।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः
## श्रीमद्विष्णुतत्त्वविनिर्णयः

**सदागमैकविज्ञेयं समतीतक्षराक्षरम् ।**
**नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ।। १ ।।**

### श्रीनारायणपण्डिताचार्यविरचिता तत्त्वमञ्जरी

वन्दे नारायणं देवं प्रोद्यत्प्रद्योतनप्रभम् ।
निरस्तोरुतमस्तोमं स्वच्छातुच्छगुणोदयम् ।।

श्रीमदानन्दतीर्थार्यपादपांसुः पुनातु नः ।
चूडामणिः सुरेन्द्राणां सतां चिन्तामणिः सदा ।।

पूर्णानन्दात्मनेऽनन्तज्ञानविज्ञानरोचिषे ।
विशुद्धतत्त्वतनवे नमो वेदान्तमूर्तये ।।

त्रिविक्रमार्यवर्येभ्यो गुरुभ्योऽस्तु नमस्कृतिः ।
यत्कृपाकल्पकलता सर्वदा सर्वदाऽपि नः ।।

श्रीमदानन्दतीर्थीयो विष्णोः सत्तत्त्वनिर्णयः ।
व्याख्यायते यथाप्रज्ञं सज्जनोऽत्रानुमोदताम् ।।

### श्रीजयतीर्थविरचिता टीका

विश्वस्योदयमातनोति तदनु त्राणं विधत्ते पुनः
सौख्याप्तीतरहानिसाधनमलं वक्ति श्रुतीर्व्यञ्जयन् ।
स्वापं प्रापयति श्रमापहृतये कल्पावसाने च यः
तं देवं पितरं पतिं गुरुतमं वन्दे रमावल्लभम् ।। १ ।।

लसतु श्रीमदानन्दतीर्थेन्दुर्नो हृदम्बरे ।
यद्वचश्चन्द्रिका स्वान्तसन्तापं विनिकृन्तति ।। २ ।।

पदवाक्यप्रमाणज्ञान् प्रणम्य शिरसा गुरून् ।
व्याकरिष्ये यथाबोधं विष्णुतत्त्वविनिर्णयम् ।। ३ ।।

### श्रीरघूत्तमयतिविरचितः भावबोधः

नत्वा लक्ष्म्याः पतिमानन्दतीर्थं तथा जयार्यं परमं गुरुं च ।
गुरुं च मे जयतीर्थीयभावं वक्ष्ये विष्णुप्रीतयेऽहं स्वशक्त्या ।। १ ।।

अथ परमकारुणिकः श्रीमदाचार्यो यथायोगमिष्टेष्टसाधनत्वाभ्यां सकलसज्जनापेक्षितविष्णुतत्त्वनिर्णयमुद्दिश्य प्रकरणं निर्माय तस्य तादर्थ्यज्ञापनाय व्यधिकरणबहुव्रीहिसमासविवक्षया विष्णुतत्त्वनिर्णय इति नाम तस्य चकार । तस्याप्यतिगहनगम्भीरतया आचार्याभिमततच्छब्दवाच्यत्वं मन्दैर्न शक्यते ज्ञातुमिति तथा तच्छब्द-वाच्यत्वज्ञापनार्थं तस्य प्रकरणस्य व्याख्यानं कर्तुकामो

जयतीर्थश्रीचरणः व्याचिख्यासितप्रकरणाद्यपद्य-गतान्त्यपदस्याऽकाङ्क्षाक्रमेण प्राथम्यात्तत्रापि भावरूपलक्षणप्रतिपादकांशस्य प्राधान्यात् तत्पद्यव्याख्यानदिक्-प्रदर्शनार्थं तदुक्तलक्षणभूतगुणवत्त्वेन परदेवतास्तुतिप्रणामरूपं मङ्गलमाचरति- **विश्वस्येति ॥** देवमिति पदं गुरुतममित्यस्यानन्तरं विवक्षित्वा विश्वस्योदयमित्यादीनां यथाक्रमं पितृत्वाद्युपपादकत्वं द्रष्टव्यम् । संहारस्य क्रीडारूपत्वाद् देवत्वोपपादकत्वं युक्तम् । यद्वा सृष्टित्राणादीनां यथाक्रमं पितृत्वपतित्वगुरुतमत्वरूपाणां क्रीडारूपत्वाद् विश्वस्योदयमित्यादिवाक्यचतुष्टयस्यापि देवत्वोपपादकत्वेन देवमित्याद्युक्तम् । तमपोऽर्थः अलं व्यञ्जयन्नलं वक्तीति । अनुत्पन्नस्य पालनायोगादन्वित्युक्तम् । जातमात्रं प्रति उपदेशायोगात् स्थित्यानन्तर्य-वाचकपुनःशब्दप्रयोगः । चशब्दान्न केवलं प्रतिदिनमिति यथाश्रुतार्थः, प्रापयति चेति विशेषणसमुच्चयश्च । रमाशब्दप्रयोगस्य तत्र तत्रोक्तमेव तात्पर्यं द्रष्टव्यम् ।

### श्रीराघवेन्द्रयतिविरचितः भावदीपः

देवं नारायणं नत्वा पूर्णबोधादिकान् गुरून् ।
विवृणोमि यथाबोधं तत्त्वनिर्णयपञ्चिकाम् ॥ १ ॥

ग्रन्थादौ मङ्गलमाचरति- **विश्वस्येति ॥ तं** विश्वस्योत्पत्त्यादिहेतुम् । 'रमावल्लभं वन्दे' इत्युक्त्या ग्रन्था-दाववश्यवन्दनीयायाः सकलवाङ्मनसनियामिकाया देव्या अपि भगवदुपसर्जनतया वन्दनं कृतं भवति । कुतो वन्द्यताऽस्येत्यतः पितरं पतिं गुरुतमं देवमित्युक्तम् । कथं पितृत्वादिकमस्येत्यतो विश्वस्येत्यादि । विश्वस्येति सर्वत्रान्वेति । चिदचित्प्रकृत्यादेः सर्वस्य जगतः उदयं वियन्नयोक्तदिशा पराधीनविशेषाप्त्यादिरूपोत्पत्तिं यः **(रा.टि.)**करोति । अतो विश्वस्य पितरम् । विश्वान्तःपातिनो ममापि पितरमिति । एवमग्रेऽपि । नैतावतोपरतः किन्तु **तदनु** जन्मानन्तरम् । उत्पन्नचराचराख्यविश्वमनुसृत्येति वा । तत्तद्योग्यतानुसारेणेति यावत् । अन्नपानादिना जीवानां, जडस्य च स्थायित्वादिरूपेणेत्यादिप्रकारेण यः **पुनः त्राणं** रक्षणं **विधत्ते** करोति । अत एव **पतिं** रक्षकम् । एतेन जिज्ञासासूत्रस्थब्रह्मशब्दार्थभूतगुणपूर्णत्वरूपमूलकृदुक्तप्रधानलक्षणस्योपपादकं जन्मादिसूत्रोक्तं जगज्जन्मादिहेतुत्वमुक्तं भवति । किञ्च यः, सुखमेव सौख्यं, स्वार्थे ष्यञ्, सौख्यस्याऽप्तेः, सौख्येतरस्य दुःखस्य हानेश्च साधनं निवृत्तकर्मानुष्ठानाङ्गकश्रवणादिरूपम् **अलं** सम्यक्, विश्वस्य वक्ति । कथं सम्यक्तेत्यत उक्तम्- **श्रुतीर्व्यञ्जयन्निति ॥** अपपाठादिना तिरोहिताः 'ज्योतिष्टोमेन स्वर्गकामो यजेत','श्रोतव्यः' इत्यादिश्रुतीः स्वहृद्गता उच्चारणेन ब्रह्मादिविश्वस्योपदिशन्नित्यर्थः । अतो **अलं** फलाव्यभिचारिभूतत्वात् सम्यक्त्वं साधन-स्येति । अतो **गुरुतमं** ब्रह्मादयो हि विश्वस्य गुरवः, तेषामपि गुरुत्वात् गुरुतमम् । किञ्च यः विश्वस्य जीवरूप-विश्वस्य जाग्रद्दशायां विषयेष्विन्द्रियविक्षेपेण प्राप्तश्रमापहृतये **स्वापं** निद्रां प्रापयति प्रतिदिनमिति योज्यम् । न केवलमेतावत् कल्पावसाने च प्रलये च ब्रह्मेतरजीवानां स्वापं प्रापयति । ततो **देवं** 'दिवु क्रीडाविजिगीषाव्यवहार-द्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इत्युक्तेः स्वप्नार्थस्य दीव्यतेः पचाद्यचि देवमिति रूपसिद्धेः स्वप्नकर्तार-मित्यर्थः । यद्वा विश्वस्योदयादिकरणेन किं प्रयोजनमित्यतो **देवं** क्रीडादिगुणकमित्यर्थः । लीलारूपमेव तत् । न प्रयोजनहेतुकमित्यर्थः । 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रात् ॥ १ ॥

ग्रन्थकर्तॄनर्थयते- **लसत्त्विति ॥** यथेन्दुश्चन्द्रोऽम्बरे गगने लसन् प्रकाशमानोऽर्कसन्तापं चन्द्रिकया निरा-करोति तथाऽऽनन्दतीर्थोऽपि नोऽस्माकं हृदि लसन् वचसाऽऽध्यात्मिकसन्तापं निराकरोत्विति भावः **॥ विनि-कृन्ततीति ॥** 'कृती छेदने' इत्यस्य 'तुदादिभ्यः शः' इति शप्रत्यये 'शे मुचादीनाम्' इति नुमागमे रूपं ध्येयम् ॥ २ ॥

स्वगुरुप्रणतिपूर्वं चिकीर्षितं प्रतिजानीते-**पदेति ॥** शब्दमीमांसातर्कशास्त्रज्ञानिति गुरुत्वोपपादनम् । बहु-वचनं गौरवादेव । स्वगुरुप्रभृतितदुत्तमानेकगुर्वभिप्रायं वा । **यथाबोधं** शिष्यबुद्धिमनतिक्रम्य । शिष्याणां यथा बोधो भवति तथेति यावत् । ग्रन्थकर्तृबोधमनतिक्रम्येति वा । तदभिप्रायानुसारेणेति यावत् । अस्मद्-बुद्ध्यनुसारेणेति वाऽर्थः । व्याकरिष्य इत्यात्मनेपदप्रयोगेण ग्रन्थप्रतिपाद्यतत्कर्त्रोः प्रीतिमात्मन्याशास्ते । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्युक्तेः **॥ विष्णुतत्त्वविनिर्णयम् ॥** विष्णुरूपतत्त्वस्येति वा विष्णो-श्चिदचित्प्रकृत्यादिसर्वतत्त्वानां वा सर्वोत्तमत्वसत्यत्वादिरूपेण विनिर्णयो यस्मात् तं ग्रन्थमित्यर्थः ॥३॥

### श्रीनिवासतीर्थविरचिता वाक्यार्थदीपिका

श्रीरामं हनुमत्सेव्यं श्रीकृष्णं भीमसेवितम् ।
श्रीव्यासं मध्वसंसेव्यं समस्ताभीष्टदं भजे ॥ १ ॥

श्रीमदानन्दतीर्थार्यचरणावाश्रयेऽनिशम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सताम् ॥ २ ॥

श्रुतिक्षीराब्धिमामथ्य धीमन्दरमहीभृता ।
प्राप्ता न्यायसुधा येन तं जयेन्द्रमहं भजे ॥ ३ ॥

रघूत्तममुनीन् वन्दे तच्छिष्यानमलात्मकान् ।
छान्दोग्यभाष्यसट्टीकाकर्तॄन् वेदेशयोगिनः ॥ ४ ॥

वेदेशमुनिसत्पादसेवासम्प्राप्तवैभवान् ।
यादवार्यान् वरसुधाटीकाकारान् वयं नुमः ॥ ५ ॥

यैरहं शुकवत् सम्यक्छिक्षितोऽस्मि कृपालुभिः ।
तान् वन्दे यादवाचार्यान् सदा विद्यागुरून् मम ॥ ६ ॥

अथैतत्कृपया श्रीनिवासेन विदुषा हरेः ।
तत्त्वनिर्णयटीकाया व्याख्यानं क्रियते मया ॥ ७ ॥

बुधैरपि सुदुर्बोधे ग्रन्थे यन्मम साहसम् ।
तत् पारयन्तु निपुणा गुरुपादरजःकणाः ॥ ८ ॥

सर्वज्ञकल्पाष्टीकाकारा जयतीर्थश्रीमच्चरणाः स्वचिकीर्षितग्रन्थस्य निर्विघ्नपरिसमाप्त्याद्यर्थं स्वेष्टदेवतानमन-रूपं मङ्गलं कृत्वा शिष्यशिक्षार्थं ग्रन्थादावुपनिबध्नन्ति- **विश्वस्येति ॥** उत्तमपुरुषप्रयोगादेवाहमिति कर्ता लभ्यते । अहं रमावल्लभं वन्द इति क्रियाकारकसम्बन्धः । ग्रन्थस्य वाङ्मानसव्यापारत्वाद्रमायाश्च वाङ्मनस-देवतात्वादवश्यं सा वन्दनीया । सा च पृथक् न वन्दनीया । 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इति पृथक् तद्वन्दनस्य निषिद्धत्वात् । अतो भगवद्विशेषणत्वेनैव वन्दनीयेत्याशयेन रमावल्लभमित्युक्तम् । न देवतावन्दनं व्यसनितया क्रियते, किन्तु विघ्नविघातादिप्रयोजनोद्देशेनैव । तथाविधैव च देवता तस्येष्टे या विशिष्टेष्टाऽधिकृता च । तादृशश्च भगवान् रमावल्लभ इत्यभिप्रायेणोक्तं **देवमिति** । **पतिं** पालकम् । क्रीडादिगुणविशिष्टत्वार्थकदेवत्व-पितृत्वपतित्वाद्युक्त्या सर्वोत्तमत्वापरपर्यायविशिष्टत्वम् । गुरुतमत्वोक्त्या इष्टत्वम् । सौख्याप्तीतरहानि-साधनवक्तृरूपगुरोरेवेष्टत्वात् । 'देवशब्दो देवतापर्यायः प्रतिपाद्यमाह' इति गीताभाष्यटीकोक्तरीत्या देव-शब्देनैवाधिकृतत्वमप्युक्तं वेदितव्यम् । अन्ये तु पतिमिति पालकत्वकथनेन गुरुतममिति वेदोपदेष्टृत्वकथनेन च तत्प्रतिपादकागमप्रतिपाद्यत्वरूपमधिकृतत्वमुक्तमित्याहुः । देवत्वादिविशेषणचतुष्टयमेव विव्रियते विश्वस्ये-त्यादिना पादत्रयेण । तथा हि- **विश्वस्य** रमाब्रह्मादिसर्वजगतः, **उदयं** पराधीनविशेषावाप्त्यादिरूपामुत्पत्तिं, **आतनोति** वियदधिकरणव्युत्पाद्यावान्तरविशेषवत्तया विस्तारयति । करोतीति यावत् । **तदनु** उत्पत्त्यनन्तरं, **(श्री.टि.) त्राणम्** अन्नदानादिना पालनं, त्रैङ् पालन इति धातोः । **विधत्ते** करोति विपूर्वस्य धाधातोः करोत्यर्थकत्वात् । विश्वस्येत्यनुवर्तते । अनुत्पन्नस्य पालनायोगात्तदन्वित्युक्तम् । जातमात्रं प्रत्युपदेशायोगात् पालनानन्तर्यवाचकः पुनश्शब्दः । सुखमेव सौख्यं स्वार्थे ष्यञ्, स्वरूपानन्दस्तस्य **आप्तिः** आविर्भावः । **इतरस्य** दुःखस्य, दुःखयतीति व्युत्पत्त्या तच्छब्दवाच्यलिङ्गशरीरस्य **हानिर्भ**ङ्गस्तयोः **साधनं** भगवत्तत्त्वम् । व्यासादिरूपेण **श्रुतीर्व्यञ्जयन्** शाखाभेदादिनोद्धारं कृत्वा प्रकटयन् । **अलम्** अतिशयेन इतरोपदेष्टृवैलक्षण्येन **वक्ति** उपदिशति ज्ञापयतीति यावत् । वेदानामपौरुषेयत्वाद्व्यञ्जयतीत्युक्तम् । अत्रापि विश्वस्येत्यनुवर्तते । ब्रह्मादि-सज्जनसमुदाय-स्येत्यर्थः । ब्रह्माणं प्रत्येव साक्षादुपदेशः । रुद्रादीनां तु ब्रह्मादिद्वारा भगवानेवोपदिशति । 'अगम्य-त्वाद्धरिस्तस्मिन्नाविष्टो मुक्तिदो भवेत्' इति वचनात् । तस्मिन्= गुर्वादावाविष्टः सन्, मुच्यतेऽनेनेति मुक्तिर्ज्ञानं तत्प्रदो भवेदिति वचनार्थः ।

**॥ स्वापमिति ॥** अत्रापि विश्वस्येत्यनुवर्तते । जाग्रत्स्वप्नयोः शरीरेन्द्रियमनसामितस्ततो विक्षेपेण श्रान्तस्य विश्वस्य **श्रमापहृतये** श्रमापनोदाय **स्वापं** सुषुप्तिं प्रापयति प्रतिदिनमिति शेषः । न केवलं प्रतिदिनं किन्तु **कल्पावसाने च** महाप्रलये च स्वापं प्रापयतीत्यर्थः । अत्र स्वापो नाम मनआदिसर्वेन्द्रियोपरमरूपा सुषुप्तिः । सा च महाप्रलये रुद्रादीनामेव सम्भवति न तु वायोः । तस्य तदानीमपि प्रतिभातपरावरत्वेन तदीयमनो-वृत्त्युपरमाभावादिति ज्ञातव्यम् । न च तर्हि 'सुषुप्तिसंस्थान् ब्रह्मादिकान्' इत्युक्तिविरोध इति वाच्यम् । अतद्गुण-संविज्ञानबहुव्रीहिणा ब्रह्मादिकशब्देन रुद्रादीनामेव ग्रहणात् । नन्वेवमपि 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्म-

शिवादिकाः' इति वचनविरोधः । न ह्यत्रातद्गुणसंविज्ञानबहुव्रीहिर्युक्तः । तथात्वे शिवस्यापि तदभावापत्तेरिति चेन्न । छत्रिन्यायेन ब्रह्मणः सुषुप्त्युक्तेरुपचरितत्वात् । जगद्व्यापाराभावसाम्येन गौणी वा । नन्वथापि विश्व-शब्दोक्तब्रह्मादीनां कथं प्रतिदिनं सुषुप्तिः । ब्रह्मणस्तावन्नास्त्येव । अधिदैवगतानां रुद्रादितत्त्वाभिमानिदेवता-नामपि सा न सम्भवति । तथात्वे जगत्प्रवृत्तिविलयापातात् । यथोक्तमेकादशस्कन्धतात्पर्ये- 'स्वर्गस्थानां नतु स्वापः' इति । तस्मादेतत्कथमुच्यत इति चेत्, उच्यते । यद्यप्यधिदैवगतानां न सुषुप्तिरस्ति । अन्यथोक्तवचन-विरोधात् । तथाऽप्यध्यात्मं विद्यमानानां तत्त्वाभिमानिदेवानां जीवस्य सुषुप्तावीषत्सुषुप्तिरस्त्येव । यथोक्तं तत्रैव- 'एवं सुप्तावपि स्फुटम् । तदन्या देवतास्सर्वाः प्राणस्यैव वशे स्थिताः । ईषच्च सुप्तवद्यान्ति नैव मानुषजीववत्' इति । अथवा इन्द्रादिदेवानां यदाऽर्जुनादिरूपेणोत्पत्त्या मानुषदेहप्राप्तिस्तदा तेषां सुषुप्तिरस्त्येवेति तदभिप्राये-णेदमित्यदोषः । तथा हि । महाभारते सौषुप्तिके पर्वणि सर्वेषां देवांशानां शिबिरे सुषुप्त्युक्तेरित्यवगन्तव्यम् ।

अत्र विश्वोदयादिकर्तृत्वोक्त्या देवत्वं विवृतम् । तथा हि । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिस्वप्नमोद-मदकान्तिगतिषु' इति क्रीडार्थकाद्दिव्धातोः कर्तरि 'नन्दिग्रहि' इत्यादिसूत्रेण पचाद्यच्प्रत्यये 'पुगन्तलघूपधस्य च' इति लघूपधगुणे च सति निष्पन्नस्य देवशब्दस्य क्रीडाकर्तृवाचित्वात्सृष्ट्यादेश्च क्रीडारूपत्वात् । सौख्याप्तीतर-हानिसाधनभूतभगवत्स्वरूपज्ञापकत्वोक्त्याऽपि देवत्वं विवृतम् । तथा हि । गत्यर्थकाद्दिव्धातोरन्तर्णीत-**(श्री.टि.)** ण्यर्थात्कर्तर्यच्प्रत्यये सति निष्पन्नस्य देवशब्दस्य ज्ञापकत्वार्थकत्वात् । सौख्याप्तीतरहानिसाधनेत्यस्य योग्यतया लाभः । स्वापप्रापकत्वोक्त्याऽपि देवत्वमेव विवृतम् । तथा हि । 'स्वप्नः सुषुप्तिरित्याख्या' इति वचनात् सुप्त्यपरपर्यायस्वप्नार्थकाद्दिव्धातोरन्तर्णीतण्यर्थात्कर्तर्यच्प्रत्यये सति निष्पन्नस्य देवशब्दस्य स्वाप-प्रापणार्थकत्वात् । विश्वोत्पत्तिकर्तृत्वोक्त्या पितृत्वं, त्राणकर्तृत्वोक्त्या पालकत्वापरपर्यायं पतित्वं, सौख्याप्तीतर-हानिसाधनत्वोक्त्या गुरुत्वं च विवृतं ज्ञातव्यम् । हिताहितप्राप्तिपरिहारोपदेष्टुरेव गुरुत्वात् सौख्यस्यैव हितत्वाद् इतरस्यैवाहितत्वात् । अलं वक्तीत्युक्त्या गुरुतममिति तमबर्थो विवृत इति सर्वमनवद्यम् ॥ १ ॥

अथ व्याचिख्यासितमूलकृत्त्वोपाधिना पूर्णबोधान् प्रसिद्धचन्द्रवैलक्षण्येन प्रार्थयते- **लसत्विति ॥** प्रसिद्धेन्दु-राकाशे लसति, **अयं** तु हृदम्बर इति ततो वैलक्षण्यम् **॥ यद्वचश्चन्द्रिकेति ॥ यस्य** श्रीमदानन्दतीर्थेन्दोर्वचन-लक्षणचन्द्रिका **स्वान्तसन्तापं** 'स्वान्तं हृन्मानसं मनः' इत्यभिधानान्मनोनिष्ठकामादिकृतसन्तापं **विनिकृन्तति** छिनत्ति । प्रसिद्धेन्दुस्तु बाह्यसन्तापमेवेत्यतोऽपि वैलक्षण्यमित्यर्थः ॥ २ ॥

'यथा देवे तथा गुरौ' इति शास्त्रमर्यादासंरक्षणार्थं कृतं गुरुप्रणाममुपनिबध्नन् स्वचिकीर्षितं प्रतिजानीते- **पदवाक्येति ॥ पदं** महाव्याकरणं, **वाक्यं** वार्तिकं, सूत्रव्याख्यानात्मकश्लोकरूपानुव्याख्यानं, **प्रमाणं** ब्रह्म-तर्कादि । **गुरून्** अक्षोभ्यतीर्थश्रीमच्चरणान् । विष्णोस्तत्त्वं विशेषेण निर्णीयतेऽनेनेति करणव्युत्पत्त्या, विष्णोस्तत्त्वं विष्णुतत्त्वं तस्य निर्णयो यस्मादिति व्यधिकरणबहुव्रीहिणा वा विष्णुतत्त्वविनिर्णयशब्दवाच्यं प्रकरणम् । 'आनन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणोऽत्र' इत्यनेन सुराणामेवाधिकारस्यान्ते स्वयमेवोक्तत्वादत्र पुनस्तद्व्याख्यानकरणप्रतिज्ञाने कथं न स्वव्याहतिरित्यत उक्तम्- **यथाबोधमिति ॥३॥**

### श्रीपाण्डुरङ्गिकेशवभट्टारकविरचिता विषमपदवाक्यार्थविवृतिः

नत्वा श्रीशं गुरून् सर्वान् गुरुराजोक्तमार्गतः ।
तत्त्वनिर्णयटीकाया भावं वक्ष्ये यथामति ॥ १ ॥

निर्विघ्नपरिसमाप्त्यादिसाधनमविगीतशिष्टाचारपरम्परायवगतं विशिष्टेष्टदेवतानतिस्तुतिरूपं मङ्गलं.....[१] शिष्यशिक्षायै ग्रन्थादौ निबध्नाति- **विश्वस्येति ॥** अत्र रमावल्लभं वन्द इत्यन्वयः । तत्र च रमावल्लभमित्युक्त्या न विद्यन्ते अरा यस्याः सा नारा लक्ष्मीः, पतित्वेन तदयनत्वाद्वा नारायण इति आद्यपद्यगतनारायणपदाभि-प्रायव्यञ्जनेन आवश्यकसकलवाङ्मनसदेवतानमनाभावप्रयुक्तमौलिकन्यूनताशङ्का अपहस्तिता भवति । नारायणस्येव सकलवाङ्मनसदेवताया रमाया अपि ग्रन्थारम्भे अवश्यवन्दनीयता सूचिता भवतीति... ।[२]

ननु वन्द इति...[३] कर्तृमात्रलाभेऽपि तस्य परकर्तृत्वेऽप्युपपत्त्या स्वमात्रकर्तृकत्वालाभात् स्वमात्रकर्तृकत्व-**(पां.टि.)** समर्पकाहमित्यनुक्त्या न्यूनत्वमिति चेत् । अत्र केचित् । अहमित्यध्याहारात्तत्सिद्धिरिति । तन्न । 'अस्मद्युत्तमः' इत्यादौ युष्मद्युपपदे

मध्यम एव न प्रथमोत्तमौ, शेषे प्रथम एव न मध्यमोत्तमौ, इत्येवमा-कारोपपदनियमविवक्षायां युष्मदो मध्यमेन, शेषस्य प्रथमेन नियमितत्वेन उत्तमपुरुषाप्राप्त्यापत्त्या स्वनियमि-तास्मद एव उपपदत्वमार्थिकमिति उत्तमपुरुषप्रयोगादेव अस्मदर्थलाभः। अन्यथा उपपदनियमे शेषग्रहणा-नर्थक्यप्रसङ्गात्। शेषग्रहणं कुर्वतः सूत्रकारस्य....[१] युष्मद्येव मध्यमः अस्मद्येव उत्तमः शेष एव प्रथम इत्येवमाकारपुरुषनियमस्य विवक्षिततया उत्तमपुरुषस्य अस्मदर्थं विना असम्भवात् तद्बलेन साक्षाच्च अहमित्यस्य लाभसम्भवेन निराकाङ्क्षत्वात् साकाङ्क्षत्वप्रयुक्ताध्याहारकल्पनायोगात्। उभयथा लाभेऽपि अध्याहारे गौरवमनध्याहारे लाघवमित्यर्थसूचकः 'उत्तमपुरुषप्रयोगादेव अहमिति लभ्यते' इति सुधास्थैवकारविरोधाच्च। तस्मादुत्तमपुरुषप्रयोगादेव अहमित्यस्य लाभात् न तदनुक्तिर्न्यूनत्वापादिकेत्येव तत्त्वम्।

ननु रमावल्लभस्य कुतो वन्द्यत्वमित्यतः विशिष्टत्वेष्टत्वाधिकृतत्वानां वन्द्यत्वप्रयोजकानां तस्मिन्नेव भावाद् युक्तं तदिति भावेन तत्प्रदर्शनाय देवमित्यादिविशेषणचतुष्टयं प्रयुक्तम्। तत्र वन्द्यत्वप्रयोजकविशिष्टत्वाधि-कृतत्वयोः सङ्कीर्तनं देवमिति। देवशब्दस्य क्रीडादिगुणवैशिष्ट्यवाचित्वात्। 'देवशब्दो देवताशब्दपर्यायः प्रतिपाद्यमाह' इति गीताभाष्यटीकोक्तरीत्या प्रतिपाद्यार्थत्वाच्च तस्य तदुभयसङ्कीर्तनत्वमिति ज्ञेयम्। वन्द्यत्व-प्रयोजकेष्टत्वप्रतिपादनाय पितरं पतिं गुरुतममिति विशेषणत्रयम्। एतद्विशेषणचतुष्टयविवरणपरं विश्वस्येत्यादि-वाक्यचतुष्टयं योग्यतानुसारेण ज्ञेयम्। तत्र देवमित्यस्य विवरणं स्वापं प्रापयतीति विशेषणम्। स्वापपदोक्तस्य संहारस्य क्रीडारूपत्वाद् देवत्वोपपादकत्वमुपपन्नम्। विश्वान्तर्गतस्वोत्पादकत्वस्यापि प्राप्तेः पितृत्वादि-प्रयुक्तवन्द्यत्वप्रयोजकेष्टत्वलाभात्...।[२] स्वं प्रति वन्द्यत्ववद् देवपदसूचितविश्वसंहारकारणत्वेन विश्वान्तर्गत-स्वसंहारकत्वस्यापि प्राप्त्या तत्प्रयुक्तद्वेष्यत्वापत्त्या अवन्द्यत्वमपि स्यादित्यत उक्तम्- **श्रमापहृतय इति॥** तथा च यः कल्पावसाने श्रमापहृतये स्वर्गनरककर्मभूमिप्राप्तिसाधनगतागतप्रयुक्तश्रमापहाराय स्वापं मनसो बहिरिन्द्रियाणाञ्च स्वस्वविषयसञ्चाररूपोपप्लवोपरमरूपत्वात् स्वापशब्दार्थं संहारं प्रापयन्नप्यसौ मातृवन्न द्वेष्यः, किन्तु तद्वत् हितकारित्वाद् वन्दनीय एवेति भावः। पितरमित्यस्य विवरणं विश्वस्योदयमातनोतीति। विश्वोत्पाद-कत्वाद् रमावल्लभस्य युक्तं विश्वान्तर्गतस्वपितृत्वमित्युक्तं भवति। पतिमित्यस्य विवरणं तदनु त्राणं विधत्त इति। अत्र विश्वस्येत्यनुवर्तनीयम्। सृष्ट्यनन्तरमेव स्थितिव्यापारः न तु तत्समानकाल इतीममर्थं द्योतयितुं तदनु इति। गुरुतममित्यस्य विवरणं सौख्याप्तीतरहानिसाधनमलं वक्तीति। पुनःशब्दो न सृष्टिस्थित्योरिव अनयोः पूर्वापरीभाव इति ज्ञापनार्थः। सुखमेव सौख्यं स्वार्थे ष्यञ्। **सौख्यस्य** स्वरूपानन्दस्य **आप्तिः** आविर्भावः। **इतरस्य** लिङ्गदेहादेः **हानिः**, तयोः **साधनं** वक्तीति। तमपो विवरणम्, **अलमिति**। तथा च तस्य अलं वक्तीति वा अलं व्यञ्जयन्निति वा अन्वयसूचनेन मोक्षदातृत्वं ज्ञानदातृत्वञ्चोक्तं भवति। तथा **(पां.टि.) सौख्याप्तेः इतरस्य** दुःखादिकस्य **हानिः** प्राप्तिः 'ओ हाङ् गतौ' इति धातोः **तत्साधनम्** अज्ञानं वक्तीति बन्धदत्वम् आनन्ददत्वञ्च उक्तं भवति। बन्धमोक्षदत्वोक्त्या अर्थात् नियमनकर्तृत्वस्यापि सिद्धिरिति सृष्ट्याद्यष्टकर्तृत्वं सूचितं भवति। प्रसिद्धपुरुषोपदेष्टृवत् साक्षाद् वक्तृत्वस्य बाधितत्वाद् आह - **श्रुतीर्व्यञ्जय-न्निति॥** उपवेदावान्तरवेदशाखोपशाखादिभेदेन तदर्थनिर्णायकन्यायग्रथनात्मकमीमांसाशास्त्रनिर्माणेन च श्रुतिव्यञ्जनं द्रष्टव्यम्। अनेन श्रुत्युक्त्या तस्योपदेष्टृत्वमित्युक्तं भवति। यद्वा विश्वस्योदयमातनोतीत्यादिविशेषण-चतुष्टयमपि देवत्वोपपादकं सृष्टित्राणादिसर्वव्यापाराणां क्रीडारूपत्वात्। आद्यं विशेषणत्रयं पितरमित्यादेरपि क्रमेण विवरणमिति ज्ञेयम्।

भावबोधे तु देवमिति पदं गुरुतममित्यस्य अनन्तरं विवक्षित्वा विश्वस्योदयमित्यादीनां यथाक्रमं पितृत्वाद्युप-पादकत्वं द्रष्टव्यमित्युक्तम्। अन्ये तु वन्द्यत्वप्रयोजकेष्टत्वादिविशिष्टसूचनाय रमावल्लभमिति। रमावल्लभत्वं हि रमापरमप्रेमास्पदत्वम्, न हि ब्रह्मरुद्रादिपददात्र्याः प्रेक्षावत्याश्च तस्याः तादृशं प्रेम तस्मिन् निर्निबन्धनं भवितु-मर्हति इति तदभिलषितस्य दाता अनेकगुणशाली इति लभ्यते। अत एव रमायाः वल्लभमिति तत्पुरुष एव न तु बहुव्रीहिरिति सम्प्रदायविदः। वन्द्यत्वप्रयोजकम् अधिकृतत्वं च व्याख्येयग्रन्थप्रतिपाद्यत्वादेव सुज्ञानमिति नोक्तम्। ततश्च वन्द्यत्वप्रयोजकरूपवत्त्वाद् रमावल्लभस्यैव वन्द्यत्वसिद्धिरित्याहुः। तत्र 'देवशब्दो देवताशब्द-पर्यायः प्रतिपाद्यमाह' इति टीकाकारीयग्रन्थान्तरस्य देवशब्दार्थव्युत्पादनानुसारेणापि देवशब्देन प्रतिपाद्यत्वरूपस्य अधिकृतत्वस्यापि उक्तिसम्भवेन सुज्ञानतया तदनुक्तेः अनाश्रयणीयत्वात्। प्रयोजनापेक्षया विश्वोत्पत्त्यादिकारित्वे अपूर्णत्वं, तदनपेक्षायां च न प्रेक्षावत्त्वं, प्रेक्षावत्प्रवृत्तेः प्रयोजनाविनाभूतत्वादिति शङ्कानिवारकस्यापि तस्य प्रतिपाद्यत्वरूपाधिकृतत्वसूचकतायाः विशिष्टेष्टत्वसूचकस्य रमावल्लभपदस्य सकलवाङ्मनसदेवतया रमया युतस्यैव हरेः ग्रन्थारम्भे वन्द्यत्वसूचकत्वस्येव अविरुद्धत्वाच्च।

यच्च न केवलं विशिष्टेष्टाधिकृतत्वेभ्यः रमावल्लभस्य वन्द्यत्वसिद्धिः, किन्तु पितृत्वादिरूपप्रयोजकान्तर-सद्भावादपि तस्य

तत्सिद्धिरिति भावेन पितरमित्यादिविशेषणत्रयमिति व्याख्यानम् । तन्न । 'न हि देवतावन्दनं व्यसनितया क्रियते' इत्यादिटीकाकारीयग्रन्थान्तरस्थवन्द्यत्वप्रयोजकत्वव्युत्पादनानुसारेण विशिष्टत्वादेः तत्प्रयोजकत्वेऽपि विना विनिगमकं पितृत्वादेः तत्प्रयोजकत्वाभिधानस्य अतिप्रसङ्गपराहतत्वेन अनुचित-त्वात् । पितृत्वाद्युक्त्या इष्टत्वलाभात् तस्य तत्प्रयोजकत्वाभिप्राये च न भवदभिमतप्रयोजकान्तरपरत्वसिद्धिः । इष्टत्वरूपतत्प्रयोजकमात्रपरत्वाभिप्राये तु अस्मत्पक्षनिक्षेप एवेति दिक् ।

यदपि स्वापं प्रापयतीत्यत्र विश्वोत्पत्तिकारणस्य तस्य विश्वान्तर्गतसंहारकारणत्वस्यापि प्राप्तेः पितृत्वादि-प्रयुक्तवन्दनीयत्ववद्द्वेष्यत्वमपि स्याद् इति शङ्कोत्थापनं तदपि न । पितृत्वादेः वन्द्यत्वप्रयोजकत्वाभावस्य प्रागेव व्युत्पादितत्वेन तदसम्भवात् ।

यद्वा नानिर्धारितस्वरूपस्य वन्दनं युक्तम् । न चान्तरेण लक्षणं वस्तुनिर्धारणम् इत्यतो विभवाद् अनेक-**(पां.टि.)**लक्षणोक्तिरियं देवमित्यादि । तत्र देवशब्देन क्रीडादिगुणोपलक्षितानन्तगुणत्वं प्रधानलक्षणम् । पितरमित्यादिना तु तत्सम्भावकं 'जन्माद्यस्य यतः' इति द्वितीयसूत्रोक्तं जगज्जन्मादिकारणत्वरूपलक्षणं सूचितमिति विवेकः ॥ १ ॥

देवताप्रणामस्येव गुरुप्रणामस्यापि अभिमतसाधनतया यस्य देवेत्यादिप्रमाणसिद्धत्वाद्देवताप्रणामानन्तरं गुरून् इन्दुत्वेन निरूपयन् प्रार्थयते- **लसत्विति** ॥ २ ॥

साक्षाद् गुरुप्रणतिपुरस्सरं शिष्यमनःसमाधानाय चिकीर्षितं निर्दिशति-**पदेति** ॥ एतच्च गुरुत्वोपपादकं विशेषणम् । अत्र पदार्थज्ञानोपायभूतं पद्यते शब्दार्थोऽनेनेति व्युत्पत्त्या व्याकरणं पदम् । वाक्यार्थज्ञानोपाय-न्यायसमर्पकं प्रमेयमीमांसाशास्त्रं वाक्यम् । उद्देशलक्षणविभागपरीक्षाभिः प्रमाणस्वरूपनिर्धारकप्रमाणमीमांसा-शास्त्रं ब्रह्मतर्काख्यं प्रमाणमुच्यत इति द्रष्टव्यम् । व्याख्याक्रियाफलस्यालौकिकस्य भगवत्प्रसादविषयत्वस्य, लौकिकस्य ख्यात्यादेश्च कर्तृगामित्वाद् व्याकरिष्ये इति आत्मनेपदप्रयोग इति ज्ञेयम् । ननु विषयादिशून्यतया प्रकरणमेवेदमनारम्भणीयं ततश्च न व्याख्येयमित्याशङ्कां वारयितुं भगवत्पादकृताया विष्णुतत्त्व(वि)निर्णय इति ग्रन्थसञ्ज्ञायाः सर्वनामानीत्यादिवद् अन्वर्थसञ्ज्ञात्वेन विषयप्रयोजनसम्बन्धप्रतिपादनपरत्वात् तत्प्रकरणस्य आरम्भणीयत्वेन युक्तं व्याकर्तव्यत्वम् इति भावेन विष्णुतत्त्वविनिर्णयमित्युक्तम् । अत्र च विष्णोस्तत्त्वं विष्णु-तत्त्वं विष्णुतत्त्वस्य विनिर्णयो यस्मादिति गमकत्वाद् व्यधिकरणो बहुव्रीहिरित्येके । केचित्तु विष्णुतत्त्वस्य विनिर्णयो विष्णुतत्त्वविनिर्णय इति षष्ठीतत्पुरुष एव । न च ग्रन्थस्य निर्णयरूपत्वाभावात् षष्ठीसमासो बाधित इति वाच्यम् । निर्णीयतेऽनेनेति निर्णय इति निर्णयशब्दस्य करणसाधनत्वेन भावसाधनत्वानाश्रयणेनोक्त-दोषानवकाशात् । न च 'प्रतिपदविधाना षष्ठी न समस्यते' इति षष्ठ्याः समासः प्रतिषिध्यत इति वाच्यम् । 'कृद्योगलक्षणा षष्ठी समस्यते' इति प्रतिप्रसवाद् ब्रह्मजिज्ञासेत्यादाविव प्रकृतेऽपि षष्ठीसमासोपपत्तेरित्याहुः । वस्तुतः 'अशेषविषयत्वाद् अशेषं दर्शनं यस्यासौ अशेषदर्शनः' इति अन्यत्र टीकाकारीयोक्त्यनुसारेण अत्रापि निर्णयशब्दस्य भावसाधनत्वेऽपि विष्णुतत्त्वविषयत्वाद् विष्णुतत्त्वं निर्णयो यस्मात्स ग्रन्थः तथोक्त इति समानाधिकरणबहुव्रीहिरेवायमिति न किञ्चिदेतत् ॥ ३ ॥

## श्रीव्यासतत्त्वज्ञविरचिता लघुप्रभा

ऋगादिवेदाप्ततमप्रणीतजयादिमानैकसुमेयरूपम् ।
क्षराक्षरातीतमहं रमेशं हरिं विदोषं गुणपूर्णमीडे ॥ १ ॥

देवदुर्गमपरार्थगभीरान् सूत्रभारतपुराणसुवेदान् ।
योऽतनोदवितथार्थनिबन्धान् नन्दितीर्थमहमन्वपि सेवे ॥ २ ॥

श्रीमदानन्दतीर्थार्यगूढभावप्रकाशकः ।
जयतीर्थाख्यतरणिः भातु मद्धृदयाम्बरे ॥ ३ ॥

यो व्यासमुनिदावाग्निः कुमतामितकाननम् ।
भस्मीचकार सच्छास्त्रसमीरेतो रुचेऽस्तु नः ॥ ४ ॥

विजयीन्द्रयतीन्द्रार्यवागस्तु विजयाय नः ।
न वादिविजयो यस्माद्विना यदुपजीवनम् ॥ ५ ॥

पञ्चधा पितृतोपेतान् किञ्च भावितसद्गुरून् ।
गुरून् जनार्दनार्यान् स्वस्तरून् वन्दे निरन्तरम् ॥ ६ ॥
तनोमि गुरुपादोच्चव्याख्यादर्शितभावधीः ।
तत्त्वनिर्णयटीकार्थबोधनाय लघुप्रभाम् ॥ ७ ॥

इह खलु शमदमादिमतो मुमुक्षोरैहिकामुष्मिकभोगविरागवतस्तत्त्वमविदुषस्तत्त्वबुभुत्सोरधिकारिवर्गस्य तत्त्वं निश्चाययितुं भगवानानन्दतीर्थमुनिः तत्त्वनिर्णयं प्रणिनाय । तस्यापि गम्भीरतया तं व्याचिख्यासुः जयतीर्थराजः प्रारिप्सिताविघ्नपरिसमाप्त्यादिहेतुतया विशिष्टशिष्टानुष्ठितमिष्टदेवतानत्यादिरूपमभिमतसिद्ध्यङ्गं मङ्गलं मनसा आचर्य शिष्यशासनाय आदिमग्रन्थेन ग्रथयति- **विश्वस्येति ॥** *अहं तं रमावल्लभं वन्द इत्यन्वयः । स क इत्याशङ्कायां तत्स्वरूपमाह- **य उदयमातनोतीत्यादिना ॥** आतनोति आ समन्ताद् विस्तारयतीत्यर्थः । अद्धेति वा । विस्तारस्य धात्वर्थत्वेऽपि वियन्नयन्यायेनोदयस्य सार्वत्रिकत्वद्योतनार्थमाङ्प्रयोगः । कस्येत्यपेक्षा-यामाह- **विश्वस्येति ॥** रमाब्रह्मादिरूपचेतनात्मकप्रपञ्चस्येत्यर्थः **॥ तदन्विति ॥** उदयोपलक्षितमित्यर्थः । यद्वा उदयानन्तरमित्यर्थः ।

ननु 'अनुर्लक्षणे' इति सूत्रेण 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति सूत्रेण वा जपमनु प्रावर्षदित्यादिवदनोः कर्म-प्रवचनीयसञ्ज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति तत्पदे[१] द्वितीयया भाव्यम् । उदयशब्दस्य च 'एरच्' इत्यजन्तस्य 'घञजन्तश्च' इति पुंलिङ्गतया तदर्थपरामर्शकतच्छब्देनापि पुंलिङ्गेन भाव्यम् । अतः तमन्विति निर्देष्टव्ये तदन्विति कथमचकथत् । न च 'तस्मात्पश्चात् तदनु' इति पश्चादर्थे 'अव्ययं विभक्ति' इत्यादिना अव्ययीभावाभिप्रायेणेत्थमकथीति वाच्यम् । तथा सति 'प्रथमानिर्दिष्टं समास उपसर्जनम्' **(व्या.टि.)** इति अनोरुपसर्जनसञ्ज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वनिपाते गोः पश्चादनुगु इतिवद् अनु- तदित्यनिर्दिश्य[१] तदन्विति निर्देशोऽयुक्ततर इति चेत् । अत्र ब्रूमः । लक्षणार्थत्वे तावद् भूतपूर्वादिवत् सुप्समासोपपत्तिः ।

यद्वा पुमांसमनुजाता पुमनुजेतिवत् तमनु तदन्विति द्वितीयातत्पुरुषः । न च श्रितादिपरिगणनविरोधः । 'द्वितीया' इति सूत्रे श्रितादिषु 'गमिगाम्यादीनामुपसङ्ख्यानम्' इति वार्तिके आदिपदेन अन्नबुभुक्षुरित्यादेरिव 'भूमीन्द्रजा तदनु राजसभां बभाज' इति नैषधप्रयोगेण प्रामाणिकत्वादस्यापि ग्रहणोपपत्तेः । अथ वा अनन्तर-मित्यर्थे 'पञ्चमी, भयेन' इति योगविभागेन पञ्चमीसमासोऽपि युक्तः । 'किमेत्तिङव्ययघात्' इत्यादौ दृष्टेः । न त्वव्ययीभावः । तेन न पूर्वनिपातः । अथ वा अनुसारार्थे तस्य अनु तदन्विति षष्ठीसमासोऽपि युक्तः। यद्वा अञ्जसेतिवत् तस्मादित्यर्थे तदिति विभक्तिप्रतिरूपकमव्ययं भिन्नं पदम् । अन्वित्यस्य च पश्चादित्यर्थः ।

अथ वा तदिति नपुंसकलिङ्गं 'सा वैश्वदेव्यामिक्षा' इतिवत् प्रक्रंस्यमानत्राणविशेषणम् । अन्याद्धारकव्यापार-त्वेन प्रसिद्धमिति तदर्थः । उदयमिति प्रकृतमेव आवृत्त्या अन्वित्यत्रापि सम्बध्यत इति न काऽप्यनुपपत्तिः ।

**॥ त्राणमिति ॥** त्रायतेर्भावे ल्युडन्तत्वं बोध्यम् । भावनिष्ठान्तत्वे तु 'नुदविदोन्दत्राघ्राहीभ्योऽन्यतरस्याम्' इति वैकल्पिकं निष्ठानत्वं बोध्यम् । पुनरित्यनन्तरार्थेऽव्ययम् । पुनर्नोवाच किञ्चनेतिवत् । यद्वा संहर्तुरसंहाराति-रिक्तपालनाभावशङ्कावारणाय समुच्चये पुनःशब्दः । अन्नदानादेः पृथक् सत्त्वात् । यथोक्तं 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति **॥ सौख्याप्तीति ॥** चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञिति बोध्यम् । नन्वितर-हानीत्यत्रेतरपदेन कथं दुःखमात्रबोधः । भिन्नत्वस्य केवलान्वयित्वात् प्रतियोगिविशेषस्यानुपादानात् । इतरपदस्य विरुद्धपरतामुपेत्य सौख्याप्तिपदस्य प्रतियोगिवाचितया इतरपदान्वये तस्य साधनपदेनानन्वयापत्तेः । सौख्यपदस्य आप्तिपदेनान्वितस्य एतत्पदार्थान्वितप्रतियोगिवाचित्वं तु अशक्यशङ्कम् इति चेन्न । सौख्यपदेन सौख्यस्य प्रकृतत्वेन हेयप्रतिपक्षतया योग्यत्वेनात्र इतरशब्दस्य तद्विरुद्धलाक्षणिकतया दुःखमात्रबोधोपपत्तेः । विस्तरस्त्व-स्मत्कृतगुरुप्रभायां द्रष्टव्यः **॥ अलं वक्तीति ॥** विश्वस्येति पदमत्राप्यन्वेति । ननु विश्वस्य सम्प्रदानत्वाविवक्षायां 'अकथितं च' इति कर्मसञ्ज्ञायां द्वितीयया भाव्यम् । सम्प्रदानत्वविवक्षायां चतुर्थ्या भाव्यमिति चेन्न । द्वितीया-विपरिणामेनान्वयात् । विश्वसम्बन्धित्वस्य साधनेऽन्वयाद्वा नानुपपत्तिः । विस्तृतमेतद् गुरुप्रभायाम् **॥ स्वापं प्रापयतीति ॥** अनुदिनमिति शेषः । विश्वस्येतिपदं सर्वत्रान्वेति ।

ननु गङ्गां प्राप्त इति 'गत्यर्थ' इति सूत्रे कर्तृनिष्ठान्ततयोदाहरणादिसाधकेन 'द्वितीया श्रित' इत्यादिसूत्रे शब्दस्वरूपग्रहणेन

अर्थग्रहणाभावेन गतशब्दात् पृथक् प्राप्तपदोपादानोपपत्त्या बाधकाभावेन च आप्नोतेः गति-विशेषार्थतया सणौ 'गतिबुद्धि' इत्यनेन विश्वस्य कर्मतया द्वितीयया भाव्यम् । विपरिणामस्तु 'वर्तमाने लट्' **(व्या.टि.)** इत्यतो विपरिणामसम्भवे 'लटः शतृ' इति पुनर्लड्ग्रहणेनायुक्त इति ज्ञाप्यत इति चेन्न । व्याकरणे अङ्गस्येत्यस्य यथायथं पञ्चम्याद्यन्ततयोत्तरत्र उत्तरमीमांसायां 'ज्ञोऽत एव' इत्यस्योत्तरत्र यथायथं षष्ठ्याद्यन्ततया विपरिणामेनानुवृत्तिदर्शनादत्रापि विपरिणामोपपत्तेः । 'लटः शतृ' इत्यत्रत्यस्य लड्ग्रहणस्य व्यर्थस्य प्रथमा-समानाधिकरणेऽपि शत्रादिज्ञापनार्थत्वात् । न चैवं 'सं ते वातो वायुना गच्छताम्' इत्यत्रत्यस्य गच्छता-मित्यस्याङ्गानीत्यत्र वचनविपरिमाणेनान्वयसम्भवेन 'सं यज्ञपतिः' इत्यत्र व्यवायान्नानुषज्यत इत्युक्त्या-ननुषङ्गविरोध इति वाच्यम् । तत्र विपरिणाममुपेत्य व्यवायात्प्रत्ययमात्रस्याननुषङ्गः प्रकृतेस्त्वनुषङ्ग एवेति नवीनैरुक्तत्वात् । अधिकं तु गुरुप्रभायां द्रष्टव्यम् । अथ वा विश्वमिति शेषो वा अङ्गीकार्यः । यद्वक्ष्यति 'आत्माज्ञानपरिकल्पितत्वे च जगतः आत्मनो भिन्नत्वेन न दृश्येत इत्यत्र जगदिति शेषः' इति ।

**॥ श्रमापहृतय इति ॥** शरीरिणां मनुष्याणां जागरावस्थायां नानाविषयसञ्चारादिना चित्तविक्षेपात् श्रान्तानां श्रमापहाराय प्रतिदिनं निद्रां प्रापयतीत्यर्थः । 'निद्रया ह्रियते नक्तं निद्रया ह्रियते श्रमः' इति स्मृतेरिति भावः **॥ कल्पावसाने चेति ॥** नात्र श्रमापहृतय इत्यन्वेति । प्रलयस्यातदर्थत्वात् । स्वापमित्यस्यानु-कर्षणार्थश्चकारः ।

ननु कल्पावसाने विश्वस्य स्वापः कथम् । 'स्वापो द्विविधः स्वप्नः सुषुप्तिश्च' इति षट्प्रश्नटीकोक्तेः, सुप्तेः देहनाड्याद्यभावेन, स्वप्नस्य मनस उपरतत्वेन चायोगादिति चेन्न । लये विद्यमानावस्थायां सुप्त्या मानस-ज्ञानाभावसाम्येन स्वापशब्दोपपत्तेः 'अज्ञानं सुप्तिशब्दोक्तम्' इति तात्पर्योक्तेः । अत्र विश्वपदस्य संसारि-रुद्रादिपरत्वम्, न तु वाय्वादिपरत्वम् । 'एवं प्रलयकालेऽपि प्रतिभातपरावरः । मुख्यवायुः' इति अनुव्याख्या-नोक्तेः । 'स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण' इति तत्त्वप्रकाशिकोक्तेश्च वायोरुक्तावस्थाऽयोगात् । 'सुषुप्तिसंस्थान् ब्रह्मादिकान्' इति तु अतद्गुणसंविज्ञानबहुव्रीहिणा ब्रह्मशब्दस्य बृहस्पतिपरत्वेन वा उपपन्नम् । 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः' इत्यैतरेयभाष्योक्तवचने 'अंशेन सुप्तो ब्रह्मा तु' इति तात्पर्ये च सुप्तपदं 'सुप्तो देवो जनार्दनः' इतिवत् निर्व्यापारत्वाभिप्रायम् । यद्वा उक्तवचनानुसारेण पूर्वोक्तवचनानुसारेण च[१] बाह्यज्ञानाभावे सति मनोवृत्तिसत्त्वरूपस्वप्नसमावस्था वायोरपि । 'स्वप्नावस्था च (सु) सदृशी ह्यवस्था सुप्तिसञ्ज्ञिता' इति गरुडपुराणोक्तेः (अ.११,श्लो.३०) । सकृत्प्रयुक्तस्यानेकार्थत्वं तु सह्यम् । तथा च वायोरपि विश्वशब्देन ग्रहणमित्यवधेयम् । अधिकं तु गुरुप्रभायां बोद्धव्यम् ।

अधिकृतत्वेष्टत्वविशिष्टत्वगुरुतमत्वानि वन्द्यत्वप्रयोजकानि दिदर्शयिषुः वन्द्यं विशिनष्टि- **तं देवमित्या-दिना ॥** देवमिति प्रतिपाद्यत्वं, देवताशब्दपर्यायत्वात्तस्य । यथोक्तं गीताभाष्यटीकायां 'देवताशब्दपर्यायो देवशब्दः' इति । पितरमितीष्टत्वम् । पितुरिष्टत्वप्रसिद्धेः । पतिमिति विशिष्टत्वम् । प्रतियोगिविशेषानुपादानेन **(व्या.टि.)** सर्वोत्तमत्वप्राप्तेः । गुरुतममित्यतिशयितगुरुत्वम् । 'कृग्रोरुच्च' इति कुप्रत्यये गृणतेरुदित्यन्तादेशे रपरत्वे अतिशायने तमपि च तद्रूपसिद्धेः। तत्र देवत्वोपपादनं सौख्याप्तीतरहानिसाधनमिति । प्रथमान्तं य इत्यस्य विशेषणम् । इष्टसाधनस्यैव सर्ववेदप्रतिपाद्यत्वात् । 'इष्टे व्युत्पत्तिरिष्यते', 'योगश्च स्यान्महाफले' इत्युक्तेः । अस्मिन् पक्षे श्रुतीर्वक्तीति सम्बन्धः । हयग्रीवकपिलऋषभव्यासादिरूपेण तत्र प्रमाणत्वेन श्रुतीर्वक्तीति तदर्थः । न चात्र वचनकर्मत्वाद्वाक्यत्वं तस्मात्पौरुषेयत्वं मन्तव्यमित्याह- **व्यञ्जयन्निति ॥** विपूर्वादञ्जेः णिचि कर्तरि शतरि सुबन्तम् । प्रकटयन्निति यावत् । प्राकट्यं च पूर्वं स्थितस्यैवेति प्राक् स्थितिरुक्ता । अनेन 'श्रुता एवापरैर्जनैः' इति स्मारयति । एतेन 'ऋचः सामानि जज्ञिरे' इत्याद्युत्पत्तिश्रुतयोऽपि 'जनी प्रादुर्भावे' इति धात्वर्थोक्त्या 'तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु' इति वक्ष्यमाणदिशा व्याख्याता वेदितव्याः । साधनमित्यस्य द्वितीयान्तत्वेऽपि साधनमात्मानं वक्तीति संयोज्यम् । तत्र कर्मत्वोक्त्या देवत्वस्य, वक्तीत्यनेन गुरुत्वस्य चोपपादनम् । श्रुतीर्व्यञ्जयन्नित्यनेन श्रुतीनामादिमवक्तेत्यर्थपरेण गुर्वनपेक्षगुरुत्वस्य असङ्कुचद्वृत्तिबहुवचनेन 'ऋषिर्हि सर्वविद्यानां भगवान् पुरुषोत्तमः' इति ऋग्भाष्योक्तसर्ववेदवक्तृत्वस्य चोक्त्या तमबर्थस्योपपादनं द्रष्टव्यम् । यथोक्तं भागवते 'नारायणाखिलगुरो' इति । उदयमातनोतीति पितृत्वस्य, त्राणं विधत्त इति पतित्वस्य चोपपादनम् । यद्वा देवशब्दस्य, स्वप्नार्थाद् अन्तर्णीतण्यर्थाद् दीव्यतेरचि लघूपधगुणे च रूपमभिसन्धाय स्वापं प्रापयतीति देवत्वस्य विवरणम् । न च दीव्यतेः इगुपधलक्षणः कः कस्मान्न स्यादिति वाच्यम् । कबाधनार्थमेव पचादिषु पाठेन अच एवोपपत्तेः **॥ रमावल्लभमिति ॥** सकलवाङ्मनसदेवताभूतरमायाश्चावश्यं वन्दनीयत्वेन **समनानय**रीत्याऽत्यन्तरङ्गताद्योतनाय तां धवविशेषणत्वेन ववन्दे । 'परिवारतया ग्राह्या अपि हेयाः प्रधानतः' इत्युक्तेः । 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इति

स्वातन्त्र्येणाव्यक्तासक्तिनिन्दनाच्च तथा वन्दनस्यैव युक्तत्वात्। वाल्लभ्यं च तामन्तरा स्त्र्यन्तरारतिमत्त्वम्। तदुक्तं तात्पर्यनिर्णये- 'तयैवान्याः सर्वदाऽनुप्रविष्टाः' इति 'यदावेशो बहुलः स्याद्रमायाः' इति च। अभिवादयामि स्तौमीति पृथग्ग्रहणमन्तरा वन्द इत्युक्तिः लघूक्त्योभयलाभाय। तेन[१] 'अभिवादनशीलस्य' इत्युक्तायुरादिप्राप्तिं स्तुतिसाध्यप्रसादप्राप्तिं च सूचयन् स्वस्यामहाधिकारित्वं सूचयति। यद्वक्ष्यति 'विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणोऽत्र' इति। अत्र वन्द इति क्रियायां कर्तृविशेषलाभप्रकारस्तु 'उत्तमपुरुषप्रयोगादेवाहमिति कर्ता लभ्यते' इति सुधोक्तोऽवसेयः। तदर्थस्तु कर्तृविशेषवाचकपदाभावान्न न्यूनत्वम् 'अस्मद्युत्तमः' इति सूत्रे पुरुषनियमेनास्मदर्थस्यैव कर्तृताया लाभादिति। विस्तृतं चैतद् वाक्यार्थचन्द्रिकायाम्। अथ वा नानिर्धारितस्वरूपस्य वन्दनं युक्तम्, निर्धारणं च नान्तरेण लक्षणं सम्भवतीत्याशयवान् वैभवादनेकलक्षणान्याह- **तं देवमित्यादिना ॥**

देवमिति क्रीडादिगुणविशिष्टत्वं दिवु क्रीडेत्यादेः। पितरमिति स्रष्टृत्वम्। नन्वेतदयुक्तम्। प्रत्यक्षेण, 'यन्मे रेतः' इति श्रुत्या, 'रेतःसिग्योगोऽथ' इति सूत्रेण च विरोधाद् इति चेन्न। सञ्ज्ञामूर्तिक्लृप्त्यधिकरणे 'विरिञ्चो **(व्या.टि.)** वा इदं सर्वं विरेचयति' इति श्रुत्यवष्टम्भेन विरिञ्चस्य देहकर्तृत्वं पूर्वपक्षयित्वा 'देहश्चैव तदुद्भवः' इति, त्रिवृत् कुर्वत इति, हेतुगर्भ इति सिद्धान्तयद्भाष्यदिशा सूचितेन 'सेयं देवता' इति श्रुतिसिद्धेन 'परो नामरूपात्मकदेहस्रष्टा त्रिवृत्कर्तृत्वात्' इति हेतुना, 'मामको देहः स्रष्टृसृष्टः कार्यत्वाद् घटवत्' इति सामान्यतः स्रष्टरि सिद्धे 'अयं पिता न स्रष्टा अस्वातन्त्र्यात्' इति पितुः तदभावसिद्धौ परिशेषेण 'त्रिवृत्क्रिया यतो विष्णोः' इति स्मृत्या अत्रत्यपितृपदसूचितया 'यो नः पिता' इत्यादिश्रुत्या 'पिताऽसि लोकस्य' इति गीतया च स्वतन्त्रेश्वरकर्तृत्वसिद्धेः। 'स ब्रह्मणा सृजति' इति श्रुत्यनुसारेण ब्रह्मादीनां द्वारत्वमिति टीकोक्तेः इतरस्य द्वारमात्रत्वात् मुख्यामुख्यन्यायेन मुख्यस्यैवेश्वरस्य ग्रहणौचित्यात्। यथोक्तमनुव्याख्याने 'देहकर्तृत्वमीशस्य ज्ञात्वा तत्पितृतास्मृतेः। विशेषस्नेहमापाद्य' इति। पतिमिति स्वामित्वं, गुरुतममिति परमगुरुत्वं इत्यनेकानि लक्षणानि सूचितानि। अथ वा श्रोतृशेमुषीमनुकूलयिष्यन् वक्ष्यमाणपरिच्छेदत्रयोपपाद्यविशेषणानि सङ्गृह्य तैर्विशिनष्टि- **तं देवमित्यादिना ॥** विश्वस्येति विशेषणत्रयान्वयि। देवमिति पदेन क्रीडार्थकधातुजेन लीला-कैवल्योक्त्या निर्दोषत्वम्। सदोषस्य लीलामात्रप्रवृत्त्ययोगात्। गत्यर्थकधातुप्रकृतिकेन कर्मार्थकघञन्तेन देवतापदपर्यायेण वा तेन सदागमैकविज्ञेयत्वम्। विश्वस्य पितरं पतिमिति च 'कर्तृत्वात् सगुणं ब्रह्म' इत्युक्तदिशा अशेषसद्गुणत्वम्। 'पतिं विश्वस्याऽऽत्मेश्वरम्' इति श्रुतिं सूचयता पतिपदेन च विश्वपतित्वस्वातन्त्र्याशेष-सद्गुणत्वतत्तदागमविज्ञेयत्वादीनि सूचितानि। रमावल्लभमित्यनेन विशेष्यवाचिना अक्षरस्वामित्वोक्त्या क्षरातीतत्वस्यापि कैमुतिकन्यायेन लाभेन समतीतक्षराक्षरत्वमपि सूचितम्। मूले क्षराक्षरातीतत्वोक्त्या 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इत्युक्तन्यायेन क्षराक्षरयोः परस्परसाम्यशङ्का प्राप्ता। तां वारयितुं क्षरस्य ब्रह्मादेरक्षरश्रीतत्त्ववशत्वात्तदतीतत्वोक्तिमात्रेणोभयातीतत्वं लब्धमित्यभिप्रायेण टीकायां रमावल्लभ-मित्युक्तम्। यथोक्तं भगवत्पादैः सप्तमस्तोत्रे 'ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्वगीर्वाणसन्ततिरियं यदपाङ्ग-लेशम्। आश्रित्य' इति। मूले गुरुनमनन्यूनतापरिहाराय मूलकृदभिसंहितं तदभेदं नारायणस्य सूचयितुं गुरुतम-मिति व्यशिनडिति सकलमकलङ्कम्।

अथ वा त्रिपाद्रूपी भगवान् दिव्यपुरुषस्त्रिविक्रमोऽस्य देवता। तत्प्रतिपादकगायत्रीभाष्यत्वात्। तत्प्रतिपादिका च गायत्री। 'त्रिपदा गायत्री' इति श्रुतेः। अस्या अपि त्रिपदात्वात्। तद्भाष्यत्वं चास्य 'गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः। भारतिज्ञानरूपत्वाद् भर्गो ध्येयोऽखिलैर्जनैः। प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरितः' इति ऋग्भाष्योक्तदिशा तच्छब्दार्थवर्णनम्-निर्दोषाशेषसद्गुणमिति। वरेण्यमित्यस्यार्थवर्णनम्- समतीत-क्षराक्षरमिति। देवताशब्दपर्यायदेवशब्दार्थवर्णनम्-सदागमैकविज्ञेयमिति। यद्वा वरेण्यमित्यस्यसदागमैक-विज्ञेयमिति। सवितृपदस्य सवितृत्वार्थकस्यार्थवर्णनम्- समतीतक्षराक्षरमिति। भारतिज्ञानार्थस्य भर्गशब्द-स्योपलक्षणाभिप्रायेणाशेषसद्गुणत्वोक्तिरिति गुणत्रयं परिच्छेदत्रयप्रतिपाद्यम्। अतः परिच्छेदत्रयरूपस्यास्य **(व्या.टि.)** गायत्रीभाष्यत्वं सिद्धम्। अत एव श्रीमदानन्दतीर्थश्रीमच्चरणैः गायत्रीवर्णैः[१] तत्सवर्णैरेवाऽऽद्य-पद्यविन्यासः कृतः। तद्देवतानामादिमवर्णेन प्रारम्भः तदन्तिमतकारेण ग्रन्थसमाप्तिश्च 'नमो नारायणाय ते' इति तथा 'नारायणम्' इति तद्ध्येयमूर्तिकीर्तिश्चेति। यथा मीमांसाशास्त्रं सर्वशाखानिर्णायकं विश्वतोमुखत्वात्तथेदं प्रकरणमपि तदेकदेशसम्बद्धत्वाद् वेदैकदेशगायत्रीनिर्णायकं तत्सरूपत्वात्। तथा 'अथ वा पञ्चमूर्तिः सः' इत्यनुव्याख्याने सूत्रप्रतिपाद्यतयोक्तपञ्चमूर्तिमध्यपतितनारायणप्रतिपादकम्।

**+** 'सज्जनसंविदे' इत्युक्तं त्रैगुण्यज्ञानस्य मोक्षहेतुत्वं 'सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता' इत्याद्यागम-सिद्धम्। एवं पदेऽपि

स्वारस्यमवगन्तव्यम् **+**।

यथा मोक्षशास्त्रत्वाद् ब्रह्मतन्त्रस्य प्रणवपूर्वकत्वं, यथा वा गायत्र्या ब्रह्मविद्यात्वात् तत्पदपूर्वकत्वं तथा अस्यापि ग्रन्थस्य गायत्रीभाष्यत्वाद् ब्रह्मतन्त्रैकदेशत्वाच्च 'सत्' पदपूर्वत्वम् । त्रयाणामपि ब्रह्मनामत्व-साम्यात् । यथोक्तं गीतायाम्- 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति । 'ॐ इति ब्रह्म' इतिवत् 'तदिति वा एतस्य' इति श्रुतिवच्च स्मृतेरपि तत्समकक्षतया सच्छब्दग्रहणेन नामत्वोक्त्या शक्तिनिश्चायक-त्वात् । एवं चास्य ब्रह्मनाम्नोपक्रमात् 'ते' इत्यन्ते ब्रह्मणः प्रत्यक्षनिर्देशाच्च ब्रह्मविद्यात्वं सिद्धम् । एवं च यथा अग्न्यर्थस्यापि प्रणवादेः 'वैश्वानरः प्रथमा मात्रा' इत्यवयवशो वैश्वानरादिमूर्तिकतया सर्वप्रह्मांहो-दाहकतया श्रुतितो माङ्गलिकत्वं, यथा वा 'अग्निर्मुखम्' इति श्रुत्या गायत्रीतत्पदस्य अग्निवाचित्वेन जामदग्न्यमूर्तिकतया माङ्गलिकत्वं, तथा सच्छब्दस्य साधुभावार्थकत्वेन मङ्गलार्थस्य माङ्गलिकत्वादादिमत्वं मन्तव्यमित्यभिप्रेत्य टीकाचार्यः स्वयमपि तत्प्रतिपादनाय तदीयशब्दानर्थांश्च प्रत्यभिज्ञापयति- **तं देवमित्यादिना ।।** तत्र 'तम्' इत्यनेन तच्छब्दस्य, देवं इत्यनेन देवस्येत्यत्रत्यप्रातिपदिकस्य 'पितरम्' इत्यनेन सवितुरित्युक्तप्रसवितृत्वार्थस्य गुरुतममित्यनेन 'धियो यो नः प्रचोदयात्' इत्युक्तार्थस्य 'रमावल्लभम्' इत्यनेन प्रतियोगिविशेषोपादानेन वरेण्यमित्यस्य 'वन्दे' इत्यनेन ध्यानवन्दनयोः मनोवृत्तिविशेषत्वाद् धीमहि इत्यस्य प्रत्यभिज्ञापनम् । इतराणि तदुपपादकानीति रहस्यतमं मात्सर्यमुत्सार्य सुधीभिराकलनीयमित्याद्यपद्यमनवद्यम् ।। १ ।।

देवानां विष्णुचोदिते ज्ञानदानकर्मणि मुख्याधिकारित्वात्तत्रापि देवोत्तमस्य ब्रह्मणो 'गुरुर्ब्रह्माखिलानां च' **(व्या.टि.)** इति जगद्गुरुत्वेनोक्त्या 'एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुत्या च मुख्यतमत्वात् प्राणस्य च 'वायुरसि प्राणो नाम' इति प्राणं प्रकृत्य 'धातुराधिपत्ये' इति श्रुतब्रह्मभावत्वेन तादृक्त्वात् तत्सन्निधानस्य च 'आचार्यो ब्रह्मणो मूर्तिः' इति स्मृत्या व्याख्यातृस्थत्वावगमात् व्याख्यातृत्वस्य च 'सहकार्यन्तरविधिः' इति सूत्रोक्तदिशा तत्सहकारित्वार्थत्वात् तस्य च सेवारूपतया अवश्यं सम्पाद्यत्वात् तत्प्रयोजकं तत्सन्निधानमभीप्सुः प्राणावतारत्वाद्व्याचिख्यासितग्रन्थनिर्मातृत्वेनानुग्राहकत्वाच्चाऽनन्दितीर्थमुनेः तद्ग्रन्थं व्याचिख्यासुः जयतीर्थश्रीमच्चरणः आत्मनीने मनसि तत्सन्निधिं नाथयति- **लसत्विति ।।** भासताम् । लस श्लेषणक्रीडनयोरिति धातोः श्लिष्यतु क्रीडतां वा इत्यर्थः । श्रीरस्यास्तीति श्रीमान्, श्रीशब्दश्च वेदवचनः । यथाऽऽह वेदः 'ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम्' इति । भूमार्थोऽयं मतुप् । 'भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः' इत्युक्तेः । अनन्तशाखाद्रष्टेत्यर्थः । तेन तद्वचसः अतिविश्वसनीयत्वं सूचयति । आनन्दतीर्थ इन्दुरिवेत्युपमितसमासः ।

ननु 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सामान्यधर्माप्रयोगे समासविधानात् । अत एव व्याघ्रादे-राकृतिगणत्वादेव सिद्धे 'वृन्दारकनागकुञ्जरैः पूज्यमानम् इत्यादिसामान्यप्रयोगार्थम्' इत्युक्तं सिद्धान्तकौमु-द्याम् । इह तूपमानोपमेयसाधारणचन्द्रिकावत्त्वाम्बरसञ्चारादिसाधारणधर्मोक्तेः कथं समास इति चेत् । मैवं वोचः । 'भाष्याब्धिः क्वातिगम्भीरः' इति कैयटीयप्रयोगात् सामान्यप्रयोगेऽपि समासः साधुः । अत्र गाम्भीर्यं साधारणधर्मत्वेन न विवक्षितं, किन्तु विततत्वदुरवगाहित्वादि, तच्च न प्रयुक्तमिति समाधानं तु न सम्यक् । स्वरसप्रतीतिविरोधात् । शूरत्वस्यापि साधारणधर्मत्वेनाविवक्षायां पुरुषो व्याघ्र इव शूर इत्यादावपि समासोप-पत्तेश्च । तेनोपमालङ्कारः, ताद्रूप्यविवक्षया रूपकं वा ।

**नः इति ।।** अस्माकमित्यर्थः । 'अस्मदो द्वयोश्च' इति बहुवचनम् । **हृदम्बर इति ।।** मनोनभसीत्यर्थः 'स्वान्तं हृन्मानसं मनः' इत्यभिधानात् । वचश्चन्द्रिकेति पूर्ववत् । **स्वान्तसन्तापमिति ।।** 'क्षुब्धस्वान्त-ध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु' इति मनसि स्वान्तेति निपातः । अत्र वर्ण्यस्योपमानाधिक्यपूर्वं ताद्रूप्योक्त्या आद्यं रूपकमर्थालङ्कारः । तल्लक्षणोदाहरणे सुधीन्द्र-तीर्थश्रीपादैरलङ्कारमञ्जर्यां-'रूपकं तद्विषयिणाभेदताद्रूप्ययोः क्रमात् । विषये रञ्जनं त्रेधाऽऽधिक्यन्यूनसम-त्वतः । चन्द्रो जयीन्द्रो नित्यर्धिरनभ्रगतिरुत्कलः' इति दर्शिते । अन्यत्र च 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्त्रिधाऽऽधिक्यन्यूनत्वानुभयोक्तिभिः ।।' 'अयं हि धूर्जटिः साक्षाद् येन दग्धाः पुरः क्षणात्' इति । अत्र स्वान्तसन्तापमिति तकारावृत्त्या वृत्त्यनुप्रासनामा शब्दालङ्कारः । तल्लक्षणोदाहरणे अलङ्कारमञ्जर्यां- 'वृत्त्यनुप्रास एकस्याप्यावृत्तिरसकृद्यदा । विजयीन्द्रो विलोलाक्षीवीक्षणाक्षतहृत्क्षितौ' इति । अलङ्कारचूडामणौ च- 'वृत्त्यनुप्रास एकानेकावृत्तौ नन्दनन्दनः' इति **।। विनिकृन्ततीति ।।** कृती छेदने । अस्य तौदादिकत्वात् शः । 'शे मुचादीनाम्' इति नुमागम इति बोध्यम् । इति द्वितीयं पद्यमनवद्यम् ।। २ ।।

**(व्या.टि.)**'यस्य देवे परा भक्तिः' इति श्रुतौ विष्णौ सर्वोत्कृष्टभक्तेः ब्रह्मादिदेवेषु यथाक्रमभक्तेः गुरौ च भक्तेः कर्तव्यत्वेनोक्तेस्तदनुरोधेन देवप्रणामानन्तरं गुरून् प्रणमति- **पदेति ।।** पद्यते गम्यते अर्थोऽनेनेति पदं व्याकरणम्। वाक्यं मीमांसा। 'पदं व्याकरणं प्रोक्तं मीमांसा वाक्यमेव च' इति साम्प्रदायिकोक्तेः। सा च त्रिविधा। 'मीमांसा त्रिविधा ज्ञेया दैवी ब्राह्मी च कार्मिकी' इति गीतातात्पर्यनिर्णयोक्तेः। वार्तिकमिति केचित्। तन्न शोभते। अल्पत्वात्। पदपदेन पुनरुक्तेश्च। प्रमाणविषयत्वात् प्रमाणं ब्रह्मतर्कः। यथोक्त-मनुव्याख्याने- 'मानन्यायैस्तु तत्सिद्धेः' इति । तानि जानन्तीति तथोक्ताः। इगुपधेति कः **।। प्रणम्येति ।।** भक्तिश्रद्धातिशयपूर्वकत्वं प्रकर्षः। तादृश एव हि प्रणामो भवत्यभिमतसिद्धेरङ्गम्। शिरसेत्युपलक्षणया साष्टाङ्गत्वं द्योतयति। तादृशस्यैव हि प्रणामस्य 'तद्विद्धि प्रणिपातेन' इति गुर्वतिप्रीतिहेतुत्वेन कर्तव्यत्वोक्तेः। व्याकरिष्य इत्यात्मनेपदेन 'य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति' इत्युपक्रम्य 'मामेवैष्यति' इत्युक्तं भगवत्प्राप्तिलक्षणं फलं 'व्याख्यैकस्य शतोत्तरा' इति तन्त्रसारोक्तं भगवत्पूजाधिक्यं फलं चाऽत्मगामीति सूचयति- **यथाबोध-मिति ।।** 'यथाऽसादृश्ये' इत्यनतिक्रमेऽव्ययीभावः। तेन ख्यात्यर्थमबुद्धव्याख्यानं वारयति। शिष्यमत्यनुकूलनं वा तदर्थः **।। विष्णुतत्त्वेति ।।** निर्णीयतेऽनेनेति निर्णयो ग्रन्थः। 'निर्णयः सर्वशास्त्राणां भारतम्' इतिवत्। निरुपपदात् नयतेः 'पुंसि सञ्ज्ञायां घः प्रायेण' इति करणे घ इति बोध्यम्। (सूत्रे प्रायेण इति नास्ति)। 'एरच्' इत्यज्वा। विष्णुतत्त्वविनिर्णय इत्यत्र 'कर्तृकर्मणोः कृति' इति षष्ठी। तस्यास्समासः। न च 'कर्मणि च' इति प्रतिषेधः। तत्र चशब्दस्य इतिशब्दार्थकतया कर्मणीतिपदयुक्तेन 'उभयप्राप्तौ कर्मणि' इति सूत्रेण प्राप्ताया एव समासनिषेधात्, नापि 'प्रतिपदविधाना' इत्यनेन निषेधः। 'कृद्योगलक्षणा षष्ठी समस्यते' इति प्रतिप्रसवाद् 'व्यासकृतिः' 'भारतश्रवणम्' इतिवत्।

केचित्तु, विष्णुतत्त्वविषयत्वाद् विष्णुतत्त्वं निर्णयो यस्मादिति 'स्वतन्त्रोऽशेषदर्शनः' इत्यत्रेव समानाधि-करणबहुव्रीहिमिच्छन्ति। अपरे तु, विष्णुतत्त्वस्य निर्णयो यस्मादिति व्यधिकरणबहुव्रीहिमास्थिषत। केचित्तु विष्णोस्तत्त्वं विशेषेण निर्णीयतेऽनेनेति व्यधिकरणबहुव्रीहिणा तत्त्वविनिर्णयशब्दवाच्यं प्रकरणमिति वदन्ति। तत्र करणव्युत्पत्तिं प्रदर्श्य बहुव्रीह्युपन्यासोऽतिसाहसः। अत्र यथाबोधमिति बोधानतिक्रमाभ्यां वक्तव्यतत्त्वज्ञानाविप्रलिप्से, व्याकरिष्य इति व्याक्रियाप्रतिज्ञया पटुकरणत्वव्याचिख्यासे च सूचयता स्वस्य गुणचतुष्टयरूपाप्तिं सूचयता तत्त्वनिर्णयमिति स्वव्याख्येयग्रन्थनाम्नि निर्णयपदेन युक्तिमूलत्वं तत्त्वपदेन प्रमेयवाचिना श्रुतिमूलत्वं च मूलस्य सूचयता 'आप्तवाक्यतया तेन' इत्युक्तत्रिविधप्रामाण्यं शास्त्रस्येव व्याख्यानस्यापि स्वकृतस्य बोध्यमिति सूचितम्। एवं विष्णुतत्त्वविनिर्णय इति व्याख्येयनामकीर्तनेन व्याख्येयस्य निश्चितप्रामाण्यकमीमांसाशास्त्रेणैकार्थ्यं सूचयता तद्व्याख्यानरूपस्वग्रन्थस्य प्रामाण्यं सूचितम्। नामकीर्तनेन मीमांसयैकार्थ्यसूचनं च विष्णुब्रह्मशब्दयोः पर्यायत्वाद् जिज्ञासानिर्णयशब्दयोः पर्यायत्वात् स्फुटं चैतत्प्रकरणस्य शास्त्रेणैकार्थ्यम्। तथा हि। शास्त्रयोनिसूत्रे यत्सदागमैकप्रमाणकत्वं प्रत्यपादि यथाऽऽह भाष्यकारः सङ्क्षेपे **(व्या.टि.)** 'आगमोदितः' इति तदत्राऽद्यविशेषणेन सञ्जग्राह। यच्च वियत्पादे रमाब्रह्माद्युत्पत्तिकथनेन समतीतक्षराक्षरत्वं तदत्र द्वितीयेन। यच्चाऽद्याध्यायेऽशेषसद्गुणत्वं- 'शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः' इति- तदत्राशेषसद्गुणमिति। यच्च द्वितीये निर्दोषत्वमुक्तं- 'सर्वदोषोज्झितस्तस्मात्' इति तदत्रापि निर्दोषेति। तेन विशिष्टव्याख्यातुः स्वस्य सुरोत्तमत्वं सूचितमिति वेदितव्यम्। यद्वक्ष्यति 'विशिष्टव्याख्यानकर्मणि सुरा ह्यधिकारिणोऽत्र' इति तृतीयं पद्यमनवद्यम् ।। ३ ।।

**(त.मं.)** ''सदागमैकविज्ञेयं समतीतक्षराक्षरम्।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ।।''

इतीष्टदेवतामभिवन्दते शिष्टाचारपरिपालनाद्यर्थम्। सदागमा निर्दोषागमाः। दोषास्त्व-ज्ञानमूलत्वादयः । सदागमैरेकविज्ञेयं प्रधानविज्ञेयम् । यद्यपि सदागमैः कर्मदेवतादिकमपि विज्ञेयम्। तथाऽपि तत्र महातात्पर्याभावान्नारायण एव मुख्यज्ञेय इत्यर्थः। अथवा, सर्वचेतना-चेतनेभ्यः एकत्वेन मुख्यत्वेन विज्ञेयम्। एकशब्दः प्रधानेऽपि प्रसिद्धः - 'एकः प्रधान उद्दिष्टः' इति। अथवा, सदागमेनैकेनैव विज्ञेयम्; न तु दुरागमेन। नापि सदागमाननुगृहीतप्रत्यक्षानु-मानाभ्याम्। तयोराभासत्वनियमात्। निर्दोषश्चायमशेषसद्गुणश्चेति। अशेषाः पूर्णाः।

**टीका-** विघ्नविघातादिसाधनतयाऽविगीतशिष्टाचारपरम्पराद्यवगतं नारायणवन्दनं स्वयमन्तराय-विधुरोऽपि भगवानानन्दतीर्थमुनिः शिष्यान् ग्राहयितुं प्रकरणादौ निबध्नाति- **सदागमैकविज्ञेय-मिति ।।** सदा वन्दे इत्यनेन मम नारायणवन्दनं न प्रत्यूहविरहादिप्रयोजनोद्देशेनेति सूचयति । न अनिर्धारितस्वरूपस्य वन्दनं युक्तं, न च लक्षणेन विना निर्धारणमित्यतो नारायणस्य लक्षणान्याह- **निर्दोषेति ।।** निर्दोषश्चासावशेषसद्गुणश्चेति विग्रहः । अत्र निर्दोषग्रहणेन पारतन्त्र्यराहित्यादीनि, अशेषसद्गुणमित्यनेन परिपूर्णानन्दत्वादीनि च अनन्तानि लक्षणानि सूचितानि । तदर्थमेव अशेषेत्युक्तम् । दुःखादीनामपि गुणत्वेन व्यवहारात् सदिति । अथवा उत्पत्त्यादिराहित्यं गुणानां सच्छब्देनाऽचष्टे । एतल्लक्षणसम्भावनार्थमुक्तम्- **समतीतेति ।।** क्षराक्षरपदाभ्यां जडमप्युप-लक्ष्यते। सम्यगतीते अतिक्रान्ते क्षराक्षरे येन असौ तथोक्तः । जडजीवप्रकृतिभ्योऽत्यन्तविलक्ष-णम् । एतैर्लक्षणैः अनया च सम्भावनयाऽन्वितो नारायणः कुतः प्रतिपत्तव्य इत्यत उक्तम्- **आगमविज्ञेयमिति ।।** आगमैः विशिष्टतया विलक्षणतया च ज्ञेयम् । प्रत्यक्षानुमानाभ्याम् अन्यथापि **(टी.)** ज्ञायत इत्यत उक्तम्- **एकेति ।।** आगमानपेक्षस्य प्रत्यक्षादेः नारायणस्य सदोषत्वादौ प्रवृत्त्यनुपपत्तेः तदपेक्षायां च उपजीव्यविरोधेन न तस्य तत्र प्रामाण्यमिति भावः । तथाऽपि पाशुपताद्यागमैः अन्यथाऽपि ज्ञायत इत्यत उक्तम्- **सदिति ।।** अयोग्यजनव्यामोहनाय प्रणीतानां तेषां दुरागमत्वात् न तदुक्तप्रकारेण ज्ञेयः ।

'दोषैकदृक् पुरोभागी, ह्लादैकमयीम्' इत्यादिप्रयोगदर्शनात् सङ्ख्यार्थस्यैव एकशब्दस्य पूर्वकालैकेति पूर्वनिपातो न केवलार्थस्य ।

**(र.टि.)** निर्दोषत्वस्य गुणविशेषणत्वे सत्पदवैय्यर्थ्यम् । तृतीयपरिच्छेदे 'वर्जितः' इत्यादिप्रमाणोदाहरणाद्य-सङ्गतिश्च स्यादित्यत आह- **निर्दोषश्चासाविति ।।** लक्षणान्तरलाभश्च विग्रहप्रदर्शनप्रयोजनम् । तदर्थमेवा-शेषेत्युक्तमिति । उत्पत्त्यादीत्यादिपदेन पारतन्त्र्यापूर्णत्वग्रहणेन सत्पदेनैव लक्ष्म्यादिव्यावृत्तिसिद्धेर्न तदर्थ-मशेषपदमिति भावः **।। येनेति ।।** अन्यपदार्थस्य कर्मत्वे विरुद्धता स्यादिति भावः । वीत्यस्यार्थद्वयम् । 'विशिष्टतया' लक्षणैरित्यर्थः । 'विलक्षणतया' जडजीवप्रकृतिभ्य इत्यर्थः । अत एवैतत्परिच्छेदान्ते तथैवाऽ-चार्यैरुपसंहारः कृत इति भावः ।

**(रा.टि.)** नारायणवन्दनस्य ग्रन्थादौ लेखनस्य च कृत्यं वदन्नाद्यपद्यमवतारयति- **विघ्नविघातादीति ।।** नारायणवन्दनं प्रकरणादौ निबध्नातीत्यन्वयः । तत् किं स्वस्य ग्रन्थकृतौ अविघ्नतार्थं नेत्याह- **स्वयमिति ।।** तर्हि किं प्रयोजनं, शिष्यान् ग्राहयितुम् । ग्राहयतेर्द्विकर्मकत्वात् किमित्याकाङ्क्षायां सन्निधानादेतत्प्रकरणमित्य-न्वेति । निर्विघ्नतयैतत्प्रकरणमाद्यन्तमध्येतुं व्याख्यातुं चेत्यर्थः । यद्वा 'यद्यदाचरति श्रेष्ठः' इत्युक्तदिशाऽऽचार्यैरेवं कृतं, अस्माभिरप्येवं कार्यमिति बुद्धिं शिष्याणामुत्पादयितुमित्यर्थः । तेषां तथा बुद्ध्युत्पादनमपि किमर्थमित्यतो नारायणवन्दनं विशिनष्टि अवगतमित्यन्तेन । विघ्नविघातादीत्यादिपदेन प्रचयपरिग्रहः । साधनतयेति प्रकारे तृतीया । परम्परादीत्यादिपदेन शिष्टाचारानुमितश्रुतिस्मृतिसङ्ग्रहः **।। अविगीतेति ।।** निश्चितप्रामाण्य-कत्वेनाविप्रतिपन्नेत्यर्थः । शिष्याणां सर्वकर्मकृतौ सम्भावितविघ्नत्वात् तत्तन्निवृत्त्यर्थतया प्रमाणावगतनारायण-वन्दनमादौ कृत्वा निर्विघ्नं कार्यसमाप्तिं लभन्तां शिष्याः इत्येतदर्थं नारायणनतेरादौ कर्तव्यताबुद्ध्युत्पादनमिति भावः । सदेत्यस्य कृत्यमाह- **सदेति ।।** विशेषणत्रयस्य कृत्यमाह- **नानिर्धारितेत्यादिना त्रयाणामपि कथनं युक्तमित्यन्तेन ।।** अनिर्धारितस्य स्वेतरसमस्तवस्तुव्यावृत्तयाऽनिर्णीतस्येत्यर्थः **।। लक्षणेनेति ।।** इतरासाधा-रणधर्मेणेत्यर्थः **।। लक्षणान्याहेति ।।** निर्दोषेतिपदकृत्यमेतत् । निर्दोषपदस्य गुणविशेषणतया बहुव्रीहिरयमिति भ्रमनिरासायाऽह- **निर्दोषश्चासाविति ।।** निर्गतो दोषेभ्यः निर्दोषः । बहुव्रीहिगर्भोऽयं कर्मधारय इति भावः । **।। अनन्तानीति ।।** अनन्तलक्षणोक्तिश्चेश्वरस्य 'जन्माद्यस्य' इत्यत्रेव वैभवद्योतनायेति भावः **।। व्यवहारा-(रा.टि.) दिति ।।** तार्किकाणामिति योज्यम् । निर्दोषपदेनैव दुःखद्वेषमोहादेर्वारणादाह- **अथ वेति ।।** तर्हि समतीतेति व्यर्थमित्यत आह- **एतल्लक्षणेति ।।** 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इति गीतोक्त्या जडातीतत्वाप्राप्तेराह- **क्षराक्षरपदाभ्यामिति ।।** विनिगमनाविरहाद् द्वयोरपि पदयोर्लक्षणत्वेनोक्तिरित्येके । उभयसम्बन्धिनोर्जडयोर्ग्रहणाय द्वयोरुक्तिरित्यन्ये । **जडमप्युपलक्ष्यत इति ।।** लक्षणया जडमप्यत्र ग्राह्यमि-त्यर्थः । न तु न केवलं क्षराक्षरे उपलक्ष्येते अपि तु जडमपीत्यर्थः । न चैवं वृत्तिद्वयविरोधः । गङ्गायां मीनघोषावित्यत्र वचनवृत्त्या पूरस्य, लक्षणया तीरस्य

गङ्गापदेन बोधनात् । उक्तं हि तर्कताण्डवे लाक्षणिकादेः शक्यसम्बद्ध-त्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनवादे 'गङ्गायां घोषो मत्स्यश्च इत्यादौ युगपद्वृत्तिद्वयदर्शनात्' इति । केचित्तु वृत्तिद्वयविरोधात् सर्वमपि लक्षणयैव ग्राह्यमिति भावेनापिपदं प्रयुक्तमित्याहुः । एतेन जडप्रकृतिकर्मादि-स्वातन्त्र्यवादिनो निरस्ता इत्यपि ज्ञेयम् ।। **सम्यगतीते इति** ।। कर्मणि निष्ठान्तमतीतपदं क्षराक्षरविशेषणं, बहुव्रीहिश्च समास इत्युपेत्यैवमुक्तम् । द्वितीया श्रितातीतेति सूत्रोक्तदिशा कर्तरि निष्ठान्तमतीतपदमित्युपेत्य काष्ठातीत इत्यादाविव क्षराक्षरे समतीत इति विग्रहपक्षे क्षराक्षरसमतीतम् इति भाव्यमिति ध्येयमित्येके । केचित्तु तत्र सूत्रेऽतीतपदस्यैवोक्तेरिह समतीतपदोक्तेस्तत्सूत्रस्य नायं विषय इत्याहुः ।

सम्भावनाघटनाय फलितमाह-**जडेति** ।। **विशिष्टतयेति** ।। भावाभावरूपोक्तानन्तलक्षणविशिष्टतया जडजीवश्रीतत्त्वेभ्यो विलक्षणतया चेत्यर्थः । परिच्छेदान्ते तथैवोपसंहारादिति भावः ।। **अन्यथेति** ।। दोषित्वादेः रामकृष्णादिरूपे नारायणे प्रत्यक्षेण पुरुषत्वशरीरित्वाद्यनुमानेनेत्यर्थः ।। **एकेतीति** ।। केवलार्थोऽत्रैकशब्द इत्यग्रे व्यक्तम् । प्रबलप्रत्यक्षविरुद्धं निर्दोषत्वमागमः कथं ब्रूयादित्यत आह- **आगमेति** ।। रामकृष्णादौ नारायणावतारत्वमज्ञात्वा मनुष्यत्वमेव देवदत्तादाविव ज्ञात्वा दोषित्वग्राहिप्रत्यक्षमागमानपेक्षत्वान्नारायणस्य दोषित्वग्राहि न भवति । यदा तु 'निरनिष्टो निरवद्यः' इत्याद्यागमेन निर्दोषतयाऽवधारितनारायणावतारत्वम् 'अजस्तस्मान्महान् राजा तस्माद्दशरथोऽभवत् । तस्यापि भगवान् विष्णुः साक्षाद् ब्रह्ममयो हरिः । अंशांशेन चतुर्धाङ्गात्पुत्रत्वं प्रार्थितस्सुरैः' इति, तथा 'देवक्यां देवरूपिण्यां विष्णुस्सर्वगुहाशयः । आविरासीत्' इत्याद्यागमेन ज्ञात्वा नारायण एवायं रामो रोदिति खिद्यतीति दोषित्वग्राहिप्रत्यक्षमागमसापेक्षमित्युपजीव्यागमविरोधा-दप्रमाणमेवमनुमानमपीत्यर्थः ।। **तस्येति** ।। प्रत्यक्षस्य । **तत्र** दोषित्व इत्यर्थः ।। **अन्यथेति** ।। शिवादि-हीनत्वादिरूपेणेत्यर्थः । ननु 'पूर्वकालैकसर्वजरत्पुराणनवकेवलास्समानाधिकरणेन' इति समासविधिसूत्रे प्रथमान्ततया एकपदस्य निर्देशात् तस्य च 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसञ्ज्ञा । 'उपसर्जनं पूर्वम्' इति सूत्रेण पूर्वनिपाते सदैकागमविज्ञेयमिति भाव्यमित्यत आह- **दोषैकेति** ।। एकदोषदृक्पुरोभागीति वाच्येऽप्यमरसिंहस्य दोषैकदृगिति प्रयोगात् एकह्लादमयीमिति वाच्ये ह्लादैकमयीमिति काव्यप्रकाशे प्रयोगदर्शनेन कल्पकसत्त्वेन सङ्ख्यार्थकस्यैवैकशब्दस्य समाससूत्रे प्रथमानिर्देशो न केवलार्थस्येति कल्प्यते । अत्रामरादौ च केवलार्थ एवैकशब्दो न सङ्ख्यार्थ इति पूर्वनिपाताभावेनाऽगमैकेति निर्देशो युक्त इति भावः । 'उपसर्जनं पूर्वम्' इत्यस्यैव पूर्वनिपातसूत्रत्वेऽपि पूर्वकालैकेत्यस्य तन्मूलत्वात् पूर्वकालैकेत्युक्तम् ।

**(श्री.टि.)** ननु सदागमैकविज्ञेयमित्याद्यपद्यं व्यर्थम् । न च मङ्गलकरणार्थत्वेन सार्थकमिति वाच्यम् । फल-प्रमाणयोरभावेन तस्याकर्तव्यत्वात् । अस्तु वा कर्तव्यत्वम् । तथाऽप्यन्यैरेव तत्कर्तव्यम् । तेषां सान्तराय-त्वात् । न तु भगवत्पादैस्तेषां निरन्तरायत्वात् । अस्तु वा तैरपि तत्कर्तव्यम् । तथाऽप्युपनिबन्धो व्यर्थ इतीमाः शङ्काः परिहरन्नाद्यपद्यमवतारयति- **विघ्नविघातादीति** ।। विघ्नविघात एव आदिः कारणं यस्याः समाप्तेः तत्साधनतयेत्यर्थः । अत्र प्रचयोऽप्युपलक्षणीयः । समाप्त्यादिसाधनतयेत्युक्तसमाप्तेर्विघ्नविघातकारणकत्वोक्त्या सिद्धान्ते मङ्गलस्य समाप्तिरेव फलं, विघ्नध्वंसोऽवान्तरव्यापार इति सूचितं भवति । एवं व्याख्याने 'प्रामाणि-कत्वाच्चास्यार्थस्य' इत्यादिनाऽग्रिमग्रन्थेन मङ्गलसमाप्त्योरेव व्यभिचारपरिहारेण कार्यकारणभावसमर्थनमपि सङ्गच्छते, विघ्नध्वंसफलकत्वे तु न सङ्गच्छत इत्यवधेयम् । अविगीतो धर्मशास्त्राविरुद्धः । तथा च मङ्गलं निर्विघ्नपरिसमाप्तिफलकम्, अविगीतशिष्टाचारपरम्परावगतत्वात् । यदविगीतशिष्टाचारपरम्परावगतं तत्सफल-मिति सामान्यव्याप्तिमूलकमनुमानं प्रमाणमुक्तं भवति । परम्परादीत्यादिपदेन 'मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यते ।' 'निर्विघ्नपरिसमाप्तिकामो मङ्गलमाचरेत्' इत्यादिवचन-सङ्ग्रहः । नारायणवन्दनं कृतमिति शेषः । अन्यथा अकृतस्य निवेशने प्रतारकत्वप्रसङ्ग इति भावः । अन्तरायो विघ्नः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यभिधानात् । शिष्यान् असन्निहितशिष्यान् । प्रयोजनोद्देशेनेत्यनन्तरं 'किन्तु स्वभावेन' इति शेषः । स्वरूपस्य वस्तुन इति शेषः ।। **निर्धारणमिति** ।। सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणमित्यर्थः । निर्दोषत्वस्य गुणविशेषणत्वे सत्पदवैय्यर्थ्यं स्यात् । तृतीयपरिच्छेदे 'वर्जितः सर्वदोषैश्च' इति भगवतो निर्दोषत्वे प्रमाणोदाहरणासङ्गतिश्चेत्यत आह- **निर्दोषश्चासाविति** ।। **तदर्थमेवेति** ।। अनन्त-लक्षणसूचनार्थमेवेत्यर्थः । परमात्मनिष्ठैकैकगुणस्यानन्यसाधारणत्वेन व्यावर्त्याभावादनन्तलक्षणसूचनार्थ-मेवैतत्प्रयोग इति भावः ।। **व्यवहारादिति** ।। तार्किकाणां मत इति शेषः ।। **सदितीति** ।। 'सद्भावे साधुभावे च' इति वचनात्सच्छब्दः साधुत्वार्थकः । दुःखादीनां चासाधुत्वात्तेन तद्व्यावृत्तिरिति भावः । ननु दुःखादीनां दोषत्वेन तेषु गुणत्वव्यवहारस्य तार्किकाणां सङ्केतमात्रमूलकत्वेनाप्रामाणिकतया तद्व्यावृत्त्यर्थं सत्पद-मनुपादेयमित्यत आह- **अथ वेति** ।। ननु गुणादीनां कथं निर्दोषत्वं चेतनाश्रितपापादिष्वेव दोषशब्दव्यवहारदर्शनेन गुणेषु तत्प्रसक्तेरेवाभावेन निषेधायोगादित्यत उत्पत्तीत्यादिना दोषो व्याख्यातः

उत्पत्त्यादिदोष इत्यर्थः । तथा च भगवद्गुणेषु ज्ञानादिषूत्पत्त्यादयो दोषाः प्रसक्ताः । तज्जातीयेषु जीवज्ञानादिषु दर्शनादतस्तन्निषेधो युक्त इति भावः ।

अत्रेदं विचार्यते । ननु दोषात्यन्ताभावरूपं निर्दोषत्वं कथं भगवल्लक्षणम् । सिद्धान्ते प्रामाणिकप्रतियोगि-कात्यन्ताभावाभावेन दोषाणां जीवे प्रामाणिकतया तत्प्रतियोगिकात्यन्ताभावासम्भवादिति चेत् । अत्र ब्रूमः- निर्दोषत्वं नाम आरोपितदोषात्यन्ताभावः स एव च भगवल्लक्षणमिति । आरोपितदोषाणां चाप्रामाणिकतया तत्प्रतियोगिकात्यन्ताभावसम्भवात् । न च वाच्यं जीवे वास्तवदोषाणामेव विद्यमानत्वेनाऽरोपितदोषात्यन्ता-(श्री.टि.) भावोऽस्तीति लक्षणस्यातिव्याप्तिरिति । जीवे वास्तवदोषाणामेव विद्यमानत्वेनाऽरोपित-दोषात्यन्ताभावायोगात् । तथा हि । आरोपितदोषात्यन्ताभावो नाम दोषारोपपूर्वकप्रतीतिविषयाभाव इत्यर्थस्य विवक्षितत्वात् । दोषारोपपूर्वकप्रतीतिविषयाभावो नाम दोषा आरोप्य निषिध्यन्त इति यावत् । तथा च जीवे दोषारोपपूर्वकप्रतीतिविषयाभावरूपारोपितदोषात्यन्ताभावो न वक्तुं शक्यः । तत्र दोषारोपे प्रधानभूतवास्तव-दोषाणामेव विद्यमानत्वेन जीवे दोषाः न सन्तीति दोषानारोप्य न निषेधः कर्तुं शक्यते । अत्यन्ताभावस्य प्रतियोगिनेव प्रतियोग्यारोपे यत्प्रधानं तेनापि साकं विरोधात् । भगवति च प्रधानभूतवास्तवदोषाणामभावेन दोषा न सन्तीति दोषानारोप्य निषेधः कर्तुं शक्य इत्येवं दोषारोपपूर्वकप्रतीतिविषयाभावरूपारोपितदोषा-त्यन्ताभावस्य भगवति सम्भवाज्जीवे चासम्भवान्नातिव्याप्तिरिति ।

अन्ये तु स्वसंसृष्टदोषात्यन्ताभावो लक्षणमिति विवक्षितम् । स्वशब्दस्समभिव्याहृतपरः । तथा चेश्वरीय-दोषाणामप्रामाणिकत्वेन तत्संसृष्टदोषात्यन्ताभावसम्भवात् । जीवे च नातिव्याप्तिः । स्वशब्दोक्तजीवसंसृष्ट-दोषणां प्रामाणिकतया स्वसंसृष्टदोषात्यन्ताभावस्य जीवेऽभावादित्याहुः ।

इदमेवोपपादनमन्यत्रापि द्रष्टव्यम् । तथा हि- सिद्धान्ते सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन विरोधः कथ्यते । स न युक्तः । सत्त्वस्य सति असत्त्वस्यासति प्रामाणिकत्वेन तत्प्रतियोगिकात्यन्ताभावयोरसम्भवादिति चेन्न । परस्परविरहरूपत्वोक्तेः परस्परविरहव्यापकत्वे तात्पर्यम् । तथा हि । यत्राऽरोपितसत्त्वात्यन्ता-भावस्तत्रासत्त्वम् । यत्र चाऽरोपितासत्त्वात्यन्ताभावस्तत्र सत्त्वम् । न च सति घटे वास्तवसत्त्वसद्भावेनाऽ-रोपितसत्त्वात्यन्ताभावसद्भावात्तत्र चासत्त्वाभावाद्व्यभिचारः । एवमेवासति शशविषाणादौ वास्तवासत्त्व-सद्भावेनाऽरोपितासत्त्वात्यन्ताभावसद्भावात्तत्र च सत्त्वाभावाद्व्यभिचार इति वाच्यम् । आरोपितसत्त्वा-त्यन्ताभावो नाम सत्त्वारोपपूर्वकप्रतीतिविषयाभाव इत्यर्थस्य विवक्षितत्वेन सति घटे प्रधानभूतवास्तवसत्त्वस्यैव सद्भावेन सत्त्वमारोप्य निषेधस्य कर्तुमशक्यत्वेनाऽरोपितसत्त्वात्यन्ताभावस्यैवाभावान्न व्यभिचारः । एवमेवा-रोपितासत्त्वान्ताभावो नाम असत्त्वारोपपूर्वकप्रतीतिविषयाभाव इत्यर्थस्य विवक्षितत्वेनासति शशविषाणादौ प्रधानभूतवास्तवासत्त्वस्यैव सत्त्वेनासत्त्वमारोप्य निषेधस्य कर्तुमशक्यत्वेनाऽरोपितासत्त्वात्यन्ताभावस्यैवाभावान्न व्यभिचारः । अतो युक्तं सत्त्वासत्त्वयोः परस्परविरहव्यापकत्वमिति । ननु दोषात्यन्ताभावस्य कथं भगवल्लक्षण-त्वम् ? लक्षणानां भगवताऽत्यन्ताभिन्नत्वाङ्गीकारादन्योन्याभावस्येवात्यन्ताभावस्यापि भगवत्स्वरूपत्वा-नङ्गीकारादिति चेन्न । दोषात्यन्ताभाववत्त्वस्यैव भगवल्लक्षणत्वेन दोषात्यन्ताभावस्य लक्षणत्वानङ्गीकारात् । दोषात्यन्ताभाववत्त्वस्य च भावरूपत्वेन तस्य भगवत्स्वरूपत्वोपपत्तेरित्यवधेयम् । विस्तरस्तु लिङ्गपादीय-सुधायामदृश्यत्वाधिकरणे द्रष्टव्यः ।

**।। सम्भावनार्थमिति ।।** असम्भावनाशङ्कानिरासार्थमित्यर्थः । निश्चयार्थमिति यावत् । तेनोत्कटकोटि-कस्संशयस्सम्भावना तदर्थमित्यन्यथाप्रतीतिः परास्ता वेदितव्या । एवमेवोत्तरत्रापि व्याख्येयम् । नन्वत्र (श्री.टि.) शरीरक्षरणाद्ब्रह्मादिचेतनाः क्षराः, अक्षरदेहवत्त्वादक्षरा महालक्ष्मीः तद्वैलक्षण्यरूपं तदतीतत्वं जडेऽ-प्यस्तीति सम्भावकस्य जडेऽप्यतिप्रसक्तत्वात्तस्यापि निर्दोषत्वाशेषसद्गुणत्वयोः प्रसक्तिरित्यत आह- **क्षराक्षर-पदाभ्यामिति ।।** अत्रापिशब्दस्समुच्चये । उपलक्ष्यत इत्यस्य प्रतिपाद्यत इत्यर्थः । एवञ्च क्षराक्षरपदाभ्यां न केवलं क्षराक्षरे प्रतिपाद्ये किन्तु जडमपीत्येवमपिशब्दस्य क्षराक्षरजडानां प्रतिपादनरूपैकक्रियासम्बन्धरूप-समुच्चयोऽर्थः । प्रतिपाद्यत्वं च क्षराक्षरयोर्मुख्यवृत्त्या जडस्य तु लक्षणयेति विवेकः । ननु क्षराक्षरशब्दयोर्मुख्यवृत्त्या स्वार्थप्रतिपादकत्वस्य लक्षणया जडप्रतिपादकत्वस्य चोक्तावेकस्य शब्दस्य युगपद्वृत्तिद्वयविरोधस्स्यादिति चेन्न । सिद्धान्ते तावन्न विरोधः । 'मायामात्रम्' इति सूत्रे मायाशब्दस्येश्वरप्रज्ञावाचकत्वस्य वासनालक्षकत्वस्य चाङ्गीकारात् । 'गङ्गायां मीनघोषौ' इत्यत्र परैरपि युगपद्वृत्तिद्वयस्वीकाराच्च । वस्तुतस्तु न केवलं क्षराक्षरपदाभ्यां क्षराक्षरे लक्ष्येते किन्तु जडमपि लक्ष्यत इत्येवमपिशब्दस्य क्षराक्षरजडानां लक्षणारूपैकक्रियासम्बन्ध-रूपस्समुच्चयोऽर्थः । न च वाच्यं क्षराक्षरशब्दयोः क्षराक्षरवाचकत्वेन कथं तत्र लक्षणेति । इयं ह्यजहत्स्वार्थ-लक्षणा । तस्यां चाजहत्स्वार्थलक्षणायां वाच्यस्यार्थस्यापि लक्ष्यत्वमेव ।

यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदस्य स्वार्थे तदितरत्र च लक्षणा। ननु तत्र शक्यलक्ष्यकाकमार्जालादिसाधारणस्य दध्युपघातकद्रव्यत्वरूप-स्योपलक्ष्यतावच्छेदकस्य सत्त्वादुभयत्र लक्षणा सम्भवति। प्रकृते तु कथमिति चेत्। उच्यते। प्रकृतेऽप्य-स्वतन्त्रत्वरूपस्य शक्यक्षराक्षर-लक्ष्य-जडरूपोभयसाधारणस्योपलक्ष्यतावच्छेदकस्य सत्त्वाल्लक्षणा सम्भव-त्येव। नन्वत्र काकपदेन घटादेरितरस्यावाच्यत्वात्काकस्यैव वाच्यत्वं वाच्यम्। काकस्यापि लक्ष्यत्वाङ्गीकारे तस्य कुत्रापि वाचकत्वमेव न स्यादेवं प्रकृतेऽपीति चेन्न । स्यादिदं यद्यजहत्स्वार्थलक्षणास्थले काकपदाल्लक्षणया काकत्वप्रकारकबोधो भवतीत्युच्येत। न चैवम्। किन्तु दध्युपघातकद्रव्यत्वप्रकारक एव। एवं प्रकृतेऽपि यदि क्षराक्षरपदाभ्यां क्षराक्षरत्वप्रकारक एव बोधो लक्षणया भवतीत्युच्येत तदैवोक्तदूषणं स्यात्। न चैवम्। किन्त्वस्वतन्त्रत्वप्रकारक एव बोधः। तथा चोभयत्रापि क्षराक्षरपदाभ्यां काकपदेन चास्वतन्त्रत्वदध्युपघातक-द्रव्यत्वप्रकारकबोधस्तु लक्षणयैव भवति। एवं च काकेभ्यो दधि रक्ष्यतामित्यस्य दध्युपघातकद्रव्येभ्यो दधि रक्ष्यतामित्यर्थः। एवं प्रकृतेऽपि समतीतक्षराक्षरमित्यस्य समतीतास्वतन्त्रमित्यर्थः सम्पद्यत इति ज्ञातव्यम्।

ननु लक्षणाबीजस्य मुख्यार्थबाधस्याभावात् कथमुभयत्रापि लक्षणेति चेन्न। तात्पर्यानुपपत्तेरपि लक्षणाबीजस्य यष्टीः प्रवेशयेत्यादौ दर्शनेनात्रापि तदनुपपत्त्यैव लक्षणास्वीकारात्। तथा हि। काकेभ्य इत्यत्र काकपदेन तन्मात्र-ग्रहणे दध्युपघातकद्रव्येभ्यो दधिरक्षणरूपवक्तृतात्पर्यस्यानुपपत्तिः स्यादतोऽत्र लक्षणा। एवं प्रकृतेऽपि क्षराक्षर-शब्दाभ्यां तन्मात्रग्रहणेऽस्वतन्त्रातीतत्वरूपवक्तृतात्पर्यमनुपपन्नं स्यादतस्तदनुपपत्त्यैवात्र लक्षणेति ध्येयम्। ननु क्षराक्षरपदान्यतरपदेनैव लक्षणायास्सम्भवात् क्षराक्षरपदाभ्यामिति कस्मादुक्तमिति चेत्। अत्राऽहुः। क्षरशब्देन घटादिरूपं क्षरजडमुपलक्ष्यते। अक्षरशब्देन च प्रकृत्यादिरूपाक्षरजडमित्युभयोपादानमिति। तन्न। क्षरशब्दस्य क्षरजडलक्षकत्वे अक्षरशब्दस्य चाक्षरजडलक्षकत्वे उपलक्ष्यतावच्छेदकधर्मस्याभावेनोपलक्षणायोगात्। न च **(श्री.टि.)** ब्रह्मादिवाचकक्षरशब्देन क्षरजडलक्षणायां क्षरत्वमेवोपलक्ष्यतावच्छेदकम्। तथा लक्ष्मीवाचकाक्षर-शब्देनाक्षरजडलक्षणायामक्षरत्वमेवोपलक्ष्यतावच्छेदकमिति वाच्यम्। तयोरेव शक्यतावच्छेदकत्वेन तदाक्रान्त-योर्ब्रह्मादिश्रियोरपि क्षराक्षरशब्दलक्ष्यतापातात्। यदि चास्वतन्त्रत्वमुभयत्राप्युपलक्ष्यतावच्छेदकं तर्ह्येकेनैव शब्देनोभयोपलक्षणायां सम्भवन्त्यामन्यतरवैय्यर्थ्यानिस्तारात्। अतो विनिगमनाविरहादुभयोरपि लक्षकत्वमिति सम्प्रदायार्थविदः। नन्वत्र यद्यजहत्स्वार्थलक्षणा तर्ह्युपलक्ष्यत इति पदास्वारस्यं, जहत्स्वार्थलक्षणायामेवोपलक्ष्यत इति शब्दस्य 'वेदा इत्युपलक्षणं पञ्चाशद्वर्णा अपि गृह्यन्त' इत्यादौ दर्शनादिति चेन्न। अजहत्स्वार्थलक्षणायामपि उपलक्ष्यत इति शब्दप्रयोगस्य बहुलमुपलम्भात्। यथा हि। 'उपजीव्यविरोधे तु न प्रामाण्यममुष्य च' इति ब्रह्मतर्कवाक्यव्याख्यानावसरे निरवकाशादेरुपलक्षणमेतदित्युक्तमित्यादि द्रष्टव्यमिति सर्वमकलङ्कम्।

उपलक्षणकरणेन सम्पन्नवाक्यार्थमाह- **जडजीवेति ॥** संशब्दार्थोऽत्यन्तेति। वीत्युपसर्गस्यार्थद्वयमाह- **विशिष्टतयेति ॥** निर्दोषाशेषसद्गुणत्वविशिष्टतयेत्यर्थः **॥ विलक्षणतया चेति ॥** जडजीवप्रकृतिभ्योऽत्यन्त-विलक्षणतयेत्यर्थः। अत एव परिच्छेदान्ते तथैवाऽचार्यैरुपसंहारः कृत इति भावः **॥ प्रत्यक्षानुमानाभ्या-मिति ॥** रामकृष्णादौ दोषग्राहि प्रत्यक्षं, विष्णुर्दोषी चेतनत्वाद्देवदत्तवदित्याद्यनुमानं ताभ्यामित्यर्थः **॥ अन्यथाऽ-पीति ॥** निर्दोषत्वाशेषसद्गुणत्वसमतीतक्षराक्षरत्वाभाववत्तयेत्यर्थः **॥ आगमानपेक्षस्येति ॥** अयमर्थः। रामकृष्णादिदोषग्राहिप्रत्यक्षेण त्रेधोत्पत्तव्यम्। अयं रामकृष्णादिर्विष्णुः, स च दोषवान्, ततश्च तदभिन्नो विष्णुर्दोषवानिति वा। कश्चिदयं दोषवानिति वा। विष्णोरन्योऽयं दोषवानिति वा। प्रकारान्तराभावात्। तत्र द्वितीयतृतीययोर्न विष्णोर्दोषित्वे आगमानपेक्षं तत्प्रत्यक्षं भवितुं शक्यम्। विष्णुर्दोषवानिति तेनानव-गाहनात्। आद्ये रामकृष्णादेरवश्यं विष्णुत्वं ज्ञातव्यम्। न चैतत्प्रत्यक्षवेद्यम्। तस्मात् 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः। आविरसीत्' इत्याद्यागमेनैव ज्ञातव्यम्। तथा च प्रत्यक्षं प्रत्यागमस्योपजीव्यत्वात्तद्विरोधे सति तत्र विष्णोः सदोषत्वादौ तस्य प्रत्यक्षस्याप्रामाण्यम्। एवं चेतनत्वानुमानस्याप्यागमानपेक्षत्वे विष्णोरेवा-भावेनाऽश्रयासिद्धौ चोदितायां निरनिष्टो निरवद्य इत्याद्यागमेन तत्सिद्धिर्वक्तव्या। तथा च तेन निर्दोषत्वेनैव विष्णोस्सिद्धत्वात्तं पक्षीकृत्य दोषित्वानुमाने धर्मिग्राहकतयोपजीव्यागमविरोध इत्यर्थः। यथोक्तमनुव्याख्याने 'आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते। न चेत्स्याद्दोषवानन्यः' इति।

ननु 'पूर्वकालैकसर्वजरत्पुराणनवकेवलास्समानाधिकरणेन' एते समानाधिकरणेन समस्यन्त इत्यनेन समासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसञ्ज्ञं स्यादित्यनेन पूर्वसूत्रे पूर्वकालैक-सर्वजरत्पुराणनवकेवला इति प्रथमानिर्दिष्टस्यैकशब्दस्योपसर्जनसञ्ज्ञायां 'उपसर्जनं पूर्वम्' - समास उपसर्जनं प्राक् प्रयोज्यम्- इत्यनेनोपसर्जनभूतैकशब्दस्य पूर्वनिपाते सति सदेकागमविज्ञेयमिति स्यादेकशाटीतिवदित्यत आह- **सङ्ख्यार्थस्यैवेत्यादिना । पूर्वकालैकेतीति ॥**

पूर्वकालैकेत्यादिसूत्रैरित्यर्थः । तेन पूर्वकालैकेत्यादिसूत्रेण समासस्यैव विहितत्वात्कथं पूर्वकालैकेति पूर्वनिपात इत्युक्तमिति शङ्काऽनवकाश इति ज्ञातव्यम् ।। **न केवलार्थ-(श्री.टि.) स्येति ।।** प्रकृते च केवलार्थः । केवलागमविज्ञेय इति वक्ष्यमाणत्वादिति भावः । केवलार्थकस्यैक-शब्दस्य पूर्वनिपातो नास्तीत्यत्र ज्ञापकमुक्तम्- **दोषैकदृगिति ।।** केवलदोषद्रष्टेत्यर्थः । अमरकोशवाक्य-मिदम् । ह्लादैकमयीमिति काव्यप्रकाशीयः श्लोकः । ह्लादः सुखं केवलाह्लादमयीमित्यर्थः । द्वितीयाया उत्तरेणान्वयः।

**(पां.टि.)** ननु मङ्गलस्य विघ्नविघातादिसाधनताया अप्रामाणिकत्वेन तस्य तत्फलकत्वानुपपत्त्या निष्फलत्वेन अकर्तव्यत्वात्, कर्तव्यत्वेऽपि वा अन्तरायविधुरतया भवदभिमतस्य आचार्यस्यान्तरायविरहोद्देशेन ग्रन्थारम्भ-कालीननारायणवन्दनरूपमङ्गलाचारानुपपत्तेः । कथञ्चित् तदुपपत्तावपि निष्प्रयोजनतया ग्रन्थे तदुपनिबन्धस्य सर्वथैवानुपपत्तेः तत्परायपद्यानर्थक्यमित्येताः शङ्काः क्रमेण परिहरन् तदुपनिबन्धपरतया आद्यपद्यं सङ्गमयति- **विघ्नविघातादिसाधनतयेत्यादिना ।।** अत्र आनन्दतीर्थमुनिः नारायणवन्दनं निबध्नातीति सम्बन्धः । अवगत-मित्यन्तेन ग्रन्थेन निष्फलत्वप्रयुक्ततदकर्तव्यत्वशङ्कानिरासः । अनेन मङ्गलस्य विघ्नविघातादिसाधनतायाः अविगीतशिष्टाचारानुमितश्रुतिबोधितत्वकथनेन मङ्गलस्य विघ्नविघातादिफलकत्वस्य सिद्धतया अकर्तव्यत्वहेतोः निष्फलत्वस्य असिद्धिव्युत्पादनात् । यद्यपि ग्रन्थकृन्मते 'प्रामाणिकत्वाच्च अस्यार्थस्य' इत्युत्तरग्रन्थपर्यालोचनया मङ्गलस्य समाप्तिफलकत्वव्युत्पादनपरजिज्ञासासूत्रीयसुधानुसाराच्च समाप्तेरेव मङ्गलफलत्वस्थित्या मङ्गलस्य विघ्नविघातादिफलकत्वाभावाद् विघ्नविघातादिसाधनतयेत्युक्तिरयुक्तेत्याभाति । तथाऽपि विघ्नविघातः आदिः कारणं यस्याः सा विघ्नविघातादिरिति विग्रहाश्रयणाद् विघ्नविघातादिपदेन समाप्तेरेव ग्रहणाद् अदोष इति ज्ञेयम् । मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिसाधनत्वस्य अङ्गीकाराद् व्यापारप्राधान्यविवक्षया इयमुक्तिरित्यप्याहुः। अन्तरायविधुरोऽपि शिष्यान् ग्राहयितुमित्यनेन द्वितीयतृतीयशङ्कयोर्निरासः । अत्र हि अन्तरायविधुरोऽ-पीत्यतःपरम् अनवरतम् ईश्वरप्रवणकायकरणवृत्तिरपीति पूरणीयम् । ततश्च आनन्दतीर्थमुनेः विलीनप्रकृतितया अन्तरायविधुरस्य तद्विरहोद्देशेन ग्रन्थारम्भकालीनमङ्गलाचारानुपपत्तावपि अनवरतम् ईश्वरप्रवणकायकरण-वृत्तित्वेन तस्य कालान्तर इव ग्रन्थारम्भकालेऽपि मङ्गलाचारसम्भवलाभात्, तेन द्वितीयशङ्कानिरासः । शिष्यान् ग्राहयितुमिति निबन्धनप्रयोजनोक्त्या च वैय्यर्थ्यप्रयुक्ततन्निबन्धनानुपपत्तिशङ्कायाः परिहार इति द्रष्टव्यम् । केचित्तु नारायणवन्दनमित्यत्र कृतमिति पूरणात् कृतं नारायणवन्दनं शिष्यान् ग्राहयितुम् उपनिबध्नातीत्यनेन शङ्काद्वयनिरासः । आचार्यीयग्रन्थारम्भकालीनवन्दनाचारस्य शिष्यशिक्षार्थत्वेन ग्रन्थोपनिबन्धनस्य च आचार्यीयग्रन्थारम्भकालीनमङ्गलाचारदर्शसन्निहितशिष्यशिक्षणार्थकतया मङ्गलाचारतन्निबन्धनयोर्द्वयोरपि शिष्यशिक्षैकप्रयोजनकत्वेन तदनुपपत्तेरप्रसरादित्याहुः ।

**।। लक्षणान्याहेति ।।** अनेकलक्षणाभिधानं च विभवादिति ज्ञेयम् । ननु मूले निर्दोषाशेषसद्गुणत्वरूपैक-लक्षणाभिधानात् लक्षणमाहेत्येव तदवतारस्य कर्तव्यत्वात् न लक्षणान्याहेति तदवतारो युक्त इत्यत आह- **निर्दोषश्चासाविति ।।** यद्वा निर्दोषाः अशेषाः सन्तो गुणाः यस्येति निर्दोषत्वस्य गुणविशेषणत्वे सत्पद-वैयर्थ्यापत्तेः, उदाहरिष्यमाण 'वर्जितः सर्वदोषैर्यः' इत्यादिप्रमाणासङ्गतिप्रसङ्गाच्च, तदुभयानुरोधेन इदं **(पां.टि.)** विग्रहप्रदर्शनम् । रागादिदोषराहित्यस्य निर्दोषपदार्थत्वे तस्येतरसाधारणत्वेन लक्षणत्वानुपपत्तेः अन्यथा व्याख्याति- **अत्रेति ।।** पारतन्त्र्यराहित्यादीत्यादिपदेन अपर्याप्तशक्तित्वासर्वज्ञत्वादिराहित्यादिपरिग्रहः। **तदर्थमेवेति ।।** परमात्मनि एकैकगुणस्यानन्यसाधारणत्वेन व्यावर्त्याभावाद् अनन्तलक्षणसूचनमेव तत्पद-प्रयोगफलमित्यर्थः । उत्पत्त्यादीत्यादिपदेन पारतन्त्र्यापूर्णत्वादेर्ग्रहात् तद्राहित्यवाचिना सच्छब्देनैव लक्ष्म्यादि-व्यावृत्तिसिद्धेर्न तदर्थम् अशेषपदमिति भावः । **व्यवहारादिति ।।** वैशेषिकादीनामिति शेषः **।। सदितीति ।।** गुणविशेषणमुपात्तमिति शेषः । व्यावृत्त्युपादेयताप्रयोजकरूपवत्त्वलक्षणस्यैव सत्त्वस्य अत्र विवक्षितत्वात् तेन तद्व्यावृत्तिरिति भावः । ननु दुःखादेः स्वरूपतो दोषत्वेन गुणताभावात्, वैशेषिकादिव्यवहारस्य च स्वसङ्केत-मात्रमूलकत्वेन अप्रयोजकत्वात्, गुणपदेनैव तद्व्यावृत्तिसिद्धेः न तदर्थं सत्पदोपादानम् इत्यरुचेः अर्थान्तरमाह- **अथ वेति ।।**

यत्त्वत्र उत्पत्त्यादिराहित्यं पराधीनविशेषावाप्तिलक्षणोत्पत्त्यादिराहित्यं विवक्षितम् । अभूत्वाभावित्वरूपो-त्पत्त्यादिरहितगुणवत्त्वस्य चित्प्रकृत्यादिसाधारणतया लक्षणत्वासम्भवादिति केषाञ्चिद् व्याख्यानं, तत्र उत्पत्त्या-दीत्यादिपदगृहीतपारतन्त्र्यादिरहितगुणवत्त्वस्य भगवन्मात्रनिष्ठत्वेन तदसाधारणत्वेन यथाश्रुते दोषाभावात् ।

**।। एतल्लक्षणेति ।।** निर्दोषाशेषसद्गुणसूचितानन्तलक्षणेत्यर्थः । नन्वत्र क्षराक्षरवैलक्षण्यवद् जडवैलक्षण्यम् अवश्यं वाच्यम् ।

तस्यापि उक्तलक्षणसम्भावकत्वात् । तत्किमिति तस्यासङ्कीर्तनम् । अथ सम्भावनाया यत्किञ्चित् सम्भावकोक्तावपि सिद्धेः तदनुक्तिरिति मन्यसे तर्हि क्षरवैलक्षण्येनैव वाऽक्षरवैलक्षण्येनैव वा तत्सिद्ध्या तन्मात्रस्य वक्तव्यत्वोपपत्त्या उभयग्रहणस्यापि आनर्थक्यापातात् । यदि च विनिगमनायां कारणाभावाद् उभयग्रहणमिति मन्यसे तर्हि तत एव जडवैलक्षण्यमपि वक्तव्यमित्यत आह- **क्षराक्षरपदाभ्यामिति ॥** शरीरक्षरणवद्ब्रह्मादि-तदक्षरणवच्चेतनप्रकृतिवाचिक्षराक्षरपदाभ्यां जडमपि उपलक्ष्यत इत्यर्थः ।

न चात्र क्षराक्षरपदयोः अन्यतरस्य जडोपलक्षकत्वाश्रयणेनैव जडजीवप्रकृतिभ्योऽत्यन्तविलक्षणत्वरूपा-भिलषितवाक्यार्थनिर्वाहसम्भवात् किमिति पदद्वये लक्षणाश्रयणमिति वाच्यम् । न्यायनये बहुव्रीहौ विनिगमना-विरहेण पदद्वये अन्यपदार्थलक्षणावद् इहापि पदद्वये तदुपपत्तेः । किं चात्र क्षरशब्देन क्षरसम्बन्धिमहत्तत्त्वादि-कार्यजातस्यैव अक्षरशब्देन तत्सम्बन्धिजडप्रकृत्यादेरेव लक्षणा न्याय्या । अभिमानिवाचिक्षराक्षरपदाभ्यां तदभिमन्यमानलक्षणायां तद्बीजभूतसाक्षात्सम्बन्धलाभात् । तदुभयलक्षणायां साक्षात्सम्बन्धालाभात् । सम्भवति च साक्षात्सम्बन्धे परम्परासम्बन्धानुसरणस्य अन्याय्यत्वात् । अत्र लक्ष्यत इत्येवोक्ते मुख्यार्थत्यागेन जडमात्र-विलक्षणत्वलाभेऽपि क्षराक्षरविलक्षणत्वालाभात् तदर्थमुपलक्ष्यत इत्युक्तम् । तेनाजहत्स्वार्थलक्षणा सिद्धा भवति । अपिशब्दस्तु क्षरपदेन तत्सम्बन्धिनः अक्षरपदेन तत्सम्बन्धिनः उपलक्षणं भवतीत्येवं सम्भावनार्थः । 'अपिः पदार्थसम्भावना' इति पाणिनिस्मृतेः । योजना तु उपलक्ष्यत इत्यपि सम्भावितम् । लक्षणामूलभूतान्तरङ्ग-**(पां.टि.)** शक्यसम्बन्धलाभात् । न च लाक्षणिकप्रयोगे प्रयोजनाभाव इति शङ्क्यम् । अत्यन्तपराधीनत्वज्ञापनाय तत्सम्भवात् । तदुक्तम् । 'यतोऽत्यन्तपराधीनं चेतनादप्यचेतनम्' इति प्राञ्चः । नव्यास्तु- उपलक्षणा च गौणी चेत्यादौ उपलक्षणाशब्दस्य लक्षणायामपि प्रयोगाद् उपलक्षणाशब्दो लक्षणापर एव । तेन उपलक्ष्यत इत्यनेनैव अजहत्स्वार्थलक्षणालाभादपिशब्दवैय्यर्थ्यमिति शङ्कानिरासः । अपिशब्दमहिम्नैव तल्लाभात् । योजना तु न केवलं क्षराक्षरपदाभ्यां क्षराक्षरे वचनवृत्त्या अभिधीयेते । किं नाम? जडं लक्ष्यतेऽपीति । न च युगपद्वृत्तिद्वयप्रसङ्गः, सिद्धान्ते च तस्य अदोषत्वादित्याहुः ।

तदुभयमप्यसत् । 'ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात् क्षराः' इत्याद्युत्तरपरिच्छेदस्थमूलवाक्यव्याख्याऽ-नुरूपया 'क्षरणं जीवरूपस्य न सम्भवति इत्यतः शरीरेत्युक्तम् । स्वनाशेन स्वामिनोऽपि विनाशोपचारो लोके दृश्यते' इत्युत्तरटीकया विरोधापातात् । तदनुरोधेन क्षराक्षरशब्दयोः ब्रह्मादिचेतनेषु मुख्यवृत्त्यभावसिद्धेः। तस्माद् उत्तरटीकानुसारेण विनाश्यविनाशिजडवाचकयोः क्षराक्षरशब्दयोः ब्रह्मादिचेतनेषु लक्षणैव । अपिशब्दस्तु न केवलं क्षराक्षरपदाभ्यां क्षराक्षरे लक्ष्येते किं नाम? जडमपि लक्ष्यत इति समुच्चयार्थ एव । उपलक्षणाशब्दस्य लक्षणापरतायाः उक्तरीत्यैव सिद्धेः । न च क्षराक्षरशब्दाभ्यां मुख्यवृत्त्यैवोक्तोभयजडग्रहसम्भवात् तत्र तल्लक्षणाश्रयणमनर्थकमिति वाच्यम् । 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ मुख्यार्थभूतकाकस्य काकपदेन लक्ष्यत्ववद् वृत्तिद्वयविरोधपरिहाराय स्वार्थभूतस्यापि जडस्योप-लक्ष्यत्वलाभसम्भवात् । यद्यपि च गङ्गायां मत्स्यो घोषश्च इत्यादौ तद्दर्शनात् पङ्कज(वृत्तिद्वयपरिहाराय स्वार्थीभूतस्यापि)पदेन रूढ्या पद्मत्वजातेर्योगेन पङ्कजननस्य प्रतीतिदर्शनाच्च न ग्रन्थकृन्मते युगपद्वृत्तिद्वयविरोधो दोषः । तथाऽपि तद्दोषत्ववादिमतेनेदमभिधानम् । यद्यपि च काकेभ्यो दधि रक्ष्यतामित्यत्रेवाजहत्स्वार्थलक्षणाश्रयणे शक्यलक्ष्यसाधारणदध्युपघातकत्वादिधर्मेण काका-काकसमुदायस्योपस्थितिवद् इहापि शक्यलक्ष्यसाधारणयत्किञ्चिद्धर्मेणैव तदुभयोपस्थितेः जडजीवप्रकृति-भ्योऽत्यन्तविलक्षणत्वरूपविवक्षितार्थलाभः । तथाऽपि चित्रगुलम्बकर्णादिशब्देष्विवासाधारणधर्मपुरस्कारेणापि शक्यलक्ष्यार्थोपस्थितिसम्भवाद् उक्तविवक्षितार्थलाभ इति द्रष्टव्यम् । क्षराक्षरे समतीत इति द्वितीयासमासे प्रथमा-निर्दिष्टतयोपसर्जनस्य क्षराक्षरशब्दस्य पूर्वनिपातप्रसङ्गाद् बहुव्रीहिरयमित्याह- **समतीते क्षराक्षरे येनेति ॥** अन्यपदार्थस्य कर्मत्वे विरुद्धता स्याद् इति भावेन येनेत्युक्तम् । क्षराक्षरयोः एतद्ध्वस्तत्वप्रतीतिनिवृत्त्यर्थ-मतीतशब्दार्थमाह- **अतिक्रान्ते इति ॥** अत्यन्तेति संशब्दार्थकथनम् । अत्र जडस्य आदौ ग्रहणं तदुभयापेक्षया अत्यन्तवैलक्षण्यद्योतनायेति प्राञ्चः । वस्तुतस्तु अप्राधान्यक्रमेण अयं निर्देशः । जडस्य मुख्यार्थत्वं जीवप्रकृत्योस्तु तल्लक्ष्यत्वम् इति ज्ञापनाय जडस्य प्रथमं निर्देश इति वा ।

ननु वेदात् निर्दोषत्वादिना प्रतीतिमात्रेण न नारायणस्य निर्दोषत्वादिसिद्धिर्भवितुमर्हति । तथा सति भगवदत्यन्ताभिन्नतदवताररामकृष्णादिविषयकतद्दर्शिपुरुषप्रत्यक्षानुमानाभ्यां दोषवत्त्वादिनाऽपि प्रतीतत्वेन नारायणस्य सदोषत्वादेरपि सिद्धिप्रसङ्गात् । न च 'निरनिष्टो निरवद्यः' इत्यागमविरुद्धत्वेन प्रत्यक्षादेरप्रामाण्यात् **(पां.टि.)** न तेन तत्सिद्धिरिति वाच्यम् । प्रत्यक्षादितोऽनधिकबलस्याऽगमस्य प्रत्यक्षबाधाक्षमत्वात् । अन्यथा तत्त्वमस्याद्यागमस्यापि प्रत्यक्षबाधकत्वापत्त्या प्रत्यक्षविरोधेन तस्य प्रतीतार्थं परित्यज्य अर्थान्तरकल्पनानव-काशप्रसङ्गादिति भावेन शङ्कते- **प्रत्यक्षानुमानाभ्याम् इति ॥**

'अवतारादिदृष्टौ स्यादागमस्योपजीव्यता। आगमेन हि विष्णुत्वं ज्ञात्वा' इत्यादिज्ञानपादीयमनुव्याख्यानं मनसि निधाय एकपदसूचितं परिहारमाह- **आगमानपेक्षस्येति ॥**

अयं भावः। सिद्धान्ते प्रत्यक्षविरोधेन आगमस्याप्रामाण्याभिधानेऽपि प्रकृते आगमविरोधेन प्रत्यक्षस्य अप्रामाण्याभिधानं न विरुद्धम्। न हि निर्विशेषयोः प्रत्यक्षागमयोः परस्परं बाध्यबाधकभावोऽभिहितः। किं तु उपजीवकत्वेन बाध्यत्वम् उपजीव्यत्वेन बाधकत्वम्। ततश्च तत्त्वमस्याद्यागमं प्रति प्रत्यक्षस्य धर्मिग्राहकतया उपजीव्यत्वात्। उपजीव्यतया प्रबलप्रत्यक्षेणोपजीवकतया ततो दुर्बलस्याऽगमस्य युक्तो बाधः। प्रकृते तु दोषग्राहकप्रत्यक्षस्याऽगमं प्रति उपजीव्यत्वाभावेन तदपेक्षया प्रबलत्वाभावात्। आगमस्यैव च दोषग्राहकप्रत्यक्षं प्रत्युपजीव्यत्वेन प्रत्यक्षापेक्षया प्रबलत्वात् तेनैव तद्बाधो युक्तः। तथा हि। रामकृष्णादिदोषग्राहिणा प्रत्यक्षेण त्रेधा उत्पत्तव्यम्। विष्णुरयं दोषवानिति वा विष्णोरन्योऽयं दोषवानिति वा कश्चिदयं दोषवानिति वा। प्रकारान्तराभावात्। तत्र द्वितीयतृतीययोः विष्णोर्दोषवत्त्वे न तदुद्भावयितुं शक्यम्। विष्णुर्दोषवानिति तेनानवगाहात्। वस्तुवृत्त्याऽसौ विष्णुरेवेति चेत्, किं तावता। न हि वस्तुवृत्तिसहितं यत्किञ्चिद् ज्ञानं विवक्षित-विशेषं साधयति अतिप्रसङ्गात्। तस्माद् आद्य एव अङ्गीकर्तव्यः। तत्र विष्णुत्वं सर्वथा ज्ञातव्यम्। न च यथा पटः छिन्नो दग्धो मलिन इति परानुपजीविना प्रत्यक्षेण गृह्यते तथा आगमादिकमनुपजीव्य प्रत्यक्षेणैव विष्णोः सदोषत्वं ज्ञातुमशक्यम्। पटत्वस्य अवयवसन्निवेशव्यङ्ग्यस्य प्रत्यक्षतया परानपेक्षप्रत्यक्षेण तथा ज्ञातुं शक्यत्वेऽपि विष्णुत्वस्य समस्तगुणपूर्णत्वनिर्दोषत्वजगज्जन्मादिकारणत्वरूपस्य शास्त्रैकसमधिगम्यत्वेन अप्रत्यक्षतया पञ्चपलपरिमितोऽयं पटो मलिन इतिवत् केवलेन प्रत्यक्षेण विष्णुरयं दोषवानिति ज्ञातुमशक्यत्वात्। तस्मात् 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः। आविरासीत्' इत्यागमात् तदवगन्तव्यम्। तथा च दोषग्राहक-प्रत्यक्षस्य आगमोपजीव्यतायाः अङ्गीकर्तव्यत्वात् सर्वस्याप्यागमस्य एकवाक्यत्वात् सर्वरूपोपेतस्य विष्णोः निर्दोषत्वस्य प्रतिपादनात् तद्विरोधेन दोषग्राहकस्य विष्णुरयं दोषवानिति प्रत्यक्षस्य तथाविधस्यानुमानस्य अप्रमाणत्वात् न ताभ्यां सदोषत्वादिसिद्धिः। 'क च प्रत्यक्षतः प्राप्तमनुमागमबाधितम्' इति प्रत्यक्षस्य जात्यादिना प्राबल्यवचनं तु लौकिकार्थविषयम्। अत एव 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति अलौकिकार्थे आगमस्यैव जात्या प्राबल्याभिधानं सङ्गच्छते इति सर्वमनवद्यम्।

यत्तु प्रत्यक्षानुमानाभ्याम् आगमविरुद्धाकारेणापि ज्ञानजननाद् योग्यताव्यतिरेकनिश्चयात् कथं तद्विरुद्धार्थ-प्रत्यायनमागमः कुर्यात्? तस्य प्रत्यक्षापेक्षया दुर्बलत्वात् प्रत्यक्षस्य जात्यादिभिः प्राबल्यादिति प्रत्यक्षानुमाना-भ्यामिति शङ्काग्रन्थाभिप्रायवर्णनम्, तदसत्। बाधपरतया एतद्ग्रन्थयोजनायाः टीकास्थापिशब्दविरुद्धत्वेन **(पां.टि.)**अयुक्तत्वात्। तद्बलेन प्रतिपक्षपरताया एव प्राप्तत्वात्। अन्यथाऽपि ज्ञानजननस्य तदुपपादक-तयोक्तेरश्लिष्टत्वापाताच्च। यच्च अत एव 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति भगवत्पादोक्तिरपि इत्युदाहृतवाक्यस्य भगवत्पादोक्तित्ववचनम्, तदप्यसत्। तस्य ब्रह्मतर्कवाक्यत्वेन भगवत्पादवाक्यत्वा-भावात्।

ननु 'सदागमैकविज्ञेयम्' इत्यत्र 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासे एकशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वेन 'प्रथमानिर्दिष्टम्' इति उपसर्जनसञ्ज्ञायां 'उपसर्जनं पूर्वम्' इति पूर्वनिपाते सदैकागमविज्ञेयमिति स्यात्, न तु सदागमैकविज्ञेयम् इति, इत्यत आह- **दोषैकदृगिति ॥** 'पूर्वकालैक' इति निर्देशप्रयुक्तः पूर्वनिपात इति मध्यमपदलोपी समासः। ननु पूर्वकालैकेति सूत्रस्य सङ्ख्यार्थैकैकशब्दस्यैव समासविधायकत्वं कस्माद् इत्यत एकशब्दमात्रस्य समानाधिकरणशब्देन समासविधायकत्वस्य दोषैकदृगि-त्याद्यभियुक्तप्रयोगानुपपत्तिप्रसङ्गेन अयोगाद् इति भावेन उक्तम्- **दोषैकदृगिति ॥** उपलक्षणं चैतत्। तस्यैव युक्तत्वाच्चेत्यपि द्रष्टव्यम्। तथा हि। 'विशेषणं विशेष्येण बहुलम्' इत्यनेन विशेषणवाचकशब्दस्य विशेष्य-वाचकशब्देन समासे विहिते विशेषणविशेष्यशब्दयोः सम्बन्धिशब्दत्वाद् एकेनैव परस्परसमासस्य विज्ञानसम्भ-वात् पदान्तरवैयर्थ्यमित्याशङ्कायां, तेनैव विशेष्येण समासः यदि तद् विशेष्यं विशेषणमपि स्याद् इति परस्पर-विशेषणविशेष्यभावस्थल एव अनेन समासः, अत एव नीलोत्पलमित्यत्र नीलशब्दस्य पीतादिव्यवच्छेदकत्वाद् उत्पलशब्दस्य च नीलभ्रमरादिव्यवच्छेदकत्वाद् एतादृशस्थल एव अनेन समास इति इमम् अर्थं द्योतयितुं पदद्वयोपादानम् इति प्रत्युक्ते, तर्हि उभयोरपि प्रथमानिर्दिष्टत्वात् पूर्वनिपातानियमस्स्याद् इत्याशङ्कायाम्, उपसर्जनसञ्ज्ञाया अन्वर्थत्वेन अप्रधानपरत्वात्, नीलोत्पलमिति द्रव्यगुणवाचकशब्दयोः गुणवाचकस्य अप्रधानत्वेन पूर्वनिपातनियमसम्भवात्, क्रियाद्रव्यवाचकयोश्च क्रियावाचकस्य अप्रधानत्वेन पूर्वनिपात-नियमसम्भवात्, गुणवाचकयोः खञ्जकुब्जशब्दयोः, क्रियावाचकयोरपि पाचकपाठकशब्दयोः उभयोरपि अप्रधानत्वेन पूर्वनिपातानियमस्य इष्टत्वात्, द्रव्यवाचकयोरपि शिंशुपावृक्षशब्दयोः उभयोः प्रधानत्वेऽपि वृक्षत्वस्य अन्यत्रापि सत्त्वेन वृक्षशब्दस्य

बहुविषयत्वेन प्रधानत्वात् शिंशुपाशब्दस्यैव पूर्वनिपात इति न पूर्वनिपातानियम इति प्रत्युक्तेऽपि, स्नातानुलिप्त इत्यादिक्रियावाचकशब्दयोः पूर्वनिपातानियमे प्राप्ते, 'दिक्सङ्ख्ये सञ्ज्ञायाम्' इत्यनेन दिग्वाचकसङ्ख्यावाचकशब्दयोः सञ्ज्ञायामेव समासस्य नियमितत्वेनैकशाटीत्यादेश्च सञ्ज्ञात्वाभावाद् असमासे प्राप्ते, एकशब्दस्य समानाधिकरणेन समासविधानार्थं, स्नातानुलिप्त इत्यादौ पूर्वनिपातनियमार्थं च प्रवृत्तस्य पूर्वकालैकेति सूत्रस्य सङ्ख्यार्थकैकशब्दस्य समासविधायकत्वावश्यम्भावात् । ततश्च सङ्ख्यार्थकैक-शब्दस्यैव पूर्वकालैकेति सूत्रेण समासविधानेन पूर्वनिपातनियमात् न केवलार्थकैकशब्दसमासविधाने तस्य प्रवृत्तिरिति । न च केवलार्थकैकशब्दस्य विशेषणं विशेष्येणेति समासे आगमशब्दार्थस्यैव प्रधानत्वाद् आगम-शब्दस्यैव परनिपातः स्याद् इति वाच्यम् । 'राजपुरुषः' इत्यत्र राजशब्दस्येव आगमशब्दस्य अप्राधान्यविवक्षया **(पां.टि.)** पूर्वनिपातोपपत्तेः । एकत्वस्य आगमादन्यत्रापि सत्त्वेन बहुविषयत्वविवक्षया आगमशब्दस्य पूर्व-निपात इति तु तत्त्वम् । यद्वा सदागमाश्च ते एके चेति 'मयूरव्यंसकादयश्च' इति समासः । व्यंसकादिशब्देषु हि विशेषणमित्यनेन समासे तेषां गुणवाचकत्वेन अप्रधानत्वात् पूर्वनिपाते प्राप्ते गुणवचनानामपि परनिपातविधानार्थं प्रधानवचनानामपि मयूरादिशब्दानां पूर्वनिपातविधानार्थं च तस्य प्रवृत्तत्वेन प्रधानीभूतागमवचनस्यापि आगम-शब्दस्य पूर्वनिपातो युक्तः । तस्य आकृतिगणत्वेन, दोषैकदृक् पुरोभागी, ह्लादैकमयीमित्याद्यभियुक्त-प्रयोगदर्शनाच्च अस्यापि अभियुक्तप्रयोगतया तत्र अनुसन्धेयत्वात् न अनुपपत्तिः । सापेक्षत्वेऽपि एकशब्दस्य गमकत्वात् समास इति सर्वमकलङ्कम् ।

**(व्या.टि)** ननु वन्दनादिरूपं मङ्गलं नानुष्ठेयं विधिफलयोरभावात् । तथा हि । न तावद्विधिरस्ति । स हि श्रुतो वा अनुमितो वा । नाऽद्यः । 'यजेत स्वर्गकामः' इतिवत् 'वन्देताविघ्नपरिसमाप्तिकामः' इति प्रत्यक्षश्रुतेरभा-वात् । नाप्यनुमितः । तत्प्रतिबद्धलिङ्गाभावात् । न चाऽचारपरम्परया विध्य(श्रुत्य)नुमितिः । चैत्यवन्दनादावपि तत्प्रसङ्गात् । नापि शिष्टाचारपरम्परया विध्यनुमितिः । शिष्टकृताङ्गचेष्टादौ व्यभिचारात् । नापि फलम् । फलं स्वसाधने प्रवर्तयत् स्वसाधनताज्ञानद्वारा प्रवर्तयति । तत्र नेष्टत्वेनेष्टसाधनताज्ञानं प्रवर्तकम् । इच्छाज्ञान-स्याप्रवर्तकत्वात् । किन्तु स्वरूपसदिच्छाविषयसाधनताज्ञानं वक्तव्यम् । ततश्च स्वतो विघ्नविधुरस्याऽनन्दतीर्थमुनेः तद्विघातायुद्देश्याभावेनानुष्ठानमयुक्तम् । न च शिष्यशिक्षार्थं तदिति वाच्यम् । शिष्याणामिष्टसाधनताबोधनेनैव प्रवृत्त्युपपत्तेः स्वानुष्ठानपर्यन्तप्रयासवैयर्थ्यात् । न हि शिष्यपापपरिजिहीर्षया प्रायश्चित्तमनुष्ठापयन्तः तत्स्वय-मनुतिष्ठन्ति । किञ्च शिष्याणां फलं किं प्रारिप्सितपरिसमाप्तिर्वा, तद्विघ्नविघातो वा, तद्द्वारकसमाप्तिर्वा । नाऽद्यः । आरिप्सोरारब्धपरिसमाप्तेः इष्यमाणत्वेन फलत्वसम्भवेऽपि कृतदेवतावन्दनानामपि चिकीर्षितापरि-समाप्तेः अकृतदेवतावन्दनानामपि तत्समाप्तेः अन्वयव्यतिरेकव्यभिचारेण कार्यकारणभावग्रहासम्भवात् । वन्दनेन विघ्ने निवृत्ते बुद्धिवैशद्यादिकारणान्तरेण समाप्तिसम्भवाच्च । विघ्ननिवृत्त्युपक्षीणत्वेनान्यत्रानुपक्षीणा-न्वयव्यतिरेकाभावाच्च । न द्वितीयः । निर्विघ्नपुरुषस्य विघ्नाभावेन तद्विघातानुपपत्तेः । न हि सर्वोऽपि विघ्नवानेवेति नियन्तुं शक्यते । तस्य शपथनिर्णेयत्वात् । न तृतीयः । निर्विघ्नकृतौ विघ्नविघातेन विनाऽपि समाप्तिदर्शनेन तस्य द्वारत्वानुपपत्तेः । 'यदवच्छिन्नं यदवच्छिन्नं जनयित्वा यदवच्छिन्नं जनयति तदवच्छिन्नस्य तदवच्छिन्नजनने तदवच्छिन्नं द्वारम्' इति द्वारलक्षणम् । किञ्च विघ्नाभावस्य समाप्तिकारणत्वे प्रतिबन्धकाभावस्य कारणत्वा-पत्तिः । न चेष्टापत्तिरिति वाच्यम् । प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपतया प्रतिबन्धकाभावत्वेन कारणत्वेऽन्योन्याश्रयापत्तेः । किञ्च प्रतिबन्धकाभावस्य कारणत्वे उत्सर्गापवादौ क्वापि न स्याताम् । तथा हि । सत्यां सामग्र्यां कार्यानुत्पादव्याप्यत्वं प्रतिबन्धकत्वम् । प्रतिबन्धकाभावस्य कारणत्वे कारणाभावादेव कार्याभावसम्भवे प्रतिबन्धकवाचोयुक्तिः रिक्ता स्यात् । अतो विघ्नाभावो न प्रतिबन्धकाभावत्वेन समाप्ति-कारणमिति द्वारत्वानुपपत्तिः । स्वतस्सिद्धविघ्नविरहवता कृतमङ्गलस्य विघ्नध्वंसकारणत्वाभावेन तज्जन्यत्वा-**(व्या.टि)** भावाच्च । विघ्नोत्सारणासाधारणकारणत्वस्यैव मङ्गलत्वरूपत्वेन तेन रूपेण विघ्नोत्सारणासाधा-रणकारणत्वे अवच्छेद्यातिरिक्तावच्छेदकाभावेनाऽत्माश्रयापत्तेश्च । कायिकादिविजातीयक्रियासाधारण-स्यैकस्यान्यस्य दुर्वचत्वाच्च । मङ्गलत्वस्य जातित्वे मानसत्वादिना साङ्कर्यापत्तेः । अतो मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिः फलमिति रिक्तं वचः ।

गौरीकान्तस्तु 'विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाभावभिन्नत्वे सति विघ्नध्वंसासाधारणकारणत्वं मङ्गलत्वम्' इत्याह । तन्न । उक्तदोषापरिहारात् । विघ्नध्वंसप्रागभावेऽतिव्याप्तेश्च । न च विघ्नध्वंसप्रागभावो विघ्न एवेति वाच्यम् । भावस्याभावत्वानुपपत्तेः । दुरितादिजन्यस्य विघ्नस्यानादित्वाभावेनानादिसान्तत्व-लक्षणप्रागभावत्वस्य सुतरामयुक्तत्वाच्च । न च तत्प्रागभावोऽपि तद्ध्वंसप्रागभाव इति वाच्यम् । एक-प्रतियोगिकभावाभावोभयविधप्रागभावकल्पनेऽदृष्टकल्पनाप्रसङ्गात् । तत्प्रागभावस्य

तन्निरूप्यत्वेऽपि तद्ध्वंसा-निरूप्यत्वाच्च । तत्प्रागभावस्यापि तद्ध्वंसप्रागभावत्वे प्रागभावनाशे प्रतियोग्युत्पत्तिनियमेन तत्प्रागभावनाशे तदुत्पत्तिरिव तद्ध्वंसस्यापि तदैवोत्पत्तिप्रसङ्गाच्च । प्रतियोगितद्ध्वंसयोरेकप्रागभावोत्पत्तिकत्वेन प्रतियोगि-ध्वंसयोरभेदापत्तेश्च । प्रतियोगिप्रागभावस्य प्रतियोगिनाऽन्यथासिद्धेश्च । तत्प्रागभावस्य तद्ध्वंसाव्यवहित-प्राक्कालीनत्वाभावेन कारणत्वायोगाच्च । भावस्याभावव्यापारत्वकल्पनेऽदृष्टकल्पनापत्तेश्च । भावाभावसाधारण-स्यैकस्य प्रागभावत्वस्य दुर्वचत्वाच्च । तस्मात्प्रतियोगिभिन्नः प्रागभाव इति तत्रातिव्याप्तिः सुस्थैवेति । प्रतिबन्ध-काभावस्य कारणत्वाभावादेव तद्वारणे तद्भिन्नपदवैयर्थ्याच्च । विघ्नस्य विघ्नध्वंसकत्वे विघ्नो विघ्नध्वंसक इति प्रयोगप्रत्ययौ स्याताम् । न चेष्टापत्तिरिति वाच्यम् । ध्वंसनक्रियां प्रति एकस्यैव विरुद्धे कर्तृकर्मत्वे स्याताम् । किञ्च प्रतियोगिन इवाव्यहितपूर्वक्षणमात्रसम्बन्धिनोऽन्यस्यापि दण्डादेः कारणताऽऽपातेन कार्यसहभूतत्वे सतीति भावकारणलक्षणे विशेषणाऽवश्यकत्वेन प्रतियोगिनो न क्वापि ध्वंसकारणत्वमिति विघ्नस्य कारणत्वाभावेनैवा-तिव्याप्तिविरहे तद्भिन्नत्वविशेषणस्यापि वैयर्थ्याच्चेत्यलमतिविस्तरेण । तस्मान्नानुष्ठानं नतरां तन्निबन्धनं युक्तम् इत्याशङ्क्य परिहरति- **विघ्नविघातादीति ॥** विघ्नन्तीति विघ्नाः प्रतिबन्धकाः । मूलविभुजादित्वात्कः । 'गमहन' इत्युपधालोपः । 'हो हन्तेः' इत्यनेन कुत्वम् । तेषां विघातः प्रतिहतिः । विपूर्वात् हन्तेर्भावे घञि कुत्वे 'हनस्त' इति तः । आदिना समाप्तिप्रचयादि ।

केचित्तु विघ्नविघात एवाऽदिः कारणं यस्याः समाप्तेः तत्साधनतयेत्यर्थ इत्याहुः । तदसत् । विघ्नाभाव-कारणत्वे उत्सर्गापवादौ क्वापि न स्यातामित्युत्तरटीकाविरोधात् । शब्देनैव प्रचयग्रहणसौलभ्ये उपलक्षण-करणासम्भवाच्च । साधनतयेत्यवगतमित्यनेनान्वयि । शासतीति शिष्टाः धर्मप्रवक्तारः । शासेः कर्तरि क्तः । 'शास इदङ्हलोः' इतीत्वम् । तेषामाचारः धर्मबुद्ध्याऽनुष्ठानम् । तत्परम्परेत्यर्थः । तेन तत्कृतवन्ध्यक्रिया-व्युदासः । अवगतमिति नारायणवन्दनविशेषणम् । तच्च ग्रहेर्बुद्ध्यर्थत्वेन 'गतिबुद्धि' इत्यनेन णौ द्विकर्मकत्वात् कर्मतयाऽन्वेति । वन्दनं शिष्यान् ग्राहयितुं इत्यन्वयः । साधनतयाऽवगतमिति फलाभावो निरस्तः । आचार-**(व्या.टि)** परम्परेति प्रमाणाभावश्च **॥ अन्तरायविधुरोऽपीति ॥** विलीनप्रकृतितयेति शेषः । भगवानिति पूजार्थम् **॥ सदा वन्द इत्यनेनेति ॥** 'सर्वैकान्यकिंयत्तदः काले दा' इत्यतः सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यादिति दाप्रत्ययं विधाय 'सर्वस्य सोऽन्यतरस्यां दि' दाप्रत्यये परे सर्वस्य सो वा स्यात् । सर्वस्मिन् काले सदा सर्वदेत्युभयोदाहृतत्वात् साधुः । सार्वकालिकवन्दनकर्तृकर्तृकं वर्तमानवन्दनमित्यर्थः । तेन सर्वकालार्थ-तद्धितेन वन्द इति वर्तमानार्थकलडन्तेनानन्वय इति निरस्तम् । ममेति नारायणवन्दनेन प्रयोजनोद्देशेन च सम्बध्यते । तेन मदीयं वन्दनं मदीयप्रयोजनोद्देशेन नेति विशेषं निषेधता शिष्यानुजिघृक्षया परकीयप्रयोजन-मुद्दिष्टमनुज्ञायते । 'विशेषनिषेधे शेषाभ्यनुज्ञानम्' इति वचनात् । तेन ग्रन्थकर्तुरेकान्तत्वं परानुजिघृक्षुत्वं च सूचयति । यथोक्तं 'एकान्तानां न कस्यचित् । अर्थे नारायणो देवः' इति 'दयापरा भागवता हि लोके' इति च । अत्रायं परिहारक्रमः । मङ्गलमनुष्ठेयं विहितत्वादित्यनुमानं मानम् । यत्त्वत्र मङ्गलं नानुष्ठेयं विध्यभावा-दित्यनुमाय स हि (विधिः) श्रुतो वा अनुमितो वेति विकल्पितम् । तत्राऽद्यं तावदङ्गीकुर्मः । 'स्तुहि श्रुतम्' इति ऋग्वेदे यजुषि च लोटा प्रत्यक्षं स्तुतिरूपमङ्गलविधानात् । तथा 'नमो देवेभ्यः' इति मन्त्रस्य ब्राह्मणे 'नमो देवेभ्यः इत्याहूय (इत्याह) याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनोऽनार्त्यै' इति नमस्कार-विधानाच्च । न च नात्र विधिः प्रत्यक्ष इति वाच्यम् । 'उपांशुयाजमन्तरा यजति अजामित्वाय' इतिवदनार्त्यै इति फलश्रवणेन पञ्चमलकारोपपत्तेः । द्वितीयमप्यङ्गीकुर्मः । शाखान्तराधिकरणन्यायेन अदृष्टे तच्छ्रुतीनां शिष्टाचारेणापि श्रुत्यनुमानसम्भवात् । तथा हि । मङ्गलं श्रुतिविहितं शिष्टाचारपरम्परितत्वात् होलाकादिवदित्यनुमानसम्भवात् । यथोक्तं मीमांसकैराचाराधिकरणे- 'आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् । तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते' इति ।

यच्चोक्तं फलाभावादिति तदप्यसत् । 'नमस्करोत्यात्मनोऽनार्त्यै तस्मा एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽ-नार्त्यै । तेभ्य एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रियमाशिषमेवैतामाशास्ते इन्द्रियस्य वीर्यस्यानिर्घाताय' इत्यादौ कामपदेनेव चतुर्थ्याऽपि 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादाविव विघ्नविघातादेः फलत्वोक्तेः । किञ्चाफले प्रेक्षावत्प्रवृत्त्ययोगेन शिष्टाचाराच्च मङ्गलस्य फलसाधनत्वं ज्ञायते । तथा हि । मङ्गलं फलसाधनं फलोद्देशेन शिष्टाचरितत्वात् । न चासिद्धो हेतुः । ऋचि 'अग्निमीळे' इत्याद्ये 'नमो महद्भ्यः' इति मध्ये 'नमः प्रवक्त्रे' इत्यन्ते अन्यत्र 'नमः परमऋषिभ्यः' इति 'नमो वाचे' इति च श्रवणात् । यजुषि चाऽद्येऽनुवाके 'नमोऽग्रयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे' इति मध्ये 'हविष्मन्तो नमसा विधेम ते' इति मध्ये सप्तमेऽनुवाके 'नमोऽग्नये पृथिविक्षिते नमो वायवेऽन्तरिक्षक्षिते नमः सूर्याय दिविक्षिते' इति शतरुद्रीये च 'नमस्ते रुद्र' इत्यादौ 'नमो भवाय च' इति मध्ये 'तेभ्यो नमस्ते नो मृडयन्तु' इत्यन्ते । उपनिषदि 'नमो ब्रह्मणे । नमस्ते वायो' इत्यादौ अन्ते च 'भूयिष्ठां ते नम उक्तिं विधेम' इत्यन्ते, भारते च 'नारायणं सुरगुरुम्' इत्यारभ्य 'वन्दे भवघ्नम्'

इति, भागवते च 'जन्माद्यस्य इत्यारभ्य, **(व्या.टि)** सत्यं परं धीमहि' इति आदिमध्यावसानेषु वैदिकस्मार्ताचारात् । तेन जानीमः सफलं मङ्गलमिति । यथोक्तं महाभाष्ये- 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि कार्याण्यविघ्नं परिसमाप्यन्ते प्रचीयन्ते च' इति । आचारश्च स्वार्थे स्मृतिवत् स्वतन्त्रं प्रमाणम् । 'प्रेक्षावत्प्रवृत्त्या सफलत्वे सिद्धे' इति टीकोक्तेः । न च दृष्टान्तोऽसिद्धः । सूत्रकृता 'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्' इति द्विवचनेन श्रुतिस्मृत्योः समकक्षतया निर्देशात् । श्रौतार्थे 'स्मरन्ति च' इति चशब्देन समुच्चयीकरणात् । अस्वातन्त्र्ये समुच्चयीकरणायोगात् । न हि सम्भवति घटः सन् दर्शनात्सन्निकर्षाच्चेति । अनुवादवत् पूर्वप्रमाणावच्छिन्नतयाऽर्थानवगाहनाच्च । अत एव 'न विलक्षणत्वात्' इति सूत्रव्याख्यानावसरे नित्यत्वात्तदनुसारित्वाच्चेत्येवमुक्तम्, न श्रुत्यनुमापकत्वादिति । संवादमात्रं त्वविरुद्धम् । श्रुतेः श्रुतिसंवादवत् । 'यद्वै किञ्च मनुरवदत्तद्भेषजम्' इति श्रुत्यैव तदुक्तार्थसत्यत्वोक्त्या स्वातन्त्र्योक्तेश्च । तद्वदाचारोऽपि । अत एव 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' इति चशब्देन स्मृत्याचारौ समुच्चितवान् । अत एव गीताभाष्ये 'आचाराच्चैवमित्याह- कर्मणैव हि' इति चशब्दः प्रयुक्तः । अत्र चाऽचारपरम्परावगतमित्यवोचत् न त्वनुमितश्रुत्यवगतमिति । तेन चाऽचारात् श्रुतिमनुमिमानाः परे निरस्ता वेदितव्याः । आस्तां श्रुत्यनुमानम् । स्मृत्यनुमानद्वारीकरणमत्यन्तायुक्तम् । स्वत एवार्थप्रत्यायनसम्भ-वात् । यच्चोक्तं फलं किं स्वनिष्ठं परनिष्ठं वेति तत्रेदमुत्तरम् । फलवत्त्वमात्रं प्रवृत्तौ प्रयोजकं न तु स्वफलवत्त्वं गौरवात् । अव्यापकत्वेन असम्भवाच्च । शास्त्रदेशितं फलं प्रयोक्तरीत्यौत्सर्गिकम् । अपवादे परनिष्ठत्वस्यापि ग्राह्यत्वात् । अत एव पूर्वतन्त्रे जातेष्ट्यधिकरणे- 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति जातेष्टिं प्रकृत्य 'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति श्रुते पुत्रपूतत्वादौ वैयधिकरण्ये-नाफलत्वमाशङ्क्य श्रुत्यैव 'यस्मिन् जातः' इति जातमात्रे इष्टिविधानात् पुत्रपूतत्वादिकं व्यधिकरणमपि फलमित्यु-क्तम् । इयांस्तु विशेषः । जातेष्ट्या पितृकृतयैव स्वयं पूतो भवति न स्वयं यजति । इह तु स्वयमनुष्ठायैव निर्विघ्नो भवतीति । अत्र विघ्नस्य प्रतिबन्धकापरपर्यायस्य दुश्चरितनिमित्तत्वाद् धर्मप्रवणे मुनावसम्भवः । 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चितामेति' इत्युक्तेः । ऋजुत्वाच्च । 'ऋजूनामेक एव' इत्युक्तेः । प्राणावतारत्वाच्च न स्वनिष्ठनिवर्तनीयविघ्नादि । प्राणस्य 'यथा लोष्ठमाखणमश्मानमृत्वा विध्वंसेतैवम्' इति पापालेपोक्तेः । पर-निष्ठस्यापि पुत्रपूतत्वस्य पितुरिष्टत्वेन फलत्ववत् शिष्यविघ्नविघातादेरपि आचार्योद्देश्यत्वेन फलत्वसम्भवाच्च । अतः 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' इति भगवद्गीतोक्तदिशा भगवदाचार इव भागवताचार्याचारोऽपि लोकसङ्ग्रहार्थ एव । न स्वगतफलार्थः । यथोक्तं भागवते 'न धीर्मय्येक-भक्तानामाशीर्भिर्भिद्यते क्वचित्' इति । तदेतत्स्पष्टमुक्तं 'नमस्काराधिकारादिग्रथनसूचने शिष्यशिक्षार्थम्' इति ।

यच्चोक्तं शिष्याणामपि किं फलम् इत्यादि तत्रेशितुरिच्छानुसारेण यथायथं सर्वं फलमिति ब्रूमः । न चैकस्यानेकफलकत्वं न दृष्टचरमिति वाच्यम् । स्वर्गार्थतया श्रुतस्यापि दर्शादेः 'कामाय कामाय प्रयुज्यते सर्वेभ्यो **(व्या.टि)**हि कामेभ्यो यज्ञः प्रयुज्यते' इति सर्वकामार्थत्वोक्तेः । 'अग्निहोत्रं जुहोति' इति स्वर्गार्थस्याग्निहोत्रस्य 'दध्नेन्द्रियकामस्य', 'पयसा पशुकामस्य', 'यवाग्वा ग्रामकामस्य' इति नानाफलार्थेनानेकगुणविधानात् । काम्येष्टिकाण्डे प्रजार्थमैन्द्राग्नादीष्टिं विधाय पुनः फलान्तरार्थं विधानदर्शनात् । न च निर्विघ्नपुरुषकृतस्या-तत्फलत्वेन व्यभिचारान्न तत्फलत्वमिति वाच्यम् । अदग्धगृहपुरुषकृतक्षामवत्या वैयर्थ्ये गृहदाहवत्कृताया अपि तत्प्रसङ्गात् । अतो यथेच्छं फलमिति सिद्धम् ।

यच्चोक्तं मङ्गलत्वस्य जातित्वे मानसत्वादिना साङ्कर्यापातात्तेन विघ्नोत्सारणासाधारणकारणत्वस्यैव मङ्गलत्व-रूपतया वक्तव्यत्वेन तेन रूपेण विघ्नोत्सारणकारणत्वे आत्माश्रयादीति । तन्न । मङ्गलशब्दव्यवहार्यत्वस्यैव मङ्गलत्वरूपत्वात् । यथा पूर्वतन्त्रे उत्तमामन्त्रणस्य तत्त्वातत्त्वादेः परस्पराव्यापकत्वेन मन्त्रप्रसिद्धिरेव मन्त्रलक्षणं, यथा वा स्तुतिनिन्दापरकृतिपुराकल्पादिरूपविजातीयवाक्यजातस्यार्थवादप्रसिद्धिरेव लक्षणं, तथाऽत्रापि मङ्गलत्वप्रसिद्धेरेव लक्षणत्वे आत्माश्रयादिगन्धाभावेन तस्यैव सम्यक्त्वात् । वस्तुतस्तु 'मगि समर्पणे' इत्यतः 'मङ्गेरलच् मङ्गलम्' इति शाकटायननिर्वचनेन 'कल्याणं मङ्गलं शुभम्' इत्यभिधानेन च शुभमेव मङ्गलम् । तत्कारणत्वात् साधने ताच्छब्द्यम् आयुर्घृतमितिवत् । न तु विघ्नोत्सारणासाधारणक्रिया । साधारणकारणे, द्रव्ये च नारायणे मङ्गलानां च मङ्गलमिति प्रयोगादिति सङ्क्षेपः । केचित्तु ग्रन्थकर्तुरेव शङ्कितविघ्ननिरासाय मङ्गलाचरणरूपप्रयत्न इति व्याख्यन् । तत् तत्त्वविप्लुतेः प्रमाद इति **मङ्गलवादः समाप्तः** ।

ननु वन्दनम् अभिवादनं स्तुतिर्वा । नाऽद्यः । तस्य 'नमो भवाय' इत्यादाविव गुणाभिधानमन्तराऽपि सम्भवात् । न द्वितीयः । गुणविशिष्टगुण्यभिधानरूपस्तुतेर्गुणान्तरोपादानेनापि सम्भवात् नियमेनैतद्वि-शेषणत्रयोपादानवैयर्थ्यम् इत्याशङ्क्य तदुपयोगकथनेन

तत्त्रयस्यावश्यम्भावमुद्भावयति- **नानिर्धारित-स्वरूपेत्यादिना ॥** नानिर्धारितस्येत्येवोक्तेऽसम्भवः। केनापि रूपेण सर्वस्यापि निश्चितत्वात्। न हि सर्वेणापि रूपेण सर्वं सन्दिग्धम्। किन्तु यत्र सादृश्यादिप्रतिबन्धः तेनैव रूपेण। अतो नानिर्धारितस्वरूपस्येत्युक्तम्। स्वम्- असाधारणं रूपं- धर्मो यस्येति। रूपशब्दस्य स्वपरसाधारणत्वात् स्वेति। तथा च स्मृतिः 'यस्य गोत्रं न जानाति नाम रूपं त्रिपूरुषम्। तस्य कन्याप्रणयनं नमस्कारं च वर्जयेत्' इति ॥ **लक्षणेनेति ॥** 'पृथग्वि-नानानाभिस्तृतीयाऽन्यतरस्याम्' इति विनायोगे तृतीया। निर्दोषत्वस्य गुणविशेषणत्वे सच्छब्देन पुनरुक्तिम्, धर्मात्मनैव निर्दोषत्वभ्रमं च, तदर्थान्तरोक्तावपि लक्षणैक्यभ्रमं च, लक्षणैक्ये च लक्षणान्याहेत्यवतारासङ्गतिम्, 'वर्जितः सर्व' इत्युदाहरिष्यमाणमानानामसङ्गतिं च परिहर्तुं विवक्षितसमासे विग्रहं ग्राहयति- **निर्दोषश्चासा-विति ॥** तथाऽपि लक्षणद्वयमेव स्यादित्यतः समस्यमानपदे प्रत्येकमनन्तलक्षणपरतया व्याचष्टे- **निर्दोष-ग्रहणेनेत्यादिना ॥**

ननु किमिदं निर्दोषत्वम्। यत्किञ्चिद्दोषाभावो वा यावद्दोषाभावो वा। आद्येऽप्यन्यदीयदोषाभावो वा तत्सजातीयदोषाभावो वा ब्रह्मीयदोषाभावो वा। नाऽद्यः। जीवेऽतिव्याप्तेः। दोषिणोऽपि तस्यान्यदीयदोषाभा-**(व्या.टि)** वात्। न द्वितीयः। तत्सजातीयोऽपि निषेधाधिकरणे प्रमितो वा आरोपितो वा। नाऽद्यः। व्याघातात्। न द्वितीयः। आरोपितस्यालीकत्वेन तदभावस्य सार्वत्रिकत्वेनातिव्याप्तेर्वज्रलेपायितत्वात्। सदसतोरेकजात्यसम्भवाच्च। न तृतीयः। सिद्धौ व्याघातात्। असिद्धावतिव्याप्तेः। किञ्च ब्रह्मीयत्वस्य व्यधि-करणधर्मतया तदवच्छिन्नस्यालीकत्वेन तदभावस्य सार्वत्रिकत्वापत्तिः। द्वितीयेऽपि यावत्त्वं दोषविशेषण-मभावविशेषणं वा । नाऽद्यः। व्यासज्यवृत्तिधर्मावच्छिन्नस्य प्रतियोगिमत्यपि सत्त्वेन पुनरतिव्याप्तेः। न द्वितीयः। ब्रह्मण्यपि दोषप्रागभावादेरभावेनासम्भवादित्यत आह- **पारतन्त्र्यराहित्यादीनीति ॥** पारतन्त्र्यस्य प्रसिद्धसाधारणदोषस्य ग्रहणेन दोषतया प्रामाणिकत्वं, राहित्यपदेनात्यन्ताभावं सूचयता दोषतया प्रामाणिक-प्रतियोगिकोऽत्यन्ताभावो निर्दोषत्वम्। न त्वप्रामाणिकप्रतियोगिकः। तस्य जीवेऽपि सत्त्वादिति सूचितम्। राहित्यपदोत्तरादिपदेन च राहित्यानां पृथक् लक्षणत्वं सूचयता प्रतियोग्यानन्त्येनाभावानन्त्याल्लक्षणानन्त्यमपि सूचितम्। असाधारणश्रमचिन्तादिराहित्यपरिग्रहेऽपि अपराधीनत्वविशेषणान्न दोषः।

अत्र यद्विकल्पितं तत्राऽद्ये आद्यं तावदङ्गीकुर्मः। तत्र परकीयस्यापि पारतन्त्र्यरूपसाधारणदोषस्य किञ्चित्पदेन ग्रहणाद् ब्रह्मेतरसर्वस्यापि तद्दोषित्वेनातिव्याप्त्यभावात्। न चैवं प्रामाणिकप्रतिषेधापत्तिरिति वाच्यम्। 'अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता। सर्वज्ञतादीशगुणविरुद्धा ह्यनुभूतिगाः' इत्युक्तदिशा अन्योन्यवन्निष्ठा-त्यन्ताभावप्रतियोगित्वरूप-विरुद्धतायाः स्वीकार्यतया अत्यन्ताभावस्य प्रामाणिकप्रतियोगिकताया आवश्य-कत्वात्। अन्यथाऽभावाभावो भाव इति नियमेनाज्ञतादीनां प्राप्त्या भेदवादभङ्गप्रसङ्गात्। 'न ते महित्वमन्व-श्नुवन्ति', 'अदुःखमसुखम्', 'वर्जितः सर्वदोषैर्यः' इत्यादिश्रुतिषु, 'न च स्वातन्त्र्यमन्यगं करोति' इति स्मृतौ, 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्', 'न च स्मार्तमतद्धर्माभिलापात्', 'नानुमानमतच्छब्दात्', 'अन्य-भावव्यावृत्तेश्च', 'अरूपवदेव हि तत्प्रधानत्वात्', 'तद्भूतस्य च तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः', 'अभावं बादरिराह ह्येवम्', 'अत एव चानन्याधिपतिः' इत्यादिसूत्रतद्भाष्यटीकासु, 'तदभावस्य तद्भानपूर्वकत्वं चान्यत्र तस्य सत्त्वादेवेष्टम्' इति मूले, 'अन्यत्र देशान्तरे कालान्तरे च तस्य प्रतियोगिनः सत्त्वादेव' इति टीकायां, 'स्वोपाधावनिषेधात् परोपाधौ निषेधात्' इति सुधायाम्, 'अनात्म्ये जैवगुणविधुरे' इति तत्त्व-प्रकाशिकायाम्, 'अत्यन्ताभावस्य नित्यत्वात् कालभेदेन विरोधपरिहारासम्भवेन देशभेदेनैव विरोधः परिहर-णीयः' इति मन्दारमञ्जर्यां च प्रामाणिकप्रतियोगिकात्यन्ताभावस्याभिधानानुपपत्तेश्च। तस्मान्निषेधः प्रामाणिक-प्रतियोगिकतया मुनित्रयसम्मत इति ज्ञायते। स च क्वाचित्कोऽपि सार्वकालिकत्वाद् अत्यन्ताभाव एव। उक्तं चैतल्लक्षणं भगवत्पादैः 'सदाभावः' इति। पदार्थविदोऽपि 'त्रैकालिकनिषेधोऽत्यन्ताभावः' इत्याहुः। न चास्य सदाभावत्वेऽपि नात्यन्ताभावत्वमिति वाच्यम्। अत्यन्ताभावस्य सदाभावपदेन ग्रहणात्। तदुक्तं तत्त्वसङ्ख्यान-टीकायाम् 'प्रसिद्धसञ्ज्ञातिक्रमणेन सञ्ज्ञान्तरकरणमुद्देशेनैव लक्षणस्यापि सूचनार्थम्' इति। न चात्यन्ता-भावप्रतियोगित्वे दोषस्यासत्त्वापत्तिरिति वाच्यम्। किमसत्त्वमात्रमापाद्यते उतात्यन्तासत्त्वम्। नाऽद्यः। **(व्या.टि)** तन्निष्ठात्यान्ताभावप्रतियोगिनः तत्रासत्त्वस्येष्टत्वात्। न द्वितीयः। सार्वत्रिकसार्वकालिकात्यन्ता-भावप्रतियोगिन एवात्यन्तासत्त्वात्। अस्य चातथात्वात्। अत एव न्यायामृते 'त्रिकालसर्वदेशीयनिषेधा-प्रतियोगिता। सत्तोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी' इति सत्तालक्षणे सर्वदेशीयपदमुपात्तम्। न च सदाभावस्य देशविशेषानाकलनात् क्वाचित्कत्वानुपपत्तिरिति वाच्यम्। दोषो ब्रह्मणि सदा नास्ति, स्वातन्त्र्यमन्यत्र सदा नास्तीत्येव प्रतीतेः। 'देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते' इत्यनुव्याख्यानोक्तदिशा सत्ताप्रतीतेः देशकालोभयप्रतीत्यविनाभूतत्वेन

निषेधसत्ताप्रतीतेरपि तथात्वात् प्रामाणिकस्यान्यत्रिकात्यन्ताभावो निष्प्रत्यूह इत्याद्यं लक्षणं निरवद्यम् ।

एवं जीवदोषसदृशदोषस्य जीवान्तरे प्रामाणिकत्वात्तदभावोऽपि ब्रह्मलक्षणम् । ब्रह्मीयदोषस्य चाप्रामाणिक-त्वात्तदभावो न लक्षणम् । एवं प्रामाणिकयावद्दोषाभावोऽपि लक्षणम् । किञ्चिद्दोषाभावस्य जीवान्तरेऽपि सत्त्वाद्यावदिति । तच्च दोषत्वावच्छिन्नाभावतात्पर्यद्योतकमिति नोक्तदोषः । अत एव तत्त्वप्रकाशिकायां चिन्ता-सन्तापेत्यादिना प्रामाणिकयावद्दोषाभावपरतया दोषवर्जितपदं व्याख्यातम् । एवं च केनापि दोषेणास्पृष्ट-त्वमित्यर्थलाभान्न क्वाप्यतिव्याप्तिः । तदुक्तं चन्द्रिकायाम् - 'अस्पृष्टदोषगन्धाय' इति । इति सर्वं सुस्थम् ।

अत्र केचिद् दोषात्यन्ताभावरूपं निर्दोषत्वं कथं भगवतो लक्षणम् । सिद्धान्ते प्रामाणिकप्रतियोगिका-त्यन्ताभावाभावेन दोषाणां जीवे प्रामाणिकतया तत्प्रतियोगिकात्यन्ताभावासम्भवादित्याशङ्क्य, निर्दोषत्वं नाम आरोपितदोषात्यन्ताभावः । स एव च भगवल्लक्षणम् । आरोपितदोषाणां चाप्रामाणिकतया तत्प्रति-योगिकात्यन्ताभावसम्भवादिति समादधुः । तन्नातीव चमत्करीकरीति । तथा हि । प्रामाणिकप्रतियोगिका-त्यन्ताभावो नास्तीति क्वापि विस्पष्टवचनाभावेन तन्निश्चयायोगात् । श्रुतिस्मृतिसूत्रैः पूर्वं तस्य समर्थितत्वाच्च । तदनङ्गीकारे बाधकसत्त्वाच्च । तथा हि । प्रामाणिकस्य घटत्वादेरन्योपाधौ निषेधस्तावद् भावनिषेधत्वेना-भावः । स क इति प्रष्टव्यम् । न तावदन्योन्याभावः । तादात्म्यानारोपात् । नापि प्रध्वंसप्रागभावौ । पूर्वोत्तरं तत्र प्रतियोगिनः सत्त्वापत्तेः । यदि च नात्यन्ताभावः तदा अभावचातुर्विध्यभङ्गप्रसङ्गः । त्रैकालिकाभाव(त्व)स्वीकारे पर्यायेणात्यन्ताभावस्यैव स्वीकारेण नाममात्रे विवादायोगात् । किं चायम्, अत्यन्ताभावः, प्रागभावप्रध्वंसान्यत्वे सति संसर्गाभावत्वात् कूर्मरोमाभाववदित्यनुमानेन तन्निषेधस्यात्यन्ताभावत्वसिद्धेः । अपि च प्रामाणिकस्य अत्यन्ताभावो नास्तीति वदन् वादी प्रष्टव्यः । किमभाव एव नास्ति उत तस्याऽत्यन्तिकत्वं नास्तीति । नाऽद्यः । सुधायाम् - 'स्वोपाधावनिषेधात्परोपाधौ निषेधात्' इति व्यवस्थया सदसत्त्वस्वीकारात् । न द्वितीयः । आत्यन्ति-कत्वमपि त्रैकालिकत्वरूपं निषिध्यते सार्वत्रिकत्वविशिष्टं तद्वा । नाऽद्यः । घटत्वादिनिषेधस्य पटादौ सर्वदा प्रतीयमानत्वेन त्रैकालिकत्वस्य निषेद्धुमनर्हत्वात् । द्वितीये निषिध्यतां न नो हानिः । अत एव सुधायां सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी इति परकीयानुमानदूषणावसरे उक्तविशिष्टात्यन्तिकत्वं निरुच्योक्तम् 'यद्धि सकलदेशकालासत् तदत्यन्ताभावप्रतियोगीत्युच्यते यथा शशविषाणादिकम् । घटादौ च सत्त्वम्, अभावप्रति-**(न्या.टि)** योगित्वलक्षणमसत्त्वं च प्रत्यक्षादिसिद्धमिति' इति । तथा च वैवक्षिकात्यन्ताभावप्रतियोगित्वाभावेऽपि सतस्त्रैकालिकात्यन्ताभावप्रतियोगित्वमक्षुण्णमेव । अत एवाभावस्योभयविधात्यन्तिकत्वे तत्प्रतियोग्यपि अत्यन्तासदित्युच्यते । एकविधात्यन्तिकत्वे तु अभावप्रतियोगीत्यसदित्युच्यते । अत एव तर्कताण्डवे 'केवला-न्वय्यभावप्रतियोगित्वे गगनादेरत्यन्तासत्त्वं स्यात्' इत्यभावस्योभयविधात्यन्तिकत्वेन प्रतियोगिनोऽत्यन्ता-सत्त्वमापादितम् ।

अपि च प्रागभावप्रध्वंसानधिकरणकालस्यात्यन्ताभावानधिकरणत्वे प्रतियोग्यधिकरणकालत्वनियमवद् देशस्यापि तथात्वेन, ब्रह्मणोऽपि तात्त्विकदोषप्रागभावप्रध्वंसात्यन्ताभावानधिकरणस्य तदधिकरणत्वापत्त्या त्वदभिलषितनिर्दोषत्वभङ्गप्रसङ्गः । किञ्च प्रतियोगितावच्छेदकात्यन्ताभावस्य प्रतियोग्यन्योन्याभावव्यापकतया, ब्रह्मणस्तात्त्विकदोषाभावाभावे व्यापकनिवृत्तिन्यायेन दोष्यन्योन्याभावस्यापि अभावापातेन, परस्पर-विरुद्धयोरिति न्यायेन तद्विरोधिदोषितादात्म्यापातेन जितमद्वैतवादिनेति साधु समर्थितो भेदवादः । किञ्च 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्यादिश्रुत्या आनुभाविकदोषाभावस्यैवोक्त्या तद्विरोधः । अपि च तात्त्विकधर्माणामत्यन्ताभावाभावे तेषां केवलान्वयित्वापत्त्या व्यतिरेक्यसाधारणधर्मत्वरूपलक्षणत्वा-भावेन तैरितरभेदानुमानानुपपत्तिः । केवलान्वयिलिङ्गमात्रावशेषप्रसङ्ग इत्यादिबहुविप्लवापातः । अपि च तात्त्विकव्यतिरेकिधर्माभावे लक्षणोक्तिव्याघातः । हेतूनां विपक्षवृत्त्यभावाभावेन व्यभिचारित्वापत्तिश्च । तात्त्विकसाध्यप्रतियोगिकाभावाभावेन विपक्षत्वानुपपत्तिश्च । साध्यविपरीतधर्मो विपक्ष इति विपक्षलक्षण-शिक्षणविचक्षणवचनविरोधश्च । किञ्च प्रामाणिकप्रतियोगिकात्यन्ताभावाभावे निर्गुणश्रुतेर्गुणत्रयनिषेध-परत्वानुपपत्तिः । किञ्च सत्त्वलक्षणे प्रतिपन्नोपाधाविति विशेषणवैयर्थ्यम् । मन्दारमञ्जर्यां तु परमतेन प्रत्याग्रहमात्रं न वस्तुस्थितिः । अन्यथा, क्वापि शशशृङ्गं नास्तीत्यत्रापि प्रतियोग्यधिकरणसंसर्गात्यन्ताभावो विषय इति असतः शशशृङ्गादेः न क्वाप्यत्यन्ताभावः स्यात् । न चात्र प्रतियोगिनोऽन्यत्र सत्त्वाद्वैषम्यमिति वाच्यम् । अन्यत्र सत्त्वस्य तत्रात्यन्ताभावप्रतीत्यविरोधित्वात् । किञ्च 'न तौ पशौ करोति न सोमे अध्वरे न चतुस्त्रिंशदिति ब्रूयात् न गिरा गिरेति ब्रूयात् नास्यान्नमद्यात् नास्य पल्पूलनेन वासः पल्पूलयेयुः' इत्यादिप्रामाणिकप्रकृत-निषेध एवेष्ट इति पूर्वमीमांसाविरोध इति ।

यच्चाप्युक्तम्, आरोपितदोषात्यन्ताभावो नाम दोषारोपपूर्वकप्रतीतिविषयात्यन्ताभाव इति तन्न। वास्तव-दोषाभावाभावं भगवति प्रतिज्ञाय प्रधानदोषाणामेवाभावेनेति वास्तवदोषाभावेनाऽरोपितदोषाभावसाधने स्ववचनव्याघातात्। वास्तवस्य जैवदोषस्य ब्रह्मण्यभावाभावे आरोपासम्भवात्। तत्सत्त्वे तेनैव निर्दोषत्वोपपत्त्या कल्पनावैयर्थ्याच्च। दोषारोपपूर्वकप्रतीतिविषयाभावस्यापीश्वरगतस्यैवाधिकरणभेदेनाभावभेदाभावेनाप्रामा-णिकप्रतियोगिकतया केवलान्वयित्वेन च जीवादौ सत्त्वेनातिव्याप्तितादवस्थ्याच्च। दोषारोपपूर्वकाभावप्रतीति-विषयत्वस्य लक्षणत्वे व्यर्थविशेष्यत्वापत्तेः। निर्दोषत्वस्याभावरूपत्वानापत्तेश्च।

**(व्या.टि)** अयुक्तं चेदं लक्षणम्। तथा हि। निषेधधीकारणमारोपो आहार्यो वा अनाहार्यो वा। नाऽद्यः। तस्य बाधाप्रतिबध्यतया अप्रामाणिकदोषाभावनिश्चयेऽपि ईश्वर इव, प्रधानाविरोधितया च दोषवत्स्वपि तत्सम्भवे तत्पूर्वकनिषेधप्रतीत्युपपत्त्या अतिव्याप्तिः। किञ्च आहार्यारोपस्य स्वविषयप्रतियोगिकाभावनिश्चयरूपबाध-कालीनेच्छाजन्यतया अभावप्रतीतिं प्रत्याहार्यारोपस्य कारणत्वेऽन्योन्याश्रयादिति। न द्वितीयः। प्रतियोगिनोऽ-नाहार्यारोपस्याभावज्ञानविरोधितया तत्कारणत्वायोगात्। यत्र भूतलादौ घटाद्यभावज्ञानं तत्र सर्वत्रानानुभावि-कानाहार्यभ्रमकल्पनापत्तेश्च। सूच्यग्रे हस्तिशतं नास्तीत्यादावनाहार्यारोपासम्भवेनाभावप्रत्ययानापत्तेश्च। दुःखादेरनाहार्यारोपासम्भवेन मयि दुःखादिकं नास्तीत्यभावप्रत्ययानापत्तेश्च। अभावप्रतीतौ (प्रत्यक्षे) अना-हार्यारोपस्य कारणत्वे देवानां देवत्वदशायामनाहार्यारोपाभावेन, रमाब्रह्मादीनां च कदाऽप्यनाहार्यभ्रमाभावेन तेषां भगवति दोषाभावज्ञानानापत्तेश्च। दैत्यानामनाहार्यभ्रमसत्त्वेऽपि तस्यासञ्जातबाधत्वेन मनुष्योत्तमानामेव भगवन्निर्दोषत्वज्ञानापत्तेश्च। तेषामप्यपरोक्षज्ञानानन्तरमनाहार्यासम्भवेनानन्तरं निर्दोषत्वज्ञानानापत्तेश्च। अन्यदीयारोपोपादाने 'आरोप्य प्रतिषिध्यत इति यावत्' इति भवदुक्तल्यपोऽयोगः। व्यधिकरणस्य कारण-त्वासम्भवाच्च। किञ्च पक्षद्वयेऽपि आरोपानन्तरं जायमानेऽभावज्ञानेऽभावे प्रकारतया प्रतियोगी भासते न वा। अन्त्येऽनुभवविरोधः। अभावस्य दोषप्रतियोगिकत्वादेरप्रसिद्ध्यापत्तेश्च। 'तौ विना न ह्यभावश्च' इत्यनु-व्याख्यानेन, 'अभावः प्रतीयमानो धर्मिप्रतियोगिघटित एव अत्रेदं नास्तीति प्रतीयते न तौ विना केवल इति अन्वयव्यतिरेकाभ्याम् एकज्ञानसम्बन्धेन व्याप्यव्यापकभावोपपादनमेतत्' इति तदीयसुधया च स्पष्टं विरोधाच्च। आद्ये तादृशाभावज्ञानातिरिक्तस्याभावाधिकरणे प्रतियोग्यारोपस्यानुभवविरोधः। भूतले घटं न प्रत्येमि किन्तु घटाभावमेवेत्यनुभवात्। 'झटित्येव परिज्ञानाद्' इत्यत्र प्रतियोगिस्मृतिमतोऽभावज्ञानं घटादि-ज्ञानवत् झटित्येव जायत इत्युपपादितत्वेन तद्विरोधाच्च। निर्दोषचक्षुष्मतो मार्गे कण्टकाद्यभावं जानतो दोषाभावेन कण्टकाद्यनाहार्यारोपस्य, कण्टकादिप्रत्यक्षस्यानिष्टतया तदाहार्यारोपस्य चायोगेनाऽरोपमात्रायोगश्च। तदभावस्य तज्ज्ञानपूर्वकत्वं चान्यत्र तस्य सत्त्वादेवेष्टमित्येतद्व्याख्यानावसरेऽन्यत्र प्रतियोगिज्ञानमभावज्ञाने कारणं न त्वभावाधिकरण इति स्पष्टमुपपादितत्वेन तद्विरोधश्च। भगवतः स्वनिर्दोषत्वाज्ञानेऽज्ञानरूपदोषस्य तज्ज्ञाने प्रतियोग्यारोपरूपभ्रमरूपदोषस्याऽपत्त्या भगवन्निर्दोषत्वविचारे महोपप्लवापत्तिश्च। न चाऽहार्यारोपस्य न भ्रमत्वमिति वाच्यम्। प्रमाभ्रमोभयबहिर्भूतज्ञानाभावेन प्रमात्वापत्त्या पुनर्दोषित्वापत्तेः। न च गृहीताप्रामाण्य-कत्वेनैतादृशभ्रमस्य न दोषत्वमिति वाच्यम्। शङ्खश्चैत्याकाशनीरूपत्वचन्द्रमण्डलपरिमाणाधिक्यादिनिश्चयवतो जायमानस्य सोपाधिकस्य पैत्यनीलत्वप्रादेशपरिमितत्वादिभ्रमस्य दोषत्वानापत्तेः। भ्रान्तिज्ञ एव भगवान्न तद्विषयज्ञ इति सिद्धान्तविरोधाच्चेत्यलम्।

न चाभावबुद्धेरभावाधिकरणे प्रतियोगिप्रतीतिसापेक्षत्वाभावे प्रतिषेधस्य प्रसक्तिसापेक्षत्वप्रवादविरोध इति वाच्यम्। प्रतिषेधप्रतिपादनस्य प्रसक्तिसापेक्षत्वपरत्वात्तस्य। 'प्रतिषेधप्रतिपादनं प्राप्तिपूर्वकम्' इतीहत्य-**(व्या.टि)** टीकोक्तेः। किञ्च प्रतिषेधप्रतिपादनस्यापि प्रसक्तिसापेक्षत्वं नाम नाभावाधिकरणविशेष्यक-प्रतियोगिप्रकारकभ्रमसापेक्षत्वम्। प्रतियोगिभ्रमवत इव तद्रहितस्यापि प्रथमत एव निषेधवाक्येनाभावशाब्द-बोधस्यानुभवसिद्धत्वात्। किन्तु स्वाभावे बोधनीये तादृशप्रतियोगिभ्रमसामग्रीसापेक्षत्वमेव। अन्यथा नान्तरिक्ष इत्यादाविव नित्यानुवादत्वापत्तेः। तथा च जातभ्रमं निवर्तयज्जनिष्यमाणं प्रतिबध्नत् सार्थकं प्रतिषेधवाक्यम्। अत एव जनिष्यमाणप्रतिबन्धकतया तार्तीयबाधस्याप्राप्तबाधत्वव्यवहारः। तस्मान्न प्रसक्तिसापेक्षत्वप्रवाद-विरोधः। नाप्यनारोपपूर्वकप्रतिषेधस्यानुपपत्तेरित्याद्यभियुक्तोक्तिविरोधः। तत्र निषेधपदस्य बाधधीपर-त्वात्। प्रथमत एव जायमाने नेदं रजतमिति ज्ञाने बाधधीरिति व्यवहाराभावात्। नापि 'प्रसज्य प्रतिषेधति निषेधवाक्यम्' इति लोकव्यवहारेण ल्यपा अभावाधिकरणे प्रतियोग्यारोपस्य पौर्वकालिकत्वोक्तेस्तद्विरोधः। प्रतियोगित्वेनोपादायेत्येव तदर्थस्वीकारात्। अन्यथा समानकर्तृकत्वाभावापत्तेः। भूतले घटो नास्तीत्यादौ वाक्यभेदापत्तेः। स्वव्याघातापत्तेश्च। वेदे 'विजरो विमृत्युर्विशोकः'

इत्यादौ, लोके 'घटाभाववद्भूतलम्' इत्यादौ तादृशसमभिव्याहाराभावेन तदयोगाच्च । आहार्यत्वानाहार्यत्वादिविकल्पमुखानेकदूषणगणग्रासाच्च ।

एतेनाश्वे गोत्वं नास्तीत्यादावारोपविषयसंसर्गस्य वा अधिकरणसंसृष्टस्य गोत्वादेर्वा प्रतियोगित्वोपगमेन तस्यालीकत्वेनाप्रामाणिकप्रतियोगिकत्वमेवेति प्रत्याशा परास्ता । उक्तरीत्याऽऽरोपायोगात् । अश्वगोत्वसंसर्ग-त्वाश्वसंसृष्टगोत्वत्वादिरूपारोप्यतावच्छेदकाक्रान्तस्याप्रसिद्धतया प्रधानाभावेनाऽरोपायोगाच्च । अभावस्याधि-करणसाकाङ्क्षत्वापत्तेश्च । अभावरूपकर्तृद्वारा सत्तारूपक्रियायामनन्वयेऽधिकरणकारकसप्तम्ययोगाच्च ।

तस्मादभावप्रतीतेरारोपपूर्वत्वे बाधकसद्भावात्तदनङ्गीकारे बाधकाभावाच्च न दोषारोपपूर्वकप्रतीतिविषया-भाववत्त्वरूपलक्षणं परिष्करणीयम् । परिष्करणेऽप्यनुभूयमानारोपस्थले प्रामाणिकस्याप्यारोपोपगमेन नेमौ चूतौ किन्त्वेक एवेतिवन्नावां दोषिणौ किन्त्वहमेवेति बाधप्रतीतिसम्भवेन न अनिष्टस्य प्रामाणिकप्रतियोगि-कत्वस्य हानिसिद्धिरिति प्रामाणिकदोषाभाव एव लक्षणम् । 'न ह्यस्मन्मते प्रामाणिकस्यैव निषेध इति नियमः' इति न्यायामृतवाक्यं तु अप्रामाणिकाभावबोधकम् । एवकारनियमपदस्वारस्यात् । अन्यथा तद्विलोपेन वाक्यचारिताथ्यीत् । तस्माद्ये ये प्रामाणिकाः पारतन्त्र्यादयो दोषाः तदभावो लक्षणमिति सकलमकलङ्कम् । अधिकं तु गुरुप्रभायां द्रष्टव्यम् ।

अत्रेदं तत्त्वम् । अशेषसद्गुणपदोक्तज्ञानानन्दादिकं भगवतः स्वरूपलक्षणम् । निर्दोषपदोक्तं पारतन्त्र्या-त्यन्ताभावाज्ञानात्यन्ताभावादिकं तु भिन्नं लक्षणम् । एतत्समनियतस्य दोष्यन्योन्याभावस्य, भावरूप-स्यैतद्वत्त्वस्य च धर्मिस्वरूपत्वेऽपि एतस्य धर्मिस्वरूपत्वाभावात् । खननादिना भूतलादिरूपधर्मिनाशेऽ-प्यनाशादियुक्त्या संसर्गाभावस्य सुधायां भिन्नत्वसमर्थनात् । 'गोत्रादिसंसर्गाभावस्य ब्रह्मातिरिक्तत्वाभ्युप-गमात्' इति सुधोक्तेश्च । लक्षणत्वं त्वसाधारणधर्मत्वात्स्पष्टम् । न च 'दण्डित्ववदभाववत्त्वस्य धर्मत्वेन विवक्षितत्वात्' इति सुधोक्तेरभावस्य धर्मत्वं नास्तीति वाच्यम् । तत्र 'एवं धर्मान्' इति श्रुतिविरोधपरिहाराय **(व्या.टि)** तत्रत्यधर्मपदविवक्षामात्रोक्तेः । अभावस्य धर्मत्वस्यैवानङ्गीकारे 'गोत्राद्यभावोऽपि ब्रह्मविशेषणम्' इति सुधोक्तिविरोधात् । विशेष्यतैव धर्मित्वमित्येतद्व्याख्यावसरे विशेषणत्वं धर्मत्वमिति स्वयमेवोक्तेः । 'सर्वधर्मोपपत्तेश्च' इति सूत्रे 'सर्वेषां धर्माणां गुणानां दोषाभावानां च' इति सुधोक्तिविरोधाच्च । 'अभावस्य च धर्माः स्युर्भावास्तेषां च तेऽखिलाः' इत्यनुभाष्यविरोधाच्च । न च लक्षणाख्यधर्मपरं धर्मपदमभिन्नधर्मपरमिति मन्तव्यम् । 'क्वचित् लक्ष्यातिरिक्तं लक्षणं भवति यथा गन्धवती पृथिवी' इति सुधोक्तिविरोधात् । तस्माद्दोषा-त्यन्ताभावो भिन्नं लक्षणमिति । एतेन दोषात्यन्ताभावस्य लक्षणत्वं नास्तीति केषाञ्चिदुक्तिः परास्ता । अनाकर-त्वात् । अधिकं गुरुप्रभायामस्मत्कृतायां द्रष्टव्यम् ।

अत्र सद्गुणपदेन लक्षणकथनतात्पर्यकेण द्वित्वाद्यनेकत्वसङ्ख्या न ग्राह्या । तस्या भगवन्मात्रवृत्तित्वाभावेन लक्षणत्वायोगात् । तथा हि । अनेकत्वसङ्ख्या तावदेकत्वसमाहार इत्येकः पक्षः । 'एकत्वाभावे अनेकत्वमपि न स्यात् । तत्समाहाररूपत्वात्तत्कार्यत्वाद्वा तस्य' इति सुधोक्तेः । अस्याः पूर्वपक्षस्थत्वेऽपि अदूषितत्वादिह टीकायां सिद्धान्तस्थत्वाद् बाधकाभावाच्च स्वपक्षत्वज्ञापकत्वम् । न च द्वित्वत्रित्वयोरविशेषापत्तिर्बाधिका । एकत्वद्वयत्रयसमाहाररूपत्वेन विशेषोपपत्तेः । न चैकत्वद्वयसमाहारो द्वित्वमित्यत्रैकत्वे प्रतीयमानद्वित्व-स्यातिरिक्तसङ्ख्यात्वेनासमाहाररूपत्वे पूर्वमेव तथा कल्पयितुं शक्यत्वेनैकत्वान्तरसमाहाररूपत्वे अनवस्थेति वाच्यम् । एकत्वमेकमिति प्रतीत्या एकत्वे एकत्वान्तरस्य प्रामाणिकत्वात् । एकत्वगतैकत्वस्य तत्स्वरूप-त्वाच्च । उत्पत्तेरुत्पत्त्यन्तराभावेऽपि स्वयैव स्वोत्पत्तिव्यवहारवदेकत्वेऽपि एकमिति व्यवहारस्य स्वेनैवोप-पत्तेश्च । न चैकधर्मिकत्वापत्तिः, नानाधर्मिकत्वानापत्तिश्चेति वाच्यम् । समाहाररूपत्वेन नानावृक्षसमाहार-रूपवनस्यैकवृक्षीयदेशमात्रानाश्रितत्वतद्घटिताधिकदेशाश्रितत्ववदुपपत्तेः । भेदस्येवैकानुयोगिकत्वमन्यप्रति-योगिकत्वमनेकत्वसङ्ख्याया इति तु न मन्तव्यम् । घटः पटाद्भिन्न इतिवत् पटाद् द्वौ इत्याद्यप्रतीतेः । 'अनेकत्व-सङ्ख्या तावद् अनेकाश्रिता । एकैकस्मिन् द्वित्वादेः शङ्कितुमशक्यत्वात् । न हि द्वित्वादिकमेकैकप्रतीतौ प्रती-यते । न च प्रतियोगिनिरूप्यत्वं धर्मितयैवानेकेषामनुभवात्' इति सुधोक्तेश्च । 'न ह्येकत्वानेकत्वे स्वरूपेण विरुद्धे, एकस्यैव घटस्यान्यापेक्षयाऽनेकत्वदर्शनात्' इति सुधोक्तिः 'स्वस्मिन्नेकोऽन्येन सहितोऽनेकः' इतीहत्यटीकोक्तिश्च ध(र्मा)र्म्यन्तरापेक्षाभिप्रायके, न त्वन्यस्य प्रतियोगित्वाभिप्रायके । अनुभवविरोधाद् उक्तसुधाविरोधात्, समाहाररूपत्वायोगाच्च । एतत्पक्षेऽपि प्रत्येकमेकैकधर्मिकैकत्वप्रकारकप्रतीतिरूपापेक्षा-धीव्यङ्ग्यत्वम् अनुभवबलेन स्वीकार्यम् । तस्माद् बाधकाभावात् साधकसद्भावाच्च समाहारपक्षो युक्तः ।

अपेक्षाबुद्धिजन्यभिन्नाभिन्नायावद्द्रव्यभाविनी व्यासज्यवृत्तिरनेकत्वसङ्ख्येति द्वितीयः पक्षः । 'तत्कार्यत्वाद्वा तस्य' इति अनेकत्वस्यैकत्वकार्यतायाः सुधायामुक्तेः । 'समुदायस्तु भिन्नगः' इत्येतद्व्याख्यावसरे 'समुदायोऽ-नेकत्वं भिन्नगोऽनेकाश्रितः । सत्यमनेकत्वसङ्ख्या नैकाश्रिता । तथाऽपि तदन्यत्वेन हेतुविशेषणाददोषः । सा चापेक्षाबुद्धिजन्यत्वादयावद्द्रव्यभाविनी भिन्नाभिन्नेति नाऽश्रययोरभेदापत्तिः' इति स्पष्टं सुधोक्तेश्च । एषा **(व्या.टि)** चानेकत्वसङ्ख्या प्रमेयत्वादिवद् भावरूपैव, भावाभावधर्मभूताऽभावमात्रधर्मभूता च । एवं धर्मि-द्वयोपादानकत्वादपेक्षाधीनिमित्तकत्वाच्च, सतोरपि धर्मिणोरपेक्षाबुद्ध्यसत्त्वे निमित्ताभावाद् असतोः शशविषाण(नृविषाण)योरुपादानासत्त्वात्, घटशशविषाणयोस्त्वन्यतरस्यासत्त्वात्, विभिन्नमात्रकालयोस्तु घटपटयोरेकदाऽसत्त्वान्नोत्पद्यते । एवमेष्यतोः पूर्वम्, अतीतयोश्च पश्चान्नोत्पद्यते तदा धर्मिणोऽसत्त्वात् । नित्या-नित्ययोरनित्ययोर्वा कादाचित्कसमावेशयोः समावेशकाल एवोत्पद्यते, अन्यदा तु न, धर्मिद्वयासत्त्वादेव । उक्तस्थलेषु अनेकत्वप्रतीतेरपेक्षाबुद्धिविशेषविषयत्वं वा स्वाश्रयप्रतियोगिकपरस्परभेदसमानाधिकरणैकत्व-द्वयादिकं वा भाविद्वित्वादिकं वा विषय इत्यनन्यगत्या स्वीक्रियते । अनेकत्वसङ्ख्योपादानत्वं च ब्रह्मणोऽपि सम्भवति । 'पराधीनविशेषाप्तिरनिवर्त्यान्यथाभावः । क्षीरादिवद्विकारः स्यात् नैव स स्याद्धरेः क्वचित्' इति अनुव्याख्याने पराधीनविशेषस्य द्रव्यान्तरापत्तिरूपस्य च विकारस्य निषेधेऽपि 'विशेषनिषेधे' इति न्यायेन गुणाकारपरिणामस्याभ्यनुज्ञानात् । विरुद्धः कारः प्रकारः विकार इति पूर्वभावापगमेन भावान्तरापत्तेरेव विकारशब्दार्थतयाऽताद्दशस्य गुणाकारस्याङ्गीकारे बाधकाभावाच्च । कूटस्थत्वेन स्वीकृतेऽव्याकृताकाशेऽपि सुधायां 'न च निरवयवं क्वापि परिणतं दृष्टम् । आकाशं संयोगादिमदुपलब्धमिति चेन्न । द्रव्याकारपरिणामस्य प्रकृतत्वात्' इति गुणाकारपरिणामस्याङ्गीकृतत्वाच्च । एषा चानेकत्वसङ्ख्या स्वजनकापेक्षाबुद्धिसमानाधिकरणेनैव प्रत्यक्षेण विषयीक्रियत इति नैकस्यानेकद्वित्वादिप्रत्यक्षापत्तिः । अनेकत्वसङ्ख्याया धर्मितो भिन्नाभिन्नत्वादेव न धर्मिणामभेदापत्तिः । तस्माद् द्वितीयपक्षोऽपि निर्बाधकत्वाद् युक्ततरः ।

एवमपेक्षाबुद्धिव्यङ्ग्यानेकत्वसङ्ख्येति तृतीयः पक्षः । 'अपेक्षाबुद्धेरनेकत्वव्यञ्जकत्वात्' इति वैभाषिकाधि-करणीयसुधोक्तेः । उपासनापादे 'असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनम्' इत्येतद्व्याख्यावसरे 'दशत्वसङ्ख्या खल्वपेक्षाबुद्धिजन्या तद्व्यङ्ग्या वा' इति सुधोक्तेश्च । एतत्पक्षे यावत्सर्वधर्मिसत्त्वभाविनी अपेक्षाबुद्धिव्यङ्ग्या भिन्नाभिन्ना । अतो नैकधर्मिनाशेऽपि तत्सत्त्वम् । नाप्यपेक्षाबुद्ध्यभावेऽपि प्रतीतिः नाप्याश्रययोरभेदः । न च जीवेशगतद्वित्वस्य भगवद्धर्मस्य भिन्नाभिन्नत्वे 'एवं धर्मान्' इत्यादिभेदनिषेधकश्रुतिविरोधः । अत्यन्ताभावस्य धर्मत्वस्य पूर्वं समर्थितत्वेन तदितरपरत्वस्यैवानेकत्वसङ्ख्येतरपरत्वस्याप्युपपत्तेः । 'समुदायस्तु भिन्नगः' इत्यनु-व्याख्यानेन, 'न केनचिदभेदोऽस्ति भेदाभेदोऽपि वा क्वचित् । समुदायमृते विष्णोः स्वगुणादीन्विनाऽपि वा' इति तदुदाहृतश्रुत्या च, 'समुदायो द्वित्वम्' इति सुधाबलेन भेदाभेदस्य प्रमितत्वेन सङ्कोचस्यावश्यम्भावाच्च । एतत्पक्षे भगवदीयज्ञानानन्दादिगतानेकत्वसङ्ख्या आश्रयतोऽत्यन्ताभिन्ना आश्रययोरभेदस्यानिष्टत्वाभावात् । उक्तश्रुतेर्जीवेशगतद्वित्वादिविषयकत्वेनोपपत्तेश्च । तस्मादयमपि पक्षो बाधकाभावाल्लाघवाच्च युक्ततमः । अधिकं गुरुप्रभायाम्, अस्मदनुशिष्टेन तनयेन कृते द्वित्ववादे च द्रष्टव्यम् ।

अत्र पारतन्त्र्यस्य भगवदितररमादिसाधारण्येन तद्राहित्यस्य केवलस्य लक्षणत्वम्, रमादावविद्यमानानां चिन्ताश्रमादीनामभावानां त्वन्यप्रसादानधीनत्वविशेषितानां लक्षणत्वमित्यवधेयम् । आनन्दादीनामपि **(व्या.टि)** परिपूर्णत्वविशेषितानामेव लक्षणत्वमित्यभिप्रेत्य परिपूर्णानन्दत्वादीनीत्युक्तम्- **अनन्तानि लक्ष-णानीति ॥** प्रत्येकं लक्षणत्वे सम्भवति दोषाभावानां गुणानां वा समुदायस्य तत्त्वाभिप्रायस्यास्वरसत्वात् । विशेषणविशेष्यभावे च व्यर्थविशेषणत्वाद्यापत्तेः । अशेषपदमपि न प्रत्येकमतिव्याप्तिवारणाभिप्रायकम् । किन्तु लक्षणानन्त्यसूचकमित्याह- **तदर्थमेवेति ॥ व्यवहारादिति ॥** वैशेषिकादीनामिति शेषः । एवं च सत्पदं कल्याणपरं, गुणपदं भावधर्मपरमित्युक्तं भवति । वैशेषिकादिव्यवहारस्य भ्रममूलत्वाद् अनभिप्रेतार्थकल्पनस्य परजातिमति व्यवहृतसत्पदेऽपि तौल्यान्निर्दोषत्वेनोक्ते दुःखादीनामप्रसक्तेश्चारुच्या पक्षान्तरमाह - **अथ वेति ॥** उत्पत्त्यादीत्यादिपदेन सान्तत्वसातिशयत्वादीनां ग्रहणम् । अत्र गुणपदस्य परिपूर्णज्ञानानन्दादिपरत्वे सदिति स्वरूपकथनम् । शुभधर्मपरत्वे त्वतिव्याप्तिवारकं निर्दोषत्वरूपसत्त्वम् । रमागुणानामुत्पत्त्यादि-किञ्चिद्दोषाभावेऽपि सातिशयत्वरूपापरिपूर्णत्वस्य सत्त्वेन दोषसामान्याभावरूपसत्त्वघटितलक्षणमनतिव्याप्त-मेव । एतदेवाभिप्रेत्य परिपूर्णानन्दत्वादीनीत्युक्तम् । दोषविवेचनाय चोत्पत्त्यादिराहित्यमित्युक्तिरित्यव-धेयम् । समतीतेत्यस्य कृत्यमाह- **एतदिति ॥** जीवचित्प्रकृत्यतीतत्ववज्जडातीतत्वं किमिति नोक्तमित्यत उक्तम्- **क्षराक्षरपदाभ्यामिति ॥** अत्र शङ्क्यते । सम्भावकं

क्षराक्षराद्युत्तमत्वं वा तदन्यत्वमात्रं वा। आद्येऽपि विशिष्टस्य तत्त्वे, अक्षरोत्तमत्वमात्रस्यैव सम्भावकत्वसम्भवेन विशेषणवैयर्थ्यम् । प्रत्येकं तत्त्वे सम्भावकान्तर-वैयर्थ्यम् । क्षरोत्तमत्वस्याक्षरे सम्भाव्ययोग्यतारहिते, जडोत्तमत्वस्य क्षराक्षरयोः सत्त्वेन सम्भावकत्वायोगश्च । द्वितीये प्रत्येकमन्यत्वस्य परस्परसाधारण्येन विशिष्टस्यैव सम्भावकत्वे क्षरान्यत्वे सति अक्षरान्यत्वस्य जड-साधारण्येन तदन्यत्वे सतीत्यपि विशेषणीयमिति जडोपलक्षणा कार्या। तथाऽपि सा न युक्ता। मुख्यार्थान्व-यानुपपत्तेरभावात् । उपलक्ष्यतावच्छेद(कस्यैवा)कैक्याभावाच्च। क्षरशब्दप्रवृत्तिनिमित्तविनाशादेर्जडेऽपि सत्त्वेन मुख्यवृत्तेरेव युक्तेश्च। 'साक्षाद्भूतस्य चोद्भवः' इत्यनुव्याख्याने उत्पत्तेर्जडे मुख्यतोक्त्या तन्यायेन नाशस्यापि तत्रैव मुख्यत्वाच्च । 'शरीरक्षरणात् क्षराः' इति श्रुत्या जीवेष्वेव नाशस्यामुख्यत्वोक्तेश्च। 'यद्यपीयमप्यमुख्या' इति टीकायां देहोत्पत्तेरमुख्यत्वोक्त्या तन्नाशस्याप्यमुख्यत्वस्य ग्राह्यत्वाच्च । तस्माल्लक्षणा न युक्ता । साऽप्येक-पदस्य सम्भवे पदद्वयस्य न युक्ता । अत एव बाधलक्षणे 'वाजपेये रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति' इत्यत्र द्वन्द्वाश्रयेण रथघोषाभ्यां प्रकृतिप्राप्तयोर्दर्भमन्त्रयोः क्रमेण बाध इति प्राप्ते, इतरेतरद्वन्द्वस्यैकवचनायोगेनासम्भवे समाहारद्वन्द्वस्य पदद्वयलक्षणावत एकपदलक्षणायुक्ततत्पुरुषापेक्षया जघन्यत्वात्तत्पुरुष एवेति सिद्धान्तितम् । मुख्यार्थस्योपलक्षणत्वाभावेन अपिपदस्य सर्वथाऽयुक्तिश्चेति चेत् ।

अत्र ब्रूमः । उत्तमत्वस्य सम्भावकत्वपक्षे, अक्षरोत्तमत्वस्य वस्तुतो नारायणासाधारण्येऽपि तत्तद्वादिरीत्या तस्य ब्रह्मादिसाधारण्यप्राप्तौ तदुत्तमत्वस्यापि विशेषणत्वे वक्तव्ये, साङ्कचरीत्या जडे विशिष्टस्यापि प्राप्तौ तदुत्तमत्वस्यापि घटकत्वस्यावश्यम्भावेन जडोपलक्षणायाः प्रकृतोपयोगात्। प्रत्येकमुत्तमत्वस्य सम्भावकत्वं तु नाङ्गीक्रियते। वस्तुतोऽन्यत्वस्यैव सम्भावकत्वम्। तच्च विशिष्टस्यैवेति जडोपलक्षणाऽऽवश्यकी। 'अत एव **(व्या.टि)** जडजीवप्रकृतिभ्योऽत्यन्तविलक्षणम्' इति फलितमुक्तम् । 'क्षराक्षरजडात्मकात् सर्वस्मादुत्तमत्व-मित्ययमर्थो हि प्राङ् निरूपितः' इति वक्ष्यमाणटीका तु स्वमात्रवृत्तिशुभधर्मप्रयुक्ततद्वैलक्षण्यस्य तदुत्तमत्व-पर्यवसितत्वमभिप्रेत्य प्रवृत्ता । अन्वयानुपपत्तेरभावाल्लक्षणाऽयुक्तेति तु न । तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्य व्रीहीन् प्रोक्षतीत्यादौ दृष्टत्वात् । अन्वयानुपपत्तेर्लक्षणाबीजत्वसिद्धान्ते यष्टीः प्रवेशयेत्यत्र भोजनोद्देश्यक-प्रवेशरूपपदार्थान्वयानुपपत्तिवत् तात्पर्यविषयसमतीतत्वान्वयस्य क्षराक्षरयोरयोगाच्च । शरीरक्षरणशक्यता-वच्छेदककेन क्षरपदेन शरीरक्षरणस्वरूपक्षरणसाधारणक्षरणमात्रमुपलक्ष्यतावच्छेदकीकृत्य क्षरजडस्य, अक्षरपदेन परतन्त्रत्वे सति क्षरणमात्राभावमुपलक्ष्यतावच्छेदकीकृत्याक्षरजडस्योपलक्षणसम्भवेन, उपलक्ष्यतावच्छेदका-भावोक्तिरयुक्ता । योगलभ्यस्य विनाशादेर्जडसाधारण्येन मुख्यवृत्तिरेव युक्तेति तु न। क्षरणस्य धात्वर्थत्वेऽपि 'शरीरक्षरणात् क्षराः' इति निर्वचनेन शरीरक्षरणस्यैव, ब्रह्मशब्दे गुणपूर्णत्वस्येव, निर्मथ्यशब्देऽचिरनिर्मथनस्येव, दृतिहरिशब्दे पशुगतदृतिहरणस्येव, ऋत्विक्शब्दे ब्रह्मादिगतऋतुयजनस्येव च योगलभ्यत्वोपगमात्। तस्य च जडेऽभावात्। उत्पत्तिशब्दार्थेषु स्वरूपोत्पत्तेर्मुख्यत्ववत् नाशशब्दार्थेषु स्वरूपनाशस्य तथात्वेऽपि श्रुतिबलेन शरीरक्षरणस्यैव योगार्थत्वात्। श्रुतिस्तु योगप्रदर्शिकैव न त्वमुख्यत्वपरा। अत एव वाऽक्षराधिकरणचन्द्रिकायाम्, 'लक्ष्मीरक्षरदेहत्वादक्षरेति श्रुतौ शरीराक्षरणस्य निमित्तत्वोक्तेश्चाव्यभिचारितशरीर-क्षरणाभावरूपाक्षरणविशेषे केवलयौगिकोऽक्षरशब्दः' इत्युक्तम् । देहोत्पत्तेः टीकायाम् अमुख्यत्वोक्तावपि तत्प्रवृत्तिनिमित्तकजन्यशब्दस्य शरीरिणि 'जन्तुजन्युशरीरिणः' इति कोशबलाद्योगरूढत्ववत्, 'स्वनाशेन स्वामिनो नाशोपचारात्' इति टीकायां नाशोपचारोक्तावपि क्षरशब्दस्योक्तश्रुतिवशाद्यौगिकत्वम् । 'कूटस्थोऽक्षर उच्यते' इति कूटस्थस्याक्षरशब्द-वाच्यत्वोक्त्या, तन्यायेनोच्यत इत्यस्य वचनविपरिणामेनापकर्षेण च सर्वभूतानां क्षरशब्दवाच्यत्वनिर्धार-णात्। लक्ष्मीत्वभूतत्वयोर्नियमेन भाने योगरूढत्वमपि।

केचित्तु उपचारत्वोक्तिबलाद् ब्रह्मादौ लाक्षणिकाभ्यामेव क्षराक्षरपदाभ्यामेकोपलक्ष्यतावच्छेदकाभावेऽपि मुख्यार्थस्य जडस्य चित्रगुलम्बकर्णादौ चित्रगवादीनामिवोपलक्षणया ग्रहणमित्याहुः । पदद्वयस्य लक्षणा तु उपलक्ष्यभेदादुपलक्ष्यतावच्छेदकभेदाच्च युक्ता। अस्वातन्त्र्यस्योपलक्ष्यतावच्छेदकतामुपेत्य विनिगमनाविरहात् पदद्वयलक्षणेति तु न। उपलक्ष्यतावच्छेदकभेदसम्भवात्। प्राथम्यादेर्विनिगमकत्वाच्च। अस्वातन्त्र्यस्य द्विवारं बोधापत्तेश्च। लाक्षणिकपदद्वयेनाप्येकबोधे, शक्तेनापि तथा सम्भवेन अग्निं वह्निमानयेत्यादौ पुनरुक्त्यना-पत्तेश्च । 'सत्यं ज्ञानम्' इत्यत्राद्वैतिमते वैयर्थ्योक्त्यभावापत्तेश्चेत्यलम् । मुख्यार्थस्याप्युपलक्षणाजन्यशाब्द-बोधविषयत्वस्य सत्त्वेन समुच्चयार्थकमपिपदमिति स्पष्टम्। अधिकं तु गुरुप्रभायाम्।

विग्रहं ग्राहयति- **सम्यगतीते इति ।।** यद्यपि 'द्वितीया श्रितातीत' इति तत्पुरुषो युक्तः। समासप्राब-ल्यात्। अतिपूर्वकस्येणः प्रतियोगितानिरूपितानुयोगिताकभेदोऽर्थः । आधेयत्वं द्वितीयार्थः । निष्ठा च कर्तरि, इति द्वितीयासमासे क्षराक्षरवृत्तिप्रतियोगितानिरूपितानुयोगिताकवैलक्षण्यस्य ऋजुगत्या सिद्धेश्च। कर्मणि **(व्या.टि)** निष्ठामुपेत्य तृतीयार्थबहुव्रीहौ

तु वक्रेण सिद्धिः । तथाऽपि स नाऽश्रयणीयः । समासशास्त्रे द्वितीयायाः प्रथमानिर्दिष्टत्वेन क्षराक्षरशब्दयोः पूर्वनिपातापत्तेः । समासविधौ तदन्तग्रहणनिषेधेन समतीतशब्देन द्वितीया-तत्पुरुषायोगाच्च । विवक्षितार्थबोधस्त्वर्थात् । समासशक्तिमते आरूढो वानरो यमिति विग्रहे वृक्षकर्मकारोहणकर्ता वानर इति बोधेऽपि, आरूढवानर इति समासे बोधानुसारेण वानरकर्तृकारोहणकर्मणि शक्तिवत्, विग्रहे स्ववृत्तिभेदप्रतियोगिताके क्षराक्षरे इति बोधेऽपि समासशक्तिबलात् क्षराक्षरवृत्तिप्रतियोगिताकभेदवानीश्वर इति बोधः साक्षादपीति न कोऽपि दोषः । अधिकं गुरुप्रभायाम् ।

ध्वस्ते इति प्रतीतिवारणायातिक्रान्ते इति । फलितमाह- **जडेति ॥** अप्राधान्यक्रमेण निर्देशः । मूलेऽक्षर-पदस्याजाद्यदन्तत्वेऽपि वस्तुतोऽभ्यर्हितत्वेऽपि क्षरपदस्याल्पाक्षरत्वेन, अक्षरप्रतियोगिसमर्पकत्वेन प्रथमोप-स्थितत्वनिमित्ताभ्यर्हितत्वेन च पूर्वनिपातः । केचित्तु अक्षरशब्दस्याभ्यर्हितत्वात् पूर्वनिपातमाशङ्क्य यतिभङ्गान्न दोष इत्याहुः । तन्न । पदमध्ये पादविच्छित्तिरूपस्य तस्याप्रसक्तेः । शास्त्रेऽदोषत्वाच्च । भवद्रीत्या सदागमैकेत्यत्र दोषत्वापाताच्च । पूर्वान्तवत्स्वरः सन्धावित्यस्यापि साम्याच्च । यतिभङ्गभयेन शास्त्रप्राप्तनिपातपरित्यागस्या-चातुर्यावहत्वाच्चेत्यलम् ।

**॥ सम्भावनयेति ॥** 'ण्यासश्रन्थो युच्' इति युच् । न ल्युट् । तेन न स्त्रीलिङ्गस्य टापो वाऽनुपपत्तिः । लक्षणे सम्भावके च किं मानमिति शङ्का । विशिष्टतया विलक्षणतया चेति विशब्दस्यार्थद्वयकथनेन, वैशिष्ट्यरूपे लक्षणे वैलक्षण्यरूपे सम्भावके चाऽगमो मानमित्युक्तं भवति । सदोषत्वादिग्राहकप्रत्यक्षानुमानरूपे प्रतिपक्षे जाग्रति कथमागमेन तन्निश्चय इत्यत एकशब्देन प्रतिपक्षत्वनिरास इत्यभिप्रेत्यावतारयति- **प्रत्यक्षेति ॥** अत्र एकेति विशेषणेन लक्षणसम्भावके प्रति धर्मितावच्छेदकेन विष्णुत्वेनाऽगमेनैव ज्ञेयमित्यर्थोऽभिमतः । तेनान्यधर्मितावच्छेदककत्वेन कृष्णो दोषवान्, कश्चिद्दोषवानित्यस्य वा न प्रतिपक्षत्वम् । 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीत्' इत्याद्यागमाधीनविष्णुत्वनिश्चयमूलकतद्धर्मितावच्छेदककप्रत्यक्षादेरुप-जीव्यविरोधेन दुर्बलत्वान्न प्रतिपक्षत्वमित्यवधेयम् । विवृतमेतत् 'अवतारादिदृष्टौ स्यादागमस्योपजीव्यता । आगमेन हि विष्णुत्वं ज्ञात्वा' इत्यनुव्याख्यानव्याख्यावसरे सुधायाम् । पाशुपतागमेन सत्प्रतिपक्षत्वं तु निर्दोष-त्वाद्यावेदकेन आगमानां सत्त्वविशेषणेन तेषां दुरागमत्वसूचनेन निरस्तमित्याह- **तथाऽपीत्यादिना ॥** ननु 'पूर्वकालैक' इति समासशास्त्रे एकशब्दस्य प्रथमानिर्दिष्टत्वेन 'प्रथमानिर्दिष्टम्' इत्यनेनोपसर्जनत्वात् 'उपसर्जनं पूर्वम्' इति पूर्वनिपाते सदेकागमेति निर्देष्टव्ये सदागमैकेति निर्देशोऽयुक्त इत्यत आह- **दोषैकदृगिति ॥** पूर्व-कालैकेति पूर्वनिपात इत्यत्र निर्देशप्रयुक्तपदस्य मध्यमस्य लोपो मन्तव्यः **॥ न केवलार्थस्येति ॥** इति विज्ञायत इति शेषः । केवलार्थैकशब्दस्य पूर्वनिपातरहितोऽभियुक्तप्रयोगः पूर्वकालैकेत्यत्र सङ्ख्यार्थकस्यैव ग्रहणे ज्ञापकः । 'विशेषणं विशेष्येण' इत्यनेन समासे सिद्धे 'दिक्सङ्ख्ये सञ्ज्ञायाम्' इत्यस्य सञ्ज्ञायामेव सप्तर्ष्यादिपदे सङ्ख्यावाचकस्य समासो नान्यत्रेति नियमार्थ(क)त्वेन एकशाटीत्यादावेकशब्दस्य समासाप्राप्तौ पुनस्तदर्थं **(व्या.टि)** पूर्वकालैकेत्येकग्रहणमिति साफल्यमप्यपरं ज्ञापकमवधातव्यम् । न च केवलार्थकत्वेऽपि विशेषण-मित्यनेन समासे पूर्वनिपातः स्यादेवेति वाच्यम् । बहुप्रयोगानुरोधेनाऽकृतिगणे मयूरव्यंसकादावन्तर्भावात् । तस्य विशेष्यस्यापि मयूरादेः पूर्वनिपातार्थत्वात् । कैवल्यं च समभिव्याहृतपदार्थसंसर्गिनिष्ठभेदप्रतियोगिता-नवच्छेदकान्वयितावच्छेदकावच्छिन्नत्वम् । विष्णुविषयकविज्ञानकरणत्वसंसर्ग्यन्यन्नास्तीत्यागम एव तादृशः। तन्निष्ठभेदप्रतियोगिताऽनवच्छेदकं चाऽगमत्वमितीह कैवल्यम् । एवमन्यत्रापीत्यवधेयम् । अधिकं तु गुर्व्यां प्रभायाम् ।

**टीका-** शृङ्गे कर्णे वा गृहीत्वा गामिव न आगमो नारायणं गमयति, किन्तु लक्षणमुखेनैव । लक्षणमपि नाप्रमितं लक्ष्यनिर्धारणस्येष्टे । सन्ति हि तेऽप्यर्थाः, ये प्रमाणप्रतीता अपि असम्भावनया अपोद्यन्ते । यथा देवगवानामुत्तानानां वहनम् । अत्र च युगपदणुत्वमहत्त्वादीनामसम्भावनया अपवादो मा शङ्कीति लक्षणसम्भावनाप्रमाणानां त्रयाणामपि कथनं युक्तम्, प्रामाणिकत्वा-च्चास्यार्थस्य ।

कृतदेवतावन्दनानामपि या चिकीर्षितापरिसमाप्तिः सा भक्त्यादिवैगुण्यनिमित्ता । या तु अकृतदेवतावन्दनानामपि समाप्तिः सा अदृष्टान्तरायत्तेति कल्प्यते । श्रेयांसि बहुविघ्नानीति विघ्नानां सम्भावितत्वात् पाक्षिकस्यापि दोषस्य परिहार्यत्वात् तन्निरासार्थः प्रयत्नो युक्त एवेति ।

**(र.टि) ॥ प्रामाणिकत्वाच्चेति ॥** न केवलं शिष्टैः समाप्तिमुद्दिश्य मङ्गलस्यानुष्ठितत्वात् । किन्तु यागस्वर्गयोः कार्यकारणभावस्येव

मङ्गलसमाप्त्योः कार्यकारणभावरूपार्थस्य श्रुतिसिद्धत्वाच्चेत्यर्थः । स्वर्गयागादिकार्यकारण-भावसमुच्चयार्थमस्य चेति वा सम्बन्धः । ननु मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिकारणत्वे स्वात्मनो विघ्नसद्भावा-निश्चयान्मङ्गलमननुष्ठेयं स्यादित्यत आह- **श्रेयांसीति ॥** विघ्नसंशयवतोऽपि मङ्गले अधिकारादिति भावः ।

**(रा.टि)** नन्वनिर्धारितवस्तुनो वन्दनायोगेऽप्यागमेनैव नारायणाख्यवस्तुनो निर्धारणसम्भवात् निर्दोषेति लक्षणोक्तिर्व्यर्थेत्यत आह- **शृङ्गे कर्णे वेति ॥** द्विवचनान्तं पदद्वयम् **॥ लक्षणमुखेनैवेति ॥** 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यतो वा इमानि भूतानि जायन्ते', 'एतद्ब्रह्म' इत्यादिना पूर्णज्ञानत्व-पूर्णानन्दत्वादिलक्षणमुखेनैवेत्यर्थः । सूत्रकारोऽपि जिज्ञास्यं ब्रह्म किमित्याकाङ्क्षायां 'जन्माद्यस्य यतः' इति जगज्जन्महेतुत्वादिलक्षणान्याहेति भावः । तर्हि सदागमैकविज्ञेयमिति प्रमाणोक्तिर्व्यर्थेत्यतो लक्षणज्ञानार्थं तदुक्तिरिति भावेनाऽह- **लक्षणमपीति ॥** अत एव विज्ञेयं विशिष्टतया ज्ञेयमिति विशेषणीभूतलक्षण-ज्ञानार्थत्वद्योतनाय विशब्दः । अन्यथा ज्ञेयमित्येव ब्रूयादिति भावः । तर्हि समतीतेति सम्भावनोक्तिर्व्यर्था, **(रा.टि)** प्रमाणावगतेऽर्थेऽसम्भावनाशङ्काऽनुदयादित्यत आह- **सन्ति हीति ॥ प्रमाणेति ॥** 'उत्ताना वै देवगवा वहन्ति', 'गावो वा एतत्सत्रमासत', 'ओषधयस्संवदन्ते' इत्यादिप्रमाणप्रतीता इत्यर्थः **॥ देवगवा-नामिति ॥** 'गोरतद्धितलुकि' इति गोः तत्पुरुषे टचा समासान्तेनाकारान्तत्वम् । उत्तानानाम् ऊर्ध्वपादा-धश्शरीराणामित्यर्थः ।

ननु पूर्णानन्दत्वपूर्णज्ञानत्वादिधर्माणां मुक्तेष्वपि सम्भवेन कुतोऽत्रासम्भावनेत्यत आह- **अत्र च युग-पदणुत्वमहत्त्वादीनामिति ॥** तेषामप्यत्राणोरणीयान्महतो महीयानिति लक्षणत्वेनाभिमतत्वादिति भावः । **अपवादो मा शङ्कीति ॥** अत एव समस्तविलक्षणतया केवलागमविज्ञेयमित्यसम्भावनाशङ्कानिरासकाशेष-वस्तुवैलक्षण्यद्योतनाय च विशब्दोक्तिरिति भावः । तदाह- **प्रामाणिकत्वाच्चास्यार्थस्येति ॥** सर्ववस्तु-वैलक्षण्यरूपार्थस्य द्वितीयपरिच्छेदे वक्ष्यमाणप्रमाणसिद्धत्वाच्चेति । यद्वा लक्ष्ये सम्भावितमेव लक्षणं वाच्यम् । तच्च प्रमाणप्रमितमेव लक्ष्यावधारकम् । अलौकिके च लक्षणे केवलागम एव प्रमापक इत्यस्यार्थस्य सर्वानु-भवादिरूपप्रमाणसिद्धत्वादित्यर्थः । अथ वा सर्वमेतदभित्तिचित्रायितम् । नारायणवन्दनस्याऽवश्यकत्वे हि तद्विशेषणत्रयमुक्तदिशाऽर्थवत् । तद्धि निर्विघ्नपरिसमाप्तिहेतुतया ह्यावश्यकं वाच्यम् । न च तद्धेतुः । अन्वयतो व्यतिरेकतश्च व्यभिचारादित्याशङ्क्य, फलव्यभिचारोऽन्यप्रयुक्तो, नाहेतुत्वप्रयुक्त इति विवक्षुरन्यप्रयुक्तत्वोक्तौ कल्पकमाह- **प्रामाणिकत्वाच्चास्यार्थस्येति ॥** विघ्नविघातादिसाधनं नारायणाख्यदेवतावन्दनमित्यस्यार्थ-स्याविगीतशिष्टाचारतदनुमितश्रुत्यादिसिद्धत्वादित्यर्थः । चोऽवधारणे । इति कल्प्यत इति पञ्चम्यन्तस्यान्वयः। कृतदेवतावन्दनानामपीति बहुव्रीहिः । पुंसामिति शेषः । प्रासादप्राकारादिचिकीर्षितापरिसमाप्तिरित्यर्थः । ननु शिष्याणामपि विघ्नानिश्चयात् तदर्थं तेषामपि देवतावन्दनार्थं यत्नो न युक्त इति शिष्यान् ग्राहयितुमपि भगवतो निबन्धनार्थयत्नो व्यर्थ इत्यत आह- **श्रेयांसीति ॥ पाक्षिकस्यापीति ॥** अस्तित्वेन सन्देहकोटिप्रविष्टस्यापी-त्यर्थः **॥ प्रयत्नो युक्त एवेति ॥** शिष्याणां वन्दनादौ, भगवतः शिष्यान् ग्राहयितुं, भगवतो निबन्धनार्थश्चेति योज्यम् । इतिशब्द आद्यपद्यव्याख्यासमाप्तौ ॥ १ ॥

**(श्री.टि)** एवमाद्यपद्ये लक्षणप्रमाणसम्भावकानि त्रीण्युक्तानि । त्रयाणामपि कथनस्याऽवश्यकत्वमुपपादयन्नादौ लक्षणकथनस्याऽवश्यकत्वमुपपादयति-**शृङ्गे कर्णे वेति ॥** अतो लक्षणं वक्तव्यमिति शेषः । प्रमाणकथनस्या-प्यावश्यकत्वमाह- **लक्षणमपीति ॥** अतः प्रमाणं वक्तव्यमिति शेषः । अन्यथेतरभेदसाधनाय लक्षणस्य हेतूकरणेऽज्ञानासिद्धिस्स्यादिति भावः । ननु सम्भावना किमर्थं वक्तव्या । असम्भावनाशङ्कापरिहारार्थमिति चेन्न । प्रमाणप्रमितानामसम्भावनया निराकरणायोगादित्यत आह- **सन्तीति ॥ यथा देवगवानामिति ॥** अधःकृतपृष्ठभागा ऊर्ध्वपादा उत्ताना इत्युच्यन्ते । इदं च 'उत्ताना वै देवगवा वहन्ति' इति प्रमाणप्रमितमिति भावः । ननु देवगवानामिति कथं देवगवामिति वक्तव्यत्वादिति चेत् । उच्यते । 'गोरतद्धितलुकि' गोन्तात्तत्पु-रुषाट्टच् स्यादिति सूत्रेण देवगोशब्दाट्टच्प्रत्यये 'चुटू' इति टकारलोपे 'हलन्त्यम्' इति चकारलोपे देवगो अ **(श्री.टि)** इति स्थिते 'एचोऽयवायावः' इतिसूत्रेणाचि परे ओकारस्य अव् इत्यादेशे देवगवेत्यकारान्तप्रातिपदिकं भवति । पश्चात्स्वाद्युत्पत्तौ देवगवानामिति षष्ठीबहुवचनं युक्तमिति द्रष्टव्यम् **॥ अत्र चेति ॥** प्रकृते नारायण इत्यर्थः **॥ युगपदणुत्वमहत्त्वादीनामिति ॥** 'अणोरणीयान्महतो महीयान्' इति प्रमाणप्रमितानां लक्षणानामित्यर्थः । आदिपदेन 'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापकः' इति श्रुतिप्रमितााना-मस्थूलानणुत्वादीनां ग्रहणम् । **अपवादो** विरुद्धत्वं मा शङ्कीत्यनन्तरमतः सम्भावना वक्तव्येति शेषः । उपसंहरति- **इतीति ॥** इत्येवमित्यर्थः ।

यदुक्तं निर्विघ्नपरिसमाप्तिरूपफलसद्भावाद् देवतावन्दनरूपं मङ्गलमनुष्ठेयमिति । तदसत् । कादम्बर्यादौ ग्रन्थे देवतावन्दनरूपे मङ्गले सत्यपि समाप्तेरभावेनान्वयतो व्यभिचारात् । प्रमत्तनास्तिकानुष्ठितकर्मणि देवता-वन्दनरूपमङ्गलाभावेऽपि समाप्तेर्जायमानत्वेन व्यतिरेकव्यभिचारात् । अतो मङ्गलसमाप्त्योः कार्यकारण-भावाभावेन तदर्थं मङ्गलाचरणमयुक्तमित्याशङ्क्य, अन्वयव्यभिचारः प्रतिबन्धकसद्भावकल्पको न त्वकारणत्व-कल्पकः । न हि प्रतिबद्धं कारणं कार्यमजनयदकारणं भवत्यतिप्रसङ्गात् । व्यतिरेकव्यभिचारश्चानेक-कारणत्वकल्पक एव । न तु तस्याकारणत्वकल्पक इत्याह- **कृतदेवतावन्दनानामपीत्यादिना ॥** ननु कुत एवं कल्प्यते । व्यभिचारान्मङ्गलसमाप्त्योः कार्यकारणभाव एव नास्तीति कुतो न कल्प्यते । अन्यथा रासभादेरपि घटकारणत्वमङ्गीकृत्य तत्र प्राप्तान्वयव्यभिचारादेरेवमेव परिहर्तुं शक्यत्वादित्यत उक्तम्- **प्रामाणिक-त्वाच्चास्यार्थस्येति ॥** चशब्दो दृष्टान्तसमुच्चयार्थः । यागस्वर्गयोः कार्यकारणभाववन्मङ्गलसमाप्त्योः कार्य-कारणभावस्य प्रमाणप्रमितत्वेन रासभादिवैलक्षण्यादन्वयव्यभिचारादिकमुक्तरीत्यैव परिहर्तव्यमिति भावः । नन्वथापि मङ्गलमननुष्ठेयं निरधिकारिकत्वात् । विघ्ननिश्चयवत एव हि मङ्गलेष्वधिकारः । नाशार्थिप्रवृत्तौ नाशयनिश्चयवत एवाधिकारस्य प्रायश्चित्तस्थले क्लृप्तत्वात् । न ह्यात्मनो विघ्नवत्त्वं केनापि प्रमाणेन निश्चितमित्यत आह- **श्रेयांसीति ॥** तथा च शङ्कितानिष्टनिवारणार्थमपि परीक्षकाणां सर्पदंशजन्यविषसन्देहेन भेषजपानादौ प्रवृत्तेर्दृष्टत्वेन तद्वदेव श्रेयांसीति वाक्यबलेन विघ्नानां सम्भावितत्वेन यदि विघ्ना न स्युस्तर्हि मङ्गलवैयर्थ्यम्, यदि च स्युस्तर्हि तन्निरासाय मङ्गलं कर्तव्यमेवेत्येवं पाक्षिकोऽपि मङ्गलवैयर्थ्यरूपो दोषः परिहर्तव्य एव । अतः शङ्कितविघ्ननिरासार्थं मङ्गलाचरणरूपः प्रयत्नो युक्त इत्यर्थः । तथा च विघ्नज्ञानवानेव मङ्गलेऽधिकारी, ज्ञानं निश्चयः शङ्का चेति निरधिकारिकत्वहेतोरसिद्धिरिति भावः ।

**(पां.टि)** ननु आगमेनैव नारायणस्वरूपावधारणसम्भवात्, तदर्थतया लक्षणस्यानपेक्षितत्वेन तदभिधाना-नर्थक्यात्, आगमस्य लक्षणमुखेनैव नारायणबोधकत्वेन साक्षात्तदबोधकत्वात् तत्स्वरूपावधारणाय लक्षणस्य अपेक्षितत्वेन तदभिधानावश्यकत्वाभिप्राये च, तल्लक्षणेनैव नारायणस्वरूपावधारणात् तदर्थतया प्रमाणस्यानपेक्षितत्वेन तदभिधानानर्थक्यात्, नारायणनिष्ठतया प्रमितस्यैव लक्षणस्य तत्स्वरूपावधारकत्वेन तन्निष्ठतया अप्रमितस्य तल्लक्षणस्य तदनवधारकत्वात्, तन्निष्ठत्वप्रमितेश्च प्रमाणसापेक्षतया प्रमाणाभिधानस्यापि **(पां.टि)** अर्थवत्त्वाभिप्रायेऽपि, प्रमाणेन नारायणनिष्ठतया प्रमिततल्लक्षणेनैव तत्स्वरूपावधारणसम्भवेन तदर्थ-कतया सम्भावनाया अनपेक्षितत्वेन तदभिधानानर्थक्यात्, नारायणस्वरूपावधारणस्य त्रितयाधीनत्वाभावात् तदभिधानानर्थक्यम् इत्येताः शङ्काः तत्स्वरूपावधारणे लक्षणादित्रितयस्यापि उपयोगप्रदर्शनेन क्रमेण परिहरन् तदभिधानानर्थक्यं परिहरति- **शृङ्गे कर्णे वेत्यादिना ॥** अत्र लक्षणमुखेनेत्यन्तेनाऽद्यशङ्कापरिहारः । लक्षण-मपि नाप्रमितं लक्ष्यनिर्धारणस्य ईष्ट इत्यनेन द्वितीयशङ्कापरिहारः । सन्ति च ते इत्यादिना तृतीयशङ्कापरिहारः । **देवगवानामिति ॥** देवानां गावो देवगवाः तेषां देवगवानाम् इति 'गोरतद्धितलुकि' इति समासान्तटच्-प्रत्ययान्तोऽयं देवगवशब्द इति बोध्यम् । **अत्र** लक्ष्यभूते नारायणे, तथेति शेषः । लोके कालभेदेन विरुद्ध-परिमाणद्वयस्य देहादौ दर्शनाद् अणुत्वमहत्त्वादीनामपि कालभेदेन एकत्र सम्भवात् क्वासम्भावनेत्यत उक्तम्- **युगपदिति ॥**

यत्तु, ननु एतावता लक्ष्यावधारणाय लक्षणसम्भावनाप्रमाणानि त्रीण्यपि कथनीयानीति पर्यवसितम् । तन्न । लक्षणकथनं विनाऽपि शृङ्गे कर्णे वा गृहीत्वा गोप्रदर्शनेऽपि तद्रूपलक्ष्यावधारणदर्शनात् । सकललक्ष्याव-धारणस्यापि लक्षणकथनमात्रेणापि सिद्धेश्च । लक्ष्यनिष्ठतया प्रमाणसिद्धस्यैव लक्षणस्य सकललक्ष्यावधारण-हेतुत्वेन प्रमाणकथनस्य उपयोगेऽपि सम्भावनाकथनस्य उपयोगादर्शनाच्च इत्याशङ्क्य योग्यस्य तस्य तत्त्रितयकथनं विना कथञ्चिदवधारणसम्भवेऽपि अयोग्यस्य तस्य तत्त्रितयं विना स्वरूपावधारणानुपपत्तेः । तस्य त्रितयसापेक्ष-त्वाद् युक्तं त्रितयाभिधानम् इत्यर्थकतयैतद्ग्रन्थवर्णनम् । तदसत् । तथा सति 'नागमो नारायणं साक्षाद् बोधयति किन्तु लक्षणमुखेन' इत्यादिग्रन्थविरोधप्रसङ्गात् । तद्ग्रन्थानुरोधेन, आगमादेव नारायणस्वरूपाव-धारणसिद्धेः तदर्थतया लक्षणस्य अनपेक्षितत्वात् तदभिधानानर्थक्यम् । लक्षणमुखेनैव तस्य बोधकतया लक्षणस्य तत्स्वरूपावधारकत्वात् तदभिधानस्य अर्थवत्त्वेऽपि लक्षणेनैव नारायणस्वरूपावधारणसिद्धेस्तदर्थतया प्रमाणस्यानपेक्षितत्वात् तदभिधानानर्थक्यम् । नारायणनिष्ठतया प्रमितस्यैव तल्लक्षणस्य तत्स्वरूपावधारकत्वेन तदर्थतया प्रमाणस्याप्यपेक्षितत्वात् तस्य आवश्यकत्वाभिप्रायेऽपि लक्षणप्रमाणाभ्यामेव नारायणस्वरूपाव-धारणसिद्धेः । तत्र अनुपयोगात् सम्भावनायाः, तदभिधानानर्थक्यमिति नारायणस्वरूपावधारणाय तल्लक्षण-प्रमाणसम्भावनाभिधानानर्थक्यशङ्काया एव एतद्वाक्यव्यावर्त्यतया उत्थापनीयत्वसिद्ध्या, तामनुत्थाप्य लक्षण-कथनं विनाऽपि शृङ्गे कर्णे वा गृहीत्वा गोप्रदर्शनेनापि तद्रूपलक्ष्यावधारणदर्शनात्

सकललक्ष्यावधारणस्यापि लक्षणकथनमात्रेण सिद्धेः, लक्ष्यनिष्ठतया प्रमाणसिद्धस्यैव लक्षणस्य सकललक्ष्यावधारणहेतुत्वेन प्रमाणकथनस्य उपयोगेऽपि सम्भावनाकथनस्य उपयोगादर्शनात्। गवादिलक्ष्यस्वरूपावधारणस्य लक्षणप्रमाणसम्भावना-नपेक्षत्वेन गवादिलक्ष्यावधारणाय त्रयाणां वक्तव्यत्वासम्भवात् लक्षणाद्यभिधानानर्थक्यमिति त्वया एतद्ग्रन्थ-व्यावर्त्यतयोत्थापितशङ्काया उदाहृतग्रन्थाननुगुणत्वात् । नारायणलक्षणादेः ग्रन्थकृतोक्तस्य तत्स्वरूपाव-धारकत्वस्य अस्मदुक्तरीत्या आक्षेपेणैव तदभिधानानर्थक्यशङ्काया उत्थापयितुं शक्यत्वात् । तन्निवर्तकतया **(पां.टि)**एतद्ग्रन्थावतारस्य श्लिष्टत्वेन, तथाऽनवतार्य नारायणस्वरूपावधारणस्य लक्षणादित्रितयाभिधाना-पेक्षत्वोक्त्या पर्यवसितत्वेन त्वदुपवर्णितस्य लक्ष्यावधारणे लक्षणादित्रितयापेक्षितत्वस्य आक्षेपेण तदभि-धानानर्थक्यशङ्काया अश्लिष्टत्वेन तन्निवर्तकतया एतद्ग्रन्थावतारस्य अत्यन्तायुक्तत्वाच्च । 'नानिर्धारितस्वरूपस्य वन्दनं युक्तम्। न च लक्षणेन विना निर्धारणमतो नारायणस्य लक्षणान्याह' इति ग्रन्थपर्यालोचनया इह टीकायां नम्यनारायणस्वरूपावधारणस्य लक्षणाद्यभिधानापेक्षत्वोक्त्या नम्यान्तरस्वरूपावधारणस्य लक्षणा-द्यभिधानापेक्षितत्वस्य पर्यवसानगत्या लाभसम्भवेऽपि, इह टीकायां लक्ष्यनारायणस्वरूपावधारणाय लक्षणाद्यभि-धानापेक्षितत्वानुक्त्या लक्ष्यस्वरूपमात्रावधारणस्य लक्षणाद्यभिधानापेक्षतायाः पर्यवसानगत्याऽप्यलाभेन तदाक्षेपेण तदभिधानानर्थक्यशङ्काया असम्भवदुक्तिकत्वाच्च ।

ननु कृतदेवतानतीनामपि चिकीर्षितकर्मसमाप्त्यदर्शनाद् अकृतदेवतानतीनामपि तत्समाप्तिदर्शनाद् अन्वयव्यतिरेकाभ्यां व्यभिचारेण मङ्गलस्य समाप्त्यहेतुत्वाद् विघ्नविघातादिसाधनतयेत्यादिनोक्तं मङ्गलस्या-विघ्नसमाप्तिसाधनत्वमयुक्तमित्यतः, तथा सति कृतेऽपि कारीर्यादौ वृष्ट्यदर्शनाद् अकृतेऽपि तस्मिन् तद्दर्शनाद् अन्वयव्यतिरेकाभ्यां व्यभिचारेण तस्यापि वृष्ट्यादिहेतुत्वं न स्यात्। अथ करीर्यादौ वृष्ट्यादिहेतुत्वस्य 'वृष्टिकामः करीर्या यजेत' इत्यादिश्रुतिसिद्धत्वेन निष्प्रमाणकत्वाभावात्, श्रुतिसिद्धे च कार्यकारणभावे, सत्यपि कारणे कार्याभावस्य कर्तृकरणादिवैगुण्यकल्पकत्वेन तत्कल्पनया, असत्यपि कारणे कार्यभावस्य अनेककारणकत्व-कल्पकत्वेन कारणान्तरकल्पनयोपपन्नत्वेन अन्वयव्यतिरेकव्यभिचारयोरप्रसरात् न करीर्यादेः वृष्ट्यादौ अहेतुत्वप्रसङ्ग इति चेन्न। एवं तर्हि नमस्कारस्य निर्विघ्नपरिसमाप्तिसाधनत्वस्यापि 'निर्विघ्नपरिसमाप्तिकामो नमस्कारमाचरेत्' इति श्रुतिसिद्धत्वेन अप्रामाणिकत्वाभावात्, श्रुतिसिद्धे च कार्यकारणभावे सत्यपि कारणे कार्याभावस्य कर्तृकरणादिवैगुण्यकल्पकत्वेन अङ्गवैगुण्यकल्पनया कादम्बर्यादौ सत्यपि तस्मिन् तदभावस्य च, अनेककारणकत्वकल्पकत्वेन मत्तादौ कारणान्तरकल्पनया उपपन्नत्वेन प्रकृतेऽपि अन्वयव्यतिरेकव्यभि-चारयोरप्रसङ्गान्न मङ्गलस्य समाप्त्यहेतुत्वप्रसङ्ग इत्याशयेनाऽह- **प्रामाणिकत्वाच्चास्यार्थस्येत्यादिना ।। अस्यार्थस्य च** अस्यार्थस्यापि मङ्गलस्य निर्विघ्नपरिसमाप्त्यादिहेतुत्वस्यापि **प्रामाणिकत्वाद्** अविगीतशिष्टा-चारानुमितश्रुतिसिद्धत्वादिति योजना। वैगुण्यनिमित्तेत्यस्य कल्प्यत इति वक्ष्यमाणेन सम्बन्धः ।

यत्तु प्रमाणस्य स्वप्रवृत्तिविषय एव सम्भावनारूपाङ्गसापेक्षत्वेन अणुत्वमहत्त्वादेश्च प्रमाणप्रवृत्तिविषयत्वा-भावेन कथं तत्र सम्भावनारूपाङ्गापेक्षेत्याशङ्कापरिहारकतया प्रामाणिकत्वाच्चास्यार्थस्य इति वाक्यमवतार्य अणुत्व-महत्त्वादिरूपस्यार्थस्य 'अणोरणीयान्महतो महीयान्' इत्याद्यागमसिद्धत्वादिति तदर्थवर्णनम्। तदसत्। प्रमाणस्य सम्भावनारूपाङ्गापेक्षाप्रयोजकस्य प्रमाणप्रवृत्तिविषयत्वस्याणुत्त्वादीनाम् आगमविज्ञेयमित्यनेन मूल-कृतैवोक्तत्वेन तत एव तत्सिद्ध्या प्रमाणविषयत्वाभावप्रयुक्तसम्भावनारूपाङ्गापेक्षानुपपत्तिशङ्काया अति-निर्दलत्वात् । मूलकारीयसम्भावनोक्तिप्रयोजकप्रमाणप्रवृत्तिविषयतायास्तदीयलक्षणे प्रमाणप्रवृत्तिविषयत्वो-**(पां.टि)** क्त्यभावस्थल एव टीकाकारीयलक्षणादिप्रामाणि-कत्वोक्तेरर्थवत्त्वेन सत्यां तस्यां तदुक्तेरनर्थकतया सम्भावनारूपाङ्गापेक्षाप्रयोजकप्रमाणप्रवृत्तिविषयत्वोपदर्शकतया योजयितुमशक्यत्वाच्च। सम्भावनोप-पादकपूर्वग्रन्थशेषत्वाभिप्राये अस्य वाक्यस्य, 'इति लक्षणसम्भावनाप्रमाणानां त्रयाणामपि कथनं युक्तम्' इत्यतः पूर्वमेव सन्निवेशनीयत्वेन तदनन्तरस्य टीकाकारीयतत्सन्निवेशस्याश्लिष्टत्वापाताच्च। त्वदुक्तयोजनायां कृताणुत्वमहत्त्वाद्यन्वयेनैव नैराकाङ्क्ष्यसिद्ध्या प्रामाणिकत्वादित्येव वक्तव्यत्वेन अस्यार्थस्येत्यस्य चशब्दस्य च वैय्यर्थ्यापाताच्च । कल्पकाभावप्रयुक्तकल्पनाऽनुपपत्तिशङ्कायाः कल्पकोक्तिमात्रनिवर्त्यत्वेन पूर्वग्रन्थशेषतायां कल्पकाभावप्रयुक्तकल्पनानुपपत्तिशङ्काया अपरिहारेण 'मङ्गलाचरणस्याविघ्नपरिसमाप्त्यादिहेतुत्वस्यापि अविगीतशिष्टाचारानुमितश्रुतिसिद्धत्वात्' इति सुधानुसारेण च प्रामाणिकत्वाच्च अस्यार्थस्य इत्यस्य उक्त-ग्रन्थशेषतया एव निश्चितत्वेन पूर्वग्रन्थशेषताया असम्भवदुक्तिकत्वाच्च ।

यच्च धर्मिग्राहकमानसिद्धत्वाच्च न विरोध इति भाववर्णनम् । तदप्यसत् । विरुद्धत्वप्रयुक्तासम्भवशङ्कायाः

सम्भवोक्तिमात्रनिवर्त्यतया धर्मिग्राहकमानसिद्धत्वोक्त्यनिवर्त्यत्वात् । अन्यथा अनेनैव असम्भवशङ्कानिवृत्ति-सिद्धेः सम्भावनोक्तिवैय्यर्थ्यानिस्तारात् ।

ननु विघ्नविध्वंसविशिष्टसमाप्तेर्न मङ्गलफलत्वं युक्तम्। तथा सति समाप्तिविशेषणतया विघ्नाभावस्य मङ्गल-प्रवृत्त्युद्देश्यताऽऽपत्त्या नाशार्थिप्रवृत्तौ नाश्यनिश्चयवतोऽधिकारस्य प्रायश्चित्तादिस्थले क्लृप्ततया प्रकृते च आत्मनो विघ्ननिश्चायकप्रमाणाभावेन विघ्ननिश्चयाभावेन अधिकाराभावात् निरधिकारित्वान्मङ्गलं न वेदबोधिताभीष्टो-पायताकम् इति प्रतिपक्षशङ्काकलङ्कितत्वेन मङ्गलस्य अविगीतशिष्टाचारविषयत्वेन वेदबोधिताभीष्टोपाय-ताकत्वानुमानस्य आभासत्वेन मङ्गलसमाप्त्योः कार्यकारणभावस्य तेनासिद्ध्या तत्सिद्ध्युपजीवनेन अङ्ग-वैगुण्यादिकल्पनानुपपत्त्या न तत्कल्पनया उक्तव्यभिचारपरिहारः सम्भवतीत्यतः, पापनिश्चयवतामेव शिष्टानां प्रायश्चित्तानुष्ठानदर्शनेन तदाचारानुमितिविधिना पापनिश्चयवतोऽधिकारबोधनात् तन्निश्चयवत एव प्रायश्चित्तादौ अधिकारेऽपि, प्रकृते विघ्नसन्देहे तन्निश्चये वा शिष्टानां मङ्गलानुष्ठानेन तदाचारानुमितिविधिना विघ्नज्ञानवतोऽ-धिकारबोधनाद् आत्मनो विघ्नवत्त्वप्रमाणाभावेन तन्निश्चयाभावेऽपि तत्सन्देहस्य विद्यमानत्वात् सन्देहस्यापि ज्ञानत्वाद् विघ्नज्ञानरूपाधिकारसद्भावेन निरधिकारिकत्वहेतोरसिद्धत्वेन तेन मङ्गलस्य वेदबोधिताभीष्टोपाय-ताकत्वाभावानुमानासम्भवेन अप्रतिपक्षतया मङ्गलस्य अविगीतशिष्टाचारविषयत्वेन वेदबोधिताभीष्टोपाय-ताकत्वानुमानस्याप्रत्यूहतया मङ्गलसमाप्त्योः कार्यकारणभावस्य श्रुतिसिद्धत्वप्राप्त्या तदुपजीवनेन अङ्ग-वैगुण्यादिकल्पनोपपत्त्या, युक्त एव तया व्यभिचारद्वयपरिहार इत्याशयेनाऽह- **श्रेयांसीति ॥**

यत्तु, ननु सर्वत्र विघ्ननिश्चयासम्भवात् नाश्यसन्देहे कथं तन्नाशोपाये प्रवृत्तिः । न हि पापसन्देहवान् तन्नाशोपाये प्रायश्चित्ते प्रवर्तत इत्याशङ्कानिवर्तकतया श्रेयांसीति वाक्यमवतार्य, उपायत्वसन्देहस्यैव प्रवृत्तिप्रतिबन्धकतया फलसन्देहतया पर्यवसन्नविघ्नसन्देहस्य तदप्रतिबन्धकत्वात् नानुपपत्तिरिति तदभिप्रायवर्णनम्। तदसत्। नाश्य-**(पां.टि)** सन्देहात् कथं नाशोपाये प्रवृत्तिरिति शङ्काया एतद्ग्रन्थावतारिकात्वेन उत्थापनं किं तस्याः सम्भा-विततत्वमात्रेण, किं वा तत्त्वे सति प्रकृतोपयुक्तत्वेन, किं वा अन्यथाशङ्काया असम्भावितत्वेन सम्भावितत्वे वा तस्याः प्रकृतानुपयुक्तत्वेन, सत्यपि प्रकृतोपयुक्तत्वे उत्तरग्रन्थानिवर्त्यत्वेन वा। नाऽद्यः। सम्भावितत्वस्य उत्थापनीयत्वमात्रप्रयोजकस्य ग्रन्थस्योपरि तदुत्थापनपूर्वकनिरासेनापि उपपन्नत्वेन अवतारिकात्वेन तच्छङ्काया उत्थापनीयत्वाप्रयोजकत्वात् । न द्वितीयः । उक्तशङ्कायाः पूर्वग्रन्थोक्तमङ्गलसमाप्तिकार्यकारणभावप्रामा-णिकत्वाद्यनुपमर्दकत्वेन तदयोगात्। न तृतीयः। मङ्गलं न वेदबोधिताभीष्टोपायताकं निरधिकारिकत्वाद् इति प्रतिपक्षशङ्काया अपि सम्भावितत्वेन तदयोगात्। नापि चतुर्थः। प्रतिपक्षशङ्कायाः पूर्वग्रन्थोक्तमङ्गलसमाप्त्योः कार्यकारणभावप्रामाणिकत्वोपमर्दकतया व्यभिचारपरिहाराक्षेपपर्यन्तत्वेन तदयोगात्। नापि पञ्चमः। विघ्नसन्देहवच्छिष्टानुष्ठानकल्प्यविधिना विघ्नज्ञानवतोऽधिकारित्वसिद्ध्या निश्चायकप्रमाणाभावेन विघ्न-निश्चयाभावेऽपि तत्सन्देहस्य सत्त्वेन विघ्नज्ञानरूपाधिकारसद्भावप्रतिपादकोत्तरग्रन्थेन निरधिकारिकत्व-रूपप्रतिपक्षहेतोरसिद्धिसूचनेन तन्निवर्त्यतायाः स्पष्टत्वात् । परग्रन्थानुवादरूपैतद्ग्रन्थस्य तद्ग्रन्थीयाभियुक्त-योजनानुसारेणैव योजनीयत्वात्। अभियुक्तैश्च प्रतिपक्षशङ्कादिपरतयैव तस्य योजितत्वेन तदनुवादरूपस्य ग्रन्थस्य तथैव योजनासम्भवे तत्परित्यागेन अन्यथायोजनस्य निर्निबन्धनत्वाच्च ।

**(व्या.टि.)** वन्ध्यनारायणस्वरूपावधारणाय लक्षणप्रमाणसम्भावनानामुक्तेरुपयोगो नास्ति । लक्षण-प्रमाणयोरन्यतरेण परस्परनिरपेक्षेण निर्धारणसम्भवेन उभयवैय्यर्थ्यात्। सम्भावकस्य तु अनुपयोगेन सर्वथा वैय्यर्थ्यमिति शङ्कायामुपयोगं वक्ति- **शृङ्गे कर्णे वेति ॥** केशेषु गृहीत्वा इत्यादाविव अवच्छिन्नत्वार्थका सप्तमी । शृङ्गाद्यवच्छिन्नं गोकर्मकं ग्रहणमित्यर्थः । द्वितीयाद्विवचनान्तमिति केचित्। लक्षणानपेक्षस्यागमस्य निर्धारकत्वशङ्काया अयं निरासः। प्रत्यक्षयोग्यलक्ष्यव्यक्तिं शृङ्गे गृहीत्वा लक्ष्यमनिर्दिश्य सामान्यशब्देन निर्दिश्य वा सर्वविलक्षणेत्युक्तौ लक्ष्यव्यक्तिविशेष्यकसर्ववैलक्षण्यप्रकारकबोधेऽपि, प्रत्यक्षायोग्यनारायणव्यक्तौ शृङ्ग-ग्राहिकाऽसम्भवेन, अनिर्देशे सामान्यनिर्देशे वा तन्मात्रविशेष्यकेतरव्यावृत्तिबोधासम्भवेन, लक्ष्यासाधारण-धर्मप्रवृत्तिनिमित्तकशब्देन निर्देशे लक्षणोपजीवित्वं व्यावृत्तिबोधकागमस्यायातम् । प्रमाणानपेक्षेण लक्षणेन निर्धारणं निरस्यति- **लक्षणमपीति ॥** लक्ष्यनिष्ठतयाऽप्रमितलक्षणस्य लक्ष्यविशेष्यकेतरव्यावृत्तिप्रमाऽनुमिति-जनकत्वायोगात् प्रमाणमपेक्षते । प्रमाणं च प्रकृते सदागम एवेति भावः। सम्भावकस्योपयोगं दर्शयति- **सन्ति चेति ॥ प्रमाणप्रमिता अप्यसम्भावनयाऽपोद्यन्त इति ॥** प्रतीता अपीति क्वचित्पाठः । वस्तुतः प्रमाणकरण-कनिर्णयविषया अपि सम्भाव्यायोग्यताव्याप्यतया भ्रान्तिविषयसाधारणधर्मप्रयुक्ताऽयोग्यताज्ञानरूपदोषेण वस्तुसत्ताऽनवगाहिनिश्चयविषयाः सन्दिग्धप्रामाण्यकनिश्चयविषया वा

भवन्तीत्यर्थः । यथा पित्तदोषज्ञानवता ज्ञायमानं चिरबिल्वेऽपि पीतिमादिकम् । अतः प्रमाणप्रमिता इत्यस्य, अपोह्यन्त इत्यनेन न व्याघातः । अधिकं तु गुरुप्रभायाम् ॥ **देवगवानामिति** ॥ 'गोरतद्धित' इति टजन्तं पुंलिङ्गम् । **अत्र चेति** ॥ भगवल्लक्षण **(व्या.टि.)** इत्यर्थः । कालभेदेऽसम्भावनाऽभावात् **युगपदिति** ॥ **अपवाद इति** ॥ सत्ताऽवधारणविषयत्वं प्रामाण्यसन्देहाहितसन्देहविषयत्वं वेत्यर्थः । मा शङ्कीति चिण्णन्तम् । ननु प्रमितस्यार्थस्यासम्भावनयाऽ-पवादेऽपि प्रमाणाभावेन कथमणुत्वादावसम्भावनाशङ्का, तन्निरासाय यत्नश्चेत्यत आह- **प्रामाणिकत्वा-दिति** ॥ उत्तानवहनस्येव अणुत्वादेरपि 'अणोरणीयान्' इत्यादिश्रुतिसिद्धत्वादित्यर्थः । अथ वा सम्भावक-मप्यप्रमितं कथमसम्भावनां पराचक्षीत इत्यत आह- **प्रामाणिकत्वाच्चेति** ॥ द्वितीयपरिच्छेदोक्तप्रमाण-सिद्धत्वादित्यर्थः । वस्तुतस्तु अन्वयतो व्यतिरेकतश्च व्यभिचारात् समाप्तिवन्दनयोरकार्यकारणभावे शङ्किते, वृष्टिकारीर्यादे प्रत्यक्षश्रुत्येव वन्दनसमाप्त्योरपि शिष्टाचारानुमितश्रुत्या कार्यकारणभावस्य निश्चितत्वात्तत्रेव अत्रापि व्यभिचारस्यान्यथासिद्धिकल्पनं युज्यत इत्याशयेनाऽह-**प्रामाणिकत्वादिति** ॥ **अस्यार्थस्य च**, मङ्गल-समाप्तिकार्यकारणभावस्यापीत्यर्थः । पञ्चम्याः कल्प्यत इति वक्ष्यमाणेनान्वयः । अन्वयव्यभिचारं परिहरति- **कृतदेवतावन्दनानामपीति** ॥ **वैगुण्येति** ॥ साङ्गस्यैव फलावश्यम्भावनियमादिति भावः । व्यतिरेकेऽपि तं निराह-**या त्वकृतेति** ॥ **अदृष्टान्तरायत्तेति** ॥ न हि बहुसाधनसाध्ये कार्ये केनचित् सिद्धे तदहेतुरहेतुर्भवति । 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इत्युक्तेरिति भावः ।

ननु पापे निश्चित एव प्रायश्चित्तानुष्ठानदर्शनादनिश्चिते विघ्ने कथं तन्नाशार्थे मङ्गले प्रवृत्तिरित्यत आह- **श्रेयांसीति** ॥ बहवो विघ्ना येष्विति सप्तम्यर्थे बहुव्रीहिः ॥ **सम्भावितत्वादिति** ॥ अनेन, सर्पिषोऽपि स्यादिति-वत् 'महतामपि'[१] इत्यपिशब्दः पदार्थसम्भावनायामिति सूचयति । **पाक्षिकस्यापीति** ॥ पक्षे भवः पाक्षिकः । भवार्थे ठक् बोध्यः । अभिमतपुत्राद्युत्पत्तिप्रतिबन्धकदुरिताशङ्कया तन्निरासकजपाद्यनुष्ठानदर्शनेन, अत्रापि समाप्ति-प्रतिबन्धकविघ्नसन्देहेऽपि तन्निरसनप्रयत्नोपपत्तेः । इदं तु सन्देहेन मङ्गलानुष्ठानसाधनं लोके । प्रकृते तु भगवत्पा-दाचार्यस्य विघ्नाभावनिश्चयेन भगवत्प्रीत्यतिशयोद्देशेनैवानुष्ठानम् । निबन्धनं तु शिष्यानुजिघृक्षया । स्वयमाचर-णाभावे शिष्याणां तत्कर्तव्यताज्ञानानुदयेन अनुष्ठानाभावं शिष्याणां विघ्नैः समाप्तिः प्रतिबध्येत ।

केचित्तु 'प्रत्यवायनिश्चयवतां प्रायश्चित्ते इव विघ्ननिश्चयवतामेव तन्निरासके मङ्गलेऽधिकारस्य वाच्यतया, तन्निश्चयस्य चाभावेन निरधिकारिकत्वान्मङ्गलस्य वेदबोधितेष्टोपायताकत्वमयुक्तमिति प्रतिपक्षशङ्काकलङ्कितत्वेन शिष्टाचारविषयत्वासिद्धया, तत्सिद्ध्युपजीवनेन अङ्गवैगुण्यादिकल्पनानुपपत्त्या, उक्तव्यभिचारपरिहारोऽयुक्त इत्यतः, संशयसाधारणज्ञानवद्भिरेव मङ्गलानुष्ठानेन आचारानुमितश्रुत्या विघ्नज्ञानसामान्यवतामेवाधिकारः कल्प्यत इति नोक्तदोष इत्याशयेनाऽह- **श्रेयांसीति** ॥' इत्यवतारयन्ति ।

**मूलम् -** **विशेषणानि यानीह कथितानि सदुक्तिभिः ।**
**साधयिष्यामि तान्येव क्रमात् सज्जनसंविदे ॥ २ ॥**

**(त.मं.)** वस्तु निर्दिशति - **विशेषणानीत्यादिना** ॥ **सदुक्तिभिः** सदागमैः । निर्दोषोप-पत्त्युक्तिभिश्च । अत्र सज्जनसंविद इति सज्जनोऽधिकारी, मोक्षैकफला नारायणसंवित् प्रयोजनं चोच्यते । विषयस्तु नारायणमिति प्रथमत एव । सम्बन्धः संवेद्यसंवेदकादिलक्षणः ।

**टीका -** स्यादेतत् । प्रकरणमेवेदं नाऽरम्भणीयं विषयप्रयोजनसम्बन्धशून्यत्वात् । प्रतीतघट-स्वरूपप्रतिपादकवाक्यवत् काकदन्तपरीक्षाग्रन्थवच्च । स हि शास्त्रस्य विषयो भवति, योऽज्ञातः सन्दिग्धो विपर्यस्तो वा । अस्य च विषयत्वेन अभिमतो नारायणः सर्वसम्मत एव । नहि नारायणपदमनर्थकं कोऽप्यङ्गीकरोति । नाप्यस्य प्रकरणस्य प्रयोजनमस्ति, ऐहिकपारत्रिकयोः कृष्यादियागादिसाधनान्तरसाध्यत्वात्, एतेन सम्बन्धाभावाच्च । मोक्षस्यापि कर्मसाध्यत्वात्, एतत्सम्बन्धाभावाच्च, सकलैहिकपारत्रिकभोगपरित्यागात्मकस्य तस्य अपुरुषार्थत्वेन निरधि-कारिकत्वापत्तेश्चेत्यत आह- **विशेषणानीति** ॥ लक्षणत्वेन निर्दोषत्वम्, अशेषसद्गुणत्वम्, यथा कामधेनुप्रभृतीनां लोकविलक्षणत्वात् प्रासादोद्गिरणादिकं नासम्भवि, तथा भगवतोऽपीति दर्शनार्थं सर्वतोऽत्यन्तविलक्षणत्वम्, तत्र प्रमाणाकाङ्क्षायां

वेदादिवेद्यत्वं, तस्य विरोधपरिहाराय दुरागमाद्यवेद्यत्वमिति **यानि इह** आद्यपद्ये नारायणस्य विशेषणानि कथितानि तान्येव इह ग्रन्थे साधयिष्यामि, तत्प्रसक्तं चान्यत्। न तु स्वरूपमात्रम्। एतद्विशेषणवति च नारायणे सन्त्येव अज्ञानसन्देहविप्रतिपत्तय इत्यनेन विषयो दर्शितः। प्रकरणस्य विषयेण सह प्रतिपाद्यप्रति-पादकत्वलक्षणः सम्बन्धश्चोक्तः। स तु न युक्तः। साधकप्रमाणाभावात्। न तावदनुमानादिना सदागमैकविज्ञेयत्वादिविशिष्टतया नारायणः साधयितुं शक्यते स्ववचनविरोधात्। नापि वेदादिभिः सदागमैः, तत्प्रामाण्यमनभ्युपगच्छतः सौगतार्हतादीन् प्रति तदुपन्यासायोगाद् इत्यत आह- **सदुक्तिभिरिति ॥** सदागमैः। तत्प्रामाण्यं च साधयिष्यामीति भावः।

अथवा सत्यो वेदाद्या उक्तयः अनुग्राहिका येषामनुमानादीनां तानि सदुक्तीनि तैरपि। सदागमैकविज्ञेयमिति च वेदादिविरुद्धानुमानाद्यवेद्यत्वमेवोक्तमिति हृदयम्। क्रमादिति मन्दानां मनस्समाधानायोक्तम्। अन्यथा कुत्र **किं** साधितमिति मन्दा व्याकुलाः स्युः। निर्देशक्रम एवात्र विवक्षितो न त्वाकाङ्क्षाक्रमः। संविदे इति प्रयोजनाभिधानम्। ननु न व्युत्पाद्यार्थसंविन्मात्रं प्रयोजनं सुखदुःखावाप्तिहान्योरन्यतरत्वाभावात्, काकदन्तपरीक्षाग्रन्थसाधारण्याच्चेत्यत उक्तम्- **सज्ज-नेति ॥** सन्ति हि तथाविधाः पुरुषाः, येषां सुखावाप्त्यादिकमपि न प्रार्थ्यं, किन्तु परमेष्टस्य नारायणस्य संविदेव। तान् प्रति इदं साधनमुपपद्यते। नहि सर्वाधिकारिकं किमपि शास्त्रमस्ति। अथवा संविच्छब्देन तत्साध्यो मोक्ष उपलक्ष्यते। मोक्षस्य कर्मसाध्यत्वं निराकर्तुं, प्रकरणस्य प्रयोजनेन सम्बन्धमुपपादयितुं च लाक्षणिकप्रयोगः। एवं तर्हि निरधिकारिकत्वमित्यत उक्तम्- **सज्ज-नेति ॥** ये खलु सात्त्विकप्रकृतयोऽधीतसाङ्गाम्नायाः, शमदमादिसम्पन्नाः, नित्यानित्यवस्तुविवेक-वन्तोऽखिलसांसारिकभोगेभ्यो विरक्ता मुमुक्षवो, भगवत्संविदेकसाध्यत्वात् मोक्षस्य, तामेवार्थ-यन्ते तेषां संविदे। तस्मात् विषयप्रयोजनसम्बन्धाधिकारिसम्पन्नत्वादारम्भणीयं प्रकरणमिति स्थितम्।

**(र.टि.) ॥ प्रतीतघटेति ॥** यथाक्रममनयोर्विषयप्रयोजनाभावोदाहरणत्वं द्रष्टव्यम्। एतयोरेव सम्बन्धा-भावोदाहरणत्वान्न पृथक् वक्तव्यमिति भावः **॥ एतेनेति ॥** शास्त्रेणैहिकपारत्रिकयोः सम्बन्धाभावादित्यर्थः। ननु संविच्छब्देन मोक्षः कुत उपलक्षणीयः, सज्जनमुक्तय इत्येव किं नोच्यत इत्यत आह- **मोक्षस्य कर्म-साध्यत्वमिति ॥** तथा च शक्यसम्बन्धान्वेषणे संविन्मोक्षयोर्जन्यजनकभावलाभेन मोक्षस्य कर्मसाध्यत्व-निराकरणं संविद्विषयप्रतिपादकस्यास्य प्रकरणस्य संवित्साध्यमुक्त्या सह परम्परया साध्यसाधनभाव-सम्बन्धोपपादनं च कृतं भवति। मुख्यप्रयोगे तदसिद्धेरिति भावः। पूर्वोक्तनिरधिकारित्वशङ्कापरिहारकत्वेन सज्जनपदमवतारयति- **एवं तर्हीति ॥**

**(रा.टि.)** उत्तरपद्यस्य व्यर्थतामाशङ्क्य तन्निवर्तकतया तदवतारयति- **स्यादेतदित्यादिना ॥ एतद्** वक्ष्यमाणं चोद्यं स्यादित्यर्थः। तदाह-**प्रकरणमेवेदमिति ॥** यद्वा **एतद्**मङ्गलाचरणरूपं वन्दनं प्रकरणस्यारभ्यत्वे स्यात्। तदेव अनारम्भणीयमित्यर्थः **॥ विषयेति ॥** विषयशून्यत्वात्, प्रयोजनशून्यत्वात्, विषयेण च प्रयोजनतया अभिमतेन चास्य प्रकरणस्य सम्बन्धशून्यत्वादित्यभिप्रेत्य, आद्यहेतुद्वये क्रमाद् दृष्टान्तावाह- **प्रतीतेति ॥** विषयस्वरूपं वदन्नेव आद्यहेतोः पक्षधर्मतामाह- **स हीत्यादिना अङ्गीकरोतीत्यन्तेन ॥** एतच्च 'इह तान्येव विशेषणानि साधयिष्यामि' इत्यस्य व्यावर्त्यं ज्ञेयम्। अज्ञातोऽनिश्चित इत्यर्थः। ज्ञात इति वा विभागः, सामान्यतो ज्ञातः, विशेषतः सन्दिग्धो विपर्यस्तो वा इत्यर्थः **॥ अस्य चेति ॥** प्रकरणस्येत्यर्थः **॥ सम्मत एवेति ॥** नारायणपदवाच्योऽर्थः कश्चिदस्तीति सर्वजनसम्मत एव। न कस्यापि तत्र संशयो विपर्ययो वाऽस्तीति भावेन सम्मतत्वं व्यनक्ति- **न हीत्यादिना ॥** एतेन विषयेणास्य सम्बन्धाभावो व्युत्पादितो भवति। द्वितीयादिहेतोः पक्षधर्मतां व्यनक्ति-**नापीत्यादिना। एतेनेति ॥** प्रकरणेनेत्यर्थः। ऐहिकपारत्रिकयोरित्यनुषङ्गः। मोक्षोऽस्तु प्रयोजनमित्यत आह- **मोक्षस्यापीति ॥** 'अपाम सोमममृता अभूम' इत्यादेरिति भावः **॥ एतत्सम्बन्धे-ति ॥** प्रकरणेन मोक्षस्य सम्बन्धाभावाच्चेत्यर्थः। तदेतत् लाक्षणिकसंवित्पदकृत्यं बोध्यम्। न्यायमतरीत्या **(रा.टि.)** आह- **सकलेति ॥ तस्येति ॥** मोक्षस्येत्यर्थः **॥ निरधिकारिकत्वेति ॥** तादृशमोक्षप्रयोजकस्यास्य प्रकरणस्येति योज्यम्। तदेतत् सज्जनपदव्यावर्त्यम्। उक्तसर्वशङ्कानिवर्तकतया आद्यपद्यं व्याचष्टे- **लक्षणत्वे-नेत्यादिना।**

**विलक्षणत्वमिति ॥** समतीतेत्यादिनोक्तमिति योज्यम् । **तत्रेति ॥** निर्दोषत्वादिलक्षणे सर्वतोऽत्यन्तविलक्षणत्वे चेत्यर्थः । आगमैकविज्ञेयमित्यस्यार्थो वेदादीति । सत्पदार्थस्तस्येत्यादि । इहेत्यनुवादः। आद्यपद्य इति व्याख्या । इहेत्यनुवृत्त्या अर्थान्तरं तस्याह- **इह ग्रन्थ इति ॥ अन्यदिति ॥** वेदप्रामाण्य-तन्नित्यत्वतद्विभागाक्षप्राबल्यादिकमित्यर्थः ॥ **अज्ञानेति ॥** यथावन्निश्चयाभाव इत्यर्थः ॥ **इत्यनेनेति ॥** साधयिष्यामि तान्येवेत्यर्थः । सदुक्तिभिरित्यस्य व्यावर्त्यमाह- **स तु न युक्त इति ॥** स इत्यस्योक्त-विशेषणविशिष्टो नारायणोऽस्य विषय इत्ययमर्थ इत्यर्थः ॥ **स्ववचनेति ॥** आगमैकविज्ञेयत्वोक्ति-रूपस्ववचनविरोधात् । 'न चानुमानात् तत्सिद्धिः' इत्यादिवक्ष्यमाणस्ववचनविरोधाद्वेत्यर्थः । स्वतन्त्रत्वाद्यनु-मानानां श्रुतिपुराणोक्तानामग्रेऽभिधानादाह- **अथ वेति ॥** स्ववचनविरोधं निराह- **सदागमेति ॥ न त्वाकाङ्क्षाक्रम इति ॥** तथात्वे त्रयाणामपि परिच्छेदानां मध्येऽन्त्यस्य प्राथम्यं प्रथमस्यान्त्यताप्रसङ्ग इति भावः ॥ **व्युत्पाद्यार्थेति ॥** उक्तविशेषणयुक्तनारायणरूपार्थसंविन्मात्रमि-त्यर्थः । तज्ज्ञानस्यापुमर्थत्वेऽपि विप्रतिपन्नोऽर्थोऽवश्यं व्युत्पाद्य एवेत्यत आह- **काकदन्तेति ॥** तथात्वेऽनारम्भणीय एवायं ग्रन्थः स्यादिति भावः ॥ **सन्ति हीति ॥** 'एकान्तानां न कस्यचित् । अर्थे नारायणो देवः सर्वमन्यत् तदर्थकम्' इति वचनादिति भावः । सर्वाधिकारिकत्वलाभायाऽह- **अथ वेति ॥ सम्बन्धमिति ॥** प्रकरणजन्यसंवित्साध्यत्वरूपसम्बन्ध-मित्यर्थः ॥ **एवं तर्हीति ॥** ऐहिकामुष्मिकभोगहीनमोक्षफलकत्व इत्यर्थः । निरधिकारिकत्वं प्रकरणस्येत्यनु-षङ्गः । सांसारिकेभ्यो भोगेभ्यो विरक्ता मुमुक्षव इत्युक्त्या मोक्षस्य परमपुमर्थत्वं सूचितम् ॥ **तेषां संविद इति ॥** स्वतोऽपुमर्थत्वेऽपि परमपुमर्थमोक्षहेतुत्वात् पुमर्थ एव संविदिति भावः । एतेन सात्त्विकप्रकृतित्वाद्युक्त-विशेषणविशिष्टा अत्र ग्रन्थेऽधिकारिण इत्युक्तं भवति ।

**(श्री.टि.) ॥ प्रकरणमेवेदमिति ॥** यस्य निर्विघ्नेन परिसमाप्त्यर्थं मङ्गलाचरणं स्यादिति भावः ॥ **सम्बन्धे-ति ॥** विषयप्रयोजनाभ्यां प्रकरणस्य, विषयप्रयोजनयोश्च परस्परं सम्बन्धाभावादित्यर्थः । विषयशून्यतयाऽ-नारम्भणीयत्वे दृष्टान्तमाह- **प्रतीतेति ॥** प्रयोजनशून्यत्वेनानारम्भणीयत्वे दृष्टान्तमाह- **काकेति ॥** 'काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम् । कम्बले कति रोमाणि का वार्ता चोलमण्डले' इत्यादिवदित्यर्थः । एतयोरेव सम्बन्धाभावोदाहरणत्वान्न पृथगुक्तमिति मन्तव्यम् । स्वरूपासिद्धिपरिहाराय विषयशून्यत्वमुप-पादयति- **स हीति ॥ योऽज्ञात इत्यादि ॥** यथाऽऽहुः पदार्थविदः 'सन्दिग्धविपर्यस्तान्यतरं प्रत्येव शास्त्रस्यार्थ-वत्त्वात्' इति । अस्य प्रकरणस्य सर्वसम्मतत्वमुपपादयति- **न हीति ॥** तथात्वे पदत्वव्याघातादिति भावः । व्याघातसूचनार्थमेव 'पदमनर्थकं कोऽपि न ह्यङ्गीकरोति' इत्युक्तम् । तथा हि । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति प्रातिपदिकसञ्ज्ञायाम्, 'ङ्याप्प्रातिपदिकात्' इति प्रातिपदिकोपरि स्वादिप्रत्यये, 'सुप्तिङन्तं पदम्' इति **(श्री.टि.)** पदत्वविधानात्, पदत्वाङ्गीकारेऽर्थवत्त्वप्राप्त्या अनर्थकत्वाङ्गीकारे च तद्व्याहन्येतेत्याशयः । प्रयोजन-शून्यत्वमुपपादयति- **नापीति ॥** प्रयोजनं भवदैहिकं वा स्यात् पारत्रिकं वा । द्वितीयेऽपि स्वर्गो मोक्षो वा । नाऽद्यद्वितीयावित्याह- **ऐहिकेति ॥** धान्यधनादिरूपैहिकेत्यर्थः । कृष्यादीत्यादिपदेन कुसीदादिग्रहणम् । यागादीत्यादिपदेन अन्नप्रपादानादिरूपपूर्तसङ्ग्रहः ॥ **एतेनेति ॥** तयोः साधनान्तरसाध्यत्वेन एतेन प्रकरणेन जन्यजनकभावसम्बन्धाभावादित्यर्थः । एवमेवोत्तरत्राप्युपपादनं द्रष्टव्यम् । नापि तृतीय इत्याह- **मोक्षस्या-पीति ॥** 'अपाम सोमममृता अभूम' इत्यादिश्रुतेरिति भावः ॥ **एतदिति ॥** एतेन प्रकरणेनेत्यर्थः । विषय-प्रयोजनाभावादेवाधिकारी च दूरे निरस्त इत्याह- **सकलेति ॥** आत्मकस्येत्यनन्तरं मोक्षस्येति शेषः । एक-विंशतिदुःखध्वंसात्मनाशादिरूपत्वादिति भावः ॥ **अपुरुषार्थत्वेनेति ॥** पुरुषेणार्थ्यमानत्वाभावेनेत्यर्थः । न ह्येतादृशे मोक्षेऽर्थिता कस्यापि सम्भवतीति भावः ॥ **निरधिकारिकत्वापत्तेरिति ॥** यो हि यमर्थमर्थयमानो यं विषयं जिज्ञासते तस्यैवाधिकारित्वादिति भावः । केवलार्थैकैकशब्दार्थानुवादो दुरागमाद्यवेद्यत्वमिति । इहेत्यस्याऽवृत्तिमभिप्रेत्य इह ग्रन्थ इत्युक्तम् । ननु वेदप्रामाण्यापौरुषेयत्वादेरप्यत्र साधनात्तान्येवेति कथमुच्यत इत्यत आह- **तत्प्रसक्तं चेति ॥** सदागमैकविज्ञेयत्वे कथिते वेदानामेवाप्रामाण्यात्तत्कथमेतदित्याशङ्कायां तत्प्रामाण्यादिसाधनं क्रियत इत्येवमादिरूपेण अन्यत् प्रामाण्यादिसाधनम्, सदागमैकविज्ञेयत्वादिकथनप्रसक्त-मित्यर्थः ॥ **न तु स्वरूपमात्रमिति ॥** नारायणस्वरूपमात्रमित्यर्थः । येन तस्य सर्वसम्मतत्वेन विषयत्वं न स्यादिति भावः । विप्रतिपत्तिः विपरीतनिश्चयः ॥ **उक्त इति ॥** इह साधयिष्यामीत्यनेनेत्यर्थः । शङ्कते- **स त्विति ॥** विषय इत्यर्थः । सदागमैकविज्ञेयत्वादिविशिष्टस्य नारायणस्य यद्विषयत्वमुक्तं तदयुक्तमिति यावत् ॥ **साधकेति ॥** साधयिष्यामीति साधकं प्रमाणमुक्तं तदभावादित्यर्थः । अनुमानादिनेत्यत्राऽदिपदेन प्रत्यक्षं ग्राह्यम् ॥ **स्ववचनविरोधादिति ॥** एतैर्लक्षणैरनया च सम्भावनया विशिष्टो भगवान् कुतः प्रतिपत्तव्य इत्या-शङ्कायां सदागमैकविज्ञेयत्वमुक्त्वाऽधुना अनुमानादिना वेद्यत्वाङ्गीकारे सदागमैकविज्ञेयमिति स्ववचनविरोधः स्यादित्यर्थः । सदुक्तिभिरित्यस्य व्याख्यानम्- **सदागमैरिति ॥** वेदादिभिरित्यर्थः ।

ननु सौगतादिभिर्वेदादिसदागमानां प्रामाण्यानङ्गीकारात् कथं सौगतादीन् प्रति सदागमैकविज्ञेयत्वादिविशिष्ट-नारायणसाधनाय

तदुपन्यास इत्यत आह- **तत्प्रामाण्यं चेति ॥** उक्तार्थस्यानुमानादिनाऽप्यग्रे साध्यमानत्वात् कथं सदुक्तिभिः साधयिष्यामीति प्रतिज्ञेत्यस्वरसादाह- **अथ वेति ॥** आदिपदेन यशोदादिप्रत्यक्षग्रहणम्। **तैरपीति ॥** वेदानुगृहीतानुमानादिभिरपीत्यर्थः। नन्वेवं परमात्मनोऽनुमानादिगम्यत्वं वक्तुं न शक्यते। सदागमैकविज्ञेयत्ववचनविरोधादित्यत आह- **सदागमैकविज्ञेयमिति चेति ॥ वेदादिविरुद्धेति ॥** न तु वेदानुकूलानुमानाद्यवेद्यत्वम्। तादृशानुमानादिभिरेव च साधनमस्माभिः प्रतिज्ञातमिति भावः। ननु प्रथमपरिच्छेदे सदागमैकविज्ञेयत्वप्रतिपादनमयुक्तम्। नियामकाभावात्। न च निर्देशक्रमानुसारेण तदुपपादनं क्रियत इति स एव नियामक इति वाच्यम्। निर्देशक्रमापेक्षया आकाङ्क्षाक्रमस्य बलवत्त्वेन निर्दोषाशेषसद्गुणत्वस्यैव प्रथमपरिच्छेदे प्रतिपाद्यत्वौचित्यादित्यत आह- **निर्देशेति ॥**

**(श्री.टि.)** ननु बलवन्तमाकाङ्क्षाक्रमं विहाय निर्देशक्रमविवक्षायां किं बीजमिति चेदुच्यते। सदागमैक-विज्ञेयत्वोपपादनस्य वेदप्रामाण्याद्युपपादनसापेक्षत्वेनात्यायाससाध्यतया प्रथममेव तस्योपपाद्यत्वात्। किञ्च सदागमैकविज्ञेयत्वस्य प्रथमत उपपादनाभावे निर्दोषाशेषसद्गुणत्वं साधयितुं न शक्यते। आगमानामप्रामाण्य-शङ्काकलङ्कितत्वेन तज्ज्ञापकप्रमाणाभावात्। प्रथमतः सदागमैकविज्ञेयत्वोपपादने तु सदागमरूपप्रमाणसद्भावेन तेन निर्दोषाशेषसद्गुणत्वसाधनं सुशकमिति भावः। एतदभिप्रायेणैव निर्देशक्रम एवात्र विवक्षित इत्यवधारणमिति ज्ञातव्यम्।

सदागमैकविज्ञेयत्वादिविशिष्टनारायणसंविन्मात्रस्य प्रयोजनत्वमुक्तं तदयुक्तमित्याशङ्कते- **नन्विति ॥ व्युत्पाद्यार्थसंविन्मात्रमिति ॥** प्रतिपाद्यार्थज्ञानमात्रमित्यर्थः **॥ काकदन्तेति ॥** काकस्याष्टौ दन्ता इति काक-दन्तपरीक्षाग्रन्थेत्यर्थः। तथा च दन्ताष्टकरूपप्रतिपाद्यार्थज्ञानमात्रस्य तत्रापि जायमानत्वेन सप्रयोजनत्वापत्त्या निष्प्रयोजनत्वं सर्वसम्मतं न स्यादिति भावः **॥ येषामित्यादि ॥** 'एकान्तानां न कस्यचित्। अर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्' इति वचनादिति भावः **॥ संविदेवेति ॥** प्रार्थ्येति लिङ्गविपरिणामेनानुवर्तते। **तान् प्रति** एकान्तभक्तान् प्रति। नन्वेवं सत्यस्मिञ्छास्त्रे एकान्तभक्तातिरिक्तभक्तानामधिकारो न स्यादित्यत आह- **न हीति ॥** तथा चेष्टापत्तिरिति भावः। एकान्तभक्तातिरिक्तभक्ताभिप्रायेणापि प्रयोजनाभिधानपरं संविद इति पदं योजयति- **अथ वेति ॥** तत्साध्य इति लक्षणाबीजभूतशक्यसम्बन्धोक्तिः। नन्वस्मदायत्ते वाक्यप्रयोगे सज्जनमुक्तय इति मुख्यप्रयोगमकृत्वा मोक्षावाचकसंवित्पदप्रयोगो न युक्तः। प्रयोजनाभावादित्यत आह- **मोक्षस्येति ॥** तथा च लक्षणाबीजशक्यसम्बन्धान्वेषणे संविन्मोक्षयोर्जन्यजनकभावलाभेन यत्पूर्वं शङ्कितं मोक्षस्य कर्मसाध्यत्वं तन्निराकरणं संविद्विषयप्रतिपादकस्यास्य प्रकरणस्य संवित्साध्यमुक्त्या सह परम्परया साध्यसाधनभावसम्बन्धोपपादनं च कृतं भवति। मुख्यप्रयोगे तदसिद्धेरिति भावः। सज्जनपदमवतारयति- **एवं तर्हीति ॥** मोक्षस्य प्रयोजनत्वोक्तावित्यर्थः **॥ निरधिकारिकत्वमिति ॥** एकान्तभक्तानां मोक्षापेक्षाया अभावात्। तदतिरिक्तभक्तानां चाप्रसिद्धत्वान्निरधिकारिकत्वमित्यर्थः। कथमनेन शङ्कापरिहार इत्यत एकान्त-भक्तातिरिक्ता अपि भक्ता मोक्षापेक्षिणस्सन्तीत्याह- **ये खल्वित्यादिना ॥** सात्त्विकप्रकृतयः सात्त्विक-स्वभावाः। साधनचतुष्टयसम्पन्न एवाधिकारीत्याशयेन साधनचतुष्टयं दर्शयति- **शमादीति ॥** मुमुक्षव इत्युक्तं मुमुक्षुत्वमेवैकान्तभक्तातिरिक्तभक्तस्वरूपज्ञापकम्। 'एकान्तानां न कस्य-चित्। अर्थे नारायणो देवः' इति वचनात्तेषां मुमुक्षाया अभावादिति भावः। **तां** भगवत्संविदम् **॥ तेषां संविद इति ॥** मोक्षसाधनीभूतज्ञानाये-त्यर्थः। उपसंहरति- **तस्मादिति ॥**

**(पां.टि.) ॥ अनारम्भणीयमिति ॥** प्रेक्षावदनुपादेयमित्यर्थः **॥ विषयेति ॥** विषयशून्यत्वात् सम्बन्ध-शून्यत्वाच्च इत्यर्थः। आद्यहेतोर्व्याप्यसिद्धिं दृष्टान्तोक्त्या परिहरति- **प्रतीतेति ॥** निश्चितेत्यर्थः। द्वितीयहेतोरपि दृष्टान्तोक्त्या तां परिहरति- **काकेति ॥** आद्यहेतोः स्वरूपासिद्धिमुद्धरति- **स हीति ॥** द्वितीयस्यापि तां परि-**(पां.टि.)** हरति- **नापीति ॥** ननु ऐहिकपारत्रिकयोः साधनान्तरसाध्यत्वेऽपि यागस्य यवव्रीह्युभय-साधनसाध्यत्ववत्, एतत्प्रकरणसाध्यत्वमपि किं न स्यात् इत्यत आह- **एतेनेति ॥** प्रकरणेनेत्यर्थः **॥ अपुरु-षार्थत्वेनेति ॥** पुरुषकामनाऽविषयत्वेनेत्यर्थः **॥ निरधिकारिकत्वापत्तेरिति ॥** प्रकरणस्येति शेषः। फल-कामनावत एव अधिकारित्वात्, अत्र च फलस्याकाम्यत्वेन तत्कामनारूपाधिकारिविशेषणविरहात् नाधि-कारित्वमिति भावः।

**॥ एतेन विषयो दर्शित इति ॥** विशेषणानि यानीह कथितानि साधयिष्यामि तान्येव इत्येतावतांऽशेने-त्यर्थः **॥ स त्विति ॥** विषय इत्यर्थः **॥ स्ववचनविरोधादिति ॥** पूर्वं सदागमैकविज्ञेयत्वस्य उक्ततया अनु-मानावेद्यत्वोक्तेः, तद्विरुद्धत्वादिति भावः **॥ सदागमैरिति ॥** अनेन सत्यश्च ता उक्तयश्च सदुक्तय इति कर्मधारय इति सूचितं भवति। ननु चात्रोक्तो दोषः,

वेदादिप्रामाण्यमनभ्युपगच्छतः सौगतार्हतादीन् प्रति तदुपन्यासायोगाद् इति तत्राऽह- **तत्प्रामाण्यं चेति** ।। उक्तार्थस्य अनुमानादिनाऽपि अग्रे साध्यमानत्वात् कथं सदागमैः साधयिष्यामीति प्रतिज्ञेत्यत आह- **अथ वेति** ।। नन्वेवं 'सदागमैकविज्ञेयम्' इति वचनविरोध इत्यत आह- **सदागमेति** ।। आकाङ्क्षाक्रमस्यापि क्रमशब्दार्थत्वात् तस्य च प्रकृते असत्त्वादाह- **निर्देशेति** ।। **संविदेवेति** ।। अत्र प्रार्थ्यमित्येतत् प्रकृतमर्थवशात् लिङ्गविपरिणामेन प्रार्थ्येति सम्बध्यते । नन्वेवं अत्र प्रकरणे अनेकान्तानाम् अधिकारो न स्यादित्यत आह- **अथ वा संविच्छब्देनेति** ।। **तत्साध्य इति** ।। लक्षणा-बीजभूतसम्बन्धोक्तिः । नन्वेवं सज्जनमुक्तय इति वाचकपदप्रयोगम् अकृत्वा अवाचकपदप्रयोगे स्वायत्त-न्यायविरोध इत्यत आह- **मोक्षस्येति** ।। तथा च संविद इति लाक्षणिकपदप्रयोगे हि लक्षणाहेतुशक्यसम्बन्धान्वेषणे संविन्मोक्षयोर्जन्यजनकभावलाभेन मोक्षस्य कर्मसाध्यत्वनिराकरणसिद्धिः । संविद्विषयप्रतिपादकस्यास्य प्रकरणस्य तत्साध्यमुक्त्या संविद्द्वारा साध्यसाधनभावसम्बन्धोपपादनस्य च सिद्धिः, न तु सज्जनमुक्तय इति वाचकपदप्रयोगे । अतो वाचकं हित्वा लाक्षणिकस्यैव प्रयोग इति भावः ।। **निरधिकारिकत्वमिति** ।। सकलैहिकपारत्रिकभोगविरागात्मकत्वात् मोक्षस्यापुरुषार्थत्वाद् इति भावः ।

**(व्या.टि.)** प्रायः स्पष्टानि वाक्यानि बहुभिर्व्याकृतानि च ।
अतोऽस्पष्टास्पृष्टवाक्यभाव एवोच्यते मया ।।

'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते' इत्युक्त्या विषयादिसम्बन्धवत एव प्रेक्षावदुपादित्सागोचरत्वेन, अत्रोपादानप्रयोजकं तद्द्वारा आरम्भणीयताप्रयोजकं विषयादिसम्बन्धादिकमाक्षिपति- **स्यादेतदिति** ।। **एतद्** वन्दननिबन्धनादिकं स्याद्, युक्तमिति शेषः ।। **प्रकरणमेवेति** ।। यदि प्रकरणमारम्भणीयं भवेत् तदेदं युक्तं स्यात्, तदेव नेति बुद्ध्या विवेकेन एवकारस्य प्रकरणारम्भणीयत्वनिष्ठव्यापकतासूचकत्वं मन्तव्यम् ।। **विषय-प्रयोजनसम्बन्धेति** ।। विषयसम्बन्धशून्यत्वात्, प्रयोजनसम्बन्धशून्यत्वाद् इति हेतुद्वयम् । विशिष्टस्य हेतुत्वे **(व्या.टि.)** वैयर्थ्यम् । प्रतिपादकताप्रयोजकतादिसम्बन्धेन विषयाद्यभावस्य सम्बन्धाभावत्वविवक्षया इत्थ-मुक्तिः । सम्बद्धयोर्विषयप्रयोजनयोरारम्भणीयताप्रयोजकत्वे सम्बन्धप्राधान्यविवक्षया वा सम्बन्धाभावस्य हेतूकरणम् । हेतुद्वयमपि सामान्याभावरूपम् । अस्य च सम्भावितो विशेषो विरोधी । शङ्किते विशेषे विषय-लक्षणाभावे प्रयोजनलक्षणाभावे वा सम्बन्धस्याभावे वा विशेषत्वमेव नास्तीति न सामान्याभावरूपहेत्व-सिद्ध्यापादकत्वमित्यवधेयम् । आद्ये निदर्शनम्- **प्रतीतेति** ।। द्वितीये- **काकदन्तेति** ।। विषयलक्षणासम्भवेन तत्त्वाभावं वक्तुं तल्लक्षणमाह-**स हीति** ।। **अज्ञात इति** ।। अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः ।।**सम्मत एवेति** ।। स्वरूपमात्रे विवादाभावादिति भावः ।। **पदमनर्थकमिति** ।। इतरथा प्रातिपदिकसञ्ज्ञाऽभावेन सुबनुत्पत्तेः पदत्वव्याघात इति भावः । द्वितीयमुपपादयति- **नापीति** ।। प्रयोजनं भवद् ऐहिकं पारत्रिकं मोक्षो वेति त्रेधा विकल्प्य आद्यद्वितीयौ निराह- **ऐहिकपारत्रिकयोरिति** ।। इहपरत्रशब्दाभ्यां प्राग्वहतेष्ठकि रूपम् । **कृष्यादियागादीति** ।। कृष्यादि च यागादि च, ते च ते साधनान्तरे च इति विग्रहः । उत्तरपदेनैव कर्मधारये पूर्वपदेन समासानुपपत्तेरिति भावः । एतेन प्रकरणेन । तृतीयं निराह-**मोक्षस्येति** ।। **कर्मेति** ।। 'अपाम सोमम्' इति श्रुतेरित्यर्थः ।। **भोगपरित्यागेति** ।। 'केन कं पश्येत्' इति श्रुतेरित्यर्थः । सम्भावकेन लक्षणासम्भावनानिवृत्तिं दर्शयति- **उद्गिरणेति** ।। गिरतेर्ल्युट् । दानमित्यर्थः । इहेति आवृत्त्या योजयति- **आद्यपद्य इत्यादिना** ।। अन्यत् वेदप्रामाण्यस्वतस्त्वादि ।। **विषय इति** ।। प्रकरणस्येति शेषः । तेन आद्यहेतोरसिद्धिरुक्ता वेदि-तव्या ।। **स त्विति** ।। सम्बन्ध इत्यर्थः । साधनं किम् अनुमानादिना सदागमैर्वा इति विकल्प्य आद्यं निराह- **न तावदिति** ।। **स्ववचनेति** ।। सदागमैकविज्ञेयम् इत्युक्तिविरोधाद् इत्यर्थः । द्वितीयं पराह- **नापीति** ।। द्वितीयपक्षपरिग्रहाय सदुक्तिभिरित्येतत् कर्मधारयाभिप्रायेण व्याचष्टे- **सदागमैरिति** ।। इत्यर्थ इति शेषः । सदुक्त्युपन्यासायोगशङ्कायाः सदुक्तिभिरित्येतद् असङ्गतम् अनुत्तरत्वाद् इत्यत आह- **तत्प्रामाण्यं चेति** ।। अप्रामाण्यं च निरसिष्यामीत्यर्थः । यद्वक्ष्यति एतच्छङ्कानिराससमुचितस्येति । प्रथमपक्षपरिग्रहाय बहुव्रीहिं स्पष्टयति- **सत्य इति** ।। सर्वं विषयाभिधानम् इति भ्रान्तिं वारयति- **प्रयोजनाभिधानमिति** ।। तेन द्वितीय-स्याप्यसिद्धिरुक्ता । **तथाविधाः** एकान्तभक्ताः । सर्वाधिकारिसाधारणफलं दर्शयितुमाह- **अथ वेति** ।। लाक्षणिकप्रयोगे प्रयोजनं दर्शयति-**मोक्षस्येति** ।। **निरधिकारिकत्वमिति** ।। मुमुक्षुमात्रस्य अभावादिति भावः । सत्त्वं व्यनक्ति- **ये खल्विति** ।। **संविदेकेति** ।। 'नान्यः पन्थाः' इति श्रुतेरिति भावः ।

**मूलम् -** **'ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ।**
**मूलरामायणं चैव पुराणं चैतदात्मकम् ।।**

**ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः ।**
**दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ॥**
**ज्ञेय एतैस्सदायुक्तैर्भक्तिमद्भिः सुनिष्ठितैः ।**
**न च केवलतर्केण नाक्षजेन न केनचित् ।**
**केवलागमविज्ञेयो भक्तैरेव न चान्यथा ॥' इति ब्रह्माण्डे ।**

**'नावेदविन्मनुते दं बृहन्तं सर्वानुभुमात्मानं साम्पराये' इति तैत्तिरीयश्रुतिः ।**

**'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति कठश्रुतिः ।**

**'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति' इति पिप्पलादश्रुतिः ।**

**(त.मं.)** ऋगाद्या इत्यादिना ब्रह्माण्डवाक्येन सदागमानुक्त्वा तदेकविज्ञेयत्वं साधयति- **न केनचिद्** अर्थापत्त्यादिना । सदायुक्तैर्भक्तिमद्भिरित्युक्तिरयोगव्यवच्छेदाय । भक्तैरेव न चान्य-थेत्यन्ययोगव्यवच्छेदाय । श्रुतीश्चाऽह - **'नावेदवित्'** इत्यादि । **सर्वानुभुं** सर्वस्यानुभवितारं, ज्ञातारम् । **आत्मानं** स्वामिनम् । साम्पराये इति तादर्थ्ये सप्तमी । मोक्षार्थमित्यर्थः । **आपनेया** प्रापणीया । **अन्येन** अन्यत्वज्ञानिना प्रोक्तैव सुज्ञानाय भवति ।

**टीका -** क्रमादिति सदागमैकविज्ञेयत्वस्य प्रथमप्रतिपाद्यत्वं प्रतिज्ञातम् । सदुक्तिभिरिति चो-क्तम् । तत्र कास्ता नारायणस्य सदागमैकवेद्यत्वं प्रतिपादयन्त्यः सदुक्तय इत्यत आह- **ऋगाद्या इति ॥** ऋग्यजुस्सामाथर्वसञ्ज्ञका वेदाः । चाथशब्दाः परस्परसमुच्चये । एवशब्दयोस्तु त एव सदागमाः, तदन्ये ये ते सर्वे दुरागमा एवेति वा, तैर्नैव ज्ञेय एतैरेव ज्ञेय इति वा सम्बन्धः । पञ्चरात्रगतानां जीवजननादिवाचिनां केषाञ्चिद्वाक्यानामप्रामाण्यं केचिदाचक्षते, तन्निरासार्थ-मखिलमित्युक्तम् । एतदात्मकम् ऋगाद्यनुकूलम् । एषाम् ऋगादीनामनुयायिनोऽनुकूलग्रन्था मानवाद्याः । तुशब्दो विशेषणार्थः । तदन्ये तद्विरुद्धास्तदुदासीनाश्च । कथं तर्हि वैशेषिकादिभिः, उक्तविशेषणो नारायणो न ज्ञायत इत्यत आह- **सदा युक्तैरिति ॥** वेदाद्यर्थविचारे सदाभियोग-युक्तैः । वाक्यार्थो हि विचाराभियोग एव स्फुरति । नच वैशेषिकादयो वेदाद्यर्थविचारेऽभियोग-युक्ताः । तर्हि मीमांसकैः किं न ज्ञायत इत्यत उक्तम्- **भक्तिमद्भिरिति ॥** यो हि यत्राऽदरवान् तस्यैव तद्वस्तु विद्यमानमपि स्फुरति, न त्वनादरवतोऽन्यत्राऽदरवतश्चेत्यनुभवसिद्धम् । न च तथा मीमांसकाः । भक्तिरपि न कादाचित्की वेदाद्यर्थभगवज्ज्ञानोपयोगिनीत्युक्तम्- **सुनिष्ठितै-रिति ॥** एतैरेवेत्यस्य दुरागमा इव व्यावर्त्यान्तरमप्यस्तीत्याह- **नचेति ॥** केवलो वेदाद्यानुकूल्य-रहितः । तर्कशब्देन दूषणानुमानं व्यावर्तितम् । तदितरानुमानव्यावृत्त्यर्थमाह- **न केनचिदिति ॥** अथ वा तर्कशब्देन अनुमानमेवोक्तम् । कुरुपाण्डववत् सामान्यविशेषभावमाश्रित्य अर्थापत्त्यादि-व्यावृत्त्यर्थम् एतदुक्तम् । यद्वा **केनचित्** सदायुक्तत्वादिरहितेन पुरुषेण । केवलेति सर्वस्योप-संहारः । केवलग्रहणेन दुरागमादिनिरासः । आगमेति सदागमग्रहणम् । भक्तैः सदायुक्तैः सुनिष्ठितैश्च । ब्रह्माण्डे पुराणे कथितमिति शेषः ।

'नावेदवित्' इत्यादौ सर्वेऽपि सदागमा गृह्यन्ते । सर्वमनुभवतीति सर्वानुभूः । **आत्मानं** परमात्मानम् । **साम्परायो** मोक्षः, तदर्थं श्रुतिर्वक्तीति शेषः । आ अपेति विरुद्धार्थयोरुपसर्गयोः क्रमेण सम्बन्धः । **एषा** परमात्मविषया मतिः शुष्केण तर्केण **आनेया** उत्पाद्या, **अपनेया** निराकार्या च न भवति । किन्तु **अन्येन** जीवेश्वरादिभेदज्ञानिना, भगवद्भक्त्यादिमतेति यावत्, आचार्येण **प्रोक्ता** वेदप्रवचनेन उत्पादितैव **सुज्ञानाय** साक्षात्काराय भवति । प्रेष्ठेति नचिकेतसं प्रति यमस्य सम्बुद्धिः । **एनं** परमात्मानम् । तस्माद् वेदनकरणत्वे समानेऽपि असाधारण्येन व्यपदेशा

**भवन्तीति न्यायाद् विशिष्टवस्तुवेदनकरणत्वादेव हि एतान् वेदा इत्याहुः । विवक्षितस्य सर्वस्यापि अर्थस्य प्रतिपादनात् पुराणवाक्यम् आदौ पठितम् । श्रुतयस्तु एकदेशप्रतिपादनात् पश्चादिति ॥**

**(र.टि.) ॥ तुशब्दो विशेषणार्थ इति ॥** अत्र विशेषणमिति भाव उच्यते । अनुयायिन एवेत्यर्थः । सर्वे त इत्यत्र ऋगादीनां परामर्श इति द्रष्टव्यम् **॥ तर्कशब्देनेति ॥** 'न च केवलतर्केण' इति नञ्शब्दसहितेन तर्कशब्देनेत्यर्थः ।

**(रा.टि.) ॥ जीवजननादीति ॥** 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इत्यादीनामित्यर्थः । आदिपदेन 'भगवान् शाण्डिल्यः षडङ्गं वेदमधीत्यास्मिन्महत्याम्नाये निष्ठामनधिगच्छन्' इत्यादिनोक्तवेदनिन्दापरि-ग्रहः **॥ विशेषणार्थ इति ॥** ऋगाद्यानुकूल्यविशेषणयुक्त इत्यर्थः । तेन मानवादिस्मृतिष्वपि तद्विशेषण-हीनास्त्याज्या इत्युक्तं भवति । अत एवाऽह- **तद्विरुद्धास्तदुदासीनाश्चेति ॥** ऋगादिः प्रागुक्तस्तच्छब्दार्थः । **विचाराभियोग एवेति ॥** विचाराभिनिवेशे सत्येवेत्यर्थः । आदरेऽनादरे वा विद्यमानं चेत् स्फुरत्येव, अतस्तेषा-मस्फुरणान्नास्त्येवेत्यत उक्तम्- **विद्यमानमपीति ॥** विद्यमानमप्यादरवत एव स्फुरति नान्यस्येत्येतत् सर्वानुभवसिद्धमिति भावः **॥ अन्यत्रेति ॥** मीमांसकास्तु कर्मादावेवाऽदरवन्तो न ब्रह्मणीति भावः **॥ सुनि-ष्ठितैरिति ॥** सुष्ठु निष्ठावद्भिः, सार्वकालिकदृढभक्तिमद्भिरित्यर्थः **॥ व्यावर्तितमिति ॥** उक्तविशेषण-**(रा.टि.)**युक्तनारायणज्ञानजनन इति योज्यम् **॥ तदितरेति ॥** तथाच न पौनरुक्त्यमिति भावः **॥ एतदुक्त-मिति ॥** न केनचिदित्येतदुक्तमित्यर्थः **॥ सर्वस्येति ॥** सदागमज्ञेयत्वस्य दुरागमाद्यज्ञेयत्वस्य प्रत्यक्षाद्यज्ञेय-त्वस्य भक्त्यादिमद्भिरेव ज्ञेय इत्यस्य भक्त्यादिहीनैर्न ज्ञेय इत्यस्य चेत्यर्थः । नन्वत्र केवलपदेनाऽगमेतरप्रत्यक्षादि-निरासेऽपि कथं दुरागमनिरास इत्यत आह- **केवलेति ॥** कथं तल्लाभः, आगमपदस्याऽगममात्रपरत्वादित्यत आह- **आगमेतीति ॥** अन्यथोपक्रमविरोध इति भावः । न चेति चशब्दो भिन्नक्रमस्सन्ननुक्तसमुच्चय इत्याह- **भक्तैरित्यादि ॥** मन्दानां कटाहभ्रान्तिं निराह- **पुराण इति । इति शेष इति ॥** सदागमैकविज्ञेयत्वमित्यपि योज्यम् **॥ सर्वानुभूरिति ॥** अनूपसर्गपूर्वकाद् भू सत्तायामित्यतो वा, 'भू प्राप्तौ, भूकृ शुद्धिचिन्तयोः' इति कविकल्पद्रुमोक्त्या भू चिन्तायामित्यतो वा क्विपि रूपम् । श्रुतौ सर्वानुभुमिति छान्दसं ह्रस्वत्वमिति भावः । सर्वज्ञमित्यर्थः । 'चर्मणि द्वीपिनं हन्ति' इत्यादौ इव निमित्तसप्तमीति भावेनाऽह- **तदर्थमिति ॥** आपनेयेत्यत्राऽङः प्रश्लेष इत्युपेत्याऽह- **आ अपेति ॥** अन्यपदं ज्ञान्युपलक्षणमिति मत्वाऽऽह- **अन्येनेति ॥ प्रेष्ठेति ॥** प्रियतमे-त्यर्थः । तस्मादित्यनूदितस्यार्थो विशिष्टवस्तुवेदनकरणत्वादिति **॥ समानेऽपीति ॥** कालिदासादिवाक्येषु लौकिकवाक्येष्विति योज्यम् । श्रुतीनां प्राधान्यात् पूर्वं तदनुक्तेः कृत्यमाह- **विवक्षितस्येति ॥** वेदपुराणादि-सदागमज्ञेयत्वम्, पाशुपतादिदुरागमाज्ञेयत्वम्, एकपदोक्तप्रत्यक्षाद्यज्ञेयत्वम्, वेदादिरेव सदागमः, अन्यस्तु दुरागम इत्यादिरूपस्य वक्तुमिष्टस्य सर्वस्येत्यर्थः ॥

**(श्री.टि.)** भारतादीनां पृथगुक्तत्वादाद्यशब्दो वेदमात्रपर इत्याह- **ऋग्यजुरिति ॥** ननु चाथशब्दा व्यर्थाः प्रयोजनाभावात् । न च समुच्चय एव प्रयोजनमिति वाच्यम् । एकेनैव शब्देन समुच्चयसम्भवे शब्दान्तरवैयर्थ्यादि-त्यत आह- **चाथशब्दा इति ॥** चशब्दाश्चाथशब्दश्चेति चाथशब्दाः । ऋगादीनां परस्परसमुच्चयार्थत्वान्न वैयर्थ्य-मिति भावः । ननु चशब्दैवशब्दयोः कथमेकत्र सम्बन्धः? चशब्दस्यान्यसमुच्चायकत्वाद् एवशब्दस्यान्यनिषेध-कत्वादित्यतो नैकत्र तयोस्सम्बन्ध इत्याह- **एवशब्दयोस्त्विति ॥ जीवजननादिवाचिनां केषाञ्चिद्वा-क्यानामिति ॥** 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते । सङ्कर्षणात् प्रद्युम्नसञ्ज्ञकं मनो जायते' इत्यादि-वाक्यानामित्यर्थः । आदिपदेन कर्तृतः करणोत्पत्तिसङ्ग्रहः **॥ अप्रामाण्यमिति ॥** असम्भावितताया जीवोत्पत्तेः, कर्तृतः करणोत्पत्तेश्च प्रतिपादकत्वादित्यर्थः । केचित् मायावादिनः **॥ अखिलमितीति ॥** उदाहृतवाक्यानाम् 'जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु । वासुदेवाज्जनिः प्रोक्ता' इत्याद्यनुव्याख्यानोक्तरीत्या प्रामाण्य-सम्भवादित्याशयः **॥ तुशब्दो विशेषणार्थ इति ॥** अत्र विशेषणेति भावे ल्युट् । तथा हि । विपूर्वकात् शिष्लृ विशेषण इति धातोर्ल्युट्प्रत्यये लघूपधत्वात् 'पुगन्तलघूपधस्य' इति गुणे 'युवोरनाकौ' इत्यनादेशे 'रषाभ्याम्' इति णत्वे विशेषणमिति भवति । तथा च विशेषणं विशेषस्तदर्थक इत्यर्थः । एवं च विशेषतो ऋगादीनामनुकूला इत्युक्तं भवति । विशेषत इत्यस्य सर्वांशेनेत्यर्थः । सर्वांशेनानुकूला मानवाद्या इति भवति तेषां सदागमत्वम् । एवं च 'श्वपचादपि कष्टत्वम्', 'नाहं न च शिवोऽन्ये च' इत्यादिना किञ्चिदंशेनानुकूलानां दुरागमानाम्, **(श्री.टि.)** तादृशलौकिकवाक्यस्य च निरासो विशेषार्थकतुशब्दफलमिति भावः । अन्ये तु तुशब्दो विशेष-णार्थः । विशेषणे योऽर्थो व्यावृत्तिरूपं प्रयोजनं तदर्थक इत्यर्थः । अवधारणात्मक इति यावत् । तथा चैषामेवा-नुयायिन इत्यर्थ उक्तो भवतीत्याहुः । केचित्तु 'विशेषणानि यानीह' इति सदागमैकविज्ञेयत्वादीनामेव विशेषण-तया व्यवहारात् सदागमैकविज्ञेयत्वादिविशेषणार्थकोऽत्र तुशब्दः । तस्य च

जनार्दन इत्यनेन सम्बन्धः । तथा च सदागमैकविज्ञेयत्वादिविशेषणविशिष्टो जनार्दनस्तैर्नैव ज्ञेयः, एतैरेव ज्ञेय इत्यर्थो द्रष्टव्यः । नन्वेवं सति 'सर्वज्ञं सर्वकर्तारम्' इति वाक्यावतारिकाग्रन्थविरोधः । तत्र हि 'ज्ञेय एतैरिति वाक्यमपि न विशिष्टभगवत्स्वरूप-प्रतिपादकत्वं सर्वेषां सदागमानामाचष्टे' इत्युक्तत्वात् । अत्र तुशब्दस्योक्तविशेषणार्थकस्य जनार्दन इत्यनेन सम्बन्धकरणे उक्तविशेषविशिष्टं भगवन्तं प्रतिपादयन्त्येवेति प्राप्तमिति चेत्सत्यम् । स्पष्टं नाऽचष्ट इति तद्वाक्यस्य व्याख्येयत्वाददोषः । तुशब्दसम्बन्धेनैव प्रतिपादनात् स्पष्टताभाव इति द्रष्टव्यमित्याहुः ।

तदन्य इत्यत्र नञो विरुद्धार्थकत्वे ऋगादिविरुद्धानामेव दुरागमत्वमुच्यते न तूदासीनानामित्यत आह- **तदन्य इति ।। कथं तर्हीति ।।** जनार्दन एतैरेव ज्ञेयश्चेदित्यर्थः ।। **वैशेषिकादिभिरिति ।।** ईश्वराष्ट-गुणत्ववादिभिरित्यर्थः ।। **उक्तविशेषण इति ।।** सदागमैकविज्ञेयत्वनिर्दोषाशेषसद्गुणत्वादिविशेषणविशिष्टो जनार्दन इत्यर्थः । **अभियोग** आग्रहविशेषः । ननु वैशेषिकादीनां वेदार्थविचाराभावेऽपि वेदवाक्यार्थज्ञानं तावद् भविष्यतीत्यत आह- **वाक्यार्थ इति ।।** वैशेषिकादीनां च वेदार्थविचारेऽभियोगाभावाद्वेदवाक्यार्थज्ञानमेव तेषां न भवतीति भावः ।। **तर्हि मीमांसकैरिति ।।** तेषां वेदार्थविचारे सदाऽभियोगसद्भावादुक्तविशेषणविशिष्टो भगवान् किमर्थं तैर्न ज्ञायत इत्यर्थः । कथमनेनोक्तशङ्कापरिहार इत्याशङ्क्य, मीमांसकाः वेदार्थभूतभगवज्ज्ञान-शून्याः, अत्रानादरवत्त्वे सति अन्यत्राऽदरवत्त्वादित्यनुमाने सामान्यतो व्यतिरेकव्याप्तिरुच्यते- **यो हीति ।।** यत्राऽदरवानित्यनन्तरमन्यत्रानादरवानित्यपि पूरणीयम् । अत्र हेत्वभावपुरस्सरं व्यतिरेकव्याप्तिकथनेऽपि एव-कारमहिम्ना वह्निमत्त्वादेव धूमवत्त्वमित्यादाविव तस्य व्यापकत्वलाभ इति द्रष्टव्यम् । अन्वयव्याप्तिरुच्यते- **न त्विति ।।** अत्रापिशब्दस्य कोऽर्थ इति चेदत्र केचित्, अपिशब्दः सम्भावनार्थः । 'अपिः पदार्थसम्भावना-न्ववसर्गगर्हासमुच्चयेषु' इति सूत्रात् । तथा च यो हि यत्राऽदरवान् तस्यैव, विद्यमानम्- वाक्ये प्रतिपाद्यत्वेन विद्यमानम्, वस्तु- प्रमेयं वाक्यार्थ इति यावत्, स्फुरत्यपि- स्फुरतीति सम्भावितम् । अनादरवतोऽन्यत्राऽदरवतश्च विद्यमानमपि न स्फुरतीत्यर्थ इत्याहुः ।

सम्प्रदायस्तु, अपिशब्दो वाक्यार्थोपपादकप्रमेयसमुच्चये कैमुत्ये च । तथा चायमर्थः । यो हि यत्राऽदरवांस्तस्यैव विद्यमानं वस्तु- वाक्ये प्रतिपाद्यत्वेन विद्यमानं प्रमेयं, वाक्यार्थ इति यावत्, स्फुरति । अपिशब्दात् तद्वाक्यार्थोप-पादकं प्रमेयं स्फुरतीति ग्राह्यम् । अनादरवतोऽन्यत्राऽदरवतश्च यदा विद्यमानं- स्पष्टं वाक्ये प्रतिपाद्यत्वेन स्थितमपि प्रमेयं न स्फुरति, स्पष्टोऽपि वाक्यार्थो न प्रतीयत इति यावत्, तदा किमु वाच्यं तदुपपादकप्रमेयजातं न स्फुर-तीति । एवं व्याप्तिद्वयमुपपाद्योक्तशङ्कापरिहाराय प्रयोगप्रकारं दर्शयति- **न च तथेति ।।** अत्राऽदरवन्तोऽन्यत्रा-**(श्री.टि.)** नादरवन्तश्च न सम्भवन्ति, तेषां कर्मरूपार्थ एवाऽदरसद्भावात् । अतो न वेदाद् ब्रह्मरूपार्थप्रतीति-रिति भावः । तथा च मीमांसकाः वेदार्थभूतब्रह्मज्ञानशून्याः, अत्रानादरवत्त्वे सत्यन्यत्राऽदरवत्त्वादिति प्रयोगः सूचितो भवतीति ज्ञातव्यम् ।। **सुनिष्ठितैरितीति ।।** ष्ठा गतिनिवृत्ताविति धातोर्गतिरपगतिः, भक्तेर्योग्यतया लाभः, तन्निवृत्तिः ष्ठाधात्वर्थः । सु सम्यक् नितरां स्थितैर्भक्त्यपगमनिवृत्तिमद्भिः कादाचित्कभक्तिशून्यै-रित्यर्थलाभादुक्तशङ्कानिरास इति ज्ञातव्यम् ।। **तर्कशब्देनेति ।।** न च केवलतर्केणेति नञ्शिरस्केनेत्यर्थः । अनेन केवलतर्कशब्देन कथं दूषणानुमानव्यावृत्तिरिति शङ्कानवकाशः । यद्वा तर्कशब्देन दूषणानुमानं विवक्षितम्, तच्च नञा व्यावर्तितमित्यर्थः ।। **तदितरानुमानेति ।।** साधनानुमानेत्यर्थः ।। **अनुमानमेवेति ।।** द्वित्वावच्छिन्न-मप्यनुमानमित्यर्थः । अर्थापत्त्यादेरनुमानान्तर्भावान्न पृथक्तन्निषेधो युक्त इत्यत आह- **सामान्येति ।।** अत्र दृष्टान्तः ।। **कुरुपाण्डववदिति ।।** 'सन्तानबीजं कुरुपाण्डवानाम्' इत्यत्रेवेत्यर्थः । यथा पाण्डवानां कौरव-विशेषत्वात् पृथग्ग्रहणम्, एवमर्थापत्त्यादीनामनुमानविशेषत्वात्पृथक्तद्व्यावृत्त्यर्थं न केनचिदित्युक्तमित्यर्थः। ननु केवलागमविज्ञेय इत्येतद्व्यर्थम् । अनेनोच्यमानार्थस्य ऋगाद्या इत्यनेनैवोक्तत्वादित्याशङ्क्य ऋगाद्या इत्यनेनोक्तस्य सर्वस्याप्यर्थस्योपसंहारोऽनेन क्रियत इत्याह- **केवलेति ।।** अत्र केवलपदस्य नागममूलक-प्रत्यक्षानुमाननिषेधकत्वम्, येन सदुक्तिभिरित्यस्य द्वितीयं व्याख्यानं विरुद्धं स्यादित्याशयवानाह- **केवल-ग्रहणेनेति ।।** आदिपदेन केवलानुमानादिग्रहणम् । एवशब्दोऽभक्त्यादेरेव व्यावर्तको न तु पूर्वोक्तसदायुक्त-त्वादिव्यावर्तक इत्यभिप्रायेण भक्तपदमुपलक्षणत्वेनोक्तोपसंहारलाभाय व्याख्याति- **भक्तैस्सदायुक्तैरि-त्यादिना । सम्बन्ध इति ।।** नेयेति क्रिययेति शेषः । तमेव सम्बन्धं दर्शयति- **एषेति ।। शुष्केणेति ।।** निस्सारेणेत्यर्थः । वेदाद्यानुकूल्यरहितेनेति यावत् ।। **समानेऽपीति ।।** दुरागमादिसाधारणेऽपीत्यर्थः । असाधा-रण्यमेव दर्शयति- **विशिष्टवस्त्विति ।।** सर्वोत्तमवस्त्वित्यर्थः । **एवेति ।।** अन्यथा तन्न स्यादिति भावः । नन्वपौरुषेयत्वेनोत्तमत्वाच्छ्रुतय आदावुदाहर्तव्याः पुराणवाक्यं पश्चादुदाहर्तव्यम्, तत्कुतो व्यत्यासेनोदा-हरणमित्यत आह- **विवक्षितस्येति ।।** पश्चादित्यत्र लिङ्गव्यत्ययेन पठितमित्यनुवर्तते ।

**(पां.टि.)** भारतादीनां पृथग् गृहीततया आद्यशब्दस्यासङ्कुचितार्थताया अनुपपन्नत्वात् सङ्कुचितार्थतामेव अङ्गी-कृत्य

अवच्छेदकानुक्तौ तदयोगात् तत्सङ्ग्राह्यतावच्छेदकधर्ममाह- **ऋग्यजुरिति ।। चाथशब्दाः परस्परसमुच्चय इति ।।** तथा च अथशब्दमात्रेण चशब्दमात्रेण वा समुच्चयसिद्धेः किम् उभयोपादानेनेति शङ्का निरस्ता भवति । समुच्चयमात्रसिद्धावपि एकैकेन परस्परसमुच्चयासिद्ध्या तदर्थत्वादिति भावः । अत्र प्रमाणवाक्ये, सदागमैक-विज्ञेयमित्याद्यपदे च आगमशब्दः पदसमूहमात्रपरो न तु निर्दोषः शब्द आगम इति लक्षणलक्षितपदसमूहपरः । अन्यथा निर्दोषत्वपरसत्पदानर्थक्यप्रसङ्गात् । दुरागमा इत्यत्र दुःशब्दस्य सदोषपरत्वेन विरोधश्च स्यादित्यव-धेयम् ।

अखिलं भारतमिति तत्र विशेषणमनुपादाय, अखिलं पञ्चरात्रमित्यत्रैव विशेषणोपादाने किं प्रयोजनमित्यत **(पां.टि.)** आह- **पञ्चरात्रेति ।। निरासार्थमिति ।।** तत्प्रकारश्च 'उत्पत्त्यसम्भवात्' इत्येतदधिकरणीयाप-व्याख्याननिरासपरानुव्याख्यानतत्सुधयोः स्पष्टः । स्वरूपाभेदस्य बाधितत्वादाह- **ऋगाद्यनुकूलमिति ।। तुशब्दो विशेषणार्थ इति ।।** अत्र च विशेषो विशेषणमिति भावे ल्युट् । तेन विशेषतः सर्वांशेन ऋगादीनामनुकूलता इत्युक्तं भवति । ततश्च किञ्चिदंशेन अनुकूलानां दुरागमानां लौकिकवाक्यवत् सदागमत्वनिरासार्थं विशेषार्थक-तुशब्दप्रयोग इति भावः । ननु यद्युक्तविशेषणविशिष्टो नारायणः सर्ववेदार्थः स्यात्, तर्हि तथा मीमांसकैः प्रतीयेत । तेषां वेदार्थविचारेऽभियोगयुक्तत्वात् । न च तैस्तथा प्रतीयते । अतो नासौ तदर्थ इत्याशङ्कायाः कथं भक्तिमद्भिरित्यनेन परिहार इत्यत आह- **यो हीति ।।** अत्रैवं योजना । अपि- यद्यपि तद्वस्तु- विद्यमानम्, तथाऽपि यो यत्र वस्तुनि आदरवान् तस्यैव तद्वस्तु स्फुरति न तु अन्यस्येति । तथा च उक्तगुणविशिष्टस्यापि नारायणस्य वेदार्थत्वेऽपि मीमांसकानां तथा अप्रतीतेरादराभावेन उपपन्नत्वेन अन्यथासिद्धत्वात् न तया उक्तगुणविशिष्टस्य नारायणस्य वेदार्थत्वाभावसिद्धिः । न हि तथा विद्यमानत्वमात्रं तथा स्फुरणप्रयोजकम् । सर्वस्यापि स्फुरणप्रसङ्गात् । न च साक्षात्काररूपत्वात् स्फुरणस्येन्द्रियसंयोगसाध्यत्वात् कथं तदभावे तदापादनमिति वाच्यम् । तस्मिन् सत्यपि तत्राऽदररहितस्य अन्यत्राऽदरवतश्च तत्स्फुरणाननुभवात् । वीणा-रवाकर्णनादरवतः पुंसः श्रोत्रसम्बद्धभेरीरवस्फुरणादर्शनादिति भावः । यो हि यत्राऽदरवान् तस्य तद्वस्तु विद्यमानं स्फुरति, अविद्यमानं न स्फुरति इति निषेधसमुच्चयार्थोऽपिशब्द इति केचित् । यो यत्राऽदरवान् तस्य तद्वस्तु विद्यमानं स्फुरतीत्यपि सम्भावितमिति सम्भावनार्थः स इत्यन्ये । यो यत्रादरवान् तस्य तद्वस्तु अविद्यमानं यदा स्फुरति, तदा विद्यमानं स्फुरतीति किमु वक्तव्यमिति कैमुत्यार्थः स इत्यपरे । तत्र स्पष्टमेव पूर्वोत्तरग्रन्थास्वार-स्यम् । एवं कैमुत्याभिप्राये, अविद्यमानमपि स्फुरतीति वाचो विन्यासापाताच्च ।

प्रत्यक्षसहकृततर्कज्ञेयत्वशङ्कां वारयति- **केवलो वेदाद्यानुकूल्यरहित इति ।। तर्कशब्देनेति ।।** न च केवल-तर्केणेति नञ्सहितेन तर्कशब्देनेत्यर्थः **।। अथ वेति ।।** तर्क्यतेऽनुमीयते अनेनेति, अनुमितिकरणमेव तर्कशब्दे-नोक्तमित्यर्थः । तर्हि न च केवलतर्केणेत्यनेनैव अनुमानमात्रगम्यत्वनिषेधलाभात् न च केनचिदिति पुनस्तन्निषेधे पौनरुक्त्यमित्यत आह- **अर्थापत्त्यादिव्यावृत्त्यर्थमिति ।।** अर्थापत्त्यादेरपि अनुमानान्तर्भावात् न पृथक् तन्निषेधो युक्त इत्यत उक्तम्- **सामान्येति ।।** तत्र दृष्टान्तकथनम्- **कुरुपाण्डववदिति ।।** यथा 'सन्तानबीजं कुरुपाण्डवा-नाम्' इत्यत्र सामान्यवाचिकुरुशब्दस्य तद्विशेषवाचिपाण्डवशब्दसमभिव्याहारेण तदतिरिक्तकुरुपरत्वा-दपौनरुक्त्यम्, तथा अनुमानमात्रवाचितर्कशब्दस्य तद्विशेषवाच्यर्थापत्त्यादिपरकिञ्चिच्छब्दसमभिव्याहृतस्य तदतिरिक्तानुमानपरत्वेन भिन्नभिन्नप्रकारकबोधजनकत्वेनापौनरुक्त्यमिति भावः **।। केवलेति सर्वस्योपसंहारः इति ।।** ततश्च न पौनरुक्त्यमिति भावः । केवलपदस्य न आगममूलकप्रत्यक्षादिनिषेधकत्वम्, येन सदुक्तिभि-रित्यस्य द्वितीयं व्याख्यानं विरुद्धं स्यात् इत्याशयेनाऽह- **केवलग्रहणेनेति ।।** एवग्रहणम् अभक्त्यादेरेव व्यावर्तकं न तु पूर्वोक्तसदायुक्तत्वादिनिषेधकम् इत्यभिप्रायेण भक्तपदमुपलक्षणत्वेन व्याख्याति- **भक्तैरिति ।।**

**(व्या.टि.)** आद्यपदसङ्ग्राह्योपाधिं दर्शयति- **ऋग्यजुःसामाथर्वसञ्ज्ञका वेदा इति ।।** नन्वथर्वणा प्रोक्त-मित्यर्थे 'तेन प्रोक्तम्' इत्यणि आथर्वणेति भाव्यम् । कथमाथर्वेति । न च 'नस्तद्धिते' इति टिलोपेन इदं रूप-मिति वाच्यम् । 'अन्' इति सूत्रे अणि अन् प्रकृत्या स्यादिति प्रकृतिभावश्रवणेन टिलोपासम्भवादिति चेन्न । आथर्वणोपनिषदि 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति अकारान्तपदोक्तस्यैव 'अथर्वणे यां प्रवदेत ब्रह्मा' इति नकारान्तेनानुवादेन, अकारान्तादणि आथर्वशब्दस्यापि साधुत्वात् । तथा च द्विरूपः प्रयोगः । 'ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः' इति । 'ऋग्यजुःसामाथर्वाश्च' इति च । अथ वा अथर्वन्शब्द एवायं वेदवचनः । आथर्वणिक इति दाण्डिनायनसूत्रे निपातितस्य अथर्वणमधीते इति व्याख्यानात् । अस्मिन् पक्षे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो वाच्यः । इति सञ्ज्ञा येषामिति बहुव्रीहिः । ततः 'शेषाद्विभाषा' इति समासान्तः कप् । सञ्ज्ञिका इति पाठे तु नायं ठनन्तः । 'अतः' इति सूत्रे तपरकरणात् । 'व्रीह्यादिभ्यश्च' इति सूत्रेऽपि वार्तिके 'शिखामालासञ्ज्ञादिभ्य इनिः', 'यवखलादिभ्यष्ठन्'

इति शिखामालासञ्ज्ञादिभ्य इनिरेव इति नियमितत्वात् । अत इनिमेव विधाय सञ्ज्ञिन एव सञ्ज्ञिका इति स्वार्थे को बोध्यः ॥ **चाथशब्दा इति** ॥ चाश्च अथश्चेति चाथाः । ते च ते शब्दाश्च इति विग्रहः ॥ **परस्परसमुच्चय इति** ॥ तेन नान्यतमवैयर्थ्यमिति भावः । एवकारौ विशेष्यविशेषणनञ्विभक्तिभिः सङ्गमय्य अन्ययोगायोगप्रतियोगिसामानाधिकरण्य-स्वसमभिव्याहृतविभक्तिप्रकृत्यर्थेतरविभक्त्यर्थयोगरूपान्ययोगव्यवच्छेदकतया व्याचष्टे- **एवशब्दयोस्त्विति** ॥ **केचिदिति** ॥ रामानुजीया इत्यर्थः । **तन्निरासार्थमिति** ॥ 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्', 'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते' इत्याप्ततमकृतत्वप्रमाणतमत्वयोरुक्तेः । 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते । सङ्कर्षणात् प्रद्युम्नसञ्ज्ञं मनो जायते' इत्यादिभागो 'जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु । वासुदेवाज्जनिः प्रोक्ता' इत्यनुव्याख्यानदिशा व्याख्येयः । मूले गृहीतं मूलरामायणं तु 'वेदे रामायणे चैव' इति भारते, 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥' इति वाल्मीकिरामायणे च प्रसिद्धमिति नापलपनीयम् । पौरुषेयापौरुषेययोरभेदबाधाद् एतदात्मकमिति पदं व्याचष्टे- **ऋगाद्यनुकूल-मिति** ॥ अनेन एष आत्मा मूलं यस्येति वा, एतम् आतनोति विस्तारयति इति वा व्युत्पत्तिं सूचयति । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्युक्तेः । अनुपूर्वाद्यातेः ताच्छील्ये णिनिम्, 'अतो युक्' इति युगं चोपेत्य अनुयायिपदं व्याचष्टे- **अनुकूला इति** ॥ तान् शृङ्गग्रा(हकत)हिकया दर्शयति- **मानवाद्या इति** ॥ 'यद्वै किञ्चन मनुरवदत् तद्भेषजम्' इति वेदेनैव तदुक्तस्य सत्यत्वोक्तेरिति भावः ॥ **विशेषार्थ इति** ॥ तेन सर्वांशेनानुयानस्य विवक्षितत्वात्, नैकदेशेनानुयायिनां सदागमत्वापत्तिः । विशेषणार्थ इति पाठेऽपि ल्युटो भावार्थत्वादयमेवार्थः । अत एव तदन्य इति द्वेधा व्याचष्टे- **विरुद्धा उदासीनाश्चेति** ॥ तामसा राजसाश्चेति भावः । केचित्तु तदन्य इत्यत्र नञिति बभ्रमुः ।

उपसर्गाणां द्योतकमात्रत्वाद् युक्तैरभियुक्तैरित्यत्र तात्पर्यमाह- **अभियोगयुक्तैरिति** ॥ अभिनिवेशयुक्तै-**(व्या.टि.)**रित्यर्थः ॥ **विचारेति** ॥ आपाततः स्फुरतोऽवाक्यार्थत्वात् । अन्यथा मीमांसावैयर्थ्यादिति भावः। नन्वर्थप्रतिभासाप्रतिभासयोः सत्त्वासत्त्वे प्रयोजके, न त्वादरानादरौ, अनिच्छतोऽपि दुर्गन्धज्ञानदर्शनात् । दूष्यवाक्यार्थज्ञानदर्शनाच्च । तदनवबोधे तद्दूषणानुपपत्तेः । अतो न भक्तिः प्रयोजिकेत्यत आह- **यो हीति** । **आदरवान् इति** ॥ अन्यत्रानादरवानित्यपि ग्राह्यम् । वर्तिष्यमाणैवकारविवरणानुरोधात् ॥ **तस्यैवेति** ॥ अत्राऽदरवतोऽन्यत्रानादरवत एवेत्यर्थः । 'यस्य देवे परा भक्तिः' इति श्रुत्या 'जायेव पत्या' इति श्रुत्या चैतत् सिद्धम् ॥ **विद्यमानमपीति** ॥ अपिर्गर्हायाम्, 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' इति सूत्रात् । अर्थसत्त्वमात्रमप्रयोजकं सूक्ष्मपदार्थज्ञाने आदरादिकमपि प्रयोजकम् । वीणारवादावादरवत एव भेरीशब्दकाले क्रियमाणवीणारवश्रवणस्य, गहनवाक्यार्थज्ञानस्य च दर्शनात् । सूक्ष्मदुर्गन्धादेरज्ञानमेव । दूषणविवक्षाप्रयुक्तो दूष्यार्थविचारादरोऽस्त्येवेति न क्वापि व्यभिचार इत्यवधेयम् ।

केचित्तु, मीमांसकाः वेदार्थभूतभगवज्ज्ञानशून्याः, अत्रानादरवत्त्वे सति अन्यत्राऽदरवत्त्वात् इत्यनुमान-मभिमतमिति वदन्ति । तन्न । तर्हि मीमांसकैः किं न ज्ञायत इति ग्रन्थेन, विचारस्य कारणत्वे तत्सत्त्वेन मीमांसकानां ज्ञानाभावः किंनिबन्धनः, अतो वेदार्थत्वमेव नास्तीति शङ्किते, आदररूपसहकार्यभावनिबन्धन इति वक्तुम् आदरस्यान्वयव्यतिरेकप्रदर्शकतायाः श्लिष्टत्वेन तत्त्यागायोगात् । मीमांसके भगवज्ज्ञान-स्यानाशङ्कितत्वेन तदभावसाधनेऽसङ्गतेश्च । तस्य सिद्धत्वेन सिद्धसाधनत्वाच्च । सामान्यव्याप्तिप्रदर्शनस्य वैशे-षिकादौ विशेषव्याप्तिसम्भवेऽस्वरसत्वाच्च । व्यतिरेकव्याप्तेः पूर्वं प्रदर्शनस्यासुन्दरत्वाच्च । हेत्वभावपुरस्सर-त्वस्यास्वरसतरत्वाच्च । यच्च 'सम्प्रदायस्तु अपिशब्दो वाक्यार्थोपपादक इति प्रमेयसमुच्चये कैमुत्ये चेति' । तदपि न । पूर्वोत्तरग्रन्थासङ्गतत्वात् । वाक्यार्थोपपादकस्याप्यादरविषयत्वाच्च । स्पष्टत्वं विना कैमुत्यायोगेन स्पष्टत्वे आदरानपेक्षणापाताच्च ॥ **अन्यत्रेति** ॥ त्रैविद्यस्य फलवाक्यात् मुक्त्यप्रतीतेरित्यर्थः । यथोक्तम् -

'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः' इति ।

'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इति च ।

॥ **सुनिष्ठितैरिति** ॥ अभिव्यक्तस्वरूपभक्तिमद्भिरित्यर्थः । 'तदस्य सञ्जातं तारकादिभ्य इतच्' इति मत्वर्थीयोऽयं प्रत्यय इति भावः । 'कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसी' इति न्यायात्, सु सम्यक् नितरां स्थितैरिति तु अनादरणीयम् ।

अत्रेदमवधेयम् । ज्ञेय एतैरिति सदागमकरणकज्ञानविषयत्वम् एतैरेवेति योजनेन तदनुपजीविकरणकप्रमाऽ-विषयत्वं चोक्तम् । एतदनुपजीविकरणकसामान्यप्रमयाऽपि विषयीकृतत्वेनोक्तविशेषणप्रकारकज्ञानविषयत्वं विवक्षणीयम् । तथाऽपि

उक्तविशेषणातिरिक्तवेदोक्तधर्मप्रकारकज्ञाने सदागमैककरणकत्वनियमो न स्यात्। सदाऽभियोगाद्यपेक्षा च न स्यादिति न मन्तव्यम्। उक्तविशेषणे निर्दोषाशेषसद्गुणत्व एव वेदोक्तयावद्धर्माणा-(व्या.टि.) मन्तर्भावात्। तत्र वेदोक्तयावद्धर्मप्रकारकज्ञानविषयत्वं ब्रह्माणमादाय; इतरानादाय तु यथायोग्यं यथाशक्ति। तत्र वैशेषिकादिभिरुक्तविशेषणः कथं न ज्ञायत इति चोद्यस्य सदायुक्तैरिति परिहारः। तस्यायं भावः। वाक्यार्थबोधत्वावच्छिन्नं प्रति तदौपयिकोपक्रमाद्यनुसन्धानाभिनिवेशस्य हेतुतया सदागमकरणकबोधं प्रत्यपि तदौपयिकोपक्रमाद्यनुसन्धानाभिनिवेशस्य कारणतया वैशेषिकादीनां तदभावात् तैरुक्तविशेषणो न ज्ञायत इति। मीमांसकैः किं न ज्ञायत इत्यस्योत्तरं भक्तिमद्भिरिति। तस्यायं भावः। झडिति दुर्विज्ञानवस्तुविषयक-बोधत्वावच्छिन्नं प्रति समानविषयकादरत्वेनाऽदरः, अन्यविषयकादराभावत्वेनाभावश्च कारणम्। अन्यपदं च यद्विषयकादरस्य यद्बोधविरोधित्वं तत्परम्। तेन देवताद्वयादिविषयबोधस्य आदरेणैकदा जननेऽपि न दोषः। प्रकृते तु ब्रह्मणो दुर्विज्ञानवस्तुत्वेन तद्विषयकादरस्य तद्विरोधिकाम्यकर्मतत्फलादिविषयकादराभावस्य च आवश्यकस्याभावान्न मीमांसकानां ज्ञानप्रसक्तिरिति। बुभुत्सारूपादरजननोपयोगिन्यां कामुकभक्तौ सत्यामपि तैर्भगवान् कुतो न ज्ञायत इति मनसि कृतस्य चोद्यस्य सुनिष्ठितैरित्युत्तरम्। तस्येदमाकूतम्। स्वयोग्यधर्म-प्रकारकवेदकरणकज्ञाने परा अनन्यसाधारणी या भक्तिस्तज्जन्यबुभुत्साविशेषरूपादर एव हेतुः। तत्र सुनिष्ठितैरितीदमेव वचनम्। 'यस्य देवे परा भक्तिः' इति श्रुतिः,

'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥'

इति गीता च मानानि। परत्वं तारतम्यान्तर्गतत्वरूपमाहात्म्यज्ञानघटितत्वम्। अनन्यत्वं च मोक्षविरोध्युद्देश्य-कत्वाभावादिरूपम्। एतादृशभक्तिश्च कामुकस्य नेति न तस्य तादृशज्ञानमिति॥ **व्यावर्त्यान्तरमिति**॥ अन्यत् एवकारव्यावर्त्यम्॥ **इत्याहेति**॥ व्याचष्ट इत्यर्थः॥ **तर्कशब्देनेति**॥ गृहीतमिति शेषः॥ **व्यावर्तित-मिति**॥ नञेति शेषः। नञ्शिरस्केन तर्कशब्देनेति तु चिन्त्यम्। व्यावर्तकताया नञ्धर्मत्वात्॥ **तर्कशब्दे-नेति**॥ तर्क्यतेऽनुमीयतेऽनेनेति करणव्युत्पत्त्या इत्यर्थः॥ **एतदिति**॥ केनचिदित्येतदित्यर्थः। भक्तैरेवेति वक्ष्यमाणैवकारव्यावर्त्यपरतया व्याचष्टे- **यद्वेति**॥ पुनरुक्तिं परिहरति- **उपसंहार इति**॥ **निरास इति**॥ तेन न वेदादेरपि तदुक्तोऽर्थोऽवधेय इति सूचितम्॥ **सदागमेति**॥ तस्यैव शब्दमुख्यार्थत्वान्मुख्यस्यैव ग्राह्यत्वादिति भावः। भक्तैरिति विशेषणान्तरोपलक्षणमित्याह- **सदायुक्तैरित्यादि**॥ अण्डगोलभ्रान्तिं वारयति- **पुराण इति**॥ **सर्वेऽपीति**॥

'ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः॥'

इत्युक्तेरिति भावः। अथवा वेदपदस्य रूढिपूर्विका लक्षणा॥ **अनुभवतीति**॥ अनुपूर्वाद् भवतेः कर्तरि क्विबिति भावः। श्रुतौ सर्वानुभुवमिति वक्तव्ये सर्वानुभुमिति वचनम् 'विप्रसम्भ्यः' इति बहुवचनमाद्यर्थ इति वा, मितद्र्वादेराकृतिगणत्वाद्वा डुप्रत्ययान्तत्वेन समाधातव्यम्। '(भु)भूकृ शुद्धिचिन्तनयोः, इति प्रकृत्यन्त-(व्या.टि.) रत्वेऽपि एवमेवेति न कोऽपि दोषः। यद्यपि दं बृहन्तमित्येव तैत्तिरीयपाठः। तथाऽपि 'छन्दसि बहुलम्' इति वा 'वर्णागमो वर्णविपर्ययश्च' इत्युक्तदिशा निरुक्तत्वेन वा तकारस्य दकारादेश इत्युपेत्य व्याक-रोति- **तमात्मानमिति**॥ 'यच्चाऽप्नोति यदादत्ते' इति निरुक्तेरित्यर्थः। सम्यक् पर आयो लाभ इति व्युत्पत्ति-मभिसन्धाय व्याख्याति- **साम्परायो मोक्ष इति**॥ 'चर्मणि द्वीपिनं हन्ति' इतिवत् तादर्थ्ये सप्तमीत्याशयानो वक्ति- **तदर्थमिति**॥ ननु मूले तैत्तिरीयश्रुतिरित्यनुपपन्नम्। तित्तिरिणा प्रोक्तमित्यर्थे 'तित्तिरिवरतन्तु-खण्डिकोखाच्छण्' इति सूत्रेण छणि सत्यपि, 'छन्दो ब्राह्मणानि च तद्विषयाणि' इति तस्याध्येतृवेदितृप्रत्यय-विषयतानियमेन श्रुतेस्तैत्तिरीयत्वासम्भवादिति चेन्मैवम्। 'तेन प्रोक्तम्' इत्यधिकृत्य 'तित्तिरिवरतन्तु-खण्डिकोखाच्छण्' इति छणि, 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति छस्य 'ईय्' आदेशे, 'छन्दो ब्राह्मणानि च तद्विषयाणि' इति अध्येतृवेदितृप्रत्ययविषयतानियमेन तित्तिरिणा प्रोक्तमधीयत इत्यर्थे 'तदधीते तद्वेद' इत्यणि, ततः 'प्रोक्ताल्लुक्' इति प्रोक्तप्रत्ययात् परस्याध्येतृवेदितृप्रत्ययस्य लुकि सति तैत्तिरीया इति भवति। ततस्तेषां श्रुतिरिति षष्ठीसमासेन निर्देशोपपत्तिरित्यभिप्रेत्य शेषमुपस्करोति- **वक्तीति शेष इति**॥

नन्वेतस्य आतः स्मरणाद्यर्थत्वे न प्रकृतसङ्गतिः। सन्ध्यभावप्रसङ्गश्च। एकाज्निपातत्वेन प्रगृह्यत्वात्। ङित्त्वे तु ईषदाद्यर्थायोगेन क्रियायोग एव वाच्यः। स च न सम्भवति। अपेन विरुद्धार्थत्वादित्यत आह- **क्रमेणेति**॥ पर्यायेणेत्यर्थः। पृथगन्वयं दर्शयति- **आनेयेत्यादिना**॥ साधनबाधनाक्षमः शुष्कतर्क इति भावः। यद्यप्यन्येनेति सदागमादिपरतया योजयितुं शक्यम्। तथाऽपि

प्रोक्तेत्युक्त्या प्रवक्तुरपेक्षणाद् गुरु-विशेषणपरतया व्याचष्टे- **अन्येन भेदज्ञानिनेति ।।** ज्ञेयेन ज्ञान्युपलक्षणमिति भावः । अथ वा अन्यमाचष्ट इत्यन्यो भेदवादी, तेन गुरुणेत्यर्थः । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिजन्तादच्प्रत्ययसम्भवात् । यद्वा(नस्त)न् तद्वानिति वक्तव्ये यर्वाणस्तर्वाण इत्याचक्षाणेषु तच्छब्दवद् गौणो वा । यथोक्तं शब्दकौस्तुभे 'एवं श्रूयते यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञा इति' इति । यथा वा 'मां धाता' इत्युक्तस्य मान्धातृत्वं तथा भागवतोक्तेः । यथा वा स्वेत्युक्तवत्या वाचः स्वाहात्वम् । यथोक्तं वेदे 'स्वैवते वागित्यब्रवीत् सोऽजुहोत्स्वाहेति तत्स्वाहाकारस्य जन्म' इति । अकमिष्टेति भाषिणोऽकमिष्टत्ववच्च । उक्तं हि महाभाष्ये 'नाकमिष्ट सुखं यान्ति सुयुक्तैर्वडवारथैः । अथ यत्काषि(चि)णो यान्ति ये चीकमनभाषिणः' इति । तथैव व्याकृतं कैयटेनापि । तथात्रापि । आख्यानं च ज्ञानपूर्वकम् । तच्च भक्त्याद्युपलक्षणमित्याह- **भक्त्यादिमतेति ।।** एवं श्रुतौ 'अनन्यप्रोक्ते गतिरस्य नास्ति' इति प्राचीनानन्यशब्दोऽपि व्याख्यातव्य इति दिक् । प्रोक्तेति मतिविशेषणमनुपपन्नम् । तस्याः प्रवचनकर्मत्वाभावादित्यत आह- **वेदप्रवचनेनोत्पादिते-ति ।।** अनेन प्रोक्तेति हेतुहेतुमतोरभेदोपचारो वा । चन्दनं सुखम्, लाङ्गलं जीवनम्, आयुर्घृतम्, दधि त्रपुसं, प्रत्यक्षो ज्वरः इत्यादौ दृष्टेः । प्रोक्तमस्या अस्तीति मत्वर्थीयाच्प्रत्ययो वा, विभक्ता भ्रातर इतिवदिति भावः । प्रेष्ठेत्यपि मतिविशेषणमिति भ्रान्तिं वारयति- **सम्बुद्धिरिति ।।** प्रियशब्दादिष्ठनि 'प्रियस्थिर' इत्यादिना प्रियस्य **(व्या.टि.)** प्रादेशे रूपम् । प्रियतमेत्यर्थ इति भावः । ननु मूले कठश्रुतिरिति निर्देशोऽयुक्तः । 'गोत्रचरणाद्वुञ्' इति सूत्रे, कात्यायनवचनम् 'चरणाद्धर्माम्नाययोरिति वक्तव्यम्' इति । चरणेति अध्यापकेषु अप्राचामाचार्याणां सञ्ज्ञा । तथा च कठस्याऽम्नाय इत्यर्थे वुञि काठकमिति भवतीति काठकश्रुतिरिति निर्देष्टव्यत्वादिति चेन्न । युक्तोऽयं निर्देशः । तथा हि । 'छन्दोब्राह्मणानि च तद्विषयाणि' छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीति नियमितत्वात् । कठेन प्रोक्तं छन्दोऽधीयत इत्यर्थे 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' इति णिनिप्रत्ययं प्रकृत्य 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति सूत्रेण कठस्य वैशम्पायनान्तेवासित्वाण्णिनिप्रत्यये, ततोऽणि च सति, तस्य 'प्रोक्ताल्लुक्' इति लुकि, प्रोक्तप्रत्ययस्य च 'कठचरकाल्लुक्' इति लुकि सति कठा इत्येव भाव्यत्वेन तेषां श्रुतिरिति विग्रहे कठश्रुतिरित्येव साधुत्वात् । एवकारो भिन्नक्रम इत्युपेत्याऽह- **वेदनकरणत्वादेवेति ।।** वेदा इत्यस्येतिशब्देन कर्मत्वोक्तावपि विशेष्यकर्माध्या-हारेण योजयति- **एतान् वेदा इत्याहुरिति ।।** अभियुक्ता इति शेषः । मूले इतिशब्दस्याध्याहारः ।

**। इत्युपोद्घातप्रक्रिया ।**

**मूलम् - न चैतेषां वचनानामेवाप्रामाण्यम् ।**

**(त.मं.)** अत्राऽहुः - ईश्वरादिविषयो वेदोऽप्रमाणम्; प्रमाणान्तरायोग्यार्थत्वात्, खपुष्पाद्यस्तित्व-विषयवाक्यवत् । अथवा, आप्ताप्रणीतत्वात्, उन्मत्तवाक्यवत्, इत्यत आह - **न चेति ।।**

**टीका -** अत्राऽहुः । यदनृतं तदप्रमाणं दृष्टं यथोन्मत्तवाक्यम् । अनृतं च 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यादिवेदवाक्यम् । कृतायामपि इष्टौ पुत्रजन्मानुपलम्भात् । एवं 'मृदब्रवीत्' इत्यादि, अनुमान-विरुद्धत्वात् । स्वव्याहतं चाप्रमाणं दृष्टम् । स्वव्याहतं च 'उदिते होतव्यम् अनुदिते होतव्यम्' इत्यादि । पुनरुक्तं चाप्रमाणम् । पुनरुक्तं च वेदवाक्यं, शाखान्तरोक्तस्य शाखान्तरेऽभिधानात् । एकस्यामपि शाखायां वाक्यावृत्तिदर्शनात् । 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति स्वयमेव विधा-नाच्च । निरर्थकं चाप्रमाणम् । निरर्थकं च 'सृण्येव' इत्यादि । प्रमाणान्तरसिद्धार्थं च न प्रमाणम् । तथाविधं च 'अग्निर्हिमस्य भेषजम्' इत्यादि वेदवाक्यम् । एवं पुराणेऽपि अनृतत्वादीनि ज्ञातव्यानि (द्रष्टव्यानि) । तद्दृष्टान्तेन अशेषस्यापि वेदादिभागस्याप्रामाण्यमनुमातव्यम् । किञ्च संवादरहितं विप्रलम्भकादिवाक्यमप्रमाणम् । तथाविधं च वेदादिकम् । एवञ्च वेदपुराणयोरप्रामाण्यात् तदन्तर्गतानामुदाहृतवाक्यानाम् अप्रामाण्यमेव । एतेषां वचनानामेव अप्रामाण्ये सति कथमेतद्बलात् विष्णोस्सदागमैकविज्ञेयत्वसिद्धिः । एवमेव वेदादिभिः निर्दोषत्वादिसिद्धिरपि परास्तेत्यत आह- **न चैतेषामिति ।।** चशब्दस्समुच्चये । एतच्छङ्कापरिहारसमुचितस्यैव उदाहृतप्रमाणस्य विवक्षित-साधकत्वात् । एवमुत्तरत्रापि बोद्धव्यम् ।

अयमभिप्रायः। किमिदमनृतत्वम्। अर्थशून्यत्वमिति चेत्। ननु एतदेवाप्रामाण्यमिति साध्याविशिष्टता स्यात्। प्रमाणान्तरविसंवादोऽनृतत्वमिति चेत् स किमापाततः सर्वथा वा। नाऽद्यः। तस्य सर्वत्र सम्भवेन अनैकान्त्यात्। द्वितीये सन्दिग्धासिद्धिः, किमत्र सर्वथा प्रमाणविसंवाद एव उत वैगुण्यादिनिमित्तं फलादर्शनादिकमिति सन्देहापरिहारात्। व्याघातेनापि किं द्वयोरप्रामाण्यं साध्यमुतान्यतरस्य। नाऽद्यः। अन्यतरप्रामाण्येऽपि व्याघातसम्भवेन सन्दिग्धकालातीतत्वस्य अनैकान्तिकत्वस्य च आपातात्। द्वितीये पक्षीकृतस्यैव प्रामाण्यसम्भवेन सन्दिग्धबाधानिस्तारात्। किञ्च व्याघातोऽपि आपाततः सर्वथा वा। नाऽद्यः। अनैकान्त्यात्। द्वितीये सन्दिग्धासिद्धिः, किमत्र सर्वथा व्याघात एव उताधिकार्यादिभेदेन व्यवस्थेति सन्देहानिस्तारात्। पौनरुक्त्यं तु प्रमाणसम्प्लवे व्यभिचाराद् अप्रामाण्यसाधकं न भवति। वैयर्थ्यं कथञ्चित् साधयेत्, तदपि नास्ति, किमिदं पुनरुक्तमेव उताधिकविवक्षादिनाऽनुवादादिरूपमिति सन्दिग्धत्वात्। एतेन प्रमाणान्तरसिद्धार्थत्वमपि निरस्तम्। नैरर्थक्यमप्यापाततश्चेद् अनैकान्ति-कम्। सर्वथा तु सन्दिग्धम्, किमत्र शक्तितात्पर्यापरिज्ञानादर्थाप्रतिपत्तिः, उत सर्वथा नैरर्थक्यादिति सन्देहात्। संवादराहित्यं च भागासिद्धम्, 'अग्निर्हिमस्य' इत्यादेस्संवाददर्शनात्। किमयथार्थ-त्वादेवात्र संवादो नास्ति उत तस्यार्थस्य तदेकप्रमाणकत्वादित्यन्यथासिद्धिसन्देहाच्च न प्रमाण(नाप्रामाण्य)मिति।

**(र.टि.)** ॥ **वाक्यावृत्तीति** ॥ 'कुवित्सोमस्यापाम् इति' वाक्यावृत्तिदर्शनादित्यर्थः। उदाहृतवाक्यावृत्तेरनु-वादरूपत्वेनोपपत्तौ न पुनरुक्तिज्ञापकत्वमित्यत आह- **त्रिः प्रथमामिति** ॥ तथा चानेन वेदेन पुनरुक्ति-रस्तीत्युच्यत इति न आवृत्तेरर्थान्तरं कल्पनीयमिति भावः ॥ **किञ्चेति** ॥ वेदार्थरूपस्येश्वरादेः प्रमा-णान्तरावेद्यत्वस्योक्तत्वादिति भावः ॥ **सन्दिग्धकालातीतत्वस्येति** ॥ आहितस्य साध्यसन्देहस्या-नुमितिप्रतिबन्धकत्वात् प्रकृते त्वन्यथासिद्ध्या साध्यसन्देहस्याऽहितत्वात् ॥ **प्रमाणसम्प्लव इति** ॥ भिन्न-वक्तृकशब्दरूपप्रमाणानेकसम्प्लव इत्यर्थः ॥ **न प्रमाणमितीति** ॥ संवादराहित्यमप्रामाण्ये प्रमाणं न भवतीत्यर्थः।

**(रा.टि.)** 'अनृतव्याघातपुनरुक्त्यादिदोषेभ्यः' इति पूर्वपक्षगौतमसूत्रोक्तरीत्या बौद्धमतमनूद्य तन्निरासकत्वे-नोत्तरवाक्यमवतारयति- **अत्राऽहुरिति** ॥ वेदाप्रामाण्यवादिनो बौद्धा इति योज्यम्। अत एव तन्मतरीत्योदा-हरणोपनयाख्यावयवद्वयात्मकान्येवानुमानान्याह- **यदनृतमित्यादिना** ॥ इत्यादीत्यनन्तरं वाक्यमित्यनुषङ्गः। एवमग्रेऽपि ॥ **अनुमानविरुद्धत्वादिति** ॥ मृन्न वक्त्री जडत्वादित्यनुमानविरुद्धत्वादित्यर्थः ॥ **दृष्टमिति** ॥ 'गिरिरग्निमान्नाग्निमान्' इत्यादिवाक्यमिति योज्यम् ॥ **शाखान्तरोक्तस्येति** ॥ 'अग्निहोत्रं जुहोति' इत्येकत्रोक्तस्य शाखान्तरेऽपि उक्तेरिति भावः ॥ **वाक्यावृत्तीति** ॥ 'कुवित्सोमस्यापामिति, कुवित्सोमस्या-पामिति' इत्येवमिति भावः ॥ **त्रिःप्रथमामिति** ॥ 'पञ्चदश सामिधेनीरनुब्रूयात्' इति दर्शपूर्णमासप्रकरणे श्रुतपञ्चदशत्वं तत्प्रकरणपठितानामेकादशानां सामिधेनीशब्दितानां 'प्रवोवाजा' इत्यादिकानामृचां कथं सम्पाद्य-मित्यत उच्यते त्रिरिति। प्रथमाम् आद्याम् ऋचं त्रिरन्वाह, त्रिरुत्तमाम्। एवं पञ्चदश सम्पद्यन्त इति ॥ **विधाना-चेति** ॥ वाक्यावृत्तेरित्यनुषङ्गः। तन्मात्रस्यास्त्वप्रामाण्यम्, सर्वस्य वेदस्य कुतस्तदित्यत आह- **तद्दृष्टान्ते-नेति** ॥ 'तत्सामान्यादितरेषु तथात्वम्'(१-२-२३) इति जैमिनिसूत्रात् कृत्स्नोऽपि वेदोऽप्रमाणम्, वेदवाक्य-त्वात्, अनृतादिवेदवदित्याद्यनुमातव्यमित्यर्थः ॥ **तथाविधं च वेदादिकमिति** ॥ मानान्तराग्राह्यार्थबोधकत्वा-दिति भावः। एवकारतात्पर्यं व्यनक्ति- **एतेषामिति** ॥ समुच्चय इत्युक्तं व्यनक्ति- **एतच्छङ्केति** ॥ अप्रामाण्यशङ्के-त्यर्थः। न चेति वक्ष्यमाणस्थलेऽपि बोध्यमित्याह- **एवमुत्तरत्रापीति** ॥ प्रागुक्तयुक्तीनां का गतिरित्यत आह- **अयमभिप्राय इति** ॥ **विसंवाद इति** ॥ फलानुपलभ्य इत्यर्थः ॥ **सर्वत्रेति** ॥ दूरस्थघटादिज्ञानेऽपी-त्यर्थः ॥ **फलादर्शनादिकमिति** ॥ पुत्रकामेष्ट्यादेः फलोत्पादकत्वादर्शनमादिपदार्थः। मृद्ब्रवीदित्यादावभि-मानिनये मृदादिशब्दानां चेतनार्थत्वाभ्युपगमेन जडत्वहेतोस्तत्रासिद्धिरिति स्फुटत्वादत्र तदनुक्तिः ॥ **सन्दिग्ध-कालातीतत्वस्येति** ॥ यद्यपि सन्दिग्धे न्यायः प्रवर्तत इति साध्यतदभावसन्देहरूपबाधसन्देहस्यानुमानाङ्गत्वेन न दोषत्वम्, तथाऽप्युपाध्यादिसन्देहाहितबाधसन्देहस्य दोषत्वादिह च व्याहतत्वादिहेतुरग्निमत्पर्वते गिरिरग्नि-मान्नाग्निमानित्यादाविवान्यतराप्रामाण्येनापि उपपत्त्योभयाप्रामाण्येऽप्रयोजक इत्यप्रयोजकत्वशङ्कया, शशशृङ्गं तीक्ष्णं न तीक्ष्णमित्यादाविव द्वयमप्यप्रमाणमुत गिरिरग्निमान्नाग्निमानित्यादाविवान्यतरदेवाप्रमाणमिति बाध-सन्देहस्याऽहितत्वाद्दोषत्वमेवेति भावः ॥ **अनैकान्तिकत्वस्य चेति** ॥ गिरिरग्निमान्नाग्निमानित्यादिव्याहत-वाक्य इति भावः ॥ **द्वितीय इति** ॥ अन्यतरदप्रमाणमिति पक्षे, यद्वाक्यं पक्षीकृत्याप्रमाणमिदमिति साध्यते तदा व्याघातरूपहेतोः पक्षीकृतवाक्यादन्यवाक्याप्रमाण्येनाप्युपपत्त्या

पक्षीकृतवाक्याप्रामाण्यसाधनेऽप्रयोजक-त्वेन तत्सन्देहाहितस्येदं वाऽप्रमाणं तद्वाऽप्रमाणमित्यादिरूपेण जायमानबाधसन्देहस्य दोषत्वात् सन्दिग्ध-बाधानिस्तारादित्युक्तम्- **अनैकान्त्यादिति** ॥ घटोऽयं द्रव्यं चेत्यादाविति भावः ॥ **अधिकार्यादीति** ॥ केषाञ्चिच्छाखिनामुदिते केषाञ्चिदनुदिते इत्येवमित्यर्थः ॥ **प्रमाणसम्प्लव इति** ॥ अक्षादिप्रमाणसम्प्लव इति वा नानाकर्तृकशब्दरूपप्रमाणमेलन इति वाऽर्थः ॥ **सन्दिग्धत्वादिति** ॥ तथा च सन्दिग्धासिद्धिरिति भावः। **एतेनेति** ॥ प्रमाणसम्प्लवे व्यभिचारकथनेनेत्यर्थः ।

**(श्री.टि.)** सौगतास्तु 'सोपनीतिमुदाहृतिम्' इति वचनादवयवद्वयमेव दर्शयन्ति- **यदनृतमिति** ॥ **एवं मृदब्रवीदित्यादीति** ॥ अप्रमाणमिति शेषः ॥ **अनुमानविरुद्धत्वादिति** ॥ मृत् न वक्त्री, जडत्वादित्यनु-मानविरुद्धत्वादित्यर्थः ॥ **शाखान्तरोक्तस्येति** ॥ ऋक्शाखायामुक्तस्यैव सहस्रशीर्षेत्यादेर्यजुःशाखा-यामप्यभिधानादित्यर्थः ॥ **वाक्यावृत्तीति** ॥ 'कुवित्सोमस्यापामिति', 'मरुद्भिरग्न आगहि', 'उलूखल-सुतानाम्', 'आतू न इन्द्र' इत्यादिवाक्यानामावृत्तिदर्शनादित्यर्थः । उदाहृतवाक्यानामनुवादादिरूपत्वेना-प्युपपत्तेर्न पुनरुक्तिज्ञापकत्वमित्यत आह- **त्रिःप्रथमामन्वाहेति** ॥ प्रथमामृचं त्रिः- त्रिवारमन्वाह- अवो-चम्। उत्तमाम्- अन्तिमाम् ऋचं त्रिरन्वाहेत्यर्थः। तथा चानेन वाक्येन वेदे पुनरुक्तिरस्तीत्युच्यते। अतो न वाक्यावृत्तेरर्थान्तरं कल्पनीयमिति भावः ॥ **निरर्थकं चेति** ॥ कचटतपानां जबगडदत्वादिकमिवेत्यर्थः। **प्रमाणान्तरसिद्धार्थमिति** ॥ प्रमाणान्तरसिद्धार्थप्रतिपादकमित्यर्थः ॥ **तथाविधं चेति** ॥ अग्नेर्हिमनिवारक-त्वस्य स्पार्शनप्रत्यक्षसिद्धत्वादिति भावः । ननूक्तरीत्या केषाञ्चिदेव वेदपुराणवाक्यानामप्रामाण्येऽपि नाशेषवेदा-प्रामाण्यं प्राप्तम् । अतस्तेन विष्णोः सदागमैकविज्ञेयत्वादिसिद्धिर्भविष्यतीत्यत आह- **तद्दृष्टान्तेनेति** ॥ अनृतव्याहतादिवाक्यदृष्टान्तेनेत्यर्थः ॥ **अनुमातव्यमिति** ॥ तथा चावशिष्टो वेदभागः पुराणभागश्च, अप्रमा-णम्, वाक्यत्वात् सम्प्रतिपन्नवेदपुराणवाक्यवदित्यनुमातव्यमित्यर्थः ॥ **तथाविधं च वेदवाक्यमिति** ॥ वेदार्थभूतेश्वरस्वर्गादेः प्रमाणान्तरावेद्यत्वस्योक्तत्वादिति भावः। न चैतेषां वचनानामेवेति मूलं योजयति- **एवं चेति** ॥ एवकाराभिप्रायं वदन् मूलेऽध्याहार्यं दर्शयति- **एतेषामित्यादिना** ॥ **एवमेवेति** ॥ एवं वेदपुराण-योरेवाप्रामाण्यात् तदन्तर्गतानाम् 'वर्जितस्सर्वदोषैर्यो गुणसर्वस्वमूर्तिमान्' इत्यादीनां तृतीयपरिच्छेदे द्वितीय-परिच्छेदे चोदाहरिष्यमाणानामपि वाक्यानामप्रामाण्यात्तद्बलाद्विष्णोर्निर्दोषत्वाशेषसद्गुणत्वादिसिद्धिस्तृतीय-परिच्छेदे द्वितीयपरिच्छेदे च क्रियमाणा परास्तेत्यर्थः । ननु कथं चशब्दस्समुच्चयार्थः । एतेषां वचनानामप्रामाण्यं च नास्तीत्येतत्समुच्चेयस्यान्यस्यादर्शनादित्यत आह- **एतच्छङ्केति** ॥ तथा च न केवलम् ऋगाद्या इत्युदाहृत-प्रमाणेन सदागमैकविज्ञेयत्वादिरूपविवक्षितार्थसिद्धिः । किं नामैतेषां वचनानामप्रा-माण्यशङ्का च नास्ती-त्यर्थः। अप्रामाण्यशङ्कानिरासाभावे उदाहृतप्रमाणेन विवक्षितार्थसिद्धेरयोगादिति भावः ॥ **एवमुत्तरत्रापी-ति** ॥ यत्र समुच्चेयो नास्ति समुच्चयार्थश्चशब्दश्चास्ति तत्रैतद्रीत्या शङ्कानिरासमुच्चितस्यैवोक्तप्रमाणस्य विवक्षितार्थसाधकत्वाददोष इति बोद्धव्यमित्यर्थः ।

नन्वेतेन कथमनृतत्वादिहेतूनां वेदाप्रामाण्यसाधकत्वं निराकृतमित्यत आह- **अयमभिप्राय इति** ॥ नन्वित्यस्य निश्चयेनेत्यर्थः ॥ **प्रमाणान्तरविसंवाद इति** ॥ प्रमाणान्तरविरोध इत्यर्थः। न तु प्रमाणान्तर-संवादाभाव इत्यर्थः। तथात्वे संवादरहितं चाप्रामाणं दृष्टमिति शङ्काग्रन्थस्य, संवादराहित्यं च भागासिद्धमित्युत्तर-ग्रन्थस्य च पौनरुक्त्यं स्यादिति ध्येयम् ॥ **सर्वत्रेति** ॥ 'केशवं पतितं दृष्ट्वा पाण्डवा हर्षनिर्भराः। रुदन्ति कौरवाः सर्वे' इति प्रमाणभूते वाक्य आपाततः प्रमाणान्तरविरोधसद्भावादनैकान्त्यमित्यर्थः ॥ **द्वितीय (श्री.टि.) इति** ॥ उक्तवाक्ये तु न सर्वथा प्रमाणान्तरविरोधः। के- उदके शवं- पतितं दृष्ट्वा बका हर्षनिर्भराः काकाश्च सर्वे रुदन्तीत्यर्थे प्रमाणान्तरविरोधाभावाद् अतो न व्यभिचार इति भावः। सन्दिग्धासिद्धिमेवोपपादयति- **किमत्रेति** ॥ 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यादौ ॥ **प्रमाणविसंवाद एवेति** ॥ तन्निमित्तकमेव फलादर्शनादिक-मिति शेषः ॥ **वैगुण्येति** ॥ कर्तृकर्मादिवैगुण्येत्यर्थः। सन्दिग्धकालातीतत्वं सन्दिग्धानैकान्तिकत्वं चोपपाद-यितुमुक्तम्- **अन्यतरप्रामाण्येऽपीति** ॥ नन्वत्र कथं सन्दिग्धकालातीतता । वाक्यद्वयं पक्षीकृत्य अप्रामाण्यं साधनीयम् । तत्र द्वित्वावच्छिन्ने यत्र कुत्रचिदेकत्राप्रामाण्यरूपसाध्याभावस्य निश्चितत्वादिति चेत्, सत्यम्। द्वित्वावच्छिन्नस्यान्यतरस्य प्रामाण्येऽपि व्याहतिर्यद्यपि सम्भवति, तथाऽपि द्वित्वावच्छिन्नस्य कस्य वाक्यस्या-प्रामाण्यं साध्यत इति पृष्टे, यद्युदित इति वाक्यस्यानुदित इति वाक्यस्य वेति ब्रूयात्, तर्हि तस्य वस्तुगत्या प्रामाण्यमेव किं न स्यादित्युभयोरप्रामाण्यं सन्दिग्धबाधितम्। यथा हि नदीतीरे पञ्चफलानां वस्तुतस्सत्त्वेऽसत्त्वे वा पञ्चफलानि सन्ति न सन्तीति वाक्ययोर्व्याहतत्वेऽपि सन्तीत्यस्य वा न सन्तीत्यस्य वा प्रामाण्यमेव भवति नोभयोरप्रामाण्यं तद्वत्। तथा व्याहतयोरुभयोर्मध्ये वस्तुतो यत्प्रमाणं तत्र व्याहतत्वमस्ति नास्ति चाप्रामाण्यमित्यनैकान्त्यमित्यर्थः

।

ननु कथमत्र सन्दिग्धबाधस्य दोषत्वम्? साध्याभावसन्देहरूपबाधसन्देहस्य ग्राह्यसंशयपर्यवसन्नत्वेन तस्या-नुमित्यनुकूलत्वेन तदप्रतिबन्धकत्वादिति चेदुच्यते। स्वारसिकसंशयस्यैवानुमानाङ्गत्वं न त्वाहितसंशयस्य। प्रत्युत तस्यानुमितिप्रतिबन्धकत्वमेव। प्रकृते च व्याहतत्वरूपो हेतुरप्रामाण्यरूपसाध्यं विनाऽन्यतरप्रामाण्ये-नाप्युपपद्यत इत्यन्यथासिद्ध्या साध्यसन्देहस्याऽहितत्वेन युक्तं सन्दिग्धबाधाभिधानमिति भावः ॥ **अनै-कान्त्यादिति** ॥ केशवं पतितमित्यादिवाक्य इत्यर्थः ॥ **प्रमाणसम्प्लव इति** ॥ भिन्नवक्तृकैकार्थप्रतिपादक-शब्दरूपप्रमाणानामेव सम्प्लव इत्यर्थः। प्रत्यक्षादिप्रमाणसम्प्लव इत्यर्थस्तु चिन्त्यः। तत्र पुनरुक्तत्वहेतोरेवा-भावादिति द्रष्टव्यम्। ननु पौनरुक्त्यस्याप्रामाण्यसाधकत्वाभावेऽपि व्यर्थत्वसाधकत्वं तु स्यादित्याशङ्क्याऽह- **व्यर्थत्वमिति** ॥ द्वितीयेयम्। अधिकविवक्षादिनाऽनुवादादिरूपत्वान्न व्यर्थत्वसाधकत्वमित्यभिप्रेत्य कथञ्चिदित्युक्तम्। **अधिकविवक्षा** अधिकविधानम्। आदिपदेन निषेधग्रहणम्। अनुवादादीत्यादिपदेन दार्ढ्यार्थकाभ्यासरूपत्वग्रहणम् ॥ **एतेनेति** ॥ प्रत्यक्षादिप्रमाणसम्प्लवे व्यभिचारेणेत्यर्थः ॥ **अनैकान्तिक-मिति** ॥ 'वाश्चारेड्ध्वजधक् धृतोड्वधिपतिः कुध्रेड्जजानिः' इत्यादावित्यर्थः ॥ **सर्वथेति** ॥ वाश्चारेडित्यादौ तु न सर्वथा नैरर्थक्यम्। जलचरेश्वरमकरध्वजदहनकर्ता भूधरेश्वरहिमवद्गिरिजन्यपार्वतीभार्यकः श्रीमहादेव इत्यर्थ-सम्भवेन हेतोरेवाभावान्न व्यभिचार इति भावः। तदेवोपपादयति- **किमत्रेति** ॥ सृण्येवेत्यादावित्यर्थः। इतोऽपि न संवादराहित्यस्याप्रामाण्यसाधकत्वम् अन्यथासिद्धिसन्देहादित्याह- **किमयथार्थत्वादेवेति** ॥ **न प्रमाणमिति** ॥ संवादराहित्यमप्रामाण्यप्रमापकं न भवतीत्यर्थः। यद्वाऽनृतत्वादिहेतुजातमप्रामाण्ये प्रमाणं न भवतीत्यर्थः।

**(पां.टि.)** ननु विष्णोः सदागमैकविज्ञेयत्वसाधकतया आचार्योदाहृतवाक्येष्वप्रामाण्यकारणानाम् अनृतत्वा-दीनामनुपलम्भात् कथम् 'न चैतेषामेव वचनानामप्रामाण्यम्' इति शङ्कावकाश इत्यतः, नात्रोदाहृतवाक्यानाम् अनृतत्वादिभिरप्रामाण्यसाधनमभिमतम् येनोक्तदोषः स्यात्, किन्तु अनृतत्वादिभिस्तत्तद्वेदैकदेशाद्य-प्रामाण्यसिद्धौ, वेदत्वेन तत्साम्यादुदाहृतानामप्यप्रामाण्यमिति हेत्वन्तरेणैवाप्रामाण्यसाधनस्याभिमतत्वाद् युक्ता शङ्केति भावेनाऽह- **अत्राऽहुरिति** ॥ बौद्धमते उदाहरणोपनययोर्द्वयोरेवाऽवयवत्वात् तथैवोदाहरति- **यदनृतमित्यादिना** ॥ **एवं मृदब्रवीदित्यादीति** ॥ अप्रमाणमिति शेषः ॥ **अनुमानेति** ॥ मृन्न वक्त्री जडत्वा-दित्यनुमानविरुद्धत्वादित्यर्थः ॥ **स्वव्याहतं चेति** ॥ 'अग्निहोत्रं जुहोति' इति वाक्यविहितहोमानुवादेन एकं वाक्यम् उदितकालं विधत्ते, अपरम् अनुदितम्। न चैक एव होमस्तदा तदा कर्तुं शक्यः। न च कालरूपगुणानुरोधेन प्रधानभूतहोमानुवृत्तिर्युक्ता। नाप्युदितादिवाक्ये होमाभ्यासः श्रूयते। अतः परस्परव्याघातादप्रमाणमेवेत्याशयः। इदं च विध्योरेव व्याघातोदाहरणम्। आदिपदेन तु 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इत्यादिरूपस्य विधिनिषेधयोर्व्याघातोदाहरणस्य परिग्रहः। अत्र हि पूर्ववाक्येन विहितस्य ग्रहणस्योत्तरवाक्ये प्रतिषेधात्। अप्राप्तविषयकविधेरेवार्थवादत्वेन प्रकृते च पूर्ववाक्येनैव प्राप्ततया अप्राप्तेरभावात् 'नातिरात्रे' इत्यस्य नार्थवादत्वम्। सामान्यविषये विधौ विशेषविषयकस्य नञः पर्युदासरूपेण विधिवाक्यशेषत्वेन, प्रकृते च विधिनिषेधयोरुभयोरपि विशेषविषयकत्वेन 'नातिरात्रे' इत्यस्य पर्युदासत्वासम्भवादिति द्रष्टव्यम् ॥ **शाखान्तरेऽप्यभिधानादिति** ॥ न च भिन्नभिन्नशाखास्थे एककर्मविधायके वाक्यद्वये यत्र वाक्ये द्रव्यदेवताख्ययागरूपं वा, इतिकर्तव्यताभूयस्त्वं वा तदेव विधायकम्, इतरत्तु तदनुवादेनेतिकर्तव्यता-विधायकमित्यङ्गीकाराद् अपूर्वार्थप्रतिपादकत्वेन न पौनरुक्त्यमिति वाच्यम्। तथाऽपि यत्र शाखाद्वयस्थे वाक्यद्वयेऽपि द्रव्यदेवताख्ययागरूपं वा, इतिकर्तव्यतासाम्यं वा तत्रोक्तप्रकारासम्भवेन पौनरुक्त्यमेवेत्यत्र तात्पर्यात्।

नन्वेकस्मिन् यजुरादिरूपवेदे आध्वर्यवौद्गात्रादिसर्वकर्मानुपदेशेन 'स त्रिभिर्विधीयते' इति वचनात् त्रयीं विना सर्वाङ्गोपेतकर्मानवगतेर्वेदत्रयस्याप्यध्येतव्यत्वनियमेऽपि, एकैकस्यां तैत्तिरीयादिरूपायां शाखायां सर्वाध्वर्य-वादिकर्मोपदेशेन काण्वादिशाखान्तरस्याध्येतव्यत्वनियमाभावात्, तत्तच्छाखाध्यायिनं प्रति तत्तद्वाक्यस्य व्यवस्थाबोधकत्वादपौनरुक्त्यमेवेत्यरुचेराह- **एकस्यामपि शाखायामिति** ॥ **वाक्यावृत्तीति** ॥ 'कुवित्सोमस्यापामिति' इत्यादिवाक्यावृत्तिदर्शनादित्यर्थः। ननु उदाहृतवाक्यावृत्तेरनुवादादिरूपत्वेनोपपत्तेर्न पौनरुक्त्यज्ञापकत्वम्। यत्र हि शपथरूपत्वं वा, प्रकृतोपयोगिप्रमेयान्तरकथनेन पुनस्तदुपसंहाररूपत्वं वा, अधिकविवक्षादिकं वा नास्ति केवलज्ञातज्ञापकत्वमात्रं तत्रैव पौनरुक्त्यस्य दोषत्वादित्यरुचेराह- **त्रिः प्रथमा-मिति** ॥ **तथाविधं चेति** ॥ वेदाद्यर्थस्येश्वरस्य प्रमाणान्तरावेद्यत्वोक्तेरिति भावः। यद्यप्यत्र निरर्थकत्वादीना-मनेकेषां पृथगप्रामाण्यहेतुत्वेनोपादानं न युक्तम्। व्याघातनिरासकेनाऽपाततः सर्वथा वेति विकल्पनिरासकन्यायेन, **(पां.टि.)**आपाततो

नैरर्थक्यम् अनैकान्तिकं, शक्तितात्पर्यापरिज्ञानात् तदर्थाप्रतीतेः, सर्वथा नैरर्थक्यं तु असिद्धम् इत्येवंरूपेण नैरर्थक्यस्य, अनृतत्वनिरासकन्यायेन प्रमाणान्तरविसंवादस्य, पौनरुक्त्यनिरासकन्यायेन च प्रमाणान्तरसिद्धार्थत्वस्य सपरिहारत्वात्। संवादराहित्यस्य चासिद्धत्वात्, अपूर्वतासम्पादकत्वेनादोषत्वाच्च पृथगुपादानस्याऽनावश्यत्वात्। अत एव 'तदप्रामाण्यम् अनृतव्याघातपुनरुक्तदोषेभ्यः' इति गौतमसूत्रे त्रयाणामेवोक्तिः। अत एव च सुधायामप्यनृतत्वादीनां त्रयाणामेवाप्रामाण्यहेतुत्वेनोक्तिश्च। अत एवात्र टीकाया-मनृतत्वादिदोषपरिहारातिदेशादिना नैरर्थक्यादिनिरासोऽपि। तथाऽप्यत्र टीकायां नैरर्थक्यादीनामनेकेषाम् अप्रामाण्यहेतुत्वेनोपादानं स्पष्टत्वायेति स्वामिनः।

कस्य केन समुच्चय इत्यत आह- **एतच्छङ्केति ॥** अनृतत्वादिहेत्वनिरासात् प्रतिज्ञामात्रमेतदित्यतोऽपौरु-षेयत्वादिति ग्रन्थेनोक्तहेतूनाम् अप्रामाण्याभावनिश्चयप्रयुक्तनिश्चितान्यथासिद्ध्याद्युक्त्या सूचिततन्निश्चय-पूर्वकालीनतत्सन्दिग्धासिद्धेः न तत् इत्यभिप्रेत्य, सन्दिग्धान्यथासिद्ध्यादिना हेतुदूषणं ग्रन्थाभिप्रायतया वर्णयति- **अयमभिप्राय इति ॥ किमिदमिति ॥** अर्थशून्यत्वं प्रमाणान्तरविसंवादो वेति किमोऽर्थः। आद्यमाशङ्कते- **अर्थेति ॥** अर्थः 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यादिवाक्यबोध्यः पुत्रजन्मपुत्रेष्ट्योः साध्यसाधनभावः, तच्छून्यत्वं तद्व्यभिचारित्वम्। कृतायामपि पुत्रेष्टौ पुत्रजन्मानुपलम्भादित्यर्थः ॥ **साध्याविशिष्टतेति ॥** ततश्च सन्दिग्धा-सिद्धिरिति भावः। द्वितीयमाशङ्कते- **प्रमाणान्तरेति ॥ सर्वत्रेति ॥** प्रमाणीभूते प्रत्यक्षादौ इत्यर्थः ॥ **अनै-कान्त्यादिति ॥** सत्यपि तत्राऽपाततः प्रमाणान्तरविसंवादे अप्रामाण्यविरहादिति भावः। सन्दिग्धासिद्धत्वमेव दर्शयति- **किमत्रेति ॥ सन्दिग्धकालातीतत्वस्येति ॥** यद्यपि पक्षे साध्यसन्देहो न प्रतिबन्धकः, अनुमान-मात्रोच्छेदप्रसङ्गात्। प्रत्युत गुण एव। असन्दिग्धे न्यायः प्रवर्तत इत्यङ्गीकारात्। तथाऽपि स्वारसिकस्य तस्याप्रति-बन्धकतायामप्याहितस्य प्रतिबन्धकत्वमेव। अन्यथोपाध्याहिततत्सन्देहस्याप्यप्रतिबन्धकत्वप्रसङ्गात्। प्रकृते च अन्यथासिद्ध्या तत्संशयस्याऽहितत्वात् प्रतिबन्धकत्वमिति भावः। **अनैकान्तिकत्वस्य चेति ॥** इदं रजतम् इत्यादिप्रत्यक्षादिविरुद्धे नेदं रजतमिति प्रत्यक्षादौ, सत्यपि व्याहतत्वे द्वयोरप्रामाण्यविरहादिति भावः। **अनैकान्त्यादिति।** प्रमाणीभूतप्रत्यक्षानुमानादाविति शेषः। ननु प्रत्यक्षादौ प्रवृत्तस्य प्रत्यक्षान्तरादेरप्रामा-ण्याभावेऽपि शब्दप्रामाण्ये सप्रयोजनत्वस्य व्यापकत्वात् पुनरुक्ते च वैयर्थ्येन तन्निवृत्तौ तद्व्याप्यप्रामाण्य-निवृत्तिरावश्यकीत्याशङ्कायामाह- **वैयर्थ्यं त्विति ॥** कथञ्चिदित्यनेन सूचितं तत्परिहारमाह- **तदपीति ॥ एतेनेति ॥** प्रमाणसम्प्लवे व्यभिचारेणेत्यर्थः। तत्र सत्यपि प्रमाणान्तरसिद्धार्थत्वे चाप्रामाण्यविरहादिति भावः। **अनैकान्तिकमिति ॥** प्रमाणतयाऽभ्युपगतलौकिकवाक्ये सत्यप्यापाततो निरर्थकत्वेऽप्रामाण्यविरहा-दिति भावः। **न प्रमाणमितीति ॥** संवादराहित्यं नाप्रामाण्ये प्रमाणमित्यर्थः। इतीत्यस्य इत्यभिप्राय इति पूर्वेणान्वयः।

**(व्या.टि.)** अत्र बौद्धराद्धान्तं 'न चैतेषाम्' इत्यनेन दूषयितुमनुवदति- **अत्राऽहुरित्यादिना ॥** बौद्धमतरीत्या **(व्या.टि.)** उदाहरणोपनयौ दर्शयति- **यदनृतमित्यादिना ॥** गूढाभिसन्धिरनृतत्वहेतुमुपनयति- **अनृतं चेति ॥** आदिपदेन 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यादिदृष्टफलवाक्यपरिग्रहः। अन्यत्राप्यतिदिशति- **एवमिति ॥** अत्राऽदिपदेन 'आपोऽब्रुवन्' इत्यादेर्ग्रहः ॥ **अनुमानविरुद्धत्वादिति ॥** न च दृष्टिविरोधमपहाया-नुमानविरोधोक्तिरयुक्तेति वाच्यम्। आदिकालीनमृदाद्यभिप्रायेणास्योक्तत्वात्। हेत्वन्तरमुदाहृत्योपनयति- **स्वव्याहतं चेति ॥** एवमुत्तरत्रापि बोध्यम्। इत्यादीत्यादिपदेन 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति' इति विरुद्धार्थवाक्यपरिग्रहः ॥ **शाखान्तरोक्तस्येति ॥** अग्निहोत्रादेरित्यर्थः। ननु शाखान्तराधि-करणन्यायेन पुरुषान्तरं प्रत्यर्थवत्त्वान्न पुनरुक्तिर्दोषायेत्यत आह- **एकस्यामपीति ॥ वाक्यावृत्तीति ॥** 'वाचं देवा उपजीवन्ति विश्वे' इत्यादेरिति भावः। न केवलं दृष्टा पुनरुक्तिरपि तु श्रुता चेत्याह- **त्रिरिति ॥** 'दर्शपूर्णमासयोः पञ्चदश सामिधेनीरन्वाह' इति 'समिधामाधाने षेण्यण्' इति षेण्यणि, णित्त्वादादिवृद्धौ षित्त्वात् ङीषि 'यस्येति च' इत्यकारलोपे, 'हलस्तद्धितस्य' इति यलोपे च निष्पन्नसामिधेनीशब्दितानां समिधाधानसाधनभूतानां प्रवोवाजीयानामृचां पाञ्चदश्यं विधाय, श्रुतैकादशर्चां पाञ्चदश्यसम्पत्तये आवृत्त्या सङ्ख्यापूर्तिः श्रूयते 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति। त्रिरिति 'द्वित्रिचतुर्भ्यः सुच्' इति सुजन्तम् आवृत्तिवचनम्। प्रथमामृचं त्रिवारमनुब्रूयात्, तथोत्तमाम्-अन्त्यां च त्रिरनुब्रूयादिति तदर्थः। उत्तमशब्दस्त्वन्त्ये 'गुरूपोत्तमयोः' इत्यादा-वभियुक्तप्रयुक्तः। ततश्चावृत्त्या सङ्ख्या पूर्यत इति मीमांसकहृदयम् ॥ **सृण्ये(ण्वे)वेत्यादिकमिति ॥** आदि-पदेनाप्रतीतार्थवाङ्मात्रपरिग्रहः। हेत्वन्तरं चोदाहृत्योपनयति- **प्रमाणान्तरेति ॥ भेषजमित्यादीति ॥** आदि-पदेन 'सूर्य एकाकी चरति' इत्यादिसिद्धार्थपरिग्रहः ॥ **पुराणेऽपीति ॥** 'तस्य मुक्तिः करे स्थिता' इत्यादावि-त्यर्थः ॥ **तद्दृष्टान्तेनेति ॥** 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायादिति भावः ॥ **तथाविधमिति ॥** वेदार्थस्य तदेकप्रमाणकत्वादित्यर्थः। निगमयति- **एवं चेति ॥** मौल एवकारः कैमुतिकार्थ इत्युपेत्य तन्न्यायविषयं दर्शयति- **वचनानामिति ॥** एतमेव न्यायमन्यत्राप्यतिदिशति-

**एवमिति ।। सिद्धिर्निश्चयः** । वाक्याप्रामाण्य-निश्चयस्यार्थनिश्चयविरोधित्वादिति भावः ।

**।। चशब्दः समुच्चय इति ।।** ननु पृथगेकक्रियान्वयः समुच्चय इति हि समुच्चयलक्षणम् । अत्र चशब्दस्य वचनान्वये तत्पूर्व(र्वं)वचनाभावेनानन्वयः । अप्रामाण्यपदान्वये प्रामाण्यप्रसक्त्या व्याहतिरिति, कस्यां क्रियायां केन कस्य समुच्चय इति न ज्ञायत इत्यतो मन्दानुजिघृक्षया आशयमुद्घाटयति- **एतच्छङ्कापरिहारेति ।।** अयं भावः । सदुक्तिभिः साधयिष्यामीति साधनक्रियाकरणतयोक्तसदुक्तीनामप्रामाण्यशङ्कापरिहारसमुच्चितानाम् अकुण्ठितशक्तितया साधकत्वम् इति, उक्ताप्रामाण्यशङ्कापरिहारेण सहैकसाधनक्रियासम्बन्धात् समुच्चयो युक्त इति । एतमेव न्यायमुत्तरत्राप्यतिदिशति- **एवमिति ।।** ननु कथमुक्तहेतुषु जाग्रत्सु प्रतिज्ञामात्रेणोक्तशङ्कापरिहार इत्यत आह- **अयमभिप्राय इति ।।** परकीयगूढाभिसन्धिमुद्घाटयितुं पृच्छति- **किमिदमिति ।।** उद्घाटयति- **अर्थशून्यत्वमिति ।।** नन्विति खल्वित्यर्थेऽव्ययम् **।। प्रमाणान्तरेति ।।** अत्र प्रमाणान्तरशब्देन सजातीय-**(व्या.टि.)** विजातीयरूपोभयं विवक्षितम् । तत्र फलशब्दितं विजातीयं प्रमाणम् । सजातीयं प्रत्यक्षादि । तत्र पुत्रेष्ट्यादिवाक्याप्रामाण्यहेतुतयोक्तं फलादर्शनरूपं विजातीयप्रमाणविसंवादं दूषयितुं विकल्प्य पृच्छति- **स किमिति ।। आपातत इति ।।** यथाकथञ्चित् फलादर्शनमित्यर्थः **।। सर्वथा वेति ।।** सति कारणान्तरे प्रतिबन्धकाभावे च सति अदृश्यमानफलकहेतुबोधकत्वादिति वाऽनुमीयत इत्यर्थः **।। तस्येति ।।** अविचारितस्ये-त्यर्थः **।। सर्वत्रेति ।।** कारणान्तराभावप्रतिबन्धकप्रयुक्तादर्शनफलकहेतुबोधके प्रमाणवाक्येऽपीत्यर्थः । **अत्र** पुत्रेष्ट्यादीति वाक्ये । वैगुण्यादीत्यादिपदेन प्रतिबन्धकं गृह्यते **।। फलादर्शनादिकमिति ।।** विरुद्धफलदर्शनम् आदिपदोक्तम् । एवं सजातीयप्रत्यक्षादिप्रमाणविसंवादोऽपि किमापाततः सर्वथा वेति विकल्पः कार्यः । तस्य मानान्तरविरुद्धार्थबोधकत्वमात्रं वा, तादृशतात्पर्यविषयार्थबोधकत्वं वेत्यर्थः । आद्येऽनैकान्त्यम् । द्वितीये मृदादिवच(नादि)नवाक्ये सर्वथा प्रत्यक्षादिविरोध एव, उत मृदादिपदजातस्य देवतापरतया वचनादिकमुपपन्नमिति सन्देहापरिहारादिति तद्दूषणोद्धारश्चोह्यः । अन्यथा न्यूनताऽऽप(त्ति)त्तेरिति सुधीभिरूहनीयम् ।

व्याघातहेतुं दूषयति- **व्याघातेनापीति ।। अन्यतरप्रामाण्ये(नापी)पीति ।।** अपिना उभयाप्रामाण्या-विनाभावं वारयति । अयं भावः । यद्यपि स्वारसिकः संशयः पक्षतारूपत्वेनानुमित्यङ्गम्, तथाऽप्याहित-त्वाद्बाधसन्देहः प्रतिबन्धकः । आधानं पक्षीयव्याघातधर्मिकोभयाप्रामाण्यनिमित्तकोपपत्त्यन्यतरप्रामाण्यनिमित्त-कोपपत्तिकोटिकसन्देहेनेत्यवधेयम् । यद्यपि च उभयाप्रामाण्ये वाक्यद्वयार्थस्य भावाभावरूपस्य विरोधभङ्गापत्त्या अन्यतराप्रामाण्येनैवेति निश्चीयते, तथाऽपि उभयाप्रामाण्येनापि सम्भवमुपेत्यायं ग्रन्थः प्रवृत्तः । वस्तुतो निश्चित एव बाधः **।। अनैकान्तिकत्वस्य चेति ।।** गिरिरग्निमान्नाग्निमानिति वाक्य इत्यर्थः । द्वितीयं दूषयति- **द्वितीय इति ।।** अन्याप्रामाण्येनापि व्याघातसम्भवादिति भावः । अत्रापि व्याघातधर्मिकतत्तदुपपत्तिकोटिक-सन्देहेन बाधसन्देहाधानम् । विकल्पेन दोषान्तरं वक्तुं प्रतिजानीते- **किञ्चेति ।। अनैकान्त्यादिति ।।** 'बृहत्तुलै-रप्यतुलैः' इत्यादिविरोधाभासालङ्कारवति काव्ये व्यभिचारादित्यर्थः **।। अधिकार्यादीति ।।** आदिपदेनाश्व्यादि-देवताभेदः । यथोक्तं प्रातर्युजीयमन्त्रे 'पुरा गृध्रादररुषः पिबाथ' इति । उदितहोमस्त्वग्निहोत्रादिविषयः । अभ्युपगमविकल्पेन वा । अत एवोक्तं गौतमसूत्रे 'अभ्युपेतकालभेदे दोषवचनात्' इति । श्रूयते हि 'यदुदिते जुहोति श्यामोऽस्याऽऽहुतिमभ्यवहरति' इति दोषवचनम् **।। प्रमाणेति ।।** शब्दप्रमाणेत्यर्थः । व्यर्थत्वमित्य-मन्तम् । वैफल्यमित्यर्थः **।। अधिकेति ।।** सहप्रयोगादिरूपेत्यर्थः । आदिना विधिनिषेधौ । आग्नेयादिपौर्णमासी-त्रिकस्य सहप्रयोगाय पौर्णमास्यां पौर्णमास्येत्यनुवादः **।। एतेनेति ।।** किमिदं प्रसिद्धार्थम्, उतापूर्वार्थमिति सन्दिग्धत्वेनेत्यर्थः **।। अनैकान्तिकमिति ।।** अव्युत्पन्नाप्रतीतार्थवाक्य इत्यर्थः **।। अपरिज्ञानादिति ।।** स्वस्यासार्वज्ञ्येन सतोरपि शक्तितात्पर्ययोरज्ञानसम्भवादिति भावः । वस्तुतो निरुक्तपर्यालोचनेऽर्थप्रतीतेर्निश्चि-तासिद्धिः ।

**(व्या.टि.)** सृण्येवेत्यृगर्थस्त्वित्थम् । भूतांशो नाम ऋषिः, 'भूतांशोऽश्विनोः काममप्राः' इत्यन्ते कीर्तनात्, शरीरजरामरणनिवारणकामो निदर्शनत्रिकेण विशेषणद्वन्द्वत्रिकं पिपादयिषुरश्विनौ अभिष्टौति- **सृण्येवेति ।।** सृण्येव जर्भरी तुर्फरीतू । प्रसिद्धभर्तृवद्भर्तारौ प्रसिद्धहन्तृवत् हन्तारौ चेत्यर्थः । तथैव निरुक्तं निरुक्ते यास्केन 'सृण्येवेति द्विविधा सृणिर्भवति भर्ता च हन्ता च । तथाऽश्विनौ चापि भर्तारौ । जर्भरी भर्तारावित्यर्थः । तुर्फरीतू हन्तारौ' इति । तयोर्देवभिषक्त्वेन औषधदानाऽदानाभ्याम् उभयविधत्वात् । तथा हि श्रुतम् 'अश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति' इति । **नैतोशेवतुर्फरी पर्फरीका ।** नैतोशेव श्येनश्यावाविव । नितरां तुसति खण्डयतीति नितोसः, सस्य शो निरुक्तत्वात् । ततः 'तस्यापत्यम्' इत्यण् । तदपत्यभूताविवेत्यर्थः सम्पद्यते । तुर्फरी क्षिप्रहन्तारौ । पर्फरीका किसलयभूतौ कोमलावित्यर्थः । निदर्शने 'श्येनो गृध्राणाम्' इति,

'श्येनो वै वयसां पतिष्ठः' इति च पक्षिश्रैष्ठ्यम्, 'यथा वै श्येनः' इति क्षिप्रहन्तृत्वं च प्रसिद्धम्। अश्विनोरपि 'आशु वानाद् गतेरश्वी' इति ऋग्भाष्यदिशा प्रसिद्धम्। पर्फरीकशब्दस्तु 'पर्फरीकादयश्च' इत्यौणादिकसूत्रेण निपातितः। तथैव निरुक्तं यास्केन 'नितोशस्यापत्यं नैतोशो नैतोशेव' इति। **उदन्यजेव जेमना मदेरू।** उदन्यजे इव उदकजे इव समुद्रोद्भूतचन्द्रज्योतिषी इव, रत्ने इव वा। जेमना सर्वातिशयितकान्तिमन्तौ, मदेरू सुखिनौ चेति। तथैव निरुक्तं निरुक्ते 'उदन्यजेवेत्युदकजे इव रत्ने सामुद्रे चान्द्रमसे वा' इति। **ता मे जराय्वजरं मरायु।** ता, तौ 'सुपां सु लुक्' इति डा, हे अश्विनौ जरायु 'किञ्जरयोः श्रिणः' इति जरोपपदस्येणो ञुणि, वृद्धौ च जरामेतीति जरायुः गर्भाशयः। 'गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम्' इत्यमरः। जरायुजत्वाद् जरायु। हेतुहेतुमतोरभेदव्यपदेश आयुर्वै घृतमितिवत्। जीर्यतेर्म्रियतेश्च बाहुलकायुप्रत्यये जीर्यमाणं, मरायु म्रियमाणम्, 'सपत्नं दुर्मरायुम्' इति प्रयोगात्, शरीरम् अजरम्, उपलक्षणम् अमरं च कुरुतम् इति। तथैव निरुक्तं 'जरायु शरीरमजरमजीर्णम्' इति।

माधवस्तु 'निगमनिरुक्तानुरोधेन वेदार्थं वच्मि' इति प्रतिज्ञाय निगमविरुद्धं व्याख्यासीत्। तथा हि। सृणिरङ्कुशः सरणसाधनत्वात्। तदर्हत इति सृण्यौ, अर्थात् कुञ्जरौ। ताविव जर्भरी जृम्भमाणौ। तुर्फरीतू हिंसन्तौ। नितोशतिर्वधकर्म तत्कारिणौ। नैतोशौ योद्धारौ। तुर्फरी त्वरमाणौ। पर्फरीका शोभायुक्तौ। उदन्यतिः पिपासार्थः 'अशनायोदन्या' इति निपातनात्, तत्र जातौ उदन्यजौ प्रावृषिकचातकौ। जेमना उदकवन्तौ। जेमशब्दात् पामादिविहितो नप्रत्ययः। तौ यथोदकलाभेन मत्तौ भवतः, तथा यौ मदेरू तौ मे जरायु मरायु च जरणमरणकर्म अर्थात् शरीरम्, अजरममरं च कुरुतमिति। तन्न। श्रौतार्थपरत्वसम्भवे आर्थिकार्थस्वीकारायोगात्। पर्फरीकापदस्य शोभानामस्वपाठात्। नितोशतेरलौकिकधातुत्वाच्च। निरुक्ते नितोशस्यापत्यं नैतोश इति तद्धितार्थत्वकथनविरोधाच्च। जेमशब्दस्य उदके वृत्त्यभावात्। स्तुत्यनानुगुण्याच्चेति ॥ **तदेकेति** ॥ एकशब्दोऽ-त्राप्यवधारणार्थः। नाप्रामाण्यमिति निगमः। अप्रामाण्यनिश्चयो न सम्भवतीत्यर्थः।

**मूलम् - अपौरुषेयत्वाद् वेदस्य।**

**(त.मं.)** पुरुषकृतत्वे ह्यज्ञानमूलत्वादिना प्रामाण्याभावशङ्का स्यात्। वेदस्य त्वपौरुषेयत्वात् सा न स्यात्। अत्रायमाशयः - वेदोऽप्रमाणं न भवितुमर्हति; अपौरुषेयवाक्यत्वात्। यदप्रमाणं तन्नापौरुषेयवाक्यं, यथोन्मत्तवाक्यमिति।

**टीका -** अस्त्वेवं तर्हि हेतूनां सन्दिग्धासिद्धत्वादिना वेदाप्रामाण्यानिश्चयः। तथाऽपि तत्सन्देहोऽ-स्त्येव, वैगुण्यादिनिमित्तत्वादेरनिश्चितत्वात्। तथाच भवतोऽभिमतसिद्धये वेदपुराण-वचनोदाहरणमयुक्तमित्यत आह- **अपौरुषेयत्वादिति ॥** वचनानामिति प्रकृतत्वेऽपि वेदस्येति पुनर्वचनम्, पुराणवचनस्यापि प्रकृतत्वात् तस्यापि पक्षीकारे भागासिद्धिप्रसङ्गात् तत्परित्यागेन तावदत्र वेदस्यैव पक्षीकरणज्ञापनार्थम्।

इदमुक्तं भवति। करणानामप्रामाण्यं खल्वबोधकत्वं विपरीतबोधकत्वं वा। तत्र शब्दस्या-बोधकत्वं द्वेधा सम्भवति, पदाभिमतानां निरभिधेयत्वेन साभिधेयत्वेऽप्यन्वयाभावेन चेति। विपरीतबोधकत्वं तु विपरीतान्वयेन। तदिदं स्वतन्त्रवक्तृपुरुषदोषाधीनं नतु स्वभाव इति अप्रामाण्यस्य परतस्त्वं व्युत्पादयन्तो वक्ष्यामः। पुरुषो ह्यज्ञानाद् विपरीतज्ञानात् प्रमादाद् अपटुकरणत्वाद्वा निरभिधेयान् निरन्वयान् वा शब्दान् प्रयुङ्क्ते। प्रमादात् करणापटुत्वाद् विपरीतज्ञानाद् विप्रलम्भकत्वाद्वा विपरीतान्वयान्। तदभावश्च द्वेधा सम्भवति, अपौरुषेयत्वेन वा वक्तुराप्तत्वेन वा, विवक्षितार्थतत्त्वज्ञानादेराप्तिशब्दार्थत्वात्। तत्र वेदस्यापौरुषेयत्वेन पुरुषदोषनिबन्धनदोषाभावात्, कारणाभावे च कार्यस्य शङ्कितुमशक्यत्वाद् अप्रामाण्याभावो निश्चीयते।

वेदो नाप्रमाणम्, अप्रामाण्यकारणदोषशून्यत्वात् प्रत्यक्षादिवत्। शब्ददोषाश्च पुरुषदोषाधीनाः तदन्वयव्यतिरेकानुविधायित्वात्। यद् यदन्वयव्यतिरेकानुविधायि, तत् तदधीनम्। यथा पटस्तन्त्वधीनः। वेदो न पुरुषदोषनिबन्धनदोषवान्, पुरुषाप्रणीतत्वात्। यद् येनाप्रणीतं वाक्यम्, न तत् तद्दोषप्रयुक्तदोषवत्। यथा

यज्ञदत्ताप्रणीतं वाक्यं न यज्ञदत्तदोषप्रयुक्तदोषवद् इति। विपक्षे त्वकारणकार्योत्पत्तिप्रसङ्गः।

तथाचानृतत्वादयः प्रागप्रामाण्याभावानिश्चयात् सन्दिग्धासिद्धाः। निश्चिते त्वप्रामाण्याभावे निश्चितासिद्धा एव भवन्ति। एवमप्रामाण्याभावे निश्चितेऽपि प्रामाण्यनिश्चयः कुत इति चेत्। अपौरुषेयत्वेन तन्निबन्धनाबोधकत्वविपरीतबोधकत्वशून्यत्वादिति ब्रूमः। वेदोऽप्रमाणम् आप्ताप्रणीतवाक्यत्वात्, उन्मत्तवाक्यवत् इति चेन्न। वाक्यत्वावच्छिन्ने साध्येऽनाप्तप्रणीतत्वस्य, केवले वा अप्रामाण्यकारणदोषवत्त्वस्योपाधित्वात्। वेदे चोपाधिद्वयाभावस्योक्तत्वात्। वाक्यप्रामाण्यस्य वक्तुराप्तिमूलत्वेन तदभावेऽकारणकार्योत्पत्तिः स्याद् इति तु प्रामाण्यस्य स्वतस्त्वप्रतिपादनेन निराकरिष्यते। आप्तोक्तत्वेन अप्रामाण्याभावप्रामाण्ययोर्निश्चयः किं न क्रियत इति चेत्। यथा न शक्यते तथा वक्ष्यते। महाजनपरिगृहीतत्वात् प्रामाण्यादिनिश्चयोऽस्तु किमनेनापौरुषेयत्वक्लेशेनेति चेत्। किं महच्छब्देन सङ्ख्याप्रकर्षोऽभिधीयते पूज्यता वा। नाऽद्यः। जनानामियत्तापरिज्ञानस्याशक्यत्वेन सन्दिग्धासिद्धत्वात्। देशादिविशेषे बौद्धादीनां महाजनपरिगृहीतत्वेनानैकान्त्याच्च। न द्वितीयः। वेदपरिग्रहवतां पूज्यत्वस्य परैरनङ्गीकृतत्वात्। स्वशास्त्रपरिगृहीतॄणां तस्याङ्गीकृतत्वाच्चेति॥

**(र.टि.)**ननु 'अपौरुषेयत्वाद्वेदस्य' इत्यत्र प्रामाण्यहेतुत्वेनोक्तमपौरुषेयत्वम्, अनियतानुपूर्वीकत्वाभावो वा, नियतानुपूर्वीकत्वभावो वा। नाऽद्यः। गगनादौ व्यभिचारात्। न द्वितीयः। साक्ष्यादिरूपसकलप्रमाणरूप-सपक्षव्यावृत्तत्वेनासाधारण्यात्, इत्याद्यनुपपत्तिपरिहाराय 'नित्यत्वात् पुरुषोद्भवैः। वर्जितं सर्वदोषैश्च कथं नो मानतां व्रजेत्' इत्याद्यनुव्याख्यानानुसारेणाप्रामाण्याभावसाधकानुमानपरत्वेन तद्वाक्यं योजयति- **अपौरुषेय-त्वेनेति**॥ नन्वनुकूलतर्केण हेतोः साध्यव्याप्यत्वनिश्चयात्, पक्ष एव साध्यव्यापकत्वभङ्ग इत्यत आह- **वाक्य-प्रामाण्यस्येति**॥

**(रा.टि)** ॥ **सन्देहोऽस्त्येवेति** ॥ अप्रामाण्यसन्देहो वेदादिष्वस्त्येवेत्यर्थः॥ **वैगुण्यादिनिमित्तत्वादे-रिति**॥ आपातत एवायं व्याघात इत्यादेरनिश्चयादित्यादिपदार्थः॥ **भागासिद्धीति**॥ अपौरुषेयत्वादित्यत्र नाप्रामाण्यमित्यनुषङ्गात्तत्र च वेदवचनानि नाप्रमाणानीति वाच्यत्वादिति भावः। उत्तरवाक्ये पुराणादेरपि पक्षीकारात्तावदत्रेत्युक्तम्। अपौरुषेयत्वादित्युक्तिमात्रेण कथमुक्तशङ्कानिरासेनाप्रामाण्याभावनिश्चय इत्यत आह- **इदमुक्तं भवतीति**॥ **निरभिधेयत्वेनेति**॥ कचटतपानां जबगडदत्वादित्यादाविति भावः॥ **अन्वया-भावेनेति**॥ कुण्डमजाजिनं दश दाडिमानि षडपूपा इत्यादाविति भावः॥ **विपरीतान्वयेनेति**॥ श्वेतो धावतीत्यादौ श्वा इतो गच्छतीत्यर्थके वाक्ये श्वेतः कुष्ठः शोधयतीत्यन्वयेनेति वा, गिरिर्भुक्तमग्निमान् देवदत्तेने-त्यादाविति वा, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादावन्याभिप्रायेऽन्यान्वयेनेति वाऽर्थः॥ **वक्ष्याम (रा.टि) इति**॥ 'दुष्टबुद्धीनामेवाप्रामाण्यशङ्केति परतोऽप्रामाण्यम्' इति वाक्यव्याख्याऽवसर इति भावः। **विपरीतान्वयानिति**॥ शब्दान् प्रयुङ्क्त इत्यनुषङ्गः॥ **तत्त्वज्ञानादेरिति**॥ पटुकरणत्वाप्रमादत्वा-विप्रलम्भकत्वानामादिपदेन ग्रहणम्। अपौरुषेयत्वादिति हेतुर्न साक्षादप्रामाण्याभावे हेतुः, अपि तु तत्साधक-हेतुसाधनद्वारा परम्परयेति भावेन साक्षाद्धेतुं स्वयमाह- **अप्रामाण्यकारणेति**॥ दोषशून्यत्वमात्रोक्ता-वप्रयोजकताशङ्का स्यादिति कारणान्तविशेषणोक्तिः। कुठारादियत्किञ्चित्कारणदोषशून्यस्यापि दुष्टेन्द्रियादे-रप्रामाण्यात् तत्राव्यभिचारायाप्रामाण्येत्युक्तिः। दोषपदं स्पष्टार्थत्वाय स्वरूपकथनं वा। वेदोऽप्रामाण्य-कारणहीनो निरभिधेयपदत्वानन्वितपदत्वविपरीतान्वितपदत्वप्रयुक्ताबोधकत्वविपरीतबोधकत्वरूपदोषशून्य-त्वादिति प्रयोगान्तराभिप्रायं वा। दोषो ह्यप्रामाण्ये कारणमित्यस्य दुष्टबुद्धीनामेवेत्यादावग्रे स्पष्टत्वाद्धेतोरसिद्धि-निरासाय तत्साधकमनुमानमग्रे विवक्षुरादौ साध्यविशेषणसाधकमनुमानमाह- **शब्ददोषाश्चेति**॥ यद्वा प्राक् पुरुषदोषनिबन्धनदोषाभावादिति दोषाणां पुरुषदोषायत्तत्वं यदुक्तं तत्साधयितुमाह- **शब्ददोषाश्चेति**॥ प्रत्यक्षादिदोषाणामदृष्टादिकारणान्तरायत्तत्वात् शब्ददोषा इत्युक्तम्। प्रागुक्तहेतोरसिद्धिवारकं प्रयोगमिदानीमाह- **वेद इति**॥ दुष्टेन्द्रिये व्यभिचारनिरासायाप्रयोजकत्वनिरासाय च साध्ये विशेषणोक्तिः। आद्यन्तहेत्वोर-प्रयोजकत्वनिरासायानुग्राहकतर्कमाह- **विपक्ष इति**॥ हेतुसत्त्वेऽपि साध्याभाव इत्यर्थः।

एतावता प्रागुक्तहेतूनां का गतिरुक्तेत्यत आह- **तथा चेति**॥ इममेव हेतुं परम्परया प्रामाण्यसाधनेऽप्याह- **अपौरुषेयत्वेनेति**॥ **तन्निबन्धनेति**॥ अज्ञानविपरीतज्ञानादिप्रागुक्तपुरुषदोषनिबन्धना ये निरभिधेय-पदत्वादयस्तन्निबन्धनाबोधकत्वादिशून्यत्वादित्यर्थः। तत्कुत इत्यतोऽपौरुषेयत्वेनेत्युक्तम्- **इति ब्रूम इति**॥ हितैषिपित्रादिवाक्यमत्र

दृष्टान्त इति भावः । तत्राऽऽप्तोक्तत्वेनोक्तहेतुर्ध्येयः । प्रतिपक्षमुक्तानुमानस्याऽऽशङ्कते- **वेदोऽप्रमाणमिति ।।** आप्तवाक्येऽव्यभिचाराय विशेषणम् । गगनादौ भ्रान्तिजनकत्वरूपाप्रामाण्याभावेन तत्राव्यभिचाराय विशेष्यम् **।। वाक्यत्वावच्छिन्न इति ।।** उपाधिर्द्विविधः । शुद्धसाध्यव्यापकः, अवच्छिन्न-साध्यव्यापकश्चेति । द्वितीयोऽपि द्वेधा । पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति । प्रकृते चानाप्तप्रणीतत्वोपाधेः प्रत्यक्षभ्रमादौ शुद्धसाध्याव्यापकत्वेऽपि वाक्यत्वरूपपक्षधर्मावच्छिन्नसाध्यं प्रत्युन्मत्तवाक्ये व्यापकत्वाद्भवत्ययमुपाधिः । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र द्रव्यत्वावच्छिन्नसाध्य-व्यापकोद्भूतरूपवत्त्ववदिति भावः **।। केवले वेति ।।** साध्य इत्यनुषङ्गः । प्रत्यक्षाभासादौ साध्यव्यापकोऽ-प्रामाण्यकारणदोषवत्त्वरूपोपाधिरिति भावः । साधनाव्यापकत्वमुपाधिद्वयस्याऽऽह- **वेदे चेति ।। उक्तत्वा-दिति ।।** शब्ददोषाश्चेत्यादिना वेदस्यापौरुषेयत्वेनेत्यादिना वा न यज्ञदत्तदोषप्रयुक्तदोषवदित्यन्तेनेति भावः। **स्वतस्त्वेति ।।** प्रामाण्यं तु स्वत एवेत्येतद्व्याख्यावसर इति भावः । न्यायमतरीतिमाश्रित्य शङ्कते- **आप्तेति ।।** वेदस्येति योज्यम् **।। वक्ष्यत इति ।।** 'न च पौरुषेयेण वाक्येन' इत्यादिवाक्यव्याख्यानावसर इति योज्यम् । कुसुमाञ्जल्युक्तमाशङ्कते- **महाजनेति ।।** प्रामाण्यादीत्यादिपदेनाप्रामाण्याभावनिश्चयसङ्ग्रहः **।। इयत्तेति ।। (रा.टि)** वेदाप्रामाण्यवाद्यपेक्षया तत्प्रामाण्यवादिनो बहव इति परिज्ञानस्येत्यर्थः **।। बौद्धादीनामिति ।।** बौद्धसाङ्ख्यशैवादिग्रन्थानामित्यर्थः । तत्र प्रामाण्यरूपसाध्याभावादनैकान्त्यमित्यर्थः **।। परैरिति ।।** अप्रामाण्य-वादिभिः । तथा चासिद्धिरिति भावः । अनैकान्त्यं चाऽऽह- **स्वशास्त्रेति ।। तस्येति ।।** पूज्यत्वस्येत्यर्थः ।

**(श्री.टि.) ।। तत्सन्देह इति ।।** अनृतत्वादिनाऽप्रामाण्यात् फलविसंवादः, उत वैगुण्यादिनिमित्तक इति फलविसंवादसन्देहेनाप्रामाण्यसन्देहोऽस्त्येवेत्यर्थः । ननु न फलविसंवादसन्देहो द्वितीयकोटेरेव निश्चितत्वादिति चेत्तत्राऽऽह- **वैगुण्यादीति ।। निमित्तत्वादे**र्निमित्तकत्वादेः, फलविसंवादस्येति शेषः **।। तस्यापीति ।।** वचनानामिति प्रयुज्याप्रामाण्याभावसाधनाय पुराणस्यापि पक्षीकार इत्यर्थः **।। भागासिद्धीति ।।** अपौरुषेयत्व-हेतोस्तत्राभावादिति भावः **।। तावदिति ।।** पुराणस्याप्रामाण्याभावमुत्तरत्र 'इतिहासपुराणः पञ्चमः' इत्यादिना प्रकारान्तरेण साधयिष्याम इत्याशयेनेत्यर्थः । पदानां निरभिधेयत्वेनेत्युच्यमाने 'अर्थवदधातुरप्रत्ययः' इत्यर्थवत एव प्रातिपादिकत्वोक्तेः प्रातिपदिकोपर्येव 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य स्वादिप्रत्ययविधानात् स्वादिप्रत्ययान्तानामेव 'सुप्तिङन्तं पदम्' इति पदत्वविधानात् पदत्वोक्त्याऽर्थवत्त्वप्राप्तेः निरभिधेयत्वोक्तौ व्याघातः स्यादतः पदाभिमतानामित्युक्तम् । पदत्वेन पराभिमतानां कचटतपानां जबगडदत्वादित्यादीनामि-त्यर्थः **।। अन्वयाभावेनेति ।।** कुण्डमजाजिनं दश दाडिमानि षडपूपा इत्यादावित्यर्थः **।। विपरीतान्वये-नेति ।।** गिरिर्भुक्तमग्निमान् देवदत्तेन, 'अम्बरमम्बुनि पत्रमरातिः पीतमहीशगणस्य ददाह । यस्य वधूस्तनयं गृहमब्जा पातु स वः शिवलोचनवह्निः' इत्यादावित्यर्थः । **तदिदं** पदाभिमतानां निरभिधेयत्वादि **।। स्वतन्त्र-वक्त्रेति ।।** सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषः स्वतन्त्रवक्तेत्यर्थः **।। न तु स्वभाव इति ।।** विपरीत-बोधकत्वादिरूपाप्रामाण्यस्य स्वभावत्वे ज्ञानजनकजन्यत्वप्राप्त्याऽप्रामाण्यस्य स्वतस्त्वापत्तिरिति भावः । अस्तु स्वतस्त्वं को दोष इत्यत आह- **अप्रामाण्यस्येति ।। वक्ष्याम इति ।।** 'अप्रामाण्यस्य च परतस्त्वानङ्गीकारे' इत्यत्रेत्यर्थः । पदाभिमतानां निरभिधेयत्वादिकं यत्तत् पुरुषदोषाधीनमित्येतदुपपादयति- **पुरुषो हीति । तदभाव इति ।।** शब्दस्याबोधकत्वविपरीतबोधकत्वरूपाप्रामाण्याभाव इत्यर्थः । वक्तुराप्तत्वनिश्चयेन कथं तदभावनिश्चय इत्यत आह- **विवक्षितार्थेति ।।** आदिपदेन करणपाटवाविप्रलिप्सयोर्ग्रहणम् । विवक्षितार्थतत्त्वज्ञानोक्त्या अज्ञानविपरीतज्ञानप्रमादानां निरासः । करणपाटवोक्त्याऽपटुकरणत्वस्य, अविप्रलिप्सोक्त्या विप्रलम्भकत्वस्य निरास इति ज्ञातव्यम् ।

अपौरुषेयत्वेन कथमप्रामाण्याभावनिश्चय इत्यत आह- **तत्र वेदस्येति ।। कारणाभावे** दोषरूपकारणा-भावे । **कार्यस्य** अप्रामाण्यस्य । अप्रामाण्यकारणदोषशून्यत्वहेतोः स्वरूपासिद्धिपरिहाराय वक्ष्यमाणे, 'वेदो न पुरुषदोषनिबन्धनदोषवान् पुरुषाप्रणीतत्वात्' इत्यनुमानेऽप्रयोजकताशङ्कामादौ परिहरति- **शब्ददोषा-श्चेति ।।** नन्वस्त्वप्रामाण्यकारणदोषशून्यत्वम्, अप्रामाण्यमेवास्त्वित्यप्रयोजकत्वशङ्कायां बाधकमाह - **विपक्षे त्विति ।।** नन्वनेनाप्रामाण्यसाधकानृतत्वादिहेतूनां को दोष उक्त इत्यत आह- **तथा चेति ।। प्रागप्रामाण्या-(श्री.टि.) भावनिश्चयादिति ।।** साध्यभूतं यदप्रामाण्यं तदभावनिश्चयाभावदशायामित्यर्थः **।। सन्दिग्धा-सिद्धा इति ।।** किमत्र सर्वथा प्रमाणान्तरविरोधादेव फलादर्शनमुत वैगुण्यादिनिमित्तकमिति सन्देहापरि-हारादित्युक्तरीत्या सन्दिग्धासिद्धा इत्यर्थः **।। निश्चिते त्विति ।।** अपौरुषेयत्वेनेत्यर्थः ।

**।। निश्चितासिद्धा एवेति ।।** फलविसंवादस्य वैगुण्यादिनिमित्तत्वनिश्चयादित्यर्थः । अपौरुषेयत्वेनेत्यनन्तरं साधितादिति

शेषः ॥ **तन्निबन्धनेति** ॥ तच्छब्देनापौरुषेयत्वेनेत्यत्र प्रकृतपुरुषपरामर्शः । स च तद्दोषोपलक्षकः। तथा चापौरुषेयत्वेन हेतुना साधितं यत्पुरुषदोषनिबन्धनाबोधकत्वविपरीतबोधकत्वशून्यत्वं तस्माद्धेतोरित्यर्थः। अन्ये तु तन्निबन्धनेत्यत्र तच्छब्देन सन्निहितमपौरुषेयत्वं ग्राह्यम् । न च तन्निबन्धनेत्यनेनैवापौरुषेयत्वस्य हेतुताया लब्धत्वादपौरुषेयत्वेनेत्येतद्व्यर्थमिति वाच्यम् । अपौरुषेयत्वेनेति तृतीययोक्तकारणत्वस्यैव तन्निबन्धनेत्यादिना साध्यसाधनभावमुखेन प्रदर्शनादित्याहुः । अयमिहानुमानप्रवृत्तिप्रकारः । वेदः प्रमाणम्, अबोधकत्वविपरीत-बोधकत्वशून्यत्वात् प्रत्यक्षादिवत् । न चासिद्धो हेतुः । वेदोऽबोधकत्वविपरीतबोधकत्वशून्यः तत्प्रयोजक-दोषशून्यत्वात् प्रत्यक्षादिवत् । न च तत्प्रयोजकदोषवत्त्वमेवास्तीत्यसिद्धिरिति वाच्यम् । वेदोऽबोधकत्वविपरीत-बोधकत्वप्रयोजकदोषशून्यः, अपौरुषेयत्वादिन्द्रियादिवत् । न चाप्रयोजकत्वम् । वाक्यदोषाणां पुरुषदोष-निबन्धनत्वाद् वेदे च पुरुषस्यैवाभावादिति । सत्प्रतिपक्षमाशङ्कते- **वेदोऽप्रमाणमिति** ॥ ननु नानाप्त-प्रणीतत्वमुपाधिर्दुष्टेन्द्रियेऽप्रामाण्ये सत्यप्यनाप्तप्रणीतत्वाभावेन साध्याव्यापकत्वादित्याङ्क्य वाक्यत्व-रूपसाधनधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरित्याशयेनोक्तम्- **वाक्यत्वावच्छिन्ने साध्य इति** ॥ शुद्धसाध्य-व्यापकमप्युपाधिमाह- **केवले वेति** ॥ साध्य इत्यनुवर्तते । ननूपाधिद्वयस्यापि पक्षे सत्त्वात् साधनव्यापकत्व-मित्यत आह- **वेदे चेति** ॥ अपौरुषेयत्वेनोपाधिद्वयाभावस्य साधितत्वादिति भावः । किञ्चास्त्वाप्ताप्रणीतत्वम्, अप्रामाण्यं मास्त्वित्यप्रयोजकता । ननु यद्यप्रामाण्यं न स्यात्, प्रामाण्यमेव स्यादिति यावत्, तर्ह्याप्ताप्रणीतत्व-मेव न स्यात्, आप्तप्रणीतत्वमेव स्यादिति यावत् । तथा च वाक्यप्रामाण्यस्याप्तोक्तत्वगुणजन्यत्वेन तदभावेऽपि प्रामाण्याङ्गीकारेऽकारणकार्योत्पत्तिः स्यादित्येवं हेतूच्छित्तिरूपानुकूलतर्कसद्भावान्नाप्रयोजकता । तत एवोपाध्योः पक्ष एव साध्यव्यापकताभङ्गः सिद्ध्यति । 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भवः ॥' इति वचनादिति चेत् तत्राऽह- **वाक्यप्रामाण्यस्येति** ॥ **निराकरिष्यत इति** ॥ आप्ति-मूलकत्वाभावेऽपि यादृच्छिकसंवादिवाक्ये प्रामाण्यस्य दृष्टत्वेन व्यभिचारान्न तस्य तत्र कारणत्वमिति निराकरिष्यत इत्यर्थः । तार्किकोक्तरीत्या वेदप्रामाण्यनिश्चयप्रकारमाशङ्क्य निराकरोति- **आप्तोक्तत्वेनेत्यादिना** । **निश्चय इति** ॥ वेदस्येति शेषः । अपौरुषेयत्वहेतुना कस्मात्क्रियत इत्यर्थः । **वक्ष्यत इति** ॥ वेदस्य सकर्तृकत्व-निराकरणेनेत्यर्थः ॥ **सङ्ख्याप्रकर्ष इति** ॥ शतसहस्रादिरूपबहुत्वसङ्ख्येत्यर्थः । तथा च महाजनपरिगृहीत-त्वादित्यस्य सहस्रसङ्ख्याकजनपरिगृहीतत्वादित्यर्थो द्रष्टव्यः ॥ **पूज्यता वेति** ॥ मह पूजायामिति धातोरि-त्यर्थः ॥ **इयत्तेति** ॥ वेदपरिगृहीतारो जनाः शतसङ्ख्याका एव सहस्रसङ्ख्याका एवेत्येवं मर्यादापरिज्ञान-**(श्री.टि.)** स्याशक्यत्वादित्यर्थः । **देशादिविशेषे** कीकटदेशविशेषे बुद्धगयादौ ॥ **बौद्धादीनामिति** ॥ बुद्ध-निर्मितं शास्त्रं बौद्धं तदादीनामित्यर्थः ॥ **महाजनेति** ॥ सङ्ख्याप्रकर्षवत्तद्देशस्थजनैरित्यर्थः ॥ **परैरिति** ॥ वेदः प्रमाणं पूज्यजनपरिगृहीतत्वादित्येवं वेदाप्रामाण्यवादिनं बौद्धं प्रत्यनुमानं कार्यम् । तेन वेदपरिग्रहवतां पूज्यत्वस्यानङ्गीकृतत्वादन्यतरासिद्धिः स्यादित्यर्थः । एवमन्यतरासिद्धेनापि हेतुना चेद्वेदप्रामाण्यं साध्यते तर्ह्याभाससमानयोगक्षेमत्वमित्याशयेनाऽह- **स्वशास्त्रेति** ॥ **तस्य** पूज्यत्वस्य । तथा च बौद्धशास्त्रं प्रमाणं महाजनपरिगृहीतत्वादिति बौद्धेनापि स्वशास्त्रप्रामाण्यं सुखेन साधयितुं शक्यम् । तत्र त्वया वाच्यं बौद्धशास्त्रपरिगृहीतॄणां पूज्यत्वं मया नाङ्गीकृतमित्यन्यतरासिद्धिरिति । तत्तवापि समानमिति भावः ।

**(पां.टि.)** ॥ **अनिश्चितत्वादिति** ॥ तस्याप्रामाण्याभावनिश्चयनिमित्तकत्वेन,असति तस्मिन्नसम्भवादिति भावः ॥ **अयुक्तमिति** ॥ शङ्किताप्रामाण्यस्याभिमतसिद्ध्यनङ्गत्वादिति भावः । ननु अप्रामाण्यस्यैव तावदपरिज्ञानात्, कथञ्चित् तत्परिज्ञानेऽपि अपौरुषेयत्वेन साक्षादप्रामाण्याभावसाधनस्याप्रयोजकत्वेना-युक्तत्वात्, परम्परया तत्साधनाभिप्राये चाप्रामाण्यदोषयोः कार्यकारणभावस्यासिद्धत्वेन दोषाभावेनाप्रामाण्या-भावसाधनायोगात्, अप्रामाण्यस्य परतस्त्वेन तत्सिद्ध्यभिप्राये च तत्कारणनिरभिधेयत्वादिदोषाणामन्यप्रयुक्त-त्वाभावेन स्वाभाविकतया तदभावस्यासिद्धत्वात्, स्वतन्त्रवक्तृपुरुषगताज्ञानादिदोषाधीनत्वेन तेषामस्वाभा-विकत्वाभिप्राये च तत्प्रयुक्तदोषाणामेव तत्र सत्त्वेन तदभावस्यासिद्धत्वात्, अपौरुषेयत्वेन पुरुषदोषनिबन्धन-दोषाभावसाधनस्य चाप्रयोजकत्वेन, अपौरुषेयत्वशून्ये पुराणादौ पुरुषदोषनिबन्धनदोषाभावासिद्धिप्रसङ्गेन चायुक्तत्वात्, नापौरुषेयत्वेन वेदाप्रामाण्याभावसिद्धिरित्येताः शङ्काः क्रमेण परिहरन्नपौरुषेयत्वेनाप्रामाण्या-भावसिद्धिमुपदर्शयति- **इदमुक्तं भवतीति** ॥ एवमुपयुक्तमभिधाय सिद्धान्यनुमानानि दर्शयति- **वेदो नाप्रमाणमित्यादिना** ॥

नन्वपौरुषेयत्वेनोक्तरीत्या वेदस्याप्रामाण्याभावनिश्चयेऽपि सदागमैकविज्ञेयमिति तद्विषयस्य प्रमाणान्त-रागोचरत्वेन सजातीयसंवादस्य, मोक्षादेः प्रत्यक्षाद्यवेद्यत्वेनार्थक्रियासामर्थ्यादिरूपविजातीयसंवादस्य चाभावेन

वेदगतयथार्थज्ञानसाधनत्वरूपप्रामाण्यस्य संवादेनानुमातुमशक्यत्वेन आप्तोक्तत्वेनैवानुमातव्यत्वात्, अपौरु-षेयत्वे च वेदस्याप्तोक्तत्वासम्भवेन तेनापि प्रामाण्यानुमानासम्भवात्, नाऽनिश्चितप्रामाण्यस्य वेदस्य विवक्षितार्थसाधनतयोपन्यासो युक्त इत्याशयेन शङ्कते- **एवमप्रामाण्याभाव इत्यादिना ॥** एतच्छङ्कापरि-हारायापि मूले 'अपौरुषेयत्वाद्वेदस्य' इत्युक्तम् इत्यभिप्रेत्य, अपौरुषेयत्वेन प्रामाण्यसिद्धिप्रकारं दर्शयति- **अपौरुषेयत्वेनेति ॥** अत्र वेदस्यापौरुषेयत्वेनाप्रामाण्यकारण-स्वतन्त्रवक्तृपुरुषगताज्ञानादिदोषनिबन्धन-निरभिधेयत्वादिदोषशून्यत्वादिनिश्चयात्, निरभिधेयत्वादि-प्रयुक्ताबोधकत्वविपरीतबोधकत्वरूपाप्रामाण्या-भावे निश्चिते, वेदगतयथार्थज्ञानसाधनत्वरूपप्रामाण्यस्य तदीयज्ञानसाधनत्वग्राहकान्वयव्यतिरेकमात्रसमधि-गम्यत्वेन, वेदजन्यज्ञानगतयाथार्थ्यरूपप्रामाण्यस्य च तज्ज्ञानग्राहकसाक्षिमात्रग्राह्यत्वेन स्वत एतन्निश्चय इति **(पां.टि.)** परिहारोऽभिमतः । न त्वपौरुषेयत्वादियुक्त्या प्रामाण्यनिश्चय इति । तथा सति 'बुद्धिदोषनिरास-मात्रकारणत्वाद्युक्तीनाम्' इत्युत्तरग्रन्थव्याख्यानरूपेण, 'ततः प्राचीनो युक्त्युपन्यासः साक्षिणः प्रामाण्यग्रहण-प्रतिबन्धकबुद्धिदोषनिरासार्थमेव कृतो, न तु प्रामाण्यज्ञापनार्थमिति न पूर्वोत्तरग्रन्थविरोधः' इत्युत्तरग्रन्थेन, एतच्छङ्कानिरासकैतद्ग्रन्थसमानार्थकेन 'ज्ञानजनकस्य सतोऽप्रामाण्ये निरस्ते स्वत एवेति ब्रूमः' इति सुधाग्रन्थेन च विरोधापातादिति द्रष्टव्यम् ।

स्वत एव प्रामाण्यनिश्चय इत्युक्तमाशयमजानानोऽपौरुषेयत्वादियुक्त्या प्रामाण्यनिश्चयः पूर्वत्रोक्त इति मन्वानः शङ्कते- **वेदो न प्रमाणमिति ॥** दुष्टेन्द्रियादौ साध्याव्यापकत्वपरिहारायोक्तम्- **वाक्यत्वावच्छिन्न इति ॥** साधनव्यापकत्वं परिहरति- **वेदे चेति ॥** ननु वाक्यगतयथार्थज्ञानसाधनत्वरूपप्रामाण्यस्य वाक्यजन्य-ज्ञानगतयाथार्थ्यरूपप्रामाण्यस्य च वक्तुराप्तिमूलकत्वाद् वेदस्य चापौरुषेयत्वेनाप्तिमूलकवाक्यत्वाभावात् तदभावेऽपि प्रामाण्योत्पत्त्यङ्गीकारेऽकारणकार्योत्पत्तिप्रसङ्गाद् वेदस्य तज्जन्यज्ञानस्य च उक्तरूपप्रामाण्योत्पत्तिरेव कथं स्यादित्याशङ्क्य प्रामाण्यस्योत्पत्तौ स्वतस्त्वस्योत्तरत्रोपपादयिष्यमाणत्वेन, वेदगतयथार्थज्ञानजनकत्वरूप-प्रामाण्यस्य आप्तोक्तत्वरूपगुणनिरपेक्षज्ञानजननशक्त्युत्पादकत्वेनैव, तज्जन्यज्ञानगतयाथार्थ्यरूपप्रामाण्यस्य चाऽप्तोक्तत्वगुणानपेक्षत्वेन ज्ञानोत्पादकवाक्येनैवोत्पत्तिसम्भवात् नापौरुषेयत्वपक्षे तदनुत्पत्तिप्रसङ्गोऽ-पीत्याशयेनाऽह- **वाक्यप्रामाण्यस्येति ॥ स्वतस्त्वप्रतिपादनेनेति ॥** 'तत् प्रामाण्यं च स्वत एव सिद्धम्' इत्यादिनोत्पत्तौ स्वतस्त्वप्रतिपादनेनेत्यर्थः ।

यत्तु, 'एवमप्रामाण्याभावे निश्चिते' इति शङ्काग्रन्थस्य, अपौरुषेयत्वयुक्त्या वेदस्योक्तरीत्याऽप्रामाण्याभाव-निश्चयादप्रामाण्यतदभावकोटिकसंशयासम्भवेऽपि, तत्प्रामाण्यस्यानिश्चितत्वात् तत्संशयसामग्रीनिबन्धन-प्रामाण्यसंशयावश्यम्भावात्, शङ्कितप्रामाण्यस्य वेदस्य विवक्षितार्थसाधकत्वोपन्यासोऽनुपपन्न एवेत्यभिप्राय-कत्ववर्णनम्, तदसत् । एतच्छङ्काग्रन्थविवरणरूपसंवादादिरूपवेदप्रामाण्यनिश्चायकाभावप्रयुक्ततन्निश्चयाक्षेप-परटीकाकारीयोत्तरग्रन्थानुरोधेन, सामान्यधर्मप्रयुक्तप्रामाण्यसंशयस्य स्वतः परतः साधारणप्रामाण्यनिश्चय-मात्रनिवर्त्यत्वेन तत्परिहाराय सिद्धान्तीयस्वतःप्रामाण्यनिश्चयकथनपर्यन्तधावनानर्थक्यापत्त्या, तदनुरोधेन चैतच्छङ्काग्रन्थस्य निश्चायकाभावप्रयुक्ततन्निश्चयाक्षेपपरत्वस्यैव ग्रन्थकृत्सम्मततायाः सिद्धत्वेन, सामग्रीप्रयुक्त-तत्संशयापत्तिपरत्वस्य तदसम्मततया प्रामाण्यसंशयापत्तिपरतया एतद्योजनाया अयुक्तत्वात् । न च परिहार-ग्रन्थस्याप्यनुमानेन प्रामाण्यनिश्चयकथनमात्रपरत्वात् स्वतः प्रामाण्यनिश्चयपर्यन्तधावनमेवासिद्धमिति वाच्यम् । तस्यानुपदमेवोपपादयिष्यमाणत्वात् ।

यच्च 'अपौरुषेयत्वाद्वेदस्य' इत्यत्र प्रामाण्ये साधकत्वेनोक्तापौरुषेयत्वं नाऽनियतानुपूर्वीकत्वाभावो गगनादा-वनैकान्त्यात् । नापि नियतानुपूर्वीकत्वं साक्ष्यादिसकलसपक्षव्यावृत्तत्वेनासाधारण्यात्, इत्याद्यनुपपत्तिपरिहाराय **(पां.टि.)** 'नित्यत्वात् पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत्' इत्यनुव्याख्यानुसारेण प्रामाण्य-साधकानुमानप्रदर्शनपरत्वेन एतद्वाक्ययोजनापरत्ववर्णनमपौरुषेयत्वेनेत्यादिपरिहारग्रन्थस्य, तदप्यसत् । अपौरुषेयत्वनिरुक्तिनिवर्त्यतद्विकल्पानुपपत्तिशङ्कायास्तन्निरुक्तिसत्त्व एवोत्थापनीयत्वात् । प्रकृते चेह टीकायां वा त्वदुदाहृतानुव्याख्याने वा तद्व्याख्यानरूपसुधायां वा तस्याऽनिरुक्तत्वेन तन्निरुक्तिमात्रनिवर्त्यतद्विकल्पा-नुपपत्तिशङ्काया अनुत्थापनीयत्वात् । एतद्वाक्यस्य परम्परयाऽप्यपौरुषेयत्वस्य प्रामाण्यसाधकत्वाभिप्रायकताया अपि सम्भावितत्वेन साक्षात्साधकत्वमात्राभिप्रायकत्वासिद्ध्या तत्सिद्धिमूलकानैकान्त्यासाधारण्यरूपोक्त-विकल्पदोषानुपपत्तेश्च । अपौरुषेयत्वस्य साक्षात्प्रामाण्यसाधकत्वाभिप्राये इह टीकायाम् अपौरुषेयत्वादित्येव वक्तव्यत्वेन,

तत्सिद्धतन्निबन्धनाबोधकत्वविपरीतबोधकत्वशून्यत्वरूपहेत्वन्तराभिधानानर्थक्यप्रसक्त्या तदनु-रोधेन परम्परासाधकत्वाभिप्रायकताया एव वक्तव्यत्वेन, अपौरुषेयत्वस्याप्रामाण्याभावसाधकत्वपक्ष इव प्रामाण्यसाधकत्वपक्षेऽपि पुरुषदोषनिबन्धनदोषवत्त्वाभावमात्रसाधकत्वस्थित्या तत्रोक्तविकल्पदोषयोःप्रस-राच्च। अत एव नियतानुपूर्वीकत्वम् अपौरुषेयत्वम्, असाधारण्यं च दशाविशेषे दोष इत्यपौरुषेयत्वनिरुक्ति-तत्पक्षदोषपरिहारयोर्हार्दत्ववर्णनमपि निरस्तम् । तथा सति नियतानुपूर्वीकत्वरूपापौरुषेयत्वेन साक्षादेव तत्प्रामाण्यसाधनसम्भवेन तत्सिद्धहेत्वन्तरानुसरणवैयर्थ्यापातात्। परम्परासाधनताया एव युक्तत्वेन त्वयाऽपि तस्या एवाङ्गीकर्तव्यत्वेन टीकोक्तापौरुषेयत्वशब्दार्थपरित्यागेन नियतानुपूर्वीकत्वरूपतन्निर्वचनादेर्हार्दत्व-वर्णनानर्थक्याच्च। अपौरुषेयत्वयुक्त्या तत्सिद्धतन्निबन्धनाबोधकत्वविपरीतबोधकत्वशून्यत्वयुक्त्या वा प्रामाण्य-निश्चयवर्णनस्य, स्वत एवेत्यादिव्याख्यानरूपसुधानुसारेण स्वतः प्रामाण्यनिश्चयकथनपरतया निर्णीतोदा-हृतानुव्याख्यानाननुसारित्वेन त्वदुक्तरीत्या प्रामाण्यस्यानुमानसिद्धतायाः तदनुसारित्ववर्णनस्यासम्भवदुक्ति-कत्वाच्च । एथद्ग्रन्थसमानार्थैतच्छङ्कापरिहारक 'ज्ञानकरणस्य सतोऽप्रामाण्ये निरस्ते स्वत एवेति ब्रूमः' इति जिज्ञासाधिकरणीयसुधानुसारेण, 'बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनाम्' इत्युत्तरग्रन्थव्याख्यानरूप 'ततः प्राचीनः' इत्यादिटीकाग्रन्थानुरोधेन च, अस्य ग्रन्थस्य स्वत एव प्रामाण्यग्रहकथनपरत्वावश्यम्भावेन तत्परतयैव योजनीयत्वेन, अनुमानेन तद्ग्रहपरत्ववर्णनस्योदाहृतग्रन्थविरुद्धत्वाच्च । वेदप्रामाण्योत्पत्त्याक्षेपस्य तत्स्वतस्त्वेन समाधानपर 'वाक्यप्रामाण्यस्य' इत्याद्यव्यवहितोत्तरग्रन्थानुरोधेन एवमित्यादिशङ्कासमाधानस्यापि प्रामाण्य-निश्चयाक्षेपस्वतस्त्वप्रयुक्ततत्समाधानपरतयैव योजनायाः श्लिष्टत्वेन प्रामाण्यसंशयापत्तिपरत्वेन शङ्काग्रन्थस्य आनुमानिकप्रामाण्यनिश्चयपरत्वेन परिहारग्रन्थस्य योजनायाष्टीकाकृदर्धजरतीयाश्रयणापादकत्वाच्चेति दिक् ।

यच्च, अनुकूलतर्केण हेतोः साध्यव्याप्तत्वे निर्णीते साध्यव्याप्यहेत्वव्यापकत्वेनोपाधेः साध्याव्यापकत्वमित्या-शङ्कापरिहारकतया वाक्यप्रामाण्यस्येति ग्रन्थप्रवृत्त्युपवर्णनम्। तदसत्। एतद्ग्रन्थसमानार्थकोत्पत्तिप्रामाण्य-वादीयोत्तरटीकाकारीयस्पष्टग्रन्थानुरोधेन वेदापौरुषेयत्वप्रयुक्ततत्प्रामाण्योत्पत्त्याक्षेपशङ्कानिवर्तकतयैव योजनीय-त्वेन अन्यथैतदवतारस्यायुक्तत्वात्, त्वदुक्तरीत्या उपाधिसमर्थनपरतयैतद्ग्रन्थयोजनायां वेदप्रामाण्योत्प-**(पा.टि.)** त्तेरत्रानिरूपणप्रसङ्गेन प्रामाण्यज्ञप्तेरिवावश्यवक्तव्यतदुत्पत्तेरनुक्तिप्रसङ्गाच्च। न च प्रामाण्योत्पत्ति-समर्थनपरत्वेऽप्यस्य ग्रन्थस्योपाध्यसमर्थनप्रसङ्गदोषस्तु तुल्य इति वाच्यम् । तत्पक्षे साक्षादुपाध्यसमर्थनेऽ-प्यर्थतस्तत्समर्थनेन तदप्रसङ्गात् । न चैवम् उपाधिसमर्थनपरतया एतद्ग्रन्थयोजनापक्षेऽर्थतो गुणनिरपेक्षतया प्रामाण्योत्पत्तिनिरूपणसिद्ध्या न तदनिरूपणप्रसङ्ग इति वाच्यम् । प्रामाण्यज्ञप्तिनिरूपणवत् स्वप्रधानतयोत्पत्ति-निरूपणस्य साक्षात्सिद्धेः गुणभूतोपाधिसमर्थनस्य चार्थतः सिद्धेरेव न्याय्यत्वेन, गुणभूतोपाधिसमर्थनस्य साक्षात्सिद्धेः प्रधानीभूतप्रामाण्योत्पत्तिनिरूपणस्यार्थतः सिद्धेरन्याय्यत्वेन तदयोगात्। उत्पत्तौ गुणानपेक्ष-त्वोपपादनेनैवोक्तशङ्कापरिहारस्य सिद्धत्वेनोत्पत्तौ ज्ञप्तौ च प्रामाण्यस्वतस्त्वस्य तत्रोपयोगादर्शनेनोत्पत्ति-स्वतस्त्वमात्रस्यैव परिहारग्रन्थार्थतया वर्णनीयत्वेनोत्पत्तिज्ञप्त्योः स्वतस्त्वस्य तदर्थतयाऽवर्णनीयत्वेनोत्पत्ति-ज्ञप्त्योरिति शेषवर्णनस्यानर्थकत्वाच्च।

ननूपे(पा)यार्थिनस्तत्सिद्धावेव निर्बन्धो न तूपायविशेषेण तत्सिद्धावपि। तत्राप्युपायानेकत्वे लघोस्तस्या-नुसरणं गुरोः परित्याग इति सर्वसिद्धान्तः । तदिहापौरुषेयत्वेनेव आप्तोक्तत्वेनाप्यप्रामाण्याभावादि-सिद्धिसम्भवात् बहुप्रयत्नानपेक्षत्वेन लघुत्वाच्चाप्रामाण्याभावादिसाधकतया तस्यैवोपादानं कर्तुमुचितम् । तत् किमिति तत्परित्यागेन बहुप्रयत्नसाध्यापौरुषेयत्वस्य तत्सिद्ध्यर्थतया ग्रन्थकारीयमनुसरणमित्याशयेन शङ्कते- **आप्तोक्तत्वेनैवेति ॥ वक्ष्यत इति ॥** 'अन्यत्राद्दष्टस्य सर्वज्ञत्वस्य कल्पनम्' इत्यादिनेति शेषः। महाजनपरि-गृहीतत्वादिति शङ्काया अपि पूर्ववदेवाभिप्रायः ॥ **अनङ्गीकृतत्वादिति** ॥ ततश्चासिद्धिरिति भावः ॥ **अङ्गी-कृतत्वाच्चेति** ॥ ततश्च बौद्धागमादावनैकान्त्यमिति भावः ।

**(व्या.टि.)** अनिश्चयमुपेत्य शङ्कते- **अस्त्विति ॥** हेतूनाम् अनृतत्वादीनाम् । आदिपदेन सन्दिग्धबाधादि-परिग्रहः । विशेषादर्शनमुपपादयति- **वैगुण्यादीति ॥** फलादर्शनादेरिति शेषः। किमतो यद्येवमित्यत आह- **तथा चेति ॥ सिद्ध्ये** निश्चयाय ॥ **अयुक्तमिति ॥** यथा निमित्तसन्देहाहितप्रामाण्यसन्देहस्तथाऽप्रामाण्य-सन्देहाहितार्थसन्देहस्यावर्जनीयत्वेन तन्निर्णयाय वचनोदाहरणमयुक्तमिति भावः। वचनानामिति प्रकृतानु-वृत्तिसम्भवे वेदस्येति पुनर्वचनानर्थक्यमाशङ्क्य हेतुभागासिद्धिवारणाय तदित्याह- **पुनर्वचनमिति ॥** अपौरु-षेयत्वस्य कथमुक्ताप्रामाण्यशङ्कानिरासहेतुत्वमित्यतस्तदभिप्रायमाह- **इदमुक्तं भवतीति ॥** ज्ञानाप्रामाण्यं वारयितुं करणानामिति । प्रकृतमनुसरति- **तत्रेति ॥ तत्र** करणेषु, **शब्दस्य** वाक्यस्य, **अबोधकत्वमन्वया-**बोधकत्वम् ॥ **द्वेधेति ॥** अन्वयस्य सप्रतियोगिकत्वात् प्रतियोग्यभावेन स्वाभावेन च द्वेधेत्यर्थः ॥ **पदाभि-मतानामिति ॥**

हुम्फडादिशब्दानामित्यर्थः ॥ **साभिधेयत्वेऽप्यन्वयाभावेन चेतीति** ॥ केवलप्रातिपदिका-दीनामित्यर्थः । **विपरीतेति** ॥ अविद्यमानान्वयबोधौपयिकसमभिव्याहारेणेत्यर्थः ॥ **स्वतन्त्रेति** ॥ परानपेक्ष-वक्ता, कर्तेति यावत् । 'स्वतन्त्रः कर्ता' इति सूत्रात् ॥ **न त्विति** ॥ परानपेक्षस्यैव स्वभावत्वादित्यर्थः । शब्दस्याबोधकत्वहेतून् विपरीतबोधकत्वहेतूंश्च पुरुषदोषान् पृथङ् निर्दिशति- **पुरुषो हीत्यादिना** ॥ **अज्ञानं (व्या.टि.)** ज्ञानाभावः । **विपरीतज्ञानं** भ्रमः । **प्रमादो** अनवधानम् । इच्छाविषयीभूतवर्णानुकूलकण्ठताल्वा-द्यभिघातानुत्पादकालीनापरवर्णानुकूलकण्ठताल्वाद्यभिघातः **करणापाटवम्** । अन्यथाप्रतीतार्थस्याऽन्यथा प्रतिपिपादयिषा **विप्रलम्भः** ॥ **एतदभाव इति** ॥ पुरुषदोषनिबन्धनदोषाभाव इत्यर्थः । पुरुषदोषनिबन्धन-दोषाभावोऽजन्यत्वेन वा जनकस्य निर्दोषत्वेन वेत्याशयेनाऽह- **द्वेधेति** ॥ आप्तत्वे निर्दोषत्वं कथमित्यत आह- **विवक्षितेति** ॥ आदेरिति पटुकरणत्वादिग्रहः ॥ **कारणेति** ॥ अप्रामाण्यकारणेत्यर्थः । **कार्यस्य** अप्रामाण्यस्य ॥ **शङ्कितुमिति** ॥ व्याघातादिति भावः । 'व्याघातावधिराशङ्का' इत्युक्तेः ॥ **अप्रामाण्याभाव इति** ॥ ततश्च नाप्रामाण्यसंशय इति भावः ।

अपौरुषेयत्वं यद्द्वाराऽप्रामाण्याभावसाधकं तदाह- **वेदो नाप्रमाणमिति** ॥ ननु वक्ष्यमाणपुरुषाप्रणीतत्व-हेतुना पुरुषदोषनिबन्धनदोषाभावसिद्धावपि नाप्रामाण्यकारणदोषशून्यत्वसिद्धिः । विशेषाभावेन सामान्याभाव-साधनेऽतिप्रसङ्गादित्यत आह- **शब्ददोषाश्चेति** ॥ पदार्थाबोधकत्वादय इत्यर्थः । शब्दे इतरदोषाणामप्रसक्तत्वेन शब्दगतदोषाणां चाभावस्य पुरुषाप्रणीतत्वेन सिद्धौ सामान्याभावसिद्धिर्भवतीति भावः ॥ **तदन्वयव्यतिरे-केति** ॥ तदन्वयव्यतिरेकप्रयोज्यान्वयव्यतिरेकप्रतियोगित्वादित्यर्थः । तथाऽपि प्रकृते किमित्यत आह- **वेद इति** ॥ दोषा निरभिधेयत्वादयः । यदनुवक्ष्यति तन्निबन्धनाबोधकत्वेत्यादि ॥ **पुरुषाप्रणीतत्वादिति** ॥ अत्र वाक्यत्वादिति विशेष्यं पूरणीयम् । उदाहरणे वाक्यपदश्रवणात् । श्रुतमात्रस्यैव हेतुत्वे हेतुतावच्छेदकरूपेण व्याप्तेर्गगनादौ दर्शयितुं शक्यत्वेन तदुज्झित्वा वाक्यविशेषनिदर्शनीकरणानुपपत्तेः । सामान्यव्याप्तिप्रदर्शनानुप-पत्तेश्च । यद्वा सामान्यतो व्याप्त्यवलम्बने वाक्येऽपि साध्यं दर्शयितुं शक्यमिति तथैवोदाहृत्य निदर्शितम् । अप्रयोजकत्वं निरस्यति- **विपक्षे त्विति** ॥ प्रसङ्गो बाधक इति शेषः । निगमयति- **तथा चेति** ॥ सन्दिग्धेति निश्चितेति च विशेषणे उपसङ्क्रान्तं 'सविशेषणे हि' इति न्यायात् । चैत्रः परमधार्मिक इत्यादाविव समभि-व्याहृतपदार्थतावच्छेदकेन वा पूर्वपदार्थस्य सन्दिग्धत्वस्य भानम् । भावे निष्ठामुपेत्य बहुव्रीहिर्वा ॥ **अपौरुषेयत्वेन तन्निबन्धनेति** ॥ तत्पदेन बुद्धिस्थपुरुषदोषपरामर्शः ॥ **अबोधकत्वेत्यादि** ॥ अस्य अबोधकत्वविपरीत-बोधकत्वशून्यत्वाद् हेतोः प्रामाण्यनिश्चय इति नार्थः । 'बुद्धिदोषनिरासमात्रकारणत्वात्' इति वक्ष्यमाणमूल-तट्टीकाभ्यां विरोधात् । 'ज्ञानजनकस्य सतोऽप्रामाण्ये निरस्ते स्वत एवेति ब्रूमः' इति सुधया च विरोधात् । यथार्थज्ञानजनकत्वरूपकरणप्रामाण्यस्य ज्ञानजनकत्वग्राहकमात्रग्राह्यत्वरूपपारिभाषिकस्वतस्त्वाङ्गीकार-विरोधाच्च । किन्तु, **शून्यत्वात्** शून्यत्वनिश्चयात् । प्रतिबन्धकाभावाज्ज्ञानजनकत्वग्राहकेणैव प्रामाण्यनिश्चय इति । प्रामाण्यमेवानुमितमिति मन्वानस्य त्वाप्ताप्रणीतत्वेन प्रतिपक्षाऽशङ्केति । यद्वा अबोधकत्वादिशून्यत्वेन प्रामाण्यनिश्चय इत्येवार्थः । टीकास्वारस्यात् । न चोत्तरग्रन्थविरोधः । तत्र 'ततः प्राचीनो युक्त्युपन्यासः साक्षिणः प्रामाण्यग्रहणप्रतिबन्धकबुद्धिदोषनिरासार्थमेव कृतो न तु प्रामाण्यज्ञापनार्थमिति न पूर्वोत्तरग्रन्थविरोधः' इति साक्षिग्राह्यस्य केवलप्रमाणप्रामाण्यस्यैव युक्त्यज्ञाप्यत्वोक्तेः । नापि सुधाविरोधः 'ज्ञानजनकस्य सतोऽ-**(व्या.टि.)** प्रामाण्ये निरस्ते स्वत एवेति ब्रूमः' इत्यस्य विपरीतबोधकत्वाभावे सति ज्ञानजनकत्वादेवेत्यर्थोप-पत्तेः । नाप्यपसिद्धान्तः । 'करणप्रामाण्यं परत एव' इत्यन्यत्र टीकोक्तेः । ग्राह्यप्रामाण्याश्रयग्राहक-ग्राह्यत्वरूपस्वारसिकस्वतस्त्वस्यायोगाच्च । ज्ञानजनकत्वग्राहकेणान्वयव्यतिरेकित्वानुमानेनेवानुमानान्तरेणापि निश्चयसम्भवाच्च । अपौरुषेयत्वहेतोः प्रतिपक्षं शङ्कते- **वेद इति** ॥ अवच्छिन्नानवच्छिन्नसाध्यव्यापकोपाधी मनसि निधायाऽद्यं तावदाह- **वाक्यत्वावच्छिन्न इति** ॥ द्वितीयमाह- **केवल इति** ॥ **उक्तत्वादिति** ॥ अपौरुषेयत्वादेवोपाधिद्वयाभावसिद्धेरित्यर्थः । उक्तहेतोस्तर्कपराहतिमाशङ्क्य पराचष्टे- **वाक्यप्रामाण्य-स्येति** ॥ आप्तिमूलत्वेनेति बहुव्रीहिः ॥ **स्वतस्त्वेति** ॥ उत्पत्ताविति शेषः । निराकरिष्यते 'प्रामाण्यं च स्वत एव' इत्यादावित्यर्थः । नैयायिकः शङ्कते- **आप्तोक्तत्वेनेति** ॥ **तदिति** ॥ निश्चयीकरणमित्यर्थः । वक्ष्यते 'न च पौरुषेयेण' इति वक्ष्यमाणग्रन्थेनेत्यर्थः ॥ **जनानामिति** ॥ वैदिकानामिति शेषः ॥ **इयत्तेति** ॥ बाह्येभ्योऽधिकसङ्ख्येत्यर्थः । अधिकजनपरिग्रहसन्देहादिति यावत् ॥ **बौद्धादीनामिति** ॥ आगमानामिति शेषः ॥ **महाजनेति** ॥ वैदिकेभ्योऽधिकजनेत्यर्थः । **परैः** बाह्यैः ।

**मूलम् - 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति तद्गृहीतत्वाच्च ॥**

**(त.मं.)** तद्गृहीतत्वात् तेन वेदेनैव साधितप्रामाण्येन वेदसमत्वेनैव परिगृहीतत्वात् स्मृति-वचनानामपि नाप्रामाण्यम्

। एवं सप्रतिसाधनं तदनुमानम्। तस्य हेतुरप्यसिद्धः। न हि प्रमाणान्त-रायोग्यार्थत्वमीश्वरवादिवेदस्य। क्षित्यादिकं सकर्तृकम्, कार्यत्वात्, घटवदित्यनुमानयोग्यार्थ-त्वात्।

**टीका -** अस्त्वेवं वेदस्यापौरुषेयत्वेनाप्रामाण्यकारणदोषाभावादप्रामाण्याभावनिश्चयः प्रामाण्य-निश्चयश्च। तत एव फलविसंवादादेरवश्यं वैगुण्यादिनिमित्तत्वस्य कल्पनीयत्वेन परोक्तहेतूना-मसिद्धत्वनिश्चयोऽपि। पुराणवाक्यस्य तु कथम्? नहि तदप्यपौरुषेयतयाऽङ्गीक्रियते। तथात्वे पूर्ववाक्ये वेदस्येति नोच्येतेत्यत आह- **इतिहासेति ॥** इतिहासश्च पुराणं चेति द्वन्द्वैकवद्भावः। नपुंसकत्वं तु नाऽश्रितम्। पुराणशब्दस्य विशेष्यलिङ्गत्वाद्ग्रन्थविशेषणत्वेन पुंलिङ्गत्वमेवाऽश्रि-तम्। इतिहासपुराणो वेदो, वेदानाम् ऋगादीनां, पञ्चमः पञ्चत्वसङ्ख्यापूर(को)णो वेद इति। तेन अप्रामाण्यशङ्काशून्येन प्रमाणतया निश्चितेन वेदेन वेदसमानतया गृहीतत्वात् पुराणवचनस्या-प्यप्रामाण्याभावादिनिश्चयाद् युक्तं तदुदाहरणमिति। अत्र यद्यपि सामान्येनोक्तम्, तथाऽपि प्रमाणान्तरबलाद् वेदानुकूलयोरेवेतिहासपुराणयोर्ग्रहणमिति ज्ञातव्यम्। ननु आप्तोक्तत्वेनैव पुराणस्याप्रामाण्याभावादिनिश्चयः किं न क्रियत इति चेन्न। आप्तिनिश्चयस्याप्यन्ततो वेदानुसरण-मन्तरेणाशक्यत्वात्। एतेन वेदादिभिर्विष्णोर्निर्दोषत्वादिसिद्धिरपि समाहिता।

**इति वेदादेः प्रामाण्यसमर्थनम्।**

**(र.टि.)** नन्वितिहासपुराणलक्षणे ग्रन्थे वेदत्वेन प्राथमिको वेत्यादिरूपेण कतमत्वशङ्काभावात् किमर्थं तस्य वेदानां मध्ये पञ्चमवेदत्वविधानमित्यत आह- **इतिहासपुराणो वेद इति ॥** नैवमर्थो वाक्यस्य। किन्तु 'पञ्चभिर्वेदैः' इत्यादौ ऋगादिवेदानां पञ्च(म)त्वसङ्ख्योक्ता। तत्र ऋगादयश्चत्वारो वेदाः सुप्रसिद्धाः अपर-स्त्वेकस्तत्सङ्ख्यापूरको न च दृश्यते इत्याशङ्क्य परिहारार्थमितिहासपुराणलक्षणग्रन्थस्य ऋगादीनां सम्बन्धिना-मुक्तसङ्ख्यापूरकवेदत्वमेव वाक्यार्थ इत्यर्थः। अनेन वेदशब्दस्याऽऽवृत्तिः, तत्र प्राथमिकस्य ग्रन्थपरत्वं चोक्तं भवति। आवृत्तिसूचनार्थमेव पूर्वं 'ग्रन्थविशेषणत्वेन' इत्युक्त्वा इदानीं वेद इत्युक्तम्।

**(रा.टि.) ॥ अस्त्विति ॥** एतच्च प्रामाण्यनिश्चयश्चेत्यत्रासिद्धत्वनिश्चयोऽपीत्यत्र चान्वेति- **द्वन्द्वेति ॥** 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्युक्तेरिति भावः। ननु द्वन्द्वैकवद्भावे 'स नपुंसकम्' इति नपुंसकेन भाव्यमित्यत आह- **नपुंसकमिति ॥ विशेष्यलिङ्गत्वादिति ॥** पुराणशब्दस्य पुरातनशब्दपर्यायत्वात् 'पुराणः पुरातनो ग्रन्थः' इति द्वन्द्वात् प्रागपि पुंलिङ्गत्वात्तदेव समासेऽप्याश्रितमित्यर्थः। एतेन पुराणपदस्य प्रागपि नपुंसकत्वाद् द्वन्द्वे पुंलिङ्गप्राप्तेरभावात् कथं पुंलिङ्गतेति निरस्तम्। प्रागपि पुंलिङ्गत्वादिति। वेदशब्दस्याऽवृत्तिमुपेत्य वाक्यं योजयति- **इतिहासेति ॥** 'तस्य पूरणे डट्', 'नान्तादसङ्ख्यादेर्मट्' इति पूरणार्थे मट्प्रत्ययविधानादाह- **पञ्च-त्वेति ॥** नन्वेवं वेदविरुद्धेतिहासादेरपि प्रामाण्याद्यापत्तिरित्यत आह- **अत्रेति ॥** इतिहासपुराण इति श्रुतावि-त्यर्थः। **॥ प्रमाणान्तरेति ॥** प्रागुदाहृतप्रमाणान्तरेत्यर्थः। एवमेव वेदादिभिर्निर्दोषत्वादिसिद्धिरपि परास्ता वेदितव्येति प्रागुक्तं निराह- **एतेनेति ॥** अप्रामाण्याभावप्रामाण्ययोः समर्थनेनेत्यर्थः।

**(श्री.टि.)परोक्तहेतूनाम्** अप्रामाण्यसाधकानामनृतत्वादिहेतूनाम्। असिद्धत्वनिश्चयोऽप्यस्त्वित्यनुवर्तते। नन्वितिहासश्च पुराणं चेतिहासपुराणे इति द्विवचनं स्यादित्यत आह- **द्वन्द्वैकवद्भाव इति ॥** 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनादिति भावः। ननु तर्हि 'स नपुंसकम्' यस्यैकवद्भावः स नपुंसकं स्यादित्येकवद्भावे नपुंसकत्वविधानादितिहासपुराणमिति स्यादित्यत आह- **नपुंसकत्वं त्विति ॥** 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनादिति भावः। नपुंसकत्वं नाऽश्रितमित्येव न भवति। प्रत्युत पुराणशब्दस्य विशेष्यलिङ्गत्वाद्विशेष्यभूत-वेदशब्दोक्तग्रन्थविशेषणत्वेन पुंलिङ्गत्वमेवाऽश्रितमित्याह- **पुराणशब्दस्येति ॥** अत्र वेदशब्दस्याऽवृत्तिः। तत्र प्राथमिकस्य ग्रन्थपरत्वमङ्गीकृत्य व्याचष्टे- **इतिहासपुराणो वेद इति ॥** इतिहासपुराणाख्यो ग्रन्थ **(श्री.टि.)** इत्यर्थः। अत एव पूर्वं ग्रन्थविशेषणत्वेनेत्युक्तम्- **पञ्चत्वसङ्ख्यापूरण इति ॥** 'तस्य पूरणे डट्' इति सूत्रेण पूरणार्थे डट्प्रत्ययविधानात् पञ्चमशब्दस्यापि डट्प्रत्ययान्तस्य पूरणार्थत्वादित्थं व्याख्यातमित्यव-गन्तव्यम्। तथा च 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन' इत्यादौ ऋगादिवेदानां पञ्चत्वसङ्ख्योक्ता। तत्र ऋगादयश्चत्वारो वेदाः प्रसिद्धाः। अपरस्त्वेको वेदस्तेषां

पञ्चत्वसङ्ख्यापूरको न दृश्यते; स क इति शङ्काया-मितिहासपुराणलक्षणग्रन्थस्य ऋगादीनां पञ्चत्वसङ्ख्यापूरकवेदत्वमेव विधीयत इति भावः। तद्गृहीतत्वादित्यत्र मध्यमपदलोपी समास इत्याशयेन वेदसमानतयेत्युक्तम्।

नन्वत्र पुराणशब्दस्य सामान्यशब्दत्वात् तेन शैवपुराणादीनामपि ग्रहणे तेषामपि प्रामाण्यमुक्तं स्यात्। तथा चापसिद्धान्त इत्यत आह- **अत्र यद्यपीति ॥ सामान्येनेति ॥** इतिहासपुराण इति सामान्येनोक्तमित्यर्थः **॥ प्रमाणान्तरबलादिति ॥**

'अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा।
एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथञ्चन ॥'

इत्यादि प्रमाणान्तरबलादित्यर्थः **॥ किं न क्रियत इति ॥** तथा च वेदवाक्येन किमर्थमप्रामाण्याभावादिनिश्चयः पुराणस्य क्रियत इत्यर्थः **॥ आम्नीति ॥** पुराणकर्तुर्व्यासस्येति शेषः। अतः 'तद्धेतोरेवास्तु तद्धेतुत्वं किं तेन' इति न्यायेन वेदेनैव तन्निश्चयः कृत इति भावः **॥ एतेनेति ॥** अपौरुषेयत्वेन वेदानां, वेदेन तत्समानतया गृहीतत्वेन पुराणानां चाप्रामाण्याभावात् तैर्विष्णोर्निर्दोषत्वादिसिद्धिर्या तृतीयपरिच्छेदे द्वितीयपरिच्छेदे च क्रियमाणा साऽपि समाहितेत्यर्थः।

**(पां.टि.)** ननु इतिहासपुराण इत्यत्र न तावदव्ययीभावसमासः। अव्ययाभावात्। उत्तरपदार्थस्याप्राधान्य-प्रसङ्गाच्च। नापीतिहाससहितं पुराणमिति तत्पुरुषः। तत्पुरुषस्योत्तरपदार्थप्रधानत्वेनेतिहासस्याप्राधान्य-प्रसङ्गात्। नापि द्विगुः। सङ्ख्यापूर्वकत्वाभावात्। नापि कर्मधारयः। इतिहासपुराणयोर्भिन्नत्वेन तत्प्रतिपाद्य-पदार्थभेदस्य तत्र बाधितत्वात्। नापीतिहासश्च पुराणं च यस्मिन्निति बहुव्रीहिः। तथा सतीतिहासपुराणयोः पञ्चमवेदत्वाभावप्रसङ्गात्। तादृशान्यपदार्थाभावेनासम्भवदुक्तिकत्वाच्च। नापि समाहारद्वन्द्वः। तथा सति समाहारस्यैकत्वादेकवचनं क्लीबता चेति क्लीबत्वप्रसक्त्या पुंलिङ्गानुपपत्तिप्रसङ्गात्। नापीतिहासश्च पुराणं चेति इतरेतरयोगः। तथा सति धवखदिराविवितिवद् द्विवचनप्रसक्त्या एकवचनानुपपत्तिप्रसङ्गात्। तस्मादत्र कः समास इत्याशङ्क्य इतरेतरद्वन्द्व एवात्र समासः। इतिहासपुराणयोर्वर्णरूपशब्दरूपतया, तद्द्रव्यत्वपक्षे 'जातिरप्राणि-नाम्' इत्यनेनैकवद्भावविधानाद्, गुणत्वपक्षे च 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति तद्विधानाद् द्विवचना-प्रसक्त्या नैकवचनानुपपत्तिप्रसङ्ग इत्याशयेनाऽह- **द्वन्द्वैकवद्भाव इति ॥** नन्वेवमपि 'स नपुंसकम्' इत्येकवद्भावप्रयुक्तनपुंसकत्वेनेतिहासपुराणमिति प्रसक्त्या इतिहासपुराण इति पुंलिङ्गानुपपत्तिरित्यतः 'सर्वे **(पां.टि.)** विधयश्छन्दसि विकल्प्यन्ते' इत्यभियुक्तोक्त्या तत्प्रयुक्तक्लीबत्ववैकल्पिकत्वान्न पुंलिङ्गानुपपत्ति-रित्याशयेनाह- **नपुंसकत्वं त्विति ॥** नन्वेकवद्भावप्रयुक्तनपुंसकत्वाप्रसङ्गेऽपि 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति द्वन्द्वतत्पुरुषयोः परवल्लिङ्गविधानात् पुराणशब्दलिङ्गस्य नपुंसकस्यैव प्रसक्त्या पुंलिङ्गानुपपत्तिस्तदवस्थैवेत्यतो नियतलिङ्गानां विशेषणानां विशेष्यनिघ्नत्वाभावेऽप्यनियतलिङ्गानां विशेषणानां विशेष्यनिघ्नत्वेन तल्लिङ्गत्व-नियमात्, ल्युडन्तपुराणशब्दस्यानियतलिङ्गत्वेन विशेष्यभूतग्रन्थलिङ्गपुंलिङ्गवत्त्वस्याऽवश्यकत्वात् 'पुराणप्रतन-प्रत्नपुरातनचिरन्तनाः' इति विशेष्यनिघ्नत्वस्मरणाच्च न तदनुपपत्तिरित्याह- **पुराणशब्दस्येति ॥**

**(व्या.टि.) तत एव** प्रामाण्यनिश्चयादेव **॥ नोच्येतेति ॥** अपौरुषेयत्वहेतोर्भागासिद्ध्यभावादिति भावः। **इतिहासश्चेति ॥** यद्यपि 'अल्पाच्तरं पूर्वम्' इति द्वन्द्वे पुराणशब्दः पूर्वं निपातनीयः। तथाऽपि 'अजाद्यदन्तम् इति इतिहासशब्दस्य पूर्वनिपातो युक्तः **॥ द्वन्द्वैकवद्भाव इति ॥** 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति एकवद्भावः। तेन नैकवचनानुपपत्तिरित्याशयः। तथाऽपि 'स नपुंसकम्' इति नपुंसकत्वं स्यादत आह- **नपुंसकत्वं त्विति ॥** सर्वविधीनां छन्दसि वैकल्पिकत्वेन 'स नपुंसकम्' इति न प्रवृत्तमिति भावः। तथाऽपि पुराणशब्दस्य नियतनपुंसकत्वेन 'परवल्लिङ्गम्' इति नपुंसकत्वं स्यादित्यस्याप्येतदेवोत्तरम्- **नपुंसकत्वं त्विति ॥** उक्तविधया परवल्लिङ्गमित्येतदपि न प्रवृत्तमित्यर्थः। व्यत्ययेन पुंस्त्वमप्याश्रितमित्यवधेयम्। समाधानान्तरमाह- **पुराण-शब्दस्येति ॥** एतत्पक्षेऽप्युक्तविधया 'स नपुंसकम्' इति नाऽश्रितमिति ध्येयम्। परवल्लिङ्गमित्यनेन तु पुंलिङ्ग-मेव। ग्रन्थविशेषे रूढस्य लोकप्रसिद्धनियतनपुंसकत्वस्वारस्याय विधिद्वयानाश्रयणं व्यत्ययेन पुंस्त्वाश्रयणं च पूर्वसमाधाने। एतत्समाधाने तु व्यत्ययानाश्रयणपरवल्लिङ्गत्वस्वारस्याय ग्रन्थविशेषे रूढस्यापि विशेष्यनिघ्नत्वमेक-वद्भावप्रयुक्तनपुंसकत्वानाश्रयणं च स्वीकृतमित्यवधेयम्। द्वितीयसमाधाने विग्रहोऽपि पुंलिङ्गेन कर्तव्यः।

केचित्तु परवल्लिङ्गमित्यनेन प्राप्तनपुंसकत्वपरिहाराय पुराणशब्दस्य विशेष्यवचनतयेति योजयित्वा 'पुराण-प्रतनप्रत्नपुरातनचिरन्तनाः' इति कोशानुसारेण पुरातनपर्यायस्य पुराणशब्दस्य विशेष्यनिघ्नत्वमित्येकवाक्यता-माहुः। तेषां नपुंसकेन विग्रहप्रदर्शनम्, इतिहासस्यापि पुरातनग्रन्थत्वेन पृथक्कथनं, भागवतादिग्रन्थविशेषोपस्थानं च कथमिति चिन्त्यम्। अधिकं तु

गुरुप्रभायां द्रष्टव्यम् ।

विशेषणविशेष्यभावेनान्वयं दर्शयति - **इतिहासपुराणो वेद इति ।।** इतिहासपुराणोभयात्मको ग्रन्थ इत्यर्थः । **सङ्ख्यापूरक इति ।।** 'तस्य पूरणे डट्' इति पञ्चन्शब्दात् डटि तस्य 'नान्तादसङ्ख्यादेर्मट्' इति मडागमे तस्याभत्वान्न टिलोपः । किन्तु 'नलोपः प्रातिपदिकान्तस्य' इति नलोप इति भावः । केषाञ्चिद्व्याख्याने तस्य पूरणे मडिति पाठः, तेषां लेखकस्य वा प्रमादात् । वेदेनेत्यन्तं तच्छब्दस्य व्याख्यानम् । वेदसमानतयेति तु गृहीतिप्रकारप्रदर्शनम् । तद्गृहीतत्वादित्यत्र मध्यमपदलोपी समास इत्याशयेन वेदसमानतयेत्युक्तमिति केचित् । तन्न । शाकपदस्य पार्थिवपदेनेव तेनेत्यस्य गृहीतपदेन सामर्थ्याभावात् । वेदसमानतयेत्यनेनासा-**(व्या.टि.)** मर्थ्याच्च । सामान्यनिर्देशजनितसदसत्साधारणप्रतीतिं वारयति- **तथाऽपीति ।। प्रमाणान्त-रेति ।।** 'ये चानुयायिनः' इति, 'पुराणानि च यानीह' इति च प्रमाणान्तरेत्यर्थः ॥ **अशक्यत्वादिति ।।** अज्ञानविप्रलम्भयोः प्राप्तेरिति वक्ष्यमाणदिशेति भावः **।। एतेनेति ।।** वेदादिप्रामाण्यसमर्थनेनेत्यर्थः ।

**मूलम् -**

**नचापौरुषेयं वाक्यमेव नास्तीति वाच्यम् । तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेः ।।**

**(त.मं.)** वाक्यस्यापौरुषेयत्वमेवासिद्धमित्यत आह- **न चापौरुषेयमिति ।।**

**टीका-** अत्राऽहुर्वेद प्रामाण्यवादिनो बाह्याश्च । वेदस्यापौरुषेयत्वं न युक्तम् । घटत्वनीरूपत्वयोरिव वाक्यत्वापौरुषेयत्वयोः परस्परपरिहारेणैव वृत्त्युपलब्धेर्द्वयोरेकत्रासम्भावितत्वात् । नच तत्साधनमपि युक्तम् । सम्भावितस्यैव साधनार्हत्वात् । यथोक्तम्- 'सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुना । न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृतः' इति । नहि मम कर्णं प्रविश्य गजो गर्जतीत्येतत् साधनार्हं, किन्त्वनादरणीयमेवेत्यत आह- **नचेति ।।** अपौरुषेयं वाक्यमेव नास्तीत्यनेन वाक्यत्वापौरुषेयत्वयोः परस्परपरिहारेणैव वृत्तिरित्याचष्टे । अतो वेदोऽपौरुषेय इत्येतदसम्भावित-मेवेति वाक्यशेषः । इतः परः 'अपौरुषेयत्वं च स्वत एव' इत्यतः प्राक्तनो ग्रन्थः सम्भाव-नार्थः । कुतो न वाच्यमित्यत आह- **तदभाव इति ।।** धर्मादिकं तावदतीन्द्रियं वस्तु सर्व-समयानामभिमतम् । ततस्तत्तत्समयिभिः प्रामाणिकत्वेन तदङ्गीकरणीयम् । प्रामाणिकतयाऽ-भ्युपगतस्यैवार्थस्य शास्त्रसिद्धान्तत्वात् । नचापौरुषेयं वाक्यं विना धर्मादिसाधकं प्रमाणमस्ति । अतोऽपौरुषेयवाक्याभावे धर्माद्यसिद्धिप्रसङ्गाद् अप्रामाणिकस्य च सर्वशास्त्राभिमतत्वायोगात् सर्वैस्समयिभिर्धर्मादिनिश्चयार्थं किमप्यपौरुषेयं वाक्यमङ्गीकार्यम् । ततश्च वाक्यत्वापौरुषेयत्वयोः क्वचित् समावेशे सर्वैरङ्गीकर्तव्ये कुतो 'वेदोऽपौरुषेयः' इत्येतदसम्भावितम् इति ॥

**(रा.टि.) ।। अत्रेति ।।** वेदापौरुषेयत्वविषये वाक्यत्वाभावरूपं बाधकमाहुरित्यर्थः । तदेव स्पष्टमाह- **वेद-स्येति ।।** सम्भावितस्यैव साधनं कुत इत्यत आह- **न हीति ।। तत इति ।।** परस्परपरिहारेण वर्तनादित्यर्थः । शेषोक्त्या मूलयोजनायां ज्ञापकमाह- **इतः पर इति ।।** शिष्यमनस्समाधानाय वाऽह- **इतः पर इति ।।** मूलोक्तापादनं धर्मादेरपौरुषेयैकप्रमाणकत्वसिद्धावेव घटते नान्यथेति तदादौ स्वयमुक्त्वा मूलोक्तं घटयति- **धर्मादिकमिति ।।** आपाद्यस्यानिष्टत्वसिद्ध्येऽभिमतमित्यन्तोक्तिः- **अत इति ।।** अपौरुषेयैकप्रमाण-कत्वाद्धर्मादेरित्यर्थः ।

**(श्री.टि.) बाह्यास्तदप्रामाण्यवादिनः** । ननु वाक्यत्वापौरुषेयत्वयोरेकत्र समावेशं साधयिष्यामीति चेत्तत्राऽह- **न चेति ।। युक्तं** युक्तिसिद्धं च नेत्यर्थः । कुत इत्यत आह- **सम्भावितस्यैवेति ।। प्रतिज्ञाया अर्थ इति ।।** साध्यधर्मविशिष्टधर्मिवचनरूपप्रतिज्ञाया अर्थो विशेषणीभूतस्साध्यधर्म इत्यर्थः । पक्ष इति पाठेऽप्ययमेवार्थः । **अतो वेद इति ।।** वेदस्यापि वाक्यविशेषत्वादित्यर्थः **।। सर्वशास्त्राभिमतत्वायोगादिति ।।** सर्वशास्त्र-सिद्धान्ततयाऽभिमतत्वायोगादित्यर्थः ।

**(व्या.टि.) वेदप्रामाण्यवादिनो** नैयायिकादयः । **बाह्या** वेदबाह्या वेदाप्रामाण्यवादिनो बौद्धाद्या इत्यर्थः । **घटत्वनीरूपत्वयोरिति ।।** निरो 'रो रि' इति रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे नीरूपसिद्धिः । **परस्परपरिहारेणैवेति ।।** परस्पराभावव्याप्यत्वेनैवेत्यर्थः। एकत्र समावेशस्येति शेषः **।। सम्भावितस्यै-वेति ।।** सम्भावनाविषयस्यैवेत्यर्थः **।। साधनेति**

॥ एकधर्मिसम्बन्धितयेति शेषः ॥ **मृत इति** ॥ व्याघातेना-पोदित इत्यर्थः । **कर्णमिति** ॥ महतः सुषिरप्रवेशादर्शनादित्यर्थः । 'नच' इति मूले चशब्दः शङ्कानिरासमसमु-चये । एतच्छङ्कानिरासमसमुचितस्यैव प्रमाणस्य विवक्षितसाधकत्वात् । यथोक्तं प्राक् 'एवमन्यत्रापि' इति । **परस्परपरिहारेणैवेति** ॥ एवेति सामानाधिकरण्यबुद्धिं व्यवच्छिनत्ति- **असम्भावितमेवेति** ॥ यथा घटत्वसामान्यावच्छेदेन नीरूपत्वाभावग्रहे नीलघटत्वरूपविशेषावच्छेदेनापि न तद्विशिष्टबुद्धिः तथाऽत्रापि वाक्यत्वसामान्यावच्छेदेनापौरुषेयत्वाभावग्रहान्न तद्व्याप्यवेदत्वावच्छेदेनाप्यपौरुषेयत्वबुद्धिः । बाधबुद्धेः प्रतिबन्धकत्वादिति । अथ वा तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावज्ञानस्येव तदभावव्याप्यवत्ताज्ञानस्यापि साक्षात्प्रतिबन्धकता । तथा च रूपित्वज्ञानं प्रति नीरूपत्वज्ञानस्येव नीरूपत्वव्याप्यगुणत्वज्ञानस्यापि प्रतिबन्ध-कता । तथाऽपौरुषेयत्वज्ञानं प्रति तदभावज्ञानस्येव तद्व्याप्यवाक्यत्वज्ञानस्यापि प्रतिबन्धकत्वमिति बोध्यम् । शिष्यमनःसमाधातुम् उत्तरग्रन्थसन्दर्भगर्भमाह- **इतः पर इति** ॥ **प्राक्तन इति** ॥ प्रागित्यव्ययात् 'सायश्चिरम्' इत्यनेन ट्यौ तुटि च रूपसिद्धिः ॥ **सम्भावनार्थ इति** ॥ **सम्भावना** उत्कटकोटिकसन्देहः ॥ **निश्चयार्थ-मिति** ॥ अनेन तदन्यथाऽनुपपत्तिं प्रमाणयति- **अपौरुषेयमिति** ॥ तदेकप्रमाणकत्वात्तस्येति भावः ।

**मूलम् - यस्य तौ नाभिमतौ नासौ समयी समयप्रयोजनाभावात् ॥**

**(त.मं.) यस्य** लोकायतिकस्य **तौ** धर्माधर्मौ नाभिमतौ नासौ समयी । प्रत्यक्षेणानवगतमप्यर्थं समाययति अवगमयतीति हि समयः । अत्र तु तादृशसमयप्रयोजनाभावात् ।

**टीका -** येषां वैशेषिकादीनां बौद्धादीनां चातीन्द्रियं धर्मादिकं वस्त्वभिमतं तान् प्रत्यापाद्यताम-पौरुषेयवाक्याभ्युपगमः । यस्य तु लोकायतस्य धर्माद्यभिमानो नास्ति न तं प्रत्यापादनं युक्तम् । तस्य स्वाभिमतप्रमेयस्य प्रत्यक्षेणैव सिद्धेरतीन्द्रियस्यानङ्गीकृतत्वेनाऽपादकाभावात् । तथाच लोकायतं प्रति नासम्भावनापरिहारोऽस्तीत्याशङ्क्य, तेनापि धर्माद्यभ्युपगमं कारयित्वा तत्साधकापौरुषेयवाक्यमङ्गीकारयिष्यामीत्याशयवानाह - **यस्येति** ॥

ननु 'कर्तृकरणयोस्तृतीया' इति प्राप्तां तृतीयां बाधित्वा 'कर्तृकर्मणोः कृति' इति प्राप्तायाः षष्ठ्याः 'न लोकाव्ययनिष्ठा' इति पुनः प्रतिषेधे तृतीयया भवितव्यं देवदत्तेन भुक्तमिति यथा, यस्येति तु कथम् ? उच्यते । अभिमताविति 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति प्रतिषेधबाधकत्वेन षष्ठीविधानात् सैवात्र युक्ता देवदत्तस्येष्टमिति यथा इति ।

**तौ** धर्माधर्मौ । अतीन्द्रियोपलक्षणं चैतत् । नासौ समयी स्यादिति शेषः ।

धर्मादिकमनङ्गीकारिणोऽशास्त्रित्वापत्तिः कुत इत्यत आह- **समयेति** ॥ प्रयुज्यते प्रेर्यते प्रणेता प्रणयने, श्रोता च श्रवणे येन तत् **प्रयोजनं**, विषयः साध्यं च । समयस्य लोकायतशास्त्रस्य विषयाद्यभावप्रसङ्गादित्यर्थः ।

एतदुक्तं भवति । न तावल्लोकायतशास्त्रस्य ऐन्द्रियको विषयः, प्रत्यक्षत एव तत्सिद्धौ शास्त्रानपेक्षणात् । फलमपि न दृष्टमर्थादिकं तस्यान्यतो लभ्यत्वाद्, अनेन सम्बन्धाभावाच्च । ततो धर्मादिकमतीन्द्रियं विषयत्वेन, स्वर्गादिकं फलत्वेनाङ्गीकार्यम् । तदपि चेन्नाङ्गीक्रियते तदा शास्त्रस्य निर्विषयत्वेन निष्फलत्वेन च काकदन्तपरीक्षाग्रन्थवद् अशास्त्रत्वमापद्येत । वक्तृश्रोत्रोरभिमत-मनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहो हि शास्त्रमित्युच्यते यथा चरकादि । एवं चाशास्त्रत्वापत्तौ तस्याशास्त्रित्वं प्रसज्येत । नच तस्य तदिष्टमिति सर्वथा तेन विषयादिसिद्ध्यर्थं धर्मादिकमङ्गीकार्यमिति ॥

**(रा.टि.)** शङ्कते- **येषामिति** ॥ **स्वाभिमतेति** ॥ धर्माद्यभावरूपप्रमेयस्येत्यर्थः ॥ **आपादकेति** ॥ अपौरुषेय-वाक्याङ्गीकारापादकस्यातीन्द्रियस्याभावादित्यर्थः । यस्य तौ नाभिमतावित्यत्र येनेति भाव्यमिति शङ्कते- **ननु कर्त्रिति** ॥ कर्तरि करणे च तृतीया स्यादिति सूत्रार्थः । देवदत्तेन कुठारेण छिद्यते काष्ठमिति । यस्येति यच्छब्दोक्तस्य कर्तृत्वादस्ति तृतीयाप्राप्तिरिति भावः । नन्वभिमतशब्दस्य क्तप्रत्ययान्तत्वात् क्तप्रत्ययस्य 'कृदतिङ्' इति कृत्सञ्ज्ञकत्वेन तद्योगे 'कर्तृकर्मणोः कृति' इति

सूत्रेण कृद्योगे कर्तरि कर्मणि च षष्ठी स्यादिति तृतीयाबाधकत्वेन षष्ठ्युक्तेः कथं तृतीयया भाव्यमिति शङ्केत्यत आह- **इति प्राप्तामिति ॥ बाधित्वेति ॥** विशेषसूत्रत्वादिति भावः। 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति सूत्रे ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां योगे षष्ठी नेति **(रा.टि.)**निषेधादत्र क्तप्रत्ययस्य 'क्तक्तवतू निष्ठा' इति निष्ठासञ्ज्ञकत्वात्तद्योगे षष्ठीनिषेधे 'कर्तृकरणयोः' इति तृतीयया भाव्यमित्यर्थः ॥ **वर्तमाने क्त इति ॥** 'ञीतः क्तः' इति पूर्वस्मादनुवृत्तेरिति भावः ॥ **प्रतिषेध-बाधकत्वेनेति ॥** षष्ठीप्रतिषेधबाधकत्वेनेत्यर्थः। विषयप्रयोजनयोर्लाभाय यौगिकमेतत्पदमित्युपेत्य योगमाह- **प्रयुज्यत इति ॥** तस्यैवार्थः प्रेर्यत इति। प्रसङ्गहेतुरयमित्युपेत्याऽह- **विषयाद्यभावप्रसङ्गादिति ॥** धर्मादेर-तीन्द्रियस्यानभिमतत्वेऽपि शास्त्रस्य कुतो निर्विषयत्वादीत्यतोऽभिप्रायमाह- **एतदुक्तमिति ॥ अन्यतः** कृषि-वाणिज्यराजसेवादित इत्यर्थः। **अनेन** शास्त्रेणार्थादिः ॥ **चरकादीति ॥** चरकेति सुश्रुतेति वैद्यग्रन्थविशेषः। अप्रसक्तप्रतिषेधमाशङ्क्य प्रसक्तिमाह- न चेत्यादिना ॥

**(श्री.टि) लोकायत**श्चार्वाकः ॥ **आपादकाभावादिति ॥ आपादकं** साधकम्। मां प्रत्यापादकस्य सम्पादकस्या-पौरुषेयवाक्याभ्युपगमसाधकस्य तन्मतेऽभावादित्यर्थः। तेनातीन्द्रियस्य वस्तुनोऽनङ्गीकृतत्वेन तत्सिद्ध्यन्यथा-नुपपत्त्याऽपौरुषेयवाक्यस्याङ्गीकारयितुमशक्यत्वादिति भावः। ननु 'कर्तृकरणयोस्तृतीया' तिङाद्यनुक्ते कर्तरि करणे च तृतीया स्यात्, रामेण बाणेन हतो वालीति। तिङाद्युक्तौ तु प्रतिषेधः, हरिः करोति। एवं कर्तरि तृतीयायां सत्यां येनाभिमताविति स्यान्न यस्येति। न च 'कर्तृकर्मणोः कृति' कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। व्यासस्य कृतिः, भारतस्य श्रवणम्। एवं च प्रकृते 'कृदतिङ्' इति तिङ्वर्जप्रत्ययस्य कृत्त्वोक्तेः क्तप्रत्ययस्यापि कृत्त्वादभिमतशब्दस्यापि क्तप्रत्ययान्तत्वेन कृदन्तत्वात्तद्योगे यस्येति षष्ठी युक्तेति वाच्यम्। 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' एषां योगे षष्ठी न स्यात्। विष्णुना हता दैत्याः। निष्ठोदाहरणमेतत्। एवं च प्रकृतेऽभिमतशब्दस्य क्तप्रत्ययान्तस्य 'क्तक्तवतू निष्ठा' इति निष्ठाप्रत्ययान्तत्वेन तद्योगे षष्ठ्या निषिद्धतया तदप्राप्तौ 'अपवादस्यापवादे पुनरुत्सर्गस्यैव प्राप्तिः' इति तृतीयैव स्यात्। देवदत्तेन भुक्तमितिवत्। अतो येन तौ नाभिमतावित्येव वक्तव्यं, यस्येति तु कथमित्याशङ्कते- **नन्विति ॥** अतीतार्थकनिष्ठाक्तप्रत्यययोग एव न लोकेति षष्ठी निषिद्धा। न तु वर्तमानार्थकक्तप्रत्यययोगे। एवं च प्रकृते 'मतिबुद्धिपूजार्थेभ्यश्च' एतदर्थकेभ्यो धातुभ्यो वर्तमानेऽर्थे क्तप्रत्ययः स्यादिति मत्याद्यर्थकेभ्यो धातुभ्यः क्तप्रत्ययविधानात्। प्रकृते च मत्यर्थकादभि-पूर्वकान्मनित्यस्माद्धातोः क्तप्रत्यये कित्त्वादनुनासिकलोपे सत्यभिमतशब्दो निष्पन्नः। तथा च 'क्तस्य च वर्तमाने' वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात्। सतां मतो, राज्ञां मत इत्येवं 'न लोक' इति सूत्रविहितषष्ठी-प्रतिषेधबाधकत्वेन षष्ठीविधानात्सैवात्र युक्ता, देवदत्तस्येष्टमितिवत्। अतो यस्य तावित्युपपन्नमिति परिहरति- **उच्यत इत्यादिना। प्रयुज्यत इत्यादि ॥** प्रणेता प्रणयने शास्त्रनिर्माणे येन प्रयुज्यते तत्प्रयोजनं विषयः। श्रोता च शास्त्रश्रवणे येन प्रयुज्यते तत्प्रयोजनं साध्यमित्युभयमपि प्रयोजनशब्देनोच्यत इत्यर्थः। एवं प्रयोजनशब्दं निरुच्येदानीं प्रयोजनाभावादिति वाक्यार्थमाह- **विषयादीति ॥ अन्यत इति ॥** धनधान्यादेः कुसीदकृष्यादितो लभ्यत्वादित्यर्थः ॥ **सम्बन्धेति ॥** अन्यतो लभ्यत्वादेवानेन शास्त्रेण साध्यसाधनभावसम्बन्धो नास्तीत्यर्थः। कुतोऽशास्त्रत्वमापद्यत इत्यतः शास्त्रस्वरूपं दर्शयति- **वक्तृश्रोत्रोरित्यादिना ॥** सिद्धार्थबोधकवाक्यसमूहस्य **(श्री.टि)** शास्त्रत्वपरिहाराय प्रमाणान्तरेत्याद्युक्तम्। तेनापूर्वतालाभः। काकदन्तपरीक्षाग्रन्थादिसाधारण्य-वारणायोक्तं वक्तृश्रोत्रोरित्यादि। फलस्यान्यसाध्यत्वे तेन सम्बन्धाभावप्रसङ्गादनन्यसाध्यमित्युक्तम्। तद्धेतुभूतमिति विषयफलयोः सम्बन्धोक्तिः। चरकं वैद्यशास्त्रम्। इष्टापत्तिं परिहरति- **न चेति ॥ तस्य** चार्वाकस्य **तत्** अशास्त्रित्वं नेष्टमित्यर्थः।

**(पां.टि.) ॥ आपाद्यतामपौरुषेयवाक्याभ्युपगम इति ॥** धर्माद्यङ्गीकाररूपापादकसद्भावादिति भावः। **न लोकाव्ययनिष्ठेति पुनः प्रतिषेध इति ॥** यद्यपि 'तृजकाभ्यां कर्तरि' इत्यत्र तृचः सानुबन्धकस्य निर्देशेन तृन्व्यावृत्त्यर्थेन 'न लोक' इति निषेधस्यानित्यत्वज्ञापनेन न तस्य प्रकृते प्रवृत्तिः सम्भवति। तथाऽपि तन्नित्यत्व-माश्रित्यायं ग्रन्थ इति द्रष्टव्यम् ॥ **तृतीयया भवितव्यमिति ॥** 'अपवादाभावे पुनरुत्सर्गस्य स्थितिः' इति न्यायादिति भावः। उक्तमर्थं विपक्षे बाधकसूचनेनोपपादयति- **देवदत्तेन भुक्तमिति यथेति ॥ प्रतिषेध-बाधकत्वेनेति ॥** 'न लोकाव्यय' इति प्रतिषेधबाधकत्वेनेत्यर्थः। उक्तमर्थं विपक्षे बाधकसूचनेन द्रढयति- **देवदत्तस्येष्टमिति यथेति ॥ प्रयोजनं विषयः साध्यं चेति ॥** 'अप्रयोजनं चेत्युपलक्षणम्। निर्विषयं चेत्यपि द्रष्टव्यम्' इति सुधाग्रन्थस्य प्रयोजनपदरूढ्याश्रयणेन प्रवृत्तत्वात् प्रयोजनपदयोगाश्रयणेन प्रवृत्तैतद्ग्रन्थस्य न तद्विरोध इति द्रष्टव्यम् ॥ **शास्त्रानपेक्षणादिति ॥** 'अप्राप्त एव हि शास्त्रमर्थवत्' इति न्यायादिति भावः। **शास्त्रमित्युच्यत इति ॥** अन्यथा काकदन्तपरीक्षाग्रन्थस्यापि शास्त्रत्वापत्तेरिति भावः। अङ्गीकार्यमितीत्यत्रत्यस्य इतिशब्दस्य इत्येतदुक्तं भवतीति पूर्वेण सम्बन्धः

।

**(व्या.टि.)** चार्वाकः शङ्कते- **येषामिति ॥ आपादकाभावादिति ॥** अतीन्द्रियाङ्गीकाररूपापादकाभावा-दित्यर्थः । असम्भावनापरिहारो वेदोऽपौरुषेय इत्यस्येति शेषः **॥ तेनापीति ॥** अनिच्छताऽपीत्यर्थः **॥ अभ्युप-गममिति ॥** तस्यैवापादकपदार्थत्वादित्यर्थः **॥ कारयित्वेति ॥** विपक्षे बाधकदण्डेनेति शेषः **॥ कर्तृकरण-योरिति ॥** यच्छब्दार्थस्यात्राभिमतिकर्तृत्वादित्यर्थः **॥ बाधित्वेति ॥** षष्ठ्याः कृद्योगलक्षणत्वेन विशेषविधि-त्वादिति भावः**॥ न लोकाव्ययेति ॥** 'अत्र लग्रहणं व्यर्थम्। तृन्निति प्रत्याहारग्रहणात्' इति भाष्ये स्थितम्। तथाऽपि वार्तिकानुसारेण सूत्रग्रहणम्। अभिमतशब्दे क्तप्रत्ययस्य 'क्तक्तवतू निष्ठा' इति निष्ठासञ्ज्ञात्वात् तद्योगे षष्ठीप्रतिषेधः **॥ मतिबुद्धीति ॥** मतिरिच्छा बुद्धेः पृथग्ग्रहणात्। क्तस्य कित्त्वात् मनोतेरनुनासिकलोप इत्यर्थः। केचित्तु माङ् मान इत्यतो निष्ठायामातो लोपेन मतपदं निरवोचन्। तदज्ञान-विजृम्भितम्। तथा हि 'आतो लोप इटि च' इत्यत्र अजाद्योरिति क्ङिदिड्विशेषणत्वेन आलोपप्राप्त्यभावात्। तल्लोपे वा 'म्त' इति स्यात्। 'द्यतिस्यतिमास्थामित्ति किति' इतीत्वस्यावर्जनीयत्वेन मितमित्येव भाव्यत्वाच्च। 'मतिबुद्धि' इत्यत्र इच्छार्थस्य मनोतेरेव ग्रहणाच्च। अन्यथा (तेन) षष्ठीप्रतिप्रसवानुपपत्तेरित्यलम्। ननु सूत्रान्तरेण विधावपि तस्य निष्ठात्वानपायात् कथं प्रतिषेधबाध इत्यत आह- **क्तस्य च वर्तमान इति ॥** वर्तमानार्थस्य क्तस्य योगे **(व्या.टि.)** षष्ठी स्यादित्यर्थः। केचित्तु अतीतार्थकनिष्ठायोग एव षष्ठी निषिद्धेति व्याख्यन्। तन्न। तथा सति भिन्नविषयत्वेनाबाधकत्वप्रसङ्गात्। तथा च प्रतिषेधबाधकत्वेनेति टीकाविरोधः।

**॥ कुत इति ॥** कुतो हेतोरित्यर्थः **॥ प्रयुज्यत इति ॥** करणे ल्युडिति भावः **॥ प्रयोजनं विषयः साध्यं चेति ॥** अनेन प्रयोजनश्च प्रयोजनं चेति विगृह्य 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इति नपुंसकैकशेषो बोध्यः। हेतुत्वभ्रान्तिं वारयति- **अभावप्रसङ्गादिति ॥** धर्माद्यतीन्द्रियार्थरूपविषयविशेषाभावेन स्वर्गादिरूप-प्रयोजनाभावेन च कथं सामान्याभावापादनमित्यतः परिशेषाभिप्रायेणेदमित्याशयेन परिशेषं व्यनक्ति- **एतदुक्तं भवतीति ॥ अनपेक्षणादिति ॥** 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादिति भावः। **अनेन** शास्त्रेण। **सम्बन्धः** कार्यकारणभावः **॥ परीक्षादीति ॥** [१]आदिपदेन प्रतीतार्थवाक्यपरिग्रहः। निर्विषयफलत्वेऽनुपादेयत्वमापाद-नीयम्। अशास्त्रत्वं तु कुत इत्यतः शास्त्रलक्षणस्य तद्घटितत्वादित्याशयेन शास्त्रलक्षणमाह- **वक्तृश्रोत्रो-रिति ॥ तद्धेतुभूतमिति ॥** (महा)फलहेतुभूतमित्यर्थः। अनभिमतफलकेऽन्यसाध्यफलके चातिव्याप्तिवारणाय यथाक्रमं फलविशेषणमिति बोध्यम्। अभिमताहेतुभूतार्थके सिद्धार्थके चातिव्याप्तिनिरासाय यथाक्रममर्थ-विशेषणम्। चरकं वैद्यम्। आदिपदेन सुश्रुतम्। इष्टापत्तिं निराह- **न चेति ॥**

**मूलम् -**

**नच तेन लोकोपकारः । धर्माधर्माभावज्ञाने परस्परहिंसादिनाऽपकारस्यैव प्राप्तेः ॥**

**(त.मं.)** धर्माद्यभावज्ञापनेन तदनुष्ठानादिक्लेशनिवारणाल्लोकोपकारः प्रयोजनमित्यत आह - **न च तेनेति ॥**

**टीका -** ननु धर्माद्यनङ्गीकारेऽपि न शास्त्रस्य विषयादिशून्यत्वमापद्यते। धर्माद्यभावस्यैव विषय-त्वात्। नच धर्मादिकं पश्वादिभिरिव स्वभावत एवाप्रतिपन्नमिति किं तदभावप्रतिपादनेनेति वाच्यम्। वेदादिजनितया भ्रान्त्या धर्मादिसद्भावस्य प्रसक्तत्वेन 'नायं सर्पः' इतिवत् तदभाव-प्रतिपादनस्योपपन्नत्वात्। फलं च लोकस्य निरङ्कुशः कामोपभोगो दुःखनिवृत्तिश्च। यद्यपि शास्त्रं न कामान् ददाति। तेषामर्थादिनैव लभ्यत्वात्। नापि भोजयति। रागत एव तत्सम्भवात्। नाप्यौषधादिवद् दुःखं शमयति। तथाऽपि धर्मादिसद्भावभ्रान्त्या केचित् कामोपभोगोपरुद्धाः। कृच्छ्रचान्द्रायणाद्यनुष्ठाननिमित्तं दुःखं च प्रसक्तम्। धर्माद्यभावप्रतिपादनेन तु भ्रान्तौ निवृत्तायां यथेष्टकामोपभोगो दुःखाद्यनुदयश्च स्यात्। शास्त्रप्रणेतुस्तु लोकोपकारः फलम्। उपकृताश्च लोका अस्माकमयं कामोपभोगोपरोधं धर्माद्यनुष्ठानादिक्लेशं च निवारितवानित्यनुरागिणो भवन्ति। 'जनानुरागप्रभवाश्च सम्पदः' इति। तत्राऽह- **नच तेनेति ॥ तेन** शास्त्रप्रणेत्रा, **तेन** शास्त्रेण प्रणीतेन लोकोपकारः कृतो भवतीति न च वाच्यमित्यर्थः। लोकप्रयोजनादिप्रतिषेधस्याप्युप-लक्षणमेतत्। कुतो नेत्यत आह- **धर्मेति ॥** ज्ञाने लोकस्य लोकायतशास्त्रेणोत्पादिते सति, हिंसादिना प्राप्तेन।

**एतदुक्तं भवति। यदि धर्मादिज्ञानं प्रमा यदि वा भ्रान्तिः सर्वथा सर्वमर्यादास्थितिहेतुत्वेन महान्तमनर्थं पर्यहार्षीत् । इदानीं तु धर्माद्यभावज्ञाने सति सर्वमर्यादाभङ्गेन धनवनिताद्यपहारार्थिनो लोकस्य परस्परहिंसादिकं प्राप्नोत्येव । तथा चापकार एव लोकस्यानेन कृतो भवति । नहि कपर्दिकालाभार्थं लक्षलाभं नाशयन्नुपकारी भवति । ततश्च श्रोतॄणामिदमफलमेव । फलसम्बन्धिन एव विषयत्वेन निर्विषयत्वं च । शास्त्रप्रणेतरि च लोकस्यापकारित्वबुद्ध्या द्वेष एव भवति कुतोऽनुराग इति । नन्वविवेकिनां भवतु केषाञ्चिद् द्वेषः । विवेकिनस्तु अस्मत्सुखाद्यर्थमनेनोद्यमः कृतः । यत्तु हिंसादिकं प्राप्तं तदस्मत्सामर्थ्याभावनिबन्धनम् । तत्रायं किं करोत्विति मन्वाना अनुरज्यन्त एव । यथा आरोग्यार्थं भिषजौषधे दत्ते स्वापराधेन चानिष्टोत्पादे जाते न आमयावी तस्मै द्रुह्यति, किन्तु प्रत्युपकरोत्येवेति चेन्न। तथाऽपि समव्ययफलत्वेन शास्त्रकरणस्य निष्प्रयोजनत्वात्। अङ्गीकृत्य चेदमुक्तम्। विषमश्चायमुपन्यासः। नहि रोगिणोऽप्यथ्याचरणं वैद्यनिमित्तं येन तस्मै द्रुह्येत्। हिंसादिप्राप्तिस्तु शास्त्रनिमित्तैवेति सर्वेषां द्वेष एव स्यात्। ये तु हिंसया धनवनितादिकं लभन्ते तेऽपि बलवत्तरैरन्यैर्हिंस्यन्त एव । नैवं दृश्यत इति चेत् । सत्यम् । तदास्तिकदर्शनानाम् अनुन्मूलितत्वात्। तदुन्मूलनार्थश्च परस्य प्रयत्नः ।**

**(र.टि.) ।। लोकप्रयोजनादिप्रतिषेधस्येति ।।** शास्त्रप्रणेतृकर्तृकधर्माद्यभावप्रतिपादननिमित्तकः कामोप-भोगो धर्माद्यनुष्ठानक्लेशनिवृत्तिश्च लोकप्रयोजनशब्देनोच्यते। शास्त्रप्रणेतरि तदुपकृतलोककर्तृकानुराग आदि-शब्देनोच्यत इति ज्ञातव्यम् ।

**(रा.टि.)।। स्वभावत इति।।** प्रत्यक्षाद्यग्राह्यस्वरूपत्वादिति भावः। विषयमुपपाद्य प्रयोजनं च स्वशास्त्र-स्योपपादयति- **फलमिति ।।** नन्वस्त्वयं धर्माद्यभावो विषयः । तेन सह प्रतिपाद्यप्रतिपादकभावः सम्बन्धश्च । शास्त्रस्य फलत्वेन सम्मताभ्यां कामोपभोगदुःखनिवृत्तिभ्यां कः सम्बन्ध इत्यतो धर्मादिभ्रान्तिनिवृत्तिद्वारा कामोपभोगजननरूपः, कृच्छ्रचान्द्रायणाद्यनुष्ठाननिवृत्तिद्वारा तदनुष्ठाननिमित्तदुःख-निवृत्तिसम्पादनरूप इति **(रा.टि.)**विवक्षुः प्रसक्तं निषेधति- **यद्यपीत्यादिना। न कामानिति ।।** स्रक्चन्दनादिविषयानित्यर्थः। अस्तु लोकस्यैतत्फलम्। शास्त्रप्रणेतुः किं फलमित्यत आह- **शास्त्रप्रणेतुरिति ।।** स्वतोऽपुमर्थत्वात् कथं तस्य फलत्वमित्यत आह- **उपकृताश्चेति ।। लोकेति ।।** लोककर्तृकप्रणेतृप्रयोजनप्रतिषेधोऽपि ग्राह्य इत्यर्थः। एकदेशानुवादेन शेषमाह- **ज्ञाने लोकस्येत्यादिना ।।** उक्तदिशोपकारस्य सयुक्तिकत्वेन कथमपकारस्य प्राप्तिरित्यत आह- **एतदुक्तमिति ।।** अनेन शास्त्रप्रणेत्रा शास्त्रेण च कृतो भवतीत्यर्थः । धर्माद्यनुष्ठाननिमित्त-दुःखनिवृत्तिरूपोपकारोऽस्त्येवेत्यत आह- **न हि कपर्दिकेति ।।** समुद्रोद्भववस्तुविशेषो देशविशेषे क्रयसाधन-भूता कपर्दिका **।। फलसम्बन्धिन इति ।।** स्वज्ञानद्वारा फलजनकस्येत्यर्थः। **स्वापराधेनेति ।।** अपथ्या-चरणेनेत्यर्थः। **आमयावी** रोगी **।। तस्मै द्रुह्यतीति ।।** 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी **।। अयमुपन्यास इति ।।** रोगिदृष्टान्तोपन्यास इत्यर्थः। केषाञ्चिद्वाऽस्त्युपकार इत्यत आह- **ये त्विति ।।**

**(श्री.टि.)।। स्वभावत एवेति ।।** शास्त्रं विनैवेत्यर्थः। यथा पश्वादीनां धर्मादिज्ञानाभावः स्वभावत एवास्ति। अतो न शास्त्राद् धर्माद्यभावस्तान् प्रति प्रतिपादनीयः । एवं सर्वपुरुषाणामपि धर्मादिज्ञानाभावस्य शास्त्रं विना स्वत एव सद्भावात्तान् प्रति शास्त्रेण तदभावप्रतिपादनं व्यर्थमित्यर्थः **।। नायं सर्प इतिवदिति ।।** रज्ज्वां भ्रान्त्या सर्पप्रसक्तौ सत्यामिति शेषः। **निरङ्कुशः** अनिवारितः । काम्यत इति व्युत्पत्त्या **कामो** विषयः । एव-मुत्तरत्रापि । **भोगोऽनुभवः ।। दुःखेति ।।** विषयभोगानन्तरं तदप्राप्तिनिमित्तं यद्दुःखं तन्निवृत्तिर्भवतीत्यर्थः। ननु निरङ्कुशकामोपभोगादिरूपप्रयोजनेन यद्यपि लोकायतशास्त्रस्य न साक्षात्साध्यसाधनभावोऽस्ति । तथाऽपि परम्परया प्रयोजकत्वमस्तीत्युपपादयति- **यद्यपीत्यादिना ।।** भोजयति विषयभोगान् ददातीत्यर्थः **।। नापी-ति ।।** अधीतेऽपि शास्त्रे दुःखशान्त्यदर्शनादिति भावः। ननु सुखदुःखावाप्तिहान्योरन्यतरत्वाभावात् कथं लोकोपकारस्य फलत्वमित्याशङ्क्य सुखरूपत्वाभावेऽपि सुखसाधनीभूतसम्पदादिहेतुत्वाद्युक्तं तस्य फलत्व-मित्याह- **उपकृताश्चेति ।।** अनुरागिणः शास्त्रप्रणेतरीति शेषः। अनुरागस्यापि न स्वतः प्रयोजनत्वमित्यभिप्रेत्य तत्साध्यं प्रयोजनमाह- **जनानुरागेति ।।**

'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवाश्च सम्पदः ।।'

इति वचनादिति भावः । ननु मूले शास्त्रप्रणेतृप्रयोजनस्यैव निराकरणं प्रतीयते न लोकप्रयोजनादेरतो न्यूनतेत्यत आह- **लोकप्रयोजनादीति ॥** शास्त्रप्रणेतृकृतधर्माद्यभावप्रतिपादननिमित्तकः कामोपभोगो धर्माद्यनुष्ठानक्लेश-निवृत्तिश्च लोकप्रयोजनशब्देनोच्यते । आदिपदेन धर्माद्यभावरूपविषयसङ्ग्रहः । **अनेन** शास्त्रप्रणेत्रा ।

ननु धनवनिताद्यपहारेण तात्कालिकसुखभोगस्तावत् प्राप्त एवेत्युपकारित्वमेव तस्येत्यत आह- **नहीति ॥** तात्कालिकसुखप्राप्तिः कपर्दिकालाभस्थानीया । लक्षलाभस्थानीयं जीवनमिति ज्ञातव्यम् **॥ फलसम्बन्धिन (श्री.टि.) एवेति ॥** लोके फलसाधनस्यैव विषयत्वदर्शनान्निरङ्कुशकामोपभोगस्य चोक्तरीत्याऽफलत्वात् तत्साधनस्य धर्माद्यभावस्य न विषयत्वमित्यर्थः । **कुतोऽनुराग इति ॥** कुतश्च तत्प्रयुक्ताः सम्पद इत्यपि द्रष्टव्यम् । **आमयावी** रोगवान् **॥ समव्ययफलत्वेनेति ॥** अविवेकिद्वेषप्रयुक्तापकारो व्ययो विवेक्यनु-रागप्रयुक्तोपकारः फलम्, तदुभयं सममेवेति । समव्ययफलकशास्त्रकरणाय विचक्षणस्य न प्रवृत्तिर्युक्तेत्याशयः। यथोक्तम्-

'असत्यानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नाऽरभेत विचक्षणः ॥'

इति **॥ इदमिति ॥** समव्ययफलत्वमित्यर्थः । **उपन्यासो** नन्वविवेकिनामित्यादिना कृतः । **सर्वेषां** विवेकिना-मविवेकिनां च ।

नन्वेवं निराकरणमयुक्तम् । येऽबलिष्ठस्य हिंसया धनवनितादिकं लभन्ते तेषां बलवतां पुनरन्येन हिंसाऽभावा-न्निरङ्कुशकामोपभोगः फलं भविष्यत्येव । तदनुरागप्रयुक्तसम्पच्छास्त्रप्रणेतुर्भविष्यत्येवेत्यत आह- **ये त्विति ॥** तटस्थः शङ्कते- **नैवमिति ॥** परस्परधनवनिताद्यपहारेण निरङ्कुशकामोपभोगकरणं, तत्कर्तुः परस्परहिंसादि-नाऽपकारप्राप्तिश्चेत्येतन्नेदानीं लोके दृश्यते । अतो भवद्भिः कथमेवं निराक्रियत इत्यर्थः **॥ तदेति ॥** यदैवं न दृश्यते तदानीमित्यर्थः **॥ आस्तिकदर्शनानामिति ॥** अस्ति स्वर्गनरकाख्यः परो लोकः । तत्साधनीभूतौ धर्माधर्मौ च स्त इत्येवं प्रतिपादकानां शास्त्राणामित्यर्थः ।

**(पां.टि.) ॥ लोकोपकार इति ॥** वैदिकानां धर्माधर्मव्यवस्थापकैर्वचनै रुद्धकामभोगानां प्राणिनां धर्माद्यभाव-प्रतिपादनेन कामोपभोगोपरोधनिवृत्तिरूपमस्य प्रयोजनमित्यर्थः । ननु लोकोपकारो न स्वरूपेण प्रयोजनम् । सुखदुःखाभावेतरत्वात् । नाप्यदृष्टहेतुत्वेन । तदनङ्गीकारात् । तत्कथं बाऽचार्यप्रयोजनं स्यादित्यतो जनानुरागरूप-दृष्टफलसम्पादकत्वेन तस्य प्रयोजनत्वमित्याह- **उपकृताश्चेति ॥** ननु जनानुरागोऽपि न स्वतः प्रयोजनमित्यत आह- **जनेति ॥ आमयावीति ॥** 'आमयस्योपसङ्ख्यानम् दीर्घश्च' इति 'बहुलं छन्दसि' इत्येतत्सूत्रीयोप-सङ्ख्यानबलाद् रोगवाचिन आमयशब्दाद् विन्प्रत्यये दीर्घत्वे च सति आमयाविन्निति प्रातिपदिकसिद्धिरिति ज्ञेयम् **॥ नैवं दृश्यत इति ॥** धनवनिताद्यपहारेण परस्परहिंसादिकं न दृश्यत इत्यर्थः ।

**(व्या.टि.) ॥ पश्वादिभिरिवेति ॥** बुद्धेर्मान्द्यद्योतनाय पशुसाम्योक्तिः । यथोक्तं वेदे- 'एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च' इति । प्रतिपादनस्य स्वयमफलत्वात् फलं चाऽह- **फलं चेति ॥** निरङ्कुशो निराबाधः । कामोपभोगदुःखनिवृत्त्योर्भोग्यादानेन भोगानुत्पादनेन प्राप्तदुःखाशमनेन च शास्त्रफलत्वाभावमाशङ्क्य भोगोपरोधतपोनुष्ठानप्रसक्तदुःखनिवर्तकतया फलत्वं साधयति- **यद्यपीत्यादिना ॥** शास्त्रश्रवणफलमुक्त्वा प्रणयनफलमाह- **शास्त्रप्रणेतुरिति ॥** अनुरागफलमाह- **जनेति ॥** तेनेति पदं कर्तृकरणोभयपरतया व्याचष्टे- **(व्या.टि.) प्रणेत्रेत्यादिना । लोकप्रयोजनादीति ॥** लोकस्य कामोपभोगादिरूपं, प्रणेतुश्च अनुरागसम्प-दादिरूपं प्रयोजनं तत्प्रतिषेधस्येत्यर्थः । ज्ञानस्य शास्त्रेण सम्बन्धमाह- **उत्पादित इति । यदि वेति ॥** वाशब्देनानास्था सूचिता । ननु सुखार्थप्रयत्ने कथमपकार इत्यत आह- **न हीति ॥ कपर्दिका** वराटिका । बलवदनिष्टानुबन्धित्वेन परस्वापहारस्याविधेयत्वादिति भावः । निर्विषयं च स्यादिति शेषः **॥ अनुरज्यन्त एवेति ॥** दैवादिकः श्यन् **॥ आमयावीति ॥** 'आमयस्योपसङ्ख्यानम्' इति विनिर्दीर्घश्चेति भावः **॥ तस्मा इति ॥** 'क्रुधद्रुह' इत्यादिना चतुर्थी **॥ द्रुह्यतीति ॥** अयमपि दैवादिकः **॥ तथाऽपीति ॥** विवेक्यनुरागेऽप-त्यर्थः **॥ समेति ॥** अनुरागद्वेषयोः समत्वादित्यर्थः **॥ इदमिति ॥** समफलत्वम् **॥ शास्त्रनिमित्तैवेति ॥** धर्माद्यभावबोधनेनेति भावः **॥ तदास्तिकदर्शनानामिति ॥** अस्ति परलोक इति मतिर्येषां ते आस्तिकाः । 'अस्ति नास्ति दिष्टं मतिः' इति ठक् । तेषां दर्शनानि सिद्धान्तास्तेषामित्यर्थः **॥ अनुन्मूलितत्वादिति ॥** निश्शेषनिरस्तत्वाभावादित्यर्थः ।

**मूलम् - नचोपकारेण तस्य प्रयोजनम् । अदृष्टाभावात् । अतो धर्माद्यभावं वदता**

**स्वसमयस्याऽनर्थक्यमङ्गीकृतमेवेति नासौ समयी ॥**

**(त.मं.)** उक्तार्थं निगमयति- **अत इति ॥**

**टीका -** नन्वपकुर्वन्तु सर्वे; तथाऽपि हितबुद्ध्या शास्त्रं प्रणीतवतोऽस्योपकारित्वमस्त्येव। नहि पङ्कमग्नां गामुद्दिधीर्षुर्यदि गवा शृङ्गेण हन्यते तर्हि गोरपकारी भवतीति चेत्। तदा वक्तव्यम्। स तादृगुपकारः किं शास्त्रं प्रणयतः स्वयमेव प्रयोजनरूप उत तेनान्यत् प्रयोजनं भवति। नाऽद्यः। सुखप्राप्त्यादीतरत्वात्। द्वितीयेऽपि किं दृष्टं प्रयोजनमदृष्टं वा। आद्यं दूषयति- **नचेति ॥ तस्य** शास्त्रप्रणेतुः। उक्तप्रकारेण सर्वविद्वेषविषयत्वात् प्रणाडिकान्तराभावादिति भावः। द्वितीयाभावे हेतुमाह- **अदृष्टेति ॥** न केवलं शास्त्रप्रणेतुः प्रयोजनाभावः किन्तु तस्यापि हिंसादिप्राप्तिरवर्जनीया, अदृष्टाभावादेवेति। सङ्क्षेपकरणे कारणं सूचयन् चार्वाकस्यासमयित्वापादनमुपसंहरति- **अत इति ॥** अविद्यमानोऽर्थो विषयः प्रयोजनं च यस्य तदनर्थकं तस्य भाव आनर्थक्यम्। **अङ्गीकृतमेव** अङ्गीकृतप्रायमेव। अदृष्टविषयाद्यभावस्य स्वयमेवाङ्गीकृतत्वेनार्धं तावदवसितं भारस्य। दृष्टविषयादिनिरासश्चायत्नसाध्य इति प्रतिवादिनो नात्रात्यन्तं कृत्यमित्युपसंह्रियत इति भावः। **असौ** धर्माद्यभावमभ्युपगच्छन्न समयी स्यात्। अतः समयित्वलोभात् तेनापि विषयत्वेन धर्मादिकमङ्गीकार्यम्। तत्सिद्धेरन्यथाऽनुपपत्त्याऽपौरुषेयं वाक्यमपीति वाक्यशेषः।

**(रा.टि.) ॥ तादृगिति ॥** लोकस्य कृतः कामोपभोगादिरूप उपकार इत्यर्थः ॥ **उक्तप्रकारेणेति ॥** इदानीं त्वित्यादिना शास्त्रप्रणेतरि चेत्यादिना वोक्तप्रकारेणेत्यर्थः। **प्रणाडिकेति ॥** फलस्योपपादने प्रागुक्तप्रणाडिकातः प्रणाडिकान्तराभावात् तस्याश्च दूषितत्वादिति भावः ॥ **हिंसादीति ॥** धनवनिताद्यपहार आदिशब्दार्थः। **अदृष्टाभावादेवेति ॥** गुरोर्हिंसाद्यकरणे परलोकसाधनादृष्टाभावादिति वा, हिंसादिकरणे नरकाद्यनर्थहेतु-दुरदृष्टाभावादिति वाऽर्थः। अर्थशब्द उभयार्थ इति भावेनाऽह- **अर्थो विषयः प्रयोजनं चेति ॥** अदृष्टविषयादी-त्यादिपदेन प्रयोजनपरिग्रहः ॥ **अयत्नसाध्य इति ॥** वक्तृश्रोत्रोरभिमतमनन्यसाध्यमित्यादिना, शास्त्रं न कामान् ददातीत्यादिना चोक्तदिशेति भावः। बाधवारणायोक्तम्- **न समयी स्यादिति ॥** परमप्रकृतमुपसंहरति- **अतः समयित्वलोभादिति ॥**

**(श्री.टि.)** दृष्टम् उपकारजनितजनानुरागप्रयुक्तसम्पदादिरूपम् ॥ **उक्तप्रकारेणेति ॥** धर्माधर्मज्ञानाभाव इत्यादिनोक्तप्रकारेणेत्यर्थः। ननु सर्वविद्वेषविषयत्वाभावोपपादनमुपकारेण दृष्टं प्रयोजनं च प्रकारान्तरेणोप-पादयिष्यामीति चेत्तत्राऽह- **प्रणाडिकान्तरेति ॥** प्रकारान्तराभावादित्यर्थः ॥ **किन्तु तस्यापीत्यादि ॥** कृतघ्नतानिमित्तप्रत्यवायानुसन्धाने सति हि शास्त्रप्रणेतुर्लोककृतहिंसाद्यभावः स्यात्, तत्तु त्वयैव त्याजितम्। अतो हिंसादिप्राप्तिस्तस्याप्यवर्जनीयैवेत्यर्थः। अङ्गीकृतमित्यनेन सङ्क्षेपकरणे कारणं सूचितम्। कथमङ्गीकृत-प्रायमित्यतस्तदुपपादयति- **अदृष्टेत्यादिना ॥ वाक्यशेष इति ॥** वाक्यस्य शेषो वाक्यशेष इति वाक्यरूपः शेष इति वाऽर्थः।

**(व्या.टि.)** प्रणीतवत इति क्तवतुः ॥ **उद्दिधीर्षुरिति ॥** ननु 'किरश्च पञ्चभ्यः' इति धृङः किरादित्वात् सन इटि, उद्दिधरिषुरिति वक्तव्यम्। कथम् उद्दिधीर्षुरितीति चेन्न। भौवादिकस्य धृञ एतद्रूपे न दोषः। गवा कर्त्रा। शृङ्गेण करणेन। प्राप्त्यादीत्यादिपदेन दुःखनिवृत्तिरुच्यते ॥ **प्रणाडिकेति ॥** द्वारेत्यर्थः। मूले चशब्दम् आवर्त्य हिंसादिनाऽपकारस्यैव प्राप्तिरित्यनुवर्त्य तेन तस्येति श्रुतेन चान्वयमुपेत्याऽह- **न केवलमिति ॥ तस्या-पीति ॥** न केवलं लोकस्येत्यर्थः। इष्टाभावहेतुमेवानिष्टप्राप्तावपि व्यापारयति- **अदृष्टाभावादेवेति ॥** 'प्रादिभ्यो नञश्चोत्तरपदलोपो वा वक्तव्यः' इति विद्यमानपदलोपं मत्वा व्याख्याति- **अविद्यमान इति ॥ आनर्थक्य-मिति ॥** भावे ष्यञ्प्रत्ययः। अवसितम् अवरोपितम् ॥ **अयत्नसाध्य इति ॥** यद्यप्यर्थाभावे यदव्ययं नञ् तस्य 'अव्ययम्' इत्यव्ययीभावे, 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' इत्यमादेशे, अयत्नमिति भाव्यम्। तथाऽप्य-व्ययीभावेन सह तत्पुरुषो विकल्प्यते। 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' इति 'अद्रुतायामसंहितम्' इति च भाष्यवार्तिकप्रयोगात्। तेन अनुपलब्धिरविवाद इत्यादिवदयत्न इत्यपि सिद्ध्यति। अयत्नेन साध्य इति विगृह्य अयत्नसाध्य इति समासो बोध्यः। वस्तुतस्तु अयत्नमित्यस्याऽव्ययीभावत्वेऽपि तद्गर्भतत्पुरुषे, अमः 'सुपो धातु' इत्यनेन लुकि श्रवणप्रसक्तेरभावः।

**टीका - ननु न प्रयोजनाधीना प्रमेयव्यवस्थितिः किन्तु प्रमाणाधीना। नहि देवदत्तः पिपासित इत्येतावता मरौ वारि सिद्ध्यति। नच धर्मादौ प्रमाणमस्ति। प्रत्यक्षेण तदनवगमात्। अनुमानादीनां च प्रामाण्याभावात्।**

**अत्राऽहोदयनः। यद्यदृष्टं न स्यात् न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत। नहि निष्फले दुःखैकफले वा कदाचित् कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते प्रागेव जगदिति। अत्र प्रष्टव्यं किमनेन प्रमाणमुक्तमिति। अनुमानमर्थापत्तिर्वेति चेन्न। प्रत्यक्षैकप्रमाणवादिनं प्रति तदुपन्यासस्या-नुचितत्वात्। किञ्चैवं चैत्यवन्दनादिकमपि धर्मादिसाधनं स्यात्। तत्रापि हि शक्यते वक्तुम्- अन्यथा न कश्चिच्चैत्यवन्दनादौ घटेतेति। नैतदेवम्। यतो हेतुदर्शनादर्शनाभ्यां विशेषोऽस्ति। जीविकादिकं तत्र हेतुरस्ति नचात्र कश्चिदिति चेन्न। सर्वेषां चैत्यवन्दनादेर्जीविकादिमूलकत्व-कल्पनेऽनुभवविरोधात्। केषाञ्चित् तथात्वस्येष्टापूर्तयोरपि समत्वात्। तस्माच्चैत्यवन्दनादिकमिव इष्टापूर्तमप्यन्धपरम्परया विप्रलम्भेन वा प्राप्तमिति। प्रयोजनाभावान्नैवंविधं विप्रलम्भनं सम्भवतीति चेन्न। परचित्तवृत्तिगुरुतरप्रयोजनस्य इदानीन्तनैरस्माभिरपाकर्तुमशक्यत्वात्। त्वयाऽपि कथमिदं निश्चितमिति चेत्, न मयाऽपि निश्चितं किन्तु शङ्क्यत एव। तावताऽप्यनुमानादेरन्यथासिद्धि-शङ्काकलङ्कितस्य न प्रवृत्तिरिति।**

**(रा.टि.)** शास्त्रस्य सप्रयोजनत्वाद्यर्थं धर्मादिकमङ्गीकार्यमिति यदुक्तं धर्माद्यभाववादी तदाक्षिपति- **ननु न प्रयोजने**त्यादिना **उच्यत** इति पर्यन्तेन। **मरावि॑ति ॥** ऊषरभूमावित्यर्थः। शङ्कितैव चार्वाकः उदयनोक्तं परिहारमनूद्य निराह- **अत्राऽहेति ॥ प्रागेव जगदिति ॥** न हि प्रवर्तत इत्यनुषङ्गः। प्रेक्षापूर्वकारिणः कस्या-प्यप्रवृत्तौ सुतरां जगतोऽप्रवृत्तिरिति भावः। प्रसाध्याङ्गकस्याप्युपन्यासार्हत्वात्तत्प्रामाण्यं साधयिष्यामीति वदन्तं प्रति दोषान्तरं चाऽह- **किञ्चेति ॥** चैत्यवन्दनादिप्रतिबन्दीं मोचयितुं तद्वैषम्यमाहोदयनः- **नैतदेवमित्या-दिना ॥** तमेव विशेषं व्यनक्ति- **जीविकेति ॥ जीविका** जीवनम्। चैत्यवन्दनादौ कृते सति तदीयाजीवनार्थं द्रविणादिकं प्रयच्छन्तीति जीवनादिकं दृष्टमेव किञ्चित्फलमस्ति। न चेष्टापूर्तादिकृतौ किमपि दृष्टं प्रयोजन-मस्ति। प्रत्युतार्थव्ययः कायक्लेश एवातोऽदृष्टमस्तीति। उक्तं हि जैमिनिना 'रागलोभमोहजीवनादिमूलकानां स्मृतिवचनानामप्रामाण्यं हेतुदर्शनाच्च' इति सूत्र इति भावः। चार्वाक एव तद्वैषम्यं निराह- **नेत्यादिना। समत्वादिति ॥** इष्टापूर्तादि करोमीति द्रविणं याचित्वा किञ्चिद्व्ययेनान्यस्य जीवनार्थं स्थापनसम्भवात्। लोके तथा विप्रलम्भदर्शनाच्चेति भावः **॥ नैवंविधमिति ॥** बहुवित्तव्ययायाससाध्येष्टापूर्तादिकृतिरूप-विप्रलम्भनमित्यर्थः **॥ त्वयाऽपीति ॥** पूर्वपक्षिणा चार्वाकेण त्वयाऽपीष्टापूर्तादिकं विप्रलम्भादिमूलं चैत्य-**(रा.टि.)** वन्दनादिकमिवेति कथं निश्चितमित्यर्थः **॥ तावतेति ॥** मूलान्तरशङ्कामात्रेणापि **॥ अनुमानादेरिति ॥** प्रागुक्तानुमानार्थापत्त्योरित्यर्थः।

**(श्री.टि.)** समयित्वलोभात्तेनापि विषयादित्वेन धर्मादिकमङ्गीकार्यमित्युक्तौ धर्मादिरूपप्रमेयव्यवस्थितिः समयित्वलोभरूपप्रयोजनाधीनेत्यापन्नम्। तदुपर्याशङ्कते चार्वाकः- **नन्विति। किन्त्विति ॥** यथाऽहुः पदार्थविदः 'मानाधीना मेयसिद्धिः' इति। प्रमेयव्यवस्थितेः प्रयोजनाधीनत्वेऽतिप्रसङ्गमाह- **नहीति ॥ मरौ** ऊषरभूमौ। तत्रापि पिपासानिवृत्तिरूपप्रयोजनसद्भावाद् वारिरूपप्रमेयसिद्धिः स्यादिति भावः। ननु तर्हि मयाऽपि प्रमाणेनैव धर्मादिरूपं प्रमेयं व्यवस्थाप्यत इति चेत्तत्राऽह- **न चेति ॥** न हीत्यर्थः। तदुपपादयति- **प्रत्यक्षेणेति ॥** अयं घट इतिवदयं धर्म इत्यनुभवाभावादिति भावः। एवं चार्वाकेण धर्माद्यङ्गीकारवादिनः सर्वान् प्रति धर्मादिसाधक-प्रमाणाभावे शङ्किते तं प्रत्युदयनोक्तं धर्मादिसाधनप्रकारं (माणं) दूषयितुमनुवदति- **अत्राहोदयन इति ॥** न स्यादित्यनन्तरं तर्हीति शेषः। **इष्टं** यजनम्। **पूर्तम्** अन्नप्रपादानादि **॥ प्रागेव जगदिति ॥** मूर्खो लोको न घटत इति किं वक्तव्यमित्यर्थः। अयं भावः। अनेन कर्मणा स्वर्गादिरूपं फलमस्तु वा मा वा। अस्तु वा इदं दुःखैकफलकम्। विरक्तानामस्माकमुभयमपि समानमिति ज्ञात्वा प्रेक्षावतां प्रवृत्त्या भाव्यमिति कदाचित्सम्भावितं दृष्टम्। लोके तादृशानामपि यदा निष्फले दुःखैकफलके वा कर्मणि प्रवृत्तिर्नास्ति तदा सुखमेव मे स्याद्दुःखं मनागपि मा भूदित्येवानुसन्धानवतां मूर्खाणां निष्फले दुःखैकफलके वा कर्मणि प्रवृत्तिर्नास्तीति किमु वक्तव्य-मिति। स्वयं समाधानं वक्तुमुदयनोक्तं समाधानं तावद्दूषयति- **अत्र प्रष्टव्यमिति ॥ अनेनेति ॥** यद्यदृष्टं न स्यादित्यादिना ग्रन्थेनेत्यर्थः **॥ अनुमानमर्थापत्तिर्वेति ॥** इष्टापूर्तमदृष्टफलकं, प्रेक्षावत्प्रवृत्तिविषयत्वाद् यदेवं तदेवं, यथा सम्प्रतिपन्नमित्यनुमानं वा। इष्टापूर्तयोः प्रेक्षावत्प्रवृत्तिविषयत्वान्यथाऽनुपपत्त्याऽदृष्टफलत्व-सिद्धिरित्यर्थापत्तिर्वेत्यर्थः। अन्यथेत्यस्य यद्यदृष्टं न स्यादित्यर्थः। तथा च

तत्प्रवृत्त्यन्यथानुपपत्त्याऽनुमानेन वा चैत्यवन्दनस्याप्यदृष्टसाधनत्वसिद्धिः स्यादिति भावः ।

नन्वस्मिन्ननुमानेऽन्यथासिद्धिः, अर्थापत्तेश्चान्यथाऽप्युपपत्तिरित्युदयनः शङ्कते- **नैतदेवमिति ॥** तमेव विशेषं व्यनक्ति- **जीविकादिकमिति ॥** जीवनोपायसाधनभूतं धनादिकमित्यर्थः । तत्र चैत्यवन्दने । चैत्यवन्दने कृते सति धनादिकं बौद्धैर्दीयत इति भावः **॥ न चात्रेति ॥** इष्टापूर्तकरणे च न जीविकादिकं हेतुरस्तीत्यर्थः **॥ अनुभवविरोधादिति ॥** तथा च कैश्चिज्जीविकामनपेक्ष्यादृष्टार्थमेव चैत्यवन्दनं क्रियत इति तत्प्रवृत्त्यन्यथाऽ-नुपपत्त्या तस्यापि धर्मसाधनत्वसिद्धिरित्यर्थः । ननु केषाञ्चित्तावच्चैत्यवन्दनादौ प्रवृत्तिर्जीविकाद्यपेक्षयैवाऽस्ति तत्प्रवृत्त्यन्यथाऽनुपपत्त्या नादृष्टसाधनत्वं तस्य सिध्यतीति चेत्तत्राऽह- **केषाञ्चिदिति ॥** चैत्यवन्दनादिप्रवृत्तेरिति शेषः **॥ तथात्वस्येति ॥** जीविकादिहेतुकत्वकल्पनस्येत्यर्थः **॥ समत्वादिति ॥** इष्टापूर्तकरणेऽयं परोपकारी समीचीन इति मत्वा धनं दास्यन्तीति जीविकादिबुद्ध्यैव केचिदिष्टापूर्ते कुर्वन्त्यतो न तत्प्रवृत्त्यन्यथाऽनुपपत्त्येष्टा-पूर्तयोरदृष्टफलकत्वमिति तदनुमानस्याप्यन्यथासिद्धिः, अर्थापत्तेश्चन्यथाप्युपपत्तिरिति भावः । उदयनः शङ्कते- **(श्री.टि.) प्रयोजनाभावादिति ॥** बहुवित्तव्ययायासाध्येष्टापूर्तविषयकं विप्रलम्भनं चैत्यवन्दनादाविव न सम्भवतीत्यर्थः **॥ परेति ॥** इष्टापूर्तकर्तृपूर्वकालीनपुरुषेत्यर्थः **॥ गुरुतरेति ॥** येन प्रयोजनेन बहुवित्तव्ययायास-साध्येष्टापूर्तविषयकं विप्रलम्भनं करोति तादृशगुरुतरप्रयोजनस्येत्यर्थः । उदयनः शङ्कते- **त्वयाऽपि कथमिद-मिति ॥** इष्टापूर्तविषयकप्रवृत्तेरन्धपरम्परामूलकत्वं विप्रलम्भकत्वमूलकत्वं वा त्वयाऽपि कथं निश्चितमि-त्यर्थः **॥ तावताऽपीति ॥** इष्टापूर्तयोरन्धपरम्परादिमूलकत्वेनादृष्टफलकत्वाभावशङ्कनेनेत्यर्थः । आदिपदे-नार्थापत्तिग्रहणम् । अन्यथासिद्धिपदेनान्यथाप्युपपत्तिश्च ग्राह्या । तथा चेष्टापूर्तयोः प्रेक्षावत्प्रवृत्तिविषयत्वमदृष्ट-फलकत्वरूपसाध्यं विना विप्रलम्भादिमूलकत्वेनाप्युपपद्यत इत्यन्यथासिद्धिशङ्कयाऽन्यथाप्युपपत्तिशङ्कया वाऽनु-मानस्यार्थापत्तेर्वा न प्रवृत्तिरित्यर्थः ।

**(पां.टि.)** अत्र कुसुमाञ्जलिकृतोक्तसमाधानं दूषयितुमनुवदति- **अत्राहेति ॥** इष्टं यागादि, पूर्तं तटाकादि । **न हीति ॥** बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानजन्यत्वात्प्रवृत्तेरिति भावः **॥ प्रागेवेति ॥** प्रागेवेति निपात-समुदायोऽतिशयार्थः । उक्तहेतोरिति भावः **॥ जीविकादीति ॥** तथा च दृष्टेष्टसाधनताज्ञानादेव तत्र प्रवृत्तिः । न पारलौकिकेष्टसाधनताज्ञानादित्यर्थः **॥ तथात्वस्येति ॥** जीविकादिहेतुत्वस्येत्यर्थः । तथा च दृष्टेष्टसाधनता-ज्ञानादेवात्र प्रवृत्तिः । न तु पारलौकिकेष्टसाधनताज्ञानादिति साम्यमेवेति भावः ।

**(व्या.टि.) ॥ पिपासित इति ॥** 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्प्रत्यय इति भावः । **मरौ** ऊषर-प्रदेशे **॥ इष्टापूर्तयोरिति ॥** 'चित्रं स्यात् क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि' इत्यमरः । 'अन्येषामपि दृश्यते' इति पूर्वपददीर्घः **॥ कश्चिदेकोऽपीति ॥** कैमुत्यद्योतनायैकोऽपीति । कस्यचिदेकस्य प्रतिबन्धकवशान्न प्रवृत्तिरिति तु न शङ्क्यम् । अन्यस्याप्येकस्याप्रवृत्तेरिति वक्तुं कोऽपीत्यर्थकं कश्चिदिति विशेषणम् **॥ प्रेक्षापूर्वकारीति ॥** उन्मादरहितकर्तेत्यर्थः **॥ प्रागेव जगदिति ॥** विद्वत्समुदाय इत्यर्थः । मूर्खो लोक इति केचित् । तन्न । कैमुत्या-योगात् । न हि घटत इत्यनुषङ्गः **॥ प्रत्यक्षैकेति ॥** केवलार्थोऽयमेकशब्दः । **तदिति** । अप्रत्यक्षप्रमाणेत्यर्थः । **घटेत** चेष्टेत । शङ्कते- **नैतदिति ॥** जीविका वृत्तिः **॥ इदानीन्तनैरिति ॥** 'सायश्चिरम्' इत्यादिना ट्युस्तुट् च ।

**टीका -** उच्यते । किमेवं वदतो धर्मादौ सन्देह उताऽभावनिश्चयः । आद्ये न तत्र प्रवर्तेत नापि निवर्तेत । द्वितीये कुतोऽसाविति वाच्यम् । घटाद्यभावनिश्चय इव प्रत्यक्षेणैव धर्माद्यभावनिश्चय इति चेन्न । अयोग्यतया चक्षुषा रसस्येव प्रत्यक्षेण सतोऽप्यग्रहणोपपत्तेः । ननु किं योग्यताविशेषणेन यन्नोपलभ्यते तन्नास्त्येवेति चेत् । स्यादेतदेवं यद्यत्र वादिनो न विप्रतिपद्येरन्, यदि च चक्षुरादिना रसादिकमयोग्यतया न गृह्यत इति न स्यात् । सत्यां तु वादिविप्रतिपत्तौ सति चायोग्यतया क्वचिदनुपलम्भे प्रत्यक्षानुपलब्धिः संशयमेव सम्पादयति । किमनुपलम्भान्नास्त्येव धर्मादिकमुत वाद्यन्तरोक्तरीत्या चक्षुषाऽनुपलभ्यमानोऽपि रसो रसनेनेवायोग्यतया प्रत्यक्षेणानुपलभ्यमानमपि प्रमाणान्तरादस्तीति । नहि न्यायमतिक्रम्य स्वसमयमात्रेण संशयोत्तारो युज्यते । तथाचैतत्संशय-निरासार्थमप्यागमादिकं प्रमाणमङ्गीकार्यम् । तथा सति तेनैव सुकरं धर्मादिसाधनम् ।

**किञ्चाऽगमादिप्रामाण्याभावे लोकव्यवहारोच्छेदः प्रसज्येत । ननु सम्भावनामात्रेण तत्सिद्धिः। संवादेन च प्रामाण्याभिमान इति चेत् । एवं तर्ह्यागमादिकं ज्ञानमुत्पादयति तच्च संवादीत्यङ्गी-कृतम् । किमतोऽधिकं प्रामाण्यं नाम यन्नाङ्गीक्रियते । तदेवं चार्वाकेणापि धर्मादिकमङ्गीकार्यमिति स्थितम् ।**

**। इति चार्वाकनिरासः ।**

**(रा.टि.)** आगमादिनैव धर्मादिनिश्चयः । आगमादिप्रामाण्यं च धर्मतदभावकोटिकसंशयोत्तारार्थमङ्गीकार्यमिति विवक्षुर्ग्रन्थकारो धर्मादिसन्देहमाह- **किमेवमिति । न तत्रेति ।।** इष्टापूर्तादिधर्म इत्यर्थः । लोक इति योज्यम् । बहुवित्तव्ययायाससाध्यत्वान्न प्रवर्तेत । पारत्रिकादिश्रेयोऽपेक्षित्वादभावानिश्चयान्न निवर्तेतेत्यर्थः **।। स्यादेतदेव-मिति ।।** यन्नोपलभ्यते तन्नास्तीत्येतत्कल्पनेन धर्माद्यभावनिश्चयः स्यात् तदा, यद्यत्रेत्यादियोजना । विपर्यये पर्यवसानमाह- **सत्यामित्यादिना ।।** संशयशरीरं व्यनक्ति- **किमनुपलम्भादित्यादिना ।।** विशेषादर्शनादि-सामग्रीसत्त्वे जायत एव संशय इत्येवंरूपं वा सामग्रीसत्त्वे कार्येण भाव्यमित्येवं रूपं वा सर्वजनसिद्धं न्यायमति-क्रम्य यन्नोपलभ्यते तन्नास्त्येवेति स्वसिद्धान्तमात्रेण संशयनिरासो न युक्तः **।। तथा चेति ।।** सन्देहे न्यायसिद्धे सतीत्यर्थः **।। निरासार्थमपीति ।।** तदनुष्ठानार्थमागमानभ्युपगमेऽपीत्यर्थः । अन्यथा नास्तिकस्य तवेष्टा-पूर्तादितो निवृत्तिरास्तिकजनस्य प्रवृत्तिर्वा न युक्ता स्यादिति भावः । त्वयाऽप्यागमप्रामाण्यमङ्गीकृतप्रायमित्याह- **किञ्चेति ।।**

**(श्री.टि.)** एवमुदयनोक्तं धर्मादिसाधकप्रमाणं दूषयित्वा स्वयं तद्वक्तुं प्रतिजानीते- **उच्यत इति ।। एवं वदत इति ।।** न च धर्मादौ प्रमाणमस्ति । प्रत्यक्षेण तदनवगमात् । अनुमानादीनां च प्रामाण्याभावादिति वदत इत्यर्थः **।। आद्ये न तत्र प्रवर्तेतेति ।।** तत्रेति बुद्धिस्थपरस्परधनवनिताद्यपहारेण निरङ्कुशकामोपभोगपरामर्शः। तथा च यदि धर्माधर्मसद्भावसन्देहस्तवास्ति तर्हि परस्परधनवनिताद्यपहारेण निरङ्कुशकामोपभोगे प्रवृत्तिस्तवास्ति सा न स्यात् । न हि धर्माधर्मसद्भावशङ्कायां सत्यां सा युक्तेत्यर्थः **।। नापि ततो निवर्तेतेति ।।** धर्मादेरित्यर्थः। यदि धर्मेऽधर्मे च तव सन्देहस्तदा धर्माधर्माभाववादिनस्तव धर्मादधर्माच्च निवृत्तिस्तावदस्ति सा न स्यात् । नहि धर्माधर्मादौ सन्देहे सति सा युज्यत इत्यर्थः **।। कुतोऽसाविति ।।** धर्माद्यभावनिश्चयः कुतः प्रमाणादित्यर्थः । **(श्री.टि.)** चार्वाकः प्रमाणं शङ्कते- **घटाद्यभावेति ।।** योग्यत्वे सति यत्प्रत्यक्षेण नोपलभ्यते तन्नास्ति । धर्मादिकं च प्रत्यक्षायोग्यत्वान्नोपलभ्यत इत्यस्यापि सम्भवान्न प्रत्यक्षेण धर्माद्यभावानिश्चय इत्याह- **अयोग्यत-येति ।। विशेषणेनेति ।।** अनुपलब्धिविशेषणेनेत्यर्थः **।। तन्नास्त्येवेति ।।** शशविषाणवदित्यर्थः **।। अत्रे-ति ।।** धर्मादिविषय इत्यर्थः । शशविषाणे यथा तथेति शेषः । तर्ह्येव यन्नोपलभ्यते तन्नास्तीति व्याप्तिर्युक्ता स्यादित्याशयः **।। न स्यादिति ।।** तर्ह्येव योग्यताविशेषणं व्यर्थं स्यादिति भावः । क्वचित् रसादौ । **प्रत्यक्षा-नुपलब्धिरिति ।।** धर्मादिविषयिणीत्यर्थः **।। नास्त्येवेति ।।** शशविषाणवदित्यर्थः **।। अनुपलभ्यमानम-पीति ।।** धर्मादिकमिति वर्तते ।

ननु धर्माद्यभावप्रतिपादकमदीयसमयेनैवानुपलम्भान्नास्त्येव धर्मादिकमित्येककोटिनिश्चयसम्भवादेष संशयो निवर्तिष्यत इत्यत आह- **न हीति ।। न्यायमतिक्रम्येति ।।** संशयकोटिप्रापकन्यायमतिक्रम्येत्यर्थः । तथा च संशयकोटिप्रापकन्याययोः प्रबलत्वान्न तन्मूलकः संशयः समयमात्रनिवर्त्य इति भावः । 'अतस्संशयसम्पत्तौ वाक्यं प्रत्यक्षवत्प्रमा' इत्यनुव्याख्यानं हृदि निधायाऽह- **तथा चेति ।।** तथा चाऽगमादौ प्रमाणतयाऽङ्गीकृते सति द्वितीयकोटिनिश्चयसम्भवात् संशयनिरासो भविष्यतीत्याशयः । नन्वस्तु संशयविधूननार्थमागमप्रामा-ण्यम् । कुतो धर्मादिसिद्धिः । तदभावावेदकप्रमाणाङ्गीकारे संशयोत्तारसम्भवादित्यत आह- **तथा सतीति ।।** तुल्यन्यायेन तथा धर्मादिसाधकागममात्रस्य प्रामाण्ये सिद्धे तेन धर्मादिसिद्धिरप्यविकलेति भावः **।। आगमा-दीति ।।** आदिपदेनानुमानग्रहणम् **।। लोकव्यवहारोच्छेद इति ।।** साक्षिजन्यवचनेनार्थनिश्चयस्य लोके दर्शनादा-गमप्रामाण्याभावे साक्ष्यादिलोकव्यवहारोच्छेदः स्यात् । अनुमानप्रामाण्याभावे च धूमदर्शनानन्तरं वह्न्यादि-व्यवहारस्य चोच्छेदः प्रसज्यत इत्यर्थः **।। सम्भावनामात्रेणेति ।।** उत्कटकोटिकस्संशयस्सम्भावना तन्मात्रे-णेत्यर्थः **।। तत्सिद्धिरिति ।।** अयमत्रार्थे साक्षीत्यादिलोकव्यवहारस्य धूमदर्शनानन्तरं वह्न्यादिव्यवहारस्य (ज्ञानस्य) च सिद्धिरित्यर्थः । तथा चानुमानागमयोः संशयजनकत्वमेव प्राप्तं न प्रमाजनकत्वम् । तथा च न प्रामाण्यम् । न हि संशयजनकं प्रमाणमित्याशयः । एवं तर्ह्यागमानुमानयोः प्रामाण्यव्यवहारस्य का गतिरित्यत आह- **संवादेन चेति ।।** सम्भावनया प्रवृत्त्यनन्तरं संवादेन प्रामाण्याभिमानः स्मृतिवदिति भावः **।। संवादी-ति ।।** संवादित्वोक्त्याऽर्थस्य यथावस्थितत्वं प्राप्तमिति भावः **।। किमतोऽधिकमिति ।।** यथावस्थितार्थज्ञेय-विषयीकारिज्ञानजनकत्वादन्यदधिकं प्रामाण्यं नाम किमस्तीत्यर्थः । वादार्थमुपसंहरति- **तदेवमिति ।।**

**(पां.टि.)** नन्वनुपलब्धिविरुद्धा वादिविप्रतिपत्तिर्न संशयाय प्रभवतीत्यतोऽनुपलब्धेः सावकाशत्वमाह- **यदि चेति ॥ वादिविप्रतिपत्ताविति ॥** वादिनां धर्मासत्त्वाभिमान इत्यर्थः **॥ अस्तीति ॥** अनेन वादिविप्रति-पत्तिकचिदयोग्यताप्रयुक्तादर्शनयोर्मिलितयोरनुपलब्धेरस्तित्वकोटिसाहचर्यप्रापकतया साधारणत्वसम्पादकत्वेन संशयोपयोग उक्तः । नास्तित्वकोटिसाहचर्यस्य च स्पष्टत्वादनुपपादनम् । ननु यत्प्रत्यक्षेण नोपलभ्यते तन्नास्त्येवेति **(पां.टि.)** नियमादेव संशयनिवृत्तिः स्यादित्यत उक्तरीत्या संशयप्रापकन्यायप्राप्तसंशयस्य त्वत्समयाभ्युपेत-नियममात्रेणापह्नवेऽतिप्रसङ्ग इत्याशयेनाऽह- **न हीति ॥** अन्यथा चक्षुरेकप्रत्यक्षवादिनाऽपि केनचिदनुपलम्भाद् रसाद्यभावं वदता जीयेतेति भावः । **लोकव्यवहारेति ॥** लोके नदीतीरे पञ्चफलानि सन्तीति वाक्यश्रवणानन्तरं नदीतीरपञ्चफलसंसर्गव्यवहारः प्रत्यक्षसिद्धः । तथा चास्ति संसर्गज्ञानं तच्च शाब्दमेवेत्यवश्यं शब्दस्य प्रामाण्य-मभ्युपेयम् । एवं धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारः प्रत्यक्षसिद्धः । तथा चास्ति वह्न्यादिज्ञानम् । तच्चानुमिति-रूपमेवेत्यनुमानस्य प्रामाण्यमवश्यमभ्युपेयम् । अन्यथा उक्तरूपव्यवहार उच्छिद्येतेत्यर्थः **॥ सम्भावना-मात्रेणेति ॥** उत्कटकोटिकसंशयमात्रेणेत्यर्थः । ननु तत्र पञ्चफलानां वह्न्यादेश्च प्राप्त्यनन्तरं प्रमाणेनाहं प्रवृत्त इति व्यवहार आगमानुमानयोरप्रामाण्ये न स्यादित्यत आह- **संवादेनेति ॥**

**(व्या.टि.)** प्राचीनचार्वाकशङ्कामपाकरोति- **उच्यत इति ॥ किमेवं वदत इति ॥** एवं वदतस्तव मते आस्तिक-नास्तिकसमुदायस्य धर्मादिसन्देहस्तदभावनिश्चयो वेत्यर्थः । प्रवर्तेत आस्तिकः । निवर्तेत नास्तिकः । प्रवृत्तिं प्रतीष्टसाधनतानिश्चयस्य, तत्प्रतिद्वन्द्विनिवृत्तियत्नं प्रतीष्टसाधनताऽभावनिश्चयस्य, अनिष्टसाधनतानिश्चयस्य वा हेतुत्वाल्लोकप्रवृत्तिनिवृत्त्युपायाभावादिति भावः । यद्वा संशयवतस्तव करणेऽनिष्टशङ्कया कामोपभोगादौ प्रवृत्तिः, अकरणेऽनिष्टशङ्कया सन्ध्यावन्दनादौ निवृत्तिश्च न स्यातामिति शङ्कते- **किमिति ॥** विप्रतिपद्येरन् विवदेरन् । ननु यन्नोपलभ्यते तन्नास्तीति समयाच्छङ्कापरिहारः स्यादित्यत आह- **न हीति ॥ तथा सतीति ॥** संशयोत्तराय तत्प्रामाण्याङ्गीकार इत्यर्थः । व्यवहारान्यथानुपपत्त्याऽप्यागमप्रामाण्यं साधयति- **किञ्चेति ॥** व्यवहारो नाम शब्दजन्यसंसर्गज्ञानजन्यप्रवृत्तिः । धूमज्ञानजन्यवह्निज्ञानजन्यवह्न्यर्थिप्रवृत्तिः । तदन्यथासिद्धिं शङ्कते- **नन्विति ॥** व्यवहारः प्रवृत्तिः । 'सम्भावना उत्कटकोटिकसंशयः' इति चिन्तामणौ चार्वाकग्रन्थे रुचिदत्तो व्याख्यत् । तत्सिद्धिः प्रवृत्तिसिद्धिः **॥ संवादेनेति ॥** प्रवृत्तिसामर्थ्येनेत्यर्थः **॥ प्रामाण्याभिमान इति ॥** 'अभिमानः स्मृतिवत्' इत्यपि रुचिदत्तः **॥ किमत इति ॥** संवादिज्ञानस्यैव प्रमात्वादित्यर्थः ।

**मूलम् - नच पौरुषेयेण वाक्येन तत्सिद्धिः । अज्ञानविप्रलम्भयोः प्राप्तेः । नच तदर्थत्वेन सर्वज्ञः कल्प्येत । अन्यत्राऽदृष्टस्य सर्वज्ञत्वस्य कल्पनम्, तस्य तत्कृतत्वकल्पनं चेति कल्पनागौरवप्राप्तेः ।**

**(त.मं.)** आप्तवाक्याद् धर्मादिसिद्धिरित्यत आह - **न च पौरुषेयेति ॥** धर्मादिः कस्यचित् प्रत्यक्षः वस्तुत्वाद् घटवत् इत्यादिना सर्वज्ञः कल्प्यत इत्यत आह - **न च तदर्थत्वेनेति ॥** तदर्थत्वेन धर्मादिसिद्ध्यर्थत्वेन । विमतो धर्मदृङ् न भवति पुरुषत्वात् चैत्रवदिति सप्रतिसाधनत्वं च ।

**टीका -** नन्वस्त्वेवं धर्मादिकम् । तच्च बुद्धर्षभेश्वरकपिलादिपुरुषवचसैव सेत्स्यति । तत्किमपौरुषेय-वाक्याङ्गीकारेणेत्यत आह- **नच पौरुषेयेणेति ॥ तत्सिद्धिः** धर्मादिनिश्चयः । तत्र हेतुमाह- **अज्ञानेति ॥** विवक्षितार्थतत्त्वज्ञानाभावोऽज्ञानम् । ज्ञात्वाऽपि परप्रतारणं विप्रलम्भः । मिथ्या-ज्ञानप्रमादापटुकरणत्वानामप्युपलक्षणमेतत् । **प्राप्तेः** पुरुषेषु सम्भवात् । पुरुषाणां बहुलमज्ञान-विप्रलम्भाद्युपलम्भेन बुद्धर्षभादिष्वपि तत्सम्भावनयाऽऽश्वासानुपपत्तेर्न तद्वाक्येन धर्मादि-निश्चयस्सम्भवति ।

ननु धर्मादेरुपदेष्टा बुद्धः सर्वज्ञोऽङ्गीक्रियते । धर्मादिसाक्षात्कारवतश्च न तस्य रागद्वेषादि-दोषास्सम्भवन्ति । अज्ञानमूलत्वात् तेषाम् । यथाऽह पतञ्जलिः 'अविद्याक्षेत्रत्वमुत्तरेषाम्' इति । रागादिरहितस्य च न विप्रलम्भः सम्भवति । तस्य तत्कार्यत्वात् । नह्येवमेव कश्चित् कञ्चिद्विप्र-लब्धुमिच्छति । नचैवम्भूतस्य महानुभावस्य करणपाटवाद्यभावसम्भावनाऽ-स्ति । अतस्तस्मिन्नना-श्वासकारणाभावादुपपन्नस्तद्वाक्येन धर्मादिनिश्चय इति बौद्धाः । एवमार्हतादयोऽपि स्वस्वाचार्य-सार्वज्ञ्यमङ्गीकुर्वाणाः । तान् प्रत्याह- **नचेति ॥** पौरुषेयेण वाक्येन धर्मादिसिद्धिस्तदिति

परामृ-श्यते। सोऽर्थः प्रयोजनं यस्य सर्वज्ञकल्पनस्य तत्तथोक्तम्। तस्य भावस्तत्त्वम् । तृतीया हेतौ । सर्वज्ञकल्पनायाः पौरुषेयवाक्येन धर्मादिनिश्चयः प्रयोजनं यत इति। अर्थशब्दो निवृत्तिवचन इति केचित्। तत्राज्ञानादिप्राप्तिस्तच्छब्देन परामृश्यते । अर्थशब्दश्च आवर्तनीयः । तस्या अर्थो निवृत्तिस्तदर्थः । सोऽर्थः प्रयोजनं यस्य सर्वज्ञकल्पनस्येति । उक्तन्यायेन सर्व(ज्ञत्वे)ज्ञे कल्पिते विप्रलम्भाद्यभावस्तत एव सेत्स्यतीति पूर्वपक्षिणामभिप्रेतत्वात् सर्वज्ञ इत्येवोक्तम् ।

कुतो नेत्यत आह- **अन्यत्रेति ।।** एवं वदता तावत् कस्मिंश्चित्पुरुषे प्रमाणेन विना सर्वज्ञत्वस्य कल्पनं कार्यम्। तथाहि। न तावत्तदीये सार्वज्ञेऽस्माकं प्रत्यक्षमस्ति। अस्माकमपि तत्प्रसङ्गात्। सर्वं हि ज्ञात्वा तदीयज्ञानस्य तद्विषयत्वं प्रत्यक्षेणावगन्तव्यम्। नचास्माकं सार्वज्ञमस्ति। तथात्वे बुद्धादिकल्पनावैयर्थ्यात्। तदिदमुक्तम् **अन्यत्र** अस्मासु **अदृष्टस्य** इति । अनुभवविरुद्धं चास्माकं परचित्तवृत्तिप्रत्यक्षीकरणम् । नाप्यनुमानम् । यद्धि येन धर्मेण व्याप्तमन्यत्रोपलब्धं तत्तस्यैव गमकं भवति। नच सर्वज्ञत्वमन्यत्र दृष्टम्। येनाऽनुमानस्य व्याप्तिर्गृह्येत। एतदप्युक्तम्- **अन्यत्राद्दष्ट-स्येति ।।** आगमोऽपि न तावदपौरुषेयः परेणाङ्गीक्रियते। पौरुषेयोऽपि किं सर्वज्ञप्रणीतोऽथान्य-प्रणीतः । नान्त्योऽनाश्वासात्। आद्येऽपि किं तत्सर्वज्ञप्रणीत उत सर्वज्ञान्तरप्रणीतः। नाऽद्यः। इतरेतराश्रयप्रसङ्गात्। तस्य सार्वज्ञसिद्धौ तत्प्रणीतागमप्रामाण्यसिद्धिः । तेन च तस्य सार्वज्ञसिद्धि-रिति । अन्यथाऽस्मद्वाक्येनैवास्माकमपि तत् सिद्ध्येत्। न च तदस्ति। तदप्याह- **अन्यत्राद्दष्ट-स्येति ।। अन्यत्र** स्ववाक्येन सिद्धतयाऽदृष्टस्येत्यर्थः । न द्वितीयः । पुरुषान्तरे सार्वज्ञस्यादृष्ट-त्वात् । सर्वज्ञान्तरवाक्येन तत्कल्पनेऽनवस्थितेः । पूर्वसर्वज्ञवाक्याश्रयणे च इतरेतराश्रयणात्। इदमप्युक्तम्- **अन्यत्राद्दष्टस्येति ।।** नाप्युपमानम्। तद्धि स इवायमिति, एतत्सदृशोऽसाविति वोत्पद्यते। न चान्यत्र सार्वज्ञं प्रमितम्। येनोपमानोदयः स्यात्। एतदप्युदितम्- **अन्यत्राद्दष्ट-स्येति ।।** नाप्यर्थापत्तिः । अनुपपत्त्यभावात्। बुद्धस्य धर्मातिदेशनं महाजनपरिगृहीतत्वं वाऽनुपपद्यमानं सार्वज्ञं गमयतीति चेत् । तर्हि जिनस्यापि तत्स्यात् । नचास्त्विति वाच्यम्। विप्रतिपत्त्यभावप्रसङ्गात्। इदमप्याह- **अन्यत्राद्दष्टस्येति ।।** नाप्यभावः । तस्य भावविषयतायाः क्वाप्यदृष्टत्वात्। एतच्चोवाच- **अन्यत्राद्दष्टस्येति ।। अन्यत्रा**भावप्रमाणविषयतयाऽदृष्टस्य भावरूपस्येति।

**(र.टि.)** ननु पौरुषेयेण वाक्येन धर्मादिसिद्धिर्वा उक्तोपलक्षितानां पूर्वेषां निवृत्तिर्वा कथं सर्वज्ञ(त्व)कल्पनमात्रेण स्यादित्यत आह- **उक्तन्यायेनेति ।।**

**(रा.टि.)** प्राप्तेरित्यनुवादेन शेषमाह- **प्राप्तेः पुरुषेषु सम्भवादिति ।।** पुरुषेषु सम्भवे बुद्धादिषु किमायातमित्यत आह- **पुरुषाणामिति ।। अविद्याक्षेत्रत्वमिति ।।** अज्ञानकारणकत्वमुत्तरेषां रागद्वेषमोहनादीनामित्यर्थः। **एवमेवेति ।।** कारणेन विना तूष्णीमेवेत्यर्थः । अङ्गीकुर्वाणा आहुरिति योज्यम् । अव्यवहितपरामर्शभ्रान्तिं निराह- **पौरुषेयेणेति ।।** 'सर्वज्ञकृतवाक्याद्धर्मादिनिश्चयः स्यादिति न वाच्यम्' इति सन्न्यायरत्नावल्युक्तेरिति भावः। हेतौ तृतीया चेत् को वाक्यार्थ इत्यत आह- **सर्वज्ञकल्पनाया इति ।।** यत इत्यनन्तरमतः सर्वज्ञः कल्प्यत इति न वाच्यमिति योजना। नरहरितीर्थीययोजनामाह- **अर्थशब्द इति ।।** तत्राव्यवहितपूर्वप्रकृतपरामर्श-स्वारस्येऽप्यावृत्त्याद्यनेकदोषसत्त्वात्केचिदित्युक्तम्। ननु योजनाद्वयेऽपि सर्वज्ञादिः कल्प्यत इति वाच्यमित्यत आह- **उक्तन्यायेनेति ।।** धर्मादिसाक्षात्कारवतश्चेत्यादिनोक्तन्यायेनेत्यर्थः **।। एवं वदतेति ।।** सर्वज्ञे कल्पित इत्यादि वदतेत्यर्थः **।। तत्प्रसङ्गादिति ।।** सर्वमज्ञात्वा सर्वमयं(हं) जानाती(मी)ति प्रत्यक्षतो ज्ञातुमशक्यत्वात् तदर्थं सर्वस्यापि ज्ञातव्यत्वेन सार्वज्ञप्रसङ्गादित्यर्थः। तत्प्रसङ्गादित्युक्तमेव विवृण्वन् विपर्यये पर्यवसानमाह- **सर्वं ज्ञात्वेति ।। नापीति ।।** तदीये सार्वज्ञ इति योज्यम् **।। आगमोऽपीति ।।** पराभिमतसार्वज्ञ इति योज्यम् **।। तत्सर्वज्ञेति ।।** स चासौ सर्वज्ञश्च तत्सर्वज्ञः । विप्रतिपन्नसार्वज्ञवान् यः पुरुषः तत्प्रणीत इत्यर्थः **।। अन-वस्थितेरिति ।।** तत्रापि सार्वज्ञस्य ततोऽपि सर्वज्ञान्तरवाक्येन कल्प्यत्वादित्यादिरूपेणेति भावः **।। पूर्वेति ।। (रा.टि.)** विप्रतिपन्नसार्वज्ञवत्पुरुषवाक्येनेत्यर्थः **।। इदमप्युक्तमिति ।।** अन्योन्यवाक्यप्रमाणेनान्योन्य-सार्वज्ञस्येतरेतराश्रयतयाऽन्यत्राद्दष्टस्येति मूलवाक्यांशस्यार्थ इति भावः। परमते मानान्तरत्वादाह-

**नाप्युपमान-मिति ॥** एवमग्रेऽपि । पराभिमतपुङ्गतसार्वज्ञ इति योज्यम् । गृह्यमाणे गवये स्मर्यमाणगोसादृश्यज्ञानं वा स्मर्यमाणे गोपिण्डे गृह्यमाणगवयसादृश्यज्ञानं वा उपमानमिति मतेनाह- **तद्धीति ॥ इदमप्याहान्यत्रे-त्यादि ॥** जिनादावन्यत्रादृष्टस्येत्यर्थः **॥ नाप्यभाव इति ॥** प्राग्वदेव योज्यम् । उपलब्ध्यभाव इत्यर्थः । उपात्तांश-स्यार्थमाह- **अन्यत्राभावेत्यादि ॥**

**(श्री.टि.) ॥ अज्ञानमूलत्वात्तेषामिति ॥** रागद्वेषमोहानामज्ञानमूलकत्वादित्यर्थः । सर्वज्ञस्य चाज्ञानाभावा-दिति भावः **॥ अविद्येति ॥** उत्तरेषां रागद्वेषमोहानामविद्याक्षेत्रत्वमविद्याऽज्ञानं क्षेत्रं मूलं येषां ते तथोक्तास्तेषां भावस्तत्त्वमित्यर्थः **॥ तस्येति ॥** विप्रलम्भस्य रागादिकार्यत्वादित्यर्थः । तत्कुत इत्यत आह- **न हीति ॥ एवमेवेति ॥** रागादिकं विनैवेत्यर्थः **॥ एवम्भूतस्येति ॥** सर्वज्ञत्वेन रागादिदोषरहितस्येत्यर्थः । आश्वासो विश्वासः । अङ्गीकुर्वाणा इत्यनन्तरं तद्वाक्येनोपपन्नो धर्मादिनिश्चय इत्याहुरिति वाक्यशेषः । तदेव दर्शयति- **सर्वज्ञकल्पनाया इति ॥** नरहरितीर्थानां व्याख्यानमनुवदति- **अर्थशब्द इति ॥ निवृत्तिवचन इति ॥** 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति वचनादिति भावः **॥ आवर्तनीय इति ॥** तथा च तदर्थार्थत्वेनेति वाक्यवृत्तिः । आवर्तितश्चार्थशब्दः प्रयोजनवाचीति ज्ञातव्यम् । अज्ञानादिप्राप्तिनिवृत्तिप्रयोजनकत्वेनेति तदर्थ इत्यभिप्रेत्याऽह- **तस्या अर्थ इत्यादिना ॥** ननु भवद्व्याख्याने पौरुषेयवाक्येन धर्मादिसिद्धिर्वा केषाञ्चिद्व्या-ख्यानेऽज्ञानादिप्राप्तिनिवृत्तिर्वा कथं सर्वज्ञकल्पनामात्रेण स्यात् । अतस्सर्वज्ञो रागादिदोषरहितोऽविप्रलम्भकश्च कल्प्यत इति वक्तव्यम् । न तु सर्वज्ञ इत्येवेत्यत आह- **उक्तन्यायेनेति ॥** आदिपदेन रागादिग्रहणम् । **सर्वज्ञे कल्पिते** सति । **तत एव** सर्वज्ञत्वादेव । धर्मादिसाक्षात्कारवत इत्यादिनोक्तन्यायेन रागाद्यभावसिद्धौ तत एव विप्रलम्भाद्यभावः सेत्स्यतीति योज्यम् **॥ तत्प्रसङ्गादिति ॥** सार्वज्ञ्यप्रसङ्गादित्यर्थः । कथमित्यतस्तदुपपादयति- **सर्वं हीति ॥** ज्ञातव्यमस्माभिः **॥ वैयर्थ्यादिति ॥** अस्मदादीनामेव सर्वज्ञत्वेनास्मदादिवाक्येनैव धर्मादि-सिद्धिसम्भवादिति भावः **॥ यद्धीति ॥** अनुमानं हीत्यर्थः **॥ तत्सर्वज्ञेति ॥** यत्सर्वज्ञवाक्येन धर्मादिसिद्धि-रभ्युपेयते तत्सर्वज्ञेत्यर्थः **॥ तेन चेति ॥** प्रमाणभूततत्प्रणीतागमेनेत्यर्थः । ननु पुरुषान्तरस्य सार्वज्ञं सर्वज्ञान्तर-वाक्येन न कल्प्यते येनानवस्था स्यात्, अपि तु पूर्वसर्वज्ञवाक्येनेत्यत आह- **पूर्वेति ॥** शाबरोपमानाभिप्राये-णैतत्सदृशोऽसावित्युक्तम् । **देशनम्**(ना) उपदेशः । अनुपपद्यमानं सार्वज्ञं विनेति शेषः **॥ जिनस्यापीति ॥** अनयैवार्थापत्त्या जिनस्यापि सार्वज्ञं स्यादित्यर्थः **॥ विप्रतिपत्तीति ॥** बुद्धजिनयोरुभयोरपि सर्वज्ञत्वेन तत्प्रणीत-शास्त्रयोर्विवादाभावप्रसङ्गात् । न च विवादो नास्त्येवेति वाच्यम् । जिनैर्विश्वस्य सप्तभङ्गित्वाङ्गीकारात् । वैभाषि-कादिभिश्चतुर्भिरपि तदनङ्गीकारादित्यर्थः । **अभावो**ऽनुपलब्धिः **॥ भावविषयताया इति ॥** अनुपलब्धे-रभावविषयकप्रमाजनकत्वेन भावविषयकप्रमाजनकत्वस्य कुत्राप्यदृष्टत्वान्न सार्वज्ञरूपभावधर्मप्रमापकत्व-मित्यर्थः **॥ अभावप्रमाणेति ॥** अभावविषयकप्रमाजनकानुपलब्धिरूपप्रमाणविषयतयेत्यर्थः ।

**(पां.टि.)** ननु यद्यङ्गीकृतं धर्मादिकं तर्हि तत्साधकतयाऽपौरुषेयं वाक्यमङ्गीकर्तव्यमेवेत्यत आह- **तच्चेति ॥** ननु रागद्वेषादिदोषाणामज्ञानमूलकत्वमेव कुत इत्यत आप्तोक्त्या द्रढयति- **यथाहेति ॥** पतञ्जली रागादीना-मज्ञानमूलकत्वमाहेत्यर्थः । कुत एतदवगम्यत इत्यतस्तत्सूत्रादेवेत्यभिप्रेत्य प्रकृतोपयोगित्वात्तदेकदेशमेवोदा-हरति- **अविद्यक्षेत्रत्वमुत्तरेषामितीति ॥** 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः' इत्यभिधायाभिहितम्[1] 'अविद्या क्षेत्रमुत्तरेषाम्' इति । उत्तरेषाम्- अस्मितादीनाम्, अविद्या- क्षेत्रं प्रसवभूमिरित्यर्थः । विप्रलम्भस्य रागादिकार्यत्वमेव कुत इत्यतस्तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादित्याह- **न हीति ॥** ननु सर्वज्ञत्व-स्यैवाऽविप्रलम्भकत्वादेरपि पौरुषेयेण वाक्येन धर्मादिसिद्ध्यर्थतया पूर्वपक्षिणा कल्पितत्वात् 'न च तदर्थत्वेन सर्वज्ञत्वादिकं कल्प्येत' इति वक्तव्यम् । 'न च तदर्थत्वेन सर्वज्ञः कल्प्येत' इत्युक्तिस्तु कथमित्यत आह- **सर्वज्ञत्वे कल्पित इति ॥** सर्वज्ञत्वकल्पनामात्रेण कथं विप्रलम्भाद्यभावसिद्धिरित्यत उक्तम्- **उक्तन्याये-नेति ॥** 'सर्वज्ञत्वेन धर्मादिसाक्षात्कारवतो बुद्धस्य न रागद्वेषादिदोषाः सम्भवन्ति' इत्याद्युक्तन्यायेनेत्यर्थः । ननु सर्वज्ञत्वादेः कुतः कल्प्यत्वमित्यतः प्रमाणाभावादित्याह- **प्रमाणेन विनेति ॥** इष्टापत्तिं परिहरति- **न चास्माकमिति ॥** तथाऽनुभवविरुद्धत्वादिति भावः । अभ्युपेत्याप्याह- **तथात्वे वेति ॥** अस्मद्वाक्येनैव तत्सिद्धि-सम्भवादिति भावः। इतरेतराश्रयप्रसङ्गमेवोपदर्शयति । **तस्य सर्वज्ञत्वसिद्धाविति ॥** सत्यप्यन्योन्याश्रये तद्वाक्ये-नैव तस्य सर्वज्ञत्वसिद्ध्यङ्गीकारेऽतिप्रसङ्गमाह- **अन्यथेति ॥** अस्त्वस्मद्वाक्येनाप्यस्माकं सर्वज्ञत्वसिद्धिरित्यत आह- **न चेति ॥** तथात्वे बुद्धादिवाक्यपर्यन्तधावनानर्थक्यादिति भावः । सर्वज्ञान्तरप्रणीतेति द्वितीयेऽपि पुरुषान्तरसर्वज्ञत्वे किं प्रत्यक्षं प्रमाणमनुमानमागमो वेति विकल्पान्मनसि निधायाऽद्यपक्षद्वयं दूषयति- **पुरु-षान्तरे सर्वज्ञत्वस्येति ॥** पूर्वोक्त एव निरासप्रकारः । पुरुषान्तरस्य सर्वज्ञत्वे आगमः प्रमाणमिति तृतीयेऽपि न तावदपौरुषेय आगमस्तत्र मानम् । तस्यानङ्गीकारात् । न पौरुषेयोऽपि सर्वज्ञप्रणीतः । अनाश्वासात् । सर्वज्ञ-प्रणीतत्वेऽपि किं तत्सर्वज्ञप्रणीतः सर्वज्ञान्तरप्रणीतो वा पूर्वसर्वज्ञप्रणीतो वा । नाऽद्यः । उक्तरीत्या इतरेतराश्रय-प्रसङ्गादिति भावेन द्वितीयपक्षे

दूषणमाह- **सर्वज्ञान्तरेति** ।। तृतीयं दूषयति- **पूर्वसर्वज्ञेति** ।। करणोपमान-माश्रित्याऽह- **स इवायमितीति** ।। फलोपमानमाश्रित्याऽह- **एतत्सदृशोऽसाविति वेति** ।। **विप्रतिप-त्तीति** ।। तथा सति बुद्धोक्तमण्डलीकरणादेरिव जिनोक्तकेशोल्लुण्ठनादेरपि धर्मत्वापत्त्या मण्डलीकरणादि-कमेव धर्मो न केशोल्लुण्ठनादिकमिति विप्रतिपत्त्यभावप्रसङ्गादित्यर्थः ।। **क्वाप्यदृष्टत्वादिति** ।। अभावग्राहक-प्रमाणस्यैवाभावप्रमाणत्वादिति भावः ।

**(व्या.टि.)** अङ्गीकृत्यापि धर्माधर्मादिकं तत्सिद्धेरन्यथासिद्धिं शङ्कते- **नन्विति** ।। एतद् दोषद्वयग्रहणम् । प्राप्तेरित्यनुवादेन सम्भवादिति व्याख्यानम् । तत्प्रकारं दर्शयति- **पुरुषाणामिति** ।। दोषसाहचर्येण उपलब्ध-पुरुषत्वस्यात्र दृष्ट्या दोषसम्भावनेत्यर्थः ।। **आश्वासेति** ।। आप्तिनिश्चयानुपपत्तेरित्यर्थः । अज्ञानमूलत्वादिति **(व्या.टि.)** बहुव्रीहिः । **एवमेव** रागादीन् विना ।। **सम्भावनेति** ।। व्याघातेन शङ्काऽनुदयादित्यर्थः । स्वस्वेति वीप्सा सर्वोपसंहारार्था ।। **अङ्गीकुर्वाणा इति** ।। तद्वचसा धर्मादिसिद्धिमभ्युपयन्तीति शेषः ।। **प्रयोजनं यस्येति** ।। अत्र अन्यपदार्थः प्रकृतवाक्यार्थ एवेत्याह- **सर्वज्ञकल्पनस्येति** ।। **हेताविति** ।। फलमपीह हेतुः । प्रयोजकत्वादित्यर्थः । तत्प्रकारं दर्शयति- **सर्वज्ञकल्पनाया इति** ।। **निवृत्तिवचन इति** ।। 'अर्थोऽभिधेय' इत्यभिधानादिति भावः । निवृत्तिरिह न ध्वंसः किन्त्वनुत्पाद इति यावत् ।। **तस्या इति** ।। प्राप्तेरित्यर्थः । तस्यार्थ इति पाठे तु यस्य अज्ञानादेः प्राप्तिर्दोषतयोक्ता तदज्ञानादि तच्छब्देन परामृश्यते । अथ वा प्रापणस्येत्यध्या-हारेण तस्येति परामर्शो योजनीयः । अत एवेशावास्यभाष्ये 'रक्षोभिरुग्रैः सम्प्राप्तः' इति प्रकृत्य 'तान् हत्वाऽवध्यतां गतान्' इति परामर्शोपपत्तये तट्टीकायां 'राक्षसान्' इत्यध्याहार इत्युक्तम् । तथेहापीत्यदोषः । अस्वरसबीजं तु प्राप्तं हि निषिध्यते न प्राप्तिः । अत एव वक्ष्यति 'अभावः स्वत एव सेत्स्यति' इति । ननु कल्पनत्रयस्योत्तर-मूलेऽभिधानादिह सर्वज्ञमात्रकल्पनानुवादोऽयुक्त इत्याशङ्क्य वास्तवाभिप्रायेणोत्तरं मूलम् । इदं तु परभ्रान्त्यनु-वाद इत्याशयेन व्याचष्टे- **उक्तन्यायेनेति** ।। कथं सर्वज्ञकल्पनमात्रेणोत्तरदोषशङ्कानुत्पाद इत्यत आह- **स्वत एवेति** ।। **विप्रलम्भादीति** ।। तत्पुरुषस्तद्गुणसंविज्ञानो बहुव्रीहिश्च । तेन स्वपूर्वोत्तरेषां दोषाणां ग्रहणम् । तेन तत्सम्भावना लक्ष्यते । अस्या **अभावो**ऽनुत्पादः । **स्वत एव** व्याघातादेव शङ्कानुत्थानात् सेत्स्यति । न तूत्पन्नध्वंसकापेक्षयेत्यर्थः । प्रसङ्गाऽसङ्गति(प्रसङ्ग)माशङ्क्योपपादयति- **सर्वं हीति** ।। सर्वाज्ञाने तदुपहितसार्वज्ञ-ज्ञानायोगः । (सर्वज्ञानिज्ञानायोगः) उपाधेरज्ञाने तदुपहितज्ञानासम्भवात् । घटितपदार्थज्ञाने घटकपदार्थज्ञानस्य हेतुत्वादित्यर्थः ।। **वैयर्थ्यादिति** ।। अस्मद्वाक्यादेव धर्मादिसिद्धेरित्यर्थः ।। **अन्यत्रेति** ।। विवक्षितादिति शेषः । तात्पर्यमाह- **अस्मास्विति** ।। परकीयसार्वज्ञस्य परप्रत्यक्षासिद्धिमुक्त्वा प्रत्यक्षेण तद्विषयीकरणस्य प्रत्यक्षविरुद्धत्वं चाऽह- **अनुभवविरुद्धं चेति** ।। परचित्तवृत्तिं न जानामीत्यनुभवविरुद्धं चेत्यर्थः । परकीयसार्वज्ञं नास्मत्प्रत्यक्षगोचरः । अयोग्यत्वात् । यद्यदयोग्यं तत्तदगोचरः, यथा सम्मतम् इत्यनुभवसिद्धव्याप्तिकानुमान-विरुद्धं चेति वा । एतदपि परचित्तवृत्तीत्यनेन सूचितम् ।। **अन्यत्रेति** ।। पक्षादिति शेषः ।। **अन्यथेति** ।। आगमप्रामाण्यासिद्धावपि तदुदितसार्वज्ञसिद्धौ इत्यर्थः ।। **इति वेति** ।।

'दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टे तु वस्तुनि ।
एतत्सदृशताज्ञानमुपमानं प्रकीर्तितम् ।।'

इत्युक्तेः ।। **अनुपपत्तीति** ।। प्रमितस्येति शेषः । **धर्मातिदेशनं** धर्मोपदेशः । तदबोधे तदुपदेशायोगादिति भावः ।। **अन्यत्रेति** ।। जिनादावित्यर्थः ।। **तस्येति** ।। अभावप्रमाणस्येत्यर्थः ।। **भावरूपस्येति** ।। विधिरूपस्येत्यर्थः ।

अत्र शङ्क्यते । 'तस्य भावविषयतायाः क्वाप्यदृष्टत्वात्' इत्यनेन अभावप्रमाणजन्यज्ञानविषयता भावे क्वापि नास्तीत्युक्तम् । तत्र भावे कीदृशी विषयता नास्तीति तात्पर्यं? विशेष्यतारूपा वा प्रकारतारूपा वा सांसर्गिकरूपा **(व्या.टि.)** वा । आद्येऽपि किञ्चिन्निरूपिता वा अभावनिरूपिता वा । नाऽद्यः । 'घटाभाववद्भूतलम्' इत्यत्र घटत्वनिरूपितविशेष्यताया घटे सत्त्वात् । न द्वितीयः । भूतले सत्त्वात् । द्वितीयेऽपि किञ्चिन्निरूपिता वा अभावनिरूपिता वा । नाऽद्यः । भूतलत्वघटत्वादौ सत्त्वात् । न द्वितीयः । घटे सत्त्वात् । अभावत्वादौ धर्मे सत्त्वाच्च । न चाभावो निर्धर्मक इति वाच्यम् । सप्रतियोगिकत्वास्तित्वाभावत्वादीनामनेकेषां धर्माणामनुभव-सिद्धत्वात् । 'न ह्यभावोऽप्यधर्मात्' इति तैत्तिरीयभाष्यविरोधाच्च । न च सधर्मोऽपि न भावधर्मेति न दोषः । 'न तु स्याद्भावधर्मयुक्' इति तैत्तिरीयभाष्ये,

'प्रतियोगितात्वभावस्याप्यस्त्यभावतया स्फुटम् ।
अभावस्यास्तिता नाम स्यादेवाभावरूपिणी ।।'

अभावता तु सैव स्यान्न तु स्याद्भावरूपिणी' इति मानान्तरे तद्धर्माणामभावत्वस्योक्तेरिति वाच्यम् । विधिरूपतयोक्तधर्माणां

भावत्वानुभवात्।

'अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिणः।
तादृक्त्वमात्रतेहोक्ता'

इत्यनुव्याख्यानोक्तेश्च। उक्तवचनानां च भावस्य भिन्नाभावधर्मकत्ववदभावस्य भिन्नभावधर्मकत्वं नास्तीत्यभिप्रायकत्वेनाविरोधित्वात्। तृतीयेऽपि संसर्गपदेन तादात्म्येतरस्य वा विवक्षा, तादात्म्यस्य वा। उभयत्रापि किञ्चिद्विषयतानिरूपिता वा, अभावविषयतानिरूपिता वा। नाऽद्यः। 'दण्डी देवदत्तः कुण्डलाभाववान्' इत्यत्र दण्डसंयोगे दण्डतादात्म्ये च सत्त्वात्। न द्वितीयः। प्रमेयघटाभाववद्भूतलमित्यत्र भूतलाभावविशेषण-विशेष्यभावे, प्रमेयाभावयोस्तादात्म्ये, घटो न पट इत्यत्र धर्मिभेदयोस्तादात्म्ये च सत्त्वात्। सार्वज्ञस्यासंसर्ग-रूपत्वेन तृतीयपक्षासङ्गतेश्च।

अत्रेदं समाधीयते। अनुपलब्धेः पृथक् प्रमाणत्वमालम्ब्यैव पृथङ् निरस्तत्वेन तन्मतेऽभावस्यैव मानान्तरा-गृहीतस्य अनुपलब्धिविषयत्वेनेतरस्याविषयत्वेन, विषयत्वेऽपि ज्ञानप्रत्यासत्त्या विषयत्वेन, अनुपलब्ध्या प्रत्येमि इत्यनुव्यवसायसिद्धविषयताविशेषस्य अनुमिनोमीत्यनुव्यवसायसिद्धविषयताविशेषस्य परामृश्यमानलिङ्ग-व्यापकगतत्ववदभावमात्रगतत्वात्। न हि धूमानुमानस्य पर्वतादौ मानत्वम्। सिद्धान्ते त्वनुपलब्धेः क्वचित् प्रत्यक्षसहकारित्वम्। क्वचिल्लिङ्गत्वम्। तत्र सहकारित्वमभावांश एव। लिङ्गत्वं प्रतियोग्यभाव इव तद्व्यापके भावेऽपि सम्भवति। अभावत्वानुपलब्ध्या भावत्वानुमानसम्भवात्। तथा च न प्रकृते काऽप्यनुपपत्तिरिति स्थितम्।

**टीका -** आर्हतास्त्वाहुः। कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीण-प्रतिबन्धकत्वात्। यदेवं तदेवं यथाऽपगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारीति। तदसत्। सकलपदार्थसाक्षात्कारित्वस्यान्यत्राद्दृष्टत्वेनाप्रसिद्धविशेषणत्वात्। तद्ग्रहणस्वभावत्वं च किं विवक्षितस्यैवाऽत्मनोऽङ्गीक्रियते सर्वेषां वा। नाऽद्यः। अन्यत्राद्दृष्टत्वेन आत्मत्वात्तत्रापि तदभावसाधनसौलभ्यात्। न द्वितीयः। अस्मदादौ तत्स्वभावत्वस्य प्रमाणाद्दृष्टत्वात्। व्याप्तिज्ञानं सर्वविषयं सर्वात्मनां स्वभावो दृश्यत इति चेन्न। परोक्षसामान्यज्ञानस्वभावत्वेनाऽपरोक्ष-विशेषज्ञानसाधनस्याऽतिप्रसङ्गित्वात्, अन्यत्र रूपसाक्षात्कारस्वभावेऽपि लोचनविज्ञाने रस-साक्षात्कारित्वस्याऽदृष्टत्वात्, तत्स्वभावत्वस्याऽसिद्धत्वादेव प्रतिबन्धककल्पनानुपपत्तेस्तत्प्रक्षय-स्याप्यनुपपत्तिरेव। नहि तेजसोऽन्यत्र दाहप्रतिबन्धकत्वं दृष्टम्।

किञ्च अन्यत्राद्दृष्टस्याऽऽवरणप्रक्षयस्य विवक्षितेऽप्यात्मनि कुतस्सिद्धिः। आवरणत्वादेवेति चेन्न। कस्यचित्तिमिरादेर्यावदाव्रियमाणभावित्वात्। कमनीयकान्तास्पर्शादावपि रागाद्यनुदयात् प्रक्षीणप्रतिबन्धकत्वसिद्धिरिति चेन्न। रागाद्यभावस्याप्यन्यत्राऽदृष्टस्य कल्पकाभावात्। बाह्यविक्रियाऽभावेन तदभावानुमानमिति चेन्न। जगद्वशीकरणार्थं धैर्येण स्थगनसम्भवात्। अन्यत्र दृष्टान्ते च सकलपदार्थसाक्षात्कारित्वं तत्स्वभावत्वं चाद्दृष्टमेव। यद् यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धकं तत्तत्साक्षात्कारीति व्याप्तिरिति चेन्न। तथाऽपि विज्ञानस्य साक्षात्कारत्वेन साक्षात्कारित्वाभावात्। किञ्च सकलपदार्थसाक्षात्कारित्वस्य अन्यत्राद्दृष्टस्यात्रापि आत्म-त्वादेवाभावः किं न साध्यत इति।

**(र.टि.)** ॥ **तद्ग्रहणस्वभावत्वं चेति** ॥ इतः परं यथोचितविशेष्ययोगेन 'अन्यत्राद्दृष्टस्य' इत्येतावत एव व्याख्यानानीति द्रष्टव्यम्।

**(रा.टि.)** कश्चिदात्मेति पक्षः। सकलेत्यादि साध्यम्। तदित्यादिर्हेतुः। सकलपदार्थपरामर्शस्तच्छब्दः। प्रतिबन्धकवत्यव्यभिचाराय विशेष्यम्। तादृशे उक्तस्वभावहीनेऽव्यभिचाराय सत्यन्तम्। सामान्यव्याप्तिमुपे-त्याऽह- **यदेवमिति** ॥ **आत्मत्वादिति** ॥ आत्मत्वहेतुना आत्मान्तरदृष्टान्तेन। **तत्रापि** विमतात्मनीत्यर्थः। प्रमाणाद्दृष्टत्वहेतुरसिद्ध इति शङ्कते- **व्याप्तिज्ञानमिति** ॥ शब्दोऽभिधेयः प्रमेयत्वात् यदेवमित्यादिरूपं सर्वविषयं व्याप्तिज्ञानं सर्वात्मनां स्वभावो दृश्यत इत्यर्थः ॥ **अतिप्रसङ्गित्वादिति** ॥ कुड्यादिव्यवहितघटादिपरोक्ष-सामान्यज्ञानेन तत्साक्षात्कारसाधनप्रसङ्गादित्यर्थः। अन्यत्राद्दृष्टस्येत्यादिवाक्यमार्हतानुमानस्य

प्रतिज्ञाभाग-निरासपरतया व्याख्याय हेतुभागनिरसनपरतया व्याचष्टे- **अन्यत्र रूपसाक्षात्कारस्वभावेऽपीति** ॥ बहुव्रीहि-रयम् ॥ **अदृष्टत्वादिति** ॥ तथा च सकलपदार्थग्रहणस्वभावत्वमसिद्धमिति योज्यम् । विशेषणासिद्ध्यैव **(रा.टि.)** विशेष्यमप्यसिद्धमित्याह- **तत्स्वभावत्वस्येति** ॥ तत्स्वभावत्वासिद्धौ तत्प्रतिबन्धककल्पना कुतो न युक्तेत्यत आह- **न हीति** ॥ दाहकत्वस्वभावस्य तेजसो**ऽन्यत्र** जलादौ, तत्स्वभावहीन इत्यर्थः ॥ **कस्य-चिदिति** ॥ तत्राऽवरणत्वहेतुरनैकान्तिक इति भावः । सर्वज्ञत्वस्येत्युपलक्षणमित्युपेत्याऽह- **रागाद्यभाव-स्येति** ॥ **बाह्यविक्रियेति** ॥ धातुविसर्गादिरूपेत्यर्थः । दृष्टान्तमपि साध्यसाधनहीनतया निराह- **अन्यत्रेति** ॥ सामान्यव्याप्तिपक्षे नायं दोष इत्याशङ्कते- **यद्ग्रहणेति** ॥ प्रतिपक्षं चाऽह- **किञ्च सकलेति** ॥ **अत्रापीति** ॥ आर्हताचार्यत्वेनाभिमतात्मनीत्यर्थः । इतिशब्द आर्हतनिराससमाप्तौ ।

**(श्री.टि.)** ॥ **तद्ग्रहणस्वभावत्वे सतीति** ॥ सकलपदार्थग्रहणस्वभावत्वे सतीत्यर्थः । एतावता प्रबन्धेन 'अन्यत्रादृष्टस्य सर्वज्ञत्वस्य कल्पनम्' इत्येतावद्वाक्यमनेकप्रकारेण व्याख्यायातः परं तद्ग्रहणस्वभावत्वं चेत्यादिना 'अन्यत्रादृष्टस्य कल्पनम्' इत्येतावत एवांशस्य यथोचितविशेष्याध्याहारेण व्याख्यानानि क्रियन्त इत्यवगन्त-व्यम् । विशेषणासिद्धिं वक्तुमाह- **तद्ग्रहणस्वभावत्वं चेति** ॥ **विवक्षितस्येति** ॥ पक्षीभूतस्य कस्यचिदेवेत्यर्थः। **सर्वेषां वेति** ॥ पक्षत्वेन सर्वेऽपि विवक्षिता एवेत्यर्थः ॥ **अन्यत्रेति** ॥ तथा चान्यत्रादृष्टस्येत्यनन्तरं तत्स्वभावत्व-स्येति शेष इत्युक्तं भवति ॥ **आत्मत्वादिति** ॥ कश्चिदात्मा न सकलपदार्थसाक्षात्कारस्वभाववान् भवति आत्मत्वात्। अस्मदादिवदित्यनुमानेनेत्यर्थः ॥ **अस्मदादाविति** ॥ तथा च विशेषणस्य भागासिद्धिरिति भावः ॥ **तत्स्वभावत्वस्येति** ॥ सकलपदार्थग्रहणस्वभावत्वस्येत्यर्थः । भागासिद्धिपरिहारं शङ्कते- **व्याप्ति-ज्ञानमिति** ॥ यत्प्रमेयं तदभिधेयमिति व्याप्तिजन्यं ज्ञानमित्यर्थः ॥ **परोक्षेति** ॥ परोक्षं यत्सामान्यज्ञानं व्याप्ति-ज्ञानं तत्स्वभावत्वेनेत्यर्थः ॥ **अपरोक्षेति** ॥ अपरोक्षं यद्विशेषज्ञानं सकलपदार्थसाक्षात्कारित्वं तत्साधनस्येत्यर्थः। **अतिप्रसङ्गित्वादिति** ॥ अन्यस्वभावेनान्यस्वभावसाधने चक्षुषो रूपग्रहणस्वभावत्वेन गन्धादिग्रहणस्वभाव-स्यापि साधनापात इति भावः ।

ननु यत्प्रमेयं तदभिधेयमिति सर्वविषयकव्याप्तिज्ञानस्यास्मन्मते साक्षिरूपत्वेनापरोक्षत्वस्य 'सर्वं सामान्यतो यस्मात् साक्षिणैवानुभूयते' इत्युक्तत्वेन कथं परोक्षत्वमुच्यत इति चेत् । सत्यम् । पररीत्येदमुक्तमित्यदोषः । परोक्षेत्यस्य लौकिकप्रत्यासत्त्यजन्येत्यर्थः । साक्षिणस्त्वलौकिकत्वादेवमुक्तमित्यप्याहुः ।

विशेषणासिद्ध्युपजीवनेन प्राप्तां विशेष्यासिद्धिमप्याह- **अन्यत्र रूपसाक्षात्कारस्वभावेऽपीत्यादिना** ॥ रससाक्षात्कारित्वस्य अतत्स्वभावत्वस्येत्यर्थः । आदौ तत्स्वभावत्वस्यासिद्धत्वादित्यादि योज्यम् । तद्ग्रहण-स्वभावत्वरूपविशेषणस्य पक्षेऽसिद्धत्वादेवेत्यर्थः । तदुपपादनायोक्तं मूलेऽन्यत्रादृष्टस्येति । तस्यार्थमाह- **अन्यत्र रूपेत्यादि** ॥ तथा च सकलपदार्थग्रहणस्वभावत्वस्यान्यत्र कुत्राप्यदृष्टत्वात् पक्षेऽपि तद्ग्रहणस्वभावत्व-मसिद्धमित्यर्थः ॥ **प्रतिबन्धकेति** ॥ अयं भावः । सति पुष्कलकारणे यस्मिन् सति यन्न भवति तत्तत्र प्रतिबन्धकं, प्रकृते च पुष्कलकारणमेव नास्ति। पदार्थग्रहणस्वभावरूपयोग्यताया अपि कारणमध्ये प्रविष्टत्वात् तस्याश्चोक्त-**(श्री.टि.)** रीत्याऽभावादेव प्रतिबन्धककल्पनाया अनुपपत्तेस्तत्प्रक्षयस्याप्यनुपपत्तिरेव । सत एव हि प्रध्वंसो वाच्यः । तथा च विशेष्यासिद्धिरिति । ननु पुष्कलकारणमध्ये कुतस्तत्स्वभावरूपयोग्यतायाः प्रवेशः । तथा च तत्स्वभावस्यासिद्धत्वेऽपि प्रतिबन्धकं कुतो न कल्पनीयम् । येन तत्प्रक्षयस्याप्यनुपपत्तिस्स्यादित्यत आह- **न हीति** ॥ **अन्यत्र** जलादौ। यथा जलादीनां कुतो न दाह इति पृष्टे मण्यादिप्रतिबन्धकसद्भावादिति केनचिदुक्ते दाहजनकत्वयोग्यताया एव तत्राभावेन प्रतिबन्धककल्पना न युज्यते, योग्यताया अपि पुष्कलकारणमध्ये प्रवेशादिति परीक्षकैस्समाधीयते तद्वदित्यर्थः ।

विशेष्यासिद्धिं प्रकारान्तरेणोपपादयति- **किञ्चेति** ॥ **आवरणेति** ॥ प्रतिबन्धकेत्यर्थः । एवमुत्तरत्रापि । **आवरणत्वादेवेति** ॥ विवक्षितात्मसम्बन्ध्यावरणं प्रक्षीयते। आवरणत्वात्। यदावरणं तत्प्रक्षीयते इति व्याप्तेरित्यर्थः ॥ **कस्यचिदिति** ॥ गिरिदरीविवरवर्तिन इत्यर्थः । तिमिरादेः प्रतिबन्धकस्य । तथा च तत्र व्यभिचार इति भावः । ननु विवक्षित आत्मा प्रक्षीणप्रतिबन्धको भवितुमर्हति । कमनीयकान्तास्पर्शादौ सत्यप्यनुत्पन्नरागादिमत्त्वादित्यनुमीयत इत्याशङ्कते- **कमनीयेति** ॥ **रागाद्यभावस्येति** ॥ कमनीयकान्ता-स्पर्शादावपीत्यनुवर्तते ॥ **कल्पकाभावादिति** ॥ तथा चासिद्धिरिति भावः । ननु नासिद्धिः । विवक्षित आत्मा कमनीयकान्तास्पर्शादावपि रागाद्यभाववान् बाह्यविक्रियाशून्यत्वादित्यनुमानेन तत्सिद्धिसम्भवादित्याशङ्कते- **बाह्येति** ॥ **धैर्येणेति** ॥ उत्पन्नस्यापि रागादेर्धैर्येण धारकप्रयत्नेन स्थगनसम्भवात्। स्थगनं स्तम्भनम्, अप्रकटीकरणमिति यावत्, तत्सम्भवादित्यर्थः । किमर्थमित्यत उक्तम्- **जगदिति** ॥ तथा च बाह्यविक्रिया-शून्यत्वमुक्तसाध्यं विना धैर्यप्रयुक्तस्थगनेनान्यथासिद्धमिति न

रागाद्यभावसाधकमिति भावः । कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धकत्वादित्यनुमाने विशेषव्याप्तिविवक्षायां दृष्टान्ते लोचनविज्ञाने साध्यवैकल्यं साधनवैकल्यं चेत्याह- **अन्यत्र दृष्टान्त इति ॥** नन्वथापि सामान्यव्याप्तौ लोचनविज्ञानं दृष्टान्तो भविष्यतीत्याशङ्कते- **यद्यद्ग्रहणेति ॥** तथाऽपि साध्यवैकल्यमेवेत्याह- **तथाऽपीति ॥** ननु लोचनविज्ञानशब्देन विज्ञायतेऽनेनेति व्युत्पत्त्या लोचनरूपं ज्ञानकारणमेव विवक्षितम् । अतस्तस्य साक्षात्कारित्वं युक्तमिति न साध्यवैकल्यमित्यस्वरसादाह- **किञ्चेति ॥** तथा च कश्चिदात्मा सकलपदार्थ-साक्षात्कारी न भवति आत्मत्वादस्मदादिवदिति सत्प्रतिपक्षत्वमिति भावः ।

**(पां.टि.)** नन्वार्हतोक्तानुमानेनैव तत्सार्वज्ञसिद्धेर्न तस्याप्रामाणिकत्वमित्याशयेन शङ्कते- **आर्हतास्त्वि-ति ॥** एतदनुमाननिरासकतयाऽपि 'अन्यत्रादृष्टस्य सर्वज्ञत्वस्य' इति वाक्यमेव योजयति- **तदसदिति ॥** ननु व्याप्तौ सत्यां न तद्दूषणमित्यत आह- **तद्ग्रहणस्वभावत्वं चेति ॥ सर्वेषामिति ॥** सर्वेषामिति द्वितीयेऽपि सर्वग्रहणस्वभावत्वं किं विशेषतः, किं वा सामान्यत इति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **अस्मदादा-विति ॥** द्वितीयमाशङ्कते- **व्याप्तिज्ञानमिति ॥** यत्प्रमेयं तदभिधेयमिति व्याप्तिज्ञानं सर्वपदार्थविषयकं सर्वात्मनां स्वभावो दृश्यत इत्यर्थः **॥ परोक्षेति ॥** यद्यप्यत्र सर्वसामान्यग्रहणस्वभावत्वेन तद्विशेषसाधनस्यातिप्रसङ्गत्वा-**(पां.टि.)** दित्येव वक्तुमुचितम् । तथाऽपि सर्वपरोक्षग्रहणस्वभावत्वेन तदपरोक्षज्ञानसाधनस्येवेति दृष्टान्ततया परोक्षेत्यादेरुपादानमिति द्रष्टव्यम् । अतिप्रसङ्गमेवोपपादयति- **अन्यत्रेति ॥** अस्यैव विवरणं 'रूपसाक्षात्कार-स्वभावेऽपि लोचनविज्ञान' इति । विशेषणासिद्धिमुक्त्वा तदुपजीवनेन विशेष्यासिद्धिमप्याह- **तत्स्वभावत्व-स्यासिद्धत्वादेवेति ॥** ननु तद्ग्रहणस्वभावत्वासिद्धावपि प्रतिबन्धककल्पना कुतो न युक्तेत्यत आह- **न हीति ॥** अन्यथा तेजोरूपे वह्न्यादाविव तदन्यस्मिन् घटादावपि दाहप्रतिबन्धककल्पना स्यादिति भावः । **कस्यचिदिति ॥** तथा चावरणत्वहेतोस्तत्रैव व्यभिचारादिति भावः ॥ **रागाद्यभावस्यापीति ॥** तथा चासिद्धि-रिति भावः **॥ स्थगनसम्भवादिति ॥** तथा चाप्रयोजकत्वमिति भावः । किञ्चात्र विशेष्यव्याप्तिः, उत सामान्य-व्याप्तिरिति विकल्प्य आद्ये दृष्टान्ते साध्यसाधनवैकल्यमित्याह- **अन्यत्रेति ॥** द्वितीयं शङ्कते- **यद्यदिति ॥** तावता साधनवैकल्यपरिहारेऽपि साध्यवैकल्यमपरिहार्यमेवेत्याशयेनाऽह- **तथाऽपीति ॥** उक्तानुमाने सत्प्रतिपक्षमाह- **किञ्चेति ॥**

**(व्या.टि.)** 'सार्वज्ञं स्वाचार्यनिष्ठम्, अन्यत्र वृत्तौ बाधकोपेतत्वे सति धर्मत्वात्' इति परिशेषं विवक्षोरार्हतस्य अनिर्धारितव्यक्तिविशेषं सार्वज्ञं साधयत् सामान्यतो दृष्टम् अनुवदति- **कश्चिदित्यादिना ॥** साध्ये सकलेति विशेषणम् उद्देश्यसिद्धये । साक्षात्कारीति मत्वर्थीय इनिः । ताच्छीलिको णिनिर्वा । प्रतिबद्धे, अग्रहणस्वभावे, अतद्ग्रहणस्वभावे च व्यभिचारवारणाय हेतुपदानि । ननु नाशितेऽर्थे प्रक्षीणेति निर्देशोऽनुपपन्नः । किन्तु प्रक्षिते-त्येव । 'निष्ठायामण्यदर्थे' इति सूत्रे(ण) ण्यदर्थो भावकर्मणी, ततोऽन्यत्र निष्ठायां क्षियो दीर्घविधानात् । 'क्षियो दीर्घात्' इति च दीर्घात् परस्य तस्य नत्वविधानाच्चेति चेन्मैवम् । 'क्षि क्षये' इति भौवादिकस्य 'गत्यर्थाकर्मक' इति कर्तरि निष्ठायां क्षयतीति क्षीणम् । न तु क्षीयत इति । अतो न कोऽपि दोषः । अनेन आवरणत्वादिति पञ्चिका(फक्किका) व्याख्यानावसरे प्रक्षीयत इति केनचित् प्रयुक्तं प्रत्युक्तम् । तन्निरासपरतयाऽपि मूलं योजयति- **सकलेति ॥** अप्रसिद्धविशेषणत्वात् पक्षस्येति शेषः । हेत्वसिद्धिं विवक्षुरादौ विशेषणासिद्धिं तावदाह- **तद्ग्रहणस्वभावत्वं चेति ॥** हेतुसिद्धिं शङ्कते- **व्याप्तिज्ञानमिति ॥** प्रमेयाभिधेययोरिति शेषः । **परोक्षेति ॥** आगमिकानुमानिकव्याप्तिज्ञानयोः परोक्षत्वात् । प्रात्यक्षिकस्यापि सामान्यप्रत्यासत्तिजन्यस्य सामान्यज्ञानत्वादिति भावः **॥ स्वभावत्वेनेति ॥** दृष्टेनेति शेषः **॥ अतिप्रसङ्गादिति ॥** भित्तिव्यवहित-पदार्थत्वप्रकारकज्ञानस्वभावत्वेन घटत्वेनापरोक्षज्ञानसाधनप्रसङ्गादित्यर्थः । सकलसाक्षात्कारस्वभावत्वस्य हेतुत्वे तदसिद्धिं मूलमारोहयति- **अन्यत्रेति ॥** विशेषणासिद्ध्युपजीविकां विशेष्यासिद्धिमप्याह- **तत्स्वभाव-स्येति ॥** कार्यानुकूलस्वभावशक्त्यभावादेव कार्याभावोपपत्तौ प्रतिबन्धककल्पना न युक्ता । कार्यानुकूल-किञ्चिद्विघातलक्षणत्वात्तस्येति भावः । कार्यानुकूलशक्त्यभावेऽपि प्रतिबन्धकं कल्प्यताम् इत्यत आह- **न हीति ॥**

प्रतियोग्यप्रसिद्ध्या तत्प्रक्षयानुपपत्तिमभिधाय प्रमाणाभावेनापि तामाह- **किञ्चेति ॥** प्रतिबन्धकं प्रक्षयति **(व्या.टि.)** आवरणत्वात्तिमिरवदित्यनुमानात्तत्सिद्धिं शङ्कते- **आवरणत्वादेवेति ॥** एवेति हेत्वन्तरान्वेषणं वारयति- **कस्यचिदिति ॥** नित्यनिरयस्येत्यर्थः । 'तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ' इति स्मृतेरिति भावः । युक्त्यन्तरं वक्ति- **कमनीयेति ॥** कमेरनीयर् । सुन्दरीत्यर्थः । हेत्वसिद्ध्या दूषयति- **रागाद्यभाव-स्येति ॥** लिङ्गे लिङ्गं वक्ति- **बाह्यविक्रियेति ॥** रेतस्खलनादिरूपेत्यर्थः **॥ तदभावेति ॥** रागाद्यभावेत्यर्थः। **स्थगनेति ॥** 'ष्ठगे संवरणे' इति भौवादिकः । ततो भावे ल्युट् ।

संवरणं गूहनम्। आच्छादनसम्भवादिति यावत्। 'धूमेनाऽव्रियते वह्निः' इत्यादिस्मृतेरिति भावः। प्रसुप्ततनुमध्यावस्थापन्नरागादीनां स्वरूपेण सत्त्वेऽपि बाह्यविक्रियाऽभावोपपत्तेरन्यथासिद्धिरनुमानस्येति भावः। परोक्तानुमानं दुष्टं मत्वा दृष्टान्तदोषेण दूषयति- **अन्यत्रेति** ।। परः स्वाशयमुद्घाटयति- **यद्यद्ग्रहणेति** ।। सामान्यव्याप्तेर्दृष्टान्ते ग्रहीतुं शक्यत्वान्न साध्य-साधनोभयवैकल्यं दोष इति भावः। णिनेः कर्तृप्रत्ययत्वेन भावे तदसम्भवेन मत्वर्थीयस्येनेर्वाऽसम्भवेन साध्यवैकल्यं दृढमित्याह- **तथाऽपीति** ।। एतेन 'साक्षात्कारिणी प्रमा सैवोच्यते' इत्यादिरपशब्द इति सूचि-तम्। सत्प्रतिपक्षेणापि निराह- **किञ्चेति** ।। इतिशब्दः समाप्तौ।

**टीका - ननु धर्मादिकं कस्यचित् प्रत्यक्षं वस्तुत्वाद् घटवदिति सामान्यतः सार्वज्ञादिसिद्धिरिति। मैवम्। अत्र किं धर्मादेः प्रत्यक्षत्वमात्रं साध्यते उतैकपुरुषप्रत्यक्षत्वम्। आद्येऽर्थान्तरत्वम्। कस्यचित् केनचित्प्रत्यक्षीकृतत्वेनापि प्रतिज्ञातार्थस्य सिद्धेः। न द्वितीयः। दृष्टान्तेऽदृष्टत्वात्। नहि (नच) पक्षातिरिक्तस्य सर्वस्यैकपुरुषप्रत्यक्षत्वं सम्मतम्। एको घट एकस्य प्रत्यक्ष इति चेत्। तर्ह्येको धर्म एकस्य प्रत्यक्षोऽपरस्याधर्म इत्येवं प्रतिज्ञातार्थस्योपपत्तेरर्थान्तरतातादवस्थ्यात्। धर्मं पश्यन्नधर्मं कथं न पश्यतीति चेत्। किमियं सम्भावना अथानुमानम्। नाऽद्यः। असाधकत्वात्। न द्वितीयः। व्याप्त्यभावात्। योऽशक्यमेकं करोति सोऽपरमपीति व्याप्तिरिति चेन्न। वराहगृध्रादिषु दूरस्थ-शब्दरूपग्रहणसमर्थेष्वपि तथाविधरसादिग्रहणसामर्थ्यस्यादृष्टत्वात्। अस्तु वा विप्रतिपन्नमेकस्यैव प्रत्यक्षम्। तथाऽपि कुतः सार्वज्ञसिद्धिः। नहि स एव सम्प्रतिपन्नं पश्यतीत्यत्र प्रमाणमस्ति। कैमुत्यन्यायसिद्धं तदिति चेन्न। तद्बीजाभावात्। यो ह्यशक्यं करोति स सुकरं करोत्येवेति चेन्न। कण्टकान् भक्षयितरि उष्ट्रे कदलीफलभक्षणस्यादृष्टत्वात्। धर्मादिज्ञानेनैव प्रकृतोपयोगात् किं कीटकसङ्ख्यापरिज्ञानेनेति चेन्न। धर्मादिसाध्यसाधनाद्यपरिज्ञाने धर्मादिज्ञानस्यानुपयुक्त-त्वादिति।**

**(रा.टि.)** ।। **सामान्यत इति** ।। वस्तुविशेषानिष्ठतयेत्यर्थः ।। **सार्वज्ञादीति** ।। तन्मूलरागाद्यभाव आदि-शब्दार्थः ।। **अर्थान्तरत्वमिति** ।। धर्मादेरतीन्द्रियस्य सर्वस्यैकपुरुषप्रत्यक्षत्वे हि तस्य सार्वज्ञमभिमतं कथञ्चित् **(रा.टि.)** सिद्ध्येत्। तत्प्रत्यक्षत्वमात्रसाधने तु किञ्चित् केनचित्प्रत्यक्षीकृतम् अन्यदन्येनापरं त्वपरेणेत्येवं-रूपेणापि प्रतिज्ञातार्थसिद्धेरभिमतासिद्धिरिति व्यनक्ति- **कस्यचिदिति** ।। **सोऽपरमपीति** ।। करोतीत्यनुषङ्गः।। **शब्दरूपेति** ।। शब्दस्य रूपस्येति यथाक्रममन्वयः ।। **प्रकृतोपयोगादिति** ।। शास्त्रस्य विषयादिमत्त्वसिद्धेरिति भावः ।। **साध्यसाधनेति** ।। धर्मस्य यत्साध्यं यच्च साधनं तदादीत्यर्थः। तदर्थं सार्वज्ञस्यापेक्षणादिति भावः।

**(श्री.टि.)** 'प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदिते' इत्यनुव्याख्यानं मनसि निधायाऽह- **नन्विति** ।। **कस्यचिदिति** ।। धर्मः कस्यचित्प्रत्यक्षोऽधर्मश्चापरस्येत्यपि प्रतिज्ञार्थोपपत्त्यैकस्यैव धर्मादिविषयकप्रत्यक्षासिद्धि-रित्यर्थान्तरतेत्यर्थः। तदेवोपपादयति- **न चेति** ।। न हीत्यर्थः। **सर्वस्य** घटादेः। तथा च साध्यवैकल्यमिति भावः ।। **एको घट इति** ।। प्रत्यग्रोत्पन्नविनष्टो घट इत्यर्थः। स एव च मम दृष्टान्त इति भावः ।। **अथानुमान-मिति** ।। अयमधर्मद्रष्टा धर्मद्रष्टृत्वादित्यनुमानमित्यर्थः। असाधकत्वात् सम्भावनामात्रस्येति शेषः ।। **व्याप्ती-ति** ।। यो धर्मद्रष्टा सोऽधर्मद्रष्टेत्यत्र दृष्टान्ताभावेन विशेषव्याप्त्यभावादिति भावः। सामान्यव्याप्तिमाशङ्कते- **योऽशक्यमिति** ।। **अपरम्** अन्यदप्यशक्यम्। तथा चाशक्यधर्मदर्शनवान् अशक्याधर्मदर्शनवानपि भविष्यत्येवेति भावः। वराहे दूरस्थशब्दग्रहणसामर्थ्यं, गृध्रे दूरस्थरूपग्रहणसामर्थ्यमिति विवेकः। तथा च सामान्यव्याप्तौ व्यभिचार इति भावः। **विप्रतिपन्नं** धर्माधर्मस्वर्गनरकादिकम्। **स एव** धर्मादिद्रष्टैव। **सम्प्रतिपन्नं** घटादिकं जगत्। तथा च न सार्वज्ञसिद्धिरिति भावः। **तत्** सम्प्रतिपन्नघटादिदर्शनम् ।। **तद्बीजेति** ।। कैमुत्यबीजभूत-व्याप्त्यभावादित्यर्थः।। बीजं शङ्कते- **यो हीति** ।। तथा चाशक्यधर्मादिद्रष्टृत्वे सुशकघटादिजगद्द्रष्टृत्वं प्राप्तमेवेति भावः ।। **कण्टकानिति** ।। तथा च व्यभिचार इति भावः ।। **प्रकृतोपयोगादिति** ।। धर्मादिज्ञानस्यैव प्रकृत-बुद्धसार्वज्ञोपपादकत्वादिति भावः ।। **कीटकेति** ।। तस्यास्मदादिसाधारण्येन सार्वज्ञानुपपादकत्वादित्यर्थः। **धर्मादीति** ।। कीटकसङ्ख्यादेरपि साक्षात्परम्परया वा यथाकथञ्चिद्धर्मादिसाध्यसाधनान्तर्गतत्वादिति भावः। तथा च सम्प्रतिपन्नघटादिजगज्ज्ञानस्यापेक्षितत्वेन धर्मादिद्रष्टैव तत्पश्यतीत्यत्र प्रमाणाभावात् सार्वज्ञसिद्धिर्न सम्भवतीति ज्ञातव्यम्।

**(पां.टि.)** ननु सामान्यसिद्धिपरिशेषाभ्यामेव बुद्धस्य सर्वज्ञत्वसिद्धेर्न तस्याप्रामाणिकत्वमित्याशयेन शङ्कते- **नन्विति** ।। सामान्यतः

सर्वज्ञत्वसिद्धिरित्युपलक्षणम् । सामान्यतो धर्मादिद्रष्टरि सिद्धेऽस्मदादीनां तद्द्रष्टृत्वस्य बाधितत्वाद् आर्हतादीनां तत्र तत्र स्खलनदर्शनात् परिशेषेण भगवतो बुद्धस्यैव सर्वज्ञत्वसिद्धिरित्यपि द्रष्ट-व्यम् ।। **अर्थान्तरत्वादिति** ।। एकस्य सर्वविषयकज्ञानवत्त्वासिद्धेरिति शेषः । तदेवोपपादयति- **कस्यचि-दिति** ।। ननु पक्षातिरिक्तस्य सर्वस्य एकपुरुषप्रत्यक्षत्वासम्मतावप्येकमात्रदृष्टघटस्यैकपुरुषप्रत्यक्षतायाः सम्मत्या तस्यैव दृष्टान्तत्वसम्भवात् कथं तद्दृष्टान्ते तदभाव इत्याशङ्कते- **एक इति** ।। **असाधकत्वादिति** ।। सम्भावनाया उत्कटैककोटिकसंशयरूपत्वेनाप्रमाणत्वादिति भावः । अनुमानपक्षेऽपि किमत्र विशेषव्याप्तिरुत सामान्य-व्याप्तिरिति विकल्पद्वयं मनसि निधायाऽऽद्यं दूषयति- **व्याप्त्यभावादिति** ।। दृष्टान्ताभावादिति भावः । द्वितीयं **(पां.टि.)** शङ्कते- **य इति** ।। **तथाविधेति** ।। दूरस्थेत्यर्थः ।। **प्रकृतोपयोगादिति** ।। धर्मादिप्रतिपादक-बुद्धवाक्यस्य विवक्षितार्थतत्त्वज्ञानादिरूपाऽप्तिमूलकत्वस्य बुद्धस्य धर्मादिज्ञानेनैव सिद्ध्या तदितरज्ञानस्य तत्रानुपयोगादिति भावः ।

**(व्या.टि.)** परिशेषतः स्वाचार्ये सार्वज्ञसिद्धिमभिलषतो बौद्धस्य सामान्यतः सार्वज्ञसाधनप्रकारमाशङ्कते- **नन्विति** ।। **धर्मादिकमिति** ।। ऐन्द्रियकत्वानैन्द्रियकत्वविप्रतिपत्तिरादिपदसङ्ग्राह्यतावच्छेदिका ।। **घटवदि-ति** ।। एवं पटादेरपि सम्प्रतिपन्नस्य दृष्टान्तत्वं बोध्यम् ।। **सामान्यत इति** ।। अनिर्धारितवस्तुविशेषनिष्ठत्वेनेत्यर्थः। प्रत्यक्षस्य द्रष्टारमन्तरा अनुपपत्तेरर्थसिद्धं कस्यचिदिति । प्रत्यक्षत्वमात्रं साध्यं उतैकत्वं विवक्षित्वा एकप्रत्यक्ष-विषयत्वमिति विकल्पयति- **अत्र किमिति** ।। **अर्थान्तरत्वमिति** ।। कस्यचिद्धर्मस्य केनचित्पुरुषेण, अपरस्या-धर्मस्यापरेणेत्येवमनेकप्रत्यक्षत्वापत्त्या एकस्य सर्वविषयकज्ञानरूपसार्वज्ञासिद्धेरर्थान्तरत्वमित्यर्थः ।। **न द्वितीय इति** ।। एकपुरुषप्रत्यक्षविषयत्वमित्यर्थः । अत्र किं पक्षीकृतस्य धर्मादेः समुदायस्यैकद्रष्टृकत्वरूपमेकप्रत्यक्षत्व-मभिलषितम् उत प्रत्येकमिति विकल्पं मनसिकृत्याऽद्यं निराह- **दृष्टान्तेऽदृष्टत्वादिति** ।। भिन्नदेशकालानां (कालीयानां) घटादीनां दृष्टान्तीकृतानामेकद्रष्टृकत्वासम्मतेरित्यर्थः । सर्वैन्द्रियकद्रष्टारमेकमादाय सम्मतिरित्यतो नेत्याह- **न हि पक्षातिरिक्तस्येति** ।। द्वितीयं शङ्कते- **एको घट इति** ।। तथा च प्रत्येकमेकद्रष्टृकत्वरूपैकप्रत्यक्षत्वं घटेष्विति न दृष्टान्ते साध्यादर्शनमिति भावः । तर्हि पक्षेऽपि प्रत्येकमेकद्रष्टृकत्वमादाय साध्यपर्यवसानेनार्थान्तर-तातादवस्थ्यमित्याह- **तर्हीति** ।। पक्षे समुदाये एकद्रष्टृकत्वं दृष्टान्तस्त्वेकव्यक्तिरिति तु न शङ्कनीयम् । ऐन्द्रियक-समुदाये वस्तुत्वसत्त्वेऽप्येकद्रष्टृकत्वाभावेन व्यभिचारापत्तेः । केचित्तु एकपुरुषप्रत्यक्षत्वमित्यस्यैकमात्रपुरुष-प्रत्यक्षत्वमर्थ इत्याहुः । तच्चिन्त्यम् । यथाश्रुते सम्भवत्येकमात्रेत्यर्थकल्पनाऽस्वारस्यात् । 'न हि पक्षातिरिक्तस्य कस्यापि' इत्युपपादनीये सर्वस्येत्यस्यानौचित्याच्च । न ह्यस्तीति वक्तव्ये न हि सम्मतमिति सम्मत्यभाव-कथनायोगाच्च । प्रत्यग्रोत्पन्नविनष्टघटाभिप्रायकत्वे कश्चिद्घट इति वक्तव्ये एको घट इत्यस्य स्वारस्याभावाच्च । उभयदृष्टघटादौ व्यभिचारापरिहाराच्च । अर्थान्तरतातादवस्थ्यस्य प्रत्यग्रोत्पन्नविनष्टघटदृष्टान्तीकरणोपजीवनाभावेन तर्ह्येको धर्म इति ग्रन्थास्वारस्याच्च । मात्रपदेन प्राप्तसर्वज्ञान्तरनिषेधस्याप्रकृतत्वाच्चेत्यलम् ।

।। **कथमिति** ।। सम(मा)र्थदर्शनादिति हेतुशेषः । विकल्प्य पृच्छति- **किमिति** ।। विमतोऽधर्मं पश्यति धर्मद्रष्टृत्वाद् इत्यनुमानप्रकारो बोध्यः ।। **असाधकत्वादिति** ।। सम्भावनाया इति शेषः । **व्याप्त्यभावादि-ति** ।। विशेषव्याप्तौ दृष्टान्ताभावात् । यद् धर्मद्रष्टृत्वे एकाशक्यकर्तृत्वरूपम्, अधर्मद्रष्टृत्वेऽपराशक्यकर्तृत्व-रूपं च तेन सामान्यरूपेण व्याप्तिरित्याह- **योऽशक्यमिति** ।। **शब्दरूपेति** ।। यथाक्रममन्वयः । प्रतिज्ञा-(ता)र्थसिद्धावपि नाभिमतसिद्धिरित्याह- **अस्तु वेति** ।। **कुत इति** ।। किंशब्देन सिद्धिराक्षिप्ता । तत्प्रकारं दर्शयति- **न हि स एवेति** ।। [१]अपीति विप्रतिपन्नं समुच्चिनोति । **तदिति** प्रकृत्यर्थपरामर्शः । सम्प्रतिपन्न-**(व्या.टि.)** सर्वदर्शनमित्यर्थः ।। **तद्बीजेति** ।। तस्मिन् बीजेत्यर्थः ।। **अशक्यमिति** ।। धर्मादिद्रष्टृत्वस्या-शक्यकर्तृत्वरूपत्वं बीजमित्यर्थः । करोत्येवेत्यविनाभावं दर्शयति- **उष्ट्र इति** ।। क्रमेलक इत्यर्थः ।। **अदृष्टत्वा-दिति** ।। तेन व्यभिचारान्नाविनाभाव इत्यर्थः । सार्वज्ञसिद्धेर्वैयर्थ्यं शङ्कते- **धर्मादिज्ञानेनै-वेति** ।। **प्रकृतेति** ।। धर्माद्युपदेशसम्भवेनापौरुषेयवाक्यान्यथासिद्धिसम्भवादित्यर्थः । **अनुपयुक्तत्वादिति** ।। अनुष्ठानापर्यव-सानादिति भावः । न हि साध्यसाधनाद्यज्ञाने धर्मस्वरूपज्ञानमात्रेणोत्तरक्रत्वनुष्ठानसम्भवः । किं केन कथम् इत्याकाङ्क्षात्रयानुत्तारात् । अन्यथा चोदनासूत्रेणैव श्रुत्यर्थाभ्यां स्वरूपप्रमाणोक्त्या धर्मस्वरूपसिद्धेः शेष-लक्षणाद्यनारम्भणीयं स्यात् । अतस्तावज्ज्ञानस्य सार्वज्ञमङ्गीकरणीयम् । यथोक्तं गीताभाष्ये - 'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः' इति । तच्च नानुमानात् सिद्ध्यतीति कल्पनीयमेवेति । उपलक्षणमेतत् । धर्मादेरुपदेष्टा बुद्धः सर्वज्ञोऽङ्गीक्रियत इति प्रतिज्ञाहानिश्चेत्यपि ग्राह्यम् ।

टीका - ननु क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति क्षित्यादेः कर्तरि सिद्धे तस्य सार्वज्ञमपि सिद्धमेव ।

**उपादानादिसाक्षात्कारवत एव कर्तृत्वात् । सर्वस्यापि क्षित्याद्युपादानादौ प्रविष्टत्वादिति चेन्न । घटादीनां कर्तरि कुलालादौ तदुपादानादिविषयसाक्षात्कारस्यादृष्टत्वात् । नहि कुलालो घटं पलपरिमाणेयत्ताविशेषवन्तं तन्निमित्तं वा कालं देशमदृष्टं तदाश्रयं वा पुरुषं तत्प्रयोजनविशेषं वा साक्षात्करोति । किञ्च घटादौ सपक्षेऽदृष्टस्यैककर्तृकत्वस्य क्षित्यादौ कुतस्सिद्धिः? यतस्तस्य सार्वज्ञं स्यात् । कल्पनालाघवादिति चेन्न । अतिबहुतरकार्यजातस्यानेककर्तृताया एवोचितत्वादित्यलं प्रपञ्चेन ।**

**(रा.टि.)** सिद्धमेवेत्युक्तं व्यनक्ति- **उपादानादीति ॥** दृष्टान्ताभावेन वा अदृष्टकल्पनारूपतर्कपराहत्या वा सार्वज्ञसिद्धिं निराह- **घटादीनामिति ॥** तदुपादानादीत्यतद्गुणसंविज्ञानबहुव्रीहिः । मृत्पिण्डगतपलपरिमाणा-ज्ञानाभिप्रायेण वा तदुपादानादीत्युक्तम् । तदेव व्यनक्ति- **न हीति । तदाश्रयमिति ॥** यद्योजकादृष्टजन्यं तं पुरुषमित्यर्थः ॥ **तत्प्रयोजनेति ॥** जलाहरणतैलाहरणधान्याहरणादिरूपमित्यर्थः। प्रकारान्तरेण सार्वज्ञसिद्धिं निराह- **किञ्चेति ॥** अन्यत्रादृष्टस्यैककर्तृकत्वस्येति मूले शेषमुपेत्य योजयति- **घटादौ सपक्षेऽदृष्टस्येति ॥**

**(श्री.टि.)** ननूपादानादिसाक्षात्कारसिद्धावपि कथं सर्वविषयकज्ञानसिद्धिरित्यत आह- **सर्वस्यापीति ॥ घटादीनामित्यादि ॥** तथा च साध्यवैकल्यमिति भावः । तदेवोपपादयति- **न हीति ॥** पलपरिमाणयोरियत्ता-विशेषो मर्यादाविशेषस्तद्वत्त्वम् ॥ **कुतः सिद्धिरिति ॥** क्षितिकर्तैकः, अपरो जलस्य कर्तेत्येवं प्रतिज्ञार्थस्योप-पत्तेरर्थान्तरतेति भावः ॥ **कल्पनालाघवादिति ॥** क्षित्यादेरेककर्तृकत्वकल्पने कल्पनालाघवमनेककर्तृकत्वे कल्पनागौरवम् ॥ **अतिबहुतरेति ॥** दृष्टानुसारिणी हि कल्पना । अतिबहुतरप्रासादाद्युपेतगृहादिकार्यजातस्या-(श्री.टि.) नेककर्तृताया एव दृष्टत्वेन प्रकृतक्षित्यादिकार्यजातस्यापि तथात्वकल्पनस्यैवोचितत्वेन एककर्तृकत्व-स्यासिद्ध्या न तस्य सार्वज्ञसिद्धिरिति भावः ।

**(पां.टि.)** तार्किकोक्तं सार्वज्ञसिद्धिप्रकारमनुवदति- **नन्विति ॥** ततश्च न तस्याप्रामाणिकत्वमिति भावः । दृष्टान्तं साध्यवैकल्येन दूषयति- **घटादीनामिति ॥** कुलालादौ तदुपादानादिसाक्षात्काराभावमेवोपपादयति- **न हीति ॥ कुतस्सिद्धिरिति ॥** कार्यत्वहेतोः कर्तृमात्रसाधने सामर्थ्येऽपि तदेकत्वसाधनेऽसमर्थत्वादिति भावः ॥ **कल्पनालाघवादिति चेदिति ॥** न चानुमितेर्व्यापकांशे व्यापकतावच्छेदकमात्रप्रकारकत्वादिहापि व्यापकस्य कर्तुर्व्यापकत्वावच्छेदककर्तृत्वेन सिद्धावप्येकत्वेन कथं तत्सिद्धिः स्यादिति वाच्यम् । अनुमितिसामग्री-महिम्ना तथात्वेऽपि लाघवतर्कसहकारिरूपप्रमाणसामग्रीमहिम्ना कर्त्रैकत्वस्य सिद्ध्युपपत्तेरित्याशयात् ॥ **अति-बहुतरकार्यजातस्येति ॥** लोके गजगवयगर्दभादीनां घटपटादीनां च निर्मातारो विजातीया एवोपलब्धा इति लोकदर्शनानुसारेण कर्तारं कल्पयतो गौरवानुसरणस्यैवोचितत्वादिति भावः । 'अनुपलब्धप्राक्कोटिषु भूभूधरादिषु कार्यत्वमेव कुतस्सिद्धम्' इत्यादि वक्ष्यमाणदूषणजातं मनसि निधायाऽह- **अलं प्रपञ्चेनेति ॥**

**(व्या.टि.)** अधुना सार्वज्ञसिद्धिफलकं नैयायिकोक्तमनुमानं दूषयितुमनुवदति- **नन्विति ॥ घटवदिति ॥** उपलक्षणमेतत् । यद्वक्ष्यति घटादाविति ॥ **सिद्धमिति ॥** हेतोः पक्षधर्मताबलादिति शेषः । यथोक्तं प्रमाणलक्षणे विमतं सकर्तृकमित्यत्र 'सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारात्' इति । उपादानादीत्यादिपदेन उपादेय-निमित्तफलादिपरिग्रहः । अन्यथा उत्तरग्रन्थासङ्गतेः । साक्षात्कारवत एवेति तस्य कर्तृत्वव्यापकतामाह- **कर्तृ-त्वादिति ॥** प्रेक्षापूर्वकारित्वादित्यर्थः । उपादानादिज्ञत्वेऽपि सर्वज्ञत्वं कुत इत्यत आह- **सर्वस्यापीति ॥ प्रविष्टत्वादिति ॥** अन्तर्भावादित्यर्थः । सर्वज्ञत्वस्यानुषङ्गतः सिद्धिं दूषयितुं कृतेरुपादानादिसाक्षात्कारव्याप्तिं दूषयति- **घटादीनामिति ॥** सार्वज्ञप्रयोजकैककर्तृत्वासिद्ध्या तदसिद्धिं विवक्षुराह- **किञ्चेति ॥ कुत इति ॥** व्याप्तेर्व्यापकतावच्छेदकप्रकारकसाध्यसिद्ध्यङ्गत्वादिति भावः ॥ **लाघवादिति ॥** कर्त्रैकत्वसिद्धिरिति शेषः । **बहुतरेति ॥** विचित्रेत्यपि पूरणीयम् ॥ **उचितत्वादिति ॥** 'औचित्यादर्थनिर्णयः' इति न्यायादित्यर्थः । **अलमिति ॥** प्रपञ्चेन साध्यं नास्तीत्यर्थः । साधनक्रियापेक्षया करणविभक्तिः ।

**टीका -** एवं सार्वज्ञासिद्धौ तस्याविप्रलम्भकत्वमप्यप्रामाणिकं कल्प्यमेव । सार्वज्ञेऽपि कुतो विप्रलम्भाभावः । रागाद्यभावादिति चेन्न । तद्रहितेष्वपि बुद्धादिष्वीश्वरावतारेषु दर्शनात् । वीत-रागाणामपि ज्ञानाङ्कुरसंरक्षणार्थं छलादिना प्रतिवादिप्रतारणस्य सर्वैरङ्गीकृतत्वाच्च । एवं पटुकरणत्वादिकं कल्प्यमेव ; नतु प्रामाणिकम् । किञ्चास्तु

कश्चित्सर्वज्ञोऽविप्रलम्भकश्च । तथाऽपि धर्मादिप्रतिपादकवाक्यविशेषस्य तत्कृतत्वं कुतस्सिद्धम् । नन्वेवम्भूतः स्वीयहिताहितप्राप्ति-परिहारसाधनमविदुषो नानाविधव्यसनसागरनिमग्नान् जन्तूनवलोकयन् नानुपदिश्य स्थातुमर्हतीति चेन्न । एवम्भूतानामपि सिद्धानामुदासीनानामङ्गीकृतत्वात् । उपदिशतु वाऽसौ ; सोऽयमुपदेश इति तु कल्प्यमेव ।

तदेवं कल्पनागौरवप्रसङ्गेन न पौरुषेयेण वाक्येन धर्मादिनिश्चयः शक्यः । नहि लोके विना प्रमाणेन कस्यचित् पुरुषस्याऽऽप्तत्वं प्रकल्प्य तत्प्रणीततां च कस्यचिद्वाक्यस्य कल्पयित्वा प्रेक्षावन्तस्तदर्थनिश्चयं कुर्वन्ति । कुर्वाणा वा किं स्वात्मन्येव तत्सर्वं न कल्पयेयुः । तस्मात् पौरुषेय-वाक्येन धर्माद्यसिद्धेस्तत्प्रतिपादकं किमप्यपौरुषेयं वाक्यमङ्गीकृत्य बुद्धर्षभादयस्तदर्थस्यानुवादका इति तैस्तैर्वादिभिर्धर्मादिनिश्चयमभिलषद्भिरभ्युपेयम् । यथाऽऽहुः- 'शौद्धोदनिप्रभृतयः सम्प्रदाय-प्रवर्तकाः' इति ।

**(रा.टि.)** अभ्युपेत्यापि सार्वज्ञमाह- **सार्वज्ञेऽपीति ।। दर्शनादिति ।।** विप्रलम्भकत्वस्येति योज्यम् । प्रमाणान्तराभावेऽपि लोकन्यायसिद्धमेतदित्यत आह- **न हीति ।।** तदीयानामेव वाक्यमुक्तार्थे संवादयति- **यथाऽऽहुरिति ।।**

**(श्री.टि.) ।। तद्रहितेष्वपीति ।।** रागादिदोषरहितेष्वित्यर्थः **।। बुद्धादिष्विति ।।** धर्माद्युपदेष्टृतया सर्वज्ञत्वेन त्वदङ्गीकृतेष्वित्यर्थः । रागादिदोषाभावोपपादनायेश्वरावतारेष्वित्युक्तम् । तथा च बाध इति भावः । किञ्च रागाद्यभावस्य न विप्रलम्भकत्वाभावसाधकत्वं व्यभिचारादित्याह- **वीतरागाणामपीति ।। छलादिनेति ।।** सद्दूषणेन प्रतिवादिनिराकरणेऽयोग्यानामपि ज्ञानप्राप्त्या सज्ज्ञानाङ्कुरसंरक्षणं न स्यादिति भावः । **एवम्भूत इति ।।** सर्वज्ञोऽविप्रलम्भकश्चेत्यर्थः **।। नानुपदिश्येति ।।** धर्मादिकमिति शेषः । तथा च धर्माद्युपदेशरूपस्य वाक्यस्याभावात्तदुपदेशरूपं वाक्यमिदमेवेति धर्माद्युपदेशरूपवाक्यविशेषस्य तत्कृतत्वसिद्धिरित्याशयः **।। एवं भूतानामपीति ।।** स्वीयहिताहितप्राप्तिपरिहारमविदुषो नानाविधव्यसनसागरे निमग्नान् जन्तूनवलोकयता-मपीत्यर्थः **।। अङ्गीकृतत्वादिति ।।** तद्वदस्यापि बुद्धस्योदासीनत्वोपपत्तेरित्याशयः **।। आप्तत्वमिति ।।** सर्वज्ञत्वाविप्रलम्भकत्वरूपमित्यर्थः । बुद्धादयोऽपौरुषेयवाक्यार्थभूतस्य धर्मादेरनुवादका इत्यत्र सम्मतिमाह- **शौद्धोदनीति ।।** शुद्धोदनस्यापत्यं पुमान् शौद्धोदनिर्बुद्धः, तत्प्रभृतय इत्यर्थः ।

**(पां.टि.)** एवं 'अन्यत्राऽदृष्टस्य सर्वज्ञत्वस्य कल्पनम्' इतीममंशमुपपाद्य तदुपजीवनेन 'तस्याविप्रलम्भकत्व-कल्पनम्' इतीममंशमप्युपपादयति- **एवमिति ।।** प्रत्यक्षाद्यन्यतमप्रमाणाभावेनेत्यर्थः **।। कल्प्यमेवेति ।।** तस्योक्तरीत्या सर्वज्ञत्वमात्रसिद्ध्यधीनसिद्धिकत्वेन तदसिद्धौ असिद्धिध्रौव्यादिति भावः । वस्तुस्थितिकथनं **(पां.टि.)** चैतत् । वस्तुतस्तु सर्वज्ञेऽपि न तत्सिद्धिरप्रयोजकत्वादित्याशयेनाऽह- **सार्वज्ञेऽपीति ।।** विमतोऽविप्र-लम्भकस्तत्कारणरागादिशून्यत्वादिति सर्वज्ञत्वेन परम्परया तत्सिद्धेरभ्युपगतत्वान्नाप्रयोजकत्वमिति शङ्कते- **रागाद्यभावादिति चेदिति ।।** व्यभिचारेण दूषयति- **तद्रहितेष्वपीति ।।** पक्षतुल्यत्वान्न व्यभिचार इत्यरुचेराह- **वीतरागाणामपीति ।।** पटुकरणत्वादिकमित्यादिपदेन कृपालुत्वैश्वर्यादिपरिग्रहः **।। कल्प्यमेवेति ।।** तत्सम्भा-वकत्वेनोक्तसर्वज्ञत्वाविप्रलम्भकत्वयोरसिद्धिव्युत्पादनादिति भावः । ननु सति प्रमाणे कल्पनाया अदोषत्वात् तदभावेऽप्यदोषत्वं किं न स्यादित्यतोऽतिप्रसङ्गान्न तथेत्याशयेनाऽह- **न हीति ।।**

**(व्या.टि.)** असिद्धाविति निमित्तसप्तमी । नान्तरीयकतया तत्सिद्धिं दूषयति- **सार्वज्ञेऽपीति ।। रागाद्यभावा-दिति ।।** विप्रलम्भकारणाभावादिति भावः । व्यतिरेकाभावेनाकारणत्वं तस्येत्याह- **तद्रहितेष्वपीति ।। ईश्वरेति ।।** तस्याऽप्तकामत्वादिति भावः **।। ज्ञानाङ्कुरेति ।।** 'अनाविष्कुर्वन्' इति सूत्रादिति भावः **।। सर्वै-रिति ।।** वैतण्डिकैरित्यर्थः । एवकारव्यावर्त्यमाह- **न त्विति ।।** एवं कर्तुराप्तिं प्रदूष्य कृतस्य तन्मूलत्वं दूषयति- **किञ्चेति ।।** मूले तस्येति पदं व्याचष्टे- **धर्मादिप्रतिपादकस्येति ।।** आप्तित्रितयस्य विवक्षाऽविनाभावं शङ्कते- **नन्वेवम्भूत इति ।।** तस्येत्यावृत्त्या पुनर्योजयति- **सोऽयमिति ।।** परमप्रकृतमुपसंहरति- **तदेवमिति ।।** गुरुतरकल्पनामात्रेणार्थासिद्धिं निदर्शयति- **प्रेक्षावन्त इति ।।** अनेन मूढकल्पनां वारयति- **स्वात्मन्येवेति ।।** कल्पनालाघवादित्यर्थः ।

**मूलम् - अपौरुषेयवाक्याङ्गीकारे न किञ्चित्कल्प्यम् ।**

**टीका -** ननु प्रसिद्धानि बौद्धादिवाक्यानि परित्यज्य धर्मादिप्रतिपादकं किञ्चिद् बपौरुषेयं वाक्यं कल्प्यमिति साम्यमेवेत्यत आह- **अपौरुषेयेति ।।** पौरुषेयवाक्येन धर्मादिनिश्चयमिच्छता यथा बहुतरं सार्वज्ञादि कल्प्यं तथाऽपौरुषेयवाक्याङ्गीकारे न **किञ्चिद्** बहुतरं कल्प्यम् । किन्त्वपौरु-षेयवाक्यमेकमेव । तथाच धर्मादिनिश्चयस्यावश्यमङ्गीकार्यत्वे बहुकल्पनापक्षपरित्यागेनाल्प-कल्पनापक्षाऽश्रयणमेव ज्यायः । यथाऽहुः- 'यत्राल्पीयांसो दोषाः स पक्षः' इति । तथाऽपि दुष्टस्य कथमङ्गीकार इति चेत् किं कार्यं गत्यन्तराभावात् । अयं च परेषामेव । यथा नास्माकं दोषस्तथाऽ-नुपदमेव वक्ष्यते । एवं सर्वसमयिभिरपौरुषेयवाक्यस्यावश्यमङ्गीकार्यत्वाद् 'वेदोऽपौरुषेयः' इति वाक्यं नासम्भावितार्थमिति सिद्धम् ।

**(रा.टि.) ।। तथाऽपीति ।।** धर्मादिनिश्चयार्थं प्रमाणस्योपेयत्वेऽपीत्यर्थः **।। दुष्टस्येति ।।** अल्पदोषेणापि युक्तस्येत्यर्थः **।। वक्ष्यत इति ।।** उत्तरवाक्य इति भावः ।

**(श्री.टि.) ।। स पक्ष इति ।।** ग्राह्य इति शेषः **।। दुष्टस्येति ।।** अल्पकल्पनयाऽपि दुष्टस्येत्यर्थः **।। गत्य-न्तरेति ।।** धर्मादिनिश्चय इति शेषः । **अयं** कल्पनागौरवरूपः । **परेषाम्** अपौरुषेयवाक्यानङ्गीकारिणाम् **।। यथेति ।।** अल्पकल्पनादोषोऽपि यथाऽस्माकं नास्ति तथेत्यर्थः **।। वक्ष्यत इति ।।** 'अपौरुषेयत्वं च' इत्यादिनाऽनुपदमेवेत्यर्थः ।

**(पां.टि.)** अङ्गीकृत्यैव चापौरुषेयवाक्यस्य कल्प्यत्वमिदमुक्तम् । वस्तुतस्तु स्वपक्षेऽपौरुषेयवाक्यकल्पना-दोषोऽपि नेत्याह- **अनुपदमेव वक्ष्यत इति ।।** 'वेदकर्तुरप्रसिद्धेः' इत्यादिना प्रामाणिकत्वोपपादनेनेति शेषः ।

**(व्या.टि.)** कल्पनासाम्यं शङ्कते- **नन्विति । किञ्चिदिति ।।** 'यच्च किञ्चित्' इत्यत्रेव 'यत्किञ्चित्प्राचीन-मग्नीषोमीयात्' इत्यत्रेव च बहुतरार्थकत्वं मत्वा किञ्चिदित्येतद् बहुतरमिति व्याख्यातम् । सर्वज्ञत्वादिकं वा बहुतरम्, अन्यद्वा बहुतरं किमपि न कल्प्यमिति किमपीत्यर्थकं किञ्चित्पदम् । बहुतरं तु प्रकृतमिति वाऽभिप्रायः। **ज्याय इति ।।** प्रशस्ततरमित्यर्थः । 'प्रशस्यस्य श्रः', 'ज्य च' इति ज्यादेशे 'ज्यादादीयसः' इति प्रत्ययादेराकारादेश इति भावः **।। अयं चेति ।।** दुष्टपक्षाङ्गीकारः **।। अनुपदमेवेति ।।** वेदकर्तुरित्यत्रेत्यर्थः । धर्मादिसिद्ध्यन्यथा-नुपपत्तिं निगमयति- **एवमिति ।।** परमप्रकृतमुपसंहरति- **नासम्भावितमिति ।।**

**मूलम् - अपौरुषेयत्वं च स्वत एव सिद्धम् । वेदकर्तुरप्रसिद्धेः । अप्रसिद्धौ च कर्तुस्तत्कल्पने कल्पनागौरवम् । अकल्पने चाकर्तृकत्वं सिद्धमेव ।**

**(त.मं.)** तत्र वाक्यस्य कर्तृपूर्वकत्वदर्शनाद् युष्मत्पक्षेऽप्यपौरुषेयत्वं कल्प्यमित्यत आह - **अपौरु-षेयत्वं चेति ।।**

**टीका -** अस्तु वेदस्यापौरुषेयत्वं सम्भावितम् । तन्निश्चयस्तु नास्ति । नचानिश्चितो हेतुर्भवतीत्यत आह- **अपौरुषेयत्वं चेति ।।** वेदस्येति शेषः । वेदस्यापौरुषेयत्वमसम्भावनया निरुद्धं दुःसाधन-मभूत् । इदानीमसम्भावनायां निरस्तायां **स्वत एव** अनायासेनैव **सिद्धं** निश्चितम् । कुत इत्यत आह- **वेदेति ।।** 'कर्तरि च' इति प्रतिषिद्धस्य 'याजकादिभिश्च' इति प्रति (पुनः) प्रसवात्तृजन्तेन षष्ठ्याः समासोपपत्तिः । द्वितीयान्तस्य तृन्नन्तेन वाऽयं समासः । श्रितादिषु गमिगाम्यादी-नामुपसङ्ख्यानात् । वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वाद्गगनवदित्यर्थः ।

ननु यथा गिरिदरीवर्तिनस्तृणाङ्कुरस्यास्माभिः केनापि प्रमाणेनाप्रमितस्यापि कर्तुस्सद्भावः, तथा वेदस्य कर्तुरस्माभिरप्रमितस्यापि सद्भावः शङ्क्यत इत्यत आह- **अप्रसिद्धौ चेति ।। कल्पने** शङ्कायाम् । अप्रमितमपि वेदस्य कर्तारं शङ्कमानः किं धर्मादिकमङ्गीकरोति न वा । नेति पक्षेऽसमयी स्यात् । आद्ये बुद्धादिपुरुषवाक्येन वा तन्निश्चिनुयाद्, वेदेन वा, वाक्यान्तरमपौरुषेयं कल्पयित्वा तेन वा । गत्यन्तराभावात् । अनुमानादीनां निराकरिष्यमाणत्वात् । प्रथमे द्वितीये च बुद्धादीनां वेदकर्तुर्वा सर्वज्ञत्वादिकं प्रमाणेन विना कल्पनीयमिति कल्पनागौरवं

स्यात्। तृतीये तु तद्वाक्यं तस्यापौरुषेयत्वं च कल्प्यमिति कल्पनागौरवमेव। नच प्रयोजनानुरोधेन प्रमाणकल्पना युक्ता। किं नाम निश्चितेन प्रमाणेनान्यदभ्युपगम्यते। अतः कल्पनागौरवप्रसङ्गात् नाप्रमितो वेदस्य कर्ता शङ्कनीयः। ततः किमित्यत आह- **अकल्पने चेति ॥** एवं वेदकर्तुरप्रमितत्वे, कल्पनागौरव-प्रसङ्गभयेना **अकल्पने** शङ्काया अप्यभावे वेदस्याकर्तृकत्वं सिद्धमेव। यथा धूमस्याग्नि (धूमाग्न्योः) सम्बन्धे न कश्चिदुपाधिः प्रमितः, तर्कबलेनाऽशङ्काऽप्युपाधिविषया निराक्रियते ततो निरुपाधिक एवासौ अनुमानबीजं सम्बन्धः सिद्ध्यति तथैवेति।

**(र.टि.)** नन्वपौरुषेयत्वस्य स्वतस्त्वं नाम ज्ञानप्रामाण्यस्येव स्वाश्रयग्राहकमात्रग्राह्यत्वं वा प्रमाणान्तरान-धीनसिद्धिकत्वं वा। नाऽद्यः। अनङ्गीकारात्। न द्वितीयः। तत्साधकानुमानोपन्यासव्याहतेरित्यत आह- **स्वत एवानायासेनैवेति ॥** अत एव पूर्वमायासाभाव उपपादितो वेदस्येत्यादिना। ननु 'कर्तृकर्मणोः कृति' इति षष्ठ्यां प्राप्तायाम् 'कर्तरि च' इति समासप्रतिषेधाद् वेदस्य कर्तुरिति भिन्नपदत्वं भवेदित्यत आह- **कर्तरि चेतीति ॥** याजकादेराकृतिगणत्वात्तत्र कर्तृशब्दस्य ग्रहणोपपत्तेः, 'याजकादिभिश्च' इति समासस्य पुनः प्रसवसामर्थ्यादत्रापि समासोपपत्तिरिति भावः॥ **द्वितीयान्तस्य तृन्नन्तेन वेति॥** 'कर्मणि द्वितीया' इति प्राप्तां द्वितीयां बाधित्वा 'कर्तृकर्मणोः कृति' इति षष्ठी प्राप्ता। 'न लोकाव्यय' इति षष्ठ्या अपि बाधे 'अपवाद-स्यापवादे पुनरुत्सर्गस्य स्थितिरेव' इति द्वितीयैव प्राप्ता। तत्र च समासप्रतिषेधकाभावात् समासोपपत्तिरिति भावः। ननु 'द्वितीया श्रितातीत' इति सूत्रे कर्तृशब्दस्यापठितत्वादेतदपि कथमित्यत आह- **श्रितादिष्विति ॥** आकृतिगणत्वादेतस्येति हृदयम्। अपौरुषेयत्वे लिङ्गप्रतिपादकत्वेन 'वेदकर्तुरप्रसिद्धेः' इति वाक्यं व्याख्याय वादिवाक्यादिना वेदकर्तृज्ञानसम्भावादुभयवाद्यसिद्धो हेतुरित्याशङ्क्य वाद्यसिद्धिं परिहर्तुं प्रसिद्धिपदं प्रमिति-परमित्यभिप्रेत्याऽह- **अप्रमितकर्तृकत्वादिति ॥** (मूले) 'न च लौकिकवाक्यवत् सकर्तृकत्वम्' इत्यनेन प्रतिवाद्यसिद्धेः परिहरिष्यमाणत्वात् 'अप्रसिद्धौ च' इति वाक्यं किमर्थमित्याशङ्कां हृदि निधायापौरुषेयत्वा-नुमानेऽस्यानुकूलतर्कप्रतिपादनपरत्वेन व्याख्याय तन्निवर्तनीयाप्रयोजकत्वशङ्कायां साध्याभावशङ्कैव कर्तव्या, न तु साध्याभावकल्पनम्। अतः कथं 'तत्कल्पने' इत्युक्तमित्यतस्तत् प्रकृतानुकूलतया व्याचष्टे- **कल्पने शङ्कायामिति ॥ मूले** 'अप्रसिद्धौ च' इति हेत्वङ्गीकारप्रतिपादनम्। 'तत्कल्पने' इति साध्याभावाङ्गीकार-**(र.टि.)** प्रतिपादनम्। कर्तृकल्पनेऽ**पौरुषेय**त्वाभावसिद्धेरिति। प्रतियोगिग्राहकप्रमाणाभावेन तर्केण प्रतियोगि-शङ्काया अपि निरासे तत्प्रतियोगिकाभावः सिद्ध्यतीत्यत्र दृष्टान्तमाह- **यथा धूमाग्न्योरित्यादिना ॥**

**(रा.टि.) ॥ निरस्तायामिति ॥** 'न चापौरुषेयं वाक्यमेव नास्तीति वाच्यम्' इत्यादिना इयता ग्रन्थेनेत्यर्थः। **कर्तरि चेतीति ॥** कर्त्रर्थतृजकाभ्यां सह षष्ठी न समस्यत इति द्वितीयाध्यायस्य द्वितीयपादीयसूत्रेण प्रतिषिद्धस्य तृजन्तेन षष्ठीसमासस्य 'याजकादिभिश्च' इत्यनेन याजकपूजकादिशब्दैः कर्त्रर्थकतृजकान्तैरपि षष्ठी समस्यत इति पुनः षष्ठीसमासविधानाद् वेदस्य कर्ता वेदकर्तेति तृजन्तेन कर्तृशब्देन वेदस्येति षष्ठ्याः समासो युक्त इत्यर्थः। **प्रतिप्रसवो** निषेधस्यापवादः। यद्वा नायं कर्तृशब्दः 'ण्वुलृतृचौ' इति सूत्रोक्ततृजन्तः। अपि तु तृन्प्रत्ययान्तः। अनुबन्धलोपे सति कर्तेति रूपस्य तृन्तृचोस्तुल्यत्वात्। तत्र च 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति सूत्रेण तृन्नन्तयोगे षष्ठीनिषेधेऽपि वेदं कर्ता वेदकर्तेति द्वितीयान्तस्य वेदपदस्य तृन्नन्तकर्तृपदेन समास इति पक्षान्तरमाह- **द्वितीयान्तस्येति ॥** ननु 'द्वितीया श्रितातीतपतित-गतात्यस्तप्राप्तापन्नैः' इति सूत्रे द्वितीयान्तस्य श्रितातीतादिशब्दैरेव समासोक्तेः कथं कर्तृशब्देन समास इत्यत आह- **श्रितादिष्विति ॥** ग्रामगमीत्यादिरूप-सिद्ध्यर्थं श्रितादिशब्देषु गमिगाम्यादिशब्दयोगेऽपि द्वितीयान्तसमासस्य वार्तिके सङ्ग्रहोक्तेर्गमिगाम्यादेराकृति-गणत्वाद् आदिपदेन कर्तृशब्दस्य सङ्ग्रहादिति भावः। अप्रसिद्धेरिति पञ्चम्यन्तस्य स्वत एव सिद्धमिति पूर्व-वाक्येनान्वयमुपेत्य द्वयोः फलितार्थमाह- **वेदोऽपौरुषेय इति ॥** स्वतन्त्रपुरुषाप्रणीत इत्यर्थः। वेदशब्दार्थस्तु तर्कताण्डवव्याख्यानेऽत्राप्यग्रे व्यक्तः। साध्याविशेषाद्यापत्तेरकर्तृकत्वादित्यनुक्त्वा अप्रमितकर्तृकत्वादित्यु-क्तम्। हेतुरस्तु साध्यं मास्त्विति भावेन हेतोरप्रयोजकत्वमाशङ्कते- **ननु यथेति ॥** निश्चायकाभावेन निश्चयार्थ-त्वस्यानुपपत्तेरर्थान्तरमाह- **कल्पने शङ्कायामिति ॥** अ(स्पष्ट)स्फुटत्वात्कल्पनागौरवं विकल्पमुखेन व्यनक्ति- **वेदस्येत्यादिना ॥ निराकरिष्यमाणत्वादिति ॥** 'न चानुमानादीनामागमं विना प्रामाण्यं धर्मादिषु' इत्यत्रेति भावः। ननु धर्मादिसिद्ध्यर्थं किञ्चित्प्रमाणं बुद्धादिवाक्यं वाऽन्यद्वा किञ्चित् कल्प्यम्। अन्यथा तदसिद्धेरित्यत आह- **न च प्रयोजनेति ॥ अभ्युपगम्यत इति ॥** परीक्षकैरिति योज्यम्। विपक्षे बाधकाभावान्नाप्रयोजकोऽ-प्रमितकर्तृकत्वहेतुरिति भावेनोपसंहरति - **अत इति ॥** तस्यैव विवरणं कल्पनेत्यादि। अकल्पने चेत्युपलक्षणमिति भावेनाऽह- **एवं वेदकर्तुरप्रमितत्व इति ॥** अकल्पन इत्यनुवादः,

शङ्काया अप्यभाव इति व्याख्या।

**(श्री.टि.)** ॥ **अनायासेनैवेति** ॥ अत एव पूर्वं वेदस्यापौरुषेयत्वमित्यादिनाऽऽयासाभाव उपपादित इति द्रष्टव्यम्। वेदकर्तुरित्यत्र वेदं कर्तेति कर्मणि द्वितीया प्राप्ता। तत्र कर्तृशब्दस्तृजन्तस्तृन्नन्तश्च। तत्र तृजन्तत्वपक्षे द्वितीयाऽपवादकत्वेन 'कर्तृकर्मणोः कृति' कृद्योगे कर्तरि कर्मणि च षष्ठी स्यादित्यनेन कर्मणि वेदस्येति षष्ठी प्राप्ता। तृजन्तत्वे 'न लोक' इति षष्ठीप्रतिषेधस्यात्राप्रवृत्तेः। 'कृदतिङ्' इति तिङ्वर्जप्रत्ययस्य कृत्त्वोक्तेस्तृचोऽपि तथात्वेन कृत्त्वात्तदन्तकर्तृशब्दयोगे प्राप्तायाः षष्ठ्याः 'षष्ठी' षष्ठी समर्थेन सुबन्तेन समस्यत इति समासे वेदकर्तेति भवति। अत्र षष्ठ्याः समासानुपपत्तिमाशङ्क्य समाधत्ते- **कर्तरि चेत्यादिना** ॥ 'कर्तरि च' कर्त्रर्थतृजकाभ्यां **(श्री.टि.)** षष्ठी न समस्यत इत्यर्थः। अपां स्रष्टा, सतामर्चक इत्युदाहरणम्। तथा च कर्त्रर्थकतृजन्तकर्तृशब्देन वेदस्येति षष्ठ्याः समासस्य प्रतिषिद्धत्वाद्वेदस्य कर्तेत्येव स्यान्न वेदकर्तेति समास इत्यर्थः ॥ **याजकादिभि-श्चेति** ॥ याजकादिभिः षष्ठी समस्यत इत्यर्थः। द्विजस्य याजको द्विजयाजकः। आकृतिगणोऽयम्। एवमाकार-काश्शब्दाः एतद्गणस्था इत्याकृतिगणः। तथा च पुनःप्रसवसामर्थ्याद्वेदकर्तेति समासो युक्त इत्यर्थः। कर्तृशब्दस्य तृन्नन्तत्वपक्षमङ्गीकृत्यापि समाधत्ते- **द्वितीयान्तस्येति** ॥ तृन्नन्तेन कर्तृशब्देन। **अयं समासो** वेदकर्तेति समासः। ननु 'न लोक' इति सूत्रेण तृन्नन्तशब्दयोगे षष्ठ्याः प्रतिषिद्धतया तत्प्राप्तेरेवाभावेन तस्याः समासस्य दूरोत्सारितत्वात् कथमेतदित्यत उक्तम्- **द्वितीयान्तस्येति** ॥ वेदशब्दस्येत्यर्थः। 'द्वितीया श्रित' इति सूत्रेणेति शेषः। द्वितीयायाश्च समासप्रतिषेधकं किमप्यत्र नास्तीत्याशयः। ननु तृनोऽपि कृत्त्वात्तद्योगे कर्मणि प्राप्त-द्वितीयाऽपवादकत्वेन 'कर्तृकर्मणोः' इति षष्ठीप्राप्तौ तस्यास्समासो भविष्यतीति चेन्न। तृनो योगे 'न लोक' इति षष्ठीनिषेधेन षष्ठीप्राप्तेरेवाभावात्, तस्यास्समासो दूरे निरस्त एव। एतत्सूचयितुमेव तृन्नन्तेन वेत्युक्तमिति ज्ञातव्यम्। ननु 'द्वितीया श्रित' इति सूत्रेण द्वितीयायाः कथं कर्तृशब्देन समासः। 'द्वितीया श्रितातीतपतित-गतात्यस्तप्राप्तापन्नैः' इति सूत्रे श्रितादिभिरेव द्वितीयायाः समासोक्तेः कर्तृशब्दस्य तत्रानुपादानादित्यत आह- **श्रितादिष्विति** ॥ ग्रामगमी ग्रामगामीत्यादिप्रयोगसिद्ध्यर्थं 'गम्यादेरिष्टिः' इत्युक्तत्वेन गम्यादेश्चाऽकृति-गणतया तन्मध्ये कर्तृशब्दस्यापि पठनीयत्वान्न कोऽपि दोष इति भावः।

ननु किमनेन निश्चायकं प्रमाणमुक्तमित्यतोऽनुमानमेवेत्याह- **वेद इति** ॥ अप्रयोजकतामाशङ्कते- **ननु यथेति** ॥ **इत्यत आहेति** ॥ इत्यप्रयोजकताशङ्कायां कल्पनागौरवरूपानुकूलतर्कमाहेत्यर्थः। नन्वप्रयोजकताशङ्का यत्र क्रियते तत्र साध्याभावाऽशङ्कैव कर्तव्या न तु साध्याभावकल्पनमित्यतस्तत्प्रकृतोपयोगितया व्याचष्टे- **कल्पने शङ्कायामिति** ॥ **गत्यन्तरेति** ॥ धर्मादिनिश्चायकोपायान्तराभावादित्यर्थः। ननु कथं गत्यन्तराभावः। अनुमानादिना तन्निश्चयसम्भवादित्यत आह- **अनुमानादीनामिति** ॥ 'न चानुमानादीनामागमं विना प्रामाण्यं धर्मादिषु' इत्यादिना निराकरिष्यमाणत्वादित्यर्थः। ननु धर्मादिनिश्चयरूपप्रयोजनसद्भावात्तदनुरोधेन तन्निश्चायकं किञ्चित्प्रमाणं कल्प्यत इत्याशङ्क्य निराकरोति- **न चेति** ॥ तथात्वे देवदत्तः पिपासित इत्येतावता मरावपि वारिसिद्धिप्रसङ्ग इति भावः। **अन्यत्** प्रमेयम्। प्रकृते च धर्मादिनिश्चायकं प्रमाणं न किञ्चिन्निश्चितमस्तीत्या-शयः। प्रतियोगिग्राहकप्रमाणाभावे तर्केण प्रतियोगिशङ्काया अपि निरासे तत्प्रतियोगिकाभावः सिद्ध्यतीत्यत्र दृष्टान्तमाह- **यथेत्यादिना। तर्कबलेनेति** ॥ स उपाधिर्योग्यो वाऽयोग्यो वा। योग्यस्यानुपलभ्यमानत्वाद् अयोग्यस्य शङ्कितुमशक्यत्वादिति तर्कबलेनेत्यर्थः।

**(पां.टि.)** ननु प्रमेयसिद्धेः प्रमाणसापेक्षत्वादपौरुषेयत्वस्वतस्त्वस्य बाधितत्वात्तदुक्तिरयुक्तेत्यत आह- **स्वत अनायासेनैवेति** ॥ **कर्तरि चेति प्रतिषिद्धस्येति** ॥ एतच्च वृत्तिकृन्मतमाश्रित्यैवमुक्तम्। वस्तुतस्तु 'तृजकाभ्यां कर्तरि' इति प्रतिषिद्धस्येत्येव वक्तव्यमित्यन्यत्र विस्तरः ॥ **याजकादिभिश्चेतीति** ॥ इदं च समाधानं कर्मत्व-**(पां.टि.)** विवक्षां 'कर्तरि च' इत्यादिषष्ठीसमासप्रतिषेधस्याविशेषेण कारकशेषषष्ठीसमाससमात्रप्रतिषेधपरत्वं नित्यत्वं चाऽश्रित्यैव कृतम्। न तु कर्तृशब्दस्य तृजन्तत्वतृन्नन्तत्वयोः षष्ठीसमासानुपपत्तिभिया। तथा हि। अस्तु तावत् कर्तृशब्दस्तृजन्तः। न चोक्तरीत्या 'कर्तरि च' इति वा 'तृजकाभ्यां कर्तरि' इति वा षष्ठीसमास-प्रतिषेधप्रसङ्गः। ताभ्यां कृल्लक्षणषष्ठीसमासस्यैव निषेधेन शेषषष्ठ्याः समासस्याप्रतिषिद्धत्वात्। ततश्च तृज्योगे 'कर्तृकर्मणोः कृति' इति प्राप्तषष्ठ्याः समासासम्भवेऽपि शेषषष्ठ्याः समासो नानुपपन्नः। अत एवोक्तं कैयटे 'कथं तर्हि घटा(दी)नां निर्मातुस्त्रिभुवनविधातुश्च कलह; इति शेषषष्ठ्याः समासः' इति। कर्मत्वविवक्षायामपि न 'कर्तृकर्मणोः कृति' इति प्राप्तकृल्लक्षणषष्ठीसमासानुपपत्तिः। 'जनिकर्तुः प्रकृतिः', 'तत्प्रयोजको हेतुश्च', 'जातिवाचको गुणो गुणिविशेषकः' इत्यादित्रिमुनिनिर्देशेन 'कर्तरि च' इति 'तृजकाभ्यां कर्तरि' इति वा निषेधस्यानित्यत्वज्ञापनेन क्वचिदप्रवृत्तिसम्भवात्। अत एव 'भीष्मः कुरूणां भयशोकहन्ता', 'हितकारकः' इत्यादिप्रयोगा अप्युपपन्नाः। एवं तृन्नन्तत्वेऽपि कर्तृशब्दस्य नानुपपत्तिः। न च

तृन्योगे 'न लोक' इति षष्ठ्या निषेधात् षष्ठ्येव न प्राप्नोति समासस्तु दूरनिरस्त इति वाच्यम् । तेन कारकषष्ठ्या एव तृन्योगे निषेधेन तस्यास्समासासम्भवेऽपि शेषषष्ठ्या अनिषेधेन तस्याः कर्तृशब्देन समासे दोषाभावात् । अवश्यं चैतत्, यत् 'न लोक' इति न षष्ठीमात्रप्रतिषेधः । किन्तु कारकषष्ठ्या एवेति । अन्यथा ब्राह्मणस्य कुर्वन्, ओदनस्य पचन्, अपापेरुरसि, नरकस्य जिष्णवो गुणैरित्यादौ षष्ठ्यनुपपत्तिप्रसङ्गात् । कारकषष्ठ्यास्तृन्नन्तेन समासाश्रयणेऽपि न दोषः । 'तृजकाभ्यां कर्तरि' इत्यत्र तृचः सानुबन्धकस्य निर्देशेन तृन्व्यावृत्त्यर्थेन 'न लोक' इति निषेधस्या-नित्यत्वज्ञापनेन प्रकृतेऽप्रवृत्तिसम्भवात् । न ह्यसत्यां षष्ठ्यां समासप्रसङ्गोऽस्ति । अत एवोक्तं न्यासे । 'तृन्नन्त-मेतत् । 'न लोकाव्यय' इति षष्ठीनिषेधस्त्वनित्यः । त्रकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्य ग्रहणाज्ज्ञापकात्' इति ॥ **पुनःप्रसवादिति** ॥ प्राप्तस्याप्यनेन निवर्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञा पुनःप्रसव इत्यर्थः । तृजन्तेनेत्युपलक्षणम् । तृन्नन्तेनेत्यपि द्रष्टव्यम् । पक्षान्तरमाह- **द्वितीयान्तस्येति** ॥ (तृन्नन्तेनेत्युपलक्षणम् । तृजन्तेनेत्यपि ज्ञेयम्) । श्रितादिषु कर्तृशब्दस्यापठितत्वात् कथं तृन्नन्तेन (तृजन्तेन वा) द्वितीयान्तस्य समासः स्यादित्यत आह- **श्रितादिष्विति** ॥ गम्यादेश्चाऽकृतिगणत्वादिति भावः । उक्तानुमानेऽप्रयोजकत्वं तद्बीजोपदर्शनपूर्वकमाशङ्कते- **ननु यथेति** ॥ ननु कर्तुः शङ्कितत्वेऽप्यकल्पितत्वात् कल्पन इत्युक्तिरयुक्तेत्यतः शङ्कापरतया तद्व्याचष्टे- **कल्पन इति** ॥

**(व्या.टि.)** 'अपौरुषेयत्वाद्वेदस्य इत्युक्तहेतुः सम्भावित इत्युक्तम् । तथाऽपि निश्चयाभावान्न हेतुत्वमित्याशङ्क्य तन्निश्चाययति- **अस्त्वित्यादिना** ॥ नन्वत्र 'कर्तरि च' इति प्रतिषिद्धस्येति, सुधायामप्युपासनापादे 'सृष्टि-बन्धनमोक्षादिकर्तृत्वस्य' इत्यनुव्याख्यानव्याख्याने, 'मोक्षादिकर्तृत्वस्येत्यादि कथं ? कर्तरि चेति तृजन्तेन षष्ठ्याः समासप्रतिषेधात्' इति समासानुपपत्तिमाशङ्क्य 'याजकादिभिश्च' इति प्रतिप्रसवात्, इति समाहितम् । तत्र शङ्का न युक्ता । न हि 'कर्तरि च' इति सूत्रे तृजन्तेन समासप्रतिषेधः । किन्तु 'तृजकाभ्याम्' इत्यत्रैव । अत्र **(व्या.टि.)** कर्तृग्रहणस्य षष्ठीविशेषणत्वेन 'भवत आसिका, भवतः शायिका' इत्यादौ अकेनैव समासप्रतिषेधेन तृज्ग्रहणाननुवृत्तेः । तदनुवृत्तौ तद्योगे तेनैव कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् । 'तृजकाभ्याम्' इत्यत्र तु कर्तृग्रहणस्य तृजकविशेषणत्वात्, अपां स्रष्टा, वज्रस्य भर्ता, ओदनस्य पाचक इत्यादौ तृजन्तेन षष्ठीसमास-निषेधः । न च तृचः कर्त्रव्यभिचाराद्विशेषणवैयर्थ्यमिति वाच्यम् । उपरञ्जकविशेषणत्वोपपत्तेः । न च विनिगमकाभावाद्विपरीतं सूत्रव्याख्यानं किं न स्यादिति वाच्यम् । 'तृजकाभ्यां कर्तरि' इत्यत्र कर्तृग्रहणस्य षष्ठीविशेषणत्वे अनुवृत्तविशेषणत्वं स्यात् । तच्च श्रुतविशेषणत्वसम्भवेऽन्याय्यम् । किञ्च कर्तृषष्ठ्या अकेनैव निषेधो युक्तः । भवतः शायिका, भवत आसिका इत्यादौ अकर्तर्यकविधानेन तद्योगे कर्तृषष्ठीसम्भवात् । न तृचा योगे । तस्य कर्तर्येव विधानेन तद्योगे तेनैव कर्तुरभिधानेन कर्तृषष्ठ्या अयोगात् तद्ग्रहणमुत्तरार्थमिति कल्प्यं स्यात् । तृजकसूत्रस्यैव प्रतिषेधकत्वे 'कर्तरि च' इति सूत्रे तृज्ग्रहणं नानुवर्तत एवेति लाघवम् । व्यक्तमेतन्मनोरमायाम् । अत एव 'अनधिगतार्थगन्तृ' इति पदव्याख्याप्रसङ्गे चन्निभट्टोऽप्याचष्ट- 'तृजन्तत्वेऽपि न तृजकाभ्यां कर्तरीति षष्ठीसमासप्रतिषेधः' इति । एवं च 'कर्तरि च' इति सूत्रे कर्तृषष्ठ्या अकेन समासनिषेधेऽपि कर्मणि षष्ठ्यास्तृजन्तेन समासानिषेधाद्वेदकर्तुरित्यत्र कर्मणि षष्ठीपरिग्रहेण तन्निषेधाप्रसक्तेः कथं 'कर्तरि च' इति प्रतिषिद्धस्येत्यनुभाषितमिति चेत् । सत्यम् । वृत्तिकृतो मतमाश्रित्येत्थमनुवाद इत्यदोषः । भाष्यमते तु 'तृजकाभ्यां कर्तरि' इति प्रतिषिद्धस्येति वक्तव्यम् । तथैव तान्त्रिकव्यवहारात् । ननु 'याजकादिभिश्च' इति पुनःप्रसवादित्ययुक्तम् । याजकादिगणे कर्तृशब्दस्य पाठाभावादिति चेन्न । वृद्ग्रहणाभावेन तस्याऽकृतिगण-त्वात् ॥ **षष्ठ्या इति** ॥ कर्मणि षष्ठ्या इत्यर्थः । एतच्च समाधानं निषेधस्य नित्यत्वमुपेत्य । वस्तुतस्तु 'जनिकर्तुः प्रकृतिः' 'तत्प्रयोजको हेतुश्च' इति प्रयोगात् लिङ्गात् 'तृजकाभ्यां कर्तरि' इति निषेधोऽनित्यः । तेन तृजन्तत्वेऽपि कर्मणि षष्ठीसमासः साधुः । एवं कर्मणि षष्ठीमुपेत्येदं समाधानम् । शेषषष्ठीपक्षे तु न समासप्रतिषेधः । अत एव कैयटे 'कथं घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इत्याशङ्क्य 'शेषषष्ठ्याः समासोपपत्तिः' इत्युक्तम् । चन्निभट्टोऽपि 'कृद्योगलक्षणषष्ठ्याः समासप्रतिषेधेऽपि शेषषष्ठीं समादाय समासोपपत्तिः' इत्याह । एवं तृन्नन्तेन योगे षष्ठी नेत्युपेत्य एष समाधिः । षष्ठीसत्त्वे तु न समासप्रतिषेध इति मन्तव्यम् । न च 'न लोकाव्ययनिष्ठा' इति तृनो योगे षष्ठ्या एव निषेधात् कथं समास इति वाच्यम् । निषेधस्यानित्यत्वात् । तत्त्वं च त्रकाभ्यामिति वक्तव्ये तृचः सानुबन्धस्य ग्रहणाज्ज्ञापकात् । तथा हि । त्रकाभ्यामित्युक्ते सामान्यग्रहणात् तृन्तृचोर्योगे समासप्रतिषेधो विज्ञायेत । तन्मा विज्ञायीति सानुबन्धग्रहणम् । तेन तृन्नन्तेन षष्ठीसमासोऽनुमत एव । तेन च तृनो योगे कर्मणि षष्ठी चानुमतैव । यथा 'पूरणगुण' इति षष्ठीसमासप्रतिषेधात् तद्योगे षष्ठी, तथाऽत्रापीत्यव-धेयम् । व्यक्तमेतन्मनोरमायाम् । न्यासकारोऽपि तृन्नन्तत्वे कर्मणि षष्ठीसमासमसाधयदित्यलं पल्लवेन(ल्लवितेन)।

समाध्यन्तरमाह- **द्वितीयान्तस्येति** ॥ न च तद्गणापाठात् कथमित्यत आह- **श्रितादिष्विति** ॥ उप-सङ्ख्येयेष्वस्योपसङ्ख्यानमिति

भावः । मूलेऽप्रसिद्धेरित्यस्याप्रमितेरित्यर्थमुपेत्य तदभिमतानुमानं दर्शयति- **वेद (व्या.टि.) इति ॥** अप्रमितकर्तृकत्वादिति बहुव्रीहिः । हेतोरप्रयोजकत्वं शङ्कते- **नन्विति । गिरिदरीति ॥** 'दरी तु कन्दरो वाऽस्त्री' इत्यमरः । वेदस्य कर्तुरिति व्यधिकरणषष्ठ्यौ **॥ शङ्क्यत इति ॥** अङ्कुरसद्भावदर्शनं संशयबीजमित्यर्थः । सर्वतो बलवतीं पूर्वोक्तां धर्मादिसिद्ध्यन्यथाऽनुपपत्तिं मा विस्मार्षीरित्याह- **अप्रमितमपीत्यादिना ॥** भवत्वन्या गतिरित्यत आह- **गत्यन्तरेति ॥** अस्त्यनुमानादिरन्या गतिरित्यत आह- **अनुमानादीनामिति ॥ निराकरिष्यमाणत्वादिति ॥** तदगोचरत्वादित्युत्तरग्रन्थ इत्यर्थः **॥ कल्पना-गौरवमेवेति ॥** धर्मधर्मिणोरुभयोरपि कल्प्यत्वेन बहुकल्पनाप्रसङ्गादिति भावः । ननु धर्मादिसिद्धिरूपकार्यस्य साधकमन्तरा अनुपपत्तेस्तत्साधकमन्यत् प्रमाणं कल्प्यत इत्याशङ्क्य निराचष्टे - **न चेति ॥ युक्तेति ॥** 'न हि देवदत्तः पिपासितः' इत्यादिना निराकृतत्वादिति भावः **॥ निश्चितेनेति ॥** प्रमाणतयेति शेषः । **अन्यद्** अप्रसिद्धं प्रमेयम् । **अभ्युपगम्यते** सत्तयेति शेषः । **'मानाधीना मेयसिद्धिः'**इति न्यायादिति भावः **॥ शङ्क-नीय इति ॥** बाधकदर्शने निर्मूलशङ्काया अनुदयादिति भावः । प्रमाणाभावेनानिश्चये गौरवतर्केण शङ्काया अप्यभावे सिद्धं नः समीहितमित्याह- **एवमिति ॥** एतन्न्यायं निदर्शयति- **यथेति ॥**

**मूलम् - नच लौकिकवाक्यवत् सकर्तृकत्वम् । तस्याकर्तृकत्वप्रसिद्ध्यभावात् ।**

**(त.मं.)** विमतं वेदवाक्यं सकर्तृकं वाक्यत्वात् लौकिकवाक्यवदिति च न वक्तव्यमित्याह - **न च लौकिकवाक्यवदिति ॥** तत्र चोपाधिदोषमाह - **तस्येति ॥** अकर्तृकत्वप्रसिद्ध्यभावस्तु स्यादेवोपाधिः । सकर्तृकत्वलक्षणसाध्यव्यापकत्वात् । वाक्यत्वलक्षणसाधनस्याव्यापकत्वात् । अनेन चात्र प्रत्यनुमानं सूचितम् । तथा हि - वेदवाक्यमकर्तृकम्; अकर्तृकत्वप्रसिद्धिमत्त्वात्, ईश्वरवदिति । न च हेत्वसिद्धिराशङ्कनीया । अहरहर्व्यवह्रियमाणत्वे सति अस्मर्यमाणकर्तृक-स्याकर्तृकत्वप्रसिद्धिमत्त्वसम्भवात् ।

**टीका -** एवं वेदस्याकर्तृकत्वेऽनुमानमभिधाय तत्स्थेम्नेऽनुकूलतर्कोऽप्यभिहितः । तत्र शङ्कते । असिद्धं वेदस्याप्रमितकर्तृकत्वम् । वेदः सकर्तृको वाक्यत्वाल्लौकिकवाक्यवदित्याद्यनुमानेन वेदकर्तुः प्रमितत्वादिति । तत्राऽह- **नच लौकिकेति ॥** वेदस्य वाक्यत्वादिहेतुनाऽनुमेयमिति शेषः । कुत इत्यत आह- **तस्येति ॥ तस्य** लौकिकवाक्यस्य । सकर्तृकत्वमिति वर्तते । पक्षीकृतस्य तु अकर्तृकत्वप्रसिद्धिमत्त्वादकर्तृकत्वमस्त्विति वाक्यशेषः ।

इदमुक्तं भवति । वाक्यत्वादौ समानेऽपि लौकिकवाक्यस्यावेदवाक्यत्वात् सकर्तृकत्वमस्तु । अस्य तु वेदत्वादकर्तृकत्वं भवत्वित्याशङ्कायां बाधकाभावेनाप्रयोजकत्वान्नैवमनुमातव्यमिति । नच साध्यदृष्टान्तयोर्धर्मविकल्पेन प्रत्यवस्थानाद्विकल्पसमाख्यं जात्युत्तरमेतदिति शङ्कनीयम् । तथा सति कुत्राप्यनुकूलतर्कस्य विपक्षे बाधकस्य चावक्तव्यत्वात्तर्कव्युत्पादनस्य वैयर्थ्यापत्तेः । किन्तु साध्ये वा दृष्टान्ते वा साध्यदृष्टान्तयोर्वा धर्मविकल्पात् कस्यचिद्धर्मस्य किञ्चिद्धर्मव्यभिचार-दर्शनात् साधनस्यापि साध्यव्यभिचारप्रतिपादनं विकल्पसमा जातिः ।

**(र.टि.)** नन्वनियतावयववादिनाऽपि दृष्टान्तसाध्यधर्मोक्तिमात्रस्य व्याप्त्यादिस्मारकत्वं नाङ्गीकृतमित्यतः कथं 'न च लौकिकवाक्यवत्सकर्तृकत्वम्' इति(त्यादि)परार्थानुमानानुवाद इत्याशङ्क्यापेक्षितं पूरयति- **वेदस्येत्यादिना ॥** 'लौकिकवाक्ये व्यवस्थापनम्' इति पदद्वयाध्याहारेण तस्येति सकर्तृकत्वपरामर्शकं प्रती-यते । तन्निवृत्त्यर्थं दृष्टान्तपरामर्शकतया व्याचष्टे- **तस्य लौकिकवाक्यस्येति ॥** अस्मिन् पक्षे एकस्यैव पदस्यानुवृत्तिः । तस्मिन् पक्षे तु पदद्वयाध्याहार इति हृदयम् । नन्वप्रयोजकत्वशङ्कायां दृष्टान्ते साध्यधर्मं प्रति प्रयोजकत्वेनोक्तधर्मस्य पक्षेऽभावेन तत्र साध्याभावव्यवस्थापनं कार्यम् । तावानर्थः कथमनेन प्रतीयत इत्यत आह- **पक्षीकृतस्य त्विति ॥** वाक्यार्थपर्यालोचनायां (दृष्टान्ते साध्यधर्मप्रयोजकत्वे) सोपाधिकत्वमेव स्पष्टं प्रतीयते, नाप्रयोजकत्वमित्यत आह- **इदमुक्तं भवतीति ॥**

**(रा.टि.) ॥ अनुकूलतर्कोऽपीति ॥** विपक्षे गौरवरूपो वा धर्माद्यसिद्धिरूपो वा अपौरुषेयवाक्याङ्गीकारपक्षे लाघवरूपो वेत्यर्थः **॥ अभिहित इति ॥** अप्रसिद्धौ च कर्तुरित्यादिनेति भावः । तावतोक्तवाक्यत्वानुमानस्य किं दूषणमुक्तमित्यत आह- **इदमुक्तमिति ॥** केनचिदुक्तलक्षणरीत्याऽस्य जात्युत्तरत्वमाशङ्कते- **न च साध्य-दृष्टान्तयोरिति ॥** वेदत्वं पक्षे, दृष्टान्ते चावेदत्वमिति

परस्परप्रतिद्वन्द्विधर्मकल्पनरूपेण वा वेदत्वरूपधर्म-भावाभावरूपधर्मविकल्पेन वा दूषणाभिधानमित्यर्थः ॥ **जात्युत्तरमेतदितीति** ॥ अतोऽत्र शङ्किताप्रयोजकत्व-निरासायानुकूलतर्कादिर्वाक्यत्वहेतोर्न वक्तव्य एवेति भावः ॥ **तथा सतीति** ॥ उक्ताप्रयोजकत्वस्य जात्युत्तरत्वे सतीत्यर्थः । धूमवत्त्वाद्यनुमानेऽप्यपर्वतीयधूमवत्त्वादस्तु महानसोऽग्निमान्, अत्र तु पक्षे पर्वतीयधूमवत्त्वान्मास्तु पर्वतोऽग्निमानित्यादिचोद्यस्य जात्युत्तरत्वेनानुकूलतर्कादेरवक्तव्यत्वापत्त्या विपक्षे कार्यकारणभावभङ्गादिरूप-तर्कोक्तेर्वैयर्थ्यं स्याद् अतो नेदं विकल्पसमलक्षणं किन्त्वन्यदेवेत्याह- **किन्तु साध्य इत्यादिना ॥ धर्म-विकल्पादिति** ॥ साध्ये केनचिद्धर्मेण सह भावाभावरूपविकल्पाद् दृष्टान्ते कस्यचिद्धर्मस्य भावाभावरूप-विकल्पात्साध्यदृष्टान्तयोर्वा धर्मविकल्पान्निमित्तादित्यर्थः । शब्दोऽनित्यः कार्यत्वाद्घटवदित्युक्ते कृतकत्वरूपो धर्मः साध्यं व्यभिचरेत्, मूर्तत्वामूर्तत्वयोरन्योन्यं व्यभिचारदर्शनादित्येवंरूपा विकल्पसमा जातिः । न ह्येवं प्रकृत इति भावः ।

**(श्री.टि.) अनुकूलस्तर्कः** कल्पनागौरवरूपः । **लौकिकवाक्यं** कालिदासादिवाक्यं कुमारसम्भवादि । पक्षहेत्वोरनुक्तेर्न्यूनतेत्यत आह- **वेदस्येति ॥ समानेऽपीति** ॥ पक्षदृष्टान्तयोरिति शेषः ॥ **साध्येति** ॥ **(श्री.टि.)**साध्यधर्मवत्त्वेन साधयितुं योग्यं साध्यं पक्ष इत्यर्थः । एवमुत्तरत्रापि साध्यशब्देन पक्षो ग्राह्यः । **धर्मविकल्पेनेति** ॥ वेदत्वावेदत्वरूपधर्मविकल्पेनेत्यर्थः । **एतद् अप्रयोजकताशङ्कनम्** ॥ **तथा सतीति** ॥ एतादृशाप्रयोजकताशङ्काया जात्युत्तरत्व इत्यर्थः ॥ **कुत्रापीति** ॥ धूमानुमानादावपीत्यर्थः । तथा हि । महानसस्यापर्वतत्वादस्तु वह्निमत्त्वम् अस्य च पर्वतत्वान्मास्त्वित्यप्रयोजकताशङ्कायां नेयमप्रयोजकताशङ्का, किं नाम विकल्पसमाख्यं जात्युत्तरमिति वक्तुं शक्यते । तथा चाप्रयोजकताशङ्कानिरासाय तत्रानुकूलतर्कव्युत्पादनं परीक्षकैः क्रियमाणं व्यर्थमेव स्यात् । कुतः सद्दूषणत्वे हि तत्परिहाराय यत्नः कर्तव्यः । एतादृशाप्रयोजकत्व-शङ्कनस्य जात्युत्तरत्वेनासद्दूषणतया तत्परिहारासम्भवात् । 'असदुत्तरं जातिः' इत्युक्तेरिति भावः ।

नन्वनुकूलतर्कस्यैव विपक्षबाधकतर्कत्वेन द्वयोः कथं पृथगुक्तिः । न च विशेषणविशेष्यभावेनोपपत्तिरिति वाच्यम् । चशब्दवैयर्थ्यापत्तेरिति चेत्, उच्यते । पक्षादिप्रविभागात्पूर्वं व्याप्त्यादिग्रहणदशायामप्रयोजकत्वप्राप्तौ तत्परिहाराय यस्तर्कः प्रवर्तते सोऽनुकूलतर्क इत्युच्यते । स च व्याप्तिनिश्चयैकफलकः । पक्षादिप्रविभागोत्तर-मप्रयोजकताशङ्कायां यस्तत्परिहाराय तर्कः प्रवर्तते स विपक्षबाधकस्तर्क इत्युच्यते । स च पक्षे विपक्षजिज्ञासा-विच्छेदफलक इति भेदमभिप्रेत्य 'अनुकूलतर्कस्य विपक्षे बाधकस्य च' इत्युक्तम् ।

इदं विकल्पसमजातिलक्षणं न चेत् किं तर्हि लक्षणमिति पृच्छति- **किन्त्विति** ॥ उत्तरमाह- **साध्ये वेत्या-दि** ॥ साध्यवत्तया साधयितुं योग्यं साध्यं पक्षः । तथा च साधनस्य साध्ये पक्षे दृष्टान्ते पक्षदृष्टान्तयोर्वा धर्म-विकल्पात् किञ्चिद्धर्मेण व्यभिचारदर्शनात्साध्यव्यभिचारप्रतिपादनम्, तथा कस्यचिद्धर्मस्य किञ्चिद्धर्मव्यभिचार-दर्शनात्साधनस्यापि साध्यव्यभिचारप्रतिपादनं विकल्पसमा जातिरित्यर्थः । तथा हि । साधनस्य धूमवत्त्वस्य पक्षेऽपर्वतत्वव्यभिचारदर्शनात्साध्येन वह्निनाऽपि व्यभिचारोऽस्त्विति प्रतिपादनम्, तथा साधनस्य धूमस्य दृष्टान्ते अमहानसत्वव्यभिचारदर्शनात् साध्यव्यभिचारप्रतिपादनम्, तथा साधनस्य धूमस्य पक्षदृष्टान्तयोरद्रव्यत्वेन व्यभिचारदर्शनात् साध्येनापि व्यभिचारप्रतिपादनम्, तथा कस्यचिद्धर्मस्य रूपस्य किञ्चिद्धर्मेण रसेन व्यभिचारदर्शनात्साधनस्यापि धूमस्य साध्यव्यभिचारापादनं विकल्पसमा जातिः । यथाऽऽहुः-

'धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः ।
हेतोः साध्याभिचारोक्तेर्विकल्पसमजातिता' इति ।

न ह्येतल्लक्षणं प्रकृतेऽस्ति, अतो नैतद्विकल्पसमाख्यं जात्युत्तरमित्याशयः ।

**(पां.टि.) ॥ अनुकूलतर्क इति** ॥ कल्पनागौरवापादनरूप इत्यर्थः ॥ **अभिहित इति** ॥ 'अप्रसिद्धौ च कर्तुः' इत्यनेन वाक्येनेति शेषः । किमनेन शङ्कितानुमानस्य दूषणमुक्तं भवतीत्यत आह- **इदमुक्तं भवती-ति** ॥ साध्यदृष्टान्तयोरित्यत्र साध्यशब्देन पक्षो ग्राह्यः ॥ **धर्मविकल्पेनेति** ॥ वेदत्वाऽवेदत्वरूपधर्मविकल्पे-नेत्यर्थः ।

**(व्या.टि.) ॥ तत्स्थेम्न इति** ॥ तस्य स्थैर्यायेत्यर्थः । 'प्रियस्थिर' इत्यादिना स्थिरशब्दस्य स्थादेशः । तत इमनिचि रूपम् ॥ **शङ्कत इति** ॥ पौरुषेयत्ववादीति शेषः ॥ **शेष इति** ॥ 'यत्रानवसरोऽन्यत्र' इति वचनादिति भावः । मूलाभिसंहितदोषमुद्घाटयति- **इदमुक्तं भवतीति** ॥ धर्मविकल्पेन प्रत्यवस्थानं विकल्पसम इति मत्वा शङ्कते- **न चेति** ॥ अत्र साध्यशब्देन पक्षो निर्दिश्यते । तस्यापि साध्यवत्तया साध्यत्वात् । **तथा सति** असदुत्त-रत्वे । अनुकूलतर्कस्य व्यभिचाराद्यापादककानिष्टापत्तिरूप(तर्क)स्य

व्याप्तिग्रहणौपयिकस्येत्यर्थः ॥ **बाधक-स्येति** ॥ पक्षे साध्याभावाद्यापादककानिष्टापत्तिरूपस्येत्यर्थः ॥ **अवक्तव्यत्वादिति** ॥ शङ्काया जात्युत्तरतया साधारणासामर्थ्यरूपव्याघातहततया उत्थानायोगेन तन्निरासाय तर्कस्यावक्तव्यत्वापातादित्यर्थः(ति भावः)। 'व्याघातावधिराशङ्का' इत्युक्तेरिति भावः ॥ **साध्यव्यभिचारप्रतिपादनमिति** ॥ यथोक्तं न्यायचन्द्रिका-याम्। 'हेतोः साध्यव्यभिचारापादनं विकल्पसमः' इति विकल्पसमप्रतिषेधं लक्षयित्वा तथैवोदाहृतम्। 'शब्दोऽनित्यः कृतकत्वादित्यत्र पक्षे शब्दे कृतकत्वं विभागजत्वेन सह वर्तमानमपि सपक्षे घटे तद्व्यभिचारि। तथा सपक्षे साध्यसहचरितमपि पक्षे तद्व्यभिचारि किं न स्यादिति' इति।

**टीका -** ननु किमिदं वेदत्वं यद्भावाभावाभ्यां पक्षसपक्षयोः साध्यस्याभावो भावश्च व्यवस्था-प्यते। न तावद्वाक्यत्वम् अदृष्टविषयवाक्यत्वं वा। बौद्धादिवाक्यानामपि वेदत्वप्रसङ्गात्। नापि प्रमाणत्वे सत्यदृष्टविषयवाक्यत्वम्। मन्वादिवाक्यानामपि तत्प्राप्तेः। नाप्यपौरुषेयवाक्यत्वम्। व्यवस्थाप्यमानातिरिक्तव्यवस्थापकाभावप्रसङ्गात्। इत्याशङ्क्य तस्यावेदत्वादिति वक्तव्येऽवेद-शब्दार्थज्ञापनार्थं 'तस्याकर्तृकत्वप्रसिद्धिरहितत्वात्' इत्युक्तम्। तथाचाकर्तृकत्वप्रसिद्धिमत्त्वं वेदत्वं तदभावश्चावेदत्वं ताभ्यां साध्यविकल्पः शङ्क्यत इत्यभिहितं भवति। अकर्तृकत्वप्रसिद्धिमत्त्वं नाम प्रत्यक्षादिप्रमाणं विप्रलम्भादिकं वाऽस्य मूलं नोपलभ्यत इति प्रसिद्धिविषयत्वम्। एतच्च 'अनुप-लभ्यमानमूलत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वम्' इति वदता उदयनेनाप्यङ्गीकृतम्। तत्रानुपलभ्यमानमूलत्वग्रहणेन प्रत्यक्षादिमूलत्वस्य, महाजनपरिगृहीतत्वग्रहणेन विप्रलम्भादि-मूलत्वस्य च व्यावर्तितत्वात्। सर्वज्ञज्ञानमूलत्वं वदताऽपि तस्य प्रमाणत्वाभावाद् एवं वक्तुं शक्यत एव। एतच्चानुमानं वैशेषिकादीनाम् । तथाच सूत्रम् 'बुद्धिपूर्वा वाक्यकृतिर्वेदः' इति। अतस्तान् प्रत्येवं वेदशब्दार्थं निरुच्य तद्भावाभावाभ्यां साध्यविकल्पशङ्कोपपद्यते। विप्रलम्भादिमूलत्व-मभ्युपगच्छतः सौगतादीन् प्रति तु पक्षतावच्छेदकत्वेन यद्वेदत्वं तैरङ्गीक्रियते तद्भावाभावाभ्यामेव शङ्कनीयम्। एवञ्चाप्रयोजकोऽन्यथासिद्धो व्याप्यत्वासिद्धो वा वाक्यत्वादिहेतुरिति। सकर्तृकत्वाभावे प्रामाण्याभावप्रसङ्गः प्रमायाः परतन्त्रत्वादित्यादिबाधकं तूत्तरत्र निराकरिष्यते ।

**(र.टि.) ॥ व्यवस्थाप्यमानेति ॥** अप्रयोजकत्वशङ्कायां दृष्टान्ते साध्यधर्मं प्रति प्रयोजकत्वेनोक्तधर्मस्य पक्षेऽ-भावेन तत्र साध्याभावव्यवस्थापनं कार्यम्। सकर्तृकत्वरूप(लक्षण)साध्याभावश्चापौरुषेयत्वरूपः। सकर्तृकत्व-प्रयोजकाभावप्रतियोगिरूपं वेदत्वं यद्यपौरुषेयवाक्यत्वरूपं तर्ह्यभावाभावो भाव एवेति प्रयोजका(कोऽ)-भावोऽप्यपौरुषेयवाक्यत्वरूपः पर्यवसन्नः। तथा च तयोरेकत्वादित्यर्थः। यद्यप्यपौरुषेयवाक्यत्वभावाभाव-योर्व्यवस्थापकत्वे, व्यवस्थापके वाक्यत्वस्याधिकस्य प्रवेशान्न तयोरैक्यम्। तथाऽपि यथा हेतावधिकप्रवेशेऽपि सर्वसाध्यघटितत्वे सन्दिग्धविशेषणत्वेनाहेतुत्वं तथाऽसम्प्रतिपन्नव्यवस्थाप्यघटितत्वेन विशिष्टस्यासम्प्रति-पन्नविशेषणकत्वेन न व्यवस्थापकत्वमिति भावः। नन्वकर्तृकत्वप्रसिद्धिमत्त्वमपि न वेदत्वम्। व्यवस्थापक-स्यान्यतराप्रसिद्धिप्रसङ्गादित्यत आह- **अकर्तृकत्वप्रसिद्धिमत्त्वं नामेति ॥**

**(रा.टि.)** प्रश्नस्यासाङ्गत्यनिरासायोक्तम्- **यद्भावाभावाभ्यामिति ॥ साध्यस्येति ॥** सकर्तृकत्वस्याभावो भावश्चेति यथाक्रममन्वयः ॥ **व्यवस्थाप्येति** ॥ अपौरुषेयत्वं हि लौकिके नास्ति वेदे त्वस्तीति व्यवस्था-प्यम्। तद्व्यवस्थाहेतुतयोक्तं व्यवस्थया स्थितं वेदत्वं व्यवस्थापकम्। तदुभयमेकमेवाऽपन्नमिति व्यवस्थाप्य-व्यस्थापकभावायोग इति भावः ॥ **साध्यविकल्प इति** ॥ वाक्यत्वानुमानेऽभिमतस्य सकर्तृकत्वस्य वेदे अभावो लौकिके भावः शङ्क्यत इत्यर्थः। अकर्तृकत्वप्रसिद्धिमत्त्वं पौरुषेयत्ववादिनो न सम्मतमित्यत आह- **अकर्तृकत्व-प्रसिद्धिमत्त्वं नामेति** ॥ बौद्धादिवाक्ये मन्वादिवाक्ये चानतिव्याप्तये दलद्वयम् ॥ **इति वदतेति** ॥ कुसुमाञ्जलाविति योज्यम्। नन्वीश्वरप्रत्यक्षज्ञानजन्यत्वस्य परेणोच्यमानत्वात् कथं प्रत्यक्षाद्यमूलत्वं परसम्मत-मित्यत आह- **सर्वज्ञेति** ॥ गुणदोषाभ्यामजन्यत्वेनेश्वरज्ञानस्य प्रमाऽप्रमाबहिर्भावोपगमेन प्रत्यक्षादिप्रमाणा-मूलत्वे सति विप्रलम्भाद्यमूलकशब्दत्वं वेदत्वमिति वक्तुं शक्यत एवेत्यर्थः। तर्कताण्डवे तु 'प्रत्यक्षादिशब्दः प्रमाकरणपरः प्रमाकरणामूलकत्वे सति प्रमाणशब्दत्वं वेदत्वम्' इत्युक्तम्। ईश्वरज्ञानस्य प्रमात्वेऽपि परसाधारण-मेतदिति ज्ञेयम्। वैशेषिकादीनामित्यादिपदेन

नैयायिकपरिग्रहः ।। **साध्यविकल्पशङ्केति** ।। सिद्धान्तिप्रयोगे वेदत्वस्य भावेनापौरुषेयत्वरूपसाध्यस्य भावो, लौकिकवाक्ये वेदत्वाभावेनोक्तसाध्यस्याभाव इति । वाक्य-त्वानुमानेऽभिप्रेतसकर्तृकत्वरूपसाध्यस्य सिद्धान्तिप्रयोगेऽभावः परकीयप्रयोगे तु भाव इति वा । सिद्धान्तिप्रयोगे पराभिमतप्रयोगे च तत्तदभिमतसाध्यस्य भावः तद्विपरीतस्याभाव इति भावाभावरूपसाध्यविकल्पशङ्केत्यर्थः । **पक्षतावच्छेदकत्वेनेति** ।। सकर्तृकत्वप्रयोग इति बोध्यम् ।। **शङ्कनीयमिति** ।। वाक्यत्वहेतोरप्रयोजकत्वा-दिकमिति योज्यम् । तस्याकर्तृकत्वप्रसिद्ध्यभावादित्युक्त्या वाक्यत्वहेतोः किं दूषणमुक्तमित्यत आह- **एवं चेति** ।। **अन्यथासिद्ध इति** ।। वेदे विद्यमानो वाक्यत्वहेतुराकाङ्क्षादिमत्त्वेनोपपन्न इत्यर्थः ।। **व्याप्यत्वेति** ।। व्याप्तिग्रहणवेलायामेव अन्यथासिद्धत्वोपस्थितौ व्याप्यत्वासिद्ध्युन्नायकत्वादेतदुक्तिः ।। **बाधकं त्विति** ।। अपौरुषेयत्वानुमाने बाधकं तु 'प्रामाण्यं च स्वत एव' इत्यादावुत्तरत्रेत्यर्थः ।

**(श्री.टि.)** प्रश्नस्यासङ्गतिं परिहरति- **यद्भावाभावाभ्यामिति** ।। यस्य वेदत्वस्य भावेन पक्षे सकर्तृकत्वरूपस्य साध्यस्याभावो व्यवस्थाप्यते, यस्य वेदत्वस्याभावेन सपक्षे लौकिकवाक्ये साध्यस्य सकर्तृकत्वस्य भावो व्यवस्था-प्यते तद्वेदत्वं नाम किमित्यर्थः ।। **बौद्धादीति** ।। बौद्धावाक्यस्यापि वाक्यत्वात् 'केशोल्लुण्ठनं धर्मः सप्तघटिकातः प्राग्भोजनं धर्मः' इत्यदृष्टविषयवाक्यत्वाच्च तत्रातिव्याप्तिरित्यर्थः ।। **व्यवस्थाप्यमानेति** ।। वेदत्वात्सकर्तृकत्वं मास्त्विति वेदत्वेन सकर्तृकत्वाभावो व्यवस्थाप्यते । तत्र व्यवस्थापकीभूतं वेदत्वं नाम यद्यपौरुषेयत्वं तर्हि तदेव व्यवस्थाप्यमानसकर्तृकत्वाभावरूपम् । तथा चापौरुषेयत्वादपौरुषेयमस्त्वित्युक्तं स्यादित्यर्थः ।। **अकर्तृ-कत्वप्रसिद्धिमत्त्वं वेदत्वमिति** ।। अकर्तृकत्वप्रसिद्धिमद्वाक्यत्वमित्यर्थः । अन्यथा गगनादावतिव्याप्तिः स्यादित्यवधेयम् । अत एवोत्तरत्र 'अकर्तृकत्वप्रसिद्धिमद्वाक्यत्वं वेदत्वमिति यद्वेदलक्षणमुक्तम्' इति वदिष्य-तीति । **साध्यविकल्पः** पक्षसपक्षयोः साध्याभावभावरूपः । विप्रलम्भादिकमित्यत्राऽदिपदेन भ्रान्तिसङ्ग्रहः । ननु कथमिदं वेदलक्षणं? केनापि परीक्षकेणानङ्गीकृतत्वादस्य लक्षणस्येत्याशङ्कायां वेदस्य सकर्तृकत्ववादिनोदय-नेनाप्यङ्गीकृतमिति वक्तुमकर्तृकत्वप्रसिद्धिमत्त्वं तावन्निर्वक्ति ।। **अकर्तृकत्वप्रसिद्धिमत्त्वं नामेति** ।। नन्वकर्तृकत्वप्रसिद्धिमत्त्वशब्दात् कथमयमर्थो लभ्यत इति चेदुच्यते । यो हि यमर्थं प्रत्यक्षादिप्रमाणेनोपलभ्य तत्प्रतिपादकं वाक्यं रचयति विप्रलम्भेन वा स तस्य कर्तेत्युच्यते । तादृशकर्तृप्रसिद्धिमत्त्वाभावो ह्यकर्तृकत्व-प्रसिद्धिमत्त्वम् । तथा चार्थात् प्रत्यक्षादिप्रमाणमूलकत्वाभाव एवोक्तो भवतीति द्रष्टव्यम् ।। **अनुपलभ्य-मानमूलत्वे सतीति** ।। महाजनपरिगृहीते मन्वादिवाक्ये तत्प्रत्यक्षादिप्रमाणमूलकेऽतिव्याप्तिपरिहाराय सत्यन्तम् । विप्रलम्भकवाक्येऽतिव्याप्तिवारणाय विशेष्यभाग इति द्रष्टव्यम् । इत्थमेव पदकृत्यं हृदि निधायोप-पादयति- **तत्रेत्यादिना** ।। **मूलत्वस्य** मूलकत्वस्य । तथा च मन्वादिवाक्यव्यावृत्तिरिति ज्ञेयम् ।। **विप्रलम्भा-दीति** ।। न हि विप्रलम्भादिमूलकं वाक्यं महाजनपरिगृहीतं भवतीति भावः । तथा चानुपलभ्यमानमूलत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वमित्युक्तेऽर्थात्प्रत्यक्षादिप्रमाणं विप्रलम्भादिकं वाऽस्य मूलं नोपलभ्यत इति प्रसिद्धिविषयत्वमेव प्राप्तमिति द्रष्टव्यम् । नन्वनुपलभ्यमानप्रत्यक्षादिप्रमाणमूलकत्वं कथमुदयनेन शक्यते वक्तुम् । ईश्वरः सर्वज्ञः । स च प्रत्यक्षेणार्थमुपलभ्य वेदं रचयतीत्यङ्गीकारेण प्रमाणभूतेश्वरप्रत्यक्षमूलकत्वाङ्गी-कारादित्याशङ्क्याऽह- **सर्वज्ञज्ञानेति** ।। ईश्वरप्रत्यक्षेत्यर्थः । वदता उदयनेन । **तस्य** ईश्वरज्ञानरूपप्रत्यक्षस्य । **प्रमाणत्वाभावादिति** ।। प्रामाण्यस्य तन्मते गुणजन्यत्वेनेश्वरज्ञानरूपप्रत्यक्षस्य नित्यत्वेन तत्प्रामाण्यस्य गुणजन्यत्वाभावेन तस्य प्रमाणत्वाभावादित्यर्थः । यथोक्तमुदयनेन गुणकिरणावल्याम् -

'गुणदोषाजन्यतया नित्यत्वादीश्वरी प्रमा ।
प्रमाऽप्रमाबहिर्भूता परतस्त्वात्तयोर्मम ।।' इति ।

।। **एवं वक्तुमिति** ।। अनुपलभ्यमानप्रत्यक्षप्रमाणमूलकत्वं वक्तुं शक्यत एवेत्यर्थः ।

।। **एतच्चेति** ।। वेदः सकर्तृक इत्यनुमानमित्यर्थः ।। **वैशेषिकादीनामिति** ।। आदिपदेन नैयायिकसौगतादि-**(श्री.टि.)** ग्रहणम् ।। **साध्यविकल्पशङ्केति** ।। पक्षसपक्षयोः साध्याभावभावशङ्काऽस्माभिः परं प्रति क्रिय-माणोपपद्यत इत्यर्थः ।। **सौगतादीन् प्रति त्विति** ।। वेदानां विप्रलम्भादिमूलकत्वाङ्गीकारेण प्रत्यक्षादिप्रमाणं विप्रलम्भादिकं वाऽस्य मूलं नोपलभ्यत इति प्रसिद्धिविषयत्वं वेदत्वमिति तान् प्रति वेदत्वं निर्वक्तुं न शक्यत इत्यर्थः ।। **तैरङ्गीक्रियत इति** ।। विप्रलम्भादिना वेदो बुद्धिरचित इति सौगतैरङ्गीकृतत्वादिदं सकर्तृकत्वानुमानं सौगतैरपि वक्तुं शक्यत एव । अतस्तैः पक्षतावच्छेदकतया वेदत्वं किञ्चिन्निर्वक्तव्यमेव । अन्यथा पक्षीकरण-स्यैवासम्भवात् । अतस्सौगतैः पक्षतावच्छेदकतया यद्वेदत्वं निरुच्यते तद्भावाभावाभ्यामेव पक्षसपक्षयोः साध्या-भावभावसत्त्वं शङ्क्यम् । न तु वैशेषिकादीन् प्रतीव वेदशब्दार्थं निरुच्य तद्भावाभावाभ्यामित्यर्थः ।। **अप्रयोजकोऽ-**

**न्यथासिद्धो वेत्यादि ॥** अस्तु वाक्यत्वं सकर्तृकत्वं मास्त्वित्यप्रयोजकता, सकर्तृकत्वं विनाऽपि वाक्यत्वमुप-पद्यत इत्यन्यथासिद्धिर्वा स्यात्। विपक्षे बाधकाभावादिति भावः। यथाऽऽहुः-

'यस्यानुकूलतर्कोऽस्ति स एव स्यात् प्रयोजकः।
तदभावेऽन्यथासिद्धिस्तस्याः स हि निवारकः ॥' इति।

**॥ व्याप्यत्वासिद्धो वेति ॥** व्याप्तिग्राहकप्रमाणाभावादिति भावः। यथाऽऽहुः 'व्याप्यत्वासिद्धो द्विविधः। एको व्याप्तिग्राहकप्रमाणाभावादपरस्तूपाधिसद्भावात्' इति।

ननु नोक्तानुमानेऽप्रयोजकत्वादि। यदि सकर्तृकत्वं न स्यात्तर्हि प्रामाण्यमेव न स्यात्, वाक्यप्रामाण्यस्याऽऽप्तोक्तत्वगुणजन्यत्वादित्यनुकूलतर्कसद्भावात्। अत एवोपाधेरपि पक्ष एव साध्यव्यापकताभङ्गः सेत्स्यति। अतो न व्याप्यत्वासिद्धिरपीत्याशङ्क्य परिहरति- **सकर्तृकत्वाभाव इति ॥ परतन्त्रत्वात्** पराधीनत्वात्। गुणजन्यत्वेन परतस्त्वादिति यावत् **॥ निराकरिष्यत इति ॥** 'प्रामाण्यं च स्वत एव' इत्यादिना प्रामाण्यस्य स्वतस्त्वप्रतिपादनेनेत्यर्थः।

**(पां.टि.)॥ व्यवस्थाप्यमानेति ॥** लौकिकवाक्ये व्यवस्थाप्यमानस्य सकर्तृकत्वस्य पौरुषेयत्वरूपत्वाद् वेदे च व्यवस्थाप्यमानस्याकर्तृकत्वस्यापौरुषेयत्वरूपत्वाद्व्यवस्थाप्यमानाभ्यां पौरुषेयत्वापौरुषेयत्वाभ्यां तद्व्यवस्थापकत्वेनोक्तयोः पौरुषेयत्वापौरुषेयत्वरूपावेदत्ववेदत्वयोर्भेदाभावप्रसङ्गादित्यर्थः। न चापौरुषेय-वाक्यत्वं वेदत्वमिति पक्षे व्यवस्थापककोटौ वाक्यत्वस्याधिकस्य प्रवेशान्न व्यवस्थाप्यमानातिरिक्तव्यवस्थापका-भावप्रसङ्ग इति वाच्यम्। वाक्यत्वस्य सकर्तृकत्वाकर्तृकत्वे प्रत्यप्रयोजकतया तत्प्रवेशस्याकिञ्चित्करत्वेनोक्त-प्रसङ्गानिवारणात्। ननु नाकर्तृकत्वप्रसिद्धिमत्त्वं वेदत्वम्। तस्य वेदे परं प्रत्यसिद्धतयाऽपौरुषेयत्वव्यवस्थाप-कत्वाभावप्रसङ्गादित्यत आह- **अकर्तृकत्वप्रसिद्धिमत्त्वं नामेति ॥** मन्वादिवाक्यव्यावृत्त्यै पूर्वभागः। बौद्धागमव्यावृत्त्यै चोत्तरभागः। तथाऽपि कथं परं प्रत्यसिद्धिपरिहार इत्यत आह- **एतच्चेति ॥** ननु परमते वेदस्येश्वरज्ञानमूलकत्वात् परेण तस्यानुपलभ्यमानप्रत्यक्षादिमूलकत्वं वक्तुं न शक्यमित्यत आह- **सर्वज्ञेति ॥ (पां.टि.) प्रमाणत्वाभावादिति ॥** परेणेश्वरज्ञानस्य प्रमाबहिर्भूतत्वाङ्गीकारादिति भावः। ननु विप्रलम्भादि-मूलत्वं वदद्भिः सौगतादिभिरेतादृशवेदत्वानङ्गीकारान्न तान् प्रति वेदत्वसद्भावासद्भावाभ्यां साध्यविकल्पशङ्का कर्तुं शक्येत्यत आह- **एतच्चेति ॥** वेदः सकर्तृको वाक्यत्वादित्यनुमानं चेत्यर्थः। कुत एतदवगम्यत इत्यत आह- **तथा चेति ॥** वेदवाक्यसमुदाये या वाक्यवृत्तिः, या समुदायिनां वाक्यानां रचना, सा पक्षः। बुद्धिपूर्वा, वक्तृयथार्थवाक्यार्थज्ञानपूर्वा। वाक्यरचनात्वात्। नदीतीरे पञ्च फलानि सन्तीत्यस्मदादिवाक्यरचनावत्। न चास्मदादिबुद्धिपूर्वकत्वेनान्यथासिद्धिः। 'स्वर्गकामो यजेत' इत्यादाविष्टसाधनतायाः कार्यताया वा अस्मदादि-बुद्ध्यगोचरत्वेन स्वतन्त्रपुरुषपूर्वकत्वमादायैव साध्यपर्यवसानादिति वैशेषिकसूत्रार्थः। तर्हि बौद्धादीन् प्रति साध्यविकल्पशङ्काया अनवकाशान्न तदुत्थापितैतदनुमानदूषणप्रसङ्ग इत्यत आह- **विप्रलम्भेति ॥** विपक्षे बाधक-सद्भावान्नाप्रयोजको हेतुरित्याशङ्क्य परिहरति- **सकर्तृकत्वाभाव इति ॥ निराकरिष्यत इति ॥** 'तत्प्रामाण्यं च स्वत एव सिद्धम्' इत्यादिना प्रामाण्यस्योत्पत्तौ गुणानपेक्षत्वव्युत्पादनेनेति शेषः।

**(व्या.टि.)** ननु तस्यावेदत्वादित्येव तर्हि वक्तव्यम्। न तु तस्याकर्तृकत्वप्रसिद्ध्यभावादिति। स्वायत्तन्याय-विरोधादित्यतस्तदाशयमुद्घाटयितुं पृच्छति- **नन्वित्यादिना ॥** अत्र व्यवस्थापकं वेदत्वं किं वाक्यत्वं वा, अदृष्टविषयवाक्यत्वं वा, प्रमाणत्वे सत्यदृष्टविषयवाक्यत्वं वा, अपौरुषेयवाक्यत्वं वा, इति चतुर्धा विकल्पं मनसि विधाय क्रमेण दूषणान्याह- **न तावदित्यादिना। व्यवस्थाप्यमानेति ॥** अत्र गगनादावतिव्याप्ति-निरासाय अधिकस्य वाक्यत्वस्य प्रवेशेऽपि तस्याकर्तृकत्वाप्रयोजकत्वेनापौरुषेयत्वस्यैव तत्त्वे वक्तव्ये तस्याकर्तृ-कत्वाभेदेन व्यवस्थाप्यव्यवस्थापकभावानुपपत्तिरिति भावः **॥ साध्यविकल्प इति ॥** पक्षसपक्षयोः साध्या-भावभावयोः शङ्केत्यर्थः। नन्वकर्तृकत्वप्रसिद्धिमत्त्वं वेदत्वमिति निरुक्तिरयुक्ता। सकर्तृकत्ववादिनामकर्तृकत्व-प्रसिद्धेरसिद्धेः। तदसिद्धौ विपर्ययपर्यवसानायोगात्। किञ्चाकर्तृकत्वप्रसिद्धिमत्त्वे सिद्धे तेन सकर्तृकत्वनिरासः। निरस्ते च तस्मिन्नप्रमितकर्तृकत्वसिद्ध्या तेनाकर्तृकत्वप्रसिद्धिरित्यन्योन्याश्रयश्चेत्यतो निरुक्तं व्यक्तीकरोति- **अकर्तृकत्वप्रसिद्धिमत्त्वं नामेत्यादिना ॥** तथा च अकर्तृकत्वप्रसिद्धेरप्रमितकर्तृकत्वसिद्ध्यधीनत्वान्ना-न्योन्याश्रय इति भावः। ननु तथाऽप्यनुपलभ्यमानप्रमाणविप्रलम्भान्यतरमूलत्वं वेदत्वमिति निरुक्तं स्यात्। न चैतद्युक्तम्। उपक्रमे 'वेदप्रामाण्यवादिनो बौद्धाश्च' इत्युभयेषां वादित्वाभिधानात्। तत्र प्रामाण्यमभ्युपेत्य वेदसकर्तृकत्वमनुमिमानानां वैशेषिकादीनामनुमानं दुदूषयिषितम्

उत तदप्रामाण्यवादिनां सौगतादीनाम्। नाऽद्यः। तैः सर्वज्ञज्ञानमूलत्वाङ्गीकारेणानुपलभ्यमानप्रमाणमूलत्वस्यासिद्धेः। न द्वितीयः। तैर्विप्रलम्भादिदोष-मूलत्वाङ्गीकारेणानुलभ्यमानदोषमूलत्वासिद्धेः। अत उभयान् प्रत्यपि साध्यविकल्पशङ्का न युक्तेत्याशङ्क्य आद्यपक्षमुपेत्य तद्दोषमुद्धरति- **एतच्चेति ॥ व्यावर्तितत्वादिति ॥** तथा चोभयामूलत्वं सिद्धमिति न तान् प्रत्यसिद्धिरिति भावः **॥ प्रमाणत्वाभावादिति ॥** प्रमाकरणत्वाभावादित्यर्थः। गुणजन्यत्वाभावाभिप्रायेण वा। **वक्तुं** निर्वक्तुम्। ननु वाक्यत्वेन सकर्तृकत्वमनुमिमानान् प्रत्येवं वेदत्वं निरुच्य शङ्कनीयम्। न च ते **(व्या.टि.)** तथाऽनुमिमत इत्यतस्तत्सम्मतिमाह- **एतच्चेति ॥** अत्राऽदिपदेन सौगतानपि जगृहुः। तन्न। 'सौगतान् प्रति तु' इति टीकाविरोधात्। स्ववाक्यविरोधाच्च। द्वितीयेऽप्यवद्यमवद्यति- **विप्रलम्भादीति ॥ प्रति त्विति ॥** तुः, उक्तनिरुक्तिमनिच्छत इति विशेषार्थः **॥ पक्षतावच्छेदकत्वेनेति ॥** पूर्वत्र वेदलक्षण-भावाभावाभ्याम् अत्र पक्षतावच्छेदकभावाभावाभ्यामिति विशेष इत्यर्थः। निगमयति- **एवं चेति ॥ अप्रयोजको** विपक्षे बाधकाभावात्। **अन्यथा सिद्धः** साध्यं विनाऽपि आकाङ्क्षादिमत्त्वेनैव सम्भवात्। **व्याप्यत्वासिद्धः** अवेदत्वस्योपाधित्वादित्यर्थः। विपक्षे बाधकसद्भावान्नाप्रयोजकत्वादीत्याशङ्कते- **सकर्तृकत्वाभाव इति ॥ परतन्त्रत्वादिति ॥** गुणजन्यत्वादित्यर्थः। **उत्तरत्र** प्रामाण्यस्वतस्त्ववादे।

**मूलम् - न च केनचित् कृत्वा वेद इत्युक्तं वेदसमम्। परम्पराभावात्।**

**(त.मं.)** नन्वेवमकर्तृकत्वप्रसिद्धिमतो वेदत्वनिश्चये केनचिदतिगूढतया कृत्वा वेद इत्युक्तमपि वेदसमं स्यात्। तस्याप्यकर्तृकत्वप्रसिद्धिमत्त्वादित्यत आह - **न च केनचिदिति ॥** अध्यापक-परम्पराया अभावात्; तन्मूलान्वेषणे तु अकर्तृकत्वप्रसिद्धिरेव न स्यात्।

**टीका -** अकर्तृकत्वप्रसिद्धिमद्वाक्यत्वं वेदत्वमिति यद्वेदलक्षणमुक्तं तदयुक्तम्। गूढकर्तृकस्य कृताकर्तृकत्वप्रसिद्धिकस्यापि वाक्यस्य वेदत्वप्रसङ्गात्। अन्यथाऽतिव्यापकत्वादित्यत आह- **नच केनचिदिति ॥** वेद इत्युक्तं कृताकर्तृकत्वप्रसिद्धिकं वाक्यं वेदसमं प्रसिद्धवेदवद्वेदत्वोपेतं प्रसज्यत इति शेषः। हेतुमाह- **परम्परेति ॥** अकर्तृकत्वप्रसिद्धिमत्त्वं नाम अनुपलभ्यमानप्रत्यक्षादि-मूलत्वमित्युक्तम्। अस्य चाध्येतृपरम्पराऽभावेन यस्मिन् विच्छेदस्तदीयप्रत्यक्षादिमूलत्व-मनुमानेनोपलभ्यत एव। विमतं वाक्यम् एतत्प्रत्यक्षादिमूलम् अस्मिन् विच्छिन्नपरम्परत्वात्। यद्यस्मिन् विच्छिन्नपरम्परं वाक्यं तत्तत्प्रत्यक्षादिमूलं यथा सम्प्रतिपन्नमिति। अतो नोक्तं वेदलक्षणं गूढकर्तृकेऽस्तीति।

**(र.टि.)** गूढकर्तृकवाक्यस्य कर्तुरप्रसिद्धावप्यकर्तृकत्वप्रसिद्ध्यभावात् कथमुक्तलक्षणं वेदत्वमित्यत आह- **कृतेति ॥**

**(रा.टि.)॥ अन्यथाऽतिव्यापकत्वादिति ॥** तस्यावेदत्वे प्रागुक्तवेदलक्षणस्यातिव्यापकत्वादित्यर्थः **॥ अस्य चाध्येत्रिति ॥** गूढकर्तृकवाक्यस्येत्यर्थः **॥ एतत्प्रत्यक्षेति ॥** यस्मिन् विच्छेद एतदीयप्रत्यक्षादिमूलमित्यर्थः। विच्छिन्नपरम्परत्वादिति बहुव्रीहिः **॥ नोक्तमिति ॥** अनुपलभ्यमानप्रत्यक्षादिमूलत्वरूपं वेदलक्षणमित्यर्थः।

**(श्री.टि.)** ननु गूढकर्तृकवाक्यस्य कर्तुरप्रसिद्धत्वेऽप्यकर्तृकत्वप्रसिद्ध्यभावात् कथं तस्योक्तलक्षणवेदत्वप्रसङ्ग इत्यत उक्तम्- **कृताकर्तृकत्वप्रसिद्धिकस्यापीति ॥ अन्यथेति ॥** वेदत्वानङ्गीकार इत्यर्थः **॥ विच्छेद इति ॥** अध्येतृपरम्पराविच्छेद इत्यर्थः। **सम्प्रतिपन्नमिति ॥** कुमारसम्भवादिकं कालिदासादौ विच्छिन्न-परम्परत्वात् तत्प्रत्यक्षादिमूलकमित्यर्थः **॥ उक्तं वेदलक्षणमिति ॥** अनुपलभ्यमानप्रत्यक्षादिमूलकत्व-रूपाकर्तृकत्वप्रसिद्धिमत्त्वरूपमुक्तं वेदलक्षणमित्यर्थः।

**(व्या.टि.)** वेदलक्षणमतिव्याप्त्या दूषयितुमनुवदति- **अकर्तृकत्वेति ॥ कृताकर्तृकत्वप्रसिद्धिकस्येति ॥** कृता अकर्तृकत्वप्रसिद्धिर्यस्येति विग्रहः **॥ अन्यथेति ॥** तस्य लक्ष्यबहिर्भाव इत्यर्थः **॥ अस्य चेति ॥** गूढकर्तृकस्येत्यर्थः **॥ विच्छेद इति ॥** अध्येतृपरम्पराया इति शेषः। अनुमानप्रकारं दर्शयति- **विमतमिति ॥ सम्प्रतिपन्नमिति ॥** प्रसिद्धकाव्यमित्यर्थः। निगमयति- **अत इति ॥**

**मूलम् - नच स्वयम्प्रतिभातवेदैर्दृष्टम् अवेदवाक्यं भवति । परम्परासिद्धवेदवाक्यानु-सारित्वात् । वेदद्रष्टॄणाम् उक्तगुणवत्त्वाच्च तेषाम् । उक्तं च ब्रह्माण्डे-**

**'विंशल्लक्षणतोऽनूनस्तपस्वी बहुवेदवित् ।**
**वेद इत्येव यं पश्येत् स वेदो ज्ञानदर्शनात् ॥' इति ॥**

**(त.मं.)** यद्यध्यापकपरम्परया वेदत्वनिश्चयः तर्हि स्वयम्प्रतिभातवेदैरुक्तस्य तदभावात् तदवेदवाक्यं स्यादित्यत आह - **न च स्वयमिति ॥** ''सद्यो ह जातो वृषभः कनीय इति मैत्रावरुणः'' इत्यारभ्य 'तदु वैश्वामित्रम्' इति परम्परासिद्धवेदवाक्यानुसारित्वात् तेषां दर्शनस्य । विश्वा-मित्रादीनां सर्वज्ञत्वाभावात् तद्दर्शनं वेदानुसार्यप्यन्यथा किं न स्यादित्यतो वक्ति - **वेदेति ॥** उक्तं च तेषां ज्ञानादिगुणवत्त्वं ब्रह्माण्डे । यानि महापुरुषलक्षणानि शास्त्रोदितानि द्वात्रिंशत् तेषां मध्ये विंशल्लक्षणैरनूनः यं 'अयं वेदः' इत्येव ज्ञानदर्शनात् पश्येत्, न तु प्राकृतदर्शनात्, स वेदः ।

**टीका -** ननु नाध्येतृपरम्पराऽभावेन गूढकर्तृकस्य वेदलक्षणाभावोऽनुमातुं शक्यते । अध्ययनेन विना वसिष्ठादयो वेदान् पश्यन्तीति भवदङ्गीकारात् । ततश्च स्वयमेव प्रतिभातो वेदो येषां तैर्दृष्टस्य परम्पराऽभावेन वेदलक्षणाभावापत्त्या वेदत्वाभावापत्तेः । अन्यथाऽनैकान्त्यप्रसङ्गादित्यत आह- **नच स्वयमिति ॥ भवति** प्रसज्यत इत्यर्थः । अप्रसङ्गे हेतुमाह- **परम्परासिद्धेति ॥** अध्यापक-परम्परावत्त्वेन यत्प्रसिद्धं वेदवाक्यं तदनुसारित्वात् तत्समानत्वात् । एतदुक्तं भवति । परम्परा नाम अध्येतॄणामध्यापकानां च पूर्वतनमेवेदमधीमहेऽध्यापयामश्चेति प्रतिपत्तिः । न त्वध्ययना-विच्छेदः । तदभावश्च गूढकर्तृकस्य वेदलक्षणराहित्ये हेतुत्वेनोपात्तः । नचासौ स्वयम्प्रतिभातवेदैर्दृष्टे वर्तते । तस्यापि परम्परासिद्धवेदवाक्यान्तरवत् प्राक्तनमेवैतदिति तत्प्रतिपत्तिविषयत्वात् । अतो नावेदत्वप्रसङ्गो नाप्यन्यतरानैकान्त्यमिति । नन्वेवं तर्हि गूढकर्तृके परम्पराऽभावस्य हेतोरसिद्धिः स्यात् । वसिष्ठादय इव गूढोऽपि कर्ता प्राक्सिद्धमेवेदं मया दृष्टमिति वदत्येवेति चेन्न । तद्वचन-स्यानृतत्वात् । ननु वसिष्ठादयो वेदानां पुरातनानां द्रष्टार एव तथा वदन्ति, अयं त्वदृष्ट्वैवानृतभाषीति कुतो निश्चयः । तथाच सन्दिग्धानैकान्त्यं सन्दिग्धासिद्धिर्वेत्यत आह- **वेदद्रष्टॄणामिति ॥** वेदद्रष्टॄणां ये गुणा उक्ता आगमेषु तद्वत्त्वात्तेषां वसिष्ठादीनां प्राक्तनवेदद्रष्टृत्वं निश्चेतुं शक्यते । इतरस्य तु तदभावादनृतवादित्वं निश्चीयत इति चार्थः । उक्तशब्दस्य नित्यसापेक्षत्वात् समासः । अथ वा वेदद्रष्टॄणां तथाऽभिमतानां तेषां वसिष्ठादीनामित्यन्वयः । गुणशब्देन च वेदद्रष्टृलक्षणमुच्यत इति । के ते गुणाः, कुत्र च वेदद्रष्टॄणां लक्षणत्वेनोक्ता इत्यत आह- **उक्तं चेति ॥** एवंलक्षणका वेदस्य द्रष्टार इत्येतदुक्तं चेत्यर्थः । तत् पठति- **विंशदिति ॥** विंशतिशब्दपर्यायो विंशच्छब्दः । शास्त्रे यान्युत्तमस्य पुरुषस्य द्वात्रिंशल्लक्षणान्युक्तानि तेषां मध्ये विंशल्लक्षणतोऽनूनलक्षणवान् **वेद इत्येव** प्राक्तन एवायमित्येव **यं** वाक्यविशेषं **ज्ञानदर्शनाद्** दिव्यदृष्ट्या पश्येत् । अत्र लिङ्गमवि-वक्षितम् । स्त्रीणामपि वेददर्शनसद्भावात् । अर्थादत्र प्रकृतोपयोगो द्रष्टव्यः ।

**(र.टि.) ॥ अन्यथाऽनैकान्त्यप्रसङ्गादिति ॥** वेदत्वाङ्गीकारे च वाद्यनैकान्त्यप्रसङ्गादित्यर्थः । वैशेषिकादि-भिर्वसिष्ठादीनां स्वयम्प्रतिभातवेदत्वानङ्गीकारात् । अत एव पूर्वमुक्तम् 'भवदङ्गीकारात्' इति । ननु वेदद्रष्टॄणामित्यस्य तेषामित्यनेनान्वये वेदद्रष्टृलक्षणलाभः कथमित्यत आह- **गुणशब्देनेति ॥** उक्तशब्दस्य गुणशब्देन सह कर्मधारये विशेष्यलिङ्गत्वे पुंलिङ्गत्वं बहुत्वविवक्षा च । तथा च वेदद्रष्टृपूक्तगुणप्रतिपादक-वाक्योदाहरणप्रतिज्ञापरं वाक्यम् 'उक्ताश्च ब्रह्माण्डे' इत्येवंरूपं भवेत् । कथमुक्तं चेत्युक्तमित्यत आह- **एव-मिति ॥** इत्येतत्प्रमेयमित्यर्थः ॥ **अनूनलक्षणवानिति ॥** यद्यपि विंशल्लक्षण इत्यत्र बहुव्रीहिं कृत्वा 'अनून' इति पदम् अनूनलक्षणवत्पुरुषपरं कर्तुं शक्यते । तथाऽपि विंशल्लक्षणपुरुषगतधर्मान्तरेणाप्यनूनत्वसम्भवेन प्रकृतानुपयोगात् पूर्वपदस्य कर्मधारयमुपेत्यानूनपदम् अनूनलक्षणवानिति व्याख्यातमिति द्रष्टव्यम् । नन्वत्रैवं-विधलक्षणकेन पुरुषेण दृष्टवाक्यस्य वेदत्वं विधीयते । न पुनर्वेदद्रष्टुरेते गुणा इति । तत्कथं प्रकृतोपयोग इत्यत आह- **अर्थादिति ॥** यद्गुण(युक्त)विशिष्टपुरुषदृष्टवाक्यस्य

वेदत्वं त एव गुणा वेदद्रष्टुरुक्ता इत्यर्थः ।

**(रा.टि.)** विमतं वाक्यमिति प्रागुक्तप्रयोगे बाधकतर्कमाशङ्कते- **ननु नाध्येत्रिति ।। पश्यन्तीति ।।** ध्यानेन विषयीकुर्वन्तीत्यर्थः । 'जन्मान्तरे श्रुतास्तास्तु' इति वक्ष्यमाणप्रमाणादुक्तम् **।। भवदङ्गीकारादिति ।। तत-श्चेति ।।** स्वयंदृष्टवेदस्य भवदङ्गीकारे सतीत्यर्थः । तैर्दृष्टस्य वेदत्वाभावापत्तेरित्यन्वयः । वक्ष्यमाणमूलगतपदस्य विग्रहमाह- **स्वयमेवेति ।।** एतज्जन्मन्यध्ययनेन विनैव सुप्तप्रतिबुद्धन्यायेन जन्मान्तराधीतोऽधुना ध्यानेन मनसा प्रतिभातो वेदो येषां वसिष्ठादीनां तैर्दृष्टस्य मनसा प्रतिभातस्येत्यर्थः। तच्छिष्यप्रशिष्यादिषूपदेशपरम्परया प्राप्तस्येति योज्यम् **।। परम्पराऽभावेनेति ।।** वसिष्ठादौ स्वयम्प्रतिभातवेदे विच्छिन्नपरम्परत्वेनेत्यर्थः । तेन हेतुना तत्प्रत्यक्षादिमूलकत्वानुमानसम्भवेनानुपलभ्यमानप्रत्यक्षादिमूलकत्वरूपवेदलक्षणाभावापत्तेरित्यर्थः **।। अन्यथेति ।।** स्वयम्प्रतिभातवेदस्यानुपलभ्यमानप्रत्यक्षादिमूलकत्वरूपवेदत्वाङ्गीकारेऽस्मिन्विच्छिन्नपरम्परत्वादेतत्प्रत्यक्षादि-मूलमित्युक्तहेतोरनैकान्त्यापत्तेरित्यर्थः **।। अध्यापकेति ।।** कस्मिंश्चिदविश्रान्ताध्ययनपरम्परत्वेन यत्प्रसिद्ध-मित्यर्थः । तावतोक्तातिप्रसङ्गस्य समाधेरस्फुटत्वादाह- **एतदुक्तमिति ।।** कथं तर्हि विमतं वाक्यमेतत्प्रत्यक्षादि-मूलमस्मिन्विच्छिन्नपरम्परत्वादिति हेतुरुक्त इत्यतस्तत्राप्ययमेवार्थो विवक्षित इत्याह- **तदभावश्चेति ।।** पूर्वतन-मेवेदमध्यापयामीति प्रतिपत्त्यभावश्च हेतुत्वेनोपात्त इत्यन्वयः **।। नाप्यन्यतरेति ।।** सिद्धान्तमत एव स्वयम्प्रति-भातवेदभावेन परमते तदभावेन तन्मते तत्रानैकान्त्याप्रसक्तेरन्यतरेत्युक्तम् । अस्मिन्विच्छिन्नपरम्परत्वादिति हेतोः प्रकारान्तरेणानैकान्त्याद्याशङ्कते- **नन्वेवं तर्हीति ।।** परम्पराशब्दस्य पूर्वतनमेवेदमध्यापयाम इत्यादि-प्रतिपत्तिरूपत्व इत्यर्थः **।। परम्पराऽभावस्येति ।।** गूढकर्तरि विश्रान्तपरम्परत्वस्य हेतोरित्यर्थः **।। सन्दिग्धा-नैकान्त्यमिति ।।** वसिष्ठादेरसत्यवादित्वे तद्वाक्येऽवेदत्वहीने विवक्षितस्य विच्छिन्नपरम्परत्वस्य हेतोर्विपक्षे वसिष्ठादिस्वयम्प्रतिभातवाक्ये सत्त्वात्सत्यवादित्वेऽसत्त्वाद्विपक्षे हेतुसत्त्वासत्त्वसन्देहेन सन्दिग्धानैकान्त्यम् । पक्षे गूढकर्तृकवाक्ये च गूढकर्तुरसत्यवादित्वे हेतोस्सत्त्वमन्यथा त्वसत्त्वमिति पक्षे हेतुभावाभावसन्देहेन सन्दिग्धा-सिद्धिरित्यर्थः **।। तदभावादिति ।।** वेदद्रष्टृगुणाभावादित्यर्थः **।। इति चार्थ इति ।।** इतरस्य त्वित्यादिनोक्तोऽर्थः। अनुक्तसमुच्चायकश्चशब्द इत्यर्थः ।

ननूक्तपदस्य केषामिति षष्ठ्यन्तद्रष्टृपदसापेक्षस्य गुणपदेन कथं समासः । 'समर्थः पदविधिः' इति समर्थानामेव समासोक्तेः । पदान्तरसाकाङ्क्षस्य गुणपदेन सामर्थ्याभावादित्यत आह- **उक्तशब्दस्येति ।।** देवदत्तस्य गुरुकुल-मित्यादाविव नित्यसापेक्षस्यापि समासाभ्युपगमाददोष इति भावः । वेदद्रष्टॄणां परम्पराऽसम्मतेः कथं तेषामुक्त-गुणवत्त्वं वसिष्ठादीनामुच्यत इत्यतो योजनान्तरमाह- **अथ वेति ।।** यद्वा यथा न समासानुपपत्तिस्तथाऽऽह- **अथ वेति ।। तथाऽभिमतानां** वेदद्रष्टृतया सिद्धान्त्यभिमतानामित्यर्थः । अस्मिन्पक्षे पुराणाद्युक्तगुणवत्त्वा-दित्यर्थः । ननु के ते गुणा इति प्रश्नस्योक्ताश्च ब्रह्माण्ड इत्युत्तरं वाच्यम् । उक्तं चेति कथमित्यतो वा नात्र स्मृतौ गुणोक्तिरस्तीत्यतो वाऽह- **एवंलक्षणका इति ।। उक्तमिति ।।** अर्थादत्रेत्यत्राग्रे व्यक्तम् । विंशच्छब्दस्या-प्रसिद्धेराह- **विंशतीति ।।** छान्दसोऽयं शब्द इति भावः **।। द्वात्रिंशल्लक्षणानीति ।।** तानि च सङ्ग्रहरामायणादौ **(रा.टि.)** व्यक्तानि ।

'द्वात्रिंशल्लक्षणै(स्सम्यग्युक्ता वायुत्व)र्युक्ता वायुत्वपदयोग्यकाः ।
अष्टाविंशल्लक्षणास्तु गिरीशपदयोगिनः ।
चतुर्विंशतिमारभ्य षोडशादा सुराः स्मृताः ।
आष्टकाद्दषयश्चोक्तास्तदूनाश्चक्रवर्तिनः ।'

इति बृहद्भाष्योक्तस्मृतिस्तु स्फुटतरलक्षणाभिप्राया । सम्यगित्यस्यानुवृत्तेः । इयं तु स्मृतिः स्फुटास्फुटलक्षणा-भिप्राया । तपोनिष्ठदेवताविषया वा । वेदद्रष्टृऋषिमात्राभिप्राया वा । अतो न तद्विरोधोऽत्र शङ्क्यः । वेद इत्ये-वेत्यनुवादः । प्राक्तन एवायमिति व्याख्या **।। दिव्यदृष्ट्येति ।।** योगलब्धातिशयेन मनसेत्यर्थः **।। स्त्रीणाम-पीति ।।** शच्यादीनाम् 'सपत्नीं मे पराधम' इत्यादिवेदद्रष्टृत्वदर्शनादित्यर्थः । नन्वत्र विंशल्लक्षणकदृष्टवाक्यस्य वेदत्वमेवोच्यते; न तु वेदद्रष्टार एतद्गुणका इति । तत्राऽह - **अर्थादिति ।।** अत्र वचने अनूनविंशल्लक्षणकदृष्टस्य वेदत्वोक्त्याऽर्थाद्वेदद्रष्टार एतद्गुणका इति सिद्ध्यतीति । यद्वा विंशदित्यादिस्मृत्युक्तेर्वेदापौरुषेयत्वसाधनरूप-प्रकृतप्रमेये कथमुपयोग इत्यत आह- **अर्थादिति ।।** अयमर्थः । अप्रमितकर्तृकत्वाद्वेदोऽपौरुषेय इति सिद्धान्ति-प्रयोगे, लौकिकवाक्यवद्वाक्यत्वहेतुना वेदकर्तुः प्रमितत्वेन विशेषणासिद्धो हेतुरिति चोदिते, लौकिकवाक्येऽ-कर्तृकत्वप्रसिद्ध्यभावादस्तु पौरुषेयत्वं वेदे तु तत्प्रसिद्धिमत्त्वादस्त्वपौरुषेयत्वमिति सिद्धान्तिनोक्ते,

गूढकर्तृके वाक्येऽप्रमितकर्तृकत्वहेतुरपौरुषेयत्वव्यभिचारीति पुनश्चोदिते, तन्निरासायाकर्तृकत्वप्रसिद्धिमत्त्वं नामाविच्छिन्न-परम्परत्वम् । तच्च गूढकर्तृके नास्तीति तेन हेतुना तत्सकर्तृकं वेदस्तु तादृशहेतुमत्त्वादकर्तृक इति सिद्धान्तिनोक्ते, तर्हि स्वयम्प्रतिभातवेदेऽविच्छिन्नपरम्परत्वाभावरूपो हेतुरपौरुषेयत्वव्यभिचारीत्येवं पुनश्चोदिते, तद्दोषपरिहाराया-विच्छिन्नपरम्परत्वं नाम प्राक्तनमेवेदमध्यापयाम इत्यादिप्रतिपत्तिमत्त्वं, तच्चास्ति स्वयम्प्रतिभातवेदे, गूढकर्तृके तु नेति सिद्धान्तिनोक्ते, तर्हि स्वयम्प्रतिभातवेदे सन्दिग्धानैकान्तिक उक्तरूपो हेतुर्गूढकर्तृकवाक्ये सन्दिग्धा-सिद्धश्चेति परेण चोदिते, स्मृत्युक्तवेदद्रष्टृलक्षणयुक्तवसिष्ठादिदृष्टत्वात् स्वयम्प्रतिभातवेदे उक्तरूपहेतुनिश्चय-सम्भवेन न सन्दिग्धानैकान्तिको हेतुः । गूढकर्तृके तल्लक्षणाभावेन तदभावनिश्चयसम्भवेन न सन्दिग्धासिद्धोऽ-पीत्येतदर्था हि विंशदिति स्मृत्युक्तिः । एवं चोक्तरूपहेतोः स्वयंदृष्टवेदादौ सन्दिग्धानैकान्तिकत्वादावनया स्मृत्या निरस्ते सति तेन हेतुना वेदापौरुषेयत्वं सिद्ध्यति । तदभावादेव लौकिकवाक्ये पौरुषेयत्वमिति वाक्यत्व-हेतुरप्रयोजक इति न सिद्धान्तिहेतोर्विशेषणासिद्धिरित्येवं वेदापौरुषेयत्वरूपप्रकृतप्रमेयेऽर्थाद्धेतोरनैकान्त्यादि-निरासद्वारोपयोग इति ।

**(श्री.टि.)**शङ्कते- **नाध्येत्रिति** ।। मूलं योजयति- **ततश्चेत्यादिना** ।। दृष्टस्य वाक्यस्य ।। **अन्यथेति** ।। तस्यापि वेदलक्षणमङ्गीकृत्य वेदत्वाङ्गीकारे भवन्मतेऽनैकान्त्यप्रसङ्गात् । वैशेषिकादिभिर्वसिष्ठादीनां स्वयम्प्रतिभात-वेदत्वानङ्गीकारात् । अत एव पूर्वं भवदङ्गीकारादित्युक्तम् । तथा च तत्र विच्छिन्नपरम्परत्वे सत्यप्यनुपलभ्यमान-**(श्री.टि.)** प्रत्यक्षादिमूलकत्वादिरूपवेदलक्षणमङ्गीकृत्य वेदत्वाङ्गीकारेण साध्याभावादिति भावः । **प्रतिपत्तिः** प्रतीतिः । गूढकर्तृकस्य वाक्यस्य ।। **अत इति** ।। परम्परासिद्धवेदवाक्यान्तरवत्प्राक्तनमेवैतदिति प्रतीतिविषय-त्वेन अनुपलभ्यमानप्रत्यक्षादिमूलत्वरूपवेदलक्षणसद्भावादित्यर्थः ।। **नापीति** ।। परम्परा नामेत्यादिना निरुक्त-परम्पराऽभावरूपहेतोरेवाभावादिति भावः ।। **तथेति** ।। पूर्वतनमेवेदमधीमह इत्यादिरूपेण सत्यमेव वदन्तीति कुतो निश्चय इति सम्बन्धः । तथा च सन्दिग्धानैकान्तिकमनेनोपपादितं भवतीति द्रष्टव्यम् । सन्दिग्धासिद्धि-मुपपादयति- **अयन्त्विति** ।। [1]**अद्रष्टैव** पूर्वतनमेवेत्यादिप्रतिपत्तिशून्य एव । **तद्वत्त्वादिति** । आगमोक्तवेद-द्रष्टृगुणवत्त्वादित्यर्थः ।। **निश्चेतुं शक्यत इति** ।। तथा च न सन्दिग्धानैकान्त्यमिति भावः । चशब्दसमुच्चेयमाह- **इतरस्य त्विति** ।। गूढकर्तुरित्यर्थः । **तदभावाद्** आगमोक्तवेदद्रष्टृगुणवत्त्वाभावादित्यर्थः ।। **निश्चीयत इति** ।। तथा च न सन्दिग्धासिद्धिरिति भावः । ननूक्तपदस्य वेदद्रष्टृपदेन सापेक्षत्वात् कथं गुणपदेन समासः । 'समर्थः पदविधिः' इति समर्थस्य सुबन्तस्य समर्थेन सुबन्तेन समासोक्तेः । 'सापेक्षमसमर्थवद्भवति' इति वचनात्, यद् यत्पदेन सापेक्षं तेनैव तस्य समासो भवितुं युक्तः । अन्येन समासे तद्, असमर्थमेवातो वेदद्रष्टुक्त-गुणवत्त्वादिति वक्तव्यम् । नतु वेदद्रष्टृणामुक्तगुणवत्त्वादिति तत्राऽह- **उक्तशब्दस्येति** ।। **नित्यसापेक्षत्वा-दिति** ।। उत्थिताकाङ्क्षावत्त्वादित्यर्थः । सापेक्षमसमर्थवद्भवतीत्ययं नियमोऽनित्यसापेक्षविषयः । उत्थाप्याकाङ्क्षा-स्थलविषय इति यावत् । अस्य तु नित्यसापेक्षत्वादुत्थिताकाङ्क्षावत्त्वादिति यावत् । अन्यपदेन समासेऽपि पूर्व-पदेनाऽकाङ्क्षा न विहन्यते । देवदत्तस्य गुरुकुलमितिवदित्यर्थः । अत एवास्वरसादाह- **अथवेति** ।। ननु वेदद्रष्टॄणां तेषामित्यन्वये उक्तगुणवत्त्वादित्यनेनाऽगमोक्तयत्किञ्चिल्लक्षणवत्त्वमेव लभ्यते नतु वेदद्रष्टृलक्षणवत्त्वमतोऽ-सङ्गतमेतदित्यत आह- **गुणशब्देनेति** ।। तथाच वेदद्रष्टॄणां तेषाम् **उक्तगुणवत्त्वाद्** आगमोक्तवेदद्रष्टृलक्षण-वत्त्वादित्यर्थो द्रष्टव्यः । नन्वेवमाकाङ्क्षायामुक्ताश्च ब्रह्माण्ड इति वक्तव्यम्, उक्तं चेति कथमुक्तमित्यत आह- **एवंलक्षणका इति** ।। **इत्येतदिति** ।। प्रमेयमित्यर्थः । ननु 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीति-नवतिशतम्' इति सूत्रे विंशतीति निपातनाद्विंशदिति कथमुक्तमित्यत आह- **विंशतिशब्दपर्याय इति** ।। पश्येदित्यनन्तरं स वेद इति शेषः । नन्वत्र पुंलिङ्गप्रयोगात् पुरुषाणामेव वेदद्रष्टृत्वं प्रतीयते नतु स्त्रीणाम् । तथात्वे शच्यादीनामपि 'सपत्नीं मे पराधम पतिं मे केवलं कुरु' इत्यादिवेददर्शनसद्भावेन तद्विरोधापत्तेरित्यत आह- **अत्र लिङ्गमिति** ।। अनूनस्तपस्वीत्यादिपुल्लिङ्गमित्यर्थः । नन्वत्रैवंविधलक्षणवता पुरुषेण दृष्टवाक्यस्य वेदत्वमेव विधीयते न त्वेवंलक्षणका वेदस्य द्रष्टार इति । अतः कथं प्रकृतोपयोग इत्यत आह- **अर्थादिति** ।। **अत्र** वाक्ये । एतादृशलक्षणविशिष्टपुरुषदृष्टवाक्यस्य वेदत्वविधानेऽपि तद्द्रष्टार एतादृशलक्षणका इत्यर्थतः प्राप्तमेवेति प्रकृतोपयोग इति भावः । नन्वत्र विंशल्लक्षणतोऽनूनलक्षणवानिति वसिष्ठादिवेदद्रष्टॄणां विंशल्लक्षण-वत्त्वमुक्तम् । तत्सिद्धान्तविरुद्धम् । तथाहि । बृहद्भाष्ये ब्रह्मणो द्वात्रिंशल्लक्षणोपेतत्वमुक्त्वा तत्त्वाभिमानिदेवाः **(श्री.टि.)** कियल्लक्षणवन्त इति शङ्कायां 'षोडशादा सुराः स्मृताः' इत्युक्तम् । षोडशाद् आ षोडशलक्षण-पर्यन्तम् । यत्र षोडशलक्षणानि वर्तन्ते ते सुराः प्रतिपत्तव्या इत्युक्तम् । अतो विंशल्लक्षणवत्त्वं

देवानामप्यसम्भावितं, कथं वेदद्रष्टॄणां वसिष्ठादीनामुच्यत इति चेत्। अत्राऽहुः। षोडशलक्षणं द्वात्रिंशल्लक्षणान्तर्गतमित्यभिप्रेत्य बृहद्भाष्यं प्रवृत्तम्। विंशल्लक्षणत इति वाक्यन्तु तदितरवेदद्रष्टृलक्षणापेक्षया प्रवृत्तम्। वेदद्रष्टृलक्षणान्यपि द्वात्रिंशत्-सङ्ख्याकान्येव सन्तीत्यविरोध इति।

**(पां.टि.)** ॥ **अन्यथेति** ॥ स्वयम्प्रतिभातवेदैर्दृष्टे वेदे वेदलक्षणसत्त्व इत्यर्थः ॥ **अनैकान्त्येति** ॥ अन्यतरा-नैकान्त्येत्यर्थः। तत्राविच्छिन्नपरम्परत्वहेतुसत्त्वेऽपि तत्प्रत्यक्षामूलकत्वादिति भावः ॥ **सन्दिग्धानैकान्त्य-मित्यादि** ॥ वसिष्ठादिदृष्टवेदे परम्पराऽभावहेतोः सन्दिग्धत्वात्सन्दिग्धानैकान्त्यम्। गूढकर्तृके वाक्ये तत्सन्देहात् सन्दिग्धासिद्धिर्वेत्यर्थः। ननूक्तशब्दस्य आगमेष्वित्येतत्सापेक्षत्वात् 'सापेक्षमसमर्थं भवति' इति न्यायेन, वृत्तावुपसर्जनपदेनाप्रधानस्य[१] प्रधानार्थाभिधायिना भाव्यत्वेन, तस्य स्वविशेषणापेक्षायां च[२] प्रधानत्वस्याऽवश्य-कत्वादेकस्यैकदा प्रधानत्वैकार्थीभावयोरसम्भवेनासमर्थत्वान्न गुणशब्देनोक्तगुणवत्त्वादिति समासः सम्भ-वति। 'समर्थः पदविधिः' इति समासविधौ समर्थाधिकारेण निरपेक्षस्यैव तद्विधानादित्यतः पूर्वकायो नाभेः, देवदत्तस्य गुरुकुलम् इत्यादिसमासदर्शनेन नित्यसापेक्षस्य तत्सिद्ध्या पूर्वादिशब्दवत् सम्बन्धिशब्दत्वेन नित्य-सापेक्षस्य उक्तशब्दस्य गुणशब्देन समासो युक्त इत्याह- **उक्तेति** ॥ उक्तरीत्या योजनायां वेदद्रष्टॄणां तेषामित्य-नयोर्भिन्नविषयत्वमाश्रयणीयं भवतीत्यतो विशेषणविशेष्यभावेन समानविषयत्वमाश्रित्यापि योजयति- **अथवेति** ॥ यत्तु ततश्च न समासानुपपत्तिरिति भाववर्णनम्। तदसत्। उक्तशब्दस्य सापेक्षतायाः सापेक्षस्या-समर्थतायाश्चानुपपादितत्वेनोक्तशब्दस्येत्येतद्ग्रन्थनिवर्त्यत्वदुत्थापितशङ्काया निर्दलत्वात्। पूर्वयोजनायामप्युक्त-शब्दस्यान्यसापेक्षताया इह टीकायामनाश्रितत्वेन, आगमेष्वित्येतत्सापेक्षत्वेनैव तच्छङ्काया उत्थापनीयत्वेनैत-द्योजनायामप्यागमशब्दसापेक्षत्वप्रयुक्ततत्समासानुपपत्तिशङ्कायास्तादवस्थ्याच्च।

ननु वेदद्रष्टॄणां वसिष्ठादीनामुक्तगुणवत्त्वादिति योजनायां वसिष्ठादीनामागमोक्तगुणवत्त्वलाभ एव स्यात्। न तु वेदद्रष्टृलक्षणवत्तालाभ इत्यतोऽत्र गुणशब्दस्य वेदद्रष्टृलक्षणपरत्वाद्युक्तस्तल्लाभ इत्याह- **गुणशब्देन चेति** ॥ उक्तशब्दस्य गुणशब्देन सह कर्मधारये विशेष्यलिङ्गत्वेन पुंलिङ्गत्वबहुवचनयोः प्राप्त्या 'उक्ताश्च' इति वक्तव्यम्। तत्कथं 'उक्तं च' इति निर्देश इत्यत आह- **एवमिति** ॥ ननु 'पङ्क्तिविंशति' इति निपातनात् 'विंशतिलक्षणतः' इति वक्तव्यम्, 'विंशल्लक्षणतः' इति तु कथमित्यत आह- **विंशतिशब्दपर्याय इति** ॥ लिङ्गाविवक्षायां निमित्तमाह- **स्त्रीणामपीति** ॥ 'सपत्नीं मे पराधम' इत्यादाविति शेषः। ननु 'विंशल्लक्षणतोऽ-नूनः' इत्यत्रैवंविधपुरुषदृष्टवाक्यस्य वेदत्वस्यैव विधानेन वेदद्रष्टॄणामेते गुणा इत्यनुक्तत्वेन प्रकृते तद्वाक्योदाहरण-**(पां.टि.)** मसङ्गतमित्याशङ्क्य एवंविधेन दृष्टस्य वेदत्वविधाने द्रष्टुस्तद्गुणवत्त्वस्यार्थतः सिद्धत्वान्नोक्तानुप-पत्तिरित्याह- **अर्थादिति** ॥

**(व्या.टि.)** परम्पराऽभावेनोक्तवेदलक्षणाभावानुमानमतिप्रसङ्गेन दूषयितुमुपक्रमते- **नाध्येत्रिति** ॥ **अन्यथा** स्वयम्प्रतिभातस्यापि वेदत्वे ॥ **अनैकान्त्येति** ॥ परम्पराऽभावस्य, वेदत्वाभावेनेति शेषः। अविच्छिन्नाध्ययन-परम्पराऽभावे नावेदत्वम्(प्राप्तम्)। यतः परम्परा नाम नाध्ययनाविच्छेदः। किं नाम अध्ययनाध्यापनविषये प्राक्तनत्वप्रतिपत्तिरित्याशयं स्फोरयति- **एतदुक्तं भवतीत्यादिना** ॥ **अवेदत्वेति** ॥ स्वयंप्रतिभातस्येति शेषः ॥ **अन्यतरेति** ॥ वैशेषिकैः स्वयम्प्रतिभातवेदानङ्गीकारादन्यतरेत्युक्तम्। ननु यद्यध्यापकानाम् अध्येतॄणां च प्राक्तनत्वप्रतिपत्तिः परम्पराशब्देन विवक्ष्यते तर्हि गूढकर्तृकेऽसिद्धिः। प्राक्तनमेवैतन्मया दृष्टमिति गूढ-कर्तृकवचनेन तदीयप्रतिपत्त्यनुमानसम्भवादित्याशयेन शङ्कते- **नन्विति** ॥ **कुत इति** ॥ निर्णायकाभावादिति भावः ॥ **सन्दिग्धानैकान्त्यं सन्दिग्धासिद्धिर्वेति** ॥ स्वयम्प्रतिभातवेदे परम्परासन्देहेन सन्दिग्धानै-कान्त्यम्। गूढकर्तृके तत्सन्देहेन सन्दिग्धासिद्धिरित्यर्थः। वसिष्ठादयः सत्यभाषिणो वेदद्रष्टृलक्षणलक्षितत्वात्, गूढः कर्ता अनृतवादी तल्लक्षणशून्यत्वात्, इत्यनुमानद्वयमभिप्रेत्य व्याचष्टे - **वेदद्रष्टॄणां ये गुणा इति** ॥ ननु उक्तशब्दस्य कुत्र केषामिति पदान्तरसापेक्षत्वेन 'सापेक्षमसमर्थम्' इत्यसामर्थ्ये तस्य कथं गुणशब्देन समासः, तस्य 'समर्थः पदविधिः' इति समर्थाधिकारित्वादित्यत आह- **उक्तशब्दस्येति** ॥ **नित्यसापेक्षत्वादिति** ॥ देवदत्तस्य गुरुकुलमितिवत् सापेक्षत्वेऽपि ससम्बन्धिकशब्दत्वेनासामर्थ्यानापादकत्वादित्यर्थः। पूर्वं वेदद्रष्टॄणा-मित्यस्य उक्तगुणशब्दान्वयमुपेत्य व्याख्यातम्। अधुना तेषामित्यस्य इदं विशेषणमित्युपेत्य व्याचष्टे- **अथ वेति** ॥ तर्हि पुराणोक्तयत्किञ्चिच्छुभधर्मलाभः स्यात्, न लक्षणलाभ इत्यत आह- **गुणशब्देनेति** ॥ हेत्वसिद्धि-मागमेन परिहर्तुमवतारयति- **के त इति** ॥ मौलं नपुंसकं सङ्गमयति। **एवंलक्षणका इति** ॥ **एतद्** वचनम्, उक्तमिति प्रकृत्यर्थपरामर्शः। ननु 'पङ्क्तिविंशतित्रिंशत्'

इति सूत्रे विंशतिशब्दनिपातनात् कथं विंशच्छब्दोऽत्र पठित इत्यत आह- **पर्याय इति ।।** छान्दसोऽयं तदर्थक इत्यर्थः। विंशल्लक्षणत इति तसिरयं न तसिल्। 'पूर्वसदृश' इति सूत्रेण ऊनशब्दयोगे तृतीयासमासविधानेन तदन्तविधिना तद्योगे तृतीयाया ज्ञापितत्वात्। विंशति-लक्षणैरित्यर्थः। तद्वद्भिरिति वा। अनून इत्येतन्मत्वर्थीयाजन्तमुपेत्य व्याचष्टे- **अनूनलक्षणवानिति ।।**

ननु नेदं युक्तम्। बृहद्भाष्योदाहृतवचनविरोधात्। तथा हि। ऊनशब्दस्यात्यन्ताभावसमानाधिकरणोऽर्थः। विंशल्लक्षणानां च विंशतित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अत्यन्ताभावेऽन्वयः। नञश्चान्योऽर्थः। तथाच विंशतित्वावच्छिन्नाभावसमानाधिकरणभिन्नलक्षणकत्वमर्थः। तथा चैकोनविंशतिलक्षणवत्स्वपि विंशतित्वरूप-व्यासज्यवृत्तिधर्मावच्छिन्नाभावोऽस्त्येवेति विंशत्यादिलक्षणवत्स्वेव विंशल्लक्षणतोऽनूनलक्षणकत्वं वाच्यम्। न च वेदद्रष्टॄणामृषीणां विंशत्यादिलक्षणवत्त्वं युक्तम्।

**(व्या.टि.)** 'द्वात्रिंशल्लक्षणैर्युक्ता वायुत्वपदयोगिनः।
अष्टाविंशल्लक्षणास्तु गिरीशपदयोगिनः॥
चतुर्विंशतिमारभ्य षोडशादा सुराः स्मृताः।
आष्टकादृषयः प्रोक्तास्तदूनाश्चक्रवर्तिनः॥'

इति प्रमाणे अभिविध्यर्थकेन मर्यादार्थकेन वा आङा देवानां चतुर्विंशतिमारभ्य षोडशान्तलक्षणवत्त्वं सप्तदशान्त-लक्षणवत्त्वं वा उक्त्वा ऋषीणां पञ्चदशं षोडशं वाऽऽरभ्याष्टकान्तलक्षणवत्त्वस्योक्तेरिति चेन्न। ऋषिसामान्यस्य षोडशं पञ्चदशं वाऽऽरभ्य अष्टकावधिकलक्षणवत्त्वेऽप्युत्तमर्षीणां वसिष्ठभृगुनारदादीनां विंशत्यादिलक्षण-वत्त्वसम्भवात्। वसिष्ठादीनां 'मित्रतन्मध्ये ब्रह्मपुत्रकाः' इत्यनुव्याख्याने मित्रनाम्नः सूर्यादुत्तमत्वस्य अग्नेरधम-त्वस्योक्तेः। भृगोस्तु 'भृगुरग्निसमः' इत्यग्निसमत्वस्य, नारदस्य 'वरुणाग्र्यन्तरा तत्र नारदः' इत्यग्नेरुत्तमत्वस्य चोक्तेः। वस्तुतस्तु चतुर्विंशतिमारभ्य इत्यस्यैवानुवृत्तिसम्भवे आष्टकादित्यत्र षोडशमारभ्येत्यादेः कल्पने मानाभावेन वेदद्रष्टृणामृषीणां विंशत्यादिलक्षणवत्त्वे वचनविरोधप्रसक्तिरेव नास्ति। 'अर्वाक्तु द्वादशावृत्ते-रधीत्याप्यृषिरेव सः' इति वेदद्रष्टृत्वरहितस्याप्यृषित्वोक्त्या वेदद्रष्टृत्वस्य ऋषित्वव्यापकत्वाभावेन एकोनविंश-त्यादिलक्षणवतामृषीणां वेदद्रष्टृत्वानङ्गीकारेऽपि न दोषः। यद्वा बृहद्भाष्योदाहृता स्मृतिः सम्यगित्यनुवृत्तेः स्फुटतरलक्षणाभिप्राया। इयं तु स्फुटास्फुटसाधारणाभिप्राया। एवं च स्फुटतराष्टकादिलक्षणवतामपि वेदद्रष्टृऋषीणामस्फुटतया विंशतिलक्षणवत्त्वमस्त्येवेति न विरोधगन्धः। अथ वा विंशल्लक्षणानामूनशब्दार्था-त्यन्ताभावे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः। तथा च विंशल्लक्षणाभावकूटासमानाधि-करणलक्षणवत्त्वस्य त्रयोदशादिलक्षणवत्स्वपि सत्त्वेन न विरोधवार्ता। एकोनविंशत्यभावादिकूटसत्त्वेऽपि तत्र विंशत्यभावकूटाभावात्। केचित्तु तपोनिष्ठदेवतापरेयं स्मृतिरित्याहुः। तत्र तेषां वसिष्ठादीनामित्यादिपूर्वटीकोक्तिः कथमिति चिन्त्यम्। अपरे तु बृहद्भाष्योक्तद्वात्रिंशल्लक्षणातिरिक्तानि वेदद्रष्टृद्वात्रिंशल्लक्षणानीति न विरोध इत्याहुः। तदनाकरत्वादश्रद्धेयम्। अधिकन्तु गुरुप्रभायाम्।

**।। वेद इत्येवेति ।।** वेदत्वप्रकारेणैवेत्यर्थः। वेदत्वं निरुच्य व्याचष्टे- **प्राक्तन एवेति ।।** एतेन वेद इत्येवेत्ययुक्तम्। 'संशयार्थं गुरोर्वचः सुपर्णादेः' इत्यृग्भाष्ये सुपर्णादेरपि स्वदृष्टे वेदो वाऽन्यो वेति संशयनिवृत्तये गुरूपदेशविधानेन वसिष्ठादीनां संशयस्य कैमुतिकन्यायसिद्धत्वादिति शङ्का निरस्ता। वसिष्ठादीनामनुपलभ्य-मानमूलत्वरूपस्य, अन्यस्य वा वेदत्वस्यानिश्चयेऽपि प्राक्तनत्वप्रकारकनिश्चयसम्भवात्। अधिकं तु गुर्व्यां प्रभायाम्। ज्ञानदर्शनादित्येतत् पुनरुक्तभिया व्याचष्टे- **दिव्यदृष्ट्येति ।। लिङ्गमिति ।।** 'स्वर्गकामो यजेत' इतिवदिति भावः। 'सपत्नीं मे पराधम' इत्यादौ शच्यादीनामधिकार-दर्शनादिति भावः। ननु नास्य प्रकृतोपयोगो दृश्यते। वसिष्ठादीनामुक्तलक्षणवत्त्वस्य प्रकृतत्वात्। तस्य चात्रानुक्तेरित्यत आह- **अर्थादिति ।।** आक्षे-पात्। आक्षेपस्तु एवंलक्षणको यं पश्येत् स वेद इत्यनुवादेन वेदद्रष्टॄणां लक्षणवत्त्वसिद्धिः। सिद्धस्यैवानुवादादिति **(व्या.टि.)** ज्ञेयम्। अथ वा पुराणे वसिष्ठादीनामप्रकृतत्वात् कथमस्य प्रकृतोपयोग इत्यत आह- **अर्था-दिति ।।** अन्यथाऽनुपपत्तेरित्यर्थः। वेदद्रष्टृत्वेन वसिष्ठादीनां प्रसिद्धत्वात् प्रसिद्धार्थपरित्यागेनाप्रसिद्धार्थ-कल्पनानुपपत्तेरित्यर्थः।

**टीका -** अथवा तस्याकर्तृकत्वेत्यनेन वेदत्वाभावो वाक्यत्वानुमानस्योपाधिरुच्यते। अत्र किमिदं वेदत्वं यदभाव उपाधित्वेनाभिप्रेयते, न तावद्वाक्यत्वादृष्टविषयवाक्यत्वादृष्टविषयप्रमाणवाक्य-त्वानामन्यतमम्। तदभावस्य साध्याव्यापकत्वात्। नाप्यपौरुषेयत्वम्। तदभावस्यैव साध्य-त्वात्। नापि वैदिकशब्दलक्षणोपेतत्वम्। तदभावस्य

भारतादिषु साध्याव्यापकत्वात्। यथोक्तम्-

'विशुद्धत्वप्रसन्नत्वाक्लिष्टत्वश्राव्यतादयः ।
वेदधर्मा हि दृश्यन्ते व्यासादिवचनेष्वपि ॥' इति।

अध्ययननियमविशेषास्तु शाखाभेदेनाव्यवस्थिता नोपसङ्ग्रहीतुं शक्यन्ते। नियमसामान्यं तु भारतादावप्यस्तीति तदभावोऽपि साध्याव्यापक एव । नापि नियतक्रमवत्त्वम्। तस्यापि भारतादौ सद्भावात्। क्रमव्यत्यासे वेदत्वाभाववद् भारतत्वाभावात्। नापि वेदव्यवहारगोचरत्वम्। इतिहासपुराणादिष्वपि तद्भावात्। नापि मुख्यतस्तद्गोचरत्वम्। तदभावस्य पक्षेतरत्वात्। प्रतिपक्षपर्यवसाने चासाधारणत्वादित्याशङ्क्य, अवेदत्वादिति वक्तव्ये तन्निर्वचनार्थम् 'अकर्तृकत्व-प्रसिद्धिरहितत्वात्' इत्युक्तम्। अकर्तृकत्वप्रसिद्धिमत्त्वं वेदत्वं तद्रहितत्वादेव तस्य लौकिकवाक्यस्य सकर्तृकत्वं नतु वाक्यत्वप्रयुक्तमित्यर्थः। नन्वेतल्लक्षणं गूढकर्तृकेऽपि वाक्येऽस्तीति तस्यापि वेदत्वं प्राप्तम्। तथाच तदभावस्य साध्याव्यापकत्वमित्यत आह- **नच केनचिदिति ॥** अकर्तृकत्व-प्रसिद्धिमत्त्वं नाम अनुपलभ्यमानोचितकारणत्वम्। वाक्यस्योचितं कारणं प्रत्यक्षादिकं विप्रलम्भा-दिकं वा । तच्च गूढकर्तृके परम्पराऽभावेनानुमानेनोपलभ्यत एवेति कथं तस्य वेदत्वप्राप्तिरित्यर्थः।

एतेनैतदपि निरस्तम्। वेदस्य सकर्तृकत्वनिरासात्प्रागकर्तृकत्वप्रसिद्धिमत्त्वस्याभावात् साधन-व्यापकत्वमिति। अकर्तृकत्वप्रसिद्धिमत्त्वस्यानुपलभ्यमानप्रत्यक्षादिमूलतया व्याख्यातत्वात् । तस्याश्चेश्वरकर्तृकत्ववादिभिरप्यङ्गीकृतत्वात् । 'न च स्वयम्प्रतिभात' इत्यादिकं तु परम्पराऽभावस्य हेतोर्व्यभिचारपरिहारार्थत्वेन पूर्ववद्व्याख्येयमिति । तर्कपराहतं च वाक्यत्वानुमानम् । पूर्वोक्त-कल्पनागौरवप्रसङ्गादित्युक्तप्रायमेव। तथा वक्ष्यमाणश्रुतिपुराणादिविरुद्धं च।

एतेन वेदाः सर्वज्ञप्रणीता वेदत्वाद् व्यतिरेकेण लौकिकवाक्यवदित्यपास्तम्। विपक्षे बाधकाभावेनाप्रयोजकत्वात् । किञ्च वेदस्य सर्वज्ञप्रणीतत्वनिश्चये सति प्रामाण्यनिश्चयः । तन्निश्चये च सर्वज्ञत्वनिश्चयः । ततश्च विशेषणप्रसिद्ध्याऽनुमानप्रवृत्तौ वेदप्रामाण्यनिश्चय इति चक्रकप्रसङ्गः। प्रकारान्तरेण सर्वज्ञत्वसिद्धेर्निरस्तत्वात्। प्रमाणान्तराणि तु तत्र तत्र निरसिष्यन्त इति।

**(र.टि.) ॥ नोपसङ्ग्रहीतुं शक्यन्त इति ॥** तथा च प्रतिपक्षपर्यवसाने हेतोर्भागासिद्धिः स्यादिति भावः। **तदभावस्य पक्षेतरत्वादिति ॥** वेदः सकर्तृक इत्यनुमाने मुख्यतो वेदव्यवहारगोचरत्वस्यैव पक्षतावच्छेदकत्वात् तदभावस्य पर्वतत्वाभाववत्पक्षेतरत्वपर्यवसन्नत्वादित्यर्थः **॥ प्रत्यक्षादिमूलतयेति ॥** प्रत्यक्षादिमूल-रूपत्वेनेत्यर्थः।

**(रा.टि.)** एवं 'न च लौकिकवाक्यवत्' इत्यादिकमप्रमितकर्तृकत्वहेतोर्विशेषणासिद्धिनिरासाय वाक्यत्व-हेतुर्विपक्षे बाधकाभावेनाप्रयोजक इत्युक्तिपरतया व्याख्याय, अधुना प्राचीनटीकारीत्या वाक्यत्वहेतोः सोपाधि-कत्वोक्तिपरतया व्याचष्टे- **अथ वेति ॥** उक्तं हि पद्मनाभतीर्थीये 'अकर्तृकत्वप्रसिद्धिरहितत्वेन सोपाधिक-त्वाद्वाक्यत्वहेतोः' इति । यद्वा यथा न समासानुपपत्तिस्तथाऽह- **अथ वेति ॥** तस्य वेदत्वाभावादित्येव कुतो नोक्तमित्यतः साध्यव्यापकत्वार्थमिति भावेनोपोद्घातमाह- **किमिदमिति ॥ तदभावस्येति ॥** उपाधित्वे-नाभिमताऽद्यद्वयाभावस्य पौरुषेये बौद्धादिवाक्येऽन्त्याभावस्य भारतादाविति भावः **॥ साध्यत्वादिति ॥** तथा च साध्यस्यैवोपाधित्वेन साध्याव्यापकत्वमेवेति भावः। कानि च वेदसम्बन्धिलक्षणानि। कथं च भारतादौ पौरुषेये तदभावरूपोपाध्यभाव इत्यत आह- **यथोक्तमिति ॥ नियमसामान्यं त्विति ॥** प्रदोषानध्याया-दावनध्ययनादिरूपमित्यर्थः **॥ इतिहासपुराणादिष्विति ॥** 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वचनादिति भावः ॥ **असाधारणत्वादिति ॥** उपाध्यभावस्य वेदत्वस्य पक्षमात्रवृत्तितयाऽसाधारणानै-कान्त्यादित्यर्थः। तस्येत्यादिमूलवाक्यार्थमाह- **तद्रहितत्वादेवेति ॥ साध्याव्यापकत्वमिति ॥** गूढकर्तृकवाक्ये पौरुषेयत्वे सत्यप्युक्तरूपवेदत्वस्यैव सत्त्वेन तदभावरूपोपाधेरभावादिति भावः। परम्पराभावादिति मूलवाक्यार्थं परिष्कारपूर्वकमाह- **अकर्तृकत्वप्रसिद्धिमत्त्वं नामेत्यादिना**

। **परम्पराभावेनेति** ।। तस्मिन्विच्छिन्नपरम्पर-त्वेनेत्यर्थः ।। **साधनव्यापकत्वमिति** ।। अकर्तृकत्वप्रसिद्धिमत्त्वाभावरूपोपाधेरिति योज्यम् । साधनवति पक्षे सत्त्वादिति भावः ।

एतेनेत्युक्तं व्यनक्ति- **अकर्तृकत्वेति** ।। **अङ्गीकृतत्वादिति** ।। अनुपलभ्यमानप्रत्यक्षादिमूलतयेत्यत्र तर्कताण्डवरीत्या प्रत्यक्षादिपदं प्रत्यक्षादिकरणपरं वा प्रत्यक्षादिप्रमापरं वा ध्येयम् । न्यायमते ईश्वरप्रत्यक्षज्ञानमूल-कत्वेऽपि वेदस्य, ईश्वरज्ञानं प्रमाऽप्रमाबहिर्भूतमित्यङ्गीकारादुक्तरूपाया अनुपलभ्यमानप्रत्यक्षादिमूलताया ईश्वर-वादिभिरङ्गीकृतत्वादित्यर्थः । तदभावरूपोपाधिश्च न पक्षेऽस्तीति न साधनव्यापक इति भावः ।। **इत्यादिक-(रा.टि.) मिति** ।। इत्यादिवाक्यत्रयं पुराणवाक्यं च विच्छिन्नपरम्परत्वहेतोः स्वयंदृष्टवेदेऽनुपलभ्यमानप्रत्य-क्षादिमूलताऽभावरूपसाध्यव्यभिचारपरिहारार्थत्वेन पूर्ववद्व्याख्येयमित्यर्थः । गूढकर्तृकवाक्ये परम्पराऽभावात् तत्प्रत्यक्षादिमूलमित्युक्ते तर्हि स्वयम्प्रतिभातवेदेऽनैकान्तिको हेतुरित्युक्ते प्राक्तनमेवेदमध्यापयाम इत्यादि-प्रतिपत्त्यभावो विच्छिन्नपरम्परत्वं नाम, तच्च नास्ति स्वयम्प्रतिभातवेदे । अतो न व्यभिचार इति परम्परासिद्धेति वाक्येनोक्तौ सन्दिग्धानैकान्तिको वा गूढकर्तृकवाक्ये सन्दिग्धासिद्धो वेति चोदिते वेदद्रष्टृलक्षणवद्वसिष्ठादि-पुरुषदृष्टवेदे तद्विलक्षणत्वेन हेतुसद्भावनिश्चयस्य, गूढकर्तुस्तल्लक्षणाभावेन तद्वाक्ये हेत्वभावनिश्चयस्य च सम्भवेन नासिद्धिशङ्का, नापि व्यभिचारशङ्केति वेदद्रष्टॄणामिति वाक्येनोक्ते, कानि वेदद्रष्टृलक्षणानीत्यतः पुराणवाक्य-मित्येवं व्याख्येयमिति भावः ।। **पूर्वोक्तेति** ।। वेदस्य पौरुषेयत्वेऽन्यत्रादृष्टस्येत्यादिवाक्येनोक्तेत्यर्थः । **वक्ष्य-माणश्रुतीति** ।। 'वाचा विरूप नित्यया' इत्यादिश्रुतिपुराणप्रत्यभिज्ञानयुक्तिविरुद्धमित्यर्थः ।। **सर्वज्ञत्व-निश्चय इति** ।। वेदेनेति योज्यम् ।। **विशेषणेति** ।। सर्वज्ञप्रणीतत्वरूपविशेषणेत्यर्थः ।। **निरस्तत्वादिति** ।। अन्यत्रादृष्टस्येत्यादिवाक्यव्याख्यानावसर इति भावः । ननु प्रामाण्यस्याऽऽप्तोक्तत्वगुणजन्यत्वान्यथाऽनुपपत्ति-वेदगतास्मच्छब्दोत्तमपुरुष 'छन्दांसि जज्ञिरे' इत्यादिश्रुतिस्मृतिरूपप्रमाणबलाद्वेदस्य कर्ताऽभ्युपेय इत्यत आह- **प्रमाणान्तराणीति** ।। 'प्रामाण्यं च स्वत एव' इत्यत्र पुराणवाक्यव्याख्यावसरे च तत्र तत्रेत्यर्थः ।

**(श्री.टि.)** ।। **तदभावस्येति** ।। वाक्यत्वादृष्टविषयवाक्यत्वाभावयोर्बौद्धादिवाक्येषु, अदृष्टविषयकप्रमाण-वाक्यत्वाभावस्य मन्वादिवाक्येषु साध्याव्यापकत्वादित्यर्थः ।। **तदभावस्यैवेति** ।। अपौरुषेयत्वं वेदत्वं तदभावः पौरुषेयत्वम् । तदेव च सकर्तृकत्वरूपं साध्यम् । अतो न स्वस्मिन्स्वयमुपाधिरित्यर्थः । ननु वैदिकशब्दलक्षणानि कानि यदुपेतत्वं भारतपञ्चरात्रादिषु तिष्ठतीत्यत आह- **यथोक्तमिति** ।। नन्वध्ययननियमविशेषवत्त्वमेव वेदत्वमस्त्वित्यत आह- **अध्ययननियमविशेषा इति** ।। 'सामगो वटुर्मुण्डी अधीयीत अन्यगः शिखी' इत्यादय इत्यर्थः ।। **नोपसङ्ग्रहीतुमिति** ।। अवच्छेदकधर्मेण क्रोडीकर्तुमित्यर्थः । तथा च वेदः सकर्तृको न भवति अध्ययन-नियमविशेषवत्त्वादिति प्रतिपक्षपर्यवसाने हेतोर्भागासिद्धिः स्यादिति भावः ।। **नियमसामान्यमिति** ।। प्राङ्-मुखत्वादिरूपनियमसामान्यवत्त्वं वेदत्वमित्यर्थः । **भारतादाविति** ।। उत्पत्त्यनन्तरं विनाशशून्ये भारतेऽपि नियतक्रमस्य सद्भावादित्यर्थः ।। **क्रमव्यत्यास इति** ।। यथा क्रमव्यत्यासेऽयं वेद एव न भवतीत्युच्यते तथाऽस्मिन् कल्पे भारतेऽपि दैवात्क्रमव्यत्यासे भारतमेव न भवतीत्युच्यते महद्भिरित्यर्थः ।। **तद्भावादिति** ।। 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति श्रुतेरिति भावः ।। **मुख्यत इति** ।। इतिहासपुराणादौ न मुख्यतो वेदव्यवहारविषयत्वं तत्र तद्व्यवहारस्यामुख्यत्वादिति भावः ।। **तदभावस्य पक्षेतरत्वादिति** ।। वेदः सकर्तृक इत्यनुमाने मुख्यतो वेदव्यवहारगोचरत्वस्यैव पक्षतावच्छेदकत्वात् तदभावस्य पर्वतत्वाभाववत्पक्षेतरत्वपर्यवसन्नत्वादित्यर्थः । तथा च सर्वानुमानोच्छेदः स्यादिति भावः ।। **असाधारणत्वादिति** ।। वेदः सकर्तृको न भवति वेदत्वादिति सत्प्रतिपक्षोन्नयने गगनादवसाधारण्यमित्यर्थः ।

**(श्री.टि.)** ।। **इत्युक्तमिति** ।। नन्वकर्तृकत्वप्रसिद्धिराहित्योपाधेरपि प्रतिपक्षे पर्यवसानेऽसाधारण्याभावेऽपि पक्षेतरत्वमत्रापि समानमेवेति चेन्न । इष्टापत्तेः । अनुकूलतर्कसद्भावदशायामेव हि पक्षेतरत्वस्य नोपाधित्वं, पक्ष एव साध्यव्यापकताभङ्गात् । 'अनुकूलेन तर्केण' इत्याद्युक्तेः । अनुकूलतर्काभावे तु तस्योपाधित्वमिष्टमेव, पक्षे साध्यव्यापकताभङ्गाभावात् । यथाऽऽहुः 'तदभावे तस्येष्टत्वात्' इति । प्रकृते च वाक्यत्वानुमानेऽनुकूल-तर्काभावात् पक्षेतरत्वभूतस्याप्यकर्तृकत्वप्रसिद्धिराहित्यस्योपाधित्वं युक्तमेव । नन्वत्रापि सकर्तृकत्वाभावे वाक्यत्वं न स्यात् । वाक्यत्वापौरुषेयत्वयोरेकत्र समावेशस्य घटत्वनीरूपत्वयोरिव विरुद्धत्वात् । सकर्तृकत्वाभावे प्रामाण्यं न स्यात् । तस्याऽऽप्तोक्तत्वरूपगुणजन्यत्वादिति वाऽनुकूलतर्कोऽस्तीति चेन्न । उक्तं मा विस्मार्षीः । यतो वाक्यत्वापौरुषेयत्वयोरेकत्र समावेशः पूर्वं समर्थित इत्याद्यस्तर्को न युक्तः । प्रामाण्यस्य स्वतस्त्वसमर्थनेन द्वितीयस्तर्कोऽप्ययुक्त इत्यालोचनीयम् ।

एतेनेत्युक्तं विशदयति- **अकर्तृकत्वप्रसिद्धिमत्त्वस्येति ।। मूलतयेति ।।** अनुपलभ्यमानप्रत्यक्षादि-मूलतारूपत्वेनेत्यर्थः । नन्वनुपलभ्यमानप्रत्यक्षादिप्रमाणमूलत्वरूपाकर्तृकत्वप्रसिद्धिमत्त्वरूपोपाध्यभावस्येश्वर-प्रत्यक्षप्रमाणमूलताऽङ्गीकारेण सकर्तृकत्वनिरासात्प्रागसिद्धतया पुनः साधनव्यापकतैवेत्यत आह- **तस्या-श्चेति ।।** अनुपलभ्यमानप्रत्यक्षादिप्रमाणमूलताया इत्यर्थः । ईश्वरप्रत्यक्षमूलकत्वाङ्गीकारेऽपि तस्य नित्यतया प्रमाणत्वाभावादनुपलभ्यमानप्रमाणमूलकत्वमक्षतमेवेत्याशयः **।। पूर्वोक्तेति ।।** अन्यत्राद्दृष्टस्येत्यादिनोक्तेत्यर्थः। **वक्ष्यमाणेति ।।** 'वाचा विरूप नित्यया' इत्यादिना वक्ष्यमाणेत्यर्थः **।। प्रामाण्यनिश्चय इति ।।** आप्तोक्तत्वरूप-गुणलाभादिति भावः **।। सार्वज्ञनिश्चय इति ।।** प्रमाणभूतेन 'यस्सर्वज्ञः' इत्यादिना वेदेन सार्वज्ञनिश्चय इत्यर्थः। **ततश्चेति ।।** अन्यथा सर्वज्ञत्वरूपविशेषणस्याप्रसिद्धत्वेनानुमानस्यैवाप्रवृत्तेरिति भावः । ननु प्रामाण्यनिश्चये सति प्रमाणभूतेन वेदेन सार्वज्ञनिश्चय इति नाङ्गीक्रियते येनोक्तरीत्या चक्रकप्रसङ्गः । किं नाम क्षित्यादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानेन सार्वज्ञसिद्धिर्भविष्यतीत्याशङ्क्य निराकरोति- **प्रकारान्तरेणेति ।।** नन्वथापि वेदस्याप्रमितकर्तृकत्वमसिद्धम् । 'अग्नेर्वात्र ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः','ऋचः सामानि जज्ञिरे' इत्यादिप्रमाणान्तरैर्वेदकर्तुः प्रमितत्वादित्याशङ्क्य निराकरोति- **प्रमाणान्तराणि त्विति ।।**

> 'तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु ।
> वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।
> अवान्तराभिमानानां देवानां वा व्यपेक्षया ।'

इत्यादिनोत्पत्तिवाक्यानामर्थान्तरोक्त्या निरसिष्यन्त इत्यर्थः ।

**(पां.टि.) ।। तदभावस्य साध्याव्यापकत्वादिति ।।** वाक्यत्वाभावस्याद्दृष्टविषयवाक्यत्वाभावस्य च सकर्तृ-कत्वरूपसाध्यवति बौद्धादिवाक्ये, प्रमाणत्वे सत्यदृष्टविषयवाक्यत्वाभावस्य सकर्तृके मन्वादिवाक्येऽभावादि-**(पां.टि.)** त्यर्थः **।। तदभावस्यैवेति ।।** ततश्च साधनव्यापकत्वमिति भावः **।। भारतादिष्विति ।।** तत्र वैदिक-शब्दलक्षणवत्त्वरूपवेदत्वस्यैव सत्त्वेन तदभावस्यासत्त्वादिति भावः । कानि तानि वैदिकशब्दलक्षणानि । कुतश्च भारतादेस्तद्वत्त्वमित्यतस्तद् आप्तोक्त्या दर्शयति - **उक्तं चे(यथोक्तमि)ति ।। नोपसङ्गृहीतुं शक्यन्त इति ।।** ततश्चाध्ययननियमविशेषशून्यत्वस्य वेदेऽपि सत्त्वात्साधनव्यापकत्वमिति भावः **।। तस्यापीति ।।** ततश्च साध्याव्यापकत्वमिति भावः । भारतस्य नियतक्रमवत्त्वमेवोपपादयति- **क्रमव्यत्यास इति ।। तद्भावा-दिति ।।** ततश्च तत्रैव साध्याव्यपकत्वमिति भावः **।। पक्षेतरत्वादिति ।।** मुख्यतो वेदव्यवहारगोचरत्वस्यैव पक्षतावच्छेदकत्वात्तदभावस्य पर्वतत्वाभाववत् पक्षमात्रव्यावर्तकविशेषणत्वेन पक्षेतरत्वादित्यर्थः **।। असाधा-रण्यादिति ।।** उपाधेः प्रतिपक्षोन्नायकत्वेन वेदः सकर्तृको न मुख्यवेदव्यवहारगोचरत्वादित्युपाध्यभावेन प्रति-पक्षोन्नयनं कर्तव्यम् । तच्च न सम्भवति । सकर्तृकत्वाभावरूपसाध्यवत्तया सपक्षे गगनादौ उक्तहेत्वप्रवेशादिति भावः **।। साध्याव्यापकत्वमिति ।।** गूढकर्तृके वाक्ये सत्यपि सकर्तृकत्वेऽकर्तृकत्वप्रसिद्धिमत्त्वस्यैव तत्र सत्त्वेन तदभावरूपावेदत्वस्य तत्राभावादिति भावः **।। परम्पराऽभावेनानुमानेनेति ।।** विमतं वाक्यमेतत्प्रत्यक्षादि-मूलम्, अस्मिन्विच्छिन्नपरम्परत्वादित्यनुमानेनेत्यर्थः **।। व्यभिचारपरिहारार्थत्वेनेति ।।** स्वयम्प्रतिभातवेदैर्दृष्टे वेदे सत्यपि वसिष्ठादिषु विच्छिन्नपरम्परत्वे तत्प्रत्यक्षादिमूलकत्वाभावात्तत्र व्यभिचार इत्याशङ्कानिवर्तकतयेत्यर्थः। **पूर्ववदिति ।।** पूर्वयोजनायामिवेत्यर्थः । ननु वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वादित्यनुमाने यद्यपौरुषेयं वाक्यं न स्यात्तर्हि धर्मादिसिद्धिर्न स्यादित्येवंरूपोऽनुकूलतर्क उक्तः । स पौरुषेयत्वानुमाने प्रतिकूलो भवत्येव । परानुमान-प्रतिकूलस्यैव स्वानुमानेऽनुकूलत्वात् । प्रतिपक्षानुमाने तस्य प्रतिकूलत्वाभावे स्वानुमानेऽनुकूलत्वानुपपत्तेः । तथा च प्रतिपक्षानुमानबाधकतया तस्यावश्यं वक्तव्यत्वात्तदनुक्त्या न्यूनत्वमित्यत उक्तप्रायत्वेन तदनुक्तेर्न न्यूनत्वापादकत्वमित्याशयेनाऽऽह- **तर्कपराहतमिति ।। वक्ष्यमाणश्रुत्यादीति ।।** 'वाचा विरूप नित्यया' इत्यादिना वक्ष्यमाणश्रुत्यादीत्यर्थः । धर्मादिकं कस्यचित्प्रत्यक्षं वस्तुत्वादित्याद्यनुमानेनैव सर्वज्ञत्वसिद्धेः सम्भवात् तस्या वेदसाध्यत्वाभावेन तत्प्रामाण्यनिश्चयानपेक्षत्वान्न चक्रकमित्यत आह- **प्रकारान्तरेणेति । निरस्तत्वा-दिति ।।** 'अन्यत्राद्दृष्टस्य सर्वज्ञत्वस्य कल्पनम्' इत्येतद्व्याख्यानावसर इति शेषः **।। प्रमाणान्तराणीति ।।** 'ऋग्वेद एवाग्नेरजायत' इत्यादिरूपाणीति शेषः । तत्र तत्र निरसिष्यन्त इति ।। 'तदुत्पत्तिवचश्चैव' इत्यादिनेति शेषः ।

**(व्या.टि.)** एवं वाक्यत्वानुमानस्याप्रयोजकत्वाभिधानपरतया तस्याकर्तृकत्वेत्यादिमूलं स्वयं व्याख्याय प्राक्तन-व्याख्यामनुवदति- **अथ वेत्यादिना ।।** ननु वेदत्वाभावो हि वाक्यत्वानुमानस्योपाधितयाऽभिप्रेयते । तत्र प्रतियोग्यज्ञाने नाभावः सुज्ञान इति प्रतियोगि

वेदत्वं निर्वक्तव्यम्। किमिदं वेदत्वं वाक्यत्वं वा, अदृष्टविषय-वाक्यत्वं वा, अदृष्टविषयप्रमाणवाक्यत्वं वा, अपौरुषेयत्वं वा, वैदिकशब्दलक्षणोपेतत्वं वा, नियमविशेष-वदध्ययनविषयत्वं वा, नियताध्ययनविषयत्वमात्रं वा, नियतक्रमवत्त्वं वा, वेदव्यवहारगोचरत्वं वा, मुख्यतया **(व्या.टि.)** तद्गोचरत्वं वेति दशधा विकल्पान् मनसि निधाय क्रमेण निराह- **न तावदित्यादिना । अन्यतम-दिति ।।** अव्युत्पन्नस्यान्यतमशब्दस्य गणपाठाभावेनादड्भावेऽपि 'किंकिंयत्तदः' इति योगविभागेनान्य-शब्दाड्डतमप्रत्ययान्तात् 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इति स्वमोरद्डादेशे रूपम्। 'न च सामान्यादिष्वन्यतमत्तमः' इत्यादिशशधराद्यभियुक्तप्रयोगादिति भावः। अन्यतममिति पाठे तु न कोऽपि शङ्कापङ्कः। **तदभावस्य** वेदत्वा-भावस्य। पित्रादिवाक्ये वाक्यत्वादित्रितयसत्त्वेन तदभावाभावादिति भावः। चतुर्थं निराह- **नापीति ।। तदभावस्य** अपौरुषेयत्वाभावस्य **।। साध्यत्वादिति ।।** अभावाभावस्य भावत्वादिति भावः। पञ्चमं निरस्यति- **नापीति ।। साध्येति ।।** साध्यसमानाधिकरणाभावप्रतियोगित्वादित्यर्थः। तत्प्रमाणेन द्रढयति- **यथोक्त-मिति ।। विशुद्धत्वं** वर्णपददोषराहित्यम्। **प्रसन्नत्वं** जपादिना सिद्धिदत्वम्। **अक्लिष्टत्वम्** अकठिनत्वम्। **श्राव्यत्वं** श्रवसस्तोषकारित्वम्। एवमादयो वेदधर्मा इत्यर्थः। षष्ठं खण्डयति- **अध्ययनेति ।। शाखाभेदे-नेति ।।** 'पञ्चशीर्षोपनयने विनियोगः' इति तैत्तिरीयकाः, 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति शिरस्यङ्गारपात्रनिधानरूपशिरोव्रतादय आथर्वणिकाः, न शाखान्तराधिकारिविशेषणम् इत्यव्यव-स्थिता इत्यर्थः **।। नोपसङ्गृहीतुमिति ।।** अव्यापकतया लक्षणत्वासम्भवादित्यर्थः। सप्तमं दूषयति- **नियम-सामान्यमिति ।।** शौचप्रदोषानध्ययनादीत्यर्थः। अष्टमं दूषयति- **नापीति । नियतेति ।।** तत्क्रमेणैवेत्युक्ते-रिति भावः। नवमं निराह- **नापीति । तद्भावादिति ।।** 'पञ्चमो वेदानां वेदः' इति वेदेनैव पञ्चमत्वोक्तेरिति भावः। दशमं व्युदस्यति- **नापीति ।।** पक्षेतरत्वादिति भावप्रधानः। अथ वा पक्षम् इतरयति व्यावर्तयति इति 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिजन्तादच्, तस्य भावस्तत्त्वं तस्मादित्यर्थः **।। प्रतिपक्षेति ।।** 'उपाधिः प्रतिरूपं हि साधनं तन्न चापरम्' इत्यनुव्याख्यानोक्तेरित्यर्थः। अकर्तृकत्वप्रसिद्धिरहितत्वादित्यर्थानु-वादोऽयमिति भावः **।। तद्रहितत्वादेवेति ।।** प्रयोजकत्वाद्वेदत्वाभावः उपाधिरित्यर्थः **।। न त्विति ।।** वाक्यत्वमप्रयोजकमित्यर्थः।

मणिकारस्तु शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दाजन्यवाक्यार्थज्ञान-जन्यप्रमाणशब्दत्वं वेदत्वमिति तन्निरूचे। तन्न। 'सूर्य एकाकी चरति','अग्निर्हिमस्य भेषजम्' इत्यादिप्रत्यक्ष-समानार्थे वेदभागेऽव्याप्तेः। तत्र सत्यन्ताभावात्। वेदव्यतिरिक्तादृष्टार्थकेश्वरवाक्येऽतिव्याप्तेश्च। तस्य वेदवदीश्वर-प्रत्यक्षमूलत्वेन विशेष्यस्य, अदृष्टविषयत्वेन सत्यन्तविशेषणस्य च सत्त्वात्। व्यासकृतग्रन्थे वेदसमानार्थक-भागेऽतिव्याप्तेश्च। व्यासस्य 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' इति प्रमाणसिद्धभगवदवतारत्वेन तज्ज्ञानस्य नित्यत्वात्। भगवत्कृते वेदव्याख्यानेऽतिव्याप्तेश्च। यत्त्वत्र पक्षधरेणोक्तम्। वेदाः केनचिद्व्याख्याता महाजनपरिगृहीतत्वादित्युभयातिरिक्तप्रमाणगोचरवेदतदर्थबोध्यबोधकभावस्य वेदव्याख्यानतात्पर्यविषयत्वेन तत्र सत्यन्ताभावान्नातिव्याप्तिरिति। तन्न। अनुमानेन सामान्यतो विषयीकरणेऽपि विशिष्याविषयीकरणेन **(व्या.टि.)** तत्र सत्यन्तसद्भावात्। अन्यथा सकलस्यापि वेदस्य सामान्यलक्षणप्रत्यासत्तिजन्यप्रतीति-विषयार्थकत्वेनासम्भवः स्यादित्यास्तां विस्तरः।

**।। वेदत्वमिति ।।** तच्छब्दव्यवहार्यत्वमित्यर्थः। **तदभावस्य** वेदत्वाभावस्य **।। साध्याव्यापकत्व-मिति ।।** साध्यसमानाधिकरणाभावप्रतियोगित्वादित्यर्थः। अनुपलभ्यमानोचितकारणत्वमिति बहुव्रीह्युत्तरो भावप्रत्ययः **।। अनुमानेनेति ।।** विमतं वाक्यम् एतत्प्रत्यक्षादिमूलम्, अस्मिन्विच्छिन्नपरम्परत्वात्। यदेवं तदेवं यथा सम्प्रतिपन्नम् इत्युक्तदिशेति भावः। तथा च तत्रोपाधेः सत्त्वात् साध्यव्याप्तिः सिद्धेत्याशयः **।। साधनव्यापकत्वमिति ।।** उपाधेरिति शेषः **।। अनुपलभ्यमानेति ।।** अत्र तलन्तस्य स्वार्थाभेदे लक्षणा षष्ठ्यनुसारात्। **तस्या** इति तु स्वार्थस्यैव परामर्श इत्यवधेयम् **।। ईश्वरकर्तृकत्ववादिभिरिति ।।** 'सम्यगनुभव-साधनं प्रमाणम्' इति प्रमाणसामान्यम्, 'प्रत्यक्षप्रमाकरणं प्रत्यक्षम्' 'इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानमव्यपदेश्य-मव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इति तद्विशेषं च लक्षयद्भिः सूत्रकारादिभिरीश्वरस्य प्रत्यक्षादिबहिर्भावा-भ्युपगमात् तेषामेवेहानुमातृत्वादीश्वरकर्तृकत्ववादो विरुद्ध इति। एतच्च विस्पष्टं प्रागेवावादि 'सर्वज्ञज्ञानमूलत्वम्' इत्यादिना 'एतच्चानुमानं वैशेषिकादीनाम्' इत्यन्तेन। **तत्परिहारार्थत्वेन** तत्प्रयोजनवत्त्वेनेत्यर्थः **।। पूर्व-वदिति ।।** अप्रयोजकतापरतया योजयितुमत इवोपाधिपरतया योजयितुमतेऽपि व्याख्येयमित्यर्थः। **पूर्वोक्ते-ति ।।** अन्यत्राद्दृष्टस्येत्युक्तदिशेत्यर्थः **।। उक्तप्रायमेवेति ।।** उक्ततुल्यमित्यर्थः। 'पशुप्रायो मनुष्यः' इत्याद्यभियुक्तप्रयोगात्, 'प्रायः स्यात्ताडने मृत्यौ तुल्यबाहुल्ययोरपि' इत्यभिधानाच्च,

अकारान्तं विशेष्यनिघ्नं सदृशार्थकं प्रायपदमस्तीति प्रतीमः। स्फुटप्रतीतिश्च सादृश्यम्। अधिकं तु गुरुप्रभायाम्॥ **वक्ष्यमाणेति** ॥ 'वाचा विरूप नित्यया' इत्यादीत्यर्थः ॥ **तदिति** ॥ वेदप्रामाण्येत्यर्थः ॥ **अनुमानेति** ॥ वाद्यन्तरोक्तरीत्ये-त्यर्थः ॥ **प्रमाणान्तराणीति** ॥ जनिश्रुत्यादीनीत्यर्थः।

**॥ अपौरुषेयत्ववादः समाप्तः ॥**

**मूलम् - प्रामाण्यं च स्वत एव। अन्यथाऽनवस्थानात्।**

**(त.मं.)** ननु वेदस्यापौरुषेयत्वे प्रामाण्यनिश्चयो न स्यात्। पौरुषेयत्वे तु तदाप्तिमूलत्वेन सम्भवतीत्यत आह - **प्रामाण्यं चेति** ॥ अन्यथा, प्रमाणस्य परतःप्रामाण्याङ्गीकारे तस्यापि परतस्तस्यापि परत इत्यनवस्था स्यात्।

**टीका -** यदुक्तं वाक्यत्वाद्यनुमानं विपक्षे बाधकाभावादप्रयोजकमिति। तदसत्। तथाहि। संवादेन खलु प्रमाणानां प्रामाण्यमनुमातव्यम्। संवादश्च सजातीयेन विजातीयेन वा भवति। तत्र वेदस्य न तावत्सजातीयसंवादोऽस्ति। 'सदागमैकविज्ञेयम्' इति तद्विषयस्य प्रमाणान्तरागोचरत्वा-भ्युपगमात्। नाप्यर्थक्रियासामर्थ्यादिकं विजातीयमस्ति। मोक्षादेः प्रत्यक्षाद्यवेद्यत्वात्। तथाचाऽऽप्तोक्तत्वेनैव तत्प्रामाण्यमनुमातव्यम्। प्रमाणजन्यत्वेनैव तज्जन्यज्ञानप्रामाण्यमपि। तथाचाऽह कणादः 'तद्वचनादाम्नायप्रामाण्यम्' इति। अक्षपादोऽपि 'तत्प्रामाण्यमाप्तप्रामाण्यात्' इति। ततश्च वेदस्याकर्तृकत्वे प्रामाण्यासिद्धिप्रसङ्गस्य बाधकस्य विद्यमानत्वात् कथमप्रयोजकत्वं वाक्यत्वाद्यनुमानस्य। अत एवाकर्तृकत्वाद्यनुमानमपि प्रतिकूलतर्कपराहतम्। उपाधेरपि साध्यव्यापकताभङ्गः सिद्ध्यति। यथोक्तम्-

'अनुकूलेन तर्केण सनाथे सति साधने।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः ॥' इति।

तत्राऽह- **प्रामाण्यं चेति** ॥ सर्वेषामपि ज्ञानानां यथार्थत्वलक्षणं प्रामाण्यं **स्वत एव** ज्ञान-ग्राहकेणैव गृह्यत इति शेषः।

एतदुक्तं भवति। भवेदेवं यदि ज्ञानं मनसाऽवसेयं तदीयं याथार्थ्यमुक्तविधया संवादेनानुमेय-मिति परतः प्रामाण्यग्रहणं स्यात्। न चैवम्। किं नाम, ज्ञानं साक्षिप्रत्यक्षवेद्यम्। तच्च वक्ष्यते। तत्प्रामाण्यमपि साक्षिप्रत्यक्षवेद्यमेव। इन्द्रियलिङ्गशब्दानां तु यथार्थज्ञानसाधनत्वलक्षणं प्रामाण्य-मन्वयव्यतिरेका(क समधिगम्यं)वसेयम्। तथाच कुत्रापि प्रामाण्यग्रहणे नाऽऽप्तोक्तत्वादेरुपयोग इति।

ज्ञानग्राहकमात्रेणैव तत्प्रामाण्यग्रहणमित्येतत् कुत इत्यत आह- **अन्यथेति** ॥ प्रामाण्यं तावदवश्यं केनचित्प्रमाणेन ज्ञातव्यम्। अन्यथा तदभावप्रसङ्गात्। नच ज्ञानग्राहकातिरिक्तेन तद्ग्रहणं सम्भवति। तत्प्रामाण्यस्याप्यन्येन ग्रहणाङ्गीकारेऽनवस्थानात्। तस्य स्वतस्त्वे प्रथमस्यैव तथात्वाङ्गीकारोपपत्तेः। अतः परिशेषात् स्वतस्त्वसिद्धिः।

तथा च प्रयोगः। ज्ञानगतं याथार्थ्यं तद्ग्राहकेणैव ग्राह्यम्। ग्राहकान्तरानुपपत्तौ सत्यां गृह्यमाण-त्वात्। यद्यतोऽन्येनानुपपद्यमानग्रहणं गृह्यते तत्तेनैव ग्राह्यम्। यथा चक्षुषोऽन्येनानुपपद्यमान-साक्षात्कारं साक्षात्क्रियमाणं रूपं चक्षुषैव साक्षात्क्रियत इति। नच विशेषणासिद्धिः। ग्राहकान्तर-स्यानवस्थाप्रसङ्गेन निरस्तत्वात्। नच साक्षिवेद्यत्वेऽप्यनवस्थाप्रसङ्गः समान एवेति वाच्यम्। साक्षी स्वयंप्रकाशः स्वात्मानं स्वप्रामाण्यं च गोचरयतीत्यङ्गीकारात्। ज्ञानस्यैव तथाभावोऽभ्युप-गम्यतामिति चेत्, अन्तःकरणवृत्तेर्ज्ञानस्य जडत्वेन स्वयम्प्रकाशत्वायोगादिति।

ननु प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वादप्रामाण्यवत् । अप्रामाण्यं हि ज्ञानग्राहकातिरिक्तेन विसंवादादिना लिङ्गेनानुमेयमित्यतो वाऽह- **अन्यथेति ॥** अनवस्थालक्षण-प्रतिकूलतर्कपराहतमनुमानमित्यर्थः ।

**(र.टि.) ॥ संवादश्च सजातीयेन विजातीयेन वा भवतीति ॥** सजातीयसंवादो नाम साक्षात्स्वविषय-विषयकप्रमाणान्तरव्यवस्थापितविषयत्वम् । विजातीयसंवादो नाम स्वविषयघटितस्वगतप्रामाण्यग्राहकप्रमाण-व्यवस्थापितविषयत्वमिति द्रष्टव्यम् । ननु वेदस्याऽऽप्तोक्तत्वाभावेऽपि यथार्थज्ञानजनकत्वलक्षणं प्रामाण्यं यथार्थज्ञानान्वयव्यतिरेकाभ्यामनुमातुं शक्यत इति (कथम्) न वेदप्रामाण्यसिद्धिः तत्सकर्तृकत्वमाक्षिपतीत्यत आह- **प्रमाणजन्यत्वेनैवेति ॥** स्यादेतदेवम्, यदि वेदजन्यज्ञानप्रामाण्यस्य प्रमाणभूतवेदजन्यत्वं विनाऽन्यतः सिद्धिः स्यात् । न चैवम् । प्रमाणभूतवेदजन्यत्वेनैव तत्सिद्धेः । तथा च तदन्वयव्यतिरेकाभ्यां वेदप्रामाण्यानु-मानेऽन्योन्याश्रयः स्यादित्यर्थः ॥ **साक्षिप्रत्यक्षवेद्यमेवेति ॥** तथा च नान्योन्याश्रय इ(त्यर्थः)ति भावः । अंशे बाधनिवारणार्थं प्रामाण्यं विशिनष्टि- **ज्ञानगतमिति ॥ ज्ञानग्राहकेणैव ग्राह्यमिति ॥** पद्धत्युक्तरीत्या ज्ञानज्ञापकातिरिक्तज्ञापकानपेक्षत्वं यदि स्वतस्त्वं तदा एवकारोऽन्ययोगव्यवच्छेदपरः । तेनात्रापि ज्ञानग्राहकाति-रिक्ताग्राह्यत्वं पर्यवस्यति । अत्र च ग्राहकपदं संशयविरोध्यलौकिकप्रत्यासत्त्यजन्यप्रत्यक्षपरम् । तदतिरिक्ता-ग्राह्यत्वं तु नियमेन तदतिरिक्तग्राह्यत्वाभावः । एतेनानुमित्यादिवेद्यत्वेऽपि प्रामाण्यस्य नानुपपत्तिः । अत्र यद्यप्येवकारं विना उक्तप्रत्यक्षग्राह्यत्वसाधनेनैव स्वतस्त्वसिद्धिः । तथाऽपि परमतनिषेधार्थं विशिष्टसाध्यकर-णम् । तद्धि त(था)दा भवति, यदि यद्रूपं परतस्त्वे साध्यतावच्छेदकं तद्रूपावच्छिन्नाभावः साध्यते (ध्येत) । परेण तु (तूत्तरत्र) 'लौकिकप्रत्यक्षातिरिक्तनियतग्राहकग्राह्यत्वं परतस्त्वम्' इत्युक्तम् । अत एवोक्तं पद्धतौ 'ज्ञानज्ञापकातिरिक्तप्रमाणापेक्षत्वं ज्ञप्तौ परतस्त्वम्' इति । अन्यथा स्वतस्त्वनिरुक्तौ तदभावस्य परतस्त्वरूपत्वे पृथक् परतस्त्वनिर्वचनायोगः । अत्रापि 'प्रामाण्यं स्वतः' इत्यंशलब्धप्रामाण्यस्वतस्त्वे हेतुविशेष(णसिद्ध्यर्थ)-णासिद्धिनिरासार्थत्वेन 'अन्यथाऽनवस्थानात्' इति वाक्यं व्याख्याय एवशब्दसूचितपरतस्त्वनिषेधसाधकत्वेन तद्वाक्यं व्याख्यातम् । स्वमते तु प्रामाण्ये स्वतस्त्वं संशयविरोध्यलौकिकप्रत्यासत्त्यजन्यप्रत्यक्षवेद्यत्वम् । अत्रेश्वरप्रत्यक्षवेद्यत्वेन सिद्धसाधनं स्यादिति प्रत्यक्षे संशयविरोधीति विशेषणम् । योगिज्ञानादिना तन्मा भूदित्य-लौकिकप्रत्यासत्त्यजन्येति विशेषणम् । अनुमित्यादिना तद्वारणाय प्रत्यक्षपदम् । एतादृशं च प्रत्यक्षं स्वमते साक्षिरूपं परमते त्वनुव्यवसायादिरूपमित्यन्यदेतत् । यदि तु ग्रन्थान्तररीत्या ज्ञानग्राहकेण गृह्यत एवेति **(र.टि.)** स्वतस्त्वनिर्वचनं तदा एवकारो भिन्नक्रमः सन् यावदर्थको बोद्धव्यः । ज्ञानग्राहकश्चोभयसिद्ध-प्रामाण्यग्राहकभिन्नत्वेन विवक्षितम् । तेन दोषाभावे सति ज्ञानप्रत्यक्षवेद्यत्वं स्वतस्त्वं पर्यवस्यतीति दिक् ।

**(रा.टि.) ॥ सजातीयेन विजातीयेन वेति ॥** साक्षात्स्वविषयं प्रमाणान्तरं सजातीयम् । तदन्यन्मानं विजातीयं ज्ञेयम् ॥ **अर्थक्रियेति ॥** फलनिष्पादनशक्तत्वमर्थक्रियासामर्थ्यम् । फलवत्प्रवृत्तिजनकत्वादृष्ट-करणकत्वादिरादिपदार्थः ॥ **प्रत्यक्षाद्यवेद्यत्वादिति ॥** आगमैकवेद्यत्वात्तस्य । तथा च तज्जननशक्तिर्दुर्ज्ञेयेति भावः ॥ **प्रामाण्यमपीति ॥** अनुमातव्यमित्यनुषङ्गः ॥ **तद्वचनादिति ॥** ईश्वरवचनादित्यर्थः ॥ **ततश्चेति ॥** आप्तोक्तत्वेनैव वेदप्रामाण्यस्यानुमातव्यत्वे सतीत्यर्थः ॥ **अत एवेति ॥** अपौरुषेयत्वे प्रामाण्यासिद्धि-प्रसङ्गादेवेत्यर्थः ॥ **अकर्तृकत्वाद्यनुमानमपीति ॥** अप्रमितकर्तृकत्वाविच्छिन्नपरम्परत्वनियतैकप्रकारकत्वा-प्रणीतत्वाद्यनुमानमपीत्यर्थः ॥ **उपाधेरिति ॥** अकर्तृकत्वप्रसिद्ध्यभावरूपोपाधेरपीत्यर्थः । अत एवेत्यनुषङ्गः। कथमित्यतस्तार्किकोक्तमाह- **यथोक्तमिति ॥ साध्यव्यापकताभङ्गात्पक्ष इति ॥** अनुकूलतर्कसनाथसाधनेन पक्षे साध्यनिश्चये सति तत्रोपाधेस्साध्य-व्यापकत्वाभावादिति भावः । करणप्रामाण्यस्य धर्मिग्राहकग्राह्यत्वरूप-स्वतस्त्वाभावादाह- **सर्वेषामपि ज्ञानानामिति ॥ यथार्थत्वेति ॥** साक्षाद्यथावस्थितज्ञेयविषयीकारित्व-रूपमित्यर्थः । तावता कथमुक्तशङ्कापरिहार इत्यत आह- **एतदुक्तमिति ॥ भवेदेवमिति ॥** अपौरुषेयत्वे वेदस्य प्रामाण्यासिद्धिप्रसङ्गरूपो दोषो भवेदित्यर्थः ॥ **वक्ष्यत इति ॥** बुद्धिदोषेति वाक्यव्याख्यावसरे 'अयमभिसन्धिः' इत्यादिग्रन्थेनेति वा 'ज्ञानाज्ञानसुखदुःखात्मभेदादिविषयस्यानुभवस्य' इति मूलकृतैव परिच्छेदान्ते वा वक्ष्यत इत्यर्थः ॥ **अन्वयेति ॥** प्रमान्वयव्यतिरेकेति वा अपवादाभावे केवलज्ञानान्वयव्यति-रेकावसेयमित्यर्थः ॥ **परिशेषादिति ॥** अवश्यग्राह्यत्वस्य परतः स्वतो वेति सम्भावितकोटिद्वयमध्येऽनवस्था-दोषेण परतोऽसम्भवे ज्ञानग्राहकमात्रग्राह्यत्वरूपस्वतस्त्वे पर्यवसानेन परिशेषप्रमाणात् स्वतस्त्वसिद्धिरित्यर्थः। **तथा चेति ॥** अनुकूलतर्कादौ सतीत्यर्थः । अप्रामाण्येऽनैकान्त्यनिरासाय ग्राहकान्तरानुपपत्तौ सत्यामित्युक्तिः। अनुपपद्यमानग्रहणमिति बहुव्रीहिः । एवमग्रेऽपि ज्ञेयम् । ग्रहणमित्यत्र साक्षात्कारमित्यत्र च सदिति शेषः ।

**ज्ञानस्यैवेति ॥** वृत्तिरूपज्ञानस्यैवेत्यर्थः **॥ परत इति ॥** ज्ञानग्राहकादन्येनेत्यर्थः **॥ अनभ्यासेति ॥** परिचित्यभाववेलायां दूरे जलादिज्ञाने सतीदं ज्ञानं प्रमाणं न वेति संशयविषयत्वादित्यर्थः । अभ्यासदशापन्न-ज्ञानप्रामाण्येऽसिद्धिनिरासाय विशेषणम् । दृष्टान्ते साध्यानुगतिं व्यनक्ति- **अप्रामाण्यं हीति ॥ विसंवादि-नेति ॥** दुष्टकरणजन्यत्वादिरादिपदार्थः ।

**(श्री.टि.) ॥ संवादश्च सजातीयेन विजातीयेन वेति ॥** साक्षात्स्वविषयविषयकमानान्तरसंवादो हि सजातीयसंवादः । स्वशब्देनेदं जलमिति ज्ञानं, तद्विषयो जलं, तद्विषयकं यन्मानान्तरम् इदं जलमिति ज्ञानान्तरं, तत्संवादस्सजातीयसंवादः । स्वनिष्ठप्रामाण्यव्यवस्थापनद्वारा स्वविषयविषयकमानान्तरसंवादो विजातीय-संवादः । स्वशब्देनेदं जलमिति ज्ञानम् । तन्निष्ठं यत्प्रामाण्यं यथावस्थितार्थज्ञेयविषयीकारित्वरूपं तद्व्यवस्थापन-**(श्री.टि.)** द्वारा, इदं जलमिति ज्ञानविषयभूतं जलविषयकं यन्मानान्तरम्, इदं जलमिति ज्ञानं प्रमाणं समर्थ-प्रवृत्तिजनकत्वादित्यनुमानरूपं तत्संवादो हि विजातीयसंवादः । इदमनुमानं यथावस्थितार्थज्ञेयविषयीकारित्वरूप-प्रामाण्यविषयीकरणद्वारा जलसत्तावगाहि । उक्तरूपप्रामाण्यस्यार्थसत्ताघटितत्वादिति द्रष्टव्यम् **॥ तद्विषय-स्येति ॥** वेदप्रतिपाद्यस्येश्वरादेरित्यर्थः **॥ अर्थक्रियासामर्थ्येति ॥** समर्थप्रवृत्तिजनकत्वमित्यर्थः । **मोक्षादे-रिति ॥** मोक्षस्वर्गादिरूपार्थक्रियाया इत्यर्थः । **प्रमाणजन्यत्वेनैवेति ॥** वेदप्रामाण्यस्याऽप्तोक्तत्वेनैवानुमेयत्वाद् वेदस्याकर्तृकत्व आप्तोक्तत्वगुणाभावेन तत्प्रामाण्यासिद्धौ प्रमाणजन्यत्वाभावेन वेदजन्यज्ञानप्रामाण्यमपि न सिद्ध्येत् । न चान्यत एव तत्सिद्धिरिति वाच्यम् । प्रमाणजन्यत्वेनैव तस्यानुमेयतया तदतिरिक्तोपायान्तरा-भावादित्यर्थः । अत एव सिद्धान्ते ज्ञानग्राहकग्राह्यत्वोक्त्योपायान्तरं वक्ष्यत इति द्रष्टव्यम् ।

भावबोधे तु ''ननु वेदस्याऽप्तोक्तत्वाभावेऽपि यथार्थज्ञानजनकत्वलक्षणं प्रामाण्यं यथार्थज्ञानान्वय-व्यतिरेकाभ्यामनुमातुं शक्यत इति न वेदप्रामाण्यसिद्धिस्तत्सकर्तृकत्वमाक्षिपतीत्यत आह- **प्रमाणजन्यत्वेनै-वेति ॥** स्यादेतदेवं यदि वेदजन्यज्ञानप्रामाण्यस्य प्रमाणभूतवेदजन्यत्वं विनाऽन्यतस्सिद्धिः स्यात् । न चैवं, प्रमाणभूतवेदजन्यत्वेनैव तत्सिद्धेः । तथा च तदन्वयव्यतिरेकाभ्यां वेदप्रामाण्यानुमानेऽन्योन्याश्रयः स्यादित्यर्थः' इति व्याख्यातम् ।

**॥ तद्वचनादिति ॥** ईश्वरवचनत्वादित्यर्थः । तेनेश्वरेण प्रणयनादिति वा **॥ तत्प्रामाण्यमिति ॥** आप्तस्ये-श्वरस्य प्रामाण्यात् प्रमाश्रयतया प्रमाणभूतेनाऽप्तेनोक्तत्वादिति यावत्, तस्य वेदस्य प्रामाण्यं सिद्धमित्यर्थः । **अत एवेति ॥** सकर्तृकत्वानुमानेऽप्रयोजकत्वाभावादेवेत्यर्थः **॥ प्रतिकूलतर्केति ॥** सकर्तृकत्वानुमानेऽ-प्रयोजकत्वशङ्कापरिहारकबाधकतर्कस्यैवाकर्तृकत्वानुमाने प्रतिकूलतर्कत्वादित्यर्थः **॥ उपाधेरपीति ॥** अनुकूल-तर्केण पक्षीभूते वेदे सकर्तृकत्वस्यैव सिद्धत्वेनाकर्तृकत्वप्रसिद्ध्यभावरूपोपाधेः पक्ष एव व्यभिचारात्साध्य-व्यापकताभङ्गः सिद्ध्यतीत्यर्थः । नन्वनुकूलतर्कसिद्धसकर्तृकत्वोपेते पक्षीभूते वेदे कथमेतदुपाध्यभावसिद्धिः । अकर्तृकत्वप्रसिद्ध्यभावाभावेऽकर्तृकत्वप्रसिद्धिमत्त्वस्यैव प्राप्त्या विरोधादिति चेन्न । अकर्तृकत्वप्रसिद्धि-मत्त्वस्यानुपलभ्यमानप्रत्यक्षादिप्रमाणमूलकत्वरूपत्वेन व्याख्यातत्वात् । अस्य च सकर्तृकत्वेऽप्युपपत्तेः । ईश्वरप्रत्यक्षस्य प्रमाणत्वाभावादित्यवगन्तव्यम् । [१]**मानसं मनः ॥ तच्चेति ॥** ज्ञानस्य साक्षिवेद्यत्वमित्यर्थः **॥ अन्वयेति ॥** सति निर्दुष्टेन्द्रियादौ यथार्थं ज्ञानमुत्पद्यतेऽन्यथा तु नेत्यन्वयव्यतिरेकगम्यमित्यर्थः **॥ कुत्रा-पीति ॥** ज्ञाने करणे वेत्यर्थः ।

वक्ष्यमाणानुमाने विशेष्यासिद्धिं परिहरति- **प्रामाण्यमिति ॥ तदभावेति ॥** वस्तुसिद्धेर्ज्ञानाधीनत्वादिति भावः । वक्ष्यमाणप्रयोगे विशेषणासिद्धिं परिहरति- **न चेति ॥ अतिरिक्तेन** अनुमानादिना । ननु कियद्दूरं **(श्री.टि.)** गत्वा तत्प्रामाण्यस्य स्वतस्त्वमङ्गीक्रियत इति नानवस्थेत्यत आह- **तस्येति ॥** अनुपपद्यमानग्रहणं सत् । **ज्ञानस्यैवेति ॥** त्रिपुटीप्रत्यक्षवादिनः प्राभाकरस्य मते आत्मांशः स्वात्मांशो वेद्यांशश्चेत्यंशत्रयं ज्ञाने प्रतीयते । इदमहं जानामीति हि तन्मते ज्ञानाकारः । तथा च ज्ञानस्यैव स्वप्रकाशत्वमङ्गीकृत्य **तथाभावः** स्वात्मगोचरत्वं स्वप्रामाण्यगोचरत्वं च कस्मान्नाभ्युपगम्यते । किं साक्षिणस्तदभ्युपगमेनेत्यर्थः **॥ जडत्वे-नेति ॥** एतावन्तं कालं सुखमहमस्वाप्समित्यौत्तरिकानुस्मृतिसिद्धात्मादिविषयकसौषुप्तिकानुभवस्ताव-दस्ति । स च न तावन्मनआदीन्द्रियैर्भवितुं युक्तः । तेषामुपरतत्वात् । तस्मात्साक्षिरूप एवेति साक्षिरूप-चैतन्यज्ञानस्य स्वप्रकाशत्वसाधिका युक्तिरस्ति । सेयं युक्तिरन्तःकरणवृत्तिरूपे जडे ज्ञाने न प्रवर्तत इत्यर्थः । 'अप्रकाशस्वरूपत्वाज्जडे ज्ञानं न मन्यते' इत्युक्तेः । एतद्युक्त्यभावसूचनार्थमेव जडत्वेनेत्युक्तमिति ज्ञात-व्यम् **॥ सांशयिकत्वादिति ॥** स्वतस्त्वे ज्ञानग्राहकेणैव प्रामाण्यस्यापि गृहीतत्वात्संशयो न स्याद्, अतस्तदन्यथाऽनुपपत्त्या परतस्त्वमित्याशयः । अभ्यासदशापन्नज्ञानप्रामाण्ये

सांशयिकत्वाभावेनासिद्धिवारणार्थम् अनभ्यासदशायामित्युक्तम् । व्यभिचारवारकविशेषणवद्, असिद्धिवारकविशेषणस्याप्यसिद्धिपरिहारद्वारा व्याप्तिग्रहोपयुक्तत्वस्य 'चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात्' इत्यत्र दर्शनाददोषः । तत्र हि रूपत्वस्यापि व्यञ्जकत्वेनासिद्धिपरिहाराय रूपादिषु पञ्चसु मध्य इत्युक्तमस्तीति द्रष्टव्यम् । यद्वा पक्षविशेषणमेतत् । अनभ्यासदशापन्नज्ञानप्रामाण्यं पक्ष इति भावः । दृष्टान्ते साध्यमुपपादयति- **अप्रामाण्य-मिति ।। अनवस्थेति ।।** प्रामाण्यस्यानुमेयत्वे प्रामाण्यानुमितिप्रामाण्यमपि पुनरनुमित्यन्तरेण ग्राह्यम् । एवं तत्प्रामाण्यमपीत्येवं फलमुखी । एवं प्रामाण्यस्यानुमेयत्वे लिङ्गव्याप्त्यादिज्ञानप्रामाण्यनिश्चयार्थं लिङ्गान्तरं तज्ज्ञानप्रामाण्यनिश्चयश्च स्वीकार्यः । एवं तत्र तत्रापीति कारणमुखीत्यनवस्थाद्वयलक्षणप्रतितर्कपराहतमित्यर्थः।

**(पां.टि.) ।। संवादश्च सजातीयेन विजातीयेन वा भवतीति ।।** तत्र वेदसमानविषयकत्वे सति वेदप्रामाण्य-ग्राहकत्वं संवादस्य सजातीयत्वम् । वेदसमानार्थकत्वाभावे सति वेदप्रामाण्यग्राहकत्वं विजातीयत्वमिति विवेकः। **अभ्युपगमादिति ।।** वेदसमानार्थकत्वे सति वेदप्रामाण्यग्राहकत्वस्यैव सजातीयसंवादतया प्रकृते वेदसमान-विषयकप्रमाणान्तराभावेनोक्तरूपसंवादानुपपत्तेरित्यर्थः ।। **नापीति ।।** अर्थक्रियासामर्थ्यस्य वेदसमानार्थ-कत्वाभावे सति वेदप्रामाण्यग्राहकत्वाद्विजातीयत्वमिति भावः ।। **प्रत्यक्षाद्यवेद्यत्वादिति ।।** तथा च मोक्षादि-रूपार्थक्रियासामर्थ्यरूपलिङ्गस्यासिद्धत्वान्न तेन प्रामाण्यानुमानं सम्भवतीति भावः । ननु प्रमाजनकत्वेनापि वेदस्य प्रामाण्यानुमानसम्भवाद् आप्तोक्तत्वेनैव प्रामाण्यस्यानुमेयत्वमित्यत्रानुकूलतर्काभावस्तदवस्थ इत्यतः, तथा सति प्रमाणजन्यत्वेन ज्ञानप्रामाण्यस्य ज्ञानप्रामाण्येन च करणप्रामाण्यस्यानुमेयत्वेन वेदप्रामाण्यस्य तज्जन्यज्ञानप्रामाण्यस्य चान्योन्यसिद्ध्यधीनसिद्धिकत्वेनान्योन्याश्रयापत्त्या प्रमाजनकत्वेन तत्प्रामाण्यानुमाना-सम्भवेनाऽऽप्तोक्तत्वेनैव तस्यानुमेयत्वेन नानुकूलतर्काभाव इत्याशयेनाऽऽह- **प्रमाणजन्यत्वेनैवेति ।।** वेद-प्रामाण्यस्याऽऽप्तोक्तत्वेनैवानुमेयत्वं युक्त्योपपाद्याभियुक्तसम्मत्याऽपि द्रढयति- **तथा चाऽऽहेति ।।** यद्यपि तदिति **(पां.टि.)** सन्निहितत्वाद्धर्मस्य परामर्शः । तथा च **तस्य** धर्मस्य **वचनात्** प्रतिपादनाद् **आम्नायस्य** वेदस्य प्रामाण्यम् । यत्प्रामाणिकार्थप्रतिपादकं वाक्यं तत्प्रमाणमेवेति नियमात्, इत्यर्थकत्वादस्य सूत्रस्य प्रामाण्यज्ञानस्य गुणजन्यत्वासिद्धेर्नास्य विवक्षितार्थसाधकत्वम् । तथाऽपि ग्रन्थेऽनुपक्रान्तस्यापि वेदस्य 'तदप्रामाण्यमनृत-व्याघातपुनरुक्तदोषेभ्यः' इति गौतमीयसूत्रे यथा प्रसिद्ध्या सिद्धत्वात्तदिति परामर्शः, तथेहानुपक्रान्त-स्यापीश्वरस्य प्रसिद्ध्या सिद्धत्वात्तदिति परामर्शः । ततश्च **तद्वचनात्** तेनेश्वरेण वचनात् प्रणयनाद् **आम्नायस्य** वेदस्य प्रामाण्यमित्येतत्सूत्रस्य परकीययोजनाश्रयणेन विवक्षितार्थसाधकत्वादस्योदाहरण-मिति । यद्यपि च 'मन्त्राऽयुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' इति समग्रसूत्रस्योदाहर्तव्यत्वात्समग्रसूत्रमनुदाहृत्य तदेकदेशमात्रोदाहरणमयुक्तम् । तथाऽप्येकदेशस्यैव विवक्षितार्थप्रतिपादकत्वेन प्रकृतोपयोगित्वात्तन्मात्रमेवोदा-हृतम् । **तस्याद्दृष्टार्थस्य** वेदस्य **प्रामाण्यम् आप्तप्रामाण्याद्** आप्तोक्तत्वात् । अदृष्टार्थं वेदवाक्यं प्रमाणम् आप्तोक्तत्वात् । दृष्टार्थमन्त्राऽयुर्वेदवाक्यवदित्युदाहृतसूत्रार्थः । वाक्यत्वाद्यनुमानस्येत्यत्राऽऽदिपदेन 'वेदाः सर्वज्ञ-प्रणीता वेदत्वात्' इति प्रागुक्तव्यतिरेक्यनुमानपरिग्रहः **।। उपाधेरिति ।।** अनुकूलेन तर्केण हेतोः साध्य-व्याप्यत्वनिर्णयेनोपाधेः साध्यव्याप्यहेत्वव्यापकतया पक्ष एव साध्यव्यापकताभङ्गः सिद्ध्यतीत्यर्थः । **सम्मतिग्रन्थे** पक्षे साध्यव्यापकताभङ्गादिति सम्बन्धः ।

ननु किमिदं प्रमाणानां प्रामाण्यस्य स्वतस्त्वमित्यतः फलकरणभेदेन प्रामाण्यस्य द्वैविध्यात् फलतत्प्रामाण्य-स्वतस्त्वोपदर्शनेन तत्परतया वाक्यं व्याचष्टे- **सर्वेषामिति ।।** इन्द्रियलिङ्गशब्दजन्यानामित्यर्थः **।। यथार्थत्व-लक्षणमिति ।।** यथार्थज्ञानत्वलक्षणमित्यर्थः **।। ज्ञानग्राहकेणैव गृह्यत इति ।।** अत्र ज्ञानग्राहकशब्देन ग्राह्य-प्रामाण्याश्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानस्य, गृह्यत इत्यनेन तद्विषयत्वस्य, एवकारेण कात्स्न्यर्थपरेण तन्नैयत्यस्य, अवधारणपरेण प्रतिबन्धव्यवच्छेदस्य च लाभाद् ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितग्राह्यप्रामाण्या-श्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानविषयत्वनैयत्यमित्यर्थपर्यवसानान्न कश्चित्क्षुद्रोपद्रवः । ननु यदुक्तमित्यादि-प्राचीनाप्रयोजकत्वशङ्काग्रन्थानुरोधेन करणप्रामाण्यस्वतस्त्वोपदर्शनपरतयैवैतद्ग्रन्थव्याख्यानमुचितम् । अन्यथोक्तशङ्काया अनिरासप्रसङ्गात् । तत्किमिति करणप्रामाण्यस्वतस्त्वपरत्वपरित्यागेन फलप्रामाण्यस्वतस्त्व-परत्वाश्रयणमित्यतः करणप्रामाण्यस्वतस्त्वव्युत्पादनेन करणप्रामाण्यस्वतस्त्वस्य ज्ञानप्रामाण्यस्य ज्ञान-ग्राहकातिरिक्तग्राह्यत्वेऽनुपपत्त्या तत्स्वतस्त्वाधीनत्वात्, ज्ञानप्रामाण्यस्वतस्त्वव्युत्पादनेन करणप्रामाण्य-स्वतस्त्वव्युत्पादने सौलभ्याद्युक्तं करणप्रामाण्यस्वतस्त्वपरत्वपरित्यागेन फलप्रामाण्यस्वतस्त्वपरत्वाश्रय-णमित्याशयेन करणप्रामाण्यस्वतस्त्वस्य फलप्रामाण्यस्वतस्त्वाधीनत्वमुपदर्शयन्

यदुक्तमित्यादिशङ्कापरि-हाराय करणप्रामाण्यस्वतस्त्वसिद्धिमप्येतद्ग्रन्थाभिप्रायतया दर्शयितुमाह- **एतदुक्तं भवतीति ॥ तच्च वक्ष्यत इति ॥** 'ज्ञानं स्वरूपेणैव प्रवृत्तिहेतुः' इत्यादिनेति शेषः **॥ अन्वयव्यतिरेकसमधिगम्यमिति ॥** ज्ञानसाधनत्व-ग्राहकान्वयव्यतिरेकसमधिगम्यमित्यर्थः ।

**(पां.टि.)** वक्ष्यमाणपरिशेषानुमाने उपोद्घातसङ्गत्या विशेष्यासिद्धिमुद्धरति- **प्रामाण्यं तावदिति ॥** विशेषणा-सिद्धिं परिहरति- **न चेति ॥ तत्प्रामाण्यस्येति ॥** प्रामाण्यज्ञानस्यापि प्रामाण्यं संवादादिलिङ्गजन्यानुमिति-रूपेणान्येन ज्ञानेन ग्राह्यम् । एवं तत्प्रामाण्यमपीति फलमुखा । एवं प्रामाण्यस्यानुमेयत्वे लिङ्गव्याप्त्यादिज्ञान-प्रामाण्यानिश्चयेऽतिप्रसङ्गेन तन्निश्चयार्थं लिङ्गान्तरं तज्ज्ञानप्रामाण्यनिश्चयश्च स्वीकार्यः । एवं तत्रापीति करणमुखा चानवस्था स्यादित्यर्थः **॥ प्रथमस्यैवेति ॥** लाघवात्, प्रथमपरित्यागे कारणाभावाच्चेत्यर्थः **॥ ज्ञानगतं याथार्थ्य-मिति ॥** करणगतयाथार्थ्यस्य पक्षत्वभ्रमनिरासाय ज्ञानगतमिति विशेषणम् । साध्यार्थस्तु पूर्वमेवोक्तः । **ज्ञानस्यैवेति ॥** लाघवादिति भावः **॥ अन्तःकरणवृत्तेरिति ॥** ननु जडत्वं न स्वप्रकाशत्वाभावे प्रयोजकम् । अन्यथा साक्षिणोऽपि चेतनत्वात्स्वप्रकाशत्वं न स्यादिति चेन्न । क्रियायाः कारकप्रयोज्यत्वस्य सकलवादि-सम्मतत्वेन प्रयोजकस्य च प्रयोज्यापेक्षया पूर्ववृत्तित्वनियमाज्ज्ञप्तिरूपवृत्तिक्रियायाः स्वकर्मकत्वे स्वापेक्षया स्वस्य पूर्वभावित्वरूपाऽत्माश्रयाऽऽपत्त्या स्वकर्मकप्रकाशत्वरूपस्वप्रकाशत्वमनुपपन्नमेव । जडत्वं चात्र जन्यत्व-रूपं ग्राह्यम् । साक्षिणस्त्वनादिनित्यत्वेनोत्पत्त्यर्थमन्यानपेक्षणादनादितः स्वविषयकत्वे न काऽप्यनुपपत्तिः । एतच्च 'कर्मकर्तृव्यपदेशाच्च' इत्येतत्सुधाग्रन्थे स्पष्टम् । केचित्तु जडत्वेऽपि स्वप्रकाशत्वं भवत्विति व्याहतत्वान्न शङ्कोदयः । जडत्वस्याप्रकाशत्वरूपत्वात् । अप्रकाशस्यापि स्वप्रकाशत्वमित्यस्य व्याहतत्वात् । न चैवं साध्या-वैशिष्ट्यम् । व्यवहारस्य साध्यत्वाङ्गीकारेण तदप्रसक्तेरित्याहुः । हेतौ चासिद्धिवारणायानभ्यासदशायामिति विशेषणम् । दृष्टान्ते साध्यवैकल्यं परिहरति- **अप्रामाण्यं हीति ॥ प्रतिकूलतर्कपराहतमनुमानमितीति ॥** तथा चासमानबलत्वान्नैतदनुमानं प्रतिपक्ष इति भावः ।

**(व्या.टि.)** वेदस्य यथार्थज्ञानसाधनत्वरूपं प्रामाण्यमाप्तोक्तत्वेनैवानुमातव्यम् । तज्जन्यज्ञानगतं याथार्थ्यरूपं तु (प्रामाण्यम्) प्रमाणजन्यत्वेनैवेति सकर्तृकत्वाभावे वेदे प्रामाण्यसिद्धिर्न स्यात् । तत्र प्रामाण्यसिद्ध्यभावे तज्जन्यज्ञानेऽपि तत्सिद्धिर्न स्यादिति वक्तुं संवादेन तत्सिद्धिं सम्भाव्य वेदे तदनुपपत्तिमाह- **संवादेन खल्वित्यादिना ॥** निरूपकद्वैविध्येन संवादद्वैविध्यमाह- **संवादश्चेति ॥** वेदे उभयाभावं दर्शयति- **न तावत् सजातीयेति ॥** ननु सजातीयत्वं केन धर्मेण, प्रमाणत्वेन तद्विभाजकेन वा । नाऽद्यः । अर्थक्रियासामर्थ्यादेरपि प्रमाणत्वेन सजातीयत्वापत्तेः । न द्वितीयः । ब्रह्मसूत्रलक्षणागमस्य 'युक्तिमूलतयेति सजातीयसंवादाभिधानम्' इति सुधाविरोधादिति चेन्न । एकधर्मिकं मानान्तरं सजातीयम् । तेन संवादः, एकप्रकारकत्वम् । तथा च इदं जलमिति ज्ञानजनकेन्द्रियादेस्तादृशज्ञानजनकेन्द्रियेणानुमानादिना वा तुल्यप्रकारकत्वेन प्रामाण्यानुमितिः । तत्र द्रव्यत्वप्रकारकज्ञानजनकं तु मानान्तरं सजातीयं भवति । परं तु न संवादि, नापि विसंवादि । तत्रैवेदमर्थे धर्मिणि जलत्वाभावज्ञानजनकं तु सजातीयमपि विसंवादि । समानधर्मिकभिन्नं सविषयं निर्विषयं वा विजाती-यम् । तेन संवादो यथायथं प्रामाण्यानुमित्यौपयिकः सम्बन्धः । तथा फलनिष्पादनशक्तत्वरूपमर्थक्रियासामर्थ्यं विजातीयम् । तेन संवादश्च ज्ञाने तद्वद्विषयकत्वम् । ज्ञानजनके च तादृशज्ञानजनकत्वम् इत्यादि बोध्यम् । **(व्या.टि.)** अधिकं तु गुरुप्रभायाम् । तद्विषयस्य वेदबोध्यप्रकारस्य ब्रह्मधर्मिकमानान्तरस्य वेदबोध्यप्रकारकज्ञान-जनकत्वाभावेन सजातीयसंवादो नास्तीति भावः **॥ नापीति ॥** अर्थक्रियासामर्थ्यं फलनिष्पादनशक्तत्वम् । आदिपदेन फलवत्प्रवृत्तिजनकत्वादिकं ग्राह्यम् **॥ मोक्षादेरिति ॥** तथा च वेदजन्यज्ञानविषये मोक्षजननशक्तत्वस्य ज्ञाने वा, मोक्षवत्प्रवृत्तिजनकत्वस्य वेदे वा तादृशज्ञानकरणत्वस्यानिश्चितत्वेन न विजातीयसंवादेन प्रामाण्यानुमितिरिति भावः । संवादानुपपत्तौ च पर्यवसितमाह- **तथा चेति ॥ तद्वचनादिति ॥** कणादसूत्रे भावप्रधानो निर्देशः । तच्छब्देन चेश्वरस्य परामर्शः । अक्षपादसूत्रे तत्पदेन वेदपरामर्शः । आप्तप्रामाण्यादिति कर्तरि ल्युट् । 'यदसौ प्रमाणं तत्र चान्यत्र च' इति महाभाष्यप्रयोगाद् बहुलग्रहणाद्वा साधुः । 'तज्ज्ञानस्य वाक्यस्य वा प्रामाण्याद्विप्राः प्रमाणमित्युपचर्यते' इति सुधारीत्यौपचारिको वा प्रमाणशब्दः **॥ ततश्चेति ॥** आप्तोक्तत्वेनैव वेदप्रामाण्यस्यानुमातव्यत्वे सतीत्यर्थः । वाक्यत्वादीत्यादिपदेन वेदत्वपरिग्रहः **॥ अकर्तृ-कत्वाद्यनुमानमिति ॥** तत्साधकमप्रमितकर्तृकत्वा(त्वसाधनम)नुमानमित्यर्थः । तर्केण साध्यव्यापकता-भङ्गेऽभियुक्तसम्मतिमाह- **यथोक्तमिति ॥** सनाथे साध्यसाधनसमर्थे सतीत्यर्थः । तथा च पक्षे साध्यसिद्धौ तत्रैवोपाधेः साध्यव्यापकताभङ्गः । केचित्तु साध्यव्याप्यहेत्वव्यापकत्वात् साध्यव्यापकताभङ्ग इति व्याचख्युः । तन्न स्वरसम् । साध्यव्यापकोपाधिव्यभिचारात् साध्यव्यभिचारं चोदयतस्तस्य साध्यव्याप्यत्वासिद्धेः । तदर्थं पक्षे साध्यनिश्चयानुसरणं तु बकबन्धरीतिमनुसरतीति ।

फलगतस्य याथार्थ्यलक्षणस्य करणगतस्य तत्साधनत्वलक्षणस्य च प्रामाण्यस्य स्वतस्त्वं सिषाधयिषुरादौ तावज्ज्ञानप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं मूले प्रतिज्ञातमित्यभिप्रेत्य व्याचष्टे- **सर्वेषामपीति ॥** तत्र स्वपदस्याऽ-त्मीयपरत्वमुपेत्य स्वतस्त्वं निर्वक्ति- **ज्ञानेति ॥** क्रियापदमुपस्करोति- **गृह्यत इतीति ॥** ज्ञानग्राहकमात्रग्राह्यत्वं ज्ञप्तौ स्वतस्त्वमित्यर्थः । तदेतत् त्रेधा निरुक्तं तर्कताण्डवे । 'ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहित-ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानग्राहकसाक्षिज्ञानविषयत्वनैयत्यं स्वतस्त्वम्, ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानग्राहक-साक्षिज्ञानविषयत्वयोग्यत्वं वा स्वतस्त्वम् । उभयसिद्धप्रामाण्याविषयकज्ञानभिन्नज्ञानविषयत्वनैयत्यं वा स्वतस्त्वम्' इति । तत्त्रितयमपि सुधायामिवात्राप्यभिसंहितम् । तथाहि । अत्र ज्ञानग्राहकपदेन ग्राह्यप्रामाण्या-श्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानं विवक्षितमिति स्पष्टमवगम्यते । यद्वक्ष्यति, 'ज्ञानं साक्षिप्रत्यक्षवेद्यम्' इत्युक्त्वा 'तत्प्रामाण्यमपि साक्षिवेद्यमेव' इति । गृह्यत इति कर्मलकारेण वेद्यमिति कृत्यप्रत्ययान्तेन च तद्विषयत्वम् । एवेत्यनेन ज्ञानग्राहकमात्रेणैवेत्यनुवादस्थमात्रशब्देन च कार्त्स्न्यर्थपरेण तन्नियमः । अवधारणेन प्रतिबद्धव्यवच्छेदश्च विवक्षित इति । एवमर्हार्थकृत्यप्रत्ययान्तेन वेद्यशब्देनोक्तसाक्षिज्ञानविषयत्वयोग्यतेति । एवं ज्ञानग्राहकशब्देन साक्षितदितरसाधारणज्ञानं, मात्रशब्देनावधारणेन चोभयसिद्धप्रामाण्याविषयकव्यवच्छेदः । कार्त्स्न्यार्थेनाप्रति-बद्धसर्वानुव्यवसायग्रहश्च विवक्षित इति ज्ञायत इति ।

ननु कथमनेन प्रतिज्ञामात्रेणोक्तशङ्कानिवृत्तिरित्यतोऽभिसन्धिमुद्घाटयति- **एतदुक्तं भवतीति ॥ वक्ष्यत (व्या.टि.) इति ॥** 'ज्ञानाज्ञानसुखदुःखात्मभेदादिविषयस्यानुभवस्य' इति मूल इति शेषः । करणगतस्य यथार्थज्ञानसाधनत्वरूपप्रामाण्यस्य ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहितज्ञानजनकत्वग्राहक-मात्रग्राह्यत्वं ज्ञप्तौ स्वतस्त्वम् । तदप्यत्र प्रतिज्ञातमित्यभिप्रेत्य व्याचष्टे- **इन्द्रियेति ॥** प्रामाण्यमित्यतः परं स्वत इति शेषः । अवसेयमित्यतः परं यत इति च । तथा च ज्ञानकरणत्वग्राहकानुमानेनैव प्रमाकरणत्वग्रहात् स्वतस्त्वसिद्धिरित्यर्थः । न चैवं पद्धतिविरोधः । तत्र 'करणप्रामाण्यज्ञप्तिस्तु परत एव । इन्द्रियलिङ्गशब्दानां यथायथमनुमानादिवेद्यत्वात् । यथार्थज्ञानजनकत्वस्यानुमानवेद्यत्वात्' इत्युक्तेरिति वाच्यम् । अभिप्रायसद्भा-वात् । करणग्राहकमात्रग्राह्यत्वाभावाभिप्रायेण तत्प्रवृत्तेः । अत एव न्यायसुधायां तत्पक्षमुट्टङ्क्य 'अथ वा ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वम्' इति पक्षान्तरमुक्तम् । ननु तथाऽपि सूत्रभाष्यटीकाविरोधः । तत्र न विलक्षणत्वाधिकरणे स्वतश्च प्रामाण्यमिति वैलक्षण्यहेतुवर्णकान्तरे 'वेदादिप्रामाण्यस्य संवादनिरपेक्षतज्ज्ञानादेव सिद्ध्यङ्गीकारात्' इति करणप्रामाण्यस्यापि धर्मिग्राहकमात्रग्राह्यता-स्वीकारादिति चेत् । गूढभावसद्भावात् । तथा हि । नात्र करणग्राहकमात्रग्राह्यत्वं स्वतस्त्वं विवक्षितम् । किन्तु प्रामाण्यव्याप्यनिर्दोषत्वतदनुसारित्वादिग्राहकमात्रग्राह्यत्वं स्वतस्त्वमिति पक्षान्तरमुपेत्य प्रवृत्तम् । अत एव तत्रैव 'न हि निर्दोषतदनुसारितत्तत्स्वरूपग्रहे पुनः प्रामाण्योपलब्धौ संवादसापेक्षताऽनुभूयते' इति तदेव स्पष्टमिति न कश्चिदपि विरोधगन्ध इत्यलम् । उत्पत्तौ तु ज्ञानजननशक्त्यभिन्नप्रमाजननशक्तिमत्त्वम्, उभयोः सहजत्वं वा करणप्रामाण्यस्य स्वतस्त्वम् । निष्कृषति- **तथा चेति ॥ कुत्रापि** फले करणे चेत्यर्थः । आदिपदेन प्रमाणजन्यत्वग्रहः ।

निष्कृष्यानूद्य शङ्कते- **ज्ञानेति ॥** परिशेषं वक्तुं सामान्यसिद्धिं दर्शयति- **प्रामाण्यमिति ॥** प्रवर्तकज्ञान-प्रामाण्यमित्यर्थः । अवश्यमित्युक्ताऽवश्यकत्वं दर्शयति- **अन्यथेति । तदभावेति ॥** प्रामाण्याभावेत्यर्थः । प्रमाणं विनाऽर्थसत्त्वानिश्चयादिति भावः । यद्वा प्रामाण्याध्यवसायाभावे निष्कम्पप्रवृत्त्यभावप्रसङ्गादित्यर्थः । ग्राहकान्तरानुपपत्तिं दर्शयति - **न चेति ॥** ज्ञानग्राहकातिरिक्तेन संवादादिलिङ्गेनेत्यर्थः । फलमुखीमनवस्थां दर्शयति- **तत्प्रामाण्यस्यापीति ॥** प्रामाण्यानुमितिप्रामाण्यस्यापीत्यर्थः । **तस्य** प्रामाण्यानुमितिप्रामाण्यस्य **स्वतस्त्वे** स्वाश्रयग्राहकग्राह्यत्वे । **प्रथमस्य** प्रवर्तकज्ञानप्रामाण्यस्य । करणमुखीमपि तां दर्शयति- **तत्प्रामाण्य-स्यापीति ॥** लिङ्गान्तरज्ञानप्रामाण्यस्यापीत्यर्थः । **अनेन** लिङ्गान्तरेण । **तस्य** लिङ्गान्तरज्ञानप्रामाण्यस्य । परिशेषं दर्शयति- **तथा चेति ॥** सामान्यतो व्याप्तिं दर्शयति- **यद्यतोऽन्येनेति ॥ विशेषणेति ॥** सत्यन्त-विशेषणेत्यर्थः **॥ ज्ञानस्यैवेति ॥** ग्राह्यप्रामाण्याश्रयज्ञानस्यैवेत्यर्थः । **तथाभावः** स्वप्रकाशत्वम् **॥ अन्तः-करणवृत्तेरिति ॥** स्वरूपज्ञानव्यावृत्त्यर्थम् ।

**॥ जडत्वेनेति ॥** अत्रेयमाशङ्का । किं जडत्वं स्वप्रकाशत्वविरोधीति तत्त्वात्तदभावः, उतास्वप्रकाशत्व-व्याप्यमिति तत्त्वात्तत्त्वमिति । आद्ये किं विरोधः सहानवस्थाननियमलक्षण उत भावाभावलक्षण आहोस्विद् **(व्या.टि.)** वध्यघातकभावलक्षणः । नाऽद्यः । जडेऽप्यालोके स्वप्रकाशत्वदर्शनात् । न च स्वविषयत्वं स्वप्रकाशत्वम् । 'स्वविषयप्रकाशत्वं स्वप्रकाशत्वमिति स्वमतेऽङ्गीकारात्' इति टीकोक्तेः । जडे त्वालोकादौ प्रकाशान्तरानपेक्षत्वरूपस्वप्रकाशत्वसत्त्वेऽपीच्छादिवत् सविषयकपदार्थत्वाभावेन

विषयविषयिभावगर्भ-स्वविषयत्वासम्भव इति वाच्यम्। अनुप्रमाणस्यापि साक्षात्स्वजन्यप्रमाविषयविषयकत्वस्यान्यत्र समर्थितत्वेन आप्त-वाक्यं शब्द इत्यादिशब्दे, सामान्यसाध(ध्यक)के विशेषे लिङ्गे, ज्ञानसामान्यविषयकानुमितिशाब्दादिरूपे मानसज्ञाने च जडे स्वविषयकत्वदर्शनेन तन्नियमाभावात् । न द्वितीयः । सत्त्वासत्त्वादिवत् परस्परविरह-रूपत्वाभावात् । जडेऽपि स्वप्रकाशत्वोपपादनेन परस्परविरहव्याप्यत्वस्याप्यभावाच्च । नापि तृतीयः । 'नाजात एकोऽन्यं हन्ति नाप्यन्याधारः' इति न्यायेन सहावस्थानस्यैव प्राप्त्या तेन तन्निषेधायोगात् । नान्त्यः । उक्तभङ्ग्या बहुस्थलेषु व्यभिचारदर्शनेन जडत्वस्यास्वप्रकाशत्वेन व्याप्त्यसिद्धेः । जडत्वेऽपि स्वप्रकाशत्वोपपत्त्या विपक्षे बाधकाभावादप्रयोजकत्वाच्चेति चेत्। अत्रेदं समाधीयते। जडत्वेन स्वप्रकाशत्वं व्यासेधता यज्जडत्वव्यावृत्तं तदिह विवक्षितम्। न स्वविषयत्वमात्रम्। तच्च स्वप्रमातृत्वम्। जडत्वस्याप्रमातृत्वरूपत्वात्। यथोक्तमन्यत्र 'जडत्वं चाप्रमातृत्वमेव' इति । तथा चाप्रमातृत्वेन स्वप्रमातृत्वाभावसाधनं युक्तम् । सामान्याभावस्य विशेषा-भावव्याप्यत्वेन तेन तत्साधनसौलभ्यात् । इत्थं च मनोवृत्तिर्न स्वप्रमात्री अप्रमातृत्वात्, यदेवं तदेवं यथा घट इति युक्तेरभिप्रेतत्वात् न काऽप्यनुपपत्तिरिति ।

वस्तुतस्तु प्रवर्तकज्ञानविषयकत्वं तत्प्रामाण्यविषयकत्वं च यादृशं साक्षिणस्तादृशं प्रवर्तकज्ञानस्य शङ्क-नीयम् । तच्च ज्ञात्रादिव्यवहारनिर्वाहकम् । विशिष्य स्वकर्मकापरोक्षत्वम् । एतच्च न क्वापि जडे सम्मतम् । अनु-प्रमाणस्य, गमनादेर्ग्रामादिविषयकत्ववत्, सविषयकत्वेऽपि तस्य ज्ञात्रादिव्यवहारनिर्वाहकत्वाभावात् । विशिष्य स्वगतविषयताभावाच्च । ज्ञानं गुण इत्यादिशाब्दानुमित्यादेः शक्यतावच्छेदकपक्षतावच्छेदकसाध्यतावच्छेदका-वच्छिन्नान्तःपातितया सामान्यतः स्वगतपरोक्षविषयताकत्वेऽपि विशिष्य स्वकर्मकापरोक्षत्वाभावात् । एवं च मनोवृत्तेर्जडत्वेन हेतुना घटादिदृष्टान्तेनैतादृशस्वप्रकाशत्वाभावः साध्यते । न च चेतनत्वेन साक्षिणोऽप्येवं साध्येतेति वाच्यम् । दृष्टान्ताभावात् । सुप्तिकाले मनस उपरतत्वेन 'एतावन्तं कालं सुखमहमस्वाप्सम्' इत्यौत्तर-कालिकपरामर्शबलेन चेतनस्वरूपज्ञानस्य तत्स्वरूपप्रकाशत्वस्य तत्वप्रकाशिकायां समर्थितत्वाच्च । श्रुत्यादिक-मप्यत्रार्थानुकूलमाकरे द्रष्टव्यम् ।

केचित्तु जडत्वेन जन्यत्वेन स्वकर्मकत्वमनुपपन्नम् । कर्मकारकस्य कारणत्वेन स्वस्य स्वपूर्ववृत्तित्वे आत्मा-श्रयापत्तेरित्याहुः । तदस्वरसम् । भविष्यत इवाकारणत्वेऽपि कर्मकारकत्वोपपत्तेः । अपरे तु जडत्वमस्वप्रकाशत्व-रूपमिति व्याघातादेव जडस्य स्वप्रकाशत्वशङ्कानुदयः । व्यवहारस्य साध्यत्वेन साध्याविशिष्टता नास्तीत्याहुः। तदपि न चारु । स्वप्रकाशत्वे शङ्किते ऽस्वप्रकाशत्वव्यवहारसाधनस्यानुचितत्वात् । हेतोरसम्मतेश्च । अस्मदुक्त-परिष्कारानङ्गीकारे उक्तस्थले जडत्वस्याप्यव्याप्त्यापत्तेश्च। ज्ञानप्रामाण्यस्य ज्ञप्तौ परतस्त्वे परकीयानुमानं शङ्कते- **नन्विति ॥** अनभ्यासदशायामिति पक्षविशेषणम् । अनभ्यासदशापन्नमित्यर्थः । तथैव ह्यनुवदिष्यति 'अनभ्यास-दशापन्नज्ञानप्रामाण्यस्यापि' इति **॥ सांशयिकत्वादिति ॥** संशयमापन्न इत्यर्थे ठगिति बोध्यम् । निदर्शने साध्यं निदर्शयति- **अप्रामाण्यं हीति ॥** ज्ञानाप्रामाण्यमित्यर्थः **॥ अनवस्थेति ॥** उक्तानवस्थाद्वयेत्यर्थः ।

**मूलम् - नचोक्तयुक्त्यधीनत्वं प्रामाण्यस्य । बुद्धिदोषनिरासमात्रकारणत्वाद् युक्ती-नाम् । अदुष्टबुद्धीनां स्वत एव सिद्धत्वाच्च प्रामाण्यस्य ।**

**(त.मं.)** प्रामाण्यं परतश्चेदनवस्थेति ह्युक्तम् । एवं चानवस्थापरिहारान्यथाऽनुपपत्तियुक्त्यधीनत्वं प्रामाण्यस्येत्यत आह - **न चोक्तेति ॥**

**टीका -** ननु 'अपौरुषेयत्वाद्वेदस्य' इत्यपौरुषेयतया निर्दोषत्वेन वेदस्य तत एव तज्जन्यज्ञानस्यापि प्राक् प्रामाण्यमनुमितम् । तत्कथमिदानीम् 'प्रामाण्यं च स्वत एव' इत्युच्यत इत्यत आह- **नचे-ति ॥** प्रामाण्यस्येति विषयेण विषयिणो ज्ञानस्योपलक्षणम् । नचापौरुषेयत्वाद्युक्तयुक्त्या वेदप्रामाण्यं ज्ञापितं प्रागित्यर्थः । प्रामाण्यज्ञापनाय युक्तेरुपन्यस्तत्वात्कथं नेत्यत आह- **बुद्धी-ति ॥** अनृतव्याघातादिदर्शनेन वेदविषया याऽप्रामाण्यशङ्का सा बुद्धिदोषेत्युच्यते ।

अयमभिसन्धिः । साक्ष्येव ज्ञानं तत्प्रामाण्यं च विषयीकर्तुं क्षमः । किन्तु कारणान्तरोपनिपातजेन मानसापराधेन

प्रतिबद्धो ज्ञानमात्रं गृहीत्वा तत्प्रामाण्यग्रहणस्य नेष्टे। यथा स्वयमेव गतिसमर्थोऽपि गजो गोक्षुरकादिना प्रतिबद्धो न चलितुं क्षमते। तत्र तु युक्त्यनुसन्धानलक्षणपरीक्षाऽवसरः। सा च बुद्धिदोषमात्रं निरस्यति। तस्मिन्निरस्ते साक्षी स्वमहिम्नैव प्रामाण्यं गोचरयति। यथा गोक्षुरकाद्यपसरणे स्वयमेव गजो गच्छति। ततः प्राचीनो युक्त्युपन्यासः साक्षिणः प्रामाण्य-ग्रहणप्रतिबन्धकबुद्धिदोषनिरासार्थमेव कृतो नतु प्रामाण्यज्ञापनार्थ(ज्ञानार्थ)मिति न पूर्वोत्तरविरोध इति।

एतेनैवैतदपि निरस्तम्। यदाहोदयनः- 'यदि प्रामाण्यं स्वतो ज्ञायेत तदा कदाचिदपि प्रामाण्य-संशयो न स्यात्। ज्ञानत्वसंशयवत्। निश्चिते तदनवकाशात्। नहि साधकबाधकप्रमाणाभावमवधूय समानधर्मादिदर्शनादेवासौ। तथा सति तदनुच्छेदप्रसङ्गात्। अथ प्रमाणवदप्रमाणेऽपि तत्प्रत्ययदर्शनाद् विशेषादर्शनाद् भवति शङ्केत्यभिप्रायः। तत्किं प्रमाण(प्रामाण्य)ज्ञानोपलम्भेऽपि न तत्प्रामाण्यमुपलब्धं प्रमाणज्ञानमेव वा नोपलब्धम्। आद्ये कथं स्वतः प्रामाण्यग्रहः, प्रत्ययप्रतीतावपि तदप्रतीतेः। द्वितीये कथं तत्र शङ्का; धर्मिण एवानुपलब्धेः' इति। धर्म्युपलब्धावपि व्याघातादिदर्शनेन साक्षिणि प्रतिबद्धे प्रामाण्यविषये मनसि संशयाद्युपपत्तेः। युक्तीनां बुद्धिदोषनिरासमात्रकारणत्वं नतु वेदप्रामाण्यज्ञप्तिकारणत्वमित्येतत् कुत इत्यत आह- **अदुष्टे-ति ॥** यस्मिन् सत्येव यद्भवति नासति तत्खलु तस्य कारणम्। सतीष्वेव च युक्तिषु बुद्धिदोषनिरासो भवति नासतीषु। प्रामाण्यं त्वनृतपुनरुक्तव्याघाताद्यनुसन्धानरूपबुद्धिदोषरहितानां पुंसां **स्वत एव** युक्त्यपेक्षां विनैव सिद्धमित्यनुभवसिद्धम्। तस्मादुक्तव्यवस्थैव युक्तेति।

संवादान्वयव्यतिरेकानुविधायित्वात् प्रामाण्यज्ञप्तेस्तत्कार्यत्वमित्येदप्यनेनैव निरस्तम्, व्यतिरेकाभावस्यानुभवसिद्धत्वात्। एतेनैवानभ्यासदशायां सांशयिकत्वस्यासिद्धिरप्युक्ता वेदि-तव्या। बुद्धिदोषाभावेऽनभ्यासदशाऽऽ-पन्नज्ञानप्रामाण्यस्यापि निष्कम्पस्यैव प्रतीयमानत्वात्। क्वचित्संशयस्यान्यथोपपन्नत्वादिति।

**(र.टि.)** ननु 'अपौरुषेयत्वाद्वेदस्य' इति वेदरूपकरणप्रामाण्यमेवानुमितम्। न ज्ञानप्रामाण्यम्। इदानीं ज्ञानप्रामाण्यस्य स्वतस्त्वमुच्यत इति न पूर्वोत्तरयोर्विरोध इत्यत आह- **तत एव तज्जन्यज्ञानस्यापीति ॥** बौद्धस्य वेदे यथार्थज्ञानजनकत्वविषयविवादो वेदजन्यज्ञानगतयाथार्थ्यविषयकएव। न तु वेदगतज्ञान-जनकत्वविषयः। तं (परं) प्रति वेदप्रामाण्यसाधनाय प्रयुक्तं निर्दोषत्वं तज्जन्यज्ञानगतयाथार्थ्यसाधनायैव प्रयुक्तं भवतीति भावः। प्रामाण्यस्य निश्चितत्वेन स्वारसिकसन्देहानुपपत्तावपि प्रामाण्यज्ञाने प्रामाण्यसन्देहात् प्रामाण्यसन्देहोपपत्तिरित्याह- **अथ प्रमाणवदिति ॥ तत्प्रत्ययदर्शनात्** प्रामाण्यप्रत्ययदर्शनादित्यर्थः। प्रामाण्यज्ञानगतप्रामाण्यस्यापि स्वतस्त्वेनाऽधायकसंशय एव नोपपद्यत इत्याह- **तत्किं प्रामाण्यज्ञानोप-लम्भेऽपीति ॥** प्रमाणत्वेन प्रमाणविषयकज्ञानोपलम्भेऽपीत्यर्थः।

**(रा.टि.) ॥ तत एवेति ॥** वेदस्य निर्दोषत्वादेव, निर्दोषवेदजन्यत्वहेतुत एवेति वा, निर्दोषत्वादेवेति वाऽर्थः। लक्षणाबीजं सम्बन्धं दर्शयति- **विषयेण विषयिण इति ॥** तावता कथमुक्तशङ्कानिरास इत्यतो वा, साक्षिणो निर्दोषत्वात्कथं तत्र शङ्का यन्निरासार्थं युक्तिरित्यतो वाऽऽह- **अयमभिसन्धिरिति। कारणान्तरेति ॥** व्याघातादिरूपेत्यर्थः **॥ मानसापराधेनेति ॥** अप्रामाण्यशङ्कारूपेणेत्यर्थः। एतेन बुद्धिर्न साक्षी किन्तु मन इत्युक्तं भवति। मनोगताप्रामाण्यशङ्कारूपदोषेण प्रतिबद्ध इत्यर्थः **॥ तत इति ॥** साक्षिणस्स्वत एव प्रामाण्य-ग्रहणशक्तत्वादित्यर्थः। युक्त्युपन्यास इत्यस्य कृत इत्यनेनान्वयः **॥ पूर्वोत्तरेति ॥** 'अपौरुषेयत्वाद्वेदस्य' **(रा.टि.)** इत्यस्य 'प्रामाण्यं च स्वत एव' इत्यस्य च न विरोध इत्यर्थः **॥ एतेनैवेति ॥** बुद्धिदोषेत्यादि-कथनेनैवेत्यर्थः। **स्वतो ज्ञायेतेति ॥** ज्ञानग्राहकेणैव ज्ञायेतेत्यर्थः **॥ निश्चित इति ॥** प्रामाण्य इति योज्यम्। प्रामाण्यतदभावसाधारणज्ञानत्वधर्मदर्शनाद्भवेत्तदुभयकोटिकसन्देह इत्यत आह-**न हीति। अवधूयेति ॥** विहायेत्यर्थः **॥ तथा सतीति ॥** साधकबाधकयोरन्यतरस्मिन् विद्यमानेऽपि सन्देहोत्पादे सतीत्यर्थः। इह चास्ति साधकमिति भावः। निश्चितेऽपि

प्रामाण्ये तन्निश्चयेऽपि प्रामाण्यसन्देहे तद्विषयीभूते प्रथमज्ञाने प्रामाण्य-सन्देहो भविष्यति। यथा घटादिज्ञाने प्रामाण्यसन्देहाद्घटादावर्थे सन्देहस्तथेति भावेन शङ्कते- **अथेति ॥ तत्प्रत्ययेति ॥** प्रामाण्यप्रत्ययदर्शनादित्यर्थः । तथा च प्रामाण्यनिश्चयत्वस्य प्रामाण्यतदभावोभयसाधारण्यात् तत्प्रामाण्यादिसन्देहात् तद्विषयज्ञानप्रामाण्येऽपि सन्देहो युक्त इति भावः। प्रामाण्यनिश्चयेऽपि प्रामाण्यसन्देहो न युक्तः। येन तदाहितो ज्ञानप्रामाण्ये सन्देहो घटेतेत्यत आह- **तत् किं प्रमाणज्ञानेति ॥** प्रमाणज्ञानशब्दोऽत्र प्रामाण्यनिश्चयपरः **॥ तत्प्रत्ययप्रतीतावपीति ॥** प्रामाण्यनिश्चयस्य प्रतीतावपि तन्निष्ठप्रामाण्यस्याप्रतीतेः । तत्प्रतीतौ पुनः संशयायोगः । तत्राप्याहितसन्देहाङ्गीकारे चोक्तरीत्या तत्रापि तथेत्यनवस्थेति भावः **॥ द्वितीय इति ॥** प्रामाण्यनिश्चय एव नोपलब्ध इति पक्ष इत्यर्थः । इतिपदस्य इत्येतदपि निरस्तमिति पूर्वेणान्वयः ।

**॥ धर्म्युपलब्धावपीति ॥** प्रामाण्याश्रयज्ञानोपलब्धावपीत्यर्थः **॥ साक्षिणीति ॥** ज्ञानग्राहके साक्षिणि प्रामाण्यविषये प्रतिबद्धे सतीत्यर्थः **॥ मनसीति ॥** 'यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्' इत्युक्तेरिति भावः **॥ संशयादीति ॥** जातिव्यक्त्योरेकवित्तिवेद्यत्वनियमेऽपि भ्रमस्थले शुक्तिग्रहणेऽपि दोषवशाच्छुक्ति-त्वस्याग्रहणेन इदं शुक्तिर्वा रजतं वेति सन्देहो रजतमेवेति विपर्ययो वा यथा तथा ज्ञानतत्प्रामाण्ययोरेक-वित्तिवेद्यत्वनियमेऽपि दोषवशात्प्रामाण्याग्रहणेन संशयादेरुपपत्तेरित्यर्थः । विस्तरस्तु तर्कताण्डवे **॥ वेद-प्रामाण्येति ॥** वेदादिजन्यज्ञानप्रामाण्यज्ञप्तीत्यपि ग्राह्यम् **॥ उक्तव्यवस्थैवेति ॥** युक्तेः प्रतिबन्धनिरास एवोपयोगो न प्रामाण्यज्ञप्तावित्युक्तेत्यर्थः **॥ अनुभवसिद्धत्वादिति ॥** अभ्यासदशापन्नज्ञानस्थले संवादेन विना प्रामाण्यग्रहणदर्शनादिति भावः **॥ एतेनैवेति ॥** अदुष्टबुद्धीनामित्यादिकथनेनैवेत्यर्थः । तदेव व्यनक्ति- **बुद्धिदोषेति । अन्यथोपपन्नत्वादिति ॥** धर्म्युपलब्धावपीत्यादिनोक्तदिशेति भावः ।

**(श्री.टि.) तत एव** निर्दोषवेदजन्यत्वादेव । विषयेणेत्याद्युक्त्या लक्षणाबीजभूतशक्यार्थसम्बन्धो दर्शितः- **ज्ञानस्येति ॥** प्रामाण्यज्ञप्तेरित्यर्थः **॥ कारणान्तरोपनिपातजेनेति ॥** अनृतव्याघातादिदोषदर्शनरूप-कारणान्तरसन्निपातजन्येनेत्यर्थः । **मानसापराधो**ऽप्रामाण्यशङ्कारूपः **॥ प्रामाण्यज्ञानार्थमिति ॥** प्रामाण्य-ज्ञापनार्थमित्यर्थः। नन्वेवं प्रामाण्यस्य स्वतस्त्वहानिः । अप्रामाण्यशङ्कादशायां साक्षी ज्ञानमात्रं गृहीत्वा प्रामाण्य-ग्रहणस्य नेष्टे इत्युक्तत्वेन ज्ञानग्राहकग्राह्यत्वालाभादिति चेन्न । अप्रामाण्यग्राहकसामग्र्यसमवहितज्ञानग्राहक-सामग्रीग्राह्यत्वस्य विवक्षितत्वाददोषः ।

**(श्री.टि.) स्वतो** ज्ञानग्राहकेणैव **॥ संशय इति ॥** ज्ञान इति शेषः **॥ ज्ञानत्वेति ॥** ज्ञानरूपे धर्मिणि गृहीते सति ज्ञानत्वे संशयो न भवति । जातिभानसामग्र्या व्यक्तिभानसामग्रीनियतत्वादिति भावः **॥ निश्चित इति ॥** प्रामाण्ये निश्चित इत्यर्थः । **तदनवकाशात्** संशयानवकाशात् । एककोटेर्निश्चितत्वादिति भावः। ननु ज्ञानत्वादिसाधारणधर्मदर्शनादेव संशयो भविष्यतीत्यत आह- **नहीति ॥** लोके साधारणधर्मदर्शनादेव न संशयः। किन्तु साधकबाधकप्रमाणाभावसहकृतादेव। स्थाणुत्वनिश्चायकप्रमाणाभावे स्थाणुत्वानङ्गीकारे पुरुषत्वाङ्गीकार इति यावत्, बाधकप्रमाणाभावे च सत्येव तत्सहकृतोर्ध्वत्वरूपसाधारणधर्मदर्शनादेव दृष्टः। न तु साधकप्रमाणाभावं बाधकप्रमाणाभावं **चावधूय** निराकृत्य विनेति यावत् । ऊर्ध्वत्वरूपसाधारणधर्मदर्शनादेव न दृष्ट इत्यर्थः । समानधर्मदर्शनमात्रादेव कुतो न संशय इत्यत आह- **तथा सतीति ॥** साधारणधर्मस्य सर्वत्र सत्त्वेन सर्वत्र संशयः स्यात् । तथा साधारणधर्मस्य विशेषदर्शनेनाप्यनिवृत्त्या संशयोच्छेद एव न स्यादित्यर्थः ।

इदमत्राऽकूतम् । अत्र प्रष्टव्यं ज्ञानं गृहीतं न वेति। नेति पक्षे धर्मिज्ञानाभावादेव न संशयः। यदि गृहीतं तर्हि तत्र प्रामाण्यं निश्चितं न वा । नेति पक्षे स्वतस्त्वभङ्गः । निश्चितं चेत् सन्देह एव न युज्यते एककोटेर्निश्चित-त्वात् । संयुक्तसमवायसन्निकर्षरूपजातिभानसामग्र्या व्यक्तिभानसामग्रीनियतत्वात्। ज्ञानरूपधर्मिप्रतीतौ ज्ञानत्वस्यापि निश्चितत्वेन तत्र यथा न सन्देहस्तद्वत्। भवति चायं संशयोऽतस्तदन्यथाऽनुपपत्त्या ज्ञानं गृहीतं तत्र प्रामाण्यं न गृहीतमतः संशयो युक्त इत्येवं परतस्त्वे सांशयिक(त्वयुक्तिरिति)त्वं युक्तमिति ज्ञातव्यम्। नन्विदं जलमिति ज्ञानप्रामाण्ये स्वारसिकसंशयाभावेऽप्याहितसंशयो भवत्येव। तथा हि- यत्प्रमाणभूतम् 'अयं घटः' इति ज्ञानं तत्रापीदं ज्ञानं प्रमाणमिति प्रामाण्यप्रत्ययो भवति, यदप्रमाणभूतं 'इदं रजतम्' इति ज्ञानं तत्रापीदं ज्ञानं प्रमाणमिति प्रामाण्यप्रत्ययो भवति। अत एवाऽहुः- 'अप्रमाऽपि प्रमेत्येव गृह्यते' इति। अन्यथा तज्ज्ञानात् प्रवृत्तिरेव न स्यात् । इयांस्तु विशेषः । अत्र प्रामाण्यज्ञानं भ्रमरूपं तत्र प्रमारूपमिति । यथाकथञ्चित् प्रामाण्यज्ञानं तु भवति । इदं च प्रामाण्यज्ञानम्, तस्मात्प्रमाणमप्रमाणं वेत्येवं जलज्ञाननिष्ठप्रामाण्यज्ञाने प्रामाण्या-प्रामाण्यसन्देहाहितोऽर्थे जलज्ञानप्रामाण्येऽपि सन्देहो भविष्यतीत्याशङ्कते- **अथेति ॥ प्रमाणवदिति ॥** अयं घट इत्यादिप्रमाणभूतज्ञान इवेत्यर्थः **॥**

**अप्रमाणेऽपीति ॥** अप्रमाणभूते इदं रजतमिति ज्ञानेऽपीत्यर्थः। **तत्प्रत्ययदर्शनादिति ॥** प्रामाण्यप्रत्ययदर्शनादित्यर्थः। अन्यथा प्रवृत्तिरेव न स्यादिति भावः **॥ विशेषा-दर्शनादिति ॥** एककोटिनिश्चायकतद्व्याप्यधर्मादर्शनादित्यर्थः **॥ भवति शङ्केति ॥** जलज्ञानप्रामाण्येऽ-प्याहितशङ्का भवतीत्यर्थः। भवन्मते प्रामाण्यज्ञानगतप्रामाण्यस्यापि स्वतस्त्वेनाऽधायकसंशय एवाऽदौ नोपपद्यते यदाहितः संशयः स्यात् । तथा हि। अत्रापि पृच्छामो जलज्ञाननिष्ठप्रामाण्यज्ञानरूपं धर्मिज्ञानमस्ति वा न वेति। नेति पक्षे धर्मिज्ञानाभावादेव न संशयः। आद्ये तत्र प्रामाण्यं प्रतीतं न वा। आद्ये एककोटेर्निश्चितत्वान्न संशयः। द्वितीये स्वतस्त्वहानिरित्येवमाधायकः संशयो नोपपद्यत इत्याह- **तत् किमित्यादिना ॥** जलज्ञान-निष्ठप्रामाण्यज्ञानेऽपि प्रामाण्यसन्देहमङ्गीकुर्वतस्तव मत इत्यर्थः **॥ प्रामाण्यज्ञानोपलम्भेऽपीति ॥** इदं जलमिति **(श्री.टि.)** ज्ञाननिष्ठं यत्प्रामाण्यं तज्ज्ञानरूपधर्म्युपलम्भेऽपीत्यर्थः **॥ न तत्प्रामाण्यमिति ॥** प्रामाण्यज्ञान-निष्ठं प्रामाण्यं नोपलब्धमतः संशयो भवतीत्यर्थः। यद्युपलब्धं स्यात्तर्ह्येककोटेर्निश्चितत्वात्सन्देहो न भवतीति भावः **॥ प्रमाणज्ञानमेवेति ॥** धर्मिभूतं प्रामाण्यज्ञानमेवेत्यर्थः। कुत इत्यतो ज्ञानग्राहकग्राह्यत्वाभावादित्याह- **प्रत्ययेति ॥** प्रामाण्यज्ञानरूपधर्मिणः साक्षिणा प्रतीतावपीत्यर्थः। **तदप्रतीतेः** प्रामाण्या-प्रतीतेः। **तत्र** प्रामाण्यज्ञाने। अनुपलब्धेरित्येतदप्येतेनैव निरस्तमित्यन्वयः।

एतेनेत्युक्तं विशदयति- **धर्म्युपलब्धावपीति ॥** साक्षिणि प्रतिबद्धे सति प्रामाण्यविषये संशयाद्युपपत्तेः। प्रामाण्यविषयसंशयादेर्मनस्युपपत्तेरित्यर्थः। तथा च प्रामाण्यज्ञानरूपं धर्मि साक्षिणा प्रतीतं प्रामाण्यं च न प्रतीतम्। न च स्वतस्त्वहानिः। असति प्रतिबन्धे साक्षिवेद्यत्वनियमो वा साक्षिवेद्यत्वयोग्यता वा स्वतस्त्व-मित्यङ्गीकारात्। प्रकृते च प्रामाण्यज्ञानरूपं धर्मिणं गृह्णता साक्षिणाऽनृतव्याघातादिदर्शनेन शक्तिप्रतिबन्धात् प्रामाण्याग्रहेऽप्यस्मदुक्तस्वतस्त्वाहान्या प्रामाण्यज्ञानरूपधर्मिज्ञानस्य प्रामाण्यनिश्चयस्य च सम्भवेन संशयो युक्त एव। न चैवं प्रतिबन्धकाभावरूपस्याधिकस्य हेतोरनुप्रवेशात्स्वतस्त्वहानिरिति वाच्यम्। उत्सर्गापवाद-न्यायभङ्गापत्त्या प्रतिबन्धकाभावस्य कारणत्वाभावादित्याशयः **॥ उक्तव्यवस्थैवेति ॥** युक्तीनां बुद्धिदोषनिरास-मात्रकारणत्वमेव न वेदप्रामाण्यज्ञप्तिकारणत्वमित्युक्त-व्यवस्थैवेत्यर्थः। अनेनेत्युक्तं विशदयति- **व्यतिरेका-भावस्येति ॥** संवादे सति प्रामाण्यज्ञप्तिस्तदभावे प्रामाण्यज्ञप्त्यभाव इति ह्यन्वयव्यतिरेकानुविधानं वक्त-व्यम्। तच्चासिद्धम्। संवादाभावेऽपि, युक्त्यपेक्षां विनैवेति यावत्, प्रामाण्यज्ञप्तेरदुष्टबुद्धीनामनुभवसिद्धत्वेन व्यतिरेकव्याप्त्यभाव इत्यर्थः। एतेनेत्युक्तमेव विशदयति- **बुद्धिदोषाभाव इति ॥** नन्वभ्यासदशापन्नज्ञानप्रामाण्ये कदाचित्संशयोऽपि दृश्यतेऽतस्तद्विरोध इत्यत आह- **क्वचिदिति ॥** कदाचिदिति शेषः **॥ अन्यथेति ॥** मनोदोषेणेत्यर्थः।

**(पां.टि.)** यत्तु 'अपौरुषेयत्वाद्वेदस्य' इत्यस्य 'प्रामाण्यं च स्वत एव' इत्यस्य च विरोधाऽशङ्का न युक्ता। तत्र करणप्रामाण्यस्य परतस्त्वव्युत्पादनात्। अत्र च ज्ञानप्रामाण्यस्यैव स्वतस्त्वव्युत्पादनादित्याशङ्कानिवर्तकतया 'तत एव' इति ग्रन्थप्रवृत्त्युपवर्णनम्, तत्तु 'प्रामाण्यं च स्वत एव' इत्येतद्ग्रन्थीयव्याख्यानरूप'एतदुक्तं भवति' इत्यादिकरणप्रामाण्यस्वतस्त्वव्युत्पादनपरग्रन्थादर्शनमूलकत्वादुपेक्ष्यम् **॥ मानसापराधेनेति ॥** मानसा-प्रामाण्यशङ्कयेत्यर्थः **॥ तदनुच्छेदप्रसङ्गादिति ॥** समानधर्मस्य तदाऽप्यनिवृत्तेरिति भावः। ननु प्रामाण्य-स्यानिश्चितत्वात् स्वारसिकप्रामाण्यसंशयासम्भवेऽपि प्रामाण्यनिश्चये प्रामाण्यसंशयेन प्रामाण्यनिश्चयविषयीभूते प्रामाण्ये संशयः स्यादेवेति शङ्कते- **अथेति ॥ तत्प्रत्ययदर्शनात्** प्रामाण्यप्रत्ययदर्शनात्। भवेदेतदेवं यदि प्रामाण्यनिश्चये प्रामाण्यसंशय उपपद्येत। न च स्वतस्त्वपक्षेऽसावुपपद्यते। तथा च न प्रामाण्यनिश्चये प्रामाण्यसंशयेनापि प्रामाण्यनिश्चयविषयप्रामाण्ये संशयः सम्भवतीत्याशयेन समाधत्ते- **तत्किमिति ॥** एतेनेति परामृष्टं दर्शयति- **धर्म्युपलब्धावपीति ॥ व्यतिरेकाभावस्येति ॥** असत्यपि संवादेऽदुष्टबुद्धीनां प्रामाण्य-**(पां.टि.)** ग्रहदर्शनादिति भावः **॥ बुद्धिदोषाभाव इति ॥** एतच्च साक्षिविषयसुखादिकमभिप्रेत्योक्तम्। अन्यत्र बुद्धिदोषाभावस्यासिद्धत्वादिति द्रष्टव्यम्। ननु यत्र प्रामाण्ये संशयो दृश्यते तस्यैव पक्षत्वान्नासिद्धिरित्यत आह- **क्वचिदिति ॥** उक्तरीत्येति शेषः।

**(व्या.टि.)** पूर्वोत्तरग्रन्थयोर्विरोधं शङ्कते- **नन्विति ॥ अनुमितमिति ॥** वेदस्यापौरुषेयत्वेन निर्दोषत्वात् प्रामाण्यमनुमितम्। तज्जन्यज्ञानस्य निर्दोषकरणजन्यत्वात् प्रामाण्यमनुमितप्रायमित्यर्थः **॥ कथमुच्यत इति ॥** कथं करणफलोभयस्वतस्त्वं प्रतिज्ञायत इत्यर्थः। 'विषयेण विषयिणः' इति शक्यसम्बन्धप्रदर्शनम्। **वेदप्रामाण्यमिति ॥** उपलक्षणमेतत्। तज्जन्यज्ञानप्रामाण्यमपीत्यपि ग्राह्यम्। ननु कथं पूर्वोत्तरग्रन्थविरोधपरिहार इत्यतोऽभिसन्धिमुद्घाटयति- **अयमभिसन्धिरित्यादिना ॥** ननु पूर्वोत्तरग्रन्थविरोधो नास्ति। पूर्वमपौरुषेयत्वाद् वेदस्येत्यत्र 'न चैतेषां वचनानामेवाप्रामाण्यम्' इति प्रक्रमेण वेदस्येत्युक्त्या च

करणप्रामाण्यस्यैवानुमितत्व-प्रतीतेः। स्वयमपि तथैव योजितत्वाच्च। 'प्रामाण्यं च स्वत एव' इत्यत्र तु ज्ञानप्रामाण्यस्यैव स्वतस्त्वं प्रति-ज्ञायते। 'अन्यथाऽनवस्थानात्' इति तत्रैव विपक्षे बाधकोक्तेः। स्वाश्रयग्राहकमात्रग्राह्यत्वस्य श्रोत्रादिग्राह्य-शब्दादिरूपकरणप्रामाण्येऽयोगाच्च। पद्धतौ करणप्रामाण्यं ज्ञप्तौ परत इत्युक्तेश्चेति चेदत्राहुः। ज्ञानप्रमात्वमुपेत्य करणाप्रामाण्यस्य अनृतव्याघातादिनाऽनुमानायोगेन दुष्टकरणजन्यत्वेन वेदजन्यज्ञानाप्रमात्वमपि पूर्वपक्षिणोऽ-भिलषितमिति, सिद्धान्तेऽपि 'अपौरुषेयत्वाद्वेदस्य' इत्यत्र अपौरुषेयत्वेन निर्दोषत्वेन वेदप्रामाण्यं, निर्दोषकरण-जन्यत्वेन तज्जन्यज्ञानप्रामाण्यमप्यनुमितमिति प्रतीयत एव। टीकायां तु स्फुटत्वादनुक्तिः। एवं च 'प्रामाण्यं च स्वत एव' इत्यत्रोत्तरत्रानवस्थाऽदिना ज्ञानप्रामाण्यस्वतस्त्वोपपादनेऽपि करणप्रामाण्यस्वतस्त्वमप्यभिमत-मेव। सकर्तृकत्वाभावे आप्तोक्तत्वरूपलिङ्गाभावेन वेदप्रामाण्यासिद्धावापादितायां तत्स्वतस्त्वस्यावश्यं वक्तव्य-त्वात्। उक्तापौरुषेयत्वयुक्त्यधीनताया निरासाच्च। ज्ञानप्रामाण्यस्येव स्वाश्रयग्राहकग्राह्यत्वायोगेऽपि ज्ञान-जनकत्वग्राहकान्वयव्यतिरेकग्राह्यत्वसम्भवात्। सुधायां पद्धत्युक्तं परतस्त्वमुक्त्वा 'यद्वा ज्ञानजनकत्वग्राहक-ग्राह्यत्वमेव स्वतस्त्वम्' इत्यस्यैव स्वतस्त्वशब्दार्थताया उक्तत्वात्। अतः पूर्वोत्तरविरोधशङ्का युक्तीनां दोष-निरासमात्रकारणत्वेन तत्परिहारश्च युक्त इति।

यद्यपि युक्त्यज्ञेयत्वं ज्ञानप्रामाण्यस्य, युक्त्यन्तराज्ञेयत्वं करणप्रामाण्यस्य न युक्तम्। सर्वस्यापि वस्तुनो बह्वनुमानगम्यत्वेन युक्त्यगम्यत्वस्य युक्त्यन्तरागम्यत्वस्य चायोगात्। तथाऽपि ज्ञानप्रामाण्ये अगृहीतग्राहित्वं न युक्तेः। धर्मिज्ञानार्थं साक्षिण्यपेक्षिते तेन प्रामाण्यस्यापि सिद्धेः। एवं ज्ञानजनकत्वग्राहकस्य प्रथमोपस्थितत्वेन नेतरयुक्तेरगृहीतग्राहित्वम्। यद्यपि दोषशङ्कायां प्रामाण्यस्यागृहीतत्वेन, तद्ग्राहित्वं, शङ्कायां निरस्तायां, युक्तेः सम्भवति। तथाऽपि प्रत्यक्षसामग्र्या बलवत्त्वेन ज्ञानप्रामाण्यस्य प्रत्यक्षत्वमेव। ज्ञानजनकत्वग्राहकस्य शङ्काऽ-भावस्थले प्रमाजनकत्वग्राहकतायाः क्लृप्तत्वेन शङ्कानिरासस्थलेऽपि तदित्यवधेयम्। यद्यपि करणज्ञानयोः प्रामाण्यस्य परतस्त्वेऽपि आप्तोक्तत्वस्य वेदेऽभावेऽपि निर्दोषत्वेन वेदे, निर्दोषकरणजन्यत्वेन ज्ञाने प्रामाण्यस्य **(व्या.टि.)** सिद्धेः, सकर्तृकत्वा(भावे न)भावेन प्रामाण्यासिद्ध्यापादनं न युक्तम्। तथाऽपि वस्तुस्थितिप्रदर्शनाय स्वतस्त्वं समर्थितम्। यद्यपि आप्तोक्तत्वाभावेन करणे प्रामाण्यासिद्धिमापाद्य प्रमाणजन्यत्वाभावेन ज्ञाने प्रामाण्यासिद्धिरापादितेति करणप्रामाण्यस्वतस्त्वमेव प्रथमत उपपादनीयम्। तथाऽपि ज्ञानप्रमात्वस्य स्वतस्त्व एव ज्ञानजनकत्वग्राहकग्राह्यत्वं प्रमाजनकत्वस्य भवतीति तत्स्वतस्त्वमेव प्रथमत उपपादितम्। वस्तुतस्तु ज्ञानप्रामाण्यस्यैव स्वतस्त्वं मूलाभिमतम्। **स्वतो** ज्ञानग्राहकेणेति व्याख्यातत्वात्। करणे आप्तोक्तत्वाभावेऽपि प्रामाण्यसिद्ध्यर्थमिन्द्रियलिङ्गशब्दानां त्विति वाक्यं प्रवृत्तम्। 'न चोक्त' इति मूलावतारिकायां निर्दोषत्वेन वेदप्रामाण्ये साधितेऽपि विरोधाभावादेव 'तत एव तज्जन्यज्ञानस्यापि' इत्युक्तम्। 'नापौरुषेयत्वाद्युक्तयुक्त्या वेदप्रामाण्यं ज्ञापितम्' इत्यत्रापि वेद(ज्ञप्तितज्ज्ञान)जनितज्ञानप्रामाण्यमित्यर्थः। वेदविषये वाऽप्रामाण्यशङ्केत्य-स्यापि तज्जन्यज्ञानविषय इत्यर्थः। अत एवायमभिसन्धिरित्याशयोद्घाटने 'साक्ष्येव ज्ञानं तत्प्रामाण्यं च' इत्युपक्रमः, 'ततः प्राचीनो युक्त्युपन्यासः साक्षिणः प्रामाण्यग्रहणप्रतिबन्धकबुद्धिदोषनिरासार्थमेव कृतो न तु प्रामाण्यज्ञापनार्थमिति न पूर्वोत्तरविरोधः' इत्युपसंहारश्च युज्यत इति दिक्। अधिकं तु गुरुप्रभायां द्रष्टव्यम्।

**॥ क्षम इति ॥** ज्ञानग्रहणशक्तिवत् प्रामाण्यग्रहणशक्तेरपि सहजत्वादिति भावः। शक्तेः सहजत्वे कुतो न फलमिति पृच्छति- **किन्त्विति ॥** उत्तरयति- **कारणान्तरोपनिपातेति ॥ मानसेति ॥** अत्र शङ्क्यते। व्याघातदर्शनादिरूपकारणान्तरोपनिपातजेन अप्रामाण्यशङ्कारूपमानसापराधेन साक्षिणः प्रतिबन्धो न युक्तः। अप्रामाण्यशङ्का धर्मिज्ञानसापेक्षा वा तन्निरपेक्षा वा। आद्ये कारणीभूतं धर्मिज्ञानं प्रामाण्यं गृह्णाति न वा। नाऽद्यः। धर्मिज्ञानरूपप्रामाण्यनिश्चयस्य जातत्वेन भाव्यप्रामाण्यशङ्कायाः तत्प्रतिबन्धकत्वायोगात्। प्रामाण्यनिश्चये सत्यप्रामाण्यशङ्काया एव प्रतिबन्धेनायोगाच्च। न द्वितीयः। प्रतिबन्धकाभावेन प्रामाण्या-ग्रहणायोगात्। एवमपि प्रामाण्याग्रहणे स्वतस्त्वहानेश्च। नापि धर्मिज्ञाननिरपेक्षेति द्वितीयः। धर्मिज्ञानस्य संशयं प्रति कारणत्वेन तदभावे शङ्काया एवायोगात्। किञ्चाप्रामाण्यशङ्का साक्षिरूपा वा मानसरूपा वा। नाऽद्यः। साक्षिणः सुदृढनिर्णयरूपत्वेन शङ्कात्वायोगात्। बुद्धिदोषेत्युक्तिविरोधाच्च। द्वितीयेऽपि न तावदनु-मितिरूपा। लिङ्गनिश्चयाभावात्। संशयाकारानुमितेरनङ्गीकाराच्च। नापि शाब्दरूपा। शब्दरूपकारणाभा-वात्। शाब्दसंशयेऽपि विवादाच्च। तस्मात्प्रत्यक्षरूपेति वक्तव्यम्। तदप्ययुक्तम्। ज्ञानादीनां साक्षात्साक्षिवेद्यत्वेन तत्र मानसप्रत्यक्षायोगात्। अन्यथा सुखदुःखादीनामपि मानसप्रत्यक्षविषयत्वापत्तेः। द्रव्यस्यायोग्यत्वेऽपि तद्गतगन्धादेर्घ्राणादिग्राह्यत्ववत् प्रामाण्यस्य मानसविषयत्वमिति तु न शङ्क्यम्। धर्मिणमसाक्षात्कृत्य धर्ममात्रे मानसादर्शनात्। धर्मिणमविषयीकृत्य शङ्काऽयोगाच्च। साक्षिणोपनयने तु प्रामाण्यस्य निश्चयप्राप्त्या शङ्काऽयो-गाच्च। विशेष्यांश उपनयनानङ्गीकाराच्च

। अपि च साक्षिवेद्यस्य प्रामाण्यस्य संशयविषयत्वे सुखत्वादेरपि तत्प्रसङ्गः। तस्मात् कथं मानसशङ्कया प्रतिबन्ध इति ।

अत्रोच्यते- धर्मिज्ञानसापेक्षा मानससाक्षात्काररूपा शङ्का प्रतिबन्धिकेत्युपगम्यते। धर्मिज्ञानं च न प्रामाण्यं **(व्या.टि.)** गृह्णाति । अप्रामाण्यग्रहणवत् तत्कारणव्याघातादिदर्शनस्यापि प्रतिबन्धकत्वोपगमात् । वक्ष्यति चानुपदमेव । 'धर्म्युपलब्धावपि व्याघातादिदर्शनेन साक्षिणि प्रतिबद्धे प्रामाण्यविषये मनसि संशयाद्युपपत्तेः' इति। प्रतिबन्धकत्वं तु फलबलाद्धर्मितया प्रामाण्यग्रहणं प्रति दोषदर्शनस्य स्वविषयवज्जन्यत्वेनेति विषयनिष्ठ-प्रत्यासत्त्या प्रकारान्तरेणाऽत्मनिष्ठप्रत्यासत्त्या वा बोध्यम्। न च साक्षिवेद्यस्य मानसत्वायोगः। साक्षिवेद्यस्य सुखादेः स्मृतिविषयत्वान्यथाऽनुपपत्त्या मानसत्वस्य वाच्यत्वात्। स्मृतेर्मानससाक्षात्काररूपायाः संस्कारद्वारा मनःपरिणतिरूपज्ञानजन्यत्वात्। स्वयं मानसत्वाच्च। विशेष्यांश उपनयने बाधकाभावाच्च। 'मानसे त्वनियमः' इति नैयायिकैरप्यङ्गीकाराच्च। स्मृतौ तत्तादिं प्रति विशेष्यांशे उपनयनस्याऽवश्यकत्वाच्च। प्रामाण्यांशे प्रतिबन्धकवत् सुखत्वाद्यंशे प्रतिबन्धकाभावेन साक्षिणा निश्चिततत्वेन संशयविषयत्वं नाऽपादयितुं युक्तम्। तस्माद्युक्तं 'मानसापराधेन प्रतिबद्धः' इति। यद्वा व्याघातादिदर्शनानन्तरम् आकाङ्क्षादिमच्छब्दत्वादिना वेदो ज्ञानजनक इति तज्जन्यज्ञानमनुमाय तत्र दुष्टकरणजन्यत्वेनाप्रामाण्यशङ्कायां पूर्वं सत्यां ज्ञानं गृह्णन् साक्षी प्रतिबद्धः प्रामाण्यं न गृह्णातीति न कोऽपि दोषः। विस्तरस्तु गुरुप्रभायाम्।

सहजाया अपि शक्तेः प्रतिबन्धकप्रतिबध्यत्वं निदर्शयति- **यथेति ॥ स्वमहिम्नेति ॥** स्वाभाविकशक्त्येत्यर्थः। **दोषनिरासार्थमेवेति ॥** ननु प्रामाण्यज्ञप्त्यर्थं दोषनिरासार्थं वा परापेक्षायामनपेक्षत्वलक्षणस्वतस्त्वभङ्ग इति चेन्न। सर्वथा परीक्षाऽनपेक्षत्वलक्षणस्वतस्त्वं साक्षिण एव। यथोक्तं सुधायाम्। 'यदि ज्ञानग्राहकातिरिक्तस्य यथाकथमपि प्रवेशात् प्रामाण्यस्य परतस्त्वमिति तदा साक्षिण एव स्वतःप्रामाण्यमन्यस्य परत इत्यङ्गीकारेऽपि न कश्चिद्विरोधः' इति। बाह्यकरणजज्ञानानां तु दोषनिरासे परापेक्षायामपि प्रामाण्यग्रहणे परानपेक्षत्वात्स्वत-स्त्वम्। तेषामपि शङ्काऽनुत्पादे सर्वथाऽनपेक्षत्वमस्त्येव। करणानां तु ज्ञानजनकत्वग्राहकग्राह्यप्रामाण्यकत्वं ज्ञप्तौ स्वतस्त्वमिति विवेको द्रष्टव्यः **॥ एतेनेति ॥** बुद्धिदोषस्य प्रतिबन्धकत्वकथनेनेत्यर्थः। उदयनः पूर्वोक्त-मापादकीकृत्यानिष्टं प्रसञ्जयति- **यदीत्यादिना। कदाचिदिति ॥** अनभ्यासदशायामपीत्यर्थः **॥ प्रामाण्ये-ति ॥** यद्यपि, यदि प्रामाण्यं स्वतो ज्ञायेत तर्हि संशयविषयो न स्यात् ज्ञानत्ववदित्येव ऋजुः पन्थाः। तथाऽपि स्फुटप्रतिभासाय वक्रोक्तिः **॥ निश्चित इति ॥** प्रामाण्य इति शेषः। धर्म्युपलब्धेरेव प्रामाण्यनिश्चयरूपत्वात्तस्य संशयविरोधित्वादिति भावः। साधारणधर्मदर्शनाद्भवति संशय इत्यतो भविष्यन् संशयोऽपि किं स्वारसिक उताऽहित इति विकल्प्याऽद्यं निराह- **न हि साधकबाधकेति ॥** साधकसत्त्वे तन्निर्णय एव बाधकसत्त्वे त्वभाव-निश्चय एवेत्युभयाभावविशिष्टसाधारणधर्मदर्शनं तद्बीजं न तन्मात्रमिति भावः **॥ तथा सतीति ॥** निर्णायके सत्यपि। तन्मात्रात्संशय इत्यर्थः। **तदनुच्छेदः** संशयानु(त्पादः)च्छेदः। साधारणधर्मस्य कदाऽप्यनिवृत्तेरिति हृदयम्।

द्वितीयं दूषयितुमुपक्षिपति- **अथेति ॥ प्रमाणवदिति ॥** सप्तम्यन्ताद्वतिः। अप्रमाणेऽपीत्यनाश्वासप्रदर्श-नम्। **तत्प्रत्ययदर्शनात्** प्रामाण्यप्रत्ययदर्शनादित्यर्थः **॥ विशेषेति ॥** प्रामाण्यव्याप्यादर्शनादित्यर्थः। **भवति (व्या.टि.) शङ्केति ॥** प्रामाण्यज्ञानेऽप्रामाण्यशङ्का ततस्तदाहिता प्रमाणज्ञानेऽप्यप्रामाण्यशङ्का इत्यावृत्त्या योज्यम्। तं कल्पं दूषयितुं विकल्पयति- **तत्किमिति ॥ प्रमाणज्ञानेति ॥** प्रामाण्यज्ञानरूपप्रमाणज्ञाने-त्यर्थः। **तत्प्रामाण्यं** प्रामाण्यज्ञानप्रामाण्यम् **॥ प्रमाणज्ञानमेव वेति ॥** प्रामाण्यज्ञानरूपप्रमाणज्ञानमित्यर्थः। **प्रत्ययेति ॥** प्रामाण्यज्ञानरूपप्रत्ययेत्यर्थः **॥ धर्मिण एवेति ॥** प्रामाण्यज्ञानस्यैवेत्यर्थः। तत्राऽद्यं स्वारसिक-पक्षमभ्युपेत्य तद्दोषमुद्धरति- **धर्म्युपलब्धावपीति ॥ व्याघातादीति ॥** आदिपदेन दुष्टकरणजन्यत्व-रूपज्ञानदोषपरिग्रहः। न चैवं स्वतस्त्वहानिः। असति प्रतिबन्धे साक्षिवेद्यत्वनियमो वा साक्षिवेद्यत्वयोग्यता वा स्वतस्त्वमित्युक्तम्। अत्र चाप्रामाण्यग्रहणसामग्री प्रामाण्यग्रहणप्रतिबन्धिका समवहितैवेति निरुक्त-स्वतस्त्वाहान्या स्वतस्त्वपक्षेऽपि धर्मिज्ञानप्रामाण्यानिश्चयश्च युक्त एवेति **॥ मनसीति ॥** साक्षिणो निर्णयात्म-कत्वादिति भावः। व्यवस्थापकाभावेन व्यवस्थाऽयोगं शङ्कते- **युक्तीनामिति ॥** अन्वयव्यतिरेकावेव कारणत्व-व्यवस्थापकौ। तौ च दोषनिरास एव स्तो न प्रामाण्यज्ञप्तौ इत्याशयेन तत्र तौ दर्शयति- **यस्मिन्निति ॥** प्रामाण्ये व्यतिरेकाभावं दर्शयति- **प्रामाण्यं त्विति ॥ युक्त्यपेक्षामिति ॥** अपौरुषेयत्वादिति युक्त्यपेक्षामि-त्यर्थः **॥ सिद्धमिति ॥** ज्ञानकरणत्वग्राहकान्वयव्यतिरेकसिद्धं करणे, ज्ञाने च साक्षिसिद्धमित्यर्थः **॥ उक्त-व्यवस्थेति ॥** दोषनिरास एव कारणत्वं न प्रामाण्यज्ञप्तावित्युक्तव्यवस्थेत्यर्थः। आनुषङ्गिकमर्थान्तरं दर्शयति- **संवादेति ॥ व्यतिरेकेति ॥** नासतीति व्यतिरेकाभावस्येत्यर्थः। अर्थसिद्धमर्थान्तरं दर्शयति- **एतेनेति ॥ निष्कम्पस्यैवेति ॥** असन्दिग्धस्यैवेत्यर्थः **॥ अन्यथेति ॥** स्वतस्त्वेऽपि प्रामाण्यज्ञप्तिप्रतिबन्धकदोषानु-सन्धानेनेत्यर्थः।

**मूलम् - नचाऽकाङ्क्षायामेव प्रमाणान्तरापेक्षत्वादनवस्थाभाव इति वाच्यम् । आकाङ्क्षाया एव बुद्धिदोषात्मकत्वात् ।**

**(त.मं.)** नचाऽकाङ्क्षायामित्यादेरयमर्थः - इदं प्रमाणं वा न वेत्याशङ्कायामेव तत्प्रामाण्यनिश्चयार्थं प्रमाणान्तरापेक्षा । न तु नाऽशङ्कायाम् । तथा हि - कुत्रचिद् रजतप्रत्यक्षादेः प्रामाण्याशङ्कायां तन्निश्चयार्थं निष्टापानुमादिप्रमाणान्तरमपेक्ष्यते । न पुनर्घटादिप्रत्यक्षस्य । तस्मादनवस्थाया अभाव इति न वाच्यम् । सा शङ्कैव ह्यस्माभिर्बुद्धिदोष इत्युच्यते । तन्निराकरणार्थं प्रमाणान्तरं सम्मत-मेव ।

**टीका -** स्यादेतत् । जलादिज्ञाने जाते सति तत्प्रामाण्यशङ्कायां प्रवृत्तिसामर्थ्यं वा तज्जातीयत्वं वा प्रमाणान्तरं तन्निश्चयार्थमपेक्ष्यते । तदीयप्रामाण्यशङ्कायामपि प्रमाणान्तरम् । यत्प्रामाण्ये तु शङ्कैव नोदेति तत्र प्रमाणान्तरसंवादोऽपि नापेक्ष्यते । अतः प्रामाण्यग्रहणस्य परतस्त्वेऽपि नानवस्थाऽ-स्ति । अस्ति चासावर्थो यः स्वप्नेऽपि न व्यभिचरति । तथाहि । जलज्ञानाज्जलार्थिनः प्रवृत्तिः, प्रवृत्तस्य प्राप्तिः, प्राप्तस्य पानं, पाने सत्युदन्यानिमित्तदुःखोपशान्तिस्तृप्तिश्च । ततो दुःखाभावस्य सुखस्य चानुभवः । नच जलादिज्ञानस्येव दुःखाभावादिज्ञानस्यापि प्रामाण्ये कस्यचिच्छङ्काऽ-स्ति । तत् कस्य हेतोः, जलादिज्ञानस्य मरुमरीचिकादौ व्यभिचारदर्शनाद्, दुःखनिवृत्त्यादिज्ञानस्य क्वापि व्यभिचारादर्शनात् । अवश्यं चैतत् स्वतः प्रामाण्यग्रहणवादिनाऽप्यङ्गीकर्तव्यम् । अन्यथाऽ-प्रामाण्यशङ्कानिवृत्तये युक्त्यनुसन्धानात्मकपरीक्षापेक्षायां तत्रापि परीक्षान्तरापेक्षयाऽनवस्थानस्य दुर्वारत्वात् । उक्तं च 'न परीक्षाऽनवस्था स्यात्साक्षिसिद्धे त्वसंशयात्' इति । तत्राह- **नचेति ।। आकाङ्क्षायां** प्रामाण्यशङ्कायां सत्याम् । प्रमाणान्तरापेक्षत्वात् प्रामाण्यज्ञप्तेरिति शेषः । कुतो न वाच्यमिति चेत्, यत एवं वदता प्रामाण्यशङ्कानिवृत्तावेव प्रमाणान्तरसंवादस्योपयोगो न प्रामाण्य-ज्ञप्तावित्युक्तं स्यात् । अन्यथा शङ्काऽभावेऽपि प्रामाण्यज्ञानार्थं प्रमाणान्तरसंवादावश्यम्भावेना-नवस्थातादवस्थ्यात् । तथा चास्मन्मतमेवाङ्गीकृतं भवेत् । तत्कथमित्यत आह- **आकाङ्क्षाया एवेति ।।** परेणोक्तम् आकाङ्क्षानिवृत्तौ प्रमाणान्तरस्योपयोग इति । अस्माभिस्तु बुद्धिदोषनिरास इति । आकाङ्क्षा च बुद्धिदोषश्चेत्यनर्थान्तरमिति । अवश्यवेद्यत्वाभावान्नानवस्थेत्यभिप्राय इति चेन्न । निःशङ्कप्रवृत्तावश्यवेद्यत्वात् । ज्ञाने हि ज्ञाते तत्प्रामाण्यानुपलब्धौ कथं संशयो न स्यात् । सति च प्रामाण्यसंशयेऽर्थसंशयोऽपि कथं न भवेत् । त(था च)तश्च कथं निःशङ्का प्रवृत्तिः स्यात् ।

यद्यपि लोके संशयतोऽपि प्रवृत्तिर्भवति । तथाऽपि न बहुतरशरीराऽयासवित्तव्ययाऽदिसाध्या पारत्रिकी प्रवृत्तिस्तथा भवितुमर्हति । ज्ञानं स्वरूपेणैव प्रवृत्तिहेतुर्नतु तज्ज्ञानमपेक्षत इति चेन्न । तथाऽपि सुखादिवत् सत्यां सामग्र्यां वेद्यत्वापरिहारात् । सुखादिकमबुभुत्सितग्राह्यं नतु तथा ज्ञानम् । अन्यथा सुषुप्त्याद्यभावप्रसङ्गादिति चेन्न । तथा सत्यप्रामाणिकस्य ज्ञानस्यासत्त्व-प्रसङ्गात् । साक्षिवेद्यत्वपक्षे सुषुप्त्याद्यभावप्रसङ्गाभावात् । किञ्च परलोकार्थप्रवृत्तिमतो बुभुत्साऽप्यवर्जनीयैव । अन्यथा कथं तत्प्रामाण्यनिश्चयाय तज्जातीयत्वादिकमन्विष्यत इति ।

**(र.टि.) ।। परतस्त्वेऽपीति ।।** ज्ञानग्राहकातिरिक्तग्राह्यत्वेऽपीत्यर्थः **।। अवश्यवेद्यत्वाभावादिति ।।** पूर्वम्, अप्रामाण्यशङ्काशून्यज्ञानस्य प्रवृत्तिहेतुत्वेन (प्रवर्तकत्वेन) अप्रामाण्यस्य शङ्कायामेव प्रामाण्यस्यावश्यवेद्यत्वं न सर्वत्र । तथा चाप्रामाण्यशङ्का यस्मिन् ज्ञाने नास्ति तदगृहीतप्रामाण्यमेव स्वार्थनिश्चयरूपमिति नानवस्थे-त्यनवस्थापरिहारः शङ्कितः । अधुना त्वप्रामाण्यशङ्कायामप्यवश्यवेद्यत्वाभावमभ्युपेत्यानवस्थापरिहारः शङ्क्यत **(र.टि.)**इति ज्ञातव्यम् **।। बुभुत्साऽप्यवर्जनीयैवेति ।।** अङ्गीकृत्येदमुदितम् । बुभुत्सितग्राह्यत्वेऽपि कारणमुख्य-नवस्थादेरपरिहार्यत्वात् । बुभुत्साया इच्छारूपत्वेन ज्ञानजन्यत्वात् । तज्ज्ञानस्य बुभुत्सान्तरजन्यत्वादिति ।

**(रा.टि.)** उत्तरवाक्यमवतारयितुं शङ्कामाह- **स्यादेतदित्यादिना ।। प्रवृत्तिसामर्थ्यं** प्रवृत्तेः (सम्बन्धि-त्वम्)सफलत्वम् **।।**

**तज्जातीयत्वमिति ॥** गृहीतप्रामाण्यकज्ञानसमानविषयकत्वं वा स(मर्थप्र)फलप्रवृत्ति-जनकज्ञानविषयकत्वं वेत्यर्थः **॥ तदीयेति ॥** प्रमाणान्तरीयेत्यर्थः । असम्भावनां निराह- **अस्ति चासावर्थ इति ॥** सर्वथा शङ्काशून्योऽर्थ इत्यर्थः **॥ उदन्येति ॥** पिपासेत्यर्थः **॥ तृप्तिरिति ॥** जलपानेऽलम्बुद्धिः । **उक्तं चेति ॥** अनुव्याख्याने **॥ अन्यथेति ॥** प्रामाण्यज्ञप्तावपि संवादस्योपयोगाङ्गीकार इत्यर्थः **॥ तथाचेति ॥** शङ्कानिवृत्तावेवोपयोगावश्यम्भावे सतीत्यर्थः। अर्थनिश्चयादेव निश्शङ्कप्रवृत्तिर्भविष्यति किं प्रामाण्यनिश्चयेन । अर्थनिश्चयश्चाप्रामाण्यशङ्काशून्यरूपो भविष्यतीत्यत आह- **ज्ञाने हीति ॥** धर्मिज्ञानस्य संशयहेतुत्वाज्ज्ञाने हि ज्ञात इत्युक्तम् । धर्मिज्ञानाभावान्न प्रामाण्यसंशय इति शङ्कते- **ज्ञानं स्वरूपेणैवेति ॥ सामग्र्यामिति ॥** आत्मनि सुखाद्युत्पत्तौ त्वन्मते मनसा तद्ग्रहणे संयुक्तसमवायरूपसामग्रीवज्ज्ञानग्रहणेऽपि तद्रूपसामग्र्यां सत्यां वेद्यत्वापरिहारादित्यर्थः। सिद्धान्ते साक्षिरूपसामग्र्यामिति ज्ञेयम् । ज्ञानग्रहणे तन्मात्रं न सामग्री, तद्बुभुत्साऽ-प्यपेक्षितेति शङ्कते- **सुखादिकमिति ॥ अन्यथेति ॥** अवश्यवेद्यत्वे ज्ञानधारापरम्पराप्रसङ्गेन ज्ञानोपरमरूप-सुषुप्त्याद्यभावः स्यादित्यर्थः **॥ तथा सतीति ॥** ज्ञानस्यावेद्यत्वे सतीत्यर्थः **॥ साक्षीति ॥** तस्य नित्यस्य स्वप्रकाशत्वेन सुषुप्तौ सत्त्वेऽपि मनोवृत्त्यभावमात्रेण सुषुप्तिमूर्छाप्रलयानामुपपत्तेरिति भावः । बुभुत्साग्राह्यत्व-मभ्युपेत्याप्याह- **किञ्चेति ॥ तज्जातीयत्वादिकमिति ॥** समर्थप्रवृत्तिजनकजातीयत्वगृहीतप्रामाण्यकज्ञान-तुल्यविषयत्वादिकमित्यर्थः ।

**(श्री.टि.) ॥ प्रवृत्तिसामर्थ्यमित्यादि ॥** अनभ्यासदशापन्नज्ञानप्रामाण्यनिश्चायकं समर्थप्रवृत्तिजनकत्वम् अभ्यासदशापन्नज्ञानप्रामाण्यनिश्चायकं समर्थप्रवृत्तिजनकं यत्पूर्वतनं ज्ञानं तज्जातीयत्वमिति विवेकः **॥ अत इति ॥** यज्ज्ञानप्रामाण्ये शङ्कैव नोदेति तस्यागृहीतप्रामाण्यकस्यैव स्वार्थनिश्चयरूपत्वादित्यर्थः **॥ परतस्त्वेऽ-पीति ॥** ज्ञानग्राहकातिरिक्तग्राह्यत्वेऽपीत्यर्थः । ननु यज्ज्ञानप्रामाण्ये विवादो नास्त्येतादृशोऽर्थः क इति शङ्कायां सुखादिज्ञानमेवेत्याशयेनाऽह- **अस्ति चेति ॥ न व्यभिचरतीति ॥** शङ्काऽस्पदो न भवतीत्यर्थः **॥ प्राप्ति-रिति ॥** जलसमीपप्राप्तिरित्यर्थः **॥ उदन्येति ॥** 'अशनायोदन्याधनाया बुभुक्षापिपासागर्धेषु' बुभुक्षादिषु त्रिष्वर्थेषु विवक्षितेषु सत्सु अशनाया उदन्या धनाया इति त्रयः शब्दा निपात्यन्त इति सूत्रार्थः । तथा च पातुमिच्छारूपा या पिपासा सोदन्येत्यर्थः । अत्र जलज्ञानादित्यादौ कार्यभूतानि प्रवृत्त्यादीनि लिङ्गभूतानि सन्ति जलज्ञानादीनां कारणभूतानामप्रामाण्यशङ्कानिरासद्वारा तत्सत्तानिश्चायकानीति ज्ञातव्यम् । **मरुमरीचिका** मृगतृष्णा । (बिसिलदोरी) विलाससारीत्यपभ्रष्टभाषा **॥ व्यभिचारादर्शनादिति ॥** अजाते सुखे दुःखाभावे वाऽहं सुखीत्यादिज्ञानादर्शनादित्यर्थः **॥ दुर्वारत्वादिति ॥** तथाच यावत्साक्षिवेद्ये सुखादौ नावतारस्तावत्पर्यन्तमेव **(श्री.टि.)** परीक्षाऽपेक्षा । साक्षिवेद्यसुखादिज्ञाने तु न तदपेक्षेति परीक्षाऽनवस्थापरिहारो भवद्भिः कर्तव्यः । सोऽस्माकमपि समान इति भावः । अस्मान् प्रति परोऽनुव्याख्यानसम्मतिमाह- **उक्तं चेति ॥** मूले आकाङ्क्षा-यामेवेति । आकाङ्क्षा च न सर्वत्रेति भावः **॥ एवं वदतेति ॥** यत्प्रामाण्ये तु शङ्कैव नोदेति तत्र प्रमाणान्तरसंवादोऽपि नापेक्ष्यत इति वदतेत्यर्थः । अन्यथेत्यस्यैव विवरणम्- **शङ्काभावेऽपीति ॥** पूर्वम्, अप्रामाण्यशङ्कायामेव प्रामाण्यस्यावश्यवेद्यत्वं, यस्मिन् ज्ञाने चाप्रामाण्यशङ्का नास्ति तद् अगृहीतप्रामाण्यकमेव स्वार्थनिश्चयरूपमि-त्यनवस्थापरिहारः शङ्कितः । अधुना त्वप्रामाण्यशङ्कायां सत्यामपि प्रामाण्यस्यावश्यवेद्यत्वाभावमभ्युपेत्या-नवस्थापरिहारमाशङ्कते- **अवश्यवेद्यत्वाभावादिति ॥** प्रामाण्यस्येति शेषः । **निश्शङ्कप्रवृत्तौ** तदर्थत्वेने-त्यर्थः । तत् कुत इति शङ्कायामवश्यवेद्यत्वाभावे निश्शङ्कप्रवृत्तिरेव न स्यादित्युपपादयति-**ज्ञाने हीत्यादिना ॥** जलज्ञान इत्यर्थः । ज्ञाते सति मनसेति शेषः **॥ अनुपलब्धाविति ॥** अनुमित्येति शेषः । यथाऽऽहुः- 'ज्ञानं मनसा गृह्यते प्रामाण्यं पुनरनुमानेन' इति । **संशय इति ॥** इदं जलज्ञानं प्रमाणं न वेति प्रामाण्यसंशय इत्यर्थः। **अर्थसंशय इति ॥** इदं जलं भवति न वेति संशय इत्यर्थः । प्रामाण्यस्यार्थसत्ताघटितत्वात् तत्संशये सत्यर्थसंशयोऽ-प्यावश्यक इति भावः । **तथा चेति ॥** अर्थे जलादावेव संशयात् कथं जलादौ निश्शङ्का प्रवृत्तिः स्यादित्यर्थः ।

**॥ संशयत इति ॥** धान्यादिरूपार्थसन्देहादपीत्यर्थः । प्रवृत्तिः कृष्यादौ । तथा च प्रकृतेऽपि प्रामाण्यसन्देहात् प्रवृत्तिरस्त्विति भावः **॥ पारत्रिकी ति ॥** 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यजन्यज्ञानसाध्यस्वर्गरूप-परलोकसाधनीभूतयागादौ प्रवृत्तिर्ज्ञाने प्रामाण्यनिश्चयं विना तत्सन्देहमात्रान्न भवितुमर्हतीत्यर्थः **॥ तथेति ॥** संशयत इत्यर्थः **॥ न तु तज्ज्ञानमपेक्षत इति ॥** प्रवृत्तिजनने स्वज्ञानं नापेक्षितमित्यर्थः । यद्यपेक्षितं स्यात् तर्ह्येव 'ज्ञाने हि ज्ञाते' इत्यादिनोक्तं दूषणं स्यादित्याशयः । **सामग्र्याम्** आत्ममनःसन्निकर्षादिरूपायाम्। दृष्टान्तोऽसम्प्रतिपन्न इत्याशङ्कते- **सुखादिकमिति ॥ न तु तथेति ॥** ज्ञास्यामीति बोद्धुमिच्छारूपायां बुभुत्सायां सत्यामेव ज्ञानं गृह्यते न तदभावे । तथा च सामग्र्यां सत्यामपि क्वचिद्बुभुत्साया अभावान्न तज्ज्ञानमपेक्षित-मित्याशयः **॥ अन्यथेति ॥** ज्ञानस्याबुभुत्सितग्राह्यत्वाङ्गीकारे सर्वदा ज्ञानपरम्परासद्भावनिवारकाभावेन सर्वदा तत्सद्भावप्राप्त्या तदर्थं

तद्ग्राहकमनसः सर्वदा जागरूकत्वे वक्तव्ये तदुपरमाभावप्राप्त्या सुप्तिमूर्च्छाद्युच्छेद एव स्यात्। मनस उपरमेण सर्वज्ञानोपरमस्यैव सुप्तित्वात्। अतस्तदन्यथाऽनुपपत्त्या ज्ञानस्य बुभुत्सितग्राह्यत्वे वक्तव्ये बुभुत्सायाः सर्वदाऽभावेन ज्ञानग्रहणाभावात्सुप्त्याद्युत्पत्तिरित्याशयः। तथा च ज्ञानं स्वरूपेणैव प्रवृत्तिहेतुरिति नोक्तदूषणावकाश इति हृदयम्॥ **तथा सतीति**॥ तथा च यत्र बुभुत्सा नास्ति तादृशं प्रवर्तकं यज्ज्ञानं तदसदेवेति प्राप्तम्। कुतः? अप्रामाणिकत्वात्। वस्तुसद्भावे ज्ञानस्यैव प्रमाणत्वात्। एवं चाबुभुत्सित-ग्राह्यत्वे वाच्ये तस्य ज्ञानस्य स्वरूपेणैव प्रवर्तकत्वाभावेन ज्ञातस्यैव प्रवर्तकत्वं वाच्यम्। तथा च ज्ञाने ज्ञाते तत्प्रामाण्यानुपलब्धौ तत्संशयद्वाराऽर्थसंशयेन निश्शङ्का प्रवृत्तिर्न स्यात्। अतस्तदन्यथाऽनुपपत्त्या प्रामाण्य-स्यावश्यवेद्यत्वं वाच्यमित्यनवस्था सुस्थैवेति भावः। ननु ज्ञानस्याबुभुत्सितग्राह्यत्वे भवत्पक्षेऽप्युक्तरीत्या **(श्री.टि.)** सुप्त्याद्यभावप्रसङ्गः स्यादेवेत्यत आह- **साक्षीति**॥ ज्ञानस्याबुभुत्सितग्राह्यत्वेऽपि त्वन्मते ज्ञानस्य मनोवेद्यत्वाङ्गीकारेण मनस उपरमासम्भवात् सुप्त्याद्यभावप्रसङ्गः स्यात्। अस्मन्मते तु ज्ञानस्याबुभुत्सित-ग्राह्यत्वेऽपि साक्षिवेद्यत्वाङ्गीकारेण सुखकालात्मस्वरूपज्ञानानां सुषुप्तौ सत्त्वेऽपि साक्षिणैव तद्ग्रहणसम्भवेन सुप्त्युच्छेदाभावान्मनस उपरमसम्भवेन सुषुप्त्युपपत्तेः। तदुपरमस्यैव सुप्तित्वादिति भावः। ज्ञानस्य बुभुत्सित-ग्राह्यत्वमङ्गीकृत्यापि समाधत्ते- **किञ्चेति**॥ **बुभुत्सा** ज्ञानज्ञानेच्छा॥ **अन्यथेति**॥ बुभुत्सितग्राह्यत्वाभावे क्वचिद्बुभुत्साया अभावेन ज्ञानस्यैवाभावात् तस्मिन्ज्ञाने प्रामाण्यनिश्चयाय इदं ज्ञानं प्रमाणं समर्थप्रवृत्ति-जनकजातीयत्वादिति समर्थप्रवृत्तिजनकजातीयत्वरूपविजातीयसंवादो वा सजातीयसंवादो वा परीक्षकैरन्विष्य-माणो व्यर्थ एव स्यात्। धर्मिज्ञानाभावेनानुमानप्रवृत्तेरेवायोगादिति भावः। अत्र बुभुत्साऽप्यवर्जनीयेत्यङ्गी-कृत्योक्तम्। वस्तुतस्तु बुभुत्सितग्राह्यत्वपक्षेऽप्यनवस्था स्यादेव। बुभुत्साया इच्छारूपत्वेन ज्ञानजन्यत्वात् तज्ज्ञानस्य पुनर्बुभुत्साऽन्तरजन्यत्वात्। तस्याश्च पुनर्ज्ञानान्तरजन्यत्वादिति।

**(पां.टि.)**॥ **अवश्यवेद्यत्वाभावादिति**॥ अर्थनिश्चयमात्रेण प्रवृत्त्युपपत्तेरर्थसन्देहेऽपि प्रवृत्तिदर्शनाच्च न प्रामाण्यमवश्यवेद्यमिति भावः। कृष्यादावर्थसन्देहात् प्रवृत्तावपि बहुवित्तव्ययाऽयाससाध्ये पारत्रिकफलके यागादौ निष्कम्पप्रवृत्तये प्रामाण्यमवश्यवेद्यमित्याह- **निःशङ्केति**॥ नन्वर्थनिश्चयादेव तत्रापि प्रवृत्त्युपपत्तेर्न प्रामाण्य-निश्चयापेक्षा। न च प्रामाण्यसन्देहे तदाहितार्थसन्देहोऽवर्जनीय इत्यर्थनिश्चय एवानुपपन्न इति वाच्यम्। धर्मिज्ञानाद्यभावे नैव प्रामाण्यसन्देहाभावोपपत्त्याऽर्थनिश्चयाविघातादित्यतोऽर्थसन्देहाधायकप्रामाण्यसन्देह-जनकधर्मिज्ञानादिसद्भावं तत्रोपपादयति- **ज्ञाने हि ज्ञात इति**॥ उपलक्षणं चैतत्। ज्ञानत्वरूपसाधारणधर्मदर्शनस्य यागादौ निष्कम्पप्रवृत्त्यर्थं प्रामाण्यादिविशेषबुभुत्सायाश्च सत्त्वेन कोटिस्मरणे च सति तदस्मरणमपि नोपपद्यत इति द्रष्टव्यम्। विशेषादर्शनसद्भावं वक्तुं तत्प्रामाण्यानुपलब्धावित्युक्तम्। न च विषयान्तरसञ्चारादसन्देह इति वाच्यम्। यागादौ निष्कम्पप्रवृत्तिहेत्वसन्देहप्रयोजकविशेषावधारणाय विषयान्तरसञ्चारस्यैव निरोद्धव्य-त्वात्। न हि प्रेक्षावन्तो बहुवित्तव्ययाऽयाससाध्ये यागादौ साधनत्वनिश्चये विषयान्तरसञ्चारसम्पादितासन्देह-मात्रेण चैत्यवन्दनादाविव प्रवर्तन्ते। तदेतदाह - **कथं संशयो न स्यादिति**॥ अस्त्वप्रामाण्यसंशयः किं तावतेत्यत आह- **सति चेति**॥ सामग्र्याः कार्याव्यभिचारादिति भावः। अस्तु तत्रार्थसन्देहोऽपीत्यत आह- **तथा चेति**॥ तद्धेतुतया त्वदुक्तार्थनिश्चयाभावादिति भावः। शङ्कते- **ज्ञानमिति**॥ तथा च धर्मिणो ज्ञानस्याज्ञातत्वान्न संशय इति भावः॥ **सत्यां सामग्र्यामिति**॥ योग्यस्य धर्मिणो ज्ञानस्य मनःसंयुक्ताऽत्म-समवायरूपसम्प्रयोगवत्त्वेनैवोत्पत्त्या ज्ञानत्वेन ज्ञानज्ञानसामग्र्याः सत्त्वेन तज्ज्ञानमावश्यकम्। अन्यथा सति सुखे तदज्ञानमपि स्यादविशेषादिति भावः। बुभुत्सितग्राह्यत्वाबुभुत्सितग्राह्यत्वाभ्यां ज्ञानसुखयोर्विशेषाद-विशेषोऽसिद्ध इत्याशङ्कते- **सुखादिकमिति**॥ योग्याऽत्मविशेषगुणत्वाविशेषात् सुखादिवज्ज्ञानमप्यबुभुत्सित-ग्राह्यमेव किं न स्यादित्यत आह- **अन्यथेति**॥ वृत्तिरूपज्ञानोपरमस्यैव सुषुप्त्यादित्वादिति भावः। **तथा (पां.टि.) सत्यप्रामाणिकस्य ज्ञानस्येति**॥ ननु स्वेनाज्ञातत्वेऽप्यन्येन ज्ञातत्वेन प्रामाणिकत्वान्नासत्त्वा-पत्तिः। न च स्वेन ज्ञातत्वमेव तत्र प्रयोजकम्। गौरवात्। परकीयसुखादेः स्वेनाज्ञातत्वेनासत्त्वापाताच्च। न च तदपि परकीयसुखादिकार्यदर्शनात् स्वं प्रत्यनुमानसिद्धमिति वाच्यम्। तथा सति परदृष्टस्वाप्नार्थानां सर्वेषां कार्यदर्शनाभावेन तत्राऽनुमानिकज्ञानस्यापि वक्तुमशक्यत्वेन तेषामसत्त्वापातादिति चेन्न। विप्रतिपत्तिविषयस्य सतः स्वयमज्ञातत्वेऽसत्त्वमित्यत्र तात्पर्यात्। परदृष्टस्वप्नादेश्च स्वं प्रति विप्रतिपत्तिविषयत्वाभावादित्याहुः। ज्ञानस्याबुभुत्सितग्राह्यत्वे प्रागुक्तमतिप्रसङ्गं परिहरति- **साक्षीति**॥

**(व्या.टि.)** परतस्त्वेऽपि प्रामाण्यशङ्काया असार्वत्रिकतया तन्निरासाय प्रमाणान्तरापेक्षाऽभावान्नानवस्थेत्या-शयवान् शङ्कते- **स्यादेतदित्यादिना**॥ **जलादिज्ञान इति**॥ अनभ्यस्तप्रदेश इति शेषः॥ **प्रवृत्तीति**॥ पिपासायामिति शेषः॥ **तज्जातीयत्वं**

**वेति ॥** वाशब्दो व्यवस्थितविकल्पः **॥ यत्प्रामाण्य इति ॥** यदीयप्रामाण्य इत्यर्थः। कोऽसावर्थो यदीयज्ञानप्रामाण्ये शङ्काऽनुदय इत्यतोऽस्ति ज्ञानव्यापकोऽर्थ इत्याह- **अस्ति चेति ॥ न व्यभिचरति** न बाध्यत इत्यर्थः **॥ उदन्येति ॥** पिपासेत्यर्थः। 'अशनायोदन्याधनाया बुभुक्षापिपासागर्धेषु' इति निपातनात् **॥ कस्य हेतोरिति ॥** केन हेतुनेत्यर्थः। 'षष्ठी हेतुप्रयोगे' इति षष्ठी **॥ उक्तश्चेति ॥** क्वचिद-वस्थानमित्यर्थः। आकाङ्क्षापदस्येच्छार्थत्वे आत्माश्रयप्रसङ्गादन्यथा व्याचष्टे- **प्रामाण्यशङ्कायामिति ॥ अस्मन्मतमेवेति ॥** प्रामाण्यज्ञप्तावपेक्षायामनवस्थातादवस्थ्यात् तत्प्रतिबन्धनिरास एव तदपेक्षायां स्वतस्त्वं सिद्धमित्यस्मन्मतमेवाङ्गीकृतमिति संवादो निग्रहस्थानमित्यर्थः **॥ अनर्थान्तरमिति ॥** एकार्थ इत्यर्थः। तथा चार्थैक्यान्नाममात्रे विवादायोग इति भावः **॥ अवश्येति ॥** 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः। किं प्रामाण्यं नावश्यवेद्यं ज्ञानं वेति विकल्प्याऽद्यं निराह- **निश्शङ्केति ॥ अवश्यवेद्यत्वादिति ॥** प्रामाण्यस्येति शेषः। वेदनाऽवश्यकतां स्फोरयति- **ज्ञाने हि ज्ञात इति ॥ कथमिति ॥** किमाक्षेपे। धर्मिज्ञानकोटिस्मरण-विशेषादर्शनादिसामग्र्यां कार्यावश्यम्भावनियमादिति भावः। नन्वर्थनिश्चय एव प्रवृत्तिहेतुः, समानविषयत्वाद् आवश्यकत्वाच्च। न तु प्रामाण्यनिश्चयः, व्यधिकरणत्वादित्यत आह- **सति चेति ॥** तथा चाऽहितसंशया-न्नार्थनिश्चयोऽपि सम्भवतीत्यर्थः। ननु नार्थनिश्चयोऽपि प्रवृत्तिहेतुः। कृष्यादेः(दौ) संशयतोऽपि प्रवृत्तिदर्शनाद् व्यतिरेकव्यभिचारादित्याशङ्क्य परिहरति- **यद्यपीत्यादिना ॥** पारत्रिकीति 'कालाट्ठञ्' इत्यत्र योगविभागात् साधुः। परत्रेति विषयसप्तमी। परलोकविषयिणी प्रवृत्तिः पारत्रिकफलकेति यावत्। द्वितीयं शङ्कते- **ज्ञान-मिति ॥** ज्ञानस्याज्ञातकरणत्वादिति भावः। सत्यर्थज्ञाने ज्ञानाज्ञानेनाप्रवृत्त्यदर्शनादिति हृदयम् **॥ सत्या-मिति ॥** इन्द्रियसम्प्रयोगरूपायामित्यर्थः **॥ अबुभुत्सितेति ॥** बुभुत्साया असार्वत्रिकत्वान्न तज्ज्ञानावश्य-कतेत्यर्थः **॥ अन्यथेति ॥** ज्ञानानुभवपरम्परायामित्यर्थः **॥ सुषुप्तीति ॥** 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वम्। मनस उपरमाभावेन सर्वदा जाग्रत्त्वप्रसङ्गादित्यर्थः **॥ अप्रामाणिकस्येति ॥** अज्ञायमानज्ञानसद्भावे प्रमाणाभावादित्यर्थः **॥ साक्षिवेद्यत्वेति ॥** मनस उपरमाङ्गीकारादिति भावः **॥ बुभुत्सेति ॥** प्रमात्वेन **(व्या.टि.)** ज्ञानबुभुत्सेत्यर्थः **॥ अन्यथेति ॥** प्रामाण्यप्रकारकबुभुत्साऽभाव इत्यर्थः **॥ तज्जातीयत्वादिक-मिति ॥** प्रामाण्यप्रमाणान्वेषणानुपपत्तेरित्यर्थः।

**मूलम् - दुष्टबुद्धीनमेवाप्रामाण्यशङ्केति परतोऽप्रामाण्यम्। प्रामाण्यं च स्वत एव सिद्धम्।**

**(त.मं.)** ननु प्रमाणानामप्रामाण्यमपि प्रामाण्यमिव स्वत एव स्यादित्यत आह - **दुष्टेति ॥** बुद्धिदोषवतामेव प्रमाणस्याप्रामाण्यशङ्केति यत् तस्मात् परतो दोषादप्रामाण्यम्; प्रामाण्यं स्वाभाविकमेवेति सिद्धम्।

**टीका -** यद्येवं ज्ञानग्राहकमात्रेणैव प्रामाण्यग्रहणमिति प्रामाण्यस्य स्वतस्त्वं स्यात्, तदा ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्रहणं स्वभाव इत्युक्तं भवति। परानपेक्षस्य स्वभावत्वात्। तथाच बौद्धादिवाक्यजनितज्ञानस्यापि साक्षी प्रामाण्यं गृह्णीयात्। स्वभावस्यानपायात्। स चाव्यभिचारीत्यङ्गीकरणीयम्। अन्यथा परीक्षाऽनवस्थाया दुष्परिहारत्वापत्तेः। ततश्च तदपि प्रमाणमापद्येतेत्यत आह- **दुष्टेति ॥** ज्ञानग्राहकः साक्षी प्रमाणतयैव गृह्णातीत्युत्सर्ग एव। विसंवादलक्षणात् **परतो**ऽपवादादप्रामाण्यं च गृह्णाति। सहकारिणः सहजशक्तिं प्रतिबध्य विपरीतशक्तिं जनयन्तीति हि प्रसिद्धम्। दावदहनदग्धानां वेत्रबीजानां वेत्राङ्कुरमजनयित्वा कदलीकाण्डजनकत्वस्य दर्शनात्। अस्ति च बौद्धादिवाक्यजनितविज्ञानस्य विसंवाद इति तद् अप्रमाणतया साक्षी गृह्णाति। विसंवाददर्शनमप्रामाण्यग्रहणकारणमित्यत्र दृष्टान्तो **दुष्टबुद्धीनामेवा-प्रामाण्यशङ्केतीति ॥** विसंवाददोषकलुषितमनसां पुंसां वेदजनितविज्ञानेऽप्रामाण्यशङ्का दृष्टैवेति हेतोरिति। नात्राप्रामाण्यशङ्का साक्षिणः किन्तु मनस एव। 'यत् क्वचिद् व्यभिचारि स्याद्दर्शनं मानसं हि तत्' इत्युक्तत्वात्। अतः सामान्यमात्रे दृष्टान्तोऽयमिति ज्ञातव्यम्।

अथवा यदि प्रामाण्यं ज्ञानग्राहकमात्रग्राह्यं स्यात् तर्ह्यप्रामाण्यमपि तथा स्यात्। ज्ञान-धर्मत्वाविशेषात्। तथा च वेदजनितज्ञानस्य प्रामाण्यमिवाप्रामाण्यमपि साक्षिगृहीतमित्यापन्नमि-त्यत आह- **दुष्टबुद्धीनामेवेति ॥** न प्रामाण्यमिवाप्रामाण्यमपि ज्ञानग्राहकमात्रग्राह्यम्; येनोक्त-दोषः स्यात्। किं तर्हि ? **परतो** विसंवाददर्शनादनुमीयते

। नच वेदजनितज्ञानस्य तत्त्वतो विसंवादोऽस्ति। कुतोऽयं विभाग इत्यत उक्तम्- **दुष्टेति ॥** अनेनाप्रामाण्यग्रहणस्य युक्त्यनुसन्धान एव भावोऽन्यथाऽभाव उक्तो वेदितव्यः । दुष्टबुद्धीनामिति अप्रामाण्यशङ्केति च प्रकृतवेदजन्य-ज्ञानापेक्षयोक्तम् । वस्तुतस्तु विसंवादानुसन्धानवतामेवाप्रामाण्यज्ञप्तिर्न तद्रहितानाम् इत्यव्यभि-चरितानन्यथासिद्धान्वयव्यतिरेकसद्भावाद् अनुमेयमेवाप्रामाण्यं, न पुनर्ज्ञानग्राहकमात्रग्राह्यम् इत्युक्तं ज्ञातव्यम्। प्रामाण्यग्रहणस्य तु युक्त्यनुसन्धानापेक्षा नास्तीति प्रागेवोक्तम् 'अदुष्टबुद्धीनां स्वत एव सिद्धत्वाच्च प्रामाण्यस्य' इति। नन्वेवं सति विसंवादाभावे सति प्रामाण्यं प्रतीयत इति तदपि परत एव स्यात्, न स्वत इत्यत आह- **प्रामाण्यं चेति ॥** नहि दाहाभाव एव वेत्रबीजं वेत्राङ्कुरं जनयतीत्येतावता दाहाभावो वेत्राङ्कुरस्य कारणं भवति । किन्तु ततो विपरीतकार्यानुत्पादे सति वेत्रबीजं स्वमहिम्नैवाङ्कुरं करोति । अन्यथोत्सर्गापवादौ क्वापि न स्यातामिति भावः । किञ्चाप्रामाण्यग्रहणकारणाभावस्यापि प्रामाण्यग्रहणोपयोगाङ्गीकारेऽपि न प्रकृते काचिदस्माकं हानिरिति ।

**॥ इति प्रामाण्यस्वतस्त्ववादः ॥**

**(र.टि.)** ननु दुष्टबुद्धीनामेवेति कथं दृष्टान्तप्रतिपादकम्। ज्ञापकाभावात्। इतिशब्दश्चानर्थक इत्यत आह- **विसंवादेति ॥** वह्निमत एव महानसादेर्धूमवत्त्वं दृष्टमिति धूमवतः पर्वतस्य वह्निमत्त्वमिति यथेति भावः । **अतस्सामान्यमात्र इति ॥** निश्चयरूपस्य साक्षिणोऽप्रामाण्यं विषयीकर्तुं दोषसापेक्षत्वे मनसोऽप्रामाण्य-संशयजनने दोषसापे(क्षित)क्षत्वस्य विशिष्य दृष्टान्तत्वासम्भवात् । ज्ञाने साक्षित्वनिश्चयत्वमनःकरणकत्व-संशयत्वाद्यविवक्षया, अप्रामाण्यविषयीकरणे दोषसापेक्षत्वरूपसामान्यमात्रे दृष्टान्त इत्यर्थः । ननु दुष्ट-बुद्धीनामितिवाक्येऽप्रामाण्यशङ्काया विसंवाददोषकलुषितमनोऽन्वयव्यतिरेकावेव बोध्येते, न त्वप्रामाण्य-ग्रहणस्य युक्त्यनुसन्धानान्वयव्यतिरेकौ । तत्कथमेवमुक्तमित्यत आह- **दुष्टबुद्धीनामितीति । प्रकृतवेद-जन्येति ॥** वेदजन्यज्ञाने संशयविपर्ययलक्षणाप्रामाण्यभ्रम एव । न त्वप्रामाण्यप्रमा । भ्रमोऽपि मनःकरणक एवेति भावः । शङ्कापदं च भ्रममात्रपरमिति द्रष्टव्यम् । वेदज(न्य)नितज्ञानेऽप्रामाण्यभ्रमस्यापि सम्भवात् । **अनुमेयमेवाप्रामाण्यमिति ॥** विसंवादलक्षणहेत्वनुसन्धानाधीनज्ञानविषय एवेत्यर्थः । साक्षिणोऽप्रामाण्य-विषयीकारित्वेऽपि विसंवादसापेक्षतानियमात् । न तु साक्ष्यग्राह्यमित्यर्थः । अत्र ग्रन्थान्तरे च विसंवादसहकृत-साक्षिग्राह्यत्वस्योक्तत्वेन तद्विरोधापत्तेः **॥ न प्रकृते काचिदस्माकं हानिरिति ॥** ज्ञानप्रामाण्यस्य विसंवादा-भावसहकृतसाक्षिवेद्यत्वेऽपि न प्रमाणजन्यत्वेन वेदजन्यज्ञानप्रामाण्यनिश्चयः । तथा वेदस्यापि यथार्थज्ञानान्वय-व्यतिरेकाभ्यामेव प्रामाण्यनिश्चयः । तथा च नाऽप्तोक्तत्वस्य कुत्राप्युपयोग इति सकर्तृकत्वाभावे प्रामाण्यासिद्धि-लक्षणबाधकाभावादप्रयोजकं वाक्यत्वानुमानमिति प्रकृतस्य वेदापौरुषेयत्वस्याहानिरित्यर्थः ।

**(रा.टि.) ॥ ततश्चेति ॥** अव्यभिचारिसाक्षिगृहीतप्रामाण्यकत्वात्। **तदपि** बौद्धवाक्यजनितज्ञानमपीत्यर्थः। **उत्सर्ग एवेति ॥** अनियतबहुविषयसम्बन्ध एव, न नियत इत्यर्थः । परत इति मूलानुवादः । विसंवादलक्षणादप-वादादिति व्याख्या । आहितशक्तिकस्सन्निति योज्यम्। गृह्णातीत्युक्त्या मूले गृह्यत इति शेष इत्युक्तं भवति **॥ दावदहनेति ॥** वनवह्नीत्यर्थः **॥ अस्ति च बौद्धादिवाक्यजनितविज्ञानस्य विसंवाद इति ॥** 'इतरेषां चानुपलब्धेः' इति सूत्रोक्तदिशा तदुक्तसाधनानुष्ठानेऽपि फलानुपलम्भरूप इति वा 'नासतोऽदृष्टत्वात्' इति सूत्रोक्तदिशा वेति भावः। दुष्टबुद्धीनामिति बहुव्रीहिरित्युपेत्य व्याचष्टे- **विसंवादेति ॥** इतिशब्दो हेत्वर्थ इत्युपेत्याऽह- **इति हेतोरिति ॥ अत इति ॥** शङ्काया मानसत्वादिति वा साक्षिणो नियतप्रामाण्यादिति वा दोषदर्शने शङ्का भवतीत्येवंरूपार्थ एवायं दृष्टान्तो न साक्षिण इति वा मनस इति वा विशिष्येत्यर्थः । उक्त-शङ्कानिवर्तकतया मूलं योजयितुं परिष्करोति- **न प्रामाण्यमिवेति ॥** मूलं योजयति- **किं तर्हि परत इति ॥ अनुमीयत इति ॥** विसंवादाऽहितशक्तिकेन साक्षिणा गृह्यत इत्यर्थः । वेदजनितज्ञानेऽप्यप्रामाण्यमनुमी-यतामित्यत आह- **नच वेदेति ॥ अयं विभाग इति ॥** प्रामाण्यं ज्ञानग्राहकसाक्षिणैव, अप्रामाण्यं तु विसं-वादाऽहितशक्तिकेन गृह्यत इत्ययं विभाग इत्यर्थः **॥ दुष्टेतीति ॥** व्याख्यानं प्रागिवेति भावः । दुष्टबुद्धीनामि-त्यादिवाक्यसन्दोहेन का युक्तिरुक्तेत्यत आह- **अनेनेति ॥** एवकारार्थः **॥ अन्यथात्वभाव इति ॥** नन्वेवं विसंवाददशायामेवाप्रामाण्यज्ञानमिति वाच्यमित्यत आह- **दुष्टबुद्धीनामितीति ॥** अनृत-व्याघातादिदोषाणां वेदे आपाततः प्रतीतेरिति भावः ।

**॥ अनुमेयमेवाप्रामाण्यमिति ॥** अत्र तर्कताण्डवकारैरुक्तम् 'अनुमेयमेवाप्रामाण्यम्' इत्युक्तिः साक्षिणोऽ-प्रामाण्यग्रहणे

विसंवादापेक्षा नियतेत्यभिप्राया । अत एव तत्रैव 'न पुनर्ज्ञानग्राहकमात्रग्राह्यम्' इत्युक्तम् । वादावल्यां च 'अप्रामाण्यस्यानुमेयताऽवसायात्' इत्युक्त्वा 'न चाप्रामाण्यं क्वचिदिति निरपेक्षेण साक्षिणा निश्चितचरम्' इत्युक्तम् इति । तथाच 'अपवादादप्रामाण्यं च साक्षी गृह्णाति' इति 'तदप्रमाणतया साक्षी गृह्णाति' इति च पूर्ववाक्येन 'साक्षी अपवादकसद्भावेऽप्रामाण्यमपि गृह्णाति' इति सुधावाक्येन च न विरोध इति ज्ञेयम् ।। **परत एव स्यादिति** ।। यथा विसंवादसापेक्षसाक्षिग्राह्यत्वादप्रामाण्यं परत इत्युच्यते तथा विसंवादा-भावसापेक्षसाक्षिग्राह्यत्वात् प्रामाण्यमपि परतो ग्राह्यं स्यादित्यर्थः ।। **अन्यथेति** ।। अपवादस्यापि सामान्य-सामग्र्यामनुप्रवेशे सति हिंसा पापसाधनं वैधी तु पुण्यसाधनमित्यत्रापवादाभावसाहित्यतत्साहित्यरूप-सामग्रीभेदादेव पापपुण्यरूपकार्यभेदप्राप्त्या सहजशक्त्या हिंसा पापं जनयति विधिरूपापवादाहितशक्त्याऽपवाद-रूपसहकारिबलाद्वा विपरीतकार्यं जनयतीत्येवंरूप उत्सर्गोऽपवादश्च क्वापि न स्यादित्यर्थः ।। **न प्रकृत इति** ।। वेदस्यापौरुषेयत्वे तस्य वा तज्जन्यज्ञानस्य वाऽऽप्तोक्तत्वगुणाभावाद् आप्तोक्तवाक्यजन्यत्वाभावाद्वा प्रामाण्यं न स्यादिति हानिर्वेदापौरुषेयत्वरूपप्रकृतप्रमेये नेत्यर्थः । अपौरुषेयत्वेऽपि परमार्थतो विसंवादाभावेन प्रामाण्योपपत्तेरित्याशयः ।

**(श्री.टि.)** ।। **स्वभावस्येति** ।। प्रामाण्यग्राहकत्वस्वभावस्येत्यर्थः ।। **स चेति** ।। बौद्धादिवाक्यजन्यज्ञान-प्रामाण्यग्राहकस्साक्षीत्यर्थः ।। **अन्यथेति** ।। साक्षिणोऽव्यभिचारित्वाभावे साक्षिवेद्यसुखादिज्ञानेऽप्यप्रामाण्य-शङ्कापत्त्या तत्रापि परीक्षान्तरापेक्षाप्राप्तौ 'न परीक्षानवस्था स्यात् साक्षि(सिद्धे)वेद्ये त्वसंशयात्' इत्येवं परीक्षा-नवस्थापरिहारो भवद्भिः क्रियमाणोऽनुपपन्नः स्यादित्यर्थः ।। **तदपीति** ।। बौद्धादिवाक्यजन्यज्ञानमपीत्यर्थः । **कदलीकाण्डेति** ।। काण्डो दण्डः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरकोशात् । कदलीदण्डे-त्यर्थः । अत्र बुद्धिशब्दो मनःपर इत्यभिप्रायेणोक्तम्- **कलुषितमनसामिति** ।। ननु दुष्टबुद्धीनामेवेति वाक्यं कथं दृष्टान्तप्रतिपादकं तज्ज्ञापकाभावात्, इतिशब्दश्चानर्थक इत्याशङ्क्य दृष्टान्तत्वज्ञापनाय शङ्केत्यनन्तरं दृष्टेति-पदमध्याहार्यं तेनैवशब्दसम्बन्धः, इतिशब्दश्च हेत्वर्थः, अतो नासङ्गतिरित्याह- **दृष्टैवेति** ।। दुष्टबुद्धीना-मित्युक्तेरभिप्रायमाह- **नात्रेति** ।। **अत्र** वेदजन्यज्ञाने । तस्य निश्चयरूपत्वादिति भावः । अत्रानुव्याख्यान-सम्मतिमाह- **यत् क्वचिदिति** ।। ननु कथमयं दृष्टान्तः । दोषकलुषितमनसां वेदजनितविज्ञानेऽप्रामाण्यशङ्काया दृष्टत्वात् प्रकृतेऽपि विसंवादरूपापवादसहकृतसाक्षिणा बौद्धादिवाक्यजन्यज्ञानेऽप्रामाण्यनिश्चय इत्यस्या-सङ्गतत्वादित्यत आह- **अत इति** ।। विसंवादसहकृतसाक्षिणा बौद्धादिवाक्यजन्यज्ञानेप्रामाण्यनिश्चय इत्यत्र विसंवादरूपदोषकलुषितमनसां वेदजन्यज्ञानेऽप्रामाण्यशङ्का दृष्टेति विशेषे दृष्टान्तत्वायोगादित्यर्थः ।। **सामन्यमात्र इति** ।। विसंवादरूपदोषदर्शनमप्रामाण्यग्रहणकारणमित्यत्रैवायं दृष्टान्त इत्यर्थः । शङ्काया अपि ग्रहणत्वादिति भावः ।। **आपन्नमिति** ।। तथा चाप्रामाण्यस्यापि स्वतस्त्वापत्तिरिति भावः ।। **कुतोऽयं विभाग इति** ।। प्रामाण्याप्रामाण्ययोर्ज्ञानधर्मत्वेऽपि प्रामाण्यस्य ज्ञानग्राहकमात्रग्राह्यत्व-मप्रामाण्यस्य तु नेत्ययं विभागः कुत इत्यर्थः ।

किमनेनास्मिन् विभागे प्रमाणमुक्तमित्यतोऽन्वयव्यतिरेकावेवेत्याह- **अनेनेति** ।। **युक्त्यनुसन्धान एवेति** ।। अनृतव्याघाताद्यसद्युक्त्यनुसन्धान एवेत्यर्थः । ननु बौद्धादिवाक्यजन्यज्ञाने विसंवादसहकृतसाक्षिणाऽ-प्रामाण्यनिश्चय इति वक्तव्ये दुष्टबुद्धीनामिति शङ्केति च कस्मादुक्तम् असङ्गतत्वादित्यत आह- **दुष्टबुद्धीना-मिति शङ्केति चेति** ।। वेदजन्यज्ञाने साक्षिणाऽप्रामाण्यनिश्चयायोगादिति भावः ।। **ज्ञप्तिरिति** ।। इति सामान्य-मात्रमेव विवक्षितम् । शङ्कानिश्चययोरुभयोरपि ज्ञप्तित्वादिति भावः ।। **अनुमेयमेवेति** ।। विसंवादलक्षण-हेत्वनुसन्धानाधीनसाक्षिविषय एवेत्यर्थः । साक्षिणोऽप्रामाण्यविषयीकारित्वे विसंवादसापेक्षतानियमात् । न तु साक्ष्यग्राह्यमित्यर्थः । अन्यथा अत्र ग्रन्थान्तरे च विसंवादसहकृतसाक्षिग्राह्यत्वस्योक्तत्वेन तद्विरोधापत्तेरित्यव-गन्तव्यम् । नन्वप्रामाण्यग्रहणे विसंवादापेक्षावत् प्रामाण्यग्रहणेऽपि संवादरूपयुक्त्यनुसन्धानापेक्षा स्यात् । तथा च प्रामाण्यस्यापि परतस्त्वापत्तिरित्यत आह- **प्रामाण्यग्रहणस्य त्विति** ।। **एवं सतीति** ।। विसंवाद-स्याप्रामाण्यग्रहणकारणत्व इत्यर्थः । **ततो** दाहाभावात् ।। **स्वमहिम्नैवेति** ।। एवमेव प्रकृतेऽपि विसंवादाभावे सत्येव साक्षी प्रामाण्यं गृह्णातीत्येतावता विसंवादाभावोऽपि न प्रामाण्यज्ञप्तिकारणं भवति । किन्तु ततो विसंवा-**(श्री.टि.)** दादप्रामाण्यज्ञप्तिरूपविपरीतकार्यानुत्पादे सति साक्षी स्वमहिम्नैव प्रामाण्यं गृह्णातीत्याशयः । **अन्य-थेति** ।। विसंवादाभावस्यापि प्रामाण्यज्ञप्तिकारणत्व इत्यर्थः ।। **उत्सर्गापवादाविति** ।। वेत्राङ्कुरं वेत्रबीजं जनयतीतिवत् 'न हिंस्यात् सर्वा भूतानि' इति भूतहिंसात्वावच्छेदेनाकर्तव्यत्वमुत्सर्गः । तत्र दाहः प्रतिबन्धकः। अत्र तु 'अग्नीषोमीयं पशुमालभेत' इति विहितहिंसारूपोऽपवादो दाहस्थानीयः । तत्र दाहाभावरूपप्रतिबन्धका-भावस्यापि कारणत्वमङ्गीकृत्य दाहाभावविशिष्टवेत्रबीजस्य कारणत्वाङ्गीकारे, अत्राप्यविहितहिंसात्वावच्छेदेना-कर्तव्यत्वनियम एव स्यात्, नोत्सर्गः । सव्यभिचारनियमस्यैवोत्सर्गत्वात् । न ह्यस्य नियमस्य

व्यभिचारोऽ-स्ति । एतादृशोत्सर्गाभावे च तन्नियमे व्यभिचारप्रदर्शनार्थं प्रवृत्तस्यापवादस्याप्यसम्भव एव । उक्तरीत्याऽव्यभि-चारस्यैव सम्भवादिति भावः । **कारणाभावस्य** विसंवादाभावस्य **॥ न प्रकृते काचिदस्माकं हानिरिति ॥** प्रामाण्यस्य विसंवादाभावसहकृतसाक्षिवेद्यत्वाङ्गीकारेऽपि न प्रकृतस्य वेदापौरुषेयत्वस्य हानिः । विसंवादा-भावस्यैव सहकारित्वप्राप्त्या आप्तोक्तत्वस्य कुत्राप्युपयोगाभावात् । तदैव हानिः स्यात् यद्याप्तोक्तत्वेनैव तत्प्रामाण्यमनुमातव्यमिति त्वदुक्तरीत्या आप्तोक्तत्वस्य सहकारित्वं स्यात्, न चैवम् । अतः सकर्तृकत्वाभावे प्रामाण्यासिद्धिलक्षणबाधकाभावादप्रयोजकं वाक्यत्वानुमानमिति न प्रकृतस्य वेदापौरुषेयत्वस्य हानिरित्यर्थः। अङ्गीकृत्येदमुक्तम् । वस्तुतस्तु कारणीभूताभावप्रतियोगित्वं हि प्रतिबन्धकत्वम् । तथा च प्रतिबन्धकज्ञाने तदभावज्ञानम् । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्, प्रतिबन्धकाभावज्ञाने च प्रतिबन्धकत्वज्ञानम् । तस्य तद्घटितशरीरत्वादित्यन्योन्याश्रयान्न प्रतिबन्धकाभावस्य कारणत्वमिति हृदयम् ।

**(पां.टि.) ॥ तथा चेति ॥** ननु प्रामाण्यग्रहणस्य साक्षिणः स्वभावत्वमेवास्तु । न चैवं बौद्धवाक्यजनितज्ञान-स्यापि साक्षी प्रामाण्यं गृह्णीयादित्युक्तातिप्रसङ्ग इति वाच्यम् । साक्षिणो याथार्थ्यनियमेन यत्र प्रामाण्यमस्ति तत्रैव तद् गृह्णातीत्यङ्गीकारात् । तथा च वेदान्तजनितविज्ञानस्य प्रामाण्यात् तत्र प्रामाण्यग्रहणेऽपि बौद्धादि-वाक्यजनितविज्ञाने प्रामाण्याभावेनैव तद्ग्रहणोपपत्तेः । तदभावेऽपि तद्ग्रहणेऽयाथार्थ्यापातात् । तत् कथमेतदा-पादनमिति चेत् । उच्यते । वेदस्यापौरुषेयत्वे आप्तोक्तत्वाभावेन प्रामाण्याभावात् तज्जनितविज्ञानस्यापि न प्रामाण्यमिति प्रत्यवतिष्ठमानं प्रति प्रामाण्यस्य स्वतस्त्वादाप्तोक्तत्वाभावेऽपि प्रामाण्यं सम्भवतीत्यभिहि-तम् । तत्र च प्रामाण्यस्य स्वतस्त्वेऽयमतिप्रसङ्गः परेणाभिहितः । न चास्यां दशायां वेदप्रामाण्यं तिष्ठतीति शक्यते वक्तुम् । येन यत्र यदस्ति तत्र तद् गृह्यत इति नियमाद् वेदप्रामाण्यग्रहणेऽपि बौद्धादिवाक्यजनितविज्ञाने प्रामाण्यं न गृह्यत इति परिहारः स्यादित्यत्र तात्पर्यमिति ।

**॥ तदपि प्रमाणमापद्येतेतीति ॥** न चेष्टापत्तिरिति वाच्यम् । विरुद्धयोर्द्वयोः प्रामाण्यानुपपत्त्या वेदविरुद्धस्य बौद्धागमस्य तदयोगात् । वेदविरोधिनोऽपि तस्य प्रामाण्ये पुनर्वेदप्रामाण्यं न स्यात् । विरुद्धयोर्द्वयोरपि प्रामाण्ये वस्तुनो द्वैरूप्यं वा आपद्येतेति भावः **॥ उत्सर्ग एवेति ॥** न तु ज्ञानग्राहकः साक्षी प्रमाणतयैव तद् गृह्णातीति नियम इत्यर्थः । किं तदित्यत आह-**विसंवादलक्षणादिति ॥** प्रवृत्त्यसामर्थ्यादिरूपादित्यर्थः । कथं **(पां.टि.)** प्रामाण्यग्रहणे सहजशक्तिमतस्तदग्राहकत्वं सहकारिमात्रेण चाप्रामाण्यग्राहकत्वमित्यत आह- **सहकारिण इति ॥** नन्वेवं परतोऽप्रामाण्यमित्येतावतैवोक्तरीत्योक्तशङ्कापरिहारसिद्धेः 'दुष्टबुद्धीनामेव' इत्यादिपूर्वभागवैयर्थ्य-मित्यत्राऽह-**विसंवाददर्शनमिति ॥** तथा च दृष्टान्तोपदर्शकत्वान्न वैयर्थ्यमिति भावः। ननु नेदं दृष्टान्तप्रतिपादकम् । अत्र तज्ज्ञापकाभावादित्यत इतिशब्द एव तज्ज्ञापक इति भावेन योजयति-**विसंवा-देति ॥** तथा च वह्निमत एव महानसादेर्धूमवत्त्वं दृष्टमिति हेतोर्धूमवत एव पर्वतस्य वह्निमत्त्वमित्यर्थसिद्धिवद्, दोषकलुषितमनसां वेदजनितज्ञानेऽप्रामाण्यशङ्का दृष्टैवेति हेतोर्विसंवाददर्शनसहकृतः साक्षी अप्रामाण्यं गृह्णातीति लभ्यत इति भावः । अप्रामाण्यशङ्केति भ्रमस्याप्युपलक्षणं बोध्यम् । ननु साक्षिणो यथार्थनिश्चयमात्रहेतुत्वाद् विसंवाददर्शनादप्यप्रामाण्यशङ्काहेतुत्वं कथं स्यादित्यत आह- **नात्रेति ॥** तथा च न यथार्थनिश्चयमात्रहेतुत्वाविरोध इति भावः । तर्हि कस्य तद्धेतुत्वमिति पृच्छति- **किन्त्विति ॥ समाधत्ते- मनस एवेति ॥** तत्रोपष्टम्भकमाह- **यत् क्वचिदिति ॥** नन्वेवं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । साक्षिणो विसंवादसहकारेणाप्रामाण्यविषयक-यथार्थनिश्चयहेतुत्वान्मनसश्च तत्सहकारेण तद्विषयकसंशयादिहेतुत्वादित्यतः साक्षिनिष्ठस्याप्रामाण्यविषयक-यथार्थनिश्चयहेतुत्वस्य, मनोनिष्ठस्य तद्विषयकसंशयादिहेतुत्वस्य अविवक्षयोभयानुगतस्य दोषसहकारेणा-प्रामाण्यविषयकज्ञानहेतुत्वस्य विवक्षया दृष्टान्तदार्ष्टान्तिकभावस्य विवक्षितत्वान्न वैषम्यमित्याशयेनाऽह- **अतः सामान्यमात्र इति ॥**

ननु 'दुष्टबुद्धीनामेवाप्रामाण्यशङ्का' इत्यनेनाप्रामाण्यग्रहणस्य युक्त्यनुसन्धानान्वयव्यतिरेकावुच्येते इत्युक्त-मयुक्तम् । अत्राप्रामाण्यशङ्काया विसंवादादिदोषकलुषित-मनोऽन्वयव्यतिरेकयोरेव कथनादित्यत आह- **दुष्ट-बुद्धीनामिति अप्रामाण्यशङ्केति चेति ॥ प्रकृतेति ॥** वेदजन्यज्ञाने संशयविपर्ययलक्षणाप्रामाण्यभ्रम एव । न त्वत्राप्रामाण्यप्रमा । भ्रमोऽपि मनःकरणक एवेति भावः **॥ अन्यथेति ॥** प्रतिबन्धकाभावे कारणत्वेन, कारणीभूतदण्डाभावादौ च प्रतिबन्धकत्वेनाव्यवहारात्, स्वसामग्रीवशेन प्रसक्ते औत्सर्गिकत्वस्य, सत्यपि पुष्कलकारणे यद्वशात् कार्याभावो विपरीतकार्यं वा तस्यापवादकत्वस्य च सर्वसिद्धत्वात् । प्रतिबन्धकाभावस्यापि कारणत्वे तस्यापि सामग्रीकोटिप्रवेशापत्त्या सर्वसिद्धोत्सर्गापवादापलापः स्यादित्यर्थः **॥ न प्रकृते काचिदस्माकं हानिरिति ॥** ज्ञानप्रामाण्यस्य विसंवादाभावसहकृतसाक्षिवेद्यत्वेऽपि(न)प्रमाणजन्यत्वेन वेदजन्यज्ञान-

प्रामाण्यनिश्चयः। तथा वेदस्यापि यथार्थज्ञानान्वयव्यतिरेकाभ्यामेव प्रामाण्यनिश्चयः। तथा चाऽऽप्तोक्तत्वस्य कुत्राप्युपयोगो नास्तीति सकर्तृकत्वाभावे प्रामाण्यासिद्धिलक्षणबाधकाभावादप्रयोजकं वाक्यत्वानुमानमिति न प्रकृतस्य वेदापौरुषेयत्वस्य हानिरित्यर्थः।

**(व्या.टि.)** प्रामाण्यस्य ज्ञप्तिस्वतस्त्वे बाधकं शङ्कितुमनुवदति- **यद्येवमिति ॥ प्रामाण्येति ॥** ज्ञानग्रहणवदिति भावः। **स च साक्षी ॥ अन्यथेति ॥** साक्षिणोऽप्यर्थव्यभिचारशङ्कायामित्यर्थः। साक्षिणः प्रामाण्यग्रहण-मौत्सर्गिकस्वभाव इति परिहरति- **ज्ञानग्राहक इति ॥** सहजशक्तिप्रतिबन्धेन विपरीतशक्त्याधानं सहकारि-**(व्या.टि.)** व्यक्तिविशेषे निदर्शयति- **दावेति ॥** दुष्टबुद्धीनामित्येतद् वैयर्थ्यपरिहाराय व्याचष्टे- **विसंवा-देति ॥** सामान्यकार्यकारणभावे विशेषकार्यकारणभावो दृष्टान्त इत्यर्थः। तत् स्पष्टं व्याचष्टे- **विसंवाद-दोषेति ॥ इति हेतोरिति ॥** 'यावद्विशेषयोः' इति न्यायादिति भावः। ननु साक्षिणो निर्णयरूपत्वात् कथं तच्छङ्का साक्षिण इत्यत आह- **नात्रेति ॥** ननु तर्हि विषमोऽयं दृष्टान्तः। वेदजन्यज्ञानेऽप्रामाण्यबुद्धिर्मानसी शङ्कारूपा च। बौद्धवाक्यजज्ञानेऽप्रामाण्यबुद्धिः साक्षिरूपा निर्णयरूपा च। अतः कथं तद्दृष्टान्तेनैतत्साधनमित्यत आह- **सामान्यमात्र इति ॥** अप्रामाण्यग्रहणमात्र इत्यर्थः। मूले शेषं मत्वाऽऽह- **अनुमीयत इति ॥** न च वेदजन्यज्ञान एव विसंवादेनाप्रामाण्यमनुमीयतामित्यतो हेत्वसिद्ध्या परिहरति- **न चेति ॥** अप्रामाण्यग्रहणस्य युक्त्यनुसन्धानजन्यत्वप्रतिज्ञायां यथाश्रुतमूल-मसङ्गतमिति भावेन मूलाभिसन्धिमाह- **अनेनेति ॥** विशेषग्रहणप्रयोजनमाह- **दुष्टबुद्धीनामिति ॥** अत्र बुद्धिशब्दो मनोवाची शङ्कापदसाहचर्यात्। सामान्यान्वय-व्यतिरेकोक्तिलब्धमर्थमाह- **वस्तुतस्त्विति ॥ अनुमेयमेवेति ॥** विसंवादसापेक्षसाक्षिवेद्यमित्यर्थः। यथाश्रुत-परत्वे 'साक्षी अपवादकसद्भावेऽ-प्रामाण्यमपि गृह्णाति' इति सुधया 'न चाप्रामाण्यं क्वचिदपि निरपेक्षेण साक्षिणा निश्चितचरम्' इति वादावल्या च विरोधादित्यवधेयम्। अप्रामाण्यग्रहणवत् प्रामाण्यग्रहेऽपि अपौरुषेयत्वादि-युक्त्यपेक्षासाम्येन विनिगमनाविरहः इत्यत आह- **प्रामाण्यग्रहणस्य त्विति ॥**

युक्त्यपेक्षाभावेऽपि विसंवादाभावापेक्षाऽस्तीति परत एव प्रामाण्यमिति शङ्कते- **नन्विति ॥** यस्मिन् सत्येव यद्भवति नान्यथेत्यन्वयव्यतिरेकयोरन्यथासिद्धिं दर्शयति- **ततो विपरीतकार्यानुत्पादे सतीति ॥** अङ्कुरं करोतीत्यतः परं एवं ज्ञानेऽपि विसंवादाभावेनाप्रामाण्यग्रहणानुत्पादे सति साक्षी स्वमहिम्नैव प्रामाण्यग्रहणं करोतीति दार्ष्टान्तिकवचनमुपस्कर्तव्यम्। उभयत्रापि विपक्षे बाधकमाह- **अन्यथेति ॥** प्रतिबन्धकाभावस्यापि कारणत्व इत्यर्थः ॥ **उत्सर्गापवादाविति ॥** सामग्र्याः फलावश्यम्भाव उत्सर्गः। सत्यां सामग्र्यां यस्मात् कार्यानुत्पादो विपरीतकार्योत्पादो वा सोऽपवादः। प्रतिबन्धकाभावस्यापि कारणत्वे समाग्र्यभावादेव कार्यानु-त्पादसम्भवेनापवादात् कार्यानुत्पाद इति वाचोयुक्ती रिक्ता स्यादित्यर्थः। नन्वेवं भाष्यटीकाविरोधः। तत्र 'शब्द इति चेन्न' इति सूत्रभाष्यव्याख्यानावसरे प्रतिबन्धकाभावस्य कारणत्वोक्तेरिति चेन्न। तस्याः कारणतावच्छेदकसाधारणप्रयोजकत्वाभिप्रायत्वात्। तथैवोक्तं तर्कताण्डवे। तदभिप्रायेणात्रापि (कृत्वा) चिन्तयोत्तरयति- **किञ्चेति ॥ प्रामाण्यग्रहणोपयोगेति ॥** प्रामाण्यग्रहणकारणस्याप्रतिबद्धस्यैवादग्ध-बीजवत्कारणत्वात्। कारणत्वोपयोगद्वारा कार्योपयोगेऽपि न साक्षात्कारणत्वमित्यर्थः। दण्डदार्ढ्यादिवत् कारणतावच्छेदकतयेति शेषः **॥ न हानिरिति ॥** ज्ञानग्रहणकारणातिरिक्तकारणानपेक्षत्वरूपस्वतस्त्व-हानिर्नेत्यर्थः।

**॥ इति प्रामाण्यस्वतस्त्ववादः ॥**

## मूलम् - नचोच्चारणकाल एव वर्णानामुत्पत्तिरिति वाच्यम्; तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात् ।

**(त.मं.)** ननु प्रत्युच्चारणं वर्णानामुत्पत्तिदर्शनात् तत्क्रमात्मकस्य वेदस्य कथमनुत्पत्तिरित्यत आह - **न चोच्चारणेति ॥** यन्मया पुराऽधीतं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात्।

**टीका -** ननु तथाऽपि नापौरुषेयत्वं वेदस्योपपद्यते, तस्य वर्णसमुदायरूपत्वात्, वर्णानां चोच्चा-रणेनोत्पद्यमानत्वात्। न चोत्पत्तिमतां समुदायिनां समुदायो नोत्पत्तिमानिति युज्यते। नच वाच्यं प्रागुच्चारणादनुपलब्धा वर्णा उच्चारणे सत्युपलब्धाः पुनर्नोपलभ्यन्त इत्येवानुभवसिद्धम्, नतु तेषामुत्पत्तिर्विनाशो वा। नचोपलब्ध्यनुपलब्धिमात्रेणोत्पत्त्याद्यध्यवसायो युक्तः। तथा सत्युपलभ्याऽनुपलब्धानां घटादीनां

तदैवोत्पत्त्यादिप्रसङ्गादिति। वर्णास्तावन्न घटादिवदन्यत आगत्यान्यत्र गता अमूर्तत्वात्। तदपि गुणत्वात्। द्रव्यत्वेऽपि सर्वगतत्वात्। अणुत्वेऽ-तीन्द्रियत्वापत्तेः। मध्यमपरिमाणत्वे नित्यत्वविरोधात्। नापि केनचित् प्रागावृतत्वादनुपलब्धा आवरणापगतावुपलभ्य पुनस्तदुपनिपातान्नोपलभ्यन्ते । आवरकानुपलम्भाद्, अमूर्तत्वेनाऽ-वरणानुपपत्तेश्च । नचेन्द्रियदोषादनुपलब्धिः । वर्णान्तरोपलब्धेः । नच श्रोतुरनवधानम् । अवधानेऽप्यनुपलम्भात् । नचातीन्द्रियाः । उच्चारणेऽप्यनुपलब्धिप्रसङ्गात् । नच सहकार्यभावः । अन्वयव्यतिरेकवतस्तस्यानुपलम्भात् । उच्चारणं सहकारीति चेन्न। नकिञ्चित् (अकिञ्चित्) कुर्वतः सहकारित्वानुपपत्तेः। नच व्यञ्जकम्। भिन्नदेशत्वात्। उच्चारणं हि वक्तृवक्त्रे वर्तते वर्णास्तु श्रोतृश्रोत्रदेशे प्रतीयन्ते । नहि विभिन्नदेशयोर्घटालोकयोर्व्यङ्ग्यव्यञ्जकभावोऽस्ति । तस्मादा-गमनाद्यनुपपत्तौ उच्चारणानन्तरोपलब्धिर्वर्णानां तदुत्पाद्यत्वेनैवोपपद्यते। अन्यथा कुलाल-व्यापारानन्तरमुपलभ्यमानो घटोऽपि तदनुत्पाद्य आपद्येत । तदेवं समुदायिनां वर्णानां पुरुषव्यापारोत्पाद्यानां वीचीतरङ्गन्यायेन श्रोत्रदेशे वर्णान्तरजनकत्वं, तेषां चोपलब्धिरित्येवं तत्समुदायरूपस्य वेदस्यापि पौरुषेयत्वमेव युक्तमित्यत आह- **नचोच्चारणेति** ।। सामीपिकाधिकरणे सप्तमी। उच्चारणकालानन्तरमेवेत्यर्थः । उच्चारणस्य काल उच्चारणकालः, आनन्तर्यलक्षणः सम्बन्धः षष्ठ्यर्थ इति वा । तदनन्तरमेव विनाशश्चेत्यपि द्रष्टव्यम् । कुतो न वाच्यमित्यतो व्यञ्जकभावाभावाभ्यामेवोपलम्भानुपलम्भौ, उच्चारणन्तु व्यञ्जकजनकत्वेनोपयुज्यते, व्यञ्जकाश्च ध्वनयः, ते च नाभसा इत्यादिकं वक्तुम्, अस्याश्च कल्पनाया वर्णानामनादिनित्यत्वव्यवस्थितावेव सम्भवात् तत्साधकमुत्पत्त्याद्यङ्गीकारे च बाधकं प्रमाणं हेतुत्वेनाऽह- **तदेवेदमिति** ।। उच्यतेऽभि-धीयते अर्थोऽनेनेति वर्णोऽत्र वचनशब्देन गृह्यते। पूर्वं गकारं श्रुतवतः पुनस्तच्छब्दश्रवणे स एवायं गकार इति तावत् प्रत्यभिज्ञा जायते। सा च श्रुतश्रूयमाणगकाराभेदं गोचरयन्त्युच्चारणजन्यत्वं विरुणद्धि। नहि प्राक्तनस्येदानीन्तनेनोत्पत्तिर्युज्यते। एवं पूर्वं पूर्वतरमित्यनादिनित्यतैव वर्णानां प्रत्यभिज्ञया सिद्ध्यति।

**(र.टि.) तदैवोत्पत्त्यादिप्रसङ्गादिति** ।। न च वाच्यमिति पूर्वेणान्वयः । ननु परेणोच्चारणस्य वर्णकारण-त्वाङ्गीकारात् कथमुच्चारणकाले वर्णानामुत्पत्तिरित्युक्तमित्यतो व्याचष्टे- **सामीपिकाधिकरण इति** ।।

**(रा.टि.) तथाऽपीति** ।। वेदस्यापौरुषेयत्वे प्रामाण्यहानेरभावेऽपीत्यर्थः ।। **उत्पद्यमानत्वादिति** ।। वर्णाना-मुत्पद्यमानत्वात् तत्समुदायरूपस्य वेदस्यापौरुषेयत्वं न सम्भवतीत्यभ्युपेत्योक्तम् । वस्तुतस्तु वर्णानामुत्पत्ति-विनाशवत्त्वेऽपि नियतानुपूर्वीकत्वरूपानादिनित्यत्वलक्षणापौरुषेयत्वस्य सम्भवात्। 'वस्तुतत्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्वमुपपादितम्' इति सुधोक्तेः, 'अभ्युपगम्य वा इदमुक्तम्' इति तर्कताण्डवे चोक्तेः । नच वाच्यमित्यस्योत्पत्त्यादिप्रसङ्गादितीतिपदेनान्वयः ।। **विनाशो वेति** ।। अनुभवसिद्ध इत्यनुवर्त्यम्। कुतो न वाच्यमित्यत आह पूर्ववादी- **वर्णास्तावदित्यादिना** ।। असिद्धो हेतुरित्यत आह- **तदपि गुणत्वादिति** ।। ज्ञेयमिति योज्यम् । रूपादिवदिति भावः ।। **अतीन्द्रियत्वेति** ।। अणुद्रव्यस्य परमाण्वादेस्तथात्वदर्शनादिति भावः ।। **नित्यत्वविरोधादिति** ।। घटादेरिवेति भावः। कुतो नापीत्यतो हेतुमाह- **आवरकेति** ।। **अमूर्तत्वे-नेति** ।। द्रव्यस्यामूर्तस्य परिमितपरिमाणाभावात् तादृशस्यैव घटादेरावरणदर्शनादिति भावः ।। **अतीन्द्रिया इति** ।। वर्णा इत्यनुषङ्गः । नकिञ्चिदिति नसमासः । किमप्यकुर्वत इत्यर्थः ।। **व्यञ्जकमिति** ।। उच्चारणमित्यनुषङ्गः ।। **तस्मादिति** ।। उच्चारणस्य व्यञ्जकत्वायोगादित्यर्थः ।। **तदेवमिति** ।। **तत्** तस्मात् नित्यत्वायोगाद् **एवम्** उक्तदिशा । पुरुषव्यापारोत्पाद्यानामित्यन्वयः । ननूत्पत्तिपक्षेऽपि भिन्नदेशत्वापरिहाराच्छ्रोतृश्रोत्रेणोपलब्धिः कथमित्यत आह- **वीचीतरङ्गेति** ।। तटाकमध्ये पाषाणादिप्रक्षेपे सति चक्राकारतयाऽष्टदिक्सम्बन्धित्वेनोत्पन्न-तरङ्गपरम्परा तीरदेशं यथा प्राप्नोति तथैव वक्तुर्वक्त्रदेशोत्पन्नशब्दाच्छब्दान्तरं, तस्मादप्यन्यः शब्द इत्येवं श्रोत्रदेशे वर्णान्तरजनकत्वमित्यर्थः। स्त्रीरूपोऽणुतरङ्गो वीचीत्युच्यते । स्थूलः पुंतरङ्गस्तरङ्ग उच्यत इति ध्येयम् ।। **सामी-पिकाधिकरण इति** ।। द्वितीयाध्यायतृतीयपादे 'सप्तम्यधिकरणे च' इति सूत्रेणाधिकरणे सप्तमी भवति। चकाराद्दूरान्तिकार्थेभ्यश्च भवतीत्यधिकरणे सप्तमी विहिता। अधिकरणं च 'आधारोऽधिकरणम्' इति सूत्रेणोक्ताऽधारः । स चाऽधारश्चतुर्धा । औपश्लेषिकः सामीपिको विषयो व्याप्तिश्चेति । स्थाल्यां पचति, नद्यामास्ते, तर्के कुशलः, सर्वस्मिन् स्थितः, इत्युक्तत्वादिह नद्यामास्त इत्यत्रेव सामिपिकाधिकरणे सप्तमीत्युक्तम् ।। **आनन्तर्यलक्षणस्सम्बन्ध**

**इति ॥** 'षष्ठी स्थाने योगा' इति सूत्रभाष्ये 'एकशतं षष्ठ्यर्थाः' इत्युक्तेरयमपि तन्मध्ये कश्चिदर्थ इति भावः ॥ **नाभसा इति ॥** नभस्सम्बन्धिनः ॥ **इत्यादिकं वक्तुमिति ॥** 'अत आकाशगुणे शब्दे व्यज्यमाना वर्णाः' इत्यादिना वक्तुमित्यर्थः ॥ **पूर्वं पूर्वतरमिति ॥** गकारं स एवायमिति गोचरयन्ती प्रत्यभिज्ञा श्रुतश्रूयमाणगकाराभेदं गमयतीत्येवमनादिनित्यतैवेत्यर्थः।

**(श्री.टि.)** वर्णानित्यत्ववादी वैशेषिकादिः शङ्कते- **नन्विति ॥** ननु समुदायिनां वर्णानामुत्पद्यमानत्वेऽपि तत्समुदायरूपस्य वेदस्य नोत्पत्तिरिति चेत्तत्राऽह- **नचेति ॥** न हीत्यर्थः । उच्चारणेनोत्पत्तिर्नास्तीति सिद्धान्ती शङ्कते- **नच वाच्यमिति ॥** ननूपलब्ध्यनुपलब्धिभ्यामेवोत्पत्तिविनाशौ साध्याविन्याशङ्क्य निषेधति- **नचेति ॥ उपलभ्येति ॥** आदावुपलब्धिविषयो भूत्वेत्यर्थः ॥ **तदैवेति ॥** उपलब्ध्यादिसमय एवेत्यर्थः ॥ **प्रसङ्गा-दिति ॥** न च वाच्यमित्यन्वयः । कुतो न वाच्यमिति चेदुच्यते । प्रागुच्चारणादनुपलब्धा वर्णा उच्चारणे सत्युपलब्धाः पुनर्नोपलभ्यन्त इत्येतावदेवानुभवसिद्धमित्युक्तं यत्तत्सत्यमेव । तथाऽप्युच्चारणानन्तरोपलब्धिर्वर्णानां तदुत्पाद्यत्वेनैवोपपद्यते नान्यथेति वक्तुं प्रसक्तप्रतिषेधं तावत्करोति- **वर्णास्तावदित्यादिना ॥** उच्चारणानन्तरम् **अन्यतो** देशान्तरादागत्योच्चारणोपरमे सति **अन्यत्र** देशान्तरं प्रति गता इत्यर्थः ॥ **अमूर्तत्वादिति ॥** अमूर्तानां गमनाऽगमनादिक्रियाया अयोगादित्यर्थः । स्वरूपासिद्धिपरिहारायाऽह- **तदपीति ॥** अमूर्तत्वमपीत्यर्थः । वर्णा अमूर्ता गुणत्वात् । मूर्तत्वं हि इयत्ताऽवच्छिन्नपरिमाणयोगित्वं वक्तव्यम् । तच्च न सम्भवति, गुणे गुणानङ्गीकारादिति भावः । ननु वर्णानां द्रव्यत्वाङ्गीकाराद्गुणत्वं स्वरूपासिद्धमिति चेत्तत्र पृच्छामः । द्रव्यत्वे किं गगनादिवत्सर्वगतत्वमङ्गीक्रियते परमाणुवदणुपरिमाणवत्त्वं वा घटादिवन्मध्यमपरिमाणवत्त्वं वा । आद्ये सर्वगतत्वाद्गमनागमनादिक्रियाऽनुपपत्तिस्तदवस्थेत्याशयेनाऽह- **द्रव्यत्वेऽपीति ॥** सर्वगतत्वान्नान्यत आगत्या-न्यत्र गता इति सम्बन्धः । न द्वितीय इत्याह- **अणुत्व इति ॥** वर्णानां श्रोत्रेन्द्रियग्राह्यत्वस्यानुभवसिद्धत्वेन तद्विरोध इति भावः । नापि तृतीय इत्याह- **मध्यमपरिमाणत्व इति ॥** भवदङ्गीकृतं नित्यत्वं विरुध्येतेत्यर्थः । अन्यथा घटादेरपि नित्यत्वं स्यादिति भावः ॥ **प्रागिति ॥** उच्चारणात् प्रागित्यर्थः ॥ **अमूर्तत्वेनेति ॥** भवन्मते वर्णानां व्याप्तद्रव्यत्वाद्गगनादिवदावरणानुपपत्तिरित्यर्थः ॥ **इन्द्रियदोषादिति ॥** श्रोत्रेन्द्रियदोषादित्यर्थः । तथा चेन्द्रियदोषस्यैवाऽवरकत्वमिति भावः । **वर्णान्तरेति ॥** श्रोत्रेन्द्रियस्यैव दुष्टत्वे वर्णमात्रं नोपलभ्येत । न हीदमनुभूयते । (ककारानुपलम्भेऽपि गकारोपलब्धेरनुभूयमानत्वात् ।) एकवर्णानुपलम्भेऽपि वर्णान्तरानुभवस्य सर्वजनसिद्धत्वात् । तथा च य एको वर्णो नोपलभ्यते तत्राऽवरकमिन्द्रियदोषातिरिक्तं नास्तीत्यर्थः ।

नन्विन्द्रियदोषातिरिक्तं वर्णान्तरानुपलम्भे श्रोतुरनवधानं विषयान्तरमनःसञ्चाररूपो मनोव्यासङ्ग एव निमित्तमित्याशङ्क्य निषेधति- **नचेति ॥ अवधानेऽपि** मनोव्यासङ्गाभावेऽपि ॥ **अनुपलम्भादिति ॥** एक-वर्णोपलब्धिकाले वर्णान्तरस्येत्यर्थः ॥ **अतीन्द्रिया इति ॥** उच्चारणात् प्रागतीन्द्रियत्वान्नोपलभ्यन्त इत्यर्थः । **(श्री.टि.) उच्चारणेऽपीति ॥** न ह्यतीन्द्रियं कदाऽप्यैन्द्रियकं भवितुं युक्तमिति भावः ॥ **सहकार्यभाव इति ॥** कारणमिति शेषः । उच्चारणात्प्राक् सहकार्यभावान्नोपलभ्यन्त इति भावः । **तस्य** सहकारिणः । **अकिञ्चित्कुर्वत इति ॥** यद्धि कार्योत्पत्तौ किञ्चिदुपकारि तदेव हि सहकारीत्युच्यत इति भावः । नन्वकिञ्चित्कुर्वत उच्चारणस्य सहकारित्वानुपपत्तेरिति यदुक्तं तन्न । उच्चारणस्य वर्णव्यञ्जकतया उपकारित्वादकिञ्चित्करत्वाभावात् सहकारित्वोपपत्तिरित्याशङ्क्य निषेधति- **न च व्यञ्जकमिति ॥ भिन्नदेशत्वादिति ॥** समानदेशयोरेव हि व्यङ्ग्यव्यञ्जकभावो दृष्ट इति भावः । भिन्नदेशत्वमेवोपपादयति- **उच्चारणं हीति ॥ अन्यथेति ॥** प्रकारान्त-रानुपपत्तावुपलब्धिस्तदुत्पाद्यत्वेनैवोपपद्यत इत्यनङ्गीकार इत्यर्थः ॥ **पुरुषव्यापारेति ॥** ताल्वोष्ठपुटव्यापार-जन्योच्चारणेत्यर्थः ॥ **वीचीतरङ्गन्यायेनेति ॥** तरङ्गन्यायेनेत्यर्थः । यथा हि स्तिमितजलोपेतवाप्यां मध्ये पाषाणप्रक्षेपे कृते सति मण्डलाकार एकस्तरङ्गो जायते, तस्माच्च तरङ्गात्पुनस्तरङ्गान्तरं जायते , एवं क्रमेणान्तिमो मण्डलाकारस्तरङ्गस्तीरसम्बद्धो भवति । एतन्न्यायेन शब्दाच्छब्दान्तरोत्पत्तिक्रमेणोत्पन्नोऽन्तिमो वर्णात्मकः शब्द एक एव सर्वपुरुषश्रोत्रसम्बद्धो भवति । अस्मिन्पक्षे य एव शब्दस्त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञा प्रमैव । कदम्बमुकुलन्यायपक्षे तु दशदिक्षु दशमुकुलवद्दशदिक्षु दशशब्दसन्तानानि प्रत्येकं जायन्ते । तत्र दशदिक्षु जातेषु शब्दसन्तानेषु जातोऽन्तिमः शब्दस्तत्तद्दिगवस्थितैः पुरुषैः श्रूयते । अस्मिंश्च पक्षे य एव शब्दस्त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञा भ्रमरूपा इति वीचीतरङ्गन्यायकदम्बमुकुलन्याययोर्विशेषो द्रष्टव्यः । **तेषां** श्रोत्रदेशोत्पन्नानां वर्णान्तराणाम् ।

ननु परेणोच्चारणस्य वर्णकारणत्वाङ्गीकारात्कथमुच्चारणकाले वर्णानामुत्पत्तिरिति समानकालत्वमुच्यत इत्यत आह- **सामीपिकाधिकरण इति ॥** सामीप्यमेव सामीपिकं तद्रूपेऽधिकरण इत्यर्थः । वैयाकरणानां मते लक्षणावृत्त्यभावेन गङ्गायां घोषो, वटे गाव इत्यादौ सामीप्यरूपाधिरणे सप्तमीत्युक्त्वा गङ्गासमीपे घोषो, वट-समीपे गाव इति 'आधारोऽधिकरणम्' इति

सूत्रव्याख्यानसमये सामीप्यादिरूपेणाऽधारश्चतुर्धेत्युक्तत्वात् । एवं च प्रकृते उच्चारणकाल इत्यस्य उच्चारणकालसमीप इत्यर्थः । उच्चारणकालसामीप्यं च अनन्तरकालस्यास्तीति भावेनाऽह- **उच्चारणकालानन्तरमेवेत्यर्थ इति** ॥ उच्चारणकाल इति सप्तम्या आनन्तर्यं लभ्यत इति व्याख्या-येदानीमुच्चारणकाल इत्यत्र षष्ठीविग्रहबलादेवानन्तर्यं लभ्यत इति भावेन व्याचष्टे- **उच्चारणस्य काल इति** ॥ **द्रष्टव्यमिति** ॥ उच्चारणोपरमानन्तरमित्यर्थः ॥ **नाभसा इति** ॥ ते च ध्वनयो भूताकाशगुणा इत्यर्थः । तथा च भूताकाशमेव श्रोत्रं तद्गुण एव ध्वनिः, अतस्तत्प्रदेशवर्ती ध्वनिस्तदवच्छिन्नमेव वर्णं व्यञ्जयतीति न व्यङ्ग्य-व्यञ्जकयोर्भिन्नदेशत्वमिति भावः । **इत्यादि** इत्यादिपदेन वर्णानां कदाचिदेवोपलब्धिर्न सर्वेषां सर्ववर्णोपलब्धि-रित्यादिकं ग्राह्यम् ॥ **वक्तुमिति** ॥ 'अत आकाशगुणे शब्दे' इत्यादिनेति शेषः ॥ **हेतुत्वेनेति** ॥ उच्चारणकाले वर्णानामुत्पत्तिरिति न च वाच्यमित्यत्र हेतुत्वेनेत्यर्थः ॥ **तच्छब्देति** ॥ स चासौ शब्दश्चेति तच्छब्दो गकार-रूपशब्देत्यर्थः । कथं विरुणद्धीत्यत आह- **न हीति** ॥ प्राक्तनस्य गकारस्य । इदानीन्तनेनोच्चारणेन ॥ **एवं (श्री.टि.) पूर्वं पूर्वतरमिति** ॥ पूर्वकाले तत्पूर्वकाले चेत्यर्थः । स एवायं गकार इति प्रत्यभिज्ञा सर्वेषां जायत इति शेषः ।

**(पां.टि.)** ॥ **न चोत्पत्तिमतामिति** ॥ न चोत्पत्तिमतामपि समुदायिनां समुदायस्यानुत्पत्तिमत्त्वं भवि-ष्यति । अन्यथा उत्पत्तिमतां प्रवाहिणां प्रवाहस्याप्युत्पत्तिमत्त्वप्रसङ्गेन तद् अनादित्वभङ्गापातादिति वाच्यम् । तत्र प्रवाहमध्यपतितैकप्रवाहव्यक्तिसद्भावदशायामपि प्रवाहसत्त्वव्यवहारवत् प्रकृते समुदायमध्यपतितैकसमुदायि-व्यक्तिसद्भावदशायां समुदायस्यासत्त्वेन तत्रेवात्र वैवक्षिकस्यानादित्वस्यासम्भवेन वैषम्यादित्याशयात् । ननु शब्दो द्रव्यं साक्षात्सम्बद्धेन्द्रियग्राह्यत्वात् सङ्ख्यावत्त्वाच्च घटवत् । श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनो-वदित्याद्यनुमानैर्वर्णानां द्रव्यत्वस्थितेर्गुणत्वमसिद्धमित्यत आह- **द्रव्यत्वेऽपीति** ॥ अमूर्तत्वमिति सम्बन्धः ॥ **अमूर्तत्वेनेति** ॥ अङ्गुल्यादेः करणसम्बन्धितयाऽऽवरणत्वेन, आव्रियमाणसूर्याद्यपेक्षयानधिकपरिमाणस्य तदावरणत्वसम्भवेऽपि विषयसम्बन्ध्यावरणस्याऽव्रियमाणापेक्षयाऽधिकपरिमाणस्यैव तदावरणातायाः सर्वत्र दृष्टत्वेन, प्रकृते चाऽवरकत्वेन पराभिमतस्य वस्तुनो विषयसम्बन्ध्यावरणत्वेनाऽव्रियमाणवर्णापेक्षयाऽधिक-परिमाणताया वक्तव्यत्वात् । तस्याश्च वर्णानां सर्वगतत्वेनासम्भवात् । अनधिकपरिमाणया विषयसम्बन्धि-न्याऽविद्यया सर्वगतस्य ब्रह्मणोऽनावरणवदनधिकपरिमाणेनाऽवरकेण सर्वगतवर्णानामावरणानुपपत्तेरि-त्यर्थः । नन्वङ्गुल्यादिवत् करणसम्बन्धिनो दोषस्यैव वर्णाऽवरणत्वाभ्युपगमान्नोक्तानुपपत्तिरित्याशङ्क्य निषेधति- **नचेन्द्रियेति** ॥ **न च सहकार्यभाव इति** ॥ स च सहकारी, किम् उच्चारणातिरिक्तोऽभिमतः, उच्चारणमेव वेति विकल्पद्वयं मनसि निधायाऽद्यमनुपलम्भबाधेन दूषयति- **अन्वयेति** ॥ द्वितीयं शङ्कते- **उच्चारणमिति** ॥ सहकारित्वव्यापकस्य किञ्चित्कुर्वत्त्वस्योच्चारणेऽसत्त्वान्न तद्व्याप्यं सहकारित्वं तस्य सम्भवतीत्याशयेन दूषयति- **अकिञ्चिदिति** ॥ **न चेति** ॥ तथा चाऽलोकादिवद्विषयसंस्कारकत्वादुच्चारणस्य, न तत्र व्यापकीभूतस्य किञ्चित्कुर्वत्त्वस्य निवृत्तिरिति न सहकारित्वानुपपत्तिरिति भावः ॥ **वीचीतरङ्गन्यायेनेति** ॥ यथा वीची प्रथमोत्पन्ना वीच्यन्तरमारभते तच्च वीच्यन्तरं तरङ्गान्तरम्, तथा शब्दोऽप्याद्यः सर्वतो दिक्षु सजातीयशब्दान्तर-मारभते तदपि शब्दान्तरमिति वीचीतरङ्गन्यायेनेत्यर्थः । कदम्बगोलकन्यायेनानेकशब्दारम्भपक्षे भिन्नदिगव-स्थितयोः 'य एव शब्दस्त्वया श्रुतः स एव मयाऽपि' इति प्रत्यभिज्ञानुपपत्तिः । बाधकाभावाच्च न तज्जातीयविषयत्वकल्पना युक्तेत्याशयेनात्र वीचीतरङ्गन्यायस्यैवानुसरणं कृतमिति ध्येयम् ।

ननु वर्णानामुच्चारणेनोत्पत्तिं वदतोच्चारणकालानन्तरकाले तदुत्पत्तेरङ्गीकारेणोच्चारणकाले तदुत्पत्तेरनङ्गी-कारान्न तत्प्रतिषेधो युक्त इत्यतो 'नद्यामास्ते' इत्यत्र नदीपदवाच्यप्रवाहे आसनासम्भवेऽपि तल्लक्षिततीरस्याऽ-श्रयतया गम्यमानत्वात् सामीपिकाधिकरणत्ववद् उच्चारणकालपदवाच्यस्योच्चारणकालस्य वर्णोत्पत्त्यधि-करणत्वाभावेऽपि तल्लक्ष्यस्योच्चारणकालानन्तरकालस्याऽश्रयतया गम्यमानत्वेन सामीपिकाधिकरणत्व-सम्भवान्नद्यामिति सप्तमीवदुच्चारणकाल इति सप्तम्या अपि सामीपिकाधिकरणसप्तमीत्वेन पराभिमतोच्चारण-(पां.टि.) कालानन्तरकाले वर्णोत्पत्तिनिषेधकत्वलाभान्नानुपपत्तिरित्याशयेनाऽह - **सामीपिकेति** ॥ 'लक्ष्यार्थे यत्राऽश्रयत्वप्रतीतिस्तत्सामीपिकम्' इत्यन्यत्र स्पष्टम् । अस्मिन् पक्षे उच्चारणकालपदस्य तत्समीपकाले लक्षणाऽऽश्रयणीया भवतीत्यपरितोषात्पक्षान्तरमाह- **उच्चारणस्येति** ॥ **आनन्तर्यलक्षणश्चेति** ॥ 'षष्ठी स्थानेयोगा' इति सूत्रे 'एकशतं षष्ठ्यर्थाः' इति महाभाष्ये 'ते च स्वस्वामिभावादयः षष्ठीदण्डके पठिताः' इति कैयटे चोक्तत्वादिति भावः ॥ **व्यञ्जकेति** ॥ तथा चानादिनित्यत्वेऽपि न सर्वदोपलब्धिप्रसङ्ग इति भावः । ननु व्यञ्जकमपि किमुच्चारणमुतान्यत् । नाऽद्यः । तस्य भिन्नदेशत्वेन तदयोगात् । नान्त्यः । वर्णसमानदेशस्यान्य-स्याभावात् । भावे वा उच्चारणवैयर्थ्यापातादित्यत आह- **उच्चारणन्त्विति** ॥ ननूच्चारणजन्यस्य ध्वनेर्वर्णव्यञ्जकत्वे ध्वनिना व्यक्तस्य वर्णस्य

सर्वदोपलब्धिः स्यादित्यतो ध्वनीनामाशुतरविनाशित्वेन व्यञ्जकाभावान्न सर्वदोपलब्धि-प्रसङ्ग इत्याशयेनाऽह- **व्यञ्जकाश्च ध्वनय इति ।।** आशुतरविनाशिन इति शेषः । ननु ध्वनीनां वायुगुणत्वेन स्पर्शनेन्द्रियग्राह्यत्वान्न श्रोत्रग्राह्यवर्णव्यञ्जकत्वम् । समानेन्द्रियग्राह्ययोर्घटदीपयोर्व्यङ्ग्यव्यञ्जकभावदर्शनेन भिन्नेन्द्रियग्राह्ययोर्ध्वनिवर्णयोस्तदयोगादित्यतो न ध्वनीनां वायुगुणत्वम् । तथा सति बधिराणामपि स्पर्शनेन्द्रि-येण शब्दोपलम्भापत्त्या बधिराभावप्रसङ्गात् । किन्त्वाकाशगुणत्वमेव । ततश्चोभयोरपि श्रोत्रग्राह्यत्वाद्युक्तो व्यङ्ग्यव्यञ्जकभाव इत्याशयेनाह- **ते चेति ।।** नन्वेवमपि श्रोत्रस्याऽकाशात्मकतया निरवयवत्वेन तद्गुणस्य ध्वनेः प्रदेशवृत्तित्वानुपपत्त्या सर्वगतत्वेन सर्वत्र वर्णव्यञ्जकत्वापत्त्या देवदत्तस्य वर्णोपलम्भकाले दूरस्थानां यज्ञदत्तादीनामपि तदुपलम्भः स्यादित्यतोऽव्याकृताकाशस्य स्वतो निरवयवत्वेऽपि श्रोत्रस्य भूताकाशात्म-कत्वेनाव्याकृताकाशात्मकत्वाभावाद् भूताकाशस्य च स्वत एव सावयवत्वेन तद्गुणस्य ध्वनेः प्रदेशवृत्तित्वसम्भवेन प्रदेशवर्तिना तेन प्रदेशावच्छिन्नवर्णस्यैवाभिव्यक्तेर्वक्तव्यत्वेन सर्वत्र वर्णानभिव्यक्तेर्देवदत्तस्य तदुपलम्भसमये न यज्ञदत्तादेस्तदुपलम्भप्रसङ्गः इत्याशयेन इत्यादीत्यादिपदम् । ननु तथाऽपि ध्वनिना एकवर्णव्यक्तौ सर्ववर्ण-व्यक्त्यापत्त्या तदा गकारस्येव सर्वेषामपि वर्णानामुपलम्भः स्यादित्यतः परमते वर्णोत्पादकतयाऽभिमतोच्चार-णानामिव तद्व्यञ्जकतयाऽभिमतानां ध्वनीनामपि मन्मते प्रतिवर्णनित्यत्वेन एकेनोच्चारणेनैकस्य वर्णस्येव एकेन ध्वनिनाऽप्येकस्यैव वर्णस्याभिव्यक्त्या तदुपलम्भसम्भवेऽपि सर्वेषामनभिव्यक्तत्वान्न तदोपलम्भप्रसङ्ग इत्या-शयेनाप्युक्तमादीति **।। वक्तुमिति ।।** 'अत आकाशगुणे शब्दे व्यज्यमाना वर्णादयः' इत्यादिनेति शेषः । **अनादिनित्यत्वस्थितावेवेति ।।** अन्यथाऽन्योन्याश्रयप्रसङ्गादिति भावः ।

**(व्या.टि.)** ननु, वेद उत्पत्तिमान् उत्पत्तिमत्समुदायत्वात् पुलिनपुञ्जवदित्यनुमानमभिसन्धाय शङ्कते- **नन्वि-त्यादिना ।।** अभिसंहिते विशेषणासिद्धिं वारयति- **वर्णानां चेति ।।** हेतोरप्रयोजकतां वारयति- **नचेति ।।** विपक्षे तन्नियतहेतूच्छित्तिर्बाधिकेति भावः । उच्चारणेनोत्पद्यमानत्वस्यासिद्धिं शङ्कते- **नच वाच्यमिति ।। उत्पत्तिर्विनाशो वेति ।।** अनेन विनाशिसमुदायत्वाद्विनाशित्वमप्यनुमेयमिति सूचितम् । अत्रोत्पत्तिमन्निरू-पितत्वविनाशिनिरूपितत्वयोः क्षणलवादिप्रवाहे व्यभिचारवारणाय विशेष्यम्, जीवसमुदाये तद्वारणाय **(व्या.टि.)** विशेषणमित्यवधेयम् । वस्तुतस्तु क्षणलवादिप्रवाहव्यावृत्तं धान्यराशिसाधारणं क्रमिकवर्णसमुदाये वेदे समुदायत्वं कथं निर्वाच्यमिति नैयायिकाः प्रष्टव्याः । तदनन्तरमुपलब्ध्यनुपलब्धी एव तदुत्पत्तिविनाशहेतू स्यातामित्यत आह- **तथा सतीति ।।** घटादौ व्यभिचारान्नैतौ हेतू इति भावः । वर्णा उच्चारणेनोत्पद्यन्ते उच्चारणात् प्रागनुपलभ्यमानत्वे सत्युच्चारणानन्तरम् अनन्यथासिद्धोपलम्भात्, यद् यद्व्यापारात् प्रागनुपलभ्यमानत्वे सति यद्व्यापारानन्तरमुपलभ्यते तत् तद्व्यापारोत्पाद्यम्, यथा कुलालव्यापारजन्यो घटः । वर्णा विनाशिन उच्चारणोप-रमे सत्यनन्यथासिद्धानुपलम्भादिति च प्रयोगद्वयमभिधित्सुरादौ तावद्धेत्वोर्विशेषणासिद्धिं वारयति- **वर्णा इत्यादिना ।।** उपलम्भानुपलम्भयोरन्यथासिद्धिर्यथायोगम् अन्यतो गत्यागतिभ्याम्, आवरणानावरणाभ्यां वा, इन्द्रियदोषभावाभावाभ्यां वा, अनवधानावधानाभ्यां वा, सहकारिभावाभावाभ्यां वा, व्यञ्जकभावाभावाभ्यां वा इति विकल्प्य क्रमेण दूषणान्याह- **तावदित्यादिना ।।** हेत्वसिद्धिमाशङ्क्य साधयति- **तदपीति ।। गुणत्वा-दिति ।।** शब्दो गुणो बहिरिन्द्रियव्यवस्थाहेतुत्वाद्रूपादिवदित्यनुमानात् तत्सिद्धिरिति भावः । तथा च गुणस्य निष्क्रियत्वाद्गत्यनुपपत्तिरिति हृदयम् । शब्दो न गुणः श्रोत्रग्राह्यत्वाद् शब्दत्ववदिति, शब्दो द्रव्यं साक्षात्सम्बन्धे-नेन्द्रियग्राह्यत्वाद्घटवदिति चानुमिमानं मीमांसकं प्रत्यसिद्धिरित्यत आह- **द्रव्यत्वेऽपीति ।।** द्रव्यत्वे परिमाणं नियतं, तस्य तल्लक्षणत्वात्, सर्वगतत्वं तु कुत इत्यतः परिशेषसिद्धं तदिति विवक्षुः प्रसक्तपरिमाणद्वयं क्रमेण निरस्यति- **अणुत्व इत्यादिना ।। नित्यत्वविरोधादिति ।।** तस्य तदभावव्याप्तत्वादिति भावः ।

द्वितीयं दूषयितुमुपक्षिपति- **नापीति ।। अनुपलम्भादिति ।।** प्रत्यक्षादिप्रमाणैरिति शेषः । साधका-भावमुक्त्वा बाधकमप्याह- **अमूर्तत्वेनेति ।।** अल्पस्य ततोऽधिकमावरणं यथा पटलादि । श्रुतं च 'आत्तं वै भूयसा कनीयः' इति । सर्वगतस्य ततोऽधिकपरिमाणाभावेनाऽवरणासम्भवः । तृतीयं पराह- **नचेति ।। अनुपलब्धिरिति ।।** उच्चारितस्योच्चारणोपरमे सतीति शेषः **।। वर्णान्तरेति ।।** पूर्ववर्णानुपलम्भदशायामेवेति शेषः । प्रतिनियतप्रतिबन्धकप्रतिबध्यत्वे गौरवादिति भावः । तुरीयं निरस्यति- **नच श्रोतुरिति ।। अनुप-लम्भादिति ।।** श्रुतपूर्वस्येति शेषः **।। अतीन्द्रिया इति ।।** अनुपलम्भमात्रान्यथासिद्धिवर्णनमिदम् **।। उच्चा-रणेऽपीति ।।** स्वभावस्यानागन्तुकत्वेनानपायादित्यर्थः । पञ्चमं निराह- **नच सहकारीति ।।** वर्णोपलम्भक-श्रोत्रस्येति शेषः **।। अकिञ्चिदिति ।।** ताच्छीलिकणिनेरयोगादिति भावः । षष्ठं निराह- **नच व्यञ्जकमिति ।।** वर्णानामिति शेषः । एतदुपपादयति- **उच्चारणमिति ।।** हेतोरप्रयोजकत्वं परिहरति- **नहीति ।।** तदेवमनन्यथा-सिद्धानन्तरोपलब्धिरुत्पाद्यत्वमेव गमयतीति निगमयति-

**तस्मादिति ॥** विपक्षे बाधकमाह- **अन्यथेति ॥** एवमनन्यथासिद्धानन्तरोपलब्धिर्विनाशेनैवोपपद्यते । अन्यथा उपलभ्य मुद्गरप्रहारानन्तरमनुपलभ्यमानो घटादि-रप्यविनाश्यापद्येत इत्यपि संयोज्यम् । वीची अल्पतरङ्गः । नन्वन्यथाऽनुवादोऽयम् । न ह्युच्चारणसमये वर्णोत्पत्ति-स्तैरुक्ता । तैरुच्चारणजन्यत्वाभिधानात् । जन्यजनकयोः पौर्वापर्यावश्यम्भावादित्यत आह- **सामीपिकेति ॥** औपश्लेषिकमभिव्यापकं वैषयिकं सामीपिकं चेति चतुर्विधाधिकरणे, वटे गावः सुशेरत इतिवत् सामीपिकमत्र **(व्या.टि.)** विवक्षितमित्यर्थः । न च गङ्गायां घोष इत्यादौ लक्षणोच्छेदाऽपत्तिः । अव्यवहितसामीपि-काधिकरणस्य सप्तमीवाच्यतया लक्षणाऽभावेऽपि व्यवहितसमीपे, औपश्लेषिकत्वविवक्षायां वा प्रकृतिलक्षणो-पपत्तेः । केचिदत्रापि प्रकृतेर्लक्षणेत्याहुः । आनन्तर्यं विभक्त्यर्थतया व्याख्याय समासार्थतयाऽपि व्याचष्टे- **उच्चारणस्येति ॥** उत्पत्तिरित्युपलक्षणमित्याह- **तदनन्तरमेवेति ॥** उत्पत्त्यनन्तरकालमेवेत्यर्थः **॥ वक्तु-मिति ॥** 'अत आकाशगुणे शब्दे' इत्यादिनेति शेषः । यद्यपि वैशेषिकमते ये वर्णा उच्चारणोत्पाद्या न ते श्रोत्रेणोपलभ्यन्ते । ये च श्रोत्रदेशे श्रोत्रेणोपलभ्यन्ते न ते उच्चारणजन्या इति, वर्णा उच्चारणजन्या अनन्यथा-सिद्धोच्चारणानन्तरोपलब्धेरिति पराभिमतहेतुसाध्ययोर्वैयधिकरण्यम् । 'श्रोत्रग्राह्यो गुणः शब्दः' इति लक्षणासम्भवश्चेति दोषः स्फुरति । तथाऽपि स शिष्यैरेवोह्यतामिति नोक्तम् । वचनपदस्य वाक्यपर्यायता-भ्रमव्युदासाय व्याचष्टे- **उच्यत इति ॥** नन्वनया प्रत्यभिज्ञया श्रुतश्रूयमाणवर्णाभेदसिद्धावपि कथमनादिनित्यत्व-सिद्धिरित्यतस्तत्प्रकारं दर्शयति- **एवमिति ॥** श्रुतगकारस्य पूर्वपूर्वतरकाले उत्तरोत्तरकालेऽपि प्रत्यभिज्ञया ज्ञायमानतयाऽनादिनित्यत्वसिद्धिरित्यर्थः ।

**टीका -** अत्र केचित्- तानेव शाटकानाच्छादयामस्तानेव शालीन्भुञ्ज्महे इतिवत् त एवेमे वर्णा इति व्यपदेशमात्रमित्याचक्षते । तदसत् । प्रत्यभिज्ञानस्य साक्षिसिद्धत्वात् । तदिदमुक्तम्- **प्रत्यभि-ज्ञेति ॥** प्रत्यभिज्ञैवेयं न व्यपदेशमात्रमिति । अपरे तु- गत्वादिजातिविषया प्रत्यभिज्ञा न वर्ण-विषयेत्याहुः । तदप्यसत् । सामान्यनित्यतायाः प्रमाणविरुद्धत्वात् । वर्णविषयत्वस्य स्पष्ट-प्रतिभासत्वाच्च । अन्ये तु- मन्यन्ते गौरित्यत्र गकारौकारविसर्जनीयैर्वर्णैर्व्यङ्ग्यः पदस्फोट एव प्रत्यभिज्ञायत इति । एतदप्ययुक्तम् । वर्णातिरिक्ते स्फोटे प्रमाणाभावात् । एकं पदमिति प्रत्यक्षं प्रमाणमिति चेन्न । भिन्नेष्वपि वर्णेष्वेकार्थाभिधानोपाधिनैकत्वस्य सम्भवात् । एकदेशावस्थानेन निमित्तेनानेकेष्वेव तरुषु वनमितिवत् । तदपि, वर्णानामिति प्रकृते वचनग्रहणेन सूचितम् ।

न वर्णाः प्रत्येकमर्थमभिदधति । अनेकवर्णोच्चारणवैयर्थ्यापत्तेः । नापि समुदिताः । क्रमवतां समुदायानुपपत्तेः । नित्यत्वेऽपि प्रतीतानामेवार्थाभिधायकत्वम्, प्रतीतयश्च क्रमभाविन्य इति न समुदायः सम्भवति । अतो वर्णैरनुपपद्यमानमर्थाभिधानं तदतिरिक्तं पदस्फोटं कल्पयतीति चेन्न । एकबुद्ध्युपारूढत्वेन वर्णानामेवार्थाभिधायकत्वोपपत्तेः । तदिदमुक्तं वचनमिति । एवमेव पदातिरिक्तवाक्यस्फोटनिराकरणाय वर्णेषु प्रकृतेष्वपि 'तद्वद्वेदस्य' इति वेदग्रहणं 'तदेवेदं वाक्यम्' इति वाक्यग्रहणं च करिष्यति । वर्णानामेव पदबुद्धिविषयाणामन्वितस्वार्थाभिधायकत्वेन वाक्यार्थवेदनसम्भवेन तदतिरिक्तवाक्यस्फोटकल्पकाभावादिति । अन्यथा वर्णानां स्फोट-व्यञ्जकत्वमप्यनुपपन्नम् । प्रत्येकसमुदितविकल्पस्य तत्रापि सम्भवात् । प्रथमोच्चारितेनैव वर्णेनाभिव्यक्तोऽपि स्फोटो द्वितीयाद्युच्चारणेन विशदीक्रियत इति चेन्न । निरवयवस्य वैशद्यावैशद्य-कल्पनानुपपत्तेः । न च गकारमात्रश्रवणेनाविशदाऽपि पदप्रतीतिरनुभूयते । अतो वर्णविषयैवेयं प्रत्यभिज्ञा इति स्थितम् ।

**(र.टि.) ॥ वचनग्रहणेनेति ॥** प्रतिज्ञावाक्ये वर्णत्वरूपधर्मपुरस्कारेण वर्णानामुक्तत्वात् तद्धर्मपुरस्कारेणैव तेषां वक्तव्यत्वेऽपि पदार्थाभिधायकत्वलक्षणधर्मपुरस्कारेण वर्णानामुक्त्येत्यर्थः । एवमभिप्रायाभावे प्रतिज्ञा-हेतुवाक्ययोर्भिन्नविषयकत्वं स्यादिति भावः **॥ क्रमवतामिति ॥** आशुतरविनाशिनामित्यपि द्रष्टव्यम् **॥ तदिद-मुक्तं वचनमितीति ॥** वर्णानामिति प्रकृतत्वेऽपि पदार्थाभिधायकत्वलक्षणधर्मपुरस्कारेण वर्णानामुक्त्या वर्णानामेवावस्थाविशेषविशिष्टानां पदार्थाभिधायकत्वं ज्ञापितमित्यर्थः **॥ एवमेवेति ॥** एकं वाक्यमिति प्रत्यक्षबलेन प्रत्येकसमुदितविकल्पदूषणग्रामे(से)ण पदानां संसर्गविशेषप्रतिपादकत्वान्यथाऽनुपपत्त्या च प्राप्त-वाक्यस्फोटनिरासाय, उपक्रमवाक्ये वर्णत्वपुरस्कारेण वर्णानां गृहीतत्वेन उपसंहारवाक्ये तथैव तेषां ग्राह्यत्वेऽपि संसर्गादिवाक्यार्थवेदनकरणत्वरूपवेदत्ववाक्यत्वधर्मपुरस्कारेण वर्णानां ग्रहणं करिष्यतीत्यर्थः । एवमभिप्राया-भावे उपक्रमोपसंहारयोर्भिन्नविषयत्वं स्यादिति भावः । वेदादिग्रहणलब्धं हेतुमाह- **वर्णानामेवेति ॥** यद्यपि पदानामेव वाक्यबुद्धिविषयाणां

वाक्यार्थवेदकत्वसम्भवेनेति वक्तव्यम् । तथाऽपि 'वर्णानामेव पदबुद्धिविषया-णामन्वितस्वार्थाभिधायकत्वेन' इत्यस्मत्सिद्धान्ताभिप्रायेणोक्तमिति बोध्यम् । उपलक्षणं चैतत् । भिन्नेष्वपि पदेषु संसर्गविशेषाद्येकार्थाभिधानोपाधिनैकत्वस्य सम्भवेन एकं वाक्यमिति प्रत्यक्षोपपत्ते(त्ति)रिति च द्रष्टव्यम् ।

**(रा.टि.) ॥ तदपीति ॥** एकार्थाभिधायकत्वेनैवानेकेष्वपि वर्णेष्वेकत्वधीरित्येतदपि करणव्युत्पत्त्याऽर्थाभि-धायकवर्णवाचिवचनपदग्रहणेन सूचितमित्यर्थः । एवं स्फोटे प्रत्यक्षप्रमाणं निरस्य अर्थापत्तिमाशङ्क्य निराह- **न वर्णा इत्यादिना वचनमितीत्यन्तेन ॥ क्रमवतामिति ॥** क्रमेणोत्पत्तिविनाशवतामित्यर्थः **॥ एकबुद्ध्यु-पारूढत्वेनेति ॥** ज्ञानस्याक्षणिकत्वमतेनेदम् । क्षणिकत्वपक्षे तु पूर्वपूर्ववर्णानुभवजनितसंस्कारसचिवश्रोत्रेण सम्बद्धान्त्यवर्णज्ञानं पूर्वसर्ववर्णविषयकमित्येकबुद्ध्युपारूढत्वं ध्येयम् **॥ वचनमितीति ॥** एकबुद्ध्युपारूढ-वर्णसमुदाय इत्युक्तमित्यर्थः **॥ वर्णेषु प्रकृतेष्विति ॥** 'नचोच्चारणकाल एव वर्णानाम्' इति प्रकृतेष्वित्यर्थः **॥ अन्यथेति ॥** वर्णानामेवेत्यादिनोक्तदिशा वाक्यार्थवेदनाङ्गीकार इति वा वर्णाभिव्यक्तस्फोटेनैवार्थ-वेदनाङ्गीकार इति वाऽर्थः **॥ तत्रापि सम्भवादिति ॥** वर्णाः किं प्रत्येकं स्फोटाभिव्यञ्जका उत समुदिताः । नाऽद्यः । अनेकवर्णोच्चारणवैयर्थ्यात् । नान्त्यः । क्रमवतां तेषां समुदायानुपपत्तेरित्येवमिति भावः । अनुभवबलादेवं कल्प्यत इत्यत आह- **नचेति ॥**

**(श्री.टि.) प्रत्यभिज्ञैवेयमिति ॥** ज्ञानमेवेदमित्यर्थः **॥ जातिविषयेति ॥** स एवायं गकार इत्यस्य तदेवेदं गत्वमित्यर्थः **॥ सामान्यनित्यताया इति ॥** जातेर्नित्यतायाः

'मासेन शूद्रो भवति ब्राह्मणो रसविक्रयात् ।
जातेरपायो भवति महापातककारिणः ॥'

इत्यादिप्रमाणविरुद्धत्वादित्यर्थः । जातिव्यक्त्योरभेदस्यान्यत्र समर्थितत्वेनानित्यव्यक्त्यभिन्नजातेरप्यनित्यतया तन्नित्यत्वावगाहिप्रत्यभिज्ञाया जात्यनित्यत्वग्राहिप्रमाणविरुद्धत्वाद् इत्यर्थ इत्यप्याहुः । किञ्च गत्वं जातिरेव न भवति यद्विषयकतया प्रत्यभिज्ञाया अन्यथासिद्धिः स्यात् । तारत्वादिना साङ्कर्यात् । तारत्वं गत्वं विहाय तारककारे वर्तते, गत्वं च तारत्वं विहाय मन्द्रगकारे, समावेशस्तु तारगकार इति द्रष्टव्यम् **॥ वर्णविषयत्व-स्येति ॥** स एवायं गकार इति प्रत्यभिज्ञाया गकाररूपधर्मिविषयत्वमेव प्रतिभासते न तु गत्वरूपजातिविषयत्व-मित्यर्थः **॥ सम्भवादिति ॥** तथा च एकं पदमिति प्रत्यक्षम् औपाधिकैकत्वावगाहीत्यर्थः । उपाधिनिमित्त एकत्वव्यवहारः कुत्र दृष्ट इत्यत आह- **एकदेशेति ॥** इदम् उपलक्षणम् । 'गौरित्युक्ते गकारौकारविसर्जनीय-वर्णातिरिक्तस्य क्वचिदप्यनुभवानारोहात् । भवानपि चक्षुषी निमील्य परिभावयतु । गौरित्युक्ते किं वर्णा एवानुभूयन्ते ततोऽतिरिक्तं वा किञ्चनेति । तस्मान्न स्फोटे प्रत्यक्षं प्रमाणम्' इति चन्निभट्टचुक्तं दूषणमपि द्रष्टव्यम् । ननु वर्णानामर्थाभिधायकत्वं केन पदेन सूचितम् इत्यत आह- **तदपीति ॥** 'न चोच्चारणकाल एव वर्णानामुत्पत्तिः' इति प्रतिज्ञावाक्ये वर्णत्वरूपधर्मपुरस्कारेण वर्णानामुक्तत्वात्त एवामी वर्णा इति तद्धर्म-पुरस्कारेणैव तेषां वक्तव्यत्वे वचनमिति पदार्थाभिधायकत्वलक्षणधर्मपुरस्कारेण वर्णानामुक्त्या सूचितमित्यर्थः। एवमभिप्रायाभावे प्रतिज्ञाहेतुवाक्ययोर्भिन्नविषयत्वं स्यादिति भावः । वर्णानामेकार्थाभिधायकत्वोपाधिरेव न सम्भवत्यतो वर्णव्यङ्ग्यः पदस्फोटोऽवश्यमङ्गीकार्य इत्याशङ्कते- **न वर्णा इति ॥ अनेकेति ॥** एकेन वर्णेन अर्थस्याभिहितत्वाद्वर्णान्तरोच्चारणं व्यर्थं स्यादित्यर्थः । **क्रमवतां** वर्णानाम् । आशुतरविनाशिनाञ्चेत्यपि द्रष्ट-व्यम् । क्रमवतां स्थायित्वे समुदायसम्भवात् **॥ नित्यत्वेऽपीति ॥** वर्णानामित्यर्थः **॥ अतो वर्णैरित्यादि ॥** यथोक्तं चन्निभट्टिकारेण । ''तस्माद्वर्णानां समासव्यासाभ्यां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतिपत्तिः स स्फोटो वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको 'नित्यश्शब्दः स्फोटः' इति तद्विदो वदन्ति ।'' अत एव वैयाकरणाः 'स्फुटचते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः । स्फुटचति स्फुटीभवत्यर्थ इति स्फोटोऽर्थप्रत्यायकः' इति स्फोटशब्दार्थं द्वेधा निरुक्तवन्तः । तथा चोक्तं पतञ्जलिना महाभाष्ये 'अथ गौरित्यत्रैकः शब्दो येनोच्चारितेन सास्नालाङ्गूलखुरककुदविषाणानां सम्प्रत्ययो भवति स स्फोटशब्दः' इति । **तदिदमुक्तम् वचनमितीति ॥** वर्णानामिति प्रकृतत्वेऽपि पदार्थाभिधायकत्वलक्षणधर्मपुरस्कारेण वर्णानामुक्त्या वर्णानामेवावस्थाविशेष-विशिष्टानां पदार्थाभिधायकत्वं वचनमित्युक्त्या ज्ञापितमित्यर्थः ।

ननु माऽस्तु पदस्फोटः । तथाऽपि पदव्यङ्ग्यो वाक्यस्फोटस्तावदवश्यमङ्गीकार्य एव । तथा हि । न पदानि **(श्री.टि.)**प्रत्येकं संसर्गरूपवाक्यार्थमभिदधति । अनेकपदोच्चारणवैयर्थ्यापत्तेः । नापि समुदितानि । क्रमवताम् आशुतरविनाशिनां च समुदायानुपपत्तेः

। नित्यत्वेऽपि प्रतीतानामेव पदानां संसर्गाभिधायकत्वं, प्रतीतयश्च क्रमभाविन्य इति न समुदायः सम्भवति। अतः पदैरनुपपद्यमानं वाक्यार्थाभिधानं तदतिरिक्तं वाक्यस्फोटं कल्पयतीति चेत्। तत्राऽह- **एवमेवेति ॥** प्रतिज्ञावाक्ये वर्णत्वपुरस्कारेण वर्णानां गृहीतत्वेनोपसंहारवाक्येऽपि तेषां तथैव ग्राह्यत्वे संसर्गरूपवाक्यार्थवेदनकरणत्वरूपवेदत्ववाक्यत्वलक्षणधर्मपुरस्कारेण वर्णग्रहणं करिष्य-तीत्यर्थः। एवमभिप्रायाभावे उपक्रमोपसंहारयोर्भिन्नविषयत्वं स्यादिति भावः। एवमेवेत्यतिदिष्टं वेदादिग्रहण-लब्धं हेतुमाह- **वर्णानामेवेत्यादिना ॥ अन्वितस्वार्थेति ॥** योग्येतरान्विस्वार्थेत्यर्थः **॥ वेदनेति ॥** वेद्यतेऽ-नेनेति वेदनं, वेदनहेतुत्वमित्यर्थः। ननु एकं वाक्यमिति प्रत्यक्षमेव वाक्यस्फोटे प्रमाणमिति चेन्न। भिन्नेष्वपि पदेषु संसर्गविशेषरूपैकार्थाभिधानोपाधिना एकत्वस्य सम्भवेन एकं वाक्यमिति प्रत्यक्षोपपत्तेरिति च द्रष्ट-व्यम् **॥ अन्यथेति ॥** पदबुद्धिविषयाणां वर्णानां वाक्यार्थवेदनकरणत्वानङ्गीकार इत्यर्थः **॥ तत्रापीति ॥** वर्णानां स्फोटव्यञ्जकत्वपक्षेऽपीत्यर्थः। तथा हि। न वर्णाः प्रत्येकं स्फोटं व्यञ्जयन्ति, अनेकवर्णोच्चारणवैयर्थ्या-पत्तेः। नापि समुदिताः, क्रमवतामाशुतरविनाशिनां च समुदायानुपपत्तेरिति भावः। वर्णानां प्रत्येकमेव स्फोट-व्यञ्जकत्वमित्यङ्गीकृत्य तत्रोक्तदोषपरिहारमाशङ्कते- **प्रथमेति ॥ अभिव्यक्तः**, ईषदभिव्यक्तो न विशद इत्यर्थः। **स्फोटः** पदस्फोटः **॥ निरवयवस्येति ॥** अखण्डस्येत्यर्थः। वैशद्यावैशद्ययोरवयवविशेषप्रतीत्यधीनत्वादिति भावः। प्रथमोच्चारितवर्णेनाभिव्यक्त इत्येतदेवायुक्तमित्याह- **नचेति ॥** न हीत्यर्थः। **पदप्रतीतिः** पदस्फोट-प्रतीतिः **॥ वर्णविषयैवेति ॥** न स्फोटविषयेत्यर्थः।

**(पां.टि.) गत्वादिजातिविषयेति ॥** गत्वादिजात्यभेदविषयेत्यर्थः। न चैवं तज्जातीयोऽयमित्याकारत्वापत्ति-रिति वाच्यम्। जात्यभेदादधिकस्य जातिगतजातित्वस्य प्रतीतावेव तदाकारत्वादिह च जातित्वस्याप्रतीतेरि-त्याशयात् **॥ वर्णविषयत्वस्येति ॥** अन्यथा 'स एवायं घटः' इत्यादिप्रत्यभिज्ञाया अपि घटत्वादिजात्यभेद-विषयत्वाऽपत्त्या व्यक्त्यभेदस्य न क्वापि सिद्धिः स्यादिति भावः। वैयाकरणमतमनुवदति- **अन्ये त्विति ॥ व्यङ्ग्य इति ॥** स्फोटस्य नित्यत्वाङ्गीकारेण वर्णानां तदारम्भकत्वानुपपत्तेरिति भावः **॥ एकमिति ॥** वर्णानाम् अनेकतया एकत्वावगाहिप्रत्ययविषयत्वासम्भवेन एकं पदमित्यबाधितप्रत्यक्षस्य स्फोटं विनाऽनुपपत्तिरिति भावः **॥ एकार्थेति ॥** न चैवमेकार्थप्रत्यायकत्वेन एकत्वप्रत्ययः, ततश्च एकार्थप्रत्यय इत्यन्योन्याश्रयः स्यादिति वाच्यम्। एकार्थप्रत्यायकत्वस्य समयग्राहकप्रमाणादेव सिद्धत्वेन एकत्वप्रत्ययानपेक्षणात्, तदनवकाशात्। पदार्थप्रतिपत्त्यन्यथाऽनुपपत्तिरेव पदस्फोटे प्रमाणमित्याशङ्कते- **नेति ॥ अनेकेति ॥** गौरित्यत्र सर्वेषामपि वर्णानां गोरूपैकार्थाभिधायकत्वे गकारौकारविसर्जनीयानामन्यतमेन तदर्थावगमात् तन्मात्रार्थकशेषवर्णवैयर्थ्या-पत्तेरित्यर्थः **॥ क्रमवतामिति ॥** वर्णानां क्रमभावित्वेन एकवर्णसमयेऽन्यस्याभावान्न समुदायः सम्भवती-त्यर्थः। श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वात् मनोवदित्यनुमानेन नित्यत्वसिद्धेर्न वर्णानामनित्यत्व-**(पां.टि.)** मित्यत्राऽह- **नित्यत्वेऽपीति ॥ प्रतीतानामेवेति ॥** अप्रतीयमानानां प्रत्यायकत्वस्य सर्वपदार्थ-प्रतीतिप्रसङ्गदुष्टत्वेनासम्भवदुक्तिकत्वादिति भावः। अस्तु तर्हि प्रतीतानामेवार्थाभिधायकत्वमित्यत आह- **प्रतीतयश्चेति ॥** वर्णव्यञ्जकध्वनिजनकोच्चारणस्य प्रतिनियतत्वेनाऽशुतरविनाशित्वेन क्रमिकत्वेन च तज्जन्य-ध्वनीनां तज्जन्यप्रतीतीनामपि तादृशत्वेन, एकप्रतीतिकालेऽपरप्रतीत्यभावान्न तासां समुदायः सम्भवतीत्यर्थः। **एकबुद्ध्युपारूढत्वेनेति ॥** पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णविषयकश्रोत्रजनितसदसदनेक-वर्णविषयकानुभवारूढत्वेनेत्यर्थः। 'पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतम् अन्त्यवर्णसन्निकृष्टं श्रोत्रमनेकेष्वपि वर्णेष्वेकां पदबुद्धिं जनयति' इति पद्धतावुक्तत्वात्। यद्वा पूर्वपूर्वसंस्कारसहितोत्तरोत्तरानुभवाऽहितातिपटुसंस्कार-जन्यनिखिलवर्णविषयैकस्मृत्युपारूढत्वेनेत्यर्थः। 'एकस्मृतिसमारूढानामेकार्थप्रत्यायकत्वोपपत्तेः' इति सुधायामुक्तत्वात्। न च वर्णानां सर्वगतत्वेन नित्यत्वेन च तत्र दैशिकस्य कालिकस्य वा क्रमस्यायोगाद् एक-स्मृतिसमारूढानां बुद्धिक्रमस्याप्ययोगात् क्रमरहितस्याप्यर्थप्रत्यायकत्वे राजा जारेत्यादावर्थभेदप्रतीतेर्निर्निबन्ध-नत्वप्रसङ्गान्न एकस्मृत्युपारूढानामर्थप्रत्यायकत्वमिति वाच्यम्। अनुभवक्रमोपहितानामेव वर्णानां स्मृत्याऽ-वगाहनाङ्गीकारेण बौद्धक्रमस्यैव सम्भवेन क्रमवतामेव वर्णानामर्थप्रत्यायकत्वाभ्युपगमेन क्रमव्युत्क्रमयोर-विशेषाऽपादनासम्भवात्। न चानुभवक्रमरूपोपाधेः पूर्वमननुभवान्न स्मृतिविषयत्वमिति वाच्यम्। क्रमिक-तत्तद्वर्णानुभवानन्तरं क्रमविशिष्टानुभवानामेव साक्षिणाऽनुभवोपपत्तेरिति दिक्।

ननु कथं वेदादिग्रहणमात्रेण पदातिरिक्तवाक्यस्फोटस्याभावनिर्णय इत्यतः स किम् एकं वाक्यमिति प्रतीतिबलात् कल्पनीयः किं वाक्यार्थप्रतीत्यन्यथाऽनुपपत्त्या वा। नाऽद्यः। एकदेशावस्थानेन निमित्तेनानेकेषु तरुषु वनमिति प्रतीतिवदनेकेष्वपि पदेषु एकार्थप्रत्यायकत्वेनोपाधिना एकत्वसम्भवेनान्यथासिद्धत्वादित्यभिप्रेत्य द्वितीयं दूषयति- **वर्णानामेवेति ॥** एकबुद्ध्युपारूढत्वेन वर्णानामेकार्थप्रत्यायकत्वानङ्गीकारे बाधकं चाऽह- **अन्यथेति ॥ सम्भवादिति ॥** तथा च प्रत्येकपक्षे वर्णान्तरवैयर्थ्यम्, समुदायस्तु न सम्भवतीति प्रागुक्त एव दोष इति भावः। ननु च यथा रत्नपरीक्षकस्य पुनःपुना रत्नतत्त्वं वीक्षमाणस्य पश्चिमाणि रत्नदर्शनानि

प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तं रत्नतत्त्वमवभासयन्ति । किन्तु पूर्वपूर्व-दर्शनजनितभावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति रत्नतत्त्वम् । तथा व्यञ्जयन्तोऽपि प्रत्येकमिमे वर्णा न प्रागेव स्फुटतरं स्फोटमवभासयितुमीशते, अपि तु अल्पम् । पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचि-वोत्तराभिव्यक्तिक्रमेण अन्योऽन्यो वर्णः स्फुटतरं स्फोटज्ञानमाधत्त इति न वैयर्थ्यम् । द्वितीयादीनामपि, पूर्वेषां तदभावे तदभिव्यक्तिजनितसंस्काराभावेन अन्त्यवर्णस्यासहायतया व्यक्तावभासहेतुत्वासम्भवादित्यभिप्रेत्य शङ्कते- **प्रथमोच्चारितवर्णेन चेति** ॥ किमत्र वैशद्यावैशद्ये अर्थगते अभिमते किं वा ज्ञानगते इति विकल्पं मनसि निधायाऽद्यं दूषयति- **निरवयवस्येति** ॥ सर्वांशानाम् अनुभूयमानता हि वैशद्यम् । किञ्चिदंशानामननुभव-श्चावैशद्यम् । न च निरंशस्य स्फोटस्योक्तरूपे वैशद्यावैशद्ये सम्भवत इत्यर्थः । द्वितीयं दूषयति- **नचेति** ॥ नापि पूर्वपूर्ववर्णैरस्फुटमुत्तरोत्तरैर्विशदं तज्ज्ञानं कस्याप्यनुभवसिद्धमित्यर्थः ।

**(व्या.टि.)** अस्य प्रत्यभिज्ञात्वं वर्णविषयत्वं च दृढीकर्तुं परपक्षान् प्रतिक्षिपति- **अत्र केचिदित्यादिना** ॥ प्रत्यभिज्ञेतीत्यतः परं नामकीर्तनेनेति शेषः । उक्तिप्रकारं दर्शयति- **प्रत्यभिज्ञैवेति** ॥ 'तदेवेदमिति विरोधात्' इत्येतावता सम्भवे नामकीर्तनस्यान्यथा वैयर्थ्यादित्यर्थः ॥ **प्रमाणेति** ॥ 'मासेन शूद्रो भवति ब्राह्मणो रसविक्र-यात्' इत्यादिनेत्यर्थः ॥ **वर्णविषयत्वस्येति** ॥ व्यक्तिविषयत्वस्य स्पष्टप्रतिभासत्वेऽपि जातिविषयत्वकल्पने सोऽयं घट इत्यत्रापि तत्त्वाऽपत्त्या व्यक्तिस्थायित्वासिद्ध्यापातात् । सोऽयं गकार इत्यादौ 'वर्णात्कारः' इति कारप्रत्ययप्रयोगान्यथाऽनुपपत्त्या च तज्जनकप्रतीतेर्व्यक्तिविषयकत्वं वाच्यम् । वैयाकरणमतं दूषयितुमनुवदति- **अन्ये त्विति** ॥ **गौरित्यत्रेति** ॥ श्रुते पुनः श्रूयमाण इति शेषः । **प्रत्यभिज्ञायत इति** ॥ स एवायं गौरिति शब्द इतीति शेषः । अनेन वर्णविषयिणी नास्त्येव प्रत्यभिज्ञा, पदविषयिणी तु प्रत्यभिज्ञा वर्णसमुदायातिरिक्त-स्फोटविषयिणीति ध्वनितम् ॥ **एकमिति** ॥ अनेकेष्वैक्याभावादन्यगोचरं प्रत्यक्षमिति भावः । उपचारोऽय-मित्युपेत्य तन्निमित्तमाह- **एकार्थेति** ॥ अत्र एकशक्तिपर्याप्त्यधिकरणत्वमुपाधिः । तेन घटाः इत्यादिबहुवचनान्ते सर्वोभयादिशब्देषु च बोध्यानामनेकत्वेनैकबोध्यकत्वस्योपाधित्वायोगेऽपि शक्यतावच्छेदकस्य घटत्वादेर्न्यायनये एकत्वरूपगुणाभावेन, अस्मन्मते व्यक्तिभेदेन भिन्नत्वेन नानार्थके नानात्वेनैकशक्यतावच्छेदककत्वस्य च उपाधित्वायोगेऽपि न दोषः । नानार्थके शक्त्यन्तरपर्याप्त्यधिकरणत्वेऽपि एकशक्तिपर्याप्त्यधिकरणत्वानपा-यात् । वर्णानामधिकरणत्वेऽपि पर्याप्त्यधिकरणत्वाभावात् । एकाक्षरनिघण्टुप्रतिपन्नशक्तिपर्याप्त्यधिकरणत्वं पदत्वं चाभिमतमेव वर्णस्य । इदं च शक्तं पदमिति पक्षमुपेत्येत्यवधेयम् । तन्निदर्शयति- **एकदेशावस्थाने-नेति** ॥ एतन्निराकरणं नोन्मूलमित्याह- **तदपीति** ॥ **वचनग्रहणेनेति** ॥ करणसाधनत्वात् तत्पदस्येति भावः । शाब्दिकोऽर्थापत्तिं स्फोटे प्रमाणयितुं वर्णाः किं प्रत्येकमर्थमभिदधति, मिलित्वा वा इति विकल्पं हृदि निधायाऽद्यं निराह- **न(च) वर्णाः प्रत्येकमिति** ॥ **अनेकेति** ॥ युगपदेकार्थाभिधित्सयेति शेषः ॥ **समुदा-येति** ॥ मेलनेत्यर्थः ॥ **क्रमेति** ॥ पौर्वापर्येत्यर्थः ॥ **एकबुद्धीति** ॥ पूर्वपूर्ववर्णानुभवजन्यसंस्कारसह-कृतान्तिमवर्णानुभवे समूहालम्बने, तावदनुभवजन्यसमूहालम्बनरूपस्मृतौ वा उपारूढत्वेनेत्यर्थः ॥ **अन्वि-तेति** ॥ योग्येतरान्वितेत्यर्थः ॥ **कल्पकाभावादिति** ॥ अन्यथाऽनुपपत्तिभङ्गादित्यर्थः । एकं वाक्यमिति प्रत्यक्षं एकशक्तिविषयमुख्यविशेष्यकान्वयबोधजनकत्वेनानेकपदेषूपपन्नं न कल्पकमिति भावः ॥ **अन्य-थेति** ॥ प्रमितवर्णपरित्यागेनाप्रमितस्फोटकल्पन इत्यर्थः ॥ **विकल्पस्येति** ॥ अन्यतरपरिग्रहे दोषस्य चेत्यर्थः । तथा हि । किं वर्णाः पदानि वा किं पदस्फोटं वा वाक्यस्फोटं वा प्रत्येकं व्यञ्जयन्ति उत मिलित्वा । नाऽद्यः । अनेकोच्चारणवैयर्थ्यात् । न द्वितीयः । क्रमोत्पत्तिकानां वर्णानां पदानां तत्प्रतीतीनां वा मेलनासम्भवा-दिति । वर्णेनेत्युपलक्षणम् । पदेनापीति ग्राह्यम् । स्फोट इति सामान्येन द्वयोक्तिः ॥ **निरवयवस्येति** ॥ तथाऽभ्युपगतस्येत्यर्थः ॥ **अविशदाऽपीति** ॥ येन वैशद्याय द्वितीयोच्चारणकल्पनेति ॥ **अनुभूयत इति** ॥ विपक्षेऽनुभवविरोधं सूचयति । अनेन निरवयवत्वेन बह्ववयवताया विषयीकृतत्वरूपं विषयगतं वैशद्यं स्फोट-प्रतीतेरेवाभावे ज्ञानगतं वैशद्यञ्च नाऽशङ्कनीयमिति सूचितम् । उपसंहरति- **अत इति** ॥

**मूलम् - नच सादृश्यात् प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् ; 'सोऽयं देवदत्तः' इत्यादेरपि तथात्वप्राप्तेः ।**

**(त.मं.)** न च पूर्वाधीतवचनसादृश्यादस्य वचनस्य तदेवेदं वचनमिति प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । पूर्वानुभूत एव देवदत्ते सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञाया अपि भ्रान्तित्वप्राप्तेः । बाधरहितस्य भ्रान्तित्वकल्पने तु एवमतिप्रसङ्गः स्यादित्याशयः ।

**टीका -** अस्तु तथाऽपि नानया वर्णानां नित्यत्वं सिद्ध्यति। यतः पूर्वोच्चारितेन गकारेणेदानीमुच्चा-रितस्य गकारस्य सादृश्यात् तन्निबन्धना भ्रान्तिरेवेयम्। यथा परिलूनपुनर्जातकुन्तलकलापयोः सादृश्यात् स एवायं कुन्तलकलाप इति प्रत्यभिज्ञा भ्रान्तिरित्यत आह- **नच सादृश्यादिति ।।** कुतो न वाच्यमिति चेद्वैषम्यात्। युक्तं कुन्तलकलापप्रत्यभिज्ञाया भ्रान्तित्वकल्पनम्। परिलून-कुन्तलकलापस्य भूमौ पतितस्य दर्शनेन नायमसाविति बाधकप्रत्ययोदयात्। नचात्र तथा बाधकप्रत्ययोऽस्ति। एवमेव भ्रान्तित्वकल्पने च अतिप्रसङ्ग इति भावः। ननु वर्णेष्वपि तीव्रत्वमन्द्रत्वादिविरुद्धधर्माध्यासेन भेदानुमानं प्रत्यभिज्ञाबाधकं विद्यते। विरुद्धधर्माधिकरणा-नामप्यभेदे कुत्रापि भेदाभावप्रसङ्गेन निरवकाशमनुमानं प्रत्यभिज्ञाप्रत्यक्षमपि बाधितुं क्षमत एवेति चेत्। किं यादृशतादृशो विरुद्धधर्माध्यासो भावभेदहेतुरङ्गीक्रियते उत विशिष्टः। आद्येऽतिप्रसङ्गमाह- **सोऽयमिति ।।** तथात्वे देवदत्तादेरपि शिखी मुण्डी जटिल इति विरुद्धधर्माध्यासेन भेदप्राप्तेः सोऽयं देवदत्त इत्यादेरपि प्रत्यभिज्ञाया भ्रान्तित्वप्राप्तेः। यत्र देशकालपुरुषावस्थादिभेदस्य व्यवस्था-पकस्याभावस्तत्रैव विरुद्धधर्माध्यासो भेदहेतुरिति द्वितीय एव पक्षोऽङ्गीकरणीयः, यथा जीवेश्वरयोः सर्वज्ञत्वाल्पज्ञत्वादिरूपः। नच तथाविधो विरुद्धधर्माध्यासो वर्णेष्वस्ति। एकस्यैव वर्णस्य कालभेदेनोच्चारयितृपुरुषभेदेन नासिकादिस्थानभेदेन विरुद्धधर्माध्यासोपपत्तेः। केनापि प्रमाणेन ज्ञानद्वयप्रामाण्यानुपपत्तौ खल्वन्यतरस्याप्रामाण्यमङ्गीकर्तव्यमित्याशयः।

ननु वैशेषिकादयो देवदत्तादेरपि पार्थिवद्रव्यस्य पाकेन प्रतिक्षणमुत्पत्तिविनाशावङ्गीकुर्वाणाः सोऽयमिति प्रत्यभिज्ञाया भ्रान्तित्वमङ्गीकुर्वत एव। तत् कथमिदमापादनमिति चेत्। सत्यम्। तथाऽपि पार्थिवपरमाणुषु रूपादिपरिवर्तनेनाऽऽकाशादिषु च शब्दादिभावाभावेन प्राप्तस्यातिप्रसङ्गस्य कः प्रतीकारः। एतदेव विशदयितुम् इत्यादेरित्यादिग्रहणं कृतम्। किञ्च पाकेन देवदत्तादेर-प्यापरमाणुविनाशे पुनर्द्व्यणुकादिक्रमेणोत्पादाङ्गीकारेण प्रत्यभिज्ञाभ्रान्तित्वाभ्युपगमोऽनुपपन्न एव। तथा सति सौगतैस्सह विवादाभावप्रसङ्गात्। पार्थिवं हि सर्वं द्रव्यं देवदत्तसमानम्। आप्यतैजसवायवीयानां च वायूपघातादिमात्रेणावयवापगमोऽस्त्येव। आकाशस्य स्थायित्वं तैरप्यङ्गीकृतमेव। आत्मा तु स्वरूपत एव नाङ्गीकृतः। तथा कर्मसामान्यविशेषसमवाया गुणाश्च द्रव्यातिरिक्ता न सन्त्येव। केवलं परमाणुषु विवादोऽवशिष्यते। तेषां चातीन्द्रियत्वेना-स्मत्प्रत्यभिज्ञाऽगोचरत्वेन स्थायित्वसाधनोपायाभावः। निबिडावयवं स्फटिकादिकं विवादपदमिति चेन्न। तस्यापि प्रबलवातातपाद्यभिघातेनावयवापगमस्यावर्जनीयत्वात्। पूर्वापरकलाविकलकाल-वर्तित्वं क्षणिकत्वं बौद्धैरङ्गीकृतम्, वैशेषिकादिभिस्त्वाशुतरविनाशित्वमिति चेत्। सत्यम्। अयं तु विवादो न प्रत्यभिज्ञामात्रेण निरसनीयः।

नन्वस्माभिरपि देवदत्तादेराशुतरविनाशित्वेन भेदोऽङ्गीक्रियत एव। सत्यम्। परिणामवादेऽ-भेदस्यापि विद्यमानत्वेन सोऽयमिति प्रत्यभिज्ञानस्याभ्रान्तित्वोपपत्तेः। अवयवोपचयापचय-निमित्तकपरिमाणभेददर्शनेन देवदत्तादौ परिणामोऽङ्गीक्रियते। नच वर्णेषु परिणामज्ञापकं किमप्यस्तीत्यत्यन्ताभेदः कूटस्थनित्यत्वं चाभ्युपगम्यते। अत एवात्र सोऽयमिति निरवधारण-मुक्तम्, तत्र तु तदेवेदमिति सावधारणमिति। विरुद्धधर्माधिकरणत्वमात्रस्य भेदहेतुत्वमङ्गीकृत्य प्रत्यभिज्ञाभ्रान्तित्वाङ्गीकारेऽतिप्रसङ्ग इति ।।

**(र.टि.) ।। भावभेदहेतुरिति ।।** अभावो निर्धर्मक इति पक्षे न विरुद्धधर्माधिकरणत्वेनाभावभेदः, किन्तु प्रतियोग्यादिभेदेनेत्यभिप्रेत्य भावग्रहणं कृतमिति द्रष्टव्यम् **।। प्राप्तस्यातिप्रसङ्गस्येति ।।** वैशेषिकादिमते योगिसद्भावेन परमाण्वादिविषयकतदीयप्रत्यभिज्ञाभ्रान्तित्वापादनरूपस्येत्यर्थः **।। परिमाणभेददर्शनेने-ति ।।** परिमाणस्य यावद्द्रव्यभावित्वेन तद्भेदस्य द्रव्यभेदव्याप्तत्वादिति भावः **।। अत एवात्रेति ।।** यतः परिणामवादिनां मते देवदत्तादौ भेदोऽप्यस्ति वर्णेषु चात्यन्तभेद एव, अत एवेत्यर्थः।

**(रा.टि.) ।। परिलूनेति ।।** छिन्नपुनर्जातयोः केशसमूहयोरित्यर्थः । 'सोऽयं देवदत्त इत्यादेः' इति वाक्यस्य प्रागुक्तदृष्टान्तवैषम्यविवृतिपूर्वं तात्पर्यमाह- युक्तमित्यादिना भाव इत्यन्तेन । दुर्बलं कथं बाधकमित्यत आह- **विरुद्धधर्माधिकरणानामिति ।। कुत्रापीति ।।** घटपटादिष्वपीत्यर्थः **।। यादृशतादृश इति ।।** देशकाल-पुरुषावस्थादिभेदरूपभेदव्यवस्थापकयुक्तो विरुद्धधर्माध्यास इत्यर्थः **।। विशिष्ट इति ।।** उक्तरूपव्यवस्थापक-स्याभावेन युक्त इत्यर्थः **।। तथात्व इति ।।** यादृशतादृशस्यापि भेदकत्व इत्यर्थः **।। इति विरुद्धधर्माध्यासे-(रा.टि.) नेति ।।** अवस्थाभेदेन कालभेदेन वा भेदप्रतीतिव्यवस्थापकेनोपर्युक्तेन विरुद्धधर्माध्यासेनैव वस्तुनो देवदत्तस्य भेदप्राप्तेरित्यर्थः **।। व्यवस्थापकस्येति ।।** भेदप्रत्ययव्यवस्थापकस्येत्यर्थः **।। नासिकादीति ।।** 'मुखनासिकावचनोऽनुनासिकः' इति पाणिन्युक्तेर्नासिकादिस्थानेत्युक्तम् **।। ज्ञानद्वयेति ।।** विरुद्धधर्म-ज्ञानादनुमित्यभेदप्रत्यभिज्ञारूपज्ञानद्वयेत्यर्थः **।। पाकेनेति ।।** घटादौ पाके सति कपालद्वयसंयोगरूपासमवायि-कारणनाशपरम्परया परमाणुद्वयसंयोगनाशपर्यन्तमसमवायिकारणनाशेन परमाणुपर्यन्तं कार्यनाशे सति भोजका-दृष्टबलेन पुनः परमाणुक्रियावशेनाणुद्वयसंयोगादिपरम्परया घटादिकार्योत्पत्तिरिति पीलुपाकप्रक्रियया प्रतिक्षण-मुत्पत्तिविनाशावङ्गीकुर्वाणा इत्यर्थः । पाकेनेत्युपलक्षणम् । नोदनाभिघातादिनैकैकावयवापगमेनापीत्यपि ध्येयम् **।। भ्रान्तित्वमिति ।।** परिणामभेदेन देवदत्तादिदेहेऽपि प्रतिक्षणमुत्पत्तिविनाशयोरङ्गीकाराद्भ्रान्तित्वमङ्गी-कुर्वत एवेत्युक्तम् **।। तथाऽपीति ।।** सोऽयमित्यादिबुद्धेर्भ्रान्तित्वेऽपीत्यर्थः **।। रूपादिपरिवर्तनेनेति ।।** प्राप्तस्येत्यन्वयः । तद्रूपादेः पाकजत्वोपगमादिति भावः । आकाशादिष्वित्यादिपदेनाऽत्मदिक्कालग्रहणम् । शब्दादीत्यादिपदेन ज्ञानसुखदुःखेच्छासंयोगादिपरिग्रहः । तेषाम् अव्याप्यवृत्तित्वादिति भावः **।। अतिप्रसङ्ग-स्येति ।।** यादृशतादृशविरुद्धधर्माश्रयपरमाण्वादिभेदस्येत्यर्थः । तत्र कालादिभेदेनोपपन्नेनापि विरुद्धधर्माध्यासेन प्राप्ताश्रयभेदापादनस्य न किञ्चिदुत्तरमिति भावः । तत्प्रक्रियैवायुक्तेत्याह- **किञ्च पाकेनेति ।।** सौराऽलोककृत-पाकेनेति वा जाठराग्निकृतपाकेनेति वाऽर्थः **।। सौगतैरिति ।।** सर्वक्षणिकत्ववादिभिः । समानमित्युक्तं व्यनक्ति- **आप्येति ।। अस्त्येवेति ।।** तथाच तत्रापि पीलुपाकप्रक्रियया प्रतिक्षणमुत्पत्त्यादेरङ्गीकार्यत्वान्न तत्रापि तैस्तव विवादः । आकाशादिषु स भविष्यतीत्यत आह- **आकाशस्येति ।। द्रव्यातिरिक्ता इति ।।** अङ्गुल्य इव द्रव्येभ्यः पृथग्भूता इत्यर्थः । येन तेषु क्षणिकत्वाक्षणिकत्वविवादो घटेतेति भावः । वर्णेष्वपि किमेवं भेदाभेदौ स्त इत्यतो नेत्याह- **अवयवेति ।। देवदत्तादाविति ।।** देवदत्तदेहादावित्यर्थः **।। कूटस्थेति ।।** कूटमाकाशम् । 'कूटं खं विदलं व्योम' इत्यादेः । तद्वत्तिष्ठतीति कूटस्थतया आद्यन्तशून्यत्वं निर्विकारनित्यत्वमित्यर्थः**।। अत्रे-ति ।।** देवदत्तादौ **।। तत्रेति ।।** वर्णविषये । सोऽयमित्यादेः फलितार्थमुपसंहरति- **विरुद्धधर्मेति ।।**

**(श्री.टि.)** परिलूनाः परितश्छिन्नाः । 'लूञ् छेदने' इति धातोः **।। एवमेवेति ।।** बाधकप्रत्ययाभावेऽपीत्यर्थः **।। अतिप्रसङ्ग इति ।।** सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञाया अपि भ्रान्तित्वं स्यादित्यर्थः । **तीव्रत्वं** तारत्वम् **।। भेदानुमानमिति ।।** श्रुतश्रूयमाणौ तीव्रमन्द्रगकारौ भिन्नौ तीव्रत्वमन्द्रत्वरूपविरुद्धधर्माधिकरणत्वात् । यद् विरुद्धधर्माधिकरणं तद् भिन्नमिति व्याप्तेरित्यर्थः । अनुमानेऽप्रयोजकताशङ्कापरिहारायानुकूलतर्कमाह- **विरुद्धेति ।। कुत्रापि** जगति **।। यादृशतादृश इति ।।** अविशेषित इत्यर्थः । **अध्यासो**ऽधिकरणत्वम् **।। भावभेद-हेतुरिति ।।** पदार्थभेदहेतुरित्यर्थः । भावबोधे तु 'अभावो निर्धर्मक इति पक्षे न विरुद्धधर्माधिकरणत्वेन अभाव-भेदस्सम्भवति । किन्तु प्रतियोग्यादिभेदेनेत्यभिप्रेत्य भावग्रहणं कृतमिति द्रष्टव्यम्' इति व्याख्यातम् **।। विशि-ष्ट इति ।।** देशकालपुरुषावस्थादिभेदरूपव्यवस्थापकाभावविशिष्ट इत्यर्थः **।। तत्रैवेति ।।** यत्र देशादिव्यवस्थापक-**(श्री.टि.)** सद्भावस्तत्र विरुद्धधर्माध्यासो न भावभेदहेतुः । तद्यथा एकस्यैव देवदत्तस्य सत्त्वासत्त्वयोर्देशभेदेन, शिखित्वमुण्डित्वयोः कालभेदेन, एकस्यैव घटस्यैकदैव ज्ञातत्वाज्ञातत्वयोः पुरुषभेदेन, एकस्यैव देवदत्तस्य नीलशुक्लकेशवत्त्वयोर्यौवनाद्यवस्थाभेदेनोपपन्नत्वादित्यवधेयम् **।। जीवेश्वरयोरिति ।।** जीवे सार्वज्ञस्य ईश्वरेऽ-ल्पज्ञत्वस्य च देशादिभेदेन कदाऽपि व्यवस्थाया असम्भवादिति भावः । **तथाविधो** व्यवस्थापकाभावविशिष्टः **।। कालभेदेनेति ।।** एक एव देवदत्तः कदाचिद्गकारं तीव्रतयोच्चारितवान्कदाचिन्मन्द्रतयेति कालभेदेनेत्यर्थः । **उच्चारयितृपुरुषभेदेनेति ।।** एकमेव गकारम् एकः पुमान्तीव्रतयोच्चारयति अपरस्तु मन्द्रतयेत्यर्थः **।। नासि-कादीति ।।** नासिकाध्वनिनोच्चारिते सति गकारो मन्द्रस्सम्पद्यते । सम्यगुच्चारिते सति तीव्रस्सम्पद्यत इत्यर्थः **।। उपपत्तेरिति ।।** तथा च विशिष्टस्य हेतुत्वेऽसिद्धिरिति भावः । ननु तारो गकारो, मन्द्रो गकार इति तारत्व-मन्द्रत्वरूपविरुद्धधर्मावगाहिज्ञानद्वयमध्ये एकस्य ज्ञानस्याप्रामाण्यमेवाङ्गीकृत्य विरुद्धधर्माधिकरणत्वमेव नास्तीति हेतोस्स्वरूपासिद्धिरित्येव कस्मान्नोच्यते । किं विशिष्टस्य हेतुत्वमङ्गीकारयित्वा तस्य स्वरूपासिद्ध्यु-क्त्येत्यत आह- **केनापि**

**प्रकारेणेति ॥** प्रकृते च उक्तप्रकारेण ज्ञानद्वयस्यापि प्रामाण्यं युक्तमिति भावः ।

आदिपदं सङ्गमयितुमाह- **नन्विति ॥** वैशेषिकादय इत्यत्राऽदिपदेन नैयायिका ग्राह्याः । **देवदत्तादेः** 'एष चेतनया युक्तो जीव इत्यभिधीयते' इति वचनाद्देवदत्तशरीरस्येत्यर्थः **॥ पाकेनेति ॥** आतपादिरूपतेजस्सं-योगेनेत्यर्थः **॥ अङ्गीकुर्वाणा इति ॥** पीलुपाकप्रक्रियेत्यर्थः **॥ तत्कथमिति ॥** वर्णानित्यत्ववादिनो वैशेषिकादीन्प्रति हीदमापादनं कर्तव्यं, तन्न सम्भवति । अनिष्टत्वाभावादित्यर्थः **॥ रूपादिपरिवर्तनेनेति ॥** पार्थिवपरमाणुगतरूपादीनां पाकजत्वादिति भावः **॥ प्राप्नस्यातिप्रसङ्गस्येति ॥** वैशेषिकमते योगीश्वराणां सत्त्वेन तेषां सोऽयं परमाणुः सोऽयमाकाश इति प्रत्यभिज्ञा भवति । तस्या भ्रान्तित्वं स्यात् । रूपादिपरिवर्तन-शब्दभावाभावादिरूपविरुद्धधर्माधिकरणत्वस्य परमाण्वादावपि सत्त्वादित्यर्थः । मूले भगवत्पादैः सोऽयं देवदत्त इति प्रत्यभिज्ञाया भ्रान्तित्वमङ्गीकृत्य 'इत्यादेः' इत्युक्तम् । वस्तुतस्तु सा प्रत्यभिज्ञा भ्रान्तिर्न भवत्येवेत्या-शयेनाऽह- **किञ्चेति ॥** अभ्युपगमो वैशेषिकादीनाम् **॥ सौगतैस्सहेति ॥** देहदीपफलादिदृष्टान्तेन सर्वस्यापि घटादिप्रपञ्चस्य क्षणिकत्वे सौगतैः प्रतिपादिते सति 'सोऽयं देवदत्तः, सोऽयं घटः' इत्यादिप्रत्यभिज्ञया स्थायित्वं तान्प्रति वैशेषिकादिभिः प्रतिपादनीयम् । देवदत्तादेरपि पाकेन प्रतिक्षणमुत्पत्तिविनाशावङ्गीकृत्य प्रत्यभिज्ञाया भ्रान्तित्वाङ्गीकारे स्थायित्वसाधकाभावेन सौगतमतमेवाङ्गीकृतं स्यात् । तथा च तैः सह वैशेषिकादीनां विवादो न स्यादित्यर्थः । ननु कथं विवादाभावः । देवदत्तादेः पाकेन प्रतिक्षणमुत्पत्तिविनाशाङ्गीकारेऽपि घटादि-पार्थिवद्रव्यस्य क्षणिकत्वं सौगतैरुच्यते । तत्र स्थायित्वं प्रत्यभिज्ञया साध्यत इति पार्थिवद्रव्यमेव विवादपदं भविष्यतीति वैशेषिकेणोक्ते सत्याह- **पार्थिवं हीति ॥ समानमिति ॥** तत्रापि पाकेन देवदत्तदेहवत् प्रतिक्षणमुत्पत्तिविनाशयोस्सत्त्वादित्यर्थः । तथा च प्रत्यभिज्ञा भ्रान्तिरिति भावः । नन्वाप्यतैजसवायवीयपदार्थानां क्षणिकत्वे तैरभिहिते प्रत्यभिज्ञया स्थायित्वं साधयिष्यामीति तेषामेव विवादपदत्वं भविष्यतीत्यत आह- **आप्येति (श्री.टि.) ॥ अवयवापगम इति ॥** तथा च तत्र प्रत्यभिज्ञा भ्रान्तिरेवेति भावः । नन्वस्तु तर्ह्याकाशे विवादः। तस्य क्षणिकत्वे परैरभिहिते प्रत्यभिज्ञया स्थायित्वं तत्र साधयिष्यामीति चेत् तत्राऽह- **आकाशस्येति ॥ तैः** सौगतैः **॥ अङ्गीकृतमिति ॥** 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इति तद्वचनाद् इत्यर्थः । तथा च स्थायित्वस्योभयसम्मतत्वान्न तत्र विवाद इति भावः । नन्वस्तु तर्ह्यात्मनि, कर्मसामान्यविशेषसमवायेषु च विवादः । तेषां तैः क्षणिकत्वेऽभिहिते प्रत्यभिज्ञया स्थायित्वं तेषां मया साध्यत इति चेत् तत्राऽह- **आत्मा त्विति ॥** 'समवायाः' स्वरूपत एव नाङ्गीकृता इति वर्तते ।

ननु कथमेतत् । वैभाषिकसौत्रान्तिकाभ्यामात्मनोऽङ्गीकृतत्वात् । यथोक्तमनुव्याख्याने तन्मतानुवादावसरे 'आत्मानं च क्षणस्थितम्' इति । उच्यते । स्वरूपत एव नाङ्गीकृत इत्यस्य आकाशादिवत्पञ्चस्कन्धातिरिक्तो नाङ्गीकृत इत्यर्थः । तौ ह्यात्मानं पञ्चस्कन्धानां मध्ये संज्ञास्कन्धेऽन्तर्भावयतः । ततश्च ताभ्यामात्मनः क्षणि-कतयाऽङ्गीकृतत्वेन पञ्चस्कन्धातिरिक्तस्य स्थायिन आत्मनः स्वरूपेणैवानङ्गीकारात् कुत्र विवादः स्यात्? धर्मिण एवाभावात् । अत एवोदाहृतानुव्याख्यानावसरे सुधायामुक्तम्- 'सन्तन्यमानं ज्ञानमेवाऽत्मा' इति । 'अन्योन्यापेक्षया पुंसस्समुदायत्ववेदनम्' इत्येतद्व्याख्यानसमयेऽप्युक्तम् 'ज्ञानं हि द्विविधम् । प्रवृत्तिज्ञानम् आलयज्ञानं चेति । तत्राऽलयज्ञानमेव प्रवृत्तिज्ञानदुःखसंस्कारास्पदं पुमानित्युच्यते' इति । तथा चाऽत्मनः पञ्चस्कन्धान्तर्गतत्वेन सौगतैः क्षणिकत्वाङ्गीकारात् त्वयाऽपि देवदत्तादेरात्मनः पाकेन क्षणिकत्वाङ्गीकारान्न तत्र प्रत्यभिज्ञया स्थायित्वं साधयितुं शक्यमिति हृदयम् । अस्तु तर्हि रूपादिगुणेषु विवादः । तेषां क्षणिकत्वे सौगतैरुक्ते प्रत्यभिज्ञया स्थायित्वं साधयिष्यामीति चेत् तत्राऽह- **गुणाश्चेति ॥** द्रव्येषु च पार्थिवादिषु विवादो न सम्भवतीत्युक्तमेवेति भावः **॥ अस्मदिति ॥** योगिसद्भावे मानाभावादिति भावः **॥ प्रत्यभिज्ञाऽ-गोचरत्वेनेति ॥** प्रत्यभिज्ञाविषयत्वाभावादिति भावः **॥ निबिडेति ॥** तथाच स्फटिकादेः क्षणिकत्वे तैरभिहिते प्रत्यभिज्ञया स्थायित्वं साध्यते, तस्य निबिडावयवत्वेनावयवापचयाभावात् प्रत्यभिज्ञाया न भ्रान्तित्वमिति भावः **॥ तस्यापीति ॥** तथा च तत्रापि प्रत्यभिज्ञाया भ्रान्तित्वमेवेति भावः । ननूक्तरीत्या पार्थिवादिद्रव्यस्य क्षणिकत्वं सौगतवद्वैशेषिकैरप्यङ्गीकृतमेवेति न विवादः, तथाऽपि क्षणिकत्वलक्षणे विवादोऽस्तीत्याशयेन शङ्कते- **पूर्वापरेति ॥ कला** विभागः । 'अयं पूर्वभागोऽयमपरभागोऽयं मध्यभागः' इति विभागो यत्र कर्तुं न शक्यतेऽसौ पूर्वापरकलाविकलकालः, तत्र वर्तित्वं क्षणिकत्वमित्यर्थः । 'पूर्वमध्यापरकलारहितः क्षण इष्यते' इत्युक्तत्वादिति भावः **॥ आशुतरविनाशित्वमिति ॥** त्रिक्षणावस्थायित्वमित्यर्थः । तथा चाऽशुतरविनाशित्वग्राहिप्रत्यभिज्ञया तदभिमतं क्षणिकत्वं निरस्यत इति भावः **॥ अयं तु विवाद इति ॥** इदं वस्तु न पूर्वापरकलाविकलकालवर्ति किन्त्वाशुतरविनाशीत्यर्थे प्रत्यभिज्ञाया अप्रवृत्तेः, प्रत्यक्षेणातिसूक्ष्मकालभेदानाकलनादिति भावः । शिष्यः शङ्कते- **नन्विति ॥** अवयवोपचयापचयाभ्यां प्रतिक्षणं

देवदत्तादेरुत्पत्तिविनाशाङ्गीकारेण भेदाङ्गीकारादस्मन्मतेऽ-पि सोऽयं देवदत्त इति प्रत्यभिज्ञा भ्रमरूपैवेत्यर्थः । तथा च वैशेषिकादिभिरिवास्माभिरपि प्रत्यभिज्ञाया भ्रान्ति-**(श्री.टि.)** त्वाङ्गीकारान्न तान्प्रति प्रत्यभिज्ञाया भ्रान्तित्वापादनं भवतां युक्तमित्याशयः ।। **परिणामवाद इति** ।। अवयवोपचयापचयाभ्यां परिणामवाद इत्यर्थः ।। **अभेदस्यापीति** ।। भेदाभेदाङ्गीकारादिति भावः ।। **प्रत्यभिज्ञानस्येति** ।। अभेदावगाहिप्रत्यभिज्ञाया इत्यर्थः । अत एव 'स एवायं देवदत्त इत्यत्यन्ताभेदावगाहि-प्रत्यभिज्ञाया भ्रान्तित्वेऽपि सोऽयमिति तु न भ्रमः' इत्युपपादितमन्यत्रेति द्रष्टव्यम् । ननु वर्णेषु प्रत्यभिज्ञयाऽभेदः सिद्ध्यतु, देवदत्तादाविव भेदोऽप्यस्ति किम्? इत्याशङ्कायां प्रत्यभिज्ञाबलादत्यन्ताभेद एव सिद्ध्यतीत्याह- **अवयवेति** ।। **किमपीति** ।। निरवयवत्वेन तदुपचयापचयकल्पनाऽयोगादित्याशयः । **कूटस्थनित्यत्वं** निर्विकारत्वे सति नित्यत्वम् । अत्र ज्ञापकमाह - **अत एवेति** ।। यतः परिणामवादिनां मते देवदत्तादौ भेदोऽप्यस्ति वर्णेषु चात्यन्ताभेदोऽत एवेत्यर्थः ।

**(पां.टि.)** भ्रान्तित्वं किं बाधकबलात्कल्प्यते किं वा तदभावेऽपि । आद्येऽपि बाधकत्वेनाभिमता भेदधीः किं प्रात्यक्षिकी किं वाऽनुमानिकी इति विकल्पं मनसि निधायाऽद्यं दूषयति- **नचात्र तथेति** ।। नायमसौ इतिवत् 'स गकारोऽयं गकारो न भवति'इति न विशेषेण भेदप्रत्यक्षमस्तीत्यर्थः । पूर्वविकल्पद्वये द्वितीयं दूषयति- **एव-मेवेति** ।। बाधकाभावेऽपीत्यर्थः । अन्तिमविकल्पद्वये द्वितीयं शङ्कते- **नन्विति** ।। **विरुद्धधर्माध्यासेनेति** ।। विरुद्धधर्माधिकरणत्वेनेत्यर्थः । अत एवोत्तरत्र 'विरुद्धधर्माधिकरणानामपि' इति वक्ष्यतीति ज्ञेयम् । ननु दुर्बल-स्यानुमानस्य कथं प्रबलप्रत्यक्षबाधकत्वमित्यत उक्तम् ।। **निरवकाशमिति** ।। तत्कथमित्यतोऽनुकूल-तर्कसहकृतत्वादिति भावेन तमाह- **विरुद्धेति** ।। **कुत्रापीति** ।। जीवेश्वरादावपीत्यर्थः ।। **भावभेदहेतुरिति** ।। इदं चाभावस्तुच्छत्वान्निर्धर्मक इति मतमाश्रित्योक्तम् । तन्मत एवाभावस्य विरुद्धधर्माधिकरणत्वाभावेन, तस्य भावाभावसाधारण्येन पदार्थमात्रभेदकत्वाभावेन भावमात्रभेदकत्वस्य सत्त्वात् । अत एव भाववदभावस्यापि प्रामाणिकत्वसधर्मकत्वव्युत्पादनेनैतन्मतं सुधायां निरस्तम् । मतान्तरे तु भावपदं पदार्थमात्रवचनमिति द्रष्ट-व्यम् । ननु किमनेनैकस्यैव कालादिभेदाद्विरुद्धधर्माधिकरणत्वव्युत्पादनप्रयासेन । प्रत्यभिज्ञाविरोधेन भेदानु-मानस्य, भेदानुमानविरोधेनाभेदप्रत्यभिज्ञानस्य वाऽप्रामाण्यस्यैवाऽश्रयितुं शक्यत्वादित्यत आह- **केनापी-ति** ।। तत्कथमित्यतः किमनया प्रत्यभिज्ञया घटादिषु स्थिरत्वं साध्यते नित्यत्वेनाभ्युपगतेषु परमाणुषु वेति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **पार्थिवं हीति** ।। **तथेति** ।। स्वरूपेणैवानङ्गीकृता इति सम्बन्धः । द्वितीयमनूद्य दूषयति- **केवलमित्यादिना** ।। **प्रबलतरेति** ।। निबिडावयवत्वं हि न विभागायोग्यावयवत्वम् । विभागस्य प्रत्यक्षसिद्धत्वात् । किन्तु घटादितोऽप्युत्कृष्टकारणापेक्षत्वम् । ततश्च यादृशतादृशकारणेना-वयवविभागस्य तत्राभावेऽपि प्रबलतरवातातपाद्यभिघातेनावयवापगमस्यावर्जनीयत्वाद् अवयवविभागेनासम-वायिकारणसंयोगनाशेन द्व्यणुकनाशापत्त्या तन्नाशे च समवायिकारणनाशात् त्र्यणुकनाश इत्यनेन क्रमेण स्फटिकादिनाश आवश्यक इति भावः । क्षणिकत्वस्योभयसम्मतत्वेन तत्र विप्रतिपत्त्यसम्भवेऽपि तद्विशेषे विप्रतिपत्तेः सत्त्वान्न विवादाभावप्रसङ्ग इत्याशङ्कते- **पूर्वेति** ।। न च 'अष्टादश निमेषास्तु काष्ठास्त्रिंशत्तु ताः **(पां.टि.)** कलाः । तास्तु त्रिंशत्क्षणः' इति स्मरणात् क्षणस्य पूर्वापरकलाराहित्याभ्युपगमेऽपि सभागत्वमात्रा-भ्युपगमात् कथमेतदपीति वाच्यम् । कलाशब्दस्य भागमात्रवचनत्वेन प्रसिद्धकलारूपकालविशेषपरत्वाभावेना-दोषात् ।। **अस्माभिरपीति** ।। परिणामवादिभिरपीत्यर्थः । ततश्च तदत्यन्ताभेदावगाहिनी प्रत्यभिज्ञा भ्रान्तिरेवेति शेषः । आरम्भवादे तत्तत्परिमाणविशिष्टदेवदत्तस्वरूपद्वयस्यात्यन्तभेदेन प्रत्यभिज्ञाविषयीभूताभेदाभावात् प्रत्यभिज्ञाया भ्रान्तित्वप्रसक्तावपि परिणामवादे पूर्वोत्तरवस्तुनोर्भेदाभेदाङ्गीकारात्पूर्वोत्तरकालभाविनोरभेदस्य प्रत्यभिज्ञाविषयत्वपक्षे सावधारणस्य तस्य भ्रमत्वेऽपि सोऽयमित्यभेदविषयस्याभ्रमत्वान्न तेन स्थैर्यसाधना-नुपपत्तिरित्याह- **परिणामवाद इति** ।।

**(व्या.टि.)** प्रत्यभिज्ञाया वर्णविषयत्वमङ्गीकृत्य प्रमात्वमाक्षिपति- **अस्त्वित्यादिना** ।। सादृश्यनिबन्धना भ्रान्तिः क्व दृष्टा इत्यतस्तां दर्शयति- **यथा परिलूनेति** ।। परिपूर्वाल्लुनातेः 'ल्वादिभ्यश्च' इति निष्ठा-नत्वे रूपम् ।। **वैषम्यादिति** ।। बाधकभावाभावाभ्यामिति शेषः । क्रमेण तौ दर्शयति-**नायमसाविति, न चात्रेति च** ।। **एवमेवेति** ।। बाधकं विनेत्यर्थः । अत्र यदुक्तं बाधकाभावान्नेयं प्रत्यभिज्ञा भ्रान्तिरिति । तन्न । श्रुतपुनः-श्रूयमाणवर्णाः परस्परं भिन्ना विरुद्धधर्माध्यासाद् इत्यनुमानस्यैव बाधकत्वात् । विपक्षे कुत्रापि भेदाभावप्रसङ्गेन हेतोर्निरवकाशत्वादित्याशयेन शङ्कते- **नन्विति** ।। दूषयितुं विकल्प्य पृच्छति- **किमिति** ।। **यादृशतादृश इति** ।। याथातथिक इत्यर्थः ।। **विशिष्ट इति** ।। व्यवस्थापकाभावेनेति शेषः ।। **शिखीति** ।। व्रीह्यादित्वादिनिः ।। **जटिल इति** ।। पिच्छादित्वादिलच् । प्रथमदूषणे द्वितीयं परिशेष्य प्रकृते तदभावमाह- **यत्रेत्यादिना** ।। अत इति पुरस्तादुपस्कर्तव्यम् ।। **नासिकादिस्थानभेदेनेति** ।। अनुनासिकाऽननुनासिकभेदेन अचां हलां च भेदसिद्ध्ये स्थानभेदाङ्गीकारादित्यर्थः । कुत एवं

तारमन्द्रध्वनिव्यङ्ग्यत्वरूपतारमन्द्रत्वयोर्वर्णेषु व्यवस्थाकल्पना। अन्यतर-ज्ञानाप्रामाण्यमेव किं न स्यादित्यत आह- **केनापीति ॥ ज्ञानद्वयेति ॥** विरुद्धधर्माध्यासप्रत्यभिज्ञारूपं च प्रकृते ज्ञानद्वयम्। भेदानुमित्यभेदप्रत्यभिज्ञाद्वयं ज्ञानद्वयमिति केचित्। तत्रोभयप्रामाण्यं कथमिति चिन्त्यम्। वर्णानित्यत्ववादिनो वैशेषिकान्प्रति हीदमापादनम्। न चेदमनिष्टं तेषाम्। तैरपि सोऽयमितिप्रत्यभिज्ञाभ्रान्ति-त्वाङ्गीकारादिति शङ्कते- **नन्विति ॥ परिवर्तनेनेति ॥** पीलुपाकवादादिति भावः। आकाशादीत्यादिपदेनाऽ-त्मपरिग्रहः **॥ शब्दादीत्यादि ॥** अत्राऽदिना बुद्ध्यादिपरिग्रहः। शब्दबुद्ध्यादेरव्याप्यवृत्तित्वाभ्युपगमात्। यथोक्तम् 'अव्याप्यवृत्तिः क्षणिको विशेषगुणः' इति। **अतिप्रसङ्गस्येति ॥** सोऽयं परमाणुः, सोऽयम् आकाशः, सोऽयमात्मेत्यादेर्भ्रान्तित्वप्रसङ्गस्येत्यर्थः। अतिप्रसङ्गान्तरज्ञापकमाह- **एतदेवेति ॥** अतिप्रसङ्गस्य बहु-विषयत्वमित्यर्थः।

ननु मुखोक्तस्यादृढत्वे कथं बहुविषयत्वमतिप्रसङ्गस्येत्यतः प्रथमातिप्रसङ्गं द्रढयति- **किञ्चेति ॥** कुत इत्यतो विपक्षेऽनिष्टं प्रसञ्जयति- **तथा सतीति ॥ विवादाभावेति ॥** विषयाभावेन स्थायित्वक्षणिकत्वविवादाभावः स्यादित्यर्थः। अयं भावः। प्रत्यक्षयोग्येष्वेव पार्थिवद्रव्येषु प्रत्यभिज्ञया स्थिरत्वं प्रसाध्य क्षणिकत्वं निरसनीयम्। **(व्या.टि.)** अतीन्द्रियेषु प्रत्यभिज्ञाऽप्रसरात्। अत एव वैभाषिकाधिकरणे 'अनुस्मृतेश्च' इति सूत्रेण पार्थिवादि-प्रत्यक्षयोग्येषु प्रत्यभिज्ञया स्थिरत्वं प्रसाध्यार्थान्तरे च 'उत्तरोत्पादे च पूर्वनिरोधात्' इत्यादिना कार्यकारणभावा-नुपपत्त्यादिना क्षणिकत्वं दूषितम्। वैशेषिकेनैव तत्र क्षणिकत्वमुपेत्य प्रत्यभिज्ञाभ्रान्तित्वाभ्युपगतौ संवादेनासौ निगृह्येत। विवादस्तु बधिरकलहायित इति। ननु देवदत्ताद्येकदेशे संवादेऽपि द्रव्यान्तरेऽस्तु विवाद इत्यत आह- **पार्थिवं हीति ॥** तर्हि अस्त्वाप्यादौ विवाद इत्यत आह- **आप्येत्यादिना ॥ अस्त्ये-वेति ॥** अवयवाप-गमे परमाणुसंयोगरूपासमवायिकारणनाशादापरमाणुनाशोऽवर्जनीय एवेति भावः। आकाशस्येति **॥ तैर-पीति ॥** उभयाङ्गीकारान्न विवाद इति भावः **॥ नाङ्गीकृत इति ॥** नन्वेवमनुव्याख्यानविरोधः। तत्र वैभाषि-काधिकरणे 'आत्मानं च क्षणस्थितम्' इति परमतानुवादादिति चेन्न। तत्र जीवक्षणिकताऽनुवादात्। अत्र च परमात्मनः स्वरूपतो निषेधात्। अत एव तत्र सुधायां 'किमीश्वरेण' इतीश्वरं प्रतिक्षिप्य 'अनुसन्धातुरात्मनः क्षणिकत्वाङ्गीकारात्' इति परमतम् अनूदितम्। जीवक्षणिकत्वन्तु न प्रत्यभिज्ञामात्रनिरस्यमित्यर्थः। कर्मादयो भवन्तु विवादविषया इत्यतस्त एव नेत्याह- **तथेति ॥** यथोक्तं सुधायां परमतानुवादे 'देशान्तरोत्पाद एव कर्मप्रत्ययावलम्बनम्। क्षणिकस्य वास्तवकर्मायोगात्। सन्निकृष्टविप्रकृष्टतयोत्पाद एव संयोगादिव्यवहारगोचरः। अतद्व्यावृत्तिरेव गोत्वादिसामान्यबुद्धिबोध्या' इत्यादि **॥ गुणाश्चेति ॥** सङ्ख्याद्या इत्यर्थः **॥ केवलमिति ॥** परिशेषादित्यर्थः **॥ निबिडेति ॥** अस्फुटावयवापगममित्यर्थः **॥ अवर्जनीयत्वादिति ॥** तुलारोपणे लघुत्वदर्शनादिति भावः।

**॥ पूर्वापरेति ॥** 'पूर्वमध्यापरकलारहितः क्षण इष्यते' इत्यनुव्याख्याने परमतानुवादादिति भावः। अत्र कलाशब्दो विभागवाची। न तु त्रिंशत्काष्ठावाचीति ध्येयम्। विवादसद्भावमङ्गीकरोति- **सत्यमिति ॥** दूषयति- **अयं त्विति ॥ प्रत्यभिज्ञेति ॥** स्थायित्वसाधकत्वेन आशुतरविनाशित्वविरोधित्वेन क्षणिकत्वाशुतरविना-शित्वविवादस्य प्रत्यभिज्ञाऽनिरस्यत्वादिति भावः। युक्त्यन्तरनिरसनीयत्वेऽपि प्रत्यभिज्ञामात्रनिरसनीयविवा-दाभावापादनं युक्तमिति तात्पर्येण **मात्रेणे**त्युक्तम् **॥ देवदत्तादेरिति ॥** शरीरस्येति शेषः। **अङ्गीक्रियत एवेति ॥** अतः सोऽयमिति प्रत्यभिज्ञाभ्रान्तित्वापादनमयुक्तम्। प्रसङ्गस्य विपर्ययापर्यवसानादिति भावः। **अभ्रान्तित्वेति ॥** विषयाबाधादिति भावः। तत्पदपरामृष्टस्य इदम्पदपरामृष्टशरीरं प्रति साक्षादुपादानत्वाभावेऽ-प्यभेदोऽस्त्येव कार्पासस्येव पटेनेत्यवधेयम्। ननु परिणामे प्रमाणाभाव इत्यत आह- **अवयवेति ॥** परिमाणभेदः परिणामे प्रमाणमित्यर्थः **॥ किमपीति ॥** परिमाणभेदादिकमित्यर्थः। **कूटस्थेति ॥** निर्विकारेत्यर्थः। कूटवत्तिष्ठतीति व्युत्पत्तेः। 'कूटं खं विदलं व्योम' इति गीताभाष्योक्तेः। एवं वैषम्ये मूलज्ञापकमाह- **अत एवेति ॥** ननु तत्रापि सावधारणं भाष्ये श्रुतम्। तदेवेदमिति प्रत्यभिज्ञानाच्चेति चेन्न। तत्र एवकारं भिन्नक्रममाश्रित्य इदमेवेति आत्यन्तिकभेद-निरासार्थकत्वोपपत्तेः। उपसंहरति- **विरुद्धेति ॥**

**मूलम् - सर्वक्षणिकत्वं वदताऽपि बौद्धेन सेयं दिगित्यादिप्रत्यभिज्ञाया भ्रान्तित्वं न वाच्यम्; पञ्चस्कन्धेभ्योऽन्यत्वात्।**

**(त.मं.)** ननु नायमनिष्टः प्रसङ्गः। सर्वं क्षणिकमिति हि ब्रूम इति वदन्तं बौद्धं प्रत्याह - **सर्वेति ॥** सेयं दिगित्यादीत्यत्राऽदिशब्दात् तदिदं गगनमिति द्रष्टव्यम्। संस्कार-रूप-विज्ञान-संज्ञा-दुःखेभ्यः पञ्चस्कन्धेभ्यः।

**टीका -** भवेदेषा विभीषिका वैशेषिकादीनाम् । तैः स्थायिनः पदार्थस्याङ्गीकृतत्वात् । यस्तु बौद्धः सर्वस्य क्षणिकत्वमङ्गीकृत्य प्रत्यभिज्ञामात्रस्य भ्रान्तित्वमङ्गीकरोति तस्य तु तथाऽङ्गीकारेऽपि न कश्चिदतिप्रसङ्ग इत्यत आह- **सर्वेति ।।** दिक्शब्देनात्र आकाशो गृह्यते, अव्याकृताकाशस्यैव दिक्त्वज्ञापनार्थम् । आदिग्रहणेन सोऽयं विनाश इत्यस्य ग्रहणम् । कुत इत्यत आह - **पञ्चेति ।।** रूपसंज्ञावेदनासंस्कारविज्ञानलक्षणाः पञ्चस्कन्धा एव अर्थक्रियाकारित्वरूपसत्त्वयोगात् क्षणिकाः। तत्र रूपरसगन्धस्पर्शशब्दात्मकाः परमाणवो रूपस्कन्धः । सविकल्पकं ज्ञानं संज्ञास्कन्धः । सुखदुःखे वेदनास्कन्धः । समनन्तरप्रत्ययस्संस्कारस्कन्धः । निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः । आकाशस्य प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाख्ययोर्द्वयोर्विनाशयोश्च पञ्चस्कन्धेभ्योऽन्यत्वान्नित्यत्वमिति बौद्धसिद्धान्तः । यथोक्तम्-

‘आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्’ इति ।

विनाशद्वयस्वरूपं च-

‘बुद्धिपूर्वविनाशो हि प्रतिसङ्ख्यानिरोधगीः ।
अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसङ्ख्यया ।।’ इति ।

तस्मादाकाशादीनां नित्यत्वात् तद्विषयप्रत्यभिज्ञाभ्रान्तित्वं बौद्धेनापीति न वाच्यम् । अस्ति चाकाशादीनां यादृशतादृशविरुद्धधर्माधिकरणत्वम् । ततस्तन्मात्रस्य भेदहेतुत्वाङ्गीकृतौ आकाशा-दीनामपि भेदप्रसङ्गेन तद्विषयप्रत्यभिज्ञाया अपि भ्रान्तित्वं स्यादिति सम्भवत्येव बौद्धं प्रत्यति-प्रसङ्गाभिधानम् इति भावः । यद्यप्यत्र सर्वक्षणिकत्वनिराकरणेनाप्युत्तरं शक्यते वक्तुम् । तथाऽप्यतिप्रसङ्गकथनप्रस्तावे एतद्व्युत्पादनस्यैवोचितत्वान्न तदत्रोक्तम् । कृतश्चान्यत्र सर्व-क्षणिकत्वनिरासः ।

पञ्चस्कन्धेभ्य इति ‘विशेषणं विशेष्येण’ इत्यनेन विशेषणसमासोऽयं नतु ‘तद्धितार्थ’ इत्यादिना समाहारद्विगुः । अतः पञ्चस्कन्ध्या इति नोक्तम् ।

**(र.टि.) आकाशो गृह्यत इति ।।** ‘आकाशो द्वौ विनाशौ च’ इत्युक्तेस्तैराकाशस्यैव स्थायित्वेनाङ्गीकारादिति भावः । ननु ‘तद्धितार्थ’ इति सूत्रप्रापितसमासे ‘सङ्ख्यापूर्वो द्विगुः’ इति द्विगुसंज्ञायां ‘द्विगुरेकवचनम्’ इति एकवचने ‘द्विगोः’ इति ङीपः प्राप्तौ पञ्चस्कन्ध्या इति वक्तव्यम्, पञ्चस्कन्धेभ्य इति कथमित्यत आह- **विशेषण-मिति ।।** यद्यपि ‘पात्रादिभ्यो न’ इत्यत्राऽदिपदेन स्कन्धशब्दं गृहीत्वा वक्तुं शक्यते, तथाऽपि बहुवचनोपपत्त्यर्थम् एवमाश्रितमिति द्रष्टव्यम् ।

**(रा.टि.) तथेति ।।** सोऽयमिति धियो भ्रान्तित्वाङ्गीकारेऽपीत्यर्थः । तथात्वे सोऽयमाकाश इत्येव कुतो नोक्त-मित्यत आह- **अव्याकृतेति ।।** तस्यारूपितया बाह्येन्द्रियागोचरत्वेऽपि साक्ष्युपनीतस्य सुरभिचन्दनमिति-वच्चाक्षुषप्रत्यभिज्ञोपपत्तिरित्याहुः ।। **स्कन्धा इति ।।** समुदायाः ।। **सत्त्वयोगादिति ।।** यत्सत् तत्क्षणिकं यथा दीपादीति व्याप्तेरिति भावः । अर्थक्रियाकारित्वरूपेत्युक्तिस्तु व्याप्तेरनुकूलतर्कसूचनाय । अर्थक्रियाकारिणः क्षणान्तरेऽपि सत्त्वे तेन घटाद्यर्थान्तरम्, ताभ्यां च द्रव्यान्तरम्, तैश्च घटादिद्रव्यान्तराणीत्येकेनापि घटादिना कुलालशालापरिपूर्तिः स्यात्, अतः क्षणमध्य एवोत्पत्तिविनाशावभ्युपेयाविति तर्कस्याभिमतत्वात् ।। **समनन्त-रेति ।।** सविकल्पकानन्तरेत्यर्थः । अत्र रूपस्कन्धो बाह्यः । अन्ये चत्वार आन्तराः ।। **प्रतिसङ्ख्येति ।।** निरोधपदं प्रत्येकमन्वेति । प्रतिसङ्ख्यानिरोधो नाम बुद्धिपूर्वको मुद्गरादिना घटादिनाशः । अबुद्धिपूर्वकः प्रतिक्षण-विनाशोऽप्रतिसङ्ख्यानिरोध इत्युच्यते । तावेव ससन्तानविनाश-निस्सन्तानविनाशावित्यप्युच्येते । तयोर्द्वयोश्चे-त्यर्थः । प्रतिसङ्ख्यादिशब्दार्थनिर्वचनपरं तदीयवचनं पठति- **बुद्धिपूर्वेति ।।** पञ्चस्कन्धानामिति योज्यम् । प्रतिसङ्ख्यानिरोध इति **गीः** शब्दो वाचकतया यस्य स तथा ।। **तेषामिति ।।** पञ्चस्कन्धानामित्यर्थः । **अप्रति-सङ्ख्यया** अप्रतिसङ्ख्याशब्देन गीयत इत्यर्थः ।। **यादृशतादृशेति ।।** शब्दाश्रयत्वतदभावाश्रयत्वादिरूपमिति भावः ।। **कृतश्चान्यत्रेति ।।** सूत्रभाष्यानुव्याख्यानाऽदौ । ननु ‘तद्धितार्थोत्तरपदसमाहारे च’ इति सूत्रे ‘तद्धितार्थे विषये, उत्तरपदे परतः, समाहारे च वाच्ये दिक्सङ्ख्ये समस्येते’ इत्युक्तेः समाहारे च तत्पुरुषे सति ‘सङ्ख्यापूर्वो द्विगुः’ इति द्विगुसंज्ञायां ‘द्विगोः’ इति ङीप्प्रत्यये पञ्चानां स्कन्धानां समाहारः पञ्चस्कन्धीति

भवितव्यम्, कथं पञ्चस्कन्धेभ्य इति तत्राऽह- **विशेषणमिति ॥** 'विशेषणं विशेष्येण बहुलम्' इति सूत्रेण पञ्च च ते स्कन्धाश्चेति विशेषणसमास इत्यर्थः ।

**(श्री.टि.)** बौद्धः शङ्कते- ***विरुद्धेति ॥ मात्रस्येति ॥** व्यवस्थापकाभावरूपविशेषणेनाविशिष्टस्येत्यर्थः । **तथाऽङ्गीकारेऽपीति ॥** विरुद्धधर्माधिकरणत्वमात्रस्यैव भावभेदहेतुत्वाङ्गीकारेऽपीत्यर्थः । ननु तन्मते 'आकाशो **(श्री.टि.)** द्वौ विनाशौ च' इत्याकाशस्यैव स्थायित्वेनाङ्गीकारात्सोऽयमाकाश इति प्रत्यभिज्ञाया इति वक्त-व्यम् । सेयं दिगिति कस्मादुक्तमित्यत आह- **दिक्शब्देनेति ॥** ननु कण्ठरवेणाऽकाश इत्यनुक्त्वा दिक्शब्देन तस्य ग्रहणे किं निमित्तमित्यत आह- **अव्याकृतेति ॥** स्वमत इति शेषः ॥ **समनन्तरप्रत्यय इति ॥** स्मृतिरित्यर्थ इति केचित् । अन्ये तु सं= समानः, पूर्वानुभवसमानविषयकः, अनन्तरप्रत्ययः= प्रत्यभिज्ञादिरूपो यस्मात् समनन्तरप्रत्ययः । प्रत्यभिज्ञादिजनकः संस्कार एव संस्कारस्कन्ध इत्यर्थ इत्याहुः । अपरे तु समनन्तरप्रत्ययो रूपादिस्कन्धानां वासनेत्यर्थ इत्याहुः । 'समनन्तरप्रत्ययः पूर्वविज्ञानम्' इति वाचस्पतिः । न च पूर्वविज्ञानस्य संस्कारजनकस्य कथं संस्काररूपत्वम् इति वाच्यम् । तन्मते वैशेषिकादिमत इव विज्ञानजन्यसंस्काराश्रयस्य स्थायिन आत्मनोऽभावाद्विज्ञानमेव संस्कार इत्यभ्युपगमादिति वाचस्पतिपक्षस्य विवरणटीकायामुपपादित-त्वात् । समनन्तरप्रत्ययः सजातीयपूर्वविज्ञानमित्यर्थः । आकाशो द्वौ विनाशौ च इति त्रयं **नित्यं** स्थायि । **असंस्कृतम्** अविकारीत्यर्थः । विनाशद्वयस्वरूपं च इति श्लोकेनोक्तमित्यन्वयः ॥ **बुद्धिपूर्वेति ॥** तेषां पञ्चस्कन्धानां बुद्धिपूर्वविनाशे= देवदत्तेन मुद्गरप्रहारादिना सन्तानसाहित्येन बुद्धिपूर्वं क्रियमाणे विनाशे, प्रतिसङ्ख्यानिरोधः= प्रतिसङ्ख्यानिरोधशब्दव्यवहारः । स नाशः प्रतिसङ्ख्यानिरोध इत्युच्यत इति यावत् । अयमेव च ससन्ताननाश इत्युच्यते । प्रतिसङ्ख्यानिरोधधीरित्यपि क्वचित्पाठः । तेषां पञ्चस्कन्धानामेव **अबुद्धि-पूर्वको** देवदत्तकृतमुद्गरप्रहारादिकं विनेति यावत् । सन्तानमन्तरा प्रतिक्षणं जायमानो यो **निरोधो** विनाशः, सोऽप्रतिसङ्ख्यानिरोध इति वर्तते । अप्रतिसङ्ख्यानिरोध इत्युच्यते । अयमेव च निस्सन्ताननाश इत्युच्यत इति श्लोकार्थः ॥ **तस्मादिति ॥** पञ्चस्कन्धेभ्योऽन्यत्वादित्यर्थः ॥ **यादृशतादृशेति ॥** शब्दभावाभावादीत्यर्थः ॥ **यद्यप्यत्रेति ॥** विरुद्धधर्माधिकरणत्वमात्रस्य भेदहेतुत्वमङ्गीकृत्य प्रत्यभिज्ञाभ्रान्तित्वाङ्गीकारेऽतिप्रसङ्ग इति भवेदेषा विभीषिकेत्यादिशङ्कायामित्यर्थः ॥ **अतिप्रसङ्गकथनप्रस्ताव इति ॥** सादृश्यात्प्रत्यभिज्ञा भ्रान्तिरिति वैशेषिकेण शङ्किते यादृशतादृशविरुद्धधर्माधिकरणत्वस्य भावभेदहेतुत्वाङ्गीकारे सोऽयं देवदत्त इत्यादेरपि तथात्वप्राप्तेरिति तं प्रत्यतिप्रसङ्गकथनप्रस्ताव इत्यर्थः ॥ **तद्व्युत्पादनस्येति ॥** अतिप्रसङ्गव्युत्पादनस्येत्यर्थः ।

ननु पञ्चस्कन्धेभ्य इति कथम् । पञ्चानां स्कन्धानां समाहार इति समाहारविवक्षायां 'तद्धितार्थोत्तरपदसमाहारे च' तद्धितार्थोत्तरपदे, समाहारे वाच्ये दिक्सङ्ख्ये एकार्थेन समस्येते इत्यनेन समासे 'सङ्ख्यापूर्वो द्विगुः' सङ्ख्यापूर्वो द्विगुसंज्ञस्स्यादिति समासस्य द्विगुत्वे 'द्विगुरेकवचनम्' द्विगोरर्थः समाहार एकवत् स्यादित्येकवद्भावे, 'अका-रान्तोत्तरपदो द्विगुः समाहारे स्त्रियामिष्टः' इति स्त्रीत्वविवक्षायां 'द्विगोः' द्विगोर्ङीप् स्यात् इति ङीपि ङकार-पकारयोर्लोपे, पञ्चस्कन्ध ई इति स्थिते 'यस्येति च' भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च पर इत्यनेन भसंज्ञकस्य धकारस्थाकारस्य ईकारे परे लोपे, पञ्चस्कन्धीति प्रातिपदिकसिद्धौ स्वाद्युत्पत्त्यनन्तरं पञ्चस्कन्ध्या इति स्यादित्यत आह- **पञ्चस्कन्धेभ्य इतीति ॥** 'विशेषणं विशेष्येण बहुलम्' भेदकं भेद्येन समस्यत इति सूत्रार्थः । तथा च पञ्च च ते स्कन्धाश्च पञ्चस्कन्धास्तेभ्यः पञ्चस्कन्धेभ्य इति कर्मधारयसमासो विवक्षित इति न **(श्री.टि.)** दोष इति भावः । अत्र यद्यपि 'पात्रादिभ्यः प्रतिषेधः' इति वार्तिकेन पात्रादिगणोपरि ङीपः प्रतिषेधात् पञ्चानां पात्राणां समाहारः पञ्चपात्रमितिवत् पञ्चस्कन्धेभ्य इति भविष्यति । तथाऽपि पात्रादिगणमध्येऽस्य पाठाभावात्, आकृतिगणत्वकल्पनस्य चागतिका-गतित्वात् पञ्चपात्रमितिवत्पञ्चस्कन्धमित्येव भवितव्यत्वेन पञ्चस्कन्धेभ्य इति बहुवचनानुपपत्तेश्चेत्थं समाहितमिति ज्ञातव्यम् ।

**(पां.टि.)** नन्वाकाशनित्यतायाः परसम्मतत्वेऽपि दिशो नित्यत्वस्य तदसम्मतेः सोऽयमाकाश इति प्रत्यभिज्ञाया न भ्रान्तित्वमित्येव वाच्यम् । तत्कथमुक्तं सेयं दिगित्यादीत्यतोऽत्र दिक्शब्देनाऽकाशस्यैव ग्रहणान्नानुपपत्ति-रित्याह- **दिक्शब्देनेति ॥** तथाऽपि प्रसिद्धाकाशपदपरित्यागेनाप्रसिद्धदिक्शब्देन तद्ग्रहणमनुपपन्नमित्यतः सति प्रयोजने न तद्दोषायेत्यभिप्रेत्य तदाह- **अव्याकृतेति ॥** प्रसिद्धपदपरित्यागेनाप्रसिद्धपदप्रयोग इति शेषः । **तत्रेति ॥** विषयेन्द्रियात्मना स्थिता इति शेषः । तत्र विषयात्मना स्थितानां रूपादीनां रूप्यन्त इति व्युत्पत्त्या, इन्द्रियात्मना स्थितानां तु तेषां रूप्यन्ते एभिर्विषया इति व्युत्पत्त्या रूपस्कन्धत्वमिति द्रष्टव्यम् । अत्र रूपस्कन्धो बाह्यः । अन्ये चत्वार आभ्यन्तरा इति विवेकः । एतद्व्युत्पादनप्रकारश्च शेषवाक्यार्थचन्द्रिकोक्तरीत्याऽवसेयः। **सुखदुःखे इति ॥** यद्यपि दुःखमेव परमते वेदनास्कन्धः । सुखं तु दुःखाभाव एव । 'दुःखाभावं सुखं चाऽहुः' इत्यन्यत्रोक्तत्वात् । तथाऽपि तदेकदेशिमतमाश्रित्यायमनुवाद इत्यवधेयम् ॥ **समनन्तरप्रत्यय इति ॥** प्रत्यया-नन्तरभाविनां विज्ञानादिरूपप्रत्ययानां

सम्बन्धिनी रागद्वेषमोहरूपा वासना समनन्तरप्रत्यय इत्यर्थः। 'तेषां वासना संस्कारस्कन्धः' इत्यन्यत्रोक्तत्वात्। 'संस्कारस्कन्धो रागादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च' इति भामत्याम् उक्तेश्च। समनन्तरप्रत्यय इत्युक्तिस्तु उक्ताभिप्रायकन्यायनिबन्धस्थोदयनाचार्योक्ति-माश्रित्येति द्रष्टव्यम्। न केवलमाकाशनित्यताया बौद्धसिद्धान्तत्वं न्यायतस्सिद्धमित्येव। किन्तु वचनतोऽ-पीत्यभिप्रेत्य तद्वचनम् उदाहरति- **यथोक्तमिति ॥ असंस्कृतमिति ॥** यथा क्षणिकं नीलादिकमुत्तरं पूर्वेण संस्कृतं, कारणस्य कार्येण वासनाकारितायाः परेणाङ्गीकृतत्वात्, न तथेदं त्रयं संस्कृतम्। अविकृतमिति यावदिति नित्यत्वे हेतुगर्भविशेषणमेतदिति ज्ञातव्यम् ॥ **न तदिति ॥** सर्वक्षणिकत्वनिराकरणेनोत्तरमित्यर्थः। **अन्यत्रेति ॥** अनुव्याख्यान इत्यर्थः।

॥ **विशेषणसमास इति ॥** पञ्च च ते स्कन्धाश्चेति विशेषणसमास इत्यर्थः। ननु पञ्चानां स्कन्धानां समाहार इति द्विगुरेव किं न स्यात्तत्राऽह- **न त्विति ॥** तथा सति 'द्विगुरेकवचनम्' इत्येकवचने 'अकारान्तोत्तर-पदो द्विगुः स्त्रियामिष्टः' इति स्त्रीलिङ्गतायां सत्यां 'द्विगोः' इति ङीपि सति पञ्चस्कन्ध्या इति प्रसङ्गादित्यर्थः। न च 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति वार्तिकाद्द्विगुसमासाङ्गीकारेऽपि न ङीप्प्राप्तिरिति वाच्यम्। स्कन्धशब्दस्य तत्रापाठात्। न च तस्याऽकृतिगणत्वकल्पनया निर्वाहः। तर्हि 'त्रिलोकनाथेन सतां मखद्विषः' इत्यादिप्रयोगस्थलोकशब्दस्यापि पात्रादित्वकल्पनापातात्। न चेष्टापत्तिः। 'यदि त्रिलोकी गणनापरा स्यात्' इत्यादिप्रयोगविरोधेन तस्या वैयाकरणानामसम्मतत्वात्। तथाऽपि बहुवचनायोगावारणाच्च। ननु 'विशेषणं (पां.टि.) विशेष्येण बहुलम्' इत्यनेन न प्रकृते विशेषणसमासोऽभ्युपगन्तुं शक्यते। तद्विशेषक 'दिक्सङ्ख्ये संज्ञायाम्' इत्यत्र संज्ञायामेव विशेषणसमासस्य नियमितत्वात्। पञ्चस्कन्धशब्दस्य च विशिष्टस्यासंज्ञात्वादिति चेत्। षोडशपदार्थादिपदवद्विशिष्टस्यापि पञ्चस्कन्धशब्दस्य सामयिकसंज्ञात्वाभ्युपगमेन विशेषणसमासस्योप-पन्नत्वात्।

**(व्या.टि.)** *अथ वा शून्यवादी पूर्वमनूद्य स्वपक्षे तद्दोषं परिहरति- **विरुद्धेत्यादिना ॥** ननु व्यधिकरणमिदं दूषणाभिधानं तैर्दिश एवानभ्युपगमादित्यत आह- **दिक्शब्देनेति ॥** न च तथाऽपि प्रसिद्धपरित्यागेना-प्रसिद्धपदप्रयोगे प्रयोजनं वाच्यमित्यत आह- **अव्याकृतेति ॥** तेन दिशामाकाशात्पार्थक्यवादिनो वैशेषिकादयो निरस्ता वेदितव्याः। के च ते सर्वे, कुतस्तेषां क्षणिकत्वमित्यत आह- **रूपेति ॥** रूपादिषु रूपशब्दो लिङ्ग-समवायाद्गौणः प्राणभृच्छब्दवत्। अर्थक्रियाकारित्वरूपेति सत्त्वनिरुक्त्या एकस्यैव घटस्य क्षणान्तरवृत्तित्वे तस्य कुर्वद्रूपत्वेन घटान्तरोत्पत्त्या तस्यापि स्वसदृशकार्यारम्भकत्वेन घटपरम्परया गृहपूर्तिः स्यादिति युक्तिः सूचिता ॥ **सुखेति ॥** अत्र सुखशब्देन दुःखाभावग्रहणम्। यथोक्तमनुव्याख्याने 'दुःखाभावं सुखं चाऽहुः' इति। वस्तुतस्तु 'चशब्देन केचित्सुखमपि वेदनास्कन्धेऽन्तर्भावयन्ति इति सूचयति' इति सुधोक्तेः, 'सुखमपि वेदनास्कन्ध इति केचिदतः' इति चन्द्रिकोक्तेः सुखपदं सुखपरमेव। **गीः** शब्दः, ततो बहुव्रीहिः ॥ **अप्रति-सङ्ख्ययेति ॥** संज्ञिना संज्ञा लभ्यते। गीयते इति शेषः ॥ **यादृशतादृशेति ॥** देशकालादिभेदव्यवस्थाप्यमानेत्यर्थः ॥ **उचितत्वादिति ॥** अवसरप्राप्तत्वादित्यर्थः। ननु तर्हि पर्यनुयोज्योपेक्षणमित्यत आह- **कृत इति ॥ अन्य-त्रेति ॥** वैभाषिकाधिकरण इत्यर्थः ॥ **न समाहारद्विगुरिति ॥** अनङ्गीकारफलमाह- **अत इति ॥** च्यवत्स्वा-र्थात्समाहारद्विगोरच्यवत्स्वार्थत्वाद्विशेषणसमासो बलवानिति भावः।

**मूलम् - नच दिश एव भ्रान्तिकल्पिताः ; विज्ञानशून्ययोरपि साम्यात्। नचाऽ-दित्योदयादिनैव दिक्कल्पना ; अन्धकारेऽपि दिङ्मात्रप्रतीतेः।**

**(त.मं.)** अबाधितानां दिशां भ्रान्तिकल्पितत्वाङ्गीकारे बौद्धविशेषाभ्यामबाधितत्वेनाङ्गीकृतयोः विज्ञानशून्ययोरपि भ्रान्तिकल्पितत्वं स्यात्। न चाऽदित्योदयोल्लेखेनैव दिक्कल्पना न स्वरूपतो दिशः सन्तीति वाच्यम्। अन्धकार आदित्यदर्शनाभावेऽपि दिङ्मात्रप्रतीतेः।

**टीका -** अत्र बौद्धैकदेशिनौ विज्ञानशून्यवादिनावाहतुः। स्यादयं प्रसङ्गः सौत्रान्तिकादीनां यैर्दिशो नित्यत्वमङ्गीकृतं नास्माकम्। विज्ञानातिरिक्तं शून्यातिरिक्तं वा सर्वं भ्रान्तिकल्पितमित्यङ्गी-कारात्। तत्र दिगेव भ्रान्तिकल्पिता, कुतस्तस्या नित्यत्वं, कुतस्तरां तत्प्रत्यभिज्ञाया अभ्रान्तित्वं, येनातिप्रसङ्गः स्यादित्यत आह- **नच दिश एवेति ॥** दिगिति प्रकृतेऽपि दिश इति बहुवचनं दिशां बहुत्वमपि सत्यमिति ज्ञापनार्थम्। तेनैकैव दिग् उपचारेण

दशाव्यवहारभागिति वदन्तो वैशेषिकादयो निरस्ता भवन्ति । श्रुतिस्मृतिलोकव्यवहारसिद्धस्य दशत्वस्य निष्कारणमुपचरितत्वग्रहणा-नुपपत्तेः। कुतो नेति चेत्। किं दिशां भ्रान्तिकल्पितत्वं केनचित्प्रमाणेनोच्यते, एवमेव वा। नाऽद्यः। प्रपञ्चमिथ्यात्वप्रमाणानामन्यत्र दूषितत्वात् । असाधारणप्रमाणस्यानुपलम्भात्। न द्वितीयः। अतिप्रसङ्गादित्याह- **विज्ञानेति ॥** प्रमाणेन विनैव भ्रान्तिकल्पितत्वकल्पनस्य सत्यत्वेना-भ्युपगतयोर्विज्ञानशून्ययोर्विषयेऽपि कर्तुं शक्यत्वात्तयोरपि भ्रान्तिकल्पितत्वमापद्येत।

ननु यस्य स्वरूपमेव परोपाधिनिबन्धनं तन्मिथ्या, यथा अङ्गुल्यवष्टब्धनयनोपाधिनिमित्तोऽ-परश्चन्द्रमाः। परोपाधिकं च दिक्स्वरूपम्, आदित्योदयादिनैव दिक्कल्पनात्। तत्कथं दिशो भ्रान्ति-कल्पितत्वे प्रमाणाभाव इत्यत आह- **नचाऽदित्येति ॥** कुतो नेति चेत्। दिक्सामान्यस्वरूपम् आदित्योदयादिकल्प्यम् उत तद्विशेषस्वरूपम्। नाऽद्य इत्याह- **अन्धकारेऽपीति ॥** पराभि-मतोपाध्यभावोपलक्षणमन्धकारग्रहणम्। यदि दिक्स्वरूपमौपाधिकं स्यात्तर्हि उपाधिं विना नोपलभ्येत। नहि नयनस्याङ्गुल्यवष्टम्भेन विनाऽपरश्चन्द्रमा उपलभ्यते। उपलभ्यते चोपाधित्वाभि-मतादित्योदयाद्यभावेऽपि दिक्स्वरूपम्। तत्कथं तदुपाधिकं स्यात्। अवकाशमात्रं हि दिगुच्यते। तच्च परनिरपेक्षेणैव साक्षिणा सर्वावस्थासु प्राणभृन्मात्रस्य सिद्धम्। कथमन्यथाऽन्धकारे कर-प्रसारणमपि कुर्युः। द्वितीयेऽपि किं दिग्विशेषस्वरूपमात्रमादित्योदयादिना कल्प्यमुत तदीयं प्राच्या-दित्वम्। तत्राऽद्यस्यैतदेवोत्तरम्- **अन्धकारेऽपीति ॥** अवकाशभागा एव हि दिग्विशेषाः। तेऽप्यादित्योदयादिनिरपेक्षेण साक्षिणैव प्रतीयन्ते। कथमन्यथा तदभावेऽपि मूर्तान्तरावष्टब्धाकाश-भागपरित्यागेन भागान्तरे करप्रसारणादिकं क्रियते। नच भागानामौपाधिकत्वम्। स्वतो निर्भागस्योपाधिनाऽपि सम्बन्धाभावात्। प्राच्यादित्वं च यदि तत्स्वलक्षणं तदैतदेवोत्तरम् **॥ अन्धकारेऽपीति ॥** अथ प्राच्यादिशब्दवाच्यत्वं तदपि शब्दार्थसम्बन्धस्यौत्पत्तिकत्वेन न काल्पनिकम्।

**(र.टि.)** नन्वन्धकारे सत्यालोकाभावो वर्तते न तु दिगुपाधित्वेन पराभिमतानां सूर्योदयादीनां सर्वेषाम-भावः। तथा च तेषां दिक्कल्पकत्वाङ्गीकारे कथमेतद्व्यभिचारप्रदर्शनमित्यत आह- **पराभिमतेति ॥**

**(रा.टि.)** सौत्रान्तिकादीनामित्यादिपदेन वैभाषिकपरिग्रहः ॥ **श्रुतीति** ॥ 'देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणां पितरः' इत्यादिश्रुतिसिद्धस्य 'दिशो दश दशास्योऽसावजयत् खलु लीलया' इत्यादिस्मृतिसिद्धस्य चेत्यर्थः **॥ अन्यत्रेति ॥** 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रभाष्यानुव्याख्यानादाविति भावः **॥ असाधार-णेति ॥** दिङ्मात्रकल्पितत्वबोधकप्रमाणस्येत्यर्थः। विषयेऽपीति सप्तम्यर्थोक्तिः। अवयवद्वयोपेतानुमान-प्रयोगमाशङ्कते- **ननु यस्येति ॥ पराभिमतेति ॥** नक्षत्रचन्द्रोदयाद्यभावोपलक्षणमित्यर्थः। अन्यथाऽदि-त्योदयाभावेऽप्यन्यमेवोपाधिमन्धकारे ब्रूयात्। गृहादावन्धकारे कस्याप्यभावादिति भावः। अनौपाधिकत्वमेव व्यनक्ति- **अवकाशमात्रमिति ॥ सम्बन्धाभावादिति ॥** कृत्स्नसम्बन्धैकदेशसम्बन्धविकल्पानुपपत्त्यादिनेति भावः ॥ **तत्स्वलक्षणमिति ॥** भागस्वरूपमित्यर्थः।

**(श्री.टि.)** मूलगतैवकाराभिप्रायमाह- **कुतस्तस्या इत्यादिना ॥ सत्यं** स्वाभाविकम्। आद्येऽपि किं प्रपञ्चमिथ्यात्वप्रमाणमेव दिशां भ्रान्तिकल्पितत्वे प्रमाणं दिशामपि प्रपञ्चान्तर्गतत्वादित्युच्यते किं वा दिशामेव भ्रान्तिकल्पितत्वसाधकमसाधारणं प्रमाणं किञ्चिदुच्यते। नाऽद्य इत्याह- **प्रपञ्चेति ॥** न द्वितीय इत्याह- **असाधारणेति ॥** दिशां भ्रान्तिकल्पितत्वेऽसाधारणप्रमाणमाशङ्कते- **नन्विति ॥** 'सौगतास्तु सोपनीतिमुदा-हृतिम्' इति वचनाद्यस्येत्यादिना द्व्यवयवप्रयोग इति ज्ञातव्यम्। अनेन, दिशो भ्रान्तिकल्पिताः, परोपाधि-निबन्धनस्वरूपवत्त्वात्, अङ्गुल्यवष्टब्धनयनोपाधिनिमित्तापरचन्द्र इवेत्यनुमानमुक्तं भवति। अनुमाने स्वरूपा-सिद्धिं वक्तुमाह- **किं दिक्सामान्येत्यादि ॥** नन्वन्धकारेऽपीति कथमुक्तम्, परेण ह्यादित्योदयादिनैव दिक्कल्प-नोक्ता न त्वालोकेन। तथा चान्धकारे सत्यालोकाभावो वर्तत इत्येव प्राप्तं न तु दिगुपाधित्वेन पराभिमतानामादि-त्योदयादीनां सर्वेषामभावः। न हि सूर्योदयाद्यभावोऽन्धकारः। तथा चाऽदित्योदयादीनां दिक्कल्पकत्वाङ्गीकारे कथमेतद्व्यभिचारप्रदर्शनमित्यत आह- **पराभिमतेति ॥** कथमादित्योदयाभावेऽपि दिक्स्वरूपम् उपलभ्यत इत्यतस्तदुपपादयति- **अवकाशमात्रमिति ॥** केवलाव्याकृताकाशमेवेत्यर्थः ॥ **दिगित्युच्यत इति ॥** दिक्-सामान्यमित्युच्यत इत्यर्थः ॥ **परनिरपेक्षेणेति ॥**

आदित्योदयादिरूपोपाधिनिरपेक्षेणेत्यर्थः ॥ **सर्वावस्था-स्विति** ॥ आदित्योदयसद्भावदशायां तदभावदशायां चेत्यर्थः ॥ **अन्यथेति** ॥ साक्षिणाऽवकाशमात्ररूप-दिक्सामान्यस्वरूपस्यासिद्धत्व इत्यर्थः । **अन्धकारे** दिक्सामान्यस्वरूपकल्पकादित्योदयाद्युपाध्यभावदशायाम् ॥ **अवकाशभागा एवेति** ॥ अव्याकृताकाशस्यांशा एवेत्यर्थः ॥ **अन्यथेति** ॥ अव्याकृताकाशप्रदेश-रूपदिग्विशेषस्वरूपस्य साक्षिणा प्रतीत्यनङ्गीकार इत्यर्थः । **तदभावेऽपि** दिग्विशेषस्वरूपमात्रकल्पकादि-त्योदयाद्युपाध्यभावेऽपि ॥ **मूर्तान्तरेति** ॥ कुड्यादीत्यर्थः । ननु दिग्विशेषस्वरूपत्वेनाभिमतानाम् अव-काशभागानामौपाधिकत्वे परोपाधिकत्वेन दिग्विशेषस्वरूपाणां मिथ्यात्वमेव प्राप्तमित्याशङ्क्य निषेधति- **नच भागानामिति** ॥ **सम्बन्धाभावादिति** ॥ उपाधिसम्बन्धार्थं पुनरौपाधिकभागान्तरकल्पने चानवस्थेति भावः । तदीयं दिग्विशेषस्वरूपसम्बन्धि यत्प्राच्यादित्वं तदादित्योदयादिना कल्प्यमिति द्वितीयपक्षं दूषयितुमाह- **(श्री.टि.) प्राच्यादित्वं चेति** ॥ **तत्स्वरूपेति** ॥ दिग्विशेषस्वरूपेत्यर्थः ॥ **अन्धकारेऽपीतीति** ॥ दिग्विशेषस्वरूपं चाऽदित्योदयादिनिरपेक्षेण साक्षिणैव प्रतीयते । कथमन्यथा मूर्तान्तरावष्टब्धावकाशभाग-परित्यागेन भागान्तरे करप्रसारणादिकं कुर्युरित्युक्तमेवोत्तरमित्यर्थः । **तदपि** प्राच्यादिशब्दवाच्यत्वमपि । न काल्पनिकमित्यन्वयः। **न काल्पनिकम्** अस्माच्छब्दादयमर्थो बोद्धव्य इति परमेश्वरेच्छारूपसङ्केतो नेत्यर्थः । येन प्राच्यादिशब्दवाच्यत्वस्य परमेश्वरेच्छारूपपरोपाधिकत्वप्राप्त्या पुनर्मिथ्यात्वं स्यादिति भावः । कुतो न काल्पनिकमित्यत उक्तम्- **शब्दार्थसम्बन्धस्यौत्पत्तिकत्वेनेति** ॥ स्वाभाविकत्वेनेत्यर्थः । यथोक्तं जैमिनिना 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति । उक्तं चानुव्याख्याने 'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते' इति । सङ्केतपक्षस्तु सुधायां दूषित इत्यवधेयम् ।

**(पां.टि.)** ननु सेयं दिगित्येकवचनस्य प्रस्तुतत्वात्तदनुसारेण, न च दिगेव भ्रान्तिकल्पिता इत्येकवचनमेव प्रयोक्तव्यम् । तत्किमिति दिश इति बहुवचनस्य प्रयोग इत्यतस्तत्प्रयोजनमाह- **दिगितीति** ॥ किं तद्बहुत्वस्य सत्यताज्ञापनेनापि सिद्ध्यतीत्यत आह- **तेनेति** ॥ ननु वैशेषिकाद्युक्तरीत्या बहुत्वस्यौपचारिकत्वमेव किं न स्यादित्यतः किं साधकप्रमाणाभावादौपचारिकत्वाश्रयणं बाधकसद्भावाद्वा इति विकल्पं मनसि निधायाऽद्यं दूषयति- **श्रुतिस्मृतीति** ॥ द्वितीयमसिद्ध्या दूषयति- **निष्कारणमिति** ॥ आद्ये प्रमाणं भवत् साधारणं वा स्यादसाधारणं वेति विकल्पं मनसि निधायाऽद्यं दूषयति- **प्रपञ्चेति** ॥ **अन्यत्रेति** ॥ मिथ्यात्वानुमानखण्डनादौ, अत्रैव ग्रन्थेऽपि प्रदेशान्तरे वा इत्यर्थः । द्वितीयं दूषयति- **असाधारणस्येति** ॥ दिङ्मात्रमिथ्यात्वसाधकस्येत्यर्थः ॥ **प्रमाणाभाव इति** ॥ असाधारणप्रमाणाभाव इत्यर्थः । ननु दिश उपाधिनिबन्धनत्वे परेण शङ्किते तन्निरासा-योपाध्यभावेऽपि प्रतीयमानत्वमेव वाच्यम् । न त्वन्धकारेऽपि प्रतीयमानत्वम् अनुपयोगादित्यत आह- **पराभि-मतेति** ॥ अप्रयोजकत्वनिरासाय तर्कमूलभूतां व्याप्तिम् उपपादयति- **नहीति** ॥ इष्टापत्तिं निरस्यति- **उपलभ्यते चेति** ॥ ननु पराभिमतोपाध्यभावदशायां तत्स्वरूपोपलम्भकाभावात्स एव नास्तीति नेष्टापत्तिपरिहार इत्यत आह- **तच्चेति** ॥ नन्वन्धकारे करप्रसारणान्यथानुपपत्त्या परनिरपेक्षेण साक्षिणा सर्वावस्थास्ववकाशज्ञानसिद्धावपि न दिक्स्वरूपज्ञानसिद्धिरिति नानेन दिक्सामान्यस्वरूपस्यौपाधिकत्वाभावसिद्धिरित्यत उक्तम्- **अवकाशमात्रं हीति** ॥ पूर्वोत्तरभावेन योजनीयम् । उपपत्तिबाधितं च भागानामौपाधिकत्वकल्पनमित्याह - **न चेति** ॥ तत्कथमित्यतोऽसम्बद्धस्योपाधेर्भेदकताया अतिप्रसङ्गदुष्टत्वेनासम्भवात् सम्बद्धपक्षेऽप्युपाधिसम्बन्धस्याऽकाशे सर्वगतत्वे कृत्स्नस्याप्याकाशस्य एकोपाधिना ग्रस्तत्वेनोपाधेर्भेदकत्वाभावापत्त्या एकदेशगतत्वं वाच्यम् । न च तत्सम्भवति । तथा हि । स किमेकदेशः स्वाभाविको वा औपाधिको वा । नाऽद्यः । आकाशस्य स्वतो निर्भागत्वाभ्युपगमेन तदयोगात् । नान्त्यः । 'एकदेशेऽनवस्था स्यात्' इत्युक्तन्यायेनानवस्थाप्रसङ्गादि-त्याशयेनाऽह- **स्वत इति** ॥ **औत्पत्तिकत्वेनेति** ॥ स्वाभाविकत्वेनेत्यर्थः । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति जैमिनिसूत्रादिति भावः ।

**(व्या.टि.) विज्ञानशून्यवादिनाविति** ॥ 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिरिति भावः । **कुतस्तरा-मिति** ॥ 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यव्ययपूर्वात्तरप आम्प्रत्यय इति भावः ॥ **श्रुतिस्मृतीति** ॥ 'प्राची दिगग्निर्देवता' इत्यादिश्रुतिः, 'विद्रवन्ति दिशो दश' इत्यादिस्मृतिः, ताभ्यामित्यर्थः । आद्येऽपि साधारणेन उतासाधारणेनेत्याद्यं द्वेधा विकल्प्य क्रमेण निराह- **प्रपञ्चमिथ्यात्वेत्यादिना** ॥ **विषयेऽपीति** ॥ अनेन मूलं विषयसप्तम्यन्तमिति सूचितम् । परोपाधिकत्वभ्रान्तिकल्पितत्वेऽसाधारणप्रमाणमभिसन्धायोदाहरणोपनयौ दर्शयति- **ननु यस्येति** ॥ उदयादीत्यादिपदेन चन्द्रतारकाद्युदयग्रहणम् । नन्वन्धकारेऽपीत्यसङ्गतम् । न ह्यालोकगम्यत्वं परोऽब्रवीद्येन प्रतीत्या तन्निवर्तेत । औपाधिकत्वमेव हि सोऽभ्यधात् ततः कथमनेन तन्निरास इत्यत आह- **पराभिमतेति** ॥ फलितमाह- **यदीत्यादिना** ॥ तर्कमूलभूतां व्याप्तिं दर्शयति- **नहीति** ॥ ननु दिशः परत्वापरत्वानुमेयतया निरपेक्षप्रतीतिरसिद्धेत्यत आह- **अवकाशमात्रं हीति** ॥ दिश आकाशाद् भेदे

प्रमाणाभावादिति भावः । **साक्षिणैवेति ॥** 'अव्याकृतं हि गगनं साक्षिगोचरम्' इत्यनुव्याख्यानोक्तेरिति भावः । विपक्षे बाधकमाह- **अन्यथेति ॥** अवकाशज्ञान इत्यर्थः । उपाधिसम्बन्धानुपपत्त्या च भागानामौपाधिकत्वं निराह- **नचेति ॥** **सम्बन्धाभावादिति ॥** 'न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः' इत्युक्तदिशेति भावः । द्वितीयेऽपि किं प्राच्यादित्वं स्वलक्षणमुत तच्छब्दवाच्यत्वमिति विकल्प्याऽद्यं दूषयति- **प्राच्यादित्वमिति ॥ स्वलक्षणमिति ॥** प्राच्यादिशब्दशक्यस्वरूपमात्रमित्यर्थः । द्वितीयं दूषयितुमनुवदति- **अथेति ॥** वाच्यत्व-मित्यनेन वाच्यतावच्छेदकप्राचीत्वादिकमुपलक्षणीयम् । तदपि नित्यत्वान्न काल्पनिकमिति चावधेयम् । ससम्बन्धिकस्य प्राचीत्वादेरनङ्गीकारे वाच्यत्वस्य वक्ष्यमाणसम्बन्धिशब्दत्वस्य चानुपपत्तेः ।

**मूलम् - कादाचित्कभ्रान्तिरेवाऽदित्योदयादिदर्शनान्निवार्यते । सा च विज्ञानशून्ययोरपि भवतीति तेषां मतम् ; वादिविप्रतिपत्तेः । अतो दिशः स्थिरा एवेति सिद्ध्यति शून्यवदेव ।**

**(त.मं.)** तर्हि भ्रमादनिश्चितदिग्विशेषस्य कथमादित्यदर्शनाद्दिङ्निश्चय इत्यत आह - **कादा-चित्केति ॥** यथाकथञ्चिद् भ्रान्तिविषयत्वमभ्युपगतं चेद् दिशामवास्तवत्वमेव स्यादित्यत आह- **सा चेति ॥** अस्ति हि शून्यविज्ञानयोः प्रतिवादिनां विप्रतिपत्तिः । सा च तत्र भ्रान्तिनिमित्तेति हि तेषां मतम् ।

**टीका -** एवं तर्हि दिक्प्रतीत्यर्थिनः किमित्यादित्योदयादिकं प्रतीक्षन्त इत्यत आह- **कादाचि-त्केति ॥** दिक्स्वरूपतद्विशेषयोः सिद्धत्वेऽपि दिगन्तरे दिगन्तरत्वभ्रान्तिं निवर्तयितुमेव तत्प्रतीक्ष-णम् । सा च भ्रान्तिरपि न सर्वदा । अतस्तत्प्रतीक्षणमपि न सर्वदेति सूचयितुं कादाचित्केत्यु-क्तम् । तेन दिक्प्रतीतावादित्योदयाद्यपेक्षाभावः स्पष्टी(स्फुटी)कृतो भवति । अनेन प्राच्यादि-शब्दव्युत्पत्तौ आदित्योदयादीनामुपलक्षणत्वेनोपात्तत्वात्तदर्थमप्युपयोग इति सूचितम् । दिगन्तरे दिगन्तरभ्रमस्य तद्विषयत्वात् ।

ननु दिशो वास्तवत्वे स्तम्भादिवद्व्यवस्थितत्वं स्यात् । स्तम्भो हि सर्वान् प्रति स्तम्भ एव । नचैवं दिक्, अस्माकं प्राच्या अन्येषां प्रतीचित्वात् । मैवम् । किं दिक्स्वरूपम् अधिकृत्य एतदुच्यते उत प्राच्यादिशब्दवाच्यत्वम् । नाऽद्यः । स्वरूपस्य व्यवस्थितत्वात् । न द्वितीयः । सम्बन्धिशब्द-त्वात् । नहि पितापुत्रादिशब्दा अव्यवस्थिता इत्येतावता पित्रादिस्वरूपं तच्छब्दवाच्यत्वं वाऽवास्तवं भवतीति ।

ननु यदि दिशो भ्रान्तिविषयत्वमङ्गीकृतं तदा मिथ्यात्वं सिद्धमेव शुक्तिरजतादिवदिति चेत् । किमारोप्यतया भ्रान्तिविषयत्वं मिथ्यात्वे हेतुत्वेन विवक्षितमुताधिष्ठानतया अथ साधारणम् । आद्ये सिद्धसाधनम् । आरोप्याया दिशो मिथ्यात्वेनाङ्गीकारात् । आरोप्यस्य मिथ्यात्वेऽपि प्रधानस्य सत्यत्वोपपत्तेः । द्वितीयतृतीयौ निराकरोति- **सा चेति ॥ सा** भ्रान्तिश्च सत्यत्वेनाङ्गीकृतयोर्विज्ञान-शून्ययोरधिष्ठानयोर्विषयेऽपि भवतीति **तेषां** विज्ञानवादिनां शून्यवादिनां च सम्मतम् । कथमित्यत आह- **वादीति ॥** अस्ति खलु वादिनां विज्ञानविषये शून्यविषये च विप्रतिपत्तिः । नोक्तरूपं विज्ञानं शून्यं वा तत्त्वमिति वैशेषिकादिभिरभ्युपेतत्वात् । सा च तेषां विप्रतिपत्तिर्भ्रान्तिरिति परेणावश्यमङ्गीकार्यम् । तथा चोक्तविधया भ्रान्तिविषयत्वमनैकान्तिकमिति । प्रकृतमुपसंहरति- **अतो दिश इति ॥ अतो** बाधकप्रमाणाभावात् साधकस्य साक्षिणो भावाच्च विज्ञानशून्यवद्दिशः सत्या एवेति बहिरेवोपसंहर्तव्यम् । ततोऽयं द्वितीयस्थैर्योपसंहारः । तत्र **अत** इति प्रत्यभि-ज्ञानादित्यर्थः । कैश्चिद्विज्ञानवादिभिर्विज्ञानस्य स्थैर्यं नाङ्गीकृतमिति शून्यवदेवेत्युक्तम् । अनेन प्रागुक्तस्यातिप्रसङ्गस्य विपर्यये पर्यवसानं चोक्तं भवति ।

**(र.टि.) ॥ उपलक्षणत्वेनोपात्तत्वादिति ॥** व्युत्पित्सुभिरिति शेषः । प्राच्यादिदिग्विशेषे आदित्योदयादीनां कादाचित्कत्वादुपलक्षणत्वेनेत्युक्तम् । ननु तद्वाचकशब्दप्रवृत्तिनिमित्तधर्मव्याप्यधर्मस्य ज्ञानमपि तस्मिन्नतत्त्व-भ्रमनिवर्तकं भवति । न तु प्रवृत्तिनिमित्तभूतधर्मस्यैव ज्ञानम् । तथा चाऽदित्योदयादीनां प्राच्यादौ कादाचित्क-**(र.टि.)**प्रतीच्यादित्वभ्रमनिवर्तकज्ञानविषयत्ववचनेन प्राच्यादिशब्दव्युत्पत्तावादित्योदयादीनां कथमुपयोगः सूचित इत्यत आह-

**दिगन्तर इति ॥** प्रतीच्यादौ प्राचीत्वादिभ्रमस्याऽदित्योदयादिविषयत्वादित्यर्थः । अतस्मिं-स्तद्धर्मारोपप्रकारत्वस्य तद्वाचकशब्दप्रवृत्तिनिमित्तत्वाव्यभिचारादिति भावः । 'न च दिश एव भ्रान्तिकल्पिताः' इत्यादिना उपपादितावान्तरप्रमेयं, दिक्सत्यत्वमनुपसंहृत्य कथं दिक्प्रत्यभिज्ञाया अभ्रान्तित्वोपसंहार इत्यत आह- **अतो बाधकप्रमाणाभावादिति ॥** अनेन 'अतो दिशः' इत्यनन्तरं 'सत्या एव' इत्यध्याहृत्य एतदेव तदुपसंहारपरत्वेन योज्यमित्युक्तं भवति । 'बहिरेवोपसंहर्तव्यम्' इत्यस्याप्ययमेवार्थः । अत एवात्र **अत** इति मूलपदं 'बाधकप्रमाणाभावात्' इत्यादिना, उत्तरत्र तु 'तत्रात इति प्रत्यभिज्ञानात्' इत्यनेन द्वेधा व्याख्यातम् **॥ अनेनेति ॥** प्रत्यभिज्ञाया अभ्रान्तित्वोपसंहारपरेणानेन वाक्येन 'सोऽयं देवदत्त इत्यादेरपि' इत्यत्राऽदिपदोक्त-दिक्प्रत्यभिज्ञाभ्रान्तित्वप्रसङ्गस्य 'नास्ति च दिक्प्रत्यभिज्ञाभ्रान्तित्वम्, अतो दिशः स्थिरा एव' इति विपर्यय-पर्यवसानं चोक्तं भवतीत्यर्थः ।

**(रा.टि.) ॥ तत्प्रतीक्षणमिति ॥** आदित्योदयादिप्रतीक्षणमित्यर्थः **॥ तेनेति ॥** भ्रान्तिनिवृत्त्यर्थकत्व-कथनेनेत्यर्थः । **अनेनेति ॥** कादाचित्केत्यादिकथनेनेत्यर्थः । ननु भ्रमनिवृत्त्यर्थमुक्तादित्योदयादीनां कथं व्युत्पत्तावुपलक्षणतया उपात्तत्वमुच्यत इत्यत आह- **दिगन्तर इति ॥ तद्विषयत्वात्** सूर्योदयादिविषयत्वादि-त्यर्थः । उदीच्यादौ इयं प्राचीत्यादिभ्रमस्य अस्यां सूर्योदय इत्येवंरूपत्वात्प्राच्यादिपदव्युत्पत्ता**वुपलक्षणतया** तटस्थनिमित्ततयोपादानम् अर्थात्प्राप्तम्, शब्दप्रवृत्तिनिमित्तज्ञानेन तदन्याऽकारभ्रमनिवृत्तेः तन्निवर्तकत्वेनोक्तस्य सूर्योदयादेस्तच्छब्दप्रवृत्तौ निमित्तत्वलाभादिति भावः । **प्रधानस्य सत्यत्वोपपत्तेरिति ॥** यदनुभवजन्य-संस्कारसचिवं दुष्टेन्द्रियम् आरोपितविषयं ज्ञानं जनयति तत् प्रधानमुच्यते, तस्य सत्यत्वोपपत्तेरित्यर्थः । एतेन सर्वदिशामपि कालादिभेदेन दिगन्तरभ्रमविषयत्वात् सर्वासां मिथ्यात्वं प्राप्तमिति परास्तम् । प्रधानदिशां सत्यत्वा-दिति । सप्तम्यर्थमाह- **विषयेऽपि भवतीति ॥ नोक्तरूपमिति ॥** विज्ञानं शून्यं वा एकमेव तत्त्वमन्यत्सर्वं तत्र कल्पितमित्येव परोक्तरूपमित्यर्थः । **उक्तविधयेति ॥** अधिष्ठानतया आरोपाधिष्ठानसाधारणतया वा इत्युक्तविधयेत्यर्थः । 'दिगेव भ्रान्तिकल्पिता कुतस्तस्या नित्यत्वम्' इति प्रागुक्ताक्षेपमध्ये प्रथमस्य 'न च दिश एव भ्रान्तिकल्पिताः' इत्यादिना निरस्तस्योपसंहाराप्रतीतेराह- **सत्या एवेति बहिरेवोपसंहर्तव्यमिति ॥ प्रत्यभिज्ञानादिति ॥** तस्य अभ्रान्तित्वं च दिशां सत्यत्वसाधनेनैव सिद्धमिति कुतस्तस्या अभ्रान्तित्वमिति तृतीयाक्षेपोऽपि प्रत्युक्त इति भावः । **प्रागुक्तस्येति ॥** 'न च दिश एव भ्रान्तिकल्पिताः । विज्ञानशून्ययोरपि साम्यात्' इत्युक्तातिप्रसङ्गस्येत्यर्थः ।

**(श्री.टि.) ॥ एवं तर्हीति ॥** अवकाशभागभूतानां दिशाम् अनौपाधिकत्व इत्यर्थः । **दिक्प्रतीतीति ॥** प्राच्यादि-दिक्प्रतीत्यर्थिन इत्यर्थः । **किमितीति ॥** दिक्स्वरूपस्याऽदित्योदयकल्पितत्व एव ह्युपाधिभूतादित्योदयादिप्रतीक्षा उपपद्यते नान्यथेति भावः । **दिगन्तरे** प्राच्याम् । **दिगन्तरत्वभ्रान्तिं** प्रतीचीत्वभ्रान्तिम् । **तत्प्रतीक्षणम् (श्री.टि.)** आदित्योदयप्रतीक्षणम् । **तेनेति ॥** कादाचित्कभ्रान्तिनिवृत्त्यर्थमेवाऽदित्योदयप्रतीक्षावचनेने-त्यर्थः । **अनेनेति ॥** आदित्योदयदर्शनस्य प्राच्यधिष्ठानकप्रतीचीत्वप्रकारकभ्रान्तिनिवारकत्वरूपव्याप्यधर्म-कथनेन, आदित्योदयस्य प्राचीशब्दप्रवृत्तिनिमित्तत्वलाभात्त**दर्थमपि** प्राच्यादिशब्दवाच्यवाचकभावलक्षण-सम्बन्धज्ञानलक्षणव्युत्पत्त्यर्थमपि, प्रवृत्तिनिमित्तभूतानाम् आदित्योदयादीनामुपयोग इति व्यापकं सूचितमित्य-न्वयः । एवं च यद् यदधिष्ठानकभ्रमनिवर्तकं तत् तच्छब्दप्रवृत्तिनिमित्तं यथा शुक्त्यधिष्ठानकरजतत्वप्रकारक-भ्रान्तिनिवर्तकं शुक्तित्वं शुक्तिशब्दप्रवृत्तिनिमित्तम् । प्रवृत्तिनिमित्तभूतेन च तेन शुक्तिशब्दवाच्यत्वज्ञानं भवति । एवमादित्योदयस्यापि प्राच्यधिष्ठानकप्रतीचीत्वप्रकारकभ्रान्तिनिवर्तकत्वात् प्राचीशब्दप्रवृत्तिनिमित्त-त्वम् । प्रवृत्तिनिमित्तभूतेन च तेन प्राचीशब्दवाच्यत्वज्ञानं भवतीत्याशयः । ननु गवादिशब्दप्रवृत्तिनिमित्तस्य सास्नादेर्यावद्द्रव्यभावित्वदर्शनेन आदित्योदयादीनां तथात्वाभावात्कथं प्रवृत्तिनिमित्तत्वमित्यत उक्तम्- **प्राच्यादिशब्दव्युत्पत्तावादित्योदयादीनामुपलक्षणत्वेनोपात्तत्वादिति ॥** व्युत्पित्सुभिरिति शेषः । प्रवृत्तिनिमित्तं हि द्विविधं विशेषणमुपलक्षणं चेति । तत्राऽद्यं सास्नादि । द्वितीयं काकादि । तत्र देवदत्तगृहादौ काकादेरिव प्राच्यादिशब्दव्युत्पत्तावप्यादित्योदयादेः कादाचित्कत्वेन व्युत्पत्तिसमयेऽविद्यमानत्वरूपोपलक्षणत्वेन प्रवृत्तिनिमित्तत्वमित्यर्थः । ननु यद् यदधिष्ठानकभ्रमनिवर्तकं तत् तच्छब्दप्रवृत्तिनिमित्तमिति व्याप्तिरयुक्ता । तथा हि । धूमवत्त्वं पर्वताधिष्ठानकनिर्वह्नित्वप्रकारकभ्रमनिवर्तकमिति पर्वतशब्दप्रवृत्तिनिमित्तं स्यात्, तेन तच्छब्दवाच्यत्वज्ञानं च स्यात् । तथा शुक्त्यधिष्ठानकरजतत्वप्रकारकभ्रमनिवर्तकत्वं रजताभावज्ञानस्याप्यस्तीति रजताभावोऽपि शुक्तिशब्दप्रवृत्तौ निमित्तं स्यात्, तेन तच्छब्दवाच्यत्वज्ञानं च स्यात् । तथा च व्यभिचार इत्याशङ्क्य व्याप्तौ किञ्चिद्विशेषणं देयमित्यभिप्रेत्य तद्विशेषणं प्रकृते उपपादयति- **दिगन्तरे दिगन्तरभ्रमस्य तद्विषयत्वादिति ॥ दिगन्तरे** प्रतीच्यां **दिगन्तरभ्रमस्य** प्राचीत्वभ्रमस्य । **तद्विषयत्वात्** तद् विषयो

यस्य तत्तद्विषयं तस्य भावस्तद्विषयत्वं तस्मात्तद्विषयत्वात्। **तद्विषयकत्वाद्** आदित्योदयप्रकारकत्वादित्यर्थः।

इदमत्राऽकूतम्। यद्यधिष्ठानकभ्रमनिवर्तकं यदारोपे च यत्प्रकारत्वेन भासते तत् तत्र प्रवृत्तिनिमित्तमिति व्याप्तिरभिप्रेता। यथा शुक्तित्वं शुक्त्यधिष्ठानकरजतत्वप्रकारकभ्रमनिवर्तकं यदारोपे यस्य शुक्तिरूपाधिष्ठान-स्यान्यत्र ब(र)ङ्गादावारोपे च शुक्तित्वं प्रकारत्वेन भासत इति शुक्तित्वं शुक्तिशब्दप्रवृत्तौ निमित्तं भवति। एवं च न व्यभिचारः। धूमवत्त्वस्य रजताभावस्य वा पर्वतशुक्त्यधिष्ठानकनिर्वह्नित्वरजतत्वप्रकारकभ्रमनिवर्तकत्व-सद्भावेऽपि पर्वतस्य शुक्तेर्वाऽन्यत्राऽरोपे धूमवत्त्वस्य रजताभावस्य वा प्रकारत्वेन भासमानत्वाभावान्न तयोस्त-च्छब्दप्रवृत्तिनिमित्तत्वम्। प्रकृते च प्रतीच्यां प्राचीत्वारोपेऽप्यादित्योदयस्य प्रकारत्वेन भासमानत्वाद्युक्तं तच्छब्दप्रवृत्तिनिमित्तत्वमिति। अत्र यद् यदधिष्ठानकभ्रमनिवर्तकं तत् तच्छब्दप्रवृत्तिनिमित्तमित्यंशो मूले भ्रान्तिनिवर्तकत्वोक्त्या सूचितः। दिगन्तर इत्यादिना सूचितो यदारोपे च यद्भासत इत्यंशः कादाचित्कभ्रान्तीति मूले सामान्योक्त्या सूचित इत्यवधेयम्।

**(श्री.टि.)** **किं दिक्स्वरूपमित्यादि ॥** किं दिक्स्वरूपस्य वास्तवत्वे स्तम्भादिवद् व्यवस्थितत्वं स्यादि-त्यापाद्यते, उत प्राच्यादिशब्दवाच्यत्वस्य वास्तवत्वे स्तम्भादिवद् व्यवस्थितत्वं स्यादिति वेत्यर्थः। **व्यवस्थित-त्वादिति ॥** तथा चेष्टापत्तिरिति भावः। नन्वस्तु प्राच्यादिशब्दानां सम्बन्धिशब्दत्वम्, तथाऽप्यव्यवस्थितत्वाद-वास्तवत्वं दिशां दुष्परिहरमित्यत आह- **न हीति ॥** कस्यचित्पितुरेवान्यं प्रति पुत्रत्वात् कस्यचित्पुत्रस्यैवान्यं प्रति पितृत्वादित्यर्थः। दिशो मिथ्याभूता भ्रान्तिविषयत्वाच्छुक्तिरजतादिवदित्यनुमानं दिशां मिथ्यात्वे प्रमाण-मित्याशङ्कते- **नन्विति ॥ साधारणमिति ॥** आरोप्याधिष्ठानसाधारणं भ्रान्तिविषयत्वमात्रमित्यर्थः। सिद्धसाधनत्वमेव विवृणोति- **आरोप्याया इति ॥** नन्वारोप्याया दिशो मिथ्यात्वे दिक्स्वरूपस्य सत्यत्वाङ्गीकारो भग्न इति चेत्तत्राऽह- **आरोप्यस्येति ॥** दिक्स्वरूपस्येत्यर्थः। तथा चाऽरोप्यस्य रूप्यस्य मिथ्यात्वेऽपि प्रधान-भूतापणस्थरूप्यस्य सत्यत्ववदारोप्यदिक्स्वरूपस्य मिथ्यात्वेऽपि प्रधानभूतदिक्स्वरूपस्य सत्यत्वमेवेत्यर्थः। **कथमितीति ॥** अधिष्ठानतया भ्रान्तिविषयत्वं साधारणं वा कथं विज्ञानशून्ययोरस्तीत्याशङ्कायाम् आहेत्यर्थः। **नोक्तरूपमिति ॥** 'ज्ञानमेवैकमखिलज्ञेयाकारं प्रभासते। तत्र सन्ततिभेदश्च स्वभेदो भेद एव च। कल्पिताः प्रतिभासन्ते। शून्यं मनोवाचामगोचरम्' इत्यादिना विज्ञानवादिशून्यवादिभ्यामुक्तरूपमित्यर्थः। तत्किमनेना-नुमानस्य दूषणमुक्तमित्यत आह- **तथा चेति ॥ उक्तविधयेति ॥** विज्ञानं शून्यं वा न तत्त्वमित्येवम् अतत्त्वता-प्रकारकभ्रमाधिष्ठानत्वस्य विज्ञानशून्ययोरपि सद्भावेन अधिष्ठानतया भ्रान्तिविषयत्वमनैकान्तिकमित्यर्थः। दिश इत्यनन्तरं सत्या एवेति शेषपूरणम्। **स्थैर्योपसंहारो** वर्णस्थैर्योपसंहारः। **तत्रात इतीति ॥ तत्र** द्वितीये स्थैर्योपसंहारे अत इत्यस्य प्रत्यभिज्ञानादित्यर्थो द्रष्टव्य इत्यर्थः। विज्ञानशून्ययोरुभयोरपि प्रकृतत्वाद्विज्ञान-परित्यागेन शून्यवदेवेत्युक्तौ किं निमित्तमित्यत आह- **कैश्चिदिति ॥ अनेनेति ॥** दिशां सत्यत्वोपसंहारपरेणानेन मूलवाक्येनेत्यर्थः। **प्रागुक्तस्येति ॥** प्रमाणं विना एवमेव दिशां भ्रान्तिकल्पितत्वं चेदुच्यते तर्हि सत्यत्वेन त्वदभ्युपगतयोर्विज्ञानशून्ययोरपि भ्रान्तिकल्पितत्वं स्यादिति प्रागुक्तस्यातिप्रसङ्गस्य,'न हि विज्ञानशून्ययोः कल्पितत्वं त्वदभिमतम्। अतो न दिशामेवमेव भ्रान्तिकल्पितत्वम्' इति विपर्ययपर्यवसानं चोक्तं भवतीत्यर्थः।

**(पां.टि.) ॥ एवं तर्हीति ॥** दिक्सामान्यस्वरूपादेरुपाधिनिरपेक्षसाक्षिसिद्धत्वाभ्युपगम इत्यर्थः। **तेनेति ॥** आदित्योदयादिप्रतीक्षणस्य कादाचित्कत्वकथनेनेत्यर्थः। **स्पष्टीकृत इति ॥** आदित्योदयादेस्तत्प्रत्यायकत्वे सर्वत्र दिक्प्रतीतिस्थले तदपेक्षाप्रसङ्गेन कादाचित्कत्वानुपपत्तेस्तदन्यथाऽनुपपत्त्या न आदित्योदयादेस्तत्प्रत्यायकत्व-मित्यनेन प्रकारान्तरेणान्धकारेऽपीत्यादिनोक्तस्तत्प्रतीतावुपयोगाभावः स्पष्टीकृत इत्यर्थः। नन्वादित्योदयादिना प्राच्यादिशब्दव्युत्पत्तेरपि दर्शनेन तस्य व्युत्पत्तावप्युपयोगसिद्धेः 'कादाचित्कभ्रान्तिरेवाऽदित्योदयादि-दर्शनान्निवार्यते' इति दिगन्तरे दिगन्तरत्वभ्रममात्रनिवर्तकत्वाभिधानमादित्योदयादेरनुपपन्नमित्यत आह- **अनेनेति ॥** अत्रानेन तदर्थमप्युपयोग इति सूचितमिति सम्बन्धः। **अनेन** आदित्योदयादेर्भ्रमनिवर्तकत्वकथनेन, **तदर्थमपि** प्राच्यादिशब्दव्युत्पत्त्यर्थमप्युपयोग इति सूचितमित्यर्थः। न केवलं दिगन्तरभ्रमनिवृत्त्यर्थम् अपि तु **(पां.टि.)**प्राच्यादिशब्दव्युत्पत्त्यर्थमपीत्यपिशब्दार्थः। ननु कादाचित्केति मूले आदित्यदर्शनस्य भ्रमनिवृत्त्यर्थ-कत्वोक्तेस्तदर्थमुपयोगसूचनसम्भवेऽपि प्राच्यादिशब्दव्युत्पत्त्यर्थताया मूलेऽनुक्तेर्न तदर्थतयोपयोगसूचनं सम्भवतीत्यत उक्तम्- **प्राच्यादिशब्दव्युत्पत्तावादित्योदयादीनामुपलक्षणत्वेनोपात्तत्वादिति ॥** भ्रम-निवर्तकत्वेनाऽदित्योदयादेरुपयोगकथनस्य आदित्योदयादीनां प्राच्यादिशब्दव्युत्पत्तावुपयोगोपलक्षणत्वेन स्वीकारादित्यर्थः। अनेन 'भ्रान्तिर्निवार्यत इत्यत्र भ्रान्तिपदेन लक्षणया प्राच्यादिशब्दवाच्यत्वप्रमापरिग्रहः। निवार्यत इत्यनेन लक्षणया भवतीत्यर्थपरिग्रहः

। लक्षणाऽपि न जहत्स्वार्था । तथात्वे प्राच्यादिशब्दवाच्यत्व-प्रमायामेव तदुपयोगापत्त्या भ्रमनिवर्तकत्वाभावापातात् । किन्त्वजहत्स्वार्था एव इति भावेन उपलक्षणपद-प्रयोगः । न चैवं युगपद्वृत्तिद्वयविरोधः । सिद्धान्ते तस्यादोषत्वात्' इति वाक्यं व्याख्यातं भवति । ततश्च मुख्यया वृत्त्या भ्रमनिवर्तकत्वस्येव लक्षणया प्राच्यादिशब्दवाच्यत्वप्रमार्थताया अप्युक्तत्वादादित्योदयादेरुभय-त्रोपयोगसूचना नानुपपन्नेति भावः । ननु कादाचित्कभ्रान्तिरेवेत्यादित्योदयादेर्दिगन्तरे दिगन्तरभ्रान्तिनिवर्तक-त्वोक्तिर्नोपपद्यते। दिगन्तरस्य नियतयाथार्थ्यसाक्षिसिद्धत्वेन भ्रमविषयत्वानुपपत्त्या दिगन्तरभ्रमस्यैवासिद्धेः। अस्तु वा दिगन्तरभ्रमः । तथाऽपि न भ्रान्त्यादिपदेन व्युत्पत्त्याद्युपलक्षणं सम्भवति । लक्षणाबीजभूतशक्यसम्बन्धा-भावाद् इत्यत आह- **दिगन्तर इति ॥**

**दिगन्तरे** प्राच्यादौ **दिगन्तरभ्रमस्य** प्रतीच्यादित्वरूपदिगन्तरत्वभ्रमस्य तच्छब्दवाच्यत्वरूपदिगन्तरत्व-विषयत्वादित्यर्थः । स्यादयं विरोधो यदि प्राच्यादौ तत्तच्छब्दवाच्यत्वरूपप्रतीच्यादित्वभिन्नतत्स्वलक्षणरूपप्रती-च्यादित्वभ्रमो दिगन्तरभ्रमपदेन विवक्षितं स्यात् । न चैतदस्ति । किं तर्हि तच्छब्दवाच्यत्वरूपदिगन्तरत्वभ्रम एव तथोच्यते । न चैवं सत्युक्तदोषप्रसरोऽस्ति । तत्तच्छब्दवाच्यत्वरूपदिगन्तरत्वस्य साक्ष्यसिद्धतया भ्रमविषयत्व-सम्भवात् । अत एव 'प्राच्यादित्वं च यदि तत्स्वलक्षणं तदा एतदेवोत्तरम्' इति ग्रन्थेन तस्य भ्रमविषयत्वविरोधिनीं साक्षिसिद्धतामभिधाय 'अथ प्राच्यादिशब्दवाच्यत्वं तदपि शब्दार्थसम्बन्धस्यौत्पत्तिकत्वेन न काल्पनिकम्' इति ग्रन्थेन तच्छब्दवाच्यत्वरूपदिगन्तरत्वस्य मिथ्यात्वविरोधिनी वास्तवतैवोक्ता, न तु भ्रमविषयत्वविरोधिनी साक्षिसिद्धताऽपि । अन्यथा भ्रमविषयत्वाभावोपपादनाय दिक्सामान्यतद्विशेषतत्स्वलक्षणरूपप्राच्यादित्वा-नामिव तच्छब्दवाच्यत्वरूपदिगन्तरत्वस्य भ्रमविषयत्वविरोधिनी साक्षिसिद्धतैवोच्येत । या तु टीकाकारीया उत्तरत्र 'आरोप्याया दिशो मिथ्यात्वेनाङ्गीकारात्' इत्युक्तिः साऽपि न दिक्स्वरूपादेर्भ्रमविषयत्वाभिप्राया। तथा सति साक्षिसिद्धतया भ्रमविषयत्वाभाववर्णनपरपूर्वनिरवकाशटीकाग्रन्थविरोधात्। किन्तु भ्रमविषयत्वाङ्गी-कारेऽपि न कदाचिदस्माकं क्षतिः। आरोप्याया दिशो मिथ्यात्वेऽपि प्रधानीभूतदिशः सत्यत्वेन तत्प्रत्यभिज्ञाभ्रम-त्वापादनसम्भवेन तत्प्रतिबन्धात्प्रकृतप्रत्यभिज्ञाया अभ्रान्तित्ववर्णननिर्वाहादित्यभ्युपगमवादेनैव । अत एव तदुत्तरवाक्ये 'आरोप्यमिथ्यात्वेऽपि प्रधानसत्यत्वोपपत्तेः' इत्यादिनोक्तरीत्यैव स्वाशयोद्घाटनमिति न विवक्षित-दिगन्तरत्वभ्रमस्य सिद्धान्तविरुद्धत्वम्। नापि भ्रान्त्यादिपदेन व्युत्पत्त्याद्युपलक्षणे नियामकसम्बन्धाभावः। **(पां.टि.)** प्रतीच्यादिशब्दवाच्यताभ्रमस्य प्राच्यादिशब्दवाच्यत्वप्रमाविषयविषयतया समानविषयताया एव तथात्वादिति । नन्वेवं दिशो मिथ्यात्वे तत्स्थैर्यस्य कफोणिगुडायितत्वान्न तत्प्रत्यभिज्ञाया अभ्रान्तित्वमिति कथं तद्भ्रान्तित्वापादनम् इत्यतो भ्रान्तेः सत्यप्रधानसापेक्षायास्तदभावेऽनुपपत्तेः आरोप्यतया दिशो भ्रान्तिविषय-त्वोपपादनाय प्रधानदिशः सत्यताया अवश्यमभ्युप-गमनीयत्वात्तत्स्थैर्यस्योक्तरीत्याऽविकलत्वान्न तत्प्रत्यभि-ज्ञाया भ्रान्तित्वप्रसङ्गानुपपत्तिरित्याशयवानाह- **आरोप्यस्येति ॥ उक्तविधयेति ॥** अधिष्ठानतया साधारण्येन वेत्यर्थः। **प्रागुक्तस्यातिप्रसङ्गस्येति ॥** प्रत्यभिज्ञाया अभ्रान्तित्वोपसंहारपरेणानेन वाक्येन सोऽयं देवदत्त इत्यादिपदेनोक्तदिक्प्रत्यभिज्ञाभ्रान्तित्वप्रसङ्गस्य 'नास्ति च दिक्प्रत्यभिज्ञाया भ्रान्तित्वमतो दिशः स्थिरा एव' इति विपर्ययपर्यवसानं चोक्तं भवतीत्यर्थः ।

**(व्या.टि.)** शङ्कते- **एवं तर्हीति ॥** दिक्स्वरूपस्य तदीयप्राच्यादित्वस्य तच्छब्दवाच्यत्वस्य च अनौपाधिकत्व इत्यर्थः। अर्थान्तरं दर्शयितुं स्वरूपप्रतीतावनपेक्षामनुमन्यते- **सिद्धत्वेऽपीति ॥ दिगन्तरे** अन्यस्यां दिशि । **दिगन्तरत्वभ्रान्तिं** दिगन्तरत्वतच्छब्दवाच्यत्वभ्रान्तिम्। प्रतीच्यादौ प्राच्यादित्वतच्छब्दवाच्यत्वभ्रान्तिमिति यावत्। एवेति स्वरूपप्रतीतिं निवारयति। कादाचित्कपदव्यावर्त्यमाह- **सा चेति ॥ सूचयितुमिति ॥** प्रतीक्षणस्य कादाचित्कत्वघटनार्थम् इत्यर्थः। **तेन** कादाचित्कपदेन। **स्फुटी(स्पष्टी)कृत इति ॥** स्फुटी(स्पष्टी)करणं च दिक्प्रतीतेः सार्वकालिकत्वाद् उदयादिप्रतीक्षणस्य कादाचित्कत्वान्न तत्र तस्योपयोग इति। अधिकरणसिद्धान्त-माह- **अनेनेति ॥** आदित्योदयादेर्भ्रान्तिनिरासोपयोगकथनेनेत्यर्थः। **शब्दव्युत्पत्ताविति ॥** दिगियं प्राचीशब्द-वाच्येत्यादिशब्दशक्तिप्रमायामित्यर्थः। कथमुपादानमित्यत आह- **उपलक्षणत्वेनेति ॥** संस्थानविशेषविशिष्टस्य देवदत्तगृहशब्दवाच्यत्वे काकादेरिव, पृथिव्याः पृथिवीशब्दवाच्यत्वे गन्धवत्त्वस्येव, शक्यतानवच्छेदकत्वेऽपि शक्तिनियतत्वेनोपात्तत्वादित्यर्थः। **तदर्थमपीति ॥** शक्तिप्रमार्थमित्यर्थः। शब्दशक्तिप्रमोपयोगाभावे तद्भ्रम-निरासासम्भवात्। तथा हि । आदित्योदयस्य स्वाधिकरणे प्राचीशब्दवाच्यत्वप्रमाद्वारा अन्यत्र व्यापकाभावरूपेण स्वाभावेन प्राचीशब्दवाच्यत्वाभावप्रमाद्वारा तच्छब्दवाच्यत्वभ्रान्तिनिवर्तकत्वं वाच्यम् । तच्च वाच्यत्वप्रमोपयोगं विनाऽनुपपन्नम् । अतः प्राचीशब्दवाच्यत्वभ्रमनिरासकत्वेन तत्प्रमोपयोगसूचनम्। एवमादित्योदयस्य स्वाधिकरणे प्रतीचीशब्दवाच्यत्वभ्रमनिरासकत्वमपि

तदभावव्याप्यप्राचीशब्दवाच्यत्वप्रमाजननद्वारेति शब्दशक्तिप्रमाया-मुपयोगः । यथा चतुर्दश्याममावास्याशब्दवाच्यत्वभ्रान्तिनिरासकत्वं चन्द्रोदयस्य चतुर्दशीशब्दवाच्यत्वप्रमा-जननद्वारा । अत एव चन्द्रोदयात्तद्भ्रमनिवृत्तौ प्रायश्चित्तमाम्नातम् 'पुरस्ताच्चन्द्रमा अभ्युदेति' इति । मीमांसितं चैतत्तान्त्रिकैः । ननु शब्दवाच्यत्वभ्रमनिरासकत्वं नोक्तम् । किन्तु दिगन्तरत्वभ्रान्तिनिवर्तकत्वमेवेत्यत आह- **दिगन्तर इति ॥ तद्विषयत्वात्** दिगन्तरत्वविषयत्ववत् शब्दवाच्यत्वविषयत्वात् । तथा च वाच्यत्वभ्रम-निरासकत्वमप्युक्तम् इति भवति सूच्यसूचकभाव इति भावः । न च पूर्वं भ्रान्तिरेवेत्यवधारणेनान्यत्रोपयोगाभावः सूचितः । प्रमायामप्युपयोगसूचने व्याघात इति वाच्यम् । सामान्यविशेषस्वरूपप्रतीतावुपयोगस्यानभिमतत्वेन तन्मात्रव्यावर्तकत्वात् तस्य । न च 'आरोप्याया दिशो मिथ्यात्वेन' इति वक्ष्यमाणत्वाद् दिक्स्वरूपभ्रान्तिरप्य-**(व्या.टि.)** स्तीति वाच्यम् । उक्तरीत्या साक्षिसिद्धस्य तस्य भ्रमत्वायोगात् । ग्रन्थस्य तु मिथ्यात्वेऽपि प्रधान-सत्यत्वं भवतीत्यभिप्रायेण अभ्युपेत्यवादेन साक्ष्यसिद्धप्राचीत्वादिरूपेण भ्रान्त्यभिप्रायेण वा प्राचीत्वादिभ्रान्ति-रित्यभिप्रायेण वा प्रवृत्तत्वात् ।

केचित्तु भ्रान्तिपदेन प्रमायाः, निवार्यत इत्यनेन भवतीत्यस्योपलक्षणावृत्त्या ग्रहणेन शब्दव्युत्पत्तौ कारण-तयाऽदित्योदयादीनामुपात्तत्वात्तदर्थमप्युपयोग इति सूचितमित्याहुः । तन्न स्वरसम् । उपलक्षणावृत्तिमत्पदस्य भ्रान्तिरित्यस्य, निवार्यत इत्यस्य चाग्रहणात् । उपलक्षणीयस्यापि प्रमाभवनादेरनुक्तेः । व्युत्पत्तावित्यादेर्यथा-प्रतीतान्वयसम्भवे त्यागायोगाच्च । उपलक्षणावृत्त्या ग्रहणे सूचितमित्ययोगाच्च ।

अपरे तु अनेनेति वाक्यम्, **अनेन** प्राच्यधिष्ठानकप्रतीचीत्वप्रकारकभ्रान्तिनिवर्तकत्वरूपव्याप्यधर्म-कथनेनोदयस्य प्राचीशब्दप्रवृत्तिनिमित्तत्वलाभात्तदर्थमप्युदयादीनामुपयोग इति व्यापकं सूचितमिति व्याख्याय, ततो यद् यदधिष्ठानकभ्रमनिवर्तकं तत् तच्छब्दप्रवृत्तिनिमित्तमित्यभिप्रेतव्याप्तेः, धूमवत्त्वे पर्वताधिष्ठानक-निर्वह्नित्वप्रकारकभ्रमनिवर्तके, रजतत्वाभावे शुक्त्यधिष्ठानकरजतत्वप्रकारकभ्रमनिवर्तके च व्यभिचारमाशङ्क्य तत्र विशेषणं देयमित्याशयेन दिगन्तर इति वाक्यमवतार्य, आदित्योदयादिप्रकारकत्वादित्यर्थमभिधाय, यद्यदधिष्ठानकभ्रमनिवर्तकम् अधिष्ठानारोपे च यत्प्रकारत्वेन भासते तत्तच्छब्दप्रवृत्तिनिमित्तमित्याकूतमाविर-कार्षुः । तन्न । तच्छब्दपदेन सर्वतद्वाचकग्रहणे इदमादिपदानामपि अधिष्ठानवाचकत्वेन शुक्तित्वादेरपि तत्प्रवृत्ति-निमित्तत्वाभावेन व्यभिचारात् । यत्किञ्चित्तद्वाचकग्रहणे धूमवत्त्वरजतत्वाभावादेरपि धूमवद्रजतत्वाभाववदि-त्याद्यधिष्ठानवाचकपदप्रवृत्तिनिमित्तत्वेन व्यभिचाराभावेनाधिष्ठानारोपे चेत्यादेर्वैयर्थ्यात् । तन्मात्रस्य वा सम्भ-वेन पूर्ववैयर्थ्याच्च । गन्धवत्पृथिव्यां जलादिभ्रमनिवर्तके गन्धे, जला(लेऽ)धिष्ठानपृथिव्यारोपेऽपि गन्धवत्पृथिव्या गन्धवत्पृथिवीति प्रकारतया भानसम्भवेन व्यभिचाराच्च । न च तस्यापि पृथिवीपदप्रवृत्तिनिमित्तत्वम् । 'याथार्थ्य-मेव मानत्वम्' इत्यत्र सुधायां गन्धादेः प्रवृत्तिनिमित्तत्वनिषेधेन तद्विरोधात् । किञ्चोक्तव्याप्तौ प्रवृत्तिनिमित्तत्वं किं शक्तिविषयतया विवक्षितं किं वा उपलक्षणतया । आद्ये आदित्योदयादेस्तादृशत्वासम्भवेन प्रकृतासङ्गतेः । तादृशत्वे नक्षत्रोदयादेरपि तादृशत्वापत्त्या प्राच्यादिशब्दस्य नानार्थत्वापत्तेः । उपलक्षणत्वेनेति टीकाविरो-धाच्च । द्वितीये शुक्तित्वादौ व्यभिचारात् । सुधायां गन्धवत्त्वस्य पृथिवीपदप्रवृत्तिनिमित्तत्वखण्डनेनोपलक्षणस्य प्रवृत्तिनिमित्तत्वायोगाच्च । एतेन प्रवृत्तिनिमित्तत्वसामान्यं विवक्षितमित्यपि निरस्तम् । शक्त्यविषयस्यापि प्रवृत्तिनिमित्तत्वेऽतिप्रसङ्गाच्च । उपलक्षणस्यापि प्रवृत्तिनिमित्तत्वे काकादौ व्यभिचाराच्च । न ह्युपलक्षणस्य काका-देर्गृहशब्दप्रवृत्तिनिमित्तत्वं दृष्टमिष्टं वा । न च प्रवृत्तिनिमित्तत्वाभावे व्युत्पत्त्युपयोगो न स्यादिति वाच्यम् । अप्रवृत्तिनिमित्तानामप्यनेकेषां लक्षणानामनेकलक्ष्यवाचकशब्दव्युत्पत्तावुपयोगदर्शनात् । अशब्दनिमित्तस्यापि व्युत्पत्तावुपयोगो महाभाष्ये दर्शितः यथा 'स राजा योऽश्वेयः पीठः' इति । किञ्च प्राच्यादिशब्दस्य यावद्वस्तुभावि-प्रवृत्तिनिमित्तमुपेत्याऽदित्योदयादेरपि तत्त्वमुपेयते यद्वाऽऽदित्योदयादेरेव । नाऽद्यः । तस्यैव निमित्तत्वसम्भवेऽ-**(व्या.टि.)** न्यस्यापि तत्कल्पने गौरवात् । प्राचीपदेनानेकप्रकारकबोधापत्तेश्च । तत्पदजन्यबोधप्रकारत्वा-भावे प्रवृत्तिनिमित्तत्वस्य साङ्केतिकत्वापत्तेः । द्वितीये आदित्योदयादेरप्रकारत्वे प्राच्यादिपदजन्यबोधस्य निष्प्रकारकत्वापत्तेः । प्रकारत्वे त्वादित्योदयवती प्राचीति सहप्रयोगानुपपत्तिः । आदित्योदयस्य ससम्बन्धित्व-भावेन न तत्प्रवृत्तिनिमित्तकप्राच्यादिशब्दस्य वक्ष्यमाणसम्बन्धिशब्दत्वानुपपत्ति(त्ते)श्च । अधिकं तु गुरुप्रभायां द्रष्टव्यम् । तस्माद्दिगन्तरे दिगन्तरभ्रमस्य उपलक्षणविषयत्वाभिधानं तस्य शब्दप्रवृत्तिनिमित्तत्वाभिधानं चायुक्तम् ।

दिशो वास्तवत्वेऽनिष्टंप्रसञ्जयति- **नन्विति ॥** आपाद्यापादकयोर्व्याप्तिं दर्शयति- **स्तम्भो हीति ॥** प्रसङ्गस्य विपर्यये पर्यवसानमाह-

**न चैवमिति ॥** अनेन, दिशो न वास्तवा अव्यवस्थितत्वाद् इत्यनुमानं सूचयति । तस्य पक्षधर्मतां दर्शयति- **अस्माकमिति ॥ अन्येषामिति ॥** ततः प्राच्यानामित्यर्थः । प्रतिषेधति- **मैवमिति ॥** परोक्तं दूषयिष्यन् विकल्प्य पृच्छति- **दिक्स्वरूपमिति ॥ उच्यत इति ॥** मिथ्यात्वं परान् प्रत्युपदिश्यत इत्यर्थः । आद्यं स्वरूपासिद्ध्या दूषयति- **नाऽद्य इति ॥** द्वितीये हेतोरन्यथासिद्धिमाह- **सम्बन्धीति ॥** ससम्ब-न्धिकधर्मप्रवृत्तिनिमित्तकशब्दत्वादित्यर्थः । यथा पित्रादिशब्दस्य जनकत्वे सति पुंस्त्वादिकं प्रवृत्तिनिमित्तम् । तत्र जनकत्वादि यन्निरूपितं तस्य पितेत्यादिव्यवहारः । तथा प्राच्यादिशब्दव्यवहारोऽपि । तथा हि । प्राच्यादि-शब्दस्य प्रवृत्तिनिमित्तं प्राचीत्वादिकमखण्डं सर्वदिग्भागनिष्ठं भागान्तरनिरूपितमवश्यमङ्गीकर्तव्यम् । न तु सूर्योदयादिकं प्रवृत्तिनिमित्तम् । अस्य प्राचीतिवद् अस्य सूर्योदयवतीति व्यवहाराभावेन सम्बन्धिशब्दत्वायो-गात् । तस्य सर्वदिग्भागगतत्वाभावाच्च । एवं चाव्याकृताकाश एव दिक् । सा व्याप्ता । तस्या अनन्ता भागाः । सर्वेष्वपि दिग्भागेषु प्राचीत्वादिदशकं दिग्भागत्वं दिक्त्वमित्यादयो धर्माः । तत्र यद्भागे यद्भागनिरूपितं प्राची-त्वादिकं न तन्निरूपितप्रतीचीत्वादि, किन्तु भागान्तरनिरूपितमिति निरूपकभेदः । तत्र दिक्स्वरूपदिक्त्व-तद्भागत्वादिकं साक्षिवेद्यम् । प्राचीत्वादिकं तु न तद्वेद्यम् अन्धकारादावप्रतीतेः । 'दिगन्तरे दिगन्तरत्वभ्रान्तिं निवर्तयितुम्' इति टीकोक्तभ्रान्त्ययोगाच्च । न च संस्थानविशेषस्य चक्षुषा ग्रहेऽपि देवदत्तगृहशब्दशक्तिमजानतोऽ-व्यवहारवत् साक्षिणा प्राचीत्वज्ञानेऽपि शक्त्यज्ञानादन्धकारे न व्यवहार इति वाच्यम् । व्युत्पन्नस्य व्यवहारा-पत्तेः । न च दिगन्तरत्वभ्रान्तिस्तच्छब्दवाच्यत्वविषयिण्येवेति वाच्यम् । प्राचीपदवाच्यतावच्छेदकप्रमायां व्युत्पन्नस्य शक्तिम् अविस्मरतस्तद्विरुद्धप्रतीचीत्वादिकं पश्यतः प्रतीच्यादौ प्राचीपदवाच्यत्वभ्रमायोगात् । आदित्योदयस्य वाच्यतावच्छेदकत्वं च निरस्तम् । न च साक्षिवेद्यगतत्वेन तस्य साक्षिवेद्यत्वम् । सुखस्य साक्षिवेद्यत्वेऽपि तद्गतमनोविकारत्वादेरतथात्वात् । किन्तूपदेशानुमानादिगम्यं प्राचीत्यादि ।

नन्वेवं सूर्योदयादेः कथमुपयोग इति चेत्, इत्थम् । का प्राचीति पृष्टे सूर्याभिमुखं जननक्रमेण विद्यमान-भ्रातृपङ्क्तौ यत्पृष्ठभावाभावे सति एतत्पङ्क्तिस्थत्वं यस्य तस्य तदवरजत्वम् इत्युपदेशेनाग्रजावरजभावज्ञानवद् अपर्यवसितपङ्क्तिस्थदिग्भागेष्वपि यत्पृष्ठभावाभावे सत्येतत्पङ्क्तिस्थत्वं यस्य तस्य तन्निरूपितं प्राचीत्वम् । **(व्या.टि.)** पार्ष्णिकस्य प्रतीचीत्वम् । एवमेतस्याः पङ्क्तेः तिरश्चीनपङ्क्तौ विद्यमानानां दक्षिणोत्तरभाव इत्युपदेशेन प्राचीत्वादिज्ञानं भवति ।***** तथा चोपलक्षणतयोपयोगः । न च सूर्योदयपौरस्त्येषु प्राचीत्वं कुत इति वाच्यम् । मानसोत्तरे लोकालोके च प्राच्यामिन्द्रपुरीत्यादि व्यवहारात् । लोकेऽपि यत्र दीपः सा प्राचीत्युक्ते तत्पौरस्त्यभागेष्वपि प्राचीत्वप्रतीतेश्च । न च सूर्योदयस्योपलक्षणत्वे पातालादौ महरादौ च स्थितानां कथं प्राच्यादिपदव्युत्पत्तिरिति वाच्यम् । उपलक्षणनियमाभावेन तत्रत्यानामुपलक्षणान्तरस्य सम्भवात् । सर्वज्ञकल्पानां तेषामुपलक्षणं विना प्रतीत्युपपत्तेश्च । अत्रापि अरुणोदयादेरुपलक्षणत्वाच्च । अत एव मूले आदित्योदयादीत्यादि-पदम् । एतेन यन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरतादृशसंयोगवत्त्वं यस्य तस्य तदपेक्षया प्राचीत्वमित्यादि-वैशेषिकोक्तमपास्तम् । उदयगिरेरेवोपलक्षणत्वे नियामकाभावात् । उदयगिरेः पुरस्ताद्दूरं विद्यमानस्य मूर्तस्य पश्चात्सन्निहितापेक्षया प्राचीत्वानापत्तेश्च । उदयगिरिसन्निहितस्य परितो वर्तमानसंयोगानादाय भूयःसंयोगव-त्त्वाच्च । आकाशमध्यस्थयोः प्राचीत्वाद्यनापत्तेश्चेति दिक् ।

ननु तर्हि सम्बन्धिशब्दत्वादेव सिद्धं शब्दाव्यवस्थितत्वं दिक्त्वधर्ममिथ्यात्वं गमयिष्यतीत्यतो न, व्यभि-चारादित्याह- **न हि पितापुत्रादीति ॥** 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इत्यधिकृत्य 'आनङ् ऋतो द्वन्द्वे' इत्यानङ् । कादाचित्केत्यस्योपरि शङ्कते- **नन्विति ॥ सिद्धमेवेति ॥** तस्य तत्प्रतिबद्धत्वादित्यर्थः । प्रतिबन्धं दर्शयति- **शुक्तीति ॥ आरोप्याया इति ॥** दिशः साक्षिसिद्धत्वेऽपि प्राचीत्वादेरतादृक्त्वेन तेनाऽकारेणाऽरोप्याया मिथ्यात्वमस्तीत्यर्थः । दिश इत्यस्य प्राचीत्वादेरिति वाऽर्थः । प्राचीत्वादेः सर्वभागगतत्वेऽपि भागविशेष-निरूपितस्य देवदत्तपुत्रत्वादेरिवाऽरोपः सम्भवतीत्यवधेयम् । तर्हि सत्यत्वप्रत्याशा कथमित्यत आह- **आरोप्य-स्येति ॥ उपपत्तेरिति ॥** अन्यथाख्यात्यसम्भवेन तस्याऽरोप्यत्वाभावादिति भावः । **निराकरोतीति ॥** अनैकान्त्येनेति शेषः । तयोर्विपक्षत्वं स्फोरयति- **सत्यत्वेनेति ॥ तेषामिति ॥** 'मतिबुद्धिपूजार्थेभ्यश्च' इति षष्ठी । हेत्वभावमाशङ्कते- **कथमिति ॥** विप्रतिपत्त्या तत्साधयति- **अस्तीति ॥ अवश्यमिति ॥** इतरथा विप्रतिपत्ति-त्वानुपपत्तेरिति भावः । निगमयति- **तथा चेति ॥** ननु प्राग्दिश एव भ्रान्तिकल्पिता इति दिशां स्थैर्यसत्त्वयोराक्षिप्त-त्वादुभयोपसंहारे कर्तव्ये कथमेकत्रोपसंहार इत्यत उपसंहारान्तरमभिप्रेतमिति व्याचिख्यासुः अत इति मौलपदमावृत्त्या योजयति- **अत इति ॥ बहिरेवेति ॥** उन्मूलमेवेत्यर्थः । **तत्र** द्वितीयोपसंहारे । उभयोः प्रकृतत्वेऽप्यन्यतरपरित्यागे कारणमाह- **कैश्चिदिति ॥ अतिप्रसङ्गस्येति ॥** साम्यरूपस्येत्यर्थः ।

**मूलम् - अतस्तद्वद्वेदस्यापि स्थैर्यं सिद्धम् ; तदेवेदं वाक्यमिति प्रत्यभिज्ञानात् ।**

**(त.मं.)** उक्तार्थं निगमयति - **अतस्तद्वदिति ॥**

**टीका -** अस्तु दिशां स्थैर्यम्, किं प्रकृत इत्यत आह- **अतस्तद्वदिति ॥** अत इति परामृष्टं दर्शयति- **तदेवेदमिति ॥** वेदस्येति वाक्यमिति च वर्णा एवोच्यन्ते। तेषामेव प्रक्रान्तत्वात्। तात्पर्यं तु प्रागेवोक्तम्।

अथ वा वर्णस्थैर्यवर्णनं कुत्रोपयुक्तमित्याशङ्क्य वेदस्यापीत्युक्तम्। वर्णानां वेदस्यापीति योजना। वेदापौरुषेयत्वस्य बाधकत्वेन वर्णानामुत्पत्तिविनाशित्वं परेणोपन्यस्तम्। तस्य परिहृत-त्वान्निराबाधं वेदस्य **स्थैर्यमपौरुषेयत्वं** सिद्ध्यतीति। न केवलं बाधकाभावात्, नाप्युक्तानुमानात्, किं तर्हीत्यत आह- **तदेवेदमिति ॥** यद्वर्णक्रमाद्युपेतं पूर्वं मया श्रुतं वाक्यं **तदेव** तद्वर्णक्रमाद्युपेत-मे**वेदं** श्रूयमाणं वाक्यमिति प्रत्यभिज्ञानादर्वाचीनपुरुषस्वातन्त्र्याभावस्तावत्प्रतीयते। एवं पूर्वं पूर्वतरं पूर्वतममपीति व्यत्यासाभावस्तावत्सिद्धः। आदिसृष्टौ तु वक्ष्याम इति भावः।

**(र.टि.)** ॥ **वर्णा एवोच्यन्त इति** ॥ पदादिबुद्धिविषयाणां वर्णानामेवार्थवेदनकरणत्वेन वेदादिशब्द-वाच्यत्वादिति भावः।

**(रा.टि.)** वर्णानामिति कुतो योजनीयमित्यत आह - **वेदापौरुषेयत्वस्येति ॥** यद्वा अतश्शब्दार्थं व्यनक्ति- **वेदेत्यादिना ॥** स्थैर्यमित्यनुवादः, अपौरुषेयत्वमिति व्याख्या। **उक्तानुमानादिति ॥** वेदकर्तुरप्रसिद्धेरित्य-त्रोक्तेत्यर्थः। वेदस्यापौरुषेयत्वमित्यनुकर्षः। **वक्ष्याम इति ॥** 'नित्या वेदाः' इत्यादिस्मृत्युक्तिप्रस्ताव इति भावः।

**(श्री.टि.)** ॥ **वर्णा एवोच्यन्त इति** ॥ पदादिबुद्धिविषयाणां वर्णानामेवार्थवेदनकरणत्वेन वेदादिशब्दवाच्यत्वा-दिति भावः। **प्रक्रान्तत्वादिति ॥** 'न चोच्चारणकाल एव वर्णानामुत्पत्तिः' इत्युपक्रान्तत्वादित्यर्थः। **तात्पर्यं त्विति ॥** पदातिरिक्तवाक्यस्फोटनिराकरणाय वेदशब्दवाक्यशब्दग्रहणमिति तात्पर्यं वचनपदप्रयोजनोक्तिसमय एव उक्तम् इत्यर्थः। **परिहृतत्वादिति ॥** प्रत्यभिज्ञाविरोधेनेत्यर्थः। **बाधकाभावादिति ॥** अपौरुषेयत्वाङ्गीकार इति शेषः। अपौरुषेयत्वं सिद्ध्यतीत्यनुवर्तते। **उक्तानुमानमात्रादिति ॥** वेदकर्तुरप्रसिद्धेरित्यनेनोक्ताद् 'वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वाद्गगनवत्' इत्युक्तानुमानमात्रादित्यर्थः। **स्वातन्त्र्याभावः** सजातीयोच्चारण-मनपेक्ष्योच्चारयितृत्वाभावः। **एवं पूर्वमित्यादि ॥** एवमेव पूर्वकाले तत्पूर्वकाले च प्रत्यभिज्ञानादित्यर्थः। **(श्री.टि.)** नन्वादिसृष्टौ कस्याप्युपदेष्टुरभावेन केषामपि वेदाध्ययनाभावेनैतादृशप्रत्यभिज्ञाया अयोगादर्वाचीन-पुरुषस्वातन्त्र्यस्यैव प्रतीतेस्तदा कथं वेदस्यापौरुषेयत्वसिद्धिरित्यत आह- **आदिसृष्टौ त्विति ॥** 'सर्गे सर्गेऽमुनैवैत उद्गीर्यन्ते' इत्यादिना विष्णोरेव ब्रह्मादीन् प्रत्युपदेष्टृत्वस्य वक्ष्यमाणत्वात्तस्यापि महोपाध्यायतुल्यत्वेनोक्त-प्रत्यभिज्ञानोपपत्त्या निरुक्तस्वातन्त्र्याभावाद्व्यत्यासाभाव एव सिद्ध्यतीति वक्ष्याम इत्यर्थः।

**(पां.टि.)** ननु वेदशब्दस्य वाक्यशब्दस्य च प्रसिद्धस्वार्थपरित्यागेन वर्णपरत्वाश्रयणे किं निमित्तमित्यतः स्वार्थपरत्वे वेदादिशब्दस्य, उपसंहारस्य वेदस्थैर्यविषयत्वप्राप्त्या वर्णस्थैर्यविषयोपक्रमविरोधप्रसङ्गात्, वर्णपरतायां चोपसंहारस्य वर्णस्थैर्यविषयकत्वप्राप्त्या वर्णस्थैर्यविषयकोपक्रमेण समानविषयकत्वलाभाद् उपक्रमोपसंहार-योरेकविषयतालाभाय प्रसिद्धस्वार्थपरित्यागेन वर्णमात्राश्रयणस्योपपन्नत्वादित्याशयेनाऽह- **वर्णानामेव प्रक्रान्तत्वादिति ॥** ननु वर्णवाचकतया प्रसिद्धवर्णपदस्यैव प्रयोक्तव्यत्वात् तत्परित्यागेन वेदादिपदप्रयोगे किं निमित्तमित्यतो वेदादिपदप्रयोगेण वर्णानामेव पदबुद्धिविषयाणामन्वितार्थाभिधायकत्वेन वाक्यार्थवेदन-सम्भवेन वाक्यार्थप्रतीत्यन्यथाऽनुपपत्तिरूपवाक्यस्फोटकल्पकाभावसूचनेन, अनेकेष्वपि तरुष्वेकदेशावस्थानेन वनमिति प्रत्ययवदनेकेष्वप्येकार्थाभिधानोपाधिना 'एकं वाक्यम्' इति प्रत्ययोपपत्तिसम्भवेन एकं वाक्यमिति प्रत्यक्षस्यापि तत्कल्पकत्वाभावसूचनेन च पदातिरिक्तवाक्यस्फोटनिराकरणार्थत्वाद्वर्णपदपरित्यागेन पूर्ववाक्ये वेदपदस्य, उत्तरवाक्ये च वाक्यपदस्य प्रयोगः कृत इति तात्पर्यं 'तदेवेदं वचनमिति प्रत्यभिज्ञानात्' इति वाक्यव्याख्यानावसर एव चोक्तम् इत्याह- **तात्पर्यं त्विति ॥** अत्र पक्षे वेदपदस्य वाक्यपदस्य च वर्णमात्र-परत्वाश्रयणाल्लक्षणा भवतीत्यपरितोषात् तत्स्वारस्याय प्रकारान्तरेण योजयति- **अथ वेति ॥** वेदस्यापीत्यपि-शब्दार्थकथनम्। **वर्णानामिति ॥** अत इत्यादिमूलं वेदापौरुषेयत्वोपसंहारपरत्वेन अप्रतीतेस्तथा व्याचष्टे- **वेदेति ॥** तर्हि तदेवेत्युत्तरवाक्यवैयर्थ्यमित्यतः तद् युक्त्यन्तरसमर्पकतया योजयति- **न केवलमिति ॥ उक्तेति ॥** वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वादित्युक्तेत्यर्थः। नन्वर्वाचीनपुरुषाणां स्वातन्त्र्याभावेन इदानीं व्यत्यासाभावसिद्धावपि आदिसृष्टौ

वेदोपदेशकस्य ईश्वरस्य नियामकाभावेन अन्यथाऽप्युपदेशस्य सम्भवाद् व्यत्यासः स्यादेवेत्यत आह- **आदिसृष्टाविति ।। वक्ष्याम इति ।।** 'सर्गे सर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च' इत्यादिनेति शेषः ।

**(व्या.टि.) ।। अत इतीति ।।** एतच्छब्देनेत्यर्थः । प्रकृतहानाप्रकृतस्वीकारनिरासाय व्याचष्टे- **वेदस्येतीति ।। तात्पर्यमिति ।।** वाक्यस्फोटनिरासाकूतम् । परमप्रकृतोपसंहारपरतया व्याचष्टे- **अथ वेति ।।** अत इति परामृष्टं दर्शयति- **परिहृतत्वादिति ।। उक्तेति ।।** कर्तृप्रसिद्ध्यभावरूपेत्यर्थः । **पुरुषस्वातन्त्र्याभाव इति ।।** श्रुतश्रूय-माणवर्णयोरिति शेषः । **एवमिति ।।** यथेदं श्रूयमाणं श्रुताभिन्नं तथा श्रुतमपि श्रुतचरादिति भावः । **व्यत्यासाभाव इति ।।** सर्वदा एकप्रकारत्वरूपमपौरुषेयत्वमित्यर्थः । **वक्ष्याम इति ।।** 'यतस्ता हरिणा दृष्टाः' इति स्मृतिमिति शेषः ।

**मूलम् - न चानुमानादीनामागमं विना प्रामाण्यं धर्मादिषु ; तदगोचरत्वात् । अतोऽपौरुषेयवाक्येनैव धर्मादिसिद्धेः सर्ववादिनामपि तदङ्गीकार्यम् ।**

**(त.मं.)** धर्मादिषु पौरुषेयवाक्यस्य प्रामाण्यं न चेद् अनुमानादीनां स्यादित्यत आह - **न चानु-मेति ।। तदगोचरत्वात्** अनुमाद्यगोचरत्वाद् धर्मादीनाम् । व्याप्तिदर्शनपूर्वकं ह्यनुमानम् । धर्मादौ साध्ये सति कस्यचित् साधनस्य व्याप्यत्वं चात्र नोपलभ्यते । तस्मात् कथमनुमानस्य धर्माधर्मादि-गोचरत्वम्; प्रत्यक्षस्य तु किमु वक्तव्यमिति ।

**टीका-** किञ्च सामान्यसिद्धिपरिशेषाभ्यामपि वेदस्यापौरुषेयत्वं सिद्ध्यति । तथा हि । अस्ति तावद्धर्माधर्मस्वर्गनरकादिषु सर्ववादिसम्प्रतिपत्तिः । यस्तु तान्नाङ्गीकरोति सोऽपि पूर्वोक्तप्रकारेण बोधनीयः । ते च, प्रमाणोपेता वस्तुत्वाद्घटवत् । न ह्यप्रामाणिकेऽर्थे सर्वेषां सम्प्रतिपत्तिः सम्भवति, अतिप्रसङ्गात् । एवं सर्ववादिनां सम्प्रतिपत्तिमूले धर्मादिविषये प्रमाणे सामान्यतस्सिद्धे तस्य परिशेषेणापौरुषेयत्वं साधयितुं प्रसक्तप्रतिषेधं तावत्करोति- **न चानुमानादीनामिति ।। आगमं विनेति ।।** अपौरुषेयवाक्यं विनेत्यर्थः । ततश्चानुमानप्रत्यक्षपौरुषेयवाक्यानामित्युक्तं भवति । प्रत्यक्षस्य धर्मादिविषयत्वमसम्भावितं, तथा पौरुषेयागमस्यापि, पूर्वोक्तन्यायात् । किन्तु प्रमाणत्वमात्रेण तयोः प्रसक्तिः । अनुमानं तु सम्भावितमित्यतस्तदादित्वेन ग्रहणम् । कुतो नेत्यत आह- **तदिति ।।** धर्मादीनामनुमानाद्यगोचरत्वात् ।

नन्वनुमानादीनि धर्मादिषु प्रमाणानि न भवन्ति, धर्मादीनां तदगोचरत्वादिति व्यधिकरण-त्वम् । मैवम् । यो यद्गोचरो न भवति तत्र तन्न प्रमाणमिति व्याप्तिसम्भवेनादूषणत्वात् । अथवा अनुमानादीनि धर्मादौ प्रमाणानि न भवन्ति अतद्गोचरत्वात् । धर्मादीनि वा अनुमानादिभिर्न प्रमीयन्ते तदगोचरत्वादिति प्रयोगद्वयमत्राभिप्रेतम् । एवमपि साध्याविशिष्टतेति चेन्न । फलाभावस्य साध्यत्वात्, सामर्थ्याभावस्य साधनत्वात् । तथा हि । प्रत्यक्षं न तावद्बाह्यम्, तस्य रूपादिमति द्रव्ये, तदीयेषु गुणकर्मसामान्येष्वेव सामर्थ्यात् । नापि मानसम्, सुखादिवद्धर्मादावनुव्यवसाया-भावात् । अन्यथा सुखमनुभवामीतिवद्धर्ममनुभवामीति स्यात् । स्वर्गादीनां तु विप्रकृष्टत्वान्न प्रत्यक्षगोचरता । न च योगादिसिद्धानां प्रत्यक्षमस्मदतीन्द्रियार्थविषयमिति वाच्यम् । तस्या-प्यपौरुषेयवाक्यं विनाऽसिद्धेः । तदिदमुक्तम्- **आगमं हीति ।।** किञ्च तेषां तेन धर्मादिसिद्धावप्य-स्माकं तन्निश्चयोपायो नास्ति । न ह्यन्यदीयेन प्रत्यक्षेणान्यस्य निश्चयोऽनुष्ठानं वा सम्भवति । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । सामान्यतो दृष्टेन कथञ्चित्स्वरूपमात्रसिद्धावपि न साधनफलसम्बन्धरूपस्तद्विशेषोऽनुमातुं शक्यः । नच तदनिश्चयेऽनुष्ठानं सम्भवति । नचैवं धर्ममीमांसाऽनुपपत्तिः । अपौरुषेयवाक्येन धर्मादिप्रतिपत्तौ तदितिकर्तव्यतात्वेन मीमांसाया उपयोगाङ्गीकारात् । एतदप्युक्तम्- **आगमं विनेति ।।** न च पौरुषेयं वाक्यम् । पुरुषाणाम् अज्ञानादिसम्भवेन धर्माद्युपदेष्टर्याश्वासानुपपत्तेः । न च मन्वादिष्वाश्वासो दृश्यत इति वाच्यम् । अपौरुषेयवाक्यमूलत्वनिश्चयेनैव तत्राप्याश्वासात् । एतदप्यभिहितम्- **आगमं विनेति ।।**

एवं प्रसक्तप्रतिषेधं विधाय इदानीं परिशेषसिद्धमर्थमाह- **अत इति ॥** अत्र अनुमानादि-भिर्धर्माद्यसिद्धेरिति वक्तव्ये अपौरुषेयवाक्येनैव धर्मादिसिद्धेरिति वचनम् अपौरुषेयवाक्याङ्गीकारे तु न काचिदनुपपत्तिरिति सूचयितुम् । तच्च वाक्यं वेद एव परिशेषात् । तदतिरिक्तानि हि कर्तृ-प्रसिद्धिमन्ति नच धर्मादिव्यवस्थापराणि । नचैवं वेद इति भावः । नन्वेवं सति वेदेनैव सर्वेषां धर्मादिप्रतिपत्तिरित्यायातम् । (तर्हि वादिविप्रतिपत्तिर्न स्यात् ।) सत्यमेव तत् । किन्तु धर्मादिस्वरूपे वेदेन प्रतीते तद्विशेषेषु तमतिक्रम्य स्वमतिदोषाद् वादिनां विप्रतिपत्तयः प्रतीयन्ते । अन्यथा धर्मादेर्बुद्धावारोहस्यैवासम्भवादिति ।

**(र.टि.) ॥ स्वर्गादीनामिति ॥** धर्मादिवन्नित्यातीन्द्रियत्वाभावेनानुव्यवसायाभावहेतोरसिद्धत्वादिति भावः । **तदिदमुक्तमागमं विनेतीति ॥** अनेन, **आगमं** वेदरूपमूलप्रमाणं विना अनुमानादीनां धर्मादिषु न प्रामाण्यं, किन्तु तत्सहितानामेवेति मूलवाक्यं प्रकारान्तरेण योजितं भवति । ननु विशिष्य धर्मादिव्याप्य-लिङ्गाभावेऽपि 'ज्योतिष्टोमादिकं धर्मादिसाधनं, तदुद्देशेन प्रेक्षावद्भिः क्रियमाणत्वाद् यद् यदुद्देशेन प्रेक्षावद्भिः क्रियते तत् तत्साधनं यथा कृष्यादिकं धान्यादिसाधनम्' इति सामान्यतो दृष्टेन धर्मादिसिद्धिर्भविष्यतीत्यत आह- **सामान्यतो दृष्टेनेति ॥** वैशेषिकादिभिः साध्याप्रसिद्धेर्दूषणत्वाङ्गीकारान्नैवमनुमातुं शक्यत इति ज्ञापयितुं कथञ्चिद् इत्युक्तम् । **अत्रानुमानादिभिरिति ॥** अनेन 'धर्मादिकमपौरुषेयवाक्यैकप्रमाणकमनुमान-प्रत्यक्षपौरुषेयवाक्याप्रमाणकत्वे सति सप्रमाणकत्वाद्व्यतिरेकेण घटादिवत्' इति परिशेषरूपव्यतिरेक्यनुमान-प्रयोगदर्शनपरत्वेन मूलवाक्यं व्याख्यातं भवति । मूले तदङ्गीकार्यमित्यनेन प्रतिज्ञाया अपि सूचितत्वात् ।

**(रा.टि.) ॥ पूर्वोक्तप्रकारेणेति ॥** 'यस्य तौ नाभिमतौ' इत्यादिनोक्तप्रकारेणेत्यर्थः । **ते चेति ॥** धर्माधर्माद्यतीन्द्रियपदार्था इत्यर्थः । उक्तसामान्यानुमानस्य विपक्षे सम्प्रतिपत्त्यभावरूपतर्कसाहाय्यमाह- **न (रा.टि.) ह्यप्रामाणिक इति ॥ अतिप्रसङ्गादिति ॥** शशशृङ्गादावपि तत्प्रसङ्गादित्यर्थः । **तस्येति ॥** सामान्या-नुमानसिद्धस्य धर्मादिप्रमाणस्येत्यर्थः । **पौरुषेयागमस्यापीति ॥** धर्मादिविषयत्वमसम्भावितमित्यनुकर्षः । **पूर्वोक्तेति ॥** 'नच पौरुषेयेण वाक्येन तत्सिद्धिः' इत्यादिनोक्तन्यायादित्यर्थः । सामानाधिकरण्यमपि सुसम्पाद-मित्याह- **अथवेति ॥ अतद्गोचरत्वादिति ॥** धर्माद्यविषयकत्वादित्यर्थः । **प्रयोगद्वयमत्राभिप्रेतमिति ॥** हेतुसाध्ययोर्वैयधिकरण्येन उपन्यासपरवाक्य इत्यर्थः । अन्यथा, प्रयोगद्वयाभिप्रायाभावे अतद्गोचरत्वादित्येव ब्रूयादिति भावः । **साध्याविशिष्टतेति ॥** तत्राप्रामाण्यतदविषयकत्वयोरविशेषादिति भावः । **फलेति ॥** अनुमानादीनि न धर्मादिविषयप्रमितिरूपफलजनकानि तज्जननासमर्थत्वादित्येवमित्यर्थः । हेतोरसिद्धिं प्रतिज्ञापूर्वं निराह- **तथा हीत्यादिना ॥ बाह्यमिति ॥** धर्मादिज्ञानजनने शक्तमिति योज्यम् । एवमग्रे 'नापि मानसम्' इत्यादावपि ज्ञेयम् । **रूपादिमतीति ॥** रूपरसगन्धस्पर्शोपेतद्रव्य इत्यर्थः । **अनुभवेति ॥** सुखमनुभवामीत्यनु-व्यवसायवद्धर्ममधर्मं वा अनुभवामीत्यनुव्यवसायाभावादिति भावः । **तस्यापीति ॥** योगिनां धर्मादिप्रत्यक्ष-मस्तीत्यस्यापीत्यर्थः । **तदिदमिति ॥** योगिनां धर्मादिप्रत्यक्षमस्तीत्येतदपौरुषेयवाक्यरूपागमं विना न सिद्धमित्येतदित्यर्थः । **तन्निश्चयेति ॥** धर्मादिनिश्चयेत्यर्थः ।

**तत्प्रतिबद्धेति ॥** धर्मादिव्याप्तलिङ्गाभावादित्यर्थः । **सामान्यतो दृष्टेनेति ॥** 'सुरनरतिर्यगादिरूपं प्रतिमुख-वैलक्षण्यरूपं वा विचित्रकार्यं विचित्रकारणजन्यं विचित्रकार्यत्वाद्घटपटादिविचित्रकार्यवद्' इत्यादिरूपानुमाने-नेत्यर्थः । **साधनेति ॥** इदमस्य स्वर्गादेस्साधनम्, इदमस्याग्निहोत्रादेः फलमिति यस्साध्यसाधनभावरूपः सम्बन्धस्तद्रूपो विशेष इत्यर्थः । **नचैवमिति ॥** अनुमानस्य धर्मविशेषाननुमापकत्वे धर्माधर्मस्वरूपनिर्णायक-युक्त्यनुसन्धानार्थकयुक्तिनिबन्धनरूपधर्ममीमांसाऽनुपपत्तिरित्यर्थः । **तदितिकर्तव्यतेति ॥** अपौरुषेय-वाक्येतिकर्तव्यतेत्यर्थः । वेदेतिकर्तव्यता नाम वेदजन्यज्ञाने न्यायानुसन्धानरूपोपकारकत्वम् । न्यायानुसन्धान-रूपोपकारेणाप्रामाण्यशङ्कापगमे निश्चितप्रामाण्यकं निश्चयरूपं ज्ञानं जनयतीत्यप्रामाण्यशङ्कादिरूपदोषनिवर्तक-न्यायानुसन्धानरूपोपकारं कुर्वती न्यायनिबन्धनरूपा मीमांसा इतिकर्तव्यतेत्युच्यते । **एतदपीति ॥** मीमांसाऽनु-गृहीतापौरुषेयवाक्यं विना धर्माधर्माद्यसिद्धिरित्येतदित्यर्थः । **नच पौरुषेयं वाक्यमिति ॥** धर्मादिविषय-प्रमितिजनने शक्तमिति योज्यमिति प्रागेवोक्तम् । **आगमं विनेतीति ॥** मूलभूतागमं विना मन्वादिष्वनाश्वासा-दित्यर्थः । कथं परिशेष इत्यत आह- [1]**एतदतिरिक्तानि हीति ॥ न चेति ॥** धर्मादिव्यवस्थापराणि च न भवन्तीत्यर्थः । **न चैवमिति ॥** वेदः कर्तृप्रसिद्धिमानिति धर्मादिव्यवस्थापरश्च नेत्यपि नेत्यर्थः । **एवं सतीति ॥** धर्मादिर्वेदेतरप्रमाणावेद्यत्वे सतीत्यर्थः । चैत्यवन्दनादिर्धर्म इति वेदाप्रामाण्यवादिनां कथं व्यवहार इत्यत आह- **किन्त्वित्यादि ॥ तमतिक्रम्येति ॥** वेदप्रतीतं धर्मं विहायेत्यर्थः । वेदप्रतीतितः प्रकारान्तरेणेत्यर्थः ।

**(श्री.टि.)** वक्ष्यमाणानुमाने आश्रयासिद्धिस्वरूपासिद्धिपरिहारमाह- **अस्ति तावदित्यादिना ॥ पूर्वोक्त-प्रकारेणेति ॥** 'यस्य तौ नाभिमतौ नासौ समयी' इत्यादिना पूर्वोक्तप्रकारेणेत्यर्थः। **ते चेति ॥** सर्ववादि-सम्प्रतिपन्ना धर्माद्या इत्यर्थः। **वस्तुत्वादिति ॥** सर्ववादिसम्प्रतिपन्नत्वमेवेह वस्तुत्वमभिप्रेतम्। तथा च **वस्तुत्वात्** सर्वसम्प्रतिपन्नत्वादित्यर्थः। पक्षतावच्छेदकमेवात्र हेतुरिति भावः। अत्राप्रयोजकताशङ्कापरिहाराय हेतूच्छित्ति-रूपमनुकूलतर्कमाह - **न हीति ॥** कुतो न सम्भवतीत्यत आह - **अतिप्रसङ्गादिति ॥** अन्यथा शशविषाणादावपि सर्वसम्प्रतिपत्तिः स्यादित्यतिप्रसङ्गादित्यर्थः। **सम्प्रतिमूले** सम्प्रतिपत्तिं प्रति मूलभूते। मूले आगमं विनानुमानादीनामित्यन्वयः, आगमं विना स्थितानाम्, आगमातिरिक्तानामित्यर्थ इत्यभिप्रेत्य व्याचष्टे - **अपौरुषेयेति ॥** किमनेनोक्तं भवतीत्यत आदिपदार्थं दर्शयन्नपौरुषेयवाक्यातिरिक्तत्वोक्त्या लब्धमर्थं च दर्श-यन्नाह-**ततश्चेति ॥** प्रत्यक्षादीनामिति वक्तव्येऽनुमानस्याऽदित्वेन ग्रहणे निमित्तमाह-**प्रत्यक्षस्येत्यादिना ॥ पूर्वोक्तन्यायादिति ॥** पौरुषेयागमस्यापि धर्मादिप्रतिपादकत्वमसम्भावितम्, अज्ञानविप्रलम्भयोः प्राप्तेरित्या-द्युक्तरीत्या तत्प्रणेतर्याप्त्यनिश्चयादित्यर्थः। असम्भावितत्वे किमर्थं तदुभयग्रहणमिति पृच्छति- **किन्त्विति ॥** उत्तरमाह - **प्रमाणत्व-मात्रेणेति ॥ यो यद्गोचरो न भवतीति ॥** सत्यां व्याप्तौ व्यधिकरणत्वमकिञ्चित्कर-मित्याशयः।

व्यधिकरणत्वशङ्काऽनर्हं प्रयोगद्वयं दर्शयति - **अथ वेत्यादिना ॥ एवमपीति ॥** प्रयोगद्वये व्यधि-करणत्वाभावेऽपीत्यर्थः। **साध्याविशिष्टतेति ॥** अतद्गोचरत्वादित्यस्य हेतोरनुमानादीनां धर्मादिविषयक-प्रमाजनकत्वाभावादित्यर्थः। धर्मादिविषयकप्रमितिकारणत्वाभाव एव च साध्य इति प्रथमप्रयोगे साध्याविशिष्ट-त्वम्। द्वितीयप्रयोगेऽपि धर्मादीनामनुमानादिजन्यप्रमाविषयत्वाभावः साध्यः। अनुमानादिजन्यप्रमाविषयत्वा-भावरूपं तदगोचरत्वं हेतुरिति द्वितीयप्रयोगे च साध्याविशिष्टत्वमित्यर्थः। उभयत्रापि समाधानमाह - **फलाभाव-स्येत्यादिना ॥** फलोपधानाभावस्येत्यर्थः। **सामर्थ्यं** योग्यता, तदभावस्येत्यर्थः। तथा चानुमानादीनि धर्मादिविषयप्रमारूपफलजनकानि न भवन्ति धर्मादिविषयकप्रमाजनकत्वयोग्यतारूपसामर्थ्यशून्यत्वात्। यद् यज्जनकत्वयोग्यताशून्यं तत् तज्जनकं न भवति, यथा दण्डः पटस्य। तथा धर्मादीन्यनुमानादिजन्यप्रमारूपफल-विषयभूतानि न भवन्ति। अनुमानादिजन्यप्रमाविषयत्वयोग्यताशून्यत्वात्। यद् यज्जन्यप्रमाविषयत्वयोग्यताशून्यं तत् तज्जन्यप्रमाविषयो न भवति, यथा रूपं घ्राणस्य इति सामान्यव्याप्तिमूलकप्रयोगद्वयस्यात्राभिप्रेतत्वेन न साध्याविशिष्टतेत्याशयः। प्रसक्तप्रतिषेधप्रकारं दर्शयति - **प्रत्यक्षमिति ॥** धर्मादिविषयकं प्रत्यक्षमित्यर्थः। **तदीयेषु** तदाश्रितेषु। **सामर्थ्यादिति ॥** धर्मादीनां च रूपादिरहितत्वाद्रूपादिमद्द्रव्याश्रितत्वाभावाच्च न बाह्यप्रत्यक्षविषयत्वमिति भावः। **मानसमिति ॥** धर्मादिकं मनोजन्यानुभवविषय इत्यर्थः। **अनुभवेति ॥** अनुभवानुव्यवसाययोरभावादित्यर्थः। धर्मादिविषयकानुभवाभावे हेतुस्तदवगाह्यनुव्यवसायाभावादिति। **अन्यथेति ॥** सुखादिवद्धर्मादेर्मानसप्रत्यक्षविषयत्व इत्यर्थः। **इति स्यादिति ॥** इत्येवं मनोजन्यानुभवाव-गाह्यनुव्यवसायः स्यादित्यर्थः।

**(श्री.टि.)** ननु धर्मादावनुभवानुव्यवसाययोरभावेऽपि

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥'

इति वचनेन स्वर्गस्य सुखरूपत्वावगमान्नरकस्य च दुःखस्वरूपत्वान्मनसा तद्विषयकोऽनुभवोऽनुव्यवसायश्च स्यादेवेत्यत आह- **स्वर्गादीनां त्विति ॥** परलोके जायमानानां सुखादीनां विप्रकृष्टत्वेनैतद्देहावच्छेदेन मनसाऽ-नुभवितुमयोग्यतया न मानसप्रत्यक्षविषयत्वमित्यर्थः। योगिप्रत्यक्षमेव धर्मादिसद्भावे प्रमाणमित्याशङ्क्य निराकरोति- **न चेति ॥ तस्यापि** योगादिसिद्धानां प्रत्यक्षस्यापि। अनुमानादीनामित्यत्र आदिपदोक्तयोगि-प्रत्यक्षस्यापि, **आगमं विना** अपौरुषेयवाक्यं विना असिद्ध्या, धर्मादिविषये **प्रामाण्यं** प्रमापकत्वं नास्तीति मूलयोजनामभिप्रेत्याऽह - **तदिदमुक्तमिति ॥ तेषां** योगादिसिद्धानाम्। **तेन** स्वकीयप्रत्यक्षेण। ननु तर्हि तदीयप्रत्यक्षेणैवास्माकमपि तन्निश्चयोऽनन्तरमनुष्ठानं च सम्भवतीति चेत्तत्राऽह - **न हीति ॥** एवं प्रमाणत्वमात्रेण प्रसक्तं प्रत्यक्षं निराकृत्यानुमानं निराचष्टे- **नापीति ॥ तत्प्रतिबद्धेति ॥** धर्मादिव्याप्तलिङ्गाभावादित्यर्थः। ननु विशिष्य धर्मादिव्याप्तलिङ्गाभावेऽपि 'ज्योतिष्टोमादिकं धर्मादिसाधनं तदुद्देशेन प्रेक्षावद्भिः क्रियमाणत्वात्। यद् यदुद्देशेन प्रेक्षावद्भिः क्रियते तत् तत्साधनं यथा कृष्यादिकं धान्यादिसाधनम्' इति सामान्यतो दृष्टेन धर्मादिसिद्धिर्भविष्यतीत्यत आह- **सामान्यतो दृष्टेनेति ॥** सामान्यव्याप्तिमूलकत्वाद् अस्य सामान्यतो दृष्टत्वं ज्ञातव्यम्। वैशेषिकादिभिः साध्याप्रसिद्धेर्दूषणत्वाङ्गीकारान्नैवमनुमातुं शक्यत इति ज्ञापयितुं कथञ्चिदित्यु-क्तम्। अन्ये तु, ननु देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वाद्

देवदत्तप्रयत्न-जन्यस्रगादिवदित्यनुमानेन धर्मादिसिद्धिर्भविष्यतीत्यत आह- **सामान्यतो दृष्टेनेति ।।** अस्य प्रत्यक्षायोग्यार्थानुमापकत्वात्सामान्यतो दृष्टत्वम् । यथाऽऽहुः-

'दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयम् ।
पूर्वं प्रत्यक्षयोग्यार्थं तदयोग्यार्थमुत्तरम् ।।' इति ।

देवदत्तशरीरादिकं धर्मातिरिक्तदेवदत्तविशेषगुणजन्यमित्यपि साधयितुं शक्यत्वेनातिप्रसङ्गित्वान्नैवमनुमातुं युक्तमित्याशयेन कथञ्चिदित्युक्तमित्याहुः । केचित्तु, ननु तथाऽपि सुखदुःखादिकमसाधारणकारणजन्यं भावत्वे सत्युत्पत्तिमत्त्वाद् घटादिवदिति सामान्यतो दृष्टेन परिशेषाद्धर्मादिस्वरूपसिद्धिर्भविष्यतीत्यत आह सामान्यतो दृष्टेनेतीत्याहुः । **साधनेत्यादि ।।** पूर्वाग्रदूर्वास्थापनादिसाधनजनितमदृष्टमीदृशं फलमुपजनयतीत्येवंरूपो धर्म-विशेष इत्यर्थः । **अनुमातुं शक्यः**, अनुमानेन निश्चेतुं शक्यः । ननु माऽस्तु तन्निश्चयः । तथाऽपि तत्स्वरूप-ज्ञानमात्रेणैवालमित्याशङ्क्य निषेधति- **न चेति ।।** नन्वनुमानस्य धर्मज्ञापकत्वाभावे 'अथातो धर्मजिज्ञासा' इत्यादिना धर्ममीमांसाकरणवैयर्थ्यं स्यात् । मीमांसाया युक्त्यनुसन्धानरूपतयाऽनुमानरूपत्वादित्यशङ्क्य प्रतिषेधति- **न चैवमिति ।।** अनुमानस्य **आगमम्** अपौरुषेयागमं विना स्वातन्त्र्येण धर्मादिषु **प्रामाण्यं (श्री.टि.)**तत्प्रमापकत्वं नास्तीति मूलयोजनामभिप्रेत्य तत्फलितमर्थमाह - **अपौरुषेयवाक्येनेति ।।** यथाऽऽहुः-

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ।।' इति ।

प्रमाणत्वमात्रेण प्रसक्तं पौरुषेयागमं निराचष्टे - **न चेति ।। दृश्यत इति ।।** तथा च तद्वाक्येन धर्मादि-सिद्धिर्भविष्यतीति भावः । आगमं विनाऽनुमानादीनामित्यस्यापौरुषेयागमव्यतिरिक्तानामित्यर्थस्योक्तत्वात्, तल्लब्धस्य पौरुषेयागमस्य मन्वादिप्रणीतस्य **धर्मादिषु प्रामाण्यं** धर्मादिप्रमाजनकत्वं नास्ति, कुतः **आगमं विना** अपौरुषेयवाक्यमूलकत्वं विना तेष्वाश्वासाभावादिति शेष इति मूलयोजनामभिप्रेत्याह - **अपौरुषे-येति ।। अत्रेत्यादि ।।** अनेन धर्मादिकम् अपौरुषेयवाक्यैकप्रमाणकम् अनुमानप्रत्यक्षपौरुषेयवाक्याप्रमाणकत्वे सति सप्रमाणकत्वाद्व्यतिरेकेण घटवदिति परिशेषरूपव्यतिरेक्यनुमानप्रदर्शनपरं मूलवाक्यमित्युक्तं भवतीति ज्ञातव्यम् । नन्वस्त्वपौरुषेयवाक्यम् । तद्वेद एवेति कुत इत्यत आह- **तच्चेति ।।** अपौरुषेयमित्यर्थः । **न चैव-मिति ।।** कर्तृप्रसिद्धिशून्यो धर्मादिव्यवस्थापरश्चेत्यर्थः । **नन्वेवमिति ।।** अपौरुषेयवाक्येनैव धर्मादिसिद्ध्यङ्गी-कार इत्यर्थः । **सर्वेषां** वादिनाम् । तथा च तेषां धर्मादौ आनुमानिकत्वादिविप्रतिपत्तिर्न स्यादिति भावः । **वेदेन** 'धर्मं चरत माऽधर्मम्' इत्यादिवेदेन । **प्रतीते** सामान्येन सर्ववादिनां प्रतीते सति । **तद्विशेषेषु** अग्नीषोमीय-पश्वालम्भनादिरूपधर्मविशेषेषु । तम् 'अग्नीषोमीयं पशुमालभेत' इत्यादिवेदम् । **अतिक्रम्य** 'न हिंस्यात्' इत्यादेरुत्सर्गाभिप्रायेण प्रवृत्तत्वमज्ञात्वा, स्वबुद्धिदोषाद् वादिनाम् अहिंसैव परमो धर्मः, केशोल्लुण्ठनं धर्मः, सप्तघटिकातः प्राग्भोजनं धर्मः, इत्यादिरूपा विप्रतिपत्तयः । **प्रतीयन्ते** प्रतीता भवन्ति विस्तृता भवन्तीत्यर्थः। एवं च धर्मादेरानुमानिकत्वादिविप्रतिपत्तिः स्वमतिदोषाद्युक्तेति भावः । **अन्यथेति ।।** सामान्यतो धर्मादि-स्वरूपस्य वेदात्प्रतीत्यभाव इत्यर्थः । **बुद्धाविति ।।** तथा च धर्मादावनुमानप्रवृत्तिरपि न सम्भवति आश्रया-सिद्धिप्रसङ्गादिति भावः ।

**(पां.टि.)** धर्मादिकम् अपौरुषेयशब्दप्रमाणकम् इन्द्रियलिङ्गपौरुषेयशब्दाप्रमाणकत्वे सति सप्रमाणकत्वात् । यद् यदप्रमाणकत्वे सति सप्रमाणकं तत् तदितरप्रमाणकं यथा सम्मतम् । न चाप्रसिद्धविशेषणत्वम् । सामान्यव्याप्तेरुक्तत्वेन व्याप्तौ सत्यां तस्यादोषत्वादित्यभिप्रेतानुमाने आश्रयासिद्धिं तावत्परिहरति- **अस्ति तावदिति ।। वादिनामिति ।।** समयिनामित्यर्थः । अप्रामाणिकाभ्युपगमे समयित्वमेव तेषां न स्यात् । न ह्यप्रामाणिकविषयः समयश्चेत्युपपन्नमिति भावः । ननु चार्वाकस्य न धर्मादिषु सम्प्रतिपत्तिरस्तीत्यतस्तद्रीत्या आश्रयासिद्धिरपरिहार्यैवेत्यत आह- **यस्त्विति ।। पूर्वोक्तेति ।।** 'यस्य तौ नाभिमतौ नासौ समयी' इत्यादि-पूर्वोक्तप्रकारेणेत्यर्थः । तथा च न तद्रीत्याऽप्याश्रयासिद्धिरिति भावः । हेतौ विशेष्यासिद्धिं परिहरति- **ते चेति ।।** अप्रयोजकत्वमाशङ्क्याप्रामाणिकत्वे सर्वसम्प्रतिपत्तिविषयत्वानुपपत्तिरूपबाधकसत्त्वान्न तदित्या-**(पां.टि.)** शयेनाऽह- **न ह्यप्रामाणिकेति ।।** यथा चात्र नेष्टापत्तिस्तथोक्तं प्राक् 'अस्ति तावत्' इत्यादिना । प्रत्यक्षादीनामिति प्रत्यक्षादित्वेन ग्रहणे कर्तव्ये तदकृत्वाऽनुमानादित्वेन ग्रहणे किं निमित्तमित्यतो नियामककथनेन तदुपपादयति- **प्रत्यक्षस्येत्यादिना ।।** 'तथा हि, प्रत्यक्षं न तावद्ग्राह्यम्' इत्यादिवक्ष्यमाणरीत्येति शेषः । **पूर्वोक्ते-ति ।।** 'न च पौरुषेयेण वाक्येन तत्सिद्धिः' इत्यादिपूर्वोक्तेत्यर्थः

। अङ्गीकृत्य वैयधिकरण्यस्य दूषणत्वं समाधानमाह- **अथ वेति ॥ एवमपि** वैयधिकरण्यपरिहारेऽपि । प्रत्यक्षमपि किमस्मदादीनामभिमतं किं वा योगिनाम् । आद्येऽपि किं बाह्यम्, उत मानसमिति विकल्पान् मनसि निधायाऽद्यं प्रतिषेधति- **प्रत्यक्षमिति ॥** तत्कुत इत्यतो घ्राणश्रोत्ररसनानां गन्धशब्दरसलक्षणनियतविषयत्वेनात्र प्रामाण्यमसम्भावितमिति भावेन चक्षुःस्पर्शनयोरसामर्थ्यमुपपादयति- **तस्येति ॥** द्वितीयं दूषयति- **नापीति ॥** तृतीयमाशङ्क्य निषेधति- **न चेति ॥** अङ्गीकृत्यापौरुषेयवाक्यं विना योगिप्रत्यक्षसिद्धिं दूषणान्तरमाह- **किञ्चेति ॥** ननु योगिप्रत्यक्षेणैव अस्माकमपि धर्मादिसिद्धिः किं न स्यादित्यतोऽतिप्रसङ्गान्नैवमित्याह- **न हीति ॥** नन्वस्माकमुपाया-भावाद्धर्माद्यनिश्चयेऽपि योगिप्रत्यक्षात्तत्सिद्धिरपरिहार्यैव । प्रत्यक्षेण वस्तुसिद्धेर्यत्किञ्चित्पुरुषीयप्रत्यक्षमात्र-सापेक्षत्वेन सर्वपुरुषीयप्रत्यक्षानपेक्षत्वादित्यत आह- **अनुष्ठानं वेति ॥** अस्मदीयधर्मानुष्ठानस्यास्मदीय-तन्निश्चयमात्रसाध्यत्वान्न तेन विना तत्सम्भवतीत्यर्थः । **तत्प्रतिबद्धेति ॥** तद्व्याप्तेत्यर्थः । **सामान्यतो दृष्टे-नेति ॥** देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तभोगहेतुत्वाद्देवदत्तप्रयत्नजन्यस्रगादिवदिति सामान्यतो दृष्टेनेत्यर्थः । देवदत्तशरीरादेर्देवदत्तविशेषगुणजन्यत्वं न साक्षात्साध्यम् । धर्माधर्मयोरप्यारम्भक-प्रेरणादिरूपेणैवोप-योगाङ्गीकारात्, देवदत्तशरीरं न साक्षाद्देवदत्तविशेषगुणजन्यं शरीरत्वाद्यज्ञदत्तशरीरवदिति सत्प्रतिपक्षत्वाच्च । नापि परम्परया तत् । तथा सति जन्मान्तरीयप्रयत्नाराधितदेवताद्वारेणोपपत्त्याऽर्थान्तरत्वापा-तात् । देवदत्तविशेषगुणजन्यतया विनाऽप्याकाशादेरिवेश्वरेच्छया देवदत्तस्य भोगहेतुत्वसम्भवेनाप्रयोजकत्वाच्च इत्यादियुक्तिपादोदितमेव दूषणमभिप्रेत्योक्तम्- **कथञ्चिदिति ॥ न चैवमिति ॥** साधनफलसम्बन्धरूपधर्म-विशेषस्यानुमानाविषयत्व इत्यर्थः । **धर्ममीमांसानुपपत्तिरिति ॥** धर्ममीमांसाया युक्त्यनुसन्धानात्मकत्वादिति भावः । **आश्वासानुपपत्तेरिति ॥** धर्माद्युपदेष्टर्याप्तिनिश्चयानुपपत्त्या तद्वाक्ये प्रामाण्यनिश्चयानुपपत्तेरित्यर्थः । **आश्वास इति ॥** आप्तत्वनिश्चय इत्यर्थः । उपलक्षणं चैतत् । तद्वाक्ये प्रामाण्यनिश्चयो दृश्यत इत्यपि द्रष्टव्यम् । नन्वेवं सामान्यसिद्धिपरिशेषाभ्यामपौरुषेयवाक्यसिद्धावपि वेदापौरुषेयत्वस्यासिद्धत्वात् 'किञ्च सामान्यपरि-शेषाभ्यां वेदापौरुषेयत्वं सिद्ध्यति' इत्येतत्प्रतिज्ञाविरोध इत्यत एतदुभयोपजीवनेन प्रवृत्तपरिशेषान्तरेण तत्सिद्धेरभिप्रेतत्वान्न तद्विरोध इति वेदापौरुषेयत्वविषयकं परिशेषमाह - **तच्चेति ॥** गूढाभिसन्धिराशङ्कते - **नन्वेवमिति ॥** गूढाभिसन्धिरेव परिहरति - **सत्यमिति ॥** प्रमापकस्य प्रमाणस्यैकत्वाद्धर्मादौ वादिना मतभेदो न स्यादित्याशयेन शङ्किता स्वाभिप्रायमुद्घाटयति - **किन्त्विति ॥**

**(व्या.टि.)** एवं वेदापौरुषेयत्वे बाधकाभावं साधकेष्वप्रमितकर्तृकत्वानुमानं प्रत्यभिज्ञाप्रत्यक्षं चोक्त्वा परिशेषा-**(व्या.टि.)** नुमानमपि विवक्षुः प्रतिजानीते - **किञ्चेति ॥** अन्यच्चेत्यर्थः । **सामान्यसिद्धीति ॥** धर्मादिविषय-प्रमाणसिद्ध्यपौरुषेयेतरपरिशेषाभ्यां वेदापौरुषेयत्वमित्यर्थः । ननूद्देश्यसिद्धौ समप्राधान्यभाव एव द्विवचननिर्देशो युक्तः । यथा दर्शपूर्णमासाभ्यामिति । न चात्र समप्राधान्यम् । सामान्यसिद्धेर्विशेषपरिशेषाङ्गत्वात् । टीकायां 'सामान्यतः सिद्धे' इति निमित्तसप्तमीप्रयोगाच्च । अतस्तथा प्रयोगोऽयुक्त इति चेत् । मैवं मंस्थाः । उभयोरङ्गाङ्गि-भावे सामान्यासिद्धौ कस्य विशेषः परिशिष्येत । विशेषपरिशेषाभावे सामान्यसिद्धिः क्वोपयुज्येत इत्युभयोरा-वश्यकत्वे सामान्येन तथोक्तिः । अथ वा सामान्यसिद्धिपरिशेषयोरुभयोर्विशेषणविशेष्यभावेनानुमानावयव-त्वात् तथोक्तिः । अनुमानप्रकारश्च- धर्मादिः अपौरुषेयप्रमाणकः तदितराप्रमाणकत्वे सति सप्रमाणकत्वात् । यद् यदितराप्रमाणकत्वे सति सप्रमाणकं तत् तदेकप्रमाणकं यथा सम्मतमिति । अपौरुषेयं, वेद एव, अकर्तृकत्व-प्रसिद्धिमत्त्वे सति धर्मादिव्यवस्थापरत्वादिति तर्कताण्डवदिशा बोध्यः । नन्वेवमपि धर्मादौ प्रमाणसामान्यसिद्धिः, तस्यापौरुषेयवाक्येतरत्वनिरासे नापौरुषेयवाक्यत्वपरिशेषः, अपौरुषेयवाक्यस्य वेदतदतिरिक्तान्यतरत्वसिद्धिः, वेदातिरिक्तत्वनिरासेन वेदत्वपरिशेष इति सामान्यसिद्धिद्वयस्य परिशेषद्वयस्य वक्ष्यमाणत्वेन कथं द्विवचनमिति चेन्न । सामान्यसिद्धित्वेन परिशेषत्वेन च एकीकरणात् । अथ वा सामान्यसिद्धिभ्यां परिशेषसिद्धिभ्यामिति प्रत्येकं (विभिन्न) विभक्त्यर्थस्यान्वयः । यथा 'ओजःसहोऽम्भसा वर्तते' इति सूत्रे अम्भसेत्येकत्वस्य, यथा वा द्वापरादाविति भागवते द्वापरे चादौ चेति तात्पर्यानुसारेणैकत्वस्य, यथा वा 'अजाविखरयोः' (अजाविभ्याम्) इति द्वित्वस्य प्रत्येकमन्वयः । **वेदस्यापौरुषेयत्वमिति ॥** अपौरुषेयस्य वेदत्वमित्यर्थः । तथैव परिशिष्यमाण-त्वात् । समानवित्तिवेद्यतया तथोक्तिः । तत्राऽद्यौ सामान्यसिद्धिपरिशेषौ दर्शयति- **अस्ति तावदिति ॥ सम्प्रतिपत्तिः** निश्चयः । हेतोः स्वरूपासिद्धिं वारयति- **यस्त्विति ॥** प्रयोगप्रकारं दर्शयति- **ते चेति ॥** हेतुं दर्शयति- **वस्तुत्वादिति ॥** सर्वसम्प्रतिपन्नवस्तुत्वादित्यर्थः । विपक्षे हेतूच्छित्तिं बाधिकामाह- **न हीति ॥ अतिप्रसङ्गादिति ॥** अमूलफलप्रसङ्गादित्यर्थः । निष्कृष्याऽह- **एवमिति ॥** सिद्ध इति निमित्तसप्तमी ।

ननु मूले अनुमानादीनामित्युक्तिरयुक्ता । अन्यपदार्थयोरुभयोर्बहुत्वान्वयायोगात् । अस्य चाप्रकृत्यर्थ-त्वात् । प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति चेन्न । अनुमानम् आदिर्येष्विति निर्धारणसप्तम्या विगृह्य समस्यमानानां पदार्थानां सम्भूयान्वयोपपत्तेः, शास्त्रादिसङ्गतिरितिवत् । तथाऽन्वयं दर्शयति- **तत-श्चेति ॥** त्रयाणां प्रमाणत्वेन प्रसक्तावप्यनुमानस्य सम्भावितत्वेन धर्मादावधिकप्रसक्तेरादित्वेन कीर्तनमित्या-शयेनाऽह- **प्रत्यक्षस्येत्यादिना तदादित्वेन ग्रहणमित्यन्तेन ॥ व्यधिकरणत्वमिति ॥** साहचर्यनियमरूप-व्याप्तिविघटकतया दूषणमिति शेषः । **व्याप्तिसम्भवेनेति ॥** अविनाभावरूपव्याप्तौ सामानाधिकरण्याप्रवेशादिति भावः । साहचर्यनियमो व्याप्तिरिति पक्ष आह- **अथ वेति ॥ अतद्गोचरत्वादिति ॥** मूले नञ्व्यत्ययोऽभिसंहित इति भावः । ननु तदविषयकत्वस्यैव तदप्रामाण्यरूपत्वेनाऽद्ये साध्याभेदः । एवं तदविषत्वस्यैव तदप्रमेयत्वरूपत्वेन द्वितीयेऽपीति शङ्कते- **एवमपीति ॥ फलाभावस्येति ॥** आद्ये विषयीकरणरूपफलाभावस्य, द्वितीये विषयी-**(व्या.टि.)** भवनरूपफलाभावस्येत्यर्थः । पक्षे साध्यसाधने विशिष्योपपादयति- **तथा हीति ॥** अत्र प्रत्यक्षं लौकिकमलौकिकं वेति विकल्प्याऽद्ये बाह्यं मानसं वेति विकल्प्याऽद्यं निराह- **न तावदिति ॥ तदीयेषु** द्रव्याश्रि-तेषु । सामान्ये गुणकर्मद्वारा तदीयत्वं बोध्यम् । द्वितीयं निरस्यति- **नापि मानसमिति ॥ अनुभवानुव्यवसाय इति ॥ अनुभवस्य** साक्षात्कारस्य, **अनुव्यवसाय** इति षष्ठीतत्पुरुषः । केचित्तु अनुभवानुव्यवसाययोरिति द्वन्द्व-माहुः । तन्न । 'अनुभवाननुव्यवसायाद्' इति सुधाऽनानुगुण्यात् । **अन्यथा धर्ममनुभवामीति स्यादिति ॥** अनुभूतेऽनुव्यवसायस्य दृष्टत्वादित्यर्थः । अतीन्द्रियैकदेशे स्वर्गादौ लौकिकप्रत्यक्षसाधारणसन्निकर्षाभावेन प्रत्यक्षमात्रं निरस्यति- **स्वर्गादीनां त्विति ॥** लौकिकप्रत्यक्षमात्रे सन्निकर्षो हि प्रयोजक इति भावः । स्वर्गादिपदेन सुखादिविवक्षायां कालविप्रकर्षो देशविशेषविवक्षायां देशविप्रकर्षो बोध्यः । अलौकिकप्रत्यक्षं शङ्कते- **न चेति ॥ तस्येति ॥** योगजप्रत्यक्षस्येत्यर्थः । मूलमारोहयति- **तदिति ॥** प्रागागमं विनेति विना कृतानामिति व्याख्या-तम् । अधुना न सिद्धं योगिप्रत्यक्षमित्यपि व्याख्यातम् । वैयधिकरण्यं करणफलयोरित्याह- **किञ्चेति ॥ तत्प्रति-बद्धेति ॥** प्रतिबन्धो व्याप्तिः । **सामान्यत इति ॥** इष्टापूर्तादिविषया प्रवृत्तिः फलवती प्रेक्षावत्प्रवृत्तित्वाद् इति सामान्यतो दृष्टेनेत्यर्थः । **अनुष्ठानमिति ॥** 'ज्ञात्वा कर्म समाचरेत्' इति ज्ञानपूर्वकत्वादनुष्ठानस्येत्यर्थः । मूलमनुकूलयति- **एतदपीति ॥** अनेन, आगमकरणं विना **प्रामाण्यम्** इतिकर्तव्यतात्वमिति व्याख्यातम् । **आश्वासेति ॥** आप्तिनिश्चयेत्यर्थः । **वाक्यमूलत्वेति ॥** 'यद्वै किञ्च मनुरवदत्तद्भेषजम्' इति वेदेनैव तदाप्ति-निश्चयादित्यर्थः । मूलमनुकरोति-**एतदिति ॥** अनेनाऽगमं विना **प्रामाण्यम्** आप्तवाक्यत्वमिति व्याख्या-तम् । द्वितीयौ सामान्यसिद्धिपरिशेषौ दर्शयति- **तच्चेति ॥** सामान्यतः सिद्धं धर्मादिविषयापौरुषेयवाक्यमि-त्यर्थः । न चैवं वेद इति वैधर्म्योपनयः । शङ्कते- **वेदेनैवेति ॥** तथा च कारणान्तराभावाद्धर्मे विप्रतिपत्त्यनुपपत्तिरिति गूढाशयः । वेदेनैवेत्येतदङ्गीकरोति - **सत्यमिति ॥** विप्रतिपत्तिमूलं पृच्छति- **किन्त्विति ॥** तदाह- **स्वमति-दोषादिति ॥** 'तामसत्वाच्च लोकस्य' इत्युक्तेरिति भावः ।

## मूलम् - तत्प्रामाण्यं च स्वत एव सिद्धम् ।

**टीका-** ननु वाक्यस्य यथार्थज्ञानसाधनत्वलक्षणं प्रामाण्यमाप्तोक्तत्वगुणाधीनं सर्वत्रोपलब्धम् । अत एव वाक्यजन्यज्ञानस्यापि याथार्थ्यरूपं प्रामाण्यं वाक्यगताऽऽप्तोक्तत्वगुणजन्यम् । तथाच वेदस्यापौरुषेयतायां गुणाभावात्प्रामाण्यं न स्यात् । नहि बीजस्य कलमत्वाभावे कलमाङ्कुरं प्रति कारणत्वमस्ति । अत एव कारणाभावाज्ज्ञानस्यापि प्रामाण्यं न भवेदित्यत आह - **तत्प्रामाण्यं चेति ॥ तस्य** वेदस्य यथार्थज्ञानजनकत्वलक्षणं **प्रामाण्य**माप्तोक्तत्वलक्षणगुणनिरपेक्षेण स्वरूपेणैव सिद्धम् । तथा ज्ञानस्यापि याथार्थ्यरूपं प्रामाण्यं गुणानपेक्षेण वाक्येनैवोत्पद्यत इति सिद्धम् ।

अयमाशयः । वेदस्यापौरुषेयत्वं तावदुक्तवक्ष्यमाणानेकप्रमाणसिद्धम् । गुणस्य पौरुषेयवाक्येषु सन्निधिर्दृश्यते । तत्र किं दर्शनाश्रयेण प्रामाण्यं प्रति गुणस्य कारणत्वमभ्युपगम्य वेदापौरुषेयत्वं त्याज्यम्, उत प्रमाणानुसारेण वेदापौरुषेयत्वमङ्गीकृत्य क्वचिद्गुणसन्निधेर्यादृच्छिकत्वं गृहीत्वा गुणानां प्रामाण्यकारणत्वं त्याज्यमिति संशये द्वितीयपक्ष एवाऽश्रयितुमुचितः । सावकाशेनैकेन अनवकाशानां बहूनां बाधस्यायुक्तत्वाद् वैपरीत्यस्यैवोपपन्नत्वात् । दृश्यते

**च यादृच्छिक-संवादिनोऽनाप्तवाक्यस्य गुणाभावेऽपि यथार्थज्ञानजनकत्वम् । नच तत्र वाक्यस्याकारणत्वम् । कारणान्तरानिरूपणेनाकारणकार्योत्पत्तिप्रसङ्गादिति । एतेन, प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावदित्यपि बाधितविषयत्वेन परास्तम् ।**

**(र.टि.)** नन्वन्यथाऽनवस्थानादितिवत् स्वपक्षसाधकस्य परपक्षबाधकस्य वाऽनुक्तेः कथमुत्पत्तिस्वतस्त्वं सिद्ध्येदित्यतोऽभिप्रायमाह- **अयमाशय इति ॥** तथा च वेदापौरुषेयत्वग्राहकप्रमाणानां निरवकाशत्वा-न्यथाऽनुपपत्तिः स्वपक्षसाधिका । यादृच्छिकसंवादिस्थले प्रामाण्यं प्रति गुणस्य व्यतिरेकव्यभिचारः परपक्षे बाधक इति द्रष्टव्यमिति भावः । **प्रमेति ॥** अनित्यप्रमा ज्ञानसामान्यहेतुतदतिरिक्तहेतुभ्यां जन्येत्यर्थः । तेन न भागे बाधासिद्धी व्याघातश्च । **कार्यत्वे सतीति ॥** ईश्वरज्ञानादौ व्यभिचारवारणाय कार्यत्वे सतीति विशेष-णम् । घटादौ व्यभिचारवारणाय तद्विशेषत्वादिति । ज्ञानसामान्ये व्यभिचारवारणाय विशेषपदमिति बोध्यम् । **बाधितविषयत्वेनेति ॥** प्रकृते ज्ञानहेत्वतिरिक्तहेतुजन्यत्वं हि गुणजन्यत्वे पर्यवसन्नं वक्तव्यम् । तच्च यादृच्छिकसंवादिस्थले प्रमां प्रति गुणस्य व्यतिरेकव्यभिचाराद्बाधितमिति भावः ।

**(रा.टि.)** एवं वेदापौरुषेयत्वेऽप्रमितकर्तृकत्वानुमानं, सामान्यपरिशेषानुमाने, प्रत्यभिज्ञानं च प्रमाणमुक्त्वा तत्र वर्णानामुत्पत्तिविनाशरूपबाधकं च निरस्याधुनाऽप्रामाण्यरूपबाधकान्तरमाशङ्क्य तन्निरासकतया मूलमवतार्य योजयति- **नन्वित्यादिना ॥ सर्वत्रेति ॥** लौकिकवाक्येष्वित्यर्थः । **अत एवेति ॥** आप्तोक्तत्वगुणाधीनत्वोपलम्भादेवेत्यर्थः । व्याप्तिमुक्त्वा तर्कमाह- **तथाचेति ॥** आपादकस्याप्रयोजकत्वं निराह- **नहीति ॥ अत एवेति ॥** ज्ञानजनके वेदे आप्तोक्तत्वगुणाभावादित्यर्थः । व्यधिकरणे पञ्चम्यौ । व्याख्यानव्याख्येयभावेन समानाधिकरणे वा । **स्वरूपेणैवेति ॥** ज्ञानजननशक्त्यैवेत्यर्थः । प्रागुक्तदृढतर्कस्य का गतिरित्यतः सर्वत्र गुणाधीनतोपलब्धेः कल्पकोक्तिपूर्वमन्यथासिद्धिव्यभिचारावाह- **अयमाशय इति ॥ वक्ष्यमाणेति ॥** श्रुतिस्मृतिरूपेत्यर्थः । **उत प्रमाणेति ॥** उक्तवक्ष्यमाणेत्यर्थः । यादृच्छिकत्वं दण्डरूपादि-वदवर्जनीयसन्निधिकत्वं दैवादायातत्वं वेत्यर्थः । **बहूनामिति ॥** प्रमाणानामित्यर्थः । **गुणाभावेऽपीति ॥** विषयसत्त्वं तत्र गुण इति न युक्तम् । विषयस्य ज्ञानं प्रति कारकत्वस्यैवाभावात् । विस्तरस्तु तर्कताण्डवे । **(रा.टि.) एतेनेति ॥** गुणस्य यादृच्छिकत्वकथनेनेत्यर्थः । ज्ञानरूपकार्येऽव्यभिचाराय तद्विशेषत्वादित्यु-क्तम् । **बाधितेति ॥** गुणस्योक्तविधया यादृच्छिकत्वानैकान्तिकत्वाभ्यां हेतुत्वाभावेन ज्ञानहेत्वति-रिक्तहेत्वधीनत्वाभावादिति भावः ।

**(श्री.टि.) ॥ अत एवेति ॥** वाक्यप्रामाण्यस्य गुणजन्यत्वादेवेत्यर्थः । **प्रामाण्यं न स्यादिति ॥** यथार्थज्ञान-जनकत्वरूपं प्रामाण्यं न स्यादित्यर्थः । ननु गुणाभावेऽप्यस्तु वेदस्य प्रामाण्यमित्यत आह- **न हीति ॥** बीजेन कलमाङ्कुरे जननीये कलमत्वस्येव वेदेन यथार्थज्ञाने जननीये गुणस्य कारणत्वेन तदभावे तज्जनकत्वासम्भ-वादिति भावः । **अत एव** वेदस्यापौरुषेयत्वादेव । **कारणाभावादिति ॥** वाक्यगताऽऽप्तोक्तत्वगुणजन्यत्वा-भावादित्यर्थः । **क्वचित्** पौरुषेयवाक्ये । **सावकाशेन** यादृच्छिकतया सावकाशेन । **एकेन** गुणसन्निधानेन । **बहूनाम्** अपौरुषेयत्वप्रतिपादकागमानाम् । प्रमाणानां बहुत्वोपपादनायैव प्राक् 'वेदस्यापौरुषेयत्वमुक्तवक्ष्य-माणानेकप्रमाणसिद्धम्' इत्युक्तमिति ज्ञातव्यम् । **वैपरीत्यस्यैवेति ॥** निरवकाशेनैकेन सावकाशानेकबाधस्यैव युक्तत्वादित्यर्थः । आप्तोक्तत्वगुणे सति वाक्यस्य यथार्थज्ञानजनकत्वरूपं प्रामाण्यं, तदभावे तदभाव इति न सम्भवति । यादृच्छिकसंवादिस्थले आप्तोक्तत्वगुणाभावेऽपि भ्रान्तप्रतारकवाक्यस्य यथार्थज्ञानजनकत्वदर्शनेन व्यतिरेकतो व्यभिचारादित्याह- **दृश्यते चेति ॥** ननु यादृच्छिकसंवादिस्थले यथार्थज्ञानोत्पत्तौ वाक्यस्य कारणत्वमेव नास्तीत्याशङ्क्य निषेधति- **न च तत्रेति ॥** प्रामाण्यस्योत्पत्तौ ज्ञानजनकातिरिक्तजन्यत्व-रूपपरतस्त्वसाधकम् अनुमानमाशङ्क्य निराकरोति- **एतेनेति ॥ अधीनत्वं** जन्यत्वम् । ननु प्रमाया अपि जन्यत्वेन ज्ञानहेतुजन्यतया तदतिरिक्तहेतुजन्यत्वाभावाद्व्याघात इति चेन्न । ज्ञानहेतुजन्यत्वे सति तदतिरिक्तहेतु-जन्येत्यभिप्रेतत्वात् । अप्रमाया दोषजन्यत्वेन साध्यपर्यवसानं पक्षे तु गुणजन्यत्वेनेति विवेकः । ईश्वरप्रमायां व्यभिचारवारणाय कार्यत्वे सतीति विशेषणम् । तावत्युक्ते निर्विकल्पकज्ञाने व्यभिचारः, तस्य निर्विकल्पक-प्रत्यक्षस्य भूयोऽवयवेन्द्रियसन्निकर्षरूपगुणजन्यत्वाभावेन साध्याभावाद् अतस्तद्विशेषत्वादित्युक्तम् । सप्रकारक-ज्ञानत्वं तदर्थ इति न व्यभिचारः । अथ वा घटादौ व्यभिचारवारणाय तद्विशेषत्वादित्युक्तम् । ज्ञानविशेष-त्वादित्यर्थः । ज्ञानसामान्ये व्यभिचारवारणाय विशेषपदमिति द्रष्टव्यम् । एतेनेत्यस्य विवरणम्- **बाधित-विषयत्वेनेति ॥** प्रकृते ज्ञानहेतुजन्यत्वे सति तदतिरिक्तहेतुजन्यत्वं साधयता हि गुणजन्यत्वेन पर्यवसानं वक्तव्यम् । तस्य पक्षीभूतयादृच्छिकसंवाद्यनाप्तवाक्यजन्यप्रमायाम् अभावाद्

बाधितविषयत्वमित्यर्थः ।

**(पां.टि.)** ननु वेदतज्जन्यज्ञानरूपकरणफलयोः प्रामाण्यस्वतस्त्वस्य 'प्रामाण्यं च स्वत एव' इत्यादिना पूर्वमभिधानात् तत्प्रतिपादकस्य 'तत्प्रामाण्यं च' इत्यादिग्रन्थस्य वैयर्थ्यमित्याशङ्क्य वेदापौरुषेयत्वानुमान-बाधकतया पौरुषेयत्वानुमानानुग्राहकतया परोक्तस्य, वेदापौरुषेयतायां च करणफलयोः प्रामाण्यं नोत्पद्यत इति तर्कस्य तयोरुत्पत्तौ प्रामाण्यस्वतस्त्वप्रतिपादनेन निराकरणार्थत्वान्न तदिति भावेनोत्पत्तौ प्रामाण्यस्य स्वतस्त्वप्रतिपादकतया उत्तरग्रन्थं योजयितुं करणफलयोरुत्पत्तौ परतस्त्वशङ्कामुत्थापयति- **नन्विति ॥** ननु **(पां.टि.)** वेदस्याऽप्तोक्तत्वाभावेऽपि यथार्थज्ञानजनकत्वसम्भवादप्रयोजकमेतदित्यत आह- **न हीति ॥** अन्यथा तदपि स्यादिति भावः । **उक्तवक्ष्यमाणेति ॥** 'वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वात्' इत्यादिभिरुक्तप्रमाणैः, 'वाचा विरूप नित्यया' इत्यादिभिर्वक्ष्यमाणैश्च प्रमाणैः सिद्धमित्यर्थः । **वैपरीत्यस्यैवेति ॥** निरवकाशैरनेकैः प्रमाणैः सावकाशस्यैकस्य प्रमाणस्य बाधस्योपपन्नत्वादित्यर्थः । व्यभिचाराच्च न गुणस्य प्रामाण्यं प्रति हेतुत्व-मित्याह- **दृश्यते चेति ॥** कुसुमाञ्जल्युक्तमनुमानमनूद्य निराकरोति- **एतेनेति ॥ प्रमेति ॥** अनित्यप्रमेत्यर्थः। तेन नेश्वरप्रमांशे बाधासिद्धीति भावः । **कार्यत्वे सतीति ॥** अत्रेश्वरप्रमायामव्यभिचाराय कार्यत्वे सतीति विशेषणम् । अनित्यज्ञानत्वरूपसामान्यधर्मावच्छिन्नेऽनित्यज्ञानेऽव्यभिचाराय तद्विशेषत्वादिति विशेष्योपादान-मिति द्रष्टव्यम् ।

केचित्तु, यद्यपि परैर्जन्यज्ञानत्वादिति हेतूकृतं, न तु कार्यत्वे सति तद्विशेषत्वादितीति नैवमनुवादो युक्तः । तथाऽपि जन्यज्ञानत्वस्य ज्ञानसामान्यसामग्रीजन्यत्वेनाप्युपपत्त्या तद्विशेषसामग्रीजन्यत्वेऽप्रयोजकतया ज्ञान-विशेषत्वस्यैव विशेषसामग्रीजन्यत्वप्रयोजकत्वमाश्रयणीयम् । एवं चात्र हेतावप्रयोजकत्ववारणाय तद्विशेषत्वा-दिति विशेष्योपादानम् । 'यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना न गृह्यते' इत्यादि वदद्भिः परैरप्रयोजक-त्वाहितव्यभिचारवारकस्यापि सार्थक्यस्यावश्यं वक्तव्यत्वादिति ज्ञापनायेह टीकायां जन्यज्ञानत्वादित्यनुक्त्वा कार्यत्वे सतीत्याद्यनुवादः कृतः । एतदनुरोधेनैव तर्कताण्डवेऽपि तथैव कृतमित्याहुः । तत्तु 'प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् । तदन्यस्मिन्ननाश्वासान्न विधाऽन्तरसम्भवः' इति कुसुमाञ्जलिद्वितीयस्तबकगतकारिका-विवरणरूपोत्तर 'तथा हि प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात्' इत्याद्युदयनग्रन्थ-तद्विवरणरूपवर्धमानादिग्रन्थादर्शनमूलकत्वादुपेक्ष्यम् । एतेनेत्युक्तमेव विशदयति- **बाधितविषयत्वेनेति ॥** प्रमाया ज्ञानत्वेन तद्धेतोर्ज्ञानहेतुत्वेन तदतिरिक्तजन्यत्वस्य तत्र बाधितत्वादित्यर्थः।

**(व्या.टि.)** अत्र वेदापौरुषेयत्वे गुणाभावेन प्रामाण्याभावमापादयितुं गुणस्य प्रामाण्यकारणत्वे सिद्ध एव कारणाभावेन कार्याभावस्य सुप्रसञ्जनत्वाद्गुणस्य प्रामाण्यप्रयोजकत्वमन्वयव्यतिरेकाभ्यामुपपादयति - **नन्वि-त्यादिना ॥** नन्वेतदसङ्गतम् । परतस्त्ववादिना हि ज्ञानगतयाथार्थ्यस्य गुणजन्यत्वं साधनीयम्, 'प्रमाऽसाधारण-कारणं गुणः' इति तल्लक्षणकरणात् । अनुमास्यति चात्र तथैव 'प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना' इति । अतः प्रमासाधनत्वस्य गुणकारणत्वाभिधानं केन सङ्गतम् । अयुक्तं च । न हि लोके यत्कार्यस्य कारणं तत् तत्कारणताया अपि कारणम् । पटकारणतन्तुसंयोगादेस्तन्तुगतपटकारणत्वाकारणत्वात् । न चात्र गुणभेदः । आप्तोक्तत्व-स्यैवोभयत्र गुणत्वात् इति चेन्न । भावानवबोधात् । तथा हि । याथार्थ्यरूपस्य ज्ञानप्रामाण्यस्य ज्ञानकारणातिरिक्त-कारणाजन्यत्वं स्वतस्त्वम् । तथा ज्ञानजननशक्तेरेव प्रमाजनकत्वं तद्वत्सहजत्वं वा करणप्रामाण्यस्य स्वतस्त्वं स्वतस्त्ववादिनोऽभिप्रेतम् । यद्वक्ष्यति 'औत्सर्गिकत्वात् स्वतःप्रामाण्यस्य' इति । अतः करणप्रामाण्यस्यान्याऽ-हितत्वेन परतस्त्वे ज्ञानप्रामाण्यस्यापि परतस्त्वं तत एव सेत्स्यति । यथा करणस्य अप्रमाजनकत्वशक्तेः दोषाऽ-**(व्या.टि.)** हितत्वेऽप्रमात्वस्यापि (दोषाहितत्व) तज्जन्यत्वमित्यनुशयानः करणप्रामाण्यस्य परतस्त्वं तदानु-षङ्गिकतया फलप्रामाण्यस्य परतस्त्वमप्यसाधयदिति नासङ्गतिः । **गुणाधीन इति ॥** अध्युपपदात् 'अध्युत्तरपदात् खः' इति खः । तस्य ईनादेशः । गुणाऽहिता प्रमाजननशक्तिर्न स्वाभाविकीत्यर्थः । अन्याऽहितत्वं परतस्त्वं न त्वनेकान्याहितत्वं, दोषाऽहिते तथा दर्शनात् । अनन्यथासिद्धान्वयव्यतिरेकौ दर्शयति - **सर्वत्रेति ॥** ननु ज्ञानप्रामाण्यस्योत्पत्तिस्वतस्त्वे कथं तद्विरुद्धं(तदविरुद्धं)करणप्रामाण्यस्योत्पत्तौ परतस्त्वं(स्वतस्त्वं) प्रतिज्ञायत इत्यतस्तदप्यानुषङ्गिकमित्याह- **अत एवेति ॥** करणशक्तेः परायत्तत्वादित्यर्थः । एवं तत्परतस्त्वं प्रतिज्ञाय वेदापौरुषेयत्वेऽनिष्टं प्रसञ्जयति - **तथा चेति ॥** ननु गुणहीनमपि वेदवाक्यं शाब्दप्रमाका(क)रणं किं न स्यादित्यतो यद् यदधीनं तत् तदभावे न इत्येतदुपपादयति- **न हीति ॥** तदानुषङ्गिकं बाधकान्तरं प्रसञ्जयति- **अत एवेति ॥** गुणाभावादेवेत्यर्थः । सिद्धान्ती करणफलोभयप्रामाण्यस्वतस्त्वं निरुच्य प्रतिजानीते- **तस्ये-ति ॥ स्वरूपेणैवेति ॥** स्वभावेनैवेत्यर्थः । सहजशक्त्येति यावत् ।

न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्यतो मूलाशयं प्रकाशयति- **अयमाशय इति ।। वेदस्यापौरुषेयत्वमिति ।।** अत्र वेदस्वरूपं तदपौरुषेत्वं च सुधायां प्रश्नपूर्वकं निरुक्तम् 'ननु को वेदः, किञ्च तस्यापौरुषेयत्वम् । क्रमविशेषविशिष्टवर्णा वेदः । तस्य नियतैकप्रकारत्व-मपौरुषेयत्वम् । स्वतन्त्रपुरुषपूर्वकत्वाभाव इति यावत्' इति । **यादृच्छिकत्वं** रासभादिवद्दैवादागतत्वम् । **वैपरीत्यस्येति ।।** बहुभिर्निरवकाशैः सावकाशैकबाधस्येत्यर्थः । गुणस्य प्रामाण्यव्यतिरेकाभावं दर्शयति- **दृश्यते चेति ।।**

नन्वेतत्सुधाविरुद्धम् । तत्र हि 'केनचित्पञ्च वराटिकाः पाणौ गृहीत्वा कति वराटिका इति पृष्टः सम्भावनया पञ्च वराटिका इत्याह । दैवात्पञ्च वराटिका आसन् । तत्र वाक्यस्य यादृच्छिकसंवादिनोऽप्यप्रामाण्यम्' इत्य-प्रामाण्याभिधानादिति चेन्न । अभिप्रायसद्भावात् । तथा हि । तत्र हि ज्ञानस्य याथार्थ्येऽपि न वाक्यस्य तज्जन-कत्वम् । तस्य प्रत्यक्षजन्यत्वात् । अत्र तु वाक्यस्यैव तज्जनकत्वात्प्रामाण्यम् । अत एवात्र वाक्यस्याकारणत्व-माशङ्क्य कारणान्तराभावेन तत्प्रासाधि । वाक्यस्य प्रामाण्ये गुणव्यभिचारोऽत्राभिहितः । सुधायां तु अनाप्तिमूलत्वादप्रामाण्यमेवेति न परस्परविरोधः । **कारणान्तरेति ।।** प्रत्यक्षादेर(भावा)सम्भवादिति भावः । पूर्वोक्तव्यतिरेकाभावं ज्ञानप्रामाण्यपरतस्त्वानुमानेऽप्यतिदिशति- **एतेनेति ।।** प्रतियोगिविशेषानुपादाने ज्ञानहेतोरप्यन्यापेक्षयाऽतिरिक्तत्वात्सिद्धसाधनमतो ज्ञानहेत्विति । ईशप्रमायां व्यभिचारवारणाय कार्यत्वे सतीति । **बाधितेति ।।** प्रमाया अपि ज्ञानत्वेन तद्धेतोर्ज्ञानहेतुतया तदतिरिक्तजन्यत्वसाधने बाध इत्यर्थः । यद्वा गुणस्योक्तदिशा यादृच्छिकत्वानैकान्त्याभ्यां हेतुत्वाभावेन ज्ञानहेत्वतिरिक्तहेत्वधीनत्वसाधने बाध इत्यर्थः ।

**मूलम् - अप्रामाण्यस्य च परतस्त्वानङ्गीकारे दुष्टेन्द्रियादेरप्यप्रामाण्यहेतुत्वं न स्यात् । तदनङ्गीकारे चानुभवविरोधः । अतः प्रामाण्यं स्वतः परतोऽप्रामाण्यमिति (च) सिद्धम् ।**

**(त.मं.)** निगमनप्रसङ्गे परतोऽप्रामाण्यं द्रढयति - **अप्रामाण्यस्येति ।।** आदिशब्दादज्ञानविप्रलम्भौ द्रष्टव्यौ ।

**टीका-** ननु यदि वाक्यमात्रस्य यथार्थज्ञानजनकत्वं तदा बौद्धादिवाक्यस्यापि तत् स्यात् । ततश्च तज्जन्यं ज्ञानं यथार्थमापद्येतेति चेन्मैवम् । तस्याज्ञानविप्रलम्भादिदोषमूलत्वेनायथार्थज्ञानजनक-त्वात् । वाक्यगता हि दोषास्तस्य यथार्थज्ञानजननशक्तिं प्रतिबध्य विपरीतज्ञानजननशक्ति-माविर्भावयन्ति । औत्सर्गिकत्वात्स्वतःप्रामाण्यस्यापवादेनाप्रामाण्यं भवतीति किमनुपपन्नम् ।

वाक्यगतस्याप्रामाण्यस्य दोषाधीनत्वं कुत इत्यतस्तद्विपक्षे बाधकेनोपपादयति- **अप्रामाण्यस्य चेति ।।** वाक्यगतस्यायथार्थज्ञानजनकत्वलक्षणस्याप्रामाण्यस्य **परतस्त्वानङ्गीकारे** पुरुष-दोषनिबन्धनत्वानङ्गीकारे काचादिव्यभिचारादिदुष्टयोरिन्द्रियलिङ्गयोरपि **अप्रामाण्यहेतुत्वं** ज्ञानगतायाथार्थ्यहेतुत्वं न स्यात् ।

पुरुषदोषाणां वाक्याप्रामाण्यनिमित्तत्वाभावो हि द्वेधा भवति । तस्याप्रामाण्याभावेन अप्रामाण्यस्य स्वतस्त्वेन वा । आद्ये दुष्टेन्द्रियादेरप्यप्रामाण्यं न स्यात् । द्वितीये काचादीनाम-पीन्द्रियाद्यप्रामाण्ये निमित्तत्वं न स्यात् । अस्ति च दुष्टेन्द्रियादेरप्यप्रामाण्यं काचादेश्च तन्निमित्तत्व-मिति । उभयस्याप्यनभ्युपगमे किं बाधकमित्यत आह- **तदनङ्गीकारे चेति ।।** यदि दुष्टेन्द्रियादेर-प्रामाण्यं नाऽङ्गीक्रियते तदाऽपि द्वयी गतिः । ज्ञानकरणत्वाभावो वा याथार्थ्यं वा । आद्ये ज्ञान-स्येन्द्रियाद्यन्वयव्यतिरेकानुविधानानुभवविरोधः । ज्ञानस्यैवानङ्गीकारे साक्ष्यनुभवविरोधः । द्वितीये तु बाधानुभवविरोधः । तृतीये त्वप्रामाण्यस्य काचाद्यन्वयव्यतिरेकानुभवविरोध एव ।

ननु यादृच्छिकसंवादिषु सत्यपि दोषेऽप्रामाण्याभावात्कथमप्रामाण्यस्य दोषान्वयव्यति-रेकानुविधानमिति चेन्न । तस्य सद्भाव एवोत्पादो नासद्भाव इत्यन्वयव्यतिरेकयोः कार्यकारण-भावहेतुत्वात् । कारणे सत्यपि कार्यानुत्पादस्य सामग्र्यभावेन प्रतिबन्धेन वा उपपत्तिरिति । अत एव दोषाभावोऽपि न प्रामाण्यकारणम् । यादृच्छिकसंवादिषु सत्यपि दोषे प्रामाण्यज्ञानोद-यादित्याशयवानुपसंहरति - **अत इति ।।**

**(र.टि.)** ननु 'अधिकं प्रविष्टं न तु तद्धानिकरम्' इति न्यायेन बौद्धादिवाक्यस्य प्रमाजनकत्वं दुष्परिहरम् इत्यत आह - **वाक्यगता हीति ॥ वाक्यगतस्यायथार्थज्ञानजनकत्वलक्षणस्येति ॥** मूलेऽप्रामाण्यस्येत्यप्रामाण्य-पदस्य ज्ञानगतायाथार्थ्यपरत्वे दोषान्वयव्यतिरेकित्वेन दुष्टेन्द्रियादेरित्यस्य सङ्गतत्वेऽपि अपिपदमसङ्गतम् । सकलकरणगताप्रामाण्यपरत्वे तु दुष्टेन्द्रियादेरपीत्यापादनानुपपत्तिः, उक्ताप्रामाण्यस्वतस्त्ववादिनं प्रति तस्येष्टत्वादिति भावः । इन्द्रियादिगतायथार्थज्ञानजनकत्वलक्षणाप्रामाण्यस्य काचादिदोषनिबन्धनत्वाभावस्यैव विवक्षितापादकापाद्यत्वेनेन्द्रियादिगताप्रामाण्यस्य दोषनिबन्धनत्वं न स्यादित्येव वक्तव्ये दुष्टेन्द्रियादेरपीत्येवं विन्यासः किमर्थमित्यत आपादके विवक्षितपक्षद्वयदूषणार्थमेवमुक्तमित्यभिप्रेत्य तत्पक्षद्वयप्रदर्शनपूर्वकं वाक्यं योजयति- **पुरुषदोषाणामित्यादिना ॥ दुष्टेन्द्रियादेरप्यप्रामाण्यं न स्यादिति ॥** अनेन दुष्टेन्द्रियादेरपि ज्ञानगतायाथार्थ्यहेतुत्वलक्षणं यदप्रामाण्यं तन्न स्यादिति दुष्टेन्द्रियादेरपीति वाक्यं व्याख्यातं भवति । **काचादीनामपीति ॥** अनेन दुष्टेन्द्रियादेरपीत्यत्र विशेषणत्वेन प्रविष्टदोषाणां बुद्ध्या विवेकेन तेषामपीत्यपिशब्दं संयोज्य इन्द्रियादेर्यदप्रामाण्यं ज्ञानगतायाथार्थ्यजनकत्वलक्षणं तद्धेतुत्वं न स्यादिति प्रकारान्तरेण दुष्टेन्द्रियादेरपीति वाक्यं व्याख्यातं भवति **॥ तृतीय इति ॥** काचादिदोषाणामिन्द्रियादिगताप्रामाण्यनिमित्तत्वानङ्गीकार इत्यर्थः **॥ तस्य सद्भाव एवेति ॥** अनेन 'अतः प्रामाण्यं स्वतः परतोऽप्रामाण्यम्' इत्येतन्मूलगतातश्शब्दः 'अप्रामाण्यं परतः' इत्यत्र दोषस्याप्रामाण्यं प्रति कारणत्वग्राहकान्वयव्यतिरेकसद्भावरूपहेतुप्रदर्शकत्वेन व्याख्यातो भवति **॥ अत एव दोषाभावोऽपीति ॥** अनेन 'प्रामाण्यं स्वतः' इत्यत्रापि हेतुप्रदर्शकत्वेनातश्शब्दो व्याख्यातो भवति । न च 'दोषाभावस्य कारणत्वे च नास्माकमनिष्टम्' इति भाष्यटीकाविरोधः । तस्याभ्युपगम-वादत्वात्, दोषस्य प्रतिबन्धकत्वेन तदभावस्य प्रयोजकत्वाभिप्रायकत्वाद्वा । अत एव तत्रैव 'प्रदीपावरणनिवृ-त्त्यादीनामपि प्रकाशनादिकारणत्वापत्तेः' इति प्रतिबन्धकीभूतावरणनिवृत्त्यादेरपि कारणत्वमापादितम् ।

**(रा.टि.)** प्रामाण्यस्य स्वतस्त्वे बाधकमाशङ्कते- **ननु यदीति ॥** तर्हि प्रमाजननस्वभावो व्याहन्येतेत्यत आह- **वाक्यगता हीति ॥** प्रकृताभिप्रायेणेयमुक्तिः, कारणगता हीत्यर्थः । **औत्सर्गिकत्वादिति ॥** यद् ज्ञानकरणं तत् प्रमां जनयतीत्येव, नतु सर्वथाऽपवादादौ सत्यपि तामेव जनयतीति नियम इत्यनियतसहचारमात्रत्वादि-त्यर्थः **॥ अप्रामाण्यं न स्यादिति ॥** सत्यपि दोषे तदकार्यत्वात्तस्येति भावः । दुष्टेत्यत्र विशेषणमात्रे तात्पर्यमिति भावेनाऽह- **काचादीनामिति ॥** विपर्यये पर्यवसानमाह- **अस्ति चेति ॥ ज्ञानकरणत्वाभाव इति ॥** दुष्टेन्द्रि-यादेरित्यनुकर्षः । अप्रामाण्यस्वतस्त्वेनेति तृतीयपक्षोऽप्यत्र ध्येयः । अग्रे तृतीय इत्युक्तेः । **बाधेति ॥** चक्षुषा विपरीतमेवाज्ञासिषम् इत्यादिरूपबाधानुभवविरोध इत्यर्थः । **इत्यन्वयव्यतिरेकयोरिति ॥** धूमाग्न्योरिवेति **(रा.टि.)** भावः । अत एवेत्युक्तं व्यनक्ति- **यादृच्छिकेति ॥ इत्याशयवानिति ॥** एतेन वक्तव्यं सर्वमनुक्त्वा कथमुपसंहार इति शङ्काऽपास्ता ।

**(श्री.टि.) तस्य** बौद्धादिवाक्यस्य **॥ अज्ञानेत्यादि ॥** अज्ञानविप्रलम्भप्रमादापटुकरणत्वरूपपुरुषदोष-मूलकत्वेनेत्यर्थः । ननु 'अधिकं प्रविष्टं न तु तद्धानिकरम्' इति न्यायेन बौद्धादिवाक्यस्य प्रमाजनकत्वं तु स्यादेवेति चेत्तत्राऽह- **वाक्यगता हीति ॥ दोषा** अज्ञानविप्रलम्भमूलकत्वादयः **॥ अप्रामाण्याभावेनेति ॥** तस्य वाक्यस्य अप्रामाण्यस्यैवाभावेन पुरुषदोषाणां वाक्याप्रामाण्यनिमित्तत्वाभाव इत्यर्थः । **अप्रामाण्य-स्येति ॥** सत्यप्यप्रामाण्ये तस्य ज्ञानजनकजन्यत्वरूपस्वतस्त्वेन पुरुषदोषाणां वाक्याप्रामाण्यनिमित्तत्वं नास्ति । तथात्वे परतस्त्वापत्तेरित्यर्थः । पक्षद्वयेऽपि प्रतिबन्द्योत्तरं वक्तुं प्रवृत्त दुष्टेन्द्रियादेरपीत्यादिवाक्यं योजयति- **आद्य इत्यादिना ॥** दुष्टेन्द्रियादेरपीत्यत्रेन्द्रियविशेषणतया प्रविष्टदोषाणां बुद्ध्या विवेकं कृत्वा अपिशब्दं तैः संयोज्य द्वितीयपक्षोत्तरत्वेनाप्येतदेव योजनीयमित्याह- **द्वितीय इति ॥** वाक्याप्रामाण्यस्य स्वतस्त्वेन पुरुष-दोषाणां वाक्याप्रामाण्यनिमित्तत्वं नास्तीति यद्युच्यते तर्हि काचादिदोषाणामपि अयथार्थज्ञानजनकत्वरूपेन्द्रि-याद्यप्रामाण्ये **हेतुत्वं** निमित्तत्वं न स्यात् । तत्रापि इन्द्रियाद्यप्रामाण्यस्य स्वतस्त्वेन काचादीनां तन्निमित्तत्वं नास्ति । तथात्वे परतस्त्वापत्तेरिति वक्तुं शक्यत्वादिति भावः । विपर्ययपर्यवसानं दर्शयति- **अस्ति चेति ॥ उभयस्येति ॥** दुष्टेन्द्रियादेरप्रामाण्यस्य, काचादिदोषाणामपीन्द्रियादिनिष्ठायथार्थज्ञानजनकत्वलक्षणा-प्रामाण्यहेतुत्वस्य चानभ्युपगम इत्यर्थः । तथा च तर्कद्वयेऽपि इष्टापत्तिरिति भावः **॥ ज्ञानेति ॥** दुष्टेन्द्रिया-देर्ज्ञानकरणत्वाभावेनैवायथार्थज्ञानसाधनत्वरूपाप्रामाण्यं नास्तीत्यर्थः **॥ याथार्थ्यं वेति ॥** दुष्टेन्द्रियादेर्यथार्थ-ज्ञानसाधनत्वादेव निरुक्तमप्रामाण्यं नास्तीत्यर्थः । ज्ञानकारणत्वाभावरूपाद्यपक्षेऽपि ज्ञानमुत्पद्यते, परन्तु इन्द्रियादेस्तत्कारणत्वाभावादेव दुष्टेन्द्रियादेस्तत्कारणत्वं नास्तीत्यर्थः, उत ज्ञानस्वरूपमेव नास्तीति कृत्वा दुष्टेन्द्रियादेस्तत्कारणत्वं

नास्तीत्यर्थ इति द्वेधा विकल्पं हृदि निधायाऽद्ये दूषणमाह- **ज्ञानस्येति ।।** 'इदं रजतम्' इत्यादिज्ञानस्येत्यर्थः । दुष्टेन्द्रिये सतीदं रजतमित्यादिज्ञानं जायते, तदभावे तदभाव इत्यन्वयव्यतिरेकानु-विधानावगाह्यनुभवविरोध इत्यर्थः ।

द्वितीये दूषणमाह- **ज्ञानस्यैवेति ।।** शुक्तिकां रजतत्वेन जानामीति भ्रमरूपज्ञानस्वरूपावगाहिसाक्षि-रूपानुभवविरोध इत्यर्थः **।। द्वितीय इति ।।** इदं रजतमित्यादिज्ञानस्य यथार्थत्वेन दुष्टेन्द्रियादेरयथार्थज्ञानहेतुत्वा-नङ्गीकारे नेदं रजतमिति रजताभावावगाहिबाधस्वरूपानुभवविरोध इत्यर्थः । काचादेर्दोषस्येन्द्रियादेरयथार्थ-ज्ञानहेतुत्वरूपाप्रामाण्ये निमित्तत्वं नाङ्गीक्रियत इति पक्षे दोषमाह - **तृतीये त्विति ।।** दुष्टेन्द्रियादेर्ज्ञानगतताया-थार्थ्यहेतुत्वं नाङ्गीक्रियत इति प्रथमपक्षस्य द्वेधा विकल्पितत्वाद् द्वितीयस्याप्यस्य तृतीयत्वमित्यवगन्तव्यम् **।। काचादीति ।।** काचादिदोषे सतीन्द्रियादेरयथार्थज्ञानहेतुत्वं, तदभावे तदभाव इत्यन्वयव्यतिरेकानुविधानानुभव-विरोध इत्यर्थः । **तस्य** दोषस्य । **उत्पादो**ऽप्रामाण्यस्य । अप्रामाण्यमुत्पद्यते चेत्तर्हि दोषसद्भाव एवोत्पादः, **(श्री.टि.)** नासद्भाव इति कार्यमुखान्वयव्यतिरेकयोर्विवक्षितत्वान्न यादृच्छिकसंवादादिस्थले व्यभिचारः । तत्राप्रामाण्योत्पत्तेरेवाभावादिति भावः । किञ्चैतादृशान्वयव्यतिरेकयोर्बहुसांव्यवहारिकत्वाभावात्पूर्वोक्तौ कारण-मुखान्वयव्यतिरेकावेवाभिप्रेतौ । तर्हि यादृच्छिकसंवादादिषु व्यभिचार इत्यत आह - **कारणे सतीति ।।** मङ्गलस्य समाप्तिं प्रति हेतुत्वे कादम्बर्यादौ ग्रन्थे अन्वयव्यभिचारे प्राप्ते यथा समाधीयते- अन्वयव्यभिचारो न समाप्तिं प्रति मङ्गलस्याकारणत्वकल्पकः, किं नाम? तत्र तावन्मात्रे मङ्गले सत्यपि विघ्नसमसङ्ख्याकमङ्गलरूपसामग्र्य-भावात्, अन्तरा विघ्नोत्पत्तिरूपप्रतिबन्धकेन वा समाप्त्यभावो युक्तः । न हि प्रतिबद्धं कारणं कार्यमजनयदकारणं भवति अतिप्रसङ्गादिति । तथा प्रकृते यादृच्छिकसंवादादिस्थले दोषरूपे कारणे सत्यपि विषयासत्त्वस्याप्रामा-ण्योत्पत्तौ सामग्रीत्वात्तदभावेन वा, विषयसत्त्वस्याप्रामाण्योत्पत्तौ प्रतिबन्धकत्वेन प्रतिबन्धकीभूतविषयसत्त्वस्य सत्त्वाद्वाऽप्रामाण्यरूपकार्यानुत्पादो युक्त इति नान्वयव्यभिचारो दोषस्याकारणत्वकल्पक इत्याशयः । **दोषा-भाव इति ।।** दोषस्याप्रामाण्यकारणत्वेन तदभावः प्रामाण्योत्पत्तौ कारणमिति नेत्यर्थः । अत एवेत्युक्तं विशदयति- **यादृच्छिकेति ।।** दोषाभावे सति प्रामाण्योत्पत्तिर्दोषे सति प्रामाण्योत्पत्त्यभाव इति वक्तुं न युज्यते व्यतिरेकव्यभिचारादित्यर्थः ।

**(पां.टि.) वाक्यमात्रस्येति ।।** आप्तोक्तत्वरूपगुणनिरपेक्षवाक्यस्येत्यर्थः । इष्टापत्तिं परिहरति- **ततश्चेति ।।** न चात्रापीष्टापत्तिरिति वाच्यम् । तस्य वेदविरोधित्वेन तदयोगात् । वेदविरोधिनोऽपि तस्य प्रामाण्ये वेदस्या-प्रामाण्यप्रसङ्गात् । विरुद्धयोर्द्वयोः प्रामाण्यस्यायोगात् । योगे वा वस्तुनो द्वैरूप्यप्रसङ्गादित्यशयात् । ननु यथार्थ-ज्ञानजननशक्तिमतो वाक्यस्य कथं दोषसहकारमात्रेण यथार्थज्ञानाजनकत्वम् अयथार्थज्ञानजनकत्वं च स्यादित्यत आह - **वाक्यगता हीति ।।**

ननु दोषाणां सहजशक्तिप्रतिबन्धकत्वेऽपि न विपरीतशक्त्याधायकत्वमपि वक्तुं युक्तम् । दुष्टस्य कुटजबीजस्य कुटजाङ्कुराजनकत्ववद्वटाङ्कुरजनकत्वाभावात् । विपरीतशक्त्याधायकत्वे च भर्जितकुटजबीजस्य वटाङ्कुरजनकत्व-प्रसङ्गात् । ततश्च दुष्टस्य वाक्यस्य यथार्थज्ञानाजनकत्वमेव युक्तम् । न त्वयथार्थज्ञानजनकत्वमपीति कथं तदङ्गीकार इत्यतो भर्जनादिदोषाणां सहजशक्तिमात्रप्रतिबन्धकत्वेऽपि न दोषमात्रस्य तन्नियमः । किन्तु केचित्सहजशक्ति-प्रतिबन्धेन विपरीतशक्तिमप्यादधति । विषस्य मारकत्वशक्तिं प्रतिबध्याऽरोग्यादिजननशक्तिमादधानानां पदार्थानामपि बहुलमुपलम्भात् । अतो दोषवैचित्र्याद्वाक्यगतदोषाणां सहजशक्तिप्रतिबन्धकत्वस्य विपरीत-शक्त्याधायकत्वस्य चोपपन्नत्वाद्, युक्ते एव वाक्यस्य यथार्थज्ञानाजनकत्वायथार्थज्ञानजनकत्वे इत्याशयेन दोषवैचित्र्यप्रसिद्ध्यर्थकस्य हिशब्दस्य प्रयोगः ।

नन्वेवं ज्ञानकरणस्य वाक्यस्य यथार्थज्ञानजनकत्ववदयथार्थज्ञानजनकत्वस्याप्यभ्युपगमे प्रामाण्यं स्वतोऽ-प्रामाण्यं परत इति सिद्धान्तो भज्येतेत्यतो वाक्यादीनामुभयजनकत्वेऽपि तन्निष्ठयथार्थज्ञानजननशक्तेः सहजत्वम्, **(पां.टि.)** अयथार्थज्ञानजननशक्तेस्तु अन्याहितत्वमित्येतावन्मात्रेणैव स्वतस्त्वपरतस्त्वविभागस्याभिप्रेतत्वान्न सिद्धान्तभङ्गोऽपीत्याशयेनाऽह- **औत्सर्गिकत्वादिति ।।** उभयत्रापीष्टापत्तिं निरस्यति- **अस्ति चेति ।। उभय-स्येति ।।** दुष्टेन्द्रियादेरप्रामाण्ये, काचादीनां चेन्द्रियाद्यप्रामाण्ये निमित्तत्वमित्युभयस्येत्यर्थः । दुष्टेन्द्रियादेर्ज्ञान-करणत्वाभाव इत्याद्येऽपि, सत्यपि ज्ञाने तस्य तत्करणत्वाभावोऽभिप्रेतः, किं वा ज्ञानस्यैवासत्त्वेन तत्करणत्वा-भाव इति विकल्पं मनसि निधायाऽद्यं दूषयति- **आद्ये ज्ञानस्येति ।।** तत्र ज्ञानस्यानन्यथासिद्धेन्द्रियाद्यन्वय-व्यतिरेकानुविधानेन दुष्टेन्द्रियजन्यत्वसिद्ध्या तस्य ज्ञानकरणतायाः सिद्धत्वेन ज्ञानकरणत्वाभावविवक्षायां तद्ग्राहकेन्द्रियाद्यन्वयव्यतिरेकानुविधानानुभवविरोधः स्यादित्यर्थः । ज्ञानस्यैवासत्त्वात्तत्करणत्वाभावो दुष्टेन्द्रि-यादेरित्यभिप्रेतं द्वितीयं पक्षं दूषयति- **ज्ञानस्यैवेति ।।** साक्ष्यनुभवेन तत्र ज्ञानसत्तायाः सिद्धत्वेन तदसत्त्वे तत्सत्ताग्राहकसाक्ष्यनुभवविरोधः स्यादित्यर्थः । दुष्टेन्द्रियादेर्याथार्थ्यं वेति प्राक् कण्ठतो विकल्पितं द्वितीयं पक्षं दूषयति- **द्वितीये**

**त्विति ॥** बाधानुभवेन दुष्टेन्द्रियादेरयथार्थत्वस्यैव सिद्धत्वेन तद्याथार्थ्याभ्युपगमे बाधानु-भवविरोधः स्यादित्यर्थः । अप्रामाण्यस्य स्वतस्त्वेनेत्याद्यद्वितीयं दूषयति- **तृतीये त्विति ॥** अप्रामाण्यस्य काचाद्यन्वयव्यतिरेकानुविधानेनोत्पत्तौ दोषाधीनत्वेन परतस्त्वस्यैव सिद्धत्वात्तत्स्वतस्त्वाभ्युपगमे तस्य दोषाद्य-न्वयव्यतिरेकानुविधानानुभवविरोध इत्यर्थः । **दोषाभावोऽपीति ॥** न चास्य ग्रन्थस्य भाष्यटीकया विरोधः, 'दोषाभावस्य कारणत्वे च' इत्यादिना तत्र दोषाभावस्य कारणत्वोक्तेरिति वाच्यम् । तत्र कारणशब्दस्य घटं प्रति कुलालपित्रादिसाधारणं यत् तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपं प्रयोजकत्वं तन्मात्रपरत्वेन कारणत्व-परत्वाभावात् । आप्तोक्तत्वरूपगुणजन्यत्वस्येव दोषाभावजन्यत्वस्यापौरुषेयत्वाविघातकत्वाद् अपौरुषेयत्व-साधनस्यैव तत्र प्रस्तुतत्वात् प्रकृताभिप्रायेणाभ्युपगमवादेन तत्र दोषाभावस्य कारणत्वोक्तिः । अत एव 'दोषाभावस्य कारणत्वेऽपि नास्माकमनिष्टम् । तावता वेदापौरुषेयत्वाव्याघातात्' इत्युत्तरत्र वेदापौरुषेयत्वा-व्याघातकत्वेनानिष्टत्वाभावप्रतिपादनम् । अत्र तु प्रामाण्यस्वतस्त्वस्यैवोपपादनीयतया तदर्थं वस्तुस्थितिकथन-मिति तु गुरवः ।

**(व्या.टि.)** प्रामाण्यस्योत्पत्तिस्वतस्त्वे बाधकमाशङ्कते- **नन्विति ॥** वाक्यमात्रस्य गुणानपेक्षस्येत्यर्थः । ननु दोषस्य दुष्टबीजादाविव स्वभावशक्तिप्रतिबन्धकत्वं युक्तम्, न विपरीतकार्यजनकत्वमित्यतो दोषाणां तदभावेऽपि एषामेष स्वभाव इत्याह- **वाक्यगता हीति ॥ आविर्भावयन्ति** आदधति । अनेन कथमस्याः शङ्कायाः परिहार इत्यतोऽभिसन्धिमुद्घाटयति- **औत्सर्गिकत्वादिति ॥** स्वसामग्रीवशसम्पन्नमौत्सर्गिकं, तत्प्रतिबन्धक-मपवाद इत्यर्थः ।

इन्द्रियलिङ्गयोरप्रामाण्यस्योत्पत्तिपरतस्त्वमभ्युपेत्य शब्दे तदसहमानः शङ्कते- **वाक्यगतस्येति ॥ तत्** शब्दाप्रामाण्यपरतस्त्वम् । **बाधकेन** अतिप्रसङ्गेन । **वाक्यगतस्य** दुष्टवाक्यगतस्य । **ज्ञानगतेति ॥** अयथार्थज्ञान-हेतुत्वं न स्यादित्यर्थः । ननु दुष्टवाक्यगताप्रमासाधनत्वस्य वाक्यदोषानधीनत्वे दुष्टेन्द्रियलिङ्गगताप्रामाण्य-**(व्या.टि.)** साधनत्वस्यापि तद्दोषाधीनत्वं न स्यात् इति वक्तव्ये किमिदमसङ्गताभिधानमित्यतः 'अप्रामाण्य-हेतुत्वं न स्यात्' इति मूलम् 'अप्रामाण्यं न स्यात्, दोषस्य तद्धेतुत्वं न स्यात्' इति (भावेन) विभागेन प्रसङ्ग-परतया व्याख्याति- **पुरुष-दोषाणामिति ॥ तस्येति ॥** दुष्टवाक्यस्येत्यर्थः । **अप्रामाण्यस्येति ॥** दुष्टवाक्या-प्रामाण्यस्येत्यर्थः । अप्रामाण्याभावस्याप्यापाद्यत्वाभिप्रायेणाऽद्यं निरस्यति- **आद्य इति ॥** तद्धेतुत्वाभावस्या-प्यापाद्यत्वाभिप्रायेण द्वितीयमपास्यति- **द्वितीय इति ॥** अनेन **अप्रामाण्यस्य** दुष्टवाक्यीयाप्रमाकरणत्वस्य, दोषानधीनत्वे **दुष्टेन्द्रियादेः** इन्द्रियादिदोषाणां तदीयाप्रमासाधनत्वनिमित्तत्वं न स्यात्, दुष्टेऽप्यर्धजरतीयानुप-पत्तेरिति प्रतिबन्दीग्रहणतया मूलं योजितं वेदितव्यम् । अतिप्रसङ्गस्य विपर्ययपर्यवसानमाह- **अस्ति चेति ॥ उभयस्येति ॥** पर्यवसितोभयस्येत्यर्थः । 'उभादुदात्तो नित्यम्' इत्युभशब्दात् तयपोऽयज् विज्ञेयः । 'तदनङ्गीकारे च' इति मूलेऽप्रामाण्यानङ्गीकारे, दोषहेतुत्वानङ्गीकारे चेत्युभयम् एकोक्त्याऽनूद्यते । अप्रामाण्यानङ्गीकारे हेतुं विकल्प्य सर्वेष्वपि पक्षेषु अनुभवविरोधं दर्शयति- **तदाऽपि द्वयी गतिरिति ॥** 'द्वित्रिभ्यां तयपोऽयज्वा' इति तयपोऽयच्, तस्य स्थानिवद्भावेन 'टिड्ढाणञ्' इति ङीबिति भावः । **अनुविधानं** तत्प्रयोज्यान्वयव्यतिरेक-प्रतियोगित्वम् । चक्षुषा पश्यामीत्यनुभवादिति भावः ॥ **ज्ञानस्यैवेति ॥** भ्रमस्यैवेत्यर्थः ॥ **साक्ष्यनुभवेति ॥** भ्रान्तोऽस्मीति तत्सत्त्वानुभवादित्यर्थः ॥ **बाधानुभवेति ॥** विपरीतमपश्यम् इत्यनुभवेत्यर्थः ॥ **तृतीय इति ॥** दोषहेतुत्वानङ्गीकार इत्यर्थः । प्रामाण्यं नाङ्गीक्रियत इत्यस्य द्वेधा विकल्पितत्वाद्दोषाणां तद्धेतुत्वं नास्तीति द्वितीयस्य तृतीयत्वं बोध्यम् । गुणस्य प्रामाण्ये व्यतिरेकाभावेनाकारणत्ववद् दोषाणामन्वयाभावेनाप्रामाण्याहेतुत्वं शङ्कते- **नन्विति ॥ सद्भाव एवेति ॥** एवकारेणान्वये सद्भावो व्यापको ननु व्याप्य इति द्योतयति, वह्निमानेव धूमवानितिवत् । कारणे सति कार्यं भवत्येवेति वैभाषिकपरिभाषा नास्माकं सम्मतेति भावः । तथाऽप्यन्वय-व्यभिचारमन्यथा परिहरति- **कारणे सत्यपीति ॥** दोषान्वयव्यतिरेकित्वेनाप्रामाण्यस्य परतस्त्वे दोषाभावान्वय-व्यतिरेकानुविधानात् प्रामाण्यस्यापि परतस्त्वं स्यादिति प्रतिबन्दीमाशङ्क्य निराकरोति- **अत एवेति ॥** व्यतिरेकाभावादेवेत्यर्थः। तमेवोपपादयति- **यादृच्छिकेति ॥** न चैवं 'दोषाभावस्य कारणत्वेऽपि नास्माकम-निष्टम् । तावता वेदापौरुषेयत्वाव्याघातात्' इति भाष्यटीकाविरोध इति वाच्यम् । कारणतावच्छेदकप्रतिबन्धका-भावसाधारणप्रयोजकत्वमात्रस्य तत्राभिप्रेतत्वादित्यवोचाम । विस्तरस्तु तर्कताण्डवे बोध्यः । **अप्रामाण्य-स्योत्पत्तिपरतस्त्ववादः ।**

**मूलम् - 'वाचा विरूप नित्यया', 'नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदम् इति, श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाचः' इति पैङ्गिश्रुतिः । 'विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः । अनादिनित्या सा तच्च विना तां न स गम्यते' इति कात्यायनश्रुतिः । 'सहस्रधा महिमानः**

**सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक् ।' 'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रति वाचं पपाद' इत्यादि च ।**

**(त.मं.)** हे विरूप!**नून**मिदानीं अभितो द्योतकाय तस्मै **वृष्णे** समर्थाय नित्यया वाचा सुष्टुतिं चोदयस्वेति । मन्त्रवर्णमनूद्य व्याचक्षाणां पैङ्गिश्रुतिमप्यस्मिन्नेवार्थे आह - **नित्ययेति ॥** यद्यपि कर्मदेवाद्यपि श्रुत्या विज्ञेयम् । तथाऽपि परमं विज्ञेयं ब्रह्म । यद्यपि वेदानुकूलतर्कादिकमपि ज्ञापकं ब्रह्मणः, तथाऽपि परमा ज्ञापिका श्रुतिः । ब्रह्मणः सहस्रं स्वातन्त्र्यसार्वज्ञादिमहिमानः एकैकशोऽपि सहस्रधा । अत्र सहस्रशब्दोऽनन्तवाची । 'न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप' इत्यादिना तन्महिम्नोऽनन्तत्वावगमात् । ईदृशमहिम्नि ब्रह्मणि किं प्रमाणमित्याशङ्कायामाह- **यावदिति ॥** यावत्कालं ब्रह्म विशेषेण स्थितं वागपि कालतस्तावती विद्यते । **छन्दसां** वेदानां **योगं** ब्रह्माख्याभिधेयसम्बन्धं क आ वेद? **धिष्ण्य**माधारः । धिष्ण्यं च अयम् अश्नेति धिष्ण्याः- परमः । अन्यार्थकतया प्रतीयमानामपि वाचं तं धिष्ण्यामुद्दिश्य कः प्रतिपपाद । क इति ब्रह्मा, कर्त्राक्षेपो वा । अत्रापि वेदार्थस्य ज्ञानप्रतिपादनयोरेवोक्तत्वात् न कर्ताऽस्तीति पर्यवसीयते ।

**टीका -** एवमनुमानादिना समर्थितं वेदापौरुषेयत्वं श्रुतिपुराणवाक्यैरपि साधयति- **वाचेति ॥** 'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्' इति मन्त्रस्यायमर्थः- 'अभितो द्यौः प्रकाशो यस्यासावभिद्युस्तस्मै **अभिद्यवे, वृष्णे** वर्षित्रे **नूनं** निश्चितं, हे विरूप, **नित्यया वाचा** वेदलक्षणया, **सुष्टुतिं** शोभनां स्तुतिं, **चोदस्व** प्रेरय- कुरु' इति विरूपऋषिं प्रत्युच्यते । इति श्रुतिरिति शेषः । वाक्शब्दो वागिन्द्रियेऽपि प्रसिद्ध इति स्पष्टां वेदविषयां श्रुतिं पठति- **नित्य-येति ॥ परमं पदं** परमं प्राप्यम् । इति मन्त्रमुदाहृत्य ब्राह्मणं नित्यानित्यशब्दविषयं निर्दिशति- **श्रुतिर्वावेति ॥** श्रुतिद्वयेन नित्यत्वमेव प्रतीतं न त्वपौरुषेयत्वमित्यतो वाक्यद्वयम् उदाहरति- **विज्ञेयमिति ॥ परमं विज्ञेयं** मुमुक्षूणां प्रधानं प्रमेयम् । **परमा ज्ञापिका** प्रधानं प्रमाणम् । अनादीति तदुभयोपपादनम् । विनेति परमज्ञापकत्वे युक्त्यन्तरम् । **स** ब्रह्मशब्दोक्तः परमात्मा । यस्य **सहस्र**-मपरिमिता महिमानः प्रत्येकमपि **सहस्रधा** अपरिमितविधाः, तद् ब्रह्म यावद्देशकालव्यापितया **विष्ठितं** विशेषेण स्थितं **वाक्** वेदवागपि **तावती** तावद्देशकालव्यापिनी । प्राज्ञेन केनचित्पुरुषेण वेदस्य कृतत्वात्कथमेतदित्यत उक्तम्- **कश्छन्दसामिति ॥ छन्दसां** वेदानां **योगम्** अर्थैः सह वाच्यवाचकभावसम्बन्धं **को धीरो** धीमान् **आवेद** सम्यग्वेद न कोऽपि । **धिष्ण्यां** बुद्धिपूर्वां **वाचं** वेदवाचं **कः प्रति पपाद** परान् प्रति प्रतिपादितवान् न कोऽपि । वेदार्थस्य ज्ञाता, ज्ञात्वा व्याख्या-ताऽपि दुर्लभः किमुत तत्कर्तेति । इति च श्रुतिरिति शेषः । प्रत्येकम् अभिप्रेतमर्थमाहेत्यध्याहारः।

**(र.टि.)** 'वाचा विरूप नित्यया' इत्यस्य 'नित्ययाऽनित्यया' इत्यनेनैकवाक्यत्वभ्रमं वारयितुमाह- **इति श्रुतिरिति शेष इति ॥** कात्यायनश्रुतित्वभ्रमं वारयितुमाह - **श्रुतिरिति शेष इति ॥**

**(रा.टि.)** पदमित्यस्यार्थः प्राप्यमिति । **इति मन्त्रमिति ॥** पदमित्यन्तं मन्त्रमित्यर्थः । 'श्रुतिर्वाव' इति ब्राह्मणं, कर्तृ । **प्रधानं प्रमेयमिति ॥** लक्ष्मीब्रह्मादिकं त्वप्रधानं प्रमेयमित्यर्थः । **प्रधानं प्रमाणमिति ॥** इतिहासादि त्वप्रधानं प्रमाणमिति भावः । **तदुभयेति ॥** प्रधानप्रमेयत्वप्रधानप्रमाणत्वोपपादनमित्यर्थः । ब्रह्मेति प्रकृतत्वात् कथं स इत्युक्तिरित्यत आह- **स इति ॥** 'ब्रह्मेत्युक्त्या प्राप्तनपुंसकत्वशङ्कानिरासाय स इत्युक्तिः' इति पद्मनाभतीर्थटीका । यत्तच्छब्दाध्याहारेण योजनामाह- **यस्य सहस्रमिति ॥** श्रुतिरिति सर्वत्राभिप्रेत-प्रथमान्तानाम् अन्वयाप्रतीतेराह- **प्रत्येकमिति ॥**

**(श्री.टि.) अनुमानादिनेति ॥** वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वादित्यनुमानम्, आदिपदेन सामान्यसिद्धि-परिशेषसङ्ग्रहः । अन्ये तु प्रमेयसमर्थनं स्वपक्षसाधनेन बाधकपरिहारेण च भवति । तथा चानुमानग्रहणेना-प्रमितकर्तृकत्वसामान्यसिद्धिपरिशेषरूपस्वपक्षसाधकसङ्ग्रहः । आदिपदेन सकर्तृकत्वाभावे प्रामाण्यं न स्यात्, तस्य

परतन्त्रत्वादित्यादिबाधकपरिहारसङ्ग्रह इत्याहुः । **वर्षित्र इति ।।** भक्ताभिलषितसेचकायेत्यर्थः । **प्रेर-येति ।।** 'चुद प्रेरणे' इति धातोरित्यर्थः । तत्तात्पर्यमाह - **कुर्विति ।।** विरूपनामा ऋषिः स्वात्मानं प्रति वक्तीत्यर्थः । 'वाचा विरूप नित्यया' इत्यस्य 'नित्ययाऽनित्यया' इत्यनेनैकवाक्यताभ्रमं वारयितुं वाचा विरूप नित्ययेत्यनन्तरमध्याहार्यमाह - **इति श्रुतिरिति शेष इति ।। प्रसिद्ध इति ।।** न स्पष्टं वेदवागर्थक इति भावः । अर्चिरादीनां कार्यब्रह्मणश्च प्राप्यत्वात् परममित्युक्तम् । **शब्दविषयं** शब्दप्रतिपाद्यम् । **प्रधानं प्रमेय-मिति ।।** प्राधान्येन ज्ञेयमित्यर्थः । **उभयोपपादनमिति ।।** ब्रह्मणोऽनादिनित्यत्वेन धर्मादिप्रमेयवैलक्षण्यात् परमविज्ञेयत्वम् । श्रुतेश्चानादिनित्यत्वेनेतरप्रमाणवैलक्षण्यात् परमप्रमाणत्वमित्येवं ब्रह्मणः परमविज्ञेयत्वं, श्रुतेः प्रधानप्रमाणत्वं चेत्युभयोपपादनम् 'अनादिनित्या सा तच्च' इत्यनेन कृतमित्यर्थः । **युक्त्यन्तरमिति ।।** 'श्रुतिः, परमा ज्ञापिका- प्रधानं प्रमाणम्, इतरप्रमाणावेद्यवस्तुप्रमापकत्वाद् व्यतिरेकेण प्रत्यक्षादिवत्' इति युक्त्यन्तरमनेनोक्तमित्यर्थः । 'नेन्द्रियाणि नानुमानम्' इत्यादिवाक्याद्धेतुसिद्धिरिति भावः । ननु विना तां न तद्गम्यत इति वक्तव्यं, न तु स इति पुंलिङ्गप्रयोग इत्यत आह - **स ब्रह्मशब्दोक्त इति ।। एतदिति ।।** ब्रह्मवत्सर्वदेशकालव्याप्तिरूपमाहात्म्यमित्यर्थः । **न कोऽपीति ।।** तथा च वेदार्थस्य ज्ञाता दुर्लभ इत्यर्थः । **बुद्धिपूर्वामिति ।।** वेदार्थं सम्यग् ज्ञात्वेति यावदित्यर्थः । **न कोऽपीति ।।** तथा च व्याख्याताऽपि दुर्लभ इत्यर्थः । इति चेत्यनेनास्याः कात्यायनश्रुतित्वं प्रतीयते । अत आह - **इति च श्रुतिरिति शेष इति ।।** 'वाचा विरूप नित्यया' इति श्रुतिः, पौङ्गिश्रुतिः, कात्यायनश्रुतिः, सहस्रधेति च श्रुतिरभिमतमर्थं वेदापौरुषेयत्वमाहेति प्रत्येकमध्याहारः कार्य इत्यर्थः ।

**(पां.टि.)** अनुमानादिनेत्यादिपदेन प्रत्यभिज्ञादेः परामर्शः । विरूपेति स्वात्मानं प्रति सम्बोधनम् । **न त्वपौरुषेयत्वमिति ।।** तत्प्रत्यायकपदाभावादिति भावः ।

**(व्या.टि.) द्यौः प्रकाश इति ।।** दीव्यतेर्द्युतिकर्मत्वादिति भावः । **यस्यासावभिद्युरिति ।।** यद्यपि 'गोतो णित्' इत्यत्र ओत इति सामान्यग्रहणादोकारान्तपदमात्रस्य णिद्धद्भावाद् गोशब्दवद्रूपमिति अभितो द्यौः प्रकाशो यस्यासावभिद्यौरित्येव टीकायां निर्देष्टव्यम् । स्त्रीप्रत्ययान्तत्वाभावेन 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वासम्भ-वात् । गव इतिवदभिद्यव इति चतुर्थी भवति । तथाऽपि छन्दसि 'अभिद्यवः सुम्नायन्तो हवामहे' 'हन्मनाहन्नभिद्यून्' इति जस्शसोः प्रयोगात् 'गोस्त्रियोः' इति सूत्रेण वेदे स्त्रीलिङ्गमात्रस्य ह्रस्वो न तु स्त्रीप्रत्ययान्तस्येति नियम इति ज्ञापनादत्रापि तदनुकरणं कृतम् । **सुष्टुतिमिति ।।** 'उपसर्गात्' इति षत्वं ततः ष्टुत्वम् । ननु कथमत्रोपसर्गसंज्ञा, 'सुः पूजायाम्' इति कर्मप्रवचनीयसञ्ज्ञाविधानेनोपसर्गसंज्ञाबाधात् । 'आकडारादेका संज्ञा' इति नियमित-त्वात् । अतः सूक्तं सुस्तुतमित्यादिवत् षत्वं दुर्लभमित्यत आह- **शोभनामिति ।।** सौष्ठवं हि पूजा । न चात्र सौष्ठवं विवक्षितमिति भावः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वा समाधिरवधेयः । **चोदस्वेति ।।** णिजभावश्छान्दसः । **विरूपमृषिमिति ।** विरूपेति स्वात्मानं प्रति सम्बोधनमित्यन्यत्र । **वागिन्द्रिये प्रसिद्ध इति ।।** 'अथ वाचा व्याहरति' 'यद्धि मनसा ध्यायति तद्वाचा वदति' इत्यादाविति भावः । **स्पष्टामिति ।।** स्पष्टत्वं चास्याः श्रुतिपदनिर्देशाद्विज्ञेयम् । मूले श्रुतेरसमाप्तत्वादितिशब्दो व्यर्थ इत्याशङ्क्याऽह - **इतीति ।।** आवृत्त्या योज्यम् । **तदुभयेति ।।** परमज्ञाप्यत्वज्ञापकत्वेत्यर्थः । **उपपादनमिति ।।** अनादिनित्यत्वस्योभयस्मिन् हेतूकरणादिति भावः ।

**युक्त्यन्तरमिति ।।** श्रुतिः परमज्ञापिका गमकान्तरागम्यगमकत्वाद् रूपे चक्षुरिवेति युक्तिरुपात्तेत्यर्थः । तदिति नपुंसकेन प्रकृतस्य स इति पुंलिङ्गेन परामर्शोऽयुक्त इत्याशङ्क्य परमात्मशब्दाध्याहारेण योजयति- **परमात्मेति ।।** श्रुतिर्ब्रह्मशब्दं निर्वक्ति- **सहस्रधेति ।।** तत्रोद्देश्यविधेयभावप्रकटनाय यत्तच्छब्दाध्याहारेण योजयति- **यस्येति ।।** 'सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः' इत्यैतरेयोदाहृतमानेन सहस्रशब्दस्य अनन्त-नामत्वात् 'मय्यनन्तगुणेऽनन्ते' इत्युपबृंहणानुसारेण व्याचष्टे- **अपरिमिता इति ।।** सहस्रधाशब्दस्य 'सङ्ख्याया विधार्थे धा' इति धाप्रत्ययान्तस्य 'अनन्ते गुणतः' इत्युपबृंहणानुसारेणाऽह- **प्रत्येकमिति ।।** तद्ब्रह्मेतिपदं पूर्वत्र विधितयोत्तरत्रानुवादतया चेति व्याख्येयम् । यावत्पदं तु 'यत्तदेतेभ्यः परिमाणे वतुप्' इति यत् परिमाणम् अस्येत्यर्थे वतुपि 'आ सर्वनाम्नः' इत्याकारादेशे निष्पन्नम् इत्युपेत्यानुवदति- **यावदिति ।।** परिमाणं चात्र नोर्ध्वतादि, किन्तु देशकालव्यापनमिति तद्भावकथनपूर्वकं विष्ठितपदं व्याचष्टे- **देशकालेति ।। विशेषेणे-ति ।।** 'उपसर्गात्' इति तिष्ठतेः सस्य षत्वं ततः ष्टुत्वं चेति भावः । **तावतीति ।।** पूर्वस्माद्वतुपि 'उगितश्च' इति ङीबिति भावः । तद्भावमाह- **तावद्देशकालेति ।।** यद्यप्यत्र यावद् ब्रह्मेत्याद्येव प्रकृतोपयोगि, ब्रह्मवद् वाचि अपि अनादिनित्यत्वप्रतिपादनात् । तथाऽप्यत्र ब्रह्मशब्दो न रूढः, किन्तु गुणपूर्तिवाचीति ज्ञापनाय पूर्वांशोदाहर-**(व्या.टि.)** णम् । ननु पूर्वश्रुतिवदुत्तरश्रुतावपौरुषेयत्वप्रतिपादनात् किं तदुदाहरणेनेत्यतः साऽपि कैमुत्य-न्यायेनापौरुषेयत्वं प्रतिपादयतीति वक्तुकामः 'क' इति श्रुतिमवतारयति- **प्राज्ञेनेति ।।** अत्र 'प्रज्ञादिभ्योऽण्' इति स्वार्थिकोऽण्

बोध्यः । अत्र छन्दःशब्दो न अनुष्टुप्छन्द इत्यादाविव वर्णसङ्ख्यापरः, किन्तु 'श्रोत्रियश्छन्दोऽ-धीते' इतिवद्वेदपर इति व्याचष्टे- **वेदानामिति ।।** योगशब्दस्योपायार्थत्वभ्रमं वारयति- **अर्थैः सहेति ।। धीमानिति ।।** 'ऊषसुषिमुष्कमधो रः' इत्यत्राप्यन्येभ्योऽप्युपसङ्ख्यानादत्रापि धीशब्दान्मत्वर्थीयो रप्रत्यय इति भावः । आङोऽर्थः सम्यगिति । अत्र 'किमः कः' इति प्राप्तस्य कादेशस्य आक्षेपार्थत्वात् तस्य विपर्यये पर्यवसानापेक्षत्वात्तदाह- **न कोऽपीति ।।** बुद्धिशब्दपर्यायस्य धिष्ण्याशब्दस्य तत्पूर्विकायां वाचि लक्षणां मत्वा व्याचष्टे - **बुद्धिपूर्वामिति ।।** 'छन्दसि व्यवहिताश्च' इति सूत्रादुपसर्गस्य व्यवधानेनान्वयं दर्शयति- **प्रतिपपादे-ति ।।** वेदनं विपर्यये पर्यवसाय्य प्रतिपादनमपि विपर्यये पर्यवसाययति- **न कोऽपीति ।।** इदं प्रकृताभिप्रायेण । अनुव्याख्याने तु 'कस्त्वा युनक्तीत्याह प्रजापतिर्वै कः' इति ब्राह्मणानुसारेण कशब्दस्याकारान्तत्वं ब्रह्मार्थत्वं चोक्तम्-

'कश्छन्दसां योगमिति श्रुतेर्योगार्थतत्त्ववित् ।
ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थतः' इति ।

कैमुत्येन वेदापौरुषेयतासिद्धिं दर्शयति- **वेदार्थस्येति ।।** ननु वाचेत्यारभ्य प्रत्येकं श्रुतिरिति पदस्य प्रथमान्तत्वेन कर्तृवाचकत्वेऽपि क्रियाकारकपदाभावेनानन्वय इत्यत आह- **प्रत्येकमिति ।।** तथा चाध्याहृतक्रियाकर्मभ्यां श्रुतेरन्वय इति भावः ।

**मूलम् - 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।**
**सर्गेसर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च ।**
**तत्क्रमेणैव तैर्वर्णैस्तैः स्वरैरेव नान्यथा ।।'**

**(त.मं.)** ननु वेदस्य प्रळये सम्प्रदायविच्छेदाद् विनाशिनः कथं नित्यत्वमित्याशङ्कां परिहरति- **नित्या इति ।।** तथैव च यथा पूर्वसर्गे । तदेवोपपादयति- **तत्क्रमेणेति ।।**

**टीका -** ननु विधिः नियोगः प्रेरणेत्यनर्थान्तरम् । स च प्रेरकपुरुषधर्मः । अतो वैदिकानां विध्युद्देशानां लौकिकवत् स्वतन्त्रवक्तृकत्वमेवोचितम् । तथाऽर्थवादानामपि हानोपादानाभिप्रायेण प्रवृत्तत्वाद् अभिप्रायस्य च स्वतन्त्रवक्तृधर्मत्वात् । किञ्च वेदेऽहमादिपदानि श्रूयन्ते । तानि च स्वतन्त्र-वक्तृकाणि लौकिकवाक्यवत् । तस्मादेवमादीनां पौरुषेयत्वमेव इत्यतो वेदा नित्या इत्युक्त्वा समस्ताश्चेत्याह । कथमिति चेत्, न हि वेदे वयं पुरुषाभिप्रायप्रवेश एव नास्तीति वदामः । तथात्वे सङ्कल्पप्रार्थनादिवाक्यानामनर्थकत्वप्रसङ्गादिति भावः । कथं तर्ह्यपौरुषेयत्वमित्यत आह- **शाश्वता इति ।।** शश्वदेकप्रकाराः पूर्वं स्थितान्येव वेदवाक्यानि कानिचित्कैश्चित्पुरुषैः स्वाभिप्रायप्रवेशेन प्रयुज्यन्ते न त्वपूर्वाणि क्रियन्त इत्याशयः ।

एतेनैतदपि परास्तम् । वर्णास्तावन्नित्यत्वात् सर्वगतत्वाच्च स्वतः क्रमशून्याः । नच क्रमेण विना पदवाक्यभावः । नापि तमन्तरेण प्रामाण्यम् । अतः क्रमः पौरुषेय एव आस्थेयः । तत्कथं वेदस्यापौरुषेयत्वमिति । नहि वयं वेदस्य कूटस्थनित्यतां ब्रूमः । किन्तु शब्दतोऽर्थतश्च सर्वदैक-प्रकारतामेव । ततश्च क्रमस्य कृतकत्वेऽपि पुरुषाभिप्रायप्रवेशेऽपि स्वतन्त्रस्य वक्तुरभावा-दपौरुषेयत्वमुपपद्यते ।

ननु प्रलये विच्छेदात्कथं शाश्वता इत्यत आह- **विष्णुबुद्धिगा इति ।।** अपौरुषेयत्वे युक्तिकथनं चैतत् । तथाच व्याकरिष्यत्याचार्यः । तथाऽपि लोके पुनः प्रवृत्तिः कथमित्यत आह- **सर्ग इति ।।** सति सप्तमीयम् । वीप्सायां द्विर्वचनम् । **उद्गीर्यन्ते** उच्चार्यन्ते ब्रह्मादीन् प्रत्युपदिश्यन्ते । तर्हि तस्य नियामकाभावादन्यथाऽप्युपदेशः सम्भाव्य इत्यत उक्तम्- **एत एवेति ।।** पूर्वकल्पे प्रवृत्ता एव । किं शब्दमात्रसाम्येनार्थमात्रसाम्येन वा एत एवेत्युच्यन्ते । मैवम् । किन्तु सर्वप्रकारेणेत्याह- **तथैव चेति ।।** तद्विवृणोति- **तत्क्रमेणैवेति ।।** एवं तैरेव पदार्थैर्वाक्यार्थैश्चेत्यपि द्रष्टव्यम् । इत्थम्भूत-लक्षणे तृतीया ।

**अनेनैतदपि निरस्तम् । नाव्याख्याताद्वेदात् कश्चिदर्थमधिगच्छति । न चार्थाधिगतिमन्तरेणानु-ष्ठानं सम्भवति । न चार्वाक्तनपुरुषव्याख्याने विश्वासो युज्यते, अनादेशिकत्वात् । अतः स्वतन्त्र-वक्तृव्याख्यानम् अङ्गीकरणीयमिति । वेदानामकर्त्रापि सर्वज्ञेनेश्वरेण व्याख्यानोपपत्तेः ।**

**(र.टि.) अतो वैदिकानां विध्युद्देशानामिति ।।** अनेनैव, वैदिकानि विध्युद्देशवाक्यानि स्वतन्त्रवक्तृपूर्वकाणि विध्युद्देशत्वात् लौकिकविध्युद्देशवाक्यवदिति वेदस्य पौरुषेयत्वेऽनुमानमुक्तं भवति । अस्मिन्ननुमाने अप्रयो-जकत्वशङ्कापरिहारार्थं 'विधिर्नियोगः' इति पूर्ववाक्यमिति ज्ञातव्यम् । पौरुषेयत्वेऽर्थवादपक्षकानुमानमाह- **तथाऽर्थवादानामपीति ।।** प्रयोगस्तु- निन्दास्तुत्यर्थवादवाक्यानि यथोक्तज्ञानोत्पादनाभिप्रायपूर्वकाणि तथा-विधार्थवादवाक्यत्वाल्लौकिकार्थवादवदिति । मन्त्रभागस्यापि पौरुषेयत्वेऽनुमानमाह- **वेदेऽहमादिपदा-(र.टि.) नीति ।।** आदिपदेन 'वसुभिश्चरामि' इत्याद्युत्तमपुरुषोपेतपदसङ्ग्रहः । प्रयोगप्रकारस्तु- वैदिकाहमादि-पदानि स्वतन्त्रवक्तृकाणि अहमादिपदत्वाल्लौकिकाहमादिपदवदिति । **कथमिति चेदिति ।।** 'समस्ताः' इत्यनेन कथमुक्तशङ्कापरिहार इत्यर्थः । अनुमाने दूषणस्यानुक्तत्वादिति भावः । समस्ता इति वदतः स्मृतिकर्तुरुक्तानु-मानानामभिप्रायपूर्वकत्वमात्रसाधकत्वे सिद्धसाधनत्वं, तत्परिहारार्थं स्वतन्त्रपुरुषाभिप्रायपूर्वकत्वसाधने त्वप्रयो-जकत्वमित्यभिप्रेतमित्याह- **न हि वेद इति ।।** उपलक्षणं चैतत् । वैदिकविध्युद्देशादिप्रविष्टाभिप्रायवतः पुरुषस्य स्वतन्त्रवक्तृत्वे 'श्वेतकेतो वस ब्रह्मचर्यम्', 'अधीहि भगवो ब्रह्म' इत्यादिविध्युद्देशेषु उद्दालकभृग्वादीनां, 'येनाश्रुतं श्रुतं भवति' इत्यर्थवादवाक्येषु उद्दालकादीनाम्, 'अहं मनुरभवम्' इत्यादौ वामदेवादीनां स्वतन्त्रवक्तृत्वं स्यादित्यपि द्रष्टव्यम् । **अनेनैतदपीति ।।** ब्रह्मादीन् प्रत्युपदिश्यन्त इत्यर्थकेनोद्गीर्यन्त इत्यनेनेत्यर्थः ।

**(रा.टि.)** 'नित्या वेदाः' इत्यादेः श्रुतिपुराणवाक्यैरिति पूर्वमेवावतारितत्वात् समस्ताश्चेतिपदकृत्यं वक्तुं शङ्कामाह- **ननु विधिरिति ।। विध्युद्देशानामिति ।।** विधिरुद्दिश्यते यत्र 'यजेत स्वर्गकामः' इत्यादिवाक्येषु तेषामित्यर्थः । तेषां यागे प्रवर्तस्वेत्याद्यर्थकत्वादिति भावः । **अर्थवादानामिति ।।** 'यो ब्राह्मणायावगुरेत्तं शतेन घातयेत्', 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिनिन्दास्तुत्यादिरूपार्थवादानामित्यर्थः । **अहमादीति ।।** 'अहं विश्वं भुवनमभ्यभवाम्' 'अहं मनुरभवम्' इत्यादाविति भावः । **सङ्कल्पेति ।।** 'भूयसा यज्ञेन भूयो यजेय' 'बहु स्यां प्रजायेय' इत्यादिसङ्कल्पः । 'तन्मामवतु' इत्यादिः प्रार्थना । 'अग्नीदग्नीन् विहर' इति प्रेषणादिरादिपदार्थः। तत्रेशकर्तृकत्वायोगादिति भावः । **कथं तर्हीति ।।** अल्पायुःपुरुषाभिप्रायकत्व इत्यर्थः । एतेनेत्युक्तं व्यनक्ति- **नहि वयमिति ।। एकप्रकारतामिति ।।** सजातीयानुपूर्वीकतामित्यर्थः । **कृतकत्वेऽपीति ।।** प्रत्यध्याप-कोच्चारणक्रियाजन्यत्वेऽपीत्यर्थः । कथं युक्तिकथनमित्यत आह- **तथाचेति ।।** 'सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इत्यनेनेति भावः । **तथाऽपीति ।।** विष्णुबुद्धिगतत्वेन प्रलये विच्छेदाभावेऽपीत्यर्थः । एवकारान्वयेन प्रतीकोक्तिः- **एत एवेति ।** हेतुत्वाद्यर्थकत्वाभावादाह- **इत्थम्भूतेति ।।** प्राचीनक्रमादिमत्त्वप्रकारं प्राप्ता इत्यर्थः । **अनादेशिकत्वादिति ।।** तद्वाक्यं प्रति स्वतन्त्रकर्तृरूपोपदेशकत्वाभावादिति भावः । अनेनैवेत्युक्तं व्यनक्ति- **वेदानामकर्त्राऽपीति ।।**

**(श्री.टि.) विध्युद्देशानामिति ।।** विधिरेवोद्देशः प्रयोजनं येषां ते तथा तेषाम् 'प्रातः सन्ध्यामुपासीत' इत्यादिवाक्यानामित्यर्थः । **लौकिकवद्** इदं कुर्वित्यादिलौकिकवाक्यवत् । **स्वतन्त्रवक्तृकत्वमेवेति ।।** सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषः स्वतन्त्रः,तद्वक्तृकत्वं तत्कर्तृकत्वमिति यावदित्यर्थः । अनेन, वैदिकानि विध्युद्देशवाक्यानि स्वतन्त्रवक्तृपूर्वकाणि विध्युद्देशत्वात् लौकिकविध्युद्देशवाक्यवदिति वेदस्य पौरुषेयत्वेऽ-नुमानमुक्तं भवति । अस्मिन्ननुमानेऽप्रयोजकताशङ्कापरिहाराय विधिर्नियोग इति पूर्ववाक्यमिति ज्ञातव्यम् । पौरुषेयत्वेऽर्थवादपक्षकानुमानमाह- **तथाऽर्थवादानामपीति ।। हानेत्यादि ।।** विधिबोधितार्थ इति शेषः । **(श्री.टि.)** प्रयोगप्रकारस्तु- निन्दास्तुत्यर्थवादवाक्यानि विधिबोध्यार्थे हानोपादानाभिप्रायपूर्वकाणि तथा-विधार्थवादवाक्यत्वात् लौकिकार्थवादवदिति । मन्त्रभागस्यापि पौरुषेयत्वेऽनुमानमाह- **वेदेऽहमादिपदानी-ति ।।** 'अहं रुद्रेभिः' इत्यादिवाक्येष्वित्यर्थः । आदिपदेन 'वसुभिश्चरामि' इत्याद्युत्तमपुरुषोपेतपदसङ्ग्रहः । प्रयोगप्रकारस्तु- वैदिकाहमादिपदानि स्वतन्त्रवक्तृकाणि अहमादिपदत्वात् लौकिकाहमादिपदवदिति । **वेदा इत्युक्त्वेति ।।** बहुवचनेनैव सामस्त्यस्य लब्धत्वादिति भावः । **कथमिति चेदिति ।।** समस्ता इत्यनेन कथमुक्तशङ्कापरिहार इत्यर्थः । अनुमानानां दूषणानुक्तेरिति भावः । उक्तानुमानानां पुरुषाभिप्रायपूर्वकत्व-मात्रसाधकत्वे सिद्धसाधनत्वं समस्ता इति वदतः स्मृतिकर्तुरभिप्रेतमित्याह- **न हीत्यादिना ।। सङ्कल्प-प्रार्थनादिवाक्यानामिति ।।** 'स्तविष्यामि त्वामहम्' इत्यादिसङ्कल्पप्रतिपादकवाक्यानाम् । 'आयाहि पिब मत्स्व' इत्यादि

प्रार्थनावाक्यानां चेत्यर्थः । **कथं तर्ह्यपौरुषेयत्वमिति ॥** पुरुषाभिप्रायपूर्वकत्वं साधयतामस्माकं वैदिकविध्युद्देशादावभिप्रायं प्रवेष्टुः पुरुषस्य स्वातन्त्र्यमेव विवक्षितम् । तथा च स्वतन्त्रपुरुषाभिप्रायपूर्वकत्व-साधनान्न सिद्धसाधनम् । तथा च कथमपौरुषेयत्वमित्याशयः । **आहेति ॥** तथात्वे अप्रयोजकत्वं स्यादित्याहे-त्यर्थः । **न त्वपूर्वाणीति ॥** तथा च न स्वतन्त्रपुरुषाभिप्रायप्रवेशपूर्वकत्वमित्यप्रयोजकतेति भावः । **नित्यत्वा-दित्यादि ॥** नित्यत्वान्न कालिकः क्रमः, सर्वगतत्वान्न दैशिकः क्रम इत्यर्थः । अस्तु क्रमशून्यत्वं, ततः किमित्यत आह- **न चेति ॥** बोधोपयुक्तक्रमवद्वर्णसमूहस्यैव पदत्वात् तादृशक्रमवत्पदसमूहस्यैव वाक्यत्वादिति भावः । माऽस्तु पदादिभावोऽपीति चेत्तत्राऽह- **नापीति ॥** पदवाक्यभावाभावे प्रमाकरणत्वाभावात्प्रामाण्यमेव न स्यादित्यर्थः । **पौरुषेयः** कृतकः । **वेदस्य** जन्यक्रमविशेषविशिष्टवर्णसमुदायरूपस्य । एतेनेत्युक्तं विशदयति- **न हीति ॥ कूटस्थनित्यतां** निर्विकारताम् । क्रमस्य जन्यतया विकारित्वे क्रमविशेषविशिष्टवर्णसमुदायरूप-वेदस्यापि विकारित्वादिति भावः । तर्ह्यपौरुषेयत्वोक्तेः कोऽभिप्राय इत्यत आह- **ततश्चेति ॥ स्वतन्त्रवक्तु-रिति ॥** तथा च सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषस्स्वतन्त्रः, तत्पूर्वकत्वाभाव एवापौरुषेयत्वमित्यर्थः।

अत्र केचित् । तत्तद्वर्णादिविषयकबुद्धिक्रम एव वर्णपदादिक्रमो नातिरिक्तोऽस्ति । न च वर्णक्रमस्य श्रावण(तया)ताया अनुभूयमानत्वाद्बुद्धिगतक्रमस्य श्रावणत्वासम्भवः । बुद्धेः साक्षिवेद्यत्वेन तत्क्रमस्यापि तद्वेद्यत्वेन साक्ष्युपनीतस्यैव तस्य वर्णेषु श्रोत्रेण भानाङ्गीकारात् । 'व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते' इति तन्त्रसारोक्तेरित्याहुः । तेषां 'क्रमस्तु वर्णधर्मः' इति सुधाविरोधः स्पष्टः । व्यक्तिक्रममित्यादि वाक्यं तु वर्णसमुदायात्मके वेदे क्रमप्रतिपादनाय न प्रवृत्तम् । किन्तु पूर्वं क्रमेण अष्टमहामन्त्रोद्धारे कृते मन्त्राणां नित्यत्वेन युगपत्सर्वमन्त्रसद्भावेन क्रमाभावात् कथमेकानन्तर्यमपरस्योच्यत इति शङ्कापरिहाराय प्रवृत्तम् । तथा च सर्व-मन्त्राणां ब्रह्मा ऋषिः । अतस्स एव द्रष्टा । स चैकानन्तरमपरं मन्त्रं दृष्टवान् । अतो मन्त्राणां ब्रह्मबुद्धौ व्यक्तीभाव-मपेक्ष्यैव मन्त्रेष्वपि क्रमो विष्णूदिते तन्त्रसारे उच्यते, ततस्तदनुसारेणास्माभिरपि तथैव क्रमो मन्त्रेषु उच्यत इत्येवंपरतया तद्वाक्यविरोधाभावात् । यद्यपि न वर्णेषु दैशिकः कालिको वा क्रमः सम्भवति, व्याप्तत्वान्नित्य-**(श्री.टि.)** त्वाच्च । नापि वस्तुनिबन्धनः । एकदैव जारा राजेति प्रयोगे जकारस्य पौर्वापर्यायोगात् । नापि बुद्धियोग एव क्रमो वर्णेष्ववभासत इति युक्तम् । वर्णपदादिगतस्य क्रमस्य श्रावणत्वानुभवात् । बुद्धेरान्तरत्वेन साक्षिवेद्यतया तत्क्रमस्यापि तथात्वेन श्रावणत्वायोगात् । न चाऽरोपित एव वर्णेषु क्रम इति युक्तम् । पदवाक्या-देरत्यन्तासत्त्वापातात् । तथाऽपि बुद्धिक्रमजन्यो वर्णेष्वौपाधिकः कश्चन क्रमोऽस्त्येव । 'क्रमस्तु वर्णधर्मः' इति स्पष्टं सुधोक्तेः । न च स कीदृश इति वाच्यम् । यथा कालनिबन्धनक्रमापेक्षया देशनिबन्धनस्तत्तद्वस्तुगतः क्रमो विलक्षणोऽनुभूयमानो विशिष्य वक्तुमशक्योऽपि कश्चिदङ्गीक्रियते । तथा बुद्धि क्रमनिबन्धनो वर्णपदादिगता-नुपूर्वीरूपः क्रमोऽपि साक्षिवेद्यतया श्रोत्रेणानुभूयमानो वक्तुमशक्योऽप्यङ्गीकार्यः । न हि सर्वत्र क्रमशब्द एकार्थकोऽस्तीत्येवमस्मदाचार्यरचितसुधाटिप्पण्यनुसारेण द्रष्टव्यम् । स च वर्णनिष्ठः क्रम ईश्वरबुद्ध्युपाधिकोऽ-स्मद्बुद्ध्युपाधिकश्चेति द्विविधोऽपि जन्य एव, 'क्रमस्य कृतकत्वेऽपि' इति सामान्यवचनात् । इयांस्तु विशेषः । अस्मद्बुद्ध्युपाधिकः क्रमो जन्योऽस्मद्बुद्ध्युपरमे नश्यति । ईश्वरबुद्ध्युपाधिकः क्रमो जन्योऽपि न नश्यति, तद्बुद्ध्युपरमाभावात् । जन्यस्यापि नाशाभावस्य पुराणेषु प्रमितत्वात् । यथोक्तं तर्कताण्डवे - 'ईश्वरोऽप्यस्मन्मते महोपाध्याय एव' इति । यथा प्रत्यहमुपाध्यायबुद्ध्युपाधिकः क्रमो वर्णेषु जायते, एवमीश्वरबुद्ध्युपाधिकः क्रमोऽपि वर्णेषु जायत एवेति तद्वाक्यार्थः ।

ननु ईश्वरबुद्ध्युपाधिकक्रमस्याजन्यत्वाङ्गीकारे किं बाधकं, क्रमस्य कृतकत्वेऽपीति वाक्यस्यास्मद्बुद्ध्युपाधिक-क्रमविषयत्वसम्भवादिति चेत् । अत्रोच्यते । क्रमस्तावद्वर्णधर्मः 'क्रमस्तु वर्णधर्मः' इति सुधावचनात् । तस्य चाजन्यत्वाङ्गीकारे यावद्द्रव्यभावित्वप्राप्त्या खण्डितत्वाभावेन वर्णैरत्यन्ताभेद एव वाच्यः । 'यावद्वस्तु न भेद-वत्' इत्युक्तत्वात् । एवं च यद् यदभिन्नाभिन्नं तत् तदभिन्नं, यथा रामाभिन्नमूलनारायणाभिन्नः कृष्णो रामाभिन्न इति व्याप्तिबलात् पूर्ववर्णाभिन्नक्रमाभिन्नो द्वितीयवर्णः पूर्ववर्णाभिन्न इति वर्णयोः परस्परमभेदः स्यात् । जन्यत्वाङ्गीकारे तु खण्डितत्वेन भेदाभेदसद्भावान्नैवमापादनावकाशः । यथाऽयमेकोऽयमेकः, तस्मादिमौ द्वावि-तीश्वरबुद्ध्या जीवयोर्द्वित्वमुत्पद्यते । तच्चेश्वरबुद्ध्युपाधिकमपि द्वित्वं जीवाभ्यां भिन्नाभिन्नमेवाङ्गीक्रियते । अन्यथोक्तव्याप्तिबलाज्जीवयोरपि परस्पराभेदापत्तिरेव । एवमेव प्रकृतेऽपीति न कोऽपि दोष इति सर्वमव-दातम् । **सति सप्तमीति ॥** सर्गे सतीत्यर्थः । द्विर्वचनं किमर्थमित्यत आह- **वीप्सायामिति ॥** बह्वर्थसङ्ग्रहो **वीप्सा** । तथा च सर्गेसर्ग इत्यस्य प्रतिसर्गम् इत्यर्थः । **तद्विवृणोतीति ॥** सर्वप्रकारेण साम्यं विवृणोतीत्यर्थः। ननु 'कर्तृकरणयोस्तृतीया' इत्युक्तत्वात्तत्क्रमादीनां कर्तृत्वकरणत्वयोरभावात्कथं तत्र तृतीयेत्यत आह- **इत्थम्भूतलक्षणे तृतीयेति ॥** कश्चन प्रकारं प्राप्त

इत्थम्भूतः, तज्ज्ञापके तृतीया स्यादिति सूत्रार्थः। छात्रेणोपाध्यायमद्राक्षीदित्युदाहरणम्। अत्रोपाध्यायत्वरूपं प्रकारं प्राप्त उपाध्याय इत्थम्भूतः, तत्रोपाध्यायत्व-स्यान्यत्र प्रसक्तौ सत्यां छात्रस्य तज्ज्ञापकत्वात्तत्र तृतीया। एवमिहाप्येत उद्गीर्यन्त इत्युच्चारणविषयत्वरूपं प्रकारं प्राप्ता वेदाः, तत्रोच्चारणकर्मत्वरूपप्रकारस्यान्यथात्वरूपातिप्रसक्तिपरिहाराय तत्प्रकारज्ञापकत्वं क्रमादीनां **(श्री.टि.)** विवक्षितमिति तत्र तृतीयेत्यर्थः। **अनेनेति ॥** ब्रह्मादीन् प्रत्युपदिश्यन्त इत्यर्थकेनोद्गीर्यन्त इत्य-नेनेत्यर्थः। **अनादेशिकत्वादिति ॥** आदेश उपदेशस्तत्परम्पराप्राप्तत्वाभावाद् असाम्प्रदायिकत्वादिति यावदि-त्यर्थः। **स्वतन्त्रवक्त्रेति ॥** सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषस्स्वतन्त्रः तत्कर्तेति यावत्, तद्व्याख्यान-मेवापेक्षितम्। तथात्वे तत्र विश्वासो युक्त इत्याशयः। अनेनेत्युक्तं विशदयति- **वेदानामिति ॥**

**(पां.टि.)** अहमादिपदानीत्यादिपदेन वैदिकानां 'स्याम्','अभूवम्' इत्याद्युत्तमपुरुषाणां वैदिकानां युष्मद्यत्तच्छ-ब्दानां च परिग्रहः। **न हीति ॥** ईश्वराभिप्रायप्रवेशाङ्गीकारादिति भावः। तदङ्गीकारमेवानङ्गीकारे बाधकोक्त्या उपपादयति- **तथात्वे इति ॥** **सङ्कल्पप्रार्थनादिवाक्यानामिति ॥** 'शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा' इत्यादीनामित्यर्थः। न चैवं तद्वाक्यस्थाहमादिशब्दानामीश्वरपरत्वं स्यादिति वाच्यम्। तथात्वे त्वन्मतेऽपि 'शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा' इत्यादौ स्वतन्त्रवक्तुरीश्वरस्यैव, भारतादौ च 'किं नो राज्येन गोविन्द' 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' इत्यादौ व्यासस्यैव, लोके च 'वाच्यस्त्वया मद्वचनात्स राजा' इत्यादौ कालिदासादेरेवाहंशब्दार्थत्वापातात्। यदि च शरीरं मे इत्यादावीश्वरादेरेव स्वतन्त्रवक्तृत्वेऽपि मन्त्रलिङ्ग-प्रकरणादिना यजमानाद्यभिप्रायानुप्रवेशाङ्गीकाराद् यजमानार्जुनसीतादेरेवाहंशब्दार्थत्वमिति मन्यसे, तर्हि वेदा-पौरुषेयत्वेऽपि 'शरीरं मे' इत्यादिप्रार्थनामन्त्रेषु मन्त्रलिङ्गादिना यजमानेश्वराद्यभिप्रायानुप्रवेशस्य मयाऽपि स्वीकारात्तत्र यजमान एवाहंशब्दार्थः, 'मामुपास्व' इत्यादावीश्वर इति नातिप्रसङ्ग इति भावः। **अत इति ॥** प्रामाण्यान्यथानुपपत्त्या पदवाक्यभावस्य, तदन्यथाऽनुपपत्त्या च क्रमस्यावश्याऽश्रयणीयत्वात् तस्य चान्यस्या-सम्भवेनोपलब्धिनिष्ठस्यैव वक्तव्यत्वेनोपलब्धेश्च जन्यत्वेन तन्निष्ठक्रमस्यापि जन्यत्वात्पौरुषेयत्वमेवेत्यर्थः। अस्तु क्रमस्य पौरुषेयत्वं किं तत इत्यतः क्रमविशिष्टवर्णानामेव वेदत्वात्क्रमस्य कृतकत्वे वेदस्यापि कृतकत्वमेवेति न तस्यापौरुषेयत्वं सम्भवतीत्याह- **तत्कथमिति ॥** इतीत्यस्यैतेनेत्यनेन सम्बन्धः। एतेनेत्यनेन परामृष्टं दर्शयति- **न हीति ॥**

न चैवं तत्त्वसङ्ख्यानटीकाविरोधः। तत्र ''नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम्। तच्च वेदानां 'नित्या वेदाः समस्ताश्च' इत्यादि प्रमाणसिद्धम्'' इत्युक्तत्वादिह कूटस्थत्वनिषेधादिति वाच्यम्। ईश्वरीयोपलब्धेरजन्यत्वेन तन्निष्ठक्रमस्याप्यजन्यत्वेन वक्ष्यमाणरीत्या तद्विशिष्टवर्णानामप्यजन्यत्वेन कूटस्थतयाऽऽद्यन्तशून्यत्वोक्तेरीश्वर-बुद्धिस्थवेदविषयत्वाद्, इह टीकायां तत्कौटस्थ्यनिषेधस्य चास्मदादीन् प्रति प्रमापकत्वोपयुक्तस्यास्मदादिबुद्धि-स्थस्य क्रमस्योच्चारणाद्यधीनत्वेन तद्विषयत्वेन टीकाद्वयस्य भिन्नविषयत्वादविरुद्धत्वात्। अवश्यं च क्रमस्य सदा ईश्वरबुद्धिस्थत्वकल्पनम्, 'सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इति वक्ष्यमाणत्वादिति ध्येयम्। **व्याकरिष्यतीति ॥** 'सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इत्यत्रेति शेषः। **अनादेशि-कत्वादिति ॥** आदेश आज्ञा, तद्युक्तम् आदेशिकं, न आदेशिकम् अनादेशिकं, तस्य भावस्तत्त्वं, तस्मादित्यर्थः। स्वतन्त्रवक्तृव्याख्याने व्याख्यातुरिच्छाया एव नियामकत्वेनेदमित्थमेवेत्यर्थनियमनसम्भवेऽप्यर्वाचीन-**(पां.टि.)** व्याख्याने आज्ञारूपनियामकाभावादिदमित्थमेवेत्येवं नियमनासम्भवादिति भावः। यद्वा आदेश उपदेशः सोऽस्यास्तीत्यादेशी, स विद्यते यस्येत्यादेशिकोऽनेवम्भूतोऽनादेशिकः तस्य भावस्तत्त्वं तस्माद्। उपदेशकमूलपुरुषरहितत्वेन तद्व्याख्यानस्यासाम्प्रदायिकत्वादित्यर्थः।

**(व्या.टि.)** पुराणस्य श्रुतिपुराणवाक्यैरिति प्रागेवावतारितत्वान्न पुनरवतारितम्। तत्र पुराणस्यैकत्वेऽपि 'जान्तनशां विभाषा' इतिवत् श्रुतिबहुत्वाभिप्रायेण बहुत्वम्। 'अदितिः पाशान्' इतिवदवयवबहुत्वाभिप्रायेण वेति बोध्यम्। तत्र समस्तपदव्यावर्त्याशङ्कां दर्शयति- **नन्वित्यादिना ॥** विध्युद्देशत्वस्य स्वतन्त्रवक्तृकत्वेन व्याप्त्युपपादनाय विधेः पुरुषधर्मत्वमुपपादयति- **स चेति ॥** अभिप्रायस्येच्छारूपत्वादिति भावः। हेत्वभिधानपूर्वकं प्रतिजानीते- **अत इति ॥** विधेः पुरुषधर्मत्वादित्यर्थः। **विध्युद्देशानामिति ॥** प्रेरणापराणां 'वायव्यं श्वेतमा-लभेत' इत्यादीनामित्यर्थः। **उचितमिति ॥** अनेन वैदिको विध्युद्देशः स्वतन्त्रवक्तृको विध्युद्देशत्वात् लौकिक-वदित्यनुमानाद्वेदस्य पौरुषेयत्वमुक्तं भवति। **अर्थवादानामपीति ॥** 'वायुर्वै क्षेपिष्ठा' इत्यादिस्तुतिरूपाणाम् 'सोऽरोदीद्यदरोदीत्' इत्यादिनिन्दारूपाणाम्, 'इति ह स्माह बहुर्वार्ष्णेयो माधा(षा)नेव मह्यं पचत' इति परकृतिरूपाणाम्, 'देवा वै सत्रमासत' इत्यादिपुराकल्परूपाणां चेत्यर्थः। तथेति पौरुषेयत्वसमुच्चयः। तत्र हेतुमाह - **हानोपादानेति ॥** न चासिद्धो

हेतुरिति वाच्यम्। वैदिकानि स्तुतिवाक्यानि उपादानाभिप्रायेण प्रवृत्तानि स्तुतिवाक्यत्वाल्लौकिकवाक्यवत्, वैदिकानि निन्दावाक्यानि हानाभिप्रायेण प्रवृत्तानि निन्दा-वाक्यत्वाल्लौकिकवाक्यवदित्यादिना तत्सिद्धेः। नन्वस्त्वभिप्रायेण प्रवृत्तत्वं, मास्तु पौरुषेयत्वमित्यतो विपक्षे हेतूच्छित्तिं विवक्षुरभिप्रायस्य पुरुषाविनाभावं दर्शयति- **वक्तृधर्मत्वादिति ॥** अभिप्रायस्येच्छारूपत्वादिति भावः। अत्र विधिलिङादीनां स्वबोध्याभिप्रायवत्कर्तृकत्वस्य, अर्थवादानां हानाद्यभिप्रायवत्कर्तृकत्वस्य दर्शनाद्विशेषव्याप्तेन विध्युद्देशत्वादिना सामान्यं सकर्तृकत्वं सुसाधमित्याकूतम्। **किञ्चेति ॥** वेदभागे अन्यदपि पौरुषेयत्वसाधकमस्तीत्यर्थः। **वेद इति ॥ मन्त्रभाग** इत्यर्थः। **अहमादिपदानीति ॥** 'अहं वृक्षस्य रेरिवा' इत्यादौ। आदिपदेनोत्तमपुरुषादीनि। अत्राहंपदस्य स्वतन्त्रवक्तृवाचकत्वेन, उत्तमपुरुषस्याहमर्थसामानाधि-करण्येन सकर्तृकत्वव्याप्तिरवधातव्या। **कथमिति ॥** पुरुषाभिप्रायप्रवेशाप्रवेशयोः कतरः पक्षः परिगृह्यत (इत्यर्थो) इति अस्यार्थो, न तु कथमपौरुषेयत्वमिति, उत्तरग्रन्थेन पौनरुक्त्यापत्तेः। सिद्धान्ती स्वानभिमतं पक्षं प्रतिक्षिपति- **न हीति ॥** नास्तीत्येवोच्यतां, किं विपक्षे बाधकमित्यत आह- **तथात्व इति ॥** 'प्रजापतिरकामयत प्रजाः सृजेय' इति सङ्कल्पवाक्यम्, 'शरीरं मे विचर्षणम्' इत्यादि प्रार्थनावाक्यम्, आदिपदेन 'सत्याः सन्तु यजमानस्य कामाः' इत्याशीर्वचनम्, तदेषामित्यर्थः। पुरुषाभिप्रायप्रवेशाङ्गीकारे वेदस्य पौरुषेयत्वमवर्जनीयं, तस्य कर्तृपुरुषाविनाभावादित्याक्षिपति- **कथं तर्हीति ॥** शाश्वता इति व्याचष्टे- **शश्वदिति ॥** अनेन शश्वच्छब्दादणिति सूचितम्।

ननु कथं शाश्वता इति पदप्रयोगः। 'कालाट्ठञ्' इति ठञोऽवर्जनीयत्वेन कालिका मासिका इतिवत्तदन्तस्यैव **(व्या.टि.)** प्रयोज्यत्वादिति चेन्न। प्रामाणिकत्वेनाणोऽपि सम्भवात्। कथमन्यथा 'अग्राह्यः शाश्वतः कृष्णः' इति 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः' इति 'अनुदितौषसरागा' इति 'शार्वरस्य तमसः' इति 'समानकालीनः' इत्याद्यभियुक्तप्रयोगाः समाधेयाः। यत्तु सिद्धान्तकौमुद्याम् 'अपभ्रंशा एवैते' इति तद्दुराग्रहमात्रं, बह्वभियुक्तप्रयोगाणां दुरपह्नवत्वात्। शाश्वतत्वोक्त्या कथमुक्तशङ्काऽपगम इत्यत आह- **पूर्वस्थितान्ये-वेति ॥** ईशबुद्धाविति शेषः। **वाक्यानीति ॥** पदक्रमविशिष्टानीत्यर्थः। क्रमाभावे वाक्यत्वानुपपत्तेः। अन्यकृतेऽपि 'पापोऽहं पापकर्माऽहम्' इत्यादिश्लोके स्वाभिप्रायप्रवेशेन सर्वैः प्रयोगवद् वेदद्रष्टृभिरकृतेऽपि वेदे स्वाभिप्रायप्रवेशः क्रियत इत्यङ्गीक्रियते। तथा च विध्युद्देशादेरभिप्रायवत्पुरुषसम्बन्धेऽपि तत्स्वातन्त्र्यानावश्यकेन तेन सकर्तृकत्व-साधनमयुक्तमिति भावः। अहंपदस्याननुवादस्य वक्तृवाचित्वेऽपि तत्स्वातन्त्र्यस्य पापोऽहमित्यादौ अदर्शनात्, 'न जाने' इत्यादौ तत्सामानाधिकरण्यस्याभावात्, न अहंपदत्वादिनाऽपि सकर्तृकत्वसाधनमिति बोध्यम्। शङ्काऽन्तरमप्यनेन निरस्तमित्याह - **एतेनेति ॥** शाश्वतत्वकथनेनेत्यर्थः। निरस्यामाशङ्कामुट्टङ्कयति - **वर्णास्ता-वदिति ॥** नित्यत्वादिति कालिकस्य क्रमस्य निरासः, सर्वगतत्वादिति दैशिकस्य। किं तत इत्यत आह- **न चेति ॥** ततोऽपि किमित्यत आह- **नापीति ॥ तं** पदवाक्यभावम्। **प्रामाण्यं** प्रमापकत्वम्। तत्र पदार्थवाक्यार्थयोः पदवाक्यगम्यत्वादिति भावः। वेदः सकर्तृकः पुरुषाभिप्रायप्रवेशात् कृतकक्रमत्वाद् इति हेतुमप्रयोजकत्वेन निरस्यति- **न हि वयमित्यादिना ॥**

ननु तत्त्वसङ्ख्याने 'नित्या वेदाः' इति वेदानां नित्यत्वमुक्तम्। तच्च 'नित्यत्वं नाम कूटस्थतया आद्यन्त-शून्यत्वम्। तच्च 'नित्या वेदाः समस्ताश्चेति प्रमाणसिद्धम्'इति तट्टीकायां कूटस्थनित्यतारूपत्वेन परिष्कृतम्। एतत्प्रमाणेनैव प्रमापितं चेति कथमत्र तद्विरुद्धा कूटस्थनित्यताऽभ्युपगमाभावोक्तिः, 'किन्तु शब्दतोऽ-र्थतश्चैकप्रकारतामेव' इत्युक्तिः, 'क्रमस्य कृतकत्वेऽपि' इत्युक्तिश्चेति चेत्। बहूक्तियुक्तिसिद्धप्रमेयानुरोधेन तत्त्वसङ्ख्यानटीकाया अभिप्रायस्य कल्पनीयत्वात्। प्रमेयं चेत्थम्- क्रमविशिष्टा वर्णा एव तावद्वेदः। इत्थमेव टीकायामसकृदुक्तेः। क्रमविशेषेण वर्णान् शृणोमीत्यनुभवसिद्धप्रत्यक्षाच्च। वाक्यस्फोटादेरप्रामाणिकत्वाच्च। क्रमविशेषश्च पौरुषेयग्रन्थव्यावृत्त आनुपूर्वीविशेषः। ग्रन्थभेदस्य सर्वत्राप्यानुपूर्वीभेदनिबन्धनत्वात्। तत्र वर्णाः कूटस्था विभवश्च इत्येतदपि बहूक्तियुक्तिसिद्धम्। ईदृशानां वर्णानां स्वतः क्रमो नास्ति। दैशिकस्य कालिकस्य वा तत्त्वेन, विभूनां स्वानधिकरणं यत्तदधिकरणं तद्भिन्नतदुत्तरदेशस्थत्वरूपस्य एतादृशपूर्वदेशस्थत्वरूपस्य वा दैशिकस्य एकपङ्क्तिस्थबकानामिवायोगेन, अनादिनित्यानां तदुत्पत्त्यधिकरणक्षणध्वंसाधिकरण-क्षणोत्पत्तिकत्वरूपस्य तदुत्पत्त्यधिकरणक्षणप्रागभावाधिकरणक्षणोत्पत्तिकत्वरूपस्य वा तद्ध्वंसाधिकरण-क्षणोत्पत्तिकत्वरूपस्य तदुत्पत्त्यधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वस्य वा कालिकस्य कुलीरतत्त्र्यपत्यादीना-मिवायोगेन तदयोगात्, किन्त्वन्यो वाच्यः। क्रमेण वर्णान् शृणोमीत्यनुभवस्य दुरपह्नवत्वात्। वर्णव्यञ्जक-ध्वनिजनिकाः क्रियाः क्रमेण जायन्ते। ताभिर्व्यञ्जका ध्वनयः क्रमेणोत्पद्यन्ते। तैश्च वर्णानां क्रमेण व्यक्तयो **(व्या.टि.)** भवन्ति। व्यक्तानां च क्रमेण श्रवणसाक्षात्कारा उत्पद्यन्ते। तत्र चरमवर्णसाक्षात्कारेण संस्कार-वशादुक्तक्रमविशिष्टवर्णविषयकेण, अन्यया वा स्मृत्या क्रमविशिष्टतावद्वर्णविषयिण्या

पदभावावगाहिन्या शक्तिस्मृत्यादिद्वारा शाब्दबोध इति वस्तुस्थितिः। तत्र वर्णेषु प्रकारतया भासमानोऽयं क्रमः व्यक्तिक्रमः। न च तस्य स्वस्वव्यक्तिधर्मस्य कथं वर्णधर्मत्वमिति वाच्यम्। तर्हि क्रमिकोत्पत्तिमत्त्वमतेऽपि कथं वर्णधर्म-त्वम्। क्रमिकोत्पत्तिमत्त्वस्य प्रकारत्वे तादृशव्यक्तिमत्त्वस्यापि तत्त्वम्। योगिनः क्रमेण भगवद्रूपाणि पश्यामीति प्रतीतिरुक्तक्रममेव प्रकारतयाऽवगाहते। अन्यस्य क्रमस्य दुर्वचत्वात्।

वस्तुतस्तु भगवद्रूपक्रियादौ कार्यविशेषाय व्यक्तिरूपावस्थाविशेषाङ्गीकारेऽपि वर्णेषु प्रतीत्यतिरिक्तव्यक्ति-कल्पने मानाभावेन प्रतीतिरेव व्यक्तिः। ध्वनीनां प्रत्यायकत्वमेव व्यञ्जकत्वम्। तदा क्रमिकप्रतीतिविषयत्व-मेव क्रमः। श्रावणं तु न क्रमावगाहि बुद्धिक्रमस्य स्वायोग्यत्वात्। स्वस्य प्रतिवर्णं भिन्नत्वेनानेकधर्मिकक्रमिक-बुद्धिविषयत्वप्रकारकत्वायोगाच्च। स्वपूर्वमुपनायकाभावेनोपनीतभानस्याप्ययोगाच्च। किन्तु साक्षी क्रमेण श्रावणान्यवगाहमानः क्रमिकश्रावणविषयत्वं वर्णेष्ववगाहते। न च साक्ष्यपि तत्तच्छ्रावणं तदाऽवगाहमानः कथं क्रममवगाहत इति वाच्यम्। प्रतीतिकाल एवानन्तरं प्रतीतानि विषयीकृत्य वा तद्गतकालिकक्रममवगाढुं शक्तत्वात्। अधिकं तु प्रकृतानुपयोगाद् ग्रन्थगौरवभयाद्रहस्यत्वाच्च न विचार्यते। सर्वथा तावत् स्वतः क्रमा-भावादुक्तक्रम एव वाच्यः। स च व्यक्तेर्बुद्धेर्वा जन्यत्वाज्जन्य एव, तन्नाशनाश्य एव। तथाऽपि पारिभाषिकौ स्थित्युपरमौ वक्तव्यौ। अस्मिन् ग्रामे वेदस्तिष्ठति, अस्मिन्नध्यापके तिष्ठति, अस्मिन् गत इत्यबाधितव्यव-हारात्। तौ च उक्तक्रमविशिष्टवर्णोच्चारणानुकूलोक्तक्रमविशिष्टवर्णानुभवजन्यसंस्कारसत्त्वनाशौ लोके। ईश्वरे तु तस्य सर्वदा सर्वज्ञत्वेन क्रमविशेषविशिष्टवर्णानुभवस्यैव सत्त्वादीश्वरे महोपाध्याये वेदः सदा तिष्ठति। न चैवं पुराणादावतिप्रसङ्गः। तस्य सदा ईशबुद्धौ स्थितत्वेऽपि अभूतपूर्वानुपूर्वीविशेषविशिष्टोच्चारणस्योत्पत्तित्वेन भविष्यत्कल्पीयतादृशोच्चारणाभावस्य नाशत्वेन श्रुतितो वैलक्षण्यात्। न च वैदिकक्रमस्य जन्यत्वे प्रत्यह-मध्यापकैर्व्यज्यमानत्वोक्त्ययोगः। भूतपूर्वसदृशोच्चारणकत्वेनैव तद्व्यवहारोपपत्तेः। अन्यथा कथकेन पुराणं क्रियत इति व्यवहारापत्तिः। न च तत्क्रमेणेति प्रत्यभिज्ञाविरोधः, सादृश्याभिप्रायकत्वात्। अन्यथा तैरेव पदार्थैरिति टीकोक्त्या पदार्थानामपि नित्यत्वप्रसक्तेः। एवमन्यान्यपि बाधकानि सुपरिहाराणि। न च मीमांसकोक्तविततिविशेषवद्, वेदान्तिमते ब्रह्मादिमानुषान्तेषु क्रमवद् विलक्षणः क्रमः कल्प्य इति वाच्यम्। कल्पकाभावात्। विततेरपि कालिकक्रमवदनुष्ठानविषयाङ्गसमुदायरूपत्वाच्च। क्षीरनीरमाधुर्यतारतम्यस्येव आनन्दादितारतम्यस्यैव क्रमशब्दार्थत्वाच्च।

किञ्च कल्प्यमानोऽपि वेदे कल्प्यतेऽन्यत्रापि वा। नाऽद्यः। अन्यत्रेवोक्तरीत्या वेदेऽपि पदवाक्यादिभावोप-पत्तावतिरिक्तकल्पने मानाभावात्। लौकिकवाक्य इव वर्णतत्प्रतीतिक्रमाद्यन्यस्यानुभवविरुद्धत्वाच्च। नापि द्वितीयः। अनुभवविरोधादेव। तस्य सर्वत्राप्यजन्यत्वे लौकिकवाक्यस्य कूटस्थत्वापत्तेश्च। वेदेऽजन्यत्वमन्यत्र **(व्या.टि.)** जन्यत्वमिति वैलक्षण्ये च नियामकाभावः। पुराणादीनां नश्वरक्रमवत्त्वेनानित्यत्वोपपत्तौ 'पुराणादी-नामन्यथाशब्दरचनमेवानित्यत्वम्' इति मूलविरोधश्च। 'वर्णादीनामित्येव सिद्धे यत्पदादिग्रहणं तद्वर्णानां कौट-स्थ्याभावोऽनित्यत्वं पदादीनां तु क्रमव्यत्यय इति सूचयितुम्' इति स्पष्टटीकावाक्यविरोधश्च। न च क्रमकृतकत्व-वचनानां परमतानुवादत्वम्। 'न हि वयं कूटस्थनित्यतां ब्रूमः' इत्यादेः परमतत्वोक्तेः साहसत्वात्। तस्माद्वर्णा एव कूटस्थाः, क्रमस्तु जन्यो विनाशीति सिद्धं प्रमेयम्। तथा च तत्त्वसङ्ख्यानटीका वर्णांशे कूटस्थत्वाभिप्रायका, क्रमांशे सर्वदा ईश्वरबुद्धिस्थत्वाभिप्रायका वा कृत्वाचिन्तोक्तिरूपा वा। अत एव गायत्र्यधिकरणचन्द्रिकाया-मीश्वरबुद्धिस्थत्वादेव तत्त्वसङ्ख्यानटीकाया युक्तत्वमुक्त्वा लौकिकवाक्यसाधारण्यं मनसिकृत्य 'कृत्वाचिन्तया वा अनादित्वोक्तिः' इत्युक्तम्।

केचित्तु बुद्धिक्रमनिबन्धनो दैशिककालिकान्यो वर्णगत एव क्रमो विलक्षणो जायते। तत्रास्मद्बुद्ध्युपाधिको बुद्ध्युपरमे नश्यति। ईश्वरबुद्ध्युपाधिको जन्योऽपि न नश्यति, तद्बुद्ध्युपरमाभावात्। जन्यस्यापि नाशाभावस्य पुराणेषु प्रमितत्वात्। ईश्वरबुद्ध्युपाधिकक्रमस्याजन्यत्वाङ्गीकारे यावद्वस्तुभावित्वेनात्यन्ताभेदप्राप्त्या ईश्वरापेक्षा-बुद्ध्युपाधिकजीवद्वयगतद्वित्वस्य भिन्नाभिन्नत्वाभावे तदाश्रययोर्जीवयोरिव वर्णयोरत्यन्ताभेदापत्तिर्बाधिके-त्याहुः। तन्न। उच्चारणक्रियातज्जन्यध्वनिवर्णव्यक्तितत्प्रतीतिक्रमातिरिक्तस्य क्रमस्य स्फोटवदप्रामाणिकत्वादनु-भवविरुद्धत्वाच्च। किञ्च बुद्धिक्रमनिबन्धन इत्यत्र किं वक्तुर्बुद्धिनिबन्धनत्वम् उत श्रोतृबुद्धिनिबन्धनत्वम्। आद्येऽपि वाक्योच्चारणजनकीभूतसमूहालम्बनबुद्धेरेकत्वेन बुद्धिक्रमस्यैवाभावात्। ततः पूर्वतनीनां क्रमिक-बुद्धीनाम् उच्चारणोपयोगाभावेनोच्चरितेषु क्रमजनकत्वायोगाच्च। भावे च उच्चारणक्रमस्यैव क्रमजनकत्वसम्भवेना-न्यथासिद्धत्वाच्च। उच्चारणक्रममद्वारीकृत्य क्रमजनकत्वे दैवाद्विपरीतक्रमेणोच्चारणेऽपि बुद्धिक्रमजन्यक्रमस्यैव श्रावणापत्तेश्च। न द्वितीयः। क्रमस्य श्रावणत्वानुभवादिति स्वोक्तिविरोधात्। न हि श्रावणानि स्वगतक्रमजन्यं भाविनं वर्णक्रमं स्वयं विषयीकुर्वन्ति,

विषयस्यावर्तमानत्वात् । अननुभूयमानस्य शाब्दाद्यनुपयोगिनस्तस्य वैयर्थ्याच्च । ईश्वरबुद्धिजन्यस्तु सुतरामयुक्तः । ईश्वरबुद्धेः क्रमाभावेन तज्जन्यक्रमायोगात् । अजन्याया ईश्वरबुद्धे-रजन्यवर्णेषु क्रमजनकत्वे प्रतिक्षणं जनकत्वापत्त्या ईश्वरबुद्ध्युपाधिकानन्तक्रमापत्तिः । बुद्ध्युपरमाभावेन नाशा-भावे तु प्रतिक्षणमभिवर्धमानानश्वरानन्तलौकिकवैदिकवाक्यघटकीभूतानन्तानन्ताऽनुपूर्वीभरभुग्नत्वापत्तिश्च । पश्चाशद्वर्णानामानुपूर्व्याः पूर्वापरत्वादिरूपाया व्यासज्यवृत्तित्वाभावेनाजन्यत्वे वर्णाभेदापत्तिश्चायुक्तेत्य-लम् । अधिकं गुरुप्रभायां द्रष्टव्यम् ।

**कथनं चेति** ।। नोक्तशङ्काऽपगममात्रमिति चार्थः । **व्याकरिष्यतीति** ।। 'सर्वज्ञत्वादीश्वरस्य' इत्यादिनेति शेषः । **तथाऽपीति** ।। ईशप्रत्यक्षत्वेन शाश्वतत्वेऽपीत्यर्थः । **लोके** अधिकारिवर्गे । **प्रवृत्तिरु**च्चारणादिरूपा । **सति सप्तमीति** ।। 'यस्य च भावेन' इत्यनेन सप्तमीत्यर्थः । **वीप्सायामिति** ।। 'नित्यवीप्सयोः' इति सूत्रादिति भावः । **उच्चार्यन्त इति** ।। गृणातेर्निगरणार्थत्वादिति भावः । **नियामकाभावादिति** ।। प्रवर्तकपुरुषाभावादि-**(व्या.टि.)** त्यर्थः । **(सर्वप्रकारेणेति ।) तैरेव पदार्थैरिति** ।। 'वज्रहस्तः पुरन्दरः' इत्यादिश्रुतलक्षणोपेतैरि-त्यर्थः । अन्यथा 'यथापूर्वम्' इति, 'समाननामरूपत्वाच्च' इति श्रुतिसूत्रविरोधः । क्रमादीनामुद्गिरणानुपपत्तेराह- **इत्थम्भूते-ति** ।। प्राचीनक्रमादिमत्त्वं प्राप्ता इत्थम्भूताः, तज्ज्ञापके तृतीयेत्यर्थः । पदार्थैर्वाक्यार्थैश्चेत्यनेनेश्वरस्य व्याख्यातृत्वं च लब्धम् । तत्फलमाह - **अनेनेति** ।। **एतदिति** ।। वक्ष्यमाणं पौरुषेयत्वचोद्यमित्यर्थः । **नाव्याख्या-तादिति** ।। 'कश्छन्दसाम्' इति तदर्थस्यातिगहनत्वोक्तेरित्यर्थः । **अर्थाधिगतिमिति** ।। अनुष्ठेयज्ञानमि-त्यर्थः । अधिपूर्वस्य गमेर्ज्ञानार्थत्वात् । 'ज्ञात्वा कर्म समाचरेत्' इत्युक्तेः । **अर्वाक्तनेति** ।। व्याख्येया-दर्वाचीनेत्यर्थः । **अनादेशिकत्वादिति** ।। आदेश आज्ञा तद्युक्तमादेशिकम्, तत्त्वाभावात् । स्वतन्त्रवक्तुः सत्त्वे स्यात्तदिच्छा नियामिकेति भावः । यद्वा आदेश उपदेशस्तद्वानादेशी तन्मूलकत्वाभावात्, उपदेशपरम्परा-भावादित्यर्थः । **स्वतन्त्रेति** ।। कर्तृपुरुषव्याख्यानमित्यर्थः । निरासप्रकारं दर्शयति- **वेदानामिति** ।। व्याख्यानेऽर्थज्ञानं प्रयोजकं न कर्तृत्वमिति भावः ।

**मूलम् - 'अतः श्रुतित्वमेतासां श्रुता एव यतोऽखिलैः ।**
**जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः ।।**
**मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः ।**
**यतस्ता हरिणा दृष्टाः श्रुता एवापरैर्जनैः ।**
**श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः ।।'**

**(त.मं.)** मुनयः श्रुतीः स्वयमेव पश्यन्ति हि । अतः कथमखिलैः श्रुता एवेत्यत आह- **जन्मेति** ।।

**टीका -** अपौरुषेयत्वे युक्त्यन्तरं चाऽह- **अत इति** ।। श्रुतित्वमिति प्रसङ्गात् स्त्रीलिङ्गनिर्देशः । एतासां श्रुतीनां **श्रुतित्वं** श्रुतिशब्दवाच्यत्वम् **अतः** अपौरुषेयत्वादेवोपपद्यते नान्यथेत्यर्थः । तत्कथमित्यत आह- **श्रुता एवेति** ।। श्रुतत्वाद्धि श्रुतयः । श्रुतत्वं च शब्दमात्रसाधारणम् । ततश्च 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेन अब्भक्षो वायुभक्ष इतिवत्सावधारणं व्याख्येयम् । तथा चाखिलैः श्रुता एव, नतु केनापि कृता इति श्रुतिशब्दवाच्यत्वेन लभ्यत इत्यर्थः । ननु मुनयोऽनधीता अपि पठन्ति, तत्कथमखिलैः श्रुता एवेत्युच्यत इत्यत आह- **जन्मान्तर इति** ।। तुशब्दोऽवधारणे । ननु जन्मान्तरानुभूतं कथं प्रतिभायात्, अस्मास्वदर्शनादित्यत उक्तम्- **वासुदेवेति** ।। तर्हि 'अमुनैवोद्गीर्यन्ते' इति कथमुक्तमित्यत उक्तम्- **भागेनैवेति** ।। तथाऽपि श्रुता एवाखिलैरित्ययुक्तम्, परमेश्वरेणोपाध्यायादनधीतत्वादित्यतः सोपपत्तिकमुक्तस्यापवाद-माह- **यत इति** ।। कृतत्वव्यावृत्तिरेवावधारणप्रयोजनमिति भावः । दृष्टिशब्दवाच्यत्वमप्यपौरुषेयत्वे युक्तिरित्यनेन सूचितम् । तच्च विवरिष्यते ।

एतेनैतदपि प्रत्युक्तम् । काठकं कालापकमित्यादयः समाख्याविशेषाः शाखाविशेषाणां स्मर्यन्ते । न च तेऽध्ययनप्रवचनमात्रनिबन्धनाः । अध्येतॄणां प्रवक्तॄणां चानन्तत्वात् । अतस्तत्कृ-तत्वनिबन्धना एवेति ।

**तज्जन्मन्यश्रुतानां सुप्तेः (सुप्त) प्रबुद्धैरिव कठादिभिर्दृष्टत्वस्य तन्निबन्धन-त्वोपपत्तेः ।**

**(र.टि.) स्त्रीलिङ्गनिर्देश इति ।।** एतासामिति स्त्रीलिङ्गनिर्देश इत्यर्थः । अन्यथा वेदा इति प्रकृतत्वादेतेषामिति भवेदिति भावः । **सावधारणं व्याख्येयमिति ।।** निर्वाच्यश्रुतिपदमिति शेषः । तदर्थं श्रुता एवेत्येवकारः प्रयुक्त इत्युक्तं भवति । **कृतत्वव्यावृत्तिरेवेति ।।** कृतत्वव्यावृत्तिरेव 'श्रुता एव यतः' इति वाक्यगतावधारणप्रयोजनं, न तु दृष्टत्वव्यावृत्तिरित्यर्थः । **एतेनैतदपीति ।।** 'जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः । मुनीनां प्रतिभास्यन्ति' इत्यनेनेत्यर्थः । अत एव व्यवहितत्वादेतस्य एतेनेत्युक्तं हेतुं विवृणोति- **तज्जन्मनीति ।।**

**(रा.टि.)** ननु वेदा इति प्रकृतत्वादेतेषामिति वाच्यं, कथमेतासामिति, तत्राऽह- **श्रुतित्वमिति प्रसङ्गा-दिति ।।** एवकारार्थलाभप्रकारमाह- **श्रुतत्वं चेति ।। लभ्यत इति ।।** अपौरुषेयत्वमिति योज्यम् । **अवधारण इति ।।** श्रुता एवेत्यवधारण इत्यर्थः । **उक्तस्येति ।।** श्रुता एवेत्युक्तस्य **सोपपत्तिकमपवादं** दृष्टत्वरूपमित्यर्थः। **अवधारणेति ।।** श्रुता एवेत्यवधारणेत्यर्थः । नतु दृष्टत्वव्यावृत्तिरिति भावः । **अनेनेति ।।** 'दृष्टयश्चेति तेनोच्यन्ते' इत्यनेनेत्यर्थः । पूर्वोक्तदिशा 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायाद् दृष्टा एव न कृता इति दृष्टत्वकथनेन लाभादिति भावः । **विवरिष्यत इति ।।** 'नच नित्यत्वं विना दर्शनव्यवहारो युज्यते' इत्यनेनेति भावः । यद्वा तदित्यस्य श्रुतिदृष्ट्यादिशब्दवाच्यत्वपरिग्रहः । तच्च 'नचानित्यत्वे श्रुतिर्वेद इत्यादिविशेषशब्दो युज्यते' इत्यादिना विवरिष्यत इत्यर्थः । **समाख्याविशेषा इति ।।** संज्ञाविशेषा इत्यर्थः । 'यौगिकी सञ्ज्ञा समाख्या' इति मीमांसकव्यवहारात् । एतेनेत्युक्तं व्यनक्ति- **तज्जन्मन्यश्रुतानामिति ।।** सुप्तेरिति पञ्चमी । सुप्तितः प्रबुद्धैर्जनैः सुप्तेः प्राक् श्रुतानामनुसन्धानस्येवाधुना मनसा ध्यानकाले विषयीकृतत्वस्य तादृशसंज्ञाविशेषनिमित्तत्वोप-पत्तेरित्यर्थः ।

**(श्री.टि.)** ननु वेदा इति प्रकृतत्वादेतेषाम् इति वक्तव्यम् एतासामिति स्त्रीलिङ्गनिर्देशः किमर्थ इत्यत आह- **श्रुतित्वमिति प्रसङ्गादिति ।।** श्रुतीनां भावः श्रुतित्वम् इति श्रुतित्वोक्त्या श्रुतित्वाधिकरणतया श्रुतीनामपि प्रसक्तत्वादित्यर्थः । **शब्दमात्रेति ।।** लौकिकालौकिकसर्वशब्देत्यर्थः । **अब्भक्ष इत्यादि ।।** अबादिभक्षणस्य सर्वसाधारण्यादम्मात्रभक्षो, वायुमात्रभक्ष इति यथा व्याख्यायते तद्वदित्यर्थः । **व्याख्येयमिति ।।** निर्वाच्यश्रुति-**(श्री.टि.)** पदमिति शेषः । अत एव श्रुता एवेत्येवकारः प्रयुक्त इत्याशयेनाऽह- **तथा चेति ।। तर्हीति ।।** मुनीनामपि प्रतिभासेन तैरप्युद्गीर्यमाणत्वादित्यर्थः । **अनधीतत्वात्** अश्रुतत्वात् । **उक्तस्येति ।।** अखिलैः श्रुता इत्यस्येत्यर्थः । विविच्य कथनात् सोपपत्तिकत्वं द्रष्टव्यम् । ननु 'यतस्ता हरिणा दृष्टाः' इत्ययुक्तम्, 'श्रुता एव यतः' इत्युक्त्या दृष्टत्वस्यापि प्रतिषिद्धत्वादित्यत आह- **कृतत्वव्यावृत्तिरेवेति ।।** न दृष्टत्वव्यावृत्तिः 'श्रुता एव यत इति वाक्यगतावधारणप्रयोजनमित्यर्थः । तथा च 'श्रुता एव यतोऽखिलैः' इत्यत्र अखिलैरित्यस्य हरिव्यतिरिक्तजनपरत्वान्न दोष इति भावः । **विवरिष्यत इति ।।** 'न च नित्यत्वं विना' इत्यादिनेति भावः । **एतेनेति ।।** 'जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः । मुनीनां प्रतिभास्यन्ति' इत्यनेनेत्यर्थः । **समाख्याविशेषाः** सम्यङ्नामविशेषाः । **अनन्तत्वादिति ।।** तथा च तन्नामभिरपि शाखानां व्यवहारः स्यादिति भावः । एतेनेत्युक्तं विशदयति- **तज्जन्मनीति ।। सुप्तप्रबुद्धैरिवेति ।।** आदौ सुप्तानां पश्चात्प्रबुद्धानां यथा पदार्थदर्शनं सहसा भवति तद्वदित्यर्थः । **तन्निबन्धनत्वोपपत्तेरिति ।। तस्मिन्** समाख्याविशेषे निमित्तत्वोपपत्तेरित्यर्थः ।

**(पां.टि.) विवरिष्यत इति ।।** 'न चानित्यत्वे दर्शनव्यवहारः' इत्यत्रेति शेषः ।

**(व्या.टि.)** वेदा इति घञन्तेन प्रकृतानां कथमेतासामिति स्त्रीलिङ्गेन परामर्श इत्यत आह- **श्रुतित्वमिति ।।** क्तिन्नन्तप्रकृत्याः स्त्रीलिङ्गस्मरणादित्यर्थः । सर्वं वाक्यं सावधारणम् इति मत्वा व्यापकमवधारयति- **अपौरुषेय-त्वादिति ।। श्रुतत्वादिति ।।** अत्र श्रवणमध्ययनं, श्रोतव्य इतिवत् । कर्मणि क्तिन्निति भावः । **न कृता इति ।।** 'नरं च नारायणमेव चाऽदौ' इत्यादिवदनभिमतस्यैव व्यावर्तनीयत्वादित्यर्थः । अनेनाध्ययनपरम्परा-रूपापौरुषेयत्वे युक्तिः सूचितेति ज्ञातव्यम् । मूले प्रसादत इत्यनेनाघटितघटनापटीयसी तच्छक्तिः 'पराऽस्य' इति श्रुतिसिद्धेति सूचितम् । मूले न सर्वश इत्यनेन सर्ववेदोद्गिरणापेक्षया अमुनैवेत्यवधारणं युक्तमिति सूचि-तम् । **व्यावृत्तिरेवेति ।।** एवेत्य(न)भिमतदृष्टत्वयोगव्यवच्छेदं व्यवच्छिनत्ति । तेनान्यदृष्टत्वमप्यनिवारितम् । **युक्तिरिति ।।** असाधारण्येन व्यपदेशा भवन्तीति दृष्टा एव न कृता इत्यर्थलाभादिति भावः । **तच्चेति ।।** श्रुतत्वदृष्टत्वयोरुपपत्तित्वम् इत्यर्थः । **विवरिष्यत इति ।।** 'न चानित्यत्वे श्रुतिः' इत्यादिनेति शेषः । **एतेने-ति ।।** अन्यदृष्टत्वाभ्युपगमेनेत्यर्थः । एतदिति निर्दिष्टचोद्यं दर्शयति- **काठकमित्यादिना ।। समाख्येति ।।** यौगिकसंज्ञेत्यर्थः । न च तेषां प्रोक्तप्रत्ययान्तत्वेन प्रवचनादिनाऽन्यथासिद्धिरित्यतोऽतिप्रसङ्गेन दूषयति- **अध्येतॄणा-मिति ।।** दर्शनप्रकारं दर्शयति- **तज्जन्मनीति ।।**

**मूलम् - ‘तदुत्पत्तिवचश्चैव भवेद् व्यक्तिमपेक्ष्य तु ।**
**चेतनस्य जनिर्यद्वदुच्यते सर्वलौकिकैः ।।**
**पुराणानि तदर्थानि सर्गेसर्गेऽन्यथैव तु ।**
**क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ।।’**
**‘वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।**
**अवान्तराभिमानानां देवानां वा व्यपेक्षया ।**
**नानित्यत्वात्, कुतस्तेषामनित्यत्वं स्थिरात्मनाम् ।।’ इति ब्रह्माण्डे ।।**

**(त.मं.)** ‘ऋचः सामानि जज्ञिरे’ इति वेदस्योत्पत्तिवचनात् कथमनुत्पत्तिरित्यतो वक्ति- **तदुत्पत्तीति ।।** तर्हि पुराणोत्पत्तिवचनमप्येवं स्यादित्यत आह- **पुराणानीति ।।** अन्यथैव तु क्रियन्ते शब्दतः । वेदानामित्यादिना सृष्टिवाक्यानां गतेः पुनरुक्तिस्तात्पर्यात् । विषयान्तरस्या-प्युक्त्यर्थं च । वेदानां मुख्याभिमानिन्याः श्रीदेव्या अनुत्पत्तेः अवान्तराभिमानानामित्युक्तम् ।

**टीका -** ‘ऋचः सामानि जज्ञिरे’ इत्याद्युत्पत्तिश्रवणात् कथं वेदानामपौरुषेयत्वमुच्यत इत्यत आह- **तदुत्पत्तीति ।।** व्यक्तिमपेक्ष्यैवेति सम्बन्धः । तुशब्दो विशेषा(षणा)र्थ आदिकालीनां व्यक्ति-मिति । तेन प्रत्यहमप्युपाध्यायैर्व्यज्यमानत्वादुत्पत्तिव्यवहारप्रसङ्ग इति निरस्तम् । उपचारप्रयोगे किं प्रयोजनमित्यतो रूढोपचारोऽयमित्याह- **चेतनस्येति ।।** व्यक्तिमपेक्ष्येत्यनुवर्तते । विष्णुबुद्धि-गत्वयुक्त्या यदि वेदानां नित्यत्वमुच्यते तर्हि पुराणादीनामपि तत्साम्यान्नित्यत्वं स्यात् । ततश्च ‘श्रुतिर्वाव नित्या’ इत्यादिविभागो नोपपद्यत इत्यत आह- **पुराणानीति ।।** पौरुषेयत्वनिमित्त एवानित्यत्वव्यपदेशो न तु विनाशनिमित्त इत्यर्थः । अत एव त्वनित्यानीति सम्बन्धः । अन्यथाऽपि क्रियन्त इत्यनेनार्थव्यत्यासेऽपि प्राप्ते सत्याह- **तदर्था इति ।।** ततश्च पदादिक्रमव्यत्यास एवेत्युक्तं भवति । एतच्च वेदानुसारिणामेव । अन्येषां त्वर्थव्यत्यासस्यापि सद्भावात् । उत्प्रे(क्षा)क्षाऽऽदिमूलो हि तदर्थ इति भावेनोक्तम् । **तदर्थानीति ।।** स वेदार्थ एवार्थो विषयः प्रयोजनं च येषां तानि तथोक्तानि । एतेन हरिश्चन्द्रजनमेजयाद्यनित्यसम्बन्धात् कथं वेदानामनादिनित्यत्वम् इत्यपि निरस्तम् । हरिश्चन्द्रादीनामपि प्रवाहेणानादिनित्यत्वात् । ‘ऋचः सामानि’ इत्यादिवाक्य-व्याख्यानन्तरं ब्रह्माण्डपुराणान्तर्गतमेव प्रदेशान्तरस्थं वाक्यान्तरमपि पठति- **वेदानामिति ।।** देवानां शरीरजन्मापेक्षया इत्यर्थः । शरीरजन्म मुख्याभिमानिदेवतायाः श्रियो नास्तीत्यत उक्तम्- **अवान्तरेति ।। अवान्तरो**ऽमुख्यो**ऽभिमानः** स्वामित्वं परमेश्वराधीनं येषां ते तथोक्ताः । **स्थिरात्मनाम्** अनादिनित्यत्वेन प्रमितानामित्यर्थः । पूर्वोक्तानुवादेन गत्यन्तरप्रदर्शनार्थं निरन्तरमेवैतद्वाक्यमिति केचित् ।

**(र.टि.) एतेन हरिश्चन्द्रेति ।।** ‘पुराणानि तदर्थानि’ इत्युक्त्वा वेदार्थार्थकपुराणविषयभूतहरिश्चन्द्रादीनां प्रवाहतोऽनादित्वप्रतिपादकेन ‘तदर्थाः पूर्वसर्गवत्’ इत्यनेनेत्यर्थः ।

**(रा.टि.)** विशेषार्थ इत्युक्तं व्यनक्ति- **आदीति ।। उपचार इति ।।** जज्ञिर इत्यस्य व्यक्तिरूपामुख्यार्थत्व-वचनमित्यर्थः । **व्यक्तिमपेक्ष्येति ।।** देहयोगोऽत्र व्यक्तिर्ज्ञेया । एवशब्द-तुशब्दयोरन्वयोक्तिः- **अत एव त्वनित्यानीति ।। ततश्चेति ।।** अर्थानामैकरूप्योक्तितश्चेत्यर्थः । अर्थशब्दो द्व्यर्थ इति भावेनाऽह- **विषयः प्रयोजनं चेति ।। हरिश्चन्द्रेति ।।** ‘हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजा पुत्र आस’ इति श्रवणादित्यर्थः । तदुत्पत्ति-वचश्चैवेत्यनेनापौनरुक्त्यायाऽह- **ऋचस्सामानीत्यादि ।।** काङ्क्षितं पूरयति- **देवानां शरीरजन्मापेक्षयेति ।।** कूटस्थानामिति भ्रमनिरासाय वा साध्याविशिष्टतानिरासाय वाऽऽह- **अनादिनित्यत्वेन प्रमितानामिति ।। पूर्वोक्तानुवादेनेति ।।** पूर्वार्धेनेति । **गत्यन्तरेति ।।** उत्तरार्धेनेति भावः । **निरन्तरेति ।।** पूर्वाव्यवहितेत्यर्थः।

**(श्री.टि.) विशेषणार्थ इति ।।** व्यक्तौ किञ्चिद्विशेषणं देयमित्यर्थक इत्यर्थः । तदेव विशेषणं दर्शयति- **आदिकालीनामिति ।। तेनेति ।।** व्यक्तावादिकालीनत्वरूपविशेषणदानेनेत्यर्थः । **प्रत्यहमिति ।।** व्यक्ति-मात्रस्यैव उत्पत्तिव्यवहारनिमित्तत्व इति शेषः । **उपचारप्रयोग इति ।।** व्यक्तिमपेक्ष्योत्पत्तिव्यवहारस्यौप-चारिकत्वादिति भावः । **तत्साम्यात्** विष्णुबुद्धिगत्वसाम्यात् । नोपपद्यत इत्यनन्तरम्, 'इति चेन्न । पुराणानामपि नित्यत्वाङ्गीकारेण इष्टापत्तेः । तर्हि पुराणानामनित्यत्वप्रतिपादिकायाः 'अनित्या वाव स्मृतयः' इति श्रुतेः का गतिः' इत्येतावान् वाक्यशेषः । अनेन श्रुतेः का गतिरुक्तेत्यत आह- **पौरुषेयत्वेति ।। सम्बन्ध इति ।।** एवं सम्बन्धकरणेन पौरुषेयत्वनिमित्त एवानित्यत्वव्यपदेशो न विनाशनिमित्त इति सूचितमिति भावः । **पदा-दीति ।।** पदानां वाक्यानां च यः क्रमस्तद्व्यत्यास एवेत्यर्थः । तथा च न वेदवन्नियतक्रमवत्त्वं पुराणानां, किन्तु पूर्वकल्पस्थपुराणक्रमापेक्षया एतत्कल्पस्थपुराणे पदवाक्यादिक्रमस्य व्यत्यास एव भवतीति भावः । **एतच्चेति ।।** अर्थव्यत्यासाभाववचनमित्यर्थः । **अन्येषां** वेदाननुसारिणां राजसतामसपुराणानाम् । निर्मूला बुद्धिः **उत्प्रेक्षा** । आदिपदेन विप्रलम्भसङ्ग्रहः । **येषां तानीति ।।** वेदप्रतिपाद्यप्रतिपादकानि वेदप्रयोजनप्रयोजनानी-त्यर्थः । **एतेनेति ।।** 'पुराणानि तदर्थानि' इत्युक्त्वा वेदार्थार्थकपुराणविषयीभूतहरिश्चन्द्रादीनां प्रवाहतोऽ-नादिनित्यत्वप्रतिपादकेन 'तदर्थाः पूर्वसर्गवत्' इत्यनेनेत्यर्थः । **अनित्यसम्बन्धादिति ।।** अनित्यार्थ-प्रतिपादकत्वादित्यर्थः । तथा च प्रतिपाद्यानामनित्यत्वे तत्प्रतिपादकस्य वेदस्य कथं नित्यत्वमिति भावः । एतेनेत्युक्तं विशदयति- **हरिश्चन्द्रादीनामपीति ।।** 'वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया' इत्यस्यैकानुपूर्वी-गतत्वे 'तदुत्पत्तिवचश्चैव' इत्यनेन पौनरुक्त्यं स्यादित्यभिप्रेत्यावतारयति- **ऋचस्सामानीत्यादीति ।। प्रदेशान्त-रस्थमिति ।।** स्थानान्तरस्थम् अध्यायान्तरस्थमित्यर्थः । **देवानां** वेदाभिमानिनाम् । 'कुतस्तेषामनित्यत्वं स्थिरात्मनाम्' इत्यत वेदा नित्याः स्थिरात्मत्वादित्यनुमानमुक्तं भवति । तदयुक्तम् । स्थिरात्मत्वं हि स्थिर-**(श्री.टि.)** स्वरूपत्वं, तच्च नित्यत्वमेव, अतः साध्याविशिष्टतेत्यत आह- **स्थिरात्मनामिति ।।** तथा च नित्यत्वेन प्रमितत्वं हेतुः, तेन नित्यत्वं साध्यत इति न साध्याविशिष्टतेति भावः । नरहरितीर्थानां व्याख्यानमनु-वदति- **पूर्वोक्तेति ।। निरन्तरमिति ।।** अन्तरं व्यवधानं तच्छून्यं **निरन्तरम्** एकानुपूर्वीगतमेवेत्यर्थः । तथा च वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षयेत्येव न, किन्त्ववान्तराभिमानानां देवानां वा व्यपेक्षया भवेयुरित्यर्थः।

**(व्या.टि.)** एवकारो भिन्नक्रम इत्युपेत्यान्वयं दर्शयति- **अपेक्ष्यैवेति ।।** विशेषं दर्शयति- **आदिकालीना-मिति ।।** ब्रह्मादीनामिति शेषः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः । यथोक्तं तन्त्रसारसङ्ग्रहे 'व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य' इति । **तेनेति ।।** विशिष्टव्यक्तेरेवोपचारनिमित्तत्वेनेत्यर्थः । तत्राप्युपचारनिमित्तमाह- **अनुवर्तत इति ।।** अनेन, एक एव क्रमः । स ईश्वरबुद्ध्युपाधिक एव, न जीव-बुद्ध्युपाधिकः । स ईश्वरेणाऽदिकाल इव प्रत्यहमप्युपाध्यायैर्व्यज्यते । इयांस्तु विशेषः । आदिकालीना व्यक्तिरुत्पत्तिव्यवहारनिमित्तं न प्रात्याहिकीति, वेदस्य कौटस्थ्यमभिसंहितमुद्घाटितं वेदितव्यम् । प्रसङ्गस्येष्टापत्तिं मनसि निधायानित्यत्वव्यपदेशे कृतकत्वं निमित्तयति- **पौरुषेयत्वेति ।।** अन्वयप्रदर्शनेन तदर्थं मूलमारोहयति- **अत एवेति ।।** तथा च किंविषयमन्यथाकरणमित्यतः पदवाक्यविषयमित्याह- **ततश्चेति ।।** अर्थव्यत्या-साभावादित्यर्थः । ननु किं पुराणमात्रस्यार्थव्यत्यासाभाव इत्यतो नेत्याह- **एतच्चेति ।।** उत्प्रेक्षादीत्यादि-पदेनासुरव्यामोहनं गृह्यते । अर्थपदस्य विषयप्रयोजनोभयार्थत्वं, तच्छब्देन बहुव्रीहिं च मत्वा व्याचष्टे- **स इति ।।** तदर्था इति वाक्यशेषे तच्छब्देन पुराणं परामृष्टम्, अधुना वेदपरामर्शेन तस्यानित्यसंयोगशङ्का परिहृतेत्याह- **एतेनेति ।।** 'हरिश्चन्द्रो ह वैधसः' 'जनमेजयस्य यज्ञान्ते' इत्यादीनामिति शेषः । 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमे हरिश्चन्द्रेति रूपं साधु । **प्रवाहेणेति ।।** यथोक्तम् 'समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च', 'धाता यथापूर्वमकल्पयत्' इति च । पुनरुक्तिपरिहारायाऽह- **प्रदेशान्तरस्थमिति ।।** देवाना-मित्यस्यापेक्षितं पूरयति- **शरीरजन्मापेक्षयेति ।। श्रिय इति ।।** 'असृत्युपक्रमात्' इति सूत्रादिति भावः । ननु श्रियो मुख्यतो वेदाभिमानित्वमसिद्धमिति वाच्यम् । 'वाग् वै सरस्वती' इति 'वाग्देवी जुषताम्' इति 'चोदयित्री सूनृतानाम्' इति च सरस्वत्या वाग्देवतात्वोक्तेः । न च लक्ष्म्याः किमायातमिति वाच्यम् । 'मन्त्रादिवद्वा विरोधः' इति न्यायेन नीचदेवतावाचकानाम् उच्चदेवेषु प्रवृत्तेः । 'सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीः सरस्वती' इति लक्ष्मीनामसु पाठाच्च । तन्नियमे तन्नियामकनियम्यत्वस्य कैमुत्यसिद्धत्वाच्च । 'तदधीनत्वादर्थवत्' इति न्यायेन तच्छब्दस्य तत्स्वामिन्येव मुख्यत्वाच्च ।

प्रवृत्तिनिमित्तपौष्कल्याच्च । स्थिरात्मनामिति विशेषणं हेतुगर्भं मत्वा साध्यावैशिष्ट्यपरिहाराय व्याचष्टे- **प्रमितानामिति ॥ निरन्तरमेवेति ॥** तत्पक्षेऽधिकविधानान्न पुनरुक्तिः ।

**मूलम् - नचानित्यत्वे श्रुतिर्वेद इत्यादिविशेषशब्द उपपद्यते ।**

**'वेदास्ते नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः ।**

**आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदा ॥' इति महावराहे ।**

**नच नित्यत्वं विना वेदानां दर्शनव्यवहारो युज्यते ।**

**(त.मं.)** श्रुतिवेदादिशब्दव्यवहारान्यथाऽनुपपत्तितर्केणापि नित्यत्वं सिद्ध्यतीत्याह- **न चा-नित्यत्व इति ॥ नित्यविन्नत्वात्** नित्यलब्धत्वात् । **विद** लाभ इति धातोः । आम्नायः सम्प्र-दायः । तत्सम्बन्धी चाऽम्नाय एव । 'तान् वा एतान् सम्पातान् विश्वामित्रः प्रथममपश्यत्' इति दर्शनव्यवहारः ।

**टीका -** 'अतः श्रुतित्वमेतासाम्' इति यदुक्तं तदुपलक्षणपरमित्यभिप्रायेण व्याचष्टे - **न चानित्यत्व इति ॥** अनित्यत्वे वेदानाम् । आदिग्रहणेनाऽम्नायशब्दो गृह्यते । विशिष्यत इति **विशेषो**ऽसाधा-रणः ।

श्रवणकर्मत्वादौ साधारणेऽपि यदेषामेव श्रुतिवेदाऽम्नायशब्दवाच्यत्वं, तत् नित्यत्वं विनाऽनुप-पद्यमानं तद् गमयति । तथाहि । श्रुतिशब्दे तावदुक्तम् । वेदशब्दश्च सत्तार्थाद् विदेः पचाद्यचि कृते कर्तरि निष्पन्नः । सत्ता च सर्वार्थसाधारणी । असाधारण्येन व्यपदेशा भवन्ति । अतो नित्यं विद्यत इति लभ्यते । तथा आम्नायशब्द आङ्पूर्वात् 'म्ना अभ्यासे' इत्यस्मात्कर्मणि घञि कृते सिद्धः । अभ्यासश्चैकप्रकारासकृदुक्तिः । तत्कर्मत्वं च शब्दान्तरसाधारणम् । ततो भूतभवद्भविष्यद्भिरखि-लैरप्येकप्रकारेणैव पठ्यन्त इति लभ्यते । एतदेवानादिनित्यत्वमिति ।

स्यादेतदेवं यदि श्रुत्यादिशब्दानामेतदेव निर्वचनं स्यात् । सत्यपि च तस्मिन्निदमेव चासाधारण्ये निमित्तं स्यात् । सम्भवति चान्यदपीति चेत् । सत्यम् । तथाऽपि पौराणिकमिदमेव आदरणीयमिति भावेन तत्पुराणवाक्यं पठति- **वेदास्त इति ॥ ते** प्रसिद्धाः । **नित्यविन्नत्वात्** नित्यं विद्यमान-त्वात् । अकर्मकत्वात् कर्तरि क्तः । 'गत्यर्थाकर्मक' इति स्मरणात्, 'विद्यतेर्विन्न इष्यते' इति च । अनन्यथापाठादित्यत्रापि अखिलैरिति वर्तते । आम्नाय इत्येकवचनं बहुवचनार्थे 'सुपां सुलुक्' इति वचनात् । प्रलये विनाशात्कथं नित्यविन्नत्वादि इत्यत उक्तम्-**ईशेति** । 'यतस्ता हरिणा दृष्टाः' इत्यनेन सूचितां युक्तिं विवृणोति- **न च नित्यत्वं विनेति ॥** अस्ति तावदीश्वरादयो वेदस्य द्रष्टार इत्यादिव्यवहारः । 'स इमं मन्त्रमपश्यत्' इत्यादिश्रुतेः । दर्शनं च पूर्वसिद्धस्य भवति । न हि यो यत्करोति स तत् पश्यतीत्युच्यते । अतस्तदन्यथाऽनुपपत्त्याऽपि नित्यत्वं सिद्धमिति ।

**(र.टि.)** शब्दविशेष इत्युक्ते श्रुत्यादिशब्दानां नासाधारण्यं प्राप्नोति । तल्लाभाय विशेषशब्दस्य पूर्वप्रयोग इति भावेन व्याचष्टे- **विशिष्यत इति ॥** ननु वेदस्य जन्यत्वेऽपि पदवाक्यादिक्रमस्यैकप्रकारत्वेनाऽम्नायशब्दवाच्यत्वं सम्भवति । तथा च न तदन्यथाऽनुपपत्त्याऽनादिनित्यत्वं सिद्ध्यतीत्यत आह- **एतदेव चेति ॥**

**(रा.टि.) तावदुक्तमिति ॥** 'श्रुता एवाखिलैर्जनैः' इत्येतद्व्याख्यान इति भावः । **पचाद्यचीति ॥** 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रे पचादेराकृतिगणत्वेनात्राप्यच्प्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे च कृते निष्पन्न इत्यर्थः । **कर्मणि घञीति ॥** 'अकर्तरि च कारके सञ्ज्ञायाम्' इति सूत्रेण घञि कृते 'आतो युक् चिण्कृतोः' इति युकि च सति सिद्ध इत्यर्थः । **गत्यर्थेति ॥** 'गत्यर्थाकर्मकश्लिषशीङ्-स्थासवसजनरुहजीर्यतिभ्यश्च' इति सूत्रात् क्तप्रत्यये 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति नत्वे रूपमिति भावः । **इति चेति ॥** स्मरणादित्यनुषङ्गः । **इति वचनादिति ॥** 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति सूत्रे सुर्भवति लुग्भवतीत्याद्युक्तेरत्र बहुवचनार्थे एकवचनं भवतीत्यर्थः । **स इमं मन्त्रमपश्यदिति ॥** ध्यानकाले मनसा

ज्ञातवानित्यर्थः ।

**(श्री.टि.)** शब्दविशेष इत्युक्ते श्रुत्यादिशब्दानां नासाधारण्यं प्राप्नोति, तल्लाभाय विशेषशब्दस्य पूर्वप्रयोग इति भावेन व्याचष्टे- **विशिष्यत इतीति ।। श्रवणकर्मत्वादाविति ।।** श्रुतिशब्दप्रवृत्तिनिमित्तं श्रुतत्वं, तच्च श्रवणकर्मत्वमेवेत्यर्थः । **नित्यत्वमिति ।।** अनादिनित्यत्वमित्यर्थः । अनादित्वम् अपौरुषेयत्वम् । **श्रुतिशब्दे तावदुक्तमिति ।।** अपौरुषेयत्वरूपानादित्वगमकत्वम् 'अतः श्रुतित्वमेतासां श्रुता एव यतोऽखिलैः' इत्यनेनोक्तमित्यर्थः । **वेदशब्दश्चेति ।।** विद सत्तायाम्, अस्मात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रेणास्य पचादिगणस्थत्वाद् विद्यत इति कर्त्रर्थे अच्प्रत्यये 'हलन्त्यम्' इति चकारलोपे 'पुगन्तलघूपधस्य च' पुगन्तस्य लघूपधस्य च इको गुणः स्यादिति सूत्रेण इकाररूपलघ्वक्षरोपधस्य इकारस्य एकाररूपे गुणे वेदेति रूपनिष्पत्तिरित्यर्थः । **सर्वार्थेति ।।** घटादिसर्वपदार्थेत्यर्थः । **आम्नायशब्द इति ।।** आङ्पूर्वात् 'म्ना अभ्यासे' अस्माद् आम्नायते अभ्यस्यते इति कर्मार्थे 'अकर्तरि च कारके सञ्ज्ञायाम्' इति सूत्रेण घञ्प्रत्यये घकार-ञकारयोर्लोपेन अकारमात्रे उर्वरिते सति 'आतो युक् चिण्कृतोः' आदन्तधातोः युगागमः स्याच्चिणि ञिति णिति कृति च प्रत्यये परे इति सूत्रेण घञ्प्रत्ययस्य ञित्त्वात् तस्मिन् परे युगित्यागमे उक् इत्यस्य लोपे आम्नायेति सिद्ध्यतीत्यर्थः ।

**(श्री.टि.) शब्दान्तरेति ।।** लौकिकशब्देत्यर्थः । **एकप्रकारेणैवेति ।।** तथा च पदवाक्यादिक्रमस्यैकप्रकारेण पठ्यमानत्वमेवासाधारण्ये निमित्तमिति भावः । ननु कथमनेनानादिनित्यत्वलाभ इत्यत आह- **एतदेवेति ।।** भूतभवद्भविष्यद्भिरखिलैरेकप्रकारेण पठ्यमानत्वमेवेत्यर्थः । **अन्यदपीति ।।** श्रुतिवेदाम्नायशब्दानामसाधारण्ये आप्रलयं विद्यमानत्वमपि निमित्तं सम्भवतीत्यर्थः । ननु 'ते वेदाः श्रुतय आम्नायः' इत्येतेषामनुवादकोटौ प्रवेशे विधेयाभावाद्वाक्यं न्यूनमापद्यत इत्याशङ्क्याऽह- **ते प्रसिद्धा इति ।।** अग्निमीळ इत्याद्या वाक्यविशेषा इत्यर्थः । तथा च त इत्येतावदेवानुवादो, वेदाः श्रुतय आम्नाय इत्येतद्विधेयम् । एवं च, ते- प्रसिद्धा वाक्यविशेषा, नित्यविन्नत्वाद्वेदा इत्यादि योज्यमित्याशयः । **अकर्मकत्वादिति ।।** विद सत्तायाम् इति धातोः सत्तार्थाद् विद् इत्यस्मात् 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' एभ्यः कर्तरि क्तः स्याद् भावकर्मणोश्च इति सूत्रेण विदधातोरकर्मकत्वात्कर्तरि क्तप्रत्यये ककारस्य लोपे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' रेफदकाराभ्यां परस्य निष्ठातः 'क्तक्तवतू निष्ठा' इति स्मरणात् निष्ठाप्रत्ययभूतक्तप्रत्ययतकारस्य नकारः स्यात्, पूर्वदकारस्य च नकारः स्यादिति सूत्रेण दकारतकारयोर्नकारादेशे विन् न विन्नेति रूपमित्यर्थः । नन्वत्र 'पुगन्तलघूपधस्य च' इत्यनेन इकारस्य एकाररूपे गुणे वेन्न इति स्यादिति चेन्न । 'क्ङिति च' किति ङिति च प्रत्यये परे इको गुणवृद्धी न स्त इति गुणस्य प्रतिषिद्धत्वेन क्तप्रत्ययस्य कित्त्वाद्गुणाभाव इत्यवधेयम् । ननु विद्धातोः क्तप्रत्यये तस्य सेट्त्वादिडागमे विद् इत विदित इति स्यादित्यत आह- **विद्यतेरिति ।।** विद्यतेर्विद्यमानार्थाद्धातोर्विन्न इति रूपमिष्यत इत्यर्थः । तथा च वार्तिककारेण विन्न इत्येवोक्तत्वाद्विन्न इति साध्विति भावः । **एकवचनं बहुवचनार्थ इति ।।** वेदाः श्रुतय इति प्रायपाठादिति भावः । तत्र ज्ञापकमाह- **सुपामिति ।।** 'सुपां सुलुक्-पूर्वसवर्णाऽऽच्छेयाडाड्यायाजालः' सुश्च लुक् च पूर्वसवर्णश्च आश्च आच्च शे च या च डा च ड्या च याच्च आल् च ते तथा, सुपामेत आदेशाः स्युरिति सूत्रार्थः । यथा 'ऋजवः सन्तु पन्थाः' इत्यत्र पन्थान इति प्राप्ते बहुवचनस्य जसः सु इत्येकवचनादेशे पन्था इति भवति, एवं प्रकृतेऽप्याम्नायशब्दाद् बहुवचनस्य जसः सु इत्येकवचनादेशे आम्नाय इति युक्तमित्यर्थः । **तदन्यथाऽनुपपत्त्येति ।।** दर्शनव्यवहारान्यथाऽनुपपत्त्येत्यर्थः ।

**(व्या.टि.) उपलक्षणपरमिति ।।** अपौरुषेयत्वे युक्तित्वेन यत् श्रुतिशब्दव्याख्यानं तद्वेदादिशब्दोप-लक्षणश्रुतिशब्दपरं, न तन्मात्रपरमित्यर्थः । तेनोपलक्षणमित्येव वक्तव्ये परमित्यधिकोक्तिरिति परास्तम् । **विशिष्यत इति ।।** विपूर्वाच्छिषेः कर्मणि घञिति भावः । **पचाद्यचीति ।।** पचादिलक्षणोऽच् पचाद्यच् । लघूपधगुण इतिवल्लक्षणलक्ष्ययोरभेदव्यपदेशः । **कर्तरीति ।।** 'कर्तरि कृत्' इति सूत्रादिति भावः । अचीत्युप-लक्षणम् । लघूपधगुणे चेत्यपि ग्राह्यम् । **असाधारण्येनेति ।।** प्रवृत्तिनिमित्तस्येति शेषः । घञीत्युपलक्षणम् । 'आतो युक्' इति युकि चेत्यपि ग्राह्यम् । नन्वनादिनित्यत्वं वेदापौरुषेयत्ववादिना वक्तव्यम् । तत्किमनेनेत्यत आह- **एतदेवेति ।।** सर्वदैकप्रकारत्वमेवेत्यर्थः । **तस्मिन्निति ।।** उक्तनिर्वचनेऽपीत्यर्थः । **असाधारण्ये** शब्दा-साधारण्ये । **अन्यदपीति ।।** निर्वचनान्तरम्, उक्ते वा निर्वचनेऽसाधारण्ये निमित्तान्तरमित्यर्थः । **अकर्मक-(व्या.टि.) त्वादिति ।।** विद्यतेरिति शेषः । ननु 'वित्तो भोगप्रत्यययोः' इति निपातनात् कथं विन्नेति भिन्नं रूपमित्यत आह- **विद्यतेरिति ।।** एतद्वार्तिकप्रयोगात् 'रदाभ्याम्' इति निष्ठानत्वमिति भावः । कश्चित्तु विद्यतेरिति श्यना निर्देशमविज्ञाय विद्यमानार्थादिति व्याख्यत् । अनन्यथापाठादित्यत्र

कर्तुरश्रवणादाह- **वर्तत इति ॥** अनुवर्तत इत्यर्थः । 'द्व्येकयोः' इत्येकत्वे तद्विधानात् कथं बहुवचनार्थ इत्यत आह- **सुपामिति ॥** सुपां सुर्भवतीति बहुवचनस्य एकवचनादित्यर्थः । यथा 'ये ते पन्थाः सवितः' इति । मूले 'ईशबुद्धिस्थिताः' इति ईशबुद्धेरविनाशात् तन्निमित्तक्रमस्याप्यविनाश इति सूचितम् । विवरणप्रकारं दर्शयति- **अस्ति तावदित्यादिना ॥** ईश्वरादय इत्यादिपदेन देवर्ष्यादयः, इत्यादीत्यादिपदेन अपश्यन् दर्शयाश्चकार द्रष्टा इत्यादिव्यवहारः, अपश्यदित्यादीत्यादि-पदेन 'ते देवा एतद्यजुरपश्यन् तस्य ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाश्चकार' इत्यादयः । दर्शनं च कथं कृतकत्वं विरुणद्धीत्यत आह- **दर्शनं चेति ॥** ननु कृत्युद्देश्यस्यापि दर्शनं भवत्वित्यत आह- **न हीति ॥** व्यवहाराभावेन तन्निश्चय इति भावः । **नित्यत्वमिति ॥** दर्शनान्यथाऽनुपपत्त्या पूर्वसिद्धत्वं, विनाशकाभावाच्च नित्यत्वं सिद्धमित्यर्थः ।

**मूलम् - न च वर्णपदादीनामनित्यत्वं वक्तुं युक्तम् । सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात् । न च घटादिवत् संस्कारमात्रत्वं वक्तुं युक्तम् । प्रत्यभिज्ञा-विरोधस्योक्तत्वात् । पुराणानामप्यन्यथाशब्दरचनमेवानित्यत्वम् ।**

**(त.मं.)** न तावद् वर्णपदादीनां नित्यत्वम् । योग्यत्वे सति नित्यमनुपलभ्यमानत्वात् । अतस्तत्क्रमात्मकस्य वेदस्य कथं नित्यत्वमित्यत आह- **न च वर्णेति ॥** आदिशब्दात् स्वराः । घटे नष्टे सत्यपि बुद्धौ तत्संस्कारप्रतीतेः वर्णादीनामपि तथा स्यादित्यत आह- **न च घटेति ॥** एवं चेत् पुराणादीनामपि नित्यवर्णक्रमात्मकत्वान्नित्यत्वं स्यात् । वेदार्थवतां तेषां सर्गान्तरेऽप्यर्थस्य च व्यत्ययासम्भवादित्यत आह- **पुराणानामिति ॥** अन्यथाशब्दरचनमेवानित्यत्वे हेतुः, न वर्णपदानित्यत्वम् । नाप्यर्थव्यत्ययेनानित्यत्वमिति विशेषः ।

**टीका -** अस्तु नित्यविन्नत्वादिकं, तदप्याप्रलयमेव, तावताऽप्यसाधारणोक्त्यादिसम्भवात् । ततो वेदाः प्रलये विनश्यन्ति, सर्गे पुनरन्ये जन्यन्त इत्यङ्गीकारे न कोऽपि विरोध इत्यत आह- **न चेति ॥** वर्णानां पदानां च । आदिपदेन वाक्यानां ग्रहणम् । वर्णादीनामित्येव सिद्धे यत्पदादिग्रहणं तद्वर्णानां कौटस्थ्याभावोऽनित्यत्वं, पदादीनां तु क्रमादिव्यत्यय इति सूचयितुम् । अनित्यत्वं प्रलय इति शेषः । तथा सर्गे जन्मापि ग्राह्यम् । एतेन 'नित्या वेदाः' इत्युक्त्वा यत्पुनः 'समस्ताश्च शाश्वताः' इत्युक्तं तत्प्रकारान्तरेण व्याख्यातं भवति- न केवलं वर्णमात्रं, नापि पदादिमात्रं, किन्तु समस्ताश्च यथायोगं शाश्वताः । 'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति । कुतो न युक्तमित्यत आह- **सर्वज्ञत्वादिति ॥ तद्बुद्धौ** तन्मनसि । एतच्चोत्तरग्रन्थे स्पष्टं भविष्यति ।

नन्वीश्वरबुद्धौ सर्वदा प्रतीयमानत्वं नाम ईश्वरेण सर्वदा वर्तमानतयाऽनुभूयमानत्वं विवक्षितं, तस्यैवोक्तार्थसाधकत्वात् । तच्चासिद्धम् । तथा हि 'विष्णुबुद्धिगाः', 'ईशबुद्धिस्थिताः सदा' इति पुराणवाक्याद्वा तत्सिद्धिः, सर्वज्ञत्वयुक्त्या वा । नाऽद्यः । तस्यान्यथासिद्धेः, वेदानुभवजनित-संस्कारस्य बुद्धिगतत्वमात्रेण बुद्धिगा इत्युक्तिसम्भवात् । नचैवं लक्षणाप्रसङ्गो दोषः । वेदपदस्य तदनुभवार्थत्वाङ्गीकारेऽपि तत्साम्यात् । वेदानामेव साक्षान्मनोगतत्वासम्भवात् । एवमङ्गीकारे जन्मवाक्यान्यप्यनुगृहीतानि भवन्ति । अत एव बुद्धिगा इत्यस्य ज्ञानविषया इति व्याख्यान-मप्ययुक्तम् । न च लाक्षणिकप्रयोगे प्रयोजनं वाच्यम् । नष्टेऽपि घटादौ घटो देवदत्तस्य बुद्धौ वर्तत इत्यादिप्रयोगदर्शनेन रूढलक्षणात्वात् । न द्वितीयः । घटादीनामपि तथात्वप्राप्तेः । विद्य-मानार्थाननुभवे हि सर्वज्ञत्वहानिः स्यात् । अत्राऽऽद्यं तावदङ्गीकुर्मः । ननूक्तं पुराणवाक्य-मन्यथासिद्धमिति तत्राऽह- **न च घटादिवदिति ॥** घटादेरिव वेदानामपि संस्कारस्य बुद्धिगतत्वमात्रं पुराणवाक्यार्थत्वेन वक्तुं न युक्तम् । किन्त्वीश्वरेण सर्वदा वर्तमानतयाऽनुभूयमानत्वमेव । कुत इत्यत आह- **प्रत्यभिज्ञेति ॥** यदि वेदाः प्रलये विनष्टास्तत्संस्कारमात्रं विष्णुबुद्धौ वर्तत इति विष्णुबुद्धिगा इत्यस्यार्थः स्यात्, तर्ह्युत्तरवाक्ये ये पूर्वकल्पे स्थिता एत एव सर्गे सर्गेऽमुनोद्गीर्यन्त इत्युक्तप्रत्यभिज्ञाविरोधः स्यादित्यर्थः । **उक्तत्वात्** उक्तप्रायत्वात् । नच सादृश्यात् 'एत एव' इत्युक्तमिति वाच्यम् । तथा सत्यपौरुषेयत्वसिद्धेर्दुर्वारत्वात् । उपलक्षणं चैतत् । जन्मवाक्यगति-कथनविरोधाच्चेत्यपि द्रष्टव्यम् ।

एवं तर्हि सर्वज्ञत्वयुक्त्युपन्यासः किमर्थ इति चेत्, पुराणकृता (शाश्वताः) विष्णुबुद्धिगा इतीश्वरेण सर्वदा वर्तमानतया अनुभूयमानत्वमुक्तम्। तत्र प्रमाणाकाङ्क्षायां तदभिप्रेता युक्तिरियमुप-वर्णितेत्यदोषः। तथाहि-क्रमविशिष्टा वर्णा एव वेदो, नतु घटादिवदर्थान्तरम्। क्रमस्तु बुद्धिनिमित्त एव नतु स्वतोऽस्ति। ततश्च सर्वेषां सर्वथा वर्णविषयविवक्षितक्रमोपाधिभूतबुद्ध्युपरम एव वेद-विनाशो वक्तव्यः। नतु घटादीनामिवापरः। नचेश्वरस्य तथाविधबुद्ध्युपरमो युज्यते। स हि देवदत्तस्येव विषयान्तरसञ्चारनिमित्तो वा स्यात्, विस्मरणनिमित्तो वा। नोभयथाऽपि सम्भवति, तस्य सर्वदा सर्वज्ञत्वात्। अतो वेदाः सर्वदेश्वरेण वर्तमानतयाऽनुभूयन्त इति सिद्ध्यतीति। इयं युक्तिः पुराणकृतोऽभिप्रेतेति कुतोऽवगम्यत इति चेत्। 'पुराणानि तदर्थानि' इत्युत्तरवाक्येषु पुराणानामपि नित्यत्वमाशङ्क्य परिहारात्। एतद्युक्त्यभिप्रायाभावे तच्छङ्काबीजाभावा-दित्याशयवान् उत्तरवाक्यार्थम् अनुवदति- **पुराणानामपीति ॥**

नन्वेवं वेदपुराणयोर्नित्यत्वे पुराणानां पुना रचनं, न वेदस्य इत्येतत् कुत इति चेत्, प्रमाण-प्रश्नश्चेदुक्तादेव पुराणवाक्यादेरिति ब्रूमः। प्रयोजनप्रश्नस्त्वयुक्तः। ईश्वरप्रवृत्तेः सर्वत्र स्वप्रयोजन-हीनत्वात्। परप्रयोजनानि तु सूक्ष्माण्युत्प्रेक्षितुं वयं न प्रभवामः। भगवानाचार्योऽपि इदानीं प्रयोजनाभावान्नावादीदिति।

**(र.टि.)** असाधारणोक्त्यादीत्यादिपदेन ईशबुद्धिस्थितत्वादिग्रहणम्। 'सर्वज्ञत्वात्' इत्यादिवाक्योक्तहेतोः पुराणोक्तत्वस्य 'तथा च व्याकरिष्यति' इत्यनेन प्राग् दर्शितत्वात् 'न च वर्णपदादीनाम्' इति प्रतिज्ञातार्थस्यापि पुराणोक्तत्वमाह- **एतेनेति ॥** कथं 'शाश्वताः' इत्यनेन विवक्षितप्रतिज्ञाऽर्थलाभ इत्यत उक्तम्- **यथायोग-मिति ॥** ननु तर्हि शाश्वतपदस्यानेकार्थत्वान्न वर्णपदादिष्वनुगतैकसाध्यलाभ इत्यत आह- **सर्गेऽपीति ॥** ननु वर्णानां कूटस्थनित्यत्वं प्रकृतानुपयुक्तं कस्मादुच्यत इति चेन्न। वर्णानामेव ध्वंसप्रतियोगित्वेन तदात्मकवेदे 'तद्बुद्धौ' इत्यादिनोक्तहेतोरसिद्धिप्रसङ्गात्। तत्परिहारार्थं मूले वर्णग्रहणमिति ज्ञातव्यम्। ननु विष्णुबुद्धिगा ईशबुद्धिस्थिता इत्यत्र बुद्धिपदस्य ज्ञानार्थकत्वमेवाङ्गीकृत्य विषयत्वेन गमनं स्थितिरिति व्याख्याने न वेदपदस्य लाक्षणिकत्वमिति वैषम्यमित्याशङ्क्य परिहरति- **अत एवेति ॥** असत्त्वेऽपि वेदानामतीतत्वेन ज्ञानविषयत्व-सम्भवेन तेषां ज्ञानविषयत्वमात्रप्रतिपादकत्वेन विष्णुबुद्धिगा इत्यस्य पूर्ववदन्यथासिद्धेरित्यर्थः। **वेदानामपि संस्कारस्येति ॥** अनेन 'घटादिवत्संस्कारमात्रत्वम्' इति मूलम्, घटो देवदत्तबुद्धिग इत्यत्र यथा देवदत्तबुद्धिगस्य न घटत्वं, न वा ह्यनुभवत्वं, किन्तु तदनुभवजनितसंस्कारमात्रत्वम्, तथा वेदा विष्णुबुद्धिगा इत्यत्रापि विष्णु-बुद्धिगस्य न वेदत्वं, नापि तदनुभवत्वं, किन्तु तदनुभवजनितसंस्कारमात्रत्वमिति योजितमिति ज्ञातव्यम्। **इत्युक्तप्रत्यभिज्ञाविरोधः स्यादिति ॥** तदेवेदमित्युक्तप्रत्यभिज्ञानस्य भिन्नविषयत्वेन प्रकृते तद्विरोधासम्भ-वादिति भावः। **उक्तप्रायत्वादिति ॥** 'अमुनैवैत उद्गीर्यन्ते' इति वाक्यस्य पूर्वमुदाहृतत्वादिति भावः।

**(रा.टि.) नित्यविन्नत्वादिकमिति ॥** नित्यं विद्यमानत्वश्रुतत्वादिकमित्यर्थः। प्रकारान्तरेणेत्युक्तं व्यनक्ति- **न केवलमिति ॥ यथायोगमिति ॥** कौटस्थ्यादिरूपतयेत्यर्थः। फलितार्थमाह - **सर्गेऽपीति ॥** अपौन-रुक्त्यायाऽह- **तन्मनसीति ॥** मनोऽभिव्यक्तस्वरूपज्ञानविषयत्वादित्यर्थः। **उत्तरग्रन्थ इति ॥** 'अत आकाश-गुणे शब्दे' इत्यादाविति भावः। नचेत्युत्तरग्रन्थ इति वाऽर्थः। **उक्तार्थेति ॥** 'नानित्यत्वं वक्तुं युक्तम्' **(रा.टि.)** इत्युक्तार्थेत्यर्थः। अन्यथासिद्धेरित्युक्तं व्यनक्ति- **वेदेति ॥ तदनुभवार्थत्वेति ॥** वेदस्य नित्यत्व-मित्यस्य वेदानुभवस्य नित्यत्वमित्यर्थाङ्गीकार इति वा, वेदस्य मनोगतत्वं नाम वेदानुभवस्येश्वरमनोगतत्वमित्य-र्थाङ्गीकारेऽपि इति वाऽर्थः। कुत एवमङ्गीकार इत्यत आह- **वेदानामेवेति ॥ एवमङ्गीकार इति ॥** वेदानुभव-जनितेत्यादिनोक्तार्थाङ्गीकारे 'ऋचस्सामानि जज्ञिरे' इत्यादिवाक्यानि मुख्यार्थतयाऽनुगृहीतानि भवन्ती-त्यर्थः। **अत एवेति ॥** जन्मवाक्यबलेन संस्कारस्य बुद्धिशब्दितमनोगतत्वेनोपपन्नत्वादेवेत्यर्थः। सर्वज्ञत्वयुक्त्येति पक्षं निराह- **न द्वितीय इति ॥ तथात्वेति ॥** सर्वदा वर्तमानतयाऽनुभूयमानत्वप्राप्तेरित्यर्थः। घटाद्यनुभव एव नेति ब्रूम इत्यत आह- **विद्यमानार्थेति ॥** सर्गे सर्ग इति वाक्यमुपादाय प्रत्यभिज्ञाविरोध इति कण्ठतोऽनुक्तेराह- **उक्तत्वादुक्तप्रायत्वादिति ॥ तथा सतीति ॥** सादृश्याभ्युपगमे सति सदृशानुपूर्वीकत्वस्यैवापौरुषेय-शब्दार्थतयाऽपौरुषेयत्वसिद्धेरित्युक्तम्। **जन्मवाक्येति ॥** 'तदुत्पत्तिवचश्चैव' इत्यादिनेति शेषः। **एतदिति।** सर्वज्ञत्वयुक्त्यभिप्रायाभाव इत्यर्थः। **उत्तरवाक्यार्थमिति ॥** 'सर्गे सर्गेऽन्यथैव तु क्रियन्ते' इति

वाक्यार्थम् इत्यर्थः । अनुवदतीत्युक्त्या तेन गतार्थताऽस्य निरस्ता । **नन्वेवमिति ॥** ईश्वरबुद्धिगतत्वेनेति एवंशब्दार्थः । **पुना रचनमिति ॥** पूर्वतनाऽनुपूर्वीतोऽन्याऽनुपूर्वीकतया पुनर्निर्माणमित्यर्थः । पुनश्शब्दविसर्गस्य सत्वरुत्वलोपेषु 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे पुना रचनमिति साधु । पुराणवाक्यादेरित्यादिपदेन श्रुतिवाक्यग्रहः ।

**(श्री.टि.) तदपीति ॥** वेदशब्दप्रवृत्तिनिमित्तभूतं नित्यविद्यमानत्वम्, आदिपदोक्तं श्रुतिशब्दप्रवृत्तिनिमित्त-मखिलैः श्रुतत्वम्, आम्नायशब्दप्रवृत्तिनिमित्तं भूतभवद्भविष्यद्भिरखिलैरप्येकप्रकारेण पठ्यमानत्वम् । **आप्रलयं** प्रलयपर्यन्तमेवास्त्वित्यर्थः । **तावताऽपीति ॥** नित्यं विद्यमानत्वस्य प्रलयपर्यन्तत्वेऽपि घटादिसर्वपदार्थ-वैलक्षण्यसम्भवाद् असाधारण्येनैतेषामेव वेदशब्दवाच्यत्वं युक्तम् । तथा अखिलैः श्रुतत्वस्याखिलैरेकप्रकारेण पठ्यमानत्वस्य च प्रलयपर्यन्तत्वेऽपि शब्दान्तरवैलक्षण्यसम्भवादसाधारण्येनैतेषामेव श्रुत्याम्नायशब्दवाच्यत्वं युक्तमित्यर्थः । असाधारण्योक्त्यादीत्यादिपदेन 'श्रुतिर्वाव नित्या' इत्यादिनित्यत्वोक्तिपरिग्रहः । (साऽपि) नित्यत्वोक्तिरपि आप्रलयं विद्यमानत्वेनैवोपपन्नेति भावः । नन्वस्त्वेवं, किं तावता, वेदानामनादिनित्य-त्वाव्याघातादित्यतोऽनादिनित्यत्वं गतमेवेत्याह- **ततो वेदा इति ॥ वर्णादीनामिति ॥** वर्णादीनामित्येवोक्त्याऽ-प्यादिपदेन पदवाक्यग्रहणसिद्धेः कण्ठरवेण पदग्रहणं किमर्थमित्यर्थः । वर्णानां पदवाक्ययोश्च नित्यत्वं नैकप्रकारमित्याशयेन पृथग्ग्रहणमित्याह- **तद्वर्णानामित्यादिना ॥ कौटस्थ्याभावो** निर्विकारत्वाभावो विकारित्वमिति यावत् । सर्गे पुनरन्ये जायन्त इत्याशङ्कितत्वान्मूले तत्प्रतिषेधो न प्राप्त इत्यत आह- **तथेति ॥ एतेनेति ॥** वर्णानां पदादेश्च नित्यत्वस्य भिन्नत्वसूचनेनेत्यर्थः । **यथायोगमिति ॥** वर्णानां कौटस्थ्यं शाश्वतत्वं, पदादीनां तु क्रमव्यत्यासाभाव एव शाश्वतत्वमिति भावः । नन्वेवं शाश्वतपदस्यानेकार्थत्वान्न वर्णपदा-दिष्वनुगतमेकं शाश्वतत्वमस्तीति चेत्तत्राऽह-**सर्गेऽपीति ॥ न व्यथन्तीति ॥** व्यथ सञ्चलने । सञ्चलनं विनाशो, न नश्यन्तीत्यर्थः । सर्गप्रलययोरुत्पत्तिविनाशाभाव एव वर्णपदाद्यनुगतं शाश्वतत्वमिति भावः । नन्वत्र ग्रन्थे **(श्री.टि.)** वर्णानां कूटस्थत्वं प्रकृतानुपयुक्तं कस्मादुच्यत इति चेन्न । वर्णानां ध्वंसप्रतियोगित्वे तदात्मकवेदे तद्बुद्धावित्यादिनोक्तहेतोरसिद्धिः स्यात् । तत्परिहारार्थं मूले वर्णग्रहणमिति ज्ञातव्यम् । **एतच्चेति ॥** बुद्धिशब्दस्य मनःपरत्वमित्यर्थः । **उत्तरग्रन्थ इति ॥** 'न च घटादिवत्' इत्युत्तरग्रन्थ इत्यर्थः । **सर्वदा** प्रलये । वेदा नानित्या ईश्वरबुद्धौ सर्वदा प्रतीयमानत्वादव्याकृताकाशवदित्यनुमानेऽसिद्धिं वक्तुं पूर्वपक्षी हेतुं निर्वक्ति - **नन्वित्या-दिना ॥ उक्तार्थेति ॥** अनित्यत्वाभावेत्यर्थः । **तच्चेति ॥** सर्वदा वर्तमानतयाऽनुभूयमानत्वमित्यर्थः । **सर्वज्ञत्वयुक्त्येति ॥** वेदा ईश्वरेण सर्वदा वर्तमानतयाऽनुभूयन्ते तस्य सर्वज्ञत्वादिति युक्त्येत्यर्थः । **तस्य** पुराणवाक्यद्वयस्य । तामेवान्यथासिद्धिं विवृणोति- **वेदानुभवेति ॥** प्रलये वेदानां नष्टत्वेऽपीति शेषः । **सम्भ-वादिति ॥** तथा चैवं पुराणवाक्यस्यान्यथासिद्ध्या ईश्वरेण सदा वर्तमानतयाऽनुभूयमानत्वसाधकत्वाभावा-दिति भावः । ननु 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः','वेदास्ते नित्यविन्नत्वात्' इति पुराणवाक्यद्वये वेदा विष्णुबुद्धिगा इत्यस्य वेदा ईशबुद्धिस्थिता इत्यस्य च वेदानुभवजनितसंस्कारस्येशबुद्धिगतत्वमात्रेणान्यथा-सिद्ध्युक्तौ वेदपदस्य वेदानुभवजन्यसंस्कारे लक्षणा स्याद्, अतो नैवं व्याख्येयमिति सिद्धान्तिना शङ्किते सत्याह- **न चैवमिति ॥ तत्साम्यात्** सिद्धान्तिनां भवतामपि लक्षणासाम्यादित्यर्थः । अनुभवार्थता मयाऽङ्गीक्रियत इति, न मन्मते लक्षणेत्यतः सिद्धान्तिनां मुख्यार्थे बाधकं पूर्वपक्षी दर्शयति- **वेदानामेवेति ॥ एवमङ्गीकार इति ॥** वेदानां नाशमङ्गीकृत्य वेदानुभवजनितसंस्कारस्य बुद्धिगत्वमात्रेण विष्णुबुद्धिगा इत्यस्यान्यथासिद्ध्यङ्गी-कार इत्यर्थः । **अनुगृहीतानि** अनुकूलानि ।

ननु वेदपदस्यानुभवार्थताङ्गीकारेऽपि तत्साम्यादित्युक्तमयुक्तम् । वेदपदस्य अनुभवलक्षकत्वानङ्गी-कारात् । न च वेदानां साक्षान्मनोगतत्वासम्भवेन बुद्धिगा इत्यस्य मुख्यार्थानुपपत्त्याऽनुभवे लक्षणा कार्येत्युक्तमिति वाच्यम् । बुद्धिशब्दस्य मनोवाचित्वे किल मुख्यार्थानुपपत्तिः, किन्तु ज्ञानार्थत्वमङ्गीकृत्य बुद्धिगा इत्यस्य वर्तमान-तया ज्ञानविषया इत्यर्थाङ्गीकारात्पुराणवाक्येनोक्तहेतुसिद्धिर्भविष्यत्येवेति सिद्धान्तिनोक्ते सत्याह पूर्वपक्षी- **अत एवेति ॥** बुद्धिशब्दस्य ज्ञानार्थत्वपक्षेऽपि वेदानां नष्टत्वेऽप्यतीतत्वेन ज्ञानविषयत्वमङ्गीकृत्य तत्प्रतिपादकत्वेन विष्णुबुद्धिगा इत्यस्य पूर्वन्यायेनान्यथासिद्धत्वादित्यर्थः । ननु वेदपदस्य वेदानुभवजनितसंस्कारलक्षणायां किं प्रयोजनमिति सिद्धान्तिना शङ्किते सत्याह- **न चेति ॥ नष्टे**पि घटादावित्यनन्तरं घटानुभवजनितसंस्कारस्य देवदत्तबुद्धिगतत्वाभिप्रायेणेति वाक्यशेषः । **रूढलक्षणात्वादिति ॥** रूढलक्षणायां च न प्रयोजनापेक्षेति भावः । **तथात्वप्राप्तेरिति ॥** ईश्वरस्य सर्वज्ञत्वेन नष्टानां घटादीनामपि सर्वदा वर्तमानतयाऽनुभूयमानत्वप्रसङ्गेन नित्यत्वं स्यादित्यर्थः । नन्वापादनमनिष्टस्य भवति । नष्टानामपि घटादीनां सर्वदा

वर्तमानतयाऽनुभूय-मानत्वानङ्गीकारे ईश्वरस्य सर्वज्ञत्वं न स्यात्। अतस्तदन्यथाऽनुपपत्त्या नष्टानामपि घटादीनां सर्वदेश्वरेण वर्तमानतयाऽनुभूयमानत्वं वक्तव्यमेव। अतो घटादीनामपि तथात्वप्राप्तेरित्यापादनमयुक्तमित्यत आह- **विद्यमानेति ॥** विद्यमानपदार्थानामननुभवे हि सर्वज्ञत्वं न स्यात्। न त्वतीतानामपि घटादीनां सर्वदा वर्तमानतया **(श्री.टि.)** अनुभवानङ्गीकार इति वाक्यशेषः। तथा च नष्टानां घटादीनां वर्तमानतयाऽनुभवे ईश्वरस्य भ्रान्तत्व-प्रसङ्गेन नष्टानां घटादीनामतीतत्वेनैव अनुभवोऽस्ति, न तु वर्तमानत्वेनेति सिद्धत्वान्नष्टानामपि घटादीनां वर्तमानतया अनुभवस्यानिष्टत्वेनैतदापादनं युक्तमेवेति भावः। घटादिवदिति वतिः 'तत्र तस्येव' इति सूत्रात् षष्ठ्यन्ताद् इवार्थे इति भावेनोक्तम्- **घटादेरिवेति ॥ संस्कारस्य बुद्धिगतत्वमात्रमिति ॥** केवलं संस्कारस्य **मनोगतत्वमित्यर्थः**। एतद्ग्रन्थानुसारेण प्राग् बुद्धिशब्दो मनःपरतया व्याख्यातः। प्रसिद्धाया बुद्धेः संस्काराधार-त्वस्य बाधितत्वात्। एतदभिप्रायेणैव 'एतच्चोत्तरग्रन्थे स्पष्टम्' इति प्रागुक्तमिति ध्येयम्। **उत्तरवाक्य इति ॥** 'नित्या वेदास्समस्ताश्च शाश्वता विष्णुबुद्धिगाः' इत्यस्मादुत्तरवाक्य इत्यर्थः। तदेवेदं वचनमिति प्रत्यभिज्ञा-विरोधस्योक्तत्वेऽपि नैतत्प्रत्यभिज्ञाविरोधः प्रागुक्तः। अत उक्तत्वादिति कथमुक्तमित्यत आह- **उक्तप्राय-त्वादिति ॥** 'सर्गेसर्गेऽमुनैवैत उद्गीर्यन्ते' इति वाक्यस्योदाहरणं यदा कृतं तदैतत्प्रत्यभिज्ञाविरोध उक्तप्राय इत्यर्थः। **सादृश्यादिति ॥** परिलूनपुनर्जातकुन्तलकलापप्रत्यभिज्ञावदियमपि प्रत्यभिज्ञा भ्रान्तिरिति भावः। **तथा सतीति ॥** पूर्वकल्पोच्चारितवेदसदृशा एव वेदा एतत्कल्पेऽमुनैवोद्गीर्यन्त इत्यङ्गीकारेऽपि सजातीयोच्चारण-मनपेक्ष्योच्चारयितृरूपस्वतन्त्रपुरुषपूर्वकत्वाभावरूपापौरुषेयत्वसिद्धेर्दुर्वारत्वादित्यर्थः। अस्यैवापौरुषेय-शब्दार्थत्वादिति भावः। **जन्मवाक्येति ॥** प्रत्यभिज्ञाया भ्रान्तित्वमङ्गीकृत्य प्रलये वेदानां विनाशः, सृष्टिकाले पुनरुत्पत्तिरित्यङ्गीकारे वेदानामुत्पत्तिप्रतिपादकानाम् 'ऋचस्सामानि' इत्यादिवाक्यानां 'वेदानां सृष्टिवाक्यानि' इत्यादिना गतिकथनं विरुद्धं स्यादित्यर्थः।

**उक्तं** वेदानाम्। **तदभिप्रेता** पुराणकृदभिप्रेता। **उपवर्णितेति ॥** 'सर्वज्ञत्वादीश्वरस्य' इत्यनेनेत्यर्थः। तामेव युक्तिं दर्शयति- **तथा हीत्यादिना ॥ अर्थान्तरमिति ॥** निबिडावयवरूपं पदार्थान्तरमित्यर्थः। अखण्ड-मिति यावत्। **क्रमश्चेति ॥** वर्णनिष्ठ इत्यर्थः। **वर्णविषयेति ॥** वर्णधर्मिकेत्यर्थः। **विवक्षितक्रमेति ॥** नियतानुपूर्वीरूपेत्यर्थः। **अपर इति ॥** अवयवविभागेन स्वरूपध्वंस इत्यर्थः। **तथाविधेति ॥** वर्णविषयक-विवक्षितक्रमोपाधिभूतेत्यर्थः। **विषयान्तरसञ्चारो** विषयान्तरविषयकत्वम्। देवदत्तमनसो विषयान्तरसञ्चारेऽ-न्यविषयकबुद्ध्युपरमो दृष्ट इत्यर्थः। **विस्मरणेति ॥** अत्र विस्मरणशब्देन देहाभिमानाभावो विवक्षितः। एतादृशे विस्मरणे बुद्ध्युपरमोऽनुभवसिद्ध इत्यर्थः। **तस्य सर्वदेति ॥** ईश्वरस्य सर्वदा सर्वविषयकज्ञानवत्त्वेन विषयान्तरसञ्चारप्रयुक्तस्य विस्मरणप्रयुक्तस्य वा बुद्ध्युपरमस्यासम्भवादित्यर्थः। **उत्तरवाक्य इति ॥** 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः' इत्यस्मादुत्तरवाक्य इत्यर्थः। **तच्छङ्काबीजेति ॥** विष्णुबुद्धिगत्वयुक्त्या यदि वेदानां नित्यत्वमुच्यते तर्हि पुराणानामपि विष्णुबुद्धिगत्वसाम्यान्नित्यत्वं स्यात्। तथा च, 'श्रुतिर्वाव नित्या' इत्यादिविभागो नोपपद्यत इति हि परेण शङ्कितम्। तत्र पुराणानां सर्वदा वर्तमानतयाऽनुभूयमानत्व-रूपविष्णुबुद्धिगत्वसाम्यशङ्कायां बीजाभावेन तद्बीजतया सर्वज्ञत्वयुक्तिमुक्त्वा तथा विषयान्तरसञ्चाराद्यभावेन बुद्ध्युपरमाभावमभिधाय सर्वदेश्वरेण वर्तमानतयाऽनुभूयमानत्वरूपं विष्णुबुद्धिगत्वमुक्त्वा नित्यत्वमुपपादनीय-**(श्री.टि.)** मिति भावः। पुना रचनम् उत्तरकल्प इति शेषः। पुराणानां पुना रचनं कुत इति प्रमाणं पृच्छ्यते प्रयोजनं वा। द्वितीयेऽपि स्वप्रयोजनं पृच्छ्यते परप्रयोजनं वेति विकल्पक्रमेणोत्तरमाह- **प्रमाणप्रश्नश्चेदित्यादिना ॥ उक्तादेवेति ॥** 'पुराणानि तदर्थानि' इत्यादिनोक्तादेवेत्यर्थः। ननु भगवत्पादानां सर्वज्ञत्वेन परप्रयोजनानि तेऽपि कस्मान्नावदन्नित्यत आह- **भगवानाचार्योऽपीति ॥**

**(पां.टि.) क्रमविशिष्टा इति ॥** क्रमविशेषविशिष्टा इत्यर्थः। तेन भारतादौ नातिप्रसङ्गः। तद्विशिष्टत्वं च विशिष्टक्रमोपेतबुद्धिविषयत्वमेव। क्रमस्य वर्णेषु कथमप्यसम्भवात्। न चैवं पदादिभावस्याभिव्यक्तिघटितत्वाद् इदमेकं पदमित्यादिप्रतीतिः श्रावणी न स्यात्। पदाद्युपाध्यभिव्यक्तेरश्रावणत्वादिति वाच्यम्। मनसोपनीतस्य अभिव्यक्तिक्रमस्य श्रावणत्वोपपत्तेरित्याशयात्। **बुद्धिनिमित्त एवेति ॥** बुद्धिनिष्ठ एवेत्यर्थः। **न तु स्वत इति ॥** सर्वगतत्वान्नित्यत्वाच्चेति भावः। **क्रमोपाधिभूतेति ॥** क्रमाधिष्ठानभूतेत्यर्थः। **तथाविधेति ॥** क्रमाधिष्ठानभूतेत्यर्थः।

**(व्या.टि.) असाधारणेति ॥** तावताऽपि 'सप्तैते चिरजीविनः' इत्यसाधारणोक्तिदर्शनादिति भावः। **जन्यन्त इति ॥** 'जन जनने' इति प्रकृत्यन्तरस्येदं रूपं, जनेर्जादेशस्य दुर्वारत्वात्। जनेर्ण्यन्तात् कर्मणि यकि 'ये विभाषा' इत्यात्वविकल्पो वा। **आदिपदेनेति ॥** समासार्थत्वेनेत्यर्थः। **क्रमादिति ॥** क्रमपदेन वर्णक्रमो गृह्यते। पदक्रमव्यत्ययस्य वाक्यानित्यत्वरूपत्वात्।

आदिपदेन वाक्यघटकपदक्रमो ग्राह्यः । **ग्राह्यमिति ॥** निषेध्यतया ग्राह्यमित्यर्थः । **एतेनेति ॥** पदादिग्रहणेनेत्यर्थः । व्याख्यानप्रकारं दर्शयति- **यथायोगं शाश्वता इति ॥** वर्णानां कौटस्थ्येन, पदानां वर्णव्यत्यासाभावेन, वाक्यानां पदव्यत्यासाभावेन, प्रकरणानां वाक्यव्यत्या-साभावेन, स्वराणां विस्वराभावेनेति यथासम्भवमित्यर्थः । सर्वसाधारणं नित्यत्वमाह- **सर्गेऽपीति ॥ व्यथन्ती-ति ॥** 'व्यथ भयसञ्चलनयोः' इति धातोः । बुद्धिशब्दस्य प्रतीत्यर्थत्वे प्रतीयमानत्वान्वयानुपपत्तेराह- **तन्मनसी-ति ॥** ननु कृतचोद्यस्योत्तरं नात्र प्रतीयत इत्यत आह- **उत्तरेति ॥** प्रत्यभिज्ञेति मूल इत्यर्थः । ननु वर्तमानतयेत्यनुक्तं विशेषणं कस्मादभिप्रायविषयतयाऽऽरोप्यत इत्यत आह- **तस्यैवेति ॥ उक्तार्थस्य** नित्यत्वस्य । **असिद्ध-मिति ॥** साधकाभावादिति भावः । तमेवोपपादयति- **तथा हीति ॥ तस्य** पुराणवाक्यस्य । **अन्यथा** वर्तमानतया अनुभवं विनाऽपि । तां दर्शयति- **वेदानुभवेति ॥** मात्रेणेत्यनुभवं व्यावर्तयति- **एवमिति ॥** वेदपदस्य संस्का-रार्थत्व इत्यर्थः । **तत्साम्यात्** लक्षणासाम्यात् । मुख्यार्थेऽनुपपत्त्यादेरभावात्कुतो लक्षणेत्यत आह- **वेदानामे-वेति ॥ साक्षादिति ॥** अनुभवादिद्वारमन्तरेणेत्यर्थः । **असम्भवादिति ॥** विषयस्य विषय्यवस्थानासम्भवादि-त्यर्थः । तथा च अन्वयानुपपत्त्या लक्षणाऽऽवश्यकीत्यर्थः । अन्यदप्यनुकूलमित्याह- **एवमङ्गीकार इति ॥ अत एवेति ॥** जन्मवाक्यानुग्रहादेवेत्यर्थः । **रूढेति ॥** रूढेः प्रयोजनानपेक्षणादित्यर्थः । **तथात्वेति ॥** वर्तमान-तयाऽनुभूयमानत्वप्राप्तेरित्यर्थः । सर्वज्ञत्वयुक्त्या साधनेऽतिप्रसङ्गमभिधाय युक्तिरेवेयं निर्दलेत्याह- **विद्य-मानेति ॥** स्यादित्यतः परम्, न त्वविद्यमानार्थाननुभवे, अन्यथा भ्रान्तत्वप्रसङ्गादिति वाक्याध्याहारः । **(व्या.टि.) शङ्कासमाप्तिद्योतकेति**शब्दश्चाध्याहार्यः । **अत्र** कल्पद्वये । **घटादेरिवेति ॥** 'तत्र तस्येव' इतीवार्थे षष्ठ्यन्ताद्वतिरिति भावः । **अनुभूयमानत्वमेवेति ॥** पुराणादिवाक्यार्थ इत्यर्थः । **उक्तप्रत्यभिज्ञेति ॥** शाब्द-प्रत्यभिज्ञेत्यर्थः । यद्यपि ईश्वरस्यानुभवजन्यसंस्काराभावेनैव समाधिर्विधेयः ।

'भक्तानां स्मरणं विष्णोः नित्यज्ञप्तिस्वरूपतः ।
अनुग्रहोन्मुखत्वं तु नैवान्यत्क्वचिदिष्यते ॥'

इति ईशावास्यभाष्यात् । तथाऽपि स शिष्यैरेवोह्यतामिति कृत्वा चिन्तया प्रववृते । ननु प्रत्यभिज्ञैवोक्ता, न तद्विरोध इत्यत आह- **उक्तप्रायत्वादिति ॥** यदा पुराणे स्वोक्तशाश्वतत्वोपपादनाय प्रत्यभिज्ञोक्ता तदा तदर्थानङ्गीकारे तद्विरोधोऽप्युक्त एवेत्यर्थः । **तथा सतीति ॥** सदृशानुपूर्वीकत्वरूपमीमांसकाभिहितस्वाभ्युप-गतापौरुषेयत्वसिद्धेरित्यर्थः । ननु सदृशानुपूर्वीकत्वरूपापौरुषेयत्वसिद्धावपि सादृश्यनिबन्धनप्रत्यभिज्ञाविरोधा-भावात् कथं न वक्तुं युक्तं संस्कारमात्रत्वमित्यत उपलक्षणया युक्त्यन्तरमाह- **उपलक्षणं चैतदिति ॥ एतत्** प्रत्यभिज्ञाविरोधकथनम् उपलक्षणम् अन्यस्या युक्तेः । तामाह- **जन्मवाक्येति ॥** अयं भावः । 'तदुत्पत्तिवचश्चैव' इत्यादिजन्मवाक्यगतिकथनविरोधात् सदृशानुपूर्वीकत्वरूपापौरुषेयत्वमपि न स्वमतं, किन्तु कौटस्थ्यमेव । तथा च संस्कारमात्रत्वं वक्तुं न युक्तमेवेति । एतेन जन्मवाक्यान्यप्यनुगृहीतानि भवन्तीत्यपास्तम् । तेषां गतिकथनेन प्रतीतार्थत्वाभावात् ।

**॥ उपवर्णितेति ॥** ग्रन्थकृतेति शेषः । **वर्णा एवेति ॥** एवकारव्यावर्त्यमाह- **न त्विति ॥ अर्थान्तर-मिति ॥** वर्णेभ्य इति शेषः । न च विशिष्टं पदार्थान्तरमिति सिद्धान्तव्याकोपः । तस्य यावद्वस्तुभाविविषय-त्वात् । नित्यविशेषणविशिष्टस्य स्वरूपमात्रत्वात् । अन्यथा सार्वज्ञ्यादेरपीश्वरभिन्नत्वापत्तेः । **बुद्धिनिमित्त एवेति ॥** बुद्धिप्रयोज्य इत्यर्थः । न तु बुद्धिकारणक इति । 'आदिकालीनां व्यक्तिम्' इति पूर्वटीकाविरोधात् । **न तु स्वत इति ॥** दैशिककालिकान्यतर इत्यर्थः । वर्णानां नित्यविभुत्वादिति भावः । **वेदविनाश इति ॥** व्यञ्जकाभावेनोत्सादरूप इत्यर्थः । **अपर इति ॥** स्वरूपनाश इत्यर्थः । **न चेश्वरस्येति ॥** तथा च निमित्ता-विनाशान्न नैमित्तिकक्रमस्यापि विनाश इति भावः । **देवदत्तस्येवेति ॥** बुद्ध्युपरम इति शेषः । तद्बुद्धेः क्रमिक-विषयसञ्चारित्वादिति हेतुरवधेयः । **विस्मरणनिमित्तो वेति ॥** अनित्यानुभवत्वात् तज्जन्यसंस्कारस्योद्बोधका-भावेन विस्मरणसम्भवादिति भावः । तन्निमित्तद्वयाभावं प्रतिजानीते- **नोभयथाऽपीति ॥** पूर्वं सर्वदेति यथाश्रुतं व्याख्यातम् । अधुना सर्वदेति सर्वज्ञत्वान्वयीति व्याचष्टे - **तस्येति ॥** सर्वकालीनसर्ववैषयिकानुभववत्त्वादि-त्यर्थः । सर्वदेति सर्वज्ञत्वविशेषणेन विषयसञ्चारयौगपद्योक्त्या क्रमो निरस्तः । सर्वदेति प्रतीतिविशेषणेना-नुभवनित्यत्वोक्त्या विस्मरणं निरस्तमित्यवधेयम् । सर्वज्ञत्वस्य युक्तित्वं प्रसाध्य तेन पुराणोक्तसाध्यसिद्धिं निगमयति- **अत इति ॥** अतश्चानादिनित्या इति परमसाध्यनिर्देशो द्रष्टव्यः । **कुत इति ॥** ज्ञापकादित्यर्थः । **(व्या.टि.) नित्यत्वम**नादिनित्यत्वम् । **आशङ्क्येति ॥** आशङ्काप्रकारस्तु- यदीश्वरस्य सर्वज्ञत्वात्तज्ज्ञेयानां वेदानां सर्वदा वर्तमानतयाऽनुभूयमानत्वं ततश्च नित्यत्वं सेत्स्यति, तर्हि पुराणानामपि तत्सिद्धेः कः प्रति-रोद्धा । सर्वज्ञत्वयुक्तेरुभयत्र

तौल्यात्, इति बोध्यम्। **शङ्काबीजाभावादिति ।।** युक्त्युपन्यासाभावे प्रमाणाभावेन पुराणे उक्तवर्तमानतयाऽनुभवासिद्धेरित्यर्थः । **वेदपुराणयोर्नित्यत्व इति ।।** सर्वज्ञत्वयुक्त्या समेऽपीति शेषः। पुराणानामनित्यत्वे पुना रचनमेव निमित्तं, न विनाशः, 'अत एवानित्यानि' इति व्याख्यानादित्यवधेयम्। **पुना रचनमेवेति ।।** 'रो रि' इति लोपे 'ढ्रलोपे' इति पूर्वाणो दीर्घे च सिद्धम्। **ईश्वरप्रवृत्तेरिति ।।** अनेन, इयं प्रवृत्तिः स्वप्रयोजनहीना ईश्वरप्रवृत्तित्वाद् यदेवं तदेवमिति युक्तिः सूचिता। यथोक्तम् 'लोकवत्तु लीलाकैवल्यम्' इति । **परप्रयोजनानीति ।।** 'न प्रयोजनवत्त्वात्' इति सूत्रे परप्रयोजनानुमितेरिति भावः । **इदानीमिति ।।** वेदापौरुषेयत्वस्थापनावसर इत्यर्थः । अनेन अनवसरादेवानुक्तिर्न त्वज्ञानादिति सुसूचे ।

**मूलम् - अत आकाशगुणे शब्दे व्यज्यमाना वर्णादयस्तत्क्रमात्मको वेदश्च नित्य एवेति सिद्धम् ।**

**(त.मं.)** एवं चेत् कथमस्मदादीनामुच्चारणकाल एव वर्णपदादीनां प्रतीतिरित्येतामाशङ्कां परिहरन्नुपसंहरति- **अत आकाशेति ।।** ताल्वोष्ठादिप्रयत्नेन जायमाने आकाशविशेषगुणे ध्वन्याख्ये शब्दे व्यज्यमाना वर्णादयः, न तूत्पद्यमानाः ।

**टीका -** एवमुपपादितमर्थं शङ्कान्तराणि परिहरन्नुपसंहरति- **अत इति ।। अतः** प्रत्यभिज्ञा-बलाद्वर्णादयो नित्या इति सिद्धम्। आदिशब्देन वर्णधर्मा गृह्यन्ते येऽनौपाधिकाः । अप्रमित-कर्तृकत्वादिबलाद्वेदश्च नित्य एवेति सिद्धम्। नित्यत्वस्य पृथग्विधत्वात् पृथगुपसंहारः ।

ननु नित्यत्वे वर्णानां कथं कदाचिदेवोपलब्धिः । नचेन्द्रियसन्निकर्षस्य कादाचित्कत्वादिति वाच्यम्। 'तावती वाक्' इति व्यापकत्वस्याभ्युपगतत्वेन सर्वदा श्रोत्रसन्निकृष्टत्वात्। अत्रैके ब्रुवते। स्तिमितेन वायुनाऽवष्टब्धं श्रोत्रं सन्निकृष्टमपि शब्दं नोपलम्भयति। वक्तुः कोष्ठयो वायुः प्रयत्नवदात्मसंयोगेन प्रेरितः प्रतिष्ठमान उरःप्रभृतीन्यष्टौ स्थानान्यभिहत्य श्रोतुः कर्णशष्कुलीं प्रविष्टः स्तिमितं वायुमपनयति ततो वर्णोपलब्धिरिति। अपरे तु कोष्ठयवायुसंयोग एव श्रोत्रसंस्कारो नापर इति। तदुभयमप्यसत्। वायुसंयोगानन्तरं सर्वदा सर्ववर्णोपलब्धिप्रसङ्गात्। उत्तरक्षण एव वायुविभागेन संयोगनाशान्नेति चेन्न। अप्रामाणिककल्पनाप्रसङ्गात्। सर्वोपलब्धेरनिवारणाच्च। अन्ये तु वायुगुणः शब्दो ध्वनिलक्षणो वायुना सह श्रोत्रं प्रविष्टो वर्णस्य व्यञ्जकः । तेन व्यक्तो वर्ण उपलभ्यत इति। एतदप्यसत्। वायुगुणत्वे शब्दस्य स्पार्शनग्राह्यत्वेन बधिराणामपि तदुपलब्धि-प्रसक्तेः । श्रोत्राग्राह्यस्य तद्ग्राह्यवर्णव्यञ्जकत्वानुपपत्तेश्च, व्यङ्ग्यव्यञ्जकयोरेकेन्द्रियग्राह्यत्वस्य घटप्रदीपादौ दर्शनात्। एकस्मिन् वर्णे व्यक्ते तत्रस्थाः सर्वेऽपि वर्णा व्यक्ता इति सर्वोपलब्धेरपरि-हाराच्च । किञ्च यो वर्णो देवदत्तश्रोत्रे व्यक्तः स एव यज्ञदत्तश्रोत्रसन्निकृष्ट इति दूरस्थेनापि तेनोपलभ्येतेत्यत उक्तम्- **आकाशगुणे शब्द व्यज्यमाना इति ।।**

इदमुक्तं भवति। वक्तृप्रयत्नप्रेरितो वायुः उरःप्रभृतिभिः स्थानैः संयुक्तः तत्स्थानसंयुक्ताकाशे ध्वनिलक्षणं शब्दमुत्पादयति । स च देशान्तरे प्रतिशब्दम्। यस्तु कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे समुत्पन्नस्तद्गुणो ध्वनिः, तस्मिन् व्यज्यमानो वर्णः श्रोत्रेण गृह्यते। ध्वनेश्चाऽशुतरविनाशित्वेन व्यञ्जकाभावान्न सर्वदोपलब्धिप्रसङ्गः। ते च ध्वनयः प्रतिनियता एव वर्णानां व्यञ्जका इति (अतो) न सर्ववर्णोपलब्धि(सर्वोपलब्धि)प्रसङ्गः । भूताकाशमेव श्रोत्रम्। तद्गुण एव ध्वनिः । तच्च स्वतः सावयवम्। अतः प्रदेशवर्ती ध्वनिस्तदवच्छिन्नमेव वर्णं व्यञ्जयतीति न सर्वेषामुपलब्धिः। समानेन्द्रियग्राह्याणां समानदेशकालधर्मापन्नानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं क्वापि नोपलब्धमिति चेन्न। गोत्वाश्वत्वादीनां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्य परैरङ्गीकृतत्वात्। गोत्वादीनां व्यक्ति-सर्वगतत्वेन समानदेशत्वं नास्तीति चेन्न। प्रत्यासत्तेरवर्जनीयत्वात्। समवायाभावस्य वर्णेष्वपि समत्वात्। किञ्च ब्राह्मणत्वद्रव्यत्वादीनां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमङ्गीकृतमेव । रूपेण समानदेशस्यापि परिमाणस्य चतुष्टयसन्निकर्षोऽधिको व्यञ्जकः स्वीक्रियते। तथा क्षीरनीरपृथक्त्वादेः समानाभिहाराभावादिः । नच वर्णव्यतिरिक्तो ध्वनिर्नास्तीति वाच्यम्।

दूराद्वर्णाग्रहणेऽपि ध्वनिग्रहणात्। नचैतत्सर्वमप्रामाणिकम्। प्रत्यभिज्ञाप्रामाण्यस्योपपादितत्वेन तद्बललब्धत्वात्। आगमाश्चात्र साक्षिणः सन्तीति।

ननु वर्णव्यतिरिक्तो वेद एव नास्ति, स्फोटस्यानङ्गीकृतत्वात्, तत्कथं वेदश्चेति पृथगुच्यत इत्यत उक्तम्- **तत्क्रमात्मक इति ॥** विशिष्टक्रमवद्वर्णात्मकः। अवस्थाभेदात् पृथगुक्तिरि-त्याशयः।

**॥ इति वर्णनित्यत्ववादः ॥**

**(र.टि.) श्रोत्रस्य संस्कार इति ॥** पूर्वं प्रतिबन्धकीभूतस्तिमितवायुनिरासकत्वमेव कोष्ठ्यवायुसंयोगस्य, न संस्कारत्वमिति स्फुटो भेदः। **वायुगुणत्व इति ॥** वायुविशेषगुणत्व इत्यर्थः। तेन न वायुगतसंयोगादौ व्यभिचारः। **श्रोत्राग्राह्यस्येति ॥** वायुविशेषगुणत्वेन श्रोत्राग्राह्यत्वस्यापि सिद्धत्वादिति भावः। **तस्मिन् व्यज्यमान इति ॥** तस्मिन् ध्वनौ सति व्यज्यमान इत्यर्थो, न तु तस्मिन्निति सप्तम्या आधारार्थत्वमभ्युपेत्य कर्णशष्कुल्यवच्छिन्नाकाशग्रहणम्। 'आकाशगुणे शब्दे' इति मूलानुसारेण यच्छब्दार्थत्वेन च ध्वनेरेव ग्राह्य-त्वात्। **तच्च स्वतः सावयवमिति ॥** तथा च वर्णावच्छेदकप्रदेशस्यौपाधिकत्वाभावेन नानवस्थादिदोषाव-काश इति भावः। **सर्वेषामिति ॥** सर्वपुरुषाणामित्यर्थः। **समानेन्द्रियग्राह्याणामिति ॥** अत्र, समानदेश-कालधर्मापन्नानामित्यत्र धर्मपदस्य भावप्रत्ययान्तत्वेन समानदेशकालधर्मत्वापन्नानामित्यर्थ इति ज्ञातव्यम्। एतेन वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्याः समानेन्द्रियग्राह्यत्वे सति समानदेशकालधर्मत्वापन्नत्वात्, यथा घटगतपरिमाणैकत्वादीत्यनुमानमुक्तं भवति। अत्र साध्ये व्यञ्जकपदं विषयतत्सन्निकर्षव्यतिरिक्तज्ञानहेतु-परम्। तेन वर्णसाक्षात्कारे तयोः प्रतिनियतत्वेऽपि न बाधः। हेतौ भिन्नेन्द्रियग्राह्यरूपरसादौ व्यभिचारवारणाय सत्यन्तम्। रूपरूपत्वादौ व्यभिचारवारणाय समानदेशपदम्। रूपरूपध्वंसादौ व्यभिचारवारणाय समानकाल-पदम्। **गोत्वाश्वत्वादीनामिति ॥** जातेः सर्वगतत्वाङ्गीकारेण गोत्वादीनामश्वादौ विद्यमानत्वेन समान-देशत्वादिति भावः। **प्रत्यासत्तेरिति ॥** संयुक्तसमवायादिरूपाया इत्यर्थः। ननु समवायसम्बन्धेन समानदेशत्वं विवक्षितम्। तच्च भिन्नभिन्नव्यक्तिसमवेतगोत्वाश्वत्वादौ नास्तीत्यत आह- **समवायाभावस्येति ॥ क्षीरनीरादि-पृथक्त्वादेरिति ॥** रूपेण समानदेशस्येति, अधिको व्यञ्जकः स्वीक्रियत इति चानुवर्तते। समानाभिहाराभावो नाम क्षीरादीनां नीरादिना मेलनाभावः।

**(रा.टि.)** आकाशगुण इत्यादेरुपयोगोक्तिः- **शङ्कान्तराणि परिहरन्निति ॥** विपरिणामेनान्वयमाह- **नित्या इति ॥ वर्णधर्मा इति ॥** ह्रस्वत्वदैर्घ्यादयः। तारत्वमन्द्रत्वादेरपि तथात्वप्राप्तेराह- **येऽनौपाधिका इति ॥** ते तु ध्वन्याद्युपाधिका इति भावः। अतःशब्दार्थं प्रकारान्तरेणाऽह- **अप्रमितकर्तृकत्वादीति ॥** श्रुतत्वदृष्टत्वा-द्युक्त्यन्यथाऽनुपपत्त्यादिरादिशब्दार्थः। **पृथग्विधत्वादिति ॥** कूटस्थत्व-सदृशानुपूर्वीकत्वरूपत्वादित्यर्थः। **तावती वागितीति ॥** वाक्शब्देनात्र वर्णोऽभिमत इति भावः। यावद्ब्रह्म विष्ठितमिति पूर्वशेषः। **प्रतिष्ठमान इति ॥** निर्गच्छन्नित्यर्थः। **अष्टौ स्थानानीति ॥** 'अकुहविसर्जनीयानां कण्ठः' इत्यादिशिक्षाग्रन्थोक्तकण्ठ-ताल्वाद्यष्टस्थानानीत्यर्थः। **सर्वोपलब्धेरिति ॥** सर्ववर्णोपलब्धेरित्यर्थः। **श्रोत्राग्राह्यस्येति ॥** वायुगुणत्वे श्रोत्राग्राह्यत्वस्यावर्जनीयत्वादिति भावः। **तद्गुण इति।** आकाशगुणः। नन्वथापि किञ्चेत्यादिना प्रागुक्तदिशा सर्वेषां पुंसामुपलम्भः स्यादित्यत आह- **भूताकाशमेवेति ॥ तच्चेति ॥** भूताकाशम्। **स्वत इति ॥** औपाधि-कत्वेऽनवस्थाद्यापत्तेरिति भावः। **समानदेशेति ॥** समानपदं प्रत्येकमन्वेति। समानधर्मत्वं चात्र शब्दत्वादिवर्णानां ध्येयम्। गोत्वाश्वत्वादीनां सर्वपदार्थगतत्वमुपेत्याऽह- **प्रतिनियतेति ॥** गोत्वस्य सास्नादिमत्त्वधर्मव्यङ्ग्यत्वम्, **(रा.टि.)** अश्वत्वस्यैकशफत्वे सति केसरवत्त्वरूपधर्मव्यङ्ग्यत्वमित्यादिरूपेणेत्यर्थः। **व्यक्तिसर्वेति ॥** स्वस्व-व्यक्तिष्वेव सर्वत्र सत्त्वेन विजातीये वस्तुन्यसत्त्वेन गोत्वादिधर्माणां समानदेशत्वं नास्तीत्यर्थः। **प्रत्यासत्तेरि-ति ॥** गोव्यक्त्योर्मध्ये विद्यमानेऽश्वपिण्डेऽसम्बध्य तदुभयत्र स्थितगोव्यक्त्योर्गोत्वस्य सम्बन्धायोगेन मध्ये विद्य-मानाश्वपिण्डे गोत्वप्रत्यासत्तेर्गोत्वसम्बन्धस्यावर्जनीयत्वात्। एवमश्वत्वादेरपि गोपिण्डादौ प्रत्यासत्तिर्ध्येया। तथाच गोत्वं गोपिण्ड एव व्यज्यते नाश्वे। अश्वत्वमप्यश्व एव व्यज्यते न गोपिण्ड इत्यर्थः।

ननु गोत्वादेरश्वादौ प्रत्यासत्तित्वेऽपि स्वस्वव्यक्तिष्विव समवायसम्बन्धेनाश्वादौ सत्त्वाभावान्न समान-देशत्वमिति चेत्तर्हि गकारादिवर्णानां श्रोत्रदेशसम्बद्धत्वेऽपि न समवायसम्बन्धेन सम्बद्धत्वमस्तीति समवायेन समानदेशत्वं वर्णानां श्रोत्रदेशे नास्तीति समानदेशकालेत्यादिना प्रागुक्तं नास्मत्पक्षे बाधकमिति भावेनाऽह- **समवायाभावस्येति ॥** ननु गकारः श्रोत्रदेशे येन सम्बन्धेन सम्बद्धस्तेनैव ककारादयोऽपि। गोत्वादिकं तु गोऽश्वपिण्डादौ नैकसम्बन्धेनेति वैषम्यमित्यत आह- **किञ्चेति ॥** समवायसम्बन्धेनैवैकत्र समाविष्टानां ब्राह्मणत्वद्रव्यत्वादीनामित्यर्थः। शिखायज्ञोपवीतादिना ब्राह्मणत्वस्य, गुणाश्रयत्वादिना द्रव्यत्वादेर्व्यङ्ग्यत्वात्

प्रतिनियतेत्युक्तम् । **चतुष्टयेति ।।** इन्द्रियावयवैरर्थावयवानामेकः, अर्थावयविनोऽन्यः । तथा इन्द्रियावयविन अर्थावयवैरेकः, अर्थावयविना इन्द्रियावयविनश्चान्य इत्येवं चतुष्टयेत्यर्थः । **समानाभिहाराभावादिरिति ।।** अन्योन्यमेलनाभावादिर्व्यञ्जकः स्वीक्रियते इत्यनुषङ्गः । **नचैतत्सर्वमिति ।।** वर्णानामनादिनित्यत्वं ध्वनि-व्यङ्ग्यत्वं प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमित्यादिकमित्यर्थः । **आगमाश्चात्रेति ।।** 'यावद्ब्रह्म विष्ठितं तावती वाक्' 'तत्क्रमेणैव तैर्वर्णैः' इति, तथा तृतीयस्कन्धेऽष्टाविंशेऽध्याये 'नभः श्रोत्रं तु शब्दगम्' इति, तथा तत्र तात्पर्ये च 'शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः । आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते । स एव व्यज्यमानस्तु भवेत्कर्णैकगोचरः' इत्यागमा इत्यर्थः । **विशिष्टक्रमवदिति ।।** इतरासाधारणक्रमोपेतवर्णात्मक इत्यर्थः । **अवस्थेति ।।** क्रमावस्थेत्यर्थः ।

**(श्री.टि.) उपपादितमर्थमिति ।।** वर्णनित्यत्वादिरूपमित्यर्थः । के ते नित्यभूता धर्मा इत्यत आह- **येऽनौपाधिका इति ।।** आकाशगुणभूतध्वनिव्यङ्ग्या **अनौपाधिकाः** स्वाभाविकास्तारत्वमन्द्रत्वाद्या ये धर्मास्ते आदिपदेन ग्राह्या इत्यर्थः । यथोक्तं न्यायामृते - 'नागो नग इत्यादौ दीर्घत्वं वर्णगतं सत्यमेवार्थविशेषधीहेतुः, न ध्वनिगतं वर्णेष्वारोपितं हेतुः' इत्यादि । यद्वा अनौपाधिका धर्मा गत्वादय इत्यर्थः । ननु वर्णा नित्या इत्युपसंहारेणैव क्रमविशेषविशिष्टवर्णात्मकवेदस्यापि नित्यत्वोपसंहारलाभाद् वेदश्चेति पृथगुपसंहारे किं निमित्त-मित्यत आह- **नित्यत्वस्येति ।।** वर्णानां कौटस्थ्यमेव नित्यत्वं, वेदानां क्रमव्यत्यासाभाव एवेति नित्यत्वस्य पृथग्विधत्वादित्यर्थः । **इन्द्रियेति ।।** श्रोत्रेन्द्रियेत्यर्थः । व्यापकत्वस्येत्यत्र वर्णानामिति वर्तते । **अवष्टब्धं** प्रतिबद्धम् । **सन्निकृष्टमपि शब्दमिति ।।** व्याप्ततया सन्निकृष्टमपि वर्णात्मकं शब्दमित्यर्थः । वक्तुरित्यतः पूर्वं यदेति शेषः । **प्रतिष्ठमान** ऊर्ध्वं गच्छन् । **अभिहत्य** सम्बध्य । **श्रोत्रस्य संस्कार इति ।।** पूर्वमते प्रतिबन्धकी-**(श्री.टि.)** भूतस्तिमितवायुनिरासकत्वमेव कोष्ठ्यवायुसंयोगस्य, न संस्कारकत्वमिति स्फुटो भेदः । **सर्व-वर्णेति ।।** प्रतिबन्धकाभावाच्छ्रोत्रस्य संस्कृतत्वाच्चेत्यर्थः । **संयोगो** वायुसंयोगः । तथा च न सर्वदोपलब्धिरिति भावः । **सर्वोपलब्धेरिति ।।** उत्तरक्षण एव वायुविभागेन संयोगनाशकल्पनया सर्वदोपलब्धिपरिहारेऽपि वायुसंयोगानन्तरं सर्ववर्णोपलब्धिप्रसङ्गो न निवारित एवेत्यर्थः । प्रतिबन्धकाभावाच्छ्रोत्रस्य संस्कृतत्वाच्चेति भावः । **वायुगुणत्व इति ।।** वायुविशेषगुणत्व इत्यर्थः । तथा च यो वायुविशेषगुणः स स्पार्शनग्राह्यो यथा स्पर्श इति व्याप्तेर्विवक्षितत्वात्, वायुगतसंयोगादिसामान्यगुणस्य स्पार्शनग्राह्यत्वाभावाद्व्यभिचार इति शङ्काऽ-नवकाश इति ज्ञातव्यम् । **बधिराणामपीति ।।** तेषामपि स्पार्शनेन्द्रियसद्भावेन तेन वायुगुणभूतशब्दोपलब्धिप्रसङ्ग इत्यर्थः । **श्रोत्राग्राह्यस्येति ।।** वायुविशेषगुणत्वेन स्पार्शनग्राह्यतया श्रोत्राग्राह्यत्वस्यापि सिद्धत्वादिति भावः । **तद्ग्राह्येति ।।** श्रोत्रग्राह्येत्यर्थः । कुतोऽनुपपत्तिरित्यत आह- **व्यङ्ग्यव्यञ्जकयोरिति ।। तत्रस्था इति ।।** एको वर्णो यत्प्रदेशेऽस्ति तत्प्रदेशस्था इत्यर्थः । तथा च वर्णानां व्याप्तत्वेनाप्रतिघद्रव्यतया चैकस्मिन् प्रदेशे सर्ववर्णसद्भा-वाद्व्यञ्जकीभूतस्य वायुसहितध्वनेः श्रोत्रसम्बद्धत्वेन सर्ववर्णानामुपलब्धेरपरिहारादिति भावः । **स एवेति ।।** व्याप्तत्वादेकत्वाच्चेत्यर्थः । **तेन** यज्ञदत्तेन । तथा च सर्वेषां पुरुषाणामुपलब्धिः स्यादिति भावः ।

**।। यस्त्विति ।।** वीचीतरङ्गन्यायेनेति भावः । **तद्गुणः** तदवच्छिन्नाकाशगुणः । **तस्मिन् व्यज्यमान इति ।। तस्मिन्** ध्वनौ सति कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे व्यज्यमान इत्यर्थः । किञ्च यो वर्ण इत्यादिनोक्तां सर्वेषां पुरुषाणामुपलब्धिं परिहरति- **भूताकाशमेवेत्यादिना ।। तद्गुण एवेति ।।** न वायुगुण इत्यर्थः । तथा च व्यङ्ग्यव्यञ्जकयोरेकेन्द्रियग्राह्यत्वप्राप्त्या वायुविशेषगुणत्वेन श्रोत्राग्राह्यस्य ध्वनेः कथं तद्ग्राह्यवर्णव्यञ्जकत्वमिति शङ्काऽनवकाश इति ध्येयम् । ननु भूताकाशस्य श्रोत्रत्वे तस्य सावयवत्वाभावेनैकत्वात् तस्यैकस्यैव सर्वश्रोत्रत्वे-नैकस्य वर्णस्य देवदत्तश्रोत्रसम्बद्धत्वे सर्वपुरुषश्रोत्रसम्बद्धत्वप्राप्त्या सर्वेषां पुरुषाणामुपलब्धिः स्यादेवेत्यत उक्तम्- **तच्च सावयवमिति ।। तच्च** भूताकाशम्, प्रदेशसहितं सांशमित्यर्थः । अतः श्रोत्रेन्द्रियाणां भेद इति भावः । तस्य प्रदेशस्यौपाधिकत्वे 'उपाधिसम्बन्ध एकदेशेऽथ सर्वगः । एकदेशेऽनवस्था स्यात् सर्वगश्चेन्न भेदकः' इत्युक्त-दोषपरिहारायोक्तम्- **स्वत इति ।।** स्वाभाविकभिन्नाभिन्नावयवोपेतं, न तु तदवयवानामौपाधिकत्वं, येनोक्तदोषः स्यादिति भावः । **अत इति ।।** सावयवत्वादित्यर्थः । **तदवच्छिन्नमेवेति ।।** तत्प्रदेशसम्बद्धमेवेत्यर्थः । न च तत्प्रदेशे सर्ववर्णानामपि सत्त्वादुपलब्धिप्रसङ्ग इति वाच्यम् । सर्ववर्णानां सत्त्वेऽपि तत्तद्व्यञ्जकध्वनीनां प्रतिनियतत्वेन युगपत्तेषामभावान्न सर्ववर्णोपलब्धिरित्युक्तमेवेति भावः । ते च ध्वनयः प्रतिनियता एव वर्णानां व्यञ्जका, अतो न सर्ववर्णोपलब्धिरित्युक्तमयुक्तमित्याशयेन शङ्कते- **समानेन्द्रियग्राह्याणामित्यादिना ।। समानम्** एकम् । समानदेशकालधर्मापन्नानामित्यस्य देशकालनिष्ठो यो धर्मः समानदेशकालत्वं तदापन्नत्वात् समानदेशकालोपेतत्वादित्यर्थः । तथा

च वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्याः समानेन्द्रियग्राह्यत्वे सति समानदेश-कालापन्नत्वाद्घटगतपरिमाणपृथक्त्ववदित्यनुमानमुक्तं भवति।

**(श्री.टि.)** अत्र व्यञ्जकपदं तत्तत्सन्निकर्षातिरिक्तव्यञ्जकपरम्। तेन तत्तद्वर्णसन्निकर्षरूपभिन्नव्यञ्जकव्यङ्ग्यत्व-स्यैव सत्त्वाद्बाध इति शङ्काऽनवकाशः। अत्र समानदेशकालापन्नयो रूपरसयोरालोकलालाजलरूपभिन्नव्यञ्जक-व्यङ्ग्ययोर्व्यभिचारवारणाय समानेन्द्रियग्राह्यत्वे सतीत्युक्तम्। तयोस्समानेन्द्रियग्राह्यत्वाभावान्न व्यभिचारः। समानेन्द्रियग्राह्यत्वे सति समानकालापन्नत्वादित्युक्ते रूपरूपत्वयोर्व्यभिचारः। महत्त्वसमानाधिकरणोद्भूतत्वस्य रूपव्यञ्जकत्वात्, 'जातियोग्यतायां व्यक्तियोग्यत्वं तन्त्रम्' इत्यभियुक्तवचनेन रूपत्वे व्यक्तियोग्यत्वस्य व्यञ्जकत्वेन साध्याभावात्। अत्रापि पूर्वोक्तालोकस्यैव रूपव्यञ्जकत्वोक्तौ तस्य रूपत्वसाधारण्येन साध्यस्यापि सत्त्वेन व्यभिचाराभावापत्तेः। अत उक्तमेव व्यञ्जकं रूपे वाच्यम्। एवं च तयोर्व्यभिचारपरिहाराय समानदेश-पदम्। रूपस्य घटे वृत्तेः, रूपत्वस्य च रूपे सत्त्वेन तयोः समानदेशत्वाभावात्। समानेन्द्रियग्राह्यत्वे सति समानदेशापन्नत्वाद् इत्युक्ते रूपतद्ध्वंसयोर्व्यभिचारः। तयोः समानेन्द्रियग्राह्यत्वात्। ध्वंसस्य प्रतियोगिसमवाय-देशवृत्तित्वेन समानदेशत्वाच्च। रूपे महत्त्वसमानाधिकरणोद्भूतत्वस्य व्यञ्जकत्वात्। ध्वंसयोग्यतायां प्रतियोगि-योग्यत्वस्य तन्त्रत्वेन ध्वंसे प्रतियोगियोग्यत्वस्य व्यञ्जकत्वेन साध्याभावात्। ध्वंसयोग्यतायामधिकरणयोग्यत्वं तन्त्रमिति ध्वंसेऽधिकरणयोग्यत्वं व्यञ्जकमिति केचिदाचक्षते। तन्न। तथात्व आत्मनि धर्मादिध्वंसस्य प्रत्यक्षत्वापत्तेः। धर्मादिध्वंसाधिकरणस्याऽत्मनो मानसप्रत्यक्षयोग्यत्वात्। अतो ध्वंसे उक्तमेव व्यञ्जकमङ्गी-कार्यम्। अत्र रूप आलोकस्य व्यञ्जकत्वोक्तौ तस्य ध्वंससाधारण्येन साध्यस्यापि सत्त्वेन व्यभिचाराभावापत्तेः, अतो रूपे महत्त्वसमानाधिकरणोद्भूतत्वमेव व्यञ्जकमङ्गीकार्यमिति व्यभिचारपरिहाराय समानकालपदम्। तयोश्च भिन्नकालत्वान्न व्यभिचार इति भावः।

गोत्वाश्वत्वयोर्व्यभिचारान्नेदमनुमानं युक्तमित्याह- **गोत्वाश्वत्वादीनामिति ॥** समानेन्द्रियग्राह्याणां समानदेशकालापन्नानामिति वर्तते। **प्रतिनियतव्यक्तीति ॥** प्रतिनियतगवाश्वादिव्यक्तिरूपव्यञ्जकव्यङ्ग्यत्वस्ये-त्यर्थः। अनेन साध्यं नास्तीति सूचितम्। हेतोरेवाभावान्न व्यभिचार इत्याशङ्कते- **गोत्वाश्वत्वादीनामिति ॥ व्यक्तिसर्वगतत्वेनेति ॥** स्वाश्रयव्यक्तावेव सर्वत्र गतत्वेनेत्यर्थः। यद्वा स्वाश्रयसर्वव्यक्तिगतत्वेनेत्यर्थः। गोत्वं स्वाश्रयगोव्यक्तावेवास्ति नत्वश्वे। एवं चाश्वो गोत्वं प्रति न व्यक्तिः। एवमश्वत्वमपीति, न समानदेशत्व-मिति भावः। अस्त्येव समानदेशत्वमित्याह- **प्रत्यासत्तेरिति ॥** संयुक्तसमवायरूपाया इत्यर्थः। अश्वसंयुक्तायां गवि गोत्वस्य, गोसंयुक्तेऽश्वे अश्वत्वस्य च समवायादिति भावः। ननु यदा गवाश्वावसंयुक्तौ तिष्ठतस्तदा नोक्तरूपा प्रत्यासत्तिरिति चेन्न। तदाऽपि गोसंयुक्तभूसंयुक्तेऽश्वेऽश्वत्वस्य समवायेन [1]संयुक्तसंयुक्तसमवायरूप-परम्परासम्बन्धस्याश्वस्य गोत्वेन, गोरश्वत्वेन सत्त्वात्समानदेशत्वमस्तीति व्यभिचार इति भावः। ननु संयुक्त-समवायादेरेव परम्परासम्बन्धत्वात् संयुक्तसंयुक्तसमवायादेः कथं तत्त्वमिति चेन्न। संयुक्तसमवायादेरिन्द्रि-यार्थसन्निकर्षरूपत्वात्। यथोक्तम् 'इन्द्रियार्थयोर्यः सन्निकर्षः स साक्षात्कारिप्रमाहेतुः स च षड्विध एव' **(श्री.टि.)** इति। अयं त्वर्थयोरेव परम्परासम्बन्धः कथ्यते। अर्थयोरेतादृशः परम्परासम्बन्धो बहुतरणिपरिस्पन्द-रूपपरत्वस्य देवदत्ते सत्त्वेन देवदत्ते तरणिपरिस्पन्दघटकतया यदा कालः कल्प्यते तदा दृष्ट इत्यवधेयम्। ननु साक्षात्सम्बन्धेनैव समानदेशत्वं विवक्षितं, न तूक्तपरम्परासम्बन्धेन। तथा चाश्वत्वस्य गोव्यक्त्या गोत्वस्य चाश्वव्यक्त्या समवायरूपसाक्षात्सम्बन्धाभावान्न व्यभिचार इत्याशङ्क्याऽह- **समवायाभावस्येति ॥ वर्णेष्व-पीति ॥** वर्णानां द्रव्यत्वेन सर्वगतत्वान्न समवायरूपसाक्षात्सम्बन्धेन समानदेशत्वमस्तीति स्वरूपासिद्धिरिति भावः। अङ्गीकृत्येदं दूषणमुक्तम्। समवायस्यैकत्वेन य एव गोत्वसमवायः स एवाश्वत्वसमवाय इति समवायेन समानदेशत्वमपि गोत्वाश्वत्वयोरस्तीति व्यभिचार एव। यदि च समवाये औपाधिकभेदमङ्गीकृत्य परिहारः तदा समवाये स्वाभाविकैकत्वाङ्गीकारभङ्गः। औपाधिकभेदस्यापि पार्थिवपरमाणौ पाकजन्यरूपस्य स्वाभाविकनीरूपत्वं प्रतीव स्वाभाविकसमवायैकत्वविरोधित्वात्। यथोक्तम् 'यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यते' इति।

स्थलान्तरेऽपि व्यभिचारमाह- **किञ्चेति ॥** अध्ययनगुणाश्रयत्वयोः प्रतिनियतयोर्व्यञ्जकयोस्सत्त्वादिति भावः। आदिपदेन सत्त्वनरत्वपरिग्रहः। तयोर्व्यक्तिसंस्थानविशेषरूपप्रतिनियतयोर्व्यञ्जकयोः सत्त्वादिति द्रष्ट-व्यम्। रूपपरिमाणयोश्च व्यभिचार इत्याह- **रूपेणेति ॥** रूपे महत्त्वसमानाधिकरणोद्भूतत्वं व्यञ्जकम्, परिमाणे तु किमित्यत उक्तम्- **परिमाणस्येति ॥** इन्द्रियावयवैरर्थावयवानाम् अर्थावयवैरिन्द्रियावयविन, इन्द्रियावय-वैरर्थावयविनः, अर्थावयविनेन्द्रियावयविन इति चतुष्टयसन्निकर्ष इत्यर्थः। दृष्टान्ते साध्यवैकल्यमभिप्रेत्याऽह- **तथेति ॥** पृथक्त्वादेरित्यत्राऽदिपदेन परिमाणग्रहणम्। समानेन नीरादिनाऽभिहारो

मेलनम्, तदभावो व्यञ्जक इत्यर्थः। परिमाणे तु चतुष्टयसन्निकर्षो व्यञ्जकतयोक्त एवेति साध्यवैकल्यमित्याशयः। ननु वर्णव्यतिरिक्तस्य ध्वनेरेवाभावात्कस्य वर्णव्यञ्जकत्वं स्यादित्याशङ्क्य निराकरोति- **न चेति ॥** कुतो न चेत्यतोऽनुभव-विरोधादित्याह- **दूरादिति ॥ एतत्सर्वमिति ॥** इदमुक्तं भवतीत्यादिनोक्तं प्रमेयमित्यर्थः। **प्रत्यभिज्ञेति ॥** वर्णानादिनित्यत्वावगाहिप्रत्यभिज्ञेत्यर्थः। **आगमा इति ॥** 'वर्णात्मकाश्च ये शब्दाः' इत्यादिरूपाः। **साक्षिणः** संवादिनः। **वेद एव नास्तीति ॥** तथा च वेदश्चेति किमर्थं पृथगुपसंह्रियत इत्यर्थः। ननु कथं नास्ति, प्रत्येकसमुदायाभ्यां वर्णानामर्थाभिधायकत्वस्यानुपपत्तेः तदन्यथाऽनुपपत्त्या वर्णातिरिक्तस्तद्व्यञ्ज्यः स्फोट एव वेदस्थानीयो भविष्यति। अतो वेदश्चेति पृथगुपसंहारो युज्यत इत्यत आह- **स्फोटस्येति ॥ विशिष्टेति ॥** क्रमस्य विशिष्टत्वं नाम भूतभवद्भविष्यद्भिरखिलैरपि एकप्रकारेण पठ्यमानत्वरूपं नियतत्वं द्रष्टव्यम्। नन्वनेन पृथगुक्तेः कोऽभिप्राय उक्त इत्यत आह- **अवस्थेति ॥** तथा च वर्णानां वर्णत्वक्रमविशेषविशिष्टत्वरूपावस्था-भेदाद् वर्णा वेदश्चेति पृथगुपसंहारो युज्यत इत्यर्थः।

**(पां.टि.) सर्वोपलब्धेरिति ॥** सर्ववर्णोपलब्धेरित्यर्थः। कथमनेन सर्वदोपलब्ध्यादिप्रसङ्गनिरास इत्यत आह- **इदमुक्तं भवतीति ॥** तर्हि तस्य वर्णस्य सर्वदोपलम्भः स्यादित्यत आह- **ध्वनेश्चेति ॥** तथाप्येकवर्णोपलब्धिसमये **(पां.टि.)** सर्ववर्णोपलब्धिरनिवार्येत्यत आह- **ते चेति ॥** देवदत्तस्यैकवर्णोपलम्भसमये दूरस्थस्य यज्ञदत्तस्यापि तदुपलम्भप्रसङ्गं निरस्यति- **भूतेति ॥** एतच्च प्रागेव विवृतम्। ननु वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्या एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वाद्घटगतैकत्वपरिमाणवत्। अत्र हेतौ भिन्नेन्द्रियग्राह्यरूपरसादा-वव्यभिचाराय समानेन्द्रियेति विशेषणम्। एकेन श्येनचरणावच्छेदेन वर्तमानयोर्भिन्नसंयोगिव्यङ्ग्ययोः श्येनस्य स्थाणुतदवयवाभ्यां संयोगयोर्व्यभिचारनिरासाय समानदेशत्वे सतीति विशेषणम्। इह च समानदेशत्व-मनतिरिक्तदेशत्वं विवक्षितम्। तेनोक्तयोः संयोगयोरेकस्मिन् श्येने वृत्तावपि स्थाणुसंयोगस्यावयवसंयोगानाश्रये स्थाणौ, अवयवसंयोगस्य च स्थाणुसंयोगानाश्रयेऽवयवे वृत्त्या अतिरिक्तदेशत्वान्न व्यभिचारः। कालरूपावच्छेद-भेदेनैकघटनिष्ठयो रूपतद्ध्वंसयोर्व्यभिचारनिरासाय एकावच्छेदेनेति विशेषणम्। एकावच्छेदश्च न केवलं कालतः किन्तु देशतोऽपि। तेनानवयवद्वयवृत्त्योरवयवद्वयारब्धयोरवयवितदवयवसंयोगयोर्व्यभिचारो निरस्तः। अवयविनो व्याप्यवृत्तित्वेन अवयवसंयोगस्य चाव्याप्यवृत्तित्वेन देशतोऽवच्छेदकभेदादित्याशयेन शङ्कते- **समानेन्द्रिय-ग्राह्याणामिति ॥ ***किमत्र व्यञ्जकशब्देन विषयतत्सन्निकर्षसाधारण्येन ज्ञानहेतुमात्रं विवक्षितं किं वा तद्व्यतिरिक्तो ज्ञानहेतुः। नाऽद्यः। बाधित्वादिति भावेन द्वितीयं दूषयति- **गोत्वाश्वत्वादीनामिति ॥** न च गोत्वादेरश्वादाववृत्तेर्न समानदेशत्वमिति न तत्र व्यभिचार इति वाच्यम्। तथा सति जातिः सर्वगतेति पक्षभङ्गप्रसङ्गेन गोत्वादेरश्वादौ वृत्तेः परेणाङ्गीकर्तव्यत्वादिति भावः। आदिपदेन त्वचा ग्राह्ययोर्घटगत-स्पर्शपृथक्त्वयोः परिग्रहः। तत्पृथक्त्वस्य स्पर्शाव्यञ्जकेनावधिना व्यङ्ग्यत्वादिति द्रष्टव्यम्।

ननु जातिसर्वगतत्ववादो न गोत्वादेर्गवादाविवाश्वादावपि वृत्त्यभिप्रायकः, किन्तु स्वदेशभूतव्यक्तिसर्व-गतत्वाभिप्रायक एवेति न गोत्वादेरश्वादाववृत्तौ तत्सिद्धान्तभङ्गो नापि व्यभिचार इत्याशङ्कते- **गोत्वा-श्वत्वादीनामिति ॥** अश्वादेर्गोत्वादिदेशत्वाभावं वदतो देशशब्देन यया कयाचित्प्रत्यासत्त्या तद्देशोऽभिमतः समवायिदेशो वेति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **प्रत्यासत्तेरिति ॥** तथा च व्यभिचार एवेति भावः। द्वितीयं दूषयति- **समवायाभावस्येति ॥** वर्णानां नित्यद्रव्यत्वस्य मत्सिद्धान्तत्वेन समवायिदेशाभावेन समानदेशत्वरूपविशेषणासिद्धिरिति भावः। विषयतत्सन्निकर्षातिरिक्तो ज्ञानहेतुर्व्यञ्जकशब्देन विवक्षित इत्यस्मिन् पक्षे स्थलान्तरेऽपि व्यभिचारमाह- **किञ्चेति ॥** विषयादिसाधारण्येन ज्ञानहेतुमात्रं व्यञ्जकपदेन विवक्षितमिति पक्षे व्यभिचारमप्याह- **रूपेणेति ॥ क्षीरेति ॥** अत्र रूपेण समानदेशस्येति, अधिको व्यञ्जक इति चानुवर्तते। समानैरभिहारो मिश्रणं तदभावो रूपाव्यञ्जक एव तत्पृथक्त्वस्य व्यञ्जक इति तत्र व्यभिचार इत्यर्थः। यद्यपि क्षीरनीरयोर्विद्यमानभेदयोः स्वरूपग्रहणेऽपि पृथक्त्वरूपभेदस्याग्रहो न तद्ग्रहहेतुभूतसमानाभि-**(पां.टि.)** हाराभावनिबन्धनः, किन्तु समानाभिहाररूपप्रतिबन्धकसत्त्वप्रयुक्त इति, उक्तसाध्यस्यापि सत्त्वान्न व्यभिचारो वक्तुं युक्तः। तथाऽपि प्रतिबन्धकाभावस्यापि हेतुत्वाभ्युपगमेनायं ग्रन्थ इत्यवधेयम्। **नास्ती-ति ॥** तथा च व्यक्त्यैक्यान्न ध्वनिवर्णयोर्व्यङ्ग्यव्यञ्जकभाव इति भावः। **एतत्सर्वमिति ॥** ध्वनेर्वर्णत्वं प्रतिनिय-तत्वं भूताकाशस्यैव श्रोत्रत्वं, ध्वनेस्तद्गुणत्वमित्यादिकं सर्वमित्यर्थः। (**आगमाश्चात्रेति** । शोधः।) **विशि-ष्टेति ॥** विशिष्टक्रमोपेतबुद्धिविषयवर्णात्मक इत्यर्थ इत्यन्यत्र विस्तरः। **अवस्थेति ॥** वर्णानामेवाविशिष्टत्व-विशिष्टत्वरूपावस्थाभेदादित्यर्थः।

**(व्या.टि.) आदिशब्देनेति ॥** समासार्थत्वेनेत्यर्थः। **वर्णधर्मा इति ॥** कत्वादयो ह्रस्वत्वदीर्घत्वादयश्च।

तारत्वमन्द्रत्वयोर्ध्वन्युपाधिकत्वात्तद्व्यावृत्तये तान् विशिनष्टि- **येऽनौपाधिका इति ॥** दीर्घत्वादेरनौपाधिकत्वम् 'दैर्घ्यादयोऽपि ध्वनिष्विव वर्णे स्वाभाविका एव। अन्यथा स्वरेष्विव वर्णेष्वपि ध्वानोपधानवशेन दैर्घ्यादि-प्रतिभासप्रसङ्गात्' इत्यादिना, 'अन्यथा न खलु नग इति नाग इति वा शब्दात्' इत्यादिना च सुधायाम् 'दीर्घत्वं वर्णगतं सत्यमेव हेतुः' इति न्यायामृते चोपपादितम्। तारत्वमन्द्रत्वादय इति केचित्। तेषामुच्चैष्ट्वोपांशुत्वरूपत्वेन ध्वन्युपाधिकत्वात्। निगमयति- **वेदश्चेति ॥** ननु वर्णानामेव वेदत्वे पृथगुपसंहारः किंनिबन्धन इत्यत आह- **तन्नित्यत्वस्य पृथग्विधत्वादिति ॥** नित्यत्वे कादाचित्कोपलब्धिं बाधिकामाशङ्कते- **नन्विति ॥** कारण-कादाचित्कत्वेन तत्परिहारमाशङ्क्य परिहरति- **न चेति ॥** तदसम्भवमाह- **तावतीति ॥** 'यावद्ब्रह्म तावती' इति ब्रह्मतुल्यत्वेन देशकालसम्बन्धः श्रुत्यर्थः। समाधिविमर्तिं दर्शयति- **अत्रैक इति ॥ अवष्टब्धं** प्रतिबद्धम्। **नोपलम्भयति** न ज्ञापयति। **कोष्ठ्य इति ॥** 'शरीरावयवाच्च' इति भवार्थे यत्प्रत्ययः। **प्रतिष्ठमानः** प्रस्थानं कुर्वाणः। 'उरःप्रभृतीनि' इति तद्गुणसंविज्ञानः। **अष्टाविति ॥** कण्ठादीनि सप्त उरश्चैकमित्यष्टावित्यर्थः। स्थानशब्दो भूम्ना गुणः सृष्टिशब्दवत्। **अभिहत्य** सम्बध्य। **शष्कुलीं** विवरम्। **स्तिमितमिति ॥** ष्टिम ष्टीम आर्द्रीभावे, शीतमित्यर्थः। **ततः** प्रतिबन्धकापनयने। **संस्कारो** गुणाधानम्। **विभागेनेति ॥** तस्य संयोग-नाशकत्वादित्यर्थः। **अप्रामाणिकेति ॥** उत्तरक्षण एव वायुविभागसंयोगनाशादौ प्रमाणाभावादिति भावः। मीमांसकमतमनुवदति- **अन्ये त्विति ॥ वायुगुण इति ॥** अत एव 'बबरः प्रावा(पूर्वा) हणिरकामयत' इत्यादावनित्यसंयोगमाशङ्क्य बबरो बर्बरशब्दायमानो वायुरिति व्याकुर्वन् शबरः बब(र्ब)रासत्तामाह। **प्रसङ्गेनेति ॥** वायुस्पर्शे व्याप्तिनिर्णयादिति भावः। **तदिति ॥** ध्वनेरित्यर्थः। व्यङ्ग्यैकेन्द्रियग्राह्यत्वस्य व्यञ्ज-कत्वव्यापकतया प्रयोजकत्वात् तदभावेन तदभावमाह- **श्रोत्रेति ॥** तयोर्व्याप्तिं दर्शयति- **घटप्रदीपादाविति ॥ तत्रेति ॥** कर्णशष्कुल्यामित्यर्थः। **तेन** यज्ञदत्तेन। अनेन कथमुक्तशङ्कापरिहार इत्यतो वर्णानां नित्यत्वेऽपि व्यञ्जकस्य ध्वनेराशुतरविनाशित्वान्न सर्वदोपलब्धिप्रसङ्गः। प्रतिनियतव्यञ्जकव्यङ्ग्यत्वान्न सर्ववर्णोपलब्धि-प्रसङ्गः। तत्तत्कर्णपुटावच्छिन्नध्वनिना तदवच्छिन्नवर्णस्य तत्तच्छ्रोतारं प्रत्येव व्यञ्जनान्न सर्वेषां देवदत्तादीनामुप-लब्धिप्रसङ्ग इत्याशयं विवृण्वान आह- **इदमुक्तं भवतीति ॥ यस्तु कर्णेत्यादि ॥** अनेन कदम्बमुकुलादिन्यायेन **(व्या.टि.)** कर्णशष्कुल्यवच्छिन्नवर्णस्य व्यञ्जको भवतीत्युक्तं भवति। कथमेतद्युज्यते बाधकसत्त्वात् साधका-भावाच्च। तथा हि। श्रूयमाणस्य ध्वनेर्वर्णस्य वा समीपत्वेन दूरो ध्वनिर्वर्णो वा पूर्वं श्रुतोऽधुना तु मत्समीपो ध्वनिर्वर्णो वा श्रूयत इत्यनुभूयमानव्यवस्थाऽयोगः। १। 'दूराद्वर्णाग्रहणेऽपि ध्वनिग्रहणात्' इति स्वोक्त्ययोगश्च, वर्ण-ध्वन्योर्दूरत्वायोगात्। २। वक्त्रुच्चारणजन्यध्वनेरव्यञ्जकत्वे 'उच्चारणं तु व्यञ्जकजनकत्वेनोपयुज्यते' इति स्वोक्तिविरोधश्च। ३। एकलव्यादेः श्रूयमाणशब्दस्थानश्ववक्त्रशरपूरणाद्यतिशयायोगाच्च। ४। लोके गरुडादीनां दूरदर्शनशक्तिर्भुजङ्गादीनां दूरस्थशब्दश्रवणशक्तिरिति प्रावादापवादापातश्च। ५। 'वराहगृध्रादिषु दूरस्थशब्द-रूपादिग्राहिष्वपि तादृशरसादिग्रहणसामर्थ्यस्यादृष्टत्वात्' इति प्राचीनस्वोक्तिविरोधश्च। ६। किञ्च वक्तृ-कण्ठाद्यवच्छिन्नवर्णादेरग्रहणे कण्ठादेर्वर्णस्थानत्वायोगः। उत्पत्तिव्यक्त्यन्यतरस्थानत्वाभावात्, व्यञ्जक-जनकत्वाभावाच्च। ७। स्थानत्वायोगे तत्साम्यादेर्दूरापास्तत्वेन सावर्ण्याद्ययोगाच्च। ८। दन्ताद्यवयवसम्बन्धाभावे 'शरीरावयवाच्च' इति यत्प्रत्ययाभावेन दन्त्यादिशब्दव्यवहारानुपपत्तिश्च। ९। किञ्च कर्णपुटावच्छिन्नध्वनेरेव श्रोत्रग्राह्यत्वे (न) आद्यादिध्वनेरश्रावणत्वेन तदेकप्रमाणकस्य तदभावादभावप्रसङ्गः। १०। किञ्च कर्णपुटावच्छिन्नस्य ध्वनेर्ग्रहणे तस्य देवदत्तीयत्वाभावेन तेन देवदत्तादिपुरुषविशेषानुमानानुपपत्तिः। ११। अवधाने प्राच्यां भेरीशब्दः, प्रतीच्यां शङ्खशब्दः, इति दिग्विशेषज्ञानानुपपत्तिश्च। १२। चैत्रः शब्दायते तीर इत्यनुभवविरोधश्च। १३। चैत्रस्य कण्ठरवः श्रूयत इत्यनुभवविरोधश्च। १४। तन्त्रीध्वनेर्मूर्च्छनादिवैजात्येन वैजात्यानुभवायोगश्च। १५। पुराणेषु दूरश्रवणादेर्विद्याफलत्वोक्त्ययोगश्च। १६। इतोऽधिकानि बाधकानि गुरुप्रभायामुक्तानि द्रष्टव्यानि। साधकमपि प्रत्यक्षस्य शब्दमात्रग्राहित्वेन कदम्बमुकुलन्यायाविषयकत्वात्, चक्षुषेव श्रोत्रेणापि दूरस्थशब्दग्रहणोपपत्तेरनुमानस्याप्ययोगात्, एतद्विषये आगमाभावाच्च नास्त्येव। तस्मात्कथमेतदिति पूर्वपक्षरहस्यम्।

सिद्धान्तस्तु, साधकप्रमाणं तावदन्यथाऽनुपपत्तिः। श्रोत्रेण शब्दप्रत्यक्षं तावदनुभवसिद्धम्। न च लौकिकसन्निकर्षेण विना लौकिकसाक्षात्कारः। सन्निकर्षश्च न तावद्भेरीदण्डसंयोगादिना तदवच्छिन्ननभःप्रदेशे जायमानस्य तद्गुणस्य शब्दस्याऽगमनेन। गुणिनं विहाय गुणस्याऽगमनायोगात्। गुणिनश्च नभःप्रदेशस्याऽगमनं नास्त्येव। नापि नाभसस्याणोः श्रोत्रस्य स्वतो गमनम्। इन्द्रियस्य गोलकं विना गमनायोगात्। समीपदूरशब्दयोर्युगपद्ग्रहणायोगाच्च। नापि रश्मिद्वारा। अतैजसत्वेन रश्मिद्वारा गमनायोगात्। 'इन्द्रियत्वे समानेऽपि घ्राणादीनामतैजसानामनेवम्भावः। चक्षुषस्तैजसत्वेन रश्मिद्वारा बहिर्निर्गमनमित्यङ्गीकारे बाधका-भावात्' इति सुधोक्तेश्च। तस्मादन्यथाऽनुपपत्त्या कदम्बमुकुलादिन्यायेन कर्णपुटावच्छेदेन जायमानध्वन्यादि-ग्रहणम्। 'आगमाश्चात्र

साक्षिणः' इति टीकोक्तेरागमोऽपि गवेषणीयः। बाधकानि चेत्थं सुपरिहाराणि। कण्ठताल्वादिस्थानावच्छेदेन वैयाकरणोक्तप्रयत्नविशेषैः प्रतिनियतो वर्णव्यञ्जको ध्वनिस्तारो जायते। अनन्तरं क्रमेण पूर्वपूर्वापेक्षया मन्दा प्रथमध्वनिजातीया व्यञ्जकपरम्परा जायते। व्यञ्जकस्य च स्वावच्छिन्नविषये **(व्या.टि.)** इन्द्रियसंयोगे सति ज्ञानजनकत्वम्, सतीन्द्रियपाटवे स्वस्य मान्द्येऽपि ज्ञानजनकत्वम्, अपाटवे तु प्रौढ्यपेक्षा, अतिमान्द्ये सजातीयाभिघाते(धाने) वा न व्यञ्जकत्वम्, प्रतिपुरुषमिन्द्रियपाटववैचित्र्यमित्यादिकं सर्वमपि कार्यानुसारेण कल्प्यम्। आलोकादौ दृष्टं च। तथा च न तावत्प्रथमं बाधकम्। समीपे तारं भेरीशब्दं श्रुत्वा गच्छतो देशव्यवधानक्रमेण मान्द्यप्रतीतेरन्यत्रापि मान्द्येन दूरस्थशब्दमूलकत्वस्य तारत्वेन समीपस्थशब्द-मूलकत्वस्यानुमानेन समीपेऽपि शब्दे तदुपनीतभानसम्भवेन दूरत्वमन्दत्वव्यवस्थोपपत्तेः। नापि द्वितीयम्। वक्तुः सकाशाद्दूरस्थितस्य वर्णाग्रहणेऽपि ध्वनिग्रहणोक्तिसम्भवात्। ध्वनिग्रहणेऽपि वर्णाग्रहणं तु ध्वनेर्मान्द्यात् सजातीयाभिघाताद्वा दूरतया व्यञ्जकजात्यनाक्रान्ततयोत्पादाद्वा सङ्गच्छते। नापि तृतीयम्। उच्चारणस्य व्यञ्जकजनकत्वोपगमात्। नापि तुरीयम्। एकलव्यस्य श्रूयमाणशब्दमूलस्थाने शरपूरणसामर्थ्यसम्भवात्। नापि पञ्चमषष्ठे। भुजङ्गवराहादीनां दूरस्थशब्दमूलकशब्दग्रहणसामर्थ्योपगमात्। नापि सप्तमाष्टमनवमानि। व्यञ्जकमादाय स्थानत्वस्य तत्साम्यस्य दन्त्यादिशब्दवाच्यत्वस्य च सम्भवात्। नापि दशमम्। श्रोत्रसंयोगसत्त्वे आद्यस्यापि श्रावणविषयत्वेन कुड्यान्तर्वर्त्यवयववृत्तिस्पर्शस्येवाभावानापत्तेः। नाप्येकादशम्। देवदत्तीय-ध्वनिपरम्परायां देवदत्तानुमापकवैजात्योपगमेन तदनुमानोपपत्तेः। नापि द्वादशम्। स्पर्शविशेषेणातीन्द्रियस्यापि वायोर्दिग्विशेषज्ञानस्येव शब्दविशेषेण मूलशब्दस्य दिग्विशेषज्ञानोपपत्तेः। अत एव क्वचित्संशयोऽपि। नापि त्रयोदशादीनि। श्रूयमाणशब्दमूलशब्दमादाय तीरे चैत्रं पश्यतः तीरे शब्दायत इत्युपनीतभानस्य, कण्ठरव-जातीयत्वमादाय कण्ठरवः श्रूयत इत्यस्य, मूर्च्छनाजन्यशब्दपरम्परायां वैजात्योपगमेन तदनुभवस्य च सम्भ-वात्। नापि षोडशम्। दूरस्थशब्दपरम्परया प्राप्तस्यात्युपांशुशब्दस्य पुरुषान्तरायोग्यस्य यच्छ्रवणं तस्य विद्याफलत्वोपपत्तेः। वस्तुतस्तु अलौकिकप्रत्यक्षं लौकिकसन्निकर्षानपेक्षं विद्याफलमिति न दोषः। तस्माद्यथा-टीकोक्तं युक्तम्। 'अत्रामाघो(द्यो)षो गच्छतु' इत्यादिश्रुतिभिर्ध्वनेर्गमनश्रवणात्, शब्दस्य वाय्वाहार्यत्वप्रवादाच्च, गुणाद्वाऽऽलोकवत्' इति सूत्रे गुणिनं विहाय प्रकाशाख्यगुणस्य गतिसमर्थनात्, 'व्यतिरेको गन्धवत्' इति सूत्रे गन्धिनं विहाय गन्धगमनस्य दृष्टान्तीकरणात् तन्न्यायेन शब्दस्यापि गमनसम्भवाच्च, तारस्यापि शब्दस्य देशकालव्यवधानक्रमेण मान्द्योपगमेन सर्वप्रत्ययानां सूपपादत्वाच्च, बाधकानामप्रसराच्च, शब्दागमपक्षोऽपि युक्त इति वयमुत्पश्यामः।

वस्तुतस्तु 'श्रोत्रस्यैव गमनेन शब्दग्रहणम्' इति यत्तत्त्वप्रकाशिकायामुक्तं तदेव सिद्धान्तः। पूर्वोक्तपक्षे कर्णावच्छेदेन शब्दोत्पत्तौ मानाभावात्। श्रोत्रगमनादिनोपपत्त्या(त्पत्त्य)ऽन्यथाऽनुपपत्तेरभावात्। आगमस्य चाभावात्। आगमाश्चात्रेति टीकोक्तेर्वर्णनित्यत्वविभुत्वध्वनिव्यञ्जकत्वादिविषयतया सावकाशत्वात्। बहुशब्द-कल्पनया गौरवाच्च। भेर्यादिजन्यो ध्वनिर्मया श्रुत इति प्रत्यभिज्ञाविरोधाच्च। तज्जातीय इति कदाऽप्यननु-भवाच्च। बाधकानां क्लेशेन परिहरणीयत्वाच्च। न चोक्तरीत्या श्रोत्रस्य गमनासम्भवः। भूयो नभोभूतोपचितस्यापि 'तैजसानीन्द्रियाण्याहुः' इति वचनेन पञ्चीकरणेन च रश्मीनां सत्त्वात्। न च निश्चायकसाधकमानाभावः। **(व्या.टि.)** दूरश्रवणादिभाष्योक्तयुक्तेः। 'यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत' इति उपलक्षणया सर्वेन्द्रिय-प्रकाशप्रतिपादकश्रुतेः। 'अणूनि वेन्द्रियाणि तेषां प्रकाशो व्यातत' इति न्यायविवरणोदाहृतस्पष्टश्रुतेः। 'इन्द्रियत्वे समानेऽपि घ्राणादीनामतैजसानामनेवम्भावश्चक्षुषस्तैजसत्वेन रश्मिद्वारा निर्गमनम्' इति सुधोक्तिरुपेत्यवादतया चक्षुषस्तावद्गतिसमर्थनाभिप्रायिका। न च ब्रह्मभाषितानां ग्रहणापत्तिर्बाधिका। ब्रह्मरूपादेरिवाग्रहणोपपत्तेः। न च क्वचित्सन्देहायोगः। दोषवशाद्रूपादाविव तदुपपत्तेः। न च वस्तुतस्तारस्य दूरस्थैर्मान्द्येन ग्रहणायोगः। महतो वृक्षादेरणुत्वेनेव दोषवशाद्ग्रहणोपपत्तेः। न च पक्षान्तरे तारस्य बहुपरम्पराजनकत्वेऽपि मन्दस्याल्प-परम्पराजनकत्वेन तारसमीपस्थस्य मन्दस्य दूरस्थैरग्रहणेऽप्येतत्पक्षे ग्रहणापत्तिः। दीर्घवृक्षसमीपस्थस्य अणोरिवा-ग्रहणोपपत्तेः। न च प्राच्याः सकाशात् प्रतीचीं प्रति वायौ वाति सति दूरस्थप्राच्यशब्दग्रहणानुपपत्तिः, प्रतीच्यशब्दग्रहणापत्तिश्चेति वाच्यम्। वातप्रमीवद्वाय्वभिमुखं श्रोत्ररश्मिगमनोपगमेन तदुपपत्तेः। एवमन्यान्यपि बाधकानि परिहरणीयानि। अधिकं तु गुरुप्रभायां द्रष्टव्यम्।

सर्वदोपलब्धिं वारयति- **ध्वनेश्चाऽशुतरविनाशित्वेनेति ॥** नन्वन्त्यशब्दस्य किं नाशकम्। पूर्वशब्देष्वि-वोत्तरशब्दाभावात्। सिद्धान्ते समवायाभावेन पूर्वशब्दनाशस्यासमवायिनाशत्वेन नाशकत्वायोगात्। नापि पूर्वशब्दस्य निमित्तत्वेन निमित्तनाशत्वेन कार्यनाशकत्वम्। दण्डादिनाशेन घटादेर्नाशापत्तेः। नापि सुन्दोपसुन्द-न्यायेनान्त्योपान्त्ययोः परस्परनाशकत्वम्। अन्त्यशब्दद्वितीयक्षणे नश्यत उपान्त्यस्य पूर्ववृत्तित्वाभावेन तृतीय-क्षणे नाशोत्पादकत्वायोगादिति चेन्न। निमित्तनाशत्वेन

कार्यनाशकत्वायोगेऽपि तैलपुण्यापेक्षाबुद्ध्यादीनां नाशात् दीपस्वर्गभोगद्वित्वादिनाशदर्शनेन फलबलादन्त्यशब्दव्यक्तिनाशं प्रति निमित्तशब्दनाशस्य विशिष्य हेतुत्वसम्भवात् । अधिकं तु गुरुप्रभायां द्रष्टव्यम् । सर्वोपलब्धिं वारयति- **प्रतिनियता एवेति ॥** प्रतिव्यङ्ग्यव्यक्ति-विजातीया इत्यर्थः । तेन नैकेन ध्वनिना वर्णद्वयस्याप्युपलब्धिरिति भावः । **भूताकाशमेव श्रोत्रमिति ॥** अनेन, जन्यं मूर्तं भूताकाशमनङ्गीकृत्य नीरूपं नित्यं व्याप्तं यदव्याकृतमाकाशं तदेव भूतं तदात्मकत्वमेव श्रोत्रस्येति वदन्तो वैशेषिकाः परास्ताः । श्रोत्रस्य तादृशाकाशात्मकत्वे साधकाभावात् । आकाशश्रोत्र-योरतीन्द्रियत्वेन प्रत्यक्षाप्रसरात् । 'रूपादिषु पञ्चसु मध्ये शब्दस्यैव ग्राहकत्वात्' इति युक्तेर्दृष्टान्ताभावेना-प्रयोजकत्वेन चासाधकत्वात् । आगमस्यानुपलब्धेः । बाधकसद्भावाच्च । तथा हि । तादृशाकाशात्मकत्वे गत्याद्यभावेन 'श्रोत्रमुदक्रामत् श्रोत्रं प्राविशत्' इत्यादिश्रुतिषु, 'इन्द्रियाणां हि चरताम्' इत्यादिस्मृतिषु बोध्यमानं गमनादिकम्, 'सूर्यं चक्षुर्गमयात्' इत्यनुवाके 'दिशः श्रोत्रम्' इति, 'वाङ्म आसन्' इत्यत्र 'कर्णयोः श्रोत्रम्' इति च प्रार्थ्यमानं गमनादिकं च बाधकम् । एवमजन्याकाशात्मकत्वे तस्य नित्यसिद्धत्वेन 'अश्विनौ वा अकामयेतां श्रोत्रश्विनावबधिरौ स्याव' इत्यादिना श्रूयमाणमुत्पत्त्याशंसनतदर्थेष्ट्यनुष्ठानादिकम्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्यादौ पृथगुत्पत्त्यादिकथनं च बाधकम् । सत्यामिन्द्रियसम्प्रयोगादिसामग्र्यामदृष्टाभावेन कार्याभावस्यादर्शनेनोपहत्यादेश्च अचलाकाशात्मकश्रोत्रस्यासम्भवेन बधिराभावप्रसङ्गश्च । श्रोत्रस्य भूताकाशत्वे **(व्या.टि.)** च

'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम्' इति भगवद्वचनम्'

'श्रोत्रमाकाशरूपश्च मित्रधर्मजलाधिपाः ।
कुबेरश्च दिशां देवाः श्रोत्रदेवा इति श्रुताः ॥'

इत्याद्यैतरेयभाष्याद्युदाहृतवचनानि च साधकानि । भूताकाशस्य जन्यत्वेन तत्परिणामविशेषस्य श्रोत्रस्य चक्षुष इव गतिजन्युपहत्यादिमत्त्वेन न किमपि बाधकम् ।

'असंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ।
पञ्चभिः पञ्चभिर्ब्रह्मा चतुर्भिः ।'

इत्यादिषु बहुषु वचनेषु श्रोत्रनभस्तत्वयोर्भिन्नत्वोक्तावपि तत्त्वानां चतुर्विंशतिसङ्ख्याकत्वेऽपि ब्रह्माण्डान्तः-प्राणिनां करणीभूतस्य श्रोत्रस्य जन्यनाभसत्वोपगमे न तत्त्वसङ्ख्यानादिविरोधः । इयं हि वस्तुस्थितिः । असंसृष्टानि तत्त्वानि प्रत्येकं साक्षाद्विजातीयाजन्यनित्यप्रकृतिसूक्ष्मोपादानकानि पूर्वपूर्वतत्त्वोपचितानि अण्डतद्गतानि च वस्तूनि परस्परं मिश्रितजन्यचतुर्विंशतितत्त्वोपादानकानि संसृष्टानीत्युच्यन्ते । तत्तद्भूतप्राचुर्याच्च(श्च)तत्तद्भूत-शब्दव्यपदेशः (व्यपेक्ष्याः) । तत्र यदसंसृष्टं तैजसाहङ्कारोपचितं श्रोत्रं नाम तत्वं तदेकदेशः प्रचुरनभोभूतेनोपचितः संसृष्टः पद्मनाभेनाण्डान्तरानीतः प्रतिसंसारिभिन्नः प्रतिमृतिजनिगत्यादिमद्भागयुक्तः शब्दज्ञानकरणीभूतः श्रोत्र-मित्युच्यते । तथा च तत्त्वपरिगणनेन, 'तैजसानीन्द्रियाण्याहुः' इति तैजसत्ववचनेन,

'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ।'

इति शब्दतन्मात्रजन्यत्वावेदकतृतीयभागवतवचनेन, 'तेषां भूतैरुपचयः' इति भूतमात्रोपचयवचनेन, रश्मिद्वारा गमनोपगमेन न विरोधः । न च श्रोत्रस्य नाभसत्वे पार्थिवशरीरस्य पृथिव्यप्ययवन्नभस्यप्ययप्राप्त्या 'दिशः श्रोत्रम्' इति दिक्ष्वप्ययोक्तिविरोध इति वाच्यम् । मनसश्चन्द्रमसीवोपपत्तेः । तस्याभिमानिदेवताप्रवेशाभि-प्रायकत्वेऽत्रापि तथोपपत्तेः ।

'श्रोत्रमाकाशरूपं च मित्रधर्मजलाधिपाः ।
कुबेरश्च दिशां देवाः श्रोत्रदेवाः ॥'

इत्यैतरेयभाष्योदाहृतवचनाद् दिक्पदेन भूताकाशभागानां विवक्षितत्वात् श्रोत्राप्ययविवक्षायामप्यविरोधः । अव्याकृतभागानां रमामात्राभिमन्यमानत्वेन मित्राद्यभिमानायोगात् । इत्थमेव विवक्षाऽवश्यम्भावाच्च । 'अवकाशमात्रं दिगुच्यत इत्यव्याकृताकाशस्यैव दिक्त्वज्ञापनार्थम्' इति च तत्र तट्टीकोक्तिः साक्षिसिद्ध-**(व्या.टि.)** दिगभिप्राय(यि)का । न च दिक्शब्दस्योभयार्थत्वम् । भागिवाच्याकाशशब्दस्येव भागवाचि-दिक्शब्दस्यापि तदुपपत्तेः । भूताकाशमेवेत्येवकारोऽव्याकृताकाशनिरासार्थः । प्राचुर्येण

(तत्तद्भूत)इतरभूत-निरासार्थो वा। 'पृथिव्यादीनामुपपद्यते श्रोत्रत्वम्' इति सुधोक्तिरव्याकृतश्रोत्र(त्व)निरासाभिप्राय(यि)का। तस्मात्सुष्ठूक्तं भूताकाशमेव श्रोत्रमिति। अधिकं तु गुरुप्रभायाम्।

**तद्गुण एव ध्वनिरिति ॥** असाधारणगुणत्वविवक्षया च इदमवधारणम्। अन्यथा पृथिव्यादावप्यनुभवेन आकाशाद्युपादानकत्वयुक्त्या 'सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम्' इति 'परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात्। अतो विशेषो भावानां भूमावेवोपलभ्यते' इति च भागवतोक्त्या 'पृथिव्यां हि सर्वे शब्दादयोऽ-वभास्यन्ते' इति स्फुटतात्पर्योक्त्या च विरोधात्। अधिकं तु गुर्व्याम्। भूताकाशत्वे कथमुक्तदोषपरिहार इत्यत आह- **तच्चेति ॥ स्वत इति ॥** स्वभावेनेत्यर्थः। तेन न्यायमतनिरासः। **सावयवमिति ॥** पुनः सर्वोपलब्धिं प्रसञ्जयितुं वर्णानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वव्यतिरेकं साधयति- **समानेति ॥** हेतुगर्भविशेषणमेतत्। हेतोः साध्याव्यभिचारं दर्शयति- **साऽपीति ॥** येन व्यभिचारः स्यादित्यर्थः। अत्र गर्भितो हेतुः स्पष्टीकृतः तर्क-ताण्डवे। 'वर्णा न प्रतिनियतव्यञ्जकव्यङ्ग्या एककालावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् घटैकत्व-परिमाणवत्' इति। अत्र च भिन्नदेशकालीनेषु भिन्नेन्द्रियग्राह्येषु च व्यभिचारवारणाय यथायथं साधने विशेषणानीति बोध्यम्। हेतोः पररीत्याऽनैकान्तिकतामाह- **गोत्वेति ॥** हेतोरेवाभावान्न व्यभिचार इति शङ्कते- **गोत्वादीनामिति ॥** गोत्वादीनां समानदेशत्वमिति वदन् प्रष्टव्यः, किं समानदेशप्रत्यासत्तिमात्रं नेति उत समवायो नेति। आद्यमवद्यति- **प्रत्यासत्तेरिति ॥** स्वव्यक्तिमध्यवृत्त्यन्यव्यक्तिसम्बन्धस्येत्यर्थः। द्वितीयं दूषयति- **समवायेति ॥** तथा च हेतोरसिद्धिरिति भावः। स्थानान्तरे व्यभिचारेणापि दूषयति- **किञ्चेत्या-दिना ॥ प्रतिनियतेति ॥** यज्ञोपवीतादेर्ब्राह्मण्यव्यञ्जकत्वाद्रूपादेर्द्रव्यत्वव्यञ्जकत्वादित्यर्थः। अन्यत्राप्याह- **रूपेणेति ॥ अधिक इति ॥** गुणग्राहकसामग्रीत इति शेषः। अपरत्राप्याह- **तथेति ॥** व्यञ्जकव्यङ्ग्ययोरभेदेन तद्भावानुपपत्तिं शङ्कते- **नास्तीति ॥** पृथगनुपलम्भादिति शेषः। पृथक्त्वं प्रथयति- **दूरादिति ॥** अनेन ध्वनिर्वर्णादतिरिच्यते तदग्रहणेऽपि ग्रहणात्, तद्ग्रहणप्रतिबन्धकाप्रतिबध्यग्रहणत्वात् यदेवं तदेवमिति प्रयोगद्वयं सूचयति। **तद्वल** इति दृष्टार्थापत्तिं प्रमाणयति। **आगमा इति ॥** भागवतादय इत्यर्थः। **अवस्थेति ॥** तन्तूनामितरसाहित्येन पटावस्थावद् वर्णानामपीतरवर्णसाहित्येन क्रमोऽप्यवस्थाविशेषः सम्भवतीत्यर्थः।

**॥ इति वर्णनित्यत्ववादः ॥**

## मूलम् - न च केवलसिद्धेऽर्थे व्युत्पत्त्यभावादप्रामाण्यम्। सिद्धान्वित एव व्युत्पत्ति-गृहीतेः।

**(त.मं.)**अत्राऽहुः- वेदानां प्रामाण्यं नित्यत्वं च समञ्जसमेव। न तु नारायणे तात्पर्यं सम्भवति। न हि केवलसिद्धेऽर्थे तात्पर्यम्; किन्तु कार्य एव। केवलं सिद्धद्वारेण बालस्य व्युत्पत्तिग्रहणासम्भ-वात्। यद्द्वारेण व्युत्पत्तिग्रहणं शब्दानां तत्र हि तात्पर्यमित्यत आह- **न च केवलेति ॥**

**टीका -** अत्र प्राभाकरास्त्वाहुः। स्यादेवोक्तं वेदप्रामाण्यादिकं समस्तम्। किं तर्हि? यदुक्तं 'सदागमैकविज्ञेयम्' इति वेदानां विष्णुप्रतिपादकत्वं तन्नोपपद्यते। तथाहि। वाच्यवाचक-भावसम्बन्धज्ञानलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थं बोधयति नान्यथा। अन्वयव्यतिरेकाभ्यां तथाऽवगमात्। व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव भवति। वृद्धव्यवहारश्च कार्यप्रतिपत्तिनिबन्धन इति कार्यप्रतिपादकतैव शब्दस्य युक्ता। तथाहि। 'चैत्र जलमाहर' इति प्रयोजकवृद्धवाक्यश्रव-णानन्तरं प्रयोज्यवृद्धस्य जलाहरणविषयां प्रवृत्तिं दृष्ट्वा पार्श्वस्थो बाल एवमाकलयति। अस्येयं प्रवृत्तिर्बुद्धिपूर्वा स्वतन्त्रप्रवृत्तित्वात् मदीयस्तनपानादिप्रवृत्तिवदिति। पुनश्चास्य प्रवृत्तिहेतुभूता बुद्धिः किंविषयेति जिज्ञासायामेवं निश्चिनोति। वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिः मम प्रवृत्तिहेतुभूता बुद्धिर्यद्विषयिणी तद्विषयैव भवितुमर्हति प्रवृत्तिहेतुभूतबुद्धित्वात् मदीयप्रवृत्तिहेतुभूतबुद्धिवदिति। पुनरेवमवधारयति। यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता तद्वस्तु अस्यानेन शब्देन बोधितं तद्भाव-भावित्वात्। मम तु प्रमाणान्तरेणेत्यावयोर्विशेषः। तेन यद्बोधान्मम प्रवृत्तिस्तदनेन शब्देन बोध्यत इति शब्दस्य प्रवृत्तिहेतुभूतार्थबोधकतेति। पुनश्च कोऽसौ प्रवृत्तिहेतुभूतः शब्दबोध्योऽर्थ इत्यवधारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतार्थमनुसन्धत्ते। तत्र न तावदहं क्रियामात्रं फलमात्रं क्रियाफल-सम्बन्धमात्रं

वा बुद्ध्वा प्रवृत्तः, किन्तु कार्यमेव। ममेदं कार्यमिति प्रतीत्य हि स्तनपानादावहं प्रवृत्त इति स्वप्रवृत्तेः कार्यबोधपूर्वकतां निश्चित्यायमपि कार्यबोधादेव प्रवृत्त इत्यनुमाय वाक्यस्य तावत्सामान्यतः कार्यपरतामवधारयति। ततो लिङाद्यावापे कार्यावगमदर्शनात् तदुद्धारे चादर्शनात् त एव कार्यावगतिं कुर्वन्ति । शब्दान्तराणि च तदन्वितांस्तांस्तानर्थानवगमयन्तीति आवापोद्वा-पाभ्यामधिगच्छति। एवं लोके कार्य एव गृहीतशब्दसङ्गतिर्वेदेऽपि तदेव शब्दात्प्रत्येतुमर्हति । तत्र लिङादिप्रत्ययः कार्यशरीरमेवाभिदधाति प्रकृतिस्तद्विषयम् । पदान्तराणि च प्रकृत्यर्थविशेषणं कारकं तद्विशेषणं नामधेयं नियोज्यं चाभिदधति कार्यप्रतिपत्तौ व्याप्रियन्ते । सन्निपत्योप-कारकाङ्गवाक्यानि यद्यपि कार्यान्तरशून्यानि तथाऽपि प्रधानकार्यान्वितस्वार्थाभिधायकतया कार्यप्रतिपत्तावेव व्याप्रियन्ते। मन्त्रा अपि कार्याङ्गभूतार्थस्मारकतया तत्रैव नियुक्ताः कार्य एव व्यापारवन्तः । अर्थवादा अपि तत्रैव रुचिमुत्पादयन्त उपयुज्यन्त इति कृत्स्न एव वेदः कार्ये प्रमाणम्।

कार्यं च कृतिसाध्यत्वे सति कृत्युद्देश्यम्। कृतिश्च प्रयत्नः। तच्च लोके भावार्थो वेदे त्वपूर्वम्। अत एव वेदान्तानामपि कर्तृस्वरूपप्रतिपादकत्वेन देवताप्रतिपादकत्वेन वा कार्यपरतैव । प्रकरणभेदात्तदनङ्गीकारेऽपि 'आत्मा ज्ञातव्यः' इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यता-माश्रित्य कार्यपरत्वमेव वर्णनीयम्। तदेवं कार्यान्वित एवार्थे सर्वशब्दानां व्युत्पत्तिदर्शनात् केवलसिद्धार्थे तदभावान्न सिद्धस्वरूपे विष्णौ वेदस्य प्रतिपादकत्वं सम्भवतीति। तदेतत्प्रतिषेधति- **नच केवलेति ॥ केवले** कार्यान्वयरहिते, स्वप्रधाने सिद्धे कार्यातिरिक्तेऽर्थे शब्दानां व्युत्पत्त्य-भावात्तथाविधे विष्णौ वेदस्य **अप्रामाण्यम्** अप्रतिपादकत्वमिति च नेत्यर्थः। नच कार्यान्विततयैव तत्र प्रामाण्यं भविष्यति तत्किमनेनेति वाच्यम् । स्वप्रधाने विष्णौ सर्ववेदप्रामाण्यस्याभिलषित-त्वात् । अत एव सदागमैरेक एव प्रधानविज्ञेय इत्यपि व्याख्यायते । कुतो नेत्यत आह- **सिद्धेति ॥** अन्वितग्रहणेन यत्प्राभाकरैः कार्यान्वितार्थताव्युत्पादनाय शब्दानामन्विताभिधानसामर्थ्यं समर्थितं तदभ्युपगम्यत एवास्माभिरिति सूचयति। एवेति कार्यान्वयनियमनिराकरणम् । गृहीतेर्दर्शनात्। कार्यान्वयनियमं विना योग्येतरान्वितस्वार्थे व्युत्पत्तिदर्शनादित्यर्थः।

**(र.टि.) व्युत्पत्तिश्चेति ॥** प्राथमिकी व्युत्पत्तिरित्यर्थः। तेनानन्तरभाविव्युत्पत्तेर्व्याकरणादिमूलकत्वेऽपि 'न व्यवहारदर्शनादेव' इत्यवधारणानुपपत्तिरिति ज्ञातव्यम्। **अस्येति ॥** अंशतो बाधादिवारणाय इयमिति पक्षविशेषणम्। **स्वतन्त्रेति ॥** विष्टिगृहीतादिप्रवृत्तौ व्यभिचारवारणायेदम् । **प्रवृत्तिहेत्विति ॥** उपेक्षाज्ञानादौ व्यभिचारवारणायैतदिति ज्ञातव्यम् । **तद्वस्त्विति ॥** तद्वस्तुबोध एतच्छब्दजन्य इत्यर्थः । तद्भावभाविबोधत्वादिति हेत्वर्थो वा । **न तावदहमिति ॥** कृत्यसाध्यादावप्रवृत्त्या क्रियादिज्ञानस्य प्रवृत्तिव्यभिचारादिति भावः। **इत्यनु-मायेति ॥** चैत्रस्य प्रवृत्तिः कार्यबोधपूर्विका बुद्धिपूर्वप्रवृत्तित्वात् मदीयप्रवृत्तिवदित्यनुमायेत्यर्थः। **वाक्य-स्येति ॥** प्रवृत्तिहेतुभूतार्थबोधकत्वेनावधारितवाक्यस्येत्यर्थः। **पदान्तराणि चेति ॥** 'ज्योतिष्टोमेन' इत्यादितृतीयाकारकं तत्प्रातिपदिकं नामधेयम्, 'स्वर्गकामः' इत्यादि च नियोज्यमिति विवेचनीयम्। सिद्धेऽपि **(र.टि.)** कार्यान्विते गवादिशब्दानां परेणापि व्युत्पत्तिरङ्गीक्रियत इत्यतः केवल इत्युक्तमिति ज्ञापयन् व्याचष्टे- **कार्यान्वयरहित इति ॥** कार्यान्वयरहितेऽपि कार्ये लिङादीनां परेण व्युत्पत्त्यङ्गीकारात् 'सिद्धे' इत्युक्तमिति सूचयन् व्याचष्टे- **कार्यातिरिक्तेऽर्थ इति ॥** ननु परेण वेदस्य विष्णुप्रतिपादकत्वाभावाङ्गीकारात् कथं तदप्रमा-जनकत्वलक्षणमप्रामाण्यं वेदस्य । किञ्च व्युत्पत्त्यभावलक्षणो हेतुरप्रतिपादकत्वसाधको न त्वप्रामाण्यसाधको विरुद्धत्वादित्यतोऽप्रामाण्यपदं व्याचष्टे- **अप्रतिपादकत्वमिति ॥** ननु 'विशेषणानि यानीह' इत्याद्यपद्योक्त-विशेषणतदुपयुक्तप्रतिपादनमेव प्रतिज्ञातम् । अतथाभूतमिदं किमर्थमुच्यत इत्याशङ्क्य निराकरोति- **न च कार्यान्विततयैवेत्यादिना ॥ एक एव प्रधानविज्ञेय इति ॥** अनेनैकशब्दस्य विष्णुगतैकत्वसङ्ख्या मुख्यत्वं चार्थ इत्युक्तं भवति। तावता विना सकलवेदार्थत्वस्य प्राधान्यस्य चालाभात्।

**(रा.टि.) अत्रेति ॥** विष्णोरागमज्ञेयत्वविषये अनुपपत्तिमाहुरित्यर्थः । **प्रामाण्यादिकमिति ॥** वेदापौरुषेयत्व-वर्णनित्यत्वादिरादिपदार्थः । तन्नोपपद्यत इत्यत्र युक्तिं 'तदेवं कार्यान्वित एव' इत्यादिनोपसंहारे व्यक्तं विव-क्षुस्तत्सिद्ध्यर्थमुपोद्घातमाह - **वाच्यवाचकेत्यादिना ॥** प्राथमिकव्युत्पत्त्यभिप्रायेणोक्तम्। **वृद्धव्यव-हारदर्शनादेवेति ॥** कार्ये

व्युत्पत्तिप्रकारं दर्शयति- **तथाहीत्यादिना ॥** वायुप्रेरिततृणादिप्रवृत्तावव्यभि-चारायोक्तम्- **स्वतन्त्रेति ॥ निश्चिनोतीति ॥** पार्श्वस्थो बाल इत्यनुकर्षः । एवमग्रेऽपि । बुद्धित्वादित्यस्योदा-सीनतृणादिबुद्धावव्यभिचाराय प्रवृत्तिहेतुभूतबुद्धित्वादित्युक्तम् । **प्रमाणान्तरेणेति ॥** जन्मान्तरानुभवजन्य-संस्कारादिनेत्यर्थः । **आवयोरिति ॥** प्रयोज्यवृद्धस्य मम चेत्यर्थः । बोधकतेतीतिपदस्य एवमवधारयतीति पूर्वेणान्वयः । क्रियामात्रं स्तनपानादिरूपम् । फलमात्रं तृप्तिरूपम् । **सम्बन्धेति ॥** साध्यसाधनभावरूपे-त्यर्थः । **इति प्रतीत्य हीति ॥** क्रियायां कार्यत्वं प्रतीत्य हीत्यर्थः । एवमग्रेऽपि कार्यपदस्य कार्यत्वमर्थो ध्येयः । **सामान्यत इति ॥** एतादृशः शब्दार्थः कार्यं कृतिसाध्यं वस्त्विति निर्धारणं विना तादृशवस्तुतात्पर्यकं वाक्यमित्यवधारयतीत्यर्थः । **तत इति ॥** सामान्यतः कार्यपरतानिश्चयानन्तरम् । इत्यावापोद्धाराभ्यामधि-गच्छतीत्यन्वयः । **लिङाद्यावाप इति ॥** लिङ्लोट्तव्यप्रत्ययादेरन्यतमयोगे सतीत्यर्थः । **त एव** लिङादय एवेत्यर्थः । **तांस्तानिति ॥** चैत्र जलमाहरस्वेत्यादौ चैत्रादिपदार्थानित्यर्थः । **तदेवेति ॥** यद्यपि लोके मयाऽऽनयनं कार्यमिति बोधदर्शनात् क्रियाकार्यत्व एव लिङादेः शक्तिग्रहः । तत्राऽनयनादिक्रियाजन्यापूर्वशब्दितस्यान्यस्य कार्यस्याभावात् । तथाऽपि वेदे क्रियाजन्यापूर्वस्य कार्यशब्दितस्य सत्त्वात्तत्र शक्तिग्रहः । कुत एवमिति चेत् । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामं नियोज्यं प्रति यजनादिक्रिया लिङादिशब्देन कार्यतया बोधयितुम-शक्या । कुतः ? कामी हि काम्यादन्यत् काम्याव्यवहितसाधनमेव कार्यतयाऽवगच्छतीति व्याप्तेः । नतु व्यवहितसाधनम् । क्रिया चास्थायित्वेन काम्यव्यवहितत्वान्न कार्यताबोधयोग्येति फलपर्यन्तस्थाय्यपूर्वमेव लिङादिना कार्यत्वेन बोध्यमित्यपूर्वमेव कार्यशब्दितं लिङादिवाच्यमिति । तदेवेत्युक्तिस्त्वविवक्षितविवेकेन कार्यसामान्याभिप्रायेणेति ज्ञेयम् । अत एव तत्र वेदे यजेतेत्यत्र ईतेत्यादिलिङादिप्रत्ययोऽपूर्वशब्दितकार्यशरीर-**(रा.टि.)** मेवाभिदधातीत्ययमेवार्थः स्फुटमुत्तरवाक्येऽवगम्यते । **प्रकृतिरिति ॥** यजेत्ययमंशोऽपूर्वशब्दितकार्य-विषयम् अभिदधातीत्यन्वयः । यागविषयकं कार्यमिति हि किल तन्मतेऽन्वयबोधः । **प्रकृत्यर्थविशेषणं कारक-मिति ॥** 'सोमेन यजेत' 'पशुना यजेत' इत्यादौ करणकारकम्, 'राजा राजसूयेन' इत्यादौ तद्विशेषणं प्रकृत्यर्थविशेषणं राजसूयादिनामधेयम्, राजेत्यादिकर्तृरूपनियोज्यमित्यर्थः । अभिदधतीति शत्रन्तम् । अभिदधानानि भूत्वा व्याप्रियन्त इत्यन्वयः । **सन्निपत्योपकारकाङ्गवाक्यानीति ॥** यागोत्पत्त्यपूर्वजनक-प्रोक्षणाद्यङ्गप्रतिपादकानि 'व्रीहीन् प्रोक्षति व्रीहीनवहन्ति' इत्येवमादीनि वाक्यानि स्वर्गादिजनकप्रधानापूर्व-शब्दितकार्यादन्यप्रधानकार्यपराणि न भवन्ति । 'यजेत स्वर्गकामः' इत्यादौ यागविषयकं कार्यमितिवत् प्रोक्षणविषयकं कार्यमित्यन्वयबोधानभ्युपगमादित्यर्थः । तस्य गुणकर्मतयाऽर्थकर्मत्वाभावादिति भावः । **प्रधा-नेति ॥** 'व्रीहीन् प्रोक्षति' इत्यादौ न व्रीहित्वादिकमुद्देश्यतावच्छेदकम् । किन्तु स्वर्गादिफलाव्यवहितसाधनतया प्रधानभूतयागकार्यान्वयित्वमेवेति प्रधानकार्यान्वितव्रीह्यादिस्वार्थाभिधायकतया कार्यप्रतिपत्तावित्यर्थः । **मन्त्रा इति ॥** 'व्रीहीणां मेघः सुमनस्यमानः' इति 'अग्निर्मूर्धा' इत्यादयो मन्त्राः कार्याङ्गपुरोडाशादिद्रव्यदेवता-स्मारकतया तत्रैव कार्य एव विनियुक्ता इत्यर्थः । **अर्थवादा इति ॥** 'वायुर्वै क्षेपिष्ठा' इत्येवमादयः श्वेत-पश्वालम्भविषयकं कार्यं प्रशस्तमित्येवंरूपेणेत्यर्थः । **कृत्युद्देश्यमिति ॥** कृत्या साधयिष्यामीति इच्छाविषय इत्यर्थः । कृतिसाध्यतामात्रस्य निषिद्धेऽपि सत्त्वात्तद्व्यावृत्त्यर्थमेतत् । कृत्यसाध्यव्यावृत्त्यर्थमाद्यं विशेषणम् । **तच्चेति ॥** कार्यमित्यर्थः । **भावार्थ इति ॥** आनयनादिधात्वर्थ एवेत्यर्थः । **अत एवेति ॥** प्रागुक्तदिशा कृत्स्न-वेदस्य कार्यपरत्वादेवेत्यर्थः । **तदनङ्गीकार इति ॥** कर्मकाण्डब्रह्मकाण्डरूपप्रकरणभेदात्कर्मकाण्डगतकर्म-समवेतकर्तृदेवताप्रतिपादकत्वानङ्गीकारे ब्रह्मकाण्डगतलिङाद्यर्थकार्यपरतैवास्त्वित्यर्थः । **स्वप्रधान इति ॥** अनन्यशेष इत्यर्थः । वेदाप्रामाण्यस्य परासम्मतेः कथमप्रामाण्यमित्यनुवाद इत्यत आह - **अप्रतिपादकत्वमिति ॥ तत्रेति ॥** 'आत्मा ज्ञातव्यः' इत्युक्तदिशा कार्यान्विततयैव विष्णौ वेदस्य प्रामाण्यं भविष्यति, सिद्धे व्युत्पत्तिकथनेन किमित्यर्थः । **अभिलषितत्वादिति ॥** इष्टत्वादित्यर्थः । **इत्यपि व्याख्यायत इति ॥** न केवलं प्रागुक्तदिशा एकशब्दः केवलार्थः, प्राधान्यार्थोऽपि व्याक्रियत इत्यर्थः । **समर्थितमिति ॥** स्वग्रन्थ इति भावः । **नियमेति ॥** अप्रथमव्युत्पत्तेः कार्यान्वितेऽपि स्वीकारादिति भावः । गृहीतेरित्यनुवादेन शेषमाह- **दर्शनादिति ॥** वाक्यस्य फलितार्थमाह- **कार्येति ॥**

**(श्री.टि.) अन्वयव्यतिरेकाभ्यामिति ॥** व्युत्पत्तिसद्भावे शब्दादर्थबोधस्तदभावे तदभाव इत्यन्वयव्यतिरेका-भ्यामित्यर्थः । **व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेवेति ॥** ननु कथमेतदवधारणम् । 'शक्तिग्रहं व्याकरणोपमान-कोशाऽऽप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः' इति वचनेन व्युत्पत्तिप्रकाराणां बहूनां सत्त्वादिति चेन्न । व्युत्पत्तिश्चेत्यस्य प्राथमिकी व्युत्पत्तिरित्यर्थकरणात् । कार्यव्युत्पत्त्य-नन्तरभाविव्युत्पत्तिप्रकारास्ते । अतो न दोष इति भावः । **अस्येयं प्रवृत्तिरिति ॥** प्रवृत्तिसामान्यस्य पक्षत्वे **(श्री.टि.)**विष्टिगृहीतप्रवृत्तेरपि पक्षत्वापत्त्या तत्र बुद्धिपूर्वकत्वसाधने अंशे बाधः स्यादत इयमित्युक्तम्

। प्रत्यक्ष-सिद्धा जलाहरणविषयेत्यर्थः । विष्टिगृहीतप्रवृत्तौ व्यभिचारवारणाय स्वतन्त्रेत्युक्तम् । स्वेच्छाधीनेत्यर्थः । वृद्धस्य प्रयोज्यवृद्धस्य । **प्रवृत्तिहेतु(भूत)बुद्धित्वादिति ।।** उपेक्षाज्ञाने बुद्धित्वसद्भावेऽपि कार्यविषयकत्वाभावाद् व्यभिचारः स्यादतः प्रवृत्तिहेत्वित्युक्तम् । **तद्वस्त्विति ।।** तद्वस्तुबोध एतच्छब्दजन्य इत्यर्थः । **तद्भावभावित्वा-दिति ।।** तच्छब्दप्रयोगानन्तरभावित्वादित्यर्थः । **प्रमाणान्तरेणेति ।।** स्तनपानादिप्रवृत्तिहेतुभूतवस्तुबोधो मम शब्दातिरिक्तानुमानरूपप्रमाणान्तरेण जात इत्यर्थः । मम प्रवृत्तिः स्तनपानादौ । **प्रवृत्तिहेतुभूत इति ।।** प्रयोज्यवृद्धस्येति शेषः । **प्रवृत्तिहेतुभूतं** स्तनपानादिप्रवृत्तिहेतुभूतम् । **न तावदहमित्यादि ।।** कृत्यसाध्ये चन्द्रमण्डले तक्षकचूडामण्याहरणादौ क्रियादिज्ञानमात्रस्य सत्त्वेऽपि प्रवृत्त्यभावेन व्यभिचारान्न क्रियादिज्ञान-मात्रस्य प्रवर्तकत्वमिति भावः । **प्रतीत्य हीति ।।** इदं मया कर्तव्यं स्तनपानत्वादिति स्तनपानादेः कार्यत्वमनुमानेन ज्ञात्वेत्यर्थः । **इत्यनुमायेति ।।** चैत्रस्य प्रवृत्तिः कार्यबोधपूर्विका बुद्धिपूर्वप्रवृत्तित्वान्मदीयस्तनपानादिप्रवृत्ति-वदित्यनुमायेत्यर्थः । **वाक्यस्येति ।।** प्रवृत्तिहेतुभूतार्थबोधकत्वेनावधारितवाक्यस्येत्यर्थः । **लिङाद्यावाप इति ।।** लिङ्लोट्तव्यप्रत्ययपञ्चमलकाराणां स्थापने कृत इत्यर्थः । **तदुद्धार इति ।।** तेषां लिङादीनां निष्कासन इत्यर्थः । **त एव** लिङादय एव । **तदेव** कार्यमेव । **प्रत्येतुमर्हतीति ।।** य एव लौकिकास्त एव वैदिका इति लौकिकवैदिकपदयोरभेदात् 'लोकावगतसामर्थ्यश्शब्दो वेदेऽपि बोधकः' इति न्यायादिति भावः । **तत्रेति ।।** 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवेदवाक्ये, **लिङादिप्रत्ययः** ईतप्रत्ययः, **कार्यशरीरं** प्रयत्नरूपशाब्द-भावनारूपमभिदधाति । 'भावनैव प्रयत्नात्मा सर्वत्राऽख्यातगोचरः । लिङोऽभिधा सैव च शाब्दभावना' इत्यादि-तदीयवचनात् । प्रकृतिः यज् इत्येवंरूपो धातुः । तद्विषयं लिङ्वाच्यप्रयत्नविषयं यागम् । पदान्तराणि ज्योतिष्टोमेन स्वर्गकाम इत्यादिपदानि । तत्रायं विवेकः । इनेति तृतीयाविभक्तिः । प्रकृत्यर्थभूतयागविशेषणं करणकारकं यागस्य करणत्वमिति यावत्, ज्योतिष्टोमेत्येतत्प्रकृत्यर्थयागविशेषणीभूतं नामधेयम्, स्वर्गकाम इत्येतत् नियोज्यमधिकारिणम् अभिदधति सन्ति कार्यप्रतीतावेव व्याप्रियन्ते व्यापारवन्ति भवन्तीत्यर्थः ।

ननु द्विविधान्यङ्गवाक्यानि । सन्निपत्योपकारकाणि आरादुपकारकाणि चेति । दृष्टद्वारा साक्षादुपकारकाणि सन्निपत्त्योपकारकाणि । तान्येव क्वचित्स्वरूपोपकारकाणीत्युच्यन्ते । यथा व्रीहीनवहन्तीत्यादीनि । तत्रावहन-नादेर्वितुषीभावरूपदृष्टफलद्वारैव यागस्वरूपोपकारकत्वात् । अदृष्टद्वारोपकारकाण्यारादुपकारकाणि । तान्येव क्वचित्फलोपकारकाणीत्युच्यन्ते । यथा 'इडो यजति समिधो यजति बर्हिर्यजति तनूनपातं यजति स्वाहाकारं यजति' इति पञ्चप्रयाजादिवाक्यानि, अदृष्टद्वारा यागफले उपकारकत्वात् । तत्र सन्निपत्योपकारकवाक्यानि 'व्रीहीनवहन्ति' इत्यादीनि कार्यवाचकलिङादिप्रत्ययशून्यानि । तानि कथं प्रमाणानि । आरादुपकारकेष्वपि लिङाद्युपेतान्येव वाक्यानि प्रायस्सन्ति । कानिचिदेव प्रयाजादिवाक्यानि तदनुपेतानि सन्ति । तानि च कथं प्रमाणानीत्यत आह- **सन्निपत्योपकारकाङ्गवाक्यानीति ।।** इदमुपलक्षणम् । आरादुपकारकाणि कानिचित् **(श्री.टि.)** प्रयाजादिवाक्यान्यप्यत्र ग्राह्याणि । अत एव कण्ठतोऽनुक्तिरिति ज्ञेयम् । मन्त्राणामपि कार्ये प्रामाण्यमुपपादयति- **मन्त्रा अपीति ।। अर्थेति ।।** देवतादिरूपार्थेत्यर्थः । **तत्रैवेति ।।** कार्याङ्गभूतार्थस्मारण एवेत्यर्थः । नन्वर्थवादानां स्तुतिपरत्वेन कथं कार्ये प्रामाण्यमित्यत आह- **अर्थवादा अपीति ।। तत्रैवेति ।।** विधिबोध्ये कार्य एवेत्यर्थः । **रुचिमिति ।।** प्राशस्त्यबोधनेन शीघ्रं मनःप्रवृत्तिमित्यर्थः । यत्र कार्ये कृत्स्नवेदप्रामाण्यं तत्कार्यं नाम किमित्यत आह- **कार्यं चेति ।।** चन्द्रमण्डलादावतिव्याप्तिवारणाय सत्यन्तम् । विषपानादावति-व्याप्तिवारणाय विशेष्यमिति द्रष्टव्यम् । **तच्च** कार्यम् । **लोके भावार्थो वेदे त्वपूर्वमिति ।।** भावार्थो धात्वर्थः। अयं भावः । गामानयेत्यादिलौकिकवाक्ये आनयनरूपधात्वर्थ एव कृतिसाध्यः कृत्युद्देश्यश्च । वेदे तु यजेतेत्यादौ अपूर्वमदृष्टमेव कृतिसाध्यं कृत्युद्देश्यम् । 'कामी हि काम्याव्यवहितपूर्वक्षणवर्त्येव साधनत्वेनावैति' इति न्यायेन यागादेः क्रियात्मकत्वेन चिरविनष्टस्य काम्यभूतस्वर्गाव्यवहितपूर्वक्षणवर्तित्वाभावादपूर्वस्य च तथात्वात्तदेव लिङर्थभूतं स्थायि कार्यम् । तथा च यजेतेत्यस्य यागेन अपूर्वं भावयेदित्यर्थ इति तत्सम्प्रदाय इति । ननु वेदान्त-भागानां कथं कार्यपरत्वमित्यत आह- **अत एवेति ।।** कृत्स्नस्यापि वेदस्य कार्यपरत्वादेवेत्यर्थः । **वेदान्ताना-मपीति ।।** तदन्तर्गतानामित्यर्थः । 'विज्ञानघन एवैभ्यो भूतेभ्यः समुत्थाय' इत्यादीनां कार्याङ्गभूतकर्तृस्वरूप-प्रतिपादकत्वम् । 'वाग्वाव नाम्नो भूयसी' इत्यादीनां कार्याङ्गभूतदेवतास्वरूपप्रतिपादकत्वं मन्तव्यम् ।

ननु कर्मकाण्ड एव कार्यवाचिलिङादीनां सत्त्वेन ब्रह्मकाण्डानां वेदान्तानां कथं कर्मकाण्डस्थकार्याङ्गभूत-कर्त्रादिस्वरूपप्रतिपादकत्वेन कार्यपरत्वं ? प्रकरणभेदादित्याशङ्क्य निराकरोति- **प्रकरणभेदादिति ।।** ब्रह्म-प्रकरणकर्मप्रकरणयोर्भेदादित्यर्थः । **तदनङ्गीकार इति ।।** वेदान्तवाक्यानां कर्मकाण्डस्थकार्याङ्गभूतकर्त्रादि-प्रतिपादकतानङ्गीकार इत्यर्थः । वेदान्त एव कार्यवाचकलिङादेस्सद्भावात्तदङ्गभूतकर्त्रादिस्वरूपप्रतिपादकत्वं वेदान्तवाक्यानामुपपद्यत एवेत्याह- **आत्मा**

**ज्ञातव्य इतीति ।।** एकवाक्यतामित्यत्र वेदान्तानामिति वर्तते । कार्याङ्गभूतकर्त्रादिस्वरूपप्रतिपादकत्वेनेत्यर्थः । सर्वशब्दानां कार्यपरत्वोपपादनस्य प्रयोजनं दर्शयन्नुपसंहरति- **तदेवमिति ।।** कार्यान्विते सिद्धेऽपि गवादिशब्दानां परेणापि व्युत्पत्तिरङ्गीक्रियत इत्यतः केवल इत्युक्तमित्यभिप्रेत्य तद्व्याचष्टे - **कार्यान्वयरहित इति ।।** अत एव **स्वप्रधाने** स्वयमेव प्रधाने न केनाप्यन्वित इत्यर्थः । कार्यान्वय-रहितेऽपि कार्ये लिङादीनां परेण व्युत्पत्तिरङ्गीक्रियत एवेत्यतस्सिद्ध इत्युक्तमिति सूचयन् व्याचष्टे - **कार्यातिरिक्तार्थ इति ।।** अप्रामाण्यमित्यत्र केवलसिद्धेऽर्थ इत्यनुवर्तत इत्यभिप्रेत्य आह- **तथाविध इति ।।** कार्यान्वय-रहितत्वेन कार्यातिरिक्तत्वेन च केवलसिद्धार्थभूत इत्यर्थः । तथा च कार्यानन्वितः कार्यातिरिक्तोऽर्थस्सिद्धार्थ इति सिद्धार्थलक्षणं सूचितं भवति । अत्र कार्यानन्वितस्सिद्धार्थ इत्युक्ते कार्येऽतिव्याप्तिः स्यात् । कार्यस्य कार्यान्वयाभावात् । अतः कार्यातिरिक्त इत्युक्तम् । तावत्युक्ते घटमानयेति वाक्यगते आनयनान्विते घटेऽतिव्याप्तिः स्यादत उक्तं कार्यानन्वित इति । इति पदकृत्यं द्रष्टव्यम् । ननु परेण वेदस्य व्युत्पत्त्यभावेन विष्णुप्रतिपादकत्वाभाव एवाङ्गीकृतो न तु तदप्रमाजनकत्वलक्षणमप्रामाण्यम् । तथात्वे 'स्यादेवोक्तं वेद-**(श्री.टि.)** प्रामाण्यादिकं समस्तम्' इत्युक्तविरोधापत्तेः । अतोऽसदनुवादोऽयम् । किञ्च व्युत्पत्त्यभावलक्षणो हेतुः पदानामप्रतिपादकत्वसाधक एव । न त्वप्रामाण्यसाधकः । पदानां व्युत्पत्त्यभावे ज्ञानमात्राजनकत्वप्राप्त्या अप्रमारूपज्ञानजनकत्वरूपाप्रामाण्यसाधकत्वाङ्गीकारे हेतोर्विरुद्धत्वापातादित्यतोऽप्रामाण्यपदं व्याचष्टे- **अप्रतिपादकत्वमिति ।।** ननु भवन्मतेऽपि कार्यान्वित एवेश्वरे सदागमानां प्रामाण्यं भविष्यति । अतः कार्यान्वयरहिते केवलसिद्धेऽर्थे वेदानामप्रतिपादकत्वस्य भवतामपीष्टत्वात्कथं तन्निराकरणमित्याशङ्क्य निराकरोति- **न च कार्यान्विततयैवेति ।।** तत्र ईश्वरे । **अनेन** अप्रामाण्यं न चेति निराकरणेन । **स्वप्रधाने** कार्यान्वयरहिते । किमत्र ज्ञापकमिति चेत् सदागमैकविज्ञेयमित्यत्रैकशब्द एवेति ब्रूमः । ननु तत्रैकशब्दस्य दुरागमादिव्यावृत्त्यर्थं केवलार्थतया व्याख्यातत्वात्कथं तस्य स्वप्रधाने विष्णौ सर्ववेदप्रामाण्यस्याभिलषितत्व-ज्ञापकत्वमित्यत आह- **अत एवेति ।।** स्वप्रधाने विष्णौ सर्ववेदप्रामाण्यं यतोऽभिलषितमत एवेत्यर्थः । अभिलषि-तैतत्प्रमेयलाभार्थमिति यावत् । **एक एवेति ।। एको** भगवानेव कार्यानन्विततया **एकविज्ञेयो** मुख्यविज्ञेयः, प्रधानविज्ञेयः । 'एके मुख्यान्यकेवलाः' इति वचनेन एकशब्दस्य प्राधान्यरूपमुख्यार्थत्वादित्यर्थः । **समर्थितं** स्वग्रन्थे । **तदभ्युपगम्यत एवेति ।।** अस्माभिरपि योग्येतरान्विते स्वार्थे शब्दानां व्युत्पत्तिरङ्गीकृतैवेत्यर्थः । यथोक्तमनुव्याख्याने 'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते । अतोऽन्विताभिधायित्वम्' इति । ननु कार्यान्विते आनन्तरिकी अस्माभिरप्यङ्गीक्रियत एवातः कथमवधारणमित्यत आह- **एवेति कार्यान्वयनिय-मेति ।।** कार्यान्वित एव व्युत्पत्तिरिति परोक्तकार्यान्वयनियमनिराकरणार्थक एवैवशब्दो न तु कार्यान्विते व्युत्पत्तिनिराकरणार्थ इत्यर्थः । कार्यान्वित एवार्थे सर्वशब्दानां व्युत्पत्तिदर्शनात्केवलसिद्धेऽर्थे तदभाव इति परेणोक्ते तत्प्रतिपक्षतया सिद्धान्वित एव व्युत्पत्तिदर्शनादित्येव वक्तव्यम् । न तु गृहीतेरुपादानादिति असङ्गतत्वात्, अतो गृहीतेरिति पदं व्याचष्टे - **दर्शनादिति ।।** वाक्यार्थमाह- **कार्यान्वयेति ।।**

**(पां.टि.)** ननु यदि वेदप्रामाण्यादिकं समस्तमभ्युपगतं तदा पर्यवसितं विवादेनेति पृच्छति- **किं तर्हीति ।।** वेदप्रामाण्यादेरविप्रतिपन्नत्वेऽपि विवादविषयीभूतस्यार्थान्तरस्य सत्त्वान्न तत्पर्यवसानमिति भावेन विवादविषयं दर्शयति- **यदुक्तमिति ।। वृद्धो** व्युत्पन्नः । तद्व्यवहारो- वाक्योच्चारणप्रवृत्त्यादिरूपतच्चेष्टा । वक्ष्यमाणानुमाने पक्षहेतुसिद्ध्यर्थमाह- **चैत्रेति ।।** बालोऽव्युत्पन्नः । **इयं प्रवृत्तिरिति ।।** स्वतन्त्रप्रवृत्तिरित्यर्थः । उन्मत्तप्रवृत्त्यंशे बाधवारणाय स्वतन्त्रेति पक्षविशेषणम् । हेतौ च तत्रैव व्यभिचारवारणाय तदिति द्रष्टव्यम् । **ममेति ।।** प्रवृत्तिहेतुभूतमद्बुद्धिसमानविषयेत्यर्थः । स्वबुद्धौ शब्दजन्यत्वाभावेन तद्दृष्टान्तेन शब्दजन्यत्वानुमानासम्भवात् प्रकारान्तरेण तत्प्रकारं दर्शयति- **पुनरिति ।।** दृष्टान्ते वक्ष्यमाणसाध्यसिद्ध्यर्थमनुसन्धानप्रकारं दर्शयति- **पुनश्चेति ।। तत्र न तावदिति ।।** क्रियाफलबोधयोर्वर्तमानापदेशादौ, क्रियाफलसाध्यसाधनभावरूपसम्बन्धज्ञानस्य च भूतादौ प्रवृत्तिव्यभिचारादिति भावः । नन्वस्तु लौकिकशब्दानां कार्यपरत्वम् । वैदिकशब्दानां तु तत्कुत इत्याशङ्क्य लोकवेदयोः पदपदार्थानामैक्यस्य 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्' इत्यधिकरणसिद्धत्वाल्लोके कार्यपरत्वे **(पां.टि.)**सिद्धे वेदेऽपि तत्परत्वमवर्जनीयमित्याशयेनाऽह- **एवमिति ।।** ननु वैदिकसर्वशब्दानां कार्यप्रतिपादकत्वे पर्यायत्वप्रसङ्ग इत्यत आह- **तत्रेति ।। कार्यशरीरमिति ।।** नियोगापरपर्यायमपूर्वमित्यर्थः । **प्रकृतिस्तद्विषय-मिति ।।** नियोगविषयं धात्वर्थमित्यर्थः । लिङ्गाद्यर्थनियोगस्य विषयमन्तरेणानुपपद्यमानतया कुत्र नियोग इति विषयाकाङ्क्षायां धात्वर्थस्यैव नियोगप्रतीत्यनुबन्धित्वरूपविषयत्वेन सम्बन्धादिति भावः । उपलक्षणं चैतत् । तत्करणं चेत्यपि द्रष्टव्यम् । यागविषयकनियोगस्य साध्यतया प्रतीयमानस्यापि साक्षात्कृत्यसाध्यत्वेन स्वस्य कृतिसाध्यतानिर्वाहस्य विषयतयाऽन्वितस्य यागादेर्धात्वर्थस्यैव नियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्वेनापि सम्बन्धादिति

भावः। नन्वस्त्वेवं प्रधानविधेः कार्यपरत्वं तथापि समग्रस्य कर्मकाण्डस्य कथं तत्परत्वमित्यतस्ता-वत्सन्निपत्योपकारकाङ्गवाक्यानां तत्परतां दर्शयति- **सन्निपत्येति ॥ सन्निपत्य** आहत्य शेषिणि द्रव्ये अतिशय-मादधदुपकारकं सन्निपत्योपकारकं तच्च तदङ्गं चेति तत्तथोक्तम्। एवमाराद्दूरेणापूर्वव्यवधानेन शेषिणि उपकारक-मारादुपकारकमिति विवेकः। सन्निपत्योपकारकाङ्गवाक्यान्यपि प्रधानकार्यान्वितस्वार्थप्रतिपादकतया कार्य-प्रतिपत्तावेव व्याप्रियन्त इति सम्बन्धः।

ननु च 'समिधो यजति' इत्यारादुपकारकाङ्गवाक्यानामिव 'व्रीहीनवहन्ति' इत्यादिसन्निपत्योपकारकाङ्ग-वाक्यानामप्यङ्गकार्यान्विततत्स्वार्थप्रतिपादकतया कार्यपरत्वमस्तु, तत् किमिति प्रधानकार्यान्वितस्वार्थप्रति-पादकतया कार्यपरत्वाश्रयणमित्याशङ्क्य, आरादुपकारकाङ्गवाक्यस्थलिङादीनां प्रधानकार्यानुवादकत्वानुप-पत्त्या तत्प्रकृत्यर्थविषयक-तत्प्रकृत्यर्थकरणक-नियोगान्तरप्रतिपादकतया आरादुपकारकाङ्गवाक्यानामङ्ग-कार्यान्वितस्वार्थप्रतिपादकत्वेन कार्यपरत्वसम्भवेऽपि सन्निपत्योपकारकाङ्गवाक्यस्थलिङादीनां प्रधाननियोगा-नुवादकत्वस्यैव सम्भवेन तत्परित्यागेनाङ्गकार्यप्रतिपादकतया तदन्वितस्वार्थप्रतिपादकाया सन्निपत्योप-कारकाङ्गवाक्यानां कार्यपरत्वानिर्वाहात्। प्रधानकार्यान्वितस्वार्थप्रतिपादकतया कार्यपरत्वाश्रयणमुचित-मित्याशयेनोक्तम्- **कार्यान्तरशून्यानीति ॥** ततश्च यद्यपि सन्निपत्योपकारकाङ्गवाक्यानि कार्यान्तरशून्यानि अङ्गकार्यशून्यानीति यावत्। तद्वाक्यस्थलिङादेस्तत्प्रकृत्यर्थविषयकतत्प्रकृत्यर्थकरणकनियोगान्तराप्रतिपादक-त्वात्। ततश्च न तदन्वितस्वार्थप्रतिपादकतया कार्यपराणीति शेषः। तथाऽपि प्रधानकार्यान्वितस्वार्थपरा-ण्येव। तद्वाक्यस्थलिङादेः प्रधाननियोगानुवादकत्वात्। ततश्च प्रधानकार्यान्वितस्वार्थाभिधायकतया कार्य-परत्वाश्रयणमुचितमित्यपेक्षितपूरणेन वाक्ययोजना द्रष्टव्या। भवेदेतदेवं यद्यारादुपकारकाङ्गवाक्यस्थलिङादीनां प्रधाननियोगानुवादकत्वाभावः सन्निपत्योपकारकाङ्गवाक्यस्थलिङादेश्च न तदनुवादकत्वमिति स्यात्। तदेव कुत इति चेत्, शृणु तर्हि प्राभाकरसिद्धान्तरहस्यम्। सन्निपातिवाक्येषु आरादुपकारकवाक्येषु च श्रूयमाणा ये लिङादिप्रत्ययास्तैः प्रथममधिकृतदर्शादिप्रधाननियोगप्रत्यभिज्ञानेन तदनुवादशङ्क्या न नियोगान्तरमुच्यते, किन्तु तैर्वाक्यैः प्रकृत्यर्थ एव योग्यविशेषणविशिष्ट उपस्थाप्यते। ततश्च तद्वाक्यस्थो लिङादिशब्दः प्रकृत्यर्थावहननाद्य-न्वितमेव प्रधाननियोगं बोधयति अवघातान्वितः प्रधाननियोग इति । इदमेव च तन्मते ग्राहकग्रहणमि-**(पां.टि.)** त्युच्यते। ततश्च ग्राहकेण सन्निपातिनामवघातादीनामारादुपकारकाणां प्रयाजादीनां च ग्रहणाविशेषेऽ-प्यस्ति कश्चिद्विशेषः। आरादुपकारकाणां ग्राहकग्रहणाख्यप्रमाणप्रमितं ग्राहकैदमर्थ्यं प्रधाननियोगस्य स्ववाक्य-प्रतिपन्नेन यजिरूपेण विषयेण करणेन चावरुद्धत्वेन विषयाद्यन्तरानाकाङ्क्षतया न विषयादित्वेन सम्भवतीति करणोपकरणद्वारा निर्वाह्यमित्यनुपपत्त्यात्मकेन चातुर्थिकेनोपादानप्रमाणेन विषयैदमर्थ्यं तेषां बोध्यते। न च तेषां विषयानुप्रवेशो दृष्टद्वाराऽदृष्टद्वारा वा सम्भवतीत्यतः प्राक्प्रतिपन्नस्य प्रधाननियोगानुवादकत्वस्य परित्यागेन तत्प्रकृत्यर्थविषयकतत्प्रकृत्यर्थकरणकनियोगान्तराभिधायकत्वमेव तद्वाक्यस्थलिङादीनां, सन्निपातिनां त्ववघा-तादीनां ग्राहकग्रहणेन करणैदमर्थ्यसिद्धावपि प्रकृतप्रधाननियोगस्य यजिरूपेण विषयेण करणेन चावरुद्धतयाऽ-वहननादेर्विषयादित्वेन प्रधाननियोगान्वयबाधादन्विताभिधानान्यथानुपपत्तिप्रसूतार्थापत्तिरूपचातुर्थिक-प्रमाणेनोपपादनेन विषयैदमर्थ्यसिद्ध्या तस्य च क्रत्वर्थव्रीह्यादिद्रव्यवैतुष्यसम्पादकतया प्रधानापूर्वविषयनिर्वर्तक-तया विषयानुप्रवेशसिद्धेर्न प्राक्प्रतिपन्नप्रधाननियोगानुवादकत्वपरित्याग इति तद्वाक्यस्थलिङादिभिः प्रधान-नियोगानुवादेन तदन्वितप्रकृत्यर्थविधानात्प्रधानकार्यान्वितस्वार्थपरत्वमेवेति दिक्।

नन्वेवमपि न मन्त्राणामर्थवादानां च कार्यपरत्वसिद्धिरिति कथं समस्तस्य वेदस्य कार्यपरत्वमित्यत आह- **मन्त्रा अपीत्यादिना ॥ कार्यं चेति ॥** कृतिसाध्यत्वमात्रं भावार्थसाधारणमित्यतः कृत्युद्देश्यमित्युक्तम्। तावन्मात्रं च फलसाधारणमित्यतः कृतिसाध्यमित्युक्तम्। **भावार्थ इति ॥** धात्वर्थ इत्यर्थः। **अपूर्वमिति ॥** 'स्वर्गकामो यजेत' इत्यादौ स्वर्गकामं नियोज्यं प्रति लिङ्शब्देन क्रियायाः कार्यत्वेन बोधयितुमशक्यत्वात्फल-पर्यन्तावस्थाय्यपूर्वमेव कार्यतया बोध्यत इत्यपूर्वमेव कार्यमित्यर्थः। नन्वेतावता कर्मकाण्डस्य कृत्स्नस्य कार्य-परत्वप्राप्तावपि वेदान्तानां कार्यपरत्वासिद्धेर्न कृत्स्नस्य वेदस्य कार्यपरत्वमित्यत आह- **अत एवेति ॥** लोके कार्य एव गृहीतशब्दसङ्गतिकतया सिद्धार्थबोधकत्वानुपपत्तेरेवेत्यर्थः। कर्तृस्वरूपप्रतिपादकत्वेनेत्यत्र च कर्माङ्ग-भूतेत्युपस्कर्तव्यम्। ततश्च मन्त्रार्थवादादिन्यायेन कर्माङ्गभूतकर्तृस्वरूपप्रतिपादकतया तद्देवताप्रतिपादकतया च वेदान्तानामपि कार्यपरत्वाद्युक्तमेव समस्तस्य वेदस्य कार्यपरत्वमिति भावः। कार्यान्विते व्युत्पत्तेः सिद्धान्तेऽ-प्यङ्गीकारात् तन्निवृत्त्यर्थकैवकारानुपपत्तिमाशङ्क्य नात्रैवकारः कार्यान्विते व्युत्पत्तिनिवृत्त्यर्थो येनोक्तदोषः स्यात्। किन्तु तन्नियमनिवृत्त्यर्थक एवेति न तद्विरोध इति तदर्थमाह- **एवेतीति ॥**

**(व्या.टि.)** एवं सदागमैकविज्ञेयत्वे प्रमाणतयोक्तसदागमानां प्रामाण्यादिकं प्रसाध्याधुना सदागमैकविज्ञेयत्वं विष्णोः साधयितुमुत्तरो ग्रन्थः। तत्र प्राभाकरमतं दूषयितुमनुवदति- **अत्रेति ॥** नोपपद्यत इत्यतः परं व्युत्पत्त्यभावादिति शेषः। तमेवोपपादयति- **तथा हीति ॥** बोधयति पदार्थं स्मारयतीत्यर्थः। व्युत्पत्तेः शाब्द-बोधोपयोगं साधयति- **अन्वयेति ॥** कारणाभावेन व्युत्पत्त्यभावं वक्तुं व्यवहारं कारणतयाऽवधारयति- **व्यवहारदर्शनादेवेति ॥** व्यवहाराभावश्च तन्निबन्धनाभावनिबन्धन इत्याशयानो व्यवहारस्य कार्यप्रतिपत्ति-निबन्धनत्वमुपपादयति- **तथा हीति ॥** अत्र प्रयोजकप्रयोज्यशब्दौ प्रवर्तकप्रवर्तनीयपरौ। **आकलयतीति ॥ (व्या.टि.)** 'कल कामधेनुः' सर्वार्थ इत्यर्थः। आलोचयतीत्यर्थः। **स्वतन्त्रेति ॥** कर्तृप्रवृत्तित्वादित्यर्थः। 'स्वतन्त्रः कर्ता' इति सूत्रात्। अबलात्कारितप्रवृत्तित्वादिति यावत्। **प्रमाणान्तरेण** अनुमानेन। **आवयो-रिति ॥** अयं चाहं च आवां तयोरित्यर्थः। 'त्यदादीनि सर्वैर्नित्यम्' इति अस्मद एकशेषः, 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति वचनात्। **अनुसन्धत्ते** परामृशति। **वाक्यस्य** पदसमूहस्य। **आवापे** प्रक्षेपे। **त एव** लिङादय एव। **कार्यशरीरमेवेति ॥** कार्यस्वरूपमित्यर्थः, अधिकरणशरीरमितिवत्। तैरपूर्वे लिङादीनां शक्तिस्वीकारादिति भावः। **प्रकृति**र्धातुः। **तद्विषयं** तज्जनकक्रियाम्। **नामधेयं** ज्योतिष्टोमादिनामधेयम्। 'भागरूप-नामभ्यो धेयः' इति धेयप्रत्ययः। अभिदधतीति शत्रन्तं बहुवचनम्। **व्याप्रियन्त इति ॥** 'पृङ् व्यायामे' प्रायेण व्याङ्पूर्वः, तौदादिको रिङ् इयङिति भावः। **सन्निपत्योपकारकेति ॥** 'यैस्तु द्रव्यं चिकीर्ष्यते' इति जैमिनिसूत्रोक्तदिशा द्रव्यचिकीर्षाद्वारोपकारकाण्यवघातादीनि सन्निपत्योपकारकाङ्गानि। 'यैस्तु द्रव्यं न चिकीर्ष्यते' इति तत्रैवोक्त्या साक्षादुपकारकाणि प्रयाजादीन्यारादुपकारकाणि। न तु दृष्टार्थत्वादृष्टार्थत्वाभ्यां तद्भेदः। सन्निपत्योपकारकाणामपि प्रोक्षणादीनामदृष्टार्थत्वात्। यद्यपि नियमादृष्टमवघातादावप्यस्ति। वैतुष्य-मात्रस्य नखनिर्लुण्ठनेनापि सम्भवेन तत्र विध्यानर्थक्यात्। तथाऽपि नियमादृष्टं नियमफलमपि न तत्क्रियोद्देश्य-मिति तत्त्यागः। एवमुत्तरत्रापि 'मन्त्रैरेव स्मर्तव्यम्' इति नियमादृष्टस्य तत्रापि सत्त्वादिति रहस्यम्। अत्र केचित्पश्चप्रयाजेषु स्वधाकारं यजतीत्यपि पठन्ति। तत्स्वाध्यायानध्ययननिबन्धनम्।

**अर्थस्मारकतयेति ॥** प्रयोगसमवेतद्रव्यदेवतारूपार्थस्मारकतयेत्यर्थः। यद्यपि शब्दोऽनुभावकस्तथापि इषेत्वे-त्यादिमन्त्राः पूर्वानुभूतान् स्वार्थाननुष्ठानकाले ज्ञापयन्तीति तथोच्यन्त इत्यदोषः। **अर्थवादा अपीति ॥** 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिस्तुतिरूपा बोध्याः। अत्र क्षेपिष्ठा क्षिप्रतरा। 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः' एषां यणादि परं लुप्यते पूर्वस्य च गुण इष्ठादिषु, इति वचनात् क्षिप्रशब्दादिष्ठनि रूपं बोध्यम्। **रुचिमिति ॥** 'प्ररोचना चाङ्गतयोपयुज्यते' इत्युक्तेरिति भावः। निन्दार्थवादानामपि न हि निन्दान्यायेनान्यस्तुतिपरत्वात्कृत्स्न एवेत्युक्तम्। कार्यं लक्षयति- **कृतीति ॥** लोकवेदयोस्तत्स्वरूपं निरूपयति- **भावार्थ इति ॥ अपूर्वमिति च ॥** 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' इति जैमिनिसूत्रात्। तर्हि वेदान्तानामप्रामाण्यं प्रसज्येत। न चेष्टमिदम्। तेषां वेदवादित्वाभिमानादित्यत आह- **अत एवेति ॥ कार्यपर-तैवेति ॥** देवतामुद्दिश्य हविस्त्यागरूपक्रियायां कर्तृदेवतयोरपेक्षणात्तद्द्वारा कार्यपरतेत्यर्थः। प्रकरणभेदात् कर्म-ब्रह्मकाण्डरूपत्वेन प्रकरणभेदादित्यर्थः। **विधिनैकवाक्यतामिति ॥** 'विधिना त्वेकवाक्यत्वात्' इति न्यायादिति भावः। **केवलसिद्धार्थ इति ॥** केवलेति कार्यान्वयाभावप्रदर्शनम्। सिद्धेति कार्यत्वाभावप्रदर्शनम्। निगमयति- **नेति ॥** कैवल्यं दर्शयति- **कार्येति ॥** फलितमाह- **स्वप्रधान इति ॥** सिद्धपदस्वरसायातमाह- **कार्येति ॥ किमनेनेति ॥** सिद्धव्युत्पत्तिसमर्थनेनेत्यर्थः। अभिलाषं शब्दव्युत्पत्त्या दर्शयति- **प्रधानेति ॥** 'एके मुख्यान्य-केवलाः' इत्यमरोक्तेरिति भावः। अन्वितपदलब्धं दर्शयति- **अन्वितेति ॥** एवकारव्यावर्त्यं दर्शयति- **एवे-तीति ॥** अन्वयप्रतियोगिविशेषनियमश्च निवारितो नान्विताभिधानवाद इति भावः।

**मूलम् - 'इयं माता' 'अयं पिता' इत्यादावङ्गुलिप्रसारणादिपूर्वकनिर्देशेनैव हि तज्जानाति। कार्यान्वित एव व्युत्पत्तिरिति वदतः कार्यस्य कार्यान्वयाभावात् कल्पनागौरवम्।**

**(त.मं.)** सिद्धान्विते व्युत्पत्तिमुपपादयति- **इयमिति ॥** बालस्य मात्रादावेवाऽकाङ्क्षा सन्निधि-श्चाङ्गुलिप्रसारणादिविषय एव योग्यता च। तस्मादत्राऽकाङ्क्षादिसद्भावादन्यत्राऽकाङ्क्षाद्यभावादत्रैव हि बालस्तद्विवक्षितं जानाति। कार्यस्येत्यादेरयमर्थः- गामानयेत्यादौ कार्यान्विते व्युत्पत्तिरिति वदतस्तत्राऽनयपदार्थे कार्ये 'आनय'पदस्य व्युत्पत्त्याकाङ्क्षायां कार्यान्वयाभावात् का गतिरिति वक्तव्यम्। केवलकार्य इति चेत् कल्पनागौरवम्। कार्यान्विते व्युत्पत्तिरित्युक्त्वा पुनः केवलकार्ये चेत्यङ्गीकारादनन्वितवादित्वप्रसङ्गश्च।

**टीका-** अथवा इष्टसाधनतातिरिक्तायाः कृत्युद्देश्यताया निरूपयितुमशक्यत्वेनेष्टसाधनतैव लिङाद्यर्थ

इत्यन्यत्रोपपादितत्वात् पराभिमतस्य कार्यस्यैवाभावं सूचयितुं सिद्धान्वित एवेत्युक्तम्। तत्प्रपञ्च-यति- **इयमिति ॥** इत्यादौ वाक्ये व्युत्पादकेन प्रयुक्ते सति। अङ्गुलिप्रसारणमादिर्यस्य भ्रूविक्षे(पणा)पादेर्व्यापारस्य स तथोक्तः। अङ्गुलिप्रसारणादिः पूर्वो यस्य निर्देशस्य स तथोक्तः। एवशब्देन वृद्धव्यवहारदर्शनं व्यावर्तयति। **तत्** मात्रादिकं मात्रादिशब्दवाच्यतया जानाति हि बालः।

मातुः पितुर्वाऽङ्के स्थितं बालमन्यमनस्कं सन्तमङ्गुलिप्रसारणादिना स्ववचनश्रवणाभिमुखं मात्राद्यभिमुखं च विधाय यदा व्युत्पादयिता वाक्यं प्रयुङ्क्ते 'बाल तवेयं माता' 'तवायं पिता' 'अयं ते भ्राता कदलीफलमभ्यवहरति' इत्यादि, तदा वृद्धव्यवहारदर्शनं विना तेन निर्देशेनैव तस्य शब्दसमुदायस्य कार्यान्वयरहित एव तस्मिन्नर्थसमुदाये विषयविषयिभावं तावदवगच्छति बाल इदमनेनायं बोधयतीति। पुनरियं ते स्वसा, अयं ते सखाऽपूपं खाद(य)ति इत्यादिवाक्यान्तरेषु शब्दार्थयोरावापोद्धाराभ्यां शब्दविभागादिकमवगत्य मात्रादिपदानां योग्येतरान्विते जनन्यादौ वाचकत्वमाकलयतीति किमनुपपन्नम्। लघीयांश्चायमुपायो व्युत्पत्तौ व्यवहारदर्शनात्। शश्वद्धि-स्मरणशीलो बालकः शब्दमनुसन्धाय वृद्धस्याऽगामिप्रत्यागमनं स्वानपेक्षितमेव प्रतीक्षत इति गुरुतरेयं कल्पना। पुरोवस्थितेष्विष्टसाधनतयाऽपेक्षितेषु मात्रादिषु श्रूयमाणस्यैव शब्दस्य वाचकत्वं कल्पयतीति (आकलयतीति) लघुतरमेतत् कल्पनम्। वर्तमानापदेशेषु व्युत्पन्नो जातजिज्ञासः पश्चाद्व्यवहारदर्शनेनान्यत्रापि व्युत्पद्यत एव। एतेनैतदपि निरस्तम्। यावती सिद्धार्थपरादपि वाक्याद्व्युत्पत्तिः सा सर्वा प्रथमभाविकार्यव्युत्पत्त्यनन्तरभावित्वात्कार्यव्युत्पत्तिरेवेति। प्रथमव्युत्पत्तेरेव सिद्धार्थे समर्थितत्वात्।

एवं कार्यान्वयं विनाऽपि व्युत्पत्तिदर्शनाद्योग्येतरान्विते व्युत्पत्तिरिति सामान्यमेवाङ्गीकार्यम्। कार्यान्वित एवेति विशेषनिर्बन्धस्त्याज्य इत्युक्तम्। इतश्चैवमेवेत्याह- **कार्यान्वित इति ॥** कार्यान्विते स्वार्थे शब्दस्य व्युत्पत्तिरिति वदतः प्राभाकरस्य कल्पनागौरवं स्यात्। कथम्। सर्वेषामपि शब्दानां कार्यान्विते स्वार्थे व्युत्पत्तिरित्येकमेव प्रयोजकं तावदङ्गीकर्तुं न शक्यते, लिङादीनां हि कार्यमेव स्वार्थः। नच तस्य कार्यस्य कार्यान्तरेणान्वयोऽस्ति। गुणप्रधानभावेन खलु पदार्थानामन्वयो भवति। कार्यं च प्रधानतया शब्देनैव बोध्यते। तथाच कथं कार्यद्वयस्य युगपद्गुणप्रधानभावः सम्भवति। अतः कार्यस्य कार्यान्वयाभावात् लिङादीनां कार्यमात्रे सिद्धान्विते वा कार्ये व्युत्पत्तिरित्यङ्गीकार्यम्। गवादिपदानां तु कार्यान्विते स्वार्थ इति। तथा च प्रयोजक-द्वैविध्याङ्गीकारे कथं न कल्पनागौरवम्। योग्येतरान्विते स्वार्थे व्युत्पत्तिरित्यङ्गीकारे त्वेकप्रयोजक-लाभात् लाघवमित्ययमेव पक्षः समाश्रयणीयः।

ननु कार्यान्वयिनि स्वार्थे व्युत्पत्तिरित्यङ्गीकारान्न कल्पनागौरवम्। कार्येण सह योऽन्वयस्तद्वत्त्वं कार्यस्य सिद्धस्य चास्तीत्येकप्रयोजकलाभादिति चेन्मैवम्। कार्येण सह सिद्धस्य योऽन्वयः स गुणभाव एव। नच कार्यं प्रति गुणभावः कार्यस्यास्ति। नच गुणे प्रधाने चानुगतमन्वयमात्रं शब्देन बोध्यते। अतः शब्दमात्रमत्रैकं नार्थ इति यत्किञ्चिदेतत्।

एतेन कार्यान्वयान्वयिनि व्युत्पत्तिरित्येकप्रयोजकवर्णनमपि परास्तम्। कार्यपरपदार्थान्विते स्वार्थे व्युत्पत्तिरिति चेन्न। अत्राप्येकप्रयोजकासिद्धेः। कार्यपरं यत्पदं तस्य योऽर्थस्तेनान्वित इति ह्यस्यार्थः। तत्र लिङादीनां कार्यपरत्वं नाम कार्यवाचित्वं गवादिपदानां तु तदुद्देशित्वमात्रमिति द्वैविध्यमेवेति।

**(र.टि.)** प्राभाकरस्यान्विताभिधानवादित्वात् कथं कार्यमात्रे लिङादीनां व्युत्पत्तिरित्यत आह- **सिद्धान्विते वेति ॥ न च गुण इति ॥** विशेषान्वयाभिधानवादिना प्राभाकरेण तथाऽनङ्गीकारादिति भावः।

**(रा.टि.)** पूर्वं पराभिमतकार्यमभ्युपेत्यार्थ उक्तोऽधुना तदभावसूचकतया व्याचष्टे- **अथ वेति ॥ अन्यत्रेति ॥** 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्यनुव्याख्यान इत्यर्थः। बहुव्रीहिगर्भबहुव्रीहिरित्युपेत्याऽह- **अङ्गुलीति ॥** तदित्यनुवादो

मात्रादिकमिति व्याख्या। परोक्तस्वोक्तरीत्योः को विशेष इत्यतो मात्रादिपदप्रयोग-सूचितयुक्तिमाह- **लघीयांश्चेति ॥ अयमिति ॥** मूलकृदुक्त इत्यर्थः। परोक्तेर्गौरवं स्वोक्तेर्लाघवं च व्यनक्ति- **शश्वदिति ॥** व्यवहाराधीनव्युत्पत्तिदृष्टेर्गतिमाह- **वर्तमानेति ॥ अन्यत्रेति ॥** कार्यपरेऽपीत्यर्थः। एतेनेत्युक्तं व्यनक्ति- **प्रथमेति ॥ इत्युक्तमिति ॥** 'सिद्धान्वित एव व्युत्पत्तिगृहीतेः' इत्यादिनेति भावः। **इतश्चेति ॥** कल्पनागौरवरूपदोषादपीत्यर्थः। **प्रयोजकमिति ॥** वाच्यवाचकसम्बन्धग्रहणरूपव्युत्पत्ताविति योज्यम्। **कार्यमेवेति ॥** यजेतेत्यादावपूर्वशब्दितं कार्यमेवेत्यर्थः। कुतो नास्तीत्यतस्तत्र स्वयं युक्तिमाह- **गुणेति ॥** कार्यान्विते गुणत्वस्यान्वयप्रतियोगिनश्च प्राधान्यस्य स्वीकार्यत्वात्। कार्यमात्रं प्राधान्येन शब्दबोध्यमिति वदतो गुणादिभावो न सम्भवतीत्यर्थः। उपलक्षणमेतत्। एकेन लिङ्प्रत्ययेन कार्यद्वयाबोधनादन्यस्य च तत्प्रत्या-यकस्याभावादेकस्मिन् वाक्ये कार्यद्वयमसम्भवि चेत्यपि ध्येयम्। अन्वितत्वमावश्यकं चेत्तत्राऽह- **सिद्धान्वित इति ॥** गामानयेत्यादिवाक्ये गवादिरूपसिद्धार्थान्वितानयनादिरूपकार्य इत्यर्थः। **कार्यस्य सिद्धस्य चेति ॥** अन्वयस्य द्विष्ठत्वादिति भावः। अन्वयो हि शब्दार्थयोर्न संयोगो नापि समवायः किन्तु गुणादिभावरूपः। स च भिन्न एव तत्तत्स्वभाव इति भावेनाऽह- **कार्येणेति ॥** गुणत्वप्रधानत्वत्यागेनान्वयमात्रं बोध्यतामित्यतः शब्दस्थले तथा बोधोऽनुभवविरुद्ध इति भावेनाऽह- **नचेति ॥** बोध्यते इत्यन्वयः। **अत्रैकमिति ॥** कार्यान्वयिनी-त्यत्रेत्यर्थः। **एतेनेति ॥** गुणप्रधानभावासम्भवेनेत्यर्थः। कार्येण सहान्वयो येषामिति बहुव्रीहिः। कार्यान्वयिनः सिद्धार्था गवादयस्तदन्वयि च कार्यं तत्र व्युत्पत्तिरित्यर्थः। **परास्तमिति ॥** अन्यान्वयप्रतियोगित्वेन प्राधान्यस्य तदन्वितत्वेन गुणत्वस्य प्राप्तेरेकस्य तदयोगाद्गुणभावस्य त्वयाऽनङ्गीकाराच्चेति भावः।

**(श्री.टि.)** परोक्तकार्यान्विते व्युत्पत्तिमङ्गीकृत्य नियमनिराकरणमेवकाराभिप्राय इत्युक्तम्। इदानीं प्रकारान्तरेण तदभिप्रायमाह- **अथ वेति ॥ अन्यत्रेति ॥** 'लिङाद्यर्थस्त्विष्टसाधनत्वमेव' इत्यादिना कर्मनिर्णये, 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्यनुव्याख्याने चेत्यर्थः। **पराभिमतस्येति।** कृतिसाध्यत्वे सति कृत्यु-द्देश्यत्वरूपस्येत्यर्थः। **एवेत्युक्तमिति ॥** तथा च सिद्धान्वित एव व्युत्पत्तिर्दृष्टा न परोक्तकार्यान्विते, तस्यैवा-भावात्। न हि शशशृङ्गान्विते व्युत्पत्तिर्दृष्टा, इत्येवं परोक्तकार्यान्विते व्युत्पत्तिनिराकरणमेवैवकाराभिप्राय इत्यर्थः। **तत्** सिद्धान्वित एव व्युत्पत्तिदर्शनम्। आदिपूर्वकशब्दयोरेकार्थत्वादन्यतरवैयर्थ्यमित्याशङ्क्य व्याख्याति- **अङ्गुलीति ॥** भ्रूविक्षेपादेरित्यत्राऽदिपदेन छोटिकावादनं ग्राह्यम्। **तथोक्तः** अङ्गुलिप्रसारणादिरित्युक्तः। **पूर्वः** कारणभूतः। **निर्देशस्य** इयं मातेत्यादिनिर्देशस्य। नन्वियं मातेत्यादिना भगवत्पादैः पिकः कोकिल इतिवदुपदेशतो जायमान एव व्युत्पत्तिप्रकारो दर्शितः। अवधारणेन च प्रकारान्तरं व्यावर्तितम्। तन्न सम्भ-वति। सास्नादिमान् गौरित्युपदेशानन्तरं सास्नादिमत्त्वेन गोशब्दवाच्यत्वज्ञानमनुमानेनापि भवति। तथा **(श्री.टि.)** प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीति वाक्यश्रवणानन्तरं प्रभिन्नकमलोदरे यं मधुपानकर्तारं पश्यति तं मधुकरशब्दवाच्यं प्रत्यक्षेणैव प्रत्येति। एवं

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यैर्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'

इत्युक्तप्रकारेण व्युत्पत्तिप्रकाराणां बहूनां सत्त्वान्निर्देशेनैव तज्ज्ञानातीत्यवधारणं कथमित्यत आह- **एवशब्दे-नेति ॥ वृद्धव्यवहारेति ॥** 'तथाहि। चैत्र जलमाहर' इत्यादिनोपपादितप्रकारेण वृद्धव्यवहारदर्शनेन जायमानं कार्यान्विते प्राथमिकव्युत्पत्तिप्रकारं व्यावर्तयतीत्यर्थः। विषयविषयिभावं प्रतिपाद्यप्रतिपादकभावम्। **आवापोद्धा-राभ्यामिति ॥** आवापः स्थापनम्। उद्धारः परित्यागः। यदर्थावापे यच्छब्दावापो यदर्थोद्धारे यच्छब्दोद्धार इत्यावापोद्धाराभ्यामित्यर्थः। खादयतीति स्वार्थे णिच्। सखिकर्तृकापूपखादनरूपार्थावापेऽयं ते सखाऽपूपं खादतीति शब्दावापः। भ्रातृकर्तृककदलीफलाभ्यवहाररूपार्थोद्धारे सत्ययं ते भ्राता कदलीफलमभ्यवहतीति शब्दोद्धार इति द्रष्टव्यम्।

ननूपायद्वयस्याप्यविशेषान्मदीय एवोपायः किं नाङ्गीक्रियत इत्यत आह- **लघीयांश्चेति ॥** वृद्धव्यवहार-दर्शनापेक्षया व्युत्पत्तौ कथमस्योपायस्य लघीयस्त्वमित्यतः परकीयस्योपायस्य गुरुत्वं

'.................नानयेत्यादिवाक्यतः।
आनीयमानदृष्ट्यैव व्युत्पत्तेः सम्भवे सति। एष्यदानयनायायं कुत एव प्रतीक्षते'

इत्यनुव्याख्यानं मनसि निधायोपपादयति- **शश्वद्विस्मरणेति ॥**

'अत्यपूपांस्तव भ्रातेत्यादावावापतोऽपि च।
उद्वापाद्वर्तमानत्वादाकाङ्क्षादिबलादपि। बालो व्युत्पत्तिमप्येति'

इत्यनुव्याख्यानं मनसि निधाय स्वोपायस्य लघीयस्त्वमुपपादयति- **पुरोऽवस्थितेष्विति ।।** नन्वनागतादौ पदार्थे कथं व्युत्पत्तिः। तस्यावर्तमानत्वेन पुरोऽवस्थितत्वाभावादनपेक्षितत्वाच्चेत्यतो

'दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यति।
व्युत्पत्तिः प्रथमा यस्माद्वर्तमानेऽगते ततः ।।'

इत्यनुव्याख्यानं हृदि निधायानागतादौ व्युत्पत्तिमुपपादयति- **वर्तमानापदेशेष्विति ।।** वर्तमान इत्यपदेशो व्यवहारो येषां ते तथा तेषु वर्तमानपदार्थेष्वित्यर्थः। **जातजिज्ञास इति ।।** वर्तमानादन्यत्र अनागतादौ जात-जिज्ञास इत्यर्थः। एतेनेत्युक्तं विशदयति- **प्रथमव्युत्पत्तेरेवेति ।।** तथा च प्रथमभाविकार्यव्युत्पत्तीत्युक्तमसदिति भावः। **एवमेवेति ।।** योग्येतरान्विते स्वार्थे व्युत्पत्तिरिति सामान्यमेवाङ्गीकार्यमित्याहेत्यर्थः। कुतो नास्तीत्य-तस्तदुपपादयति- **गुणप्रधानभावेन खल्विति ।।** तर्ह्यत्राप्यस्तु कार्यस्य कार्यान्तरेण गुणप्रधानभावेनान्वय **(श्री.टि.)** इत्यत आह- **कार्यं चेति ।। तथा चेति ।।** कार्यस्य येन कार्यान्तरेणान्वयो बोधनीयस्तस्यापि कार्यस्य प्राधान्येनैव लिङादिशब्दबोध्यत्वादित्यर्थः। **कार्यद्वयस्येति ।।** प्रधानतया लिङादिशब्दबोधितस्ये-त्यर्थः। ननु प्रयाजाद्यङ्गसाध्यावान्तरकार्यस्य दर्शपौर्णमासादिसाध्यप्रधानकार्यस्य च गुणप्रधानभावेन अन्वयोऽस्त्येव। तथा च कथं कार्यद्वयस्य गुणप्रधानभावेनान्वयो न सम्भवतीत्युक्तमित्यत उक्तम्- **युगप-दिति ।।** एकस्मिन्नेव वाक्य इत्यर्थः। तत्र तु भिन्नवाक्यस्थकार्ययोरेव गुणप्रधानभावेनान्वय इति भावः। ननु प्राभाकरस्य अन्विताभिधानवादित्वात्कथं कार्यमात्रे लिङादीनां व्युत्पत्तिस्तेन अङ्गीकर्तुं शक्यत इत्यत उक्तम्- **सिद्धान्विते वा कार्ये इति ।। गवादिपदानामिति ।।** सिद्धपदानामित्यर्थः। एकप्रयोजकमाशङ्कते- **ननु कार्यान्वयिनीति ।।** अन्वयस्सम्बन्धः। **तद्वत्त्वं कार्यस्य सिद्धस्य चास्तीति ।।** अन्वयस्य सम्बन्धरूपत्वेन द्विष्ठत्वादिति भावः। **न च कार्यं प्रतीति ।।** गुणप्रधानभावस्य भेदव्याप्तत्वेनैकस्मिन् कार्ये तस्य विरुद्धत्वादिति भावः। ननु कार्यान्वयशब्देन गुणप्रधानानुगतमन्वयसामान्यमेव बोध्यत इति नोक्तदोष इत्यत आह- **न च गुण इति ।।** विशिष्यान्विताभिधानवादिना प्राभाकरेण कार्यान्वयशब्दस्य गुणप्रधानानुगतान्वयसामान्य-बोधकत्वानङ्गीकारादिति भावः। **कार्यान्वयान्वयिनीति ।।** कार्येण उक्तं योऽन्वयस्सम्बन्धस्तदन्वयवत्त्वं कार्ये सिद्धे चास्ति सम्बन्धस्य द्विष्ठत्वादिति भावः। एतदप्येतेनैव परास्तम्। उक्तरीत्या शब्दैक्येऽप्यर्थैक्या-भावादिति भावः। पुनरेकप्रयोजकमाशङ्कते- **कार्यपरेति ।।** कार्यपरं यत्पदं तस्य योऽर्थस्तदन्वित इत्यर्थः। तथा च 'स्वर्गकामो यजेत' इत्यादौ लिङादेः कार्यवाचकत्वेन कार्ये तात्पर्योपेतत्वात्सिद्धपदस्यापि कार्योपयुक्त-कर्त्रादिकारकप्रतिपादकत्वेन कार्ये तात्पर्योपेतत्वात्कार्यपरत्वं कार्यसिद्धोभयसाधारणमित्येकप्रयोजकलाभ इति भावः। **तदुद्देशित्वमात्रमिति ।।** कार्योद्देशित्वमात्रं, तदुपयुक्तार्थप्रतिपादकत्वमात्रं न वाचकत्वमित्यर्थः।

**(पां.टि.)** कार्यान्विते व्युत्पत्तिनिवृत्त्यर्थतया स्पष्टप्रतिभास्यमानैवकारस्य तन्नियमनिवर्तकत्वाश्रयणं क्लिष्टमिति पूर्वत्रारुच्या पक्षान्तरमाह- **अथ वेति ।। निरूपयितुमशक्यत्वेनेति ।।** कृत्युद्देश्यत्वस्य मुख्यत्वे इष्टत्वप्रसक्त्या अमुख्यत्वविवक्षायामिष्टसाधनत्वप्रसक्त्या चेति शेषः। **अन्यत्रेति ।।** अनुव्याख्यानादावित्यर्थः। इयं माताऽयं पितेत्यादिवाक्यस्य व्युत्पत्त्यनधिकरणत्वाद् **इत्यादौ** इति सप्तम्यनुपपत्तिमाशङ्क्य तत्प्रयोगस्य व्युत्पत्तिहेतुत्वान्न तदनुपपत्तिरित्याशयेन प्रयुक्तपदाध्याहारं सतिसप्तमीत्वं चाऽश्रित्य योजयति- **इत्यादावित्यादिना ।।** एवं सिद्धार्थे व्युत्पत्तिसम्भवमभिधायेदानीं परव्युत्पादितव्युत्पत्तिप्रकारं निराचिकीर्षुः, किं सिद्धे व्युत्पत्त्यनुपपत्त्या वृद्धव्यवहारदर्शनं तदुपायतया कल्प्यते किं वा सम्भवन्त्यामपि सिद्धार्थव्युत्पत्तौ तदनादरेण व्युत्पित्सुरेव वैतां शक्तिप्रक्रियामाश्रयतीति कृत्वा। नाऽद्यः। सिद्धार्थे प्राथमिकव्युत्पत्तिसम्भवस्योक्तत्वात्। नान्त्यः। प्रयो-जनार्थिनो हि प्रयोजन एव निर्बन्धो न तूपायविशेषे। तत्र उपायानेकत्वे च गुरुभूतमुपायं परित्यज्य लघुभूतं तमाश्रयते, न तु लघुं परित्यज्य गुरुमिति स्वात्मन्येवानुभवसिद्धमतो व्युत्पित्समानेऽपि एवमेव कल्पयितुं युक्तम्। न तु लघीयांसमुपायमनादृत्य गरीयांसमुपायं व्युत्पित्सुरनुतिष्ठतीति कल्पना युक्ता निर्मूलत्वादित्यभिप्रेत्य, **(पां.टि.)**भवेदेतदेवं यदि परोदीरितप्रकारस्य गुरुतरत्वं स्वाभिमतप्रकारस्य लघुतरत्वं स्यात्। न चैतदस्ति। तत्कथमेतदित्यभिप्रेत्य प्रतिज्ञापूर्वकं पक्षद्वयस्य गुरुतरत्वं लघुतरत्वं चोपपादयति- **लघीयांश्चायमित्यादि-ना ।।** तत्किं प्रयत्नगौरवाद्भविष्यत्क्रियायां तदन्वितेषु च व्युत्पत्तिरेव नास्ति। तथा सति तच्छब्दव्यवहारोऽपि कथमित्यतो न ब्रूमो वयं भविष्यत्क्रियायां तदन्वितेषु च सर्वथा व्युत्पत्तिरेव नास्तीति येनोक्तदोषः स्यात्। किन्तु वर्तमानक्रियायां तदन्वितेषु चार्थेषु गामानयतीत्यादिपदानां सम्बन्धं प्रथमतोऽधिगच्छति। भविष्यत्क्रियायां तदन्वितेषु च गामानयेत्यादिपदानां

सम्बन्धं तदुक्तप्रकारेणैव पश्चाज्जानातीत्येव । अतो न काऽप्यनुपपत्तिरित्या-शयेनाऽह- **वर्तमानापदेशेष्विति ॥** ननु भविष्यदर्थक्रियायां शब्दव्युत्पत्तिसम्भवोऽभिमतस्तर्हि तस्याः प्राथमिकत्वमेवास्तु । वर्तमानार्थक्रियाशब्दव्युत्पत्त्यनन्तरभावित्वे तस्या नियामकाभावादित्याशङ्क्य प्रथमत एवानागतार्थजिज्ञासाप्रतीक्षयोरसम्भवादेव हि तत्र व्युत्पत्त्यसम्भवोऽभिहितः । वर्तमानार्थस्य तु दृष्टिसम्भवेन जिज्ञासोपपत्तौ प्रतीक्षाया अभावाच्च वर्तमानक्रियायां तदन्वितेषु चार्थेषु देवदत्तो गामानयतीत्यादिपदानां प्रथमं व्युत्पत्तौ जातायां देवदत्त गामानयेत्युक्ते गवादिपदानामानयतेश्च ज्ञातार्थत्वेनोर्वरितप्रत्ययार्थमात्रे जिज्ञासा-प्रतीक्षयोः सम्भवेन वर्तमानार्थव्युत्पत्तेराकाङ्क्षादिजननद्वारेण कारणत्वाद्भविष्यदाद्यर्थकव्युत्पत्तेश्च कार्यत्वात् कार्यकारणभावस्यैव पौर्वापर्यनियामकतया पौर्वापर्योपपत्तिरित्याशयेनाऽह- **जातजिज्ञास इति ॥**

ननु धात्वर्थस्यापि कार्यत्वात् तदन्वितनियोगरूपकार्याभिधायकत्वाल्लिङादीनां कार्यान्वितस्वार्थाभिधाय-कत्वमस्त्येवेति सम्भवत्येवैकं प्रयोजकं मन्मतेऽपीत्याशङ्क्य 'कृतिसाध्यं प्रधानं यत्तत्कार्यमित्यभिधीयते' इति वदद्भिः प्राभाकरैः कृत्युद्देश्यलक्षणस्यैव कार्यस्याभ्युपगतत्वात् तथाविधकार्यद्वयस्य चैकस्मिन् वाक्येऽसम्भवेन कृत्युद्देश्यलक्षणकार्यान्वितस्वार्थाभिधायकत्वं लिङादिशब्दानां न सम्भवति । कृतिसाध्यमात्रस्य च धात्वर्थादेः शब्दशक्तिप्रतियोगिकार्यत्वेन तैरभ्युपगमात् न तदन्वितस्वार्थाभिधायकत्वेनैकप्रयोजकसमर्थनं सम्भवती-त्याशयेनाऽह- **गुणप्रधानभावेन हीत्यादिना ॥ युगपदिति ॥** एकस्मिन्नेव वाक्य इत्यर्थः । उक्तदूषणातिदेशेन प्रयोजकान्तरमपि निराकरोति- **एतेनेति ॥** कार्यनिरूप्योऽन्वयः कार्यान्वयः । **तदन्वयी** तदाधारः । स च कार्यमितरच्च भवति । सम्बन्धस्य द्व्याधारत्वात् । तत्र सामर्थ्यं सर्वपदानामस्ति कार्यपदस्य चेत्यर्थः । नयविवेककारोक्तं प्रयोजकमाशङ्कते- **कार्यपरेति ॥ अस्यार्थ इति ॥** न तु कार्यपरो यः पदार्थस्तेनान्विते व्युत्पत्तिरित्यर्थः । पदार्थानां कार्यपरत्वं हि न तद्वाचकत्वं युक्तम् । पदार्थानां कार्यवाचकत्वाभावात् । वाचकत्वस्य शब्दधर्मत्वात् । धूमादिवल्लिङ्गतया बोधकत्वाश्रयणे च कार्यस्यानुमेयत्वापत्त्याऽशाब्दत्वप्रसङ्गात् । नापि कार्यसाधनत्वरूपं कार्यशेषत्वं तत् । तथा सति कार्यशेषत्वं गवादिपदार्थस्यास्तीति तदन्विताभिधायिकार्यपदस्य कार्यपरपदार्थान्विताभिधायित्वप्राप्तावपि, भेदाभावेन कार्यपदार्थस्य कार्यशेषत्वाभावेन तदन्विताभिधायि-कारकपदानां कार्यपरपदार्थान्विताभिधायित्वाभावप्रसङ्गादिति भावः । अस्तु तर्हि कार्यपरत्वस्य पदधर्मत्वा-श्रयणेनोक्त एवार्थ इत्यत आह- **तत्रेति ॥ तदुद्देशित्वमात्रमिति ॥** लिङादिपदवत्सर्वपदानामपि कार्यपरत्वाश्रयणे च तेषां लिङादिपर्यायत्वप्रसक्त्या सहप्रयोगानुपपत्तिप्रसङ्गादिति भावः ।

**(व्या.टि.)** एवं पराभिमतं कार्यमुपेत्य तदन्वयनियमनिवारणपरतयाऽवधारणं व्याख्यायाधुना पराभिमत-कार्यव्यावृत्तिपरतया व्याचष्टे- **अथवेति ॥** आदिपूर्वपदयोरैकार्थ्याद्बहुव्रीहावन्यतरवैयर्थ्यमाशङ्क्य बहुव्रीहि-गर्भबहुव्रीहिं दर्शयति- **भ्रूविक्षेपणादेरिति ॥** आदिपदेन छोटिकावादनं गृह्यते । तदिति द्वितीयान्तं मत्वाऽह- **मात्रादिकमिति ॥** कर्तृपदमध्याहरति- **बाल इति ॥** निर्देशेन बालस्य व्युत्पत्तिप्रकारं दर्शयति- **मातुरित्यादिना किमनुपपन्नमित्यन्तेन ॥ शब्दविभागादिकमिति ॥** यदर्थप्रक्षेपे यच्छब्दप्रक्षेपो यदर्थोद्धारे यच्छब्दोद्धारः स तस्य वाचक इति शब्दविभागादिकमित्यर्थः । ननु 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इत्युक्तेरुपा-यान्तरव्यवच्छेदः किन्निबन्धन इत्यत आह- **लघीयांश्चेति ॥** लघुशब्दाद् गुणवचनात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुनि 'टेः' इति टिलोपे रूपम् । कल्पनागौरवप्रदर्शनाय शश्वद्विस्मरणशील इत्यादि-विरुद्धहेतूक्तिः । एवं स्वोपाये लाघवप्रदर्शनाय पुरोवस्थितेष्वित्यादि बोध्यम् । तर्हि किं व्यवहारो नोपाय इत्यत आह- **वर्तमानेति ॥ एतेनेति ॥** सिद्धान्विते व्युत्पत्तिगृहीतेः प्राथमिकत्वकथनेनेत्यर्थः । विना प्रमाणेन बहुतरकल्पनया कल्पनागौरवमभिधाय प्रयोजनद्वयकल्पनयाऽपि तदभिधित्सुराह- **इतश्चेति ॥ कार्यस्य** कृत्युद्देश्यस्य । **कार्यान्तरेण** अन्येन कार्येण । तस्य मुख्यविशेष्यतया अन्येन तादृशेनान्वयासम्भवादिति भावः । तदेवोपपादयति- **कार्यं चेति ॥** 'क्रियाप्रधानमाख्यातम्' इत्युक्तेरिति भावः । नन्वङ्गभूतदीक्षणीयाद्यपूर्वस्य प्रधानज्योतिष्टोमार्थत्वेन कार्ययोरपि परस्परमङ्गाङ्गिभावेनान्वयो मीमांसकसम्मत इत्यतो युगपदित्युक्तम् । एकस्मिन् वाक्य इत्यर्थः । स्वमतेऽप्येकप्रयोजकलाभं शङ्कते- **नन्विति ॥ अस्तीति ॥** सम्बन्धस्य द्विष्ठत्वादि-त्याशयः । **गुणभाव एवेति ॥** प्रकारभावेनान्वयादित्यर्थः । **न चेति ॥** व्याघातादिति भावः । **बोध्यत इति ॥** आकाङ्क्षाविरहादिति बोध्यम् । तथा च अर्थैक्याभावान्नानुगम इत्यर्थः । उक्तदोषमन्यत्राप्यतिदिशति- **एतेनेति ॥** विरुद्धगुणप्रधानभावापातेनेत्यर्थः । उपलक्षणमेतत् । अन्वयस्यैव शब्दबोध्यत्वेन तदन्वयस्य शब्दाबोध्यत्वेन चेति, अन्वयस्य अन्वयप्रतियोगितया भाने पदार्थत्वापाताच्चेत्यपि बोध्यम् । पुनः प्रयोजकैक्यं शङ्कते- **कार्येति ॥** दूषयितुमर्थं विवेचयति- **कार्यपरमिति ॥** एवेति प्रयोजकैक्यदौर्लभ्यमाह ।

**मूलम् - 'इयं माता', 'अयं पिता', 'सुरूपोऽसि' इत्यादौ सिद्धमात्रज्ञापनेन पर्यवसितत्वाद् वाक्यस्य**

।

**(त.मं.)** ननु सिद्धार्थत्वे वाक्यानां न वाक्यपर्यवसितिः । तस्मात् तत्रापीयं मातेति विद्धीति स्यादित्यत आह- **इयमिति ।।**

**टीका -** ननु तथाऽपि न केवले सिद्धार्थे वाक्यप्रामाण्यं युज्यते । कार्यबोधमन्तरेण नैराकाङ्क्ष्य-लक्षणस्य पर्यवसानस्याभावात् । नहि गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पदजातं पर्यवसितमनुभूयते, किन्तु तृप्तिकामौदनं पचेति । पर्यवसानहीनस्य च न्यूनतया वाक्याभासत्वं स्यात् । अतः कार्यपरत्वं सर्वथाऽङ्गीकार्यमित्यत आह- **इयमिति ।।** इत्यादौ प्रयोगे । केवले सिद्धेऽर्थे नाप्रामाण्यमिति वर्तते ।

यो बाल्य एव कुतश्चित्कारणान्मातापितृभ्यां वियुक्तो मातापितृमतोऽन्यानवलोक्य स्वात्मनोऽपि तथाभावमनुमाय 'का मे माता, को मे पिता, कीदृशौ, कुत्र वर्तेते' इत्युत्कण्ठते । अथ तं प्रति कश्चिद्ब्रवीति 'अयं ते पिता यः पाटलीपुत्रे राजाऽस्ति भद्रसेनः, इयं ते माता या भद्रसेनस्य महिषी लीलावती' इति । तदा कार्योपदेशमन्तरेण सिद्धस्यैव ज्ञापनेन तद्वाक्यं पर्यवसितं भवति श्रोतुर्निराकाङ्क्षत्वात् । तदनन्तरं च स यदि कथं तौ पश्येयमिति जिज्ञासते तदा 'तद्दर्शन-कामस्त्वमेवमनेन पथा पाटलीपुत्रं याहि' इति कार्यं बोधयति । तथा, यः स्वमुखमपश्यन् अन्यान् सुरूपान् विरूपांश्च विलोक्य स्वात्मनि सन्दिग्धे 'किमहं सुरूपो विरूपो वा' इति' । तदा तं कश्चिदाचष्टे 'सुरूपोऽसि' इति । तदपि वाक्यं सिद्धमात्रज्ञापनेन पर्यवस्यति । ततः परम् आकाङ्क्षा-विच्छेदात् । तस्मादिष्टसाधनज्ञापनमेव वाक्यपर्यवसाने हेतुर्न कार्यबोधनमेवेति नियमः । कार्यबोधने पर्यवसानस्यापीदमेव निमित्तं यदिष्टसाधनबोधनमिति ।

अनेनैतां वेदवाक्यानां योजनां सूचयति । यो हि सात्त्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादि-लिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेष-ज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं वेदस्तत्स्व-रूपं स्वप्रधानमेव प्रतिपादयति 'विज्ञानमानन्दं ब्रह्म' इत्यादि । ततो वाक्यार्थज्ञानादवाप्त-परमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवति । तदर्थं कर्मविधयः प्रवर्तन्त इत्येवं समस्तोऽपि वेदः परमेश्वरस्वरूपज्ञापन एव पर्य-वसितः । अथवा शरीरेन्द्रियान्तःकरणादिसन्निधानेन स्वात्मनो विविधदुःखं पश्यन् निष्कण्टकं च सुखमलभमानोऽयं संशेते, किं ममेदं दुःखादिकं शरीरादिसम्बन्धनिमित्तमेव उत स्वाभाविक-मिति । तं प्रति वेदः प्रवर्तते 'तत्त्वमसि' इत्यादिः; परमात्मेव निर्दुःखपरमानन्दस्वभाव एव त्वमसि, किन्तु ईश्वराधीनाविद्याद्युपस्थापितशरीरादिनिमित्तेनान्यथारूपेणोपेत इति । ततः पुनरसौ जिज्ञासते 'केनोपायेनाहमिदमस्वाभाविकं रूपं हित्वा स्वरूपेणावस्थितः स्याम्' इति । तं प्रति परमेश्वर एव प्रसन्नस्तदुपाय इति तत्स्वरूपं निरूप्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदर्थं श्रवणादिकं तदङ्गतया कर्माणि च विधीयन्त इत्येवं समस्तस्यापि वेदस्य परमेश्वरस्वरूप एव पर्यवसानमिति । एतच्च 'अन्यार्थं तु जैमिनिः' इत्यादिना सूत्रकृतैवोक्तम् ।

**(र.टि.) न हि गौरश्व इति ।।** इदं तु वाक्यं दृष्टान्तत्वेनोपात्तम् । अत एव पूर्वो वाशब्द उपमार्थः, द्वितीयस्त्वप्यर्थ इत्यवधेयम् । ननूक्तरीत्या वाक्यानां सिद्धेऽर्थे प्रामाण्यसिद्धावपि विष्णोः स्वप्रधानतया सकलवेदवेद्यत्वं प्रतिज्ञातं कथमनेन सिद्धमित्यत आह- **अनेनैतामिति ।। यो हि सात्त्विकप्रकृतिरिति ।।** इयं च योजना एकान्तभक्ता-भिप्रायेण 'इयं माताऽयं पिता' इत्येतावता भागेन सूचितेति ज्ञातव्यम् । मध्यमभक्ताभिप्रायेण 'सुरूपोऽसि' इत्यनेन सूचितां योजनामाह- **अथ वेति ।।** 'तत्त्वमसि' इत्यस्य 'सिंहो देवदत्तः' इतिवत्सादृश्यमादायोप-चारेणाभेदप्रतिपादकत्वमभिप्रेत्याऽह- **परमात्मेवेति ।।** यदर्थज्ञापनमुपचारप्रयोगे प्रयोजनं

तमर्थमाह- **किन्त्वी-श्वराधीनेति ॥** ननु 'विज्ञानमानन्दं ब्रह्म' इत्यस्य 'तत्त्वमसि' इत्यस्य 'इयं माता' इति 'सुरूपोऽसि' इत्यनेन च योजनाप्रकारस्य सूचितत्वेऽपि नोपासनाकर्मविध्यादिपराणां वाक्यानां योजनाप्रकारः सूचितः । तथा च तत्प्रदर्शनं किंमूलकमित्यत आह- **एतच्चेति ॥**

**(रा.टि.) तथाऽपीति ॥** कार्यान्विते व्युत्पत्तिपक्षस्य गौरवदुष्टत्वेनायोगेऽपीत्यर्थः । तत्र क्रियापदाभावा-दपर्यवसानमित्यत आह- **देवदत्त इति ॥ पचेतीति ॥** कार्यताबोधकलिङाद्यन्तपदप्रयोगे सत्येवेत्यर्थः । अस्त्व-पर्यवसानं तावताऽप्रामाण्यं कुत इत्यत आह- **पर्यवसानहीनस्य चेति ॥ प्रयोग इति ॥** उच्चार्यमाण इत्यर्थः । पर्यवसितत्वादिति हेतोः साध्यमाह- **नाप्रामाण्यमितीति ॥** वाक्यार्थमाह- **यो बाल्य इत्या-दिना ॥** वाक्यमात्रे पर्यवसानहेतुभूतमेकं धर्मं निष्कृष्याऽह- **तस्मादिति ॥** परोक्तस्य कार्यपरत्वस्य इयं मातेत्यादिवाक्येऽनैकान्त्यादिति वा सिद्धपरेऽपि वाक्ये पर्यवसानदर्शनादिति वाऽर्थः । तर्ह्येकं नानुगतं लब्धमित्यत आह- **कार्यबोधन इति ॥** अस्त्वेवं लोके । वेदे तु कथं योजना । परेण तस्यान्यथैवोक्तत्वादित्यत आह- **अनेनैतामिति ॥ कार्यत्वादीति ॥** आदिपदेन 'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः' इत्याद्युदयनोक्त-जगद्धारकत्वादिलिङ्गपरिग्रहः । **उत्कण्ठितेति ॥** त्वरायुक्तमानस इत्यर्थः । **तत्संस्कारेति ॥** भगवज्जिज्ञासा-संस्कारवशादिति वा माहात्म्यज्ञानजन्यसंस्कारवशादिति वाऽर्थः । **स्वप्रधानमिति ॥** अनन्यशेषमित्यर्थः । **इत्यादीति ॥** आदिपदेन 'सत्यं ज्ञानमनन्तं ब्रह्म', 'सत्यकामः सत्यसङ्कल्पः', 'निरनिष्टो निरवद्यः' इत्यादिलक्षणवाक्यग्रहः । **तदुपासनेति ॥** 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'सोऽन्वेष्टव्यः' इत्यादावि-त्यर्थः । **प्रक्षीणेति ॥** कामादिषड्वर्गहीनस्येत्यर्थः । **कर्मेति ॥** 'सन्ध्यामुपासीत' 'अर्चत प्रार्चत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादय इत्यर्थः । सुरूपोऽसीत्युक्तिसूचितयोजनामाह- **अथवेति ॥** संशेते संशयवान् वर्तते । 'अतस्मिंस्तच्छब्दप्रयोगः सारूप्यगमकः' इति न्यायात्तद्वदित्यर्थमुपेत्याऽह- **परमात्मेवेति ॥** तदाह **(रा.टि.)** सूत्रे 'तद्गुणसारात्वात्तद्व्यपदेशः' इति । **अविद्याद्युपस्थापितेति ॥** अविद्याकामकर्माद्यागते-त्यर्थः । **एतच्चेति ॥** परमेश्वरस्वरूपे सर्वस्य पर्यवसानमित्येतदित्यर्थः । **अन्यार्थमिति ॥** 'जगद्वाचित्वात्' 'जीवमुख्यप्राणलिङ्गात्' इति च पूर्वसूत्रद्वयाज्जगद्वाचित्वपदं जीवमुख्यप्राणपदं चानुवर्तते । अन्यशब्दश्चान्यज्ञान-परः । कर्मकाण्डदेवताकाण्डयोः कर्मदेवतादिरूपजगद्वाचित्वं, तत्प्रतिपादनमिति यावत्, जीवमुख्यप्राणाभ्या-मन्यब्रह्मज्ञानार्थमेवेत्यर्थः । कर्मानुष्ठानेन मनोमलनिवृत्तौ तदुपासनाद्वारा तज्ज्ञानोत्पत्तेरिति भावः । आदिपदेन 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः', 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः', 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रत्रयग्रहः ।

**(श्री.टि.) नैराकाङ्क्ष्यलक्षणस्येति ॥** यत्प्रतिपादनानन्तरं पुनराकाङ्क्षा न भवति तन्निराकाङ्क्षं सम्पूर्णा-काङ्क्षमित्यर्थः, तस्य भावो नैराकाङ्क्ष्यं तद्रूपस्येत्यर्थः । **गौरश्वः पुरुषो हस्तीति वेति ॥** 'वा विकल्पोप-मानयोः' इत्यभिधानाद्वाशब्द उपमानार्थः । तथा च गौरश्वः पुरुषो हस्तीति निराकाङ्क्षवाक्यवदित्यर्थः । **देवदत्तः पचतीति वेति ॥** अत्र वाशब्दोऽप्यर्थः । देवदत्तः पचतीत्यपि पदजातमित्यर्थः । पचतीति लट एव सत्त्वेन नैराकाङ्क्ष्यहेतोः कार्यबोधकलिङादेरभावादिति भावः । **पचेतीति ॥** अत्र कार्यताबोधकस्य लोटस्सत्त्वादिति भावः । सिद्धमात्रज्ञापनेन कथं वाक्यस्य नैराकाङ्क्ष्यलक्षणपर्यवसितत्वमित्यत आह- **यो बाल्य एवेति ॥** बाल्यावस्थायामेवेत्यर्थः । यो बाल एवेत्यपि क्वचित्पाठः । **कुतश्चित्कारणात्** राजकार्यादिरूपात् । **तथाभावं** मातापितृमत्त्वम् । **पाटलीपुत्रे** तन्नामकनगरे । **महिषी** पत्नी । सिद्धमात्रज्ञापनेनेत्यत्रावधारणार्थकमात्रशब्द-व्यावर्त्यमाह- **कार्योपदेशमन्तरेणेति ॥ निराकाङ्क्षत्वात्** आकाङ्क्षापूर्तिहेतुत्वात् । **स्वात्मनि सन्दिग्ध इति ॥** स्वस्मिन्नपि सन्देहवान् भवतीत्यर्थः । **सिद्धमात्रज्ञापनेनेति ॥** कार्योपदेशमन्तरेण सिद्धस्यैव ज्ञापनेने-त्यर्थः । 'तद्धेतोरेवास्तु तद्धेतुत्वं किं तेन' इति न्यायं हृदि निधायाऽह- **कार्यबोधन इति ॥ यदिष्टसाधनेति ॥** तदेव सिद्धार्थबोधनेऽप्यस्ति चेन्नैराकाङ्क्ष्यलक्षणं पर्यवसानं भविष्यत्येवेत्यर्थः । 'कार्यता च न काचित् स्यादिष्ट-साधनतां विना' इत्युक्तेरिति ध्येयम् ।

ननूक्तरीत्या वाक्यानां सिद्धेऽर्थे प्रामाण्यसिद्धावपि विष्णोस्स्वप्रधानतया सकलवेदवेद्यत्वं प्रतिज्ञातं कथमनेन सिद्धमित्यत आह- **अनेनेति ॥** सिद्धे व्युत्पत्तिप्रदर्शनेनेत्यर्थः । यद्वा सिद्धमात्रज्ञापनेन वाक्यस्य पर्यवसि-तत्वोपपादनेनेत्यर्थः । **स्वप्रधानम्** अनन्यशेषम् । तदनन्तरं स यदि कथं तौ पश्येयमिति जिज्ञासत इत्यादिनोक्त-प्रकारं वेदवाक्येऽपि दर्शयति- **ततो वाक्यार्थज्ञानादिति ॥** इयं च योजनैकान्तभक्ताभिप्रायेण मुमुक्षुत्व-स्यानुक्तत्वाद् इयं माता अयं पितेत्येतावता भागेन सूचितेति ज्ञातव्यम् । मध्यमभक्ताभिप्रायेण सुरूपोऽसीत्यनेन सूचितां योजनामाह- **अथ वेति ॥** 'तत्त्वमसि' इत्यस्य सिंहो देवदत्त इतिवत्सादृश्यमादायोपचारेणाभेद-प्रतिपादकत्वमन्यत्रोक्तमभिप्रेत्याऽह- **परमात्मवदिति ॥** यदर्थज्ञापनमुपचारप्रयोगे प्रयोजनं तमर्थमाह- **किन्त्वी-श्वराधीनेति ॥ अवस्थितस्यामिति ॥** 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति वचनादत्र

**(श्री.टि.)** मुमुक्षुत्वोक्त्या एकान्तभक्तातिरिक्ताभिप्रायेणेयं योजनेति ज्ञायत इति द्रष्टव्यम् । ननु 'विज्ञानमानन्दं ब्रह्म' इत्यादिवेदवाक्यस्य 'इयं माता' इत्यनेन योजनाप्रकारस्य सूचितत्वेऽपि 'ततो वाक्यार्थज्ञानादवाप्त-परमानन्दः' इत्यादिनोक्तोपासनाविधिपराणां वाक्यानां योजनाप्रकारो मूले न सूचितोऽतस्तत्प्रदर्शनं किंमूलम् । तथा तत्त्वमसीत्यादिवेदवाक्यस्य सुरूपोऽसीत्यनेन योजनाप्रकारस्य सूचितत्वेऽपि 'ततः पुनरसौ जिज्ञासते' इत्यादिना प्रबन्धेनोक्तः कर्मविध्यादिपराणां वेदवाक्यानां योजनाप्रकारो मूले न सूचितोऽतस्तत्प्रदर्शनं च किंमूलकमित्यत आह- **एतच्चेति ॥ अन्यार्थं त्विति ॥** 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैव-मेके' इति सूत्रस्य ''परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति? तस्मै स होवाच द्वे विद्ये वेदितव्ये, कथं नु भगवः स आदेशो भवति? यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिप्रश्नव्याख्यानाभ्याम् । **एवमपि चैके पठन्ति** 'यस्तं न वेद किमृचा करिष्यति'' इति भाष्योक्तप्रकारेणार्थो द्रष्टव्यः ।

**(पां.टि.)** मूले उदाहरणद्वयोपदर्शनानर्थक्यमाशङ्क्याधिकारिभेदेन द्वेधा वेदवाक्यानां स्वप्रधानभगवत्परत्व-योजनाप्रदर्शनार्थत्वान्न तदित्यभिप्रेत्य तत्प्रयोजनमाह- **अनेनेत्यादिना ॥**

**(व्या.टि.)** एवं व्युत्पत्त्यभावेन सिद्धाप्रामाण्यं पराकृत्य वाक्यपर्यवसानाभावेनाप्यप्रामाण्यं पराकर्तुमुपक्षिपति- **नन्वित्यादिना ॥** तथाऽपि व्युत्पत्त्यभावस्य स्वरूपासिद्धावपि । ननु सिद्धविषयत्वेऽपि वाक्यपर्यवसानं किन्न स्यादित्यत आह- **नहीति ॥** पर्यवसानाभावेऽपि प्रामाण्यं किं न स्यादित्यत आह- **पर्यवसानहीनस्येति ॥ अत इति ॥** कार्यपरत्वे वाक्यपर्यवसानादित्यर्थः । **वर्तते** अनुवर्तते । वाक्यस्य पर्यवसानप्रकारं दर्शयति- **यो बाल्य एवेत्यादिना ॥ कुतश्चिदिति ॥** अपराधादितः । **मातापितृभ्यामिति ॥** 'मात्रा सहोक्तः पिता वा शिष्यते' इति विकल्पादेकशेषाभावः । **अनुमायेति ॥** पुत्रत्वेनेति शेषः । **कीदृशाविति ॥** 'पुमान्स्त्रिया' इत्येकशेषः । **पाटलीपुत्र इति ॥** तत्कालीनो ग्राम इति सम्प्रदायः । प्राथमिकीं सिद्धे पर्यवसितिं प्रदर्श्य पश्चात्तनीं कार्ये पर्यवसितिं दर्शयति- **तदनन्तरमिति ॥ पथा** मार्गेण । **सन्दिग्ध इति ॥** दिह उपचये, अतो लडात्मने-पदम् । **इष्टसाधनताबोधनमिति ॥** यदाह परोऽपि

'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ।
फलसाधनता तत्र कारणं तेन कार्यता ॥' इति ।

ननु सिद्धे प्राथमिकव्युत्पत्तेः पर्यवसानस्य च समर्थनेन कः प्रकृतोपयोग इत्यत आह- **अनेनेत्यादिना ॥** अनेनेत्यस्य उदाहरणद्वयप्रदर्शनेनेति वाऽर्थः । स्नेहवशेन जिज्ञासितमात्रादिबोधकताया इव तादृशभगवद्बोधकताया एकान्तिनं प्रति, सौरूप्यादिसंशयनिरासकताया इव मध्यमाधिकारिणं प्रति दुःखादिस्वाभाविकत्वसंशय-निरासकताया वेदे सत्त्वात् । 'देहकर्तृत्वमीशस्य ज्ञात्वा तत्पितृतास्मृतेः । विशेषस्नेहमापाद्य' इत्यनुव्याख्यानं **(व्या.टि.)** मनसि निधायाऽह- **स्वतनुभवनादेरित्यादिना ॥** ग्रन्थान्तरोक्तयोजनाप्रकारं दर्शयति- **अथ वेति ॥ संशेत इति ॥** सम्पूर्वकस्य शीङो लडात्मनेपदम् । सिंहो माणवक इतीव सादृश्यनिबन्धनोऽभेदव्यपदेश इत्याह- **परमात्मेवेति ॥ अविद्यादीति ॥** 'अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः' इति भागवतोक्तेरित्यर्थः। **जिज्ञासते** मुमुक्षति । तत्प्रकारं दर्शयति- **केनेति ॥ स्वरूपेणेति ॥** 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इत्युक्तेः । **परमेश्वर एवेति ॥** 'बन्धको भवपाशेन भवपाशाच्च मोचकः' इत्युक्तेः । **पर्यवसान-मिति ॥** ततः परम् आकाङ्क्षाभावादिति भावः । न चैतदुन्मूलमित्याह- **एतच्चेति ॥**

**मूलम् - तस्य तत्र प्रामाण्यानुभवाच्च । नच कुत्रचित्सिद्धज्ञापनादन्यद्वाक्यस्य प्रयोजनं दृष्टम् । ज्ञात्वैव हीष्टसाधनतां प्रवर्तते ; निवर्तते च विपर्ययेण । अतः सिद्ध एव सर्ववाक्यानां प्रामाण्यं सिद्धम् । प्रसिद्धं च व्याकरणनिरुक्तादीनां सिद्धमात्रे प्रामाण्यं सर्ववादिनाम् । तदनङ्गीकारे च सर्वशाब्दव्यवहारासिद्धिः ।**

**(त.मं.)** कथं वाक्यपर्यवसितिर्निश्चीयत इत्यत आह- **तस्येति ॥ तस्य** वाक्यस्य । **तत्र** अर्थे । ननु यज्ञादिकर्तव्यताज्ञापनं हि वाक्यप्रयोजनम् । अतः कथं कर्तव्यतायामतात्पर्यमित्यत आह- **न च कुत्रचिदिति ॥** 'स्वर्गकामो यजेत' इत्यादिविधिवाक्येऽपि यजनक्रियायाः स्वर्गसुखाख्येष्ट-साधनतां ज्ञात्वैव हि प्रवर्तते; न विधिमात्रात्

। 'विषं भुङ्क्ष्व' इत्यादिविधौ सत्यपि विपर्ययेणानिष्ट-साधनताज्ञानेन निवर्तते च। अत इष्टसाधनाख्ये सिद्धे सर्ववाक्यानां प्रामाण्यम्। इष्टसाधनं च भगवानेव। 'साधनमिष्टस्य भगवानिष्टदेवता' इति ह्यनुव्याख्यायाम्। **सिद्धमात्रे** शब्दस्वरूपादा-वेव, न तु कार्ये। व्याकरणाद्यनङ्गीकारे सुशब्दापशब्दविभागे प्रमाणाभावाद् व्यवहारासिद्धिः।

**टीका-** ननु तथाऽपि केवलसिद्धपरत्वे वाक्यस्यानुवादकत्वेनाप्रामाण्यं स्यात्। ततः सर्वथा कार्य-परता स्वीकार्या। कार्यस्य च प्रमाणान्तरागोचरत्वेन नानुवादकत्वप्रसङ्ग इत्यत आह- **तस्येति ॥** पू(र्वै/वा)र्वत्रेवात्राप्यनुवृत्तिः। **तस्य** इयं मातेत्यादिवाक्यस्य। **तत्र** केवलसिद्धार्थे। प्रामाण्यं नाम यथावस्थितार्थबोधकत्वं नान्यत्। तच्च केवलसिद्धेऽप्यर्थे प्रत्यक्षादेरिव वाक्यस्याप्यनुभूयते। अस्ति चासावर्थो यः सिद्धोऽपि प्रमाणान्तरेणाविदितपूर्वः। ततः सिद्धार्थ एव इयं मातेत्यादि-वाक्यस्याननुवादकत्वमप्यनुभूयत एव। अतः केवलसिद्धार्थे वाक्यस्य नाप्रामाण्यमिति किं कार्यपरत्वाऽग्रहेण। स्यादेतत्। यद्यपि बोधकत्वेनैव प्रमाणानां प्रामाण्यम्। तथाऽपि वाक्यप्रयोगस्य परार्थत्वात् परप्रयोजनाङ्गमेव वाक्यं प्रामाण्यमश्नुते। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादि। नान्यत् यथाऽष्टौ काकस्य दन्ता इति। परप्रयोजनाङ्गं च तदेव यत्कार्यपरम्। ततः कथं केवलसिद्धेऽर्थे वाक्यप्रामाण्यमित्यत आह- **नचेति ॥** सिद्धेति प्रकृतत्वादेवोक्तम्। ततश्चैवं व्याख्येयम्। वाक्यं हि प्रमाणम्। तच्च प्रमासाधनम्। प्रमा च यथार्थज्ञानम्। अतस्तस्य परज्ञापनमेव प्रयोजनं छिदासाधनस्य परशोः छिदेव। नहि तत्साधनस्य ततोऽन्यत्प्रयोजनं दृष्टम्। तच्च प्रयोजनं सिद्धविषयस्याप्यस्तीति कथं प्रामाण्यानुपपत्तिरिति।

अथवा कार्यमपि सिद्धविशेष एवेष्टसाधनलक्षण इति भावेन सिद्धेत्युक्तम्। यथावस्थितपर्यायो वा सिद्धशब्दः। सत्यमेतज्ज्ञापनमेव साक्षाद्वाक्यस्य प्रयोजनम्। तथाऽपि स एवार्थो वाक्येन ज्ञापनीयो यज्ज्ञानं परस्य क्वचित्प्रवृत्तिं कुतश्चिन्निवृत्तिं वा कुर्यात्, परप्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगात्। प्रवृत्त्यादिकारणं च कार्यज्ञानमेव न केवलसिद्धज्ञानम्। नच वाच्यं शब्दस्तद्व्यपारो वा प्रवर्तक इति। तथासति तच्छ्राविणां सर्वेषामपि प्रवृत्तिनिवृत्तिप्रसङ्गात्। बालस्य स्तनपानादि-प्रवृत्त्यादौ शब्दाद्यभावाच्च। याऽपीयं शङ्खादिशब्दश्रवणानन्तरं प्रवृत्तिर्निवृत्तिर्वा, साऽपि पुरुषाभि-प्रायानुमानादेव,न साक्षात्। रागद्वेषयोर्यद्यपि प्रवर्तकत्वमस्ति तथाऽपि तत्सत्तयैव नतु ज्ञाततया। ज्ञानं त्वबुभुत्सितग्राह्यतयाऽवर्जनीयसन्निधि। अतो वाक्यबोध्यं प्रवृत्त्यादिकारणं कार्यमेवेति तदेव सर्वत्र वाक्यार्थतयाऽङ्गीकार्यम्। अत एव लिङादिरहिते वाक्ये कार्याध्याहारो लक्षणा वाऽऽश्रय-णीया। तत्कथं सिद्धमात्रपरत्वं वाक्यस्येति। उच्यते। नायमस्ति नियमो यत्प्रवृत्त्याद्यर्थ एव वाक्यप्रयोग इति। यत्र वाक्यार्थज्ञानमात्रेण सुखदुःखावाप्तिहानी भवतस्तत्र प्रवृत्त्याद्यभावात्, यत्रापि प्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगस्तत्रापि सिद्धपरत्वं युक्तमेवेति वक्तुमाह- **ज्ञात्वै-वेति ॥** एव(कारो)शब्दो भिन्नक्रमः, इष्टसाधनतामेवेति। ततः किमित्यत आह- **अत इति ॥**

यद्यपि सिद्धमात्रज्ञानं न प्रवृत्त्यादिहेतुस्तथाऽपि सिद्धविशेषेष्टानिष्टसाधनत्वज्ञानं तु भवत्येव। यतो बालोऽपि स्तनपानादेरिष्टसाधनतामेव ज्ञात्वा प्रवर्तते। तथा दंशमशकदशनादेरनिष्ट-साधनता-मेव ज्ञात्वा निवर्तते। तस्यापि कार्यताज्ञानादेव प्रवृत्तिः, इष्टसाधनताज्ञानं तु कार्यताज्ञानस्य कारणमिति चेन्न। इष्टसाधनतातिरिक्तायां कार्यतायां प्रमाणाभावात्। चन्द्रमण्डलादावस्तीष्ट-साधनताबुद्धिर्न कार्यताबुद्धिरिति चेत्। सत्यम्। कृतिसाध्येष्टसाधनतायाः कार्यतापर्याय-तयाऽङ्गीकारात्। अत एव न भूतादौ प्रवृत्तिप्रसङ्गः।

एतेन वृद्धव्यवहारदर्शनेन या व्युत्पत्तिः साऽपि सिद्धविषयैवेति सिद्धम्। बालेन हि स्वप्रवृत्तौ यत्प्रवर्तकत्वेनावगतं तदेव वृद्धप्रवृत्तावपि कल्पयितुमुचितम्। स्वप्रवृत्तौ च इष्टसाधनताज्ञानमेव प्रवर्तकतयाऽवधारितमित्युक्तम्। यत एवं सिद्धज्ञानस्यैव सर्वत्र प्रवर्तकत्वं व्युत्पत्तिश्च सिद्धविषयैव, अतो न केवलम् इयं मातेत्यादीनां किन्तु सर्ववाक्यानां

लिङादियुक्तानामपि सिद्ध एव प्रामाण्यं सिद्धम्।

अत्र सर्ववादिसिद्धदृष्टान्तमाह- **प्रसिद्धं चेति ।।** आदिपदेन निघण्टुप्रभृतीनां ग्रहणम्। **सिद्धमात्रे** शब्दादिस्वरूपे। तत्रापि 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग् भवति' इत्यर्थवादबलाद् विधिः कल्प्यत इति चेन्न। इष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तौ तत्कल्पकाभावात्।

अपर आह- व्याकरणादेः प्रामाण्यमेव नास्ति निर्मूलत्वात् प्रयोजनाभावाच्च, शब्दज्ञानस्य लोकप्रयोगादेव सिद्धेः, वेदरक्षादेश्च शुद्धसम्प्रदायेनैवोपपत्तेः। तत्कथं तदुदाहियत इति, तत्राऽह- **तदनङ्गीकारे चेति ।।** व्याकरणादि प्रामाण्यानङ्गीकारे। अपशब्दासङ्कीर्णैः शब्दैर्यो निर्वर्त्यो व्यवहारः स शाब्दव्यवहारः। लोके हि गोशब्दवद्गा(य्या)व्यादयोऽपि सास्नादिमति पिण्डे प्रयुज्यन्ते। ततस्तेषामपि तद्वत् प्रयोगप्रसङ्गे 'दुष्यति चापशब्दैः' इति वचनात् प्रत्यवायः स्यात्। अत एव शब्दापशब्दविभागो नास्तीत्यपि निरस्तम्। तदभावे फलभेदकथनानुपपत्तेः। नच शब्दापशब्द-योर्विभागो विना व्याकरणाच्छक्यते ज्ञातुम्। अतस्तत्प्रामाण्यानङ्गीकारे शाब्दव्यवहार एवोच्छि-द्येत। अत एवाष्टकादिस्मृतिवन्मूलमपि तस्य कल्पनीयम्। प्रमादपरिहारार्थत्वेन वेदरक्षादिकमपि सिद्धमिति।

**(र.टि.) पूर्वैवात्राप्यनुवृत्तिरिति ।।** पर्यवसितत्वाद्वाक्यस्येत्यत्र यत्साध्यमप्रामाण्याभावरूपं तदेवात्रापि साध्यमित्यर्थः। अत एव च मूले चशब्द इति भावः। पूर्वं, सिद्धत्वं नाम ज्ञातत्वमित्यभ्युपेत्य तत्प्रतिपादक-वेदस्यानुवादकत्वेऽपि यथावस्थितार्थबोधकत्वलक्षणप्रामाण्यं प्रत्यक्षादिवत्सम्भवतीति व्याख्यातम्। अधुना, सिद्धत्वं नाम निष्पन्नस्वरूपत्वमित्यभ्युपेत्यानुवादकत्वमेव नास्तीत्यभिप्रेत्य वाक्यं प्रकारान्तरेण व्याचष्टे- **अस्ति चासावित्यादिना ।।** ननु कार्यज्ञापनस्यापि ज्ञापनत्वेन प्रयोजनत्वात्सिद्धपदं व्यर्थमित्यत आह- **सिद्धेतीति ।।** प्रकृतत्वादेवोक्तं न तु व्यावर्तकत्वेनेत्यर्थः। **अथवेति ।।** अस्मिन् पक्षे सिद्धसाधनातिरिक्त-पराभिमतकार्यतानिरासार्थे सिद्धपदप्रयोग इत्युक्तं भवति। **तद्व्यापार इति ।।** अभिधारूपः शब्दव्यापार इत्यर्थः। **न तु ज्ञाततयेति ।।** तथा च न तयोः प्रवर्तकज्ञानविषयत्वं येन ताभ्यामन्यथासिद्धिः स्यादिति (र.टि.) भावः। **कार्याध्याहार इति ।।** अर्थाध्याहारवादित्वात्तस्येति भावः। **एवकारो भिन्नक्रम इति ।।** परेण प्रवर्तकज्ञानविषयत्वेन कार्यं नियमितम्। न तु ज्ञानस्याप्रवर्तकत्वमुक्तं येनैवकारो यथाश्रुतः सङ्गच्छेतेति भावः। **सिद्धमात्रज्ञानमिति ।।** अस्मिन् व्याख्याने सिद्धत्वसामान्यव्यावर्तकत्वम्, इष्टसाधनतामेवेत्येवकार-स्येति ज्ञातव्यम्। उक्तार्थे हेतुप्रदर्शकत्वेनापि ज्ञात्वैवेति वाक्यं व्याचष्टे- **यतो बालोऽपीति ।।** अनेन हिशब्दो हेत्वर्थ इत्युक्तं भवति। **कृतिसाध्येष्टसाधनताया इति ।।** प्रवृत्ताविष्टसाधनतालक्षणलिङादिवाच्यकार्यताज्ञानमात्रं न कारणम्। किन्तु प्रमाणान्तरजन्यकृतिसाध्यत्वज्ञानसहितेष्टसाधनताज्ञानं कारणमित्यभिप्रेत्यैतदुक्तम्। न तु लिङादिवाच्यकार्यतानिर्वचनार्थम्। तथात्वे 'लिङाद्यर्थस्त्विष्टसाधनत्वमेव' इत्यादिकर्मनिर्णयेन, 'किन्त्विष्ट-साधनत्वं सिद्धविशेषः, कार्यत्वं तदेव धात्वर्थनिष्ठं लिङाद्यर्थः' इत्यादितट्टीकया, अतिरिक्तकार्यताया लिङादि-वाच्यत्वनिराकरणपरेण 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्यनुव्याख्यानेन, 'कृतिसाध्यता-विशेषणस्य व्यर्थत्वात्' इति सुधया च विरोधः स्यात्। अत एव कर्मनिर्णयटीकायाम् 'इष्टसाधनत्वमेव लिङादि-वाच्यम्' इत्यतिस्पष्टमुक्त्वा न केवलं लिङादिवाच्येष्टसाधनतालक्षणकार्यताज्ञानं प्रवृत्तिकारणं, किन्तु प्रमा-णान्तरजनितकृतिसाध्यत्वज्ञानसहितम् इत्यभिप्रेत्य 'कृतिसाध्यतैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेः' इत्यादिनाऽतिरिक्तकार्ये परोपन्यस्तप्रवृत्त्यन्यथानुपपत्तिलक्षणार्थापत्तिर्दूषितेति ज्ञातव्यम्। न चैवं कृतिसाध्यत्व-ज्ञानस्य प्रवर्तकत्वे तदपि लिङादिवाच्यं स्यादिति वाच्यम्। न हि यावान् प्रवर्तकज्ञानविषयस्तावान् लिङाद्यर्थः। इदानीं ममेदमिष्टसाधनमिति प्रवर्तकज्ञानविषययोरपि कालस्वांशयोर्लिङाद्यर्थत्वाभावादिति बोध्यम्।

**अत एव न भूतादाविति ।।** 'अतीतादौ प्रवृत्तिरिति चेन्न। तस्येदानीमिष्टसाधनत्वाभावात्। अन्यथाऽ-तीतकार्येऽप्ययं प्रसङ्गस्तुल्यः' इत्यादिसुधाऽनुसारेण अत एवेत्यस्येष्टसाधनत्वाभावादेवेत्यर्थो न कृतिसाध्यत्वा-भावादिति। आदिपदेनागम्यागमनादिनिषिद्धमपि ग्राह्यम्। तथा च निषिद्धे बलवदनिष्टानुबन्धित्वज्ञानेन तज्जन्यदुःखे उत्कटद्वेषदशायां तज्जन्यसुखं नेच्छतीति इच्छाविषयरूपेष्टसाधनत्वाभावादेव नागम्यागमनादौ प्रवृत्तिप्रसङ्गः। इष्टसाधनतापदस्येच्छाविषयसाधनतार्थकत्वात्। अत एव कर्मनिर्णयटीकायां 'कृतिसाध्यत्व-स्येष्टसाधनत्वातिरिक्तत्वेऽपि तदुद्देश्यत्वमन्यत्किमपि नास्ति किन्तु इच्छाप्रयत्नरूपोपाधी भिद्येते' इत्युक्तम्। सुधायामपि 'तस्य च समीहितसाधनताज्ञानम्' इत्यादौ इष्टपदपर्यायत्वेन समीहितपदप्रयोगः।

नन्वगम्यागमनादिनिषिद्धजन्ये सुखे सुखत्वेनेच्छा स्यादेव । न हि दुःखासम्भिन्नसुखत्वेन तत्रेच्छा । तथात्वे तस्य स्वतः पुरुषार्थत्वं न स्यादिति चेन्न । स्वतः पुरुषार्थत्वं नाम पुरुषार्थान्तरासाधनत्वे सतीष्यमाणत्वम् । तस्य च तत्र दुःखासम्भिन्नसुखत्वेनेष्यमाणत्वेऽप्यविरोधात् । न चैवं सतीच्छाज्ञानस्यापि प्रवर्तकत्वापत्तिरिति वाच्यम् । न ह्यत्रेच्छाविषयसाधनमेतदिति ज्ञानं प्रवर्तकमुक्तं येनोक्तदोषः स्यात् । किन्तु वस्तुगत्या यत्रेच्छा तत्साधनत्वज्ञानं प्रवर्तकमिति तत्रागम्यागमनादौ तज्जन्यसुखेच्छाभावादेव नास्तीति भावः । अगम्यागम-नादेर्निषिद्धस्येष्टसाधनत्वाभाव आचार्याणामप्यभिप्रेत एव। कथमन्यथा 'कार्यं न हि क्रियाव्याप्यं निषिद्धस्य (र.टि.) समत्वतः' इत्यादिना क्रियाव्याप्यत्वादेर्निषिद्धसाम्येन कार्यतारूपत्वं निराकृत्य स्वयं 'तदिष्टं साधनं तथा । कार्यम्' इतीष्टेष्टसाधनत्वयोः कार्यतारूपत्वमुक्तमिति दिक् ।

॥ **अर्थवादबलादिति** ॥ कर्तव्यत्वेन विधिवाक्यबोधितकर्मणि रुच्युत्पादकप्रशस्तत्वज्ञानाभावे प्रवृत्तिर्न स्यादिति विधिवाक्यफलीभूतप्रवृत्तिविषये कर्मणि प्रशस्तत्वप्रतिपादकत्वेनार्थवादस्योपयोगः स्वीक्रियते । तथा च विधिवाक्याभावे प्रवृत्तेरेवाप्रसक्तौ किंविषये प्रशस्तत्वप्रतिपादकत्वेनार्थवादस्योपयोगः स्वीक्रियते । तथा च 'एकः शब्दः सम्यग् ज्ञातः' इत्याद्यर्थवादबलाच्छब्दः सम्यग् ज्ञातव्यः इत्यादिविधिः कल्प्यत इत्यर्थः । तथा च तेन विधिवाक्येन व्याकरणादीनामेकवाक्यतया कार्यपरत्वान्न सिद्धमात्रे शब्दादिस्वरूपे प्रामाण्यमिति भावः। **इष्टसाधनताज्ञानादेवेति** ॥ स्वार्थे प्रमाणभूतार्थवादजनितात् (स्वाधीन) साधितप्रवृत्तिहेतुभावे(हेतुना चे)- ष्टसाधनताज्ञानादेवेत्यर्थः ।

**(रा.टि.) पूर्वत्रेवेति** ॥ इयं मातेत्यादिवाक्य इव 'तस्य' इति वाक्येऽपि 'केवलसिद्धेऽर्थे नाप्रामाण्यम् इत्य-स्यानुवृत्तिरित्यर्थः । पूर्वैवेति पाठे याऽनुवृत्तिः पूर्वत्र सैवेत्यर्थः, पूर्वतनीति यावत् । तस्येत्यनुवादः इयमि-त्यादिव्याख्या । तत्रेत्यप्यनुवादः केवलेत्यादिव्याख्या । ननूक्तमनुवादकत्वेनाप्रामाण्यमिति तत्राऽऽह- **अस्ति चेति** ॥ **सिद्धोऽपीति** ॥ कृत्यसाध्ययथावस्थितरूपार्थोऽपीत्यर्थः । सिद्धार्थेऽप्यननुवादकत्वोक्तिर्वाक्यस्य । **बोधकत्वेनैवेति** ॥ प्रमाजनकत्वेनैव करणप्रमाणानामित्यर्थः । नान्यदित्येतदुदाहृत्य दर्शयति- **यथेति** ॥ **प्रकृतत्वादेवेति** ॥ इष्टसाधनरूपार्थपरोऽत्र सिद्धशब्द इति, सिद्धकार्योभयपर इति वा अभिप्रायः । तदिति तच्छब्देन बुद्धिस्थछिदासाध्यग्रहः । 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्युक्तेराह- **अथवेति** ॥ प्रकृताभिप्रायेण यथाश्रुतेऽपि न दोष इति भावेनाऽह- **यथावस्थितेति** ॥ एतदित्युक्तं व्यनक्ति- **ज्ञापनमेवे-ति** ॥ प्रयोजनमितीतिशब्दो योज्यः । **कार्येति** ॥ कृतिसाध्यवस्तुज्ञानमेवेत्यर्थः । कार्यान्वितसिद्धज्ञानमपि तथा भवतीति 'नतु केवलसिद्धे' इति केवलपदप्रयोगः । परमुखेनैव भाट्टमतं निवारयति- **नच वाच्यमिति** ॥ **शब्द इति** ॥ लिङादिरूप इत्यर्थः । **तद्व्यापार इति** ॥ लिङादिविधिप्रत्ययनिष्ठो लिङादिवाच्यो भावना प्रवर्तनापरपर्यायो व्यापारो भाट्टाभिमत इत्यर्थः । **पुरुषाभिप्रायेति** ॥ प्रवृत्त्यादिविषयध्यातृपुरुषाभिप्रायम् । ध्यानरूपलिङ्गेनानुमानादित्यर्थः । कार्यज्ञानमेवेत्युक्तस्यानैकान्त्यमाशङ्क्य निराह- **रागेति** ॥ ननु रागद्वेषयोरपि सुखादिवज्ज्ञातैकसत्त्वेन साक्षिणा स्वप्रकाशवृत्तिज्ञानेन वा ज्ञातत्वमप्यस्तीत्यत आह- **ज्ञानं त्विति** ॥ घटं प्रति दण्डरूपमिवेति भावः । कार्यमेवेतीतिशब्दो हेत्वर्थः । **लक्षणेति** ॥ इयं मातेत्यादिवाक्येऽपि मात्रादिदर्शनादि-विधिलक्षणा वाऽऽश्रयणीयेत्यर्थः । **वाक्यार्थज्ञानेति** ॥ पुत्रस्ते जात इत्यादिवाक्यार्थज्ञानमात्रेत्यर्थः । **वक्तु-मिति** ॥ अनुपदमेवेति ज्ञेयम् । **इष्टानिष्टसाधनत्वज्ञानं त्विति** ॥ कुत एषा कल्पनेत्यत आह- **यतो बालोऽपी-ति** ॥ 'कार्यता च न काचित् स्यादिष्टसाधनतां विना' इत्यनुव्याख्यानोक्तेराह- **इष्टसाधनतारिक्ताया-मिति** ॥ विस्तरस्तु तर्कताण्डवे । **कृतिसाध्येष्टसाधनताया इति** ॥ तर्कताण्डवे कृतिसाध्यत्वादिविशिष्टेष्ट-**(रा.टि.)** साधनत्वस्य विधित्वभङ्गे 'कृतिसाध्यत्वविशेषणस्य व्यर्थत्वात्' इति सुधावाक्येनास्य वाक्यस्य विरोधमाशङ्क्य 'कृतिसाध्यत्वस्य लिङर्थत्वमात्रनिषेधान्मानान्तरजन्यकृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वमनुमतमेव, लिङादिना तज्ज्ञानं त्वसम्मतमित्यविरोधः' इत्युक्तम्। अधिकं तत्रैव ज्ञेयम्। **अत एवेति** ॥ कृतिसाध्यत्व-विशिष्टेष्टसाधनत्वज्ञानस्य प्रवृत्तिहेतुत्वाङ्गीकारादेवेत्यर्थः । एतच्चाभ्युपेत्योक्तम् । वस्तुतस्तु इष्टोपायताज्ञानमेव प्रवृत्तिहेतुः । अतीतादौ प्रसङ्गस्तु कृतिसाध्यत्वविशेषणदानेऽपि स्यादेव तस्यापि कृतिसाध्यत्वात् । अन्यथा तत्कथं तत्कृतितो जातम् । इदानीं कृतिसाध्यं नेति चेदिदानीमिष्टसाधनमपि नेति तुल्यमिति ज्ञेयम् । **एते-नेति** ॥ इष्टोपायताज्ञानस्यैव प्रवृत्तिहेतुत्वकथनेनेत्यर्थः । तद्वचनक्ति-**बालेनेति** ॥ **इत्युक्तमिति** ॥ 'यतो बालोऽपि' इत्यत्रेति भावः । अतस्सिद्ध एवेत्यादिवाक्यार्थमाह- **यत इति** ॥ **अत्रेति** ॥ 'सिद्धेऽर्थे वाक्यानां प्रामाण्यम्' इत्यत्रेत्यर्थः। **निघण्टुप्रभृतीनामिति** ॥ छन्दःशास्त्रज्योतिश्शास्त्रेतिहासादिभूतार्थबोधकपरिग्रहः प्रभृतिशब्देन । **तत्रापि** व्याकरणादावपीत्यस्य विधिः कल्प्यत इत्यन्वयः । साधुशब्दानेव प्रयुञ्जीत इति विधिरि-त्यर्थः । विध्यर्थवादयोरविनाभावस्य पूर्वतन्त्रार्थवादाधिकरणे सिद्धत्वादित्यर्थवादबलादित्युक्तम् । ननु 'रक्षो-हाऽऽगमलघ्वसन्देहाः

प्रयोजनम्' इति व्याकरणभाष्यकृतैव वेदरक्षा तथा 'अग्नये जुष्टं निर्वपामि' इति मन्त्रे 'सूर्याय जुष्टं निर्वपामि' इत्यग्निपदस्थाने सूर्यायेत्यूहः, लघूपायेन साधुशब्दज्ञानम् इत्यादिप्रयोजनं व्याकरणस्योक्त-मित्यत आह- **शब्दज्ञानस्येति ॥ निर्वर्त्य इति ॥** निष्पाद्य इत्यर्थः। **फलभेदेति ॥** 'कामधुग् भवति' इति 'दुष्यति चापशब्दैः' इति च फलभेदकथनेनेत्यर्थः। **प्रमादेति ॥** ब्राह्मणासः, सोम्यासः, रुद्रेभिः, अगृभ्णन् इत्यादिस्थाने लौकिकशब्दस्थापनस्वरादिव्यत्यासरूपप्रमादपरिहारार्थत्वेनेत्यर्थः ।

**(श्री.टि.) अनुवादकत्वेनेति ॥** प्रमाणान्तरेण तस्य ज्ञातत्वादेवेत्यर्थः। **अप्रामाण्यं स्यादिति ॥** व्यवहारे भट्टनय इत्यङ्गीकारेण अनधिगतार्थगन्तृत्वरूपप्रमाणलक्षणाभावादिति भावः । ननु कार्यस्यापि प्रमाणान्तरेण सिद्धत्वे कार्यताबोधकस्यापि वाक्यस्यानुवादकत्वेनाप्रामाण्यं त्वन्मतेऽपि स्यादेवेत्यत आह- **कार्यस्य चेति ॥** कार्यस्य त्वित्यर्थः। **पूर्वैवात्राप्यनुवृत्तिरिति ॥** इयं माता, अयं पिता, सुरूपोऽसीत्यादौ वाक्ये नाप्रामाण्यमित्यस्य अनुवृत्तिवत् 'तस्य तत्र' इति वाक्येऽपि नाप्रामाण्यमित्यस्यानुवृत्तिः कार्येत्यर्थः। तथा च 'तस्य तत्र प्रामाण्यानुभवात्तस्य च तत्र नाप्रामाण्यम्' इति योज्यम्। **नान्यदिति ॥** स्मृत्यादावव्याप्तिप्रसङ्गेन अनधिगतार्थबोधकत्वं न प्रमाणलक्षणमित्यर्थः। पूर्वं, सिद्धत्वं नाम ज्ञातत्वमित्यभ्युपेत्य तत्प्रतिपादकस्य वेदस्या-नुवादकत्वेऽपि यथावस्थितार्थबोधकत्वलक्षणं प्रामाण्यं प्रत्यक्षादिवत्सम्भवतीति व्याख्यातम् । अधुना, सिद्धत्वं नाम निष्पन्नस्वरूपत्वमित्यभ्युपेत्यानुवादकत्वमेव नास्तीत्याशयेन 'तस्य च तत्र' इति वाक्यं प्रकारान्तरेण व्याचष्टे- **अस्ति चासावित्यादिना ॥ सिद्धोऽपि** निष्पन्नस्वरूपोऽपि । अस्मिन् पक्षे वाक्यं योजयति- **तत इत्यादिना ॥** तत्रेत्यस्यार्थस्सिद्धार्थ एवेति। तस्येत्यस्य अर्थः 'इयं मातेत्यादिवाक्यस्य' इति। प्रामाण्यानु-भवादित्यत्र प्रामाण्यपदमननुवादकत्वपरमित्यभिप्रायेणोक्तम्- **अननुवादकत्वमिति ॥** अस्यामपि योजना-**(श्री.टि.)** यामनुवृत्तेर्नाप्रामाण्यमित्यत्रापि तत्र तस्येत्यनुवर्तत इत्याशयेनोक्तम्- **केवलसिद्धेऽर्थे वाक्य-स्येति ॥** योजनाद्वयेऽपि नाप्रामाण्यमित्यनन्तरं शेषं पूरयति- **किं कार्यपरत्वाऽग्रहेणेति ॥ बोधकत्वेनेति ॥** यथावस्थितार्थबोधकत्वेनेत्यर्थः। **परार्थत्वादिति ॥** परप्रयोजनार्थत्वादित्यर्थः। **यत्कार्यपरमिति ॥** न तु काकस्याष्टौ दन्ताः इत्यादिसिद्धार्थपरं वाक्यमित्यर्थः। ननु कार्यज्ञापनस्यापि ज्ञापनत्वेन क्वचित्प्रयोजनत्वात् सिद्ध इति व्यर्थमित्यत आह- **सिद्धेति ॥ प्रकृतत्वादेवोक्तमिति ॥** न तु कार्यज्ञापनव्यावर्तकत्वेनेत्यर्थः । सिद्धज्ञापनादित्यस्य यथार्थज्ञानजननादित्यर्थ इत्याशयेनाऽह- **अतस्तस्य परज्ञापनमेवेति ॥** यथार्थज्ञानसाधनस्य वाक्यस्य परं प्रति यथार्थज्ञानजननमेव प्रयोजनमित्यर्थः। **तच्च प्रयोजनमिति ॥** परं प्रति यथार्थज्ञानजननरूपं प्रयोजनमित्यर्थः । **सिद्धविषयस्य** सिद्धार्थप्रतिपादकस्य । सिद्धार्थप्रतिपादकादपि वाक्याद् यथार्थज्ञानोत्पत्तेरनु-भवसिद्धत्वादिति भावः ।

**अथ वेति ॥** अस्मिन् पक्ष इष्टसाधनातिरिक्तपराभिप्रेतकार्यनिरासार्थं सिद्धपदप्रयोग इति भावः। **यथावस्थितपर्यायो वेति ॥** तथा च सिद्धज्ञापनादित्यस्य यथावस्थितार्थज्ञापनादित्येवार्थो द्रष्टव्यः । पूर्व एवाभि-प्रायः । शङ्कते- **सत्यमेतदिति ॥ ज्ञापनं** यथावस्थितार्थज्ञापनम् । कार्यज्ञानमेव प्रवर्तकमिति निर्धारयितुं पूर्वपक्षी स्वयमेव प्रवर्तकान्तराण्याशङ्क्य निराकरोति-**न च वाच्यमित्यादिना ॥ तद्व्यापार इति ॥** अभिधा-रूपः शब्दव्यापारः इत्यर्थः । केचित्तु पदार्थस्मृतिरूपः शब्दव्यापार इत्यर्थ इत्याहुः। शब्दस्य प्रवर्तकत्वे दूषणमाह- **तथा सतीति ॥ तच्छ्राविणां** शब्दश्राविणाम्। शब्दतद्व्यापारयोरुभयोर्न प्रवृत्तिकारणत्वं व्यतिरेकव्यभि-चारादित्याह- **बालस्येति ॥** आदिपदेन शब्दव्यापारग्रहणम्। ननु युद्धादौ शङ्खभेर्यादिशब्दश्रवणमात्रस्यैव प्रवर्तकत्वं दृष्टमिति चेत्तत्राऽह- **याऽपीति ॥ पुरुषाभिप्रायानुमानादेवेति ॥** अयं युद्धकर्तव्यत्वाभिप्रायवान् तत्सूचकशङ्खादिध्वनिकर्तृत्वादित्येवं कार्यतामनुमायैव प्रवर्तते । तथा च कार्यतानुमापकत्वेनैव शङ्खादिशब्द-श्रवणस्य प्रवर्तकत्वं न साक्षात् । साक्षात्प्रवर्तकमेव चास्माभिर्विचार्यते तादृशं च कार्यमेवेति भावः । नन्वथापि न कार्यज्ञानस्य प्रवर्तकत्वं किन्तु रागद्वेषयोरेव । 'प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च ते' इति वचनादित्याशङ्क्य निराकरोति- **रागद्वेषयोरिति ॥** यद्यप्युक्तकारिकायां रागद्वेषमोहानां त्रयाणामपि प्रवर्तकत्वस्योक्तत्वाद्राग-द्वेषयोर्द्वयोरेव ग्रहणमयुक्तम्। तथाऽपि रागद्वेषयोरेव साक्षात्प्रवर्तकत्वं मोहस्य तु रागद्वेषोत्पादनद्वारैवेति तार्किकेण अङ्गीकृतत्वात्साक्षात्प्रवर्तकत्वाभिप्रायेण द्वयोरेव ग्रहणमित्यवगन्तव्यम् । **न तु ज्ञाततयेति ॥** अत्र हि यज्ज्ञानं प्रवृत्त्यादिकारणं तद्विषयो विचार्यते। न हि रागादिज्ञानं प्रवृत्त्यादिकारणं येन प्रवर्तकज्ञानविषयतया ताभ्यामन्य-थासिद्धिः स्यादिति भावः । ननु रागद्वेषाभ्यां यदा प्रवर्तते तदानीं तज्ज्ञानमप्यस्त्येवेति ज्ञाततयैव प्रवर्तकत्वं प्राप्तमिति चेत्तत्राऽह- **ज्ञानं त्विति ॥** रागद्वेषविषयकं ज्ञानं त्वित्यर्थः । **अबुभुत्सितग्राह्यतयेति ॥** तयोस्सुखादिवद् ज्ञातैकसत्त्वादिति भावः । एवं प्रवर्तकान्तराणि निराकृत्य उपसंहरति- **अत इति ॥**

नन्वथापि कार्यताज्ञानमेव प्रवर्तकमित्ययुक्तम् । पुत्रस्ते जातः, सुरसमाम्रफलं, द्वारं द्वारमित्यादिवाक्यात् **(श्री.टि.)**

प्रवृत्तिस्तावदनुभवसिद्धा। न ह्यत्र कार्यताबोधकं किञ्चित्पदमस्ति लिङाद्यन्यतमस्याभावादित्यत आह- **अत एवेति ॥** यतो वाक्यबोध्यं प्रवृत्त्यादिकारणं कार्यमेवेति निर्धारितमत एवेत्यर्थः। **कार्याध्याहार इति ॥** तस्यार्थाध्याहारवादित्वादेवमुक्तम्। यद्वा कार्यवाचक-गच्छ-पिधेहीत्यादिपदाध्याहार इत्यर्थः। **लक्षणा वेति ॥** पुत्रस्ते जात इत्यादिवाक्यगतस्यैव कस्यचित्पदस्य गमनादौ लक्षणेत्यर्थः। सामीपिकाधिकरणे सप्तमी-त्यङ्गीकुर्वद्भिर्वैयाकरणैर्लक्षणाऽनङ्गीकारात्तन्मतानुसारेणाध्याहार इत्युक्तम्। तार्किकमतानुसारेण लक्षणा वेत्युक्तमित्याहुः। 'वाक्यार्थज्ञानमात्रेण क्वचिदिष्टं भवेदपि' इत्यनुव्याख्यानं मनसि निधायाऽह- **यत्रेति ॥** पुत्रस्ते जातः, पिता ते राजा वर्तत इत्यादौ। **सिद्धपरत्वम्** इष्टसाधनत्वरूपसिद्धपरत्वम्। **वक्तुमिति ॥** अतस्सिद्ध एवेत्युत्तरग्रन्थेनेत्यर्थः। परेण कार्यताज्ञानमेव प्रवर्तकमिति नियमितं न त्विष्टसाधनताज्ञानस्या-प्रवर्तकत्वम्, येनैवकारो यथाश्रुतस्सङ्गच्छेतातो व्याचष्टे- **एवशब्दो भिन्नक्रम इति ॥** तमेव दर्शयति- **इष्टसाधन-तामेवेति ॥** न तु कार्यतामित्यर्थः। **सिद्धमात्रज्ञानं न प्रवृत्त्यादिहेतुरिति ॥** तृणादिज्ञानस्य तथात्वाभावादिति भावः। अयमिहाभिसन्धिः। लोके सिद्धमपि द्विविधमस्ति। एकमिष्टसाधनं कदलीफलादि। अपरमनिष्टसाधनम् उदासीनं च यथा कण्टक-तृणादि। तत्र सिद्धविशेषे इष्टसाधनतामेव ज्ञात्वा प्रवर्तते, अनिष्टसाधनतां च ज्ञात्वा निवर्तते। न तु सिद्धभूततृणादिज्ञानात्प्रवृत्त्यादिकमित्येवं सिद्धसामान्यव्यावर्तकत्वमेव 'इष्टसाधनतामेव ज्ञात्वा' इत्युक्तैवकारस्यार्थ इति द्रष्टव्यम्। अथ वा पराभिमतकृतिसाध्येष्टसाधनत्वरूपलिङ्वाच्यकार्यताज्ञानस्य प्रवर्तकत्व-व्यावृत्तिरेवेष्टसाधनतामेवेत्युक्तैवकारस्य अर्थः। इष्टसाधनताज्ञानमेव प्रवर्तकं न तु कृतिसाध्यत्वं प्रवर्तककार्यतायां निवेश्यमित्येवमिष्टसाधनतामेव ज्ञात्वेत्युक्तैवकारार्थो भवतीत्यभिप्राय इति द्रष्टव्यम्। उक्तार्थे हेतुप्रदर्शकत्वेनापि ज्ञात्वैवेति वाक्यं व्याचष्टे- **यतो बालोऽपीति ॥** अनेन हिशब्दो हेत्वर्थ इत्युक्तं भवति। **दंशमशकेति ॥**

'अरण्यमक्षिका दंशो मशको गृहमक्षिका' इत्यभिधानम्।

'स्थूलास्तु मक्षिका दंशा मशकाः सूक्ष्ममक्षिका' इति च रत्नमाला।

शङ्कते- **तस्यापीति ॥** बालस्यापीत्यर्थः। **कार्यताज्ञानादेवेति ॥** कृतिसाध्यत्वरूपकार्यताज्ञानादेवेत्यर्थः। **कारणमिति ॥**

'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत्।
फलसाधनता तत्र कारणं तेन कार्यता॥'

इति तद्वचनादिति भावः। **प्रमाणाभावादिति ॥** ननु कथं प्रमाणाभावः। लिङादिशब्द एव तत्र प्रमाणमिति चेदुच्यते। अनन्यलभ्यो हि शब्दार्थः। तत्र कृतिसाध्यत्वं नाम प्रयत्नजन्यत्वम्। इदं च यागादेरन्वयव्यति-रेकसध्रीचीनप्रत्यक्षेणैव गम्यमित्यनन्यलभ्यत्वाभावान्न तल्लिङादिशब्दबोध्यम्। तथात्वे लिङादेरनुवादकत्व-प्रसङ्गात्। यथोक्तं कर्मनिर्णये 'शब्दस्तु न तद्वक्तीत्युक्तम्' इति। इष्टसाधनत्वं तु लिङादिशब्दबोध्यम्। न हि यजेतेत्यत्र यागादीनां स्वर्गसाधनत्वमन्वयव्यतिरेकसध्रीचीनप्रत्यक्षगम्यमित्यनन्यलभ्यत्वात्तदेव लिङादिशब्द-**(श्री.टि.)** बोध्यमङ्गीकार्यमिति। इष्टसाधनतातिरिक्तकार्यतायां प्रवृत्त्यन्यथाऽनुपपत्तिरेव प्रमाणमिति शङ्कते- **चन्द्रमण्डलादाविति ॥** आदिपदेन तक्षकचूडामण्याहरणादिकं ग्राह्यम्। अयमर्थः- यदीष्टसाधनत्वमेव कार्यता स्यात्तर्हि चन्द्रमण्डलादाविष्टसाधनताबुद्धिस्तावद्भवति। तथा च ममेदं कृतिसाध्यमिति कृतिसाध्यतारूपकार्यता-बुद्धिरपि स्यात्। न चेष्टापत्तिः। तथात्वे तत्र प्रवृत्तिप्रसङ्गात्। न भवति च प्रवृत्तिः। तेन ज्ञायते तत्रेष्टसाधनताबुद्धिरेव भवति न कार्यताबुद्धिरिति। तस्मादिष्टसाधनतातिरिक्ता कार्यताऽङ्गीकार्येति। अर्धाङ्गीकारेण परिहरति- **सत्य-मिति ॥** चन्द्रमण्डलादाविष्टसाधनताबुद्धिर्भवतीत्यङ्गीकृतम्। न कार्यताबुद्धिरित्येतन्नाङ्गीक्रियते। इष्टसाधनतैव कार्यतेति यदाऽङ्गीकृतं तदा कार्यताबुद्धिरपि तत्र भवत्येवेति भावः। तथात्वे तत्र प्रवृत्तिः स्यादिति चेन्न, प्रवर्त-काभावादित्याह- **कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायतयाऽङ्गीकारादिति ॥** कार्यपदवाच्यत्वेनाङ्गी-कारादित्यर्थः।

ननु कथमेतत्। कृतिसाध्येष्टसाधनताया लिङ्वाच्यकार्यत्वाङ्गीकारे परोक्तमेवाङ्गीकृतं स्यात्। परेणापि कृतिसाध्यत्वे सति कृत्युद्देश्यत्वरूपकार्यताया एव लिङ्वाच्यत्वेनोपपादितत्वात्। तथा चात्र 'लिङाद्यर्थस्त्विष्ट-साधनत्वमेव' इति कर्मनिर्णयेन, 'इष्टसाधनत्वं सिद्धविशेषः कार्यत्वं तदेव धात्वर्थनिष्ठं लिङाद्यर्थः' इति तट्टीकया, इष्टसाधनत्वातिरिक्तकार्यताया लिङ्वाच्यत्वनिराकरणपरेण 'कार्यता च न काचित् स्यादिष्टसाधनतां विना' इत्यनुव्याख्यानेन, 'कृतिसाध्यताविशेषणस्य व्यर्थत्वात्' इति सुधया च विरोधस्स्यादिति चेत्, उच्यते। अस्त्यत्र सम्प्रदायविशेषः। सिद्धान्ते कार्यं द्विविधमङ्गीकृतम्। एकं लिङ्वाच्यम् अपरं च प्रवर्तकमिति। तत्रेष्टसाधनत्वरूपं कार्यं लिङ्वाच्यम्। कृतिसाध्येष्टसाधनत्वरूपं यत्कार्यं तत्प्रवर्तकं कार्यम्। तच्च न लिङ्वाच्यम्। तथा च 'कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायतयाऽङ्गीकारात्' इत्यस्य लिङ्वाच्यकार्यतापर्यायतयाऽङ्गीकारादिति

नार्थो येनोक्तग्रन्थविरोधस्स्यात् । किं नाम प्रवर्तककार्यतापर्यायतयाऽङ्गीकारादित्यर्थः । तथा च प्रवृत्ताविष्टसाधनता-लक्षणलिङ्वाच्यकार्यताज्ञानमात्रं न कारणं येन चन्द्रमण्डलादौ प्रवृत्तिप्रसङ्गः, किन्तु प्रमाणान्तरजन्यकृति-साध्यत्वज्ञानसहितेष्टसाधनताज्ञानम् । चन्द्रमण्डलादौ च कृत्यसाध्यताज्ञानस्यैव प्रतिबन्धकस्य सत्त्वेन नोक्तं प्रवर्तकमस्तीति न प्रवृत्तिप्रसङ्गः । अत एव कर्मनिर्णयटीकायाम् 'इष्टसाधनत्वमेव लिङादिवाच्यम्' इत्यतिस्पष्टमुक्त्वा, न केवलं लिङादिवाच्येष्टसाधनतालक्षणकार्यताज्ञानं प्रवृत्तिकारणं किन्तु प्रमाणान्तरजनित-कृतिसाध्यत्वज्ञानसहितम् इत्यभिप्रेत्य 'कृतिसाध्यतैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेः' इत्यादिना ग्रन्थेनातिरिक्तकार्ये परोपन्यस्तचन्द्रमण्डलादौ प्रवृत्त्यन्यथानुपपत्तिलक्षणार्थापत्तिरन्यथैवोपपत्त्या दूषितेति ज्ञातव्यमित्यालोचनीयम् ।

नन्विष्टसाधनत्वस्यैव कार्यत्वेऽतीतभोजनादावपि इष्टसाधनत्वस्य सत्त्वेन कार्यताबुद्ध्यापत्त्या प्रवृत्तिप्रसङ्ग इत्येतदप्यत एवापास्तमित्याह- **अत एवेति ॥ भूतादौ** इष्टसाधनेऽतीतभोजनादौ । अतीतभोजनादेः कृत्यसाध्य-त्वेन कृतिसाध्येष्टसाधनत्वरूपप्रवर्तकाभावादेवेत्यर्थः । भावबोधे तु 'अतीतभोजनादौ प्रवृत्तिप्रसङ्ग इति चेन्न । **(श्री.टि.)** तस्येदानीमिष्टसाधनत्वाभावात् । अन्यथा अतीतकार्येऽप्ययं प्रसङ्गस्तुल्यः' इत्यादिसुधानुसारेणात एवेत्यस्येदानीमिष्टसाधनत्वाभावादेवेत्यर्थः, इति व्याख्यातम् । **या व्युत्पत्तिरिति ॥** 'तथा हि चैत्र जलमाहर' इत्यादिना व्युत्पादितेत्यर्थः । **सिद्धविषया** इष्टसाधनविषया । एतेनेत्युक्तं विशदयति- **बालेन हीत्यादिना ॥ स्वप्रवृत्तौ** स्तनपानादिप्रवृत्तौ । **इत्युक्तमिति ॥** तथा च तदेव वृद्धप्रवृत्तावपि कल्पयतीत्यर्थः । **सिद्धज्ञानस्य** इष्टसाधनज्ञानस्य । इयं मातेत्यादीनां लिङादिरहितानां सिद्ध एव प्रामाण्यं सिद्धमित्यन्वयः । **अत्र** वाक्यस्य सिद्धेऽर्थे प्रामाण्यमित्यत्र । **अर्थवादबलादित्यादि ॥** अर्थवादानां हि कर्तव्यत्वेन विधिबोधितेऽर्थे रुच्युत्पादनाय प्राशस्त्यज्ञापकत्वेनोपयोगो 'वायव्यं श्वेतमालभेत भूतिकामः । वायुर्वै क्षेपिष्ठा देवता' इत्यादौ दृष्टः । तदिहापि 'शब्दः सम्यग्ज्ञातव्यः' इति विधेरेवाभावे 'एकः शब्दः' इत्याद्यर्थवादः कस्मिन् विषये रुच्युत्पादनाय प्रशस्तत्वं प्रतिपादयेदिति व्यर्थ एव स्यादतः 'एकः शब्दः' इत्याद्यर्थवादबलात् 'प्रवृत्तिः' इति पूरणीयम् । तद्बलाच्च 'एकः शब्दः सम्यग्ज्ञातव्यः' इति विधिः कल्प्यत इत्यर्थो द्रष्टव्यः । एवमव्याख्याने इष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्ताविति वाक्यास्वारस्यापत्तेरिति ज्ञातव्यम् । तथा च तेन विधिवाक्येन व्याकरणादीनामेकवाक्यतया कार्यपरत्वान्न सिद्धमात्रे शब्दादिस्वरूपे प्रामाण्यमिति भावः । **इष्टसाधनताज्ञानादेवेति ॥** प्रमाणविरुद्धार्थ-वादानां स्वार्थेऽप्रामाण्यात् प्रमाणभूतार्थवादबोधितार्थ एव यदिष्टसाधनताज्ञानं तस्मादेव व्याकरणादौ प्रवृत्त्युप-पत्तेर्विधिकल्पकाभावादित्यर्थः । शब्दापशब्दविभागज्ञानमेव प्रयोजनमिति चेत्तत्राऽह- **शब्दज्ञानस्येति ॥** शब्दापशब्दविभागज्ञानस्येत्यर्थः । नन्वस्ति व्याकरणशास्त्रस्य प्रयोजनं सन्देहपरिहारेण वेदपाठसंरक्षणस्यैव प्रयोजनत्वात् । तथा हि 'चक्षोस्सूर्योऽजायत' 'उपप्रयन्तोऽध्वरम्' 'सुजातेऽश्वसूनृते' इत्येवं कस्मान्नोच्चार्यत इति शङ्कायां 'प्रकृत्यान्तः पादमव्यपरे' ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात्, न सन्धिं यातीति यावदिति व्याकरणोक्तनियामकेन चक्षोस्सूर्यो अजायत, उपप्रयन्तो अध्वरं, सुजाते अश्वसूनृते इत्येवमेवोच्चारणं कर्तव्यमित्येवं वेदपाठरक्षणमेव प्रयोजनमस्ति । 'रक्षोहागमलघ्वसन्देहाः प्रयोजनं शब्दशास्त्रस्य' इति वचनाद् इत्याशङ्क्याऽह- **वेदरक्षादेरिति ॥ शुद्धसम्प्रदायेनेति ॥** अध्यापकसम्प्रदायेनेत्यर्थः । अध्यापकैः सम्प्रदायेन यथा प्रयुज्यते तथैव प्रयोगः कर्तव्यः । तैश्च 'चक्षोस्सूर्यो अजायत' इत्येवमादिरूपेणैव प्रयुज्यत इति तथैव प्रयोगः कार्योऽतस्तदर्थं न व्याकरणमपेक्षितमिति भावः । **तदुदाह्रियत इति ॥** वाक्यानां सिद्धे प्रामाण्यमि-त्यत्राप्रमाणभूतं व्याकरणं दृष्टान्तत्वेन कथमुच्यत इत्यर्थः । **निर्वर्त्यो** जायमानः । **प्रयुज्यन्त इति** । गाविति गुर्जरैः, गायिति महाराष्ट्रैरित्यर्थः । **तद्वत्** गोशब्दवत् । इष्टापत्तिरिति चेत्तत्राऽह- **दुष्यतीति ॥**

> 'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले ।
> सोऽनन्तमाप्नोति जयं परत्र वाग्योगयुग् दुष्यति चापशब्दैः ॥'

इति महाभाष्यकारवचनादित्यर्थः । यः- पुमान्, विशेषे- शब्दविशेषप्रयोगे, कुशलो- व्यवहारकाले यथावद् अपशब्दासङ्कीर्णान् शब्दान् प्रयुङ्क्ते, स पुमानिह जन्मनि लोके, अनन्तं- नियमेनेति यावत्, प्रतिवादी जय-**(श्री.टि.)** माप्नोति, परत्र- जन्मान्तरे, वाग्योगयुग् अपशब्दासङ्कीर्णसमीचीनवाक्प्रयोगयुक्तो भवति । यथावत्प्रयुङ्क्त इति किमर्थमुक्तमित्यत आह- दुष्यति चेति । अपशब्दैः प्रयुक्तैरपशब्दं प्रयुञ्जान इति यावत् । दुष्यति दोषवान् भवति । इह जन्मनि जयं न प्राप्नोतीति यावत् । परत्र वाग्योगयुङ् न भवतीति चशब्दार्थः । इत्येवं तट्टीकानुसारेण श्लोकार्थो द्रष्टव्यः । अत एवेत्युक्तं विशदयति- **तदभाव इति ॥** शब्दापशब्दविभागाभाव इत्यर्थः । **फलभेदकथनेति ॥** समीचीनशब्दप्रयोगस्यैकः शब्द इत्यादिना स्वर्गलोके कामदोहकत्वम् अपशब्द-प्रयोगस्य 'दुष्यति

चापशब्दैः' इति दोषापादकत्वमित्येवं वाक्यद्वयेन फलभेदकथनानुपपत्तेरित्यर्थः। अस्तु शब्दापशब्दविभागः प्रकृते व्याकरणप्रामाण्ये किमायातमित्यत आह- **न चेति ॥** तथा च शब्दापशब्दविभाग-ज्ञानस्य प्रयोजनत्वात्प्रयोजनाभावोऽसिद्ध इति भावः। निर्मूलकत्वादप्रामाण्यमित्युक्तं निराकरोति- **अत एवे-ति ॥** शब्दव्यवहारार्थं व्याकरणप्रामाण्यस्याङ्गीकार्यत्वादेवेत्यर्थः। **अष्टकादीति ॥** मार्गशीर्षपौषमाघफाल्गुन-(भाद्रपद)मासानां कृष्णपक्षीयसप्तम्यष्टमीनवमीषु तिस्राऽष्टकश्राद्धं कार्यमिति प्रतिपादिकानामष्टकादिस्मृतीनां किञ्चिन्मूलमप्रसिद्धमपि यथा कल्प्यते तथा अत्रापि कल्पनीयमिति निर्मूलत्वमसिद्धमिति भावः। वैदिक-पाठसंरक्षणादेः प्रयोजनत्वे कथिते तस्य शुद्धसम्प्रदायेनान्यथासिद्धिरुक्ता । तां परिहरति- **प्रमादेति ॥** अध्यापका-नामपि कदाचित्प्राप्तप्रमादपरिहारार्थत्वेनेत्यर्थः। **सिद्धमिति ॥** व्याकरणप्रयोजनत्वेन सिद्धमित्यर्थः।

**(पां.टि.)** भाट्टोक्तं प्रवर्तकमाशङ्क्य निषेधति- **न चेति ॥ शब्दो** लिङादिः। **तद्व्यापारः** पदार्थस्मृतिहेतुभूत-पदपदार्थसम्बन्धरूपशक्तिभिन्नोऽभिधाख्य इत्यर्थः। शब्दशक्तिरूपाया अभिधाया अप्रवर्तकत्वात् तद्भिन्नत्व-कीर्तनम्। न च शक्त्यतिरिक्ताभिधारूपतद्व्यापारे मानाभावः। व्यापारभिन्नस्य परनिष्ठव्यापारजनकतायाः स्वनिष्ठव्यापारपूर्वकत्वनियमादेव तत्सिद्धेः। न च दृष्टान्ताभावादुक्तनियमासिद्धिः। स्वनिष्ठस्पन्दनादिद्वारा चक्रादिस्पन्दनजनकस्य दण्डादेरेव तत्र दृष्टान्तत्वसम्भवात्। अत्र दण्डनिष्ठस्पन्दनव्यापारस्य चक्रनिष्ठस्पन्दन-रूपव्यापारजनकताया न स्वनिष्ठव्यापारपूर्वकत्वम्। तथा सति तस्यापि व्यापारस्य स्वनिष्ठव्यापारद्वारा परनिष्ठव्यापारजनकत्वप्रसक्त्या अनवस्थाप्रसङ्गात्। अतो व्यभिचारपरिहारार्थं व्यापारभिन्नस्येत्युक्तम्। व्यापारिणो दण्डादेर्न स्वनिष्ठस्पन्दनादिव्यापारजनने स्वनिष्ठव्यापारान्तरापेक्षा। तथा सति पूर्ववदनवस्थापत्तेरित्यत उक्तं परनिष्ठेति। व्यापारभिन्नस्य परनिष्ठव्यापारजनकताया व्यापारपूर्वकत्वमात्राभिधाने लिङादिशब्दस्य परनिष्ठज्ञानरूपव्यापारद्वारा परनिष्ठप्रवृत्तिरूपव्यापारजनकत्वमात्रेणाप्युक्तव्याप्तिनिर्वाहात् शब्दाश्रिताया अभिधाया असिद्धेः अर्थान्तरवारणाय स्वनिष्ठेति। तथा च शब्दनिष्ठ एवाभिधानामा शब्दव्यापार आयाति। स एव च शब्दाश्रितत्वाच्छब्दभावनेत्युच्यत इति शब्दनिष्ठपदार्थसम्बन्धातिरिक्ताभिधानामकलिङादिव्यापार-सिद्धेरिति। **बालस्येति ॥** सर्वत्र दृष्टान्तानुसारिण्येव कल्पना प्रभवति न त्वन्यथा अतिप्रसङ्गात्। तथा च मानान्तरनिबन्धने व्यवहारे स्वात्मनि समधिगतप्रवर्तकभावमेव शाब्दव्यवहारे चेतनप्रवृत्तिहेतुतया बालः कल्प-यितुमलम्। न च बालेन मानान्तरनिबन्धने स्वव्यवहारे शब्दस्य तद्व्यापारस्य वा हेतुभावः समधिगतोऽस्ति। **(पां.टि.)** तत्कथमन्यप्रवृत्तावपि लिङादिशब्दं तद्व्यापारं वा प्रवर्तकतया कल्पयेदिति भावः। ननु ध्वन्यात्मकस्य शब्दस्यापि प्रवर्तकत्वं दृष्टम्। किमु तदा वर्णात्मकस्य शब्दस्य तदित्यत आह- **याऽपीति ॥** अन्यथा पुरुषाभि-प्रायानभिज्ञानामपि तच्छब्दश्रवणानन्तरं प्रवृत्त्यापत्तेरिति भावः। **रागद्वेषयोरिति ॥** 'प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च ते' इत्यभियुक्तवचनादिति भावः। ननु ज्ञानान्वयव्यतिरेकात् सत्तयैवेति कथमवधारणमित्यतः सति रागादौ तज्ज्ञानव्यतिरेकेण व्यतिरेकादर्शनादित्याह- **ज्ञानं त्विति ॥**

**कृतिसाध्येष्टसाधनताया इति ॥** कृतिसाध्यत्वविशिष्टेष्टसाधनताया इत्यर्थः। ननु चैवं सति सुधाविरोधः स्यात्। तत्र चन्द्रमण्डलादौ कार्यताबुद्धिप्रसङ्गं च अतिरिक्तकार्यताया अनिरूपणेनेष्टसाधनताबुद्धेश्चेष्टतयेष्टा-पादनतया निरस्य, अतीतादौ प्रवृत्तिप्रसङ्गं च इदानीमिति विशेषणेन निरस्य कृतिसाध्यत्वविशेषणस्य वैयर्थ्य-व्युत्पादनात्। अत्र च टीकायां कृतिसाध्यत्वविशिष्टेष्टसाधनतायाः कार्यतारूपत्वाश्रयणेन तदतिप्रसङ्गद्वयपरि-हारादिति चेत्, अत्र ब्रूमः। सुधायाम्- 'कार्यता च न काचित्स्यात्' इत्यनुव्याख्यानानुसारेण कृतिसाध्यत्व-विशेषणवैयर्थ्यं प्रतिज्ञाय तदुपपादनाय वस्तुस्थितिमनुरुध्य प्रकारान्तरेणातिप्रसङ्गद्वयपरिहारोऽभिहितः। इह तु टीकायां कृतिसाध्येष्टसाधनतायाः कार्यपदार्थत्वप्रवर्तकत्वाभ्युपगमेऽप्यस्माकं न काचित्क्षतिः। इष्टसाधनताति-रिक्तकृत्युद्देश्यतारूपायाः कालत्रयानवमृष्टविधिरूपाया वा पराभिमतकार्यतायाः कार्यपदार्थत्वप्रवर्तकत्व-योरनभ्युपगमाद् इत्यभ्युपगमवादेनातिप्रसङ्गद्वयपरिहार इत्यविरोधः। विस्तरस्तु वाक्यार्थचन्द्रिकायां द्रष्टव्यः। **एतेनेति ॥** इष्टसाधनत्वातिरिक्तकार्यत्वाभावकथनेनेत्यर्थः। **अर्थवादबलाद्विधिः कल्प्यत इति चेदिति ॥** 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यर्थवादबलेन 'प्रतिष्ठाकामो रात्रिसत्रं कुर्यात्' इति विधिकल्पन-दर्शनादिति भावः। ततश्च व्याकरणादेरपि कार्यपरत्वमेवेति हृदयम्। **निर्मूलत्वादिति ॥** पौरुषेयवाक्यस्य मूलभूतप्रमाणमपेक्ष्यैव प्रामाण्यस्थितेरिति भावः। प्रयोजनं भवत् किं शब्दज्ञानमभिमतं वेदरक्षादिकं वेति विकल्प्याऽद्यं दूषयति- **शब्दज्ञानस्येति ॥** शब्दसाधुत्वज्ञानस्येत्यर्थः। यस्मिन् सत्येव यद्भवति नासति तदेव हि तस्य प्रयोजनम्। साधुत्वज्ञानं च व्याकरणं विनाऽपि लोकप्रयोगादेव जायत इति कथं तत्तस्य प्रयोजनमिति भावः। द्वितीयं दूषयति- **वेदरक्षादेरिति ॥** आदिपदेनोहादिपरिग्रहः। अत एवेत्युक्तस्यैव प्रपञ्चनम्- **तदभाव इति ॥**

**प्रमादपरिहारार्थत्वेनेति ॥** प्रमादजत्वसम्भावनापरिहारार्थत्वेनेत्यर्थः । वर्णलोपादेरिति शेषः । अय-मर्थः । वेदानां रक्षार्थमप्यध्येयं व्याकरणम् । वर्णलोपागमवर्णविकारज्ञ एव हि वेदान् परिपालयिष्यति । इतरथा ये हि भाषायामदृष्टलोपागमवर्णविकारादयः, केवलं छन्दस्येव दृश्यन्ते, ते केवलं प्रयोगशरणानां प्रमादजाः सम्भाव्येरन् । वैयाकरणस्तु 'लोपस्त आत्मनेपदेषु' इति लक्षणदर्शी तदेव रूपं स्थापयति इति भवति वेदपरिपालनं व्याकरणप्रयोजनम् । विस्तरस्तु पदमञ्जर्यादौ द्रष्टव्यः ।

**(व्या.टि.)** सिद्धबोधकत्वेऽनिष्टं प्रसञ्जयति- **नन्विति ॥** स्वपक्षेऽनिष्टप्रसङ्गाभावं दर्शयति- **कार्यस्य चेति ॥** अनुवादकत्वस्य न प्रामाण्यविघातित्वम् । तस्यान्यादृशत्वेन तदविरोधादित्याह- **प्रामाण्यं नामेति ॥** अनुभूयते **(व्या.टि.)** साक्षिणेति शेषः । प्रसञ्जकप्रसञ्जनीययोर्व्याप्यभावं दर्शयति- **अस्ति चासाविति ॥ अत इति ॥** अनुवादकताविरहादित्यर्थः । पुनः प्रत्यवतिष्ठते- **स्यादेतदिति ॥** कार्यपरत्वं न साक्षात्प्रमापकत्वरूपप्रामाण्य-व्यापकं किन्तु व्यापकव्यापकम् । अतस्तदभावाद् व्यापकाभावेन व्याप्याभाव इति वक्तुं निरुक्तप्रामाण्यमनु-वदति- **यद्यपीति ॥ परप्रयोजनाङ्गमेवेति ॥** व्यापकतायामवधारणम् । तथा च सिद्धविषयस्य परप्रयोजनाङ्गत्वा-भावात् प्रामाण्याभाव इति भावः । प्रामाण्यस्य तद्व्याप्तिमुदाहरति- **यथेति ॥** व्यतिरेकमाह- **नान्यदिति ॥** तच्चोदाहरति- **यथेति ॥** तदेव कुतो नेत्यतस्तद्व्यापकाभावादित्याशयेन तद्व्यापकं दर्शयति- **तदेवेति ॥** साध्यं निर्दिशति- **तत इत्यादिना ॥** ननु कार्यपरवाक्यस्य कार्यज्ञापनमपि प्रयोजनं भवत्येव । सिद्धज्ञापनस्य सार्वत्रिकत्वादतः किमर्थं व्यर्थं सिद्धपदं प्रायोजीत्यत ओमित्याह- **सिद्धेतीति ॥** एवेति प्रयोजनं व्यावर्तयति । सिद्धविषयवाक्यस्य प्रकृतत्वादेवेत्यर्थः । ननु कथमनेनोक्तशङ्कापरिहारः प्रयोजनानुपन्यासादित्यतोऽभिसन्धि-मुद्धाटयति- **ततश्चैवमिति ॥ प्रयोजनमिति ॥** साक्षादिति शेषः । निदर्शयति- **छिदेति ॥** अन्यत् किं नोच्यत इत्यत आह- **न हीति ॥** न साध्यमात्रं तत्प्रयोजनम् 'पुरोडाशकपालेन तुषानुपवपति' इति श्रुततुषोपवापस्यापि कपालसाध्यस्य तत्प्रयोजनत्वापत्तेः । न चेष्टापत्तिरिति वाच्यम् । तस्यानुनिष्पादितत्वेनाप्रयोजकत्वमिति चातुर्थि-काधिकरणसिद्धान्तात् । किन्तूद्देश्यत्वे सति साध्यम् । अतः कथमेवमुक्तमित्यतः, तत्साधनस्य तदेव प्रयोजन-मिति वक्तव्ये ततोऽन्यन्नेत्युक्तम् । तेन साध्यमात्रस्य प्रयोजनत्वाभावेऽपि प्रयोजनस्य साध्यत्वमस्त्येवेत्युक्तं भवति ।

अथ वा सिद्धज्ञापनमेव सर्ववाक्यसाधारणं प्रयोजनम् । कार्यस्यापि सिद्धविशेषत्वादित्याह- **अथ वेति ॥** ननु सिद्धं न साधनार्हमिति कार्यत्वसिद्धत्वयोः परस्परपरिहारेणैव वृत्तेः कथं कार्यं सिद्धविशेष इत्यत आह- **इष्टसाधनलक्षण इति ॥** तथा हि । 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते' इति हि परोदितं कार्यलक्षणम् । तत्र हि कृतिसाध्यत्वे सति कृत्युद्देश्यत्वमिति विशिष्टमेकं लक्षणं प्रत्येकमतिव्याप्तेः । तत्रोद्देश्यं मुख्यममुख्यं वा । आद्यं त्विष्टमेव । द्वितीयं तु नेष्टसाधनाद्भिद्यत इति सिद्धं कार्यस्यापि सिद्धविशेषत्वमिति भावः । रीत्यन्तरेणापि सिद्धपदं व्याचष्टे- **यथावस्थितेति ॥** यथावस्थितज्ञापनं साक्षाद्वाक्यप्रयोजनं भवदपि न स्वयमेव प्रयोजन-मित्यर्धाङ्गीकारेण शङ्कते- **सत्यमेतदिति ॥** तच्छब्दपरामृष्टं दर्शयति- **यज्ज्ञानमिति ॥** यस्येति विग्रहः । (पर)प्रवृत्तिनिवृत्त्यजननेऽपि कुतो न ज्ञापनीय इत्यत आह- **परप्रवृत्तिनिवृत्तीति ॥** एवकारव्यवच्छेद्यमाह- **न केवलेति ॥** भाट्टमतमनूद्यावद्यति- **न चेति ॥ शब्दो** लिङादिः । **तद्व्यापारो** भावना । **सर्वेषामपीति ॥** व्युत्पत्तिविधुराणामपीत्यर्थः । तथा चान्वयव्यभिचारः सिद्धः । व्यतिरेकव्यभिचारं चाऽह-**बालस्येति ॥** ननु कथं शब्दस्य न प्रवर्तकत्वम्, शङ्खादिशब्दश्राविणां प्रवृत्तिदर्शनादित्यत आह- **याऽपीति । अभिप्रायेति ॥** प्रवृत्तिनिवृत्त्यभिप्रायेत्यर्थः । ननु रागद्वेषयोरपि प्रवर्तकत्वात्तावपि वाक्यबोध्यौ स्यातामिति किं वाक्यस्य कार्य-परताग्रहेणेत्यत आह- **रागद्वेषयोरिति ॥ अस्तीति ॥** 'प्रवर्तनालक्षणा दोषाः' इति सूत्रादिति भावः । **(व्या.टि.)** आत्मविशेषगुणानां ज्ञातैकसत्त्वाज्ज्ञाता एव प्रवर्तका भवेयुरित्यत आह- **ज्ञानं त्विति ॥ अवर्जनी-येति ॥** अन्यथासिद्धेर्न तत्त्वेन कारणत्वमित्यर्थः । प्रसक्तप्रतिषेधं विधायान्यस्याप्रसङ्गात्परिशेषं विधत्ते- **अत इति ॥** उपसंहरति- **अत एवेति ॥ लिङादिरहित इति ॥** 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' इत्यादौ मीमांसकैस्तथा व्याकरणादिति भावः । **लक्षणा वेति ॥** समिधादिवाक्येषु वर्तमानापदेशेषु लिङर्थे लक्षणाऽश्रयणादिति भावः । उत्तरं प्रतिजानीते- **उच्यत इति ॥** आक्षेपं प्रतिक्षिपति- **नायमिति ॥ यत्रेति ॥** 'पुत्रस्ते जातः' 'पिता ते राजा वर्तते' इत्यादौ । **सुखदुःखावाप्तिहानी इति ॥** क्रमेणान्वयः । पुरुषापेक्षितं हि प्रयोजनं भवति । अन्यस्यानिरूपणात् । पुरुषश्चेष्टावाप्तिमनिष्टनिवृत्तिं चापेक्षते न प्रवृत्तिनिवृत्ती, तयोः क्लेशरूप-त्वात् । अतो न तयोर्मुख्यप्रयोजनतेति भावः । तथाऽपि न सार्वत्रिकप्रयोजनं सिद्धज्ञापनमित्यत आह- **यत्रापी-ति ॥** 'क्षुधित ओदनं पचेत्' इत्यादौ । **निवर्तते**, तत इति शेषः ।

'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ।
फलसाधनता तत्र कारणं तेन कार्यता ॥'

इति प्राभाकरोक्तं मनसि निधाय शङ्कते- **तस्यापीति ।।** 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्यनु-व्याख्यानोक्तयुक्तिं वक्ति- **इष्टसाधनतातिरिक्तायामिति ।।**

'फलसाधनता नाम या सा नैव हि कार्यता ।
कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ।
कारणत्वं फलोत्पादे ते भिद्येते परस्परम् ।।'

इति तच्छ्लोकं मत्वा वादी वक्ति- **चन्द्रमण्डलादाविति ।।** समाधत्ते- **सत्यमिति ।। कृतिसाध्येष्टसाधनताया इति ।।**

नन्वेतदयुक्तम् । 'लिङाद्यर्थस्त्विष्टसाधनत्वमेव' इति कर्मनिर्णयमूले इष्टसाधनतामात्रस्य लिङर्थत्वोक्त्या 'न वयं सिद्धमात्रं कार्यं ब्रूमः किन्त्विष्टसाधनत्वं सिद्धविशेषः कार्यत्वम् । तदेव धात्वर्थनिष्ठं लिङाद्यर्थः' इति तत्र तट्टीकायाम् इष्टसाधनताया एव लिङर्थत्वोपपादनेन तद्विरोधात् । इष्टसाधनतातिरिक्तकार्यतानिषेधपरेण 'कार्यता च न काचित्स्यादिष्टसाधनतां विना' इत्यनुव्याख्यानेन 'कृतिसाध्यताविशेषणस्य व्यर्थत्वात्' इति सुधया च विरोधात् । कृतिसाध्येष्टसाधनतायाः लिङर्थत्वे इष्टसाधनतायाः कृत्युद्देश्यतानतिरिक्तत्वेन पराभ्युप-गताङ्गीकारापाताच्चेति चेत्, न । एतद्वचनस्य प्रवर्तककार्यतापरत्वात् । कर्मनिर्णयादेश्च लिङर्थकार्यतापर-त्वात् । नापि परमताङ्गीकारापत्तिः । परैरस्या एव लिङर्थत्वोपगमात् । प्रवर्तकत्वं तु कृतिसाध्येष्टसाधनतायाः सम्मतमेव । 'कृतिसाध्यतैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेः' इति कर्मनिर्णयटीकोक्तेः । अन्यथाऽ-नुपपत्तेश्च । अधिकं तु तर्कताण्डवेऽनुसन्धेयम् । एतच्चाभ्युपेत्योक्तम् । वस्तुतस्तु इष्टसाधनताज्ञानमेव प्रवर्त-**(व्या.टि.)** कम् । अतीतादावतिप्रसङ्गस्तु कृतिसाध्यत्वविशेषणेऽपि तुल्य एव । इदानीं कृतिसाध्यं नेति तु इदानीम् इष्टसाधनमपि नेति तुल्यम् । चन्द्रमण्डलादौ प्रवृत्तिप्रसङ्गस्तु बलवदनिष्टानुबन्धित्वज्ञानस्येव कृत्यसाध्यता-ज्ञानस्य प्रतिबन्धकत्वादेवायुक्तः । एतेन वैयाकरणभूषणे कृतिसाध्यताविशेषणवैयर्थ्यपरसुधावाक्यानि यथा-न्यासमनूद्य चन्द्रमण्डलादौ प्रवृत्तिप्रसङ्गाभिधानम्, इष्टसाधनत्व इदानीमिति विशेषणस्य तन्निरासकत्वमनभि-मतमाशङ्क्य विकल्प्य दूषणाभिधानं च निरस्तम् । कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वात् । अतीतादावति-प्रसङ्गस्यैवेदानीमिति विशेषणेन निरासात् ।

तस्य च साधनत्वविशेषणत्वसम्भवात् । **अत एवेति ।।** कृतिसाध्यत्वविशेषणादेवेत्यर्थः । सिद्धिप्रकारं दर्शयति- **बालेन हीति ।।** निगमयति- **अत इति ।।** प्राभाकरः शङ्कते- **तत्रापीति ।। कल्पकाभावादिति ।।** सर्वस्य कार्यपरत्वं तत्कल्पकतयेष्टम् । तस्यैवाभावादित्यर्थः । **निर्मूलत्वादिति ।।** पौरुषेयप्रमाणस्य हि मूल-प्रमाणेन भवितव्यम् । न चास्य मूलं दृश्यत इत्याशयः । प्रयोजनं भवच्छब्दज्ञानं वा 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति महाभाष्यदिशा वेदरक्षादिकं वेति विकल्प्याऽद्यं निराह- **शब्दज्ञानस्येति ।। प्रयोगादेवेति ।।** तस्य सिद्धान्वाख्यानरूपत्वादित्यर्थः । द्वितीयं पराचष्टे- **वेदरक्षादेश्चेति ।। सम्प्रदायेनैवेति ।। सम्प्रदाय** उपदेशपरम्परा । शाब्दव्यवहारपदस्य स्वारस्यमाह- **अपशब्देति ।।** 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः' इति न्यायेन शब्दशब्देन सुशब्दा एवोच्यन्ते । 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेन सुशब्दैरेव क्रियमाणो व्यवहारः शाब्दव्यवहार इति निरुक्तिमभिप्रेत्यावधारणतात्पर्यमाह- **अपशब्दासङ्कीर्णशब्दैर्निर्वर्त्य इति ।। फलभेदेति ।।** कामधुगिति दुष्यति चेति स्वर्गप्रत्यवायरूपेत्यर्थः । **विना व्याकरणादिति ।।** 'पृथग्विना-नानाभिस्तृतीयाऽन्यतरस्याम्' इत्यन्यतरस्यां ग्रहणस्यानुवृत्तसमुच्चयार्थत्वात्पञ्चमी । **अत एवेति ।।** फलवत्त्वे-नोपादेयत्वसिद्धेरित्यर्थः । **अष्टकादिस्मृतिवदिति ।।** अष्टकाः पितृदैवत्याः इष्टयः 'अष्टका पितृदैवत्ये' इति निपातनात्, तद्वाचकत्वात्स्मृतेरपि ताच्छब्द्यम् 'अयं वै लोकः प्रथमा महानाम्नी' इतिवदिति बोध्यम् । **वेदरक्षादिकमिति ।।** व्याकरणप्रयोजनत्वेनेति शेषः । वेदरक्षायै व्याकरणम् इति वेदेनैवोक्तम् । तथा हि यजुर्वेदे ६कां.४-प्र.सप्तमानुवाके 'वाग्वै पराच्यव्याकृताऽवदत्' इत्यारभ्य 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्' इत्यन्तेन स्पष्टं प्रतीयते ।

**मूलम् - उक्तं च नारदीये - 'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।**
**सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि ।।**
**सर्वेषामपि वेदानाम् इतिहासपुराणयोः ।**
**प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते ।।' इति ।।**

**टीका -** अस्तु वाक्यस्य सिद्धार्थे प्रामाण्यम्। तथाऽपि **समतीतक्षराक्षरत्वादिलक्षणे नारायणे सकलसदागमानां प्रामाण्यमित्येतत्कुतः सिद्ध्येत्। नहि निश्चायकप्रमाणेन** विना सम्भावना-मात्रेणार्थसिद्धिर्भवति। **सम्भावनाकारणमेव प्रागुक्तं समस्तम्**। 'ज्ञेय एतैः' इति वाक्यमपि **न विशिष्टभगवत्स्वरूपप्रतिपादकत्वं सर्वेषां सदागमानामाचष्टे**। **वक्ष्यमाण**(णामा)**शङ्कां** च **न परिहरतीत्यत** आह- **उक्तं चेति ॥ न** केवलं सम्भावितमिति चार्थः। अत्राऽद्येन विशेषणद्वयेना-शेषसद्गुणत्वं लक्ष्यते। तृतीयेन निर्दोषत्वं, चतुर्थेन समतीतक्षराक्षरत्वम्। सर्वस्मादुत्तम इति विगृह्य 'पञ्चमी' इति योगविभागात् समासः। ज्ञापयन्तीत्यत्र सर्वेषामपि वेदानामित्यादिकं सिंहावलो-(कित)कनन्यायेनानुवर्तते। अर्थवशाद्विभक्तिविपरिणामः । ननु धर्मादिकमपि वेदादिप्रति-पाद्यम्। अन्यथा तदसिद्धिप्रसङ्गात्। अतः कथमेवमुच्यत इत्यत उक्तम्- **महातात्पर्यमिति ॥ अत्र** उक्तलक्षणे नारायणे। **प्रमाणानां च सर्वेषां** पञ्चरात्रादीनाम्। **अन्यत्तु** धर्मादिकं, **तदर्थं** भगवत्प्रतिपत्त्यर्थमेवोच्यते वेदादिभिः। तत्प्रकारश्च प्रागेव सङ्क्षेपेणोक्त इति।

**॥ इति कार्यतावादः ॥**

**(र.टि.) वक्ष्यमाणशङ्कामिति ॥** 'ननु धर्मादिकमपि वेदप्रतिपाद्यम्' इत्यादिना वक्ष्यमाणामित्यर्थः। **वेदादिभिरिति ॥** ज्ञापयन्तीत्यत्रेवात्राप्यनुवृत्त्यादिकमभिप्रेत्यैवमुक्तमिति ज्ञातव्यम्।

**(रा.टि.)** सम्भावना वा कथं सिद्धेत्यत आह- **सम्भावनाकारणमेवेति ॥** 'न चैतेषां वचनानामेवाप्रामा-ण्यम्' इत्यादिनोक्तं वेदादेः प्रामाण्यम्, वेदापौरुषेयत्वम्, सिद्धार्थे व्युत्पत्तिः, तत्र वाक्यानां पर्यवसानेन प्रामाण्यमित्येतत्समस्तमित्यर्थः। वेदादिसर्वसदागमानां प्रामाण्ये सिद्धार्थप्रमापकत्वे च सिद्धे सति भगवानुक्त-विशेषणविशिष्टः सिद्धार्थः सन्नपि सिद्धार्थप्रमापकवेदादिसदागमबोध्यो भवितुमर्हतीति सम्भावना सिद्ध्यतीति भावः। 'ज्ञेयः एतैः सदा युक्तैर्भक्तिमद्भिः' इति प्रागुदाहृतवाक्येन तन्निश्चयोऽस्त्वित्यत आह- **ज्ञेय एतै-रिति ॥** तत्र जनार्दन इत्येव श्रवणेन विशेषणविशिष्टत्वेनाश्रवणादिति भावः। **वक्ष्यमाणेति ॥** सर्वेषां भगवत्परत्वे कर्माद्यसिद्धिरिति शङ्कामित्यर्थः। **न परिहरतीति ॥** इत्यादिवाक्यमित्यनुषङ्गः। षष्ठीसमासपक्षे समतीतेत्यादि-विशेषणेनैकार्थता न लभ्यत इत्यत आह- **इति विगृह्येति ॥** नन्वेवं 'पञ्चमी भयेन' इति सूत्रे भयशब्देनैव पञ्चम्यन्तस्य 'चोराद् भयं चोरभयम्' इत्यादावेव समासोक्तेरिह कथं समास इत्यत आह- **पञ्चमीति योग-विभागादिति ॥** पञ्चमीति एको योगः, भयेनेत्यपरः। **योगः** सूत्रम्। तत्राऽद्यस्यायमर्थः पञ्चम्यन्तपदं येन केनचित्समस्यत इति। भयेनेति सूत्रे च पञ्चमीत्यनुवर्तने। पञ्चम्यन्तं भयशब्देन समस्यत इति। आद्यसूत्रं क्वाचित्कप्रौढप्रयोगविषयम्। द्वितीयं सार्वत्रिकम्। ज्ञापयन्तीत्यत्र कर्त्राकाङ्क्षायामाह- **ज्ञापयन्तीत्यत्रेति ॥ सिंहावलोकनेति ॥** सिंहो हि गच्छन् पश्चाद्देशं पश्यतीति न्यायेनेत्यर्थः। **अर्थेति ॥** आकाङ्क्षितकर्त्रर्थवशादि-**(रा.टि.)** त्यर्थः। **विभक्तीति ॥** प्रथमाविभक्तीत्यर्थः। अत्रेत्यनुवादः। चस्त्वर्थ इत्युपेत्याऽह- **अन्यत्त्वि-ति ॥ प्रागेवेति ॥** इयं मातेत्यादिवाक्यतात्पर्योक्तिप्रस्ताव इति भावः।

**(श्री.टि.) समतीतक्षराक्षरत्वादिलक्षण इति ॥** 'सदागमैकविज्ञेयम्' इत्यत्र वीत्युपसर्गस्य विलक्षणतया ज्ञेयमित्यर्थस्योक्तत्वादिति भावः। ननु समतीतक्षराक्षरत्वेनेतरविलक्षणत्वात्तत्रैव नारायणे सकलसदागमानां प्रामाण्यं सिद्ध्यतीति चेत्तत्राऽह- **न हीति ॥** ननु वेदस्यापौरुषेयत्वेऽप्रामाण्यापत्तेः सर्वस्यापि कार्यपरत्वाच्च नेश्वरप्रतिपादकत्वमिति शङ्काया अपौरुषेयत्वसमर्थनेन कार्यतापरत्वनिराकरणेन निराकृतत्वादुक्तलक्षणे नारायणे सकलसदागमानां प्रामाण्यं निश्चितं भविष्यतीत्यत आह- **सम्भावनाकारणमेवेति ॥ प्रागुक्तमिति ॥** कार्यतापरत्वनिराकरणादिकं 'सकलसदागमानामुक्तलक्षणे नारायणे प्रामाण्यम्' इत्यस्य सम्भावकमेव न निश्चायकमिति भावः। ननु ज्ञेय एतैरिति वाक्ये सर्वेषां सदागमानां सदागमैकविज्ञेयत्वादिविशिष्टभगवत्स्वरूप-प्रतिपादकत्वस्योक्तत्वान्निश्चायकं प्रमाणमुक्तमस्तीति चेत्तत्राऽह- **ज्ञेय एतैरिति वाक्यमपीति ॥** जनार्दन एतैरेव ज्ञेय इत्येवोक्तत्वादुक्तविशेषणविशिष्टभगवत्प्रतिपादकत्वं सकलसदागमानां नोक्तमित्यर्थः। केचित्तु, यद्यपि तत्र विशेषणार्थकतुशब्दस्य जनार्दन इत्यनेन सम्बन्धं कृत्वा 'सदागमैकविज्ञेयत्वादिविशेषणविशिष्टो जनार्दन एतैरेव ज्ञेयः' इति यदा व्याख्यातं तदा नाचष्ट इत्ययुक्तम्। तथाऽपि स्पष्टं नाचष्ट इति व्याख्यानाददोष इत्याहुः। तुष्यत्विति न्यायेनाऽह- **वक्ष्यमाणामिति ॥** ज्ञेय एतैरिति वाक्यमिति वर्तते। 'ननु धर्मादिकमपि वेदादिप्रतिपाद्यम् अन्यथा तदसिद्धिप्रसङ्गात्। अतः सर्वस्यापि वेदादेः कथं नारायणज्ञापकत्वमुच्यते' इत्यनुपदमेव वक्ष्यमाणामाशङ्कामित्यर्थः। **निर्दोषत्वमिति ॥** रोगवाचि-

आमयशब्दस्य सर्वदोषोपलक्षकत्वेन रोगाभाववाचि- अनामयपदेन निर्दोषत्वं लक्ष्यत इत्यर्थः । ननु सर्वोत्तममित्यत्र कः समासः । न च सर्वस्मादुत्तम इति विग्रहं कृत्वा पश्चात्पञ्चम्या उत्तमपदेन समास इति वाच्यम् । 'पञ्चमी भयेन' भयशब्दयोगे पञ्चमी समस्यते, चोराद्भयं चोरभयमिति भयशब्दयोगे एव पञ्चम्याः समासविधानात्, प्रकृते च भयशब्दयोगाभावात् । अतस्सर्वस्मादुत्तम इत्येव वक्तव्यमित्यत आह-**पञ्चमीति योगविभागादिति ।।** **योगो** वाक्यं तद्विभागादित्यर्थः । तथा च पञ्चमी-त्येकं वाक्यम् । पञ्चमी येन केनापि पदेन समस्यत इति तदर्थः । भयेनेत्यपरं वाक्यम् । भयशब्देन च समस्यत इति तदर्थः । तथा च सर्वस्मादुत्तम इति **विगृह्य** विग्रहं कृत्वा अनन्तरं पञ्चम्या उत्तमपदेन समासे सति सर्वोत्तममिति युक्तमिति भावः । ननु तर्हि सर्वेषां वेदानां ज्ञापयन्तीत्यसङ्गतिरिति चेत्तत्राऽह- **अर्थवशादिति ।।** अर्थसङ्गतिवशात् षष्ठीविभक्तेः प्रथमात्वेन विपरिणामः कर्तव्यः । तथा च सर्वे वेदाद्या ज्ञापयन्तीत्यर्थो द्रष्टव्यः । **तदसिद्धीति ।।** धर्मादिविषये प्रत्यक्षस्याप्रवृत्तेः । केवलनानुमानस्य चाप्रामाण्यादिति भावः । **एवमुच्यत इति ।।** सर्वस्यापि वेदादेः कथं नारायणज्ञापकत्वमुच्यत इत्यर्थः । **उक्तलक्षणे** सर्वज्ञमित्यादिनोक्तलक्षणविशिष्टे । धर्मादौ त्ववान्तरं तात्पर्यमिति भावः । **धर्मादिकं** निवृत्तकर्मादिकम् । ननु कथं धर्मादीनां भगवत्प्रतिपत्त्यङ्गत्वमित्यत आह- **तत्प्रकारश्चेति ।।** भगवत्प्रतिपत्त्यङ्गत्वप्रकार इत्यर्थः । **प्रागेव सङ्क्षेपेणोक्त इति ।।** 'अनेनैतां वेदवाक्यानां **(श्री.टि.)** योजनां सूचयति' इत्यादिना प्रकारद्वयेन वेदवाक्यानां योजनाकरणसमय इत्यर्थः । एकान्तभक्ताभि-प्रायेण योजनाकरणसमये 'ततो वाक्यार्थज्ञानादवाप्तपरमानन्दः तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः प्रवर्तन्ते' इति । तथा तदितरभक्ताभि-प्रायेण अथ वेत्यादियोजनाकरणसमये 'ततः पुनरसौ जिज्ञासते केनोपायेनाहमिदमस्वाभाविकं रूपं हित्वा स्वरूपेणावस्थितः स्यामिति । तं प्रति परमेश्वर एव प्रसन्नस्तदुपाय इति तत्स्वरूपं निरूप्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदर्थं श्रवणादिकं तदङ्गतया कर्माणि विधीयन्ते ।' इति सङ्क्षेपेणास्माभिरुक्त इत्यर्थः ।

**(पां.टि.)** नन्वेतद्वाक्यशेषे 'केवलागमविज्ञेयः' इति विशिष्टत्वेन विलक्षणत्वेन चाऽगमविज्ञेयत्वोक्तेः समतीत-क्षराक्षरत्वादिविशिष्टे नारायणे सदागमानां प्रामाण्यसिद्धिर्भविष्यतीत्यरुचेराह- **वक्ष्यमाणशङ्कां चेति ।।** नारायणस्यैव सदागमवेद्यत्वे धर्मादिसाधकप्रमाणाभावेन धर्मादिसिद्धिर्न स्यादित्येवंरूपामित्यर्थः । ननु सर्वोत्तम इत्यत्र न समानाधिकरणसमासोऽङ्गीकर्तुं शक्यः । तथा सति 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति सूत्रेण प्रथमानिर्दिष्टस्योत्तमशब्दस्य पूर्वनिपातप्रसङ्गात् । नापि सर्वस्मादुत्तम इति पञ्चमीसमासः । भयभीतभीतिभीभिरेव पञ्चम्याः समासस्य 'पञ्चमी भयेन' इत्यनेन नियमितत्वादुत्तमशब्दस्य भयादित्वाभावेन तदयोगात् । नापि षष्ठीसमासः । 'न निर्धारणे' इति षष्ठ्याः समासप्रतिषेधादित्यतो 'नृणां द्विजः श्रेष्ठः' इत्यादाविव जात्यादिभि-रेकदेशस्य समुदायादपृथक्करणान्निर्धारणाभावात् शेषषष्ठ्या अयं समासः । 'यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतुरेतत्त्रितयसन्निधाने सत्येव निर्धारणं भवतीति तत्रैव षष्ठीसमासप्रतिषेधः' इति 'द्विवचन-विभज्योपपद' इति सूत्रे कैयटोक्तेः । अथ वा 'यतश्च निर्धारणम्' इति निर्धारणे सप्तम्या अपि विधानात्तस्याश्च समासाप्रतिषेधात् सर्वेषूत्तम इति निर्धारणसप्तम्याः 'सञ्ज्ञायाम्' इति समासो भविष्यति । न चैवं 'न निर्धारणे' इत्यनर्थकं प्राप्नोति तद्विषयेऽपि तत्प्रसङ्गादिति वाच्यम् । षष्ठीसमासेऽन्तोदात्तत्वस्य सप्तमीसमासे च 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिस्वरत्वस्य प्रसक्त्या स्वरभेदेनाऽनर्थक्यासम्भवात् । यद्वा पञ्चमीसमासः । न चोक्त-दोषः । 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वाद् 'ग्रामान्निर्गतो यो ग्रामनिर्गतः' इत्यादाविव 'सर्वस्मादुत्तमः सर्वोत्तमः' इति पञ्चमीसमासस्याविकलत्वादिति सत्येव समाधाने उपायस्योपा-यान्तरादूषकत्वात्स्वयं योगविभागाश्रयणेन समाधत्ते- **योगविभागेनेति ।।** **प्रागेवेति ।।** 'अनेनैतां वेदवाक्यानां योजनां सूचयति' इत्यादिनेत्यर्थः ।

**(व्या.टि.)** तथाऽपि न पूर्वशङ्का समूलघातं हतेत्याशङ्कते- **अस्त्विति ।।** **प्रागुक्तमिति ।।** सिद्धव्युत्पत्त्यादिक-मित्यर्थः । **विशिष्टेति ।।** निर्दोषाशेषसद्गुणत्वादिविशिष्टेत्यर्थः । **मूले नारदीय इति ।।** 'वा नामधेयस्य वृद्धसञ्ज्ञा' इति नारदशब्दस्य वृद्धसञ्ज्ञायां 'वृद्धाच्छः' इति छप्रत्यय इति भावः । **निर्दोषत्वमिति ।।** आमयशब्दस्य **(व्या.टि.)** दोषान्तरोपलक्षणत्वादिति भावः । **योगविभागादिति ।।** सूत्रभेदादित्यर्थः । कर्त्रश्रवणादभिलषिता-लाभ इत्यत आह- **ज्ञापयन्तीत्यत्रेति ।।** वृत्तस्यानुवृत्तिर्युक्ता न वर्तिष्यमाणस्येत्यत उक्तम्- **सिंहावलोकित-न्यायेनेति ।।** 'या ते अग्ने याशया रजाशया हराशया तनूर्वर्षिष्ठा' इत्यादौ शेषाकाङ्क्षिणोः पूर्वमन्त्रयोरुत्तर-शेषानुवृत्तिदर्शनात् । न च नैवं मीमांसितमिति वाच्यम् । यतस्तदधिकरणं शाखान्तरोदाहरणेन नेयम् । ननु षष्ठ्यन्ततया श्रुतं कथमत्रानुवर्तेत अयोग्यत्वादित्यत उक्तम्- **अर्थवशादिति ।।** अङ्गस्येत्यादौ दर्शनादिति भावः ।

कर्त्रपेक्षायामाह- **वेदादिभिरिति ॥**

**॥ इति कार्यतावादः समाप्तः ॥**

**मूलम् - न च जीवेश्वराभेद एव तात्पर्यमागमस्य ; तत्र प्रमाणाभावात् । नच जीवेश्वर-भेदः सिद्ध इत्यनुवादकत्वं भेदवाक्यानाम् ; आगमं विनेश्वरस्यैवासिद्धेः । नचानु-मानात्तत्सिद्धिः । विपर्ययेणाप्यनुमातुं शक्यत्वात् ।**

**(त.मं.)** अत्र नारायणस्य, सदागमैः सर्वजगतः प्रधानतया विज्ञेयत्वं साधयितुं सर्वज्ञमि-त्यादिप्रमाणमुपन्यस्यमानमाकर्ण्य तदसहमानैः मायिभिराक्षिप्यते- कथं सर्वागमानां सर्वोत्तमत्वे तात्पर्यम् । तत्त्वतः सर्वस्यैवाभावात् । तत्त्वमस्यादिवाक्यानां प्रामाण्यान्यथाऽनुपपत्त्या जीवेश्वरा-भेद एव हि सदागमानां तात्पर्यमिति । तत्परिहारायाऽह- **न च जीवेति ॥** भेदे प्रत्यक्षादिप्रमाणमङ्गी-कृत्य अभेदे तदभावो दोष उच्यते । एवञ्च भेदस्य सिद्धत्वात् तद्वादिवाक्यानामनुवादकत्वादप्रामाण्य-मित्यत आह- **न च जीवेश्वरभेद इति ॥** ईश्वरे केवलानुमानस्यैव दूषितत्वान्नापसिद्धान्तोऽत्र ।

**टीका -** अत्राद्वैतवादिनो वदन्ति । मन्त्रब्राह्मणलक्षणस्तावद्वेदो विधिनिषेधरूपत्वात् कर्मपरोऽ-विद्यावद्विषयोऽतत्त्वावेदक एव । वेदान्तानां तु तत्वावेदकत्वेऽपि जीवेश्वराभेद एव तात्पर्यम् । तत्रोद्गीथाद्युपासनानां कर्मसमृद्ध्यर्थानामपि चित्तवृत्तित्वसाम्येन बुद्धिशुद्ध्यर्थत्वाच्चाऽम्नानम-विरुद्धम् । प्राणाद्युपासनानामपि प्राणादीनां ब्रह्मप्रतीकत्वेनाद्वैतज्ञानोपयोगित्वात् क्रममुक्ति-फलत्वाच्च पाठो न विरुद्धः । एतेन सगुणब्रह्मविद्या अपि व्याख्याताः । यद्वा क्रियाकारकफल-रूपभेदप्रपञ्चप्रतिपादकः सर्वोऽपि वेदो जीवब्रह्मणोर्निष्प्रपञ्चताप्रतिपादनपूर्वकमभेदप्रति-पादनायानुवादपर एवेति सर्वस्याप्यागमस्य जीवेश्वराभेद एव तात्पर्यात्कथं सर्वोत्तमत्वादि-लक्षणे विष्णौ तात्पर्यमुच्यते । सर्वोत्तमत्वादेर्भेदसापेक्षत्वेनाभेदविरोधादिति । तदेतत्प्रतिषेधति- **न चेति ॥** अत्रेश्वरशब्देन ब्रह्मोच्यते, तस्यैव स्वाधीनमायाशबलस्येश्वरत्वेन परैरङ्गीकृतत्वात् । ऐश्वर्यविशिष्टेन जीवस्याभेदानुपपत्तेः । कुतो नेत्यत आह- **तत्रेति ॥** सति हि जीवेश्वराभेदप्रतिपादके प्रधानवाक्ये तदितरेषां वाक्यानां कथञ्चित्तदेकवाक्यतां व्युत्पाद्य सर्वस्याप्यागमस्य तत्र तात्पर्यं व्याख्यातुं शक्यते । नच जीवेश्वराभेदे प्रमाणं प्रधानवाक्यमस्ति । तत्कथं तत्राऽगमस्य तात्पर्य-कल्पनम् ।

ननु कथं नास्ति । 'तत्त्वमसि' इत्यादीनां जीवेश्वराभेदप्रतिपादकानां वाक्यानां विद्यमानत्वादिति चेन्न । तेषाम् 'द्वे ब्रह्मणी वेदितव्ये' 'द्वा सुपर्णा' इत्यादिजीवेश्वरभेदवाक्यविरुद्धत्वेनाभेदे प्रामाण्याभावादिति भावः । ननु प्रबलं विरोधि बाधकं भवति । समबलं च प्रतिरोधकम् । उभयथाऽपि कालातीतसत्प्रतिपक्षहेत्वोरिव विरुद्धस्याप्रामाण्यमुचितम् । नचाभेदवाक्यापेक्षया भेदवाक्यानां प्राबल्यं समबलत्वं वाऽस्ति । जीवेश्वरभेदस्य प्रत्यक्षानुमानसिद्धत्वेन तदनुवादकानां तेषां दुर्बल-त्वात् । नचाभेदः प्रमाणान्तरसिद्धो येन तद्वाक्यानामनुवादकत्वं स्यात् । अतो भेदवाक्य-विरोधेनाभेदवाक्यानामप्रामाण्यकथनमयुक्तं प्रत्युत विपर्यय एवोचित इत्यत आह- **नचेति ॥ सिद्धः** प्रत्यक्षानुमानाभ्याम् । इतिशब्दो हेतौ । तथाच दौर्बल्यमिति शेषः । कुतो नेत्यत आह- **आगमं विनेति ॥** भेदस्तावद्धर्मिप्रतियोगिप्रतीतिसापेक्षप्रतीतिकः । तत्रेश्वरधर्मिको जीवप्रतियोगिको भेदः प्रमाणान्तरसिद्ध इति वा वक्तव्यम्, ईश्वरप्रतियोगिको जीवधर्मिक इति वा । पक्षद्वयेऽपि जीवेश्वरप्रतीत्याऽवश्यं भवितव्यम् । तत्र यद्यपि जीवः साक्षिप्रत्यक्षसिद्धस्तथाऽपीश्वरसिद्धिः किमागमेनोत प्रमाणान्तरेणेति वाच्यम् । आद्ये वक्ष्यामः । द्वितीये त्विदमुपतिष्ठते । तथाच धर्मिप्रतियोगिप्रतीत्यभावात्कथं तदधीना प्रत्यक्षादिना जीवेश्वरभेदसिद्धिः स्यात् । कथं च

तद्वाक्यानामनुवादकत्वं दुर्बलत्वं वा भवेदित्येवार्थः ।

नन्वीश्वरस्य स्वभावविप्रकृष्टत्वात्प्रत्यक्षतोऽसिद्धावप्यनुमानात्तत्सिद्धिर्भविष्यति । तथाच प्रमाणान्तरेण भेदसिद्ध्युपपत्तेस्तद्वाक्यानामनुवादकत्वमेवेति चेत्, किं प्रत्यक्षागमसहाय-वताऽनुमानेनेश्वरसिद्धिरुच्यते उत तद्रहितेन । आद्ये वक्ष्यामः । द्वितीयं प्रतिषेधति- **नचेति ।।** तत्र हेतुमाह- **विपर्ययेणापीति ।।** इत्थम्भूतलक्षणे तृतीया । प्रत्यक्षागमसहायरहितस्यानुमानस्य सर्वथा विपरीतानुमानेन प्रतिरुद्धत्वात् । तथा चोक्तम् । 'उपाधिप्रतिरोधौ तु क्व नामातीव दुर्वचौ' इति । प्रत्यक्षादिसाहाय्ये तु प्रतिपक्षस्य तद्बाधेनोपाधेश्च पक्ष एव साध्यव्यापकताभङ्गेन निराकरणं शक्यते । तदभावे तु प्रतिपक्षादिकं दुष्परिहरमेव ।

**(र.टि.) कर्मसमृद्ध्यर्थानामिति ।।** 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथोपासनाविधिप्रकरणे 'एषा उ एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति ।''यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति' इति श्रवणादिति भावः । अपिशब्दो विरोधसूचनार्थः । **चित्तवृत्तित्वसाम्येनेति ।।** बुद्धिशुद्धिप्रयोजनक-सगुणोपासनाप्रतीकाद्युपासनोद्गीथाद्युपासनानां च प्रत्यगर्थविषयकमनोवृत्तित्वसाम्येनेत्यर्थः । **बुद्धिशुद्ध्यर्थ-त्वाच्चेति ।।** अन्तःकरणस्य पराग्वृत्तिनिरोधकत्वादित्यर्थः । तथा च तद्द्वाराऽद्वैतज्ञान एवोपयोगादुद्गीथाद्युपा-सनाविधायकवाक्यानाम् 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादीनामाम्नानं न विरुद्धमित्यर्थः । नन्वेवमपि वेदान्ते सृष्ट्यादिकथनस्य कथमुपयोगः । यदि च तस्य ब्रह्मणो निष्प्रपञ्चताप्रतिपादनपूर्वकमभेदप्रतिपादना-यानुवादकतयोपयोगस्तर्हि मन्त्रब्राह्मणलक्षणवेदस्यापि तथैवोपयोगसम्भवात्किमित्येवं विभज्य कथनमित्य-स्वरसादाह- **यद्वेति ।।** अस्मिन्पक्षे मूलस्थमागमस्येति पदमप्यसङ्कुचितार्थं भवतीति भावः । विशिष्ट-वाचकेनेश्वरशब्देन शुद्धं ब्रह्म कथमुच्यत इत्यत आह- **तस्यैवेति ।।** विशिष्टवाचकस्यापि विशेष्यवाचकत्वादिति भावः । **अभेदे प्रामाण्याभावादिति भाव इति ।।** अभेदे वेदस्य तात्पर्याभावे तत्प्रतिपादकप्रधानप्रमाणाभावस्यैव हेतुत्वात् तत्र प्रधानवाक्याभावादित्येव वक्तव्ये प्रमाणपदं प्रयुञ्जानस्य भाव इत्यर्थः । 'प्रत्यक्षानुमानसिद्धत्वे च भेदस्य' इत्युत्तरवाक्यानुसारेणाऽह- **प्रत्यक्षानुमानाभ्यामिति ।।**

**(रा.टि.) अत्रेति ।।** समतीतक्षराक्षरत्वादिविशेषणविशिष्टे महातात्पर्यं वेदादेरित्यत्रेत्यर्थः । **मन्त्रेति ।।** 'अग्नि-मीळे' इत्यादयः । **ब्राह्मणेति ।।** 'उरु प्रथस्वेति पुरोडाशं प्रथयति' 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यादयः । 'यजेत स्वर्गकामः' 'नानृतं वदेत्' इत्यादिविधिनिषेधकवाक्यानि । **कर्मपर इति ।।** मन्त्राणां कर्मपरत्वं कर्मगतद्रव्यदेवताप्रकाशकत्वेनेति ज्ञेयम् । 'उद्गीथमुपासीत' इत्यादीनां तत्रोपनिषदि आम्नानमविरुद्धमिति योजना । **प्राणादीति ।।** 'यो ह वै प्राणं वेद, नाम ब्रह्मेत्युपासीत' इत्यादीनामित्यर्थः । **क्रमेति ।।** अर्चिरादिक्रममुक्तीत्यर्थः । **सगुणेति ।।** 'सत्यकामः सत्यसङ्कल्पः सर्वस्य वशी सर्वस्येशानः' इत्याद्या अपि क्रममुक्तिपरत्वेन व्याख्याता इत्यर्थः । **क्रियेति ।।** सन्ध्यावन्दनज्योतिष्टोमभोजनादिवैदिकलौकिकक्रिया, सोमरसाम्राज्यादिकारकाणि, स्वर्गतृप्त्यादिफलेत्यर्थः । **अनुवादेति ।।** प्रत्यक्षादिप्राप्तस्येति भावः । ईश्वरशब्देन ब्रह्मग्रहणं कुत इत्यत आह- **तस्यैवेति ।। मायाशबलस्येति ।।** मायया शबलस्य सविशेषभावं प्राप्तस्ये-त्यर्थः । **वक्ष्याम इति ।** 'असर्वकर्तृत्वेनानुभवात्' इति वाक्यव्याख्यानावसरे वक्ष्याम इत्यर्थः । **इदमिति ।।** 'आगमं विना' इत्येतद्वाक्यमित्यर्थः । **धर्मिप्रतियोगीति ।।** जीवप्रतियोगित्वपक्षे ब्रह्मणो धर्मित्वस्य जीव-धर्मिकत्वपक्षे प्रतियोगित्वस्य प्राप्तेरीश्वरासिद्धौ धर्मिप्रतियोगिप्रतीत्यभावादित्युक्तम् । **आद्ये वक्ष्याम इति ।। (रा.टि.)** 'प्रत्यक्षादिसाहाय्ये तु' इत्यादिनेति योज्यम् । यद्वा 'प्रत्यक्षानुमानसिद्धत्वे च' इत्यादिग्रन्थव्याख्याना-वसर इति वा 'कथं चानुवादकत्वं भेदस्य प्रमाणेनासिद्धौ' इत्यादाविति वाऽर्थः । **इत्थम्भूत इति ।।** कञ्चित्प्रकारं प्राप्त इत्थम्भूतः । तल्लक्षणे तज्ज्ञापने तृतीयेत्यर्थः । प्राक्तनप्रकाराद्विपरीतप्रकारम्- अकर्तृकत्वप्रकारं प्राप्तमपि साध्यमनुमातुं शक्यत्वादित्यर्थ इति भावः । कर्तृकरणाद्यर्थस्यात्रासम्भवादेवमुक्तम्- **उपाधीति ।।** एवं तर्ह्यनु-मानमात्रभङ्ग इत्यतो वा को वा विशेषः प्रत्यक्षसाहाय्यवत्तद्रहितानुमानयोरित्यतो वाऽह- **प्रत्यक्षादिसाहाय्ये त्विति ।। पक्ष एवेति ।।** हेतोर्व्याप्त्यादिमत्त्वेन पक्षे साध्यसिद्धौ तत्रोपाध्यभावादिति भावः ।

**(श्री.टि.) अत्रेति ।।** सर्वोत्तमत्वादिलक्षणे विष्णौ सकलवेदानां महातात्पर्यमित्यत्रेत्यर्थः । **मन्त्रः** 'अग्निमीळे' इत्यादिः । 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति **ब्राह्मणम्** । अतत्त्वावेदकत्वे हेतुमाह- **अविद्यावद्विषयक इति ।।** अत्र विषयपदेनाधिकारी विवक्षणीयः । तथा चाविद्यावान् विषयो- अधिकारी यस्येति विग्रहः । तथा चाविद्वदधिकारिकत्वादतत्त्वावेदक इत्यर्थः । केचित्तु

अविद्यावच्छब्देन प्रपञ्च उच्यते । प्रपञ्चस्याविद्यावत्त्वं नाम तदुपादानकत्वं तत्कल्पितत्वमिति यावत् । तथा चाज्ञानकल्पितकर्मादिप्रपञ्चप्रतिपादकत्वादतत्त्वावेदक इत्यर्थ इत्याहुः । ननु मन्त्रब्राह्मणलक्षणस्य वेदस्यातत्त्वावेदकत्वेन तत्र तात्पर्याभावेऽपि वेदान्तानां तत्र तात्पर्यमस्त्वि-त्यत आह- **वेदान्तानां त्विति ॥ अभेद एवेति ॥** न सर्वोत्तमत्वादिलक्षणे विष्णावित्येवकारार्थः । ननु कथं वेदान्तानामभेदपरत्वं, तत्र 'ओमित्येतक्षरमुद्गीथमुपासीत' इत्याद्युद्गीथोपासनावाक्यानामपि सत्त्वात् । उद्गीथाद्यु-पासनावाक्यानां च 'एषा उ एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति । य एतदेवं विद्वानक्षरमुद्गीथ-मुपास्ते' इति कर्मसमृद्धिफलकत्वश्रवणादित्यत आह- **तत्रोद्गीथाद्युपासनानामिति ॥ कर्मसमृद्ध्यर्थाना-मिति ॥** कर्मणा जायमाना या स्वर्गादिरूपा समृद्धिस्तत्फलिकानामित्यर्थः । **चित्तवृत्तित्वसाम्येनेति ॥** यथा वेदान्तेषु प्राणाद्युपासनाः सगुणोपासनाश्च कथ्यन्त एवमुद्गीथाद्युपासनाश्च कथ्यन्ते । प्राणाद्युपासनावद् उद्गीथोपासनायाश्च चित्तवृत्तित्वसाम्येन प्रत्यगर्थविषयकमनोवृत्तित्वसाम्येन, उपासनात्वसाम्येनेति यावत्, **आम्नानं** कथनम् अविरुद्धम् इत्यर्थः । हेत्वन्तरमाह- **बुद्धिशुद्ध्यर्थत्वाच्चेति ॥** प्राणाद्युपासनावदुद्गीथाद्युपासना-नामप्यन्तःकरणस्य पराग्वृत्तिनिरोधकत्वादित्यर्थः । ननु तथाऽपि वेदान्तस्थानां 'प्राणं ब्रह्मेत्युपासीत' इत्यादीनां प्राणादिप्रतीकोपासनावाक्यानां का गतिरित्यतो गतिमाह- **प्राणाद्युपासनानामिति ॥** अद्वैतज्ञानोपयोगित्वे हेतुकथनम्- **प्राणादीनां ब्रह्मप्रतीकत्वेनेति ॥** ब्रह्मप्रतिबिम्बत्वेनेत्यर्थः । बिम्बप्रतिबिम्बयोरभेदेन ब्रह्मप्रतिबिम्ब-त्वेन प्राणाद्युपासनाया अद्वैतज्ञानोपयोगित्वादिति भावः । हेत्वन्तरमाह- **क्रममुक्तिफलत्वाच्चेति ॥** क्रमेण जायमाना या मुक्तिस्तत्फलकत्वादित्यर्थः । तथा च प्राणाद्युपासनायां कृतायामादौ प्राणादिप्राप्तिर्भवति । पश्चाद्ब्रह्मभावरूपा मुक्तिर्भवतीत्यर्थः ।

ननु तथाऽपि वेदान्तस्थानां 'यस्सर्वज्ञस्सर्ववित्' इत्यादीनां सार्वज्ञादिगुणविशिष्टब्रह्मप्रतिपादकवाक्यानां का गतिरित्यत आह- **एतेनेति ॥** सगुणब्रह्मविद्याया अप्यद्वैतज्ञानोपयोगित्वेन क्रममुक्तिफलकत्वेन चेत्यर्थः। **(श्री.टि.)** आदौ सगुणोपासनं विना निर्गुणब्रह्मोपासने बुद्ध्यनारोहात्सगुणोपासनस्य निर्गुणोपासनोपयोगि-त्वम् । यथोक्तम्-

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥' इति ।

तथा सगुणब्रह्मप्राप्तिद्वारा निर्गुणब्रह्मैक्यप्राप्तेः क्रममुक्तिफलकत्वमिति भावः । नन्वेवमपि वेदान्ते 'सदेव सोम्येदमग्र आसीत्तत्तेजोऽसृजत' इत्यादिसृष्ट्यादिकथनस्य कथमुपयोगः । यदि च 'एकमेवाद्वितीयम्' इति ब्रह्मणो निष्प्रपञ्चताप्रतिपादनपूर्वकमभेदप्रतिपादनायानुवादकतया सृष्ट्यादिकथनस्योपयोगस्तर्हि मन्त्रब्राह्मण-लक्षणवेदस्यापि ब्रह्मणो निष्प्रपञ्चताप्रतिपादनपूर्वकमभेदप्रतिपादनाय कर्माद्यनुवादकत्वेनोपयोगसम्भवात् 'मन्त्र-ब्राह्मणलक्षणस्तावद्वेदः' इत्यादिना विभज्य कथनमयुक्तमित्यस्वरसादाह- **यद्वेति ॥** पूर्वस्मिन् पक्षे मूलस्थ-मागमस्येति वेदान्तमात्रपरत्वेन सङ्कुचितार्थम् । अस्मिन् पक्षे त्वसङ्कुचितार्थं भवतीति द्रष्टव्यम् । **क्रिया** यागादि-रूपा । **कारकं** कर्त्रादि । **फलं** स्वर्गादि । ननु जीवेश्वराभेदे सर्वोत्तमत्वे चेत्युभयत्रापि तात्पर्यमस्त्वित्यत आह- **सर्वोत्तमत्वादेरिति ॥** नन्वीश्वरस्यापि विशिष्टत्वात्परेण विशिष्टयोरभेदानङ्गीकाराज्जीवेश्वराभेद एवेत्यसदनुवाद इत्यत आह- **अत्रेश्वरशब्देनेति ॥ उच्यत इति ॥** लक्षणया प्रतिपाद्यत इत्यर्थः । विशिष्टवाचकेनेश्वरपदेन शुद्धं ब्रह्म कथं लक्ष्यत इत्यतो लक्षणाबीजं शक्यसम्बन्धमुपपादयति- **तस्यैवेति ॥** शुद्धब्रह्मण एवेत्यर्थः । **माया-शबलस्य** मायावच्छिन्नस्य । लक्षणाबीजभूतमुख्यार्थानुपपत्तिं दर्शयति- **ऐश्वर्येति ॥ प्रधानवाक्ये** महावाक्ये । **तदेकवाक्यतामिति ॥** त्वदुक्तरीत्या तेन महावाक्येनैकवाक्यतामित्यर्थः । **उचितं** लोक इति शेषः । न ह्येवं प्रकृतेऽस्तीत्याह- **न चेति ॥ अस्तीति ॥** येन तद्विरुद्धस्याभेदागमस्य कालातीतसत्प्रतिपक्षहेत्वोरिवाप्रामाण्यं स्यादिति भावः । **दुर्बलत्वादिति ॥** भेदवाक्यानां प्रमाणान्तरसिद्धभेदप्रतिपादकत्वेनापूर्वतालक्षणतात्पर्य-लिङ्गाभावेन दुर्बलत्वादित्यर्थः । नन्वभेदस्यापि प्रमाणान्तरसिद्धत्वेन तद्वाक्यानामप्यनुवादकत्वेन दुर्बलत्वमेवेत्यत आह- **न चाभेद इति ॥ विपर्यय एवेति ॥** अभेदवाक्यविरोधेन भेदवाक्यानामेवाप्रामाण्यकथनमुचितमि-त्यर्थः ।

**भेदस्तावदिति ॥** भेदस्य ससम्बन्धिकपदार्थत्वेन सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानसाध्यत्वादिति भावः । अथवा भेदस्य अन्योन्याभावरूपत्वेन तस्य प्रतियोग्यधिकरणज्ञानसाध्यत्वादिति भावः । **आद्ये वक्ष्याम इति ॥** आगमेनेश्वरसिद्धावुच्यमानायां येनाऽगमेन 'यः सर्वज्ञः' इत्यादिनेश्वरसिद्धिस्तेन भिन्नत्वेनैव सिद्ध इति तद्विरोधेनाभेदागमस्याप्रामाण्यप्रसङ्ग इति 'कथं चानुवादकत्वम्' इत्यत्र वक्ष्याम इत्यर्थः । **द्वितीये त्विति ॥**

प्रमाणान्तरेणेश्वरसिद्धिरिति द्वितीयपक्षोत्तरत्वेन **इदम्** 'आगमं विना' इति मूलवाक्यम् **उपतिष्ठते** प्राप्नोतीत्यर्थः। तथा चाऽगमं विनेत्यस्य प्रमाणान्तरेणेत्यर्थो द्रष्टव्यः। **धर्मिप्रतियोगिप्रतीत्यभावादिति ॥** ईश्वरस्य कदाचिद्धर्मित्वात् कदाचित्प्रतियोगित्वादित्यर्थः। किमनेन दूषणमुक्तं भवतीत्यत आह- **तथा चेति (श्री.टि.) ॥ आद्ये वक्ष्याम इति ॥** प्रत्यक्षागमसाहाय्यवताऽनुमानेनेश्वरसिद्धौ तेन भिन्नत्वेनैव सिद्धिरिति तद्विरोध एवाभेदागमस्य स्यादित्यादिकं 'कथं चानुवादकत्वम्' इत्यत्रैव वक्ष्याम इत्यर्थः। ('न चानुमानात् तत्सिद्धिः' इति मूलवाक्यस्य प्रत्यक्षागमसाहाय्यरहितादनुमानादीश्वरसिद्धिर्न चेत्यर्थो द्रष्टव्यः।) ननु विपर्ययस्या-नुमातुं शक्यत्वे कर्तृकरणत्वयोरभावेन 'कर्तृकरणयोस्तृतीया' इत्यनेन तृतीयाया अयोगादाह- **इत्थम्भूतलक्षण इति ॥** कश्चन प्रकारं प्राप्त इत्थम्भूतः तल्लक्षणे तत्प्रकारज्ञापके तृतीया स्यादिति सूत्रार्थः। छात्रेणोपा-ध्यायमद्राक्षीदित्युदाहरणम्। प्रकृते चानुमातुं शक्यत्वरूपं प्रकारं प्राप्त ईश्वर इत्थम्भूतः। तत्र प्रकारस्यातिप्रसक्तौ सत्यां विपर्ययस्य तज्ज्ञापकत्वात्तत्र तृतीयेत्यर्थः। वाक्यार्थमाह- **प्रत्यक्षेति ॥ क नामातीवदुर्वचाविति ॥** सर्वत्रातीव सुवचावेवेत्यर्थः। नन्वेवं सत्यनुमानमात्रोच्छेदः। न च प्रत्यक्षादिसाहाय्यवत्यनुमाने नोपाधि-प्रतिपक्षाविति नानुमानमात्रोच्छेद इति वाच्यम्। तत्साहाय्यवत्त्वमात्रेणाप्युपाधिप्रतिपक्षयोः परिहारसम्भवादित्यत आह- **प्रत्यक्षादिसाहाय्ये त्विति ॥**

'अनुकूलेन तर्केण सनाथे सति साधने।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः॥'

इति वचनादिति भावः। अत्र तर्केणेति प्रमाणोपलक्षणम्।

**(पां.टि.) अविद्यावद्विषयक इति ॥** अविद्वदधिकारिक इत्यर्थः। नन्वेवमतत्त्वावेदकवाक्यविहितत्वात् कर्मफलसमृद्ध्यर्थतया कर्माश्रितत्वाच्च उद्गीथाद्युपासनानाम् 'समुद्रं मनसा ध्यायीत' इत्यादिवाक्यविहितसमुद्र-ध्यानादिवत्कर्मकाण्ड एवोक्तोपासनानामाम्नानं स्यान्न तत्त्वावेदकेषु वेदान्तेषु इत्याशङ्क्य चित्तवृत्तित्वेन रूपेण विद्यासाम्याद्युक्तं तासां वेदान्तेष्वाम्नानमित्याह- **तत्रेति ॥** नन्वेवं वेदान्ते 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथोपासनानां वाक्यानां सत्त्वात् समुद्रध्यानादेरपि मानसत्वेनोद्गीथाद्युपासनावद्विद्यासाम्याद्वेदान्तेष्वेव पाठप्रसङ्ग इत्यरुच्या हेत्वन्तरमाह- **बुद्धिशुद्ध्यर्थत्वाच्चेति ॥** बुद्धिशुद्धिद्वारा निर्विशेषज्ञानार्थत्वादित्यर्थः। ननु प्राणादेरिव सर्वस्य ब्रह्मप्रतीकतया तत्प्रतिपादनस्याप्यद्वैतज्ञानोपयोगसम्भवात्सर्वस्यापि वेदान्तेष्वेव पाठः स्यादित्यतो विशेषहेतुमाह- **क्रममुक्तीति ॥ एतेनेति ॥** क्रममुक्तिफलकत्वेनेत्यर्थः। ननु च यागादिनित्य-कर्मणामपि बुद्धिशुद्धिद्वारा निर्विशेषज्ञानार्थत्वान्मानससङ्कल्परूपतयोपासनावद्विद्यासाम्याच्चेहैव पाठप्रसङ्गः। एकवाक्यत्वसम्भवे कर्मब्रह्मकाण्डभेदेन द्वैराश्यकल्पनानुपपत्तिश्चेति पूर्वत्रारुच्या पक्षान्तरमाह- **यद्वेति ॥ ब्रह्मो-च्यत इति ॥** ब्रह्म लक्ष्यत इत्यर्थः। लक्षणाबीजशक्यसम्बन्धमुपदर्शयति- **तस्यैवेति ॥** मुख्यार्थानुप-पत्तिमप्युपदर्शयति- **ऐश्वर्येति ॥** प्रमाणमित्यस्य व्याख्यानं प्रधानवाक्यमिति। **द्वा सुपर्णेतीति ॥** न च 'द्वा सुपर्णा' इति मन्त्रोक्ते स्थित्यदने बुद्धिजीवगते एव 'तावेतौ सत्त्वक्षेत्रज्ञौ' इति पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' 'एतयो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इत्यादिश्रुतिस्मृतिषु **(पां.टि.)** सत्त्वक्षेत्रज्ञशब्दार्थत्वेन प्रसिद्धबुद्धिजीवविषयत्वेन व्याख्यातत्वात्। तथा च बुद्धिजीवभेदाभिधायकत्व-मेवास्य युक्तम्। न तु जीवेशभेदाभिधायकत्वम्। मन्त्रोक्तस्थित्यदनयोर्जीवेशगतत्वाभावात्। तत्कथं द्वा सुपर्णेत्यादिश्रुतिविरुद्धत्वं तत्त्वमसीत्यादिवाक्यानामिति वाच्यम्। ब्राह्मणे, सत्त्वशब्दस्य तु 'ऊनं न सत्त्वेष्वधिको बबाधे' इति प्रयोगात् 'सत्त्वमस्त्री तु जन्तुषु' इति नामानुशासनात् 'सत्त्वं जीव इति प्रोक्तः'इति स्मृतेश्च जीव-परत्वेन, क्षेत्रज्ञशब्दस्य च

'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम्।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंयुतम्॥'

इति मोक्षधर्मादिवचनानुरोधेन ब्रह्मपरत्वेन बुद्धिजीवपरत्वाभावेन स्थित्यदनयोर्बुद्धिजीवगतत्वालाभात्। अन्यथा द्वा सुपर्णेत्यस्मादुत्तरं 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' इत्यादिकमयुक्तं स्यात्। बुद्धौ पुरुषशब्दस्य मुह्यमानत्ववीतशोकत्वादेश्चायुक्तत्वादिति भावः। **प्रामाण्येति ॥** अनेन मूले प्रमाणेति भावप्रधानो निर्देश इत्युक्तं भवति। **भेदस्तावदिति ॥** ससम्बन्धिकपदार्थत्वादिति भावः। **आद्ये वक्ष्याम इति ॥** 'कथं चानुवादकत्वं प्रमाणेनासिद्धौ। सिद्धौ च कथमभेदवाक्यस्याबाधः' इत्यादिनेति शेषः। **आद्ये वक्ष्याम इति ॥** कथं चेत्यादिनैवेति शेषः। विपर्ययस्य कर्तृत्वकरणत्वहेतुत्वानामभावेन कर्तृकरणयोर्हेतौ वा तृतीयाया अनुप-पत्तेराह- **इत्थम्भूतलक्षणे तृतीयेति ॥**

**(व्या.टि.)** एवं प्राभाकरमतं निरस्याद्वैतिमतं निरसितुमनुवदति- **अत्रेत्यादिना ॥** मन्त्रब्राह्मणोपनिषद्रूपस्य त्रिविधस्य वेदभागस्य तत्त्वावेदकत्वातत्त्वावेदकत्वाभ्यां प्रामाण्यद्वैविध्यमभिप्रेत्य विषयविभागमाह- **मन्त्र-ब्राह्मणलक्षण इत्यादिना ॥** अत्र मन्त्रप्रसिद्धिमत्त्वं मन्त्रसामान्यलक्षणम् । 'शेषं ब्राह्मणम्' इत्युक्तदिशा मन्त्रभिन्नवेदत्वं ब्राह्मणत्वम् । उपनिषदां ब्राह्मणपरिव्राजकन्यायेन तत्त्वावेदकत्वविशेषविवक्षया पृथग्ग्रह-णम् । मन्त्रोपनिषद्भिन्नमेव वा ब्राह्मणम् । अधिकं तु गुरुप्रभायां विचारितम् । तावदिति क्रमार्थम् । विषयं निर्दिशति- **कर्मपर इति ॥** तत्र हेतुः । **विधिनिषेधरूपत्वादिति ॥** अधिकारिणमनुकरोति- **अविद्यावद्विषय इति ॥** अविद्वद्विषय इत्यर्थः । 'अज्ञानां कर्मसङ्गिनाम्' इत्युक्तेः । अतत्त्वावेदकत्वे हेतुं वाऽऽह- **अविद्यावद्विषय इति ॥** अविद्याकार्यविषय इत्यर्थः । शिष्टं वेदभागं निर्दिशति- **वेदान्तानां त्विति ॥** तत्त्वावेदकत्वेऽपीति तदभिमतप्रामाण्यनिर्देशः । तद्विषयमाह- **जीवेश्वरेति ॥** जीवब्रह्माभेद एवेत्यर्थः । ननूद्गीथाद्युपासनानां कर्मसमृद्ध्यर्थानां जपादिविधिवत्कर्मपरवाक्यैकवाक्यताप्रतीतेः कथमद्वैतपरतेत्याशङ्क्य तदेकवाक्यतां प्रकारान्त-रेणोपपादयति- **तत्रेति ॥** चित्तवृत्तिसाम्येनेति प्रकारान्तप्रदर्शनम् । **साम्येन** ऐकाग्र्येण अन्तःकरणस्य पराग्वृत्ति-निरोधद्वारेणेत्यर्थः । चित्तवृत्तित्वेति पाठे ब्रह्मविद्यया मानसत्वेन साम्येनेत्यर्थः । **बुद्धीति ॥** अन्तःकरणशुद्धिद्वारा निर्विशेषज्ञानार्थत्वादित्यर्थः । पूर्वप्रकारमन्यत्रापि समुच्चिनोति । **प्राणादीति ॥** एवमिति शेषः । सुधानुरोधात् वाक्यान्तरसाधारणप्रकारद्वयमुक्त्वा असाधारणप्रकारद्वयं दर्शयति- **प्राणादीनामिति ॥ अद्वैतज्ञानेति ॥ (व्या.टि.)** प्रतीकस्यैव ब्रह्मत्वेन प्रतिपत्तव्यत्वादित्यर्थः । **क्रममुक्तीति ॥** सगुणनिर्गुणमुक्त्योः क्रमिकत्वा-दित्यर्थः । यथोक्तं परेण

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥' इति ।

पूर्वोक्तमन्यत्राप्यतिदिशति- **एतेनेति ॥** एवं पृथक्पृथगद्वैतपरैकवाक्यतामभिधाय सर्वसाधारणैकप्रकारेणापि तां दर्शयति- **यद्वेति ॥ भेदप्रपञ्चेति ॥** भिद्यत इति भेदः । 'अकर्तरि च कारके सञ्ज्ञायाम्' इति घञ् । भिन्नप्रपञ्चेत्यर्थः । सिद्धान्त्यभिमततात्पर्यमाक्षिपति- **कथमिति ॥** नन्वस्तूभयत्र तात्पर्यम् । दीक्षणीयवाङ्-नियमन्यायेनेत्यत आह- **सर्वोत्तमत्वादेरिति ॥** उभयतात्पर्यसम्भवेऽपि न विरोध्युभयतात्पर्यम् । वस्तुनो द्वैरूप्यापत्तेरिति भावः । नन्वन्यथानुवादोऽयम् । तन्मते ईश्वरस्यापि विशिष्टत्वेन तेन तदभेदानभ्युपगमादित्यतो गौणीयं वृत्तिरित्याह- **अत्रेति ॥** लक्षणाबीजमाह- **तस्यैवेति ॥ मायाशबलस्येति ॥** अज्ञानचित्रितस्ये-त्यर्थः । **परैरिति ॥** यथोक्तं सङ्क्षेपशारीरके - 'अज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूरिभावः' इति । मुख्यार्थेऽनुपपत्तिं दर्शयति- **ऐश्वर्येति ॥** मूलाशयं विकासयति- **सति हीति ॥** अयं भावः । 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति जैमिनिना अर्थैक्यनिबन्धनमेकवाक्यत्वमित्युक्तम् । प्रधानवाक्यस्यैवाभावे केनेतरेषामर्थैक्यं स्यादिति भावः । द्वा सुपर्णेत्यादीत्यादिपदेन 'भिन्नोऽचिन्त्यः' इत्यादिपरिग्रहः । अत्र द्वा सुपर्णेतिवाक्यस्य 'तावेतौ सत्त्वक्षेत्रज्ञौ' इति पैङ्गिरहस्यब्राह्मणे सत्त्वक्षेत्रज्ञपरत्वोक्तावपि 'सत्त्वं जीव इति प्रोक्तः' 'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् । क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंयुतम्' इत्यादिप्रमाणैः सत्त्वक्षेत्रज्ञशब्दयोर्जीवब्रह्मपरतया चन्द्रिकाश्रुत्यर्थसारादौ निपुणतरमुपपादितत्वान्न बुद्धिजीवपरत्वं भ्रमित-व्यम् । **विरुद्धत्वेनेति ॥** बाधितत्वेन, प्रतिरुद्धत्वेनेत्यर्थः । **प्रामाण्येति ॥** प्रमापकत्वेत्यर्थः । प्रतिबन्दीं मोचयति- **न चाभेद इति ॥ इतिशब्द इति ॥** 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यभिधानात् । **इति वा वक्तव्य-मिति ॥** इति विकल्पे अन्यतरकल्पाश्रयेणोत्तरं वक्तव्यमिति शेषपूरणेन योजनीयम् । **वक्ष्याम इति ॥** 'सिद्धौ च कथमभेदवाक्यस्याबाधः' इत्यत्रेति भावः । **तदधीनेति ॥** 'अध्युत्तरपदात्' इति खप्रत्ययः । तस्मिन्नधि इति विगृह्य 'सप्तमी शौण्डैः' इति सप्तमीतत्पुरुषो बोध्यः । शौण्डादिष्वधिशब्दपाठात् । **एवार्थ इति ॥** एवस्यार्थ इति विगृह्य षष्ठीतत्पुरुषो बोध्यः । न च 'चतुर्थी तदर्थार्थ' इति चतुर्थीसमासं विधाय 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति वार्तिकोक्तेः कथं षष्ठीसमास इति वाच्यम् । तत्रोद्देश्यपर्यायस्यार्थशब्दस्य ग्रहणेऽपि अभिधेयपर्यायस्यानभिधानात् । **स्वभाव इति ॥** 'तदव्यक्तमाह हि' इत्यव्यक्तस्वभावोक्तेरित्यर्थः । **वक्ष्याम इति ॥** प्रत्यक्षानुमानसिद्धत्वे चेति मूल इत्यर्थः । **इत्थम्भूतलक्षणे तृतीयेति ॥** अनुमानस्य प्रत्यक्षागमसहाय-राहित्यं प्रतिरुद्धत्वं वा कश्चित्प्रकारः । तज्ज्ञापके विपरीतानुमाने तृतीयेत्यर्थः । यद्वा इत्थम्भूतो विशिष्टस्तल्लक्षणे विशेषणे तृतीया, वैशिष्ट्यं तृतीयार्थः । तथा च **विपर्ययेण** विरोधेन विशिष्टस्य साध्यस्यानुमातुं शक्यत्वाद्, विरुद्धसाध्यकत्वरूपविपर्ययविशिष्टस्यानुमानस्य वा कर्तुं शक्यत्वादित्यर्थः । ससहायासहायाभ्यां सिद्ध्यसिद्धी **(व्या.टि.)** दर्शयति- **प्रत्यक्षागमेति ॥ तद्बाधेनेति ॥** प्रत्यक्षादिबाधेनेत्यर्थः । **पक्ष एवेति ॥** प्रत्यक्षादिना पक्ष एव साध्यनिश्चयादित्यर्थः । दुष्परिहरमिति खलन्तम् ।

**मूलम् - विमतं सकर्तृकं कार्यत्वाद् घटवदित्युक्ते विमतं विकर्तृकमस्मत्सम्मत-**

**कर्तृरहितत्वादात्मवदित्यनुमानविरोधात् ।**

**टीका -** इतः परं 'प्रत्यक्षानुमानसिद्धत्वे च' इत्यतः पूर्वं वाक्यद्वयं मूलकोशेष्वदर्शनात्प्रक्षिप्तमि-त्याहुः । तथाऽपि गङ्गाजलानुप्रविष्टक्षुद्रनदीजलस्येव तस्याप्युपादेयत्वाद्व्याख्यानं क्रियते ।

केवलानुमानस्य प्रतिपक्षानुमानविरोधादित्युक्तं प्रपञ्चयति- **विमतमिति ।।** सर्वं सकर्तृकमित्युक्ते गगनादौ बाधो घटादौ सिद्धसाधनं च स्यात् । तन्निवृत्त्यर्थं विमतमित्युक्तम् । तेन विकर्तृकत्वेन सकर्तृकत्वेन वा यत्र वादिप्रतिवादिनोः सम्मतिर्गगनादौ घटादौ च ततोऽन्यदङ्कुरादीत्यर्थः । **सकर्तृकम्** उपादानादिविषयकबुद्धिमत्पूर्वकम् । तथाच जीवानामेवादृष्टद्वाराऽङ्कुरादिकर्तृत्वोपपत्तेः सिद्ध-साधनत्वमर्थान्तरता वेति निरस्तम् । **कार्यत्वाद्** अभूत्वाभावित्वात् । 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वाद्घटवदिति युज्यते । **इत्युक्ते** अनुमिते सति । ईश्वर इति शेषः । नहीश्वरादृतेऽङ्कुरादीनां कर्तोपपद्यते । एवमेव विमतं विकर्तृकमित्येतदपि व्याख्येयम् ।

ननु 'अस्मत्सम्मतकर्तृरहितत्वात्' इत्यत्रास्मत्सम्मतत्वं कर्तृरहितत्वस्य वा विशेषणं कर्तुर्वा । नाऽद्यः। व्यर्थत्वात् । तत्त्यागे साध्याविशिष्टत्वात् । तत्परिहारार्थमेव विशेषणमिति चेन्न । सर्वत्र साध्याविशिष्टत्वे तत्सम्भवात् । द्वितीये किं कुलालादिः कर्तृविशेषोऽनेनोच्यते शरीरादिमान् वा । आद्येऽनैकान्त्यम् । कुलालादिकर्तृरहितस्यापि पटादेः कुविन्दादिकर्तृमत्त्वात् । द्वितीयेऽपि किं शरीरादिरहितः कर्ताऽङ्गीक्रियते न वा । आद्ये तत्कृते व्यभिचारः । द्वितीये पुनर्वैयर्थ्यं साध्याविशिष्टता च । नच सामान्यविशेषभावेन भेदः । शरीरादिरहितस्य कर्तुरनङ्गीकारे सामान्यस्यानुपपत्तेः । सामान्याभावस्य विशेषाभावेन साधनायोगाच्च । उच्यते- कर्तृमत्त्वेनास्माकमसम्मतत्वादि-त्ययमर्थोऽत्राभिमतः । नचैवं वैयर्थ्यादिदोषोऽस्ति । धूमानुमानादावप्येवं सत्प्रतिपक्षताप्रसङ्ग इति चेन्न । अनुकूलप्रमाणविरोधेन बाधितत्वात् ।

अथवा, कर्तृरहितत्वादित्यनेनाजन्यत्वादित्युच्यते । अस्मत्सम्मतेत्यनेन च शरीर्यादिकम् । शरीरस्वप्रयोजनाज्ञानसंशयविपर्ययानित्यज्ञानानित्येच्छाऽनित्यप्रयत्नस्मृतिसंस्कारद्वेषसुख-दुःखधर्माधर्मवदजन्यत्वाद् इत्यनेकप्रतिपक्षसङ्ग्रहायास्मत्सम्मतेत्युक्तम् । एवमपि विशेषण-वैयर्थ्यमिति चेन्न । पक्षधर्मतासिद्ध्यर्थत्वात् । परैरपि, चक्षुः तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैव ग्राहकत्वात्, प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वादित्यादौ पक्षधर्मतासिद्ध्यर्थत्वेन विशेषणस्य प्रयुक्तत्वात् । नन्वेवं व्याप्तावनपेक्षितविशेषणप्रक्षेपेण पक्षधर्मतां प्रसाध्य साध्यसाधने प्रयोजनाधीनं प्रमाणं न प्रमाणाधीनं प्रयोजनमित्यापन्नम् । तथाचातिप्रसङ्ग इति चेत्, सत्यम् । वक्ष्यामोऽत्र समाधानम् ।

अनुमानविरोधादित्यस्य न चानुमानात्तत्सिद्धिरित्यनेन सम्बन्धः ।

**(र.टि.) सिद्धसाधनत्वमर्थान्तरता वेति ।।** अदृष्टद्वारा जीवानां कर्तृत्वं यदि सिद्धं तदा सकर्तृकत्वसाध्यसिद्ध्या सिद्धसाधनम् । यदि तदप्यसिद्धं तदा प्रतिबन्धकसिद्धेरभावेन कार्यत्वलिङ्गकानुमित्युत्पत्तावपि तस्या अदृष्टद्वारा जीवकर्तृकत्वविषयत्वसम्भवेनार्थान्तरता वेत्यर्थः । साध्ये आदिपदप्रयोगेण, उपादानपदस्य प्रवृत्तिविषयपरत्वेन वा साध्यस्य ध्वंससाधारण्याद् अस्य पक्षत्वेऽपि न बाध इति भावः । **अभूत्वा भावित्वादिति ।।** तथा च कर्तुं योग्यं कार्यमिति कृतिसाध्यत्वं यदि कार्यत्वं तदा सन्दिग्धासिद्धिरिति शङ्कानवकाश इति भावः । 'आगमं विनेश्वरस्यैव' इति प्रकरणबलादीश्वर इति शेषं पूरयित्वा तदुपपादयति- **न हीति ।। व्याख्येयमिति ।।** सर्वं विकर्तृकमित्युक्तौ गगनादौ सिद्धसाधनत्वं घटादौ बाधश्च । तन्निवृत्त्यर्थं विमतमित्युक्तमिति । विकर्तृकमितीदं नोपादानादिविषयकबुद्धिमत्पूर्वकम् । तथा च जीवानामेवादृष्टादिद्वारा अङ्कुरादिकर्तृत्वसम्भवाद्बाध इति निरस्त-मिति व्याख्येयमित्यर्थः । **तत्सम्भवादिति ।।** अस्मत्सम्मतत्वविशेषणं प्रक्षिप्य सर्वत्र

साध्याविशेषस्य परिहर्तुं शक्यत्वेन तद्दोषत्वं न स्यादिति भावः। रूपादिषु पञ्चसु मध्य इत्यस्याप्रसिद्धिवारकत्वेन व्याप्तिग्रहौपयिकत्वं परैरङ्गीकृतमित्यतोऽसङ्कीर्णोदाहरणमाह- **प्रामाण्यमिति ॥**

**(रा.टि.)** सकर्तृकमित्यनूद्यार्थमाह- **सकर्तृकमुपादानेत्यादिना ॥** एवमर्थोक्तेः कृत्यमाह- **तथाचेति ॥** न्यायमते हि सर्वं यथायोगं तत्तज्जीवोपभोग्यमित्यङ्गीकारेण यद्वस्तु यज्जीवभोग्यं तत्तददृष्टजन्यमिति 'जीवाना-मेवादृष्टद्वारा' इत्युक्तम्। **अर्थान्तरतेति ॥** अभिमतेश्वररूपार्थासिद्धिरूपेत्यर्थः। तदैक्षतेत्यादावीश्वरज्ञानस्येव भूत्वा भावित्वे विवक्षितार्थासिद्धेराह- **अभूत्वेति ॥** ननु, यथा घट इत्यर्थे घटवदित्युक्तिरयुक्ता 'तत्र तस्येव' इति सूत्रे सप्तम्यन्तात् षष्ठ्यन्ताच्चेवार्थे वतिरित्युक्त्या प्रथमासमर्थादिवार्थे वतिप्रत्ययानुक्तेरित्यत आह- **तत्र तस्येवेति ॥** लक्षणशब्दः सूत्रवचनः। **अभियुक्तैः** वैयाकरणत्वेनाभिमतैः। कथमनेनेश्वरानुमितिरित्यतः परिशेषेणेति भावेनाऽह-**नहीति ॥ एवमेवेति ॥** पूर्ववदेव विमतपदकृत्यम् उपादानविषयकबुद्धिमत्पूर्वकं नेति **(रा.टि.)** साध्यस्यार्थ इत्येवमित्यर्थः। तथाचादृष्टद्वारा जीवकर्तृकत्वस्य सत्त्वान्न बाधशङ्केति भावः। **व्यर्थत्वा-दिति ॥** व्यावर्त्याभावादिति भावः। **तत्सम्भवादिति ॥** शब्दोऽनित्यो ध्वंसप्रतियोगित्वादित्यादावप्यस्मदिति विशेषणसम्भवात् क्वापि साध्याविशिष्टत्वं दोषो न स्यादिति भावः। **पुनर्वैयर्थ्यमिति ॥** शरीरादिमत्कर्तृरहितत्वा-दित्यत्र कर्तृरहितत्वादित्यस्य। शरीरादिहीनकर्तृके कार्येऽव्यभिचाराय हि शरीरादिमदिति कर्तृविशेषणं देयम्। तादृशकर्तुरेवाभावे तत्कर्तृककार्यस्यैवाभावेन कुत्राव्यभिचाराय तद्विशेषणमर्थवत्स्यादिति भावः। **सामान्यविशे-षेति ॥** साध्यहेत्वोरिति योज्यम्। शरीराशरीरकर्तृसाधारणकर्तृसामान्याभावः साध्यः। हेतुस्तु शरीरिकर्तृराहित्यमात्रमतो न दोष इति भावः। **सामान्यस्यानुपपत्तेरिति ॥** विकर्तृकमित्यस्य शरीराशरीरादि-मत्कर्तृरहितमित्यस्येत्यर्थः। हेतुरप्ययमेवेति प्राप्तत्वादिति भावः। अभ्युपेत्यापि भेदमाह- **सामान्याभावस्ये-ति ॥** पीतघटवति देशे नात्र घटो नीलघटाभावादित्यादौ व्यभिचारादिति भावः। **एवं सत्प्रतिपक्षतेति ॥** पर्वतोऽग्निमान्न भवति वह्निमत्त्वेनास्मदसम्मतत्वादित्यपि वक्तुं शक्यत्वादिति भावः। **अनुकूलेति ॥** धूमवत्त्व-हेतोर्विपक्षे कार्यकारणभावविरोधादिरूपानुकूलतर्कादिरूपप्रमाणविरोधे प्रतिपक्षहेतोर्बाधितविषयत्वादित्यर्थः।

प्रतिपक्षप्रसक्तिरेव सदनुमाने यथा न भवति तथा योजनान्तरमाह- **अथवेति ॥ शरीरेति ॥** द्वन्द्वान्म-तुप्। स च शरीरवदजन्यत्वात्, स्वप्रयोजनवदजन्यत्वात्, संशयवदजन्यत्वादित्यादिरूपेण प्रत्येकमन्वेतीति भावेनाऽह- **अनेकप्रतिपक्षेति ॥** शरीरवदजन्यत्वादित्यादेः शरीरवज्जन्यत्वाभावादित्यर्थः। नन्वेकामसिद्धिं परिहरतो द्वितीयासिद्धिरायातीति परोक्तां स्वरूपासिद्धिं परिहरतो व्याप्यत्वासिद्धिरायाति। अजन्यत्वमात्रस्य गगनादौ व्याप्तिमत्त्वेन विशेषणयुक्ते विशिष्टे व्याप्त्यभावादित्यतः परैरपि क्वचित्तथाङ्गीकारादित्याह- **परैर-पीति ॥** रूपत्वस्यापि ग्राहकत्वेन रूपस्यैव ग्राहकत्वादित्येतदसिद्धमित्यतस्तद्वारणाय रूपादिष्वित्यादिविशेषण-मुक्तम्। तथाऽभ्यासदशापन्नज्ञाने, सांशयिकत्वात्- संशयविषयत्वादिति हेतोरसिद्धिनिरासाय अनभ्यासेत्यादि-विशेषणमुक्तं तद्वदित्यर्थः। नन्वाद्येऽप्रसिद्धिवारकं विशेषणं न पक्षधर्मतासिद्ध्यर्थं रूपमात्रग्राहकत्वस्य क्वाप्यप्रसिद्धेः। द्वितीयेऽनभ्यासेति विशेषणं पक्ष एव क्रियते नतु हेताविति चेन्न। अनुमितिकारणीभूत-परामर्शविघटकत्वस्यासिद्धिव्याप्यभावयोस्तुल्यत्वेन व्यभिचारवारकवत्पक्षधर्मताघटकस्याप्यावश्यकत्वाद् विशेष्यस्येव विशिष्टस्यापि व्याप्तिमत्त्वात्। अजन्यत्ववच्छरीराजन्यत्वस्यापि विशिष्टस्य हेत्वन्तरत्वेन व्याप्तेरभ्यु-पेयत्वाच्चेति तात्पर्यात्। अधिकं तर्कताण्डवे। **अतिप्रसङ्ग इति ॥** प्रयोजनाभावात्तृणाद्युदासीनज्ञानानुदयप्रसङ्ग इत्यर्थः। **वक्ष्यामोऽत्र समाधानमिति ॥** व्याप्त्यर्थमेव विशेषणोपादानमिति समाधानं 'विशिष्टस्य व्याप्तिरस्त्येव' इत्यादिना वा 'ननु किं व्यभिचारः' इत्यादिना वाऽनुपदमेवेति भावः।

**(श्री.टि.) तेनेति ॥** विमतग्रहणेनेत्यर्थः। ननु सकर्तृकत्वं नाम यदि कर्त्रा सह वर्तमानत्वं तदा जीवानां विभुत्वेनाङ्कुरादेस्तैः सह वर्तमानत्वात्सिद्धसाधनतापत्तिः। यदि च कर्तृजन्यत्वं तथाऽपि सिद्धसाधनतैव। जीवानामप्यदृष्टद्वाराऽङ्कुरादिकर्तृत्वोपपत्तेः। ईश्वरासिद्ध्याऽर्थान्तरता च स्यादित्यत आह- **सकर्तृकमिति ॥ (श्री.टि.)** बुद्धिमत्पूर्वकमित्युपलक्षणम्। चिकीर्षाकृतिमत्पूर्वकत्वमपि ज्ञातव्यम्। ननु कार्यत्वं नाम कृतिविषयत्वं वा तज्जन्यत्वं वा। नाऽद्यः। परमाणौ परमाण्वन्तरसंयोगार्थम् ईश्वरीयकृतिविषयत्वसद्भावेन सकर्तृकत्वाभावाद् व्यभिचारस्स्यात्। न द्वितीयः। पक्षे जीवकृतिजन्यत्वासम्भवेनेश्वरीयकृतिजन्यत्वमेव वाच्यम्। तस्य चेदानीमप्य-सिद्ध्या हेतोस्सन्दिग्धासिद्ध्यापत्तेरत आह- **अभूत्वा भावित्वादिति ॥** प्रागभावप्रतियोगित्वादित्यर्थः। अन्योन्याभावप्रतियोगिनि गगनादौ व्यभिचारपरिहाराय प्रागभावेत्युक्तम्। ध्वंसेऽनैकान्त्यपरिहाराय समवेतत्वे सतीति भावत्वे सतीति वा विशेषणं देयम्। गोत्वादौ व्यभिचारपरिहाराय विशेष्यभाग इति ज्ञातव्यम्। ननु घटवदिति न युक्तम्। 'तत्र तस्येव'

इति सूत्रेण सप्तमीसमर्थात् षष्ठीसमर्थाद्वा इवार्थे वतेर्विधानाद् घटे इव, घटस्येवेति वा वक्तव्यम्। तथा च घटे इव, घटस्येव विमतं सकर्तृकमित्यसङ्गतम्। दृष्टान्तदार्ष्टान्तिकयोः समानविभक्तिकत्वे हि सङ्गतिः। न च वाच्यं घटवदिति प्रथमासमर्थादेव वतिः। तथा च समानविभक्तिकत्वात् सङ्गतिरिति। प्रथमान्तादिवार्थे वतेर्विधानाभावादित्यत आह- **तत्र तस्येवेति ॥** लक्षणस्य सूत्रस्य, अभियुक्तैः प्रामाणिकैः। **व्याख्यातत्वादिति ॥** 'पूर्ववत्सनः' इति सूत्रे पूर्वस्मादिव पूर्ववदिति पञ्चम्यन्तादपि वतेर्विधानेन 'तत्र तस्येव' इति सूत्रोक्तस्य प्रायिकत्वावगमात्प्रथमान्तादपि वतेर्युक्तत्वाद्घटवदिति युक्तमित्यर्थः। **अनुमिते सतीति ॥** परार्थानुमानस्य च वचनरूपत्वादिति भावः। 'यः परार्थानुमानस्य प्रयोगो वाक्यलक्षणः' इत्युक्तेरिति ज्ञातव्यम्। विशेष्यानुक्तेराह- **ईश्वर इति ॥** तदुपपादयति- **न हीति ॥ व्याख्येयमिति ॥** सर्वं विकर्तृकमित्युक्ते गगनादौ सिद्धसाधनत्वं घटादौ बाधश्च स्यात्। तन्निवृत्त्यर्थं विमतमित्युक्तम्। तेन विकर्तृकत्वेन सकर्तृकत्वेन च यत्र वादिप्रतिवादिनोरस्मम्मतिर्गगनादौ घटादौ च ततोऽन्यद् अङ्कुरादीत्युक्तं भवति। **विकर्तृकम्** उपादानादि-विषयबुद्धिमत्पूर्वकं न भवति। तथा च जीवानामेवादृष्टद्वाराऽङ्कुरादिकर्तृत्वसम्भवाद्बाध इति निरस्तमिति व्याख्येय-मित्यर्थः।

**कर्तृरहितत्वस्येति ॥** अस्मत्सम्मतं यत्कर्तृरहितत्वं तस्मादित्यर्थः। **कर्तुर्वेति ॥** अस्मत्सम्मतो यः कर्ता तद्रहितत्वादित्यर्थः। **तत्परिहारार्थमेवेति ॥** साध्याविशिष्टतापरिहारार्थमेवास्मत्सम्मतेति विशेषणमि-त्यर्थः। **सर्वत्रेति ॥** अनुपयुक्तैतद्विशेषणप्रक्षेपेण साध्याविशिष्टत्वपरिहारे पर्वतोऽग्निमान्न भवति अग्निमत्त्व-शून्यत्वादित्यादावपि साध्याविशिष्टत्वे प्राप्ते सति अस्मत्सम्मताग्निमत्त्वशून्यत्वादिति विशेषणं प्रक्षिप्य साध्या-विशिष्टत्वपरिहारसम्भवात्तस्य दोषत्वं न स्यादित्यर्थः। **अनेनेति ॥** अस्मत्सम्मतपदेनेत्यर्थः। शरीरादिमान् वेत्यत्राऽदिपदेन वक्ष्यमाणरीत्या स्वप्रयोजनाज्ञानसंशयविपर्ययानित्यज्ञानादिग्रहणम्। साध्याभावोपपादानायाऽह- **कुविन्दादीति ॥ वैयर्थ्यमेवेति ॥** शरीरादिरहितः कर्ता चेत्स्यात्तर्ह्येव तद्व्यावृत्त्यर्थं शरीरादिमत्त्वार्थ-कास्मत्सम्मतविशेषणं देयम्। शरीरादिरहितस्य कर्तुरेवानङ्गीकारे शरीरादिमत्त्वार्थकास्मत्सम्मतविशेषण-व्यावर्त्याभावेन तस्य वैयर्थ्यमेव स्यादित्यर्थः। दूषणान्तरं चाऽह- **साध्याविशिष्टता चेति ॥** शरीरादिरहितस्य कर्तुरनङ्गीकारे विकर्तृकत्वशरीरादिमत्कर्तृरहितत्वयोरेकत्वापत्त्या शरीरादिमत्कर्तृरहितत्वमेव विकर्तृकत्वापरपर्यायं **(श्री.टि.)** जातमिति साध्याविशिष्टत्वादित्यर्थः। ननु विकर्तृकत्वं शरीरादिमत्कर्तृरहितत्वमिति शब्दत एव सामान्यविशेषभावेन भेदप्रतीतेर्विशेषाभावेन सामान्याभावसाधनान्न साध्यावैशिष्ट्यमित्याशङ्क्य परिहरति- **न चेति ॥ सामान्यस्यापीति ॥** यदि शरीरादिमान् कर्ता तद्रहितश्च कर्ता कश्चित्स्यात्तर्ह्येव कर्तृत्वं सामान्यं, विकर्तृकत्वं च तदभावः स्यात् न चैवमित्यर्थः। सामान्यविशेषभावमभ्युपेत्यापि दूषणमाह- **सामान्याभाव-स्येति ॥ विशेषाभावेनेति ॥** यत्किञ्चिद्विशेषाभावेनेत्यर्थः। न हि नीलघटाभावेन घटसामान्याभावो वक्तुं शक्यत इति भावः। **न चैवमिति ॥** अस्मत्सम्मतेत्यस्य कर्तृविशेषणत्व एव वैयर्थ्यादिदोषशङ्का स्यान्न चैवमि-त्यर्थः। अखण्डाभावे न वैयर्थ्यमिति भाव इत्याहुः। **एवं सत्प्रतिपक्षतेति ॥** पर्वतोऽग्निमान्न भवति अग्निमत्त्वेन अस्माकमसम्मतत्वादित्येवं सत्प्रतिपक्षताप्रसङ्ग इत्यर्थः। **अनुकूलप्रमाणं** तर्कादिकम्। बाधितत्वात् सत्प्रतिपक्षा-नुमानस्येति शेषः। न च प्रकृतेऽप्यनुकूलतर्कविरोधेन सत्प्रतिपक्षनिरास इति वाच्यम्। 'तदभावात्' इत्यादिना ग्रन्थेन तस्याग्रे दूष्यमाणत्वादिति भावः।

आदिपदग्राह्यं स्वयमेव दर्शयति- **स्वप्रयोजनेत्यादिना ॥ एवमपीति ॥** अस्मत्सम्मतकर्तृरहितत्वादित्यस्य शरीर्यजन्यत्वादिति व्याख्यानेऽपि शरीरीति विशेषणं व्यर्थमित्यर्थः। **पक्षधर्मतेति ॥** अजन्यत्वमात्रस्य स्वरूपासिद्धत्वादिति भावः। ननु हेतौ व्यभिचारवारकमेव विशेषणं देयं व्याप्तिग्रहोपयुक्तत्वात् न त्वसिद्धिवारकं विशेषणं व्यर्थत्वादित्यत आह- **परैरपीति ॥ नन्वत्र** रूपस्यैव ग्राहकत्वादित्यस्याप्रसिद्धत्वेन व्याप्तिग्रहायोगा-दप्रसिद्धिपरिहाराय लोके प्रसिद्धिं सम्पाद्य व्याप्तिमुपपादयितुमेव रूपादिषु पञ्चसु मध्य इत्युक्तमित्येवं व्याप्ति-ग्रहोपयुक्तमेव तद्विशेषणं देयं न तु पक्षधर्मतासिद्ध्यर्थमित्यत उदाहरणान्तरमाह- **प्रामाण्यमिति ॥** अभ्यास-दशापन्नज्ञानप्रामाण्ये संशयविषयत्वाभावेनासिद्धिपरिहारायानभ्यासदशायामिति विशेषणमिति भावः। नन्वत्रा-प्यसिद्धिपरिहारेण पक्षधर्मतासिद्ध्यर्थमनभ्यासदशायामिति हेतौ विशेषणं नाभिप्रेतम्। किं नाम पक्ष एवेदं विशेषणं देयम्। तथा चानभ्यासदशायां प्रामाण्यम्- अनभ्यासदशापन्नज्ञानप्रामाण्यमिति यावत्, परतो ज्ञायते सांशयिकत्वादिति। अतो नेदमप्युदाहरणं युक्तमित्याशयेनेत्यादावित्युक्तमिति ज्ञातव्यम्। एवमित्यस्यैव विवरणम्- **व्याप्तावनपेक्षितेति ॥** असिद्धिपरिहारेण पक्षधर्मतासिद्ध्यर्थमपेक्षितत्वेऽपि व्यभिचारावारकतया व्याप्तावनपेक्षितमिदं विशेषणमित्यर्थः। **प्रयोजनेति ॥** पक्षधर्मतासिद्धिरूपप्रयोजनेत्यर्थः। **अतिप्रसङ्ग इति ॥** देवदत्तः पिपासित इत्येतावता मरावपि वारिसाधकं प्रमाणं प्रवर्तेतेति भावः। **वक्ष्यामोऽत्र समाधान-मिति ॥** पक्षधर्मतासिद्धिरूपप्रयोजनार्थं व्याप्तावनपेक्षितमपि विशेषणं न दीयते येनोक्तातिप्रसङ्गः

स्यात्, किन्त्वखण्डस्योपाधेस्साध्यव्यापकत्वेन तदभावस्य प्रतिपक्षानुमाने हेतुत्वेनाखण्डाभावरूपतयाऽखण्डाभावे च न वैयर्थ्यं शङ्क्यं तद्बीजाभावादित्येवम् 'उपाध्यनुन्नीत एवानुमाने' इत्यादिना ग्रन्थेन वक्ष्याम इत्यर्थः। अनुमानविरोधादिति पञ्चम्या अन्वयो न प्रतीयतेऽतस्तं दर्शयति- **अनुमानविरोधादित्यस्येति ॥**

**(पां.टि.) सिद्धसाधनमिति ॥** नन्वत्र घटादौ साध्यसिद्धावपि न सिद्धसाधनम्। पक्षतावच्छेदकावच्छेदेन **(पां.टि.)** साध्यसिद्धेरिहोद्देश्यत्वेन तदवच्छिन्ने साध्यासिद्ध्या तदनवकाशात्। न च तत्सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात्तत्सिद्ध्या सिद्धसाधनमिति वाच्यम्। तथा सति तत्सामानाधिकरण्येन साध्यसिद्धिरूपो-द्देश्यसिद्धेरविकलत्वेनोद्देश्यसिद्ध्यविरोधित्वेन गगनाद्यंशे प्रमाणबाधस्यादोषत्वापातात्। ततश्च यद्यत्र पक्षता-वच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तदा घटादौ सिद्धसाधनत्वप्रसक्तावपि न गगनादौ बाधः। यदि च तदवच्छेदेन साध्यसिद्धिरुद्देश्या तदा गगनादौ बाधप्रसक्तावपि न सिद्धसाधनत्वमिति कथं दोषद्वयसमा-वेशोऽत्रेति चेत्। उच्यते- किमत्र पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्यतया विवक्ष्यते किं वा तत्सामानाधि-करण्येन। आद्ये गगनादौ प्रमाणबाधः। द्वितीये घटादौ सिद्धसाधनमिति पक्षभेदेन दूषणद्वयसमावेशोऽत्राभि-मतः। यद्यपि च समानप्रकारकविरहज्ञानस्यैव प्रतिबन्धकतया गगनत्वाद्यवच्छेदेन साध्याभावनिश्चयेऽपि सर्वत्वा-वच्छेदेन तदसिद्ध्या नांशबाधस्य दूषणत्वम्। तथाऽपि पक्षतावच्छेदकावच्छेदेन जायमानायाः अनुमितेस्तदंशे प्रमात्वप्रतिबन्धकतया तस्य दोषत्वमित्यत्र तात्पर्याददोष इत्यवधेयम्। ननु कर्तृजन्यत्वमेव सकर्तृकत्वमस्तु। किमुक्तविवक्षयेत्यत आह- **तथा चेति ॥** जीवानामदृष्टद्वाराऽङ्कुरादिकर्तृत्वस्य सिद्धत्वविवक्षायां सिद्धसाध-नम्। तदौदासीन्यविवक्षायां तु सकर्तृकत्वरूपसाध्यस्य सामान्यरूपतयेश्वरकर्तृकत्वरूपेणेव जीवकर्तृकत्वरूपेणापि पर्यवसानसम्भवेनेश्वरासिद्ध्याऽर्थान्तरत्वमिति भावः। न चोपादानादिविषयकबुद्धिमत्पूर्वकत्वाश्रयणेऽपि सिद्धसाधनमेव। अङ्कुरादेरपि स्वजनकादृष्टजनकयत्किञ्चिदुपादानभूतहविरादिगोचरबुद्धिमदस्मदादिजन्यत्वा-दिति वाच्यम्। अदृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नत्वेनाप्युपादानादिविषयकबुद्धेर्विशेषणस्य अत्राभि-मतत्वात्। तथा चादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नोपादानादिविषयकबुद्धिमत्पूर्वकत्वमिति पर्य-वस्यति। ततश्च न सिद्धसाधनम्। कारणप्रागभावस्य कार्यप्रागभावं प्रति व्याप्यत्वेनास्मदादिनिष्ठादृष्टजनक-ज्ञानादिप्रागभावस्य स्वजन्यादृष्टप्रागभावं प्रति व्याप्यत्वेन तद्भिन्नत्वाभावात्। न चैवमपि कपालादिरूपोपादान-गोचरादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नं च यज्ज्ञानादि तद्वद्भिरस्मदादिभिरर्थान्तरत्वमिति वाच्यम्। उपादानादिविषयकबुद्धेः स्वविषयसमवेतकार्यं प्रत्येव जनकत्वेन कपालादिगोचरज्ञानादेः क्षित्याद्यजनकत्वेन बाधात्। अत्र यद्यप्यदृष्टजनकभिन्नेत्युक्तेऽप्यस्मदादिभिर्न सिद्धसाधनम्। तथापीश्वरज्ञानस्याप्यदृष्टजनकतया तद्भिन्नत्वाभावाद्बाधः स्यात्। स मा भूदिति वक्रोक्तिरेवाऽश्रयणीया। एवं च न बाधः। ईश्वरज्ञानस्यानादित्वेन प्रागभावप्रतियोगित्वस्यैवाभावेन तत्प्रतियोगिभिन्नत्वात्। नन्वेवमपि दृष्टान्तस्य साध्यवैकल्यम्। कुलालनिष्ठस्य घटजनकज्ञानप्रागभावस्य तन्निष्ठविहितादिक्रियान्तरादिनोत्पत्स्यमानादृष्टप्रागभावं प्रति व्याप्यत्वेन तद्भिन्नत्वा-भावादिति चेन्न। स्वजन्यत्वेनाप्यदृष्टविशेषणस्यात्राभिमतत्वात्। उत्पत्स्यमानादृष्टस्य घटोपादानविषयक-ज्ञानजन्यत्वाभावादिति द्रष्टव्यम्।

ननु कार्यत्वं न कृतिसाध्यत्वं सन्दिग्धासिद्धिप्रसङ्गात्। किन्तु तत्कार्यत्वमेव। तच्च द्विविधम्। उद्देश्यफल-सम्बन्धित्वेन, साक्षात्कर्तृव्यापारविषयत्वेन चेति। तथा च द्व्यणुकादेरुद्देश्यसम्बन्धिफलतया कर्मत्ववत्तदुपा-दानीभूतस्य परमाण्वादेरपि साक्षात्कर्तृव्यापारविषयतया कर्मत्वात् कार्यत्वहेतोरुक्तसाध्याभाववति परमाण्वादौ **(पां.टि.)** व्यभिचार इत्यत आह- **अभूत्वेति ॥** प्रागभावप्रतियोगित्वादित्यर्थः। समवेतत्वं वा भावत्वं वा विशेषणं देयम्। अतो न ध्वंसे व्यभिचार इति द्रष्टव्यम्। ननु घटवदिति न षष्ठीसप्तमीसमर्थाद्वतिः। यत्कार्यं तत्सकर्तृकं यथा घटस्य यथा घटे इत्यनन्वयप्रसङ्गात्। नापि घट इवेति घटवदिति प्रथमासमर्थाद्वतिः। 'तत्र तस्येव' इति षष्ठीसप्तमीसमर्थादेव वतेर्विधानेन प्रथमासमर्थात्तस्यालाक्षणिकत्वेनायोगादित्याशङ्क्य, 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वात् 'शरीरवदिति प्रथमासमर्थाद्वतिः' इति कुसुमाञ्जलिवर्धमानकृता लक्षणस्य प्रायिकत्वेन व्याख्यातत्वाद्युक्त एव प्रथमासमर्थाद्वतिरत्रेत्याह- **तत्र तस्येवेति ॥ लक्षणस्येति ॥** ननु लक्षणस्य प्रायिकत्वेन व्याख्यानं न युक्तम्। तस्य प्रायिकत्वज्ञापकाभावात्। न च 'पूर्ववत्सनः' इति पञ्चम्यन्ताद्वतिप्रत्यय एव सूत्र-कारीयोऽत्र ज्ञापक इति वाच्यम्। तत्र पूर्वेण तुल्यं पूर्ववदिति तृतीयान्तादेव 'तेन तुल्यम्' इति लक्षणेन वत्याश्रयणेन पञ्चम्यन्तात्तदसिद्धेः। न च न तत्र तृतीयान्ताद्वतिराश्रयितुं युक्तः, तथा सति पूर्वस्मादिव सन्नन्तादप्यात्मनेपदमिति पञ्चम्यर्थावगमानुपपत्तिप्रसङ्गादिति वाच्यम्। यथा हि 'ब्राह्मणेन तुल्यं वैश्यादधीत' इत्युक्ते ब्राह्मणादिव वैश्याद् अधीत इति पञ्चम्यर्थोऽर्थादवगम्यते, तथेहापि पूर्वेण तुल्यं सन्नन्तादात्मनेपदं भवतीत्युक्ते पूर्वस्मादिव सन्नन्ता-दात्मनेपदं भवतीति पञ्चम्यर्थावगमोपपत्तेः। 'तुल्यार्थैः' इति तृतीयायाः

सर्वविभक्त्यर्थान्तर्भावकत्वात्। न चैवं 'तुल्यार्थैः' इति या तृतीया तयेवशब्दयोगे सर्वविभक्त्यर्थप्राप्तेः सर्वत्रापि तृतीयान्तादेव वतिः अर्थात्तदवगम इति वक्तुं शक्यत्वात्, 'तत्र तस्येव' इत्येतद्विषयेऽपि पूर्वेणैव वतिप्रत्ययसिद्धेस्तत्सूत्रवैयर्थ्यमेव। तथा हि। ब्राह्मण इवाधीते ब्राह्मणेन तुल्यमधीते, ब्राह्मणमिव पश्यति ब्राह्मणेन तुल्यं पश्यति, ब्राह्मणस्येव क्षत्रस्य स्वं ब्राह्मणेन तुल्यं क्षत्रस्य स्वं, ब्राह्मण इव क्षत्रिये वर्तते ब्राह्मणेन तुल्यं क्षत्रिये वर्तत इत्यादौ यथा एक एवार्थोऽवग-म्यते। तथा मथुरायामिव पाटलीपुत्रे प्राकार इति, देवदत्तस्येव यज्ञदत्तस्य शुक्ला दन्ता इति य एवार्थः स एव मथुरया तुल्यः पाटलीपुत्रे प्राकार इति, देवदत्तेन तुल्यं यज्ञदत्तस्य शुक्ला दन्ता इत्यत्राप्यवगम्यते। ततश्चात्रापि 'तेन तुल्यम्' इत्यनेनैव तृतीयान्ताद्वतिप्रत्ययोपपत्तेः। तस्मान्न तुल्यार्थकतृतीयायाः सर्वविभक्त्यन्तर्भावकत्वमिति पूर्ववदिति तृतीयान्ताद्वत्याश्रयणे पञ्चम्यर्थावगमानुपपत्तिर्दुष्परिहरैवेति वाच्यम्। भवेदेतदेवं यदि तुल्यार्थतृतीयायाः सर्वविभक्त्यर्थान्तर्भावकत्वे 'तत्र तस्येव' इति योगवैयर्थ्यमापद्येत। न चैतदस्ति। पूर्वसूत्रेण हि तुल्यस्य प्रतियोगि-न्येव प्रत्ययविधानम्। इह तु 'मथुरया तुल्यः पाटलीपुत्रे प्राकारः' इत्यत्र न मथुरा प्रतियोगिनी किन्तु तद्गतः प्राकार एव। एवं 'देवदत्तेन तुल्या यज्ञदत्तस्य दन्ता' इत्यत्र न देवदत्तः प्रतियोगी किन्तु तदीया दन्ता एवेति न पूर्वेण प्रत्ययप्राप्तिः सम्भवतीति नोत्तरसूत्रवैयर्थ्यम्। न चात्रापि मथुरादेवदत्तशब्दाभ्यां प्राकारो दन्ताश्च लक्षिष्यन्त इति युक्ता पूर्वेणैव प्राप्तिरिति वाच्यम्। पूर्वसूत्रे हि क्रियाग्रहणेऽसति 'गवा तुल्यो गवयः' इत्यादौ प्रत्ययप्रसक्त्या तन्निवृत्त्यर्थं तस्याऽवश्यकतया क्रियया तुल्यत्वे तेन तत्सिद्धावपि गुणद्रव्ययोस्तुल्यत्वे तेन प्रत्ययाप्राप्त्या तदर्थतया 'तत्र तस्येव' इति योगस्य सार्थक्यसम्भवाद् उक्तबाधकाभावेन तुल्यार्थतृतीयायाः सर्वसङ्ग्राहकत्वं युक्तम्। ततश्च पूर्ववदिति तृतीयान्ताद्वतिपक्षेऽपि पञ्चम्यर्थावगमोपपत्तेः पूर्ववदिति न पञ्चम्यन्ताद्वतिरिति ज्ञापकाभावा-द्योगस्य प्रायिकत्वेन व्याख्यानं न युक्तमिति चेत्, न भवेदियमनुपपत्तिर्यदि ह्यत्र योगस्य प्रायिकत्वं वा प्रायिकत्वेन **(पां.टि.)** व्याख्यातव्यत्वं वोक्तं स्यात्। न चैतदस्ति। तथा सति हि योगस्य प्रायिकत्वादित्येव तत्त्वेन व्याख्येय इत्येव वाऽवक्ष्यत्। किं तर्ह्यभियुक्तैस्तथा व्याख्यानं कृतम्। तावताऽपि प्रकृते वतिनिर्वाह इत्येव। तत्साधुत्वासाधुत्वचिन्तायां तु औदासीन्यमेव। अत एवोक्तरीत्या प्रायिकत्वव्याख्यानेऽरुचिं मनसि निधाय 'छन्दसो द्वितीयान्ताद्वतिः' इति द्वितीयान्ताद्वतेः छान्दसत्वमेव सुधायामुक्तम्। अन्यथा तत्रापि प्रायिकत्वा-श्रयणेनैव द्वितीयान्ताद्वतिनिर्वाहसम्भवात्त-च्छान्दसत्वोक्तिरयुक्ता स्यादिति सङ्क्षेपः। विस्तरस्तु सुधावाक्यार्थ-चन्द्रिकाशेषे द्रष्टव्यः।

नन्वीश्वरकर्तृकमित्यसाधनान्नेश्वरसाधकत्वमित्यतः, तथाऽसाधनेऽपि हेतोः पक्षधर्मताबलेन पक्षे सिध्य-(द्व्य)तः साध्यस्येश्वरकर्तृकत्वमनादायापर्यवसानेन पर्यवसानगत्या तस्यैव सिद्धत्वादुपपत्तिरित्यभिप्रेत्याऽह- **न हीति ॥ एवमेवेति ॥** सर्वं विकर्तृकमित्युक्ते गगनादौ सिद्धसाधनं घटादौ बाधश्च स्यात्। तन्निवृत्त्यर्थं विमतमित्युक्तम्। **विकर्तृकं** नोपादानादिविषयबुद्धिमत्पूर्वकम्। ततश्च जीवानामेवादृष्टद्वाराऽङ्कुरादिकर्तृत्वाद्बाध इति निरस्त इति व्याख्येयमित्यर्थः। **सर्वत्रेति ॥** अस्मत्सम्मतत्वविशेषणदानेन साध्यावैशिष्ट्यस्य परिहर्तुं शक्यतयाऽग्निमत्त्वेनाग्निमत्त्वसाधनेऽपि तस्यादोषत्वं स्यादित्यर्थः। **साध्याविशिष्टता चेति ॥** तत्त्याग इति शेषः। ननु हेत्वप्रसिद्धिपरिहारकतया व्याप्तिग्रहौपयिकत्वान्न रूपादिष्वित्यादिविशेषणस्य पक्षधर्मतासिद्ध्यर्थत्व-मित्यरुचेराह- **प्रामाण्यमिति ॥** नन्वनभ्यासदशायामित्यस्यापि पक्षविशेषणत्वस्याभिमततया हेतुविशेषणत्व-स्यानभिमततया न पक्षधर्मतासिद्ध्यर्थत्वमित्यरुचेराह- **इत्यादाविति ॥** पर्वतः सुरभिधूमरहितश्चन्दनखण्ड-प्रभववह्निरहितत्वादित्यादावित्यर्थः। **तथा चेति ॥** प्रतिपक्षानुमानान्तरेऽपि व्यभिचारावारकविशेषणवैयर्थ्य-स्यादोषत्वं स्यादित्यतिप्रसङ्ग इत्यर्थः। **वक्ष्याम इति ॥** 'उपाध्यनुन्नीत एवानुमाने व्यभिचारावारकविशेषणवत्त्वं दोषः' इत्यादिनेति शेषः।

**(व्या.टि.) बाधः सिद्धसाधनमिति ॥** ननु पक्षतावच्छेदकैक्ये कथमंशे बाधसिद्धसाधनाभिधानम्। पक्षता-वच्छेदकनानात्व एव तयोर्दोषत्वात्। अन्यथा द्रव्यं रूपवत्, पृथिवी इतरेभ्यो भिद्यत इत्यादौ तयोः प्रसङ्गादिति चेन्न। सर्वनाम्नां बुद्धिस्थप्रकारावच्छिन्ने शक्तिः। तदादिपदैः घटत्वादिप्रकारकबोधानुभवात्। बुद्धिस्थत्वं तु शक्यतावच्छेदकानुगमकमिति शक्यतावच्छेदकतावच्छेदकमिति नये शक्यतावच्छेदकनानात्वात्। बुद्धिस्थत्वं तु शक्यतावच्छेदकमिति मते तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे अंशेऽपि सिद्धसाध-नम्। पक्षतावच्छेदकावच्छेदेन तदुद्देशेंऽशेऽपि बाधो दोष इत्यवधेयम्। सकर्तृकपदनिर्वचनेन दोषद्वयं परिहरति- **उपादानादीति ॥** हेतोर्विवक्षितमर्थं दर्शयति- **अभूत्वेति ॥ भावित्वाद्** भवनशीलत्वादित्यर्थः। विशेष्यदलं नित्ये व्यभिचरतीति क्त्वान्तम्। असति तन्निरासाय विशेष्यम्। ननु 'तत्र तस्येव' इति सप्तम्यन्तात् षष्ठ्यन्ताद्वेवार्थे वतेर्विधानात् कथं प्रथमान्ताद्वतिरित्यत आह- **प्रायिकत्वेनेति ॥** 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' 'स्त्रीपुंवच्च' 'पूर्ववत्सनः' 'स्थानिवदादेशोऽनल्विधौ' इति पाणिनिना, 'पानव्यापच्च तद्वत्' इति जैमिनिना च प्रथमान्तादितो वतेः प्रयुक्तत्वाद् अनुशासनं प्रायिकत्वाभिप्रायमिति व्याख्यातप्रायमिति भावः। **ईश्वरादृत (व्या.टि.) इति ॥** 'अन्यारादितरर्ते' इति सूत्रात् ऋतेयोगे पञ्चमी। **अङ्कुरादीनामिति ॥** विचित्रानेककारिणा-मित्यर्थः। ईश्वरस्य तु सर्वशक्त्या तदुपपत्तिः। **व्यर्थत्वादिति ॥** व्यभिचाराद्यवारकत्वेन विफलत्वादित्यर्थः

। **साध्याविशिष्टत्वादिति ।।** साध्येऽपि विप्रिय इतिवद् वेरभावार्थत्वादित्यर्थः । **तत्सम्भवादिति ।।** ईदृशव्यर्थ-विशेषणसम्भवेन साध्यावैशिष्ट्योच्छेद एव भवेत् इत्यर्थः । **कर्तृविशेष इति ।।** शरीरादिमदपेक्षया कुलालादेर्विशेष-त्वादित्यर्थः । **वैयर्थ्यमिति ।।** विशेषणव्यावर्त्याभावादिति भावः । यद्यपि प्रतियोगिविशेषणमभावान्तर-सम्पादकमिति तत्त्यागेऽभावान्तरमेवेति न विशेषणवैयर्थ्यम् । तथापि तीव्रप्रतीतिके लघुधर्मावच्छिन्नाभावे हेतौ सम्भवति तद्घटितगुरुधर्मावच्छिन्नप्रतियोगिको विलम्बितप्रतीतिको न हेतूकरणीयः, आयासवैयर्थ्यादिति तात्पर्यम् । **साध्याविशिष्टतेति ।।** अभावयोः समनैयत्येनैक्याद् धूमाभाववान् प्रमेयः धूमाभावादित्यत्रैव साध्यावैशिष्ट्यमिति ध्येयम् । विशेषणत्यागे साध्यावैशिष्ट्यमिति व्याख्यानं चिन्त्यम् । 'न च सामान्य' इत्युत्तरग्रन्थासङ्गतेः । **सामान्येति ।।** साध्यहेतूकृताभावयोः सामान्यविशेषप्रतियोगिकतया सामान्य-विशेषभावेनेत्यर्थः । **अनुपपत्तेरिति ।।** निर्विशेषस्य सामान्यस्यानुपपत्तेरित्यर्थः। **साधनायोगादिति ।।** तस्य तेन व्याप्त्यभावादित्यर्थः । **न चैवमिति ।।** हेतोरविशेषणादित्यर्थः । **प्रसङ्ग इति ।।** प्रत्यक्षानुमानस्यैवं सुकरत्वा-दित्यर्थः । **बाधितत्वादिति ।।** प्रतिपक्षस्येति शेषः । तथा चातिप्रसङ्गभङ्ग इत्यर्थः । अलौकिकरीतिरियं न परीक्षकसम्मतेत्यस्वरसादाह- **अथ वेति ।। उक्तमिति ।।** सामान्यत इत्यर्थः । तथा चातिप्रसङ्गशङ्कैव नास्तीति भावः । **पक्षधर्मतासिद्ध्यर्थत्वादिति ।।** विशेषणप्रहाणे स्वरूपासिद्धेरित्यर्थः । यद्यप्यभावप्रतियोगिविशेषणे न वैयर्थ्यम् । त्यागेऽभावान्तरापत्तेः । तथाप्युक्तरीत्याऽयासवैयर्थ्यमालोच्योपेत्य वा प्रयोजनमुक्तमित्यव-धेयम् । **वक्ष्याम इति ।।** 'उपाध्यनुन्नीत एवानुमाने वैयर्थ्यं दोषो नोपाध्युन्नीते तस्य विशिष्टाभावरूपत्वात्' इति वक्ष्याम इत्यर्थः । साध्यनिर्देशाभावे पञ्चमीनिर्देशानुपपत्तिमाशङ्क्य पूर्वेणान्वयं दर्शयति- **इत्यस्येति ।।**

## मूलम् - अकार्यत्वमुपाधिरित्युक्ते शरीरिजन्यत्वमितरत्राप्युपाधिरित्युत्तरम् ।

**टीका -** प्रतिपक्षानुमानस्य सोपाधिकत्वमाशङ्क्येश्वरानुमानस्यापि तत्समानमित्याह- **अकार्यत्व-मिति ।।** यद्बिकर्तृकं तदकार्यमिति साध्यव्यापकत्वात् साधनवतः पक्षाद्व्यावृत्तत्वेन साधना-व्यापकत्वाच्चोपाधिः, प्रतिपक्षानुमान इति शेषः । **इत्युक्ते** केवलानुमानेनेश्वरं साधयता । यत्र सकर्तृकत्वं तत्र शरीरिजन्यत्वमिति साध्यव्यापकत्वात्, कार्यत्ववतोऽप्यङ्कुराद्व्यावृत्तत्वेन साधना-व्यापकत्वाच्च भवति शरीरिजन्यत्वमुपाधिः । **इतरत्र** ईश्वरानुमाने, **इत्युत्तरम**नीश्वरवादिना वक्तुं शक्यत इति शेषः । शरीरिविशेषणं व्यर्थमिति चेत्, अकार्यत्वमपि कार्यादन्यत्वं कार्यत्वरहितत्वं वा वक्तव्यम् । तत्राप्यन्यत्वादेरेव साध्यव्यापकत्वसम्भवात्समव्याप्तेश्चानपेक्षितत्वाद्वि-शेषणवैयर्थ्यमेव । तत्र पक्षव्यावृत्त्यर्थं विशेषणमिति चेत्, तुल्यमितरत्रापि ।

ननु किं व्यभिचारनिवारणलक्षणप्रयोजनाभावो वैयर्थ्यं, प्रयोजनमात्राभावो वा । नाद्यः । व्याप्यगतविशेषणस्यैव तथात्वेन व्यापकगतविशेषणस्य तथात्वनियमाभावात् । न द्वितीयः । असिद्धेरिति चेत्, एतदपि समानम् । अत एव प्रतिपक्षानुमानेऽपि विशेषणवैयर्थ्यं परिहृतम् । विशिष्टस्योपाधेर्हि साध्यव्यापकत्वमस्त्येव । व्यापकनिवृत्तिश्च व्याप्यं निवर्तयत्येव । उपाध्यभावश्चात्र प्रतिपक्षत्वेनोक्तः । उपाध्यनुन्नीत एवानुमाने व्यभिचारावारकविशेषणवत्त्वं दोषो नोपाध्युन्नीत इति व्यवस्थाश्रयणे दोषाभावात् । अनुकूलतर्केणोपाधिप्रतिपक्षनिरास इति चेन्न । तदभावात् । कर्त्रभावे कार्यं न स्यादिति चेन्न । कारणाभावप्रयुक्तत्वात् कार्याभावस्य । कार्यसामान्यं हि कारणसामान्यायत्तम् । अन्यथा कर्मादिकारकविशेषाभावेनाऽसनशयनादिकार्याभावप्रसङ्गः । कर्मादिकं न सार्वत्रिकं कर्ता तु सार्वत्रिक इति चेन्न । तत्सिद्ध्यर्थत्वादेवास्य परकीयप्रयासस्य । यद्यपि प्रतिपक्षे नोपाध्युद्भावनमुचितम् । उपाधेः प्रतिपक्षोन्नायकत्वेन वैयर्थ्यात् । तथाप्यभ्युप-गमवादोऽयमित्यदोषः ।

ननु शरीरप्रेरणायाः सकर्तृकत्वेऽपि शरीरिजन्यत्वं नास्ति । कर्मभूतस्य शरीरस्य कर्तरि प्रवेशा-नुपपत्तेः । ततः साध्याव्यापकत्वमिति । उच्यते । शरीरप्रेरणं हि शरीरक्रियानुगुणप्रयत्नवत्त्वम् । नचाशरीरस्य प्रयत्नोत्पत्तिरस्तीति । किञ्चाऽगमानपेक्षानुमानपक्षेऽनुपलब्धप्राक्कोटिषु पर्वतादिषु कार्यत्वं कुतः सिद्धम् । सावयवत्वादिति चेत्, किमिदं सावयवत्वम् । अवयवसम्बन्धित्वमिति चेन्न । पटावयवतन्तुसंयुक्ताऽकाशे व्यभिचारात् । अवयवसमवेतत्वं चेज्जात्या(दौ)म् (अनै-कान्त्यम्) । स्वावयवसमवेतत्वं चेत्स्वसमवायिकारणसमवेतत्वमिति ह्युक्तं स्यात् । तथाच

**कार्यत्वमनभ्युपगच्छतस्तदप्यसिद्धम् । द्रव्याश्रितद्रव्यत्वमिति चेन्न । वारिनिहिते पार्थिवपरमाणौ व्यभिचारात् । द्रव्यसमवेतद्रव्यत्वमिति चेत्, तथापि द्व्यणुकसमवेते परमाणौ व्यभिचार एव । द्व्यणुकं परमाणुसमवेतं न परमाणुद्व्यणुकसमवेत इति चेन्न । समवायत्वातिरिक्तस्य सम-वेतत्वस्याभावात् । तस्य चोभयत्र साम्यात् । समवायवृत्त्या द्रव्याश्रितद्रव्यत्वमिति चेन्न । ऊर्ध्वाधरीभावादेरसम्भवेन समवायातिरिक्ताश्रयाश्रयिभावानिरूपणात् । व्यवहारमात्रं तु न व्यवस्थितं पटे तन्तव इत्यादेरपि दर्शनात् । मध्यमपरिमाणवत्त्वं सावयवत्वमिति चेन्न । तस्याकार्यत्वेऽप्यनुपपत्त्यभावेनाप्रयोजकत्वादिति ।**

**(र.टि.) पक्षाद्व्यावृत्तत्वेनेति ।।** अभूत्वाभावित्वाभावरूपाकार्यत्वस्य अभूत्वाभाविक्षित्यादेर्व्यावृत्तत्वेने-**(र.टि.)** त्यर्थः । **उपाध्युन्नीत इति ।।** शरीर्याद्यजन्यत्वार्थकास्मत्सम्मतकर्तृरहितत्वरूपप्रतिपक्षोद्भावनात् पूर्वं शरीरिजन्यत्वोपाधेरनुद्भावनेऽपि तस्योपाध्यभावरूपत्वेन वस्तुगत्योपाध्युन्नीतत्वमस्त्येवेति भावः । अत एवोक्तम् - **'उपाध्यभावश्चात्र प्रतिपक्षत्वेनोक्तः'** इति । **दोषाभावादिति ।।** प्रागुक्तप्रसङ्गलक्षणदोषाभावा-दित्यर्थः । **न चाशरीरस्येति ।।** न च प्रागुक्तदोषः । प्रयत्नस्याकर्मकत्वेन शरीराकर्मकत्वात् । तज्जन्य-क्रियायास्तत्कर्मकत्वेऽपि शरीरावच्छिन्नस्याऽत्मनः कर्तृत्वं विशेषणभूतशरीरमात्रस्य कर्मत्वम् । अतस्तस्यापि शरीरिजन्यत्वान्न साध्याव्यापकत्वमिति भावः । **आगमानपेक्षेति ।।** आगमापेक्षत्वे तत एव कार्यत्वसिद्धिरिति भावः । **अनुपलब्धप्राक्कोटिष्विति ।। प्राक्कोटिः** प्रागभावो वा उत्पत्तिर्वा ।

**(रा.टि.)** ईश्वरवादिनोऽपसिद्धान्तदोषनिरासायोक्तम्- **इत्युत्तरमित्यादि ।।** ननु यदकार्यं तद्विकर्तृकमित्यपि गगनादौ व्याप्तिप्रदर्शनार्थं विशेषणमित्यत आह- **समव्याप्तेश्चेति ।।** साध्यव्यापकत्वमात्रेण प्रतिपक्षाद्युन्नायक-त्वेनोपाधित्वसम्भवादिति भावः । **पक्षेति ।।** यत्किञ्चिदन्यत्वरहितत्वयोः पक्षेऽपि सत्त्वात्ततो व्यावृत्त्यर्थमि-त्यर्थः । **तथात्वेन** व्यभिचारवारकत्वेनेत्यर्थः । **असिद्धेरितीति ।।** पक्षव्यावृत्तिरूपप्रयोजनसत्त्वादिति भावः । **अत एवेति ।।** व्यापकविशेषणे तथात्वनियमाभावादेवोपाध्यभावरूपप्रतिपक्षे विशेषणवैयर्थ्यं परिहृतमि-त्यर्थः । नन्वस्तु व्यापकविशेषणे तथात्वाभावः प्रकृते किमित्यत आह- **विशिष्टस्येति ।।** यद्वा व्यापकविशेषणस्य तन्नियमाभावेऽपि प्रतिपक्षे कुतो न विशेषणवैयर्थ्यं, तथात्वे शब्दोऽनित्यः कार्यत्वात्, नित्यः शब्दः चैत्रश्रवण-योग्यत्वादित्यादावपि विशेषणवैयर्थ्यं न स्यादित्यतः प्रकृतापेक्षयेयमुक्तिरित्याह- **विशिष्टस्येति ।।** शरीर-विशिष्टजन्यत्वस्येत्यर्थः । 'यत्र सकर्तृकत्वम्' इति प्रागेव प्रदर्शनादिति भावः । उपाधिप्रतिपक्षभावमुपेत्य शङ्कते- **अनुकूलेति ।।** तर्कमाशङ्कते- **कर्तुरिति ।।** कारणाभावप्रयुक्तत्वं व्यनक्ति- **कार्येति ।।** आयत्तमित्यनन्तरं ननु कारकविशेषकर्त्रायत्तमिति योज्यम् । **अन्यथेति ।।** कार्यस्य कारकविशेषायत्तत्व इत्यर्थः । **आसनेति ।।** आस्ते, शेते, प्रकाशते इत्याद्यकर्मकक्रियारूपकार्याभावप्रसङ्ग इत्यर्थः । शङ्कते- **कर्मेति ।।** कर्मकरणादिकारकमि-त्यर्थः । **तत्सिद्ध्यर्थत्वादिति ।।** कार्यमात्रं सकर्तृकमित्येतत्सिद्ध्यर्थत्वात्, **अस्य** कार्यत्वानुमानप्रयोगरूपस्य प्रयासस्य । स एव सार्वत्रिकत्वनियमोऽनीश्वरवादिनोऽव्याप्यसिद्ध एवेति न त्वदभिमततर्कावतारावसर इति भावः । उपाध्युक्तेरनौचित्यमाशङ्क्य निराह- **यद्यपीति ।। वैयर्थ्यादिति ।।** प्राचीनहेतुनैव प्रतिपक्षस्य प्रतिरुद्ध-त्वेन कार्याक्षमत्वप्राप्त्या प्रतिपक्षान्तरस्य कृत्याभावादिति भावः । अनेकत्वकृतप्राबल्याय तदुक्तिरिति केचित् । तन्न । उभयत्रापि हेतुद्वयप्राप्त्या एकत्राऽधिक्याभावात् । 'शतमप्यन्धानां न पश्यति' इति न्यायेन प्राबल्यासिद्धे-श्चेति । शरीरस्य कर्मकारकरूपस्यापि कर्तृकोटौ प्रवेशोऽस्तीति भावेनाऽह- **शरीरप्रेरणं हीति ।।** नचैकस्य कर्तृकर्मभावविरोधः । 'स्वाध्यायोऽध्येतव्यः' इत्यत्रेवान्येन सह कर्मत्वस्य केवले कर्तृत्वस्य चोपपत्तेः । **अनुप-लब्धेति ।।** अनुपलब्धपूर्वावधिष्वित्यर्थः । **जात्यामिति ।।** व्यभिचारादित्यनुषङ्गः । **ऊर्ध्वाधरीति ।।** अवयवा-वयविनोः भूतलघटयोरिवोर्ध्वाधरीभावस्यादर्शनेनासम्भवादित्यर्थः । इह तन्तुषु पट इति व्यवहारबलादाश्र-याश्रयिभावः कल्प्यत इत्यत आह - **व्यवहारेति ।।**

**(श्री.टि.) तत्राप्यन्यत्वादेरेवेति ।।** तत्राऽदिपदेन रहितत्वसङ्ग्रहः । विकर्तृकत्ववति गगनादौ पटाद्यन्यत्व-घटादिरहितत्वयोः सत्त्वेन साध्यव्यापकत्वादित्यर्थः । ननु 'साधनाव्यापकाः साध्यसमव्याप्ता उपाधयः' इत्युक्त-त्वात् समव्याप्तस्योपाधित्वपक्षे यत्रान्यत्वं तत्र विकर्तृकत्वमित्यस्य घटादौ व्यभिचारेण समव्याप्त्यभावात् तदर्थं कार्येति विशेषणमिति चेत्तत्राऽह- **समव्याप्तेश्चेति ।। अनपेक्षितत्वादिति ।।** अयं भावः । विषमव्याप्तस्यै-वोपाधित्वे पक्षेतरत्वस्याप्युपाधित्वप्राप्त्याऽनुमानमात्रोच्छेदप्रसङ्गेन तत्परिहाराय हि समव्याप्तत्वं वक्तव्यम् । तत्र विषमव्याप्तस्यैवोपाधित्वेऽपि पक्षेतरत्वस्योपाधित्वपरिहारस्तु प्रकारान्तरेण भविष्यति । तथा हि । अनुकूलतर्क-सद्भावदशायां तस्योपाधित्वमुच्यते तदभावदशायां वा । नाऽद्यः । पक्ष एव साध्यव्यापकत्वभङ्गात् ।

'अनुकूलेन तर्केण सनाथे सति साधने।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः ॥'

इति वचनात्। न द्वितीयः। तदभावे तस्येष्टत्वादिति। **पक्षव्यावृत्त्यर्थमिति ॥** पक्षे उपाधिव्यावृत्त्यर्थमित्यर्थः। साधनाव्यापकत्वार्थमिति यावत्। अन्यथा अन्यत्वमात्रस्य पक्षेऽपि विद्यमानत्वेन साधनव्यापकत्वादिति भावः। **इतरत्रापीति ॥** शरीरिजन्यत्वोपाधावपि पक्षव्यावृत्त्यर्थमेव शरीरीति विशेषणमित्यर्थः। वैयर्थ्यं नाम विगत-प्रयोजनवत्त्वम्। 'अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्यभिधानेनार्थशब्दस्य प्रयोजनवाचित्वावगमात्। तथा चात्र किं प्रयोजनविशेषाभावो विवक्षितः प्रयोजनसामान्याभावो वेति विकल्पयति- **नन्विति ॥** (अकार्यत्वोपाधौ विशेषणवैयर्थ्यमुक्तम्) तत्राऽऽशङ्कते- **नन्विति ॥) व्यापकगतस्येति ॥** उपाधेः साध्य-व्यापकत्वादिति भावः। **तथात्वनियमाभावादिति ॥** व्यभिचारवारकत्वनियमाभावादित्यर्थः। ननु व्यापकगतविशेषणस्यापि व्यभिचारवारकत्वं दृष्टम्। तथा हि। शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारण-गुणपूर्वकत्वात्। अत्र परमाणुरूपादिव्यावृत्त्यर्थं प्रत्यक्षत्वे सतीत्युक्तम्। पटरूपादिव्यावृत्तये विशेष्यभागः। तथा चात्रान्यतरकर्मजे स्थाणुश्येनसंयोगादौ व्यभिचारपरिहाराय साध्ये विशेषपदस्य अभियुक्तैर्दत्तत्वादिति चेत्सत्यम्। अत एव नियमाभावादित्युक्तमिति द्रष्टव्यम्। **असिद्धेरिति ॥** साधनाव्यापकत्वसिद्धिरूपप्रयोजन-सद्भावेन प्रयोजनसामान्याभावस्यासिद्धेरित्यर्थः। **एतदपि समानमिति ॥** शरीरिजन्यत्वोपाधावपि शरीरि-विशेषणस्य वैयर्थ्यं नाम न तावद्व्यभिचारनिवारणलक्षणप्रयोजनाभावः। व्याप्यगतविशेषणस्यैव तथात्वेन व्यापकगतस्य तथात्वनियमाभावात्। उपाधेश्च साध्यव्यापकत्वात्। नापि प्रयोजनसामान्याभावः। साधना-व्यापकत्वसिद्धिरूपप्रयोजनसद्भावेन प्रयोजनसामान्याभावस्यासिद्धेरिति समानमित्यर्थः। साध्यव्यापकीभूतोपाधौ विशेषणवैयर्थ्यपरिहारेण प्रतिपक्षानुमानेऽपि तद्वैयर्थ्यं परिहृतमित्याह- **अत एवेति ॥** व्यापकगतविशेषणस्य तथात्वनियमाभावादेवेत्यर्थः।

ननूपाधेस्साध्यव्यापकत्वेन तत्रत्यविशेषणस्य व्यभिचारवारकत्वनियमाभावेऽपि तदभावस्य यदा हेतुत्वं तदा तस्य व्याप्यगतविशेषणत्वप्राप्त्या व्यभिचारवारकत्वं वक्तव्यमेवेत्याशङ्क्यात एवेत्युक्तमेव स्पष्टमाह- **(श्री.टि.) विशिष्टस्येति ॥** अखण्डस्येत्यर्थः। सामान्यवत्त्वे सतीत्यादाविव सत्यन्तविशेषणाभावादखण्डत्व-मिति साम्प्रदायिकोऽर्थः। तथा चाखण्डोपाधौ न वैयर्थ्यमिति भावः। नन्वस्तूपाधेस्साध्यव्यापकत्वं, तथापि तदभावेन कथं प्रतिपक्ष इत्यत आह- **व्यापकनिवृत्तिश्चेति ॥** साध्यव्यापकीभूतोपाधिनिवृत्तिरित्यर्थः। **स्वव्याप्यम्** उपाधिव्याप्यभूतं साध्यम्। **निवर्तयत्येवेति ॥** व्यापकनिवृत्त्या व्याप्यनिवृत्तेरावश्यकत्वादिति भावः। **उपाध्यभावश्चेति ॥** साध्यव्यापकीभूताखण्डोपाध्यभाव इत्यर्थः। तथा चोपाध्यभावस्य व्याप्यत्वेऽप्यखण्डा-भावरूपत्वादखण्डाभावे च न वैयर्थ्यमिति भावः। तथा हि। लोके विशेषणवैयर्थ्यशङ्कायां हीदं बीजम्। एकस्मिन् धर्मिणि लघुगुरुधर्मद्वयसमावेशे लघुना व्याप्त्यवच्छेदे गुरोरनावश्यकत्वम्। यथा धूमे धूमत्वनील-धूमत्वरूपधर्मद्वयसमावेशे लघुना धूमत्वेनैव व्याप्त्यवच्छेदे गुरोर्नीलधूमत्वस्यानावश्यकत्वमिति तद्विशेषणं व्यर्थम्। न चेदं बीजमत्रास्ति। शरीरिजन्यत्वरूपाखण्डधर्मप्रतियोगिकाभावस्यैकत्वेन तन्मध्ये जन्यत्वाभावः शरीरिजन्यत्वाभाव इति विभागासम्भवेन वैयर्थ्यबीजाभावान्न विशेषणवैयर्थ्यशङ्केति ज्ञातव्यम्। व्याप्तावनपेक्षित-विशेषणदानेन पक्षधर्मतां प्रसाध्य साध्यसाधने 'प्रयोजनाधीनं प्रमाणं न प्रमाणाधीनं प्रयोजनम्' इत्यायातम्। तथा च देवदत्तः पिपासित इत्येतावता मरावपि वारिसाधकप्रमाणप्रवृत्तिस्स्यादित्यतिप्रसङ्ग इत्युक्तदोषः परिहृत इत्याह- **उपाध्यनुन्नीत एवेति ॥** उपाध्यभावमेव हेतुं कृत्वा क्रियमाणं यदनुमानं तद्भिन्ने पर्वतोऽग्निमान् प्रमेय-धूमवत्त्वादित्याद्यनुमान इत्यर्थः। **उपाध्युन्नीत इति ॥** अखण्डोपाध्यभावमेव हेतुं कृत्वा क्रियमाणे सत्प्रति-पक्षानुमान इत्यर्थः। प्रकृतं च तादृशमिति भावः। **दोषाभावादिति ॥** प्रागुक्तातिप्रसङ्गलक्षणदोषाभावा-दित्यर्थः। तथा च पक्षधर्मतां साधयितुं व्याप्तावनपेक्षितमपि विशेषणं न प्रक्षिप्यतेऽस्माभिर्येनातिप्रसङ्गः। किं नामाखण्डोपाध्यभाव एव अत्र सत्प्रतिपक्षत्वेनोक्तः। तथा चोपाधेरखण्डत्वेन तत्र विशेषणविशेष्यविभागा-भावेन तदभावरूपाखण्डाभावेऽपि न विशेषणविशेष्यविभागोऽस्ति। एवं चानपेक्षितविशेषणप्रक्षेपो न क्रियत इति नोक्तदोष इत्याशयः। 'तदनेन वक्ष्यामोऽत्र समाधानम्' इत्युक्तं दर्शितं भवतीति ज्ञातव्यम्। विमतं सकर्तृकं कार्यत्वादित्यत्र शरीरिजन्यत्वोपाधेस्तदभावेन सत्प्रतिपक्षस्य च निरासोऽनुकूलेन तर्केण क्रियते। अनुकूलतर्कसद्भावे उपाधेः पक्ष एव साध्यव्यापकताभङ्गात्, प्रतिपक्षस्य च बाधितत्वादित्याशङ्कते- **अनुकूल-तर्केणेति ॥ कारणाभावेति ॥** तथा च न कर्तुरभावेन कार्यत्वाभावापादनं युक्तमिति भावः। तदुपपादयति- **कार्येति ॥ अन्यथेति ॥** कार्यसामान्यस्य कारणसामान्यायत्तत्वमनङ्गीकृत्य कारणविशेषायत्तत्वं चाङ्गीकृत्य कार्यसामान्याभावस्य

कारणविशेषाभावप्रयुक्तत्वाङ्गीकार इत्यर्थः । **आसनशयनादीति ॥** आस्ते शेते इत्यादेरक-र्मकत्वादिति भावः । **सार्वत्रिक इति ॥** तथा च तदभावेन कार्यत्वाभावापादनं युक्तमिति भावः । **तत्सिद्ध्यर्थत्वादेवेति ॥** कर्तुस्सार्वत्रिकत्वसिद्ध्यर्थत्वादेवेत्यर्थः । तथा च कर्तुः सार्वत्रिकत्वे सिद्धेऽनुकूल-तर्कसिद्धिः । तत्सिद्धौ चोपाधिप्रतिपक्षनिरासेनानुमानसम्यक्त्वसिद्ध्या तेन कर्तुः सार्वत्रिकत्वसिद्धिरित्य-न्योन्याश्रयः स्यादिति भावः ।

**(श्री.टि.)** ननु क्षित्यादिकं सकर्तृकमित्यस्य क्षित्यादिकं विकर्तृकमिति प्रतिपक्षोऽभिहितः । तत्राकार्यत्वमुपाधि-रित्युक्ते शरीरिजन्यत्वमितरत्राप्युपाधिरिति प्रतिबन्धुत्तरं कस्माद् दत्तम् । किन्तु सत्प्रतिपक्षानुमान उपाध्युद्भावन-मेव नोचितमित्युत्तरं देयमित्याशङ्कते- **यद्यपीति ॥ वैयर्थ्यादिति ॥** 'शतमप्यन्धानां न पश्यति' इति न्यायादेके-नापि बहूनां प्रतिबन्धादिति भावः । **अभ्युपगमेति ॥** प्रतिपक्ष उपाध्युद्भावनस्योचितत्वमभ्युपगम्य शरीरिजन्यत्व-मितरत्राप्युपाधिरित्युक्तमित्यर्थः । ननु शरीरिजन्यत्वं नोपाधिः साध्याव्यापकत्वादित्याशङ्कते- **नन्विति ॥** कुतो नास्तीत्यत आह- **कर्मभूतस्येति ॥** देवदत्तः शरीरं प्रेरयतीति प्रतीत्या शरीरप्रेरणायाः शरीरकर्मत्वं तावत् सिद्धम् । तस्याश्च पुनः शरीरिजन्यत्वे कर्मभूतस्य शरीरस्य कर्तरि प्रवेशापत्तिः । तथाच शरीरावच्छिन्नस्य देवदत्तस्य कर्तृत्वेन विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवतीत्येवं लम्बकर्णमानयेत्यादौ दर्शनात्तन्न्यायेन शरीरस्यापि कर्तृत्वप्राप्तौ कर्तृत्वकर्मत्वयोरेकत्र विरोधेनाङ्गीकर्तुमशक्यत्वेन शरीरिजन्यत्वं नास्तीति वक्त-व्यम् । तथा च शरीरप्रेरणायां सकर्तृकत्वे सत्यपि शरीरिजन्यत्वाभावात्साध्याव्यापकतेत्यर्थः । शरीरप्रेरणायां न साध्याव्यापकता । शरीरिजन्यत्वस्यापि सत्त्वात्तदनङ्गीकारे केवलात्मजन्यत्वप्राप्तेः । अस्त्विति चेत्तत्राऽह- **शरीरप्रेरणं हीत्यादिना ॥ न चाशरीरस्येति ॥** तथात्वे घटावच्छिन्नात्मनोऽपि प्रयत्नोत्पत्तिस्स्यादिति भावः । न च कर्मभूतस्य शरीरस्य कर्तरि प्रवेशानुपपत्तिर्दोष इति वाच्यम् । शरीरावच्छिन्नस्याऽत्मनः कर्तृ-त्वाद्विशेषणीभूतशरीरमात्रस्यैव कर्मत्वादुक्तन्यायस्य चित्रगुमानयेत्यादौ व्यभिचारित्वादिति द्रष्टव्यम् । यद्वा शरीरं प्रेरयतीत्यस्य शरीरपरिस्पन्दानुगुणप्रयत्नं करोतीत्यर्थः । तथा च प्रयत्नस्यैव कर्मत्वं न शरीरस्यातो न कर्मभूतशरीरस्य कर्तरि प्रवेशानुपपत्तिरित्युक्तदोषः । न च शरीरपरिस्पन्द एव साध्याव्यापकत्वं शङ्क्यम् । तत्राप्युक्तरीत्या शरीरमात्रस्यैव परिस्पन्दं प्रति कर्मत्वं, शरीरावच्छिन्नस्यैवाऽत्मनः कर्तृत्वमित्यभिप्रायो द्रष्टव्यः । एवमुपाधिनाऽनुमानं दूषयित्वा हेत्वसिद्ध्याऽपि दूषयति- **किञ्चेत्यादिना ॥ आगमानपेक्षेति ॥** आगमापेक्षत्वे तत एव कार्यत्वसिद्धिस्स्यादिति भावः । प्रत्यक्षेण कार्यत्वसिद्धिपरिहारायाऽह- **अनुपलब्ध-प्राक्कोटिष्विति ॥ प्राक्कोटिः** प्रागभाव उत्पत्तिर्वा । तथा चानुपलब्धप्रागभावेषु, अनुपलब्धोत्पत्तिकेषु वा पर्वतादिष्वित्यर्थः । **कार्यत्वं** प्रागभावप्रतियोगित्वम् । **व्यभिचारादिति ॥** कार्यत्वरूपसाध्याभावादिति भावः। **जात्यादाविति ॥** तन्तुत्वादेः पटावयवे तन्तौ समवेतत्वादिति भावः । आदिपदेन परमाणुगतविशेषग्रहणम् । **इति ह्युक्तं स्यादिति ।** 'द्रव्यसमवायिकारणम् अवयवः' इति वचनादिति भावः ।

**अनभ्युपगच्छत इति ॥** तथा च समवायिकारणस्यैवानभ्युपगमात्स्वसमवायिकारणसमवेतत्वमप्यसिद्ध-मिति भावः । सावयवत्वं प्रकारान्तरेण निर्वक्ति- **द्रव्याश्रितेति ॥** आकाशे व्यभिचारपरिहाराय द्रव्याश्रितेत्यु-क्तम् । जलपरमाणुगतरूपादिगुणादौ तत्परिहाराय द्रव्यत्वमित्युक्तम् । **तस्य चेति ॥** समवायस्य चेत्यर्थः । **उभयत्रापीति ॥** समवायस्य सम्बन्धत्वेन द्विष्ठत्वादिति भावः । तथा च परमाणुरपि द्व्यणुकसमवेत इति तत्र व्यभिचार इति द्रष्टव्यम् । **समवायवृत्त्येति ॥** समवायसम्बन्धेनेत्यर्थः । तथा च समवायसम्बन्धेन च द्व्यणुकमेव **(श्री.टि.)** परमाणावस्ति न परमाणुर्द्व्यणुक इति न तत्र व्यभिचार इति भावः । **ऊर्ध्वाधरीभावादेरिति ॥** समवायसम्बन्धेनापि द्रव्याश्रितत्वं नाम न कुण्डबदरादिवदूर्ध्वाधरीभावेन वक्तुं युक्तम् । तन्तुपटाद्यवयवा-वयविस्थल एतादृशोर्ध्वाधरीभावादर्शनेन परमाणुद्व्यणुकयोरप्यभावात् । आश्रयाश्रयिभावो नाम समवाय एव वक्तव्यः । स च द्विष्ठ इति पुनः परमाणौ व्यभिचारस्तदवस्थ एवेत्यर्थः । ननु समवायवृत्त्या द्रव्याश्रितत्वं नाम समवायसम्बन्धेन द्रव्याश्रिततया व्यवह्रियमाणत्वं विवक्षितम् । नचेदं परमाणावस्ति । परमाणुर्द्व्यणुकसमवेत इति व्यवहाराभावात् । किन्तु द्व्यणुक एव परमाणुसमवेत इत्येव व्यवहारः । अतो न व्यभिचार इत्यत आह- **व्यवहारमात्रं त्विति ॥** कुतो न व्यवस्थितमित्यत आह- **पटे तन्तव इत्यादेरिति ॥** तथा च तद्वद् द्व्यणुके परमाणुरित्यपि कदाचित् कस्यचित् व्यवहारसम्भवात् परमाणौ व्यभिचारस्स्यादेवेति भावः । केचित्तु पटे तन्तव इत्यपि व्यवहारदर्शनेन सावयवत्वेन प्रसिद्धे पटे निरुक्तसावयवत्वलक्षणस्याभावादव्याप्तिरिति भाव-माहुः । **तस्याकार्यत्वेऽपीति ॥** ननु मध्यमपरिमाणवत्त्वमस्तु, कार्यत्वं मास्त्वित्यप्रयोजकताशङ्कायां कथमनुप-पत्त्यभावः । कार्यत्वाभावे मध्यमपरिमाणवत्त्वमेव न स्यादिति हेतूच्छित्तेरेव बाधकतर्कस्य विद्यमानत्वादिति चेन्न । अस्मन्मते लिङ्गशरीरस्यानादित्वेनाकार्यत्वेऽपि मध्यमपरिमाणवत्त्वस्यैव सत्त्वेन तर्कस्य व्यभिचारित्वा-दिति । यद्यपि लिङ्गशरीरमप्यण्वेव

तथाऽपि तत्तच्छरीरव्यापित्वं विशेषबलादस्ति ततस्तत्र व्यभिचारस्सुस्थ इति भावः। **अप्रयोजकत्वादिति ॥** अस्त्वेतादृशं सावयवत्वं कार्यत्वं मास्त्वित्यप्रयोजकता अनुकूल-तर्काभावादित्यर्थः।

**(पां.टि.)** नन्वन्यत्वादेः साध्यव्यापकत्वेऽप्यन्यत्वादिमति घटादौ विकर्तृकत्वाभावेन साध्यव्याप्यत्वाभावेन समव्याप्त्यर्थत्वान्न वैयर्थ्यमित्याशङ्क्य साध्यव्यापकतामात्रेणैव स्वव्यावृत्त्या साध्यव्यावृत्तिसाधकत्वसम्भवेन दूषणत्वनिर्वाहान्न समव्याप्त्या प्रयोजनमित्याशयेनाऽह- **समव्याप्तेश्चेति ॥** अन्यथा विषमव्याप्तस्याऽर्द्रेन्धन-संयोगादेरनुपाधित्वप्रसङ्ग इति भावः। **व्यापकगतविशेषणस्य तथात्वनियमाभावादिति ॥** शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादित्यत्र, श्येनक्रियया जन्ये स्थाणुश्येनसंयोगे सत्यपि प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वे स्पर्शवद्गुणताया एव सत्त्वेन तदभावरूपोक्तसाध्याभावेन तत्राव्यभिचाराय विशेषपदोपादानेन व्यापकगतविशेषणस्यापि व्यभिचारवारकत्वस्थित्या तन्निषेधानुपपत्तेर्नियमाभाव-पर्यन्तानुधावनं कृतमिति द्रष्टव्यम्। अत एवेत्युक्तमेव विशदयति- **विशिष्टस्योपाधेरित्यादिना ॥** तर्ह्यन्यत्रापि प्रतिपक्षानुमाने व्यभिचारवारकविशेषणवैयर्थ्यं दोषो न स्यादिति प्रागुक्तदोषं परिहरति- **उपाध्यनुन्नीत एवेत्या-दिना ॥** प्रतिपक्षस्योपाध्यनुन्नीतत्वम् उपाध्यभावरूपत्वाभावः, तदुन्नीतत्वं च तदभावरूपत्वमिति द्रष्टव्यम्। **अनुकूलतर्केणेति ॥** अनुकूलतर्केण हेतोः साध्यव्याप्यत्वनिश्चयेन साध्यव्याप्यहेत्वव्यापकतयोपाधेः साध्या-व्यापकत्वादनुकूलतर्कसनाथतया ईश्वरानुमानस्य प्रबलत्वेन तेनेतरस्य बाधितत्वादुपाधिप्रतिपक्षनिरास इत्यर्थः। अनुकूलतर्कमाशङ्कते- **कर्त्रभाव इति ॥ कारणाभावेति ॥** कारणसामान्याभावप्रयुक्तत्वात्कार्याभावस्य **(पां.टि.)** तदभावेनैव कार्याभावस्याऽपादनीयत्वेन, कारणविशेषाभावप्रयुक्तत्वाभावेन तद्विशेषकर्त्रभावेन कार्याभावापादनमप्रयोजकत्वादयुक्तमिति भावः। कार्याभावस्य कारणसामान्याभावायत्तत्वं कुत इत्यतस्तदुप-पादयति- **कार्यसामान्यं हीति ॥** कार्याभावस्य कारणविशेषाभावायत्तत्वे बाधकं चाऽह- **अन्यथेति ॥ प्रसङ्ग इति ॥** अविशेषादिति भावः। सार्वत्रिकत्वासार्वत्रिकत्वाभ्यां विशेषाद् अविशेषासिद्धेः प्रशिथिलमूलोऽयं तर्क इत्याशङ्कते- **कर्मादिकमिति ॥** अन्योन्याश्रयेण दूषयति- **तत्सिद्ध्यर्थत्वादिति ॥ यद्यपीति ॥**

'प्रतिसाधनरूपस्य नानुमानस्य दूषणम्।
उपाधिः प्रतिरूपं हि साधनं तन्न चापरम्॥'

इत्यनुव्याख्यानोक्तेरिति भावः।

ननु प्रतिपक्षेऽप्युपाध्युद्भावनं सिद्धान्ते स्वीक्रियत एव। तत्कथमेतत्? न च प्रतिपक्षस्य पूर्वमेव सिद्धत्वेन वैयर्थ्यान्न तथेति वाच्यम्। उपाध्युद्भावने सति प्रतिपक्षान्तरसहकारेणैकस्य प्राबल्यसिद्ध्या तेन तदसहकृतानु-मानबाधसम्भवेन वैयर्थ्याभावात्। न चाकार्यत्वरूपोपाध्यभावस्य कार्यत्वरूपत्वेन विमतं सकर्तृकं कार्यत्वादिति प्रतिपक्षपर्यवसानेन न प्रतिपक्षान्तरसहकार इति वाच्यम्। अभावाभावस्य भावव्याप्तत्वं न भावत्वमिति मतेन प्रतिपक्षान्तरलाभोपपत्तेः। न चोपाध्युद्भावनलब्धानुमानान्तरस्य पूर्वानुमानसमबलत्वाभावे प्रतिपक्षत्वानुपपत्त्या तत्समानबलत्वावश्यम्भावात्कथं बाधकत्वम्, असमानबलत्वेऽपि बाधकत्वे एकेनाप्यनुमानेन प्रतिपक्षद्वयबाधः किं न स्यादिति वाच्यम्। एकैकस्य प्रतिपक्षानुमानेन समबलत्वेऽपि बहुत्वप्रयुक्तप्राबल्येनानेकेषामेक-बाधकत्वोपपत्तेः। सहकारिकृतसामर्थ्यातिशयस्यानुभवसिद्धत्वात्। अन्यथा बहुत्वप्रयुक्तप्राबल्यस्य दत्तजलाञ्जलित्वापातात्। तस्यैतादृशविषयातिरिक्तविषयान्तराभावात्। न चेष्टापत्तिः। 'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः' इति सिद्धान्ते तदभ्युपगमात्। न चैवम् 'प्रतिसाधनरूपस्य नानुमानस्य दूषणम्। उपाधिः' इत्यनुव्याख्यानविरोधः। तस्य परमतानुवादत्वेन स्वमतानुवादत्वाभावात्। तस्मादभ्युपगमवादत्वोक्तिरयुक्तेति चेत्, अत्र ब्रूमः। प्रतिपक्षेऽप्युपाध्युद्भावनस्याङ्गीकारान्न तत्पक्षोक्तदोषावकाशः। न च प्रकृतग्रन्थासङ्गतिः। तस्यार्थान्तरपरत्वेन आपातप्रतीतार्थपरत्वाभावेन तदनवकाशात्। तथा हि। अनुमानेनेश्वरं साधयता नैयायिकेन प्रतिपक्षानुमाने उपाधेरुद्भावनीयत्वेन तेन च 'शतमप्यन्धानां न पश्यति' इति न्यायेन बहुत्वप्रयुक्तप्राबल्यानङ्गी-कारेण प्रतिपक्षे उपाधेर्वैयर्थ्यस्याङ्गीकृतत्वादिति यद्यपीति ग्रन्थार्थः। प्रतिपक्षे उपाधेर्वस्तुगत्या दूषणत्वाभ्युपगमेन नैयायिकस्य प्रतिपक्षे उपाध्युद्भावनवाद इत्यदोष इति परिहारार्थः। ततश्च न प्रकृतग्रन्थासङ्गतिः।

**॥ अनुपपत्तेरिति ॥** एकस्यैव कर्तृत्वकर्मत्वयोर्विरुद्धत्वादिति भावः। **न चाशरीरस्येति ॥** न च प्रागुक्त-दोषः। प्रयत्नस्य शरीरकर्मकत्वाभावात्। तज्जन्यक्रियायास्तत्कर्मकत्वेऽपि शरीरावच्छिन्नस्याऽत्मनः कर्तृत्वं, विशेषणभूतशरीरमात्रस्य कर्मत्वम्। अतस्तस्या अपि शरीरिजन्यत्वान्न साध्याव्यापकत्वमिति भावः। मूलकारीयं

प्रतिपक्षोपाधिभ्यामीश्वरानुमानदूषणमसिद्धेरप्युपलक्षणमिति भावेनासिद्ध्याऽपि तद्दूषयति- **किञ्चेति ।।** पक्षे **(पां.टि.)** कार्यत्वरूपहेतुसिद्धिः किमागमादभिमता उत प्रत्यक्षात् किं वाऽनुमानात् । नाऽद्यः । आगमापेक्षानु-मानेनेश्वरसिद्धिपक्षे आगमेन कार्यत्वसिद्धिसम्भवेऽपि तदनपेक्षानुमानेन तत्सिद्धिपक्षे आगमेन कार्यत्व-सिद्धेर्वक्तुमशक्यत्वात् । न द्वितीयः । *उपलब्धप्रागभावकोटिकेषु घटादिषु प्रत्यक्षेण प्रागभावप्रतियोगित्व-रूपकार्यत्वसिद्धिसम्भवेऽपि भूभूधरादेरनुपलब्धप्राक्कोटिकतया प्रत्यक्षेण तत्रोक्तकार्यत्वसिद्धेरयोगात् । नान्त्यः। लिङ्गाभावादित्याशयेनाऽह- **आगमानपेक्षेत्यादि ।।** ननु सावयवत्वस्यैव कार्यत्वसाधने लिङ्गत्वान्न तदभाव इत्याशङ्कते- **सावयवत्वादिति चेदिति ।।** तस्यैवानिरुक्तेर्न तेन कार्यत्वसिद्धिरित्यभिप्रेत्य सम्भावितान् पक्षान्निराचिकीर्षुः, तत्किं यत्किञ्चिदवयवसम्बन्धित्वं, किं वाऽवयवसमवेतत्वं, यदि वा स्वावयवसमवेतत्वम्, अथ वा द्रव्याश्रितद्रव्यत्वं, यद्वा द्रव्यसमवेतद्रव्यत्वम्, आहोस्वित्समवायवृत्त्या द्रव्याश्रितद्रव्यत्वम् उत मध्यमपरिमाणवत्त्वमिति विकल्पान् मनसि निधायाऽद्यमुत्थापयति- **किमिदमित्यादिना ।।** उत्थापितपक्षमाकाशे व्यभिचारेण दूषयति- **पटावयवेति ।।** आकाशे सत्यपि पटावयवतन्तुसम्बन्धित्वे कार्यत्वविरहादिति भावः । द्वितीयं शङ्कते- **अवयवेति ।।** ततश्चाऽकाशे सत्यपि तन्तुसम्बन्धित्वे तत्समवेतत्वाभावेन हेत्वगमनान्न व्यभिचार इति भावः । मास्तु तर्ह्याकाशे व्यभिचारस्तथाप्युदाहरणस्यानादरणीयत्वात्तन्तुसमवेततन्तुत्वादौ व्यभिचारा-न्नावयवसमवेतत्वेनापि तत्सिद्धिरित्यभिप्रेत्याऽह- **जात्यादाविति ।।** आदिपदेन यत्किञ्चिदवयवभूतपरमाण्वादि-समवेतविशेषपरिग्रहः । जात्यादेः सत्यप्यवयवसमवेतत्वेऽकार्यत्वेन कार्यत्वरूपसाध्यविरहादिति भावः ।

तृतीयं शङ्कते- **सावयवेति ।।** ततश्च जात्यादेः सत्यप्यवयवसमवेतत्वे स्वावयवसमवेतत्वाभावान्न व्यभिचार इति भावः । असिद्ध्या एतं पक्षं दूषयितुमिमं पक्षं निष्कर्षयति- **स्वसमवायीति ।।** चतुर्थमाशङ्कते- **द्रव्याश्रि-तेति ।।** द्रव्यपदं स्पष्टार्थम्, आकाशादेः सत्यपि द्रव्यत्वे आश्रितत्वाभावेन जात्यादेश्च सत्यप्याश्रितत्वे द्रव्यत्वाभावेन व्यभिचारपरिहारेण आश्रितद्रव्यत्वमात्रस्यैव कार्यत्वसाधने पुष्कलत्वादिति द्रष्टव्यम् । **व्यभि-चारादिति ।।** तत्र सत्यपि द्रव्याश्रितद्रव्यत्वे कार्यत्वविरहादिति भावः । वारिनिहितपार्थिवपरमाणौ सत्यपि द्रव्याश्रितद्रव्यत्वे द्रव्यसमवेतद्रव्यत्वाभावान्न तत्र व्यभिचारप्रसङ्ग इति पञ्चममाशङ्कते- **द्रव्यसमवेतेति ।।** अत्राप्याद्यं द्रव्यपदं स्पष्टार्थम्, आकाशादेर्वारिनिहितपरमाणोश्च सत्यपि द्रव्यत्वे समवेतत्वाभावेन जात्यादेः सत्यपि समवेतत्वे द्रव्यत्वाभावेनैव तत्रोक्तव्यभिचारपरिहारसिद्ध्या समवेतद्रव्यत्वमात्रस्यैव कार्यत्वसाधने पुष्कलत्वादिति द्रष्टव्यम् । **परमाणौ व्यभिचार एवेति ।।** तत्र सत्यपि द्व्यणुकरूपद्रव्यसमवेतद्रव्यत्वे कार्यत्व-विरहादिति भावः । परमाणौ समवेतत्वाभावेनोक्तहेत्वगमनान्न व्यभिचार इत्याशङ्कते- **द्व्यणुकमिति ।। साम्यादिति ।।** तथाच परमाणौ व्यभिचार एवेति भावः । परमाणोरुक्तरीत्या द्रव्यसमवेतद्रव्यत्वेऽपि समवायवृत्त्या द्रव्याश्रितद्रव्यत्वाभावान्न व्यभिचार इति षष्ठं पक्षमाशङ्कते- **समवायवृत्त्येति ।।** अत्रापि समवाय-वृत्त्याऽऽश्रितद्रव्यत्वे तात्पर्यम् । द्रव्यपदं तु स्पष्टार्थम् । आकाशादेराश्रितत्वेन, जात्यादेर्द्रव्यत्वेन, परमाणोश्च **(पां.टि.)** समवायवृत्त्येत्यनेनैव व्यावृत्तिसिद्ध्या समवायवृत्त्याऽऽश्रितद्रव्यत्वमात्रस्यैव कार्यत्वसाधने पुष्कलत्वादिति द्रष्टव्यम् । **अनिरूपणादिति ।।** तथा च व्यभिचार एवेति भावः । ननु समवायवृत्त्या द्रव्याश्रितत्वेन व्यवह्रियमाणत्वं सावयवत्वमतो नोक्तव्यभिचार इत्याशङ्क्याऽह- **व्यवहारमात्रं त्विति ।। दर्शनादिति ।।** तथा च तन्तुषु पट इत्यादिदृष्टव्यवहारानुसारेण परमाणुषु द्व्यणुकं समवेतमित्यादिव्यवहारवत् पटे तन्तव इति दृष्टव्यवहारानुरोधेन द्व्यणुके परमाणुरिति व्यवहारस्यापि सिद्धत्वेन परमाणोरुक्तव्यवहारविषयत्वस्यावर्जनीय-त्वात्तत्र व्यभिचार एवेति भावः । सप्तममाशङ्कते- **मध्यमपरिमाणेति ।। अकार्यत्वेऽप्यनुपपत्त्यभावे-नेति ।।** अकार्यत्वेऽपि गगनप्रदेशस्येव सांशत्वेनैव मध्यमपरिमाणत्वोपपत्तेरिति भावः ।

**(व्या.टि.)** उपाधिलक्षणमकार्यत्वे दर्शयति- **यद्विकर्तृकमित्यादिना ।।** उक्त इत्युक्तिकर्तारमाह- **साधय-तेति ।।** शरीरिजन्यत्वेऽप्युपाधिलक्षणं प्रदर्शयति- **यत्र सकर्तृकत्वमित्यादिना ।। शरीरिजन्यत्वमिति ।।** अदृष्टद्वारकेति पूरणीयम् । अन्यथाऽदृष्टद्वारा जीवजन्यत्वेन साधनव्याप्तेः । **इतरत्रेति ।।** 'किंसर्वनामबहुभ्यः' इत्यनुवर्त्य 'सप्तम्यास्त्रल्' इति त्रल्प्रत्यये रूपमिति भावः । तद्विशेष्यमाह- **ईश्वरानुमान इति ।।** ईश्वरानुमापके हेतावित्यर्थः । **कार्यत्वरहितत्वं वेति ।।** प्रतियोग्यन्योन्याभावप्रतियोगितावच्छेदकात्यन्ताभावयोः परस्पर-व्याप्यव्यापकभावेनाभेदाभावात् पृथग्विकल्पः । **सम्भवादिति ।।** क्वाप्यव्यभिचारादित्यर्थः । **समव्याप्ते-श्चेति ।।** उपाधेः साध्येनेति शेषः । प्रतिबन्दीं गृह्णाति- **तुल्यमिति ।। इतरत्रापीति ।।** शरीरिजन्यत्वोपाधा-वपीत्यर्थः । प्रतिपक्षानुमान उपाधिवादी शङ्कते- **नन्विति ।।** किं प्रयोजनविशेषाभावो वा प्रयोजनसामान्याभावो वेति विकल्पयितव्ये प्रयोजनविशेषं स्वरूपेणाऽह- **व्यभिचारनिवारणेति ।।** मणिकारेण 'वर्णा न परस्परव्यभि-चारिव्यङ्ग्या

एककालावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात्' इत्यत्र व्याप्यस्य व्यभिचारवारणाय साध्ये परस्परव्यभिचारीति व्यञ्जकविशेषणप्रक्षेपादस्ति व्यापकगतस्यापि विशेषणस्य व्याप्यगतव्यभिचारवारक-त्वमित्यतस्तथात्वनियमाभावादित्युक्तम्। कुत्रचित्प्रयोगेऽपि बहुप्रयोगाभावान्न नियम इति भावः। **असिद्धे-रिति** ॥ तेन पक्षव्यावृत्तिसिद्धचा प्रयोजनसामान्याभावासिद्धेरित्यर्थः। प्रतिवाद्युत्तरयति- **एतदपीति** ॥ **समान-मिति** ॥ शरीरिविशेषणेऽपीत्यर्थः। उपाधिगतविशेषणसार्थक्यप्रकारमेतच्छब्देनान्यत्राप्यतिदिशति- **अत एवेति** ॥ पक्षधर्मतासिद्धिरूपप्रयोजनवत्त्वादित्यर्थः। 'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च' इत्यनु-व्याख्यानदिशोपाधेः प्रतिपक्षोन्नायकत्वाद् विशिष्टस्योपाधित्वे तस्य साध्यव्यापकत्वे व्यापकाभावस्य व्याप्याभाव-व्याप्यत्वात् तेन तत्साधने तस्य विशिष्टाभावत्वेन विशेषणाभावाद्व्यतिरिक्तत्वात् न वैयर्थ्यमिति वक्तुं विशिष्टस्य साध्यव्यापकतां प्रतिजानीते- **विशिष्टस्येति** ॥ **अस्त्येवेति** ॥ ततश्च किं प्रकृत इति तत्राऽह- **उपाध्यनुन्नीत इति** ॥ तदनाहित इत्यर्थः। **नोपाध्युन्नीत इति** ॥ तस्य व्यभिचारवारकत्वेऽपि विशिष्टोपाध्यभावस्य हेतुत्वात् दज्ञाने निर्धर्मिकव्याप्तेरग्रहात्तज्ज्ञानस्य प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानसाध्यत्वाद्धर्मिज्ञानद्वारा व्याप्तिग्रहौपयिकत्वं वरीवर्त्येवेति दरीदृश्यत इति भावः। अत्र विस्तरस्तर्कताण्डवे बोध्यः।

**(व्या.टि.)** ईश्वरानुमानिकत्ववादी शङ्कते- **अनुकूलेति** ॥ **तदिति** ॥ तर्केत्यर्थः। हेतूच्छित्तिबाधकमाशङ्कते- **कर्त्रभावेति** ॥ कार्यसामान्याभावे न कर्त्रभावः प्रयोजकः, तस्य कारकविशेषाभावत्वात्। किन्तु कारण-सामान्याभावः, अतो न तेन तदापादनं युक्तमित्याह- **कारणाभावेति** ॥ तदपि कुत इत्यतः कार्यसामान्ये कारणसामान्यस्य प्रयोजकत्वादित्याह- **कार्यसामान्यं हीति** ॥ अनेन कर्त्रभावेऽपि सकारणत्वमात्रेण कार्यत्वस्योपपत्त्याऽप्रयोजकतोक्ता वेदितव्या। विपक्षेऽतिप्रसङ्गमाह- **अन्यथेति** ॥ **आसनशयनादीति** ॥ तेषामकर्मकत्वप्रसिद्धेर्नासिद्धिः। वैषम्यमाशङ्कते- **कर्मादिकमिति** ॥ **तदिति** ॥ कर्तृसार्वत्रिकत्वस्येत्यर्थः। **परकीयेति** ॥ 'कुग्जनस्य परस्य च' इति कुगागमः। **प्रयासस्येति** ॥ गिरिदरीविवरवृत्त्यङ्कुरादेः कर्तृसाधन-प्रयासस्येत्यर्थः। **एवेति** ॥ अनुमानप्रयासात्प्रागेव कर्तृसार्वत्रिकत्वसिद्धावनुमानवैयर्थ्यम्, असिद्धौ च न तेनोपाधिप्रतिपक्षनिरास इत्युभयतःपाशा रज्जुरिति सूचयति। ननु नेदं प्रतिपक्षानुमानोपाध्युद्भवनं युज्यते। सिद्धान्तविरुद्धत्वात्। उपाधेर्हि प्रतिपक्षोन्नायकतया दूषकत्वमिति हि सिद्धान्तः। प्रतिपक्षेऽप्युपाध्युद्भावने तस्यापि प्रतिपक्षोन्नायकतया तस्य वैयर्थ्यात्। पूर्वेणैव प्रतिपक्षितत्वात्। यथोक्तमनुव्याख्याने फलाध्याये-

'प्रतिसाधनरूपस्य नानुमानस्य दूषणम्।<br>
उपाधिः प्रतिरूपं हि साधनं तन्न चापरम्॥' इति।

अतो नेदममूलमाशङ्कनीयमित्याशङ्क्य परिहरति- **यद्यपीत्यादिना** ॥ **अभ्युपगमवादोऽयमिति** ॥ ननु नायं वादोऽभ्युपगमनीयः। विप्रतिपन्नत्वात्। अन्यथा संवादेन निगृह्येतेति चेन्न। रक्षानुवाके मीमांसकैः 'कृत्वा चिन्तया' बहूनामधिकरणानां प्रवर्तितत्वात्। न चैवमपि संवादस्यानुद्धारः, न हि पराङ्गं दग्धमिति स्वाङ्गदाहोपशम इति वाच्यम्। उक्त्यनौचित्योक्तेरुक्तदूषणस्य ज्यायस्त्वादिति रहस्यम्। केचित्तु बहुत्वसङ्ख्यायाः प्राबल्यप्राप्तेः प्रतिपक्षेऽप्युपाध्युद्भावनं सिद्धान्तः। प्रतिसाधनरूपस्येत्यनुव्याख्यानं पररीत्या। तथा चाभ्युप-गमवादोऽयं पूर्वपक्षिण इति व्याचख्युः। साध्यस्योपाधिव्यभिचारं शङ्कते- **नन्विति** ॥ कुत इत्यत आह- **कर्मभूतस्येति** ॥ क्रियाजन्यफलशालित्वरूपकर्मलक्षणे संयोगविभागादेर्द्विष्ठत्वेन द्वयोः कर्मत्वापत्त्या चैत्रश्चैत्रं गच्छतीत्याद्यापातेन कर्तुरन्यत्वे सतीति विशेषणावश्यकतया, **कर्तरि** शरीरकर्मकप्रेरणाकर्तरि शरीरस्य प्रवेशोऽ-नुपपन्नः, लक्षणविरोधादिति भावः।

समाधत्ते- **उच्यत इति** ॥ शरीरस्योपयोगप्रदर्शनाय प्रेरणां निर्वक्ति- **शरीरक्रियेति** ॥ धात्वर्थतावच्छेदक-फलीभूतक्रियायां शरीरनिष्ठत्वद्योतनाय शरीरेत्युक्तिः। न त्वर्थे निवेशः। धात्वर्थेनोपसङ्ग्रहेणाकर्मकत्वापत्तेः। अन्यस्य प्रेरणाकर्मत्वानापत्तेश्चेति ध्येयम्। कर्मणः कर्तृत्वाभावेऽपि तद्विशेषणत्वं समर्थः सामर्थ्यं प्रकटयतीत्यादा-विवोपपन्नम्। वस्तुतो लक्षणे कर्तुरन्यत्वे सतीति विशेषणं न देयम्। विषयत्वरूपकर्मत्वस्य ग्राम इव क्रियाश्रयेऽ-भावादेवानतिप्रसङ्गात्। 'तदात्मानमेवावेत्' इत्यादावभेददर्शनाच्च। किन्तु कर्मकर्त्रोरुत्सर्गतो भिदेत्येतदेव सुधोपदर्शितरीत्या मन्तव्यम्। **अशरीरस्य** शरीरानवच्छिन्नस्य प्रयत्नोत्पत्तिरस्तीति व्यतिरेकप्रदर्शनमुखेन **(व्या.टि.)** कर्तृप्रवेशव्युत्पादनम्। यद्यप्यशरीरस्यापि प्रयत्नोऽस्ति। ईश्वरकृतेरङ्गीकृतेः। तथाऽपि जन्यकृत्या-शयेनेयमुक्तिः। अत एव प्रयत्नोत्पत्तिरित्युक्तम्। केवलानुमानेनेश्वरसाधने पक्षे हेतुसाधकाभावेन तदसिद्धिमाह- **किञ्चेति** ॥ **अनुपलब्धेति** ॥ अदृष्टपूर्वावस्थेष्वित्यर्थः। साधकमाशङ्कते- **सावयवत्वादिति** ॥ विकल्प्य दूषयितुं पृच्छति- **किमिदमिति** ॥ अवयवसम्बन्धित्वं वाऽवयवसमवेतत्वं वा स्वावयवसमवेतत्वं वा द्रव्याश्रितद्रव्यत्वं वा द्रव्यसमवेतद्रव्यत्वं वा समवायवृत्त्या

द्रव्याश्रितद्रव्यत्वं वा मध्यमपरिमाणवत्त्वं वेति सप्तधा विकल्प्याऽद्यं निराह- **पटावयवेति** ।। द्वितीयं पराह- **जात्यादाविति** ।। तन्तुत्वादावित्यर्थः । तृतीयं पराचष्टे- **स्वसमवायि-कारणेति** ।। **तदपीति** ।। स्वसमवायिकारणमित्यर्थः । चतुर्थं निराह- **वारिनिहित इति** ।। दधातेर्हिः । निक्षिप्त इत्यर्थः । पञ्चमं पराकरोति- **तथाऽपीति** ।। उद्धरति- **द्व्यणुकमिति** ।। **तस्येति** ।। समवायस्येत्यर्थः। षष्ठं निष्ठीवति- **ऊर्ध्वेति** ।। व्यवहारेणातिरिक्तः कल्प्यत इत्यत आह- **व्यवहारमात्र-मिति** ।। सप्तमं निरस्यति- **तस्येति** ।। **अनुपपत्त्यभावेनेति** ।। गगनपदस्येवेत्यर्थः । इति समाप्तम्, केवलानुमानदूषणं समाप्तमित्यर्थः ।

**मूलम् - प्रत्यक्षानुमानसिद्धत्वे च भेदस्य तद्विरोधादेवाप्रामाण्यमभेदागमस्य । तेनाभेदागमस्याप्रामाण्याभावे (तेनाभेदवाक्यस्याप्रामाण्याभावे च) नानुवादकत्वं भेदवाक्यानाम् । न हि बलवतोऽनुवादकत्वम् ; दाढर्यहेतुत्वात् ।**

**(त.मं.)** प्रत्यक्षानुमानयोरागमापेक्षया दुर्बलत्वात् कथं तद्विरोधादभेदागमस्याप्रामाण्यमित्यत आह- **तेनेति** ।। न हि प्रत्यक्षादेर्बलवत आगमस्य तद्विषयवादेऽप्यनुवादकत्वं स्यात् ।

**टीका -** तदेवमीश्वरस्यैवासिद्धेस्तद्भेदस्य प्रत्यक्षानुमानाभ्यां सुतरामसिद्धिरिति न भेदवाक्याना-मनुवादकत्वमित्युक्तम् । अधुना व्यर्थश्चायं भेदवाक्यानामनुवादकत्वव्युत्पादनप्रयासः परस्ये-त्याशयेनाऽह- **प्रत्यक्षेति** ।। येन भेदवाक्यानामनुवादकत्वमुच्यते तेनावश्यं भेदस्य प्रत्यक्षा-नुमानसिद्धत्वं वाच्यम् । असिद्धस्यानुवदितुमशक्यत्वात् । तथा च तिष्ठन्तु तावद्भेदवाक्यानि । भेदग्राहकप्रत्यक्षादिविरोधादेवाप्रामाण्यमभेदागमस्यापरिहार्यम् । तथा चाभेदागमप्रामाण्य-परिरक्षणार्थं भेदागमानामनुवादकत्वव्युत्पादनं क्रियमाणं तदप्रामाण्यमेव द्रढयतीति व्यर्थमेव । नन्वपौरुषेयत्वेनानाशङ्कितदोषत्वादागमः प्रबलः । प्रत्यक्षानुमाने तु दोषशङ्काकलङ्कितत्वाद्दुर्बले । तत्कथं दुर्बलभेदग्राहकप्रत्यक्षादिविरोधेन प्रबलस्याभेदागमस्याप्रामाण्यप्राप्तिरित्यत आह - **तेनेति** ।। तेन प्रत्यक्षादिविरोधेन । नानुवादकत्वमित्यत्रापि तेनेति वर्तते । भेदस्य प्रत्यक्षादिना सिद्धत्वेनेति । कुतो नेति चेत्, परोक्तयुक्त्यैवेत्याह- **नहीति** ।। यद्यागमस्य प्रबलत्वाद्दुर्बल-प्रत्यक्षादिविरोधेनापि नाप्रामाण्यमित्युच्यते तर्हि भेदवाक्यानाम् अपि वेदत्वेन प्रबलत्वाद्दुर्बल-प्रत्यक्षादिप्रतिपन्नभेदप्रतिपादकत्वेऽपि नानुवादकत्वम् । बलवतोऽपि कुतो नानुवादकत्वमित्यत आह- **दाढर्येति** ।।

अयमाशयः । न तावत्पूर्वप्रवृत्तप्रमाणावच्छिन्नविषयत्वमनुवादकत्वं भेदवाक्यानामस्ति, तथाऽनुपलम्भात् । तथात्वे ह्यर्थासंस्पर्शितया दौर्बल्यं स्यात् । ततः प्रतिपन्नार्थप्रतिपादकत्वमात्र-मनुवादकत्वमिति वक्तव्यम् । तस्यापि परानपेक्षस्वकारणायत्तस्य वैयर्थ्यमेवानुवादकत्वे बीजमङ्गीकर्तव्यम् । नच तत्प्रकृतेऽस्ति । दुर्बलाभ्यां प्रत्यक्षानुमानाभ्यां प्रतिपन्नेऽपि भेदे साशङ्के सति तत्रैव प्रवृत्तानां प्रबलानां भेदवाक्यानां निःशङ्कभेदप्रतिपत्तिहेतुत्वेन सार्थकत्वात् । तथा चाननुवादकतद्विरोधेनाभेदागमस्याप्रामाण्यं तदवस्थमिति ।

**(र.टि.)** 'तद्विरोधादेव' इत्येवकाराभिप्रायमाह- **तिष्ठन्तु तावदिति** ।। भेदवाक्यानामनुवादकत्वे प्रत्यक्षादि-विरोधस्य निमित्तत्वेन परैरनुक्तत्वात्कथं तेनेत्यस्यानुवृत्तिरित्यतस्तेनेत्यस्यार्थमाह- **भेदस्येति** ।। बलवत्त्व-लक्षणहेतोरप्रयोजकत्वशङ्कायां किमनेन बाधकमुपन्यस्तमित्यत आह- **अयमाशय इति** ।। **प्रमाणावच्छि-न्नेति** ।। प्रमाणविषयत्वावच्छिन्नेत्यर्थः । **अर्थासंस्पर्शितयेति** ।। भेदे प्रत्यक्षादिविषयत्वप्रतिपादकत्वापत्त्या भेदरूपार्थसत्त्वे उदासीनतया दौर्बल्यं स्यादित्यर्थः । तथा च हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः । **निःशङ्के-ति** ।। अन्यथा प्रत्यक्षाद्यपेक्षया प्राबल्यं न स्यादिति भावः ।

**(रा.टि.)** उत्तरवाक्यस्य सङ्गतिसौलभ्याय उपसंहारव्याजेन प्रकृतप्रमेयमनुवदति- **तदेवमिति** ।। **तत्** तस्मादि-त्यर्थः । **भेदवाक्यानीति** ।। अभेदवाक्यविरोधितयोक्तानि 'द्वे ब्रह्मणी' इत्यादीनीति योज्यम् । तेनेत्यनुवर्तत इत्युक्तं तस्यात्रोपयुक्तमर्थमाह- **भेदस्य प्रत्यक्षादिना सिद्धत्वेनेति** ।। ननु प्रत्यक्षादिप्राप्तार्थाप्रतिपादनेन भेदवाक्यानामननुवादित्वे सत्येकार्थे

प्रमाणद्वयाप्रवृत्तेर्दार्ढ्यहेतुत्वादित्युक्तिर्न लगतीत्यतोऽस्त्यनुवादकत्वम्, अथापि सप्रयोजनानुवादत्वान्न दौर्बल्यमिति भावेनाऽह- **अयमाशय इति ॥ पूर्वप्रवृत्तेरिति ॥** धारावाहिकज्ञानेषु द्वितीयादिज्ञानस्येवेति भावः । **अर्थेति ॥** मानान्तरानवगतस्वमात्रप्रमाणको योऽर्थः तदसंस्पर्शितयेत्यर्थः । **प्रतिपन्नार्थेति ॥** ज्ञातार्थेत्यर्थः । **परानपेक्षेति ॥** धारावाहिकज्ञानेषु द्वितीयादिज्ञानस्येव परानपेक्षं स्वकारणायत्तं यत् तस्येत्यर्थः । **तथाचाननुवादकेति ॥** यस्य पुंसः प्रत्यक्षादिना भेदनिश्चयः तं प्रत्यनुवादकत्वेऽपि अनिश्चयवन्तं प्रत्यननुवादकताऽस्तीत्येवमुक्तम् । अनिर्णीतार्थप्रतिपादकेत्यर्थः ।

**(श्री.टि.)** पूर्वग्रन्थफलितमर्थमनुवदन्नुत्तरग्रन्थमवतारयति- **तदेवमिति ॥** तद्विरोधादेवेत्येवकाराभिप्राय-**(श्री.टि.)** माह- **तिष्ठन्तु तावदिति ॥ तथा चेति ॥** भेदग्राहकप्रत्यक्षादिविरोधे सतीत्यर्थः । **तदिति ॥** तस्याभेदागमस्येत्यर्थः । **तेनेति ॥ वर्तत इति ॥** अनुवर्तत इत्यर्थः । अनुवृत्तस्य तेनेत्यस्य प्रत्यक्षादिविरोधेने-त्यस्यार्थस्यासम्भवादाह- **भेदस्येति ॥ आगमस्य** अभेदागमस्य । **वेदत्वेनेति ॥** अपौरुषेयवाक्यत्वेनेत्यर्थः । ननु कथमनेनानुवादकत्वपरिहार इत्यत आह- **अयमाशय इति ॥ पूर्वप्रवृत्तप्रमाणावच्छिन्नेति ॥** पूर्वप्रवृत्त-प्रमाणप्रतिपाद्यत्वावच्छिन्नार्थप्रतिपादकत्वमित्यर्थः । यथा लोके, प्रत्यक्षादिकं प्रमाणमेवं प्रतिपादयतीत्यनुवादक-वाक्यस्य पूर्वप्रवृत्तप्रत्यक्षादिप्रमाणप्रतिपाद्यत्वविशिष्टार्थप्रतिपादकत्वमस्ति । एवं तादृशानुवादकत्वं द्वा सुपर्णे-त्यादिभेदवाक्यानां नास्ति तथाऽनुपलम्भादित्यर्थः । **तथात्वे हीति ॥** यद्येतादृशानुवादकत्वमुच्येत तदैव ह्यर्थासंस्पर्शितया अयमेवमाहेत्यादिवद् भेदरूपार्थसत्त्व उदासीनत्वेनार्थसत्त्वनिश्चायकत्वाभावप्राप्त्या भेद-वाक्यानां दौर्बल्येनाप्रामाण्यशङ्का स्यात् । न ह्येवमस्ति । अनुपलम्भादित्यर्थः । **तस्यापीति ॥** प्रतिपन्नार्थ-प्रतिपादकस्याप्यागमस्येत्यर्थः । **परानपेक्षेति ॥** पूर्वप्रवृत्तप्रत्यक्षादिप्रमाणरूपपरापेक्षां विना **स्वकारणायत्तस्य** स्वस्यार्थबोधने यत्कारणं शक्तियोग्यतादिसहकारितन्मात्राधीनस्य तन्मात्रमपेक्ष्य प्रवृत्तस्येत्यर्थः । अयं भावः। यद्यागमः प्रत्यक्षादिरूपपूर्वप्रमाणापेक्षया तदुपजीवनेनेति यावत्, स्वार्थप्रतिपादने प्रवर्तेत तर्ह्येवानुवादितया दौर्बल्यशङ्का स्यात् । न चैवमस्ति । आगमः प्रत्यक्षाद्यनुपजीवनेन शक्त्यादिसहकारिवशात् स्वार्थं प्रतिपाद-यति । सोऽर्थो वस्तुगत्या प्रमाणान्तरप्रतिपादित इत्येव । तथा चैतादृशस्यापि वाक्यस्यानुवादित्वे प्रमाणान्तरेणापि तस्यार्थस्य प्रतिपादितत्वाद्वैयर्थ्यमिति वैयर्थ्यमेव बीजतया वाच्यम् । **न च तत्प्रकृतेऽस्तीति ।** तद्वैयर्थ्यरूपं बीजं प्रकृते नास्तीत्यर्थः । कुतो नास्तीत्यत आह- **दुर्बलाभ्यामित्यादिना ॥** तथा च निश्शङ्कतया भेदप्रतीतेर्द्वा सुपर्णेत्यादि-भेदागमेनैव जायमानत्वेन प्रत्यक्षादिना तदजननात् । अनुवादकत्वे बीजभूतं वैयर्थ्यं नास्तीति भावः । **तद्विरोधे-नेति ॥** भेदवाक्यविरोधेनेत्यर्थः । भेदवाक्यैः प्रतिरुद्धत्वादित्यन्वयः ।

**(पां.टि.) व्यर्थश्चेति ॥** ऐक्यागमस्य भेदागमविरोधाभावोपपादनद्वाराऽप्रामाण्याभावोपपादनार्थस्य भेदागमानुवादकत्वप्रतिपादनप्रयासस्य प्रत्यक्षादिविरोधेनैक्यागमाप्रामाण्यसम्पादकत्वेन वैयर्थ्यमित्यर्थः । नन्वैक्यागमस्य भेदवाक्यविरोधेनाप्रामाण्यस्य समर्थितत्वेन तद्व्यावृत्त्यनुपपत्त्या तदर्थैवकारानुपपत्तिरित्यतोऽ-र्थान्तरपरत्वादत्रैवकारस्य भेदागमविरोधव्यावृत्तिपरत्वाभावान्न तदनुपपत्तिरिति भावेन तदभिप्रायमाह- **तिष्ठन्तु तावदिति ॥** कथमनेनोक्तशङ्कानिरास इत्यत आह- **अयमाशय इति ॥** बलवतां भेदवाक्यानामनुवादकत्वं वदन् प्रष्टव्यः, किं तेषां पूर्वप्रवृत्तप्रमाणावच्छिन्नविषयत्वरूपमेवानुवादकत्वमभिमतम् उत प्रतिपन्नार्थ-प्रतिपादकत्वमिति । नाऽद्यः । पूर्वप्रवृत्तप्रमाणावच्छिन्नविषयत्वस्यैव भेदवाक्येष्वसत्त्वेन तस्यानुवादकत्वरूपताया असम्भवादित्याह- **न तावत्पूर्वप्रवृत्तेति ॥** श्रुतसाक्षिवाक्यवत् 'प्रत्यक्षादिकं भेदं विषयीकरोति' इत्येवं पूर्वप्रवृत्त-प्रमाणविषयत्वावच्छिन्नविषयकत्वमित्यर्थः । कुत उक्तरूपस्यानुवादकत्वस्य भेदवाक्येष्वसत्त्वमित्यतस्तत्किं भेदवाक्येभ्यस्तथा प्रतिभासात्सिद्धम् उत तदङ्गीकारे बाधकाभावात् । नाऽद्यः । 'द्वा सुपर्णा' इत्यादिवाक्यात् **(पां.टि.)** प्रत्यक्षादिप्रमाणविषयो भेद इत्यप्रतिभासादित्याह- **तथाऽनुपलम्भादिति ॥** न द्वितीय इत्याह- **तथात्वे हीति ॥ अर्थासंस्पर्शितयेति ॥** भेदे प्रत्यक्षादिप्रमाणविषयत्वप्रतिपादकत्वेन स्वातन्त्र्येण भेदरूपार्था-प्रतिपादकत्वादित्यर्थः । **दौर्बल्यं स्यादिति ॥** ततश्चोक्तरूपानुवादकत्वाङ्गीकारे * त्वदङ्गीकृततद्बलवत्त्वहानिरेव बाधिकेति भावः । अस्तु तर्हि प्रतिपन्नार्थप्रतिपादकत्वमेव तेषामनुवादकत्वमित्यतस्तस्यानुवादत्वरूपत्वं किं पूर्वप्रवृत्तप्रमाणसापेक्षप्रयुक्तम् आहोस्विद्वैयर्थ्यप्रयुक्तमिति विकल्पद्वयं मनसि निधाय भेदवाक्यानां भेदप्रति-पादकतायाः शाब्दसामग्रीरूपस्वकारणायत्तत्वेन पूर्वप्रवृत्तप्रत्यक्षादिप्रमाणानपेक्षत्वेनाऽद्यपक्षानुपपत्तेर्द्वितीय एवाङ्गीकर्तव्य इत्याह- **तस्यापीति ॥** अस्तु तर्हि स एव पक्षो निरवद्यत्वादित्यतो भवेदेव यद्यत्र वैयर्थ्यं स्यात् । न चैतदस्तीत्याह- **न चेति ॥** तत्कथमित्यतस्तत्सार्थक्यमुपपादयति- **दुर्बलाभ्यामिति ॥** अस्त्वननुवादकत्वं भेदवाक्यानां किं तावताऽपीत्यतस्तत्सिद्धमर्थं दर्शयति- **तथा चेति ॥**

**(व्या.टि.)** शिष्यमनःसमाधानाय पूर्वोक्तमनूद्योत्तरग्रन्थसन्दर्भगर्भितमाह- **तदेवमिति ॥ तद्भेदस्य** तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्येत्यर्थः । **व्यर्थ इति ॥** विगतप्रयोजनो विरुद्धप्रयोजनश्चेत्यर्थः । आपादकासिद्धिमाशङ्क्य तत्साधयति- **येनेति ॥** वादिनेति शेषः । कुतोऽयं निर्बन्ध इत्यत आह- **असिद्धस्येति ॥ तिष्ठन्त्विति ॥** विरोधितया वक्तव्यानीत्यर्थः । तद्विरोधमपि पश्चाद्वक्ष्याम इति भावः । अपरिहार्यमिति प्रसङ्गस्य व्याप्त्यादिमत्तया बलवत्तामाह । अप्रामाण्यमेवेत्यनेन प्रामाण्यसिद्धिं व्यावर्तयति । द्रढयतीति 'तत्करोति' इति णिच् । निगमयति- **व्यर्थमेवेति ॥** अभिमतासिद्धेरनभिमतसिद्धेश्चोभयविधं वैयर्थ्यं सिद्धमेवेत्यर्थः । प्रत्यक्षादेरागमविरोधकत्वेऽपि दौर्बल्यान्न तद्विषयापहारकत्वलक्षणं बाधकत्वम् । अतो निर्बाधमागमप्रामाण्यं सेत्स्यतीत्याशङ्कते- **नन्वित्या-दिना ॥** वर्तते अनुवर्तते । तदर्थमाह- **भेदस्येति ॥ वेदत्वेन** अपौरुषेयत्वेन । तदेतत्सङ्गृहीतं न्यायामृते-

'यथा नापहरेद् द्वैताभावश्रुत्यर्थमक्षधीः ।
तथा नोपहरेद् द्वैतश्रुत्यर्थमपि दुर्बला' इति ।

अनुवादकत्वं द्वेधा निरुच्य तद्दूषकताबीजाभावात् न दोषत्वमित्याह- **अयमाशय इति ॥ पूर्वप्रवृत्तेति ॥** प्रमाणविषयतयाऽर्थविषयत्वं प्रमाणावच्छिन्नविषयत्वं, यथा रजतं देवदत्तेन ज्ञातमितिवत् 'इदं तत्प्रत्यक्षसिद्धम्, एतदनुमानसाध्यं, तद्वाक्योक्तम्' इत्यादि । **तथेति ॥** प्रमाणपरिग्रहेणेत्यर्थः । आद्यानुवादकत्वस्य दुष्टिबीजमाह- **तथात्वे हीति ॥** द्वितीयं परिशेषयति- **तत इति ॥ तस्यापीति ॥** प्रतिपन्नार्थप्रतिपादनस्यापि । **स्वकारणाऽ-यातस्येति ॥** स्वेत्यावर्तनीयम् । स्वस्वकारणायातस्येति । सामग्रीद्वयार्थिकसमाजायातस्येत्यर्थः । **वैयर्थ्यमे-वेति ॥** नैष्फल्यमेवेत्यर्थः । **अनुवादकत्वे** दौर्बल्यहेतावनुवादकत्वे **बीजम्** ईदृशानुवादकत्वस्य दूषकताबीज-मित्यर्थः । तदभावमाह- **न चेति ॥** चकारादाद्यानुवादकत्वबीजनिषेधसमुच्चयः । **सार्थकत्वादिति ॥** शङ्का-निवृत्तेः फलस्य स्फुटत्वादित्यर्थः । परमप्रकृतमुपसंहरति- **तथा चेति ॥**

**मूलम् - प्रत्यक्षादेरागमस्य प्राबल्येऽपि नोपजीव्यप्रमाणविरोधे प्रामाण्यम् । विषया-भावे स्वस्यैवाप्रामाण्यप्राप्तेः । तेनैव ह्यनुमानादिनाऽऽगमस्य विषयः सिद्ध्यति तत्पक्षेऽपि । अनुमानेन ह्यनुवादित्वपक्ष ईश्वरो बोद्धव्यः, प्रत्यक्षेण चाऽगमः । अतस्तयोर्विरोधे प्रामाण्यं न स्यात् । अनुमानसिद्धेश्वराच्च भेदोऽनुभवत एव सिद्धो जीवस्य ; असर्वकर्तृत्वेनानुभवात् ।**

**(त.मं.)** तर्हि प्राबल्यादभेदागमस्यापि प्रामाण्यं स्थितमित्यत आह- **प्रत्यक्षादेरिति ॥** येन यस्य विषयः स्वरूपं वाऽवगम्यते तत् तस्योपजीव्यम् । तद्विरोधाद् विषयाभावे **स्वस्यैव** उपजीवक-स्याप्रामाण्यप्राप्तेः । सामान्यत उक्तमर्थं विशिनष्टि - **तेनैव हीति ॥** अभेदादेः कस्यचिद् धर्मस्य ज्ञानं धर्मिज्ञानानन्तरीयकम् । तस्मात् किञ्चिद् धर्मिग्राहकप्रमाणमेष्टव्यम् । तत्र जीवेश्वरयोर्धर्मिणोस्तु ग्राहकौ प्रत्यक्षागमाविति प्राप्तम् । ते तु वेदं भेदेनैव धर्मिणं ग्राहयन्तमनुवादीत्यनादृत्यानुमानेन बोद्धव्यो धर्मीत्यभ्युपगच्छन्ति । एवं चेत् विषयद्वारेणाभेदागमस्यानुमानमुपजीव्यं स्यात् । श्रोत्रप्रत्यक्षेण चाऽगमस्वरूपं बोद्धव्यम् । तस्मात् तदपि स्वरूपद्वारेणोपजीव्यमभेदागमस्य । इतश्चाभेदागमः उपजीव्यप्रमाणविरुद्ध इत्याह- **अनुमानेति ॥** साक्षिज्ञानापरपर्यायोऽनुभवो हि जीवस्वरूप उपजीव्यप्रमाणम् ।

**टीका -** एवं भेदवाक्यैस्तेषामनुवादकत्वसिद्धये परेणाङ्गीकृताभ्यां भेदप्रतिपादकाभ्यां प्रत्यक्षानु-मानाभ्यां वा प्रतिरुद्धत्वान्नाभेदवाक्यानां प्रामाण्यमित्युक्तम् । इदानीं न केवलं समबलप्रमाण-प्रतिरुद्धत्वादप्रामाण्यं किन्तु प्रबलप्रमाणबाधितत्वाच्चेति वक्तुं सामान्यन्यायं तावद् व्युत्पादयति- **प्रत्यक्षादेरिति ॥** यद्यपि प्रत्यक्षानुमानाभ्यामागमस्य प्राबल्यमित्युत्सर्गः, तथापि यत्र प्रत्यक्षा-नुमानयोरागमं प्रत्युपजीव्यत्वं तत्र तयोरेव ततो बलवत्त्वम् । तत एव तद्विरोधे तस्य न प्रामाण्यमिति तावदङ्गीकार्यम् । कुत इति चेत्, उच्यते । उपजीव्योपजीवकयोर्हि विरोधे न तावदुभयं प्रमाणं वस्तुनो द्वैरूप्यापातात् । नाप्युभयमप्रमाणं वस्तुनो निःस्वभावत्वापत्तेः । ततोऽन्यतरस्यैवा-प्रामाण्येऽवश्यमङ्गीकार्ये, न तावदुपजीवकविरोधेनोपजीव्यस्याप्रामाण्यमङ्गीकर्तुमुचितम् । कुत इत्यत आह- **विषयेति ॥** येन हि यस्य विषयः सिद्ध्यति तत्तस्योपजीव्यम् । यथा पर्वतग्राहकं धूमानुमानस्य । तथाचोपजीवकविरोधेनोपजीव्यस्याप्रामाण्ये

सत्युपजीवकस्य विषयो न सिद्ध्येत्। विषयाभावे स्वोदयाभावेनाबोधकत्वलक्षणमप्रामाण्यं प्राप्नोति। यत्स्वयं नोदेतुमलं नापि बोधयितुं कथं तदुपजीव्यमप्रमाणीकुर्यात्। अतः परिशेषादनपेक्षतया प्रबलस्योपजीव्यस्य विरोधेन सापेक्षतया दुर्बलमुपजीवकमेवाप्रमाणं भवतीति सिद्ध्यति। यद्यपि येन यस्योत्थानं भवति तत्तस्योपजीव्यं न धर्मिग्राहकमात्रम्, तथाऽपि प्रकृतापेक्षयैतदुक्तमिति मन्तव्यम्।

अस्त्वेवमुपजीव्यविरुद्धस्योपजीवकस्याप्रामाण्यं प्रकृते तु किमायातमित्यत आह- **तेनैव हीति ॥** भेदवाक्यानामनुवादकत्वसिद्ध्यर्थं परोपन्यस्तेनैव। अनेन नास्माभिर्बलादिदमुच्यते किन्तु परेणापीदमङ्गीकृतमिति सूचयति। न केवलं भेदागमस्य किन्तु **तत्पक्षेऽप्यागमस्य** भेदागम-वदभेदागमस्यापीति यावत्। जीवं विषयीकृत्य तस्येश्वरेणाभेदो वा बोधनीयः 'तत्त्वमसि' इति। ईश्वरं विषयीकृत्य वा तस्य जीवाभेदः 'क्षेत्रज्ञं चापि मां विद्धि' इति। उभावपि विषयीकृत्याभेदमात्रं वा 'नेह नानाऽस्ति' इति। सर्वथा जीवेश्वरसिद्ध्या भवितव्यम्। तत्रेश्वरः कार्यत्वाद्यनुमानसिद्धो जीवश्च प्रत्यक्षसिद्ध इति प्रत्यक्षानुमाने तत्त्वमस्याद्यागमस्योपजीव्ये। एतदेव विवृणोति- **अनुमानेन हीति ॥** कुत इत्यत उक्तम्- **अनुवादित्वपक्ष इति ॥** भेदवाक्यानामनुवादित्वसिद्ध्यर्थं परेणानुमानस्येश्वरसाधनायोपन्यस्तत्वात्। आगच्छत्यवगच्छतीत्यागमो जीवः। यद्वा जीवस्य प्रत्यक्षसिद्धत्वं प्रसिद्धमिति तदनुक्त्वा स्वरूपग्राहकस्याप्युपजीव्यत्वं भवतीति ज्ञापयितुं 'प्रत्यक्षेण चाऽगमः' इत्युक्तम्। अथवा चशब्देन जीवं समुच्चिनोति। ततोऽपि किं प्रकृत इत्यत आह- **अत इति ॥** यत उपजीव्यमुपजीवकात्प्रबलम्, उपजीव्ये चाभेदागमस्य प्रत्यक्षानुमाने, अतः **तयोः** प्रत्यक्षानुमानयोर्विरोधे सत्यभेदागमस्य प्रामाण्यं न स्यात्। भवतु प्रत्यक्षादिकमभेदागमस्योपजीव्यं किन्तु तद्विरोधस्तु नास्ति। नहि प्रत्यक्षं जीवमीश्वराद्भिन्नत्वेन गृह्णाति, नाप्यनुमानमीश्वरं जीवात्। येन तद्विरोधः स्यात्। किं नाम तत्स्वरूपमात्रम्। तथाभूते एवात्रोपजीव्ये। तत्कथमभेदा-गमस्य प्रामाण्यं न स्यादित्यत आह- **अनुमानेति ॥** तत्कथमित्यत आह- **असर्वेति ॥** यद्यप्य-न्योन्यानपेक्षे प्रत्यक्षानुमाने न जीवेश्वरभेदं गोचरयतः तथापि कार्यत्वाद्यनुमानेन सर्वकर्तृत्वादि-लक्षणमीश्वरं ज्ञातवतः साक्षिणा च तद्विरुद्धस्वभावमात्मानमनुभवतः ततो भेदज्ञानमवर्जनीय-मेवेति। आगम एवेश्वरं गृह्णन्नुपजीव्यो नानुमानमिति चेन्न। तस्यापि 'यः सर्वज्ञः' इत्यादेरनुमान-तुल्यत्वात्।

आगमग्राहकप्रत्यक्षस्योपजीव्यत्वोक्तेरयमुपयोगः। 'नेह नानाऽस्ति' इत्यैक्यागमेन हि स्वप्रभृतेर्भेदप्रपञ्चस्य मिथ्यात्वमुच्यते। तत्र चाऽगमादिग्राहकं प्रत्यक्षादिकमुपजीव्यमिति तद्विरोधेन तस्याप्रामाण्यमिति।

**(र.टि.)** ननु प्रत्यक्षादेरागमस्य प्राबल्यमित्युत्सर्गस्य उपजीव्यतद्विरोधे नागमस्य प्राबल्यमिति, तयोरेव प्राबल्य-मिति वा अपवादो वक्तव्यः। 'नोपजीव्यप्रमाणविरोधे प्रामाण्यम्' इति कथमुक्तमित्यतोऽपवादवाक्यप्रदर्शन-पूर्वकं यदर्थमुत्सर्गापवादन्याय उक्तस्तत्प्रतिपादकं तदित्यभिप्रेत्य वाक्यं योजयति- **यद्यपीत्यादिना ॥ स्वोदया-भावेनेति ॥ स्वस्य** लिङ्गपरामर्शादेरुत्पत्त्यभावेनेत्यर्थः। **अबोधकत्वलक्षणेति ॥** अनुत्पन्नस्य विपरीतबोधकत्व-लक्षणाप्रामाण्यासम्भवेऽपि बोधकत्वाभावरूपाबोधकत्वं सम्भवत्येवेति भावः। स्वस्यैवेत्येवकाराभिप्रायमाह- **यत्स्वयमिति ॥** नन्वेवमुपजीव्याप्रामाण्यस्यानङ्गीकार्यत्वेऽपि 'नोपजीव्यप्रमाणविरोधे प्रामाण्यम्' इत्युक्तोप-जीवकाप्रामाण्याङ्गीकारे किमायातमित्यत आह- **अतः परिशेषादिति ॥** विरुद्धयोरेकाङ्गीकारबाधकस्यैवे-तराङ्गीकारसाधकत्वादिति भावः। **न धर्मिग्राहकमात्रमिति ॥** विषयाभाव इत्यनेन धर्मिग्राहकत्वेन यद्यस्योप-जीव्यं तत्रैव विरो(धे)ध उपजीवकाप्रामाण्याङ्गीकारसाधकत्वेनोक्त एवोपजीव्याप्रामाण्यानङ्गीकारे बाधकत्वे-नोक्तः न सर्वत्रोपजीव्योपजीवकविरोधे। तथा च व्याप्ति(वाक्या)शक्त्यादिमात्रग्राहकत्वेन यद्यस्योपजीव्यं तयोर्विरोधे नियमनं न सिध्येदिति भावः। **प्रकृतापेक्षयैवेति ॥** जीवेश्वरग्राहकत्वेनोपजीव्यभूतप्रत्यक्षानुमान-विरोधेनैवाऽगमस्याप्रामाण्यमङ्गीकार्यमिति यत्प्रकृतं तदपेक्षयैव विषयाभाव इत्यनेन नियामकमुक्तम्। न सर्वत्रोपजीव्योपजीवकयोर्विरोधे। प्रकृतप्रत्यक्षानुमानयोस्तु पक्षभेदेनाभेदबोधकतत्त्वमसीत्याद्यागमविषय-

ग्राहकत्वमप्यस्त्येवेति भावः। **इति सूचयतीति ॥** तथा चोपजीव्यप्रत्यक्षादिविरोधस्य नाऽपाद्यदूषणत्वमिति भावः। न केवलमस्मत्पक्ष इत्यन्यथाप्रतीतिनिरासायापिशब्दाभिप्रायमाह- **न केवलमिति ॥ उभावपीति ॥** 'नेह नाना' इत्यत्र इहेत्यस्य जीवब्रह्मानुस्यूतचैतन्यमात्रपरत्वादिति भावः। **चशब्देनेति ॥** तथाचाऽगमश्चेति चशब्दान्वय इति भावः। 'अनुमानसिद्ध' इत्यनेनोक्तमर्थमाह- **यद्यप्यन्योन्यानपेक्ष इति ॥** प्रतियोगि-ज्ञानाभावादिति भावः। **अनुमानतुल्यत्वादिति ॥** स(कर्तृकत्व)र्वकर्तृत्वादिवैशिष्ट्यविषयकानुमिति-जनकत्ववत् सार्वज्ञादिवैशिष्ट्यविषयकज्ञानजनकत्वादिति भावः।

**(रा.टि.) भेदवाक्यैरिति ॥** अग्रेतनवाशब्दोऽत्रापि योज्यः। **उत्सर्ग इति ॥** अपवादभिन्नस्थल इत्यर्थः। **पर्वतग्राहकमिति ॥** विशेष्यतया पर्वतस्याप्यनुमानविषयत्वादिति भावः। **न धर्मिग्राहकमात्रमिति ॥** एतेन विषयशब्दो धर्मिपर इत्युक्तं भवति। प्रकृते प्रत्यक्षादिग्राह्ययोर्जीवेशयोर्भेदधर्मित्वादिति भावः। तत्पक्षेऽपी-त्यत्राऽगमपदमनुवृत्त्याऽर्थमाह- **तत्पक्षेऽप्यागमस्येति ॥ जीवाभेद इति ॥** बोधनीय इत्यनुषङ्गः। **क्षेत्रज्ञं** जीवं मामिति कृष्णवाक्यम्। पररीत्यैतदुक्तिः। **नेह नानेति ॥** इह जीवेश्वररूपचेतने नाना भेद इत्यर्थः। **(रा.टि.) आगमग्राहकेति ॥** 'प्रत्यक्षेण चाऽगमः' इत्यनेनेति योज्यम्। 'अयमुपयोगः' इत्युक्तमाह- **नेह नानाऽस्तीति ॥**

**(श्री.टि.) किन्तु प्रबलप्रमाणबाधितत्वाच्चेति वक्तुमिति ॥** 'अतस्तयोर्विरोधे प्रामाण्यं न स्यात्' इत्यत्रे-त्यर्थः। **यद्यपीति ॥** तथा च न प्रत्यक्षानुमानविरोधेनाभेदागमस्याप्रामाण्यं वक्तुमुचितमिति भावः। **तत एव** बलवत्त्वादेव। **द्वैरूप्यापातादिति ॥** विरुद्धधर्मद्वयालिङ्गितत्वापातादित्यर्थः। **विषयो** धर्मी। पर्वतग्राहकं प्रत्यक्षम्। **स्वोदयाभावेनेति ॥** स्वस्योपजीवकस्योदयाभावेनेत्यर्थः। **अबोधकत्वलक्षणमप्रामाण्यमिति ॥** अनुत्पन्नस्य विपरीतबोधकत्वलक्षणाप्रामाण्यासम्भवेऽपि बोधकत्वाभावरूपाबोधकत्वरूपाप्रामाण्यं सम्भव-त्येव। धर्म्यभावे तत्र धर्मसंसर्गोऽनुमानेन वाऽगमेन वा बोधयितुं न शक्यते। 'सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयते' इति वचनात्। अतो बोधकत्वाभावरूपाप्रामाण्यं प्राप्नोतीत्यर्थः। स्वस्यैवेत्येवकाराभिप्रायमाह- **यत्स्वयमिति ॥ येन यस्येति ॥** तथा च लिङ्गादिग्राहकस्याप्युपजीव्यत्वेन येन यस्य **विषयो** धर्मी सिद्ध्यति। तत्तस्योपजीव्यमित्युपजीव्यलक्षणमयुक्तमिति भावः। **प्रकृतापेक्षयेति ॥** जीवेश्वररूपधर्मिग्राहकतयैव प्रत्यक्षादेरुपजीव्यत्वस्य प्रकृतत्वादित्यर्थः। **एतदुक्तमिति ॥** विषयाभाव इत्यनेन धर्मिग्राहकस्यैवोप-जीव्यत्वमुक्तमित्यर्थः। वस्तुतस्तु येन विना यस्योत्थानं न भवति तत्तस्योपजीव्यमित्येतदेवोपजीव्यलक्षणमिति भावः। तेनैवेति वचनेन सूचितमर्थमाह- **अनेनेति ॥ इदमिति ॥** भेदग्राहकयोः प्रत्यक्षानुमानयोरभेदागमं प्रत्युपजीव्यत्वमस्माभिर्बलात्कारेण नोच्यत इत्यर्थः। न केवलमस्मत्पक्षे किन्तु तत्पक्षेऽपीत्यन्यथाप्रतीति-निरासायापिशब्दाभिप्रायमाह- **न केवलमिति ॥** तत्पक्षेऽप्यागमस्येति पदद्वयमनूद्य तदभिप्रायमाह (न केवलमित्यादेरभिप्रायमाह)- **भेदागमवदित्यादिना ॥** भेदग्राहकयोः प्रत्यक्षानुमानयोरभेदागमं प्रति कथं धर्मिग्राहकत्वेनोपजीव्यत्वमित्यतस्तदुपपादयति- **जीवं विषयीकृत्येत्यादिना ॥ विषयीकृत्य** धर्मीकृत्य। **तत्त्वमसीति ॥** त्वं तदसीति तदर्थः। **क्षेत्रज्ञं चापीति ॥** मां क्षेत्रज्ञं जीवं विद्धीत्यर्थः। **नेह नानेति ॥** इह जीवब्रह्मणोः, तदुभयानुस्यूतचिन्मात्रस्येति यावत्, नाना भेदो नास्तीत्यर्थः। **एतदेवेति ॥** प्रत्यक्षानुमान-योरभेदागमं प्रति धर्मिग्राहकतयोपजीव्यत्वमेव विवृणोतीत्यर्थः। **स्वरूपग्राहकस्यापीति ॥** नेह नानाऽस्ती-त्याद्यभेदागमस्वरूपग्राहकश्रोत्रप्रत्यक्षस्यापीत्यर्थः। **चशब्देनेति ॥** तथा च नात्र जीवस्य प्रत्यक्षसिद्धत्वानुक्ति-रिति भावः। **प्रत्यक्षानुमानयोर्विरोध इति ॥** प्रत्यक्षानुमानयोस्सकाशाद्विरोधे सतीत्यर्थः। **भवत्वित्यादि ॥** यद्यप्यनुवादित्वपक्ष इत्यनेन भेदागमानामनुवादकत्वसिद्ध्यर्थं प्रत्यक्षादेर्भेदग्राहकत्वं वाच्यमेव। अन्यथा भेदागमानामनुवादकत्वमेव न स्यादिति प्रतिपादितत्वेन शङ्कैवैषा नोपपन्ना। तथाऽप्यनुवादित्वपक्ष इत्यस्याभि-प्रायमजानतः शङ्केयमिति ज्ञातव्यमित्याहुः। **तथाभूते एवेति ॥** स्वरूपमात्रग्राहके एव प्रत्यक्षानुमाने अभेदागमं प्रत्युपजीव्ये इत्यर्थः। अनुमानसिद्धेत्यनेनाभिप्रेतमर्थमाह- **यद्यपीत्यादिना ॥ अन्योन्यानपेक्षे इति ॥** प्रतियोगिज्ञानाभावादित्याशयः। प्रत्यक्षानुमाने जीवेश्वरस्वरूपमात्रग्राहके। **तद्विरुद्धस्वभावम्** असार्वज्ञादि-**(श्री.टि.)** विशिष्टम्। **ततः** ईश्वरात्। प्रतियोगिभूतेश्वरस्य ज्ञातत्वादिति भावः। **अवर्जनीयमेवेति ॥** प्रत्यक्षे धर्मिणि भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वादिति भावः। शङ्कते- **नानुमानमिति ॥** येन सर्वकर्तृ-त्वादिविशिष्टतयेश्वरज्ञानापत्तिरिति भावः। **तस्यापि** आगमस्यापि। **अनुमानतुल्यत्वादिति ॥** यथाऽनुमानस्य सर्वकर्तृत्वादिवैशिष्ट्यविषयकानुमितिजनकत्वम् एवं 'यस्सर्वज्ञः' इत्यादेरागमस्यापि सार्वज्ञादिवैशिष्ट्य-विषयकज्ञानजनकत्वादिति भावः। 'प्रत्यक्षेण चाऽगमः' इति प्रत्यक्षस्याऽगमस्वरूपग्राहकत्वमुक्तम्। तदनुपयुक्तं कस्मादुक्तमित्यत आह- **आगमग्राहकेति**

**।। स्वप्रभृतेरिति ।।** अन्यथा स्वस्मिन्नेव प्रामाण्यं प्रतिहतमिति कथमन्यस्यापि मिथ्यात्वं प्रतिपादयेदिति भावः। **तत्रेति ।।** 'नेह नाना' इत्यत्रेत्यर्थः। **तद्विरोधेनेति ।।** आगमस्वरूपसत्ताग्राहिश्रोत्रप्रत्यक्षविरोधेन स्वस्य मिथ्यात्वबोधनायोगेन स्वस्मिन् प्रामाण्यं प्रतिहतमिति कथं स्वव्यतिरिक्तस्य भेदप्रपञ्चस्य मिथ्यात्वं बोधयेदित्यर्थः। तथा च स्वप्रभृतेरित्याद्युक्तमयुक्तमिति भावः।

**(पां.टि.)** भेदागमविरोधादभेदागमस्याप्रामाण्यव्युत्पादनावसरे 'प्रत्यक्षादेरागमस्य' इत्यागमप्राबल्यस्यौत्सर्गिकत्ववर्णनमसङ्गतमित्याशङ्क्य वृत्तानुवादपूर्वकं तत्सङ्गमयति- **एवमिति ।।** द्वयोरपि प्रामाण्यस्यैव वा अप्रामाण्यस्यैव वोपजीवकविरोधेनोपजीव्यस्याप्रामाण्यस्यैव वा सम्भवादुपजीव्यविरोधेनोपजीवकाप्रामाण्य-मित्येतत्कुत इत्याशङ्कते- **कुत एतदिति चेदिति ।। द्वैरूप्येति ।।** विषयाबाधघटितत्वात्प्रामाण्यस्य वस्तुनो द्वैरूप्यं विना द्वयोः प्रामाण्यानुपपत्तेरिति भावः। **निःस्वभावत्वापत्तेरिति ।।** तेन विना द्वयोरप्रामाण्यायोगादिति भावः। **येन हि यस्य विषय इति ।।** न चैवम् 'यथा पर्वतग्राहकमनुमानस्य' इत्युत्तरवाक्यविरोधः, वह्नेरेव धूमानुमानविषयत्वेन पर्वतस्य धूमानुमानाविषयत्वादिति वाच्यम्। विषयशब्दस्य धर्मिपरत्वेन तदुपपत्तेः। तत्परत्वं च सामान्यशब्दस्य विशेषलक्षणयेत्येके। धर्मिपर्याय एव विषयशब्द इत्यप्याहुः। **न धर्मिग्राहकमात्र-मिति ।।** उक्तनियमे धर्मिग्राहकस्यैवोपजीव्यत्वापत्त्या साध्यहेतुव्याप्त्यादिग्राहकस्यानुपजीव्यत्वप्रसङ्गेन बहुविप्लवापातादिति भावः। ननु 'प्रत्यक्षेण च जीवः' इति वक्तव्यं, तत्कथम् 'प्रत्यक्षेण चाऽऽगमः' इत्युक्ति-रित्यतोऽत्राऽऽगमशब्दस्य योगेन जीवपरतया न वक्तव्यानुक्तिरित्याशयेन योगेन जीवपरतामाह- **आगच्छ-तीति ।।** 'ग्रहवृद्दनिश्चिगमश्च' इत्याङ्पूर्वाद्गमेरकर्तरि कारके, भावे च अपो विधानात्तदन्तागमशब्दस्य कर्तृभूतजीवपरत्वं क्लिष्टमित्यरुच्या तस्य जीवपरत्वं परित्यज्य प्रसिद्धागमपरतामेवाऽऽश्रित्य तदुक्तेः प्रयोजनमाह- **यद्वेति ।।** अत्र पक्षे जीवस्य प्रत्यक्षसिद्धत्वस्य प्रसिद्धतयाऽनुक्तिराश्रयणीया भवतीत्यपरितोषात्पक्षान्तरमाह- **अथ वेति ।।** अनेन प्रत्यक्षेणाऽऽगमः, चशब्दाज्जीवश्चेति मूलयोजना सूचिता भवति। **तथाभूते एवेति ।।** जीवेश्वरस्वरूपमात्रग्राहकप्रत्यक्षानुमाने एवेत्यर्थः।

**(व्या.टि.)** अत्र प्रकरणशुद्ध्यै उक्तवक्ष्यमाणार्थभेदं दर्शयति- **एवमित्यादिना ।। भेदवाक्यैरिति ।।** प्रतिरुद्ध-त्वादिति वक्ष्यमाणेनान्वयः। प्रत्यक्षानुमानाभ्यामव्यवस्थितविकल्पार्थो वाशब्दः। **सामान्यन्यायमिति ।।** उपजीव्यविरोधेनोपजीवकस्याप्रामाण्यमिति सामान्यन्यायमित्यर्थः। सामान्यन्याये सिद्धे प्रत्यक्षादेरुपजीव्यत्वं **(व्या.टि.)** साधयिष्याम इति तावच्छब्दः। **अपि** इति तथापीति व्याचिख्यासुर्यद्यपितथाप्योर्नित्यसम्बन्धाद् यद्यपीत्याध्याहृत्य व्याचष्टे- **यद्यपीत्यादिना ।। प्रत्यक्षानुमानाभ्यामिति ।।** अनेनेति मूले प्रत्यक्षादेरिति पञ्चमी तद्गुणसंविज्ञानबहुव्रीहिर्भाषितपुंस्कत्वात् पुंवद्भावश्चेति सूचयति- **उत्सर्ग इति ।।** 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्युदाहरिष्यमाणत्वाद् ब्रह्मतर्के जात्येत्युक्तेरिति भावः। **द्वैरूप्येति ।।** विरुद्धोभय-प्रकारेत्यर्थः। **निःस्वभावत्वेति ।।** विरुद्धोभयान्यतरप्रकाराभावे स्वरूपहान्यापत्तेरित्यर्थः। उपजीव्यलक्षणमाह- **येन हीति ।।** तदुदाहृत्य दर्शयति- **यथेति ।।** अनिष्टं प्रसञ्जयति- **विषय इति ।।** तेनापि प्रसञ्जयति- **विषया-भावेनेति ।।** तत्रेष्टापत्तिमापादकाङ्गीकारव्याघातेन विहन्ति- **यत्स्वयमिति ।।** कथमित्याक्षेपे। न कथमपी-त्यर्थः। विरोध्यप्रमाणीकरणोपायस्वरूपलाभाद्यभावादिति भावः। व्युत्पादितसामान्यन्यायं सप्रमाणं दर्शयति- **अत इति ।।** प्रसक्तप्रतिक्षेपादित्यर्थः। **अनपेक्षतयेति ।।** उपजीव्यप्राबल्ये हेतुः। एवं सापेक्षतयेति दौर्बल्ये लक्षणान्तरमाशङ्कते- **यद्यपीति ।। नेति ।।** लक्ष्यमात्राव्यापनादिति शेषः। तदङ्गीकरोति- **तथाऽपीति ।। प्रकृतेति ।।** प्रकृतोपजीव्यप्रकारप्रदर्शनमेतत् न सामान्यलक्षणमिति भावः। व्युत्पादितसामान्यन्यायमत्रापि सञ्चारयितुमुपक्षिपति- **अस्त्वेवमिति ।।** तत्पदपरामृष्टं दर्शयति- **भेदवाक्यानामिति ।।** अस्य वैयर्थ्यमाशङ्क्य कृत्यमाह- **अनेनेति ।।** तर्हि तत्पक्षेऽपीति व्यर्थं परसिद्धेस्तेनैवेत्यनेन सिद्धेरित्यतो नेदं सिद्ध्यतिनाऽन्वेति आगमपदेनान्वेष्यतीत्यभिप्रेत्य तदन्वयं दिदर्शयिषुरादावपिपदसमुच्चेयं दर्शयति- **न केवलमिति ।।** तल्लब्धमाह- **अभेदागमस्यापीति ।।** नन्वभेदागमविषयाभेदस्यापूर्वतयाऽनुमानादिनाऽसिद्धेरयुक्तेयं प्रतिज्ञेत्यतो धर्मिपरोऽयं विषयशब्द इत्यभिप्रेत्याभेदागमत्रैविध्येन तत्सिद्धिप्रकारं दर्शयति- **जीवमित्यादिना ।।** विषयीकृत्य उद्दिश्ये-त्यर्थः। तदुदाहरति- **तत्त्वमिति ।।** ननु 'यच्छब्दयोगः प्राथम्यं स्यादुद्देश्यस्य लक्षणम्' इत्युक्त्याऽत्र तच्छब्दस्य प्राथम्याद् ब्रह्मण एवोद्देश्यत्वं युक्तमिति चेन्न। 'ये यजमानास्ते ऋत्विजः' इत्यार्त्विज्योद्देशेन याजमान-विधानभ्युपगमे तन्नियमाभावात्। द्वितीयमुदाहरति- **क्षेत्रज्ञं चापीति ।।** मां क्षेत्रज्ञं विद्धि इत्युद्देश्यविधेयभावः पूर्ववत् समाधेयः। तृतीयागममुदाहरति- **नेहेति ।।** कुत इति हेतुप्रश्नस्य अनुवादित्वपक्षे इति सप्तम्यन्तं नोत्तरं, हेत्वनुपन्यासादित्यतस्तदभिप्रेतं हेतुं दर्शयति- **भेदवाक्यानामिति ।।**

ननु तेनैव हीति पूर्ववाक्ये प्रत्यक्षादिनाऽभेदागमविषयसिद्धिं प्रतिज्ञाय प्रत्यक्षेणाऽऽगमसिद्धिर्विधीयते, अतः किं केन

सङ्गतमभेदबोधन आगमस्याधर्मित्वात्, इत्यतो नात्र रूढार्थपरिग्रहः किन्तु योगेन जीव इत्याह- **आगच्छतीति ॥ अवगच्छतीति ॥** गत्यर्थानां ज्ञानार्थत्वादिति भावः । तर्हि स्वायत्तन्यायविरोध इत्यस्वर-सादाह- **यद्वेति ॥** ननु तेनैव हीति पूर्ववाक्यप्रतिज्ञातं विषयसाधकत्वरूपं प्रत्यक्षस्योपजीव्यत्वमनुपपाद्य उपजीव्यत्वान्तरोपपादने प्रकरणासङ्गतिरित्यत आह- **अथ वेति ॥** मूले निरूपकत्वं षष्ठ्यर्थ इत्यागमस्येति पदस्य मण्डूकप्लुत्याऽनुवृत्तिं मत्वा व्याचष्टे- **तयोरित्यादिना ॥** ननु नोपजीव्यतामात्रं बाधकत्वप्रयोजकम् अनुमानमात्रोच्छेदापत्तेः । किन्तु विरोध्युपजीव्यत्वम् । न चात्र विरोधोऽस्ति । ग्राह्याभावानवगाहनात् । **(व्या.टि.)** अन्यथा विशेष्यमात्रग्राहिप्रमाणेन विशिष्टविषयप्रमाणबाधापत्तेः । अतोऽत्र विशिष्टाभावेनाबाधक-त्वाद् युक्तमभेदागमप्रामाण्यमित्याशङ्कते- **भवत्वित्यादिना ॥ न जीवेश्वरेति ॥** नन्विदं वक्ष्यमाणविरु-द्धम् । यद्वक्ष्यति 'भेदस्तु स्वरूपदर्शन एव सिद्धः' इति । मैवम् । सामान्यतो भेदस्य स्वरूपदर्शनसिद्धत्वेऽपि तद्विशेषस्य सादृश्यादिदोषप्रतिबन्धेनाग्रहोपपत्तेः । अत एव तत्र प्राय इति, अत्र जीवेश्वरेति प्रतियोगिविशेषोपा-दानम् । **अवर्जनीयमेवेति ॥** प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य तद्वैलक्षण्येन धर्मिज्ञानस्य च भेदज्ञानसामग्रीत्वात् । सामग्र्याश्च कार्यावश्यम्भावनियमादिति भावः । **तुल्यत्वादिति ॥** अभेदविरोधिसार्वज्ञादि-प्रतिपादकत्वादित्यर्थः । विषयग्राहकत्वेनोपजीव्यत्वोक्तेरप्रामाण्योपयोगित्वेऽपि स्वरूपग्राहकतयोपजीव्यत्वोक्तेः क्वोपयोग इत्यत आह- **आगमेति ॥ स्वं** आगमः । **प्रत्यक्षादिकमिति ॥** श्रोत्रादिकमित्यर्थः । **तद्विरोधे-नेति ॥** श्रोत्रस्य शब्दसत्त्वगोचरत्वादित्यर्थः ।

**मूलम् - नचानुभवविरोधे आगमस्य प्रामाण्यम् ; आगमप्रामाण्यानुभवस्या-प्यप्रामाण्यप्राप्तेः । बहुप्रमाणसंवादश्च दाढर्यहेतुरेव ; बहूनां वचने तस्यैव दर्शने च दाढर्यस्यैव दृष्टेः ।**

**(त.मं.)** अनुभवविरोधेऽतिप्रसङ्गमाह- **नचानुभवेति ॥** साक्षिणा हि प्रमाणानां प्रामाण्यं गृह्यते । इतश्च नानुवादित्वं दूषणं भेदागमस्येत्याह- **बह्विति ॥** तस्यैव च दर्शने उच्यमानस्यैव दर्शने वा ।

**टीका -** इतश्चाभेदागमस्याप्रामाण्यमित्याह- **नचेति ॥** पूर्वमुपजीव्यत्वेन प्राबल्यमाश्रित्यैक्या-गमस्य साक्ष्यनुभवविरोधेनाप्रामाण्यमुक्तम् । इदानीं तूपजीव्यत्वानपेक्षप्राबल्यमाश्रित्योच्यते । विरोधप्रकारस्तु प्राग् व्युत्पादित एव । साक्ष्यनुभवविरोधेनैक्यागमस्याप्रामाण्यं कुत इति चेत्, न तावद्विरुद्धयोरुभयोः प्रामाण्यमप्रामाण्यं वोपपद्यत इत्युक्तम् । ततोऽन्यतरस्यैवाप्रामा-ण्येऽवश्यमङ्गीकरणीये न तावदैक्यागमविरोधेन साक्ष्यनुभवस्याप्रामाण्यमङ्गीकर्तुमुचितम् । कुत इत्यत आह- **आगमेति ॥** साक्ष्यनुभवः खलु सर्वप्रमाणप्रामाण्यनिश्चायकः । तथाच तस्य जीवेश्वरभेदविषयेऽप्रामाण्ये सत्यभेदागमप्रामाण्यविषयेऽपि प्रामाण्यमविश्वसनीयं स्यात् । ततश्चैक्यागमप्रामाण्यं न सिद्ध्येत् । न चासिद्धप्रामाण्यमन्यदप्रमाणीकर्तुं प्रभवतीत्यतः परिशेषात् साक्ष्यनुभवविरोधिनोऽभेदागमस्यैवाप्रामाण्यं वाच्यमिति । आगमप्रामाण्यानुभवस्यापीति विषयभेदेनैव भेदोपचारः । आगमप्रामाण्यविषयेऽपीति यावत् । अनेनाव्यभिचरितत्वनियमः साक्ष्यनुभवस्य प्राबल्यहेतुरित्युक्तं भवति ।

एवमुपजीव्यत्वनिरवकाशत्वलक्षणस्वभावबलवत्प्रमाणबाधितत्वादैक्यागमस्याप्रामाण्य-मित्युक्तम् । न केवलमेतावत् किन्तु बहुत्वलक्षणबलवद्भिरेतैरेव प्रमाणैर्बाधितत्वाच्च । ननु बहूनि प्रमाणान्येकविषयाणि वा भिन्नविषयाणि वा । आद्येऽधिगतमेवार्थमभिगमयतां द्वितीयादीनां वैयर्थ्यलक्षणेनानुवादकत्वेनाप्रामाण्यम् । द्वितीये स्वे स्वे विषये तेषामेकैकत्वान्न बहुत्वम् । तत् कथं बहुप्रमाणबाधितत्वं ? बहुत्वे प्रामाण्याभावात् प्रामाण्ये बहुत्वाभावादित्यत आह- **बहुप्रमा-णेति ॥** अत्र संवादग्रहणेनैकविषयतापक्षमङ्गीकरोति । दाढर्यहेतुरेवेति प्रयोजनवत्त्वाभि-धानेनानुवादकत्वं निराकरोति ।

यद्यपि भेदविषयाणि प्रमाणानि सर्वाण्यप्येकाकारनियतानि तथाऽपि प्रथमप्रमाणेन भेदे परिच्छिन्ने विप्रतिपत्त्यादिना

कारणान्तरेण पुनः शङ्कायां तत्रैव प्रवृत्तेन प्रमाणान्तरेण निःशङ्का प्रतीतिर्भव-तीति । ननु द्वितीयादिप्रमाणान्यपि प्रथमप्रमाणतुल्यानि । तत् कथं प्रथमप्रवृत्तावपि शङ्का द्वितीयादिप्रवृत्तौ तु निःशङ्कतेति चेन्न, सहकारिकृतसामर्थ्यातिशयस्यानुभवसिद्धत्वादित्याह- **बहूनामिति ।।** पर्वतोऽग्निमानित्येकस्य वचने श्रुते तस्मिन्नज्ञानादिशङ्कयाऽर्थविश्वासाभावे द्वितीयस्यापि वचनं शृणोति, तत्रापि कारणान्तरोपनिपातेन शङ्कानुवृत्तौ तृतीयस्यापि, एवं बहूनां वचने श्रुते पर्वतं प्रत्यासीदतस्तस्यैवाग्नेः प्रत्यक्षेण दर्शने सति विश्वास एव दृश्यते, नतु द्वितीयादिष्व-प्रामाण्यबुद्धिरिति । अनेनापरोक्षत्वरूपं विशेषमभिदधताऽपौरुषेयत्वादिरूपोऽपि विशेषः सूचितः। अत एव वचनमादावुक्त्वा दर्शनं पश्चादुक्तम् ।

**(र.टि.) इदानीं त्विति ।।** तथा चास्य 'प्रत्यक्षादेरागमस्य' इत्यनेन न पौनरुक्त्यमिति भावः । 'आगम-प्रामाण्य' इति वाक्योक्तमागमप्रामाण्यानुभवाप्रामाण्यं प्रत्यनुभवविरोधेऽप्यागमप्रामाण्यस्याऽपादकत्वा-योगात्तद्बललब्धमनुभवाप्रामाण्यमापादकमित्याह- **न तावदित्यादिना ।।** एकत्राप्रामाण्ये अपरत्राप्यप्रामाण्यमेव स्यादिति नियमाभावात् कथमनयोरप्यापाद्यापादकभाव इत्यत आह- **प्रामाण्यमविश्वसनीयं स्यादिति ।। भेदोपचार इति ।।** समुच्चयार्थकापिशब्दलब्धभेदोपचार इत्यर्थः । **अत एवेति ।।** परोक्षत्वापरोक्षत्वरूप-विशेषप्रदर्शनेन पर्वताग्निसंसर्गबोधकवाक्यजपरोक्षज्ञानापेक्षया तद्ग्राहकप्रत्यक्षस्य तदनिवर्तनीयशङ्कानिवर्त-कत्वोपयोग्यपरोक्षत्ववत् जीवेश्वरभेदग्राहकदोषशङ्काकलङ्कितप्रत्यक्षानुमानापेक्षया 'द्वा सुपर्णा' इत्यादिवाक्यस्य **(र.टि.)** तदनिवर्तनीयशङ्कानिवर्तनोपयोग्यपौरुषेयत्वविशेषस्य सूचनीयत्वादेवेत्यर्थः । अन्यथा जीवेश्वरभेदे प्रत्यक्षसिद्धे अनन्तरं प्रवर्तमानस्याऽगमस्यानुवादकत्वं वदन्तं प्रति तदभावव्युत्पादनार्थं दर्शनमादावुक्त्वा पश्चाद्वचनं वक्तव्यमिति भावः ।

**(रा.टि.)** 'तयोर्विरोधे प्रामाण्यं न स्यात्' इत्यादिग्रन्थेनापौनरुक्त्यायाऽह- **पूर्वमिति ।। प्रागिति ।।** 'यद्यप्यन्योन्यानपेक्षा' इत्यादिग्रन्थेनेति भावः । **अभेदागमप्रामाण्येति ।।** अभेदागमजन्यज्ञानप्रामाण्येत्यर्थः। करणप्रामाण्यस्यानुमेयत्वादिति ज्ञेयम् । भेदविषये प्रामाण्यविषये च साक्ष्यनुभवस्यैकत्वात् प्रामाण्यानुभव-स्यापीत्युक्तिः कथमित्यत आह- **विषयभेदेनेति ।।** 'तयोः स्वभावो बलवानुपजीव्यादिकश्च सः' इति वक्ष्यमाणदिशा त्वाह- **उपजीव्यत्वनिरवकाशत्वलक्षणस्वभावबलवत्प्रमाणेति ।। एतैरिति ।।** प्रत्यक्षा-नुमानभेदागमैरित्यर्थः । दार्ढ्यहेतुरेवेत्युक्तं प्रयोजनं व्यनक्ति- **यद्यपीत्यादिना ।। विप्रतिपत्त्यादिनेति ।।** अभेदवाक्यादिरादिपदार्थः । **प्रमाणान्तरेणेति ।।** भेदे परिच्छिन्नेऽपीति योज्यम् । **तस्मिन्निति ।।** अग्निमानिति वक्तरि पुरुष इत्यर्थः । **अपौरुषेयत्वादिरूप इति ।।** भेदवाक्यानामिति योज्यम् । यद्वा साक्षिणोऽपरोक्षत्व-रूपविशेषापेक्षया अपौरुषेयशब्दितनित्यत्वरूपः । निर्दोषत्वरूप आदिपदार्थः । **अत एवेति ।।** प्रत्यक्षेऽतिशय-सूचनेन सर्वशङ्कानिवर्तकप्राबल्यसूचनार्थत्वादेवेत्यर्थः ।

**(श्री.टि.)** ननु पूर्वं 'प्रत्यक्षादेरागमस्य प्राबल्येऽपि नोपजीव्यप्रमाणविरोधे प्रामाण्यम्' इति साक्ष्यनुभवविरो-धेनैक्यागमाप्रामाण्यस्योक्तत्वादस्य ग्रन्थस्य पुनरुक्तिरित्यत आह- **पूर्वमिति ।। उपजीव्यत्वानपेक्षेति ।।**

'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।  
तयोः स्वभावो बलवानुपजीव्यादिकश्च सः ।।'

इत्युक्तत्वेन साक्षिण उपजीव्यत्वरूपं यत्स्वभावप्रयुक्तं प्राबल्यं तदाश्रित्य पूर्वं तद्विरोध उक्तः । इदानीं तु साक्षिण उपजीव्यत्वानपेक्षं यन्निरवकाशत्वरूपं तत्स्वभावप्राबल्यं तदाश्रित्य तद्विरोध उच्यत इति भेद इत्यर्थः । अस्मिन् पक्षे विरोधप्रकारः कथमित्यत आह- **विरोधप्रकारस्त्विति ।। प्रागिति ।।** 'असर्वकर्तृत्वेनानुभवात्' इत्यत्रेत्यर्थः । श्रुत्यादिना सार्वज्ञ्यादिलक्षणमीश्वरं ज्ञातवतः साक्षिणा च तद्विरुद्धमसार्वज्ञ्यादिविशिष्टमात्मान-मनुभवतः ततो भेदज्ञानमवर्जनीयमेवेति तद्विरोधादभेदागमस्याप्रामाण्यमिति भावः । **इत्युक्तमिति ।।** वस्तुनो विरुद्धधर्मद्वयालिङ्गितत्वरूपद्वैरूप्यापत्तेः । अप्रामाण्ये च वस्तुनो निस्स्वभावत्वापत्तेरित्युक्तमित्यर्थः । **अङ्गी-करणीये** सति । **साक्ष्यनुभवस्य** भेदग्राहकस्य । **तस्य** साक्षिणः । **अभेदागमेति ।।** साक्षिण एवाभेदागम-प्रामाण्यग्राहकत्वादिति भावः । **ततश्चेति ।।** साक्षिणोऽविश्वस्तप्रामाण्यकत्वादित्यर्थः । **असिद्धप्रामाण्यम्** असिद्धप्रामाण्यकमिति प्रथमान्तम् । **अन्यत्** साक्ष्यनुभवमिति द्वितीयान्तम् । ननु साक्ष्यनुभवस्याप्रामाण्ये आगमप्रामाण्यानुभवस्याप्यप्रामाण्यप्रसङ्ग इत्यापादनमयुक्तम् । आगमप्रामाण्यानुभवस्यापि साक्षिरूपत्वात् । तथा च साक्ष्यनुभवस्याप्रामाण्ये साक्ष्यनुभवस्याप्रामाण्यमित्युक्तं

स्यात् । तच्च व्याहतमित्याशङ्क्याऽह- **आगम-(श्री.टि.) प्रामाण्येति ।। विषयभेदेनेति ।।** जीवेश्वरभेदविषयकत्वागमप्रामाण्यविषयकत्वरूपविषय-भेदेनेत्यर्थः । विषयभेदमेवाऽह- **आगमप्रामाण्यविषयेऽपीति ।।** 'ननु साक्ष्यनुभवविरोधेनैक्यागमस्याप्रामाण्यं कुत इति चेत्' इति पृष्टे साक्षिणः प्राबल्ये को हेतुरनेनोक्त इत्यत आह- **अनेनेति ।।** साक्ष्यनुभवविरोधादैक्या-गमस्याप्रामाण्यापत्तिकथनेनेत्यर्थः । **अव्यभिचरितत्वनियम इति ।।** विषयाव्यभिचरितत्वनियम इत्यर्थः । अनेन निरवकाशत्वं विवृतं भवतीति ज्ञातव्यम् ।

**एतैरेवेति ।।** भेदग्राहकप्रत्यक्षादिभिरेवेत्यर्थः । **अधिगतमेवेति ।।** प्रथमप्रमाणेनेत्यर्थः । **द्वितीयादीनां** प्रमाणानाम् । बहुत्व इत्यनन्तरम् एकविषयत्वे चेति शेषः । **प्रामाण्याभावादिति ।।** अनधिगतार्थगन्तृत्व-रूपप्रामाण्याभावादित्यर्थः । **प्रामाण्ये** अनधिगतार्थगन्तृत्वे । **बहुत्वाभावादिति ।।** स्वस्वविषये तेषामेकैक-त्वादित्यर्थः । **संवादग्रहणेनेति ।।** समानविषयकज्ञानान्तरस्यैव संवादत्वादिति भावः । अनुवादकत्वम् अधि-गतार्थाधिगमकत्वेन वैयर्थ्यलक्षणानुवादकत्वमित्यर्थः । **प्रयोजनवत्त्वेति ।।** निःशङ्कप्रतीतिहेतुत्वरूप-प्रयोजनवत्त्वाभिधानेनेत्यर्थः । उक्तं प्रयोजनवत्त्वमाक्षिप्य समाधत्ते- **यद्यपीत्यादिना ।। एकाकारेति ।।** तथा च प्रथमप्रमाणवद् द्वितीयादिप्रमाणानामपि निःशङ्कप्रतीतिहेतुत्वं प्रथमप्रमाणानवगतस्य निःशङ्कप्रतीत्युप-योगिनोऽधिकस्याभाना(वा)दित्यर्थः। **परिच्छिन्ने** ज्ञाते सति । **तत्रैव** भेदविषय एव । **तस्यैवेति ।।** पुरुषत्रयेण प्रतिपादितस्यैवाग्नेरित्यर्थः । **अनेन** 'बहूनां वचने' इति मूलेन । **अभिदधतेति ।।** दृष्टान्त इति शेषः । अपौरुषेयत्वा-दीत्यादिपदेन पौरुषेयत्वं ग्राह्यम् । तत्र भेदग्राहिप्रत्यक्षानुमानागमेषु प्रत्यक्षानुमानयोः पौरुषेयत्वम् आगमस्य त्वपौरुषेयत्वमिति द्रष्टव्यम् । **अपरोऽपीति ।।** सहकारिकृतसामर्थ्यातिशयोऽनुभवसिद्ध इत्येव विशेषो नेत्यर्थः। अत्र ज्ञापकमाह- **अत एवेति ।।** अपौरुषेयत्वपौरुषेयत्वरूपो विशेषस्सूचनीयो यतोऽत एवेत्यर्थः । तथा हि । प्रत्यक्षानुमानसिद्धे जीवेश्वरभेदे प्रवर्तमानस्याऽगमस्याऽनुवादकत्वं वदन्तं प्रति तदभावव्युत्पादनार्थं दार्ष्टान्तिका-नुसारेण दृष्टान्ते दर्शनमादावुक्त्वा पश्चाद्वचनं वक्तव्यम् । तथा च 'दर्शने तस्यैव बहूनां वचने' इति वाक्यवृत्तिः स्यात् । न चैवमवादीत् । किन्तु 'बहूनां वचने तस्यैव दर्शने' इति वचनमादावुक्त्वा दर्शनमेव पश्चादुक्तम् । तेन ज्ञायते पर्वतोऽग्निमानिति पर्वताग्निसंसर्गबोधकवाक्यजन्यपरोक्षज्ञानानिवर्त्यशङ्कानिरासोपयोगोऽपरोक्षत्वरूपो विशेषो दर्शनेऽस्तीति । तद्वदेव दोषशङ्काकलङ्कितप्रत्यक्षानुमानापेक्षया 'द्वा सुपर्णा' इत्यादिभेदवाक्यस्य तदनिवर्तनीयशङ्कानिरासोपयोग्यपौरुषेयत्वरूपो विशेषोऽस्तीति ज्ञायत इति भावः ।

**(पां.टि.)** ननु 'प्रत्यक्षादेरागमस्य प्राबल्येऽपि' इत्यादिनोपजीव्यभूतसाक्षिप्रत्यक्षविरोधस्य कथितत्वात् 'न चानुभवविरोधे' इत्यादिनाऽपि तदभिधाने पौनरुक्त्यमित्यत आह- **पूर्वमिति ।।** तथा च निरवकाशत्वप्रयुक्त-प्राबल्यमाश्रित्य साक्षिविरोधस्योच्यमानत्वान्न पौनरुक्त्यमिति भावः । नन्वस्तु साक्ष्यनुभवस्याऽगमापेक्षया प्राबल्यं तथाऽपि तस्य स्वरूपमात्रग्राहकत्वेन तद्विरोधाभावान्नैक्यागमस्याप्रामाण्यमित्यतः 'यद्यप्यन्योन्यानपेक्षे प्रत्यक्षानुमाने न जीवेश्वरभेदं गोचरयतस्तथापि' इत्यादिना विरोधस्य प्राग् व्युत्पादितत्वात् भवेदेवैक्यागमस्या-**(पां.टि.)** प्रामाण्यमित्याह- **विरोधेति ।। न तावदिति ।।** आद्ये वस्तुनो द्वैरूप्यं स्याद् द्वितीये निःस्वभावत्वा-पातादिति भावः । **विषयभेदेनेति ।।** जीवेश्वरभेदागमप्रामाण्यरूपविषयभेदेनेत्यर्थः । **अनेनेति ।।** 'परोक्षत्वापरोक्षत्वरूपं विशेषमभिदधता' इत्यत्र दृष्टान्ते इति शेषः । 'अपरोऽपि विशेषः सूचितः' इत्यत्र दार्ष्टान्तिके इति शेषः । ननु दृष्टान्तापेक्षया दार्ष्टान्तिकेऽपरो विशेषः कुतः सूचनीय इत्यत आह- **अत एवेति ।।** दृष्टान्तापेक्षया दार्ष्टान्तिकेऽपौरुषेयत्वादिरूपविशेषान्तरस्य सूचनीयत्वादेवेत्यर्थः । अयं भावः । दृष्टान्तापेक्षया दार्ष्टान्तिके विशेषान्तरसूचनार्थमेव वचनमादावुक्त्वा पश्चाद्दर्शनोक्तिर्युज्यते । अन्यथा दार्ष्टान्तिके प्रत्यक्षेणानिवृत्ताया अपि शङ्काया वाक्येन निवृत्त्या तत्र दृष्टान्तत्वेन दर्शनमादावुक्त्वा वचनं पश्चाद्वक्तव्यम् । वचनानिवृत्तशङ्कायाः प्रत्यक्षेण निवृत्तेर्दृष्टान्ततयाऽभिधाने दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापातादिति । यद्वा ननु दार्ष्टान्तिकेऽपौरुषेय-त्वादिविशेषः सूचित इत्यत्र किं नियामकमित्यतो दृष्टान्ते परोक्षत्वापरोक्षत्वरूपविशेषोक्तिरेव तत्र नियामिकेति भावेनाभिदधतेत्यन्तमुक्तम् । ननु बहूनामिति वाक्यस्य दृष्टान्ते परोक्षत्वापरोक्षत्वरूपविशेषकथने तात्पर्ये सिद्धे तदनुसारेण दार्ष्टान्तिके विशेषान्तरसूचनेऽपि तात्पर्यं स्यात् । तदेव कुतः? बहुप्रमाणसंवादेन शङ्कानिवृत्तिमात्रेऽपि तस्य तात्पर्यसम्भवादित्यत आह- **अत एवेति ।।** दृष्टान्ते परोक्षत्वापरोक्षत्वरूपविशेषकथने तात्पर्यस्य विद्यमान-त्वादेवेत्यर्थः । अयं भावः । यद्यत्र बहुप्रमाणसंवादेन शङ्कानिवृत्तिमात्रमभिप्रेतं स्यात्तर्हि 'बहुप्रमाणसंवादे दार्ढ्यस्यैव दृष्टेः' इत्येव वक्तव्यं स्यात् । तथाऽनुक्त्वा वचनमादावुक्त्वा पश्चाद्दर्शनोक्तिर्दृष्टान्ते परोक्षत्वापरोक्षत्वरूप-विशेषकथने

तात्पर्यमाक्षिपति । तस्य च तत्र तात्पर्ये सिद्धे दार्ष्टान्तिके तस्य विशेषस्यासम्भवादपौरुषेय-त्वादिरूपविशेषसूचनसिद्धिरिति ।

(व्या.टि.) पुनरुक्तिं परिहरति- **पूर्वमिति ॥ अनपेक्षेति ॥** निरवकाशत्वलक्षणेनेत्यर्थः । **प्रागिति ॥** असर्व-कर्तृत्वेनेति मूल इत्यर्थः । **आगमस्य** आगमस्यैव । कुतः प्रमाणादित्यर्थः । परिशेषादित्याशयेन प्रसक्तप्रतिषेधं तावत्करोति- **न तावदिति ॥ उक्तमिति ॥** वस्तुनो द्वैरूप्यनिस्स्वरूपत्वयोरन्यतरप्रसङ्गेनेति शेषः । ततः किमित्यत आह- **न चेति ॥** 'परस्परविरुद्धयोः' इति न्यायेनान्यतरप्रामाण्यनिश्चयस्यैव विरोध्यन्यतराप्रामाण्य-निश्चायकत्वादित्यर्थः । अपिपदप्राप्तभेदभ्रमं वारयति- **आगमेति ॥ अव्यभिचरितत्वेति ॥** स्वार्थेनेति शेषः। शिष्यशेमुषीमनुकूलयिष्यन् पूर्वोत्तरप्रकरणभेदज्ञापनायोक्तवक्ष्यमाणार्थभेदं दर्शयति- **एवमित्यादिना ॥ स्वभावेति ॥** प्रत्येकमेकैकनिष्ठत्वात्स्वभावत्वम् । बहुत्वप्रमाणत्वयोः विरोधेन परस्परविशेषणविशेष्य-भावासम्भवमाशङ्कते- **नन्विति ॥ वैयर्थ्यलक्षणेनेति ॥** तन्निबन्धनेनेत्यर्थः । **स्वेस्व इति ॥** 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पात् ङेः स्मिन्नभावः । **एकैकत्वादिति ॥** प्रत्येकमेकत्वादित्यर्थः । **निराकरोति** बीजोत्पाटनादित्यर्थः ।

ननु संवादो दाढर्यहेतुरित्ययुक्तम्। पूर्वप्रवृत्तप्रमाणस्याप्येकाकारनियतत्वेन संशयाजनकत्वात्। न हीतोऽन्यद्-द्वितीयादिप्रमाणानां दाढर्यहेतुत्वे शृङ्गमस्तीत्याशङ्क्य निराकरोति- **यद्यपीत्यादिना ॥ कारणान्तरेणेति ॥** (व्या.टि.) स्वयं संशयाजनकत्वसाम्येऽपि कारणान्तरायातसंशयनिवर्तकत्वेन द्वितीयादीनां दाढर्यहेतुत्वं युज्यत इत्यर्थः । ननु तथाऽपि विप्रतिपत्त्यादिना शङ्काऽनुपपन्ना, शङ्कायाः साक्षात्कारप्रभेदत्वेन विप्रतिपत्तिवाक्या-जन्यत्वादिति चेत्, साक्षात्तदजनकत्वेन शाब्दसंशयाभावेऽपि तज्जन्यकोटिस्मरणद्वारा मानसशङ्कायां बाधका-भावात्। ननु संशयनिवर्तकत्वं संशयविरोध्याकारावगाहित्वेनैव दृष्टम्। अन्यथा साधारणधर्मगोचरधारावाहिक-ज्ञानेनापि संशयो निवर्तेत । न चात्र द्वितीयादिप्रमाणानां पूर्वावगताधिकविरोध्याकारावगाहित्वं दरीदृश्यते । पूर्वप्रवृत्तप्रमाणसमानविषयत्वानुभवादित्याशङ्कते- **नन्विति ॥ सहकारिकृतेति ॥** अन्याहितशक्तेरित्यर्थः । केशानामेकैकशो दूराददृश्यत्वेऽपि तद्राशेर्दूरे दर्शनादिति भावः । प्रमाणसम्प्लवे सामर्थ्यातिशयं दर्शयति- **पर्वत इत्यादिना ॥ तस्मिन्** वक्तरि । **कारणान्तरेति ॥** विप्रलम्भादीत्यर्थः । **तृतीयस्यापीति ॥** वचनं शृणोतीति पूर्वेणान्वयः । **आसीदतः** 'पाघ्राध्मा' इति सदेः शतरि सीदादेशः आगच्छत इत्यर्थः । तस्यैवाग्नेरिति व्यधिकरण-षष्ठी । तस्यैव वचनश्रोतुरित्यर्थः । अग्नेरित्युत्तरान्वयम्। श्रौतश्चार्थोऽयम्। बह्वृचब्राह्मणे 'तस्मादीक्षितेन सत्यमेव वदितव्यम्' इत्यारभ्य 'विचक्षणवतीं वाचं वदेत्' इति विधाय 'तस्मादाचक्षाणमाहुरद्रागिति। स यद्यदर्शमित्याह अथास्य श्रद्दधाति। यद्युवै स्वयं पश्यन् बहूनां च नान्येषां श्रद्दधाति' इति वचने श्रद्धामभिधाय दर्शने श्रद्धाभिधा-नात्। ननु कथमनेनोक्तशङ्कापरिहार इत्यत आह- **अनेनेति ॥** विशेषाभिधानं कुतो ज्ञायते तद्वाचकपदाभावादि-त्यत आह- **अत एवेति ॥** विशेषाभिधाने तात्पर्यादेवेत्यर्थः। अन्यथा दार्ष्टान्तिकानुसारेण दर्शनमुक्त्वा वचनमनन्तरं वक्तव्यम्। इत्थं निर्देशेन तु वचनजन्यपरोक्षज्ञानानिवृत्तशङ्कानिवर्तकत्वप्रयोजको दर्शनेऽपरोक्षत्व-रूपो विशेषोऽभिहितः । तेन दार्ष्टान्तिकेऽपि भेदप्रतिपादकेऽपौरुषेयवाक्ये प्रत्यक्षानुमानानिवृत्तशङ्कानिवर्तकत्व-प्रयोजकोऽपौरुषेयत्वरूपो विशेषः सूच्यत इत्यर्थः ।

**मूलम् - सर्वाविवादस्थल एव कथञ्चिदनुवादकत्वम् । नचात्र सर्वाविवादः, एकत्व-वादिनामेव विवाददर्शनात् । बहुप्रमाणविरोधे चैकस्याप्रामाण्यं दृष्टं शुक्तिरजतादौ । नच दोषजन्यत्वादेव दुर्बलत्वमिति विरोधः । बहुप्रमाणविरुद्धानां दोषजन्यत्व-नियमात् । दोषजन्यत्वं च बलवत्प्रमाणविरोधादेव ज्ञायते ।**

(त.मं.) एवं तर्ह्यनुवादित्वं नाम किञ्चिन्नास्ति युष्मत्पक्ष इत्यत आह- **सर्वेति ॥** अविवादस्थले 'अग्निर्हिमस्य भेषजम्' इत्यादौ। तत्पक्षे त्वप्रामाण्यप्राप्तं ह्यनुवादकत्वम्; तद्व्यवच्छेदाय कथञ्चिदित्याह। न तादृशमनुवादकमित्यर्थः । यथार्थमात्रस्यैव प्रामाण्याभ्युपगमात् । अत्र जीवेश्वरभेदप्रत्यक्षादिविरोधादभेदागमस्य दौर्बल्यं दृष्टान्तत आह- **बह्विति ॥** शुक्तिरजतप्रत्यक्षस्य तु दोषजन्यत्वाद् दुर्बलत्वं न बहुप्रमाणविरोधादित्यत आह- **न च दोषेति ॥** दोषजन्यत्वं चेत्यादेरयमर्थः। न केवलं बहुप्रमाणविरुद्धत्वमात्रेण दोषजन्यत्वमागमार्थत्वेनाभिमत-जीवेश्वराभेदज्ञानस्य । किन्तु प्रत्यक्षादीनां जीवेश्वरभेदप्रमाणानामुक्तभङ्ग्योपजीव्यत्वेन बलवतां विरोधाच्च ज्ञायत एव। अथवा कथमिदं प्रमाणानां दोषजन्यत्वं ज्ञायत इत्याकाङ्क्षायामुपजीव्यत्वेन बलाबलप्रमाणानां विरोधादेव ज्ञायत इति।

**टीका -** यद्येवं द्वितीयादिप्रमाणस्य दाढर्य्हेतुत्वात् प्रयोजनवत्त्वेन नानुवादकत्वं तर्हि कुत्रापि तन्न स्यात्। सर्वत्र दाढर्य्स्य वक्तुं शक्यत्वात्। तथाच सिद्धसाधनादेरदूषणत्वं स्यात्। तस्यानुवादकत्वे प्रकृतेऽपि किं न भवेदित्यत आह- **सर्वेति ॥** अविवादपदेन शङ्काकारणाभावं लक्षयति। कथञ्चिदित्यनेनेदमाचष्टे - निःशङ्कं प्रमितेऽर्थे पुनः प्रयुज्यमानस्य परार्थानुमानस्य वाक्यस्य वा वैयर्थ्यदोषो न स्वार्थानुमानस्य प्रत्यक्षस्य वा तयोः पुरुषानधीनत्वादिति। अत एव पूर्वं बहूनामिति दर्शन इति चोक्तम्। ततः किं प्रकृत इत्यत आह- **नचात्रेति ॥** अत्र जीवेश्वरभेदे। येन द्वितीयादिप्रमाणानां वैयर्थ्यं स्यादिति शेषः। कुतो नेत्यत आह- **एकत्वेति ॥** एवशब्देन विवादस्य सुप्रसिद्धतां द्योतयति, एकत्वादिवादानामनादित्वात्। तदनेन बहुत्वप्रमाणत्वयोः समावेशः समर्थितः। तथापि बहुप्रमाणविरोधेनैक्यागमस्याप्रामाण्यं कुतः? प्राबल्यानिश्चयेन वैपरीत्यस्यापि सम्भवादित्यत आह- **बहुप्रमाणेति ॥** शुक्तिकां रजतत्वेन दूरात् प्रतीत्य 'नेदं रजतं किन्तु शुक्तिकैव' इत्याप्तवाक्यं शृणोति। ततः समीपं गतः प्रत्यक्षेणापि शुक्तिरेवेति पश्यति। पाटनदहनादिलिङ्गेन तथैवानुमिनोति। ततो बहुप्रमाणविरोधेनैकस्य रजतज्ञानस्याप्रामाण्यमेव निश्चिनोतीति प्रसिद्धमेव। तेनैकस्यानेकस्माद्दुर्बलत्वमिति।

एतदुक्तं भवति। ऐक्यवाक्यमप्रमाणं बहुप्रमाणविरुद्धत्वाच्छुक्तिरजतज्ञानवदिति। ननु शुक्तिकारजतज्ञानस्य दुर्बलत्वमप्रामाण्यं च दोषजन्यत्वप्रयुक्तमेव न बहुतरप्रमाणविरुद्धत्वप्रयु-क्तम्। यदप्रमाणं तद्दोषजन्यमिति साध्यव्यापकत्वात्, साधनवत्यपि पक्षेऽपौरुषेयतया दोषशङ्का-भावेन साधनाव्यापकत्वाच्चेत्यत आह- **नच दोषेति ॥** विरोधः सोपाधिकत्वरूपोऽनुमानस्य कुतो नेत्यतः साधनव्यापकत्वादित्याह- **बहुप्रमाणेति ॥** बहुवचनेन नियममेव प्रकटयति। अत्रैक्यवाक्यजनितं ज्ञानं हि पक्षः। तस्य पूर्वोत्तरपरामर्शशून्यतादिदोषजन्यत्वं सम्भवत्येव। अवश्यं चैतत्साधनव्यापकत्वं परेणाप्यङ्गीकार्यमित्याशयवानाह- **दोषजन्यत्वमिति ॥** शुक्तिरजतज्ञानानां हि दोषजन्यत्वमुपाधेः साध्यव्यापकत्वसिद्ध्यर्थमवश्यं परेणाप्यङ्गीकार्यम्। तत् कुतो ज्ञायत इति वक्तव्यम्। न तावत्प्रत्यक्षेण, जन्यजनकभावस्य सर्वत्रातीन्द्रियत्वात्। नाप्यन्वयव्यतिरेकानुमेयम्, इन्द्रियाणामतीन्द्रियत्वेन तद्दोषाणामप्यतीन्द्रियत्वात्। नाप्य-प्रमाणत्वेन, तज्ज्ञानेऽप्युपायाभावात्। नचात्राऽगमोऽस्ति । अतो बलवत्प्रमाणविरुद्धत्वादेव दोषजन्यत्वं तत्रानुमेयम्। ततो यद्बलवत्प्रमाणविरुद्धं तद्दोषजन्यमिति व्याप्तिरङ्गीकार्या। बलवत्त्वं च बाधकप्रमाणस्योपजीव्यत्वनिरवकाशत्वाभ्यामिव बहुत्वेनाप्यङ्गीकरणीयं सर्वत्रोपजीव्य-त्वादेरभावात्। तथाच बहुप्रमाणविरुद्धत्वस्य दोषजन्यत्वेन व्याप्तिः सर्वथा स्वीकार्येति साधन-व्यापकत्वान्ना(न्न त) स्योपाधित्वमिति।

**(र.टि.)** ननु न विवादपदोक्तविप्रतिपत्तिरेव शङ्काकारणम्। समानधर्मादेरन्यस्यापि सम्भवादित्यत आह- **अविवादपदेनेति ॥ अत एव पूर्वमिति ॥** सत्यां शङ्कायां परार्थानुमानवाक्ययोः, शङ्कायां निवृत्तायामपि प्रत्यक्षस्वार्थानुमानयोरव्यर्थत्वादेवेत्यर्थः। यदि शङ्कायामपि परार्थानुमानवाक्ययोरनपेक्षितत्वेन वैयर्थ्यं तर्हि बहूनां वचनं नाऽद्रियेतेति पूर्वं बहूनामिति नोच्येत। यदि वा प्रत्यक्षं शङ्काभावदशायां व्यर्थं तदा बहुभिर्वचनैर्निःशङ्कं प्रमितेऽर्थे विश्वासहेतुत्वेन दर्शनं नोच्येत। अतः सर्वाविवादस्थल एवेत्यस्योपपादनार्थं बहूनामिति, कथञ्चिदित्यस्योपपादनार्थं दर्शन इति चोक्तमित्युक्तं भवति। इदानीन्तनैक्यवादिविप्रतिपत्तिजशङ्कापनोद-नायानादिवेदप्रवृत्तिः कथमित्याशङ्कानिवर्तकत्वेनावधारणं योजयति- **एवशब्देनेति ॥** नन्वत्रानुमानस्यानुक्त-त्वात् 'नच दोषजन्यत्वात्' इत्यनेनोपाधिशङ्कापरिहारोऽसङ्गत इत्यत आह- **एतदुक्तं भवतीति ॥** 'बहुप्रमाण-विरोधे च' इति व्याप्तिकथनेनैतदनुमानमुक्तं भवतीत्यर्थः। ननु 'बहुप्रमाणविरुद्धानाम्' इत्यनेन बहुप्रमाण-विरुद्धत्वेन दोषजन्यत्वं पक्षे प्रसाध्य यत्साधनव्यापकत्वमुक्तं तदयुक्तम्। दोषजन्यत्वसाधनेऽप्रामाण्यस्योपा-धित्वसम्भवेन तयोर्व्याप्त्यसम्मतेरित्याशङ्कापरिहारकत्वेन 'दोषजन्यत्वं च' इति वाक्यमवतार्य व्याचष्टे- **अवश्यं चैतदिति ॥ तज्ज्ञान इति ॥** यदि प्रमाणविरुद्धत्वमेवाप्रामाण्यज्ञानोपायस्तदा पक्षेऽपि परीत्यैव साध्योपाध्योः स्वत एव सत्त्वं स्यादिति भावः।

**(रा.टि.) तन्न स्यादिति ॥** अनुवादकत्वं न स्यादित्यर्थः। सर्वेषामविवादस्थलेऽपि स्वस्य कारणान्तरवशेन शङ्का भवत्येवेति

अत्रानुवादकत्वोक्तिः प्रागुक्तविरुद्धेत्यत आह- **अविवादपदेनेति ॥ अत एवेति ॥** प्रमितार्थज्ञापकत्वस्यान्यत्र दोषत्वेऽपि प्रत्यक्षे दोषत्वं नास्तीत्यस्यार्थस्य सूचनार्थत्वादेवेत्यर्थः । नन्वाधुनिकैकत्व-वादिविवादप्राप्तशङ्काव्युदासाय अनादिसाक्षिभेदागमयोः कथं प्रवृत्तिरित्यत आह- **एकत्वादिवादानामिति ॥** व्यक्तमेतत्समयपादीयानुव्याख्याने । **तदनेनेति ॥** 'बहूनां वचने' इत्यादिग्रन्थेनेत्यर्थः । एतेन 'बहुत्वे प्रामाण्याभावात्' इत्यादि प्रागुक्तं निरस्तम् । दृष्टान्तोक्त्या लब्धं प्रयोगमाह- **एतदुक्तमिति ॥** उक्तप्रयोगे **(रा.टि.)** सोपाधिकत्वमाशङ्क्य तन्निरासकतया मूलमवतारयति- **नन्वित्यादिना ॥ पक्ष इति ॥** ऐक्यवाक्य इत्यर्थः । **नियममेवेति ॥** यद्बहुप्रमाणविरुद्धं तद्दोषजन्यमिति व्याप्तिमेवेत्यर्थः । ननूक्तम् 'अपौरुषेयतया दोषशङ्काभावेन' इति तत्राऽह- **अत्रैक्यवाक्येत्यादि ॥** जन्यत्वोपपादनायोक्तम्- **ज्ञानं हि पक्ष इति ॥ प्रत्यक्षेणेति ॥** ज्ञानगतदोषजन्यत्वं ज्ञानत्वमिव न प्रत्यक्षेण ज्ञातव्यमित्यर्थः । **नाप्यन्वयेति ॥** दोषे सति शुक्तौ रजतज्ञानमन्यथा नेत्येवमित्यर्थः । **नाप्यप्रमाणत्वेनेति ॥** दोषजन्यत्वमनुमेयमित्यनुषङ्गः । **दोषजन्यत्वेन व्याप्तिरिति ॥** एतेन 'नियममेव प्रकटीकरोति' इत्युक्तं विवृतं ज्ञेयम् ।

**(श्री.टि.) दार्ढ्यहेतुत्वेन प्रयोजनवत्त्वेन** दार्ढ्यहेतुत्वरूपप्रयोजनवत्त्वेन । **तस्यानुवादकत्व इति ॥** सिद्ध-साधनस्यानुवादकत्वेन दूषणत्वे प्रकृते भेदागमस्याप्यनुवादकत्वेन दूषणत्वं स्यादित्यर्थः । ननु विवादपदोक्त-विप्रतिपत्तिरेव न शङ्काकारणम् । समानधर्मादेरन्यस्यापि सम्भवादित्यत आह- **अविवादपदेनेति ॥** सर्वाविवाद-स्थल एवेत्यस्य प्रथमप्रमाणेनैव यत्रार्थो निश्शङ्कं प्रमितस्तादृशस्थल एवेत्यर्थो द्रष्टव्यः । **वैयर्थ्यदोष इति ॥** वैयर्थ्यरूपोक्तदोष इत्यर्थः । **स्वार्थेति ॥** परार्थानुमानवाक्ययोः परज्ञापनार्थत्वेन परेण तस्यार्थस्य निःशङ्कं प्रमितत्वेन वैयर्थ्यदोषः । 'सन्दिग्धविपर्यस्तान्यतरं प्रत्येव वाक्यपरार्थानुमानयोरर्थवत्त्वात्' इति वचनात् । स्वार्थानुमानस्य प्रत्यक्षस्य वा निःशङ्कं प्रमितेऽप्यर्थे पुनः प्रवर्तमानस्य वैयर्थ्यं न दोष इत्यर्थः । कुत इत्यत आह- **तयोरिति ॥** स्वार्थानुमानप्रत्यक्षयोरित्यर्थः । न हि सामग्री बुद्धिमती, येन यन्मया कर्तव्यं तदन्येन कृत-मित्यवेक्ष्योदासीतेति भावः । तथाच परार्थानुमान एव सिद्धेः प्रतिबन्धकत्वं न स्वार्थानुमान इत्यवधेयम् । नच स्वार्थानुमाने सन्देहघटितपक्षलक्षणाभावः शङ्क्यः । अनुमितिविषयः पक्ष इति पक्षलक्षणस्य तत्रापि सत्त्वात् । नच साध्येऽतिव्याप्तिः, विषयशब्दस्य विशेष्यपरत्वात् । तथाचानुमितिविशेष्यः पक्ष इति पक्षलक्षणं द्रष्टव्यम् । यथोक्तं सुधायां भक्तिपादे 'परमार्थतस्तु अनुमितिविषयः पक्षः' इति । **अत एवेति ॥** सत्यां शङ्कायां परार्थानुमानवाक्ययोर्निःशङ्कं प्रमितेऽप्यर्थे प्रत्यक्षस्वार्थानुमानयोरव्यर्थत्वादेवेत्यर्थः । तथाहि - यदि सत्यामपि शङ्कायां परार्थानुमानवाक्ययोरनपेक्षितत्वेन वैयर्थ्यं स्यात्तर्हि बहूनां वचनं शङ्कानिवर्तकत्वेन नाद्रियेतेति पूर्वं बहूनामिति नोच्येत । **तेन ज्ञायते सत्यां शङ्कायां तयोर्न वैयर्थ्यमिति ॥** यदि च प्रत्यक्षं निःशङ्कं प्रमितेऽप्यर्थे व्यर्थं स्यात्तदा बहूनां वचनैर्निःशङ्कं प्रमितेऽप्यर्थे विश्वासहेतुत्वेन दर्शनं नोच्येत । तेन ज्ञायते शङ्काभावदशायां न प्रत्यक्षस्य वैयर्थ्यमिति । नन्विदानीन्तनैक्यवादिविवादजनितशङ्कापनोदायानादिवेदप्रवृत्तिः कथमित्यत आह- **एकत्वादिवादानामिति ॥ अनादित्वात्** प्रवाहतोऽनादित्वात् । 'शौद्धोदनिप्रभृतयः सम्प्रदायप्रवर्तकाः' इति वचनादिति भावः । यथोक्तमनुव्याख्याने-

'अनादिकालतो वृत्ताः समया हि प्रवाहतः ।
न चोच्छेदोऽस्ति कस्यापि समयस्य' इति ।

**॥ तदनेनेति ॥** बहुप्रमाणानामेकविषयत्वमङ्गीकृत्य दार्ढ्यहेतुतया वैयर्थ्याभावसमर्थनेनेत्यर्थः । **वैपरीत्य-(श्री.टि.) स्यापीति ॥** ऐक्यागमविरोधेन बहूनां प्रत्यक्षादीनामेवाप्रामाण्यसम्भवादिति भावः । **पाटनं** छेदः । **अनुमिनोतीति ॥** इयं शुक्तिः दाहच्छेदादिमत्त्वादित्यनुमिनोतीत्यर्थः । ननूक्तरीत्या शुक्तिरजतज्ञानस्या-प्रामाण्येऽपि ऐक्यागमप्रामाण्ये किमायातमित्यतः तद्दृष्टान्तेन तदप्यनुमेयमित्याह- **एतदुक्तं भवतीति ॥ ऐक्यवाक्यमिति ॥** तज्जनितं विज्ञानमित्यर्थः । अनुमाने दोषजन्यत्वरूपमुपाधिमाशङ्कते- **नन्विति ॥ प्रकटयतीति ॥** 'बहुप्रमाणविरुद्धानाम्' इति बहुवचनस्य भूयोदर्शनप्रदर्शनपरत्वादिति भावः । **पूर्वोत्तरेति ॥** उपक्रमोपसंहारेत्यर्थः । **साधनव्यापकत्वमिति ॥** यत्र बहुप्रमाणविरुद्धत्वं तत्र दोषजन्यत्वमिति साधन-व्यापकत्वमित्यर्थः । **अतीन्द्रियत्वादिति ॥** तस्य कालादिघटितत्वादिति भावः । **तद्दोषाणामप्यतीन्द्रियत्वा-दिति ॥** शुक्तिरजतादिज्ञानं दोषे सति जायते, दोषाभावे न जायते इत्यन्वयव्यतिरेकाभ्यां शुक्तिरजतादिज्ञानस्य दोषजन्यत्वं ज्ञातव्यम् । तन्न सम्भवति । इन्द्रियाणामतीन्द्रियत्वेन तदाश्रितानामन्वयव्यतिरेकप्रतियोगिनां दोषाणामप्यतीन्द्रियत्वेन ज्ञातुमशक्यतयाऽन्वयव्यतिरेकयोर्दुर्ज्ञानत्वादिति भावः । **नापीति ॥** शुक्तिरजतादि-ज्ञानं दोषजन्यम् अप्रमाणत्वादित्यनुमानेनेत्यर्थः । **तज्ज्ञानेऽपीति ॥** शुक्तिरजतादिज्ञानस्याप्रामाण्य-ज्ञानेऽपीत्यर्थः । नच दोषजन्यत्वमेव तज्ज्ञानोपाय इति वाच्यम् । अन्योन्याश्रयादिति भावः । **न चात्रेति ॥** शुक्तिरजतादिज्ञानस्य दोषजन्यत्व इत्यर्थः । ननु बलवत्प्रमाणविरुद्धत्वस्यैव दोषजन्यत्वव्याप्तिः प्राप्ता, न तु बहुप्रमाणविरुद्धत्वस्येत्यत आह- **बलवत्त्वं चेति ॥ नास्योपाधित्वमिति ॥** ऐक्यवाक्यजनितं

विज्ञानमप्रमाणं बहुप्रमाणविरुद्धत्वाच्छुक्तिरजतज्ञानवदित्यनुमाने दोषजन्यत्वस्योपाधित्वं नास्तीत्यर्थः ।

**(पां.टि.)** ननु विवादपदोक्तविप्रतिपत्तिरेव न शङ्काकारणम् । समानधर्मादेरन्यस्यापि तत्कारणस्य सत्त्वात् । ततश्च संशयकारणाभावस्थल अनुवादकत्वमित्येव वक्तव्यत्वात्तथाऽनुक्त्वा तत्कारणविशेषविवादाभावस्थल इत्युक्तिरनुपपन्नेत्यतोऽत्राविवादपदस्य लक्षणया संशयकारणाभावपरत्वान्नानुपपत्तिरित्याह- **अविवादपदे-नेति ।। अत एवेति ।।** निःशङ्कं प्रमितेऽर्थ एव पुनः प्रयुज्यमानवाक्यवैयर्थ्यस्य दोषत्वेन, साशङ्कं प्रमितेऽर्थे पुनः प्रयुज्यमानस्य वाक्यस्य व्यर्थताया अदोषत्वादेव 'बहूनां वचने' इति साशङ्कं प्रतिपन्नेऽप्यर्थे प्रवृत्तद्वितीयस्यापि दाढर्यहेतुत्वेन सार्थकत्वमुक्तम् । अन्यथा तन्न स्यादिति भावः । एवमत एव निःशङ्कं प्रमितेऽप्यर्थे प्रवर्तमानस्य प्रत्यक्षस्याव्यर्थत्वादेव 'बहूनां वचने' इत्यनेन निःशङ्कत्वस्य सिद्धत्वेऽपि 'दर्शने दाढर्यस्यैव दृष्टेः' इति सार्थकत्व-मुक्तम् । निःशङ्कं प्रमितेऽर्थे प्रत्यक्षस्य व्यर्थत्वे तु तन्न स्यादिति भावः । यद्वा परार्थानुमानवाक्ययोः पुरुषाधीनत्वं प्रत्यक्षस्वार्थानुमानयोस्तु तदनधीनत्वमित्येतत् कुत इत्यत आह- **अत एवेति ।।** वाक्यस्य पुरुषाधीनत्वादेव बहूनामित्यनेन वचनकर्तृविशेषः कथितः । प्रत्यक्षस्य तदनधीनत्वादेव च 'दर्शने' इत्यत्र कर्तृविशेषानुक्तिः । अन्यथा वचन इव दर्शनेऽपि कर्तृविशेषसमर्पकं पदं वक्तव्यं स्यात् । दर्शन इव वचनेऽपि वा कर्तृविशेषो नोच्येत । दर्शने कर्तृविशेषानभिधानं वचने तदभिधानं च प्रत्यक्षस्य पुरुषाधीनत्वं वाक्यस्य तदधीनत्वं बोधयतीति भावः । नन्विदानीन्तनैक्यवादिविप्रतिपत्तिजन्यशङ्कानिरासाय कथमनादिवेदप्रवृत्तिरित्यत आह- **एकत्वादि-(पां.टि.) वादानामिति ।।** तथाच प्रवाहतोऽनादिभूतैकत्वादिवादविप्रतिपत्तिजन्यसंशयस्य सार्वकालिकत्वात् तन्निरासाय प्रवृत्तिर्युक्तेति भावः । हेतुदृष्टान्तोक्त्या, उत्तरत्र चोपाधिमाशङ्क्य परिहारेण च सूचितमनुमानप्रयोगं दर्शयति- **एतदुक्तं भवतीति ।।** नन्वपौरुषेयत्वात् पक्षीकृतैक्यवाक्यस्य दोषजन्यत्वाभावान्न साधनव्यापकत्व-मुपाधेरित्यत आह- **अत्रेति ।।** तथात्वाद् अतीन्द्रियत्वात् । **तज्ज्ञानेऽप्युपायाभावादिति ।।** दोषजन्यत्वस्यैव तज्ज्ञानोपायत्वे च स्फुटमन्योन्याश्रयत्वमिति भावः । **न चाऽगमोऽस्तीति ।।** अनुपलम्भादिति भावः ।

**(व्या.टि.)** एकार्थानामपि द्वितीयादिप्रमाणानां दाढर्यहेतुत्वेनावैयर्थ्येऽतिप्रसङ्गमाशङ्कते- **यद्येवमिति ।। नानु-वादकत्वमिति ।।** अत्र मूले टीकायां चानुवादकत्वबीजवैयर्थ्यं तच्छब्देनोपचर्यते 'आयुर्वै घृतम्' इतिवत् । प्रतिपन्नार्थप्रतिपादकवाक्यवाचकमप्यनुवादकपदं सामान्यपरं वा 'गोतो णित्' इतिवत् । **सिद्धसाधना(त्वा)-देरिति ।।** आदिपदेनाधिकं नाम निग्रहस्थानं गृह्यते । **अनुवादकत्व इति ।।** पूर्ववद् द्वेधा व्याख्येयम् । सार्वत्रिकानुवादकत्वबीजलाभाय व्याचष्टे- **अविवादपदेनेति ।। लक्षयति** उपलक्षयति । सामान्यविशेषभावादिति भावः । कथञ्चित् केनापि प्रकारेण न सर्वेणेति प्रकारविशेषेण वैयर्थ्यमुक्तमित्यभिप्रेत्य तं प्रकारं दर्शयति- **निःशङ्कमिति ।। परार्थानुमानस्येति ।।** परार्थानुमानवाक्यत्वे एव निःशङ्के प्रवर्तमानवैयर्थ्यावच्छेदकप्रकारौ, नान्यः प्रकार इत्यमुमर्थमाहेत्यर्थः । कुतोऽयं विभागो विज्ञेय इत्यत आह- **तयोरिति ।।** परार्थानुमानवाक्ययो-रित्यर्थः । परबुबोधयिषया प्रवृत्त्याः पुरुषाधीनत्वादित्यर्थः । अन्ययोः स्वसामग्र्यधीनत्वेन पुरुषानधीनत्वादित्यपि योज्यम् । तज्ज्ञापकमाह- **अत एवेति ।।** एकवचने विश्वासे परस्य वैयर्थ्यमेवेति प्रकाशयितुं बहूनामित्युक्तम् । अनेन साशङ्कस्थल एव वचनान्तरस्य सार्थक्यमुक्तं भवति । बहुवचनेन, निःशङ्केऽपि दर्शनेऽस्य दाढर्यहेतुत्वोक्त्या निःशङ्कं प्रमितेऽपि प्रत्यक्षस्य सार्थक्यमुक्तमित्यर्थः । यद्वा **अत एव** वचनस्य पुरुषाधीनत्वादेव, वचने बहूनामिति कर्त्रुक्तिः । प्रत्यक्षस्यानधीनत्वादेव दर्शनकर्तुरनुक्तिरिति भावः । 'सामान्यापेक्षं ज्ञापकम्' इति न्यायेन दर्शनस्वार्थानुमानयोर्निःशङ्केऽप्यर्थे प्रवृत्तमानयोर्न वैयर्थ्यमिति ज्ञायत इति भावः । अत्र मूलेऽविवादेत्यर्थाभावे नञ्समासोऽव्ययीभावो वा । 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' 'अद्रुतायामसंहितम्' इति च भाष्यवार्तिके प्रयोगेणास्य विकल्पज्ञापनात् । अत्रेत्येतच्छब्दपरामृष्टं दर्शयति- **जीवेश्वरेति ।।** न विवादिनो यत्नतो गवेषणीया इत्यनभिमतं व्यवच्छिन्दतैवकारेण प्रसिद्धिरर्थाद् द्योतितेत्याह- **एवशब्देनेति ।।** ननु सादेर्विवादस्य कथमनादिप्रवृत्तागमवैयर्थ्यहेतुत्वमित्यत आह- **एकत्वेति ।। अनादित्वादिति ।।** प्रवाहत इति शेषः । 'अनादि-कालतो वृत्ताः समया हि प्रवाहतः' इत्युक्तेरिति भावः । ननु द्वितीयादिप्रमाणावैयर्थ्यसमर्थनेन किं लब्धमित्यत आह- **तदनेनेति ।।** प्राबल्यनिश्चायकाभावेन बहुत्वस्य प्राबल्यहेतुत्वानिश्चयात् बहुनैकस्य कुतो बाधः, एकेन बहुबाधः किं न स्यादित्याशङ्कते- **तथाऽपीति ।। प्राबल्येति ।।** बहुप्रमाणस्येति शेषः । लिङ्गेन स्वार्थानु-मानेन । **प्रसिद्धमेवेति ।।** सर्वानुभवसिद्धमित्यर्थः । **तेनेति ।।** प्रसिद्धकार्यलिङ्गेनेत्यर्थः । **सिद्धमिति ।।** अनुमतमित्यर्थः । फलबलकल्प्यं बहुप्रमाणप्राबल्यमिति भावः । किमनेन बहुप्रमाणविरोधाप्रामाण्ययोर्व्याप्ति-**(व्या.टि.)** प्रदर्शनेनेत्यतोऽनुमानप्रयोगः सूचित इत्याह- **एतदुक्तं भवतीति ।।**

**ऐक्यवाक्यमिति ।।** दुर्बलं ततश्चाप्रमाणमिति साध्यद्वयं प्रतिज्ञातव्यम् । साध्यद्वयेऽपि उपाध्युद्भावनेन प्रत्यवतिष्ठते- **नन्विति ।।** प्रयोजकत्व-प्रयोजकसाध्यव्यापकत्वादि दर्शयति- **यदप्रमाणमित्यादिना ।।** वाक्यस्य पक्षीकरणभ्रान्तिं वारयति- **अत्रे-ति ।।** अनेनैक्यवाक्यं प्रमाणमिति पूर्वप्रतिज्ञायामणा(दि)निर्देश इत्यसूचि । एवेति साधनव्यापकतां द्रढयति ।

एवं प्रत्यक्षेणोपाधेः साधनव्यापकत्वं प्रसाध्याधुनोपाधिः साधनव्यापकः, तद्व्यापकव्यापकत्वात्, यो यद्व्यापकव्यापकः स तद्व्यापकः, यथा घटत्वव्यापकपृथिवीत्वव्यापकद्रव्यत्वं घटत्वस्य इत्यभिसन्धित्सयाऽह- **अवश्यमिति ।। इति वक्तव्यमिति ।।** इति प्रष्टव्यमित्यर्थः । इति प्रश्ने त्वयोत्तरं वक्तव्यमिति वा । किं प्रत्यक्षेण अन्वयव्यतिरेकाभ्यां वा अप्रमाणत्वेन वा आगमेन वेति विकल्प्य क्रमेण निराचष्टे- **न तावदिति ।। अतीन्द्रियत्वादिति ।।** कार्यानुकूलशक्तेस्तादृशत्वादित्यर्थः । द्वितीयं निराह- **नापीति ।। तथात्वादिति ।।** अतीन्द्रियधर्मस्य धर्मिप्रत्यक्षमन्तराऽप्रत्यक्षत्वेन तदीयान्वयव्यतिरेकयोः सत्त्वासत्त्वरूपयोरप्यप्रत्यक्षत्वेन तत्प्रमित्यसिद्धिरित्यर्थः । तृतीयं पराह- **नापीति ।।** लिङ्गासिद्धिमाह- **तज्ज्ञानेऽपीति ।।** उपलक्षणमेतत् । तत्प्रयोजकत्वेनोक्तस्य तत्प्रयोज्यत्वे(ना)न्योन्याश्रयत्वाच्चेत्यपि द्रष्टव्यम् । तुरीयं तु निरस्यति- **न चेति ।।** पौरुषेयापौरुषेयान्यतरादर्शनादिति भावः । **अत इति ।।** लिङ्गत्वादित्यर्थः । ननु बलवत्प्रमाणविरुद्धत्वदोष-जन्यत्वयोर्व्याप्तिसिद्धावपि किमायातं बहुप्रमाणविरुद्धत्वस्य । न हि यत्प्रमाणविरुद्धं तद्दोषजन्यमप्रमाणं चेति व्याप्तिरस्ति । सावकाशबहुविरुद्धस्यापि निरवकाशैकस्य तददर्शनात् । तदेव चात्र हेतूकृतम् । अतः कथं तस्य साध्योपाधिव्याप्तिसिद्धिरित्यत आह- **बलवत्त्वं चेति ।। बहुत्वेनापीति ।।** अनेनेदमुदितं भवति । न हि प्रागस्माभिर्बहुप्रमाणविरुद्धत्वं साक्षादप्रामाण्यसाधकतयोपन्यस्तम् । किन्तु बलवत्प्रमाणोन्नायकतया । बहुत्वस्य बलवत्त्वहेतुत्वात् । **तच्च साध्योपाधिव्याप्तमेवेति ।।** कुतोऽधिकाङ्गीकार इत्यत आह- **सर्वत्रेति ।।** ननु तर्ह्युक्तं विरुद्धचेतेत्यत आह- **तथा चेति ।। स्वीकार्येति ।।** व्याप्यव्याप्यस्य सुतरां व्याप्यत्वादिति भावः । **साधन-व्यापकत्वादिति ।।** व्याप्यव्याप्यस्य सुतरां व्याप्यत्वे सिद्धे समानसंवित्संवेद्यतया व्यापकव्यापकस्य सुतरां साधनव्यापकत्वसिद्धेरित्यर्थः । **न तस्येति ।।** तथा च निरुपाधित्वादनुमानं मानमेवेति सर्वमनवद्यम् ।

**मूलम् -** **अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा ।**
**आगमोऽदुष्टवाक्यं च स्वदृक् चानुभवः स्मृतः ।।**
**बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथा ।**
**द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।**
**तयोः स्वभावो बलवानुपजीव्यादिकश्च सः ।।**

**(त.मं.)** एवं प्रसङ्गप्राप्तं प्रमाणानां बलाबलविवेकं ब्रह्मतर्कवाक्येन तल्लक्षणप्रकटनपूर्वकं प्रकटयति- **अदुष्टमिति ।।** प्रत्यक्षादीनां लक्षणमुक्त्वा साक्षिप्रमाणलक्षणमाह- **स्वदृक् चेति ।। स्वदृक्** स्वस्य साक्षिणो ज्ञानमनुभवरूपमित्यर्थः । इदमदुष्टमिति निश्चेतुं कथं दोषज्ञानं स्यादित्यत आह- **बलव-दिति ।।** द्वयोर्बलवत्त्वनिमित्तयोर्मध्ये कस्य बलीयस्त्वमित्यत आह- **तयोरिति ।। स** च स्वभाव उपजीव्यत्वं साक्षित्वं च ।

**टीका -** एवमतीतेन प्रबन्धेनोक्तप्रमेयजातमुपपत्तिसिद्धमपि न्यायशास्त्रसम्मत्या दृढीकर्तुं तद्वाक्यानि पठति- **अदुष्टमित्यादि ।।** एतेषां वाक्यानामुक्तोपयोगं तत्र तत्रैव दर्शयिष्यामः । प्रमाण-निरूपणार्थमेतानि वाक्यानि प्रवृत्तानि । स्वरूपे ज्ञात एव तदन्यधर्मज्ञानम् । स्वरूपज्ञानं च लक्षणा-धीनम् । तत्र यद्यपि सामान्यलक्षणपूर्वकं विशेषलक्षणाभिधानं प्राप्तं प्रतिपत्तिसौकर्यात्, तथाऽपि सामान्यस्य व्यवहारेष्वनुपयोगाद् विशेषाणामेव तदुपयोगाद् विशेषलक्षणान्येवाऽदावुदितानि ।

येनोपहतमिन्द्रियादिकं ज्ञानमेव न जनयति, विपरीतज्ञानं चोत्पादयति तद्रहितमदुष्टम् । इन्द्रिय-मिति ज्ञानेन्द्रियमेव विवक्षितं, प्रमाणप्रकरणात् । तुशब्दो विशेषार्थः । सेतिकर्तव्यताकं करणं करणविशेषश्चात्र प्रत्यक्षादिकमधिकृतम् । तत्र करणधर्मिणः प्राधान्यात् प्रत्यक्षधर्म्यक्षमेवात्र निरूपितं नत्वनुमानमिव सेतिकर्तव्यताकं प्रत्यक्षम् । तत्तूत्तरत्र

वक्ष्याम इति। इन्द्रियस्यादुष्टत्वं काचादि-राहित्यम्।

व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्कः। तथाशब्देनाप्रसङ्गात्मकं समुच्चिनोति। तथाच वक्ष्यमाणविरोधादिदोषरहितमुपपत्तियुक्त्यादिशब्दवाच्यं लिङ्गमनुमा, सा च तर्कसाधनभेदात् द्विविधेत्युक्तं भवति। तर्कः प्रमाणमेव न भवतीति नैयायिकादयः, पृथक्प्रमाणमिति जैनाः, तन्निरासायैवमुक्तम्। अथवा तर्क्यतेऽनुमीयतेऽनेनेति तर्कशब्देन समस्तोपपत्तिरुच्यते। तथाशब्द उपमायाम् इन्द्रियमिवायमप्युदुष्ट इति।

वाक्यदोषनिरूपणं प्रागेव कृतम्। चशब्दोऽवधारणे, वाक्यमेव नतु चेष्टाऽपीति। तेन चेष्टासङ्ग्रहार्थं 'समयबलेन सम्यक्परोक्षानुभवसाधनमागमः' इति भासर्वज्ञोक्तं निरस्तं भवति। आगमशब्दस्य वाक्य एव रूढत्वात्। लोकरूढस्यैव परीक्षकैरन्वाख्येयत्वात्। अन्यथाऽतिप्रसङ्गात्। चेष्टायाश्चा-नुमानेऽन्तर्भावात्।

आत्मस्वरूपभूतं ज्ञानं स्वदृक्। तदिदानीमनुभव इति विवक्षितम्। चशब्दोऽवधारणे स्वदृगेव नतु निर्दोषत्वमनुवर्तनीयं, सज्जीवानां स्वरूपज्ञानस्य निर्दोषत्वनियमादिति। अत्र स्वरूपनिरूपण-मेव क्रियते प्रक्रिया तु प्रमाणलक्षणादिग्रन्थान्तरानुसारेण द्रष्टव्या। ज्ञानमात्मस्वरूपं न भवती-त्येके। तन्निरासार्थं स्मृत इत्युक्तम्। 'विज्ञानघन एव' इत्यादिश्रुतिस्मृतिसिद्धः। प्रत्यक्षानुमाना-गमानुभवविरुद्धमैक्यवाक्यमित्युक्तम्। तत्प्रत्यक्षाद्यज्ञाने दुर्ज्ञानम्। अतस्तत्स्वरूपनिरूपणेन सुज्ञानं कृतम्।

नन्विन्द्रियादीनामदुष्टत्वं दोषज्ञानाधीनज्ञानम्। दोषास्तु केन ज्ञातव्या इत्यत आह- **बलव-दिति ॥** चशब्दस्तुशब्दार्थः। यद्यपि केचित् स्वरूपासिद्ध्यादयोऽनुमानादिदोषाः प्रत्यक्षादिसिद्धाः, तथाऽपीन्द्रियदोषास्तु बलवत्प्रमाणविरोधेनैव ज्ञेया नैवान्यथा। यथाऽन्यथा नैव ज्ञेयास्तथोक्तं पुरस्तात्।

एतेन 'दोषजन्यत्वं च' इत्युक्तं दृढीकृतं भवति। 'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' इति वचनान्नात्र छन्दोभङ्गः शङ्कनीयः।

ननु प्रामाण्यातिरिक्तं किं बलवत्त्वमित्यतस्तद्विभज्य दर्शयति- **द्विविधमिति ॥** तर्हि बहूनां स्वभावबलवतश्च विरोधे कथं निर्णय इत्यत आह- **तयोरिति ॥** तत्रोपपत्तिं सूचयितुं स्वभावं निरूपयति- **उपजीव्येति ॥** आदिपदेन निरवकाशत्वादिग्रहणम्। अत एवोपजीव्यनिरवकाश-प्रमाणविरोधं प्रथममुक्त्वा बहुप्रमाणविरोधः पश्चादुक्तः।

**(र.टि.)** ननु प्रमाणलक्षणादेः प्रागनुक्तत्वात्तत्प्रतिपादकेनानेन वाक्यसन्दर्भेण कथमुक्तार्थदृढीकरणमित्यत आह- **एतेषामिति ॥** प्रागुक्तार्थप्रतिपादकत्वेनैव दार्ढ्यहेतुत्वाभावेऽपि क्वचिदुक्तप्रतिपादकत्वेन, क्वचिदुक्त-समर्थनादिना दार्ढ्यहेतुत्वमस्तीति भावः। अत एव सर्वसङ्ग्रहायोपयोगपदप्रयोगः। **तदन्यधर्मेति ॥** 'बलवत्प्रमाणतश्च' इत्यादिना वक्ष्यमाणबलवत्त्वादिधर्मज्ञानमित्यर्थः। **व्यवहारेष्विति ॥** प्रत्यक्षादेरागम-स्येत्यादिव्यवहारेष्वित्यर्थः। ननु दोषत्वस्यानुगतस्यैकस्याभावाददुष्टत्वं चक्षुरादिषु प्रत्येकमननुगतमिति तद्घटितं कथमक्षादीनां लक्षणमित्यत आह- **येनोपहतमिति ॥** अनेन प्रमाप्रतिबन्धकत्वं दोषत्वम्, प्रमाप्रतिबन्धकत्वं ज्ञानप्रतिबन्धकत्वेन वा संशयविपर्ययजनकत्वेन वेत्युक्तं भवति। 'विशेषार्थः' इत्युक्तमेवोपपादयति- **सेतिकर्तव्यताकमित्यादिना ॥ करणधर्मिण इति ॥** करणभूतसमुदाये यद्धर्मिभूतमिन्द्रियं तस्येत्यर्थः। प्रत्यक्षधर्मीत्येतदप्येवमेव व्याख्येयम्। **उत्तरत्र इति ॥** 'विषयान् प्रति' इत्यत्रेत्यर्थः। तत्र हि, अत्र लक्षितस्याक्षस्य **(र.टि.)** विषयान् प्रति स्थितत्वेन प्रत्यक्षत्वं विधीयते। अत्र विशिष्टाभिप्राये तत्र पुनर्विशिष्टस्यार्थसन्निकृष्टत्वेन प्रत्यक्षत्वविधानायोगादिति भावः। करणधर्मिण एवात्र लक्ष्यत्वान्नार्थदोषरहितत्वं विवक्षितमित्यभिप्रेत्याऽह- **इन्द्रियस्यादुष्टत्वमिति ॥** नन्वेवं सति तर्क-साधनानुगतैकलक्षणलाभः कथमित्यत आह- **तथा चेति ॥** अनेन 'निर्दोषोपपत्तिरनुमा', 'अनुमा युक्तिरेवोक्ता', 'लिङ्गं हेतुः' इति प्रमाणलक्षणानुव्याख्यानमिथ्यात्वानुमा-खण्डनानुसारेण विशेष्यपदाध्याहारेण अदुष्टपदेनैवोक्तलिङ्गं हेतुरित्युभयानुगतं प्रमाणलक्षणम्, तर्कतथाशब्दाभ्यां विभागश्चोच्यत इत्युक्तं भवति। **एवमुक्तमिति ॥** स्वशब्देन तर्कं तथाशब्देन साधनमुपादाय विभागकथनपूर्वकं लक्षणमुक्तमित्यर्थः। तथा च तर्कस्यानुमानान्तर्भावोक्त्या मतद्वयमपि निराकृतं भवतीति भावः। **आत्म-**

**स्वरूपभूतमिति ।।** अनेन स्वा च सा दृक् चेति विग्रहः प्रदर्शितो भवति । ननु स्वरूपभूतज्ञानत्वं वृत्ति-रूपानुभवेऽव्याप्तमित्यत आह- **तदिदानीमिति ।।** ननु निर्दोषत्वाननुवृत्तावयथार्थसाक्षिणि स्वदृक्त्व-मतिव्याप्तमित्यत आह- **सञ्जीवानामिति ।।** तथा चोत्तमसम्बन्धिस्वरूपज्ञानत्वं साक्षिप्रमाणस्य लक्षणमित्युक्तं भवति । नन्वनुभवादेर्नित्यत्व-विषयनियमादिकं कुतो नोक्तमित्यत आह- **अत्रेति ।।** चशब्दस्तुशब्दार्थ इत्यस्य फलितमाह- **यद्यपीति ।।** कथं दोषज्ञानस्य बलवत्प्रमाणजन्यत्वमित्यतो बलवत्प्रमाणत इत्यनन्तरं विरोधेनेति पदाध्याहारमभिप्रेत्याऽह- **बलवत्प्रमाणविरोधेनैवेति ।। नैवान्यथेति ।।** अनेन 'न च' इति चशब्द एवकारार्थ इत्युक्तं भवति । **निरवकाशत्वादीति ।।** अनेन मूले उपजीव्येति भावप्रधानो निर्देश इति सूचितं भवति । आदिपदेन श्रुतित्वोपपत्तित्वादिग्रहणम् । **अत एवेति ।।** तथा च 'द्विविधं बलवत्त्वम्' इति श्लोकस्यैक्यागमस्य क्रमेणोपजीव्यादिप्रमाणविरोधवचने उपपादकत्वेनोपयोग इति भावः ।

**(रा.टि.) उक्तप्रमेयजातमिति ।।** तच्चाग्रे तत्रतत्र व्यक्तीकरिष्यति । स्मृत इत्यन्तस्योपयोगमाह- **प्रमा-णेति ।।** तन्निरूपणमपि किमर्थमित्यत आह- **स्वरूपेति ।।** प्राबल्यदौर्बल्यविरोधादि **अन्यधर्मज्ञानम्** इत्यर्थः। **आदावुदितानीति ।।** सामान्यलक्षणमपि 'याथार्थ्यमेव प्रामाण्यम्' इति पश्चाद्वक्ष्यत इत्यादावित्युक्तम् । दोषस्वरूपं वदन्नेवादुष्टपदं व्याचष्टे- **येनेति ।।** विशेषार्थ इत्युक्तं व्यनक्ति- **सेतिकर्तव्यताकमिति ।।** स्वस्वविषयसन्निकृष्टमित्यर्थः । कुत एवम्? करणमात्रमेवात्र विवक्षितमस्त्वित्यत आह- **करणविशेषश्चेति ।।** अधिकृतमाश्रितमित्यर्थः । तर्ह्यक्षशब्देन सेतिकर्तव्यताकेन्द्रियलाभात् 'त्वक्षम्' इति तुशब्देन सेतिकर्तव्यता-कत्वोक्तौ पुनरुक्तिरित्यत आह- **तत्रेति ।।** करणविशेषस्याधिकृतत्वे सतीति वा तुशब्देन सेतिकर्तव्यताकत्वे उक्ते सतीति वाऽर्थः । सेतिकर्तव्यताकं चेदक्षं कथं निर्देश्यमित्यत आह- **प्रत्यक्षमिति ।।** अदुष्टमिन्द्रियं प्रत्यक्षमिति निर्देष्टव्यं न तदत्र निर्दिष्टमित्यर्थः । अतस्तादृशार्थलाभाय त्वक्षमिति तुशब्दोऽक्षपदान्वितत्वेनोक्त इत्यर्थः । अनुमानमिवेत्युक्त्या तत्र तथा विवक्षितमिति भावः । तथाचादुष्टमिन्द्रियं त्वक्षं सेतिकर्तव्यताकं सत् प्रत्यक्षप्रमाणमुच्यत इति योजना । तर्हि स्वस्वविषयसन्निकृष्टमक्षं प्रत्यक्षमिति कुतो नोक्तमित्यत आह- **तत्तूत्तर-त्रेति ।।** 'विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षम्' इत्यत्रेति भावः । **अप्रसङ्गात्मकं समुच्चिनोतीति ।।** तथात्वे **(रा.टि.)** कथमर्थ इत्यतः अदुष्टस्तर्कः, अदुष्टं व्याप्त्याद्युपेतं लिङ्गञ्चानुमेति योजनेति भावेनार्थमाह- **वक्ष्य-माणेति ।।** 'विरोधश्च तथाऽधिक्यम्' इत्यादिना वक्ष्यमाणप्रमाणविरोधादिदोषेत्यर्थः । 'निर्दोषोपपत्तिरनुमा', 'अनुमा युक्तिरेवोक्ता', 'लिङ्गं हेतुः' इत्यादिग्रन्थान्तरोक्त्यविरोधायोक्तम्- उपपत्तीत्यादि । **समस्तोपपत्ति-रिति ।।** साधनदूषणात्मिका समस्तेति वा व्याप्त्यादिसपरिकरा वेत्यर्थः । तर्कस्यापि विपर्यये पर्यवसानमुखेन क्वचित्स्वतोऽनुमितिजनकत्वादनुमीयतेऽनेनेति युज्यत इति भावः । **प्रागेव कृतमिति ।।** 'अज्ञानविप्रलम्भयोः प्राप्तेः' इत्येतद्व्याख्यानावसर इति भावः । **समयबलेनेति ।।** सङ्केतग्रहबलेनेत्यर्थः । अनुमानव्यावृत्त्यर्थमेतद्विशेष-णम् । स्वयं हेतुमाह- **आगमशब्दस्येति ।।** अन्वाख्येयत्वात् लक्षणादिना व्युत्पाद्यत्वादित्यर्थः । **अतिप्रसङ्गा-दिति ।।** प्रमाणतुल्यादावपि प्रयोगात्तत्सङ्ग्रहार्थमपि लक्षणोक्तिप्रसङ्गादित्यर्थः । चेष्टाऽपि प्रमापिकाऽस्तीत्यत आह- **चेष्टायाश्चेति ।। प्रक्रिया त्विति ।।** तदवान्तरभेदतल्लक्षणतद्व्यावर्त्यान्तर्भावादिरूपा प्रक्रियेत्यर्थः । **इत्यादिश्रुतिस्मृतीति ।।** 'पुंस्त्वादिवत्त्वस्य' इति सूत्रभाष्योक्तश्रुत्यादिरादिपदार्थः । **इत्युक्तमिति ।।** 'अनुमानसिद्धत्वे च' इत्यादिना 'शुक्तिरजतादौ' इत्यन्तेन ग्रन्थेनेति योज्यम् । विशेषार्थ इत्युक्तं व्यनक्ति- **यद्यपीत्यादिना ।। पुरस्तादिति ।।** न 'तावत्प्रत्यक्षेण' इत्यादिनोक्तमिति भावः । **नात्रेति ।।** 'बलवत्प्रमाण-तश्चैव' इत्यत्र नवाक्षरत्वेऽपि अष्टाक्षरत्वरूपछन्दोभङ्गो नेत्यर्थः । निरवकाशत्वादीत्यादिपदेन जात्या प्राबल्यवतो ग्रहः । **अत एवेति ।।** स्वभावस्य बलवत्त्वादेव । बहुप्रमाणसंवादश्चेत्यनेन पश्चादुक्त इत्यर्थः ।

**(श्री.टि.) न्यायशास्त्रसम्मत्येति ।।** ब्रह्मतर्कसम्मत्येत्यर्थः । 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम्' इति वचनात्सिद्धान्ते ब्रह्मतर्कस्यैव न्यायशास्त्रत्वप्रसिद्धिरिति भावः । ननु प्रमाणलक्षणादेः प्रागनुक्तत्वात्तत्प्रति-पादकेनानेन वाक्यसन्दर्भेण कथमुक्तार्थदृढीकरणमित्यत आह- **एतेषामिति ।।** प्रागुक्तार्थप्रतिपादकेनैव दार्ढ्य-हेतुत्वाभावेऽपि क्वचिदुक्तप्रतिपादकत्वेन क्वचिदुक्तसमर्थनादिना दार्ढ्यहेतुत्वमस्तीति भावः । अत एव सर्व-सङ्ग्रहायोपयोगपदप्रयोग इति ज्ञातव्यम् । **प्रवृत्तानि** ब्रह्मतर्कग्रन्थ इति शेषः । **स्वरूपे** प्रमाणस्वरूपे । **तदन्य-धर्मेति ।।** 'बलवत्प्रमाणतश्चैव' इत्यादिना वक्ष्यमाणबलवत्त्वादिधर्मज्ञानमित्यर्थः । **स्वरूपज्ञानं चेति ।।** इतरव्यावृत्तत्वेन स्वरूपज्ञानमित्यर्थः । **व्यवहारेष्विति ।।** प्रत्यक्षादेरागमस्येत्यादिविशेषव्यवहारेष्वित्यर्थः । **अनुपयोगादिति ।।** तस्यातिप्रसक्तत्वात् । न हि पशुत्वं गौरिति व्यवहारे निमित्तमिति भावः । तेन प्रमाणमिति प्रमाणसामान्यव्यवहारे सामान्यलक्षणस्याप्युपयुक्तत्वात् कथमेतदिति शङ्काऽनवकाश इति ध्येयम् । विशेषाणां विशेषलक्षणानाम् । तदुपयोगात् विशेषव्यवहारेषूपयोगात् । अदुष्टत्वस्य दोषज्ञानाधीनत्वात्तं लक्षयति- **येने-ति ।।** उत्पादयतीत्यनन्तरं स दोष इति

शेषः । अनेन प्रमाप्रतिबन्धकत्वं दोषत्वम् । प्रमाप्रतिबन्धकत्वं च द्वेधा । सर्वथा ज्ञानाजनकत्वेन तज्जनकत्वेऽपि संशयविपर्ययजनकत्वेन चेत्युक्तं भवति । **ज्ञानेन्द्रियमेवेति ॥** न कर्मेन्द्रियमित्यर्थः । कुत इत्यत आह- **प्रमाणप्रकरणादिति ॥** कर्मेन्द्रियस्य कर्मकरणत्वेन प्रमाकरणत्वा-भावादिति भावः । तमेव विशेषं दर्शयितुं तदुपयुक्तां काञ्चन वस्तुस्थितिमाह- **सेतिकर्तव्यताकमिति ॥ (श्री.टि.)** कारकमिति शेषः । सन्निकर्षादिरूपावान्तरव्यापाराख्येतिकर्तव्यतासहितं यत्कारकं तत्करणमि-त्युच्यत इत्यर्थः । यद्यपि क्रियाऽयोगव्यवच्छिन्नमेव कारकं करणं नियमेन क्रियाजनकमिति यावत् । 'क्रियां कुर्वद्धि कारकम्' इति वचनात् । न तु सेतिकर्तव्यताकम् । तथापीतिकर्तव्यतारहितस्य क्रियाऽयोगव्यवच्छिन्न-त्वाभावादेवमुक्तमिति ज्ञातव्यम् । **अत्र** ब्रह्मतर्कवाक्ये । **अधिकृतं** लक्ष्यतयेति शेषः । एवं वस्तुस्थितिमुक्त्वा ननु तर्हि प्रत्यक्षनिरूपणमकृत्वाऽक्षमेवात्र कस्मान्निरूपितमित्याशङ्कापरिहाराय तुशब्दार्थभूतं विशेषं दर्शयति- **तत्रेति ॥** करणधर्मिणि इत्यत्र करणे धर्मिणि इति योज्यम् । इतिकर्तव्यतासहितकारकरूपकरणशब्दार्थे यद्धर्मिभूतं कारकं तस्येतिकर्तव्यतापेक्षया प्राधान्यादित्यर्थः । **प्रत्यक्षधर्म्यक्षमेवेति ॥** करणविशेषभूतविषयसन्निकृष्टाक्ष-रूपप्रत्यक्षशब्दार्थेऽपि यद्धर्मिभूतं प्रधानम् अक्षं तदेव सन्निकर्षरूपेतिकर्तव्यतापरित्यागेन निरूपितमित्यर्थः । प्रत्यक्षधर्म्यक्षमेवेत्यत्र स्ववाक्येऽवधारणव्यावर्त्यमाह- **न त्विति ॥** प्रत्यक्षं निरूपितमिति वर्तते । यथा हि 'तर्कोऽदुष्टस्तथाऽनुमा' इत्यत्र सेतिकर्तव्यताककरणवाचिनाऽनुमापदेन सेतिकर्तव्यताकमेवानुमानं निरूपितम्; एवं सेतिकर्तव्यताकं प्रत्यक्षं न निरूपितमित्यर्थः । तर्हि यदधिकृतं प्रत्यक्षं तन्न निरूपितमेवेति न्यूनतेत्यत आह- **तत्त्विति ॥** यदधिकृतं सन्निकर्षरूपेतिकर्तव्यतासहितं प्रत्यक्षं तत्त्वित्यर्थः । **उत्तरत्रेति ॥** 'विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति कीर्तितम्' इत्युत्तरत्रेत्यर्थः । **व्याप्याङ्गीकार इति ॥** व्यतिरेकव्याप्तौ साध्याभावस्य व्याप्यत्वादग्निर्मास्तु इत्यग्न्यभावरूपव्याप्याङ्गीकार इत्यर्थः । **व्यापकप्रसञ्जनं** धूमाभावापादनम् । **अप्रसङ्गात्मकं** साधनानुमानम् । नन्वेवं सति दूषणानुमानरूपतर्कसाधनानुमानोभयानुगतानुमानलक्षणालाभ इत्यत आह- **तथा चेति ॥** अत्रादुष्ट इत्यनन्तरं लिङ्गमिति विशेष्याध्याहारः । अदुष्ट इति पुल्लिङ्गस्य व्यत्ययः । एवं सत्यदुष्टं लिङ्गमनुमेत्येवमुभयानुगतलक्षणलाभ इत्यभिप्रेत्योक्तम् । **वक्ष्यमाणविरोधादिदोषरहितं लिङ्गमनुमेति ॥** 'निर्दोषोपपत्तिरनुमा', 'अनुमा युक्तिरेवोक्ता', 'लिङ्गं हेतुः' इति प्रमाणलक्षणानुव्याख्यानमिथ्यात्वानुमान-खण्डानानुसारेणोपपत्तियुक्त्यादिशब्दवाच्यं लिङ्गमित्युक्तम् । तर्कतथाशब्दाभ्यां विभाग उक्त इत्यभिप्रेत्याऽह- **सा चेति ॥ एवमुक्तमिति ॥** स्वशब्देन कण्ठरवेण तर्को गृहीत इत्यर्थः । प्रमाणत्वमङ्गीकृत्य तस्यानु-मानेऽन्तर्भावकथनेन मतद्वयस्यापि निरासादिति भावः । **समस्तोपपत्तिरिति ॥** साधनानुमानदूषणानुमानरूपे-त्यर्थः । तथा चात्रानुमेत्यनेनैव सामान्यलक्षणं तर्क इत्यनेनैव विभागश्चोक्त इति ज्ञातव्यम् । **अयमपीति ॥** साधनानुमानदूषणानुमानरूपस्तर्क इत्यर्थः ।

**वाक्यदोषेति ॥** अबोधकत्वविपरीतबोधकत्वादिरूपेत्यर्थः । **तेनेति ॥** चेष्टाया आगमत्वव्यावर्तनेने-त्यर्थः । **समयबलेनेति ॥** सङ्केतबलेनेत्यर्थः । चेष्टाया अप्येतादृशत्वेन तन्मते आगमान्तर्भावो द्रष्टव्यः । कथं निरस्तमित्यतस्तदुपपादयति- **आगमशब्दस्येति ॥ वाक्य एवेति ॥** न तु चेष्टायामित्यर्थः । ननु वाक्ये आगमशब्दस्य रूढत्वेऽपि चेष्टायां प्रयोगः कुतो न कर्तव्य इत्यत आह- **लोकरूढस्यैवेति ॥ अन्वाख्येयत्वात्** प्रयोक्तव्यत्वात् व्यवहर्तव्यत्वादिति यावत् । लोकरूढस्यैव परीक्षकैरन्वाख्येयत्वाभावेऽतिप्रसङ्गमाह- **अन्य-(श्री.टि.) थेति ॥** प्रत्यक्षशब्दस्याप्यागमे प्रयोगः स्यादित्यतिप्रसङ्गः स्यादित्यर्थः । ननु चेष्टाया आगमानन्तर्भावे प्रमाणान्तरत्वं स्यादित्यत आह- **चेष्टायाश्चेति ॥** नन्वत्र सुधाविरोधः शङ्क्यः । तत्र लिप्यक्षरचेष्टयोर्वर्णस्मरण-हेतुत्वेन मानसप्रत्यक्षेऽन्तर्भावकथनात् । यथोक्तं सुधायां नविलक्षणत्वाधिकरणे 'पुरुषलिपिरपि पदमिव पदार्थस्य वर्णानां स्मरणहेतुरेष्टव्या' इति । न चात्र पुरुषलिपिरेवोक्ता नाक्षरचेष्टेति वाच्यम् । भक्तिपादीयसुधायाम् 'शाकुनलिप्यक्षरचेष्टानामन्तर्भावस्य नविलक्षणत्वाधिकरणे सूचितत्वात्' इत्युक्तत्वात् । न हि नविलक्षणत्वाधि-करणस्थमुक्तवाक्यं विनाऽक्षरचेष्टान्तर्भावसूचकं तत्रत्यवाक्यान्तरमस्तीति चेत् । उच्यते । भक्तिपादीय-सुधायामक्षरचेष्टाशब्देन अक्षरत्वेन सङ्केतितचेष्टायाः करपल्लवसंज्ञाया विवक्षितत्वात् । अत्र चेष्टाशब्देनार्थ-विशेषबोधकभ्रूविक्षेपादिरूपाया एव चेष्टाया अभिप्रेतत्वेनाक्षरचेष्टान्तर्भावानुक्त्या सुधाविरोधाभावात् । अत एवात्र चेष्टेत्येव सामान्येनोक्तं नाक्षरचेष्टेति । अत्रत्यचेष्टाशब्दस्याक्षरचेष्टाभिप्रायकत्वे तु चेष्टकबुद्धिस्थशब्दानु-मापकत्वेन वा तदवबुद्धार्थानुमापकत्वेन वाऽनुमानेऽन्तर्भावादिति पररीत्या व्याख्येयमिति सम्प्रदायविदः । **आत्मस्वरूपभूतमिति ॥** अनेन स्वा च सा दृक् चेति स्वदृगिति विग्रहः प्रदर्शितो भवति । ननु वृत्तिरूपज्ञान-स्याप्यनुभवत्वेनानुभवलक्षणभूतात्मस्वरूपज्ञानत्वरूपस्वदृक्त्वलक्षणस्य तत्राव्याप्तिरित्यत आह- **तदिदानी-मिति ॥** आत्मस्वरूपभूतं यत्साक्षिरूपं ज्ञानं तदेवेदानीमनुभव इति विवक्षितं न वृत्तिरूपं ज्ञानम् । तथा च साक्षिरूपानुभवस्यैव लक्ष्यत्वेन

अत्राभिप्रेतत्वान्न वृत्तिरूपज्ञाने लक्षणाभावो दोषायेति भावः । ननु निर्दोषत्वा-ननुवृत्तावयथार्थभूते साक्षिण्यात्मस्वरूपभूतज्ञानत्वरूपस्वदृक्त्वस्यातिव्याप्तिरित्यत आह - **सञ्जीवाना-मिति ॥** तथा चोत्तमजीवसम्बन्धिस्वरूपज्ञानत्वं साक्षिप्रत्यक्षस्य लक्षणमित्युक्तं भवति । ननु साक्ष्यनुभवस्य नित्यत्वं विषयनियमादिकं च कुतो नोक्तमित्यत आह- **अत्रेति ॥ प्रक्रिया त्विति ॥** नित्यत्वविषयनियमादि-प्रक्रिया त्वित्यर्थः । आदिपदेन 'इच्छाद्वेषस्सुखं दुःखं भयाभयकृपादयः । साक्षिसिद्धाः' इत्यनुव्याख्यानादि-ग्रहणम् ।

ननु प्रत्यक्षादिस्वरूपनिरूपणस्य कः प्रकृतोपयोग इत्यतस्तं दर्शयति- **प्रत्यक्षेति ॥** 'एतेषां वाक्याना-मुक्तोपयोगं तत्र तत्रैव दर्शयिष्यामः' इत्युक्तं प्रदर्शितं भवतीति द्रष्टव्यम् । **दोषज्ञानाधीनज्ञानमिति ॥** अभाव-ज्ञानस्य प्रतियोगिज्ञानाधीनत्वादिति भावः । **प्रत्यक्षादिसिद्धा इति ॥** शब्दे चाक्षुषत्वाभावस्य प्रत्यक्षसिद्धत्वादिति भावः । **इन्द्रियदोषास्त्विति ॥** इन्द्रियाणामतीन्द्रियत्वेन तद्दोषाणामप्यतीन्द्रियत्वादिति भावः । बलवत्प्रमाणत इत्यनन्तरं विरोधपदमध्याहार्यमित्याशयेनोक्तम् । **बलवत्प्रमाणविरोधेनैवेति ॥ पुरस्तादिति ॥** 'दोषजन्यत्वं च बलवत्प्रमाणविरोधादेव ज्ञायते' इति वाक्यव्याख्यानावसरे 'न तावत्प्रत्यक्षेण' इत्यादिना ग्रन्थेनास्माभि-रुक्तमित्यर्थः । अस्य प्रकृतोपयोगं दर्शयति- **एतेनेति ॥** बलवत्प्रमाणविरोधस्य दोषज्ञाने कारणत्वकथनेने-त्यर्थः । नन्वनुष्टुप्छन्दःपादस्याष्टाक्षरत्वात् कथं नवाक्षरत्वमित्यत आह- **न वा एकेनेति ॥** एकेनाक्षरेण न्यूनेनाधिक्येन वेत्यर्थः । **वियन्ति** नश्यन्ति । द्वाभ्यामक्षराभ्यां न्यूनाभ्यामधिकाभ्यां वा न वियन्तीत्यर्थः । **(श्री.टि.)** अस्यापि ब्रह्मतर्कस्य छन्दस्तुल्यत्वादिति भावः । **तत्रेति ॥** स्वभावस्य बलवत्त्व इत्यर्थः । **सूचयितु-मिति ॥** 'उपजीव्यादिकश्च सः' इत्युक्त्या उपजीव्यविरोधेनैवोपजीवकस्याप्रामाण्यं वाच्यं नान्यथा । 'विषयाभावे स्वस्यैवाप्रामाण्यप्राप्तेः' इत्युक्तोपपत्तिस्सूचितेति ज्ञातव्यम् । निरवकाशत्वादीत्युक्त्योपजीव्येति भावप्रधानो निर्देश इति सूचयति । निरवकाशत्वादीत्यत्र आदिपदेन साक्षिनिष्ठविषयाव्यभिचरितत्वनियमस्य ग्रहणम् । अत एवाऽगमप्रामाण्यानुभवस्याप्यप्रामाण्यप्राप्तेरित्यत्र उक्तम्- 'अनेनाव्यभिचरितत्वनियमः साक्ष्यनुभवस्य प्राबल्ये हेतुरित्युक्तं भवति' इति । भावबोधे तु श्रुतित्वोपपत्त्यादिग्रहणमिति व्याख्यातम् । **अत एवेति ॥** स्वभावस्य बलवत्त्वादेवेत्यर्थः ।

**(पां.टि.)** ननु प्रमाणलक्षणादेः प्रागनुक्तत्वात् कथं तत्प्रतिपादकेनानेनोक्तार्थदृढीकरणमित्यतः, प्रागुक्तार्थ-प्रतिपादकत्वेनैव दार्ढ्यहेतुत्वाभावेऽपि तदुपपत्तेर्नानुपपत्तिरिरिति भावेनाऽह- **एतेषामिति ॥ तत्रतत्रैवेति ॥** तत्तद्वाक्यव्याख्यानावसर एव 'इति पूर्वोक्तमनेनोपपादितं भवति' इत्युपयोगं वक्ष्याम इत्यर्थः । **प्रतिपत्ति-सौकर्यादिति ॥** सामान्यलक्षणेनैक्यमापन्नस्यैव वस्तुनो विभज्योद्देष्टव्यत्वेन सामान्यलक्षणाभिधानस्य विशेषोद्देशद्वारा विशेषलक्षणाभिधानार्थत्वेन तेन विना तस्यानवसरग्रस्तत्वादिति भावः । **व्यवहारेष्वनुपयोगा-दिति ॥** किमत्र प्रमाणमिति प्रश्ने प्रत्यक्षादिविशेषाणामिव प्रमाणसामान्यस्य 'प्रमाणं प्रमाणम्' इत्येवमनुपयोगा-दिति भावः । **येनोपहतमिति ॥** नन्वेवं सति ज्ञातज्ञापकत्वादीनां दोषत्वं न स्यात् । तेषां ज्ञानप्रतिबन्धकता-यास्तद्युक्तकरणस्य विपरीतज्ञानजनकतायाश्चासत्त्वात् । न चेन्द्रियदोषमात्रस्यैवैतल्लक्षणमिति न शब्ददोषेऽ-व्याप्तिरिति वाच्यम् । तथा सत्युत्तरत्रानुमानादिदोषस्याप्यनिरुक्तिप्रसङ्गात् । इन्द्रियादिकमित्यादिपदानर्थक्य-प्रसङ्गाच्च । न चेन्द्रियविषयसङ्ग्राहकत्वान्न तदिति वाच्यम् । विषयस्य ज्ञानाजनकत्वेनाऽदिपदसङ्ग्राह्यत्वायोगादिति चेन्न । 'ज्ञानं न जनयति' इत्यत्र ज्ञानपदस्य सप्रयोजनज्ञानपरत्वेन ज्ञातज्ञापकत्वादीनां च सप्रयोजनज्ञान-प्रतिबन्धकत्वेन तत्राव्याप्तेरनवकाशात् । ज्ञातज्ञापकत्वादिभिन्नदोषाणामेवेदं लक्षणमित्यप्याहुः । न चैतल्लक्षणद्वयं परस्पराव्याप्तत्वादयुक्तमिति वाच्यम् । प्रमाप्रतिबन्धकत्वस्यैकस्यैव तल्लक्षणत्वेनात्राभिप्रेततया तदनवका-शात् । तस्य च क्वचिज्ज्ञानप्रतिबन्धकत्वेन क्वचिच्च संशयविपर्ययजनकत्वेनाविशिष्टत्वात् । कुतोऽत्रेन्द्रियशब्दस्य ज्ञानेन्द्रियपरत्वमित्यत उक्तम्- **प्रकरणादिति ॥** प्रमाणप्रकरणादित्यर्थः । विशेषमेवाऽह- **सेतिकर्तव्यताक-मिति ॥** अनुमानमिवेति व्यतिरेकदृष्टान्तः । वक्ष्यामः, 'विषयान् प्रति स्थितम्' इत्यादिनेति शेषः । 'वक्ष्याम इति' इत्यत्रत्यस्येतिशब्दस्य 'इति विशेषार्थः' इति पूर्वेण सम्बन्धः ।

तर्कलक्षणमाह- **व्याप्याङ्गीकार इति ॥** अत्र धूलीपटले धूमभ्रमानन्तरं वह्न्यनुमितिस्थले यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्केऽव्याप्तिप्रसङ्गाद्व्याप्यारोप इत्यारोपगर्भत्वं परित्यज्याऽरोपपदस्थानेऽङ्गीकारपदं प्रयुक्तम् । जलह्रदे निर्धूमत्वापादनव्यावृत्त्यर्थमनिष्टेति । शब्दो यद्यनित्यः स्यात्तर्हि सावयवः स्यादित्याद्यनिष्ट-प्रसञ्जनव्युदासाय व्यापकेति । न चात्र प्रसञ्जनं न तर्कः, तस्यैव निरुच्यमानतयाऽऽत्माश्रयप्रसङ्गाद् व्यर्थ-**(पां.टि.)**विशेषणत्वापाताच्च । नाप्यारोपमात्रं भ्रमानुमितावतिव्याप्त्यापातादिति वाच्यम् । प्रसञ्जनपदस्याऽ-पादनपरत्वात् । अत एवोक्तं सुधायाम् 'प्रसङ्ग आपादनम्' इति । न

चैवमप्युक्तदोषः । तत्रैव 'आपादनमङ्गी-कर्तव्यतया ज्ञापनम्' इत्युक्तत्वेन तदप्रसङ्गात् । ननु चात्र व्याप्त्यादिपदव्यावर्त्यमस्ति न वा। अस्ति चेत् 'कस्यचिदर्थस्याङ्गीकारेऽर्थान्तरस्याऽपादनम्' इति पद्धत्युक्तलक्षणेऽपि तत्कर्तव्यं स्यात्। यदि च नास्ति तर्ह्यत्रापि तन्न कर्तव्यमिति चेन्मैवम्। भावानवबोधात्। सेतिकर्तव्यताकं हि करणम्। तत्र तर्कः करणधर्मी, तस्य वक्ष्यमाणानि व्याप्त्यादीन्यङ्गानि । तत्र करणधर्मिणः प्राधान्यविवक्षयाऽङ्गेभ्यः पृथक्कृत्य पद्धतौ तर्कतयोक्तिः । अत्र तु सेतिकर्तव्यताकस्यैवेति न कश्चिद्दोषः । न चैवमत्रोक्तलक्षणाभावेऽपि पद्धत्युक्तलक्षणसत्त्वेनाव्यापकानिष्ट-प्रसङ्गानामपि तर्कत्वं स्यादिति वाच्यम्। इष्टापत्तेः। तर्हि ततोऽप्यनुमितिः स्यादिति चेन्न । अङ्गाद्विनाकृतस्य करणस्य क्रियां प्रत्यजननकतयाऽङ्गसाचिव्याभावेन तदप्रसङ्गादित्यवधेयम् । **तर्क इत्यादि ॥** अयमाशयः । सोऽयं लिङ्गज्ञानादिवन्न प्रमारूपं प्रमाणम् । तस्याऽहार्यरूपत्वात् । न तत्करणतयाऽपि प्रमाणम् । प्रमाफलत्वा-भावात् । नापीन्द्रियादिवदप्रमारूपम् । आरोपितविषयत्वात् । विपर्यये प्रामाण्योपगतौ तु तेनास्य नियामकः सम्बन्धो नास्ति । असम्बद्धस्य जनकत्वे चातिप्रसङ्गः । शास्त्रे तन्निरूपणं च प्रमाणानुग्राहकत्वादिति ।

ननु प्रत्यक्षागमयोरिवानुमानलक्षणमात्रस्यैव वक्तव्यत्वात्तत्रानुक्तविभागस्यात्रोक्तिर्न श्लिष्टेत्यत आह- **अथ वेति ॥ प्रागेवेति ॥** 'अपौरुषेयत्वाद्वेदस्य' इत्येतद्वाक्यव्याख्यानावसर इत्यर्थः। किमवधारणस्य प्रयोजन-मित्यतश्चेष्टाया आगमत्वव्यावृत्तिरेवेत्यभिप्रेत्य तां दर्शयति- **न त्विति ॥** किं चेष्टाया आगमत्वाभावोक्तेरपि प्रयोजनमित्यतः, परोक्तागमलक्षणनिरासद्वाराऽस्योक्तलक्षणदृढीकरणमेवेत्यभिप्रेत्य तदनुवादपूर्वकं तन्निरासं दर्शयति- **तेनेति ॥ समयबलेनेति** । इदं चानुमानं व्यावर्तयितुमुक्तम् । शब्दाभासं व्यावर्तयति- **सम्यगिति ॥** नामविशिष्टदेवदत्तादिप्रत्यक्षम्, उपदेशसहकृतचक्षुषा जायमानं रत्नतत्त्वप्रत्यक्षं व्यावर्तयितुम्- **परोक्षेति ॥** पदार्थस्मरणं व्यावर्तयति- **अनुभवेति ॥** कर्तृकर्मणी व्यावर्तयति- **साधनमिति ॥** अर्थविशेषे चेष्टाविशेषस्य सङ्केते गृहीत एव चेष्टाविशेषादर्थविशेषप्रतिपत्त्या चेष्टायाः सङ्केतज्ञानपुरःसरं प्रवृत्तप्रमाणत्वनिश्चयात् तादृश-प्रमाणस्यैव च शब्दत्वायुक्तं चेष्टायाः शब्दत्वमिति भावः । सङ्ग्राह्यस्यैव सङ्ग्रहो युक्तो न त्वसङ्ग्राह्यस्यापि । नचेह चेष्टाया आगमतया सङ्ग्राह्यत्वमस्ति, तन्नियामकाभावादिति भावेन दूषयति- **आगमशब्दस्येति ॥** ननूर्ध्वं तर्जनीन्यासादृशसङ्ख्यामात्रप्रतिपत्त्या चेष्टायाः प्रामाण्यनिश्चयात्प्रत्यक्षादित्वस्य च बाधितत्वादागमत्व-स्याप्यनङ्गीकारे तस्याः प्रमाणान्तरत्वापत्त्याऽनुप्रमाणत्रित्वभङ्ग इत्यतः, सर्वेषामप्रतीत्या ऊर्ध्वतर्जनीमात्र-न्यासस्यार्थविशेषेण गृहीताविनाभावस्यैव पुरुषस्य ततोऽर्थविशेषप्रतिपत्त्याऽविनाभावबलेन चेष्टाया अर्थ-गमकतयाऽनुमान एवान्तर्भावसम्भवान्नानुप्रमाणत्रित्वभङ्ग इत्याशयेनाऽह- **चेष्टायाश्चेति ॥** स्वस्य दृग् इति विग्रहे स्वसम्बन्धिवृत्तिरूपज्ञानस्याप्यनुभवत्वप्राप्तेस्तत्परिहाराय स्वा स्वरूपभूता चासौ दृक् चेति विग्रहमभिप्रेत्य स्वदृक्पदं व्याख्याति- **आत्मस्वरूपभूतमिति ॥ विवक्षितमिति ॥** वृत्तिरूपज्ञानस्योत्तरत्र वक्ष्यमाणानुभव-**(पां.टि.)** प्रकारत्वस्य बाधितत्वादिति भावः । स्वदृगप्यनुभव इति समुच्चयस्यानुपपत्त्या चशब्दस्य समुच्चयार्थ-त्वासम्भवात्तदर्थमाह- **चशब्द इति ॥** व्यावर्त्याभावेन तद्वैयर्थ्यमित्यतस्तद्व्यावर्त्यं दर्शयति- **न त्विति ॥** निर्दोषत्वस्याननुवृत्तौ कारणमाह- **सञ्जीवानामिति ॥** (अ)सम्भवव्यभिचारयोरेव विशेषणस्यार्थवत्त्वादिति भावः । इयमेव प्रमाणप्रक्रियेति भ्रान्तिनिरासायाह- **अत्रेति ॥** नेयं प्रमाणप्रक्रियेत्यर्थः। तर्हि केत्यत आह- **प्रमाणेति ॥** मूले स्मृतिग्रहणं तन्मूलश्रुत्युपलक्षणमिति भावेनाह- **श्रुतिस्मृतिसिद्ध इति ॥ दोषज्ञानाधीनज्ञान-मिति ॥** अभावस्य ससम्बन्धिकपदार्थत्वेन प्रतियोगिनिरूप्यत्वादिति भावः । मूले चशब्दस्तुशब्दार्थ इति भावेनाह- **इन्द्रियदोषास्त्विति ॥** मूले प्रमाणपदं तद्विरोधोपलक्षणम्, आद्यादित्वात्तृतीयान्तात्तसिरिति भावेनाह- **प्रमाणविरोधेनैवेति ॥ पुरस्तादिति ॥** 'दोषजन्यत्वं च बलवत्प्रमाणविरोधादेव ज्ञायते' इत्येतद्वाक्य-व्याख्यानावसर इत्यर्थः । ननु नवाक्षरत्वादाद्यपादस्याष्टाक्षरत्वाभावाच्छन्दोभङ्ग इत्यत आह- **न वेति ॥** एकेना-क्षरेण न्यूनेनाधिकेन वा द्वाभ्यामक्षराभ्यां न्यूनाभ्यामधिकाभ्यां वा गायत्र्यादिछन्दांसि न वियन्ति न नश्यन्तीति वेदेन वेदे न्यूनत्वाधिक्यप्रयुक्तछन्दोविनाशाभावस्योक्तत्वाद्ब्रह्मतर्कस्यापि वेदतुल्यत्वान्नात्र छन्दोभङ्गः शङ्कनीय इत्यर्थः । **आदिपदेन निरवकाशत्वादिग्रहणमिति ॥** अत्रोपजीव्यत्वप्रयुक्तप्राबल्यस्यैव निरवकाशत्व-प्रयुक्तप्राबल्यस्यापि बहुत्वप्रयुक्तप्राबल्यबाधकत्वेन तस्याप्यवश्यवक्तव्यत्वात्पृथगभिधाने च 'द्विविधं बलवत्त्वं च' इत्युक्तद्वैविध्यानुपपत्तेर्यावता प्राबल्येन बहुत्वप्रयुक्तप्राबल्यस्य बाधस्तस्य सर्वस्यापि बहुत्वप्रयुक्त-प्राबल्यपरिपन्थित्वेन स्वभावप्राबल्यरूपत्वविवक्षया निरवकाशत्वस्यादिपदेन ग्रहणमिति निरवकाशत्वस्य तत्त्वकथनम्, न तु वस्तुतः । अन्यथोपजीवकत्वादिना स्वभावदुर्बलस्यापि निरवकाशत्वस्यान्यत्राभिधानेन तद्विरोधापत्तेः । वस्तुतस्तु उपजीव्यत्वमेव स्वभावप्राबल्यं न तु निरवकाशत्वमिति ध्येयम् । एवमेव 'एवमुपजीव्यत्वनिरवकाशत्वलक्षणस्वभावबलवत्प्रमाणबाधितत्वात्' इति पूर्वग्रन्थस्य 'स्वभावश्चोपजीव्यत्व-निरवकाशत्वादिरूपः' इत्यादिपद्धतेश्च तात्पर्यं वर्णनीयम् । आदिपदेन श्रुतित्वादेः परामर्श इति । **अत एवेति ॥**

बहुप्रमाणविरोधापेक्षयोपजीव्यादिप्रमाणविरोधस्य बलवत्त्वादेवेत्यर्थः ।

**(व्या.टि.)** श्रोतृशेमुषीमनुकूलयिष्यन् वृत्तवर्तिष्यमाणप्रबन्धसम्बन्धं दर्शयति- **एवमित्यादिना ॥** ननु तेषामुक्तोपयोगाभावे कथं तत्सम्मत्या दृढीकरणमित्यत आह- **एतेषामिति ॥** ननु कथमेतेषां लक्षण-वाक्यानामुक्तोपयोगः, लक्षणस्य पूर्वमनुक्तेः । प्राबल्यनिदानत्वेनोक्तोपजीव्यत्वादेरत्रानुपन्यासादित्यत आह- **प्रमाणेति ॥** तन्निरूपणस्य क्वोपयोग इत्यत आह- **स्वरूप इति ॥ तदन्येति ॥** उपजीव्यत्वादीत्यर्थः । अज्ञातस्वरूपे उपजीव्यत्वादेर्निरूपयितुमशक्यत्वादित्यर्थः । तर्हि स्वरूपमेवाभिधानीयं किं लक्षणेनेत्यत आह- **स्वरूपज्ञानमिति ॥** अतीन्द्रियेन्द्रियादिरूपे प्रमाणे प्रत्यक्षाद्यप्रसरादित्यर्थः । तथा चोपोद्घातसङ्गत्या लक्षणाभि-धानादुक्तोपयोग इति भावः । ननु तथाऽपि विदितसामान्यस्यैव पुंसो विशेषजिज्ञासा न त्वविदितसामान्यस्येति प्रथमोपस्थितत्वात् सामान्यस्यैवादौ लक्षणं वाच्यमिति शङ्कामुट्टङ्कयति- **तत्र यद्यपीति ॥** प्राप्तम् अवसर-**(व्या.टि.)** प्राप्तम् । तत्र हेतुमाह- **प्रतिपत्तीति ॥** समाधत्ते- **तथाऽपीति ॥** व्यवहारेषु आनयनादिप्रवृत्तिषु, कथारूपवाक्यव्यवहारेषु । अनुपयोगाद् अयोग्यत्वादित्यर्थः । **विशेषाणामेवेति ॥** 'पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये' इति कथालक्षणोक्तेः । दोषाभावस्य प्रतियोगिज्ञानाधीनज्ञानत्वाद्दोषं लक्षयति- **येनेति ॥** विपरीतेति संशयस्यापि ग्रहणम् । तस्यापि वस्तुतत्त्वज्ञानाद्विपरीतज्ञानत्वात् । सदोष इति शेषः । इन्द्रियादिकमित्यादिपदेन विषयग्रहणे तस्य ज्ञानजनकत्वस्यैवाभावात् । अनुमानादेर्ग्राह्यत्वात् तद्दोषस्य पृथग् वक्ष्यमाणत्वाच्च । प्रमाकरण-दोषसामान्यलक्षणमिदम् । प्रमाजननशक्तिप्रतिबन्धकत्वेन ज्ञानजननशक्तिप्रतिबन्धकत्वविपरीतज्ञान-जननशक्त्याधायकत्वान्यतरत्वेन वाऽनुगमान्नान्योन्यमव्याप्तिः । ज्ञानपदस्य सप्रयोजनज्ञानपरत्वात् न ज्ञातज्ञापके(त्वे)ऽव्याप्तिः । तद्भिन्नस्य वा लक्ष्यत्वमित्यवधेयम् ।

ननु कर्मेन्द्रियेऽतिव्याप्तिरित्यत आह- **ज्ञानेन्द्रियमेवेति ॥ प्रमाणप्रकरणादिति ॥** प्रक्रंस्यमानत्वादि-त्यर्थः । **विशेषार्थ इति ॥** 'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे' इति नाममहोदधावुक्तेः । तं वक्ष्यति- **सेतिकर्तव्यताकमित्यादिना ॥** अधिकृतं प्रतिपाद्यम् । **करणधर्मिण इति ॥** करणे व्यापारविशिष्टे विशेष्यस्ये-त्यर्थः । प्रत्यक्षैकदेशो धर्मी प्रत्यक्षधर्मीति शाकपार्थिवादिषु बोध्यः । **अनुमानमिवेति ॥** वैधर्म्यदृष्टान्तः । तर्कानुमानादिशब्दानां व्याप्यादिपर्यायत्वेन सेतिकर्तव्यताकवाचित्वादिति भावः । **उत्तरत्रेति ॥** 'विषयान् प्रति' इत्यत्रेत्यर्थः । तथा च सेतिकर्तव्यताकस्य लक्ष्यत्वे धर्मिमात्रेऽतिव्याप्तिर्नाऽऽशङ्कनीया, तन्मात्रलक्ष्यत्वद्योतक-तुशब्दादिति भावः । तथा चादुष्टमिन्द्रियं त्वक्षं सेतिकर्तव्यताकेन्द्रियं सत्प्रत्यक्षं प्रमाणमित्युच्यते इति योजनेति स्वामिनः । इन्द्रियदोषमुद्घाट्य व्याचष्टे- **काचादीति ॥** 'काचाः शिक्यमृद्भेददृग्रुजः' इत्यमरोक्तेश्चक्षूरोगः काचः । तर्कं लक्षयति- **व्याप्याङ्गीकार इति ॥** निष्कर्षयति- **तथा चेति ॥ तर्कसाधनभेदादिति ॥** दुष्टिप्रमितिसाधनस्यापि साधनेऽन्तर्भावाभिप्रायेणेत्थमकथीति न पद्धतिविरोधः । **तर्कः प्रमाणमेव नेति ॥** तत्प्रकारस्तु, तर्कः प्रमाणमेव न भवति । कुतोऽनुमानम् । तथा हि । सः प्रमारूपं वा प्रमाणं स्यात् लिङ्गदर्शन-वत् । अप्रमारूपं वेन्द्रियादिवत् । न तावदाद्यः । तस्याहार्यरूपत्वात् । न तत्करणमपि प्रमाणम् । प्रमाफलत्वा-भावात् । न द्वितीयः । आरोपितविषयत्वात् । विपर्यये प्रामाण्योपगतौ तेनास्य नियामकसम्बन्धो नास्ति । असम्बद्धस्य गमकत्वे चातिप्रसङ्गात् । अनुमानत्वे चास्याऽऽपादकं लिङ्गम् आपाद्यं साध्यमिति वाच्यम् । न च तद्युक्तम् । आपादकस्याहार्यत्वेनान्यतरासिद्धत्वात् । आपाद्यस्य चानिष्टत्वेन बाधितत्वात् । न ह्यसिद्धं लिङ्गं भवति । नापि बाधितं साध्यम् । सति चाश्रयेऽनुमानं भवति । न (हि) भूतले घटोऽस्ति यः साध्यसाधनयोराश्रयः स्यात् । व्यधिकरणता चापाद्यापादकयोर्बहुलमुपलभ्यते । यद्यूर्ध्वदेशो वृष्टिमान्न स्यात् तर्ह्यधोदेशो नदीपूरवान्न स्यादित्यादौ । आपाद्यस्य साध्यत्वेऽपसिद्धान्तश्च स्यात् । धूमसद्भावस्य स्वयमभ्युपगतत्वात् । तस्माद्विपर्ययपर-तन्त्रत्वादप्रमाणमेव प्रमाणानामनुग्राहकस्तर्क इति कुतोऽस्यानुमानेऽन्तर्भाव इति । **तन्निरासायेति ॥** तत्प्रकारस्तु, निर्वह्नित्वाङ्गीकारस्याप्रमारूपत्वेऽप्यापाद्याङ्गीकर्तव्यताप्रमाजनकत्वेन प्रामाण्यसम्भवात् । अनिष्टोप-**(व्या.टि.)** दर्शनरूपदूषणस्य परसिद्धैरेव न्यायैः कार्यतया नाश्रयासिद्ध्यन्यतरासिद्धी दूषणे, किन्तु भूषणे एव । 'व्यधिकरणत्वं न क्वापि दूषणम्' इत्यन्यत्रोक्तम् । शक्यसम्पादं च तर्के समानाधिकरणत्वम् । वस्तुतस्तु सामानाधिकरण्याभावेऽपि व्याप्त्यपेक्षया गमकत्वसद्भावादनुमानं भवत्येव । विशेषलक्षणाभावेनानुमानत्वाभावे केवलान्वयिलक्षणानाक्रान्तस्य केवलव्यतिरेकिणोऽनुमानता न स्यात् ।

यदुक्तं बाधापसिद्धान्ताविति । तन्न । किमापाद्यतोपेतस्य निर्धूमत्वादेर्बाध्यत्वं तत्प्रोक्तौ वाऽपसिद्धान्त उच्यते । उत केवलस्य । नाऽऽद्यः । यत आपादनं नाम, अङ्गीकर्तव्यताज्ञापनं न पुनः सद्भावप्रतिपादनम् । न च तत्प्रमाणादिविरुद्धम् । यदि विषं भक्षयिष्यसि तर्हि मरिष्यसीति यथा । द्वितीये तु स्यादेव बाधादि । न च तदत्रोच्यते । तथा सति 'यदि' 'स्यात्' इति न स्यादिति । असिद्धिरप्येवमेव

परिहर्तव्या। तथा हि। यद्यलङ्कृतस्य निरग्निकत्वादेरसिद्धिरुच्यते। किं वा केवलस्य। नाऽद्यः। पर्वतो यदि निरग्निकः स्यादित्यस्य हि यदि निरग्निक-त्वेनाङ्गीक्रियत इत्यर्थः। न चायमसिद्धः। तथा सति तर्कस्याप्यनुत्थानात्। न द्वितीयः। तस्यात्रानुपादानात्। तथात्वे हि यदीति न स्यादिति। विस्तरस्तु सुधायामनुसन्धेयः। अत एव भगवान् सूत्रकारोऽपि साधनवद्दूषणानु-मानभूततर्कस्य स्वतन्त्रप्रमाणत्वसूचनाय यथा 'आनन्दमयोऽभ्यासात्' इति साधनेन स्वपक्षमसाधयत्, तथा 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्','इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः', 'कृत्स्नप्रसक्तिः' इत्यादिभिः केवलतर्केण परपक्षं प्रत्यक्षिपत्। भाष्यकारोऽपि 'जीवकर्तृत्वपक्षे हिताकरणमहित-करणं च न स्यात्' इत्येव व्याचष्टे न तु तेन किञ्चिदनुमानमिति रहस्यम्। **पृथगिति** ॥ अनुमानादिति शेषः। **एवमिति** ॥ 'तर्कोऽनुमा' इति मुखत इत्यर्थः। तर्कशब्दे करणव्युत्पत्तिमाश्रित्य सामान्योद्देशपरतया व्याचष्टे- **अथवेति** ॥ **समस्तेति** ॥ साधनदूषणोभयरूपेत्यर्थः। उपमां दर्शयति- **इन्द्रियमिवेति** ॥

ननु वाक्यदोषानाविष्करणे कथं तदभावो विज्ञेय इत्यत आह- **वाक्येति** ॥ **प्रागेवेति** ॥ अपौरुषेयत्ववाद इत्यर्थः। चशब्दस्य समुच्चयार्थत्वेऽवाक्यस्याप्यागमत्वप्राप्तेराह- **चशब्द इति** ॥ अन्वयं प्रदर्श्य व्यावर्त्यं दर्शयति- **वाक्यमेव न त्विति** ॥ चेष्टाव्यावृत्त्या तत्साधारण्येन परोक्तं लक्षणं निरस्तमित्याह- **तेनेति** ॥ निरासप्रकार-माह- **आगमेति** ॥ **परीक्षकैरिति** ॥ मीमांसकैरित्यर्थः। लोकवेदयोः पदपदार्थानन्यत्वस्य लोकवेदाधि-करणसिद्धत्वादित्यर्थः। **अन्यथेति** ॥ रूढिपरित्याग इत्यर्थः। **अतिप्रसङ्गादिति** ॥ योगमात्रस्येति शेषः। तर्हि ततोऽर्थानुभवविरोध इत्यत आह- **चेष्टाया इति** ॥ हस्ताग्रस्य स्वाभिमुखचलनादिरूपचेष्टाया आह्वानादि-तात्पर्येण गृहीताविनाभावं पुरुषं प्रत्यवबोधकत्वेन अनुमानलक्षणाक्रान्तत्वादित्याशयः। स्वशब्दस्यात्मार्थकत्वं कर्मधारयश्च विवक्षित इत्याह- **आत्मेति** ॥ समुच्चेयाभावाच्चशब्दो व्यर्थ इत्यत आह- **अवधारण इति** ॥ अनभिमतं व्यावर्तयति- **न त्विति** ॥ व्यावर्त्यान्तराभावादित्यर्थः। ननु कथं व्यावर्त्यान्तराभावः। अधममध्यमानां स्वरूपस्यायाथार्थ्यनियममिश्रीभावाङ्गीकारादित्यत आह- **सञ्जीवानामिति** ॥ यथोक्तमनुभाष्ये 'निर्दोष-त्वातिनियमात् तद्बलिष्ठतमं मतम्' इति। अत्रानुभवपदवाच्यत्वं लक्ष्यतावच्छेदकम्। उत्तमस्वरूपभूतज्ञानत्वं **(व्या.टि.)** लक्षणम्। ज्ञानपदं करणव्युत्पत्त्येन्द्रियपरम्। अनुप्रमाणप्रस्तावात्। भावव्युत्पत्तौ तावद्वचञ्जकत्व-मनुप्रमाणलक्षणं सूचितम्। पूर्वत्रापि साक्षात्कारादिप्रमायाः प्रत्यक्षादिजन्यत्वलक्षणं सूच्यम्। पूर्वमक्षपदस्य स्वरूपबाह्यसाधारणत्वमिति सामान्यलक्षणत्वम्। बाह्यमात्रपरत्वेऽनुभवेऽतिव्याप्तेः। इन्द्रियपदस्य प्राकृतपरत्वे वा सामान्यलक्षणानुक्त्यापाताच्च। विशिष्यानुभवलक्षणोक्तिस्तु बलवत्त्वादिज्ञापनायेत्यवधेयम्। ननु स्वरूप-निरूपणमात्रं कृतं न तु विशेषो विचारित इत्यत आह- **अत्रेति** ॥ **प्रक्रियेति** ॥ विस्तर इत्यर्थः। **न भवती-ति** ॥ तस्य ज्ञानित्वेन तत्त्वासम्भवः, गुणगुणिनोः समवायादित्याकूतम्। अत्र स्मृत इत्युपलक्षणमभिप्रेत्य व्याचष्टे- **श्रुतिस्मृतीति** ॥ दुर्ज्ञानं सुज्ञानमिति च कर्मणि ल्युट्। दुःशकं ज्ञानं यस्येति बहुव्रीहिर्वा। **ननु** खलु। **दोषज्ञानेति** ॥ प्रतियोगिज्ञानाधीनत्वादभावस्येत्यर्थः। चशब्दस्य समुच्चयादर्थान्तरमाह- **तुशब्दार्थ इति** ॥ दोषशब्देन करणमात्रदोषं मन्वान आह- **यद्यपीति** ॥ **असिद्ध्यादय इति** ॥ प्रत्यक्षयोग्यार्थप्रतियोगिका इत्यर्थः। दोषपदमिन्द्रियदोषमात्रपरमित्युपेत्य समाधत्ते- **तथाऽपीति** ॥ बलवदित्युपलक्षणम्। विरोधीत्यपि चोह्यमित्युपेत्याह- **बलवत्प्रमाणविरोधेनैवेति** ॥ इन्द्रियदोषाणामतीन्द्रियधर्मत्वादिति भावः। अस्योपयोगं दर्शयति- **एतेनेति** ॥ नन्वस्य श्लोकस्यानुष्टुप्छन्दस्त्वादनुष्टुभश्च 'अष्टाक्षरानुष्टुप्' इति श्रुत्यैवाष्टाक्षरत्वोक्ते-रक्षराधिक्ये छन्दोभङ्ग इत्यत आह- **न वा इति** ॥ वियन्ति गच्छन्ति। वचनात् बह्वृचब्राह्मणवचनादित्यर्थः। **कथमिति** ॥ बलसाम्यादित्याक्षेपः। उपजीव्येति मूलं भावप्रधानं मत्वा व्याचष्टे- **आदिपदेनेति** ॥ बहुत्वबलात् स्वभावबलस्य बलवत्त्वे ज्ञापकमाह- **अत एवेति** ॥

**मूलम् -** **याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः।**
**ज्ञानं च द्विविधं बाह्यं तथाऽनुभवरूपकम्॥**
**बल्येवानुभवस्तत्र निर्दोषं त्वक्षजादिकम्।**
**अनुप्रमाणतां याति तथाऽक्षादित्रयं ततः॥**
**प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्।**
**उपजीव्यविरोधे तु न प्रामाण्यममुष्य च॥**

**(त.मं.)** अथ प्रमाणानां सामान्यलक्षणमाह- **याथार्थ्यमिति** ॥ यथार्थं प्रमाणमित्युक्ते यथाज्ञेयमित्यर्थः। तच्च

यथाज्ञेयत्वं ज्ञानशब्दयोर्मुख्यम्। तथा हि ज्ञानस्य ज्ञेयाव्यवहितत्वात् तत्र मुख्यं यथार्थत्वम्। शब्दस्य तु वेदाख्यस्य नित्यत्वात्। अव्यभिचारित्वनियमाच्च। अन्यस्य तदानुकूल्यात्। अक्षानुमयोस्तु ततोऽवमं स्यात्। ज्ञानाख्यप्रमाणं द्विविधम्। तत्र बाह्यं प्रत्यक्षादित्रयजन्यं ज्ञानं बाह्यार्थविषयम्। अनुभवरूपकं साक्षिज्ञानमात्मस्वरूपसुखादिविषयम्।

तत्र सर्वप्रमाणजाते अनुभव एव बली। तथा प्रत्यक्षादित्रयं तत्साधनत्वेनानुप्रमाणतां याति। सर्वथाऽप्यप्रामाण्याभावात् त्रिष्वागमस्य प्राबल्यम्। अमुष्य चोपजीव्यविरोधे सति विरुद्धार्थे न प्रामाण्यम्। किन्त्वर्थान्तरमवगन्तव्यम्। अनेन प्रमाणानां लक्षणकथनेनैव इतरेऽन्यथावादिनो वादिनो निराकृताः। ये प्रमासाधनं प्रमाणमिति वदन्ति ये वाऽनुभूतिमिति उभयेषामपि लक्षणवाक्यस्याव्याप्तत्वात्।

**टीका -** ननु एतेष्वेवं परस्परविलक्षणेषु प्रत्यक्षादिष्वेकस्य प्रमाणशब्दस्य प्रवृत्तिः कथमित्यतः सामान्यलक्षणयोगादिति भावेन तदाह- **याथार्थ्यमेवेति ॥** यथाऽवस्थितज्ञेयविषय(यीकारि)त्वं याथार्थ्यम्, **तत्प्रामाण्यं** प्रमाणशब्दप्रवृत्तिनिमित्तम्। एवशब्देन अनधिगतार्थगन्तृत्वादिकं परेषां प्रमाणलक्षणं पराचष्टे । एतेन 'बहुप्रमाणसंवादश्च' इत्युक्तः प्रमाणसम्प्लवो दृढीकृतो भवति।

ननु ज्ञेयविषयीकारित्वं ज्ञानधर्मः, तत् कथमिन्द्रियादीनां प्रामाण्यमुक्तमिति चेत्, सत्यम्। द्विविधं प्रमाणं ज्ञानं तत्करणं च। तत्र ज्ञाने मुख्यमिदं लक्षणं तस्य साक्षाज्ज्ञेयविषयीकारित्वात्। इन्द्रियलिङ्गशब्देषु तु ज्ञानद्वारा ज्ञेयविषयीकारित्वादमुख्यमित्यतो न कश्चिद्दोष इति भावेनाऽह- **तदिति ॥** करणेष्वपीन्द्रियलिङ्गापेक्षया शब्दविशेषस्य वेदस्य याथार्थ्यं मुख्यम्। इन्द्रियलिङ्गयोरिव तस्य सर्वथाऽयाथार्थ्याभावादिति प्रसङ्गात् सूचयितुं शब्दग्रहणं कृतं नतु ज्ञानसमकक्षतयेति ज्ञात-व्यम्। ज्ञाने याथार्थ्यं मुख्यमित्युक्तम्। तदपि न सर्वत्रैकप्रकारमिति वक्तुं तद्द्वैविध्यमाह- **ज्ञानं चेति ॥** तत्कथमित्यत आह- **बाह्यमिति ॥** आत्मस्वरूपातिरिक्तम्। यदर्थं तद्द्वैविध्यमुक्तं तदाह- **बल्येवेति ॥** अनुभव एवेत्यन्वयः। कुत इत्यत आह- **निर्दोषमिति ॥** बाह्यमिति प्रकृतेऽ-क्षजादिकमिति वचनं तत्स्वरूपनिरूपणार्थम्। इन्द्रियलिङ्गशब्दजन्यं यन्मनोवृत्तिरूपं तद्बाह्यम्। तन्निर्दोषकरणजन्यमेव प्रमाणमन्यदप्रमाणमिति द्वैविध्यसम्भवेन कदाचित्संशयास्पदत्वाद-मुख्यम्। अनुभवस्तु निर्दोष एवेति प्रागेवोक्तमिति भावः। एतेन 'नचानुभवविरोधे' इत्युक्तं दृढीकृतं भवति।

यदुक्तं ज्ञाने याथार्थ्यं मुख्यं करणेष्वमुख्यमिति, तदुपपादयति- **अनुप्रमाणतामिति ॥ ततः** प्रामाण्यस्यामुख्यत्वादेव हि अक्षादित्रयमनुप्रमाणशब्दवाच्यतां याति। तथा प्रामाण्यस्य मुख्यत्वादेव हि ज्ञानं केवलप्रमाणशब्दवाच्यतां याति। प्रामाणिकप्रयोगेष्वन्यथा तन्न स्यादित्यर्थः। 'तन्मुख्यं ज्ञानशब्दयोः' इत्युक्तम्। तत्र शब्दस्य ज्ञानसमकक्षताप्रतीतिं निवारयंस्तस्यापवादमाह - **प्राबल्य-मिति ॥ तेषु** त्रिष्वक्षादिषु करणेषु मध्ये **यदागमस्य** वेदस्य प्राबल्यमुक्तं **तज्जात्यैव स्मृतम्** उत्सर्गेणैव स्मर्तव्यं नतु नियतम्। जातेरुत्सर्गविषयत्वाज्जातिग्रहणेनोत्सर्गो लक्ष्यते। कुत इत्यत आह- **उपजीव्येति ॥** निरवकाशादेरुपलक्षणमेतत्। **अमुष्य** वेदस्यापि। अनेन 'प्रत्यक्षादेरागमस्य' इत्युक्तं दृढीकृतं भवति।

**(र.टि.)** प्रामाण्यस्य याथार्थ्यभिन्नस्याभावात् कथमुद्देश्यविधेयभाव इत्यतः प्रामाण्यपदं व्याचष्टे - **प्रमाण-शब्दप्रवृत्तिनिमित्तमिति ॥ एतेनेति ॥** प्रवृत्तिनिमित्तोक्त्या एकविषयकेष्वपि बहुषु प्रमाणशब्दप्रयोगः, एवकारेण सावधारणदार्ढ्यहेतुत्वं समर्पितं भवतीत्यर्थः। अविवक्षितयथावस्थितज्ञेयविषयीकारित्वस्य गमनेऽति-व्याप्तत्वात्, यथावस्थितस्वोपाधिकज्ञेयत्वोपेतविषयकत्वं लक्षणत्वेन वक्तव्यम्। तच्च ज्ञेयत्वं प्रत्यनुपाधिभूत-करणेष्वव्याप्तमित्यभिप्रेत्य शङ्कते- **नन्विति ॥ साक्षादिति ॥** ज्ञेयत्वं प्रत्युपाधित्वेनेत्यर्थः। **ज्ञानद्वारेति ॥** ज्ञेयत्वोपाधिभूतज्ञानं प्रति निमित्तत्वेनेत्यर्थः। तथा चोपाधित्वोपाधिनिमित्तत्वलक्षणावान्तरविशेषवत्त्वेऽपि

ज्ञानकरणयोः स्वसम्पादितज्ञेयत्वोपेतविषयकत्वमविशिष्टमिति भावः । ननु त्रिष्वपि प्रत्यक्षादिष्वव्याप्तेः शङ्कितत्वादुक्तविधयाथार्थ्यमुख्यत्वस्य शब्दे करणेऽयोगादनुपयुक्तमयुक्तं च शब्दग्रहणमित्यत आह- **करणेष्वपीति ॥** ननु ज्ञानशब्दयोर्द्वन्द्वनिर्दिष्टत्वान्मुख्यमिति पदस्य सकृदुक्तस्यार्थद्वयानुपस्थापकत्वात् कथमेतल्लभ्यत इति चेन्न । द्वन्द्वविशिष्टज्ञानशब्दयोर्बुद्ध्या विवेकं सकृदुक्तस्य मुख्यशब्दस्य तन्त्रन्यायं चाश्रित्य वाक्यस्य व्याख्यातुं शक्यत्वादिति भावः । एतेन 'अपौरुषेयत्वाद्वेदस्य' इत्यादिना वेदस्य यदपौरुषेयत्वेन याथार्थ्यमव्यभिचरितमित्यभिप्रेतं तत्समर्थितं भवतीति भावः । **तदपीति ॥** आदिपदेन 'ज्ञानं तु द्विविधम्' इत्याद्यपि प्रसङ्गादेवोच्यत इति ध्वनयति । वृत्तेरप्यान्तरत्वाद्बाह्यपदं व्याचष्टे- **आत्मेति ॥** तुशब्दस्यैवकारार्थत्वं प्रमाणपदाध्याहारं चाश्रित्य 'निर्दोषन्तु' इति वाक्यं योजयति- **तन्निर्दोषेति ॥ अमुख्यमिति ॥** अनेनानुभव एवेत्येवकारव्याख्यानेन बलीत्येतदपि मुख्य इति व्याख्यातं भवति । नन्वेवकारोक्तप्रतिज्ञायामेव 'निर्दोषन्तु' इति हेतुरुक्तो न त्वनुभवो बलीत्यत्रेत्यत आह- **अनुभवस्त्विति ॥ उत्सर्गेणैवेति ॥** अनेनैवकारो भिन्नक्रम इत्युक्तं भवति । जात्येत्यस्य श्रुतित्वोपपत्तित्वादिवद्वेदधर्मेणेत्यर्थत्वे 'उपजीव्यविरोधे तु' इत्युत्तरवाक्यविरोधः स्यादिति भावः ।

**(रा.टि.) यथावस्थितेति ॥** यथार्थपदेनैतदर्थलाभः प्रमाणपद्धत्यादौ व्यक्तः । **दृढीकृतो भवतीति ॥** तत्रा-प्युक्तलक्षणसत्त्वेन सर्वेषां प्रामाण्याक्षतेरिति भावः । **साक्षाज्ज्ञेयविषयीकारित्वादिति ॥** यद्यपि पदार्थविषय-कत्वं ज्ञाने तत्करणे च तुल्यम् । न मात्रयाऽपि विशेषः । करणस्यापि ज्ञानस्येव सविषयकत्वात् । तथात्वेऽपि विषयगतज्ञेयत्वांशे ज्ञानमन्यन्नापेक्षते करणन्तु ज्ञानमपेक्षत इत्येतावन्मात्रेण साक्षादिति ज्ञानद्वारेति चोक्तम् । **(रा.टि.)** व्यक्तमेतत्सुधायाम् । तन्मुख्यं ज्ञानमिति वक्तव्ये शब्दपदोपादानं कुतः कथं च तत्र मुख्यत्वमित्यत आह- **करणेष्विति ॥** तुशब्द एवार्थ इत्युपेत्याऽह- **निर्दोषकरणजन्यमेवेति ॥ प्रागेवोक्तमिति ॥** 'नचानुभव-विरोध आगमस्य प्रामाण्यम् आगमप्रामाण्यानुभवस्याप्यप्रामाण्यप्राप्तेः' इत्यत्र 'स्वदृक्च' इत्यत्र चेति भावः। तथाशब्दसमुचितमर्थमाह- **तथा प्रामाण्यस्य मुख्यत्वादिति ॥** तत इत्यस्यार्थोऽयम् । **अन्यथेति ॥** अमुख्यत्व-मुख्यत्वयोरभावेऽनुप्रमाणकेवलप्रमाणशब्दवाच्यत्वं न स्यादित्यर्थः । अत्र मुख्यामुख्यत्वं साक्षाज्ज्ञानद्वारा ज्ञेयविषयकत्वम् । **उत्सर्गेणैवेति ॥** अपवादविषयादन्यत्रैव प्राबल्यमित्यर्थः । स्मृतमित्यस्यार्थः । **स्मर्तव्य-मिति ॥** ज्ञेयमित्यर्थः । तल्लाभप्रकारमाह- **जातेरिति ॥** 'न हिंस्यात् सर्वा भूतानि' इत्यत्रोत्सर्गस्य हिंसात्व-रूपजातिविषयत्वदर्शनादिति भावः । **उत्सर्गो**ऽनियमः । लक्षणाबीजस्य विषयविषयिभावसम्बन्धस्य सूचनायैवमुक्तिः । आगमत्वजात्यैव प्राबल्यमिति व्याख्या तूत्तरवाक्यविरोधादयुक्तेति भावः ।

**(श्री.टि.)** अर्यत इति व्युत्पत्त्या अर्थशब्दो ज्ञेयवाची । यथाशब्दश्चानतिक्रमार्थः । तथाच ज्ञेयमनतिक्रम्य विद्यमानं यथार्थमित्यभिप्रेत्याह- **यथावस्थितेति ॥** ननु प्रामाण्यस्य याथार्थ्यभिन्नस्याभावाद्याथार्थ्यमित्यनूद्य प्रामाण्यं कथं विधीयत इत्यत आह- **प्रमाणशब्दप्रवृत्तिनिमित्तमिति ॥ एतेनेति ॥** याथार्थ्यस्य प्रमाणशब्द-प्रवृत्तिनिमित्तत्वकथनेन, एवशब्देन अनधिगतार्थगन्तृत्वस्य प्रमाणलक्षणत्वनिराकरणेन चेत्यर्थः । **बह्वि-त्यादि ॥** बहूनामेकार्थविषयकत्वेऽधिगतार्थगन्तृत्वेन प्रामाण्यायोगादिति शङ्काया याथार्थ्यस्यैव प्रमाणलक्षण-त्वेन अन्यस्य च प्रमाणलक्षणत्वाभावेनानुपपन्नतया बहुत्वप्रमाणत्वयोस्समावेशसम्भवादिति भावः । प्रामाण्यं ज्ञेयविषयीकारित्वम् । तथा चेन्द्रियादीनां ज्ञेयविषयीकारित्वाभावाल्लक्षणस्याव्याप्तिरिति भावः । ननु ज्ञानशब्दयोरिति द्वन्द्वनिर्देशेन ज्ञानसमकक्षतया शब्दस्य गृहीतत्वाज्ज्ञानवत् शब्देऽपि ज्ञेयविषयीकारित्वं मुख्यमिति प्राप्तम् । तथाच ज्ञेयविषयीकारित्वलक्षणस्य प्रत्यक्षादित्रिष्वप्यव्याप्तेः शङ्कितत्वाच्छब्दे तत्परिहारश्च कथमित्याशङ्क्य द्वन्द्वनिर्दिष्टज्ञानशब्दयोरित्यस्य बुद्ध्या विवेकं सकृदुक्तमुख्यशब्दस्य तन्त्रन्यायं चाश्रित्य तदभिप्रायमाह- **करणेष्वपीत्यादिना ॥** करणेष्वपीत्यनन्तरं निर्धारणायामिति शेषः । मुख्यत्वे निमित्तमाह- **इन्द्रियेति ॥ सर्वथेति ॥** 'मृदब्रवीत्' इत्यादौ क्वचिदयथार्थप्रतिपादनेऽपि न सर्वथाऽप्रामाण्यम् अपौरुषेयत्वेन तदसम्भ-वात् । अतः प्रतीतार्थे प्रामाण्यासम्भवेऽप्यर्थान्तरे प्रामाण्यसम्भवादिति भावः । **वक्तुमिति ॥** 'बल्येवानुभवः' इत्यत्रेत्यर्थः । वृत्तिरूपज्ञानस्याप्यान्तरत्वात् कथं बाह्यत्वमित्यतो बाह्यपदं व्याचष्टे- **आत्मस्वरूपेति ॥ यदर्थ-मिति ॥** ज्ञाने याथार्थ्यं मुख्यं तदपि न सर्वत्रैकप्रकारमित्येतदर्थमित्यर्थः । ननु बल्येवेत्येवकारस्य यथावस्थितान्वये विशेषणसङ्गतस्य तस्यायोगव्यवच्छेदकत्वादनुभवे बलित्वायोगो नास्तीत्येव प्राप्नोति नत्वनुभवस्यैव बलित्वमन्यत्र तदभावः । तथाचाग्रे सर्वापेक्षयाऽनुभवस्यैव बलित्वकथनमयुक्तमित्याशङ्क्यैवकारस्य भिन्नक्रमेणान्वयमाह- **अनुभव एवेति ॥** साक्षिरूपानुभव एवेत्यर्थः । तथा च विशेष्यसङ्गतस्य तस्यान्ययोगव्यवच्छेदकत्वेनानुभवस्यैव बलित्वमन्यत्र तदभावः प्राप्त इति भावः । **बाह्यमिति प्रकृत इति ॥** तथा च निर्दोषं बाह्यमित्येव वक्तव्यमिति **(श्री.टि.)** भावः

। **तत्स्वरूपेति ॥** बाह्यज्ञानस्वरूपेत्यर्थः । कथमनेन तत्स्वरूपनिरूपणमित्यतस्तद्दर्शयति- **इन्द्रियेत्यादिना ॥** अमुख्यं बाह्यज्ञाने याथार्थ्यमिति शेषः । प्रकृतोपयोगं दर्शयति- **एतेनेति ॥** सर्वापेक्षयाऽ-नुभवस्य बलित्वकथनेनेत्यर्थः । **इत्युक्तमिति ॥** 'न चानुभवविरोध आगमस्य प्रामाण्यम्' इति वाक्येनोक्तं साक्ष्यनुभवस्य प्राबल्यमित्यर्थः । मूले तथाशब्दस्य समुच्चयार्थत्वात्तत्समुच्चेयमाह- **तथा प्रामाण्यस्येति ॥ अन्यथा तन्न स्यादिति ॥** ज्ञानप्रामाण्यस्य मुख्यत्वाभावेऽनुप्रमाणप्रामाण्यस्य अमुख्यत्वाभावे अक्षादित्रय-स्यानुप्रमाणत्वव्यवहारो ज्ञानस्य केवलप्रमाणत्वव्यवहारश्च न स्यादित्यर्थः । **ज्ञानसमकक्षताप्रतीतिमिति ॥** प्राबल्यविषयेऽपि शब्दस्य साक्षिरूपज्ञानसमकक्षताप्रतीतिमित्यर्थः । **तस्यापवादमाहेति ॥** 'तन्मुख्यं ज्ञान-शब्दयोः' इत्यनेन करणेष्वपीन्द्रियलिङ्गापेक्षया शब्दविशेषस्य वेदस्य याथार्थ्यं मुख्यम् इन्द्रियलिङ्गयोरेव तस्य सर्वथा अयाथार्थ्याभावादित्येवं वेदस्य प्रामाण्यनियमः सूचित इत्युक्तम्, तस्यापवादमाहेत्यर्थः । तेषु त्रिष्वागमस्य जात्या वेदत्वादिधर्मेण प्राबल्यमित्यर्थाङ्गीकारे 'उपजीव्यविरोधे तु न प्रामाण्यम्' इत्यत्राप्रामाण्यकथनं बाधितं स्यादतो जात्येत्येतद्व्याचष्टे- **उत्सर्गेणैवेति ॥** जातिशब्दस्योत्सर्गवाचित्वशङ्कानिरासायोक्तम् । **जातिग्रहणे-नेति ॥** समानविषयकत्वं लक्षणाबीजमुख्यार्थसम्बन्ध इत्याशयेनोक्तम् । **जातेरुत्सर्गविषयत्वादिति ॥** उत्सर्गविषयकत्वादित्यर्थः । यथा 'न हिंस्यात्' इत्यत्राहिंस्यत्वं सर्वभूतेषु प्राप्नोतीत्युत्सर्गो बहुव्यापी बहुपदार्थ-विषयक इति यावत् । एवं पराभिप्रेता जातिर्बहुव्यापिनी अनेकानुगतत्वाङ्गीकारादित्येवं जात्युत्सर्गयोः समान-विषयकत्वसद्भावेन जातिपदमुत्सर्गलक्षकमिति भावः । यद्वा उत्सर्गविषयत्वाद् उत्सर्गविषयतावच्छेदकत्वा-दित्यर्थः । उत्सर्गविषयता केनचिदवच्छिद्यते तदवच्छेदिका च जातिः । यथा न हिंस्यादित्यादावुत्सर्गविषयता-वच्छेदकं सर्वभूतत्वादिधर्मः । एवं च अवच्छेद्यावच्छेदकभावसम्बन्धसद्भावाज्जातिपदमुत्सर्गलक्षकमित्याशयः। निरवकाशादेरित्यत्र आदिपदेन श्रुतिग्रहणम्। **वेदस्यापीति ॥** अपौरुषेयत्वेन प्रमितस्यापि न प्रतीतार्थे प्रामाण्यमित्यर्थः । प्रकृतोपयोगं दर्शयति- **अनेनेति ॥** उपजीव्यविरोधे आगमस्याप्यप्रामाण्यकथनेनेत्यर्थः ।

**(पां.टि.)** ननु याथार्थ्यं प्रामाण्यमित्ययुक्तम् । तथा हि । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथा-शब्दार्थाः । तत्र च 'यथाऽसादृश्ये' इत्यसादृश्यार्थकस्यैव यथाशब्दस्याव्ययीभावसमासविधानात्सादृश्यार्थकस्य यथाशब्दस्यार्थशब्देनाव्ययीभावसमासानुपपत्त्या समासान्तरस्य चासामर्थ्यादिना प्रतिहतत्वेन प्रकृते सादृश्यार्थ-कस्य यथाशब्दस्य परिग्रहानुपपत्तेः । वाक्यशेषाभावेनार्थयोग्यतायास्तद्वीप्साया वा प्रामाण्यापत्त्या च योग्यता-वीप्सार्थस्यापि परिग्रहानुपपत्तेः पदार्थानतिवृत्त्यर्थस्येदं ग्रहणमिति वाच्यम् । तथाऽर्थशब्दस्याप्यभिधेयादि-वाचिनोऽव्याप्त्यादिप्रसङ्गाद्विषयापरपर्यायवस्तुवचनस्यैवेदं ग्रहणमिति वाच्यम् । तथा च 'अर्थं विषयं नातिवर्तते न व्यभिचरति यत्तत्प्रमाणम्' इति अर्थाव्यभिचारित्वं प्रमाणत्वमिति फलितोऽर्थः । तत्र च प्रमाणस्यार्थाव्यभि-चारित्वं किमर्थव्याप्यत्वमभिमतं किं वा यावदर्थगोचरत्वम् । आद्येऽपि व्याप्तिः किं देशतः किं वा कालतः । नाऽद्यः । प्रमाणासमानदेशार्थविषयप्रमाणेष्वव्याप्तेः । न द्वितीयः । अतीतादिविषयप्रमाणेष्वव्याप्तेः । नान्त्यः। **(पां.टि.)** असर्वज्ञविज्ञानानां तत्करणानां चाप्रामाण्यप्रसङ्गादित्यतो नात्रार्थाव्यभिचारित्वमर्थव्याप्यत्वादिक-मभिमतं येनोक्तदोषः स्यात् । किं नाम विषयीकृतस्यार्थस्य यथावस्थितत्वमेवेति न कश्चिद्दोष इत्याशयेन याथार्थ्यमित्येतदनुवादपूर्वकं तस्यार्थमाह- **यथाऽवस्थितज्ञेयविषयीकारित्वमिति ॥** अत्राविवक्षितयथावस्थित-ज्ञेयविषयीकारित्वस्य गमनेऽतिव्याप्तित्वाद्यथावस्थितस्वोपाधिकज्ञेयत्वोपेतविषयकत्वं लक्षणत्वेन वाच्यम् । तच्च ज्ञेयत्वं प्रत्यनुपाधिभूतकरणेष्वव्याप्तमित्याशङ्कते- **नन्विति ॥ साक्षादिति ॥** ज्ञेयत्वं प्रत्युपाधित्वेनेत्यर्थः। **ज्ञानद्वारेति ॥** ज्ञेयत्वोपाधिभूतज्ञानं प्रति निमित्तत्वेनेत्यर्थः । तथा चोपाधित्वोपाधिनिमित्तत्वलक्षणावान्तर-विशेषणवत्त्वेऽपि ज्ञानकरणयोः स्वसम्पादितज्ञेयत्वोपेतविषयकत्वमविशिष्टमेवेति भावः । समकक्षताप्रतीतिं द्वन्द्वनिर्देशप्रसक्ताम् । ननु जातिशब्दस्योत्सर्गेऽशक्तत्वात्कथमुत्सर्गपरत्वमित्यतो लक्षणयेत्याह- **जातिग्रहणे-नेति ॥** लक्षणाबीजभूतशक्यसम्बन्धमाह- **जातेरिति ॥** सामान्यस्येत्यर्थः । उत्सर्गविषयत्वात् उत्सर्गं प्रति विषयत्वात् । तथा चोत्सर्गस्य सामान्यविषयकत्वाद्विषयवाचकेन जातिपदेन विषयिण उत्सर्गस्य लक्षणा युक्तेति भावः ।

**(व्या.टि.) कथमिति ॥** साधारणप्रवृत्तिनिमित्तं विना साधारणशब्दप्रयोगादिति भावः । यथार्थस्य भावो याथार्थ्यम् । तत्र यथाशब्दोऽनतिक्रमार्थः । न तु योग्यतावीप्सार्थः । वाक्यशेषाभावेन योग्यताया अर्थानां वा प्रामाण्यप्रसक्तेः । नापि सादृश्यवचनः । अव्ययीभावविधाने 'यथाऽसादृश्ये' इति विशेषणात् । अतोऽनतिक्रमे यथाशब्दः । यथार्था युक्तय इत्यादौ

भावप्रधानयथार्थशब्दादर्शआद्यजन्ताट्टाप्। यथाशब्दस्य बहुव्रीहिर्वा। अर्थशब्दोऽपि नाभिधेयादिवाची। अव्याप्त्यापत्तेः। नापि विषयापरपर्यायवस्तुवाची। क्रियादावतिप्रसक्तेः। अपि तु 'अर्थत्वमर्यतैव स्यात्' इत्याद्यनुभाष्यभाषितभङ्ग्या योगेन ज्ञेयवाचीत्यभिप्रेत्य व्याचष्टे- **यथाऽवस्थित-ज्ञेयविषयीकारित्वमिति ॥** नन्वनधिगतार्थगन्तृत्वादिपरोक्तलक्षणे सम्भवति कथं 'याथार्थ्यमेव' इत्यव-धारणमित्यत आह- **एवशब्देनेति ॥** स्मृत्यनुवादयोरपि प्रामाण्येन तत्र परोक्तलक्षणस्याव्याप्तेरिति भावः।

ननु याथार्थ्यमप्यव्याप्तम्। स्मृतिकाले पूर्वावस्थाया अभावेन स्मृतेरपि तदयोगात्। न च स्मृतिर्निवृत्त-पूर्वावस्थतयाऽर्थमवगाहते। पूर्वावस्थानिवृत्तावनुभवाप्रवृत्तेः। अतो यथार्थानुभवसमानविषयाऽपि स्मृतिरर्था-तादवस्थ्यादयथार्थैवेति चेत्। तदनेन किमुक्तं भवति। स्वकालेऽर्थस्य तदवस्थात्वाभावाद् अयाथार्थ्यं स्मृतेरिति वा पूर्वावस्थानिवृत्तेरविषयीकरणादिति वा, अनिवृत्तपूर्वावस्थात्वेन विषयीकरणादिति वा। नाऽद्यः। अतीतादिविषयानुमानादिप्रामाण्यप्रच्युतिप्रसक्तेः। न द्वितीयः। सर्वप्रमाणाप्रामाण्यप्राप्तेः। कस्यापि सर्वात्मनाऽविषयीकरणात्। न तृतीयः। असिद्धेः। तस्माद्याथार्थ्यं न स्मृत्यव्याप्तम्। एवमनुवादेऽपि याथार्थ्यं समर्थनीयम्। ननु तथाऽपि स्मृतेः प्रामाण्याभावेनासङ्ग्राह्यत्वाद्याथार्थ्यमतिव्याप्तमिति चेत्। कुतः स्मृतेः प्रामाण्यं नास्ति। किं साधकाभावादुत बाधकात्। तत्रापि निष्फलत्वरूपाद्बाधकाद् अथ वा प्राकट्यापरपर्याय-ज्ञातताऽजनकत्वरूपाद् उताज्ञातज्ञानत्वाभावादाहोस्विद् अनपेक्षत्वाभावाद् अथाननुभवत्वात्। नाऽद्यः। लोक-**(व्या.टि.)** व्यवहारस्य सत्त्वात्। 'स्मृतिः प्रत्यक्षम्' इति श्रुतिसद्भावाच्च। स्मृतिः प्रमाणपदवाच्या यथार्थत्वात् प्रत्यक्षादिवदित्यनुमानाच्च। न चात्रानुभवत्वमुपाधिः। समव्याप्तिपक्षे संशयादौ व्याप्त्यसम्भवात्। विषमव्याप्तित्व-पक्षेऽपि करणरूपे प्रत्यक्षे साध्याव्यापकत्वात्। स्मृतिव्यतिरिक्तत्वस्य पक्षव्यावृत्त्यर्थविशेषणतया तादृशज्ञानत्व-रूपानुभवत्वस्य पक्षेतरत्वरूपत्वाच्च। द्वितीयेऽपि नाऽद्यः। सर्वस्मृतिपक्षीकरणे कासाञ्चित्स्मृतीनां सफलतोप-लम्भेन भागासिद्धेः। करणदोषबाधकप्रत्यययोरेवाप्रामाण्ये तन्त्रत्वेन विफलत्वस्याप्रयोजकत्वाच्च। तृणादि-दर्शनादावनैकान्त्याच्च। धर्माधर्मजन्यतया कथञ्चित्साफल्यसाधनस्य तृणादिदर्शनादाविव स्मृतावपि सुवच-त्वाच्च। एतेनैकदेशपक्षीकरणमप्यपास्तं वेदितव्यम्। न द्वितीयः। ज्ञाततायां प्रमाणाभावेन प्रत्यक्षादावनै-कान्त्यात्। तत्सत्त्वेऽपि धारावाहिकज्ञानेऽनैकान्त्याच्च। संशयविपर्यययोरपि समानन्यायेन ज्ञातताजनकत्वेन हेतोरसाधारण्याच्च। तृतीयेऽनधिगतार्थगन्तृत्वस्य प्रमाणत्वमुत व्यापकमात्रत्वम्। आद्येऽपि धर्मिणमादाया-नधिगतार्थगन्तृत्वं प्रकारं वा। नाऽद्यः। नित्यवस्तुविषयाणामप्रामाण्यापत्तेः। व्याप्यवत्तयाऽवगतमर्थे व्यापकवत्तया विषयीकुर्वतोऽनुमानस्य पृथगवगतानर्थान् संसृष्टतया गोचरयतः शब्दस्य चाप्रामाण्या-प्रसङ्गाच्च। न द्वितीयः। धारावाहिकज्ञानानामप्रामाण्यप्रसक्तेः। कथञ्चिद्धारावाहिकज्ञानानामनधिगतवर्तमान-कालविषयत्वेन तादृशत्वे स्मृतेरपि वर्तमानतत्कालतयाऽनुभूतमर्थमतीततत्कालतयाऽवगाहिन्यास्तस्य वक्तुं शक्यत्वाच्च। संशयविपर्यययोरपि प्रामाण्यप्रसङ्गाच्च। अनधिगततथाभूतार्थत्वविवक्षायाम् अनधिगतविशेषण-वैयर्थ्यात्। स्मृतिव्यावृत्त्यर्थत्वेऽन्योन्याश्रयात्। द्वितीयेऽपि प्रामाण्यस्यानधिगतार्थत्वेन व्याप्तिः किं साहचर्य-दर्शनमात्रात् सिद्ध्यति उत व्यभिचारादर्शनसहकृतादथ विपक्षे बाधकोपेतात्। नाऽद्यः। अतिप्रसङ्गात्। न द्वितीयः। धारावाहिनि व्यभिचारदर्शनात्। अतिप्रसङ्गापरिहाराच्च। न तृतीयः। तदभावात्।

अधिगतमेवार्थमधिगमयता प्रमाणेन पिष्टपेषणं स्यादिति चेन्न। किमिदं पिष्टपेषणं नाम। किमधिगतेऽर्थेऽ-धिगत्यन्तरस्यानुदयः, किं वा विफलत्वम्, यद्वाऽविशिष्टफलत्वमथ वाऽनपेक्षितफलत्वम्। नाऽद्यः। स्यादप्येवं यदि ज्ञानाभावोऽपि ज्ञानसामग्र्येकदेशः स्याद् ज्ञानं वा प्रतिबन्धकं भवेत्। न चैवम्, स्मृतेरेवानुदयप्रसङ्गात्। न द्वितीयः। उक्तोत्तरत्वात्। न तृतीयः। आद्येऽप्यापत्तेः। न चतुर्थः। तृणादिदर्शने हेयदर्शने च प्रसङ्गात्। नाप्यनपेक्षत्वाभावादिति चतुर्थः। प्रामाण्यस्यानपेक्षत्वेन व्याप्तौ प्रमाणाभावात्। किञ्च किमनपेक्षत्वं सर्वथा अथ ज्ञानान्तरानपेक्षत्वम्। नाऽद्यः। अनित्यप्रमाणानां स्वसामग्र्यपेक्षत्वेनाप्रामाण्यापातात्। द्वितीयेऽप्यर्थपरिच्छेदे ज्ञानान्तरानपेक्षत्वमुत समानविषयकज्ञानान्तरानपेक्षत्वम्। नाऽद्यः। ज्ञानातिरिक्तार्थपरिच्छेदाभावात्। स्मृतावप्येवं सुवचत्वाच्च। द्वितीयेऽपि धर्मिणमादाय समानविषयकत्वं प्रकारं वा। नाऽद्यः। अनुमित्यादावप्य-भावात्। न द्वितीयः। स्मृतावपि सत्त्वात्। एवमनुभूतित्वं नाम स्मृतिव्यतिरिक्तज्ञानत्वं वा स्मृतित्वानधिकरण-ज्ञानत्वं वा नियमेन प्रत्युत्पन्नासाधारणकारणप्रत्ययत्वं वा। नाऽद्यः। स्मृतेरपि स्मृत्यन्तरव्यतिरिक्तत्वेनासिद्धेः। द्वितीयेऽपि स्मृतित्वं जातिर्वा संस्कारमात्रजन्यज्ञानत्वं वा। नाऽद्यः। जातेराकृतिव्यङ्ग्यत्वेन गुणे चाऽकृतेरभावे-**(व्या.टि.)** नासम्भवात्। द्वितीये संस्कारमात्रजन्यत्वं नाम तदितराजन्यत्वं वा तदसाधारणकारणकत्वं वा। नाऽद्यः। अदृष्टादिजन्यत्वेनासिद्धेः। न द्वितीयः। स्मृतेर्मानसत्वेन संस्कारकारणत्वाभावेनासिद्धेः। स्मृतेर्मानसत्त्वं 'तन्मया पूर्वं कृतमित्येतन्मया मनसा विज्ञातं स्मृतमपि' इति

साक्षिसिद्धम्। एतेन पूर्वानुभवावच्छिन्नार्थगोचरा स्मृतिर्न स्वयं यथार्थेति निरस्तम्। अनुभववच्छुद्धार्थविषयत्वस्यापि स्मृतमित्यादौ साक्षिसिद्धत्वात्। एतेन स्मरणस्य प्रामाण्ये संस्कारस्याप्यनुप्रमाणत्वेन तत्त्रैविध्यं भज्येतेति निरस्तम्। मनसः करणत्वात्। न च साक्षात्काररूपत्वलक्षणप्रत्यक्षफलत्वं कथमिति वाच्यम्। साक्षात्कारताया अपि साक्षिसिद्धत्वात्। न चातीतेन मनसः प्रत्यासत्त्यभावान्न तत्प्रत्यक्षजन्यत्वमिति वाच्यम्। अतीतानागतविषयकयोगिज्ञानस्य 'अपश्यमव्यये-मीयया' इत्यादिप्रमाणेन साक्षात्कारत्वे सिद्धे योगजधर्मसहकृतस्येव, स्मृतेरपि साक्षात्कारत्वे साक्षिसिद्धे पूर्वानु-भवजनितसंस्कारसाचिव्यस्य प्रत्यासत्तित्वसम्भवात्। तस्मान्न संस्कारमात्रजन्यत्वं तदसाधारणकारणजन्यत्व-मिति। न तृतीयः। स्मृतेरपि मानसप्रत्यक्षजन्यायास्तथात्वात्। त्वन्मतेऽप्युद्बुद्धसंस्कारस्य नियमेनाव्यवहित-कालीनसाधारणकारणत्वेन तज्जन्यस्मृतौ तत्सत्त्वाच्च। स्मृतेरपि कदाचित् प्रत्युत्पन्नसंस्कारतज्जन्यत्वसम्भ-वाच्च। न च तादृशस्मृतिव्यावृत्तये नियमेनेत्युक्तमिति वाच्यम्। अवच्छेदकेन विना नियतस्य ज्ञातुमशक्यत्वेना-नुभूतित्वस्यावच्छेदकत्वे आत्माश्रयापातेन अवच्छेदकान्तराभावेनासम्भवात्। किञ्च किमपि वा भूयादनुभूति-त्वम्। तथाऽपि किमनुभूतित्वं लक्षणमिति कृत्वाऽननुभूतित्वात् स्मृतिरप्रमाणमित्युच्यते। किं वा घटादिदृष्टान्ता-वष्टम्भेन। आद्येऽन्योन्याश्रयत्वम्। द्वितीये स्मृतिरेव केनापोद्यते अस्मृतित्वेनानुभूतिरप्यपोद्यताम्। तस्मात् साधकाद्बाधकाभावात् स्मृतिप्रामाण्यनिर्णये परोक्तं लक्षणं तत्राव्याप्तं नाभ्युपगम्यते। विस्तृतं च सर्वमेतत् सुधायाम्। अस्योक्तोपयोगं दर्शयति- **एतेनेति** ॥ दृढीकरणं तु न्यायशास्त्रेऽधिगतार्थस्यापि याथार्थ्येन प्रामाण्य-कथनेनेति ज्ञेयम्।

फलस्यैव ज्ञेयविषयीकारित्वं न करणस्येति मन्वानः शङ्कते- **नन्वित्यादिना** ॥ अर्धाङ्गीकारेण परिहरति- **सत्यमिति** ॥ ज्ञानधर्मत्वमङ्गीक्रियते न तस्यैवेत्यर्थः। स्पष्टीकरोति- **द्विविधमिति** ॥ **प्रमाणमिति** ॥ यथा-वस्थितज्ञेयविषयीकारीत्यर्थः। मुख्यत्वं व्यनक्ति- **साक्षादिति** ॥ ज्ञेयत्वोपाधित्वेनेत्यर्थः। **ज्ञानद्वारेति** ॥ ज्ञाननिमित्तत्वेनेत्यर्थः। **अमुख्यमिति** ॥ वैवक्षिकमित्यर्थः। यथाश्रुतपरत्वे पद्धतिविरोधापत्तेः। तथा हि। 'करणविषयस्तु ज्ञानविषयवद् विवेक्तव्यः' इति। 'ज्ञानस्य यथा साक्षाद्विषयस्तथा करणस्यापि' इत्युक्तेः। विषयविषयिभावो हि स्वभावः। अन्यानपेक्षस्यैव स्वभावत्वात्। तस्यान्यापेक्षायां स्वभावत्वहानेः। न चात्रा-मुख्यत्वादिविरोधः। अभिप्रायसद्भावात्। तथा हि। अत्र याथार्थ्यपदेन स्वोपाधिनिमित्ताभ्यां यज्ज्ञेयं तद्विषयी-कारित्वम्। तत्रार्थस्य ज्ञेयत्वे ज्ञानमुपाधिः, करणं निमित्तम्। तत्रोपाधितया ज्ञेयविषयीकारि ज्ञानम्। निमित्तत्वेन तद्विषयीकारि करणम्। ज्ञानस्योपाधित्वेन केवलपदप्रयोगः। करणस्य निमित्तत्वेनानुप्रमाणपदप्रयोगः। नतु साक्षाज्ज्ञेयविषयीकारित्वाभावात्। तन्मात्रेण चामुख्यत्वम्। यथा वैदिकपदानां भगवति परममुख्यवृत्त्यपेक्षयाऽ-**(न्या.टि.)** न्यत्रामुख्यत्वव्यपदेशः। एवमिहापि वैवक्षिकामुख्यत्वम्। न मुख्यामुख्यत्वमिति बोध्यम्। स्पष्टतरमेतदुपासनापादीयसुधायामिति न कोऽपि विरोध इत्यलम्। करणप्रामाण्येऽपि वैवक्षिकमुख्यत्वामुख्यत्वे स्त इत्याह- **करणेष्वपीति** ॥ **शब्दविशेषस्येति** ॥ सामान्ये बाधादिति भावः। सर्वथेति तच्छङ्काभावं सूच-यति। तेनाप्रामाण्यशङ्काशून्यप्रामाण्यं वेदे मुख्यम्, शङ्किताप्रमाण्येष्वमुख्यमिति भावः। द्वन्द्वनिवेशेन प्राप्तां ज्ञानसामान्यभ्रान्तिं वारयति- **आत्मस्वरूपातिरिक्तमिति** ॥ एवशब्दो भिन्नक्रम इत्याह- **अनुभव एवेति** ॥ तुशब्दोऽवधारणार्थ इति मत्वाह- **निर्दोष एवेति** ॥ **(एवेति** ॥) एतेन 'निर्दोषत्वातिनियमे तद्बलिष्ठतमं मतम्' इत्यनुव्याख्यानोक्तो याथार्थ्येऽपि विशेषोऽवसेय इत्युक्तं भवति। अस्यापि पूर्वोपयोगं दर्शयति- **एते-नेति** ॥ केवलानुप्रमाणशब्दवाच्यतया प्रामाण्यस्य मुख्यत्वामुख्यत्वे साधयति- **अमुख्यत्वादेवेति** ॥ व्यापकसङ्गतोऽयमेवकारो वह्निमत्त्वादेवेतिवत्। ज्ञेयत्वनिमित्ततया साक्षाज्ज्ञेयविषयीकारित्वादित्यर्थः। **मुख्य-त्वादेवेति** ॥ ज्ञेयत्वोपाधित्वेन साक्षाज्ज्ञेयविषयीकारित्वादित्यर्थः। अनेन ज्ञानप्रामाण्यं मुख्यं केवलशब्द-वाच्यत्वात्। करणप्रामाण्यममुख्यमनुप्रमाणशब्दवाच्यत्वादिति व्यतिरेकिद्वयं सूचितम्। विपक्षे बाधकमाह- **अन्यथेति** ॥ **प्रतीतिमिति** ॥ ज्ञानतत्करणयोः साक्षादसाक्षात्त्वभेदेऽप्यनाशङ्कितदोषत्वोक्त्या 'ज्ञानशब्दयोः' इति सहनिर्देशेन च प्राप्तां समत्वप्रतीतिमित्यर्थः। **तस्येति** ॥ यथार्थज्ञानसाधनत्वस्येत्यर्थः। **अपवादम्** अपवाद-विषयताम्। जातिपदेनोत्सर्गलक्षणायां बीजमाह- **जातेरिति** ॥ सामान्यस्येत्यर्थः। उपजीव्यविरोधस्य सार्वत्रिकापवादकत्वाभावादाह- **निरवकाशादेरिति** ॥ आदिपदेन परीक्षितत्वपटुत्वादिबलवत्परिग्रहः। स्वभावप्रबलस्येत्यर्थः। अस्यापि पूर्वोपयोगमाह- **अनेनेति** ॥

**मूलम् -** **यामाहुरनुमां केचित् त्रियाद्यवयवात्मिकाम्।**
**सा व्यर्था, नोपपत्त्या हि विना साऽपि प्रमाणताम्।**
**यात्यतो युक्तिरेवैका प्रमाणमनुमात्मकम्।**

**युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका।**
**तथोपनयरूपा च परा निगमनात्मिका।**
**पृथक्पृथक्प्रमाणत्वं याति युक्तितयैव तु ॥**

**(त.मं.)** इदानीं तदभिमतमवयवनियमं दूषयति- **यामिति ॥** केचिदनुमां प्रतिज्ञाहेतूदा-हरणात्मिकामाहुः। केचित् पुनः प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाम्। केचिद् दृष्टान्तोपनय-रूपाम्। सा व्यर्था। उपपत्तिविहीना चेत् पञ्चावयवप्रयुक्ताऽप्यर्थं न साधयति हि। उपपत्तिमती चेदनियतावयवाऽप्यर्थं साधयेदेव। नियमाभावे कथं प्रयोग इत्यत आह- **युक्तिरिति ॥**

**टीका -** एवं प्रत्यक्षादीनां लक्षणं निरूपितम्। विभागस्तु निरूपणीयः। तत्रानुमानविभाग-निरूपणस्य बहुत्वात् तदेवाऽऽदौ करोति। द्विविधमनुमानं स्वार्थं परार्थं चेति। तत्र यत्परोपदेशमनपेक्ष्य स्वयमेव व्याप्तिं ज्ञात्वा (गृहीत्वा) व्याप्त्यनुसारेण विवक्षितस्थले व्याप्यं च प्रतीत्य व्याप्तिं च स्मृत्वा व्याप्यमनुसन्धत्ते तत्स्वार्थानुमानम्। तेनास्य विवक्षितस्थले व्यापकप्रमितिरुत्पद्यते। इदमेव व्याप्त्यादिज्ञानं परोपदेशमपेक्ष्योत्पद्यते चेत्तदा परार्थानुमानमित्युच्यते। तत्सम्बन्धात् परोपदेशोऽपि तथोपचर्यते। परोपदेशे च वादिनो विप्रतिपद्यन्ते। प्रतिज्ञाहेतूदाहरणैः उदाहरणोपनयनिगमनैर्वा त्रिभिरेवावयवाख्यैरवान्तरवाक्यैरुपेतं महावाक्यं परोपदेश इत्येके। प्रतिज्ञादयः पञ्चाप्यवयवाः सर्वथाऽपेक्षिता इत्यपरे। उदाहरणोपनयौ द्वावेवावयवावित्यन्ये। तानेतान्नियमपक्षाननूद्य दूषयति- **यामिति ॥ अनुमाम्** अनुमानोपयुक्तं परोपदेशवाक्यम्। त्रियाद्यवयवात्मिकां नियमेनेति शेषः। **सा व्यर्था** सोऽवयवनियमो निष्प्रयोजन इति यावत्। 'त्रियम्बकं यजामहे' 'भूवादयो धातवः' इत्यादिप्रयोगसिद्ध्यर्थं यणागमोऽपि कैश्चिद्व्याख्यातः। ततस्त्रियादीत्युपपन्नम्।

ननु प्रमाणाकाङ्क्षाजननार्थमादौ तावत्साध्यनिर्देशरूपा प्रतिज्ञा सर्वथाऽपेक्षिता। ततस्तत्र प्रमाणाकाङ्क्षायां साधनत्वव्यापकं लिङ्गवचनं हेतुसञ्ज्ञमवश्यं वक्तव्यम्। तदनन्तरं तस्य सामर्थ्य-जिज्ञासायां व्याप्तेः प्राथमिकत्वात्तां दर्शयितुं व्याप्तिग्रहणस्थलस्य दृष्टान्तस्य सम्यग्व्याप्तिनिर्देश-पूर्वकं वचनमुदाहरणाख्यमावश्यकम्। ततः पक्षधर्मताज्ञापनाय दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य पक्षे व्याप्तिख्यापकं वाक्यमुपनयाख्यं वाच्यमेव। तत एतेषामैकार्थ्यप्रतिपत्तये निगमनाख्यमुपसंहारवाक्यमपि सर्वथा भाव्यम्। अथवा हेतुनैवार्थात् पक्षधर्मताया लब्धत्वा-दविप्रकृष्टत्वेनोपसंहारस्यानपेक्षितत्वादाद्यास्त्रय एवावयवाः सर्वथा भाव्याः। यद्वोपोद्घातलक्षणया सङ्गत्या व्याप्तिपक्षधर्मतयोरभिहितयोस्तदाधारतया लिङ्गलाभान्निगमनेन साध्यप्रतीतेरुत्तरे त्रयोऽवश्यं वाच्याः। यदि वा विवादेनैव साध्यप्रतीतौ व्याप्तिपक्षधर्मतावचनेनैव साधनधर्मिलाभात् पूर्व-वन्निगमनस्य व्यर्थत्वाद् उदाहरणोपनयौ द्वावेवावश्यं वक्तव्यौ तत् कथमवयवनियमस्य वैयर्थ्यमित्यत आह- **नोपपत्त्येति ॥** व्याप्त्यादिमल्लिङ्गमुपपत्तिः। तत्स्मृतिजिज्ञासोपलक्षण-मेतत्। हिशब्दो हेतौ। **साऽपि** नियतावयवत्वेनाङ्गीकृतं वाक्यम्। **प्रमाणतामु**पयुक्तताम्।

इदमुक्तं भवति। परोपदेशो हि गृहीतव्याप्त्यादिकं प्रति तत्स्मारकत्वेनेतरं प्रति तद्विषयजिज्ञासा-जनकत्वेनैवोपयुज्यते। नत्वागमतया प्रमितिजननाय प्रयुज्यते, प्रतिवादिन्यनाश्वासात्। आश्वासे वा प्रतिज्ञामात्रेणैव पूर्तेरितरवैयर्थ्यादिति।

ततः किमित्यत आह- **अत इति ॥** यत एवं व्याप्त्यादिमल्लिङ्गस्मारकत्वादिना विना उपयुक्ततां न यात्यतो युक्तिरेवैका व्याप्त्यादिमल्लिङ्गस्मृत्यादिकं यावता भवति तावदेवानुमात्मकं प्रमाणं परोपदेशरूपं वाक्यम्। सत्यमेवमेतत्

। व्याप्त्यादिमल्लिङ्गस्मरणादिकमेतैरेवावयवैर्विना न भवती-त्यतस्तदर्थमेवावयवनियम उपास्यत इति चेन्न, अन्यथाऽपि सम्भवादित्याह- **युक्तिरिति ॥** व्याप्त्यादिमल्लिङ्गम्। प्रतिज्ञा **रूपं** निरूपकं, स्मृत्यादिजननी यस्यास्सा तथोक्ता। एवं हेतु-रूपिकादृष्टान्तरूपिकोपनयरूपेत्येतद्व्याख्येयम्। दृष्टान्तशब्देन तद्वचनमुपलक्ष्यते। उदाहरणैकदेश-ग्रहणार्थं दृष्टान्तेत्युक्तम्। निगमनात्मिकेत्युपचरितोऽभेदव्यपदेशः। एवं परेत्यपि। कदाचिन्निगमन-मेवानुमानस्मृत्यादिकारणं भवतीत्यर्थः । चतथाशब्दाः समुच्चये । अथवा, रूपात्मशब्दौ स्वरूपस्यैव वाचकौ । युक्तिरिति तत्स्मरणादिकारणोपलक्षणम् । उक्तं पिण्डीकृत्याऽह- **पृथगिति ॥** प्रतिज्ञादिकं पृथक्पृथगेव **युक्तितया** युक्तिस्मरणादिहेतुतया **प्रमाणत्वमु**पयुक्तत्वं याति । तुशब्दो हेतुगर्भत्वादि-वक्ष्यमाणविशेषद्योतनार्थः । यदीदमागमतयाऽनुमानस्य बोधकं स्यात्, स्यात् तदाऽवयवनियमः तत्क्रमश्च। इदं तु स्मरणादिकारणत्वेनोपयुज्यते । स्मरणं तु यदैकदेशादिनाऽपि दृष्टं किमुत प्रतिज्ञादिभिः। अतो व्यर्थोऽयं नियम इति समुदायार्थः।

**(र.टि.) तदेवादौ करोतीति ॥** परार्थानुमानजनकपरोपदेशस्वरूपनियमखण्डनपूर्वकं तत्स्वरूपनिरूपणे क्रियमाणे स्वार्थपरार्थानुमानविभागनिरूपणं कृतप्रायमिति भावः। केचिदित्यस्य सा व्यर्थेत्यादेश्चोपपत्त्यर्थमाह- **नियमेनेति शेष इति ॥ उपयुक्ततामिति ॥** क्वचित्परोपदेशस्याविद्यमानार्थत्वादिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् । **यावता भवति तावदिति ॥** अनेनानियमपक्षे परोपदेशानामनेकविधत्वात् परोपदेशत्व-प्रयोजकैकधर्माभावात्कथं परार्थानुमानमित्यादिशब्दप्रयोग इत्याशङ्कापरिहारार्थं व्याप्त्यादिमल्लिङ्गस्मृत्यादि-जनकत्वरूपैकधर्मावच्छिन्नत्वेनैक्यमापन्नानि वाक्यानि तथोच्यत इति वक्तुमेकेत्युक्तं भवति। **एवं परेत्य-पीति ॥** यथा 'निगमनात्मिका' इत्यत्र निगमनयुक्त्योरभेदव्यपदेश उपचरितस्तथा प्रतिज्ञादिनिरूपितयुक्त्या निगमननिरूपितयुक्तेरेकत्वेऽपि 'परा' इति भेदव्यपदेश उपचरित इत्यर्थः। परेत्यस्य तात्पर्यमाह- **कदाचि-दिति ॥** पौनरुक्त्यपरिहाराय पृथक्पृथगिति पदलब्धमर्थमाह- **उक्तं पिण्डीकृत्येति ॥**

**(रा.टि.) व्याप्यमनुसन्धत्त इति ॥** वह्निव्याप्योऽयं धूम इत्यादिरूपेण परामृशतीत्यर्थः। **अनुमानोपयुक्त-(रा.टि.) मिति ॥** अनुमानोपयुक्तव्याप्त्याद्यनुसन्धानजनकमित्यर्थः । **इत्युपपन्नमिति ॥** अन्यथा 'इको यणचि' इति यणादेशे दध्यत्रेतिवत् त्र्याद्यवयवेति स्यादिति भावः। **सामर्थ्येति ॥** व्याप्तिपक्षधर्मतारूप-सामर्थ्येत्यर्थः। **एतेषामिति ॥** प्रतिज्ञादीनामैकार्थ्यप्रतिपत्तय इत्यर्थः । न्यायमते पञ्चानामावश्यकत्वमुपपाद्य मीमांसकमते त्रित्वनियममुपपादयति- **अथवेति ॥** द्वित्वनियमं बौद्धाभिमतमुपपादयति- **यदिवेति ॥ विवादे-नेति ॥** गिरिर्वह्निमान्न वेति वादिप्रतिवादिविवादेनेत्यर्थः। **तत्स्मृतीति ॥** व्याप्त्यादिमल्लिङ्गस्मृतिजिज्ञासयोरुप-लक्षणमित्यर्थः। उक्तशङ्कानिरासस्य 'नोपपत्त्या हि' इत्यादिना स्फुटमप्रतीतेराह- **इदमुक्तं भवतीति ॥** हिशब्दो हेतावित्युक्तं तद्वचनक्ति-**यत एवमिति ॥** युक्तिरेवैकेत्यनुवादः। व्याप्त्यादिमदिति व्याख्या। प्रमाण-मित्यनुवादः। परेत्यादि व्याख्या। स्मृत्यादिजननीत्यत्रादिपदेन जिज्ञासाया ग्रहः। **एवमिति ॥** व्याप्त्यादि-मल्लिङ्गवचनरूपो हेतुः रूपं निरूपकः तादृशलिङ्गस्य स्मृतिजिज्ञासयोर्जनको यस्य स इत्यादिरूपेण व्याख्येय-मित्यर्थः। 'निगमनात्मिका' इतिवाक्ये व्याप्त्यादिमल्लिङ्गरूपयुक्तेः शब्दरूपनिगमनाभेदोक्तिः कथमित्यत आह- **इत्युपचरित इति ॥** प्रतिज्ञादिपञ्चविधानामपि युक्तिशब्दितव्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकपरोपदेश-रूपत्वेन निगमनरूपोपदेशस्य परेत्यन्यत्वोक्तिः कथमित्यतः प्रकारभेदाभिप्रायेणोपचरितेयं भेदोक्तिरित्याह- **एवं परेत्यपीति ॥** उपचरितोऽन्यत्वव्यपदेश इत्यर्थः। फलितार्थमाह- **कदाचिदिति ॥ अनुमानेति ॥** व्याप्तिमल्लिङ्गेत्यर्थः। **पिण्डीकृत्येति ॥** बुद्ध्यारोहाय संक्षिप्याहेत्यर्थः। तथा च न पुनरुक्तिरिति भावः। मूले युक्तेरनुक्तेस्तां वदन् निष्कृष्टार्थमाह- **यदीदमिति ॥** परोपदेशवाक्यमित्यर्थः।

**(श्री.टि.) तदेवेति ॥** अनुमानविभागनिरूपणमेवेत्यर्थः। यद्यप्युत्तरत्र यामाहुरित्यादिना परार्थानुमाने अवयवनियमखण्डनमेव क्रियते न त्वनुमानविभागनिरूपणम्। तथाऽपि परार्थानुमानजनकपरोपदेश-स्वरूपनियमखण्डनेन परार्थानुमानस्वरूपनिरूपणे क्रियमाणेऽर्थात्तद्भिन्नस्वार्थानुमाननिरूपणमपि कृतप्राय-मित्याशयेनैवमुक्तमित्यवगन्तव्यम्। मूलाभिप्रेतं विभागं स्वयं दर्शयति- **द्विविधमनुमानमित्यादिना ॥ व्याप्त्यनुसारेणेति ॥** व्याप्तिग्रहणानुसारेणेत्यर्थः। तथा हि। कयोश्चित्समानकालभिन्नदेशयोर्व्याप्तिः। यथा धूमाग्न्योः। कयोश्चित्समानदेशकालयोः। यथा रसरूपयोः। कयोश्चिद्भिन्नदेशकालयोः। यथोर्ध्वदेशवृष्ट्यधो-देशनदीपूरयोः। इत्येवं व्याप्तिग्रहणस्य अनेकप्रकारेण जातत्वात्तदनुसारेणेत्युक्तमिति मन्तव्यम्। **अनुसन्धत्त इति ॥** अस्त्यत्र पर्वते वह्निना

व्याप्तो धूम इति तृतीयलिङ्गपरामर्शो भवतीत्यर्थः । तेन तृतीयलिङ्गपरामर्शेन । ननु परोपदेशमपेक्ष्योत्पन्नस्य व्याप्त्यादिज्ञानस्य परार्थानुमानत्वे परोपदेशरूपपञ्चावयववाक्यस्य परार्थानु-मानत्वव्यपदेशो न घटत इत्यत आह- **तत्सम्बन्धादिति ।।** परोपदेशस्य व्याप्त्यादिज्ञानजनकत्वेन व्याप्त्यादिज्ञानेन साकं परोदपदेशस्य जन्यजनकभावसम्बन्धादित्यर्थः । **तथेति ।।** परार्थानुमानतयेत्यर्थः । 'त्रीनुदाहरणान्तान्वा यद्वोदाहरणादिकान् । मीमांसकाः' इति कारिकानुसारेणाऽह- **प्रतिज्ञेत्यादि ।।** 'ते प्रतिज्ञादिरूपेण पञ्चेति न्यायविस्तरः' इति कारिकाऽनुसारेणोक्तम् । **प्रतिज्ञादयः पञ्चेति ।।** 'सौगतास्तु सोपनीतिमुदाहृतिम्' इति **(श्री.टि.)** कारिकानुसारेणाऽह- **उदाहरणेति ।।** ननु परोपदेशरूपवाक्यस्यावयवत्रयात्मकत्वं सिद्धान्तेऽप्यङ्गी-कृतमिति कथं तत्प्रतिषेध इत्यत आह- **नियमेनेति ।। शेष इति ।।** तथा च नियम एवास्माभिर्नाङ्गीक्रियत इति युक्तस्तत्प्रतिषेध इति भावः ।

ननु त्रियादीति कथं त्रि आदीति स्थिते 'इको यणचि' इकः स्थाने यण् स्यादचि परत इत्युक्तत्वेन यणादेशे त्र्यादीति स्यादित्यत आह- **त्रियम्बकमित्यादि ।। यणागमोऽपीति ।।** न केवलं यणादेश इत्यर्थः । अन्यथा त्रीण्यम्बकानि चक्षूंषि यस्यासौ त्र्यम्बकः । भू आदयो भ्वादय इत्येव स्यादिति भावः । तथा चेकारात्परं यणागमे त्रियादीति साध्विति द्रष्टव्यम् । नैयायिकमतेन पञ्चावयवनियममुपपादयति- **नन्विति ।।** 'तत्र प्रतिज्ञा पक्षोक्तिः' इति कारिकानुसारेण प्रतिज्ञालक्षणमुक्तम् । **साध्यनिर्देशरूपेति ।।** साध्यवत्तया साधयितुं योग्यं साध्यं पक्ष इत्यर्थः । 'लिङ्गस्य वचनं हेतुः साधकत्वप्रकाशकम्' इति कारिकानुसारेण हेतुं लक्षयति- **साधनत्व-ख्यापकमिति ।।** धूम इत्यादिलिङ्गवचनस्य हेतुत्वपरिहारायेदं विशेषणम् । पञ्चम्यन्तं तृतीयान्तं वेत्यर्थः । **सामर्थ्येति ।।** व्याप्तिपक्षधर्मतारूपसामर्थ्येत्यर्थः । उदाहरणलक्षणस्य दृष्टान्तघटितत्वात् 'व्याप्तिसंवेदनस्थानं दृष्टान्त इति गीयते' इति कारिकानुसारेण दृष्टान्तस्वरूपं दर्शयन् 'सम्यग्व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनम्' इति कारिकानुसारेणोदाहरणलक्षणमाह- **व्याप्तिग्रहणस्थलस्येत्यादि ।।** यथा महानस इति वचनमात्रस्योदा-हरणत्वपरिहाराय व्याप्तिनिर्देशपूर्वकमित्युक्तम् । यत्र वह्निस्तत्र धूमो यथा महानस इति वचनस्याप्युदाहरणत्व-परिहारायोक्तम्- **सम्यगिति ।।** 'व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्' इत्युक्तरीत्या सम्यगित्यर्थः । 'दृष्टान्तापेक्षया पक्षे हेतोर्व्याप्तिप्रदर्शकम् । वचनं स्यादुपनयः' इति कारिकानुसारेणोपनयं लक्षयति- **दृष्टान्त इत्यादिना ।।** एतेषां चतुर्णामवयवानाम् । **ऐकार्थ्यप्रतिपत्तय इति ।।** साध्यरूपैकार्थप्रतिपादनाय प्रवृत्तत्व-ज्ञापनायेत्यर्थः । 'हेतुपूर्वं पुनः पक्षवचो निगमनं मतम्' इति कारिकां हृदि निधाय निगमनलक्षणतात्पर्यमेवोक्तम्- **निगमनाख्यमुपसंहारवाक्यमिति ।।** उपसंहारवाक्याख्यं निगमनमिति योज्यम् ।

मीमांसकमतेन त्र्यवयवनियममुपपादयति- **अथवेति ।।** ननु हेतोः पक्षधर्मताज्ञापनायोपनयवाक्यमपेक्षित-मित्याशङ्क्य तस्य हेतुवाक्येन गतार्थतामाह- **हेतुनैवेति ।।** हेतुवाक्येनैवेत्यर्थः । नन्वेतेषामैकार्थ्यप्रतिपत्तय उपसंहाररूपं निगमनवाक्यमपेक्षितमित्याशङ्क्य तस्यानपेक्षितत्वमुपपादयति- **अविप्रकृष्टत्वेनेति ।।** काल-व्यवधानाभावेनेत्यर्थः । **आद्यास्त्रय इति ।।** प्रतिज्ञाहेतूदाहरणरूपाः । मीमांसकमतेनैव प्रकारान्तरेण त्र्यवयव-नियममुपपादयति- **यद्वेति ।।** नन्वादौ लिङ्गमनभिधाय तद्धर्मभूतयोर्व्याप्तिपक्षधर्मतयोरेवादावुदाहरणोपनय-वाक्याभ्यामभिधाने असङ्गत्यापत्तिस्तदर्थं हेतुवाक्यमपेक्षितमिति चेत्तत्राह- **उपोद्घातलक्षणया सङ्गत्येति ।।** 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते' इति लक्षणलक्षितयोपोद्घातसङ्गत्येत्यर्थः । अभिहितयोः सतोः । उदाहरणोपनयवाक्याभ्यामिति शेषः । नन्वथापि लिङ्गालाभान्न्यूनतेत्यत आह- **तदाधारतयेति ।।** व्याप्ति-पक्षधर्मताधारतयेत्यर्थः । तथाच न हेतुवाक्यमपेक्षितमिति भावः । ननु साध्यधर्मविशिष्टधर्मिरूपपक्षप्रतिपत्त्यर्थं **(श्री.टि.)** प्रतिज्ञावाक्यमपेक्षितमिति चेत्तत्राऽह - **निगमनेनेति ।।** तस्माद्वह्निमानित्येवं रूपेणेत्यर्थः । **साध्येति ।।** साध्यधर्मविशिष्टधर्मिरूपपक्षप्रतीतेरित्यर्थः । तथाच निगमनवाक्येन गतार्थत्वान्न प्रतिज्ञावाक्यमपे-क्षितमिति भावः । **उत्तरे त्रय इति ।।** उदाहरणोपनयनिगमनरूपा इत्यर्थः । सौगतमतेन द्व्यवयवनियममुप-पादयति- **यदि वेति ।। विवादेनैवेति ।।** एको ब्रूते पर्वतोऽग्निमानिति अपरो ब्रूतेऽग्निमान्न भवतीति विवादेनैवे-त्यर्थः । साध्यप्रतीतौ तद्विशिष्टधर्मिप्रतीतौ । तथा च प्रतिज्ञावाक्यमपेक्षितमिति भावः । **व्याप्तिपक्षधर्मतेति ।।** उदाहरणोपनयाभ्यामिति शेषः । **साधनधर्मीति ।।** साधनरूपो यो धर्मीत्यर्थः । व्याप्तिपक्षधर्मतारूपधर्माधि-करणत्वात् साधनस्य धर्मित्वमिति भावः । तथा च न तदर्थं हेतुवाक्यमपेक्षितमिति भावः । **पूर्ववदिति ।।** अविप्रकृष्टत्वेनोपसंहारस्यानपेक्षितत्वादित्यर्थः । स्वरूपसत्त्या उपपत्तेरनुपयुक्तत्वादाह- **तत्स्मृतीति ।।** तस्य व्याप्त्यादिमल्लिङ्गस्य ये स्मृतिजिज्ञासे तयोरुपलक्षणमित्यर्थः । वाक्यं परोपदेशरूपम् । लिङ्गाभाववति स्थले क्वचित्परोपदेशस्याविद्यमानार्थत्वेन प्रामाण्याभावादाह- प्रमाणतामुपयुक्ततामितीत्याहुः । वस्तुतस्तु नियतावयवत्वेनाङ्गीकृतवाक्यं व्याप्त्यादिमल्लिङ्गस्मृतिजिज्ञासाजनकत्वेन प्रमाणतां प्रमाकरणतां यातीति वक्तुं न युज्यते । स्मृतिजिज्ञासयोः प्रमात्वाभावेन तत्करणस्य

प्रमाणत्वायोगादित्यत आह- **प्रमाणतामुपयुक्तता-मिति ।।** एवमुत्तरत्रापि द्रष्टव्यम् । ननु पञ्चावयवोपेतं महावाक्यं तावदाप्तवाक्यत्वेन व्याप्त्यादिमल्लिङ्ग-प्रमितिजननायोपयुज्यते । आकाङ्क्षाद्युपेतमेव च वाक्यम् । तत्र यथा पूर्वपदसञ्जाताकाङ्क्षापूरकत्वमुत्तरपदस्यैवं पूर्वावयवसञ्जाताकाङ्क्षापूरकत्वमुत्तरावयवस्य वक्तव्यम् । अन्यथा गौरश्व इत्यादिवद्वाक्याभासत्वापत्तेः । अत उक्तरीत्या आकाङ्क्षाचतुष्टयनिवर्तकत्वेन प्रतिज्ञाद्यवयवचतुष्टयस्य बुद्ध्यारोहायोपसंहाररूपनिगमनरूपाव-यवस्याप्यपेक्षितत्वेन आकाङ्क्षाद्यनुपपत्तिरेवावयवनियमकल्पिकेति चेत्तत्राऽह- **इदमुक्तं भवतीति ।। आगमत-येति ।।** आप्तवाक्यत्वेनेत्यर्थः । **प्रमितीति ।।** व्याप्त्यादिमल्लिङ्गप्रमितीत्यर्थः । येनोक्ताकाङ्क्षाद्यनुसारेण पञ्चावयवनियमः स्यादिति भावः । कुतो नोपयुज्यत इत्यत आह- **प्रतिवादिनीति ।।** अनाश्वासात् आप्त्यनिश्च-यात् । आश्वासे आप्तिनिश्चये । **पूर्तेरिति ।।** आकाङ्क्षापूर्तेरित्यर्थः । तथाचाकाङ्क्षानुपपत्तिरेव नास्तीति भावः । तावतैव वाक्यत्वनिर्वाहोऽपि युक्त इति हृदयम् । **इतरेति ।।** हेत्वाद्यवयवेत्यर्थः । तथा च हेत्वाद्यभिधानप्रयोजकी-भूतप्रमाणाद्याकाङ्क्षाया एवानुत्थानेन व्यवधानाभावेन उपसंहारस्य च अनपोहितत्वेन हेत्वाद्यवयव-वैयर्थ्यापत्तेरित्यर्थः ।

शङ्कते - **सत्यमेवमिति ।। तदर्थमेवेति ।।** व्याप्त्यादिमल्लिङ्गस्मृत्याद्यर्थमेव पञ्चावयवनियम उपन्यस्यत इत्यर्थः । **अन्यथाऽपीति ।।** पञ्चावयवनियमं विनाऽपीत्यर्थः । **सम्भवादिति ।।** व्याप्त्यादिमल्लिङ्गस्मृत्यादेरिति शेषः । **व्याख्येयमिति ।।** हेतुर्दृष्टान्त उपनयश्च रूपो निरूपकः स्मृत्यादिजनको यस्यास्सा तथोक्तेत्येवं व्याख्येयमित्यर्थः । ननु दृष्टान्तस्य महानसादेः कथं व्याप्त्यादिमल्लिङ्गस्मारकत्वमित्यत आह- **दृष्टान्तशब्दे-नेति ।।** उदाहरणरूपिकेत्यनुक्त्वा वचनोपलक्षणाभिप्रायेण दृष्टान्तरूपिकेत्येव कस्मादुक्तमित्यत आह- **(श्री.टि.) उदाहरणैकदेशेति ।।** समग्रोदाहरणवाक्यस्य न व्याप्त्यादिमल्लिङ्गस्मारकत्वं किन्तु तदेकदेशभूत-दृष्टान्तवचनस्यैवेति ज्ञापयितुमुदाहरणरूपिकेत्यनुक्त्वा दृष्टान्तरूपिकेत्येवोक्तमित्यर्थः । ननु 'निगमनात्मिक' इति कथं युक्तेर्वचनरूपनिगमनात्मकत्वाभावादित्यत आह- **निगमनात्मिकेतीति ।। उपचरित इति ।।** तथा च प्रतिज्ञादिवन्निगमनरूपेत्येव व्याख्येयमिति भावः । अभेदव्यपदेश इति पदच्छेदः । ननु 'परा निगम-नात्मिका' इत्यत्र परेत्ययुक्तम् । परा भिन्नेति हि तदर्थः । तथा च प्रतिज्ञानिगमनयोरेकार्थत्वेन प्रतिज्ञानिरूपित-युक्तेर्निगमननिरूपितयुक्तेश्चैकत्वेन भेदाभावादित्यत आह- **एवं परेत्यपीति ।।** इत्यपि भेदव्यपदेशो निगमनात्मिकेत्यभेदव्यपदेशवदुपचरित इत्यर्थः । उपचरितत्वमात्रमपेक्ष्यैवमित्यतिदेश इति ज्ञातव्यम् । परेत्यस्य तात्पर्यमाह- **कदाचिदिति ।। अनुमानेति ।।** व्याप्त्यादिमल्लिङ्गेत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । **चतथाशब्दा इति ।।** चशब्दौ तथाशब्दश्चेति चतथाशब्दा इत्यर्थः । **अथवेत्यादि ।।** तथा च युक्तिर्व्याप्त्यादिमल्लिङ्ग-स्मृत्यादिजनिका । प्रतिज्ञारूपा प्रतिज्ञास्वरूपा प्रतिज्ञैवेति यावदित्यादि व्याख्येयमिति भावः । पूर्वं रूपात्म-शब्दावुपचरितौ युक्तिशब्दो मुख्यार्थ इत्युक्तम् । इदानीं तद्वैपरीत्येनेत्येवं योजनाभेदमात्रमर्थस्त्वेक एवेति द्रष्ट-व्यम् । 'नोपपत्त्या हि' इत्यादिग्रन्थसमुदायार्थमाह- **यदीदमित्यादिना ।।** इदं परोपदेशरूपं वाक्यम् । आगमतया आप्तवाक्यत्वेन, बोधकमनुभावकम् । व्याप्त्यादिमल्लिङ्गानुभवजनकमित्यर्थः । **तत्क्रमश्चेति ।।** 'प्रमाणा-काङ्क्षाजननार्थम्' इत्यादिनोक्तो नियतावयवानां क्रम इत्यर्थः । आप्तवाक्यतयाऽनुभावकत्वे यथा यथा आकाङ्क्षा स्यात्तथा क्रमेण नियतावयवान् स वदिष्यतीति भावः ।

**(पां.टि.) करोतीति ।।** केशान् करोतीत्यादौ शोधनेऽपि प्रयोगदर्शनेन करोतेरनेकार्थत्वादभिप्रैतीत्यर्थः । परार्थं च इत्यतः परम् इतिशब्दो द्रष्टव्यः । अन्यथा प्रत्येकं द्वैविध्यप्रसङ्गादिति भावः । **व्याप्त्यनुसारेणेति ।।** व्याप्तिग्रहणप्रकारानुसारेणेत्यर्थः । परोपदेशमपेक्ष्योत्पन्नस्य व्याप्त्यादिज्ञानस्य परार्थानुमानत्वे परोपदेशे परार्थानु-मानप्रयोगो न स्यादित्यत आह- **तत्सम्बन्धादिति ।।** परार्थानुमानोपयोगित्वादित्यर्थः । एके मीमांसकाः । अपरे नैयायिकाः । अन्ये बौद्धाः । सिद्धान्तेऽपि परोपदेशस्य आद्यावयवात्मकत्वाङ्गीकारात्तन्निषेधानुप-पत्तिमाशङ्क्याऽह- **नियमेनेति शेष इति ।।** ननु त्रय आदयो येषामिति बहुव्रीहौ कृते यदि संहिततया निर्देशस्तदा प्रापकाभावेनेयङोऽप्राप्त्या 'इको यणचि' इति यणि त्र्यादीति भवितव्यम् । असंहिततया निर्देशपक्षस्त्वयुक्तः, 'संहितैकपदे नित्या' इति वचनात् । तत्पक्षाङ्गीकारेऽपि त्रिआदीत्येव प्राप्त्या त्रियादीति यकारस्याश्रवण-प्रसङ्गादित्यतः, एवं तर्हि 'त्रियम्बकं यजामहे' 'भूवादयो धातवः' इत्यादेरप्यसाधुत्वं स्यात्तत्रापि यदि संहिततया निर्देशस्तदोक्तरीत्या 'इको यणचि' इति यणि त्र्यम्बकं भ्वादय इत्यादिप्रसङ्गेन पृथग्यकारवकारश्रवणायो-गात् । नाप्यसंहिततया निर्देशः, 'संहितैकपदे नित्या' इति तन्निषेधात् । त्रिअम्बकं भूआदय इत्येव तथा सति वक्तव्यतया पृथग्यकारवकारयोरश्रवणस्य तुल्यत्वात् । यदि चेयङुवङ्प्रकरणे तन्वादीनामुपसङ्ख्यानबलादि-यङुवङ्प्राप्त्या वा, 'अपूर्व एवाऽगमरूपो वकारः' इति 'भूवादयः' इत्येतत्सूत्रीयश्लोकवार्तिकव्याख्यानानुरोधेन **(पां.टि.)** यकारवकाररूपागमकल्पनया वा 'त्रियम्बकम्' इत्यादौ

यकारवकारश्रवणमुपपन्नमिति मन्यसे तर्हि उपसङ्ख्यानबलादियङादिश्रवणेन वाऽपूर्वागमरूपयकारश्रवणेन वा पृथग्यकारश्रवणोपपत्तेर्युक्तं त्रियादीत्यपी-त्याशयेनाह- **त्रियम्बकमिति ।।** ननु सिद्धान्ते परोपदेशस्य व्याप्त्यादिस्मृतिजिज्ञासाजनकत्वेनोपयोगाङ्गीकाराद् व्याप्त्यादि-स्मृतिजिज्ञासाजनकत्वेन विनोपयुक्ततां न यातीत्येव वक्तव्यतया 'उपपत्त्या विना प्रमाणतां न याति' इति कथमुक्तिरित्यतः, उपपत्तिशब्दस्य लक्षणया व्याप्त्यादिस्मृतिजिज्ञासापरत्वस्य प्रमाणताशब्दस्य चोपयुक्तत्वस्यैवानेनाभिधानान्नानुपपत्तिरित्याशयेनोपपत्तिशब्दमुख्यार्थं तावदाह- **व्याप्त्यादिमदिति ।।**

ननु परोपदेशस्यागमतया प्रमितिजनकत्वस्यैव सम्भवान्न व्याप्त्यादिस्मृत्यादिजनकत्वमित्यतस्तद्व्युत्पा-दयति- **इदमुक्तं भवतीति ।। तावदेवेति ।।** तावदेव परोपदेशरूपं वाक्यमनुमात्मकं प्रमाणमिति सम्बन्धः । ननु दृष्टान्तस्यार्थरूपतया व्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकत्वाभावात्तथोक्तिरयुक्तेत्यतोऽत्र दृष्टान्तशब्दस्य लक्षणया तद्वचनपरत्वेन दृष्टान्तपरत्वाभावान्नानुपपत्तिरित्याशयेनाह- **दृष्टान्तशब्देनेति ।।** तद्वचनेति लक्षणा-बीजशक्यसम्बन्धप्रदर्शनम् । स्वायत्तन्यायविरोधपरिहारायाह- **उदाहरणैकदेशेति ।। उपचरित इति ।।** वाक्य-रूपनिगमनस्य व्याप्तिपक्षधर्मताविशिष्टलिङ्गरूपयुक्त्यात्मकत्वस्य बाधितत्वादिति भावः । व्याप्त्यादिमल्लिङ्गस्य व्याप्त्यादिमल्लिङ्गभिन्नताया बाधितत्वात् परेति तद्भिन्नत्वव्यपदेशस्यानुपपत्तिमाशङ्क्याह- **एवमिति ।।** यथा निगमनात्मिकेति निगमनयुक्त्योरभेदोपदेश उपचरितस्तथा प्रतिज्ञानिरूपितयुक्त्या निगमननिरूपित-युक्तेर्भेदव्यपदेश उपचरित इत्यर्थः । उपचारमेव दर्शयति- **कदाचिदिति ।।** एवं युक्तिशब्दस्वारस्यानुसारेण 'प्रतिज्ञारूपा च' इत्यादेरमुख्यार्थतामाश्रित्य विरोधपरिहारोऽभिहितः । इदानीं 'प्रतिज्ञारूपा' इत्यादिबह्वनुग्रहाय युक्तिपदस्यामुख्यार्थताम् आश्रित्य विरोधं परिहरति - **अथ वेति ।।** पौनरुक्त्यपरिहारायाह- **उक्तं पिण्डीकृत्येति ।। समुदायार्थ इति ।।** 'युक्तिः प्रतिज्ञारूपा च' इति 'पृथक्पृथक्प्रमाणत्वम्' इति वाक्यद्वयतात्पर्यार्थ इत्यर्थः।

**(व्या.टि.)** अनुमानविभागादिनिरूपणेन विना परोपदेशावयवनियमनिरासानुपपत्तेस्तदर्थं बहिरेवानु-मानविभागादिकं निरूप्य तत् सङ्गमयति- **एवमित्यादिना ।। आदाविति ।।** महामल्लेशभङ्गन्यायेनेति शेषः । करोति मनसीति शेषः । **व्याप्तिं स्मृत्वेति ।।** ननु स्मरतेरिगर्थत्वेन 'अधीगर्थदयेशां कर्मणि' इति षष्ठी स्यादिति चेन्न । कर्मत्वविवक्षायां द्वितीयासौलभ्यात् । अत एव 'एषां कर्मणि शेषे षष्ठी' इति तद्वृत्तिः । अनुसन्धत्ते परामृशतीत्यर्थः । विवक्षितस्थल इति पक्षधर्मतानियमं वारयति- **तत्सम्बन्धादिति ।।** अनुमानबोधकत्वादि-त्यर्थः । **तथा** अनुमानत्वेन । **विप्रतिपद्यन्त** इति ।। अयं दैवादिकः । **एके** मीमांसकाः । **अपरे** नैयायिकाः । **अन्ये** बौद्धाः । अनुमानस्य लिङ्गस्यावयवाभेदायोगादाह- **अनुमानोपयुक्तमिति ।।** तत्स्मारकमित्यर्थः । अत्र फलितमाह- **स इति ।।** कैश्चिद् हरदत्तादिभिः । अवयवनियमवादिनः स्वं स्वं नियमं समर्थयमानाः प्रत्यवतिष्ठन्ते- **नन्वित्यादिना ।। आवश्यकमिति ।।** यद्यपि 'ओरावश्यके' इति सूत्रे 'अवश्यम्भाव आवश्यकम्' इति वृत्तिकारैर्व्याख्यातम् । तथाऽप्यवश्यम्भाविनि बह्वभियुक्तप्रयोगात्तदनादर्तव्यमिति हृदयम् । **कथमिति ।। (व्या.टि.)** व्याप्तिपक्षधर्मताप्रमितिजननोपयोगादिति शेषः । **उपलक्षणमिति ।।** व्याप्त्यादिमल्लिङ्गस्मृति-जिज्ञासे विनेत्यर्थः । व्याप्त्यादिस्मृत्यादिना सप्रयोजनत्वस्वीकारात् कथं वैयर्थ्यमवयवनियमस्येत्यत आह- **तावदेवेति ।।** एवेत्यधिकवैयर्थ्यं ध्वनयति । व्याप्त्यादिकं नियतावयवमिति तन्नियम आवश्यक इति शङ्कते-**तत्सत्यमेवेति ।।** अनन्यथासिद्धान्वयव्यतिरेकाभावान्न तन्नियमावश्यम्भाव इत्याह- **अन्यथाऽपीति ।।**

रूपयतीति रूपमिति णिजन्तादचमभिप्रेत्य व्याचष्टे- **निरूपकमिति ।।** प्रकृतोपयोग्यर्थमाह- **स्मृत्यादि-जननीति ।।** 'रूपिका' इति समस्तमपि बुद्ध्या पृथक् संयोज्यमित्याह- **हेतुरूपिकेति ।।** 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' इत्यतः इत्त्वम् । निदर्शनरूपदृष्टान्तस्य युक्तिस्मारकत्वाभावेन मुख्यसम्बन्धप्रदर्शनद्वारा लक्ष्यं दर्शयति- **तद्वचनमिति ।।** उदाहरणमेव किन्नोच्यतां किं दृष्टान्तग्रहणेनेत्यत आह- **उदाहरणेति ।।** यथोक्तं प्रमाणलक्षणे 'दृष्टान्तः सप्रतिज्ञो हेतुगर्भः' इति । स्मारकस्मर्ययोरभेदोऽयुक्त इत्यत आह- **उपचरित इति ।।** प्रतिज्ञादिस्मारकभेदेऽपि युक्तेरैक्यात् कथं परेति भेदव्यपदेश इत्यत आह- **एवं परेत्यपीति ।।** अय-मप्युपचारत इत्यर्थः । व्यपदेशतात्पर्यमाह- **कदाचिदिति ।। चतथाशब्दा इति ।।** चशब्दद्वयं तथाशब्दश्चैकः आहत्य शब्दत्रयं समुच्चय इत्यर्थः । एवं युक्तिशब्दस्य मुख्यार्थमभिप्रेत्य रूपात्मशब्दौ गौणौ व्याख्यातौ । अधुना तद्वैपरीत्येन व्याख्याति- **अथवेति ।।** प्रकृतप्रतिज्ञादिपदमत्रापि सम्बध्यत इत्याशयेन व्याचष्टे- **प्रतिज्ञादिकमिति ।।** अत्रापि युक्तिपदं स्मरणकारणोपलक्षणमिति व्याचष्टे- **युक्तिस्मरणादीति ।।** ननु कथमनेनावयवनियमनिरास इत्यतः समुदायार्थमाह- **यदीदमित्यादिना ।।**

**मूलम् -** **प्रतिज्ञा हेतुगर्भैव पृथक्प्रामाण्यमेष्यति ।**

**सिद्धत्वेन प्रतिज्ञाया हेतुर्मानं पृथग्भवेत् ।**
**प्रतिज्ञावयवत्वात्तु स्वातन्त्र्येणैव मानताम् ।**
**दृष्टान्तो यात्युपनयो व्याप्तिमाश्रित्य केवलम् ।**
**व्याप्तिस्तु केवलाऽपि स्यात् प्रमाणं नियमाश्रयात् ।**
**तथा निगमनं चोपसंहारैकस्वरूपतः ।**
**प्रामाण्यं यात्यनुभवो ज्ञापयत्युपपत्तिताम् ।।**

**(त.मं.)** तदेवोपपादयति- **प्रतिज्ञेति ।।** अत्रैतान्युदाहरणानि - मानसिद्धं जगत् सत्यमिति हेतुगर्भा प्रतिज्ञैव पृथक् प्रामाण्यमेष्यति । कथं जगतः सत्यत्वमिति प्रतिज्ञायाः सिद्धत्वेन मानसिद्धत्वादिति हेतुः पृथङ् मानं भवेत् । जगत् सत्यं यन्मानसिद्धं तत् सत्यं यथाऽऽत्मेति प्रतिज्ञावयवत्वेन दृष्टान्तः । यन्मानसिद्धं तत् सत्यं मानसिद्धं च जगदित्युपनयः । व्याप्तिस्त्विति तुशब्दः प्रतिज्ञायाः सिद्धत्वद्योतकः । कथं जगतः सत्यत्वमित्युक्ते यन्मानसिद्धं तत् सत्यमिति व्याप्तिः । मानसिद्धत्वात् सत्यमेव जगदिति निगमनं च केवलमपि प्रामाण्यं याति । एवंविधायाः कथमुपपत्तित्वज्ञानमित्यत आह- **अनुभव इति ।।**

**टीका -** ननु प्रतिज्ञायां लिङ्गं वा तद्धर्मयोर्व्याप्तिपक्षधर्मतयोरन्यतरद्वा न स्फुरति । तत्कथ-मनुमानस्मृत्यादिहेतुत्वं तस्या इत्यत आह- **प्रतिज्ञेति ।। हेतुगर्भा** हेत्वर्थगर्भा हेत्वर्थविशेषण-धर्मिकेत्यर्थः । न तु शुद्धा प्रतिज्ञेत्येवार्थः । **पृथग**वयवान्तरानपेक्षया । **प्रामाण्यम**नुमानस्मृत्यादि-हेतुत्वम् ।

धूमवान्पर्वतोऽग्निमानित्युक्ते श्रोतुर्विमर्शो जायते । मया प्रमाणे पृष्टेऽनेनेदमुदितम् । तत्र पर्वतोऽ-ग्निमानित्येतावद्विषयवचनम् । ततो नूनं धूमवानिति प्रमाणोक्तिर्भवितुमर्हति । न चेदं प्रत्यक्षमागमो वा । अतो लिङ्गमेवेदमिति निश्चित्य तदीये व्याप्तिपक्षधर्मते सुस्मूर्षतेऽनुसन्धत्ते, जिज्ञासते वेति किमनुपपन्नम् । अधिकं न्यूनं वै (चै) तदिति किमिति नाशङ्कते । युक्तमेवायं ब्रवीतीति वादिनि प्रतिवादिनः प्रत्ययाभावादिति चेन्न, एवंविधानां वाचोयुक्तीनां लोके शास्त्रे च सांव्यवहारिकत्वेन तदतिक्रमणेन शङ्कानुदयात् । अन्यथाऽग्निशब्दस्यौषधविशेषार्थत्वं गृहीत्वाऽसङ्गतिमप्याशङ्केत । तथात्वे छलेन निगृह्यत इति चेत्, तदेव कुतः । प्रकरणाद्यननुसन्धानादिति चेत्समं प्रकृतेऽपीति ।

ननु हेतुमात्रं कथमनुमानस्मृत्यादिहेतुर्भवेत्, साध्यधर्माप्रतीत्या व्याप्तेः, धर्म्यप्रतीत्या पक्षधर्मतायाश्च स्मरणाद्यनुदयादित्यत आह- **सिद्धत्वेनेति ।। प्रतिज्ञायाः** प्रतिज्ञार्थस्य । साध्यधर्मविशिष्टस्य धर्मिणो विवादतः, पर्वतस्याग्निमत्त्वं कुत इत्यादिप्रश्नवाक्येन वा **सिद्धत्वेन** बुद्धिस्थत्वेन कारणेन । **मान**मनुमानस्मृत्यादिहेतुः ।

ननु दृष्टान्तवचनमात्रस्य कथमनुमानस्मरणादिकारणत्वम् । लिङ्गधर्म्याद्यन्यतमस्यापि ततोऽ-स्फुरणादित्यत आह- **प्रतिज्ञेति ।। प्रतिज्ञा अवयवः** सहकारिणी यस्यासौ तथोक्तस्तस्य भावस्तत्त्वं तस्मात् । तच्च विवादादिनोक्त्या वा न कश्चिद्विरोधः । तुशब्दश्चशब्दार्थे । तेन हेतुगर्भत्वं समुच्चिनोति । अन्यथा लिङ्गधर्मिणोऽप्रतीतौ प्रतिज्ञाऽपि व्यर्था स्यात् ।

लिङ्गधर्मिणः पक्षधर्मतायाश्च प्रतीतावपि साध्यधर्मस्याप्रतीत्या व्याप्तिस्मृत्याद्ययोगात् कथमुप-नयमात्रस्योपयुक्तत्वमित्यत आह- **उपनय इति ।। व्याप्तिं** व्याप्तिवचनम् । केवलमिति क्रिया-विशेषणं दृष्टान्तोक्तिम(प्य)नपेक्ष्येति । मानतां यातीति वर्तते । दृष्टान्तानुक्तौ तथेत्यस्यार्थो न प्रतीयत इति चेन्न । यो

धूमवानसावग्निमान् धूमवांश्चायं पर्वत इत्येतावता पूर्णत्वात् । व्याप्ति-माश्रित्येत्यपि पक्षान्तरप्रदर्शनम् । अन्यथा 'सिद्धत्वेन प्रतिज्ञायाः' इत्युक्तरीत्यैवोपपत्तेः ।

प्रागनुक्तमपि प्रकारान्तरमाह- **व्याप्तिस्त्विति** ।। प्रतिज्ञार्थसिद्धिसमुच्चयार्थस्तुशब्दः । अन्यथा पक्षधर्मताऽप्रतीतेः । कुतः पर्वतोऽग्निमानिति प्रश्नवाक्येन सह व्याप्त्युक्तिमात्रस्यान्वयो नास्त्येवेत्यत उक्तम्- **नियमाश्रयादिति** ।। यो धूमवानसावग्निमानिति नियमादित्याद्युक्तेराश्रयणादित्यर्थः । निगमनस्य तु स्मारकत्वादिकं स्फुटमेवेत्याह- **तथेति** ।। सम्पूर्णप्रयोग इवेत्यर्थः । **उपसंहारैक-स्वरूपत इति** ।। सर्वार्थसङ्ग्राहकत्वादित्यर्थः । अग्निना व्याप्तस्य धूमस्य पर्वते विद्यमानत्वात् पर्वतोऽग्निमानित्यादिरूपं वाक्यमत्र विवक्षितम् ।

ननूक्तविधस्य प्रतिज्ञादिमात्रस्य स्मरणादिहेतुत्वं कुतः प्रमाणादिति चेत्, पञ्चाद्यवयवस्य महावाक्यस्यापि कुतः । स्मरणादेस्तद्भावभावित्वानुभवादिति चेत्, समानमेतदत्रापीत्याह- **अनुभव इति** ।। प्रतिज्ञादीनाम् **उपपत्तितां** तत्स्मारकत्वादिकम् । एतेन 'अपौरुषेयत्वात्' इत्यादयः प्रयोगाः समाहिता भवन्ति ।

**(र.टि.)** परोपदेशस्यावयवद्वयोपेतत्वनिरासार्थमाह- **हेत्वर्थेति** ।। हेतुवाक्यसाहित्येन विना हेत्वर्थगर्भत्वमपि कथमित्यत उक्तम् । **हेत्वर्थविशेषणधर्मिकेति** ।। **अनुसन्धत्त इति** ।। पक्षवृत्तिलिङ्गनिष्ठतयेति शेषः । **अधिकं न्यूनमिति** ।। धूमवानित्यस्य प्रतिज्ञायामनपेक्षितत्वेनाधिकम् अवयवान्तरराहित्येन न्यूनमित्यर्थः । **असङ्गति-मिति** ।। अर्थान्तरस्यासङ्गतावन्तर्भावादिति भावः । अवयवद्वयोपेतत्वनिरासार्थमाह- **प्रतिज्ञार्थस्येति** ।। हेतुप्रयोगकाले समयबन्धादिना विवादस्य व्यवहितत्वाद्धेतुवाक्यस्यान्वयाभावेनापार्थकत्वप्रसङ्गादाह- **पर्वत-स्याग्निमत्त्वमिति** ।। अन्यपदार्थस्य दृष्टान्तवचनस्य कथं प्रतिज्ञा अवयवः, तदेकदेशत्वाभावादित्यत आह- **सहकारिणीति** ।। नन्वेवं सति परोपदेशस्यावयवद्वयोपेतत्वापत्त्या 'पृथक्पृथक्' इत्युक्तविरोध इत्यत आह- **तच्चेति** ।। व्याप्तिविशेषणत्वे केवलामिति भवेदित्यत आह- **क्रियाविशेषणमिति** ।। **पक्षान्तरेति** ।। यथा प्रतिज्ञादीनां हेतुगर्भत्वादिना एकैकधैव व्याप्त्यादिमल्लिङ्गस्मारकत्वादिकं न तथोपनयस्य । किन्तु भिन्नभिन्नसह-कारियोगेनानेकधा तत्स्मारकत्वादीत्येवंरूपपक्षान्तरेत्यर्थः । तदेव विपक्षे बाधकेनोपपादयति-**अन्यथेति** ।। **(र.टि.) नियमादित्याद्युक्तेरिति** ।। तथा च नियमेति वाक्येन पञ्चम्यन्ततद्वाचकपदजातं लक्ष्यत इत्युक्तं भवति । ननु तस्मात्तथेत्येवंरूपेण निगमनेन साध्यादिप्रतीतिद्वारा कथं व्याप्त्यादिमल्लिङ्गस्मृत्यादीत्यत आह- **अग्निनेति** ।।

**(रा.टि.)** लिङ्गवचनरूपहेतोः प्रतिज्ञागर्भत्वायोगादाह- **हेत्वर्थेति** ।। लिङ्गेत्यर्थः । पर्वतो धूमवान् वह्निमानित्युक्तेऽपि व्याप्त्यादिमल्लिङ्गलिङ्गिभावाप्रतीतेराह- **हेत्वर्थेति** ।। हेत्वर्थो **लिङ्गं** विशेषणं यस्य स तथा, हेत्वर्थविशेषणो धर्मी यस्यास्सा हेत्वर्थविशेषणधर्मिकेत्यर्थः । **एवार्थः** एवकारार्थः । **सुस्मूर्षत इति** ।। स्मर्तुमिच्छतीत्यर्थः । गृहीतव्याप्तिकपुरुषापेक्षयोक्तम्- **अनुसन्धत्त इति** ।। अगृहीतव्याप्तिकं प्रत्याह- **जिज्ञासत इति** ।। व्याप्तिपक्षधर्मते इत्यनुषङ्गः । शङ्कते- **अधिकमिति** ।। पर्वतो अग्निमानिति प्रतिज्ञायां धूमवान्पर्वत इति विशेषणांशस्याधिकत्वाद्धेत्वाद्येकैकावयवोक्तौ प्रतिज्ञादेरनुक्त्या न्यूनतारूपनिग्रहस्थानं शङ्कत इत्यर्थः । **वाचो-युक्तीनामिति** ।। 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति षष्ठ्या अलुक् । एवंवचनानामित्यर्थः । लोके काव्यपुराणादौ । 'ईक्षतेर्नाशब्दम्' इत्यत्र परमते प्रधानं जगत्कारणं न अशब्दत्वादिति हेतुगर्भम् । स्वमते च 'गुहां प्रविष्टावात्मानौ' इत्यत्र ऋतं पिबन्तावात्मानौ गुहां प्रविष्टत्वादिति हेतुगर्भमिति शास्त्रे चेत्युक्तम् । **औषधेति** ।। चित्रमूलादीति भावः । **असङ्गतिमिति** ।। हेत्वादेः प्रतिज्ञया सहानन्वितत्वमर्थान्तरत्वं शङ्केतेत्यर्थः। **तदेवेति** ।। परेणार्थान्तरोक्त्याऽसङ्गतौ शङ्कितायां छलाख्यनिग्रहस्थानकथनं कुत इत्यर्थः ।

पर्वते अग्निरस्ति वा न वेत्यादिविवादेनार्थस्योपस्थितावपि पर्वतोऽग्निमानित्यादिप्रतिज्ञासिद्धेरभावाद्वा वक्ष्यमाणप्रश्नवाक्यसङ्ग्रहाय वाऽह- **प्रतिज्ञार्थस्येति** ।। समयबन्धादिना विप्रतिपत्तेर्व्यवहितत्वान्न कथारम्भसमये तदुपस्थितिरित्यत आह- **पर्वतस्येति** ।। समयबन्धानन्तरं पर्वतस्याग्निमत्त्वं कुत इति प्रश्नवाक्येन पुनरपि तदुपस्थितिरिति भावः । हेतौ तृतीयेति भावेनाह- **कारणेनेति** ।। ननु कुत इति प्रमाणप्रश्ने धूमादित्येव हेतुवचनेन भाव्यं नतु धूमवत्त्वादिति । अधिकोक्तौ निग्रहप्राप्तेः । तथाच पक्षधर्मताया अलाभान्न्यूनतेति चेन्न । पक्षस्य साध्यवत्त्वे को हेतुरित्याकाङ्क्षाशामकेन हेतुवचनेन पक्षसम्बन्धस्य बोधनीयत्वात् । **तच्चेति** ।।

प्रतिज्ञारूपावयव-सहकारित्वमित्यर्थः । **विवादादिनेति ॥** कथं चाग्निमत्त्वं पर्वतस्येति प्रश्न आदिपदार्थः । ननु ताभ्यां पर्वतोऽ-ग्निमानिति प्रतिज्ञारूपोऽवयवो न लभ्यत इत्यत आह- **उक्त्या वेति ॥** तथाच धूमवन्महानसवत् पर्वतोऽग्निमानिति प्रतिज्ञाहेतुगर्भोदाहरणैकदेशदृष्टान्तवचनमिति सिद्ध्यतीति भावः । कुत एवमित्यत आह- **अन्यथेति ॥** हेतु-गर्भत्वाभाव इत्यर्थः । लिङ्गाख्यधर्मिणः इत्यर्थः ।

प्रतिज्ञाऽभावे बाधकमाह- **लिङ्गधर्मिण इति ॥** व्याप्तिस्थलरूपदृष्टान्तवचनमात्रोक्तावप्यनुमानमुद्राऽभिज्ञस्य व्याप्तिस्मृतिर्भवत्येवेति यो यो धूमवानित्यादिव्याप्तिप्रदर्शकोक्तिर्नापेक्षिता । धूमवदिति दृष्टान्तविशेषणोक्त्या पक्षधर्मता चोपस्थितेति भावः । नचास्मिन्पक्षेऽपि विवादेनैव साध्योपस्थित्या गतार्था(व्यर्था)प्रतिज्ञेति **(रा.टि.)** शङ्क्यम् । स्वपक्षं साधयेत्यनुयोग एवास्य प्रवृत्तत्वादिति । केवलामिति वाच्यमित्यत आह- **क्रिया-विशेषणमिति ॥** नतु व्याप्तिविशेषणमिति भावः । तथाचायं धूमवान् इत्युपनयाकारमुपेत्य शङ्कते- **दृष्टान्ता-नुक्ताविति ॥** ननु विवादेन प्रतिज्ञार्थसाध्योपस्थित्या व्याप्तिस्मृतिसम्भवेन धूमवानयमित्युपनयोक्तिमात्रेण पक्षधर्मताया अप्युपस्थित्या अग्निमत्त्वाभावेन 'व्याप्तिमाश्रित्योपनयो मानतां याति' इति व्याप्त्याश्रयोक्तिः किमर्था । तेन विनाऽपि व्याप्तिस्मृतिसम्भवादित्यतः, सत्यं स एकः प्रकारोऽयमन्यः प्रकार इत्याह- **व्याप्ति-माश्रित्येति ॥** पर्वतस्याग्निमत्त्वे किं प्रमाणमिति पृष्टे योयो धूमवानसावग्निमानयं धूमवानित्युक्तिमात्रेण व्याप्तिपक्षधर्मतयोरनुसन्धानसम्भवादिति पक्षान्तरमित्यर्थः । व्याप्त्युक्तिं विनोपनयमात्रपक्षाद्व्याप्त्युक्ति-सहितोपनयरूपपक्षान्तरे प्रागुक्तोपनयपक्ष एवायं किं न स्यादित्यत आह- **अन्यथेति ॥** पक्षान्तरत्वाभाव इत्यर्थः । **प्रतिज्ञार्थसिद्धीति ॥** केन सिद्धिरित्यतः प्रश्नवाक्येनेति व्यञ्जयन् तत्समुच्चयाभावे बाधकमाह- **अन्यथेति ॥ व्याप्त्युक्तिमात्रस्येति ॥** यो धूमवानसावग्निमानित्युक्तिमात्रस्येत्यर्थः । ननु तस्मात्तथेत्यनेन विवक्षितस्मृतिः कथमित्यत आह- **अग्निनेति ॥** कुत इत्यस्योत्तरं वाचयति- **स्मरणादेरिति ॥ तत्स्मारक-त्वादिकमिति ॥** जिज्ञासाजनकत्वमादिशब्दार्थः । **एतेनेति ॥** 'सिद्धत्वेन प्रतिज्ञाया हेतुर्मानं पृथग्भवेत्' इत्यादिकथनेनेत्यर्थः ।

**(श्री.टि.)** 'युक्तिः प्रतिज्ञारूपा च' इत्यादिनोक्तं प्रतिज्ञादेरेकैकस्यैव व्याप्त्यादिमल्लिङ्गस्मृत्यादिकारणत्व-मुपपादयितुमुत्तरो ग्रन्थः । तत्र प्रतिज्ञाया व्याप्त्यादिमल्लिङ्गस्मृत्यादिकारणत्वमुक्तम्, तन्न सम्भवतीत्याशङ्कते- **नन्विति ॥** ननु 'प्रतिज्ञा हेतुगर्भा' इत्युक्त्या परोपदेशस्यावयवद्वयोपेतत्वं प्रतीयते । तदयुक्तम् । पृथगित्य-वयवान्तरानपेक्षत्वोक्तिविरोधादतो व्याचष्टे- **हेत्वर्थगर्भेति ॥** केचित्तु पक्षवचनरूपप्रतिज्ञाया लिङ्गवचन-रूपहेतुगर्भत्वाभावादाह- हेत्वर्थेतीत्याहुः । हेतुवाक्यसाहित्येन विना हेत्वर्थगर्भत्वस्याप्यसम्भवादाह- **हेत्व-र्थेति ॥** लिङ्गवचनरूपो यो हेतुः, तदर्थो यो लिङ्गरूपो धर्मः(धूमः) तद्विशेषणकधर्मिका तद्विशेषणको यो धर्मी पर्वतः तत्का तद्वती तत्प्रतिपादिका, धूमवान्पर्वतोऽग्निमानित्येवमाकारा प्रतिज्ञेत्यर्थः । **शुद्धेति ॥** हेत्वर्थाविशेषणधर्मिका पर्वतोऽग्निमानित्येवमाकारेत्यर्थः । **अनुमानस्मृत्यादिहेतुत्वमिति ॥** व्याप्त्यादि-मल्लिङ्गस्मृत्यादिजनकत्वेनोपयुक्तत्वमित्यर्थः ।

तदुपपादयति- **धूमवानित्यादिना ॥ विषयवचनमिति ॥** साध्यधर्मविशिष्टधर्मिवचनमित्यर्थः । निश्चि-त्येत्यनन्तरं गृहीतव्याप्तिकश्चेदिति शेषः । **सुस्मूर्षते** स्मरति । **अनुसन्धत्ते** पक्षवृत्तिलिङ्गनिष्ठतयेत्यर्थः । **जिज्ञासते वेति ॥** अगृहीतव्याप्तिकश्चेदिति शेषः । ननु धूमवानिति नूनं प्रमाणोक्तिर्भवितुमर्हति निश्चयो न सम्भवतीत्या-शङ्कते- **अधिकं न्यूनं वैतदिति ॥** धूमवानित्येतत्प्रतिज्ञायामनपेक्षितत्वादधिकम् अवयवान्तरराहित्यान्न्यूनं वेत्यर्थः । **किमिति नाशङ्कत इति ॥** तथा च धूमवानिति प्रमाणोक्तिरिति न निश्चिनोतीति भावः । ननु वादिनः प्रामाणिकत्वेनायुक्तवादित्वाभावादाधिक्यादिनिग्रहस्थानास्पदं वचनं कथं वदिष्यतीति निश्चित्य **(श्री.टि.)** धूमवानिति प्रमाणोक्तिरित्येव निश्चेष्यतीत्यत आह- **युक्तमेवेति ॥** शङ्कानास्पदं प्रामाणिकमेवे-त्यर्थः । प्रत्ययाभावात् विश्वासाभावात् । अतः आधिक्यादिशङ्कया धूमवानिति प्रमाणोक्तिरिति निश्चयो न युक्त इति भावः । एवंविधानां हेतुगर्भविशेषणाभिप्रायेण प्रयुज्यमानानाम् । **वा(चोयु)ग्युक्तीनामिति ॥** युक्तिर्योगः प्रकारो रीतिरिति यावत् । तथा च वाग्रीतिनामित्यर्थः । **शङ्केति ॥** आधिक्यादिशङ्केत्यर्थः । तथा च धूमवानिति प्रमाणोक्तिरित्येव निश्चेष्यतीति भावः । **अन्यथेति ॥** लोकशास्त्रव्यवहारातिक्रमेण आधिक्यादि-शङ्कोदयमङ्गीकृत्य धूमवानिति प्रमाणोक्तिरिति निश्चयानङ्गीकार इत्यर्थः । ओषधिविशेषार्थत्वम् अग्निशब्दस्य चित्रमूलपर्यायत्वेन तदर्थकत्वमित्यर्थः । यथा हि धूमवान् पर्वतोऽग्निमानित्यत्र धूमवानित्यंशे आधिक्यादिशङ्का क्रियते । एवमग्निमानित्यंशेऽग्निशब्दस्य चित्रमूलार्थत्वमादायासङ्गतिशङ्काऽपि स्यात् । लोकशास्त्रव्यवहारातिक्रमे शङ्काया निरङ्कुशत्वादिति भावः । अग्निमानित्यंशेऽसङ्गतिर्नाशङ्क्यत इत्याशङ्कते । **तथात्व इति ॥**

वादिप्रयुक्ताग्नि-शब्दस्य वाद्यनभिमतार्थान्तरमादाय असङ्गतिशङ्कायां छलेन प्रतिवादिनो निग्रहः स्यादित्यर्थः। **तदेवेति ॥** छलमेव कुत इत्यर्थः। तत्र निमित्तमाशङ्कते- **प्रकरणादिति ॥** प्रसिद्धाग्निप्रकरणमननुसन्धाय अर्थान्तरं कल्प-यित्वाऽसङ्गत्या दूषणादित्यर्थः। **सममिति ॥** मया प्रमाणे पृष्टे वादिना धूमवानित्युक्तमिति प्रमाण-प्रकरणमननुसन्धाय प्रमाणोक्तिरूपं तदभिप्रायम् अज्ञात्वाधिक्यादिशङ्कायां छलेन निग्रहः समान एवेति, तथा शङ्कामकृत्वा प्रमाणोक्तिरियमित्येव निश्चित्य तदीये व्याप्तिपक्षधर्मते सुस्मूर्षते अनुसन्धत्ते जिज्ञासते वेति किमनुपपन्नमित्युक्तं युक्तमेवेति भावः।

**साध्यधर्मेति ॥** व्याप्तिनिरूपकभूतेत्यर्थः। व्याप्तेस्तन्निरूपितायाः। **अनुदयादिति ॥** अतस्तदर्थं प्रतिज्ञा-रूपमवयवान्तरमपेक्षितमिति भावः। ननु 'सिद्धत्वेन प्रतिज्ञायाः' इति प्रतिज्ञावाक्यस्य सिद्धत्वोक्त्या अवयवद्वयावश्यकत्वं प्रतीयते। तथा च पृथक्पृथगित्युक्तविरोध इत्यत आह- **प्रतिज्ञार्थस्येति ॥** ननु प्रतिज्ञा-वाक्याभावे तदर्थस्य कथं सिद्धिरित्यतः प्रकारद्वयेन सिद्धत्वमुपपादयति- **विवादत इत्यादिना ॥** एको ब्रूते पर्वतोऽग्निमानिति, अपरस्तु नेतीत्येवं विवादत इत्यर्थः। **अनुमानस्मृत्यादिहेतुरिति ॥** व्याप्त्यादिमल्लिङ्ग-स्मृत्यादिजनकत्वेनोपयुक्तमित्यर्थः। धर्म्यादीत्यादिपदेन व्याप्तिपक्षधर्मताग्रहणम्। **अस्फुरणादिति ॥** अतस्तदर्थमवयवान्तरमपेक्षितमिति भावः। ननु प्रतिज्ञावयवत्वादिति बहुव्रीहावन्यपदार्थस्य दृष्टान्तपदोपलक्षितस्य कथं प्रतिज्ञावयवत्वं, प्रतिज्ञाया दृष्टान्तैकदेशत्वाभावादित्यतोऽवयवपदार्थमाह- **सहकारिणीति ॥** नन्वेवं सत्यवयवद्वयोपेतत्वापत्त्या पृथक्पृथगित्युक्तिविरोध इत्यत आह- **तच्चेति ॥** प्रतिज्ञावयवत्वं सहकारिभूतप्रतिज्ञार्थ इति यावत्। अत्रादिपदेन पर्वतस्याग्निमत्त्वं कुत इति प्रश्नवाक्यग्रहणम्। **उक्त्या वेति ॥** पर्वतोऽग्निमानित्युक्त्या वेत्यर्थः। न चावयवद्वयप्रयोगापत्तिरिति वाच्यम्। 'दृष्टान्तः सप्रतिज्ञो हेतुगर्भः' इत्युक्तत्वेन धूमवन्महानस-वत्पर्वतोऽग्निमानित्येवं सप्रतिज्ञहेतुगर्भदृष्टान्तवचनस्यैव पृथगवयवान्तरप्रयोगमनपेक्ष्य स्वातन्त्र्येणोपयुक्त-ताङ्गीकारात्।

**(श्री.टि.)** नन्वेवं प्रयोगे प्रतिज्ञावाक्यस्यैव दृष्टान्तसाहित्यं प्राप्तं न तु दृष्टान्तस्य प्रतिज्ञासाहित्यमिति चेत्सत्यं तथाऽपि प्रतिज्ञाया दृष्टान्तसाहित्योक्तौ दृष्टान्तेऽपि प्रतिज्ञासाहित्यमर्थाल्लब्धमेवेत्याशयात्। **हेतुगर्भत्व-मिति ॥** दृष्टान्तस्य लिङ्गवचनरूपहेतुगर्भत्वाभावाद्धेत्वर्थगर्भत्वमिति व्याख्येयम्। धूमवन्महानसवदिति तदा-कारः। **अन्यथेति ॥** हेतुगर्भत्वसमुच्चयाभाव इत्यर्थः। **लिङ्गधर्मिण इति ॥** लिङ्गरूपस्य धर्मिण इत्यर्थः। तस्यापि व्याप्त्यादिकं प्रति धर्मित्वादिति भावः। **व्यर्था स्यादिति ॥** पक्षनिष्ठतया हेत्वप्रतीत्या प्रतिज्ञाऽपि व्यर्था स्यात्। प्रतिज्ञारूपसहकारिसाहित्यं दृष्टान्तस्योच्यमानमपि व्यर्थमेव स्यात्। व्याप्त्यादिमल्लिङ्गस्मारकत्वाद्य-योगेनोपयुक्तं न स्यादिति यावदित्यर्थः। उपनयमात्रस्य व्याप्त्यादिमल्लिङ्गस्मारकत्वमुक्तं तदयुक्तमित्याशङ्कते- **लिङ्गधर्मिण इति ॥** लिङ्गरूपस्य धर्मिण इत्यर्थः। **प्रतीतावपीति ॥** तथा चायं धूमवानित्युपनयवाक्येनेत्यर्थः। **व्याप्तीति ॥** साध्यनिरूपितेत्यर्थः। **अयोगादिति ॥** तथा च तदर्थं प्रतिज्ञावाक्यमपेक्षितमतः पृथक्पृथगित्युक्ति-विरोध इति भावः। **व्याप्तिवचनमिति ॥** तथा च व्याप्तिनिरूपकत्वेन साध्यधर्मस्य व्याप्तिवचनेनैव प्रतीतत्वान्न तदर्थं प्रतिज्ञावाक्यमपेक्षितमिति भावः। **क्रियाविशेषणमिति ॥** आश्रित्येतिक्रियाविशेषणमित्यर्थः। व्याप्ति-विशेषणत्वे केवलामिति स्यादिति भावः। 'क्रियाव्ययविशेषणानां क्लीबाव्ययत्वं वाच्यम्' इतिवचनात्केवल-मित्यस्य नपुंसकत्वं युक्तमिति द्रष्टव्यम्। तदभिप्रायमाह- **दृष्टान्तोक्तिमपीति ॥** व्याप्तिवचनसाहित्येनोप-नयाकारं दर्शयति- **यो धूमवानित्यादिना ॥** तथा च धूमवांश्चायं पर्वत इत्येवोपनयाकारो न तथा चायं धूमवानिति येन दृष्टान्तोक्त्यपेक्षा स्यादिति भावः। ननूपनयवाक्यस्य व्याप्तिवचनसाहित्याङ्गीकारेऽवयवद्वयनियमापत्तिरित्यत आह- **व्याप्तिमाश्रित्येत्यपीति ॥** न केवलं 'सिद्धत्वेन प्रतिज्ञायाः' इत्युक्तप्रकारेण साध्यप्रतीतिः किन्तु व्याप्तिमाश्रित्येत्यपि साध्यप्रतीतौ पक्षान्तरप्रदर्शनं प्रकारान्तरप्रदर्शनं कृतमित्यर्थः। तथा हि। पूर्वं हेतुवाक्यस्य व्याप्त्यादिमल्लिङ्गस्मारकत्वाद्युक्तौ साध्यधर्माद्यप्रतीतौ तन्निरूपितव्याप्त्यादिस्मरणासम्भवेन तदुपेतलिङ्गादि-स्मारकत्वं न सम्भवतीत्याशङ्कायां 'सिद्धत्वेन प्रतिज्ञायाः' इत्यनेन साध्यधर्मादिप्रतीतिरुपपादिता। एवं धूम-वांश्चायमित्युपनयस्यापि व्याप्त्यादिमल्लिङ्गस्मारकत्वाद्युक्तौ कथमुपनयमात्रस्य व्याप्त्यादिमल्लिङ्गस्मारकत्वादिकं ततः साध्यधर्माप्रतीत्या तन्निरूपितव्याप्तिस्मरणाभावेन तदुपेतलिङ्गस्मारकत्वाद्यसम्भवादित्याशङ्कापरिहाराय व्याप्तिमाश्रित्येत्यनेन साध्यप्रतीतिर्व्याप्तिवचनेन भविष्यतीत्येवं साध्यप्रतीतौ प्रकारान्तरप्रदर्शनं कृतमिति भावः। व्याप्तिमाश्रित्येत्यस्य प्रकारान्तरेण साध्यप्रतीतिप्रदर्शनपरत्वानङ्गीकारे बाधकमाह- **अन्यथेति ॥** व्याप्ति-माश्रित्येत्यस्य प्रकारान्तरेण साध्यप्रतीतिप्रदर्शनपरत्वानङ्गीकारे 'सिद्धत्वेन प्रतिज्ञायाः' इत्युक्तरीत्यैव साध्य-प्रतीत्युपपत्तेरित्यर्थः। तथा हि। उपनयमात्रस्य कथं व्याप्त्यादिमल्लिङ्गस्मारकत्वादिकं ततस्साध्यधर्माप्रतीतेरिति शङ्कायां 'सिद्धत्वेन प्रतिज्ञायाः' इत्युक्तरीत्या प्रश्नवाक्येन वा साध्यप्रतीत्युपपत्त्येत्युक्तमेवोपनयमात्रस्यापि व्याप्त्यादिमल्लिङ्गस्मारकत्वादिकमतो व्याप्तिमाश्रित्येतद्वचर्थमेव स्यादत इदं साध्यप्रतीतौ प्रकारान्तरप्रदर्शनपरं ज्ञायत इति भावः।

तथा च साध्यप्रतीतिः प्रकारद्वयेन भवतीत्युक्तम्भवतीति द्रष्टव्यम्। **प्रागनुक्तमिति ।।** 'युक्तिः प्रतिज्ञारूपा च' इत्यत्रानुक्तमपीत्यर्थः ।

**(श्री.टि.) प्रतिज्ञार्थसिद्धीति ।।** 'सिद्धत्वेन प्रतिज्ञायाः' इत्युक्तरीत्या पर्वतस्याग्निमत्त्वं कुत इति प्रश्नवाक्येन प्रतिज्ञार्थसिद्धौ सत्यां केवला व्याप्तिरेव प्रमाणं व्याप्त्यादिमल्लिङ्गस्मारकत्वादिनोपयुक्ता स्यादित्यर्थः। **अन्य-थेति ।।** प्रतिज्ञार्थसिद्धिसमुच्चयानङ्गीकार इत्यर्थः। **पक्षधर्मतेति ।।** पक्षस्यैवाप्रतीत्या हेतोः पक्षधर्मता-प्रतीत्यसम्भवादित्यर्थः। **व्याप्त्युक्तीति ।।** कुत इति निमित्तप्रश्ने यो धूमवान् सोऽग्निमानिति व्याप्त्युक्ति-मात्रस्यान्वयाभावादित्यर्थः। **इत्याद्युक्तेरिति ।।** नियमेति वाच्येन तद्वाचकं पञ्चम्यन्तं पदमुपलक्ष्यत इत्युक्तम्भवति। इत्यादीत्यादिपदेन नियमेनेति तृतीयान्तपदग्रहणम्। **स्मारकत्वेति ।।** व्याप्त्यादिमल्लिङ्ग-स्मारकत्वेत्यर्थः। **सम्पूर्णप्रयोग इवेति ।।** समग्रपञ्चावयवोपेतवाक्यप्रयोगे सति यथा व्याप्त्यादिमल्लिङ्गस्मृत्यादिकं भवति तथेत्यर्थः। **सर्वार्थसङ्ग्राहकत्वादिति ।।** अवयवपञ्चकार्थस्याप्यत्र सद्भावादिति भावः। ननु तस्मात्तथेत्येवं निगमनस्य कथं सर्वार्थसङ्ग्राहकत्वं, तेन च साध्यादिप्रतीतिद्वारा कथं व्याप्त्यादिमल्लिङ्गस्मृत्यादीत्यत आह- **अग्निना व्याप्तस्येति ।।** महानस इति शेषः। **वाक्यं** निगमनवाक्यम्। तथा चाग्निना व्याप्तस्येत्यनेनोदाहरणार्थ-लाभः। धूमस्य पर्वते विद्यमानत्वादित्यनेन हेतूपनयवाक्यार्थलाभः, पर्वतोऽग्निमानित्यनेन प्रतिज्ञावाक्यार्थलाभः इत्येवं सर्वार्थसङ्ग्राहकत्वं निगमनवाक्यस्य द्रष्टव्यम्। **उक्तविधस्येति ।।** 'प्रतिज्ञा हेतुगर्भैव' इत्याद्युक्तप्रकारेण हेतुगर्भत्वादिविशेषयुक्तस्येत्यर्थः। **तद्भावभावित्वानुभवादिति ।।** पञ्चावयवप्रयोगानन्तरं जायमान-त्वानुभवादित्यर्थः। प्रतिज्ञादीनां हेतुगर्भप्रतिज्ञादीनाम्। प्रकृतोपयोगं दर्शयति- **एतेनेति ।।** पञ्चावयवनियमस्य आवश्यकत्वाभावप्रतिपादनेनेत्यर्थः।

**(पां.टि.) न स्फुरतीति ।।** तत्प्रत्यायकपदाश्रवणादिति भावः। प्रतिज्ञायाः पञ्चम्यन्तलिङ्गवचनगर्भत्व-स्यानुपपन्नत्वादाह- **हेत्वर्थेति ।।** तथाऽपि शब्दरूपप्रतिज्ञाया अर्थगर्भत्वमपि कथमित्यत आह- **हेत्वर्थ-विशेषणकेति ।। न चेदमिति ।।** तल्लक्षणानाक्रान्तत्वादिति भावः। **अधिकं न्यूनं चैतदिति ।।** प्रतिज्ञायामनपेक्षितस्य धूमवानित्यस्योक्तेरपेक्षितस्य हेत्वादेरप्रयोगादधिकं न्यूनं चेदं परोपदेशवाक्यमित्यर्थः। **औषधविशेषार्थत्वमिति ।।** अग्निशब्दस्य चित्रमूलकादावपि प्रयोगादिति भावः। **छलेनेति ।।** तदभिप्रेता-दर्थान्तरकल्पनेन तद्दूषणादिति भावः। विवादेन प्रश्नवाक्येन वा प्रतिज्ञाविषयसिद्धावपि तत्सिद्धेरभावात् तदुक्ति-रयुक्तेत्यतः प्रतिज्ञाशब्दं तद्विषयपरतयाऽनूद्य व्याचष्टे- **प्रतिज्ञार्थस्येति ।।** प्रतिज्ञाया दृष्टान्तवचनं प्रत्यवयव-ताया बाधितत्वादाह- **सहकारिणीति ।।** नन्वेवं परोपदेशस्य द्व्यवयवत्वप्रसङ्ग इत्यत आह- **तच्चेति ।।** प्रतिज्ञार्थ-भूतं धर्म्यादिकमित्यर्थः। किं हेत्वर्थसमुच्चयेनेत्यतस्तदसमुच्चये बाधकमाह- **अन्यथेति ।।** ननु केवलशब्दस्य व्याप्तिविशेषणत्वे केवलामिति स्त्रीलिङ्गेन भवितव्यम्। केवलमिति तु कथमित्यतोऽस्य क्रियाविशेषणत्वेन व्याप्तिविशेषणत्वाभावान्न तत्प्रसङ्ग इत्याशयेनाह- **केवलमितीति ।।** साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः। न चैवमपि क्रियायाः स्त्रीलिङ्गत्वात्तद्विशेषणत्वात् केवलशब्दे स्त्रीलिङ्गापत्तिरवर्जनीयेति वाच्यम्। 'क्रियाव्ययविशेषाणानां क्लीबत्वमेकवचनान्तत्वं च वाच्यम्' इति क्लीबत्वादिविधानेन तदप्रसङ्गात्। **(पां.टि.)** केवलं व्याप्तिवचनमाश्रित्य यथा भवति तथेति क्रियाविशेषणत्वोक्त्या लब्धमर्थं दर्शयति- **दृष्टान्तो-क्तिमप्यनपेक्ष्येति ।। पक्षान्तरेति ।।** व्याप्तिवचनाश्रयणेनोपनयस्य व्याप्त्यादिमल्लिङ्गबोधकत्वरूपपक्षान्तर-प्रदर्शनार्थमेव व्याप्तिमाश्रित्येत्युक्तम्। न तु व्याप्त्यादिवचनाश्रयणेनैवोपनयस्य व्याप्त्यादिमल्लिङ्गस्मृत्यादि-जनकत्वाभिप्रायेणेत्यर्थः। उक्तनियमाभिप्रायेणैव तदुक्तमिति किं न स्यादित्यत आह- **अन्यथेति ।।** अन्यथाऽप्युपपत्तेरिति सम्बन्धः। व्याप्तिवचनानाश्रयणेऽप्युपनयस्य व्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकत्वोप-पत्त्योक्तनियमासम्भवान्न नियमाभिप्रायेण तदुक्तिरङ्गीकर्तुं शक्येत्यर्थः।

कथमुपनयस्य व्याप्तिवचनानाश्रयणेऽपि व्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकत्वसम्भव इत्यतस्तं दर्शयति- **'सिद्धत्वेन प्रतिज्ञायाः' इत्युक्तरीत्येति ।।** 'प्रतिज्ञायाः प्रतिज्ञार्थस्य साध्यधर्मविशिष्टस्य धर्मिणो विवादतः, पर्वतस्याग्निमत्त्वं कुत इत्यादिप्रश्नवाक्येन वा सिद्धत्वेन बुद्धिस्थत्वेन कारणेन' इत्युक्तरीत्येत्यर्थः। ततश्च हेतो-रिवोपनयस्याप्युक्तरीत्या व्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकत्वं युक्तमिति भावः। तर्कताण्डवे तु 'व्याप्तिमाश्रित्ये-त्यपि पक्षान्तरमित्युक्त्योपनयस्य व्याप्तिमाश्रित्य व्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकत्ववत् प्रतिज्ञादेरपि व्याप्ति-माश्रित्य व्याप्त्यादिमल्लिङ्गस्मृत्यादिजनकत्वरूपपक्षान्तरमपि सूचितम्' इति वर्णितम्। भावबोधे तु 'यथा प्रतिज्ञादीनां हेतुगर्भत्वादिनैकैकधैव व्याप्त्यादिमल्लिङ्गस्मारकत्वादि न तथोपनयस्य। किन्तु भिन्नभिन्नसहकारि-योगेनानेकधा तत्स्मारकत्वादीत्येवंरूपपक्षान्तरेत्यर्थः। तदेव विपक्षे बाधकेनोपपादयति- **अन्यथेति ।।'**

इत्यु-क्तम् । तदसमुच्चये बाधककथनेन तस्यावश्यकत्वं सूचयति- **अन्यथेति ।।** नियमपदं नात्रार्थपरं किन्तु लक्षणया पञ्चम्यन्ततदुक्तिपरमित्याशयेनाह- **यो य इति ।।** ततश्च यो धूमवानसावग्निमानिति व्याप्त्युक्तिमात्रस्य कुतः पर्वतोऽग्निमानिति प्रश्नवाक्येन सहान्वयाभावेऽपि यो धूमवानसावग्निमानिति नियमादित्येवंरूपनियमोक्तेः प्रश्नवाक्येनान्वयसत्त्वान्नानुपपत्तिरिति भावः । तस्मात्तथेति निगमनस्य सर्वार्थसङ्ग्राहकत्वाभावात्तदुक्तिरयुक्ते-त्यतस्तस्यात्र निगमनशब्देनाविवक्षितत्वाद्विवक्षितस्य च सर्वार्थसङ्ग्राहकतायाः सत्त्वाददोष इति भावेन विवक्षित-निगमनस्वरूपं दर्शयति- **अग्निना व्याप्तस्येति ।।**

**(व्या.टि.)** प्रतिज्ञावयवस्य हेत्ववयवगर्भितत्वासम्भवमाशङ्क्य व्याचष्टे- **हेत्वर्थेति ।। एवार्थ इति ।।** एवस्यार्थ इत्यर्थः । **तदीय इति ।।** तच्छब्दस्य 'त्यदादीनि च' इति वृद्धसञ्ज्ञायाम् 'वृद्धाच्छः' इति छप्रत्यय इति भावः । सुस्मूर्षते, स्मरतेः सनि 'अज्झनगमां सनि' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वे 'हलि च' इति दीर्घे 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदे च रूपम्, स्मर्तुमिच्छति । **अनुसन्धत्ते** परामृशति । जिज्ञासते ज्ञातुमिच्छति वेति । व्याप्त्यादि-ग्रहाग्रहाभ्यां वा व्यवस्थितविकल्पः । नियमवादी शङ्कते- **अधिकमित्यादिना ।। ब्रवीतीति ।।** ब्रुवो लट ईट् । **वाचोयुक्तीनामिति ।।** 'वाक्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वलुग्वाच्यः' इत्यलुक्समासः । **सांव्याव-हारिकत्वेनेति ।।** संव्यवहारसिद्धत्वेनेत्यर्थः । लोकशास्त्रातिक्रमे बाधकमाह- **अन्यथेति ।। औषधविशे-षेति ।।** वैद्यशास्त्रेऽग्निशब्दस्य चित्रमूले प्रसिद्धेरिति भावः । **निगृह्यते** पराजीयते । **तदेवेति ।।** छलमेवेत्यर्थः । **(व्या.टि.) सममिति ।।** प्रकरणाद्यनुसन्धाने न्यूनाधिकत्वशङ्काया अप्यनुदयादित्यर्थः । निपुणतरमेतत् प्रमाणलक्षणे 'हेतुगर्भा प्रतिज्ञा केवलाऽपि' इत्यत्रोपपादितम् । एवं 'युक्तिः प्रतिज्ञारूपा' इत्युक्तमाक्षिप्य समाहितम् । हेतुरूपेत्येतदाक्षिपति- **नन्विति ।। स्मरणादीति ।।** ससम्बन्धिकपदार्थस्मरणे सम्बन्धिज्ञानस्य हेतुत्वादित्यर्थः । प्रतिज्ञापदेन तदर्थो लक्ष्यत इत्याह- **प्रतिज्ञार्थस्येति ।।** एतदप्युक्तं प्रमाणलक्षणे 'सिद्धौ प्रतिज्ञायां हेतुमात्रं च' इति । एवं दृष्टान्तरूपिकेत्येतत् साधयितुं पृच्छति- **नन्विति ।। तच्चेति ।।** प्रतिज्ञाऽवयव-त्वम् । तत्समुच्चेयं दर्शयति- **तेनेति ।।** तुशब्देन हेतुगर्भत्वसमुच्चयः कुत इत्यत आह- **अन्यथेति ।।** सति हेतुगर्भत्वसमुच्चये दृष्टान्तोऽपि भवति व्याप्त्यादिमल्लिङ्गस्मारक इति भावः । एतदप्युक्तं प्रमाणलक्षणे 'दृष्टान्तः सप्रतिज्ञो हेतुगर्भः' इति । तथोपनयरूपेत्युक्तं दृढयितुं शङ्कते- **लिङ्गधर्मिण इति ।। प्रतीतावपीति ।।** अपिर्गर्हा-याम् । ससम्बन्धिकपदार्थस्मरणे यावत्सम्बन्धिज्ञानं कारणम् । अन्यथा वनस्पतिमात्रप्रत्यक्षे वायुवनस्पतिसंयोग-स्मरणापत्तिरित्याशयेनाऽऽह- **साध्यधर्मस्येति ।।** व्याप्तिपदोपलक्ष्यमाह- **व्याप्तिवचनमिति ।। क्रियाविशेषण-मिति ।।** केवलमाश्रयणं कृत्वेत्यर्थः । **वर्तते** अनुवर्तते । **पूर्णत्वादिति ।।** आकाङ्क्षाया इति शेषः । **पक्षान्त-रेति ।।** उपनयस्य व्याप्त्यादिमल्लिङ्गस्मारकत्वे इति शेषः । एतदभावे कथमुपनयस्य युक्तिस्मारकत्वमित्यत आह- **अन्यथेति ।।** एतदनुक्तावित्यर्थः । **उपपत्तेरिति ।।** स्मारकत्वसम्भवादित्यर्थः । केवलव्याप्तिवचन-स्यासङ्गतत्वादपेक्षितसमुच्चयपरतया तुशब्दं व्याचष्टे-**प्रतिज्ञार्थेति ।।** समुच्चयपरतायामावश्यकतामाह-**अन्य-थेति ।। उक्तेराश्रयणादिति ।।** अनेन मूले नियमवचनाश्रयणादिति व्याख्यातं भवति । स्वरूपत इति भावप्रधानं मत्वाऽऽह-**सङ्ग्राहकत्वादिति ।। पञ्चाद्यवयवस्येति ।।** पञ्चप्रभृत्यवयवस्येत्यर्थः । **प्रयोगा इति ।।** हेतुमात्राद्य-वयवप्रयोगा इत्यर्थः । **समाहिता इति ।।** न्यूनाधिक्यराहित्येनेत्यर्थः ।

**मूलम् -** **विरोधश्च तथाऽधिक्यं न्यूनताऽसङ्गतिस्तथा ।**
**उपपत्तिदोषा विज्ञेया विरोधश्च स्वतोऽन्यतः ।**
**जनकस्यात्ययो जातिः स्वस्य वाऽन्यस्य वा भवेत् ।**
**जनकं प्रमाणमुद्दिष्टं स्वस्यार्थस्य प्रकाशनात् ।**
**निग्रहा एत एव स्युस्संवादानुक्तिसंयुताः ।।**

**(तं.मं.)** स विरोधो द्विविधः । स्वतो विरोधः स्वव्याहतिनामा । स्वदर्शनविरोधोऽपसिद्धान्ताख्यो वा । अन्यतो विरोधः प्रमाणान्तरविरोधः । जातेश्च विरोध एवान्तर्भाव इत्याह- **जनकस्येति ।।** प्रमाणत्वेनाभिमतस्य स्वस्य वाक्यस्यान्यस्य प्रमाणस्य वाऽत्ययो विरोधो जातिर्नाम । एतेष्वेव प्रतिज्ञाहान्यादीनां सर्वनिग्रहस्थानानामन्तर्भाव इत्याह- **निग्रहा इति ।।**

**टीका -** एवं निर्दोषोपपत्तिरूपेऽनुमाने निरूपिते निर्दोषताया दोषज्ञानाधीनत्वात् के ते उपपत्तिदोषा इत्यपेक्षायामाह-

**विरोधश्चेति ।।** योग्यताविरहो विरोधः । सत्यां सङ्गतावधिकत्वमाधिक्यम् । विवक्षितासम्पूर्तिर्न्यूनता । आकाङ्क्षाविरहोऽसङ्गतिः । अत्र विरोधोऽसङ्गतिश्चार्थदोषौ । तद्द्वारा शब्दस्यापि । न्यूनता(न्यूनाधि)धिक्ये वचनदोषौ । तद्द्वाराऽर्थस्यापि । अत एवार्थशब्दात्म-कत्वेनानुमानविभागकथनप्रस्तावे तथाविभक्ततद्दोषकथनं नासङ्गतम् ।

ननु कालात्ययापदिष्टत्वादयोऽनुमानदोषाः परैः परिगणिताः, तत् कथमेतदित्यतस्तेषामेते-ष्वेवान्तर्भावं सूचयितुं विरोधविभागमाह- **विरोधश्चेति ।।** इति द्विविध इति शेषः । **स्वत इति ।।** स्ववचनेन स्वक्रियया स्वन्यायेन स्वाभ्युपगमेन चेत्यर्थः । **अन्यतः** प्रमाणान्तरेण । एवमन्योऽपि विभाग ऊहनीयः ।

एवं विभागे सति किं लब्धमित्यतो दिक्प्रदर्शनाय जातेरन्तर्भावः सिद्ध इति सूचयितुं तत्स्वरूपं निरूपयति- **जनकस्येति ।।** स्वस्य वा जनकस्यान्यस्य वा जनकस्येति सामानाधिकरण्यम् । **अत्ययो**ऽतिक्रमो विरोधः । किं जनकमित्यत आह- **जनकमिति ।।** स्वस्यार्थस्य प्रकाशनात् स्वविषयप्रतिपादनात् । प्रमाणमिति ज्ञापकत्वमात्रेणोपचारः, स्वव्याहतस्य प्रामाण्यायोगात् । 'अन्येष्वपि दृश्यते' इति दृशिग्रहणान्निरुपपदात् प्रादुर्भावार्थाज्जनेरपादाने, ण्यन्ताद्वा कर्तरि डप्रत्यये कृते जमिति ज्ञापकं वाक्यमुच्यते । उपसर्गाश्च क्रियासन्निधाने सति तद्विशेषका भवन्ति । असन्निधाने तु ससाधनां क्रियामाहुः, यथा प्राचार्यः, प्रान्तेवासीति । ततोऽतिरत्ययस्य वाचकः । तथाच जस्य स्वाख्यस्यान्यस्य वा, जनकस्य ज्ञापकस्य, अतिः, अत्ययो जातिरित्युक्तं भवति । अन्यच्चात्र स्वक्रिया वा स्वन्यायो वा, अन्यथा कालातीतादेरपि जातित्वप्रसङ्गात् । एवं च स्वव्याहतिर्जातिः सा त्रिविधा, स्ववचनविरोधः स्वक्रियाविरोधः स्वन्यायविरोधश्चेति लभ्यते । तथाच स्वतो विरोधे जातेरन्तर्भावः सूचितो भवति । एवमन्येषामन्तर्भावो द्रष्टव्यः ।

न केवलमनुमानदोषाणां विरोधादिभिस्सङ्ग्रहः, किन्तु परनिरूपितानां सर्वनिग्रहस्थानाना-मपीत्याह- **निग्रहा इति ।।** निग्रहस्थानानि । **एत एव** विरोधादयः प्रतिज्ञाहान्यादयः । प्रतिज्ञा-हान्यादीनां वक्तृदोषाणां कथमर्थवचनदोषेषु विरोधादिष्वन्तर्भाव इत्यत आह- **संवादेति ।।** विप्रतिपन्नप्रमेयाभ्युपगमः **संवादः** । तूष्णीम्भावो**ऽनुक्तिः** । एताभ्यां संयुता विरोधादयः । एतेन प्रत्यभिज्ञाविरोधादिना वर्णानित्यत्वाद्यनुमानदूषणमुपपादितं भवति ।

**(र.टि.)** नन्वर्थशब्दात्मकत्वेनानुमानविभागस्योक्तत्वात्तद्दोषा अपि 'विरोधासङ्गती ह्यर्थे न्यूनाधिक्ये तु वाचिके' इत्येवं विभक्ततया वक्तव्याः । विरोधासङ्गत्योरर्थसम्बन्धित्वं न्यूनाधिक्ययोर्वचनसम्बन्धित्वमनभिधाय व्यामिश्रत्वेन च तदुक्तिरसङ्गतेत्यत आह- **अत एवेति ।।** चतुर्णामपि दोषाणामुक्तरीत्या द्विविधानु-मानसाधारण्यादेवेत्यर्थः । **स्ववचनेनेति ।।** स्ववक्तृकवाक्यगतपदावान्तरवाक्ययोस्तदन्तर्गतपदान्तरा-वान्तरवाक्यान्तरलक्षणस्ववचनेनेत्यर्थः । एवं स्ववचनविरोध इत्यत्रापि ज्ञातव्यम् । **स्वाभ्युपगमेन चेति ।।** स्वपूर्वाचार्याङ्गीकारेणेत्यर्थः । **एवमन्योऽपीति ।।** हेतुविरोधो द्विविधः असिद्धिरव्याप्तिश्च । दृष्टान्तविरोधो द्विविधः साध्यवैकल्यं साधनवैकल्यं चेत्यादिरूप इत्यर्थः । अन्यथा स्वरूपासिद्ध्यादेरन्तर्भावो न सिद्ध्येदिति भावः । **सामानाधिकरण्यमिति ।।** न तु स्वस्यान्यस्य वा यज्जनकं तस्येति वैयधिकरण्यमित्यर्थः । ननु प्रकाशनं ज्ञानव्यापारो ज्ञानं वा । उभयथा करणनिष्ठत्वाभावात् कथं ज्ञापकत्वे हेतुत्वेनोच्यत इत्यतो व्याचष्टे - **स्वविषयेति ।। ज्ञापकत्वमात्रेणेति ।।** स्वव्याहतवाक्यस्यापि ज्ञापकत्वेन तद्रूपगुणयोगेनेत्यर्थः । **दृशि-ग्रहणादिति ।।** अनेन 'सप्तम्यां जनेर्डः' इत्युक्त्वा उपपदविशेषयोगेन तद्विधायक 'पञ्चम्यामजातौ' इत्यादिसूत्रवत् सामान्यत उपपदयोगेन डप्रत्ययविधायकस्यास्य सूत्रस्य 'अन्येष्वपि' इत्येतावता पूर्णत्वे यद् दृशिग्रहणं करोति पाणिनिस्तेनेदं ज्ञापयति यत्र यत्रोपपदे सत्यसति वा डप्रत्ययकार्यं दृश्यते तत्र सर्वत्र डप्रत्ययो भवति । तथा कारकान्तरेऽपि वाच्ये डप्रत्ययो भवतीत्युक्तं भवति । व्याहतवाक्यस्यार्थजनकत्वाभावादाह- **प्रादुर्भावार्था-दिति ।।** 'स्वस्यार्थस्य प्रकाशनात्' इति मूलानुरोधेनैतदिति द्रष्टव्यम् । अन्यथा ज्ञानापेक्षया जनेरुत्पत्त्यर्थत्वोप-पत्तेः । **ण्यन्ताद्वेति ।।** अत्रापि प्रादुर्भावार्थाज्जनेरित्यनुवर्तते । कर्तरि अर्थज्ञापनलक्षणक्रियायाम् । **जमिति ज्ञापकमिति ।।** जन्यते ज्ञाप्यतेऽर्थोऽस्मादिति वा जनयति ज्ञापयत्यर्थमिदमिति वा जमिति वाक्यमुच्यत इत्यर्थः । **जस्य स्वाख्यस्येति ।।** तथा च मूले जनकस्येति कर्तरि षष्ठी । तथा च जेन जनकेन स्वाख्येन स्ववचनेन स्वक्रियया स्वन्यायलक्षणाख्येन वा वाक्यस्य विरोधो जातिरिति भावः । विरोधादीनां

परपराजयादि-रूपत्वाभावादाह- **निग्रहस्थानानीति ।।** निगृह्यते पर एभिरिति व्युत्पत्तेरिति भावः ।

**(रा.टि.) योग्यतेति ।।** अन्योन्यान्वय (घटकयोग्यता) विरह इत्यर्थः । **सत्यां सङ्गताविति ।।** आकाङ्क्षा-पूर्तौ सत्यामित्यर्थः । **आकाङ्क्षेति ।।** पदानामन्योन्याकाङ्क्षाविरह इत्यर्थः । ननु व्याप्त्यादिमल्लिङ्ग-रूपानुमानस्यार्थरूपत्वेनाशब्दत्वादर्थदोष एवात्र वक्तव्यो न वचनदोष इत्यत आह- **अत एवेति ।।** वचनद्वारा अर्थस्यापि दोषत्वादेवेत्यर्थः । परम्परया दोषरूपस्यात्रोक्तौ का सङ्गतिरित्यत उक्तम्- **अर्थशब्दात्मकत्वे-नेति ।।** 'युक्तिः प्रतिज्ञारूपा च' इत्यादिना 'त्रियाद्यवयवात्मिकाम्' इत्यादिना च व्याप्त्यादिमल्लिङ्ग-परोपदेशरूपार्थशब्दात्मकत्वेन परार्थानुमानविभागकथनप्रस्ताव इत्यर्थः । **एवमन्य इति ।।** असङ्गत्यादौ विभाग इत्यर्थः । स च पद्धत्यादौ व्यक्तः । यद्वा प्रमाणान्तरेणेत्यत्रापि समबलप्रमाणप्रबलप्रमाणेति प्रत्यक्ष-विरोधानुमानविरोधभेदेन अन्यविरोधविभाग इत्यर्थः । अथवा प्रतिज्ञाहेतुदृष्टान्तविरोधभेदेन अन्यो विरोधविभाग **(रा.टि.)** इत्यर्थः । एतेषामुदाहरणानि लक्षणादिग्रन्थान्तरे व्यक्तानि । स्वान्ययोर्जनकस्येति भ्रमनिरासायाऽह- **इति सामानाधिकरण्यमिति ।।** स्वस्यार्थस्येत्यस्य व्याख्या- **स्वविषयेति ।।** यस्य वाक्यस्य विरोध उच्यते तदत्र स्वपदेन गृह्यते । स्वस्य यो विषयः स स्वविषयः । वाक्यनिष्ठत्वलाभाय प्रकाशनादित्यस्य प्रतिपादनादित्यर्थ उक्तः । उपचारः कुत इत्यत आह- **स्वव्याहतस्येति ।।** स्वेनैव व्याहतस्य विरुद्धस्येत्यर्थः । जनकस्येत्या-दिनोक्तोऽर्थो जातिपदेन कथं लब्ध इत्यत आह- **अन्येष्वपीति ।।** 'सप्तम्यां जनेर्डः', 'पञ्चम्यामजातौ' इति सूत्रद्वयेन सप्तम्याद्युपपदे जनेर्डप्रत्ययं विधायान्येष्वपि प्रातिपदिकेषु निरुपपदेष्वपि डप्रत्ययो दृश्यत इत्युक्तत्वाद् दृशिग्रहणादित्युक्तम् । **प्रादुर्भावार्थादिति ।।** 'जनी प्रादुर्भावे' इति धातुपाठादिति भावः । **अपादान इति ।।** 'अपादाने पञ्चमी' इत्युक्तेः जायते ज्ञायतेऽस्मादित्यर्थे डप्रत्यय इत्यर्थः । जनयतीति जनकं न तु जायत इति । अतो जनक इत्यर्थलाभायाऽह- **ण्यन्ताद्वेति ।।** तथाच जन् णि ड इति स्थिते 'चुटू' इति डकारव्यञ्जनस्य, 'णेरनिटि' इति णिप्रत्ययस्य, 'डित्यभस्यापि टिलोपः' इत्यन् इत्यस्य च लोपे कृदन्तत्वेन 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तौ जमिति रूपमिति भावः । नचात्र णिचि परतः 'अत उपधायाः' इत्युपधावृद्धिः शङ्क्या । टिलोपेन तस्यापि लोपात् । अतिरित्यनेन अत्यय इत्यर्थलाभप्रकारमाह- **उपसर्गाश्चेति ।। तद्विशेषका इति ।।** अर्थान्तरापादका इत्यर्थः । अतिशेतेऽनुभवति प्रतिष्ठत इत्यादौ तथा दृष्टेरिति भावः । यद्वा प्रभवतीत्यादौ प्रकृष्टत्वाद्यतिशयाधायका इत्यर्थः । **ससाधनामिति ।।** कर्तृकरणादिरूपं साधनं निमित्तं प्रत्ययोत्पत्तौ यस्याः क्रियायाः सा ससाधना, तामित्यर्थः । 'यो व्यतीरवीविपत् । यो व्यतीरभाणयत्' इत्यादौ विशेषेणाधि-कानित्यर्थदर्शनादिति भावः । **प्राचार्य इति ।।** 'प्रादयो गताद्यर्थे प्रथमया' इति समासेन प्रगत आचार्यः प्राचार्यः प्रगतोऽन्तेवासी प्रान्तेवासीत्यत्र प्रेत्युपसर्गः कर्तृसाधनप्रत्ययान्तगमनक्रियां वक्ति यथा, तथाऽत्रापि 'इण् गतौ' इति क्रियां भावसाधनयुक्तां वक्तीत्यर्थः । **तत इति ।।** उपसर्गाणां ससाधनक्रियावाचित्वस्यापि सत्त्वादित्यर्थः । उभयत्रापि जस्येत्यस्यार्थो-**ज्ञापकस्येति ।।**

ननु स्वस्य ज्ञापकस्यात्ययो विरोधः स्वेनैवेति व्यक्तः । अन्येन स्वस्य जस्यात्यय इत्यत्र अन्यत्किं प्रत्यक्षादिः प्रमाणान्तरं वा ततोऽन्यद्वेत्यत आह- **अन्यचात्रेति ।।** कुत एवमित्यत आह- **अन्यथेति ।।** अन्यपदेन प्रमाणान्तरग्रहणे सति प्रबलप्रमाणविरोधः कालातीतः, समबलप्रमाणविरोधः सत्प्रतिपक्ष इति तयोरपि जात्युत्तरत्वापत्त्या अनुमानदोषत्वेन सदुत्तरता न स्यादिति भावः । उदाहरणमेतेषां पद्धत्यादौ व्यक्तम् । त्रयाणां जातित्वे सङ्ग्राहकं धर्मं वदन् फलितमाह- **एवं चेति ।।** अस्त्वेवं जातिस्वरूपं क्वान्तर्भावोऽस्या इत्यत आह- **तथाचेति ।।** जातेरुक्तरूपत्वे सति 'विरोधश्च स्वतोऽन्यतः' इत्युक्तस्वतोविरोध इत्यर्थः । **अन्येषामिति ।।** परोक्ताशेषानुमानदोषाणामित्यर्थः । स च व्यक्तोऽन्यत्रेति भावः । शङ्कते- **प्रतिज्ञेति ।। एताभ्यां संयुता इति ।।** द्वावर्थदोषौ द्वौ वचनदोषौ द्वौ पुरुषदोषौ । तथाच परोक्तार्थवचनपुरुषदोषाणां यथायोगं तेष्वन्तर्भाव इति भावः । **एतेनेति ।।** विरोधविभागकथनेन । अन्यतो विरोध इत्युक्त्या प्रतिज्ञाविरोधस्याप्यन्यत इत्यनेन प्राप्तत्वादुपपादितमित्यर्थः । इति युक्तिदोषोक्तिः ।

**(श्री.टि.) तद्द्वारेति ।।** अर्थस्य दुष्टत्वे तत्प्रतिपादकशब्दस्यापि दुष्टत्वादिति भावः । **तद्द्वारेति ।।** वचनस्य दुष्टत्वे तत्प्रतिपादितार्थस्यापि दुष्टत्वादिति भावः । ननु द्विविधमनुमानं स्वार्थं परार्थं चेत्यर्थशब्दात्मकत्वे-नानुमानविभागस्योक्तत्वात्तद्दोषा अपि 'विरोधासङ्गती ह्यार्थे न्यूनाधिक्ये तु वाचिके' इत्येवं विभक्ततया वक्तव्यम् । तथाच विरोधासङ्गत्योरर्थसम्बन्धित्वं न्यूनाधिक्ययोर्वचनसम्बन्धित्वं मनसि निधाय 'विरोधश्च तथाऽऽधिक्यम्' इत्यर्थवचनदोषयोर्न्यूनतासङ्गतिरिति वचनार्थदोषयोश्च व्यामिश्रतयोक्तिः कुत इत्यत आह- **अत एवेति ।।** चतुर्णामपि दोषाणामुक्तरीत्या द्विविधानुमानसाधारण्यादेवेत्यर्थः । अर्थेति स्वार्थानुमानम्, तत्र शब्दप्रयोगाभावात् । शब्देति परार्थानुमानम् । **तथा विभक्तेति ।।** अर्थशब्दात्मकत्वेन विभक्तेत्यर्थः ।

तद्दोषकथनम् अर्थशब्दात्मकानुमानदोषकथनम् । **स्ववचनेनेति ॥** एकस्मिन्नेव वाक्ये पदयोरवान्तरवाक्ययोर्वा परस्परं विरोधः स्ववचनविरोधः । यथा मे माता वन्ध्या इति तदुदाहरणम् । स्वक्रियाविरोधो मूकोऽहमिति । मेयं मानसापेक्षं न भवतीति स्वन्यायविरोधः । स्वपूर्वाचार्याङ्गीकारेण विरोधः स्वाभ्युपगमविरोधः । पूर्वा-चार्यवचनस्यापि स्वेनाङ्गीकृतत्वात् । अपसिद्धान्त इति यावत् । यथा मीमांसकस्येश्वराभ्युपगम इति द्रष्टव्यम् । इदं च न साक्षाद्विरोधविभागकथनपरम् । किं नाम? विरोधप्रभेदरूपो यस्स्ववाक्यविरोधः तत्प्रभेदरूपा या जातिस्तद्विभागकथनपरमित्यवधेयम् । **एवमन्योऽपीति ॥** हेतुविरोधादिविभाग इत्यर्थः । इयमत्र विभाग-परिशुद्धिः । विरोधस्तावद् द्विविधः; समयबन्धप्रश्नस्वपक्षसाधनादिरूपकथासाधारणोऽनुमानमात्रनिष्ठश्चेति । अनुमानविरोधस्त्रिविधः, प्रतिज्ञाहेतुदृष्टान्तविरोधभेदेन । प्रतिज्ञाविरोधोऽपि द्विविधः प्रमाणविरोधः स्ववाक्य-विरोधश्चेति । प्रमाणविरोधोऽपि द्विविधः, प्रबलप्रमाणविरोधस्समबलप्रमाणविरोधश्चेति । स्ववाक्यविरोधोऽपि द्विविधः, अपसिद्धान्तो जातिरिति । जातिस्त्रिविधा स्ववचनविरोधस्स्वक्रियाविरोधस्स्वन्यायविरोधश्चेति । हेतुविरोधोऽपि द्विविधः, स्वरूपासिद्धिरव्याप्तिश्चेति । अव्याप्तिस्त्रिविधा, साध्येन सम्बन्धस्तदभावेनापि सम्बन्धः साधारणानैकान्तिक इति यावत् । साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्धो विरुद्ध इति यावत् । उभय-सम्बन्धाभावोऽसाधारणानैकान्तिक इति यावदिति । दृष्टान्तविरोधोऽपि द्विविधः साध्यवैकल्यं साधनवैकल्यं चेति ।

**॥ जातेरन्तर्भावः सिद्ध इति ॥** प्रतिज्ञाविरोधप्रभेदरूपस्ववाक्यविरोध इति शेषः । **सामानाधिकरण्य-मिति ॥** स्वाख्यजनकस्य अन्यरूपजनकस्येति सामानाधिकरण्यं न तु स्वस्य यज्जनकं तस्य अन्यस्य यज्जनकं तस्येति वैयधिकरण्यमित्यर्थः । ननु प्रकाशनं ज्ञानव्यापारो ज्ञानं वा, उभयथा करणनिष्ठत्वाभावाद्वाक्यस्य ज्ञापकत्वे कथमयं हेतुः स्यादित्यत आह- **स्वविषयप्रतिपादनादिति ॥ उपचार इति ॥** स्वव्याहतवाक्यस्यापि ज्ञापकत्वेन प्रमाणभूतवाक्यस्वव्याहतवाक्ययोर्ज्ञापकत्वरूपगुणयोगादित्याशयः। उपचारे बीजं स्वयमेव दर्शयति- **स्वव्याहतस्येति ॥** ननु जातिरित्यत्र जशब्देन ज्ञापकं वाक्यम् अतीत्यनेनात्ययश्च कथं लभ्यत इत्यतस्तद्दर्शयति- **अन्येष्वपीत्यादिना ॥** 'जनी प्रादुर्भावे' प्रादुर्भावो विषयप्रकाशनं विषयप्रतिपादनमिति यावत् । एवं च प्रादुर्भा- **(श्री.टि.)** वार्थाज्जनेरपादाने जन्यते ज्ञाप्यतेऽर्थोऽस्मादित्यपादानविवक्षायां डप्रत्यये डित्त्वविधानसामर्थ्यादभ-स्यापि टिभूतान् इत्यस्य लोपे ज् अ जेति ज्ञापकं वाक्यं जन्यते ज्ञाप्यतेऽर्थो यस्मादिति व्युत्पत्त्योच्यते । ननु कथमेतत्? 'सप्तम्यां जनेर्डः' सप्तम्यन्त उपपदे जनेर्धातोर्डप्रत्ययः स्यात् । यथा पङ्के जातं पङ्कजम् । 'पञ्चम्यामजातौ' जातिवर्जे पञ्चम्यन्ते उपपदे जनेर्डस्स्याद्भूते, पद्माज्जातः पद्मज इति । अजातौ किम् अश्वाज्जातो अश्वजः इति नैव भवति । 'अन्येष्वपि दृश्यते' अन्येष्वप्युपपदेषु सत्सु जनेर्डो दृश्यते । यथा द्विर्जायते इति द्विज इति । एवं सूत्रत्रयेण सोपपदजनिधातोरेव डप्रत्ययविधानात् प्रकृते च जनेर्निरुपपदत्वात् कथमत्र डप्रत्ययप्राप्तिर्येन जमिति रूपं स्यादित्यत उक्तम्- **अन्येष्वपि दृश्यत इति दृशिग्रहणान्निरुपपदादिति ॥** अयमर्थः । यद्यत्र सोपपद-जनिधातोरेव डप्रत्ययोऽभिप्रेतः स्यात्तदा अन्येष्वपीति सूत्रे दृशिग्रहणं व्यर्थं स्यात् । अन्येष्वपीत्येतावतैव विवक्षितार्थसिद्धेः । 'पञ्चम्यामजातौ' इत्यत्रेव अत्रापि जनेर्डप्रत्यय इत्यस्यानुवृत्तिसम्भवात् । अतो 'व्यर्थं सत्किञ्चिदिष्टं ज्ञापयति' इति न्यायेन दृशिग्रहणसामर्थ्याद्यत्र यत्रोपपदे सत्यसति च डप्रत्ययकार्यं दृश्यते तत्र सर्वत्र डप्रत्ययो भवतीति ज्ञायते । अतोऽत्र निरुपपदजनिधातोरेव डप्रत्यये जमिति रूपं युक्तमिति भावः । प्रकारान्तरमप्याह- **ण्यन्ताद्वा कर्तरीति ॥** अत्र निरुपपदात्प्रादुर्भावार्थाज्जनेरित्येतावदनुवर्तते । तथा च 'जनी प्रादुर्भावे' अस्माण्णिच्, तस्य च 'णेरनिटि' इति लोपे जनिधातुर्णिजन्तस्तस्मादर्थज्ञापनलक्षणक्रियायां कर्तर्यभिधेये सति डप्रत्यये टिलोपे जनयति ज्ञापयत्यर्थमिति व्युत्पत्त्या जमिति ज्ञापकं वाक्यमुच्यत इत्यर्थः ।

ननु तथाऽप्यतीत्युपसर्गस्य अत्यय इत्यर्थप्रदर्शनमयुक्तम् । उपसर्गाणां क्रियागतविशेषप्रकाशकत्वात् । प्रकृते च क्रियासमभिहाराभावेन तदयोगादित्यत आह- **उपसर्गाश्चेति ॥ तद्विशेषका इति ॥** क्रिया धात्वर्थः तद्विशेषका इत्यर्थः, यथा प्रजयतीत्यादौ प्रादयः 'धाताेवेव विलीनोऽर्थ उपसर्गेण काश्यते । प्रहाराहारसंहार-विहारपरिहारवत्' इति वचनात् । **ससाधनामिति ॥** कारकगतामित्यर्थः । यथा प्राचार्यः, प्रान्तेवासीत्यादौ प्रादिरुपसर्ग आचार्यादिरूपकर्तृकारकगतां गमनक्रियामेव वक्ति । तथा च प्रगत आचार्य आचार्यस्य गमनं जातमित्यर्थः । एवमन्तेवासिनोऽपि गमनं जातमित्यर्थः । ननु प्रगत आचार्य इत्यत्र गत इति कर्तारमपि वक्तीति प्रतीयते इति चेत्सत्यं कर्तृसम्बन्धं विहाय केवलक्रियामात्रस्य प्रदर्शयितुमशक्यत्वादेव तथा प्रदर्शनम् । न तु कर्तारमपि वक्तीत्याशयेनेति ध्येयम् । ततः किं प्रकृत इत्यत आह- **तत इति ॥** प्रकृते क्रियासन्निधानाभावादि-त्यर्थः । **अत्ययस्येति ॥** कर्तृभूतवाक्यनिष्ठविरोधरूपक्रियया इत्यर्थः । **जस्य स्वाख्यस्येत्यादि ।** कर्तरि षष्ठी । स्वाख्येन जनकेन अन्येन वा जनकेनेत्यर्थः । **स्वक्रिया स्वन्यायो वेति ॥** न तु प्रमाणान्तरमित्यर्थः । तथा च जेन जनकेन स्वाख्येन स्ववचनेन स्वक्रियास्वन्यायलक्षणान्येन

वा वाक्यस्यातिरत्ययो विरोधो जातिरुच्यत इति भावः। ननु 'अन्यच्चात्र स्वक्रिया स्वन्यायो वा' इति कुतो व्याख्यायते। अन्यदित्यनेन प्रमाणान्तरं गृहीत्वा तद्विरोधो जातिरिति कस्मान्नोच्यत इत्यत आह- **अन्यथेति ॥** अन्यदिति प्रमाणान्तरं गृहीत्वा तद्विरोधस्य जातित्वाभिधाने कालातीतसत्प्रतिपक्षयोरपि जातित्वप्रसङ्ग इत्यर्थः। ननु 'जनकस्यात्ययो जातिः' इत्यनेन **(श्री.टि.)** स्ववचनविरोधः स्वक्रियाविरोधः स्वन्यायविरोधश्च जातिरित्युक्तं स्यात्। तथा चाननुगम इत्याशङ्क्य सामान्यलक्षणं वदन् मूलं विभागकथनपरतया योजयति- **एवं चेति ॥** 'जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम्' इति कारिकानुसारेणाऽह- **स्वव्याहतिर्जातिरिति ॥** 'जातेरन्तर्भावः सिद्ध इति सूचयितुं तत्स्वरूपं निरूपयति' इत्युक्तम्। अनेन कुत्रान्तर्भावः सूचित इत्यत आह- **तथा च स्वतो विरोध इति ॥** प्रतिज्ञाविरोधप्रभेदरूपे स्ववाक्यविरोध इत्यर्थः। अन्येषां हेत्वाभासानाम्। तत्र असिद्धविरुद्धसाधारणानैकान्तिकासाधारणा-नैकान्तिकानां हेतुविरोधेऽन्तर्भावः। बाधसत्प्रतिपक्षयोः प्रमाणविरोध इत्यादि द्रष्टव्यमित्यर्थः। ननु विरोधादीनां परपराजयरूपत्वाभावादेत एव निग्रहा इति परपराजयरूपनिग्रहत्वं कथमुच्यत इत्यत आह- **निग्रहस्थाना-नीति ॥** परपराजयनिमित्तानीत्यर्थः। तथा च निगृह्यते पराजीयते एभिरिति व्युत्पत्त्या निग्रहशब्देन निग्रह-स्थानान्युच्यन्त इत्यर्थः। 'अखण्डिताहङ्कृतिना पराहङ्कारखण्डनम्। निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यते' इति कारिकावचनादिति भावः। प्रकृतोपयोगं दर्शयति- **एतेनेति ॥** विरोधस्यानुमानदूषणत्वकथनेनेत्यर्थः। तथा च विरोधस्यानुमानदूषणत्वाभावात्प्रत्यभिज्ञाविरोधेन वर्णानित्यत्वानुमानं कथं दूषितमिति शङ्काऽनव-काशः। प्रत्यभिज्ञाविरोधो हि प्रबलप्रमाणविरोधः। स चानुमानविरोधप्रभेदभूतो यः प्रतिज्ञाविरोधः तत्प्रभेदभूतो यः प्रमाणविरोधस्तत्प्रभेदभूतः। एवं च तद्विरोधकथनेनानुमानदूषणं युक्तमिति भावः।

**(पां.टि.) योग्यताविरह इति ॥** साधनाभिमतस्यार्थस्य साध्याभिमतेनार्थेन सम्भावितप्रतीतिकस्यापि साध्यसाधनभावस्य बाधलक्षणमयोग्यत्वमित्यर्थः। नन्वेवं सति सिद्धसाधनताऽपि विरोध एव स्यात्। न हि सिद्धस्य साध्यता सम्भवति। न चास्त्विति वाच्यम्। तथा सति 'सिद्धसाधकोऽसङ्गतः' इति स्ववचनविरोधात्, इति चेन्न। सति साकाङ्क्षत्वेऽन्वयायोग्यत्वं विरोधः। न च सिद्धसाधनस्य साकाङ्क्षताऽस्तीति नासौ विरोधेऽ-न्तर्भवतीति भावः। **सत्यां सङ्गताविति ॥** सत्यामाकाङ्क्षायामित्यर्थः। आकाङ्क्षितस्याप्यन्येन कृतकार्यस्य प्रयोगोऽधिकमित्यर्थः। नित्यत्वानित्यत्वविप्रतिपत्तौ वर्णात्मकः शब्दो नित्यो गुणश्चेत्यादौ अनित्यत्वप्रतिज्ञयैव कृतकार्येऽर्थान्तरेऽतिव्याप्तिवारणाय अन्येन कृतकार्यस्येत्युक्तम्। **विवक्षितेति ॥** अवश्यवक्तव्यस्य एकदेशावचनविशिष्टमेकदेशवचनमित्यर्थः। अधिकापेक्षयैकदेशवचनत्वात्सम्पूर्णप्रयोगेऽतिव्याप्ति-वारणायावश्यवक्तव्यस्येत्युक्तम्। सम्पूर्णप्रयोगे एकदेशवचनस्यापि भावादतिव्याप्तिरित्यत उक्तम्। एक-देशावचनविशिष्टमिति ॥ अनुक्तावतिव्याप्तिवारणाय एकदेशवचनमित्युक्तम्। **आकाङ्क्षाविरह इति ॥** प्रतिज्ञाविषये आकाङ्क्षालक्षणसम्बन्धविरह इत्यर्थः। **अर्थदोषाविति ॥** साक्षादुपपत्तित्वाभिमतार्थदोषावि-त्यर्थः। परार्थानुमानसाधारण्यार्थमाह- **तद्द्वारेति ॥** दुष्टार्थप्रतिपादकवचनस्यापि तेन दोषेण दुष्टत्वादि-त्यर्थः। **न्यूनेति ॥** द्वन्द्वान्ते श्रूयमाणस्य भावशब्दस्य प्रत्येकमभिसम्बन्धान्न्यूनत्वाधिकत्वे इत्यर्थः। **वचन-दोषाविति ॥** साक्षादिति शेषः। परार्थानुमान एव तद्दर्शनादिति भावः। **तद्द्वारेति ॥** वचनदोषात्तत्प्रति-पादितोपपत्तेरपि दुष्टत्वादिति भावः। नन्वर्थशब्दात्मकत्वेनानुमानविभागस्योक्तत्वात्तद्दोषाणामपि 'विरोधा-**(पां.टि.)** सङ्गती ह्यार्थे न्यूनाधिक्ये तु वाचिके' इत्येवं विभक्ततया वक्तव्यत्वाद्विरोधासङ्गत्योरार्थत्वं न्यूनाधिक्य-योर्वचनसम्बन्धित्वमनभिधाय व्यामिश्रतया तत्कथनमसङ्गतमित्यत आह- **अत एवेति ॥** साक्षात्परम्परा-साधारण्येन चतुर्णामपि द्विविधानुमानदोषत्वादेवेत्यर्थः। **स्वत इति स्ववचनेनेत्यादि ॥** अनेन स्वेनेति स्वत इति मूले आद्यादित्वात्तृतीयान्तात्तसिरित्युक्तं भवति। **प्रमाणान्तरेणेति ॥** अनेनान्येनेत्यन्यत इति तृतीयान्तादेव तसिरित्युक्तं भवति। **एवमिति ॥** प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेति प्रमाणविरोधविभागः, असङ्गतिरप्यनेकविधेति तद्विभागश्च द्रष्टव्य इत्यर्थः। स्वस्य यज्जनकं तस्येति, अन्यस्य यज्जनकं तस्येति च व्यधिकरणषष्ठीत्वभ्रमनिरासायाह- **स्वस्य वा जनकस्येति ॥** मुख्यत्वे बाधकमाह- **स्वव्याहतस्येति ॥** ननु 'सप्तम्यां जनेर्डः' इत्यादिना सोपपदादेव जनेर्डप्रत्ययविधानादत्र च पङ्कजादाविव सोपपदत्वाभावात् कथं निरुपपदाज्जनेर्डप्रत्यय इत्यत आह- **अन्येष्वपीति ॥** यद्यप्यत्रापिशब्दस्य सर्वोपाधिव्यभिचारार्थताया वृत्त्यादौ स्थितेः, अपिशब्दबलादेव निरुपपदात् प्रादुर्भावार्थाज्जनेर्डप्रत्यय इत्येव वक्तुमुचितम्। तथाऽपि दृशिग्रहणस्य तत्र प्राप्तातिप्रसङ्गपरिहारार्थत्वस्य तत्रैव सिद्धेः केवलेन तेन तदसिद्धिरित्यभिप्रेत्य तदुक्तमिति द्रष्टव्यम्। **अपादान इति ॥** जायतेऽस्मादित्यपादाने प्रादुर्भावार्थाज्जनेर्डप्रत्यये डित्त्वाट्टिलोपे जमिति ज्ञापकं वाक्यमुच्यत इति सम्बन्धः। **ण्यन्ताद्वा कर्तरीति ॥** अन्तर्णीतण्यर्थात् प्रादुर्भावार्थाज्जनेर्जनयति ज्ञापयतीति कर्तरि डप्रत्यये डित्त्वाट्टिलोपे जमिति ज्ञापकं वाक्यमुच्यत

इति सम्बन्धः ।

नन्वस्तु जमित्यनेन ज्ञापकस्य स्वस्यान्यस्य वा लाभस्तथापि न अतिरित्यनेनात्ययस्य लाभः सम्भवति । अतेरुपसर्गतया क्रियागतातिशयद्योतकत्वस्य व्युत्पन्नत्वेन क्रियासन्निधाने तद्गतातिशयद्योतकत्वेऽपि प्रकृते तदसन्निधानेन तद्गतातिशयद्योतकत्वासम्भवादित्यतो नायमस्ति नियमो य उपसर्गाः क्रियागतातिशयद्योतका एवेति । तथा सति प्राचार्यः प्रान्तेवासीत्यादौ क्रियाया असन्निधानेन तद्गतातिशयसमर्पकत्वासम्भवप्रसङ्गात् । यत्र क्रियासन्निधानं तत्रैव । यत्र त्वसन्निधानं तत्र सातिशयक्रियावाचका एवेत्यतोऽत्र अतेरत्ययवाचकत्वोप-पत्तेर्युक्तोऽनेनात्ययस्य लाभ इत्याह- **उपसर्गाश्चेति ॥ स्वन्यायो वेति ॥** प्रागुक्तः स्वाभ्युपगमस्तु स्ववाक्य-विरोधीयापसिद्धान्तरूपद्वितीयकोटिघटक इति नेहोक्त इति ज्ञेयम् । ननु 'विरोधश्च स्वतोऽन्यतः' इत्यत्रैव अन्यशब्दस्य प्रमाणान्तरपरत्वमेवास्तु किं स्वक्रियादिमात्रपरत्वाश्रयणेनेत्यत आह- **अन्यथेति ॥ एव-मिति ॥** अन्येषां बाधसत्प्रतिपक्षादीनां यथायोग्यं प्रमाणविरोधादावन्तर्भावो वाच्य इत्यर्थः । **तूष्णीम्भाव इति ॥** परबोधनार्थं वक्तव्यस्यावचनमित्यर्थः ।

**(व्या.टि.) दोषज्ञानेति ॥** अभावज्ञाने प्रतियोगिज्ञानस्य सामान्यसामग्रीत्वादिति भावः । मूले चतथाशब्दौ परस्परसमुच्चये । उद्देशक्रमेण विरोधादीन् लक्षयति- **योग्यतेत्यादिना ॥** आधिक्यस्यानाकाङ्क्षिताभिधान-रूपत्वेनासङ्गतावन्तर्भावः स्यादित्यत आह- **सत्यामिति ॥** साकाङ्क्षत्वेऽप्यन्येन कृतकार्यत्वात्तद्वचनं दोषान्तर-मिति भावः । असम्पूर्तिर्वचनेनेति शेषः । अत्रोपपत्तिदोषा इति सामान्योक्त्या साक्षाद्दोषत्वभ्रान्तिं वारयितुं **(व्या.टि.)** विविनक्ति- **अत्रेति ॥** ननूपपत्तिदोषप्रश्ने तद्वचनदोषनिरूपणमसङ्गतमित्याशङ्क्योपपत्तेरपि परार्थाया अर्थशब्दात्मकत्वात् तथाविभक्ततद्दोषनिरूपणमपि नासङ्गतमित्याह (त्यत आह)- **अत एवेति ॥** स्वार्थपरार्थभेदेनार्थशब्दात्मकत्वेनेत्यपरे । एतेषु विरोधादिषु । **इतीति ॥** प्रतियोगिद्वैविध्येनेत्यर्थः । स्वत इत्यत्र स्वशब्देनाऽत्मीयवाचकेन वचनक्रियान्यायाभ्युपगमाश्चत्वारो विरोधप्रतियोगितयोपादीयन्त इत्याशयेन व्याचष्टे- **स्वत इति ॥** विरोधप्रतियोग्यन्यपदार्थमाह- **प्रमाणान्तरेणेति ॥** यथोक्तं प्रमाणलक्षणे - 'विरोधो मानस्व-वाक्याभ्याम्' इति । प्रमाणान्तरविरोधादेवमप्यवान्तरविभागो विज्ञेय इत्याह- **एवमन्योऽपीति ॥ ऊहनीय इति ॥** 'प्रतिज्ञाहेतुदृष्टान्तभेदेन' इति प्रमाणलक्षणानुसारेणेति शेषः । **दिक्प्रदर्शनायेति ॥** जात्यन्तर्भाव-वदशेषनिग्रहान्तर्भावसूचनायेत्यर्थः । **सामानाधिकरण्यमिति ॥** स्वान्यपदाभ्यां जनकपदस्येत्यर्थः । सामाना-धिकरण्यं तु भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः । अन्वयं दर्शयति- **स्वस्येति ॥** स्वरूपस्येत्यर्थः । मूले स्वस्यार्थस्येति व्यधिकरणं मत्वा व्याचष्टे- **विषयेति ॥** उपचारे बीजमाह- **ज्ञापकत्वमात्रेणेति ॥** मुख्ये बाधकमाह- **स्वव्याहतस्येति ॥**

ननु 'सप्तम्यां जनेर्डः' इति 'पञ्चम्यामजातौ' इति वा सत्युपपदे कर्तरि डविधानात् कथं निरुपपदाज्जनेर्ड-प्रत्ययान्तपदप्रयोग इत्यतोऽपादाने कर्तरि च डं साधयति- **अन्येष्वपीति ॥** श्रुतसप्तम्याद्यन्योपपदेषु द्विजादिपदेषु, अनुपपदेषु 'अकृष्या(दि)असेधादपसन्ननोजाः' इत्यादिषु दर्शनादत्रापि निरुपपदाड्डप्रत्ययो निष्प्रत्यूह एवेति भावः । अपादान इति कर्तरीति च व्युत्पत्तिप्रकारं दर्शयति- **प्रादुर्भावार्थाज्जनेरिति ॥** जायते प्रादुर्भवत्यस्मादिति व्युत्पन्नोऽयं जशब्दोऽपादानसाधनः, जनयति प्रादुर्भावयतीति व्युत्पत्त्या कर्तृसाधनोऽयं जशब्द इति भावः । **ण्यन्तादिति ॥** अन्तर्णीतण्यर्थादित्यर्थः । अन्यथा णिलोपस्य स्थानिवद्भावेन टिलोपानापत्तेरिति भावः । ननूपसर्गाणां सन्निहितधात्वर्थातिशयकत्वस्यार्थान्तरद्योतकत्वस्य वा प्रजयत्यनुभवतीत्यादौ दर्शनेन केवल-स्यातीत्यस्य नैरर्थक्येन कथं तेन समासोऽत्यय इत्यर्थकथनं वा कथमित्यत आह- **उपसर्गाश्चेति ॥** क्रियासन्निधाने क्रियावाचकधातुसहपाठेत्यर्थः, यथा प्रजयन्तीति । **ससाधनामिति ॥** साधनं प्रत्ययोत्पत्तौ निमित्तं कर्तृकर्म-भावादि, तद्युतमित्यर्थः । प्रकृते भावयुतत्वम् । तच्च सिद्धावस्थोपेतत्वम् । उपसर्गत्वव्यवहारश्च क्रियायोग-दशाभिप्रायकः । प्रकृते क्रियायोगाभावात् । अन्यथा कुगतिसूत्रे प्रादिग्रहणं च व्यर्थमित्यवधेयम् । निगमयति- **तत इति ॥** किमत्रान्यदन्यो वेत्यत आह- **अन्यच्चेति ॥** अत्रेत्यनेन न पूर्वत्रैव प्रमाणान्तरमिति भावः । कुतो नेत्यत आह- **अन्यथेति ॥** प्रमाणविरोधस्याप्यत्र परिग्रह इत्यर्थः । निर्गलितं दर्शयति- **तथा चेति ॥** ननु प्रमाणलक्षणादिनाऽस्य विरोधः । तत्र जातेः स्ववाक्यविरोधेऽन्तर्भाव उक्तः । अत्र तु स्वविरोधे, (न) तत्र जातित्वेनैकीकृताः स्ववचनविरोधादयस्त्रयः । अत्र तु विविक्ताः । अपसिद्धान्तस्तत्रोक्तः । अत्र तु स नोक्तः। स्वाभ्युपगमविरोधश्चोक्त इति चेन्न। स्ववाक्यविरोधपदस्य स्वविरोधपरत्वात्। 'विरोधश्च स्वतोऽन्यतः' इति स्वशब्दार्थत्वकथनाय विवेकः । एकीकरिष्यति च 'स्वव्याहतिः' इति । अपसिद्धान्तस्वाभ्युपगमविरोध-**(व्या.टि.)** पदयोरनतिभिन्नार्थत्वमिति । ननु कथमेवं जात्यन्तर्भावसिद्ध्या परोदीरिताशेषदोषान्तर्भावादिकं प्रदर्शितमित्यत आह- **एवमन्येषामिति ॥** यथायथमन्यविरोध

इति शेषः 'प्रमाणविरुद्धार्था प्रतिज्ञा प्रतिज्ञा-विरोधः' इति प्रमाणलक्षणानुसारेण कालातीतादीनां प्रमाणविरोधादिष्वन्तर्भावो द्रष्टव्य इत्यर्थः । **निग्रह-स्थानानीति ॥** अनेन मूले निग्रहा इत्यायुर्घृतमितिवदुपचार इत्युक्तं भवति । निगृह्यन्ते अनेनेति करणे 'ग्रहवृद्' इत्यबन्तं वा । **अर्थवचनदोषेष्विति ॥** अत्र द्वन्द्वान्ते श्रुतदोषपदमुभयत्र बुद्ध्या सम्बध्यार्थदोषौ च वचनदोषाश्च तेष्विति विग्रहो द्रष्टव्यः । अस्योपयोगं दर्शयति- **एतेनेति ॥** इत्युपपत्तिदोषनिरूपणवादः ।

**मूलम् -** **अर्थतः प्राप्तिरेवार्थापत्तिरित्यभिधीयते ।**
**दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टे तु वस्तुनि ।**
**एतत्सदृशताज्ञानमुपमानं प्रकीर्तितम् ।**
**अभावस्य परिज्ञानं द्विविधं समुदाहृतम् ।**
**एकं तत्रानुभवतो योग्यस्यानुपलब्धितः ।**
**द्वितीयमपि विज्ञेयं सुखाद्ये च घटादिके ॥**

**(त.मं.)** अर्थापत्त्यादीनां लक्षणमाह- **अर्थत इति ॥** जीवन् देवदत्तो गृहे नास्तीति निश्चये सति गृहाभावान्यथानुपपत्त्या बहिरस्तीत्यर्थतः प्राप्तिरेव । गोसदृशगवयदर्शनाद् गवयसदृशो गौरिति ज्ञानमुपमानमुदाहरन्ति ।

**टीका -** नन्वर्थापत्त्यादीन्यपि प्रमाणानि सन्ति । तानि किमिति न व्युत्पाद्यन्त इत्यतस्तेषा-मत्रैवान्तर्भावादिति वक्तुमज्ञातस्वरूपस्यान्तर्भावो दुर्ज्ञान इति तत्स्वरूपं ज्ञापयन् अर्थापत्तिं तावद् दर्शयति- **अर्थत इति ॥** न चेदनुमानविभागप्रसङ्गे प्रमाणान्तर्भावकथनमसङ्गतम् । (त)अस्या-प्यनुमानप्रभेदकथनपरत्वात्, यद्वक्ष्यति 'अनुमाभेद एव तु' इति । अर्थतोऽनुपपद्यमानस्यार्थस्य दर्शनात् प्राप्तिः, तदुपपादकार्थान्तरप्रमितिरर्थापत्तिरित्यभिधीयते प्रामाणिकैः । यद्यन्या काचित् स्यात् तदाऽन्तर्भावकथने सङ्कटं भवेत् । यदा त्वेषैव तदा किमशक्यमिति सूचयितुम् एवशब्दः । अथ वा प्रमाणद्वयविरोधोऽर्थापत्तिरित्यसत् । आपाततो व्याघातात् । अन्यथोक्तलक्षणा-बहिर्भावादिति **एव** अर्थः । यथा जीवतो देवदत्तस्य गृहेऽभावदर्शनेन बहिर्भावज्ञानम् ।

उपमानस्वरूपमाह- **दृष्ट्वेति ॥** नगरे गां दृष्टवतः पुरुषस्य वने तत्सदृशमन्यं गवयं दृष्ट्वा पूर्वदृष्टे स्मर्यमाणे वस्तुनि नगरस्थे गवि यदेतद्गवयसदृशताज्ञानं जायते तदेवोपमानं प्रकीर्तितं वृद्धैः । पूर्ववदन्तर्भावसौकर्यसूचनाय एवशब्दः । यच्चक्षुरादिव्यापारानन्तरं सदृशाविमाविति तत्सदृशोऽय-मिति वा सादृश्यज्ञानमुत्पद्यते, यच्च गोसदृशो गवय इति वाक्यश्रवणानन्तरम्, तदुभयव्यावृत्त्यर्थो वा एवशब्दः । तस्य स्फुटप्रत्यक्षादित्वेन पृथक्छङ्कानास्पदत्वात् ।

अभावप्रमितिसाधनमभावाख्यं प्रमाणम् । तदन्तर्भावकथनसौकर्याय विभागेन निरूपयति- **अभावस्येति ॥** **द्विविधं** द्विविधसाधनजन्यम् । द्वैविध्यं विवृणोति- **एकमिति ॥** अनुभवतो, जायते । उपचारेणेयमुक्तिः । उपलब्धियोग्यस्यानुपलब्ध्या करणेन द्वितीयं जायत इति विज्ञेयम् । द्वयोरुदाहरणमाह- **सुखाद्ये चेति ॥** सुखाद्ये साक्षिवेद्ये वस्तुनि प्रतियोगिनि सति यन्नास्तीदानीं मम सुखमित्याद्यभावज्ञानमुत्पद्यते तत्साक्षिजन्यम् । यत्तु घटादिके चक्षुरादिवेद्ये वस्तुनि प्रतियोगिनि सति नास्त्यत्र घट इत्याद्यभावज्ञानं जायते तद्योग्यानुपलब्धिजन्यम् । आनुमानिकागमि-कार्थप्रतियोगिकाभावज्ञानस्यानुमानागमजन्यतायामविवादात् तन्नोपन्यस्तम् ।

**(र.टि.) अस्याप्यनुमानेति ॥** बाहुल्याभिप्रायेणेदम् । 'एकं प्रत्यक्षरूपं स्यात्' इत्यादिनाऽभावप्रमाणस्य प्रत्यक्षेऽन्तर्भावस्योक्तत्वात् । **'अनुमाभेद एव तु' इतीति ॥** अन्यथाऽनुमैवेत्येवावक्ष्यत् । भेदग्रहणमनर्थकमिति भावः । **अन्यथेति ॥** बहिस्सत्त्वं कल्पयित्वा जीवनगृहाभावग्राहकप्रमाणयोरविरोधं सम्पाद्य व्याहतिपरिहार इत्यर्थः । **उक्तलक्षणाबहिर्भावादिति ॥** अनुपपद्यमानजीवनगृहाभावदर्शनाद्बहिस्सत्त्वं कल्पितमित्युक्त-लक्षणाबहिर्भावादित्यर्थः । यथाश्रुते एवशब्दस्य प्रयोजनाभावाद्

ज्ञानमेवेति तस्य सम्बन्धमभिप्रेत्य द्वेधा प्रयोजनमाह- **पूर्ववदित्यादिना ॥** 'एकं तत्र' इत्युत्तरवाक्यानुरोधेन व्याचष्टे- **द्विविधसाधनजन्यमिति ॥ द्वैविध्यमिति ॥** द्विविधसाधनजन्यत्वमित्यर्थः । लाघवेनानुभवानुपलब्ध्युभयसाधारण्येन जायत इति शेषे पूरिते सुखाद्यभावज्ञानस्य साक्षिरूपत्वेनाजन्यत्वादाह- **उपचारेणेति ॥** अनुभवाख्यस्वरूपेन्द्रियेण सुखाद्यभावज्ञानमभिव्यज्यत इति जन्यज्ञानसाधारणव्यक्तत्वरूपगुणयोगादिति भावः ।

**(रा.टि.) (त)अस्यापीति ॥** अर्थापत्त्यादिस्वरूपस्येति वा अन्तर्भावकथनस्येति वाऽर्थः । लक्षणान्तर-व्यावर्तकतयाऽपि योजयति- **अथवेति ॥ प्रमाणद्वयेति ॥** शतवर्षजीवी चैत्र इत्येकं प्रमाणं गृहे नास्तीत्यपरं तयोरन्योन्यविरोध इत्यर्थः । **आपातत इति ॥** अविमर्शदशायामित्यर्थः । **व्याघात इति ॥** तदा प्रामाण्यबुद्धिरेव नेति कुतः प्रमाणद्वयविरोध इति भावः । **अन्यथेति ॥** शतवर्षजीविनो गृहेऽसत्त्वं ममेव क्वचित्सत्त्वेनोपपन्नमिति वा क्वचित्सत्त्वेन विना अनुपपद्यमानमिति वा विमर्शेनाव्याहतत्व इत्यर्थः । यद्वा(यदा) शतवर्षजीवीत्यस्य गृह एवेत्यर्थः स्यात् गृहे नास्तीत्यस्य च न जीवनवानित्यर्थः स्यात् तदा परं विरोधः । न च (सोऽर्थः) तत्रास्तीति **(रा.टि.)** विमर्शेनाविरोधोक्तावित्यर्थः । **पूर्ववदिति ॥** अर्थापत्तिलक्षण इवान्तर्भावसौकर्यसूचनमित्यर्थः । इदमेव खलूपमानम् । एवं तर्हि नान्तर्भावोक्तौ क्लेशः । यदि इतोऽन्यत् स्यात् तदा परं क्लेशः स्यादित्येवंरूपेण तत्सूचनमिति भावः । वाक्यश्रवणानन्तरमित्यत्र सादृश्यज्ञानमुत्पद्यत इत्यनुषङ्गः । **प्रत्यक्षादित्वेनेति ॥** शाब्दत्व-मादिशब्दार्थः । सामान्यलक्षणेन स्वरूपाज्ञानेऽन्तर्भावो न सुज्ञान इति प्रकरणप्राप्तं स्वयमाह- **अभावेति ॥** अग्रे साधनोक्त्यनुरोधादाह- **द्विविधसाधनजन्यमिति ॥** आकाङ्क्षां पूरयति- **जायत इति ॥** उपचारेण विषयीकरणरूपसम्बन्धजन्माभिप्रायेणेयमुक्तिरित्यर्थः । सप्तम्यर्थमाह- **प्रतियोगिनि सतीति ॥** प्रतियोगित्वेन वर्तमाने प्रतियोगिभूत इति यावत् । सतीत्यनेन तत्र सत्त्वं न भ्रमितव्यम् । एवमग्रेऽपि । **साक्षिजन्यं** साक्षिविषय इत्यर्थः । साक्षिरूपमिति यावत् । **नोपन्यस्तमिति ॥** तत्तु लक्षणादिग्रन्थे ध्येयमिति भावः ।

**(श्री.टि.) अस्याप्यनुमानेति ॥** बाहुल्याभिप्रायेणेदम् । 'एकं प्रत्यक्षरूपं स्यात्' इत्यादिनाऽभावप्रमाणस्य प्रत्यक्षेऽप्यन्तर्भावस्योक्तत्वादिति ध्येयम् । **अन्येति ॥** लक्षणान्तरलक्षितेत्यर्थः । **एषैवेति ॥** एतल्लक्षण-लक्षितैवेत्यर्थः । **किमशक्यमिति ॥** अन्तर्भावकथने किं सङ्कटमित्यर्थः । एवकारस्य अर्थान्तरमाह- **अथ वेति ॥ प्रमाणद्वयविरोध इति ॥** देवदत्तो गृहे नास्तीति गृहे अभावग्राहकं प्रत्यक्षरूपं प्रमाणमेकं शतवर्षजीवी देवदत्त इति जीवनग्राहकज्योतिःशास्त्ररूपं प्रमाणमपरं तदुभयविरोध इत्यर्थः । यद्यप्यत्र भिन्नविषयकत्वान्न जीवनग्राहकप्रमाणेन गृहेऽभावग्राहकप्रमाणस्य साक्षाद्विरोधोऽस्ति । तथाऽपि जीवी गृह एवेति नियमग्राहक-प्रमाणसचिवेन जीवनग्राहकप्रमाणेन विरोध इति द्रष्टव्यम् । **आपातत इति ॥** बहिःसत्त्वमकल्पयित्वेत्यर्थः । **व्याघातादिति ॥** गृहेऽभावग्राहकं प्रत्यक्षं जीवनग्राहकं ज्योतिःशास्त्रम् अनयोः प्रमाणत्वे भिन्नविषयत्वेन विरोधस्यैवाभावात् प्रमाणत्वमङ्गीकृत्य विरोधोक्तौ व्याघातः । 'न मानयोर्विरोधोऽस्ति' इत्यभियुक्तवच-नात् । यदि च गृहनियमग्राहकं प्रमाणं कल्पयित्वा तद्द्वारा विरोधोक्तौ पुनर्व्याघात एव विरुद्धयोः प्रामाण्यायोगात् 'विरुद्धयोश्च न प्रामाण्यम्' इत्यभियुक्तवचनादित्यर्थः । तथा चोभयथापि प्रमाणद्वयविरोध इत्युक्तमसदिति भावः । **अन्यथेति ॥** बहिःसत्त्वं कल्पयित्वा प्रमाणद्वयस्य अविरोधं सम्पाद्य व्याहतिपरिहार इत्यर्थः । **उक्तलक्षणेति ॥** अनुपपद्यमानजीवनगृहाभावदर्शनेन तदुपपादकबहिःसत्त्वस्य कल्प्यमानत्वेनानुपपद्यमानार्थ-दर्शनात्तदुपपादकभूतार्थान्तरकल्पनमर्थापत्तिरित्युक्तलक्षणाबहिर्भावादित्यर्थः । उदाहरति- **यथेति ॥** यथोक्तं मीमांसकैः 'विद्यमानत्वसंसृष्टगेहाभावधियाऽनया । गेहादुत्कालिता सत्ता बहिरेवावगम्यते' इति ।

**नगर इत्यादि ॥** गृह्यमाणे स्मर्यमाणप्रतियोगिकसादृश्यज्ञानात् स्मर्यमाणे गृह्यमाणप्रतियोगिक-सादृश्यज्ञानमुपमानमित्यर्थः । **पूर्ववदिति ॥** यद्यन्यत्किञ्चित्स्यात्तदाऽन्तर्भावकथने सङ्कटं भवेत् । यदा त्वेतदेव तदा किमशक्यमिति सूचयितुमेवशब्द इत्यर्थः । एकस्यैव सादृश्यस्योभयनिष्ठत्वाभिप्रायेण सदृशाविमावित्यु-क्तम् । एकप्रतियोगिकमपरनिष्ठमित्यभिप्रायेणैतत्सदृशोऽयमित्युक्तमिति द्रष्टव्यम् । वाक्यश्रवणानन्तरं तत्सदृशोऽयमिति ज्ञानमुत्पद्यत इत्यनुवर्तते । **प्रत्यक्षादित्वेनेति ॥** प्रत्यक्षागमजन्यत्वेनेत्यर्थः । आद्यं प्रत्यक्षजन्यं **(श्री.टि.)**द्वितीयमागमजन्यमिति विवेकः । मूले सामान्यलक्षणमनुक्त्वा विभागस्यैव कथनेन न्यूनतापरिहाराय स्वयं तदाह- **अभावप्रमितीति ॥** 'एकं तत्रानुभवतः' इत्युत्तरवाक्यानुरोधेन व्याचष्टे - **द्विविधसाधनजन्य-मिति ॥** द्वैविध्यं द्विविधसाधनजन्यत्वम् । सुखाद्यभावज्ञानस्य साक्षिरूपत्वेन जन्यत्वाभावादनुभवतो जायत इत्युक्तमयुक्तमित्यत आह- **उपचारेणेति ॥** अनुभवाख्यस्वरूपेन्द्रियेण सुखाद्यभावज्ञानमभिव्यज्यत इति जन्यज्ञानसाधारणव्यक्तत्वरूपगुणयोगादित्यर्थः । ननु 'अभावस्य परिज्ञानं द्विविधम्' इति द्विविधसाधन-जन्यत्वकथनमयुक्तम्

। अयं चक्षुष्मान् रूपज्ञत्वादिति रूपज्ञानानुमेयत्वेनानुमानिकं यच्चक्षुरादिकं तदभावज्ञानं नायं चक्षुष्मान् रूपाज्ञत्वादित्येवं रूपज्ञानाभावलिङ्गकानुमानेन भवति । तथा भारताद्यागमसिद्धकौरवाद्यभावज्ञानं भारताद्यागमाद्भवति । तदुभयं कस्मान्नोपन्यस्तमित्यत आह- **आनुमानिकेति ॥**

**(पां.टि.) अर्थतोऽनुपपद्यमानस्येति ॥** अनुपपद्यमानार्थदर्शनं करणांशः, उपपादकीभूतार्थान्तरप्रमितिः फलांशः । ततश्चोपपादकीभूतार्थान्तरप्रमितिसाधनीभूतानुपपद्यमानार्थप्रमितिरर्थापत्तिरित्युक्तं भवति । **प्रमाण-द्वयविरोध इति ॥** जीवति देवदत्त इति जीवनग्राहकप्रमाणस्य, नास्ति देवदत्तो गृह इति गृहाभावप्रमाणस्य च विरोध इत्यर्थः । प्रमाणद्वयविरोध इत्यस्य किं द्वयोः प्रमाणयोर्विरोध इत्यापातप्रतिपन्नार्थ एवाभिमतः, उतार्थान्तराकल्पने प्रमाणद्वयस्यानुपपद्यमानतारूपाऽघटना । नाऽद्य इत्याह- **आपातत इति ॥** आपाततः प्रतीयमानस्य लक्षणार्थत्व इति शेषः । **व्याघातात्**, द्वयोः प्रमाणत्वे विरुद्धत्वस्य, विरुद्धत्वे वा द्वयोः प्रमाणत्वस्य चासम्भवेन द्वयोः प्रामाण्यस्य विरुद्धत्वस्य च व्याहतत्वादित्यर्थः । अन्त्ये त्वाह- **अन्यथेति ॥** अर्थान्तरकल्पनां विना प्रमाणद्वयस्यानुपपद्यमानतारूपाऽघटना यदि प्रमाणद्वयविरोधशब्दार्थस्तदोक्तलक्षणाबहिर्भावः, अनुप-पद्यमानार्थदर्शनादर्थान्तरकल्पनमित्युक्तलक्षणाबहिर्भावः स्यादित्यर्थः । अर्थापत्तेरुदाहरणमाह- **यथेति ॥ नगर इत्यादि ॥** अत्र गोसदृशोऽयं गवय इत्याकारं स्मर्यमाणगोप्रतियोगिकगृह्यमाणगवयगतसादृश्यज्ञानं करणांशः । एवं तत्सदृशो मदीयो गौरित्याकारं गृह्यमाणगवयप्रतियोगिकस्मर्यमाणगोनिष्ठसादृश्यज्ञानं फलांशः । ततश्च गृह्यमाणप्रतियोगिकस्मर्यमाणगतसादृश्यप्रमां प्रति साधनं यत्स्मर्यमाणप्रतियोगिक-गृह्यमाणगतसादृश्यज्ञानं तदुपमानमिति लक्षणं बोध्यम् । **स्फुटप्रत्यक्षादित्वेनेति ॥** आद्यस्य प्रत्यक्षताया द्वितीयस्यागमतायाश्च स्फुटत्वेनेत्यर्थः । ननु सुखाद्यभावज्ञानस्य साक्षिरूपत्वेनाजन्यत्वात् कथं 'जायते' इति जन्यत्वोक्तिरित्यत आह- **उपचारेणेति ॥** अनुभवाख्यस्वरूपेन्द्रियेणाभिव्यक्तसुखाद्यभावज्ञानस्य जन्यज्ञान-निष्ठाभिव्यक्तत्वरूपगुणयोगादिति भावः । **अनुपलब्ध्या करणेनेति ॥** अनेन मूलेऽनुपलब्धित इत्यदादि-त्वात्तृतीयान्तात्तसिरित्युक्तं भवति । ननु नास्त्यत्र घट इति प्रत्यक्षार्थप्रतियोगिकाभावज्ञानस्य प्रत्यक्षस्य च सत्त्वात् घटाद्यभावज्ञानस्य प्रत्यक्षानुमानजन्यत्वस्येव नास्ति चक्षुरिति चक्षुराद्यभावज्ञानस्य विमतश्चक्षूरहितो रूपाज्ञत्वाद्घटवदित्यनुमानजन्यतायाः वैधी हिंसा न पापसाधनमित्यागमिकार्थप्रतियोगिकाभावज्ञानस्यागम-जन्यतायाश्च वक्तव्यत्वात् कुतस्तदनुक्तिरित्यतो घटाद्यभावज्ञानस्य प्रत्यक्षानुमानजन्यत्वे वादिविप्रतिपत्तिवत् **(पां.टि.)** नास्ति चक्षुरित्याद्यभावज्ञानद्वयस्यानुमानागमजन्यतायां वादिनां विवादाभावाद्युक्तैवात्र तदनुक्ति-रित्याह- **आनुमानिकेति ॥** कथं वैधीहिंसायाः पापसाधनत्वस्यागमिकत्वम्, कथं च तदभावज्ञानस्यागम-जन्यत्वमिति चेत्, उच्यते । गतिनिवृत्त्यर्थकस्यापि स्थाधातोः प्रतिष्ठत इत्यत्र प्रोपसन्दानेन गमनार्थत्ववत् 'न हिंस्यात्' इति निषेधस्थले इष्टसाधनत्वार्थकस्यापि लिङो नञुपसन्दानेनानिष्टसाधनत्वार्थकतायाः सिद्धान्ते समर्थितत्वात्तदर्थकनिषेधवाक्यलभ्यत्वाद्धिंसायाः पापसाधनत्वस्याऽगमिकत्वम् । 'अग्नीषोमीयं पशुमालभेत' इत्यादौ इष्टसाधनत्वमात्रस्यैव विध्यर्थत्वेऽपि तस्य विषसम्पृक्तान्नभोजन इव निषेधवाक्यार्थेनानिष्टसाधनत्वेन सहाविरोधादग्नीषोमीयहिंसायामुभयसम्भवात् 'न हिंस्यात्' इति निषेधस्य तदतिरिक्तविषयत्वेन व्यवस्थाऽनुप-पत्तिप्रसङ्गात् तदुपपत्त्यर्थं निन्दार्थवादप्रायश्चित्तोपदेशाद्यसंवलितविध्यर्थस्यानिष्टासाधनत्वेन व्याप्ततयाऽ-निष्टसाधनत्वव्याप्तेष्टसाधनत्वरूपपर्यवस्यद्विध्यर्थेन सह निषेधवाक्यार्थस्यानिष्टसाधनत्वस्य विरुद्धत्वमनुसृत्य निषेधस्य तदतिरिक्तविषयत्वेन सङ्कोचनादग्नीषोमीयविधेर्विशिष्टार्थबोधकत्वेन हिंसायाः पापसाधनत्वाभाव-बोधकत्वस्यापि सत्त्वाद्धिंसायाः पापसाधनत्वाभावस्यागमिकत्वमिति ।

**(व्या.टि.)** यद्यप्यर्थतोऽनुपपद्यमानार्थदेवेति व्याख्येयम् । तथाऽपि लिङ्गस्य ज्ञातकरणत्वेन तज्ज्ञानापेक्षणादाह- **अर्थस्य दर्शनादिति ॥** एवकारमनभिमतव्यावृत्तिपरतया व्याचष्टे - **यद्यन्येति ॥** परोक्तलक्षणनिराकरणपर-तयाऽपि व्याचष्टे- **अथ वेति ॥** किमिदं लक्षणमनुपपत्त्यनुसन्धानशामकोपपादकविशेषणाप्रत्यक्षेणापरामर्शेनैव-मुच्यते तत्परामर्शेन वा । नाद्य इत्याह- **आपातत इति ॥** उपपादकापरामर्श इत्यर्थः । **व्याघातादिति ॥** प्रामाण्योक्तिविरोधोक्तिव्याघातादित्यर्थः । **उक्तेति ॥** ब्रह्मतर्कोक्तेत्यर्थः । **अबहिर्भावादिति ॥** प्रमेयानुप-पत्तिदर्शनादुपपादके बुद्धिरर्थापत्तिरित्यस्मात् प्रमाणद्वयविरोधात्तच्छामकबुद्धिरित्यस्यानतिभिन्नार्थत्वादि-त्यर्थः । 'स्मर्यमाणे गृह्यमाणसादृश्यज्ञानमुपमानम्' इति मीमांसकमतमनुवदति- **नगर इत्यादिना ॥** दृष्टवत इति क्तवत्वन्तम् । **तदेवोपमानमिति ॥** अर्थापत्तिशब्दवदयमप्युपमानशब्दः फलवचनो भावसाधनः । एव-शब्दार्थः एवशब्दप्रयोजनम् । पक्षप्रतिक्षेपार्थतामप्याह- **व्यावृत्त्यर्थो वेति ॥** तदपि कुतो न पृथगिति

शङ्कितमित्यत आह- **तस्येति ॥** मूलस्य शेषं योजयति- **जायत इति ॥** इयमुक्तिर्जन्यजनकभावोक्तिरित्यर्थः । प्रतियोगिनि सतीति मूले शेषोक्तिः । नन्वपरमपि किन्नोपन्यस्तमित्यत आह- **आनुमानिकेति ॥**

**मूलम् -** **एकं प्रत्यक्षरूपं स्याद् द्वितीयमनुमात्मकम् ।**
**क्वचिद्धटाद्यभावोऽपि प्रत्यक्षेणावगम्यते ।**
**झटित्येव परिज्ञानान्न लिङ्गोद्भवता मता ।**
**अर्थापत्तिश्चोपमा च ह्यनुमाभेद एव तु ॥**

**(त.मं.)** अभावज्ञानस्यान्तर्भावमुक्त्वाऽर्थापत्त्युपमानयोश्चाह- **अर्थापत्तिश्चेति ॥** अयं च प्रयोगः- विमतमत्र नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वात् सम्मतवत् । देवदत्तो बहिरस्ति जीवत्त्वे सति गृहेऽभावात् सम्मतवत् । गवयसदृशो गौः गवयस्य गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशः यथा सम्प्रतिपन्न इति ।

**टीका -** एवं निरूपितानामिदानीमन्तर्भावो वाच्यः । तत्र लाघवाय क्रममतिक्रम्यानन्तरोक्तस्याप्यभावप्रमाणस्यान्तर्भावमाह- **एकमिति ॥** सुखाद्यभावज्ञानम् । साक्षिणः प्रत्यक्षेऽन्तर्भावात् । **द्वितीयं** घटाद्यभावज्ञानम् । योग्यानुपलब्धेर्लिङ्गत्वात् । घटोऽत्रेदानीं नास्ति योग्यत्वे सति अनुपलभ्य-मानत्वाद् गजवदित्यादिप्रयोगसम्भवात् । उक्तस्यापवादमाह- **क्वचिदिति ॥** न केवलं सुखाद्यभाव इत्यपेरर्थः ।

अत्रायं विवेकः । यदाऽन्धकारे किमत्रास्ति घटो न वेति विमृश्य हस्तप्रसारणादौ कृतेऽपि घटमनुपलभ्य नास्त्यत्र घट इति जानाति तत्र योग्यानुपलब्धिलिङ्गकमनुमानम् । यदा च राजगृहादिमात्रमनुभूय गजस्मरणाभावेन गजाभावमननुभूयान्यत्र गतः पुनर्जिज्ञासायां सत्यामिन्द्रियव्यापाराभावेऽपि 'नाभूत्तत्र गजः' इति जानाति, एवं 'प्रातरत्र गजो नाभूत्' इति चाभावज्ञानम् । तत्र स्मरणयोग्यस्यास्मरणं लिङ्गम् । यत्तु स्फीतालोके घटस्मृतिमतः पुरोवर्तिनि भूतले विना विमर्शेन चक्षुर्व्यापारानन्तरमेव नास्त्यत्र घट इति ज्ञानमुत्पद्यते तत्प्रत्यक्षजन्यमिति ।

प्रत्यक्षार्थप्रतियोगिकाभावज्ञानस्य सर्वस्यापि लिङ्गोद्भवतेति सौगताः । तन्निराकरोति- **झटित्ये-वेति ॥** पक्षदर्शनलिङ्गज्ञानव्याप्तिस्मरणलिङ्गानुसन्धानरूपविलम्बेन विना घटाद्यभावस्य **परितो**ऽपरोक्षतया च ज्ञानान्न सर्वस्याभावज्ञानस्य लिङ्गोद्भवता मताऽनुभवानुसारिणाम् । अभ्यासपाटवाद्व्यवधानानुपलब्धिः । अपरोक्षाधिकरणानुभवसन्निधानाच्च अपरोक्षत्वाभिमान इति चेन्न । धूमानुमानेऽपि तत्प्रसङ्गाद्बाधकाभावाच्च । अभावस्य तुच्छत्वेन साक्षात्कारविषय-त्वानुपपत्तिर्बाधकमिति चेन्न । तथा सति शशविषाणवदनुमितिविषयत्वस्याप्यभावापातात् । विमर्शानन्तरं जायमानमप्यभावज्ञानं प्रत्यक्षफलमिति नैयायिकादयः । तदप्यसत् । परोक्ष-तयाऽनुभवात् । तदपलापे चाग्निज्ञानस्यापि परोक्षता न स्यात् । सर्वत्राभावज्ञानस्यानुपलब्धिरेव करणम् । सा च स्वरूपेणैव नतु लिङ्गतयेति चेन्न । अपरोक्षप्रतीतेरनुभवसिद्धत्वात् । व्याप्त्या-द्यनुसन्धानस्यापि तथात्वात् । अधिकरणग्रहणं प्रतियोगिस्मरणं योग्यानुपलब्धिश्चेत्येतावदुभय-वादिसिद्धम् । तन्मात्रेणैवाभावज्ञानोत्पत्तौ इन्द्रियादिव्यापारकल्पनायां गौरवप्रसङ्ग इति चेन्न । कल्पकस्योक्तत्वात् । अभावेनेन्द्रियस्य सन्निकर्षो नास्तीति चेत्, घटेन अस्तीत्यपि कुतः? अपरोक्षप्रतीतिलक्षणकार्येण कल्प्यत इति चेत्, तदापरोक्ष्यमपि कुतः? प्रतीतिग्राहकप्रमाणादिति चेत्, सममेतत् सर्वं प्रकृतेऽपि । कोऽसौ सन्निकर्ष इति चेत्, संयोग एवेति ब्रूमः । वैशेषिकादिप्रक्रियाया अप्रामाणिकत्वात् । किञ्च यथा कार्यदर्शनेन संयोगातिरिक्तस्समवायोऽङ्गीक्रियते तथेन्द्रिया-भावयोरप्यपरः कल्प्यताम् । अनुपलब्धेर्लिङ्गत्वे तज्ज्ञानावश्यम्भावात् । अभावत्वाविशेषेणा-नुपलब्ध्यन्तरापेक्षायामनवस्थापात इति चेन्न । अनुपलब्धेः साक्षिवेद्यताया उक्तत्वादिति ।

अर्थापत्त्युपमानयोरप्यन्तर्भावमाह- **अर्थापत्तिश्चेति ।।** अनुमानसामग्रीसद्भावस्य स्फुटत्वादिति हेत्वर्थः । एवशब्दः पृथक्प्रमाणत्वव्यावृत्त्यर्थः । तुशब्दोऽभावाद् व्यवच्छिनत्ति । तस्योभय-त्रान्तर्भावात्, एतयोस्त्वनुमान एवेति ।

ननु देवदत्तस्य बहिर्भावे न तावज्जीवनमेव लिङ्गं गृहे सति व्यभिचारात् । नापि गृहेऽसत्त्वमात्रं मृतादौ व्यभिचारात् । न च विशिष्टं येन हि जीवनं गृह एवेति निश्चितं तस्य परस्परविरोधेन विशेषणविशेष्यभावानुपपत्तेरिति चेन्न । विप्रतिपत्त्या संशयस्यैवावश्यकत्वेनार्थापत्तेरप्यनुदय-प्रसङ्गात् । अतो जीवनप्रमाणेन सामान्यतो जीवने प्रमिते गृहाभावप्रमाणेन च प्रसक्तप्रतिषेधे सति परिशिष्यमाणे बहिर्भावे बुद्धिरनुमानजन्यैव । अन्यथा परिशेषस्यापि पृथक्प्रामाण्यं स्यात् ।

एतेन, गृहाभावप्रमाणेन सन्दिग्धं जीवनं कथं विशेषणं भवतीति चेन्न । भिन्नविषयत्वेन संशयाजननात् । गृहाद्बहिर्भावस्यानेनानवगतत्वात् कथमनुमानमिति चेन्न । केवलव्यतिरेकि-त्वोपपत्तेः । यो जीवन् यत्र नास्ति स ततोऽन्यत्रास्तीति सामान्यव्याप्त्युपपत्तेश्च । तदिदमुक्तम् 'अनुमाभेद एव' इति ।

स्यादेतत् । पक्षान्तरासम्भवाद् उपमाने गां पक्षीकृत्य तद्गतं सादृश्यमनुमेयम् । गवयगतं च सादृश्यं लिङ्गमिति वाच्यम् । तथाच व्यधिकरणत्वान्नानुमानमिति । मैवम् । यो यत्सदृशः स तत्सदृशो यथा यमो यमान्तरेणेति व्याप्तिसम्भवे वैयधिकरण्यस्यादोषत्वात् । गवयगतसादृश्य-प्रतियोगित्वस्य लिङ्गत्वेनाङ्गीकाराद्वा । सदृशावेव येन प्राङ्नोपलब्धौ तस्य कथमिति चेन्न । केवलव्यतिरेकित्वोपपत्तेः । अत एवोक्तम्- **अनुमाभेद एवेति ।।** किञ्च स्वकरतलद्वयादौ सर्वैरपि व्याप्तिर्गृहीतैवेति यत्किञ्चिदेतत् । नैयायिकोदीरितोपमानस्य त्वनुमानेऽन्तर्भावः स्फुट एवेति तदत्र नाशङ्कितम् । अनेन प्रत्यक्षादिविरोधवदर्थापत्त्यादिविरोधोऽप्यैक्यागमस्य कुतो नोच्यत इत्यादि परिहृतं भवति ।

**(र.टि.) लाघवायेति ।।** प्रकृतैकद्वितीयशब्दाभ्यामेव द्विविधाभावज्ञानोपादानलक्षणलाघवायेत्यर्थः । क्रमानु-सरणे तु व्यवहितत्वादेकादिशब्देन तदुपस्थित्यसम्भवात्, सुखाद्यभावज्ञानादिपदोपादाने शब्दगौरवं स्यादिति भावः । ननु सुखाद्यभावज्ञानस्यानुभवाख्यसाक्षिकरणत्वेऽपि कथं प्रत्यक्षरूपत्वमित्यत आह-**साक्षिण इति ।। बाधकाभावाच्चेति ।।** झटिति जायमानघटाद्यभावज्ञानस्यापरोक्षत्व इत्यर्थः । तथा च नोक्तोपचारकल्पनं युक्तमिति भावः । यद्वा, नन्वेवं सति वायुर्वातीत्यादिप्रतीतेरपि प्रत्यक्षत्वं स्यादित्यत आह- **बाधकाभावा-च्चेति ।। अनुमाभेद एवेतीति ।।** सामान्यतो दृष्टस्यानुमानगृहीतव्याप्तिकत्वेन केवलव्यतिरेकिणश्चानुमान-विशेषत्वादिति भावः । **इत्यादीति ।।** आदिपदेन वेदापौरुषेयत्वादिसाधकत्वेनार्थापत्त्यादिकं कुतो नोच्यत इत्यादेर्ग्रहणम् ।

**(रा.टि.) लाघवायेति ।।** स्वरूपोक्त्यनन्तरमेवान्तर्भावोक्तौ प्रतिपत्तिलाघवमिति भावः । **क्रममिति ।।** प्राथमिकार्थापत्त्यादिक्रममित्यर्थः । **प्रत्यक्षेऽन्तर्भावादिति ।।** 'प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेन' इति लक्षणग्रन्थोक्तेरिति भावः । नन्वेकस्य घटाद्यभावज्ञानस्य स्वतन्त्रकारणद्वयजन्यत्वमन्योन्यविरुद्धम् । प्रत्यक्षत्वापरोक्षत्वरूपाकारद्वयं चायुक्तमित्यत आह- **अत्रायं विवेक इति ।।** स्थलान्तरेऽप्यभावज्ञानमानु-मानिकमेव नानुपलब्धिप्रमाणकमित्याह- **यदा चेति ।।** गजाभावाननुभवे हेतुः । **गजस्मरणाभावेनेति ।।** प्रतियोगिस्मृतेरभावज्ञानहेतुत्वादिति भावः । **एवं प्रातरिति ।।** प्रातःकाले गजस्मृत्यभावेन गजाभावमननुभूय सायं तत्राऽगतः पुनर्जिज्ञासायां सत्यां प्रातरत्र गजो नाभूदिति चाभावज्ञानम्, अनुमानमित्यनुषङ्गः । चकारात् प्राचीनाभावज्ञानं चानुमानमित्यर्थः । नाभूत्तत्र राजगृहे गज इति वा प्रातरत्र गजो नाभूदिति वा प्रतिज्ञा । स्मरणयोग्यत्वे सत्यस्मर्यमाणत्वात् सम्मतवदिति प्रयोग इति भावः । मतेत्युक्तौ केषामित्याकाङ्क्षायामाह- **अनुभवानुसारिणामिति ।।** शङ्कते- **अभ्यासेति ।।** अपरोक्षाधिकरणं भूतलादि ,तदनुभवेत्यर्थः । **अनुमानेऽपीति ।।** अनुमितित्वेन सम्प्रतिपन्नस्थलेऽप्यपरोक्षपर्वतरूपाधिकरणानुभवसन्निधिसत्त्वादापरोक्ष्याभि-मानप्रसङ्गादित्यर्थः । तत्रानुमिनोमीत्यनुभवबाधान्न तथाऽभिमान इति चेदिह तथा बाधकाभावादापरोक्ष्यमेवेति भावेनाऽह- **बाधकाभावाच्चेति ।।** बाधकान्तरमाशङ्कते- **अभावस्येति ।। अग्निज्ञानस्यापीति ।।** अनुमितेरपी-त्यर्थः । अनुपलब्धेः पृथक्प्रामाण्यवादी शङ्कते- **सर्वत्रेति ।।** भवदभिमतप्रत्यक्षस्थले अनुमितिस्थले च सर्वत्रे-त्यर्थः । **अपरोक्षेति ।।** शीघ्रप्रतीतिस्थल इति भावः । विमर्शपूर्वकप्रतीतिस्थलाभिप्रायेणाऽह- **व्याप्त्यादीति**

॥ (रा.टि.) **तथात्वादिति** ॥ अनुभवसिद्धत्वादित्यर्थः । शङ्कते- **अधिकरणेति** ॥ **इन्द्रियादीति** ॥ व्याप्त्यनु-सन्धानमादिशब्दार्थः । **कल्पकस्येति** ॥ अपरोक्षाद्यनुभवस्येत्यर्थः । संयोगो द्रव्ययोरेवेति नियमात् कथमेवमुच्यत इत्यत आह- **वैशेषिकेति** ॥ **कार्येति** ॥ गुणक्रियादिविशिष्टप्रत्ययरूपकार्यदर्शनेनेत्यर्थः । **साक्षिवेद्यताया उक्तत्वादिति** ॥ 'सुखाद्ये च घटादिके' इत्येतद्व्याख्यावसरे 'सुखाद्ये साक्षिवेद्ये वस्तुनि प्रतियोगिनि सति' इत्यादिग्रन्थे सुखाद्य इत्याद्यपदेन साक्षिवेद्योपलब्धेरपि ग्रहणेन इदानीं मम घटाद्युपलब्धिर्नास्तीति ज्ञानं साक्षिरूप-मित्युक्तप्रायत्वादित्यर्थः ।

**अनुमानसामग्रीति** ॥ व्याप्तिपक्षधर्मतादिरूपेत्यर्थः । **अभावादिति** ॥ अभावबोधकप्रमाणादर्थापत्त्युपमे **व्यवच्छिनत्ति** वैलक्षण्यं द्योतयतीत्यर्थः । तद्वचनक्ति- **तस्येति** ॥ **सतीति** ॥ विद्यमान इत्यर्थः । **विशेषणविशेष्येति** ॥ जीवित्वे सति गृहेऽसत्त्वरूपविशेषणविशेष्येत्यर्थः । **विप्रतिपत्त्येति** ॥ जीवी गृह एवेति, जीवी गृहे नास्तीति विरुद्धार्थवचनद्वयेनेत्यर्थः । तर्हि कथमित्यत आह- **अत इति** ॥ नियमपक्षस्या-युक्तत्वादित्यर्थः । **प्रसक्तेति** ॥ मरणान्तर्धानादेः प्रतिषेधे सतीत्यर्थः । गृहाभावप्रमाणेन चेत्यस्य बहिर्भावे बुद्धिरित्यनेनान्वयः । **अनुमानजन्यैवेति** ॥ देवदत्तो बहिरस्ति जीवित्वे सति गृहेऽसत्त्वादिति प्रयोगसम्भवादिति भावः । विपक्षे बाधकं चाह- **अन्यथेति** ॥ सत्यामप्यनुमानसामग्र्यां पृथक्प्रामाण्य इत्यर्थः । **भिन्नेति** ॥ जीवनप्रमाणं सामान्यतो जीवनमात्रविषयं गृहाभावप्रमाणं तु विशेषविषयमिति भावः । साध्याप्रसिद्ध्या तन्निरूपितव्याप्तिग्रहायोगात् कथमनुमानप्रवृत्तिरिति शङ्कते- **गृहादिति** ॥ यो बहिर्नास्ति स जीवित्वे सति गृहेऽसन्न भवति यथा गृहवर्तिचैत्र इति व्यतिरेकव्याप्तिसम्भवाभिप्रायेणाऽह- **केवलेति** ॥ ननु साध्याप्रसिद्धौ तदभावघटितव्यतिरेकव्याप्तिरपि न सुज्ञानेत्यतः सामान्यतोऽन्वयव्याप्तिमाह- **यो जीवन्निति** ॥ **अनुमाभेद एवेतीति** ॥ प्रसिद्धधूमानुमानादिविलक्षण एवेत्यर्थः । शङ्कते- **पक्षान्तरेति** ॥ अयं च गां पक्षीकृत्येत्यत्र हेतुः। गौर्गवयसदृशी गवयस्य गोसदृशत्वादिति प्रयोगमुपेत्याऽह- **व्यधिकरणत्वादिति** ॥ हेतोः सिषाधयिषितसाध्य-सामानाधिकरण्याभावादित्यर्थः । सामानाधिकरण्यं शक्यसम्पादं चेत्याह- **गवयेति** ॥ **तस्य कथमिति** ॥ दृष्टान्ताभावेन व्याप्तेरग्रहादिति भावः । **स्फुट एवेति** ॥ भक्तिपादीयानुव्याख्यासुधादौ व्यक्त एवेति भावः । अन्तर्भावोक्तेः प्रागुक्तप्रमेये कथमुपयोग इत्यत आह- **अनेनेति** ॥ अनुमानादावन्तर्भावकथनेनेत्यर्थः । इत्यादीत्यादिपदेन प्रत्यक्षादित्रयाणामेवादुष्टमित्यादिना लक्षणादिकीर्तनं कुतः? अर्थापत्त्यादेरपि भावादित्यादि-शङ्काग्रहः ।

**(श्री.टि.)** अर्थापत्त्युपमाभावा इति निरूपणानुसारेण क्रमेणार्थापत्त्यादेरन्तर्भावमनभिधायानन्तरोक्तस्याभाव-प्रमाणस्यान्तर्भावे निमित्तमाह- **तत्र लाघवायेति** ॥ 'एकं तत्रानुभवतः','द्वितीयमपि विज्ञेयम्' इत्येकद्वितीय-शब्दाभ्यां प्रकृतद्विविधाभावज्ञानम् 'एकं प्रत्यक्षरूपं स्याद् द्वितीयमनुमात्मकम्' इत्येकद्वितीयशब्दाभ्यामेवो-पादायान्तर्भावकथने लाघवमित्यर्थः । क्रमानुसरणे त्वर्थापत्त्युपमयोरन्तर्भावमुक्त्वा पश्चादभावस्यान्तर्भावे वाच्ये **(श्री.टि.)** तत्र 'एकं प्रत्यक्षरूपं स्यात् द्वितीयमनुमात्मकम्' इत्युक्तौ व्यवहितत्वेनैकादिशब्देनैत-दुपस्थित्यसम्भवात् । सुखाद्यभावज्ञानं प्रत्यक्षरूपं घटाद्यभावज्ञानमनुमात्मकमिति वक्तव्यं स्यात् । तथा च शब्दगौरवमिति भावः । ननु सुखाद्यभावज्ञानस्य अनुभवरूपसाक्षिजन्यत्वेऽपि कथं प्रत्यक्षरूपत्वमित्यत आह- **साक्षिण इति** ॥ साक्षिषडिन्द्रियभेदेन प्रत्यक्षस्य सप्तविधत्वादिति भावः । **योग्यत्वे सतीत्यादि** ॥ योग्यत्वे सति यन्नोपलभ्यते तन्नास्तीति व्याप्तावयोग्ये पिशाचादौ व्यभिचारपरिहाराय सत्यन्तम् । घटादौ तत्परिहाराय विशेष्यम् । **उक्तस्येति** ॥ 'द्वितीयमनुमात्मकम्' इत्युक्तस्येत्यर्थः । ननु प्रत्यक्षप्रतियोगिकाभावज्ञानस्य प्रत्यक्षजन्यत्वनियमात् क्वचिदिति किमर्थमुक्तमित्यत आह- **अत्रायं विवेक इति** ॥ 'परामर्शापरामर्शविशेषात्' इत्याचार्योक्तिं मनसि निधायोपपादयति- **यदेत्यादिना** ॥ **विमृश्य** विचाररूपं परामर्शं कृत्वा । **योग्यानुप-लब्धीति** ॥ घटोऽत्रेदानीं नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति योग्यानुपलब्धिलिङ्गकमनुमानमित्यर्थः। स्थलान्तरेऽप्यभावज्ञानस्यानुमानिकत्वमुपपादयति- **यदा चेति** ॥ मात्रशब्दव्यावर्त्यं दर्शयति- **गजस्मरणा-भावेनेति** ॥ अभावज्ञानकारणीभूतस्य प्रतियोगिभूतगजस्मरणस्याभावादित्यर्थः । **अन्यत्र** राजगृहादन्यत्र स्थलान्तरे । **पुनर्जिज्ञासायामिति** ॥ अनुभूते राजगृहादौ किं गजोऽभूद्वा न वेति जिज्ञासायामित्यर्थः । जानाती-त्यस्य तत्र स्मरणयोग्यस्य अस्मरणं लिङ्गमिति सम्बन्धः । अयमर्थः । नाभूत्तत्र गज इति गजाभावज्ञानं ताव-ज्जायते । तज्ज्ञानं न तावदिन्द्रियेण भवति । व्यवहितत्वेन तत्रेन्द्रियव्यापाराभावात् । नापि योग्यत्वे सत्यनुपलभ्य-मानत्वादिति योग्यानुपलब्धिलिङ्गकानुमानेन, गजस्यानुपलब्धेः सत्त्वेऽपि तस्य व्यवहिततयेन्द्रियायोग्यत्वेन योग्यत्वे सत्यनुपलब्धेरभावात् । अतस्तज्ज्ञानसाधनमभावरूपं पृथक्प्रमाणमङ्गीकार्यमिति न वाच्यम् । तत्राप्यनुमानेनैव गजाभावज्ञानाङ्गीकारात् । योग्यानुपलब्धेर्लिङ्गत्वासम्भवेऽपि स्मरणयोग्यत्वे सत्यस्मर्यमाण-त्वस्य लिङ्गत्वोपपत्तेः । तथा हि । गजस्तत्स्थलनिष्ठाभावप्रतियोगी तत्र मयाऽननुभूतत्वात् । न चासिद्धिः । तत्र गजो मया नानुभूतः

स्मरणयोग्यत्वे सत्यस्मर्यमाणत्वात् व्यतिरेकेण तत्रत्यपाषाणवदित्यनुमानसम्भवादिति भावः ।

नन्वथापि सायंकाले राजगृहं गतवतस्तदानीं गजं च दृष्टवतः प्रातरत्र गजो नाभूदित्यभावज्ञानं ताव-ज्जायते । इदं च न प्रत्यक्षेणोत्पत्तुमर्हति प्रातःकालविषयेन्द्रियव्यापाराभावात्,प्रतियोगिनो गजस्यैव दर्शनाच्च। नापि योग्यानुपलब्धिलिङ्गकानुमानेन, योग्यत्वे सत्यपि तदानीं गजस्योपलभ्यमानत्वेनानुपलब्धेरसिद्धेः । प्रातःकालीनत्वावच्छिन्नगजस्य प्रतियोगित्वे तत्रानुपलभ्यमानत्वसद्भावेऽपि योग्यत्वरूपविशेषणस्यासिद्धेः। प्रातःकालीनत्वावच्छिन्नगजस्यायोग्यत्वात्। अतस्तदर्थमभावरूपं पृथक्प्रमाणमङ्गीकार्यमित्यत आह- **एवं प्रातरिति ।।** तथा चात्रापि न योग्यानुपलब्धिर्लिङ्गं किं नाम? स्मरणयोग्यत्वे सत्यस्मर्यमाणत्वमेवेत्यर्थः । तथा हि । विप्रतिपन्नो गजः प्रातश्चत्वरनिष्ठाभावप्रतियोगी तदा तत्र मयाऽननुभूतत्वात्। न चासिद्धिः । विप्रतिपन्नो गजस्तदा तत्र मया अननुभूतः स्मरणयोग्यत्वे सति तन्निष्ठतयेदानीमस्मर्यमाणत्वाद्व्यतिरेकेण तत्रत्यपाषाण-**(श्री.टि.)** वदित्यनुमाप्रकारो द्रष्टव्यः । **घटेति ।।** प्रतियोगिभूतेत्यर्थः । झडितीत्यस्यार्थो विलम्बेन विनेति । परित इत्यस्य सम्यगित्यर्थमभिप्रेत्यापरोक्षतयेति तत्तात्पर्यमुक्तम् । **सर्वस्येति ।।** प्रत्यक्षार्थप्रतियोगिकस्य सर्वस्या-पीत्यर्थः । लिङ्गानुसन्धानं तृतीयलिङ्गपरामर्शः । अपरामर्शदशायां झडिति जायमानमपि ज्ञानं लिङ्गजन्यमेवेत्या-शयेन शङ्कते- **अभ्यासेति ।। व्यवधानेति ।।** पक्षदर्शनेत्याद्युक्तविलम्बेत्यर्थः । घनगर्जितेन मेघाद्यनुमानस्थल इवेति भावः । नन्वभावज्ञानस्यानुमानजन्यत्वेऽभावमपरोक्षतो जानामीत्यनुभवसिद्धमभावज्ञानस्यापरोक्ष्यं न स्यादिति चेन्न। इष्टापत्तेरित्याह- **अपरोक्षेति ।।** अपरोक्षत्वाभिमानः, अपरोक्षत्वोपचारः । अपरोक्षत्वाभिमाने निमित्तम्- **अपरोक्षाधिकरणेति ।।** तथा चाधिकरणभूतभूतलस्य अपरोक्षतोऽनुभूयमानत्वेन तत्सन्निधानादभाव-ज्ञानेऽप्यापरोक्ष्यमाभिमानिकमेव न वास्तवमित्यर्थः । **तत्प्रसङ्गादिति ।।** पर्वतरूपापरोक्षाधिकरणानुभवस्य तत्रापि सत्त्वेन तत्सन्निधानाद्वह्न्यादिज्ञानेऽप्यापरोक्ष्याभिमानप्रसङ्गः । तथा चापरोक्षाधिकरणसन्निधानस्य नापरोक्षाभिमानापादकत्वमिति भावः । **बाधकाभावाच्चेति ।।** झडिति जायमानघटाद्यभावज्ञानस्य अपरोक्षत्वे बाधकाभावान्नोपचारकल्पनं युक्तमिति भावः । यद्वा ननु वायुर्वातीति प्रतीतिरपाकजानुष्णाशीतस्पर्श-रूपलिङ्गजन्या । तथा च झडिति जायमानत्वं यद्यभावज्ञानस्य लिङ्गोद्भावित्वाभावे निमित्तं तर्हि वायुर्वातीति प्रतीतेरपि झडिति जायमानत्वेनापरोक्षत्वापत्त्या लिङ्गोद्भवत्वं न स्यादित्यत आह- **बाधकाभावाच्चेति ।।** इन्द्रिय-व्यापारानन्तरं झडिति जायमानस्याभावज्ञानस्य प्रत्यक्षत्वे बाधकाभावात्। तत्र तु बहिर्द्रव्यप्रत्यक्षत्वे प्रयोजकत्वेन क्लृप्तं यन्महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं तस्य वायावभावरूपबाधकसद्भावान्न तत्प्रतीतेः प्रत्यक्षत्वमिति भावः । घटाद्यभावज्ञानस्यापरोक्षत्वे बाधकाभावोऽसिद्ध इत्याशङ्कते- **अभावस्य तुच्छत्वेनेति ।।** असतो ज्ञानविषयत्वासम्भवादिति भावः । तथात्वे त्वदभिमतानुमितिविषयत्वमपि न स्यात्। असतः शशविषाणस्य तददर्शनादित्याह- **तथा सतीति ।।**

एवमपरामर्शदशायां जायमानस्याभावज्ञानस्यानुमानिकत्वं निराकृत्य परामर्शानन्तरं जायमानस्याभाव-ज्ञानस्यानुमानिकत्वं समर्थयितुं विप्रतिपत्तिमुद्भावयति- **विमर्शानन्तरमिति ।। परोक्षतयेति ।।** योग्यानुप-लब्धिलिङ्गकानुमितिजन्यत्वेनाभावज्ञाने परोक्षत्वस्यानुभवसिद्धत्वादित्यर्थः । **तदपलाप इति ।।** परोक्षत्वा-नुभवापलाप इत्यर्थः । **न स्यादिति ।।** तथा च तत्र परोक्षत्वानुभवविरोध एव वाच्यः। सोऽत्रापि समान इति भावः। एवं परामर्शापरामर्शविशेषादभावज्ञानस्याऽनुमानिकत्वं प्रात्यक्षिकत्वं चेत्युक्तमसहमानः परामर्श-स्थलेऽपरामर्शस्थले च सर्वत्राभावज्ञानमनुपलब्धमेवेत्येवमनुपलब्धेः पृथक्प्रामाण्यवादी भाट्टः प्रत्यवतिष्ठते- **सर्वत्रेति ।।** नन्वनुपलब्धेरभावज्ञाने लिङ्गत्वेन ज्ञातकारणत्वात्तज्ज्ञानापेक्षायां तस्याप्युपलब्ध्यभावरूपत्वेन अनुपलब्ध्यन्तरापेक्षायामनवस्था स्यादित्यत आह- **सा चेति ।।** अनुपलब्धिरित्यर्थः । **स्वरूपेणैवेति ।।** चक्षुरादिवदज्ञाततयैव करणमित्यर्थः । **न तु लिङ्गतयेति ।।** न तु लिङ्गत्वेन ज्ञाता सती करणं येनानवस्था स्यादिति भावः । तथा च सर्वत्राभावज्ञानमनुपलब्धमेवेति नोक्तविभागो युक्त इति हृदयम्। **अनुभवसिद्धत्वा-(श्री.टि.) दिति ।।** घटाद्यभावमपरोक्षतो जानामीत्यनुभवसिद्धत्वादित्यर्थः । तथा च प्रत्यक्षत्वमङ्गीकार्यमिति भावः । तथात्वात् अनुभवसिद्धत्वात् । आनुमानिकत्वमप्यङ्गीकार्यमिति भावः। षष्ठप्रमाणवादी पुनः शङ्कते- **अधिकरणेति ।। तन्मात्रेणैवेति ।।** एतत्त्रितयमात्रेणैवेत्यर्थः । इन्द्रियादीत्यादिपदेन व्याप्त्याद्यनुसन्धानपरि-ग्रहः । **कल्पकस्येति ।।** अभावप्रतीतेरपरोक्षत्वपरोक्षत्वकल्पकानुभवस्येत्यर्थः । **उक्तत्वादिति ।।** 'अपरोक्ष-प्रतीतेरनुभवसिद्धत्वात् । व्याप्त्याद्यनुसन्धानस्यापि तथात्वात्' इत्युक्तत्वादित्यर्थः । तथा च प्रामाणिकत्वाच्च न गौरवं दोषायेति भावः । तथापि नाभावज्ञानं प्रत्यक्षेणोत्पत्तुमर्हमित्याशङ्कते- **अभावेनेति ।।** संयोग-समवाययोरद्रव्यत्वेनायुतसिद्धत्वाभावेन चाभावादिति भावः । **कल्प्यत इति ।।** घटेन सन्निकर्षोऽस्तीति कल्प्यत इत्यर्थः । **तदापरोक्ष्यमिति ।।** तस्या घटादिप्रतीतेरापरोक्ष्यमित्यर्थः । **प्रतीतिग्राहकेति ।।** घटमपरोक्षतो जानामीति

प्रतीतिग्राहकानुव्यवसायरूपप्रमाणात्तदापरोक्ष्यं सिद्धमित्यर्थः । **समामिति ॥** अत्राप्यभावमपरोक्षतो जानामीति प्रतीतिग्राहकप्रमाणेनाभावप्रतीतेरापरोक्ष्यस्य सिद्धत्वात्तल्लक्षणकार्येणेन्द्रियाभावयोरपि सन्निकर्षः कल्पनीय इत्यर्थः । ननु कथमभावेन्द्रिययोस्संयोगः? अद्रव्यत्वात्, 'द्रव्ययोरेव संयोगः' इति हि वैशेषिकप्रक्रियेति चेत्तत्राऽह- **वैशेषिकादिप्रक्रियया इति ॥ कार्यदर्शनेनेति ॥** तन्तुपटयोरवश्यमाश्रयाश्रयिभावेनावस्थान-रूपकार्यदर्शनेनेत्यर्थः । अयुतसिद्धत्वदर्शनेनेति यावत् । अपरः संयोगसमवायातिरिक्तस्तृतीयस्सम्बन्धः ।

'योग्यस्यानुपलब्धितः । द्वितीयमपि विज्ञेयम्' इति परामर्शदशायां जायमानेऽभावज्ञाने योग्यानुपलब्धेर्लिङ्ग-त्वमुक्तम् । तदयुक्तमित्याशङ्कते- **अनुपलब्धेरिति ॥ अभावत्वाविशेषणेति ॥** अनुपलब्धेरप्युपलब्ध्यभाव-रूपत्वादिति भावः । **अनुपलब्ध्यन्तरेति ॥** उपलब्धिविषयकानुपलब्ध्यन्तरेत्यर्थः । **साक्षिवेद्यताया इति ॥** उपलब्धेः साक्षिवेद्यत्वेन तत्प्रतियोगिकाभावरूपानुपलब्धेरपि साक्षिवेद्यतायाः 'सुखाद्ये च घटादिके' इत्यत्र सुखाद्य इत्याद्यपदेनोक्तत्वादित्यर्थः । तथा च साक्षिणः स्वप्रकाशरूपत्वान्नानवस्थेति भावः । **अनुमान-सामग्रीति ॥** व्याप्त्याद्यनुसन्धानरूपेत्यर्थः । अभावाद्व्यवच्छेदप्रकारं दर्शयति- **तस्येति ॥** अभावस्येत्यर्थः । **उभयत्रेति ॥** प्रत्यक्षेऽनुमाने चेत्यर्थः । ननु देवदत्तो बहिरस्ति जीवित्वे सति गृहेऽसत्त्वादित्यनुमानं कार्यम् । तन्न सम्भवतीत्याशयेन शङ्कते- **नन्विति ॥ मृतादाविति ॥** मृतशब्देन मृतशरीरं ग्राह्यम् । आदिपदेन शश-शृङ्गाद्यसद् ग्राह्यम् । तथा च मृतशरीरे गृहेऽसत्त्वसद्भावेऽपि बहिःसत्त्वाभावाद्व्यभिचारः । असतश्च कुत्राप्यसत्त्वेन गृहेऽसत्त्वसद्भावेऽपि बहिःसत्त्वाभावादसति च व्यभिचारः स्यादित्यर्थः । केचित्तु मृते जीवे व्यभिचार इत्याहुः। तन्न । जीवस्वरूपस्य नित्यत्वेन बहिःसत्त्वरूपसाध्यस्यापि तत्र सद्भावेन व्यभिचाराप्रसक्तेरिति ध्येयम् । **विशिष्टमिति ॥** जीवित्वे सति गृहेऽसत्त्वमित्यर्थः । तथा च जीवित्वं नाम जीवनवत्त्वम् । तच्च मृतशरीरेऽसति च नास्तीति न व्यभिचार इति भावः । **निश्चितमिति ॥** जीवी गृह एवेति नियमग्राहकप्रमाणेनेत्यर्थः । तथा च जीवित्वे सतीत्यस्य गृहे सत्त्वमेवार्थः प्रतिपन्न इति भावः । **संशयस्येति ॥** यदि नियमग्राहकं प्रमाणं कल्पयित्वा विरोधेन विशेषणविशेष्यभावो नोपपद्यत इत्यनुमानासम्भव इत्युच्यते तर्हि त्वदभिमतबहिःसत्त्वकल्पकार्था-**(श्री.टि.)** पत्त्युदयोऽपि न स्यात्। नियमग्राहकप्रमाणसचिवजीवनप्रमाणगृहाभावग्राहकप्रमाणयोः परस्पर-विरुद्धतया बलाबलानवधारणेन जीवित्वाद् गृहेऽस्ति वा प्रत्यक्षेण गृहेऽदर्शनान्मृतो वेति संशयजनकत्वादित्यर्थः। **सामान्यत इति ॥** जीवता क्वचित्स्थातव्यमिति सामान्यत इत्यर्थः । **प्रसक्तेति ॥** प्रसक्तस्य गृहे सत्त्वस्येत्यर्थः। **अनुमानजन्यैवेति ॥** अयं भावः । नियमग्राहकं प्रमाणं कल्पयित्वा जीवनगृहासत्त्वयोः परस्परविरुद्धत्वेन विशेषणविशेष्यभावानुपपत्त्या अनुमानासम्भवो न मन्तव्यः । जीवता क्वचित्स्थातव्यमित्येवाङ्गीकारेणानुमान-प्रवृत्तिसम्भवात् । जीवी गृह एवेति नियमग्राहकं प्रमाणमेकं, गृहाभावग्राहकं प्रत्यक्षमपरम् । अनयोर्मध्य एकं बाध्यं विरुद्धार्थग्राहकत्वादित्यनुमानेन गृहाभावग्राहकप्रत्यक्षविरोधेन गृहनियमग्राहकप्रमाणस्यैवाप्रामाण्य-कल्पनात् । न च नियमग्राहकप्रमाणविरोधेन गृहाभावग्राहकप्रमाणस्यैवाप्रामाण्यं कुतो न कल्प्यत इति वाच्यम् । बहिष्टे स्वस्मिन्नेव जीवनगृहाभावयोः सह दर्शनेन नियमग्राहकप्रमाणस्यैवाप्रामाण्यकल्पनौचित्या-दिति । **अन्यथेति ॥** उक्तरीत्याऽन्तर्भावसम्भवेऽपि पृथक्प्रामाण्याङ्गीकार इत्यर्थः ।

ननु यद्यपि नियमग्राहकप्रमाणस्यायोगेन परस्परविरुद्धतया जीवित्वस्य हेतुविशेषणत्वासम्भवो नास्ति। तथाऽपि जीवनप्रमाणेन जीवनं तावत्सिद्धम् । गृहाभावग्राहकप्रमाणेन गृहेऽभावस्सिद्धः । तथा च जीवन-प्रमाणाज्जीवति वा प्रत्यक्षेण गृहेऽदर्शनान्मृतो वेति सन्देहः कस्मान्न स्यात् । तथा च सन्दिग्धं जीवनं कथं हेतुविशेषणं भविष्यति निश्चितस्यैव तथात्वदर्शनादित्याशङ्कते- **एतेनेति ॥** एतेन गृहाभावप्रमाणेनेति सामानाधिकरण्यम्, प्रत्यक्षरूपेणेत्यर्थः । **भिन्नविषयत्वेनेति ॥** परस्परविरुद्धार्थविषयकत्वाभावेनेत्यर्थः । तथा च जीवनप्रमाणं ज्योतिःशास्त्रम् । गृहाभावप्रमाणं प्रत्यक्षम्, तयोर्जीवनगृहाभावमात्रविषयकत्वेन संशया-जनकत्वात् । तद्विषययोर्जीवनगृहाभावयोः स्वस्मिन्नेव सहदर्शनेनाविरुद्धतया तत्प्रमाणयोर्विरुद्धार्थविषयकत्वा-भावेन भिन्नविषयकतया संशयजनकत्वायोगेन असन्दिग्धं जीवनं हेतुविशेषणं भविष्यत्येवेति नानुमानासम्भव इति भावः । ननु देवदत्तो बहिरस्ति जीवित्वे सति गृहेऽसत्त्वादित्यनुमानस्याप्रसिद्धविशेषणता, गृहाद्बहिर्भावस्या-नुमानात्प्रागनेनानवगतत्वादित्याशङ्कते- **गृहादिति ॥ केवलव्यतिरेकित्वेति ॥** यत्र बहिःसत्त्वाभावस्तत्र जीवित्वे सति गृहेऽसत्त्वाभावो यथा मृत इति केवलव्यतिरेकव्याप्तिसम्भवादित्यर्थः । तथा च व्यतिरेकिणि साध्याप्रसिद्धिर्न दोष इति भावः । **सामान्यव्याप्तीति ॥** तथा च सामान्यव्याप्तिमूलकत्वेन सामान्यतो दृष्टानुमान-मित्यर्थः । यद्यपि 'तदयोग्यार्थमुत्तरम्' इति 'प्रत्यक्षायोग्यार्थानुमापकं सामान्यतो दृष्टम्' इति परेण लक्षितम् । तथाऽपि 'व्याप्यव्यापकयोरन्यादृशत्वेऽपि तत्सामान्याकारानुगमेन

लिङ्गलिङ्गिभावे सामान्यतो दृष्टम् । यथा कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलकत्वदर्शनेन यागादेः स्वर्गादिफलानुमानम् । प्रेक्षावत्प्रवृत्तित्वफलवत्त्व-सामान्यानुगमात्' इति प्रमाणपद्धत्युक्तरीत्या सामान्यतो दृष्टत्वसम्भवादिति द्रष्टव्यम् । **अनुमाभेद एवेतीति ।।** भेदशब्दो विशेषपरः । केवलव्यतिरेकिरूपोऽनुमानविशेषः । सामान्यव्याप्तिमूलकत्वेन सामान्यतो दृष्टानुमान-विशेषश्चेत्यर्थः ।

**(श्री.टि.) ।। पक्षान्तरेति ।।** 'गृह्यमाणे स्मर्यमाणप्रतियोगिकसादृश्यज्ञानात् स्मर्यमाणे गृह्यमाणप्रतियोगिक-सादृश्यज्ञानमुपमानम्' इति शाबरोपमाने गोव्यतिरेकेणान्यस्य गवयस्य पक्षीकरणासम्भवादित्यर्थः । गवयपक्षीकारेण तत्र गोसादृश्यानुमाने तस्य प्रत्यक्षसिद्धत्वेन सिद्धसाधनतापत्तेरिति भावः । **तथा चेति ।।** गौर्गवयसदृशी गवयस्य गोसदृशत्वादित्यनुमाने व्यधिकरणत्वमित्यर्थः । **व्याप्तीति ।।** सामान्यव्याप्तीत्यर्थः । समानाधिकरणमपि लिङ्गं सम्भवतीत्याह- **गवयगतेति ।। कथमिति ।।** तथा च दृष्टान्ताभावेन व्याप्ति-ग्रहासम्भवादप्रसिद्धविशेषणत्वमित्यर्थः । **केवलेति ।।** यो यत्सदृशो न भवति स तत्सदृशो न भवतीति व्यतिरेक-व्याप्तिसम्भवादित्यर्थः । तथा च व्यतिरेक्यनुमानेऽप्रसिद्धविशेषणत्वं न दोषायेति भावः । **अनुमाभेद एवेति ।।** व्यतिरेक्यनुमानरूपानुमानविशेष एवेत्यर्थः । अन्ततः स्वकरतलयोरेव दृष्टान्तत्वसम्भवान्नाप्रसिद्ध-विशेषणत्वमित्याह- **किश्चेति ।।** तथा च सदृशावेव येन प्राङ्नोपलब्धावित्युक्तमसदिति भावः । ननु 'दृष्ट्वा सदृशमेवान्यम्' इति शाबरोपमानस्वरूपमेवानूद्यार्थापत्त्युपमाभावा इति तस्यैवान्तर्भाव उक्तो न नैया-यिकोदीरितोपमानस्य । तत् कुत इत्यत आह- **नैयायिकेति ।।**

'अव्युत्पन्नपदोपेतवाक्यार्थस्य च सञ्ज्ञिनि ।
प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते ।।'

इति कारिकोक्तस्याकृतसमयसञ्ज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षरूपोपमानस्येत्यर्थः। **अनुमानेऽन्तर्भावः स्फुट एवेति ।।** अस्योपमानस्य वाच्यवाचकभावसम्बन्धप्रमितिर्हि फलम् ।

'प्रमेयं तस्य सम्बन्धः' संज्ञायां संज्ञिना सह ।
तत्प्रतीतिः फलं चास्य नासौ मानान्तराद्भवेत् ।।'

इति कारिकावचनात् । इदं च फलमनुमानेनैव भविष्यति । तथा हि । अयं गवयशब्दवाच्योऽगोत्वे सति गोसदृश-त्वात्, व्यतिरेकेण घटवदिति प्रयोगसम्भवादित्यर्थः । प्रकृतोपयोगमाह- **अनेनेति ।।** अर्थापत्त्यादेरनुमानान्तर्भाव-कथनेनेत्यर्थः । **परिहृतमिति ।।** पृथक्प्रमाणत्वाभावेन तद्विरोधो नोक्त इति भावः । केचिदर्थापत्त्यादेरनुमानेऽ-न्तर्भावेन तद्विरोधोक्तावर्थापत्त्यादिविरोधोऽप्युक्तप्राय इति पृथक् तद्विरोधो नोक्त इति भाव इत्याहुः ।

**(पां.टि.) अन्तर्भावादिति ।।** 'प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेन' इति भगवत्पादोक्तेरिति भावः । **लिङ्गत्वादिति ।।** 'योग्यानुपलब्धेश्च लिङ्गत्वम्' इति भगवत्पादोक्तेरिति भावः । **उक्तस्येति ।।** 'उपलब्धि-योग्यस्य घटादेरनुपलब्ध्या लिङ्गेन द्वितीयमभावज्ञानम्' इत्युक्तस्येत्यर्थः । नन्वेकस्यैव घटाभावज्ञानस्य न प्रत्यक्षानुमानजन्यत्वं सम्भवति । एकस्यैव ज्ञानस्य स्वतन्त्रकारणद्वयजन्यत्वानुपपत्तेः । परस्परविरुद्धपरोक्षत्वा-परोक्षत्वलक्षणाकारद्वयप्राप्तेश्चेत्यत आह- **अत्रायं विवेक इति ।। सर्वस्यापि लिङ्गोद्भवतेतीति ।।** अभावस्य तुच्छत्वेनेन्द्रियसन्निकर्षानुपपत्त्या न प्रात्यक्षिकत्वमिति गूढोऽत्र भावः । गूढाभिसन्धिरेव परिहरति- **पक्षदर्श-(पां.टि.) नेति ।। तत्प्रसङ्गादिति ।।** अपरोक्षाधिकरणसन्निधानादपरोक्षत्वाभिमानप्रसङ्गादित्यर्थः । **बाधका-भावाच्चेति ।।** झटिति जायमानघटाद्यभावज्ञानस्यापरोक्षत्वे बाधकाभावाच्च नोक्तरीत्योपचारकल्पना युक्तेत्यर्थः। पूर्ववादी स्वाभिप्रायमुद्घाटयति- **अभावस्येति ।।** सिद्धान्त्यपि तमुद्घाटयति- **तथा सतीति ।।** अन्यथा शश-विषाणादेरप्यनुमितिविषयत्वापातादिति भावः । मीमांसकमतमाशङ्कते- **सर्वत्रेति ।। अपरोक्षप्रतीतेरिति ।।** विना विमर्शं चक्षुर्व्यापारानन्तरं जायमानस्य स्फीतालोकमध्यवर्तिघटाद्यभावज्ञानस्यापरोक्षताया अनुभवसिद्ध-त्वान्नानुपलब्धिकरणकत्वमिति भावः । **व्याप्त्यनुसन्धानस्यापीति ।।** यदाऽन्धकारे किमत्रास्ति घटो न वेति विमृश्य हस्तप्रसारणादौ कृतेऽपि घटमनुपलभ्य नास्त्यत्र घट इति जानाति, तत्र व्याप्त्यनुसन्धानस्याप्यनु-भवसिद्धत्वेन व्याप्तिबलेनार्थगमकतयाऽनुपलब्धेर्लिङ्गत्वेनैव तज्जनकत्वस्य सिद्धत्वान्न स्वरूपेण तस्या जनकत्व-मिति भावः । **उक्तत्वादिति ।।** 'अपरोक्षप्रतीतेरनुभवसिद्धत्वात्' इत्यादिनेति भावः । **अभावस्येति ।।** अद्रव्यत्वात्संयोगस्य, अवयवावयव्यादित्वाभावेन समवायस्य चानुपपत्तेरिति भावः । ननु द्रव्ययोरेव संयोगात्

कथमद्रव्यस्याभावस्य संयोग इत्यत आह- **वैशेषिकादीति ॥ कल्प्यतामिति ॥** कल्पकस्य कार्यदर्शनस्य सत्त्वात्, सत्यपि तस्मिन् तदकल्पने च समवायस्याप्यकल्पनीयत्वप्रसङ्गादिति भावः। **तज्ज्ञानावश्यम्भावा-दिति ॥** लिङ्गस्य ज्ञातस्यैव करणत्वादिति भावः । **उक्तत्वादिति ॥** साक्षिवेद्योपलब्धिप्रतियोगिकाभाव-रूपानुपलब्धेः साक्षिवेद्यत्वस्य 'सुखाद्ये च घटादिके' इत्यनेनोक्तत्वादित्यर्थः ।

**व्यवच्छिनत्तीति ॥** अनेन तुशब्दो विशेषार्थ इत्युक्तं भवति । तमेव विशेषं दर्शयति- **तस्येति ॥** ननु जीवित्वस्य गृहे सत्त्वरूपत्वे गृहाभावस्य वाऽजीवित्वरूपत्वे जीवित्वगृहाभावयोर्गृहसत्त्वगृहाभावरूपत्वप्राप्त्या जीवित्वाजीवित्वरूपत्वप्राप्त्या वा विरुद्धत्वप्रसङ्गेऽपि जीवित्वस्य गृहे सत्त्वरूपताया गृहाभावस्य चाजीवित्व-रूपतायाश्चाभावान्न विरुद्धत्वमिति न विशेषणविशेष्यभावानुपपत्तिरित्यतो यो हि मातापितृभ्यां सुशिक्षितो न जातु गृहाद्बहिर्निस्सरति सोऽन्यानपि तथा मन्यमानो जीवनग्राहकप्रमाणस्य गृहे सत्त्वमर्थतया प्रतिपद्यते तं प्रति जीवित्वगृहाभावयोर्गृहे सत्त्व-गृहाभावरूपत्वप्राप्त्या तयोर्विरुद्धत्वस्यावर्जनीयत्वादिति भावेनोक्तम्- **येन हि जीवनं गृह एवेति निश्चितमित्यादि ॥ विशेषणविशेष्यभावानुपपत्तेरिति ॥** अविरोधप्रतीतेश्च बहिर्भावकल्पनोत्तरकालीनत्वेनेतरेतराश्रयग्रस्तत्वादिति भावः। **अनुदयप्रसङ्गादिति ॥** अन्यथा प्रकरणसमे-नापि किञ्चिदवधारणप्रसङ्गादिति भावः । **अन्यथेति ॥** उक्तरीत्याऽर्थापत्तेरनुमानान्तर्भावसम्भवेऽपि पृथक्प्रामाण्य इत्यर्थः । **कथमनुमानमितीति ॥** अप्रसिद्धविशेषणत्वस्यानुमानदूषणत्वान्नार्थापत्तेरनुमानत्वमिति भावः । न केवलव्यतिरेकिण्यप्रसिद्धविशेषणत्वं दूषणम् । अन्यथा केवलव्यतिरेकिमात्रे तत्सम्भवेन तत्प्रामाण्यभङ्ग-प्रसङ्गादित्याशयेनाऽह- **केवलव्यतिरेकित्वेति ॥** ननु केवलव्यतिरेकिणि तस्यादूषणत्वेऽन्यत्र तदसम्भवात्तस्य दूषणत्ववार्तैव लुप्येतेत्यतस्तस्य दूषणत्वेऽपि व्याप्तिग्रहपरिपन्थित्वेनैव दूषणतया सत्यां व्याप्तौ तददूषणत्वस्या-न्यत्र व्यवस्थितत्वात् प्रकृते च व्याप्तिसत्त्वान्न तस्य दूषणत्वमित्याशयेन व्याप्तिमुपपादयति- **यो जीवन् यत्र (पां.टि.) नास्तीति ॥ पक्षान्तरासम्भवादिति ॥** गवयगतसादृश्यस्य प्रत्यक्षत्वेनाननुमेयतया गवयस्य पक्षत्वासम्भवादित्यर्थः । अङ्गीकृत्य व्यधिकरणत्वस्य दूषणत्वं सामानाधिकरण्यमुपपादयति- **गवयगतेति ॥** अङ्गीकृत्याप्रसिद्धविशेषणत्वस्य दूषणत्वं समाधत्ते- **केवलेति ॥** अङ्गीकृत्य चाप्रसिद्धविशेषणत्वमिदं समाधान-मुक्तम्। वस्तुतस्तु तदेव नास्तीत्याह- **किञ्चेति ॥** ननु 'दृष्ट्वा सदृशमेवान्यम्' इत्यादिना मीमांसकोपमानं निरूप्य 'अर्थापत्तिश्चोपमा च ह्यनुमाभेद एव तु' इत्यादिना तदन्तर्भावस्येव नैयायिकोदीरितोपमानस्यापि स्वरूपनिरूपणपूर्वकमनुमानेऽन्तर्भावस्य कथनीयत्वात् कुतस्तस्यानुक्तिरित्यतो निमित्तोक्त्या तदनुक्तिं समर्थयते- **नैयायिकोदीरितोपमानस्य त्विति ॥** 'संज्ञासंज्ञिसम्बन्धप्रमितिसाधनमनधिगतसङ्गतिसंज्ञास्मरण-सहायं तत्समभिव्याहृतातिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानम्' इति नैयायिकोदीरितोपमानस्येत्यर्थः। **अनु-मानेऽन्तर्भाव इति ॥** व्याप्तिमपेक्ष्यार्थगमकस्यैवानुमानत्वात्, अगोत्वे सति गोसदृशस्य गवयशब्दवाच्या-दन्यस्यादर्शनेनागोत्वे सति गोसदृशत्वस्य गवयसदृशवाच्यत्वेन व्याप्तिनिश्चयादुपमानस्य व्याप्तिबलेनार्थ-गमकत्वसिद्धेरनुमानेऽन्तर्भावः स्फुट एवेत्यर्थः ।

**(व्या.टि.)** न चैकस्योभयान्तर्भावो विरुद्ध इत्यतः परामर्शापरामर्शविशेषादिति मूलमनुसन्धाय विवेचयति- **अत्रायमिति ॥ राजगृहादिमात्रमिति ॥** मात्रपदव्यावर्त्यमाह- **गजाभावमननुभूयेति ॥** ननु 'समासेऽनञ्पूर्वे क्त्वो 'ल्यप्' इति नञ्समासपर्युदासादस्य नञ्समासत्वात् कथं ल्यबिति चेन्न । 'पूर्वं धातुरुपसर्गेण युज्यते' इति न्यायेन गतिसमासं विधाय ततो ल्यपि सति तदन्तेन नञ्समासः। अतो न दोष इति भावः। **अन्यत्रेति ॥** देशान्तर इत्यर्थः। **प्रातरत्रेति ॥** एतच्छब्देनाधिकरणनिर्देशः। प्रकृतमाह- **यत्त्विति ॥ प्रत्यक्षेति ॥** इन्द्रिये-त्यर्थः। वादिनामङ्गीकारानौचित्यज्ञापनाय प्रत्यक्षार्थप्रतियोगिकेत्यभावं विशिनष्टि। अभावस्य प्रतियोगिग्राह-केन्द्रियग्राह्यत्वयुक्तिसूचनाय झटितीत्यंशं लिङ्गोद्भवतायां साधकाभावपरत्वेन व्याचष्टे- **विलम्बेन विनेति ॥** परिज्ञानादित्यंशं बाधकपरतया व्याचष्टे- **अपरोक्षतया च ज्ञानादिति ॥** अपरोक्षत्वप्रकारेण ज्ञानानुव्यव-सायादित्यर्थः । न त्वपरोक्षत्वेनानुभवानुभवादिति । नाभावज्ञानं लिङ्गोद्भवमिति प्रतिज्ञायां वैयधिकरण्यात् । 'परोक्षत्वापरोक्षत्वे ज्ञानगते न विषयोपाधिके' इति टीकाविरोधाच्च। विपक्षेऽनुभवापलापं प्रसञ्जयितुमनुभवानु-सारिणामित्याह। विलम्बेन विनोत्पत्तिहेतोरसिद्धिम् अपरोक्षतयाऽनुभवहेतोरन्यथासिद्धिं च शङ्कते- **अभ्या-सेति ॥ अनुपलब्धिरिति ॥** युगपच्छतपत्री छिन्नेतिवत् । अपरोक्षेत्यनुभवविशेषणम्। **अभिमान इति ॥** इदं प्रकारयोर्ज्ञानद्वयस्याविवेको वा सोपाधिकभ्रमो वेत्यर्थः। धूमानुमानेऽपीति बहुव्रीहिः। धूमलिङ्गकानुमिताववि-त्यर्थः। **तदिति ॥** व्यवधानानुपलब्ध्यपरोक्षताभिमानयोरित्यर्थः। तत्राप्यभ्यासपाटवसौष्ठवादित्यर्थः। **बाध-केति ॥** अभावज्ञानस्यापरोक्षत्वानुभवबाधकाभावादित्यर्थः। सौगतः शङ्कते- **अभावस्येति ॥ तुच्छत्वेन** निरुपाख्यत्वेन। **अनुमितीति ॥** तस्या अप्युपाख्यारूपत्वादिति भावः। मतान्तरं दूषयितुमनुवक्ति- **विमर्शा-नन्तरमिति ॥ परोक्षतयेति ॥**

इत्थम्भूतलक्षणे तृतीया। **तदिति ॥** अनुभवेत्यर्थः। **न स्यादिति ॥** तस्या अनुभवैकवेद्यत्वादित्यर्थः। अनुपलब्धेः षष्ठप्रमाणत्ववादी भाट्टः शङ्कते- **सर्वत्रेति ॥** अनुपलब्धिरेवेत्येतद्व्यव-**(व्या.टि.)** च्छिनत्ति- **अपरोक्षेति ॥** अभावस्येति शेषः। स्वरूपेणैवेत्येतद्व्यवच्छिनत्ति- **व्याप्त्यादीति ॥** अनुपलब्धेरिति शेषः। **कल्पकस्येति ॥** अपरोक्षतयाऽनुभवस्येत्यर्थः। भावप्रतिबन्दीं गृह्णाति- **घटेनेति ॥** तां मोचयति- **अपरोक्षेति ॥ तदिति ॥** घटप्रतितेरित्यर्थः। प्रतिबन्दीं द्रढयति- **सममिति ॥** अभावस्याद्रव्यत्वात् कथं संयोग इत्यत आह- **वैशेषिकादीति ॥** अनुपलब्धेर्लिङ्गत्वमसहमानो नैयायिकः शङ्कते- **अनुपलब्धे-रिति ॥ तज्ज्ञानेति ॥** लिङ्गस्य ज्ञातकारणत्वादित्यर्थः। **उक्तत्वादिति ॥** 'सुखाद्ये च' इति साक्षिवेद्यप्रतियोगि-काभावस्य साक्षिवेद्यताया उक्तत्वादित्यर्थः।

**अर्थापत्त्युपमानयोरिति ॥** अनेन मूले अर्थापत्त्युपमाशब्दौ करणपरौ, अनुमाशब्दोऽपि करणसाधन इति सूचितम्। **अनुमानसामग्रीति ॥** अनुमानशब्दोऽत्र भावसाधनोऽनुमितिपरः। **व्यवच्छिनत्ति ॥** एते इति शेषः। व्यवच्छेदकं विशेषं दर्शयति- **तस्येत्यादिना इतीत्यन्तेन ॥** अनुमितिसामग्रीसद्भावं स्फुटयितुं तदभावमुपक्षिपति- **नन्वित्यादिना ॥** अनुमितिसामग्र्यां हि लिङ्गमेकम्। तदिह प्रधानं, तदिह दुर्लभम्। तथा हि- किं बहिर्भावे जीवनं लिङ्गमुत गृहेऽसत्त्वमुत विशिष्टमिति विकल्प्याऽद्यं निराह- **न तावदिति ॥** द्वितीयं पराचष्टे- **नापीति ॥** तृतीयं पराकरोति- **न चेति ॥ परस्परेति ॥** जीवनगृहाभावप्रमाणयोर्विरोधेनेत्यर्थः। **विशेषणविशेष्यभावेति ॥** सहभावाभावादित्यर्थः। प्रमाणद्वयविरोधं पराचष्टे- **विप्रतिपत्त्येति ॥** आवश्य-कत्वेन, सामग्रीवशसम्पन्नत्वेन। **अर्थापत्तेरपि**, अनुमितिभिन्नप्रमितेरपि। जीवनं गृह एवेति निश्चिन्वानस्य बहिर्भावप्रमितेरेवानुपपत्त्या अर्थापत्तिवाचोयुक्ती रिक्ता स्यादित्यर्थः। उपसंहरति- **अत इति ॥** बहिर्भाव-बोधावश्यम्भावादित्यर्थः। जीवनप्रमाणेन जातकरूपज्योतिश्शास्त्रेण, सामान्यतो गृहे वा बहिर्वेति देशसामान्यत इत्यर्थः। **प्रसक्तेति ॥** देशविशेषेत्यर्थः। **अनुमानेति ॥** प्रसक्तप्रतिषेधरूपलिङ्गजन्येत्यर्थः। परिशेषस्य लिङ्गत्वाभावे बाधकमाह- **अन्यथेति ॥** शङ्कते- **एतेनेति ॥** अनन्तरोत्पन्नेन गृहाभावग्राहकप्रमाणेनेति सामाना-धिकरण्यम्। प्रथमं निश्चितमपि प्रामाण्यसंशयेनेवानिश्चितप्राबल्यकेन विरोधिप्रमाणेन सन्दिग्धं भवतीति भावः। **कथं विशेषणमिति ॥** हेतुविशेषणमित्यर्थः। विशिष्टस्य हेतुत्वे सन्दिग्धासिद्धिप्रसङ्गादित्यर्थः। **भिन्नविषय-त्वेनेति ॥** सामान्ययत्किञ्चिद्विशेषाभावप्रमाणयोः परस्परविरोध्यर्थानवगाहनेन संशयाहेतुत्वादित्यर्थः। **अनेन** अनुमिमानेन अनवगतत्वात्, निदर्शन इति शेषः। **केवलेति ॥** यो बहिर्नास्ति नासौ जीवनवत्त्वे सति गृहेऽसन् यथा गृहे एव सन्निति व्यतिरेकव्याप्तिग्रहसम्भवादित्यर्थः। **सामान्यव्याप्तीति ॥** अस्मिन् पक्षे गृहे एव सतो निदर्शनत्वसम्भवादित्यर्थः। मूलमारोहयति- **तदिदमिति ॥** व्यतिरेकिरूपो वा सामान्यतो दृष्टरूपो वा अनुमाप्रभेद एव न प्रमाणान्तरमिति भावः। इत्यर्थापत्त्यन्तर्भावकथनम्।

व्याप्तिपक्षधर्मतोभयावश्यम्भावाभिमानेन नानुमानत्वमुपमानस्येत्याशङ्कते- **स्यादेतदिति ॥**

'आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम्।
केषाञ्चिन्न च ते दोषा व्याप्तौ सत्यां कथञ्चन ॥'

इत्यनुव्याख्यामभिव्याख्याय प्रत्याख्याति- **मैवमिति ॥ यम इति ॥** सहोत्पन्न इत्यर्थः। उभयावश्यम्भावाभिमान-नयेऽप्युपमानस्यानुमानत्वप्रकारं प्रकटयति- **गवयगतेति ॥ कथमिति ॥** सादृश्यानुपलब्धौ तत्प्रतियोगि-त्वस्याप्यदृष्टव्याप्तिकत्वेनानुमानत्वं किंप्रकारमित्यर्थः। **उपपत्तेरिति ॥** वैधर्म्यदृष्टान्तप्रदर्शितव्याप्तिकत्वादि-त्यर्थः। **गृहीतेति ॥** सन्निहितसदृशोपलब्धौ तत्र व्याप्तेरतिसुग्रहत्वादिति भावः। **स्फुट एवेति ॥** गोसादृश्यस्य गवयपदशक्त्युपधानतयाऽतिदेशवाक्यार्थं स्मरतः सदृशदर्शनानन्तरम् अयं गवयपदवाच्यो गोसदृशत्वादित्यनु-मानसौलभ्यान्न तत्पार्थक्यं शङ्कितमिति भावः। अस्यानुक्तिशङ्कापरिहारकत्वेनोक्तोपयोगमाह- **अनेनेति ॥**

## मूलम् - 'आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च ॥'

**टीका-**अनुमानानन्तरप्राप्तस्याऽगमस्य विभागमाह- **आगम इति ॥** अपौरुषेयः पौरुषेयश्चेत्यर्थः। **तथैवेत्यनेन** यथा प्रत्यक्षमनुमानं वा प्रमाणमन्यत्रानन्तर्भूतं च तथाऽऽगमोऽपीत्याचष्टे। तथाहि- न तावदागमो न बोधकः, अनुभवविरोधाद् व्यवहारविलोपप्रसङ्गाच्च। नापि विपरीतबोधको बाधकाभावात्। अन्यत्रान्तर्भावोऽपि, किं कर्तुं शक्यत इत्येव वा कर्तव्य उत पृथक्त्वे बाधकसद्भावात् अथवा तत्साधकाभावात्। नाऽद्यः।

**प्रत्यक्षस्याप्यनुमानेऽन्तर्भावयितुं शक्य-त्वात्। फलवैजात्या-देरवान्तरभेदत्वेनोपपत्तेः। न द्वितीयः। तददर्शनात्। कल्पनागौरवं बाधकमिति चेन्न, प्रत्यक्षेऽपि समानत्वात्। सामग्रीभेदादेरत्रापि विद्यमानत्वात्। अत एव न तृतीयः। किञ्चान्तर्भावोऽपि वक्तृ-ज्ञानानुमापकत्व वक्तव्यः। न चापौरुषयस्य मूलभूतं ज्ञानमस्ति। समर्थितं चापौरुषयत्वं वेदस्य। अपौरुषेयस्य पृथक्प्रमाणत्वेऽपि पौरुषेयस्यानुमानत्वमेवेति प्राभाकराः। तन्निरासार्थमप्युक्तम्- तथैवेति॥** यथा नित्यस्तथाऽनित्योऽपीत्यर्थः। तथा हि- पौरुषेयवाक्यस्थानि पदान्यन्विताभिधान-शक्तिमन्ति न वेति वाच्यम्। आद्ये कथं नाऽगमत्वम्। द्वितीये वेदस्यापि कथमागमत्वं पदानामभेदात्।

अथोच्येत- यद्यपि पुरुषप्रयुक्तानां पदानामन्विताभिधानसामर्थ्यमस्ति। तथाऽपि प्रायेण पुरुषवचसामनृतभूयिष्ठत्वेन अनन्वितार्थत्वशङ्कयाऽन्वयो न निश्चीयत इति। एवं तर्हि शब्दो-त्थापितस्याप्यर्थस्य व्यभिचारेण वेदेऽपि शङ्का सम्भवत्येवेति अन्वयो न निश्चीयेत। तत्रापौरुषेयतया शङ्कानिवृत्तिवदत्रापि आप्तोक्तत्वादिना शङ्कानिवृत्तिर्भविष्यति। तथा च शब्दादेवान्वयनिश्चयोऽ-प्रामाण्यशङ्कानिवृत्तिमात्रमुपायान्तरेणेति लोकवेदयोः समानमेवेति। एतेन यद् 'ऋगाद्याः' इत्युक्तं तदुपपन्नं भवति।

**(र.टि.)** ननु नित्यत्वं यदि ध्वंसाप्रतियोगित्वं तर्हि स्मृत्यादीनामपि नित्यकोटिनिविष्टत्वं स्यात्। तथा च 'श्रुतिर्वाव नित्या अनित्या वाव स्मृतयः' इत्यादिविरोधः स्यादित्यत आह- **अपौरुषेय इति॥**

**(रा.टि.)** ईश्वरबुद्ध्यपेक्षया नित्यत्वस्य स्मृत्यादिसाधारण्येन नित्यत्वादिना द्वैविध्यायोगादाह- **अपौरुषेयः पौरुषेयश्चेति॥** स्वतन्त्रपुरुषाप्रणीतः तत्प्रणीतश्चेत्यर्थः। **शक्यत्वादिति॥** चक्षुरादिसन्निकृष्टत्वादिना लिङ्गेन घटादिज्ञानमनुमितिरूपमेवेति सुवचत्वादिति भावः। **फलेति॥** परोक्षापरोक्षरूपफलवैजात्येत्यर्थः। **गौरव-मिति॥** प्रमाणान्तरकल्पनारूपमित्यर्थः। आलोकेन्द्रियसन्निकर्षादिरूपसामग्री प्रत्यक्षे, अनुमाने तु व्याप्त्यादि-सामग्रीति तद्भेदात् प्रत्यक्षं पृथक् प्रमाणं चेच्छक्तिग्रहादिसामग्रीभेदादागमोऽपि पृथगेवेति भावेनाऽह- **साम-ग्रीति॥** आदिपदेन विषयभेदः। **अत एवेति॥** सामग्रीभेदरूपसाधकसत्त्वादेवेत्यर्थः। **वक्तृज्ञानेति॥** विमतं वाक्यं वक्तृज्ञानपूर्वकं प्रेक्षावद्वाक्यत्वादित्यादिरूपेणेति भावः। **समर्थितं चेति॥** 'वेदकर्तुरप्रसिद्धेः' इत्यादिनेति भावः। **उपायान्तरेणेति॥** आप्तवाक्यत्वफलाविसंवादिरूपेणेत्यर्थः। आगमोऽपीत्यादेः प्रागुक्ते प्रमेये कथमुपयोग इत्यत आह- **एतेनेति॥** आगमस्य तथैवेत्युक्त्या पृथक्प्रमाणत्वकथनेन प्राक्तनऋगाद्युदा-हरणमुपपन्नमित्यर्थः।

**(श्री.टि.)** ननु यदि नित्यत्वं नाम ध्वंसाप्रतियोगित्वं तर्हि पुराणादीनामपि तत्साम्यान्नित्यत्वं स्यात्। तथा च 'श्रुतिर्वाव नित्या अनित्या वाव स्मृतयः' इत्यादिविरोध इत्यत आह- **अपौरुषेय इति॥ अन्यत्रानन्तर्भूत-मिति॥** स्वातन्त्र्येणैव प्रमाणमित्यर्थः। प्रामाण्यमन्यत्रानन्तर्भूतत्वं च क्रमेण उपपादयितुमाह- **तथा हीति॥** वाक्याप्रामाण्यनिमित्तयोरबोधकत्वविपरीतबोधकत्वयोरभावे प्रामाण्यमेव सिद्धं भवतीत्याशयेन तदुभयाभावं क्रमेणोपपादयति- **न तावदित्यादिना॥ अनुभवेति॥** शब्दादर्थं प्रत्येमीत्यनुभवेत्यर्थः। **व्यव-हारेति॥ व्यवहारः** प्रवृत्तिः। 'चैत्र जलमाहर' इति प्रयोजकवृद्धोदीरितवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य जलाहरणे प्रवृत्तिस्तावद्भवति। वाक्यस्याबोधकत्वे तद्विलोपप्रसङ्ग इत्यर्थः। अन्यत्रानन्तर्भूतत्वमुपपादयति- **अन्यत्रेति॥ पृथक्त्वे** पृथक्प्रामाण्ये। **शक्यत्वादिति॥** प्रमाकरणत्वसाम्यादिति भावः। ननु प्रत्यक्षस्य कथमनुमानेऽन्तर्भावः। अनुमानस्य परोक्षप्रमासाधनत्वात्। प्रत्यक्षस्य साक्षात्कारिप्रमाकरणत्वात्। तथा च फलवैजात्यानुपपत्तिरित्यत आह- **फलवैजात्यादेरिति॥** आदिपदेनानुमाने व्याप्त्यादिज्ञानं सामग्री, प्रत्यक्षे तु सन्निकर्ष इत्येवं सामग्रीभेदग्रहणम्। **अवान्तरभेदत्वेनेति॥** प्रत्यक्षस्यानुमानावान्तरभेदत्वेनेत्यर्थः। यथा हि घ्राणरसनचक्षुःश्रोत्रादीनां प्रत्यक्षत्वेऽपि तज्जन्येषु गन्धादिज्ञानेषु वैजात्यम्, तत्तदिन्द्रियसन्निकर्षादिरूप-सामग्रीभेदश्च प्रत्यक्षावान्तरभेदत्वेनैवोपपद्यते न तु तद्बलेन तेषां प्रत्यक्षाद्बहिर्भावस्तद्वदिति भावः। **कल्प-नेति॥** आगमस्य पृथक्प्रामाण्याङ्गीकारे प्रमाणत्रित्वप्राप्त्या कल्पनागौरवमित्यर्थः। **प्रत्यक्षेऽपीति॥** प्रत्यक्षानु-मानयोरुभयोः प्रामाण्याङ्गीकारे कल्पनागौरवप्राप्त्या लाघवायानुमानमेकमेव प्रमाणमङ्गीकार्यमिति भावः। ननु प्रत्यक्षस्य प्रामाण्याङ्गीकारे न कल्पनागौरवम्। तत्पृथक्प्रामाण्यसाधकस्येन्द्रियार्थसन्निकर्षादिरूपसामग्री-**(श्री.टि.)**भेदादेस्सत्त्वादित्यत आह- **सामग्रीभेदादेरिति॥** आदिपदेन फलवैजात्यग्रहणम्। **अत्रापीति॥** पदार्थस्मृत्यादिरूपसामग्रीभेदस्य

पृथक्प्रामाण्यसाधकस्याऽगमेऽपि सत्त्वेन न कल्पनागौरवमित्यर्थः । **अत एवेति ।।** आगमे पृथक्प्रामाण्यसाधकस्य सामग्रीभेदादेः सत्त्वादेवेत्यर्थः । **वक्तृज्ञानानुमापकत्वेनेति ।।** संसर्गप्रमितिकरणत्वेनाऽगमस्य प्रामाण्यं वक्तव्यम् । संसर्गश्च, एतानि वैदिकानि पदानि, स्वस्मारितार्थसंसर्ग-ज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वाद्गामानय शुक्लां दण्डेनेत्यादिपदकदम्बकवदिति वक्तृज्ञानावच्छेदक-त्वेनैव सिद्ध्यतीत्येवमागमस्यानुमानविधया संसर्गबोधकत्वेन न तदर्थमागमस्य पृथक्प्रामाण्यमङ्गीकार्यमित्येव-मागमस्यानुमानेऽन्तर्भावो वक्तव्यः कणादसौगताभ्यामित्यर्थः । यथोक्तं कारिकायाम्- 'प्रत्यक्षमेकं चार्वाकः कणादसुगतौ पुनः । अनुमानं च तच्च' इति । **समर्थितं चेति ।।** 'अपौरुषेयत्वाद्वेदस्य' इत्यनेनेत्यर्थः ।

**।। पृथगिति ।।** तत्र वक्तुरेवाभावेन तज्ज्ञानानुमानायोगादिति भावः । **अनुमानत्वमेवेति ।।** तत्र वक्तुर्विद्यमानत्वेन तज्ज्ञानानुमानसम्भवादित्याशयः । **नित्योऽपौरुषेयोऽनित्यः** पौरुषेयः । **अन्विताभिधा-नेति ।।** प्राभाकरस्यान्विताभिधानवादित्वात् तं प्रत्येवं विकल्पो युक्त इति ध्येयम् । **वाच्यमिति ।।** प्रष्टव्यमित्यर्थः। **कथं नाऽगमत्वमिति ।।** पदानामन्विताभिधानशक्तिमत्त्वे आगमतयैव संसर्गापरपर्यायान्वयबोधकत्वप्राप्त्या नानुमानतया संसर्गबोधकत्वमित्यर्थः । **आगमत्वम्** आगमतया संसर्गबोधकत्वम् । कुत इत्यत आह- **पदाना-मिति ।।** लौकिकाग्नि-अप्-पृथिव्यादिवाचिनां पौरुषेयवाक्यस्थानामेवाग्न्यादिपदानां 'वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इत्यादौ वेदेऽपि श्रवणात् पौरुषेयवाक्यस्थानां पदानामन्विताभिधानशक्त्यभावे अपौरुषेयवाक्य-स्थानामपि पदानां तदभावप्राप्त्या अपौरुषेयस्य पृथक्प्रमाणत्वं पौरुषेयस्यानुमानत्वमेवेति विभागो न युक्त इत्यर्थः । अत एवाऽहुः- 'य एव लौकिकास्त एव वैदिकाः' इति । तर्ह्यागमतयैव संसर्गबोधकत्वं प्राप्तमिति चेत् तत्राऽह- **तथापीति ।। अनन्वितार्थत्वशङ्कयेति ।।** वाक्यबोध्योऽन्वयो बाधितो वाऽबाधितो वेति शङ्कयेत्यर्थः। तथा च नाऽगमतया संसर्गप्रमापकत्वमिति भावः । **शब्देति ।।** पौरुषेयशब्देत्यर्थः । **व्यभिचारेणेति ।।** अनाप्त-प्रयुक्तशब्दस्यार्थविसंवादित्वदर्शनेनेत्यर्थः । शङ्का अर्थव्यभिचारेणाप्रामाण्यशङ्का । तथा च वेदस्यापि नाऽगमतया संसर्गप्रमापकत्वं स्यादिति भावः । **तत्र** वेदे । **अत्र** पौरुषेयवाक्ये । **उपायान्तरेणेति ।।** अपौरुषेयत्वाप्तोक्तत्व-रूपोपायान्तरेणेत्यर्थः । **लोकः** पौरुषेयागमः । प्रकृतोपयोगं दर्शयति- **एतेनेति ।।** 'आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च' इति पौरुषेयागमस्यापि पृथक्प्रमाणत्वकथनेनेत्यर्थः । **उपपन्नं भवतीति ।।** पूर्वं 'ऋगाद्या भारतं चैव' इत्यादिब्रह्माण्डपुराणोदाहरणं कृतं तदयुक्तम् । पौरुषेयागमस्य पृथक्प्रामाण्याभावादिति शङ्का-यास्तस्यापि पृथक्प्रामाण्यसमर्थनेन निरस्तत्वादिति भावः ।

**(पां.टि.)** विष्णुबुद्धिगत्वयुक्त्या वेदस्येव पुराणानामपि नित्यत्वस्य स्थितत्वान्न नित्यत्वानित्यत्वाभ्यां तद्विभागः सम्भवतीत्यतोऽत्र नित्यानित्यशब्दयोरपौरुषेयपौरुषेयपरत्वेन नित्यानित्यपरत्वाभावान्नानुपपत्ति-रित्याशयेन 'नित्योऽनित्यः' इत्येतद्व्याचष्टे - **अपौरुषेयः पौरुषेयश्चेत्यर्थ इति ।।** कथमागमस्य प्रामाण्यमित्यतः **(पां.टि.)** किं तस्य बोधकत्वस्यैवाभावादप्रामाण्यं किं वा विपरीतबोधकत्वादिति विकल्पद्वयं मनसि निधायाऽद्य-मनूद्य प्रतिषेधति- **न तावदिति ।। न बोधक इति ।।** परोक्षस्यानुमानसिद्धत्वादपरोक्षस्य च प्रत्यक्षसिद्धत्वेन विषयस्याभावात्, भावेऽपि वाऽर्थेनासम्बद्धस्य शब्दस्य तद्बोधकत्वे नियामकाभावेन सर्वस्य सर्वबोधकत्वप्रसङ्गात्, सम्बद्धस्य बोधकत्वेऽपि वह्न्यादिशब्दोच्चारणे मुखदाहादिप्रसङ्गेन शब्दार्थयोस्तादात्म्यानुपपत्तेः, शब्दस्य गुणत्वेन घटादिना संयोगानुपपत्तेराकाशगुणत्वेन समवायस्याप्यनुपपत्तेः, शब्दस्य द्रव्यत्वपक्षे च संयोगसम्भवेऽपि मूर्तस्य क्रिययाऽर्थसंयोगेऽन्तरावस्थितार्थविषयत्वस्य, सर्वगतत्वे च सर्वार्थप्रतिपादकत्वस्य च प्रसङ्गान्मूर्तस्यामूर्तस्य वा घटादिना समवायासम्भवेन च तदप्रतिपादकत्वप्रसङ्गाच्छब्दो न बोधक इत्यर्थः । कुतो नेत्यतः परोक्षत्वेऽप्यनुमानाविषयतया धर्माधर्मादेरेव शब्दविषयत्वसम्भवात्, स्वाभाविकशक्तेरेव, 'अस्मात्पदादयमर्थो बोद्धव्यः' इति पारमेश्वरसङ्केतस्यैव वा शब्दार्थयोः सम्बन्धत्वाच्च न शब्दस्याबोधकत्वमिति मनसि निधाय अबोधकत्व-मनुभवविरोधेन दूषयति- **अनुभवेति ।।** शब्दादर्थं प्रत्येमीत्यनुभवेन शब्दस्य बोधकतायाः सिद्धत्वादिति भावः । **व्यवहारेति ।।** यदि न शब्दस्य बोधकत्वं तदा वाचा निर्वर्त्यस्य व्यवहारस्य विलोपः स्यात् । परप्रत्यायनार्थो हि वाग्व्यवहारः। स यदि न परं प्रत्याययेद् व्यर्थोऽसौ न क्रियेतैवेत्यर्थः । उपलक्षणं चैतत् । स्वक्रियाविरोधश्च । प्रत्यायनार्थं शब्दप्रयोगक्रियया शब्दस्य प्रत्यायनसाधनतायाः प्राप्तत्वेन शब्दो नार्थप्रत्यायक इति वाक्यार्थस्यार्थ-प्रत्यायकत्वाभावस्य तादृशक्रियया विरुद्धत्वादिति द्रष्टव्यम् ।

शब्दस्य विपरीतार्थबोधकत्वं वदन् प्रष्टव्यः । किं स संशयजनक इति किं वा विपर्ययजनक इति । नाऽद्यः । शब्दजन्यज्ञानस्यैकाकारनियतत्वेन संशयत्वायोगादिति मनसि निधाय द्वितीयं दूषयति- **बाधकाभावा-दिति ।।** भ्रमत्वस्य बाधैकसमधिगम्यत्वेन शब्दजन्यज्ञानस्य बाधकराहित्यान्न विपर्ययत्वमिति भावः । उपलक्षणं चैतत् स्वव्याघातस्य । सर्वं

शब्दजन्यज्ञानमयथार्थं, सर्वः शब्दो न यथार्थज्ञानजनक इत्यादिप्रयुक्तशब्दजन्य-ज्ञानस्यायथार्थत्वे शब्दजन्यज्ञानादेर्यथार्थत्वाद्यापत्त्या याथार्थ्यावश्यम्भावाद्, याथार्थ्ये चास्यैवायाथार्थ्याभावेन प्रतिहतप्रमाणत्वात् सर्वशब्दजन्यज्ञानायथार्थत्वादिरूपस्याभिमतस्यासिद्धेरिति द्रष्टव्यम्। **वक्तृज्ञानानुमाप-कत्वेनेति** ।। विवादाध्यासितानि पदानि, स्वस्मारितार्थान्वयप्रमितिपूर्वकाणि, आकाङ्क्षायोग्यतासन्निधिमत्पद-त्वाद् गामभ्याजेति स्वप्रयुक्तपदवदिति वक्तृज्ञानानुमापकत्वेनेत्यर्थः । किमत्र स्वस्मारितार्थान्वयप्रमितिपूर्वकत्व-मात्रं साध्यं किं वा मूलमूलपुरुषीयस्वस्मारितार्थान्वयप्रमितिपूर्वकत्वम्। नाऽद्यः। विनाऽप्यन्वयप्रमितिं दैवात्प्रयुक्तेष्वाकाङ्क्षादिमत्सु पदेष्वनैकान्त्यात्। आप्तप्रयुक्तत्वेन हेतुविशेषणे साध्यार्थस्य हेत्वर्थे प्रवेशापत्तेः। पुरुषविशेषप्रयुक्तत्वस्य चाध्यापकप्रयुक्तेषु व्यभिचारादिति भावेन द्वितीयं दूषयति- **न चेति** ।। शुकबालादीना-मन्वयप्रतीत्यभावेऽपि यद्विरचितपदावलीज्ञानेन पदप्रयोगस्तस्य मूलपुरुषतदन्वयप्रमितित्वेन मूलपुरुषीय-स्वस्मारितार्थसंसर्गप्रमितिपूर्वकत्वान्माऽस्तु तत्र व्यभिचारः, तथाऽपि यस्य पुराणादेः स्वतन्त्रो वक्ताऽस्ति तत्र स्वतन्त्रवक्तुरुक्तरूपप्रमितिसत्त्वेनोक्तसाध्यस्य तत्र साधनसम्भवेऽपि वेदस्यापौरुषेयत्वेन स्वतन्त्रवक्तृ-**(पां.टि.)** शून्यत्वेन तदीयोक्तरूपप्रमितिपूर्वकत्वस्य तत्रानुपपत्त्यांऽशे बाधः स्यादित्यर्थः। भवेदेतदेवं यद्यपौरु-षेयत्वं स्यात्। तदेव कुत इत्यत आह- **समर्थितं चेति** ।। 'वेदकर्तुरप्रसिद्धेः' इत्यादिनेति शेषः। **पृथक्प्रमाणत्वेऽ-पीति** ।। तत्रोक्तरीत्या बाधितत्वेन वक्तृज्ञानानुमापकत्वासम्भवादन्तर्भावानुपपत्तेरित्यर्थः।

**अनुमानत्वमेवेति** ।। तत्र मूलपुरुषीयस्वस्मारितार्थसंसर्गप्रमितिपूर्वकत्वस्याबाधितत्वेन वक्तृज्ञानानुमान-सम्भवात् तस्यानुमानेऽन्तर्भाव इत्यर्थः। पौरुषेयापौरुषेयवाक्ययोरनतिभिन्नत्वेन मद्रीत्योभयोरप्यागमस्य कणादादिरीत्याऽनुमानत्वस्यैव वा सम्भवेनापौरुषेयागमस्याऽगमत्वं पौरुषेयस्य चानुमानत्वमित्यर्धचरतीया-श्रयणमयुक्तमित्याशयवांस्तयोरनतिभिन्नत्वमुपपादयति- **तथा हीति** ।। **न वेति वाच्यमिति** ।। उपलक्षणं चैतत्। किं पदान्येव वाक्यमुत ततोऽन्यदित्यपि वाच्यमित्यपि द्रष्टव्यम्। **आद्य इति** ।। पौरुषेयवाक्यस्थानि पदान्यन्विताभिधानशक्तिमन्ति, तथा पदान्येव वाक्यमित्याद्य इत्यर्थः। पौरुषेयवाक्यस्थपदानामन्विताभिधान-शक्तिमत्त्वे, तथा पदानामेव च वाक्यत्वे, अपौरुषेयवाक्यस्येव पौरुषेयवाक्यस्यापि संसर्गवादकत्वेनाऽगमत्वोप-पत्तेरित्यर्थः। **द्वितीय इति** ।। न तानि पदान्यन्विताभिधानशक्तिमन्ति, वाक्यं चान्यदिति द्वितीय इत्यर्थः। पदानामन्विताभिधाने शक्त्यभावे वाक्यस्य च ततोऽन्यत्वे पदानामभेदेन पौरुषेयवाक्यस्येव वेदस्यापि संसर्ग-वादकत्वानुपपत्तेरनागमत्वप्रसङ्ग इत्यर्थः। ननु लोकवेदयोः सत्यपि वर्णानामभेदे केनचित्स्वरच्छान्दसवर्णागम-लोपविकारादिना भिन्नत्वाद्वैदिकपदानामन्विताभिधानशक्तिमत्त्वेन संसर्गवादकत्वेऽपि लौकिकानां च तद्रहितानां तदवादकत्वोपपत्त्या युक्तं वैषम्याश्रयणमित्यतः पदानामभेदस्य लोकवेदाधिकरणन्यायसिद्धत्वादुक्तप्रसङ्ग-तादवस्थ्यमेवेत्याशयेनाऽह- **पदानामभेदादिति** ।। विस्तरस्तु शेषवाक्यार्थचन्द्रिकायां द्रष्टव्यः।

**(व्या.टि.)** ननु 'तथैव द्विविधः' इत्यनुपपन्नम्। स्वार्थपरार्थादिविभागं विना नित्यानित्यत्वादिना विभाग-करणादित्यत आह- **तथैवेत्यनेनेति** ।। अथ वा पूर्वमनुमाने नित्यानित्यविभागानुक्तेस्तथैवेत्यतिदेशोऽनुपपन्न इत्यत आह- **तथैवेत्यनेनेति** ।। विभागातिदेशाभावेऽपि स्वातन्त्र्येण प्रामाण्यातिदेशो युक्त इति भावः। अतिदेशं साधयितुं प्रतिजानीते- **तथा हीति** ।। आगमो न स्वतन्त्रप्रमाणमिति वदन् प्रष्टव्यः। किमप्रामा-ण्यादन्यत्रान्तर्भावाद्वा। आद्ये तदप्रामाण्यमबोधकत्वाद्विपरीतबोधकत्वाद्वेति विकल्प्याऽद्यं वारयति- **न तावदिति** ।। **अनुभवेति** ।। अन्वयानुभवानुभवेत्यर्थः। दोषान्तरमाह- **व्यवहारेति** ।। आनयनादिप्रवृत्तेर्बोधाधीनत्वेन तदभावेऽभावप्रसङ्गादित्यर्थः। द्वितीयं दूषयति- **नापीति** ।। **बाधकेति** ।। बोध्यार्थस्येति शेषः। द्वितीयमपि त्रेधा विकल्प्याऽद्यं निराचष्टे- **नाऽद्य इति** ।। भूतलं घटवत् तत्संयोगादित्येवमनुमातुं शक्यत्वादित्यर्थः। ननु प्रत्यक्षं नानुमानम् अनुमानफलविजातीयफलसाधनत्वादित्यत आह- **फलेष्विति** ।। अनुमितौ स्वार्थपरार्थ-त्वादिवैजात्यवत्साक्षात्कारत्वादिवैजात्यस्यापि सम्भवादित्यर्थः। **तदिति** ।। बाधकस्येत्यर्थः। **समानत्वा-दिति** ।। प्रमाणद्वित्वेऽपि गौरवसाम्यादित्यर्थः। अत्रापि आगमेऽपि। तृतीयं दूषयति- **अत एवेति** ।। सामग्री-भेदादेः साधकत्वादेवेत्यर्थः। अनुमेयाभावाच्च नाऽगमस्यानुमानत्वमित्यभिप्रेत्य तदभावं दर्शयति- **किञ्चेत्या-(व्या.टि.) दिना** ।। **वक्तृज्ञानेति** ।। इदं वाक्यं, वक्तुस्तत्त्वज्ञानमूलकम्, आप्तवाक्यत्वादित्यनुमानप्रकारो बोध्यः। अपौरुषेयस्येति मूलज्ञानाभावे हेतुगर्भविशेषणम्। हेत्वसिद्धिं परिहरति- **समर्थितं चेति** ।। 'तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेः' इत्यादिनेति शेषः।

एवं स्वतन्त्रप्रामाण्यातिदेशपरतया तथाशब्दं व्याख्याय मतान्तरनिरसनपरतयाऽपि व्याचष्टे- **तन्निरासार्थ-मपीति** ।। निरासप्रकारं

दर्शयति- **यथेति** ॥ नित्य इत्यतः परम् आगम इति शेषः । नित्यानित्ययोरागमत्वं समानमिति तदर्थः । अनित्यस्याऽगमत्वं व्युत्पादयति- **तथा हीति** ॥ स्वातन्त्र्येण अन्वयप्रत्यायनमागमस्यान्विताभिधानशक्तिमत्पदवत्त्वेनेत्यभिप्रेत्यान्विताभिधानशक्तिमत्पदत्वं विकल्प्य पृच्छति- **शक्तिमन्ति न वेति** ॥ आद्यं निराह- **आद्य इति** ॥ **कथं नाऽगम इति** ॥ अन्वयप्रत्यायनशक्तिमत्त्वे प्रत्यायनावश्य-कत्वादित्यर्थः । द्वितीयं दूषयति- **द्वितीय इति** ॥ अन्विताभिधानशक्तिमत्पदाभाव इत्यर्थः । पौरुषेयत्वापौरुषेय-त्ववैषम्यात्कथं प्रतिबन्दीत्यत आह- **पदानामिति** ॥ लोकवेदयोरिति शेषः । अन्यथा लोकवेदाधिकरण-विरोधापत्तेरित्यर्थः । प्राभाकराशयमुद्घाटयति- **अथेति** ॥ **अनृतभूयिष्ठत्वेनेति** ॥ ननु कथं भूयिष्ठमिति? इत्थम्, बहुशब्दाद् इष्ठनि 'बहोर्लोपो भू च बहोः' इति बहोः परस्येष्ठन आदिलोपे बहोश्च भ्वादेशे 'इष्ठस्य यिट् च' इति सूत्राद् यिडागमे च रूपम् । **शङ्कयेति** ॥ अन्विताभिधानशक्तेः शङ्काप्रतिबन्धाप्रतिबन्धाभ्यां लोकवेदयोर्वैषम्यमिति भावः । शङ्कासाम्यमाह- **एवं तर्हीति** ॥ **समानमेवेति** ॥ निवर्तकोपायभेदेऽपि तन्निवृत्तेरुभयथाऽपि साम्यमेवेत्यर्थः । अस्योक्तोपयोगमाह- **एतेनेति** ॥

**मूलम् -** **'प्रत्यक्षं त्रिविधं ज्ञेयमैश्वरं यौगिकं तथा ।**
**अयौगिकं चेति तथा सर्वमक्षात्मकं मतम् ॥**
**अक्षाणि च स्वरूपाणि नित्यज्ञानात्मकानि च ।**
**विष्णोः श्रियस्तथैवोक्तान्यन्येषां द्विविधानि तु ॥**
**स्वरूपाणि च भिन्नानि भिन्नानि त्रिविधानि च ।**
**दैवासुराणि मध्यानीत्येतत् प्रत्यक्षमीरितम् ।**
**विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति कीर्तितम् ।**
**अक्षयं पुरुषस्याक्षं स्वरूपे मुख्यमेव तु (तत्) ॥**
**उपचारस्तदन्यत्र सृष्टावुपचयो यतः ।**
**उपपत्तिस्वरूपत्वादनुमा सम्भवादिकम् ॥**
**प्रत्यक्षागममाहात्म्यादनुमानं प्रमाणताम् ।**
**याति, नैवान्यथा, तस्य नियतत्वं क्वचिद् भवेत् ॥**

**इत्यादि ब्रह्मतर्के ॥**

**(त.मं.)** ऐश्वरशब्देन ईश्वरीयप्रत्यक्षमपि विवक्षितम् । विष्णोः, श्रिय इति तत्रैव प्रसङ्गात् । **अक्षात्मकम्** अक्षयत्वादक्षमित्यर्थः । क्षिङ् क्षय इति धातोः । तृतीयोऽतिशय इति न्यायात् । स्वरूपेन्द्रियाणां सिद्धत्वात् त्रैविध्याकथनम् । न तु त्रैविध्याभावात् । न हि स्वरूपाभिन्नं स्वरूपा-दन्यथा भवति । न हि श्वेतपटस्य तन्तवो रक्ता भवितुमर्हन्ति ।

शते पञ्चाशत् सम्भवन्तीत्यादि सम्भव उपपत्तिरूपत्वादनुमा । तथा हि- कस्यचित् पञ्चाशत् फलापेक्षायामुच्यते- विमतानि पञ्चाशदनूनानि शतत्वात् सम्मतवदिति । आदिशब्दादभिनयः । अभ्यात्मं पाणिचलनाद्यभिनयेनाऽह्वानाद्यभिप्रायः सङ्केतबलादनुमीयते हि । **अन्यथा** प्रत्यक्षागम-विरोधेऽनुमानस्याप्रामाण्यं नियतत्वेनैव । अग्निरनुष्णः मथनजन्यत्वात् नवनीतवत्; अग्निष्टोमादि-रनर्थहेतुः हिंसारूपत्वात् ब्राह्मणहिंसावत् इत्यादेः ।

**टीका -** अथ परिशेषतः प्राप्तस्य प्रत्यक्षस्य विभागमाह- **प्रत्यक्षमिति** ॥ ऐश्वरमिति विष्णोः श्रियश्च

प्रत्यक्षमेकीकृत्योक्तम्। समाधिपरिपाकवन्तो योगिनः। तदीयं प्रत्यक्षं यौगिकम्। अस्मदादीनां प्रत्यक्षमयौगिकम्। ईश्वरस्य शरीरेन्द्रियरहितत्वात् तत्र प्रत्यक्षोक्तिरौपचारिकीति शङ्कानिरासार्थमाह- **तथा सर्वमिति ।।** यथा यौगिकं तथा सर्वमैश्वरमपीति यावत्। तथा सति 'सर्वेन्द्रियविवर्जितम्' इत्यादिविरोध इत्यत आह- **अक्षाणि चेति ।।** भिन्नजडेन्द्रियाभावपरं तद्वाक्यमिति भावः। उक्तानि 'यदात्मको भगवान्' इत्यादौ। एतेनान्येषां भिन्नान्येवेति प्राप्तमत आह- **अन्येषामिति ।।** द्वैविध्यमेव दर्शयति- **स्वरूपाणि चेति ।।** यत् 'अदुष्टमिन्द्रियम्' इत्यदुष्टत्वमुक्तं तत्स्वरूपेन्द्रियाणां स्वरूपकथनमात्रम्, भिन्नेन्द्रियाणामेव तु विशेषणमिति ज्ञापयितुं तद्विभागमाह- **भिन्नानीति ।।** सम्यग्ज्ञानप्रचुराणि दैवानि। मिथ्याज्ञानप्रचुराण्यासुराणि। उभयसमानि मध्यानि।

ननु प्रत्यक्षं त्रिविधमित्यसङ्गतम्। अक्षस्यैव प्रकृतत्वात्, ऐश्वरमित्यादिना तस्यैव निरूपित-त्वाच्च। अत एव 'एतत्प्रत्यक्षमीरितम्' इति उपसंहारोऽप्यनुपपन्न इत्यत आह- **विषयानिति ।।** निर्दोषान् स्वस्वविषयान् **प्रति स्थितं** तैः सन्निकृष्टम्। अनेन प्रादिसमासोऽयमित्युक्तं भवति। अव्ययीभावत्वे हि प्रत्यक्षस्येति षष्ठी न श्रूयेत। यतोऽक्षमेव निर्दोषस्वगोचरसन्निकृष्टं प्रत्यक्षमिति कीर्तितं शाब्दिकैः न त्वर्थान्तरम् अतोऽनतिभिन्नत्वान्न कश्चिद्विरोधः। निर्वचनप्रसङ्गादक्षशब्दमपि निर्वक्ति- **अक्षयमिति ।।** एतेन नञुपपदात् 'क्षि क्षये' इत्यस्माद्धातोः 'आतोऽनुपसर्गे कः' इति कप्रत्यय इत्युक्तं भवति। अक्षयमक्षमिति निर्वचनं किमन्वर्थमुत नेति शङ्कायामाह- **पुरुषस्य स्वरूप इति ।।** एतत्तु निर्वचनं पुरुषस्येश्वरादेः स्वरूपेऽक्षे मुख्यमन्वर्थमेव। तदन्यत्र विभिन्नेऽ-क्षेऽक्षशब्दस्योपचारः। कुतो यतः स्वरूपेण नित्यस्यापि तस्य सृष्टिकाले भौतिकाहङ्कारि-कावयवोपचयरूपोत्पत्तिरस्ति, प्रलये च तदपचयलक्षणः क्षयश्चातो मुख्यासम्भवादेक-देशाक्षयत्वनिमित्ता गौणी वृत्तिरिति।

एतेनानुभवस्य प्रत्यक्षादित्रयानन्तर्भूतस्य प्रमाणत्वाभावात् कथमैक्यागमस्य तद्विरोधेनाप्रामा-ण्यमुच्यत इत्याशङ्का परिहृता भवति। स्वरूपेन्द्रियाभिव्यक्तस्यानुभवस्य प्रत्यक्षेऽन्तर्भूतत्वात्।

प्रमाणत्रित्वसिद्धये सम्भवपरिशेषादीनामन्तर्भावमाह- **उपपत्तीति ।।** व्याप्तिस्मरणमपेक्ष्यार्थ-प्रमितिजनकत्वात् सम्भवादिकमपि प्रमाणमनुमैव। एवमैतिह्यस्याप्यागमेऽन्तर्भावो वाच्यः। अर्थापत्त्यादीनि वादिभिः पृथक्प्रमाणतयाऽङ्गीकृतानि, नतु सम्भवादीनि। किन्तु प्रातीतिकमेव तेषां पृथक्त्वमिति ज्ञापनाय विप्रकर्षेणान्तर्भावोक्तिः। प्रत्यक्षशब्दे निरुक्तेऽनुमानशब्दे च प्रस्तुते तन्निर्वचनजिज्ञासायां तत्सूचयन्नाह- **प्रत्यक्षेति ।।** अनुकूलाभ्यां प्रत्यक्षागमाभ्यामुपाधिप्रतिपक्ष-निरासात् **प्रमाणताम्** अर्थनिश्चायकतां, याति। **अन्यथा** उपाध्यादिग्रस्तत्वे, तस्य **नियतत्वं** निश्चयहेतुत्वम्। एतेनानुसृत्य मानमनुमानमिति निर्वचनं सूचितम्। एवम् **आ** समन्ताद्गम्यतेऽनेनार्थ इत्यागमशब्दनिरुक्तिर्द्रष्टव्येति ।

एतेन 'विपर्ययेणाप्यनुमातुं शक्यत्वात्' इत्युक्तं दृढीकृतं भवति।

**(र.टि.) शरीरेन्द्रियरहितत्वादिति ।।** इन्द्रियरहितत्वे हेतुप्रदर्शनार्थं शरीरग्रहणं कृतम्। ननु सर्वपदस्या-सङ्कुचितवृत्तित्वे तथाशब्दसूचितदृष्टान्ताभावः। तथा योगिप्रत्यक्षस्याक्षत्वविधानवैयर्थ्यं चेत्यत आह- **यथा यौगिकमिति ।।** योग्ययोगिनोर्भिन्नेन्द्रियत्रैविध्यवत्तत्स्वरूपेन्द्रियत्रैविध्यस्यापि सद्भावात्तदनुक्त्वा भिन्नेन्द्रिय-**(र.टि.)** त्रैविध्यं किमर्थमुच्यत इत्यत आह- **यददुष्टमिति ।।** 'अदुष्टमिन्द्रियम्' इत्यत्रेन्द्रियपदस्य भ्रमत्वा-नधिकरणज्ञानजननस्वरूपयोग्येन्द्रियपरत्वेनैव नित्यसंसारितमोयोग्यस्वरूपेन्द्रियस्य भ्रमत्वाधिकरण-ज्ञानजनकत्वनियमात्तद्व्यवच्छेदसिद्धौ सज्जनस्वरूपेन्द्रियस्य याथार्थ्यनियमात् 'स्वदृग्' इत्यत्रेव निर्दोषत्व-स्यानपेक्षितत्वेन लाघवात्प्रमाणभूतसर्वेन्द्रियाणाम् एकवाक्येनैव लक्षणं प्रतिपादयितुमुक्तमदुष्टत्वं स्वरूपेन्द्रियाणां स्वरूपकथनमात्रम्, सर्वेषामपि बाह्येन्द्रियाणां दोषसाहित्येन भ्रमजनकत्वस्यापि सत्त्वात्तत्रादुष्टत्वं दुष्टेन्द्रिय-व्यावर्तकतया विशेषणमिति ज्ञापयितुमित्यर्थः। नन्वेतद्वैलक्षण्यं कथं भिन्नेन्द्रियाणां विभागकथनेन ज्ञापित-मित्यतो भिन्नेन्द्रियेषु

दैवादिपदप्रयोगबलेन लब्धमित्याशयवान् दैवादिपदार्थमाह- **सम्यग्ज्ञानप्रचुराणीत्यादिना ॥ तस्यैवेति ॥** अक्षस्यैवेत्यर्थः । ऐश्वरादिपदोक्तस्यैव 'सर्वमक्षात्मकं मतम्' इत्यक्षत्वोक्तेरिति भावः । **प्रत्यक्षस्येति षष्ठीति ॥** 'प्रत्यक्षस्य लक्षणमाह' इत्यादिशास्त्रीयप्रयोगेष्वित्यर्थः । प्रयोगबाहुल्याभिप्रायेणेदमु-दितम् । 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' 'तृतीयासप्तम्योर्बहुलम्' इत्यपवादेन प्रत्यक्षादित्यादेरनुदाहरणत्वेऽपि प्रथमाद्वितीयाद्विवचनबहुवचनचतुर्थीषष्ठीवचनान्तोऽपि प्रत्यक्षशब्दोऽत्रोदाहरणम् । **अनतिभिन्नत्वादिति ॥** प्रत्यक्षस्य सव्यापारत्वे नाक्षाद्भेदेऽपि अत्यन्ताभेदाभावादित्यर्थः । **विरोध इति ॥** प्रकृतासङ्गत्युपसंहारानुपपत्तिरूपो दोष इत्यर्थः । **भौतिकाहङ्कारिकेति ॥** भूतैस्तैजसाहङ्कारेणापीति द्वेधेन्द्रियाणामुपचयादिति भावः । साध्या-विशिष्टतापरिहारार्थम् 'उपपत्तिस्वरूपत्वात्' इत्येतद्व्याचष्टे- **व्याप्तिस्मरणमिति ॥** अनुमानप्रामाण्योपयुक्तं प्रत्यक्षागमयोः किं माहात्म्यमित्यत आह- **अनुकूलाभ्यामिति ॥** ननु प्रत्यक्षागमाभ्यां प्रतिपक्षाद्यनिरासेऽपि निर्दोषोपपत्तित्वलक्षणप्रमाणतानपायात् कथं 'प्रमाणतां याति' इत्युक्तमित्यतो व्याचष्टे- **अर्थनिश्चायकता-मिति ॥**

**(रा.टि.)** न्यूनत्वशङ्कां निराह- **विष्णोः श्रियश्चेति ॥ समाधीति ॥ समाधि**र्ध्यानम् । तस्य परिपाकोऽ-परोक्षज्ञानफलोपधानशक्तता तद्वन्तः । **शरीरेति ॥** इन्द्रियराहित्योपपादनाय शरीरराहित्योक्तिः । 'सर्वेन्द्रिय-विवर्जितम्' इति त्रयोदशे गीतायाम् । आदिपदेन 'चक्षुः श्रोत्रं तदपाणिपादम्' इत्यादिग्रहः । उक्तानीत्यनूद्य स्थलमाह- **उक्तानि यदात्मको भगवानिति ॥** 'तदात्मिका व्यक्तिः । किमात्मको भगवान् ? ज्ञानात्मक ऐश्वर्यात्मकः' इत्यादिस्तद्वाक्यशेषः । **विशेषणमिति ॥** दोषयुक्तेन्द्रियव्यावृत्त्यर्थमुपात्तमित्यर्थः । **प्रकृतत्वा-दिति ॥** अदुष्टमिन्द्रियं त्वक्षमित्युपक्रमादिति भावः । फलितार्थमाह- **तैस्सन्निकृष्टमिति ॥ अनेनेति ॥** 'विषयान् प्रति स्थितम्' इति कथनेन । 'कुगतिप्रादयः' इति सूत्रेण प्रति स्थितमक्षं प्रत्यक्षमिति प्रादिसमास इत्यर्थः । 'अव्ययं विभक्ति' इत्यादिनाऽक्षं प्रति प्रत्यक्षमित्यव्ययीभावत्वे तु 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति विभक्तेरम्प्रत्ययोक्त्या प्रत्यक्षमित्येव भाव्यम् । न तु प्रत्यक्षस्य लक्षणमाह, प्रत्यक्षस्य विभागमाहेत्यदौ षष्ठी श्रूयेतेत्यर्थः । 'अपञ्चम्याः','तृतीयासप्तम्योर्बहुलम्' इति पञ्चम्यादौ अमोऽपवादेऽपि षष्ठ्यादावनपवादात् षष्ठी न श्रूयेतेत्युक्तम् । ननु प्रत्यक्षमित्यादिना प्रागुक्तचोद्यस्योत्तरमाह- **यतोऽक्षमेवेत्यादिना ॥ क्षै क्षय इति ॥ (रा.टि.)** 'आदेच उपदेशेऽशिति' इत्याकारादेशे क्षा इति स्थिते, अनुपसर्गे सुप्युपपदे आकारान्ताद्धातोः कप्रत्यय इति सूत्रेण कप्रत्यये 'लशक्वतद्धिते' इति ककारव्यञ्जनस्य लोपे 'आतो लोप इटि च' इत्याकारलोपे नञो नलोपे सत्यक्षमिति सिद्ध्यतीति भावः । **भौतिकेति ॥** 'तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इत्युक्तेः 'तैजसा-नीन्द्रियाण्याहुः' इति वचनात् तैजसाहङ्कारावयवैरुपचयेत्यर्थः । अक्षपदनिरुक्तेः प्रकृतोपयोगं व्यनक्ति- **एते-नेति ॥** स्वरूपेन्द्रिये मुख्याक्षत्वकथनेनेत्यर्थः । ननु स्वरूपज्ञानस्य नित्यतया स्वरूपेन्द्रियाजन्यत्वात् कथमप-रोक्षानुभवत्वेन प्रत्यक्षान्तर्भाव इत्यत आह- **स्वरूपेन्द्रियाभिव्यक्तस्येति ॥** अभिव्यक्तिरत्र विषयसम्बन्धो वा विषयसम्बन्धापादको धर्मविशेषो वा ज्ञेयः । हेतुसाध्ययोरभेदशङ्कानिरासायोपपत्तिपदार्थं वदन्नेव वाक्यं योजयति- **व्याप्तीति ॥** व्यक्तमेतत् सम्भवादिस्वरूपमनुमानान्तर्भावादि च 'सम्भवपरिशेषावनुमा' इत्यादि-ग्रन्थान्तरव्याख्याने । **ऐतिह्यस्येति ॥** 'वटे वटे वैश्रवणः' इत्यादिप्रवादरूपस्येत्यर्थः । अनुमाननिरुक्तेः प्रकृतोपयोगमाह- **एतेनेति ॥** प्रत्यक्षाद्यननुसार्यनुमानस्यानिश्चायकत्वकथनेनेत्यर्थः । **एवमिति ॥** आङ्पूर्वाद् गमेः 'ग्रहवृदृनिश्चिगमश्च' इति करणे अप् प्रत्यय इति भावः ।

**(श्री.टि.)** ननु विधान्तरस्यापि लक्ष्मीप्रत्यक्षस्य सत्त्वात् कथं त्रित्वोक्तिरित्यत आह- **ऐश्वरमितीति ॥** अनेन ईश्वरस्य ईश्वर्याश्चेदम् ऐश्वरमिति विग्रहस्सूचितो भवतीति द्रष्टव्यम् । **अस्मदादीनामिति ॥** समाधिपरिपाक-शून्यानामित्यर्थः । 'शरीरेन्द्रियरहितत्वात्' इत्यत्रेन्द्रियरहितत्वे शरीरराहित्यं हेतुत्वेनोक्तमिति बुद्ध्या विवेकेन द्रष्टव्यम् । 'शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम् इन्द्रियम्' इति कारिकायामिन्द्रियस्य शरीरसंयुक्तत्वाभि-धानात् 'शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिन्द्रियम्' इत्यन्यत्राप्युक्तत्वादिति भावः । **तत्र** तदीयेन्द्रिये । तथेति दार्ष्टान्तिकोक्त्या सूचितं दृष्टान्तमाह- **यथेति ॥** यौगिकं प्रत्यक्षम् । ऐश्वरमपि प्रत्यक्षम् । तथा च यथा यौगिकं प्रत्यक्षमक्षात्मकम् अदुष्टेन्द्रियात्मकत्वात् । तथा सर्वमैश्वरमपि प्रत्यक्षमक्षात्मकम् अदुष्टेन्द्रियात्मकत्वादित्यर्थः। तथा च न तत्र प्रत्यक्षत्वोक्तिरौपचारिकीत्याशयः । **तथा सतीति ॥** ऐश्वरप्रत्यक्षस्यापि अदुष्टेन्द्रियात्मकत्व-रूपाक्षात्मकत्वाङ्गीकारे इत्यर्थः । **यदात्मक इति ।** 'यदात्मको भगवान् तदात्मिका व्यक्तिः । किमात्मको भगवान्? ज्ञानात्मक ऐश्वर्यात्मकस्सुशक्त्यात्मकः' इति श्रुतावित्यर्थः । **एतेनेति ॥** विष्णोः श्रिय इति विशिष्य कथनेनेत्यर्थः । अन्येषां योगिनामयोगिनां च । अक्षाणीति शेषः । **स्वरूपकथनेति ॥** सज्जनस्वरूपेन्द्रियाणा-मदुष्टत्वनियमेन व्यावर्त्याभावादिति भावः । भिन्नेन्द्रियाणामेवेति ॥ सर्वेषां बाह्येन्द्रियाणां दोषसाहित्येन भ्रमजनकत्वस्यापि सद्भावेन तेष्वदुष्टत्वं दुष्टेन्द्रियव्यावर्तकतया विशेषणमिति ज्ञापयितुमित्यर्थः ।

नन्वदुष्टत्वं सज्जनस्वरूपेन्द्रियाणां स्वरूपकथनमात्रं, भिन्नेन्द्रियाणामेव विशेषणमिति वैलक्षण्यं भिन्नेन्द्रि-याणां विभागकथनेन कथं ज्ञापितमित्यतो भिन्नेन्द्रियेषु दैवादिपदप्रयोगबलेन लब्धमित्याशयवान् दैवादिपदार्थ-माह- **सम्यग्ज्ञानप्रचुराणीत्यादिना ।। सम्यग्ज्ञानप्रचुराणि** प्राचुर्येण सम्यग्ज्ञानजनकानीत्यर्थः । **मिथ्या-ज्ञानप्रचुराणि** प्राचुर्येण मिथ्याज्ञानजनकानीत्यर्थः । **उभयसमानि** साम्येनोभयजनकानीत्यर्थः । **प्रकृतत्वा-(श्री.टि.) दिति ।।** 'अदुष्टमिन्द्रियं त्वक्षम्' इति प्रकृतत्वादित्यर्थः । **तस्यैव** अदुष्टेन्द्रियरूपाक्षस्यैव । 'तथा सर्वमक्षात्मकं मतम्' इत्युक्तत्वादिति भावः । **अत एव** प्रकृतविरोधादेव । प्रकृतस्यैवोपसंहार्यत्वेन एतदक्षमीरित-मिति च वक्तव्यत्वादिति भावः । **निर्दोषानिति ।।** अतिदूरत्वातिसामीप्यसौक्ष्म्यव्यवधानादिदोषरहितान् स्वविषयानित्यर्थः । **अनेनेति ।।** 'विषयान् प्रति स्थितम्' इति वचनेनेत्यर्थः । तथा च, प्रगत आचार्यः प्राचार्य इतिवत् प्रति स्थितमक्षं प्रत्यक्षमिति प्रादिसमासोऽयं, मध्यमपदलोपी समास इति यावदित्यर्थः । ननु प्रादिसमासोऽयमिति कुतः । अक्षं प्रति प्रत्यक्षमित्यव्ययीभावः कस्मान्न स्यादित्यत आह- **अव्ययीभावत्वे हीति ।। षष्ठी न श्रूयेतेति ।।** प्रत्यक्षस्य लक्षणमाहेत्यादिशास्त्रीयप्रयोगेष्वित्यर्थः । तथा हि 'नाव्ययीभावादतोऽ-म्त्वपञ्चम्याः' अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमीं विना अमादेशः । उपकृष्णाद् गत इत्येवं पञ्चमीव्यति-रिक्तसर्वविभक्तिषु नित्यमम्भावश्रवणात् । 'तृतीयासप्तम्योर्बहुलम्' अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुल-मम्भावस्स्यात् । उपकृष्णं कार्यम्, उपकृष्णेन कार्यम्, उपकृष्णं स्थितः, उपकृष्णे स्थित इति तृतीयासप्तम्यो-रम्भावस्य वैकल्पिकत्वोक्तेः । 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानसञ्ज्ञाभावेन चतुर्थीविभक्त्युत्प-त्तेरेवायोगेन अव्ययीभावसमासाङ्गीकारे अम्भावस्यावर्जनीयत्वेन प्रत्यक्षस्येति षष्ठी न श्रूयेत । इदमुपलक्षणम् । प्रत्यक्षे, प्रत्यक्षाणीति प्रथमाद्वितीयाद्विवचनबहुवचनप्रयोगोऽपि न श्रूयेत । 'प्रत्यक्षो घटः' इति विशेष्यनिघ्नता च न श्रूयेतेत्यपि द्रष्टव्यम् । प्रयोगबाहुल्याभिप्रायेणैव प्रत्यक्षस्येत्युदाहृतमिति भावः । 'विषयान् प्रति' इति मूले हिशब्दो हेत्वर्थः अवधारणार्थश्चेत्यभिप्रेत्य शङ्कापरिहारपरत्वेन तन्मूलं योजयति- **यतोऽक्षमेवेति ।। स्वगोच-रेति ।।** स्वविषयेत्यर्थः । **न त्वर्थान्तरमिति ।।** घटादिवदिति भावः । **अनतिभिन्नत्वादिति ।।** प्रत्यक्षशब्दस्य सन्निकृष्टेन्द्रियवाचित्वेन अक्षशब्दाद्भेदेऽपीन्द्रियवाचित्वांशस्योभयत्रापि सत्त्वेन प्रत्यक्षाक्षशब्दयोर्घटपटादि-शब्दवदत्यन्तं भिन्नार्थत्वाभावादित्यर्थः । **न कश्चिद्विरोध इति ।।** प्रकृतासङ्गत्युपसंहारानुपपत्तिरूपो विरोधो नेत्यर्थः ।

**निर्वचनप्रसङ्गादिति ।।** प्रत्यक्षशब्दनिर्वचनेनाक्षशब्दनिर्वचनस्यापि स्मारितत्वेन स्मृतस्योपेक्षानर्हत्वरूपात् प्रसङ्गादित्यर्थः । **नञुपपदादिति ।।** नञुपपदात् क्षै क्षय इत्यस्माद्धातोः 'आदेच उपदेशेऽशिति' उपदेशे एजन्तस्य धातोः एच आत्त्वं स्यात्, शितोऽन्यस्मिन् प्रत्यये विवक्षित इत्यनेन ऐकारस्य आत्त्वे नक्षा इति जाते 'न लोपो नञः' इति नञो नस्य लोपे अक्षा इति जाते 'आतोऽनुपसर्गे कः' आदन्ताद्धातोरनुपसर्गे उपपदे कप्रत्ययः स्यादिति सूत्रेण कप्रत्यये 'लशक्वतद्धिते' इति ककारलोपे 'आतो लोप इटि च' अजादावार्धधातुके किति ङिति च प्रत्यये इटि च परे धात्वाकारस्य लोपस्स्यादित्यनेन धात्वाकारलोपे अक्ष् अ अक्ष इति रूपम् । ननु 'आतोऽनुपसर्गे कः' इति सूत्रेणात्र कथं कप्रत्ययः । अनुपसर्गे कर्मण्युपपद इत्युक्तत्वात् । उदाहृतं च गां ददातीति गोदः, कम्बलद इति । प्रकृते च कर्मण उपपदस्याभावादिति चेत् सत्यम् । एवं हि सूत्रक्रमः 'कर्मण्यण्' 'ह्वावामश्च' 'आतोऽनुपसर्गे कः' 'सुपि स्थः' इति । तत्र पूर्वसूत्रात्कर्मणीत्यनुवृत्तिमभिप्रेत्य तथा व्याख्यातम् । अत्र कर्मणीति **(श्री.टि.)** नानुवर्तते । उत्तरसूत्रात्सुपीत्येतदाकृष्यते । तथा च अनुपसर्गे सुबन्ते उपपदे आदन्ताद्धातोः कप्रत्ययः स्यादित्यभियुक्तैर्व्याख्यातत्वेन प्रकृते च नञुपरि प्राप्तस्य सुपः 'अव्ययादाप्सुपः' इति लोपेन नञस्सुबन्तत्वात्त-स्मिन्नुपपदे युक्तः कप्रत्यय इति नैतत्सूत्रोदाहरणमसङ्गतमिति द्रष्टव्यम् । **अन्वर्थमिति ।। अन्वर्थं** युक्तार्थम् । निर्वचनलभ्योऽर्थस्तत्रास्तीत्यर्थः । न त्वश्वकर्णादिवद्रूढमिति भावः । **उपचारो** गौणी वृत्तिः । **स्वरूपेण नित्यस्यापीति ।।** सूक्ष्मरूपेण नित्यस्यापीत्यर्थः । 'भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम्' इति वचनात् । **तस्य** भिन्नेन्द्रियस्य । अहङ्कारशब्देन तैजसाहङ्कारो ग्राह्यः । तथा च भूत-तैजसाहङ्कारसम्बन्धिनो येऽवयवा अंशास्तैरुपचयरूपोत्पत्तिरस्तीत्यर्थः । अत्राऽऽदौ भिन्नानां प्राकृतानां सूक्ष्मेन्द्रियाणां तैजसाहङ्कारावयवैरुपचयस्तद-नन्तरं तैजसाहङ्कारादुपचितानां तेषां पश्चात् पञ्चभूतावयवैरुपचय इति क्रमो ज्ञातव्यः । यथोक्तं भागवततात्पर्ये-

'सूक्ष्मेन्द्रियाणि सन्त्येव स्युस्स्थूलान्यप्यहङ्कृतेः ।
तेषां भूतैरुपचयस्सृष्टिकाले विधीयते ।।' इति ।

**।। मुख्यासम्भवादिति ।।** सर्वप्रकारेण क्षयाभावरूपाक्षशब्दमुख्यार्थस्य भिन्नेन्द्रियेष्वसम्भवादित्यर्थः । **एकदेशेति ।।**

अक्षशब्दमुख्यार्थे स्वरूपेन्द्रिये सर्वथा क्षयाभावेनैकदेशाक्षयोऽस्ति । भिन्नेन्द्रियेष्वप्येकदेशाक्षयोऽ-स्ति । तथा चैकदेशाक्षयरूपमुख्यार्थसदृशगुणयोगादक्षशब्दस्य गौणी वृत्तिरित्यर्थः । प्रकृतोपयोगं दर्शयति- **एतेनेति ।। अनुभवस्य** साक्षिजानुभवस्य । तद्विरोधेन साक्ष्यनुभवविरोधेन । **उच्यत इति ।।** 'न चानुभवविरोध आगमस्य प्रामाण्यम्' इत्यनेनेत्यर्थः । एतेनेत्युक्तं विशदयति- **स्वरूपेन्द्रियेति ।।** साक्षीत्यर्थः ।

**।। सम्भवपरिशेषेति ।।** सहस्रादौ शतादिविज्ञानं सम्भवः । प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् परिशिष्यमाणे बुद्धिः परिशेषः । यथा चैत्रमैत्रयोर्नायं चैत्र इत्युक्तेऽन्यस्मिन् मैत्र इति ज्ञानम् । 'सम्भवादिकमनुमा उपपत्ति-स्वरूपत्वात्' इत्यत्र साध्याविशिष्टतापरिहारायोपपत्तिस्वरूपत्वादित्येतद्व्याख्याति- **व्याप्तीति ।। सम्भवादि-कमनुमैवेति ।।** देवदत्तः शतवान् सहस्रवत्त्वादित्येवं सम्भवेऽनुमानप्रकारो द्रष्टव्यः । यथाऽहुः 'इह भवति शतादौ सम्भवादासहस्रान्मतिरपि युतिभावात्सानुमानादभिन्ना' इति । तथाऽयं मैत्रो भवितुमर्हति, चैत्रमैत्रयो-रन्यतरत्वे सत्यचैत्रत्वाद् व्यतिरेकेण घटवदिति परिशेषेऽप्यनुमानप्रकारो ज्ञातव्यः । घटे विशेषणाभावप्रयुक्त-विशेष्याभावेन हेतुव्यतिरेको द्रष्टव्यः । **ऐतिह्यस्यापीति ।।** 'इहाऽहुर्वृद्धाः' इति प्रवादपारम्पर्यमैतिह्यम् । यथा 'वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः । पर्वते पर्वते रामः सर्वत्र मधुसूदनः' इत्यादि । इदं च प्रायः प्रमाणमेव न भवति । यदि च प्रमाणं तर्हि पदार्थस्मृत्यादिकमपेक्ष्य संसर्गप्रमाजनकत्वादागमेऽन्तर्भावो वाच्य इत्यर्थः । यथाऽहुः 'जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं भवति च यदि तथ्यं नाऽगमाद्भिद्यते तत्' इति । नन्वर्थापत्त्यादीना-मनुमानान्तर्भावकथनपरे 'अर्थापत्त्युपमाभावाः' इति वाक्य एव सम्भवपरिशेषावपि स्थापयित्वाऽनुमानान्तर्गता इत्यन्तर्भावः कुतो नोक्तः? सम्भवपरिशेषयोरपि अर्थापत्त्यादिवदनुमानान्तर्भावे समाने सति विप्रकर्षे निमित्ता-भावादित्यत आह- **अर्थापत्त्यादीनीति ।। वादिभिः** प्राभाकरभाट्टवेदान्तिभिः । यथोक्तं कारिकायाम्-

**(श्री.टि.)** 'अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ।
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा' इति ।

**।। न तु सम्भवादीनीति ।।** बहुभिर्वादिभिः प्रमाणत्वेन नाङ्गीकृतानि किन्तु कैश्चिदेव पौराणिकैरिति भावः । 'सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः' इति कारिकोक्तेरिति ध्येयम् । **प्रातीतिकमेवेति ।।** आपातप्रतीत्यैव सिद्धमित्यर्थः । अनुमानप्रामाण्योपयुक्तं प्रत्यक्षागमयोर्माहात्म्यं नाम कीदृशमित्यत आह- **अनुकूलाभ्यामिति ।।**

'अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः ।।'

इति वचनादिति भावः । तथा च प्रतिपक्षोपाध्यादिनिरासकत्वमेवानुमानप्रामाण्योपयुक्तं तयोर्माहात्म्यमिति भावः ।

ननु यस्मिन्ननुमाने व्याप्तिपक्षधर्मतावत्त्वेन स्वत एव प्रामाण्यं सिद्धमस्ति प्रतिपक्षोपाध्यादिशङ्का च नास्ति तादृशस्थले कथं प्रत्यक्षागममाहात्म्यादनुमानं प्रमाणतां याति । तत्र प्रत्यक्षागमाभ्यां प्रतिपक्षाद्यनिरासेन तयोर्निरु-क्तमाहात्म्याभावादित्यतः तादृशस्थलाभिप्रायेण प्रमाणतामित्येतद्व्याचष्टे- **अर्थनिश्चायकतामिति ।।** तादृशस्थले प्रत्यक्षागमयोर्निरुक्तमाहात्म्याभावेन तन्माहात्म्यादनुमानस्य प्रामाण्याभावेऽपि तत्संवादेनार्थनिश्चायकत्व-मस्तीत्यर्थ इत्याहुः । **एतेनेति ।।** 'प्रत्यक्षागममाहात्म्यात्' इति वचनेनेत्यर्थः । आगमशब्दस्यानिरुक्तत्वा-न्न्यूनतापरिहारायाऽह- **एवमिति ।। अर्थः** अतीन्द्रियो धर्माधर्मादिरूपः । **द्रष्टव्येति ।।**

'आ समन्ताद्गमयति धर्माधर्मौ परं पदम् ।
यच्चाप्यतीन्द्रियं त्वन्यत् तेनासावागमः स्मृतः ।।'

इत्यनुव्याख्यानानुसारेण द्रष्टव्येत्यर्थः । प्रकृतोपयोगं दर्शयति- **एतेनेति ।।** 'नैवान्यथा तस्य नियतत्वं क्वचिद्भवेत्' इत्यनेनेत्यर्थः ।

**(पां.टि.)** ननु लक्ष्मीप्रत्यक्षमादाय चातुर्विध्यस्यान्यत्र समर्थितत्वात् कथं तत्त्रैविध्योक्तिरित्यत आह- **ऐश्वरमितीति ।। शरीरेन्द्रियरहितत्वादिति ।।** अत्रेन्द्रियरहितत्वोपपादनाय शरीरग्रहणम् । सर्वशब्दस्या-सङ्कुचितवृत्तित्वे तथाशब्दसूचितदृष्टान्ताभावप्रसङ्गात् सङ्कुचितवृत्तितामाश्रित्याऽह- **सर्वमैश्वरमपीति ।। याव-दिति ।।** तावताऽपि कथमुदाहृतश्रुतिविरोधपरिहार इत्यत आह- **भिन्नेति ।।** ननु योग्ययोगिनोर्भिन्नेन्द्रियत्रैविध्य-वत् स्वरूपेन्द्रियत्रैविध्यस्यापि

सद्भावात्स्वरूपेन्द्रियत्रैविध्यमनुक्त्वा भिन्नेन्द्रियत्रैविध्यमात्रोक्तिः किन्निबन्ध-नेत्यत आह- **यददुष्टमिति ॥** अतिसामीप्यादिदोषयुक्तविषयैः सन्निकृष्टस्याक्षस्यापि विषयसन्निकृष्टाक्षत्वेन प्रत्यक्षत्वात्तेनापि तद्ग्रहणप्रसक्त्या तन्मात्रस्य प्रत्यक्षलक्षणत्वायोगात् 'निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम्' **(पां.टि.)** इत्यादिग्रन्थान्तरानुसारेण निर्दोषत्वस्यापि विषयविशेषणस्याभिप्रेतत्वान्नानुपपत्तिरित्याशयेनाह- **निर्दोषानिति ॥** मूले विषयग्रहणस्याऽनर्थक्यमाशङ्क्याऽकाशादिसन्निकृष्टचक्षुरादिव्युदासार्थत्वान्न तदित्यभिप्रेत्य विषयत्वस्य केवलान्वयित्वेनाऽकाशादिसाधारणत्वात्कथमनेन तद्व्यावृत्तिरित्यतोऽत्र विषयपदस्येन्द्रियविषय-परत्वेन विषयमात्रपरत्वाभावादिन्द्रियविषयत्वस्याकेवलान्वयित्वाद्युक्तमाकाशादिव्यावर्तकत्वं तस्येत्याश-येनाऽह- **स्वविषयानिति ॥** तथाऽपि चक्षुरादिना गन्धादिग्रहणप्रसङ्ग इत्यतोऽन्वयव्यतिरेकाभ्यां यस्येन्द्रियस्य यो विषयत्वेनावगतस्तत्परत्वाद्विषयपदस्य गन्धादेश्च चक्षुरादिकं प्रत्यतथात्वान्नोक्तप्रसङ्ग इत्याशयेनोक्तम्- **स्वस्वविषयानिति ॥** मूले 'विषयान् प्रति स्थितम्' इत्युक्तरीत्या प्रत्यक्षशब्दनिर्वचनस्याऽनर्थक्यमाशङ्क्य प्रत्यक्षशब्दे प्रादिसमासज्ञापनद्वाराऽव्ययीभावनिवृत्तिसूचनार्थत्वान्न तदिति भावेन तन्निर्वचनप्रयोजनमाह- **अनेनेति ॥** 'विषयान् प्रति' इत्यादिप्रत्यक्षशब्दनिर्वचनेनेत्यर्थः । **प्रादिसमास इति ॥** प्राचार्यः, प्रान्तेवासीत्यादौ वृत्तिविषये गताद्यर्थे वर्तमानानां प्रादीनामगतित्वेऽपि 'कुगतिप्रादयः' इत्यत्र प्रादिग्रहणात् प्रथमान्तेनाऽ-चार्यादिपदेन, प्रगत आचार्यः प्राचार्यः, प्रकृष्टान्तेवासी प्रान्तेवासीति समासवद्, वृत्तिविषये गताद्यर्थे इत्यादि-पदग्राह्यस्थितार्थे वर्तमानस्य प्रतिशब्दस्य गतित्वाभावेऽपि 'कुगतिप्रादयः' इत्यत्र प्रादिग्रहणात्प्रथमान्तेनाक्षशब्देन प्रति स्थितमक्षं प्रत्यक्षमिति प्रादिसमास इत्यर्थः । प्रति स्थितमित्युक्तिस्तु गताद्यर्थे वृत्तिमस्वपदविग्रहेण नित्य-समासत्वं च सूचयितुमिति द्रष्टव्यम् ।

न च प्रत्यक्षशब्दे न प्रादिसमासोऽङ्गीकर्तुं शक्यते । तथा सति प्रत्यक्षशब्दस्यार्धपिप्पलीत्यादिवत् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परवल्लिङ्गताविधानेन नियतलिङ्गत्वापत्त्या, प्रत्यक्षोऽर्थः, प्रत्यक्षा बुद्धिः, प्रत्यक्षं ज्ञानमित्य-भिधेयलिङ्गत्वाभावापातादिति वाच्यम् । वार्तिककृता कात्यायनेन 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधः' इति गतिसमासे परवल्लिङ्गताप्रतिषेधात् । गतिग्रहणस्यान्यस्यासम्भवेन प्राद्युपलक्षणताया आकरे स्थितत्वात् प्रादिसमासस्य परवल्लिङ्गत्वाभावेन विशेष्यनिघ्नतया निष्कौशाम्बिरित्यादिवदभिधेयलिङ्गत्वोपपत्तेः । न च प्रादिसमासप्रसङ्गे 'कर्मप्रवचनीयानां प्रतिषेधः' इति कर्मप्रवचनीयस्य प्रतिशब्दस्य समासप्रतिषेधात् कथं प्रतिशब्द-स्याक्षशब्देन प्रादिसमासः स्यादिति वाच्यम् । लक्षणेत्थम्भूताख्यानादिरूपकर्मप्रवचनीयत्वप्रयोजकस्यात्रा-भावेनाकर्मप्रवचनीयत्वात् प्रतिशब्दस्याक्षशब्देन समासोपपत्तेः । न चैवं विषयानिति द्वितीयानुपपत्तिः, कर्म-प्रवचनीययोगाभावेन 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन तदप्राप्तेरिति वाच्यम् । 'बुभुक्षितं न प्रतिभाति किञ्चन' इत्यादाविव 'उभसर्वतसोः कार्या' इत्यादिवार्तिककृदुक्तरीत्या अकर्मप्रवचनीयप्रतिशब्दयोगेऽपि द्वितीयाया उपपन्नत्वात् । एतच्च तद्वार्तिकव्याख्यानावसरे आकर एव स्पष्टम् । ननु अक्षमक्षं प्रति वर्तत इति प्रत्यक्षमिति निर्वचनाश्रयणेन प्रत्यक्षशब्देऽव्ययीभावस्यापि सति सम्भवे परित्यागायोगात् न तन्निवृत्तिसूचकत्वं सम्भवतीत्यतः, तथा सत्युपकुम्भादिवन्नियतनपुंसकत्वेन विशेष्यनिघ्नत्वाभावापत्त्या प्रत्यक्षोऽर्थः, प्रत्यक्षा बुद्धिरि-त्याद्यभिधेयलिङ्गता न स्यात् । इन्द्रियगुणकर्मसामान्येष्वतिव्याप्तेश्चेत्यादिदोषे सत्येव स्पष्टत्वात्तमुपेक्ष्य उद्योतकार-**(पां.टि.)** वार्तिकोक्तं तत्पक्षे दोषमाह- **अव्ययीभावत्व इति ॥** 'प्रत्यक्षस्य लक्षणमाह' इत्याद्यभियुक्त-प्रयोगेष्विति शेषः । 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति पञ्चम्या अमादेशनिषेधेऽपि 'तृतीयासप्तम्योर्बहुलम्' इति तृतीयासप्तम्योर्विकल्पेन तद्विधानेऽप्यन्यत्र नियमेनाम्भावविधानेन प्रत्यक्षमित्येव भाव्यत्वेन प्रत्यक्षस्येति षष्ठी न श्रूयेतेत्यर्थः । **अक्षमिति ॥** अदुष्टमिन्द्रियमित्यर्थः । **अनतिभिन्नत्वादिति ॥** विशिष्टाकारस्यायावद्-द्रव्यभावितया विशेष्येणाक्षेण भिन्नाभिन्नत्वात् नात्यन्ताभिन्नत्वमित्यर्थः । **कश्चिदिति ॥** 'प्रत्यक्षं त्रिविधम्' इत्युपक्रमासङ्गतिरूपो वा 'एतत्प्रत्यक्षमीरितम्' इत्युपसंहारानुपपत्तिरूपो वेत्येवं कश्चिदपीत्यर्थः । अक्षशब्द-निर्वचनस्यासङ्गतिमाशङ्क्य परिहरति- **निर्वचनप्रसङ्गादिति ॥** प्रत्यक्षशब्दनिर्वचनप्रसङ्गादित्यर्थः । प्रत्यक्षशब्द-निर्वचनेनाक्षशब्दनिर्वचनस्यापि स्मारितत्वात्तन्निर्वचनकरणमिति भावः । **नञुपपद इति ॥** नञुपपदे 'क्षै क्षये' इत्यस्य उपदेशे एजन्ततया 'आदेच उपदेशेऽशिति' इत्यात्त्वे 'आतोऽनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्यकारलोपे 'न लोपो नञः' इति नलोपे न क्षायतीत्यक्षमिति अक्षशब्दनिष्पत्तिरिति भावः । **सूक्ष्मरूपेण नित्यस्यापीति ॥** 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः' इति वचनाद् इति भावः । **सृष्टिकाले भौतिकाहङ्कारिकावयवेति ॥** भौतिकावयवैः तैजसाहङ्कारिकावयवैश्चेति द्वेधा उपचयलक्षणोत्पत्ति-रस्तीत्यर्थः ।

'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः ।

तेषां भूतैरुपचयः सृष्टिकाले विधीयते ॥'

इत्यादिस्मृतेरिति भावः । साध्यावैशिष्ट्यपरिहारायाऽह-**व्याप्तिस्मरणमपेक्ष्येति ॥ अन्तर्भावो वाच्य इति ॥** अन्यथाऽनुप्रमाणत्रित्वभङ्गापत्तेरिति भावः । **प्रातीतिकमिति ॥** आपाततः प्रतीत्या प्राप्तमित्यर्थः । **प्रत्यक्षागम-माहात्म्यादिति ॥** प्रत्यक्षागमयोरानुकूल्यस्याप्यनुमानप्रामाण्योपयुक्तत्वमुक्तम् । तत्केन प्रकारेणेत्यतस्तदा-भासत्वापादकोपाधिप्रतिपक्षनिरासकत्वेनेत्याह- **अनुकूलाभ्यामिति ॥** आ इत्यनुवादेन समन्तादिति व्याख्या-नम् । सम्यक्चेत्यपि ग्राह्यम् । 'ग्रहवृदृनिश्चिगमश्च' इति अकर्तरि कारके भावे च गमेरपो विधानादागमशब्दः करणसाधन एव । अत्र आ समन्ताद्गमयतीत्यादौ कर्तृसाधनकथनं तु करणे कर्तृत्वोपचारेणैवेति भावेन करण-साधनतां दर्शयति- **गम्यते ज्ञायतेऽर्थोऽनेनेति ॥**

**(व्या.टि.) एकीकृत्येति ॥** 'समना नयरीत्या परमैश्वर्यशालिमहालक्ष्म्या उपस्थितेः' इत्युक्तदिशा नित्या-वियोगित्वेनात्यन्तरङ्गत्वाद्वा प्रत्यक्षद्वयमैकराश्येनोक्तमित्यर्थः । अथवा ईश्वरश्च ईश्वरी चेति विगृह्य 'पुमान् स्त्रिया' इत्येकशेषे तयोरिदमित्यर्थेऽणि 'यचि भम्' इति भसञ्ज्ञायाम् 'यस्येति च' इत्यकारलोपे ऐश्वरमिति 'सारस्वतौ भवतः' इतिवत् 'क्षौमे वसानावग्निमादधीयाताम्' इतिवच्च विरूपैकशेषेण स्त्रीपुंससम्बन्धीन्द्रियद्वय-मेकोक्त्या लक्ष्यत इति भावः । केचित्तु ईश्वरस्येश्वर्याश्चेदमिति विग्रहमाहुः । तन्न । प्रत्येकं लिङ्गद्वयात्तद्धितवृत्तौ वृत्तस्याऽवृत्तिप्रसङ्गः । विग्रहे चशब्दायोगश्च । 'समुदायाच्च न वृत्तिः प्रातिपदिकात्' इत्येकवचनानुरोधात् **(व्या.टि.)**समुदायश्रवणापत्तेश्च । **योगिन इति ॥** योगशब्दात् 'अत इनिठनौ' इति मत्वर्थे इनिरिति भावः । **तदीयमिति ॥** ऋजुतात्त्विकातात्त्विकसम्बन्धीत्यर्थः । अनेन योगिपदात् प्राग्वहनीयछगिति भावः । **अस्मदादी-नामिति ॥** वयमादयो येषामिति विग्रहः । समासस्त्वतद्गुणसंविज्ञानः । टीकाकाराणां विशिष्टव्याख्यातृत्वेन सुरत्वनिश्चयेनायोगित्वाभावात् । अनेनायोगिनामिदमिति विग्रहो दर्शितः । तथात्वे च अयौगिकमित्यार्षः प्रयोगः । अयोगिशब्दात् ठकि 'किति च' इति वृद्धावयोगिकमिति भाव्यत्वात् । **शरीरेन्द्रियेति ॥** यद्यपीन्द्रिय-राहित्यमेव शङ्कनीयं तथाऽपि तत्साधकतया शरीरराहित्यमप्युक्तम् इति । अत्राऽद्यस्तथाशब्दः समुच्चये, द्वितीय-मुपमायामित्यभिप्रेत्य व्याचष्टे-**यथा यौगिकमिति ॥** अभाववचनस्य तात्पर्यद्वयमाह-**भिन्नजडेति ॥** भिन्नेन्द्रियाभावपरं जडेन्द्रियाभावपरं चेत्यर्थः । 'उक्तानि' इत्युक्तवचनानि दर्शयति-**यदात्मक इत्यादा-विति ॥** आदिपदेन श्रियोऽपि भिन्नजडेन्द्रियाभावपरा श्रुतिर्ग्राह्या । भिन्नेन्द्रियविभागोक्तेः फलमाह-**यददुष्टमित्यादिना ज्ञापयितुमित्यन्तेन ॥** अत्र स्वरूपेन्द्रियपदेनोत्तमचेतनानां स्वरूपेन्द्रियं विवक्षितम् । तच्च 'निर्दोषमेव चैतन्यम्' इत्यनुभाष्योक्तदिशा निर्दोषमेवेति व्यावर्त्याभावात्तन्निर्दोषत्वं स्वरूपकीर्तनमिति भावः । अत्र मूले दैवानि चासुराणि चेति विग्रहः । सर्वत्र व्यक्त्यपेक्षया बहुवचनम् । तानि त्रीणीन्द्रियाण्युद्देशक्रमेण लक्षयति- **सम्यग्ज्ञानप्रचुराणीत्यादिना ॥** सम्यग्ज्ञानं प्रचुरं येभ्यस्तानीति विग्रहः । प्रचुरसम्यग्ज्ञानसाधना-नीति यावत् । अत्र ऋजुभिन्नेन्द्रिये सम्यग्ज्ञानप्राचुर्ये व्यधिकरणसजातीयाल्पं निरूपकम् । न तु समानाधिकरण-विजातीयाल्पम् । 'तत्र द्वयमपि नियमेन यथार्थम्' इति पद्धत्युक्तेः । भवति च व्यधिकरणसजातीयाल्पमपि प्राचुर्यनिरूपकम् । यथोक्तं तात्पर्यचन्द्रिकायाम्- 'विजातीयसमानाधिकरणाल्पं यथा तथा सजातीय-विभिन्नाधिकरणाल्पं निरूपकम्' इति । दैवान्यासुराणीत्यत्र दैवासुरशब्दावुत्तमाधमाधिकारिमात्रपरौ । उत्तमाधमेषु देवासुरप्राधान्येन वाऽयं व्यपदेशः । श्रौतश्चायमर्थो यत्प्राधान्येन व्यपदेश इति । यथाऽह ब्राह्मणम्- 'अथो एनं प्रथमे नैवानुबुद्ध्यन्ते । अयमागन् अयमवासत्' इति । इति मीमांसितश्च श्रुतिलिङ्गाधिकरणे 'ऐन्द्र्या गार्हपत्य-मुपतिष्ठते' इत्यत्र लिङ्गवाक्यविरोधसत्त्वेऽपि श्रुतिप्राबल्यात् श्रुतिलिङ्गविरोधव्यपदेशः' इति । **उभयसमा-नीति ॥** उभयं समं येभ्यस्तानीति विग्रहः । समोभयसाधनानीत्यर्थः ।

इन्द्रमहेन्द्राधिकरणन्यायेनाक्षप्रत्यक्षयोर्भेदं मत्वा शङ्कते- **नन्विति ॥ प्रकृतत्वादिति ॥** 'अदुष्टमिन्द्रियं त्वक्षम्' इत्युक्तक्रमादित्यर्थः । **निरूपितत्वादिति ॥** विभागेनेति शेषः । **अत एवेति ॥** प्रक्रमविरोधादि-त्यर्थः । ननु 'स्वरादिनिपातमव्ययम्' इति चादिनिपातपतितस्य प्रतेरव्ययत्वात् 'अव्ययं विभक्ति' इत्यादिनाऽ-व्ययीभावसमासे 'अतोऽम्त्वपञ्चम्याः' इत्यम्भावे 'अव्ययीभावश्च' इत्यव्ययत्वे कथमयं विग्रह इत्यत आह- **अनेनेति ॥** प्रतिस्थितमिति विग्रहप्रदर्शनेनेत्यर्थः । 'कुगतिप्रादयः' 'प्रादयो गताद्यर्थे प्रथमया' इति विहितः प्रादिसमासोऽयं नाव्ययीभाव इति भावः । मध्यमपदलोपी समासोऽयमिति कश्चित् । तन्न । 'सप्तम्युपमानपूर्वकस्य बहुव्रीहिर्वोत्तरपदलोपश्च' इतिवदत्र विधानाभावात् । शाकपार्थिवादित्वाभावाच्च । प्रत्युत 'प्रादयो गताद्यर्थे' इत्यनेन 'जनकस्यात्ययो जातिः' इत्यत्र प्रान्तेवासी, प्राचार्य इत्युदाहृत्य 'उपसर्गाः क्रियासन्निधानाभावे ससाधन-**(व्या.टि.)** क्रियामाहुः' इत्युक्त्या गतादीनामुपसर्गार्थत्वोक्त्या च विरोधाच्च । अव्ययीभावसमासे बाधकमाह- **अव्ययीभावत्वे हीति ॥**

**षष्ठीति ॥** 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यकारान्तादव्ययीभावात्सुपो न लुक् किन्त्वमेवेति सर्वविभक्तिस्थानापन्नतयाऽमो विधानेन, 'तृतीयासप्तम्योर्बहुलम्' इति पञ्चमीपर्युदासबहुल-ग्रहणाभ्यां पञ्चमीतृतीयासप्तमीनां श्रवणसम्भवेऽपि षष्ठीश्रवणमयुक्तमिति भावः । उपलक्षणमेतत् । द्विवचन-बहुवचनानुपपत्तिश्चेति ज्ञातव्यम् । **नत्वर्थान्तरमिति ॥** विशिष्टस्य पदार्थान्तरत्वे आमिक्षाधिकरणविरोधः स्फुट एवेति भावः । अक्षशब्दात् कथमक्षयत्वलाभ इत्यतः प्रकृतिप्रत्ययविभागं दर्शयति- **एतेनेति ॥ नञुपपद इति ॥** एतेन सूत्रे 'सुपि' इत्यनुवृत्तिः सूचिता । **धातोरिति ॥** धातुव्याख्यानादित्यर्थः । क्षायतेः 'आदेच उपदेशेऽशिति' इत्यात्त्वे 'आतोऽनुपसर्गे कः' इति कप्रत्यय इति भावः । **अन्वर्थमिति ॥** आनुपूर्व्येऽव्ययीभावः। अर्थवदेव न रूढमिति भावः । **भौतिकाहङ्कारिकेति ॥** 'तेषां भूतैरुपचयः' इति 'वैकारिकान्मनो जज्ञे । तैजसानीन्द्रियाण्याहुः' इत्युपचयश्रवणादित्यर्थः । उपचयोक्तिरनुपयुक्तेत्यत आह- **अपचयलक्षण इति ॥** स्वरूपेन्द्रियनित्यत्वानुभवनिर्दोषत्वोक्तेः क्वोपयोग इत्यत आह-**एतेनेति ॥** 'अनुमा' इत्युपलक्षणं मत्वाऽह-**एवमिति ॥** सम्भवाद्यन्तर्भावोक्तेः प्रकरणविच्छेदे हृदयमाह- **अर्थापत्त्यादीनीति ॥ तत्सूचयन्नाहेति ॥** अनुसृत्येति निर्वचनस्यानुसरणीयार्थसापेक्षत्वात्तमाहेत्यर्थः। **निरुक्तिरिति ॥** तथा चात्र 'ग्रहवृद्दनिश्चिगमश्च' इति अकर्तरि कारके अपि करणसाधन आगमशब्दः । 'आ समन्ताद्गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं किञ्चित्तेनासावागमः स्मृतः' इत्यनुव्याख्याने तु करणे कर्तृत्वोपचारः । अस्योक्तोपयोगमाह- **एतेनेति ॥** इति ब्रह्मतर्कव्याख्याभाववर्णनम् ।

**॥ इति ब्रह्मतर्कव्याख्या ॥**

**मूलम् :- अत्र चोपजीव्यत्वेन प्रमाणप्राबल्याद्भेद एव तात्पर्यं युक्तम् । कथञ्चानु-वादकत्वं भेदस्य प्रमाणेनासिद्धौ । सिद्धौ च कथमभेदवाक्यस्याबाधः । न चाप्रमाण-सिद्धेनानुवादकत्वं प्रमाणस्य भवति । दुर्बलत्वे च भेदप्रमाणस्याऽभासत्वान्न भेद-वाक्यानामनुवादित्वम् । अतश्च भेदवाक्यानामेव प्राबल्यम् ॥**

**(त.मं.)** अत्र च भेदप्रमाणस्योक्तन्यायेन उपजीव्यत्वेन प्राबल्याद् भेद एव तात्पर्यं युक्तं सर्वागमानाम् । पुनश्च भेदवाक्यानामनुवादित्वादप्रामाण्यमित्येतद् दूषयति- **कथं चेति ॥** अयं भावः - योऽनुवादित्वं वदेत् स प्रष्टव्यः - भेदस्य प्रमाणेन सिद्धिरस्ति न वा? न चेत्, अगृहीत-ग्राहित्वान्नानुवादित्वं भेदवाक्यस्य । अस्ति चेत् कथमभेदवाक्यस्याबाधः? न प्रमाणसिद्धो भेदः । किन्तु प्रमाणाभाससिद्ध एवेत्यत आह- **न चाप्रमाणेति ॥** तमेवार्थं स्पष्टयति- **दुर्बलत्व इति ॥** अधिगतार्थाधिगतिरनुवाद इति ह्युच्यते । आभासेन तु सम्यगधिगतेरेवासम्भवः । तेनापि ह्यधिगतिमात्रं स्यादिति चेत्, तस्यान्यथाऽधिगतित्वात् तद्विषयस्य वाक्यस्याप्ययथार्थ-त्वादेवाप्रामाण्यं नानुवादित्वात् । एवं चानुवादित्वादप्रामाण्यं स्यादिति दुरुक्तं स्यादित्यर्थः । **अतश्च भेदवाक्यानामेव प्राबल्यम् ।** अयमर्थः- एवमुक्तभङ्ग्या भेदेनैव बहुप्रमाणसंवादादत्र सर्वाविवादस्थलत्वाभावेनानुवादकत्वन्यायस्यापि पराहतत्वात् भेदवाक्यानामेव प्राबल्यम् ।

**टीका -** इदानीं प्रकृतमनुसरन्नुक्तमेवार्थं विशदयति 'तथा चोक्तम्' इत्यतः प्राक्तनेन ग्रन्थेन । यदुक्तम् 'उपजीव्यविरोधादैक्यागमस्याप्रामाण्यम्' इति तदसत् । अपौरुषेयत्वेन निर्दोषस्या-प्रामाण्यायोगादित्यत आह । **अत्र चेति । अत्र** ब्रह्मतर्कवाक्ये, चोपजीव्यत्वेन प्रमाणप्राबल्य-स्योक्तत्वादुपपत्तिसिद्धत्वाच्च, **अत्र च** प्रकृतेऽप्युपजीव्यत्वेन भेदप्रमाणप्राबल्यात्, तद्विरुद्ध-स्यैक्यागमस्याप्युपजीव्यानुसारेण जीवेश्वरभेद एव तात्पर्यं युक्तम् । न तु तदभेद इत्येवं प्रतीतार्थ-प्रच्युतिरेवाप्रामाण्यपदेनोक्ता न तु सर्वथाऽप्रामाण्यमिति भावः ।

यदुक्तं भेदागमविरोधादैक्याऽगमस्याप्रामाण्यम् इति तदयुक्तम् । भेदवाक्यानां प्रत्यक्षादिसिद्ध-भेदानुवादित्वेन दुर्बलत्वात् । ऐक्यागमस्य त्वपूर्वतालक्षणबलवत्वात् । यदत्रोक्तम् 'ईश्वरस्यैवा-सिद्धिः' इति । तन्न । केवलानुमानेनेश्वरसिद्ध्यभावेऽप्यागमाद्यनुकूलानुमानेनाऽगमेनैव वा तत्सिद्ध्युपपत्तेरित्यत आह- **कथञ्चेति ॥**

**अनुवादकत्वं** भेदवाक्यानामिति शेषः । भवतु जीवेश्वरयोः प्रमाणान्तरेण सिद्धिर्न च तावता तद्भेदवाक्यानामनुवादकत्वं भिन्नविषयत्वात्, किन्तु भेदस्यापि प्रमाणान्तरेण सिद्धौ । न च सा परेणाङ्गीकर्तुं शक्या । अतो जीवेश्वरभेदस्य प्रमाणान्तरेणासिद्धौ सत्यां भेदवाक्यानां कथमेवानुवादकत्वं भवतीति । न केवलं जीवेश्वरौ, किं नाम तद्भेदोऽपि प्रमाणान्तरेण सिद्ध एव । अतो भेदवाक्यानामनुवादकत्वं स्थितमित्यत आह- **सिद्धौ चेति ॥** भेदस्य प्रमाणान्तरेण सिद्धावङ्गीक्रियमाणायामभेदवाक्यस्य तेन प्रमाणेन **अबाधः** अनुपरोधः कथं स्यात् । न कथञ्चित् । अतो भेदवाक्यानामनुवादकत्वसिद्धये भेदस्य येन प्रमाणेन सिद्धिरङ्गीक्रियते ऐक्यागमस्य तत्प्रमाणोपरोधप्रसङ्गाद् भेदस्य प्रमाणान्तरेण सिद्धेरङ्गीकर्तुमशक्यत्वेन तद्वाक्यानां नानुवादकत्वं वक्तव्यम् । एवमपि भेदवाक्यविरोधोऽभेदवाक्यानां स्यादिति चेत्तर्हीयं परस्योभयतःपाशा रज्जुः । तद्भयात् तत्त्वमस्यादिवाक्यानां भेद एव तात्पर्यमङ्गीकार्यमिति ।

जीवेश्वरभेदः प्रत्यक्षादिसिद्ध एव । तेन भेदवाक्यानामनुवादित्वसिद्धिः । किन्तु तत्प्रत्यक्षा-दिकमप्रमाणमेव । व्यावहारिकत्वमात्रेण तत्र प्रमाणवाचोयुक्तिः । ऐक्यवाक्यन्तु तत्त्वाऽवेदकं प्रमाणम् । अतो न तत्तेनोपरुध्यत इति चेत्, अत्र वक्तव्यम् । भेदवाक्यमपि किमप्रमाणमुत प्रमाणमिति । आद्ये वक्ष्यामः । द्वितीये दोषमाह- **नचेति ॥** अप्रमाणसिद्धेन प्रतिपादितेन निमित्तेन यदि प्रत्यक्षादेरप्रामाण्यं भेदवाक्यानान्तु प्रामाण्यमङ्गीक्रियते तदा भिन्नविषयत्वं स्यात् । समान-विषयत्वे हि द्वयमपि प्रमाणं स्यादप्रमाणं वा । न त्वयं विभागः । भिन्नविषयत्वे च नानुवादकत्वं भवति । अतः प्रामाण्याप्रामाण्यविभागोऽनुवादकत्वं चेति परस्परपराहतमिति भावः ।

किञ्च प्रत्यक्षादेः कुतोऽप्रामाण्यम् । ऐक्यवाक्यविरोधादिति चेन्न । अन्योन्याश्रयप्रसङ्गात् । सिद्धे खल्वैक्यवाक्यप्रामाण्ये तद्विरोधेन प्रत्यक्षादेरप्रामाण्यसिद्धिः । तस्यां च सत्यां विरोधिप्रमाणा-भावेनैक्यवाक्यप्रामाण्यसिद्धिरिति । स्यादेतदन्योन्याश्रयत्वं यद्यैक्यवाक्यं, भेदविषयं प्रत्यक्षादिकं च समानबलं स्यात् । न त्वेतदस्ति । श्रुतेरपौरुषेयत्वेनानाशङ्कितदोषायाः प्रबलत्वात् । प्रत्यक्षादेः सम्भावितदोषस्य ततो दुर्बलत्वात् । प्रबलस्य दुर्बलविरोधपरिहारानपेक्षमेव प्रामाण्यस्थितेरित्यत आह- **दुर्बलत्वे चेति ।** यदि श्रुत्यपेक्षया भेदप्रमाणस्य प्रत्यक्षादेर्दुबलत्वमाश्रित्यान्योन्याश्रयत्व-परिहारः क्रियते तदा भेदवाक्यानामनुवादित्वमुच्यमानं न स्यात् । कुतः? आभासत्वादकिञ्चित्कर-त्वात् । यथा हि दुर्बलत्वात्प्रत्यक्षादिकं नैक्यश्रुतेर्विषयापहारं करोति । तथा भेदश्रुतेर्विषयोपहार-मपि न करोति । तथा च स्वातन्त्र्येण स्वविषये प्रवृत्ता भेदश्रुतिः कथमनुवादिनी स्यादिति । न केवलमननुवादित्वसाम्याद्भेदाभेदवाक्यानां समबलत्वम् । किन्तु स्वातन्त्र्येण प्रवृत्तानां भेदवाक्यानां दैवादागतेन प्रत्याक्षादिसंवादेनैक्यवाक्यापेक्षया प्राबल्यमेव तस्य संवादाभावादित्या- **अत-श्चेति ॥** तथा च तद्विरोधादैक्यवाक्यस्याप्रामाण्यमिति शेषः ॥

**(र .टि.)** 'अत्र च' इति चशब्दसमुचितमर्थमाह - **उपपत्तीति ॥** नन्वनेन कथमुक्तशङ्कापरिहार इत्यतः 'भेद एव' इत्यस्य तात्पर्यमाह- **इत्येवमिति ॥** 'कथश्चानुवादित्वम्' इत्यादेः 'न च जीवेश्वरभेदः सिद्धः' इत्यादिना गतार्थताभ्रमं वारयितुं प्राग् भेदं प्रति धर्मिप्रतियोगिभूतेश्वरसाधकप्रमाणविषये विकल्पितपक्षेषु द्वितीयतृतीयपक्ष-निरासकत्वेन 'कथश्चानुवादित्वम्' इति वाक्यं तावदवतारयति- **यदुक्तं भेदागमेति ॥** पूर्वत्रेव अत्राऽगमं विनेत्यनुक्त्या द्वितीयतृतीयपक्षनिरासकत्वमस्यावगम्यत इति भावः । वस्तुतो भेदस्य प्रमाणसिद्धत्वात् 'प्रमाणेना-सिद्धौ' इति कथमित्यत आह- **न च सेति ॥** परेण भेदस्य प्रमाणसिद्धतानङ्गीकारादाह- **अङ्गीक्रियमाणाया-(र .टि.) मिति ॥ अनुपरोध इति ।** भेदप्रमाणस्य प्रत्यक्षादेरुपजीव्यत्वादिना प्राबल्यस्याविवक्षितत्वात् । अत एव 'दुर्बलत्वे च' इति भेदप्रत्यक्षादेर्दौर्बल्यमाशङ्क्य निराकरिष्यते । उपजीव्यत्वादिना प्राबल्यविवक्षायां तच्छङ्कानुदयादिति भावः । नन्वप्रमाणसिद्धप्रतिपादकत्वेनेति वक्तव्यं कथम् 'अप्रमाणसिद्धेन' इत्युक्तमित्यत आह- **प्रतिपादितेनेति ॥** ननु 'कथं चानुवादित्वम्' इत्यादिना भेदागमस्य दौर्बल्यनिरासार्थमनुवादकत्वस्य परिहृतत्वात् 'अतश्च' इत्युपसंहारवाक्येन दौर्बल्यमिति

वक्तव्यं 'प्राबल्यम्' इति कथमुक्तमित्यत आह- **न केवलमिति ॥ प्रत्यक्षादिसंवादेनेति ।** अनेन 'न चाप्रमाण' इत्यादिना भेदविषयकप्रत्यक्षादेर्दौर्बल्याभाव-स्याप्युपपादितत्वात् 'अतश्च' इत्यनेन तस्य परामर्श इत्युक्तं भवति ॥

**(रा. टि.) विशदयतीति ॥** तथा च न गतार्थतादोष इति भावः । **यदुक्तमिति ।** ' प्रत्यक्षादेरागमस्य प्राबल्येऽपि नोपजीव्यप्रमाणविरोधे प्रामाण्यम् ' इत्यनेनेति योज्यम् । **उपपत्तीति ।** ' विषयाभावे स्वस्यैवा-प्रामाण्यप्राप्तेः ' इति उक्तोपपत्तीत्यर्थः । सा च तद्वाक्यव्याख्यान एव व्यक्ता । च शब्दोऽनुक्तसमुच्चयार्थ इति दर्शयितुं प्रागत्रचेत्यादेरुक्त्युपलक्षणत्वमुपेत्यैकमर्थमुक्त्वा पुनरर्थान्तरं चाऽह- **अत्र च प्रकृतेऽपीत्यादिना ॥ भेदप्रमाणेति ॥** अनुभवादिरूपेत्यर्थः । **यदुक्तमिति ॥** 'नच जीवेश्वरभेदः सिद्ध इत्यनुवादकत्वं भेदवाक्यानाम्' इत्यादिनेति योज्यम् । **अपूर्वतेति ॥** मानान्तराप्राप्तार्थतालक्षणेत्यर्थः । **यदत्रोक्तमिति ॥** 'आगमं विनेश्वरस्यैवासिद्धेः' इत्यत्र 'आगमेन च सार्वज्ञादिजीवधर्मविरुद्धधर्मश्रवणेन भेदस्यैव प्रतीतेः' इत्यादि यदुक्तमित्यर्थः । **प्रमाणान्तरेणेति ॥** साक्ष्यनुमानरूपेत्यर्थः । **भिन्नेति ॥** साक्षी अनुमानं च क्रमाज्जीवमीश्वरं च विषयीकुरुतः, द्वासुपर्णेत्यादिवाक्यं तु भेदमिति भिन्नविषयत्वादित्यर्थः । तर्हि कदाऽनुवादितेति प्रश्नस्योत्तरम्- **किन्त्वित्यादि ॥** स्वमते सिद्धत्वादसिद्धत्वादिति कोटिः कथमित्यत आह- **सा परेणेति ॥** सिद्धिपक्षे बाधक-सत्त्वान्नाङ्गीकारार्हा परस्येति भावः । दोषदाढर्यायोक्तम्- **अङ्गीक्रियमाणायामिति ॥** अद्यापि प्राबल्यासम्मतेः कथं तेन बाधोक्तिरित्यत आह- **अबाधोऽनुपरोध इति ॥** भेदवाक्यविरोधादिरूपपूर्वप्रकृतप्रमेये पर्यवसाययितुं प्रसक्ताननुवादकत्वमेवोपसंहरति- **अत इति ॥ एवमपीति ॥** अननुवादकत्वोक्तावपीत्यर्थः । विधेयरज्ज्वपेक्ष-येयमिति स्त्रीलिङ्गोक्तिः । अनुवादकत्वाननुवादकत्वरूपप्रमेयाङ्गीकरणम् **उभयतः** पार्श्वद्वये **पाशो** ग्रन्थिविशेषो यस्याः सा उभयतःपाशा, रज्ज्वा विशेषणम् । दक्षिणोत्तरबाह्वोर्ग्रन्थिविशेषयुक्तरज्जुबन्धे सति दक्षिणत उत्तरतो वा यथा चलितुं न शक्यते तथाऽत्रापि अनुवादकत्वाङ्गीकारे पुरोवादकप्रमाणविरोधः अननुवादकत्वाङ्गीकारे च तद्वाक्यविरोध इति भावः । शङ्कते- **जीवेति ॥ प्रमाणवाचोयुक्तिः** प्रमाणत्वव्यवहार इत्यर्थः । 'वाग्दिक्-पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यलुक् । **आद्ये वक्ष्याम इति ॥** 'कथं चैवंवादिनां वेदवादित्वम्, वेदोक्तस्य मिथ्यात्वाङ्गीकारादेव ह्यवेदवादित्वं बौद्धादीनाम्' इत्यत्रेति भावः । असाङ्गत्यनिरासाय शेषोक्त्या योजयति- **अप्रमाणसिद्धेन प्रतिपादितेनेति ॥** व्यधिकरणे तृतीये । अप्रमाणसिद्धस्य प्रतिपादनेनेति यावत् । उत्तरवाक्य-मवतारयितुं प्रसक्तिं सम्पादयति- **किञ्चेति ॥** अवतारयति- **स्यादेतदित्यादिना ॥** अकिञ्चित्करत्वं नामानुवादाय (रा. टि.) विषयासमर्पकत्वमिति भावेन तद्व्यनक्ति- **यथा हीत्यादिना ॥ स्वातन्त्र्येणेति ॥** प्रत्यक्षमिव पुरोवादकमनपेक्ष्येत्यर्थः । अतश्चेत्येतच्छब्दो बुद्धिस्थप्रत्यक्षसंवादपरामर्शीति भावेन चशब्दार्थं वदन्नेवावतारयति- **न केवलमिति ॥ अतश्चेतीति ॥** प्रत्यक्षसंवादाच्चेत्यस्यार्थस्यावतारिकाग्रन्थ एव व्यक्तत्वान्न पुनर्व्याख्या कृता ।

**(श्री.टि.) प्रकृतमिति ॥** 'न च जीवेश्वराभेद एव तात्पर्यमागमस्य तत्र प्रमाणाभावात्' इत्यनेन प्रकृतं सर्वाग-मानां भेद एव तात्पर्यं नाभेद इति प्रमेयमित्यर्थः । **उक्तमेवेति ॥** 'प्रत्यक्षादेरागमस्य प्राबल्येऽपि नोपजीव्य-प्रमाणविरोधे प्रामाण्यम्' इत्यनेनोक्तमुपजीव्यविरोधेनैक्यागमाप्रामाण्यरूपमर्थमित्यर्थः । **उक्तत्वादिति ॥** 'उपजीव्यविरोधे तु न प्रामाण्यममुष्य च' इत्यत्रेत्यर्थः । **उपपत्तिसिद्धत्वाच्चेति ॥** 'उपजीव्योपजीवकयोर्विरोधे न तावदुपजीवकविरोधेन उपजीव्यस्याप्रामाण्यं युक्तम् । विषयाभावे स्वस्यैवाप्रामाण्यप्राप्तेः' इत्युक्तोपपत्ति-सिद्धत्वाच्चेत्यर्थः । **भेद एवेति ॥** अतत्त्वमसीति पदविभागमङ्गीकृत्येत्यर्थः । **अपूर्वतेति ॥** प्रमाणान्तरा-प्राप्तार्थप्रतिपादकत्वलक्षणापूर्वतेत्यर्थः । **यदत्रोक्तमिति ॥** 'आगमं विनेश्वरस्यैवासिद्धेः' इत्यनेन प्रत्यक्षानु-मानाभ्यामीश्वरस्यैवासिद्ध्या तद्भेदस्याप्यसिद्धत्वेन भेदवाक्यानां नानुवादकत्वमित्युक्तमित्यर्थः । **भिन्न-विषयत्वादिति ॥** प्रमाणान्तरस्य जीवेश्वरस्वरूपमात्रविषयकत्वेन तद्भेदाविषयकत्वादिति भावः । (तथात्वे तत्प्रमाणान्तरविरोधेनैव अभेदागमाप्रामाण्यप्राप्तेरिति भावः ।) प्रमाणान्तरेण सिद्धावित्यनन्तरमनुवादकत्वमिति वर्तते । **सा** भेदस्यापि प्रमाणान्तरेण सिद्धिः । **न कथञ्चिदिति ॥ कथञ्चित्** कथमपि अनुपरोधो नेत्यर्थः । उपरोध एव स्यादिति यावत् । **एवमपीति ॥** भेदवाक्यानामननुवादकत्वपक्षेऽपीत्यर्थः । **स्यादिति ॥** भेदवाक्यानामनुवादित्वेन प्रबलत्वादिति भावः । **उभयतःफाशा रज्जुरिति ॥** भेदवाक्यानामनुवादकत्वाङ्गीकारे भेदस्य प्रमाणान्तरसिद्धेरङ्गीकार्यत्वेन येन प्रमाणेन भेदसिद्धिरङ्गीक्रियते तत्प्रमाणेनैवाभेदवाक्यस्य बाधः स्यात् । तत्परिहाराय भेदस्य प्रमाणान्तरसिद्धत्वानङ्गीकारे भेदवाक्यानामननुवादित्वेन प्राबल्यप्राप्त्या तद्विरोध एवाभेदवाक्यानां स्यादित्येवं भेदस्य प्रमाणान्तरसिद्धत्वाङ्गीकारे तदनङ्गीकारे चेत्युभयतःफाशा रज्जुर्गलबन्धक-रज्जुरित्यर्थः । फाशा रज्जुरित्येव पाठः । 'फाशा स्याद्गलबन्धिका' इत्यभिधानात् । पाशा रज्जुरिति पाठे पौनरुक्त्य-मर्थासङ्गतिश्चेति ज्ञातव्यम् । **भेद एवेति ॥** अतत्त्वमसीति पदच्छेदमङ्गीकृत्येत्यर्थः ।

शङ्कते- **जीवेश्वरभेद इत्यादिना ॥** तर्हि प्रत्यक्षादिनैव विरोधस्स्यादित्याशयेन सिद्धान्ती शङ्कते- **किन्त्वि-ति ॥** उत्तरमाह- **तत्प्रत्यक्षादिकमिति ॥** ननु प्रत्यक्षादीनामप्रामाण्ये कथं लोकानां तत्र प्रमाणत्वव्यवहार इत्यत आह- **व्यावहारिकत्वमात्रेणेति ॥** व्यावहारिकार्थविषयकत्वमात्रेण प्रमाणवाचोयोयुक्तिः । योगो घटना । नतु पारमार्थिकविषयकत्वेनेत्यर्थः । अतत्त्वावेदकमप्रमाणमिति यावदिति भावः । **तत्** ऐक्यवाक्यम् । तेन भेदप्रमाणेन प्रत्यक्षादिना । **वक्ष्याम इति ॥** 'मिथ्यावादित्वे च श्रुतेः कथमैक्यस्य सत्यत्वम्' इत्यत्रेत्यर्थः। नन्वप्रमाणसिद्धप्रतिपादकत्वेनेति वक्तव्यम् । कथमप्रमाणसिद्धेनेत्युक्तमित्यत आह- **प्रतिपादितेनेति ॥ (श्री.टि.)** अप्रमाणभूतप्रत्यक्षादिसिद्धेन भेदेन प्रतिपादितेन निमित्तेनेत्यर्थः । **भिन्नविषयत्वं स्यादिति ॥** अप्रमाणभूतप्रत्यक्षादिसिद्धार्थस्याविद्यमानत्वप्राप्त्या प्रमाणभूतवेदप्रतिपादितार्थस्य विद्यमानत्वप्राप्त्या भिन्नार्थ-विषयकत्वं स्यादित्यर्थः । **द्वयमपीति ॥** विद्यमानघटावगाहिप्रत्यक्षतत्प्रतिपादकागमवदिति भावः । **अप्रमाणं वेति ॥** विद्यमानेऽपि घटे तदभावावगाहिप्रत्यक्षतदभावप्रतिपादकागमवदिति भावः । **विभाग इति ॥** प्रत्यक्षा-दिकमप्रमाणं भेदवाक्यं प्रमाणमिति विभाग इत्यर्थः । प्रत्यक्षभेदागमयोर्भिन्नविषयत्वापादन इष्टापत्तिरित्यत आह- **भिन्नविषयत्वे चेति ॥ परस्परपराहतमिति ॥** प्रत्यक्षादिकमप्रमाणं भेदवाक्यं प्रमाणमिति विभागे भिन्नविषयत्वप्राप्त्याऽनुवादकत्वोक्तिव्याघातः अनुवादकत्वोक्तौ च समानविषयकत्वप्राप्त्या उक्तरीत्या द्वयोः प्रामाण्यस्य अप्रामाण्यस्य वा प्राप्त्या प्रामाण्याप्रामाण्यविभागकथनं व्याहतमित्यर्थः । **श्रुतेः** ऐक्यश्रुतेः । **प्राबल्यस्येति ॥** तथा च प्रबलैक्यवाक्यप्रामाण्यं दुर्बलप्रत्यक्षादिविरोधाभावसापेक्षं न भवति । न हि हरिण-शावाभावमपेक्ष्य सिंहो वनमवगाहते । अतो द्वितीयकोटेरनङ्गीकारान्नान्योन्याश्रय इति भावः । **श्रुतीति ॥** ऐक्यश्रुतीत्यर्थः । **उपहारः** प्रापणम् । **स्वातन्त्र्येण** प्रत्यक्षाद्यनपेक्षतया । **स्वविषये** भेदप्रतिपादने । कुत इत्यत आह- **तस्येति ॥** ऐक्यवाक्यस्येत्यर्थः ।

**(पां.टि.) उक्तमेवार्थं विशदयतीति ॥** तथा च न 'अत्र च' इत्याद्युत्तरग्रन्थवैयर्थ्यमिति भावः । ननु कोऽसा-वुक्तोऽर्थः, का च तत्रानुपपत्तिः, येनोपपादनापेक्षत्वात्तस्य तदुपपादनपरतया तद्ग्रन्थावैयर्थ्यं स्याद् इत्यत उक्तमर्थं तत्र तत्रानुपपत्तिं च प्रदर्श्य तत्परिहारतया उत्तरग्रन्थं योजयति- **यदुक्तमित्यादिना ॥ अत्र ब्रह्मतर्क इति ॥** अत्रेति मूलपदानुवादः, ब्रह्मतर्केति तद्व्याख्यानम् । चशब्दसमुचितमर्थमाह- **उपपत्तीति ॥** 'न तावद् द्वयोरपि प्रामाण्यं वस्तुनो द्वैरूप्यापातात्' इत्याद्युपपत्तीत्यर्थः । एवं सामान्यन्यायोपपादकतया मूलं व्याख्याय तदेव मूलं प्रकृतपरतयाऽपि व्याचष्टे - **अत्र च प्रकृतेऽपीति ॥** ननु कथमनेन अप्रामाण्यशङ्कानुपपत्तिपरिहार इत्यतः 'भेद एव तात्पर्यम्' इत्येतत्तात्पर्यमाह- **इत्येवमिति ॥**

**(व्या.टि.)** अत्रेत्यस्य प्राबल्यादित्यनेनान्वयाप्रतीतेराह- **प्राबल्यस्योक्तत्वादिति ॥** चशब्दसूचितयुक्त्यन्तर-माह- **उपपत्तिसिद्धत्वाच्चेति ॥** अत्रेत्यस्यावृत्त्याऽर्थान्तरमाह- **अत्र च प्रकृतेऽपीति ॥** प्राचीनाप्रामा-ण्योक्तेर्भावमाह- **इत्येवमिति ॥** दर्शितदिशेत्यर्थः । **भिन्नविषयत्वादिति ॥** तदगृहीतग्राहित्वादित्यर्थः । अन्यथाऽग्निहोत्रोत्पत्तिविधिना गुणविधेरप्यनुवादकत्वापात इति भावः । **अङ्गीकर्तुं शक्येति ॥** वक्ष्यमाण-दूषणगणग्रासादित्यर्थः । भेदस्याप्यन्यतः सिद्धिं शङ्कते- **न केवलमिति ॥** कथमाक्षेपे इति मत्वा विपर्ययमाह- **न कथञ्चिदिति ॥ उभयत इति ॥** अनुवादकत्वे पुरोवादरूपभेदसाधकेन, अननुवादकत्वे च भेदवाक्येनैव विरोध इति भावः । **पाशारज्जुरिति ॥** 'पाशा स्याद्गलबन्धिका' इत्यभिधानम् । भेदवाक्यानामनुवादित्वेऽपि न तत्पुरोवादेनोपरोधोऽभेदागमस्य तस्यैवाप्रामाण्यादित्याशङ्कते- **जीवेश्वरभेद इति ॥** प्रत्यक्षाद्यप्रामाण्ये व्यवहारोच्छेद इत्यत आह- **व्यावहारिकत्वमात्रेणेति ॥ न त्वयमिति ॥** प्रामाण्याप्रामाण्यनिमित्तयोरबाध-**(व्या.टि.)** बाधयोस्तौल्यादित्यर्थः । ज्ञप्तावन्योन्यापेक्षां दर्शयति- **सिद्धे खल्वित्यादिना ॥** अनपेक्षमेवेत्यर्था-भावेऽव्ययीभावः । अकिञ्चित्करत्वमुपपादयति- **यथा हीति ॥** सङ्गृहीतमेतन्न्यायामृते-

'यथा नापहरेद् द्वैताभावश्रुत्यर्थमक्षधीः ।
तथा नोपहरेद् द्वैतश्रुत्यर्थमपि दुर्बला ॥' इति ।

प्राबल्योक्तेः कोपयोग इत्यत आह- **तथा चेति ॥**

**मूलम् - सर्वप्रमाणविरुद्धवचनानामेव प्राबल्याङ्गीकारे 'इदं वाऽग्रे नैव किञ्चनाऽ-सीत् । असतः सदजायत' इत्यादीनामेवाविचारेण प्रतीयमानस्यार्थस्य सर्व-प्रमाणविरुद्धत्वात् तत्र सर्वागमानां महातात्पर्यं प्रसज्येत । नच तत्र युक्तिविरोध इति वाच्यम् । तस्मिन् पक्षे**

**युक्तिविरुद्धत्वेनाननुवादित्वमिति गुण एव स्यात् । युक्तिसिद्धत्वे ह्यनुवादित्वं स्यात् । अतः प्रमाणसिद्धत्वे तदपलापायुक्तेः, अप्रमाण-सिद्धत्वे च भेदप्रमाणस्यानुवादित्वाभावाच्च न भेदवाक्यानां दौर्बल्यम् ।**

**(त.मं.)** तदभिमतानुवादकत्वपक्षेऽतिप्रसङ्गमाह- **सर्वेति ।।** प्रकृतार्थं निगमयति- **अतः प्रमा-णेति ।।**

**टीका-** नन्वेतद् विपरीतमुच्यते प्रमाणान्तरसंवादवतां भेदवाक्यानां प्राबल्यं तद्रहितानामैक्य-वाक्यानां दौर्बल्यमिति । यतः संवादोऽपूर्वताविरोधी तद्राहित्यमपूर्वताहेतुः । अपूर्वता च प्राबल्य-लिङ्गतया प्रसिद्धा । ततः प्रमाणान्तराप्राप्तमपूर्वमर्थं प्रतिपादयतामैक्यवाक्यानामेव प्राबल्यम् । अन्येषामपि वाक्यानां तदेकवाक्यत्वाद् जीवेश्वरैक्ये सर्वागमानां महातात्पर्यमिति । अत्र वक्तव्यम्, किं प्रमाणान्तरविरोधेऽप्यपूर्वतामात्रमाश्रित्यैतदुच्यते, उत तदविरोधे । आद्येऽतिप्रसङ्गमाह- **सर्वेति ।।** सर्वप्रमाणविरुद्धानामैक्यवचनानामेवापूर्वतामात्रेण प्राबल्याङ्गीकारे, तथाऽन्येषामपि वाक्यानां तदेकवाक्यतां व्याख्याय सर्वागमानां जीवेश्वरैक्ये महातात्पर्याङ्गीकारे, 'इदं वाऽग्रे' इत्यादीनामेव वाक्यानां प्राबल्यमङ्गीकर्तव्यम् । कुतः? अविचारेण प्रतीयमानस्य तदर्थस्य सर्वप्रमाणविरुद्धत्वात् । सर्वप्रमाणासिद्धत्वादपूर्वतालाभादिति यावत् । तथाचान्येषामपि वाक्यानां तदेकवाक्यतामादाय तत्र शून्यस्यैव जगत्कारणत्वे सर्वागमानां महातात्पर्यमङ्गीकार्यं प्रसज्येता-विशेषादिति । इत्यादीनामर्थस्येति सम्बन्धः । अर्थस्येत्येतावत्युक्ते वस्तुतस्तदर्थत्वं प्रसज्येत । अतोऽविचारेणैव प्रतीयमानस्येत्युक्तम् । एतेन तत्त्वमस्यादिवाक्यानामपि जीवब्रह्मैक्यमवि-चारेणैवार्थतया प्रतीयत इति सूचयति ।

प्रमाणान्तरविरोधाभावेऽपूर्वता प्राबल्यहेतुर्नतु तद्विरोधे । अस्ति च शून्यस्य जगत्कारणत्वे प्रमाणविरोधः । 'विमतो विनाशः सच्छेषो विनाशत्वाद् युद्धादिविनाशवदिति, आदिकार्यं सत्कारणकं कार्यत्वात् पटवत्' इत्यादियुक्तिविरोधात् । अतो नातिप्रसङ्ग इति द्वितीयपक्ष-माशङ्क्याऽह- **नच तत्रेति ।।** कुतो न वाच्यमिति चेत्तद्वदेवैक्यवाक्यानामपि तर्हि सर्वप्रमाण-विरुद्धत्वान्नापूर्वतामात्रेण प्राबल्यमित्यापातादिति परिहारस्य स्फुटत्वात् सोत्प्रासं परिहारान्तर-माह- **तस्मिन्निति ।।** अननुवादित्वं प्राबल्यकारणमित्यस्मिन् पक्षे युक्तिविरुद्धत्वात् 'इदं वा' इत्यादीनां न प्राबल्यमिति वक्तुं न शक्यते । यतो युक्तिविरोधेनाननुवादित्वं भवतीति युक्तिविरोधो गुण एव स्यात्, प्राबल्यकारणस्याननुवादित्वस्य हेतुभूतो युक्तिविरोधः कथं प्राबल्यविघाती भवेदित्यर्थः । युक्तिविरोधः कथमननुवादित्वस्य हेतुरित्यत आह- **युक्तीति ।।** शून्यस्य जगत्कारणताया युक्तिसिद्धत्वे हि 'इदं वा' इत्यादिवाक्यस्यानुवादित्वं स्यात् । ततश्च विरोधिनी युक्तिस्तां साधिकां युक्तिमाभासीकुर्वन्ती स्यादेवाननुवादित्वस्य हेतुरिति भावः ।

'इदं वा' इत्यादिवाक्यवदैक्यवाक्यस्यापि प्रमाणविरुद्धत्वान्नापूर्वतामात्रेण प्राबल्यमिति यदभिप्रेतं तदसत् । भेदवाक्यानां प्रत्यक्षादिसिद्धार्थविषयतयाऽनुवादित्वेन दुर्बलत्वात्, ऐक्या-गमस्याननुवादित्वेन प्राबल्यात्, प्रत्यक्षादेश्चाप्रमाणत्वात् । न हि प्रबलस्य प्रमाणस्य दुर्बलेनाप्रमाणेन च विरोधः किञ्चित्करो भवतीत्याशङ्क्य, उपसंहारव्याजेन प्रागुक्तमेवोत्तरमाह- **अत इति ।।** भेदवाक्यानामनुवादित्वसिद्ध्यर्थं भेदस्य प्रत्यक्षादिप्रमाणसिद्धत्वेऽङ्गीक्रियमाणे प्रत्यक्षादि-प्रमाणप्रतिरुद्धेनैक्यवाक्येन भेदनिराकरणानुपपत्तिप्रसङ्गात् । तत्परिहाराय यदि प्रत्यक्षादीना-मप्रामाण्यमङ्गीक्रियते भेदवाक्यानां च प्रामाण्यं तदा भेदस्याप्रमाणसिद्धत्वे प्रमाणाप्रमाणयोः समानविषयत्वानुपपत्तेर्भेदप्रमाणस्याऽगमस्यानुवादित्वाभावाद् भेदवाक्यानामेव दौर्बल्यं नाभेदवाक्यानामिति यदुक्तं तन्नेत्यर्थः । अतश्च भेदवाक्यानामेव प्राबल्यमिति ।

**(र.टि.)** ऐक्यागमप्राबल्याङ्गीकारस्य तदविशिष्टशून्यकारणत्ववाक्यप्राबल्याङ्गीकारं प्रत्येवाऽपादकत्वात्तदेव वक्तव्यम् । तत्र सर्वागमानां तत्रैव तात्पर्यमिति कथमुच्यत इत्यतः 'तथाऽन्येषाम्' इत्यादि 'प्राबल्यमङ्गीकर्तव्यम्' **(र.टि.)** इत्यन्तं पूरयित्वा 'सर्वप्रमाणविरुद्धवचनानाम्' इति वाक्यं व्याचष्टे- **सर्वप्रमाणविरुद्धानामित्या-दिना ॥ सर्वप्रमाणासिद्धत्वादिति ॥** प्रमाणविरुद्धार्थस्यापूर्वतारूपत्वासम्भवादिति भावः। **अङ्गीकार्य-मिति ॥** प्राबल्याङ्गीकारस्यैवाऽपादकत्वेनोक्तत्वादिति भावः । इत्यादीनां सर्वागमानामिति सम्बन्धप्रतीतिं वारयितुमाह- **इत्यादीनामर्थस्येति सम्बन्ध इति ॥** ननु युक्तिसिद्धत्वमनुवादकत्वे प्रयोजकं भवत्तदसिद्धत्वस्या-ननुवादकत्वे हेतुत्वं सम्पादयति न युक्त्यन्तरविरुद्धत्वस्य, तत्कथमेवमुक्तमित्यत आह- **ततश्चेति ॥**

**(रा.टि.)प्रसिद्धेति ॥** तात्पर्यानुमापकत्वेन प्राबल्यलिङ्गतया प्रसिद्धेत्यर्थः । [१]**प्रमाणान्तरापूर्वमिति ॥** प्रमा-णान्तराप्राप्तमित्यर्थः । अग्रे महातात्पर्यमित्यापाद्ये श्रवणादापादकेऽपि तद् ग्राह्यमिति भावेनाऽह- **तथेति ॥** अपूर्वताया एव प्राबल्यलिङ्गतया शङ्कितत्वात् सर्वप्रमाणविरुद्धत्वोक्तिं तत्रैव पर्यवसाययति- **सर्वप्रमाणेति ॥** व्यवहितत्वाद्वा प्राबल्यमङ्गीकर्तव्यमित्यध्याहृतप्राबल्यपदान्वितत्वेन स्वयं व्याख्यानाद्वाऽऽह- **इति सम्बन्ध इति ॥ विमत इति ॥** प्रलयकालीनो विनाशः । **सच्छेष इति ॥** सद्रूपवस्तुशेषवानित्यर्थः । परेण प्रलयेऽ-सद्रूपशून्यमात्रावशेषाङ्गीकारात् तद्विरोध्ययं प्रयोग इति भावः । एवमग्रेऽपि **विरोधिनी युक्तिरिति ॥** प्रागुक्त-विनाशत्वादिरूपेति भावः । **प्रागुक्तमेवेति ॥** 'सिद्धौ च कथमभेदवाक्यस्याबाधः' इत्यादिनोक्तमेवेत्यर्थः । तदपलापायुक्तेरित्यस्यार्थः- **ऐक्यवाक्येनेति ॥** अप्रमाणसिद्धत्व इत्यादेरर्थः- **तत्परिहारायेत्यादि ॥**

**(श्री.टि.)** एतदित्युक्तं विवृणोति- **प्रमाणान्तरेति ॥** इति विपरीतमुच्यत इत्यन्वयः । **प्रसिद्धेति ॥** 'उपक्रमोप-संहारावभ्यासोऽपूर्वता फलम्' इत्यादिप्रमाणप्रसिद्धेत्यर्थः। अपूर्वमित्यस्य व्याख्यानं प्रमाणान्तराप्राप्तमिति। प्रमाणान्तरापूर्वमिति पाठे पूर्वं प्रमाणान्तरेणाप्रतिपन्नमित्यर्थः । **अन्येषां वाक्यानां** भेदवाक्यानाम् । एवमुत्तर-त्रापि । तदेकवाक्यत्वाद् ऐक्यवाक्यैकवाक्यत्वात् । सार्वज्ञदुःखादेस्सत्यत्वे जीवेश्वरयोरैक्यायोगात् नेह नानेत्यादौ तन्निषेद्धुं भेदकधर्मप्रतिपादनेन भेदप्रतिपादकानाम् 'यस्सर्वज्ञः' 'योनिमन्ये प्रपद्यन्ते' इत्यादीनामैक्यप्रति-पादनायोपयुक्तत्वेनैक्यवाक्यैकवाक्यत्वं द्रष्टव्यम् । **एतदुच्यते** प्राबल्यमुच्यते । **तदविरोध इति ॥** प्रमाणान्तरा-विरोधे सत्यपूर्वतामाश्रित्य प्राबल्यमुच्यत इत्यर्थः । **अविचारेणेति ॥** आपाततः प्रतीतस्येत्यर्थः । **तदर्थस्य** तेषां वाक्यानामर्थस्य शून्यजगत्कारणत्वस्य । **अन्येषाम्** 'सदेव सोम्य' इत्यादिवाक्यानाम् । **तदेकवाक्यताम्** इदं वा इत्यादिशून्यजगत्कारणत्वप्रतिपादकवाक्यैकवाक्यताम् । **अविशेषादिति ॥** प्रमाणान्तरविरोधेऽपि प्राबल्यहेतोरपूर्वताया अविशिष्टत्वात् । इत्यादीनां सर्वागमानामित्यन्वयभ्रान्तिं वारयितुमाह- **इत्यादीनामर्थ-स्येति ॥ एतेनेति ॥** अतिप्रसङ्गस्थल इदं वा इत्यादिवाक्यार्थस्याविचारेण प्रतीयमानत्वकथनेनेत्यर्थः । तथा च इदं वेत्यादिवाक्यवदैक्यवाक्यस्यापि सर्वप्रमाणविरुद्धत्वान्नापूर्वतामात्रेण प्राबल्यमित्यभिप्रायः । शङ्कते- **प्रमाणान्तरेणेति ॥ विनाशत्वादिति ॥** न च समवायिकारणनाशप्रयुक्तकार्यनाशे व्यभिचारः शङ्क्यः । **(श्री.टि.)** तत्रापि समवायिकारणावयवादेरेव कस्यचिदवशिष्टत्वेन साध्यस्यापि सत्त्वादित्याहुः। घटादिकार्य-मादाय सिद्धसाधनतापरिहारायाऽदिकार्यमित्युक्तम् । **सोत्प्रासं** सोल्लुण्ठं, सोपहासमित्यर्थः । **अनुवादित्वं स्यादिति ॥** युक्तिसिद्धार्थप्रतिपादकत्वादित्यर्थः । ननु कथमनेन युक्तिविरोधस्याननुवादित्वे हेतुत्वमुप(यात)-पादितमित्यत आह- **ततश्चेति ॥** युक्तिसिद्धत्वेऽनुवादित्वप्रसङ्गादित्यर्थः । **विरोधिनी युक्तिरिति ॥** 'इदं वा' इत्यादिवाक्यानां यद्युक्तिविरोध उच्यते सा शून्यस्य जगत्कारणत्वविरोधिनी, विमतो विनाशः सच्छेष इत्यादिका युक्तिरित्यर्थः । **साधिकामिति ॥** 'इदं वा' इत्यादिवाक्यानामनुवादित्वार्थं शून्यजगत्कारणत्व-साधिकामित्यर्थः । **अननुवादित्वस्य हेतुरिति ॥** 'इदं वा' इत्यादिवाक्यानामिति शेषः । तथा च साधक-युक्तेराभासकत्वे इदं वा इत्यादिवाक्यार्थस्य प्रमाणान्तरासिद्धत्वप्राप्त्या युक्तिविरोधोऽननुवादित्वस्य हेतुर्भव-त्येवेत्यर्थः । **यदभिप्रेतमिति ॥** एतेन 'तत्त्वमसि' इत्यादिवाक्यानामपि जीवब्रह्मैक्यमविचारेणैवार्थतया प्रती-यत इति सूचयतीत्युक्तत्वादिति द्रष्टव्यम्। ननु तर्ह्यैक्यागमस्य प्रत्यक्षादिविरोध एव स्यादित्यत आह- **प्रत्यक्षा-देश्चेति ॥ किञ्चिदिति ॥** विषयापहारमित्यर्थः । पुनरुक्तिपरिहारायोपसंहारव्याजेनेत्युक्तम् । **प्रागुक्त-मेवेति ॥** 'न चाप्रमाणसिद्धेनानुवादित्वं प्रमाणस्य भवति' इति प्रागुक्तमेवेत्यर्थः । **अप्रमाणसिद्धत्व इति ॥** अप्रमाणभूतप्रत्यक्षादिसिद्धत्व इत्यर्थः । भेदावगाहिप्रत्यक्षादेरप्रामाण्य इति यावत् ।

**(पां.टि.)** एतदित्युक्तमेव विशदयति- **प्रमाणान्तरसंवादवतामित्यादि ॥** यत्र सर्वप्रमाणविरुद्धानामैक्य-वचनानामपूर्वतामात्रेण प्राबल्यात् तदेकवाक्यतया सर्वागमानामैक्ये तात्पर्यं, तत्र सर्वप्रमाणविरुद्धानाम् 'इदं वा अग्रे' इत्यादिवचनानामपूर्वतामात्रेण

प्राबल्यात् तदेकवाक्यतया सर्वागमानां शून्यस्य जगत्कारणत्वे तात्पर्य-मिति व्याप्तौ दृष्टान्ताभावेन तदसिद्ध्या व्याप्तिविकलत्वात्तर्काभासोऽयमित्यतोऽत्र दृष्टान्ताभावेन विशेषव्याप्त्य-भावेऽपि 'यदविशिष्टस्य यस्य यद्वत्ति' इत्याद्यविशेषलक्षणसामान्यव्याप्तेः सत्त्वान्नोक्तदोष इत्याशयेनाऽह- **अविशेषादिति ॥ एतेनेति ॥** शून्यजगत्कारणताया अविचारेण 'इदं वाऽग्रे' इत्यादिवाक्यानां प्रतीयमानार्थत्व-वचनेनेत्यर्थः । माऽस्तु तर्हि भेदागमविरोधेनैक्यागमस्याप्रामाण्याभावः । भेदग्राहकप्रत्यक्षादिविरोधेन तु स्यादेव तस्याप्रामाण्यमित्यत आह- **प्रत्यक्षादेश्चेति ॥**

**(व्या.टि.)** विशेषणप्रयोजनमाह- **एतेनेति ॥ सोत्प्रासं** सोपहासमित्यर्थः ।

**मूलम्- नच प्रमाणबहुत्वे दौर्बल्यम् । दाढर्यमेव हि बहुवाक्यसंवादे दृष्टम् । तथा सत्यभ्यासादेरप्रामाण्यहेतुत्वं स्यात् । अभ्यासस्य च तात्पर्यलिङ्गत्वं सर्वेषां सिद्धम् । तदनङ्गीकारे तत्पक्षेऽपि नवकृत्वस्तत्त्वमसीत्यभ्यासस्यानुवादकत्वेनाप्रामाण्यं स्यात् । प्रथमवाक्येनैव यस्यासिद्धं तदर्थमपरमित्युक्ते प्रत्यक्षादिना भेदो येनानिश्चि-तस्तदर्थमपरं वाक्यमित्युत्तरम् । तस्माद् बहुप्रमाणसंवादित्वे प्राबल्यमेव ।**

**अतः सर्वप्रमाणविरुद्धत्वान्नाभेदे तात्पर्यं वाक्यस्य । किन्तु विष्णोस्सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् ।**

**(त.मं.) तथा सति** प्रमाणबहुत्वे दौर्बल्ये सति । अभ्यासादेरित्यादिशब्दाद् धारावाहिकप्रत्य-क्षस्य । भेदवाक्यानां प्रबलत्वेनोपलभ्यमानत्वात् तेषामनुवादकत्वप्रतिपादनार्थं प्रतिवादिना स्वयमेव भेदस्य प्रत्यक्षानुमानसिद्धत्वाभ्युपगमाच्च, बहुप्रमाणसंवादकस्य दाढर्यहेतुत्वप्रतिपादनाच्चेत्य-भिप्रायेणाऽह- **अतः सर्वेति ॥**

**टीका -** 'अतश्च भेदवाक्यानामेव प्राबल्यम्' इति प्रत्यक्षादिसंवादेनाभेदवाक्यापेक्षया यद्भेदवाक्यानां प्राबल्यमुक्तम् । तदसत् । प्रत्युत संवादस्य वैयर्थ्येन दौर्बल्यहेतुत्वादित्याशङ्कां परिहृतामप्यधिकं वक्तुं पुनः परिहरति- **नचेति ॥** एकस्मिन्नेवार्थे प्रमाणबहुत्वे प्रवृत्ते सति द्वितीयादीनां दौर्बल्यमिति च नेत्यर्थः । कुत इत्यत आह- **दाढर्यमेवेति ॥** निश्शङ्का प्रमितिरेवेत्यर्थः । एवशब्देन नोपेक्षे-त्याह । अनेन वैयर्थ्यं परिहृतम् । विषये विशेषानाधायकस्य कथं दाढर्यहेतुत्वम् । अन्यथा प्रथम-प्रमाणस्यापि तत् स्यादित्यतो दृष्टमित्युक्तम् । तेन पूर्वसंस्कारसचिवस्य तन्मात्रगोचरस्यापि दाढर्यहेतुत्वं युक्तमिति सूचितम् । तदनङ्गीकारे बाधकमाह- **तथा सतीति ॥** संवादस्य वैयर्थ्ये-नोपेक्षणीयत्वे सति । अभ्यसनमभ्यासः । आदिपदेन निगमनं गृह्यते । **अप्रामाण्यम्** उपेक्षणीय-त्वम् । अस्तु तदपीत्यत आह- **अभ्यासस्य चेति ॥** एवं निगमनस्यापि बुद्ध्यारोहाद्यर्थत्वम् । सर्वसम्मतमपि मया नाङ्गीक्रियते को दोषः । नहि प्रतितन्त्रसिद्धान्तो नाम नास्तीत्यत आह- **तदनङ्गीकार इति ॥** अप्रामाण्यं स्यात् तत्त्वमस्यादिवाक्यस्येति शेषः । वैषम्यमाशङ्क्य परिहरति- **प्रथमेति ॥ असिद्धं** जीवेश्वरैक्यम् । ऐक्यस्य दुर्बोधत्वात्, पुरुषाणां च मृदुमध्याधिमात्राधि-मात्रतरत्वादिभेदभिन्नत्वादिति भावः । **प्रत्यक्षादिनेति ॥** प्रत्यक्षादेर्दोषशङ्काकलङ्कितत्वादिति भावः । एतेनानधिगतार्थविषयत्वमपि भेदवाक्यानामुक्तं भवति ।

'नच प्रमाणबहुत्वे' इत्यादिनोक्तमुपसंहरति- **तस्मादिति ॥** ततः किमित्यत आह- **अत इति ॥ वाक्यस्य** 'तत्त्वमसि' इत्यादेः । तथाच महावाक्याभावान्न तदेकवाक्यतया सर्ववाक्या-नामैक्ये महातात्पर्यमिति भावः । एवं तर्हि सर्वागमानामेकस्य विषयस्याभावादेकवाक्यता न स्यादित्यभिप्रायेण पृच्छति- **किन्त्विति ॥** उत्तरमाह- **विष्णोरिति ॥** यदुक्तं 'सदागमैकविज्ञेयम्' इति तदेवेदमिति ज्ञातव्यम् । तत्प्रकारश्च प्रागेव सङ्क्षेपेण वर्णित इति ।

**(र.टि.) नोपेक्षेति ॥** द्वितीयादिप्रमाणसंवादस्येति शेषः । **अभ्यसनमिति ॥** न त्वेकप्रकारासकृदुक्तिरभ्यास-पदार्थः । तथात्वे

हेतुत्वमित्यलग्नकं स्यात्। उक्तेरुपेक्षणीयत्वस्यैवाऽपाद्यत्वात्, अन्योपेक्षणीयत्वहेतुत्वाभावादिति भावः। **निगमनमिति ॥** अत्र निगमनपदेनोपसंहरणमेव ग्राह्यं न तु वाक्यमिति द्रष्टव्यम्। नन्वैक्यस्य दुर्बोधत्वे कस्यापि प्रथमवाक्येनैक्यबोधो न स्यात्। तथा च 'यस्य' इति विशिष्योक्तिर्न स्यादित्यत आह- **पुरुषाणां चेति ॥** ननु प्रत्यक्षेणानिश्चितोऽपि वाक्येन निश्चीयत इत्ययुक्तमित्यत आह- **प्रत्यक्षादेरिति ॥** ननु 'सदागमैक-विज्ञेयम्' इत्यनेन विष्णावेव सर्वागमानां महातात्पर्यमुक्तम्। अत्र सर्वोत्तमत्वे कथं महातात्पर्यं सर्वागमानामुच्यत इत्यत आह- **यदुक्तमिति ॥** क्षराक्षरातीतत्वादिविशिष्टे तात्पर्योक्तौ सर्वोत्तमत्व एव तात्पर्यमुक्तं भवतीति भावः।

**(रा.टि.)** शङ्कते- **अतश्चेति ॥ प्राबल्यमुक्तमिति ॥** अनेन वाक्येनेति योज्यम्। **परिहृतामपीति ॥** 'बहुप्रमाणसंवादश्च दार्ढ्यहेतुरेव' इत्यादिनेति भावः। **अधिकमिति ॥** अभ्यासाप्रामाण्यापादनादीत्यर्थः। चशब्दान्वयमाह- **इति च नेत्यर्थ इति ॥** न केवलं पुरोवादस्य अप्रमाणत्वेनानुवादित्वाभावाद्दौर्बल्यं नेति, बहुप्रमाणप्रवृत्तिस्थले द्वितीयादीनां वैयर्थ्येन दौर्बल्यमित्यपि नेत्यर्थः। **नोपेक्षेत्याहेति ॥** बहुवाक्यसंवादस्येति योज्यम्। **अनेनेति ॥** निश्शङ्कप्रमितिरूपदार्ढ्यहेतुत्वकथनेनेत्यर्थः। **विषय इति ॥** पूर्वप्रवृत्तप्रमाणविषये विशेषानाधायकस्य द्वितीयादेरित्यर्थः। **तत्स्याद्** दार्ढ्यहेतुत्वं स्यादित्यर्थः। अभ्यासपदस्याभ्यस्यत इत्यभ्यासः इति कर्मव्युत्पत्त्याऽभ्यस्यमानशब्दपरत्वेऽप्रामाण्यं स्यादिति वाच्यत्वेन तद्धेतुत्वोक्तिघटनाय भावे व्युत्पन्नोऽ-यमिति भावेनाऽह- **अभ्यसनमिति ॥** पुनः पुनरुच्चारणमित्यर्थः। **बुद्ध्यारोहाद्यर्थत्वमिति ॥** सर्वेषां सम्मतमिति योज्यम्। शङ्कते- **सर्वेति ॥** सर्ववादिसम्मतं कथं त्वया नोपेयमित्यत आह- **नहीति ॥** 'स्वतन्त्र-मात्रसिद्धोऽर्थः परतन्त्रैर्निराकृतः। प्रतितन्त्रसमः' इत्युक्तलक्षणकः प्रतितन्त्रसिद्धान्तो नास्तीति नहि, अस्त्ये-वेत्यर्थः। ईश्वरप्रामाण्यं न्यायमत इवास्तु ममाप्ययं सिद्धान्त इति शङ्कार्थः। **एतेनेति ॥** मानान्तरानिश्चि-तार्थविषयकत्वकथनेनेत्यर्थः। न केवलमनुवादित्वाभाव इति वा दार्ढ्यहेतुत्वेनावैयर्थ्यमिति वा अपेरर्थः। **इत्यादिनोक्तमिति ॥** आदिपदेन सर्वविरुद्धवचनानामित्यादिनोक्तस्य ग्रहः। तस्य, अतः सर्वप्रमाणेत्यादिरुप-संहार इति भावः। नन्वाद्यपद्ये निर्दोषाशेषसद्गुणत्वं लक्षणं समतीतक्षराक्षरत्वं च तत्र सम्भावकमित्युक्त्वा तत्र सदागमाः प्रमाणमिति वक्तुं सदागमैकविज्ञेयमिति विशेषणमित्युक्तम्। तान्येव विशेषणानि साधयिष्यामीति चोक्तम्। तथाच सिद्धमेतद्विष्णोः सदागमैकविज्ञेयत्वमित्युपसंहर्तव्यमित्यत आह- **यदुक्तमिति ॥** सदागमै-रुक्तलक्षणविशिष्टतया, जडजीवश्रीतत्त्वेभ्यो विलक्षणतया ज्ञेयं महातात्पर्येण प्रतिपाद्यमिति यदुक्तं तस्येदं स्पष्टतया निरूपणं सर्वोत्तमत्व इत्युक्त्या वैलक्षण्यवैशिष्ट्ययोर्लाभाद्वैशिष्ट्याभावे सर्वोत्तमत्वाभावादिति भावः। **प्रागेवेति ॥** 'इयं माता अयं पिता' इत्यादिवाक्यव्याख्यानावसाने 'अनेनैतां वेदवाक्यानां योजनां सूचयति' इत्यादिनेति भावः।

**(श्री.टि.) अतश्चेति ॥** प्रत्युताभेदवाक्यानामेव दौर्बल्यं भेदवाक्यानामेव प्राबल्यमित्यर्थः। **परिहृतामपी-ति ॥** 'बहुप्रमाणसंवादश्च दार्ढ्यहेतुरेव' इत्यनेनेत्यर्थः। तर्हि पुनरुक्तिरित्यत उक्तम्- **अधिकमिति ॥ वक्तु-मिति ॥** तथा सत्यभ्यासादेरपीत्यनेनेति शेषः। **नोपेक्षेति ॥** द्वितीयादिप्रमाणसंवादस्येति शेषः। अनेन दार्ढ्यहेतुत्ववचनेन **वैयर्थ्यं** संवादस्येति शेषः। **विशेषेति ॥** अतिशयेत्यर्थः। **अन्यथेति ॥** विषये विशेषानाधाय-कस्यापि द्वितीयादिप्रमाणस्य दार्ढ्यहेतुत्व इत्यर्थः। **तत्स्याद्** दार्ढ्यहेतुत्वं स्यात्। विषयेऽतिशयानाधाय-कत्वाविशेषादिति भावः। **तन्मात्रगोचरस्यापीति ॥** पूर्वप्रमाणगृहीतार्थमात्रविषयकस्यापीत्यर्थः। विषये विशेषानाधायकस्यापीति यावत्। **दार्ढ्यहेतुत्वं** निःशङ्कप्रमितिहेतुत्वम्। **तदनङ्गीकारे** संवादस्य दार्ढ्यहेतुत्वा-नङ्गीकारे। ननु अभ्यस्यत इत्यभ्यास इति कर्मव्युत्पत्त्या एकप्रकारेणासकृदुच्चार्यमाणवाक्यस्य अभ्यासपदार्थत्वेऽ-भ्यासस्यैकप्रकारासकृदुच्चार्यमाणवाक्यास्याप्रामाण्यं स्यादिति वाक्यस्योपेक्षणीयत्वरूपमप्रामाण्यमेवाऽपा-द्यम्। न त्वप्रामाण्यहेतुत्वमित्यन्योपेक्षणीयताहेतुत्वम्। असङ्गत्यापत्तेरतो व्याचष्टे-**अभ्यसनमभ्यास इति ॥** वारं वारमुच्चारणमित्यर्थः। तथा च भावव्युत्पत्तिरेवाभिप्रेता। कर्मव्युत्पत्त्या वाक्यं न ग्राह्यमिति भावः। एवं च वारं वारं वाक्योच्चारणस्य वाक्योपेक्षणीयताहेतुत्वे उच्चार्यमाणस्य वाक्यस्योपेक्षणीयत्वमर्थात्प्राप्तमेवेति ज्ञात-व्यम्। **निगमनमिति ॥** अत्रापि निगमनपदेनोपसंहरणमेव ग्राह्यम्। न तूपसंह्रियमाणं वाक्यं येनासङ्गतिः स्यादित्यर्थः। **प्रतितन्त्रसिद्धान्त इति ॥**

'स्वतन्त्र एव सिद्धोऽर्थः परतन्त्रैर्निवारितः।
प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता ॥'

इति कारिकानुसारेण तल्लक्षणं द्रष्टव्यम्। **असिद्धम्** अज्ञातम्। कुत इत्यत आह- **ऐक्यस्येति ॥** नन्वैक्यस्य दुर्बोधत्वे कस्यापि प्रथमवाक्येन ऐक्यबोधो न स्यात्। ततश्च 'यस्य असिद्धम्' इति विशेषोक्तिर्न स्यादित्यत आह- **पुरुषाणां चेति ॥** मृदुशब्देन

सूक्ष्ममुच्यते । अधिमात्राधिमात्रतरशब्दौ स्थूलस्थूलतरवाचिनौ । आदिपदेन स्थूलतमग्रहणम् । **भेदभिन्नत्वादिति ॥** भेदभिन्नबुद्धिमत्त्वादित्यर्थः । तथा च प्रथमवाक्येन बोधो मृदुबुद्धीनामेव भविष्यति । न तु मध्यादिबुद्धिमताम् । अतस्तदर्थं द्वितीयादिवाक्यमपेक्षितमिति भावः । ननु प्रत्यक्षादिनाऽनिश्चितो भेदो वाक्येन कथं निश्चीयत इत्यत आह- **प्रत्यक्षादेरिति ॥ एतेनेति ॥** 'प्रत्यक्षादिना भेदो येन न निश्चितः' इति वचनेनेत्यर्थः । **अनधिगतेति ॥** भेदवाक्यानां प्रत्यक्षाद्यनिश्चितभेदप्रतिपादकत्वादित्यर्थः । **एवं तर्हीति ॥** अभेदे तात्पर्याभाव इत्यर्थः । **विषयस्येति ॥** प्रतिपाद्यार्थस्येत्यर्थः । **एकवाक्यता न स्यादिति ॥** तस्य अर्थैक्यगर्भत्वादिति भावः । यथोक्तं जैमिनिना 'अर्थैकत्वादेकं वाक्यम्' इति । ननु सदागमैकविज्ञेयमित्यनेन समतीतक्षराक्षरत्वादिविशिष्टे विष्णावेव सर्वसदागमानां महातात्पर्यस्योक्तत्वादत्र पुनस्सर्वोत्तमत्व एव महातात्पर्योक्तौ तद्विरोधः स्यादित्यत आह- **यदुक्तमिति ॥** समतीतक्षराक्षरत्वादिविशिष्टे विष्णौ सर्वसदागमानां महातात्पर्योक्तौ तत्सर्वोत्तमत्व एव महातात्पर्यमुक्तं भवतीति भावः । ननु विष्णोः सर्वोत्तमत्वे सर्वसदागमानां **(श्री.टि.)** महातात्पर्यप्रकारः कथमित्यत आह- **तत्प्रकारश्चेति ॥ प्रागेवेति ॥** 'इयं माता अयं पिता सुरूपोऽसि' इत्यादिवाक्यव्याख्यानावसरे 'अनेनैतां वेदवाक्यानां योजनां सूचयति' इत्यादिनाऽस्माभिर्वर्णित इति नात्र पुनः प्रदर्शित इति भावः ।

**(पां.टि.)** ननु यद्यैक्यस्य दुर्बोधत्वं तदा न कस्यापि प्रथमवाक्येन तत्सिद्धिः स्यात् । अन्यथा अविशेषात्सर्वेषामपि तत्प्रसङ्गेनोक्तव्यवस्थानुपपत्तिप्रसङ्गादित्यतो विशेषोपदर्शनेन अविशेषासिद्धिमाह- **पुरुषाणां चेति ॥** ननु प्रत्यक्षादिना भेदस्यानिश्चये को हेतुरित्यत आह- **प्रत्यक्षादेरिति ॥ एतेनेति ॥** भेदस्य प्रत्यक्षादिनाऽनिश्चित-त्वेनेत्यर्थः । **एकस्य विषयस्याभावादिति ॥** ऐक्यस्य विषयतायाः खण्डितत्वात् तदतिरिक्तस्यैकस्य विषय-स्याप्रतिभासादिति भावः । **एकवाक्यतेति ॥** एकवाक्यत्वस्यैकार्थविषयताव्याप्तत्वेन व्यापकीभूतैकार्थ-विषयकत्वाभावे तद्व्याप्यभूतैकवाक्यत्वाभावनियमादिति भावः । ननु 'सदागमैकविज्ञेयम्' इति सदागमानां विष्णौ तात्पर्यस्योक्तत्वाद्विष्णोः सर्वोत्तमत्वे तत्तात्पर्योक्तौ तद्विरोध इत्यतः पूर्वोक्तस्यैवेदानीमुच्यमानत्वेन उक्तिद्वयस्य भिन्नार्थत्वाभावान्न विरोध इत्याह- **यदुक्तमिति ॥** कथमुक्तिद्वयस्य एकविषयत्वमित्यत आह- **तत्प्रकारश्चेति ॥** 'सदागमैकविज्ञेयम्' इत्येतद्वाक्यव्याख्यानावसरे एव 'सर्वस्माद्विशिष्टत्वेन विलक्षणत्वेन च सदागमैर्ज्ञेयम्' इति विष्णोः सर्वोत्तमत्वादिकमेव सकलसदागमतात्पर्यविषय इति सङ्क्षेपेण तत्प्रकार उपवर्णित इत्यर्थः ।

**(व्या.टि.) वैयर्थ्येन** द्वितीयादेरिति शेषः । **अनेन** प्रयोजनवचनेन । **एकवाक्यतेति ॥** 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इत्येकवाक्यताया अर्थैक्यनिबन्धनतोक्तेरिति भावः ।

**मूलम् - तथाचोक्तं भगवता -**

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥**
**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥**
**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद् भजति मां सर्वभावेन भारत ॥**
**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥' इति ॥**
**'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।**
**अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततोऽतः ॥'**

**इति पैङ्गि श्रुतिः ।**

**'मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतेः परम् ।**
**उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम् ।।' इति महावराहे ।।**

**(त.मं.)**कूटस्थः चित्प्रकृतिः श्रीरित्यर्थः । वेदेषु कर्मदेवादीनामप्युच्यमानत्वात् कथं तत्र न तात्पर्य-मित्यत आह- **अवान्तरमिति ।।** सर्वागमानां विष्णोरन्यत्र तात्पर्यमवान्तरं न महदित्यर्थः ।

**टीका -** ननु कुत एतत् ? नहि जीवब्रह्मणोरेकत्वे सर्वागमानां महातात्पर्यं न सम्भवतीत्येतावता समतीतक्षराक्षरत्वादिलक्षणे विष्णौ तेन भाव्यमित्यत्र नियामकमस्ति । नापि योजयितुं शक्यत इत्येतावता तत्सिद्धिः । अन्यथाऽपि योजनायाः कर्तुं शक्यत्वादिति चेन्न । 'सर्वज्ञं सर्वकर्तारम्' इति प्रमाणस्योक्तत्वात् । परमाप्तेन भगवता वासुदेवेन च तथोक्तमित्याह- **तथाचेति ।।** तद्वाक्यं पठति- **द्वाविमाविति ।।** द्वावेवेति सम्बन्धः । **इमौ** प्रमितौ । **पुरुषौ** चेतनौ । **लोके** अवलोके, पर्यालोचने सति । अथवा, द्वावेवेत्यस्योपपत्तये परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । ईशितव्यवर्ग इत्यर्थः । **सर्वाणि भूतानि** ब्रह्मादयो जीवाः । **कूटस्थो** महालक्ष्मीः । यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह- **उत्तम इति ।। अन्यः** क्षराक्षराभ्याम् । न पुनरेतयोर्मध्ये कश्चित्पुरुषोत्तमः कल्पनीयः । तत्र श्रुत्यादिसम्मतिमाह-**परमात्मेति ।।** आत्मशब्दो हि चेतनपर्यायः । युक्तिमप्याह- **य इति ।।** लोकत्रयमिति सर्वोपलक्षणम् । यो हि यस्य धारणपोषणादिकर्ता स तस्मादुत्तमो युक्तः । तदाविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम्- **अव्यय इति ।।** तत्कथम्? ऐश्वर्यादित्याह- **ईश्वर इति ।।** स च क इत्यपेक्षायामहमेवेति सप्रमाणकमाह- **यस्मादिति ।।** क्षरं चेत्यन्वयः । **लोके** पौरुषेयागमे । अत्र आत्मनस्तात्पर्यद्योतनाय वेत्तुः फलमाह- **यो मामिति ।।** एवं नत्वश्वकर्णादिवत्सञ्ज्ञात्वेन । एतच्च पुरुषोत्तमत्वमपारमार्थिकमिति संमोहवर्जितः । **सर्ववित्** अस्यैव सर्वशास्त्रार्थत्वात् । **सर्वभावेन** सर्वप्रकारेण । एतच्च नायोग्याय वाच्यमित्याशयेनाऽह- **इतीति ।।** 'स सर्ववित्' इत्याद्युक्तम् । ततः किमित्यत आह- **एतदिति ।। बुद्धिमान्** अपरोक्षज्ञानी । **कृतकृत्यो** मुक्तः । अत्र हि सर्व-विदित्युक्तत्वात् सर्वेषां पौरुषेयापौरुषेयागमानां विष्णोस्सर्वोत्तमत्व एव महातात्पर्यमिति स्फुटं प्रतीयते । श्रुतिरप्येवमेवाऽहेत्याह- **सर्वोत्कर्ष इति ।।** सर्वस्मादुत्कर्ष उत्तमत्वं- सर्वोत्कर्षः । देवानां देवः स्तुत्यो- देवदेवः । सर्वागमानां महातात्पर्यमिति सम्बन्धः । **अन्यत्र** धर्मादौ तु महातात्पर्यं नैव । किं तर्हि **तदन्यत्र** आगमैकदेशस्य **अवान्तरं** विष्णोः सर्वोत्कर्षप्रतिपत्त्यर्थत्वादमुख्यं तत्पर-त्वम् । यतः सर्वागमसाध्यः पुरुषार्थो मोक्षः, **ततो** विष्णोः सर्वोत्तमत्वज्ञानादेव भवति । **अतः** कारणादुक्तमेतत् सत्यमिति । पुराणेऽप्येवमेवोक्तमित्याह- **मुख्यं चेति ।।** सर्ववेदानां श्रीपतेरुत्कर्ष एव **परं** मुख्यं तात्पर्यम् । तदन्यत्र तु **परं** केवलमवान्तरं तात्पर्यं स्यादिति योजना ।

**(र.टि.)** क्षराक्षरात्मकस्य सर्वस्याप्रत्यक्षत्वादिमाविति कथमित्यत आह- **प्रमाणप्रमिताविति ।। चेतना-विति ।।** पुंवच्छक्तिरहितस्त्रीणामपि क्षरशब्देन ग्राह्यत्वादिति भावः । विष्णोरपि लोकगतत्वात् कथं लोक इत्यनेन अवधारणोपपत्तिरित्यत आह- **ईशितव्येति ।।** ननूत्तमपुरुष इत्युक्तार्थप्रतिपादको वेदः शब्दसाम्येन चेत् परमपुरुष इति भवेत् । अर्थसाम्येन चेत्परमचेतन इति भवेत् । परमात्मेति कथमुक्तमित्यत आह- **आत्मशब्दो हीति ।। सर्वोपलक्षणमिति ।।** यथाश्रुते वैकुण्ठादिस्थितलक्ष्म्याद्युत्तमत्वे युक्तिर्नोक्ता स्यादिति भावः । **सर्वप्रकारेणेति ।।** न तु सर्वत्वेनेत्यर्थः । तथात्वे 'उत्तमः पुरुषस्त्वन्यः' इत्यादिविरोधः स्यादिति भावः । **ततः किमिति ।।** सर्ववित्त्वादेरेव फलत्वादिति भावः । 'बुद्ध्वा बुद्धिमान्' इति बुद्धेरेव कथं पौर्वापर्यमित्यत आह- **अपरोक्षज्ञानीति ।।** तथा च बुद्ध्वेत्यस्य परोक्षतो ज्ञात्वेत्यर्थ इति भावः । **सर्वविदित्युक्तत्वादिति ।।** अत्र सर्ववित्त्वं नाम सर्वशास्त्रार्थवित्त्वम् । अन्यस्य फलत्वासम्भवात् । पुरुषोत्तमत्वज्ञानिनः सर्वशास्त्रार्थवित्त्वं तु पुरुषोत्तमत्वस्य सर्वशास्त्रार्थत्वं विना न सम्भवति । तच्च तस्य कर्मादिपरसर्वागममहातात्पर्यविषयत्वं विना न सम्भवतीति भावः । तदन्यदिति व्याचष्टे - **तदन्यत्रेति ।।** सर्वागमानामित्यस्यापि सम्बन्धप्रतीतिं वारयितुमाह- **आगमैकदेशस्येति ।। सर्वागमसाध्य इति ।।** अनेन सर्वागमानामित्यस्य

पुरुषार्थ इत्यत्रापि सम्बन्ध उक्तो भवति । **इति योजनेति** ।। उत्कर्ष इत्यत्रावधारणार्थत्वेन चशब्दस्य, तुशब्दस्यान्यत्रेत्यत्र, परशब्दस्य केवलार्थ-त्वेनोभयत्र योजनेत्यर्थः ।

**(रा.टि.) कुत इति** ।। उक्तरूपे विष्णौ महातात्पर्यमित्येतत् कुतो मानाज्ज्ञायत इत्यर्थः । तदेव व्यनक्ति- **नहीति** ।। क्षराक्षरत्वादीत्यादिपदेन निर्दोषाशेषसद्गुणत्वलक्षणग्रहः । लक्षणसम्भावकस्य लक्षणत्वोपचारात् समतीतक्षराक्षरत्वादिलक्षण इत्युक्तम् । **तेनेति** ।। सर्वागमानां महातात्पर्येणेत्यर्थः । **अन्यथाऽपीति** ।। 'नन्वेतद्विपरीतम्' इत्यादिना प्रागुक्तरीत्या वा 'नच जीवेश्वराभेद एव' इत्येतदवतारिकायामुक्तरीत्या वेति **(रा.टि.)** भावः । **उक्तत्वादिति** ।। सार्वज्ञादिविशेषणद्वयेनाशेषसद्गुणत्वस्य, अनामयमित्यनेन निर्दोषत्वस्य, सर्वोत्तममित्यनेन क्षराक्षरातीत्वस्योक्तेरिति व्याख्यानादिति भावः । ननु द्वावेव पुरुषौ चेतनौ नत्वेक एवेत्यत्र किं नियामकमित्यत इमावित्युक्तमिति भावेन तदर्थमाह- **इमौ प्रमिताविति** ।। यद्वा पुरःस्थितयोरुक्तिरिति भ्रमनिरासायाऽह- **इमौ प्रमिताविति** ।। श्रीप्रभृतिस्त्रीग्रहणायोक्तम्- **पुरुषौ चेतनाविति** ।। परमात्मे-त्यत्राऽत्मशब्दस्य वा परमात्मशब्दस्य वा रूढ्या विष्णुशब्दपर्यायस्यात्र ग्रहे नियम्यचेतनद्वयादुत्तमचेतनः इति 'चेतनश्चेतनानाम्' इत्यादावुदाहृत इत्यस्यार्थस्यालाभादहमेवेत्युत्तरवाक्यासङ्गतेश्चाऽह-**आत्मशब्दो हीति** ।। हिशब्देन शरीरप्रतिद्वन्द्वतया लोके चेतने प्रसिद्ध इति सूचयति- **आत्मन इति** ।। उपदेष्टुः स्वस्य कृष्णस्येत्यर्थः। एवमित्यनुवादः । क्षराक्षरातीतत्वेन पुरुषोत्तम इति श्रुत्यादौ प्रसिद्ध इत्येवंप्रकारेण तदर्थः स्पष्ट इति तद्व्यावर्त्य-मेवाऽह- **न त्वश्वकर्णादिवदिति** ।। अश्वकर्ण इति कस्यचिद्वृक्षस्य रूढसञ्ज्ञा यथा तथा नेत्यर्थः ।

'भवेतां यदि वृक्षस्य वाजिकर्णौ कथञ्चन ।
अदृष्टां समुदायस्य कःशक्तिं जातु कल्पयेत् ।।'

इति भट्टोक्तेः । **अस्यैवेति** ।। जडजीवश्रीतत्त्वेभ्य उत्तमत्वेन पुरुषोत्तमत्वरूपस्येत्यर्थः । सर्वभावेनेत्यस्य सर्वत्वे-नेति धीनिरासायाऽह- **सर्वप्रकारेणेति** ।। इदं गुह्यतममित्युक्तम्, तत्किमित्यत आह- **स सर्वविदित्याद्युक्त-मिति** ।। आदिपदेन यो मामेवमित्यादेर्ग्रहः । **एतदितीति** ।। क्षराक्षरातीततया यत्पुरुषोत्तमत्वं तदेव सर्वशास्त्रार्थः इत्येतत्प्रमेयमेतच्छब्दार्थः स्पष्ट इति भावः । अपौनरुक्त्यायाऽह- **बुद्धिमानपरोक्षज्ञानीति** ।।

गीतोक्तेः प्रकृतोपयोगमाह- **अत्र हीति** ।। गीतावाक्ये । पद्मनाभतीर्थीये तु 'गीतातात्पर्योक्तनारायणश्रुत्या द्वाविमावित्यादेरर्थो ज्ञेयः' इत्युक्त्वा 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः इति विष्णुनोक्तत्वाद् विष्णोस्सर्वोत्तमत्व एव सर्ववेदमहातात्पर्यावगम इति सिद्ध्यति' इत्युक्तम् । **सर्वस्मादिति** ।। 'पञ्चमी भयेन' इत्यत्र योगविभागात् समासः । **स्तुत्य इति** ।। 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इत्युक्तेः स्तुत्यर्थाद्दीव्यतेः कर्मणि घञ्प्रत्यये 'पुगन्तलघूपदस्य च' इति गुणे देव इति रूपसिद्धिरिति भावः । व्यवधानाद्वा पुरुषार्थपदेनान्वय इति धीनिरासाय वाऽह- **इति सम्बन्ध इति** ।। तर्हि धर्मादिपरिलोप इति प्रश्न उत्तरमाह- **किं तर्हि तदन्यत्रेति** ।। तदर्थ आगमेत्यादिः, कर्मदेवताकाण्डरूपैकदेशस्येत्यर्थः । अवान्तरमित्य-स्यार्थोऽमुख्यमिति । तत्र हेतुः विष्णोरित्यादि । 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' इत्यादिसूत्रत्रयोक्तदिशेति भावः । **तत्परत्वं** तात्पर्यमित्यर्थः । तात्पर्यं नाम तत्प्रमितिशेषत्वम् । 'शेषः परार्थत्वात्' इति जैमिनीयसूत्रोक्तदिशा तदेकोद्देशेन प्रवृत्तत्वं, तच्च ब्राह्मणोपनिषन्मन्त्रभेदभिन्नवेदाद्यखिलशब्दराशेर्विष्णाविव । न धर्मादिप्रमित्युत्पा-दनमात्र एव पर्यवसानं, ब्रह्मकाण्डस्य ब्रह्ममात्रप्रतिपादनेऽपि अन्यभागस्य धर्मादिप्रतिपादनद्वारा भगवज्ज्ञान एव पर्यवसानम् । 'विविदिषन्ति यज्ञेन' इत्यादेः, अतोऽमुख्यमिति । अत इत्युक्तेराह- **यत इति** ।। चोऽवधारणार्थः **(रा.टि.)** सन् भिन्नक्रम इत्युपेत्याऽह- **उत्कर्ष एवेति** ।। तुशब्दान्वयेनानुवादः- **अन्यत्र त्विति** ।। अर्थान्तरमुपेत्याऽह- **परं केवलमिति** ।।

**(श्री.टि.)** ननु 'अनेनैतां वेदवाक्यानां योजनां सूचयति' इत्यादिनोक्तप्रकारेण समतीतक्षराक्षरत्वादिलक्षणे विष्णौ महातात्पर्यप्रकारो योजयितुं शक्यत इति तदेव नियामकमित्याशङ्क्य निराकरोति- **नापीति** ।। **अन्यथापीति** ।। 'अत्राद्वैतवादिनो वदन्ति । मन्त्रब्राह्मणलक्षणस्तावद्वेदः' इत्यादिनोक्तप्रकारेण सर्वस्याप्या-गमस्य जीवेश्वराभेद एव तात्पर्यमित्यपि योजनाया मया कर्तुं शक्यत्वादिति भावः । **उक्तत्वादिति** ।। 'सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि' इति तत्रोक्तत्वादिति भावः । **वासुदेवेन** वसुदेवपुत्रेण श्रीकृष्णेन । **उक्तं** गीता-याम् । अक्षर एव चेत्यत्रैवकारचशब्दयोरेकत्र प्रयोगोऽनुपपन्नः । एवकारस्यान्यव्यावर्तकत्वाच्चशब्दस्यान्य-समुच्चायकत्वादित्यतो भिन्नक्रमेणैवकारस्यान्वयं दर्शयति- **द्वावेवेति** ।। ननु क्षराक्षरात्मकस्य

सर्वस्याप्रत्यक्ष-त्वादिमाविति कथमुक्तमित्यत आह- **प्रमिताविति ।।** प्रमाणप्रमितावित्यर्थः । अक्षरशब्दवाच्याया रमायाः, सरस्वत्यादिस्त्रीणां च क्षरशब्देन सङ्ग्राह्यत्वात्तासां च पुरुषत्वाभावात्पुरुषपदं व्याचष्टे- **पुरुषौ चेतनाविति ।।** न च पुंवच्छक्तिमत्त्वात्तासां पुरुषशब्देन ग्रहणोपपत्तेश्चेतनपरतया व्याख्यानं कुतः कार्यमिति वाच्यम् । तासां पुंवच्छक्तिरहितत्वात् । एकस्याः श्रिय एव तच्छक्तिमत्त्वात् । यथोक्तं छान्दोग्यभाष्ये- 'पुल्लिङ्गेनोच्यते श्रीश्च पुंवच्छक्तिमती क्वचित्' इति । **द्वावेवेत्यस्योपपत्तय इति ।।** लोक इत्यनुक्तौ 'उत्तमः पुरुषस्त्वन्यः' इत्युत्तर-त्रोत्तमस्य तृतीयस्यापि पुरुषस्य वक्ष्यमाणत्वेन द्वावेवेत्येतदनुपपन्नं स्यादिति भावः । ननु विष्णोरपि लोक-गतत्वात्कथं लोक इत्यनेन द्वावेवेत्यवधारणोपपत्तिरित्यत आह- **ईशितव्यवर्ग इति ।।** प्रेर्यवर्गे, अस्वतन्त्रवर्ग इत्यर्थः । वर्गस्समूहः । 'ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात् क्षराः' इत्यादिप्रमाणानुसारेणोक्तम्- **ब्रह्मादयो जीवा इति ।।** 'लक्ष्मीरक्षरदेहत्वादक्षरा' इति प्रमाणानुसारेणाऽह- **महालक्ष्मीरिति ।। श्रुत्यादीति ।।** तथा च 'परमात्मेत्युदाहृतः' इत्यस्य 'परमात्मा व्यवस्थितः' इति तैत्तिरीयोपनिषद्युदाहृत इत्यर्थो द्रष्टव्यः ।

ननूत्तमः पुरुष इति प्रतिपादको वेदः शब्दसाम्येन चेत्तर्हि 'परमपुरुष इत्युदाहृतः' इति भवेत् । अर्थसाम्येन चेत् 'परमचेतन इत्युदाहृतः' इति भवेत् । तथा च परमात्मेत्युदाहृत इत्ययुक्तमित्याशङ्क्यार्थसम्मतिरियमित्या-शयेनाऽह- **आत्मशब्दो हीति ।। सर्वोपलक्षणमिति ।।** महरादिसर्वलोकोपलक्षणमित्यर्थः । अन्यथा लोकत्रय-मात्रविवक्षायां महरादिलोकस्थितजनोत्तमत्वे युक्तिर्न स्यादिति भावः । भगवान् सर्वलोकोत्तमः, धारणपोषणादि-कर्तृत्वादिति युक्तिमभिप्रेत्य तत्र व्याप्तिमुपपादयति- **यो हि यस्येति ।। तदाविष्टस्य** लोकत्रयाविष्टस्य । **नाशप्रसङ्ग इति ।।** दह्यमानगेहान्तर्गतवदिति भावः । **ऐश्वर्यादिति ।।** अघटितघटकसामर्थ्यादित्यर्थः । अग्निस्तम्भनविद्या-वतो दाहाभाववदिति भावः । **सप्रमाणकमाहेति ।।** तथा च यस्मात्क्षरमित्यनेन 'अहं पुरुषोत्तमशब्दवाच्यः, समतीतक्षराक्षरत्वात्, व्यतिरेकेण घटवत्' इति प्रमाणमुक्तमिति ज्ञातव्यम् । अपि चेत्युभयोरपि समुच्चयार्थक-त्वादेकत्रोभयवैयर्थ्यमित्याशङ्क्याऽह- **क्षरं चेत्यन्वय इति ।।** उपसंहारे सर्वश्रुतिस्मृतीनामिति वक्ष्यमाणत्वात् **(श्री.टि.)** तदनुसारेणाऽह- **लोके पौरुषेयागम इति ।। अत्रेति ।।** आत्मनः क्षराक्षरोत्तमत्वरूपार्थ इत्यर्थः। **आत्मनः** अर्जुनं प्रत्युपदेष्टुः स्वस्य कृष्णस्य । **फलमाहेति ।।**

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।'

इति वचनेन फलस्य तात्पर्ये लिङ्गत्वावगमादिति भावः । **सञ्ज्ञात्वेनेति ।।** रूढत्वेनेत्यर्थः । तथा च 'यो मामेवम्', 'यस्मात्क्षरमतीतोऽहम्' इत्यादिनोक्तरीत्या योगवृत्त्यैव पुरुषोत्तमशब्दवाच्यं जानाति । न त्वश्व-कर्णादिशब्दवद्रूढ्येत्यर्थो द्रष्टव्यः । **संमोहेति ।।** भगवत्पुरुषोत्तमत्वापारमार्थिकत्वज्ञानस्य मिथ्याज्ञानत्वादिति भावः । ननु योगवृत्त्या भगवतः पुरुषोत्तमशब्दवाच्यत्वरूपप्रमेयविशेषं जानतः कथं सर्वज्ञत्वमित्यत आह- **अस्यैवेति ।।** भगवत्पुरुषोत्तमत्वस्यैवेत्यर्थः । ननु सर्वभावेनेत्यस्य सर्वत्वेनेति यद्यर्थस्तर्हि 'उत्तमः पुरुषस्त्वन्यः' इत्यादिविरोधः स्यादतो व्याचष्टे- **सर्वप्रकारेणेति ।।**

'पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव मे ।
विद्या धनं च कामश्च नान्यत्किञ्चित्त्वया विना ।।'

इति प्रमाणोक्तरीत्या पितृत्वादिना सर्वप्रकारेणेत्यर्थः । **ततः किमितीति ।।** सर्ववित्त्वभजनमात्रयोरेवाफलत्वा-दिति भावः । ननु बुद्ध्वा बुद्धिमानित्ययुक्तम्, बुद्ध्वेति क्त्वाप्रत्ययेन बुद्धेः पूर्वकालीनत्वमुच्यते बुद्धिमानित्यपर-कालीनत्वम् । तथा चैकस्या एव बुद्धेः कथं पौर्वापर्यमित्यत आह- **बुद्धिमानपरोक्षज्ञानीति ।। 'भूमनिन्दा-प्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ।।'** इति वचनेन प्रशंसायां मतुपो विधानात् परोक्षज्ञानापेक्षयाऽपरोक्षज्ञानस्य प्रशस्यत्वाद्बुद्धिमानित्यपरोक्षज्ञानी कथ्यत इत्यर्थः । तथा च बुद्ध्वेत्यस्य परोक्षतो ज्ञात्वेत्यर्थो दृष्टव्यः । तथा च बुद्ध्योर्भेदाद् युक्तं पौर्वापर्यमिति भावः । ननूदाहृतभगवद्वचनेन विष्णोः सर्वोत्तमत्वे सदागमानां कथं महातात्पर्यं प्रतीयत इत्यतस्तद्दर्शयति- **अत्र हीति ।।** अत्र सर्ववित्त्वं नाम सर्वशास्त्रार्थवित्त्वम् । पुरुषोत्तमत्वज्ञानिनः सर्वशास्त्रार्थवित्त्वं तु पुरुषोत्तमत्वस्य सर्वशास्त्रार्थत्वं विना न सम्भवति । तच्च कर्मादिपरसर्वागममहातात्पर्यं विना न सम्भवतीत्येवं पौरुषेयापौरुषेयाणां सर्वागमानां विष्णोः सर्वोत्तमत्व एव महातात्पर्यमिति स्फुटं प्रतीयत इत्यर्थः । देवानामिति कर्तरि षष्ठी देवैरित्यर्थः । **देवः स्तुत्य इति ।।** 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्रकान्तिगतिषु' इति धातुव्याख्यानादिति भावः । तदन्यदित्यस्यार्थमाह- **तदन्यत्रेति ।। प्रतिपत्त्यर्थत्वादिति ।।** अन्तःकरणशुद्धिद्वारेणेत्यर्थः । सर्वागमाना-मित्यस्य पुरुषार्थ इत्यत्रापि सम्बन्धः । षष्ठ्यर्थसम्बन्धश्च

साध्यसाधनभाव इत्यभिप्रेत्याऽह- **सर्वागमसाध्य इति ॥ उक्तमेतदिति ॥** विष्णोः सर्वोत्कर्षे सर्वागमानां तात्पर्यमित्युक्तमेतत्प्रमेयं सत्यं न मिथ्येत्यर्थः । उत्कर्ष इत्यत्रावधारणार्थकचशब्दस्य, तुशब्दस्यान्यत्रेत्यत्र, परशब्दस्य मुख्यं तात्पर्यम् अवान्तरं तात्पर्यमित्युभयत्र सम्बन्ध इत्यभिप्रेत्य योजनामाह- **सर्ववेदानामित्यादिना ॥**

**(पां.टि.)नन्विति ॥ एतत्** विष्णोः सर्वोत्तमत्वे सदागमानां तात्पर्यमित्येतत्कुतः । न कुतोऽपि । किं जीवेश्वरैक्ये तात्पर्यानुपपत्तिस्तत्र साधिका किं वा योजनायाः कर्तुं शक्यत्वम्, अन्यद्वेति प्रश्नार्थः । न तावत्तृतीयस्तदनुप-लम्भात्, इत्यभिप्रायेणाऽद्यमप्रयोजकत्वेन द्वितीयमतिप्रसङ्गेन दूषयति- **न हीत्यादिना ॥ अन्यथाऽपीति ॥** पुरुषमतिवैरूप्यात्तदधीनयोजनाया निरङ्कुशत्वादिति भावः । तृतीयपक्षमङ्गीकृत्य तत्रोक्तदोषं परिहरति- **सर्वज्ञ-मित्यादि ॥ भगवता वासुदेवेन चोक्तमिति ॥** अनेन मूले तथा चोक्तमिति चशब्दः तथा उक्तं चेति भिन्न-क्रमत्वेन योजनीय इत्युक्तं भवति । अक्षर एव चेति चैवशब्दयोः परस्परविरुद्धार्थतया एकत्र सम्बन्धासम्भवात् चशब्दस्य यथास्थितान्वयमङ्गीकृत्य एवशब्दं भिन्नक्रमतया योजयति- **द्वावेवेति सम्बन्ध इति ॥** ननु क्षराक्षरा-त्मकस्य जगतः सर्वस्यापि प्रत्यक्षत्वाभावात् कथमिमावित्यपरोक्षतो निर्देश इत्यतः प्रमितपरामर्शोऽयं नापरोक्ष-सिद्धपरामर्श इति भावेनोक्तम्- **इमौ प्रमिताविति ॥** 'ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः । श्रीरक्षरात्मेत्यु-दिता' इत्यादिगीतातात्पर्योदाहृतैतद्वाक्यव्याख्यानरूपनारायणश्रुतौ अक्षरात्मेत्यात्मपदप्रयोगात् 'द्वाविमौ पुरुषौ' इति पुरुषशब्दस्य चेतनार्थत्वात् न श्रियः पुरुषत्वविरोध इति भावेनोक्तम्- **पुरुषौ चेतनाविति ॥** विष्णोरपि लोकान्तर्गतत्वात्कथं लोक इत्यनेन तद्व्यावृत्तिरित्यत आह- **ईशितव्येति ॥ पुरुषोत्तम इति ॥** यदत्र वक्तव्यं तत्कार्यतावादे सर्वोत्तमपदसाधुत्वव्युत्पादनावसर एवोक्तमिति न पुनरत्र तदुच्यत इति ज्ञेयम् । ननु विष्णोरुत्तम-पुरुषत्वे 'परमात्मेत्युदाहृतः' इत्यागमसम्मतिप्रदर्शनं किं शब्दसाम्येनाभिहितं किं वा अर्थसाम्येन । नाऽद्यः । तथा सति पुरुषोत्तम इत्याकारत्वापत्तेः । नान्त्यः । तथा सति उत्तमश्चेतन इत्याकारत्वापत्तेरित्याशङ्क्यार्थ-साम्येनैवेदमागमसम्मतिप्रदर्शनमित्यभिप्रेत्य तत्सिद्ध्यर्थं परमात्मशब्दे परमशब्दस्योत्तमार्थत्वस्य सिद्धत्वात् तदनुक्त्वा आत्मशब्दस्य चेतनपरतामाह- **आत्मशब्दो हीति ॥** लोकत्रयपदस्य यथाश्रुतपरत्वे लक्ष्म्याद्युत्तमत्वे युक्त्यनुक्तिप्रसङ्गात्सर्वपरतया व्याचष्टे- **सर्वोपलक्षणमिति ॥**

दृष्टान्ताभावेन विशेषव्याप्तेरसम्भवात् मूलशैथिल्यमाशङ्क्य विशेषव्याप्त्यभावेऽपि सामान्यव्याप्तिसम्भवान्न तदित्याशयेन तामुपदर्शयति- **यो हीति ॥ तन्नाशे नाश इति ॥** गृहनाशे तदाविष्टस्य पुरुषस्य नाशदर्शनादिति भावः । **ऐश्वर्यादित्याहेति ॥** गृहनाशेऽपि तत्प्रविष्टाग्निस्तम्भनशक्तिमतः पुरुषस्यानाशवत् लोकत्रयनाशेऽपि तदाविष्टस्य भगवतो नित्यशक्तियोगादनाशो युक्त इत्याहेत्यर्थः । अक्षरादपि चेत्यत्र अपिशब्देनैव समुच्चयसिद्धेः चशब्दस्य वैयर्थ्यमित्याशङ्क्य भिन्नक्रमतया तत्सार्थक्यं दर्शयति- **क्षरं चेत्यन्वय इति ॥** लोकस्यापौरुषेयवेदं प्रति प्रतिद्वन्द्वित्वाभावेन लोकशब्दस्य लोकपरत्वायोगात् पौरुषेयागमपरतया तं व्याचष्टे- **पौरुषेयागम इति ॥** एवमित्यनेन व्यावर्तितं प्रकारं दर्शयति- **नहीति ॥** य एवं मां पुरुषोत्तमं जानाति स सर्ववित् इत्येतावतैव पूर्तेः असम्मूढ इत्यनर्थकमित्यतः क्षराक्षरोत्तमत्वस्य मिथ्यात्वान्न तस्य एवमित्यनेनोक्तं पुरुषोत्तमपदप्रवृत्तिनिमित्तपरत्वं युक्तमित्याशङ्कापरिहारार्थत्वात्तस्य न वैयर्थ्यमित्यभिप्रेत्य उक्तशङ्कापरिहारकतया असम्मूढपदमनूद्य व्याचष्टे- **असम्मूढ इति ॥** ततश्चानेन क्षराक्षरपुरुषोत्तमत्वमपारमार्थिकमिति ज्ञानस्य सम्मोहनत्वसूचनद्वारा पुरुषोत्तमत्वस्य **(पां.टि.)**पारमार्थिकत्वलाभाद् युक्तोऽनेन क्षराक्षरपुरुषोत्तमत्वस्य पुरुषोत्तमपदप्रवृत्तिनिमित्तत्वानुपपत्ति-शङ्कापरिहार इति भावः । ननु क्षराक्षरोत्तमत्वेन पुरुषोत्तमत्वज्ञानमात्रात्कथं सर्वज्ञत्वं स्यादित्यतः, तस्य सर्व-शास्त्रार्थत्वाद्युक्तं तज्ज्ञानिनः सर्वज्ञत्वमित्याशयवान् क्षराक्षरोत्तमत्वस्य सर्वशास्त्रार्थतामाह- **अस्यैवेति ॥** नन्वत्र सर्वभावेनेति सर्वात्म्योक्त्या भेदाभावप्राप्तेः कथं तत्सापेक्षस्य क्षराक्षरोत्तमत्वस्य पारमार्थिकत्वं येन प्रवृत्तिनिमित्तता तस्य स्यादित्यतो भवेदेवं यदि सर्वभावेनेत्यस्य सर्वात्म्याभिधानत्वं स्यात् । न चैतदस्ति । तथा सति भजतीत्युक्तभजनक्रियाविरोधापातात् । 'उत्तमः पुरुषस्त्वन्यः' इति पूर्ववाक्यविरोधापाताच्च । किन्तु भजतीत्युक्तभजनोपयोगिसर्वप्रकारसमर्पकत्वमेवेति भावेन तत्तथा व्याचष्टे - **सर्वभावेन सर्वप्रकारेणेति ॥** भजनोपयुक्तसर्वप्रकारेणेत्यर्थः ।

पौनरुक्त्यापत्त्या बुद्ध्वा बुद्धिमानिति शब्दद्वयस्य परोक्षज्ञानमात्रार्थताया अपरोक्षज्ञानमात्रार्थतायाश्चायोगाद् बुद्ध्वेत्यस्य परोक्षज्ञानार्थत्वमभिप्रेत्य बुद्धिमानित्येतदपरोक्षज्ञानार्थतया व्याचष्टे- **बुद्धिमानपरोक्षज्ञानीति ॥** बुद्धिशब्दोक्तज्ञानसम्बन्धबोधकस्य बुद्धिमानित्यस्य कथमपरोक्षज्ञानसूचकत्वमिति चेत्, उच्यते । अस्तिविव-क्षायामिव 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति भूमादि-ष्वर्थेष्वपि मतुबादिविधानाभ्युपगमाद् रूपवानित्यनेन प्रशस्तरूपवत्त्वस्येव

बुद्धिमानिति मत्त्वर्थीयप्रत्ययेन प्रशस्तज्ञानवत्त्वलाभादपरोक्षज्ञानस्य च परोक्षज्ञानागृहीतरेखोपरेखादिविशिष्टार्थग्राहकत्वेन परोक्षज्ञानापेक्षया प्रशस्तत्वाद् युक्तं मतुप्प्रत्ययेन अपरोक्षज्ञानसूचनमित्याशयात् । **कृतकृत्यो मुक्त इति ॥** ततश्च परोक्षा-परोक्षज्ञानयोः स्वतः प्रयोजनत्वाभावेन तन्मात्रोक्त्या स सर्वविदित्युक्त्यनन्तरं ततः किमितीति प्राप्तप्रयोजन-शङ्कायां बुद्ध्वा बुद्धिमान् इत्येतावन्मात्रोक्त्याऽपरिहारेऽपि अपरोक्षज्ञानानन्तरं मुक्तत्वाभिधायककृतकृत्यपदेन युक्तस्तत्परिहारः । आत्यन्तिकदुःखनिवृत्तिविशिष्टपरमानन्दावाप्तिरूपमुक्तेः स्वतःप्रयोजनत्वेन तत्साधनतया परोक्षापरोक्षज्ञानयोः सप्रयोजनत्वसमर्थनादिति भावः । ननु भगवता विष्णोः सर्वोत्तमत्वे सर्वागमानां महातात्पर्य-स्योक्तत्वेऽपि श्रुतौ विष्णोः सर्वोत्कर्षे तस्योक्तत्वाद्भगवता श्रुत्या चेति कथं ग्रन्थावतार इत्यतः श्रुतौ सर्वोत्कर्ष-पदस्य सर्वोत्तमत्वपरत्वेन तयाऽपि तल्लाभसम्भवाद्युक्तस्तथा ग्रन्थावतार इति भावेन सर्वोत्कर्षपदं तत्परतया व्याचष्टे - **सर्वस्मादुत्कर्ष उत्तमत्वं सर्वोत्कर्ष इति ॥** देवस्येत्यनेनैव विष्णोः क्रीडादिगुणविशिष्टत्वोक्त्या पूर्णत्वेन द्वितीयस्य तस्य वैयर्थ्यमित्यतो विवक्षितार्थहेतुसमर्पकत्वान्न तस्य वैयर्थ्यमिति भावेन तत्पदं तत्परतया व्याचष्टे- **देवानामित्यादिना ॥** विष्णोः सर्वोत्कर्षे महातात्पर्यमात्रस्य श्रुत्या उक्तत्वेऽपि सर्वागमानां तस्या-नुक्तत्वात्कथं श्रुत्या तल्लाभ इत्यतस्तत्सिद्ध्यर्थतया अन्वयं दर्शयति- **सर्वागमानां महातात्पर्यमिति सम्बन्ध इति ॥** 'यस्य येनार्थः' इति न्यायेन सम्बन्धे च योग्यताया एव प्रयोजकत्वस्थित्या सन्निधानस्य अप्रयोजकत्वादिति भावः । विष्णोरप्यन्यत्वादन्यत्रेत्यनेन परिग्रहप्राप्तौ व्याघातस्स्यात् । तत्परिहाराय अन्यत्रपदपरामृष्टव्यं दर्शयति- **धर्माधर्मादाविति ॥** तर्हि तस्य मानान्तरागोचरत्वात् तदसिद्धिरेव स्यादिति शङ्कते- **किं तर्हीति ॥** श्रौतस्य **(पां.टि.)** तदन्यदित्यस्य व्याख्यानम्- **तदन्यत्रेति ॥** तस्योपपादनम्- **विष्णोरिति ॥ एवमेवेति ॥** श्रुतौ यथोक्तं तथैवेत्यर्थः । **इति योजनेति ॥** तथा च पुराणेष्वप्येवमेवोक्तमिति ग्रन्थावतारो युक्त एवेति भावः ।

**(व्या.टि.) अन्यथाऽपीति ॥** भवद्भिन्नवाद्युक्तरीत्येत्यर्थः । गीतायामुपोद्घातसङ्गत्या पुरुषद्वयं निरूपयति- **द्वावित्यादिना ॥** अक्षर एव चेत्येवकारो भिन्नक्रमः । यथाश्रुतान्वये चकारविरोधादित्यभिप्रेत्यान्वयं दर्शयति- **द्वावेवेतीति ॥** लोकशब्दं व्याचष्टे- **अवलोक इति ॥** लुक प्रकाशने इति धातोर्लोकोऽवलोक इति भावः । द्वावेवेत्यवधारणोपपादकतयाऽर्थान्तरमाह- **अथ वेति ॥** 'यतो वा इमानि भूतानि' इत्यत्रेव भूतशब्दो जीवपर इत्याह- **ब्रह्मादय इति ॥** 'खं छिद्रं विवरं कूटम्' इति गीताभाष्यदिशा कूटवत्, खवत् स्थितेर्निर्विकारतयाऽव-स्थानात् कूटस्थः । पुल्लिङ्गं तु पुंवच्छक्तिमत्त्वात् । यथोक्तम् गीताभाष्ये - 'पुंवच्छक्तिमती स्त्री तु पुल्लिङ्गेनोच्यते बुधैः' इति । तदेतदभिप्रेत्य व्याचष्टे - **कूटस्थो महालक्ष्मीरिति ॥** अन्यत्वप्रतियोगिनमाह- **क्षरेति ॥** तद्व्यावर्त्यमाह- **न पुनरिति ॥** उदाहृतः, 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति दहरविद्यायामिति शेषः । श्रौतपरमात्मसमाख्यया कथङ्कारं पुरुषोत्तमत्वलाभ इत्यत आह- **आत्मशब्दो हीति ॥ युक्तिमिति ॥** लोकभरणलक्षणामित्यर्थः । विमतः सर्वोत्तमः सर्वधारणपोषणकर्तृत्वादित्यभिप्रेत्य व्याप्तिं दर्शयति- **यो हीति ॥** आविश्य भरणेऽनिष्टं प्रसञ्जयति- **तदाविष्ट इति ॥** न व्येतीत्यव्ययोऽविनाशीत्यर्थः । **कथमिति ॥** मायैश्वर्याद्यनेकप्रकारेषु कस्मादित्यर्थः । उत्तरयति- **ऐश्वर्यादिति ॥** 'अक्षरादपि च' इत्यत्रापिशब्देन चारितार्थ्याच्च-शब्दवैयर्थ्यमालोच्य परस्परसमुच्चयार्थत्वं भिन्नक्रमत्वं चोपेत्याऽह- **क्षरं चेत्यन्वय इति ॥ अत्र** सर्वोत्तमत्वे । एवमित्यस्य व्यावर्त्यान्तरं दर्शयति- **न त्विति ॥** सञ्ज्ञात्वेन केवलरूढित्वेन । यथोक्तं मीमांसावार्तिके-

'भवेतां यदि वृक्षस्य वाजिकर्णौ कथञ्चन ।
अक्लृप्तां समुदायस्य कश्शक्तिं जातु कल्पयेत् ॥' इति ।

**॥ मोहवर्जित इति ॥** अभ्रान्त इति यावत् । सर्वं वेत्तीति सर्ववित् सर्वोपपदाद्विदेः 'सत्सूद्विष' इति क्विबिति भावः । कथमेकज्ञाने सर्ववित्त्वमित्यत आह- **अस्यैवेति ॥ सर्वभावेन सर्वप्रकारेणेति ॥** 'तस्य भावस्त्वतलौ' इति प्रकारे भावपदप्रयोगादिति भावः । मूले गुह्यमिति गूहतेः क्यबिति भावः । एकस्या एव बुद्धेः 'बुद्ध्वा बुद्धिमान्' इति पौर्वापर्यायोग इत्यतो विशेषमाह- **अपरोक्षेति ॥** यथोक्तं वैयाकरणैः 'भूमनिन्दा-प्रशंसासु...भवन्ति मतुबादयः' इति । **सर्वस्मादिति ॥** 'पञ्चमी भयेन' इति योगविभागात्समास इति भावः। अत्राऽम्रेडिते देवशब्दे द्वितीयो यौगिक इत्याह- **स्तुत्य इति ॥** स्तुत्यर्थाद्दीव्यतेः कर्मणि घञिति भावः । तदन्यदिति प्रथमा सप्तम्यर्थे 'सप्तसु प्रथमा' इति सूत्रात् इति भावेनाऽह- **तदन्यत्रेति ॥** सर्वागमानामिति साध्यसाधनभावे षष्ठीत्यभिप्रेत्याऽह- **सर्वागमसाध्य इति ॥** तत इति 'तेन रक्तं रागात्' इत्यत्रेव बुद्धिस्थपरामर्शं मत्वा व्याचष्टे - **सर्वोत्तमत्वज्ञानादेवेति ॥** परमित्यावृत्य केवलार्थतया व्याचष्टे - **परं केवलमिति ॥**

**मूलम् - युक्तं च विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम्। मोक्षो हि सर्वपुरुषार्थोत्तमः।**

**'धर्मार्थकामास्सर्वेऽपि न नित्या मोक्ष एव हि।**
**नित्यस्तस्मात् तदर्थाय यतेत मतिमान् नरः ॥' इति भाल्लवेयश्रुतिः।**

**'अनित्यत्वात् सदुःखत्वान्न धर्माद्याः परं सुखम्।**
**मोक्ष एव परानन्दः संसारे परिवर्तताम् ॥' इति भारते।**

**मोक्षश्च विष्णुप्रसादेन विना न लभ्यते।**

**'यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण।**
**नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात् ॥'**
**इति नारायणश्रुतिः।**

**'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥'**
**इति कठश्रुतिः।**

**'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥' इति भगवद्वचनम्।**

**'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः।**
**बन्धमोक्षौ च पुरुषाद्यस्मात् स हरिरेकराट् ॥' इति स्कान्दे।**

**'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः।**
**आनन्ददश्च मुक्तानां स एवैको जनार्दनः ॥' इति च।**

**'बन्धको भवपाशेन भवपाशाच्च मोचकः।**
**कैवल्यदः परं ब्रह्म विष्णुरेव न संशयः ॥' इति च ॥**

**(त.मं.)** विवक्षितार्थे युक्तिमाह- **युक्तं चेति** ॥ उक्तमर्थमागमैर्दृढयति धर्मेत्यादिभिः। यमेवैष वृणुते प्रसादेन।

**टीका -** न केवलं श्रुतीतिहासपुराणसिद्धमेतत्, किं तर्हीत्यत आह- **युक्तं चेति** ॥ युक्तिसिद्धं चेत्यर्थः। 'पुरुषार्थस्ततोऽतः' इति श्रुत्युक्तामेव युक्तिं प्रपञ्चयितुमियं प्रतिज्ञेति ज्ञातव्यम्। कथं युक्तमिति चेत् श्रुतिस्मृतिलक्षणो हि सर्वोऽप्याम्नायस्तावदेकमेव शास्त्रम्, भेदे प्रमाणाभावात्। शास्त्रैक्यं च विषयप्रयोजनैक्यनिमित्तम् उपाध्यन्तराभावात्। सर्वोत्तमं चेदं शास्त्रं प्रसिद्धम्। 'वेदशास्त्रात् परं नास्ति' इति वचनात्। सर्वोत्तमता चास्य सर्वोत्तमप्रयोजनवत्तायामुपपद्यते नान्यथा। सर्वोत्तमं च प्रयोजनं मोक्ष एव नान्यदिति सर्वशास्त्राणां मोक्षार्थत्वे स्थिते, विषयो विचार्यते। तत्र प्रतिवाक्यं वाक्यार्थानामनेकत्वेऽपि न तैरस्य शास्त्रस्य विषयवत्ता युज्यते भेद-प्रसङ्गात्। अतो यत्प्रतिपत्त्यर्थमवान्तरवाक्यार्थप्रतिपादनं तेनैकेन महातात्पर्यगोचरेण विषयेण भवितव्यम्। यश्च ज्ञातोऽभिप्रेतप्रयोजनहेतुस्स एव तथाभावमापद्यते। अन्यथा विषयप्रयोजनयोः सम्बन्धाभावे शास्त्रस्यानुपादेयत्वप्रसङ्गात्। अभिप्रेतप्रयोजनस्य च मोक्षस्य सर्वोत्कृष्टतया ज्ञातः प्रसन्नो भगवान् विष्णुरेव हेतुः। अतस्स एव तथाविधः

सकलसदागममहातात्पर्यगोचरोऽङ्गीकार्य इत्याशयवान् स्वर्गादेरेव परमपुरुषार्थतां मन्यमानानामपाकरणाय मोक्षस्य सर्वपुरुषार्थोत्तमत्वं साधयन्नाह- **मोक्षो हीति ॥** कुत इत्यतस्तत्र श्रुतिस्मृती पठति- **धर्मेति ॥** धर्मार्थकामा इति तत्साध्यं स्वर्गादिकमुच्यते। स चासावर्थश्चेति तदर्थः। **परिवर्ततां** परिवर्तमानानाम्। उद्देश्य इति शेषः। 'व्यत्ययो बहुलम्' इति परस्मैपदम्।

अस्तु मोक्षः सर्वपुरुषार्थोत्तमः सर्वोत्तमशास्त्रप्रयोजनं च। स च ब्रह्मात्मैकत्वविद्यासाध्यः कर्मसाध्यो वेति वदतां निराकरणाय तस्य विष्णुप्रसादैकसाध्यतां साधयन्नाह- **मोक्षश्चेति ॥** विष्णुप्रसादेन लभ्यते, तं विनाऽन्येन न लभ्यते चेत्यर्थः। तदुभयं कुत इत्यतस्तत्र श्रुति-स्मृतीरुदाहरति- **यस्येति ॥ परमो विचिन्त्यः** प्रीत्यर्थं सर्वोत्कृष्टतया ज्ञातव्यः। **लभ्यः** प्राप्यः। **एष** परमात्मा **यं वृणुते** यस्य प्रसीदति तेनैव लभ्यः। कथम्? यतस्तस्य स्वां तनुं **विवृणुते** प्रकाशयति, ततश्चास्य **स्वां तनुम्** अविद्यावृतं स्वरूपं **विवृणुते** आविर्भावयति। अहं समुद्धर्ता भवामीत्युक्ते प्रसन्न इत्यर्थाल्लभ्यते । एवमुत्तरत्रापि ज्ञातव्यम् । **आवृतिः** अज्ञानम् । **एकराट्** स्वतन्त्रः। विरिञ्चादिष्वतिव्याप्तिपरिहारार्थमेतत्। **मोक्षदः** अविद्यानिवृत्तिदः। **आनन्ददः** स्वरूपानन्दानुभवशक्तिदः। कैवल्यद इत्यस्याप्ययमेवार्थः।

**(र.टि.) स चासावर्थश्चेतीति ॥** तथा च चतुर्थ्युपपत्तिरिति भावः। **उद्देश्य इति शेष इति ॥** संसारदशायां मोक्षविरोधादिति भावः। **परस्मैपदमिति ॥** परिवर्ततामिति परस्मैपदमित्यर्थः। **एवमुत्तरत्रापीति ॥** प्रसादं विना मोक्षदातृत्वज्ञानादिप्रदत्वभवपाशमोचकत्वाद्यसम्भवात्तत्रापि प्रसादोऽवगम्यत इति भावः। **विरिञ्चादि-ष्विति ॥** उत्पत्तिकर्तृत्वादेः प्रत्येकं लक्षणत्वे सृष्टिकर्तृत्वस्य विरिञ्चे, संहारकर्तृत्वस्य रुद्रे, मोक्षदातृत्वादेर्वाय्वादा-वतिव्याप्तिपरिहारार्थमेकराडित्युक्तमित्यर्थः। **अविद्यानिवृत्तिद इति ॥** आनन्दद इति पृथगुक्तत्वादिति भावः। **शक्तिद इति ॥** आनन्दतदनुभवयोरनागन्तुकत्वादिति भावः। **अयमेवार्थ इति ॥** आनन्दानुभवशक्तिद इत्येवार्थः। 'मोचकः' इति पृथगुक्तत्वादिति भावः।

**(रा.टि.) श्रुतीति ॥** 'सर्वोत्कर्षे' इति श्रुतिः। 'द्वाविमौ' इतीतिहासः। 'मुख्यं च' इति पुराणम्। अपौनरुक्त्याय आह- **पुरुषार्थ इति ॥ विषयप्रयोजनैक्यमिति ॥** 'अर्थैकत्वादेकं वाक्यम्' इति जैमिन्युक्तेरिति भावः। परिशेषाच्चेत्याह- **उपाध्यन्तरेति ॥ तथाभावं** महातात्पर्यविषयत्वम्। **अन्यथेति ॥** यो ज्ञातः प्रयोजनहेतुः तादृशस्य विषयत्वाभावे शास्त्रस्य विषयस्य ज्ञाप्यज्ञापकभावः, विषयस्य प्रयोजनस्य च हेतुहेतुमद्भावरूप-सम्बन्धाभावेन विषयफलाभ्यामसम्बद्धं शास्त्रमनुपादेयं स्यादित्यर्थः। विषयप्रयोजनयोरित्यत्र शास्त्रेणेति वा तयोरन्योन्यमिति वा सम्बन्धाभावेनेत्यर्थः। अस्त्वेवं प्रकृते किमायातमित्यत आह- **अभिप्रेतेति ॥ तथाविध इति ॥** सर्वोत्कृष्टतया ज्ञातो मोक्षहेतुभूत इत्यर्थः। तस्यार्थायेति धीनिरासायाऽह- **स चासाविति ॥** नित्यभूतमोक्षरूपप्रयोजनायेत्यर्थः। संसारस्थानां मोक्ष इत्यस्यायोग्यतापराहतत्वाद्वा साकाङ्क्षत्वाद्वाऽऽह- **उद्देश्य इति शेष इति ॥** 'वृतु वर्तने' इत्यस्याऽत्मनेपदित्वात् 'तङानावात्मनेपदम्' इत्युक्तेः शानच्प्रत्ययान्तत्वेन भाव्यतया शतृप्रत्ययान्तत्वेन कथं परिवर्ततामिति परस्मैपदनिष्पन्नरूपोक्तिरित्यत आह- **व्यत्यय इति ॥** व्यतिरेकोक्तिरूपलक्षणमित्युपेत्य वा चशब्दोऽनुक्तसमुच्चय इति मत्वा वा यस्येत्यादिवक्ष्यमाणवाक्यानुरोधेनान्वयं चाऽह- **विष्णुप्रसादेनेति ॥** प्रकृतानुगुणतया अर्थमाह- **सर्वोत्कृष्टतया ज्ञातव्य इति ॥** लभ्य इत्यनुवादः प्राप्य इति व्याख्या। अन्वयव्यतिरेकयोर्द्वयोरपि लाभायैवकारं भिन्नक्रममुपेत्याऽह- **तेनैवेति ॥** वाक्यमावृत्त्या-र्थान्तरमाह- **ततश्चेति ॥** स्वतनुप्रकाशतः इत्यर्थः। **एवमुत्तरत्रापीति ॥** मोक्षदत्वानन्ददत्वमोचकत्वकैवल्य-दत्वानां बन्धकस्य हरेः प्रसन्नतया विनाऽयुक्तत्वात् प्रसादो लभ्यत इति ज्ञातव्यमित्यर्थः। **विरिञ्चादिष्विति ॥** उत्पत्त्यादेः प्रत्येकं लक्षणत्वेन विरिञ्चे सृष्टिकर्तृत्वस्य, रुद्रे संहर्तृत्वस्य, एवमन्ये धर्मा अन्यत्र प्रसक्ता अत एकराडित्युक्तिः। स्वातन्त्र्ये सत्युत्पत्त्यादिकर्तृत्वस्यान्यत्राभावादिति भावः। आनन्दद इत्यनेनापौनरुक्त्यायाऽह- **अविद्यानिवृत्तिद इति ॥** आनन्दस्य नित्यसिद्धस्य दानं नाम किमित्यत आह-**आनन्दानुभवशक्तिद इति ॥**

**(श्री.टि.)** भेदे शास्त्रभेदे। **उपाध्यन्तरेति ॥** विषयप्रयोजनैक्यव्यतिरिक्तस्य निमित्तान्तरस्याभावादित्यर्थः। **वेदशास्त्रादिति ॥** वेदयन्तीति व्युत्पत्त्या वेदशब्दवाच्यश्रुतिस्मृतिलक्षणशास्त्रादित्यर्थः। **मोक्षार्थत्वे** मोक्षप्रयोजन-कत्वे। **भेदप्रसङ्गादिति ॥**

अर्थैक्याभावेन वाक्यभेदप्रसङ्गादित्यर्थः । **तथाभावं** महातात्पर्यगोचरत्वम् । **अन्य-थेति ।।** अभिप्रेतप्रयोजनहेतुभूतस्य विषयत्वानङ्गीकार इत्यर्थः । **सम्बन्धेति ।।** जन्यजनकभावरूपसम्बन्धे-त्यर्थः । **अनुपादेयत्वप्रसङ्गादिति ।।** वक्तृश्रोत्रोरभिमतमनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहस्यैव शास्त्रत्वादिति भावः । **तथाविधः** सर्वोत्कृष्टः । **मन्यमानानामिति ।।** 'न स्वर्गादेः फलान्तरम्' इत्यादिवचनानुसारेणेति शेषः । ननु तदर्थमित्येवोक्तावपि तादर्थ्यस्य प्रतीतत्वाच्चतुर्थ्यनुप-पत्तिरित्यत आह- **स चासावर्थश्चेति ।।** केचित्तु, तस्यार्थस्तदर्थ इत्यन्यथाप्रतीतिवारणाय व्याचष्टे- स चासाविती-त्याहुः । ननु संसारे परिवर्तमानानां तद्दशायां परानन्दरूपमोक्षाभावात्परानन्दो मोक्ष एवेत्येतद्बाधितार्थमतो व्याचष्टे- **उद्देश्य इति शेष इति ।।** परानन्दरूपमोक्ष एव प्रार्थ्य इत्यर्थः । ननु संसारे परिवर्ततामिति कथम् । न च वाच्यं परीत्युपसर्गपूर्वकाद् वृतु वर्तन अस्माद्धातोः 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति सूत्रेण परस्मैपदिनि लटः शत्रादेशे, शकारऋवर्णयोर्लोपे वृत् अत् इति जाते, गुणे तस्य रपरत्वे वर्त् अत् इति जाते, 'उगिदचां सर्वनामस्थानेऽधातोः' अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यादिति सूत्रेण उगित्त्वान्नुमागमे, उम् इत्यस्य लोपे 'मिदचोऽन्त्यात्परः' अन्त्यादचः परो मित्स्यादिति सूत्रेण मित्त्वादन्ते जाते वर्तन् त् इति जाते, 'संयोगान्तस्य लोपः' इति तकारलोपे परिवर्तन् इति भवति । तस्य षष्ठीबहुवचनं परिवर्ततामिति भव-तीति । वृतुधातोर्नित्यात्मनेपदित्वात् । तथा च परीत्युपसर्गपूर्वकाद् वृतुधातोः 'लटः शतृशानचौ' इति सूत्रेणाऽत्मनेपदिनि लटः शानजादेशे शकारचकारयोर्लोपे गुणे रपरत्वे 'आने मुक्' आने परे अदन्ताङ्गस्य मुगागमस्स्यादिति सूत्रेण मुक् इत्यागमे उक् इत्यस्य लोपे 'आद्यन्तौ टकितौ' इति कित्त्वादन्ते जाते परिवर्तम् आन परिवर्तमानेति आत्मनेपदिनि रूपं भवति तस्य षष्ठीबहुवचनं परिवर्तमानानामित्येव भवेन्न तु परिवर्त-तामित्यत आह- **व्यत्ययो बहुलमिति परस्मैपदमिति ।।** धातूनां परस्मैपदित्वात्मनेपदित्वयोर्बहुलं व्यत्ययो भवतीति सूत्रार्थः । एवं चाऽत्मनेपदिधातोरपि व्यत्ययेन परस्मैपदित्वमाश्रित्य परिवर्ततामित्युक्तमिति भावः।

**।। कर्मसाध्यो वेति ।।** 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति वचनादिति भावः । उत्तरत्र 'यस्य प्रसादात्' इति श्रुतौ मोक्षस्य विष्णुप्रसादलभ्यत्वं कथ्यते तदनुसारेण प्रतिज्ञावाक्यस्यापि तथैवाभिप्रायमाह-**विष्णुप्रसादेन लभ्यत इति ।।** अन्यथा मोक्षस्य विष्णुप्रसादालभ्यत्व एव वाक्यमुदाहर्तव्यं स्यान्न तु लभ्यत्वे । तथा च 'यस्य प्रसादात्' इति वाक्योदाहरणमयुक्तं स्यादिति भावः । **स्वां तनुं** स्वकीयां तनुम् । प्रकाशयति अपरोक्षज्ञानविषयो भवतीत्यर्थः । 'परमो विचिन्त्यः- परमत्वेन विचिन्त्यः' इत्यभिप्रेत्य सर्वोत्कृष्टतया ज्ञातव्य इत्युक्तम् । प्रीत्यर्थमिति प्रसादस्यात्र मोक्षसाधनत्वाकथनात्पूरितमिति ज्ञातव्यम् । स्वां तनुमित्यस्यैव विवरणम्- **अविद्यावृतं स्वरूपमिति ।।** जीवस्वरूपमित्यर्थः । **एवमुत्तरत्रापीति ।।** 'उत्पत्तिस्थितिसंहाराः' इति वाक्ये **(श्री.टि.)** 'अज्ञानां ज्ञानदः' इति वाक्ये 'बन्धको भवपाशेन' इति वाक्ये चेत्यर्थः । प्रसादं विना मोक्षदातृत्व-ज्ञानदत्वभवपाशमोचकत्वाद्यसम्भवात्तेष्वपि वाक्येष्वर्थात्प्रसादोऽवगम्यत इति ज्ञातव्यमित्यर्थः । उत्पत्तिकर्तृत्वादेः प्रत्येकं लक्षणत्वे सृष्टिकर्तृत्वस्य विरिञ्चे, संहारकर्तृत्वस्य रुद्रे, मोक्षदातृत्वस्य वायौ 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति वचनात्, अज्ञानबन्धदातृत्वयोर्दुर्गादेव्यामतिव्याप्तिपरिहारार्थमेकराडित्युक्तमित्यर्थः । तथा च स्वातन्त्र्ये सत्युत्पत्तिकर्तृत्वं, स्वतन्त्रत्वे सति संहारकर्तृत्वमित्यादिरूपेण लक्षणस्य विवक्षितत्वान्न विरिञ्चादिष्वतिव्याप्तिरिति भावः । सृष्ट्याद्यष्टकर्तृत्वस्य विशिष्टस्यैव लक्षणत्वेऽतिव्याप्त्यभावात् स्वरूपकथनाय तद्विशेषणमिति ज्ञातव्यम्- **अविद्यानिवृत्तिद इति ।।** लिङ्गशरीरभङ्गद इत्यर्थः । 'आनन्ददः' इति पृथगुक्तत्वा-दिति भावः । **शक्तिद इति ।।** जीवस्याऽनन्दानुभवस्वरूपत्वेन अनागन्तुकत्वाच्छक्तिद इत्युक्तमिति भावः। 'भवपाशाच्च मोचकः' इति पृथगुक्तत्वादाह- **अयमेवार्थ इति ।।** आनन्दानुभवशक्तिद इत्ययमेवार्थ इत्यर्थः ।

**(पां.टि.)** युक्तेः पूर्वमेवोक्तत्वात् पुनस्तत्प्रतिज्ञाया वैयर्थ्यमित्यत आह- **पुरुषार्थ इत्यादि ।।** धर्मादेः प्रयोजनसाधनत्वेऽपि प्रयोजनत्वाभावात् नित्यत्वेन तत्परत्वसिद्धावपि कथं सर्वपुरुषार्थोत्तमत्वसिद्धिरित्यतो धर्मादिशब्दानां लक्षणया स्वर्गादिपरत्वेन धर्मादिपरत्वाभावान्नानुपपत्तिरिति भावेन लक्षणाप्रयोजकीभूतशक्य-सम्बन्धोपदर्शनपूर्वकं तच्छब्दानां लक्षणया तत्परत्वं दर्शयति- **धर्मेत्यादिना ।। उच्यते** लक्ष्यत इत्यर्थः । तदर्थ-शब्देनैव तादर्थ्यस्योक्तत्वात् न तदर्थायेति चतुर्थ्या किञ्चित्प्रयोजनमित्यतस्तद्वैयर्थ्याय प्रकारान्तरेण व्याचष्टे- **स चासावित्यादिना ।।** संसारदशायां मोक्षस्य विरुद्धत्वेन असम्भवादपेक्षितं पूरयति- **उद्देश्य इतीति ।।** 'वृतु वर्तने इत्यस्य आत्मनेपदित्वात् तस्माल्लटि तस्य शानचि 'आने मुक्' इति मुगागमे परिवर्तमानानामिति भवितव्यम्, परिवर्ततामिति परस्मैपदं तु कथमित्यत आह- **व्यत्यय इति ।।** अयं भावः 'व्यत्ययो बहुलम्' इत्यस्मिन् सूत्रे 'छन्दसि शायजपि' इति पूर्वसूत्रात् छन्दस्यपीत्यस्य अनुवृत्तौ छन्दसि व्यत्ययो भवति, अपिशब्दाद् यथाप्राप्तं च इत्येतावन्मात्रेण इष्टसिद्ध्या बहुलग्रहणं

व्यर्थमित्याशङ्कायाम् 'बहुलग्रहणं सर्वविधिव्यभिचारार्थम्' इति वृत्तौ प्रकृताप्रकृतसर्वविधिव्यत्ययलक्षणव्यभिचारार्थत्वं बह्वर्थादानप्रवृत्तिनिमित्तकबहुलग्रहणस्य प्रदर्श्य, तत्सङ्ग्राह्यप्रदर्शनपरतया उदाहृते-

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन॥'

इति श्लोके उपग्रहशब्देन

'य आत्मनेपदाद्भेदः कश्चिदर्थस्य गम्यते।
अन्यतश्चापि लादेशात् मन्यन्ते तमुपग्रहम्॥'

इत्युक्त्यनुसारेण स्वार्थत्वपरार्थत्वव्यक्तत्वाव्यक्तत्वरूपक्रियासाधनविशेषस्य मुख्यव्यावृत्त्या प्रतिपादनेऽपि तद्व्यक्तिनिमित्तात्मनेपदपरस्मैपदयोरपि ग्रहणाद् इच्छतीति प्राप्ते 'सब्रह्मचारिणमिच्छतः' इत्यादिप्रयोगाणां **(पां.टि.)** दर्शनाद् युक्तम् अन्यपदित्वेन, लोकसिद्धस्यापि वेदे अन्यपदित्वमित्यर्थस्य सिद्धत्वेन 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वाक्येन पुराणस्यापि वेदत्वात्, वृतु वर्तन इत्यस्याऽत्मनेपदिनोऽपि लटि शतरि परिवर्ततामिति परस्मैपदम् उपपन्नमिति।

**॥ वदतामिति ॥** अद्वैतवादिनां मीमांसकानां चेति क्रमेण सम्बन्धः। ननु 'मोक्षश्च विष्णुप्रसादं विना न लभ्यते' इति उत्तरमूलानुसारेण विष्णुप्रसादादन्येन असाध्यतां साधयन्नाहेत्येव ग्रन्थावतारस्य कर्तव्यत्वाद् विष्णु-प्रसादैकसाध्यतां साधयन्नाहेति कथं ग्रन्थावतार इत्यतो मोक्षश्चेत्यादेरुत्तरग्रन्थस्य न मोक्षस्य भगवत्प्रसादातिरिक्त-साधनसाध्यत्वाभावमात्रप्रतिज्ञात्वम्। तथा सति तदर्थमात्रप्रतिपादकश्रुत्यादेरेवोदाहर्तव्यत्वेन मोक्षस्य भगवत्-प्रसादलभ्यत्वतदन्यालभ्यत्वरूपार्थद्वयोपपादकश्रुत्याद्युदाहरणासङ्गतिप्रसङ्गात्, किन्तु मोक्षस्य भगवत्प्रसाद-साध्यत्वतदन्यालभ्यत्वरूपार्थद्वयविषयकमेवेति युक्त एव मोक्षस्य भगवत्प्रसादैकसाध्यतां साधयन्नाहेति ग्रन्था-वतार इति भावेन उदाहरिष्यमाणप्रमाणानुसारेण मोक्षश्चेत्यादिप्रतिज्ञावाक्यमुभयप्रतिज्ञापरतया व्याचष्टे- **विष्णु-प्रसादेनेत्यादिना ॥** तेषामिति वाक्ये प्रसादस्याश्रुतत्वात् कथमुक्तार्थप्रमाणतया उदाहरणमित्यतोऽश्रुतत्वात् प्रसादस्यागमतया तत्र प्रमाणत्वासम्भवेऽपि अन्यथानुपपत्त्या तद्गमकत्वमस्त्येवेति युक्तं तत्र प्रमाणीकरणमिति भावेन अर्थतस्तदवगमं दर्शयति- **अहं समुद्धर्ता भवामीत्युक्त इत्यादिना ॥ एवमुत्तरत्रापीति ॥** उत्पत्तीत्याद्युत्तरवाक्येऽपि प्रसादस्याश्रवणाद् आगमतया तेषामुक्तार्थे प्रमाणत्वासम्भवेऽपि प्रसादं विना मोक्षदातृत्वज्ञानदातृत्वाद्यसम्भवेन प्रसादस्यार्थतो लाभेन अन्यथानुपपत्त्या उक्तार्थोपपादकत्वाद् युक्तं तदुपपादकतया प्रमाणीकरणमिति ज्ञातव्यमित्यर्थः। किं एकराडिति विशेषणेनेत्यत तत्प्रयोजनमाह- **विरिञ्चादि-ष्विति ॥** समुदितस्य तत्राभावेऽपि व्यर्थविशेषणत्वेन तस्यालक्षणत्वात् लक्षणभूतस्योत्पत्तिकर्तृत्वस्य विरिञ्चे, संहारकर्तृत्वस्य रुद्रे, मोक्षदातृत्वादेश्च वायौ सत्त्वेन तत्र अतिव्याप्तिपरिहारार्थम् एकराडिति विशेषणम्। ततश्च उत्पत्त्यादिकर्तृत्वस्य अन्यत्र सत्त्वेऽपि स्वातन्त्र्येण तदभावात् न तत्रातिव्याप्तिरिति युक्तं तस्य तद्व्यवच्छेदकत्व-मिति भावः। आनन्दद इति आनन्ददातृत्वस्य पृथगुक्तत्वेन तदर्थत्वायोगात् मोक्षद इत्येतद् अविद्यानिवृत्तिदत्व-मात्रपरतया व्याचष्टे- **मोक्षदो अविद्यानिवृत्तिद इति ॥ शक्तिद इति ॥** आनन्दतदनुभवयोः स्वरूपतया नित्यसिद्धत्वेन तद्दानासम्भवादिति भावः **॥ अयमेवेति ॥** आनन्दानुभवशक्तिद इत्ययमेवेत्यर्थः।

**(व्या.टि.) युक्तीति ॥** महातात्पर्ययुक्तीत्यर्थः। **विषयप्रयोजनैक्येति ॥** अर्थैक्यसूत्रादिति भावः। शास्त्रैक्येन विषयप्रयोजनैक्यं प्रसाध्य तदुत्तमत्वेन तदुत्तमत्वं साधयति- **सर्वोत्तममिति ॥** आयुर्घृतमितिवत् साध्यसाधन-योरभेदोपचारादिति भावेनाऽह- **तत्साध्यमिति ॥** परस्मैपदं शतेत्यर्थः **॥ विष्णुप्रसादेनेति ॥** श्रुतौ चिन्तनप्रकारप्रदर्शनाय परमग्रहणं मत्वा व्याचष्टे- **सर्वोत्कृष्टतयेति ॥ लभ्यः प्राप्य इति ॥** 'पोरदुपधात्' इति यत्। अन्यथा ण्यन्तात् 'अचो यत्' इति यति नुम्प्रसङ्गादिति भावः। फलितं वा, प्रतीत्यध्याहृत्य 'यम्' इत्युपपदविभक्तिं वृणोतेः प्रसादार्थत्वं च मत्वा वाऽऽह- **यस्येति ॥** स्वशब्दं ब्रह्मपरतया व्याख्याय जीवपरतया **(व्या.टि.)** व्याख्याति- **अविद्याऽवृतमिति ॥ अर्थादिति ॥** भगवतो वितथशपथाभावादिति भावः। **अज्ञानमिति ॥** भावरूपमेव। अभावस्याऽवरणरूपत्वानुपपत्तेरिति भावः **॥ एकराट् स्वतन्त्र इति ॥** असहा-यार्थैकशब्दोपपदाद्राजतेः क्विपि 'व्रश्च' इति षत्वे जश्त्वे चर्त्वे च रूपमिति भावः **॥ मोक्षदोऽविद्यानिवृत्तिद इति ॥** 'विश्वमायानिवृत्तिः' इत्युक्तेरिति भावः।

**मूलम् - प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतो दृष्टा; नाभेदज्ञानात्। अभेदज्ञाना-दप्रीतिरेवोत्तमानां भवति। घातयन्ति हि राजानो राजाऽहमिति वदन्तम्। ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः।**

**‘न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।**
**तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव ॥’ इति सौपर्णश्रुतिः ।**

**‘यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद् भजति मां सर्वभावेन भारत ॥’**

**इति गुणोत्कर्षज्ञानादेव परमा प्रीतिर्भगवता स्वयमेवाभिहिता । अतो विष्णोर्गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां महातात्पर्यम् । नचाभेदे तात्पर्यमित्यत्र किञ्चिन्मानम् ।**

**(त.मं.)** अभेदज्ञानात् प्रसादः किं न स्यादित्यत आह- **प्रीतिश्चेति ॥** ततो वेदाः सर्वे तत्परा एव । न हि मोक्षैकफलानां वेदानां मोक्षादन्यत्र तात्पर्यं स्यात् ।

विष्णोः सर्वगुणोत्कृष्टत्वेन जगतो वैलक्षण्यस्वरूपं भेदमेवं साधयित्वा विपक्षे दूषणमाह- **न चाभेद इति ॥**

**टीका-** अस्तु विष्णुप्रीतिरेव मोक्षसाधनम् । सा च कर्मादिना भविष्यतीत्यत आह- **प्रीतिश्चेति ॥** यद्यपि कर्मादिना भगवत्प्रीतिर्भवति तथाऽपि नासौ मोक्षसाधनं किन्तु परमा प्रीतिरेव । सा च विशेषतः प्रीतिर्गुणोत्कर्षज्ञानादेव भवति न कर्मादिना । कुतः? तथा लोके दृष्टत्वादिति । ननु यदा राजा गुरुर्वा भृत्यं शिष्यं वा प्रति ब्रूते अहमेव त्वमिति, तदाऽसौ भृत्यादिर्वचनानुमितयाऽ-भेदप्रतिपत्त्या परमप्रीतिमान् दृश्यते । तत्कथं गुणोत्कर्षज्ञानादेव परमा प्रीतिरित्युच्यत इत्यत आह- **नेति ॥** प्रतिपत्तिरिह ज्ञानशब्देनोच्यते ।

अयमभिप्रायः । यद्युत्तमोऽधमं प्रत्यभेदप्रतिपत्तिं करोति तदाऽधिकगुणारोपणेन ‘अहमनेन मानितः’ इति मन्यमानोऽधमस्तस्मिन् प्रीयते न त्वधमेनोत्तमं प्रत्यभेदप्रतिपत्तौ कृतायामुत्तमस्याधमे प्रीतिर्भवति । निमित्ताभावात् । ततश्चाधमो जीवः कथमुत्तमं भगवन्तं प्रति तत्प्रीतिकामोऽभेदप्रतिपत्तिं कुर्यात्, येन वेदो जीवं प्रत्यभेदप्रतिपत्त्यर्थमपि वदेदिति ।

न केवलमभेदज्ञानात् प्रीतिर्न भवति किं तर्हीत्यत आह- **अभेदज्ञानादिति ॥** अभेदप्रतिपत्त्याऽ-धमत्वारोपात् । एतदेव दृष्टान्तेन दर्शयति- **घातयन्ति हीति ॥** पाटलीपुत्राद्यधिपतयो भद्रसेनाद्या राजानः पाटलीपुत्रस्याधिपतिरिदानीमहमेवेति वदन्तमतदर्हं वचनेन तदीयां प्रतिपत्तिमनुमाय घातयन्तो दृश्यन्ते । तेन तेषां तत्राप्रीतिरनुमीयते । भवेदेवं लौकिकानां भयमत्सरादिग्रस्तानाम्, ईश्वरस्य तु नैवमिति चेन्न । तथा सत्यपराधपरिहारस्याप्यकर्तव्यतापातात् । अत एव ‘निन्दनस्तव-सत्कारन्यक्कारार्थं कलेवरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥

‘सर्वात्मनः सर्वदृशो ह्यद्वयस्यानहङ्कृतेः ।’
‘तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥’

इत्यादिकं भक्तकृतप्रामादिकापराधविषयं ज्ञातव्यम् । एतेन जीवेश्वरयोः पारमार्थिकभेदमङ्गी-कृत्याभेदश्रुतीनां प्रतिपत्त्यर्थतां व्याचक्षाणा नैयायिकादयो निरस्ता वेदितव्याः ।

‘प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतो दृष्टा’ इत्युक्तं विवृणोति- **ददति चेति ॥** राजान इति वर्तते । कर्मकरेभ्योऽप्यतिशयेनेति शेषः । वचनेन ज्ञानमनुमायेति च । तेन च तेषां तत्र परमा प्रीतिरनुमीयते । सम्प्रदानत्वस्याविवक्षितत्वाद् रजकस्य वस्त्रं ददातीत्यादिवच्छेषविवक्षया ‘वदतः’ इति षष्ठी । वदतः प्रतीति वा ।

तथा च प्रयोगः- 'विष्णुः गुणोत्कर्षज्ञातर्यतिशयेन प्रीयते सत्पुरुषत्वात् पुण्यश्लोकराजवत्' इति । न केवलमनुमानसिद्धमेतत् । किं तर्हीत्यतोऽभिहिताशेषार्थसङ्ग्रहरूपां श्रुतिमपि पठति- **न तादृशीति ।।** कर्मकरादिष्विति शेषः । तत्प्रीणनात् तथाविधात् । इतश्चैवमित्याह- **यो मामिति ।।** अत्र 'भजति मां सर्वभावेन' इति परमप्रीतेर्द्योतकम् । परमा प्रीतिरात्मनः । तदेवं जीवानां मोक्षमुद्दिश्य प्रवर्तमानैः सदागमैस्तत्साधनभगवत्प्रीतिहेतुभूतगुणोत्कर्षज्ञानाय तत्रैव महातात्पर्यवद्भिर्भवितव्यमिति स्थितम् ।

'विष्णोः सर्वोत्तमत्व एव' इत्यादिनोक्तं स्वपक्षसाधनमुपसंहरति- **अत इति ।।** स्मृतिग्रहणेन पौरुषेयाः सर्वेऽपि सदागमा गृह्यन्ते । तेन लोके वेदे चेति व्याख्यातं भवति ।

सर्वप्रमाणविरुद्धत्वेन जीवब्रह्मणोरभेदे तत्त्वमस्यादिवाक्यानां तात्पर्यायोगात् । प्रधान-वाक्याभावेन तत्र सर्वागमानां महातात्पर्यकल्पनमयुक्तमित्युक्तम् । इतोऽपि तदयुक्तमित्याह- **नचेति ।।** यथाऽस्माभिर्भगवतो गुणोत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र श्रुतिस्मृतियुक्तयः प्रमाणत्वेन प्रदर्शिताः, नच तथा पराभिमतार्थे किञ्चिदपि प्रमाणमस्ति । प्रक्रिया तु मन्दजनमनोहरा निर्मूलत्वादुपेक्ष(दुपलक्ष)णीयेति ।

**(र.टि.) प्रतिपत्तिरिहेति ।।** भृत्यशिष्यादेः राजगुर्वादिना लोकेऽभेदज्ञानाभावेन 'अभेदज्ञानादप्रीतिः' इत्युत्तरवाक्ये ज्ञानपदेनार्थाभावेऽपि तथाभावनारूपप्रतिपत्तेरेव ग्राह्यत्वेनात्रापि ज्ञानपदेन सैवोच्यत इत्यर्थः । 'तत्कृतम्' इत्यत्र तच्छब्दार्थज्ञापनाय पूर्वश्लोकोदाहरणमिति द्रष्टव्यम् (ज्ञातव्यम्) । **तथाविधादिति ।।** गुणोत्कर्षज्ञानसाध्योत्तमादित्यर्थः । **प्रीतिरात्मन इति ।।** मामित्यात्मन एव भजनकर्मत्वोक्तेरिति भावः । 'अतोऽपि' इत्युपसंहारपरमूलवाक्ये अपिपदम् । 'सर्वज्ञं सर्वकर्तारम्' इत्यादिप्रमाणसमुच्चायार्थमिति ज्ञातव्यमिति भावः ।

**(रा.टि.) कर्मादिनेति ।।** 'तत्कर्म हरितोषं यत्' इत्युक्तेरिति भावः । विशेषशब्दार्थः परमेति । विरोधिनो भेदज्ञानस्य सत्त्वेन कदाऽप्यभेदज्ञानोदयासम्भवादाह- **प्रतिपत्तिरिति ।।** अविद्यमानविषयभावनेत्यर्थः । अनेनोक्तशङ्कानिवृत्तेरस्फुटत्वादाह- **अयमभिप्राय इति ।। निमित्ताभावादिति ।।** मान्यत्वादिरूपेत्यर्थः । नन्वेवं तर्हि भागवते निन्दनादिकृतं मतिवैषम्यं चित्तविकारः सर्वान्तर्यामित्वादिगुणकस्य मात्सर्यादिदोषहीनस्य हरेर्नेति कथमुच्यत इत्यत आह- **अत एवेति ।।** असत्कारस्य अप्रीतिहेतुत्वादेवेत्यर्थः । **एतेनेति ।।** अभेदभाव-नाया अनर्थहेतुत्वकथनेनेत्यर्थः । वचनफलोक्तिर्ज्ञानफलोक्तिप्रकरणाननुगुणेत्यत आह- **वचनेनेति ।। इति चेति ।।** शेष इत्यनुषङ्गः । **तेन चेति ।।** अभिमतसर्वदानेनेत्यर्थः । तेषां राज्ञाम् । ननु 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानसञ्ज्ञायां 'चतुर्थी सम्प्रदाने' इति वदद्भ्य इति चतुर्थ्या भाव्यमित्यत आह- **सम्प्रदानत्वस्येति ।। शेषविवक्षयेति ।।** अप्राधान्यविवक्षया सम्बन्धसामान्यविवक्षया वा 'षष्ठी शेषे' इति सूत्रेण षष्ठीत्यर्थः । द्वितीयाबहुवचनं वेत्याह- **वदतः प्रतीति ।। अभिहिताशेषार्थेति ।।** अत्युत्तमपुमर्थरूपो मोक्षो भगवत्प्रीत्यैकसाध्यः, सा च तत्र गुणोत्कर्षज्ञानसाध्या । तच्च वेदवचनानां महातात्पर्यप्रतिपादनाद् भवतीत्युक्ताशेषार्थेत्यर्थः । **तथाविधादिति ।।** गुणोत्कर्षज्ञानसाध्यात् परमप्रीणनादित्यर्थः । **इति परम-प्रीतेर्द्योतकमिति ।।** यथा लोके मामसौ सर्वप्रकारेण सेवत इति राजादिवचनेन तत्प्रीतिः सेवकेन ज्ञायते **(रा.टि.)** तथेति भावः । परमा प्रीतिरिति मूले कस्येत्याकाङ्क्षायामाह- **आत्मन इति ।।** मामित्युक्तेरेतल्लाभ इति भावः । युक्तं चेत्यादिनोक्तमर्थं बुद्ध्यारोहाय सर्वं निष्कृष्योपसंहारमुखेन दर्शयति- **तदेवमिति ।। तेनेति ।।** सर्वसदागमग्रहणेन गीतागतं लोकपदं सर्वपौरुषेयग्रन्थपरमिति व्याख्यातं भवति मूलकृतैवेत्यर्थः । मूले अत इत्यस्य सर्वप्रमाणविरुद्धत्वेन जीवब्रह्मणोरभेदे तत्त्वमस्यादिवाक्यानां तात्पर्यायोगादित्यर्थः । **प्रक्रिया त्विति ।।** 'सर्वप्रमाणविरुद्धवचनानाम्' इत्येतदाद्यवतारिकायामुक्तप्रक्रियेत्यर्थः ।

**(श्री.टि.)** कर्मादिनेत्यादिपदेन श्रवणादिग्रहणम् । **नासौ मोक्षसाधनमिति ।।** 'कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः । मध्यमः' इत्युक्त्वा 'प्रसादात्त्वधमाद् विष्णोः स्वर्गलोकः प्रकीर्तितः । मध्यमाज्जन-लोकादिः' इत्युक्तत्वान्नासौ कर्मादिसाध्यः प्रसादो मोक्षसाधनमित्यर्थः । **परमप्रीतिरेवेति ।।** अत्युत्तमप्रसाद एवेत्यर्थः । 'ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः' इत्युक्त्वा 'उत्तमस्त्वेव मुक्तिदः' इत्युक्तत्वादिति भावः । **प्रतिपत्तिरिहेति ।।** अभेदज्ञानादप्रीतिरित्युत्तरवाक्ये ज्ञानपदेन अन्यथोपासनारूपा प्रतिपत्तिरेव

विवक्षिता। कुत इति चेत्, भृत्यस्य राज्ञा शिष्यस्य गुरुणा लोकेऽभेदज्ञानाभावात्। अतस्तत्र ज्ञानशब्देन प्रतिपत्तेरेव ग्राह्यत्वात् तदनुसारेणात्राप्यन्यथोपासनारूपा प्रतिपत्तिरेव ज्ञानशब्देनोच्यत इत्यर्थः। **प्रीयते** प्रीतिमान् भवति। **निमित्ता-भावादिति ॥** उत्तमेनाधमं प्रत्यभेदप्रतिपत्तौ कृतायाम् अधिकगुणारोपणेन तन्मानितत्वं यथाऽधमस्य प्रीतौ निमित्तमस्ति तथाऽत्र निमित्ताभावादित्यर्थः। **येनेति ॥** अभेदप्रतिपत्तेः कर्तव्यत्वेनेत्यर्थः। **प्रतिपत्त्यर्थम-पीति ॥** अविद्यमानोपास्त्यर्थमपीत्यर्थः। **नैवमिति ॥** भयमत्सरादिदोषशून्यत्वेन तदभेदप्रतिपत्तौ कृतायां तदप्रीतिर्न भवतीत्यर्थः। **तथा सतीति ॥** तस्याप्रीत्यभाव इत्यर्थः। **अपराधपरिहारस्यापीति ॥** 'अपराध-सहस्राणि क्रियन्तेऽहर्निशं मया। तानि सर्वाणि मे देव क्षमस्व मधुसूदन॥' इत्यादिनेत्यर्थः। नन्वीश्वरस्याप्रीत्यादि-रूपबुद्धिवैषम्यसद्भावे 'सर्वात्मनः समदृशः' इत्यादिभागवतवाक्यविरोध इत्यत आह- **अत एवेति ॥** अपराध-परिहारकरणान्यथाऽनुपपत्त्या अप्रीतिसद्भावादेवेत्यर्थः। 'सर्वात्मनः' इत्यादेरेव प्रकृतोपयोगित्वेऽपि तत्कृतमित्यत्र तच्छब्दपरामर्श्यं दर्शयितुं निन्दनेति पूर्वश्लोकोदाहरणमिति ज्ञातव्यम्। **प्रधानपरयोः** देहात्मनोः। **तत्कृतं** निन्दनादिकृतम्। **मतिवैषम्यम्** अप्रीत्यादिरूपम्। **भक्तकृतेति ॥** यदि भक्तः कदाचित् प्रमादादसुरावेश-प्रयुक्तद्वेषेण निन्दनाद्यपराधं करोति तर्हि तदीयां पूर्वतनीं भक्तिमेवापेक्ष्यान्यावेशकृतं तात्कालिकद्वेषकृतं निन्दना-दिकमनिरूप्य तस्मिन् प्रीयत इत्येव न तु सर्वैरप्यपराधे कृते सतीत्यर्थः। अत एव शिशुपालदन्तवक्रविषय एव सप्तमस्कन्धे इदं श्लोकद्वयं प्रवृत्तमित्यवगन्तव्यम्। भक्ता एव हि ते पूर्वं शिशुपालादयः शापादेव विद्वेषिण इति प्रसिद्धेरिति भावः। **एतेनेति ॥** अभेदेन प्रतिपत्तावीश्वरस्य अप्रीतिकथनेनेत्यर्थः। **प्रतिपत्त्यर्थताम्** उपा-सनार्थताम्। **गुणोत्कर्षज्ञानादेवेति ॥** न कर्मादिनेत्यर्थः। **कर्मकरेभ्य इति ॥** सेवाकारेभ्यो भृत्येभ्य इत्यर्थः। **इति चेति ॥** शेष इति वर्तते। **तेनेति ॥** तदभिप्रेतध(ना)रादिसर्वदानेन। **तेषां** राज्ञां **तत्र** गुणोत्कर्ष-वक्तरि।

**(श्री.टि.)** ननु 'कर्मणा यमभिप्रैति स सम्प्रदानम्' दानकर्मणा यमभिप्रैति स सम्प्रदानसञ्ज्ञः स्यादिति सूत्रेण सम्प्रदानसञ्ज्ञायां 'चतुर्थी सम्प्रदाने' इति सूत्रेण विप्राय गां ददातीत्यत्र विप्रायेतिवद् वदते इति चतुर्थी स्यान्न तु वदत इति षष्ठीत्यत आह- **सम्प्रदानत्वस्येति ॥** 'विवक्षातः कारकाणि सम्भवन्ति' इति वचनादिति भावः। **शेषविवक्षयेति ॥** तथा च शेषे, उक्तकारकेभ्योऽन्यः शेषः, तद्विवक्षायां षष्ठी स्यादिति सूत्रेण वदतः षट्कारक-भिन्नत्वस्य विवक्षितत्वाद्रजकस्य वस्त्रं ददातीत्यत्र रजकस्येतिवदत्रापि षष्ठी युक्तेत्यर्थः। केचित्तु सम्प्रदानत्वस्या-विवक्षितत्वादित्यस्य 'कर्मणा यमभिप्रैति स सम्प्रदानम्' स्वत्वपरित्यागेन परस्वत्वापादनं दानम्, तत्कर्मणा यमभिप्रैति स सम्प्रदानसञ्ज्ञः स्यादिति सम्प्रदानत्वविधायकस्य कर्मणेति सूत्रस्य **अविवक्षितत्वाद्** वक्तुमिष्टत्वा-भावान्महाभाष्यकारेण प्रत्याख्यातत्वादिति यावदित्यर्थः। यथोक्तं महाभाष्ये 'कर्मणा यमभिप्रैति' इत्यत्र 'अयं योगो न शक्यो वक्तुम्, खण्डिकोपाध्यायः शिष्याय चपेटिकां ददातीत्यादिप्रयोगे शिष्ये स्वत्वपरित्यागादि-रूपसम्प्रदानत्वासम्भवाच्छिष्यायेति चतुर्थी न श्रूयेत' इतीत्याहुः। यद्वा वदत इत्येतद् द्वितीयाबहुवचनमित्यभिप्रेत्य योजनान्तरमाह- **वदतः प्रतीति वेति ॥** तथा च 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति सूत्रेण प्रतिशब्दस्य कर्मप्रवचनीयसञ्ज्ञाविधानात् तद्योगे 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रेण चतुर्थ्यपवादकत्वेन द्वितीयाविधानादत्रापि कर्मप्रवचनीयार्थकप्रतिशब्दाध्याहारकरणेन तद्योगे उक्तसूत्रेण द्वितीयैव जातेति न दोष इति भावः। **सत्पुरुषत्वादिति ॥** उत्तमपुरुषत्वादित्यर्थः। नीचपुरुषे व्यभिचारपरिहाराय सदिति विशेषणम्। **तथाविधादिति ॥** गुणोत्कर्षज्ञानसाध्यादुत्तमादित्यर्थः। **आत्मनः** स्वस्य कृष्णस्य भजति मामित्यात्मन एव भजनकर्मत्वोक्तेरित्यर्थः। ननु 'जीवब्रह्मणोरभेदे सर्वागमानां महातात्पर्यम्' इत्यत्र मत्प्रक्रियैव प्रमाणम्। 'मन्त्रब्राह्मणलक्षणस्तावद्वेदः' इत्यादिनैक्ये सर्वागमानां महातात्पर्यस्य मत्प्रक्रियाऽनुसारेणोपपादितत्वादित्यत आह- **प्रक्रिया त्विति ॥**

**(पां.टि.) प्रतिपत्तिरिहेति ॥** भावनापरपर्यायोपासनैव इह ज्ञानशब्देनोच्यते। न प्रसिद्धज्ञानमित्यर्थः। भृत्यशिष्ययो राजगुरुभ्यां विरोधिभेदज्ञानस्य विद्यमानत्वेन अभेदज्ञानाभावेन 'अभेदज्ञानादप्रीतिरेव' इत्युत्तरवाक्ये ज्ञानशब्देन अर्थाभावेऽपि तथा भावनारूपप्रतिपत्तेरेव ग्राह्यत्वेन तदनुरोधेनात्रापि तस्या एव तेन ग्राह्यत्वादिति भावः। **अभेदप्रतिपत्त्येति ॥** भावनापरपर्यायोपासनयेत्यर्थः। निन्दनस्तवसत्कारेत्यादिपूर्ववाक्योदाहरणं तु तत्कृतमित्युत्तरवाक्यस्थतच्छब्दार्थस्फुरणायैव कृतमिति ध्येयम्।

ननु राजकर्तृकदानकर्मणा अभिप्रेतेन आप्तुमिष्टतमत्वाद् गुणोत्कर्षं वदतः 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सम्प्रदानत्वमावश्यकम्। सम्प्रदानं च-

'अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम्।

प्रेरणानुमतिभ्यां च लभते सम्प्रदानम् ॥'

इति हरिणोक्तत्वात् त्रिविधम् अनिराकर्तृ प्रेरकम् अनुमन्तृ चेति । तत्र अनिराकर्तृ यथा- सूर्याय अर्घ्यं ददा-**(पां.टि.)** तीति । नात्र सूर्यः प्रार्थयते न चानुमन्यते न च निराकरोति । प्रेरकं यथा- विप्राय गां ददातीति । विप्रो हि गां मह्यं देहीति याचते । अनुमन्तृ यथा- उपाध्यायाय ददातीति । नोपाध्यायः पूर्वं प्रार्थितवान्, अथ च दीयमानमनुमन्यते भद्रं कृतमिति । तत्र प्रेरकत्वानुमन्तृत्वयोरभावेऽप्यनिराकर्तृत्वरूपं सम्प्रदानत्वं गुणोत्कर्षं वदतः सम्भवत्येव । न च अपुनर्ग्रहणाय स्वस्वत्वापरित्यागेन परस्वत्वापादनमेव दानम् । अत एव रजकस्य वस्त्रं ददातीत्यादौ ददातेर्भाक्तत्वात् षष्ठी भवति । प्रकृते च राज्ञाऽभिप्रेतविषये स्वस्वत्वापरित्यागेन परस्वत्वापाद-नस्य कदाऽप्यकरणात् न दानकर्मणा आप्तुमिष्टतमत्वमिति कथं गुणोत्कर्षं वदतः सम्प्रदानत्वमिति वाच्यम् । वृक्षाय जलं ददातीत्यादिचतुर्थ्युपपत्त्यर्थं किञ्चिदुद्दिश्य अपुनर्ग्रहणाय स्वद्रव्यत्यागमात्रस्य दानशब्दार्थतया विवक्षणीयत्वेन पदमञ्जर्यामुक्तत्वेन तत्रेव अत्रापि यथाकथञ्चित् तस्य प्रतिपादयितुं शक्यत्वेन दानकर्मत्वाविरोधाद् भाष्यकारेण दानकर्मणेत्यस्य अनाश्रयणीयत्वोक्त्या दानकर्मणा आप्तुमिष्टतमत्वस्य अनपेक्षितत्वात् । यदाह भाष्यकारः- 'खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति' इति । न चैवमजां नयति ग्राममित्यादावपि प्रसङ्गः । यमभिप्रैतीत्युक्त्या यमिति निर्दिष्टस्य शेषित्वं लभ्यते कर्मणश्च शेषत्वम् । न च अजां प्रति ग्रामस्य शेषित्वमिति न सम्प्रदानत्वप्रसङ्गः । गुणोत्कर्षं वदतस्तु दानकर्माभिप्रेतं प्रति शेषित्वात् स्यादेव सम्प्रदानत्वम् । तथा च 'सम्प्रदाने चतुर्थी' इति चतुर्थ्या 'गुणोत्कर्षं वदते' इति भवितव्यं 'वदतः' इति षष्ठी कथमित्यतो 'घ्नतः पृष्ठं ददाति, रजकस्य वस्त्रं ददाति' इत्यादाविव सम्प्रदानत्वाविवक्षया अशेषस्यापि शेषत्वविवक्षया च षष्ठ्युपपत्ति-रित्याशयेनाऽह- **सम्प्रदानस्येति** ॥ अस्मिन् पक्षे सतोऽपि सम्प्रदानत्वस्याविवक्षया असतोऽपि शेषत्वस्य विवक्षायाश्चाऽश्रयणाद् गौरवमिति मन्वानो नेयं षष्ठी किन्तु प्रतिशब्दयोगे द्वितीयैवेति न काऽप्यनुपपत्तिरिति भावेन प्रतिशब्दाध्याहारेण तामुपपादयति- **गुणोत्कर्षं वदतः प्रतीति वेति** ॥ मूले षष्ठ्यन्तोपदर्शनादिना सूचितमभिमतार्थसाधकमनुमानप्रयोगं दर्शयति- **तथा च प्रयोग इति** ॥ साकाङ्क्षत्वप्रयुक्तवाक्याभासत्वशङ्का-परिहारायापेक्षितं पूरयति- **कर्मकरादिष्विति शेष इति** ॥ **तथाविधादिति** ॥ गुणोत्कर्षज्ञानसाध्यादुत्तमात् प्रसादादित्यर्थः । केचित्तु अस्तु सम्प्रदानत्वं विवक्षितम् । न च चतुर्थ्यापत्तिः कर्मप्रवचनीयसञ्ज्ञकप्रतियोगेन प्राप्तद्वितीयाया बाधकत्वादित्याह इति वदतः प्रतीति वेति ग्रन्थावतारमाहुः । **द्योतकमिति** ॥ परमप्रीतिं विना सर्वभावेन भजनस्यैवायोगादिति भावः ।

**(व्या.टि.) प्रतिपत्तिर्भावना** । प्रीयते, 'प्रीङ् प्रीणने' दैवादिकः । **निमित्तेति** ॥ अधिकगुणारोपेत्यर्थः । **अनुमीयते** । एते तस्मिन् प्रीयन्ते तद्दानोद्यमादिति भावः । **अकर्तव्यतेति** ॥ शतापराधस्तोत्रादिनेति शेषः । **भक्तकृतेति** ॥ 'यदनिन्दत् पिता मह्यं त्वद्भक्ते मयि चाघवान् । तस्मात्पिता मे पूयेत दुरन्ताद् दुस्तरादघात्' 'न मे भक्तः प्रणश्यति' 'धर्मो भवत्यधर्मोऽपि' इत्यादिवचनात् । **प्रतिपत्त्यर्थतामिति** ॥ उपासनार्थतामि-त्यर्थः । **कर्मकरेभ्य इति** ॥ कर्मशब्दे कर्मण्युपपदे 'सुकर्मपापपुण्येषु कृञः' इति टजिति भावः । वचनेन कार्येण । **अनुमीयत इति** ॥ अनुमानप्रकारस्तु एते तत्रातिप्रीतास्तदभिमतदातृत्वादिति । **सम्प्रदानस्येति** ॥ **(व्या.टि.)**स्वस्वत्वपरित्यागेन परस्वत्वापादनरूपदानकर्मणोऽत्राभिप्रेयमाणत्वस्यात्राविवक्षितत्वादित्यर्थः। उपपदविभक्तिं मत्वाऽह- **प्रतीति** ॥ प्रीणनं विशिनष्टि- **तथाविधादिति** ॥ **द्योतकमिति** ॥ तादृशवचनस्य प्रीत्यनुभावकवचनत्वादित्यर्थः । **इतोऽपीति** ॥ अप्रामाणिकत्वादपीत्यर्थः । ननु 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यादिना परभाष्ये महता प्रबन्धेन सर्वागमानामद्वैते महातात्पर्यमुपपादितम् । तत्कथं प्रमाणाभाव इत्यत आह- **प्रक्रियेति** ॥ वृथोक्तिरित्यर्थः । **निर्मूलत्वादिति** ॥ प्रमाणानुपन्यासादित्यर्थः । **उपलक्षणीयेति** ॥ गुडजिह्विका-न्यायेन । वस्तुतस्तु कामुकशास्त्रवदुत्प्रेक्षामूलत्वान्मुमुक्षुभिर्हेयमेवेति । यथोक्तमनुव्याख्याने 'हेयं मायामतं शुभैः' इति । स्वपक्षप्रमाणोपन्यासः ।

**मूलम् - नच विशेषणविशेष्यतया भेदसिद्धिः । विशेषणविशेष्यभावश्च भेदापेक्षः ; धर्मिप्रतियोग्यपेक्षया भेदसिद्धिः, भेदापेक्षं च धर्मिप्रतियोगित्वमित्यन्योन्याऽश्रयतया भेदस्यायुक्तिः, पदार्थस्वरूपत्वाद् भेदस्य । नच धर्मिप्रतियोग्यपेक्षया भेदस्या-स्वरूपत्वम् ; ऐक्यवत् स्वरूपस्यैव तथात्वात् ।**

**(त.मं.)** अत्र परैरुत्प्रेक्ष्यमाणं भेदग्रहासम्भवमनूद्य दूषयति- **न च विशेषणेति** ॥ अयमर्थः - भिन्नः पट इति विशेषणविशेष्यभावज्ञानेन भेदज्ञानम् । भिन्नः पट इत्युभयोरर्थयोर्विशेषणविशेष्य-ज्ञानं च भेदज्ञानापेक्षम् ।

एवमन्योन्याश्रयतया भेदस्यायुक्तिः। अपि च, घटात् पट इति धर्मि-प्रतियोगिज्ञानापेक्षया भिन्न इति हि भेदज्ञानम् । घटपटयोर्भेदज्ञानापेक्षं च तयोर्धर्मिप्रतियोगित्व-ज्ञानमिति चान्योन्याश्रयतया भेदस्यायुक्तिरिति च न वक्तव्यम्। भेदस्य पदार्थस्वरूपत्वात् स्वरूपग्रहण एव ग्रहणसम्भवात्। ननु पटस्वरूपं तावदयं पट इति गृह्यते, न धर्मिप्रतियोग्य-पेक्षया। भेदस्य तु तदपेक्षत्वात् कथं स्वरूपत्वमित्यत आह- **न च धर्मीति ॥** यथा तत्पक्षे स्वरूपभूतमप्यैक्यं जीवस्य ब्रह्मणैक्यमस्तीति धर्मिप्रतियोग्यपेक्षया गृह्यते, एवं स्वरूपभूतस्यैव भेदस्य धर्मिप्रतियोग्यपेक्षया ग्राह्यत्वात्, अहमिति जीवस्वरूपसिद्धावप्यैक्यासिद्धिस्तस्य मायिनः सिद्धैव।

**टीका-** एवं तावद्विष्णोः सर्वोत्तमत्वे सर्वेषां सदागमानां महातात्पर्यमिति प्रमाणैरुपपादितम्। तत्र बाधकपरिहारार्थः 'कथं च जीवपरमात्मैक्ये' इत्यतः प्राक्तनो ग्रन्थः। तथाहि - क्षराक्षर-जडात्मकात् सर्वस्मादुत्तमत्वमित्ययमर्थो भेदसापेक्षः। भेदस्तु न कश्चिदपि प्रामाणिकः। नच घटपटादिभेदस्तावत् प्रत्यक्षसिद्ध इति वाच्यम्। भेदो हि न तावत्स्वतन्त्रः प्रतिभासते, किन्तु घटपटौ भिन्नाविति घटपटविशेषणतया वा घटपटयोर्भेद इति तद्विशेष्यतया वा, एकस्यैव भेदस्य द्विष्ठत्वपक्षे। भेदद्वयाङ्गीकारेणान्यतरमात्राऽश्रयत्वेऽपि विशेषणविशेष्यभावं धर्मिप्रतियोगिभावं वाऽनपेक्ष्य सम्बन्धिमात्रापेक्षायां गत्यन्तराभावात्। भेदस्य च विशेषणत्वे घटपटयोर्विशेष्यत्वं, तस्य विशेष्यत्वे तयोर्विशेषणत्वम्। तथाच घटपटाविति वा घटपटयोरिति वा द्वित्वावच्छिन्न-योर्घटपटयोर्विशेषणविशेष्यतया प्रतीतौ सत्यां भेदप्रतीतिः, विशेषणादिप्रतीतेर्विशेष्यादिप्रतीति-कार्यत्वात्। द्वित्वावच्छिन्नयोर्घटपटयोर्विशेषणविशेष्यभावप्रतीतिश्च भेदप्रतीत्यपेक्षा, भेदप्रतीत्य-विनाभूतत्वाद् द्वित्वप्रतीतेः। तथाचान्योन्याश्रयता।

अथ यदाऽन्यतरमात्राश्रयो भेदो धर्मिप्रतियोगिभावापेक्षश्च, तदाऽप्यन्योन्याश्रयता। घटात् पटस्य भेद इति पटस्य भेदं प्रति धर्मित्वं घटस्य चावधित्वेन प्रतियोगित्वं प्रतीत्य हि भेदः प्रत्येतव्यः। भेदप्रतीत्यपेक्षा च धर्मिप्रतियोगित्वप्रतीतिः। अन्यथा पटस्येति घटादिति च विलक्षणप्रतीत्य-नुपपत्तेरिति। तथाचान्योन्याश्रयतया प्रत्यक्षेण भेदप्रतीतेरनुपपत्तिरिति। तदेतदाशङ्क्य निषेधति- **न चेति ॥** उक्तानुसारेण पदानि योज्यानि। कुतो नेत्यत आह- **पदार्थेति ॥** धर्मीह पदार्थ इत्युच्यते।

अयमर्थः- न भेदो युगधर्मः। किन्त्वेकस्य धर्मोऽपरेण निरूप्यः। घटपटौ भिन्नावित्यत्रापि घटात् पटो भिन्नः पटाद् घटो भिन्न इत्येवार्थः। एवं घटपटयोर्भेद इत्यत्रापि घटपटधर्मिकं भेदद्वयमेव प्रतीयते। एकवचनं तु घटपटयो रूपमितिवत् समुदायापेक्षम्। स च भेदो धर्मिणः स्वरूपमेव। तेन धर्मिप्रतीतिरेव भेदप्रतीतिरिति प्रतीतिद्वयाभावान्नान्योन्याश्रयत्वम्। घटस्य प्रतियोगिता च पटप्रतियोगिकतद्धर्मिकभेदनिबन्धनैव। सोऽपि घटस्य स्वरूपमेव। तथाऽपि प्रतिपन्नभेदस्य प्रतियोगित्वाद् घटात् पटस्य भेदसिद्धौ पटाद् घटस्य भेदसिद्धिरित्यन्योन्याश्रयत्वमिति चेन्न। विद्यमानभेदस्य प्रतीतिमात्रेण प्रतियोगित्वोपपत्तेरिति। एतेन विशेषणविशेष्यभावप्रतीतेर्भेद-प्रतीत्यधीनत्वस्य दण्डद्यादौ दर्शनेन भेदप्रतीतिपरम्परयाऽनवस्थाप्रसङ्गोऽपि परास्तः। तथा प्रत्यक्षं किं भेदमेव गोचरयेदुत वस्त्वपि। नाऽद्यः। भेद इत्येव प्रतीत्यभावात्। द्वितीयेऽपि किं भेदपूर्वं वस्तु गोचरयेदुत वस्तुपूर्वं भेदं युगपद्वोभयम्। नाऽद्यः। भेद इत्येवाप्रतीतेः। विरम्य व्यापारायोगाच्च। अत एव न द्वितीयो नापि तृतीयः। वस्तुप्रतीतेर्भेदप्रतीतिकारणत्वेन यौगपद्यायोगात् इत्येतदपि निरवकाशमिति।

भवेदयं परिहारो यदि भेदस्य धर्मिस्वरूपत्वं स्यात्। नच तद्युक्तम्। धर्मिस्वरूपं हि परप्रतीति-निरपेक्षमेव प्रतीयते। न हि कस्यचिदस्मादयं पट इति वा अस्मादस्य पट इति वा प्रतीतिरस्ति। किं नाम पट इत्येव। भेदस्तु घटात् पटो भिन्न इति वा घटात् पटस्य भेद इति वा धर्मिप्रतियोगिप्रतीत्य-पेक्षयैव प्रतीयते नतु जातुचिद्भेद इत्येव।

तथाच सापेक्षनिरपेक्षतालक्षणविरुद्धधर्माधिकरण-योर्भेदधर्मिस्वरूपयोः कथमैक्यं स्यादित्याशङ्क्याऽह- **नचेति ॥** धर्मिप्रतियोगीति तत्प्रतीति-रुपलक्ष्यते । अपेक्षया प्रतीयमानत्वादिति शेषः । **अस्वरूपत्वं** परप्रतीतिनिरपेक्षप्रतीतिकधर्मि-स्वरूपत्वाभावः । कुतो नेत्यत आह- **ऐक्यवदिति ॥** यथा अनपेक्षप्रतीतिकप्रत्यक्चैतन्यस्वरूप-स्यापि जीवब्रह्मैक्यस्य जीवस्य ब्रह्मणैक्यमिति धर्मिप्रतियोगिप्रतीत्यपेक्षया प्रतीयमानत्वं परेणाङ्गीक्रियते, तथा निरपेक्षप्रतीतिकधर्मिस्वरूपस्यैव भेदस्य धर्मिप्रतियोगिप्रतीत्यपेक्षया प्रतीयमानत्वोपपत्तेः ।

एतेन, भेदपटौ नाभिन्नौ सापेक्षनिरपेक्षप्रतीतिकत्वेन विरुद्धधर्माधिकरणत्वादित्यस्यान्यतरा-नैकान्तिकत्वमुक्तं भवति । नचैक्यं न स्वरूपमिति वाच्यम् । अस्वरूपत्वे मिथ्यात्वप्रसङ्गेन तत्परस्य तत्त्वमस्यादिवाक्यस्यातत्त्वावेदकत्वप्रसङ्गात् । अस्वरूपस्यापि सत्यत्वे सदद्वैतभङ्गप्रसङ्गात् । नचैक्यं न सापेक्षमिति वाच्यम् । तथा सति तत्त्वम्पदार्थप्रतिपादकानां वेदान्तवाक्यानामैक्यपरमहा-वाक्यैकवाक्यताऽभावप्रसङ्गेन वैयर्थ्यापातात् । अथ तत्र प्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वलक्षण-विरुद्धधर्माधिकरणत्वेन भेदोऽस्तु नतु तद्विषयस्य, एकस्यैवाग्नेः सापेक्षनिरपेक्षानुमितिप्रत्यक्ष-विषयत्वदर्शनेन विरोधाभावादिति ब्रूयात् तर्हि तत्प्रकृतेऽपि समानम् । अधिकश्चात्र सविशेषा-भेदाङ्गीकारेण परिहारो भविष्यतीति ।

**(र.टि.)** ननु 'विशेषणविशेष्यभावश्च भेदापेक्षः' इत्युक्तम् । घटादिविशेषणत्वादिना भेदप्रतीतेर्विशेष्यतया घटादिप्रतीतिसापेक्षत्वेऽपि न विशेष्यतया घटादिप्रतीतेस्तद्भेदप्रतीतिसापेक्षत्वम् । प्रत्येतव्यभेदज्ञानाभावेऽपि घटो भिन्नो घटे भेद इति भेदविशेष्यत्वादिना घटादिप्रतीतेः । तथा च कथमन्योन्याश्रय इति चेन्न । भेदस्य द्विष्ठत्वपक्षे हीयमन्योन्याश्रयतोच्यते । द्विष्ठो हि भेदः प्रतीयमानो द्वित्वावच्छिन्नघटपटयोर्विशेषणत्वादिना प्रती-यते । तादृशे च भेदज्ञाने घटपटयोर्द्वित्वावच्छेदेनैव विशेष्यत्वादिना ज्ञानं कारणं वाच्यम् । तद्विना द्वित्वावच्छिन्न-**(र.टि.)** घटपटविशेषणत्वादिना भेदज्ञानानुपपत्तेः । एवं च द्वित्वावच्छेदेन घटपटयोर्विशेष्यत्वादिज्ञानं घटपटगत-द्वित्वप्रतीतिजनकघटपटभेदज्ञानं विना न सम्भवतीति युक्ताऽन्योन्याश्रयत्वशङ्केत्याशयेनाऽह- **द्वित्वावच्छिन्न-योरित्यादि ॥** अत एव घटादेर्विशेष्यत्वादिमात्रप्रतीतौ भेदप्रतीत्यपेक्षाऽभावाद्भेदस्यैकैकमात्राश्रितत्वपक्षे नैवमन्योन्याश्रयता सम्भवतीति धर्मिप्रतियोग्यपेक्षयेति प्रकारान्तरेण सा उपपादितेति भावः । **विशेषण-विशेष्यतयेति ॥** घटपटाविति विशेष्यतया घटपटयोरिति विशेषणतयेति यथायोगं सम्बन्धः । **विशेषणादि-प्रतीतेरिति ॥** विशेषणत्वादिना विशेषणादिप्रतीतेर्विशेष्यतावच्छेदकावच्छेदेन विशेष्यत्वादिना विशेष्यादि-प्रतीतिकार्यत्वादित्यर्थः । **भेदप्रतीत्यविनाभूतत्वादिति ॥** भेदप्रतीतिजन्यत्वादित्यर्थः । अन्यथाऽ-न्योन्याश्रयताऽनवकाशात् । **उक्तानुसारेणेति ॥** विशेषणविशेष्यतयेत्यतः पूर्वं द्वित्वावच्छिन्नयोरिति, तदनन्तरं प्रतीताविति शेषं पूरयित्वा विशेषणविशेष्यभावभेदपदयोश्च ज्ञानलक्षकत्वं, धर्मिप्रतियोग्यपेक्षयेत्यत्र धर्मिप्रतियोगि-पदयोर्भावप्रधानत्वं स्वज्ञानोपलक्षकत्वं, भेदापेक्षमित्यत्र भेदधर्मित्वप्रतियोगित्वपदानां तत्तज्ज्ञानोपलक्षकत्वमुक्त्वा विशेषणविशेष्यतयेत्यादिपदानि योजनीयानीत्यर्थः । भेदस्य प्रतियोगिस्वरूपत्वप्रतीतिनिवारणायाऽह- **धर्मी-हेति ॥** स च भेद इति जात्यपेक्षयैकवचनम् । घटप्रतियोगिकभेदधर्मिणां पटकुड्यादीनामनेकत्वेन घटप्रतियोगिक-भेदानामप्यनेकत्वात् । भेदस्यैकत्वे अनेकधर्मिस्वरूपत्वायोगात् । घटादिस्वरूपभेदानामननुगतत्वेऽपि पट-प्रतियोगिकत्वेनानुगमसम्भवाच्चेति द्रष्टव्यम् । ननु भेदस्य धर्मिस्वरूपत्वेन धर्मिप्रतीत्यपेक्षयाऽन्योन्याश्रय-त्वाभावेऽपि प्रतियोगिस्वरूपत्वाभावाद् भेदावधित्वेन प्रतियोगिप्रतीत्यपेक्षयाऽन्योन्याश्रयः स्यात् । अवधित्वेन प्रतियोगिज्ञाने भेदज्ञानं, भेदज्ञाने च तदवधित्वेन प्रतियोगिज्ञानमितीत्यत आह- **घटस्येति ॥** न चैवं प्रत्येतव्यभेदावधित्वेन प्रतियोगिज्ञानापेक्षयाऽन्योन्याश्रयाभावेऽपि प्रत्येतव्यभेदाधिकरणप्रतियोगिकभेदाधि-करणत्वेन प्रतियोगिज्ञानस्यापेक्षणीयत्वादन्योन्याश्रयः स्यादित्याशङ्कते- **तथाऽपीति ॥ प्रतियोगित्वात्** प्रतियोगित्वेन ज्ञानादित्यर्थः । स्वनिष्ठभेदज्ञानापेक्षायामपि प्रत्येतव्यभेदज्ञानापेक्षाभावात् कथमन्योन्याश्रय इत्यत उक्तम्- **घटात्पटस्य भेदसिद्धाविति ॥ विद्यमानभेदस्येति ॥** न हि प्रत्येतव्यभेदाधिकरणप्रतियोगिकभेद-वत्त्वेन ज्ञानमपेक्षितं येनोक्तरीत्याऽन्योन्याश्रयः स्यात् । किन्तु गोर्गवयसादृश्यज्ञानाभावेऽपि वस्तुतो गवयसादृश्यवतो गोत्वादिना प्रतीतिमात्रेण गवयविसदृशत्वेनाप्रतीतिमात्रेण वा गवयगतसादृश्यप्रतियोगित्व-बुद्धिवत्, वस्तुतस्तादृशाभेदवतो घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वज्ञानोपपत्तेस्तन्मात्रमपेक्षितमि-त्यर्थः । एतेन घटाद्यभिन्नतया ज्ञातस्यापि पटादेर्घटधर्मिकभेदप्रतियोगित्वं ज्ञायेतेति

परास्तम् । तदा घटत्वादिना ज्ञानाभावात् । पटाद्यैक्येनाप्रतीतस्येति विशेषणाद्वेति ।

**॥ एतेनेति ॥** 'पदार्थस्वरूपत्वाद्भेदस्य' इत्यनेनेत्यर्थः । तथा च घटभेदयोर्भेदाभावेन न तयोर्विशेषण-विशेष्यभावप्रतीत्यर्थं भेदज्ञानापेक्षा । किन्तु स्वरूपसद्भेदप्रतिनिधिविशेषवतोर्घटत्वादिना प्रतीतिमात्रेण विशेषणविशेष्यभावप्रतीत्युपपत्तेः । यत्रापि दण्डदेवदत्तादिविशेषणविशेष्ययोर्भेदोऽस्ति तत्रापि विशेषणत्वादि-**(र.टि.)** प्रतीतौ न भेदज्ञानापेक्षा । विद्यमानभेदयोर्दण्डदेवदत्तादिकयोर्दण्डत्वादिना प्रतीतिमात्रेण विशेषण-विशेष्यभावप्रतीत्युपपत्तेरिति भावः । **इत्येतदपि निरवकाशमिति ॥** धर्मिस्वरूपत्वाद्भेदस्य धर्मिप्रतीतेरेव भेदप्रतीतित्वाद् भेदवस्तुप्रतीत्योः कार्यकारणभावस्यैवाभावेन यौगपद्यासम्भवादिति भावः । अस्वरूपत्वमित्यस्य निःस्वरूपत्वार्थकत्वभ्रमं वारयितुमाह- **धर्मिस्वरूपत्वाभाव इति ॥ अन्यथाऽनैकान्तिकत्वमिति ॥** जीव-ब्रह्मैक्यस्य तेनैवाङ्गीकारादिति भावः । यद्यपि ब्रह्मगतब्रह्माभेदादावुभयानैकान्त्यं सम्भवति, तथाऽपि 'ऐक्यवत्' इति मूलवाक्येनेदमेवोक्तमिति हृदयम् । अत एवैतेनेत्युक्तम् । **वैयर्थ्यापातादिति ॥** ननु प्रतियोगिभूतभेदस्य धर्मिप्रतियोगिसापेक्षत्वेन तदभावरूपमैक्यं सापेक्षम् । न तु स्वयं सापेक्षम् । एवं च तत्त्वमस्यादिवाक्यस्य जीवो ब्रह्मभिन्नो न भवतीत्येवमर्थत्वेनैतद्वाक्यप्रतिपाद्याभेदप्रतियोगिभेदधर्मिप्रतियोगिरूपजीवेश्वरप्रतिपादकानां 'विज्ञानघनः' 'सत्यं ज्ञानम्' इत्यादिवेदान्तवाक्यानां तत्त्वमस्यादिवाक्यैकवाक्यत्वसम्भवेन न वैयर्थ्यमिति चेन्न । घटः पटो नेत्यादौ भेदस्यैव नञर्थत्वेनैक्याभावरूपत्वात् । अत एव टीकामूलयोर्विधिरूपत्वज्ञापनार्थम् अभेदशब्दं विहायैक्यशब्दप्रयोगः । एवमपि प्रतियोगिभूतभेदसापेक्षत्वेन स्वतः सापेक्षत्वतादवस्थ्याद्वेति द्रष्टव्यम् ।

**(रा.टि.)** शिष्यमनस्समाधानायोक्तवक्ष्यमाणार्थौ दर्शयति- **एवं तावदिति ॥** एतेन पूर्वोत्तरप्रकरणयोः सङ्गतिरप्युक्ता भवति । पक्षभेदेन मूलं योजयितुमाह- **भेदो हीति ॥ विशेष्यतया वेति ॥** प्रतिभासत इत्यनु-कर्षः । **द्विष्ठत्वपक्ष इति ॥** संयोगादिरिव द्वित्वत्रित्वादिरिव च भेदो घटपटयोर्व्यासज्य वर्तते इति पक्ष इत्यर्थः। **अन्यतरमात्राश्रयत्वेऽपीति ॥** घटनिरूपितो भेदः पटे, पटनिरूपितो भेदो घट इत्येवमित्यर्थः । विशेषण-विशेष्यतया वा धर्मिप्रतियोगिभावसापेक्षतया वा भेदः प्रतिभासत इति योज्यम् । कुतस्तद्भावापेक्षोपेयते, केवलं धर्मिप्रतियोगिरूपसम्बन्धिस्वरूपमात्रमपेक्ष्य भेदोऽवभासतामित्यत आह- **विशेषणेति ॥ गत्यन्तरेति ॥** भेदप्रतीतौ विशेषणादिभावापेक्षां विनोपायान्तरस्याभावादित्यर्थः । आद्यपक्षं तावद्विवरितुं प्राक्प्रदर्शितप्रतीत्या-कारे किं विशेषणं किं विशेष्यमित्यतस्तद्व्यनक्ति-**भेदस्य चेति ॥** एवं परिष्कृत्य मूलं योजयति-**तथाचेति ॥** प्रतीतौ सत्यामिति शेषोक्तिः । भेदसिद्धिरित्यस्यार्थः- **भेदप्रतीतिरिति ॥** भिन्नाविति विशेषणतया वा भेद इति विशेष्यतया वा भेदप्रतीतिरित्यर्थः । कुत एवमित्यत आह- **विशेषणादीति ॥** भेदरूपविशेषणविशेष्य-प्रतीतेर्घटपटरूपविशेषणविशेष्यप्रतीतिकार्यत्वादित्यर्थः । विशेषणधीः विशेष्यधीकार्या विशेष्यधीर्विशेषण-धीकार्येति विवेकः । उत्तरवाक्यं योजयति- **द्वित्वावच्छिन्नयोरिति ॥** कुत एवमित्यत आह- **भेदप्रतीत्यविना-भूतत्वादिति ॥ तथाचेति ॥** ज्ञप्तावन्योन्यसापेक्षत्वे सतीत्यर्थः । द्वितीयपक्षपरतया धर्मीत्यादिमूलं योजयति- **अथेत्यादिना ॥** भावेत्यत्र तज्ज्ञा(द्धा)नपरिग्रहः । **अपेक्षा चेति ॥** भेदप्रतीतेरिति योज्यम् । भेदधीसापेक्षत्वं धर्मित्वादिधियः कुत इत्यत आह- **अन्यथेति ॥ योज्यानीति ॥** विशेषणविशेष्यतयेत्यनन्तरं प्रतीतौ सत्यामिति, विशेषणविशेष्यभावश्चेत्यत्र भेदापेक्ष इत्यत्र च प्रतीतिग्रहः, धर्मीत्यादिवाक्ये तावद् ज्ञानापेक्षयेति भेदज्ञानापेक्षं **(रा.टि.)** चेत्येवंरूपेण योज्यानीत्यर्थः । प्रतियोगिधीव्यावृत्त्यर्थमाह- **धर्मीहेति ॥** तावता कथमुक्तशङ्का-निरास इत्यत आह- **अयमर्थ इति ॥ युगधर्म इति ॥** व्यासज्यवृत्तिरेक एवोभयनिष्ठ इत्यर्थः । नन्वस्त्वेवं घटात्पटो भिन्न इत्यादौ, घटपटौ द्वौ भिन्नौ घटपटयोर्भेद इत्यादौ तु कथं तत्र भेदस्यैकत्वप्रतीतेरित्यत आह- **घटपटाविति ॥** ननु घटस्य पटाद्भेदाभावे कथं प्रतियोगितेत्यत आह- **घटस्येति ॥** भेदनिबन्धनैव न संशय इत्येवकारार्थः । तर्हि तत्र धर्मिभेदप्रतीत्योर्भेदापत्तिरित्यत आह- **सोऽपीति ॥ तथाऽपीति ॥** अन्योन्यनिरूपित-भेदयोरन्योन्यधर्मिस्वरूपत्वेऽपीत्यर्थः । **प्रतिपन्नप्रभेदस्य** ज्ञातभेदस्येति बहुव्रीहिः । **सिद्धिर्ज्ञानम्** । **प्रतीति-मात्रेणेति ॥** वस्तुप्रतीतिरेव भेदप्रतीतिरिति भावः ।

**॥ एतेनेति ॥** भेदस्य धर्मिस्वरूपतया धर्मिप्रतीतेरेव भेदप्रतीतित्वकथनेनेत्यर्थः । **भेदप्रतीतिपरम्पर-येति ॥** भेदो हि धर्म्यपेक्षया विशेषणादिभावेन प्रत्येतव्यः । सा च प्रतीतिर्दण्डचैत्रयोरिव धर्मिभेदयोर्भेदप्रतीत्य-धीना । सा च धीर्भेदप्रतीत्यन्तराधीनेति अनवस्थेत्यर्थः । धर्मिप्रतीतेरेव भेदप्रतीतित्वेन विशेषणादिभावेन भेदप्रतीतेरभावान्नानवस्थेति भावः । **तथेति ॥** एतदपि निरवकाशमित्यन्वयः । एतेनेत्यनुषङ्गः । स्वरूपस्य धर्म्याद्यनपेक्षत्वादाह- **तत्प्रतीतिरुपलक्ष्यत इत्यादि ॥** निस्स्वरूपत्वमिति धीनिरासायाऽह- **परप्रतीति-निरपेक्षप्रतीतिकेति ॥ सापेक्षनिरपेक्षप्रतीतिकत्वेनेति ॥** हेतौ तृतीया । **अन्यतरेति ॥**

जीवब्रह्मैक्यरूप-विपक्षस्य सिद्धान्तिनाऽनङ्गीकारान्मायावादिनोऽनैकान्त्यमित्यर्थः । **तत्त्वम्पदार्थेति ॥** तत्पदार्थत्वम्पदार्थयोः परमात्मजीवात्मनोः प्रतिपादकानां 'सत्यं ज्ञानमनन्तं ब्रह्म' इति, 'विज्ञानघनः' इत्यादिवेदान्तवाक्यानां वैयर्थ्यापातात् । ऐक्यस्यान्यनिरपेक्षत्वेन जीवब्रह्मरूपधर्मिप्रतियोगिप्रतिपादनस्यानपेक्षितत्वेन तत्प्रतिपादनद्वारा तदेकवाक्यताऽभावप्रसङ्गेनेत्यर्थः । **सापेक्षेति ॥** व्याप्तिज्ञानादिसापेक्षेत्यर्थः । **तर्हि तदिति ॥ तत्** समाधान-मित्यर्थः । न केवलं साम्यमात्रमित्याह- **अधिकश्चेति ॥ सविशेषाभेदेति ॥** भेदस्य धर्मिणेति योज्यम् । एतेनाप्रामाणिकैक्यप्रतिबन्द्या समाधिर्न समाधिः, किन्त्वन्य एव वाच्य इति चोद्यं समाहितं भवति ।

**(श्री.टि.)** पूर्वग्रन्थसङ्गतत्वेनोत्तरग्रन्थमवतारयति- **एवं तावदित्यादिना ॥** अस्तु भेदसापेक्षत्वं, ततः का नो हानिरित्यत आह- **भेदस्त्विति ॥** अन्योन्याश्रयेण प्रत्यक्षेण भेदसिद्धिं दूषयिष्यन् भूमिकामारचयति- **भेदो हीति ॥ स्वतन्त्र इति ॥** अन्यानालिङ्गिततयेत्यर्थः । भेद इत्येवाप्रतीतेरिति भावः । किन्तु एकस्यैव भेदस्य द्विष्ठत्वपक्षे घटपटौ भिन्नौ भेदवन्ताविति घटपटविशेषणतया वा घटपटयोर्भेद इति घटपटविशेष्यतया तद्व्यावर्त्यतया तद्विशिष्टतयेति यावत्, भेदः प्रतिभासत इत्यन्वयो द्रष्टव्यः । **भेदद्वयाङ्गीकारेणेति ॥** घटपटौ भिन्नावित्यत्र घटात्पटो भिन्नः पटाच्च घटो भिन्न इति घटपटधर्मिकं भेदद्वयमेव प्रतीयत इत्यङ्गीकारेणेत्यर्थः । **अन्यतरमात्राश्रयत्वेऽपीति ॥** अन्यतरमात्राश्रयत्वपक्षेऽपीत्यर्थः । **सम्बन्धिमात्रेति ॥** भेदस्य सम्बन्धिव्यति-रिक्तान्यपदार्थापेक्षाया अभावात् केवलसम्बन्ध्यपेक्षैवास्तीत्यर्थः । तथा च भेदस्य ससम्बन्धिकपदार्थत्वेन केवलं सम्बन्ध्यपेक्षायां सत्यां धर्मिप्रतियोगिभावमनपेक्ष्य गत्यन्तरं नास्ति धर्मिप्रतियोगिभावेनैव सम्बन्ध्यपेक्षाऽस्तीति **(श्री.टि.)** यावत् । भेदो हि धर्मितयैकं सम्बन्धिनं प्रतियोगितया चापरं सम्बन्धिनमपेक्षत इत्यर्थः । एक एव भेदो द्विष्ठ इति तार्किकाणां पक्षेऽन्योन्याश्रयमुपपादयति- **तथा चेत्यादिना ॥** तथा चान्योन्याश्रयतेत्यन्तेन । इदं वाक्यं बुद्ध्या विवेकेनेत्थं योज्यम् । घटपटौ भिन्नाविति द्वित्वावच्छिन्नघटपटयोर्विशेष्यतया प्रतीतौ सत्यां तद्विशेषणीभूतभेदप्रतीतिः कुत इत्यतस्तदुपपादयितुमुक्तम्- **विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वा-दिति ॥** घटपटयोर्भेद इत्यत्र घटपटयोर्विशेषणतया तत्प्रतीतौ सत्यां तद्विशेष्यतया भेदप्रतीतिः कुत इत्यतस्तदुप-पादयितुं विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वादित्यादिपदद्वयं प्रयुक्तम् । तथा च घटपटयोर्भेद इति विशिष्ट-प्रतीतेर्विशेषणप्रतीतिकार्यत्वादिति तदर्थः ।

नन्वत्र विशेषणप्रतीतेर्विशेष्यप्रतीतिकार्यत्वादिति कथम् । न हि दण्डप्रतीतिर्देवदत्तप्रतीतिकार्येति चेत् । अत्र केचित् । विशेषणशब्देन विधेयं ग्राह्यं विशेष्यशब्देन चोद्देश्यम् । एवं च विधेयप्रतीतेरुद्देश्यप्रतीति-कार्यत्वादित्यर्थः, 'सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयते' इति वचनादित्याहुः । तन्न स्वरसम् । उद्देश्य-विधेयभावस्य वाक्य एव दृष्टत्वेन प्रतीतावदर्शनात् । तस्या एव चात्र प्रकृतत्वादिति । वस्तुतस्तु विशेषणशब्देन ससम्बन्धिकपदार्थग्रहणम् । विशेष्यशब्देन च सम्बन्धितावच्छेदकप्रकारकसम्बन्धिग्रहणम् । तथा च ससम्बन्धिक-पदार्थप्रतीतेः सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानकार्यत्वादित्यर्थः । अत्र ससम्बन्धिकपदार्थप्रतीतेः सम्बन्धि-ज्ञानकार्यत्वादित्येवोक्तौ प्रमेयत्वादिना रूपेण घटपटादिसम्बन्धिज्ञाने सति घटपटौ भिन्नौ घटपटौ संयुक्तावि-त्यादिप्रतीतिः स्यादत उक्तम्- **सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानकार्यत्वादिति ॥** तत्र च न प्रमेयत्वं सम्बन्धितावच्छेदकम्, अधिकवृत्तित्वात् । किन्तु द्वित्वमेवेति नोक्तदोषः । तथा च प्रकृते घटपटौ भिन्नावित्यत्र भेदरूपससम्बन्धिकपदार्थप्रतीतेर्द्वित्वरूपसम्बन्धितावच्छेदकप्रकारकघटपटरूपसम्बन्धिज्ञानकार्यत्वं वाच्यमिति भावः । **भेदप्रतीत्यविनाभूतत्वादिति ॥** द्वित्वप्रतीतेर्भेदप्रतीतिजन्यत्वादित्यर्थः । अन्यथाऽन्योन्याश्रयताऽ-नवकाशात् । **तथा चान्योन्याश्रयतेति ॥** तथा हि घटपटौ भिन्नावित्यत्र द्वित्वावच्छिन्नघटपटयोर्विशेष्यतया प्रतीतौ सत्यां तद्विशेषणीभूतभेदप्रतीतिः । कुतः? विधेयप्रतीतेरुद्देश्यप्रतीतिकार्यत्वादिति केचित् । वस्तुतस्तु ससम्बन्धिकपदार्थप्रतीतेः सम्बन्धितावच्छेदकप्रकारकसम्बन्धिप्रतीतिकार्यत्वात् । भेदप्रतीतौ सत्यां च द्वित्वा-वच्छिन्नघटपटोभयप्रतीतिः द्वित्वप्रतीतेर्भेदप्रतीतिकार्यत्वात् । तथा च घटपटयोर्भेद इत्यत्रापि द्वित्वावच्छिन्नघट-पटयोर्विशेषणतया प्रतीतौ सत्यां तद्विशिष्टभेदज्ञानम् । कुतः? विशिष्टप्रतीतेर्विशेषणप्रतीतिकार्यत्वात् । भेदज्ञाने च द्वित्वावच्छिन्नघटपटोभयज्ञानम् । भेदप्रतीतिजन्यत्वाद् द्वित्वप्रतीतेः, इत्येवमेकस्यैव भेदस्य द्विष्ठत्वपक्षेऽ-न्योन्याश्रयतेत्यर्थः ।

घटपटौ भिन्नावित्यत्र घटपटधर्मिकं भेदद्वयमेव प्रतीयत इति पक्षेऽप्यन्योन्याश्रयत्वमुपपादयति- **अन्य-तरेति ॥ धर्मिप्रतियोगिभावापेक्षश्चेति ॥** धर्मिप्रतियोगिभावमनपेक्ष्य सम्बन्धिमात्रापेक्षायां गत्यन्तराभावादि-त्युक्तत्वादिति भावः । तामुपपादयति- **घटात्पटस्येत्यादिना ॥ अन्यथेति ॥** धर्मिप्रतियोगित्वप्रतीतेर्भेद-**(श्री.टि.)** प्रतीत्यपेक्षाऽभाव इत्यर्थः ।

**विलक्षणप्रतीत्यनुपपत्तेरिति ॥** प्रत्युत घटाद् घटस्येति प्रतीत्यापत्ते-रिति भावः । इत्यन्योन्याश्रयतेति सम्बन्धः । तथा हि । घटात् पटो भिन्न इत्यत्र प्रत्येतव्यभेदाधिकरणपटप्रतियोगिक-भेदवत्त्वेन घटज्ञाने जाते तस्य प्रतियोगित्वज्ञानम् । तस्मिंश्च सति घटप्रतियोगिकपटधर्मिकभेदज्ञानम् । ततश्च पटे प्रतियोगित्वज्ञानम् । तस्मिंश्च सति पुनस्तत्प्रतियोगिकघटधर्मिकभेदज्ञानम् । ततश्च तस्य प्रतियोगित्वज्ञान-मित्येवंरूपेण भेदद्वयाङ्गीकारपक्षेऽपि धर्मिप्रतियोगिभावप्रतीत्यपेक्षया अन्योन्याश्रयता द्रष्टव्येत्यर्थः । **उक्तानु-सारेणेति ॥** विशेषणविशेष्यतयेत्यतः पूर्वं द्वित्वावच्छिन्नयोरित्यनन्तरं च प्रतीताविति शेषपूरणं कृत्वा, विशेषणविशेष्यभावश्च भेदापेक्ष इत्यत्र विशेषणविशेष्यपदयोः स्वज्ञानोपलक्षकत्वम्, धर्मिप्रतियोग्यपेक्षयेत्यत्र धर्मिप्रतियोगिपदयोर्भावप्रधानत्वं स्वज्ञानोपलक्षकत्वं, भेदापेक्षं च धर्मिप्रतियोगित्वमित्यत्र भेदधर्मित्व-प्रतियोगित्वपदानां स्वज्ञानोपलक्षकत्वमुक्त्वा विशेषणविशेष्यतयेत्यादिपदानि योज्यानीत्यर्थः । 'पदार्थ-स्वरूपत्वाद्भेदस्य' इत्युक्ते प्रतियोगिनोऽपि पदार्थत्वेन तत्स्वरूपत्वमपि भेदस्य प्राप्नोति । तथात्वे घटाद्घटस्य भेद इति प्रतीतिः प्रसज्येतेत्यत आह- **धर्मीहेति ॥** इह वाक्ये पदार्थशब्देन धर्म्युच्यते न प्रतियोगीत्यर्थः । **न भेदो युगधर्म इति ॥** एक एव भेद उभयधर्म इति नेत्यर्थः । ननु भेदो यद्येकस्य धर्मोऽपरेण निरूप्यस्तर्हि घटपटौ भिन्नावित्यत्रैकस्यैव भेदस्य कथमुभयधर्मत्वप्रतीतिरित्यत आह- **घटपटौ भिन्नावित्यत्रेति ॥** ननु घटपटयोर्भेद इत्यत्र घटपटधर्मिकं भेदद्वयमेव यदि प्रतीयेत तर्हि घटपटयोर्भेदाविति द्विवचनप्रयोगः स्यात्, न तु घटपटयोर्भेद इत्येकवचनप्रयोग इत्यत आह- **एकवचनं त्विति ॥** ननु भेदस्य धर्मिस्वरूपत्वेन धर्मि-प्रतीत्यपेक्षयाऽन्योन्याश्रयाभावेऽपि प्रतियोगिस्वरूपत्वाभावाद्भेदावधित्वेन प्रतियोगित्वज्ञाने भेदज्ञानं, भेदज्ञाने च तदवधित्वेन प्रतियोगिज्ञानमिति प्रतियोगिप्रतीत्यपेक्षयाऽन्योन्याश्रयस्तु स्यादेवेत्यत आह- **घटस्येति ॥ तद्धर्मिकेति ॥** घटधर्मिकेत्यर्थः । प्रकारान्तरेण प्रतियोगिप्रतीत्यपेक्षया अन्योन्याश्रयं शङ्कते- **तथाऽपीति ॥ प्रतिपन्नभेदस्येति ॥** प्रत्येतव्यभेदाधिकरणप्रतियोगिकभेदवत्त्वेन ज्ञातस्य घटस्येत्यर्थः । **प्रतियोगित्वात्** प्रतियोगित्वेन ज्ञानादित्यर्थः । भेदसिद्धावित्यनन्तरं घटस्य प्रतियोगित्वप्राप्त्या इति शेषः । **भेदसिद्धिरिति ॥** तथा च घटस्य प्रतियोगित्वप्राप्त्या तत्प्रतियोगिकपटधर्मिकभेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः । **विद्यमानभेद-स्येति ॥** प्रत्येतव्यभेदाधिकरणप्रतियोगिकभेदवतो घटस्येत्यर्थः । तथा च घटे प्रत्येतव्यभेदाधिकरणप्रतियोगिक-भेदस्य सत्तया भाव्यमित्येव,न तु तज्ज्ञानमप्यपेक्षितं,येनान्योन्याश्रयः स्यादिति भावः । **प्रतीतिमात्रेणेति ॥** घटत्वादिना प्रतीतिमात्रेणेत्यर्थः । **प्रतियोगित्वोपपत्तेरिति ॥** पटधर्मिकभेदं प्रतीति शेषः । इदमत्राऽकूतम् । यथा हि गोर्गवयसादृश्यज्ञानाभावेऽपि वस्तुतो गवयसादृश्यवतो गोत्वादिना प्रतीतिमात्रेण गवयविसदृशत्वेन अप्रतीतिमात्रेण वा गवयगतसादृश्यप्रतियोगित्वबुद्धिर्भवति, एवं वस्तुतः प्रत्येतव्यभेदाधिकरणप्रतियोगिकभेदवतो घटादेर्घटत्वादिना ज्ञानमात्रेण प्रतियोगित्वज्ञानोपपत्तेर्घटत्वादिना ज्ञानमात्रमेवापेक्षितम् । न च वाच्यं घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वज्ञाने पटाद्यभिन्नतया ज्ञातस्यापि घटादेः पटधर्मिकभेदं प्रति प्रतियोगित्वं ज्ञायेतेति ।

**(श्री.टि.)** तदा घटत्वादिना ज्ञानाभावात् । यद्वा पटाद्यैक्येनाप्रतीतस्य घटादेर्घटत्वादिना ज्ञानमात्रेण प्रतियोगित्व-ज्ञानमुपपद्यत इत्युच्यमानत्वाददोष इति ।

**॥ एतेनेत्यादि ॥** दण्डदेवदत्तयोर्विशेषणविशेष्यभावस्य तदुभयभेदप्रतीतिसापेक्षताया दृष्टत्वेन भेदस्यापि स्वातन्त्र्येण कदाऽप्यप्रतिभासेन कयोश्चिद्विशेषणतया विशेष्यतया वा प्रतीयमानत्वेन तत्र विशेषणविशेष्यभाव-प्रतीतेर्भेदान्तरप्रतीतिसापेक्षत्वं वाच्यम् । सोऽपि भेदः पुनर्विशेषणविशेष्यभावेनैव प्रतीयत इति पुनस्तत्प्रती-तेर्भेदान्तरप्रतीतिसापेक्षत्वं वाच्यम्, तदप्येवमिति भेदप्रतीतिपरम्परया अनवस्था स्यादिति **अनवस्थाप्रसङ्गो**ऽपि, **एतेन** 'पदार्थस्वरूपत्वाद्भेदस्य' इति घटभेदयोरेकत्वोक्त्या भेदाभावकथनेनापास्त इत्यर्थः । तथा च घटभेद-योर्भेदाभावेन विशेषणविशेष्यभावस्यैवाभावान्न तदर्थं भेदज्ञानापेक्षेति भावः । यदि क्वचित् तयोर्विशेषणविशेष्य-भावप्रतीतिरस्ति तदपि न तदर्थं भेदज्ञानापेक्षा, किन्तु घटभेदयोः सविशेषाभेदाङ्गीकारेण तदुपपत्तेः । यत्र दण्ड-देवदत्तयोर्विशेषणविशेष्ययोर्भेदोऽस्ति तत्रापि विशेषणत्वादिप्रतीतौ न भेदज्ञानापेक्षा, किन्तु विद्यमानभेदयोर्दण्ड-देवदत्तयोर्दण्डत्वादिना प्रतीतिमात्रेण विशेषणविशेष्यभावप्रतीत्युपपत्तेरिति द्रष्टव्यम् । **भेदपूर्वं वस्त्विति ॥** आदौ भेदं विषयीकृत्य पश्चाद् वस्तु विषयीकरोतीत्यर्थः । **वस्तुपूर्वं भेदमिति ॥** आदौ वस्तु विषयीकृत्य पश्चाद्भेदं विषयीकरोतीत्यर्थः । **विरम्य व्यापारेति ॥** स्थित्वा स्थित्वा व्यापारो **विरम्य व्यापारः** । अस्य चेतनधर्मत्वेन जडे प्रत्यक्षेऽयोगादित्यर्थः । **अत एवेति ॥** विरम्यव्यापारायोगादेवेत्यर्थः । **इत्येतदपि निरवकाशमिति ॥** एतदपि दूषणमवकाशशून्यमित्यर्थः । धर्मिस्वरूपत्वाद्भेदस्य धर्मिप्रतीतेरेव भेदप्रतीतित्वेन भेदवस्तुप्रतीत्योः कार्यकारणभावस्यैवाभावेन यौगपद्यसम्भवादिति भावः ।

'सापेक्षत्वात्सावधेश्च तत्त्वे द्वैतप्रसङ्गतः । एकाभावादसन्देहान्न रूपं वस्तुनो भिदा ॥'

इत्युक्तं भेदस्य वस्तुस्वरूपत्वाभावे युक्तिपञ्चकं दूषयिष्यन् सापेक्षत्वाद्भिदा भेदो न वस्तुनो रूपं स्वरूपमित्युक्ता-माद्यां युक्तिमाशङ्क्य निराकरोति- **भवेदयमित्यादिना ॥ परिहारो**ऽन्योन्याश्रयपरिहारः । **अस्मादयं पट इति वेति ॥** घटात्पटो भिन्न इतिवदिति शेषः । **अस्मादस्य पट इति वेति ॥** घटात्पटस्य भेदवदिति शेषः । **जातुचित्** कदाचित् । **भेदधर्मिस्वरूपयोः** भेदस्वरूपधर्मिस्वरूपयोः । अस्वरूपत्वमित्यस्य निःस्वरूपत्वार्थ-कत्वभ्रमं वारयितुमाह- **धर्मिस्वरूपत्वाभाव इति ॥** तथात्वादित्यस्याभिप्रायो- **धर्मिप्रतियोगिप्रतीत्यपेक्षया प्रतीयमानत्वोपपत्तेरिति ॥**

॥ **एतेनेति** ॥ 'ऐक्यवत्' इति मूलवाक्येनेत्यर्थः । **अन्यतरेति** ॥ मायावादिमतेऽनैकान्त्यमित्यर्थः । जीव-ब्रह्मैक्यस्य तेनैवाङ्गीकृतत्वादिति भावः । **ऐक्यं न स्वरूपमिति ॥** प्रत्यक्चैतन्यस्वरूपं न भवतीत्यर्थः । तथा च साध्यस्यापि सत्त्वान्न व्यभिचार इति भावः । **अस्वरूपत्वे** ब्रह्मस्वरूपत्वाभावे । **तत्परस्य** ऐक्यपरस्य । **न सापेक्षमिति ॥** तथा च हेतोरेवाभावान्न व्यभिचार इति भावः । **तथा सतीति ॥** ऐक्यस्य धर्मिप्रतियोगि-सापेक्षत्वाभाव इत्यर्थः । **तत्त्वम्पदार्थेति ॥** 'तत्त्वमसि' इति महावाक्येन त्वं तदसीति जीवस्य ब्रह्मणैक्ये **(श्री.टि.)** बोधिते धर्मिप्रतियोगिभूतत्वंतत्पदार्थस्वरूपजिज्ञासायां तत्स्वरूपनिरूपणाय प्रवृत्तानाम् 'विज्ञान-घनः','योनिमन्ये प्रपद्यन्ते','सत्यं ज्ञानमनन्तम्' इत्यादिवेदान्तवाक्यानामैक्यपरमहावाक्येन एकवाक्य-तोच्यमाना अयुक्ता स्यात् । ऐक्यस्य जीवब्रह्मरूपधर्मिप्रतियोगिसापेक्षत्वाभावाङ्गीकारादिति भावः । **प्रतीत्यो-रेवेति ॥** ऐक्यप्रतीतिप्रत्यक्चैतन्यरूपब्रह्मप्रतीत्योरित्यर्थः । **तद्विषयस्य** ऐक्यस्य, तथा चैक्ये हेतोरेवाभावान्न व्यभिचार इति भावः । ननु प्रत्यक्चैतन्याभिन्नस्य एकस्यैवैक्यस्य सापेक्षत्वादिना विरुद्धप्रतीतिद्वयविषयत्वं कथं युक्तं, विरोधादित्यत आह- **एकस्यैवाग्नेरिति ॥ सापेक्षनिरपेक्षानुमितिप्रत्यक्षेति ॥** अनुमितेर्ज्ञातकरण-सापेक्षत्वात् प्रात्यक्षिकज्ञानस्य तदभावादिति भावः । यद्वा अनुमितेर्व्याप्तिलिङ्गादिज्ञानसापेक्षत्वात्, प्रात्यक्षिक-ज्ञानस्य ज्ञानसापेक्षत्वाभावात् । न च दण्डी देवदत्त इति प्रात्यक्षिकविशिष्टज्ञानं विशेषणज्ञानसापेक्षं दृष्टमिति वाच्यम् । विशिष्टज्ञानस्य विशेषणविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहाभ्यामेवोपपत्तौ विशेषणज्ञानस्य तत्रा-कारणत्वादिति भावः । **प्रकृतेऽपीति ॥** अत्रापि भेदप्रतीतिधर्मिभूतपटप्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वे, न तु तद्विषयस्य भेदस्येति वक्तुं शक्यत्वेन स्वरूपासिद्धिरिति भावः । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु भेदस्य निरपेक्षधर्मिस्वरूपत्वेऽपि सापेक्षत्वं युक्तम् । धर्मिणा निर्विशेषा-भेदानङ्गीकारात्, विशेषस्य भेदप्रतिनिधित्वा-दित्याशयेनाऽह- **अधिकश्चात्रेति ॥** 'कदाचिद्धर्मिस्वरूपसिद्धौ भेदसिद्धेः परेणाभ्युपगतत्वात्' इति वक्ष्यमाणत्वेन स्वरूपासिद्धिपरिहाराय कदाचिदित्युक्तमिति ज्ञातव्यम् ।

**(पां.टि.)** 'न च विशेषणविशेष्यतया' इत्याद्युत्तरग्रन्थस्य प्रकृतेन सङ्गत्यप्रतीतेरानर्थक्यमाशङ्क्य वृत्त-वर्तिष्यमाणयोः सङ्गतिप्रदर्शनेन तस्य सार्थतां दर्शयितुं वृत्तं तावदनुवदति- **एवमिति ॥** ननु न चेत्यादिना प्रत्यक्षेण घटपटभेदसिद्धेरन्योन्याश्रयत्वेनायुक्ततोच्यते, न तु पूर्वमुपपादितेऽर्थे किञ्चिद्बाधकमिति कथमुत्तर-ग्रन्थस्योक्तार्थे बाधकपरिहारार्थत्वमित्यत आशङ्क्यमानायाः प्रत्यक्षेण घटपटभेदसिद्धेरयुक्ततायाः साक्षा-दुक्तेऽर्थेऽनुपपत्तित्वाभावेऽपि तत्र अभिप्रेतसाक्षादनुपपत्त्युपपादकत्वादस्त्येवोक्तेऽनुपपत्तितेत्यभिप्रेत्य साक्षात्तत्रानुपपत्तिं स्वयमुद्धाटयन्नेव तदुपपादकतया मूलोक्तां प्रत्यक्षेण घटपटभेदसिद्धेरयुक्ततां योजयति- **तथा हीति ॥** मूले प्रत्यक्षेण भेदसिद्धेरयुक्तत्वोपपादकतयोक्तस्यान्योन्याश्रयत्वस्योपपादनाय, 'विशेषणविशेष्यतया भेदसिद्धिः' इत्युक्तम् । तदयुक्तम् । 'अयं घटः' इत्यादिरूपेण घटादेरिव भेदस्यापि स्वातन्त्र्येण प्रतिभाससम्भवेन विशेषणविशेष्यतया तत्प्रसिद्धेरेवासिद्धेः, तत्सिद्धावपि विशेषणविशेष्यतयैव प्रतीयत इति नियमासिद्धेः तत्सिद्धावपि विशेषणत्वादिना भेदप्रतीतेर्विशेष्यादिप्रतीतिसापेक्षत्वासिद्ध्या तदुपजीवनेन अन्योन्याश्रयत्वा-नवकाशाद् इत्यतस्तदुपपादनाय स्वातन्त्र्येण प्रतिभासं तावत् प्रतिक्षिपति- **भेदो हीति ॥** भेद इत्येवाप्रतीतेरिति भावः । यदि न स्वातन्त्र्येणावभासते कथं तर्हि भासत इत्याशङ्क्य मूलोक्तां विशेषणविशेष्यतया भेदप्रतीति-मभिनयेन दर्शयति- **किन्त्वित्यादिना ॥** नन्वस्तु भेदस्य घटपटविशेषणत्वादिना प्रतीतिः, तथापि न तन्नियमः, अस्यास्माद्भेद इति धर्मिप्रतियोगिभावापेक्षयाऽपि तत्प्रतीतिसम्भवादित्यतस्तन्नियममुपपादयति- **एकस्यैव (पां.टि.) भेदस्येत्यादिना ॥** इयमत्र योजना । किं भेदस्य द्विष्ठत्वपक्षमवलम्ब्य धर्मिप्रतियोगिभावापेक्षया प्रतीतिराशङ्क्यते, किं वा भेदद्वयाङ्गीकारेण अन्यतरमात्राश्रयत्वपक्षमवलम्ब्य ? आद्यस्योत्तरम् 'एकस्यैव भेदस्य द्विष्ठत्वपक्षे गत्यन्तराभावात्' इति । अस्मिन् पक्षे उभयोरिति धर्मित्वेन घटपटयोर्धर्मिप्रतियोगिभावस्यैवाभावेन तदपेक्षया प्रतीतेरसम्भावितत्वाद्विशेषणत्वादिनैव तत्प्रतीतिसिद्धिरिति भावः । अन्यतरमात्राश्रित इति द्वितीय-पक्षेऽपि धर्मिप्रतियोगिभावानपेक्षायामपि विशेषणत्वादिना भेदप्रतीत्यसम्भवोऽभिमतः किं वा

तदपेक्षायामिति पृच्छामः । तत्राऽद्यस्योत्तरं भेदद्वयाङ्गीकारेणान्यतरमात्राश्रयत्वेऽपि धर्मिप्रतियोगिभावमनपेक्ष्य सम्बन्धमात्रा-पेक्षायां गत्यन्तराभावादिति । अत्र पक्षे उभयोर्धर्मिप्रतियोगिभावसत्त्वेऽपि सतोऽपि तस्याविवक्षया सम्बन्धमात्रा-पेक्षायाम् अस्यास्माद्भेद इति धर्मिप्रतियोगिभावापेक्षया भेदप्रतीत्यसम्भवेन घटपटविशेषणत्वादिनैव तत्प्रतीतेर्वक्त-व्यत्वादुक्तनियमासिद्धिरिति भावः । एवं भेदस्य घटपटविशेषणत्वादिना भेदप्रतीतिनियममुपपाद्य तस्या विशेष्यादिप्रतीत्यपेक्षामुपपादयितुं विशेषणविशेष्यभावं स्पष्टयति- **भेदस्य चेति ।। तस्येति ।।** भेदस्येत्यर्थः । **भेदप्रतीति-रिति ।।** द्वित्वावच्छिन्नघटपटविशेषणत्वादिना भेदप्रतीतिरित्यर्थः ।

ननु विशेषणविशेष्यतया विशेष्यविशेषणतया वा घटपटयोर्द्वित्वावच्छिन्नयोरप्रतीतावपि तद्विशेषणत्वादिना भेदप्रतीत्यभ्युपगमे बाधकाभावान्न तस्यास्तदधीनत्वमिति कथमन्योन्याश्रयत्वमित्यतो देवदत्ताज्ञाने तद्विशेषणतया दण्डज्ञानस्य दण्डाज्ञाने च तद्विशेष्यतया देवदत्तज्ञानस्य चादर्शनेन तद्विशेषणत्वादिज्ञानस्य विशेष्यादिज्ञान-कार्यत्वात् कार्यस्य च कारणापेक्षत्वाद्युक्तं तस्य तदधीनत्वमित्याशयेनाऽह- **विशेषणादिप्रतीतेरिति ।।** अत्र 'घटपटौ भिन्नौ' इत्यादिप्रतीतेस्तद्विशेषणत्वादिविषयकत्वमात्रमेव विवक्षितं न तु तद्विशेषणत्वादिप्रकारक-त्वम् । तथा सति घटपटभेदो विशेषणमित्यादिविशेषणत्वादिप्रकारकभेदज्ञानस्य विशेष्यादिभूतघटपट-ज्ञानापेक्षत्वप्राप्तावपि 'घटपटौ भिन्नौ' इत्यादिज्ञानस्य अतत्प्रकारकत्वेनोक्तयुक्त्या विशेष्यादिज्ञानापेक्षत्वा-प्राप्त्या तदुपजीवनेनान्योन्याश्रयानुत्थानप्रसङ्गात् । तद्विशेषणत्वादिविषयतामात्रविवक्षायां तु नायं दोषः । घटपटौ भिन्नावित्यादिज्ञानस्य तद्विशेषणत्वाद्यप्रकारकत्वेऽपि तद्विशेषणत्वादिविषयकत्वेनोक्तयुक्त्या विशेष्यादि-भूतघटपटज्ञानापेक्षत्वप्राप्त्या तदुपजीवनेनोक्तान्योन्याश्रयसम्भवात्, विशेष्यत्वादिना विशेष्यादिप्रतीतित्वा-वच्छिन्नस्यापि घटपटान्यतरप्रतीतिमात्रस्य सत्त्वेऽपि भेदप्रतीतेरभावेन विशेषणादिप्रतीतित्वावच्छिन्नं प्रति कारणत्वासम्भवात् कथं तस्यास्तज्जन्यत्वमित्यतो द्वित्वावच्छिन्नविशेष्यत्वादिज्ञानत्वस्यैव कारणतावच्छेदकत्वाद् घटपटान्यतरप्रतीतिसत्त्वेऽपि कारणतावच्छेदकावच्छिन्नस्य कारणस्याभावाद्युक्तो भेदप्रतीत्यभाव इत्याशयेन द्वित्वावच्छिन्नयोरिति द्वित्वावच्छिन्नत्वेन घटपटयोर्विशेषणमुक्तम् । **विशेषणविशेष्यभावप्रतीतिश्चेति ।।** विशेष्यविशेषणभावेन भेदप्रतीतिश्चेत्यर्थः । **भेदप्रतीत्यविनाभूतत्वादिति ।।** यद्यपि विशेषणादि-प्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वादिति पूर्वोक्तयुक्त्यैव द्वित्वावच्छिन्नयोर्घटपटयोर्विशेषणविशेष्यभावप्रतीतेर्भेद-प्रतीतिसापेक्षत्वं वक्तुं सुकरम्, तथापि तस्य प्रकारस्य पूर्वोक्तयुक्त्यैव सुज्ञानत्वादनेनापि प्रकारेण भेदप्रतीत्यपेक्षाया **(पां.टि.)** वक्तुं शक्यत्वाच्च तदुक्तिरिति भावः । अस्तु तर्हि अन्यतरमात्राश्रयत्वेऽपि धर्मिप्रतियोगिभावापेक्षेति द्वितीयः पक्षः । अत्र च अन्यतरमात्राश्रितत्वेन द्विष्ठत्वाभावादेकस्य भेदस्योभयधर्मिकत्वाभावेन घटपटयोः धर्मिप्रतियोगिभावसम्भवेन तदपेक्षया प्रतीतिसम्भवेन विशेषणत्वादिना तत्प्रतीतिनियमासिद्धेर्न तदुपजीवने-नोक्तोऽन्योन्याश्रयः । अन्यतरमात्राश्रयत्वेऽपि धर्मिप्रतियोगिभावापेक्षाया अङ्गीकारेण अस्यास्माद्भेद इति धर्मिप्रतियोगिभावापेक्षयैव प्रतीतिसम्भवेन विशेषणत्वादिना तत्प्रतीत्यप्राप्तेः न तदुपजीवनेनाप्युक्तः स इत्याशयेन शङ्कते- **अथेति ।।** न च घटात् पटस्य भेद इतिवत् पटाद् घटस्य भेद इत्यपि प्रतीतेर्विद्यमानत्वात् कथमन्यतरमात्राश्रितत्वनिश्चय इति वाच्यम् । अस्माभिर्भेदद्वयाङ्गीकारेण पटप्रतियोगिकघटधर्मिकभेदस्य घट-निष्ठतायाः, घटप्रतियोगिकपटधर्मिकभेदस्य पटनिष्ठतायाश्च निश्चेतुं शक्यत्वेन तन्निश्चय इत्याशयात् । एवमपि अन्योन्याश्रयत्वं दुष्परिहरमित्याह- **तदाऽपीति ।।** तत्कथमित्यत आह- **घटादीति ।। प्रतीत्येति ।।** विषयी-कृत्येत्यर्थः । **प्रत्येतव्य इति ।।** विषयीकर्तव्य इत्यर्थः । अत्र च भेदप्रकारकसाक्षात्प्रतीतेर्धर्मित्वप्रतियोगित्वोल्ले-खित्वं नियतमित्यत्रैव तात्पर्यम्, नतु पौर्वापर्येऽपि । ज्ञानस्य विरम्यव्यापारायोगेन क्रमेणोल्लेखासम्भवात् । एवं च भेदप्रतीतौ धर्मितावच्छेदकप्रतियोगितावच्छेदकप्रकारकधर्मिप्रतियोगिप्रतीत्योरेव हेतुत्वेन धर्मित्वप्रतियोगित्व-प्रतीत्योरहेतुत्वाद् धर्मित्वप्रतियोगित्वं च प्रतीत्य हि भेदः प्रत्येतव्य इति कथं हेतुहेतुमद्भावकथनमिति चोद्यं निरस्तं भवति । ननु एवमपि कथमन्योन्याश्रय इत्यत आह- **भेदप्रतीत्यपेक्षेति ।।** घटात्पटो भिन्न इति घटस्य प्रतियोगित्वं पटस्य धर्मित्वं च विरुद्धाकारमवगाहमाना भेदप्रतीतिः पूर्वं घटपटयोर्भेदप्रतीतिमपेक्षत इत्यर्थः । तदेवोपपादयति- **अन्यथेति ।।** तथा च भेदप्रतीतौ भेदप्रतीत्यपेक्षायामन्योन्याश्रयः स्पष्ट एवेति भावः । एतच्च अन्योन्याश्रयत्वं पूर्वं प्रतीतस्य पश्चात्प्रत्येतव्यस्य भेदस्य च परस्परं भेदमाश्रित्योक्तम् । एकत्वे तु आत्माश्रयत्वमेवेति बोध्यम् । तेन भेदप्रतीतौ भेदप्रतीत्यपेक्षायाम् आत्माश्रय एव स्यात्, न तु अन्योन्याश्रय इति शङ्काऽनवकाश इति ध्येयम् ।

एवं प्रकारद्वयेनान्योन्याश्रयतामुपपाद्य अन्योन्याश्रयतया भेदस्य अयुक्तिरिति वाक्यमपेक्षितं शेषं पूरयन्नेव व्याचष्टे- **तथा चेति**

**।।** परस्पराश्रयकार्याणामसम्भवादिति भावः। भेदस्य धर्मिप्रतियोगिस्वरूपत्वे 'यद् यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नम्' इति नियमाद् धर्म्यत्यन्ताभिन्नभेदात्यन्ताभिन्नत्वात् प्रतियोगि-नोऽपि धर्म्यत्यन्ताभिन्नत्वप्रसक्त्या तस्य तदुभयस्वरूपत्वानुपपत्त्या पदार्थपदस्य धर्मिप्रतियोगिसाधारण्येन पदार्थमात्रपरत्वानुपपत्तेर्धर्मिपरत्वमेव तस्येत्याशयेन व्याचष्टे- **धर्मीहेति ।।** ननु तथापि भेदस्य द्विष्ठत्वपक्षे विशेषण-विशेष्यतया प्रतीतिनियमात् तदुपजीवनेन प्रसक्तान्योन्याश्रयताया न परिहारः । धर्मिस्वरूपत्वेन भेदप्रतीतेर्धर्मि-प्रतीत्यनपेक्षत्वप्राप्त्या तदपेक्षाप्रयुक्तान्योन्याश्रयपरिहारेऽपि प्रतियोगिस्वरूपत्वाभावेन तत्प्रतीत्यनपेक्षत्वा-प्राप्तेर्भेदप्रतीत्यपेक्षप्रतियोगिप्रतीतिसापेक्षत्वाद् भेदप्रतीतेर्नान्यतरमात्राश्रयत्वेऽपि तत्परिहार इत्यत आह- **अयमर्थ इति ।। न भेदो युगधर्मः किन्त्वेकस्येति ।।** 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक्' इत्यादिना अन्यत्र **(पां.टि.)** द्विष्ठत्वनिरासेनान्यतरमात्राश्रितत्वसमर्थनादिति भावः । ननु घटपटसम्बन्धितयाऽनुभूयमानस्य भेदस्य कथमेकमात्राश्रितत्वम् । तथात्वे चैकस्मिन्नेव भिन्नप्रत्ययप्रसङ्गोऽपीत्याशङ्क्य एकमात्राश्रितस्यापि भेदस्य अन्यप्रतियोगिकत्वादुभयसम्बन्धितया प्रतिभासोऽतिप्रसङ्गाभावश्चेत्याशयेनाऽह- **परेण निरूप्य इति ।।** भवेदेवं यदि भेदस्यैकमात्रवृत्तित्वे प्रमाणं स्यात्। तदेव नास्तीत्यतः, पटो घटाद्भिन्न इति पटधर्मस्य भेदस्य घटप्रति-योगिकत्वान्न घटधर्मत्वं, यो प्रतियोगिको नासौ तद्धर्मो, यथा स्थविरप्रतियोगिकमपरत्वं न स्थविरधर्म इत्यनुमान-मेव तत्र मानमित्याशयेनाप्याह-**परेण निरूप्य इति ।।** ननु भेदो द्विविधः एकपृथक्त्वमनेकपृथक्त्वं चेति । तत्र पटो घटाद्भिन्नो घटः पटाद्भिन्न इत्यन्यनिरूप्यतया प्रतीयमानस्यैकपृथक्त्वस्य एकैकाश्रितत्वमभ्युपगम्यते । यत्तु 'भिन्नाभिन्नाविमौ', 'भिन्नौ इमौ' इति प्रतीयते तदनेकपृथक्त्वमनेकाश्रितमेव। प्रतियोगिनिरूप्यस्य एकाश्रयत्वे मानाभावादित्यतो यथा शुक्ला इमे पटा इत्यादिप्रतीतौ अनेके पदार्था अनेकानि तद्विशेषणानि शौक्ल्यान्यवभासन्ते, तथा भिन्नौ इमावित्यादिप्रतीतावप्यनेके पदार्थाः अनेके भेदाः प्रकाशयन्त इति विशेष-प्रमाणाभावेन अभ्युपगन्तव्यत्वान्नानुपपत्तिरित्याशयेनाऽह- **घटपटौ भिन्नौ इत्यत्रापीति ।।** ननु घटपटयोर्भेद इति प्रतीतौ अनेकाश्रितस्य भेदस्य प्रतिभासात् कथमेकाश्रितत्वं तस्येत्यतः, किमत्रानेकस्य धर्मितयाऽवभासं प्रमाणयसि, उत धर्मस्यैकत्वावभासमुतोभयावभासमिति विकल्पान् मनसि निधाय पक्षत्रयेऽप्युत्तरमाह- **एव-मिति ।।** तथा चानेकस्य धर्मित्वेऽपि धर्मस्यैकत्वावभासासम्मतेर्नानेनाभिमतार्थसिद्धिरिति भावः ।

ननु च नान्योन्यप्रतियोगिकधर्मिकानेकभेदविषयत्वमुदाहृतप्रतीतेः कल्पयितुं शक्यम्। वक्त्रभिप्रायस्य वचनलिङ्गकत्वेन भेद इत्येकवचनेन प्रतीतेर्द्विधर्मिकैकभेदविषयत्वस्यानुमानसिद्धत्वादित्यत आह- **एकवचनं त्विति ।।** तथा च एकवचनेन प्रतीतेरेकार्थविषयकत्वानुमानस्य घटपटयो रूपमित्यादौ अनैकान्तिकत्वेन समुदायविषयकत्वेन अन्यथासिद्धत्वेन च आभासत्वात् न तेन भेदप्रतीतेः द्विधर्मिकैकभेदविषयकत्वसिद्धिरिति भावः। एवं भेदस्य द्विष्ठत्वाभावेन धर्मिप्रतियोगिसापेक्षप्रतीतिकत्वसम्भवेन गत्यन्तराभावासिद्ध्या विशेषण-त्वादिना तत्प्रतीतिनियमासिद्धेर्नान्योन्याश्रयत्वमिति ग्रन्थान्तरानुरोधेन स्वयं परिहारमभिधाय धर्मिप्रतियोगि-भावापेक्षाऽङ्गीकृतौ उद्भावितान्योन्याश्रयत्वपरिहारकतया मूलं योजयति- **स चेति ।।** ननु भेदस्य धर्मिस्वरूपत्वेन प्रतीतिभेदस्यैवाभावादितरेतरसापेक्षत्वस्य सुतरामभावात् तदपेक्षयाऽन्योन्याश्रयासम्भवेऽपि तस्य प्रतियोगि-स्वरूपत्वाभावेन तज्ज्ञानापेक्षयाऽन्योन्याश्रयत्वमपरिहरणीयमेवेत्यतः, किं भेदस्य प्रतियोगिनश्च स्वरूपेण ज्ञाने परस्परापेक्षत्वमभिमतमुत विशेषरूपेण तज्ज्ञान इति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति - **घट-स्येति ।।** तथा च भेदस्य स्वरूपतो ज्ञाने प्रतियोगिविशेषज्ञानानपेक्षणात् प्रतियोगिस्वरूपज्ञाने च एतद्भेद-ज्ञानानपेक्षणात् न परस्परापेक्षत्वमिति नान्योन्याश्रय इति भावः । द्वितीयमाशङ्कते- **तथापीति ।।** धर्मिणः सकाशाद् भेदेन प्रतिपन्नस्यैव प्रतियोगित्वादित्यर्थः । अप्रतीतभेदस्यापि प्रतियोगित्वे स्वस्यापि तत्प्रसङ्गादिति भावः । न स्वरूपेण प्रतीतिमात्रं विवक्षितम् अपि तु विद्यमानभेदत्वमपि, तथा च स्वस्य स्वस्मात् तदभावान्न **(पां.टि.)** भेदग्रहप्रसङ्गः । नाप्यन्योन्याश्रयता। विद्यमानभेदत्वमात्रस्यैव तत्र प्रयोजकत्वेन तज्ज्ञानस्यातन्त्र-त्वादित्याशयेन समाधत्ते- **विद्यमानभेदस्येति ।।** अत्रासति प्रतिबन्धक इत्यपि पूरणीयम्। अन्यथा क्षीरनीरयोरपि भेदग्रहप्रसङ्गात्। तत्प्रयोजकस्य विद्यमानभेदत्वे सति स्वरूपग्रहस्य तत्रापि सत्त्वात्। असति प्रतिबन्धक इत्य-स्यापि प्रयोजकताकोटावन्तर्भावे तु नायं दोषः। तत्र समानाभिहारलक्षणदोषप्रतिबन्धादेव तदग्रहणोपपत्तेरिति द्रष्टव्यम्।

**।। एतेनेति ।।** भेदस्य स्वातन्त्र्येणाप्रतीत्या इदमस्माद्भिन्नमनयोर्भेद इति वा वस्तुविशेषणत्वेन विशेष्यत्वेन तत्प्रतिभासनियमसिद्धेर्विशेषणविशेष्यभावेन तत्प्रतिभासस्य च दण्डयादौ तद्भावप्रतिभासस्य विशेषणविशेष्य-भूतयोः दण्डदेवदत्तयोर्भेदतद्ग्रहपूर्वकत्वदर्शनेन भेदभेदिनोः विशेषणविशेष्यभावग्रहणात् प्रागेव भेदान्तरग्रह-पूर्वकत्वस्यावश्याश्रयणीयत्वाद् भेदान्तरग्रहणस्यापि विशेषणविशेष्यभावेन तत्प्रतिभासतया तद्भेदभेदिनोः विशेषणविशेष्यभावग्रहणात्

पूर्वभाविभेदान्तरग्रहणपूर्वकत्वम्, एवं तस्य तस्यापि इत्यनवस्था । न च मूले तदभावान्नेदमनवस्थादूषणमिति वाच्यम् । 'विशेषणविशेष्यभावग्रहणहेतोः पूर्वपूर्वभेदग्रहणस्यासिद्धौ तदसिद्धेर्मौलिकभेदासिद्ध्या मूलक्षतिसद्भावात्' इति प्रमाणमालायामानन्दबोधोक्तदूषणमपि भेदप्रतीतेर्विशेषण-विशेष्यभावप्रतीतित्वनिरासेन निरस्तमित्यर्थः । भेदवस्तुनोः किमेकैकग्राहकं प्रत्यक्षमुत उभयग्राहकम्, उभयग्रहपक्षे युगपत् क्रमेण वा, क्रमपक्षेऽपि किं पूर्वं किमपरमिति दूषयद्भिर्मण्डनमिश्रैर्भेदग्राहकत्वमेव प्रत्यक्षस्य नास्तीत्युक्तम्। तदनूद्य उक्तातिदेशेन दूषयति- **तथेति ।।** एतेनेति वर्तते। वस्त्वेवेति तु पक्ष(स्त्व)स्तदनर्थ-बीजमिति परित्यक्तः । **अप्रतीतेरिति ।।** तथा प्रतीतेरननुभवादिति भावः । उपपत्तिविरुद्धं च प्रत्यक्षेण भेदग्रहण-पूर्वकं वस्तुग्रहणमित्याह- **विरम्येति ।।** न च उभयशक्तियुक्तस्यापि पुरुषस्य एकानन्तरमन्यकार्यस्येव उभय-विषयीकरणशक्तियुक्तस्यापि प्रत्यक्षस्य भेदग्रहणपूर्वकं वस्तुग्राहकत्वसम्भवान्नोपपत्तिविरुद्धमिति वाच्यम् । पुरुषस्य चेतनत्वादिच्छाक्रमेण तत्र कार्यक्रमसम्भवेऽपि बुद्धेरचेतनत्वात् न क्रमेणार्थद्वयग्राहकत्वं सम्भवतीत्याशय इति स्वामिनः । यद्वा क्षणभङ्गित्वाद्बुद्धेः प्रथमं वस्तुबोधकत्वं पश्चाद् भेदबोधकत्वमिति व्यापारक्रमानुपपत्तेरि-त्यर्थः । न च क्षणमात्रवृत्तित्वं न क्षणिकत्वं ब्रूमः । येन व्यापारक्रमानुपपत्तिः स्यात् । किन्त्वाशुतरविनाशित्वमिति युज्यत एव व्यापारक्रम इति वाच्यम् । तत्पक्षेऽपि जन्मातिरिक्तव्यापाराभावेन जाताया बुद्धेर्व्यापारक्रमानुप-पत्तेरित्यन्यत्र विस्तरः । **अत एवेति ।।** विरम्यव्यापारानुपपत्तेरेवेत्यर्थः । **वस्तुप्रतीतेरिति ।।** धर्मिप्रतियोगिरूप-वस्तुप्रतीतेरित्यर्थः । **निरवकाशमिति ।।** भेदस्य वस्तुस्वरूपत्वं वदतो मम मते वस्तुग्रहस्यैव भेदग्राहकत्वेन मां प्रत्युक्तविकल्पानामनवसरदुस्थत्वान्न प्रत्यक्षस्य भेदग्राहकत्वानुपपत्तिरिति भावः ।

**।। यथेति ।।** यद्यपि प्रतीतौ सापेक्षस्यापि ब्रह्मणि ब्रह्माभेदस्य निरपेक्षब्रह्मस्वरूपत्ववत् प्रतीतौ सापेक्षस्यापि भेदस्य निरपेक्षधर्मिस्वरूपत्वमस्त्विति ब्रह्मनिष्ठब्रह्माभेदे मतद्वयरीत्या अनैकान्त्योपपादकतया शक्यमिदं व्याख्यातुम् । व्याख्यातं च न्यायामृतकृद्भिः । तथापि निरसनीयत्वेन प्रकृतजीवब्रह्मैक्यपरित्यागेन ब्रह्मनिष्ठ-**(पां.टि.)** ब्रह्माभेदपरत्वे च ऐक्यपदस्य प्रकृताप्रकृतत्यागस्वीकारप्रसङ्गभिया जीवब्रह्मैक्यपरतामेवाऽश्रित्यान्य-तरानैकान्त्योपपादकत्वेन इह टीकायां व्याख्यातमित्यवधेयम् । **अन्यतरानैकान्त्यमिति ।।** जीवब्रह्मैक्यस्य सिद्धान्तिनाऽनङ्गीकृतत्वेन उभयरीत्या तत्रानैकान्त्यासम्भवादिति भावः । **न स्वरूपमिति ।।** न प्रत्यक्चैत-न्याभिन्नमित्यर्थः । तथा च साध्यस्यापि सत्त्वान्नानैकान्त्यमिति भावः । **अस्वरूपत्व इति ।।** चैतन्यव्यतिरिक्तस्य सर्वस्य परेण मिथ्यात्वाङ्गीकारादिति भावः । यद्यप्यत्र अपसिद्धान्तो वक्तुं शक्यः तत्त्वमस्यादिवाक्यस्याखण्डार्थ-निष्ठतायाः परेणाङ्गीकारात् । तथापि स्पष्टत्वात् शिष्यैरेव स ऊह्यतामिति भावेन नोक्तः । इष्टापत्तिमाशङ्क्याऽह- **तत्परस्येति ।।** उपलक्षणं चैतत् । भेदस्य सत्यत्वं च स्यादित्यपि द्रष्टव्यम् । **सदद्वैतेति ।।** अभावद्वैतं चान्यत्र निरस्तमिति भावः । हेतोरेव तत्र अभावान्नानैकान्त्यमित्याशङ्क्य निषेधति- **नचेति ।। तत्त्वम्पदार्थप्रति-पादकानामिति ।।** 'सत्यं ज्ञानमनन्तम्' इति तत्पदार्थप्रतिपादकानाम् 'अथ यो वेदेदं जिघ्राणि' इत्यादि-त्वम्पदार्थप्रतिपादकानां चेत्यर्थः । **एकवाक्यत्वाभावप्रसङ्गेनेति ।।** ऐक्यस्य निरपेक्षत्वेन एकवाक्यताप्रयो-जकीभूतसाकाङ्क्षत्वविरहादिति भावः । न च प्रतियोगिनो भेदस्य सापेक्षत्वात्तदभावरूपमैक्यं सापेक्षवदेवेत्येक-वाक्यतोपपत्तिरिति वाच्यम् । घटः पटो नेति नञर्थस्य भेदस्यैव तादात्म्यनिषेधकत्वेन वैपरीत्यस्य बोचित-त्वात् । ऐक्ये भेदसापेक्षत्वस्य दुर्वारत्वाच्च इत्याशयात् । **सापेक्षनिरपेक्षेति ।।** व्याप्तिज्ञानादिसापेक्षतन्निरपेक्षे-त्यनुमितिप्रत्यक्षयोः विशेषणम् । उपलक्षणं चैतत् । एकस्यामेव तत्तायां संस्कारसापेक्षतन्निरपेक्षस्मृत्यनुभव-विषयत्वस्य दर्शनादिति द्रष्टव्यम् । ननु प्रतिबन्ध्या अनुत्तरत्वेऽपि वा तयैक्यमङ्गीकुर्वाणस्य प्रतिवादिनो मुख-मुद्रणसम्भवेऽपि तदनङ्गीकुर्वाणस्य उक्तरीत्या भेदस्य धर्मिस्वरूपत्वमाक्षिपतः शिष्यस्य न तया मुखमुद्रणम् । तं प्रत्युक्तप्रतिबन्ध्याद्यप्रवृत्तेः, इत्यतो भेदस्यान्योन्याभावतया स्वरूपमात्रत्वाभावात्तस्य च वस्तुना सविशेषा-भिन्नत्वाद् भेदप्रतिनिधिविशेषबलेन सापेक्षत्वनिरपेक्षत्वरूपविरुद्धधर्माधिकरणत्वोपपत्त्या अन्यथोपपन्नत्वात् न तेन धर्मिस्वरूपत्वाभावसाधनं सम्भवतीति परिहारः शिष्यं प्रत्यपि सम्भवत्येवेत्याह- **अधिकश्चेति ।।**

**(व्या.टि.)** शिष्यमनस्समाधानाय वृत्तवर्तिष्यमाणे ग्रन्थसन्दर्भे सङ्गतिं दर्शयति- **एवं तावदिति ।। प्राक्तन इति ।।** 'सायश्चिरम्' इत्यादिना टयुस्तुडिति भावः । बाधकं प्रकाशयति- **तथा हीति ।।** समतीतक्षराक्षर-पदनिरुक्तिलभ्यार्थमनुवदति- **क्षराक्षरेति ।। भेदेति ।।** एकस्यैव उच्चावचभावासम्भवादिति भावः । **कश्चि-दिति ।।** किम्प्रतियोगिकोऽपीत्यर्थः । भेदे प्रत्यक्षमाशङ्क्य निराह- **न चेति ।।** अनपेक्षप्रतीतिमननुभवेन निराह- **भेदो हीति ।। स्वतन्त्रः** सम्बन्ध्यनपेक्षः । अपेक्षायामपि भेदो व्यवस्थया प्रतीयत इत्याह- **किन्त्विति ।।** ननु घटः पटाद्भिन्न इति प्रतीयत इति कथमुक्तव्यवस्थेत्यतो वक्ति- **एकस्यैवेति ।।**

द्वित्वादिवद्व्यासज्यवृत्तित्वमत इत्यर्थः । अन्यतराश्रयत्वेऽपि धर्मिप्रतियोगिभावाविवक्षायामुक्तदिशैव प्रतीतिरिति वक्ति- **भेदद्वयाङ्गीकारे-णेति ॥ गत्यन्तराभावादिति ॥** सम्बन्ध्यन्तराभावादित्यर्थः । भेदस्य विशेष्यत्वे घटपटयोरपि तत्त्वसम्भवेन तस्य विशेषणत्वे तयोरपि तत्त्वसम्भवेन कथं विशेषणविशेष्यभाव इत्यतो वक्ति- **भेदस्य चेति ॥** एकस्य **(व्या.टि.)** विशेषणभावेन भानेऽपरस्य तत्सम्बन्धिनो विशेष्यतानियमादिति भावः । तथापि कथं मिथआश्रय इत्यत आह- **तथा चेति ॥** विशेषणविशेष्यतयेति योज्यम् । **विशेषणादिप्रतीतेरिति ॥** घटपटौ भिन्नौ, घटपटयोर्भेद इति प्रतीत्योः क्रमेण विशेषणविशेष्यभूतो यो भेदस्तत्प्रतीतेरुक्तप्रतीत्योर्विशेष्यादिभूतौ यौ द्वित्वावच्छिन्नघटपटौ तत्प्रतीतिकार्यत्वादित्यर्थः । कार्यकारणभावस्तु घटपटौ संयुक्तावित्यादौ द्वित्वावच्छिन्नघट-पटप्रत्यक्षमन्तरा संयोगप्रत्यक्षादर्शनेन तद्धर्मावच्छिन्नधर्मिनिष्ठविषयतानिरूपितानेकाश्रितधर्मनिष्ठविषयता-शालिप्रत्यक्षत्वेन तद्धर्मावच्छिन्नविषयकप्रत्यक्षत्वेन भूतलत्वेन भूतलप्रत्यक्षमन्तरा 'भूतलं घटाभाववत्' इत्यादि-प्रत्यक्षानुदयेनाभावप्रत्यक्षत्वेनाधिकरणतावच्छेदकप्रत्यक्षत्वेन वा बोध्यः । द्वित्वप्रत्यक्षस्य भेदप्रत्यक्षाधीनत्वा-च्चान्योन्याश्रयः । सिद्धान्ते भेदस्यानेकाश्रितत्वाभावान्न प्रथमकार्यकारणभावाक्रान्तत्वम् । धर्मिप्रतीतेरेव भेद-प्रतीतित्वेनानुभवसिद्धत्वेन द्वितीयकार्यकारणभावेऽपि अभावपदं भेदोत्तरपरम्, बाधकाभावात् कार्यकारणभावद्वयं मानं वा मन्तव्यम् । केचित्तु, विशेषणादिभावेन भेदप्रतीतिं प्रति विशेष्यादिभावेन द्वित्वावच्छिन्नघटपटप्रतीतिर्हेतुः। एवमेतां प्रति सा हेतुरिति भेद एव चायं हेतुहेतुमद्भाव इति न विशिष्टप्रत्ययमात्रविलोपः । द्वित्वप्रतीतेर्भेदप्रतीत्य-धीनत्वं चाभ्युच्चययुक्तिरित्याहुः । द्वितीयं दूषयति- **अथेत्यादिना ॥ उक्तानुसारेणेति ॥** उक्तदिशा आकाङ्क्षि-तानि पूरणीयानीत्यर्थः । पदार्थशब्दस्य प्रतियोगिसाधारण्यादाह- **धर्मीहेति ॥** अत्राऽप्यपक्षमनभ्युपगमेन पराचष्टे- **न भेद इति ॥** 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' इत्यभिधानाद्युगशब्दो युग्मवचनः । आश्रये द्विवचनं बाधकमाशङ्क्य परिहरति- **घटपटावित्यादिना ॥** एकवचनं साधयति- **एकवचनमिति ॥** एकमात्राश्रितत्वपक्षं परिगृह्य तद्दोषं निरस्यति- **स च भेद इत्यादिना ॥** स्वरूपत्वे किमायातमित्यत आह- **तेनेति ॥** प्रतीतिद्वयाभावेन तत्सापेक्षत्वनिमित्तोऽन्योन्याश्रयः सुतरां नास्तीति भावः । ननु घटस्य पटप्रतियोगिकभेदाभावे कथमेतद्धर्मिक-भेदप्रतियोगिता । अन्यथा पटस्यापि स्यादित्यत आह- **घटस्येति ॥** तथा सत्यत्राभावेऽपि तत्रान्योन्याश्रयः स्यादत आह- **सोऽपीति ॥** नन्वन्योन्यनिरूपितभेदयोरन्योन्यधर्मिस्वरूपत्वेऽपि प्रतियोगित्वापेक्षयाऽन्यो-न्याश्रयः, भेदज्ञानाधीनत्वात्तज्ज्ञानस्येत्याशङ्कते- **तथापीति ॥** प्रतिपन्नभेदस्येति बहुव्रीहिः, ज्ञातभेदस्ये-त्यर्थः । **सिद्धिर्ज्ञानम्** । निराह- **नेति ॥ प्रतीतिमात्रेणेति ॥** प्रतियोगितावच्छेदकप्रकारकप्रतियोगि-ज्ञानस्यैवाभावज्ञानकारणत्वेन प्रतियोगित्वप्रकारकज्ञानस्याभावज्ञानोत्तरकालिकस्यानावश्यकत्वात् । भेदस्य धर्मिस्वरूपत्वेनान्योऽपि दोषः परिहृत इत्याह- **एतेनेति ॥ प्रतीतिपरम्परयेति ॥** भेदधर्मिणोर्विशेषणविशेष्य-भावे भेदप्रतीत्यपेक्षा, तयोरप्येवं तयोरप्येवमिति परम्परयेत्यर्थः । दूषणान्तरमप्यनेनापास्तमिति समुच्चिनोति- **तथेति ॥** निरवकाशमित्यनेनान्वयः । **कारणत्वेनेति ॥** धर्मिप्रतीतित्वेनेति भावः ।

'सापेक्षत्वात्सावधेश्च तत्त्वे द्वैतप्रसङ्गतः । एकाभावादसन्देहान्न रूपं वस्तुनो भिदा' इति भिन्नभेदवाद्युक्त-धर्मिस्वरूपत्वबाधकान्याहत्याद्वैती शङ्कते- **भवेदेवमित्यादिना ॥** धर्मिस्वरूपत्वेनान्योन्याश्रयत्वादिपरिहार-दूषकस्याद्वैतिनः स्वरूपत्वखण्डने तात्पर्यं न तु धर्मिभेदसाधने, अपसिद्धान्तानौचित्यादिप्रसक्तेरित्यवधेयम् । **(व्या.टि.)परिहारः** । अन्योन्याश्रयादेरिति शेषः । **स्यादिति ॥** युक्तमिति शेषः । तन्निबन्धनत्वात्तत्परिहारस्येति भावः। अत्र भेदस्य धर्मिस्वरूपत्वे सापेक्षत्वनिरपेक्षत्वरूपविरुद्धधर्माधिकरणत्वानुमानं बाधकमभिसन्धाय तस्य पक्षधर्मतामुपपादयति- **धर्मिस्वरूपं हीत्यादिना ॥ परेति ॥** धर्मिप्रतियोगिविशेषेत्यर्थः । अवधारणव्यावर्त्यं प्रदर्श्य निरस्यति- **न हीति ॥** निरपेक्षप्रतीतिं दर्शयति- **किन्नामेति ॥** अत्रापि व्यावर्त्यं दर्शयति- **न त्विति ॥** कथमित्याक्षेपे, निरुपाधिकसम्बन्धभङ्गादिति भावः । तत्प्रतीतिरिति शक्यसम्बन्धप्रदर्शनम् । **अपेक्षयेति ॥** इत्यतः परमिति शेषः । प्रतियोग्यस्वरूपत्वसिद्ध्या सिद्धसाधनवारणायाऽह- **धर्मीति ॥** मुखतोऽन्यथासिद्धिं वदतोऽभिप्रायमाह- **एतेनेति ॥** तत्र साध्यस्यापि सत्त्वेन व्यभिचाराभावमाशङ्क्य परिहरति-**न चैक्यमिति ॥** अनिष्टं प्रसञ्जयति- **मिथ्यात्वेति ॥** प्रतिपक्षं प्रतिक्षिपति- **अस्वरूपस्यापीति ॥** हेत्वननुगमान्नानैकान्त्यमिति शङ्कते- **न चैक्यमिति ॥** अनिष्टं प्रसञ्जयितुमापादकमनुवदति- **तथा सतीति ॥** धर्मिप्रतियोग्यनपेक्षायामिति भावः । **तत्त्वम्पदार्थेति ॥** धर्मिप्रतियोगिभूतजीवब्रह्मपराणाम् 'योऽयं विज्ञानमयः' 'सत्यं ज्ञानमनन्तम्' इत्यादीनामित्यर्थः । **एकवाक्यताऽभावेति ॥** अन्वयप्रतियोगिसमर्पकत्वाभावेत्यर्थः । नन्वैक्ये हेतुरगतः, सापेक्षत्वनिरपेक्षत्वरूपविरुद्धधर्माधिकरणत्वेन प्रतीत्योर्भेदेऽपि

तत्प्रतीतिकत्वयोर्विरोधाभावादिति शङ्कते- **अथेति ॥** कुतो न विरोध इत्यतो निदर्शयति- **एकस्येति ॥ समानमिति ॥** तथा च स्वरूपासिद्धो हेतुरिति भावः । न केवलं सममित्याह- **अधिकश्चेति ॥** मन्मते धर्मिणाऽत्यन्ताभेदेऽपि सविशेषाभेदेन भेदस्य सापेक्षत्वं सूपपादं सूद्धरबाधकमिति भावः ।

**मूलम् - स्वरूपसिद्धावपि तदसिद्धिश्च जीवेश्वरैक्यं वदतः सिद्धैव । भेदस्तु स्वरूपदर्शन एव सिद्धः । प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते । 'अस्य भेदः' इति तु 'पदार्थस्य स्वरूपम्' इतिवत् ।**

**(त.मं.)** भेदस्तु सामान्यतः स्वरूपदर्शन एव सिद्धः । पश्चाद् धर्मिप्रतियोग्यपेक्षया विशेषतो गृह्यतां नाम । तदेवोपपादयति- **प्राय इति ॥** ननु 'चैत्रस्य पटः' इतिवत् 'पटस्य भेदः' इति सम्बन्ध-व्यवहारात् कथं भेदस्य स्वरूपत्वमित्यत आह- **अस्येति ॥** न हि पदार्थात् स्वरूपस्य भेदः केनापीष्यते ।

**टीका -** तथापि न भेदो धर्मिस्वरूपं, तत्प्रतीतावपि कदाचिदप्रतीतेः । यो यत्प्रतीतावपि न प्रतीयते नासौ तत्स्वरूपं यथा घटप्रतीतावप्यप्रतीयमानः पटो न घटस्वरूपम् । नचायमसिद्धो हेतुः, स्थाणुशुक्तिकाप्रतीतावपि पुरुषरजतभेदस्याप्रतीतेः । प्रतीतौ वा संशयविपर्ययानुत्पत्तिप्रसङ्गात् । नह्यप्रतीते स्थाण्वादौ संशयादिर्भवतीत्यत आह- **स्वरूपेति ॥** धर्मिप्रतीतावपि भेदस्याप्रतीतिः अभेदाविरोधित्वेन जीवेश्वरैक्यं वदतः परस्य सम्मतैव ।

इदमुक्तं भवति- प्रत्यक्चैतन्ये स्वप्रकाशतया सिद्धेऽपि जीवब्रह्मणोरैक्यं न सिद्धम् । अन्यथा उपदेशानर्थक्यप्रसङ्गात् । विप्रतिपत्त्यभावप्रसक्तेश्च । तथापि तत् स्वरूपतया परेणाङ्गीक्रियते । तस्मादयमपि हेतुरन्यतरानैकान्तिक एव भवति । स्वरूपमप्यैक्यमविद्याप्रतिबन्धान्न प्रकाशत इति चेन्न । अनैकान्त्यापरिहारात् । विशेषणप्रक्षेपाभिप्राये चात्रापि सादृश्यादेः प्रतिबन्धकस्य वक्तुं शक्यत्वेन विशेषणासिद्धिप्रसङ्गादिति ।

असिद्धश्चायं हेतुरित्याह- **भेदस्त्विति ॥** तुशब्देनैक्याद्विशेषमाचष्टे । एवशब्देन नियमम् । कदाचिद्धर्मिस्वरूपसिद्धौ भेदसिद्धेः परेणाप्यभ्युपगतत्वात् । कुत इत्यत आह- **प्राय इति ॥** भूमार्थं प्राय इत्यव्ययमप्यस्ति । **विलक्षणं** व्यावृत्तम् । प्राय इति संशयादिस्थलव्युदासार्थम् । तत्रापि विशेषं वक्ष्यामः । यद्यद् दृश्यते तत्तत् सर्वतो व्यावृत्तमेव दृश्यते नतु सर्वात्मकत्वेनेति ह्यनुभवसिद्धम् । व्यावृत्तिरेव च भेदः । नचैकस्मिन् वस्तुन्यनेके भेदाः किन्त्वेक एव । स चेद् दृष्टः कथं तर्हि धर्मिप्रतीतावपि भेदस्याप्रतीतिः सिद्ध्येदिति । तथापि भेदस्य धर्मिस्वरूपत्वं न युज्यते । पटस्य भेद इति तत्सम्बन्धितया प्रतीयमानत्वात् । यो यत्सम्बन्धितया प्रतीयते नासौ तत्स्वरूपम् । यथा कम्बलो ब्राह्मणस्येति । अत आह- **अस्येति ॥** इति तु सम्बन्धितया प्रतीतिर्व्यपदेशो वेति शेषः । इतिवदुपपद्यत इति च । यथा पदार्थस्य स्वरूपमिति पदार्थसम्बन्धितया प्रतीयमानमपि स्वरूपं न ततोऽन्यत्, तथा भेदोऽपीत्यनैकान्तिकत्वमनेनोक्तम् । तथा 'आनन्दं ब्रह्मणो विद्वान्' इत्या-द्युदाहरणीयम् । यदि तत्र भेदातिरिक्तं किमपि सम्बन्धप्रतीतिनिमित्तमुच्यते तर्ह्यत्रापि विशेषं वक्ष्याम इत्यन्यथासिद्धिः । यदि तत्र व्यपदेशमात्रं न प्रतीतिरित्यभिधीयते तदाऽत्रापि तत्सममिति स्वरूपासिद्धिः । अनयैव दिशा पटो भिन्न इति विशेषणतया प्रतीतिरपि न भेदसाधिकेति द्रष्ट-व्यम् । अत एव सर्वतो विलक्षणं हीत्यादिप्रयोगोऽपि युज्यते ।

नन्वेतन्निमित्तान्तरादिकल्पनं भेदस्य धर्मिस्वरूपत्वे सिद्धे स्यात्, तत्रैव किं प्रमाणमिति चेत्, यो भेदमेव नाङ्गीकरोति किं तस्यानया तद्विशेषप्रमाणचिन्तया । स्वरूपे प्रमाणं तूक्तम् । तस्य च बाधकानि परिहृतानि । अनुमानमात्रेण प्रत्यक्षं न बाध्यत इति च वक्ष्यते ।

**(र.टि.)** ननु संशयादितः पूर्वं भेदाप्रतीतिदशायां स्थाण्वादिधर्म्यपि न प्रतीयते। तथा चासिद्धिरेवेत्यत आह- **न ह्यप्रतीत इति ॥** संशयादेर्धर्मिज्ञानसाध्यत्वादिति भावः। ऐक्यवचनेन धर्मिप्रतीतावपि भेदाप्रतीतिः कथं परस्य सम्मतेति ज्ञायत इत्यत आह- **अभेदाविरोधित्वेनेति ॥** 'सर्वं खल्विदं ब्रह्म' इति वाक्यबोध्यो यो ब्रह्मणः सर्वाभेदः, तदविरुद्धत्वेनेत्यर्थः। ब्रह्मभिन्नत्वेनैक्यं वदत इति यावत्। ऐक्यस्य ब्रह्मभिन्नत्वे 'सर्वं खल्विदं ब्रह्म' इति वाक्यबोध्यः सर्वाभेदो विरुध्येतेति भावः। **विप्रतिपत्त्यभावप्रसक्तेश्चेति ॥** न च प्रत्यक्चैतन्यस्वरूपभूतैक्यस्याज्ञानविरोधिस्वरूपज्ञानेन सिद्धावप्यज्ञानविरोधिवृत्त्यभावाद्विप्रतिपत्तिसम्भवः, वृत्तिजनकत्वेनोपदेशसार्थक्यं चेति वाच्यम्। प्रत्यक्चैतन्येऽपि विप्रतिपत्त्यादिप्रसङ्गात्। न चेदत्रापि न स्यादविशेषा-दिति भावः। **विशेषणप्रक्षेपेति ॥** प्रतिबन्धकाभावे सतीति विशेषणप्रक्षेपेत्यर्थः। **नियममिति ॥** अनेन सिद्ध एवेत्येवकारसम्बन्धः सूचितो भवति। ननु प्रायेणेति प्रायश इति वा वक्तव्यम्। प्राय इति कथमुक्तमित्यत आह- **भूमार्थमिति ॥** ननु स्थाण्वादौ पुरुषत्वादिसंशयानुरोधेन पुरुषादिप्रतियोगिकभेदाप्रतीत्यङ्गीकारे तमेव भेदं पक्षीकृत्योक्तहेतुना धर्मिस्वरूपत्वाभावः साध्यते, हेत्वसिद्धेरभावादित्यत आह- **न चैकस्मिन्निति ॥** संशयादिकं च प्रकारान्तरेणोपपादयिष्यत इति भावः। **अनुमानमात्रेणेति ॥** तथा च प्राचीनो बाधक-परिहारोऽभ्युच्चयत्वेन कृत इति भावः।

**(रा.टि.)** ननु संशयस्थले विपर्ययस्थले च स्थाणुर्वा शुक्तिर्वा न प्रतीयते। तथाच तत्प्रतीतावप्रतीयमानत्वादिति हेतुरसिद्ध इत्यत आह- **नह्यप्रतीत इति ॥** धर्मिज्ञानसाध्यत्वात् तयोरिति भावः। **अभेदेति ॥** धर्मिस्वरूप-भेदयोरभेदाविरोधेनेत्यर्थः। संमतैवेत्युक्तं व्यनक्ति- **इदमुक्तं भवतीति ॥ न सिद्धं** न ज्ञातम्। **अन्यथा** ज्ञातत्वे तत्त्वमसीत्यैक्योपदेशानर्थक्यप्रसङ्गादित्यर्थः। **विप्रतिपत्तीति ॥** निश्चिते संशयायोगेन वादिनां विप्रति-पत्तिर्न स्यादित्यर्थः। **अयमपीति ॥** धर्मिस्वरूपप्रतीतावपि भेदस्याप्रतीयमानत्वादिति हेतुरपीत्यर्थः। **विशेष-णेति ॥** असति प्रतिबन्धके धर्मिप्रतीतावप्रतीयमानत्वादित्युक्तावित्यर्थः। **अत्रापीति ॥** स्थाणुशुक्तिकादि-संशयादिस्थलेऽपीत्यर्थः। कुतो नियमोक्तिरित्यत आह- **कदाचिदिति ॥** विशेषदर्शनदशायामित्यर्थः। अतः सिद्धसाधनतावारणाय यदायदा धर्मिदर्शनं तदातदाऽपीति वक्तुमेवकार इति भावः। **कुत इति ॥** कुतो नियम इत्यर्थः। कथं तर्हि नियममाचष्ट इत्यतो वा, स्थाण्वादौ भेदाप्रतीतौ तत्रैव प्रागुक्तहेतुसिद्ध्या धर्मिस्वरूपत्वाभावः सिध्येदित्यतो वाऽऽह- **तत्रापि विशेषं वक्ष्याम इति ॥** 'ज्ञात्वैव हि प्रायः सर्वतो वैलक्षण्यम्' इत्येतद्व्याख्यावसर इति भावः। भूमार्थकप्रायशब्दार्थं व्यनक्ति- **यद्यद् दृश्यत इति ॥** नन्वेवं सर्वप्रतियोगिकभेदानां निरूपकभेदेन अनेकत्वादेकानेकयोः कथमभेद इत्यतो वा, तावद्भेदज्ञाने सार्वज्ञापत्तिरित्यतो वाऽऽह- **नचैकस्मिन्निति ॥ इति चेति ॥** शेष इत्यनुषङ्गः। **अनेनेति ॥** 'पदार्थस्य स्वरूपमितिवत्' इत्यनेन तत्सम्बन्धितया प्रतीयमाने तदभिन्ने स्वरूपेऽनैकान्त्यमुक्तं भवतीत्यर्थः। वैदिकमप्यनैकान्त्यस्थलमाह- **तथेति ॥** ब्रह्मसम्बन्धितया प्रतीयमानस्यापि तदभिन्नत्वस्य परस्यापि सम्मतेरिति भावः। **विशेषं वक्ष्याम इति ॥** 'एकस्मिन्नेव वस्तुनि **(रा.टि.)** विशेषः' इत्येतद्व्याख्याऽवसर इति भावः। **अन्यथासिद्धिरिति ॥** तत्सम्बन्धितया प्रतीयमानत्वरूप-हेतोर्भेदरूपसाध्येन विना तत्प्रतिनिधिना विशेषेणोपपत्तिरित्यर्थः। **स्वरूपासिद्धिरिति ॥** तत्सम्बन्धितया प्रतीयमानत्वरूपहेतोरिति योज्यम्। **अनयैवेति ॥** जीवो ब्रह्माभिन्न इति विशेषणतयैक्यप्रतीतिप्रतिबन्ध्युन्नयनरीत्या वा, भेदप्रतिनिधिविशेषतत्सम्बन्धीति प्रतीत्युपपत्तिनिर्वाहोक्तिदिशा वा भेदस्य धर्मिविशेषणतया प्रतीति-रपि धर्मिभेदयोर्भेदसाधिका नेति द्रष्टव्यमित्यर्थः। भेदप्रतिनिधिविशेषेण तादृशप्रतीत्युपपत्तिरिति भावः। **अत एवेति ॥** अभेदेऽपि विशेषणतया भेदप्रतीतेर्विशेषशक्तिवशादुपपन्नत्वादेव **विलक्षणं** व्यावृत्तिमदिति वैलक्षण्यस्य विशेषणतया प्रयोगो युज्यत इत्यर्थः। **निमित्तान्तरादीति ॥** अन्योन्याश्रयतापरिहारादिरादिपदार्थः। **तद्विशे-षेति ॥** भेदस्य धर्मिस्वरूपत्वरूपविशेषेत्यर्थः। यस्तु भेदमुपेत्य धर्मिस्वरूपत्वे प्रमाणं पृच्छति तं प्रत्याह- **स्वरूपे प्रमाणं त्विति ॥** भेदो धर्मिस्वरूपमित्यत्र 'भेदस्तु स्वरूपदर्शन एव सिद्धः। प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते' इत्यनेन प्रत्यक्षरूपं प्रमाणमुक्तमित्यर्थः। यद्वा भेदानभ्युपगमवादिनं प्रति भेदस्वरूपं साधनीयमेवेत्यत आह- **स्वरूप इति ॥** भेदस्वरूप इत्यर्थः। भेदस्त्वित्यादिना वा अयमस्माद्भिन्न इति अनयोः भेद इति प्रागुदाहृतत्वेन वा प्रत्यक्षं प्रमाणमुक्तमित्यर्थः। **तस्य चेति ॥** प्रत्यक्षप्रमाणस्य, अन्योन्याश्रयत्व-धर्मिप्रतीतावप्रतीयमानत्व-तत्सम्बन्धितया प्रतीयमानत्व-विशेषणविशेष्यभावेन प्रतीयमानत्वरूपबाधकानी-त्यर्थः। प्रागुक्तानुमानानां बाधकत्वमनैकान्त्यादिदुष्टतया नेत्युक्तम्। अधुना बाधकताशङ्काऽपि न युक्तेत्याह- **अनुमानमात्रेणेति ॥** 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्यादिना वक्ष्यत इत्यर्थः।

**(श्री.टि.)**ननु संशयविपर्ययापेक्षया पूर्वं पुरुषरजतभेदाप्रतीतिदशायां स्थाणुशुक्तिकारूपं धर्म्यपि न प्रतीयते। एवं च स्थाणुशुक्तिकाप्रतीतावपीत्युक्तमयुक्तम्। तथा च तत्प्रतीतावपीति हेतुविशेषणस्यासिद्धिरेवेत्यत आह- **न ह्यप्रतीत इति ॥**

संशयादेर्धर्मिज्ञानसाध्यत्वेन स्थाणुशुक्तिकारूपधर्मिस्वरूपस्यैवाप्रतीतौ संशयादिरेव न स्यात् । अतः संशयादितः पूर्वं धर्मिस्वरूपप्रतीतेरङ्गीकार्यत्वान्न विशेषणासिद्धिरिति भावः । ननु ऐक्यवचनेन धर्मिप्रतीतावपि भेदाप्रतीतिः कथं परस्य सम्मतेति ज्ञायत इत्यत आह- **अभेदाविरोधित्वेनेति ॥** 'सर्वं खल्विदं ब्रह्म' इति वाक्यबोध्यो यो ब्रह्मणः सर्वाभेदस्तदविरुद्धत्वेनेत्यर्थः । ब्रह्माभिन्नत्वेनैक्यं वदत इति यावत् । ऐक्यस्य ब्रह्माभिन्नत्वे 'सर्वं खल्विदं ब्रह्म' इति वाक्यबोध्यसर्वाभेदो विरुध्येतेति भावः । केचित्तु ननु जीवेश्वरैक्यं वदत इत्ययुक्तं, विशिष्टयोरैक्यायोगादित्यत उक्तम्- **अभेदाविरोधित्वेनेति ॥** भिद्यतेऽनेनेति भेदो विशेषः, न विद्यते भेदो यस्य **तदभेदं** निर्विशेषचैतन्यं, **तदविरोधित्वेन** तत्स्वरूपत्वेनेत्यर्थः । ब्रह्मस्वरूपत्वेनेति वक्तव्ये, एवमुक्तिस्तु ऐक्यस्य ब्रह्मातिरिक्तत्वे तेनैव ब्रह्मणः सविशेषत्वप्राप्त्या निर्विशेषत्वं न स्यादिति युक्ति-सूचनार्थमित्याहुः । **सिद्धेऽपीति ॥** अहमिति स्वप्रकाशतया सिद्धेऽपीत्यर्थः । **अन्यथेति ॥** प्रत्यक्चैतन्या-भिन्नस्याप्यैक्यस्य सिद्धत्वाङ्गीकार इत्यर्थः । **उपदेशेति ॥** तत्त्वमसीत्याद्युपदेशेत्यर्थः । **आनर्थक्येति ॥** सिद्धेऽर्थे उपदेशस्य व्यर्थत्वादिति भावः । **विप्रतिपत्तीति ॥** मायावादितत्त्ववादिनोरित्यर्थः । निश्चितेऽर्थे तदयोगादिति **(श्री.टि.)** भावः । **तथापि** ऐक्यस्यासिद्धत्वेऽपि । **तत्स्वरूपतया** प्रत्यक्चैतन्यस्वरूपतया । **अन्यतरेति ॥** मायिमत ऐक्येऽनैकान्तिक इत्यर्थः । गूढाभिसन्धिराशङ्कते- **स्वरूपमपीति ॥** प्रत्यक्चैतन्यस्वरूपमपीत्यर्थः । **अपरिहारादिति ॥** तत्प्रतीतावप्यप्रतीयमानत्वप्राप्त्या व्यभिचारापरिहारादित्यर्थः । पूर्वपक्ष्यभिसन्धिमुद्घाट्य तं दूषयति- **विशेषणप्रक्षेपेति ॥** 'असति प्रतिबन्धके' इति हेतुविशेषणप्रक्षेपेत्यर्थः । तथा चासति प्रतिबन्धके तत्प्रतीतावप्यप्रतीयमानत्वरूपहेतोरेवाभावान्न व्यभिचार इति भावः । **अत्रापीति ॥** धर्मिप्रतीतावपि भेदा-प्रतीतावित्यर्थः ।

**॥ ऐक्याद्विशेषमिति ॥** स्वप्रकाशतया प्रत्यक्चैतन्ये सिद्धेऽप्यैक्यं न सिद्धं, नैवं भेदः, किन्तु धर्मिस्वरूपसिद्धौ सिद्ध एवेत्यैक्याद्भेदस्य विशेषमाचष्ट इत्यर्थः । **नियममिति ॥** आचष्ट इति वर्तते । अनेन सिद्ध एवेत्येवकारस्य सम्बन्धस्सूचितो भवति । कथमेवकारेण नियमलाभ इति चेत्, उच्यते । स्वरूपदर्शने भेदः सिद्ध एवेति वाक्यवृत्त्या विशेषणसङ्गतोऽयमेवकार इत्युक्तं भवति । तस्य चेतरपदार्थतावच्छेदके समभिव्याहृतपदार्थतावच्छेदकव्याप्य-त्वार्थकत्वस्य शङ्खः पाण्डुर एवेत्यादौ दर्शनेनात्रापि धर्मिस्वरूपदर्शने भेददर्शनस्य व्याप्यत्वलाभात् । यदा धर्मिस्वरूपदर्शनं तदा भेददर्शनमिति व्याप्यपरपर्यायो नियमो लभ्यत इति भावः । नियमः कुतो वक्तव्य इत्यत आह- **कदाचिदिति ॥** तथा च तद्वैलक्षण्यकथनाय नियमः कथ्यत इति भावः । ननु प्राय इति कथमुक्तं, भूमार्थे प्रायशः प्रायेणेत्यव्ययस्यैव दर्शनेन प्रायशः प्रायेणेत्येव वक्तव्यत्वादित्यत आह- **भूमार्थमिति ॥** प्राय इत्यव्ययमिति सम्बन्धः । भूमा बाहुल्यं तदर्थकमित्यर्थः । तथा च प्रायशः प्रायेणेतिवत् प्राय इत्यप्यव्ययं भूमार्थकमस्तीति न दोष इति भावः । अन्ये तु प्राय इति शब्दोऽनशनार्थस्तावदस्ति । 'प्रायो निरशने पुमान्' इत्यभिधानेन अनशनार्थस्य प्रायशब्दस्य पुंलिङ्गताविधानात् । 'प्रायोपविष्टाः' इति प्रयोगाच्च । प्राय इत्यस्य अव्ययपरत्वे समासायोगेन शब्दरूपत्वावगमात्, तथा च न केवलं प्राय इति शब्दोऽस्ति, किन्त्वव्ययमप्यस्ति, तच्चाव्ययं प्रकृते भूमार्थमित्यर्थ इत्याहुः । प्राय इति विशेषणस्य कृत्यमाह- **प्राय इतीति ॥ संशयादीति ॥** संशयविपर्ययस्थलेऽपि सर्वतो वैलक्षण्यदर्शने तदुच्छेद एव स्यादिति भावः । संशयविपर्ययस्थलेऽपि सर्वतो विलक्षणं पदार्थस्वरूपं न दृश्यत इति यत्प्राय इति विशेषणेनोक्तं तदङ्गीकृत्यैवोक्तम् । वस्तुतस्तु संशयादिस्थलेऽपि विशेषं वक्ष्याम इत्याह- **तत्रापीति ॥** संशयादिस्थलेऽपि सर्वतो वैलक्षण्यं प्रतीतमेव । न च तर्हि संशयायोग इति वाच्यम् । एक एव खल्वेकस्य वस्तुनो भेदः, अनेकत्वे प्रमाणाभावात् । स च भेदो वस्तुप्रतीतौ प्रतीत एव, किन्तु तस्य घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्ता धर्माः । तत्र भेदनिष्ठो यत्प्रतियोगिकत्वरूपो धर्मस्सादृश्यादिवशान्न प्रतीयते तत्र संशयादिकमुत्पद्यते । न तु तत्रापि भेदस्याप्रतीतिरिति ज्ञात्वैवेति वाक्य-व्याख्यानावसरे वक्ष्याम इत्यर्थः । ननु व्यावृत्तिरेव दृश्यते न तु भेद इत्यत आह- **व्यावृत्तिरेव चेति ॥ नन्वेक-स्मिन्ननेकभेदसद्भावेन** स्थाण्वादौ घटादिप्रतियोगिकभेदस्य दृष्टत्वेऽपि पुरुषत्वादिसंशयानुरोधेन पुरुषादिप्रति-योगिकभेदस्य अदृष्टत्वात्तमेव भेदं पक्षीकृत्य धर्मिप्रतीतावप्यप्रतीयमानत्वहेतुना धर्मिस्वरूपत्वाभावः साध्यते **(श्री.टि.)** हेत्वसिद्धेरभावादित्यत आह- **न चैकस्मिन् वस्तुनीति ॥** भेदस्यान्योन्याभावरूपत्वेन तद्भेदेऽधि-करणभेदस्यैव प्रयोजकत्वेन तदभावादिति भावः । संशयादिकं च प्रकारान्तरेणोपपादयिष्यत इति हृदयम् ।

सावधेरित्युक्तां युक्तिमाशङ्कते- **तथाऽपीति ॥** अवधिशब्दः सम्बन्धिपरः । तथा च सावधेरित्युक्तस्य सम्बन्धिसाहित्येन एकस्य सम्बन्धितयेति यावत्, प्रतीयमानत्वादित्यर्थमभिप्रेत्योपपादयति-**पटस्य भेद इत्या-दिना ॥** इति चेत्यनन्तरं शेष इति वर्तते । **अनैकान्तिकत्वमिति ॥** उभयवादिरीत्येति शेषः । **उदाहरणीय-मिति ॥** अनैकान्त्यस्थलत्वेनेत्यर्थः । 'ब्रह्मण आनन्दम्'

इति ब्रह्मसम्बन्धितया प्रतीतिसद्भावेऽपि तत्स्वरूपत्व-स्यैव सत्त्वादिति भावः । **तत्रेति ॥** पदार्थस्य स्वरूपं ब्रह्मण आनन्दमित्यादावित्यर्थः । **किमपि** उपचारादि-कम् । **तर्ह्यत्रापीति ॥** तत्र यथा आनन्दादेः ब्रह्मादिस्वरूपत्वेऽपि सम्बन्धप्रतीतेरुपचारादिरूपं निमित्तान्तरमुच्यते एवं भेदस्य धर्मिभूतपटस्वरूपत्वेऽपि पटस्य भेद इति सम्बन्धितया प्रतीतौ निमित्तमभेदे भेदकार्यकारिरूपं विशेषं वक्ष्याम इत्यर्थः । **अन्यथासिद्धिरिति ॥** पक्षीभूते भेदे सम्बन्धितया प्रतीयमानत्वं च धर्मिस्वरूपत्वाभावरूपं साध्यं विना विशेषेणैव सम्भवतीत्यन्यथासिद्धिरित्यर्थः । **तत्र** पदार्थस्य स्वरूपं ब्रह्मण आनन्दमित्यत्र । **न प्रतीतिरिति ॥** तथा च सम्बन्धितया प्रतीयमानत्वरूपहेतोरेवाभावान्न व्यभिचार इति भावः । **अत्रापीति ॥** पटस्य भेद इत्यपि व्यपदेशमात्रमिति वक्तुं शक्यत्वेन सम्बन्धितया प्रतीयमानत्वहेतोरभावात्स्वरूपासिद्धिरि-त्यर्थः । ननु तथापि भेदो न धर्मिस्वरूपं पटो भिन्न इति तद्विशेषणतया प्रतीयमानत्वात् । यद् यद्विशेषणतया प्रतीयते न तत् तस्य स्वरूपं यथा दण्डो देवदत्तस्येत्यत आह- **अनयैवेति ॥** 'आनन्दं ब्रह्मणः' इत्यादौ व्यभिचारप्रसङ्गादेवेत्यर्थः । **भेदसाधिकेति ॥** भेदस्य धर्मिस्वरूपाद्भेदसाधिकेत्यर्थः । **अत एवेति ॥** विशेषणतया प्रतीतेर्भेदसाधकत्वाभावादेवेत्यर्थः । **सर्वतो विलक्षणं हीति ॥** पदार्थस्वरूपं **सर्वतो विलक्षणं** सर्वस्माद्भिन्नमिति पदार्थस्वरूपविशेषणतया प्रयोग इत्यर्थः । **निमित्तान्तरकल्पनमिति ॥** सम्बन्धितया प्रतीतौ भेदातिरिक्तं विशेषरूपं निमित्तान्तरकल्पनमित्यर्थः । **तत्रैवेति ॥** धर्मिस्वरूपत्व एवेत्यर्थः । **यो** मायावादी । **तद्विशे-षेति ॥** तस्य भेदस्य धर्मिस्वरूपत्वरूपप्रमेयविशेषे प्रमाणचिन्तयेत्यर्थः । आर्द्रकवणिजो वहित्रचिन्तावद्व्यर्थ-त्वादिति भावः । ननु भेदस्वरूप एव प्रमाणाभावाद्भेदो मया नाङ्गीक्रियत इत्यत आह- **स्वरूप इति ॥** भेदस्वरूपसद्भावे प्रत्यक्षमेव प्रमाणमिति 'भेदस्तु वस्तुस्वरूपदर्शन एव सिद्धः' इत्यनेनोक्तमित्यर्थः । नन्व-न्योन्याश्रयादिबाधकबाधितं प्रत्यक्षं न भेदस्वरूपे प्रमाणं भवितुमर्हतीत्यत आह- **तस्य चेति ॥** भेदग्राहि-प्रत्यक्षप्रमाणस्येत्यर्थः । ननु तथापि भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यनुमानमेव भेदप्रत्यक्षस्य बाधकं भविष्य-तीत्यत आह- **अनुमानमात्रेणेति ॥ वक्ष्यत इति ॥** 'तर्कमात्रतः प्रत्यक्षबाधने' इत्यादिनेत्यर्थः । तथात्वे कालात्ययापदिष्टमात्रोच्छेदप्रसङ्ग इत्याशयः ।

**(पां.टि.)** ननु संशयविपर्ययस्थले कुतः पुरुषरजतभेदस्याप्रतीतिः? कुतश्च तस्य स्थाणुशुक्तिकयोः प्रतीतिः? येन स्थाणुशुक्तिकाप्रतीतावपि पुरुषरजतभेदस्याप्रतीत्या तत्प्रतीतावप्यप्रतीयमानत्वरूपहेतोः सिद्धिः स्यादित्यतः **(पां.टि.)** पुरुषादिभेदस्याप्रतीतिं तत्प्रतीतौ बाधकोपदर्शनेन तावत् कथयति- **प्रतीतौ वेति ॥** विरोधिनो भेदज्ञानस्य सत्त्वात् तस्याविरोधित्वे च विरोध्यन्तरस्याभावात्तदनिवृत्तिप्रसङ्गादिति भावः । स्थाण्वादिप्रतीतिमपि तदप्रतीतौ बाधककथनेन दर्शयति- **न हीति ॥** संशयादेर्धर्मिज्ञानसाध्यतया असति तस्मिन् तदनुपपत्तेरकारण-कार्योत्पत्तिप्रसङ्गेन असम्भवादिति भावः । किमनेन शङ्कितानुमानस्य दूषणमुक्तं भवतीत्यत आह- **इदमुक्तं भवतीति ॥ अन्यथेति ॥** ऐक्यस्यापि सिद्धत्व इत्यर्थः । **उपदेशेति ॥** 'तत्त्वमसि' इत्याद्युपदेशेत्यर्थः । 'अप्राप्त एव शास्त्रस्यार्थवत्त्वम्'इति न्यायादिति भावः । **विप्रतिपत्तीति ॥** निश्चिते संशयायोगादित्यर्थः । नच स्वरूपज्ञानेनैवैक्यस्य स्वतो भानेऽप्यज्ञानविरोधिन्या वृत्तेरभावाद्विप्रतिपत्त्यादीति वाच्यम् । प्रत्यगर्थवदेव वृत्त्य-भावेऽपि स्वतो भानेनैवैक्येऽपि विप्रतिपत्त्याद्ययोगादित्याशयात् । गूढाभिसन्धिः शङ्कते- **स्वरूपमपीति ॥** गूढाभिसन्धिरेव परिहरति- **नेति ॥** इदानीं पूर्ववाद्यभिप्रायोद्घाटनेनानैकान्त्यपरिहारमुत्थाप्य स्वाभिप्रायमुद्घा-टयति- **विशेषणप्रक्षेपेति ॥** असति प्रतिबन्धक इति विशेषणप्रक्षेपेत्यर्थः । नियमोक्तेः प्रयोजनमाह- **कदाचि-दिति ॥** ननु प्राय इत्यस्य 'प्रायो भूम्न्यन्तगमने' इत्यभिधानानुसारेण भूमार्थकाकारान्तपुंलिङ्गप्रायशब्दप्रथमैक-वचनान्ततायाः प्रायो बाहुल्यं सर्वतो विलक्षणं पदार्थस्वरूपं दृश्यत इत्यन्वयासम्भवेनायुक्तत्वात् 'प्रायेण कृतकृत्यत्वात्' इत्यादाविव प्रायेण सर्वतो विलक्षणमिति तृतीयान्ततयैव निर्देष्टव्यत्वात् प्राय इति निर्देशोऽनुपपन्न इत्यतः भूमार्थकाकारान्तप्रायशब्दस्येव 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः' इत्यभिधानानुसारेण 'प्रायः सर्वतो विवेक्तारः' इत्यादाविव बाहुल्येनेत्यर्थस्य प्राय इति सकारान्ताव्ययस्यापि सत्त्वान्न तदर्थकस्य तस्य सर्वतो विलक्षणमित्यनेनान्वयानुपपत्तिरित्यभिप्रायेणाऽह- **भूमार्थे प्राय इत्यव्ययमप्यस्तीति ॥ तत्रापी-ति ॥** संशयस्थलेऽपि । **विशेषम्** । भेदविषय इति शेषः । **वक्ष्यामः** । 'एक एव खल्वेकस्य वस्तुनो भेदोऽनेकत्वे प्रमाणाभावात् । स च वस्तुप्रतीतौ प्रतीयत एव । किन्तु तस्य घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्ता धर्माः । तत्र भेदनिष्ठो यत्प्रतियोगिकत्वरूपो धर्मः सादृश्यादिवशान्न प्रतीयते तत्र संशयादिकमुत्पद्यते । न तु तत्रापि भेदस्याप्रतीतिः' इति विशेषमनुपदमेव वक्ष्याम इत्यर्थः । इति चेत्यतः परं शेष इति शेषः । मूलमुप-लक्षणमित्यभिप्रेत्य वैदिकं व्यभिचारस्थलमप्युदाहरति- **तथेति ॥**

ननु तथापि भेदो न धर्मिस्वरूपं तद्विशेषणतया प्रतीयमानत्वात् । यो यद्विशेषणतया प्रतीयते नासौ तत्स्वरूपम्, यथा दण्डो

देवदत्तस्येत्यतो ब्रह्मविशेषणतया प्रतीयमानस्यापि सत्यत्वादेर्ब्रह्मस्वरूपत्ववद् घटविशेषणत्वेन प्रतीयमानस्यापि तत्स्वरूपत्वमुपपन्नमेव । यदि च व्यपदेशमात्रत्वान्न सा विशेषणविशेष्यभावेन प्रतीतिरिति न व्यभिचार इति मन्यसे तर्हि व्यपदेशमात्रत्वान्न घटो भिन्न इति विशेषणविशेष्यतया प्रतीतिरिति तुल्यमिति स्वरूपासिद्धिः । यदि च क्लृप्तभेदातिरिक्तं किञ्चिद्विशेषणविशेष्यभावप्रतीतिनियामकं कल्प्यते तर्ह्यत्रापि विशेषं वक्ष्याम इत्यन्यथासिद्धिरित्याशयेनाऽह- **अनयैव दिशेति** ।। ननु भेदस्य धर्मिस्वरूपत्वे सर्वतो वैलक्षण्यं पदार्थ-स्वरूपम् इति प्रयोगः स्यात् न तु सर्वतो विलक्षणमिति सर्वतो वैलक्षण्यविशिष्टतयेत्यत आह- **अत एवेति ।। (पां.टि.)**भेदस्य धर्मिणा सविशेषाभिन्नत्वादेवेत्यर्थः। **स्वरूपे प्रमाणं तूक्तमिति** ।। घटपटौ भिन्नावित्यादि-प्रत्यक्षमित्यर्थः । ननु भ्रमत्वात्तस्य प्रत्यक्षस्य न तेन तत्सिद्धिरित्यतो बाधकाभावान्न भ्रमत्वमित्यभिप्रेत्य तद्धि भवदन्योन्याश्रयत्वादिकं वा भेदमिथ्यात्वसाधकमनुमानं वेति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **तस्येति ।। परिहृतानीति** ।। 'पदार्थस्वरूपत्वाद् भेदस्य' इत्यादिनेति शेषः। द्वितीयं दूषयति- **वक्ष्यत इति** ।। 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्यादिनेति शेषः।

**(व्या.टि.)** पुनः सामान्यतो दृष्टं बाधकमाशङ्कते- **तथापीति** ।। विशेष्यासिद्धिमाशङ्क्य निराह- **न चाय-मिति** ।। विपक्षे बाधकमाह- **अनुत्पत्तीति** ।। तद्भेदज्ञानस्य तदभेदसंशयविपर्ययविरोधित्वादित्यर्थः । विशेषणासिद्धिं निराह- **न हीति ।। भवतीति** ।। धर्मिज्ञानाभावे संशयादिसामग्र्यभावेन तदुद्भवासम्भव इति भावः । व्याख्याति- **धर्मीति** ।। स्थाणुशुक्तिकाप्रतीतावपीत्यर्थः । **भेदस्य** पुरुषरजतभेदस्य । प्रतीतिः परस्य सम्मतैवेत्युत्तरेणान्वयः । यद्यपि 'धर्मिप्रतीतावपि तदसिद्धिः' इति मूलानुरोधेन तदप्रतीतिरित्येव वक्तव्यम्, तथापि नेदं साक्षादनैकान्तिकत्वोद्भावनं किन्तु मुखतो प्रयोजकत्वाभिधानं विपक्षे बाधकत्वेन न त्वनैकान्त्यं फलतीत्यभिप्रेत्य भेदस्याप्रतीतिरित्युक्तमित्यवगन्तव्यम्। सम्मतिप्रकारं दर्शयति- **अभेदाविरोधित्वेनेति ।। अभेदः** स्वरूपत्वं धर्मधर्मिणोरिति शेषः, **तेनाविरोधित्वेन** सहावस्थितत्वेन, साध्याभावसहावस्थाने साध्या-विनाभावाभावेन अप्रयोजकत्वमित्यर्थः । तुल्ययोगक्षेमयोरन्यतराङ्गीकारेऽपरस्याप्यङ्गीकार्यत्वम् । अन्यथा तत्रा-नैकान्त्यं भवतीत्याशयः । तत्र हेतुगर्भं परविशेषणम्। **जीवेश्वरैक्यं वदत इति** ।। ऐक्यमित्यतः परं धर्मिस्वरूपं तत्प्रतीतावप्रतीयमानं चेति शेषः। स्वप्रकाशतयेति सिद्धिहेतुप्रदर्शनम्। विपक्षे बाधकमाह- **अन्यथेति ।। उपदेशेति** ।। 'तत्त्वमसि' इत्यादेरित्यर्थः । **आनर्थक्येति** ।। परोपदेशस्य सन्दिग्धविपर्यस्तान्यतरतत्प्रत्ययार्थ-त्वादित्यर्थः। दोषान्तरमाह- **विप्रतिपत्तीति** ।। विप्रतिपत्तेर्विपर्ययमूलत्वादित्यर्थः। **तथापीति** ।। अप्रतीति-सत्त्वेऽपीत्यर्थः । निगमयति- **तस्मादिति** ।। व्यभिचारस्थले हेतोरन्यथासिद्धिं शङ्कते- **स्वरूपमपीति** ।। किमेवं वदतः परस्य धर्मिप्रतीतावप्रतीतिमात्रं हेतुरुत बाधकाभावे सतीति विकल्प्याऽद्यमवद्यति- **अनै-कान्त्येति** ।। द्वितीयं दूषयति- **विशेषणेति** ।।

असिद्धिवचने तुशब्दवैयर्थ्यादाह- **तुशब्देनेति** ।। अनेन प्राचीनतदसिद्ध्युपगमः कृत्वाचिन्तयेति ध्वनि-तम्। **नियममिति** ।। अनेनैवकारः सिद्ध एवेति भिन्नक्रम इति सूचयति। कुतो नियमसाधनमित्यत आह- **अभ्युपगतत्वादिति** ।। इतरथा परोक्तहेतौ कदाचित्पदवैयर्थ्यादिति भावः। अव्ययमपीत्यपिना शब्दं समुच्चि-नोति। प्रायभवः, प्रायदर्शनादित्यभियुक्तप्रयोगभूमदृष्टेरित्यर्थः । 'प्रायः स्यात्सन्ततौ मृत्यौ तुल्यबाहुल्ययोरपि' इति कोशाच्च । कश्चित् 'अप्यव्ययमस्ति' इति व्याचख्यौ । तन्न । तथात्वे इत्यप्यव्ययमितीति टीकाग्रन्थविन्यासा-पत्तेः। ननु संशयस्थलव्युदासे पुनरप्रतीतिपिशाचीयपादं दधीतेत्यत आह- **तत्रापीति ।। विशेषमिति** ।। तत्र तत्प्रतियोगिकत्वधर्माप्रतीतिरेव न तु तद्धर्मभेदाप्रतीतिरिति विशेषमित्यर्थः। वस्तुप्रतीतौ भेदप्रतीतिनियममनु- **(व्या.टि.)** भवेन साधयति- **यद्यदित्यादिना** ।। ननु घटादिप्रतीतिः चक्षुरादिजन्या, प्रतियोगिभूतसर्वपदार्थ-ज्ञानं च साक्षिरूपम्। 'सर्वं सामान्यतो यस्मात्सर्वैरेवानुभूयते' इत्यनुभाष्योक्तेः। अतः कथं तेन सह घटप्रतीति-रिति चेत्, नैवम्। यथा अस्तीति वा सदिति वा साक्षिसिद्धकालेन सहैव वस्त्वनुभूयते । यथोक्तमनुव्याख्याने 'साक्षिसिद्धेन कालेन खचितं ह्येव दृश्यते' इति । तथाऽत्रापीत्यदोषः । तदुक्तं तैत्तिरीयभाष्ये 'यथाऽस्तीति वर्तमानः कालो वस्तुना सहैवानुभूयते एवम्' इति । **अनेक इति** ।। एकस्वरूपाणामनेकत्वासम्भवादिति भावः ।

बाधकान्तरमाशङ्कते- **तथापीति** ।। उक्तबाधकापनयेऽपीत्यर्थः। **तत्सम्बन्धितयेति** ।। वस्तुविशेष्यतये-त्यर्थः। हेतोः सामान्यतो व्याप्तिं दर्शयति- **य इति** ।। उदाहरति- **यथेति** ।। ब्राह्मणस्येत्यतः परम् इति तत्सम्बन्धितया प्रतीयमानो न तत्स्वरूपमिति शेषः। **इति त्विति** ।। तस्मात् परमिति शेषः। **इतिवदिति** ।। ततः परमिति शेषः। ननु इत्थं शेषद्वयेन किं लब्धमित्यतः परोक्तव्यवस्थाया अनैकान्त्यान्यथासिद्धि-स्वरूपासिद्ध्यो व्यवतिष्ठन्त इत्याशयेनानैकान्त्यं तावद् दर्शयति- **यथेति** ।। उदाहरणं वैदिकमपि समुच्चिनोति-

**तथेति ॥** अन्यथासिद्धिं वक्तुमाह- **यदीति ॥ किमपीति ॥** ईशेच्छाविशेषादिकमित्यर्थः । स्वरूपासिद्धिं विवक्षुराह- **यदि तत्र व्यपदेश इति ॥** उक्तसम्मतसमसमाध्यभिसन्धिं चाऽह- **व्यपदेशमात्रमिति ॥ अनयैव दिशेति ॥** ज्ञानं ब्रह्म, शुक्लः पटः, आनन्द्येव भवतीत्यादिना विशेषणतया प्रतीयमानस्य ज्ञानादेस्तत्स्वरूप-प्रमितेरस्याप्यनैकान्त्यादिप्राप्त्येत्यर्थः । विशेषणविशेष्यभावोपपादनस्य प्रकृतोपयोगमप्याह- **अत एवेति ॥** 'सोमाभावे पूतिकाग्रहणम्' इति सोमादिप्रतिनिधितया श्रुतपूतिकादेः सोमादिकार्यकरत्ववद्भेदाभावे प्रमितभेदकार्यकरत्वेन धर्मिग्राहकमानसिद्धविशेषस्य भेदकार्यकारित्वेन तत्कार्यविशेषणविशेष्यभावादि-प्रतीतिव्यपदेशयोस्तेनैव सिद्धेरित्यर्थः । अभित्तिकचित्रायितमेतत्, मूलासिद्धेरिति शङ्कते- **नन्वेतदिति ॥ निमित्तान्तरेति ॥ निमित्तान्तरं** विशेषः । सम्बन्धित्वविशेषणत्वादिप्रतीतेरिति शेषः । आदिपदेन व्यपदेशमात्रत्वपरिग्रहः । किमयं प्रश्नोऽभेदवादिन उत भेदवादिन इति विकल्प्याऽद्ये प्रश्नासङ्गतिमाह-**य इति ॥ यद्विशेषेति ॥** सामान्यसिद्धेर्विशेषजिज्ञासाहेतुत्वेन तदभावे तन्मूलप्रश्नायोगादित्यर्थः । तर्हि स्वरूपे प्रमाणं पृच्छ्यत इत्यत आह- **स्वरूप इति ॥ उक्तमिति ॥** 'दर्शन एव सिद्धः' इति 'सर्वतो विलक्षणं दृश्यते' इति प्रत्यक्षमुक्तमित्यर्थः । बाधकं शङ्क्यत इत्यत आह- **तस्य चेति ॥ बाधकानीति ॥** अन्योन्याश्रयत्वादीनि । **वक्ष्यत इति ॥** 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्यत्रेति शेषः ।

**मूलम् - यदि न स्वरूपं भेदः, तदा पदार्थे दृष्टे प्रायः सर्वतो वैलक्षण्यं तस्य न ज्ञायेत । अज्ञाते च वैलक्षण्ये आत्मनि घट इत्यपि संशयः (यादिः) स्यात् । नहि कश्चित्तथा संशयं करोति । ज्ञात्वैव प्रायः सर्वतो वैलक्षण्यं कस्मिंश्चिदेव सदृशे संशयं करोति । नह्यात्मन्यहं देवदत्तो नवेति कस्यचित् संशयो भवति । सामान्यतः सर्ववैलक्षण्ये ज्ञात एव घटत्वादिज्ञानम् । अतो नान्योन्याश्रयता ।**

**(त.मं.)**अज्ञाते च घटस्य सर्वतो वैलक्षण्ये आत्मनोऽपि सर्वान्तर्भूतत्वादात्मवैलक्षण्यस्य चाज्ञात-त्वादात्मन्यपि अहं घटो वा न वेति संशयः स्यात् । स्वरूपदर्शन एव सर्वतो वैलक्षण्यं गृह्यते चेत् स्थाणुस्वरूपं दृष्टवतः कथं स्थाणुर्वा पुरुषो वेति संशयः स्यादित्यत आह- **ज्ञात्वैवेति ॥** सादृश्यस्य कुत्रचित् संशयहेतुत्वे सत्यपि साक्षिणि तथा न स्यादित्याह- **नह्यात्मनीति ॥**

**टीका -** अथ यो भेदमङ्गीकृत्य तस्य धर्मिस्वरूपत्वे प्रमाणं जिज्ञासते तं प्रत्याह- **यदीति ॥** अत्रापि संशयादिस्थलव्यावृत्तये प्राय इत्युक्तम् । भेदस्य धर्मिस्वरूपत्वे हि तद्दर्शन एव प्रतिभासो युज्यते । यदिच भेदो धर्मिस्वरूपादत्यन्तं भिन्नः स्यात्तदा पटदर्शने घट इव तस्य सर्वतो व्यावृत्तिर्न प्रतीयेत नियामकाभावात् । ततः किमित्यत आह- **अज्ञाते चेति ॥** आत्मदर्शनेन तस्य घटादिसर्वव्यावृत्तावज्ञातायामात्मविषये 'किमुपलभ्यमानोऽहं वा घटो वा' इति संशयो 'घट एव' इति विपर्ययो वा स्यात्, समानधर्मादेः सद्भावात् प्रतिबन्धकस्य च व्यावृत्तिज्ञानस्याभावात्। अस्तु तथा संशयादिकमिति चेन्न । अप्रामाणिकाङ्गीकारस्यानुचितत्वादित्याशयवानाह- **नहीति ॥**

इदमुक्तं भवति। अस्ति तावद्भेदः। तस्य च द्वय्येव गतिः। धर्मिस्वरूपत्वं वा ततो भिन्नत्वं वेति। तत्र भेदपक्षस्य सर्वत्र संशयादिप्रसङ्गेनानुपपन्नत्वात् परिशेषात् स्वरूपत्वमेव सिद्ध्यति। नच वाच्यं धर्मिप्रतीतावप्रतीतोऽपि भेदः पश्चात् प्रत्येष्यते, स च प्रसक्तमपि संशयादिकं निरोत्स्यतीति, पश्चाद्धि, भेदोऽस्यास्मादिति प्रत्येतव्यः । नच प्राग्भेदानवगतावखण्डे वस्तुनि अस्यास्मादिति विभागेनानुवादो घटते। अतो धर्मिप्रतीतावेव भेदो न प्रतीयते चेत् न प्रतीयेतैव कदाऽपीति संशयादिप्रसङ्गो दुर्वार एव । अथाऽपातजायां निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासात् न संशयाद्यवकाश इति चेन्न । तस्य भेदस्य एतदीयतयाऽनवगतस्य एतद्विषयसंशयादिप्रतिबन्धकत्वानुपपत्तेः । अन्यथा सर्वत्र संशयाद्यनुदयप्रसङ्गादिति ॥

ननु यदि भेदो धर्मिस्वरूपं स्यात् तर्हि तत्प्रतीतावेव प्रतीयेत । नचैवम् । तथा सति संशयाद्यभाव-प्रसङ्गात् ।

अस्ति च संशयादिकं प्रमाणसिद्धमिति न धर्मिप्रतीतौ भेदप्रतीतिः। तत्कथं तस्य तत्स्वरूपत्वमित्यत आह- **ज्ञात्वैवेति ॥**

अयमभिप्रायः- एक एव खल्वेकस्य वस्तुनो भेदोऽनेकत्वे प्रमाणाभावात्। स च वस्तुप्रतीतौ प्रतीयत एव किन्तु तस्य घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्ता धर्माः। तत्र भेदनिष्ठो यत्प्रतियोगिकत्वरूपो धर्मः सादृश्यादिवशान्न प्रतीयते तत्र संशयादिकमुत्पद्यते, नतु तत्रापि भेदस्याप्रतीतिः। अतः संशयादेरन्यथोपपत्तेर्न तदर्थं धर्मिप्रतीतौ भेदाप्रतीतिरङ्गीकार्या, यया भेदस्यास्वरूपत्वं भवेदिति।

संशयादिस्थलेऽपि सर्वतो भेदः प्रतीयत एवेत्युक्तम्, तत्कुत इति चेन्न। भेदस्य सर्वथा-प्रतीतावात्मनि प्रतीयमानः अहं किं देवदत्तोऽथवा घट इत्यादिसंशयो घट एवेति विपर्ययो वा स्यात्, नैवमस्तीत्याह- **नहीति ॥** न वेत्यस्य घटो वेत्यर्थः।

ननु घटादौ घटत्वाद्यसाधारणधर्मं दृष्टवतस्तमात्मन्यपश्यतः संशयाद्यनुत्पत्तेर्न तदर्थं सर्वतो व्यावृत्तिप्रतीतिः कल्पनीया। किञ्च सर्वाप्रतीतौ सर्वतो व्यावृत्तेः प्रत्येतुमशक्यत्वात्, सर्वप्रतीतौ सर्वेषां सर्वज्ञता चाऽपद्यत इत्यत आह- **सामान्यत इति ॥** घटत्वादिज्ञानम् असाधारणतयेति शेषः। घटत्वाद्यसाधारणधर्मज्ञानेन संशयाद्यनुत्पत्तिमभिलषताऽपि प्रथमं सर्वव्यावृत्तिज्ञानमेष्टव्य-मेव। तेन विना घटत्वादेरसाधारणतया ज्ञानासम्भवात्। नहि धर्मिणामविविक्तत्वे धर्मस्यासाधारण्यं भवति। नच सर्वज्ञतापातो दोषः। सामान्यतः सर्वव्यावृत्तिज्ञानस्योच्यमानत्वात् सामान्यतः सर्वज्ञानस्य च प्राणभृन्मात्रवृत्तित्वात्। नच सर्वात्मकमिदं किन्तु स्वयमेवेति धर्मिस्वरूपेण प्रतीयमानस्य भेदस्य सामान्यतः सर्वप्रतियोगिकत्वं स्मर्यमाणकतिपयविशेषप्रतियोगिकत्वं ह्यनुभूयते। तदेवं भेदस्य धर्मिप्रतीतावेव प्रतीतिसम्भवाद्युक्तं तत्स्वरूपत्वम्।

ननु भेदस्य किं केवलस्य धर्मिस्वरूपत्वम् उत प्रतियोगिघटितस्य। नाऽद्यः। कदापि केवलस्य तस्याप्रतिभासात्। द्वितीये प्रतियोगिनोऽपि धर्मिस्वरूपत्वापत्त्या सर्वाद्वैतप्रसङ्ग इति। मैवम्। प्रतियोगिनो निरूपकत्वेन बहिरङ्गत्वात्। कुत्र चेदमुपलब्धं येन निरूपितस्य यद्भवति तत्तन्निरूपक-स्यापि भवतीति। लम्बकर्णमानयेत्यादाविति चेन्न। चित्रगुमानयेत्यादौ किं तदभावोऽपि नोप-लब्धः। ततः स्वदृष्टिपक्षपातमपहाय लौकिकीं दृष्टिमाश्रित्य भेदः कां रीतिमवलम्बतामिति विचारे, यदि प्रतीत्यनुसरणं तदा चित्रगुन्यायो भवति। प्रतीत्यतिक्रमे त्वापादनमप्यशक्यमिति।

ननु विदारणात्मनो भेदस्य पटस्वरूपत्वे तस्यापि विदारणं स्यात्। तथा तदवयवानामपीति सर्वशून्यतापत्तिरिति। मैवम्। न हि भेदो विदारकः किन्तु विदारणम्। विदारकत्वेऽपि प्रतियोगिनो धर्मिणं विदारयेन्नतु स्वत एव। प्रतियोगिनिरूप्यत्वं च स्वरूपस्यापि भेदस्योपपादितम्। अङ्गीकृत्य चेदमुक्तम्। वस्तुतस्तु न भेदो विदारणात्मा किन्त्वन्योन्याभाव एवेति। तथाप्यनेकत्वैकार्थ-समवायिनो भेदस्य पटस्वरूपत्वे पटस्याप्यनेकत्वं स्यात्। तथा तदवयवानामपीति तद्विरुद्धमेकत्वं कुत्रापि न स्यात्। एकत्वाभावेऽनेकत्वमपि न भवेत्। तथाच सङ्ख्यारहितस्य द्रव्यस्य शून्यत्वापत्ति-रिति। मैवम्। एवं हि पटोऽप्यनेकत्वं स्यान्न त्वनेकः। अनेकत्वेऽपि कुतो नैकत्वम्? स्वस्मिन्नेकोऽ-प्यन्येन सहितोऽनेक इति विरोधाभावात्। अनेकत्वबलेनैकत्वाभावमुक्त्वा पुनस्तेनानेकत्वाभावं वदतः कुतो न पूर्वोत्तरविरोधः। नह्यत्र काऽप्यस्मद्रीतिरस्तीत्युक्तं येन परीत्या परस्याऽपादनमिति निस्तारः।

एवं बाधकाभावात् साधकसद्भावाच्च भेदस्य धर्मिस्वरूपत्वान्न तत्प्रतीतावन्योन्याश्रयत्व-मित्युपसंहरति- **अत**

**इति ॥**

**(र.टि.)** ननु 'यदि न स्वरूपं भेदः' इत्यनेन भेदस्य धर्मिस्वरूपत्वे किं प्रमाणमुपन्यस्तमित्यत आह- **इदमुक्तं भवतीति ॥** भेदो धर्मिस्वरूपं धर्मिणा सहाऽनुपपन्नभेदत्वाद्धर्मिवदिति परिशेषानुमानप्रयोगो द्रष्टव्यः । **स चेति ॥** प्रत्येष्यमाणो भेद इत्यर्थः । निश्चयवन्निश्चयसामग्र्यपि संशयादिप्रतिबन्धिकेति भावः । तथा च धर्मिप्रतीतावपि भेदाप्रतीतौ उक्तबाधकाभावेन धर्मिणा सह भेदोपपत्तेरनुपपद्यमानभेदत्वमसिद्धमिति भावः । **अथाऽपातजायामिति ॥** तथा च भेदस्य धर्मिणा सह भेदेऽप्येतादृशप्रतीत्यैवोक्तबाधकपरिहारसम्भवेना-नुपपद्यमानभेदत्वमसिद्धमिति भावः । **अनेकत्वे प्रमाणाभावादिति ॥** न च, घटनिष्ठो भेदोऽनेकः पटाद्यनेक-निरूप्यत्वाद्भूतलनिष्ठघटपटाद्यभाववदिति अनुमानमत्र मानमिति वाच्यम् । अनेकविषयादिनिरूप्ये समूहा-लम्बनादौ व्यभिचारात् । अभावत्वेन हेतुविशेषणे चैकघटनिरूप्यप्रागभावप्रध्वंसादावनेकत्वसत्त्वेऽप्यनेक-निरूप्यत्वाभावेनाप्रयोजकत्वादिति भावः । 'घटत्वादिज्ञानम्' इत्युत्तरवाक्यानुकूल्याय 'न वा' इत्यस्यार्थमाह- **घटो वेत्यर्थ इति ॥** ननु सामान्यतः सर्ववैलक्षण्यसद्भाव एव किं प्रमाणं येन सामान्यतः सर्वज्ञानस्य प्राणभृन्मात्रवृत्तित्वमङ्गीकर्तव्यमित्यत आह- **न सर्वात्मकमिति ॥ प्रतियोगिन इति ॥** न हि प्रतियोगिनो **(र.टि.)** भेदे विशेषणत्वं येन विशिष्टस्य धर्मिस्वरूपत्वे विशेषणस्यापि तत्स्यात् । किन्तूपलक्षणत्वेन निरूपकत्व-मेव । अतो बहिरङ्गत्वान्न धर्मिस्वरूपत्वमित्यर्थः । ननूपलक्षणत्वपक्षेऽपि निरूप्यस्य धर्मिस्वरूपत्वे निरूपकस्यापि तत्स्यादित्यापाद्यत इत्यत आह- **कुत्र चेदमिति ॥ आपादनमप्यशक्यमिति ॥** प्रतीत्यतिक्रमे आपाद्या-पादकयोर्व्याप्तिप्रतीतेरपि प्रतीतित्वादविशेषादतिक्रमे मूलशैथिल्यादापादनमप्यशक्यमित्यर्थः ।

॥ **किन्तु विदारणमिति ॥** तथा च पटो विदारणं स्यात् । न च पटस्य विदारणत्वं वृत्तिविरोधादिति भावः। **धर्मिणं विदारयेदिति ॥** विशेषबलाद्भेदस्य धर्मित्वमभ्युपेत्येदमुक्तम् । वस्तुतो धर्मिस्वरूपत्वेन धर्मिणो विदार-णात्मकत्वेन स्वसम्बन्ध्यर्थविदारकत्वमेव स्यान्न तु स्वविदारकत्वमिति द्रष्टव्यम् । ननु विदारकमपि लवित्रादि स्वसम्बद्धं स्वसम्बन्धादेव विदारयति । धर्मिस्वरूपत्वे भेदस्य प्रतियोगिसम्बन्धाभावात्कथं ततो धर्मिणं विदार-येदित्यत आह- **प्रतियोगिनिरूप्यत्वं चेति ॥ पटोऽप्यनेकत्वं स्यादिति ॥** अनेकस्य भावो धर्मोऽनेक-त्वम् । तथा चानेकत्वसमानाधिकरणः स्यादित्यर्थः । यद्वा 'अनेकत्वैकार्थसमवायिनः' इत्येतदनेकत्वाभिन्नस्येति व्याख्येयम् । अथ वा अनेकत्वभेदयोरेककार्यकारित्वेनाभेदोपचारादेवमुक्तमिति द्रष्टव्यम् । **इत्युक्तमिति ॥** 'स्वस्मिन्नेकः' इत्यादिना एकत्वानेकत्वयोर्विरोधो नास्तीत्युक्तमित्यर्थः ।

**(रा.टि.)** स्वरूपत्वपक्षघटनायां सत्यां विपक्षे बाधकं वाच्यमित्यतो 'भेदस्तु स्वरूपदर्शन एव सिद्धः' इत्यादिना प्रागुक्तप्रत्यक्षसिद्धत्वरूपघटनां तावदनुवदति- **भेदस्येति ॥** हिशब्देनाविगानं सूच्यते । मूलार्थमाह- **यदि चेति ॥ नियामकेति ॥** धर्मिस्वरूपत्वरूपनियामकस्याभावादित्यर्थः। ननु सामग्र्यभावाद्वा प्रतिबन्धकभावाद्वा न संशयादिरित्यत आह- **समानेति ॥** ननु प्रमाणं जिज्ञासमानं प्रति यदीत्यादिमूलेन किं प्रमाणमुक्तमित्यतः परिशेष उक्त इति भावेनाऽह- **इदमुक्तमिति ॥** भेदस्य धर्मितो भिन्नत्वपक्षे अनुपपत्तिर्नास्ति येन परिशेषावतार इति भावेन तैत्तिरीयभाष्योक्तमाशङ्कते- **नच वाच्यमिति ॥** कुतो न वाच्यमित्यत आह- **पश्चाद्धीति ॥ अखण्ड इति ॥** भेदहीन इत्यर्थः । **निर्विकल्पिकायामिति ॥** धर्मिप्रतियोगिसम्बन्धितया भेदमविषयी-कुर्वन्त्यामित्यर्थः। **अन्यथेति ॥** तदीयत्वेन भेदस्याप्रतीतावपि स्वरूपप्रतीतिमात्रेण संशयविरोधित्वे सर्वत्राऽपातप्रतीतौ भेदप्रतीतेर्भावात् संशयादिः क्वापि न स्यादित्यर्थः । तावतोक्तशङ्कानिरासस्यास्पष्टत्वादाह- **अयमभिप्राय इति ॥ नतु तत्रेति ॥** संशयादिस्थल इत्यर्थः । **ययेति ॥** भेदाप्रतीत्येत्यर्थः । शङ्कते- **संशया-दीति ॥** संशयाद्यभावोऽन्यथाऽप्युपपन्नो न भेदप्रतीत्येकाधीन इति शङ्कते- **ननु घटादाविति ॥** धर्मिप्रतीतावेव सर्वभेदप्रतीतौ बाधकं चाऽह- **किञ्चेति ॥** प्रागुक्तबाधकमनूद्य निराह- **नच सर्वज्ञतापातो दोष इति ॥ प्राणभृन्मात्रेति ॥**

'सर्वं सामान्यतो यस्मात् सर्वैरेवानुभूयते ।
तस्माद्व्यावृत्तता सर्वैस्सर्वस्मादनुभूयते ॥'

इत्यनुव्याख्यानोक्तेरिति भावः । **सामान्यतस्सर्वप्रतियोगिकत्वमिति ॥** सर्वज्ञानस्य साक्षिरूपत्वेन साक्ष्युपनीतं **(रा.टि.)** सर्वं धर्मिस्वरूपभूतभेदविषयकचाक्षुषादिज्ञाने भासत इति न तत्प्रतियोगिकत्वम् । तथा प्रत्यक्षादिनाऽनु-भूतकतिपयपदार्थानुभवजन्यस्मृत्युपनीतकतिपयपदार्थाश्च तादृशभेदज्ञाने भासन्त इति कतिपयविशेषप्रतियोगि-कत्वं चानुभूयत इत्यर्थः । स्मर्यमाणेति स्मृतेरुपनायकत्वोक्तिः पररीत्यैवेति ज्ञातव्यम् । सिद्धान्ते तु विशेषगोचरा-नुभवजन्यसंस्काराहितशक्तिकेन

चक्षुरादिनैव विशेषप्रतियोगिकत्वज्ञानमिति ध्येयम्। अत एव वक्ष्यति 'संस्कार-सहकृतेन्द्रिय' इत्यादि। भेदनिरूपकस्य प्रतियोगिनो घटादेर्विशेषणत्वं मत्वा शङ्कते- **ननु भेदस्येति ॥** उपलक्षणतामुपेत्य परिहरति- **मैवमित्यादिना ॥** यादृशतादृशं वस्तु स्वनिरूपकं तदवश्यं निरूप्यसमानयोग-क्षेममेवेति वदन्तं प्रत्याह- **कुत्र चेदमिति ॥** इतीदमिति इतिशब्दस्यान्वयः । **इत्यादाविति ॥** देवदत्तस्याऽनयने तद्व्यावर्तकीभूतलम्बमानकर्णयोरपि आनयनक्रियान्वयदर्शनादित्यर्थः । **चित्रगुमानयेत्यादाविति ॥** चित्राणां गवां देवदत्तव्यावर्तकानामानयनान्वयादर्शनादित्यर्थः । उभयथा दृष्टावपि प्रकृते भवदुक्तमेव ग्राह्यमिति कुत इत्यत आह- **तत इति ॥** द्वेधा दर्शनादित्यर्थः। इति विचार इत्यन्वयः। **अशक्यमिति ॥** लम्बकर्णमानयेत्यादौ दर्शनानुरोधेनैवाऽपादनीयत्वात्तदतिक्रमे च कथमापादनम्? व्याप्तिहीनतया तर्कस्याभासतापत्तेरिति भावः ।

'भिदिर् विदारणे' इत्यतः करणे घञ्प्रत्यये 'पुगन्त' इति गुणे भेद इति रूपमुपेत्य शङ्कते- **ननु विदार-णेति ॥ विदारणं स्यादिति ॥** द्वैधीभावः स्यादित्यर्थः। **तथेति ॥** भेदस्य तदवयवस्वरूपत्व इत्यापादकानु-षङ्गः। **विदारक इति ॥** भिद्यतेऽनेनेति भेद इति करणे निष्पन्नोऽयं न भवतीत्यर्थः। **किन्तु विदारणमिति ॥** तथाच घटो विदारणरूप एव स्यात् कुतो द्वैधीभावापत्तिः। तथात्वे विदारणात्मनो भेदस्यापि द्वेधता स्यादिति भावः। करणे घञन्तत्वमुपेत्याप्याह- **विदारकत्वेऽपीति ॥** प्रतियोगिन इति पञ्चमी। **स्वत एवेति ॥** स्वस्मादेव स्वात्मानमित्यर्थः।

'भेदस्य च स्वरूपत्वे ये वदन्ति च शून्यताम्।
अद्भुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते।
प्रतियोगिनो हि भेदोऽयं नतु स्वस्मात्कथञ्चन ॥'

इति वैशेषिकनयानुव्याख्यानोक्तेरिति भावः। नन्वन्यानिरूप्यघटादिस्वरूपभेदस्य प्रतियोगिनिरूप्यत्वं वा कथं येन प्रतियोगिनो धर्मिणो विदारको भेदो धर्मिस्वरूपं स्यादित्यत आह- **प्रतियोगीति ॥** उक्तं हि सुधायाम्- 'भेदो वस्तुस्वरूपं चेत्प्रतियोगिनिरूप्य एव न स्यात्' इत्यादि। **उपपादितमिति ॥** 'ऐक्यवत् स्वरूपस्यैव तथात्वात्' इत्यत्रेति भावः। **अन्योन्याभाव एवेति ॥** तस्य च धर्मिस्वरूपत्वमविरुद्धं सर्ववस्तूनां भावाभाव-स्वरूपत्वात्। उपपादितमेतद् दृश्यत्वाधिकरणसुधादाविति भावः। **अनेकत्वेति ॥** अनेकत्वेन सहैकार्थसमवायिन इत्यर्थः । अनेकत्वसमानाधिकरणस्येति यावत्। **एवं हीति ॥** अनेकत्वैकाश्रयस्य भेदस्य पटस्वरूपत्व इत्यर्थः। **पुनस्तेनेति ॥** एकत्वाभावेनेत्यर्थः। **इत्युक्तमिति ॥** अन्योन्याश्रयतया भेदस्यायुक्तिरित्यन्तवाक्यव्याख्याना-वसरे 'भेदो न युगधर्मः' इत्युक्त्याऽनेकत्वसमानाश्रयो न भवति किन्त्वेकत्वैकार्थसमवाय्येवेति प्राप्तेरस्मद्रीतिरत्र **(रा.टि.)** त्वदुक्तानेकत्वापादने नास्तीत्युक्तप्रायमिति भावः । **निस्तार इति ॥** पूर्वोत्तरविरोधस्येति योज्यम्। **बाधकेति ॥** 'धर्मिप्रतीतावप्रतीतत्वात्' इति मूलकृदाशङ्कितबाधकानां विदारणाद्यापत्त्या घटादेश्शून्यतापत्तिरूपटीकाकृदाशङ्कितबाधकस्य चाभावात्। 'प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते' इत्युक्तप्रत्यक्षरूपसाधकस्य 'यदि न स्वरूपं भेदः' इत्यत्रोक्तपरिशेषरूपसाधकस्य च सद्भावाच्च। भेदस्य धर्मिस्वरूपत्वादित्यतश्शब्दार्थः।

**(श्री.टि.)यः** तार्किकः। ननु यर्हि सर्वतो वैलक्षण्यं ज्ञायते तर्हि संशयमात्रोच्छेदप्रसङ्ग इति चेत्तत्राऽह- **अत्रा-पीति ॥** 'प्रायः सर्वतो विलक्षणं हि' इति वाक्य इवेत्यर्थः। **नियामकाभावादिति ॥** धर्म्यभेदपक्षे तु तत्स्वरूप-त्वमेव तद्दर्शन एव प्रतिभासे नियामकमस्तीत्याशयः। **ततः किमिति ॥** सर्वतो वैलक्षण्यज्ञानानङ्गीकारे किं तत्साध्यमनिष्टमित्यर्थः। सर्वतो वैलक्षण्यज्ञानाभावस्य मयाऽङ्गीक्रियमाणत्वादिष्टापादनमिति भावः। **आत्म-विषये** आत्मस्वरूपे धर्मिणि। **समानधर्मेति ॥** धर्मिकोट्यालिङ्गितद्रव्यत्वादिरूपसमानधर्मेत्यर्थः। समान-धर्मादेस्सद्भावादिति पाठे आदिपदेन विप्रतिपत्तिग्रहणम्। भूतचतुष्टयात्मकजडदेहातिरिक्तात्माभाववादिनां चार्वाकाणां सद्भावादिति भाव इत्याहुः। ननु न समानधर्मदर्शनमात्रस्य संशयहेतुत्वम्। तथात्वे सर्वत्र संशय-प्रसङ्गात्। किन्तु विशेषादर्शनसहकृतस्यैव। प्रकृते च संशयप्रतिबन्धकीभूतस्य सर्वव्यावृत्तिरूपविशेषदर्शनस्यैव सद्भावान्न संशय इत्यत आह- **प्रतिबन्धकस्य चेति ॥** व्यावृत्तिज्ञानाभावस्य त्वयैवोच्यमानत्वादिति भावः। ननु 'यदि न स्वरूपं भेदः' इत्यादिना भेदस्य धर्मिस्वरूपत्वे किं प्रमाणमुपन्यस्तमित्यत आह- **इदमुक्तं भवतीति ॥ भेदपक्षस्य** धर्मिस्वरूपाद्भिन्नत्वपक्षस्य। **सर्वत्र** आत्मादिविषये। **परिशेषादिति ॥** भेदो धर्मिस्वरूपं धर्मिणा सहानुपपन्नभेदवत्त्वाद् धर्मिस्वरूपवदिति परिशेषानुमानप्रयोगो द्रष्टव्यः। ननु धर्मिप्रतीतौ भेदो न प्रतीयते न च सर्वत्र संशयापत्तिः। भेदस्तावदादौ धर्मिस्वरूपदर्शनानन्तरं पश्चात्प्रत्येष्यते। स च प्रत्येष्यमाणो भेद इदानीं प्रसक्तमपि संशयादिकं निरोत्स्यति। 'यद्धीर्यत्र प्रतिबन्धिका तत्सामग्र्यपि तत्र प्रतिबन्धिका' इति न्यायेन भेददर्शनस्य संशयप्रतिबन्धकत्वेन तत्सामग्र्या धर्मिप्रतीतिरूपाया अपि तत्र प्रतिबन्धकत्वात्। तथा च धर्मिप्रतीतावपि भेदाप्रतीतौ

सर्वत्र संशयादिप्रसङ्गरूपोक्तसाधकाभावेन धर्मिणा सह भेदस्य भेदोपपत्तेर्धर्मिणा सहानुपपद्यमानभेदत्वरूपः परिशेषहेतुरसिद्ध इत्याशङ्क्य निराकरोति- **न च वाच्यमिति ॥** प्राग् धर्मिप्रतीति-समये। **अखण्डे** निर्भेदे। **अनुवाद इति ॥ पश्चाद्** भेदप्रतीतिकाल इत्यर्थः। तथा च पूर्वं धर्मिप्रतीतिसमय एव भेदप्रतीतिरङ्गीकार्येति भावः। **संशयादीति ॥** 'आत्मनि घटः' इत्यादिनोक्तसंशयादिप्रसङ्ग इत्यर्थः। तथा च धर्मिप्रतीतावपि भेदाप्रतीतौ संशयादिप्रसङ्गरूपोक्तबाधकसद्भावेनैव धर्मिणा सह भेदस्य भेदानुपपत्तेर्धर्मिस्वरूपत्व-साधकस्य धर्मिणा सहानुपपद्यमानभेदवत्त्वरूपपरिशेषहेतोर्नासिद्धिरिति भावः।

ननु धर्मिप्रतीतिकाले अजागलस्तनायिततया यथा कथञ्चिद्भेदोऽपि प्रतीयत एव अतो न संशयाद्यवकाश इत्याशङ्कते- **अथेति ॥ आपातजायामिति ॥** प्रथमाक्षसन्निकर्षजायां किञ्चिदिदमित्येवंरूपायामित्यर्थः। **(श्री.टि.)** भेदज्ञानमात्रं न संशयविरोधि, किन्तु विशेषणविशेष्यभावापन्नतया तदीयत्वेन तज्ज्ञानम्। न हि निर्विकल्पकज्ञाने भेदस्य तदीयत्वं भासते। अतो दुर्वारः संशयादिप्रसङ्ग इत्याह- **तस्येति ॥ एतद्विषयेति ॥** एतद्धर्मिकेत्यर्थः। **अन्यथेति ॥** तदीयतयाऽनवगतस्यापि तद्धर्मिकसंशयादिप्रतिबन्धकत्व इत्यर्थः। **सर्व-त्रेति ॥** स्थाणुर्वा पुरुषो वेत्यादिसम्प्रतिपन्नस्थलेऽपीत्यर्थः। तत्राप्यापातजायां संविदि भेदावभासस्य सत्त्वादिति भावः। असन्देहादित्युक्तां युक्तिमाशङ्कते- **ननु यदीति ॥ तथा सतीति ॥** धर्मिप्रतीतावेव प्रतीयते चेदि-त्यर्थः। एक एव कुत इत्यत आह- **अनेकत्व इति ॥** भेदो नामान्योन्याभावः। अन्योन्याभावभेदे चाधिकरणभेदः प्रयोजकस्तस्यात्राभावादिति भावः। न च प्रतियोगिभेदेनाभावभेदादन्योन्याभावप्रतियोगिनां चानेकत्वात्तस्याप्य-नेकत्वमिति वाच्यम्। तथात्व एकघटप्रतियोगिकानां प्रागभावादिचतुर्णामभावानां भेदो न स्यात्। न च, घटनिष्ठो भेदोऽनेकः अनेकनिरूप्यत्वाद् भूतलनिष्ठघटपटाद्यभाववत् इत्यनुमानमत्र मानमिति वाच्यम्। अनेक-विषयनिरूप्ये समूहालम्बनज्ञानेऽनेकतन्तुपटादिसम्बन्धिनिरूप्ये समवायादौ च व्यभिचारात्। अभावत्वे सत्यनेक-निरूप्यत्वादिति हेतुविशेषणे चैकघटनिरूप्ये प्रागभावध्वंसादावनेकत्वरूपसाध्यस्य सत्त्वेऽपि अनेकनिरूप्यत्वा-भावात् तस्मिन् सत्यसम्भव इति न्यायेनाप्रयोजकत्वादित्याशयः। **प्रतीयत एवेति ॥** अनेकत्व एव हि न प्रतीयेतेति भावः। तर्हि संशयाद्यनुपपत्तिरित्याशङ्कते- **किन्त्विति ॥** उत्तरमाह- **तस्येति ॥ अन्यथोपपत्ते-रिति ॥** सादृश्यादिवशात् पदार्थविशेषप्रतियोगिकत्वाप्रतिभासनिमित्तेनैवोपपत्तेरित्यर्थः। **ययेति ॥** धर्मिप्रतीतौ भेदाप्रतीत्येत्यर्थः। **आत्मनि** आत्मरूपे धर्मिणि। घटत्वादिज्ञानमित्युत्तरवाक्यानुकूल्याय न वेत्यस्यार्थमाह- **घटो वेत्यर्थ इति ॥ एष्टव्यमेवेति ॥** धर्मिणामिति शेषः। **तेन विनेति ॥** धर्मिणां सर्वतो व्यावृत्तिज्ञानं विनेत्यर्थः। ननु धर्माणामसाधारण्यज्ञानार्थं धर्मिणां व्यावृत्तिज्ञानं कुत एष्टव्यमित्यत आह- **न हीति ॥ अविविक्तत्वे** अव्यावृत्तत्वे। **असाधारण्यमिति ॥** तदितरावृत्तित्वे सति तद्वृत्तित्वरूपासाधारणधर्मत्वमि-त्यर्थः। तथा चान्यत्र तदितरत्वं ज्ञातव्यम्। तत्प्रतियोगिकभेदस्यात्राज्ञाने तदितरत्वस्यैव अन्यत्र ज्ञातुमशक्य-त्वादिति भावः। **सर्वज्ञानस्य** साक्षिरूपस्य।

ननु सामान्यतः सर्ववैलक्षण्यज्ञानसद्भाव एव किं प्रमाणं येन सामान्यतः सर्वज्ञानस्य प्राणभृन्मात्रवृत्ति-त्वमङ्गीकर्तव्यमित्यत आह- **न सर्वात्मकमिति ॥ स्वयमेवेति ॥** सर्वासङ्कीर्णमित्यर्थः। सर्वव्यावृत्तमेवेति यावत्। भेदस्य धर्मिस्वरूपत्वे सर्वाद्वैतप्रसङ्ग इत्युक्तयुक्तिं स्वयमाशङ्क्य निराकरोति- **नन्वित्यादिना ॥ केवलस्येति ॥** भेद इत्येवाप्रतीतेरिति भावः। **सर्वाद्वैतप्रसङ्ग इति ॥** सर्वप्रतियोगिकभेदस्य धर्मिस्वरूपत्वे 'विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवति' इति न्यायेन प्रतियोगितया विशेषणीभूतस्य सर्वस्यापि धर्मिस्वरूप-त्वापत्त्या सर्वाद्वैतप्रसङ्ग इत्यर्थः। **प्रतियोगिन इति ॥** न हि प्रतियोगिनो भेदे विशेषणत्वं येन विशिष्टस्य धर्मिस्वरूपत्वे विशेषणस्यापि तत्स्यात्, किन्तूपलक्षणत्वेन निरूपकत्वरूपं बहिरङ्गत्वमेव। अतो विशेषणत्वा-भावान्नोक्तन्यायेन विशेषणीभूतस्य सर्वस्य धर्मिस्वरूपत्वमित्यर्थः। ननु प्रतियोगिनो निरूपकतयोपलक्षण-**(श्री.टि.)** त्वपक्षेऽपि 'यन्निरूप्यस्य यद् भवति तत्तन्निरूपकस्यापि भवति' इति न्यायेन प्रतियोगितया सर्व-निरूप्यस्य भेदस्य धर्मिस्वरूपत्वे निरूपकस्यापि सर्वस्य धर्मिस्वरूपत्वमापाद्यत इति पुनस्सर्वाद्वैतप्रसङ्ग इत्यत आह- **कुत्र चेदमिति ॥ स्वदृष्टिपक्षपातमिति ॥** सर्वाद्वैतापादनाय लम्बकर्णन्यायस्यैव अनुसरणरूपमित्यर्थः। **लौकिकीं दृष्टिं** लौकिकं दृष्टान्तमिति यावत्। **रीतिः** प्रकारः। लम्बकर्णमानयेति न्यायेन प्रतियोगिघटितस्य धर्मिस्वरूपत्वमुत चित्रगुन्यायेन केवलस्यैवेति प्रकारद्वयमध्ये कं प्रकारमित्यर्थः। **प्रतीत्यनुसरणमिति ॥** लौकिकदृष्टान्तानुसरणमिति यावत्। ननु प्रतीत्यनुसरणमकृत्वा चित्रगुन्यायस्त्यज्यत इति चेत्तत्राऽह- **प्रतीत्यति-क्रमे त्विति ॥** 'येन निरूपितस्य यद्भवति तत्तन्निरूपकस्यापि भवति' इति व्याप्तिबलात्प्रकृते सर्वाद्वैतापादनं कर्तव्यम्। तत्रेयं व्याप्तिः कुत्रोपलब्धेति पृष्टे लम्बकर्णमानयेत्यादावविति लौकिकदृष्टान्तानुसरणं कर्तव्यमेव। तदतिक्रमे त्वापादने व्याप्तेर्ग्रहीतुमशक्यत्वेन तदसिद्ध्या तर्कस्य प्रशिथिलमूलत्वापत्तेस्सर्वाद्वैतापादन-मप्यशक्यमित्यर्थः। **विदारणात्मन इति ॥** 'भिदिर् विदारणे' इति धातोः

करणसाधनत्वमङ्गीकृत्य 'भिद्यते- विदीर्यते विभज्यतेऽनेन' इति व्युत्पत्त्या **विदारकत्वरूपस्य** विभागजनकत्वरूपस्येत्यर्थः । **तस्यापि** घटस्यापि **विदारणं** विभागः । **तदवयवानामपीति ।।** विभागजनकत्वरूपो भेदः स्वभाव इति तेष्वपि विदारणापत्त्या क्रमेण सर्वशून्यतापत्तिरित्यर्थः । भेदनं- विदारणं विभाग इति यावदिति भावसाधन एवायं भेदशब्दोऽङ्गीक्रियते न करणसाधन इत्याशयेनाऽह- **किन्तु विदारणमिति ।।** यथोक्तमनुव्याख्याने - 'विदारणार्थो धातुश्च विभागगुणवाचकः' इति । तथा च विभागरूपभेदस्य घटस्वरूपत्वे घटो विभागरूपं विदारणमेव स्यात् । न तु घटस्य विदारणम् । एवं च तस्यापि विदारणं स्यादित्याद्युक्तमयुक्तं स्ववृत्तिविरोधादिति भावः ।

भेदशब्दस्य करणसाधनत्वमङ्गीकृत्याप्याह- **विदारकत्वेऽपीति ।।** विभागजनकस्वभावत्वेऽपीत्यर्थः । **प्रतियोगिनो धर्मिणं विदारयेदिति ।।** भेदो हि यस्य यतस्तं ततो विदारयेन्न यं कमपि यतः कुतश्चित् । तथा च प्रतियोगिनः सकाशादेव च धर्मिणो भेदोऽङ्गीकृतो न तु स्वस्मादेवेति तमेव धर्मिणं ततः प्रतियोगिनः सकाशादेव विदारयेन्न तु स्वस्मादेवेत्यर्थः । यथोक्तमनुव्याख्याने-

'यतोऽन्यस्य प्रतियोगित्वमिष्यते ।
प्रतियोगिनो हि भेदोऽयं नतु स्वस्मात् कथञ्चन ।।' इति ।

अत्र विशेषबलाद्विभागजनकत्वस्वभावत्वरूपभेदस्य धर्मत्वमङ्गीकृत्य धर्मिणं विदारयेदित्युक्तम् । वस्तुतस्तु विभागजनकत्वस्वरूपस्य भेदस्य धर्मिस्वरूपत्वे धर्मिण एव स्वसम्बन्ध्यन्यपदार्थविदारकत्वं प्राप्तम् । न तु स्वविदारकत्वमिति द्रष्टव्यम् । ननु तथापि विदारकं लवित्रादि स्वसम्बद्धं केशादिकं स्वसम्बद्धात्प्रदेशाद्विदारयतीति दृष्टम् । विदारकस्वभावस्य भेदस्य धर्मिस्वरूपत्वे धर्मिणैव तादात्म्यरूपस्सम्बन्धः प्राप्तो न प्रतियोगिना । तथा च प्रतियोगिना सम्बन्धाभावात्कथं ततो धर्मिणं विदारयेदित्यत आह- **प्रतियोगिनिरूप्यत्वं चेति ।।** तथा च तन्निरूप्यत्वमेव प्रतियोगिना साकं भेदस्य सम्बन्ध इति भावः । **स्वरूपस्यापीति ।।** धर्मिस्वरूपस्यापीत्यर्थः। **(श्री.टि.) उपपादितमिति ।।** न च धर्मिप्रतियोग्यपेक्षया भेदस्यास्वरूपत्वम्, ऐक्यवत्स्वरूपस्यैव तथात्वादि-त्यनेनैक्यप्रतिबन्द्या सिद्धान्ते सविशेषाभेदाङ्गीकारेण चोपपादितमित्यर्थः । **अङ्गीकृत्य चेति ।।** विदारणशब्दो भावसाधनः करणसाधनश्चेति पक्षद्वये यत्समाधानमुक्तं तत् 'भिदिर् विदारणे' इति भिदधातोर्विदारणार्थत्व-मङ्गीकृत्यैवोक्तमित्यर्थः । तर्हि वस्तुतत्त्वं किमित्यत आह- **वस्तुतस्त्विति ।। विदारणात्मेति ।।** अत्रास्माकं विवक्षित इति शेषः । **अन्योन्याभाव एवेति ।।** इदमुक्तं भवति ।

'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः ।
प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ।।'

इति वचनाद् भिदिर्विभागवचनोऽन्यत्ववचनश्च । भिन्नो घट इत्युक्ते स्फुटित इति गम्यते । भिन्नं गगनं घटादित्युक्ते अन्यदिति विज्ञायते । तत्र विभागो विदारणात्मा नान्यत्वम् । अन्यत्वमेवात्र प्रकृतं न विभाग इत्यन्यतालक्षणस्य भेदस्य वस्तुस्वरूपत्वेऽस्माभिः कथिते विदारणप्रसङ्गेन शून्यतापादनमसङ्गतमेव, छलत्वादिति ।

ननु विभागस्यान्यत्वस्य च को विशेषो येनैवमुच्यत इति चेन्न । 'विदारणार्थो धातुश्च विभागगुणवाचकः' इत्यनुव्याख्याने गुणग्रहणेनैव परिहृतत्वात् । विभागो हि गुणतया वैशेषिकादिभिरुपपादितोऽन्यता चान्योन्याभाव इति भावाभावरूपतया स्फुटस्तयोर्भेदः । यस्तु मायावादी गुणादिप्रक्रियां नानुमन्यते स तु 'अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ तु तस्य च' इत्यनुव्याख्यानोक्तरीत्या बोधनीयः । तथा हि यदा मायावादी तत्त्व-वादिभिरस्माभिः पराजितः सन्निरुत्तरतया तूष्णीमास्ते तदा संयुक्तयोस्तदीययोरोष्ठयोर्विदारणलक्षणविभागा-भावेऽप्योष्ठौ भिन्नौ भवत एव । तथैव प्रतीतिरप्यस्त्येव । तथा च तत्र भिन्नावित्यस्य अन्योन्याभावलक्षण-भेदवन्तावित्येवार्थो वक्तव्यः । एवं च यदभावे यदस्ति तत्ततोऽन्यदिति प्रसिद्धमेव । अतो विभागादन्योन्याभाव-रूपो भेदोऽर्थान्तरमेवेति सुधोक्तरीत्यैवोपपादनं द्रष्टव्यम् । सर्वशून्यतापत्तिरित्युक्तं सर्वशून्यतापादनं च

'विभागेनाल्पतैव स्यात्कुत एव च शून्यता ।
न शून्यानां हि संयोगाद्भावो वस्तुन इष्यते ।।'

इत्यनुव्याख्यानोक्तरीत्या परिहर्तव्यम् । एकाभावादित्युक्तां युक्तिमाशङ्क्य निराकरोति- **तथापीत्यादिना ।। अनेकत्वं स्यादिति ।।** अनेकत्वाधारत्वं स्यान्न त्वेकत्वाधारतेत्यर्थः । **तदवयवानामपीति ।।** अनेकत्वैकार्थ-समवायिनो भेदस्य तत्स्वरूपत्वात्तेषामप्यनेकत्वाधारत्वं स्यादित्यर्थः । **न भवेदिति ।।** तस्य तत्समाहाररूपत्वात् तत्कार्यत्वाद्वेति भावः । **सङ्ख्यारहितस्येति ।।** एकत्वानेकत्वसङ्ख्यारहितस्येत्यर्थः । **शून्यत्वेति ।।** सङ्ख्यायाः सामान्यगुणत्वादिति भावः । **एवं हीति ।।**

अनेकत्वैकार्थसमवायिनो भेदस्य पटस्वरूपत्व इत्यर्थः । **अनेकत्वं स्यादिति ॥** अनेकस्य भावोऽनेकत्वं 'तस्य भावस्त्वतलौ' इति भावे त्वप्रत्ययविधानात् । तथा चानेकनिष्ठो धर्मस्स्यादित्यर्थः । **न त्वनेक इति ॥** अनेकत्वाधिकरणभूतो धर्मीत्यर्थः । भेदपटयोरभिन्नत्वेन यथा भेदो अनेकनिष्ठो धर्मस्तथा तदभिन्नः पटोऽप्यनेकतन्त्वादिनिष्ठधर्म एव स्यान्न त्वनेकत्वाधिकरणभूतो धर्मी। तथा **(श्री.टि.)** च पटस्याप्यनेकत्वं स्यादित्युक्तमनेकत्वाधारत्वापादनमसदिति भावः। अङ्गीकृत्याप्याह- **अनेक-त्वेऽपीति ॥** पटस्यानेकत्वाधारत्वेऽपीत्यर्थः । एकत्वम् एकत्वाधिकरणत्वम् । नन्वेकस्य नानेकत्वं विरोधादिति चेत्तत्राऽह- **स्वस्मिन्निति ॥ तेन** एकत्वाभावेन । नन्वेकत्वानेकत्वयोर्विरोधस्य भवद्भिरङ्गीकृतत्वेन परगीत्यैव परं प्रत्यापादनान्न मम पूर्वोत्तरविरोध इत्यत आह- **न ह्यत्रेति ॥** 'स्वस्मिन्नेकोऽन्येन सहितोऽनेक इति विरोधा-भावात्' इत्यनेनैकत्वानेकत्वयोरस्मन्मते विरोध एव नास्तीत्युक्तमित्यर्थः । यदुक्तं सङ्ख्यारहितस्य द्रव्यस्य शून्यता-पत्तिरिति तन्न । वैशेषिकाणां गुणादिपञ्चकवन्मायावादिनां ब्रह्मवदगुणस्यापि सत्त्वसम्भवेन सङ्ख्या-राहित्यस्य शून्यतानापादकत्वादित्यवधेयम् । **बाधकाभावादिति ॥** सापेक्षत्वादिति कारिकोक्तबाधकपञ्चका-भावादित्यर्थः। **साधकेति ॥** 'यदि न स्वरूपं भेदः' इत्यादिनोक्तपरिशेषानुमानरूपसाधकसद्भावाच्चेत्यर्थः ।

**(पां.टि.) नियामकेति ॥** प्रतीतिनियामकस्य तदभेदस्याभावादित्यर्थः । 'संशयः स्यात्' इत्युक्तं तत्कुत इत्यतस्तदभावः किं कारणाभावप्रयुक्त उत प्रतिबन्धकसद्भावप्रयुक्त इति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **समानधर्मादेरिति ॥** वस्तुत्वादिसाधारणधर्मादेरित्यर्थः। द्वितीयं दूषयति- **प्रतिबन्धकस्येति ॥** किमनेन धर्मिस्वरूपत्वे प्रमाणमुक्तं भवतीत्यत आह- **इदमुक्तं भवतीति ॥** करिष्यमाणानुमान आश्रयासिद्धिं परिहरति- **अस्ति तावदिति ॥** स्वरूपे प्रमाणस्योक्तत्वादिति भावः । **परिशेषादिति ॥** भेदो धर्मिस्वरूपं धर्मिणा सहानुपपन्नभेदत्वाद् धर्मिवदिति परिशेषादित्यर्थः । **स चेति ॥** प्रत्येष्यमाणो भेद इत्यर्थः। ततश्च 'यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्प्रतिबन्धिका' इति न्यायेन भेदज्ञानवत्तत्सामग्र्या अपि संशयप्रतिबन्धकत्वेन भेदज्ञानाभावेऽपि भेदज्ञानसामग्रीसद्भावेन तत एव संशयाभावोपपत्त्या भेदपक्षेऽप्यनुपपत्त्यभावात् परिशेषानुमाने हेत्वसिद्धिरिति भावः । धर्मिप्रतीत्यनन्तरं भेदप्रतीतेरेवासम्भवेन धर्मिज्ञानदशायां भेदप्रतीतिसामग्रीविरहेण तया संशयप्रतिबन्धानुपपत्त्या तदनुपपत्तेर्दुर्वारत्वेन न हेत्वसिद्धिरिति भावेन परिहरति- **पश्चाद्धीति ॥ अखण्डे** निर्भेद इत्यर्थः । अन्यथा स्वस्मिन्नपि स्वतो भेदग्रहप्रसङ्गादित्यर्थः । भेदस्य धर्मिस्वरूपत्वाभावेन तत्प्रतीतेरेव भेदप्रतीतित्वाभावेऽपि तत्प्रतीतिकालीनभेदविषयकनिर्विकल्पकाङ्गीकारात् तादृशभेदज्ञानस्यैव संशयादिप्रति-बन्धकत्वात् तत एव तदनुत्पत्तेर्न भेदपक्षस्यानुपपत्तिरिति उक्तहेतोरसिद्धिरेवेति शङ्कते- **अथेति ॥** भेदविषयक-निर्विकल्पकज्ञानस्यापि संशयादिप्रतिबन्धकत्वे तस्य संशयादिस्थलेऽपि विद्यमानत्वेन तत्रापि संशयाभावापत्त्या निर्विकल्पकस्य तस्य तत्प्रतिबन्धकत्वासम्भवेन सविकल्पकरूपस्यैव तस्य तत्प्रतिबन्धकत्वस्थित्या तस्य चोक्त-रीत्या धर्मिस्वरूपत्वाभावेऽसम्भवेन संशयादिप्रसङ्गस्य दुर्वारत्वान्नासिद्धिरित्याशयेन परिहरति- **न तस्येत्या-दिना ॥** 'प्रायः सर्वतो विलक्षणं हि' इत्यादिनोक्तस्य प्रतिपादनात् 'ज्ञात्वैव' इत्युत्तरग्रन्थस्य वैयर्थ्यमाशङ्क्य 'तत्रापि विशेषं वक्ष्यामः' इत्युक्तविशेषोपदर्शकत्वान्न तदिति भावेन पुनस्तदेव शङ्कते- **नन्विति ॥ प्रमाणा-भावादिति ॥** न च निरूपकानेकत्वमेव तत्र प्रमाणमिति वाच्यम् । अनेकविषयनिरूप्यस्येश्वरज्ञानस्य, अनेकद्वैतनिरूप्यस्याद्वैतस्य चैक्यदर्शनेन तत्र व्यभिचरिततया तस्य तत्रामानत्वात् । घटादिव्यावृत्तिज्ञानस्येव **(पां.टि.)** घटत्वाद्यसाधारणधर्मज्ञानस्यापि संशयादिप्रतिबन्धकत्वाङ्गीकारात् तन्मात्रेणापि संशयाद्यभावोपपत्तेर्न तदर्थतया व्यावृत्तिज्ञानस्याऽवश्यकत्वमित्यभिप्रेत्य शङ्कते- **नन्विति ॥**

ननु सामान्यतः सर्ववैलक्षण्यज्ञाने सिद्धे सामान्यतः सर्वज्ञानस्य प्राणभृन्मात्रवृत्तित्वं कल्पनीयम्। सामान्यतः सर्ववैलक्षण्यज्ञान एव किं प्रमाणमित्यत आह- **न सर्वात्मकमिति ॥ प्रतियोगिघटितस्येति ॥** प्रतियोगि-विशिष्टस्येत्यर्थः। **सर्वस्वरूपत्वापत्त्येति ॥** घटत्वविशिष्टस्य घटस्य ज्ञातत्वे घटत्वस्यापि ज्ञातताया दृष्टत्वेन, यद्विशिष्टस्य यस्य यद्वत्ति तद्विशेषणस्यापि भवतीति व्याप्तेरिति भावः । इष्टापत्तिं परिहरति- **सर्वाद्वैतेति ॥** भवेदेतदेवम्, यदि प्रतियोगिनो भेदं प्रति विशेषणत्वं स्यात् । न चैतदस्ति । किन्तूपलक्षणत्वेन निरूपकत्व-मेव। ततश्च बहिरङ्गत्वान्न स्वरूपत्वमिति न सर्वाद्वैतप्रसङ्ग इत्याशयेन परिहरति- **मैवमिति ॥** ननु प्रतियोगिनो विशेषणत्वाभावेऽपि निरूपकत्वात् प्रतियोगिनिरूपितस्य भेदस्य धर्मिस्वरूपत्वे प्रतियोगिनोऽपि तत् स्यात् । यन्निरूपितस्य यस्य यद्वत्ति तन्निरूपकस्य तद्वतीति व्याप्तेरित्यतो दृष्टान्ताभावेन व्याप्त्यसिद्धिमुपदर्शयति- **कुत्र चेति ॥** 'लम्बकर्णमानयेत्यादौ' इत्यादिपदेन 'नीलमानीयताम्' इत्यादेः परिग्रहः। 'चित्रगुमानयेत्यादौ' इत्यादिपदेन 'काशीवासी समागतः'

इत्यादेः परिग्रहः । **तदभाव इति ॥** निरूपितस्य क्रियान्वयेऽपि निरूपकस्य क्रियान्वयाभाव इत्यर्थः । ननु चित्रगुरित्यादौ पारमार्थिकीं दृष्टिमवलम्बमानस्य परिकरवतोऽपि क्रियान्वया-सिद्धेर्व्याप्यागमनान्न तत्र व्यभिचार इत्यतः, तर्हि लम्बकर्णमानयेत्यादावपि पारमार्थिकीं दृष्टिमवलम्बमानस्य परिकरवतः क्रियान्वयासिद्धेर्न तस्य व्याप्तिग्रहणस्थलत्वमिति नोक्तव्याप्तिसिद्धिः । न हि व्याप्तिग्रहणस्थले लौकिकी दृष्टिरेवानुसरणीया, व्यभिचारोदाहरणस्थले तु पारमार्थिकी दृष्टिरेवानुसरणीया इत्यत्र पक्षपातं विनाऽन्य-न्नियामकमस्तीत्याशयेनाऽह- **स्वदृष्टिपक्षपातमपहायेति ॥ अशक्यमिति ॥** व्याप्त्यसिद्ध्या मूलशैथिल्यात् प्रतियोगिनो धर्मिस्वरूपत्वापादनमशक्यमित्यर्थः ।

**॥ विदारणात्मनो भेदस्येति ॥** 'भिदिर् विदारणे' इति विदारणार्थकभिदिधातुनिष्पन्नभेदशब्दार्थत्वाद्भेदस्य विदारणात्मकत्वमित्यर्थः । अत्र भेदस्य विदारणत्वं नाम भिद्यतेऽनेनेति भेद इति करणसाधनतया विदारक-त्वमेवाभिप्रेतम् । अन्यथा उत्तरदूषणासङ्गतेरित्यवधेयम् । **तस्येति ॥** विदारकस्य लवित्रादेः स्वसम्बन्धि-वस्तुविदारकत्वदर्शनाद् विदारकस्य भेदस्य स्वसम्बन्धिधर्मिविदारकत्वमवश्यं वाच्यम् । अन्यथा विदारकत्व-रूपस्वभावहानिप्रसङ्गादिति भावः । यद्यपि स्वरूपाभेदवादे भेदस्य धर्मिसम्बन्धाभावान्न तद्विदारकत्व-प्रसञ्जनस्यावकाशः । तथापि भेदस्य धर्मत्वं चास्तीति भ्रान्त्या शङ्केयमिति ध्येयम् । अत एव परिहारे तथैव विभावयिष्यतीति ध्येयम् । इष्टापत्तिं परिहरति- **तथेति ॥** विदारकस्य भेदस्य तदवयवस्वभावत्वेन तद्विदारक-त्वावश्यम्भावादिति भावः । भिद्यतेऽनेनेति भेद इति करणसाधनत्वपक्षे तस्य धर्मिविदारकत्वप्राप्तावपि, अस्माभिर्भेदनं भेद इति भावसाधनत्वाङ्गीकारान्न भेदस्य विदारकत्वप्राप्तिः, किन्तु विदारणप्राप्तिरेव । तथा च पटोऽपि विदारणं स्यान्न तु पटस्य । न हि विदारणस्य विदारणं, स्ववृत्तिविरोधादित्याशयेन समाधत्ते- **मैवमित्या-(पां.टि.) दिना ॥** पूर्ववाद्यभिप्रेतं करणसाधनत्वं भेदशब्दस्यानङ्गीकृत्य भावसाधनत्वं चाङ्गीकृत्य भेदस्य धर्मिस्वरूपत्वे पूर्ववाद्युक्तो धर्मिविदारकत्वप्रसङ्गः परिहृतः । पूर्ववाद्युक्तं तस्य करणसाधनत्वमङ्गीकृत्याप्युक्त-प्रसङ्गं परिहरति- **विदारकत्वेऽपीति ॥** इदमुक्तं भवति- विदारको हि भेदो यस्य यतस्तं ततो विदारयेत् । न तु यं कमपि यतः कुतश्चित् । न च पटस्वरूपस्य भेदस्य पट एव प्रतियोगी । येन तस्य तत एव विदारकत्वं स्यात् । किन्तु पटादन्य एव । ततो विदारकत्वं तु नानिष्टम् । तस्य शून्यतानापादकत्वादिति ।

ननु निष्प्रतियोगिकधर्मिस्वरूपभूतभेदस्य सप्रतियोगिकत्वासम्भवेन न प्रतियोगिनोऽपि सकाशाद्धर्मिणो विदारकत्वं तस्येत्यतः, भेदस्य धर्मिणा सह सविशेषाभिन्नत्वेन निर्विशेषाभिन्नत्वाभावाद् भेदकार्यकारिविशेषबलेन प्रतियोग्यनिरूप्यधर्मिस्वरूपस्यापि भेदस्य सप्रतियोगित्वोपपत्तेर्युक्तं धर्मिणः प्रतियोगिनः सकाशाद्विदारकत्वं तस्येत्याशयेनाऽह- **प्रतियोगिनिरूप्यत्वं चेति ॥ अङ्गीकृत्य चेदमुदितमिति ॥** भेदशब्दस्य विभागरूप-विदारणवाचित्वमङ्गीकृत्यैव 'न भेदो विदारकः किन्तु विदारणम्' इत्युक्तमित्यर्थः । **न विदारणात्मेति ॥** विभागरूपविदारणात्मा नेत्यर्थः, मानाभावादिति भावः । ननु भेदशब्दादेव भेदस्य विभागात्मकविदारणा-त्मकत्वमवगम्यते । स हि भिदिधातो रूपम् । स च विदारणार्थतया व्याख्यात इति भावेन शङ्कते-**किन्त्विति॥** परिहरति- **अन्योन्याभाव एवेति ॥** प्रकृत इति शेषः । अयमर्थः-

'क्रियावाचित्वमाख्यातुमेकैकार्थः प्रदर्शितः ।
प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः ॥'

इति वचनाद्भिदिर्विभागवचनोऽन्यत्ववचनश्च । 'भिन्नो घटः' इत्युक्त्या विभागरूपस्फुटितत्वस्येव 'भिन्नं गगनं घटात्' इत्युक्त्याऽन्यत्वस्याप्यवगमात् । अन्यथा संयुक्तयोरोष्ठयोर्भिन्नाविति व्यवहाराभावप्रसङ्गात् । विभागान्य-त्वयोर्मध्ये विभागो विदारणात्मा, नान्यत्वम् । तदेव चात्र प्रकृतमिति न शून्यत्वप्रसङ्ग इति । **तथापीति ॥** इयं च शङ्का भेदस्य वस्तुधर्मत्वं, तत एव तन्निष्ठत्वं चेति भ्रान्त्येति द्रष्टव्यम् । इष्टापत्तिं परिहरति- **तथेति ॥** अनेकत्वैकार्थसमवायिनो भेदस्य तत्रापि सत्त्वादिति भावः । तत्रापीष्टापत्तिं परिहरति- **इति तद्विरुद्धमिति ॥** तत्रापि तां परिहरति- **एकत्वाभावे चेति ॥ न भवेदिति ॥** अनेकत्वस्य तत्समाहाररूपत्वतदसमवायिकारणत्व-योरन्यतरत्वस्यावश्यम्भावादिति भावः । अस्तु तस्यैकत्वानेकत्वशून्यत्वम् । ततोऽपि किमित्यत आह- **तथा चेति ॥** सङ्ख्यायाः सामान्यगुणत्वादिति भावः । **एवं हीति ॥** भेदस्यानेकत्वैकार्थसमवायित्वेऽप्यनेकत्वैकार्थ-समवायिभेदात्मकः पटो यत्रास्ति तस्यैवानेकत्वं स्यात्, तत्प्रसञ्जकपटात्मकभेदस्य तत्रैव सत्त्वात् । **न त्वनेकः।** न तु पटोऽनेकः । न तु पटस्यानेकत्वमापादनीयम् । तत्प्रसञ्जकस्य भेदात्मकपटस्य पटेऽसत्त्वादित्यर्थः । अङ्गीकृत्यापि पटस्यानेकत्वापादनं दूषयति- **अनेकत्वेऽपीति ॥** नन्वेकत्वानेकत्वयोर्विरुद्धत्वात् कथमनेकत्ववतः पटस्यैकत्वं स्यादित्यतः, नैकत्वानेकत्वे स्वरूपेण विरुद्धे । एकस्य पटस्यान्यापेक्षयाऽनेकत्वदर्शनात् । किन्तु यदपेक्षयाऽनेकत्वं तदपेक्षयैकत्वं विरुद्धम् । तत्र पटस्य परस्मात् प्रतियोगिन एव

भेदेन तदपेक्षयैवानेकत्वात् **(पां.टि.)** तदपेक्षयैवैकत्वस्य विरुद्धत्वेऽपि स्वतो भेदाभावेन तदपेक्षयानेकत्वाभावान्न स्वापेक्षयैकत्वस्य विरुद्ध-त्वमित्याशयेनाऽह- **स्वस्मिन्निति ॥ कुतो न पूर्वोत्तरविरोध इति ॥** अश्वत्वसद्भावेन गोत्वाभावं प्रसाध्य पुनर्गोत्वाभावेनाश्वत्वाभावसाधने विरोधदर्शनादिति भावः। नन्वनेकत्वबलेनैकत्वाभावस्य एकत्वाभाव-बलेनानेकत्वाभावस्य च परीत्यैव परं प्रत्यापादनान्न पूर्वोत्तरविरोधो ममेत्यत आह- **न हीति ॥ उक्तमिति ॥** 'स्वस्मिन्नेकोऽप्यन्येन सहितोऽनेकः' इत्यनेन ग्रन्थेनैकत्वानेकत्वयोरविरुद्धत्वस्योपपादनादित्यर्थः। **बाध-केति ॥** सापेक्षत्वशून्यत्वाद्यापत्त्यादिरूपबाधकेत्यर्थः। **साधकेति ॥** धर्मिप्रतीतावपि गृह्यमाणत्व(रहितत्व)-रूपसाधकेत्यर्थः।

**(व्या.टि.)** द्वितीये आह- **अथेति ॥** संशयादिस्थले इष्टापत्तिमाशङ्क्य निराह-**अत्रापीति ॥** स्वरूपत्वे प्रत्यक्ष-घटनां तावदाह- **भेदस्येति ॥ यदीति ॥** ननु दण्डिज्ञाने तदत्यन्तभिन्नोऽपि दण्डः प्रतीयत इति प्रशिथिलमूलस्तर्क इत्यत आह- **नियामकेति ॥** घटादिव्यावृत्तविशिष्टान्तर्गत्यादिनियामकविशेषाभावादित्यर्थः। अस्वरूपत्व-वादिनोऽप्रतीतेरिष्टत्वेन स्वतोऽबाधकत्वात्ततो बाधकं शङ्कते- **ततः किमिति ॥** आत्मदर्शनेनेति मूले शेषोक्तिः। **अज्ञातायामिति ॥** अविषयीकृतायामित्यर्थः। विशिष्टवाचकानां पदानां विशेषणवाचकपदसमभिव्याहारे विशेष्यमात्रपरत्वनियमात्, 'स तपोऽतप्यत' इत्यादिवत्। आत्मनीति वैषयिकाधिकरणे सप्तमीत्याह- **आत्म-विषय इति ॥** एककोटिकसंशयाभावादाह- **अहं वेति ॥** घटो वेत्यनेन मूले वाशब्दाध्याहारं सूचयति- **विपर्ययो वेति ॥** अनेन 'संशयादिः स्यात्' इत्यादिशब्दो भिन्नक्रम इत्यसूचयत्। सम्भृतसामग्रीकस्य प्रतिबन्धकाभावेऽवश्यम्भावादित्यनुक्रमेणाऽह- **समानेत्यादिना ॥** इष्टापत्तिमाशङ्कते- **अस्त्विति ॥** आपाद्यानिष्टत्वं स्पष्टमाचष्टे- **अप्रामाणिकेति ॥** ननु सर्वत्र संशयादिप्रसङ्गेन परपक्षप्रतिक्षेपेऽपि स्वपक्षे किमायातम्? न हि परपक्षप्रतिक्षेप एव स्वपक्षसिद्धिः। पक्षान्तरस्यापि सम्भवादित्यत आह- **इदमुक्तं भवतीति ॥ द्वय्येवेति ॥** द्वाववयवाविति विगृह्य 'सङ्ख्याया अवयवे तयप्' इति प्राप्तस्य तयपो 'द्वित्रिभ्यां तयस्यायज्वा' इत्यादिष्टस्यायचोऽपि स्थानिवत्त्वेन तयस्त्वात् 'टिड्ढाणञ्' इत्यादिना ङीपि द्वयीति रूपं न्यरूपि। एवेति तृतीयव्युदासः। **स्वरूपत्वमेवेति ॥** परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन पक्षान्तरस्याप्रसक्तेः स्वपक्षसिद्धिरिति भावः।

ननु तथापि न भेदस्य धर्मिस्वरूपत्वं तत्र प्रमाणाभावात्। न च तद्दर्शन एव प्रतिभासो लिङ्गम्, असिद्धेः। न च तद्दर्शन एव भेदाप्रतिभासे प्रतिबन्धकाभावेन समानधर्मदर्शनादिना सर्वत्र संशयाद्यापातेन तन्निवृत्तये वस्तुप्रतीतावेव भेदप्रतीतिरेष्टव्येति वाच्यम्। तन्निवृत्तेरन्यथासिद्धेरित्याशयेनाऽशङ्क्य निषेधति- **न च वाच्य-मिति ॥ पश्चादिति ॥** वस्तुप्रतीत्यनन्तरं सादृश्यवदभाववच्च प्रतियोगिस्मरणे सतीत्यर्थः। **प्रत्येष्यत इति ॥** इणः कर्मणि लृट्। **प्रसक्तमपीति ॥** अयं भावः। द्विविधो बाधो मीमांसितः, प्राप्तबाधोऽप्राप्तबाधश्चेति। तत्र तार्तीयोऽप्राप्तबाधो दाशमिकः प्राप्तबाध इति। तत्र भेदप्रतीतेः संशयादिकं प्रति श्रुतिलिङ्गाधिकरणन्यायेन कार्यानुत्पादव्याप्यत्वरूपप्रतिबन्धकत्वापरपर्यायाप्रसञ्जकत्वरूपाप्राप्तबाधकत्वाभावेऽपि शरकुश(कर)न्यायेन **(व्या.टि.)** प्राप्तप्रतिषेधकत्वरूपप्राप्त-बाधकत्वं युज्यत इति न तन्निवृत्तये वस्तुप्रतीतेर्भेदप्रतीत्यभेदः प्रत्येतव्य इति। **निरोत्स्यतीति ॥** निपूर्वाद्रुधेः लृटि स्ये लघूपधलक्षणगुणे च रूपं निरूप्यम्। यद्वा 'यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्र प्रतिबन्धिका' इति न्यायेन भेदप्रतीतिसामग्री प्रतिबन्धिकेत्यभिप्रायेणायं ग्रन्थः प्रवृत्तः। दूषयितुमुपक्रमते- **पश्चाद्धीति ॥** सविकल्पक इत्यर्थः। हीति प्रतीतिप्रसिद्धिं द्योतयति। तथा प्रतीयतां किं बाधकमित्यत आह- **न चेति ॥ अनुवाद इति ॥ अनु** सविकल्पकज्ञानमनुसृत्य **वादो** व्यवहारः, तथा ज्ञानव्यवहारो न युज्यत इत्यर्थः। अयं भावः- यदि भेदो वस्तुप्रतीतौ न प्रतीयेत तदा अस्यास्माद्भेद इत्युत्तरकालं सविकल्पकं ज्ञानं तथा व्यवहारश्च न स्यात्। अस्यास्मादिति धर्मिप्रतियोगितया वस्तुद्वयमुद्दिश्य हि भेदो ज्ञायते। न चागृहीतभेदं वस्तु तथोपदेष्टुं शक्यते। एकस्मिन्नपि तत्प्रसङ्गादिति। तदुक्तमनुव्याख्याने 'अन्यथाऽ-स्यामुना भेद इति वक्तुं न शक्यते' इति। निगमयति- **अत इति ॥**

ननु पश्चात्तन्याः सविकल्पकप्रतीतेरुत्थानासम्भवेन संशयाद्यवारकत्वेऽपि प्रथमप्रतीतेर्निर्विकल्पकरूपाया भेदविषयत्वेन संशयादिवारकत्वेन किमाद्यप्रतीतेरेव सविकल्पकत्वाभ्युपगमेनेति शङ्कते- **अथेति ॥ एतदीयत-येति ॥** धर्मिवस्तुसम्बन्धित्वेनेत्यर्थः। विपक्षे बाधकमाह- **अन्यथेति ॥** दूरस्थवनस्पत्योश्चूतपनसयोः पनसचूत-कोटिकसंशयविपर्ययाभावप्रसङ्ग इत्यर्थः। दोषात्तत्र तथेति चेत्, भेदस्य स्वरूपप्रतीत्यैवोपयोगे दोषस्या-किञ्चित्करत्वात्।

निर्विकल्पके प्रमाणाभावाच्च। तथा हि- न तावत्तत्र प्रत्यक्षं मानम्। तस्यातीन्द्रियत्वाभ्युपगमात्। नापि व्यवहाररूपकार्येण तदनुमानम्। व्यवहारस्य सविकल्पकज्ञानसाध्यत्वात्। नापि, प्राथमिकं गौरिति प्रत्यक्षं, जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वाद्

अनुमितिवदित्यनुमानं मानम्। दृष्टान्तस्य साध्यविकलत्वात्। न चानुमितौ साध्यप्रसिद्धेर्हेतुतया तत्र विशेषणज्ञानजन्यत्वं सिद्धमेवेति वाच्यम्। व्याप्त्यादिज्ञानसत्त्वे साध्यप्रतीतिविलम्बेनानुमितिविलम्बाभावेन तत्र तस्याहेतुत्वात्। न च साध्यप्रतीत्यभावे व्याप्तिग्रह एव नास्तीति वाच्यम्। तर्हि तस्य तज्जनकत्वेनान्यथासिद्धतयाऽनुमितावजनकत्वात्। किञ्च 'यद्विशेषयोः' इति न्यायेन विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वे विशेष्यज्ञानस्यापि जनकत्वं स्यात्। अनुमितौ तस्यापि जनकत्वात्। किञ्च संयुक्ताविमौ समवेतावित्यादिज्ञाने संयोगसमवायादिरूपविशेषणस्य, अनुव्यवसाये व्यवसायगतस्य रजतत्वप्रकारकत्वस्य विशेषणस्य, अभावज्ञाने प्रतियोगित्वाभावत्वादिरूपस्य विशेषणस्य पूर्वमज्ञातस्यैव भानमित्यभ्युपगमेन तत्र व्यभिचारः । नापि, ज्ञानत्वं निर्विकल्पकत्वसमानाधिकरणं सकलज्ञानवृत्तित्वात् सत्तावदित्यनुमानं मानम्। अप्रयोजकत्वात्। इच्छात्वव्यवहारत्वानुमितित्वादिकं पक्षीकृत्यापि प्रयोगसम्भवेन निर्विकल्पकेच्छादिसिद्धिप्रसङ्गाच्च। नापि, चक्षुश्चाक्षुषसविकल्पकातिरिक्तज्ञानकरणं ज्ञानकरणत्वाद् घ्राणवदि-त्यनुमानं मानम् । अप्रयोजकत्वात् । अनेन निर्विकल्पकसिद्धौ तदतिरिक्तेति विशेषणदानेन सविकल्पक-निर्विकल्पकातिरिक्तज्ञानसिद्धेरेवं तदतिरिक्तज्ञानसिद्धिरित्यतिप्रसङ्गाच्च । नापि, जागरादिसविकल्पप्रत्यक्षं **(व्या.टि.)** जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वाद् दण्डीति विशिष्टप्रत्यक्षवदित्यनुमानं मानम् । दृष्टान्ते साध्यविकलत्वात् । दण्डपुरुषयोर्युगपदिन्द्रियसन्निकर्षेऽसंसर्गाग्रहे च सति विनैव दण्डज्ञानं दण्डीति ज्ञानोत्पत्ति-दर्शनात् । तस्मान्नानुमानं मानम् । आगमस्तु तत्र नेष्टो दृष्टो वा। तस्मादप्रामाणिकं निर्विकल्पकम्। तदुक्तं तैत्तिरीयभाष्ये 'किञ्चिदिति प्रत्ययस्यासिद्धेः(द्धिः)' इति । 'न च पश्चाद्भेदो ज्ञायत इत्यत्र किञ्चिन्मानम्' इति च।

उक्ततर्कस्य प्रतिकूलतर्कपराहतिं शङ्कते- **ननु यदीत्यादिना ॥** न च तत्प्रतीतावेव प्रतीत्या धर्मिस्वरूपत्वं साधयत इष्टापादनमेतत् । अन्यथा पूर्वहेतोर्बाधसिद्धिप्रसङ्गात्। अतो विपर्ययापर्यवसानात्तर्काभासोऽयमित्यतस्तं विपर्यये पर्यवसाययति- **न चैवमिति ॥ तथा सतीति ॥** इष्टापत्तावित्यर्थः। **संशयादीति ॥** भेदप्रतीतेस्तत्संशय-विपर्ययविरोधित्वादित्यर्थः। प्रसञ्जनीयस्यानिष्टत्वं दर्शयति- **अस्ति चेति ॥** तथा च तत्प्रतीतावेव प्रतीतेः स्वयमनिष्टत्वाभावेऽप्यनिष्टप्रसञ्जकत्वादनिष्टत्वमिति भावः। विपक्षे बाधकेन स्वोक्ततर्कस्य विपर्यये पर्यवसान-मुपपाद्योपसंहरति- **न धर्मिप्रतीताविति ॥** तत्सिद्धमर्थमाह- **तत्कथमिति ॥** अत्रापि मूले प्राय इति स्मर्यमाण-सदृशविशेषप्रतियोगिकभेदव्युदासाय ।

ननु प्रतीतौ संशयानुपपत्तिं प्रसञ्जयन्तं प्रति पुनः प्रतीतौ संशयप्रदर्शनमसङ्गतम्, उक्तदोषानुद्धारादित्यत आह- **अयमभिप्राय इति ॥** एकस्य वस्तुन इति हेतुगर्भविशेषणम्। धर्मिस्वरूपस्य तदैक्येनैक्यावश्यम्भावादिति भावः । **प्रमाणाभावादिति ॥** प्रतियोगिभेदस्य सादृश्यादौ व्यभिचारेणाऽनन्त्यप्रसङ्गेन च भेदाप्रमाणत्वादिति भावः। **प्रतीयत एवेति ॥** विषयीभवत्येवेत्यर्थः । यद्वा तत्प्रतीत्युपाधिनैवास्य ज्ञेयत्वं नान्यथेत्यर्थः। संशयानुपपत्तिं शङ्कितां स्मारयति- **किन्त्विति ॥** उत्तरयति- **तस्येत्यादिना ॥** अयं भावः । न स्वरूपेण भेदप्रतीतिः संशय-प्रतिबन्धिका, किन्तु सप्रतियोगिकत्वेन। तत्र धर्मिस्वरूपेण प्रतीयमानो भेदो न सर्वात्मकमिदं, किन्तु स्वयमेवेति सामान्यतः सर्वप्रतियोगिकत्वेन स्मर्यमाणकतिपयविशेषप्रतियोगिकत्वेन चानुभूयमानो विरुणद्ध्येव सर्वत्व-कोटिकं स्मर्यमाणकतिपयकोटिकं च संशयं विपर्ययं वा। परन्तु यत्प्रतियोगिकत्वेन नोपलब्धस्ततो विरोधिज्ञाना-भावादेव स्यातामेव संशयविपर्ययौ। समानविषये तद्विरोधिप्रकारकत्वेन संशयादिविरोधित्वादिति। वक्ष्यत्ये-तदुपरिष्टात्। तदेतदभिप्रेत्याऽह- **न तु तत्रापीति ॥** अनेन प्राक् साधारण्येन भेदप्रतीतिरुपपादिता, अत्र विशिष्य संशयादिस्थलेऽपीति न पुनरुक्तिरिति। निगमयति- **अत इति ॥ अन्यथेति ॥** भेदप्रतीतावपि तद्धर्मविशेषाप्रतीतिमात्रेणेत्यर्थः। **ययेति ॥** विपर्यये पर्यवसन्नयेति शेषः। **भवेदिति ॥** सिद्धमिति शेषः । उक्तमनूद्य नियामकं पृच्छति- **संशयादिस्थलेऽपीति ॥ उक्तमिति ॥** 'कस्मिंश्चिदेव सदृशे' इति मूलेनेति शेषः । तत्र हि कस्मिंश्चिदिति बाह्यार्थ इत्यर्थः । एवेति साक्षिभास्यव्युदासः । तत्रापि न सर्वत्रेत्याह- **सदृशे इति ॥** तेन विसदृशव्यवच्छेदः । यद्वा कस्मिंश्चिदिति सदृशविशेषणम्। न सदृशमात्रे किन्तु सुसदृशेत्यर्थः । तेन संशयादिस्थले सर्वस्मात्-सामान्यतो विशेषतश्च स्मर्यमाणकतिपयविसदृशादिविशेषाच्च व्यावृत्तिरनुभूयत **(व्या.टि.)** इत्युक्तमित्यर्थः। तदेतद्विस्पष्टमाचष्ट तैत्तिरीयभाष्ये भगवान् भाष्यकारः 'यदा संशयीत तदाऽपि कुतश्चिद्व्यावृत्तमेव ज्ञायते। न हि सर्वमिदं भवति न वेति कस्यचित्संशयः' इति । कस्मिंश्चिदेवेत्येवकारव्यावर्तित-साक्षिभास्यात्मादौ संशयाद्यनास्पदे संशयाद्यभावप्रसङ्गाभावेन निराबाधं सार्वत्रिकनैसर्गिकभेदप्रतीतिः सिद्धेत्याह- **भेदस्येति ॥ आत्मनीति ॥** साक्षिभास्योपलक्षणमेतत्। तथा घट इति सर्वस्य। यथोक्तं तैत्तिरीयभाष्ये 'सर्वस्य स्वरूपं सर्वैरेवानुभूयते। अन्यथाऽहं दृष्टोऽन्यो वा दृष्ट इत्यपि संशयः स्यात्। न ह्यज्ञाताद्वस्तुनो व्यावृत्तिः केनचिच्छङ्क्यते' इति च । **न चैवमिति ॥** अनेन प्रतितर्कस्येष्टापादनं सिद्धसाधनं च सूचितम् । **इत्याहेति ॥** इत्युक्तं मा

विस्मार्षीरित्यर्थः । संश(यस्य)ये स्मर्यमाणविसदृशकोटिकत्वलाभाय व्याचष्टे- **न वेत्यस्येति ।।** अयं भावः- यथाऽनभ्यासदशापन्नजलादिज्ञाने प्रमात्वसंशयेऽप्यभ्यासदशापन्नबाह्यजलादिज्ञाने, तथा साक्षिभास्यसुखादिज्ञाने प्रमात्वसंशयाद्यभावेन धर्मिप्रतीतेरेव तद्विषयकत्वमङ्गीकृत्य क्वाचित्कसंशयादिक-मन्यथोपपादितम्, तथाऽत्रापि साक्षिभास्यात्मादौ बाह्ये च ज्ञातप्रतियोगिवैजात्ये संशयाद्यभावेन क्वाचित्कसंशया-दिकमन्यथोपपाद्य निराबाधया धर्मिप्रतीतावेव प्रतीत्या स्वरूपत्वसिद्धिरिति ।

ननु साक्षिभास्यात्मादौ आत्मघटादिसंशयानुत्पत्त्या हि तद्व्याप्यतया व्यावृत्तिप्रतीतिरुपगता । न त्वेवं सम्भवति । तदनुत्पत्तेरन्यथासिद्धेरिति शङ्कते- **नन्वित्यादिना ।। अपश्यत इति ।।** उपलक्षणमेतत् । तद्विपरीतं च पश्यत इति योज्यम् । अन्यथा साधारणधर्मदर्शने तदसाधारणधर्मादर्शनस्य संशयादिहेतुत्वेन तन्निवर्तक-त्वानुपपत्तेः । तदर्थम् अनुत्पत्तय इत्यर्थः । दूषणान्तरं प्रतिजानीते- **किञ्चेति ।।** अन्यच्चेत्यर्थः । **अशक्यत्वा-दिति ।।** वैलक्षण्यज्ञानस्य प्रतियोगिज्ञानपूर्वकत्वादिति भावः । मूले व्यापकत्वमवधारणार्थः, वह्निमानेव धूमवानितिवत् । ज्ञानसामान्यस्य तन्नान्तरीयकत्वाभावाच्छेषं पूरयति- **असाधारणतयेति ।।** तदविनाभाव-मुपपादयति- **तेन विनेति ।। असाधारण्यमिति ।।** इतरविविक्तधर्मिवृत्तित्वमेवासाधारण्यम् । तच्चेतरव्या-वृत्त्यज्ञाने दुर्ज्ञानम् । किञ्चासाधारणधर्मादर्शनं संशयमात्रसाधारणमिति संशयमात्रोच्छेदापत्तिः । न च विपरीत-दर्शनसहितं संशयोच्छेदकमिति वाच्यम् । विपरीतदर्शनमात्रस्यैव तदुपपत्तेः । तद्भिन्नवृत्तिधर्मवत्तया धर्मिदर्शन-रूपविपरीतदर्शनस्य तद्भेदज्ञानसापेक्षत्वाच्च । **प्राणभृन्मात्रवृत्तित्वादिति ।।** अन्यथा सर्वोपसंहारवती व्याप्तिर्न सिद्ध्येदिति सर्वानुमानतर्कोच्छेदः स्यात् । सर्वशब्दप्रयोगः, सर्वस्य सर्वविज्ञानं नास्तीति प्रतिषेधः, 'सर्वं खल्विदं ब्रह्म' इति वाक्यार्थधीश्च न स्यादिति भावः ।

ननु तर्हि भेदस्य विशेषतो ज्ञातत्वे पदार्थस्वरूपमपि विशेषतो न ज्ञायेत तदात्मकत्वात्तस्येति चेत्, सत्य-मेतत् । यथोक्तं तैत्तिरीयभाष्ये- 'यावत्सर्वतो भेदो विशेषतो न ज्ञायते, तावत् स्वरूपमेव विशेषतो न ज्ञातम्' इति । ननु 'एक एव खल्वेकस्य वस्तुनो भेदः' इत्यनुपपन्नम् । भेदस्यान्योन्याभावरूपत्वात् । प्रतियोगिभेदेनाभाव-भेदस्यात्यन्ताभावे दर्शनात् । घटवति नीलघटो नास्तीति प्रतीतेः, नीलघटवति घटो नास्तीत्यप्रतीतेश्च विशेषाभावातिरिक्तः सामान्याभावः सिद्धः । तथैव भेदोऽपि, घटो नेति नीलघटो नेति च प्रतियोगितावच्छेदक-**(व्या.टि.)** भेदाद्भेदसिद्धेः । तथैव पदार्थविदो वदन्ति । तत्कथमन्योन्याभावरूपभेदस्यैकस्यैव सामान्यतः सर्वप्रतियोगिकत्वं घटादिरूपेण विशेषप्रतियोगिकत्वं लोकविरुद्धं सिद्ध्यतीत्यतः, अनुभवशरणा भगवच्चरणा इत्याह- **न च सर्वात्मकमिति ।।** अनुभवेन न्यायातिक्रमो न्याय्य एवेति भावः । एवं बाधकोद्धारे साधकं सुदृढतरमित्याह- **तदेवमिति ।।** भेदस्य धर्मिस्वरूपत्वे बाधकान्तरमाशङ्कते- **नन्विति ।।** स्वरूपासिद्धिं (द्धिमाशङ्कते) ब्रूते- **कदाऽपीति ।।** केवलस्य प्रतियोगिविनिर्मुक्तस्य । द्वितीयं दूषयति- **सर्वाद्वैतेति ।।** सर्वस्यापि भेदप्रतियोगित्वादिति भावः । उद्धरति- **मैवमिति ।। निरूपकत्वेन बहिरङ्गत्वादिति ।।** तटस्थत्वादित्यर्थः। व्याप्तेर्निदर्शनं पृच्छति- **कुत्र चेदमिति ।।** तदाशङ्कते- **लम्बेति ।।** आदिपदेन 'यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्ति' इति वैदिकमप्युदाहरणं द्रष्टव्यम् । तत्र सोमलिप्तस्यावभृथदेशनयने सोमस्यापि नयनान्वयदर्शनात् । तद्व्यभिचारस्थलमाह- **चित्रेति ।। इत्यादाविति ।।** अत्राप्यादिपदेन 'गोदोहनेन पशुकामस्य प्रणयेत्' 'श्वेतायै श्वेतवत्सायै दुग्धे' इत्यादिवैदिकमप्युदाहर्तव्यम् । तत्रापि निरूपकगोवत्सादेः प्रणयनदुग्धाद्यन्वयादर्शनात् । ततश्च व्यभिचारेण भूयोदर्शनान्न व्याप्तिरिति भावः । उपसंहरति- **तत इति ।।** व्याप्त्यभावादित्यर्थः । ननु भूयोदर्शनेन (दर्शने) संशयः स्यात् कुतो निश्चय इत्यत उक्तम्- **यदि प्रतीत्यनुसरणमिति ।।** अनुभवानुसरण-मित्यर्थः । प्रतियोगिनामनेकेषामेकधर्म्यस्वरूपत्वानुभवादित्यर्थः । **अशक्यमिति ।।** आपादनस्यापि दर्शन-मूलत्वादित्यर्थः ।

भेदशब्दस्यापि धात्वनुगमभ्रान्त्या बाधकमाशङ्कते- **नन्वित्यादिना ।। सर्वशून्यतेति ।।** अवयवशैथि-ल्यादि-त्यर्थः । घञि भावाधिकारादाह- **न हीति ।। विदारकत्वेऽपीति ।।** घञ्विधौ कारकग्रहणादित्यर्थः । भेदो न धर्मिस्वरूपं विदारकत्वादित्यत्र स्वतो विदारकत्वं वा प्रतियोगिनो वेति विकल्प्याऽद्येऽसिद्धिमाह- **न त्विति ।।** द्वितीयेऽप्रयोजकतामाह- **स्वरूपस्यापीति ।।** आकाशो वायुना भिन्नो, मेरुर्मन्दरेण भिन्न इत्यवि-दार्येऽपि तच्छब्दप्रयोगात् । न यौगिको भेदशब्दः किन्तु रूढ एव । सापेक्षयोगादपि निरपेक्षरूढेर्बलीयस्त्वात् । अत एव पूर्वतन्त्रे 'यद्योन्यां गायति तदुत्तरयोर्गायन्ति' इत्यत्र उत्तरशब्दस्य दिक्शब्दत्वेन सापेक्षत्वाद्योन्युत्तर-ऋग्ग्रहणे प्राप्ते 'सापेक्षनिरपेक्षयोर्निरपेक्षं बलीयः' इत्युत्तरग्रन्थस्थऋच्येव साम, वाचनिकातिदेशविषय इति निरणायि । तदेतदभिप्रेत्याऽह- **अन्योन्याभाव एवेति ।।** पुनर्बाधकान्तरं प्रसञ्जयति- **तथापीति ।। एकत्वाभाव इति ।।** आदिमसङ्ख्याभावे परिगणनानुपपत्तेरिति भावः । सुधायां तु 'तत्समाहाररूपत्वात् तत्कार्यत्वाद्वा तस्य' इत्यन्यथोपपादितम् । प्रसङ्गानौचित्यं दर्शयति-

**एवं हीति ॥** अङ्गीकृत्यापि दोषमाह- **अनेकत्वेऽपि वेति ॥** स्वस्मिन्निति पूर्वान्वयि। तर्हि एको नैक इति विरोध इत्यत आह- **एक इति ॥** स्वयमिति शेषः। **स्वस्मिन्** स्वविषयमात्र इति, व्यवहार्य इति शेष इति वा। स्वव्याहतिं चाऽह- **अनेकत्वबलेनेति ॥** परीत्या परस्याऽपादनमित्यत आह- **न हीति ॥** 'भेदो न युगधर्मः' इत्यनेन अनेकत्वैकार्थसमवायितायाः, 'स्वस्मिन्' इत्यनेन एकत्वानेकत्वविरोधस्याभावोक्त्या नास्मद्रीतिरित्युक्तप्रायमित्यर्थः।

**मूलम् - नच युगपज्ज्ञानानुत्पत्तिर्दोषः। यथा युगपदेव दीपसहस्रदर्शने सामान्यतः सर्वे ज्ञायन्त एव, तथा स्यात्। एकस्मिन्नेव वस्तुनि विशेषस्तैरप्यङ्गीकृत एव। 'नेति नेति' इत्यत्र सर्ववैलक्षण्याङ्गीकारात्। विशेषानङ्गीकारे च पुनरुक्तेः। नच घटाद् वैलक्षण्यमेव पटाद्वैलक्षण्यम्; अनुभवविरोधात्। तस्माद्भेददर्शनं युक्तमेव।**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते विष्णुतत्त्वविनिर्णये भेदवादप्रकरणं समाप्तम् ॥**

**(त.मं.)** सर्वतो वैलक्षण्यं ज्ञातुं सर्वत्र युगपद् ज्ञानोत्पत्तिसम्भव इत्यत आह-**न च युगपदिति ॥** ननु भेदस्य स्वरूपत्वे भेदमात्रं भेदिमात्रं वा स्यात्। भेदमात्रे कस्य भेद इति वक्तव्यम्। भेदिमात्रे भेदो नास्तीत्युक्तं स्यादित्यत आह- **एकस्मिन्निति ॥** 'स वा एष नेति नेतीत्यात्मा' इत्यत्र इतिशब्देन प्रत्येकं पुरोवर्तिवस्तुप्रकारो हि विवक्षितः। एवं चाऽत्मा, घटवन्न, पटवन्न, पृथिवीवन्न, अब्वन्नेति पृथक् पृथक् सर्वपदार्थवैलक्षण्याङ्गीकारात् एकस्मिन्नेवाऽत्माख्ये वस्तुनि विशेषः तैरप्यङ्गीकृत एव। युक्तमेवेति निगमन एवशब्देन विपक्षबाधकतर्कान्तरं च सूचितम्। व्यक्तं चोक्तमनुव्याख्याने-

'अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः।
अन्यत्वं यदि सिद्धं स्यात् कथमन्योन्यसंश्रयः॥' इति।

**॥ इति श्रीलिकुचसूरिसूनुश्रीनारायणपण्डिताचार्यविरचितायां तत्त्वमञ्जर्यां भेदवादप्रकरणम् ॥**

**टीका -** पटः प्रतीयमानः सर्वव्यावृत्ततयैव प्रतीयत इत्युक्तम्। तदयुक्तम्। प्रतियोगिभूतस्य सर्वस्य, धर्मिणश्च पटस्य युगपज्ज्ञानप्रसङ्गात्। यद्यपि ज्ञानानां वध्यघातुकभावेन यौगपद्यमस्ति। तथापि युगपदुत्पत्तिस्तु नास्ति। मनसोऽणुत्वेन युगपदनेकेन्द्रियसन्निकर्षाभावात्। एकेन्द्रिय-विषयेऽपि सजातीयात्मगुणानां युगपदुत्पत्त्यदर्शनादित्याशङ्क्याऽह- **न चेति ॥** कुतो नेत्यत आह- **यथेति ॥** दृश्यतेऽनेनेति दर्शनं चक्षुस्सन्निकर्षः। तथा स्यात् प्रकृत इति शेषः। यद्यपि युगपदनेकज्ञानोत्पत्तिर्नास्ति। तथापि समुदायालम्बनस्यैकस्य ज्ञानस्योत्पत्तौ न काचिदनुपपत्तिरिति भावः।

ननु सर्वमिति सामान्यतो यत्सर्वविषयकं ज्ञानं तत्साक्षिरूपम्। तस्मिन् सर्वदा सत्येव पटादिज्ञानानि मनोवृत्तिरूपाणि जायन्ते। तत्कथमेतावाक्षेपपरिहारौ। सत्यम्। तथापि विशेषतो व्यावृत्तिप्रतीतौ घटपटज्ञानोत्पत्तियौगपद्यं प्रसज्यत एव। तत्र धर्मिणः प्रतियोगिनां च पुरोऽवस्थितत्वे युगपदिन्द्रियसन्निकर्षे च सति समुदायावलम्बनैकज्ञानोत्पत्तिरुक्ता। धर्मिप्रतियोगिनोरन्यतरस्यैव सन्निधाने तु संस्कारसहकृतेन्द्रियसन्निकर्षेणैकज्ञानोत्पत्तिरित्यादि बोद्धव्यम्। ननु भेदस्य पट-स्वरूपत्वे पट एवास्ति न भेद इति वा भेद एवास्ति न पट इति वा पटभेदशब्दौ पर्यायाविति वाऽऽ-पद्येत। मैवम्। विद्यमानयोरेव पट-भेदयोः सविशेषाभेदस्वीकारात्। तत्राभेदेनान्योन्याश्रयादि-परिहारो भविष्यति। विशेषेण चान्यतरमात्रावशेषादिकं न भविष्यति। विशेषस्य भेदप्रतिनिधि-त्वात्।

अभिन्ने वस्तुनि पुनर्विशेषोऽस्तीत्येतदप्रसिद्धं कथमङ्गीक्रियत इत्यत आह- **एकस्मिन्नेवेति ॥** तैः सर्वाभेदवादिभिरपि

। किमुत पदार्थान् व्यवस्थापयद्भिरन्यैः । **अङ्गीकृतो**ऽङ्गीकृतप्रायः । तदविनाभूतस्यार्थस्याङ्गीकृतत्वात् । तत्कथमित्यत आह- **नेतीति ।।** 'स एष नेति नेत्यात्मा' इत्यत्र वाक्ये प्रतिपाद्यतया ब्रह्मणः सर्ववैलक्षण्याङ्गीकारात् । तावता च किं प्रकृत इत्यत आह- **विशेषेति ।।** इदमुक्तं भवति । इदं तावद्वाक्यं पदसमन्वयबलेन ब्रह्मणः सर्वपदार्थव्यावृत्ति-प्रतिपादकमिति परेणाप्यङ्गीकृतम् । तत्राऽत्मशब्दार्थस्य वाक्यद्वयप्रतिपादितयोर्व्यावृत्त्योश्च न तावद्भेदो भेदाभेदो वाऽङ्गीकर्तुं शक्यौ । अखण्डवाक्यार्थाङ्गीकारविरोधात् । तत्रात्यन्ताभेदे विशेषस्य चानङ्गीकारे पदानां पुनरुक्तिप्रसङ्गेनानाम्नानं प्रसज्येत । अतो 'नेह नानाऽस्ति किञ्चन' इत्यादिवाक्यविरोधपरिहाराय अत्यन्ताभेद इव पौनरुक्त्यादिप्रसङ्गपरिहाराय विशेषोऽप्यङ्गीकार्य एव । ननु, एवमादिपदजातं न वचनवृत्त्या आत्मनि प्रवर्तते, किन्तु लक्षणया । तत्र वचनवृत्त्या प्रतिपाद्ययोर्व्यावृत्त्योर्भेदसद्भावान्न पौनरुक्त्यम् । लक्ष्यार्थभेदाभावान्नाखण्डार्थताहानिरिति । मैवम् । लक्ष्यार्थे विशेषाभावे पुनर्वैयर्थ्यापरिहारात् । नानाविधारोपपरिहारस्य प्रयोजनत्वान्न वैयर्थ्यमिति चेन्न । प्रतिपाद्यविशेषाभावे तत्परिहारस्याप्यनुपपत्तेरिति ।

न केवलं व्यावृत्तिद्वयस्य निर्विशेषाभेदे पौनरुक्त्यादिदोषः । किं तर्हीत्यतो दोषान्तरं प्रतिजानीते- **नचेति ।।** इतश्च न व्यावृत्तिद्वयस्य निर्विशेषाभेद इत्यर्थः । कुतो नेत्यत आह- **अनुभवेति ।।** विरोधप्रकटनार्थमनुभवेन ह्येकार्थविशेषणत्वेन प्रतीयमानं व्यावृत्तिद्वयमभिन्नमपि सातिशयं प्रतीयते नतु तन्मात्रमिति । यद्यपि सत्यज्ञानादिवाक्यमप्यत्रोदाहर्तुं शक्यं तथापि भेदस्य सविशेषाभेदप्रति-पादनं प्रस्तुतमिति तथाविधमेव वाक्यमुदाहृतम् । क्वापि भेदानभ्युपगतावेतद्वाक्यविरोधश्चानेन सूचितो भवति ।

किञ्चात्र कथमापादनम् । यदि भेदो दृश्येत तदाऽन्योन्याश्रयत्वं स्यादिति चेन्न । भेददर्शनस्य सम्मतत्वेन विपर्ययापर्यवसानात् । दर्शनमात्रसद्भावेऽपि तस्य प्रमात्वं निराक्रियत इति चेन्न । अन्योन्याश्रयत्वस्य प्रमात्वाप्रतिबन्धकत्वात् । एतेन दर्शनस्य वास्तवत्वं निराक्रियत इत्यपि परा-स्तम् । किञ्चान्योन्याश्रयदुष्टस्य व्यावहारिकसत्त्वमपि कुतः? नहि मृदवास्तवीत्येतावता यस्य घटस्य कारणं तत एवोत्पन्नेत्येतत्परस्यापि मनोगतं भविष्यति । अथ यदि धर्म्यादिप्रतीतिमपेक्ष्य भेदः प्रतीयेत तदाऽन्योन्याश्रयत्वं स्यादित्यापाद्यते, तदा धर्म्यादिप्रतीत्यपेक्षैव निवर्तते भेददर्शनस्य किमायातम् । प्रकारान्तराभावात्तन्निवृत्तिरिति चेन्न । दर्शनमात्रस्याङ्गीकृतत्वेन निवर्तयितुमशक्य-त्वात् । प्रमात्वादिनिवर्तनेऽन्योन्याश्रयत्वादेः सामर्थ्याभावस्योक्तत्वात् ।

किञ्च स्पष्टदृष्टं भेददर्शनं प्रकारान्तरं कल्पयिष्यति । अस्मिन्नेव वा प्रकारे कमप्यवान्तर-विशेषम् । स्वयं तु न निवर्तते । नहि स्पष्टदृष्टोऽङ्कुरः परिचितचरबीजासम्भवमात्रेण स्वयं निवर्तते । किन्तु बीजान्तरं वा परिचितेष्वेव जात्यादिविशेषं वा कल्पयतीति लोके दृष्टमित्याशय-वानुपसंहरति- **तस्मादिति ।।** प्रत्यक्षेणेति शेषः । एवमनुमानादिनाऽपि स्वविषये भेद-प्रतीतिर्वक्ष्यमाणन्यायेन द्रष्टव्या । ननु व्याप्यव्यापकादिभेदप्रतीत्यपेक्षमनुमानादिकं कथं भेदे प्रमाणं भविष्यतीति चेत्, तत्किं भेदप्रतीतिमात्रं परो नाङ्गीकरोति । तथा सति तस्याप्यनुमानादिव्यवहारो न स्यात् । प्रमात्वनिवृत्तिकारणस्य च बाधकप्रत्ययस्य निरासोऽनुपदमेव करिष्यते ।

**।। इति भेदवादप्रकरणम् ।।**

**(र.टि.) इत्युक्तमिति ।।** 'स्वस्मिन्नेकः' इत्यादिना एकत्वानेकत्वयोर्विरोधो नास्तीत्युक्तमित्यर्थः । मूले युगपज्ज्ञानाभाव इत्येवोक्ते इष्टापादनं स्यात् । तत्परिहारार्थं युगपज्ज्ञानानुत्पत्तीत्युक्तमित्याह- **यद्यपि ज्ञानाना-मिति ।। सजातीयेति ।।** प्रत्यक्षार्थविशेषणगुणानामित्यर्थः । मूलगतस्य सामान्यत इति पदस्य व्यावर्त्यमाह- **यद्यपि युगपदिति ।। साक्षिरूपमिति ।।** 'सर्वं सामान्यतो यस्मात् सर्वैरप्यनुभूयते' इत्यनुव्याख्यानादिबलादिति भावः । **इत्यादीति ।।** धर्मिप्रतियोगिनोरुभयोरप्यसन्निधाने संस्कारव्यापारकेण मनसा समुदायविषयकैक-**(र.टि.)** ज्ञानोत्पत्तिरादिपदेन गृहीता बोद्धव्या । **सर्वाभेदवादिभिरपीति ।।**

अनेनापिशब्दो विरोधद्योतनार्थ इत्युक्तं भवति । अत एवाऽह- **पदार्थान् व्यवस्थापयद्भिरिति ।।** तैर्विशेषस्य स्वारस्येनाङ्गीकृतत्वान्नास्मत्समु-च्चयार्थत्वमपिशब्दस्येति भावः । अत एवोक्तम्- **अङ्गीकृतप्राय इति ।।** ननु 'स एष' इति वाक्यगतात्मशब्दस्यैव ब्रह्मप्रतिपादकत्वम्, 'नेति नेति' इत्यनयोर्भिन्नभिन्नप्रतियोगिघटितवैलक्षण्यप्रतिपादकत्वमिति कथं पुनरुक्ति-रित्यत आह- **इदमुक्तं भवतीति ।। पौनरुक्त्यादीति ।।** आदिपदेन व्यावृत्तिद्वयब्रह्मणोर्विशेषणविशेष्य-भावानुपपत्तिरूपार्थदोषादिकं ग्राह्यं द्रष्टव्यम् । **अत्रेति ।।** परेण विशेषोऽङ्गीकारयितव्य इत्यर्थः । **तथाविध-मिति ।।** व्यावृत्तेर्भेदरूपत्वादिति भावः । **एतद्वाक्यविरोध इति ।।** तथा च भेदखण्डनं स्वव्याहतमिति भावः। **सम्मतत्वेनेति ।।** अन्यथा भेदनिराकरणादिकं न स्यादिति भावः । **तस्य प्रमात्वमिति ।।** यदि भेददर्शनं प्रमाणं स्यात् तदाऽन्योन्याश्रयः स्यादित्यापादनेनेत्यर्थः । **प्रमात्वाप्रतिबन्धकत्वादिति ।।** परेण घटात्पटस्य भेदसिद्धौ पटाद्घटस्य भेदसिद्धिरिति सिद्धिपदोक्तज्ञप्तावेवोक्तस्यान्योन्याश्रयत्वस्य तत्तद्गतप्रमात्वानिषेधकत्वा-दित्यर्थः ।

**(रा.टि.)** गमनिकायामेव व्याख्यातत्वादत[१] इत्यादिवाक्यमव्याख्यायोत्तरवाक्यमवतारयितुं शङ्कते- **पटः प्रतीयमान इति ।। उक्तमिति ।।** 'प्रायस्सर्वतः' इत्यादिवाक्य इति भावः । मूल अनुपपन्नतामाशङ्क्य तात्पर्योक्त्या तां निराह- **यद्यपीति ।। यौगपद्यमस्तीति ।।** 'नाजात एको अन्यं हन्ति नाप्यन्याधारः' इति न्यायेन मूषिकमार्जारयोरिव मनोवृत्तीनामुत्तरात्मविशेषगुणानां पूर्वपूर्वनिवर्तकत्वमिति मतान्तरेऽपि सिद्धतया वध्यघातुकभावसत्त्वेन **यौगपद्यम्** एकाधिकरण्यमस्तीत्यर्थः । **आत्मगुणानाम्** आत्मस्वामिकानां मनोनिष्ठा-नामित्यर्थः । पररीत्यैवमुक्तिः । धर्माधर्मादिविजातीयव्यावृत्त्यर्थं सजातीयेत्युक्तिरित्याहुः । दर्शनेन ज्ञायत इत्ययुक्तमित्यत आह- **दृश्यत इति ।।** 'करणाधिकरणयोश्च' इति करणे ल्युट् अनभाव इति भावः । **तस्मिन् सर्वदा सत्येवेति ।।** घटादिधर्मिस्वरूपभेदगोचरचाक्षुषादिज्ञानोदयदशायां भेदप्रतियोगिभूतसर्वपदार्थोपनायक-साक्षिरूपज्ञाने सति धर्मिप्रतियोग्युभयविषयैकज्ञानोदयसम्भवेनानुपपत्त्यभावात् कथमेतौ तदयुक्तमित्यादिना कृताक्षेपपरिहारावित्यर्थः । **एकज्ञानेति ।।** धर्मिप्रतियोग्युभयविषयैकज्ञानेत्यर्थः । एवं धर्मिणः सन्निकृष्टत्वे प्रतियोग्यनुभवजन्यसंस्कारसहकृतेन्द्रियसन्निकर्षेण, प्रतियोगिनस्सन्निकृष्टत्वेन तु धर्म्यनुभवजन्यसंस्काराहित-शक्तिकेन्द्रियेणेत्यर्थः । शक्त्यनङ्गीकारमतेनोक्तम्- **सहकृतेति ।।** ननु भेदकार्यं विशेषेण कथं भवेदित्यत आह- **विशेषस्य भेदप्रतिनिधित्वादिति ।।** 'व्रीहिभिर्यजेत' इति यागसाधनत्वेन श्रुतव्रीहीणामलाभे व्रीहिकार्यं तत्प्रतिनिधिनीवारैः क्रियते तद्वदिति भावः । एकस्मिन्नित्यस्यार्थः- **अभिन्ने वस्तुनीति ।।** अपिशब्दसूचितकैमुत्यं व्यनक्ति- **सर्वाभेदेति ।।** न केवलमस्माभिरिति तु न व्याख्यातम् । परेण मुखतो विशेषानभ्युपगमादाह- **अङ्गीकृतः अङ्गीकृतप्राय इति ।।** अत्र ज्ञापकमाह- **तदविनाभूतेति ।।** व्यवहारादिभेदकार्यरूपार्थस्ये-**(रा.टि.)** त्यर्थः । अस्फुटत्वात् पौनरुक्त्यं व्यनक्ति- **इदमुक्तमिति ।। पदेति ।।** (आत्मेत्यनूद्य नेति) मूर्तवन्नेति अमूर्तवन्नेति मूर्तामूर्तब्राह्मणादौ वाजसनेये नेति पदसमन्वयबलेन पृथिव्यप्तेजोऽभिधमूर्तवाय्वन्त-रिक्षाख्यामूर्तादिसर्वपदार्थव्यावृत्तिप्रतिपादकमित्यर्थः । ततः किमित्यत आह- **तत्रेति ।।** वाक्यद्वयेत्यादिनाऽ-न्वयः । मूर्तामूर्तसर्वपदार्थव्यावृत्तिमत्त्वे 'नेति नेति' इति वाक्यद्वयप्रतिपादितयोरित्यर्थः। **अखण्डेति ।।** निर्भेदे-त्यर्थः । यद्वा अखण्डः पदार्थान्तरेणानन्वितो वा प्रातिपदिकार्थमात्ररूपो वा यो वाक्यार्थः तदङ्गीकारविरोधा-दित्यर्थः ।

'संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।।'

इत्युक्तेः । **अत्यन्ताभेद इति ।।** ब्रह्मणो व्यावृत्त्योश्चेत्यनुषङ्गः । पर्यवसानमाह- **अत इति ।।** इत्यादिभेद-निषेधकवाक्येत्यर्थः । **पौनरुक्त्यादीति ।।** अन्यतरपरिशेषादिरादिपदार्थः ।

अपौनरुक्त्यमन्यथोपपन्नं सन्न विशेषमाक्षिपतीति शङ्कते- **नन्वेवमादिपदजातमिति ।।** नेतिनेतीत्यादि-पदजातमित्यर्थः । वचनवृत्त्याऽमूर्तव्यावृत्तिं मूर्तव्यावृत्तिं चान्योन्यभिन्नां बोधयित्वा पश्चादात्मपदलक्षितं शुद्धचैतन्यं लक्षणया बोधयति- गङ्गापदं प्रवाहबोधद्वारा तीरमिवेत्यर्थः । **लक्ष्यार्थ इति ।।** नेतिनेतीत्युभाभ्यामपि शब्दाभ्या-मेकचैतन्यस्यैव बोधनादेकेनैव पूर्त्या पदान्तराणां वैयर्थ्यमेवेत्यर्थः ।

'लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदतः ।
विज्ञानानन्तपदयोः पर्यायव्यर्थते कुतः ।।'

इति परोक्तमाशङ्कते- **नानाविधेति ।।** जडत्वानानन्दत्वादिनानाविधारोपेत्यर्थः । चशब्दोऽनुभवविरोधरूप-दोषान्तरसमुच्चयार्थ इति व्याचष्टे - **इतश्चेति ।।** वक्ष्यमाणानुभवविरोधाच्चेत्यर्थः । निर्विशेषाभेदो ब्रह्मणेति योज्यम् । अनुभवाकारं व्यनक्ति-

**विरोधप्रकटनार्थमनुभवेन हीति ॥** स्तम्भकुड्यादिरूपैकार्थस्य घट-विलक्षणोऽयं पटविलक्षणोऽयमिति विशेषणत्वेनेत्यर्थः । **अभिन्नमिति ॥** विशेष्येणेति भावः । नेतिनेतीति वाक्योक्तेरनौचित्यमाशङ्क्य निराह- **यद्यपीति ॥ अत्रेति ॥** अभिन्ने वस्तुनि भेदकार्यनिर्वाहः परसम्मत इत्यत्रेत्यर्थः । **शक्यमिति ॥** सत्यत्वज्ञानत्वादिधर्मस्य ब्रह्मणा भेदस्य वा भेदाभेदस्य वा अखण्डार्थताविरोधेनाङ्गी-कर्तुमशक्यतयाऽत्यन्ताभेदे स्वीकार्ये विशेषस्य चानङ्गीकारे पदानां पुनरुक्ततापत्तेर्विशेषोऽभ्युपेय इत्यादेस्तत्रापि वक्तुं शक्यत्वादिति भावः । एतदुदाहरणस्य अन्यदप्यस्ति प्रयोजनमित्याह- **क्वापीति ॥** एवमियता प्रबन्धेन प्रत्यक्षपरिशेषाभ्यां भेदस्य धर्मिस्वरूपतया प्रतीतिद्वयाभावात् 'नच विशेषणविशेष्यतया भेदसिद्धिः' इत्यादि-नोक्तान्योन्याश्रयरूपतर्कस्यानवतार इत्युक्तम् । अधुना व्याप्त्या-द्यङ्गहीनत्वात्तर्काभासोऽयमिति भावेनाऽह- **किञ्चात्रेति ॥** भेददर्शनविषय इत्यर्थः । **सम्मतत्वेनेति ॥** भेदनिरासान्यथानुपपत्त्या दूषणभूषणादिव्यवस्थित- सर्वव्यवहारान्यथानुपपत्त्या च सम्मतत्वेनेत्यर्थः । **विपर्ययेति ॥** 'न चान्योन्याश्रयोऽङ्गीकर्तुमुचितोऽतो न **(रा.टि.)**दृश्यत' इति विपर्यये पर्यवसानरूपाङ्गमनुपपन्नं, व्याघातप्रसङ्गादिति भावः । **तस्य प्रमात्वमिति ॥** यदि भेददर्शनं प्रमा स्यात् तर्ह्यन्योन्याश्रयः स्यादित्यापादनं कार्यम् । भेददर्शनस्य विशेषणविशेष्यभावादिप्रतीति-सापेक्षत्वेन तत्रैवान्योन्याश्रयतया भेददर्शनप्रतिबन्धकत्वेऽपि व्याप्त्यभावेन प्रमात्वाप्रतिषेधकत्वादित्यर्थः । **एतेनेति ॥** वास्तवत्वाप्रतिबन्धकत्वेनेत्यर्थः । यदि भेददर्शनं वास्तवं- तात्त्विकं स्यात् तर्ह्यन्योन्याश्रयः स्यादित्यत्र व्याप्त्यभावेन वास्तवत्वाभावप्रतिबन्धकतया परास्तमित्यर्थः ।

वास्तवत्वनिरासश्च व्यर्थ एव । तावता त्वदभिमतव्यावहारिकत्वस्यासिद्धेरिति भावेनाऽह- **किञ्चेति ॥** वास्तवत्वपक्ष एव अन्योन्याश्रयदोषो न त्ववास्तवत्व इति शङ्कामर्थान्तरन्यासेन निराह- **नहीति ॥ कारण-मिति ॥** मृदित्यनुकर्षः । **प्रकारान्तरेति ॥** धर्म्यादिप्रतीतिसापेक्षतां विना भेदप्रतीतेः प्रकारान्तराभावात्, भेदप्रतीतेर्निवृत्तिरिति चेदित्यर्थः । **उक्तत्वादिति ॥** 'प्रमात्वाप्रतिबन्धकत्वात्' इत्यत्रेति भावः । अन्योन्याश्रयता धर्म्यादिधीसापेक्षतापगमे प्रकारान्तरस्य चाभावे कथं भेदप्रत्यक्षं भवेदित्यत आह- **किञ्चेति ॥ स्पष्टदृष्ट-मिति ॥** अनुभवसिद्धमित्यर्थः । **अस्मिन्नेवेति ॥** धर्म्यादिधीसापेक्षत्वप्रकार एवास्मदुक्तरीत्याऽवान्तरविशेषं कल्पयिष्यतीत्यर्थः । अनुभवसिद्धं कार्यमेव स्वनिर्वाहकं कल्पयिष्यतीत्येतदर्थान्तरन्यासेन व्यनक्ति- **नहीति ॥ एवमिति ॥** यथा प्रत्यक्षेण स्वविषये घटपटादौ भेदप्रतीतिः तथाऽनुमानागमाभ्यां स्वविषये साध्यादौ भेद-प्रतीतिः । साध्यादिवस्तुप्रतीतेः सर्वविविक्ततया तद्विषयकत्वात् तत्प्रतीतिरेव भेदप्रतीतिर्द्रष्टव्येत्यर्थः । **वक्ष्य-माणेति ॥** नवकृत्वोऽभ्यासप्रकरणे दृष्टान्तनवकेनोच्यमानजीवेश्वरविषयभेददर्शनन्यायेन 'तथा यतः स्वरूप-तश्चान्यो जातितः' इति वक्ष्यमाणविरुद्धधर्मवत्त्वन्यायेनेत्यर्थः । 'नहि प्रमाणदृष्टस्य' इत्यादिना वक्ष्यमाणन्यायेन वेत्यर्थः । अनुमानादिना भेदधीरयुक्तेति शङ्कते- **नन्विति ॥** आदिपदेन क्रियाकारकादिपदभेदग्रहः । अन्तिमादिपदेनाऽगमपरिग्रहः । **कथमिति ॥** भेदे प्रतीतेऽनुमानादिप्रवृत्तिः, तत्प्रवृत्त्यनन्तरं भेदप्रतीतिरिति प्राप्तेरित्यर्थः । तत्किमिति काकुः । **तथा सतीति ॥** अनङ्गीकार इत्यर्थः । अनुमानादिव्यवहारस्य व्याप्यव्याप-कादिभेदधीसापेक्षत्वादिति भावः । नन्वस्ति भेदधीः प्रमा तु न इत्युच्यत इत्यत आह- **प्रमात्वेति ॥ बाध-केति ॥** भेदभेदिनोर्मिथ्यात्वप्रत्ययस्येत्यर्थः । **अनुपदमिति ॥** उत्तरवाक्यादावेवेत्यर्थः । **इति भेदप्रकरणम् ॥**

**(श्री.टि.)** शङ्कते- **पट इत्यादिना ॥** प्रतियोगिभूतस्येत्यतः पूर्वं तथात्व इति पूरणीयम् । **युगपज्ज्ञानेति ॥** युगपज्ज्ञानोत्पत्तीत्यर्थः । ननु मूले ज्ञानयौगपद्याभावो दोष इत्यनुक्त्वा युगपज्ज्ञानानुत्पत्तिरित्यनुत्पत्तिपर्यन्तं कस्माद्धावनं कृतमित्यतस्तत्कृत्यमाह- **यद्यपीत्यादिना ॥ वध्यघातुकभावेनेति ॥** प्रथमक्षणे संशयो द्वितीय-क्षणे च तन्निवर्तकं विशेषदर्शनं भवति । एवं च संशयविशेषदर्शनयोर्मूषकमार्जारवद्वध्यघातुकभावेन युगपद-वस्थानरूपयौगपद्यमस्त्येव । अन्यथा वध्यघातुकभावस्यैवायोगात् । तथा च ज्ञानानां युगपदवस्थानरूपयौग-पद्याभावस्य लोकेऽदृष्टत्वात् प्रकृते सर्वव्यावृत्ततया पटः प्रतीयत इत्यङ्गीकारे धर्मिप्रतियोगिज्ञानयोर्युगपदवस्थान-रूपयौगपद्यप्रसङ्ग इत्यापादने इष्टापादनं स्यादिति भावः । कुतो नास्तीत्यत आह- **मनस इति ॥** ननु मनसोऽणुत्वेन **(श्री.टि.)** युगपदिन्द्रियद्वयसन्निकर्षासम्भवेऽप्येकेन्द्रियसन्निकर्षस्तावदस्त्येव । तथा चैकस्मादिन्द्रियाद्युग-पज्ज्ञानद्वयं जायतामित्यत आह- **एकेन्द्रियविषयेऽपीति ॥** एकेन्द्रियरूपाधिष्ठाने मनस्सन्निकर्षस्य सत्त्वेऽपीति व्याख्येयम् । नन्वात्मगुणानां युगपदुत्पत्त्यदर्शनादित्ययुक्तम् । लिङ्गपरामर्शानन्तरमनुमितिजननकाले लिङ्ग-संस्कारस्याप्यात्मनि जायमानत्वेन वह्न्यनुमितिलिङ्गसंस्कारलक्षणविजातीयात्मगुणयोर्युगपदुत्पत्तिदर्शनादत उक्तम्-**सजातीयेति ॥** केचित्तु लिङ्गपरामर्शानन्तरं तदनुव्यवसायोत्पत्तिकाले लिङ्गसंस्कारस्यापि जननाद्विजा-तीयसंस्कारानुव्यवसायोत्पत्तिव्यावृत्त्यर्थं सजातीयपदमित्याहुः । अन्ये तु अनुमितिजननकाले धर्मादेरप्यात्मनि जननाद्विजातीयानुमितिधर्माद्युत्पत्तिव्यावृत्त्यर्थं सजातीयपदमित्याहुः । **न चेतीति ॥**

तथा च 'न च युगपज्ज्ञा-नानुत्पत्तिर्दोषः' इति मूलस्य एकेनैवेन्द्रियेण युगपत्सजातीययोर्ज्ञानयोरनुत्पत्तिर्दृष्टेति हेतोः प्रकृते पटः प्रतीयमानः सर्वव्यावृत्ततयैव प्रतीयत इत्यङ्गीकारे एकेनैवेन्द्रियेण सजातीययोः प्रतियोगिभूतसर्व-धर्मिभूतपटविषयक-योर्ज्ञानयोर्युगपदुत्पत्तिप्रसङ्गरूपो दोषः स्यादित्यर्थो द्रष्टव्यः। मूले दर्शनशब्देन ज्ञानग्रहणे दीपसहस्रदर्शने ते सर्वे सहस्रदीपा ज्ञायन्त इति पुनरुक्तिः। अनुव्यवसीयन्त इत्यर्थाङ्गीकारे च प्रकृतासङ्गतिरतो व्याचष्टे- **दृश्यतेऽने-नेति** ॥ सामान्यत इति पदाभिप्रायमाह- **यद्यपीत्यादिना ॥ युगपदिति ॥** एकेनैवेन्द्रियेण युगपत् सजातीयानेक-ज्ञानोत्पत्तीत्यर्थः। सामान्यशब्दार्थमाह-**समुदायेति** ॥ प्रतियोगिभूतसर्व-धर्मिभूतपटविषयकसमूहालम्बनस्येत्यर्थः।

शिष्यः शङ्कते- **नन्विति ॥ साक्षिरूपमिति ॥** 'सर्वं सामान्यतो यस्मात्सर्वैरेवानुभूयते' इत्यनुव्याख्याना-द्युक्तिबलादित्यर्थः। **सर्वदा सत्येवेति ॥** साक्षिरूपज्ञानस्य नित्यत्वादिति भावः। **आक्षेपपरिहाराविति ॥** युगपज्ज्ञानोत्पत्त्यापादनरूपाशङ्का समूहालम्बनज्ञानाङ्गीकारेण परिहारश्चेत्यर्थः। **सत्यमित्यादि ॥** सामान्यतः सर्ववैलक्षण्यप्रतीतावेव त्वदुक्तोपपादनं सङ्गच्छते। तत्र प्रतियोगिभूतसर्वज्ञानस्य साक्षिरूपत्वात्। यदा विशेषतो घटात्पटो भिन्न इति घटप्रतियोगिकव्यावृत्तिः पटे प्रतीयते तत्र घटपटज्ञानोत्पत्तियौगपद्यं प्रसज्यत एव। न हि प्रतियोगिभूतघटज्ञानं साक्षिरूपं येन त्वदुक्तरीतिस्तत्र सङ्गच्छत इति भावः। मूलोक्तं समाधानं स्थलविशेषा-भिप्रायमित्याह- **तत्रेति ॥ संस्कारेति ॥** यदसन्निहितं धर्मिप्रतियोगिनोरन्यतरत्तत्तद्विषयकपूर्वानुभवजन्य-संस्कारेत्यर्थः। **एकज्ञानेति ॥** यत्सन्निहितं धर्मिप्रतियोगिनोरन्यतरत् तद्विषयकमेव ज्ञानमुत्पद्यत इत्यर्थः। **इत्यादीति ॥** इत्यादीत्यादिपदेन धर्मिप्रतियोगिनोरुभयोरप्यसन्निधाने संस्कारव्यापारकेण मनसा समुदायविषय-कैकज्ञानोत्पत्तिरिति द्रष्टव्यम्। **इति वेति ॥** अन्यतरमात्रावशेषः स्यादिति भावः। **विद्यमानयोरेवेति ॥** उभयोरपि सत्त्वाङ्गीकारेण नान्यतरमात्रावशेष इति भावः। अभेदविशेषयोरुभयोः प्रयोजनमाह- **तत्राभेदे-नेति ॥** अन्योन्याश्रयादिपरिहार इत्यत्राऽदिपदेन भेदप्रतीतिपरम्परया अनवस्थाप्रसङ्गस्य, तथा 'प्रत्यक्षं किं भेदमेव गोचरयेदुत वस्त्वपि' इत्यादिनोक्तदूषणस्य च ग्रहणम्। अन्यतरमात्रावशेषादिकमित्यत्राऽदिपदेन शब्दपर्यायत्वग्रहणम्। नन्वन्यतरमात्रावशेषाभावादेर्भेदनिर्वाह्यत्वेन कथं विशेषान्निर्वाह इत्यत आह- **विशेष-स्येति ॥** अभिन्ने वस्तुनि भेदकार्यकारित्वस्यैव विशेषलक्षणत्वादिति भावः। सर्वाभेदवादिभिरपीत्यनेनापिशब्दो **(श्री.टि.)**विरोधद्योतनार्थ इत्युक्तं भवति। अत एवाऽह- **किमुतेत्यादि ॥** सर्वाभेदादिवादिभिरपीति पाठे आदिपदेन भेदाभेदवादिग्रहणम्। **पदार्थान्** द्रव्यगुणादीन्। **अन्यैः** तार्किकादिभिः। ननु सर्वाभेद-वादि-भिर्विशेषस्य कण्ठतोऽनङ्गीकृतत्वात्कथमङ्गीकृत एवेत्युच्यत इत्यत आह- **अङ्गीकृतप्राय इति ॥** अत एव मूलगतापिशब्दस्य नास्मत्समुच्चयार्थत्वम्। अस्माभिः कण्ठत एव विशेषस्याङ्गीकृतत्वादिति भावः। कथमङ्गी-कृतप्राय इत्यत आह- **तदविनाभूतस्येति ॥** विशेषाविनाभूतस्य ज्ञानानन्दादेरन्यतरपरिशेषाभावापर्याय-त्वादेरर्थस्येत्यर्थः।

**॥ पदसमन्वयबलेनेति ॥** समन्वयो हि द्विविधः, पदसमन्वयो वाक्यसमन्वयश्चेति। तत्र वैदिकानामपर्याया-नन्तशब्दानां ब्रह्मण्युपक्रमादिप्रमाणकः शक्तितात्पर्यलक्षणस्सम्बन्धः पदसमन्वयः, तन्न्यायेनेत्यर्थः। पृथक्पृथ-गर्थेषु वाचकतयाऽवस्थितपदसमुदायरूपवाक्यानामन्वयो भगवत्परत्वं वाक्यसमन्वयः। तत्पक्षे एतद्वाक्यस्य पृथिव्यादिव्यावृत्तिमात्रप्रतिपादकत्वेन वाक्यद्वयप्रतिपाद्यव्यावृत्त्योर्ब्रह्मसम्बन्धित्वासिद्धिरिति भावः। आत्म-**शब्दार्थस्य** ब्रह्मणः। **वाक्यद्वयेति ॥** नेति नेतीति द्विराम्नातत्वादिति भावः। **भेद इति ॥** ब्रह्मणा परस्परं चेत्यर्थः। **अखण्डेति ॥** निर्भेदार्थनिष्ठत्वरूपेत्यर्थः। मूलं योजयति- **तत्रेति ॥** अत्यन्ताभेद इति मूले शेषपरि-पूरणम्। ब्रह्मणा अत्यन्ताभेदे यद् यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तिबलात्परस्परं चात्यन्ताभेद इत्यर्थः। मूले विशेषपदं बुद्ध्या विविच्य षष्ठ्यन्तं कृत्वा तेन चशब्दस्य सम्बन्ध इत्यभिप्रेत्योक्तम्- **विशेषस्य चानङ्गी-कार इति ॥ पुनरुक्तीति ॥** ब्रह्मरूपैकार्थप्रतिपादकत्वादित्यर्थः। **पुनरुक्तिः** पर्यायता। एवमुत्तरत्रापि ज्ञात-व्यम्। अत्यन्ताभेदाङ्गीकारे निमित्तकथनायोक्तम्- **नेह नानाऽस्तीति ॥ इह** ब्रह्मणि **किञ्चन** किमपि व्यावृत्त्यादिकं **नाना** भिन्नं नास्तीत्यर्थः। तथा च व्यावृत्त्योर्ब्रह्मणश्चात्यन्ताभेदानङ्गीकारे एतद्वाक्यविरोधः स्यादिति भावः। पौनरुक्त्यादीत्यादिपदेन व्यावृत्तिद्वयस्य ब्रह्मणश्च विशेषणविशेष्यभावानुपपत्तेरन्यतर-मात्रावशेषस्य च सङ्ग्रहः। **एवमादीति ॥** नेति नेतीत्यादिवाक्यगतेत्यर्थः। **व्यावृत्त्योः** पृथिवीव्यावृत्ति-जलादिव्यावृत्त्योः। **लक्ष्यार्थो** ब्रह्म। **अखण्डार्थतेति ॥** निर्भेदार्थनिष्ठत्वरूपेत्यर्थः। **वैयर्थ्येति ॥** एकेनैव पदेन ब्रह्मणो लक्षितत्वात्पदान्तरवैयर्थ्यं स्यादित्यर्थः। **नानाविधारोपेति ॥** पृथिवीजलाद्यभेदरूपेत्यर्थः। तथा च, स एष आत्मा पृथिवीवन्न जलादिवन्नेति प्रतिपादनेन तत्तदभेदारोपपरिहारो भवतीति भावः। **प्रति-पाद्येति ॥** लक्षणया प्रतिपाद्ये ब्रह्मणि पृथिव्यादिव्यावृत्तिरूपविशेषणानामनर्पणे तत्तदभेदारोपपरि-हारस्याप्यनुपपत्तेरित्यर्थः

। विशेषणार्पणे च निर्विशेषार्थनिष्ठत्वनिर्भेदार्थनिष्ठत्वरूपाखण्डार्थताहानिरिति भावः । यथोक्तमनुव्याख्याने 'न व्यावृत्त्या प्रयोजनम् । व्यावृत्तस्याविशेषत्वे' इति । **निर्विशेषाभेदे** ब्रह्मणा परस्परं चेति शेषः । पौनरुक्त्यादीत्यादिपदेन पदान्तरवैयर्थ्यं ग्राह्यम् । चशब्दस्यार्थमाह- **इतश्चेति ॥** किञ्चे-त्यर्थः । निर्विशेषाभेदः परस्परमिति शेषः । **अभिन्नमपि** परस्परमभिन्नमपीत्यर्थः । **सातिशयं** सविशेषात्यन्ता-भिन्नमित्यर्थः । **तन्मात्रं** निर्विशेषात्यन्ताभिन्नम् । **अत्रेति ॥** 'सर्वाभेदवादिना मायिना विशेषोऽङ्गीकार्यः' **(श्री.टि.)** इत्यत्रेत्यर्थः । **तथाविधमेवेति ॥** व्यावृत्त्यपरपर्यायभेदप्रतिपादकमेव नेति नेतीति वाक्यमुदा-हृतमित्यर्थः । न केवलं प्रस्तुतः भेदप्रतिपादकत्वादेवास्य वाक्यस्य उदाहरणं किन्तु प्रयोजनान्तरानुरोधेनापीत्याह- **क्वापीति ॥** कुत्रापि जगति वा ब्रह्मणि वेत्यर्थः । **भेदानभ्युपगताविति ॥** भेदरूपपदार्थस्यैवानभ्युपगम इत्यर्थः । **एतद्वाक्येति ॥** भेदप्रतिपादकनेतिनेतीतिवाक्येत्यर्थः । **अनेनेति ॥** 'नेति नेतीत्यत्र सर्ववैलक्ष-ण्याङ्गीकारात्' इति मूले नेति नेतीति वाक्योदाहरणेनेत्यर्थः । तथा चैतद्वाक्यविरोधपरिहाराय भेदस्याङ्गीकर्तव्यत्वे भेदखण्डनं क्रियमाणं स्वव्याहतमित्याशयः ।

'तस्माद्भेददर्शनं युक्तमेव' इत्युपसंहारवाक्याशयमाह- **किञ्चात्रेत्यादिना ॥** अत्र धर्मिप्रतियोग्यपेक्षया भेदसिद्धिर्भेदापेक्षं च धर्मिप्रतियोगित्वमित्यन्योन्याश्रयतया भेदस्यायुक्तिरिति वाक्ये भेदविषये कथमापादनं त्वया क्रियत इत्यर्थः । आपादनप्रकारं शङ्कते- **यदि भेद इति ॥ विपर्ययेति ॥** 'न चान्योन्याश्रयाणि कार्याणि भवन्ति तस्माद्भेदो न दृश्यते' इति विपर्ययपर्यवसानं न सम्भवतीत्यर्थः । तत्र हेतुः- **भेददर्शनस्य सम्मतत्वे-नेति ॥** अनुमानतर्कागमादिव्यवहारं कुर्वतस्तव भेददर्शनस्य सम्मतत्वात् । अनुमानतर्कयोर्लिङ्गसाध्यापादक-भेदसापेक्षत्वात् । अन्यथा साध्यावैशिष्ट्यादिप्रसङ्गादेरनुमानादेरेवानुत्थानात् । आगमस्यापि पदपदार्थसंसर्गादि-भेदसापेक्षत्वात् । अन्यथा गामानयेत्यादेरागमस्याबोधकत्वापत्तेः । अतो भेददर्शनं तवापि सम्मतमेवेति प्रतितर्क-पराहतिरिति भावः । यथोक्तं वादावल्याम् 'यदि भेददर्शनं न स्यात्तर्ह्यनुमानादिसकलव्यवहारविधुरः परः प्रसज्येतेति प्रतितर्कपराहतत्वात्' इति । किञ्च भेददर्शनस्यासम्मतत्वे भेदनिराकरणमेवायुक्तं स्यात् । तस्य प्रतियोगिज्ञानपूर्वकत्वादित्यपि द्रष्टव्यम् । **तस्य** भेददर्शनस्य । **प्रमात्वाप्रतिबन्धकत्वादिति ॥** 'यदि भेदो धर्म्यादिप्रतीतिमपेक्ष्य प्रमीयेत तदाऽन्योन्याश्रयः स्यात् । न चान्योन्याश्रयाणि कार्याणि भवन्ति । तस्माद्भेददर्शनं न प्रमा' इति वक्तव्यम् । स्यादिदं यदि धर्म्यादिप्रतीतेर्भेदप्रमात्वावच्छेदेन कारणत्वं स्यान्न चैवम्, तथात्वे धर्मिप्रतियोगिप्रतीतिमतो भेदभ्रमः क्वापि न स्यात् । न चेष्टापत्तिः । अङ्गुल्यवष्टम्भादिना द्वितीयचन्द्रदर्शनाऽ-नन्तरमयं चन्द्रोऽस्माच्चन्द्राद्भिन्न इति चन्द्रभेदभ्रमस्यानुभवसिद्धस्यापह्नोतुमशक्यत्वात् । तस्माद्भेदप्रतीतित्वाव-च्छेदेनैव धर्म्यादिप्रतीतेः कारणताया अवश्यं वाच्यत्वेन प्रकृते धर्म्यादिप्रतीत्यपेक्षया प्राप्तान्योन्याश्रयस्य भेदप्रतीतिप्रतिबन्धकत्वमेव वाच्यम् । न तु प्रमात्वप्रतिबन्धकत्वमित्यर्थः । **वास्तवत्वं** पारमार्थिकत्वम् । **परास्तमिति ॥** अन्योन्याश्रयेण भेददर्शनस्य वास्तवत्वं निराक्रियत इत्युक्त्या प्रमात्वमेव निराक्रियत इत्युक्तं स्यात् । तन्न सम्भवति । अन्योन्याश्रयत्वस्योक्तरीत्या प्रमात्वाप्रतिबन्धकत्वादित्यर्थः । दुष्टस्य, भेदस्य । **व्यावहारिकसत्त्वमपीति ॥** अन्योन्याश्रयेण भेददर्शनस्य प्रमात्वनिराकरणे भेदस्य पारमार्थिकसत्त्वम् एव निषिद्धं न तु व्यावहारिकं सत्त्वम् । तत्तु त्वयाऽङ्गीकृतमस्तीत्यर्थः । ननु व्यावहारिकसत्त्वोपेते वस्तुन्यन्योन्याश्रयो न दूषणमिति चेत्तत्राऽह- **न हीति ॥** अवास्तवी पारमार्थिकसत्या न भवति, किन्तु व्यावहारिकसत्येत्यर्थः ।

पुनः प्रकारान्तरेणाऽपादनं शङ्कते- **अथेति ॥ धर्म्यादिप्रतीत्यपेक्षैवेति ॥** न चान्योन्याश्रयाणि कार्याणि भवन्ति । तस्माद्धर्म्यादिप्रतीत्यपेक्षया भेदो न प्रतीयत इति विपर्ययपर्यवसाने 'सविशेषणे हि' इति न्यायेन **(श्री.टि.)** भेदप्रतीतेर्धर्म्याद्यपेक्षैव निवर्तत इत्यर्थः । विशिष्टनिषेधाभिप्रायेण शङ्कते- **प्रकारान्तराभावा-दिति ॥** धर्म्यादिप्रतीत्यपेक्षया प्रतीयमानत्वरूपप्रकारभिन्नप्रकारस्य भेददर्शनेऽभावाद्धर्म्यादिप्रतीत्यपेक्षया प्रतीय-मानत्वरूपप्रकारस्यान्योन्याश्रयेण निवृत्तौ भेददर्शनस्यैव निवृत्तिः प्राप्तेत्यर्थः । **दर्शनमात्रस्येति ॥** भेददर्शन-मात्रस्येत्यर्थः । अन्यथा तन्निराकरणानुपपत्तिरित्यर्थः । एवं च विशेष्यभूतभेददर्शननिराकरणस्य बाधितत्वेन विशिष्टनिषेधायोगाद् विशेषणीभूतं धर्म्यादिप्रतीतिसापेक्षत्वमेव निवर्तते । 'सविशेषणे हि विधिनिषेधौ विशेषण-मुपसङ्क्रामतस्सति विशेष्यबाधे' इति न्यायादिति भावः । ननु दर्शनमात्रस्य अङ्गीकृतत्वेऽपि प्रमात्वं वास्तवत्वं वा तस्य निराक्रियत इति चेत्तत्राऽह- **प्रमात्वादीति ॥ उक्तत्वादिति ॥** 'अन्योन्याश्रयत्वस्य प्रमात्वाप्रति-बन्धकत्वात्' इत्यनेनेत्यर्थः । **प्रकारान्तरं** धर्म्यादिप्रतीत्यपेक्षया प्रतीयमानत्वरूपप्रकारभिन्नं प्रकारमित्यर्थः । **अस्मिन्नेवेति ॥** धर्म्यादिप्रतीत्यपेक्षया प्रतीयमानत्वरूपप्रकार एवेत्यर्थः । **स्वयं** स्पष्टदृष्टं भेददर्शनमित्यर्थः । अत्रोदाहरणमाह- **नहीति ॥ परिचितचरेति ॥** 'भूतपूर्वे चरट्' इति स्मरणात् पूर्वं परिचितं परिचितचरमि-त्यर्थः । **बीजासम्भवेति ॥** बीजादुत्पत्त्यसम्भवेत्यर्थः । परिचितेषु, बीजेषु । **अनुमानादिनेति ॥** अनुमानेन पक्षसाध्यलिङ्गरूपे स्वविषये । आगमेन पदपदार्थसंसर्गरूपे स्वविषय इत्यर्थः । अनुमाने

व्याप्यव्यापकादिभेदाप्रतीतौ साध्याविशिष्टत्वापत्त्या तदुच्छेद एव स्यात्। एवमागमेऽपि पदपदार्थभेदाप्रतीतौ संसर्गबोधायोगादागमो-च्छेदापत्तिरिति भावः। एवं च भेदे प्रत्यक्षादिप्रमाणत्रयमुक्तं भवति। **वक्ष्यमाणन्यायेनेति**॥ 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्यादिना वक्ष्यमाणन्यायेनेत्यर्थः। **कथमिति**॥ तथा चानुमानेन भेदप्रतीतिर्न सम्भवति। तत्र व्याप्यव्यापकादिभेदोऽनुमानेन बोद्धव्यः तस्मिन्नप्यनुमाने व्याप्यादिभेदः पुनरनुमानान्तरेणेति अनवस्था स्यादिति भावः। **नाङ्गीकरोतीति**॥ प्रत्यक्षेणेति शेषः। तथा चानुमानापेक्षितव्याप्यव्यापकादिभेदः प्रत्यक्षेणैव ज्ञातो भविष्यतीति नानवस्थेति भावः। **तथा सतीति**॥ यदि परो भेदप्रतीतिमात्रं नाङ्गीकुर्यादित्यर्थः। **व्यवहार इति**॥ अनुमानव्यवहारस्य साध्यलिङ्गव्याप्त्यादिभेदसापेक्षत्वादागमव्यवहारस्य च पदपदार्थसंसर्गादिभेदसापेक्ष-त्वेन भेदप्रतीत्यनङ्गीकारे स न स्यादित्यर्थः। ननु भेदप्रतीतिमात्राङ्गीकारेऽपि तस्याः प्रतीतेः प्रमात्वं निरा-क्रियते। भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यनुमानेन भेदप्रतीतेर्बाधितत्वात्। न हि बाधकबाधिता प्रतीतिः प्रमा भविष्यतीत्यत आह- **प्रमात्वनिवृत्तिकारणस्येति**॥ **अनुपदमेवेति**॥ 'यच्च प्रमाणदृष्टानामपि' इत्यादि-नाऽनुपदमेवेत्यर्थः। **इति भेदप्रकरणम्**॥

**(पां.टि.)** ज्ञानोत्पत्तियौगपद्यस्येव ज्ञानयौगपद्यस्याप्यापादयितुं शक्यत्वात् कुतो मूले ज्ञानयौगपद्यमनापाद्य तदुत्पत्तियौगपद्यमेवाऽपादितमित्यतो ज्ञानयौगपद्यस्यानिष्टत्वाभावात्तदनापादनम् अनिष्टत्वाच्च तदुत्पत्तियौग-पद्यस्यैव चाऽपादनं युक्तमित्यतो ज्ञानयौगपद्यस्य वस्तुतः सत्त्वादिष्टत्वं युगपत्तदुत्पत्तेरसत्त्वात्तदुत्पत्तियौगपद्यस्या-निष्टत्वमिति वक्तुं ज्ञानयौगपद्यप्रसङ्गशङ्कां तावदुत्थापयति- **पटः प्रतीयमान इत्यादि**॥ एवं ज्ञानयौगपद्यप्रसङ्ग-मुत्थाप्य शङ्कामुखेन तस्येष्टापादनत्वं दर्शयति- **यद्यपीति**॥ कुतो ज्ञानयौगपद्यसिद्धिरित्यतोऽयौगपद्येऽसमान-**(पां.टि.)** कालतया वध्यघातुकभावायोगात्तदन्यथानुपपत्त्यैव तत्सिद्धिरिति भावेनोक्तम्- **वध्यघातुक-भावेनेति**॥ एवमिष्टापादनत्वप्रसङ्गेन ज्ञानयौगपद्यप्रसङ्गस्यानवकाशमुपपाद्य मूलोक्तं ज्ञानोत्पत्तियौगपद्य-प्रसङ्गमुत्थापयति- **तथापीति**॥ कुत इत्यतः, सा किमनेकेन्द्रियकरणकानेकज्ञानोत्पत्तिः? किं वा एकेन्द्रियकरण-कानेकज्ञानोत्पत्तिः? इति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **मनस इति**॥ तथा च सामग्रीवैकल्या-न्नानेकेन्द्रियकरणकानेकज्ञानोत्पत्तिः सम्भवतीति भावः। अस्तु तर्हि मनःसंयुक्तैकेन्द्रियसन्निकृष्टानेक-विषयकानेकज्ञानोत्पत्तिरिति द्वितीयः। तत्र सामग्रीसद्भावेनोक्तदोषाप्रसरादित्यतः, एकं ज्ञानक्रियाकरणमेक-दैकामेव ज्ञानक्रियां जनयति न त्वनेकामिति ज्ञानक्रियाकरणस्वाभाव्यान्नायमपि पक्षः सम्भवतीत्याशयेनाऽह- **एकेन्द्रियविषयेऽपीति**॥ **सजातीयेति**॥ सजातीयप्रत्यक्षरूपात्मविशेषगुणानामित्यर्थः। अनेकज्ञानसामग्र्य-नुक्त्या अनेकज्ञानानुपपादनप्रसङ्गेन दर्शने ज्ञायन्त इत्यस्यायुक्तत्वप्रसङ्गेन च दर्शनशब्दस्य भावसाधनताया अयुक्तत्वात्करणसाधनतामाश्रित्य चक्षुस्सन्निकर्षपरतया तं व्याचष्टे - **दृश्यतेऽनेनेत्यादि**॥ साकाङ्क्षत्वप्रयुक्त-वाक्याभासत्वपरिहारायापेक्षितं पूरयति- **प्रकृत इति शेष इति**॥

ननु प्रकृतानुपयुक्तत्वान्मूले 'सामान्यतः सर्वे ज्ञायन्ते' इति सामान्याकारेण सर्वज्ञानोपपादनमनर्थकमित्यतो नेदं सामान्याकारेण सर्वज्ञानोपपादनपरं किन्त्वेकज्ञानत्वकथनेनैकेन्द्रियकरणकानेकविषयकानेकज्ञानोत्पत्त्यनु-पपत्तिरूपप्रागुक्तदोषपरिहाराय एकेन्द्रियकरणकानेकविषयकज्ञानस्य समूहालम्बनरूपैकज्ञानत्वकथनपर-मेवेत्यतो नानर्थकमित्यभिप्रेत्य तद्व्यावर्त्यशङ्काप्रदर्शनपूर्वकं तत्तात्पर्यमाह- **यद्यपीत्यादिना**॥ **साक्षिरूप-मिति**॥ 'सर्वं सामान्यतो यस्मात्सर्वैरेवानुभूयते' इत्यनुव्याख्यानोक्तेरिति भावः। **तत्कथमेतावाक्षेप-परिहाराविति**॥ धर्मिणः पटादेर्मनोवृत्तिरूपज्ञानस्येदानीमुत्पन्नत्वेऽपि सर्वमिति प्रतियोगिभूतसर्वविषयक-ज्ञानस्य साक्षिरूपतया पूर्वं सत्त्वेनेदानीमनुत्पन्नतया ज्ञानोत्पत्तियौगपद्यप्रसङ्गस्य धर्मिभूतस्य पटस्येव प्रतियोगि-भूतसर्वस्येदानीं मनोवृत्तिरूपज्ञानानुत्पत्त्या तत्समूहालम्बनत्वकल्पनया परिहारस्य च निर्बीजत्वादिति भावः। **तथापीति**॥ पटो न सर्वमिति व्यावृत्तिप्रतीतावुक्तरीत्योक्ताक्षेपपरिहारयोरनवतारेऽपीत्यर्थः। **विशेषत इति**॥ पटो न घट इति घटव्यावृत्ततया पटप्रतीतावित्यर्थः। **प्रसज्यत एवेति**॥ तत्र धर्मिप्रतियोगिनोर्घटपटयोः साक्ष्यविषयतया, तज्ज्ञानयोर्मनोवृत्तिरूपत्वेन, अन्यतरस्य साक्षिरूपत्वेन पटो न सर्वमित्यत्रेव प्रतियोगिज्ञानस्य साक्षिरूपतया, ज्ञानोत्पत्तियौगपद्यस्य परिहर्तुमशक्यत्वादिति युक्त एव तदाक्षेप इति भावः। तथापि कथमुक्तरीत्या परिहारः? समूहालम्बनज्ञानोत्पत्तेरसमर्थितत्वादित्यतः, तदनुत्पत्तिः किं धर्मिप्रतियोगिनोरुभयोः सन्निधान-दशायामभिमता? किं वाऽन्यतरस्य यस्य कस्यचित्सन्निधानदशायाम्? उभयोरसन्निधानदशायां वा? इति विकल्पान् मनसि निधायाऽद्यं दूषयति- **तत्रेति**॥ सामग्र्याः कार्याव्यभिचारित्वेनोभयसन्निधानस्थले योग्योभय-सन्निकर्षरूपसमूहालम्बनसामग्र्याः सत्त्वेन इदमनेन सदृशमितिवद् इदमस्माद्व्यावृत्तमिति समुदायालम्बनैक-ज्ञानोत्पत्तेरावश्यकत्वादिति भावः। न द्वितीयः। धर्मिप्रतियागिनोरन्यतरस्य धर्मिण एव सन्निधाने प्रतियोग्यनुभव-**(पां.टि.)** जनितसंस्कारसहकृतेन्द्रियधर्मिसन्निकर्षेण इदं तेन

सदृशमितिवत्, इदं तस्माद्व्यावृत्तमिति, अन्यतरस्य प्रतियोगिन एव सन्निधाने तु धर्म्यनुभवजनितसंस्कारसहकृतेन्द्रियप्रतियोगिसन्निकर्षेण तदनेन सदृशमितिवत् तदस्माद्व्यावृत्तमिति समुदायालम्बनैकज्ञानोत्पत्तेरनिरुद्धत्वादित्याऽह- **धर्मिप्रतियोगिनोरन्यतरस्यैवेति** ॥ नान्त्यः । तत्रापि धर्मिप्रतियोगिभूतघटपटानुभवद्वयजनितसंस्कारव्यापारकेण मनसैव तत्तेन सदृशमितिवत् तत्तस्माद् व्यावृत्तमिति समुदायालम्बनैकज्ञानोत्पत्तेरविकलत्वादित्याशयेनाऽह- **इत्यादीति** ॥ ननु भेदकार्यस्या-न्यतरमात्रावशेषा(भावा)देः कथं विशेषेण निर्वाह इत्यत आह- **विशेषस्येति** ॥ **किमुतेति** ॥ अनेन मूलेऽपिशब्दः कैमुत्यार्थ इत्युक्तं भवति । मायावादिभिर्विशेषस्यानङ्गीकृतत्वात्कथं तदङ्गीकृतत्वोक्तिरित्यत आह- **अङ्गीकृत इति** ॥ तदुपपादयति- **तदविनाभूतस्येति** ॥ विशेषाविनाभूतस्यान्यतरमात्रावशेषा-भावादिरूपस्यार्थस्येत्यर्थः।

ननु 'स एष नेति नेति' इति वाक्यस्य ब्रह्मपरत्वस्यैवासिद्धेः, सिद्धौ वा आत्मशब्दप्रतिपाद्यस्य ब्रह्मणो नेति नेतीति वाक्यद्वयप्रतिपाद्ययोर्व्यावृत्त्योश्च भेदस्य वा भेदाभेदस्य वा सम्भवादत्यन्ताभेदस्यैवासिद्धेर्न तदैकार्थ्य-निबन्धनं पौनरुक्त्यमिति किं विशेषेणेत्यतोऽभिप्रायमाह- **इदमुक्तं भवतीति** ॥ **परेणापीति** ॥ क्रियादि-विषयाणां वाक्यानामतत्त्वावेदकत्वमङ्गीकुर्वताऽपीत्यर्थः । **विरोधादिति** ॥ वाक्यार्थस्याखण्डताया निर्भेदत्व-रूपत्वादिति भावः । **अनाम्नानमिति** ॥ सहप्रयोगानुपपत्तिरित्यर्थः । पूर्वेण पदेन लक्षितस्यैवोत्तरेण लक्षणायां वैयर्थ्यम्, अधिकलक्षणायां नाखण्डार्थत्वमित्याशयेनाऽह- **लक्ष्यार्थे विशेषाभाव इति** ॥ लक्ष्यार्थभेदाभावेऽपि नानाविधारोपनिवृत्त्यर्थत्वेन सप्रयोजनत्वान्न वैयर्थ्यमिति शङ्कते- **नानेति** ॥ तीरे नदीत्वमनभिदधतो नदीपदस्य तत्रानदीत्वव्यावृत्तिप्रयोजनकत्वादर्शनेन तत्र विरोध्याकारसमर्पकस्यैव तत्राऽरोपितविरोध्याकारान्तरनिवृ-त्त्यर्थकत्वस्थित्या, लक्ष्ये ब्रह्मणि विरोध्याकारासमर्पकस्य पदजातस्य तत्रारोपितविरोध्याकारान्तरनिवृत्त्यर्थक-त्वानुपपत्त्या वैयर्थ्यं तदवस्थमेवेत्याशयेनाऽह-**प्रतिपाद्येति** ॥ इतीत्यस्य इतीदमुक्तं भवतीति पूर्वेण सम्बन्धः। **अत्रेति** ॥ निर्भेदेऽपि विशेषः परेणाङ्गीकर्तव्य इत्यत्रेत्यर्थः । उदाहर्तुं शक्यमित्युपलक्षणम् । 'सत्यज्ञानादिकेऽ-प्येवम्' इत्यन्यत्र तदुदाहृतं चेत्यपि द्रष्टव्यम् । **तथाविधमेवेति** ॥ सत्यज्ञानादिवाक्यस्य सविशेषाभेदप्रतिपादनानु-कूलत्वेऽपि प्रस्तुतं भेदस्य सविशेषाभेदप्रतिपादनं प्रत्यननुकूलत्वात् तदनुदाहृत्य, तदनुकूलत्वात् 'नेति नेति' इति वाक्यमेवोदाहृतमित्यर्थः । प्रयोजनान्तरवत्त्वाच्च तदनुदाहृत्यैव तदेवोदाहृतमित्याह- **क्वापीति** ॥ **कथमा-पादनमिति** ॥ यदि भेदो दृश्येतेति भेददर्शनमात्रमापादकमित्यभिमतं किं वा यदि भेदः प्रतीयेतेति धर्मिप्रतियोगि-प्रतीतिसापेक्षप्रतीतिकत्वमित्यर्थः । आद्यमुत्थाप्य दूषयति- **यदीत्यादिना** ॥ **सम्मतत्वेनेति** ॥ असम्मतत्वे भेदादर्शनेन तन्निरासाद्ययोगादिति भावः । उक्तदूषणपरिहारेण द्वितीयमुत्थापयति - **दर्शनमात्रसद्भावेऽ-पीति** ॥ **अन्योन्याश्रयत्वस्येति** ॥ त्वया स्तम्भात् कुम्भस्य भेदप्रतीतौ कुम्भात्स्तम्भस्य भेदप्रतीतिरिति प्रतीतावेवान्योन्याश्रयत्वस्योक्तत्वेन प्रतीतिगतान्योन्याश्रयत्वेन तत्प्रमात्वनिषेधस्य चोरापराधान्माण्डव्यस्य शूलारोपणप्राप्तिवदयुक्तत्वादिति भावः । तृतीयमतिदेशेन दूषयति- **एतेनेति** ॥ प्रतीतिगतान्योन्याश्रयत्वस्य **(पां.टि.)** तद्वास्तवत्वनिरासकतायाश्चोरापराधान्माण्डव्यस्य शूलप्राप्तिवदयुक्तत्वेनेत्यर्थः । यदि भेददर्शनं व्यावहारिकं स्यात्तर्ह्यन्योन्याश्रयत्वं स्यान्न च तद्युक्तं तस्मान्न व्यावहारिकमिति प्रतितर्कपराहतत्वात्तर्काभासोऽ-यमित्याह- **किञ्चेति** ॥ विपक्षे बाधकसूचनेनाप्रयोजकत्वं परिहरति- **न हीति** ॥

चतुर्थप्रकारमाशङ्कते-**अथेति** ॥ किमत्र यदि भेददर्शनं धर्मिप्रतियोगिग्रहणापेक्षं स्यात्तर्ह्यन्योन्याश्रयत्वं स्यादि-त्यापादनमभिप्रेतम्, किं वा यदि तत्सापेक्षा भेदप्रतीतिः स्यात्तदाऽन्योन्याश्रयत्वं स्यादिति, यदि वा तत्सापेक्षं भेदग्रहणं स्यात्तर्ह्यन्योन्याश्रयत्वं स्यादिति विकल्पान् मनसि निधायाऽद्यं दूषयति- **तदेति** ॥ आपाद्यनिवृत्तेरापा-दकमात्रनिवर्तकत्वेन धर्मिप्रतियोगिग्रहणापेक्षत्वस्यैव चाऽपादकत्वात्तस्यैव निवृत्तिः स्यादित्यर्थः । **भेददर्शनस्य किमायातमिति** ॥ भेददर्शनस्यानापादकत्वेनाऽपाद्यनिवृत्त्या न तन्निवृत्तिः सम्भवतीति भावः । नन्वत्र पक्षे आपाद्यनिवृत्त्या भेददर्शननिवृत्त्यप्राप्तावपि धर्म्यादिप्रतीत्यनपेक्षत्वरूपप्रकारान्तरेण भेददर्शनासम्भवे सति धर्म्यादिप्रतीत्यपेक्षानिवृत्त्या तन्निवृत्तिः स्यादेवेत्याशङ्कते- **प्रकारान्तरेति** ॥ **अङ्गीकृतत्वेनेति** ॥ भेदादर्शने तन्निरासाद्यनुपपत्त्याऽङ्गीकरणीयत्वेनेत्यर्थः । न द्वितीयतृतीयौ । त्वया स्तम्भात्कुम्भस्य भेदप्रतीतौ कुम्भात्स्तम्भस्य भेदप्रतीतिरिति धर्मिप्रतियोगिग्रहणापेक्षभेदप्रतीतावेवान्योन्याश्रयत्वादेरुक्तत्वेन तादृशप्रतीतिगतान्योन्याश्रयत्वा-देस्तत्प्रतीतिगतप्रमात्वतद्वास्तवत्वप्रतिबन्धकतायाः चोरापराधान्माण्डव्यस्य शूलारोपणप्राप्तिवदयुक्तत्वादित्या-शयेनाऽह- **प्रमात्वादिनिवर्तन इति** ॥ अङ्गीकृत्यैव च भेददर्शनस्य प्रकारान्तरेणासम्भवं भेददर्शनस्याङ्गीकृतत्वेन निवर्तयितुमशक्यत्वमुक्तम्

। वस्तुतस्तु न तस्य प्रकारान्तरेणासम्भव इति न धर्मिप्रतियोगिप्रतीतिसापेक्षत्वनिवृत्त्या तन्निवृत्तिरित्याशयेनाऽह- **किञ्चेति ॥** भेददर्शनस्य प्रकारान्तरकल्पकत्वे निर्णायकमाह- **स्पष्टदृष्टमिति ॥** अवश्यं चैतदेवम् । अन्यथाऽतिप्रसङ्गादिति भावेनाऽह- **न हीति ॥ वक्ष्यमाणन्यायेनेति ॥**

**(व्या.टि.)** हेतोर्बाधकमाशङ्कते- **पटः प्रतीयमान इति ॥ ज्ञानप्रसङ्गादिति ॥** ज्ञानजननस्य प्रसङ्गादि-त्यर्थः । ननु यौगपद्यापादने इष्टापादनमित्याशङ्क्य न यौगपद्यं युगपदुपस्थितिः, किन्तु युगपदुत्पत्तिः । अनुत्पत्तेः सिद्धत्वेन युगपदुत्पत्तेरेवानिष्टत्वादित्याशयेनाऽह- **यद्यपीति ॥ वध्यघातुकभावेनेति ॥** 'नाजात एकोऽन्यं हन्ति नाप्यन्याधारः' इति न्यायेन तद्भावस्य सहभावनियमादित्यर्थः । **नास्तीति ॥** अनेनानुत्पत्तिः सिद्धेति तदुत्पत्तिर्दोषोऽनिष्टमिति मूलयोजना सूचिता । ननु कुतो नास्ति? कारणयौगपद्येन कार्ययौगपद्यसम्भवादित्याशङ्क्य युगपज्ज्ञानोत्पत्तिर्भवन्त्यप्यनेकेन्द्रियविषये वा एकेन्द्रियविषये वा । नाऽद्यः । कारणाभावादित्याह- **मनसोऽ-णुत्वेनेति ॥** द्वितीये प्रमाणाभावेनाभाव इत्याह- **एकेन्द्रियविषयेऽपीति ॥** रूपादीनां सहोत्पत्तेरात्मेति । धर्माधर्मादिविजातीयव्यावृत्त्यर्थं सजातीयेति । दर्शनशब्दस्य भावसाधनत्वे दर्शनेन ज्ञायन्त इत्यनेनानन्वयादाह- **दृश्यत इति ॥** नन्वनिष्टप्रसङ्गे चोदिते पुनस्तदेवाङ्गीकृतमिति किं केन सङ्गतमित्यतो भावमाह- **यद्यपीति ॥** सामान्यतः सर्वव्यावृत्तिज्ञानेनैतावाक्षेपपरिहारौ सङ्गतौ । धर्मिज्ञानस्य मनोवृत्तिरूपत्वेऽपि प्रतियोगिज्ञानस्य मनोवृत्तिरूपत्वाभावादिति शङ्कते- **नन्विति ॥ साक्षिरूपमिति ॥** 'सर्वं सामान्यतो यस्मात् सर्वैरप्यनु-**(व्या.टि.)** भूयते' इत्यनुभाष्योक्तेरित्यर्थः । अनुमन्यते- **सत्यमिति ॥ प्रसज्यत एवेति ॥** उभयोर्मनोवृत्ति-रूपत्वादित्यर्थः । तथापि 'तथा स्यात्प्रकृते' इत्यनुमतिरयुक्ता दीपसहस्रस्येव सर्वत्र धर्मिप्रतियोगिनां सन्निधान-नियमाभावादित्याशङ्क्य व्यवस्थामाह- **तत्रेत्यादिना ॥** एकज्ञानेति तत्पुरुषः । **संस्कारेति ॥** प्रतियोग्यनुभव-जन्यसंस्कारेत्यर्थः । संस्कारपदं सविषयकमात्रस्य सहकारित्वमुपेत्य स्मरणोपलक्षणमिति न पूर्वग्रन्थविरोधः। धर्मिणोऽसन्निधाने उपनीतस्य मुख्यविशेष्यत्वाभावनियमाभावादेतस्माद्भिन्नः स इति, नियमे वा तद्भेदप्रति-योग्ययमिति प्रतीतिरित्यवधेयम् । पुनर्बाधकद्वयं प्रसञ्जयति- **नन्विति ॥ इति वेति ॥** भेदमात्रावशेषो वा पटमात्रावशेषो वाऽन्यतरावशेष एक एवाऽपाद्यः । विशेषाङ्गीकारेण समाधिं विधत्ते- **विद्यमानयोरेवेति ॥** सविशेषाभेदाङ्गीकारे व्यवस्थयोक्तानुमानाशेषदोषनिरासो भवतीत्याह- **तत्रेति ॥ प्रतिनिधित्वादिति ॥** प्रतिनिधेः स्थानिकार्यकरत्वस्य पूतिकादौ दर्शनादिति भावः । **अप्रसिद्धमिति ॥** मतान्तर इति शेषः । **किमु-तेति ॥** सर्वथा भेदानङ्गीकारिभिरपि तत्प्रतिनिधिविशेषस्तत्कार्यकारित्वेन तत्स्थानापन्नतयेष्टः, किमुत तद्वादि-भिस्तदभावे तत्स्थानापन्नतयेष्ट इति कैमुत्यम् । कथमन्येषां भेदाङ्गीकारोऽवगत इत्यत उक्तम्- **व्यवस्थापयद्भि-रिति ॥** हेतुगर्भविशेषणम् । भिन्नविषयत्वाद्व्यवस्थापनाया इति भावः । असदारोपोऽसावित्यत आह- **तदविना-भूतस्येति ॥** तदन्यथानुपपन्नस्येत्यर्थः । **तत्कथमिति ॥** अविनाभूतार्थाङ्गीकरणं कथमित्यर्थः । **प्रतिपाद्यत-येति ॥** अनेन नञोर्वीप्सा श्रुतौ पूर्वोपसंहारार्था, इति करणद्वयं वाक्यद्वयसमाप्तौ, इतीत्यतः परं प्रतीतेरिति शेषः, आत्मेत्यतो विलक्षणेति चेति सूचितम् । **सर्वेति ॥** सर्ववैलक्षण्यं तदविनाभूतोऽर्थ इत्यर्थः ।

ननु मुख्यभेदाङ्गीकारेणैव सर्ववैलक्षण्यप्रतिपादनसम्भवेन कुतस्तत्प्रतिनिधिविशेषाङ्गीकारः । न हि सोमाभावे पूतिकाग्रहणमिति तद्भावे स इत्यत आह- **इदमुक्तं भवतीति ॥ पदसमन्वयः** पदशक्तिः । नञोऽन्योन्याभाववति शक्तेरित्यर्थः । **ब्रह्मण** आत्मपदार्थस्य । सर्वेति विशेषणतयाऽत्मपदार्थे नञर्थान्वयादित्यर्थः । अपिना वाद्यन्त-राविगानं सूचयति । **आत्मशब्दार्थस्येति ॥** व्यावृत्तिभ्यामिति शेषः । **व्यावृत्त्योश्चेति ॥** मिथ इति शेषः । अखण्डवाक्यार्थेति भावप्रधानः । **अखण्डस्य** संसर्गशून्यस्य प्रातिपदिकार्थमात्रस्य । वाक्यार्थत्वं वाक्यबोध्य-त्वम् । **पुनरुक्तीति ॥** उक्तमात्रोक्तीत्यर्थः । **अनाम्नानमिति ॥** पर्यायत्वेन सहपाठाभाव इत्यर्थः । मुख्यप्रतिनिध्युभयाभावे तत्कार्यासम्भव इति भावः । **अङ्गीकार्य एवेति ॥** अर्हे कृत्यः । नञोऽन्योन्याभाव एव शक्तेस्तद्वति लक्षणेति मतमाश्रित्य शङ्कते-**नन्वेवमिति ॥ भेदेति ॥** मिथो विशेषणत्वे चेत्यर्थः । घटप्रतियोगि-कत्वादिभेदकसद्भावादित्यर्थः । उक्तमात्रोक्तावपि प्रयोजनवत्त्वान्न वैयर्थ्यमिति शङ्कते- **नानाविधेति ॥ प्रतिपाद्येति ॥** नञ्द्वयेन विशेष्यपदेन चाऽत्मत्वतत्तत्प्रतियोगिकव्यावृत्त्यादिरूपविशेषासमर्पणेनाऽत्मत्वघटत्वा-द्यारोपपरिहारोऽपि न फलिष्यतीति भावः । **इतश्चेति ॥** अवधिभेदादित्यर्थः । **व्यावृत्तिद्वयमिति ॥** ननु 'एक एव खल्वेकस्य वस्तुनो भेदः' इति पूर्वोक्तविरुद्धं व्यावृत्तिद्वयमिति वचनमित्यत आह- **अभिन्नमपीति ॥ सातिशयम्** अवधिभेदनिरूप्यताविशेषोपेतम् । ननु सत्यज्ञानादिवाक्यमेवात्र किं नोदाह्रियते । तत्राप्येकतरा-**(व्या.टि.)** परिशेषापर्यायत्वाभ्यां विशेषस्याङ्गीकारयितुं शक्यत्वात् । 'ज्ञानानन्दादिवदेव' इति तैत्तिरीयभाष्ये तथैवोदाहृत्वाच्चेत्याशङ्क्य प्रकृतसङ्गतिविशेषावगत्या परिहरति- **यद्यपीत्यादिना ॥** परमप्रक्रमानुगुण्याच्चैव-मित्याह- **क्वाऽपीति**

॥ 'भेदस्तु न कश्चिदपि प्रामाणिकः' इति परमोपक्रमे वाद्युक्तेरित्यर्थः । तदेवं सापेक्षत्वं, तत्प्रतीतावप्रतीतिः, सम्बन्धितया प्रतीतिः, विशेषणतया प्रतीतिः, संशयानुपपत्तिः, प्रतियोगिनोऽपि स्वरूपत्वा-पत्तिः, विदारणापत्तिः,अनेकत्वापत्तिः, अन्यतरमात्रावशेषः, पर्यायत्वम् इति स्वरूपत्वे बाधकदशकोद्धारः ।

एवं भेदस्य धर्मिस्वरूपत्वे बाधकदशकमुद्धृत्यान्योन्याश्रयतर्कं प्रतीतिद्वयाभावेन निराश्रयतया निराकृत्य जात्या आभासीकरिष्यन् प्रतिजानीते- **किञ्चेति** ॥ अन्यच्चेत्यर्थः । **कथमिति** ॥ 'किमश्च' इति थन्प्रत्ययः । किमश्च कादेशः । केन प्रकारेणेत्यर्थः । किं, यदि भेदो दृश्येत तदाऽन्योन्याश्रयः स्यादिति दर्शनमापादकीकृत्याऽ-पादनम्, उत यदि प्रमा स्यात्तदैवमिति, किं वा यदि वास्तवी स्यात्तदैवमिति, यदि धर्म्यादिप्रतीतिमपेक्ष्य भेदः प्रतीयेत तदाऽन्योन्याश्रयत्वं स्यादिति, विशिष्टदर्शनमापादकीकृत्य इति विकल्पः प्रश्नार्थः । आद्यमाशङ्कते- **यदीति** ॥ इतीत्यावृत्त्या योज्यम् । **सम्मतत्वेनेति** ॥ अन्यथा निराश्रयापादनानुपपत्तेरिति भावः । द्वितीय-माशङ्कते- **दर्शनमात्रसद्भावेऽपीति** ॥ अयं भावः - किमन्योन्याश्रयत्वं प्रतीत्योरेव परस्परोत्पत्तिं प्रतिबध्नातीति मतं किं वा तद्धर्मम् । आद्ये कथमप्रमाऽपि भेदप्रतीतिरुत्पद्यते । न द्वितीयः । अन्ययोरन्योन्याश्रयत्वम् अन्यल्लुप्यत इत्यस्यान्याय्यत्वादित्याह- **अन्योन्याश्रयत्वस्येति** ॥ प्रतीतिगतस्येति शेषः । एतन्न्यायं तृतीयेऽप्यतिदिशति- **एतेनेति** ॥ किञ्च भेदस्य व्यवहारिकसत्त्वाङ्गीकरणमपि विरुध्येत । अन्योन्याश्रयेण वास्तवत्वप्रतिबन्ध इव व्यावहारिकत्वस्यापि प्रतिबन्धादित्याह- **किञ्चेति** ॥ ननु व्यावहारिकमन्योन्याश्रयदुष्टमप्युत्पद्यत इत्यत आह- **न हीति** ॥ **परस्यापीति** ॥ सोल्लुण्ठनवचनं, लोकोत्तरप्रज्ञस्य तवापीत्यर्थः । तुरीयं निराचष्टे- **अथ यदीति** ॥ **किमायातमिति** ॥ भेददर्शनस्यानुत्पत्तिं प्रतिज्ञाय तद्धर्मसापेक्षतानिराकरणे कथं न पूर्वोत्तरविरोध इति भावः। परिशेषादभिमतसिद्धिमभिलषति- **प्रकारान्तरेति** ॥ प्रसक्तप्रतिषेधेऽन्यस्याप्रसङ्गात्तन्निवृत्तिरेव सेत्स्यतीति भावः । मोक्तं विस्मार्षीरित्याह- **दर्शनमात्रस्येति** ॥ किञ्चाऽनुभाविकस्य भेददर्शनस्यापलापोऽयुक्त इत्याह- **किञ्चेति** ॥ लोकविरुद्धं चेत्यर्थः । तन्निदर्शयति- **स्पष्टदृष्टाङ्कुरमिति** ॥ **परिचितचरेति** ॥ भूतपूर्वचरमि-त्यर्थः । एतेन तर्कस्य व्याहतिरुक्ता वेदितव्या । ननु कतमेयं जातिरिति चेन्न । सामान्यलक्षणसद्भावे विशेष-निर्बन्धस्य व्यर्थत्वात् । अहेतुप्रसङ्गनित्यसमास्वन्तर्भावाच्चेति दिक् । अनुमानेन भेदप्रतीत्यनुपपत्तिं शङ्कते- **(व्या.टि.) नन्विति** ॥ **कथमिति** ॥ अन्योन्याश्रयानवस्थानाद्यापत्तेरिति भावः । किं प्रतीतिमात्रं नाङ्गीकरोति उत तत्प्रमात्वमिति विकल्पं मनसि निधाय गूढाभिसन्धिरुत्तरयति- **तत्किमिति** ॥ ओमिति चेत्तत्राऽह- **तथा सतीति** ॥ **व्यवहार इति** ॥ तथा च तस्य स्वक्रियाविरोध इति भावः । द्वितीयं निराह- **प्रमात्वेति** ॥

**॥ इति श्रीमद्विष्णुतत्त्वविनिर्णये भेदवादः समाप्तः ॥**

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः
# श्रीमद्विष्णुतत्त्वविनिर्णयः

(द्वितीयभागः)

**मूलम् - यच्च प्रमाणदृष्टानामपि पदार्थानां मिथ्यात्वकल्पनं तच्च प्रमाणविरुद्धत्वादेव प्रकाशतस्करत्वम् । न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्, प्रत्यक्षादिविरुद्धानां तर्का-भासत्वनियमात् । शुक्त्यादे रजतत्वादिप्रतीतेरपि बलवत्प्रत्यक्षविरुद्धत्वादेव भ्रमत्वं न तर्कमात्रात् । तर्कमात्रतः प्रत्यक्षबाधने भूतचतुष्टयस्याबादेः पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वं न स्यात् । अतो न तर्कमात्रत एव दृष्टस्य भ्रान्तित्वं कल्प्यम् । अतः सर्वभेदनिरासकतर्कस्य सर्वश्रुतिस्मृतिप्रत्यक्षानुमानविरुद्धत्वात् नितरामाभासत्वम् ॥**

**(त.मं.)** ननु चन्द्रभेदस्य सत्यत्वादृष्टेः भेदत्वादेव सर्वभेदस्यापि तद्वत् सत्यत्वं न स्यादित्यत आह- **न हि प्रमाणेति** ॥ स्यादेतत् । शुक्त्यादौ रजतादित्वं प्रत्यक्षतः प्रतीयते । सा च प्रतीतिर्बाध्यत्वान्यथानुपपत्तितर्केण भ्रम इति निश्चीयते

। तस्मात् कथं तर्कस्य दौर्बल्यमित्यत आह- **शुक्त्यादेरिति ॥** अतिप्रसङ्गमाह- **तर्कमात्रत इति ॥** अत्रायमाशयः । यथा भूतत्वसाम्येऽपि कुत्रचित् पृथिवीत्वं कुत्रचिदपृथिवीत्वम्, एवं भेदत्वसाम्येऽपि कुत्रचित् सत्यत्वम्, कुत्रचिदसत्य-त्वम् । पूर्णादीश्वरादल्पोऽहं भिन्न इति साक्षिप्रत्यक्षेण, विमतो भिन्नः मुक्तत्वान्निगळमुक्तवदित्य-नुमानेन च विरुद्धत्वात् ।

**टीका-** ननु च, विवादपदं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरजतवत् । अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात् पटान्तरवत् । विपक्षे दृक्सम्बन्धानुपपत्त्या दृश्यत्वाभावप्रसङ्गो बाधकः । तथा च प्रपञ्चस्यैव मिथ्यात्वात्कथं तद्धर्मभूतो भेदः सत्यः स्यात् । किञ्च, विमतो भेदो मिथ्या भेदत्वात् चन्द्रभेदवत् । विवादपदं भेदसंवेदनं भ्रान्तिर्भेदसंवेदनत्वात् चन्द्रभेदसंवेदनवत् । विमतं तात्त्विकस्वान्तर्भेदहीनं मतत्वाद् गगनवत् । विमता आत्मानो देवदत्तान्न भिद्यन्ते आत्मत्वाद्देवदत्तवत् । विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वात् सम्मतदेवदत्तशरीरवत् । एवं, विमतानीन्द्रियाणि प्रत्येकं समुदितानि च पक्षीकृत्य प्रयोक्तव्यम् । तथा, जीवाः परमात्मनः तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत् । विपक्षे कल्पनागौरवप्रसङ्गो बाधकः । तदेवं भेदस्य भेदिनश्च सर्वस्यापि प्रपञ्चस्य मिथ्यात्वात्कुतो विष्णोस्सर्वोत्तमत्वं, कुतश्च तत्र सर्वागमानां महातात्पर्यमिति ?

अत्रोच्यते - किं वियदादिपदार्थास्तद्भेदश्च प्रत्यक्षादिप्रमाणसिद्धा इत्यङ्गीक्रियते न वा । नेति पक्षेऽनुमानानामाश्रयासिद्धिः स्यात् । यदि प्रत्यक्षादिप्रमाणदृष्टपदार्थपक्षीकारेणैवमनुमीयते तत्राऽह- **यच्चेति ॥** न केवलं जीवब्रह्मणोरेकत्वे सर्वागमानां महातात्पर्यकल्पनमिति चशब्दः । पदार्थानां तद्भेदस्य च कल्पनमनुमानैः । **प्रमाणविरुद्धत्वाद्** धर्मिग्राहकतया प्रबलैः प्रमाणैर्बाधितत्वेनानु-मानानां कालात्ययापदिष्टत्वात् । धर्मिग्राहकाणि हि प्रत्यक्षादीनि पदार्थान् तद्भेदं च सत्यतया विषयीकुर्वन्ति । **प्रकाशतस्करत्वं** प्रकाशे तस्करत्वमिव । ननु अनुमानैरेव प्रत्यक्षादीनां बाधो भविष्यतीत्यत आह- **न हीति ॥** कुतो नेत्यत आह- **प्रत्यक्षादीति ॥**

भवेदनुमानानां प्रत्यक्षादिविषयबाधकत्वं यदि प्रामाण्यं स्थितं स्यात् । न चैवम्, प्रत्यक्षादि-विरुद्धानां तेषामप्रमाणत्वात् । तथा च प्रत्यक्षादीनामप्रामाण्येऽबाधितविषयत्वरूपसम्पत्त्याऽनु-मानानां प्रामाण्यं, तस्मिंश्च सिद्धे तद्विरोधेन प्रत्यक्षादीनामप्रामाण्यमितीतरेतराश्रयत्वं स्यात् । न चैवं प्रत्यक्षादिप्रामाण्येऽपि इतरेतराश्रयत्वं समानमिति वाच्यम् । प्रत्यक्षादीनां धर्मिग्राहकत्वेन प्रबलानां दुर्बलानुमानविरोधपरिहारमनपेक्ष्यैव प्रामाण्यस्य स्थितत्वात् । न हि हरिणशावाभावमपेक्ष्य पञ्चाननो वनमवगाहत इति ।

यद्यनुमानस्य न प्रत्यक्षादिबाधकत्वं कथं तर्हि शुक्त्यादे रजतत्वादिप्रतीतेः प्रत्यक्षरूपाया दाहच्छेदाद्यनुमानबाधितत्वेन भ्रमत्वं कल्प्यते । अन्यथाऽबाधितत्वेन तस्या भ्रमत्वं न स्यादित्यत आह- **शुक्त्यादेरिति ॥** परीक्षादिसहकृततया बलवता नेदं रजतं किन्तु शुक्तिकैवेति प्रत्यक्षेण बाधितत्वादेवेत्यर्थः । न तर्कमात्रादिति वदताऽनुमानमपि तत्र प्रत्यक्षस्य साहाय्यमाचरत् न निवार्यत इति सूचितम् । एवमन्यत्रापि प्रत्यक्षादेः प्रबलप्रत्यक्षादिबाधितत्वेनैव भ्रमत्वं व्युत्पाद्य केवलानुमान-बाध्यत्वाभावनियमः समर्थनीयः ।

नन्वनुमानमपि अनुकूलतर्कसनाथं व्याप्तिपक्षधर्मतावत्त्वेन निरवकाशत्वात् प्रत्यक्षमिव बलवत्प्रत्यक्षस्य बाधकं भवतु विरोधाभावात् । किमनेन सर्वत्र प्रबलप्रत्यक्षाद्यन्वेषणव्यसनेनेति चेत्तर्हि कालात्ययापदिष्टमात्रलोपप्रसङ्गः स्यात् । सर्वत्रैवमनुमानप्राबल्यस्य व्युत्पादयितुं शक्यत्वादित्याशयवानाह- **तर्कमात्रत इति ॥** 'भूतचतुष्टयस्याबादेः पृथिवीत्वादृष्टेः' इत्यनेन बाह्येन्द्रियग्राह्यगुणवत्त्वलक्षणस्य भूतत्वस्यापृथिवीत्वेन व्याप्तिं साधयति । पक्षधर्मता तु स्पष्टैव। **पृथिव्या अपि** गन्धवतो द्रव्यस्यापि । पृथिवीत्वं जातिविशेषः । गन्धवद्द्रव्यं पृथिवी न भवति भूतत्वादबादिवद् इत्याद्यनुमानेन पृथिवीत्वादिग्राहकप्रत्यक्षस्य बाधः स्यात् । अस्याप्यनुमानस्य व्यभिचारादर्शनादिना

व्याप्त्यादिमत्त्वादिति।

विषमोऽयमुपन्यासः। पृथिवीत्वाभावो ह्यनेन गन्धवतो द्रव्यस्य साध्यते। अभावश्च प्रतियोगि-ज्ञानाधीनज्ञानः। तस्माद् एवमनुमिमानेन पृथिवीत्वं ज्ञातव्यमन्यथाऽप्रसिद्धविशेषणत्वापत्तेः। तच्च गन्धवति द्रव्य एव प्रत्यक्षेण ज्ञातव्यमिति उपजीव्यत्वेन प्रबलस्य प्रत्यक्षस्य नानुमानं बाध-कम्। अन्यथा स्वस्यैवोदयाभावप्रसङ्गात्। किन्तु प्रत्यक्षबलेन गन्धवतो द्रव्यस्य पृथिवीत्वस्थितौ तत्रैव भग्नव्याप्तिकमनुमानमेवाप्रमाणम्। यथा तेजोऽवयविनोऽनुष्णत्वसाधकं कृतकत्वानु-मानम्। तत्रापि ह्यनुष्णत्वप्रतियोग्युष्णत्वस्य तेजोऽवयविनि प्रत्यक्षेण ज्ञातत्वात्। न च प्रकृते तथाऽस्तीति। मैवम्। येन विना यस्योदयो नास्ति तत्तस्योपजीव्यम्। तच्च न साध्यधर्मप्रति-योगिग्राहकमेवेति नियमः। किन्तु धर्मिसाध्यलिङ्गव्याप्त्यादिग्राहकमपि। तद्विरोधश्चास्ति प्रकृत इति कथमनुमानं प्रत्यक्षस्य बाधकं भवेद् इत्याशयवान् उक्तातिप्रसङ्गस्य विपर्ययपर्यवसानमाह- **अत इति**॥ दृष्टस्येति भावे क्तः प्रत्यक्षस्येत्यर्थः। अथ वा **भ्रान्तित्वं** भ्रान्तिकल्पितत्वम्। यदा तु प्रत्यक्षविरुद्धत्वादेवानुमानस्याप्रामाण्यं तदा किमु वाच्यं सर्वप्रमाणविरुद्धत्वादिति कालात्य-यापदिष्टत्वमुक्तमुपसंहरति- **अत इति**॥ शङ्काऽनास्पदत्वं नितरामित्यस्यार्थः।

नन्वस्त्यत्र व्यवस्था। शुष्कतर्कमात्रमुपजीव्येन बाध्यते। प्रमाणानुकूलं त्वनुमानमेवोपजीव्यं बाधते। तत्र प्रसक्तिहेतुत्वेनोपजीव्यस्य प्रामाण्यानपेक्षणात्। प्रतीतिमात्रेण च आश्रयत्वोप-पत्तेः। प्रकृतं चानुमानजातमागमानुकूलमिति। मैवम्। तत्त्वमसीत्याद्यागमानामैक्यपरत्वस्य निराकृतत्वात्।

**(र.टि.)** ननु भेदधर्मिणः प्रपञ्चस्य मिथ्यात्वेऽपि भेदस्य न मिथ्यात्वम्। धर्मिसत्तासापेक्षत्वाभावात्। तथात्वे असति सद्विलक्षणस्यापि आश्रयसत्त्वापातात्। किञ्च प्रपञ्चमिथ्यात्वसाधनदृश्यत्वादिनैव भेदमिथ्यात्वसाधन-सम्भवे किमनया कुसृष्ट्येत्यत आह- **किञ्चेति**॥ नन्वेतदनुमानद्वये बाधकाभाव उपाधिरिति चेन्न। तस्य पक्षेऽपि विद्यमानत्वेन साधनव्यापकत्वादित्याशयेनाऽऽह - **विमतमिति**॥ विमतपदेन चेतनजडात्मकं सर्वमपि ग्राह्यम्। स्वान्तर्भेदहीनमित्यनेन भेदपञ्चकाभावः साध्य इति द्रष्टव्यम्। **प्रत्येकं समुदितानि चेति**॥ देवदत्तेन्द्रियं यज्ञदत्तस्यैव ज्ञानकरणम् इन्द्रियत्वात् यज्ञदत्तेन्द्रियवद् इत्यादि प्रत्येकं, विमातानीन्द्रियाणि देवदत्तस्यैव करणानि इन्द्रियत्वाद् देवदत्तेन्द्रियवदिति समुदितानि पक्षीकृत्य प्रयोक्तव्यमित्यर्थः। **धर्मिग्राहकतयेति**॥ प्रमाण-दृष्टानामित्युक्तत्वादिति भावः। **न हि हरिणेति**॥ अत्र प्रत्यक्षादित्वानुमानत्वरूपजातितोऽपि प्राबल्यदौर्बल्य-योर्विवक्षितत्वादेतद्दृष्टान्तोक्तिः। अत एव मूले प्रमाणस्य प्रकृतत्वेऽपि प्रत्यक्षादिविरुद्धस्येत्युक्तम्। अन्यथोपजीव्यप्रमाणविरुद्धस्येति वक्तव्यम्। शुक्त्यादेरित्युत्तरग्रन्थेन प्रत्यक्षादिमात्रस्यानुमानबाध्यत्वे परशङ्कित-बाधकोद्धाराचायमेवाभिप्रायोऽवगम्यत इति भावः। **प्रत्यक्षरूपाया इति**॥ अनेन रजतत्वादिप्रतीतेरपि इति मूलगतप्रतीतिपदं पूर्वोत्तरग्रन्थानुरोधेन प्रत्यक्षपरमित्युक्तं भवति। **इति सूचितमिति**॥ अन्यथा न तर्कादि-त्येवावक्ष्यदिति भावः। **एवमन्यत्रापीति**॥ नभोनैल्यचन्द्रप्रादेशत्वयजमानप्रस्तरत्वादावित्यर्थः।

हेतुसूचकभूतपदोक्तं भूतत्वं न जातिः सङ्करप्रसङ्गात्। पृथिव्यादिपञ्चकान्यतमत्वस्य प्रकृतसाध्ये विरोधेन हेतुत्वासम्भवाद् भूतत्वं निर्वक्ति- **बाह्येन्द्रियेति**॥ **व्याप्तिं साधयतीति**॥ अनेन भूतचतुष्टयस्य पृथिवी-त्वादृष्टेरित्येतन्न केवलं हेतुमति साध्याभावादर्शनप्रतिपादकत्वेन व्यभिचारादर्शनप्रतिपादकं किन्तु अपृथिवीत्व-दृष्टेरिति नञ्व्यत्यासेन सहचारदर्शनप्रतिपादकमपीत्युक्तं भवति। अत एव दृष्टिपदप्रयोजनकथनावसरे व्यभिचारा-दर्शनादीत्यादिपदप्रयोगं करिष्यति। पक्षतावच्छेदकाभावस्यैव साध्यत्वे बाधप्रसङ्गात् पृथिव्या इत्येतद् व्याचष्टे- **गन्धवत इति**॥ ननु गन्धवत्त्वमेव पृथिवीत्वमिति गन्धवद्द्रव्यस्यापृथिवीत्वसाधने पुनस्तदवस्थो बाध इत्यत आह- **जातिविशेष इति**॥ **भग्नव्याप्तिकमिति**॥ व्याप्तिग्रहणसमय एव प्रवृत्तप्रबलप्रमाणविरोधस्या-प्युत्थापकत्वात्प्रकृते च पृथिवीत्वाभावरूपसाध्यप्रतियोगिपृथिवीत्वग्राहकप्रत्यक्षविरोधः स्यात्। उक्तानुमान-व्याप्तिग्रहणसमय एव उपस्थितेरिति भावः। अत एवोक्तं सुधायाम् - 'किं व्याप्तिग्रहणसमयेऽव्याप्त्युत्थापकः प्रमाणविरोधः स्याद् उतानुमानप्रवृत्त्युत्तरमपि। आद्यस्त्विष्यत एव। मानबाधे न तद्भवेदिति वक्ष्यमाणत्वात्' इति। **येन विनेति**

॥ अत्र जातितः प्राबल्ये विद्यमानेऽपि धर्म्यादिग्राहकत्वेनोपजीव्यत्वेनापि प्राबल्यमस्तीति तदुपपादितमिति ज्ञातव्यम् । **शङ्काऽनास्पदत्वमिति** ॥ आभासत्वे तारतम्याभावादिति भावः । **तत्त्व-मसीत्याद्यागमानामिति** ॥ एतज्ज्ञापनायैव मूले सर्वश्रुतिमात्रं विरोधित्वेन गृहीतमिति भावः ।

**(रा.टि.) एतत्तन्त्विति** ॥ एतत्समवायिकारणत्वेनाभिमततन्तुनिष्ठेत्यर्थः । अन्यत्र सर्वत्राप्यविद्यमानपटस्य एतत्तन्तुष्वभावसाधने मिथ्यात्वमेव सिद्ध्यतीति भावः । पटान्तरस्य स्वोपादानतन्तुष्वेव सत्त्वेनैतत्तन्तुष्वभावात् **(रा.टि.)** साध्यानुगमो दृष्टान्ते ध्येयः । हेतोरप्रयोजकत्वनिरासाय हेतुसत्त्वेऽपि साध्याभावोऽस्त्विति साध्याभाव-पक्षे बाधकमाह- **विपक्ष इति** ॥ पदार्थानां दृश्यत्वं तावदस्ति । तच्च दृक्सम्बन्धनिमित्तम् । सम्बन्धश्च न संयोगः । द्रव्ययोरेव संयोगात्, दृशश्चाद्रव्यत्वात् । नापि समवायः । अयुतसिद्धयोरेव तदभ्युपगमात् । नापि विषयविषयिभावः । तस्य दुर्वचनत्वात् । किन्तु अध्यस्ताधिष्ठानभावरूप एव वाच्य इति दृशि अध्यस्तत्वाद् दृश्यमिति वाच्यम् । तथा च मिथ्यात्वाभावे दृग्दृश्ययोः सम्बन्धानुपपत्त्या दृश्यत्वाभावप्रसङ्ग इत्यर्थः । **चन्द्र-भेदवदिति** ॥ एकस्मिन्नेव चन्द्रेऽङ्गुल्यवष्टब्धचक्षुषा प्रतीयमानद्वितीयचन्द्रभेदवदित्यर्थः । एवमग्रेऽपि । **विमत-मिति** ॥ जगदित्यर्थः । **तात्त्विकस्वान्तर्भेदेति** ॥ अन्योन्यप्रतियोगिकभेदहीनमित्यर्थः । **गगनवदिति** ॥ यथा गगनं स्वान्तर्भेदहीनं तथा जगदित्यर्थः । बाधनिरासाय तात्त्विकेति । यद्वा प्रपञ्चमिथ्यात्वे भेदमिथ्यात्वे च मानमुक्त्वा चैतन्यैक्ये मानमाह- **विमतमिति** ॥ जीवब्रह्मरूपचेतनम् एकानेकत्वेन विमतिविषयीभूत-मित्यर्थः। **मतत्वात्** मतिविषयत्वादित्यर्थः । **विमता आत्मान इति** ॥ देवदत्तेतरात्मान इत्यर्थः । एवं शरीराणीत्यादावपि ज्ञातव्यम् । **एवमिति** ॥ विमतानीन्द्रियाणि देवदत्तस्यैव भोगायतनानि इन्द्रियत्वात् तदीयेन्द्रियवत्, विमतानि चक्षूंषि देवदत्तस्यैव इत्येवं समुदितानि प्रत्येकं वा पक्षीकृत्येत्यर्थः । विमतानि शरीराणी-त्यादिप्रयोगेषु जीवचैतन्यानामैक्येन विना साध्यापर्यवसानाज्जीवैक्यसिद्धिरिति भावः । एवं जीवाना-मन्योन्यमभेदं प्रसाध्य परमात्माभेदं साधयति- **तथा जीवा इति** ॥ **कल्पनेति** ॥ अनेकचेतनकल्पनागौरवेत्यर्थः। एतेषामनुमानानां प्रातिस्विकरूपेण दूषणानि तु 'इत्येवोपरम्यते' इति मूलवाक्यव्याख्यानावसाने व्यक्तानि । यच्चेति चशब्दसमुच्चेयस्य व्यवहितत्वादाह- **न केवलमिति** ॥ 'न च जीवेश्वराभेद एव तात्पर्यमागमस्य' इत्येतदवतारिकायामुक्तदिशा सर्वागमानां जीवब्रह्मणोरभेदे यन्महातात्पर्यवर्णनं तन्मात्रमेव 'न च जीवेश्वराभेद एव' इत्यारभ्य 'न चाभेदे तात्पर्यमित्यत्र किञ्चिन्मानम्' इत्यन्तेन 'न च विशेषणविशेष्यतया' इत्यारभ्य 'तस्माद्भेददर्शनं युक्तमेव' इत्यन्तेन चोक्तानेकप्रमाणसिद्धजीवादिभेदोपेतभगवदुत्कर्षपरत्वापलापात् प्रकाशतस्करत्वं न भवति, किन्तु मिथ्यात्ववर्णनादपीत्यर्थः । पदार्थानामित्युपलक्षणमिति भावेनाऽह- **तद्भेदस्य चेति** ॥ केन कल्पनमित्यतः शेषमाह- **अनुमानैरिति** ॥ प्रागुक्तैरिति भावः । विरुद्धत्वपदं बाधितत्वपरमिति भावेन तदनूद्य व्याचष्टे- **प्रमाणेत्यादिना** ॥

धर्मिग्राहिणोऽपि साध्याभावग्राहकत्व एव बाधकत्वमित्यतस्तद्व्यनक्ति- **धर्मिग्राहकाणीति** ॥ **सत्यत-येति** ॥ विधिनिषेधाववधूय प्रत्ययायोगादिति भावः । षष्ठीतत्पुरुषभ्रान्तिं निराह- **प्रकाश इति** ॥ 'सप्तमी शौण्डैः' इत्यत्र योगविभागात्समास इति भावः । अथाप्यसङ्गतमित्यत उक्तम्- **इवेति** ॥ **समानमिति** ॥ प्रत्यक्षादीनां प्रामाण्ये सति तद्विरुद्धमिथ्यात्वानुमानानामप्रामाण्यं, तस्मिंश्च सिद्धे तदविरोधात्सत्यत्वग्राहि-प्रत्यक्षादीनां प्रामाण्यमिति समानमित्यर्थः । **धर्मिग्राहकत्वेनेति** ॥ एतच्च प्रकृताभिप्रायेण वाऽनुमानाद्या-शयेन (श्रयेण) वोक्तम् । प्रत्यक्षस्य जात्यैव प्राबल्यात् । तत एव तदनुगुणमेवार्थान्तरमुपन्यस्यति- **न हि (रा.टि.) हरिणेति** ॥ **शावः** शिशुः । **परीक्षादीति** ॥ दोषाजन्यत्वादिरूपयुक्त्यनुसन्धानपरीक्षया वा प्रामाण्यनिश्चयेन वा सहकृतत्वहेतुना बलवतेत्यर्थः । नन्वेवं नेदं रजतम् अग्निसम्बन्धे सति दह्यमानत्वात्, पाषाणप्रक्षेपे सति पाट्यमानत्वादित्याद्यनुमानप्रवृत्तेः का गतिरित्यत आह- **न तर्कमात्रादिति वदतेति** ॥ **साहाय्यमिति** ॥ संवादहेतुना तद्दार्ढ्यापादकत्वेनेति भावः । **एवमन्यत्रापीति** ॥ 'गौरोऽहं', 'नीलं नभः' इत्यादिभ्रमस्थलेऽपीत्यर्थः । **समर्थनीय इति** ॥ विवृतमेतत्सर्वं न्यायामृते प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे बाधकोद्धार-वादे । **अनुमानमपीति** ॥ दाहच्छेदाद्यनुमानमपीत्यर्थः । **प्रत्यक्षस्येति** ॥ इदं रूप्यमित्यादिभ्रमरूपस्येत्यर्थः यद्वा दृश्यत्वाद्यनुमानमपि घटपटादिपदार्थग्राहिप्रत्यक्षस्येत्यर्थः । **सर्वत्रैवमिति** ॥ व्याप्त्यादिमत्त्वप्रकारेणेत्यर्थः। अस्पष्टत्वाद्धेतुव्याप्त्यादि व्यनक्ति- **इत्यनेनेति** ॥ भूतत्वस्य जातित्वे साङ्कर्यापत्त्योपाधित्वमुपेत्य तत्स्वरूपो-**क्तिर्बाह्येति** । एतच्चाऽत्मन्यनतिव्याप्त्यर्थमुक्तम् । गुणवत्त्वस्य द्रव्यमात्रे सत्त्वात्तद्व्यावृत्त्यर्थमिन्द्रियग्राह्येति । गन्धरसरूपस्पर्शशब्दानां पृथिव्यादिभूतपञ्चके यथाक्रमं घ्राणरसनचक्षुस्त्वक्श्रोत्ररूपबाह्येन्द्रियग्राह्यतया तद्वत्त्व-रूपभूतत्वस्य पक्षे गन्धवद्द्रव्ये दृष्टान्तेऽबादिचतुष्टये च सत्त्वात्पक्षधर्मता दृष्टान्ते हेत्वनुगमो व्याप्तिश्चेति भावः। बाधनिरासाय पृथिव्या इत्यनूद्य गन्धवतो द्रव्यस्येत्युक्तम् । पृथिवीत्वमपि यदि गन्धवत्त्वं

तदाऽपि बाध इत्यत आह- **जातिविशेष इति ॥** प्रयोगप्रकारं निष्कृष्याऽह- **गन्धवद्द्रव्यमिति ॥**

उपजीव्यप्रत्यक्षस्थलेऽस्त्वनुमानं दुर्बलं नाऽन्यत्रेति शङ्कते- **विषमोऽयमिति ॥** अतिप्रसङ्गरूपोपन्यास इत्यर्थः। **न च प्रकृत इति ॥** शुक्तिरूप्यादिभ्रमप्रत्यक्षस्थल इति वा दृश्यत्वाद्यनुमानेषु धर्मिभूतघटपटादिप्रत्यक्षस्थल इति वाऽर्थः । आद्ये दाहाद्यनुमानसाध्यप्रत्यक्षस्य नेदं रजतमित्यस्य प्रतियोगिज्ञानजननेन पृथिवीत्वमिव पक्षादन्यत्रापि ग्रहणसम्भवेन पक्ष एव ग्राह्यमिति नियमाभावादिति भावः। द्वितीये मिथ्यात्वाद्यनुमानस्थलेऽपि प्रतियोगिनोऽसत्त्वस्य भेदस्य च पक्ष एव ग्राह्यत्वमिति नियमाभावादिति भावः । **येन विनेति ॥** तथा चेदं रूप्यमिति भ्रमं विना नेदं रजतं दह्यमानत्वादित्याद्यनुमानाप्रवृत्तेर्भ्रमस्थलेऽप्यनुमानस्य प्रत्यक्षमुपजीव्यमेवेति नानुमानरूपतद्बाधकता। किन्तु ततोऽपि बलवत्प्रत्यक्षस्यैवेति भावः। दृश्यत्वाद्यनुमानस्थलेऽपि आश्रयासिद्धिनिरासाय प्रत्यक्षादिप्रमाणदृष्टपदार्थानेव पक्षीकृत्य मिथ्यात्वस्य भेदाभावस्य वा साध्यत्वेन तेन विना दृश्यत्वाद्यनुमानानुदयेनाऽस्ति तत्राप्युजीव्यत्वमिति भावः। ननूक्तमत्र साध्यधर्मं प्रति यत्प्रतियोगि तद्ग्राहकमेव तदभावसाधकानुमानोपजीव्यमिति। प्रकृतं तु न तथेत्यत आह- **तच्चेति ॥** निषेधरूपसाध्यधर्मं प्रति यत्प्रतियोगि तद्ग्राहकमित्येवमित्यर्थः। **व्याप्त्यादिग्राहकमपीति ॥** तेन विनाऽप्यनुमानानुत्थानेन येन विनेत्युक्तलक्षण-सत्त्वादिति भावः। **प्रकृत इति ॥** इदं रूप्यमिति स्थले सर्वमिथ्यात्वानुमानादिस्थले च सत्त्वेनैव धर्म्यादि गृह्णातीति तद्ग्राहकप्रत्यक्षादीति प्रागेवोक्तत्वादिति भावः। भ्रान्तित्वस्य ज्ञानधर्मत्वादाह- **भावे क्त इति ॥** कर्मण्येव निष्ठामुपेत्याऽह- **अथ वेति ॥** प्रत्यक्षविरोधोऽकिञ्चित्कर इति श्रुत्यादिविरोधमाहेति भ्रान्ति-निरासायाऽह- **यदा तु प्रत्यक्षेति ॥** अनुमानस्य दृश्यत्वादिप्रागुक्तानुमानानाम्, 'यच्च प्रमाणदृष्टानाम्' इत्यादि-**(रा.टि.)** नोपपादितं कालात्ययापदिष्टत्वमित्यर्थः । आभासत्त्वे तारतम्याभावादाह- **शङ्केति ॥** यदुक्तं दृश्यत्वाद्यनुमानानामुपजीव्यप्रत्यक्षादिबाधितविषयत्वं तत्रोपजीव्यबाधस्य नायं विषय इति भावेन शङ्कते- **नन्वस्त्यत्रेति ॥** उपजीव्येन बाधविषय इत्यर्थः। **प्रमाणभूतं** कथं बाध्येतेत्यत आह- **तत्रेति ॥** प्रमाणानुकूला-नुमानविषय इत्यर्थः । अप्रसक्तस्य निषेधायोगात्प्रसक्तिहेतुत्वेनेत्युक्तम् । आश्रयासिद्धिः कुतो नेत्यत आह- **प्रतीतीति ॥ प्रकृतं चेति ॥** दृश्यत्वादीत्यर्थः । **निराकृतत्वादिति ॥** 'न च जीवेश्वराभेद एव तात्पर्यमागमस्य' इत्यादिनेति भावः ।

**(श्री.टि.) एतत्तन्त्विति ॥** एतत्पटस्य तन्त्वन्तरनिष्ठात्यन्ताभावप्रतियोगित्वं सिद्धमेवास्ति। एतत्तन्तु-ष्वेवास्तीति वक्तव्यम् । तत्रापि तदत्यन्ताभावसाधने मिथ्यात्वमेव सिद्ध्यति। प्रतिपन्नोपाधावत्यन्ताभाव-प्रतियोगित्वस्यैव मिथ्यात्वादिति भावः । अप्रयोजकतां परिहर्तुमनुकूलतर्कमाह- **विपक्ष इति ॥** पक्षे साध्या-भावशङ्कायामित्यर्थः। 'पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्रहः' इति कारिकावचनात्। **दृक्सम्बन्धेति ॥** दृश्यस्येति शेषः। तथा च दृग्दृश्यसम्बन्धेत्यर्थः। तथा हि। यदि जगत्सत्यं स्यात् तदा दृग्दृश्ययोस्सम्बन्धो न स्यात्। चैतन्यरूपाया दृशो दृश्यस्य च संयोगसमवाययोरयोगाद् दृग्रूपचैतन्यस्यासङ्गत्वेन विषयित्वानुपपत्त्या चासम्भ-वाद् दृशि दृश्यं जगदध्यस्तमित्यधिष्ठानाध्यस्तत्वरूपाध्यासिकसम्बन्ध एव वाच्यः । न ह्ययं सम्बन्धो जगतस्सत्यत्वे सम्भवतीति मिथ्यात्वमेव वाच्यमिति भावः। **सत्यः स्यादिति ॥** धर्मिण एव मिथ्यात्वे तद्धर्मस्य सत्यताया लोकेऽदर्शनादिति भावः। **विमतो भेदो** जीवेश्वरभेदः।

'विमतं तात्त्विकस्वान्तर्भेदहीनं मतत्वतः ।
यदित्थं तत्तथा यद्वत्खं तथेदं ततस्तथा ॥'

इति कारिकोक्तानुमानमाह- **विमतमिति ॥ विमतं** चेतनजडरूपं सर्वम्। व्यावहारिकभेदाङ्गीकारेण बाधवारणाय तात्त्विकपदम् । 'अभावरूपा धर्मा नाद्वैतं घ्नन्ति' इति मण्डनमिश्रोक्तेरनृतव्यावृत्तिर्ब्रह्माभिन्ना तात्त्विकीति मते अनृतव्यावृत्तिरूपतात्त्विकभेदवत्त्वस्यैव चैतन्ये सत्त्वेन बाधवारणाय स्वान्तरित्युक्तम्। स्वस्वरूपान्तर्गतो यो भेदः पञ्चभेदस्तद्धीनमित्यर्थः। **मतत्वात्** मतिविषयत्वाद् दृश्यत्वादित्यर्थः। **प्रत्येकं समुदितानि चेति ॥** यज्ञदत्तेन्द्रियं देवदत्तस्यैव ज्ञानकरणम् इन्द्रियत्वाद् देवदत्तेन्द्रियवदिति प्रत्येकं, विमतानि यज्ञदत्तविष्णुदत्तादि-सर्वेन्द्रियाणि देवदत्तस्यैव ज्ञानकरणानि इन्द्रियत्वाद् देवदत्तेन्द्रियवदिति समुदितानि पक्षीकृत्य प्रयोक्तव्यमि-त्यर्थः। व्यावहारिकभेदाङ्गीकारेण बाधवारणाय तत्त्वत इत्युक्तम् । अप्रयोजकतां परिहरति- **विपक्ष इति ॥** जीवानां परमात्माभेदाङ्गीकारे लाघवं, भेदाङ्गीकारे चेतनबहुत्वप्राप्त्या कल्पनागौरवमित्यर्थः । **धर्मिग्राहक-तयेति ॥** प्रमाणदृष्टानामित्युक्तत्वादिति भावः।

कथं कालात्ययापदिष्टत्वमित्यतः साध्याभावग्राहकत्वादित्याह- **धर्मिग्राहकाणि हीति ॥ रूपसम्प-त्त्येति ॥** अङ्गसम्पत्त्येत्यर्थः । **समानमिति ॥** प्रत्यक्षादिप्रामाण्ये सिद्धे तद्विरुद्धत्वादनुमानस्याप्रामाण्यसिद्धिः। **(श्री.टि.)** अनुमानाप्रामाण्यसिद्धौ

तद्विरोधाभावात्प्रत्यक्षादिप्रामाण्यसिद्धिरितीतरेतराश्रयत्वं समानमित्यर्थः। द्वितीयकोटिरसिद्धेत्याह- **प्रत्यक्षादीनामित्यादिना ॥** प्रबलस्य दुर्बलविरोधाभावापेक्षा नास्तीत्यत्र दृष्टान्तमाह- **न हीति ॥** तत्र यथा हरिणत्वपश्चाननत्वादिजात्यैव प्राबल्यदौर्बल्ये तथा प्रत्यक्षत्वानुमानत्वरूपजात्यैव प्राबल्य-दौर्बल्ये इत्याशयः । **दाहेति ॥** नेदं रजतं दाहच्छेदादिमत्त्वादित्याद्यनुमानेत्यर्थः । **अन्यथेति ॥** रजतत्वादि-प्रतीतेरनुमानबाधितत्वानङ्गीकार इत्यर्थः । **अबाधितत्वेन** अबाधितत्वप्रसङ्गेन । **तस्याः** प्रत्यक्षादिप्रतीतेः । **भ्रमत्वं न स्यादिति ॥** भ्रमत्वस्य बाधैकवेद्यत्वादिति भावः । ननु प्रत्यक्षत्वाविशेषात्कथमियं शुक्तिरिति प्रत्यक्षस्य प्राबल्यमित्यत उक्तम्- **परीक्षादिसहकृतेति ॥** दाहच्छेदाद्यनुमानरूपपरीक्षेत्यर्थः । **वदतेति ॥** केवलार्थकमात्रशब्दप्रयोगेणेत्यर्थः । ननु नीलं नभ इति प्रत्यक्षं नभो न नीलं विभुत्वादित्यनुमानबाध्यं दृष्टम् । तथा प्रादेशपरिमितश्चन्द्रमा इति प्रत्यक्षम्

'अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ।
प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव तु ॥'

इत्यागमबाध्यं दृष्टम् । अतो 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्युक्तमसदित्यत आह- **एवमन्यत्रापीति ॥** नभोनैल्यप्रत्यक्षमनुमानमूलभूताव्याकृताकाशस्यानीलत्वावगाहिसाक्षिप्रत्यक्षेणैव बाधितम्,नानुमानमात्रात् । तथा चन्द्रप्रादेशमात्रत्वावगाहिप्रत्यक्षं यद्दूरस्थत्वादिदोषयुक्तं तत्परिमाणादावयथार्थमिति साक्षिप्रत्यक्षेणैव निश्चितत्वात्तेनैव बाधितम्, नाऽगममात्रात् । एवं प्रबलप्रत्यक्षेणैव बाधितत्वात्ततः परं प्रवर्तमानावनुमानागमौ बाधकाविवोच्येते । राजगौरवेण राजभृत्येन अमात्य इवेत्यर्थः । यथाऽऽहुः- 'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदाऽपि विपरीतत्वम्' इति । केवलानुमानेत्युपलक्षणम् । केवलागमेत्यपि ग्राह्यम् । **तर्हीति ॥** अनुमानेनैव प्रत्यक्षबाधाङ्गीकार इत्यर्थः । ननु न कालात्ययापदिष्टलोपप्रसङ्गः । वह्निरनुष्णः पदार्थत्वादित्यनुमानस्य स्पार्शन-प्रत्यक्षात्प्राबल्याभावेन प्रत्यक्षेणैवानुमानस्य बाधसम्भवादित्यत आह- **सर्वत्रैवमिति ॥** व्याप्तिपक्षधर्मतावत्त्वेन तस्याप्यनुमानस्य प्रबलत्वात्तेनैव प्रत्यक्षबाधो भविष्यतीति कालात्ययापदिष्टलोपस्तदवस्थ इत्यर्थः ।

हेतुसूचकभूतपदोक्तं भूतत्वं न जातिः, मूर्तत्वेन साङ्कर्यप्रसङ्गात् । पृथिव्यादिपञ्चकान्यतमत्वस्यापृथिवीत्व-रूपप्रकृतसाध्ये विरोधेन हेतुत्वासम्भवात् । अतो भूतत्वं निर्वक्ति- **बाह्येन्द्रियग्राह्यगुणवत्त्वलक्षणस्य भूतत्वस्येति ॥** दिक्कालयोरपि गुणवत्त्वेन भूतत्वपरिहारायेन्द्रियग्राह्येति गुणविशेषणम् । तथात्वे आत्मनोऽपि मनोरूपान्तरेन्द्रियग्राह्यगुणवत्त्वेन भूतत्वपरिहाराय बाह्येत्युक्तम् । तथा च पृथिव्यप्तेजोवाय्वाकाशानां घ्राण-रसनचक्षुस्त्वक्श्रोत्ररूपबाह्येन्द्रियग्राह्यगन्धरसरूपस्पर्शशब्दरूपगुणवत्त्वाद्भूतत्वमिति द्रष्टव्यम् । **व्याप्तिं साधयतीति ॥** अनेन गन्धवद् द्रव्यं पृथिवी न भवति भूतत्वादबादिवदित्यनुमाने भूतचतुष्टयस्य पृथिवीत्वा-दृष्टेरित्येतन्न केवलं हेतुमति साध्याभावादर्शनप्रतिपादकत्वेन व्यभिचारादर्शनप्रतिपादकं किन्त्वपृथिवीत्वदृष्टेरिति नञो व्यत्यासेन सहचारदर्शनप्रतिपादकमपि भवतीत्युक्तम्भवति । अत एवोत्तरत्र व्यभिचारादर्शनादिनेत्यादि-**(श्री.टि.)** पदप्रयोगेण सहचारदर्शनं गृहीतम् । तथा च व्यभिचारादर्शनसहचारदर्शनयोरुक्तत्वात् ताभ्यां व्याप्तिः साधिता भवतीत्यर्थः । **स्पष्टैवेति ॥** घ्राणरूपबाह्येन्द्रियग्राह्यगन्धरूपगुणाश्रयत्वेन भूतत्वस्य पक्षीभूतपृथिव्यां स्पष्टत्वादित्यर्थः । पृथिवी पृथिवी नेति साधने प्रतिज्ञापदयोर्व्याघातपरिहाराय पृथिव्या अपीत्ये-तद्व्याचष्टे- **गन्धवत इति ॥** ननु गन्धवत्त्वमेव पृथिवीत्वम् । तथा च गन्धवद्द्रव्यं गन्धवद्द्रव्यं नेति साधने पुनस्तदवस्थः प्रतिज्ञापदव्याघात इत्यत आह- **पृथिवीत्वमिति ॥** व्यभिचारादर्शनादिनेत्यादिपदेन सहचार-दर्शनग्रहणम् । तथा च व्यभिचारादर्शनादिना सिद्धा या व्याप्तिस्तद्वत्त्वादित्यर्थः । व्याप्त्यादीत्यादिपदेन पक्ष-धर्मताग्रहणम् ।

**विषमोऽयमुपन्यास इति ॥** पृथिव्या अपि पृथिवीत्वं न स्यादित्युपन्यासः । प्रकृते **विषमो** अनुकूलो न भवतीत्यर्थः । **अनेन** अनुमानेन । **अन्यथेति ॥** पृथिवीत्वरूपप्रतियोगिज्ञानाभावे पृथिवीत्वाभावरूपसाध्यस्य ज्ञातुमशक्यत्वादप्रसिद्धविशेषणत्वमित्यर्थः । **उपजीव्यत्वेनेति ॥** प्रतियोगिग्राहकत्वेनेत्यर्थः । **अन्यथेति ॥** अनुमानस्यैव प्रत्यक्षबाधकत्व इत्यर्थः । **स्वस्यैव** अनुमानस्यैव । **उदयाभावेति ॥** पृथिवीत्वरूपप्रतियोगि-ज्ञानाभावेन तदभावरूपसाध्यस्याप्रसिद्धत्वापत्त्याऽप्रसिद्धविशेषणत्वेनोदयाभावप्रसङ्गादित्यर्थः । तत्रैव पक्षीभूते गन्धवद्द्रव्य एव । **तेजोऽवयविनः** तेजोरूपावयविनः । **ज्ञातत्वादिति ॥** तथा च तत्रैव भग्नव्याप्तिकमनुमान-मेवाप्रमाणमित्यर्थः । नैवं प्रकृतेऽस्तीति वैषम्यमित्याह- **न च प्रकृत इति ॥** जीवाः परमात्मनस्तत्त्वतो न भिद्यन्त इत्यत्र भेदाभावरूपसाध्यधर्मप्रतियोगिभूतभेदस्य घटपटादौ ज्ञानसम्भवेन पृथिवीत्वादिवत्पक्ष एव ज्ञातव्यत्वनियमाभावान्नोक्तरीत्या पक्ष एव भग्नव्याप्तिकमनुमानमित्यर्थः । **साध्यधर्मप्रतियोगीति ॥** साध्यधर्मस्य यः प्रतियोगी तद्ग्राहकमेवेत्यर्थः । **तद्विरोधश्चेति ॥ प्रकृते** मिथ्यात्वानुमाने धर्म्यादिग्राहकत्वेन प्रत्यक्षस्योप-

जीव्यत्वात् । तथा जीवाः परमात्मनस्तत्त्वतो न भिद्यन्त इत्यादौ साक्षिप्रत्यक्षस्य पक्षीभूतजीवग्राहकत्वात् तेन चासार्वज्ञादिविरुद्धधर्माधिकरणत्वेन परमात्मभेदस्यैव गृहीतत्वात्तादृशभेदवत्त्वेन प्रत्यक्षसिद्धजीवपक्षीकारेण परमात्मभेदाभावसाधने धर्मिग्राहकत्वेनोपजीव्यप्रत्यक्षबाधोऽनुमानस्यास्तीत्यर्थः। अत एवोक्तं 'प्रमाण-दृष्टानामपि पदार्थानाम्' इति ।

भ्रान्तित्वमिति पदस्वारस्यमङ्गीकृत्य व्याचष्टे- **भावे क्त इति ।।** तथा च दर्शनस्य प्रत्यक्षस्येति तदर्थ इत्याह- **प्रत्यक्षस्येत्यर्थ इति ।।** दृष्टस्येति पदस्वारस्यमङ्गीकृत्यापि व्याचष्टे- **अथ वेति ।। सर्वप्रमाणविरुद्धत्वा-दिति ।।** सर्वप्रमाणविरुद्धत्वादित्यभिप्रेत्येत्यर्थः । आभासत्वे तारतम्याभावान्नितरामित्ययुक्तमित्यत आह- **शङ्केति ।।** नन्वनुमानेनैव प्रत्यक्षं बाध्यत इत्युच्यते । ननु तर्हि कालात्ययापदिष्टस्य दोषता वा त्याज्या व्यवस्थापकं वा वक्तव्यमिति चेत्तत्राऽऽह- **नन्वस्त्यत्र व्यवस्थेति ।। शुष्केति ।।** प्रमाणानुकूल्यरहितेत्यर्थः । **उपजीव्येन** प्रत्यक्षेण । **उपजीव्यं** प्रत्यक्षमिति द्वितीया । ननूपजीव्यस्यानुमानबाधितत्वेनाप्रामाण्ये धर्म्याद्यसिद्ध्याऽनु-मानप्रवृत्तिरेव न स्यादिति चेत्तत्र पृच्छामः, किं निषेध्यसमर्पकत्वेन तत्प्रामाण्यमपेक्षितं धर्मिप्रमित्यर्थं वा । **(श्री.टि.)** नाऽद्य इत्याह- **प्रसक्तीति ।।** प्रसक्तिहेतुत्वेन यदुपजीव्यं तस्येत्यर्थः । प्रत्युत तत्प्रामाण्यं निषेध-विरोध्येवेति भावः । न द्वितीय इत्याह- **प्रतीतीति ।।** धर्मिण इति शेषः । तथा च प्रतीतिमात्रेणाऽऽश्रयत्वोपपत्त्या तस्याः प्रतीतेः प्रामाण्यं नापेक्षितं येन तज्जनकत्वेनोपजीव्यस्य प्रामाण्यमपेक्षितं स्यादिति भावः । नन्वस्तु प्रमाणानुकूलानुमानस्योपजीव्यप्रत्यक्षबाधकत्वम् । प्रकृतभेदप्रपञ्चमिथ्यात्वसाधकानुमानजातस्य प्रमाणानु-कूल्याभावात् कथं बाधकत्वमित्यत आह- **प्रकृतं चेति ।। आगमेति ।।** तत्त्वमसीत्यागमेत्यर्थः । **तत्त्वमसीत्या-द्यागमानामिति ।।** एतज्ज्ञापनायैव मूले सर्वश्रुतीति श्रुतिमात्रं विरोधित्वेन गृहीतमित्यवगन्तव्यम् । **निराकृत-त्वादिति ।।** 'अत्र चोपजीव्यत्वेन प्रमाणप्राबल्याद्भेद एव तात्पर्यं युक्तम्' इत्यादिना निराकृतत्वादित्यर्थः ।

**(पां.टि.)** भेदो मिथ्या मिथ्याभूतप्रपञ्चधर्मत्वाद् वन्ध्यासुतवक्तृत्ववत् इत्युपोद्घातसङ्गत्या करिष्यमाणेऽनुमाने, प्रपञ्चस्य मिथ्यात्वासिद्ध्या हेत्वसिद्धिमाशङ्क्य प्रपञ्चमिथ्यात्वसाधनाय न्यायदीपावल्यामानन्दबोधोक्तमनुमानं शङ्कते- **विवादपदमिति ।।** पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे शुक्तिरजतादौ तत्सिद्ध्या सिद्धसाधनत्वस्य तदवच्छेदेन साध्यसिद्धेरुद्देश्यत्वपक्षे च ब्रह्मण्यंशे बाधस्य च प्राप्त्या सर्वमिति पक्षनिर्देशानु-पपत्तेर्विवादपदमिति तन्निर्देशः कृत इति द्रष्टव्यम् । एवं साधारण्येन प्रपञ्चमिथ्यात्वसाधकमनुमानमुपन्य-स्यासाधारण्येन तत्साधकतत्त्वप्रदीपिकोक्तमनुमानमुपन्यस्यति- **अयं पट इति ।।** पटविशेष इत्यर्थः । अत्र पटमात्रं पक्षीकृत्य तस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधने पटान्तरस्य एतत्तन्तुनिष्ठत्वाभावेनैतत्तन्तु-निष्ठात्यन्ताभावप्रतियोगित्वेनापि प्रतिज्ञार्थोपपत्त्याऽर्थान्तरः स्यात्, तन्निवृत्त्यर्थं विशेषग्रहणम् । साध्ये च सादृश्यप्रतियोगित्वेन सिद्धसाधनतापरिहारायाभावेति । प्रागभावादिप्रतियोगित्वेन सिद्धसाधनतापरि-हारायात्यन्तेति । मृन्निष्ठात्यन्ताभावप्रतियोगित्वेन तद्वारणाय तन्त्विति । तन्त्वन्तरनिष्ठात्यन्ताभावप्रतियोगितया तद्वारणाय एतदिति । विपक्षे बाधकाभावादप्रयोजकत्वमुक्तहेतूनामाशङ्क्य परिहरति- **विपक्ष इति ।।** अयमाशयः- दृश्यस्य सत्यत्वे न तावत् तज्ज्ञानं स्वतः, जडत्वात् । नापि परतः । तदपि न तावदसम्बद्धं प्रकाशकमति-प्रसङ्गात् । नापि सम्बद्धम्, आत्मगुणस्य ज्ञानस्य ज्ञेयेन संयोगसमवाययोरयोगात् । अन्यस्य च सम्बन्धस्या-भावात् । विषयविषयिभावस्याद्विष्ठत्वेनासम्बन्धत्वाद्दुर्निरूप्यत्वाच्च । अतो न तस्य दृश्यत्वं सम्भवतीति दृश्यत्वाभावप्रसङ्गो बाधक इति ।

अस्त्वेवं प्रपञ्चस्य मिथ्यात्वं किं तावतेत्यत आह- **तथा चेति ।।** एवं परम्परया भेदस्य मिथ्यात्वं प्रसाध्य साक्षादपि तत्साधनाय प्रमाणमालायामानन्दबोधोक्तमनुमानमुपन्यस्यति- **किञ्चेति ।।** भेदो मिथ्येत्युक्ते चन्द्रभेदादिना सिद्धसाधनमित्यतो विमतग्रहणम् । यावान् कश्चिद्विमतो भेदः स सर्वोऽपीत्यर्थः । भेदग्रहणं विस्पष्टार्थम् । भेदसंवेदनस्य सत्यत्वान्न तद्विषयस्य भेदस्य मिथ्यात्वमित्यत आह- **विवादपदमिति ।।** यद्वा विषयपक्षकमनुमानमुक्त्वा विषयिपक्षकमपि तदाह- **विवादपदमिति ।।**

**(पां.टि.)** 'विमतं तात्त्विकस्वान्तर्भेदहीनं मतत्वतः ।
यदित्थं तत्तथा यद्वत् खं तथेदं ततस्तथा ।।'

इति प्रमाणमालायामानन्दबोधोक्तमनुमानमनुवदति- **विमतमिति ।।** साध्ये प्रतीतिपराहतिपरिहाराय तात्त्विकग्रहणम् । नृशृङ्गाद्यभावापेक्षया तात्त्विकभेदाभावस्य सिद्धत्वात्सिद्धसाधनता स्यात् । तत्परिहाराय स्वान्तरिति । **मतत्वात्** ज्ञातत्वादित्यर्थः । इदानीं प्रतिभासमानभोक्तृभेदस्य तात्त्विकत्वनिरासकं तदुक्त-मेवानुमानमुपन्यस्यति- **विमता इति ।।** देवदत्ते तद्देवदत्तभेदाभावस्य

सिद्धत्वात्सिद्धसाधनतापरिहाराय विमता इति । आत्मग्रहणं स्पष्टार्थम् । साध्ये तत्त्वत इति पूरणीयम् । अन्यथा बाधप्रसङ्गात् ।

जीवानां परस्परभेदनिरासकं तदुक्तमेवानुमानमुपन्यस्यति- **विमतानीति ॥ प्रत्येकमिति ॥** देवदत्तस्य शरीरस्य देवदत्तभोगायतनतायाः सिद्धत्वात्सिद्धसाधनतापरिहाराय विमतानीति । विमतं चक्षुर्देवदत्तस्य रूप-ग्रहणसाधनं भोगसाधनत्वात्, चक्षुष्वाद्वा देवदत्तचक्षुर्वत्, विमतं रसनं देवदत्तस्य रसग्रहणसमर्थं भोगसाधनत्वात्, रसनत्वाद्वा देवदत्तरसनवत्, इत्येवं प्रत्येकमित्यर्थः । **समुदितानीति ॥** विमतानीन्द्रियाणि देवदत्तस्यैव भोग-साधनानि इन्द्रियत्वात्, भोगसाधनत्वाद्वा देवदत्तेन्द्रियवदिति समुदितानीन्द्रियाणि पक्षीकृत्य प्रयोक्तव्यमि-त्यर्थः । एवं जीवानां परस्परभेदाभावं प्रसाध्य जीवपरमात्मनोस्तात्त्विकभेदाभावं साधयत् तदुक्तमेवानुमान-मुपन्यस्यति- **तथेति ॥** बाधपरिहारार्थं तत्त्वत इति साध्ये विशेषणम् । विमतो भेद इत्याद्यनुमानेष्वप्रयोज-कत्वमाशङ्क्य परिहरति- **विपक्ष इति ॥** आत्मान्यस्यापि सत्यत्व इत्यर्थः । न च तर्हि गौरवाद्भिभ्यता शून्यवाद एवातिलघीयानङ्गीकार्यः स्यादिति वाच्यम् । प्रामाणिकत्वादात्मसत्यत्वस्य तत्र गौरवस्यादोषत्वादित्या-शयात् । केचित्त्वात्मभेदाभावसाधकानुमानेष्वप्रयोजकत्वशङ्कापरिहारायेदम् । तथा हि । न तावदयमात्मा अणुः सकलशरीरव्यापिवेदनानुसन्धानानुपपत्तिप्रसङ्गात् । नापि मध्यमपरिमाणो निरवयवत्वाद् गगनवत् । ततः परिशेषाद्व्यापकोऽभ्युपेयः । 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेश्च । स चैकः परस्यापि सम्मतः । 'यो बहून् कल्पयत्यसावेकम्' इति न्यायात् । तेनैकैकेन सर्वेषां भोगायतनत्वाद्युपपत्तौ वास्तवात्मभेदकल्पने गौरवमेव बाधकम् । यथाऽऽकाशस्यैकत्वेऽपि कर्णशष्कुलीभेदोपाधिकभेदाच्छब्दोपलम्भानुपलम्भव्यवस्था, यथा दिश एकत्वेऽपि प्राच्यादिव्यवस्था आदित्यसंयोगोपाधिकभेदादेव, यथा वा कालस्यैकत्वेऽपि मुहूर्तयामाहोरात्रादि-व्यवस्था कल्पितभेदादव्याहताऽभ्युपेयते तार्किकैस्तद्वदिहापि भविष्यतीत्याहुः ।

अस्त्वेवं भेदभेद्यात्मकस्य प्रपञ्चस्य मिथ्यात्वं किं तावताऽपीत्यतोऽभिप्रेतमर्थं दर्शयति- **तदेवमिति ॥** ननु प्रमाणेनादृष्टान्पदार्थादीन् पक्षीकृत्यानुमानैर्मिथ्यात्वसाधनान्न बाधितविषयत्वमित्यतोऽत्र पदार्थादीनां प्रमाण-दृष्टत्वपक्ष एव बाधितत्वमुच्यते, न तु तददृष्टत्वपक्षेऽपि । तत्र तु दूषणान्तरमेवेत्यतो नानुपपत्तिरित्यभिप्रेत्य अत्र सम्भावितविकल्पद्वयं मनसि निधायाऽद्यं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयति- **किमि-त्यादि ॥** आश्रयासिद्धिः स्यादिति न्यायरीत्योक्तं न स्वरीत्या । स्वमते तद्दूषणत्वस्यान्यत्र स्थितत्वादिति (**पां.टि.**) द्रष्टव्यम् । भेदभेदिरूपप्रपञ्चस्यानुमानैर्मिथ्यात्वसाधनशङ्काया मूलारूढतासिद्ध्यर्थमपेक्षितपूरणेन पदार्थानामित्यादि व्याचष्टे - **पदार्थानामिति ॥** उत्तरग्रन्थानुरोधाद्विरुद्धत्वे बाध्यत्वमेव । तच्च पदार्थादिग्राहक-प्रमाणानामधिकबलत्वं विना न सम्भवतीत्यतस्तदुपयोगिनीमधिकबलतां पूरयन् कथं साऽपीत्यतो हेतूक्त्या तामुपपादयति- **धर्मिग्राहकतयेति ॥** अनेनोपजीव्यत्वात्पदार्थादिग्राहकप्रमाणानामनुमानाद्यपेक्षया प्राबल्य-मित्युक्तं भवति ।

ननु नाधिकबलत्वमात्रं बाधकतायां तन्त्रम्, अतिप्रसङ्गात्, किन्तु विरुद्धार्थत्वविशिष्टमेव । तदिह पदार्थादि-ग्राहकाणां प्रत्यक्षादीनामुपजीव्यत्वादनुमानाद्यपेक्षयाऽधिकबलत्वेऽपि विरुद्धार्थत्वाभांवात् कथं बाधकत्वमित्यतः, तेषां विरुद्धार्थतां दर्शयति- **धर्मिग्राहकाणीति ॥** मिथ्यात्वसाधनस्य प्रकाशतस्करत्वरूपत्वाभावात्कथं तदित्यतो व्याचष्टे - **प्रकाशेति ॥** उक्तमाशयमजानानः शङ्कते - **नन्विति ॥** प्रमाणत्वाविशेषेऽपि प्रत्यक्षादिभिरेवानुमानानां बाधो न त्वनुमानैः प्रत्यक्षादीनामित्यत्र नियामकाभावादिति भावः । **समानमिति ॥** प्रत्यक्षादीनां प्रामाण्ये सिद्धे तद्विरोधादनुमानानामप्रामाण्यसिद्धिस्तत्सिद्धौ च तद्विरोधाभावात्तत्प्रामाण्यसिद्धिरिति समानमित्यर्थः। प्रबलस्य दुर्बलविरोधपरिहारानपेक्षायां दृष्टान्तमाह- **न हीति ॥ अन्यथेति ॥** अनुमानस्य प्रत्यक्षबाधकत्व इत्यर्थः । **अबाधितत्वेनेति ॥** अनुमानातिरिक्तबाधशून्यत्वेनेत्यर्थः । **परीक्षासहकृततयेति ॥** विशेषदर्शन-जन्यस्वसमानविषयकज्ञानान्तररूपसजातीयसंवादार्थक्रियाकारिरूपविजातीयसंवादविसंवादाभावरूपपरीक्षा-सहकृततया नेदं रजतमिति प्रत्यक्षस्य बलवत्त्वम् । इदं रजतमिति प्रत्यक्षस्य तु तद्विरहाद्दुर्बलत्वमित्यर्थः । ननु न तर्कादिति वक्तव्यं मात्रपदमधिकमित्यतस्तत्सूचितमर्थमाह- **न तर्केत्यादि ॥**

ननु नीलं नभः, पीतः शङ्ख इत्यादिप्रत्यक्षादेर्नीरूपत्वश्वैत्यानुमित्यादिबाध्यत्वदर्शनात्कथं प्रत्यक्षादेः केवलानु-मानबाध्यत्वाभाव इत्यत आह- **एवमन्यत्रापीति ॥ निरवकाशत्वादिति ॥** निरवकाशप्रयुक्तप्राबल्यस्योप-जीव्यत्वप्रयुक्तप्राबल्यापेक्षया प्रबलत्वाद् उपजीव्यभूतप्रत्यक्षादिबाधकत्वं निरवकाशस्यानुमानस्य युक्तमिति भावः । **सर्वत्रेति ॥** वह्निरनुष्णः पदार्थत्वादित्यादावित्यर्थः । व्यवस्थापकस्य चाभावादिति भावः । ननु भूतत्वं न जातिर्मूर्तत्वेन सङ्करप्रसङ्गात् । नाप्युपाधिः । तदनिर्वचनादित्यत आह- **बाह्येति ॥ व्याप्तिं साधय-तीति ॥** व्यभिचाराभावोपदर्शनेनापृथिवीत्वदृष्टेरिति नञ्व्यत्यासेन सहचारोपदर्शनेन च व्याप्तिसाधनादिति भावः । अत एवोत्तरत्र व्यभिचारदर्शनादिनेत्यादिपदमिति द्रष्टव्यम् । **स्पष्टैवेति ॥** अत एव मूले तदनुपपादनेन न दोष इति भावः

। पृथिवीत्वजातिविशिष्टस्य पृथिवीत्वाभावसाधनस्य व्याहतत्वादाह - **गन्धवतो द्रव्यस्या-पीति ।।** गन्धवद्द्रव्ये गन्धवद्द्रव्यत्वरूपपृथिवीत्वाभावस्यापि व्याहतत्वादाह- **जातिविशेष इति ।।** अभिप्रायमाह- **गन्धवद्द्रव्यमित्यादिना ।।** ननु भेदभेद्यादिप्रपञ्चग्राहकप्रत्यक्षस्य तन्मिथ्यात्वानुमानबाध्यत्वे गन्धवद्द्रव्ये पृथिवीत्वग्राहकप्रत्यक्षस्याप्यपृथिवीत्वानुमानबाध्यत्वं स्यादिति प्रागुक्ततर्के दृष्टान्ताभावेनाऽ-पाद्यापादकयोर्विशेषतो व्याप्त्यनुपपत्त्या यद्विशिष्टस्य यस्य यद्वत्ति इत्याद्यविशेषलक्षणसामान्यव्याप्तेरेव तर्कमूल-**(पां.टि.)** तयाऽवश्याश्रयणीयतया प्रकृते च प्रपञ्चग्राहकप्रत्यक्षस्य पृथिवीत्वग्राहकप्रत्यक्षस्य च प्रत्यक्षत्वादि-विशेषेऽपि प्रपञ्चग्राहकस्य प्रत्यक्षस्य तन्मिथ्यात्वानुमानं प्रत्यनुपजीव्यत्वात् तदपेक्षया प्राबल्याभावेन तद्बाधक-त्वानुपपत्त्या व्याप्तिपक्षधर्मतावत्त्वेन निरवकाशतन्मिथ्यात्वानुमानबाध्यतायाः पृथिवीत्वग्राहकप्रत्यक्षस्य चापृथिवीत्वानुमानं प्रत्युपजीव्यत्वेन तदपेक्षया प्राबल्यात् तद्बाधकत्वोपपत्त्या तदबाध्यतायाश्च सम्भवेना-विशेषासिद्ध्याऽविशेषरूपसामान्यव्याप्तेरप्यसम्भवेन मूलशैथिल्यात्तर्काभासोऽयमित्यभिप्रेत्य, भवेदेतदेवम्, यदि पृथिवीत्वग्राहकप्रत्यक्षस्यापृथिवीत्वानुमानं प्रत्युपजीव्यत्वं स्यात्, तदेव कथमित्यतः प्रतियोगिग्राहकत्वेन तदुपदर्शयति- **विषमोऽयमुपन्यास इत्यादि ।। अभावश्चेति ।।** ससम्बन्धिकपदार्थज्ञानस्य सम्बन्धिता-वच्छेदकप्रकारकसम्बन्धिज्ञानसाध्यत्वादिति भावः । **अन्यथेति ।।** पृथिवीत्वज्ञानाभावे पृथिवीत्वाभाव-ज्ञानासम्भवादिति भावः ।

ननु प्रत्यक्षस्य प्रतियोगिग्राहकत्वेनोपजीव्यताया बाधकत्वोपयोगिप्राबल्यहेतुताया अक्लृप्तत्वान्न तदङ्गी-कारोऽत्रोचित इत्यतस्तस्य क्लृप्ततां दर्शयति- **यथेति ।।** एतच्च तेजोऽवयविमात्रस्य पक्षत्वमनुष्णत्वस्यैव च साध्यत्वमभिप्रेत्योक्तम् । तेजोऽवयविविशेषस्य पक्षतायां तेजोऽवयविमात्रस्य पक्षतायामपि शीतत्वस्य साध्यतायामुक्तप्रकारानवतारादिति द्रष्टव्यम् । ननु पृथिवीत्वग्राहकप्रत्यक्षस्येव जगद्ग्राहकप्रत्यक्षस्याप्युप-जीव्यतायाः सत्त्वादविशेषः स्यादेवेत्यत आह- **न चेति ।।** घटो व्यापकः सत्त्वादित्यत्र प्रत्यक्षस्य धर्मिमात्र-ग्राहकत्वेन, शुचि नरशिरःकपालं प्राण्यङ्गत्वादित्यत्र शब्दस्य साध्यमात्रग्राहकत्वेन, मनो विभु समवाय्याधार-त्वादित्यत्रानुमानस्य हेतुमात्रग्राहकत्वेनोपजीव्यताया दृष्टत्वेन साध्यधर्मप्रतियोगिग्राहकत्वेनैवोपजीव्यत्वस्य नियन्तुमशक्यतया, 'येन विना यस्य नोत्थानं तत्तस्योपजीव्यम्' इत्येवंरूपोपजीव्यत्वस्यैवाऽश्रयणीयत्वेन जगद्ग्राहकप्रत्यक्षस्य साध्यधर्मप्रतियोगिग्राहकत्वाभावेऽपि धर्मिसाध्यलिङ्गव्याप्त्यनुमितिस्वरूपतत्प्रामाण्यादि-ग्राहकत्वेन जगन्मिथ्यात्वानुमानं प्रति सुतरामुपजीव्यत्वेन, उपजीव्यत्वानुपजीव्यत्वाभ्यां विशेषाभावेना-विशेषसिद्ध्या युक्त एव तन्मूलकोक्तप्रसङ्गावतार इत्याशयेन समाधत्ते- **येन विनेत्यादि ।।** दृष्टिविषयस्य घटादेर्भ्रान्तित्वस्य परेणानभ्युपगतत्वेन तन्निषेधानुपपत्त्या दृष्टपदस्य दृश्यते एतद्दृष्टमिति कर्मसाधनताया अनुपपन्नत्वात्, दृष्टिर्दृष्टमिति भावसाधनोऽयं दृष्टशब्द इत्याह- **दृष्टस्येति भावे क्त इति ।।** कर्मणि क्तप्रत्ययमङ्गीकृत्यापि दृष्टिविषयस्य भ्रान्तित्वमुपपादयति- **अथ वेति ।।** नन्वाभासत्वे तारतम्याभावात् तदर्थकस्य नितरामित्यस्यानुपपत्तिरित्यतस्तदर्थमाह- **शङ्केति ।।** तथाऽपि न कालात्ययापदिष्टोच्छेदो व्यवस्थापक-सद्भावादित्यभिप्रेत्य शङ्कते- **नन्विति ।।** नन्वेवमुपजीवकेनानुमानेनोपजीव्यस्य प्रत्यक्षस्य बाधने अनुमानानुद-यापत्त्या न तेन प्रत्यक्षस्य बाधः स्यादित्यतः किं निषेधस्य प्रमाणेनाप्रसक्त्याऽनुमानानवतारोऽभिमत उत धर्म्यसिद्धेरिति विकल्पं मनसि निधायाद्यं दूषयति- **तत्रेति ।।** न द्वितीय इत्याह- **प्रतीतिमात्रेणेति ।।** तथा चाऽश्रयतायां सत्त्वस्याप्रयोजकतया न तत्सिद्ध्यर्थतयाऽप्युपजीव्यस्य प्रामाण्यापेक्षेति भावः ।

**(व्या.टि.)** एवं भेदप्रतीतेरन्योन्याश्रयादिनोत्पत्तिं निरस्य सर्वोत्तमत्वमाक्षिप्य समाहितम् । अधुना विषय-मिथ्यात्वेन तत्प्रतीतिप्रमात्वमाक्षिप्य पुनस्तदाक्षेप्तुं भेदमिथ्यात्वे तत्प्रतीतिभ्रान्तित्वे तदुपयोगिभेदमिथ्यात्वे तदनुरोध्यात्मैक्ये चानुमानान्युदाहरति- **नन्वित्यादिना ।।** अत्र विश्वं मिथ्येत्युक्ते ब्रह्मणि प्रमाणबाधोऽध्यस्ते सिद्धार्थतेत्यतो विवादपदमित्युक्तम् । विवादस्यानेकत्वेऽपि साध्यविशेषोपादानात् तद्विशेषसिद्धिः । द्वितीये पटान्तरतन्त्वन्तरान्योन्याभावं चाऽदाय सिद्धार्थताऽर्थान्तरतावारणाय क्रमेण इदमेतदत्यन्ताभावपदानीति बोध्यम् । शेषं सुगमम् । **सम्बन्धेति ।।** द्रव्यत्वायुतसिद्धत्वाभावेन संयोगसमवाययोरित्यर्थः । 'विमतं तात्त्विकस्वान्तर्भेदहीनं मतत्वतः । यदित्थं तत्तथा यद्वत् खं तथेदं ततस्तथा' इत्यान्तर्गणिकभेदाभावानुमानं सुरेश्वरवार्तिकोक्तमर्थतोऽनुवदति- **विमतमिति ।।** जीवानां पारस्परिकभेदाभावेऽनुमानम्-**आत्मान इति ।।** परकायप्रवेशेन यक्षवद्देवदत्तस्यापि परकीयदेहभोगसम्भवादाह- **देवदत्तस्यैवेति ।।** परमात्मनीतरभेदाभावेऽ-नुमानम्- **तथेति ।।** निगमयति- **तदेवमिति ।।**

ननु मूले 'प्रमाणदृष्टानामपि मिथ्यात्वकल्पनम्' इत्यन्यथाऽनुवादः, तेन रूपेणापक्षीकरणात् । विमतेः पक्षतावच्छेदकत्वेन

प्रमाणदृष्टेरपक्षतावच्छेदकत्वादित्यतो विकल्पेन प्रत्यवस्थानान्न दोष इत्याशयेनाऽह- **अत्रोच्यत इति ॥** समुच्चेयाभावेन चशब्दवैयर्थ्यमाशङ्क्य निराह- **न केवलमिति ॥ चशब्द इति ॥** समुच्चिनोतीति शेषः। 'न चाभेदे तात्पर्यमित्यत्र किञ्चिन्मानम्' इति माननिरासेनार्थलभ्यं(ब्धं)कल्पनमिह समुच्चेयमिति भावः। तद्भेदस्य चेति मूलशेषोक्तिः। ननु कथमेषां तद्बाधितत्वं तेषामेतद्ग्राह्याभावानवगाहित्वादित्यत आह- **धर्मि-ग्राहकाणि हीति ॥** साध्यविपरीतरूपेणेति शेषः। यद्वक्ष्यति 'सत्यतया' इति। बाधकत्वे विपरीतविषयत्वं तन्त्रं न पक्षतावच्छेदकावच्छेदेन। अंशबाधोच्छेदापत्तेः। प्रकृते तदप्यस्तीत्याह- **पदार्थांस्तद्भेदं चेति ॥** प्रकाशाप-हारित्वभ्रान्तिं वारयति- **प्रकाशेति ॥ तस्करत्वमिवेति ॥** 'तद्बहतोः' इति करस्य सुट् तलोपश्चेति ज्ञेयम्। इवेत्यनेन मूले रूपकमिति सूचयति। तस्करत्वं नाम धनस्वाम्यदृष्टापहारित्वं चौर्यापरपर्यायम्। तद्यथा तत्स्वामि-दर्शने विहन्यते। तद्दर्शिभिः प्रतिघातेनापहारशक्तिविच्छेदात्। तथेहापीत्यर्थः। यामिकगृहे चोर इवेत्यनेन समानमेतत्। वैपरीत्यं शङ्कते- **नन्विति ॥ स्थितं स्यादिति ॥** सिद्धं स्यादित्यर्थः। स्थिते प्रामाण्ये बलवतो बाधकता सिद्ध्येत्। तदेव न सेत्स्यतीत्याह- **न चैवमिति ॥** अनेन को दोषः प्रादुःष्यादित्यत आह- **तथा चेति ॥** प्रबलदुर्बलानपेक्षवृत्तिं व्यतिरेकमुखेन निदर्शयति- **न हीति ॥ अबाधितत्वेनेति ॥** बाधकान्त-राभावादिति भावः। **अनुमानमपीति ॥** अनेन तर्कपदं सामान्योपलक्षणमिति सूचयति। **साहाय्यमिति ॥** 'योपधाद् गुरूपोत्तमाद्वुञ्' इति प्रकृत्य 'सहायाद्वा' इति वुञो वैकल्पिकत्वात्पक्षे ष्यञिति भावः। अत्र मूले तर्कमात्रादिति तर्कमात्रशब्दस्यावधारणार्थकस्य तर्कशब्देन मयूरव्यंसकादित्वान्नित्यस्तत्पुरुषसमासो बोध्यः। तर्क एवेति तु विग्रहः। सुप्समासत्वे तदनित्यत्वस्य 'अव्ययम्' इत्यादिपृथक्समासविधानेन ज्ञापितत्वेन नित्यत्वा-नुपपत्तेः। समासान्तरस्याप्रसक्तत्वात्।

**(व्या.टि.)** ननु देहात्मैक्याध्यासो विनाशा(शत्वा)द्यनुमानबाधित इति नायं नियम इत्याशङ्क्य एतमेव न्यायमन्यत्राप्यतिदिशति- **एवमिति ॥ व्युत्पाद्येति ॥** व्युत्पादनप्रकारस्तु 'मम देह इति ह्येव न देहोऽहमिति प्रमा' इत्यनुव्याख्यानोक्तदिशा बोध्यः। ननु बाधकतायां प्राबल्यं तन्त्रं लाघवात्। न तु प्रत्यक्षत्वादिजाति-विशेषोऽपि गौरवात्। तथा चानुमानमपि यदि निरवकाशत्वादिना प्रबलं तदा तदपि प्रत्यक्षं बाधतां किमनेन निर्मूलेन नियमनिबन्धेनेत्याशङ्कते- **नन्वनुमानमपीति ॥** विपक्षे बाधकादनियमो नेत्याह- **कालात्ययापदिष्ट-मात्रेति ॥** अत्र मात्रेति कात्स्न्र्ये। ननु तथाऽपि मूले पृथिवीत्वादृष्टेरित्यनुपपन्नम्। पञ्चम्या दौर्लभ्यात्। 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे गुणे हेतावस्त्रीलिङ्गे पञ्चमीविधानात्। अस्या गुणत्वेऽपि शब्दस्य स्त्रीलिङ्गत्वा-दिति चेत्, विभाषेति योगविभागादगुणे स्त्रियामपि भवति। अन्यथा धूमादग्निमान्, घटो नास्त्यनुपलब्धेरित्यादि-प्रयोगानुपपत्तेरिति वैयाकरणैरेवोक्तत्वादित्यवेहि। **चतुष्टयस्येति ॥** सङ्ख्याया अवयवे तयबिति भावः। **इत्यनेनेति ॥** भूयोदर्शनेन व्यभिचाराभावसिद्धेरित्यर्थः। **स्पष्टैवेति ॥** पृथिव्यां घ्राणेन गन्धं जिघ्रामीत्यनुभव-सिद्धत्वादित्यर्थः। प्रतिज्ञाव्याघातं विहन्ति- **गन्धवत इति ॥** तथाऽपि व्याघात इत्यत आह- **जातिविशेष इति ॥** प्रयोगप्रकारं दर्शयति- **गन्धवदिति ॥**

वैषम्यं शङ्कते- **विषम इति ॥** ज्ञानाधीनज्ञान इति बहुव्रीहिः। **अनुमिमानेनेति ॥** अत्रानुपूर्वात् 'माङ् माने शब्दे च' इत्यस्माल्लटः शानचि 'भृञामित्' इत्यभ्यासस्येत्त्वे 'श्नाभ्यस्तयोरातः' इत्यालोपे रूपं द्रष्ट-व्यम्। **अन्यथेति ॥** पृथिवीत्वज्ञानाभावेत्यर्थः। **अप्रसिद्धेति ॥** यद्यप्यभावसाध्यके व्यतिरेकिणि साध्याप्रसिद्धिर्न दोषः। अत एव नैयायिका अपि व्यतिरेकिणि साध्यमभावरूपतया योजयन्ति। तथाऽप्यन्वयिनि प्रतियोग्यप्रसिद्धौ तद्विशिष्टाभावग्रहानुपपत्तेरित्यर्थोऽवसेयः। **इतीति ॥** साध्यप्रतियोगिग्राहकेणेत्यर्थः। **अन्यथेति ॥** उपजीव्य-स्यैवोपजीवकेन बाध इत्यर्थः। **उदयेति ॥** तत्प्रतियोगिकत्वेन साध्यानुमितिविरहादिति भावः। **स्थितौ** निर्णये, **तत्रैव** गन्धवद्द्रव्य एव। **भग्नव्याप्तिकमिति ॥** 'भञ्जो अवमर्दने' इत्यस्मात् 'ओदितश्च' इति निष्ठानत्वम् 'अनिदिताम्' इति नलोपः। नत्वस्यासिद्धत्वात्कुत्वं च बोध्यम्। अनेन व्याप्तिमत्त्वेन निरवकाशत्वरूप-प्राबल्यबीजं निरस्तम्। एवेत्यनेन न पराप्रामाण्ये हेतुरित्याचष्टे। तन्निदर्शयति- **यथेति ॥** प्रतिज्ञातवैषम्यं निगमयति- **न चेति ॥** मिथ्यात्वाद्यनुमानानां भावसाध्यकत्वेन प्रत्यक्षस्य साध्यप्रतियोगिग्राहकत्वाभावादिति भावः। उपजीव्यत्वस्यैकप्रकारानियतत्वेनैकाभावेऽप्यपरसम्भव इत्याशयेनोपजीव्यत्वं लक्षयति- **येन विनेति ॥** अत्र येन यस्योपकारस्तत्तस्योपजीव्यमित्युक्ते न्यायमते प्रामाण्यपरतस्त्वेन प्रमाणमात्रप्रामाण्यग्राहकत्वेना-नुमानस्य प्रत्यक्षाद्युपजीव्यत्वम्, मीमांसकमते 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यादिना विहितोत्तराङ्गस्य फलोपकार्यङ्गमात्रस्य च सत्राद्युपजीव्यत्वं स्यादित्यतिप्रसङ्गवारणाय यस्य येनोदय इत्युक्तम्। अत्र येन यस्योद-यस्तत्तस्योपजीव्यमिति विधिमूललक्षणकरणे यादृच्छिकसंवादिलिङ्गविभ्रमादपि प्रमाऽनुमित्युदयेन तस्याप्युप-जीव्यत्वप्रसङ्गं वारयितुं व्यतिरेकमुखतो लक्षणमिति ध्येयम्। तच्च साधारणं नैकव्यक्तिमात्रनिष्ठमित्याह- **(व्या.टि.) तच्चेति ॥** अन्यथा दहनशैत्यानुमानस्य प्रत्यक्षबाधानापत्तेरिति भावः। **धर्मीति ॥** तथा च धर्मि-ग्राहकत्वेन प्रत्यक्षस्योपजीव्यत्वं स्थिरमिति भावः। ततः किमित्यत आह- **तद्विरोधश्चेति ॥ कथमिति**

॥ किमाक्षेपे, न कथमपीत्यर्थः। अत्र दृष्टस्येति कर्मणि निष्ठान्तत्वे भ्रान्तित्वानन्वयादाह- **भाव इति ॥** 'नपुंसके भावे क्तः' इति सूत्रादिति भावः। भावसाधनत्वेन लब्धार्थमाह- **प्रत्यक्षस्येति ॥** यद्यपि ज्ञानार्थयोर्भ्रमत्वं परस्येष्टम्। यदाह - 'भ्रमोपादानमज्ञानम्' इति। तथाऽपि शाब्दिकमर्यादयैवमुक्तमिति भावः। यद्वा निष्ठान्तस्य कर्मसाधनत्वेऽपि नानन्वयः। 'इष्टिश्चितिराहुतिः' इत्यादाविव भ्रान्तित्वमित्यत्र क्तिनोऽपि कर्मण्युपगमादि-त्याह- **अथ वेति ॥** उक्तं कालात्ययापदिष्टं कैमुतिकन्यायसिद्धं चेत्युपसंहाराभिप्रायं वदन् कैमुतिकन्यायं दर्श-यति- **यदेति ॥** इत्युपसंहरतीत्यन्वयः। कैमुत्यद्योतकं नितरामिति पदं व्याचष्टे- **शङ्केति ॥** किमेत्तिङव्यय-घादाम्वद्रव्यप्रकर्षे' इत्यव्ययपूर्वात्तरप आमुप्रत्यये तद्रूपम्। ननूपजीव्यमुपजीवकस्य बाधकमिति व्यवस्थितोऽयं न्यायः, व्यवस्थापकसद्भावात्। तथा हि। उपजीव्यं द्विविधं प्रसञ्जकं प्रमापकं चेति। उपजीवकमपि निषेधकं विधायकमिति। उभयमपि शुष्कं प्रमाणानुकूलं चेति। तत्र निषेधकं प्रति प्रसञ्जकमुपजीव्यमपि नोपजीवकं बाधते। अन्यथा भ्रान्तेर्बाधकबाधकतापत्तेः। उपजीवकमपि न सर्वबाध्यम्। शुष्कस्य बाधेऽपि प्रमाणसनाथस्य बाधे प्रमाणानामपि बाधापत्तेः। इह च मिथ्यात्वस्य सत्त्वनिषेधरूपत्वेन धर्मिग्राहकमपि प्रत्यक्षं प्रसञ्जकतया नोपजीवकबाधकं, किन्त्वनुमानमुपजीवकमपि प्रमाणसनाथमुपजीव्यमेव बाधतामित्याशयेन शङ्कते- **नन्व-स्तीति ॥ निराकृतत्वादिति ॥** भूते निष्ठा। 'न चाभेदे किञ्चिन्मानम्' इति मूलेनेति शेषः।

**मूलम् - न च परमार्थतो भेदाभावो व्यावहारिकः सोऽस्तीति वाच्यम्। सदसद्वैलक्षण्ये प्रमाणाभावात्। असतः ख्यात्ययोगादिति वदतः ख्यातिरभून्न वा। यदि नाभूत् न तत्ख्यातिनिराकरणम्। यद्यभूत्तथाऽपि। न चासतो वैलक्षण्यं तत्प्रतीतिं विना ज्ञायते। न च शुक्ते रजतत्वं सदसद्विलक्षणम्। असदेव रजतं प्रत्यभादित्यनु-भवात्। न च प्रतीतत्वादसत्त्वाभावः। असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीति-रित्यन्यथाप्रतीतेरेव भ्रान्तित्वात्।**

**(त.मं.)** नन्वस्ति विषये उपन्यस्तानां प्रमाणानां व्यावहारिको भेदः, परमार्थो ह्यपोद्यत इत्यत आह- **न च परमार्थत इति ॥** सदसद्विलक्षणं हि व्यावहारिकं नामेत्यभिप्रेत्याऽह- **सदिति ॥** असतः ख्यात्ययोगात् सतो बाधायोगात् ख्यातिबाधान्यथाऽनुपपत्त्याऽनिर्वचनीयमिति वदतोऽसतः ख्यातिरभून्न वा ? न चेत्, न तस्य ख्यातिनिराकरणं सम्भवति। अज्ञाते व्यवहारासम्भवात्। यद्यभूत् तथाऽप्येवमेव। अपरथा स्वव्याहतिप्रसङ्गात्। अपि च सदसद्विलक्षणत्वं साधयताऽसतो वैलक्षण्यं तस्य प्रतीतिं विना न ज्ञायेत। न हि गजमजानताऽजस्य तद्वैलक्षण्यं ज्ञायते। ननु नासतः ख्यातिर्निषिद्ध्यते। असतः सत्त्वेन ख्यात्ययोगादिति तैर्विवक्षितमित्यत आह- **न च प्रतीतत्वा-दिति ॥** सत्त्वेन प्रतीतत्वादित्यर्थः। तत्पक्षेऽनिर्वचनीयं हि रजतं तस्य परमार्थत्वं चाविद्यमानमेव परमार्थमिदं रजतमिति दृश्यते। एवं चानिर्वचनीयपरमार्थत्वस्यासत एव दृष्टिरङ्गीकृता।

**टीका-** नन्वस्तु प्रत्यक्षादिकमुपजीव्यम्। तथाऽपि नोक्तानुमानजातस्याप्रामाण्यं, भिन्नविषयत्वेन विरोधाभावात्। भेदप्रपञ्चस्य हि पारमार्थिकं सत्त्वमस्माभिर्नाङ्गीक्रियते, व्यावहारिकं त्वङ्गीक्रियत एव। तत्रोक्तानुमानजातं भेदप्रपञ्चस्य व्यावहारिकीं सत्तामनुपमृद्य पारमार्थिकसत्ताप्रतिषेध-परम्। प्रत्यक्षादिकं तु व्यावहारिकीं सत्तां गोचरयतीति। अपृथिवीत्वाद्यनुमानं प्रत्यक्षं चोभयमप्यपारमार्थविषयमिति युक्तस्तत्र बाध्यबाधकभाव इत्यभिप्रायेणाऽशङ्क्य प्रतिषेधति- **न चेति ॥** भेदाभावः सोऽनुमानसाध्य इति शेषः। स भेदोऽस्ति प्रत्यक्षादेर्विषय इति शेषः। कुतो न वाच्यमिति चेत्, प्रत्यक्षादेरपि भेदप्रपञ्चस्य परमार्थसत्त्वविषयत्वात्। तदपि कुत इति चेत्, परि-शेषात्। भेदप्रपञ्चं गोचरयतो हि प्रत्यक्षादेः परमार्थसन्वाऽसौ विषयो भवेत्, असन् वा, सदसद्वि-लक्षणानिर्वचनीयो वा। तत्र अनिर्वचनीयासत्पक्षयोः प्रतिषेधे परमार्थसद्विषयत्वमेव परिशेक्ष्य-(सेत्स्य)तीत्याशयवान् सदसद्वैलक्षण्यपक्षानुपपत्तौ तावद्धेतुमाह- **सदसदिति ॥** भेदप्रपञ्चस्येति शेषः। सदसद्वैलक्षण्यं नाम सत्त्वेनासत्त्वेन च रहितत्वम्। दृश्यत्वादिहेतुभिः वियदादिप्रपञ्चस्य सदसद्वैलक्षण्यसाधनात् कथं तत्र प्रमाणाभाव इति चेन्न। दृष्टान्ताभावेन व्याप्त्यसिद्धेः। शुक्ति-रजतादिकं दृष्टान्त इति चेन्न। कुत इत्यत आह- **सदसद्वैलक्षण्य इति ॥** शुक्तिरजतादेरिति

शेषः।

नन्वस्त्यर्थापत्तिरत्र प्रमाणम्। तथा हि- न तावत् शुक्तिरजतादिकमत्यन्तासत्, असतः ख्यात्ययोगादस्य च ख्यायमानत्वात्। नापि परमार्थसत्, सतो बाधायोगात् अस्य च बाध्यमान-त्वात्। अतः ख्यातिबाधान्यथाऽनुपपत्त्या सदसद्विलक्षणं शुक्तिरजतादिकमिति चेन्न। अत्यन्ता-सत्त्वेनैवोपपत्तेः। नन्वसतः ख्यात्ययोगात् ख्यायमानमिदं नासदित्युक्तमित्यतोऽसतः ख्याति-मुपपादयितुं पृच्छति- **असत इति ॥ इति वदत** इत्यसतः ख्यातिं प्रतिषेधतः परस्येत्यर्थः। ख्यात्यभावपक्षस्य परेणाङ्गीकृतत्वात् तमेवाऽदौ निराकरोति- **यदि नेति ॥** यद्यसत्परेण कदाऽपि न प्रतीतं तदा तस्य असत्ख्यातिनिषेधो न युज्यते। असद्विशिष्टा खलु ख्यातिर्निराक्रियते। न च विशेषणाप्रतीतौ विशिष्टप्रतीतिरस्ति। न चाप्रतीतस्य प्रतिषेधो युज्यते। अतः परकीयप्रतिषेधानुप-पत्त्यैवासतः ख्यातिः सिद्ध्यतीति। आद्यं दूषयति- **यदीति ॥ अभूद्** असतः ख्यातिः। तथाऽपि न तत्ख्यातिनिराकरणं युज्यते स्वक्रियाविरोधात्। तथा च असतः ख्यातिरनिवार्या।

इतोऽप्यसतः ख्यातिरङ्गीकार्येत्याह- **न चेति ॥** शुक्तिरजतादेरसतो वैलक्षण्यं खल्वर्थापत्त्या ज्ञातव्यम्। न च तद् असत्प्रतीतिं विना ज्ञातुं शक्यते। वैलक्षण्यं हि व्यावृत्तिः। सा च प्रतियोगि-ज्ञानाधीनज्ञानेति कथं तदप्रतीतौ प्रतीयेत। अतोऽर्थापत्तेः फलेन विरोधः स्यात्। तथा चासत्त्वे-नोपपत्तेर्नार्थापत्त्या शुक्तिरजतादेरनिर्वाच्यतासिद्धिरिति। तथाऽपि शुक्तिरजतादिकमनिर्वचनीयं बाध्यत्वाद् व्यतिरेकेणाऽत्मवदित्यनुमानेन तत्सिद्धिर्भविष्यतीत्यत आह- **न च शुक्तेरिति ॥** अनुमानेन कल्पनीयमिति शेषः। अत्यन्तासतो रजतत्वस्य शुक्तिकायाम् अत्यन्तासन्नेव संसर्गो वा रजतस्यैव तादात्म्यं वा भ्रान्तिविषय इति ज्ञापयितुं क्वचिद्भावनिर्देशः क्वचिद्द्रव्यनिर्देशः। कुतो नेति चेद् बाधकप्रत्ययेनात्यन्तासत्त्वस्यैवावधारणेन कालातीतत्वादित्याह- **असदेवेति ॥** बाधकप्रत्ययस्य वस्तुव्यवस्थापकत्वेन प्राबल्यं निश्चितमेव।

नन्वयं बाधकप्रत्ययः सत्त्वाभावविषयः। शुक्तिरजतादेः प्रतीतत्वादसत्त्वाभावात्। न चासतोऽपि प्रतीतिरुपपादितेति वाच्यम्। असतोऽसत्त्वेन प्रतीतावपि सत्त्वेन प्रतीत्यभावात्। अस्य च सत्त्वेन प्रतीतत्वात्। एतेनार्थापत्तिरपि समर्थिता भवति, प्रतीतिमात्रसद्भावेन प्रतिषेधाद्युपपत्तेः। सत्त्वेन प्रतीतेश्च अर्थापत्तिशरीरेऽप्रवेशादित्यत आह- **न चेति ॥** प्रतीतत्वात्सत्त्वेनेति शेषः। **असत्त्वा-भावः** शुक्तिरजतादेः। कुतो नेति चेत्, किमसतः सत्त्वेन प्रतीतिरभ्रान्तौ नास्ति उत भ्रान्तावपि वा। नाऽद्यः। प्रकृतानुपयोगात्। द्वितीये भ्रान्त्यभावप्रसङ्गः। कुत इत्यत आह- **असत इति ॥** असतो रजतादेः सत्त्वेन प्रतीतिः सतश्च शुक्त्यादेरसत्त्वप्रतीतिरित्येवंरूपान्यथाप्रतीतेरेव भ्रान्ति-त्वात्। अन्यथाप्रतीतेरेव भ्रान्तित्वादित्येतावत्येवोक्ते नासतः सत्त्वेन प्रतीतिः सिद्ध्यति। अन्यथा-ख्यातिवादिभिरपि असतः सत्त्वेन प्रतीतेरनङ्गीकृतत्वात्। अतोऽसतः इत्याद्यन्यथाख्यातिव्याख्यानं कृतम्। यद्यसदसत्वेन सच्च सत्त्वेनैव प्रतीयते तदा का नाम भ्रान्तिः। सतः सदन्तरात्मता-प्रतीतिर्भ्रान्तिरिति चेत् किं सतः सदन्तरात्मता सती उतासती। नाऽद्यः। भ्रान्तित्वाभाव-प्रसङ्गात्। द्वितीये सा किमसत्त्वेन प्रतीयते किं वा सत्त्वेन। आद्ये पुनर्भ्रान्तित्वानुपपत्तिरेव। द्वितीये कथमसतः सत्त्वेन प्रतीत्यभावः। असतो धर्मस्य सत्त्वेन प्रतीतिरस्ति न तु धर्मिण इति तु नियामकशून्यम्। अत्र प्रतीतस्य रजतस्यान्यत्र सत्त्वकल्पनं च प्रमाणविकलम्। विज्ञानवादिनाऽ-प्यान्तरस्य बाह्यत्वमत्यन्तासदेव सत्त्वेन प्रतीयत इत्यङ्गीकर्तव्यमेव। अतोऽन्यथा भ्रान्तित्वानुप-पत्तेस्तल्लोभादवश्यमसतः सत्त्वेन प्रतीतेरङ्गीकार्यत्वेन न बाधकप्रत्ययस्य विषयान्तरं कल्प्यम्। नाप्यर्थापत्तेः समर्थनमिति।

**(र.टि.)** सदेकस्वभावस्य भेदस्य सदसद्रूपत्वाभावेन सदसद्वैलक्षण्यं युज्यत एवेति कथं तद् दूष्यत इत्यत आह- **सदसद्वैलक्षण्यं**

**नामेति ॥** 'न च परमार्थतः' इति पूर्ववाक्यानुरोधेन 'सदसद्वैलक्षण्ये' इति वाक्यम् 'प्रपञ्चस्येति शेषः' इति व्याख्याय 'असतः ख्यात्ययोगात्' इत्युत्तरवाक्यानुरोधेनापि तद्व्याचष्टे - **शुक्तिरजतादेरिति शेष इति ॥ अर्थापत्तेः फलेन विरोध इति ॥** ख्यात्यन्यथाऽनुपपत्तेरसत्प्रतीतिप्रतिक्षेपकत्वादसद्वैलक्षण्य-ज्ञानजननलक्षणतत्फलस्यासत्ख्यात्याक्षेपकत्वादिति भावः । **क्वचिद्द्रव्यनिर्देश इति ॥** अनिर्वचनीयत्वे रजतस्येत्यादौ धर्मिनिर्देश इत्यर्थः । **सत्त्वेनेति शेष इति ॥** अन्यथा 'असतः ख्यात्ययोगात्' इत्यनेन गतार्थता 'असतः सत्त्वप्रतीतिः' इत्युत्तरग्रन्थानानुगुण्यं च स्यादिति भावः । **प्रकृतानुपयोगादिति ॥** असतः सत्त्वेन प्रमित्यसम्भवेऽपि तथा भ्रमसम्भवात्सत्त्वेन भ्रमगोचरस्यापि शुक्तिरजतादेरसत्त्वोपपत्तेर्बाधकप्रत्ययस्य विषयान्तरकल्पनेऽर्थापत्तिसमर्थने चैतस्यानुपयोगादित्यर्थः । **असतो धर्मस्येति ॥** संसर्गतादात्म्यरूपस्ये-त्यर्थः । **न तु धर्मिण इति ॥** आरोप्यस्येत्यर्थः । न चाऽरोप्यस्यान्यत्र सत्त्वमेव नियामकमित्यत आह- **अत्र प्रतीतस्येति ॥** यद्यपि संसर्गादेरसतः सत्त्वेन प्रतीत्यङ्गीकारेणापि प्रकृतसिद्धिः, तथाऽपि स्मर्यमाणारोपस्थले आरोप्यस्याप्यसतः सत्त्वेन प्रतीतिरिति सिद्धान्तनिष्कर्षार्थमेतदुक्तमिति ज्ञातव्यम् ।

**(रा.टि.)** मूलमवतारयितुं शङ्कामाह- **नन्वस्तु प्रत्यक्षादिकमिति ॥** धर्मिसाध्यलिङ्गव्याप्त्यादिसत्त्वग्राहकमिति योज्यम् । नन्वेवं बाधोच्छेद इत्यत आह- **पृथिवीत्वाद्यनुमानमिति ॥** आदिपदेनाऽनग्नित्वाद्यनुमानपरिग्रहः। प्रतियोगितदभावयोर्द्वयोरप्येकरूपत्वादिति भावः । स्वोक्तं मूलारूढं कर्तुमाह- **इति शेष इति ॥ भेदप्रपञ्च-स्येति ॥** भेदस्य प्रपञ्चस्य चेति वा भेदसहितप्रपञ्चपरमार्थसत्त्वस्यापीति वाऽर्थः । एवमग्रेऽपि । शङ्कते- **दृश्यत्वादि-हेतुभिरिति ॥** तदेव वाक्यं दृष्टान्तनिरासकत्वेनाप्यवतार्य योजयति- **कुत इत्यत आहेति ॥ इति शेष इति च ॥ अत्रेति ॥** शुक्तिरूप्यादेस्सदसद्विलक्षणत्वरूपानिर्वचनीयत्व इत्यर्थः । **ख्यातीति ॥** प्रतीत्ययोगादित्यर्थः। **अस्य चेति ॥** शुक्तिरूप्यस्य । प्रश्नविषयनिर्देशव्युत्क्रमेण निरासः कुत इत्यत आह- **ख्यात्यभावपक्ष-स्येति ॥ असद्विशिष्टेति ॥** पटधीर्नेतिवदसत्प्रतीतिर्नेत्यत्र असतः प्रतीतौ व्यावर्तकतया विशेषणत्वेनासद्विशिष्टा सद्व्यावर्तिता ख्यातिरित्यर्थः । असतो निषेध्यता तु नाभिप्रेता । **विशेषणेति ॥** व्यावर्तकाप्रतीतावित्यर्थः । **अभूदिति** मूलपदानुवादः । किमित्यत आह-**असतः ख्यातिरिति ॥** तथाऽपीत्यनूद्यार्थमाह-**न तदिति ॥** स्वयं युक्तिमाह- **स्वक्रियेति ॥** असतः ख्यातिर्नेत्येवंरूपवचनक्रियया विरोध इत्यर्थः । **असत इति ॥** असतोऽ-
**(रा.टि.)** प्रतीतावसद्वैलक्षण्यज्ञानायोगेनासद्वैलक्षण्यज्ञानरूपफलेन ख्यायमानत्वान्यथाऽनुपपत्तिरूपार्थाप-त्तेर्विरोधः । असद्वैलक्षण्यज्ञानम् असद्विज्ञानमपि भवतीति ख्यात्याऽसन्नेत्युक्ते विरोधः स्पष्ट एव, असन्नेत्युक्त्यै-वासत्ख्यातेः प्राप्तत्वात् । एवं च ख्यातिरसत्त्वमेवाऽपादयति नासद्वैलक्षण्यमिति भावः । **क्वचिद्भावेति ॥** न च शुक्ते रजतत्वमिति भावप्रत्ययनिर्देशः 'तस्य भावस्त्वतलौ' इत्युक्तेः । **क्वचित्** सदसद्वैलक्षण्ये प्रमाणाभावा-दित्यत्र शुक्तिरजतादेरिति शेषोक्त्या भवितृरूपरजतादिद्रव्यनिर्देशः संसर्गारोपतादात्म्यारोपाभिप्रायेणेत्यर्थः।

**कुतो नेति चेदिति ॥** बाध्यत्वानुमानेन शुक्तिरजतादिकमनिर्वचनीयं कुतो न कल्प्यमित्यर्थः । सत्त्वाभाव-विषयता कुतः कल्प्येत्यत आह- **शुक्तिरजतादेरिति ॥ अस्य चेति ॥** शुक्तिरजतादेः । समर्थितेत्युक्तं व्यनक्ति- **प्रतीतिमात्रेत्यादिना ॥** आदिपदेनासद्वैलक्षण्यज्ञानग्रहः । **अर्थापत्तिशरीरेति ॥** असच्चेत् सत्त्वेन न प्रतीयेतेत्येवंरूपेणेत्यर्थः । उक्तमर्थं मूलारूढं दर्शयितुं शेषमाह- **शुक्तिरजतादेरिति ॥ प्रकृतानुपयोगा-दिति ॥** भ्रमविषयस्यासद्वैलक्षण्यसिद्धिरूपप्रकृतप्रमेयानुपयोगादित्यर्थः । वाद्यन्तररीत्या सिद्ध्यतीत्यत आह- **अन्यथाख्यातिवादिभिरपीति ॥** यद्यपि प्राचीनतार्किकैः सदुपरागेणासदपि भासदपि संसर्गोऽसन्नेव भासत इत्यङ्गीक्रियते । तथाऽपि स रजतत्वसंसर्गः स्वरूपेणाऽसन्नपि संसर्गमर्यादयैव भासते न त्वसत्त्वेनेति असतः संसर्गस्य भानेऽपि धर्मिणो रजतादेर्नासतो भानमित्यङ्गीकारादसतः सत्त्वेन प्रतीतेरनङ्गीकारादित्युक्तम् । **अन्यथा-ख्यातिव्याख्यानम्** अन्यथाख्यातिस्वरूपनिरूपणमित्यर्थः । शङ्कते- **असतो धर्मस्येति ॥** सतः सदन्तरात्मत्व-रूपधर्मस्येत्यर्थः । **अत्रेति ॥** शुक्तिकादावित्यर्थः । प्रसक्तानुप्रसक्तं प्रकृतोपयोगितयोपसंहरति - **अतोऽन्य-थेत्यादिना ॥**

**(श्री.टि.) भिन्नविषयकत्वेनेति ॥** समानसत्ताकवस्तुविषयकत्वाभावो भिन्नविषयकत्वं तेनेत्यर्थः । भिन्नविषयकत्वमुपपादयति- **भेदप्रपञ्चस्येत्यादिना ॥** व्यावहारिकं सत्त्वम् । नन्वनुमानस्यापि व्यावहारिकसत्ता-प्रतिषेधकत्वाद्भिन्नविषयकत्वं नास्तीत्यत उक्तम्- **व्यावहारिकीं सत्तामनुपमृद्येति ॥ गोचरयतीति ॥** भिन्नविषयकत्वेनेति सम्बन्धः । नन्वेवं चेदपृथिवीत्वानौष्ण्यसाधकानुमानप्रत्यक्षयोरपि बाध्यबाधकभावो न स्यात् । अनुमानेन पृथिवीत्वौष्ण्ययोरभावः पारमार्थिकस्साध्यते । प्रत्यक्षेण तु व्यावहारिकमेव पृथिवीत्वमौष्ण्यं च गृह्यत इति भिन्नविषयकत्वादिति वक्तुं शक्यत्वादित्यत आह-

**अपृथिवीत्वाद्यनुमानमिति ॥ प्रत्यक्षं** पृथिवीत्वौष्ण्यावगाहि प्रत्यक्षम् । **अपरमार्थेति ॥** पृथिवीत्वमौष्ण्यं तदुभयाभावश्च व्यावहारिक एवेति समानसत्ताकवस्तुविषयकत्वेन समानविषयकत्वादिति भावः । स इति तच्छब्दस्य प्रकृतभेदाभावपरत्वप्रतीति-वारणायानूद्यार्थमाह- **स भेद इति ॥** अभावप्रतियोगित्वेन भेदस्यापि प्रकृतत्वादिति भावः । **परमार्थ-सत्त्वेति ॥** तथा च भेदग्राहिप्रत्यक्षाभेदसाधकानुमानयोः समानसत्ताकवस्तुविषयकत्वेन समानविषयकत्वाद्युक्त एव बाध्यबाधकभाव इति भावः । परिशेषप्रकारमेवाऽह- **भेदप्रपञ्चमित्यादिना ॥ असौ** भेदप्रपञ्चः । ननु सदेकस्वभावस्य भेदस्य सदसद्रूपत्वाभावेन सदसद्वैलक्षण्यं युक्तमेवेति कथं दूष्यत इत्यत आह- **सदसद्वैलक्षण्यं (श्री.टि.) नामेति ॥ रहितत्वमिति ॥** तत्र प्रमाणाभावादित्यर्थः । शङ्कते- **दृश्यत्वादीति ॥** अर्थापत्तेरन्य-थोपपत्तिं दूषणमाह- **अत्यन्तासत्त्वेनैवेति ॥** ननु विकल्पानुसारेण कुतो न दूष्यत इत्यत आह- **परेणाङ्गी-कृतत्वादिति ॥ असद्विशिष्टेति ॥** असद्विशेषणकेत्यर्थः । **विशेषणेति ॥** असद्रूपेत्यर्थः । **विशिष्टेति ॥** असत्ख्यातिरूपविशिष्टेत्यर्थः । विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वादिति भावः । ततः किमित्यत आह- **न चेति ॥** अप्रतीतस्य असत्ख्यातिरूपविशिष्टस्य । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादिति भावः । **प्रतिषे-धेति ॥** असत्ख्यातिप्रतिषेधेत्यर्थः । **स्वक्रियेति ॥** मूकोऽहमितिवदिति भावः । **अर्थापत्तेः फलेन विरोधः स्यादिति ॥** असच्चेन्न प्रतीयेतेति ख्यात्यन्यथाऽनुपपत्तेरसत्प्रतीतिप्रतिक्षेपकत्वाद्विपर्ययापर्यवसानलभ्यस्य असद्वैलक्षण्यज्ञानलक्षणस्यार्थापत्तिफलस्यासत्ख्यात्याक्षेपकत्वेनार्थापत्तेः फलेन विरोधस्स्यादित्यर्थः । ननु शुक्ते रजतत्वमिति धर्मनिर्देशः, अनिर्वचनीयत्वे च रजतस्यानिर्वचनीयमिदं रजतमित्यत्र धर्मिनिर्देश इति विचित्रप्रयोगः किमर्थम्, इत्यतोऽत्र रजतत्वमिति संसर्गारोपः, इदं रजतमिति तादात्म्यारोप इत्यारोपद्वय-सद्भावात्तदभिप्रायेणेत्याह- **अत्यन्तासत इत्यादिना ॥ संसर्गः** समवायः । **भावनिर्देशः** रजतत्वमिति धर्म-निर्देशः । **द्रव्यनिर्देशः** रजतमिति धर्मिनिर्देशः ।

नन्वनुभवत्वाविशेषात्कथमस्यानुभवस्य प्राबल्यं येन बाधकत्वं स्यादित्यत आह- **बाधकप्रत्ययस्येति ॥** विशेषदर्शनजन्यत्वादिति भावः । **सत्त्वाभावविषय इति ॥** न च तावताऽसत्त्वप्राप्तिः । अनिर्वचनीयरूपतृतीय-कोट्यङ्गीकारादिति भावः । नन्वयं बाधकप्रत्ययः सत्त्वाभावविषयः कुतः? असत्त्वविषयक एव किं न स स्यादित्यत आह- **शुक्तिरजतादेरिति ॥ अस्य चेति ॥** रजतस्येत्यर्थः । अन्यथा प्रवृत्तिर्न स्यादिति भावः । एतेनेत्युक्तं विशदयति- **प्रतीतिमात्रेति ॥** असत्त्वेनेत्यर्थः । **प्रतिषेधेति ॥** असत्ख्यातिप्रतिषेधेत्यर्थः । आदि-पदेन असद्वैलक्षण्यज्ञानग्रहणम् । नन्वेवमसतः प्रतीत्यङ्गीकारे असच्चेन्न प्रतीयेतेत्यापादनानुपपत्त्याऽर्थापत्त्य-नुपपत्तिरित्यत आह- **सत्त्वेनेति ॥** तथा चासच्चेत्सत्त्वेन न प्रतीयेतेत्यापादनकरणान्न विरोध इत्यर्थः । **सत्त्वेनेति शेष इति ॥** अन्यथा 'असतः ख्यात्ययोगात्' इत्यनेन गतार्थता 'असतः सत्त्वप्रतीतिः' इत्युत्तरग्रन्थानानुगुण्यं च स्यादिति भावः । **अभ्रान्तौ** प्रमायाम् । **प्रकृतेति ॥** बाधकप्रतीतेस्सत्त्वाभावविषयकत्वमसद्वैलक्षण्योपपादनेन अर्थापत्तिसमर्थनं च प्रकृतं तदनुपयोगादित्यर्थः ।

अयं भावः - असतः सत्त्वेन प्रतीतिरभ्रान्तौ नास्तीत्युक्त्या असच्चेत्सत्त्वेन न प्रतीयेतेति सत्त्वप्रकारक-प्रमाविषयत्वाभाव आपादितः स्यात् । ओमिति चेत्, तथात्वेऽसतः सत्त्वेन प्रमित्यसम्भवेऽपि सत्त्वेन भ्रमसम्भवात् सत्त्वेन भ्रमगोचरस्यापि शुक्तिरजतादेरसत्त्वस्यैवोपपत्तेरसदेव रजतं प्रत्यभादिति बाधकप्रत्ययस्य सत्त्वाभावरूप-विषयान्तरकल्पनम् अर्थापत्त्याऽसद्वैलक्षण्योपपादनं चानुपयुक्तं स्यादिति । **नासतः सत्त्वेन प्रतीतिः सिद्ध्य-तीति ॥** एवमन्यथाख्यातिलक्षणमुक्त्वा सर्वान्प्रत्यप्यसतः सत्त्वेन प्रतीत्युपपादनमस्माभिः कर्तव्यं तन्न सिद्ध्यतीत्यर्थः । कुत इत्यत आह- **अन्यथाख्यातिवादिभिरपीति ॥** अन्यत्र विद्यमानमेवान्यत्राऽरोप्यत **(श्री.टि.)** इत्यन्यथाख्यातिवादिभिस्तार्किकैरित्यर्थः । **असत इति ॥** सत एव सत्त्वेन प्रतीत्यङ्गीकारादिति भावः । **व्याख्यानं कृतमिति ॥** भ्रमविषयप्रदर्शनं कृतमित्यर्थः । एवमनङ्गीकारे बाधकमाह- **यद्यसदित्या-दिना ॥** यदीत्यनन्तरमसतस्सत्त्वेन सतश्चासत्त्वेन प्रतीतिमनङ्गीकृत्येति शेषः । अवधारणव्यावर्त्यं दर्शयितु-माशङ्कते- **सत इति ॥** शुक्तेरापणस्थरजतात्मताप्रतीतिरित्यर्थः । **सा** सदन्तरात्मता । **अनुपपत्तिरेवेति ॥** असत एवासत्त्वेन प्रतीतत्वादित्यर्थः । **कथमिति ॥** असत्या एव सदन्तरात्मतायाः सत्त्वेन प्रतीतत्वादित्यर्थः। ननु असन् यो धर्मस्तस्य सत्त्वेन प्रतीतिरङ्गीक्रियते न तु धर्मिणः । तथा चासतस्संसर्गस्य तादात्म्यरूपस्य वा धर्मत्वेन सत्त्वेन प्रतीतिः सम्भवतीति चेत्तत्राऽह- **असत इति ॥ धर्मिणः** आरोप्यस्य रजतस्य । नन्वन्यत्र विद्यमानस्यैवान्यत्राऽरोपाङ्गीकारादारोप्यस्यान्यत्र सत्त्वमेवासतो धर्मिणस्सत्त्वेन प्रतीतिर्नास्तीत्यत्र नियामकमि-त्यत आह-**अत्र प्रतीतस्येति ॥ आन्तरस्येति ॥** विज्ञानरूपत्वेनाऽन्तरस्य रजतस्येत्यर्थः । **अतोऽन्यथेति ॥** असतो भ्रान्तावपि सत्त्वेन प्रतीत्यनङ्गीकार इत्यर्थः । **बाधकप्रत्ययस्य** असदेव रजतं प्रत्यभादित्यस्य । **विषयान्तरं** सत्त्वाभावरूपम् ।

**नापीति ।।** असच्चेद् भ्रान्तावपि सत्त्वेन न प्रतीयेत, प्रतीयते च सत्त्वेन, तस्मादसन्नेति वक्तुं न शक्यते । असत्त्वेऽपि सदन्तरात्मतावद्ग्राह्यत्ववच्च प्रतीतिसम्भवादिति भावः ।

**(पां.टि.) तथाऽपीति ।।** उपजीव्यतयाऽधिकबलत्वेऽपीत्यर्थः । विरोधित्वे सत्यधिकबलत्वस्यैव बाधकत्वे प्रयोजकत्वेनाविरुद्धस्याधिकबलस्याबाधकत्वादिति भावः । कुतस्तस्याविरुद्धत्वमित्यतस्तत्प्रयोजकस्य समान-विषयत्वस्य विरहादित्याह- **भिन्नविषयत्वेनेति ।।** भिन्नविषयतामेवोपदर्शयति- **भेदप्रपञ्चस्य हीति ।।** नन्वेव-मेवापृथिवीत्वानुमानेऽपि भिन्नविषयतया प्रत्यक्षानुमानयोरविरोधस्य वक्तुं शक्यत्वान्न प्रत्यक्षेणानुमानबाधः स्यादित्यत आह-**अपृथिवीत्वेति ।।** उक्तशङ्काया मूलारूढतामपेक्षितपूरणेन दर्शयति- **भेदाभावेत्यादिना ।।** ननु सदेकरूपत्वात्प्रपञ्चस्य तद्ग्राहकप्रमाणस्यैव सदसद्रूपत्वाभावरूपसदसद्वैलक्षण्यसाधकत्वान्न तत्र प्रमाणा-भाव इत्यत आह- **सदसद्वैलक्षण्यं नामेति ।।** 'सदसद्वैलक्षण्ये' इति वाक्यं प्रतिज्ञानिरासपरत्वेन योजयित्वा दृष्टान्ते साध्यवैकल्यपरतयाऽपि योजयितुं दृष्टान्तसद्भावमाशङ्कते- **शुक्तिरजतादिकमिति ।।** दृष्टान्तनिरास-परत्वसिद्ध्यर्थमनुगुणं शेषमाह- **शुक्तिरजतादेरिति शेष इति ।। अयोगादिति ।।** यदसत् तन्न प्रतीयत इति व्याप्तेः । अन्यथा नरविषाणस्यापि प्रतीतिप्रसङ्गादिति भावः । इष्टापत्तिं परिहरति- **अस्य चेति ।। बाधायोगा-दिति ।।** यत् सत् तन्न बाध्यत इति व्याप्तेः । अन्यथा सदात्मनोऽपि बाधप्रसङ्गादिति भावः । इष्टापत्तिं परिहरति- **अस्य चेति ।।** विकल्पक्रमानुसारेण ख्यातिपक्षस्यैव प्रथमतो निराकर्तव्यत्वात् तदभावपक्षनिराकरणं प्रथमतोऽसङ्गतमित्यतस्तत्र निमित्तमाह- **ख्यात्यभावपक्षस्येति ।।** अभावस्य भावनिरूप्यत्वाद् ख्यातिपक्ष एव पूर्वं विकल्पित इति हृदयम् ।

ननु यदि परोऽसत्प्रतीतिमान्न स्यात् तर्ह्यसत्ख्यातिनिषेधको न स्यादित्यापादनपक्षे, विमतोऽसत्प्रतीतिमान् असत्ख्यातिनिषेधकत्वादित्यनुमानपक्षे चाऽऽपादकसत्त्वेऽप्यापाद्यानङ्गीकारे वा हेतुसत्त्वेऽपि साध्यानङ्गीकारे वा **(पां.टि.)** बाधकाभावादप्रयोजकत्वमित्यतः, नात्र साक्षादापादनं साधनं वाऽभिप्रेतं, किन्तु यदि परोऽसत्प्रतीति-मान्न स्यात्तर्ह्यसत्ख्यातिप्रतीतिमान्न स्यात्, यदि चासत्ख्यातिप्रतीतिमान्न स्यात्तर्ह्यसत्ख्यातिनिषेधको न स्यादिति, विमतोऽसत्प्रतीतिमान् असत्ख्यातिप्रतीतिमत्त्वाद्, विमतोऽसत्ख्यातिप्रतीतिमान् असत्ख्यातिनिषेधकत्वादिति वा परम्पराऽऽपादनस्य साधनस्य वाऽभिप्रेतत्वान्नानुपपत्तिरित्यभिप्रेत्याऽऽपादनद्वयेऽनुमानद्वयेऽप्यप्रयोजकत्वं परिहर्तुं तत्ख्यातिनिराकरणपदतात्पर्यमाह- **असद्विशिष्टेति ।।** कथमेतावतोभयत्राप्रयोजकत्वपरिहार इत्यतः, आद्ये तर्के आद्यानुमाने चाकारणकार्योत्पत्तेरेव विपक्षे बाधकत्वान्न तदित्याशयेनाह- **न च विशेषणेति ।।** विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेन असति तस्मिन् तदसम्भवादित्यर्थः । द्वितीयतर्के द्वितीयानुमानेऽप्य-कारणकार्योत्पत्तेरेव विपक्षे बाधकत्वान्नाप्रयोजकत्वमित्याशयेनाऽऽह - **न चाप्रतीतस्येति ।।** अभावस्य ससम्बन्धिकपदार्थतया प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानाधीनज्ञानत्वादित्यर्थः । **स्वक्रियाविरोधा-दिति ।।** मूकोऽहमिति वचनक्रियया मूकपदोक्तवचननिषेधस्य विरोधवत्, आत्मा पराधीनप्रकाशो नेत्यात्म-सम्बन्धित्वेन पराधीनप्रकाशत्वनिषेधकात्मविषयज्ञानक्रियया नेति पदोक्तनिषेधस्य विरोधवच्च असन्न प्रतीयत इत्यसत्सम्बन्धित्वेन प्रतीतिविषयत्वनिषेधकासद्विषयज्ञानक्रियया नेति नञा प्रतिपिपादयिषितासत्प्रतीतिनिषेधस्य विरोधादित्यर्थः । अप्रयोजकत्वशङ्कां परिहर्तुं वैलक्षण्यं निरूपयति- **वैलक्षण्यं हीति ।। अधीनेति ।।** अन्वय-व्यतिरेकाभ्यां प्रतियोगिज्ञानस्य व्यावृत्तिज्ञानं प्रति कारणत्वावगमादिति भावः । **कथमिति ।।** कारणाभावेऽपि कार्योत्पत्तौ नियामकाभावेन कादाचित्कत्वानुपपत्तिप्रसङ्गादिति भावः । **अर्थापत्तेः फलेन विरोध इति ।।** यदसत् तन्न प्रतीयत इति व्याप्तिमूलकख्यात्यन्यथाऽनुपपत्तेः, प्रतीयते च तस्मान्नासत् किन्त्वसद्विलक्षणमित्य-सद्वैलक्षण्यज्ञानलक्षणफलेन विरोधः स्यात् । अस्या अर्थापत्तेरसत्प्रतीतिप्रतिक्षेपकत्वात् तत्फलस्यासद्वैलक्षण्य-ज्ञानस्य च अभावज्ञाने प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य कारणत्वेन प्रतियोगिभूतासज्ज्ञान-सापेक्षत्वादिति भावः ।

**क्वचिदिति ।।** अत्रैव वाक्ये रजतत्वमिति धर्मनिर्देश इत्यर्थः । **क्वचिद् द्रव्यनिर्देश इति ।।** 'असदेव रजतं प्रत्यभात्' इत्यादौ रजतमित्यादिधर्मिनिर्देश इत्यर्थः । नन्वधिकबलत्वाभावात्कथमनेन बाधितत्वमित्यत आह- **बाधकप्रत्ययस्येति ।।** अन्यथा वस्तुव्यवस्थापकत्वमेव न स्यादिति भावः । उक्तशङ्काया मूलारूढतां कर्तुमनुरूपं शेषमाह- **सत्त्वेनेति शेष इति ।। प्रकृतेति ।।** अभ्रान्तावसतः सत्त्वेन प्रतीत्यभावस्य भ्रान्तिविषयस्य शुक्तिरजतादेरसत्त्वाभावानुपपादकत्वेन प्रकृतानुपयोगादित्यर्थः । एवकाराभिप्रायमाह- **यद्यसदसत्त्वेनेति ।।** असदादेः सत्त्वादिना प्रतीत्यभावेऽपि भ्रान्तिसम्भवं शङ्कते- **सत इति ।। भ्रान्तित्वाभावप्रसङ्गादिति ।।** अन्यथा घटे घटात्मतायाः सत्याः प्रतीतेरपि भ्रान्तित्वप्रसङ्गादिति भावः । **कथमिति ।।** सति सदन्तरात्मताया असत्याः सत्त्वेन प्रतिभासादिति भावः । ननु न वयमसतः सर्वथा सत्त्वेन प्रतीत्यभावं ब्रूमः, किन्तु धर्मिण एव

। सदन्तरात्मतायाश्च धर्मत्वाद्युक्तस्तदसत्त्वेऽपि सत्त्वेन प्रतिभास इत्यत आह- **असतो धर्मस्येति ॥ (पां.टि.) नियामकशून्यमिति ॥** वैपरीत्यस्यापि वक्तुं शक्यत्वादिति भावः । **प्रमाणविकलमिति ॥** भ्रान्त्यनुभवबाधानुभवभ्रान्त्यनुपपत्तिबाधानुपपत्तीनां तत्र प्रामाण्यस्यान्यत्रोपपादितत्वादिति भावः । **आन्तर-स्येति ॥** प्रतीत्यनुपपत्त्याऽसत्त्वस्य, भ्रान्तिबाधयोरनुपपत्त्या पुरतस्सत्त्वस्य, प्रमाणविकलतया देशान्तरे सत्त्वस्य चानुपपत्त्या परिशेषाद्रजतस्याऽन्तरत्वसिद्धिरिति भावः । **बाह्यत्वमिति ॥** आन्तरस्याऽन्तरत्वेन प्रतीतौ भ्रान्त्यभावप्रसङ्गादिति भावः । **अत्यन्तासदेवेति ॥** आन्तरस्य रजतस्य बाह्यतायाः सत्त्वे तत्प्रतिभासस्या-भ्रान्तित्वप्रसङ्गादिति भावः । **सत्त्वेनेति ॥** असत्या बाह्यताया असत्त्वेन प्रतिभासस्य भ्रान्तित्वाभावादिति भावः । अस्त्वेवं किं तावता सिद्धमित्यत आह- **अत इति ॥**

**(व्या.टि.)** एवं प्रत्यक्षादेरनुमानोपजीव्यत्वानुपगमेन पृथिवीत्वानुमानवैषम्यमाशङ्क्य परिहृतम् । अधुना तदुपजीव्यत्वमुपेत्यापि तद्वैषम्यमाशङ्कते- **नन्वस्त्विति ॥ विरोधेति ॥** अप्रामाण्यहेतुतयोक्तविरोधस्या-सिद्धिरनेनोक्ता । तद्बीजं भिन्नविषयत्वमुपपादयितुं प्रतिषेध्याप्रतिषेध्यसत्त्वद्वैविध्यमाह- **भेदप्रपञ्चस्येति ॥ अनुपमृद्येति ॥** नन्वनुपमृदित्वेति वक्तव्यं कथमनुपमृद्येति 'समासेऽनञ्पूर्वे' इति ल्यपः पर्युदासादिति चेदि-त्थम् । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति वचनेन गतिसमासस्य नित्यत्वात् । पूर्वमुपेन गतिसमासं विधाय पश्चान्नञ्समासकरणाददोषः । अत एव नैषधीयव्याख्याने 'तमनाप्य भेजे' इत्यत्राऽङा पूर्वं समस्तस्य पश्चान्नञ्समास इत्यवादीत् इति । गोचरयतीति सुब्धातुः । निगमयति- **इतीति ॥**

अयं भावः । धर्म्यैक्येऽपि यत्प्रत्यक्षादिग्राह्यं सत्त्वं न तन्निषेध्यम्, अनुमानेन यच्च निषिध्यते न तद्गृह्यते प्रत्यक्षादिना इति तद्ग्राह्याभावानवगाहित्वाद् भिन्नविषयत्वमिति । प्रत्यक्षसमानविषयत्वमपृथिवीत्वानुमाने दर्शयति- **अपृथिवीत्वानुमानमिति ॥ अपारमार्थिकविषयमिति ॥** भावाभावयोर्व्यावहारिकसत्त्वादित्यर्थः। **परमार्थसत्त्वेति ॥** तथा च प्रत्यक्षस्यानुमाननिषेध्यग्राहित्वेन विरोधः स्थिर एवेति भावः । **कुत इति ॥** सिद्धमिति शेषः । तत्र प्रमाणाकाङ्क्षायामाह- **परिशेषादिति ॥** तत्र परिशेषस्य प्रसक्तप्रतिषेधपूर्वकत्वात्प्रसक्तान् पक्षान् प्रतिषेद्धुं विकल्पयति- **भेदप्रपञ्चमिति ॥ निषेध इति ॥** अनुपपत्त्या सिद्धे इति शेषः । **परिशेक्ष्य-तीति ॥** शिषेर्लृटि स्ये 'षढोः कः सि' इति कत्वे लघूपधगुणे च रूपम् । पक्षीयसाध्ये प्रमाणनिषेधकतया मूलं संयोज्य दृष्टान्तेऽपि तत्प्रमाणनिषेधकतया योजयितुमुपक्षिपति- **दृश्यत्वादीति ॥** अर्थापत्त्यनुमे दूषयिष्यन् अर्थापत्तिं तावच्छङ्कते- **नन्वस्तीति ॥ ख्यायमानत्वादिति ॥** ख्यातेः कर्मणि यकि शानचि आने मुकि सति रूपम् । **बाध्यमानत्वादिति ॥** प्राग्वदेवान्यथैवोपपत्त्याऽर्थापत्तिमाभासीकरोति- **अत्यन्तासत्त्वेनैवेति ॥** ननु इति वदत इति व्यर्थं 'न तत्ख्यातिनिराकरणम्' इत्युत्तरमूलाननुगुणं चेत्यतः तदनुगुणमर्थमाह- **ख्यातिं प्रतिषेधत इति ॥** ननु विकल्पव्युत्क्रमेण निराकरणे को हेतुरित्यत आह- **ख्यात्यभावपक्षस्येति ॥ सिद्ध्य-तीति ॥** अनेनायं विशिष्टप्रतीतिमान् तन्निषेधकत्वात्, असद्रूपविशेषणप्रतीतिमान् तद्विशिष्टप्रतीतिमत्त्वात्, व्याप्तिश्च सामान्यतः इत्येवं प्रयोगद्वयं सूचयति । **स्वक्रियेति ॥** उक्तरीत्याऽवश्यकासज्ज्ञानरूपक्रियया **(व्या.टि.)** तन्निषेधवचनस्य विरोध इत्यर्थः । **फलेनेति ॥** वैलक्षण्यज्ञानरूपफलेनेत्यर्थः । फलसिद्धौ तन्नान्तरीय-कतयाऽसतोऽपि ख्यातिसिद्धेर्व्याप्तिभङ्गादित्यर्थः । उपसंहरति- **तथा चेति ॥**

शङ्कते- **तथाऽपीति ॥** अर्थापत्त्या तदसिद्धावपीत्यर्थः । **आदिकमिति ॥** अध्यस्तत्वमादिपदसङ्ग्राह्यता-वच्छेदकमित्यर्थः । ननु शङ्कासमाध्योर्भावभवितृनिर्देशभेदे को हेतुरित्यत आह- **अत्यन्तासत इति ॥** भ्रान्ति-समानेन बाधेन कथं बाधाभिधानमित्यत आह- **बाधकप्रत्ययस्येति ॥ वस्तुव्यवस्थापकत्वेनेति ॥** परीक्षया सावधारणत्वेनेत्यर्थः । **सत्त्वाभावेति ॥** असदेवेत्यनुभवप्रत्यायकोऽसच्छब्दोऽसुरशब्दवन्न रूढः, किन्तु नञ्तत्पुरुष एवेति भावः । अर्थापत्तिमुपजीवयति- **एतेनेति ॥** प्रतिषेधादीत्यादिपदेनोक्तमसद्वैलक्षण्यज्ञानम् अनुक्तोऽसत्पदप्रयोगोऽपि ग्राह्यः । फलविरोधं परिहरति- **सत्त्वेनेति ॥ शरीर इति ॥** आपाद्यकोटावित्यर्थः। **प्रकृतेति ॥** भ्रान्तिविषयरजतादेरत्यन्तासद्वैलक्षण्य इत्यर्थः । **व्याख्यानं कृतमिति ॥** अन्यथा ख्यात्यन्तर-निरासोऽप्यप्रयोजनमिति भावः । भ्रान्त्यनुपपत्तिं दर्शयति- **यद्यसदसत्त्वेनेति ॥** एतेनासतः सत्त्वप्रतीतिरूप-विशेषाभावेन कथं सामान्याभावापादनं सतोऽसत्त्वप्रतीतिमालम्ब्योपपत्तेः । विशेषाभावापादने त्वापादनैक्यमिति परास्तम् । असतोऽसत्त्वेनैव सतः सत्त्वेनैव प्रतीतिनियमस्याऽपादकत्वात्, भ्रान्त्यभावस्याऽपाद्यत्वात् । सद्विशेष्यकासत्त्वप्रकारकान्यतरत्वरूपलक्षणाभावे लक्षणान्तराभावेन लक्ष्याभावप्रसङ्गात् । उभयरूपत्वन्तु न लक्षणं, रजतप्रतीतौ शुक्त्यस्मृतौ तदसत्त्वविषयकत्वाभावात् ।

अन्यथा ख्यात्यन्तरं निरसितुमुपक्षिपति- **सत इति ॥** निरसितुं विकल्पेन पृच्छति- **किमिति ॥ भ्रान्तित्वा-भावेति ॥** तद्वति तत्प्रकारकत्वादित्यर्थः । सदन्तरत्वायोगश्च ध्येयः । **इति त्विति ॥** वैषम्यचोद्यमित्यर्थः । **शून्यमिति ॥** विनिगमनाविरहेण

विपरीतापत्तिग्रस्तं च । असदेवेदं रजतमिति बाधविरोधश्च। धर्मपदस्य तदात्मतामात्रपरत्वे संसर्गारोपानिर्वाहः, सम्बन्धपरत्वेऽपि धर्मिपदस्य द्रव्यपरत्वे आरोपितगुणादेरसत्त्व-स्वीकारापातः । पदार्थपरत्वे सम्बन्धस्यापि रजततादात्म्यस्य जातितया रजतत्वसमवायस्य समवायतया क्वचित् संयोगादिरूपतया निषेधायोगः । प्रकारपरत्वेऽत्र रजतत्वमित्यादौ रजतत्वादेरसत्त्वस्वीकारापत्तिः । वैशिष्ट्य-सम्बन्धिपरत्वेऽसत्त्वेन प्रतीयमानधर्मस्यापि तादृक्त्वेनोक्तनियमभङ्ग इत्यादिदूषणमूह्यम् । अन्यथाख्यातिमते दूषणान्तरं चाऽह- **अत्र प्रतीतस्येति ।।** आपणस्थेऽत्र प्रतीतेन, अत्र प्रतीते वाऽपणस्थेनाभेदप्रत्यभि-ज्ञानाभावादिति भावः । किञ्च पूर्वमन्यत्र प्रतीतस्याधुना सतोऽत्र प्रतीतिः, उताप्रतीतस्यापि सतः । द्वितीयेऽनन्ता-नामेतत्प्रत्ययविषयतापत्तिः । प्रथमे येनैकमेव रजतं दृष्टं भस्मसात्कृतश्चानुभूतं तस्यान्यत्र भ्रान्तिर्न स्यात् । अन्यत्र सत्त्वाभावात् । तत्स्मरणे तद्भेदानुभवाच्च । पूर्वप्रतीतानामनेकेषां सत्त्वेऽपि सर्वेषां भ्रान्तिविषयत्वा-पत्तिः । न चेत्कस्यापि न स्यात् । किञ्च एकस्मिन् दृष्टे पुरःस्थित एवान्यत्र रजतभ्रान्तिर्न स्यात् । भेदानुभ-वात् । अपि च रजतशर्करासु दृष्टासु श्वेतपर्वतादौ भ्रान्तिर्न स्यात्, इत्यादिदूषणमूहनीयम् । एवमन्यथा-ख्यातिवादिनाऽसतः सत्त्वप्रतीतिं भ्रान्तावङ्गीकार्य विज्ञानख्यातिवादिनाऽप्यङ्गीकारयति- **विज्ञानवादिनाऽ-(व्या.टि.) पीति ।। अङ्गीकर्तव्यमेवेति ।।** आन्तरस्याऽन्तरत्वेन प्रतीतौ भ्रान्तित्वानुपपत्तेर्बहिष्ठे प्रवृत्त्यनुप-पत्तिश्चेत्यवधारणम् । अत इत्युपसंहारपरतया प्रतियोगिपरतया च तन्त्रेण योज्यम् । **विषयान्तरमिति ।।** सत्ताभावलक्षणमित्यर्थः ।

**मूलम्- न च असतो भ्रान्तावपि प्रतीतिर्नास्तीति वाच्यम् । अनिर्वचनीयपरमार्थत्व-स्यासत एव दृष्टयङ्गीकारात् । न च तदप्यनिर्वाच्यम् । अनवस्थितेः । प्रथमा-निर्वचनीयासिद्ध्या सर्वानिर्वचनीयासिद्धिरिति मूलक्षतिः ।**

**(त.मं.)** नन्वनिर्वचनीयपरमार्थत्वमप्यनिर्वचनीयं नासदित्यत आह- **न च तदिति ।।** तस्यानिर्वचनीयस्य परमार्थत्वमप्यनिर्वचनीयं तस्यापि तस्यापीत्यनवस्थितेः । शुक्तिरजतस्य परमार्थत्ववत् शुक्तिरजतमप्यसत् स्यादित्युपालम्भपरिहाराय हि अनिर्वचनीयपरम्परा कल्प्यते । तथा च यदनिर्वचनीयं सर्वनिर्वाहकतया प्रथमं तस्यैवाप्रामाणिकत्वादसिद्ध्या सर्वानिर्वच-नीयासिद्धिरिति मूलक्षतिः ।

**टीका-** भवेदयं दोषोऽन्येषां यदसतः सत्त्वेनाप्रतीतौ भ्रान्त्यभावप्रसङ्ग इति । मम त्वनिर्वच-नीयार्थावभासो भ्रम इत्यङ्गीकृतत्वादसतो भ्रान्तावपि प्रतीतिर्नास्ति इत्यङ्गीकृतेऽपि न कश्चिद्दोष इत्याशङ्क्य प्रतिषेधति- **न चेति ।।** प्रतीतिः सत्त्वेनेति शेषः । कुतो न वाच्यमिति चेत्, रजतमनिर्वचनीयम् इति पक्षेऽपि तत्किम् अनिर्वचनीयतया प्रतीयते, उतासत्त्वेन, अथ सत्त्वेन । न प्रथमद्वितीयौ । तथा प्रतीत्यनुपलम्भात् । प्रवृत्त्यभावप्रसङ्गाच्च । न हि असत्प्रातिभासिकं वा कदाचिदनेन अर्थक्रियासूपयुज्यमानं दृष्टं येनासत्त्वादिकं प्रतीत्यापि प्रवर्तेत । तस्मात्सत्त्वेनैव प्रतीयत इत्यङ्गीकार्यम् । तथा च प्रतीतिप्रवृत्ती युज्येते । न च रजतप्रतीतिमात्रात् प्रवृत्तिरिति वाच्यम् । अनुभवविरोधात् । विधिनिषेधाववधूय प्रत्ययायोगाच्च । तत्सत्त्वं सदसदनिर्वचनीयं वा । नाऽद्यः। अनिर्वचनीयताविरोधात् । न हि यस्य सत्त्वं सत्तदनिर्वाच्यमिति भवति । तस्मात् द्वितीयोऽङ्गीकार्यः। ततः किमित्यत आह- **अनिर्वचनीयेति ।। अनिर्वचनीयस्य** प्रातिभासिकस्य रजतस्य यत् **परमार्थत्वं** व्यावहारिकसत्त्वं तस्यासत एव सत्त्वेन दृष्ट्यङ्गीकारात् नासतो भ्रान्तावपि सत्त्वेन प्रतीतिर्नास्तीति वाच्यमिति ।

ननु रजतस्यापि प्रातिभासिकं सत्त्वमस्त्येव । मैवम् । व्यावहारिकत्वाप्रतीतौ प्रवृत्त्यभाव-स्योक्तत्वात् । सत्यं, प्रातिभासिकं रजतं व्यावहारिकतया प्रतीयत इति । तथाऽपि न सा सती नाप्यसती । किन्तु शुक्तिकेदन्तासंसर्गवत् तद्व्यावहारिकतासंसर्गस्याप्यनिर्वाच्यस्याऽरोपितस्य प्रतिभासः । ततो नासतः सत्त्वेन प्रतीत्यङ्गीकार इति तृतीयं पक्षं निराकरोति- **न चेति ।।** न केवलं रजतम् अपि तु प्रातिभासिकस्य रजतस्य यद्व्यावहारिकं सत्त्वं प्रतीयते तदप्यनिर्वाच्यं, शुक्तिका-गतमेव व्यावहारिकं सत्त्वं रजते समारोपितमिति च नेत्यर्थः । कुत इत्यत आह-

**अनवस्थिते-रिति ॥**

**शुक्तिकागतमेव व्यावहारिकं सत्त्वं रजते समारोपितममनिर्वचनीयमिति कोऽर्थः, किं व्याव-हारिकम् उत प्रातिभासिकमिति । नाऽद्यः । अनङ्गीकारात् । अङ्गीकारे वा रजतस्यापि व्यावहारि-कतापातात् । द्वितीयेऽपि किं प्रातिभासिकतयैव प्रतीयते उत व्यावहारिकतया । नाऽद्यः । प्रवृत्त्य-भावप्रसङ्गात् । न हि प्रातिभासिकमर्थक्रियासूपयुक्तं क्वचिदनेनोपलब्धं यतस्तथात्वं प्रतीत्यापि प्रवर्तेत । द्वितीये तद्व्यावहारिकता किं सती उतासती । नाऽद्यः । प्रातिभासिकत्वानुपपत्तेः । द्वितीये असतोऽपि सत्त्वेन प्रतीतिप्रसङ्गः । अथ सा व्यावहारिकताऽपि अनिर्वचनीयैवाऽरोपितेत्युच्यते तदाऽनिर्वचनीयमिति कोऽर्थ इत्यादेरावृत्त्या आरोपपरम्पराऽपर्यव-सानानुपपत्तिः स्यात् । यत्रैवाऽरोपपर्यवसानं तत्रैव प्रवृत्त्यभावो वाऽसतोऽपि सत्त्वेन प्रतीतिर्वा प्रसज्येत । न चेयमपर्यवसिता परम्परा सिद्धविषया येन बीजाङ्कुरपरम्परावददूषणं स्यादिति । ननु मूलक्षतेरभावात् नेयमनवस्था दूषणमिति चेत् । केयं मूलक्षतिर्नाम । किं परम्पराकल्पकाभावो वा अथ वा प्रयोजनपरिक्षयः । आद्या त्वस्ति प्रकृत इत्याह- प्रथमेति ॥ प्रथमस्य रजतस्यानिर्वचनीयत्वे सिद्धे हि तदुपपत्त्यर्थ-मुत्तरोत्तरानिर्वचनीयारोपपरम्पराकल्पनं स्यात् । न च तदस्तीति । द्वितीयेऽप्येतदेवोत्तरम्- प्रथ-मेति ॥ पूर्वपूर्वारोपानुपपत्तौ उत्तरोत्तरारोपाभाव इति ।**

**(र.टि.)** 'अनिर्वचनीयपरमार्थत्वस्य' इति मूले परमार्थत्वशब्देन व्यावहारिकत्वं ग्राह्यम् । भ्रान्तेः परमार्थ-विषयत्वस्य परेणानङ्गीकारात् । एवं चानिर्वचनीयशब्दस्य सदसद्विलक्षणमात्रपरत्वे तत्सम्बन्धिव्यावहारिकत्व-स्यासत्त्वं नाऽपतति । प्रपञ्चरूपानिर्वचनीयसम्बन्धिव्यावहारिकत्वस्य सत्त्वोपपत्तेः । तत्कथमसत एव इत्युक्तमि-त्यतः सामान्यवाचकानिर्वचनीयशब्दस्य तद्विशेषप्रातिभासिकपरत्वं वक्तव्यमित्यभिप्रेत्य मूलं व्याचष्टे- **अनिर्वच-नीयस्य प्रातिभासिकस्येत्यादिना ॥** सदिदं रजतमिति प्रतीयमानं सत्त्वं नासत् । येनासतः सत्त्वेन प्रतीति-प्रसङ्गः । किं नाम ब्रह्मणि पारमार्थिकमिवाम्बरादेर्मायोपाधिकं व्यावहारिकमिव शुक्तिरजतादेरप्यविद्योपाधिकं प्रातिभासिकं सत्त्वमस्त्येवेति सत्त्वत्रैविध्यवादिनो मतमाशङ्कते- **ननु रजतस्यापीति ॥ प्रवृत्त्यभावो वेति ॥**

**(र.टि.)** ननु त्वत्पक्षेऽपि शुक्तिरजतस्य प्रतीयमानं सत्त्वं सद् असद्वा । नाऽद्यः । रजतस्यापि सत्त्वापत्तेः । द्वितीयेऽपि किमसत्त्वेन प्रतीयते किं वा सत्त्वेन । नाऽद्यः । प्रवृत्त्यभावप्रसङ्गात् । द्वितीये तदपि सदसद्वेति विकल्पप्रसरेणानवस्था । अथ त्वन्मते शुक्तिरजतादिनिष्ठत्वेन प्रतीयमानव्यावहारिकताया अपसिद्धान्तात्सत्त्वा-सम्भवेनानिर्वचनीयत्वे वाच्ये तत्र च तस्यासद्वैलक्षण्यार्थं प्रातिभासिकसत्त्वार्थं च सत्त्वप्रतीत्या भाव्यम् । एवं तदपि सत्त्वमनिर्वाच्यं चेत्तस्यापि सत्त्वप्रतीत्या भाव्यमित्यनवस्थापत्तेरसत्त्वं वाच्यम् । न चैवमस्मन्मतेऽनवस्था सम्भवति । त्वन्मतेऽनिर्वाच्यभूतव्यावहारिकतायाः सत्त्वेनाभानेऽसद्वैलक्षण्यार्थप्रातिभासिकत्वासिद्धिवन्मन्मते असतः सत्त्वस्य सत्त्वेनाप्रतीतावसत्त्वासिद्धेरभावादिति चेन्न । एवमपि मां प्रत्यसतः सत्त्वेन प्रतीतिरुपपादिता स्यात् । उक्तानवस्थाभिया शुक्तिरजतादिनिष्ठत्वेन प्रतीयमानव्यावहारिकताया असत्त्वस्य मया अङ्गीकार्यत्वेऽपि तदा तस्याः सत्त्वेन प्रतीतेरङ्गीकार्यत्वात् । अनिर्वाच्यत्व एव हि तस्या असद्वैलक्षण्यनिर्वाहार्थं सत्त्वेन प्रतीतिरङ्गी-कार्या त्वन्मतेऽपि शुक्तिरजतादिनिष्ठतया प्रतीयमानसत्त्वस्यासत्त्वोपपत्त्यर्थं सत्त्वेन प्रतीतेरनङ्गीकार्यत्वेऽपि असत्त्वेन प्रतीतौ प्रवृत्त्यभावप्रसङ्गात्सत्त्वेन प्रतीतेरङ्गीकार्यत्वेनानवस्थाया अपरिहाराच्चेति । मैवम् । इदं रजतमिति विधिप्रत्ययस्यैव सत्त्वविशिष्टविषयत्वाभ्युपगमात् । नच सत्त्वस्यापरं सत्त्वमस्माभिरभ्युपगम्यते । किन्तु रजतविधि-प्रत्ययमात्रादेव प्रवृत्त्युपपत्तेः । न चैवं परस्याभ्युपगमः । सत्त्वेऽप्यवान्तरभेदाङ्गीकारेण तत्प्रतीतिमात्रस्य प्रवृत्त्य-नुपयोगादिति । **पूर्वपूर्वारोपेति ॥** अनेन मूले अनिर्वचनीयपदेन तद्विषयकारोपो लक्षणीय इत्युक्तं भवति ।

**(रा.टि.)** सदसद्विलक्षणरूपानिर्वचनीयवादी शङ्कते- **भवेदयमिति ॥** सत्त्वप्रतीतिप्रस्तावादाह- **सत्त्वेनेति शेष इति ॥** प्रवृत्त्यभावप्रसङ्गं व्यनक्ति- **न ह्यसदिति ॥ अनेनेति ॥** भ्रान्तेनेत्यर्थः । **तथा च प्रतीतीति ॥** सदिदं रजतमिति प्रतीतीत्यर्थः । **तत्सत्त्वमिति ॥** अनिर्वचनीयरजते प्रतीयमानं सत्त्वमित्यर्थः । अनिर्वचनीये-त्युक्त्या व्यावहारिकस्यापि प्रतीतेराह- **अनिर्वचनीयस्य प्रातिभासिकस्येति ॥** पररीत्या परमार्थपदं व्याचष्टे- **व्यावहारिकं सत्त्वमिति ॥** सत्तात्रैविध्यपक्षे शङ्कते- **ननु रजतस्यापीति ॥** अनिर्वचनीयस्यापीत्यपेर्थः । शङ्कते- **सत्यमिति ॥ न सेति ॥** व्यावहारिकतेत्यर्थः । **शुक्तिकेदन्तेति ॥**

प्रातिभासिके रजते पृथगिदन्ता-शब्दितैतद्देशकालसम्बन्धस्याभावेन शुक्तिनिष्ठेदन्तासंसर्गोऽनिर्वचनीय एव रजते भासते तथैव शुक्तौ व्यावहारिकतेत्यर्थः। **तृतीयमिति ॥** तत्सत्त्वं सदसदित्यादिना विकल्पिततृतीयपक्षमित्यर्थः। **व्यावहारिक-तापातादिति ॥** रजते आरोपितसत्त्वस्य व्यावहारिकत्वे तदाश्रयस्य रजतस्य घटादेरिव व्यावहारिकता-पातादित्यर्थः। **प्रातिभासिकत्वानुपपत्तेरिति ॥** आरोपितसत्त्वस्येति योज्यम्। सत्त्वाश्रयस्य सत्यत्वस्यैव प्राप्तेरिति भावः। **अथ सेति ॥** रजतनिष्ठतयाऽरोपितेऽनिर्वचनीयरूपे व्यावहारिकत्वे प्रतीयमाना व्यावहारि-कताऽप्यनिर्वचनीया चेत्प्रवृत्त्यनुपपत्त्या व्यावहारिकत्वेन प्रतीयत इति वाच्यम्। तच्च व्यावहारिकत्वमनिवर्चनीयं चेदुक्तदिशाऽनवस्था प्राप्नोतीत्यसदेव सत्त्वेन प्रतीयत इति वाच्यम्। एवं चासतः सत्त्वेन प्रतीतिः प्राप्तैवेत्यर्थः। किमनेनोक्तं भवतीत्यतस्तन्निष्कृष्य दर्शयति- **यत्रैवेति ॥** त्रिचतुरकक्षानन्तरमारोपितं सत्त्वमनिर्वचनीयमेव **(रा.टि.)** प्रतीयते न तु सत्त्वेन। येन तदपि सत्त्वमारोपितमिति तस्यापि सत्त्वेन प्रतीत्या भाव्यमित्यनवस्था स्यादिति। तत्राऽरोपपर्यवसानं चेत्प्रवृत्त्यभावः। अतः सत्त्वेन प्रतीयत इति वाच्यम्। तदपि सत्त्वं तत्रासदेवेति तस्य सत्त्वेनैव प्रतीत्या भाव्यमित्यनवस्थानादतोऽसतस्सत्त्वेन प्रतीतिः प्राप्तैवेत्यर्थः।

**सिद्धविषयेति ॥** प्रमितविषयेत्यर्थः। **प्रयोजनपरिक्षयः** उत्तरोत्तराऽरोपाभावः। **उत्तरोत्तरेति ॥** रजते प्रतीतं सत्त्वमनिर्वाच्यम्, तत्रापि प्रतीतं सत्त्वमप्यनिर्वाच्यमित्येवंरूपेणारोपपरम्पराकल्पनमित्यर्थः। **पूर्व-पूर्वेति ॥** प्राथमिकरजतत्वस्यानिर्वचनीयत्वानुपपत्ताविति वा तत्र प्रतीतेदन्त्वसत्त्वयोरनिर्वचनीयत्वरूपाऽ-रोपानुपपत्ताविति वाऽर्थः। ननु परमते शुक्तिकागतेदन्तासंसर्गवत्तद्गतसत्त्वमपि रजते प्रतीतमनिर्वाच्यं चेत्तस्य तथैव प्रतीतौ प्रवृत्त्ययोगेन सत्त्वेन प्रतीतौ च तस्मिन्नपि सत्त्वासत्त्वानिर्वचनीयत्वविकल्पप्रसरेणानवस्थाप्रसङ्गवत् सिद्धान्तेऽप्यसति रजते प्रतीतं यत्सत्त्वं तस्य सत्त्वायोगादसत्त्वे च तथैव प्रतीतौ प्रवृत्त्ययोगात्सत्त्वेन प्रतीतौ च तस्मिन्नपि सत्त्वे उक्तविकल्पप्रसङ्गेनानवस्थेति चोद्यं सममिति चेत्परमते अनिर्वाच्यस्य सत्त्वस्य सत्त्वेनाप्रतीतौ प्रातिभासिकत्वायोगवत्सिद्धान्तेऽसतः सत्त्वस्य सत्त्वेनाप्रतीतौ असत्त्वासिद्धेरभावादिति भावः।

**(श्री.टि.)** मम तु न कश्चिद्दोष इत्यन्वयः। **अनिर्वचनीयतया** प्रातिभासिकतया। **तथेति ॥** अनिर्वचनीयतया असत्त्वेन चेत्यर्थः। प्रवृत्त्यभावप्रसङ्गमुपपादयति- **न हीत्यादिना ॥ प्रतीतिमात्रादिति ॥** तथा च प्रवृत्त्य-न्यथानुपपत्त्या सत्त्वेन प्रतीतिर्नाङ्गीकार्येति भावः। **अनुभवेति ॥** तथात्वे रजतपदश्रवणमात्रादपि प्रवृत्त्यापत्ते-रिति भावः। **विधिनिषेधौ** अस्तित्वनास्तित्वे। रजतमिति प्रतीतावस्तीति वा विषयीक्रियेत नास्तीति वा तावदवधूय प्रत्ययायोगादित्यर्थः। **तत्सत्त्वं** रजतनिष्ठं सत्त्वम्। **अनिर्वचनीयताविरोधादिति ॥** रजतस्येति शेषः। अत्र सर्वत्रानिर्वचनीयशब्दः प्रातिभासिकपरो द्रष्टव्यः। तदुपपादयति- **न हीति ॥** ननु सदिदं रजतमिति प्रतीयमानं सत्त्वं नासत् येनासतः सत्त्वस्य सत्त्वेन प्रतीतिप्रसङ्गः। किं नाम ब्रह्मणि पारमार्थिकमिव अम्बरादेर्मायो-पाधिकं व्यावहारिकमिव रजतेऽप्यविद्योपाधिकं प्रातिभासिकं सत्त्वमस्त्येव, सत्त्रैविध्याङ्गीकारादित्याशयेन शङ्कते- **ननु रजतस्यापीति ॥** व्यावहारिकत्वाप्रतीतौ प्रातिभासिकत्वेनैव प्रतीतावित्यर्थः। तस्माद्व्यावहारिकत्वं प्रतीयत इति वाच्यम्। तच्च प्रातिभासिकेऽसदेवेत्यसतस्सत्त्वेन प्रतीतिः प्राप्तेति भावः। तृतीयं पक्षमाशङ्कते- **सत्यमिति ॥ सा** व्यावहारिकता। **शुक्तिकेदन्तेति ॥** शुक्तिकानिष्ठेदन्तासंसर्गो यथा रजतेऽनिर्वचनीय एवाऽरोपितः प्रतीयत इदं रजतमिति तद्वदित्यर्थः। **तद्व्यावहारिकतासंसर्गस्येति ॥** शुक्तिगतव्यावहारिकता-संसर्गस्यापीत्यर्थः। प्रतिभासो रजत इति शेषः। **आपातादिति ॥** न हि यस्य व्यावहारिकत्वं व्यावहारिकं तत्प्रातिभासिकमिति सम्भवतीति भावः। **तथात्वं** प्रातिभासिकत्वम्। **तद्व्यावहारिकतेति ॥** रजते प्रतीयमानव्यावहारिकसत्त्वनिष्ठा व्यावहारिकतेत्यर्थः। **प्रातिभासिकत्वानुपपत्तेरिति ॥** रजतस्येति शेषः। रजतनिष्ठव्यावहारिकसत्वनिष्ठव्यावहारिकतायाः सत्त्वे रजतस्य प्रातिभासिकत्वानुपपत्तेरित्यर्थः। द्वितीये रजत-निष्ठव्यावहारिकसत्त्वनिष्ठव्यावहारिकत्वस्यासत्त्व इत्यर्थः। **अथ सेति ॥** रजतनिष्ठव्यावहारिकसत्त्वनिष्ठा **(श्री.टि.)** व्यावहारिकताऽपीत्यर्थः। **यत्रैवाऽरोपपर्यवसानमिति ॥** अपर्यवसानरूपानवस्थाङ्गीकारे व्यापा-रान्तराभावप्रसङ्गेन तत्परिहाराय कियद्दूरं गत्वा यत्रैव व्यावहारिकताया अनिर्वचनीयत्वमनङ्गीकृत्य प्रातिभासि-कत्वमसत्त्वं वाऽङ्गीकृत्यारोपपरम्परापर्यवसानमुच्यते तत्रैवेत्यर्थः। **प्रवृत्त्यभाव इत्यादि ॥** प्रातिभासिकत्वे तथैव प्रतीतौ प्रवृत्त्यभावः। असत्त्वेऽसतः सत्त्वेन प्रतीतिप्रसङ्ग इत्यर्थः।

ननु सिद्धान्तेऽपि शुक्तिरजते सत्त्वं तावत्प्रतीयत इत्यङ्गीकार्यम्। अन्यथा प्रवृत्तिर्न स्यात्। तथा च तत्सत्त्वं सदसद्वा। नाऽद्यः। रजतस्यापि सत्त्वापत्तेः। द्वितीये किमसत्त्वेन प्रतीयते सत्त्वेन वा। नाऽद्यः। प्रवृत्त्यभाव-प्रसङ्गात्। द्वितीये तदपि सदसद्वेति विकल्पकरणेनानवस्था समानेति चेत्। मैवम्। रजतमिति विधिप्रत्ययमात्रस्यैव सत्त्वविशिष्टरजतविषयकत्वाभ्युपगमात्। न च सत्त्वस्यापरं सत्त्वमस्माभिरभ्युपगम्यते येनानवस्था स्यात्। किन्तु रजतविधिप्रत्ययमात्रादेव प्रवृत्त्युपपत्तेः। न चैवं परस्याभ्युपगमः

। सत्त्वेऽप्यवान्तरभेदाङ्गीकारेण तत्प्रतीतिमात्रस्य प्रवृत्त्यनुपयोगित्वादिति ।

ननु बीजाङ्कुरानवस्थावत्प्रमाणसिद्धवस्तुविषयकत्वान्नेयमनवस्था दूषणमित्यत आह- **न चेयमिति ॥** रजतानिर्वचनीयत्वस्यैवाप्रामाणिकतयाऽसिद्धत्वादिति भावः । **मूलक्षतेरभावादिति ॥** यदर्थमुत्तरोत्तरानुसरणं तत् मूलं, तत्क्षतेरभावादित्यर्थः ।

'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्'

इति वचनादिति भावः । **परम्पराकल्पकाभावो वेति ॥** उत्तरोत्तरपरम्पराकल्पकं मूलं तदभावो मूलक्षतिः साऽत्र नास्ति । परम्पराकल्पकमेवास्तीति यावदित्यर्थः । **अथ वा प्रयोजनपरिक्षय इति ॥** मूलं नाम प्रयोजनं तत्परिक्षयो मूलक्षतिः । साऽत्र नास्ति प्रयोजनमेवास्तीति यावदित्यर्थः । **आद्या त्वस्तीति ॥** परम्परा-कल्पकाभावरूपा मूलक्षतिरस्तीत्यर्थः । **न च तदस्तीति ॥** प्रथमस्य रजतस्यानिर्वचनीयत्वं नास्ति । रजतस्या-सत्त्वेन तदनिर्वचनीयत्वस्याप्रामाणिकत्वादित्यर्थः । तदभिप्रायमाह- **पूर्वपूर्वेति ॥** प्रयोजनपरिक्षयरूपाऽपि मूलक्षतिरस्ति । प्रथमस्य पूर्वपूर्वस्य रजतस्यानिर्वचनीयत्वसिद्धिर्हि उत्तरोत्तरानिर्वचनीयपरम्पराकल्पने प्रयोजनम्, तदिह नास्ति । पूर्वस्य रजतस्यानिर्वचनीयताया अप्रामाणिकत्वेनासिद्धतया तदर्थं कल्प्यमानोत्तरोत्तरा-रोपपरम्पराया अप्यसिद्धिरिति प्रयोजनपरिक्षयरूपाऽपि मूलक्षतिरस्तीत्यर्थः । अपरे तु पूर्वपूर्वेत्यस्य इत्यभिप्राय-माहुः । तथा हि- रजतानिर्वचनीयत्वस्य अद्याप्यसिद्ध्या तदारोपानुपपत्तौ तस्य प्रवृत्तिजनकत्वाय कल्प्य-मानोत्तरोत्तरव्यावहारिकत्वारोपाणामसिद्ध्या प्रथमारोपात्प्रवृत्तिलक्षणं कार्यं त्वन्मते न स्यादिति प्रयोजन-परिक्षयरूपा मूलक्षतिरस्तीति ।

**(पां.टि.)** 'न च वाच्यम्' इति प्रतिज्ञाय कुत इति तत्र हेत्वाकाङ्क्षायाम् 'अनिर्वचनीयपरमार्थत्वस्य' इति हेतुरुच्यते । स न युक्तः । रजतानिर्वचनीयत्ववादिनो मते भ्रान्तौ रजतस्य व्यावहारिकतायाः प्रतीतेरभावाद्, **(पां.टि.)** भावे वा व्यावहारिकत्वस्यासत्त्वस्यैवासिद्धेः, सिद्धौ वा तस्य सत्त्वेन प्रतीतेरसिद्धेरित्यतः, अत्र मूले एवशब्देन सत्त्वस्यानुभवसिद्धतायाः तत्प्रतीतेश्च युक्त्युपेततायाः कथनेन कल्पान्तरेऽनुभवाभावस्य युक्तिविरोधस्य च सूचनात् कल्पान्तरनिरासेन सत्त्वप्रतीतिपक्षपरिशेषाय कल्पान्तरनिरासे तौ व्यापारयितुं विकल्पयति- **रजतमनिर्वचनीयमिति पक्षेऽपीति ॥** एवशब्दसूचितं साधकमाह- **तथा चेति ॥ प्रती-तीति ॥** सदिदं रजतमिति प्रतीतीत्यर्थः । उक्तेरन्यथासिद्धिमाशङ्क्य निराकरोति- **न चेति ॥** कुत इत्यतः कल्पान्तरनिरासे व्यापारितमनुभवविरोधमत्रापि व्यापारयति- **अनुभवेति ॥** सदिदं रजतमित्यनुभवेत्यर्थः । ननु नास्त्येव सदिदं रजतमित्यनुभवः किन्त्विदं रजतमित्येव । स च स्वरूपमात्रविषयक एवेति कथमनुभवविरोध इति चेन्न । अनुभवापलापापातात् । अस्तु वेदं रजतमित्येव अनुभवः । तथाऽपि तद्विरोधः स्यादेवेत्याह- **विधीति ॥** तथा चेदं रजतमिति विधिप्रत्ययस्यैव सत्त्वविषयकत्वमिति सत्त्वाविषयकत्वे विधिप्रत्ययत्वमेव न स्यादिति भावः । **तत्सत्त्वमिति ॥** आद्यस्य न्यायमतेन द्वितीयस्य स्वमतेन तृतीयस्य मायिमतेन प्रसक्तिरिति द्रष्टव्यम् । विरोधमेवोपपादयति- **न हीति ॥** द्वितीयपक्षस्य मूलारूढत्वसिद्ध्यर्थं तदुपयुक्ततया व्याचष्टे- **अनिर्वच-नीयस्येत्यादिना ॥** ननु रजतेऽसतः आविद्यकस्यैव सत्त्वस्य सदिदं रजतमिति प्रतीतिसम्भवात् किमसतो व्यावहारिकत्वस्य सत्त्वेन प्रतीत्याग्रहेणेत्याशङ्कते- **नन्विति ॥ उक्तत्वादिति ॥** 'न ह्यसत्प्रातिभासिकं वा' इत्यादिनेति शेषः । ननु व्यावहारिकसत्त्वस्यानिर्वचनीयत्वेऽपि व्यावहारिकत्वेन, प्रातिभासिकत्वेऽपि प्राति-भासिकत्वेनैव प्रतीत्या व्यावहारिकत्वेन प्रतीतावपि व्यावहारिकताया सत्त्वेनासत्त्वेनैवोपपत्तौ नानवस्थाप्रसङ्ग इत्यतो दूषणान्तरेण पक्षान्तरं निरस्य प्रातिभासिकस्य प्रातिभासिकव्यावहारिकतया प्रतीतिपरम्पराकल्पनेऽन-वस्थाप्रसङ्गं व्युत्पादयति- **शुक्तिकागतमेवेत्यादिना ॥ व्यावहारिकत्वापातादिति ॥** न हि यस्य व्यावहारि-कत्वं व्यावहारिकं तस्य प्रातिभासिकत्वं सम्भवति । तथा सति घटादेरपि प्रातिभासिकत्वापातादिति भावः । **तदेति ॥** रजतव्यावहारिकताया अनिर्वचनीयत्वस्य व्यावहारिकत्वरूपत्वानङ्गीकाराद्, अङ्गीकारे वा रजतस्यापि व्यावहारिकत्वप्रसङ्गात् । प्रातिभासिकत्वरूपत्वे च प्रतीतेरावश्यकत्वात्प्रातिभासिकत्वेनैव प्रतीतौ प्रवृत्त्यभाव-प्रसङ्गाद्व्यावहारिकत्वेन प्रतीतौ च तस्या व्यावहारिकताव्यावहारिकतायाः सत्त्वे व्यावहारिकतायाः प्रातिभासिक-त्वानुपपत्त्याऽसत्त्वे चासतः सत्त्वेन प्रतीत्यापत्त्या व्यावहारिकतानिष्ठव्यावहारिकताया अनिर्वचनीयत्वे 'अनिर्वच-नीयेति कोऽर्थः' इत्युक्तरीत्याऽनवस्थेत्यर्थः ।

ननु रजतव्यावहारिकत्वस्य व्यावहारिकत्वसत्त्वपक्षयोरनङ्गीकारपराहतत्वेनानाशङ्कनीयत्वेऽपि प्राति-भासिकस्य प्रातिभासिकत्वेन प्रतीतौ च सतोऽसत्त्वेन सत्त्वेन वा प्रतीत्यभ्युपगमे आरोपपरम्पराप्रसक्तेर-भावान्नानवस्थेत्यतः, एतत्पक्षत्रयेऽनवस्थाप्रसक्तावपि आद्यद्वये प्रवृत्त्यभावापत्त्या तृतीये सतोऽपि सत्त्वेन प्रतीत्यापत्त्यै तत्पक्षत्रयं प्रदूष्य प्रातिभासिकस्य प्रातिभासिकत्वेन व्यावहारिकत्वेन

प्रतीतिपक्षं परिशेष्यानवस्था-प्रसङ्गस्यात्रोच्यमानत्वान्नानुपपत्तिरित्याशयेनाऽह- **यत्रैवेति ।।** प्रातिभासिकानां शुक्तिरजततद्व्यावहारिकत्व-**(पां.टि.)** तद्व्यावहारिकत्वव्यावहारिकत्वादीनामारोपेषु पूर्वपूर्वारोपस्योत्तरोत्तरारोपं प्रत्यधिष्ठानसिद्धितया कारणत्वेन अधिष्ठानसिद्धितया कारणीभूतपूर्वपूर्वारोपस्य उत्तरोत्तरारोपार्थमपेक्षणीयत्वेनाधिष्ठानसिद्धिरूप-प्रातिभासिकरजताद्यारोपस्याप्रामाणिकत्वेनानुपपन्नतया अधिष्ठानासिद्ध्या तत्सिद्ध्युत्तरकालीनव्यावहारिकत्वा-द्यारोपस्याप्यनुपपन्नतया प्रवर्तकज्ञानविरहेण रजतार्थिप्रवृत्तिविलयादस्त्येव प्रयोजनपरिक्षय इत्याशयेनाऽह- **पूर्वपूर्वेति ।।** प्रवृत्त्यनुपपत्तिरिति शेषः ।

**(व्या.टि.)** अनिर्वचनीयख्यातिवादी प्रत्यवतिष्ठते- **भवेदयमिति ।।** अङ्गीकृतेऽपीति भावे क्तः । त्वयाऽपि परिशेषेण असतः सत्त्वप्रतीतेरनिच्छताऽपि अङ्गीकार्यत्वेन स्वक्रियाविरोधप्रसङ्गादित्याशयेन प्रसक्तपक्षान् प्रति-क्षेप्तुं विकल्पेनोपक्षिपति- **इति पक्षेऽपीति ।। अनुपलम्भादिति ।।** व्यवसायस्यानुव्यवसायैकप्रमाणकस्य तदभावेनाभावनिश्चयादिति भावः । आद्ये भ्रान्तिव्यवहारलोपप्रसङ्गश्चाधिकः । **प्रवृत्त्यभावेति ।।** तत्प्रतीतेः प्रवृत्त्यनुपयोगादिति भावः । तत्कुत इत्यत आह- **न हीति ।।** नन्विष्टतावच्छेदकप्रतीतेरेव प्रवर्तकतया सत्त्वेन प्रतीत्यनुपयोग इति निषेधति- **न चेति ।। अनुभवेति ।।** अत्रास्ति रजतमिति प्रतीत्यैव प्रवृत्तेरनुभवात् । इष्टतावच्छेदकप्रतीतिमात्रस्य प्रवर्तकत्वेनास्ति रजतमित्यस्यापीष्टतावच्छेदकप्रकारकतया प्रवृत्तिप्रसङ्ग इति ध्येयम् । अभ्युपेत्य चेदमुक्तम् । वस्तुतस्तदेव नास्तीत्याह- **विधिनिषेधाविति ।।** सत्त्वासत्त्वेत्यर्थः । **विरोधा-दिति ।।** सहानवस्थानादित्यर्थः । तदुपपादयति- **न हीति ।। सम्भवतीति ।।** अनिर्वाच्यत्वस्य सद्वैलक्षण्य-रूपत्वादिति हृदयम् । अत्रानिर्वचनीयपरमार्थशब्दौ प्रातिभासिकव्यावहारिकपराविति इत्याशयेन व्याचष्टे- **प्राति-भासिकस्येत्यादिना ।। सत्त्वेनेति ।।** सिद्धवत्कृत्योक्तम् । **अस्त्येवेति ।।** तथा च सद्रूपेणैव प्रतीयतां किमसद्रूपान्वेषणेनेति वाक्यशेषः । **अभावस्य ।।** तत्प्रसङ्गस्येत्यर्थः । ननु प्रातिभासिकस्य व्यावहारिकत्वेन भ्रान्तौ प्रतीतावपि नासतः सत्त्वेन प्रतीत्यङ्गीकारः । किन्तु प्रातिभासिकरजते प्रकारीभूतमवभासमानं व्याव-हारिकत्वमपि प्रातिभासिकसदेवेत्याशयेन शङ्कते- **सत्यमिति ।। न सा सतीति ।।** बाधाविरोधादिति भावः । प्रकारस्य व्यावहारिकत्वस्य तत्र सत्त्वे धर्मिणः प्रातिभासिकत्वानुपपत्तेः । न हि यस्य व्यावहारित्वं व्यावहारिकं तत्प्रातिभासिकमिति युज्यते, विरोधादिति भावः । **नापीति ।।** प्रतीतिविरोधादिति भावः । उपसंहरति- **ततो नेति ।। असतः** अत्यन्तासतः । **तृतीयमिति ।।** प्रातिभासिके प्रकारीभूतं सत्त्वमनिर्वचनीयमिति तृतीयमित्यर्थः। शुक्तिकागतमेवेति प्रसिद्धिद्योतनाय । अन्यथा अन्यथाख्यात्यापत्तेः । अनिर्वचनीयत्वस्योभयसाधारण्याभि-मानात्प्रश्नः । अनङ्गीकारे बीजमाह- **अङ्गीकार सति ।।** न हि यस्य व्यावहारिकत्वं व्यावहारिकं तत्प्राति-भासिकमिति युज्यते विरोधादिति भावः ।

आद्यमवद्यति- **प्रवृत्तीति ।। प्रातिभासिकत्वेति ।।** रजतीयव्यावहारिकत्वस्येति शेषः । **सेति ।।** व्यावहारिकत्वनिष्ठेत्यर्थः । **इत्यादेरिति ।।** किं व्यावहारिकी उत प्रातिभासिकी । नाऽद्यः । रजतीयव्याव-हारिकत्वस्य प्रातिभासिकत्वानुपपत्तेः । न द्वितीयः । साऽपि प्रातिभासिकी व्यावहारिकता किं प्रातिभासिकतयैव **(व्या.टि.)** प्रतीयते उत व्यावहारिकतया । आद्ये प्रवृत्त्यभावप्रसङ्गः । द्वितीये सा किं सती उतासती । आद्ये प्रातिभासिकत्वानुपपत्तिः । द्वितीये असतः सत्त्वेन प्रतीत्यनुपपत्तिरित्यादेर्विकल्पदोषस्येत्यर्थः । नन्वारोपस्य क्वचित्पर्यवसाने को दोष इत्यतो व्यवस्थया दोषद्वयमित्याह- **यत्रैवेति ।।** प्रतीयमानस्य व्यावहारिकत्वस्य प्रातिभासिकतामुपेत्य व्यावहारिकत्वेन प्रतीतावेवं तस्यापीति प्रतीतावनवस्थोक्ता तत्र चरमव्यावहारिकत्वस्य प्रातिभासिकत्वेनैव प्रतीतौ वाऽसत्त्वमुपेत्य सत्त्वेन प्रतीतौ वाऽपर्यवसानम् । आद्ये प्रवृत्त्यभावः । द्वितीयेऽभि-मतासिद्धिरिति भावः । सत्त्वेन प्रतीतिं विना प्रातिभासिकत्वायोगवदसत्त्वानुप-पत्तेरभावात्सिद्धान्ते रजते प्रतीयमानसत्त्वस्यासत्त्वेऽपि नानवस्थेत्यवधेयम् । ननु परम्पराऽपर्यवसानं न दोषः । बीजाङ्कुरपरम्परावदुप-पत्तेरित्यतो वैषम्यमाह- **न चेयमिति ।। मूलक्षतेरिति ।।** क्षणू हिंसायामस्मात् स्त्रियां क्तिन्यनुनासिकलोपे रूपम् । **अनवस्थेति ।।** ननु कथमिदं 'स्थागापापचो भावे' इति क्तिनोऽङ्पवादित्वादिति चेन्न । व्यवस्थायामिति निर्देशात्सोऽपीत्यवेहि । **केयमिति ।।** मूलपदेन किं प्रयोजकं कल्पकं वेति मूलपदार्थविकल्पात्समासार्थविकल्पो बोध्यः । मूलत्वोपपादनम्- **सिद्ध इति ।।** द्वितीये प्रथमपदस्य पूर्वार्थत्वं तत्प्रथमपरत्वं चोपेत्य व्याचष्टे- **पूर्व-पूर्वेति ।।** रजतारोपे सिद्धे अधिष्ठानसिद्ध्या तत्र सत्त्वारोप इति पूर्वस्यैवाभावे उत्तरस्यैव अभावात् । उत्तरा-रोपपरम्परया पूर्वपूर्वारोपोपपत्तिरूपप्रयोजनपरिक्षय इत्यर्थः । अनुपपद्यमानस्य प्रामाणिकस्य कल्पकत्वं, तदुपपत्तेः प्रयोजनत्वं, प्रकृते त्वप्रमाणिकत्वान्नोभयमपीति भावः ।

**मूलम्-अनिर्वचनीयत्वे रजतस्य अनिर्वचनीयमिदं रजतमिति बाधकज्ञानमुत्पद्येत ।**

**मिथ्याशब्दस्त्वभाववाची । न च सदसद्वैलक्षण्यं नामास्तीत्यत्र किञ्चिन्मानम् । अनुभवविरोधश्च तत्पक्षे । सदसतोर्द्वयोरेव सर्वैरनुभूयमानत्वात् । अतोऽनिर्वच-नीयाभावादसतः प्रतीत्यनङ्गीकारात् प्रतीयमानत्वाच्च भेदस्य सत्त्वप्राप्तेर्नाद्वितीयत्वं युज्यते ।**

**(त.मं.)** मिथ्येदं रजतमित्युत्पद्यते हि बाधकज्ञानम् । मिथ्या चानिर्वचनीयमेवेत्यत आह- **मिथ्येति ।।** तुशब्देन 'अलीकं वितथं मिथ्या' इति प्रसिद्धिं द्योतयति । असतः प्रतीत्यनङ्गीकारात् सत्त्वेन प्रतीयमानत्वाच्च भेदस्य सत्त्वमेवाऽऽप्तम् । न च वाच्यं प्रतीतत्वादेव सदसद्विलक्षणो भेद इति । सदसद्वैलक्षण्ये प्रमाणाभावस्य संसाधितत्वात् ।

**टीका-** तदेवमसतः सत्त्वेन ख्यात्युपपत्तेः न तद्बलेन बाधकप्रत्ययोऽन्यथयि(थै)तव्य इत्युक्तम् । इतश्चैवमित्याह- **अनिर्वचनीयत्वे चेति ।।** यद्यनिर्वचनीयमिदं रजतमिति स्फुटं बाधकज्ञानमुत्पद्येत तदाऽसदेव प्रत्यभादित्यनुभवस्य विषयान्तरकल्पनं युक्तं स्यात् । न चैवमस्तीति भावः । ननु भ्रान्तेरुत्थितस्तावन्मिथ्यैव रजतं प्रत्यभादित्यनुवदति । मिथ्याशब्दोऽनिर्वचनीयवाची । तेनानुमीयते 'रजतस्यानिर्वचनीयता अनेनानुभूता' इति । तत्कथमुच्यतेऽनिर्वचनीयताविषयं बाधकज्ञानं नोत्पद्यत इति? तत्राऽऽह- **मिथ्येति ।।** अभावप्रतियोगि असद् **अभाव** इति अत्रोच्यते । न भवतीत्यभाव इति वा । अत्र मिथ्याशब्दस्तु न अनिर्वचनीयवाचीति वक्तव्यम् । ततो निरर्थकः स्यादित्यतोऽभाववाचीत्युक्तम् । कुतो नानिर्वचनीयवाचीत्यत आह- **न चेति ।।** सदसद्विलक्षणे वस्तुनि प्रमाणसिद्धे पश्चात्कथञ्चित् तद्वाचित्वं सम्भवति । न चैतदस्ति । प्रमाणस्यैव इदानीं विचार्यमाणत्वात् । नच तद्बलादेव सर्वं कल्प्यम् । तस्यासद्वाचित्वेनान्यथासिद्धत्वात् ।

एवमनुमानस्य कालात्ययापदिष्टतामभिधाय दूषणान्तरं चाऽऽह- **अनुभवेति ।।** शुक्तिरजतादेर-निर्वचनीयतासाधने अनुभवविरोधश्च । अनुभूतार्थविपरीतप्रतिपादकत्वमप्रसिद्धविशेषणता चेति यावत् । कथमित्यत आह- **सदसतोरिति ।।** ननु सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवद् इति सामान्यतोऽनुमानेनानिर्वचनीयत्वे सिद्धे तस्य केवलव्यतिरेक्यनुमानेन शुक्तिरजतादिनिष्ठतामात्रं साध्यते । अतो नाप्रसिद्धविशेषणतेति चेन्न । अविरुद्धत्वस्योपाधि-त्वात् । न च गोत्वाश्वत्वादौ साध्याव्यापकता, प्रतिषेध्यप्रतिषेधात्मकस्य विरोधस्य विवक्षित-त्वात् । प्रतिज्ञापदव्याघातो वाऽनेन वाक्येन सूच्यत इति ।

एवं प्रत्यक्षादेर्विषयस्य भेदप्रपञ्चस्यानिर्वचनीयतां प्रतिषिध्योपसंहरन् असत्त्वमपि प्रतिक्षिपन् परिशेषसिद्धमर्थं दर्शयन् प्रकृतमनुसरति- **अत इति ।।** अनिर्वचनीयेति भावप्रधानो निर्देशः । भेदस्येति वक्ष्यमाणमत्रापि सम्बध्यते । असत इत्यादिकमसत्त्वनिराकरणम् । **अनङ्गीकारात्** परेणेति शेषः । भेदस्येत्यतः परमसत्त्वस्याप्यनुपपत्तेरिति पूरणीयम् । **सत्त्वप्राप्तेः** परिशेषेण पारमार्थिकसत्त्वसिद्धेः । भेदस्येति वर्तते । **नाद्वितीयत्वं युज्यते** एवं प्रत्यक्षादीनामपि परमार्थ-विषयत्वेनानुमानबाधकत्वोपपत्तेरनुमानैः भेदाभावसाधनं न युज्यत इत्यर्थः ।

**(र.टि.)** मिथ्यैव रजतं प्रत्यभादिति बाधकज्ञानस्यापि परेणानिर्वचनीयविषयत्वाङ्गीकारादाह- **इति स्फुटमिति ।। अभावप्रतियोगीति ।।** अभावपदेन स्वशक्यप्रतियोगित्वरूपसम्बन्ध्यसत् प्रतिपाद्यत इत्यर्थः । 'न च सदसद्वैलक्षण्यम्' इत्युत्तरवाक्यं सङ्गमयितुमाह- **अत्र मिथ्याशब्द इति ।। अप्रसिद्धविशेषणता चेति ।। यावदिति ।।** अन्यथा असदेव प्रत्यभादित्यनेन गतार्थता, सदसतोर्द्वयोरित्युपपदानानानुगुण्यं च स्यादिति **(र.टि.)** भावः । **प्रतिषेध्येति ।।** प्रतिषेध्यपदस्यात्यन्ताभावपरत्वान्न रूपरूपध्वंसादौ साध्याव्यापकत्वमिति भावः । [१]**प्रतिज्ञापदयोर्व्याघातो वेति ।** द्वयोरेवेत्येवकारेण तृतीयप्रकाराभावप्रतिपादने सति सद्वैलक्षण्य-साधनेत्वसत्त्वमेव प्राप्तम् । पुनरसद्विलक्षणमित्युक्ते सद्विलक्षणपदेन व्याहतिः । एवमसद्विलक्षणपदेन सद्विलक्षणपदस्य व्याहतिरित्यर्थः । दोषस्योपपादनमेव क्रियते न तु मुखतस्तत्कीर्तनमिति सूच्यत इत्युक्तम् । **भेदाभावसाधनमिति ।।** अनेन

अद्वितीयत्वपदं तत्साधनपरमित्युक्तं भवति । भेदाभावसाधकानुमान-दूषणस्योक्तत्वादिति भावः ।

**(रा.टि.) बाधकप्रत्यय इति ॥** असदेव प्रत्यभादिति बाधकप्रत्यय इत्यर्थः । **विषयान्तरेति ॥** सद्वैलक्षण्य-रूपेत्यर्थः । अभावपदमत्र लक्षणयाऽत्यन्ताभावप्रतियोग्यसत्परमित्याह- **अभावप्रतियोगीति ॥** योगवृत्त्याऽ-सद्वाचीत्याह- **न भवतीति ॥** भावः सत्, 'भवतेश्च' इति णप्रत्ययः, स नेत्यभावोऽसदित्यर्थः । एतेनासदेव प्रत्यभादिति बाधकप्रत्ययप्रदर्शनमयुक्तं, रजताभाव एव रजतत्वेन प्रत्यभादिति प्रदर्शनीयमिति चोद्यं निरस्तं बोध्यम् । परोक्तार्थप्रतिक्षेपे कार्येऽभाववाचीति कस्मादुक्तमित्यत आह- **अत्रेति ॥** **कथञ्चिदिति ॥** निगमनिघण्ट्वादौ प्रसिद्ध्यभावात्कथञ्चिदित्युक्तम् । **तच्छब्देति ॥** मिथ्याशब्देत्यर्थः । **सर्वमिति ॥** मिथ्या-शब्दस्यानिर्वाच्यवाचित्वं, तद्बलाद्बाधकप्रत्ययस्यानिर्वाच्यविषयकत्वम्, असदविषयकत्वं, तद्दृष्टान्तेन च जगतोऽनिर्वाच्यत्वसाधनमित्येतत्सर्वमित्यर्थः ।

**एवमिति ॥** 'यच्च प्रमाणदृष्टानाम्' इत्यादिनोक्तप्रकारेण दृश्यत्वाद्यनुमानजातस्येत्यर्थः । यद्वा न च शुक्ते रजतत्वं सदसद्विलक्षणम्, असदेव रजतं प्रत्यभादित्यादिना शुक्तिरजतादेरनिर्वचनीयत्वसाधककेवलव्यतिरेकि-रूपबाध्यत्वानुमानस्य उक्तां कालात्ययापदिष्टतामित्यर्थः । बाधोक्तिपरत्वे पौनरुक्त्यापत्तेरनुभवविरोधपद-मन्यथा व्याचष्टे- **अनुभूतार्थेति ॥** सामान्यप्रसिद्धिसम्पादकमनुमानमाह- **सत्त्वासत्त्वे इति ॥** एको यो धर्मी तन्निष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी इत्यर्थः । धर्मीति निर्धर्मकब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तर-निरासाय । रूपरसयोर्वाय्वादिनिष्ठात्यन्ताभावप्रतियोगित्वमस्तीति साध्यानुगमो दृष्टान्ते ज्ञेयः । अनेन सत्त्वासत्त्व-हीनं किञ्चित्सिद्ध्यति सत्त्वासत्त्वाभावे वाऽनिर्वचनीयत्वमिति भावः । सहावस्थितत्वमविरुद्धत्वं मत्वा शङ्कते- **न चेति ॥** घटादिनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यसत्त्वेऽप्युक्तरूपाविरुद्धत्वाभावादिति भावः। **प्रतिषे-ध्येति ॥** अन्योन्यविरहानात्मकत्वरूपमविरुद्धत्वमत्र विवक्षितम् । अस्ति च गोत्वाश्वत्वयोरपि तादृशाविरुद्धत्व-मिति भावः । प्रतिषेधपदेनात्यन्ताभावो विवक्षितः । तेन घटतत्प्रागभावयोर्घटतद्ध्वंसयोर्वा न साध्या-व्यापकत्वमिति ज्ञेयम् । तथाच पक्षे तादृशाविरुद्धत्वस्याभावाद्व्यापकीभूतसाध्यस्याप्यभावः। **अनेनेति ॥** सदसतोर्द्वयोरेवेति वाक्येनेत्यर्थः । विमतं सदसद्विलक्षणं बाध्यत्वादित्यनुमानप्रतिज्ञायां सद्विलक्षणमित्युक्तेऽ-**(रा.टि.)** सदिति प्राप्तं, पुनरसन्नेत्युक्ते व्याघात इति भावः । **एवमिति ॥** सदसद्वैलक्षण्ये प्रमाणाभावादित्यादिना प्रतिषिध्येत्यर्थः । **परिशेषेति ॥** प्राक्प्रत्यक्षादेः प्रपञ्चपरमार्थसत्त्वविषयकत्वं कुत इति प्रश्नेऽनिर्वचनीयत्वा-सत्त्वपक्षयोः प्रतिषेधे परिशेषात्सत्त्वविषयकत्वमेव सेत्स्यतीति बुद्ध्या 'सदसद्वैलक्षण्ये प्रमाणाभावात्' इत्यादिनाऽनिर्वचनीयतामियता ग्रन्थेन प्रतिषिध्य परिशेषसिद्ध्येऽसत्त्वपक्षं प्रतिक्षिपन् परिशेषसिद्धं परमार्थत्वम् दर्शयन् दृश्यत्वाद्यनुमानेन भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत्, विमता आत्मानः परमात्मनः तत्त्वतो न भिद्यन्त इत्यादिना च भेदप्रपञ्चाभावसाधनायोगमनुसरति । अनुसन्धत्त इत्यर्थः । तत्र तत्र विवक्षितशेषोक्त्या व्याचष्टे- **अनिर्वचनीयेति ॥** नाद्वितीयत्वं युज्यत इत्यनुवादः । एवमित्यादि व्याख्या ।

**(श्री.टि.) बाधकप्रत्ययः** असदेव रजतं प्रत्यभादिति प्रत्ययः । **अन्यथा** सत्त्वाभावविषयत्वेन । ननु परेणापि मिथ्यैव रजतं प्रत्यभादिति बाधकज्ञानस्य वस्तुगत्याऽनिर्वचनीयविषयकत्वाङ्गीकारादिष्टापत्तिरित्यत आह- **स्फुट-मिति ॥** अनिर्वचनीयमिदमित्यनिर्वचनीयत्वप्रकारकमित्यर्थः । **विषयान्तरं** सत्त्वाभावरूपम् । **अनिर्वच-नीयतावाचीति ॥** सदसद्वैलक्षण्यवाचीत्यर्थः । मिथ्याशब्दस्याभाववाचित्वे मिथ्यैव रजतमिति सामाना-धिकरण्यायोग इत्यत आह- **अभावप्रतियोगीति ॥** अत्र वाक्ये अभाव इति पदेनात्यन्ताभावप्रतियोग्यसदुच्यत इत्यर्थः । तथा च प्रतियोगिप्राधान्यविवक्षया रजतं मिथ्येत्यस्य रजतमत्यन्ताभावप्रतियोगीत्यर्थो द्रष्टव्य इति भावः । निषेधप्राधान्यविवक्षयाऽप्याह- **न भवतीति ॥** कर्तृव्युत्पत्त्यर्थः । तथा च रजतं मिथ्येत्यस्य रजत-प्रतियोगिकात्यन्ताभाव इत्यर्थो द्रष्टव्य इति भावः । **ततो निरर्थक इति ॥** मिथ्याशब्दस्यानिर्वचनीयवाचकत्वाभावे अन्यस्य तद्वाच्यस्याभावान्मिथ्याशब्दो निरर्थक इति भावः । तद्वाचित्वं मिथ्याब्दस्येति शेषः । अभिधानाद्य-भावात्कथञ्चिदित्युक्तम् । **तद्बलादेवेति ॥** भ्रान्त्युत्थितस्य मिथ्यैव रजतं प्रत्यभादित्यनुवादबलादेवेत्यर्थः । **सर्वमिति ॥** सदसद्विलक्षणे वस्तुनि प्रमाणं, मिथ्याशब्दस्य सदसद्विलक्षणरूपानिर्वाच्यवस्तुवाचकत्वमिति सर्वमित्यर्थः । **तस्येति ॥** यद्बलात्कल्पनीयं तस्य मिथ्याशब्दस्येत्यर्थः । **अनुमानस्येति ॥** शुक्तिरजतादिकम् अनिर्वचनीयं बाध्यत्वाद्व्यतिरेकेणाऽत्मवदित्यनुमानस्येत्यर्थः । **अनुभूतार्थविपरीतप्रतिपादकत्वमिति ॥** एतदनुमानात्प्राक् साध्यं कुत्रापि दृष्टान्ते नानुभूतमित्यननुभूतार्थप्रतिपादकत्वमित्यर्थः । **इति यावदिति ॥** अन्यथा बाधकथनाभिप्रायेऽसदेव रजतं प्रत्यभादित्यनेन गतार्थता सदसतोर्द्वयोरेवेत्युपपादनाननुगुण्यं च स्यादिति भावः । **धर्मत्वादिति ॥** व्यतिरेकिधर्मत्वादित्यर्थः । अन्यथा प्रमेयत्वादौ

व्यभिचारापत्तेरिति द्रष्टव्यम् । **रूपरसवदिति** ।।

ननु दृष्टान्तद्वयं किमर्थमुपात्तम् । न च वाच्यं सत्त्वासत्त्वयोर्द्वयोः पक्षत्वात्तदनुसारेणेति । अनित्ये वाङ्मनसे मूर्तत्वाद्धटवदित्यभियुक्तप्रयोगानुपपत्तेः । तत्रापि घटपटवदिति प्रयोगापातादिति चेदुच्यते । अत्र साध्येऽत्यन्ता-भावप्रतियोगिनी इत्यत्रैकात्यन्ताभावप्रतियोगित्वे साध्ये सत्त्वासत्त्वयोरेकात्यन्ताभावप्रतियोगित्वाभावेन बाधापत्त्या अत्यन्ताभावद्वयप्रतियोगित्वस्यैव साध्यतया वक्तव्यत्वे तत्र रूपवदित्येकस्यैव दृष्टान्तस्योक्तौ **(श्री.टि.)** तत्रात्यन्ताभावद्वयप्रतियोगित्वाभावेन साध्यवैकल्यापत्तेस्तत्परिहाराय दृष्टान्तद्वयोपादानमिति भावः। रूपरसयोर्वायुरूपैकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वेन दृष्टान्ते साध्यं द्रष्टव्यम् ।

**केवलव्यतिरेकी ति** ।। शुक्तिरजतादिकमनिर्वचनीयं बाध्यत्वादात्मवदिति केवलव्यतिरेक्यनुमानेनेत्यर्थः। **साध्याव्यापकतेति** ।। रासभरूपैकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वे सत्यपि परस्परविरहव्यापकत्वरूप-विरुद्धत्वस्यैव सत्त्वादिति भावः। **प्रतिषेध्येत्यादि** ।। अत्र प्रतिषेधशब्दोऽत्यन्ताभावपरः । तथा चाविरुद्धत्वं नाम परस्परविरहरूपत्वाभावः । परस्परात्यन्ताभावानात्मकत्वमिति यावत् । एवं च न गोत्वाश्वत्वयोस्साध्या-व्यापकतेति भावः । प्रतिषेधशब्दस्यात्यन्ताभावपरत्वमनङ्गीकृत्य अभावमात्रपरत्वाङ्गीकारे वायुरूपैकधर्मि-निष्ठात्यन्ताभावप्रतियोगिनो रूपतद्ध्वंसयो रूपस्य प्रतिषेध्यत्वेन ध्वंसस्य रूपप्रतिषेधत्वेन प्रतिषेध्य-प्रतिषेधात्मकत्वरूपविरुद्धत्वस्यैव सत्त्वेन साध्याव्यापकता स्यादिति द्रष्टव्यम् । **अनेनेति** ।। द्वयोरेवेत्येवकारेण तृतीयप्रकाराभावप्रतिपादनेनेत्यर्थः । तथा च सद्वैलक्षण्यसाधनेऽसत्त्वस्यैव प्राप्त्या पुनरसद्विलक्षणमित्युक्ते व्याघातः । एवमसद्विलक्षणत्वसाधने सत्त्वस्यैव प्राप्त्या पुनः सद्विलक्षणमित्युक्ते व्याघात इति भावः । **सूच्यत इति** ।। दोषोपपादनमेव क्रियते न तु कण्ठतस्तत्कीर्तनमतः सूच्यत इत्युक्तमिति भावः । **उपसंहरन्निति** ।। अतोऽनिर्वाच्यत्वाभावादित्यंशेनोपसंहारो द्रष्टव्यः । **परिशेषसिद्धमर्थमिति** ।। सदसद्वैलक्षण्ये प्रमाणाभावादि-त्यादिना ग्रन्थेन कृतो यः परिशेषस्तत्सिद्धो योऽर्थो भेदस्य पारमार्थिकसत्यत्वरूपस्तमित्यर्थः । सत्यत्वप्राप्ते-रित्यनेन तत्प्रदर्शनं द्रष्टव्यम् । **प्रकृतमिति** ।। नाद्वितीयत्वं युज्यत इत्यनेन प्रकृतानुसरणं द्रष्टव्यम् । असत्त्वं प्रतिक्षिपन्नित्युक्तम् । तत्प्रतिक्षेपः केनांशेन क्रियत इत्यत आह- **असत इत्यादिकमिति** ।।

**(पां.टि.) अन्यथयितव्य इति** ।। सत्ताभावविषयकत्वेन व्याख्येय इत्यर्थः । **विषयान्तरकल्पनमिति** ।। सत्त्वाभावविषयत्वकल्पनमित्यर्थः । ननु नेदं रजतमिति चक्षुरादिव्यापारानन्तरं जायमानो बाधकप्रत्ययो लिङ्गाद्यजन्यत्वात् प्रत्यक्षरूप इति तावदविप्रतिपन्नं सर्वेषाम् । न चायं भ्रम इति शक्यते वक्तुं, विपरीत-प्रमाणानुपलम्भात् । स चायं बाधकप्रत्ययो रजतमिथ्यात्वविषयक इत्यवश्यं वाच्यम् । उक्तरूपबाधकप्रत्यय-समनन्तरं मिथ्यैव रजतं प्रत्यभादित्याप्तस्यानुवाददर्शनात्तस्य च रजतमिथ्यात्वविषयकतया बाधकप्रत्ययस्य रजतमिथ्यात्वविषयकत्व एव सम्भवात् । अन्यथाऽप्रतीतानुवादप्रसक्त्याऽऽप्तत्वभङ्गापातात् । न चैतावता बाधकप्रत्ययस्य रजतमिथ्यात्त्वविषयकत्वसिद्धावपि रजतानिर्वचनीयविषयकत्वासिद्धिः । मिथ्यैव रजतं प्रत्यभादित्यनुवादस्य रजतानिर्वचनीयाविषयकत्वादिति वाच्यम् । मिथ्याशब्दस्यानिर्वचनीयवाचकतयाऽनुवाद-स्यानिर्वचनीयविषयकत्वसिद्ध्या तदनुरोधेन बाधकप्रत्ययस्य तद्विषयत्वसिद्धिसम्भवात् । अत एवाऽहुः 'यावदुक्तं भवत्यनिर्वचनीयमिति तावदुक्तं भवति मिथ्या' इति । तदेवं नेदं रजतमितिबाधकप्रत्ययस्यैव रजतानिर्वच-नीयताविषयकत्वात्तादृशबाधकज्ञानोत्पत्त्यापादनमिष्टापादनत्वादनुपपन्नमित्याशयेन शङ्कते- **नन्विति** ।। ननु मिथ्याशब्दस्याभाववाचित्वे कथं मिथ्यैव रजतमिति सामानाधिकरण्यमित्यतोऽत्राभावशब्दस्य लक्षणया **(पां.टि.)** प्रतियोगिप्रधानत्वेन निषेधपरत्वाभावात् रजतस्याभावत्वाभावेऽपि तत्प्रतियोगित्वान्नानुपपत्ति-रित्यभिप्रेत्य लक्षणाभूतशक्यसम्बन्धप्रदर्शनपूर्वकं तस्य लक्षणया प्रतियोगिपरतामाह-**अभावप्रतियोगीति** ।। अत्र पक्षेऽभावशब्दस्य लक्षणा भवति इत्यपरितोषाद् योगेन तत्परतां दर्शयति- **न भवतीत्यभाव इति वेति** ।। **नानिर्वचनीयवाचीति** ।। व्याकरणाभिधानादिप्रमाणाभावाद्धादिसमयस्य चातिप्रसङ्गेनानिश्चायकत्वान्न तस्या-निर्वचनीयत्ववाचकत्वमिति भावः । **वक्तव्यमिति** ।। तावताऽपि नेदं रजतमिति बाधकप्रत्ययस्यानिर्वचनीयत्वा-भावविषयकत्वसिद्ध्येष्टापादनत्वपरिहारादिति भावः । **निरर्थक इति** ।। ततश्च पदत्वव्याघात इति भावः ।

शुक्तिरजतादिकमनिर्वचनीयं बाध्यत्वाद्व्यतिरेकेणाऽत्मवदित्यनुमानस्य कालात्ययापदिष्टतायाः पूर्वमेवोक्तत्वात्पुनस्तदभिधाने फले पौनरुक्त्यमित्याशङ्क्य दूषणान्तरपरतया तद्योजयति- **एवमिति** ।। कथमनेनाप्रसिद्धविशेषणतायाः समर्पणमित्यत उक्तम्- **अनुभूतार्थेति** ।। तत्त्वप्रदीपिकोक्तमप्रसिद्ध-विशेषणतापरिहारमाशङ्कते- **सत्त्वासत्त्वे इति** ।। एको यो धर्मी तन्निष्ठौ यौ अत्यन्ताभावौ

तत्प्रतियोगिनौ भवितुमर्हत इति साध्यार्थः । यौ धर्मौ तावेकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ यथा रूपरसौ । अत्र भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितयाऽर्थान्तरतावारणायैकधर्मीत्युक्तम् । तर्हि बाध्यत्वप्रतीतत्वानुमान-योर्वैयर्थ्यमित्यत उक्तम्- **सामान्यत इति ।। उपाधित्वादिति ।।** वायुलक्षणैकधर्मिनिष्ठात्यन्ताभाव-प्रतियोगित्ववतो रूपरसयोः अविरुद्धत्वरूपोपाधिसत्त्वेनोपाधेः साध्यव्यापकत्वात् । धर्मत्वरूपसाधनवति च पक्षे विरुद्धत्वाभावेनोपाधेः साधनाव्यापकत्वाच्चेत्यर्थः । ननु गोत्वाश्वत्वादौ घटरूपैकधर्मिनिष्ठात्यन्ताभावप्रति-योगित्वरूपसाध्यसत्त्वेऽपि सहानवस्थितत्वलक्षणविरुद्धत्वस्यैव सत्त्वेनाविरुद्धत्वस्यैवाभावान्नोपाधेः साध्य-व्यापकत्वमित्याशङ्क्य निषेधति- **न चेति ।। प्रतिषेध्येति ।।** गोत्वाश्वत्वयोश्च प्रतिषेध्यप्रतिषेधकत्वाभावान्न साध्याव्यापकत्वमिति भावः । न च संयोगतदत्यन्ताभावादौ तथाऽपि साध्याव्यापकत्वमिति वाच्यम् । प्रदेशभेदेनैव संयोगतदत्यन्ताभावयोर्वृत्तेरनुभवसिद्धतया तयोरेकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वासम्मत्या तत्रापि तदनवकाशादित्याशयात् । एतच्च अप्रसिद्धविशेषणत्वं पररीत्यैवोक्तम् । स्वमतेऽन्यत्र तददूषणत्वस्य समर्थितत्वात् । स्वमतेन तु व्याहतिरेवात्र दूषणमिति भावेन तत्परतया वाक्यं योजयति- **प्रतिज्ञापदेति ।।** सन्न भवती-त्युक्तेऽसत्त्वमुक्तं भवति सत्त्वप्रतिक्षेपरूपत्वादसत्त्वस्य । पुनरसन्न भवतीत्युक्ते स्ववचनव्याहतिः । एवम् असन्न भवतीत्युक्त्या 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति सत्त्वं लभ्यते । पुनः सन्न भवतीत्युक्ते स्वव्याहतिरित्यर्थः । एतद्व्युत्पादनप्रकारस्तु वाक्यार्थचन्द्रिकोक्तरीत्याऽवधेयः । **उपसंहरन्निति ।।** ततश्च 'अतो भेदस्यानिर्वचनीयत्वाभावात्' इत्यस्य न वैयर्थ्यमिति भावः । **प्रतिक्षिपन्निति ।।** अतो न 'असतः' इत्या-देर्वैयर्थ्यमिति भावः । **परिशेषेति ।।** अतो 'भेदस्य सत्यत्वप्राप्तेः' इत्यस्य न वैयर्थ्यमिति भावः । **प्रकृत-मनुसरतीति ।।** अतो न 'नाद्वितीयत्वं युज्यते' इत्यस्य वैयर्थ्यमिति भावः ।

**(व्या.टि.)** उपसंहरति- **तदेवमिति ।। अन्यथयितव्य इति ।।** अन्यथाशब्दात् करोतिण्यन्तात् तव्ये इटि च **(व्या.टि.)** रूपम् । ततः किं प्रकृत इत्यत आह- **यदीति ।।** ननु तद्रूपबाधकप्रत्यये स्फुटतरानुव्यवसायाभावेऽप्य-नुमानेन तत्सिद्ध्या विपर्ययापर्यवसानात्तर्काभासोऽयमिति शङ्कते- **नन्विति ।।** तत्र हेत्वसिद्धिं निरस्यति- **अनुवदतीति ।।** ततः किं केन सङ्गतमित्यत आह- **मिथ्याशब्द इति ।। अनुमीयत इति ।।** अनुमानप्रकारस्तु अयं रजतानिर्वचनीयतामन्वभूत् तद्वाचिपदानुवादित्वादिति, रजतानिर्वचनीयता भ्रान्तेनानुभूता तथाऽनूद्य-मानत्वात् यदेवं तदेवमिति वा द्रष्टव्यः । अतस्तर्कस्य विपर्ययपर्यवसानं दुःशकमित्याह- **तत्कथमिति ।।** ननु मिथ्याशब्दो असद्वाचीति वक्तव्ये किमनेनाकाण्डताण्डवेन । न ह्यभावो असन्, तस्य सत्प्रभेदत्वादित्यतोऽयमभावशब्दो लक्षणयाऽसत्पर इत्याह- **अभावप्रतियोगीति ।।** शक्यसम्बन्धप्रदर्शनमेतत् । तर्हि स्वायत्त-न्यायविरोध इत्यतो व्युत्पन्नोऽत्राभावशब्द इति भावेन व्युत्पत्तिं दर्शयति- **न भवतीति ।।** अत्र नञ्पूर्वाद् भवतेः 'अकर्तरि च कारके सञ्ज्ञायाम्' इत्यत्र 'अकर्तरीत्यनेनैव नञिवयुक्तन्यायेन कर्तृभिन्नकारकलाभेऽपि कारकग्रहणं कर्तर्यपि यथा स्यादित्येवमर्थम्' इति महाभाष्योक्तेः कर्तरि घञि रूपं द्रष्टव्यम् । ज्वलादेराकृति-गणत्वाद्वा । 'कृत्यल्युटो बहुलम्' इत्यत्र कृन्मात्रग्रहणाद्वा समाधेयम् । अन्यथा 'एष सम्प्रसादोऽस्माच्छरीरात्' इति श्रौतप्रयोगः 'सम्प्रसादादध्युपदेशात्' इति सूत्रे 'सम्प्रसीदत्यस्मिन्निति सम्प्रसादो जीवः' इति परकीय-व्याख्यानं च विरुध्येतेति भावः । 'विभाषा ग्रहः' इति सूत्रे 'भवतेश्च' इति काशिकायामुक्तत्वाद्वा साधुरित्य-लम् । नन्वत्र परोक्तार्थप्रतिक्षेपेणेष्टसिद्धौ किमर्थान्तरवचनेनेत्यत आह- **अत्रेति ।।** ननु शब्दस्य वाचकत्वा-भावेऽभिधानाद्यभावो वाच्यः। किमर्थं प्रमाणाभावेनेत्यत आह- **सदसद्विलक्षण इति ।।** अत्र शक्यस्या-प्रामाणिकत्वेऽप्यलीकासदादिशब्दानां वाचकत्वदर्शनेन शक्यतावच्छेदकस्य प्रामाणिकत्वमावश्यकम् । सदसद्विलक्षणत्वं च न प्रामाणिकम् । सदसद्विलक्षणशब्दस्य वाक्यत्वान्न दोष इत्यवधेयम् । **तद्बलादेवेति ।।** मिथ्याशब्दबलादेवेत्यर्थः । **अन्यथेति ।।** कल्पकशक्तिव्याघातादित्यर्थः ।

वृत्तवर्तिष्यमाणग्रन्थयोः सङ्गतिं दर्शयति- **एवमिति ।।** अनुमानस्य बाध्यत्वानुमानस्येत्यर्थः । नन्वनुभव-विरोधस्योक्तस्यैव पुनरत्रोक्तेः कथमिदं दूषणान्तरमित्यतस्तदर्थमाह- **अनुभूतार्थेति ।।** अप्रतीतेर्व्याचष्टे- **अप्रसिद्धेति ।।** एकैकमात्रपक्षीकारे विवक्षितासिद्धेराह- **सत्त्वासत्त्वे इति ।।** अत्र द्वयोरेकत्राभावं निदर्शयितुं द्वयोर्निदर्शनम् । **मात्रमिति ।।** धर्मिविशेषसम्बन्ध एव साध्यो न धर्म इति भावः । सहानवस्थानलक्षणविरोध-भ्रान्त्याऽऽशङ्क्य निषेधति- **न चेति ।।** स्वाभिसन्धिमुद्घाटयति- **प्रतिषेध्येति ।।** एतेनानुष्णाशीतप्रतिबन्दी निरस्ता । तत्र तृतीयप्रकारस्यानुभवसिद्धत्वेन शीतोष्णयोः परस्परविरहरूपत्वाभावात् । एवमनुभवेत्यादि-वाक्यमप्रसिद्धविशेषणपरतया व्याख्याय व्याघातपरतया व्याचष्टे- **प्रतिज्ञापदेति ।।** सत्त्वविरहेऽसत्त्वस्य असत्त्व-विरहे सत्त्वस्य च नियतत्वेनोभयविरहितत्वं व्याहतमेवेत्यर्थः । मूलभावं वदन्नेवावतारयति- **एवमिति ।।** 'न च सदसद्विलक्षणं नामास्ति' इत्याद्युक्तप्रकारेणेत्यर्थः । उपसंहरन्नित्यादिः शत्रन्तः । **परिशेषेणेति ।।** प्रतीत्याऽसत्त्वस्य प्रमाणाभावेनानिर्वचनीयत्वस्य

निरासे परमार्थत्वं स्वयमेव सिद्ध्यतीति भावः । तत्सिद्धमाह- **(व्या.टि.) एवमिति ।। परमार्थविषयत्वेनेति ।।** प्राचीनग्रन्थोक्तदिशा भेदस्यातत्त्वत्वाभावेन तत्प्रमाणस्या-प्यतत्त्वावेदकत्वस्य निराकृतप्रायत्वादिति भावः । साधनमिति परमप्रकृतम् । अनेन मूलेऽद्वितीयत्वपदं तत्साधनपरमिति सूचयति ।

**मूलम् - कथं च श्रुतिसिद्धो जीवपरमात्मभेदो निराक्रियते । मिथ्यावादित्वे च श्रुतेः कथमैक्यस्य सत्यत्वम् । कथं चैवंवादिनां वेदवादित्वम् । वेदोक्तस्य मिथ्यात्वाङ्गी-कारादेव ह्यवेदवादित्वं बौद्धादीनामपि । अतो विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् ।**

**(त.मं.) एवंवादिनां** वेदोक्तस्य भेदस्य मिथ्यात्ववादिनाम् ।

**टीका-** यदैवं प्रत्यक्षानुमानसिद्धभेदबाधनमप्यनुमानैः न शक्यं किमु वाच्यं तदाऽपौरुषेय-त्वेनानाशङ्कितदोषया श्रुत्या सिद्धस्य जीवपरमात्मभेदस्येत्याशयवानाह- **कथं चेति ।।** भेदश्रुतीना-मतत्त्वावेदकत्वाद्युक्तं तद्बाधनमिति चेन्न । परिशेषप्रमाणेन निराकृतत्वात् । अधिकं च दोषमाह- **मिथ्यावादित्वे चेति ।।** जीवेश्वरैक्यमपि हि श्रुतिसिद्धमित्येव परेणाङ्गीक्रियते । तत्र भेदश्रुतेः मिथ्यावादित्वे श्रुतित्वाविशेषादैक्यश्रुतेरपि तथात्वप्राप्तेः कथं तत्प्रतिपादितस्यैक्यस्य सत्यत्वमङ्गीक्रियते । बाधकानामत्रापि सत्त्वात् । दोषान्तरमप्याह- **कथं चैवमिति ।। एवंवादिनां** वेदोक्तस्यापि मिथ्यात्वमङ्गीकुर्वताम् । वेदोक्तस्य मिथ्यात्वाङ्गीकारेऽपि कुतो न वेदवादित्वमित्यतो व्याप्तिं दर्शयति- **वेदोक्तस्येति ।।**

ननु वेदोक्तस्य मिथ्यात्वाङ्गीकारादधिकमवेदवादित्वं नास्ति । तत्कथं व्याप्यव्यापक-भावा(द्यमि)दिकमिति चेन्न । व्यवहारस्यात्र विवक्षिततत्वात् । विमतो वैदिकत्वेन न व्यवहर्तव्यः, अवैदिकत्वेन व्यवहर्तव्यो वा वेदोक्तस्य मिथ्यात्वाङ्गीकारित्वाद् बौद्धादिवदिति ।

ननु मया वेदैकदेशस्य तत्त्वावेदकत्वमङ्गीक्रियत इति चेन्न । बौद्धादीनामपि तत्साम्यात् । न हि तेऽपि वेदोक्तं स्वदर्शनानुगुणमपि मिथ्येत्याहुः । न वयं बौद्धादिवद् वेदस्य सर्वथाऽप्रामाण्यं ब्रूमः । किन्तु मन्दाधिकारिणः प्रति वेदो भेदाश्रयं कर्मादिकं प्रतिपादयतीति वदाम इति चेत् । सत्यम् । तथाऽपि उच्यमानस्य मिथ्यात्वाङ्गीकारात् किमनेन वल्गितेन । ऐक्यज्ञानस्य मिथ्याभूतमपि कर्मादिकमङ्गमिति चेन्न । भेदवासनापरिपाकस्य तद्विरोधित्वेनाङ्गत्वानुपपत्तेः । अनुवादपरोऽसौ वेदभाग इति चेन्न । अनुवादे प्रयोजनाभावात् । 'नेह नाना' इति प्रतिषेधार्थमिति चेन्न । स्वर्गापूर्वादीनां वेदमन्तरेण प्राप्त्यभावात् । वेदप्राप्तप्रतिषेधे पुनरप्रामाण्यतादवस्थ्यात् ।

किञ्च तत्त्वस्यावेद्यत्वेन नैकदेशस्यापि तत्त्वावेदकत्वमङ्गीकर्तुं शक्यते । तथाऽपि प्रयोजन-हेतुत्वमस्तीति चेन्न । प्रयोजनवत्त्वस्य प्रामाण्यपदार्थत्वाभावात् । अन्यथा मणिप्रभाविषयमणि-विभ्रमस्यापि प्रामाण्यप्रसङ्गात् । लोकसिद्धार्था(न्ता)ङ्गीकारेण तत्त्वविचारो हि परीक्षकाणामुचितो न तु स्वसङ्केतेनेति । एवं बाधकपरिहारेण यत्सिद्धं तदुपसंहरति- **अत इति ।।** सिद्धमिति वाक्य-शेषः ।

**(र.टि.) अधिकं चेति ।।** अनेन 'मिथ्यावादित्वे च' इति चशब्द उक्तयुक्तिसमुच्चयार्थ इत्युक्तं भवति । **ऐक्यज्ञानस्येति ।।** वाक्यस्यैवमादेर्मिथ्यात्वेऽपि तात्पर्यार्थभूतैक्यस्य सत्यत्वान्न वेदाप्रामाण्यमिति भावः । **अप्रामाण्यतादवस्थ्यादिति ।।** नित्यातीन्द्रियप्रतिपादकवेदस्यानुवादकत्वाभावादिति भावः । **प्रयोजनहेतुत्व-मिति ।।** 'सिद्धन्तु निवर्तकत्वात्' इत्युक्तप्रकारेणाज्ञाननिवृत्तिरूपप्रयोजनहेतुत्वमित्यर्थः । ननु मणिप्रभायां मणिभ्रमस्यापि प्रयोजनवत्त्वलक्षणप्रामाण्यमङ्गीक्रियत एवेति इष्टापत्तिरित्यत आह- **लोकसिद्धार्थेति ।।**

**(रा.टि.) परिशेषेति ।।** अनिर्वचनीयविषयकत्वासद्विषयकत्वसद्विषयकत्वानां मध्य आद्यद्वयस्य निरसनेनान्त्य-पक्षस्य

साधितत्वेनातत्त्वावेदकत्वस्य निरस्तत्वादित्यर्थः । **बाधकानामत्रापीति ।।** भेदश्रुतावनुवादित्वादि-बाधकत्वसूचनवत्प्रत्यक्षविरुद्धत्वादिबाधकानामद्वैतश्रुतावपि सत्त्वादित्यर्थः । तथा चोभयत्र बाधकतौल्ये कथमेकत्र पक्षपात इति भावः । साध्याविशेषं हेतोराशङ्कते- **ननु वेदोक्तेति ।। व्यवहारस्येति ।।** अवेदवादित्व-मित्यस्यावेदवादित्वव्यवहार इत्यर्थः । **वेदोक्तमिति ।।** अहिंसावाक्याद्युक्तमित्यर्थः । शङ्कते-**न वयमिति ।। ऐक्यज्ञानस्येति ।।** यजेतेत्यादिकर्मपरवाक्यानामैक्य एव तात्पर्यान्नाप्रामाण्यमिति भावः । **भेदेति ।।** भेदवासनायाः परिपाको यस्मात्तस्य कर्मण इति शेषः । जीवेशादिभेदवासनादाढर्च्यहेतुभूतकर्मण इत्यर्थः । **असाविति ।।** कर्मादिपरो वेदभाग इत्यर्थः । अनुवादतया स्वार्थे तात्पर्याभावान्नाप्रामाण्यमिति भावः । **अवेद्यत्वेनेति ।।** अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति परैरङ्गीकारादिति भावः । नन्ववेद्यत्वं नाम चिदविषयत्वं न तु वृत्तिज्ञानाविषयत्वमिति चेत्तर्हि दृश्यत्वहेतोरनैकान्त्यापत्तिः । दृश्यत्वमपि चिद्विषयत्व-मिति चेत्तर्हि धर्माद्यतीन्द्रिये भागासिद्धिरिति भावः । ननु वेदैकदेशस्य तत्त्वकर्मकज्ञानाजनकत्वेऽपि तदाकारवृत्ति-जनकत्वेन तदितराविषयकज्ञानजनकत्वेन वा तत्त्वव्यवहारहेतुज्ञानजनकत्वेन वा तत्त्वावरकाज्ञाननिवृत्तिरूप-प्रयोजनहेतुत्वमस्तीति शङ्कते- **तथाऽपीति ।। प्रामाण्यप्रसङ्गादिति ।।** कुड्याद्यन्तःस्थित- मणेर्बहिर्निस्सृत-**(रा.टि.)** प्रभायां मणिरियमिति बुद्ध्या प्रवृत्तस्य मणिलाभेन प्रयोजनहेतुत्वस्य सत्त्वात् । न च तत्रापि मणिज्ञानमेव पुमर्थहेतुरिति शङ्क्यम् । दृष्टहान्यदृष्टकल्पनयोरापत्तेरिति भावः । नन्वस्तु प्रयोजनहेतुत्वमेव प्रामा-ण्यम् । प्रभायां मणिबुद्धेरपि प्रामाण्यस्वीकारे दोषाभावादित्यत आह- **लोकसिद्धार्थेति ।। बाधकेति ।।** भेदभेदिप्रपञ्चमिथ्यात्वरूपबाधकस्य 'यच्च प्रमाणदृष्टानामपि पदार्थानां मिथ्यात्वकल्पनम्' इत्यादिना कृतेन परिहारेणेत्यर्थः ।

**(श्री.टि.) अनुमानैः** दृश्यत्वाद्यनुमानैः । **तद्बाधनमिति ।।** तैरनुमानैस्तासां श्रुतीनां बाधनमित्यर्थः । 'मिथ्यावादित्वे च' इति चशब्दसमुच्चेयं दोषमाह- **परिशेषेति ।।** भेदस्यानिर्वचनीयत्वादेरयोगेन परिशेषात् सत्यत्वसिद्धेर्भेदश्रुतीनां तत्त्वावेदकत्वान्नानुमानादिबाध्यत्वमिति भावः । **तथात्वेति ।।** मिथ्यावादित्वेत्यर्थः। ननु श्रुतित्वाविशेषेऽप्यन्योन्याश्रयादिबाधकेन भेदस्य सत्यत्वायोगात्तच्छ्रुतीनां मिथ्यावादित्वं, बाधकाभावे-नैक्यस्य सत्यत्वात्तच्छ्रुतीनां तत्त्वावेदकत्वमङ्गीक्रियत इत्यत आह- **बाधकानामिति ।।** उपजीव्यप्रत्यक्षादिविरोध-रूपाणामित्यर्थः । **अत्रापि** ऐक्येऽपि । विमतो मायावादी अवेदवादी भवितुमर्हति वेदोक्तमिथ्यात्वाङ्गीकर्तृत्वा-दित्यत्र साध्यावैशिष्ट्यमाशङ्कते- **नन्विति ।।** व्याप्यव्यापकभावादिकमित्यत्राऽऽदिपदेन निश्चितत्वसन्दिग्ध-त्वादिग्रहणम् । **विवक्षितत्वादिति ।।** साध्यतयेति शेषः । हेतोः स्वरूपासिद्धिमाशङ्कते- **ननु मयेति ।। वेदैकदेशस्य** वेदान्तभागस्य । तथा च वेदैकदेशवेदान्तभागोक्तस्य सत्यत्वाङ्गीकारान्न समस्तवेदोक्तमिथ्या-त्वाङ्गीकारित्वं ममेति स्वरूपासिद्धिरिति भावः । **तत्साम्यादिति ।।** वेदैकदेशस्य तत्त्वावेदकत्वाङ्गीकारित्वसाम्येन त्वयोच्यमानं तेषामवेदवादित्वं न स्यादिति भावः । तदुपपादयति- **न हीति ।। स्वदर्शनेति ।।** बौद्धदर्शने 'अहिंसा परमो धर्मः' इति प्रतिपादितम्, वेदेऽपि 'न हिंस्यात्सर्वा भूतानि' इत्युच्यते । एवं च स्वदर्शनानुगुणस्य भूताहिंस्यत्वस्य सत्यत्वं तैरङ्गीकृतमित्यर्थः । **भेदाश्रयं** भेदसापेक्षम् । **उच्यमानस्य** कर्मादेः । **मिथ्यात्वाङ्गी-करादिति ।।** तथा च बौद्धादिवत्सर्वथाऽप्रामाण्याङ्गीकारस्यैव प्राप्तत्वादिति भावः । **किमनेनेति ।।** मन्दाधिकारिणः प्रति वेदो भेदाश्रयं कर्मादिकं प्रतिपादयतीति जल्पितेन किमित्यर्थः । **ऐक्यज्ञानस्येति ।।** तथा चाग्निहोत्रादिवाक्यानामैक्यज्ञानोपयुक्तबुद्धिशुद्ध्यर्थं कर्मादिप्रतिपादकत्वादैक्य एव महातात्पर्यमङ्गी-कृतम् । तथा च वाच्यस्य कर्मादेर्मिथ्यात्वेऽपि तात्पर्यार्थभूतैक्यस्य सत्यत्वान्न वेदाप्रामाण्यमिति भावः । बौद्धैश्च नैवमङ्गीकृतमिति हृदयम् । **भेदवासनेति ।।** भेदाश्रयस्य कर्मादेरैक्यज्ञानविरोधित्वेन भेदवासनादाढर्च्य-हेतुतयोप(कार)पादकत्वाभावेनाङ्गत्वानुपपत्तेरित्यर्थः । तथा चाग्निहोत्रादिवाक्यानामैक्ये महातात्पर्यानुप-पत्तेर्वाच्यस्य च कर्मादेर्मिथ्यात्वादप्रामाण्यमेवेति भावः । **असौ वेदभागः** कर्मादिप्रतिपादको वेदभाग इत्यर्थः। नैवं बौद्धा आहुरिति भावः । अनुवादो भवन् विधानाय वा स्यान्निषेधाय वा । नाऽद्य इत्याह- **अनुवाद इति ।।** विधानरूपप्रयोजनाभावादिति भावः ।

द्वितीयं शङ्कते- **नेह नानेति ।।** इह ब्रह्मण्यारोपितं नाना नानाविधं कर्मादिकं जगत्किमपि नास्तीत्यर्थः । **(श्री.टि.) प्राप्त्यभावादिति ।।** तथा च नित्यातीन्द्रियप्रतिपादकवेदभागस्य नानुवादकत्वं सम्भवतीति भावः। ननु स्वर्गापूर्वादेरतीन्द्रियत्वेन वेदातिरिक्तप्रमाणेन प्राप्त्यभावेऽपि वेदेनैव प्राप्तं धर्मादिकं वेदेन प्रतिषिध्यत इति चेत्तर्ह्युन्मत्तवाक्यवत्सुतरामप्रामाण्यतादवस्थ्यमित्याह- **वेदप्राप्तेति ।।** वेदप्राप्तस्य वेदेनैव प्रतिषेध इत्यर्थः । **तत्त्वस्य** ब्रह्मणः । अवेद्यत्वेन त्वन्मत इति शेषः । **एकदेशस्यापि** वेदैकदेशस्य वेदान्तभागस्यापि । तथा च न प्रामाण्यमिति भावः । तथा च बौद्धसाम्यं तदवस्थमिति हृदयम् । ननु तत्त्वस्यावेद्यत्वेन वेदान्तभागस्य तत्त्वावेदकत्वलक्षणप्रामाण्यासम्भवेऽपि 'सिद्धन्तु

निवर्तकत्वात्' इत्युक्तत्वेनाज्ञाननिवृत्तिरूपप्रयोजनहेतुत्वेन प्रामाण्यमुपपद्यत इत्याशङ्कते- **तथाऽपीति ।। अन्यथेति ।।** प्रयोजनहेतुत्वेन प्रामाण्यं चेदित्यर्थः । **मणिप्रभा-विषयेति ।।** मणिप्रभाधर्मिकेत्यर्थः । तथा च मणिप्रभायां मणिभ्रमेण प्रवृत्तस्य मणिलाभो भवति । तथा च मणिभ्रमस्य मणिलाभरूपप्रयोजनहेतुत्वसद्भावेन प्रामाण्यं स्यादिति भावः । इदमुपलक्षणम् । 'तृणादिदर्शने किञ्च फलवत्त्वं निगद्यते' इत्यनुव्याख्यानोक्तरीत्या तृणादिदर्शनस्य प्रामाण्यं न स्यादित्यपि द्रष्टव्यम् । ननु मणिप्रभायां मणिभ्रमस्यापि प्रयोजनवत्त्वलक्षणं प्रामाण्यं मयाऽङ्गीक्रियत एवेतीष्टापत्तिरित्यत आह- **लोक-सिद्धार्थेति ।।** मणिभ्रमस्य प्रामाण्यरूपोऽर्थो न लोकसिद्ध इति भावः ।

**(पां.टि.)** 'न च परमार्थतो भेदाभावो व्यावहारिकः सोऽस्तीति वाच्यम्' इत्यादिना प्रमाणदृष्टस्य भेदस्य मिथ्यात्वमाशङ्क्य निराकृतत्वान्मिथ्यावादित्वेति पुनस्तदाशङ्का न युक्तेत्यतो दूषणान्तरदानार्थत्वान्नानुपपत्ति-रित्यभिप्रेत्य मिथ्यात्वशङ्कानिरासकतया प्रागुक्तदोषं स्मारयित्वा दूषणान्तरपरतया 'मिथ्यात्वे च' इत्यादिग्रन्थं योजयति- **परिशेषप्रमाणेनेति ।।** भेदस्य सदसद्वैलक्षण्ये प्रमाणाभावेन भेदप्रतिपादकश्रुतेः सदसद्वैलक्षण्य-विषयकत्वस्य, परेणासत्प्रतीतेरनङ्गीकारेणासद्विषयकत्वस्य चानुपपत्त्या परिशेषेण परमार्थसद्विषयकत्वस्यैव समर्थितत्वेनातत्त्वावेदकत्वस्य निरस्तत्वादित्यर्थः । ननु भेदस्यैक्यस्य च श्रुतिसिद्धत्वाविशेषेऽपि तर्कबाधितत्वा-बाधितत्वाभ्यां विशेषेणाविशेषासिद्धेर्मूलशैथिल्यात्तर्कस्याभासत्वमित्याशङ्क्य निरपेक्षत्वाद्यापत्त्या धर्मि-स्वरूपताया अनवस्थाद्यापत्त्या तद्धर्मतायाश्चानुपपत्त्या भेदस्य तर्कबाधितत्ववन्निरपेक्षत्वाद्यापत्त्यैवैक्यस्य ब्रह्म-स्वरूपताया अनवस्थाद्यापत्त्यैव तद्धर्मतायाश्चानुपपत्त्यैक्यस्यापि तर्कबाधितत्वेन नोक्तरीत्याऽपि विशेष-सिद्धिरिति नोक्तदोष इत्याशयेनाऽह- **बाधकानामिति ।। तत्साम्यादिति ।।** वेदैकदेशस्य तत्त्वावेदक-त्वाङ्गीकारसाम्यादित्यर्थः । **स्वदर्शनानुगुणमिति ।।** अहिंसायां धर्मत्वमित्यर्थः । **मन्दाधिकारिण इति ।।** अविद्वदधिकारिण इत्यर्थः । **किमनेनेति ।।** अतत्त्वावेदकत्वस्याप्रामाण्यशब्दार्थत्वादिति भावः । **ऐक्यज्ञान-स्येति ।।** तथा चाग्निहोत्रादिवाक्यानामैक्य एव महातात्पर्यात्तस्य च तात्त्विकत्वान्नाप्रामाण्यमिति भावः । **भेदवासनापरिपाकस्येति ।।** ततश्चाङ्गाङ्गिभावस्यैवासिद्ध्या ऐक्ये तात्पर्यायोगेन कर्मण्येव तात्पर्यस्य वक्तव्यत्वेन तात्पर्यविषयीभूतस्याप्यर्थस्यातात्त्विकत्वादप्रामाण्यतादवस्थ्यमिति भावः । **अनुवादपर इति ।।** ततश्च कर्मादावतात्पर्यान्नातत्त्वावेदकत्वमिति भावः । अनुवादो विधानार्थो वा प्रतिषेधार्थो वेति विकल्पौ मनसि निधाय विधेयार्थस्याश्रवणान्नाद्य इत्याशयेनाऽह- **अनुवाद इति ।।**

**(पां.टि.)** द्वितीयमाशङ्कते- **नेह नानेति ।। निषेधार्थमिति ।।** अप्राप्तत्वान्नानुवाद इत्यभिप्रेत्य तत्प्राप्तिः किं प्रत्यक्षादिना वा अभिमता वेदेनैव वेति विकल्पं मनसि निधाय आद्यं दूषयति- **स्वर्गापूर्वादीनामिति ।। वेदमन्तरेणेति ।।** रूपादिरहिततया प्रत्यक्षेण, उपाधिप्रतिपक्षग्रस्ततया अनुमानेन च तत्सिद्धेरसम्भवादित्यर्थः। अस्तु तर्हि वेदेनैव प्राप्तिरिति द्वितीयो निरवद्यत्वादित्यत आह- **वेदप्राप्तेति ।।** स्वेनैवास्तितया प्रतिपादितस्य स्वेनैव नास्तित्वप्रतिपादनात्, अन्यथा परस्परविरुद्धोन्मत्तवाक्यस्यापि प्रामाण्यप्रसङ्गादिति भावः । अङ्गीकृत्य चैकदेशस्य तत्त्वावेदकत्वं बौद्धानामपि तत्साम्याद् अवेदवादित्वानुपपत्तिरभिहिता । वस्तुतस्तु नैकदेशस्यापि तत्त्वावेदकत्वमित्याह- **किञ्चेति ।। अवेद्यत्वेनेति ।।** परेणावेद्यतयाऽङ्गीकृतत्वेनेत्यर्थः । न च फलाव्याप्यत्वेऽपि वृत्तिव्याप्यत्वात् नैकदेशस्य तत्त्वावेदकत्वहानिरिति वाच्यम् । वृत्त्यतिरिक्तस्य फलस्य प्रामाणिकताया उत्तरत्र निराकरिष्यमाणत्वेन वृत्त्यविषयताया एव तदर्थत्वेन वक्तव्यत्वेनोक्तदोषतादवस्थ्यादिति भावः । फलवत्त्वं प्रामाण्यं न तत्त्वावेदकत्वम् । ततश्चैकदेशस्य तत्त्वावेदकत्वाभावेऽप्यविद्यानिवर्तकत्वेन प्रयोजनवत्त्वात्प्रामाण्यं सम्भवतीति शङ्कते- **तथाऽपीति ।।** फलवत्त्वं न प्रामाण्यपदार्थः । तथा सति तृणादिदर्शनस्य फलवत्त्वा-भावेनाप्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः । लौकिकव्यवहारविरोधादित्याशयेनाऽह- **प्रयोजनवत्त्वस्येति ।।** फलवत्त्वस्यैव प्रामाण्यपदार्थत्वेऽतिव्याप्तिं चाऽह- **अन्यथेति ।।** इष्टापत्तिं परिहरति- **न त्विति ।।** तथा सत्यपरीक्षितत्वप्रसङ्गादिति भावः ।

**(व्या.टि.) बाधकानामिति ।।** नाहं सर्वेश्वरो नाहं सर्वज्ञ इति प्रत्यक्षादीनामित्यर्थः । एवंशब्दनिर्दिष्टप्रकारं दर्शयति- **वेदोक्तस्यापीति ।।** हेतोरप्रयोजकत्वं शङ्कते- **वेदोक्तस्येति ।। वेदवादित्वमिति ।।** 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिप्रत्यये 'ब्रह्मणि वदः' इत्यस्योपलक्षणत्वाभिप्रायेणास्य साधुता ज्ञेया । साध्यावैशिष्ट्यं शङ्कते- **नन्विति ।। तत्कथमिति ।।** व्याप्यव्यापकयोः कर्मकर्तृप्रत्ययान्तत्वेनाभेदे कर्मकर्तृत्वभावासम्भव इत्याक्षेपार्थः । आद्यपदेन साध्यसाधनभावोऽपि ग्राह्यः । **विवक्षितत्वादिति ।।** साध्यतयेति शेषः । तत्प्रकारं दर्शयति- **विमत इति ।।** वेदमात्राप्रामाण्यवादित्वमवेदवादित्वं वेदैकदेशप्रामाण्यवादिनि मयि तन्नास्तीति बाधितमनुमानमित्याशयेनाऽशङ्कते- **नन्विति ।। साम्यादिति ।।** वैदिकत्वं स्यादिति शेषः । तथा च बौद्धधिक्कारविरोध

इति भावः । तत्साम्यमुपपादयति- **न हीति ।। मन्दाधिकारिण इति ।।** यथोक्तम्-

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ।।'

इति । पर्यायेणाप्रामाण्यमेवाङ्गीकृतमित्याह- **उच्यमानस्येति ।। अनेनेति ।।** असङ्गतेनेत्यर्थः । अधिकारि-विशेषस्य प्रामाण्याप्रयोजकत्वादिति भावः । यथा मीमांसकमते 'अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्' इत्यादावसमवेतस्यापि समवेतविशेषणस्याभिधानमभ्युदयकारि तथा मम मतेऽपि मिथ्याभूतस्यापि सत्य-ज्ञानाङ्गतया कर्मादिप्रतिपादनं नासङ्गतमित्याशयेन शङ्कते- **ऐक्यज्ञानस्येति ।।** अङ्गं हि द्विविधं फलोपकारि **(व्या.टि.)** स्वरूपोपकारि इति, तत्र वेदैकदेशबोधितभिन्नकर्मादिकमैक्यज्ञानजन्यतद्वासनारूपफलोपकार्यङ्गम्, उत स्वरूपोपकारि । नाऽद्य इत्याह- **भेदेति ।।** भिन्नबोधजन्यस्येति शेषः । वासनापरिपाकस्य भेदप्रत्यक्षादि-जन्यसंस्कारदाढर्यस्येत्यर्थः । **तद्विरोधित्वेनेति ।।** एवमज्ञानजन्यफलविरोधित्वेनेत्यर्थः । द्वितीयेऽप्येतदेवोत्त-रम् । **भेदेति ।।** बहुव्रीहिणा बोध्यं भिन्नं कर्म उच्यते । **तद्विरोधित्वेनेति ।।** ऐक्यज्ञानविरोधित्वेनेत्यर्थः । तदुत्पत्तिप्रतिबन्धकत्वेनेति यावत् ।

ननु स्वप्रापितार्थमिथ्यात्वमेवाप्रामाण्यं नानुवाद्यमिथ्यात्वम् । तस्य तत्तात्पर्याविषयत्वात् । अतात्पर्य-विषयमिथ्यात्वे न प्रामाण्यहानिः । अन्यथा वैदिकतममीमांसकमतेऽप्यात्मवपोत्खननाद्यर्थवादप्रामाण्यस्य दुःसाधुत्वापत्तेरित्याशयेन शङ्कते- **अनुवादपर इति ।।** प्रापकतां व्यवस्थापयितुमनुवादकत्वं दूषयति- **अनुवाद इति ।। प्रयोजनेति ।।** प्रयोजनं भवदधिकविधानं प्रतिषेधो वा । नाऽद्य इत्याह- **प्रयोजनेति ।।** 'दध्ना जुहोति' इत्यादिवद्विध्येकवाक्यत्वाभावादित्यर्थः । द्वितीयं शङ्कते- **नेह नानेति ।। प्राप्त्यभावादिति ।।** अप्राप्तप्रतिषेधा-योगेन 'नान्तरिक्षे न दिवि' इत्यग्निचयनप्रतिषेधवन्नित्यानुवादत्वापत्तेरिति भावः । वेद एव तत्प्रापक इति चेत् तत्राऽह- **वेदप्राप्तेति ।। प्रतिषेध इति ।।** वेदेनेति शेषः । **अप्रामाण्येति ।।** स्वव्याहतत्वादित्यर्थः । एवं वेदैकदेशस्य तत्त्वावेदकत्वमभ्युपेत्य बौद्धवादाविशेष उक्तः । अधुना तदेव नास्तीत्याशयेन तदविशेषं स्थिरी-करोति- **किञ्चेति ।।** अद्वैतपरो वेदभागस्तत्त्वावेदक इति हि परस्येष्टम् । तदद्वैतं ब्रह्मभिन्नमभिन्नं वा । नाऽद्यः। अद्वैतहानेः । अन्त्ये त्वाह- **तत्त्वस्येति ।। अवेद्यत्वेनेति ।।** तस्यैव स्वप्रकाशरूपत्वादित्यर्थः । पुनः शङ्कते- **तथाऽपीति ।।** तत्त्वावेदकत्वाभावेऽपीत्यर्थः । किमेवंवदतो प्रयोजनवत्त्वमेव प्रामाण्यमित्युच्यते तद्व्याप्तमिति वा । नाऽद्यमित्याह- **प्रयोजनवत्त्वस्येति ।। पदार्थत्वाभावादिति ।।** रूढियोगयोरभावादिति भावः । द्वितीये त्वाह- **अन्यथेति ।।** ननु नदीवृद्ध्यादिवदयमपि मामकीनसङ्केत इत्याह- **लोकेति ।।** अन्यथा पारिभाषिकत्वेन तत्त्वविचाराभावादिति भावः । **वाक्यशेष इति ।।** वाक्यस्यापेक्षितपदपूरणमित्यर्थः ।

**मूलम्-कथञ्च जीवपरमात्मैक्ये सर्वश्रुतीनां तात्पर्यं युज्यते । सर्वप्रमाणविरुद्धत्वात् । तथा हि- अनुभवविरोधः । न ह्यहं सर्वज्ञः सर्वेश्वरो निर्दुःखो निर्दोष इति वा कस्य-चिदनुभवः । अस्ति च तद्विपर्ययेणानुभवः । न च मिथ्यानुभवोऽयम् । तद्विपरीत-प्रमाणाभावात् ।**

**(त.मं.) न च मिथ्याऽनुभवोऽयम्** अहमल्पज्ञ इत्याद्यनुभवः । नाहमल्पज्ञः सर्वज्ञ एवेति तद्विपरीतप्रमाणाभावात् ।

**टीका-** आ परिच्छेदसमाप्तेः उक्तार्थप्रपञ्चार्थः अतः परो ग्रन्थः । यदुक्तं जीवपरमात्मैक्यस्य अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च न तत्र वेदानां तात्पर्यमिति । न तत्र पराभिप्रेतप्रमाणानि स्वरूपेणोपन्यस्य दूषितानि । नापि विरोधिप्रमाणान्युपन्यस्य समर्थितानि । अतस्तदुभयं विधित्सुः प्रस्तावं तावत्करोति- **कथं चेति ।।** कुतो न युज्यत इत्यत आह- **सर्वेति ।।** प्रत्यक्षानुमानागम-विरुद्धत्वात् । प्रत्यक्षादिप्रमाणासिद्धत्वाच्चेत्यपि द्रष्टव्यम् । तत्कथमित्यतः प्रत्यक्षविरोधादिकं तावत्प्रतिजानीते- **तथा हीति ।। अनुभवः** साक्षिप्रत्यक्षं, जीवेश्वरैक्यस्येति शेषः । प्रत्यक्षासिद्धत्वं चेत्यपि ग्राह्यम् । तत्र प्रत्यक्षासिद्धत्वं तावद्दर्शयति- **न हीति ।।** ईश्वरो हि 'एष सर्वज्ञ एष सर्वेश्वरः' इत्यादिश्रुतिभिः सार्वज्ञाद्युपेततया प्रमितः । जीवस्य तदैक्यानुभवेऽहं सर्वज्ञ इत्यादिप्रतीतिः स्यात् । न चैवमस्तीत्यर्थः । आत्मनि

साक्षिण एव सम्भावितत्वाद् अनुभव इत्युक्तम्। न वयं सार्वज्ञादिमता सगुणेनेश्वरेण जीवस्यैक्यं ब्रूमः। सार्वज्ञादेः परोपाधिकस्य मायिकत्वेन मिथ्या-त्वात्। अतः तदनुभवाभावो न दोषाय। किन्तु 'निरनिष्टो निरवद्यः' इत्यादिश्रुतिप्रतिपादितेन निर्गुणेन ब्रह्मणेति। सत्यम्। एवंविधोऽप्यनुभवो नास्तीत्याह- **निर्दुःख इति ॥**

ननु ब्रह्मात्मैक्यं रत्नतत्त्वमिव शास्त्रानुगृहीतप्रत्यक्षवेद्यम्। तत्कथं केवलेन प्रत्यक्षेण गृह्यतामित्यत उक्तम्- **कस्यचिदिति ॥** अधिगतशास्त्रस्यापीत्यर्थः। ऐक्यसाक्षात्कारो हि सविलासामविद्यां विच्छिन्द्यात्। ततश्च भेददर्शनरहितस्य शरीरपालनाद्यर्थं भिक्षाटनादिप्रवृत्तिर्न स्यात्। न ह्यविद्या अंशवती येनाविद्यालेशावस्थाननिमित्तात्प्रवृत्तिः स्यात्। तथात्वे वा तस्य लेशस्यैक्यसाक्षात्कारेऽ-प्यनिवृत्तस्य कदाप्यनिवृत्तिप्रसङ्गः। प्रारब्धकर्मादिवशात्प्रवृत्तिरिति चेन्न। कर्मादेरप्यविद्याकार्यस्य ऐक्यसाक्षात्कारेण समूलघातं हतत्वात्। प्रक्रियामात्रस्य चाप्रामाणिकत्वात्। एवमैक्यस्य प्रत्यक्षासिद्धत्वमुक्त्वा तद्विरोधं दर्शयति- **अस्ति चेति ॥ तद्विपर्ययेण** उक्तरूपद्वयविपर्ययेण। यो हि श्रुत्युक्तलक्षणमीश्वरं विदित्वा तद्विपरीतं चात्मानमनुभवति सोऽवश्यमात्मनस्ततो भेदमनुभवत्येव। स्तम्भानुसन्धानवतस्तद्विपरीतकुम्भदर्शने तद्भेददर्शनस्यानुभवसिद्धत्वात्। तस्माज्जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वादैक्यस्य तद्विरोधः सिद्धः।

नन्वहं दुःखी रागद्वेषादिदोषवांश्चेति ब्रह्मरूपविपर्ययेणात्मनि योऽनुभवः स भ्रम एव। अतस्तदनुगतो भेदानुभवोऽपि तथा। अतः कथं तद्विरोधः क्षतिमावहतीत्यत आह- **न चेति ॥** मिथ्याविषयत्वान्मिथ्या। तत्र हेतुमाह- **तद्विपरीतेति ॥** बाधकप्रत्ययाधीनं हि ज्ञानानां भ्रमत्व-कल्पनम्। न चात्र बाधकप्रत्ययोऽस्ति।

ननु दुःखादिकमन्तःकरणधर्म एव। तच्च सन्निधानाद् जपाकुसुमादिगतं लौहित्यं स्फटिक इव आत्मनि भ्रान्त्या प्रतिभासत इति अस्माभिरप्यङ्गीक्रियत एव। तत्कथमुच्यते न च मिथ्यानुभवोऽ-यमिति। उच्यते। दुःखादिकमन्तःकरणपरिणाम एव। तस्यात्मसमवेतत्वप्रतिभासो भ्रमः। 'एतत्सर्वं मन एव' इति श्रुतेः। दुःखादिस्वरूपम्, आत्मनः तत्स्वामित्वं, तदनुभवस्तन्निमित्ता नीचोच्चतालक्षणा विक्रिया च सत्यैव बाधकाभावात्। अस्वभावत्वादनित्यत्वाच्च बन्धस्य 'विमुक्तश्च विमुच्यते' इत्यादिवचनानां चोपपत्तिरिति।

**(र.टि.) प्रस्तावमिति ॥** तथा च 'कथञ्च' इति वाक्यस्य 'न च जीवेश्वराभेदे' इत्यनेन न गतार्थतेति भावः। **इत्यपि द्रष्टव्यमिति ॥** तथा च 'न ह्यहं सर्वज्ञः' इत्यादेर्नाप्रतिज्ञातोपपादकत्वमिति भावः। एवम् 'इत्यपि ग्राह्यम्' इत्येतदपि व्याख्येयम्। अधिगतशास्त्रस्यैक्यसाक्षात्कारो वर्तत एवेत्यत आह- **ऐक्यसाक्षात्कारो हीति ॥** नन्वहमसर्वज्ञ इत्यादिप्रत्यक्षेण कथमैक्यं विरुद्धम्। उक्तप्रत्यक्षस्य भेदविषयत्वाभावादित्यत आह- **यो हीति ॥ सत्यैवेति ॥** तथा च 'न च मिथ्यानुभवोऽयम्' इत्यनेन दुःखादिस्वरूपादिज्ञानस्य भ्रमत्वं निरस्यत इति नापसिद्धान्त इति भावः। ननु 'विमुक्तश्च विमुच्यते' इत्यादिवचनानां दुःखादिमिथ्यात्वप्रतिपादकानां बाधकत्वात्कथं बाधकाभाव इत्यत आह- **अस्वभावत्वादिति ॥** दुःखादेर्मिथ्यात्वाभावेऽप्यस्वभावत्वानित्यत्व-मात्रेण तद्युक्तजीवस्य विमुक्तत्वं युज्यत इति नैतद्वाक्यं श्रुतार्थापत्तित्वेन दुःखादिमिथ्यात्वे मानमित्यर्थः।

**(रा.टि.) आ परिच्छेदसमाप्तेरिति ॥** आ कडारात् असिद्धवदत्रा भादितिवदयमसमासेन निर्देशः। अन्यथा आपरिच्छेदसमाप्तीति स्यात्। कस्येदं प्रपञ्चनं किमर्थं च प्रपञ्चनमित्यत आह- **यदुक्तमिति ॥** 'न च जीवेश्वराभेद एव तात्पर्यमागमस्य' इत्यादिना यदुक्तमित्यर्थः। तथा हि प्रत्यक्षविरोध इति वाच्यमित्याशङ्क्याह- **आत्म-नीति ॥** शङ्कते- **न वयमिति ॥ परोपाधिकस्येति ॥** विषयनिरूपितस्येत्यर्थः। ननु गौडपादादयस्तथानुभववन्तः सन्तीत्यत आह- **ऐक्यसाक्षात्कारो हीति ॥ सविलासां** स्वकार्यसहितामित्यर्थः। अविद्यानिवृत्तावपि तदंशस्य सत्त्वात्प्रवृत्तिरित्यत आह- **न हीति ॥ समूलघातमिति ॥** मूलनाशेन सह नष्टत्वादित्यर्थः। 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति समूलपद उपपदे हन्तेर्णमुल्प्रत्यये 'हनस्त च' इति तत्वे 'हो हन्तेः' इति घत्वे समूलघातमिति रूपम्। मुक्त्यव्यवहितसाक्षात्कारपर्यन्तं प्रारब्धानुवृत्तिरुपेयत इत्यत आह- **प्रक्रियेति ॥ उक्तरूपद्वयेति**

॥ सर्वज्ञत्वादिरूपनिर्दुःखत्वादिरूपविपर्ययेणेत्यर्थः। **तदनुगत इति** ॥ तन्निमित्त इत्यर्थः। **तथेति** ॥ भ्रम इत्यर्थः। दुःखादिकं मनःपरिणाम इत्यत्र श्रुतिमाह- **एतत्सर्वमिति** ॥ **तदनुभव इति** ॥ अहं दुःखीति दुःख-**(रा.टि.)** स्वामित्वानुभव इत्यर्थः। **विक्रिया चेति** ॥ आत्मन इत्यनुषङ्गः। **सत्यैवेति** ॥ सत्यपदस्य यथायोगं परिणामेन स्वरूपानुभवपदाभ्यामप्यन्वयो ध्येयः। 'विमुक्तश्च विमुच्यते' इति श्रुत्युक्तविमुक्तत्वमेव बाधकमित्यत आह- **अस्वभावत्वादिति** ॥ **बन्धस्येति** ॥ दुःखस्वामित्वादिबन्धस्येत्यर्थः।

**(श्री.टि.) स्वरूपेणेति** ॥ कण्ठत इति भावः। **विरोधिप्रमाणानि** भेदसाधकानि। **समर्थितानीति** ॥ परोक्तार्थान्तरनिराकरणेनेत्यर्थः। **प्रस्तावमिति** ॥ उपक्रममित्यर्थः। तथा च कथञ्चेति वाक्यस्य 'न च जीवेश्वराभेद एव तात्पर्यमागमस्य' इत्यनेन न गतार्थतेति भावः। प्रत्यक्षविरोधादिकमित्यत्रादिपदेन प्रत्यक्षासिद्धत्वं ग्राह्यम्। इत्यादिश्रुतिभिरित्यत्र आदिपदेन निर्दुःखत्वनिर्दोषत्वप्रतिपादिकायाः 'निरनिष्टो निरवद्यः' इति श्रुतेर्ग्रहणम्। कस्यचित्प्रत्यय इत्यनुक्त्वा साक्ष्यपरपर्यायानुभवग्रहणं किमर्थमित्यत आह- **आत्मनीति** ॥ जीव इत्यर्थः। निर्दुःखो निर्दोष इत्यनयोः कृत्यं वक्तुमाह- **न वयमिति** ॥ **परोपाधिकस्येति** ॥ मिथ्याभूत-सर्वघटितस्येत्यर्थः। यत्स्वरूपं परोपाधिकं तन्मिथ्या। यथाङ्गुल्यवष्टब्धनयनोपाधिनिमित्तोऽपरश्चन्द्रमाः। सार्वज्ञादिकं च तथा। अतो मिथ्येति भावः। **तदनुभवेति** ॥ मिथ्याभूतसार्वज्ञाद्यनुभवेत्यर्थः। निर्गुणेन ब्रह्मणैक्यं ब्रूम इति सम्बन्धः। **निर्दुःख इतीति** ॥ निर्दुःखनिर्दोषस्वरूपेण निर्गुणेनाप्यैक्यानुभवो नास्तीत्यर्थः। **रत्नतत्त्वमिवेति** ॥ यथा पाषाणविशेषत्वेन दृश्यमानस्यापि रत्नस्य **तत्त्वं** याथात्म्यं रत्नपरीक्षारूपशास्त्रानु-गृहीतप्रत्यक्षवेद्यं तथेत्यर्थः। **शास्त्रेति** ॥ ऐक्यज्ञानं संशयोत्तरप्रत्यक्षरूपं तत्र शास्त्रं विशेषदर्शनरूपमिति भावः। **अधिगतेति** ॥ अधिगतशास्त्रस्यापि गौडपादसङ्करादेर्निर्गुणब्रह्मणैक्यसाक्षात्काररूपानुभवो नास्तीत्यर्थः। नन्वधिगतशास्त्रस्य गौडपादादेरैक्यसाक्षात्कारो नास्तीति कुतो ज्ञायते, परबुद्धेरप्रत्यक्षत्वादित्यत आह- **ऐक्यसाक्षात्कारो हीति** ॥ **सविलासां** देहेन्द्रियभिक्षाटनादिकार्यसहिताम्। **ततश्चेति** ॥ अविद्योच्छेदे सती-त्यर्थः। **भेददर्शनेति** ॥ ऐक्यसाक्षात्कारवत्त्वेनाविद्याकार्यभूतदेहेन्द्रियादिरूपभिन्नप्रपञ्चदर्शनरहितस्येत्यर्थः। **न स्यादिति** ॥ तथा च शरीरपालनाद्यर्थं भिक्षाटनादिप्रवृत्तिरूपकार्यान्यथाऽनुपपत्त्याऽविद्यावस्थानमङ्गी-कार्यम्। तेन ज्ञायते तेषामैक्यसाक्षात्कारो नास्तीति। एवं च कस्यचिदित्युक्तं युक्तमिति भावः।

नन्वविद्यायां विच्छिन्नायामपि तल्लेशस्यावस्थितत्वात्तदवस्थाननिमित्ता प्रवृत्तिस्तेषामिति चेत्तत्राह- **न हीति** ॥ अविद्याया अखण्डत्वेन निरंशत्वादिति भावः। **तथात्वे वेति** ॥ अविद्याया अंशाङ्गीकारे वेत्यर्थः। प्रारब्धकर्मादीत्यादिपदेन पूर्वसंस्कारग्रहणम्। नन्वैक्यसाक्षात्कारवतोऽपि शरीरपालनाद्यर्था भिक्षाटनादिप्रवृत्ति-रस्तीत्यत्र मत्प्रक्रियैव प्रमाणमित्यत आह- **प्रक्रियामात्रस्य चेति** ॥ **उक्तरूपद्वयेति** ॥ सर्वज्ञत्वं सर्वेश्वरत्वं च द्वयं मिलित्वैकं रूपम्। निर्गुणत्वं निर्दोषत्वं चेति द्वयं मिलित्वाऽपरं रूपमिति रूपद्वयविपर्ययेणेत्यर्थः। नन्वहमसर्वज्ञ इत्यादिप्रत्यक्षेण कथमैक्यं विरुद्धम्, उक्तप्रत्यक्षस्य भेदाविषयकत्वादित्यत आह- **यो हीति** ॥ **अनुभवसिद्धत्वादिति** ॥ प्रत्यक्षे धर्मिणि भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वादिति भावः। **ब्रह्मरूपेति** ॥ निर्गुणब्रह्मणो यद्रूपं निर्दुःखत्वं निर्दोषत्वं च तद्विपर्ययेणेत्यर्थः। **तदनुगत इति** ॥ तद्व्यापकीभूत **(श्री.टि.)** इत्यर्थः। **क्षतिमिति** ॥ ऐक्यस्य हान्यावहो नेत्यर्थः। अनुभवस्वरूपस्य सत्यत्वादाह- **मिथ्याविषय-त्वादिति** ॥ **तत्रेति** ॥ अहं दुःखी रागादिदोषवांश्चेत्यनुभव इत्यर्थः। शिष्यः शङ्कते- **नन्विति** ॥ **तत्कथ-मिति** ॥ तथा च सिद्धान्तेऽप्यस्यानुभवस्य मिथ्यात्वेन न च मिथ्यानुभवोऽयमित्येवं दुःखाद्यनुभवस्य मिथ्यात्व-निराकरणेऽपसिद्धान्त इति भावः। **तस्येति** ॥ तथाच 'न च मिथ्याऽनुभवोऽयम्' इति मूलेन दुःखादिस्वरूपस्य सत्यत्वेन दुःखादिस्वरूपानुभवस्यैव भ्रान्तित्वं निराक्रियते। न तु दुःखादेरात्मसमवेतत्वानुभवस्यापि। अतो नापसिद्धान्त इति भावः। ननु दुःखादिस्वरूपस्य सत्यत्वेऽपि 'विमुक्तश्च विमुच्यते' इत्यादिश्रुतिविरोधः स्यात्। दुःखादिबन्धस्य सत्यत्वे पूर्वं विमुक्तत्वोक्त्ययोगात्। मिथ्यात्वे तु बन्धस्याभावाद्विमुक्तत्वोक्तिरुपपद्यत इत्येवं 'विमुक्तश्च विमुच्यत' इत्यादिवचनानां दुःखादिमिथ्यात्वप्रतिपादकानां तत्सत्यत्वाङ्गीकारे बाधकानां सत्त्वेन कथं तदभाव इत्यत आह- **अस्वभावत्वादिति** ॥ दुःखादेर्मिथ्यात्वाभावेऽप्यस्वभावत्वानित्यत्वमात्रेण तद्युक्तजीवस्य विमुक्तत्वं युज्यत इति नैतद्वाक्यं दुःखादिमिथ्यात्वे मानमित्यर्थः। यथोक्तं भाष्ये- 'प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं न युज्यते' इति।

**(पां.टि.)** कोऽसावुक्तोऽर्थः, किं च तत्प्रपञ्चनेनेत्यत आह- **यदुक्तमिति** ॥ कथं चेत्यस्योक्तार्थप्रपञ्चत्वाभावात् तद्वैयर्थ्यमाशङ्क्य परिहरति- **प्रस्तावमिति** ॥ उत्तरत्रैक्यस्य प्रत्यक्षादिसकलप्रमाणासिद्धत्वस्याप्युक्तत्वादाह- **प्रत्यक्षादिप्रमाणासिद्धत्वाच्चेत्यपीति**

॥ उत्तरत्र 'अस्ति च' इत्यादिनाऽनुभवविरोधस्येवानुभवासिद्धत्वस्यापि प्रदर्शनाद् अनुभवविरोधप्रतिज्ञावाक्यं तदसिद्धत्वोपलक्षणत्वेन व्याख्याति- **प्रत्यक्षेति ॥** ननु चाधिगत-शास्त्रस्यास्त्येवाद्वैतसाक्षात्कार इति तदापादनमिष्टापादनमित्यतस्तत्र बाधकमाह- **ऐक्यसाक्षात्कारो हीति ॥ सविलासां** सकार्याम्। **विच्छिन्द्यादिति ॥** अद्वैतसाक्षात्कारस्याविद्याविरोधित्वेन सति तस्मिंस्तन्निवृत्त्य-वश्यम्भावेनोपादानभूताविद्यानिवृत्तौ तदुपादानकबन्धनिवृत्त्यवश्यम्भावादित्यर्थः । यद्यधिगतशास्त्रोऽद्वैत-साक्षात्कारवान् स्यात् तर्हि तद्विरुद्धाविद्यानिवृत्तिमान् स्यात्। यदि चाविद्यानिवृत्तिमान् स्यात् तर्ह्यविद्योपा-दानकद्वैतदर्शनाभाववान् स्यादिति विपक्षे बाधकसत्त्वान्नेष्टापत्तिरिति भावः। द्वैतदर्शनाभावस्येष्टत्वात् तर्कस्याभासत्वमित्यत आह- **ततश्चेति ॥** ततश्च द्वैतदर्शनाभावाङ्गीकारे भिक्षाटनादिप्रवृत्त्यभावप्रसङ्गस्य बाधकत्वान्न द्वैतदर्शनाभावस्येष्टत्वमिति भावः। न च प्रवृत्त्यभावोऽपीष्ट इति न तस्य बाधकत्वमिति वाच्यम्। तथात्वे जीवन्मुक्त्यभावप्रसङ्गेन ब्रह्मोपदेशानां वातपुत्रीयत्वप्रसङ्ग इति भावः। ननु साक्षात्कृताद्वैतानामविद्या-निवृत्तावपि तल्लेशावस्थानाद्युक्तैव भिक्षाटनादौ प्रवृत्तिरित्यप्रयोजकत्वमित्यतः स लेशः पटस्य तन्तुरिवावयवो वा स्यात् प्रदेशो वा धर्मो वा। अनङ्गीकारात्, प्रदेशिनो निवृत्तौ प्रदेशावस्थानायोगाच्च न प्रदेशः, धर्मिणोऽपगतौ धर्मावस्थानुपपत्तेर्न धर्मोऽपीति, द्वितीयतृतीयपक्षदूषणं मनसि निधायाद्यं दूषयति- **न ह्यविद्यांऽशवतीति ॥** कुतो नेत्यत उक्तम्- **हीति ॥** घटादिवत् सावयवत्वानङ्गीकारादिति तदर्थः । अङ्गीकृत्याप्यंशवत्त्वं दूषयति- **तथात्वे वेति ॥ कदापीति ॥** साक्षात्कृताद्वैतानामुत्तरक्षण इवान्यदाऽपि अविद्यालेशावस्थानसम्भवेन द्वैत-**(पां.टि.)** दर्शनानुवृत्तिप्रसङ्गादिति भावः। **अविद्याकार्यस्येति ॥** अकार्यत्वे च सत्यत्वप्रसङ्गेन द्वैतप्रसक्त्याऽ-पसिद्धान्तप्रसक्तेरिति भावः ।

ननु अविद्यायाः सन्ति बहव आकाराः । तत्रैको बन्धस्य सत्यत्वविभ्रमहेतुः । द्वितीयः अर्थक्रियासमर्थ-वस्तुकल्पकः । तृतीयस्त्वपरोक्षप्रतिभासविषयाकारकल्पकः । तत्राद्वैतस्य सत्यत्वाध्यवसायेन समस्तद्वैत-सत्यत्वाकारस्य तत्त्वसाक्षात्कारेण अर्थक्रियासमर्थप्रपञ्चोपादानमायाऽऽकारस्य च निवृत्तावपि अपरोक्ष-प्रतिभासयोग्यार्थावभासजनकस्य मायाऽऽकारस्य जीवन्मुक्तावनिवृत्तस्य समाध्यवस्थायां तिरोहितस्यान्य-देहावभासजगदवभासहेतुतयाऽनुवर्तमानस्य प्रारब्धकर्मफलभोगेन नाशाङ्गीकारात् न काचिदनुपपत्तिरिति चित्सुखमतं दूषयति- **प्रक्रियामात्रस्य चेति ॥** प्रमाणाभावेनोक्तकल्पनाया अयुक्तत्वात् । तथा हि 'इन्द्रो मायाभिः' इति श्रुतिर्वा तत्र प्रमाणं स्यात् 'तस्याभिध्यानात्' इति श्रुतिर्वा । नाऽद्यः । 'अयं वै हरयः' इति तद्व्याख्यानरूपब्राह्मणानुरोधेन 'इन्द्रो मायाभिः' इति श्रुतेः परमेश्वरशक्तिप्रतिपादकत्वेन त्वदुक्तमायाऽऽकार-प्रतिपादकत्वस्य तद्ब्राह्मणविरुद्धत्वात् । नान्त्यः । तत्रापि भूयोभूयस्तस्मिन्मनसो योजनाद्यो जायते तत्त्वभावः तत्त्वज्ञानं तस्मादुदितात् तस्य परमेश्वरस्याभिध्यानात् अनुग्रहात् कर्मक्षयान्ते विश्वबन्धकमायानिवृत्तिर्भवती-त्येवोक्तत्वेन अनिर्वाच्याविद्याऽऽकाराणां क्रमेण बाधलक्षणनिवृत्तेरनुक्तत्वेन तस्यास्तत्र प्रामाण्यायोगादिति दिक्। **उक्तरूपद्वयविपर्ययेणेति ॥** अहं सर्वज्ञः सर्वेश्वर इति, अहं निर्दुःख निर्दोष इति उक्तरूपद्वयविपर्ययेणा-सर्वज्ञोऽसर्वेश्वरः दुःखी दोषीत्यनुभवेनेत्यर्थः ।

नन्वहमसर्वज्ञ इति साक्ष्यनुभवस्य नैक्यविरोधित्वं, तस्य भेदविषयत्वाभावादित्यतः तस्य भेदविषयता-मुपपादयति- **यो हीति ॥** अनेनाहमसर्वज्ञ इति प्रत्यक्षम् ईश्वरादात्मनो भेदविषयकम् ईश्वरधर्मविरुद्धधर्म-वत्त्वेनात्मविषयकप्रत्यक्षत्वात् । यद् यद्धर्मविरुद्धधर्मवत्त्वेन यद्विषयकं प्रत्यक्षं तत्ततः तस्य भेदविषयकं, यथा स्तम्भविरुद्धधर्मवत्त्वेन कुम्भविषयकं प्रत्यक्षं कुम्भस्य स्तम्भाद्भेदविषयकमिति अनुमानेनासर्वज्ञत्वप्रत्यक्षस्य भेदविषयत्वं समर्थितं भवति । ततश्च सिद्धप्रत्यक्षविरुद्धत्वाभावेऽपि उपपाद्यप्रत्यक्षविरुद्धत्वमवर्जनीयमित्युक्तं भवति । यद्यपि धर्मिभूतस्य जीवस्य प्रत्यक्षत्वात् प्रतियोगिभूतस्येश्वरस्य शास्त्रादिनाऽवगतत्वेन जीवधर्मिकेश्वर-प्रतियोगिकभेदप्रत्यक्षसामग्रीसद्भावाज्जीवेश्वरभेदस्य प्रत्यक्षत्वमुपपादयितुं शक्यं, तथापि रत्नतत्त्वसाक्षात्कारे शास्त्रीयलक्षणज्ञानस्य साचिव्यदर्शनात् प्रतियोगिनो वैधर्म्यदर्शनं भेदप्रत्यक्षसाचिव्यमाचरतीत्यभिप्रेत्यासर्वज्ञत्वा-नुभवानुसरणं कृतमिति द्रष्टव्यम्। **तथा** भ्रम एव । अप्रयोजकत्वं परिहरति- **बाधकप्रत्ययेति ॥** शिष्यः शङ्कते- **नन्विति ॥ अङ्गीक्रियत एवेति ॥** 'प्रमादात्मकत्वाद्बन्धस्य' इति भाष्यकृदुक्तेरिति भावः। कुतो भाष्यकृद्वचनस्य सङ्कुचितार्थ इत्यत आह- **दुःखादिस्वरूपमिति ॥** दुःखादेरन्तःकरणपरिणामत्वे प्रमाणमाह- **एतत्सर्वमिति ॥ तत्स्वामित्वमिति ॥** परमेश्वरायत्तं क्रियाज्ञानं प्रति कारकान्तरप्रयोज्यत्वादिलक्षणं कर्तृत्वं भोक्तृत्वं चेत्यर्थः । **विक्रियाऽपि सत्यैवेति ॥** क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्यान्य-**(पां.टि.)** त्रोपपादितत्वादिति भावः। प्रतिज्ञातेऽर्थे हेतुमाह- **बाधकेति ॥** ननु दुःखादिरूपस्य बन्धस्य सत्यत्वे 'विमुक्तश्च विमुच्यते' इत्यादिवचनजातमेव बाधकं, तत्र प्रागपि विमुक्तत्वोक्त्या दुःखादिमिथ्यात्वस्य स्पष्टमवगमाद् इत्यत आह- **अस्वभावत्वादिति ॥** दुःखादेः सत्यत्वेऽपि अस्वभावत्वानित्यत्वमात्रेण तद्युक्त-जीवस्य विमुक्तत्वोपपत्त्या

तदन्यथाऽनुपपत्तेरभावान्न तद्बलेनापि दुःखादेर्मिथ्यात्वसिद्धिरिति भावः ।

**(व्या.टि.)** एवं सदागमैकविज्ञेयत्वे सदागमा एव प्रमाणीकृताः । तेषां प्रामाण्यं समर्थितम् । तेषामन्यपरत्वं चाप्रामाणिकत्वप्रमाणविरुद्धत्वाभ्यां निरस्तम् । तदुपयोग्यर्थश्चोक्त इति वक्तव्याशेषस्योक्तत्वात् किमुत्तर-ग्रन्थेनेत्यतो वर्तिष्यमाणग्रन्थसन्दर्भसिद्धफलमाह- **आ परिच्छेदसमाप्तेरिति ॥** असिद्धवदत्रा भात्, आ मुक्तेरितिवद् आ भिन्नं पदम् । **तत्र** जीवपरमात्मैक्ये । **उभयमिति ॥** तत्स्वरूपोपन्यासेन दूषणं विरोधिस्वरूपोप-न्यासेन समर्थनं चेत्यर्थः । **विधित्सुरिति ॥** निपूर्वाद्दधातेः सनि 'सनि मीमाघुरभलभशकपतपदामच इस्' इत्यनभ्यासधात्ववयवस्याच इसादेशे 'सः स्यार्धधातुके' इति सस्य तत्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे 'सनाशंसभिक्ष उः' इत्युप्रत्यये रूपं द्रष्टव्यम् । मूले विरुद्धादिति हेतुरुपलक्षणमसिद्धत्वस्येत्याह- **इत्यपीति ॥** ननु प्रत्यक्षविरोधं प्रतिज्ञाय तदसिद्धत्वोपपादनादसङ्गतिरित्यतस्तदपि प्रतिज्ञातमित्याह- **इत्यपि ग्राह्य-मिति ॥** प्रतिज्ञायामिति शेषः । नन्वीश्वराभेदानुभवो हि निषेध्यः सर्वज्ञाद्यभेदबोधनिषेधासङ्गतिरित्यत आह- **ईश्वरो हीति ॥** ननु प्रत्यक्षासिद्धत्वं प्रतिज्ञायानुभवाभावोपपादनमसङ्गतम् । विशेषाभावेन सामान्याभाव-सिद्धेरित्यत आह- **आत्मनीति ॥** अनेन विशेषनिषेधेऽप्यन्यस्याप्रसङ्गात्प्रत्यक्षमात्राभावः सिद्ध इत्याशयः । अनभ्युपेतब्रह्मैक्ये प्रमाणनिरासेऽपि नाभ्युपेतब्रह्मैक्ये । सगुणब्रह्मैक्यस्यानभ्युपेतत्वादित्याशयेनाशङ्कते- **न वयमिति ॥ मायिकत्वेनेति ॥** मायाकल्पितत्वेनेत्यर्थः । ननु प्रत्यक्षाभावमात्रेण न वस्त्वभावसिद्धिः । अनुग्राहकाभावेन प्रत्यक्षाभावसम्भवात् । न हि आलोकाभावेन चाक्षुषाभावे रूपाभावसिद्धिः । प्रकृते च शास्त्रस्यानुग्राहकत्वात्तदभावेन प्रत्यक्षाभावसम्भव इत्याशयेन शङ्कते- **नन्विति ॥** नन्वन्यदीयसाक्षात्काराभावो नान्येन ज्ञातुं शक्यते । अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वात् । प्रतियोगिनश्चान्यदीयसाक्षात्कारस्यान्या-प्रत्यक्षत्वादित्यतो, न प्रत्यक्षतोऽवगम्यते, किन्तु प्रवृत्त्या अनुमीयत इत्याह- **ऐक्येति ॥** विपक्षे बाधकाभावेना-प्रयोजकत्वमाशङ्क्य साक्षात्कारस्य प्रवृत्तिविच्छेदकत्वात्तत्सत्त्वे तदनुपपत्तिं दर्शयति- **साक्षात्कारो हीति ॥** नन्वविद्याविच्छेदे कः प्रवृत्तेः प्रतीकार इत्यत आह- **ततश्चेति ॥ भेददर्शनेति ॥** दातृदेयसम्प्रदानादिभेद-दर्शनमूलत्वाद् भिक्षाटनादेरित्यर्थः । साऽपि नामूलेत्याह- **शरीरपालनाद्यर्थेति ॥** नन्वंशेनाविद्यासत्त्वात्प्रवृत्ति-रित्यत आह- **न हीति ॥** अनादेरंशाभावादिति भावः । नांशोऽवयवः । किन्तु लेश इत्यतस्तत्र बाधकमाह- **तथात्वे वेति ॥** सामस्त्येनाविद्यानाशेऽपि निमित्तान्तरावृत्तिमाशङ्कते- **प्रारब्धेति ॥** कारणविनाशेऽपि कार्यावस्थानोक्तेरसङ्गतत्वेन स्वाचातुर्यव्यञ्जकत्वादयुक्तमित्याह- **अविद्याकार्यस्येति ॥ समूलघात-मिति ॥** 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यनेन समूलोपपदाद्धन्तेर्णमुलन्तम् । ननु मूलाविद्यातूलाविद्येत्य-**(व्या.टि.)** विद्याभेदाभ्युपगमादेकस्य नाशेऽप्यन्यया प्रवृत्तिरित्यत आह- **प्रक्रियामात्रस्येति ॥** प्रमाण-विरुद्धत्वाच्चेत्यपि ग्राह्यम् ।

तच्छब्दपरामृष्टं दर्शयति- **उक्तरूपद्वयेति ॥** सार्वज्ञ्यादिनिर्दुःखत्वादीतिद्वयेत्यर्थः । **विपर्ययेण ॥** अज्ञत्वादिना दुःखित्वादिना चेत्यर्थः । यथोक्तं तत्त्वप्रकाशिकायाम् -

'अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ।
सर्वज्ञतादीशगुणविरुद्धा ह्यनुभूतिगाः ॥' इति ।

ननु वायुवनस्पतिसंयोगप्रत्यक्षापत्त्या ससम्बन्धिकप्रत्यक्षे यावत्सम्बन्धिप्रत्यक्षस्य तन्त्रतया प्रकृते भेदं प्रति सम्बन्धिन ईश्वरस्याप्रत्यक्षत्वेन ततो भेदोऽपि न प्रत्यक्ष इति कथं तद्विपर्ययेणानुभव इत्यत आह- **यो हीति ॥** ससम्बन्धिकसंयोगादिप्रत्यक्षे सम्बन्धिप्रत्यक्षहेतुतायां संयोगप्रत्यक्षत्वादिकमेव कार्यतावच्छेदकम् । न सम्बन्धिप्रत्यक्षत्वादिसामान्यम् । सम्बन्धिपिशाचाद्यप्रत्यक्षेऽपि तत्प्रतीतिमात्रेण स्तम्भः पिशाचो नेत्यन्योन्या-भावप्रतीतिदर्शनात् । तथाऽत्रापि ईश्वरप्रत्यक्षाभावेऽपि श्रुत्या तदसाधारणधर्मप्रकारकतज्ज्ञानसम्भवेन स्वात्मनि तद्वैलक्षण्यज्ञानसम्भवादिति भावः । वैलक्षण्यानुभवेऽपि कुतो भेदानुभव इत्यत उक्तम्- **अवश्यं ततो भेदमनु-भवत्येवेति ॥** व्यावर्तकदर्शनस्य भेदविषयकत्वनियमादिति भावः । प्रतियोगिप्रतीतिमात्रेण तद्वैधर्म्यदर्शनं ततो भेददर्शनं च कुतः सिद्धमित्यतोऽनुभवत एवेत्याह- **स्तम्भानुसन्धानवत इति ॥**

ननु व्यावर्तकदर्शनस्यैव भ्रमत्वात्तदनुगतभेदानुभवो भ्रम एव । व्यावर्तकप्रतीत्यनुरूपत्वाद्व्यावृत्तिप्रतीतेः । तथा च भ्रमविरोधेन नार्थापलाप इत्याशयेन शङ्कते- **नन्वहमित्यादिना ॥** मूले कर्मधारयं मत्वा व्याचष्टे- **मिथ्याविषयत्वादिति ॥** शक्यसम्बन्धप्रदर्शनम् । हेतुहेतुमद्भावमुपपादयति- **बाधकप्रत्ययाधीनमिति ॥** अप्रामाण्यपरतस्त्वव्युत्पादनादिति भावः । शिष्योपदर्शनमिदमिति शङ्कते-

**नन्विति ॥ सन्निधानादिति ॥** मनस इति शेषः । **अस्माभिरपीति ॥** 'अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते' इति गीतोक्तेः । उत्तरं प्रतिजानीते- **उच्यत इति ॥** दुःखादेरन्तःकरणपरिणामत्वे श्रुतिं पठति- **एतदिति ॥** 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति ह्रीप्रभृतिवृत्तेर्मनआत्मकत्वोक्तेरित्यर्थः । **तदनुभवः** स्वामित्वानुभवः । **विक्रियेति ॥** भोग-लक्षणेत्यर्थः । यथोक्तम् 'नीचोच्चतैव दुःखादेर्भोगः' इति ।

ननु कर्तृत्वभोक्तृत्वादिलक्षणबन्धस्य सत्यत्वे 'विमुक्तश्च विमुच्यते' इति श्रौतविमुक्तव्यपदेशानुप-पत्तिरित्याशङ्क्य तन्निमित्तगुणमाह- **अस्वभावत्वादिति ॥** यथा मुक्तशरीरस्य 'भावं जैमिनिः' इति सूत्रदिशा जडत्वप्राकृतत्वादिना शरीरत्वव्यपदेशस्तथेति भावः । यथा वा भ्रूकुंसादौ स्त्रीत्वप्रतिभासेऽपि तस्य वेष-भूषाद्युपाधिनिमित्तत्वेनास्वभावत्वात्तद्विरुद्धपुरुषव्यपदेशः । अत एव महाभाष्ये 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः' इत्युक्तलक्षणस्य भ्रूकुंसादावतिव्याप्तिमाशङ्क्य 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान्' **(व्या.टि.)** इति यत्र रेतोलोहिते संस्त्यायतो मिश्रीभवतः सा स्त्रीति लक्षणान्तरमुक्तम् । **अनित्यत्वाच्चेति ॥** यथा स्थूणकर्णादेः पुरुषस्यैव शापादिना स्त्रीत्वेऽपि तस्यास्वभावत्वादनित्यत्वाच्च तद्विरुद्धपुरुषव्यप-देशः । यथा वा अहल्यादेर्गौतमशापादिना शिलात्वेऽपि तस्यास्वभावत्वादनित्यत्वाच्च स्त्रीत्येव व्यपदेशः । तथाऽत्रापि बन्धस्य सत्यत्वेऽपि परमात्माज्ञाननिमित्तत्वेनास्वभावत्वादनित्यत्वाच्च तद्विरुद्धविमुक्तव्यपदेशोऽपि युक्ततर इति भावः । तदेतदभिप्रेत्योक्तं सूत्रभाष्ये 'प्रमादात्मकत्वाच्च बन्धस्य विमुक्तत्वं च युज्यते' इति । आदिपदेन 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादेः सङ्ग्रहः ।

**मूलम् - न च अभेदे कश्चिदागमः । सन्ति च भेदे सर्वागमाः । तथा हि - 'अतत्त्वमसि' इति नवकृत्व उपदेशः सदृष्टान्तकः । न चायम् अभेदोपदेशः । 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयते । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ १ ॥'**

**(त.मं.)** आगमविरोधोऽपि जीवेश्वराभेदे विद्यत इत्याह- **सन्तीत्यादिना ॥** न चाभेदे कश्चिदागम इति यदुक्तं तद् दृढीकर्तुं अभेदविषयत्वेन प्रतिवाद्यभ्युपगतागमं जीवेशभेदविषयत्वेनोदाहरति- **तथा ह्यतत्त्वमसीति ॥** ननु हन्तायमभेदोपदेशः । त्रयीविद्याप्रसङ्गेन भेदाभिनिवेशिनः श्वेतकेतोः तत्त्वमसीत्याद्यात्मैक्यबोधनात्मक इत्यत आह- **न चायमिति ॥** दृष्टान्तानां भेदविषयत्वप्रकटनार्थं दृष्टान्तभेदवाक्यान्युदाहरति- **स यथेत्यादि ॥**

**टीका-** एवं सर्वप्रमाणज्येष्ठसाक्षिप्रत्यक्षासिद्धत्वं तद्विरुद्धत्वं च ऐक्यस्य प्रथममुक्त्वाऽनुमानादपि आगमस्य प्राबल्यादिदानीं तदसिद्धत्वं तद्विरुद्धत्वं च प्रतिपादयन् तदसिद्धत्वं तावद्दर्शयति- **न च अभेद इति ॥** जीवेश्वरयोरिति प्रकृतम् । एतच्चोपपादयिष्यते । आगमविरुद्धत्वं चाह- **सन्ति चेति ॥** तत्कथमित्यतः तावदेकमागमवाक्यं पठति- **तथा हीति ॥** जीवेश्वरभेदेऽस्तीति वर्तते । 'स आत्माऽतत्त्वमसि' स एव परमात्मा,(त्वन्तु) अतदसि-तस्मादन्यद्वस्त्वसीति उद्दालकेन पित्रा पुत्रं श्वेतकेतुं प्रति उपदेशः क्रियते । अतो नैतद्विरोचनं प्रति प्रजापतिवाक्यवत् प्रतारणमिति सूचयत्युपदेश इति । न चास्य स्वार्थे तात्पर्याभावः शङ्कनीयः, नववारमुपदेशात् । शकुनि-सूत्रादिदृष्टान्तैरुपपादनाच्च । प्रसिद्धं ह्यभ्यासोपपत्त्योस्तात्पर्यलिङ्गत्वमित्युक्तं **नवकृत्वः सदृष्टान्तक इति ।** यद्यप्यसन्दिग्धानि जीवेश्वरभेदे वेदवाक्यानि सन्ति । तथापि ऐक्यस्यागमासिद्धत्वं तद्विरुद्धत्वं च उभयमुपपादयितुम् अस्य वाक्यस्योदाहरणम् । ननु तत्त्वमसीति पदविच्छेदेन अयं जीवेश्वराभेदोपदेशः प्रसिद्धः, तत्कथमकारप्रश्लेषेण पदं विच्छिद्य भेदोपदेशः कथ्यत इत्यत आह- **न चायमिति ॥** कुतो नेत्यत आह- **स यथेति ॥** स यथेत्यादिना [१]**स्थाननवकेऽपि** नवस्वपि प्रकरणेषु भेद एव दृष्टान्ताभिधानात् ।

एतदुक्तं भवति- यद्यप्युभयथा पदविच्छेदसम्भवेन इदं सन्दिग्धं वाक्यम् । तथापि असन्दिग्ध-भेदविषयदृष्टान्ताभिधानानुगुण्येन भेदोपदेश एवायमिति निश्चीयते न त्वभेदोपदेश इति । न ह्यन्यत्प्रतिज्ञाय अन्यत्र

दृष्टान्ताभिधानमुपपद्यते । यथा सधर्मघटदृष्टान्ताभिधानसामर्थ्यात् 'शब्दो नित्यः' इति प्रतिज्ञा सन्दिग्धार्थाऽपि अनित्यताविषयेति निश्चीयते तद्वत् । यदा त्वेकमपि भेद-विषयत्वेनासन्दिग्धं दृष्टान्ताभिधानं सन्दिग्धप्रतिज्ञावाक्यार्थनिश्चयायालं तदा किमु वक्तव्यं नवस्वपि प्रकरणेषु नवासन्दिग्धार्थानि भेदविषयाणि दृष्टान्ताभिधानानीति ।

अत्र दृष्टान्ताभिधानादित्युपलक्षणम् । अन्यान्यपि नवप्रकरण्यां भेदविषयाण्येव वाक्यानि सन्ति । अतोऽपीति द्रष्टव्यम् । तत्रादौ जीवेश्वरयोरत्यन्तभेदबोधनायासहायस्यैव भगवतस्तेजो-बन्नादिसमस्तजगन्निमित्तकारणत्वादिरूपं जीवेष्वसम्भाव्यमानं महन्माहात्म्यमुपवर्णितम् । तच्चागममात्रवेद्यं न पुनरनुभवसिद्धमित्यतो जागरे जीवस्य स्वातन्त्र्याभिमानात् स्वापे तदभावात् तत्र जीवस्य भगवदाश्रयत्वमनुभवारूढं कर्तुं 'स्वप्नान्तं मे सोम्य विजानीहि' इत्युपक्रान्तम् । तत्र जागरस्वप्नयोः शरीरेन्द्रियमनसामितस्ततो विक्षेपेण श्रान्तस्य जीवस्य श्रमापनोदाय स्वापे परमेश्वराश्रयतामभिधाय तत्र दृष्टान्त उच्यते 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा अन्यत्र आयतनमलब्ध्वा बन्धनमेवोपाश्रयते' इति । तथा प्रसिद्धयोरशनायापिपासयोः स्वरूपपर्यालोचनयाऽपि जीवानां भगवदधीनत्वं प्रतिपाद्योपसंह्रियते ।

**(र.टि.) वस्त्विति ॥** तथा च अतदिति नपुंसकत्वोपपत्तिरिति भावः । **नवस्वपि प्रकरणेष्वपीति ॥** एतेषां खण्डानां प्रत्येकं स्थानत्वाभावादिति भावः । ननु सन्मूला इत्यादीनां मूलोदाहृतवाक्यानां दृष्टान्तप्रतिपादकत्वा-भावात्कथं 'स्थाननवकेऽपि भेद एव दृष्टान्ताभिधानात्' इत्युक्तम् इत्यत आह-**अत्रेति ॥ असहायस्यैवेति ॥** अनेन 'सदेव सोम्य' इत्याद्युपनिषद्वाक्यगतावधारणादिप्रयोजनमुक्तं भवति । **जागरस्वप्नयोरिति ॥** एतच्च 'एवमेव खलु सोम्य एतन्मनः' इति वाक्याभिप्रायकथनमिति ज्ञातव्यम् । **तथा प्रसिद्धयोरिति ॥** 'अशनाया-पिपासे मे सोम्य विजानीहि' इत्युक्तयोः यत्रैतत्पुरुष इत्याद्युक्तप्रकारेण पर्यालोचनया जीवस्येश्वरमूलकाशना-**(र.टि.)** यापिपासावत्त्वस्य ईश्वरस्य जीवसम्बन्ध्यशनायापिपासामूलत्वस्य च प्रतीतस्य भगवदधीनत्वं विनाऽनुपपत्तिरिति जीवानां भगवदधीनत्वं प्रतिपाद्यत इत्यर्थः ।

**(रा.टि.)** न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्यत आह- **एतच्चोपपादयिष्यत इति ॥** पराभिमतवाक्यानामग्रे व्याख्यास्यमानत्वादिति भावः । अनुषङ्गोक्त्याऽकाङ्क्षां पूरयति- **जीवेश्वरभेदेऽस्तीति वर्तत इति ॥** सन्तीत्यस्य—वपरिणामेनास्तीति वर्तत इत्यर्थः । पूर्ववाक्यमुदाहृत्यार्थमाह- **स आत्मेति ॥** ननु त्वमसोऽसीति वाच्यं, कथमतदिति नपुंसकतेत्यतो वस्तुपदाध्याहारेण घटयति- **तस्मादन्यद्वस्त्वसीति ॥** उपदेशपदतात्पर्यमाह- **अतो न तद्विरोचनं प्रतीति ॥** व्यक्तमेतच्छान्दोग्येऽष्टमेऽध्याये । नवकृत्व इत्यस्य सदृष्टान्तक इत्यस्य च व्यावर्त्यशङ्कापूर्वमुपयोगमाह- **न चास्येति ॥** अतत्त्वमसीति वाक्यस्येत्यर्थः । **असन्दिग्धानीति ॥** द्वा सुपर्णेत्यादीनीति भावः । 'स्थाननवकेऽपि भेद एव दृष्टान्ताभिधानात्' इति चरमवाक्यार्थं तावदाह- **स यथेत्यादिना ॥ स्थाननवकेऽपीति ॥** स्थानशब्दोऽत्र प्रकरणपरः, न प्रकरणजातपर इति भावः । तावता कथमुक्तशङ्कापरिहार इत्यत आह- **एतदुक्तमिति ॥ नवप्रकरण्यामिति ॥** 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसमासे 'द्विगोः' इति ङीप् । **इत्यपि द्रष्टव्यमिति ॥** तथा च मूले सन्मूला इत्यादिवाक्योक्तिरप्यर्थवतीति भावः । स यथेत्यादि वाक्यं व्याख्यातुं सङ्गतिप्रदर्शनाय पूर्वप्रकरणस्य सङ्क्षेपेणार्थमनुवदति- **तत्रेति ॥** नवकृत्वो भेदोक्तिपरे षष्ठेऽध्याय इति वा दृष्टान्तनवकेन स आत्माऽतत्त्वमसीत्यस्य भेदोपदेशपरत्वे सतीति वाऽर्थः । 'सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । तदैक्षत बहु स्याम्' इत्येवमादेः खण्डषट्कस्यार्थः- **असहायस्येत्यादि ॥ उपक्रान्तमिति ॥** अष्टमखण्डे । **परमेश्वराश्रयतामिति ॥** 'सता सोम्य तदा सम्पन्नो भवति' इत्यादिनेति भावः । अष्टमखण्डस्थस्यैव 'अशनायापिपासे मे सोम्य विजानीहि' इत्यादेस्तात्पर्यानुवादः- **प्रसिद्धयोरि-त्यादि ॥** जीवेष्वनुभूयमानयोरित्यर्थः । जीवानां स्वतन्त्रत्वे दुःखहेत्वोस्तयोरयोगाद्भगवदधीनत्वमिति भावः।

**(श्री.टि.) प्रकृतमिति ॥** तथा च जीवेशयोरिति शेष इति भावः । अतदिति नपुंसकलिङ्गोपपत्त्यर्थं तस्मादन्य-द्वस्त्वित्युक्तम् । **प्रजापतिवाक्यवदिति ॥** 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' इति वाक्यवदित्यर्थः । **न चास्येति ॥** पित्रा पुत्रं प्रत्युपदिष्टस्यापीत्यर्थः । **प्रसिद्धमिति ॥** 'उपक्रमोपसंहाराव-भ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति प्रमाणप्रसिद्धमित्यर्थः । **आगमासिद्धत्वम्** एतदागमासिद्धत्वमित्यर्थः । **अकारप्रश्लेषेणेति ॥** अकारप्रश्लेषस्य 'अकः

सवर्णे दीर्घः' इति शास्त्रानुसन्धा-नाधीनतया प्रसिद्ध्यपेक्षया विलम्बोपस्थितिकत्वादिति भावः । स्थाननवकेऽपीत्यत्र स्थानशब्दस्य वाक्यं प्रकरणं स्थानमित्युक्तानेकप्रकरणात्मकस्थानरूपप्रमाणपरत्वं न सम्भवति । एकैकस्य खण्डस्यैकैकप्रकरणत्वेन प्रत्येकं स्थानत्वाभावादतः प्रकरणसमुदायवाचिना स्थानशब्देन तदेकदेशभूतं प्रकरणं लक्ष्यत इत्यभिप्रेत्य व्याचष्टे- **स्थाननवकेऽपि नवस्वपि प्रकरणेष्विति ।। अन्यद्** ऐक्यम् । **अन्यत्र** भेदे । **सधर्मेति ।।** शब्दोनित्यः **(श्री.टि.)** कृतकत्वात् घटवत् इत्यत्र कृतकत्वरूपधर्मसहितघटरूपदृष्टान्ताभिधानसामर्थ्यादित्यर्थः । **सन्दि-ग्धार्थेति ।।** शब्दो नित्यः अनित्यः इत्युभयथाऽपि पदच्छेदसम्भवादिति भावः । ननु 'सन्मूलाः सोम्येमास्सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः' इति मूलोदाहृतानां वाक्यानां दृष्टान्तप्रतिपादकत्वाभावात् स्थाननवकेऽपि भेद एव दृष्टान्ताभिधानादिति कथमुक्तमित्यत आह- **अत्रेति ।। अन्यानीति ।।** सन्मूला इत्यादीनीत्यर्थः । **अतोऽ-पीति ।।** नायमभेदोपदेश इति सम्बन्धः । **असहायस्यैवेति ।।** 'एकमेवाद्वितीयम्' इति वाक्यगतैकशब्दार्था-नुवादोऽयम् । 'एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानवाची' इति कैयटोक्तेरस्त्येकशब्दोऽसहाय-वाची । 'एकाग्नयः एकहलानि' इति महाभाष्योक्तेश्चैकशब्दस्यासहायवाचित्वावगमादित्यर्थः । **स्वप्रान्तं** स्वप्नस्यान्तः सुप्तिः तं स्वप्रान्तम् । **जागरस्वप्रयोरिति ।।** 'एवमेव खलु सोम्यैतन्मनो दिशं दिशं पतित्वा' इति वाक्याभिप्रायानुवाद इति ज्ञातव्यम् । **अभिधायेति ।।** 'सता सोम्य तदा सम्पन्नो भवति' इति वाक्येनेत्यर्थः । **अशनायापिपासयोरिति ।।** 'अशनायापिपासे सोम्य विजानीहि' इत्युक्तयोरशनायापिपासयोः 'यत्रैतत्पुरुषोऽ-शिषति नाम यत्रैतत्पुरुषः पिपासति नाम' इत्यादिना उक्तक्रमेण पर्यालोचनया जीवस्येश्वरमूलकाश-नायापिपासावत्त्वस्येश्वरस्य जीवसम्बन्ध्यशनायापिपासामूलत्वस्य च प्रतीतस्य जीवानां भगवदधीनत्वं विनाऽनुप-पत्तिरित्येवं जीवानां भगवदधीनत्वं प्रतिपाद्येत्यर्थः ।

**(पां.टि.)** ननु प्रत्यक्षानुमानागमविरुद्धत्वात्तदसिद्धत्वाच्चेति प्रतिज्ञाऽनुसारेण प्रत्यक्षासिद्धत्वप्रत्यक्षविरुद्ध-त्वोपपादनानन्तरम् अनुमानासिद्धत्वतद्विरुद्धत्वयोरुपपादनीयत्वात्तदनुपपाद्यागमासिद्धत्वतद्विरुद्धत्वमेवोप-पाद्यानन्तरमनुमानासिद्धत्वतद्विरुद्धत्वोपपादनं निर्निबन्धनमित्यत अर्थग्रहणक्रमेण तथा प्रतिज्ञायामपि प्राबल्य-क्रमेणोपपादनप्रवृत्तेर्नानुपपत्तिरित्याह- **एवमिति ।। उपपादयिष्यत इति ।।** तथा हीत्यादिनेति शेषः । **प्रजापति-वाक्यवदिति ।।** 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' इति वाक्यवदित्यर्थः । नवकृत्व इत्यादेरानर्थक्यमाशङ्क्य तद्व्यावर्तनीयां शङ्कां दर्शयति- **न चेति ।।** नवानां खण्डानां प्रसिद्धस्थानलक्षणाना-क्रान्तत्वेन प्रत्येकं स्थानत्वाभावादाह- **नवस्वपि प्रकरणेष्विति ।।** ननु कथमनेनोक्तशङ्कापरिहार इत्यत आह- **एतदुक्तं भवतीति ।।** सन्दिग्धप्रतिज्ञावाक्यस्य असन्दिग्धदृष्टान्तवाक्यानुसारेण अर्थविशेषविषयकत्वं कुत आश्रयणीयमित्यतो लोके तथा दृष्टत्वादित्यभिप्रायेणानुरूपं दृष्टान्तमाह- **यथेति ।।** तर्हि भेदपरदृष्टान्त-वाक्यानुसारेण तत्त्वमसीति सन्दिग्धप्रतिज्ञावाक्यस्याकारप्रश्लेषेण भेदविषयतानिश्चयसम्भवान्मूले नवदृष्टान्ता-भिधानमनर्थकमित्यतस्तदुक्तेरभिप्रायमाह- **यदा त्विति ।।** मूले 'भेद एव दृष्टान्ताभिधानात्' इति विशेषतः कथनात्तदेव सन्दिग्धप्रतिज्ञावाक्यार्थनिर्णायकमिति भ्रान्तिपरिहाराय उपलक्षणतया तदुक्तिरिति व्याचष्टे- **अत्रेति ।।** सदेवेति श्रौतावधारणाभिप्रायमाह- **असहायस्यैवेति ।। जागरे जीवस्य स्वातन्त्र्याभिमाना-दिति ।।** अतो जीवस्य जागरे परमेश्वराधीनत्वं नानुभवारूढं कर्तुं शक्यमिति तत्र तदनुपपादनमिति भावः । **तथा प्रसिद्धयोरिति ।।** अत्र अशनायापिपासयोरित्येव पाठः । तथैव मूलकोशेषु दर्शनात् । स्वरसत्वाच्च । अशनापिपासयोरिति तु लेखकदोषपतितः ।

**(व्या.टि.) जीवेश्वरयोरिति ।।** अत्र इतीति तन्त्रं पूर्वोत्तरान्वयि । तत्र पूर्वस्मादितीत्यतः परं शेष इति शेषः । कुत इत्यत आह- **इति प्रकृतमिति ।।** एतदर्थकं जीवपरमात्मपदं प्रकृतं 'कथं च जीवपरमात्मैक्ये' सति प्रकरणप्रारम्भ इति भावः । यथाश्रुतार्थत्वे प्राग्जीवेश्वरपदाभावेन शब्दपरामर्शकेतिशब्दवैयर्थ्यमवधेयम् । **प्रकृतं** प्रकरणलब्धमिति वा । एतच्चेति प्रकृतवाक्यार्थमागमासिद्धत्वं परामृशति । **सन्ति चेतीति ।।** अत्रापि जीवेश्वरयो-रिति शेष इति शेषः । **जीवेश्वरभेद इति ।।** श्रुतिशेषाभ्यां जीवेश्वरभेदे बुद्धिसन्निहिते सतीत्यर्थः । **अस्तीति ।।** उपदेश इत्येकवचनानुरोधादस्तीत्यपि बुद्धौ वर्तत इत्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायेन व्याचष्टे- **स एवेति ।। त्वं त्विति ।।** अनेन श्रुतावतत्तु त्वमिति पठितव्ये 'ब्रह्मवादिनो वदन्ति सत्वै(सत्वे) यजेते(ता)न्वा(नु) उपस्तीर्णमिच्छन्ति' इत्यादिवत् तुशब्दोकारस्य पररूपं द्रष्टव्यमिति सूचयति । यद्यपि पररूपप्रकरणे 'तुन्वोर्वि निपात उपसङ्ख्यानम्' इति वार्तिकादत्र वकारादिनिपाताभावेन तदयोगः । तथापि योगविभागः । स्वरित्यादि-वच्छान्दसो वा वर्णलोपः । ननु नञ्तत्पुरुषस्य परवल्लिङ्गत्वे आत्मशब्देन प्रकृतस्य तच्छब्देन परामर्शे असोऽसी-त्यस्य प्रसङ्गात् । अनियतलिङ्गत्वाभिप्रायेऽपि अनियतलिङ्गस्य पद्वादेः स्त्रीपरतामुपेत्य वटुरपद्वीति क्वाप्यदर्श-नात् । विशेष्यनिघ्नत्वेऽपि श्वेतकेतोः पुरुषस्य विशेष्यत्वेन तद्वाचकस्य युष्मच्छब्दस्य पुंलिङ्गत्वेन तस्यैव प्रसङ्गात् । एवं च असोऽसीति वक्तव्ये कथमतदिति चेन्न । 'तत्सत्यम्' इति नपुंसकेन प्रकृतपरामर्शित्वेन

शब्दविशेषाविवक्षया वा अतदित्युपपन्नम्। विशेष्यनिघ्नत्वेऽपि वस्तुपदाध्याहारेण योजनीयमित्याह- **अन्यद्वस्त्वसीति*** । अत्राधिकं विचारितं गुरुप्रभायाम्।

अत्र परपक्षे तच्छब्देन व्यवहितसत्परामर्शायोगेनात्मपरामर्शे सोऽसीति निर्देशापत्तिर्बाधिका । किञ्चाद्वैत-बोधनस्य स आत्माऽसीत्येतावतैव सम्भवेन तत्त्वमित्यस्य वैयर्थ्यम्। न चास्मत्पक्षेऽयं दोषः। स एव परमात्मा, त्वं तु अतदिति वाक्यभेदाङ्गीकारात्। तुशब्देन वाक्यभेदद्योतनात्। यथा पूर्वतन्त्रे 'अथैष ज्योतिरथैष विश्व-ज्योतिरथैष सर्वज्योतिः' इत्यादावथशब्दः, एवं तुशब्दोऽपि वाक्यभेदकः। अत एवोत्तरतन्त्रे तुशब्दस्य वाक्य-भेदकत्वमुक्तं व्यतिहाराधिकरणे। तत्र हि 'एष तु वाऽतिवदति यः प्राणेनातिवदति' इत्युक्तप्राणातिवादात् सत्यातिवादस्य तुशब्देन विशेषणात्प्राणसत्यवादयोर्भेदः' इत्युक्तम् । अमरोऽप्येवमाह- 'त्वन्ताथादि न पूर्वभाक्' इति। तदुक्तं छान्दोग्यभाष्ये 'एष तु वा अतिवदतीति तुशब्दोऽर्थान्तरवाची' इति। परपक्षे तुशब्दादिवाक्य-**(व्या.टि.)** भेदकाभावात्सम्भवत्येकवाक्यत्वे वाक्यभेदो दुरुद्धरो दोषः स्यात्। अत एव पूर्वतन्त्रे 'वाजपेयेन स्वाराज्यकामो यजेत' 'उद्भिदा यजेत पशुकामः' इत्यादावेकवाक्यतालाभाय नामधेयत्वमुक्तम्।

ननु तथाऽप्यतत्त्वमसीति पदविच्छेदोऽयुक्तः । तथा हि । नञ्तत्पुरुषः परवल्लिङ्गनियतो वा विशेष्यनिघ्नो वा। नाऽद्यः। अतदित्यत्र तच्छब्देन सत्परामर्शेन त्वं न तदिति विग्रहेणातदिति भाव्यत्वेऽपि तस्मादन्योऽसीति तदर्थो वर्णनीयः, तस्मादन्यदिति भावकथनमयुक्तम्। वस्तुपदाध्याहारश्चाधिकः। किञ्च तथात्वे इदं न तदिति विगृह्य अतदितिवत् इयं न तदिति विगृह्याप्यतदित्येवेयं न स इति विगृह्याप्यस इत्येव समस्येत। एवम् 'इयं न सा' इति विगृह्य 'इयम् असा' इति समासवद् 'इदं न सा' 'इदं न स' इति विगृह्यापि 'इदम् असा' 'इदम् अस' इति समस्येत। एवम् 'अयं न स' इति विगृह्य 'अयम् अस' इतिवद् 'अयं न साऽयं न तत्' इति विगृह्यापि 'अयम् असाऽयम् अतत्' इति समस्येत । न चैवंविधसमासः शाब्दिकानां हृदयङ्गमः । प्रत्युत तद्विपरीत एवाभियुक्तव्यवहारो लोके दरीदृश्यते। न द्वितीयः। तर्ह्यपीयं न सेति विगृह्यासेतिवदियं न तदियं न स इति विगृह्याप्यसेत्येव समस्येत । एवमयं न स इति विगृह्यासः शिव इतिवदयं न सायं न तदिति विगृह्याप्यस इत्येव समस्येत । एवमिदं न तदिति विगृह्यातदितिवदिदं न सा इदं न स इति विगृह्याप्यतदित्येव समस्येत। नचेष्टमिदं शाब्दिकानाम्। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्रविरोधात्। प्रकृतेऽप्यस इति निर्देशापातेनातत्त्वमसीति श्रुतिव्याकोपात्। तस्मान्नात्र सवर्णदीर्घाश्रयणेन अतदिति पदविच्छेदो युक्त इति चेद्, अत्रोच्यते। नञ्तत्पुरुषः परवल्लिङ्ग इत्युत्सर्गः । क्वचिद्विशेष्यनिघ्नोऽपि। न चैवं परवल्लिङ्गसूत्रविरोधः। तस्यापि व्यवस्थिततत्वात्। तथा हि। द्विविधं पदं नियतलिङ्गमनियतलिङ्गं च। यत्र परं नियतलिङ्गं तत्र तद्वल्लिङ्गम्। यथा गुणोऽद्रव्यमिति द्रव्यमगुण इति च । यत्र चानियतलिङ्गं परं तत्र विशेष्यलिङ्गम् । यथा वटुरपटुस्तटमपटु तटचपट्वीति । तथा च प्रकृते तच्छब्दस्यानियतलिङ्गत्वाद्विशेष्यनिघ्नो नञ्त्पुरुष इति 'तदोः सः सावनन्त्ययोः' इति सभावे त्यदाद्यत्वे पररूपे चासोऽसीति निर्देष्टव्येऽतदिति निर्देशोऽयुक्त इति वस्तुपदाध्याहारेण योजना कृता। न चातदिति पदस्य साक्षाद्युष्मद्विशेषणत्वेऽपि नानुपपत्तिः। 'अलिङ्गे युष्मदस्मदी' इति शाब्दिकमर्यादया युष्मदोऽप्यनियतलिङ्गत्वेन नपुंसकलिङ्गत्वादिति वाच्यम्। युष्मदः सम्बोध्यवाचकत्वेन सम्बोधनस्य च चेतन इवाचेतनेऽपि 'ओषधे त्रायस्वैनं स्वधिते मैनꣳहिंसीः' 'शृणोत ग्रावाणो विदुषो नु' इत्यादौ दर्शनेऽपि, तस्याचेतने गौणतया पुरुषस्यैव मुख्य-सम्बोध्यत्वम्। मुख्यामुख्यन्यायात्, त्वमसि श्वेतकेतो इति पुरुषपरसम्बुद्धिसमभिव्याहाराच्च त्वमित्यस्य पुरुष-परत्वेन पुंलिङ्गत्वान्नपुंसकस्यातत्पदस्य साक्षात्तद्विशेषणत्वायोगाद्वस्तुपदाध्याहारो न दोष इति रहस्यम् । न चैवम् 'इयं न सा' इति विगृह्य 'असा' इतिवत् 'अयं न स' इति 'न तत्' इति विगृह्याप्यसेत्येव स्यात्। एवम् 'इदं न तत्' इति विगृह्यातदितिवत् 'इदं न सा' इति 'इदं न स' इति विगृह्याप्यतदित्येव स्यात्। एवम् 'अयं न स' इति विगृह्य 'अस' इतिवत् 'अयं न साऽयं न तत्' इति विगृह्याप्यस इत्येव स्यादिति वाच्यम्। इष्टापत्तेः। तच्छब्दस्यानियतलिङ्गत्वेन विशेष्यनिघ्नत्वात् । तस्मान्न समासानुपपत्तिः। अधिकं तु गुरुप्रभायाम्। एवमेव पदं विच्छिद्य श्रुतिर्व्याख्याता सामसंहितायाम्-

**(व्या.टि.)** 'अतत्त्वमसि पुत्रेति यदुक्तं गौतमेन तु।
नवकृत्वः सदृष्टान्तं सर्वभेदेन केशवः।
तस्मै नमो भगवते चिदचित्परमाय ते ॥'

इति च। वस्तुतस्तु परपक्षे तत्त्वमसीत्यद्वैतबोधनमयुक्तमेव। तथा हि - परमते 'साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः सर्वदाऽपरोक्षैकरसं ब्रह्मेति, तदेव इदंशब्देन निर्दिश्याद्वैतं बोधनीयम्। 'इदं सर्वं यदयमात्मा' इतिवत्। न तु भूतपरोक्षवाचकतत्पदेन परामर्शो युक्तः। तत्रापि 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यत्रेव सन्निहितभूत-परामर्शकैतच्छब्देन 'ऐतदात्म्यमिदं सर्वम्' इति पूर्वसार्वात्म्योपदेशवच्च,

चिदद्वैतमपि प्रकृतप्रत्यभिज्ञानाय एतच्छब्देनैव ब्रह्म परामृश्य ‘एष आत्मा त्वमसि’ इत्येव बोधनीयतया ‘तत्सत्यं स आत्मा तद्’ इति च तच्छब्दत्रयं विरुद्धम्। व्यवहितभूतपरोक्षत्वाभावात्। तथात्वे तत्त्वमसीति लटप्रयोगापातेनासीति विप्रतिषिद्धं च। जरद्गवादि-वाक्यवत् व्यवहितभूतपरोक्षनिर्देशायोगेन लटोऽयोगात्। तस्मात्परमते सन्निहितवर्तमानापरोक्षपरामर्शसम्भवे व्यवहितभूतपरामर्शो न युक्तः। नतरां तदद्वैतोपदेश इति युक्तमुत्पश्यामः। भगवद्गीतातात्पर्यनिर्णये तु तदित्येव पदं विच्छिद्य ऐतदात्म्यमिति नपुंसकलिङ्गेन प्रकृतमेतदीयं परामृश्यत इत्याह। तत्र न कोऽपि दोषः प्रादुःष्यादिति भावः।

पित्रेत्यास्युक्तिः। **उपदेश इति ॥ प्रजापतिवाक्यवदिति ॥ तात्पर्याभाव इति ॥** सर्वतात्पर्यलिङ्गशृङ्गा-भ्यासोपपत्ती दर्शयति- **नववारमिति ॥** गणनाभ्यावृत्तौ कृत्वसुचो विधानादित्यर्थः। **दृष्टान्तैरिति ॥** तदुपदेशै-रित्यर्थः। नन्वभ्यासस्यैकप्रकारासकृदुक्तिरूपस्य वैयर्थ्यापादकत्वेन उपपत्तेर्युक्तिरूपत्वेन सम्भावकत्वेनानिर्णाय-कत्वात् कथं तात्पर्यग्राहकत्वमित्यत आह- **प्रसिद्धं हीति ॥** ‘उपक्रमोपसंहारौ’ इति स्मृत्या इति शेषः। अथवा अभ्यासोपपत्तिभ्यां क्वापि तात्पर्यानिर्णयात् कथं तत्त्वमित्यत आह- **प्रसिद्धं हीति ॥** पूर्वोत्तरतन्त्रयोरिति शेषः। तथा हि- पूर्वतन्त्रे तावत् अभ्यासाधिकरणे-

‘समिधो यजतीत्यादावेकत्वमुत भिन्नता।
धातुप्रत्यययोरैक्यादेकत्वं भिन्नता कुतः।
अभ्यासात्कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे।
विधित्वं श्रुतितो भाति सन्निधेरनुवादता ॥’ इति।

दर्शपूर्णमासयोः श्रूयते ‘समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति’ इति। तत्र पञ्चकृत्वः श्रुतयजतिना यागभेद उत यागैक्यमिति सन्दिह्य यजति, ददाति, जुहोति इत्यादिष्विव धातुभेदाभावेन तद्विरुद्धभावनाभेदाभावाद् आख्यातैक्यप्रयुक्तं भावनैक्यमेवेति पूर्वपक्षं प्रापय्य यजतिपदाभ्यासेन कर्मभेदः। तदैक्येऽभ्यासानर्थक्यात्। न च समिधो यजतीति प्रथमवाक्यविहितयागानुवादेन तनूनपादादयो द्रव्यरूपा देवतारूपा वा गुणा विधीयन्त इति वाच्यम्।

**(व्या.टि.)** ‘तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परस्परम् ॥’

इत्युक्तदेवताविधायकान्यतमाभावात्। ‘दध्ना जुहोति’ इतिवत्तृतीयाभावेन द्रव्यविधानायोगाच्च। तेषामपि यागनामत्वाच्च। समिद्वाक्यस्य यागविधित्वे च विहितस्य विधानायोगात् तत्तन्नामकानि यागान्तराणि विधी-यन्ते। न चैवं संज्ञाभेदात् कर्मभेदापत्त्या उत्तराधिकरणसाङ्कर्यमिति वाच्यम्। ‘अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरनेन सहस्रदक्षिणेन यजेत’ इत्युत्तराधिकरणोदाहरणे, यागावगमात् प्रागेव सञ्ज्ञात्वावगमात् संज्ञया कर्मभेदः। इह तु यजतिविहितयागानामविशेषपुनःश्रुतिरूपाभ्यासात् भेदेऽवगते भिन्नानामेकसमित्सञ्ज्ञायोगात् तनूनपादादीनामपि नामत्वं कल्प्यत इति न संज्ञया तद्भेदः किन्त्वभ्यासादेवेति निर्णीतं भेदलक्षणे। तथा तत्रैव वाजिनाधिकरणे ‘तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्’ इत्यत्र वाजमन्नं येषामिति योगेन वाजिपदेन प्रकृतामिक्षादेवतानुवादिना प्रकृतकर्मानुवादेन वाजिनविधानमिति पूर्वपक्षं प्रापय्य ‘सा वैश्वदेव्यामिक्षा’ इत्युत्पत्तिविधिशिष्टामिक्षाविरोधेन निराकाङ्क्षे पूर्वकर्मणि अन्यगुणविधानानुपपत्तिरूपोपपत्त्या तद्विशिष्टयागान्तरविधिरिति श्रुतितात्पर्यं निर्णीतम्। उत्तरमीमांसायां ‘आनन्दमयोऽभ्यासात्’ ‘आकाशस्तल्लिङ्गात्’ इत्यादौ अभ्यासोपपत्तिभ्यां वाक्यतात्पर्यनिर्णयः सुविस्पष्ट इति भावः।

ननु ‘न ते महित्वमन्वश्नुवन्ति’, ‘न ते विष्णो जायमानः’, ‘हरिर्हरन्तमनुयन्ति देवाः’, ‘त्वमग्निं हव्यवाहनं समित्सोतस्यामश्राम्य प्रजापतिः’, ‘स देवानसृजत’, ‘जुष्टं यदा पश्यत्यन्यमीशम्’, ‘अङ्गान्यन्या देवताः’, ‘परमात्मा व्यवस्थितः’, ‘द्वे ब्रह्मणी वेदितव्ये’, ‘पृथगात्मानं प्रेरितारं च मत्वा’, ‘द्वा सुपर्णा’, ‘भिन्नोऽ-चिन्त्यः’, ‘ईश्वरः सर्वभूतानाम्’, ‘तमीश्वराणां परमं महेश्वरम्’, इत्यादिस्पष्टवेदवाक्यानि विहाय किमस्पष्ट-वाक्योदाहरणेनेत्याशङ्क्य परिहरति- **यद्यपीत्यादिना ॥ आगमेति ॥** ऐक्यपरमहावाक्यतया प्रसिद्धेत्यर्थः। **अकारप्रश्लेषेणेति ॥** नञो नलोपेनाकारमात्रावशेषे तस्य सवर्णदीर्घेणेत्यर्थः। **स्थाननवकेऽपीति ॥** नवानां वर्गो नवकम् ‘सङ्ख्याया अतिशदन्तायाः कन्’ इति वर्गार्थे कनिति भावः। असन्दिग्धं सन्दिग्धस्य निर्णायक-मित्येतन्निदर्शयति- **यथेति ॥** तथा ‘अक्ताः शर्करा उपदधाति’ इत्यत्र विध्युद्देशेऽञ्जनकरणश्रवणाद् घृततैलव-सादीनामनेकेषां तत्साधनानां सत्त्वात् सन्दिग्धमक्तपदं ‘तेजो वै घृतम्’ इत्यसन्दिग्धवाक्यशेषेण घृताक्तपरतया निर्णीतम् ‘सन्दिग्धेषु

वाक्यशेषात्' इत्यत्र । ईदृशं वैदिकमप्युदाहार्यम् । स्थाननवकेऽपीति मौलापिपदद्योतितं कैमुत्यमाह- **यदा त्वेकमिति ।। उपलक्षणमिति ।।** दृष्टान्ताभिधानरूपं हेत्वभिधानमित्यर्थः । **अन्यान्य-पीति ।।** सन्मूलाः, सदायतनाः, सत्प्रतिष्ठाः इत्यादीनीति भावः । **भेदविषयाण्येवेति ।।** 'प्रजानां सुखदुःखेन राजाऽऽप्नोति शुभाशुभम्' इत्यादौ प्रजाशब्दस्य चेतनपरत्ववन्मूलमूलिभावाश्रयाश्रयिभावादेर्भेदाविनाभावेन स्पष्टवाक्यानीत्यर्थः ।

**(व्या.टि.)** तत्र नवप्रकरण्या भावं विवक्षुराद्यप्रकरणे सृष्टिस्थानाभिप्रायमाह- **तत्रादाविति ।।** असहायस्यैवेति सदेवेत्यवधारणवर्णनम् । **तेजोऽबन्नादीति ।।** 'सेयं देवतेमास्तिस्रो देवता अनेन जीवेन' इत्यादिनेति शेषः । **निमित्तेति ।।** देवताशब्दादीक्षतिकर्मणः 'तदैक्षत' इति व्यपदेशाच्चेति भावः ।

'तेजोभिमानिनी लक्ष्मीः प्राणस्त्वबभिमानवान् ।
अन्नाभिमानी रुद्रश्च तिस्रस्ता देवताः पुरा ।।'

इति छान्दोग्यभाष्यमनुसन्धायाह- **जीवेष्वसम्भाव्यमानमिति ।। महन्माहात्म्यमिति ।।** 'आन्महतः' इति स्थान्यादेशविपर्ययेण समानाधिकरणजातीययोरिति 'अल्पाच्तरं पूर्वम्' इति परनिपातेन वा आत्वस्यानित्यत्व-ज्ञापनादात्वाभावः । इत्थमेवोक्तं गीताभाष्यटीकायाम् । तस्यापि 'व्यर्थं सत्किञ्चिदिष्टं ज्ञापयति' इति परिभाषैव मूलम् । महद्भ्यो माहात्म्यमिति वा, भिन्नं पदं वाऽवधेयम् । **आगममात्रेति ।।** आदिसृष्टेरध्यक्षासम्भवादिति भावः । **स्वातन्त्र्याभिमानादिति ।।** करणस्वाम्याभिमानादित्यर्थः । 'यत्र सुप्तो न कश्चन कामं कामयते न कश्चन स्वप्नं पश्यति तत्सुषुप्तम्' इति तल्लक्षणश्रवणादित्यर्थः । **सोम्येति ।।** 'सोममर्हति यः' इति यप्रत्यय इति भावः । तत्र स्वप्नान्तः सुषुप्तिः । मनोनामा पुरुषः । प्राणनामा भगवान् । 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इति संसारिणो ब्रह्मप्राप्तिमुक्त्वा 'स यथा शकुनिः' इति 'सन्मूलाः' इति चोपसंहारादिति छान्दोग्यभाष्यं मनसि निधायाह- **तत्रेत्यादिना ।। विक्षेपः** उपहतिः । **श्रान्तस्येति ।।** 'अनुनासिकस्य क्विझलोः' इति दीर्घः । अनेनास्वातन्त्र्ये प्रमाणमुक्तम् । यथोक्तं छान्दोग्यभाष्ये 'अस्वातन्त्र्यं श्रान्तस्य निश्चितमेव । न हि श्रमः स्वेच्छया युज्यते' इति । **अभिधायेति ।।** 'एवमेतन्मनो दिशं पतित्वाऽन्य-त्रायतनमलब्ध्वा प्राणमेवोपाश्रयते' इति दार्ष्टान्तिकवचनेनेति शेषः । जागरेऽपि ईश्वराधीनत्वं जीवस्य अशनाये-त्यादिना प्रस्ताव्य 'यत्रैतत्पुरुषोऽशिषति नाम, यत्रैतत्पुरुषः पिपासति नाम' इत्यादिना बोधितम् । तद्भावमाह- **तथेति ।। स्वरूपेति ।।** अन्नपानोपशमनीयत्वस्वरूपम् । 'आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयाः' इति तैत्तिरीयश्रुतेरिति भावः । 'अपां च खलु वौषधीनां च रसमुपजीवामः' इति च । **भगवदिति ।।** अन्नपानीययोर्भगवत्सृष्टत्वेन तदधीनत्वादिति भावः ।

**मूलम् - ''यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति ।। २ ।।''**

**''इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्तास्समुद्रात् समुद्र-मेवापियन्ति । स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहस्मीति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तदा भवन्ति ।। ३ ।।''**

**टीका -** एवमाद्येन प्रकरणेन जीवानां भगवदाश्रयत्वे कथिते न मत्तोऽन्योऽस्मिन् देहेऽस्ति मया भेदेनानुपलभ्यमानत्वादित्याशयवता पुत्रेण भूय एव मा भगवान् विज्ञापयत्विति पृष्टः पितोवाच 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति । नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा तत्र' इत्यादि । **मधुकृतो** भ्रमराः मधु **निस्तिष्ठन्ति** निर्मिमते । कथम्? **नानात्ययानां** नानागतीनां परस्परविलक्षणानां वृक्षाणां रसानां

**समवहारं** समूहम् **एकतां** मिश्रतां गमयन्ति। यथा **ते** नानावृक्षरसाः **तत्र** मिश्रतायां विद्यमानमपि **विवेकं** परस्परभेदं **न लभन्ते** न जानन्ति **अमुष्याम्रस्य** वृक्षस्याहं रसोऽस्मि अयं तु अन्यस्येति। तथाऽपरोऽपि **अमुष्य** पनसस्याहं रसोऽस्मि अयं तु अन्यस्येति। एवमेव खलु सोम्य इमाः सर्वाः **प्रजाः** जीवाः परमेश्वरशक्तिभिरेव स्वे स्वे शरीरे **सति** परमेश्वरे **सम्पद्य** तेन मिश्रीभावं प्राप्य सति सम्पत्स्यामहे, उपलक्षणमेतत्, सम्पन्नाः सम्पद्यामह इति न विदुः। **इह लोके ते** प्रसिद्धाः व्याघ्रो वेत्यादि यद्यद्भवन्ति **तत्तदा** त(अ)स्मात् परमेश्वराश्रितत्वाज्ज्ञानापराधाद्भवन्तीति। एतेन योऽयमात्मनो भेदेन न पश्यति स ततो न भिद्यत इति व्याप्तेर्भङ्गो दर्शितो भवति॥ २॥

भवत्वचेतनानां नानावृक्षरसानां भेदापरिज्ञानम्। मया तु चेतनत्वेन हेतुर्विशेष्यत इत्यभिप्रायेण पुनः पृष्टे पितोवाच- **इमाः सोम्य इत्यादि॥ इमाः** प्रसिद्धा गङ्गाद्या नदीदेवताः **प्राच्यः** प्रागञ्चनात् प्राचीशब्दवाच्याः पुरस्तात् **स्यन्दन्ते** स्रवन्ति। तथा प्रत्यगञ्चनात् प्रतीचीशब्दवाच्याः पश्चात् स्यन्दन्ते। एवमत्यन्तविलक्षणास्ता मेघादिद्वारेण समुद्रादुत्पन्ना उत्पन्नजलत्वात्समुद्रमेव **अपियन्ति** प्रविशन्ति। तथापि स समुद्र एव भवति। **ता** नदीदेवता यथा **तत्र** समुद्रे इयं गङ्गाऽहमस्मि, इयन्तु यमुनाऽयं च समुद्र इत्येवमन्या अपि न विदुः। एवमेव खलु सोम्येमाः सर्वाः प्रजाः **सतः** परमेश्वराद् **आगम्य** उत्पद्यापि सत **आगच्छामहे** उत्पन्नाः स्म इति न विदुः। एवं परमेश्वरे स्थित्वाऽपि तमाश्रिताः स्म इति न विदुः। त इहेत्यादि पूर्ववत्। अनेन चेतनत्वविशिष्टस्यापि हेतोरनैकान्त्यमुक्तं भवति॥ ३॥

**(र.टि.) इत्याशयवतेति॥** अनेन ज्ञातेऽर्थे भूय इति पुनःपुनरुपदेशप्रार्थनं नानुपपन्नमित्युक्तम्भवति। **नदी-देवता इति॥** अन्यथा पूर्वदृष्टान्तवैषम्याभावे एतद्दृष्टान्तोक्तिर्व्यर्था स्यादिति भावः। **प्रागञ्चनादिति॥** नदीषु दिग्विशेषवत्प्राचीशब्दरूढेरभावादिति भावः।

**(रा.टि.) पुत्रेणेति॥** श्वेतकेतुना। **पितोवाच** उद्दालकः नवखण्डेनोवाचेत्यर्थः। मूलस्थतच्छब्देन परामृश्यं दर्शयितुं पूर्वशेषं दर्शयति- **यथा सोम्येत्यादि॥** इत्यादीत्यादिपदेन ते यथा न विवेकं लभन्त इत्यादिमूलोक्त-वाक्यग्रहः। तद्व्याचष्टे- **मधुकृत इति॥** अत्र खण्डानामर्थोक्तिः छान्दोग्यभाष्योक्तदिशा ज्ञेया। **वृक्षाणां रसानामिति॥** वृक्षसम्बन्धिपुष्परसानामित्यर्थः। सतीत्यनुवादः परमेश्वर इति व्याख्या। सच्छब्दस्य तत्परतायाः 'ईक्षतिकर्मव्यपदेशात्सः' इत्यत्र समर्थनादिति भावः। सम्पद्येत्यादौ स्वातन्त्र्यभ्रमनिरासायोक्तम्- **परमेश्वर-शक्तिभिरिति॥** त इत्यस्य प्रजापरामर्शित्वे ता इति भाव्यमित्यत आह- **ते प्रसिद्धा इति॥** यद्यदिति यच्छब्दद्वय-निर्दिष्टस्यापि एकेन तच्छब्देन परामर्शं मत्वाऽन्यत्तत्पदं हेत्वर्थं मत्वा तस्यार्थमाह- **तस्मात्परमेश्वरेत्यादि॥ तद्** व्याघ्रादिरूपं भवन्ति। भगवदाश्रितत्वाज्ज्ञानिप्रजा इत्यनुषङ्गः। नन्वेतावता न मत्तोऽन्योऽस्मिन्देहेऽस्ती-त्यादिना कृतचोद्यस्य कः प्रतीकार इत्यत आह- **एतेनेति॥** रसदृष्टान्तेन प्रजेश्वरयोर्भेदे सत्यपि तदज्ञानकथनेनेति वा, सत्यपि भेदे रसानां तद्दार्ष्टान्तिकथनेनेति वार्थः। प्राक् हेतोरेवोक्त्या व्याप्तेरनुक्तत्वात् तत्स्वरूपं व्यक्तीकृत्य 'इति व्याप्तेर्भङ्गः' इत्युक्तम्। रसेषु हेतुसत्त्वेऽपि साध्याभावादिति भावः॥ २॥

**हेतुर्विशेष्यत इति॥** मया भेदेनानुपलभ्यमानत्वादिति हेतुरित्यर्थः। मूलोपात्तस्येमाः सोम्येत्यादिवाक्य-स्यार्थमाह- **इमा इति॥** प्राचीशब्दस्य दिग्विशेषे रूढस्य योगेन घटयति- **प्रागञ्चनादिति॥** प्रपूर्वादञ्चतेः क्विपि नलोपे ङीप्प्रत्यये रूपमिति भावः। एवं प्रतीचीत्यत्रापि प्रत्यगर्थात् प्रतीत्युपसर्गादञ्चते रूपं ध्येयम्। समुद्रात्समुद्रमित्येतत् मध्ये शेषोक्त्या घटयति- **मेघादीति॥** पर्वतोत्पन्नानां कथं समुद्रादुत्पन्नत्वमित्याशङ्का-परिहाराय- **समुद्रादुत्पन्नजलत्वादिति॥** तद्घटनाय मेघद्वारेणेति। **जलत्वादिति॥** देवतानामभिमन्य-मानोत्पत्त्योत्पन्नत्वव्यपदेश इति भावः।

'स्वकीयमुदकं नद्यः समुद्रे नैव जानते।
वायुस्तु तत्पृथग्ज्ञात्वा मेघे कृत्वा प्रवर्षति॥'

इत्युक्तेरिति भावः। **तथापीति॥** नदीनां समुद्रप्रवेशे स तोयराशिरेवेति वा तदभिमान्येवेति वा समुद्रो भवति न नदीदेवतानां समुद्रैक्यमित्येवकारो भिन्नक्रमो योज्यः। **न विदुरिति॥** स्वकीयमिति प्रागुक्तस्मृत्युक्त-दिशा स्वस्वाभिमन्यमानजलं न विदुरित्यर्थः। मूलमुपलक्षकमित्युपेत्याह- **एवं परमेश्वर इति॥** ३॥

**(श्री.टि.)** ननु ज्ञातेऽर्थे भूय इति पुनरुपदेशप्रार्थनमनुपपन्नमित्यतस्तदभिप्रायमाह- **न मत्तोऽन्य इति ॥ सम्पद्यामहे** इदानीम्। **सम्पन्नाः** पूर्वम्। **सम्पत्स्यामह** उत्तरत्र। **भङ्ग इति ॥** नानावृक्षरसेषु व्यभिचार इत्यर्थः ॥ २ ॥ **गङ्गाद्या नदीदेवता इति ॥** अन्यथा जडग्रहणे चेतनत्वे सति भेदेन मया अनुपलभ्यमानत्वादिति चेतनत्वविशिष्टहेतोर्व्यभिचाराप्राप्तेरिति भावः। ननु प्राच्यादिशब्दस्य दिग्विशेषे रूढत्वात्कथं प्राच्यः प्रतीच्यो नद्य इति सामानाधिकरण्यमित्यत आह- **प्रागञ्चनादिति ॥** 'अञ्चु गतिपूजनयोः' प्राचीदिगभिमुखं गमनादित्यर्थः। **पुरस्तात्** प्राचीदिगभिमुखम्। **स्यन्दन्ते स्रवन्तीति ॥** 'स्यन्दू प्रस्रवणे' इति धातोरित्यर्थः। **प्रत्यगञ्चनात्** प्रतीचीदिगभिमुखं गमनात्। **पश्चात्** प्रतीचीदिगभिमुखम्। तथा च प्राच्यादिशब्दानां यौगिकत्वाद्युक्तं सामानाधिकरण्यमिति भावः। ननु नदीदेवतानां कथं समुद्रादुत्पत्तिरित्यत आह- **समुद्रादुत्पन्न-जलत्वादिति ॥** ननु नदीजलस्यापि कथं समुद्रादुत्पत्तिरित्यत उक्तम्- **मेघादिद्वारेणेति ॥** नदीनां समुद्रे प्रवेशेन परस्परं मिश्रीभावेऽपि वायुस्तत्तन्नद्युदकं विवेकेन ज्ञात्वा मेघे कृत्वा प्रवर्षति तेन नदीषु जलपूर्तिर्भवतीति हि पौराणिकी प्रसिद्धिः। यथोक्तं 'स्वकीयमुदकं नद्यः समुद्रे नैव जानते। वायुस्तु तत्पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति' इति। तथा चाभिमन्यमानजलानां समुद्रादुत्पन्नत्वात्तदभिमानिदेवतास्वपि तदुत्पन्नत्वव्यवहारो युक्त इति भावः। **तथापि स समुद्र एव भवतीति ॥** नदीनां समुद्रे प्रवेशेऽपि **सः** समुद्रः समुद्र एव भवति न तु नद्य इत्यर्थः। इदं चोत्तरत्र विवृतं भविष्यति। **न विदुरिति ॥** स्वाभिमन्यमानं जलं विविक्ततया न विदुरित्यर्थः। **आगच्छामह** इदानीम्, **उत्पत्स्यामह** उत्तरत्र, **उत्पन्नाः** स्मः पूर्वम्। **एवं परमेश्वरे स्थित्वापीत्यादि ॥** नन्वेतत्किमर्थमुच्यत उपनिषदि व्याख्येयाभावादिति चेदुच्यते। न हि गृहादागतस्य गृहे प्रविष्टस्येत्युत्तरत्र भगवत्पादैः 'जीवगमनक्रियां प्रति ब्रह्मणोऽपादानत्वं जीवप्रवेशक्रियां प्रत्यधिकरणत्वं चेत्युभयं विवक्षितम्' इत्युच्यते। अत एव 'नदीसमुद्रदृष्टान्ते द्वयस्यापि विवक्षितत्वाच्च' इति टीकाऽपि। अतस्तदनुसारेणेदं पूरितमिति ध्येयम्। **अनैकान्त्यमुक्तं भवतीति ॥** नदीदेवतास्विति शेषः। ननु नदीदेवतासु कथं व्यभिचारः। मिश्रितत्वेन स्वाभिमन्यमानजलज्ञानाभावेऽपि गङ्गादिदेवतानां परस्परं भिन्नत्वेन स्वस्वरूपज्ञानसद्भावादिति चेत्सत्यम्। स्वाभिमन्यमानतया स्वदेहभूतजलानां परस्परं मिश्रितत्वेन पञ्चद्रौपदीवदेकदेहवत्त्वन्यायप्राप्त्या विवेक-ज्ञाने क्षीरनीरवद्वियोगात् स्वपरस्वरूपज्ञानमत्यन्तविविक्ततया नास्तीति व्यभिचारकथनं नानुपपन्नमिति भावः ॥ ३ ॥

**(पां.टि.)** चेतनत्वविशिष्टहेतोरप्यनैकान्तिकतालाभाय नदीदेवता इति देवताग्रहणम्। नदीमात्रग्रहणे तदप्रसङ्गादिति द्रष्टव्यम्। दिग्विशेषरूढप्राच्यादिशब्दवाच्यत्वस्य नदीषु रूढ्या बाधितत्वाद्योगेन तदुपपादयति- प्रागञ्चनादित्यादिना ॥

**(व्या.टि.)** आद्यप्रकरणसङ्गतत्वेन द्वितीयप्रकरणमवतारयति- **एवमिति ॥**

**(व्या.टि.)** 'यदि स्वतोऽन्यः परमो देहेऽस्मिन् संव्यवस्थितः।
न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः ॥'

इति सामसंहिताभिहितं साकूतं वितत्याह- **न मत्तोऽन्य इति ॥**

'अङ्गैरदृश्यमानोऽपि न भेदो नास्ति पुत्रक।
यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः।
अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ॥'

इति सामसंहितां मनसि निधाय व्याचष्टे- **मधुकृतो भ्रमरा इति ॥** वृक्षाणां रसानामिति व्यधिकरणषष्ठ्यौ। तत्र श्रुतौ यथापदस्य द्विरुक्तेर्वाक्यभेदेन योज्यम्। तत्र पूर्ववाक्ये गमयन्तीत्यतः परम्, एवमेवेत्यारभ्य सर्वाः प्रजा इत्यन्तं दार्ष्टान्तिकवाक्यं द्वितीयान्ततया परिणाम्य परमेश्वरशक्तयः सति सम्पादयन्तीति कर्तृपदमध्याहृत्य तच्छेषतया आपूरणीयम्। द्वितीयवाक्ये यथाश्रुति प्रथमान्ततयैव संयोजयति- **एवमेवेति ॥** 'परमेश्वरशक्तिभिरेव स्वे स्वे शरीरे सति परमेश्वरे सम्पद्य' इति टीकावाक्यपर्यालोचनया लब्धोऽयमर्थ इत्यवधेयम्। सम्पद्येति क्त्वः पूर्वकालविहिततया लृटोऽसम्बन्धादाह- **उपलक्षणमेतदिति ॥** लृडन्तं भूतभवत्प्रत्ययान्तरोपलक्षकमित्यर्थः। सति सम्पद्यामहि, सति समपद्यामहे, सति समपत्स्यामहे इति त्रैकालिकीं सत्सम्पत्तिं न विदुः। विदुरिति 'विदो लटो वा' इति वेत्तेर्लटो झेरुसिति भावः। अस्मादिति वक्तव्ये आ इत्यनूद्य अस्मादिति व्याख्यातम्। तत्पक्षे इदमः त्यदाद्यत्वे पररूपत्वे ङसेः स्मादादेशे 'हलि लोपः' इति आपि हलादाविदम इदो लोपे 'सुपां सुलुक्' इत्याकारादेशे पूर्वसवर्णदीर्घे च रूपं बोध्यम्। तस्मादिति पाठे तु, एकेनैव तच्छब्देन सर्वोपसंहार-सिद्धेर्द्वितीयतत्पदस्य हेतुपरत्वात्, आङो भवतीति व्यवहितान्वयश्च बोध्यः। यद्वा तदेत्यव्ययं तस्मादित्यर्थे। अव्ययानामनेकार्थत्वादिति बोध्यम्। अज्ञानापराधादित्युपलक्षणम्

। अनाश्रितत्वान्याश्रितत्वज्ञानापराधादित्यपि द्रष्टव्यम् ।

'अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः' इतिवत् ।

'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्ये प्रपद्यन्ते यथाकर्म यथाश्रुतम् ।
यथाप्रज्ञं हि सम्भवाः'

इति श्रुतेरपि सत्त्वादिति भावः ।

'इति पित्रोपदिष्टः सन् पुत्रः पप्रच्छ तं पुनः ।
चेतनानामविज्ञानं कथमित्येव चिन्तयन् ॥'

इति सामसंहिताया अनुशयेन तृतीयं प्रकरणं व्याचिख्यासुराह- **भवत्विति ॥ नदीदेवता इति ॥** ननु कथं **(व्या.टि.)** नदीनां देवतात्वम् । स्रवन्तीनां नदीनां तासामम्भोऽभिन्नत्वेन जडतयाऽध्यक्षीकरणात् । स्नानीय-पानीयतायुक्तेश्च । 'यथाऽपः प्रवता यन्ति' इति श्रुतेश्च । 'नह्यम्मयानि तीर्थानि न देवाः' इति 'एकाचो नित्यम्' इति विकारार्थमयडन्तप्रयोगाच्च । तासां देवतात्वे मानाभावाच्चेति चेदुच्यते । ऋचि सर्वनदीदेवताके 'याः प्रवतो निवतः' इति मन्त्रे 'शिवा देवीः' इति सर्वासां देवीत्वोक्तेः । 'इमं मे' इति मन्त्रे शृणुहीति श्रवणप्रार्थनेन, 'शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोऽपः स्पृशत' इति दर्शनस्पर्शनप्रार्थनेन चोपलक्षणया शरीरित्वोक्तेश्च । 'अप्सु वै वरुणः' इति वरुणाधिष्ठानत्वोक्तेश्च । 'आपो वै सर्वा देवताः' इति सर्वदेवताधिष्ठानत्व-विवक्षया तदभेदोक्तेश्च । विशिष्यापि गङ्गायास्तावत् 'स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः' इति साक्षाद्विष्णु-रूपत्वोक्तेश्च । 'गङ्गे च यमुने चैव' इत्यत्र जले सन्निधिप्रार्थनाच्च । 'नन्दिनी नलिनी' इत्यत्र स्वनामपाठकस्य 'तत्र तत्र वसाम्यहम्' इति जलाशये वासप्रतिज्ञानाच्च । 'नमस्ते जलशायिने' इति विष्णोर्जलशायित्वोक्तेश्च । 'पूर्णचन्द्रनिभानने देवि' इति गङ्गायाः सुन्दरशरीरदेवत्वयोरुक्तेश्च । गोदावर्या अपि 'गौतमप्रार्थिता देवी' इति देवीत्वोक्तेश्च । 'गोदावरि नमोऽस्तु ते' इति नम्यत्वोक्तेश्च । कृष्णाया अपि 'वेदेन प्रार्थिते देवि' इति देवीत्वोक्तेश्च । अन्यासामपि 'नृसिंहपादोद्भवे देवि, वराहदंष्ट्रोद्भवे देवि, सह्यपादोद्भवे देवि' इत्यादिना देवत्वनम्यत्वार्घ्यग्रहणाद्युक्त्या देवत्वसिद्धेश्च । तासां च 'देवादिवदपि लोके', 'दृश्यते च' इति सूत्रकृतैव दृश्यत्वादृश्यत्वसामर्थ्याद्युक्तेश्च नाध्यक्षविरोधः । तदगोचरे तद्विरोधायुक्तेः । नापि प्रमाणाभावः । बहुश्रुतिस्मृतिभिरेव चितामचिच्छरीराणामुक्तेरिति रहस्यम् । पद्मपुराणे-

'मदासने कनिष्ठेयं भवद्भिः संविवेशिता ।
तस्मात्सर्वे जडीभूता नदीरूपा भविष्यथ ॥'

इति सिंहाद्रिकृतब्रह्मयज्ञे स्वावमानेन कनिष्ठासनदानेन मुनीनां सावित्रीशापान्नदीत्वोक्तेश्च ।

प्राक्प्रत्यगर्थाभ्यां प्रप्रतिभ्याम् अञ्चेः क्विपि उगित्वान्ङीपि 'अनिदिताम्' इति नलोपे 'अचः' इत्यकारलोपे 'चौ' इति पूर्वाणो दीर्घे प्राचीप्रतीचीशब्दौ व्युत्पादनीयौ । **पुरस्तात्** पूर्वस्यां दिशि गङ्गाद्याः स्यन्दन्ते । 'स्यन्दू प्रस्रवणे' स्रवन्तीत्यर्थः । **पश्चादिति ॥** प्रतीचीं दिशं प्रति नर्मदाद्याः स्यन्दन्ते । समुद्रादुत्पन्ना इति संयोजयिष्यन् द्वारमाह- **मेघादिद्वारेणेति ॥** संवदति चेममर्थं तैत्तिरीयश्रुतिः- 'उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः' इति । **समुद्रमेवेति ॥** संवदन्ति चेममर्थं 'सृजा वृष्टिं दिव आद्भिः समुद्रं पृण' 'आकाशात्पतितं तोयं यथा गच्छति सागरम्' 'सलिलवच्च तन्नियमः' इति श्रुतिस्मृतिसूत्राणि । **इति समुद्र एवेति ॥** मुद्रया सहितः समुद्रः । अतिवेलो न भवितव्यमिति मुद्रितत्वादित्यर्थः । अहमस्मीत्युपलक्षणं मत्वा व्याचष्टे- **इयन्त्विति ॥** इतीत्यतः परं गङ्गा न वेदेति शेषः । पुनरियमहमस्मीत्येतद्व्याचष्टे- **एवमन्येति ॥ अन्याऽपि** यमुनाऽपि न वेदेति शेषः । वीप्सा सर्वोपसंहारार्थेत्याह- **एवमन्यापीति ॥** गोदावर्यपीत्यर्थः । बहुवचनान्तपाठे तु यथाश्रुतान्वयः । प्रत्येकं सम्बन्ध इति भावः । **न विदुरिति ॥** इत्थं सर्वनदीदेवता इति पूर्वेणान्वयः । **(व्या.टि.) उत्पन्नाः स्म इति ॥** उपलक्षणमेतत् । उत्पत्स्यामह इति च ग्राह्यम् । अत्रोक्तं सदुत्पन्नत्वा-ज्ञानमुपलक्षणं पूर्वप्रकरणोक्ताश्रितत्वाज्ञानस्येत्याह- **एवमिति ॥** किमनेनोत्तरितमुद्दालकेनेत्यत आह- **अनेनेति ॥ चेतनत्वविशिष्टस्यापीति ॥** न मत्तोऽन्योऽस्मिन्देहेऽस्ति चेतनेन मयाऽनुपलभ्यमानत्वादिति चेतनत्वगर्भितस्येत्यर्थः । अनेन

'तं प्रत्याह यथा नद्यश्चेतनाश्च समुद्रगाः ।
स्वं वारि नैव जानन्ति प्रजास्तद्वत्प्रजालये ॥'

इति सामसंहिता विवृता भवति।

**मूलम्- ''स एष जीवेनाऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति। अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति ॥ ४ ॥ न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति। तं होवाच यं वै सोम्यैतमणिमानं न निभालयसे अस्य सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति ॥५॥''**

**टीका-** अस्त्वीश्वरस्ततो भिन्नस्तथाऽपि जीवस्य तदधीनत्वं कुत इत्यभिप्रायवता पुनः पर्यनुयुक्तः पिताऽब्रवीत्- 'अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवन् स्रवेत् यो मध्येऽभ्याहन्यात् जीवन् स्रवेत् योऽग्रेऽभ्याहन्यात् जीवन् स्रवेत् स एष जीवेनाऽत्मना' इत्यादि। अङ्कुरमात्रस्याभ्या-घातेऽवस्थानासम्भवात् महत इत्युक्तम्। **यो** यः कश्चिद्यदीत्यर्थः। **जीवन्** जीवेन परमेश्वरेणाधि-ष्ठितश्चेत् तदा **स्रवेत्** रसमेवोद्गिरेत्। न तु म्रियते। एवं **स एष** वृक्षजीवः **अनेन** प्रकृतेन **जीवेनाऽत्मना** परमात्मना परमेश्वरेणा**नुप्रभूतः** प्राप्तोऽधिष्ठितदेहः। **पेपीयमानः** पुनः पुनर्भृशं वा पिबन्।

अनेनेदमुक्तं भवति- यथा वृक्षजीवस्य सर्वदाऽनुपहतात्यक्तदेहेन सुखिनैव मया स्थातव्य-मितीच्छायामपि कदाचिदेव ईश्वरानुग्रहे सति विघातिषु बाह्यकारणेषु सत्स्वप्येवमवस्थानं भवति, कदाचित्पुनरीश्वरानुग्रहाभावे बाह्यकारणबलवत्त्वाभावेऽपि शरीरशोषणत्यागाद्यनिष्टं भवति। एवं मानुषशरीरेऽपि जीवस्य ईश्वराधीनत्वं ज्ञातव्यमिति ॥ ४ ॥

एवं, जीवस्य सत्तादिप्रदः परमात्माऽत्रैव शरीरे वर्तमानो जीवेन कुतो न दृश्यते। सौक्ष्म्यादिति चेन्न। जीवस्य सूक्ष्मस्वात्मदर्शिनः सूक्ष्मदर्शनशक्तिसद्भावादित्याशयेन पुनः पृष्टे पिताऽवोचत्- **न्यग्रोधफलमित्यादि। अतो** वृक्षात्। **इति** उवाच पितेति शेषः। आहृत्य इदं न्यग्रोधफलमाहृतं **भगवो** भगवन्निति पुत्रः। 'मतुवसो रुः सम्बुद्धौ छन्दसि'। इदं फलं भिन्धीति पिता। तद्भित्वा भिन्नमिति पुत्रः। **अत्र** भिन्ने फले किं पश्यसीति पिता। अण्व्य इव सूक्ष्मा इमा **धाना** बीजानि पश्यामीति पुत्रः । अङ्ग **आसां** धानानां मध्ये एकां धानां भिन्धीति पिता। तां भित्त्वा भिन्नेति पुत्रः। **अत्र** भिन्नायां धानायां किं पश्यसीति पिता। किञ्चन न पश्यामीति पुत्रः। एवमुक्तवन्तं तमुवाच पिता। यमेतम् **अणिमानं** भावभवित्रोरभेदात् परमसूक्ष्मं परमात्मानं **न निभालयसे** न पश्यति। अस्याणिम्नः सामर्थ्याद् **एवं** परिदृश्यमानप्रकारेण महान् न्यग्रोधस्तिष्ठतीति।

अत्र वृक्षः प्रपञ्चः। फलं शरीरम्। धाना जीवाः। तत्र यथा सूक्ष्मे वटबीजे दृश्यमानेऽपि यत्प्रभावाद्वटावस्थानं स बीजान्तर्गतः परमात्मा परमसूक्ष्मत्वान्न दृश्यते तथा जीवादपि सूक्ष्मत्वात्तदन्तर्गत इत्युक्तं भवति॥ ५ ॥

**(र.टि.) एवं मानुषशरीरेऽपीति ॥** अनेन 'एवमेव खलु सोम्य विद्धि' इतिवाक्यशेषो व्याख्यातो भवति।

**(रा.टि.) पर्यनुयुक्तः** पृष्ट इत्यर्थः। मूलेऽपेक्षितपूर्वशेषमाह- **अस्य सोम्येति ॥ पुनः पुनर्भृशं वेति ॥** 'पा पाने' इत्यतो 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति क्रियासमभिहारशब्दितपौनःपुन्येऽर्थे यङि सति 'सन्यङोः' इति द्विर्वचने पेपीयमान इति रूपमिति भावः। **भृशमिति ॥** बहुलमित्यर्थः। तीव्रमिति वाऽर्थः। शङ्कानिरासायाभिप्रायमाह- **अनेनेदमुक्तम्भवतीति ॥** अत्यक्तदेहेनेति बहुव्रीहिः। मयेत्यस्य विशेषणम्। एवमेव सोम्य विद्धीति वाक्यशेषभावमाह- **एवमेव मानुषशरीरेऽपीति ॥** ईश्वरानुग्रहतदभावनिमित्त-सुखदुःखवत्त्वात्तदधीनत्वं जीवस्य ज्ञेयमित्यर्थः ॥ ४ ॥

तिष्ठतीत्यन्तमूलस्यार्थमाह- **अत इत्यादिना ॥** अत इत्यस्यार्थः- **वृक्षादिति ॥** इतिपदमनूद्य तत्र शेषमाह- **इत्युवाच पितेति शेष इति ॥ पुत्र इति ॥** उवाचेत्यनुषङ्गः। एवमग्रेऽप्यनुषङ्गो ध्येयः। ननु भगवन्निति वक्तव्यम्। कथं भगव इत्युक्तिरित्यत आह-

**मतुवसोरिति ।।** मतुपो वसुप्रत्ययस्य चान्त्यस्य रुर्भवति सम्बुद्धौ परत इति सूत्रेण तुइत्यस्य रुत्वे विसर्गे 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मकारस्य वकारादेशे भगव इति रूपमिति भावः । अण्व्य इवेत्यस्य सूक्ष्मा इत्यर्थः । धाना इत्यनुवादः, बीजानीति व्याख्या । शङ्कानिरासप्रकारं व्यनक्ति- **अत्र वृक्ष इत्यादिना** ।। ५ ।।

**(श्री.टि.) अवस्थानासम्भवादिति ।।** तथा चावस्थानस्यैवासम्भवे जीवन् स्रवेदित्यादिकं बाधितमेव स्यादिति भावः । **पुनः पुनर्भृशं वेति ।।** पेपीयमान इति यङन्तः शब्दः । यङ् च 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति सूत्रेण पौनःपुन्ये भृशापरपर्याये क्रियासमभिहारे स्मर्यते । अत इत्थं व्याख्यातमिति द्रष्टव्यम् । यथा **(श्री.टि.) वृक्षजीवस्येत्यादि ।।** तथा च जीवस्येश्वरानुग्रहप्रयुक्तसुखदुःखभाक्त्वात्तदधीनत्वमिति भावः । 'एवमेव खलु सोम्य विद्धीति होवाच' इति वाक्यं व्याख्याति- **एवं मानुषशरीरेऽपीति** ।। ४ ।।

**सद्भावादिति ।।** तथा च सूक्ष्मभूतः परमात्माऽपि जीवेन दृश्यतैवेति भावः । अनाहृत्याभित्त्वैवाहृतं भिन्नं भिन्नेति पुत्रेण न पितुः प्रतारणं कृतमिति सूचयितुमाहृत्य तद्भित्त्वा तां भित्त्वेत्युक्तमिति द्रष्टव्यम् ।

ननु भगवन्निति सम्बुद्धिः स्यान्न तु भगव इतीत्यत आह- **मतुवसो रुः सम्बुद्धौ छन्दसीति ।।** मत्वन्तस्य वस्वन्तस्य च रुः स्यात्सम्बुद्धौ परतः छन्दसि विषय इति सूत्रार्थः । अलोऽन्त्यपरिभाषया रुरित्यादेशः षष्ठीनिर्दिष्ट-स्यान्त्यस्यैव । तथा च भगशब्दान्मतुप्प्रत्यये उप्इत्यस्य लोपे 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति सूत्रेण मतुपो मकारस्य वकारे भगवदिति प्रातिपदिकनिष्पत्तौ सत्यां पश्चात्सम्बुद्धौ भगवत् सु इति स्थिते 'मतुवसोः' इति सूत्रेण तकारस्य रुरित्यादेशे भगवर् इति जाते तस्य विसर्गे सम्बुद्धौ सोर्लोपे भगव इति युक्तमिति भावः । नन्वणुशब्दात् 'पृथ्वादिभ्य इमनिज्वा' इति सूत्रेण पृथ्वादिगणेभ्यो भावे इमनिच्प्रत्ययविधानादस्यापि तद्गणस्थत्वेन भावे इमनिच्प्रत्यये पृथोर्भावः प्रथिमेतिवदणोर्भावोऽणिमेति भवति । तथा चाणिमानमणुत्वं न पश्यसीत्यसङ्गत-मित्यत आह- **भावभवित्रोरिति ।।** धर्मधर्मिणोरित्यर्थः । तथा चाणिमानमणुमित्यर्थमभिप्रेत्याऽह- **परमसूक्ष्म-मिति ।।** दार्ष्टान्तिके वृक्षफलधानास्थानीयान् दर्शयन् कथमनेनोक्तशङ्कापरिहार इत्यत आह- **अत्र वृक्ष इत्यादिना इत्युक्तम्भवतीत्यन्तेन । तत्र** एवं सति । तदन्तर्गत इत्यनन्तरं परमात्मा न दृश्यत इति वर्तते ।। ५ ।।

**(पां.टि.) पुनः पुनः भृशं वेति ।।** 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति पौनःपुन्यादौ यङ्स्मरणादिति भावः । 'एवमेव सोम्य विद्धि' इति वाक्यशेषं व्याचष्टे- **एवं मानुषेति ।।** ननु भगशब्दात् तदस्यास्तीत्यस्मिन्नर्थे मतुपि 'मादुपधायाः' इति मकारस्य वत्वे निष्पन्नभगवत्प्रातिपदिकस्य उगित्त्वेन 'उगि-दचाम्' इति नुमि 'हल्ङ्याब्' इति सम्बुद्धिहल्लोपे 'संयोगान्तस्य' इति तकारलोपे तस्यासिद्धत्वात् 'न लोपः' इति नलोपाभावे च, इति सिद्धभगवन्निति सम्बुद्ध्यन्तेन रूपेण भवितव्यम् । भगव इति तु कथमित्यतः, 'मतुवसो रुः सम्बुद्धौ छन्दसि' इति छन्दसि विषये सम्बुद्धौ परतो मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्यादेश-विधानात् सति तस्मिन्नुकारस्येत्सञ्ज्ञायां लोपे 'खरवसानयोः' इति रेफस्य विसर्जनीये च सति छन्दसि भगव इति सम्बुद्ध्यन्तरूपनिष्पत्तिरुपपन्नैवेति भावेन तत्सूत्रमेव पठति- **मतुवसोरिति ।।** ननु अणुशब्दाद्भावे इमनिचि तस्येष्ठवद्भावात् टिलोपे सति निष्पन्नाणिमशब्दस्य भगवद्धर्मप्रतिपादकत्वेऽपि भगवदप्रतिपादकत्वेन तदलाभात् तल्लाभार्थमेतमणुं न निभालयस इति वक्तव्यम्, अणिमानमिति तु कथमित्यतो धर्मधर्मिणोरभेदोपचारस्य बहुलमुपलब्धत्वाद्युक्तो धर्मवाचकेन पदेन धर्मिणो लाभ इति भावेनाऽह-**भावेति ।।**

**(व्या.टि.)** 'स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम्' इति सामसंहिताऽनुरोधेन चतुर्थप्रकरणमनुकरोति- **अस्त्वीश्वर इति ।। पर्यनुयुक्तः** पृष्टः । यदीति हन्तुर्लिङर्थयोगे पाक्षिकत्वप्रदर्शनम् । यद्वक्ष्यति कदाचिदिति । **(व्या.टि.)** स्वतः प्राणधारणाभावेन जीवत्वासम्भवाद्व्याचष्टे- **जीवेन परमेश्वरेणेति ।।** अत एव तैत्तिरीये 'जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पताम् । अस्मिन् लोके शतं समाः' इति स्वस्य शतसंवत्सर-जीवनायान्तर्यामिजीवश्रीः प्रार्थ्यते । स्मरंस्त्यजतीतिवज्जीवन् स्रवेदिति कालोपलक्षणार्थमित्याशयेनाह- **तदा स्रवेदिति ।।** एवं स्वतोऽन्यं जीवनियन्तारं दृष्टान्तेन विज्ञाप्य तात्पर्यज्ञापनाय पुनराहेत्याह- **एवमिति ।। प्रकृते-नेति ।।** 'अनेन जीवेनाऽत्मना' इति नामरूपसृष्टौ प्रकृतेनेत्यर्थः । पेपीयमान इति यङन्तस्यार्थमाह- **पुनः पुनरिति ।।** प्रकरणरहस्यमाह- **यथा वृक्षजीवस्येति ।।**

'ज्ञायते न कथं स्वस्मिन् सूक्ष्मे ज्ञाते परो हरिः ।
तत्रस्थ इति पृष्टः सन् तमाहोद्दालकः सुतम् ।।'

इत्युक्तदिशा प्रश्नाभिप्रायं वदन् पञ्चमप्रकरणमवतारयति- **एवमित्यादिना ॥ सूक्ष्मस्वात्मेति ॥**

'बालाग्रशतभागस्य शतधा कल्पितस्य च ।
तच्छतांशसमो भागो जीवः ॥'

इति वचसा बालाग्रशतभागशतभागत्वेनातिसूक्ष्मस्वरूपेत्यर्थः । **मतुवसोरिति ॥** मत्वन्तस्य वस्वन्तस्य च रुः स्यात्, अलोन्त्यपरिभाषया तकारस्येत्यर्थः । प्रैषादिकर्तुरेव वचनादिकर्तृत्वभ्रमं वारयितुं यथायोगं शेषान् पूरयति- **उवाच पितेत्यादिना ॥**

आसामिति निर्धारणे षष्ठीत्यभिप्रेत्याऽह - **मध्य इति ॥** नन्विमनिचो भावप्रत्ययत्वाद्भवितरि तद्वैयर्थ्यमित्यत आह- **भावभवित्रोरिति ॥** 'यो वै भूमा तत्सुखम्' इत्यादिवदिति भावः । उत्तरग्रन्थानुरोधेन व्याचष्टे- **परमात्मानमिति ॥** अत्रोपमानसमानस्थानापन्नान्युपमेयानि दर्शयति- **अत्रेत्यादिना ॥** नन्विदं व्याख्यानं छान्दोग्यभाष्यविरुद्धम् । तत्र 'वटबीजे यथा सूक्ष्मे महान्यग्रोधभावयुक् । न दृश्यतेऽभिमानी स एवं जीवगतो हरिः' इति जीवगतहर्यदर्शने बीजगताभिमानिनोऽदर्शनं निदर्शितमिति भाति । अत्रैव पूर्वत्र 'शुङ्गमुत्पतितम्' इति श्रुतिव्याख्यानावसरे-

'शुङ्गमित्यङ्कुरं प्रोक्तं तन्मूलं भगवान् हरिः ।
जगतो मूलमप्येषो निमित्तं न विकारवान् ।
बीजजीवो यथा मूलमङ्कुरस्याविकारतः ॥'

इति बीजजीवस्यैवाङ्कुरजनकतया प्रस्तुतत्वात्, सम्भवति च यथा बीजात्सूक्ष्मादर्शनेऽपि न बीजजीवासत्त्वम् । तदसत्त्वे वृक्षजन्मविरोधात् । तथा न जीवान्तर्गतादर्शनेऽपि तदसत्त्वमिति निदर्शयितुम् । तथैव व्याख्यातं व्यासतीर्थैः । अत्र चाणिमशब्देन पर एवाभिहित इत्यवधारयताऽर्थान्तरं व्यवच्छिन्नमिति कथं न विरोध इत्यतोऽस्याभिप्रायमाह- **तत्र यथेत्यादिना ॥ यत्प्रभावादिति, वटावस्थानमिति च ॥**

**(व्या.टि.)** अयं भावः । यद्यप्यभिमानी जीवः परमसूक्ष्मो न दृश्यत इति युक्तं तद्ग्रहणम् । तथाऽपि 'स एषोऽणिमैतदात्म्यम्' इति पूर्ववाक्ये परमात्मनस्तच्छब्देन प्रस्तुतत्वादणुशब्दस्य 'अणोरणीयान्' इति 'सूक्ष्मं तु तदर्हत्वात्' इति श्रुतिसूत्राभ्यां तत्रैव मुख्यत्वाच स एव ग्राह्यः । किञ्च नात्र वृक्षोत्पत्तिः श्रूयते । किन्तु महान्यग्रोधस्तिष्ठतीत्यवस्थानम् । बीजजीवस्याङ्कुरजनिहेतुता नास्ति । पूर्वप्रकरणे सत्यपि बीजजीवेऽनिष्टशोष-दोषोक्तेः । परमात्मनश्च 'प्रकृतैतावत्त्वं हि प्रतिषेधति' इति सूत्रदिशा 'जगद्रक्षा केवलोद्योगिनः' इति स्वोक्त्या च 'तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्' इति स्मृत्या च पालकत्वोक्तेः । अतोऽत्राणिमशब्देन पर एवाभिप्रेतः । छान्दोग्यभाष्यन्तु सम्भवाभिप्रायम् । इहत्यावधारणं तु तात्पर्यत इति संयोज्य 'यतोऽवधारणं ततोऽन्यत्र व्यवच्छेदः' इति न्यायेन तद्द्वयवच्छेदकं नाभिधानव्यवच्छेदकमिति रहस्यम् । अत एवोत्तरत्र छान्दोग्य-भाष्ये परापव्याख्यादूषणे दृष्टान्तसङ्ग्रहे 'वृक्षपरमात्मनोर्धानापरमात्मनोः' इत्येवोपसंहृतम् । न तु 'वृक्षजीव-योर्धानाजीवयोः' इतीति सर्वं सुस्थम् । अत्र पक्षे 'आद्गुणः यथा गङ्गोदकम्' इत्यादिवद्यथाशब्द उदाहरणार्थो न निदर्शनार्थः । तथाशब्दः समुच्चय इत्यवधेयम् ।

**मूलम् - लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति । तद्ध तथा चकार । तं होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति । तद्धावमृश्य न विवेद । यथा विलीनमेवाङ्ग अस्यान्तादाचामेति । कथमिति । लवणमिति । मध्यादाचामेति । कथमिति । लवणमिति । अन्त्यादाचामेति । कथमिति । लवणमिति । अभिप्रास्यैतदथ मोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत्संवर्तते । तं होवाच अत्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ ६ ॥ यथा सोम्य पुरुषं गन्धारेभ्योऽभि-नद्धाक्षमानीय तं ततोऽतिजने विसृजेत् ॥ ७ ॥**

**टीका -** ननु वटावस्थानादिना कार्येणेश्वरसामर्थ्यं तावत्प्रत्यक्षमिव दृश्यते, एवं तत्सामर्थ्ये दृश्यमानेऽपि तस्यादर्शनमित्येतत्कथमहं जानीयामिति प्रार्थितः प्रोवाच पिता- लवणमि-त्यादि । **अवधाय** निक्षिप्य । तत्तथा चकार पुत्रो यद्यथा पित्रोक्तम् । स ह तथा चकारेति क्वचित् पाठः । स सदृशशाखान्तरगतो ज्ञातव्यः । एवमन्यत्रापि

। तं होवाच, पिता । **दोषा** रात्रौ । **अवधा** अवाधाः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति स्मरणात् । **तत्** लवणम् उदके हस्तेनावमृश्य न विवेद पुत्रः । यथा **विलीनम्** एवात्यन्तविनष्टं वस्तु न विन्दति तथा । अङ्ग **अस्य** उदकस्य **अन्तात्** पूर्वदिगवस्थितादवयवाद् उद्धृत्य एकदेशम् आचाम इति पिता । आचान्तवन्तं कथं तिष्ठतीति पप्रच्छ पिता । **लवणं** लवणरसोपेतमित्याह पुत्रः । एवं मध्याद् **अन्त्यात्** पश्चिमदिगवस्थिताच्च । **एतद्** उदकम् **अभिप्रास्य** निरस्याथ मामुपसीदथा इति पिता । तद्ध तथा चकार पुत्रः । **तत्** लवणं शश्वदुदक एव संवर्तते न तु अपगतमिति श्रुतेः स्ववाक्यम् । तद्ध तथा चकारेति वाक्यं **शश्वत्** अङ्ग तदाहरेत्याद्यनन्तरं **संवर्तते** अनुवर्तनीयमिति वा । तं होवाच, पिता । अत्रैव किलेति पुनर्वचन-मादरार्थम् । अनेन यथा लवणगुणे दृश्यमानेऽपि न लवणं दृश्यते तथा सामर्थ्ये दृश्यमानेऽपि न भगवानित्युक्तं भवति ॥ ६ ॥

एवम्भूतो हरिरविद्यापटलपिहितनयनेनानेन कथं दृश्यते प्राप्यते चेति जिज्ञासायामाह पिता -यथा सोम्य पुरुषमित्यादि ॥ विसृजेदित्यतः परं वाक्यं 'स यथा तत्र प्राङ्वोदङ्वाधराङ्वा प्राध्मायीताभिनद्धाक्ष आनीतो अभिनद्धाक्षो विसृष्टः । तस्य यथाभिनहनं प्रमुच्य ब्रूयाद् एतां दिशं गन्धारा एतां दिशं प्रव्रजेति । स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्यते एवमेवेहाऽचार्यवान् पुरुषो वेद' इति ।

**पुरुषं** धनिकं गन्धारसञ्ज्ञि(ज्ञ)केभ्यो जनपदेभ्यः **अभिनद्धाक्षम्** अक्षिणी बद्ध्वेति यावत् । **ततो**ऽनन्तरम् **अतिजने** जनरहितेऽरण्ये विसृजेच्चोरः । स विसृष्टः प्राङ्वेति सर्वदिगभिमुखं **प्राध्यायीत** उच्चैश्शब्दं कुर्यात् । किमिति? अभिनद्धाक्ष इत्यादि । अस्मीति शेषः । यथा सम्यक्तद्वाक्यं श्रुत्वा कश्चित्कृपावान् प्रब्रूयाद्- **एतां दिशम्** अस्यां दिशि गन्धाराः सन्ति । 'व्यत्ययो बहुलम्' इति स्मरणात् । स तेनोपदिष्टाद्ग्रामान्निर्गत्य अपरं ग्रामं पृच्छन् । **पण्डितः** प्राज्ञः **मेधावी** स्मृतिमान् ।

**एवमेवेति ॥** अनाद्यविद्यादिभिः आच्छादितनिजज्ञानो जीवः संसारे पतितः परमेश्वरानु-ग्रहाज्जातजिज्ञासो गुरूपदेशं लब्ध्वा क्रमापन्नानि श्रवणादीनि साधनान्यनुष्ठाय स्वजन्मभूमिं भगवन्तं पश्यति प्राप्नोति चेत्युक्तं भवति ॥ ७ ॥

**(र.टि.) अक्षिणी बद्ध्वेति यावदिति ॥** अक्षिबन्धनं चोरकर्तृकं न तु तदन्यकर्तृकं पूर्वसिद्धमिति भावः । **व्यत्यय इति ॥** तथा चैतां दिशमिति द्वितीयोपपद्यत इति भावः । एवमेवेत्युक्त्या अभिनद्धाक्षत्वं जीवे दर्शयति- **अनादीति ॥** संसारस्यारण्यप्रतिनिधित्वम् । प्राध्मायीतेत्युक्तप्रतिनिधिवचनम्- **जातजिज्ञास इति ॥** स ग्रामादित्यादिनोक्तस्य प्रतिनिधिकथनम्- **क्रमापन्नानीत्यादि ॥** गन्धारानेवेत्यस्य दार्ष्टान्तिककथनम्- **जन्मभूमिमिति ॥ पश्यति प्राप्नोति चेति ॥** उपपूर्वकपद्यतेर्विदश्च ज्ञानप्राप्तिरूपोभयार्थत्वादिति भावः ।

**(रा.टि.) लवणमिति ॥** लवणखण्डमित्यर्थः । मूले मा इत्यस्य मामित्यर्थः । प्रातर्मत्समीपमायाहीत्यर्थः । तद्ध तथा चकारेत्यत्राऽकाङ्क्षितं पूरयति- **यद्यथा पित्रोक्तमिति ॥ क्वचित्पाठ इति ॥** तद्धेत्यस्य स्थाने स हेति मूलकोशे क्वचित्पाठ इत्यर्थः । **एवमन्यत्रापीति ॥** सूत्रभाष्यादावित्यर्थः । 'अत एव प्राणः' इत्यत्र 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति वक्तव्ये श्रीश्च ते लक्ष्मीश्चेति पाठः । तथा दहरनये 'धृतेश्च' इति सूत्रे स सेतुर्विधृतिरिति वक्तव्येऽप्येष सेतुर्विधरण इति पाठः । तथा 'पत्यादिशब्देभ्यः' इत्यत्र 'सर्वस्य वशी सर्वस्येशानः' इति वाच्येऽपि सर्वस्याधिपतिः सर्वस्येशान इति पाठ इत्यादिरिति भावः । अडभावश्छान्दस इति भावेनाऽह- **अवधाः अवाधा इति ॥** तत्र सूत्रं पठति- **बहुलमिति ॥** 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति लुङि परतो धातोरडागमो भवतीत्युक्तस्य 'न माङ्योगे' लुङि परतो धातोरडागमो न भवतीत्युक्त्वा छन्दोविषये माङ्योगाभावेऽपि अडागमनिषेधो बहुलं भवतीत्युक्तेः कचिदडागमेऽपीह तदभाव इति भावः । तच्छश्वत्संवर्तत इत्यस्यार्थमाह- **तल्लवणमिति ॥** पितापुत्रयोर्मध्ये को वा एवं वक्तीत्यतो नानयोरन्यतर एवं वक्ति किन्तु पितापुत्रसंवादानुवादपरेयं श्रुतिरेवैवं वक्तीति भावेनाऽह- **इति श्रुतेः स्ववाक्यमिति ॥** तद्ध तथा चकारेतिश्रुतिवाक्यस्य श्रुत्यभिप्रेतमर्थान्तरमाह- **इति वाक्यमिति ॥** तदित्यस्यार्थोऽयम् । शश्वदित्यनुवादः, तस्यार्थोऽङ्गेत्याद्यनन्तरमिति । अन्तादाचामे-त्यादिरादिपदार्थः । शङ्कानिरासप्रकारमाह- **अनेन यथेत्यादि** ॥ ६ ॥

**अविद्येति ॥** अविद्यैव **पटलमावरणभूतं** वस्तु तेन पिहितं नयनमिव **नयनं** मनो निजज्ञानं वा यस्य तेने-त्यर्थः । अनेनेति विशेष्यम्, अधिकारिजीवेनेत्यर्थः । समग्रश्रुतिवाक्यस्यार्थमाह- **पुरुषमित्यादिना ॥** प्रागेव बद्धाक्षमिति धीनिरासायोक्तम्- **अक्षिणी बद्ध्वेति यावदिति ॥** स यथेत्यत्र तच्छब्दार्थः चोरविसृष्ट इति । 'ध्मा शब्दाग्निसंयोगयोः' इति धातुपाठादाह- **उच्चैः शब्दं कुर्यादिति ॥** 'यथा सम्यक्तद्वाक्यं श्रुत्वा कश्चित्कृपा-वान्' इत्यत्र यथेत्यस्य एवमेवेति वक्ष्यमाणेनान्वयः । सम्यगित्यादि तु श्रुतौ शेषोक्तिः । श्रुतौ तस्येत्यस्याभिनहनं प्रमुच्येत्यन्वयः । कथमनेनोक्तशङ्कानिरास इत्यत एवमेवेत्यादिवाक्यतात्पर्योक्त्या शङ्कानिरासप्रकारमाह- **अनाद्यविद्यादिभिरिति ॥** कामकर्मादिरादिपदार्थः । अनेनाभिनद्धसादृश्यमुक्तम् । अतिजन इत्यादितौल्य-मुक्तम्- **संसारे पतित इति ॥** एवमग्रेऽपि **॥ श्रवणादीनीति ॥** मनननिदिध्यासनादिरादिपदार्थः । एतच्च ग्रामाद् ग्रामं गच्छन्नित्यादेस्साम्यप्रदर्शनम् । वेदेत्यस्योपलक्षणत्वं वाऽर्थद्वयं वाऽभिप्रेत्य उक्तम्- **पश्यति प्राप्नोति चेति** ॥ ७ ॥

**(श्री.टि.) प्रत्यक्षमिवेति ॥** न मुख्यतः प्रत्यक्षमितीवशब्दः । **एवमन्यत्रापीति ॥** 'यत्ततोऽन्यद्विभक्तत्वेनैव पश्येत्' इति वाक्यशेषादित्यादावित्यर्थः । **दोषा रात्राविति ॥** ननु श्रुतौ दोषायामित्यश्रवणाद्रात्राविति कथं सप्तम्यन्ततया व्याख्यानं कृतमिति चेदुच्यते । दोषेत्यपि सप्तम्येकवचनमेव । दोषा ङि स्थिते ङकारलोपे दोषा इ इति जाते 'सुपां सु लुक्' इति आकारादेशे पूर्वसवर्णदीर्घे दोषेत्येव भवति । तथा च रात्राविति व्याख्यानं युक्तमिति द्रष्टव्यम् । नन्ववेत्युपसर्गपूर्वकाद् धा धातोः 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' एषु परेषु अङ्गस्याडागमः **(श्री.टि.)** स्यादिति सूत्रेण लुङ्यडागमे टित्त्वादादौ जाते अवाधा इति स्यात्, न त्ववधा इतीत्यत आह- **बहुलं छन्दसीति ॥** छन्दस्यडागमो विकल्पेन भवतीत्यर्थः । एवं चात्राडागमो न जात इति भावः । नन्वडभावोऽपि न सम्भवति । तथा हि 'न माङ्योगे' माङ्योगे अट् न स्यादिति माङ्योगे एवाटो निषिद्धत्वात् । मैवं वादीः, मा हि भूदित्यादिप्रयोगदर्शनात् । प्रकृते माङ्योगाभावात् कथमडभाव इत्यत उक्तम्- **अमाङ्योगेऽपीति ॥** छन्दसि माङ्योगाभावेऽपि क्वचिदडागमो न भवतीत्यर्थः । एवं च प्रकृते माङ्योगाभावेऽप्यडागमाभावः छन्दस्त्वादुपपद्यते । अतोऽवधा इत्युपपन्नमिति भावः । **अवयवाद्** एकदेशात् । **एकदेशं** स्वल्पं जलम् । **आचान्त-वन्तम्** आचमनं कृतवन्तम् । **संवर्तत इति ॥** कार्यात्मना नाशेऽपि कारणात्मना सम्यग्वर्तत इत्यर्थः । इत्याद्य-नन्तरमित्यादिपदेनान्तादाचामेति मध्यादाचामेति अन्त्यादाचामेतीति वाक्यत्रयं ग्राह्यम् । **इति वेति ॥** तच्छ-श्वत्संवर्तत इति वाक्यस्यार्थ इत्यर्थः । कथमनेनोक्तशङ्कापरिहार इत्यत आह- **अनेनेति ॥ भगवानिति ॥** न दृश्यत इत्यर्थः ॥ ६ ॥

ननु धनिकपुरुषस्याभिनद्धाक्षमिति भूतार्थकक्तप्रत्ययान्तं विशेषणमुक्तम् । तेन चोरैरानयनात्पूर्वमेव तस्याक्षि-बन्धनमन्येन कृतमभूदित्यक्षिबन्धनस्यान्यकर्तृकत्वं प्रतीयते, अन्यथाऽभिनद्धाक्षमित्यनुवादायोगादिति प्रतीतिपरिहाराय क्तप्रत्ययस्य वर्तमानार्थत्वमभिप्रेत्याक्षिबन्धनस्य चोरकर्तृकत्वज्ञापनाय व्याचष्टे- **अक्षिणी बद्ध्वेति यावदिति ॥** नायमक्षिबन्धनानुवादः किन्तु तद्विधिरेवेत्यर्थः । एवं सत्यक्षिबन्धनानयनयोरुभयोरपि चोरकर्तृकत्वेन समानकर्तृकत्वाद् बद्ध्वेति क्त्वाप्रत्ययोपपत्तिरिति भावः । **उच्चैः शब्दमिति ॥** 'ध्मा शब्दाग्नि-संयोगयोः' इति धातोरिति भावः । एतां दिशमिति द्वितीया सप्तम्यन्तत्वेन व्याख्याता । तत्र किं नियामकमित्यत आह- **व्यत्यय इति ॥** बहुलं विभक्तीनां व्यत्ययो भवतीति सूत्रार्थः । **स्मृतिमानिति ॥** दिग्विशेषावस्थित-गन्धारदेशप्राप्तिहेतुतदुपदिष्टमार्गस्मृतिमानित्यर्थः । तद्विस्मृतौ गन्धारोपसम्पत्त्ययोगादिति भावः । दार्ष्टान्तिके जीवेऽभिनद्धाक्षत्वं दर्शयितुमनाद्यविद्यादिभिराच्छादितनिजज्ञान इत्युक्तम् । संसारेत्यरण्यप्रतिनिधिवचनम् । प्राध्मायीतेत्युक्तस्य तात्पर्यतः प्रतिनिधिवचनम्- **जातजिज्ञास इति ॥** स ग्रामादित्यादिनोक्तस्य प्रतिनिधि-वचनम्- **क्रमापन्नानीति ॥** क्रमप्राप्तानीत्यर्थः । गन्धारानेवेत्यस्य दार्ष्टान्तिकम्- **जन्मभूमिमिति ॥** स्वरूपा-विर्भावेनावस्थानभूतमित्यर्थः । उपसम्पद्यत इत्यस्य प्रतिनिधितया दार्ष्टान्तिके उक्तस्य पुरुषो वेदेत्यस्यार्थः- **पश्यति प्राप्नोति चेति ॥** उपपूर्वकस्य पद्यतेर्ज्ञानप्राप्तिरूपोभयार्थत्वात् पुरुषो वेदेत्युक्तविदेरपि वेदनलाभोभ-यार्थकत्वादिति भावः ॥ ७ ॥

**(पां.टि.)** ननु 'न माङ्योगे' इति माङ्योगेऽडागमनिषेधेऽपि तदयोगे तदनिषेधात् 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अवाधा इति भवितव्यम् । अवधा इति तु कथमित्यतः 'बहुलं छन्दसि' इति सूत्रे अमाङ्योगेऽपि छन्दस्यटो बाहुलकत्वोक्त्या वैकल्पिकत्वेन नित्यत्वाभावाद्युक्तोऽत्राडागमाभाव इ ति भावेनाऽह- **बहुल-मिति ॥ श्रुतेस्स्ववाक्यमिति ॥** न तु पित्रादिवाक्यमित्यर्थः । उक्तयोजनायां पितृपुत्रसन्दर्भमध्यनिवेशानुपपत्तिं **(पां.टि.)** मनसि निधाय प्रकारान्तरेण योजनामाह- **तद्धेति ॥ आदरार्थमिति ॥** ततश्च 'अत्र वाव किल सोम्य' इत्यनेन न पुनरुक्तिरिति भावः । अक्षिबन्धनस्य चोरकर्तृकत्वेन पूर्वमसत्त्वेनाभिनद्धाक्षस्यानानयनात् कथं तथाऽनुवाद इत्यतः तदभिप्रायमाह- **अक्षिणी बद्ध्वेति यावदिति ॥** ननु एतां दिशमिति द्वितीयायाः कथमस्यां दिशीति

सप्तम्यर्थतया व्याख्यानमित्यत आह- **व्यत्यय इति ॥** अत्र सूत्रे 'छन्दसि शायजपि' इति पूर्वसूत्रात् छन्दस्यपीत्यस्यानुवृत्तेः छन्दसि व्यत्ययो भवति अपिशब्दाद्यथाप्राप्तश्चेत्येतावतैवेष्टसिद्ध्या बहुल-ग्रहणानर्थक्यमाशङ्क्य 'बहुलग्रहणं सर्वविधिव्यभिचारार्थम्' इति वृत्तौ प्रकृताप्रकृतसर्वविधिव्यत्ययलक्षणव्यभि-चारार्थत्वं बह्वर्थादानप्रवृत्तिनिमित्तकबहुलग्रहणस्य प्रदर्श्य तत्सङ्ग्राह्यप्रदर्शनपरतया उदाहृते 'सुप्तिङुपग्रहलिङ्ग-नराणाम्' इत्यादिश्लोके सुप्शब्देन विभक्तिव्यत्ययस्यापि सङ्ग्रहात् सप्तम्यर्थे द्वितीयाया द्वितीयार्थे सप्तम्याश्च विधानसिद्ध्या युक्तं द्वितीयायाः सप्तम्यर्थतया छन्दसि व्याख्यानमिति भावः । ननूपसम्पद्यत इति प्राप्तिमात्रस्य श्रवणात् कथमनेन प्राप्यते दृश्यते च इति शङ्काद्वयपरिहार इत्यत **उपसम्पद्यत** इति परिहारवाक्यं दर्शन-प्राप्त्युभयपरतया व्याचष्टे- **पश्यति प्राप्नोति चेत्यादि ॥**

**(व्या.टि.)** 'कथं दृश्येत तच्छक्तिः पृथक्तस्य ह्यदर्शने ।
इति भावयितुं प्राह पुत्रमुद्दालकः पुनः ॥'

इति छान्दोग्यभाष्यदिशा षष्ठप्रकरणमवतारयति- **ननु चेति ॥** तद्ध तथेति पाठे साकाङ्क्षत्वाच्छेषं पूरयति- **यद्यथेति ॥ एवमन्यत्रापीति ॥** 'तानि वा एतान्यवराणि तपाꣳसि' इति गीतातात्पर्यादावित्यर्थः । **स्मरणा-दिति ॥** अडभाव इति शेषः । अजनिष्ठा इत्यत्राडभावे 'जनिष्ठा उग्रः सहसेतुराय' इत्युदाहरणादिति भावः । **न विवेद** न लेभे । **आचामेति ॥** 'ष्ठिवुक्लमुचमां शिति' इति सूत्रे 'आङि चम इति वक्तव्यम्' इति वार्तिकाद् दीर्घ इति भावः । **उपसीदथा इति ॥** उपग्रहव्यत्ययः । यथोक्तं महाभाष्ये 'सुप्तिङुपग्रहलिङ्गनराणाम्' इत्यादि ।

'यथाऽप्सु लवणं व्याप्तं रसदृष्ट्यैव दृश्यते ।
एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते ॥'

इति तद्भाष्योक्तभावमाह- **अनेनेति ॥** 'कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत्' इति भाष्यानुसारेण सप्तममवतारयति- **एवंविधो हरिरित्यादिना ॥ पटलं** जवनिका । अभिनद्धाक्षमिति व्याचष्टे- **अक्षिणी बद्ध्वेति ॥** अनेन 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्तः षच्प्रत्यय इत्युक्तं भवति । **उच्चैः शब्दमिति ॥** 'ध्मा शब्दे' इति धातोः सम्भावनायां लिङिति भावः । **कृपावानिति ॥** अत्रादुपधत्वाभावात् कथं वत्वमिति न शङ्क्यम् । 'मादुपधायाश्च' इत्यस्य 'मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च' इति व्याख्या-नात् । अभिनहनप्रमोचनेन कृपा ज्ञायत इति भावः । नन्वधिकरणे कथं द्वितीयेत्यत आह- **व्यत्यय इति ॥ निर्गत्येति ॥** गमनक्रियापादानत्वाद् ग्रामशब्दे पञ्चमीति भावः । **मेधावीति ॥** 'अस्मायामेधास्रजो विनिः' इति मत्वर्थीयो विनिरिति भावः ।

**(व्या.टि.)** 'यथैवान्योपदेशेन बद्धाक्षः स्वगृहं व्रजेत् ।
तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत्पुमान् ॥'

इति तद्भाष्यानुरोधेनैवमेवेति प्रतिवचनं व्याचष्टे- **अनाद्यविद्येति ॥** 'अनादिमायया सुप्तः' इति श्रुतेरिति भावः। आदिपदेन कामादिकम् 'तथा तेनेदमावृतम्' इत्युक्तेः । **परमेश्वरानुग्रहादिति ॥** 'परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत्' इति अतो जिज्ञासेति सूत्रखण्डव्याख्यानादिति भावः । **क्रमापन्नानीति ॥** 'श्रुत्वा मत्वा तथा ध्यात्वा' इति श्रौतक्रमापन्नानीत्यर्थः । **जन्मभूमिमिति ॥** 'यो नः पिता' इति श्रुतेरिति भावः ।

**मूलम्- ''अथ यदाऽस्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावन्न जानाति ॥ ८ ॥ पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते । सोऽनृताभिसन्धोऽनृतेनाऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यतेऽथ हन्यते । अथ स यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनाऽत्मानमन्तर्धाय परशुं तप्तं प्रति गृह्णाति । स न दह्यतेऽथ मुच्यते ॥ ९ ॥ एवमेव खलु सोम्य आचार्यवान् पुरुषो वेद'' इति स्थाननवकेऽपि भेद एव दृष्टान्ताभि-धानात् ॥**

**टीका -** अवगतं वृक्षशरीरे भगवदधीनत्वं जीवस्य। मानुषशरीर एव तज्ज्ञापयेत्यर्थितः पितोवाच- 'पुरुषं सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति। तस्य यावन्न वाङ् मनसि सम्पद्यते मनः प्राणे प्राणः तेजसि तेजः परस्यां देवतायां तावज्जानाति अथ यदाऽस्य' इत्यादि। **उपतापिनं** रोगिणम्। **पर्युपासते** परित उपविशन्ति। **इति** वदन्तः। **सम्पद्यते** ग्रस्त-व्यापारो भवति॥ ८॥

एवं सर्वप्रेरकं महानुभावं भगवन्तं योऽत्यन्तभेदेन जानाति यश्च स एवाहमस्मीति, तयोः कीदृशं फलं भवतीति जिज्ञासायामाह पिता- **पुरुषं सोम्येत्यादि॥** राजद्रव्येऽपगते सति शङ्काऽस्पदं पुरुषमानयन्ति राजभटाः, अयमपहार्षीत् स्तेयमकार्षीत्। पश्यतोहरत्वमपहारः,अन्यत् स्तेयम्। **इति** वदन्त इति शेषः। ततस्तेन नेदं मया कृतमित्युक्ते भटान् प्रति राजा वक्ति। परशुम् **अस्मै** अस्य परीक्षार्थम्। **स** गृहीतो यदि **तस्या**पहारादेः कर्ता भवति। अथ च नेति ब्रूते। अनृते अभिसन्धा अभिसन्धिरस्येति तथोक्तः। **अन्तर्धाय** आच्छाद्य। एवमेव खलु सोम्याऽचार्यवानिति वाक्यं स्थानान्तरस्थमपीदं सर्वत्र सम्बध्यत इति ज्ञापयितुमन्ते पठितम्॥ ९॥

**(रा.टि.)** अथ यदेत्यादिवाक्यस्य पूर्वशेषमाह- **पुरुषं सोम्येति॥** जानासि मामितीत्यत्रेतिपदमनूद्य शेषमाह- **इति वदन्त इति॥** पर्युपासत इति पूर्वेणान्वयः। वाचो मनसि सम्पत्तिर्नाम किमित्यत आह- **ग्रस्तेति॥** एवमग्रेऽपीति भावः। अत्र परदेवतया यावद् ग्रस्तकरणो न भवति तावज्जानाति। अन्यथा तु न जानातीति स्पष्टमेव भगवदधीनत्वं मानुषदेहेऽपीति भावः॥ ८॥

अस्मीत्यनन्तरं जानातीत्यनुषज्यते। इति वदन्त इत्यस्याऽनयन्तीति पूर्वेणान्वयः। तत इति स्ववचनं राजसमीप आनयनानन्तरमिति तस्यार्थः। **स्तेनेनेति॥** इतराज्ञेयतया परकीयवस्त्वपहर्त्रा चोरेणेत्यर्थः। अस्मा इत्यस्यार्थः- **अस्य परीक्षार्थमिति॥** स इत्यनुवादः गृहीत इति व्याख्या। तस्येत्यस्यार्थः- **अपहारादेरिति॥** स्तेयमादिपदार्थः। **अभिसन्धिर**भिप्रायः। **स्थानान्तरेति॥** गान्धारवाक्यगतम्। **सर्वत्र** खण्डनवकेऽपी-त्यर्थः। एतेन स्थाननवकेऽपि दृष्टान्तमात्रोक्तेर्दार्ष्टान्तिकोक्तिर्नेति शङ्का परास्ता॥ ९॥

**(श्री.टि.) अन्यत्स्तेयमिति॥** परोक्षतो हरणं स्तेयमित्यर्थः। ननु 'यथा सोम्य पुरुषं गन्धारेभ्यः' इति प्रकरणस्थम् 'एवमेवेहाऽचार्यवान्पुरुषो वेद' इति वाक्यं पुरुषं सोम्योतेत्यन्तिमे प्रकरणे कस्मात्पठितमित्यत आह- **स्थानान्तरस्थमपीति॥ सर्वत्र सम्बध्यत इति॥** पुरुषं सोम्योपतापिनमिति खण्डे एवं मानुषशरीरे भगवदधीनत्वं य आचार्यवान् पुरुषः स एव तदुपदेशेन वेदेति शकुनिसूत्रखण्डे सम्बध्यते। तथा पुरुषं सोम्योतेति खण्डेऽपि य आचार्यवान् पुरुषः स एवैवं चोरापहार्यदृष्टान्तेनैक्यज्ञानिनोऽनर्थो भेदज्ञानिनो मोक्ष इति प्रमेयं वेदेति दार्ष्टान्तिकपूरकतया सम्बध्यते। एषु च खण्डषट्केषु सन्मूला इति खण्डे एवमेव खलु सोम्यैतन्मन इति, यथा सोम्य मध्विति खण्डे एवमेव खलु सोम्येमाः सर्वाः प्रजास्सति सम्पद्येति, इमास्सोम्येति खण्डे एवमेव खलु सोम्येमाः सर्वाः प्रजास्सत आगम्येति, अस्य सोम्य महतो वृक्षस्येति खण्डे एवमेव खलु सोम्य विद्धीति होवाचेति, न्यग्रोधफलमिति खण्डे तं ह पितोवाच यं वै सोम्यैतमिति, लवणमेतदिति खण्डे तं होवाचात्र वाव किल तत्सोम्येति दार्ष्टान्तिकवाक्यानि सन्ति। तेष्वपीदं वाक्यमेवैतत्खण्डोक्तं प्रमेयमाचार्यवानेव पुरुषः, तदुपदेशादिति यावत्, वेद नान्यथेत्येवं तत्तत्खण्डोक्तप्रमेयस्य दौर्लभ्यज्ञापनाय सम्बध्यत इत्यर्थः॥ ९॥

**(पां.टि.) अपहार्षीदिति॥** 'बहुलं छन्दस्यमाङ्योगेऽपि' इति स्मरणात् श्रुतौ अमाङ्योगेऽपि अडभाव इति भावः। **पश्यतोहरत्वमिति॥** ततश्च न स्तेयमकार्षीदित्यनेन पौनरुक्त्यमिति भावः।

**(व्या.टि.)** 'यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान्' इति तद्भाष्यदिशाऽष्टमप्रकरणमवतारयति- **अवगतमित्यादिना॥** वदन्त इति शेषोक्तिः। 'इत्युक्त आह ज्ञाने हि दृष्टैवास्यास्वतन्त्रता' इति तदुक्ताशयं **(व्या.टि.)** स्फोरयितुं व्याख्याति- **ग्रस्तव्यापार इति॥** ज्ञानास्वातन्त्र्ये च तद्दृष्टान्तेन 'उपलब्धिवदनियमः' इति सूत्रदिशा कर्मण्यप्यस्वातन्त्र्यमनुमातव्यमिति भावः। 'अभेदज्ञानिनो दोषः कीदृशः स्यादितीरितः' इति तदुक्तप्रश्नाभिसन्धिमनुसन्धायाऽह- **एवमित्यादिना॥ पश्यतोहरत्वमिति॥** 'वाक्दिक्पश्यद्भ्यो युक्ति-दण्डहरेष्वलुग्वाच्यः' इत्यलुक्समासः। अत्र यद्यपि मूले स्तेनस्तेययोरपहार्यापहारिणोरित्यादि प्रयोक्तव्यम्। उपधेयसङ्करेऽप्युपाधेरसङ्करात्। तथाऽप्युपधेयसाङ्कर्येण व्यामिश्रोक्तिः। अयं भावः। यद्यपि स्तेनपदं स्वप्रति-सम्बन्धिस्तेयोपलक्षणम्

। अपहार्यपदं च स्वप्रतिसम्बन्ध्यपहर्तुरुपलक्षणम् । तथाऽप्येकस्यैव स्तेनापहर्तृत्वयोः सत्त्वात् स्तेयस्यैवापहार्यत्वादेकसम्बन्धिज्ञानेऽपरसम्बन्धिस्मरणं भवत्येवेति नोभयमुपात्तमिति बोध्यम् । अत्र यो भेदप्रमाणमपश्यन् तन्मिथ्यात्वं वक्ति स स्तेनः । यः पश्यन्नपि तदतत्त्वावेदकत्वं पश्यति सोऽपहर्ता इति रहस्यम् । **अन्यदिति ।।** 'स्तेन चौर्ये' पचाद्यच् स्तेनः, तस्य भावः कर्म वा स्तेयम् । 'स्तेनाद्यन्नलोपश्च' इति यत्प्रत्यये नलोपे च सति स्तेयमिति भवति । **परीक्षार्थमिति ।।** अस्मा इति तादर्थ्ये चतुर्थीति भावः । **अभिसन्धा इति ।।** अनेनाभिसन्धेत्याकारान्त एवायं शब्द इति सूचितम् । 'सन्धां तु सन्दधावहै, सन्धां च यां सन्दधे' 'सत्यसन्धः' इत्यादिवैदिकलौकिकप्रयोगादिति भावः ।

**मूलम्- न हि शकुनिसूत्रयोः नानावृक्षरसानां नदीसमुद्रयोः जीववृक्षयोः अणिम-धानयोः लवणोदकयोः गन्धारपुरुषयोः ज्ञप्राणादिनियामकयोः स्तेनापहार्ययोश्चै-क्यम् । 'सति सम्पद्य न विदुः सति सम्पत्स्यामह इति त इह व्याघ्रो वा सिंहो वा' इति 'सत आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिंहो वा' इति भेदापरिज्ञानेनानर्थवचनाच्च । न हि गृहादागतस्य गृहे प्रविष्टस्य च तदैक्यम् ।**

**(त.मं.)** दृष्टान्तवचनानां दार्ष्टान्तिकवचनानां च भेदविषयत्वं प्रतिपादयति- **न हि शकुनिसूत्र-योरित्यादिना ।।** 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ते यथा' इत्यारभ्य भेदापरिज्ञानादनर्थ उच्यते । यथा नानावृक्षरसाः परस्परं विवेकं न लभन्ते एवं प्रजाः सुषुप्तौ **सति सम्पद्य** ब्रह्मणि सम्पद्यापि सत आत्मनां चाधाराधेय-भावलक्षणं विवेकं न विदुः । प्रबोधसमये सत आगम्यापि सत आगच्छाम इति सतोऽपादानत्वेन विवेकं न विदुः । **यद्यद् भवन्ति तत्तदा भवन्ति** यथा यथाऽज्ञानिनो भवन्ति तत्तदानु-कूल्येनानर्थभाजो भवन्ति ।

सत आगमनात् सति सम्पत्तेश्च तेनैक्यं किं न स्यादित्यत आह- **न हि गृहादिति ।।**

**टीका -** एवं स्थाननवकेऽपि भेद एव दृष्टान्ता अभिहिताः । न त्वेकोऽपि दृष्टान्तोऽभेदविषयोऽभि-हितः । ततो नायमभेदोपदेश इत्युक्तम् । तद्विवृणोति- **नहीति ।।** 'अल्पाच्तरम्' इत्यस्या-नित्यत्वाच्छकुनिसूत्रयोरिति साधु । अ(ज्ञस्ये)ज्ञेति ज्ञस्याप्युपलक्षणम् । अपहार्यं द्रव्यं, तत्सम्बन्धाद्राजाऽपि । ऐक्यं न हि, किन्तु भेद एव । प्रसिद्ध इति शेषः ।

ननु नानावृक्षरसदृष्टान्ते नदीसमुद्रदृष्टान्ते च ते यथा तत्र विवेकं न लभन्ते, ता यथा तत्र न विदुरिति भेदापरिज्ञानमात्रमुच्यते न तु भेदस्य विद्यमानताऽपि । अतो यथा नानावृक्षरसा एकीभूय मधुभावमापन्ना न भेदं जानन्ति, यथा च नद्यः समुद्रेणैक्यमापन्नाः तथा जीवाः परमानन्देना-परिच्छिन्नेन ब्रह्मणैकतां सुप्तौ मुक्तौ चाऽपन्ना न भेदं पश्यन्तीति शक्यते व्याख्यातुम् । तत्कथमुच्यते नैकोऽपि दृष्टान्तोऽभेदविषयोऽस्तीति । तत्राऽह- **सतीति ।।** नानावृक्षरसदृष्टान्तमुक्त्वा सति सम्पद्येति दार्ष्टान्तिकवाक्ये, नदीसमुद्रदृष्टान्तं चोक्त्वा सत आगम्येति दार्ष्टान्तिकवाक्ये जीवानां विद्यमानभेदापरिज्ञानेन व्याघ्रादित्वापत्तिरूपस्यानर्थस्योक्तत्वाद् दृष्टान्तवाक्ययोरपि विद्यमान-भेदापरिज्ञानमेव विवक्षितमिति ज्ञायते । उपपत्त्यन्तरसमुच्चयार्थश्चशब्दः । नानावृक्षरसा हि परस्परं भिन्ना एव स्वसमवेतं भिन्नमेव वा स्वपरिणामं भिन्नाभिन्नमेव वा प्रागसिद्धं मधूत्पादयन्ति न तु परस्परभेदपरित्यागेन प्राक् सिद्धेन मधुनैक्यमापद्यन्ते । नदीसमुद्रदृष्टान्ते तूपपत्तिं स्वयमेव वक्ष्यत्याचार्यः ।

ननु दार्ष्टान्तिकवाक्ययोरपि कथं भेदस्य विद्यमानता अवगम्यत इति चेद् जीवानां प्रवेशागमनक्रिये प्रति सतो ब्रह्मणोऽधिकरणत्वापादानत्वोक्तेः । ततोऽपि कथं भेदावगतिरिति चेत् कर्तुरधिकरणा-पादानाभ्यां भेदस्यैव लोके

दृष्टत्वादित्याशयवानाह- **न हीति ॥** क्रमस्याविवक्षितत्वादेवमुक्तम्। नदीसमुद्रदृष्टान्ते द्वयस्यापि विवक्षितत्वाच्च। विवक्षातः कारकाणि भवन्तीत्यतः कर्मणोऽधि-करणत्वविवक्षया श्रुतौ सति सम्पद्येत्युक्तम्। तदनुसारेण अत्रापि गृहे प्रविष्टस्येति। किञ्च भेदस्या-विद्यमानत्वे ब्रह्मणः काल्पनिकाधिकरणत्वाद्यज्ञानस्यानर्थहेतुत्वाभिधानमयुक्तं स्यात्। अधिकरण-त्वाद्युक्त्यैक्यमेव विवक्षितमित्यप्यनेन निरस्तम्। कर्तुरधिकरणादिनैक्यस्य क्वाप्यदर्शनात्।

**(र.टि.) ज्ञस्याप्युपलक्षणमिति ॥** 'तावज्जानाति' इत्यस्यापि श्रुतौ सद्भावादिति भावः। **तत्सम्बन्धा-द्राजाऽपीति ॥** तथा च चोरराज्ञोरिव जीवेश्वरयोरपि भेदः सिद्ध्यतीति भावः। **परमानन्देनापरिच्छिन्ने-(र.टि.) नेति ॥** मधुभावापन्ननानावृक्षरसदृष्टान्ताभिप्रायेण परमानन्द इति, नदीसमुद्रदृष्टान्ताभि-प्रायेणापरिच्छिन्नेनेत्युक्तमित्यवधेयम्। **नदीसमुद्रदृष्टान्ते द्वयस्यापीति ॥** 'ताः समुद्रात्समुद्रमेवापियन्ति' इत्यत्र नदीकर्तृकागमनप्रवेशलक्षणक्रिये प्रति समुद्रस्यापादानत्वकर्मत्वयोरभिधानात्, 'एवमेव खलु' इति दार्ष्टान्तिकवाक्ये सतः प्रजाकर्तृकप्रवेशनक्रियां प्रति कर्मत्वमपि विवक्षितम्। अत एव पूर्वमेव परमेश्वरे स्थित्वाऽपि तमाश्रिताः स्म इति न विदुरित्युक्तम्। तत्र च दृष्टान्तवाक्यानुसारेण सतोऽपादानत्वकर्मत्वयोः पूर्वोत्तरभावो वक्तव्यः। तदपेक्षया गृहादागतस्य गृहं प्रविष्टस्य चेत्येवं क्रमेणोक्तमित्यर्थः।

**(रा.टि.)** स्थाननवकेऽपीत्यादिवाक्यं विवृण्वन्नेवोत्तरवाक्यमवतारयति- **एवमित्यादिना ॥** एवकारार्थः- **न त्वित्यादि ॥** 'न चायमभेदोपदेशः' इति प्रागुक्तसाध्येनास्यान्वयं दर्शयति- **ततो नायमिति ॥** सूत्रपदस्या-ल्पाच्तरत्वात्सूत्रशकुन्योरिति भाव्यमित्यत आह- **अल्पाच्तरमित्यस्यानित्यत्वादिति ॥** 'अल्पाच्तरं पूर्वम्' इति सूत्रे तरप् स्वार्थे, द्वन्द्वसमासे यदल्पाच्कं पदं तत्पूर्वं प्रयोज्यमिति पूर्वनिपातोक्तेरनियतत्वात्कचिदन्यथाऽपि निर्देशो युक्त इत्यर्थः। अनियतत्वं 'नासिकास्तनयोर्ध्माधेटोः' इत्यादिसौत्रनिर्देशादिति भावः। **ज्ञस्याप्युप-लक्षणमिति ॥** तावज्जानातीत्युक्तबाधकज्ञानिनोऽपीत्यर्थः। **तत्सम्बन्धाद्राजाऽपीति ॥** तथा च चोरस्य राज्ञश्चेत्यर्थः। 'सन्ति च भेदे सर्वागमाः' इति प्राक्तनप्रतिज्ञाऽनुगुण्यायाऽह-**किन्तु भेद एव प्रसिद्ध इति शेष इति ॥** मधुभावमापन्ननानावृक्षरसदृष्टान्तोक्तिबलेन वा सति सम्पद्येति दार्ष्टान्तिके सुप्त्यादौ प्राप्त्युक्तिबलेन वा लब्धं विशेषणमाह- **परमानन्देनेति ॥** सुप्तावुपाधिविलयेन जीवानां परमानन्देन ब्रह्मणा परैरेकीभावप्राप्तेरभ्यु-पेतत्वाद्भेदाज्ञानहेतुत्वेनैतदुक्तिः। अपारसमुद्रेणैकीभावदृष्टान्तोक्तिबलेन लब्धमाह- **अपरिच्छिन्नेनेति ॥** उपपत्त्यन्तरेत्युक्तमाह- **नानावृक्षरसा हीति ॥** न्यायमतरीत्याऽऽह- **स्वसमवेतमिति ॥** वेदान्तरीत्याऽऽह- **स्वपरिणाममिति ॥ वक्ष्यतीति ॥** न हि भिन्नानामित्यादिनेति भावः। ननु गृहे प्रविष्टस्य गृहादागतस्येति वाच्यम्। श्रौतक्रमात्, प्राक् तथैव निर्देशाच्चेत्यत आह- **क्रमस्येति ॥** उपपादन एव तात्पर्यं न क्रम इति भावः। **द्वयस्यापीति ॥** 'समुद्रात्समुद्रमेवापियन्ति' इति दृष्टान्तोक्त्यनुरोधात्सत आगम्येत्यादेरिव 'सति सम्पद्य न विदुः सति सम्पत्स्यामहे' इत्यस्यापि विवक्षितत्वात् तत्क्रमानुरोधेन चायं निर्देश इत्यर्थः। ननु गृहं प्रविष्टस्येति वाच्यम्। विशतेः सकर्मकत्वात्। यदि श्रुत्यनुसारादेवमुक्तिस्तर्हि श्रुतावप्येवमुक्तेः किं बीजमित्यत आह- **विवक्षात इति ॥ गृहे प्रविष्टस्येति ॥** उक्तमित्यनुषङ्गः। ननु श्रुतौ सति सम्पद्येति सच्छब्दोक्तब्रह्मणोऽधि-करणत्वं काल्पनिकं, न वास्तवं, येन तद्बलाद्भेदस्य विद्यमानत्वसिद्धिरित्यतो वा 'परेऽव्यये सर्व एकीभवन्ति' इत्यत्रेवाधिकरणोक्तिबलादेवेश्वरैक्यसिद्धेः भेदस्यासत्यतेत्यतो वा भेदापरिज्ञानेनानर्थवचनाच्चेत्येतदपि योज्य-मिति भावेनाऽह- **किञ्चेति ॥ अधिकरणत्वादीति ॥** अपादानत्वमादिपदार्थः। **अनेनेति ॥** भेदाज्ञान-स्यानर्थहेतुत्वकथनायोगेनेत्यर्थः। दोषान्तरञ्चाह- **कर्तुरिति ॥**

**(श्री.टि.)** ननु 'अल्पाच्तरं पूर्वम्' द्वन्द्वसमासे यदल्पाच्तरं तत्प्राक्प्रयोज्यमिति सूत्रात् धवखदिरावितिवत् सूत्रशकुन्योरिति वक्तव्यं शकुनिसूत्रयोरिति कथमुक्तमित्यत आह- **अनित्यत्वादिति ॥** 'आन्महतस्समा-नाधिकरणजातीययोः', 'समुद्राभ्राद्घः' इत्यत्राल्पाच्तरस्यापि जातीयशब्दस्य अभ्रशब्दस्य च पश्चात्प्रयोगेणा-नित्यत्वं ज्ञायत इत्यर्थः। केचित्तु 'अभ्यर्हितं पूर्वम्' इत्यभ्यर्हितस्यापि पूर्वं प्रयोगोक्तेरल्पाच्तरमित्यस्यानित्यत्वं ज्ञायते। प्रकृते च सूत्रापेक्षया शकुनेश्चेतनत्वेनाभ्यर्हितत्वात् प्रथमप्रयोग इति भाव इत्याहुः। ननु, तावन्न जानातीतिवत् तावज्जानातीत्यपि श्रवणाद् ज्ञाज्ञप्राणादिनियामकयोरिति वक्तव्येऽज्ञेत्येकस्यैव ग्रहणं किमर्थमित्यत आह- **ज्ञस्याप्युपलक्षणमिति ॥ तत्सम्बन्धादिति ॥** द्रव्यस्वामित्वरूपात् सम्बन्धादित्यर्थः। **राजाऽ-पीति ॥** अपहार्यशब्देनोच्यत इत्यर्थः। तथा च चोरराज्ञोरिव जीवेश्वरयोरपि नैक्यं किन्तु भेद एवेति भावः। **न तु भेदस्य विद्यमानताऽपीति ॥** तथा च भेदस्याभावादेव तदपरिज्ञानमुच्यत इति भावः। **आपन्नाः** न भेदं जानन्तीति वर्तते।

मधुभावापन्ननानावृक्षरसदृष्टान्ताभिप्रायेण परमानन्देनेत्युक्तम् । नदीसमुद्रदृष्टान्ताभि-प्रायेणापरिच्छिन्नेनेत्युक्तमिति द्रष्टव्यम् । ब्रह्मणो मधुवदानन्दरूपत्वात्समुद्रवदपरिच्छिन्नत्वाच्चेति भावः । भेदस्य विद्यमानतायां युक्त्यन्तरस्यानुक्तत्वात् चशब्दस्य वैयर्थ्यमित्यत आह- **उपपत्त्यन्तरेति ।।** तदेवोपपत्त्यन्तरं दर्शयति- **नानावृक्षरसा हीत्यादिना ।।** अत्र रसशब्देन रसवन्तः पुष्पावयवा ग्राह्याः। अन्यथा केवलगुणानामेव रसानां ग्रहणे स्वसमवेतमित्युच्यमानं मधु प्रति समवायिकारणत्वमयुक्तं स्यात् । गुणानां समवायिकारणत्वा-भावात् । केवलं गुणानां परिणामाभावेन स्वपरिणाममित्युच्यमानपरिणामिकारणत्वायोगाच्चेति भावः । स्वसमवेतं भिन्नमिति तार्किकरीत्या, स्वपरिणाममित्यादि परिणामवादिरीत्येति द्रष्टव्यम् । ननु नदीसमुद्रदृष्टान्ते चशब्द-समुच्चितमुपपत्त्यन्तरं किमित्यत आह- **नदीसमुद्रदृष्टान्ते त्विति ।। वक्ष्यतीति ।।** न हि भिन्नानां नदीजल-परमाणूनामित्यादिनेत्यर्थः । तथा च नानावृक्षरसदृष्टान्त एवोपपत्त्यन्तरसमुच्चायकोऽयं चशब्दो न तु नदीसमुद्र-दृष्टान्तेऽपीति भावः । **उक्तेरिति ।।** 'सति सम्पद्य न विदुः' 'सत आगम्य न विदुः' इति वाक्याभ्यामित्यर्थः। **अपादानत्वोक्तेरिति ।।** विश्लेषावधिरपादानम् । यथोक्तम् 'ध्रुवमपायेऽपादानम्' इति । अपायो विश्लेषः । तस्मिन्सति यद् ध्रुवं तदपादनसञ्ज्ञं स्यात् । 'अपादाने पञ्चमी' 'शृङ्गाच्छरो जायते' 'गोमयाद्वृश्चिको जायते' इत्युदाहरणम् । अत्र च सत आगम्येत्यागमनक्रियां प्रति सतो ब्रह्मणोऽपादानत्वोक्तेरित्यर्थः । **ततोऽपि** उक्तेरपि।

ननु नानावृक्षरसदृष्टान्ते सति सम्पद्येति दार्ष्टान्तिकवाक्यानुसारेण गृहे प्रविष्टस्येत्यादौ वक्तव्यम् । नदी-समुद्रदृष्टान्ते सत आगम्येति दार्ष्टान्तिकवाक्यानुसारेण गृहादागतस्येति पश्चाद्वक्तव्यम् । एवं क्रमेण वक्तव्ये कथं तमुल्लङ्घ्य गृहादागतस्य गृहे प्रविष्टस्येति व्यत्यासेनोक्तमित्यत आह- **क्रमस्येति ।।** एवमुक्तौ निमित्तान्तरं चाऽह- **नदीसमुद्रदृष्टान्ते द्वयस्यापि विवक्षितत्वाच्चेति ।।** 'तास्समुद्रात्समुद्रमेवापियन्ति' इति दृष्टान्तवाक्ये नदीकर्तृकागमनक्रियां प्रति समुद्रस्यापादनत्वं समुद्रादित्यनेनोक्तम् । नदीकर्तृकप्रवेशलक्षणक्रियां प्रति कर्मत्वं समुद्रमेवेत्यनेनोक्तम् । तदनुसारेण एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्येति दार्ष्टान्तिकवाक्येऽपि **(श्री.टि.)** सतः प्रजाकर्तृकागमनक्रियां प्रत्यपादानत्वमुक्तम् । प्रजाकर्तृकप्रवेशक्रियां प्रति सतः कर्मत्वमपि तत्र विवक्षितमिति वक्तव्यम् । अत एव पूर्वं खण्डार्थकथनसमये 'एवं परमेश्वरे स्थित्वाऽपि तमाश्रिताः स्म इति न विदुः' इत्युक्तम् । तथा च तास्समुद्रात्समुद्रमेवेति दृष्टान्तवाक्यानुसारेण दार्ष्टान्तिके सतोऽपादानत्वं पूर्वं वक्तव्यम् । कर्मत्वं च पश्चाद्वक्तव्यम् । तदपेक्षया गृहादागतस्य गृहे प्रविष्टस्येत्युक्तमित्याशयः । ननु नाना-वृक्षरसदृष्टान्ते जीवप्रवेशक्रियां प्रति सतो ब्रह्मणः कर्मत्वेन सन्तं सम्पद्येति वक्तव्यं न तु सति सम्पद्येति । अतस्तदनुसारेण गृहं प्रविष्टस्येति वक्तव्यं न तु गृहे प्रविष्टस्येति तत्राऽह- **विवक्षात इति ।।** इत्यतः इति वच-नात् । **अनर्थेति ।।** व्याघ्रत्वापत्तिरूपेत्यर्थः । **अभिधानं** त इह व्याघ्रो वेत्यादिनोच्यमानम् । अधिकरणत्वा-द्युक्त्येत्यादिपदेनापादानत्वग्रहणम् । एतेनैवेत्युक्तं विशदयति- **कर्तुरिति ।। ऐक्यस्य** ऐक्यव्यपदेशस्य ।

**(पां.टि.)** ननु 'अल्पाच्तरं पूर्वम्' इति सूत्रेण 'द्वन्द्वे घि' इति घ्यन्तशास्त्रापवादाद् अल्पाच्तरसूत्रशब्दस्यैव पूर्वनिपाते सूत्रशकुन्योरिति भवितव्यम् । शकुनिसूत्रयोरिति तु कथमित्यतः, 'समुद्राभ्राद्घः' 'लक्षणहेत्वोः क्रियायाः' 'समानाधिकरणजातीययोः' इत्यादौ तत्र तत्र व्यभिचारं कुर्वता सूत्रकारेण पूर्वनिपातप्रकरणस्या-नित्यताया ज्ञापितत्वेनानित्यत्वसिद्ध्या क्वचिदप्रवृत्त्युपपत्तेर्नानुपपत्तिरित्यभिप्रेत्याऽह- **अनित्यत्वादिति ।।** 'अल्पाच्तरमिति लक्षणस्य व्यभिचारं कुर्वाणेनाप्येतदेव सूचितम् । अन्यथा जयनिर्णीतिकारक इत्यवक्ष्यत्' इति युक्तिपादीयसुधाग्रन्थस्तु तन्नित्यत्वाभ्युपगमवादेन प्रवृत्त इति न तद्विरोध इति द्रष्टव्यम् । यत्तु 'अभ्यर्हितं च' इत्यभ्यर्हितस्यापि पूर्वप्रयोगस्मरणादिति अनित्यत्वादित्यस्य भाववर्णनम्, तत्तु 'आन्महतः समानाधिकरण-जातीययोः' इति स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्व अल्पाच्तरस्य परनिपातेन च 'अल्पाच्तरम्' इत्यस्यानित्य-त्वात्' इत्यनित्यत्वोपपादकगीताभाष्यटीकाया अदर्शनमात्रमूलकत्वेनायुक्तत्वादुपेक्ष्यम् । **उपलक्षणमिति ।।** तावन्न जानातीत्यादिनाज्ञस्यैव तावज्जानातीति ज्ञस्यापि श्रुतावुक्तत्वादिति भावः । **समुच्चयार्थमिति ।।** ततश्च समुच्चायकत्वान्न तदानर्थक्यमिति भावः । चशब्दसमुच्चितमुपपत्त्यन्तरमेवाह- **नानावृक्षरसा इति ।।**

ननु 'गृहादागतस्य गृहे प्रविष्टस्य' इति वचनमयुक्तम् । 'सति सम्पद्य सत आगम्य' इति दार्ष्टान्तिकवाक्या-नुसारेण गृहे प्रविष्टस्य गृहादागतस्येत्येव वक्तव्यत्वादित्यत आह- **क्रमस्येति ।।** अत्र पक्षे क्रमस्याविवक्षाश्रयणं भवतीत्यपरितोषात् पक्षान्तरमाह- **नदीसमुद्रदृष्टान्त इति ।।** 'ताः समुद्रात्समुद्रमेवापियन्ति' इति नदी-समुद्रदृष्टान्तवाक्येन नदीकर्तृकागमनप्रवेशलक्षणक्रिये प्रति समुद्रस्यापादानत्वकर्मत्वयोरभिधानेन 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे' सति

दार्ष्टान्तिकवाक्ये सच्छब्दाभिधेयस्य ब्रह्मणः प्रजाकर्तृकागमनक्रियां प्रत्यपादानत्वमात्रोक्तौ दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यापत्त्या प्रजाकर्तृकप्रवेशनक्रियां प्रति कर्मत्वमपि सच्छब्दाभिधेयस्य ब्रह्मणोऽवश्यमभ्युपेयम्। अत एव पूर्वं नदीसमुद्रदृष्टान्तव्याख्यानपरे 'एवं परमेश्वरे स्थित्वाऽपि तमाश्रिताः स्मः इति न जानन्ति' इति टीकाकारैर्व्याख्यातम्। तत्र च 'ताः समुद्रात्समुद्र-मेवापियन्ति' इत्यत्र समुद्रस्य नदीकर्तृकागमनप्रवेशनकियां प्रत्यपादनत्वकर्मत्वक्रमानुसारेण 'एवं सत आगम्य **(पां.टि.)** न विदुः' इति दार्ष्टान्तिकवाक्येऽपि ब्रह्मणः प्रजाकर्तृकप्रवेशनादिक्रियापादानत्वकर्मत्वयोः क्रमस्य वक्तव्यत्वात्तदनुसारेण गृहादागतस्य गृहे प्रविष्टस्येति वचनं सङ्गतमेवेति भावः।

नन्वेवं गृहस्य प्रवेशं प्रति कर्मत्वाद् गृहं प्रविष्टस्येति कर्मणि द्वितीयया भवितव्यम्। गृहे प्रविष्टस्येति सप्तमी तु कथम्। न च 'सति सम्पद्य' इति श्रौतसप्तमीनिर्देशानुसारेणायं सप्तमीनिर्देश इति वाच्यम्। तत्रापि सच्छब्दा-भिधेयस्य ब्रह्मणः प्रवेशं प्रति कर्मत्वेन सन्तं सम्पद्येति द्वितीयाप्रयोगस्यैव कर्तव्यत्वेन सप्तमीप्रयोगस्यायुक्त-त्वादित्यतः, सतोऽपि कर्मत्वस्याविवक्षयाऽसतोऽप्यधिकरणत्वस्य विवक्षया सप्तमीप्रयोगोपपत्तेः श्रौतसप्तमी-प्रयोगानुसारेण गृहे प्रविष्टस्येति सप्तमीप्रयोगो युक्त एवेत्याशयेन श्रौतसप्तमीप्रयोगं नियामकोक्त्योपपादयन्नाह- **विवक्षात इति ॥** अन्यथा वृक्षस्यापि शाखां प्रत्यधिकरणतया वृक्षे शाखेति सप्तम्या एव प्रसङ्गेन वृक्षस्य शाखेति षष्ठी न श्रूयेतेति भावः।

**(व्या.टि.) अनित्यत्वादिति ॥** तत्त्वं च समानाधिकरणजातीययोरिति व्यत्यस्तप्रयोगदर्शनादिति भावः। **अङ्गस्येति ॥** यद्यपि षष्ठी न श्रूयते, 'सुपो धातुप्रातिपदिकयोः' इति तल्लोपात्। तथापि प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति शाब्दिकरीत्या विग्रहविभक्तिमाश्रित्योक्तमिति ध्येयम्। अङ्गेतीत्येव क्वचित् पाठः। **तत्सम्बन्धादिति ॥** तदभिमानादित्यर्थः। परिशेषयति- **किन्त्विति ॥** अपव्याख्याननिरासायोपक्षिपति- **नन्विति ॥** व्याघ्रादीति तद्गुणसंविज्ञानः। **इति ज्ञायत इति ॥** वाक्यशेषन्यायेनेत्यर्थः। तामेवोपपत्तिं दर्शयति- **नानावृक्षरसा हीति ॥** भिन्नमेवेति न्यायनयानुवादः। भिन्नाभिन्नमिति वस्तुस्थितिः। अयं भावः। नाना-वृक्षरसानां मधुनैकीभावः किं साध्येनोत सिद्धेन। नाद्यः। साध्यस्योत्पाद्यत्वेन प्रागभावात्। भेदाभेदेऽपि रस-भावे मधुभावाभावात्। न द्वितीयः। सिद्धमधुनोऽभावात्। भावेऽपि भेदपरित्यागेनाभेदभावनाननुभवाच्चेति। तदेतदाह- **न त्विति ॥ उपपत्तिमिति ॥** इहत्यचशब्दसूचितामित्यर्थः। जीवानामिति कर्तरि षष्ठी। अत्रैतौ प्रयोगौ विवक्षितौ। जीवाः सतो भिद्यन्ते तदधिकरणकप्रवेशनकर्तृत्वात् तदपादानकागमनकर्तृत्वाच्च। सद्वा जीवेभ्यो भिद्यते तत्कर्तृकप्रवेशनाधिकरणत्वात् तत्कर्तृकागमनापादानत्वाद् यदेवं तदेवमिति। तत्र हेत्वसिद्धि-परिजिहीर्षयोक्तेरित्युक्तम्। हेतूनामप्रयोजकतामशङ्कते- **ततोऽपीति ॥** भेदस्यैवेति नियमोक्तिः। उक्तिक्रम-वैपरीत्ये हेतुमाह- **क्रमस्येति ॥ द्वयस्येति ॥** समुद्रात्समुद्रमेवेति आगमनप्रवेशद्वयस्येत्यर्थः। ननु प्रविशतेः सकर्मकत्वाद्गृहमिति द्वितीयया भाव्यम्। गृह इति कथम्। न च श्रुत्यनुसारिणीयमुक्तिरिति वाच्यम्। श्रुतावपि सम्पद्यतेः सकर्मकत्वेन सदिति भाव्यत्वादित्यत आह- **विवक्षात इति ॥** तदुक्तं महाभाष्ये 'सतोऽप्यविवक्षा भवति। यथाऽनुदरा कन्येति। असतोऽपि विवक्षा भवति। यथा विन्ध्यो वर्धितकमिति' इति। **अयुक्तमिति ॥** प्रत्युत मिथ्याभूतज्ञानस्यैवानर्थहेतुत्वेन विपरीतमेवोचितमिति भावः। स्वाभिमतकर्तृत्वाद्यनुमानस्य व्याप्तिप्रदर्शन-परतया मूलं व्याख्याय परोक्ताधिकरणत्वानुमाननिरासपरतयाऽपि व्याचष्टे- **अधिकरणत्वादीति ॥ अनेन** मूलेन। निरासप्रकारं दर्शयति- **कर्तुरिति ॥** हेतुगर्भविशेषणम्। साध्याभावव्याप्ति(प्य)प्रदर्शनेन व्याप्यभाव-प्रदर्शनमिदम्।

**मूलम्- 'तास्समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवति' इत्यत्रापि भेद एवो-च्यते। अन्यथा तास्समुद्र एव भवन्तीति व्यपदेशः स्यात्। अतो नद्यः समुद्रादागच्छन्ति तं प्रविशन्ति च। समुद्रस्तु स एव, नैतासां समुद्रत्वं भवतीत्यर्थः। नहि भिन्नानां नदीजलपरमाणूनां समुद्राणुभिरैक्यं युज्यते। तथा सति महाजनसमितौ प्रविष्टानां द्वित्राणां तदैक्यं स्यात्। नच तद् युज्यते भेदेनानुभवात्।**

**टीका -** ननु नदीसमुद्रदृष्टान्ते स समुद्र एव भवतीति नदीनां समुद्रेणैक्यमुच्यते। तत्कथं नैकोऽपि दृष्टान्तोऽभेदविषय इत्युक्तमित्यत आह- **ता इति ॥ अत्रापि** वाक्ये न केवलमभेदो नोच्यते प्रत्युत भेद एवोच्यते। कथमित्यत आह- **अन्यथेति ॥** यद्यत्र नदीरुद्दिश्य तासां समुद्रभवनं विधीयते तर्हि **ता** नद्यः समुद्र एव भवन्तीति पाठः स्यात्। ते तण्डुला ओदनं भवन्तीतिवत्। न त्वेवमस्ति। तस्मान्नात्राभेद उच्यते। तथाऽपि भेदोक्तिः कथमित्यतो व्याख्याति- **अत इति ॥** प्रकारान्तरस्यासम्भवादित्यर्थः। आगच्छन्तीति शेषोक्तिः। समुद्रमेवापियन्तीत्यस्यार्थस्तं प्रविशन्ति

चेति। स समुद्र एव भवतीत्यस्य व्याख्या समुद्रस्तु स एवेति। एवशब्दार्थविवरणं नैतासामिति। **स** समुद्र एव समुद्रो भवतीत्युक्ते यतोऽवधारणं ततोऽन्यत्र तत्फलमित्यत एतल्लभ्यते। 'अत इत्यर्थः' इति सम्बन्धः।

ननु यदि नदीरुद्दिश्य तासां समुद्रत्वं विधीयेत तदा नदीनां स्वलिङ्गवचनाभ्यामुद्देशः क्रियेत। नचैवम्। किं तर्हि नदीप्रवेशानन्तरं स सर्वोऽपि जलसमुदाय एकीभूय समुद्र एव भवतीति व्याख्यायत इति चेत्, भवेदेवं कथञ्चिच्छब्ददोषाभावः। प्रमेयदोषस्त्वस्त्येव। तथाहि - किं नोदनादभिघाताद्वा क्रियाविभागादिक्रमेणावयविनाशे सति नदीसमुद्रकारणपरमाणूनां परस्परैक्यं भवेद्, उत तैर्भिन्नैरेव परमाणुभिरेक एवापरः समुद्राख्योऽवयवी जायते, अथाविनष्टानामेवावयविनां परस्परमैक्यं भवति। आद्यं दूषयति- **नहीति ॥** विमताः परमाणवो न परस्परमेकीभवन्ति भिन्नत्वाज्ज्वलानल-वदित्यर्थः। भिन्नानामपि सजातीयानां प्रवेशेनैक्यं भवतीत्यङ्गीकारे को दोष इत्यत आह- **तथा सतीति ॥** अविशेषादिति भावः। तदपि भवत्वित्यत आह- **नचेति ॥** वृद्ध्यभावप्रसङ्गश्च बाधकः स्फुट एव। एतेन तृतीयोऽपि निरस्तः। द्वितीये तु न कस्यापि केनाप्यैक्यापत्तिः। नच जीवब्रह्मनाशे वस्त्वन्तरोत्पत्तिः परेणेष्यते। अतोऽवयविषु विनष्टेषु परमाणूनां संयोगेनावयव्यन्तरोत्पादो वाऽविनष्टानामेवावयविनां संयोगमात्रं भवतीति वा युक्तम्। अनेनैव न्यायेन नानावृक्ष-रसदृष्टान्तेऽप्येकतामित्यस्य मिश्रतामित्येवार्थोऽवगन्तव्यः।

**(र.टि.) शेषोक्तिरिति ॥** दार्ष्टान्तिकवाक्ये सत आगम्येत्युक्तत्वात्ताः समुद्रादित्यत्रापि शेषः पूरितः इत्यर्थः। **यतोऽवधारणमिति ॥** अनेन स समुद्र एवेत्येवकारस्य यथाश्रुतान्वये अन्ययोगव्यवच्छेदकत्वं न लभ्यत इति मूलाभिप्राय इत्युक्तम्भवति। **कथञ्चिच्छब्ददोषाभाव इति ॥** जलसमुदायस्य पूर्वमप्रकृतत्वात्तच्छब्देन परामर्शायोग इति कथञ्चिदित्यनेनाऽचष्टे। भिन्नानामित्यनेनोक्तभिन्नत्वहेतोरप्रयोजकत्वशङ्कापरिहारकत्वे-नोत्तरवाक्यमवतार्य व्याचष्टे- **भिन्नानामपीति ॥**

**(रा.टि.)** भेद एवोच्यत इत्येवकारव्यावर्त्यं व्यनक्ति- **अत्रापीति ॥** मूलपदानुवादोऽयम्। वाक्य इति शेषोक्तिः। स एवेत्यत्रत्यतच्छब्दमनूद्य तस्यार्थमाह- **स समुद्र एवेति ॥** स एव समुद्र इत्युक्त्या नैतासामित्यर्थः कथं लभ्यत इत्यत आह- **यतोऽवधारणमिति ॥** यस्माच्छब्दात्परतोऽवधारणमित्यर्थः। **इत्यतः** इति न्यायादित्यर्थः। अत इत्यस्य इत्यर्थ इत्यनेनान्वयमाह- **अत इत्यर्थ इतीति ॥** शङ्कते- **यदि नदीरुद्दिश्येति ॥ स्वलिङ्गेति ॥** स्त्रीलिङ्गबहुवचनाभ्यामित्यर्थः। स इति तच्छब्दस्याप्रकृतजलराशिपरामर्शः क्लिष्ट इति भावेनोक्तम्- **कथञ्चिदिति ॥ नोदनादिति ॥** नुद प्रेरणे समुद्रशब्दिते जलराशौ नदीजलानां प्रवेशे सत्यन्योन्यवेगादिकृतदृढसम्बन्धादि-त्यर्थः। अभिघातात्प्रबलतरङ्गप्रहाराद्वाऽवयवेषु क्रियोत्पद्यते तया चावयवविभागेन तत्संयोगरूपासमवायिकारण-नाशः। एवं तदवयवक्रियातो विभागासमवायिकारणसंयोगनाशक्रमेणावयविनां द्व्यणुकपर्यन्तानामवयवनाशे सतीत्यर्थः। यद्वा नोदनादिनाऽऽरम्भकपरमाणुषु क्रियाविभागसंयोगनाशक्रमेण द्व्यणुकाद्यवयविनामन्त्यावय-विपर्यन्तं नाशे सतीत्यर्थः। **तैरिति ॥** नदीसमुद्रकारणभूतैरित्यर्थः। **एतेनेति ॥** वृद्ध्यभावप्रसङ्गेनेत्यर्थः। **कस्यापीति ॥** परमाणोः परमाण्वन्तरेण वाऽवयविना वा नैक्यापत्तिरित्यर्थः। अयं च पक्षस्त्वन्मतविरुद्ध इति भावेनाऽह- **न च जीवेति ॥ अत इति ॥** द्वितीयपक्षस्य त्वन्मतप्रतिपक्षत्वादित्यर्थः। अन्यमतेनाऽह- **अवयविषु विनष्टेष्विति ॥** स्वमतेनाऽह- **अविनष्टानामेवेति ॥ अनेनैव न्यायेनेति ॥** द्वितीयपक्षस्या-युक्तत्वेनोक्तपक्षद्वयन्यायेनेत्यर्थः।

**(श्री.टि.) शेषोक्तिरिति ॥** दार्ष्टान्तिकवाक्ये सत आगम्येत्युक्तत्वात्तास्समुद्रादित्यत्राप्यागच्छन्तीति शेषः पूरित इत्यर्थः। **स समुद्र एवेति ॥** अत्र स इत्यनूद्य समुद्र इति व्याख्यातम्। अत्र समुद्र एव भवतीति समुद्रत्वं विधेयत्वेन प्रतीयते। यद्विधेयं तद्विशेषणमेव। यथा पर्वतस्याग्निमत्त्वम्। एवं च समुद्रत्वस्य विशेषणत्वप्राप्त्या तदन्वितैवकारस्यायोगव्यवच्छेदकत्वेन नैतासामित्यन्ययोगव्यवच्छेदप्रदर्शनमयुक्तं स्यात्। अतस्स इत्युद्देश्यतया विशेष्यत्वं तत्सङ्गतोऽयमेवकारोऽन्ययोगव्यवच्छेदार्थक इत्याशयेन स समुद्र एवेत्युक्तम्। समुद्रत्वं(न) विशेष-णम्। एवं च नैतासामित्यत्र नदीषु समुद्रत्वयोगव्यवच्छेदप्रदर्शनं युक्तमिति द्रष्टव्यम्। विशेष्यसङ्गतैवकारस्थलेऽ-**(श्री.टि.)** न्यत्रैव विशेषणव्यवच्छेदस्सिद्ध्यतीत्यत्र बीजभूतं न्यायमाह- **यतोऽवधारणमिति ॥ अवधारणम्** अवधारणार्थकैवकार इति यावत्। **यतो** यत्पदसमभिव्याहृतं **ततः** तत्पदवाच्यादन्यत्र **तत्फलम्** अवधारणफलं व्यावृत्तिरूपम् अस्ति **इत्यत** एतन्न्यायादेतल्लभ्यत इत्यर्थः। एवं चात्र समुद्रवाचितच्छब्दसमभिव्याहृतमवधार-णम्। अतस्तदन्यत्र नदीषु समुद्रत्वव्यावृत्तिरूपमवधारणफलं लभ्यत इति भावः। शङ्कते- **यदीत्यादिना ॥ स्वलिङ्गवचनाभ्यामिति ॥** ता इति

स्त्रीलिङ्गबहुवचनाभ्यामित्यर्थः । जलसमुदायस्य पूर्वमप्रकृतत्वात्स इति परामर्शायोग इत्यभिप्रेत्य कथञ्चिदित्युक्तम् । **नोदनं** द्रवद्रव्यसम्बन्धः । **अभिघातः** स्पर्शवद्वेगवद्द्रव्यसम्बन्धः। **क्रियेति ॥** क्रिया, क्रियातो विभागो, विभागात्पूर्वदेशसंयोगनाश, उत्तरदेशसंयोगोत्पत्तिरिति क्रमेणेत्यर्थः । **अवयविनाशे सतीति ॥** एवं च द्रवद्रव्यभूतनदीसमुद्रयोः परस्परसम्बन्धेन स्पर्शवद्वेगवद्द्रव्यभूतवायुसम्बन्धेन वा क्रियाविभागादिक्रमेण नदीसमुद्ररूपावयविनाशे सतीत्यर्थः । उतेत्यत्रावयविनाशे सतीति वर्तते । **तैः** नदी-समुद्रकारणीभूतैः । अनुमाने विजातीयत्वमुपाधिरित्यभिप्रेत्य शङ्कते- **भिन्नानामपीति ॥ अविशेषादिति ॥** सजातीयत्वाविशेषादित्यर्थः । मूले समिताविव्यस्य सभायामित्यर्थः । मूले द्वित्राणामित्यस्य द्वौ वा त्रयो वा द्वित्रास्तेषामित्यर्थः । **वृद्ध्यभावेति ॥** ऐक्ये वृद्धिर्न स्यादिति भावः । **एतेनेति ॥** महाजनसमितिप्रविष्टानां द्वित्राणामपि तदैक्यापातेन वृद्ध्यभावप्रसङ्गेन चेत्यर्थः । **न कस्यापीति ॥** नदीसमुद्ररूपावयविनाशेन भिन्नैरेव नदीसमुद्रपरमाणुभिः समुद्ररूपस्वतन्त्रावयविन एकस्योत्पन्नत्वेन कस्य केनैक्यं स्यादिति भावः । प्रत्युतायं पक्षस्तव विरुद्धश्चेत्याह- **न चेति ॥ जीवब्रह्मेति ॥** नदीसमुद्रस्थानीयेत्यर्थः । **वस्त्वन्तरेति ॥** समुद्राख्या-परावयविस्थानीयेत्यर्थः । **नष्टेष्विति ॥** आपरमाण्वन्तमिति शेषः । **अवयव्यन्तरेति ॥** तार्किकरीत्या पीलुपाकप्रक्रियान्यायेनेति भावः । **संयोगमात्रमिति ॥** नैक्यमित्यर्थः । **अनेनैव न्यायेनेति ॥** नानारसो-पेतावयविनाशे सति तत्कारणपरमाणूनां परस्परमैक्यमिति पक्षस्य महाजनसमितावित्युक्तन्यायेनायोगात् । अवयविनाशे सति भिन्नैरेव परमाणुभिरपरो मध्वाख्योऽवयवी जायत इति पक्षस्य कस्यापि केनाप्यैक्याभावप्रसङ्गेन दार्ष्टान्तिके परस्यानिष्टत्वाच्चायुक्तत्वात् । अविनष्टानामेवावयविनां परस्परमैक्यं भवतीत्यस्य महाजनसमिति-प्रविष्टद्वित्राणामपि तदैक्यापातेन वृद्ध्यभावप्रसङ्गेन चायुक्तत्वादेकतामित्यस्याविनष्टानामेवावयविनां संयोग-मात्ररूपमिश्रतामित्येवार्थोऽवगन्तव्य इत्यर्थः ।

**(पां.टि.) कथञ्चिदिति ॥** स सर्वोऽपि जलसमुदायः समुद्र एव भवतीत्यर्थकरणेऽपि न शब्ददोषपरिहारः । जलसमुदायस्य जलसमुदायरूपेण पूर्वत्राप्रकृततया तत्परामर्शकेन तच्छब्देन परामर्शायोगेन नदीनामेव प्रकृत-त्वेन तासामेव च परामर्ष्टव्यत्वात् परामर्शे च स्त्रीलिङ्गवचनापत्तिरपरिहार्येति भावेन कथञ्चिदित्युक्तम् । **नोदना-दिति ॥** एतदुभयं जातिरेवेति केचित् । वेगरहितस्पर्शवद्द्रव्यसंयोगो नोदनम् । स्पशवद्वेगवद्द्रव्यसंयोगश्चाभिघात इति बहवः । स्वजनकक्रियासमानाधिकरणक्रियाजनकः संयोग एवाभिघातः । स्वजनकक्रियाव्यधिकरणक्रिया-जनकसंयोगस्तु नोदनमित्यनयोर्भेद इति केचित् । वस्तुतस्तु येन संयोगेन जनितं कर्म संयोगिनोः परस्परं **(पां.टि.)** विभागहेतुर्भवति, यः संयोगः शब्दनिमित्तकारणं च भवति स संयोगविशेषोऽभिघातः । येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्न भवति यः संयोगः शब्दनिमित्तकारणं च न भवति स संयोगविशेषो नोदनम् । एतच्च शाङ्करे काणादसूत्रोपस्कारे पञ्चमाध्यायस्य द्वितीयाह्निके 'नोदनाभिघातात्संयुक्त-संयोगाच्च पृथिव्यां कर्म' इति सूत्रव्याख्यानावसरे स्पष्टम् । प्रशस्तपादभाष्ये तु 'यः संयोगविशेषो वेगापेक्षः परस्परविभागहेतोरेकस्य कर्मणः कारणं सोऽभिघातः । यस्तु गुरुत्वद्रवत्ववेगप्रयत्नान्समस्तान् व्यस्तान्वाऽपेक्ष-माणः परस्परमविभागहेतोरेकस्य कर्मणः कारणं स नोदनमित्यनयोर्विशेषः' इत्युक्तम् । **वृद्ध्यभावप्रसङ्ग-श्चेति ॥** नदीप्रवेशद्वारीति शेषः ।

**(व्या.टि.) ऐक्यमिति ॥** शब्दसामानाधिकरण्यस्याभेदे शक्तेरित्यर्थः । नन्वभेदोक्त्याशङ्कायामभेदो नोच्यत इति वक्तव्ये भेद एवोच्यत इति प्रतिज्ञाऽसङ्गतेत्याशङ्क्य, अभेदभेदयोरिव अभेदोक्तिभेदोक्त्योः परस्परविरह-रूपत्वतद्व्याप्यत्वयोरभावेन नियताप्राप्तेरेवकारव्यावर्त्यया अभेदोक्त्या भेद उच्यतेऽपीति भेदोक्तिं समुच्चिनोति अपिपदमिति भावेनाऽह- **न केवलमिति ॥ समुद्रभवनमिति ॥** समुद्रत्वमित्यर्थः । **विधीयत इति ॥** तण्डुला ओदनं भवन्तीत्यत्रेवेति भावः । 'यच्छब्दयोगः प्राधान्यं स्यादुद्देश्यस्य लक्षणम् । तच्छब्दयोगः पश्चात्त्वं स्याद्विधेयस्य लक्षणम्' इति तान्त्रिकमर्यादामुपेत्य तच्छब्दार्थस्योद्देश्यत्वेऽपि नदीनां तच्छब्दार्थत्वे स्त्रीलिङ्गबहुवचने स्यातामित्याह- **तर्हीति ॥ ओदनमिति ॥** ओदनोऽस्त्रीत्यभिधानान्नपुंसकत्वम् । **शेषोक्तिरिति ॥** समुद्रादित्य-पादानकारकापेक्षितक्रियाध्याहार इत्यर्थः । **स एवेति ॥** एवकारो भिन्नक्रम इत्यर्थः । **फलं** व्यवच्छेदः । छान्दोग्य-भाष्ये तु स समुद्र एव भवतीति यथाश्रुति संयोज्य न नदीभावं प्राप्नोतीत्ययोगव्यवच्छेदोऽपि व्याख्यातः । उक्तशङ्काऽपनोदाय योजयति- **इति सम्बन्ध इति ॥** अनेनैतद्वाक्यं भेदविषयम्, अर्थान्तरासम्भवे सति सार्थकत्वाद् यदेवं तदेवमिति युक्तिं सूचयति । युक्तावुक्तविशेषणासिद्धिं शङ्कते- **यदीत्यादिना ॥** कथञ्चिदित्यनेन क्रमप्रमाणाभावप्रकृतपरित्यागाप्रकृतपरामर्शादिदोषाः प्रादुःष्युरिति सूचयति । किमवयवैक्यमुतावयव्यन्तरोत्पाद अथावयविनामैक्यमिति विकल्प्य क्रमेण निराहेत्याह- **प्रमेयेत्यादिना ॥** अत्र भिन्नानामिति हेत्वर्थगर्भं विशेषणमित्यभिप्रेत्याभिसंहितहेतुमभिधत्ते- **विमता इति ॥** अत्राभेदाभावो न भेदः किन्तु तद्व्याप्त इति वा अनेकत्वादिर्भेदको

वा विवक्षितः। यद्वक्ष्यति 'द्वित्राणाम्' इति। अतो न साध्यावैशिष्ट्यमिति बोध्यम्। अनुसंहितहेतौ वैजात्यमुपाधिमनुसन्धाय पक्षे तदभावेन प्रतिपक्षमनुसन्धत्ते- **सजातीयानामिति ॥** प्रतिपक्ष-हेतोरनैकान्त्योद्भावनाय विपक्षेऽनिष्टं प्रसञ्जयतीत्याशयेनाऽह- **अत आहेति ॥ मूले समिताविति ॥** सभाया-मित्यर्थः। 'सभासमितिसंसदः'इत्यभिधानात्। कर्मण्यधिकरणत्वविवक्षा च। मूले द्वित्राणामिति बहुव्रीहिः। द्वौ वा त्रयो वेति विगृह्य 'सङ्ख्याव्ययासन्नदूराधिकसङ्ख्याः सङ्ख्येये' इति सङ्ख्येयार्थया सङ्ख्यया सङ्ख्यायाः समासः, 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति समासान्तो डजिति बोध्यम्। **अविशेषादिति ॥** प्रवेशकर्म-कर्त्रोर्जनत्वाविशेषादित्यर्थः। पक्षप्रसञ्जनस्थानयोरविशेषादिति वाऽर्थः। मूले भेदानुभवादित्यस्य प्रविष्टद्वित्राणां **(व्या.टि.)** पूर्वतनैर्भेदाध्यक्षादित्यर्थः। स्वयमधिकं वक्ति- **वृद्धीति ॥** नदीसङ्गमे परिमाणप्रकर्षस्य जनसङ्गमे सङ्ख्याप्रकर्षस्य च दर्शनादित्यर्थः। **निरस्त इति ॥** तुल्यन्यायत्वादित्यर्थः। **न कस्यापीति ॥** अवयव्यन्तरो-त्पादेनैक्यप्रतियोगिनोऽभावादित्यर्थः। प्रकृतानानुगुण्यं च दृष्टान्तस्येत्याह- **न चेति ॥ जीवब्रह्मनाश इति ॥** 'जीव ईशो विशुद्धा चित्' इति परेण षण्णामनादित्वोपगमादित्यर्थः। स्वयं नदीसमुद्रदृष्टान्तं विस्पष्टयति- **अत इति ॥** अवयव्यन्तरोत्पादो वेति सम्भावितपक्षः। संयोगमात्रं वेति तत्त्वम्। यथोक्तं बह्वृचि- 'ये(यो) नदीनां सङ्गते' 'सितासिते सरिते यत्र सङ्गथे' इति च। **अनेनैवेति ॥** नदीसमुद्रदृष्टान्ते पक्षत्रयनिरासन्यायेने-त्यर्थः। नन्वत्रैकतां गमयन्तीति साक्षादैक्यश्रुतेः कथं तन्न्यायातिदेश इत्यतो भ्रममूलं विच्छिनत्ति- **एकतामि-त्यस्येति ॥** युक्तिविरोधेन मुख्यस्यापि त्याज्यत्वादिति भावः।

**मूलम् - 'स्वं ह्यपीतो भवति' इत्यत्रापि स्व इति परमात्मनोऽभिधानम्। 'स्वात्मना चोत्तरयोः' इति सूत्रात्। 'स्वातन्त्र्यात्स्व इति प्रोक्त आत्माऽयं चाऽततत्वतः। ब्रह्मायं गुणपूर्णत्वाद्भगवान् विष्णुरव्ययः' इति परमोपनिषदि। अपीत इत्यपि प्रवेशमात्रं स्वमिति द्वितीयानिर्देशात्। एकीभावविवक्षायां स्वेनेति निर्देशः स्यात्। 'स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम्। अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन्सदा' इति च। 'एवमेव खलु सोम्यैतन्मनो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा प्राणमेवोपाश्रयते' इत्यत्रापि मन इति जीवः, प्राण इति परमात्मा। 'यत्रायं पुरुषः स्वपिति नाम' इति तयोरेव प्रस्तुतत्वात्। 'मननान्मन उद्दिष्टः पुद्गलो निरयं गिरन्। कर्मानुशयनाच्चैव संसार्यनुशयी स्मृतः' इति च। 'प्राणः प्रणयनादेष साधुत्वात्सन् हरिः स्मृतः' इति च। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्यत्रापि भेद एव प्रतीयते। 'स्रष्टृत्वादाश्रयत्वाच्च मुक्तानां च प्रति प्रति। स्थापनाच्च विभुर्विष्णुरन्यः संसारिणो मतः' इति च।**

**(त.मं.)** 'तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति' इत्युक्त्वा हि 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽयतनमलब्ध्वा बन्धनमेवोपाश्रयत एवमेव सोम्येदं मन' इत्यु-च्यते। तस्मादभेदः किं न स्यादित्यत आह- **स्वं हीति ॥** स्वात्मना चोत्तरयोरित्यत्र जीवस्योत्क्रान्त्यादयः स्वेन सहेति वक्तव्यम्। 'यत्रायं पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इति च पुरुषसच्छब्दाभ्यां तयोरेव प्रस्तुतत्वात्। सन्मूला इत्यादेरर्थमाह- **स्रष्टृत्वादि-त्यादिपरमोपनिषदा।**

**टीका-** ननु यद्यपि शकुनिसूत्रदृष्टान्ते भेदः प्रतीयते। तथाऽपि न तत्र तात्पर्यं, किन्तु जीवस्य ब्रह्मैव परायणमित्यत्रैव। 'स्वं ह्यपीतो भवति' इति पूर्ववाक्ये जीवः **स्वं** स्वात्मभूतं ब्रह्मापीतो भवतीति ब्रह्मणि स्वात्मवाचिस्वशब्दप्रयोगादैक्यप्रतीतिरित्यत आह- **स्वं हीति ॥** अत्रापि नैक्यमुच्यत इति शेषः। कुत इत्यत आह- **स्व इतीति ॥** यत इति शेषः। भवेदेतद्यदि स्वशब्दो जीवस्य प्रत्यग्भावमेव ब्रूयात्। न चैवम्। यतो ब्रह्मादिशब्दवत् परमात्मनो नामैतत्। कुत इत्यतः प्रयोगदर्शनादित्याह- **स्वात्मना चेति ॥** सूत्रार्थे विप्रतिपन्नं प्रति श्रुतिं चाऽह- **स्वातन्त्र्या-दिति ॥** आततत्वत इत्यनेन आङ्पूर्वात् तनोतेर्डमनूप्रत्यय इत्युक्तं भवति। गुणपूर्णत्वादित्यनेन

बृहतेर्मन्प्रत्ययोऽमागमश्चेत्युक्तं भवति।

तथाऽपि अपीतशब्देनैक्यस्योक्तत्वान्न शकुनिसूत्रदृष्टान्तस्य भेदे तात्पर्यम्। यावदुक्तं भवति एकीभवतीति तावदपीतो भवतीति। मैवम्। किमपीतशब्दस्य अवयववृत्तिमाश्रित्यैक्यार्थत्वमुच्यते उताखण्डवृत्तिम्। आद्ये नैक्यमस्माल्लभ्यत इत्याह- **अपीत इत्यपीति ।।** न केवलं स्वशब्दो नैक्यं गमयतीत्यपिशब्दार्थः। अनेन शब्देन प्रवेशमात्रं लभ्यते नैक्यम्। अपिर्ह्यपिधाने वर्तते। 'इण् गतौ' निष्ठाप्रत्ययश्च कर्तरि। ततश्चापिहितस्य गतिः- प्राप्तिः प्रवेशे सति सम्भवतीति। द्वितीयस्तु नोपपद्यते। कुत इत्यत आह- **स्वमिति ।।** अखण्डवृत्तौ ह्यपीतशब्द ऐक्यपर्यायोऽङ्गीकार्यः। तस्य चाक्रियाऽर्थत्वाद्भवतेश्चाकर्मकत्वात् कर्मानपेक्षायां स्वमिति कर्मार्थद्वितीयानिर्देशो नोपपद्यते। अवयववृत्त्यङ्गीकारे इणः सकर्मकत्वाद् द्वितीयोपपद्यते। एवमखण्डवृत्त्यङ्गीकारे श्रुतद्वितीयाहानि-प्रसङ्गमभिधायाश्रुतकल्पनापत्तिं चाऽह- **एकीभावेति ।।** सहयोगे तृतीयाविधानादिति भावः।

एवमखण्डवृत्तौ विभक्त्यनानुगुण्यादवयववृत्तौ अवश्याश्रयणीयायां प्रवेश एवास्यार्थो लभ्यत इत्युक्तम्। समाख्यारूपवाक्यान्तराच्चैवमित्याह- **स्वं कुलायमिति ।।** एवमपीतशब्दस्य प्रवेशार्थत्वे सिद्धे यद्यपि स्वशब्दः स्वात्मवाची। तथाऽप्यत्रासौ न स्वीकर्तुमुचितः। स्वात्मनि प्रवेशासम्भ-वात्। किन्तु परमेश्वरवाच्येव स्वीकार्य इत्यपि सिद्धम्।

ननु शकुनिसूत्रदृष्टान्तमुक्त्वा दार्ष्टान्तिके मनसः प्राणाश्रयत्वमुच्यते। तत्कथं जीवेश्वरभेदविषयाः सर्वे दृष्टान्ता इत्युक्तमित्यत आह- **एवमेवेति ।।** मन इति शब्देन जीव उच्यते प्राण इति शब्देन परमात्मोच्यत इत्यर्थः। कुत इत्यत आह- **यत्रेति ।।** 'यत्रायं पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इति पूर्ववाक्ये, यत्र कालेऽ**यं** पुरुषो जीवः स्वपिति तदा **सता** परमात्मना **सम्पन्नः** सङ्गतो भवतीति पुरुषसच्छब्दाभ्यां जीवेश्वरयोराश्रयाश्रयिभावेन प्रकृतत्वात्। न ह्यन्यत्प्रतिज्ञाय दृष्टान्तमुक्त्वा दार्ष्टान्तिकेऽन्यदुच्यत इति सम्भवति। असङ्गतिप्रसङ्गात्।

अस्ति तात्पर्यज्ञापकम्, मनःप्राणशब्दयोर्जीवे परमात्मनि च शक्तिः कुत इत्यतः क्रमेणाऽगम-वाक्यद्वयं पठति- **मननादिति ।।** संसारी मन उद्दिष्ट इत्यादिरन्वयः। 'मनु अवबोधने' इत्यतोऽसुन्प्रत्ययः। पुच्छब्दो निरयवाची पुत्र इति दर्शनात्। 'गॄ निगरणे' पचाद्यच् रेफस्य लकारः षष्ठीसमासः। गिरन्ननुभवन्निति यावत्। **कर्मानुशयनात्** कर्मानुसारेण संसारे पतनात्। शीङोऽनुपूर्वादिनिः। कर्मणो योग्यतया सम्बन्धः। संसार्येवानुशयी चेति सम्बन्धः। प्रपूर्वादनितेः पचाद्यचि प्राणः। **प्रणयना**ज्जगत्प्रवर्तनात्। **साधुत्वा**न्निर्दोषत्वात्।

ननु शकुनिसूत्रदृष्टान्तप्रकरणे सन्मूला इत्यभेदः प्रतीयते। **सत्** परं ब्रह्म **मूलम्** उपादानं घटस्य मृदिव, भुजङ्गस्य रज्जुरिव वा यासां स्थावरजङ्गमानां प्रजानां ताः सन्मूलाः। तथा स्थितिकालेऽपि सद् आयतनम् आश्रयो यासां ताः सदायतनाः । न हि घटो मृदमनाश्रित्य स्थितिं लभते। अन्ते च सदेव **प्रतिष्ठा** पर्यवसानं यासां ताः सत्प्रतिष्ठाः- सत्स्वरूपतामेव प्रतिपद्यन्ते इति। तत्कथं सर्वस्य भेदपरत्वमित्यत आह- **सन्मूला इति ।।** तत्कथमित्यत आह- **स्रष्टृत्वादिति ।।** एतदुक्तं भवति- न तावन्मूलायतनप्रतिष्ठाशब्दा उपादानादिषु नियताः किन्तु कारणादिमात्रवाचिनः। तत्राऽगमवाक्यान्तरानुसारेण पिता पुत्रस्य मूलमायतनं प्रतिष्ठापक इतिवद् भगवान् प्रजानां निमित्तकारणादिरित्येवास्य वाक्यस्य व्याख्येयत्वाद्भेदोपपादकमेवेदं सिद्ध्यतीति।

**(र.टि.)** 'स्वं ह्यपीतो भवतीत्यत्रापि' इत्यस्य स्व इति परमात्मनोऽभिधानम्' इत्यनेनैकवाक्यत्वे पूर्वं स्वशब्दा-दीनां परमात्मवाचकत्वानुक्तेरपिशब्दानुपपत्तिः। अत एव तद्वाक्यस्यैक्यपरत्वं नेति प्रतिज्ञाऽध्याहाराभावे एतस्यासङ्गतिश्च स्यादित्यतो यथायोगं शेषं पूरयति- **अत्रापि नैक्यमिति ।। प्रत्यग्भावमिति ।।** प्रत्यक्त्वं निमित्तीकृत्य जीवमेव वदेदित्यर्थः। **अपिहितस्य गतिरिति ।।** यथा तिरोहितस्य पक्षिणो गतिः कुलायप्रवेशं विना न सम्भवति तथा तिरोहितस्य जीवस्य गतिः

स्वशब्दवाच्यपरमात्मप्रवेशं विना न सम्भवतीत्यर्थः । मूलोदाहृतश्रुत्यंशेन जीवस्यैव प्रकृतत्वं ज्ञायते नेश्वरस्य, अतस्तयोरिति कथमित्यतस्तच्छेषमप्युदाहरति- **सता (र.टि.) सोम्येति ॥ आश्रयाश्रयिभावेनेति ॥** अत एव पूर्वं स्वयं सम्पन्नो भवतीत्यन्तमुदाहृतम् । **पुत्र इति दर्शनादिति ॥** पुन्नाम्नो नरकात् त्राता पुत्र इति पुत्रशब्दनिर्वचने पुच्छब्दस्य नरकवाचित्वदर्शनादित्यर्थः। ननु स्रष्टृत्वादेरिवोपादानत्वादेर्ग्रहणसम्भवे भेद एवेति कथं नियम्यत इत्यत आह- **एतदुक्तं भवतीति ॥**

**(रा.टि.)** अन्यमतेनाह- **किन्तु जीवस्येति ॥** 'प्राणमेवोपाश्रयते प्राणबन्धनं हि सोम्य मनः' इति पूर्ववाक्ये मनःशब्दितजीवस्य प्राणशब्दितब्रह्मपरायणत्वोक्तेरिति भावः । अध्याहृतसाध्यान्वयायाह- **यत इति शेष इति ॥ जीवप्रत्यग्भावमिति ॥** जीवगतप्रत्यक्त्वमित्यर्थः । **स्वात्मनेति ॥** द्वितीयस्य तृतीयपादे उत्क्रान्ति-गत्यागतीनामिति नये 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छति, अमुष्मादिमं लोकमागच्छति' इति श्रुता-वुक्तोत्क्रमणगत्यागतीनां हेतूनां सकाशाज्जीवोऽणुरेवेत्युक्ते, त उत्क्रान्त्यादयो न जीवस्य स्वातन्त्र्येण । किन्तु स्वात्मना च- परमात्मनैव, कुतः? उत्तरयोः 'स्वात्मना परेणेमं गर्भमनुप्रविशति' इति 'एष ह्येनं जीवमभि-जीवयति' इति चोत्तरयोर्वाक्ययोः सकाशाज्ज्ञायत इत्यर्थः ।

ननु नायं सूत्रार्थः । किन्तु स्वात्मना जीवात्मना सम्बद्धयोर्मरणादुत्तरयोर्गमनागमनयोः 'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति वाक्योक्तयोर्व्याप्ते जीवेऽनुपपत्तेर्मध्यमपरिमाणत्वेऽनित्यत्वापत्तेरणुर्जीव इत्येव । अतो नात्र हरावात्मपदप्रयोग इत्यत आह- **सूत्रार्थे विप्रतिपन्नमिति ॥ आङ्पूर्वादिति ॥** आतन् इति स्थिते औणादिकडमन्प्रत्यये 'चुटू' इति डकारस्येत्संज्ञायां लोपे डिति भस्य टेर्लोप इति अन् इत्यस्य लोपे आत्मेति रूपमिति भावः । **बृहतेरिति ॥** बृह वृद्धावित्यतो मनिन्प्रत्यये 'मिदचोऽन्त्यात्परः' इति ऋकारात्परतो अमागमे यणादेशे च ब्रह्मेति रूपमिति ज्ञेयम् । अपीतशब्देन कथमैक्यस्योक्तिरित्यत आह- **यावदुक्तमिति ॥** अयमेकीभावशब्दसमान इति भावः । इतिपदानन्तरमनेनेति शेषोक्त्या वाक्यं योजयति- **अनेन शब्देनेति ॥** यद्वा अपीत इत्यपि अपीतशब्दोऽपि प्रवेशमात्रं गमयति नैक्यमित्येव योजना अपिपदार्थोक्त्योक्तप्रायेति तात्पर्यार्थमाह- **अनेनेत्यादिना ॥ अपिधाने** तीरोधाने इत्यर्थः । **कर्तरीति ॥** इणो गत्यर्थत्वाद्गत्यर्थाकर्मकेत्या-दिना कर्तरि क्तप्रत्यय इति भावः । प्रवेशस्त्वार्थिको न शाब्द इति भावेनाह- **प्रवेशे सति सम्भवतीति ॥** 'अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते' इत्युक्तदिशाऽन्यैरज्ञेयत्वेनानुप्रविष्ट इत्यर्थोऽस्येति भावः । **तृतीया-विधानादिति ॥** 'सहयुक्तेऽप्रधाने' इति सूत्रेणेति भावः । अन्यथानुपपत्त्यापि स्वशब्दोऽत्र भगवद्वाचीत्याह- **एवमपीतशब्दस्येति ॥**

**अस्ति तात्पर्यज्ञापकमिति ॥** प्रकरणरूपं दृष्टान्ताख्योपपत्तिरूपं चेत्यर्थः । **इत्यादिरन्वय इति ॥** 'संसारी पुद्गिल उद्दिष्टः' संसारी अनुशयी उद्दिष्ट इत्येवमन्वय इत्यर्थः । **असुन्प्रत्यय इति ॥** निरुक्तत्वादिति भावः । एवमग्रेऽपि । **पुत्र इतीति ॥** पुत्तो नरकात् त्रायत इति पुच्छब्दस्य नरके प्रयोगदर्शनादित्यर्थः । **पचाद्यचीति ॥** 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति पचादेराकृतिगणत्वात्तेनाच्प्रत्यये ऋकारस्य इर् इत्यादेशे रेफस्य च **(रा.टि.)** लत्वे गिल इति रूपं, पुतो गिलः पुद्गिल इत्यर्थः । **अनुपूर्वादिनिरिति ॥** अनु शी इति स्थिते इनि प्रत्यये 'सार्वधातुकार्धधातुकयोः' इति गुणेऽयादेशे चानुशयीति रूपमिति भावः । एवशब्दचशब्दयोरन्वयमाह- **इति सम्बन्ध इति ॥ पचाद्यचीति ॥** 'पूर्वपदात्संज्ञायामगः' इति णत्वे चेत्यपि ध्येयम् । ब्रह्मपरिणामो जगदिति मतेनाह- **घटस्य मृदिवेति ॥** ब्रह्मविवर्तमतेनाह- **भुजङ्गस्य रज्जुरिवेति ॥** उपादानशब्दोऽस्मिन्पक्षे आरोपाधिष्ठानपरः । प्रतिपद्यन्त इति इतिपदस्य इत्यभेदः प्रतीयत इति पूर्वेणान्वयः । स्रष्टृत्वादिति वचनोक्त्या प्रागुक्ताभेदप्रतीतेः का गतिरित्यतस्तथा व्याख्यैवायुक्तेति भावेनाह- **एतदुक्तम्भवतीति ॥ कारणा-दीति ॥** कारणाश्रयस्थापनमात्रवाचिन इत्यर्थः । **तत्रेति ॥** परोक्तार्थनैयत्याभावे सतीति, कारणादिमात्रवाचित्वे सतीति वाऽर्थः । **प्रतिष्ठापक इति ॥** तत्तद्योग्यस्थलविशेषे स्थापक इत्यर्थः ।

**(श्री.टि.) स्वात्मवाचीति ॥** जीववाचीत्यर्थः । **प्रत्यग्भावमेवेति ॥** अन्तरवस्थितत्वरूपं प्रत्यक्त्वं निमित्ती-कृत्य जीवमेव वदेदित्यर्थः । **स्वात्मना चेतीति ॥** 'स एतेनैव स्वात्मना परेणेमं गर्भमाविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मेति' 'एष ह्येवानन्दमादत्ते एष ह्येनं जीवमभिजीव्य जीवयत्येष उद्गमयत्येष आगमयति' इत्युत्तरयोर्वाक्ययोस्सत्त्वात् । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति' इति वाक्योक्ता उत्क्रान्त्यादयो जीवस्य स्वात्मना च- परमात्मनैव न स्वातन्त्र्येणेति सूत्रार्थो द्रष्टव्यः । **विप्रतिपन्नं प्रतीति ॥** सूत्रस्य अर्थान्तरं वदिष्यामीति

वदन्तं प्रतीत्यर्थः । **आङ्पूर्वकात्तनोतेरिति ॥** आङ्पूर्वात् 'तनु विस्तारे' इत्यस्माद् डमन्प्रत्यये 'टेः' डिति परे भस्य टेर्लोपः स्यादिति सूत्रेण डित्त्वात् टिभूतस्य अन् इत्यस्य लोपे 'आत् मन् आत्मन्' इति नकारान्तप्रातिपदिकनिष्पत्त्यनन्तरं स्वाद्युत्पत्तौ आत्मेति भवतीति द्रष्टव्यम् । **बृहतेर्मन्प्रत्यय इति ॥** 'बृह वृद्धौ' वृद्धिः पूर्णत्वं तच्च गुणतः । तथा चास्मात् मन्प्रत्यये अमागमे 'मिदचोऽन्त्यात्परः' अन्त्यादचः परो मित्स्यादिति सूत्रेण मित्त्वादन्त्यादचः परं जाते बृ अह् मन् इति जाते 'इको यणचि' इति यणादेशे ब्रह्मन् इति प्रातिपदिकं निष्पद्यत इत्यर्थः ।

अपीतशब्देन कथमैक्यमुक्तमित्यत आह- **यावदिति ॥** यावत्प्रमेयमित्यर्थः । **अखण्डवृत्तिं** रूढिम् । **अस्मात्** अपीतशब्दात् । **अनेनेति ॥** अपीत इत्यनेन शब्देनेत्यर्थः । तदुपपादयति- **अपिर्हीति ॥ अपिधाने** आच्छादने । **वर्तत इति ॥** 'अपिधानतिरोधानपिधानाच्छादनानि च' इति कोशादित्यर्थः । **निष्ठाप्रत्यय इति ॥** क्तप्रत्यय इत्यर्थः । 'क्तक्तवतू निष्ठा' इति स्मरणात् । तथा च अपिपूर्वकात् इण् गतावित्यस्मात् क्त-प्रत्यये ककारलोपे अपीत इति भवति । **कर्तरीति ॥** अपि आच्छादनं यथा स्यात्तथा स्वम् इतः प्राप्तो भवतीत्यर्थः। नन्वथापि प्राप्तिरेव प्राप्ता न तु प्रवेश इत्यत आह- **ततश्चेति ॥ अपिहितस्य गतिरिति ॥** यथा तिरोहितस्य पक्षिणो गतिः कुलायप्रवेशं विना न सम्भवति तथा तिरोहितस्य जीवस्य गतिः स्वशब्दवाच्यपरमात्मप्रवेशं विना न सम्भवतीत्यर्थः । **तस्य चेति ॥** ऐक्यपर्यायस्यापीतशब्दस्येत्यर्थः । **अक्रियार्थत्वादिति ॥** ऐक्यस्य **(श्री.टि.)** क्रियारूपत्वाभावेन तद्वाचकापीतशब्दस्य क्रियावाचकत्वाभावादित्यर्थः । तथा चापीतशब्दस्य क्रियावाचित्वे हि क्रियायाः कर्मापेक्षायां द्वितीयानिर्देशोऽपेक्षितः स्यान्न चैवमिति भावः । ननु भवतीति क्रियावाचिपदसद्भावात्तत्र कर्मापेक्षायां द्वितीयानिर्देशो युक्त इति चेत्तत्राह- **भवतेश्चेति ॥** भूधातोः सत्तार्थकत्वेनाकर्मकत्वादित्यर्थः ।

'वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥'

इति वचनादिति भावः । **इण इति ॥** इण् धात्वर्थभूतायाः प्राप्त्यपरपर्यायाया गतेरित्यर्थः । **विधानादिति ॥** 'सहयुक्तेऽप्रधाने' इति सूत्रेणेत्यर्थः । पुत्रेण सहागतः पितेत्युदाहरणम् । ननु कथमेतत् । यद्यत्र सहयोगः स्यात्तर्ह्येव तद्योगे तृतीयाऽऽपादनीया स्यात्, स एव नास्तीति चेत्सत्यम् । अस्माभिरश्रुतकल्पनमापद्यते । एवं चैक्यस्य सहार्थापेक्षत्वादपीतशब्दस्यैक्यार्थत्वे सहशब्दयोगः स्यात् । ततश्च तद्योगे च स्वेनेति तृतीयानिर्देशश्च स्यादित्युभयस्याप्यापादनादिति भावः । **प्रवेशासम्भवादिति ॥** स्वस्येति शेषः । कर्तृकर्मविरोधादिति भावः। **अन्यदिति ॥** जीवेश्वरयोराश्रयाश्रयिभावरूपं प्रमेयं प्रतिज्ञाय तत्र शकुनिसूत्रदृष्टान्तमुक्त्वा दार्ष्टान्तिके मनसः प्राणाश्रयत्वकथनमयुक्तम् असङ्गतत्वादित्यर्थः ।

शङ्कते- **अस्तीति ॥ तात्पर्यज्ञापकम्** आश्रयाश्रयिभावेन जीवेश्वरयोरेवोपक्रान्तत्वरूपमित्यर्थः । तथापीति शेषः । **मनःप्राणशब्दयोरिति ॥** 'मन इति जीवः प्राण इति परमात्मा' इत्यत्र उच्यत इति शेषोक्त्या तयोः शब्दयोः शक्तिरुक्ता । तत्कुत इत्यर्थः । **इत्यादिरिति ॥** संसारी पुद्गल उद्दिष्ट इत्यन्वयो द्रष्टव्यः । **असुन्निति ॥** तथा च उन् इत्यस्य लोपे **मनस्** इति प्रातिपदिकं निष्पद्यत इत्यर्थः । तत्र ज्ञापकमाह- **पुत्र इतीति ॥** 'पुन्नाम्नो नरकात् त्राता पुत्र इत्यभिधीयते' इति पुत्रशब्दनिर्वचनपरे वाक्ये पुच्छब्दस्य नरकवाचित्वदर्शनादित्यर्थः । **पचाद्यजित्यादि ॥** तथा च पुच्छब्दोपपदात् 'गॄ निगरणे' अस्मात्कर्तरि पचाद्यचि गॄ अ इति स्थिते 'सार्वधातु-कार्धधातुकयोः' अनयोः परयोरिगन्ताङ्गस्य गुणः स्यादिति सूत्रेण गॄ इत्यत्रत्यॠकारस्य गुणे 'उरण् रपरः' इति रपरत्वे पुत् गरेति जाते, 'अचि विभाषा' रो लत्वं स्यादजादौ प्रत्यये पर इति रस्य लत्वे 'झलां जश् झशि' इति तकारस्य दकारे पुद्गलेति रूपमित्यर्थः । **षष्ठीसमास इति ॥** तथा च पुतो गलः पुद्गल इत्यर्थः । 'कृदतिङ् इति' तिङ्वर्जप्रत्ययस्य कृत्त्वोक्तेरच्प्रत्ययस्य कृत्त्वात् तद्योगे 'कर्तृकर्मणोः कृती' इति षष्ठ्या एवानुशासनादिति भावः । **शीङोऽनुपूर्वादिनिरिति ॥** अनुपूर्वकात् 'शीङ् स्वप्ने' अस्मादिनिप्रत्यये 'सार्वधातुकार्धधातुकयोः' इति सूत्रेणेकारस्य एकाररूपे गुणे 'शे इन्' इति जाते 'एचोऽयवायावः' एचः क्रमादय् अव् आय् आव् एते स्युरचीति सूत्रेण एकारस्यायादेशो अनुशय् इन् अनुशयिन्निति प्रातिपदिकनिष्पत्तिरित्यर्थः । चैवशब्दयोरन्य-समुच्चायकान्यनिषेधकयोरेकत्र विरोधेन सम्बन्धाभावादाह- **संसार्येवेति ॥ प्रपूर्वादिति ॥** प्रपूर्वाद् 'अन चेष्टायाम्' **(श्री.टि.)** अस्मात् पचाद्यचि 'अनितेः' उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णत्वं स्यादिति सूत्रेण नस्य णत्वे प्राणेति रूपम् । **निर्दोषत्वादिति ॥** निर्दोषो हि साधुरित्युच्यत इति भावः ।

**घटस्य मृदिवेति ॥** परिणामवादिभास्कररीत्योक्तम् । मायावादिरीत्याऽऽह- **भुजङ्गस्य रज्जुरिवेति ॥** निर्विकारत्वश्रुतिविरोधेन

ब्रह्मणः परिणामित्वरूपोपादनत्वायोगाद् भुजङ्गं प्रति रज्जुर्यथा विवर्ताधिष्ठानत्वेनोपादानं तथा ब्रह्मापि स्थावरजङ्गमात्मकप्रपञ्चारोपाधिष्ठानत्वेनोपादानमित्यर्थः । तदुपपादयति- **न हीति ।।** एवं प्रजाः सदात्मकं ब्रह्माश्रित्यैव स्थितिं लभन्ते इति सदायतना इत्यर्थः । उपलक्षणमेतत् । भुजङ्गो रज्जुमनाश्रित्य स्थितिं न लभत इत्यपि द्रष्टव्यम् । तत्तात्पर्यमाह- **सत्स्वरूपतामेवेति ।।** ननु स्रष्टृत्वादेरिवोपादनात्वादेरपि ग्रहणसम्भवे भेद एवोच्यत इति कथं नियम्यत इत्यत आह- **एतदुक्तं भवतीति ।। उपादानादिष्विति ।।** मूलशब्द उपादाने, आयतनशब्दः स्थितिकाल आश्रये, प्रतिष्ठाशब्दश्चान्ते पर्यवसाने न नियत इत्यर्थः । मूलादिशब्दा नियमेनो-पादानादिवाचिनो न भवन्तीति भावः । **कारणादिमात्रेति ।।** मूलशब्दः कारणमात्रवाची, आयतनशब्द आश्रयमात्रवाची, प्रतिष्ठाशब्दश्च स्थापकत्ववाचीत्यर्थः । **आगमवाक्यान्तरेति ।।** स्रष्टृत्वादित्यागमवाक्ये-त्यर्थः । स्रष्टृत्वादिति प्रमाणे प्रतिकल्पेषु मुक्तानां स्थापनात् । एवं विरुद्धधर्माधिकरणत्वाद्विष्णुः संसारिणोऽन्यो मत इत्यर्थः । **निमित्तकारणादिरिति ।।** एवं च **सत्** ब्रह्म **मूलं** निमित्तं यासां ताः सन्मूलाः । **सत्** ब्रह्म **आयतनम्** आश्रयो यासां ताः सदायतनाः । **सत्** परं ब्रह्मैव मुक्तौ प्रतिष्ठापकं यासां ताः सत्प्रतिष्ठा इत्यर्थः ।

**(पां.टि.) सूत्रार्थे विप्रतिपन्नं प्रतीति ।।** 'स्वात्मना चोत्तरयोः' इत्यस्यायमर्थः - उत्क्रान्तिः कदाचिद-चलतोऽपि ग्रामस्वाम्यनिवृत्तिवद् देहस्वाम्यनिवृत्त्या कर्मक्षयेण वा कल्प्येत, उत्तरे तु गत्यागती नाचलतः सम्भवतः । स्वात्मना हि तयोः सम्बन्धो भवति । गमेः कर्तृस्थक्रियात्वादमध्यमपरिमाणस्य गत्यागती अणुत्व एव सम्भवतः । सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृप्तिरेव देहादिति प्रतीयते । न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनाच्च 'चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरप्रदेशेभ्यः' इति । 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववाक्रमति' 'शुक्रमादाय पुनरेति स्थानम्' इति चान्तरपि शरीरे शरीरस्य गत्यागती भवतः । तस्मादणुत्वसिद्धिरिति । सति चैवं कथमस्य सूत्रस्य भगवतः स्वशब्दवाच्यत्व-साधकतयोदाहरणम् । सूत्रस्य भगवदुक्तार्थपरत्वासिद्धेरित्याशयः । यत्तु चशब्द एवार्थे, स्वात्मनैव परमात्मनैव जीवस्योत्क्रान्तिगत्यागतयो भवन्ति न स्वतः । 'सोऽस्माच्छरीरादुत्क्रम्य' इति पौष्यायणश्रुतिवाक्यादुत्तरयोः स एतेनैव परमात्मनेत्यादिवाक्ययोस्तथैव वक्तव्यत्वादिति सूत्रार्थकथनम्, तत्तु अस्य ग्रन्थस्य स्वसिद्धान्त-ग्रन्थत्वभ्रान्तिमात्रमूलकत्वेन, विप्रतिपन्नमित्यस्यादर्शनेन चात्यन्तायुक्तत्वादुपेक्ष्यम् ।

**डमनुप्रत्यय इति ।।** आङ्पूर्वात्तनोतेर्बाहुलकडमनुप्रत्यये डित्त्वात् अन् इति टिलोपे आत्मन्निति प्रातिपदिक-निष्पत्तिरिति भावः । **बृहतेरिति ।।** वृद्ध्यर्थाद् बृहतेः 'अन्येभ्योऽपि दृश्यते' इति मनिन्प्रत्ययः । दृशिग्रहण-**(पां.टि.)** सामर्थ्याद्धातोरमागमश्चेत्यर्थः । यद्यपि 'बृंहेर्नोऽच्च' इति बृंहेर्मनिनि नकारस्य अकारे च ब्रह्मशब्दो व्युत्पादितः । तथापि 'बृह बृहि वृद्धौ' इति बृहतेरपि पाठादन्येभ्योऽपि दृश्यत इति मनिनि दृशिग्रहणसामर्थ्या-दमागमेन तस्य चैतद्रूपमित्यभिसन्धायैवमुक्तमिति ध्येयम् । यद्यपि इदितो बृंहे रूपाश्रयणे न दृशिग्रहणसामर्थ्य-माश्रयणीयम् । तथापि 'बृह जातिजीव' इति धात्वन्तरादपि एतद्रूपनिष्पत्तिरिति सूचनायैवमुक्तमिति द्रष्ट-व्यम् । **निष्ठाप्रत्यय इति ।** क्तप्रत्यय इत्यर्थः । क्तस्य च कित्त्वाद्गुणनिषेधे इत इति रूपनिष्पत्तिरिति भावः । **तस्य चेति ।।** ऐक्यशब्दपर्यायस्य अपीतशब्दस्य क्रियार्थत्वाभावान्न स्वमिति कर्मापेक्षित्वमिति भावः । अस्तु तर्हि क्रियार्थस्य भवतेः कर्मापेक्षत्वमित्यतो भवेदेवं यदि तस्य सकर्मत्वं स्यात्, न चैतदस्ति, अतो न तस्यापि कर्मापेक्षत्वमित्याह- **भवतेश्चेति ।।** अखण्डवृत्तौ स्वमिति द्वितीयानिर्देशानुपपत्तिमुपपाद्यावयववृत्तौ तदुपपत्तिमाह- **अवयववृत्त्यङ्गीकारे त्विति ।। सहयोग इति ।।** 'सहयुक्तेऽप्रधाने' इत्यनेनेति शेषः । **असुन्प्रत्यय इति ।।** 'असुन्' इति सूत्रेण कर्तरीति शेषः । **दर्शनादिति ।।** 'पुन्नाम्नो नरकात् त्राता पुत्र इत्यभिधीयते' इति वचनादिति भावः । **पचाद्यजिति ।।** 'गॄ निगरणे' इत्यतः कर्तरि पचादित्वादचि तस्मिन्परतो गुणे रपरत्वे च गर इति रूपनिष्पत्तिरिति भावः । **लकार इति ।।** निर्वचनत्वादिति भावः । **षष्ठीसमास इति ।।** पुतो गलः पुद्गल इति षष्ठीसमास इत्यर्थः । कर्तृकर्मणोः कृति' इति कृद्योगे कर्तरि षष्ठ्या एवानुशासनादिति भावः । **इनिरिति ।।** अनुपूर्वात् शीङः कर्तरि इनि सार्वधातुकेति गुणेऽयादेशे अनुशयिन्निति प्रातिपदिकनिष्पत्तिरिति भावः । **अनिते-रिति ।।** चेष्टार्थकादनतेः कर्तरि पचादित्वादचि प्राणेति प्रातिपदिकनिष्पत्तिरिति भावः । विवर्तवादिभिः परैर्निर्विकारतया ब्रह्मणः परिणामित्वानभ्युपगमान्मृद्दृष्टान्तानानुगुण्यं मन्वानः तदनुगुणं दृष्टान्तमाह- **भुजङ्गस्येति ।।**

**(व्या.टि.) जीव इति ।।** 'अत्रायं स्वपिति' इति प्रकृत इह कर्तृत्वेन सम्बद्ध इत्यर्थः । स्वमित्यनूद्य स्वात्मभूतमिति व्याख्या । स्वप्रत्यग्भूतमित्यर्थः । 'स्वमज्ञातिधनाख्यायाम्' इति सूत्रे स्वशब्दस्य प्रत्यगर्थात्मवाचिताया उक्तत्वादित्यर्थः । अत्रापीतो भवतीति प्रकृतो जीवः स्वशब्दोक्तप्रत्यगैक्ये पदिन्यायेन प्रतियोगितया सम्बध्यत इति भावः । अत्रापीतः परम् इत्यतः परमिति शेषः ।

**प्रत्यग्भावमेवेति ॥** तदर्थमेवेत्यर्थः। **न चैवमिति ॥** नानार्थत्वान्नार्थविशेषनिर्णय इत्यर्थः। वस्तुतस्तु यद्यपि स्वशब्दः स्वात्मवाची तथापि स्वमज्ञातीति सूत्रनिर्देशात्,

'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।'

इत्यमरकोशाच्च नपुंसक एव तद्वाची, न पुंलिङ्गः। स तु 'आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः। तथैव स्व इति प्रोक्तस्तस्माद् ब्रह्मात्मभूः स्वभूः।

'स्वातन्त्र्यात्स्व इति प्रोक्तो विष्णुः सर्वेश्वरेश्वरः'

इत्यादिवचनेन ब्रह्मासाधारणः। अत एव मूले स्व इति पुंलिङ्गनिर्देशः कृत इति रहस्यम्। 'स्वात्मना चोत्तरयोः' इति सूत्रार्थस्तु 'एकः प्रसूयते जन्तुरेक एव प्रमीयते' इति गत्यादिस्वातन्त्र्यमाशङ्क्य स एतेन स्वात्मनेत्युत्तर-**(व्या.टि.)** योर्वाक्ययोः परमात्मनैवोत्क्रान्त्यादय इति भगवद्भाष्यादवगन्तव्यः। **विप्रतिपन्नमिति ॥** वादिवाक्ये विश्वासाभावात्।

**डमन्प्रत्यय इति ॥** डित्त्वाट्टिलोप इत्यपि ग्राह्यम्। **अमागम इति ॥** मित्त्वादन्त्याचः परेणापि बोध्यः। पञ्चपाद्यां तु 'बृंहेर्नोऽच्च' इति प्रकृत्यन्तरान्निरुक्तम्, नो नकारस्याकार इत्यर्थः। मूलं वाक्यभेदेन योजयति- **यत इति ॥** उत्तरवाक्यस्य यत इति शेषं मनसि निधाय व्याचष्टे- **अनेनेति ॥** लाभप्रकारमाह- **अपिहीति ॥ कर्तरीति ॥** गत्यर्थाकर्मकेति तथा विहितत्वादित्यर्थः। छान्दोग्यभाष्ये तु 'अप्ययो नामाविज्ञेयत्वेन प्रवेशः। अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते इति शब्दनिर्णये' इति प्रकारान्तरेण व्याख्यातम्। **ऐक्यपर्याय**स्तत्परपद-पर्यायः। **तस्यापीतपदस्य**। न समानोयं दोषो मत्पक्ष इत्याह- **अवयववृत्तीति ॥ सहयोग इति ॥** 'सहयुक्तेऽप्रधाने' इति तद्विवक्षायां तृतीयाविधानादित्यर्थः। **कुलायमिति ॥** नीडमित्यर्थः। **यद्यपीति ॥** प्राक्पुंलिङ्गस्वशब्दस्य ब्रह्मादिशब्दवदसाधारणब्रह्मवाचित्वान्न प्रत्यगर्थवाचित्वमित्युक्तम्। अधुना 'स्वमज्ञाति-धनाख्यायाम्' इति पुंलिङ्गस्यापि जस्युक्तसंज्ञाविकल्पविधानात्तद्वाचित्वेऽपि नात्र तदर्थत्वम्। उपपत्तिविरोधादि-त्याह- **तथापीति ॥ ज्ञापकमिति ॥** उपक्रमवाक्यमिति शेषः। **दर्शनादिति ॥** 'पुन्नाम्नो नरकात् त्राता पुत्र इत्यभिधीयते' इति निर्वचनेन पुतस्त्रातरि पुत्र इति प्रयोगदर्शनादित्यर्थः। **पचाद्यजिति ॥** पचादिलक्षणोऽजि-त्यर्थः। तथा च गिरतेरचि 'इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन' इति गुणः। **रेफस्येति ॥** 'अचि विभाषा' इति रेफस्य लत्वमित्यर्थः। **प्रपूर्वादिति ॥** 'प्राणं देवा अनुप्राणन्ति' 'प्राणः परमनुप्राणिति। तस्मादाहुः प्राणस्य प्राणः' इति श्रौतनिर्वचनादिति भावः। प्रणयनादिति निमित्तान्तरम्। प्रपूर्वान्नयतेर्डच् प्रत्यये प्रणः, प्रण एव प्राणः, प्रज्ञाद्यणिति निर्वचनान्तरं द्रष्टव्यम्। घटस्य मृदिवेति विवरणरीतिः। भुजङ्गस्य रज्जुरिवेति भामतीरीतिः। स्थावरजङ्गमात्मिकानामिति इत्वेनैव पाठः। जङ्गमात्मकानामिति पाठे कप्रत्ययान्तात्मशब्देन विग्रहे टापः सुपः परत्वान्नेत्वमिति ध्येयम्। **नियता इति ॥** व्याख्येयेऽपि मूलपदप्रयोगात्।

'य आसामेवमायतनं वेद आयतनवान् भवति'

'य आसामेवं प्रतिष्ठां वेद प्रत्येव तिष्ठति'

इति इष्टकानामाश्रये लयाधिष्ठानेऽप्यायतनप्रतिष्ठापदप्रयोगान्न तदर्थनियम इति भावः। **आगमवाक्यान्तरेति॥**

'जगतो मूलमप्येष निमित्तं न विकारवान्।
बीजजीवो यथा मूलमङ्कुरस्याविकारतः ॥
यथा पिता पुत्रतन्वास्तद्देहो हि विकारवान्।
एवं हरिर्मूलमपि न विकारी कथञ्चन ॥'

इति छान्दोग्यभाष्योदाहृतवाक्यान्तरानुसारेणेत्यर्थः। प्रजानां चेतनत्वेन सत्यत्वेन च ताः प्रति सत उपादानत्वभ्रमाधिष्ठानत्वयोरयोगाच्च।

**मूलम् - 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति 'स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इत्यत्रापि जीवशब्देन परमात्मा अभिहितः। 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति श्रुतेः।**

**'विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात्।**

**स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा ।**
**महाभूतानि च विभुस्त्रिवृत्करणपूर्वकम् ।**
**संसारिणं भ्रामयति सदैवान्यत्वलक्षणम् ।**
**तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्' इति च ।**

**'तत्तेज ऐक्षत ता आप ऐक्षन्त इमास्तिस्रो देवताः' इति पूर्वमेव चेतनत्वसिद्धेः, 'अनेन जीवेनात्मना' इति संसारिणः पुनः प्रवेशो न युक्तः । अतस्तत्र जीवशब्देन परमात्मैवाभिहितः ।**

**'जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति'**

**इत्यत्रापि जीवशब्दोदितः पर एव । पेपीयमानो मोदमानस्तु संसारी । न हि चेतनादन्यस्य मोदभोगादिकं युज्यते ।**

**'सुखस्य चाप्यायतनं शरीरं दुःखस्य चाप्यायतनं शरीरम् ।**
**अचेतनं प्राकृतमेतदाहुर्भोक्ता तयोश्चेतनकः शरीरी ।' इति भारते ।**

**'जीवापेतं वा व किलेदं म्रियते न जीवो म्रियते' इत्यत्रापि जीवशब्दः परे । न हि संसारिणो मुख्यतः प्राणधारकत्वं युज्यते । 'ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते नरः' इति च ।**

**(त.मं.)** ननु 'सेयं देवतैक्षत । हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मना' इत्यादौ परमात्मनो जीवैक्यं प्रतीयत इत्यत आह- **अनेन जीवेनेति ॥**

तेजआदिषु जडेष्वभिमानिजीवस्य संसारिणोऽपि प्रवेशसम्भवान्न तत्र जीवशब्दः परमात्मविषय इत्यत आह- **तत् तेज इति ॥**

**इदं म्रियते** इदं जगत् प्राणांस्त्यजति । मृङ् प्राणत्याग इति धातुः । जीव प्राणधारण इति च ।

**टीका -** ननु जीववृक्षदृष्टान्तो न जीवपरमात्मभेदविषयः । तत्प्रत्यायकाभावात् । किन्तु समुद्रे प्रविष्टानां नदीनामिव सुप्तौ प्रलये च परमात्मनि प्रविष्टस्य जीवस्य विनाशशङ्कायां विनाशाभाव-प्रतिपादनार्थ एव । तत्कथं स्थाननवकेऽपीत्युक्तमित्यत आह- **अनेनेति ॥** व्याकरवाणीत्यतः परं 'अत्रेव' इति शेषः । 'सेयं देवतैक्षत । हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतमेकैकाङ्करवाणीति । सेयं देवतेमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यत्र वाक्ये यथा जीवशब्देन परमात्मैवाभिहितो न संसारी । वृक्षशब्देन तु संसारी कथ्यते न तु जडशरीरमिति वाक्यशेषः । तथा च पूर्वोक्तप्रकारेण संसारिणः परमात्माधीनत्वमेव अत्रोक्तमिति भावः । जीवशब्दस्य परमात्मवाचित्वं कुत इत्यत आह- **जीव इतीति ॥**

एतेन एतदपि परिहृतम् । 'यद्यत्र जीवशब्दः परमात्मपरः तदाऽऽत्मनेति व्यर्थं स्यात् । दृष्टान्तीकृते वाक्ये तु जीवेनात्मनेति द्वयमपि व्यर्थं स्यात्' इति । **जीवेन** अनिरुद्धेन परमात्मनेत्यत्र अर्थोपपत्तेः। परस्यैवात्मनेति व्यर्थम् । तथा, दृष्टान्तीकृतेऽपि वाक्ये अनिरुद्धाख्येन स्वात्मनेत्यर्थसम्भवाच्च ।

दृष्टान्तीकरणं च प्रसङ्गात्तस्यापि वाक्यस्य व्याख्यानार्थम् । अन्यथा जीवेन स्वात्मनेति सामानाधिकरण्येन

संसारिणः परदेवतायाश्च ऐक्यं प्रतीयेत। तथा च 'न चाभेदे कश्चिदागमः' इत्यसत् स्यादिति।

अस्तु जीवशब्दस्य परमात्मनि शक्तिः । तथाप्येतयोर्वाक्ययोः तत्परत्वं कुत इत्यतः समाख्यारूपाद्वाक्यान्तरादित्यभिप्रेत्य तत्पठति- **विष्णुरिति ॥ प्राणानाम्** इन्द्रियाणां शरीरे **धारणात्** स्थापनात् । 'जीव प्राणधारणे' इति हि पठन्ति। स विभुः **महाभूतानि** तेजोऽबन्नानि प्रविश्य त्रिवृत्करणपूर्वकं नामरूपे व्याकरोदिति शेषः। एतेन प्रथमवाक्यार्थो निर्णीयते। शेषेण द्वितीयवाक्यार्थः। तथाशब्दः समुच्चये। **भ्रामयति** जागराद्यवस्थासु। स्वस्वरूपं संसारिणं कथं भ्रामयतीत्यत उक्तम्- **सदैवेति ॥** चेतनत्वे सतीश्वरादन्यत्वमेव हि संसारिणो लक्षणम्। **तेन** परमेश्वरसन्निधानविशेषेण।

दृष्टान्तीकृतवाक्ये जीवशब्दस्य परमात्मपरत्वे युक्तिं चाह- **तत्तेज इति ॥** इतिवचनादिति शेषः । **पूर्वमेव** जीवप्रवेशात्। इत्युच्यमानः। **न युक्तो** वैयर्थ्यात्। इदमुक्तं भवति- यदि तेजोऽ-बन्नान्यचेतनानि स्युः तदा तेषां चेतनानधिष्ठितानां कार्याक्षमत्वात् संसारिणो जीवशब्दोदितस्य तत्र प्रवेशो वक्तव्यः स्यात्। न चैवम्। ईक्षणलिङ्गेन देवताश्रुत्या च चेतनत्वावगमात्। अतो नात्र जीवशब्दः संसारिवाचीति गम्यत इति। ततः किमित्यत आह- **अत इति ॥** परिशेषादि-त्यर्थः। **तत्र** दृष्टान्तीकृते वाक्ये। चेतनानामपि स्वतः प्रवृत्त्यभावादीश्वरप्रवेशः सार्थक एव।

एतमेव न्यायं दार्ष्टान्तिके वाक्येऽपि जीवशब्दस्य परमात्मपरत्वसिद्धयेऽतिदिशति- **जीवे-नेति ॥** एवमेवेत्युपस्कर्तव्यम्। न्यायसाम्यं दर्शयति- **पेपीयमान इति ॥** यत इति शेषः। पेपीयमानत्वादिलिङ्गेन वृक्षस्य संसारिचेतनत्वसिद्धेः जीवेनात्मनाऽनुप्रभूत इत्युच्यमानः पुनः संसारिप्रवेशो व्यर्थस्स्यात्। अतोऽत्रापि जीवशब्दस्य संसारिपरत्वानुपपत्तेः परिशेषात् परमात्मपरत्वं निश्चीयत इति। ननु पेपीयमानो मोदमान इति वृक्षशरीरं निर्दिश्यते। तस्य संसारिणाऽनुप्रभूतत्वं युक्तमेवेत्यत आह- **न हीति ॥** मोदो हि नाम सुखम्। पानशब्दोदितश्च भोगो विषयानुभवः। ताभ्यां च तत्कारणभूताविच्छाप्रयत्नौ लभ्येते। सुखादयश्च चेतनधर्मा एव प्रसिद्धाः। अन्तःकरण-परिणतित्वेऽपि चेतनस्वामिकत्वात्। ते कथं शरीरधर्माः स्युः।

अनुभवसिद्धेऽर्थे भारतसंमतिं चाह- **सुखस्येति ॥** एतदधिष्ठानेन सुखदुःखे भुज्येते इति तयोरायतनम्। भोक्तृ किं न स्यात्, किमायतनत्वेनेत्यत उक्तम्- **अचेतनमिति ॥** तस्योपपादनम्- **प्राकृतमिति ॥** भूतान्यपि प्रकृतय इत्युच्यन्ते। कस्तर्हि भोक्तेत्यत आह- **भोक्ता तयोः शरी-रीति ॥** तस्य भोक्तृत्वोपपादनम्- **चेतनक इति ॥** कप्रत्ययः कुत्सायाम्। देहात्मविवेकरूपे चैतन्ये सति भोगासम्भवात्।

जीवेनानुप्रभूतः= संसारिणा विशिष्टो देहः, पेपीयमान इत्यङ्गीकारेऽप्युपचारप्रसङ्गः । ननु जीवापेतमित्युपसंहारवाक्ये जीवस्याविनाशोक्तेस्तत्परमेव पूर्ववाक्यमित्यत आह- **जीवापेत-मिति ॥ परे** परात्मविषय एव। ततश्च **जीवेन** परमात्मनाऽपेतं, त्यक्तदेहमिति यावत्। **इदं** संसारिजातं **म्रियते** प्राणैर्वियुज्यते। **जीवः** परमात्मा तु कदापि न म्रियत इत्येवमत्यन्तविलक्षणौ जीवपराविति वाक्यार्थः। अत्र जीवशब्दः संसारिवाची किं न स्यादिति चेन्न । तत्रार्थासम्भ-वादित्याह- **न हीति ॥ मुख्यतः** स्वातन्त्र्येण । अन्यथाऽनिच्छया मरणासम्भवादिति भावः। तथाप्यस्य वाक्यस्य परमात्मपरत्वं कुत इति चेत् समाख्यानादित्यभिप्रायेणाह- **ब्रह्मणेति ॥**

**(र.टि.)** 'अनेन जीवेनात्मनानुप्रविश्य' इति वाक्यस्योदाहृतदृष्टान्तवाक्येष्वभावात् किमर्थं तदुदाहरणमित्यत आह- **करवाणीत्यतः परमिति ॥** जीवशब्दस्य परमात्माभिधायकत्वेऽपि वृक्षपरमात्मनोरेव भेदः प्राप्नोति न जीवपरमात्मनोरित्यत आह- **वृक्षशब्देन त्विति ॥** अन्यथा

'तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्'

इत्यस्योदाहरणमसङ्गतं स्यादिति भावः। **अन्यथेति ॥** दृष्टान्तीकृतस्याव्याख्यान इति भावः। **तेजोऽबन्ना-नीति ॥** श्रुतौ त्रिवृदिति त्रिवृत्करणस्यैवोक्तत्वादिति भावः। **शेषेणेति ॥**

'स प्रविश्य शरीरं च स्थावरं जङ्गमं तथा।
संसारिणं भ्रामयति।'

इत्यादिनेत्यर्थः। अत एव तथाशब्दमिदानीं व्याचष्टे- **तथाशब्द इति ॥** सवितुरित्यादिना स प्रविश्येत्येतन्महा-भूतसम्बन्धित्वेनापि व्याख्यातमिति द्रष्टव्यम्। **चेतनत्वे सतीति ॥** अत्रेश्वरपदं नित्यमुक्तपरम्। तेन न लक्ष्मीतत्त्वेऽतिव्याप्तिरिति द्रष्टव्यम्। तेनायमित्यत्र तेन परमेश्वरेणेति व्याख्याने अनुप्रभूतपदं नोक्तार्थं स्यादित्यतो व्याचष्टे- **परमेश्वरसन्निधानविशेषेणेति ॥** आदिपदार्थमाह- **ताभ्यां चेति ॥** शरीरस्य भौतिकत्वात्कथं प्राकृत-मित्युक्तमित्यत आह- **भूतान्यपीति ॥ भोगासम्भवादिति ॥** रागादिरूपदोषनिमित्तकभोगासम्भवादि-त्यर्थः। **उपचारप्रसङ्ग इति ॥** भोगकारणत्वगुणयोगेन जीववाचकपेपीयमानादिशब्दस्य देहे उपचारप्रसङ्ग इत्यर्थः। **प्राणैर्वियुज्यत इति ॥** तथा चेदमित्यस्य जडशरीरपरत्वे नश्यतीति स्यान्न तु म्रियत इतीति भावः। **अर्थासम्भवादिति ॥** स्वातन्त्र्येण प्राणधारकत्वं विनाऽन्यमरणहेतुदेहत्यागकर्तृत्वं, स्वस्य मरणाभावश्च नोप-पद्यत इत्यस्वतन्त्रप्राणधारकसंसारिग्रहणे उक्तरूपवाक्यासम्भवादित्यर्थः। अस्तु स्वातन्त्र्येण प्राणधारकत्व-मपि संसारिण इत्यत आह- **अन्यथेति ॥**

**(रा.टि.)** प्रतिज्ञावाक्ये त्रिवृत्करणवाक्ये चोभयत्रापि जीवात्मपदश्रवणाद्द्वयमप्युदाहरति- **सेयं देवतेति ॥** एतेनेत्युक्तं विवृणोति- **जीवेनानिरुद्धेनेति ॥** प्रत्युत परस्यैवायं वैयर्थ्यदोष इत्याह- **परस्येति ॥** विप्रतिपन्नस्य कथं दृष्टान्तीकरणमित्यत आह- **दृष्टान्तीकरणं चेति ॥** 'धृ धारणे' इत्यस्य ण्यन्तस्य रूपमुपेत्याह- **शरीरे धारणात्स्थापनादिति ॥ तेजोऽबन्नानीति ॥** अन्नशब्देन पृथिवी। **त्रिवृत्करणेति ॥** मिश्रीकरणपूर्वकमि-**(रा.टि.)** त्यर्थः। **नामरूपे** शब्दार्थात्मकप्रपञ्चौ। **शेषेणेति ॥** संसारिणमित्यादिना, स एष जीवेनात्मनेति द्वितीयवाक्यार्थ इत्यर्थः। **समुच्चय इति ॥** न केवलं स्थावरं, जङ्गमं चेति समुच्चय इत्यर्थः। जडेऽनतिव्याप्त्यर्थमाह- **चेतनत्वे सतीति ॥** श्रीतत्वं तु ईश्वरकोटिनिविष्टमिति भावः। तेनेति मूलानुवादः। परमेत्यादि व्याख्या। इतिशब्दानन्तरं शेषमाह- **इतिवचनादिति ॥** कस्मात्पूर्वमेवेत्यत आह- **जीवप्रवेशादिति ॥** आत्मनेति इतिपदानन्तरं शेषमुक्त्वा तस्यान्वयं तत्र हेतुं चाह- **इत्युच्यमान इति ॥ न युक्तो वैयर्थ्यादिति ॥** ननु तेजः प्रभृतेः कुतश्चेतनत्वं तथापि कुतश्चेतने चेतनान्तरानुप्रवेशो व्यर्थ इत्यत आह- **इदमुक्तम्भवतीति ॥** [1]**तत्प्रवेश इति ॥** तेजःप्रभृतिजडप्रवेश इत्यर्थः। **परिशेषादिति ॥** संसारिपरमात्मार्थकत्वयोर्मध्ये संसारिपरत्वायोगे परमात्मार्थकत्वस्यैव परिशिष्टत्वादिति भावः। तत्रेति मूलानुवादः। वाक्यान्ता व्याख्या। नन्वेतेष्वपि जीवाख्य-परमात्मानुप्रवेशो व्यर्थ इत्यत आह- **चेतनानामपीति ॥ एतमेवेति ॥** पूर्वमेवेत्यादिनोक्तमेव न्यायमित्यर्थः। दार्ष्टान्तिकत्वद्योतनायाह- **इत्युपस्कर्तव्यमिति ॥** आदिपदार्थविवरणायाह- **तत्करणभूताविच्छाप्रयत्ना-विति ॥** उत्तरार्धमवतारयति- **भोक्तृ किं न स्यादिति ॥** शरीरमिति योज्यम्। भौतिकत्वाच्छरीरस्य कथं प्राकृतत्वमित्यत आह- **भूतान्यपीति ॥** परम्परया तदुपादानकत्वादिति भावः । **विवेकेति ॥** स्फुटतरविवेके-त्यर्थः। **भोगेति ॥** उच्चत्वनीचत्वलक्षणात्मकविक्रियालक्षणभोगासम्भवादित्यर्थः। **उपचारेति ॥** भोक्तृजीवाधि-ष्ठितत्वस्यैव तदर्थत्वादिति भावः। परे इत्यनुवादः। श्रुत्यर्थमाह- **ततश्चेति ॥** जीवपदस्य परमात्मार्थकत्वे। ततश्चेत्यस्य इति वाक्यार्थ इत्यन्वयः। **प्राणैरिति ॥** इन्द्रियैः प्राणादिवायुभिश्चेत्यर्थः।

**(श्री.टि.) विनाशाभावेति ॥** न जीवो म्रियत इत्युक्तत्वादिति भावः। अनेन जीवेनात्मनाऽनुप्रविश्येति वाक्यस्योदाहृतदृष्टान्तवाक्येष्वभावात्किमर्थं तदुदाहरणमित्यत आह- **व्याकरवाणीत्यतः परमत्रेवेति शेष इति ॥** ननु जीवशब्दस्य परमात्मवाचकत्वेऽपि वृक्षपरमात्मनोरेव भेदस्सिद्ध्यति न जीवपरमात्मनोरित्यत आह- **वृक्षशब्देनेति ॥** अन्यथा

'तेनायं मोदते नित्यं वृक्षावस्थां गतोऽपि सन्'

इत्येतदयुक्तं स्यादिति भावः। **अत्रेति ॥** अनेन जीवेनात्मनाऽनुप्रभूत इति दार्ष्टान्तिकवाक्य इत्यर्थः। **व्यर्थं स्यादिति ॥** जीवेनानुप्रभूत इत्येतावता पूर्णत्वादिति भावः। **द्वयमपि व्यर्थं स्यादिति ॥** 'हन्ताहमिमास्तिस्रो देवता अनुप्रविश्य नामरूपे व्याकरवाणि' इत्येतावता पूर्णत्वादिति भावः। एतेनेत्युक्तं विशदयति- **जीवेना-निरुद्धेनेति ॥** आत्मनेत्यस्यार्थः परमात्मनेति। **अत्र**

दार्ष्टान्तिकवाक्ये। तथा चानिरुद्धरूपेण प्रवेशकथनाय दार्ष्टान्तिकवाक्ये आत्मेत्येतत्सार्थकमेवेति भावः। **आत्मनेति व्यर्थमिति ॥** परेण वृक्षशब्देन जीवस्यागृहीत-त्वादनेन जीवेनानुप्रभूतोऽयं वृक्षः पेपीयमानो मोदमानस्तिष्ठतीत्येतावता पूर्णत्वादात्मनेति व्यर्थमिति भावः। **(श्री.टि.)अर्थसम्भवादिति ॥** तथा च जीवेनात्मनेति पदद्वयमपि सार्थकमिति भावः। ननु तद्वाक्यदृष्टान्तीकरणं किमर्थमित्यत आह- **दृष्टान्तीकरणं चेति ॥ प्रसङ्गादिति ॥** एतद्वाक्यव्याख्यानेन तस्यापि स्मारितत्वादि-त्यर्थः। स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग इति तल्लक्षणादिति भावः। एतद्वाक्यव्याख्यानाकरणे बाधकमाह- **अन्य-थेति ॥** नन्वैक्यं प्रतीयतां को दोष इत्यत आह- **तथा चेति ॥** श्रुतौ त्रिवृत्करणस्यैवोक्तत्वेन पञ्चीकरणानुक्ते-स्तदनुसारेण महाभूतानीत्यस्यार्थमाह- **तेजोऽबन्नानीति ॥ प्रथमवाक्यार्थो** दृष्टान्तीकृतवाक्यस्यार्थः। **शेषे-णेति ॥** महाभूतानीत्यर्धव्यतिरिक्तसार्धश्लोकेनेत्यर्थः। जडव्यावृत्त्यर्थं चेतनत्वे सतीत्युक्तम्। ईश्वरव्यावृत्त्यर्थ-मीश्वरादन्यत्वमित्युक्तम् । न च महालक्ष्म्यामतिव्याप्तिरिति वाच्यम्। ईश्वरपदेन तस्या अपि ग्रहणादिति ज्ञातव्यम्। **देवताश्रुत्या** देवताशब्देनेत्यर्थः। ननु भवत्पक्षेऽपि तेजोऽबन्नानां चेतनत्वेन प्रवृत्त्युपपत्तेस्तेषु भगवत्प्रवेशोऽपि व्यर्थ इत्यत आह- **चेतनानामपीति ॥ स्वत इति ॥** 'न ऋते त्वत्क्रियते' इति श्रुत्या ईश्वर-व्यतिरेकेण कस्यापि स्वतः प्रवृत्त्यभावस्योक्तत्वादिति भावः। **वृक्षशरीरं** जडभूतम्। **पानशब्देति ॥** पानप्रतिपादकपेपीयमानशब्दोदित इत्यर्थः। भोगादिकमित्युक्तादिपदार्थमाह- **ताभ्यां चेति ॥** 'नन्वेतत्सर्वं मन एव' इति श्रुत्या सुखादीनामन्तःकरणपरिणामत्वेन तद्धर्मत्वप्रतीतेः कथं चेतनधर्मत्वमित्यत आह- **अन्तःकरणेति ॥** चेतनस्वामिकत्वमेवात्र चेतनधर्मतया विवक्षितमिति भावः। **एतदिति ॥** शरीरेत्यर्थः। यथोक्तं परैरपि 'यदवच्छिन्ने आत्मनि भोगस्तद्भोगायतनं शरीरम्' इति।

ननु भौतिकस्य शरीरस्य कथं प्रकृतिकार्यत्वमित्यत आह- **भूतान्यपीति ॥** नित्यानां चतुर्विंशतितत्त्व-सूक्ष्मरूपाणां प्रकृतिशब्दवाच्यतायाः पुराणेषु प्रसिद्धत्वेन भूतानामपि प्रकृतिशब्दवाच्यत्वादिति भावः। **कुत्साया-मिति ॥** तथा च **चेतनकः** कुत्सितज्ञानवानित्यर्थः। ज्ञानस्य कुत्सितत्वं कुत इत्यत आह- **देहात्मेति ॥ चैतन्ये सतीति ॥** चेतयते जानातीति चेतनस्तस्य ज्ञानवतो भावो धर्मश्चैतन्यं ज्ञानं, तस्मिन् सतीत्यर्थः।

'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः'

इत्यादिना देहात्मविवेकज्ञानस्य प्राणभृन्मात्रसिद्धत्वस्योपपादितत्वात् स्फुटतरविवेकरूपे चैतन्ये सतीति व्याख्येयम्। **भोगसम्भवादिति ॥** रागादिदोषनिमित्तकभोगसम्भवादित्यर्थः । तथा च देहात्मनोः स्फुटतर-विवेकज्ञानाभावप्रयुक्तदेहाभिमानसद्भावेन रागादिदोषवत्त्वेन कुत्सितज्ञानवत्त्वात्तत्प्रयुक्तसुखदुःखभोक्ताऽयं भवतीति भावः। **संसारिणा विशिष्ट इति ॥** केवलदेहस्य पेपीयमानत्वासम्भवेऽपि संसारिजीवविशिष्टस्य तत्सम्भवादिति भावः। **उपचारप्रसङ्ग इति ॥** भोगकारणत्वरूपगुणयोगेन जीववाचकपेपीयमानादिशब्दस्य देहे उपाचारप्रसङ्ग इत्यर्थः। **अविनाशोक्तेरिति ॥** न जीवो म्रियत इत्युक्तत्वादिति भावः। **पूर्ववाक्यमिति ॥** स एष जीवेनात्मनेति पूर्ववाक्यमित्यर्थः। **प्राणैर्वियुज्यत इति ॥** इदमित्यस्य संसारिजीवपरत्वमनङ्गीकृत्य जडशरीरपरत्वाङ्गीकारे जीवापेतं वाव किलेदं नश्यतीति प्रयोगः स्यान्न तु म्रियत इति। न हि घटो म्रियत इति प्रयोगः क्वचिद् दृष्ट इति भावः। **अर्थासम्भवादिति ॥** 'जीव प्राणधारणे' इति धातोर्जीवशब्दप्रवृत्तिनिमित्त-**(श्री.टि.)** भूतार्थस्य मुख्यतः प्राणधारकत्वस्य जीवेऽसम्भवादित्यर्थः। अस्तु स्वातन्त्र्येण प्राणधारकत्वमपि संसारिण इत्यत आह- **अन्यथेति ॥** अहं मृतः स्यामितीच्छाया अभावेऽपि मरणं भवति, तन्न स्यात्। प्राणधारणरूपजीवस्य स्वाधीनत्वादित्यर्थः।

**(पां.टि.) मूले भ्रामयतीति ॥** यद्यपि 'मितां ह्रस्वः' इति ह्रस्वत्वविधानाद् भ्रमयतीति वक्तव्यम्। तथापि 'वा चित्तविरागे' इत्यतो वेत्यनुवृत्त्या तद्विकल्पसिद्धेर्भ्रामयतीति रूपनिष्पत्तिरिति द्रष्टव्यम्। **चेतनत्वे सतीति ॥** अत्रेश्वरपदस्य नित्यमुक्तपरत्वेनेश्वरमात्रपरत्वाभावान्न श्रीतत्त्वेऽतिव्याप्तिरिति द्रष्टव्यम्। ईश्वरपदं लक्ष्म्या अप्युपलक्षणम्। ततश्च तदुभयान्यत्वस्य तल्लक्षणत्वलाभान्न तत्रातिप्रसङ्ग इत्यप्याहुः। चेतनत्वे ईश्वर-प्रवेशस्यापि वैयर्थ्यमित्यत आह- **स्वत इति ॥** जडवत्परतन्त्रतया स्वतः शक्तिमात्रशून्यत्वेनेश्वरप्रवेशं विना प्रवृत्त्यनुपपत्तेस्तत्सिद्ध्यर्थतयेश्वरप्रवेशः सार्थक इति भावः। **उच्यन्त इति ॥**

'पृथिव्याद्याः प्रकृत्यन्ताः सर्वाः प्रकृतयः स्मृताः'

इति वचनादिति भावः। कथं तस्य कुत्सितचेतनत्वमित्यतो निमित्तोक्त्या तदुपपादयति- **देहात्मेति ॥** पर इत्यत्र प्रातिपदिकार्थमुक्त्वा सप्तम्यर्थमाह- **परमात्मविषय एवेति ॥**

**(व्या.टि.)** जीववृक्षदृष्टान्तवाक्ये अनेन जीवेनेति नामरूपव्याकरणसङ्कल्पवाक्याभावात् तद्ग्रहणासङ्गति-माशङ्क्याह-

**करवाणीत्यतः परमिति ॥** तस्य दृष्टान्ततया ग्रहणान्नासङ्गतिरिति भावः। मूले अपेक्षितशेषं पूरयति- **वृक्षशब्देनेति ॥** पदार्थमुक्त्वा वाक्यार्थमाह- **तथा चेति ॥** मूलोदाहृताभिधानश्रुतेरानुषङ्गिकमर्थान्तरं चाह- **एतेनेति ॥ व्यर्थं स्यादिति ॥ तस्य** जीववाचिनः । तत्सामानाधिकरण्याभावाद्विरुद्धप्रयोजनमित्यर्थः। **द्वयमपीति ॥** सेयं देवतेति प्रकृतपरमात्मनः पदिन्यायेन प्रविश्येत्यत्र कर्तृतयान्वयप्रतीतेरित्यर्थः । **अत्रेति ॥** दृष्टान्तवाक्य इत्यर्थः । **उपपत्तेरिति ॥** द्वयोरपि पदयोः सामान्यविशेषभावेनैकार्थ्यात् शिंशुपावृक्ष इतिवत् सामानाधिकरण्योपपत्तेरित्यर्थः । **परस्यैवेति ॥** उभयोरैकार्थ्येन सहप्रयोगादित्यर्थः । **अनिरुद्धाख्येनेति ॥**

> 'जीवाख्येनैवरूपेण योऽनिरुद्ध इति स्मृतः ।
> तेन रूपेण लक्ष्म्यादीन् प्रविष्टो रूपनामनी ।
> करिष्ये त्रिवृतश्चैनानेकैकं करवाणि च ।
> इति मत्वा प्रविश्याथ'

इति तद्भाष्योदाहृतस्मृत्या तथैवोक्तेरित्यर्थः । ननु प्रकृतव्याख्याने अप्रकृतदृष्टान्ती-करणमफलमित्यत आह- **दृष्टान्तीकरणं चेति ॥ असत्स्यादिति ॥** तद्व्याख्यानस्य सन्निहितप्रकृतसङ्गत्यभावेऽपि परमप्रकृतसङ्गतिरस्तीति नासङ्गतिरिति भावः । **तत्परत्वमिति ॥** न हि शक्तिस्तात्पर्यनियता । अन्यथा नानार्थादेरनेकार्थशक्त्याऽनेक-तात्पर्यापातेनानन्वयप्रसङ्गादित्यर्थः । **स्थापनादिति ॥** तच्च 'प्राणादयो वाक्यशेषात्' इति सूत्रे-

**(व्या.टि.)** 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुतान्नस्यान्नं मनसो मनः'

इति वाक्यशेषेण प्राणादिप्रवर्तकत्वेन पञ्चजनोक्तेरित्यर्थः । शक्तौ मानीभूतं धातुं पठति- **जीवेति ॥** यथाश्रुतो-त्तरान्वयभ्रमं वारयति- **त्रिवृत्करणपूर्वकमिति ॥ प्रथमेति ॥** दृष्टान्तवाक्येत्यर्थः । **तथाशब्द इति ॥** अमुक्तावस्थाप्रेरकत्वस्येत्यर्थः । **लक्षणमिति ॥** न च लक्ष्मीमुक्तेष्वतिव्याप्तिः । ईश्वरपदस्य तदुपलक्षकत्वादिति हृदयम् । पूर्वशब्दस्य दिक्शब्दत्वेनावध्यपेक्षणात्तमाह- **जीवप्रवेशादिति ॥ इतीति ॥** ईक्षितृत्वदेवतात्वप्रकारेणे-त्यर्थः । चेतनसिद्धावपि प्रवेशोक्तेः कथं वैयर्थ्यमित्यतः स्फुटयति- **इदमुक्तं भवतीति ॥** ईश्वरप्रवेशस्यापि वैयर्थ्यं समानमित्यत आह- **चेतनानामपीति ॥** अतिदेशज्ञापकपदाभावमाशङ्क्य निराह- **एवमेवेत्युप-स्कर्तव्यमिति ॥** ननु मोदो नाम हर्षः 'मुद हर्षे' इति धातोः । लोमहर्षणः, 'लोम्नां हर्षणकारिणीम्' इत्यादि-प्रयोगादचेतनानामपि लोम्नां हर्षो दृष्टः । पानमपि वृक्षे युक्तं, पादप इति प्रसिद्धेरित्यतो मोदभोगादिपदाभि-प्रायमाह- **मोदो हीत्यादिना ॥** श्रुतौ पानस्यादित्वेऽपि स्पष्टफलवाचित्वाद् विषयानुभवतात्पर्यद्योतकत्वाच्च क्रमव्यत्यय इति ध्येयम् । अनेन जीवेनानुप्रभूतः चेतनः, सुखित्वाद्भोगित्वादेषितृत्वाद् यतमानत्वाच्चेति प्रयोगा अनुसन्धेयाः । एषामप्रयोजकतामाशङ्क्य परिहरति- **सुखादयश्चेति ॥** 'सर्वं मन एव' इतिश्रुतेः अन्तःकरण-परिणामत्वात् सुखादेरवधारणानुपपत्तिमाशङ्क्य निराह- **अन्तःकरणेति ॥ स्वामिकत्वादिति ॥** स्वामिभावो नाश्रयाश्रयिभाव इति भावः । अनेन परस्य छलमुक्तं भवति । आयतनपदमाश्रयत्वार्थभ्रमव्युदासाय व्याचष्टे- **तदधिष्ठानेनेति ॥** 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति', 'सुखदुःखमध्यसम्प्राप्तये' इति भोगायतनत्वोक्तेरित्यर्थः ।

ननु 'भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति शरीरस्य भौतिकत्वोक्तेः कथं प्राकृतत्वमित्यत आह- **भूतान्यपीति ॥**

> 'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
> एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥'

इति भागवते पञ्चपदेन भूतानामपि प्रकृतित्वोक्तेरित्यर्थः । **देहात्मविवेकरूप इति ॥** भागवते -

> 'निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ।
> प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥'

इति, 'नैषां ममाहमितिधीः श्वशृगालभक्ष्ये' इति विवेके सति अभोगोक्तेः । ननु पेपीयमानेन जीवेनानुप्रविश्यत इति नार्थः । येन चेतनत्वात्प्रागेव जीवप्रवेशो व्यर्थः स्यात् । किन्तु अनुप्रभूत इति निष्ठाप्रत्ययानुरोधात् जीवप्रवेशानन्तरमेव पानादीत्याशङ्क्य निराह- **जीवेनेति ॥ उपचार इति ॥** मुख्ययोगे गौणग्रहणमन्याय्यमिति भावः । पर इति विषयसप्तमीत्याह- **परमात्मविषय इति ॥** ननु जीवान्तर्यामिणोः अहेयत्वादहंनाम्नोरशक्य-**(व्या.टि.)** त्यागत्वेन त्यागोक्तिरयुक्तेत्यत आह- **त्यक्तदेहमिति ॥** ननु 'अकरणत्वाच्च न दोषस्तथा हि दर्शयति' इति सूत्रभाष्ये-

'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।
श्रोत्रादिभिः कारयति करणानीत्यदो विदुः ॥'

इति प्राणानां कर्तृप्रयोज्यत्वरूपं करणत्वमुक्तमिति कथं जीवस्य मुख्यतः प्राणधारणाभाव इत्यत आह- **स्वातन्त्र्येणेति ॥** तदुक्तं छान्दोग्यभाष्ये-

'प्राणाधारो हरेर्नान्यो जीवशब्दस्तथा हरौ ।
संसारिणो जीवता तु जननाद्धानतस्तथा' इति ।

स्वातन्त्र्योपगमे बाधकमाह- **अन्यथेति ॥**

**मूलम् - 'यं वै सोम्यैतमणिमानं न निभालायसेऽस्य सोम्यैषोऽणिम्न एवं महान्यग्रो-धस्तिष्ठति' इत्यत्रापि अणिमाशब्देन पर एवाभिहितः । 'स एषोऽणिमैतदात्म्यमिदं सर्वम् । तत्सत्यम् । स आत्माऽतत्त्वमसि श्वेतकेतो' इत्युक्तत्वाच्च । धानासु तु 'अण्व्य इवेमा धाना' इति स्त्रीलिङ्गप्रयोगादिवशब्दप्रयोगाच्च नाणिमत्वम् । न च ता न निभाल-यसे । ऐतदात्म्यमित्येतदीयम् । स आत्मेत्यात्मशब्दस्तु पर एव । 'द्युभ्वाद्यायतनं स्वशब्दात्' 'नानुमानमतच्छब्दात्' 'प्राणभृच्च' इत्यत्र 'तमेवैकं जानथात्मानम्' इति स्वशब्दपर्यायात्मशब्दान्न प्रकृतिजीवावभिधीयेते । किन्तु पर एवेति भगवता व्यासेनाभिहितम् । अत आत्मशब्दस्त्वस्मिन्नेव मुख्यः ।**

**'आततत्वाच्च मातृत्वादात्मेति परमो हरिः ।
आत्माभासास्तदन्ये ये न ह्येतेषां तता गुणाः ॥' इति परमोपनिषदि ।**

**(त.मं.)** अस्याणिम्नो नियमनादेवं महान्यग्रोधस्तिष्ठति । स एषोऽणिमेत्यादेरयमर्थः- तेन तेन दृष्टान्तेन स्पष्टीकृतनियन्तृत्वादिविशेषः **स एषोऽणिमा** सूक्ष्मरूपः परमात्माऽयम् । ऐतदात्म्यमिदं जगत् । एतदीयमित्यर्थः । तद्व्याह - **ऐतदात्म्यमित्येतदीयमिति ॥ तत् सत्यम्** तस्मादेतदीय-त्वात् सत्यं, न मिथ्या । अस्य सत्यसृष्टित्वात् । सोऽणिमा कीदृश इत्याकाङ्क्षायां, स **आत्मा** स्वामी, हे श्वेतकेतो त्वम**तदसि** ततः स्वामिनोऽन्यजीवाख्यं वस्त्वसि ।

'अत्र वाव किल सोम्यैतमणिमानं न निभालयसे अत्रैव किल' इति । अयं भावः - यथोदके दोषा निहितलवणं प्रातश्चक्षुषा न निभालयसे तथाऽपीमं युक्त्याऽस्तीति जानासि च, एवमेवात्राऽत्मन्येतमणिमानं न निभालयसे हि, सोम्य । अथाप्यत्रैव नियन्तृत्वेनास्ति किला-यम् । किलशब्दः श्रुत्याचार्योपदेशसूचकः ।

'स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाऽचार्यवान् पुरुषो वेद' इत्यत्रापि यथा पुरुषो गन्धारानेव विचार्य प्राप्नोति एवमेव विशिष्टाचार्यवान् पुरुषो ब्रह्म विचार्य वेदेति ह्यर्थः ।

**टीका -** ननु अणिमधानादृष्टान्तो न जीवपरमात्मभेदविषयः । तत्प्रतिपादकपदादर्शनादित्यत आह- **यं वा इति ॥** अत्रापि जीवपरभेद एवोक्त इति शेषः । कथं? यतोऽणिमशब्देन पर एवाभिहित इति योजना । अथ वा यथा पूर्ववाक्ये जीवशब्देन तथाऽत्रापि अणिमशब्देनेति । तथा च पूर्वोक्तरीत्या भेदपरत्वं सिद्धमिति भावः । अणिमशब्दस्य परमेश्वरवाचित्वं कुत इति चेत्, अर्थसम्भवात्, अत्रैव प्रकरणे प्रयोगाच्चेत्याह- **स एष इति ॥** अन्यथा प्रकृतपरित्यागप्रसङ्ग इति भावः । नन्वत्राणिमशब्देन धाना उच्यन्ते । तासामप्यणुत्वेन प्रकृतत्वाद् 'यमेतम्' इति परामर्शोपपत्तेः । तथा च यथा सूक्ष्मधाना-सामर्थ्यात् तत्परिणामो महान्यग्रोधस्तिष्ठति एवं परमसूक्ष्मपरमात्मसामर्थ्यात् तत्परिणामोऽयं प्रपञ्च इति वाक्यार्थः सम्पद्यत इति । तत्राह- **धानासु त्विति ॥** धानासु तु नाणिमत्वमिति सम्बन्धः

। धानानामत्र नाणिमशब्दविषयत्वमित्यर्थः । धाना हि स्त्रीलिङ्गेन बहुवचनान्तेन इवशब्द-शिरस्केनाणुशब्देन प्रकृताः । ताः कथं भावप्रत्ययान्तेन पुंलिङ्गेनैकवचनान्तेन इवशब्दरहितेनाणिम-शब्देन परामृष्टा इति शक्यते व्याख्यातुम् । शब्दभेदादर्थविरोधाच्च । इवशब्देन हि मुख्याणुत्वा-भावोऽवगम्यते । अत्र तु तदभावान्मुख्यमेवाणुत्वम् । अर्थान्तरविरोधाच्च नैवमित्याह- **नचेति ।।** अणिम्नो हि 'न निभालयसे' इत्यदृश्यत्वमुक्तम् । न च ता धानाः श्वेतकेतुर्न पश्यति । किमत्र पश्यसीति पृष्टेन अण्व्य इवेमा धानाः पश्यामीत्युक्तत्वात् । अतोऽपि न धानाविषयोऽयमणिम-शब्दः । किञ्चास्मिन्पक्षे धानाभेदनादिकमपि व्यर्थम् । धानाया एव वटोपादानत्वात् ।

नन्वणिमशब्दस्य परमात्मनि वृत्तिप्रदर्शनार्थमुदाहृतेऽस्मिन्नेव वाक्ये जीवेश्वरैक्यम् 'ऐतदात्म्य-मिदं सर्वम्' इति प्रतीयते । **एतत्** सदाऽऽत्मा यस्य सर्वस्य तदेतदात्मा, तस्य भावः ऐतदात्म्यम् । एतेन सदाख्येनात्मनात्मवत् सर्वमिदं जगत् । नान्योऽस्त्यस्यात्मा संसारीति । तत्कथमुक्तमस्मिन् प्रकरणे भेद एवोच्यत इति, तत्राह- **ऐतदात्म्यमिति ।।** इत्यस्यैतदीयमित्यर्थ इत्यर्थः । **एतत्** सदाऽऽत्मा यस्येत्येवास्तु व्याख्यानम् । आत्मशब्दस्तु स्वामिवाची भावप्रत्ययस्तु परस्यापि व्यर्थः। एतेन, ऐतदात्म्यम् एतत्स्वामिकमेतदीयमिति सिद्ध्यति । अथ वा एष चासावात्मा चैतदात्मा । विचित्रा हि तद्धितगतिरिति वचनात्, एतदात्मन इदमित्यर्थे तद्धितोऽयमित्युक्तं भवति । वैयर्थ्यादर्थान्तरग्रहणस्य ज्यायस्त्वात् । एवं चास्य वाक्यस्यार्थान्तरसम्भवान्न जीवेश्वराभेद-विषयत्वनियम इति भावः ।

तथापि 'स आत्मा' इत्यैक्यमुच्यते सोऽणिमैवात्मा जीव इति, तत्राह- **स इति ।।** आत्मेति शब्दो यस्यासावात्मशब्दः **परः** परमात्मैव न जीवः । अथ वा आत्मेतिशब्दः **परे** परमात्मन्येव तद्विषय एवेत्यर्थः । नन्वात्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि रूढत्वात्कथमेतदित्यत आह- **द्युभ्वाद्यायतनमिति ।।** इत्यत्र त्रिसूत्र्यामिति प्रमेयं भगवताऽभिहितमिति सम्बन्धः । **अभिधीयेते** यस्मिन् द्यौरित्यादिवाक्ये । प्रकृतिजीवावित्युपलक्षणं, वायुरुद्रावपीत्यपि ग्राह्यम् । **न प्रकृति-जीवौ** इत्युत्तरसूत्रद्वयार्थः । तत्र हेतुः- **स्वशब्दादिति** ।। तस्य व्याख्यानम्- **स्वशब्देति** ।। स्वशब्दाभावात् स्ववाचकशब्दस्याप्यन्यस्यादर्शनात् । ततः किमित्यत आह- **अत इति ।।** यस्मिन् द्यौरिति वाक्ये किं जीवादिः प्रतिपाद्य उत परमात्मेति सन्दिह्य जीवादिरिति प्राप्ते परमात्मैव, आत्मशब्दात्, न जीवादिरतच्छब्दात्-तदीयशब्दाभावाच्चेति सिद्धान्तितम् । यद्यात्मशब्दो जीववाची स्यात् कथं तर्ह्यात्मशब्दमत्रार्थे हेतुं कुर्यात् । विरुद्धत्वप्रसङ्गात् । आत्मशब्दमत्रार्थे हेतुं वदता सूत्रकारेण आत्मशब्दः परमात्मवाच्येवेत्यङ्गीकृतमिति गम्यते । अतो न तस्य जीवे वृत्तिरिति । कथं तर्हि तस्य प्रयोग इत्यत उक्तम्- **मुख्य इति ।।** अमुख्यया वृत्त्या जीवे प्रयोग इति भावः । अत्र श्रुतिं चाह- **आततत्वाच्चेति ।।** देशतः कालतो गुणतश्च व्याप्तत्वात् । **मातृत्वाद्** ज्ञातृत्वान्निर्मातृत्वा-द्वा । आङ्पूर्वात् तनोतेः, माङ् माने इत्यतश्च डन्प्रत्ययः । आत्मेति शब्देन हरिः **परमो** मुख्यो वाच्यः । **आत्माऽऽभासा** अमुख्यवृत्त्याऽऽत्मशब्दार्थाः । कुतः- **न हीति ।।**

एतेनैतदपि निरस्तम्- ''यद्यत्रात्मशब्दः परमात्मवाची स्यात्, तदा स आत्मेत्यस्य 'स स' इत्यर्थः स्यात् । तथा च वैयर्थ्यम् । न च आत्मशब्दवाच्यत्वविधानं, वैयर्थ्यादेव'' इति । आततत्वादि-ज्ञापनार्थत्वात् । अथ वा आत्मसम्बन्धीदमित्युक्ते कोऽसावात्मेत्याकाङ्क्षायामेतदित्युक्तम् । तस्यैवेदं विवरणम्- **सोऽणिमाऽऽत्मेति ।** परपक्षे तु ऐतदात्म्यमित्युक्तत्वात् स आत्मेति व्यर्थमेवेति ।

**(र.टि.) अथवेति ।।** अनेनापिशब्दो विष्णुवाचकपदसद्भावमात्रसमुच्चयार्थ इत्युक्तं भवति । नन्वेतस्मिन् व्याख्याने एतद्व्युत्पादनस्य प्रयोजनं न दृश्यत इत्यत आह- **तथा चेति ।। अर्थसम्भवादिति ।।** मुख्याणुत्वरूप-पदार्थस्यादृश्यत्वरूपवाक्यार्थस्य च सम्भवादित्यर्थः । एतच्च 'धानासु तु' इत्यादिमूलेनार्थविरोधरूपपरपक्षबाधक-प्रदर्शनेन सूचितमिति भावः । **बहुवचनान्तेनेति ।।**

अनेन स्त्रीलिङ्गप्रयोगाद्युपलक्षणमित्युक्तं भवति । अत एव- 'अण्व्य इवेमा धानाः' इतिश्रुत्युदाहरणमिति भावः । धानास्विवशब्दप्रयोगाभावादिवशब्दाच्चेति कथमित्यत आह-**इव शब्दशिरस्केनेति ।। अणुशब्देनेति ।।** भावप्रत्ययरहिताणुशब्देनेत्यर्थः । **इवशब्देन हीति ।।** अनेन इवशब्दाच्चेत्येतद् अर्थविरोधप्रदर्शनार्थम्, अन्यत् शब्दभेदप्रदर्शनार्थमुदाहृतमित्युक्तं भवति । **अस्मिन्पक्ष इति ।।** अणिमशब्दस्य धानावाचकत्वमङ्गीकृत्य यथा सूक्ष्मधानासामर्थ्यादित्याद्युक्तप्रकारेण वाक्ययोजनापक्ष इत्यर्थः । **वृत्तिप्रदर्शनार्थमुदाहृत इति ।।** तथा 'न चाभेदे कश्चिदागमः' इत्युक्तोपपादनसमय एवेदं सम्यग् व्याख्येयम् । अत्र कथं व्याख्यायत इत्यसङ्गतिर्न शङ्क्येति भावः । **वायुरुद्रावपीत्यपि ग्राह्यमिति ।।** प्रकृतिशब्दो रुद्रस्य जीवशब्दश्च वायोरुपलक्षक इति ज्ञातव्यम् । तथा च 'नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः' 'एतैरेव हेतुभिर्न जीवो वायुश्च' इति भाष्यविरोधो नेति भावः । यथायोगं सूत्रव्याख्यानसम्बन्धः न यथाक्रम-मित्याह- **न प्रकृतिजीवावितीति ।।** ननु सौत्रस्य स्वशब्दादित्यस्य स्वशब्दपर्यायात्मशब्दादित्यर्थकत्वे सूत्रमिद-मात्मशब्दस्य विष्णुवाचकत्वे प्रमाणं स्यात् । न चैवम् । 'स्वातन्त्र्यात्स्व इति प्रोक्तः' इति प्रमाणसिद्धविष्णु-वाचकस्वशब्दादिति वा स्वशब्दपर्यायनारायणादिशब्दादिति वा व्याख्यानोपपत्तेरित्यत आह- **स्वशब्देति ।।** यस्मिन् द्यौरिति वाक्ये स्वशब्दस्याभावात् । विष्णुवाचकस्यान्यस्य नारायणादिशब्दस्याप्यदर्शनादित्यर्थः । अतच्छब्दादित्येतदपि 'विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकम् । श्रुतिर्वक्ति' इत्यनुव्याख्यानोक्तप्रकारेण स्वशब्दपर्यायात्मादिशब्दादित्यनेनैव व्याख्यातमित्याह- **जीवादिरात्मशब्दादिति ।।** 'भस्मधरोग्रत्वादि-तच्छब्दाभावात्' इति भाष्यं मनसि निधायाह- **तदीयशब्दाभावाच्चेति ।। विरुद्धत्वप्रसङ्गादिति ।।** आत्मशब्दस्य प्रत्यगात्मनि जीव एव रूढत्वे आत्मशब्दवाच्यत्वहेतोर्द्युभ्वाद्यायतनस्य विष्णुत्वसाधनेऽविष्णुत्वेन व्याप्तत्वाद् विरुद्धत्वप्रसङ्गः । अजीवत्वसाधने जीवत्वेन व्याप्तत्वाद्विरुद्धत्वं स्यादित्यर्थः । **परमात्मवाच्येवेत्यङ्गीकृत-मिति ।।** विरुद्धत्वपरिहारायोभयवाचकत्वाङ्गीकारे व्यभिचारप्रसङ्गेन पुनर्हेतुत्वं न स्यादित्येवमङ्गीकृतमित्यर्थः। **अमुख्ययेति ।।** सूत्रे हेतुत्वेनोक्तात्मशब्दो मुख्यवृत्तिरेवेति भावः । **देशत इति ।।** अनेन 'न ह्येतेषां तता गुणाः' इत्यत्र तता गुणा इत्येतद्देशकालव्याप्तत्वोपलक्षणमित्युक्तं भवति । अत एवात्र गुणतश्चेत्युक्तम् । **एतदित्युक्तमिति ।।** ऐतदात्म्यमिति वाक्ये एतदित्युक्तमित्यर्थः । **ऐतदात्म्यमित्युक्तत्वादिति ।।** ऐतदात्म्यमित्यनेनैव त्वदुक्तरीत्या जीवेश्वराभेदस्योक्तत्वात्पुनस्तत्प्रतिपादनार्थं स आत्मेति व्यर्थमेवेत्यर्थः ।

**(रा.टि.)** अपिपदार्थघटनायाह- **इति शेष इति ।।** प्रकारान्तरेण घटनायाह- **अथ वेति ।।** नात्र शेषो वाच्य इति भावः । अर्थविरोधाच्चेत्युक्तं व्यनक्ति- **इवशब्देनेति ।।** प्रतीयत इत्युक्तं व्यनक्ति- **एतत्सदात्मे-त्यादि ।।** सदेव सोम्येत्यादिना प्रकृतत्वादेतच्छब्देन तदेव परामृश्यत इति भावः । **आत्मवदिति ।।** स्वरूप-वदित्यर्थः । **अस्येति ।।** जगत इत्यर्थः । **इत्येवास्त्विति ।।** परोक्तमेवास्त्वित्यर्थः । **तद्धितोऽयमिति ।।** ष्यञ्प्रत्यये रूपमित्यर्थः । कुत एवं कल्पनेत्यत आह- **वैयर्थ्यादिति ।। अर्थान्तरेति ।।** तस्येदमित्यर्थे तद्धित-प्रत्ययमुपेत्यैतदीयमित्यर्थान्तरग्रहणस्येत्यर्थः ।

**त्रिसूत्र्यामिति ।।** 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगोः' इति ङीप् । अभिहितमित्यस्यान्वयाय पर एवेतीतिपदानन्तरं शेषमाह- **इति प्रमेयमिति ।।** 'नानुमानात्मकाऽगमपरिकल्पितरुद्रोऽत्र वाच्यः' इति, 'एतैरेव हेतुभिर्न जीवो वायुश्च' इति च सूत्रभाष्यानुरोधादाह- **प्रकृतिजीवावित्युपलक्षणमित्यादि ।।** अप्रतीतेर्विवेकमाह- **न प्रकृतिजीवावित्युत्तरसूत्रद्वयार्थ इति ।।** तत्र न प्रकृतिरुद्राविति 'नानुमानमतच्छब्दात्' इत्यस्य, वायुजीवौ न द्युभ्वाद्यायतनमिति तु 'प्राणभृच्च' इति सूत्रस्यार्थः । **तत्रेति ।।** प्रथमसूत्रार्थ इत्यर्थः । कुत एवं व्याख्या स्वेतिशब्दादिति ? स्वस्य शब्दः स्वशब्दः, स्ववाचकशब्द इति विग्रहेण वाचकशब्दान्तरस्यापि सुवचत्वादित्यत आह- **स्वशब्दाभावादित्यादिना ।। जीवादिरिति ।।** प्रकृतिवायुरुद्रा आदिपदेन ग्राह्याः । **तदीयेति ।।** जीवादिबोधकशब्दाभावाच्चेत्यर्थः । स 'एषोऽन्तश्चरते बहुधा जायमानः' इति जायमानशब्दस्तु 'अजायमानो बहुधा विजायते' इति श्रुत्या विष्णौ सावकाश इति भावः । **विरुद्धत्वेति ।।** यस्मिन्निति वाक्ये जीवो न प्रतिपाद्यः किन्तु विष्णुरेव । जीववाचकशब्दस्य वाक्येऽसत्त्वादित्युक्तौ विरुद्धत्वप्रसङ्गादित्यर्थः । **अत्रार्थ इति ।।** द्युभ्वाद्यायतनं जीवो न किन्तु विष्णुरेवेत्युक्तेऽर्थ इत्यर्थः । **तत्रेति ।।** जीवे 'हृदि ह्येष आत्मा' इत्यादौ प्रयोग इत्यर्थः । **ज्ञातृत्वादिति ।।** 'माङ् माने' इति धातोरिति भावः । **निर्मातृत्वादिति ।।** 'मा निर्माणे' इति धातुपाठादिति भावः । **डन्प्रत्यय इति ।।** आतन् मा इति स्थिते 'उणादयो बहुलम्' इति वा निरुक्तिबलाद्वा डन्प्रत्यये 'चुटू' इति डकारलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे स्वाद्युत्पत्तावात्मेति रूपमिति भावः । 'अदिभूभ्यां डुतच्' इत्यादाविव धातुद्वयादप्यस्ति प्रत्यय इति भावः । श्रुत्यर्थमाह- **आत्मेतीति ।।** एतेनेत्युक्तं व्यनक्ति- **आततत्वादीति ।।** ऐतदात्म्यमित्यत्रैतच्छब्दव्याख्यानरूपत्वान्न व्यर्थतेत्याह- **अथ वेति ।। इत्युक्त इति ।।** 'ऐतदात्म्यमिदं सर्वम्' इत्यत्र 'आत्मन

इदम् आत्म्यम्' इतीदं सर्वं जगदात्म-सम्बन्धीत्युक्ते सति कोऽसावात्मेत्याकाङ्क्षायामात्मविशेषणत्वेनैतदित्युक्तम्। एष आत्मा एतद् आत्मा, तस्येदमैतदात्म्यमिति । तथोक्तावप्येतच्छब्देनेव आत्मेत्येतच्छब्देनापि को वा कथ्यत इति जिज्ञासायां स आत्मेति तच्छब्देन पूर्वप्रकृताणिमशब्दनिर्दिष्टं स इत्यनूद्य 'सोऽणिमा आत्मा न जीवः' इत्युच्यत इत्यर्थः। **परपक्षे त्विति ॥** स आत्मेत्यत्र जीवेशाभेद एवोच्यत इति पक्ष इत्यर्थः। प्राक्परोक्तरीत्या ऐतदात्म्यपदेनैवाभेदस्य प्राप्तेरिति भावः।

**(श्री.टि.) तथाऽत्रापीति ॥** अनेनापिशब्दो विष्णुवाचकपदसद्भावमात्रसमुच्चयार्थ इत्युक्तं भवति। **पूर्वोक्त-रीत्येति ॥** 'यथा सूक्ष्मवटबीजे दृश्यमानेऽपि यत्प्रभावात् वटावस्थानं स बीजान्तर्गतः परमात्मा परमसूक्ष्मत्वान्न दृश्यते तथा जीवादपि सूक्ष्मत्वात्तदन्तर्गतोऽपि परमात्मा न दृश्यते' इति पूर्वोक्तरीत्येत्यर्थः। **अर्थसम्भवा-दिति ॥** अणिमशब्दार्थभूतस्य मुख्याणुत्वस्याणोरणीयानिति श्रुत्या परमेश्वर एव सम्भवात् 'अणिमानं न निभालयसे' इत्युक्तादृश्यत्वरूपवाक्यार्थस्य च तस्मिन्नेव सम्भवादित्यर्थः। **प्रयोगाच्चेति ॥** अणिमशब्दस्य परमेश्वरे प्रयोगाच्चेत्यर्थः। **मूले इत्युक्तत्वादिति ॥** इति प्रकृतत्वादित्यर्थः। **नन्वत्रेति ॥** 'यं वै सोम्यैत-मणिमानम्' इति वाक्य इत्यर्थः। नन्वत्राणिमशब्देन परमात्मैवोच्यत इति वक्तव्यम्। स एषोऽणिमेति पूर्वखण्डान्तेऽणिमशब्देन परमात्मन एव प्रकृतत्वात् यं वै सोम्येति वाक्ये 'यमेतमणिमानम्' इति परामर्श उपपद्यते। धानाग्रहणे त्वप्रकृतपरामर्श इति चेत्तत्राह- **तासामपि प्रकृतत्वादिति ॥** 'अण्व्य इवेमा धानाः' इति पूर्ववाक्य इत्यर्थः। ननु धानानां कथमणुशब्देन प्रकृतत्वमित्यत उक्तम्- **अणुत्वेनेति ॥** सूक्ष्मत्वेनेत्यर्थः। **यमेतमिति परामर्शेति ॥** यमेतमणिमानमिति परामर्शेत्यर्थः। धाना हीत्यनन्तरं 'अण्व्य इवेति' इति शेषः। स्त्रीलिङ्गप्रयोगादित्युपलक्षणमित्यभिप्रेत्य बहुवचनान्तेनेत्युक्तम्। धानास्विवशब्दप्रयोगाभावादिवशब्द-प्रयोगाच्चेति कथमुक्तमित्यत उक्तम्- **इवशब्दशिरस्केनेति ॥ अणुशब्देनेति ॥** भावप्रत्ययरहिताणुशब्देने-त्यर्थः। **भावप्रत्ययान्तेनेति ॥** 'पृथ्वादिभ्य इमनिज्वा' इति सूत्रेणाणुशब्दाद्भावे इमनिच्प्रत्यय इति भावः। **शब्दभेदादिति ॥** स्त्रीलिङ्गप्रयोगादित्यनेन शब्दभेद उपपादितः। स्त्रीलिङ्गबहुवचनान्तभावप्रत्ययरहिताणुशब्दो धानास्वण्व्य इति प्रयुक्तः। अत्र त्वतादृशोऽणिमशब्द इति शब्दभेदादित्यर्थः। इवशब्दाच्चेत्यनेनार्थविरोध उपपादितः। तमुपपादयति- **इवशब्देन हीति ॥** धानानामिति शेषः। **अत्र त्विति ॥** यं वै सोम्यैतमणिमानमिति वाक्ये इवशब्दाभावात्परमात्मनो मुख्यमेवाणुत्वमणिमशब्देनावगम्यत इत्यर्थः। **अस्मिन्पक्ष इति ॥** अणिम-शब्दस्य धानावाचकत्वमङ्गीकृत्य 'यथा सूक्ष्मधानासामर्थ्यात्तत्परिणामो महान्यग्रोधस्तिष्ठति' इत्याद्युक्तप्रकारेण वाक्ययोजनापक्ष इत्यर्थः। ननु वटोपादानस्य धानान्तस्सत्त्वात् तत्सामर्थ्यान्महान्यग्रोधस्तिष्ठतीति वक्तुं धानाभेदनादिकं सार्थकमिति चेत्तत्राह- **धानाया एवेति ॥** ननु 'न चाभेदे कश्चिदागमः' इत्युक्तोपपादनसमय एवैतदात्म्यमिति वाक्यमुदाहृत्य सम्यग्व्याख्येयम्। अत्रोदाहृत्य व्याख्याने त्वसङ्गतिरित्याशङ्कापरिहारायोक्तम्- **परमात्मनि वृत्तिप्रदर्शनार्थमुदाहृत इति ॥** अत्र प्रकरणे परमात्मन्यणिमशब्दस्य वृत्तिसद्भावः, प्रयोग इति यावत् तत्प्रदर्शनार्थमुदाहृत इत्यर्थः। अतो नासङ्गतिरिति भावः। **एतत्सत्** ब्रह्म।

ननु कथमनेन जीवेश्वरैक्यं लभ्यतेऽतस्तत्तात्पर्यमाह- **एतेनेति ॥** यदिदं जगत् **आत्मवद्** जीववत्, तत्सदाख्ये-नात्मना ब्रह्मणैवात्मवदित्यर्थः। तद्व्यावर्त्यमाह- **नान्योऽस्तीति ॥ अन्यः** सदन्यः। **संसारी** जीवः। तथाच जीवेश्वरैक्यलाभ इति भावः। एतदीयमित्यनन्तरं इत्यर्थ इति शेषमभिप्रेत्याह- **एतदीयमित्यर्थ इत्यर्थ इति ॥** एतदीयमित्यर्थमुपपादयति- **एतत्सदात्मेत्यादिना ॥** तर्ह्युक्तरीत्या जीवेश्वराभेदः प्राप्त एवेति चेत्तत्राह- **आत्म-(श्री.टि.) शब्दस्त्विति ॥** ननु तर्हीदं सर्वमेतदात्मेत्येव स्यात्, न त्वैतदात्म्यमिति भावार्थकष्यञ्प्रत्ययप्रयोगः। एतत्स्वामिकमिति भवदभिप्रेतार्थस्य भावप्रत्ययं विनाऽपि सिद्धेरिति चेत् सममेतत्तावपीत्याह- **भावप्रत्यय-स्त्विति ॥** भावार्थकष्यञ्प्रत्ययस्तवापि व्यर्थः। एतत्सदात्मा यस्य, एतेन सदाख्येन आत्मनेत्यादित्वदभिप्रेतार्थ-स्यापि तं विनैव सिद्धेरित्यर्थः। ननु सुखमेव सौख्यमित्यत्रेव एतदात्मैवैतदात्म्यमिति ष्यञ्प्रत्ययस्य स्वार्थिकत्वं मया स्वीक्रियते इति चेत्, समं ममापीति भावः। ननु 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रेण कर्मणि भावे च ष्यञ्प्रत्ययो विहितः। जडस्य कर्म भावो वा जाड्यम्। ब्राह्मणस्य कर्म भावो वा ब्राह्मण्य-मिति। तथा 'चतुर्वर्णादिभ्यः स्वार्थ उपसङ्ख्यानम्' इति वार्तिकेन स्वार्थे ष्यञ्प्रत्ययो विहितः। चत्वारो वर्णा एव चातुर्वर्ण्यम्। त्रयो लोका एव त्रैलोक्यम्। चत्वार आत्मान एव चातुरात्म्यमिति। तथा च तस्येदमिति सम्बन्धार्थे कथं ष्यञ्प्रत्ययो व्याख्यायत इत्यत उक्तम्- **विचित्रा हि तद्धितगतिरिति ॥ एतदात्मन इद-मिति ॥** एतदात्मनः सम्बन्धि एतदीयमित्यर्थः। **तद्धितोऽयमिति ॥** तद्धितष्यञ्प्रत्ययान्तमित्यर्थः। तथा चैतदात्मशब्दात् सम्बन्धार्थे ष्यञ्प्रत्यये 'षः प्रत्ययस्य' इति प्रत्ययाद्यस्य षस्य लोपे हलन्त्यमिति ञकारलोपे 'तद्धितेष्वचामादेः' ञिति णिति च प्रत्यये परे अचामादेरचो वृद्धिस्स्यादिति सूत्रेण ञित्त्वादादिवृद्धौ 'नस्तद्धिते' इति

टिलोपे सत्यैतदात्म्यमिति रूपमिति भावः । ननु विचित्रा हि तद्धितगतिरिति वचनानुसारेण तस्येदमित्यर्थे ष्यञ्प्रत्ययाश्रयणं गौणमिति चेत्तत्राह- **वैयर्थ्यादिति ।।** त्वत्पक्षे तस्य स्वार्थिकत्वाश्रयणेन व्यर्थत्वादित्यर्थः । **अर्थान्तरेति ।।** तस्येदमित्येवं सम्बन्धरूपार्थान्तरेत्यर्थः ।

कथमुच्यत इत्यतस्तद्व्याख्याति- **सोऽणिमैवेति ।। आत्मेतिशब्दो यस्येति ।।** आत्मेति शब्दो वाचको यस्येत्यर्थः । **आत्मशब्दः** आत्मशब्दवाच्यः । **तद्विषयः** तत्प्रतिपादकः । **प्रत्यगात्मनि** अन्तरात्मनि जीव इत्यर्थः । ईश्वरस्तु परमात्मेति सोपपदात्मशब्दवाच्यतया प्रसिद्ध इति भावः । **वायुरुद्रावपीत्यपि ग्राह्य-मिति ।।** तथा च 'नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः' इति भाष्यानुसारेण प्रकृतिशब्दो रुद्रस्य 'एतैरेव हेतुभिर्न जीवो वायुश्च' इति भाष्यानुसारेण जीवशब्दो वायोरुपलक्षक इत्यर्थः । 'द्युभ्वाद्यायतनम्' इति सूत्रमुदाहृत्य न प्रकृतिजीवावित्युक्त्या द्युभ्वाद्यायतनमिति प्रथमसूत्रमपि प्रकृतेर्द्युभ्वाद्यायतनत्वप्रतिषेधकमिति प्रतीयत अत आह- **न प्रकृतिजीवावितीति ।। उत्तरसूत्रद्वयार्थ इति ।।** 'नानुमानम्' इति सूत्रम् 'नानुमानात्म-कागमपरिकल्पितरुद्रोऽत्र वाच्यः । भस्मधरोग्रत्वादितच्छब्दाभावात्' इति न्यायेन प्रकृतिवाचकशब्दाभावान्नानु-मानात्मकागमपरिकल्पिता प्रकृतिरत्र वाच्येति न प्रकृतिर्द्युभ्वाद्यायतनमित्येवं द्वितीयं सूत्रं प्रकृतेर्द्युभ्वाद्यायतनत्व-प्रतिषेधकम् । 'प्राणभृच्च' इति सूत्रं 'एतैरेव हेतुभिर्न जीवो वायुश्च' इति भाष्योक्तरीत्या जीवस्य तत्प्रति-षेधकमित्यर्थः ।

ननु स्वशब्दपर्यायात्मशब्दादिति कुतो व्याख्यायते । किं नाम 'स्वातन्त्र्यात्स्व इति प्रोक्तः' इति प्रमाणप्रसिद्ध-विष्णुवाचकस्वशब्दसद्भावादिति कुतो न व्याख्यायत इत्यत आह- **स्वशब्दाभावादिति ।।** 'यस्मिन्द्यौः पृथिवी **(श्री.टि.)** चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' इति विषयवाक्ये स्व इति शब्दः, तस्याभावादित्यर्थः । नन्वथापि स्वस्य वाचकः शब्दः स्वशब्द इत्यङ्गीकृत्य स्ववाचकनारायणादिशब्दसद्भावादिति कस्मान्न व्याख्यायत इत्यत आह- **वाचकशब्दस्यापीति ।।** विष्णु-वाचकस्यान्यस्य नारायणादिशब्दस्याप्यदर्शनादित्यर्थः । **प्रतिपाद्य इति ।।** द्युभ्वाद्यायतनत्वेनेत्यर्थः । **परमा-त्मैवेति ।।** द्युभ्वाद्यायतनमित्यर्थः । स्वशब्दादित्यस्यार्थः- **आत्मशब्दादिति ।।** नानुमानं, प्राणभृच्चेत्यस्यार्थः- **न जीवादिरिति ।।** अतच्छब्दादित्यस्य 'विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् । श्रुतिर्वक्ति' इत्यनुव्याख्यानानुसारेणार्थमाह- **आत्मशब्दादिति ।।** 'भस्मधरोग्रत्वादितच्छब्दाभावात्' इति भाष्यं मनसि निधायातच्छब्दादित्यस्यैवार्थान्तरमाह- **तदीयशब्दाभावाच्चेति ।।**

'आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ।
स्वशब्दात्प्राणभृच्चैव नोक्त इत्येव वेदराट् ।
यद्यात्मशब्दो जीवेऽपि कथं स विनिवारयेत् ।
आत्मशब्दोदितस्तस्माद्विष्णुरेव न चापरः ।।'

इत्यनुव्याख्यानं मनसि निधायोपपादयति- **यद्यात्मशब्द इत्यादिना ।। अत्रार्थ इति ।।** द्युभ्वाद्यायतनस्य विष्णुत्वे जीवादित्वाभावे चेत्यर्थः । **विरुद्धत्वप्रसङ्गादिति ।।** आत्मशब्दस्य प्रत्यगात्मनि जीव एव रूढत्वे द्युभ्वाद्यायतनं विष्णुरेव आत्मशब्दवाच्यत्वादित्यनुमाने आत्मशब्दवाच्यत्वहेतोरविष्णुत्वेन व्याप्तत्वाद्विरुद्धत्व-प्रसङ्गः । द्युभ्वाद्यायतनं न जीवादिरात्मशब्दवाच्यत्वादित्यनुमानेऽप्यात्मशब्दवाच्यत्वस्य जीवत्वेन व्याप्तत्वाच्च विरुद्धत्वप्रसङ्ग इत्यर्थः । **अमुख्यया वृत्त्येति ।।** मुख्यवृत्त्याऽऽत्मशब्दवाच्यत्वमेव तत्र हेतुत्वेन विवक्षितमित्यर्थः।

**तनोतेरिति ।।** 'तनु विस्तारे' इति धातोरित्यर्थः । विस्तारो व्याप्तिः । **माङ् मान इति ।।**

'मानं ज्ञानं लयश्चैव निर्माणं चापि कथ्यते'

इति वचनान्मानमिति ज्ञानं निर्माणं चोच्यत इत्यर्थः । ततश्चाङ्पूर्वकात् 'तनु विस्तारे' 'माङ् माने' आभ्यां डन् प्रत्यये डित्त्वात् धातुद्वयेऽपि टिभूतस्य अन् इत्यस्य आ इत्यस्य च लोपे आत् म् अन्= आत्मन् इति प्रातिपदिकसिद्धिः । ननु धातुद्वयोपरि एकः प्रत्ययः कथमानीयते वैयाकरणसम्प्रदायाभावादिति चेन्न । 'अदिभूभ्यां डुतच्' इति सूत्रेण 'अद भक्षणे' 'भू सत्तायाम्' इति धातुद्वयोपर्येकं डुतच्प्रत्ययमानीय अद्भुतमिति रूपस्योणादिवृत्तौ साधितत्वादित्यवधेयम् । **स स इत्यर्थः स्यादिति ।।** स आत्मेति तच्छब्देन ऐतदात्म्यमिति प्रकृतात्मैव परामर्शनीयः, तथा चात्मा आत्मेत्यर्थस्यादित्यर्थ इत्याहुः । वस्तुतस्तु सोऽणिमैवात्मेति व्याख्याना-दुभयोरपि परमात्मवाचकत्वेन विश्वं विष्णुरितिवत्पर्यायत्वप्राप्त्या वैयर्थ्यादित्यर्थः । ननु सोऽणिमाऽऽत्मशब्दवाच्य इत्यात्मशब्दवाच्यत्वं विधीयत इति नोक्तदोष इत्याशङ्क्य निराकरोति- **न चेति ।। वैयर्थ्यादेवेति ।।** आत्मशब्द-वाच्यत्वविधानस्यापि

वैयर्थ्यादिति भावः। एतेनेत्युक्तं विशदयति- **आततत्वादिति ।।** आततत्वादिज्ञापनार्थ-**(श्री.टि.)** मात्मशब्दवाच्यत्वं विधीयत इति न वैयर्थ्यमिति भावः। **इत्युक्त इति ।।** आत्म्यमित्यनेनेत्यर्थः। **एतदित्युक्तमिति ।।** ऐतदात्म्यमिति वाक्ये एतदित्युक्तमित्यर्थः। **तस्यैवेति ।।** एतदात्मेत्यस्यैवेत्यर्थः। इदं स आत्मेति वाक्यम्। सोऽणिमेति एतदित्यस्य विवरणम्। आत्म्यमित्यत्रत्यात्मशब्दानुवाद आत्मेति। तथा च ऐतदात्म्यमित्यस्य एषः पूर्वमणिमशब्देन प्रकृतश्चासावात्मा चैतदात्मा, तस्येदमैतदात्म्यमित्यर्थो द्रष्टव्य इत्युक्तं भवति। **इत्युक्तत्वादिति ।।** इति वाक्येन जीवेशाभेदस्य प्रतिपादितत्वादित्यर्थः। **व्यर्थमेवेति ।।** तेनाप्यभेदस्यैव प्रतिपादनेन पुनरुक्तिप्रसङ्गादित्यर्थः।

**(पां.टि.) भावप्रत्यय इति ।।** भावार्थे ष्यञ्प्रत्यय इत्यर्थः। तेन विनापि पराभिमतार्थसिद्धेः। तथा च मां प्रति तत्पर्यनुयोगो न युक्त इति भावः। ननु भावार्थे ष्यञ्विधानात् कथमिदमर्थे तद्व्युत्पादनमित्यतः, 'तद्धिताः' इति बहुवचनप्रयोगलब्धात् 'विचित्रा हि तद्धितगतिः' इति वचनात् भावार्थविहितस्यापीदमर्थे विधानसिद्धेर्नानु-पपत्तिरिति भावेनाह- **विचित्रेति ।।** तर्हि त्वत्पक्षेऽपि क्लिष्टकल्पनाश्रयणात्पक्षद्वयसाम्यमेवेत्यत आह- **वैयर्थ्या-दिति ।।** उक्तयोजनायां जघन्यबहुव्रीह्याश्रयणं भवतीत्यरुचिं मन्वानः पक्षान्तरमाह- **अथवेति ।। उत्तरसूत्र-द्वयेति ।।** 'नानुमानमतच्छब्दात्' 'प्राणभृच्च' इत्युत्तरसूत्रद्वयेत्यर्थः। **कथं तर्हीति ।।** 'हृदि ह्येष आत्मा' इत्यत्रेत्यर्थः। **डन्प्रत्यय इति ।।** बाहुलकात् धातुद्वयात् डन्प्रत्यये डित्त्वादुभयत्र टिलोपे च सति आत्मन्निति प्रातिपदिकनिष्पत्तिरिति भावः।

**(व्या.टि.)** वाक्यं भेदेन योजयितुं शेषं पूरयति- **अत्रापीति ।।** जीवपरभेद इति सप्तमी। **उक्त इति ।।** अणिमधानादृष्टान्त इत्यर्थः। अत्र जीववाचिपदाभावेन प्रथमान्तानन्वयात्।

'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिवेदना ।।'

इति गीतारीत्या बीजजीवस्यैव धानारूपेण दृश्यत्वपरिग्रहे यथाश्रुत एवान्वयः। एकवाक्यतया योजयति- **अथ वेति ।। पूर्वोक्तेति ।।** 'तत्र यथा सूक्ष्मवटबीजे दृश्यमानेऽपि' इत्युक्तभावदिशेत्यर्थः। कुत इति किं हेतुं पृच्छसि प्रमाणं वा। आद्ये प्राह- **अर्थेति ।।** द्वितीये आह- **प्रयोगाच्चेति ।।** अप्रकृतत्वाद् यमेतमिति परामर्शायोग इत्यत आह- **तासामपीति ।।** तद्ग्रहणे प्रकृतानुगुण्येन वाक्यार्थमाह- **तथा चेति ।।** अर्थविरोधमुपपादयति- **इवशब्देन हीति ।।** श्येनयागे 'यथा वै श्येनः' इति श्येनसादृश्योक्त्या मुख्यश्येनत्वाभावदर्शनादिति हिशब्दार्थः। **उक्तत्वादिति ।।** किमत्र पश्यसीति प्रश्नवाक्ये किंशब्दस्य द्वितीयान्तत्वेन तत्प्रतिवचनगताणुधानाशब्दयोरपि द्वितीयान्तत्वे कारकपदस्य क्रियापदापेक्षत्वेन पश्यामीति क्रियापदस्याप्युक्तप्रायत्वादित्यर्थः। **अस्मिन्पक्ष इति ।।** धानापदेनोपादानोपादान इत्यर्थः। मायी 'मृदात्मा घटः' इतिवदात्मपदस्य स्वरूपार्थत्वं मत्वा व्याचष्टे- **एतत्सदिति ।।** प्रत्यगर्थत्वाभिप्रायेण वाऽऽह- **एतेनेति ।।** 'ओमित्येकाक्षरम्' इति प्रणवस्यैकाक्षरत्ववदैतदात्म्य-पदस्यैतदीयत्वभ्रमं वारयति- **इत्यस्येति ।।** कथमनेनास्यार्थस्य लाभ इत्यत आह- **आत्मशब्दस्त्विति ।।**

**(व्या.टि.)** 'विष्णुरात्मा भगवतो भवस्यामिततेजसः' इति भारते,

'सूर्य आत्मा जगतस्तस्थुषश्च' इत्यादौ स्वामिन्यप्यात्मपदप्रयोगात्। सूर्यस्य स्थावरजङ्गमात्मकत्वायोगाच्च तत्र तद्वाचित्वमवसीयत इत्यर्थः। **परस्यापीति ।।** तथा च 'यत्रोभयोः समो दोषः' इति न्यायात् न तेन वादी पर्यनुयोज्य इति भावः। अर्थान्तरे तत्सार्थक्यमाह- **अथवेति ।। इदमित्यर्थ इति ।।** तस्य भाव इति निर्दिष्टार्थ-परित्यागेनार्थान्तरग्रहणमन्याय्यमित्यत आह- **वैयर्थ्यादिति ।।** अत एव पूर्वतन्त्रे 'यद्यपि चतुरवत्ती यजमानः पञ्चवत्तैव वपा कार्या' इत्यत्र 'वाक्यवैयर्थ्याद्वपाशब्दे लक्षणैव ज्यायसी' इत्युक्तं दशमे। एतदात्मशब्दादेतदीय-मित्यर्थे छप्रत्ययस्थाने ष्यञ्प्रत्ययो वा। 'व्यत्ययो बहुलम्' इति सूत्रात्। अन्नादाय इत्यादौ कर्मण्यणि प्राप्तव्येऽच् यथा।

आत्मशब्दस्य प्रत्यगर्थत्वभ्रान्त्या शङ्कते- **तथापीति ।।** आत्मशब्द इत्यत्र बहुव्रीहिकर्मधारययोः, पर एवेत्यत्र सप्तमीप्रथमयोश्च सम्भवादुभयत्र(था) व्याचष्टे- **आत्मेतीत्यादिना ।। पर इति ।।** परमात्मन्येवेत्यर्थः। **निरुप-पदस्येति ।।** अनेन जीवात्मपरात्मपरमात्मशब्दानां सोपपदानामन्यपरत्वमभिप्रैति। अत्रेत्येतच्छब्दनिर्दिष्टं दर्शयति- **त्रिसूत्र्यामिति ।।** 'द्विगोः' इति ङीप्। अत्रेतिशब्दो वाक्यार्थपरामर्शीत्याह- **इति प्रमेयमिति ।। वायुरुद्रावपीति ।।** 'नानुमानम्' इति सूत्रे 'नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः' इति भाषितत्वात्, 'प्राणभृच्च' इति सूत्रे 'एतैरेव हेतुभिर्न जीवो वायुश्च' इति चशब्देन वायोरपि समुचितत्वादित्यर्थः। ननु स्वेतिशब्दः स्वशब्दः, स्वस्य शब्दः स्वशब्द इति वाऽस्तु विग्रहः, किं पर्यायग्रहणेनेत्यत

आह- **स्वशब्देति ॥ अन्य-स्येति ॥** अनेन स्वस्य शब्दः स्वशब्द इत्येव विग्रहः । स्वीयत्वं कथमस्येत्यतः षष्ठ्यर्थघटनाय पर्यायेत्युक्तमिति हृदयम् । ननु गृहीतशब्दपरित्यागेन पर्यायग्रहणं क्व दृष्टमिति चेत्, 'सभाराजाऽमनुष्यपूर्वा' इत्यत्र राजपर्याय-इनादिशब्दा एव गृहीताः । इनसभमीश्वरसभमित्यादेरेवोदाहृतत्वात् । राजसभेति गृहीतशब्दस्य प्रत्युदाहृत-त्वाच्चेत्यवेहि । अधिकरणशरीरं रचयति- **यस्मिन्द्यौरित्यादिना ॥**

'यद्यात्मशब्दो जीवेऽपि कथं स विनिवारयेत् ।
आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ।
स्वशब्दात्प्राणभृच्चैव नोक्त इत्येव वेदराड् ॥'

इति तदी(तुरी)याद्यपादीयानुव्याख्यानमनुरुन्धान आह- **यद्यात्मशब्द इत्यादिना ॥ अमुख्ययेति ॥** परम-मुख्यवृत्त्यपेक्षया । यथोक्तमनुव्याख्याने- 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता । उपलक्षणा च गौणी च' इति । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोऽश्वा एवास्मै समीचो दधाति' इतिवत् । तत्र पशूना-मेवापशुत्वोक्तेः प्रशंसैव निमित्तमुक्तं 'प्रशंसा' इति सूत्रे । अन्यथा व्याहतिप्राप्तेः । तथेहापीति रहस्यम् ।

परोक्तार्थपरित्यागाय व्याचष्टे- **देशत इत्यादिना ॥** निर्मातृत्वादित्यनेन 'मा निर्माने' इति धातुप्रकृतिकत्व-**(व्या.टि.)** मप्यात्मशब्दस्याभिप्रैति । चशब्देन प्रकृत्यन्तरसमुच्चयः । **डन्प्रत्यय इति ॥** डित्त्वादुभयत्र टिलोप इति भावः । न च धातुद्वयात्प्रत्ययो न दृष्टचर इति वाच्यम् । 'अदिभूभ्यां डुतच् इति यथा' इति सुधादौ निदर्शित-त्वात् । न च दृष्टान्तोऽसम्मतः, 'अदिभुवो डुतच्' इत्येवार्वाचीनपाठादिति वाच्यम् । अदिभूभ्यामिति द्विवचनान्त एव पञ्चपादीदशपाद्यादिषु प्राचीनः सार्वजनीनः पाठः । तत्र न शङ्कापङ्कः । एकवचनान्तार्वाचीनपाठेऽपि 'अस्ति-सिचोऽपृक्ते' इत्यादिवद् द्वन्द्वैकवद्भावेनैकवचनोपपत्तेर्धातुद्वयात्प्रत्यये नेदं बाधकम् । आश्चर्यार्थाव्ययानुकरणत्वे अतीति निर्देशप्रसङ्गः । अदितिदान्ताव्ययपाठस्य शपथनिर्णेयत्वात् । न च धातोरित्येकवचनाधिकारो बाधकः। यथा प्रातिपदिकादित्येकवचनाधिकारेऽपि ऐतिह्यमित्यादिसिद्धये 'अनन्तावसथेतिहभेषजाञ्ञ्यः' इति इतिहेति-निपातसमुदायादपि तद्धितः, यथा वा 'वर्णात्कारः' इत्येकवचनाधिकारेऽपि स्वाहाकारः स्वधाकारो वषट्कारो वौषट्कार इत्यादिसिद्धये समुदायादपि प्रत्ययः स्वीकृतः, तथाऽत्रापि धातुसमुदायादपि प्रत्ययोत्पत्तौ बाधका-भावात् । अत एव वेदभाष्ये 'दिधिषुरित्यत्र धातुद्वयादुकारप्रत्ययः' इत्युक्तं भट्टभास्करेण । दिधिं धैर्यं, स्यति त्यजति इति भट्टोजिव्याख्यानं मात्सर्यमूलमेव । 'माङ् माने ऊख गतौ इति धातुद्वयादचि मयूखः' इति मुकुटः। तत्खण्डनमपि भट्टोजिकृतं मत्सरमूलम् । न चैकस्योभयत्र कार्यकरणानुपपत्तिरिति वाच्यम् । श्रौतनिर्वचनबलात् प्रकृतिप्रत्ययकल्पनवत् तत्कार्यकल्पनस्यापीष्टरूपानुरोधेन युक्तत्वात् । तस्माद्धातुद्वयादेकप्रत्ययानुपपत्तिरिति मूर्खप्रलापमात्रमिति दिक् ।

ननु शङ्कितरि रूढिमारूढे कथं योगमात्रेण समाधानं, तस्य ततो दुर्बलत्वादिति चेन्मैवम् । 'आत्मब्रह्मादयः शब्दाः साक्षाद् ब्रह्माभिधायिनः' इति स्मृत्या भगवति रूढेरपि सत्त्वात् । न च सत्यां तस्यां योगमात्रस्वीकारो नोचित इत्यतस्तत्र बाधकपरिहारार्थत्वादित्याशयेन शङ्कितबाधकमनूद्यावद्यति- **एतेनेति ॥ वैयर्थ्यमिति ॥** उद्देश्यतावच्छेदकविधेययोरैक्ये अनुवादविधानाद्ययोगेन शाब्दबोधानुपपत्तिरित्यर्थः । प्रमाकरणं प्रमाणमि-त्यादावैकार्थ्यमाशङ्क्य शक्यशब्दवाच्यत्वविधानाच्छाब्दबोधोपपत्तिरिति नैयायिकमतं दूषयिष्यन्ननुवदति- **न चेति ॥** दूषयति- **वैयर्थ्यादिवेति ॥** अर्थशास्त्रे शब्दस्याव्युत्पाद-नीयत्वात्तस्याव्युत्पन्नाधिकारिकत्वादित्यर्थः। अथ वा शब्दवृत्तेः प्राग(ज्ञात)लग्नशब्दप्रयोगप्रत्यययोरयोगेन गृहीतसङ्गतिकं प्रति गृहीतत्वादेव, अगृहीतसङ्गतिकं प्रति प्रवृत्तिनिवृत्त्यनौपायिकत्वेन नैष्फल्यादित्यर्थः । अथ वैतदात्म्यमिति पूर्ववाक्य एवैतस्यात्मत्वानुवादेनैव तद्वाच्यत्वसिद्धेर्न तद्विधानम् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादित्यर्थः । **आतत-तत्वादिज्ञापनेति ॥** योगवृत्त्या आततत्वादेरज्ञातस्य ज्ञापनादप्राप्तविधिसम्भवः ।

अर्थान्तरभ्रमनिरासार्थत्वेनापि सार्थक्यमाह- **अथ वेति ॥ उक्त इति ॥** ण्यन्तेनेत्यर्थः । **कोऽसा-विति ॥** आत्मशब्दस्यानेकार्थत्वादिति शेषः । **सोऽणिमेति ॥ स** एतच्छब्दपरामृष्टः अणिमेति । अनेनाणूनामपि जीवानां नात्रात्मपदेन ग्रहणं, किन्त्वणिम्न एवेति जीवानामुक्तजगत्स्वामित्वं वारयतीत्यर्थः । स्वपक्षदार्ढ्याय **(व्या.टि.)** परपक्षं दूषयति- **परपक्षे त्विति ॥ उक्तत्वादिति ॥** नान्योऽस्त्यस्यात्मा संसारीति जीवेश्वरैक्य-स्योक्तत्वा-दित्यर्थः ।

**मूलम् - ‘तेजः परस्यां देवतायां तावन्न जानाति’ इत्यत्र च ‘यदाऽस्य प्राणादीन् परो ग्रसति तदा न जानाति, यदा ददाति तदा जानाति’ इति तद्वशत्वमेवोक्तम् ।**

**‘यदा प्राणान् ददातीशस्तदा चेतनकोऽखिलम् ।**
**जानाति ग्रस्तकरणस्तेन वेत्ति न किञ्चन ॥’ इति च ।**

**‘अपहार्षीत् स्तेयमकार्षीत्’ इत्यत्र च अन्याभिमतस्यैव वस्तुनोऽपहार्यत्वाद्भेद एवायं दृष्टान्तः । अन्यं सन्तं परमात्मानं स्वयमिति मन्यमानः स्तेन एवेति । न हि स्वकीयं परित्यजन् स्तेनो भवति ।**

**‘ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।**
**शास्त्रतत्वमविज्ञाय तथावादबलाज्जनाः ।**
**कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।**
**याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।**
**ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।**
**वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ।**
**तेषां तमश्शरीराणां तम एव परायणम् ।**
**यतस्स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।**
**कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ॥’ इति मोक्षधर्मे ।**

**(त.मं.)** ‘पुरुषं सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति । तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति । अथ यदा’ इत्यत्रापि यथोपतापिनः पुरुषस्य विशेषतः पारतन्त्र्यदर्शनात् तद्वारत्वं पर्यवसीयत एवमेव सर्वस्यापीति भगवद्वशत्वमेवोक्तम् ।

स यथा तत्र न दाह्येत, सोऽस्तेनो यथा तत्र शपथे न दाह्येत । एवमेव ब्रह्मस्तेनोऽप्यन्धे तमसि दाह्यते ।

स्वकीयं ब्रह्मत्वं नाहं ब्रह्मेति परित्यजन्नपि स्तेन एवेत्यत आह- **न हि स्वेति ॥** न हि लोके स्वकीयं किञ्चिद्वस्तु परित्यजन् स्तेन इति प्रसिद्धो भवति । किन्तु जड एव ।

‘शास्त्रतत्त्वमविज्ञाय ब्रूयुर्देवेषु चैकताम् ।
यान्ति चैव तमो घोरं परमात्मविनिन्दकाः ।
आलम्ब्य तन्मतं न त्वमेकत्वं विद्धि विष्णुना ।
एकताऽभावतो नैव भवेथाश्च महामनाः ।
तन्निष्ठा हि प्रजा यस्मात् तत्प्रतिष्ठाश्च मोक्षगाः ।
तन्मूलाश्च यतस्तासां तद्भावः कुत एव तु ।
यदि स्वतोऽन्यः पुरुषो देहेऽस्मिन् संव्यवस्थितः ।
न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः ।
अन्यैरदृश्यमानोऽपि न भेदो नास्ति पुत्रक ।

यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः ।
अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ।
इति पित्रोपदिष्टः सन् पुत्रः पप्रच्छ तं पुनः ।
चेतनानामविज्ञानं कथमित्येव चिन्तयन् ।
तं प्रत्याह - यथा नद्यश्चेतनाश्च समुद्रगाः ।
स्ववारि नैव जानन्ति प्रजास्तद्वत् प्रजालये ।
स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम् ।
इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता ।
अभिमानिनोऽस्वतन्त्रत्वाद् भेदो न ज्ञायते तरोः ।
हरिः किमु मनुष्येषु शेषो ह्यस्यास्वतन्त्रतः ।
ज्ञायते न कथं स्वस्मिन् सूक्ष्मे ज्ञाते परो हरिः ।
तत्रस्थ इति पृष्टः सन् तमाहोद्दालकः सुतम् ।
वटबीजे यथा सूक्ष्मे महान्यग्रोधभावयुक् ।
न दृश्यतेऽभिमानी स एवं जीवगतो हरिः ।
कथं दृश्येत तच्छक्तिः पृथक् तस्य ह्यदर्शने ।
इति भावयुतं प्राह पुत्रमुद्दालकः पुनः ।
यथाऽप्सु लवणं व्याप्तं रसदृष्टचैव दृश्यते ।
एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते ।
कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत् ।
यथैवान्योपदेशेन बद्धाक्षः स्वगृहं व्रजेत् ।
तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत् पुमान् ।
यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान् ।
इत्युक्त आह- ज्ञाने हि दृष्टा ह्यस्यास्वतन्त्रता ।
अभेदज्ञानिनां दोषः कीदृशः स्यादितीरिते ।
प्राह- यस्मात् परस्वानां हर्ता राज्ञाऽभिहन्यते ।
किमु राज्ञोऽपहर्तैवं ब्रह्मस्तेनो निहन्यते ॥' इति हि महासंहितायाम् ।

यदिदमात्मैक्यं नाम केचिदनैपुणा ब्रूयुः । सर्वदेहानामेकचेतनकत्वमैकात्म्यम् । **शास्त्रतत्त्वं** शास्त्रप्रतिपाद्यं तत्त्वम् । 'अतीतानागते काले यत्तादृशमुदीर्यते । कुतश्चिदन्यथा नेयं तत् तत्त्वं तत्त्वतो विदुः' इति । तथेति वाद एव बलमेषाम् । न तु तत्साधनोपन्यासः । **याथातथ्यं** यथार्थ-त्वम् । स परमो[१] रूपतश्च जीवाद् **अन्यो** विलक्षण इति यतः । अनन्तरूपत्वात् । **जातित** उत्पत्ति-तश्च । नहि रेतोरक्तात्मदेहोत्पत्त्या जननम् । किन्तु प्रादुर्भावमात्रमेव । द्वा सुपर्णेत्यादिश्रुतितः । **अर्थतः** अर्थापत्तितश्च । स्वातन्त्र्यान्यथाऽनुपपत्तेः परतन्त्रात् जीवाद् भिन्न एवेति । तस्मात् सोऽहमस्मीत्येवैक्यानुसन्धानेन सम्बन्धोऽ**संहितो**ऽनुपपन्न आत्मन इत्यर्थः । [२]आत्मना शतिनो वर्धयन्ति इत्यादिवत् ।

**टीका-** ननु विद्वान् केन क्रमेण ब्रह्माप्नोतीति जिज्ञासायां तत्क्रमप्रदर्शनार्थं 'पुरुषं सोम्योपता-पिनम्' इत्याद्युच्यते

। तत्कथमुक्तं 'स्थाननवकेऽपि' इत्यादि। तत्राह- **तेज इति ॥** अत्रापि वाक्ये जीवस्य परमात्मवशत्वमेवोक्तम्। कुतः? 'यदाऽस्य' इत्यादेः प्रतीतेरिति सम्बन्धः। 'तस्य यावन्न वाग्' इत्यत्रेति वक्तव्ये 'तेजः परस्यामित्यत्र' इति वचनं भगवदधीनताप्रतिपादक-प्रदर्शनार्थम्।

अयं भावः- यदि ब्रह्मप्राप्तिक्रमप्रदर्शनार्थमेतद् भवेत् तदा 'अस्य वाङ् मनसि सम्पद्यते' इत्यादि 'तेजः परस्यां देवतायाम्' इत्यन्तमेव वाक्यं स्यात्। अन्यत्सर्वं व्यर्थमेव। अतो नासावर्थः किन्त्वस्मदुक्त एवेति। वाक्यान्तरसमाख्यानाच्चैवमित्याह- **यदेति ॥**

ननु च यदि वागादिलयक्रमेण मरिष्यतो मुमुक्षतश्च तुल्या सत्सम्पत्तिः। तत्र विद्वान् सत्सम्पन्नो नावर्तते, आवर्तते चाविद्वान् इत्यत्र किं कारणमिति जिज्ञासायां सत्यब्रह्मात्मत्वाभिसन्धि-तत्त्यागौ तत्र कारणमिति प्रदर्शनार्थं 'पुरुषं सोम्योत' इत्यादिवाक्यं पठ्यते। तत्कथं स्थाननवकेऽपी-त्याद्युक्तमित्यत आह- **अपहार्षीदिति ॥** इत्यत्र (च) वाक्ये कथितोऽयं स्तेनापहार्यदृष्टान्तो **भेद एव** भेदाभेदज्ञानिनोर्मोक्ष-घातविषय एवेत्यर्थः। **अन्याभिमतस्यैवेति ॥** एतदुक्तं भवति- यदन्याभिमतं वस्तु तदेवापहार्यतया प्रसिद्धम्। तदभिमन्ता चापरोऽपहारीति। तथा च दृष्टान्तानुसारेणैव दार्ष्टान्तिकस्य योजनीयत्वाद्भेद एव एष दृष्टान्त इति। योजनाप्रकारमेव दर्शयति- **अन्यमिति ॥** अन्यस्य सम्बन्धि परमात्मत्वं स्वस्येति मन्यमान इत्यर्थः। **इति** भेद एवेति पूर्वेण सम्बन्धः। पराभिमतमर्थं दूषयति- **न हीति ॥** किन्तु मन्दो वा विरक्तो वा भवति। तथा च भेदज्ञानिनः स्तेनोपमत्वं न सम्भवतीत्यर्थः।

न केवलं लोकानुसारादैक्यज्ञानी स्तेनः, किन्तु वचनान्तरादपीति भावेनाह- **ऐकात्म्य-मिति ॥** एकश्चासावात्मा च एकात्मा तस्य भाव ऐकात्म्यम्। सर्वात्मनां ब्रह्मैक्यमिति यावत्। यदैकात्म्यं नामेद**मनैपुणा** अविद्यमाननैपुणाः केचिद् ब्रूयुः । तेषां तथा वचने किं मूलमित्यत उक्तम्- **शास्त्रेति ॥** 'अहं ब्रह्मास्मि' इत्यादिशास्त्राणां **तत्त्वम्** अभिप्रेतार्थमविज्ञाय ब्रूयुः। कथमविज्ञानमात्रेण तदुक्तिरित्यत उक्तम्- **तथेति ॥** ऐक्यप्रतिपादकसदृशो यो वाद एक-विभक्तित्वादिरूपः स बलं येषां ते तथोक्ताः। 'अहं ब्रह्मास्मि' इत्यादिवाक्यानां तात्पर्यमविज्ञाय आपाततः प्रतीत एवार्थे भ्रान्ता इत्यर्थः। सर्वेषामविद्यमानं शास्त्रतत्वाज्ञानादिकं तेषामेव किन्निमित्तमित्यत उक्तम्- **कामेति ॥** यथोक्तम्- 'इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन' इति। ननु 'द्वा सुपर्णा' इत्यादिशास्त्रेषु विरोधिषु सत्सु कथमैक्यं ब्रूयुरित्यत आह- **याथातथ्यमिति ॥** भेदपराणां शास्त्राणां याथार्थ्यमविज्ञाय। **शास्त्रदस्यवः** तानि शास्त्राण्यतत्वावेदकानीति मन्य-माना इत्यर्थः । एवमैक्यं मन्यमाना ब्रह्मस्तेनाः । कामादीनामागन्तुकत्वान्मूलकारणमाह- **निरा-नन्दा इत्यादि ॥** एतेनाधमानां स्वरूपयोग्यतां लक्षयति। तथापि सर्वज्ञाल्पज्ञत्वादिविरुद्ध-धर्माधिकरणत्वानुमानविरुद्धमैक्यं कथं ब्रूयुरित्यत आह- **वैगुण्यमेवेति ॥** जीवब्रह्मणोस्तत्वतो निर्गुणत्वमेव पश्यन्तो **गुणानि** सर्वज्ञत्वादिगुणान्, **न नियुञ्जते** तत्स्वरूपेण न योजयन्ति। एवम्भूतानां फलमाह- **तेषामिति ॥** तमोगुणप्रचुरशरीराणाम्। **तमो** नरकविशेषः। **परायणं** प्राप्यम्। ननु 'अहं ब्रह्मास्मि' इत्यादिना स्फुटमैक्यं प्रतीयते। अतस्तद्बलाद्भेदशास्त्रादेरतत्वा-वेदकत्वकल्पनं युक्तमेवेत्यत आह- **यत इति ॥ स्वरूपतः** परिमाणभेदतः। **जातितो** जीवत्वादिजातिभेदतः। **श्रुतितः** 'द्वा सुपर्णा' इत्यादेः। **अर्थतः** प्रयोजनभावाभावाभ्याम्। यतः स भगवान् अन्यः प्रतीयते अतः सोऽस्मीति **सम्बन्धो**ऽन्वयो**ऽसंहितो**ऽयोग्यः कथमेव स्यात्।

'अहं ब्रह्मास्मि' इत्यादिवाक्यानामैक्यपरत्वे निश्चितेऽन्येषामतत्वावेदकत्वादिकल्पनं युक्तं स्यात्। न चैवम्। अनुमानागमविरोधेन प्रतीतावन्वययोग्यताविरहात् । 'सिंहो देवदत्तः' इत्यादौ योग्यताविरहस्याकाङ्क्षासन्निधिबाधकत्वोपलम्भात्। अन्यथाऽन्योन्याश्रयत्वं स्यात्। भेद-वाक्यादेरतत्वावेदकत्वादौ

**सिद्धे योग्यतासम्पत्त्या अहमादिवाक्यानामैक्यार्थतानिश्चयः। सति तस्मिंस्तदतत्वावेदकत्वादिनिश्चय इति।**

**(र.टि.) यदास्येत्यादेरिति ॥** इत्यादेरर्थस्येत्यर्थः। एवंविधवाक्यस्य तस्मिन्प्रकरणेऽभावादित्यवधेयम्। अत एव तदा जानातीति प्रतीतेरिति पदाध्याहारेण वाक्यं योजितम्। ननु तर्ह्युक्तार्थप्रतिपादकत्वात्तस्य यावन्न वाङ् मनसि सम्पद्यत इत्यादितो न जानातीत्यन्तस्य सर्वस्य ग्रहणाय प्रतीकत्वेन 'तस्य यावन्न वाक्' इत्यादिनेति वक्तव्यम्। अन्त्यभागोदाहरणं किमर्थमित्यत आह- **तस्येति ॥ अन्यत्सर्वमिति ॥** तावन्न जानातीत्येतच्छेष-वाक्यम्। 'तस्य यावन्न वाङ् मनसि सम्पद्यते' इत्यादिसमग्रमित्यर्थः। अयं चाभिप्रायस्तावन्न जानातीत्यंश-मुदाहृत्य यदा प्राणानित्यादिना समग्रवाक्यार्थानुवादेनावगम्यत इति भावः। ननु स्तेनापहार्यदृष्टान्तस्य भेदा-**(र.टि.)** विषयत्वात्कथं भेदविषयोऽयमित्यतः परम्परया तदुपपादकत्वमाह- **भेदाभेदज्ञानिनोरिति ॥** ननु निरानन्दत्वापक्वमनस्त्वादेर्यथायथं जडमुक्तियोग्यादिष्वतिप्रसक्तत्वान्न मूलकारणत्वमित्यत आह- **एतेनेति ॥**

**(रा.टि.)** इत्यत्रेत्यस्य तद्वशत्वमेवोक्तमित्यन्वयमुपेत्यार्थमाह- **अत्रापीति ॥** वाक्य इति शेषोक्तिः। जानातीति पदानन्तरं 'कुतः' इति हेत्वाकाङ्क्षापूरकपदमध्याहृत्य दर्शयति- **प्रतीतेरिति सम्बन्ध इति ॥ इत्याद्यैः** इत्यवान्तर-वाक्यैस्तद्वशत्वस्य प्रतीतेरित्यर्थः। **इति वक्तव्य इति ॥** ग्रस्ताग्रस्तकरणत्वयोः पूर्ववाक्याभ्यामेव प्रतीतेरिति भावः। तावता परोक्तार्थे को दोष उक्त इत्यतस्तद्वशत्वमेवेत्येवकारसूचितमाह- **अयं भाव इति ॥ व्यर्थ-मेवेति ॥** सिद्धान्ते त्वन्वयव्यतिरेकाभ्यामीशाधीनत्वज्ञापनायार्थवदिति भावः। असङ्गतिनिरासाय शेषोक्त्या वाक्यं योजयति- **इत्यत्र वाक्ये कथित इति ॥** भेद एवेत्युक्तिरुपलक्षणमिति भावेन तदर्थमाह- **भेदाभेद-ज्ञानिनोरिति ॥** ननु भेदाभेदज्ञानिनोरर्थानर्थोक्तिपरत्वं कथम्? तावता कथं जीवेशभेदविषयोऽयं दृष्टान्त इत्यत आह- **एतदुक्तमिति ॥ अपहारीतीति ॥** प्रसिद्धमित्यनुषङ्गः। **योजनेति ॥** दार्ष्टान्तिकयोजना-प्रकारमित्यर्थः। परकीयापहारस्पष्टीकरणाय व्याचष्टे- **अन्यस्येति ॥** स्तेनो न चेत्स क इत्याकाङ्क्षां स्वयं पूरयति- **किन्तु मन्द** इत्यादिना वाक्येन। जीवानां ब्रह्मैक्यलाभप्रकारं व्यक्तीकर्तुमाह- **एकश्वासाविति ॥** बहुव्रीहिपक्षे जीवानां ब्रह्मैक्यलाभादिति भावः। निपुणभावो नैपुणं, बहुव्रीहिश्च समास इति भावेनाह- **अविद्यमाननैपुणा इति ॥** तत्पुरुषत्वे अनिपुणा इति स्यादिति भावः। **एकविभक्तीति ॥** समानविभक्तिकत्वेत्यर्थः। 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादौ प्रथमाविभक्तिरूपसमानविभक्त्योः प्रातिपदिकद्वये सत्त्वात्। आदिपदेनैकीभवन्ती-त्यादिपरिग्रहः। **यथोक्तमिति ॥** सप्तमे गीतायां इच्छाद्वेषाभ्यां समुत्थेन जीवेश्वररूपद्वन्द्वविषयमिथ्याज्ञानेन तथा तद्धर्मभूतसर्वज्ञत्वाल्पज्ञत्वस्वातन्त्र्यपारतन्त्र्यसर्वशक्त्यल्पशक्त्यादिरूपद्वन्द्वविषयकमोहेनेत्यर्थः। 'मां तु वेद न कश्चन' इति पूर्वेणान्वयः। 'सर्वभूतानि संमोहं सर्गे यान्ति परन्तप' इत्युत्तरेण वाऽन्वयः। **सर्गे** सर्गकाले। सर्गकालमारभ्यैव। संमोहं जीवेश्वरैक्यज्ञानरूपं मिथ्याज्ञानं वा प्रागुक्तद्वन्द्वमोहदार्ढ्यं वा यान्तीति। ननु निरानन्दत्वस्याचेतनेष्वपि सत्त्वात्तेषामप्यद्वैतज्ञानरूपमिथ्याज्ञानप्रसक्तिः, मुक्तियोग्य-जनेष्वप्यपक्वमनस्कत्वस्य सत्त्वान्मिथ्याज्ञानप्रसक्तिरित्यत आह- **एतेनेति ॥** तादृशस्वरूपयोग्यतैव मूलकारणमित्यर्थः। **अनुमानागमेति ॥** विरुद्धधर्माश्रयत्वरूपानुमान-द्वासुपर्णेत्यागमाभ्यां विरोधेनेत्यर्थः। ननु योग्यताविरहेऽप्याकाङ्क्षाऽऽसत्तिभ्यामस्तु शाब्दप्रमेत्यत आह- **सिंहो देवदत्त इति ॥ बाधकत्वेति ॥** प्रमित्यहेतुत्वेत्यर्थः। अन्योन्या-श्रयत्वमेव व्यनक्ति- **भेदवाक्यादेरिति ॥**

**(श्री.टि.)** इत्यादीत्यादिपदेन भेद एव दृष्टान्ताभिधानादित्यस्य ग्रहणम्। इत्यत्र चेत्यस्यार्थः- **अत्रापि वाक्य इति ॥** यदाऽस्य प्राणादीनित्येवंरूपवाक्यस्यास्मिन् प्रकरणेऽभावादाह- **इत्यादेरिति ॥** अर्थस्येत्यर्थः। अत एव प्रतीतेरिति प्रतीतिपदाध्याहारेण वाक्यं योजितमित्यवगन्तव्यम्। **इति वक्तव्य इति ॥** यदा ददाति तदा **(श्री.टि.)** जानातीत्यर्थप्रतिपादनाय 'तस्य यावन्न वाक्' इत्यत्रेति वक्तव्यम्। इदमुपलक्षणम्। यदाऽस्य प्राणादीन्परो ग्रसतीत्यर्थप्रतिपादनाय 'अथ यदाऽस्य वाङ् मनसि सम्पद्यते' इत्यत्र चेति वक्तव्यमित्यर्थः। **इति वचनमिति ॥** एवं समग्रवाक्योदाहरणे कर्तव्ये एकदेशोदाहरणमित्यर्थः। **प्रदर्शनार्थमिति ॥** तद्वशत्वमेवोक्तमित्युक्ते केनांशेन तद्वशत्वमुक्तमिति शङ्कापरिहाराय तत्प्रतिपादकप्रदर्शनार्थमित्यर्थः। **अन्यत् सर्वमिति ॥** एतद्वाक्यशेषभूतं 'तावन्न जानाति' इति वाक्यं तथा 'तस्य यावन्न वाङ् मनसि सम्पद्यते' इत्यारभ्य 'तावज्जानाति' इत्यन्तं समग्रं वाक्यमित्यर्थः। **ब्रह्मात्मत्वाभिसन्धितत्त्यागाविति ॥ तत्त्यागो** ब्रह्मात्म-त्वाभिसन्धित्यागः। अनृतब्रह्मान्यत्वाभिसन्धिरित्यर्थः। ननु स्तेनापहार्यदृष्टान्तस्य साक्षाद्भेदाविषयकत्वाद्भेद एवायं दृष्टान्त इति कथमुक्तमित्यतः परम्परया तदुपपादकोऽयमित्याशयेनाह- **मोक्षघातविषय एवेति ॥ अन्याभिमतम्** अन्याभिमानविषयम्। **तदभिमन्ता** मदीयमिति तत्र स्वाभिमानकर्ता। **पराभिमता(तम)र्थ-मिति ॥** यथाऽनृताभिसन्धस्तेनो हन्यते एवमनृतभेदाभिसन्धिमत्त्वेन सत्यब्रह्मात्मत्वाभिसन्धित्यागवत्त्वेन

च स्तेनत्वात् सत्सम्पन्नोऽप्यविद्वानावर्तते । आवर्तनमेव चास्य हननस्थानीयमित्येवं स्वकीयब्रह्मात्मत्वाभि-सन्धित्यागवतो भेदज्ञानिनः स्तेनोपमत्वरूपं पराभिमतार्थमित्यर्थः । स्वकीयं परित्यजन् स्तेनो न भवति चेत्कीदृश इत्यत आह- **मन्दो वेत्यादि ॥ मन्दो** मूर्खः । **लोकानुसारादिति ॥** अन्याभिमते वस्तुनि स्वाभिमतिकर्तुः स्तेनत्वस्य लोके दृष्टत्वादित्यर्थः । **नैपुणं** कौशलम् । **अभिप्रेतार्थम्** अन्तर्यामिणो ब्रह्मत्वादिरूपम् । **एक-विभक्तित्वादिरूप इति ॥** अहं ब्रह्मेति समानविभक्तिकत्वरूप इत्यर्थः । आदिपदेन भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिरूपं सामानाधिकरण्यं ग्राह्यम् । **अज्ञानादिकमिति ॥** शास्त्रतत्त्वज्ञानाभावः । आदिपदेन मिथ्याज्ञानं ग्राह्यम् । अज्ञानस्य कामादिहेतुकत्वे गीतासंमतिमाह- **इच्छाद्वेषेति ॥** द्वन्द्वमोहो नाम वैषयिकसुखस्य दुःखादेश्च हेयतया ज्ञानाभावः । यथोक्तं गीताभाष्ये 'द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयोः सतोर्न हि किञ्चित्सुखादिकं हेयतया ज्ञातुं शक्यम्' इति । **आगन्तुकत्वादिति ॥** शास्त्रतत्वज्ञानिन इति शेषः । सृष्ट्यनन्तरं शरीरे सति प्राप्तत्वादिति भावः । यथोक्तं गीतायाम्-

'सर्वभूतानि संमोहं सर्गे यान्ति परन्तप' इति ।

व्याख्यातं च तद्भाष्ये भगवच्चरणैः 'सर्गमारभ्य शरीरे हि सतीच्छादयः' इति । ननु निरानन्दत्वापक्कमनस्त्वा-शिवत्वानां यथायथं जडमुक्तियोग्येष्वतिप्रसक्तत्वेन कथं मूलकारणत्वमित्यत आह- **एतेनेति ॥** पदत्रयेणे-त्यर्थः । गुणानीत्यनूद्य नपुंसकत्वं छान्दसमित्यभिप्रेत्य व्याचष्टे- **गुणानि सार्वज्ञादिगुणानिति ॥ न योज-यन्तीति ॥** तथा च ब्रह्मनिष्ठसार्वज्ञादिगुणानां जीवनिष्ठदुःखादिगुणानां च मिथ्यात्वमुक्त्वा चिन्मात्रैक्यमेव वदन्तीति भावः । तम एव परायणमित्यत्रापि तमःशब्दस्य पूर्वप्रकृततमोगुणपरत्वप्रतीतिवारणाय व्याचष्टे- **तमो नरकविशेष इति ॥** 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम्' इति प्रमाणप्रमितनित्यनरकविशेष इत्यर्थः । **तद्बलादिति ॥** तद्विरोधादिति भावः । **परिमाणेति ॥** महत्त्वाणुत्वरूपेत्यर्थः । **जीवत्वादीति ॥ (श्री.टि.)** ईश्वरे तदभावादिति भावः । **प्रयोजनेति ॥** स्वप्रयोजनेत्यर्थः । ईश्वरः स्वप्रयोजनानपेक्ष्यैव प्रवर्तते नैवं जीव इति भावः । **अन्वयः** तादात्म्यरूपः । **अयोग्यो** बाधितः । ननु किं योग्यतया, आकाङ्क्षासन्निध्योः सद्भावात् तावन्मात्रेणैव वाक्यप्रामाण्योपपत्तेरित्यत आह- **सिंहो देवदत्त इत्यादाविति ॥** आदिपदेनाग्निना सिञ्चेदित्यादेर्ग्रहणम् । तथा च तत्र आकाङ्क्षासन्निध्योः सद्भावेऽपि योग्यताया अभावेन वाक्याप्रामाण्यदर्शनादिति भावः । **अन्यथेति ॥** ऐक्यवाक्येषु योग्यताऽङ्गीकार इत्यर्थः । **योग्यतासम्पत्त्येति ॥** भेदवाक्यविरोधाभावेन योग्यतासम्पत्त्येत्यर्थः । सति तस्मिन्नित्यनन्तरं तद्विरोधेनेति शेषः ।

**(पां.टि.)** गुणानीति छान्दसो लिङ्गव्यत्यय इति भावेनाह- **गुणानिति ॥ श्रुतितो द्वा सुपर्णेत्यादेरिति ॥** न च द्वा सुपर्णेत्यादिमन्त्रोक्ते स्थित्यदने बुद्धिजीवगते । न तु जीवेशगते । 'तावेतौ सत्त्वक्षेत्रज्ञौ' इति पैङ्गिरहस्य-ब्राह्मणेन अस्य मन्त्रस्य सत्त्वक्षेत्रज्ञशब्दार्थत्वेन प्रसिद्धबुद्धिजीवविषयत्वेन व्याख्यातत्वादिति वाच्यम् । ब्राह्मणे सत्त्वशब्दस्य 'ऊनं न सत्त्वेष्वधिको बबाधे' इति प्रयोगात्, 'सत्त्वमस्त्री तु जन्तुषु' इति नामानुशासनात्, 'सत्त्वं जीव इति प्रोक्तः' इति स्मृतेश्च जीवपरत्वात् । क्षेत्रज्ञशब्दस्य च

'प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंयुतम् ॥'

इति मोक्षधर्मादिवचनैः ब्रह्मपरत्वात् । अन्यथा द्वा सुपर्णेत्यस्मात् उत्तरम् 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' इत्यादिकमयुक्तं स्यात् । न हि बुद्धौ पुरुषशब्दो मुह्यमानत्वं वीतशोकत्वं च युक्तमिति भावः ।

**(व्या.टि.)** परपक्षप्रतिक्षेपायोपक्षिपति- **नन्विति ॥** इतीत्यस्य यदास्येत्यादेरिति व्याख्या । अर्थस्येति शेषः । षष्ठ्यन्तस्यापेक्षितं पूरयति- **प्रतीतेरिति ॥** ननु गृहीतवाक्ये तेजसः परस्यां लयप्रतीतावपि यदास्येत्यर्थस्या-प्रतीतेरसिद्धिरित्यत आह- **तस्य यावदिति ॥ इति वक्तव्य इति ॥** अनेन तावदत्र गृहीतमनुसंहितमिति नासिद्धिरिति भावः । **व्यर्थमेवेति ॥** क्रमस्य तावतैवोक्तेरित्यर्थः । मूले तेन ग्रस्तकरण इति सम्बन्धः । ननु छान्दोग्यभाष्ये अष्टमप्रकरणोपसंहारे नियतज्ञानानियतज्ञानयोरिति भेदनिर्देशविरोध इति चेन्न । तत्र, नियतं सर्वदाऽप्येकप्रकारेण स्थितमिति प्राणादिनियामकस्यैव ग्रहणात् । अत एवात्र यदास्येति मूलेन तदेव समस्पष्टयदिति न विरोधः । अत एव गीतातात्पर्यनिर्णये अज्ञज्ञान्यादय इत्युक्तम् । नवमस्थाने प्रत्यवस्थानप्रकारं दर्शयति- **ननु चेति ॥ मुमुक्षोरिति ॥** उत्क्रान्तस्येत्यर्थः । उत्तरयति- **सत्येति ॥** 'तस्मादभेदज्ञानेन महान्तं विनाशं प्रदर्श्य भेदज्ञानान्मुक्तिपरमेवैतद्वाक्यम्' इति तद्भाष्यमनुसन्धाय व्याचष्टे- **भेदाभेदज्ञानिनोरिति ॥ अन्याभि-मतमिति ॥** अन्याभिमानविषयीभूतमित्यर्थः । ननु किं केन

सङ्गतम् । अन्याभिमताभिमन्ताऽपहारीत्युक्तः । अत्र चान्यस्यात्मत्वाभिमन्तोच्यत इत्यतः पूर्वानुगुण्येन व्याचष्टे- **अन्यस्येति ॥** यद्यपि मूले अत्रोत्तरत्र च **(व्या.टि.)** अन्यं सन्तं परमात्मानं स्वयमिति मन्यमानो अपहार्येवेति, न हि स्वकीयं परित्यजन् अपहारी भवतीत्येव वक्तव्यम् । तथा स्वभाववञ्चनात् स्तेन एव । न हि स्वावञ्चकः स्तेनो भवतीत्युपसंहर्तव्यम् । स्तैन्यापहारशब्दार्थभेदस्य व्याख्यातत्वात् उपधेयसङ्करेऽपि उपाधेरसङ्कराच्च । छान्दोग्यभाष्येऽपि 'अदुःखित्वपूर्ण-ज्ञानानन्दस्वातन्त्र्यादिब्रह्मस्वभावाननुभवं स्वात्मनोऽपि ज्ञात्वैव तद्भावाभिमतेः स्तैन्यम्। परकीयाभिमतेरप-हारः' इत्यर्थभेदोक्तेश्च । 'न च स्वकीयस्य ब्रह्मभावस्य अज्ञो अपहर्ता भवति। किन्तु अविद्यमानब्रह्मभावाभि-मतेरेव' इति तत्र तथैवोपसंहाराच्च। तथापि उभयसमावेशेन उपधेयसाङ्कर्येण व्यामिश्रोक्तावपि तथैव उपसंहारद्वये तात्पर्यम् । अत्र उभयसाङ्कर्यमुक्तं छान्दोग्यभाष्ये-

'परस्वभावाभिमतेरपहर्ता स्ववञ्चनात् ।
स्तेनश्चाभेदवेत्ता तु ब्रह्मणा हन्यते सदा ॥

इति तत्त्वविवेके' इति । इत्थमधस्तात् परस्ताच्चेति बोध्यम् ।

**विरक्तो वेति ॥** बुद्धिपूर्वाबुद्धिपूर्वत्यागेनेति भावः । **स्तेनोपमत्वमिति ॥** सदृशार्थकोपमाशब्दस्यैव 'अतुलोपमाभ्याम्' इति निषेधो न सादृश्याद्यर्थकस्येति भावः । वस्तुतस्तु नात्र स्तेनेन उपमा यस्येति विग्रहः, किन्तु स्तेनः उपमा यस्येतीति । अतो नैव शङ्काऽवकाशः । आत्मनां प्रतिस्वम् एकात्मत्वात् तद्वादिनां कुतोऽनैपुण्यमित्यतो वाद्यभिप्रेतार्थमाह- **एकश्चासाविति ॥** सर्वात्मनामिति विप्रतिपन्नार्थप्रदर्शनम् । निपुण-पदस्य युवादिषु पाठादण् । ततो नञा बहुव्रीहिरित्याह- **अविद्यमानेति ॥** 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तर-पदलोपः' इति विद्यमानपदलोपः । **अविज्ञायेति ॥** ल्यबन्तान्नञ्समासः । ननु तत्वाज्ञाने असदुक्तिर्न भवेत् कारणाभावात् । तदुक्तिस्तु कुत इत्याशयेन शङ्कते- **कथमिति ॥** एकविभक्तिकत्वादि रूपं प्रकारो यस्येति बहुव्रीहिः । **तथावादः** आपातप्रतीतिः । तथावादपदलब्धाभिप्रेतमाह-**अहमित्यादि ॥ सर्वेषामिति ॥** शास्त्राध्येतॄणामित्यर्थः । **द्वन्द्वमोहेनेति ॥ द्वन्द्वमोहो** विपरीतज्ञानं तेनेत्यर्थः । **याथातथ्यमिति ॥** तथा तत्प्रकारम् अनतिक्रम्य यथातथं यथार्थमित्यर्थः । यथार्थे अव्ययीभावः । 'अव्ययीभावश्च' इति नपुंसकत्वम् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वं च यथातथम् । तस्य भावो याथातथ्यं- याथार्थ्यम् । ब्राह्मणादित्वात् ष्यञ् इति भावः । दस्युपदस्वारस्यमाह- **तानीति ॥** ब्रह्म स्तेनयन्तीति ब्रह्मस्तेनाः । **लक्षयतीति ॥** 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुराः' इति तल्लक्षणोक्तेरित्यर्थः । गुणानि नियुञ्जत इत्यत्र 'छन्दस्युभयथा' इति तिङः आर्धधातुकत्वाण्णिलोपः सार्वधातुकत्वात् श्नमिति, अन्तर्णीतण्यर्थ इति वाऽऽशयेन व्याचष्टे- **न योजयन्तीति ॥ तमोगुणप्रचुरेति ॥** 'सृष्टीरुपदधाति' इतिवत् भूम्ना गौणव्यपदेश इत्युक्तं भवति । **नरक-विशेष इति ॥** 'अपि सप्त' इति सूत्रोक्ततामिस्राख्ये इत्यर्थः । **परिमाणेति ॥** अणुत्वमहत्त्वादिपरिमाणे-त्यर्थः । जातितः जीवत्वादिजातितः । **प्रयोजनेति ॥** मोक्षेत्यर्थः । **असंहित इति ॥** सम्पूर्वाद्धधातेर्निष्ठायां 'दधातेर्हिः' इति ह्यादेशे संहितः- सन्धानवान् । स नेत्यसंहितः अयोग्य इत्यर्थमभिप्रेत्य व्याचष्टे- **अयोग्य (व्या.टि.) इति ॥** अभिसन्धिमुद्घाटयति- **अहमस्मीतिवाक्यानामिति ॥ बाधकत्वेति ॥** प्रमाजनन-शक्तिप्रतिबन्धकत्वेत्यर्थः । अन्योन्याश्रयत्वं स्फुटयति- **भेदवाक्यादेरिति ॥**

**मूलम् - 'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।**
**यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा ।**
**यथा चोरापहार्यौ च यथा पुंविषयावपि ।**
**तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ।**
**तथापि सूक्ष्मरूपत्वान्न जीवात् परमो हरिः ।**
**भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ।**
**वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा ॥' इति च परमोपनिषदि ।**

**टीका-** एवं नवानामपि वाक्यानां जीवब्रह्मभेद एव तात्पर्यमिति प्रत्येकमुपपाद्येदानीं सर्वेषामपि भेदपरत्वे समाख्यावाक्यं पठति- **यथेति ॥** यथा पक्षी च सूत्रं च तथा जीवेश्वरौ भिन्नौ । यथा च नानावृक्षरसा, यथा च नद्यः समुद्रश्च तथा सर्वदैव विलक्षणौ । यथा धानागतः तथा सूक्ष्म-रूपत्वाद्भिन्नोऽपि भेदेन न दृश्यते । यथा शुद्धोदलवणे भिन्ने

तथाऽप्युदकान्तर्गतं लवणं दृष्टसामर्थ्यमपि स्वयं न दृश्यते तथा **प्रेरकोऽपि सन्** दृष्टसामर्थ्योऽपि न दृश्यते। यथा **पुंविषयौ** बद्धाक्षगन्धारदेशौ च **भिन्नौ** **गुरूपदेशेन** द्रष्टृदृश्यभाववन्तौ तथा जीवेश्वरावपि भिन्नौ। तत्र तयोः परं वैलक्षण्यं ज्ञात्वा शङ्कितचोरसत्याभिसन्धवत् **मुच्यते संसारात्**। अन्यथा ऐक्यज्ञानेनानृताभिसन्धवत् **बध्यते** **नित्यनरके पात्यत** इत्यर्थः।

**(र.टि.)** 'यथा पक्षी च सूत्रं च' इत्यादिवाक्यस्य नवप्रकरण्युक्तार्थे सर्वस्मिन्नार्थिकसमाख्यात्वं स्पष्टं न प्रतीयत इत्यतस्तत्तथा व्याचष्टे- **यथा पक्षी चेति ॥ तथा सर्वदैव विलक्षणाविति ॥** शकुनिसूत्रदृष्टान्तप्रतिपादकवाक्य-स्योभयत्र तात्पर्यान्नानावृक्षरसनदीसमुद्रदृष्टान्तप्रतिपादकयोस्तु साक्षाद्व्यावर्तकधर्मप्रतिपादन एव तात्पर्यादिति भावः। दृष्टान्तवाक्याध्याहारेण तथापीति वाक्यमुपनिषत्क्रमानुरोधेन योजयति- **यथा धानागत इति ॥** शुद्धोदेत्यस्य प्रेरक इत्यनेन दार्ष्टान्तिकत्वेनान्वयं कृत्वा तत्खण्डसमानार्थत्वेन वाक्यद्वयं व्याचष्टे- **यथा शुद्धो-देति ॥** यथा पुंविषयावित्येतदपेक्षितदृष्टान्तप्रतिपादकत्वेन व्याचष्टे- **यथा पुंविषयाविति ॥**

**(रा.टि.)** पक्षिसूत्रदृष्टान्तो न केवलं जीवेश्वरौ भिन्नावित्यत्रैव, अपि तु नानावृक्षरस-नदीसमुद्रदृष्टान्ताविव **(रा.टि.)** सर्वदैव विलक्षणावित्यत्रापीति भावेन पुनरप्यनुवदति- **यथा पक्षी च सूत्रं चेति ॥** समाख्याया-मुक्तदृष्टान्तषट्कमुपलक्षणं दार्ष्टान्तिकोक्तिबलादन्योऽपि तदनुगुणो दृष्टान्तो ग्राह्य इति भावेन तादृशदृष्टान्तोक्ति-पूर्वकं तथापीत्यादि दार्ष्टान्तिकपरतया योजयति- **यथा धानागतस्तथेति ॥** तथापीत्यस्य भिन्नोऽपि सर्वज्ञत्व-सर्वशक्तित्वादिना विलक्षणोऽपीत्यर्थस्य स्पष्टत्वादनुक्तिः। समाख्योक्तावशिष्टदृष्टान्तत्रयस्य दार्ष्टान्तिकं दर्शयति- **यथा शुद्धेति ॥** तथापीति पदं प्रेरक इत्यत्राप्यन्वेतीति भावेनानूद्यार्थमाह- **तथेति ॥** प्रेरकोऽपि सन्नित्यस्यार्थो दृष्टसमार्थ्योऽपीति। विषयशब्दो देशवाचीति भावेनाह- **गन्धारदेशाविति ॥ गुरूपदेशे-नेति ॥** आप्तोपदेशेनेत्यर्थः। उत्तरत्राप्यन्वयार्थं गुरूपदेशेनेत्युक्तिः। दृश्यमत्र स्वदेशो ज्ञेयः। **तथा जीवेश्वरावपीति ॥** भिन्नौ गुरूपदेशेन द्रष्टृदृश्यभाववन्तावित्यनुषङ्गः। **तत्रेति ॥** एवं दृष्टान्तबलेन जीवेश्वरयोर्भेदे वैलक्षण्ये च सिद्धे सतीत्यर्थः।

**(श्री.टि.)** 'यथा पक्षी च सूत्रं च' इत्यादिवाक्यस्य नवप्रकरण्युक्तार्थे सर्वस्मिन्नर्थसमाख्यात्वं स्पष्टं न प्रतीयतेऽ-तस्तदध्याहारेण सम्यग्व्याचष्टे- **यथा पक्षी चेत्यादिना ॥** यथा पक्षी च सूत्रं च तथा सर्वदैव विलक्षणावित्युक्त्या शकुनिसूत्रदृष्टान्तप्रतिपादकवाक्यस्य भेदे वैसादृश्यरूपे वैलक्षण्ये चेत्युभयत्र तात्पर्यं, नानावृक्षरसनदीसमुद्र-दृष्टान्तप्रतिपादकवाक्ययोस्तु साक्षाद् व्यावर्तकधर्मप्रतिपादन एव तात्पर्यमित्युक्तं भवति। उपनिषत्क्रमानुसारेण तथापीति वाक्यमादौ योजयति- **यथा धानागत इति ॥** यद्यपि तथापीत्येवमर्थप्रतीतिवारणाय तथेत्यस्यापेक्षितं दृष्टान्तं पूरयति- **यथा धानागत इति ॥** अपीत्यतः पूर्वं भिन्न इति शेष इत्यभिप्रेत्य भिन्नोऽपीत्युक्तम्। तथा च यथा धानागतो हरिः सूक्ष्मत्वान्न दृश्यते तथा जीवादपि सूक्ष्मरूपत्वाज्जीवाद्भिन्नोऽपि परमो हरिर्मन्ददृष्टीनां जीवाद्भेदेन न दृश्यत इत्यर्थः। शुद्धोदलवणे यथा तथा प्रेरकोऽपि सन्न दृश्यत इत्यन्वयमभिप्रेत्याध्याहारेण सम्यग् व्याचष्टे- **यथा शुद्धोदलवण इति ॥** उपनिषत्क्रमानुसारेणाह- **यथा पुंविषयाविति ॥** यथा पुंविषयौ भिन्नावित्यन्वयमभिप्रेत्य दार्ष्टान्तिकमध्याहरति- **बद्धाक्षेत्यादिना ॥ गुरूपदेशेनेति ॥** 'तस्य यथाभिनहनं प्रमुच्य प्रब्रूयात्' इत्युक्तत्वान्नेत्रपटलं प्रमुच्य मार्गोपदेष्टैव गुरुरिति भावः। जीवेश्वरावपि गुरूपदेशेन द्रष्टृ-दृश्यभाववन्ताविति सम्बन्धः। यथा चोरापहार्यौ च तथा जीवेश्वरौ भिन्नावित्यन्वयमभिप्रेत्य व्याचष्टे- **यथा चोरापहार्याविति ॥ शङ्कितचोरेति ।** वस्तुगत्या न चोर इत्यर्थः। शङ्कितचोरश्चासौ सत्याभिसन्धश्चेति विग्रहः। अन्यथेत्येतदनूद्य व्याचष्टे- **अन्यथैक्यज्ञानेनेति ॥** ऐक्यज्ञानस्य बन्धमात्रफलकत्वे 'तेषां तमःशरीराणां तम एव परायणम्' इत्युक्तविरोधः स्यादतो व्याचष्टे- **नित्यनरके पात्यत इति ॥** वायुकिङ्करैरिति शेषः।

**(व्या.टि.)** विषयभेदेनोपमेयभावं व्यनक्ति- **यथा पक्षीत्यादिना ॥** विलक्षणावित्यतः परं यथा वृ(क्षे)क्षो जीवाद्भेदेन दृश्यते जीवस्यास्वातन्त्र्यं(न्त्र्यात्) तथा मानुषदेहेऽपीत्युपस्कर्तव्यम्। सर्वेषामित्यवतारितत्वात्। **शुद्धोदेति ॥** उदकस्य उदादेशः क्षीरोद इतिवत्। प्रकृतविवक्षयाऽऽह- **संसारादिति ॥** 'तमस्यन्धे पातयति महाकारागृहोपमे' इति मात्स्यानुरोधेन व्याचष्टे- **प्राप्त इति ॥**

**मूलम् -** **'प्रेरकः सर्व(भूतानां) जीवानां प्राणधीचोदिता च सः।**
**विष्णुः संसारिणोऽन्यो यस्तमविज्ञाय मूढधीः।**
**देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यते त्मनः।**

**अतः संसारपदवीं याति जीवेशयोः सदा।**
**वैलक्षण्यं परं ज्ञात्वा मुच्यते बध्यतेऽन्यथा' इति च।**

**'सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय' इति, आत्मनोऽन्यमनूचानत्वादिगुणप्रदं परमविज्ञाय स्तब्धस्य पराधीनत्वज्ञापनेन स्तब्धतां निरस्य तन्निष्ठा ह्यत्रोपदिश्यते।**

**'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादिवादिप्रसिद्धमपि निराक्रियते। 'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः' इत्यादिवद् श्रुतितात्पर्यापरिज्ञानप्राप्तं च। दर्शितं च 'ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः' इति।**

**(त.मं.)** ननु कथमपौरुषेयो वेदः पौरुषेयं समयं निराकरोतीत्यत आह- **तद्धेति ॥** 'तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सदजायत इति। कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति। सत्वेव सोम्येदमग्र आसीत्' इति शून्यवादिप्रसिद्धं मतं निरा-क्रियते। 'अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम्। आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते। वापीकूपतटाकांश्च देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते' इति चोक्तम्।

**टीका-** एवं दृष्टान्तादिवाक्यानुसारेणेदम् अतत्त्वमसीति पदं विच्छिद्य भेदपरतया वाक्यं व्याख्या-तम्। तदसत्। एवं सति हि इदमैक्यप्रतिषेधपरमित्युक्तं स्यात्। न चैवं युक्तम्। ऐक्यस्याप्राप्तत्वेन प्रतिषेधानुपपत्तेरित्यतः प्राप्तिं दर्शयितुमागमवाक्यं पठति- **प्रेरक इति ॥** प्राणशब्देनेन्द्रियाणि वायवश्चोच्यन्ते। धीशब्देन मनः। यः स विष्णुरिति सम्बन्धः। इन्द्रियप्राणेत्यत्र प्राणशब्देन वायव एव गृह्यन्ते। त्मनः आत्मनः। 'मन्त्रेष्वाङ्यादेरात्मनः' इति स्मरणात्। न केवलं संसारपदवीं याति किन्तु नित्यनरके बध्यते। अत्र वाक्ये देहादिप्रेरकत्वं यद्भगवतो लक्षणं तत्सर्वोऽपि जनोऽहङ्कारममकारवशादात्मनि मन्यते। तस्य तेन महाननर्थो भवति। तत्त्यागेन च महान् अर्थ इत्युच्यते। लक्षणाभिमानो नाम ऐक्याभिमान एव। अतस्सर्वेषां प्राणभृतामैक्यज्ञानप्राप्तौ श्वेतकेतूपलक्षितानां सज्जनानामिष्टानिष्टप्राप्तिपरिहारार्थमैक्यप्रतिषेधः क्रियत इति भावः।

एवं साधारणीं प्राप्तिं प्रदश्यासाधारणीमपि दर्शयति- **सर्वानिति ॥** स्तब्धः एयायेत्य-त्रोपदिश्यत(उच्यत)इति सम्बन्धः। 'श्वेतकेतुर्हारुणेय आस तं ह पितोवाच- श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति। स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य' इत्यादौ **अत्र** षष्ठेऽध्याये। **तन्निष्ठा** भगवन्निष्ठा भक्तिर्ह्युपदिश्यते। **अविज्ञाय** अहमेवानूचानत्वादिगुणः स्वातन्त्र्येणेति विज्ञाय च। **स्तब्धस्या**विनीतस्य श्वेतकेतोः। तथा च कथमप्राप्तप्रतिषेध इति वाक्यशेषः। परमात्मलक्षणाभिमाने तदैक्यप्राप्तेः। अनेन 'स आत्मा तत्त्वमसि' इत्यस्यैक्यपरतया व्याख्याने प्रक्रमासङ्गतिश्च सूचिता भवति।

प्रकारान्तरेणास्य प्राप्तप्रतिषेधतां दर्शयति- **तद्धैक इति ॥ वादिप्रसिद्धम्** ऐक्यवादिप्रवाद-प्राप्तमप्यैक्यं निराक्रियतेऽतत्त्वमसीत्यनेन। ननु अनादिना वेदेन कथं सादिवादिप्राप्तस्य निराकरणं क्रियत इति चेन्न। वादिप्रवादानामपि प्रवाहरूपेणानादित्वात्। दृष्टं चैतत् यद्वादिप्राप्तस्यापि निराकरणं वेदेन क्रियत इति। यतोऽत्रैव प्रकरणे 'सदेव सोम्येदमग्र आसीत्' इति स्वमतमभिधाय 'तद्धैक आहुः असदेवेदमग्र आसीत् तस्मादसतः सदजायत' इति शून्यवादिप्राप्तं शून्यस्यैव प्रलयेऽवस्थानं जगत्कारणत्वं चानूद्य 'कुतस्तु खलु सोम्यैवं स्यात् कथमसतः सज्जायेत' इति, **निराक्रियत** एक आहुरितिवचनादिति।

प्रकारान्तरेण प्राप्तप्रतिषेधतामस्य दर्शयति- **इष्टेति ॥ श्रुतीनां** 'अहं ब्रह्मास्मि' इत्यादीनां, यत् **तात्पर्यम्** अन्तर्यामिणो ब्रह्मत्वादिकं, **तदपरिज्ञानेन**ान्यथाऽर्थप्रतीत्या च प्राप्तं चैक्यं निराक्रियतेऽतत्त्वमसीत्यनेन । न चैतदप्यदृष्टचरम् । यतो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिश्रुतितात्पर्यापरिज्ञानप्राप्तमनीश्वरविषयं काम्यं कर्म इष्टापूर्तमित्यनूद्य 'नाकस्य पृष्ठे सुकृते तेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति' इति निराक्रियते । निन्दायाः प्रतिषेधे तात्पर्यात् । न चैवंविधस्य कर्मणोऽन्यतः प्राप्तिरस्ति । **इष्टं** यजनम् । **पूर्तम्** अन्नदानादिकम् । ततो द्वन्द्वः । तस्यैकवद्भावः । 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनात् । 'अन्येषामपि दृश्यते' इति दीर्घः । **अन्यच्छ्रेयः** परं ब्रह्म पूज्यं तत्प्रसादं **वेदयन्ते** जानन्ति ।

नन्वाद्ये द्वे प्राप्ती भवतः प्रमितत्वात् । नोत्तरे प्रमाणाभावात् । दृष्टान्तो हि सम्भावको भवति न निश्चायक इत्यत आह- **दर्शितं चेति ॥** ऐक्यस्य कुवादिप्राप्तत्वं श्रुतितात्पर्यापरिज्ञानप्राप्तत्वं च मोक्षधर्मे दर्शितं च, न केवलं सम्भावितम् । केचिदिति शास्त्रतत्वमविज्ञायेति चोक्तत्वात् । अतश्चतुर्धा प्राप्तिसद्भावात् तत्प्रतिषेधो युक्त इति ॥

**(र.टि.)** देहेन्द्रियेति वक्ष्यमाणानुरोधादाह- **प्राणशब्देनेति ॥ धीशब्देनेति ॥** अनेनोत्तरत्र बुद्धिशब्दो मनःपर इत्युक्तं भवति । आङीत्युपलक्षणम् । अत एव प्रक्रियाकौमुद्यामन्यत्रापी(त्याद्यु)त्युक्तमिति भावः । संसारपदवीं यातीत्यनेन पौनरुक्त्यपरिहाराय बध्यत इत्येतद्व्याचष्टे- **न केवलमिति ॥ एवं साधारणीमिति ॥** सर्वजीवाना-मीश्वरस्य भेदप्रतिपादकानि 'द्वा सुपर्णा' इत्यादीनि वाक्यानि, तत्साधारणीमित्यर्थः । यद्वा सर्वजीवसाधा-रणीमित्यर्थः । 'सर्वान् वेदानधीत्य' इत्यत्र वाक्ये भगवद्भक्तिर्नोपदिश्यत इत्यत आह- **इत्यादावत्र षष्ठेऽध्याय इति ॥** अनूचानत्वादिगुणप्रदत्वेन परमात्माज्ञानमात्रस्य कथमैक्यप्राप्तिरूपत्वमित्यत आह- **अहमेवेति ॥ प्रक्रमासङ्गतिरिति ॥** श्वेतकेतोरैक्याभिमानतस्तद्धत्त्वस्य प्राप्तत्वात्तत्प्रतिषेध एव कर्तव्यो न तु तद्विधिरिति भावः । एतस्य वाक्यस्य वादिप्राप्तनिराकरणपरत्वं केन ज्ञायते येन दृष्टान्तत्वं स्यादित्यत आह- **एक आहु-रिति ॥** तात्पर्यापरिज्ञानमात्रेण नैक्यप्राप्तिरित्यत आह- **अन्यथाऽर्थेति ॥**

**(रा.टि.) दृष्टान्तादीति ॥** समाख्यावाक्यमादिशब्दार्थः । **वायव एव गृह्यन्त इति ॥** अन्यथा पौनरुक्त्या-पत्तेरिति भावः । नन्वात्मन इति भाव्यं कथं त्मन इत्युक्तिरित्यत आह- **मन्त्रेष्विति ॥** अङ्गपादे 'मन्त्रेष्वा-ङ्यादेरात्मनः' इति सूत्रेण मन्त्रगतात्मन्शब्दस्य आदेस्तृतीयाविभक्तौ परतो लोपो भवतीत्युक्तत्वादत्र चात्मन इत्यस्य मन्त्रगतत्वादाकारलोप इति ज्ञेयम् । यद्यपि 'आङिति तृतीयैकवचनस्य पूर्वाचार्याणां संज्ञा, त्मना देवेभ्यः' इत्युक्तं वृत्तौ । तथापि तत्रैव 'आङोऽन्यत्रापि छन्दसि लोपो दृश्यते, त्मन्यासमजायत, त्मनि सोमेभ्यः' इत्युक्तत्वेन प्रकृते षष्ठ्येकवचनेऽपि परतो लोपो ज्ञेय इति भावः । अपौनरुक्त्यायार्थभेदमाह- **न केवल-मिति ॥** कथमनेनैक्यप्राप्तिरित्यत आह- **अत्रेति ॥ भगवतो लक्षणमिति ॥** येन वा शृणोतीत्यादिश्रुतौ भगवद्धर्मत्वप्रसिद्धेरिति भावः । कर्तृत्वाभिमानोऽहङ्कारः । देहादौ ममताऽभिमानो ममकारः । **तस्य** जनस्य । **तेन** स्वस्मिन् भगवल्लक्षणज्ञानेन । **तत्त्यागेनेति ॥** स्वस्मिन्नीश्वरलक्षणारोपत्यागेनेत्यर्थः । ततः किं प्रकृत इत्यत आह- **लक्षणेति ॥**

**साधारणीमिति ॥** सर्वजनसाधारणीम् । श्वेतकेतुमात्रासाधारणीमित्यर्थः । तेन न पौनरुक्त्यमिति भावः। इत्यन्तस्यात्रोपदिश्यत इत्यनेन व्यवधानादन्वयं दर्शयति- **इति सम्बन्ध इति ॥ स्तब्धो**ऽविनीतः, **एयाय** आगतवानित्यत्र कुतः स्तब्धता, कुत आगतवानित्यादिशङ्कां निवर्तयितुं पूर्ववाक्यमुदाहरति- **श्वेतकेतु-रिति ॥** नामैतत् । अरुणाया अपत्यमारुणेयः स्त्रीभ्यो ढक् । **पितेति ॥** उद्दालकनामा । ब्रह्मचर्यं वेदाध्ययनमु-द्दिश्य । **वस** गुरुकुलवासं कुरु । कुत इत्यत उक्तम्- **न वै सोम्येत्यादि ॥** सोमपानार्हेत्यर्थः । अननूच्य **(रा.टि.)** गुरूच्चारणानूच्चारणरूपाध्ययनमकृत्वा । **ब्रह्मबन्धुः** ब्राह्मणाभासः । इत्युवाचेति पूर्वेणान्वयः । **सः** श्वेतकेतुः । इत्यादावित्यादिपदेन स्तब्ध इत्यादिमूलोक्तस्य परिग्रहः । नवप्रकरणसाधारण्यायात्रेत्यादि व्याचष्टे- **अत्र षष्ठ इति ॥** स्तब्धत्वहेतुज्ञापनायाविज्ञायेत्यनूद्य तदुपलक्षणमिति भावेनाह - **अविज्ञाये-त्यादि ॥** अहमेवेत्यादिनोक्तान्यथाज्ञानेन कथमैक्यप्राप्तिरित्यत आह- **परमात्मेति ॥ प्रक्रमासङ्गति-श्वेति ॥** उपक्रमे ह्यैक्याभिमानेन प्राप्तस्तब्धीभावनिरासाय प्रवृत्तस्य पितुरत्र पुनरैक्योपदेशे प्रक्रमासङ्गतिर्व्यक्तै-वेति प्रक्रमस्य स्तब्धतां निरस्येत्यर्थकथनेन सूचितेत्यर्थः । न केवलमैक्यस्य प्राप्तिरिति चार्थः । **अस्येति ॥** अतत्त्वमसीत्यस्य । **इदमग्रे** अस्य जगतोऽग्र इत्यर्थः । दृष्टान्ते वादिप्राप्तस्य निरासे ज्ञापकमाह- **इति वचनादि-तीति ॥** मूले तदंशोक्तेः कृत्यं व्यक्तीकृतं भवति । अपरिज्ञानमात्रेण ऐक्याप्राप्तेस्तदुलक्षणमिति भावेना-न्यार्थं प्रतीत्येति

पूर्वानुषङ्गेणाकाङ्क्षां पूरयति- **प्राप्तं चैक्यं निराक्रियत इति ॥** प्राप्तं चेत्यनुवादः । **इत्यादि- श्रुतीति ॥** इत्यादिश्रुतीनां यद् अन्तःकरणशुद्धिसम्पादनेन भगवत्प्रमितितत्प्रीतिद्वारा मोक्षप्रयोजनकत्वरूप-तात्पर्यं तदज्ञानेनान्यथाऽर्थतात्पर्यज्ञानेन च प्राप्तमित्यर्थः । **नाकस्य पृष्ठे** स्वर्गस्य विस्तीर्णस्थलविशेषे । **सुकृते** सुकृतसाध्ये । **अनुभूत्वा** कामाननुभूयेत्यर्थः । **इमं लोकं** भूलोकं मानुषभावमिति यावत् । **विशन्ति** प्राप्नु-वन्ति । मिथ्याज्ञानपूर्वकं कर्मकृतस्तु हीनतरं लोकं तमो विशन्तीति वाशब्दो व्यवस्थितविकल्पार्थः । नात्र निषेधः श्रूयत इत्यत आह- **निन्दाया इति ॥ एवंविधस्येति ॥** स्वर्गादिहेतुभूतस्येत्यर्थः । **अन्यत इति ॥** श्रुतितात्पर्यापरिज्ञानादन्यत इत्यर्थः । **अन्येषामपीति ॥** षष्ठस्य तृतीयपादे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यधिकारे 'अन्येषामपि दृश्यते' इति सूत्रेण पूर्वपदस्य दीर्घ इत्यर्थः । श्रौतपदार्थमाह- **अन्यच्छ्रेयः परं ब्रह्म पूज्य-मिति ॥** स्वार्थे णिजन्तमिति भावेनाह- **जानन्तीति ॥** परं ब्रह्म यदाराध्यं तत्प्रसादं वा फलहेतुं न जानन्तीति श्रुत्यर्थ इति भावः । मूले वादिप्राप्तमेव प्रमापितं न तु श्रुतितात्पर्यापरिज्ञानप्राप्तमित्यतः स्वयं तदाह- **शास्त्रतत्वमविज्ञायेति चोक्तत्वादिति ॥**

**(श्री.टि.) प्राप्तिं दर्शयितुमिति ॥** साधारणप्राप्तिरसाधारणप्राप्तिर्वादिप्राप्तिः श्रुतितात्पर्यापरिज्ञानप्राप्तिरिति चतुर्धा प्राप्तिदर्शनायादौ साधारणप्राप्तिं दर्शयितुमागमवाक्यं पठतीत्यर्थः । **वायवः** प्राणापानाद्या वृत्तयः । अन्यो यस्तमविज्ञायेति यत्तच्छब्दयोर्विद्यमानत्वात्स इत्येतदधिकमित्यत आह- **यस्य विष्णुरिति ॥** स प्रसिद्धो विष्णुरित्यनुवादरूपत्वान्न वैयर्थ्यमित्यर्थः । **प्राणशब्देन वायव इति ॥** पूर्वमिन्द्रियपदसमभिव्याहाराभावात् प्राणशब्द इन्द्रियवायूभयपरत्वेन व्याख्यातः । अत्र तु तद्भावाद्वायुमात्रपरत्वेन व्याख्यात इति द्रष्टव्यम् । ननु आत्मन इति वक्तव्ये त्मन इति कथमुक्तमित्यत आह- **मन्त्रेष्विति ॥** आङिति टासंज्ञा । मन्त्रेषु आङि परे आत्मन आदेराकारस्य लोपो भवतीत्यर्थः । पुरु त्मनेत्याद्युदाहरणम् । नन्वत्र सूत्रे तृतीयाविभक्तावेवात्मन आदेर्लोपो विहितो न षष्ठीविभक्तौ परतः । अतो अत्रैतत्सूत्रोदाहरणमसङ्गतमिति चेन्न । आङीत्युपलक्षणम् । षष्ठीविभक्तौ परतो लोपो भवतीत्यपि व्याख्यानान्नासङ्गतिः । अत एवोक्तं प्रक्रियाकौमुद्याम् 'आङि अन्यत्रापि' **(श्री.टि.)** इति । 'अन्यथा बध्यते' इत्यस्य संसारपदवीं यातीत्यनेन पौनरुक्त्यं प्रतीयतेऽतो व्याचष्टे- **न केवलमिति ॥** तथा च अन्यथा= जीवेशयोर्वैलक्षण्यमज्ञात्वा आत्मनो देहादिनेतृत्वज्ञानेन केवलं संसारपदवीं यातीत्येव न, किन्तु नित्यनरके बध्यते चेत्यर्थः । ननु कथमनेनैक्यप्राप्तिरुपपादितेत्यत आह-**अत्रेत्यादिना ॥** नन्वेतावता भगवल्लक्षणाभिमान एव प्राप्तो न तदैक्याभिमान इत्यत आह- **लक्षणाभिमानो नामेति ॥** यावद्द्रव्य-भाविलक्षणस्य धर्मिणाऽत्यन्ताभिन्नत्वात् तल्लक्षणाभिमाने तदैक्याभिमान एव प्राप्त इति भावः ।

सर्वेषां प्राणभृतामैक्यज्ञानप्राप्तावित्यनेन साधारणी प्राप्तिरुपपादितेति ज्ञेयम् । ननु तर्हि सर्वान्प्रत्यैक्यप्रतिषेधः कर्तव्यः । श्वेतकेतुं प्रत्यैक्यप्रतिषेधः कस्मात्क्रियत इत्यत उक्तम्- **श्वेतकेतूपलक्षितानामिति ॥ असाधा-रणीमिति ॥** श्वेतकेतोरेवैक्यज्ञानं प्राप्तमस्तीत्येवंरूपामसाधारणीमित्यर्थः । स्तब्ध एयायेत्यात्मनोऽन्यमित्यत्र स्तब्ध एयायेतीतिशब्दस्य अत्रोपदिश्यत इत्यनेन सम्बन्ध इत्याह- **स्तब्ध एयायेत्यत्रोच्यत इति सम्बन्ध इति ॥** उपदिश्यत इत्यस्यार्थानुवादः **उच्यत इति ॥** सर्वान्वेदानधीत्येत्यत्र वाक्ये भगवद्भक्तिर्नोपदिश्यत इत्यत आह- **इत्यादावत्र षष्ठेऽध्याय इति ॥** अनूचानत्वादिगुणप्रदत्वेन परमात्माज्ञानमात्रस्य कथमैक्य-प्राप्तिरूपत्वमित्यत आह- **अहमेवेति ॥ अविनीतस्य** आर्येष्वनम्रस्येत्यर्थः । ननु तल्लक्षणाभिमान एव प्राप्तो न तदैक्यज्ञानमित्यत आह- **परमात्मलक्षणाभिमाने तदैक्यप्राप्तेरिति ॥** पूर्व एवाभिप्रायः । **प्रक्रमासङ्गति-रिति ॥** श्वेतकेतोः परमात्मैक्याभिमानेन स्तब्धतायाः प्राप्तत्वात्तत्परिहारायेदं वाक्यमुपक्रान्तम् । तथा चातत्त्वमसीति परमात्मभेदोपदेशेन तत्प्रतिषेध एव कर्तव्यो न तु तत्त्वमसीत्यैक्यबोधनं कार्यम् । तथात्वे स्तब्धतादार्ढ्यस्यैव प्राप्तेरित्युपक्रमासङ्गतिरित्यर्थः ।

**प्रवाहरूपेणेति ॥** यथोक्तमनुव्याख्याने-

'अनादिकालतो वृत्ताः समया हि प्रवाहतः ।
न चोच्छेदोऽस्ति कस्यापि समयस्य ॥' इति ।

नन्वस्य वाक्यस्य वादिप्राप्तनिराकरणपरत्वं कथं ज्ञायते येन दृष्टान्तत्वं स्यादित्यतस्तज्ज्ञापकमाह- **एक आहुरिति वचनादिति ॥** श्रुतितात्पर्यापरिज्ञानमात्रेण कथमैक्यप्राप्तिरित्यत आह- [1]**अन्यार्थप्रतीत्या चेति ॥** जीवस्य ब्रह्मैक्यरूपान्यार्थेत्यर्थः । **इत्यादिश्रुतितात्पर्येति ॥** स्वरूपभूतरमणज्ञानरूपमुक्तिकामो भगवत्प्री-त्यर्थं 'दर्शपूर्णमासाभ्यां यजेत' इत्येवंरूपश्रुतितात्पर्येत्यर्थः । **अनीश्वरविषयमिति ॥ ईश्वरविषयम्** ईश्वरार्पण-बुद्ध्या क्रियमाणं, न भवतीत्यर्थः । नन्वत्र काम्यकर्मनिन्दैव प्रतीयते न तु प्रतिषेध इत्यत आह- **निन्दाया इति ॥** निन्दारूपार्थवादस्येत्यर्थः । तथा चाश्रूयमाणोऽपि काम्यकर्मप्रतिषेधो निन्दावचनबलात्कल्पनीय इति भावः । नन्वीश्वरविषयकाम्यकर्मणः श्रुतिव्यतिरिक्तप्रमाणादेव प्राप्तत्वान्न श्रुतितात्पर्यापरिज्ञानेन

प्राप्ताविद-मुदाहरणमित्यत आह- **न चैवंविधस्येति ॥** अन्नदानादिकमित्यत्रादिपदेन प्रपादानादिकं ग्राह्यम्। अत एव **(श्री.टि.)** कर्मनिर्णयटीकायां 'पूर्वमन्नप्रपादानादि' इति व्याख्यातम्। **ततो द्वन्द्व इति ॥ ततः** इष्टपूर्त-शब्दयोर्भिन्नार्थत्वादित्यर्थः। पदप्रतिपाद्ययोरर्थयोर्भेदे द्वन्द्वसमासस्य 'भेदे द्वन्द्वः' इति विधानादिति भावः। नन्विष्टं च पूर्तं चेष्टापूर्ते इति द्विवचनं स्यादित्यत आह- **तस्यैकवद्भाव इति ॥** द्वन्द्वस्यैकवद्भावे नियामकमाह- **सर्वो द्वन्द्व इति ॥** तथा च 'स नपुंसकम्' यस्यैकवद्भावः स नपुंसकं स्यादिति नपुंसकत्वे इष्टापूर्तमिति युक्तमिति भावः। नन्विष्टापूर्तमिति कथं दीर्घः। 'देवताद्वन्द्वे च' देवतावाचिपदयोर्द्वन्द्वसमासे पूर्वपदे दीर्घो भवतीति सूत्रार्थः। इन्द्राग्नी, इन्द्राबृहस्पती, इन्द्रावरुणौ, अग्नीषोमावित्याद्युदाहरणम्। तथा च प्रकृते इष्टापूर्तमित्यस्य देवताद्वन्द्वत्वाभावात्कथं दीर्घ इत्यत आह- **अन्येषामिति ॥** देवतावाचिपदभिन्नपदानामपि द्वन्द्वसमासे क्वचि-द्दीर्घो भवतीति सूत्रार्थः। तथा चेष्टापूर्तमिति द्वन्द्वसमासे दीर्घोपपत्तिरिति भावः। अन्यदित्यस्य व्याख्यानं परं ब्रह्मेति। श्रेय इत्यस्य पूज्यमिति व्याख्यानम्। तात्पर्यमाह- **तत्प्रसादमिति ॥** इति यावदिति शेषः। वेदयन्त इति स्वार्थे णिजिति भावेनोक्तम्- **जानन्तीति ॥ द्वे प्राप्ती इति ॥** साधारणासाधारणाख्ये द्वे प्राप्ती इत्यर्थः। **प्रमितत्वादिति ॥** प्रेरकः सर्व(जीवानां) देहानां, सर्वान्वेदानधीत्येति प्रमितत्वादित्यर्थः। ननु वादिप्राप्तिश्रुति-तात्पर्यापरिज्ञानप्राप्त्योः कथं प्रमितत्वाभावः। 'तद्धैक आहुः' 'इष्टापूर्तम्' इति वाक्यद्वये वादिप्राप्तश्रुति-तात्पर्यापरिज्ञानप्राप्तयोर्निषेधस्य दृष्टत्वादिति चेत्तत्राह- **दृष्टान्तो हीति ॥** कथं दर्शितमित्यत आह- **केचि-दितीति ॥** केचिदिति कुवादिप्राप्तत्वं, शास्त्रतत्त्वमविज्ञायेति श्रुतितात्पर्यापरिज्ञानप्राप्तत्वं चोक्तमित्यर्थः। उपसंहरति- **अत इति ॥**

**(पां.टि.) वायव एवेति ॥** प्राणधीचोदितेति पूर्ववाक्ये इन्द्रियाणां पृथग्ग्रहणात् प्राणशब्देन वायूनामिव इन्द्रियाणामपि ग्रहणेऽपि इन्द्रियप्राणेत्यत्रेन्द्रियाणां पृथग्ग्रहणात्, प्राणशब्देनापि तद्ग्रहणे पौनरुक्त्यप्रसङ्गात् न प्राणशब्देन इन्द्रियवायुग्रहणम्। किन्तु वायूनामेवेति भावः। नन्वात्मन्शब्दस्य ङसि परत आत्मन इत्येव षष्ठ्येकवचनेन भवितव्यम्, त्मन इति तु कथमित्यत आह- **मन्त्रेष्विति ॥** यद्यपि पूर्वाचार्यप्रक्रियया आङिति तृतीयैकवचनग्रहणात् तस्मिन् परतो मन्त्रविषयेष्वात्मन आदेर्लोपस्यानेन विधानात् यत्रात्मन्शब्दस्य तृतीयैकवचनपरताऽस्ति 'त्मना सोमेभ्यः' 'त्मना देवेभ्यः' 'त्मना पितृभ्यः' इत्यादौ तत्रैवानेनात्मन आदेर्लोपसिद्धावपि यत्र न तृतीयैकवचनं परतोऽस्ति तत्रात्मन्शब्दस्य आदिलोपविधायकत्वाभावाद् अस्य योगस्य न षष्ठ्येकवचने तद्विधायकतयोपन्यासो युक्तः। तथापि 'उप त्मनि दधानो धुर्यां३शून्' 'त्मन्या समभजन्' 'त्मनि सोमेभ्यः' इति आङोऽन्यत्रापि छन्दसि तल्लोपदर्शनेन आङ्ग्रहणं न कर्तव्यमिति आङ्ग्रहण-स्याकरे प्रत्याख्यातत्वात्, आङि अनाङि च आत्मन्शब्दस्य छन्दसि तल्लोपविधायकत्वादस्य योगस्य युक्तो ङसि परतोऽपि तद्विधायकतयोपन्यास इति द्रष्टव्यम्। **द्वन्द्व इति ॥** इष्टं च पूर्तं चेति इष्टापूर्तमितीतरेतरयोगद्वन्द्वम् इत्यर्थः। नन्वेवं धवखदिरावित्यादिवत् इष्टापूर्ते इति द्विवचनेन भवितव्यत्वादिष्टापूर्तमिति एकवचनन्तु कथमित्यत एकवद्भावात्तदुपपत्तिरित्याह- **तस्यैकवद्भाव इति ॥** किमस्यैकवद्भावविधायकमित्यतः परिभाषासूत्रमेवेति तत्पठति- **सर्वो द्वन्द्व इति ॥**

**(पां.टि.)** नन्वेवं समाहारद्वन्द्वेऽपि 'वाक्त्वचम्', 'त्वक्स्रजम्' इत्यादावपि द्विवचनं प्राप्नोति। तथा इतरेतर-योगद्वन्द्वेऽपि पक्षे एकवचनं स्यादिति, उच्यते। सर्वो द्वन्द्व इत्यनेन समाहारद्वन्द्वस्तथेतरेतरद्वन्द्वो नापूर्वतया विभाषयैकवत्क्रियते। किन्तु न्यायसिद्धार्थोऽनूद्यते। तथा हि। सर्वो द्वन्द्व इति चार्थे द्वन्द्वः क्रियते। चार्थश्चेत-रेतरयोगः। स एव यदोद्रिक्तावयवभेदो भवति तदाऽवयवभेदानुगमाद् द्विवचनबहुवचने सिद्धे एव। यदा तिरोहितावयभेदविवक्षा तदा समाहार इति संहतिप्रधानत्वादेकवचनं भवति। तदेवं चार्थ एव सर्वो द्वन्द्वो विभाषया एकवद्भवतीति परिभाषारूपेण पठ्यते। ननु चार्थः समुच्चयः। नेतरेतरयोगः। चशब्दप्रयोगे समुच्चयस्य प्रतीतेरिति चेत् सत्यम्, किन्तु तत्प्रभेद एव इतरेतरयोगो न समुच्चयादन्यः। तथा हि- समुच्चय एव युग-पदर्थाभिधायिनां परस्परापेक्षाणां पदानां भवति तदा द्वन्द्वः क्रियते। एतावतैवेतरयोगश्चार्थ इत्युच्यते। नन्वेवं 'द्वन्द्वश्च प्राणितूर्य' इति सूत्रमनर्थकं स्यात्। तेन हि समाहारद्वन्द्वे एकवद्भावो विधीयते। तत्र हि समाहार-द्वन्द्वैकत्वादेकवचनसिद्धेरिति चेन्न। प्राण्यङ्गादीनां समाहारद्वन्द्व एव यथा स्याद्, इतरेतरयोगो मा भूदिति सूत्रप्रयोजनम्। ननु तर्हि किमर्थं समाहारैकत्वं क्रियते इतरेतरयोग एवैकवद्भावः क्रियताम्। एवं समाहारग्रहणं यत्नप्रतिपाद्यं न भवति। कार्यं च विधिमुखेनैव प्रवर्तते। उच्यते। इतरेतरयोगे एकवद्भावे सति 'अस्थित्वचम्' इत्यत्र समाहारद्वन्द्वलक्षणे 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति न स्यात्। नन्वेवमपि पूर्वोक्तप्रकारेण समाहार एवैकवचनं भवति। समाहारश्चैक एव। एवं च एकवदिति वतिर्नोपपद्यते। नह्येक एव एकवदित्युच्यते। उच्यते। बुद्ध्याऽनेकत्वमध्यारोप्य भविष्यति। उक्तं च- 'बुद्धिर्हि भवन्ती अभेदेऽपि भेदं जनयति' यथा 'राहोः शिरः' इति। यद्वा नायं वतिः, किं तर्हि? वदेर्विजन्तादेकवदिति। ननु तथाप्यशेषद्वन्द्वे एकत्वाविधानात् सर्वो द्वन्द्व इति अघटना स्यात्। उच्यते। सर्वो द्वन्द्व इति कोऽर्थः। इतरेतरयोगः समाहारात्मक इत्यर्थः। न चैवमपि वृक्षमृगादिसूत्रमनर्थकम्, अनयैव परिभाषया

बाभ्रव्यशालङ्कायनं, बाभ्रव्यशालङ्कायनाः, (इत्येतद्वस्तु) प्लक्षन्यग्रोधं प्लक्षन्यग्रोधा इत्येवमादीनां सिद्धत्वादिति वाच्यम् । सिद्धे परिभाषयैकत्वे वृक्षादीनां सजातीयैरेव द्वन्द्वो यथा स्यात् न विजातीयैरिति व्यतिकरनिरासार्थं विभाषया एकत्वविधानमिति दिक् ।

नन्वेवम् इष्टपूर्तमिति भवितव्यम् इष्टापूर्तमिति दीर्घत्वं तु कथमित्यत आह- **अन्येषामपीति ॥** मन्त्र इति निवृत्तम् । अमन्त्रविषये अन्येषामपि दीर्घो दृश्यत इति सूत्रार्थः । तथा च केशाकेशीत्यादिवत् इष्टापूर्तमिति दीर्घो युक्त इति भावः । केचित् इष्टापूर्तमित्यस्य देवताद्वन्द्वत्वाभावाद् दीर्घानुपपत्तिमाशङ्क्य आहेति ग्रन्था-वतारमाहुः । **न निश्चायक इति ॥** सम्भावनाया अप्रमाणत्वेनानिश्चायकत्वादिति भावः ।

**(व्या.टि.)** उत्तरग्रन्थोपक्षेपाय वृत्तमनुवदति- **एवमिति ॥ एवं सतीति ॥** अतदिति पदविच्छेद इत्यर्थः । **ऐक्यप्रतिषेधेति ॥** अतदिति तन्नेति च समासव्यासयोरैक्यादिति भावः । **प्रतिषेधानुपपत्तेरिति ॥** अध्यारोपाप-वादन्यायेनाप्राप्तप्रतिषेधानुपपत्तेरित्यर्थः । **प्राप्तिमिति ॥** चतुर्धेति शेषः । सर्वभूतानामिति मूलस्य सर्वभूतात्मक-देहानामित्यर्थः । **प्राणशब्देनेति ॥** 'सप्त वै शीर्षण्याः प्राणाद्वाव वाचौ' इति 'तथा प्राणाः पञ्चवृत्तिः' इति **(व्या.टि.)** चोभयत्र प्रयोगादित्यर्थः । **धीशब्देनेति ॥** उत्तरबुद्धिशब्देन चेति ग्राह्यम् । 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेरिति भावः । **वायव एवेति ॥** इन्द्रियाणां पृथग्ग्रहणादित्यर्थः । त्मन इति पदं व्याचष्टे- **आत्मन इति ॥** तत्राकारलोपे सूत्रं पठति- **मन्त्रेष्विति ॥** नन्वाङिति टासंज्ञा । न चात्र टाऽस्ति । अस्य ङसन्तत्वादिति चेन्न । काशिकावृत्तौ आङीत्यस्योपलक्षणत्वमुपेत्य 'आङोऽन्यत्रापि छन्दस्याकारलोपो भवति । यथाऽत्मनि सोमेभ्यः' इत्युदाहृतत्वेनान्यत्राप्याकारलोपसम्भवात् । दृश्यते चान्यत्राप्याकारलोपः 'त्मन्यासमञ्जन्नश्वो घृतेन' 'त्मन्यासक्तः' इत्यादिषु । अतोऽत्रापि ङस्याकारलोपोऽनेनावधेयः । **बध्यत इति ॥** पात्यत इत्यर्थः । ननु तल्लक्षणाभिमानेऽपि न स्वरूपैक्याभिमान इत्यत आह- **लक्षणाभिमानो नामेति ॥** तस्य तन्नान्तरीयकत्वादित्यर्थः । ननु यथाप्राप्ति निषेद्धव्यतया साधारणप्राप्तौ विशेषनिषेधो नोपपन्न इत्यत आह- **श्वेतकेतूपलक्षितानामिति ॥ इष्टानिष्टेति ॥** 'स दह्यतेऽथ बध्यते' इति 'स न दह्यतेऽथ मुच्यते' इति नवमस्थाने तदुपदेशार्थमित्यर्थः । **एयायेति ॥** इणो णलि वृद्धौ 'अभ्यासस्यासवर्णे' इत्यभ्यासस्येयङादेशे इयायेति सिद्धे पूर्वत्राङः संश्लेषे रूपम् । **इति सम्बन्ध इति ॥** इत्यत्रेति दूरस्थयोर्निपातयोः सम्बन्ध इत्यर्थः । **आरुणेय इति ॥** 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेयीनीयियः' इत्यादिना एयादेशे रूपमिति भावः । **आसेति ॥** नन्वासेति कथम्? 'अस्तेर्भूः' इत्यस्यार्धधातुके नित्यत्वादिति चेन्न । एधामासेत्यादावनुप्रयोगे दृष्टविभक्तिप्रतिरूपकाव्ययत्वात् । अस गतौ इति प्रकृत्यन्तरं वा । एवं 'तस्माद्धान्यं न परः किञ्चनाऽस' इत्यादयः समाधेयाः । **ब्रह्मचर्यमिति ॥** प्रतीतिशेषः । **सोम्येति ॥** 'सोममर्हति यः' इति यः । **कुलीन इति ॥** 'कुलात्खः' इति खः । **अननूच्येति ॥** यद्यपि 'समासेऽनञ्पूर्वे' इति पर्युदासान्न ल्यप् सम्भवति । तथापि ल्यबन्तान्नञ्समासो बोध्यः । अज्ञानमात्रं नाहङ्कारे हेतुरित्यत आह- **विज्ञाय चेति ॥** 'उपेयिवान-नाश्वाननूचानश्च' इति वेदानधीतवति अनूचानशब्दो निपातितः । सर्वान् वेदानधीत्येति सर्ववेदाध्ययनोक्ते-रनूचानोऽसौ । **तथा च कथमिति ॥** कथमित्याक्षेपे । न कथमपीत्यर्थः । ननु लक्षणाभिधानेऽपि नैक्याभिधान-मित्यत आह- **परमात्मेति ॥ प्राप्तेरिति ॥** अवर्ज्यत्वादित्यर्थः । अनेन परपक्षप्रतिक्षेपोऽप्यनुषङ्गसिद्ध इत्याह- **अनेनेति ॥ प्रक्रमासङ्गतिश्चेति इति ॥** 'स्तब्ध एयाय' इति स्तब्धस्योपसत्तिविधानेनोपसन्नस्य स्तब्धता-निरासकोपदेशेन भाव्यम् । ऐक्योपदेशे पुनः स्तब्धतास्थापनप्रसङ्गेन प्रक्रमासङ्गतिरित्यर्थः ।

वादिप्रसिद्धमित्येतद्वादिभ्यः प्रसिद्धं प्राप्तमित्यभिप्रेत्य व्याचष्टे- **वादिप्रवादेति ॥ प्रवाहरूपेणेति ॥** यथोक्त-मनुव्याख्याने 'अनादिकालतो वृत्ताः समया हि प्रवाहतः' इति । असत्कारणत्वं पराभिमतमिति कुतो ज्ञायत इत्यत आह- **एक आहुरिति वचनादिति ॥** 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेरेकशब्दस्यान्यार्थत्वात् । कुतस्तु, कथमिति च दूषणेनान्यार्थत्वनिश्चयाच्च । **तात्पर्यं** तात्पर्यविषयः। तत्किमित्यत आह- **अन्तर्यामिण इति ॥** मूले अपरिज्ञानपदं विपरीतज्ञानोपलक्षकमिति भावेनाह- **अन्यथार्थप्रतीत्येति ॥** अधिष्ठानब्रह्मतत्व-ज्ञानेनेत्यर्थः । **अदृष्टचरमिति ॥** भूतपूर्वे चरडिति भावः । तत्रापि किं तदित्याशङ्क्याह- **अनीश्वरविषयं (व्या.टि.) काम्यं कर्म चेति ॥** वेदोपबृंहणार्थमुदितायां गीतायाम्-

'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥'

इति भगवदर्पणबुद्ध्या निष्कामककर्मणो विधानादिति भावः । **पृष्ठ इति ॥** पृष्ठशब्द उन्नतिवाची । 'विश्वतः पृष्ठेषु' इति अत्रैव प्रयोगात् । यजुषि 'बार्हस्पत्यं शितिपृष्ठमालभेत ग्रामकामो यः कामयेत पृष्ठꣳसमानानाꣳस्या-मिति बृहस्पतिमेव स्वेन

भागधेयेनोपधावति स एवैनं पृष्ठꣳसमानानां करोति’ इति समानानामुत्तमं करोतीत्यर्थस्य स्पष्टवचनाच्च। **सुकृत इति ।।** सुकृतप्राप्य इति प्राप्यप्रापकयोरभेदव्यपदेशः । ‘ते पुण्यमासाद्य सुरेन्द्रलोकम्’ इति यथा । **इमं लोकं** तिर्यग् लोकम् । **हीनतरं** यातनां वा । यथोक्तं श्रुतौ ‘त्रेधा हवाऽवाग्गतिस्तिर्यग्यातना तम इति’ इति। एतदुपबृंहणं गीतायाम्। ‘त्रैविद्या माम्’ इत्यारभ्य ‘ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति’ इत्यधोलोकप्राप्तेरुक्तत्वात् । न तु निराक्रियते निषेधाश्रवणादित्यत आह- **निन्दाया इति ।।** अत एव मीमांसायाम् ‘अश्रुजꣳहि यो बर्हिषि ददाति पुरास्य संवत्सराद् गृहे रुदन्ति’ इति निन्दाया बर्हिषि रजतं न देयमिति निषेधे तात्पर्यमुक्तमिति हृदयम् । यजेः किति सम्प्रसारणं मत्वाह- **इष्टं यजन-मिति ।। अन्नदानादिकमिति ।।** ‘पूर्तं खातादिकर्मसु’ इत्यादिपदेनास्यापि परिग्रहादित्यर्थः । वस्तुतस्तु पूर्यतेऽनेनेति करणे क्तः । ‘व्यत्ययो बहुलम्’ इति सूत्रात् । ‘अन्नात् प्राणा भवन्ति’ इति श्रुतेरिति । श्रेयः-शब्दाभिधेयमाह- **परं ब्रह्मेति ।।** तत्र प्रवृत्तिनिमित्तमाह- **पूज्यमिति ।।** प्रशस्यशब्दादीयसुनि ‘प्रशस्यस्य श्रः’ इति श्रादेशे श्रेयः पूज्यमिति भवति। तद्भावमाह- **तत्प्रसादमिति ।।** ननु ‘सदिरप्रतेः’ इति प्रतिभिन्नात्सदेः सस्य षः स्यादिति षत्वे प्रषाद इति स्यात् कथं प्रसादमित्यवादीदिति । मैवम्। ‘इण्कोः’ इति पूर्वसूत्रात् इण्-ग्रहणानुवृत्तेरिगन्तादुपसर्गादेव षत्वं निषीदतीति। न त्वदन्तोपसर्गादिति बोध्यम्। **वेदयन्त इति।** ‘सुप्तिङुप-ग्रह’ इति उपग्रहव्यत्ययः । स्वार्थे णिजिति भावेन व्याख्याति- **जानन्तीति ।।** चशब्दसमुच्चेयं दर्शयति- **न केवलमिति ।।** केचिदिति वादिवादस्य विजातीयतायाः, तात्पर्यापरिज्ञानस्य चोक्तत्वादित्यर्थः । **चतुर्धेति ।।** आद्याया अभिमानतः प्राप्तेः साधारण्यासाधारण्याभ्यां द्वैविध्यात् प्राप्तिचातुर्विध्यं बोध्यमिति दिक् ।

**मूलम् - तद्वशत्वज्ञापनार्थं च ‘सदेव सोम्येदमग्र आसीत्’ इत्यादि सृष्टिकथनम् । एकविज्ञानेन सर्वविज्ञानं च प्राधान्यम् किञ्चित्साद‍ृश्यात् कारणत्वाच्च। न तु तदन्यस्य मिथ्यात्वात्। न हि सत्यज्ञानेन मिथ्याज्ञानं भवति ।**

**(त.मं.)** सदित्यादिनाऽऽदौ द्वितीयस्याभावः किमर्थमुच्यत इत्यत आह- **तद्वशत्वेति ।। इदमग्र** अस्मादग्रे। ‘तत् तेजोऽसृजत’ इत्यादिसृष्टिकथनम्। अत्राऽह - ‘उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति’ इत्येकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते ‘कथं नु भगवः स आदेशो भवति’ इति श्वेतकेतुना पृष्ट उद्दालको यथा सोम्येति ब्रह्मजगतोः प्रकृतिविकारभावे द‍ृष्टान्तमुक्त्वा वाचारम्भणमित्या-दिना विकारस्य मिथ्यात्वं प्रकृतेः सत्यत्वं चोपदिशति हीत्यत आह- **एकेति ।।**

**टीका-** स्यादेतत्। ‘सर्वं खल्विदं ब्रह्म’ इति सर्वस्य प्रपञ्चस्य ब्रह्मात्मकत्वमुक्त्वा तत्कथमित्या-काङ्क्षायाम् ‘तज्जलानिति शान्त उपासीत’ इति तज्जत्वात् तल्लत्वात् तदनत्वादिति सर्वस्य ब्रह्मोपा-दानकत्वं प्रागुक्तम् । उपादानत्वं च न परिणामित्वेन। निर्विकारित्वश्रुतिविरोधात्। किन्तु जगदारोपाधिष्ठानत्वेन। यथा शुक्तिकाया रजतोपादानत्वम्। तद् जगतो ब्रह्मोपादानत्वं प्रपञ्चयितुं षष्ठस्य पूर्वार्धः प्रवृत्तः । तत्र श्वेतकेतुं प्रत्युद्दालकेन ‘उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्’ इत्येकस्य ब्रह्मणो ज्ञानेन सर्वस्य ज्ञानं भवतीत्युक्तम्। तन्न युक्तम् । अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादित्यभिप्रायेण ‘कथं नु भगवः स आदेशो भवति’ इति श्वेतकेतुनाऽऽक्षिप्ते कार्यस्योपादानादनन्यत्वान्नानुपपत्तिरित्याशयवतोद्दालकेन मृदादिद‍ृष्टान्तपूर्वकं ब्रह्मणो जगदुपादानत्वं प्रपञ्चयितुं ‘सदेव सोम्येदमग्र आसीत् तदैक्षत तत्तेजोऽसृजत’ इत्यादिना सृष्टिरुक्ता। तथा च ब्रह्मव्यतिरिक्तस्य सर्वजगतो मिथ्यात्वं षष्ठाद्यार्धस्य निश्चितम् । अन्यथा सृष्टिकथनमसङ्गतं स्यात्। तत्कथं पूर्वार्धविरुद्धभेदपरत्वमुत्तरार्धस्य व्याख्यायते। किं नाम ‘तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यात्’ इति उक्तस्यार्थस्योपपत्तये सर्वजीवानां ब्रह्मणाभेद एवोत्तरार्धेन प्रतिपाद्यत इति युक्तमिति।

उच्यते- भवेदुत्तरार्धस्यैक्यपरत्वं भेदपरत्वाभावश्च यदि पूर्वार्धे जगतो मिथ्यात्वमुच्यते । न चैतदस्ति । तत्प्रतिपादकादर्शनात्। ननूक्तं सृष्टिकथनं तत्प्रतिपादकमिति । तदसत् । स्यादेवं कथञ्चिद् यद्युपादानत्वमत्राभिप्रेतं स्यात् । न चैवम् । ‘तदैक्षत तत्तेजोऽसृजत’ इतीच्छापूर्वक-स्रष्टृत्वस्योक्तत्वात् । न हि मृदादिकं तथा । किन्तु

घटादीनां कुलालस्येव निमित्तत्वमेव। एवं सति सृष्टिकथनमसङ्गतं स्यात्। निमित्तत्वकथनस्य प्रयोजनाभावादित्यत आह- **तद्वशत्वेति ॥** चशब्दोऽवधारणे तुशब्दार्थे वा, सृष्टिकथनं तु तद्वशत्वज्ञापनार्थमेवेति। कार्यस्य निमित्तकारण-वशतायाः प्रसिद्धत्वात्। सर्वस्यापि जगतो ब्रह्मवशत्वज्ञापनार्थं निमित्तकारणत्वाभिप्रायेणेदं सृष्टिकथनम्। अतो नासङ्गतमिति।

ननु जगतो ब्रह्मवशत्वज्ञापनमपि न प्रकृतोपयोगि। एकविज्ञानेन सर्वविज्ञानं हि प्रकृतम्। तदुपपादनार्थं च सृष्टिकथनम्। एकविज्ञानेन सर्वविज्ञानं च ब्रह्मव्यतिरेकेण जगतोऽभावमभि-प्रेत्योक्तम्। अन्यथाऽनुपपत्तेः। तच्चोपादानत्वे ज्ञापिते सिद्ध्यति। न तु तद्वशत्वे ज्ञापित इत्युपादानत्वज्ञापनार्थमेव सृष्टिकथनम्। न तु निमित्तत्वाभिप्रायेण तद्वशत्वज्ञापनार्थमित्यत आह- **एकेति ॥** एकविज्ञानेन सर्वविज्ञानं च ब्रह्मणो जगत्प्रति प्रधानत्वं, जगता सत्तादिकिञ्चित्साद‍ृश्यं, जगन्निमित्तकारणत्वं च हेतूनभिप्रेत्योक्तम्। न च जगतस्तद्वशत्वेन विना तस्य जगत्प्रति प्राधान्यं सिद्ध्यतीत्यतस्तद्वशत्वज्ञापनार्थं निमित्तकारणत्वाभिप्रायेण सृष्टिकथनं सङ्गतमेव। एतेन कारणत्वहेतुविवरणार्थं च सृष्टिकथनं सङ्गच्छत इति सूचितम्।

नन्वेकविज्ञानेन सर्वविज्ञानं प्राधान्यादिहेतुकमत्रोक्तमिति कुतः ? हेत्वन्तरस्याभावात्। ननूक्तं जगतो ब्रह्मोपादानकत्वेन ततोऽनन्यत्वमत्र हेतुरिति। तन्न। ब्रह्मोपादानकत्वं हि जगतो न परेण साक्षादङ्गीकृतम्। 'निष्कलं निष्क्रियं शान्तम्' इत्यादिश्रुतिविरोधात्। किन्तु मिथ्याभूतजगदारोपस्य ब्रह्माधिष्ठानमिति तदुपादानमुच्यते। ब्रह्माश्रितमायैव तु मुख्यमुपादानम्। तथा च ब्रह्मोपादान-कत्वादित्यस्य ब्रह्मण्यारोपितत्वादित्यर्थः। न चैतस्य ब्रह्मविज्ञानेन सर्वविज्ञानहेतुत्वं सम्भवती-त्याह- **न त्विति ॥ तदन्यस्य** ब्रह्मव्यतिरिक्तस्य **मिथ्यात्वाद्** ब्रह्मण्यारोपितत्वात् कारणादेक-विज्ञानेन सर्वविज्ञानं तु न सम्भवतीत्यर्थः। कुत इत्यत आह- **न हीति ॥** अधिष्ठानज्ञानेनाध्यस्तस्य ज्ञानं भवत् क्वापि नोपलब्धम्, येनाधिष्ठानभूतब्रह्मज्ञानेन तत्रारोपितसर्वज्ञानं सम्भावयाम इति।

**(र.टि.) स्यादेव कथञ्चिदिति ॥** सृष्टिप्रकरणेन ब्रह्मणि जगदुपादानत्वप्रतिपादनेऽपि जगतो ब्रह्मपरिणामत्वमेव प्राप्नोति न मिथ्यात्वम्। तत्रारोपितत्वमेव तदुपादानत्वमिति विवक्षायां तवापि सृष्टिकथनमसङ्गतं स्यादिति भावेन कथञ्चिदित्युक्तम्। **चशब्द इति ॥** उपलक्षणमेतत्। एतेन कारणत्वहेतुविवरणार्थत्वं चेति वक्ष्यमाण-रीत्याऽनुक्तसमुच्चयार्थश्चेत्यपि द्रष्टव्यम्।

**(रा.टि.) तज्जत्वादिति ॥** ब्रह्मजातत्वाद्ब्रह्मणि लयवत्त्वाद्ब्रह्मणा चेष्टमानत्वात्तज्जलानित्युच्यते प्रपञ्च इत्यर्थः। **प्रागुक्तमिति ॥** तत्त्वमसीति नवकृत्वोऽभ्यासात्पूर्वं पञ्चमे उक्तमित्यर्थः। **निर्विकारत्वेति ॥** 'निष्कलं निष्क्रियम् एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतीत्यर्थः। **तमादेशमिति ॥** आदिश्यत इत्यादेशस्तम्। उपदिश्यमान-मर्थम् **अप्राक्ष्यः** पृष्टवानभूः किमित्यर्थः। **येनेति ॥** येन ब्रह्मणा श्रुतेन अश्रुतं श्रुतं भवतीत्यादिरर्थः। **तथा (रा.टि.) चेति ॥** तज्जलानिति वाक्योक्तस्य सदेव सोम्येत्यादिप्रपञ्चितस्योपादानत्वस्यारोपाधिष्ठानत्वरूपत्वे सतीत्यर्थः। **षष्ठाद्यार्धस्येति ॥** षष्ठाध्यायगतपूर्वार्धस्येत्यर्थः। 'तस्मादु हैवम्' इत्यत्र तस्माद्वैश्वानरज्ञानस्याति-शयितत्वादेवेत्येवकारार्थ उशब्दः। **एवंवित्** 'मूर्धैव सुतेजाः' इत्युक्तप्रकारेण वैश्वानरविदित्यर्थः। **इत्युक्त-स्येति ॥** पञ्चमान्तोक्तस्यात्मनि वैश्वानर इत्युक्तस्याभेदस्येत्यर्थः। **स्यादेवं कथञ्चिदिति ॥** उपादानत्वस्य 'सदेव सोम्येदमग्र आसीत्' इत्यादिनोक्तारोपाधिष्ठानत्वरूपस्य ज्ञानमध्यस्तज्ञानहेतुर्नेति वा अधिष्ठानत्व-रूपोपादनत्वस्य लोकवेदाप्रसिद्धस्य कल्पनेन पूर्वोत्तरार्धयोर्मिथ्यात्वपरत्वमभेदपरत्वं च स्यादित्यर्थः। शङ्कते- **एवं सति सृष्टिकथनमसङ्गतं स्यादिति ॥** चशब्दस्यार्थद्वयं व्यनक्ति- **सृष्टिकथनं त्विति ॥** मूले निमित्त-त्वोक्त्यैव कथं तद्वशत्वलाभ इत्यत आह- **कार्यस्येति ॥ निमित्तेति ॥** कर्तृरूपेति योज्यम्। **तच्चोपादानत्वं इति ॥** आरोपाधिष्ठानत्वरूपोपादानत्व इत्यर्थः। **एतेनेति ॥** कारणत्वाच्चेति कथनेनेत्यर्थः। कुत इत्यस्योत्तरमाह- **हेत्वन्तरस्याभावादिति ॥ साक्षादिति ॥** परिणामितयेत्यर्थः। अधिष्ठानमितीतिशब्दो हेत्वर्थः। हेतौ पञ्चमीति भावेन मिथ्यात्वादित्यस्यार्थमाह- **आरोपितत्वात्कारणादिति ॥**

**(श्री.टि.)** तज्जलानित्यत्र तज्जेत्यस्य व्याख्यानम्- **तज्जत्वादिति ॥** लेत्यस्य व्याख्यानम्- **तल्लत्वादिति ॥** तस्मिन् लीयमानत्वादित्यर्थः। अन् इत्यस्यार्थः- **तदनत्वादिति ॥ तद्** ब्रह्म **अनं** चेष्टकं यस्य तत् तदनं तत्त्वादित्यर्थः। **प्रागुक्तमिति ॥** पञ्चमप्रपाठक उक्तमित्यर्थः। **अन्यज्ञानेनेति ॥** न हि घटज्ञानेन पटज्ञानं सम्भवतीत्यर्थः। **नानुपपत्तिरिति ॥** अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादित्यनुपपत्तिर्नास्तीत्यर्थः। **मिथ्या-त्वमिति ॥** उपादानत्वं प्रतिपादयितुं सृष्टिरुक्ता। उपादानत्वं च आरोपाधिष्ठानत्वम्। तच्च मिथ्यात्वं विना न सम्भवतीत्यर्थः। **अन्यथेति ॥** सदेव सोम्येत्यादेरारोपाधिष्ठानत्वरूपोपादनत्वप्रतिपादकत्वाभाव इत्यर्थः। **उपपत्तय इति ॥** चण्डालजीवस्य वैश्वानरपदोक्तब्रह्मणाऽभेदं विना चण्डाले प्रदत्तस्य वैश्वानरे हुतत्वरूपार्थ-स्योपपन्नत्वाभावादिति भावः। **उत्तरार्धेनेति ॥** तथा च सर्वं खल्विदं ब्रह्मेति पञ्चमपूर्वभागोक्तमिथ्यात्व-प्रतिपादकत्वं षष्ठपूर्वार्धस्य, पञ्चमान्तोक्तार्थविवरणरूपत्वं षष्ठोत्तरार्धस्येति भावः। **स्यादेतदेवं कथञ्चि-दिति ॥** सृष्टिप्रकरणेन ब्रह्मणो जगदुपादानत्वप्रतिपादनेऽपि भास्कररीत्या जगतो ब्रह्मपरिणामत्वमेव प्राप्नोति न मिथ्यात्वम्। मायिरीत्या तत्रारोपितत्वमेव तदुपादनकत्वमिति विवक्षायां तत्रापि सृष्टिकथनमसङ्गतमेव स्यादिति भावेन कथञ्चिदित्युक्तम्। **अत्र** पूर्वार्धे। नन्वीक्षापूर्वकस्रष्टृत्वस्योक्तावप्युपादानत्वमेव किं न स्यादिति चेन्न। घटाद्युपादाने मृदादावीक्षापूर्वकस्रष्टृत्वादर्शनादित्याह- **न हीति ॥** उपादानत्वमत्राभिप्रेतं न चेत् कीदृशं कारणत्व-मभिप्रेतमिति पृच्छति- **किन्त्विति ॥** उत्तरमाह- **घटादीनामिति ॥ चशब्दोऽवधारण इति ॥** एतेन, कारणत्वहेतुविवरणार्थं च सृष्टिकथनमिति वक्ष्यमाणरीत्याऽनुक्तकारणत्वसमुच्चयार्थश्चेति ज्ञातव्यम्। तदुभयं दर्शयति- **सृष्टिकथनन्त्विति ॥ अन्यथेति ॥** जगतो ब्रह्मव्यतिरेकेण सत्त्व इत्यर्थः। अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनादिति भावः। **तच्चेति ॥** एकविज्ञानेन सर्वविज्ञानं चेत्यर्थः। **उपादानत्वे ज्ञापित इति ॥** कार्यस्य **(श्री.टि.)** कारणानन्यत्वेन तद्विज्ञानेन तद्विज्ञानसम्भवादिति भावः। **एतेनेति ॥** एकविज्ञानेन सर्वविज्ञाने कारणत्वस्य निमित्तत्वकथनेनेत्यर्थः। उत्तरमाह- **हेत्वन्तरेति ॥ अत्र** एकविज्ञानेन सर्वविज्ञाने। **साक्षा-दिति ॥** तत्परिणामतयेत्यर्थः। **श्रुतिविरोधादिति ॥** निष्कलमित्यादिनिर्विकारत्वश्रुतिविरोधादित्यर्थः। ननु तत्परिणामित्वरूपं मुख्यमेवोपादानत्वं किं न स्यात् किं तदारोपाधिष्ठानत्वकथनेनेत्यत आह- **ब्रह्मा-श्रितेति ॥ मायैवेति ॥** न तु ब्रह्मेत्यर्थः।

**(पां.टि.) स्यादेतदेवं कथञ्चिदिति ॥** सृष्टिप्रकरणेन ब्रह्मणो जगदुपादानत्वप्रतिपादनेऽपि जगतो ब्रह्म-परिणामत्वप्राप्तावपि न मिथ्यात्वप्राप्तिरिति भावेन कथञ्चिदित्युक्तम्। **तुशब्दार्थो वेति ॥** वाशब्दस्तुशब्दार्थश्चेति चशब्दार्थः। अत एवोभयार्थत्वाश्रयणेनैव लब्धवाक्यार्थप्रदर्शनमुत्तरत्र टीकायां विवक्षितमिति द्रष्टव्यम्। ननु जगत्प्रति ब्रह्मण आरोपाधिष्ठानत्वमेव उपादानत्वं चेत् तर्हि जगत्सृष्ट्यनुपपत्तिः, तत्प्रति विकारिणोऽन्यस्या-भावादित्यत आह- **ब्रह्माश्रितेति ॥**

**(व्या.टि.)** पूर्वप्रक्रमासङ्गत्या नाद्वैतं श्रुत्यर्थ इत्युक्ते, ततोऽपि प्रक्रमासङ्गत्या तद्विरोधेन च न द्वैतं श्रुत्यर्थ इति शङ्कते- **स्यादेतदित्यादिना ॥** तज्जलानित्यस्य परकीयव्याख्यानं दूषयितुमनुवदति- **तज्जत्वादित्यादिना ॥** विश्वं तज्जलानिति क्विबन्तम्। ततो जायत इति तज्जं, तत्र लीयत इति तल्लं, ततोऽनितीति तदन् इति। तदधि-ष्ठितोत्पत्तिलयचेष्टादिमत्त्वात्तदुपादानकमित्यर्थः। पूर्वार्ध इति विषमांशत्वात्पुंलिङ्गः। 'अर्धं समेंऽशके' इत्यभि-धानात्। अप्राक्ष्य इति लृङन्तेन तथा प्रश्नाकरणेनाकौशलं सूचयति। **अनन्यत्वादिति ॥** तद्व्यतिरेकेणा-भावादित्यर्थः। **अन्यथेति ॥** उपादानत्वानभिसन्धाने इत्यर्थः। निगमयति- **तत्कथमिति ॥ उक्तस्येति ॥** चण्डालात्मवैश्वानराभेदस्येत्यर्थः। यद्यप्युपक्रमादुपसंहारस्य प्राबल्याविरोधी परानुरोधो न्याय्य इत्युक्तं स्मार-यितव्यम्। तथापि तच्छिष्यैरेवोह्यतामित्यनुशयानो विरोध एवात्र नास्तीत्याह- **भवेदित्यादिना ॥** किं मिथ्यात्वे पदं प्रमाणं वाक्यं वा। नाऽद्य इत्याह- **तत्प्रतिपादकेति ॥** पदस्येत्यर्थः। द्वितीयं शङ्कते- **नन्विति ॥** वाक्यार्थतयाऽपि तस्याप्रतीतेराह- **कथञ्चिदिति ॥** उक्तत्वादिति हेतोरप्रसिद्धिपरिहाराय। अनेन न सदुपादानम् ईक्षापूर्वकस्रष्टृत्वात् कुलालवदित्यनुमानमनुसंहितम्। अस्य व्यतिरेकव्यभिचारं वारयति- **न हीति ॥** निमित्तत्व-मेवेत्युपसंहारेण तदपि साध्यीकरणीयमिति सूचयति। प्रत्यवतिष्ठते- **एवं सतीति ॥** चशब्देनोक्तानुमतिप्रतीते-राह- **चशब्द इति ॥** तथाऽर्थत्वेऽन्वयं दर्शयति- **कथनं त्विति ॥ निमित्तकारणेति ॥** कर्त्रित्यर्थः। **प्रसिद्ध-त्वादिति ॥** लोक इति शेषः। परमप्रक्रमासङ्गतिं शङ्कते- **नन्विति ॥** अभिप्राये किं मानमित्यतः सर्वतोऽनुप-पत्तिर्बलीयसीत्याह- **अन्यथेति ॥** प्रधानत्वमित्यादित्रितयं हेतूनित्येकशेषवृत्तिविग्रहप्रदर्शकम्। नन्वेकविज्ञानेन सर्वविज्ञानस्य प्राधान्यहेतुकत्वे ग्रन्थान्तर इव प्राधान्यज्ञापनार्थमेव सृष्ट्यादिकथनमिति वक्तव्यम्। तद्वशत्व-ज्ञापनार्थमिति तु कुत इत्यत आह- **न चेति ॥** तदविनाभूतत्वात्तदर्थमेव तद्वानमिति भावः। हेत्वन्तर-विवरणमप्यस्य फलिष्यतीत्यतिदिशति- **एतेनेति ॥ सङ्गच्छत इति ॥** 'समो गम्यृच्छिभ्याम्' इत्यात्मने-**(व्या.टि.)** पदम्। तस्यापि तद्वशत्वज्ञापनार्थत्वादिति भावः। **साक्षादिति ॥**

परिणामित्वेनेत्यर्थः । **मुख्य-मिति ।।** मायामयत्वश्रुतेरिति भावः । **सम्भावयाम इति ।।** दृष्टान्तस्य सम्भावकत्वादित्यर्थः ।

**मूलम् - न हि शुक्तिज्ञो रजतज्ञ इत्युच्यते । विरोधात्तयोर्ज्ञानयोः । नेदं रजतमित्य-रजतज्ञो हि शुक्तिज्ञो भवति । रजतज्ञश्चेन्न शुक्तिज्ञः । न हि तज्ज्ञस्तदभावज्ञो भवति । तदभावस्य तज्ज्ञानपूर्वकत्वं चान्यत्र तस्य सत्त्वादेव दृष्टम् । तदनङ्गीकारे तदेव न युज्यते ।**

**(त.मं.)** न हि शुक्तिज्ञस्तदध्यस्तरजतज्ञ इत्युच्यते । तयोर्ज्ञानयोर्विरोधं प्रतिपादयति- **नेद-मिति ।।** न हि तज्ज्ञस्तदभावज्ञो भवति । अयमर्थः- न हि भ्रान्त्या रजतानुभवी तत्काल एव नेदं रजतमिति तदभावज्ञो भवति । नन्वस्ति घटाख्यप्रतियोगिज्ञानपूर्वकत्वं घटाभावज्ञानस्येत्यत आह- **तदभावस्येति ।।** तदभावस्य तज्ज्ञानपूर्वकत्वमेव न युज्यते, न हि जगतः क्वापि सद्भावमङ्गीकरोति मायावादीति । स्यादेतत् । खरविषाणं नास्तीत्यत्र तदभावस्य तज्ज्ञानपूर्वकत्वमन्यत्र तस्य सत्त्वाभावेऽपि दृष्टम् । अतः कथं सा व्याप्तिः स्यादित्युच्यते । तज्ज्ञानं नाम तद्भावज्ञानं हि विव-क्षितम् । न हि खरविषाणाभावज्ञानं कुत्रापि तद्भावज्ञानपूर्वकम् ।

**टीका-** नन्वारोपस्य तावदुद्बुद्धसंस्कारकारणकत्वमन्वयव्यतिरेकसिद्धम् । संस्कारोद्बोधस्य चाधिष्ठानज्ञानं कारणम् । किञ्चाध्यस्तं ज्ञायमानमधिष्ठानसम्भिन्नतयैव ज्ञायते न तु केवलम् । तत्कथं सत्यज्ञानेन मिथ्याज्ञानं न भवतीत्युच्यत इत्यत आह- **न हि शुक्तिज्ञ इति ।।**

अयमभिसन्धिः- अत्र हि ब्रह्मज्ञानं नाम तद्याथात्म्यज्ञानमेव विवक्षितं न तु साधारणाकारम् । तस्य सर्वार्थज्ञानेषु स्वभावसिद्धत्वात् । अत्र चापूर्वज्ञानोत्पादनायाभिमुखीकर्तुमर्थवादस्योपन्या-सात् । ततश्च येन ब्रह्मणा नित्यशुद्धबुद्धाद्वितीयतया विज्ञातेन सर्वं विज्ञातं भवतीति वाक्यार्थः स्यात् । न चासावारोपपक्षे सम्भवतीति । अधिष्ठानयाथात्म्यज्ञानेऽध्यस्तज्ञानस्य क्वाप्यदर्शना-दिति ।

**शुक्तिज्ञः** शुक्तिरिति ज्ञानवान् । **रजतज्ञः** तत्रारोपितरजतज्ञः । ननु यः शुक्तियाथात्म्यं जानाति स रजतं नास्तीति जानात्येव । तत्कथमेतदित्याशङ्कानिरासार्थं 'न हि शुक्तिज्ञो रजतज्ञो भवति' इति वक्तव्य **इत्युच्यत** इत्युक्तम् । एवं सति रजताभावज्ञोऽसौ न रजतज्ञ इत्युच्येत । एवं ब्रह्मज्ञानेन सर्वाभावज्ञ इत्युच्येत न तु सर्वज्ञ इति । अन्यथोपचारप्रसङ्गादिति । ननु ब्रह्मज्ञानं नाम यथा ब्रह्मयाथात्म्यज्ञानं तथा सर्वज्ञानमपि । सर्वस्य याथात्म्यं च मिथ्यात्वमिति तथाज्ञानमेव सर्वज्ञानम् । मैवम् । कर्मादिज्ञानार्थमनेकवेदाभ्यासादिना वृथा श्रान्तोऽसि । किन्तु ब्रह्मैव सम्यग् ज्ञातव्यम् । तेनैव ज्ञातेन सर्वं कर्मादिकं ज्ञायत इति कर्मादिविषयवेदज्ञानफलस्य ब्रह्मज्ञानसाध्यत्वं ह्यत्रोच्यते । न हि कर्मादिविषयस्य वेदस्य कर्मादिमिथ्यात्वज्ञानं फलम् । अन्यथा वृथा कर्मादिज्ञानेन श्रान्तोऽसि तस्य मिथ्यात्वादित्येव वक्तव्यं स्यात् । किमनेन बहुनोक्तेनेति ।

नन्वधिष्ठानयाथात्म्यज्ञानेऽध्यस्तज्ञानं न भवतीत्यसत् । बीजाभावात्, अदर्शनमात्रस्यान्यथा-सिद्धत्वादित्यत आह- **विरोधादिति ।।** विरोधमेव प्रकटयति- **नेदमिति ।।** यः **शुक्तिज्ञः** शुक्तिकेयमिति ज्ञानवानिति यावत्, सोऽरजतज्ञो हि भवति । तत्रारोपितं रजतं न पश्यतीति यावत् । किन्तु नेदं रजतमित्येव पश्यतीति योजना । सोपाधिकभ्रमेष्वधिष्ठानयाथात्म्य-ज्ञानेऽध्यस्तदर्शने विद्यमानेऽपि नेतिज्ञानानुवृत्तिरस्तीति ज्ञापयितुमिदमुक्तम् । एवमधिष्ठान-ज्ञानवतोऽध्यस्तज्ञानाभावमुक्त्वाऽध्यस्तज्ञानवतोऽधिष्ठानयाथात्म्यज्ञानाभावमाह- **रजतज्ञश्चे-दिति ।।** एवमनयोर्ज्ञानयोः परस्परपरिहारेणैव वृत्तेर्विरोध इति । नन्वेतयोः परस्परपरिहारेणैव वृत्तेरपि किं निबन्धनमित्यत आह- **न हीति ।।** भावभावयोर्हि साक्षाद्विरोधो व्याघातप्रसङ्गात् । तद्द्वारान्ययोरिति हि स्थितिः । शुक्तिकारजते चान्योन्याभावरूपे । अतस्तद्द्वारा तज्ज्ञानयोरपि विरोध इति ।

ननु घटाभावो हि घटज्ञाने सत्येव ज्ञायते । प्रतियोगिज्ञानकार्यत्वादभावज्ञानस्य । तत्कथमुच्यते 'न हि तज्ज्ञस्तदभावज्ञो भवति' इति, तत्राह- **तदभावस्येति ॥** ज्ञानोपलक्षणमेतत् । **अन्यत्र** देशान्तरे कालान्तरे च । **तस्य** प्रतियोगिनः सत्त्वादेव । देशकालान्तरस्थितप्रतियोगिज्ञानमेव देशकालान्तरस्थिताभावज्ञानस्य कारणं न तु तत्रैव देशे काले चेत्यर्थः ।

एतदुक्तं भवति- शुक्तिकारजतयोरन्योन्याभावरूपयोस्तादात्म्यं विरुद्धम् । तद्द्वारा तज्ज्ञानयोरपि विरोध इति हि प्रागभिप्रेतम् । तथा च यस्य यदा यत्र शुक्तिरितिज्ञानं तस्यैव तदैव तत्रैव रजतज्ञानं न सम्भवतीत्युक्तं स्यात् । न चास्य देशान्तरादिव्यवस्थितप्रतियोग्यभाव-ज्ञानयोर्व्यभिचारः शङ्कार्ह इति । अन्यत्र तस्य सत्त्वादेवेति कुत इत्यत आह- **तदिति ॥** देश-कालान्तरस्थितप्रतियोगिज्ञानं देशकालान्तरस्थिताभावज्ञानकारणमित्यनङ्गीकारे तद्देशकाल-योरेव प्रतियोगिज्ञानाङ्गीकारे तदभावज्ञानमेव न युज्यते । ये ह्यभावज्ञानस्यानुपलब्धिं स्वरूपेण कारणमाचक्षते तेषामनुपलब्धेरभावात् । अनुमानपक्षे स्वरूपासिद्धेः । प्रत्यक्षाभाववादिभिरपि सत्यामेवानुपलब्धाविन्द्रियस्याभावे सामर्थ्याभ्युपगमात् । न हि तत्रैव घटं पश्यंस्तदभावं पश्यति । तथात्वे वा न कुत्रापि विरोधः स्यादिति । तदेवं नोपादानोपादेयभावेनैकविज्ञानेन सर्व-विज्ञानं भवतीति स्थितम् ।

**(र.टि.)** सत्यज्ञानेन मिथ्याज्ञानं न भवतीत्यनेन सत्यमिथ्याविषयकज्ञानयोः कार्यकारणभावो निषिध्यते तथ्यमिथ्याभूतयोरेकज्ञानविषयत्वं वा । आद्य आह- **आरोपस्येति ॥** द्वितीये त्वाह- **किञ्चेति ॥ सर्वार्थज्ञाने-ष्विति ॥** परमते सन् घटः सन् पट इत्यादिप्रतीतेरनुगतसद्रूपब्रह्मविषयत्वादिति भावः । ननु सर्वाभावज्ञोऽपि प्रतियोगितया सर्वं जानात्येव । अतो ब्रह्मज्ञानेन सर्वज्ञानं भवतीति श्रुतौ वक्तुं शक्यत इत्यत आह- **अन्य-थेति ॥** सदसत्त्वा(त्ता)विवक्षया सर्वविषयकत्वरूपगुणयोगेन सर्वाभावज्ञान एव सर्वविज्ञानपदप्रयोगे उपचार-प्रसङ्गादित्यर्थः । औपचारिकत्वपरिहाराय शङ्कते- **ननु ब्रह्मज्ञानमिति ॥ इति योजनेति ॥** तथा च यत्र गोत्वं न तत्राश्वत्वं यत्र चाश्वत्वं न तत्र गोत्वमितिवत्, यः शुक्तिरिति ज्ञानवान् नासौ तत्रारोपितरजतज्ञान-वान् । यः शुक्तिकारोपितरजतज्ञानवान् नासौ शुक्तिरिति ज्ञानवानिति विरोधः प्रकटनीयः । अत्र तु यो रजतज्ञो न भवति स शुक्तिज्ञ इत्युच्यत इति कथमनेन विरोधप्रकटनमिति शङ्कावकाशो नेति भावः । नन्वरजतज्ञ इत्यादिनैव विरोधस्य प्रकटितत्वात् नेदं रजतमितीत्यंशः किमर्थ इत्यत आह- **सोपाधिकभ्रमेष्विति ॥** काप्य-दर्शनेऽपि दोषानुवृत्त्याऽनिवृत्तभ्रमेष्वित्यर्थः । तथा चाधिष्ठानयाथात्म्यज्ञानेन पटुभूताध्यस्तज्ञानस्य विरोधः प्राग्विवक्षित इत्युक्तं भवतीति भावः । अन्यत्रेत्यस्य देशमात्रपरत्वे समानदेशभिन्नकालीनप्रतियोगिज्ञानस्य कारणत्वेनावधारणानुपपत्तिः । कालमात्रपरत्वे समानकालभिन्नदेशप्रतियोगिज्ञानस्य जनकत्वेन सैवानुप-पत्तिरित्यत आह- **देशान्तरे कालान्तरे चेति ॥ न तु तत्रैवेति ॥** अनेनान्यत्रैवेत्येवकारसम्बन्धः सूचितो भवति । अत्र ह्यभावदेशकालयोः प्रतियोगिसत्त्वं व्यवच्छेद्यं न तु देशकालान्तरयोस्तदसत्त्वम् । देशकालान्तरयोः सतोऽपि प्रतियोगिनो ज्ञानस्य कारणत्वादिति भावः । नन्वनेन तज्ज्ञस्तदभावज्ञो नेत्यत्र शङ्कितो व्यभिचारो न परिहृत एवेत्यत आह- **एतदुक्तं भवतीति ॥** भिन्नदेशकालीनाभावप्रतियोगिज्ञानयोः कार्यकारणभावाङ्गी-कारस्यानुपलब्धिरूपकारणविघटकाभावेनाभावज्ञानाभावापादकत्वायोगादाह- **तद्देशकालयोरेवेति ॥ अभाव इति ॥** अभावज्ञाने कारणत्वाभ्युपगमादित्यर्थः ।

**(रा.टि.)** अधिष्ठानज्ञानेनाध्यस्तज्ञानं नेति कोऽर्थः, अधिष्ठानज्ञानमध्यस्तज्ञाने हेतुर्नेति वा अधिष्ठानज्ञान-मध्यस्तविषयकं नेति वा । न द्वयमपि युक्तमिति शङ्कते- **नन्वारोपस्येति ॥ किञ्चेति च ॥ सम्भिन्नतयै-वेति ॥** अभेदेनैवेत्यर्थः । शङ्कानिरासस्यास्फुटत्वादाह- **अयमभिसन्धिरिति ॥ तस्येति ॥** साधारणाकारब्रह्म-ज्ञानस्य सर्वपदार्थविषकज्ञानेष्वधिष्ठानज्ञानत्वहेतुना स्वभावसिद्धत्वादित्यर्थः । अस्तु तादृशज्ञानमेव ज्ञानं येनाश्रुतं श्रुतमित्यर्थवादे विवक्षितमित्यत आह- **अत्र चेति ॥** गुरूपदिष्टज्ञानान्यज्ञानोत्पादनायेत्यर्थः । इत्युच्यत इत्यस्य शङ्कापूर्वं कृत्यमाह- **ननु यः शुक्तीत्यादिना ॥ अन्यथेति ॥** ब्रह्मज्ञानेन सर्वज्ञानं नाम सर्वं नास्तीति ज्ञानाभिप्राये अश्रुतं श्रुतं भवतीत्यादेर्नास्तीति श्रुतमित्यर्थप्राप्त्योपचारप्रसङ्ग इत्यर्थः । नोपचारप्रसङ्गोऽस्यैवार्थस्य मुख्यत्वादिति भावेन शङ्कते- **ननु ब्रह्मज्ञानं नामेति ॥**

**सर्वज्ञानमपीति ॥** सर्वयाथात्म्यज्ञानमित्यनुकर्षः । **किमनेनेति ॥** नवकृत्व उपदेशकथनेनेत्यर्थः । **अन्यथासिद्धत्वादिति ॥** अधिष्ठानयाथात्म्यज्ञाने नाध्यस्तज्ञानमित्यस्यादर्शन-मात्रस्याध्यस्तवस्तुनोऽभावादेव युक्तत्वादित्यर्थः । अधिष्ठानाध्यस्तज्ञानयोर्विरोधस्य स्पष्टत्वान्नेदमित्यादिना तदुपपादनं (किमर्थं कृतं इ) कुत इत्यत आह- **सोपाधिकेति ॥ इदमुक्तमिति ॥** नेदमित्यादिकमुक्तमि-त्यर्थः । यद्वा न हि सत्यज्ञानेन मिथ्याज्ञानं भवतीत्येतावतैव पूर्तौ न हि शुक्तिज्ञ इत्याद्युक्तिः किमर्थेत्यत आह- **सोपाधिकभ्रमेष्विति ॥ व्याघातेति ॥** परस्परविरहानात्मकत्वे प्रतियोग्यनुयोगिभावव्याहतिप्रसङ्गादि-त्यर्थः । यद्वा तयोः साक्षाद्विरोधाभावेऽपि तन्मूलत्वात्सर्वविरोधानां विरोधमात्रं व्याहन्येतेत्यर्थः । **अन्ययो-रिति ॥** परस्परविरहव्याप्ययोरित्यर्थः । यद्वा भावाभावविषयकज्ञानयोरित्यर्थः । **अन्योन्याभावरूपेति ॥** भेदो ह्यत्रान्योन्याभावशब्दार्थः । ननु देशान्तरादौ क्वाप्यसतोऽपि नृशृङ्गादेरभावोऽन्यत्र ज्ञायत एव, तत्कथमन्यत्र सत्त्वादेव दृष्टमित्युक्तिरित्यतो भावमाह- **एतदुक्तं भवतीति ॥ रजतज्ञानमिति ॥** रजततादात्म्यज्ञानमि-त्यर्थः । **न चास्येति ॥** यस्य यदा यत्रेत्यादिना, इत्युक्तं स्यादित्यन्तेनोक्तस्येत्यर्थः । मूलोक्तापाद्यापादक-योर्व्याप्तेरस्फुटत्वात्तदभिप्रेतापादकं स्वयमाह- **तद्देशकालयोरित्यादिना ॥** अन्यत्र सत्त्वादेवेत्यस्यायमेवाभिप्राय इति नृशृङ्गाद्यभावज्ञानाभावापादनानवकाशः । न युज्यते इत्यत्रापि हेतून् स्वयमाह- **ये हीति ॥** तार्किका इत्यर्थः । भट्टमतेनाह- **अनुमानपक्ष इति ॥** अनुपलब्धिरनुमानतयाऽभावज्ञानस्य कारणमिति पक्ष इत्यर्थः । **अभाव इति ॥** अभावज्ञानजनने सामर्थ्याभ्युपगमादित्यर्थः । अभावग्रहदेश एव प्रतियोग्युपलम्भे को दोष इत्यत आह- **न हीति ॥ उपादानेति ॥** अधिष्ठानाध्यस्तरूपोपादानोपादेयभावेनेत्यर्थः । एकविज्ञानेन सर्वविज्ञाने पराभिप्रेतोपादानोपादेयभावरूपहेतुनिरासः ।

**(श्री.टि.)** ननु सत्यज्ञानेन मिथ्याज्ञानं न भवतीत्यनेन सत्यमिथ्यावस्तुविषयकज्ञानयोः कार्यकारणभावो निषिध्यते सत्यमिथ्ययोरेकज्ञानविषयत्वं वा । नाद्य इत्याह- **नन्वारोपस्येति ॥ उद्बुद्धसंस्कारेति ॥** रजतसंस्कारे-त्यर्थः । **अधिष्ठानज्ञानमिति ॥** 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति वचनादिति भावः । द्वितीये त्वाह- **किञ्चेति ॥** सम्भिन्नतया मिश्रतया इदं रजतमित्यधिष्ठानसम्बद्धत्वेनेति यावत् । **केवलमिति ॥ (श्री.टि.)** रजतमित्येवेत्यर्थः । **साधारणाकारमिति ॥** इदन्त्वादिनाधिष्ठानज्ञानवत्सत्यत्वादिना रूपेण ब्रह्मज्ञानमित्यर्थः । येन सत्यज्ञानेन मिथ्याज्ञानं न भवतीत्युक्तमयुक्तं स्यादिति भावः । **सर्वार्थज्ञानेष्विति ॥** परमते सन्घटः सन्पट इत्यादिप्रतीतेरनुगतसद्रूपब्रह्मविषयकत्वात्, 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते' इति तद्वचनादिति भावः । इतोऽपि साधारणाकारज्ञानमत्र न विवक्षितं प्रकृतानुपयोगादित्याह- **अत्र चेति ॥ अपूर्वज्ञानोत्पादनायेति ॥** साधारणाकारभिन्नयाथात्म्यविषयकापूर्वज्ञानोत्पादनायेत्यर्थः । **अभिमुखीकर्तु-मिति ॥** श्वेतकेतुमिति शेषः । **अर्थवादस्येति ॥** 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इत्यर्थवादस्येत्यर्थः । **शुक्तिरितीति ॥** शुक्तित्वप्रकारकज्ञानवानित्यर्थः । ननु शुक्तिज्ञोऽपि तत्समीपस्थरजतज्ञो भवत्येवेत्यत आह- **तत्रारोपितरजतज्ञ इति ॥** रजतज्ञानवान् रजततया सत्त्वेन च जानातीत्यर्थः । **रजतं नास्तीति जानातीति ॥** निषेध्यत्वेन जानातीत्यर्थः । **इत्युच्यत इति ॥** व्यवह्रियत इत्यर्थः । ननु सर्वाभावज्ञोऽपि प्रतियोगितया सर्वं जानात्येवातः कथं ब्रह्मयाथात्म्यज्ञानेन सर्वाभावं जानतः सर्वज्ञत्वाभावो वक्तुं शक्यत इत्यत आह- **अन्यथेति ॥ उपचारेति ॥** सर्वाभावज्ञाने सर्वविज्ञानपदप्रयोगस्य सर्वविषयकत्वगुणयोगेनोपचार-प्रसङ्ग इत्यर्थः । औपचारिकत्वपरिहारमाशङ्कते- **नन्विति ॥ सर्वज्ञानमपीति ॥** सर्वयाथात्म्यज्ञानमेवेत्यर्थः । किं तत्सर्वयाथात्म्यज्ञानमित्यत आह- **सर्वस्येति ॥ तथाज्ञानं** मिथ्यात्वेन ज्ञानम् । **कर्मादिविषयेति ॥** कर्मादिप्रतिपादकेत्यर्थः । **ज्ञानस्य** कर्मादिज्ञानस्य । **अन्यथेति ॥** कर्मादिमिथ्यात्वज्ञानस्यैव कर्मादिप्रतिपादक-वेदफलत्व इत्यर्थः । **बहुनेति ॥** येनाश्रुतमित्यादिनेत्यर्थः । न त्वधिष्ठानयाथात्म्ये ज्ञाते सत्यध्यस्तज्ञानं भवत्क्वापि नोपलब्धमित्यदर्शनमेव तद्बीजमिति चेत्तत्राह- **अदर्शनमात्रस्येति ॥** अदर्शनमात्रस्य सामग्र्यन्तराभाव-प्रयुक्तत्वेनाप्यन्यथासिद्ध्या प्रमेयाभावनिश्चायकत्वाभावात् । अन्यथा धर्माद्यतीन्द्रियपदार्थाभाव एव स्यादिति भावः । विरोधप्रकटनाय योजनामाह- **यः शुक्तिज्ञ इति ॥**

ननु योऽधिष्ठानयाथात्म्यज्ञानवान् स तत्रारोपितं न पश्यतीत्यसत् । विशेषदर्शनानिवर्त्ये पीतः शङ्ख इत्यादि-सोपाधिकभ्रमे शङ्खः श्वेतः शङ्खत्वादित्याद्यानुमानिकेऽधिष्ठानयाथात्म्यज्ञाने विद्यमानेऽपि तत्रारोपितं पैत्यमेव पश्यतीति व्यभिचार इत्यतो मूले नेदं रजतमितीत्यंश उपात्त इत्याशयवानाह- **सोपाधिकभ्रमेष्विति ॥ नेति ज्ञानेति ॥** एवं च योऽधिष्ठानयाथात्म्यज्ञानवान् स इदं तन्नेति ज्ञानवानिति व्याप्तेर्विवक्षिततया पीतः शङ्ख इत्यादावपि दोषवशादेवैवं मम प्रतीयते, वस्तुतः पीतं नेति ज्ञानानुवृत्तिरस्त्येवेति न व्यभिचार इति भावः । तथा च नेदं रजतमिति पश्यतीत्यस्य नेदं रजतमिति जानातीत्यर्थोऽवगन्तव्यः । **परस्परपरिहारेणेति ॥** एकस्य सत्त्वदशायामपरं नास्तीत्येवं परस्परपरिहारेणेत्यर्थः । **साक्षादिति ॥** परस्परपरिहाररूपत्वेनेत्यर्थः । तदनङ्गीकारे बाधकमाह-

**व्याघातेति ॥** अन्यथेति शेषः । भावाभावयोः साक्षाद्विरोधानङ्गीकारे प्रतियोग्यनुयोगिभाव-व्याघातप्रसङ्गः प्रतियोग्यनुयोगिभावो न स्यादिति यावदित्यर्थः । **अन्ययोः** तद्विषयकज्ञानयोः । प्रकृते कथं विरोध इत्यत आह- **शुक्तिकेति ॥** शुक्तिप्रतियोगिकान्योन्याभावरूपं रजतं, तत्प्रतियोगिकान्योन्याभावरूपा (**श्री.टि.**) च शुक्तिः । अन्योन्याभावस्य धर्मिस्वरूपत्वादित्यर्थः । **तज्ज्ञानयोरपीति ॥** शुक्तिकारजत-ज्ञानयोरपीत्यर्थः । **ज्ञानोपलक्षणमिति ॥** तदभावज्ञानस्येत्यर्थः । **यत्र** देशे । **अस्य** नियमस्य । तत्फलितमाह- **तद्देशकालयोरेवेति ॥** अङ्गीकार इत्यनन्तरम् इति यावदिति शेषः । कुतो न युज्यत इत्यतस्तत्सामग्र्-भावादित्याह- **ये हीत्यादिना ॥** आचक्षते षष्ठप्रमाणवादिनो भाट्टाः । **स्वरूपेणेति ॥** न लिङ्गतयेत्यर्थः । येन तज्ज्ञानापेक्षायां तस्याप्युपलब्ध्यभावरूपतयाऽनुपलब्ध्यन्तरापेक्षायामनवस्था स्यादिति भावः । **अनुपलब्धे-रभावादिति ॥** तदानीं प्रतियोगिन एव सत्त्वेन तदनुपलब्धेरभावादित्यर्थः । अनुपलब्धेर्लिङ्गत्वेनाभावज्ञान-कारणत्वमिति पक्षे त्वाह-**अनुमानपक्ष इति ॥** घटोऽत्रेदानीं नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादित्यनुमातव्यं, तत्र स्वरूपासिद्धिरित्यर्थः । नन्वभावज्ञानं प्रत्यक्षेण भवतीति मतेऽनुपलब्धेरनपेक्षितत्वेनेन्द्रियेणैव तत्र तदानीं तदभावज्ञानं सम्पत्स्यत इत्यत आह- **(अ)प्रत्यक्षेति ॥ वादिभिरपि** तार्किकैरपि । **सत्यामेवेति ॥** इन्द्रियेणाभावग्रहणे योग्यानुपलब्धेः सहकारित्वाङ्गीकारादित्यर्थः । सहकारिभूता सा चानुपलब्धिरत्र नास्तीत्याह- **न हीति ॥** तथात्वे वेत्यनन्तरं तन्न्यायेनेति शेषः । **कुत्रापि** जगति । तथा च प्रतियोगितदभावयोर्विरोधवार्तैव जगति लुप्येतेत्यर्थः । उपसंहरति- **तदेवमिति ॥**

**(पां.टि.) सम्भिन्नतयेति ॥** तत्तादात्म्येनेत्यर्थः । **सर्वार्थज्ञानेष्विति ॥** परमते सन् घटः, सन् पट इत्यादेरनुगतसद्रूपब्रह्मविषयत्वादिति भावः । **तथा सर्वज्ञानमपीति ॥** सर्वयाथात्म्यज्ञानमेव सर्वज्ञानमि-त्यर्थः । अस्तु सर्वज्ञानशब्देन सर्वयाथात्म्यज्ञानलाभः । तथापि तन्मिथ्यात्वज्ञानस्य तेन कथं लाभ इत्यत आह- **सर्वस्येति ॥ साक्षादिति ॥** भावाभावरूपत्वेनेत्यर्थः । **अन्यथेति ॥** भावाभावयोरपि परस्परविरोधा-नभ्युपगम इत्यर्थः । परस्पराभावौ च तद्विरुद्धौ च न इत्यस्य विप्रतिषिद्धत्वादिति भावः । **तद्द्वारेति ॥** भावाभाव-विरोधद्वारेत्यर्थः । **अन्ययोरिति ॥** परस्पराभावानात्मकयोरित्यर्थः ।

**(व्या.टि.)** ननु सत्यज्ञानेन मिथ्याज्ञानं न जायत इति, उत सत्यज्ञानेन मिथ्या न विषयीक्रियत इत्येवं द्वेधा विकल्पाद्यं निराचिकीर्षुराह- **नन्वित्यादिना ॥ अधिष्ठानज्ञानमिति ॥** सदृशतयेति भावः । यथाऽऽहुः- 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति । द्वितीयं पराह- **किञ्चेति ॥ सम्भिन्नतयेति ॥** इदमभिन्न-तयेत्यर्थः । **केवलमिति ॥** रजतमित्येवाप्रतीतेरित्यर्थः । उक्तमाक्षिपति- **तत्कथमिति ॥** अनेन न हीत्युक्ताशयः प्रकाशित इत्याह- **अयमभिसन्धिरिति ॥ विवक्षितमिति ॥** प्रश्नोत्तरजननीयत्वेनेत्यर्थः । **तस्येति ॥** प्रमेयत्वादिप्रकारकज्ञानस्येत्यर्थः । **सिद्धत्वादिति ॥** सिद्धस्य साधनायोगादित्यर्थः । एवं युक्तिविरोधेन पराकृतं साधारणज्ञानं प्रकृतविरोधेनापि पराचष्टे- **अत्र चेति ॥ अभिमुखीकर्तुमिति ॥** श्वेतकेतुमिति शेषः । **अर्थवादस्येति ॥** स्तुतिरूपस्येत्यर्थः । ब्रह्मयाथात्म्यमाह- **नित्यशुद्धेत्यादिना ॥** तदनुरोधेन मूलं योजयति- **शुक्तिरिति ज्ञानवानिति ॥** रजतमिति द्वितीयैकवचनम् । अभावप्रतियोगितयेत्यर्थः । उक्तिलब्धमाह- **एवं सतीति ॥ न रजत इति ॥** रजतस्याभावप्रतियोगितया ज्ञानविषयत्वेऽपि मुख्यविशेष्यत्वाभावात् । मुख्य-**(व्या.टि.)** विशेष्येणैव ज्ञाज्ञ(न)व्यवहारादिति भावः । अस्य प्रकृतसङ्गतिमाह- **एवमिति ॥** नन्वभाव-प्रतियोगितया सर्वं जानात्येवेत्यत आह- **अन्यथेति ॥ उपचारेति ॥** अभावज्ञे प्रतियोगिज्ञव्यवहारस्य गौणत्व-प्रसङ्गादित्यर्थः । प्रक्रमानानुगुण्यान्नैवमित्याह- **मैवमिति ॥ फलमिति ॥** साध्यमित्यर्थः । **बहुनेति ॥** व्यर्थोक्तेरपर्यवसानादित्यर्थः । **अन्यथेति ॥** सतोऽप्यदर्शनसम्भवादित्यर्थः । **आहेति ॥** बीजमिति शेषः । **प्रकटयतीति ॥** अधिष्ठानज्ञानवतोऽध्यस्तज्ञानाभावोदाहरणेनेति शेषः । **सोपाधिकभ्रमेष्वपीति ॥** अनेन योऽधिष्ठानयाथात्म्यज्ञानवान् स तत्रारोपितदर्शनवान्न भवतीत्यत्रारोपितभेदज्ञानासध्रीचीनत्वविशेषितारोपित-दर्शनाभावस्य व्यापकत्वम् । तेन सोपाधिकभ्रमे न व्यभिचार इति सूचयति । यद्वाऽध्यस्तदर्शनाभावस्य निरुपाधिक-भ्रमस्थलीयाधिष्ठानयाथात्म्यज्ञानव्यापकता । अध्यस्तभेददर्शनस्य त्वधिष्ठानयाथात्म्यज्ञानमात्रव्यापकता । तेन सोपाधिकभ्रमस्थलेऽधिष्ठानयाथात्म्यज्ञानेऽध्यस्तदर्शने च सत्यपि न दोष इति भावः । **परस्परपरिहारेणै-वेति ॥** परस्परविरहव्याप्यत्वादित्यर्थः । **आहेति ॥** ज्ञानविरोधेऽर्थविरोधं बीजमिति शेषः । **साक्षादिति ॥** अन्याद्वारेत्यर्थः । **व्याघातेति ॥** अन्यथेति शेषः । अविरोधे भावाभावरूपत्वस्य व्याघातप्रसङ्गादिति, भावेऽप्य-भावशङ्कायां व्याघातप्रसङ्गादिति वाऽर्थः। शुक्तिकारजते चेति भावप्रधानो निर्देशः । शुक्तिकात्वरजतत्वे इत्यर्थः। **अन्योन्याभावरूपे इति ॥** अन्योन्यस्य अभावे विरहे(सति) रूपं स्वरूपं ययोस्ते तथोक्ते । परस्परविरहव्याप्ये इत्यर्थः । यथाश्रुतार्थत्वे बाधात् । मिथ्यासत्ययोः परस्परभेदेऽपि परस्परविरहत्वाभावादिति ध्येयम् । अथ वा अन्योन्याभावरूपे भेदस्वरूपे इत्यर्थः । **तद्द्वारा ज्ञानयोरपि विरोध**

**इति ।।** तद्धर्मावच्छिन्नप्रतियोगिक-भेदधर्मितावच्छेदकत्वेन ज्ञातशुक्तिकात्वरूपेण ज्ञाते तादात्म्येन रजतत्वावच्छिन्नज्ञानं विरुद्धम् । एवं रजतत्वेन ज्ञाते धर्मिणि तादात्म्येन शुक्तिज्ञानं विरुद्धमित्यर्थः ।

भावज्ञानस्याभावज्ञानाभावेनाभावज्ञानस्य भावज्ञानाभावेन तु व्याप्तेर्व्यभिचारमाशङ्कते- **नन्विति ।।** अभावस्य ज्ञानजन्यत्वबाधादाह- **ज्ञानोपलक्षणमिति ।।** अभावज्ञानस्येत्यर्थः । **एतदिति ।।** तदभावस्येति तस्येति च पदद्वयमित्यर्थः । **तस्य प्रतियोगिन इति ।।** प्रतियोगिज्ञानस्य चेत्यर्थः । न चैवमध्यस्ताभावज्ञानं न स्यात् । तस्यान्यत्रासत्त्वात् । अन्यथा अन्यथाख्यात्यापातः । तथाऽत्यन्तासदभावबोधो न स्यात् । तस्य क्वाप्यसत्त्वादिति वाच्यम् । अस्यापि ज्ञानोपलक्षणतया व्याख्यातत्वात् । एवकारव्यवच्छेद्यं दर्शयति- **न त्विति ।।** शुक्तिका-रजतयोरिति भावप्रधानः । **अन्योन्याभावरूपयोरिति ।।** व्याख्यातमेतदधस्तात् । **तादात्म्यमिति ।।** स आत्मा आधारो ययोस्ते तदात्मनी तयोर्भावस्तादात्म्यम् । सामानाधिकरण्यमित्यर्थः । **शङ्कार्ह इति ।।** व्यधिकरणत्वेनारोपमात्रत्वादित्यर्थः । अयोगप्रकारं दर्शयति- **ये हीति ।।** भाट्टाः । नैयायिकमतमाह- **अनुमान-पक्ष इति ।।** सिद्धान्ते आह- **अन्यथेति ।। तथात्व इति ।।** भावाभावविरोधाभाव इत्यर्थः । **न कुत्रापीति ।।** तन्मूलत्वादन्यविरोधस्येत्यर्थः । परपक्षप्रतिक्षेपं निगमयति- **तदेवमिति ।।**

**मूलम् - प्रधानज्ञानादप्रधानस्य ज्ञातवद्व्यपदेशोऽस्त्येव । यथा प्रधानपुरुषाणां ज्ञानाह्वाननाशनैः 'ग्रामो ज्ञात, आहूतो, नाशितः' इति व्यपदेशः । कारणे च पितरि ज्ञाते 'पुत्रो ज्ञातः' इति 'जानाम्येनमस्य पुत्रोऽयम्' इति व्यपदेश इति । एवमत्राप्येतत् सृष्टं सर्वमित्यादि । सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमिति ।।**

**टीका-** स्वमते प्राधान्यादित्रयमेकविज्ञानेन सर्वविज्ञाने हेतुत्वेनोक्तम् । तदसत् । प्रधानभूतस्य राज्ञो विज्ञानेऽपि भृत्यानामविज्ञातत्वात्, गोर्विज्ञानेऽपि गवयस्याज्ञातत्वात्, कुलालस्य ज्ञानेऽपि घटस्याज्ञातत्वादित्यतः प्राधान्यस्य तावद्धेतुत्वमुपपादयति- **प्रधानेति ।।** अप्रधानज्ञानेन यत्प्रयोजनं तत्प्रधानज्ञानादेव सम्पद्यत इत्यभिप्रेत्य प्रधानज्ञानादप्रधानं ज्ञातमिति व्यवहारोऽस्त्येव ।

एतदु(इदमु)क्तं भवति- फलापेक्षयैतदुक्तमतो नोक्तानुपपत्तिरिति । एवं तर्ह्युपचारः प्रस-ज्येत । विज्ञातशब्दस्य विज्ञाते सति यत्फलं तदर्थत्वाङ्गीकारादिति चेत्, सत्यम् । मुख्यार्थानुपपत्तावुप-चाराङ्गीकारस्य न्याय्यत्वात् । अत एव प्रकारान्तरस्यासम्भवः प्रागेवोपपादितः । तर्ह्युपचारप्रयोगे प्रयोजनं वक्तव्यमित्यतः प्रधानज्ञानादप्रधानं ज्ञातवद्भवतीति वक्तव्ये **व्यपदेशोऽस्त्येव** इत्यु-क्तम् । निरूढत्वादस्य प्रयोगस्य न प्रयोजनापेक्षेति भावः । तमेव व्यपदेशं दर्शयति- **यथेति ।।** अत्राह्वाननाशनग्रहणं श्रुतौ श्रुतमतविज्ञातशब्दानामुपलक्षकत्वमिति सूचयितुं कृतम् । कर्मदेवतादि-विषयश्रवणमननविज्ञानानुष्ठानाह्वानपूजादिना यत्फलं तत्सर्वमधिकं च भगवच्छ्रवणादिनैव लभ्यते । ततस्तदेव कार्यं लाघवादाधिक्याच्च । नान्यद्, गौरवादल्पत्वाच्च । तथाऽन्यविषयभ्रंशे यः प्रत्यवायः स ततोऽधिकश्च भगवदपराधे भवति । अतस्तत्रैवोद्युक्तेन भवितव्यं नान्यदादरणीय-मिति । **व्यपदेशो**ऽस्तीति वर्तते ।

कारणत्वस्य हेतुत्वमुपपादयति- **कारणे चेति ।।** इत्यस्तीति वर्तते । तत्कथमित्यत आह- **जानामीति ।।** व्यपदेशाज्ज्ञानसत्ताऽनुमीयत इति भावः । इदमुक्तं भवति । देवदत्तपितरि यज्ञदत्ते देवदत्तकारणतया विज्ञाते देवदत्तोऽपि देवदत्त इत्येव ज्ञातो यज्ञदत्तपुत्र इत्युपदेशं विनैव ज्ञायते । देवदत्तोऽयमित्युक्तिमात्रे श्रुते 'यदि देवदत्तस्तर्ह्येनमयमस्य यज्ञदत्तस्य पुत्रः' इति जानामीति व्यपदेशादिति । दार्ष्टान्तिके योजयति- **एवमिति ।। अत्र** परमात्मन्यपि जगत्कारणत्वादिरूपेण ज्ञात इति सम्बन्धः । इत्यादिरूपेण जगज्ज्ञायत इति शेषः ।

अयमर्थः- कर्मादेर्विश्वस्य स्वरूपेण ज्ञानं तावद्व्यर्थमनर्थफलं च । अल्पास्थिरत्वादिना कर्मा-दीनामपुरुषार्थत्वात्, स्वातन्त्र्येण ज्ञानप्रसङ्गाच्च । अतो मुमुक्षुणा भगवत्सृष्टमेतदित्यादिरूपेणैव ज्ञातव्यम् । तदर्थमपि न पृथक्प्रयासः कर्तव्यः, भगवज्ज्ञानादेव तत्सिद्धेः । स हि जगत्कारणत्वादि-रूपेण ज्ञायते । तथा च तस्मिंस्तथा विज्ञायमाने

जगदपि तत्सृष्टत्वादिरूपेण ज्ञायत एव। अतो भगवत्येव निष्ठा कार्येति।

साद्दश्यस्य हेतुत्वमुपपादयति- **साद्दश्याच्चेति ॥** एकस्यां स्त्रीव्यक्तौ स्त्रीशब्दवाच्यत्वादिना रूपेण ज्ञातायां **'स्तनकेशादिमती स्त्री स्यात्'** इत्युक्तसाद्दश्यादन्याऽपि व्यक्तिर्विनैवोपदेशेन यथा ज्ञायते तथा भगवति सत्यत्वेन ज्ञाते प्रामाणिकत्वसाद्दश्याज्जगदपि तथा ज्ञायते। ज्ञानानन्दादिरूपेण ज्ञाते चेतनत्वसाद्दश्याज्जीवा अपि तथा ज्ञायन्ते। अबाधित एव विषयेऽनुमानस्य प्रवृत्तेर्नाति-प्रसङ्गः। अतोऽपेक्षितस्य जगज्ज्ञानस्यान्यतो लभ्यत्वान्न कर्मादिविषयस्य शास्त्रस्याभ्यासो विधेय इति भावः। इतिशब्दो हेतुत्रयोपपादनसमाप्तौ।

**(र.टि.) श्रुतमतविज्ञातशब्दानामिति ॥** तथा चानाहुतमाहुतं भवतीत्याद्यपि श्रुतौ ग्राह्यमिति भावः। **भगवदपराध इति ॥** भगवन्नाशस्यासम्भवादपराधग्रहणमित्यवधेयम्। ननु स्वरूपेण पितृज्ञाने सत्यपि पुत्रज्ञाना-दर्शनात्कथं कार्यकारणभाव इत्यतस्तात्पर्यमाह- **इदमुक्तं भवतीति ॥ देवदत्तकारणतयेति ॥** अनेन कारणे चेत्येतदुक्ततात्पर्यमिति ज्ञातव्यम्। **इति सम्बन्ध इति ॥** अनेन कारणे ज्ञात इति पदद्वयानुवृत्तिरित्युक्तं भवति। **चेतनत्वसाद्दश्यादिति ॥** तमोयोग्यभिन्नचेतनत्वसाद्दश्यादित्यर्थः। तेन तमोयोग्येषु न व्यभिचार इत्यवधेयम्। ननु चेतनत्वहेतुनेश्वरद्दष्टान्तेन ज्ञानानन्दाद्यनुमाने तत एव तद्वदेवापरिच्छिन्नानन्दाद्यनुमान-प्रसङ्गादित्यत आह- **अबाधित एवेति ॥**

**(रा.टि.)** हेतुत्रयस्यापि क्रमेणानैकान्त्यमाह- **प्रधानभूतस्येति ॥** मूलकृदुक्तज्ञातत्वव्यपदेशं हेतूक्तिपूर्वं व्यनक्ति- **अप्रधानज्ञानेनेति ॥** अस्त्वेवं लोके, येनाश्रुतमिति वाक्यस्य प्राधान्यादिहेतुकत्वाभिप्राये व्यभिचार-स्योक्तत्वात्कथं तत्परिहार इत्यत आह- **एतदुक्तमिति ॥ एतदिति ॥** एकविज्ञानेन सर्वविज्ञानमित्युक्तमि-त्यर्थः। **प्रागेवोपपादित इति ॥** 'न हि सत्यज्ञानेन' इत्यादिना परोक्तप्रकारासम्भव उपपादित इत्यर्थः। **उपलक्षकत्वमिति ॥** येनाहूतेन सर्वमाहूतं भवति, येन नाशितेन सर्वं नाशितं भवतीति ग्राह्यमिति सूचयितुमि-त्यर्थः। यथेत्यादिमूलेन येनाश्रुतमित्यादेः कोऽर्थ उक्त इत्यत आह- **कर्मदेवतादीति ॥ लाघवादिति ॥** अनेकव्यक्तिश्रवणाद्यपेक्षया एकव्यक्तिश्रवणादेर्लघुत्वात्फलाधिक्याच्चेत्यर्थः। **अल्पत्वाच्च** अल्पफलत्वाच्चेत्यर्थः। येन नाशितेनेत्युपलक्षणम्। तस्याभिप्रायमाह- **तथेति ॥ तत्रैवोद्युक्तेनेति ॥** भगवद्विषय एव यथा नापराधो भवति श्रवणादि च यथा भवति, तथोद्योगवता भाव्यमित्यर्थः। व्यपदेशपदानुवादेन अस्तीति पदानुषङ्गमाह- **व्यपदेशोऽस्तीति ॥ वर्तत इति ॥** अस्फुटत्वात्तात्पर्यमाह- (इदमु) **एतदुक्तमिति ॥** अत्रेत्यनुवादः परमात्म-**(रा.टि.)** न्यपीति व्याख्या। अस्फुटत्वादाह- **अयमर्थ इति ॥** व्यर्थमनर्थफलं चेत्युक्तमयुक्तम्, अनुष्ठानद्वारा स्वर्गादिपुमर्थफलकत्वादित्यतो द्वयमपि क्रमेण व्यनक्ति- **अल्पेति ॥ इत्यादीति ॥** तत्तन्त्रं तदाराधनरूपतया तत्प्रीतिफलकमित्यादिरादिशब्दार्थः। **जगदपि तथेति ॥** सत्यत्वेन ज्ञायत इत्यर्थः। जगत् सत्यं भवितुमर्हति प्रामाणिकत्वाद्ब्रह्मवदिति ज्ञायत इति भावः। **तथा ज्ञायन्त इति ॥** सज्जीवा ज्ञानानन्दादिरूपाः सचेतनत्वाद् ब्रह्मवदित्यनुमानेन ज्ञानानन्दाद्यात्मना ज्ञायन्त इत्यर्थः। नन्वेवं प्रामाणिकत्वचेतनत्वादिहेतुना स्वातन्त्र्याद्यपि ब्रह्मवज्ज्ञायेतेत्यतो वा चेतनत्वेन ज्ञानानन्दाद्यात्मकत्वसाधने तमोयोग्येष्वपि तत्साधनप्रसङ्ग इत्यतो वाऽऽह- **अबाधित इति ॥ हेतुत्रयेति ॥** प्राधान्यसाद्दश्यकारणत्वरूपहेतुत्रयेत्यर्थः।

**(श्री.टि.)** कथमनेनोक्तानुपपत्तिपरिहार इत्यत आह- **इदमुक्तं भवतीति ॥ अत एवेति ॥** उपचाराङ्गीकारस्या-वश्यकत्वादेवेत्यर्थः। **प्रागेवेति ॥** न तु तदन्यस्य मिथ्यात्वादित्यादिनेत्यर्थः। श्रुतावनुक्ते आह्वाननाशने मूले किमर्थमुक्ते इत्यत आह- **अत्राह्वाननाशनेति ॥ उपलक्षकत्वमिति ॥** तथा चानाहुतं आहुतं भवतीत्याद्यपि श्रुतौ ग्राह्यमिति भावः। दार्ष्टान्तिके योजयति- **कर्मदेवतादीति ॥ आह्वानेति ॥** 'एह्यग्न इह होता' इत्यादिना क्रियमाणेत्यर्थः। **यत्फलं** स्वर्गादिरूपम्। **भगवच्छ्रवणादिनैवेति ॥**

'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामास्सम्पद्यन्ते'

इति श्रुतेरिति भावः। **लाघवादिति ॥** कर्मणां देवतानां चानेकत्वादनेकविषयकश्रवणाद्यपेक्षया भगवत एकस्यैव श्रवणादिकरणे लाघवमिति भावः। **आधिक्यादिति ॥** फलाधिक्यादित्यर्थः। **अन्यत्** कर्मदेवतादिविषयक-श्रवणादिकम्। **अल्पत्वात्** अल्पफलकत्वात्। मूले नाशनग्रहणतात्पर्यं दार्ष्टान्तिके दर्शयति- **तथाऽन्यविषयभ्रंश इत्यादिना ॥** अन्यदेवताविषयककर्मभ्रंशे सतीत्यर्थः। तथा च अन्यदेवताविषयककर्मभ्रंश एव तन्नाश इति भावः। भगवन्नाशस्यासम्भवादपराधग्रहणं कृतमित्यवधेयम्। **तत्रैव** भगवच्छ्रवणादावेव।

ननु कारणे पितरि ज्ञाते तत्पुत्रोऽयमिति व्यपदेश एव प्राप्तो न ज्ञानम्। अतः कारणज्ञानेन कार्यज्ञानस्यैवैक-विज्ञानेन सर्वविज्ञाने हेतुत्वेन वक्तव्यत्वात् व्यपदेशस्य कथं तत्र हेतुत्वमुच्यत इत्यत आह- **व्यपदेशादिति ॥** ननु स्वरूपेण पितृज्ञानेऽपि पुत्रज्ञानादर्शनान्न तयोः कार्यकारणभाव इत्यतस्तात्पर्यमाह- **इदमुक्तं भव-तीति ॥ देवदत्तकारणतयेति ॥** अनेन कारणे च पितरीत्येतद्देवदत्तकारणतया यज्ञदत्ते ज्ञात इति व्याख्येयं न तु स्वरूपेणेतीत्युक्तं भवति। **देवदत्त इत्येव ज्ञात इति ॥** पूर्वमिति शेषः। न तु यज्ञदत्तपुत्रत्वेनेत्येवार्थः। अत्रापीत्यनन्तरं कारणे ज्ञात इति पदद्वयस्यानुवृत्तिरित्यभिप्रेत्याह- **जगत्कारणत्वादिरूपेण ज्ञात इति ॥ स्वरूपेणेति ॥** भगवत्सृष्टत्वादिना तदधीनत्वं विनेत्यर्थः। व्यर्थत्वमुपपादयति- **अल्पेत्यादिना ॥** अनर्थ-फलत्वमुपपादयति- **स्वातन्त्र्येणेति ॥** कर्मादेर्विश्वस्य भगवत्सृष्टत्वादिप्रकारं विहाय स्वरूपेणैव ज्ञानाङ्गीकारे स्वातन्त्र्येणैव ज्ञानप्राप्त्या अनर्थफलत्वमित्यर्थः। **तदर्थमपीति ॥** भगवत्सृष्टमेतदिति ज्ञानार्थमपीत्यर्थः। ज्ञायत **(श्री.टि.) एवेति ॥** समानसंवित्संवेद्यत्वादिति भावः। **निष्ठा** भक्तिः। **जगदपीति ॥** कर्मादिकं जगदपी-त्यर्थः। ननु चेतनत्वसादृश्याज्जीवस्येश्वरवज्ज्ञानानन्दाद्यात्मकत्वानुमाने तत एव हेतुतस्तद्वदेवापरिच्छिन्ना-नन्दाद्यनुमानमपि स्यादित्यत आह- **अबाधितविषय इति ॥** यद्वा चेतनत्वसादृश्यात्सर्वेऽपि जीवा यदि ज्ञानानन्दादिरूपेण विज्ञायन्त इत्युच्यते तर्हि तमोयोग्यजीवानामपि चेतनत्वसादृश्याज्ज्ञानानन्दाद्यात्मकत्वा-नुमानापत्तिरित्यतिप्रसङ्ग इति चेत्तत्राह- **अबाधितेति ॥** तथा च चेतनत्वसादृश्याज्ज्ञानानन्दाद्यात्मकत्वानुमानं सज्जीवानामेव विवक्षितमिति भावः। तथा च चेतनत्वसादृश्यादित्यस्य तमोयोग्यभिन्नचेतनत्वसादृश्यादित्यर्थो द्रष्टव्यः। तथा जीवा अपीत्येतत्सज्जीवा अपीति व्याख्येयमित्युक्तं भवति। यथोक्तं 'तद्गुणसारत्वात्' इत्यत्र सुधायाम्- 'यत्सादृश्यं सज्जीवमात्रसाधारण्येनोक्तम्' इति। **अन्यत इति ॥** उक्तरीत्या भगवज्ज्ञानादित्यर्थः।

**(पां.टि.) चेतनत्वसादृश्यादिति ॥** तमोयोग्यभिन्नचेतनत्वसादृश्यादित्यर्थः। अन्यथा तमोयोग्येषु व्यभिचार-प्रसङ्गादिति द्रष्टव्यम्। ननु चेतनत्वहेतुना ईश्वरदृष्टान्तेन ज्ञानानन्दानुमानं न सम्भवति। तथा सति तत एव तद्वदेवापरिच्छिन्नानन्दत्वानुमानस्यापि प्रसक्तेरित्यत आह- **अबाधितविषय एवेति ॥**

**(व्या.टि.)** उक्तमाक्षेप्तुमनुवदति- **स्वमत इति ॥** आक्षिपति- **तदसदिति ॥** श्रौतविज्ञातपदस्य मुख्यार्थत्वं मत्वा व्यभिचारमुद्भावयति- **प्रधानभूतस्येत्यादिना ॥** मूले वतिना व्यपदेशगौणत्वमाह। तद्गुणं दर्शयति- **यत्प्रयोजनं तदिति ॥** अनेन ज्ञानफलं ज्ञातव्यपदेशे गुण इति सूचितम्। **अभिप्रेत्येति ॥** न च समानकर्तृक-त्वाभावात् क्त्वाऽसम्भव इति वाच्यम्। 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते' इतिवत्तदभावेऽपि सम्भवं बुध्यस्व। वस्तुतस्तु व्यपदेशनक्रिययैव समानकर्तृकत्वसम्भवान्न कश्चिद्दोषः। अनेन कथं व्यभिचारशङ्कापनोद इत्यतश्छलेन निगृह्णातीत्याह- **एतदुक्तं भवतीति ॥** अभिसंहितार्थेऽनिष्टं प्रसञ्जयति- **एवं तर्हीति ॥** मतानुज्ञया निगृह्णाति- **सत्यमिति ॥** न्यायं दर्शयति- **मुख्यानुपपत्ताविति ॥ न्याय्यत्वादिति ॥** न्यायार्हत्वादि-त्यर्थः। पूर्वतन्त्रे तत्सिद्धिपेटिकायां यजमानप्रस्तरादिवाक्ये, उत्तरतन्त्रेऽप्याकाशाद्यधिकरणे सम्भूतादिपदे गौणार्थस्वीकारादित्यर्थः। प्राचीनपरपक्षप्रतिक्षेपमुपष्टम्भयति- **अत एवेति ॥** व्यपदेशग्रहणकृत्यं वक्तुमुपक्षिपति- **तर्हीति ॥** वक्ति- **निरूढत्वादिति ॥** यथोक्तं काव्यप्रकाशे-

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्' इति।

**दर्शयतीति ॥** अनेन मूले यथेत्युदाहरणव्याहरणं न निदर्शनमिति सूचयति। मूलेऽश्रुतग्रहणं वारयति- **अत्रेति ॥ भगवच्छ्रवणादिनैवेति ॥**

'यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम्।
एवमाराधनं विष्णोर्देवतानां परस्य च॥'

इति भागवतोक्तेरित्यर्थः। **लभ्यत इति ॥**

**(व्या.टि.)** 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने'

इति सर्वाभिलषितलाभोक्तेरित्यर्थः। **तदेवेति ॥** 'तमेवैकं जानथ' इति श्रुतेरित्यर्थः। **आधिक्याच्चेति ॥** फलाधिक्यादित्यर्थः। 'तदानन्त्याय कल्प्यते' इत्युक्तेरित्यर्थः। **अल्पत्वाच्चेति ॥**

'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्'

इति गीतोक्तेरित्यर्थः । **ततोऽधिकश्चेति ॥**

'स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥

इतिस्मृतेरिति भावः । **उद्युक्तेनेति ॥** 'तस्मात्तन्न प्रमाद्येत तन्नातीयात्' इत्याद्यैतरेयश्रुतेरिति भावः । **आदर-णीयमिति ॥**

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥'

इति भगवत्प्रतिश्रवादित्यर्थः । **वर्तते** अनुवर्तते । **इत्यस्तीति ॥** निदर्शनमस्तीत्यर्थः । स्वरूपेण पितृज्ञानेऽपि पुत्रज्ञानदर्शनात्कथमेतदित्यतस्तदभिसन्धिमाह- **इदमुक्तं भवतीति ॥** विनैवेति शेषोक्तिः । समानसंवित्संवेद्य-त्वादित्यर्थः । आकाङ्क्षितं पूरयति- **रूपेणेत्यादि ॥** ननु 'सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते' इति कामादेरर्थस्य श्रवणात्कथं वैयर्थ्यमित्यत आह- **अल्पास्थिरत्वादिनेति ॥** 'धर्मार्थकामाः सर्वेऽपि न नित्याः' इत्यल्पत्वा-स्थिरत्वयोरुक्तेरित्यर्थः । **ज्ञानप्रसङ्गादिति ॥** तच्च -

'न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः'

इति दूषितत्वादनिष्टमिति भावः । **ज्ञायत एवेति ॥** एकवित्तिवेद्यत्वादित्याशयः । मूलं तथापदाध्याहारेण व्याचष्टे- **तथेति ॥** तर्हि चेतनत्वात्स्वातन्त्र्यादिकमपि ज्ञायेतेत्यतिप्रसङ्ग इत्यत आह- **अबाधित एवेति ॥ इति भाव इति ॥** इत्युद्दालकस्येत्यर्थः । **समाम्नाविति ॥** 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यभिधाना-दित्यर्थः ।

**मूलम् - तदेव साद्दश्यमत्रापि विवक्षितम् 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इत्यादिना । अन्यथैकशब्दः पिण्डशब्दश्च व्यर्थः स्यात् । मृदा विज्ञातयेत्येतावता पूर्णत्वात् । न ह्येकमृत्पिण्डात्मकान्यन्यमृन्मयानि । साद्दश्यमेव तेषाम् । 'यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्, यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इत्यादिकमपि व्यर्थं स्यात् । न ह्येकमण्यात्मकमन्यल्लोहमयम् । न चैकनखनिकृन्तनात्मकं सर्वं कार्ष्णायसम् ।**

**(त.मं.) अन्यथा** प्रकृतिविकारभावविवक्षायाम् । एकेन नखनिकृन्तनेन, लोहमणिनेत्यत्रापि एकनखनिकृन्तनमणिशब्दाश्च व्यर्था स्युः ।

**टीका-** नन्वेकविज्ञानेन सर्वविज्ञाने प्राधान्यादिकं हेतुरित्ययुक्तं, श्रुत्यनभिप्रेतत्वात् । श्रुतौ हि तद्बोधनाय मृत्पिण्डमृन्मयादिद्दष्टान्तत्रयमुक्तम् । तत्र चाधिष्ठानाध्यस्ततत्वरूपोपादानोपादेयभाव एव स्फुटं प्रतीयत इत्यत आह- **तदेवेति ॥** यदस्माभिरेकविज्ञानेन सर्वविज्ञाने हेतुत्वेन साद्दश्यमुक्तं तदेव **अत्र** श्रुतावपि 'यथा सोम्य' इत्यादिना द्दष्टान्तवाक्यत्रयेण तत्र कारणतया विवक्षितम् । अतो नास्मद्व्याख्यानस्य श्रुत्यभिप्रायविसंवादः । अत एव मध्योक्तस्यापि साद्दश्यस्योपपादनमन्ते कृतम् । साद्दश्यस्य सन्निधाने तदेवेति परामर्शसौकर्यात् । ननु साद्दश्यस्यैवात्रापि हेतुत्वेन विवक्षितत्वे द्दष्टान्तत्रयं व्यर्थमिति चेत्, विकारमिथ्यात्वस्य हेतुत्वेन विवक्षायामपि वैयर्थ्यं सममेव । दुर्गमत्वात् तत्त्वस्य अनेकद्दष्टान्तोपपादनमिति चेत् सममस्मन्मतेऽपि । उक्तश्चाचार्यैरेवान्यत्र द्दष्टान्तत्रये विवक्षाभेदः ।

द्दष्टान्तवाक्यत्रयेऽप्यधिष्ठानत्वादिरूपोपादनत्वादिकमेव विवक्षितमिति किं न स्यात् । उपादानोपादेययोस्तादात्म्येन तद्विज्ञानेन तद्विज्ञानस्य सम्भवादित्यतो मृत्पिण्डद्दष्टान्तवाक्ये तावदनुपपत्तिं दर्शयति- **अन्यथेति ॥** यद्यत्रोपादानोपादेयत्वेन तादात्म्यं विवक्षितं स्यादित्यर्थः । **व्यर्थो** विगतप्रयोजनो विरुद्धप्रयोजनश्च । प्रत्येकमन्वयादेकवचनम् । विगतप्रयोजनत्वं तावदुपपादयति- **मृदेति ॥** पूर्णत्वाद् विवक्षितार्थप्रयोजनस्येति शेषः । येन विना विवक्षित-वाक्यार्थप्रतिपत्तिर्भवति तद्वचनाकाङ्क्षितत्वाद्विगतप्रयोजनमेव । विरुद्धप्रयोजनत्वमुपपादयति- **न हीति ॥ अन्यानि** मृत्पिण्डान्तरकार्याणि । तथा चैकमृत्पिण्डशब्दावुपादानोपादेयभावविवक्षायां विरुद्धावेवेति

। यथा परस्य विरोधो न तथाऽस्माकमित्यभिप्रायवानाह- **सादृश्यमेवेति ।। तेषाम्** अन्यमृन्मयानामेकेन मृत्पिण्डेनेति शेषः । लोहमणिनखनिकृन्तनदृष्टान्तवाक्ययोरप्यनुपपत्तिं दर्शयति- **यथेति ।।** अन्यथेति वर्तते । इत्यादिकमित्यत्रेतिशब्देन एकशब्दः परामृश्यते । एतयोरपि वाक्ययोरेकादिकं पदं **व्यर्थं** विगतप्रयोजनं विरुद्धप्रयोजनं च स्यात् । लोहेन कृष्णायसेनेत्येतावता पूर्णत्वादिति विगतप्रयोजनत्वमुपपादनीयम् । विरुद्धप्रयोजनतां पूर्ववदुपपादयति- **न हीति ।।**

ननु त्रिष्वपि दृष्टान्तेषु तत्तद्विकारमात्रं सर्वशब्देनोच्यते । अतो नोक्तदोष इति चेन्न । तथा सति तद्वैयर्थ्यापातात् । मृन्मयमित्यादिनैव पूर्णत्वात् । नखनिकृन्तनदृष्टान्तस्त्वत्यन्तासम्बद्धः । नखनिकृन्तनस्यान्त्यावयवित्वेनानुपादानत्वात् । नखनिकृन्तनग्रहणं कृष्णायःपिण्डोपलक्षणमिति चेन्न । सादृश्याभिप्राये मुख्यार्थसम्भवादिति ।

**(र.टि.) उक्तश्चेति ।।**

‘यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ।
यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ।
अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् ।
किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।’

इत्यन्यत्रोपनिषद्भाष्ये प्रथमदृष्टान्ते सदृशमात्रज्ञानात्सदृशमात्रज्ञानं, द्वितीयदृष्टान्ते प्रधानभूतसदृशज्ञानादप्रधान-सदृशज्ञानं, तृतीयदृष्टान्तेऽल्पभूतसदृशज्ञानान्महासदृशमात्रज्ञानमिति दृष्टान्तत्रये विवक्षाभेद उक्तश्चेत्यर्थः । अत एव प्रथमदृष्टान्तवाक्यव्याख्याने सादृश्यादेवेति सादृश्यमात्रविवक्षाज्ञापनार्थम् एवेत्युक्तम् । द्वितीयदृष्टान्तवाक्य-व्याख्यानपरवाक्यगतप्राधान्यादित्येतल्लोहमयत्वेन सदृशानां मध्ये स्वर्णस्य प्राधान्यादिति व्याख्येयमिति भावः। **एतयोरपीति ।।** अनेन मूले विज्ञातं स्यादित्यनन्तरम् इत्येतयोरित्यध्याहृत्य तत्र अपिशब्दो योजनीय इत्युक्तं भवति । **एकादिकमिति ।।** अत्रादिपदेन मणिशब्दोऽवयविरूपविशेषवाचकनखनिकृन्तनशब्दश्च ग्राह्यौ । **मुख्यार्थसम्भवादिति ।।** न चैतद्वाक्यशेषे ‘कृष्णायसमित्येव सत्यम्’ इति कृष्णायसशब्दप्रयोगान्नखनिकृन्तनपदं तदुपलक्षकमिति ज्ञायत इति वाच्यम् । तस्य वक्ष्यमाणरीत्यैतच्छेषत्वाभावादिति भावः ।

**(रा.टि.) तद्बोधनायेति ।।** एकविज्ञानेन सर्वविज्ञानबोधनायेत्यर्थः । यदस्माभिरित्यत्रत्ययच्छब्दस्य तदित्य-नेनान्वयः । अत्रेत्यनुवादः श्रुताविति व्याख्या । येनाश्रुतं श्रुतमिति श्रुतावपीत्यर्थः । न केवलमस्माभिरेवोक्त-मित्यपेरर्थः । **तत्रेति ।।** एकविज्ञानेन सर्वविज्ञान इत्यर्थः । **अत एव** सादृश्यस्य श्रुत्यभिप्रेतत्वज्ञापनार्थत्वादेव । ‘प्राधान्यात्किञ्चित्सादृश्यात्कारणत्वाच्च’ इति वाक्ये मध्ये उक्तस्यापि हेतोः ‘सादृश्याच्चैकस्त्रीज्ञानात्’ इत्यन्ते कृतमित्यर्थः । अत एवेत्यस्य तदेव सादृश्यमिति परामर्शसौकर्यार्थत्वादेवेति वाऽर्थः । अत एवाह- **तदेवेति परामर्शसौकर्यादिति ।। अन्यत्रेति ।।** छान्दोग्यभाष्ये ।

**(रा.टि.)** ‘यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः ।
विज्ञायन्ते तथा विष्णोस्सादृश्याज्जगदेव च ।
यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ।
अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् ।

किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ॥'

इत्यादिना सादृश्यप्राधान्यकैमुत्यज्ञापनार्थतया मृत्पिण्डलोहनखनिकृन्तनरूपदृष्टान्तत्रये विवक्षाभेद उक्त इत्यर्थः। अन्यथेत्यस्य सादृश्यहेतुकत्वाभाव इत्यर्थकत्वे त्वापाद्यासङ्गतिं मत्वाऽर्थमाह- **यद्यत्रेति ॥** व्यर्थौ स्यातामिति भाव्यमित्यत आह- **प्रत्येकमन्वयादिति ॥** तदेव सादृश्यमत्रापि विवक्षितमित्यादिना प्रागुक्तत्वात् पुनरिह वचनं कुत इत्यत आह- **यथा परस्येति ॥** अन्यार्थं पुनर्वचनमिति भावः। परामर्शविषयाप्रतीतेराह- **इतिशब्देनेति ॥** तथा च कोऽर्थः सम्पन्न इत्यत आह- **एतयोरपीति ॥ एकादिकमिति ॥** मणिपदमादि-पदार्थः । तत्पक्षे नखनिकृन्तनेत्यनुवादोऽसङ्गतः, तदविकारत्वात्कार्ष्णायसस्येति भावेन कृष्णायसेनेत्येवो-क्तम्। **नोक्तदोष इति ॥** विरुद्धार्थतादोषो नेत्यर्थः। **तद्वैयर्थ्येति ॥** सर्वपदवैयर्थ्येत्यर्थः। मुख्यार्थसम्भवादि-तीतिपदं दृष्टान्तत्रयव्याख्यासमाप्तौ।

**(श्री.टि.) अत एवेति ॥** मृदादिदृष्टान्तत्रयेऽपि एकविज्ञानेन सर्वविज्ञाने सादृश्यस्यैव कारणतया विवक्षितत्वा-देवेत्यर्थः। **मध्योक्तस्यापीति ॥** 'प्राधान्यात्किञ्चित्सादृश्यात्कारणत्वाच्च' इति वाक्ये मध्योक्तस्यापी-त्यर्थः। अत एवेत्युक्तं विशदयति- **सादृश्यस्येति ॥ सौकर्यादिति ॥** अन्यथा क्रमेणैवोपपादने अन्ते कारणत्व-स्योपपादनप्रसङ्गेन तदेवेति परामर्शायोगादिति भावः। **अत्रापि हेतुत्वेनेति ॥** श्रुतावपि यथा सोम्येत्यादिना दृष्टान्तवाक्यत्रयेणैकविज्ञानेन सर्वविज्ञाने हेतुत्वेन विवक्षितत्व इत्यर्थः। त्वन्मतेऽपि वैयर्थ्यं सममित्याह- **विका-रेति ॥ हेतुत्वेन** एकविज्ञानेन सर्वविज्ञाने हेतुत्वेन। **तत्त्वस्येति ॥** एकविज्ञानेन सर्वविज्ञानरूपतत्त्वस्येत्यर्थः। **उक्तश्चाचार्यैरेवान्यत्रेति ॥**

'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च।
यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा।
अत्यल्पेऽपि हि विज्ञाते सदृशं तादृशं बहु।
**(श्री.टि.)** ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम्।
किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ॥'

इत्यत्र छान्दोग्यभाष्ये प्रथमदृष्टान्ते सदृशमात्रज्ञानात्सदृशमात्रज्ञानम्, द्वितीयदृष्टान्ते प्रधानसदृशज्ञानादप्रधान-सदृशज्ञानम्, तृतीयदृष्टान्तेऽल्पसदृशज्ञानान्महासदृशज्ञानं यदा भवति तदा बहुज्ञानादल्पं ज्ञातं भवतीति कैमुत्य-मभिप्रेतमिति दृष्टान्तत्रये विवक्षाभेदः श्रीमदाचार्यैरेवोक्तश्चेत्यर्थः। **अधिष्ठानत्वेति ॥** आरोपाधिष्ठानत्वेत्यर्थः। ननूपादानोपादेययोर्भेदेऽन्यज्ञानेन अन्यज्ञानासम्भवात् कथमेकविज्ञानेन सर्वविज्ञाने उपादानत्वादेर्हेतुत्वमित्यत आह- **उपादानोपादेययोस्तादात्म्येनेति ॥** नन्वेकशब्दः पिण्डशब्दश्च व्यर्थौ स्यातामिति वक्तव्यम्, व्यर्थः स्यादित्येकवचनं कथमुक्तमित्यत आह- **प्रत्येकमिति ॥** एकशब्दो व्यर्थः स्यात्, पिण्डशब्दश्च व्यर्थः स्यादित्येवं प्रत्येकमन्वयादेकवचनं युक्तमित्यर्थः। **एकशब्द इति ॥** तथा चेत्यादिकमित्यस्य एकादिकमित्यर्थो द्रष्टव्यः। अत्रादिपदेन मणिशब्दोऽन्त्यावयविवाचकनखनिकृन्तनशब्दश्च ग्राह्यौ। **कृष्णायसेनेति ॥** नखनिकृन्तन-स्यान्त्यावयवित्वेनानुपादानतया तत्स्थाने कृष्णायसेनेति वक्तव्यमित्यर्थः। **तत्तद्विकारमात्रमिति ॥** 'एकेन मृत्पिण्डेन सर्वं मृन्मयम्' इत्यादिवाक्ये सर्वशब्देन व्यक्तिविशेषभूतमृत्पिण्डविकारभूतमेव सर्वमुच्यते न मृत्पिण्डान्तरकार्यमपीत्यर्थः। **तद्वैयर्थ्येति ॥** सर्वशब्दवैयर्थ्येत्यर्थः। **अन्त्यावयवित्वेनेति ॥** द्रव्यानारम्भक-कार्यद्रव्यत्वेनेत्यर्थः। यथाहुः पदार्थविदः 'द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवी' इति। एतद्दूषणपरिहारं शङ्कते- **नखनिकृन्तनग्रहणमिति ॥** उक्तरीत्या मुख्यार्थस्य बाधितत्वादित्यर्थः। **सादृश्येति ॥** अल्पसदृशज्ञानाद्बहु-सदृशज्ञानमित्यस्मदुक्तरीत्या सादृश्याभिप्रायेण नखनिकृन्तनशब्दस्य मुख्यार्थसम्भवेनोपलक्षणत्वाभावादि-त्यर्थः। नन्वेतद्वाक्यशेषे नखनिकृन्तनमेव सत्यमित्यनुक्त्वा कृष्णायसमित्येव सत्यमिति कृष्णायसपद-प्रयोगान्नखनिकृन्तनपदं कृष्णायःपिण्डोपलक्षकमिति ज्ञायत इति चेन्न। तस्य वक्ष्यमाणरीत्या प्राधान्ये स्वतन्त्रदृष्टान्तत्वेनैव तच्छेषत्वाभावादिति भावः।

**(पां.टि.) उक्तश्चेति ॥**

'यथा मृत्पिण्डविज्ञानात् सादृश्याज्जगदेव च।

यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ।
अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् ।
किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीश्वरम् ॥'

इत्यन्यत्र छन्दोगोपनिषद्भाष्ये प्रथमदृष्टान्ते सदृशमात्रज्ञानात् सदृशमात्रज्ञानम्, द्वितीयदृष्टान्ते प्रधानभूतसदृश-ज्ञानादप्रधानसदृशज्ञानम्, तृतीयदृष्टान्ते अल्पसदृशज्ञानान्महासदृशज्ञानम् इति दृष्टान्तत्रये विवक्षाभेद उक्तश्चे-**(पां.टि.)**त्यर्थः । अत एव प्रथमदृष्टान्तवाक्यव्याख्याने सादृश्यादेवेति सादृश्यमात्रज्ञापनार्थमेवेत्युक्तम् । द्वितीयदृष्टान्तव्याख्यानेऽपि परवाक्यगतप्राधान्यादित्येतल्लोहमयत्वेन सदृशानां मध्ये स्वर्णस्य प्राधान्यादिति व्याख्येयमिति भावः ।

**(व्या.टि.)** एवं परिणामवादिना विवर्तवादिना च 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रगृहीत-प्रतिज्ञावाक्यतया गृहीताम् 'उत तमादेशमप्राक्ष्यः' इत्यादिकां प्रतिज्ञां स्वमतेन व्याख्याय दृष्टान्तम(न्तेना)पि यथावद्व्याचिख्यासुस्तदुपरोधं शङ्कते- **नन्वित्यादिना ॥** अत्र तच्छब्दः प्रकृतपरामर्श इत्याह- **यदित्यादिना ॥** तत्रेत्यादि(वि)शेषोक्तिः । निगमयति- **अत इति ॥** किन्तु परस्यैवेति भावः । हेतूपादानक्रमव्यत्ययेनोपपादन-मपि सङ्गमयति- **अत एवेति ॥** तवापि समो दोष इत्याह- **विकारेति ॥** समः समाधिरित्याह- **सममिति ॥** ननु तर्हि हेतुत्रये दृष्टान्तानुपादानदोषः प्रादुःष्यादित्यत आह- **उक्तश्चेति ॥ अन्यत्रेति ॥** 'अतस्सादृश्य एव च । विवक्षाऽत्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना' इत्यनुव्याख्यान इत्यर्थः । अथ वा छान्दोग्यभाष्य इत्यर्थः। **विवक्षाभेद इति ॥** सादृश्येऽप्यवान्तरविवक्षाभेद उक्त इत्यर्थः । यथोक्तम्-

'यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयाः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ।
यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ।
अत्यल्पेऽपि तु विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् ।
किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।
अनन्याधीनविज्ञानादन्याधीनं तथैव च ।
मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा ॥'

इत्यादि सामसंहितायाम्' इति । **विगतप्रयोजन इति ॥** विफल इत्यर्थः । **विरुद्धप्रयोजन इति ॥** बाधितविषय इत्यर्थः । प्रयुज्यतेऽनेनेति व्युत्पत्तेः । **प्रत्येकमिति ॥** समासवृत्तेरकरणादित्यर्थः । **पूर्णत्वादिति ॥** निराकाङ्क्षत्वा-दित्यर्थः । **अन्यानीति ॥** मृद्विशेषणत्वेऽनेकाच्त्वात् 'एकाचो नित्यम्' इति मयटो दौर्लभ्यादिति भावः । **यथा परस्येति ॥** अनेन परमते प्रतिज्ञादृष्टान्तानुपरोधोऽसिद्ध इति सूचयति । **वर्तते** अनुवर्तते । इतिशब्देन वाक्यपरामर्शभ्रान्तिं वारयति- **एकशब्द इति ॥** मूलं शेषेण पूरयति - **लोहेनेत्यादिना ॥** अत्र मूले लोहमणिशब्देन स्वर्णमुच्यते । 'स्वर्णं लोहमणिश्चैव पुरटं चाभिधीयते' इति शब्दनिर्णयोक्तेः । **सर्वशब्देनेति ॥** सर्वेभ्यः कामेभ्यः इत्यादौ सङ्कोचदर्शनादित्यर्थः । **तदिति ॥** सर्वपदेत्यर्थः । द्रव्यानारम्भककार्यद्रव्यमन्त्यावयवीति तल्लक्षणशिक्षणादित्यर्थः । **सम्भवादिति ॥** तथा च मुख्यार्थबाधाभावात्तल्लक्षणाऽयोग इति भावः ।

**मूलम् - 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यत्र च, वाचा नाम्नामारम्भणं विकारः, अविकृतं नित्यं नामधेयं मृत्तिकेत्येवेत्येतद्वचनं सत्यमिति श्रुत्यर्थः । न च वाचारम्भणशब्दोऽपि मिथ्यात्वे प्रसिद्धः । वाचारम्भणमात्रमिति चाश्रुतकल्पनम् । तस्मिन्पक्षे नामधेयशब्द इतिशब्दश्च व्यर्थस्स्यात् । अतो न कुत्रापि जगतो मिथ्यात्वमुच्यते ।**

**(त.मं.)** आरम्भणं विकारः । अत एवानित्यमित्यर्थः । विकारिणोऽनित्यत्वनियमात् । आरम्भण-

शब्दस्यानित्यत्ववचनात्। तद्धर्मवतः प्राकृतनाम्नश्चानित्यत्वमुक्तं स्यात्। धर्मधर्म्यैक्यात्।

**टीका -** नन्वेतद्दृष्टान्तत्रयोपपादनाय त्रयाणामपि वाक्यानां शेषाः सन्ति। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम्' 'वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम्' इति। तत्र च विकारस्य मिथ्यात्वमुच्यते। **वाचारम्भणं** वागालम्बनम्। **विकारो नामधेयं** नामैव केवलं न विकारो नाम वस्त्वस्ति। परमार्थतो मृत्तिकेत्येव तु सत्यं वस्तु। अतः कारणव्यतिरिक्तस्य कार्यस्य मिथ्यात्वाद्, यथा सोम्यैकेनेत्युक्तम् उपपन्न-मिति। एवं श्रुत्या स्वयमेव विकारमिथ्यात्वस्य एकविज्ञानेन सर्वविज्ञाने हेतुत्वेनोक्तत्वात् कथं सादृश्यादेर्हेतुत्वमुच्यते। श्रुत्यभिप्राये निश्चिते पदवैयर्थ्यादिकं न दोष इत्यत उपलक्षणत्वेनैकं वाक्यं व्याख्याति- **वाचेति ॥ इत्यत्र च** वाक्ये। **इति श्रुत्यर्थः**, **श्रुत्या** वचनवृत्त्या लभ्योऽर्थः। न तु परेषामिव काल्पनिक इत्यर्थः। अथ वा **इत्यत्र** वाक्ये न विकारमिथ्यात्वमुच्यत इति शेषः। कथं? यस्माद् **इति श्रुत्यर्थः** इति योजना।

**वाचा** वागिन्द्रियेण। **नाम्नां** (असंस्कृतानाम्) संस्कृतातिरिक्तानां यद् **आरम्भणम्** उच्चारणं तद् **विकार** उत्पादनं, न तु संस्कृतस्येव व्यञ्जनम्। अतस्तानि विकृतानि। **मृत्तिकेत्येव** संस्कृतमेव नामधेयम्। अविकृतं नित्यश्चेत्यर्थलभ्यम्। यथाऽस्मिन् ग्रामेऽन्ये दुराचाराः अयमेव तु ब्राह्मण इत्युक्ते सदाचार इति लभ्यते। **सत्यं** यथार्थम्। संस्कृतापभ्रंशशब्दयोर्नित्यत्वानित्यत्व-कथनमसङ्गतमिति चेन्न। नेदमुक्तदृष्टान्तोपपादकं वाक्यं, किन्तु प्राधान्याद् यदेकविज्ञानेन सर्वविज्ञानमुक्तं तत्र दृष्टान्तोऽनेनोच्यते। यथा अविकृतत्वात् नित्यत्वाच्च संस्कृतं प्रधानं, विकृतत्वात् साङ्केतिकमप्रधानं, तज्ज्ञानाद् यत्फलं तत् संस्कृतज्ञानात्सम्पद्यते, तथा जगज्ज्ञानफलं परमात्मज्ञानेन लभ्यत इति। एतदर्थं, यथा सोम्येत्यनुवर्तनीयम्।

विकारमिथ्यात्वपरमेतत्किन्न स्यादिति चेन्न। अत्र मिथ्यात्ववाचिशब्दाभावात्। वाचारम्भण-शब्दोऽस्तीति चेत् स किं मिथ्यात्वे रूढः उत यौगिकः। नाद्य इत्याह- **न चेति ॥** अभिधानाद्य-भावादिति भावः। न द्वितीयः। अवयववृत्त्या मिथ्यात्वालाभात्। ननु यथाऽन्नमात्रं भुक्तमित्युक्ते व्यञ्जनाभावो लभ्यते, तथा वाचारम्भणमात्रमित्युक्ते वस्तुतो नास्तीति लभ्यत एवेत्यत आह- **वाचेति ॥** स्यादेवं यदि मात्रशब्दः श्रूयेत। न चैवम्। ततश्चाश्रुतकल्पनमेव दोष इत्यर्थः। न चाब्भक्षो, वायुभक्ष इतिवदत्रापि अवधारणकल्पकं किञ्चिदस्ति। किञ्चैवमवधारणाध्याहारेण वाचारम्भणशब्दान्मिथ्यात्वलाभाङ्गीकारे नामधेयमिति पुनरुक्तत्वेन व्यर्थं स्यात्। तस्यापि नामैव केवलं न विकारो नाम वस्त्वस्तीत्येवमेव व्याख्याततत्वादित्याह- **तस्मिन्निति ॥** अपि च मृत्तिका-शब्दस्य शब्दपदार्थकत्वमनङ्गीकृत्यार्थपदार्थकत्वाङ्गीकृताविति शब्दो व्यर्थः स्यात्। अर्थान्तरा-सम्भवात्। पदार्थविपर्यास एव ह्यत्रेतिशब्दः। स च शब्दप्रकरणे प्रसक्तं शब्दपदार्थकत्वं निवार्यार्थपदार्थकत्वं व्यवस्थापयति- यथा 'न वेति विभाषा' इति। अर्थप्रकरणे तु शब्दपदार्थकत्वं यथा गौरित्ययमाहेति। अर्थशास्त्रञ्चेदम्। ततो विनैवेतिशब्देन प्रकरणादेव मृत्तिकाशब्द-स्यार्थपदार्थकत्वे सिद्धे किमितिशब्देन। अस्माकन्तु शब्दपदार्थकत्वव्यवस्थापनार्थत्वात् सार्थक एवेति भावेनाह- **इतिशब्दश्चेति ॥**

तद्वशत्वज्ञापनार्थं चेत्यादिनोक्तमर्थमुपसंहरति- **अत इति ॥ कुत्रापीति ॥** सृष्टिवाक्ये, एकविज्ञानवाक्ये, दृष्टान्तवाक्ये, वाचारम्भणवाक्येऽपीत्यर्थः। न केवलं षष्ठस्य पूर्वार्धे, किन्तु श्रुत्यादौ कुत्रापीति वा। ततश्च न तद्विरोधादुत्तरार्धस्य भेदपरत्वव्याख्यानमयुक्तमिति।

**(र.टि.) श्रुत्या वचनवृत्त्येति ॥** श्रुतिपदस्य वेदवाक्यपरत्वे इत्यत्रेत्यनेनासङ्गतिप्रसङ्ग इति भावः।

**(रा.टि.)** मिथ्यात्वमुच्यत इत्येतद्व्यनक्ति- **वाचारम्भणमित्यादिना ॥ विकार इति ॥** विक्रियमाणो घटादि-रित्यर्थः। उपपन्नमितीतिशब्दो वाक्यशेषार्थोक्तिसमाप्तौ। सादृश्यादिहेतुकत्वोक्तेः को दोष उक्त इत्यतः श्रुत्यभिप्रायविरोध इति भावेनाह-

**एवमिति ।।** एकादिपदव्यर्थतादेः कः परिहार इत्यत आह- **श्रुत्यभिप्राय इति ।।** इत्यत्रेत्यस्य इति श्रुत्यर्थ इत्यस्य चासाङ्गत्यनिरासाय द्वेधा तद्घटनामाह- **इत्यत्र(च)वाक्य इत्या-दिना ।।** श्रुत्यर्थ इति योजनेत्यत्र श्रुतेरर्थः श्रुत्यर्थ इति विग्रहः । वाचारम्भणवाक्यार्थ इत्यर्थः । **असंस्कृतानां** भाषाशब्दानामित्यर्थः । भावे घञन्तं विकारपदमिति भावेनाह- **उत्पादनमिति ।।** मृत्तिकेतिपदं संस्कृत-मात्रोपलक्षणमिति भावेनोक्तम्- **संस्कृतं नामधेयमिति ।।** कथमर्थलब्धतेत्यत आह- **अस्मिन्ग्राम इति ।। इति लभ्यत इति ।।** तथा प्रकृतेऽप्यसंस्कृतानि विकृतान्यनित्यानि च, संस्कृतं नामधेयं प्रधानमित्युक्तेऽविकृतं **(रा.टि.)** नित्यं चेति लभ्यत इत्यर्थः । सत्यमित्यनुवादः यथार्थमिति व्याख्या । **एतदर्थं** दृष्टान्तत्वद्योतनार्थमि-त्यर्थः । **अभिधानादीति ।।** सङ्केतग्राहकव्याकरणादिरादिपदार्थः । **इतिवदिति ।।** तत्र हि सर्वेषामब्भक्षत्वा-विशेषेऽपि विशिष्याब्भक्षोऽयमिति व्यवहारानुपपत्तिरेवाम्मात्रभक्षो वायुमात्रभक्ष इति अस्ति कल्पकम्, इह तु नेत्यर्थः । **शब्दपदार्थकत्वमिति ।।** मृत्तिकेति यश्शब्दस्तत्स्वरूपार्थत्वमित्यर्थः । **अर्थेति ।।** मृत्तिकेत्यस्य मृद्रूपार्थपरामर्शित्वमित्यर्थः । कुतो व्यर्थ इत्यत आह- **अर्थान्तरेति ।।** पदार्थविपर्यासादन्यार्थस्यासम्भवात्पदार्थ-विपर्यासे प्रकरणप्राप्तपदार्थादर्थान्तरस्थापनविषय एव वर्तत इत्यर्थः । **शब्दपदार्थकत्वमिति ।।** स्वसम्बद्धपदस्येति योज्यम् । **न वेति विभाषेतीति ।।** व्याकरणे प्रथमपादे 'न वेति विभाषा' इति सूत्रं, तस्यार्थः न वा इति वर्णद्वयात्मकशब्दस्य योऽर्थः तस्य विभाषेति संज्ञा भवतीति । तस्य पदस्य 'वृद्धिरादैच्' इत्यारभ्य संज्ञाप्रकरणत्वात् 'शि सर्वनामस्थानम्' इत्यादौ शीति शकारेकाररूपवर्णद्वयात्मकशब्दस्य सर्वनामस्थानसंज्ञावत् 'न वा' इति द्वयोश्शब्दयोरेव विभाषेति संज्ञा प्राप्ता, तन्निवृत्त्यर्थं न वेति शब्दयोरर्थस्य ग्रहणार्थो यथा इतिशब्द इत्यर्थः । **गौरितीति ।।** गकारौकारविसर्गात्मकशब्दस्वरूपग्रहणार्थः तत्रेतिशब्दो यथेत्यर्थः । प्राक्तनदृष्टान्तोक्ति-रितिपदवैयर्थ्योपपादनाय, द्वितीया तु सिद्धान्तानुगुण्यायेति ज्ञातव्यम् ।

**(श्री.टि.) विकारो** घटशरावादिर्वागालम्बनमिति सम्बन्धः । **वागालम्बनमात्रम्,** वाचा केवलमस्तीत्यारभ्यते न विकारो नाम वस्त्वस्ति परमार्थत इत्यर्थः । **इत्युक्तम्** एकविज्ञानेन सर्वविज्ञानमित्यर्थः । ननु विकार-मिथ्यात्वस्यैकविज्ञानेन सर्वविज्ञानहेतुत्वे उक्तरीत्या एकपिण्डादिपदवैयर्थ्यदोषप्रसङ्ग इति चेत्तत्राह- **श्रुत्यभिप्राय इति ।। उपलक्षणत्वेनेति ।।** तन्यायेनोत्तरवाक्यद्वयमपि व्याख्यातुं शक्यमिति भावः । श्रुत्यर्थ इत्यत्र श्रुतिपदस्य वेदवाक्यपरत्वे इत्यत्र वाक्ये इति श्रुत्यर्थ इत्यस्यासङ्गतत्वापत्तेस्तदर्थमाह- **श्रुत्या वचनवृत्त्या लभ्योऽर्थ इति ।।** अतस्तानि विकृतानीत्यनन्तरम् अनित्यानि चेति शेषः पूरणीयः । अविकृतं नित्यं नामधेयम् । मृत्तिकेत्येवेत्यत्र नामधेयमित्यन्वयमभिप्रेत्याह- **मृत्तिकेत्येवेति ।।** तस्य तात्पर्यार्थः- **संस्कृतमेवेति ।।** मूले अविकृतं नित्यमिति नामधेयमित्यनेनार्थाल्लब्धार्थ उक्त इत्याह- **अविकृतं नित्यं चेतीति ।।**

ननु संस्कृतातिरिक्तानि नामानि विकृतानि तत एवानित्यानि । मृत्तिकेत्येवं संस्कृतमेव नामधेयमित्युक्तेऽ-विकृतं नित्यं चेति कथमर्थाल्लभ्यत इत्यतस्तत्रोदाहरणमाह- **यथाऽस्मिन्ग्राम इति ।।** उपनिषदि उर्वरितस्य सत्यमित्यस्यार्थमाह- **मूले एतद्वचनं सत्यमितीति ।।** तत्र सत्यमित्यस्यार्थमाह- **सत्यं यथार्थमिति ।।** तथा च वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवेत्येवं मया त्वां प्रत्युपदिष्टं वचनं सत्यं यथार्थं न तु प्रतारकमिति श्वेतकेतुं प्रत्युद्दालकवचनमिति ज्ञातव्यम् । **असङ्गतमिति ।।** यथा सोम्यैकेनेत्याद्युक्तार्थोपपादकत्वाभावा-दित्यर्थः ।

'प्राधान्यात् तत्परिज्ञानात् प्राकृताज्ञोऽपि पूरुषः ।
विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ।।'

**(श्री.टि.)** इत्यनुव्याख्यानं मनसि निधायोपपादयति- **प्राधान्यादित्यादिना ।। तज्ज्ञानाद्यत्फलमिति ।।** साङ्केतिकज्ञानाद्यत्फलं विद्वद्व्यवहारगोचरत्वमित्यर्थः । **जगज्ज्ञानफलमिति ।।** कर्मादिज्ञानफलं स्वर्गादिक-मित्यर्थः । **लभ्यत इति ।।** 'ज्ञानादेव स्वर्गः' इत्यादिश्रुतेरित्याशयः । ननूपनिषदि दृष्टान्तत्वज्ञापकाभावात्कथं प्राधान्यादेकविज्ञानेन सर्वविज्ञाने दृष्टान्तपरतया व्याख्यायत इत्यत आह- **एतदर्थमिति ।।** दृष्टान्तत्वज्ञाप-नार्थमित्यर्थः । 'तनूर्वर्षिष्ठा' इत्यादिवदिति भावः । इदमुपलक्षणम् । तेन तद्विज्ञातं स्यादित्येतदप्यनुषञ्जनी-यम् । तथा च यथा सोम्य वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं तेन तद्विज्ञातं स्यादित्यादिरूपेण वाक्यावृत्तिर्द्रष्टव्या । नन्वब्भक्षो वायुभक्ष इत्यत्रावधारणार्थकमात्रपदाभावेऽपि यथा मात्रपदं लभ्यते, तद्वदत्रापि किं न स्यादिति चेन्न । तत्र वैशिष्ट्याद्विज्ञापनरूपस्यावधारणकल्पकस्य सत्त्वाद्, इह तदभावादित्याह- **न चेति ।।** नन्वत्रापि मिथ्यात्वज्ञापनमेवावधारणार्थकमात्रशब्दाध्याहारकल्पकमिति चेत्तत्राह- **किञ्चेति ।। अर्थान्तरेति ।।** 'इति हेतुप्रकरणप्रकारावसितेष्वपि' इत्यभिधानोक्तार्थान्तरेत्यर्थः । **यथा न वेतीति ।।** विकल्पवाचिनवेत्यर्थका ये शब्दा इत्यर्थः । अन्यथा शब्दपदार्थकत्वे नवेतिशब्दस्यैव विभाषासंज्ञाप्राप्त्या 'यद्वा, अथवा' इत्यादेः सा न स्यादिति भावः ।

केचित्तु इदं हि शब्दशास्त्रम्, अत्र विभाषाशब्दो यत्र वर्तते तत्रैव विकल्पार्थत्वे प्राप्ते तर्ह्यन्यतरस्यामित्यादौ विकल्पो न स्यादतः प्रसक्तं शब्दपदार्थकत्वं परित्यज्य इतिशब्दो विकल्परूपार्थपदार्थकत्वं व्यवस्थापयति । तथा च विभाषार्थकान्यतरस्यामित्यादिशब्दपरिग्रह इत्यर्थ इत्याहुः । तत्तुच्छम् । तथात्वे नवेतीत्यस्यानन्वय-वैयर्थ्ययोरापत्तेः । तथात्वे विभाषेति विकल्प इति वक्तव्यत्वेन नवेत्यस्य व्यधिकरणत्वादिति द्रष्टव्यम् । अर्थप्रकरणे त्वित्यनन्तरं प्रसक्तमर्थपदार्थकत्वं निवार्येति शेषः । **गौरितीति ।।** गोशब्दमुच्चारयतीत्यर्थः । अस्माकमित्यनन्तरं प्रसक्तमर्थपदार्थकत्वं निवार्येति शेषः । **पूर्वार्धे** जगतो मिथ्यात्वमुच्यत इत्यर्थः ।

**(पां.टि.) अर्थान्तरेति ।।** हेत्वादिरूपार्थान्तरेत्यर्थः । इतिशब्दस्य पदार्थवैपरीत्यार्थत्वं व्याकरणसम्मत्या दर्शयति- **यथा न वेतीति ।।** एतच्च टीकाकृतैव प्रथमाधिकरणे व्याख्यातम्- 'शब्दप्रकरणे नवेतिशब्दयोर्विभाषा-संज्ञायां प्राप्तायां वैपरीत्यवाचिना इतिशब्देन तावर्थपरौ व्यवस्थाप्येते' इति । विवृतं च वाक्यार्थचन्द्रिका-कृद्भिः । अत्र शब्दप्रकरण इत्यनेन 'स्वं रूपं शब्दस्य' इति शब्दपदार्थताप्रापकं सूचयति । नवेति शब्दयोरित्युक्त्या, नायं प्रतिषेधार्थो नवेत्येकनिपातः । 'विभाषा दिक्समासे' इति प्रकृते 'न बहुव्रीहौ' इति प्रतिषेधवैयर्थ्यापत्तेः । प्रदेशेषु नशब्द एवोपादेयश्च स्यात् । सङ्ख्यावाचकनवन्शब्दस्य वा प्रत्यग्रस्त्रीवाचकस्य नवाशब्दस्य वोपादाने (विभाषा)प्रदेशेष्वनुपपत्तिरेव । अतो निपातसमुदायस्यैवेदं ग्रहणम् इति परोक्तयुक्तिं सूचयति । अर्थपरावित्यस्य प्रतिषेधविकल्परूपार्थपरावित्यर्थः। यद्यपि प्राप्तविभाषास्थले 'स्वरितञितः' इत्यादिना नित्यमात्मनेपदे प्राप्ते 'विभाषोपपदेन प्रतीयमाने' इति विभाषा विधीयते । विभाषाशब्दश्च विकल्पार्थतया प्रसिद्धः । तथा च भावांशस्य सिद्धत्वादभावमात्रपरत्वम्, अप्राप्तविभाषायामप्यभावांशस्य स्थितत्वाद्भावांशमात्रपरत्वं च निषेधविकल्पयोः **(पां.टि.)** संज्ञाऽकरणेऽपि सिध्यतीति तयोः संज्ञाकरणमनर्थकम् । तथापि 'विभाषा श्वेः' इत्यत्र विधिमुखेन प्रवृत्तौ पित्स्वेव विभाषा सम्प्रसारणं स्यात् । कित्सु तु यजादित्वान्नित्यमेव स्यात् । प्रतिषेधमुखेन प्रवृत्तौ कित्स्वेव विकल्पेन तत् स्यात् । न पित्सु । एकवाक्यत्वाच्च न पित्सु विधिमुखेन, कित्सु निषेधमुखेन प्रवृत्तिर्युक्तेति प्रतिषेधविकल्पयोः संज्ञाकरणम् । संज्ञायां कृतायां पूर्वं प्रतिषेधे कित्सु प्रवृत्ते किदकिदाख्यो लिट् सर्व एव समीकृतो भवति । ततो विकल्पः सर्वत्र विधिमुखेन पक्षे सम्प्रसारणं सम्पादयतीति । अस्त्येवं संज्ञाकरणे 'विभाषा श्वेः' इत्यादौ प्रयोजनम् । एतच्च आकृतौ पदार्थसमुदाये सकृल्लक्षणं प्रवर्तत इति पक्षे प्रयोजनम् । प्रतिलक्ष्यं 'विभाषा श्वेः' इत्यस्य व्यापारे तु क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तिरिति न संज्ञाकरणप्रयोज-नम् । तथा चाकृतिपक्षे प्रतिषेधविकल्पार्थौ नवाशब्दाविति इतिशब्दो व्यवस्थापयतीति । **अर्थप्रकरणे त्विति ।।** अर्थप्रकरणे प्रसक्तमर्थपदार्थकत्वं विनिवार्य तं शब्दपदार्थतया इतिशब्दो व्यवस्थापयतीत्यर्थः । तत्रैव सम्प्रतिपन्नं दृष्टान्तमाह- **यथेति ।।** अर्थप्रकरणतया प्रसक्तं गोशब्दस्य सास्नादिमद्व्यक्त्यर्थत्वं विनिवार्य तं गोशब्दार्थतयेतिशब्दो व्यवस्थापयति यथेत्यर्थः । तर्हि त्वत्पक्षेऽपीतिशब्दस्य वैयर्थ्यमिति समानो दोष इत्यतः, अर्थप्रकरणतया प्रसक्तं मृद्रूपार्थकत्वं मृत्तिकाशब्दस्य विनिवार्य मृत्तिकाशब्दार्थकत्वव्यवस्थापकत्वात् न तद्वैयर्थ्यमिति भावेनाह- **अस्माकं त्विति ।।**

**(व्या.टि.)** तत्कथमित्यतो वाचारम्भणवाक्यं विवर्तमतमनु वितनोति- **वागालम्बनमिति ।।**

'वाचा केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चनश्चेति ।
न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति ।।'

इति वाचस्पत्युक्तेरित्यर्थः । **नामैवेति ।।** 'नामधेयमात्रं ह्येतदनृतम्' इति तद्भाष्यादित्यर्थः । अत्रोपपादकानुक्तेः कथमुपपादनमित्यतस्तद्दर्शयति- **अत इति ।। विकारमिथ्यात्वस्येति ।।** 'मृत्तिकेत्येव सत्यमित्येष ब्रह्मणो दृष्टान्तः' इति तदीयोक्तेरित्यर्थः । **एकं वाक्यमिति ।।** गृहीत्वेति शेषः । मूलश्रुतिपदस्वारस्यमाह- **श्रुत्या वचनवृत्त्येति ।।** इति श्रुत्यर्थ इति हेतुपरमित्युरसिकृत्य साध्यमध्याहरति- **न विकारेति ।।** वाचेति तृतीयान्तं भिन्नं पदमित्याह- **वागिन्द्रियेणेति ।।** कृद्योगात्कर्मणि षष्ठ्यन्तमध्याहरति- **नाम्नामिति ।।** व्याचष्टे- **संस्कृ-तेति ।।** विकार इति विपूर्वात्करोतेर्भावे घञिति मत्वाह- **उत्पादनमिति ।।** अनेन 'न चारभ्यस्यारम्भणमिति युज्यते शब्दः' इति तद्भाष्योक्तदोषं ध्वनयन् तद्व्यावर्त्यमाह- **न त्विति ।।** मृत्तिकेत्येवेत्यर्थशास्त्रीय इतिशब्दः शब्दपरः 'गौरित्ययमाह' इतिवदिति भावेन व्याचष्टे- **संस्कृतमेव नामधेयमिति ।।** अविकृतत्वादिलाभः कथमित्यत उक्तम्- **अर्थलभ्यमिति ।।** तन्निदर्शयति- **यथेति ।।** अन्यत्र तु ''नामधेयपदं नाम धेयं, नित्यं धार्यं नामेति पदभेदेनाविकृतत्वम्, 'सदातनं सत्यम्' इति सत्यपदं नित्यत्वं चाह'' इति मुखत एव आहे-त्याह । तत्पक्षे 'नामभागरूपेभ्यो धेयः' इति न धेयोऽवधेयः । किन्तु दधातेर्यति 'ईद्यति' इतीकारे गुणे च कृदन्तमिति बोध्यम् । सत्यपदं व्याचष्टे- **सत्यं यथार्थमिति ।।** सत्यं वद इत्यादौ

याथार्थ्ये प्रयोगादित्यर्थः । **(व्या.टि.) असङ्गतमिति ॥** प्रकृतानुपयोगादित्यर्थः ।

'प्राधान्यात् तत्परिज्ञानात् प्राकृताज्ञोऽपि पूरुषः ।
विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ॥'

इत्यनुव्याख्यानमनुसन्दधान आह- **नेदमित्यादिना ॥ यत्फलमिति ॥** विद्वद्व्यवहारगोचरत्वादिकम् । नन्वत्रोपमावाचकपदाभावात्कथमेवं निदर्शनमित्यत आह- **एतदर्थमिति ॥** अभिधानादीत्यादिना व्याकरणम् । किमत्रावधारणं श्रूयते कल्प्यते वा । नाद्य इत्याह- **स्यादेवमिति ॥** न द्वितीय इत्याह- **न चाब्भक्ष इति ॥** उत्तरं ग्रन्थं भावाभिधानेनावतारयति- **किञ्चेति ॥** 'पक्ष परिग्रहे' इति धातुं मत्वा मिथ्यात्वलाभाङ्गीकार इति व्याख्याय प्रकारान्तरेणापि व्याचष्टे- **मृत्तिकाशब्दस्येति ॥** एकार्थं परिशेष्य तदभावाद्वैयर्थ्यं परमत इत्याह- **अर्थान्तरेति ॥** प्रकारवचनत्वे दार्ष्टान्तिके ब्रह्मणि प्रकाराभावेनासम्भवादिति भावः । **नवेति विभाषेति यथेति ॥** तस्य 'न वा' इति निपातद्वयस्य योऽर्थो निषेधविकल्पात्मकस्तस्य विभाषेति संज्ञेत्यर्थः । **अर्थपदार्थत्व इति ॥** मृद्रूपार्थपरत्व इत्यर्थः । मूले तत्पक्ष इति पक्षपदेन पक्षान्तरे सार्थक्यं ध्वनितं तदाह- **अस्माकन्त्विति ॥** कुत्रापीत्यपिरभिव्याप्तावित्याशयेन व्याचष्टे- **सृष्टिवाक्य इत्यादिना ॥ भेदपरत्वेति ॥** नञ्प्रश्लेषेणेत्यर्थः । इतीति नवकृत्वोऽभ्यासव्याख्यासमाप्तौ ।

**मूलम् -** **'कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्**
**व्यदधाच्छाश्वतीभ्यः समाभ्यः ।'**
**'यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ।'**
**'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम् ।'**
**'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्'**
**'अनाद्यनन्तं जगदेतदीदृक्प्रवर्तते नात्र विचार्यमस्ति ।**
**न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत् ।**
**असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि ।**
**यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्मा महात्मा',**
**'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ।**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः' इत्यादेश्च ।**

**(त.मं.) कविः** वाग्मी । **मनीषी** मेधावी । अन्यान् परिभावयतीति **परिभूः** । यथार्थत्वेनार्थान् व्यदधात् । शाश्वतकालवर्तिसंवत्सरव्यवहारार्थम् ।

स भगवान् यत् **चिकेत** चकार । **तन्न मोघं** न मिथ्या । स्पृहाविषयं द्रव्यं तेजो वा भक्तेभ्यो दाता ।

**इन्द्राब्रह्मणस्पती** परमेश्वरमुख्यप्राणौ **मघवाना** यशस्विनौ । युवयोरिदं विश्वं सत्यमेव । **आपो** देवताश्च वां सत्यसृष्टिव्रतं **प्रमिनन्ति** प्रजानन्ति ।

अस्य महतः सत्यस्य महनीयानि सत्यानि **करणानि** कर्माणि **प्रवोचं घ नु** ब्रुवाणि हि किम्?

**अप्रतिष्ठम्** कालत्रयेऽपि स्थितिबाध्यमिति यावत् । **अपरस्परसम्भूतं** परतः परतस्तार-तम्येनानुत्पन्नम् । **किमन्यत्?** कथमन्यथेत्याकाङ्क्षायां कामहैतुकमाहुः । 'अज्ञानहेतवः कामाः काममूलाः प्रवृत्तयः । प्रवृत्तिनिर्मितं

सर्वं जगदेतच्चराचरम्' इति हि तन्मतम्।

**टीका-** न केवलं जगतो मिथ्यात्वं क्वापि नोच्यत इत्येव, किन्तु श्रुत्यादिवाक्यसमुदायात् सत्यत्वं च गम्यत इत्याह- **कविरिति ।। कविः** सर्वज्ञः । **मनीषी** मनसामीशिता । परिभवति सर्वानिति **परिभूः** सर्वतो वरः । स्वयं **भू**राश्रयो यस्यासौ **स्वयम्भूः** स्वतन्त्रः परमेश्वरोऽ**र्थान्** महदादीन् **शाश्वतीभ्यः समाभ्यः** सर्वेष्वपि कालेषु **याथातथ्यतो** याथार्थ्येनैव सत्यानेव **व्यदधात्** निर्मित-वान्। निर्माणे शक्तिप्रदर्शनार्थं कविरित्यादि।

**स्पार्हं** स्पृहणीयं हविरादिकं **वसु** भक्तेभ्यो **जेतोत** प्राप्ताऽपि तथा तेभ्यः **स्पार्हं** वसुफलं **दातोत** दाताऽपि परमेश्वरो **यद्** विश्वं **चिकेत** चकार **तत् सत्यमित्** सत्यमेव। कुतः? **न मोघम्** अर्थक्रियास्वनुपयुक्तं न भवति।

हे **मघवानौ** धनवन्तौ इन्द्राबृहस्पती **युवो**र्युवयोरधीनं विश्वं **सत्यमित्** सत्यमेव । एवं कुतः, **वां** युवयोः सत्यजगत्पालनादिकं **व्रतं** कर्म **आपश्चन** सर्वा देवता अपि **प्रमिनन्ति** जानन्ति, न केवलमहमेव।

**अस्य महतः** सर्वोत्कृष्टस्य सत्यस्य परमेश्वरस्य **महानि** महान्ति **सत्या** सत्यानि **करणानि** कर्माणि **नु** इदानीम् **घ** एव **प्रवोचम्** प्रावोचम्। विषयस्यासत्यत्वे कर्मणां सत्यत्वमयुक्तम्।

**ईदृक्** नानाविधम्। **अन्यथा** बाधितम्। तामेव शक्तिं दर्शयति- **यः सत्यरूपमिति ।। सत्यकर्मा** सत्यकर्मनामा ।

**अप्रतिष्ठं** बाधितत्वात् । **ते** असुराः । **अपरस्परसम्भूतं** परमेश्वराधिष्ठितायाः प्रकृतेर्महान्, महतोऽहङ्कार इत्यादिक्रमेण परस्परसम्भूतं न भवति। सत्यं न चेत् किं तर्हि ? **अन्यत्** सदस-द्भ्याम्। परस्परसम्भूतं न चेत् किं तर्हि ? **कामहैतुकम्** । काम इति कार्येण कारणं मिथ्याज्ञानमुप-लक्ष्यते । **नष्टात्मानो** दुष्टचित्ताः । **अल्पबुद्धयो**ऽल्पज्ञानाः । प्रभवन्ति कलियुगादौ । **क्षयाय** अनिष्टप्राप्तये।

**(र.टि.)** कविरित्यनेनैकार्थतापरिहारायाह- **मनसामीशितेति ।।** 'अच्छेन्द्राब्रह्मणस्पती' इत्युत्तरवाक्यानुसारेण विशेष्यमाह- **इन्द्राबृहस्पती इति ।।** अनाद्यनन्तमिति वाक्यं जगतोऽनाद्यनन्तत्वप्रतिपादकमपि साक्षात्कथं तत्सत्यत्वप्रतिपादकमित्यतोऽन्यथेतिपदं व्याचष्टे- **बाधितमिति ।।** अत एव कस्य चेदमित्याद्यपि साधकम्। अन्यथेत्यस्य प्रकारवैचित्र्यादिपरत्वे तु तदलग्नकमिति भावः। परस्परसम्भूतत्वस्यान्योन्याश्रयग्रस्तत्वेन तथाऽङ्गी-कार एव निन्दाहेतुर्न तु तद्विपरीताङ्गीकार इत्यतो व्याचष्टे- **परमेश्वराधिष्ठिताया इति ।।**

**(रा.टि.)** कविरित्यनेनापौनरुक्त्यायाह- **मनसामीशितेति ।।** पृषोदरादित्वात्साधुरिति भावः। **परिभू-रिति ।।** भवतेः क्विप्। भूरित्यस्यार्थः आश्रय इति। जेतोतेत्यस्यार्थः प्राप्तापीति। उतशब्दोऽप्यर्थ इति भावः। पद्मनाभतीर्थीये तु 'बल्यादिदैत्यराज्याख्यं स्पार्हं वसु जेता इन्द्रादिभ्यो दाता च' इत्युक्तम्। अनुपयुक्तं न भवतीत्यनन्तरमत इति योज्यम्। मघशब्दस्य कर्मनिर्णये धनवाचित्वोक्तेराह- **धनवन्ताविति ।।** 'अच्छेन्द्रा-ब्रह्मणस्पती' इत्युत्तरार्धे श्रवणादाह- **इन्द्राबृहस्पती इति ।।** स्वस्वामिसम्बन्धे षष्ठी इति भावेनोक्तम्- **युवयो-रधीनमिति ।।** चनशब्दार्थस्यापीत्युक्तस्यार्थमाह- **न केवलमहमेवेति ।।** प्रमिनोमीत्यन्वयः। अत इति योज्यम्। प्रघान्विति श्रुत्यर्थमाह- **अस्येति ।।** इन्द्र पवित्रमिति प्रकृतेन्द्रपरामर्शी अस्येति शब्दः। अडभावश्छान्दस इति भावेनाह- **प्रावोचमिति ।।** प्रावोचमेवेति वा सत्यान्येवेति वा एवकारान्वयः। ननु सृष्टिपालनादिकर्मणां सत्यत्वोक्त्या विश्वसत्यत्वे किमायातमित्यत आह- **विषयस्येति ।।** अनादीति वचनार्थमाह- **ईदृगिति ।।** अन्यथेत्यनूद्यार्थमाह- **अन्यथा बाधितमिति ।।** अभूत्पुरेत्यादिनाऽन्वयः। **क्वापि** देशे **कस्यापि** पुरुषस्य ज्ञानं बाधितं नाभूदित्यर्थ इति भावः। **तामेवेति ।।** 'शक्तिं हरेर्ये न विदुः' इत्युक्तामित्यर्थः । एकार्थत्वाद्धेतु-हेतुमद्भावानुपपत्तेराह- **सत्यकर्मनामेति ।।** किमित्यस्यार्थः- **सत्यं न चेत्किं तर्हीति ।।** अन्यदित्युत्तरम्। प्रतियोगिनमाह- **सदसद्भ्यामिति ।।** सदसद्विलक्षणमित्यर्थः। लक्षणायां सम्बन्धप्रदर्शनायोक्तम्- **कार्येण (रा.टि.) कारणमिति ।। मिथ्याऽज्ञानमिति ।।** मिथ्याभूतमज्ञानमित्यर्थः। 'अविद्याक्षेत्रमुत्तरेषाम्' इत्युक्तेरज्ञानकार्यत्वात्कामादेः। दुष्टेषु नष्टशब्दप्रयोगादात्मनाशायोगाच्चाह- **नष्टात्मान इति ।।** बुद्धिर्मन इति भ्रमनिरासायाह- **अल्पज्ञाना इति ।।**

**(श्री.टि.)** कविरित्यनेन पुनरुक्तिपरिहाराय व्याचष्टे- **मनसामीशितेति ॥** प्रेरक इत्यर्थः। 'परिभूः सर्वतो वरः' इति प्रमाणोक्तं व्याख्यानमुपपादयितुं विग्रहं दर्शयति- **परिभवतीति ॥** सर्वान् प्रति **परि** परितः, समन्तात् स्वमेव **भवति** वशीकरोतीत्यर्थः। तल्लब्धार्थमाह- **सर्वतो वर इति ॥ स्वयं** स्वयमेव। भूरित्यस्यार्थः **आश्रय** इति। विभक्तिव्यत्ययमभिप्रेत्याह- **सर्वेष्वपीति ॥ स्पृहणीयम्** अपेक्षणीयम्। **वसु** द्रव्यम्। **अनुपयुक्तं न भवतीति ॥** तथा चार्थक्रियाकारित्वात्सत्यत्वमिति भावः। **धनवन्ताविति ॥** 'धनं वाव मघम्' इति श्रुतेरिति भावः। 'अच्छेन्द्राब्रह्मणस्पती' इत्युत्तरवाक्यानुसारेण आह- **इन्द्राबृहस्पती इति ॥** षष्ठ्यर्थसम्बन्धं दर्शयति- **अधीनमिति ॥** सर्वदेवताप्रत्यक्षमेव तत्र प्रमाणमित्याह- **वां युवयोरिति ॥ व्रतं कर्मेति ॥** 'व्रतं विष्टीः कर्म' इति तन्नामसु पाठादित्यर्थः। आप इत्यस्यार्थः- **सर्वा देवता इति ॥** 'आपाः इत्याप इति' इति खण्डे अप्शब्दस्य सर्वदेवतावाचकत्वोक्तेः। 'आपो वै सर्वा देवताः' इति श्रुतेश्चेति भावः। चनेत्यस्यार्थः- **अपीति ॥ जानन्ती-ति ॥** तथा च प्रमाणदृष्टत्वात्सत्यत्वमिति भावः। **घ एवेत्यादि ॥** तथा च **प्रावोचं घ** प्रावोचमेवेत्यर्थः। नन्वत्र परमेश्वरकर्मणामेव सत्यत्वं प्राप्तं न तु जगत इत्यत आह- **विषयस्येति ॥** कर्मविषयीभूतस्य जगत इत्यर्थः। नन्वनाद्यनन्तमिति वाक्ये जगतोऽनाद्यनन्तत्वमेवोच्यते न सत्यत्वमित्यतस्तल्लाभायान्यथेत्येतद्व्याचष्टे- **बाधितमिति ॥** तथा च क्वापि देशे काले च कस्यापि पुंसोऽन्यथा बाधितं नैवेत्यर्थः। अत्राबाधितत्वोक्त्या सत्यत्वमवगम्यते यतस्तदेव सत्यत्वमिति भावः। प्रकर्षेण बहुकालमिति यावत्, न तिष्ठतीत्यप्रतिष्ठमिति पदार्थमभिप्रेत्य तत्र हेतुमाह- **बाधितत्वादिति ॥** न हि बाधितं शुक्तिरजतादिकं बहुकालं तिष्ठतीति भावः । **त आसुरा इति ॥** तथा चात्र असत्यत्ववादिनां निन्दया सत्यत्वमवगम्यत इति भावः। नन्वपरस्परसम्भूतत्वोक्त्या कथं तेषां निन्द्यत्वम्, अन्योन्याश्रयग्रस्तत्वेन परस्परसम्भूतत्वोक्तेरेव निन्दाहेतुत्वादित्यतोऽपरस्परसम्भूतत्वं यथा निन्दाहेतुः स्यात्तथा व्याचष्टे- **परमेश्वराधिष्ठिताया इत्यादिना ॥ सदसद्भ्यामिति ॥** सदसद्विलक्षण-त्वेनानिर्वाच्यमित्यर्थः। आत्मशब्देन जीवग्रहणे तस्य नाशासम्भवादाह- [१]**नष्टचित्ता इति ॥ अल्पज्ञानाः** अल्पसम्यग्ज्ञानाः।

**(पां.टि.)** 'सार्वज्ञ्यात्कविरित्येव कथ्यते' इत्यादि ईशावास्यभाष्यं मनसि निधाय कविरित्यादिश्रुतिं व्याचष्टे- **कविस्सर्वज्ञ इत्यादिना ॥ सर्वेषु कालेष्विति ॥** 'व्यत्ययो बहुलम्' इति स्मरणात् श्रुतौ पञ्चमी सप्तम्यर्थेति भावः। याथातथ्यत इति तृतीयान्तात्तसिरिति भावेनाह- **याथार्थ्येनैवेति ॥** श्रुतौ औकारविभक्तेः 'सुपां **(पां.टि.)** सुलुग्' इति आकारादेश इति भावेनाह- **मघवानाविति ॥** 'मघ इति धनम्' इति कर्मनिर्णयं मनसि निधायाह- **धनवन्ताविति ॥** विशेष्याकाङ्क्षायामुत्तरश्रुत्युक्तेन्द्राबृहस्पत्योः सम्बन्ध इति भावेनाह- **इन्द्राबृहस्पती इति ॥** 'आपो वै सर्वा देवताः' इति श्रुतिं मनसि निधायाह- **सर्वा देवता इति ॥** 'बहुलं छन्दसि' इति स्मरणादडभावश्छान्दस इति भावेनाह- **प्रावोचमिति ॥** जगत्सत्यत्वस्य श्रुतावश्रुतत्वेऽपि अर्थतस्तदवगमकत्वाद्युक्तं तत्र प्रमाणीकरणमिति भावेनार्थतस्तदवगतिं दर्शयति- **विषयस्येति ॥** मूले सृष्ट्वा त्वभूत्सत्यकर्मेत्येव पाठः। आत्मभूरिति तु लेखकदोषपतित इति द्रष्टव्यम्। उपलक्षणहेतुभूतशक्यसम्बन्ध-मुपदर्शयति- **कार्येणेति ॥** आत्मस्वरूपस्य नित्यत्वेन नाशायोगादन्तःकरणपरत्वेऽपि संसारदशायां नाशा-भावाद्व्याचष्टे- **दुष्टचित्ता इति ॥**

**(व्या.टि.)** ननु मिथ्यात्वानुक्तावपि तत्कथं तत्सत्यत्वं लभ्यते। क्वापि तदनुक्तेः। न हि मिथ्यात्वानुक्तिमात्रेण तत्सत्यत्वोक्तिलाभः। मिथ्यात्वसत्यत्वयोः परस्परविरहरूपत्वेऽपि मिथ्यात्वानुक्तिसत्यत्वोक्त्योः परस्परविरह-रूपत्वाभावादित्यत आह- **न केवलमित्यादिना ॥** अत्र श्रुतिस्मृत्युदाहरणान्तिमवाक्यस्यापेक्षितप्रतिज्ञांशं पूरयित्वा व्याचष्टे- **श्रुत्यादीति ॥** ज्ञानार्थात्कौतेः 'अच इः' इत्यौणादिकेकारप्रत्यये गुणावादेशयोः कविरिति ज्ञ इति लब्धावपि कर्मविशेषानुपादानात्सर्वज्ञ इति व्याख्यातम्। **मनसामिति ॥** ईशेर्णिनिप्रत्यये ईशी ईशिता। व्यत्ययेन शकारस्य षकारः। शकन्ध्वादित्वात्पररूपत्वमिति भावः। **परिभवतीति ॥** सर्वानिति योग्यतया सम्बन्धः। परिपूर्वाद्भवतेः क्विबिति भावः। भावं प्रकाशयति- **सर्वत इति ॥** भूरिति गौणी वृत्तिः। तद्गुणमाह- **आश्रय इति ॥** विभक्तिव्यत्यय इत्याह- **सर्वेष्वपीति ॥** विपूर्वस्य दधातेरर्थमाह- **निर्मितवा-निति ॥ स्पृहणीयमिति ॥** स्पृहाशब्दात् 'विचित्रा हि तद्धितगतिः' इति विषय इत्यर्थे तद्धितः। वसुपदार्थमाह- **हविरादिकमिति ॥ प्राप्तापीति ॥ दातापीति च ॥** संवदति चेममर्थं यजुर्वेदः - 'देहि मे ददामि ते नि मे देहि नि ते दधे' इति। **चिकेतेति ॥** किते रोगापनयनार्थकत्वाभावात् 'गुप्तिज्किद्भ्यः सन्' इति सनोऽभावः। **मघवानाविति ॥** मघशब्दो वैदिकनिघण्टुषु धननामसु पठितः। तदनुरोधेन व्याचष्टे- **धनवन्ताविति ॥** रूपन्तु 'छन्दसीवनिपौ वक्तव्यौ' इति वनिपि 'सुपां सुलुग्' इत्याकारादेशे वनिपो वकारस्य दीर्घे च भवति। 'अच्छेन्द्राब्रह्मणस्पती हविर्नोऽलं युजेव वाजिना जिगातम्' इत्युत्तरार्धानुरोधेन विशेष्यं द्विरूपं निरूपयति-

**इन्द्राबृहस्पती इति** ॥ 'देवताद्वन्द्वे च' इत्यानङ्। **युवोरिति** ॥ 'ओसि च' इत्येत्वे प्राप्ते पररूपमिति भावः। श्रुतौ चनेत्येकं पदं समुच्चयार्थमिति व्याचष्टे- **देवता अपीति** ॥ 'आपो वै सर्वा देवताः' इति श्रुतेरिति भावः । 'मीञ् हिंसायाम्' इति धातोरुपसर्गोन्नीतमर्थमाह- **प्रमिनन्ति जानन्तीति** ॥ * अत एव न 'हिनुमीना' इति **(व्या.टि.)** णत्वम् । प्वादिषूपसङ्ख्यानाद्धातोर्ह्रस्वः। **परमेश्वरस्येति** ॥ सत्यमिति सूर्यान्तर्गतनाम। 'सत्यस्यापिहितं मुखम्' इति, 'सत्यं चित्रश्रवस्तमम्' 'सत्यं परं धीमहि' 'सैव हि सत्यादयः' इति श्रुतिस्मृतिसूत्रेषु प्रयोगादिति भावः। 'सदिति प्राणः तीत्यन्नं यमित्यसावादित्यः' इति अन्नप्राणादिनियामकत्वेन तत्रैव तच्छब्दनिर्वचनाच्च। महानीति शौ तलोपश्छान्दसः। ऋचि सत्येत्यत्र 'छन्दसि बहुलम्' इति शेर्लोपः। 'घोऽव-धारणे' इति ऋग्भाष्यमनुसन्धायाह- **एवेति** ॥ मन्त्रे दीर्घस्तु 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति छान्दसः। ऋचि प्रवोचमित्यत्र 'छन्दसि व्यवहिताश्च' इत्युपसर्गव्यवधानम्, 'छन्दस्यमाङ्योगेऽपि' इत्यडभावं च मत्वा व्याचष्टे- **प्रावोचमिति** ॥ स्वप्रतिज्ञासिद्धये श्रौतार्थापत्तिमाह- **विषयस्यासत्त्व इति** ॥ **ईदृगिति** ॥ 'त्यदादिषु दृशोऽनालोचने कञ्च' इति इदम्युपपदे दृशेश्चकारात् क्विनि 'इदंकिमोरीश्की' इति इदम ईशादेश इति भावः। **बाधितमिति** ॥ बाधायां निरवधिकत्वाभावात्। अवधिरेव सत्य इति बाधितमन्यथाभवतीति भावः। **सत्य-कर्मनामेति** ॥ 'सत्यः सत्यपराक्रमः' इति सहस्रनामसु पाठात्, 'अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते' इति श्रुतेश्चान्वर्थकं नामेति भावः। अप्रतिष्ठमिति हेतुगर्भविशेषणमित्याह- **बाधितत्वादिति** ॥ **असुरा इति** ॥ असुराणां प्रकृतत्वादित्यर्थः। **अन्यदिति** ॥ तत्प्रतियोगिनमाह- **सदसद्भ्यामिति** ॥ **दुष्टचित्ता इति** ॥ क्ष्टे नष्टपदप्रयोगादिति भावः। **कलियुगादाविति** ॥ 'मणिमत्पूर्वका दुष्टा दैत्या आसन्कलौ युगे। ते कुशास्त्रे प्रवर्तन्ते हरिवायुविरोधिनः' इति स्कान्दवचनादित्यर्थः। इष्टप्राप्तौ हर्षः। अनिष्टप्राप्तौ हर्षक्षयः सुप्रसिद्ध इति भावः। अथ वा मिथ्योपदेशेन तमोगतयो भवन्ति । 'क्षि निवासगत्योः' इति धातोः।

'यावत्प्रयोजको ज्ञाने तावत्तावच्छुभाधिकः।
तथैव विपरीतेऽपि स्मृतौ ज्ञाने च तत्समम्।
तमः................................॥' इत्यादि ऋग्भाष्योक्तेरित्यर्थः।

**मूलम् -** **'अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः।**
**स्वप्रादिसाम्यं जगतो न तु बोधनिवर्त्यता।**
**सर्वज्ञस्य यतो विष्णोः सर्वदैतत्प्रतीयते।**
**बोधासहं ततो नैतत् किन्त्वाज्ञावशमस्य हि॥' इति परमोपनिषदि।**

**'प्रज्ञाविनिर्मितं यस्मादतो मायामयं जगत्।**
**अनेनानुगतं यस्मादनृतं तेन कथ्यते।**
**बोधानिवर्त्यमपि तु नित्यमेव प्रवाहतः।**
**अ इत्युक्तः परो देवस्तेन सत्यमिदं जगत्।**
**तदधीनस्वरूपत्वादसत्यं तेन कथ्यते।**
**सत्यस्य सत्यः स विभुरिन्द्रचापस्य सूर्यवत्॥' इति च।**

**'तस्योपनिषत्सत्यस्य सत्यमिति।**
**प्राणा वै सत्यं तेषामेष सत्यम्॥' इति च।**

**'महामायेत्यविद्येति नियतिर्मोहिनीति च।**
**प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते।**
**प्रकृतिः प्रकृष्टकरणाद् वासना वासयेद्यतः।**
**अ इत्युक्तो हरिस्तस्य विद्याऽविद्येति सञ्ज्ञिता।**

**मायेत्युक्ता प्रकृष्टत्वात् प्रकृष्टं हि मयाभिधम्।**
**विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते।**
**प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा' इति च।**

**(त.मं.)** ननु 'स्वप्नेऽनर्थागमो यथा', 'मायामये वासनया शयानः', 'असन्नपि क्लेशाद आस देहः', 'यदाविरासीदनृतस्य सर्वम्' इत्यादिवाक्येषु स्वप्नसाम्याद्युक्तेः कथं जगतो न बाध्यत्वमित्यत आह- **अनित्यत्वेति ॥** आदिशब्दात् वासनावशत्वं विकारजनकत्वं च। स्वप्नादीत्यादि-शब्दान्मनोरथः। विष्णोः प्रज्ञाया मायाशब्दवाच्यत्वे प्रमाणमाह - **महामायेति ॥** हरेः प्रकृष्टत्वात् मयाख्यत्वं, तत्सम्बन्धिनी माया।

**टीका-** ननु पुराणादौ 'स्वप्नमनोरथो यथा' इति जगतः स्वप्नादिसाम्यमुच्यते। तच्च ज्ञाननिवर्त्यत्व-मेव नान्यदस्ति। तत्कथं न कुत्रापि जगतो मिथ्यात्वमुच्यत इत्युक्तमित्याशङ्क्यां श्रुत्यैव परिहरति- **अनित्यत्वेति ॥ विकारित्वम्** एकप्रकारेणानवस्थानम्। आदिपदेन दुःखप्राचुर्यं गृह्यते। **रूपतो** धर्मेण स्वप्नादिसाम्यमुच्यते। बोधनिवर्त्यतात्र कारणं न भवति। कुतो नेत्यत आह- **सर्वज्ञ-स्येति ॥** अधिष्ठानाभिमतयाथात्म्यज्ञानवतः। तृतीयार्थे षष्ठी। परमेश्वरवत् सत्यं चेत्, किं तर्हि स्वतन्त्रमपीति पृच्छति- **किन्त्विति ॥** उत्तरमाह- **आज्ञेति ॥** अत्र स्वाप्नादिपदार्थेषु आरोपितं जाग्रत्त्वादिकं स्वप्नादिशब्देनोच्यते। पदार्थानां तज्ज्ञानस्य च सत्यत्वात्। आस्थानिवृत्त्यर्थं हि स्वप्नादिसाम्योक्तिः। अनित्यत्वादौ ज्ञापितेऽप्यास्था निवर्तत एव। तत्किं प्रमाणविरुद्धमिथ्यात्व-कल्पनेनेति भावः।

ननु च 'मायामये वासनया शयानः' इत्यादौ जगन्मिथ्यात्वस्य साक्षादुक्तत्वात् कथं कुत्रापि तदुक्तिर्नास्तीत्युच्यत इत्याशङ्कामागमवाक्येनैव परिहरति- **प्रज्ञेति ॥ मायया** भगवत्प्रज्ञया निर्मितत्वान्मायामयम्। 'माङ्माने' इत्यस्मात्कर्मणि यत्प्रत्ययो धातोश्च ह्रस्वः। **अनेन** चेष्टकेन भगवता **ऋतं** गतम्, **अनुगतं** व्याप्तम्। बोधानिवर्त्यं प्रवाहतो नित्यमेव। तथापि तु मायामयं कथ्यत इत्यादि सम्बन्धः। (तेन)सत्यमित्यस्योपपादनं तदधीनस्वरूपत्वादिति। यदि स्वतः सत्यं कथं तर्हि तत्स्वरूपं तदधीनमित्यत उक्तम्- **सत्यस्येति ॥ सत्यस्यापि सत्यः** सत्यताया नियामकः। सूर्येण विना प्रायेणेन्द्रचापानवस्थानात्। सत्यस्य सत्यत्वे वाक्यान्तरसंवादमप्याह- **तस्येति ॥** सत्यस्य सत्यमिति **तस्य** परमात्मनः **उपनिषत्** रहस्यं नाम। तस्य व्याख्यानम् 'प्राणा वै' इति। प्राणन्तीति **प्राणाः** ब्रह्माद्याः। सम्पन्नानां सम्पन्नत्वे राजा हेतुरितिवत्, न प्राणानां सत्यत्वमपारमार्थिकं भवति किन्तु तदधीनमेवेति। भगवज्ज्ञानमिव तदिच्छाऽपि मायाशब्दवाच्येत्यत्र पुराणवाक्यं पठति- **महामायेति ॥** ततश्च मायामयमित्यस्य भगवदिच्छा-धीनमित्यर्थः सिद्ध्यति। तानेव शब्दान् भगवत्प्रज्ञायां निर्वक्तुमागमवाक्यं पठति- **प्रकृति-रिति ॥** प्रकृष्टा कृतिरस्या इति प्रकृतिः। **वासयेत्** भावयेत्। वास्यत अनयेति वासना। प्रकृष्टत्वान्मायेत्यस्योपपादनम्- **प्रकृष्टं हीति ॥** एतेन मयेति स्वतन्त्रप्रातिपदिकं स्वार्थेऽण्प्रत्यय इत्युक्तं भवति। प्रकृतिरित्यादावभिधेयं नोक्तम्। तदिदानीमाह- **विष्णोरिति ॥** भगवल्लक्षणं प्रकृष्टकरणादिकं कथं प्रज्ञप्तौ सम्भवतीत्यत आह- **प्रज्ञप्तीति ॥** तदैक्यमेव स्पष्टयति- **सा चेति ॥**

**(र.टि.)** विकारित्वस्य जीवादिसाधारण्यायार्थमाह- **एकप्रकारेणानवस्थानमिति ॥ दुःखप्राचुर्यमिति ॥** पुत्रकलत्रार्थादिष्वास्थाया निवर्तनीयत्वादिति भावः। **अत्र कारणमिति ॥** प्रपञ्चस्य 'स्वप्नमनोरथो यथा' 'स्वप्नगन्धर्वनगरोपमम्' इत्यादिनाऽविद्यमानस्वप्नादिसाम्यवचन इत्यर्थः। कारणमिति शेषोक्त्या रूपत इति कारणत्वार्थतृतीयान्तात्तसिरित्युक्तं भवति। अत एव धर्मेणेत्युपपदं दत्तम्। तथा च नष्टादिपदप्रवृत्तिनिमित्त-पापादीनां भिन्नभिन्नत्वेऽपि तद्वदयं नष्ट इत्यादिसाम्यवचने तत्तद्गतभिन्नभिन्नपापवद् बोधनिवर्त्यत्वनिमित्तपापादीनां मानादिपदविषयत्वलक्षणसाम्यस्य 'अविद्यमानो ह्यवभाति'

इत्यादावविद्यमानादिपदेन प्रपञ्चस्य प्रतिपादनेऽ-नित्यत्वादय एव हेतवो न बोधनिवर्त्यतेति भावः । ननु 'न तु बोधनिवर्त्यता' इत्यनेन यथा स्वप्नेऽविद्यमानपदप्रयोगे **(र.टि.)** बोधनिवर्त्यता निमित्तं न तथा जगतोऽविद्यमानपदविषयत्वे कारणमित्युच्यते । तदयुक्तम् । स्वप्नादिपदार्थानां तज्ज्ञानस्य च सत्यत्वादित्यत आह- **अत्र स्वप्नादिपदार्थेष्विति ।। चेष्टकेनेति ।।** अनशब्दस्य चेष्टावाचकत्वं प्रसिद्धमिति भावः । ननु 'सत्यस्य सत्यम्' इति श्रुतार्थापत्तिरेव प्राणादिसत्यत्वस्यापारमार्थिकत्वे प्रमाणमित्यत आह- **सम्पन्नानामिति ।।** ननु भगवदिच्छायां मायाशब्दव्युत्पादनं कुत्रोपयुक्तमित्यत आह- **ततश्चेति ।।**

**(रा.टि.)** परिणामित्वभ्रमनिरासायाह- **एकप्रकारेणेति ।। दुःखप्राचुर्यमिति ।।** तस्यैवानास्थोत्पादकत्वेन वैराग्यहेतुत्वादिति भावः । स्वप्नादिसाम्यमित्यनूद्य शेषमाह- **स्वप्नादिसाम्यमुच्यत इति ।।** बोधनिवर्त्यतेत्यत्रापि शेषमाह- **अत्र कारणं न भवतीति ।।** स्वप्नादिसाम्योक्तौ कारणं नेत्यर्थः । कुत इति शङ्कानिरासस्य सर्वज्ञस्येत्यनेन स्पष्टमप्रतीतेराह- **अधिष्ठानेति ।। सत्यत्वादिति ।।** 'सन्ध्ये सृष्टिराह हि' इत्यादिना सूत्रकृता स्वाप्नपदार्थानां वासनामयतया सूक्ष्मरूपेण सत्यत्वस्य जाग्रत्त्वस्थूलत्वादेरसत्यत्वस्योक्तेरिति भावः । मिथ्यात्वेनाप्युपपत्तौ किमेवं व्याख्येत्यत आह- **आस्थानिवृत्त्यर्थमिति ।। इति भाव इति ।।** अनित्यत्वेत्यादिव्याख्यानस्येति योज्यम् । **मायामय इति ।।** द्वितीयस्कन्धे द्वितीयाध्याये । **यत्प्रत्ययो धातोश्च ह्रस्व इति ।।** निरुक्तत्वादिति भावः । **अनेन चेष्टकेनेति ।।** 'अन चेष्टायाम्' इति धातोरनशब्दस्यान्तलोपो वा क्विप्प्रत्ययेन नकारान्तो वेति भावः । अना इति तृतीयान्तस्यार्थोऽनेनेति ज्ञेयम् । ऋ गताविति धातोराह- **गतमिति ।।** अपि त्वित्यस्यार्थः- **तथापि त्विति ।। कथ्यत इति ।।** अनृतं कथ्यत, असत्यं तेन कथ्यत इति सम्बन्ध इत्यर्थः । इन्द्रचापस्य सूर्यवदित्यस्य ह्ययमर्थः- इन्द्रचापस्य सत्यस्य सूर्यः सत्य इत्युक्ते यथेन्द्रचापस्य सत्यत्वं सूर्याधीनमिति लभ्यते तथा प्रकृतेऽपि । तत्र च रात्रावपि कदाचिदिन्द्रचापोपलब्धेः कथमेतदित्यत आह- **सूर्येण विनेति ।।** प्रायिकाभि-प्रायोऽयं दृष्टान्त इति भावः । **प्राणन्तीति ।।** चेष्टन्त इत्यर्थः । ननु 'चेतनश्चेतनानाम्' इत्यत्र चेतनानामपकृष्ट-चेतनत्ववत्प्राणानामपकृष्टसत्त्वप्राप्त्या मिथ्यात्वं किं न स्यादित्यत आह- **सम्पन्नानामिति ।।** श्रीमतामि-त्यर्थः । इच्छाया मायाशब्दार्थत्वोक्तेः प्रकृतोपयोगमाह- **ततश्चेति ।। भावयेदिति ।।** उत्पादयेदित्यर्थः । **वास्यत इति ।।** 'वस निवासे' 'वस आच्छादने' इत्यतो वा ण्यन्तात् 'ण्यासःश्रन्थो युच्' इति युचि अनादेशे टापि रूपम् । **स्वतन्त्रेति ।।** मयट्प्रत्ययोऽयं न भवति । किन्तु स्वतन्त्रमेव प्रातिपदिकमित्यर्थः । तर्हि मायेति कथमित्यत आह- **स्वार्थेऽण्प्रत्यय इति ।।** ततश्चाजाद्यतष्टाबिति भावः । तत्त्वमसीत्याद्यभेदादिश्रुति-पुराणानामर्थोक्तिः ।

**(श्री.टि.) स्वप्नमनोरथो यथेतीति ।।**

'अविद्यमानो ह्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथो यथा ।'

इत्यत्रेत्यर्थः । **तत्कथमिति ।।** ज्ञाननिवर्त्यत्वमेव च मिथ्यात्वमिति भावः । **अनित्यत्वेतीत्यादि ।।** तथा चायं मूलार्थः- पुराणेऽविद्यमानपदप्रयोगविषयत्वेन जगतः स्वप्नमनोरथसाम्यमुच्यते । तत्र जगतोऽविद्यमान-**(श्री.टि.)** पदप्रयोगविषयत्वमनित्यत्वादिधर्मेणैव न तु **बोधनिवर्त्यता** ज्ञाननिवर्त्यत्वं जगत्यविद्यमानपदप्रयोगे कारणम् । स्वप्ने त्वविद्यमानपदप्रयोगे बोधनिवर्त्यत्वमेव कारणमिति । ननूभयत्राविद्यमानपदप्रयोगनिमित्तानां ज्ञाननिवर्त्यत्वानित्यत्वादिधर्माणां भिन्नत्वेन यथा तथेति साम्यवचनं कथं युक्तमिति चेदुच्यते । यथा हि- नष्टशब्दप्रयोगनिमित्तयोर्ब्रह्महत्यासुरापानरूपपापयोर्भिन्नत्वेऽपि तद्वदयं नष्ट इति साम्यवचनं दृष्टं तद्वदत्रापीति द्रष्टव्यम् । नन्वत्र श्रुतौ जगत्यविद्यमानपदप्रयोगेऽनित्यत्वादिधर्माणां निमित्तत्वमुक्तम् । तदयुक्तम् । जगन्मध्ये घटादीनामनित्यत्वविकारित्वे प्रसिद्धे । तत्र जीवादिनित्यपदार्थानामपि पतितत्वेन तेषु पराधीनविशेषावाप्त्यपगम-रूपानित्यत्वसद्भावेऽपि विकारित्वं न सम्भवतीत्यतो जीवादिसाधारण्याय विकारित्वं विवृणोति- **विकारित्व-मिति ।। एकप्रकारेणेति ।।** सुखदुःखादिनोच्चनीचतादिसद्भावेन प्रलये निर्देहतयाऽवस्थितानां सृष्टौ देहसम्बन्ध-प्राप्त्या वा जीवानामेकप्रकारेणावस्थानाभावात् । अव्याकृताकाशादिनित्यपदार्थानामपि वियत्पादीयानुव्याख्या-नोक्तरीत्या मूर्तसम्बन्धादिरूपपराधीनविशेषावाप्त्यपरपर्यायस्य विकारस्य सत्त्वात् । एवं च सर्वसाधारण्याय विकारित्वेत्यस्योत्पत्तिमत्त्वेत्यर्थो द्रष्टव्य इत्युक्तं भवति । **दुःखप्राचुर्यमिति ।।** ननु पारतन्त्र्यदुःखप्राचुर्ये जीवे प्रसिद्धे, जडेषु पारतन्त्र्यसद्भावेऽपि दुःखप्राचुर्यं कथमिति चेन्न । दुःखप्राचुर्यापादकत्वं दुःखप्राचुर्यमिति जडविषये व्याख्यानाददोषः । उच्यते अविद्यमानपदेनेति शेषः । **अत्र** जगत्यविद्यमानपदप्रयोगे ।

मूले बोधासहमित्यस्य बोधस्यासहं ज्ञाननिवर्त्यमित्यर्थो द्रष्टव्यः । ननु जगत्यविद्यमानपदप्रयोगेऽनित्य-त्वादिकमेव निमित्तं, न तु बोधनिवर्त्यत्वमित्युक्त्या स्वप्नेऽविद्यमानपदप्रयोगे बोधनिवर्त्यत्वं निमित्तमिति प्राप्त्या मिथ्यात्वं प्रतीयते । तदयुक्तम् ।

स्वाप्नादिपदार्थानां तज्ज्ञानस्य चास्मन्मते सत्यत्वादित्यत आह- **अत्रेति ॥ जाग्रत्त्वादिकमिति ॥ जाग्रत्त्वं** जाग्रद्दृष्टपदार्थाभेदः । आदिपदेन बाह्योपादानकत्वं बाह्यार्थ-क्रियाकारित्वं चेत्यपि ग्राह्यम् । कुत इत्यतस्तद्बीजं स्वयमेव दर्शयति- **पदार्थानामिति ॥** स्वाप्नपदार्थानामित्यर्थः।। ननु पुत्रकलत्रादा-वास्थानिवृत्त्यर्थं हि जगतः स्वप्नादिसाम्यमुच्यते। सा चास्था स्वप्नादिवज्जगतो मिथ्यात्व-ज्ञापनेनैव निवर्तनीया नान्यथा । अतो मिथ्यात्वेनैव तत्साम्यं वक्तव्यमिति चेत्तत्राह- **आस्थानिवृत्त्यर्थं हीति ॥ आस्था** आसक्तिः । तर्हि विनिगमनाभाव इत्यत उक्तम्- **प्रमाणविरुद्धेति ॥**

अन्ये तु 'स्वप्नादिसाम्यं जगतः' इत्यत्र स्वप्नादिपदार्थेष्वारोपितं जाग्रत्त्वं स्वप्नादिपदेनोच्यत इति व्याख्यास्य-मानत्वाज्जाग्रत्त्वस्य चात्यन्तासत्त्वात्तेन साकं जगतः कथमनित्यत्वादिधर्मेण साम्यमुच्यते । अत्यन्तासति जाग्रत्त्वेऽनित्यत्वादिधर्माणामभावादित्यत एते धर्मा अभावरूपतया व्याख्येया इत्यभिप्रेत्यानित्यत्वं नित्यत्वाभाव इति व्याख्यातुं शक्यं, विकारित्वं भावरूपं तत्कथमभावरूपतया व्याख्येयमित्यत आह- **विकारित्वमिति ॥** एकप्रकारेणावस्थानाभाव इत्यर्थः । एवं **पारतन्त्र्यं** स्वातन्त्र्याभावः । **दुःखप्राचुर्यं** दुःखाप्राचुर्याभाव इति व्याख्येयम् । एवं च नित्यत्वाभावादिधर्मैरेव स्वप्नादिसाम्यं जगत उच्यते न तु बोधनिवर्त्यताऽत्र स्वप्नादिसाम्ये निमित्तमिति व्याख्येयमित्याहुः । **माङ् मान इति ॥** 'मानं ज्ञानं लयश्चैव निर्माणं चाभिधीयते' इति वचनान्मानं **(श्री.टि.)** निर्माणम् । तथा च मायाशब्दोपपदात् 'माङ् माने' इति धातोः कर्मणि यत्प्रत्यये धातोश्च ह्रस्वे मायामयेति भवतीत्यर्थः । अनृतमित्यत्र अन् इत्यस्यार्थो अनेनेति । तस्यार्थमाह- **चेष्टकेनेति ॥** 'अन चेष्टा-याम्' इति धातोरिति भावः । **स्वत इति ॥** अन्यानधीनतयेत्यर्थः । **तत्स्वरूपं** जगत्स्वरूपम् । 'इन्द्रचापस्य सूर्यवत्' इत्यत्र 'तत्र तस्येव' इत्यस्य प्रायिकत्वात्प्रथमान्ताद्वतिः । तथा चेन्द्रचापस्य सूर्यवत् सूर्य इव, सूर्यो यथा नियामकस्तथेत्यर्थमभिप्रेत्योपपादयति- **सूर्येण विनेति ॥** भाव्यनिष्टसूचनार्थं कदाचित्सूर्यास्तमयानन्तरं तेन विनाप्यवस्थानसद्भावात्प्रायेणेत्युक्तम् । **सत्यत्वे** सत्यत्वनियामकत्वे । **रहस्यं** गोप्यम् । ननु 'सत्यस्य सत्यम्' इति श्रुतार्थापत्तिरेव प्राणादिजगत्सत्यत्वस्यापारमार्थिकत्वे मानम् । तत्र प्राणादिसत्यत्वापेक्षया परमात्मसत्यत्वस्याधिक्योक्तेरित्यत आह- **सम्पन्नानामिति ॥** सम्पन्नानां सम्पन्नत्वस्य राजाधीनत्ववत्सत्य-शब्दोक्तप्राणादीनां सत्यत्वमपि परमात्माधीनमित्यन्यथैवोपपत्तेस्तेषामेष सत्यं सत्यताया नियामक इत्यनेनोक्त-त्वान्नोक्तार्थापत्तिस्तत्र मानमित्यर्थः । **तानेव शब्दानिति ॥** मायामयादिशब्दानित्यर्थः । **निर्वक्तुमिति ॥**

'प्रज्ञाविनिर्मितं यस्मादतो मायामयं जगत्'

इति पूर्वं प्रज्ञाया मायाशब्दवाच्यत्वमुक्तम् । तत्किं रूढ्या योगेन वेति शङ्कायां योगेनेत्याशयेन निर्वक्तुमि-त्यर्थः । **भावयेद्** उत्पादयेत् । वासनाशब्दादयमर्थः कथं लभ्यत इत्यतो निरुच्य दर्शयति- **वास्यत इति ॥** भाव्यत इत्यर्थः । **एतेनेति ॥** 'प्रकृष्टं हि मयाभिधम्' इत्यनेनेत्यर्थः । ननु मयेत्ययं मयट्प्रत्ययो न तु शब्दः । अतस्तदुपरि कथमण्प्रत्यय आनीयत इत्यत उक्तम्- **स्वतन्त्रेति ॥** न तु प्रत्ययभूतोऽत्र विवक्षित इत्यर्थः । **स्वार्थ इति ॥** तथा च मयशब्दात्स्वार्थेऽण्प्रत्यये णित्वात् * 'अचो ञ्णिति' इति सूत्रेणादिवृद्धौ 'यस्येति च' इति भसंज्ञकयकारस्याकारलोपे मयैव मायेति भवतीत्यर्थः । **प्रकृतिरित्यादाविति ॥** 'प्रकृतिः प्रकृष्टकारणात्' इत्यादाव**भिधेयं** विशेष्यं नोक्तमित्यर्थः । **सा चेतीति ॥** प्रज्ञप्तिरपीत्यर्थः । तथा च विष्णुप्रज्ञप्त्योरैक्यमुपपन्नमिति भावः ।

**(पां.टि.) बोधनिवर्त्यताऽत्र कारणं न भवतीति ॥** बोधनिवर्त्यता प्रपञ्चस्य 'स्वप्नमनोरथो यथा' इति स्वप्नादिसाम्यवचने कारणं न भवति । स्वप्नस्य ज्ञाननिवर्त्यत्वनिमित्तकाविद्यमानपदवाच्यत्ववत् प्रपञ्चस्यापि ज्ञाननिवर्त्यत्वनिमित्तकाविद्यमानपदवाच्यत्वात् स्वप्नमनोरथो यथेति स्वप्नादिसाम्यवचनं न भवति । किन्तु स्वप्नस्य ज्ञाननिवर्त्यत्वनिमित्तकाविद्यमानपदवाच्यत्वं प्रपञ्चस्य त्वनित्यत्वविकारित्वादिनिमित्तकाविद्यमान-पदवाच्यत्वाभिप्रायकमेव तत्साम्यवचनमिति योजना । अयं भावः- व्यभिचार्यादिषु नष्टादिपदप्रवृत्तिनिमित्त-पापानां भिन्नभिन्नत्वेऽपि तत्र तत्र विद्यमानभिन्नभिन्नपापनिमित्तकनष्टपदवाच्यतामात्रस्य सर्वत्र सत्त्वात् तन्मात्र-विवक्षया तद्वदयं नष्ट इति साम्यवचनम् । तथा स्वप्ने प्रपञ्चे चाविद्यमानपदप्रवृत्तिनिमित्तस्य ज्ञाननिवर्त्यत्व-**(पां.टि.)** स्यानित्यत्वविकारित्वादेश्च भिन्नभिन्नत्वेऽपि तत्तन्निमित्तकाविद्यमानपदवाच्यतामात्रस्य स्वप्ने प्रपञ्चे च सत्त्वान्न तन्मात्रविवक्षायां स्वप्नादिसाम्यवचनमिति । नन्वेवं योजना कर्तुं न शक्यते । तथा सति स्वप्नस्य ज्ञाननिवर्त्यत्वनिमित्तकमेवाविद्यमानपदवाच्यत्वमङ्गीकृतं स्यात् । न च तद्युक्तम् । अर्थज्ञानात्मकस्वप्नस्य प्रपञ्चवत्सत्यत्वेन ज्ञाननिवर्त्यत्वाभावादित्यतो नात्र स्वप्नशब्देनार्थज्ञानात्मकः स्वप्नो वाच्यतयाऽभिमतः । येनोक्तदोषावकाशः । किन्तु जागरानुभूतपदार्थैरेकत्वम् । स्वप्ने हि तात्कालिकतयादृष्टचराणामेव तनयादीनां दृष्टचरतयाऽनुसन्धानात्

। यद्वाऽत्र स्वप्नशब्देन जाग्रत्त्वं ग्राह्यम्। जाग्रत्त्वं नाम गगनादीनां नित्यत्वादिकं घटादीनां मृदाद्युपादनकत्वं बाह्यार्थक्रियाक्षमत्वादिकम्। तच्च सर्वं बाध्यत्वादसत्यमेवेत्युक्तम्। तस्य ज्ञान-निवर्त्यत्वनिमित्तकाविद्यमानपदवाच्यत्वमिति युक्त एव तदङ्गीकार इति भावेनाह- **अत्र स्वाप्नादिपदार्थे-ष्विति ॥**

यत्तु 'स्वप्नादिसाम्योक्तिस्तु अनित्यत्वादेः। अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः। स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता इति वचनात्' इति न्यायामृतग्रन्थस्य, 'अनित्यत्वं नित्यत्वाभावः। विकारित्वं कूटस्थ-त्वाभावः। पारतन्त्र्यं स्वातन्त्र्याभावः' इति तरङ्गिणीकारैरनित्यत्वादिस्वरूपनिरूपणं कृतम्। तदसत्। बाधकाभावेन ध्वंसप्रतियोगित्वादिरूपानित्यत्वादेरेव सम्भवेन तत्परित्यागेन नित्यत्वाभावादिरूपानित्य-त्वादिपर्यन्तधावनानर्थक्यात्। न चात्र स्वप्नशब्देन स्वप्नगजादिकं न ग्राह्यम्। स्वप्नगजादीनां तज्ज्ञानस्य च सत्यत्वेन प्रपञ्चे तत्साम्यस्यानिष्टत्वाभावात्। किन्तु स्वाप्नगजादिजाग्रत्त्वमेव। तथा च स्वाप्नजाग्रत्त्वस्य भ्रमविषयतया अत्यन्तासत्त्वेन ध्वंसप्रतियोगित्वादिरूपानित्यत्वाद्यसम्भवेन तत्सङ्ग्रहार्थं नित्यत्वाभावादिरूपा-नित्यत्वाद्याश्रयणमर्थवदिति वाच्यम्। ध्वंसप्रतियोगित्वादिरूपानित्यत्वादेर्जाग्रत्त्वादावसत्त्वेऽपि प्रपञ्चे सत्यत्वेन दोषाभावात् तत्पर्यन्तधावनानर्थक्यानुद्धारात्। न चैवमनित्यत्वादिना अनित्यत्वाद्याक्रान्ततया प्रपञ्चस्या-विद्यमानपदवाच्यत्वनिर्वाहेऽपि न जाग्रत्त्वस्याविद्यमानपदवाच्यत्वनिर्वाहः। तस्यानित्यत्वाद्याक्रान्तत्वा-भावादिति वाच्यम्। जाग्रत्त्वस्य बोधनिवर्त्यत्वेनैवाविद्यमानपदवाच्यत्वसम्भवेनानित्यत्वादिनैवाविद्यमान-पदवाच्यताया अवक्तव्यत्वात्।

न च बोधनिवर्त्यत्वस्य न तु बोधनिवर्त्यतेत्यनेनाविद्यमानपदप्रवृत्तिनिमित्तत्वनिषेधात् कथं तदाश्रयणेन जाग्रत्त्वस्याविद्यमानपदवाच्यत्वनिर्वाहः स्यादिति वाच्यम्। प्रपञ्च एव बोधनिवर्त्यत्वस्याविद्यमानपदप्रवृत्ति-निमित्ततायास्तेन निषेधेऽपि, सर्वथा अविद्यमानपदप्रवृत्तिनिमित्तताया अनिषेधेन तदाश्रयणेन जाग्रत्त्वस्याविद्य-मानपदवाच्यत्वस्याप्रत्यूहत्वात्। अन्यथा बोधनिवर्त्यताकारणं न भवतीत्येव वक्तव्यतया अत्र कारणं न भवतीत्युक्त्यसामञ्जस्यप्रसङ्गात्। न चैवं प्रपञ्चे जाग्रत्त्वे चाविद्यमानपदप्रवृत्तिनिमित्तस्यैकस्याभावादविद्य-मानपदवाच्यत्वेनात्र विवक्षितस्य स्वप्नादिसाम्यवचनस्य कथं प्रपञ्चे निर्वाह इति वाच्यम्। नष्टादिपदप्रवृत्ति-निमित्तानां पापानां भिन्नभिन्नत्वेऽपि नष्टपदवाच्यत्वेन साम्यस्य तद्वदयं नष्ट इत्यादौ दृष्टत्वेन प्रपञ्चे जाग्रत्त्वे (**पां.टि.**) चाविद्यमानपदप्रवृत्तिनिमित्तस्य भिन्नभिन्नत्वेऽप्यविद्यमानपदवाच्यत्वेन साम्यस्योपपन्नत्वादिति दिक्। **कर्मणीति ॥** 'उणादयो बहुलम्' इत्युक्तत्वादिति भावः। **ह्रस्व इति ॥** निर्वचनत्वादिति भावः। **स्वतन्त्रमिति ॥** अखण्डं, न तु माङ् मान इत्यतः कर्मणि यत्प्रत्यये धातोश्च ह्रस्वत्वे निष्पन्नमयशब्दोऽयमिति भावः। तर्हि मयेत्येव भवितव्यम्। मायेति तु कथमित्यतोऽस्मात्स्वार्थे अणि णित्त्वादादिवृद्धौ तत्सिद्धिरिति भावेनाह- **स्वार्थेऽणिति ॥**

(**व्या.टि.**) 'अतो न कुत्रापि जगतो मिथ्यात्वमुच्यते' इति प्रतिज्ञामसहमानो मायिमतानुयायी शिष्यः स्वयमपि तदुक्तिभ्रान्तश्शङ्कते- **नन्विति ॥** साम्योक्तिमात्रेण कथं मिथ्यात्वलाभ इत्यत आह- **तच्चेति ॥** आक्षिपति- **तत्कथमिति ॥ श्रुत्यैवेति ॥** स्मृतिमूलत्वेन व्याख्यानत्वेन च प्रबलयेत्यर्थः। अनित्यपदमुत्थानार्थत्वादुदास्य विकारित्वपदं व्याचष्टे- **एकप्रकारेणेति ॥** रूपत इति तृतीयार्थे तसिरित्याह- **धर्मेणेति ॥ अत्रेति ॥** स्वप्नादि-साम्योक्तावित्यर्थः। कथमस्योक्तहेतूक्तित्वमित्यतो व्याचष्टे- **अधिष्ठानेति ॥** कर्तुरभिधानस्य तृतीयाऽऽवश्य-कीत्यत आह- **तृतीयार्थ इति ॥** अनेन जगद् बाध्यं न भवति अधिष्ठानयाथार्थ्यज्ञानवता दृश्यमानत्वात्। यदेवं तदेवं यन्नैवं तन्नैवमित्यनुमानं सूचयति। स्वप्नादिपदार्थमाह- **अत्रेति ॥**

ननु नेदं व्याख्यानं युक्तं मूलासङ्गतत्वात्। तथा हि- 'स्वप्नमनोरथो यथा' इति भगवताऽभिहितं जगतः स्वप्नादिसाम्यं ज्ञाननिवर्त्यत्वमेव। तदेव मिथ्यात्वमिति कथं न जगतो मिथ्यात्वमुच्यत इत्याशङ्कानिवृत्तये हि श्रुतिरुपात्ता। तत्र ह्यनित्यत्वाद्याकारेणैव साम्यं न बोधनिवर्त्यत्वेनेत्युक्तम्। तत्र यदि स्वप्नादिशब्देन ज्ञानं पदार्था वोच्येरन् तदा तेषां सत्यत्वेन ज्ञाननिवर्त्यत्वाभावेन तत्रत्यानित्यत्वादिधर्मेण साम्यमुक्तं युक्तं स्यात्। स्वप्नादिशब्देन तत्रारोपितजाग्रत्त्वाद्युक्तौ तु तस्यात्यन्तासत्त्वेन तत्र ध्वंसप्रतियोगित्वरूपानित्यत्वस्य, एक-प्रकारेणानवस्थानरूपविकारित्वस्य, पराधीनसत्ताकत्वरूपपारतन्त्र्यस्य, आदिपदोक्तदुःखप्राचुर्यस्य च सर्वथाऽ-सम्भवात् तद्रूपेण साम्योक्तिरयुक्ता स्यात्। प्रत्युत तस्य मिथ्यत्वेन ज्ञाननिवर्त्यत्वस्यैव सत्त्वेन तत्रत्येन तेन रूपेणैव साम्यं युक्तं स्यादिति 'न तु बोधनिवर्त्यता' इति निषेधानुपपत्तिः। तस्माद्विपरीतमिदं व्याख्यानमिति चेत्, मैवम्। अभिप्रायसद्भावात्। सादृश्यापरपर्यायतत्साम्योक्तिर्हि तद्धर्मप्रतिपत्तये भवति। यथा लोके गौरिवायं गवय इति, यथा वा काव्ये 'हंसीव कृष्ण ते कीर्तिः' इति, यथा वा पूर्वतन्त्रे श्येनीयवैशेषिकाङ्गप्रतिपत्तये 'समानमितरच्छ्येनेन' इति वाचनिकातिदेशः। यथा वा व्याकरणे 'लोटो लङ्वत्' इति तामादिकार्यप्रतिपत्त्यर्था साम्योक्तिः। तथा तद्धर्मनिषेधाय तत्साम्यनिषेधः

। यथा लोके 'न तेनायं समः' इति, यथा वाऽलङ्कारे 'मुधाऽपवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम्' इति । यथा वा 'न त्वत्समश्चाभ्यधिकश्च दृश्यते' इति । एवं च प्रकृतेऽपि साम्यप्रतियोगिनि स्वप्नादावनित्यत्वादिसद्भावेन तेन तत्साम्योक्तिसम्भवेऽपि बोधनिवर्त्यत्व-निषेधोऽनुपपन्नः । उपमानभूते स्वप्नादावेव तद्धर्माभावेनाप्रसक्तत्वात् । अप्रसक्तस्य च निषेधायोगात् । अत एव पूर्वतन्त्रे 'प्रागपरोधान्मलवद्वाससः' इति जैमिनिसूत्रे, मलवद्वासस उदक्याः क्रत्वारम्भात्प्रागेव 'यस्य **(व्या.टि.)** व्रत्येऽहनि पत्न्यनालम्भुका भवति, तामपरुध्य यजेत' इत्यानालम्भुकाख्यरजस्वलाया निषेधेन क्रतावप्रसक्तत्वान्न तन्निषेधः क्रत्वर्थ इत्युक्तम् । अत एव 'नान्तरिक्षे न दिवि' इत्यप्रसक्तप्रतिषेधत्वान्नित्यानुवाद इत्युक्तम् 'चयनप्रतिषेधात्' इत्यत्र । इत्थं च बोधानिवर्त्यत्वनिषेधोऽनुपपन्न इत्यत आह- **अत्रेति ॥** आदिशब्देन बहिःष्ठत्वादिपरिग्रहः । अयं भावः । स्वप्नादिशब्दार्थो द्विविधः । गजादिरर्थो जाग्रत्त्वं च । साम्यं च द्विविधं ग्राह्यं निषेध्यं(धं) चेति । तत्र ग्राह्यसाम्यप्रतियोगिसमर्पकस्वप्नादिशब्देन पदार्थोक्तावपि, अत्र निषेध्यांशे निषेध्य-साम्यप्रतियोगिसमर्पकस्वप्नादिशब्देन 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यत्रेव तेष्वारोपितं जाग्रत्त्वादिकमुच्यते । न च प्रकृतत्वात्त एवोच्येरन्, वैषम्यादित्याह- **पदार्थानामिति ॥** तथा च तेषां निषे(ध)ध्यसाम्यप्रतियोगि-समर्पकस्वप्नादिशब्देन ग्रहणासम्भवः । इत्थं च पदार्थसाम्यमेव भगवता भागवतेऽभिहितम् । न जाग्रत्त्वा-द्यारोपिततद्धर्मसाम्यमिति हृदयम् । शङ्किता तु भागवते स्वप्नादिशब्देन जाग्रत्त्वं गृहीतमिति बभ्राम । नन्वास्था-निवृत्तये बोधनिवर्त्यत्वोक्तिः किं न स्यादित्यत आह- **आस्थानिवृत्त्यर्थं हीति ॥** आस्थानिवृत्तेरुद्देश्याया अन्यतोऽपि लभ्यत्वान्नाप्रामाणिकतात्पर्यकल्पना युक्तेति रहस्यम् ।

केचित्तु

'अविद्यमानो ह्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथो यथा'

इति पुराणेऽविद्यमानपदप्रयोगविषयत्वेन जगतः स्वप्नमनोरथसाम्यमुच्यते । तत्र जगतोऽविद्यमानपदप्रयोग-विषयत्वमनित्यत्वादिधर्मैरेव न तु ज्ञाननिवर्त्यत्वं तत्पदप्रयोगे कारणम् । स्वप्ने तु ज्ञाननिवर्त्यत्वमेव कारणमिति मूलं योजयित्वा, स्वप्ने ज्ञाननिवर्त्यत्वस्य जगत्यनित्येऽनित्यत्वादिधर्माणां चाविद्यमानपदप्रवृत्तिनिमित्तत्वे कथं स्वप्नवदविद्यमानं जगदिति साम्यमित्याशङ्क्य नष्टपदप्रवृत्तिनिमित्तयोर्ब्रह्महत्यासुरापानयोर्भेदेऽपि तद्वदयं नष्ट इति प्रयोगो दृष्ट इति समाधाय (जगदविद्यमानं) जगन्मध्यपतितेषु जीवादिषु नित्येषु पराधीनविशेषावाप्त्यपगम-रूपानित्यत्वसम्भवेऽपि विकारित्वमसम्भवीत्याशङ्कापनोदायैकप्रकारेणानवस्थानं विकारित्वमिति विवृतमिति व्याचक्रुः । तच्चिन्त्यम् । अविद्यमानपदेनैव मिथ्यात्ववाचिना पूर्वपक्षसम्भवे स्वप्नादिसाम्यमादाय तदयोगात् । अविद्यमानपदप्रयोगविषयत्वेन साम्ये 'जगतः स्वप्नादिसाम्यमुच्यते । तच्च ज्ञाननिवर्त्यत्वमेव' इत्यवतारटीका-विरोधाच्च । 'रूपतो धर्मेण स्वप्नादिसाम्यमुच्यते न तु बोधनिवर्त्यताऽत्र कारणम्' इति योजकटीकाविरोधाच्च । अत्राविद्यमानपदगतेर्वक्तव्यतापाताच्च । अविद्यमानपदस्य स्वीयतयाऽविद्यमानपरतया तात्पर्ये व्याकृतत्वेनानित्य-त्वादेर्निमित्तत्वायोगाच्च । अत्रोक्तरीत्याऽनित्यत्वादिनैव साम्यसम्भवे एकत्र ज्ञाननिवर्त्यत्वस्य परत्रानित्यत्वा-देर्ग्रहणायोगाच्च । स्वप्ने ज्ञाननिवर्त्यत्वस्य जगत्यनित्यत्वादेर्निमित्तत्वे तद्वदविद्यमानमिति साम्योक्त्ययो-गाच्च । दृष्टान्ते नष्टशब्दस्य दुष्टार्थकतया ब्रह्महत्यासुरापानयोर्दोषत्वेनैकीकारवद् ज्ञाननिवर्त्यत्वानित्यत्वयोरेकी-कारायोगेन तद्वैषम्यात् । जीवेषु देहहान्या एवानित्यत्वरूपत्वेन पराधीनविशेषावाप्त्यपगमरूपानित्यत्व-सद्भावेऽपीत्यस्यायोगाच्च । परिणामस्य सर्वसाधारण्यायोगेऽप्येकप्रकारेणानवस्थानस्य सर्वत्र सम्भवेन विकारि-त्वेत्यस्योत्पत्तिमत्त्वेत्यर्थो द्रष्टव्य इति परिष्कारस्यायोगाच्च । अधिकं तु गुरुप्रभायाम् ।

**(व्या.टि.)** अन्ये तु जाग्रत्त्वस्यैव स्वप्नादिपदार्थत्वेन तस्य चासत्त्वेनानित्यत्वादिकं कथमित्याशङ्क्यानित्यत्वस्य नित्यत्वाभावरूपत्वेन विकारित्वस्यैकप्रकारेणावस्थानाभावरूपत्वेन पारतन्त्र्यस्य स्वातन्त्र्याभावरूपत्वेन दुःख-प्राचुर्यस्याप्राचुर्याभावरूपतयाऽभावधर्मैः साम्यमसताऽपि सम्भवतीत्याहुः । तदपि न । भावधर्मैर्गजादिसाम्य-सम्भवे एतत्कल्पनायोगात् । ध्वंसप्रतियोगित्वादिरूपानित्यत्वाद्यभावसाम्यस्य भगवत्यपि सम्भवेन तत्परिग्रह-सम्भवाच्च । पारतन्त्र्यादिपदास्वारस्याच्चेत्यलम् ।

अथ वा स्वप्नादिसाम्यमुच्यत इति साम्यं साधर्म्यं यथेति साधर्म्यदृष्टान्तनिर्देशात् । 'न स्वप्नादिवत्' इति सूत्रे जाग्रत्त्वस्य स्वप्नशब्देन निर्देशादत्रापि जाग्रत्त्वमेवोच्यत इति मत्वा तत्साम्यं पर्यवस्यति- **ज्ञाननिवर्त्यत्व-मेवेति ॥** श्रुत्या शङ्कापरिहारक्रमं दर्शयति- **धर्मेणेति ॥** अनित्यत्वादिधर्मेण स्वप्नादिसाम्यमुच्यत इति साम्योक्तिहेतूक्तिः । विपक्षं निरस्यति- **बोधनिवर्त्यत्वेति ॥ अत्रेति ॥** यथेतिसाम्योक्तावित्यर्थः । अत्रेत्यनेन तथा न स्वप्नादिवदिति वैधर्म्योक्तावेव कारणं भवति । तत्रैव स्वप्नादिपदेन जाग्रत्त्वादिपरिग्रहादिति सूचयति । वैधर्म्योदाहरण इव साधर्म्योदाहरणेऽपि जाग्रत्त्वादि किं न गृह्यत इत्यत आह- **अत्रेति ॥**

**स्वप्नादिशब्द इति सप्तम्यन्तेनान्वेति ।।** नोच्यत इत्यतः परं वैषम्यात्किन्तु पदार्था एवोच्यत इति शेषः । कुत इत्यत आह- **पदार्थानामिति ।।** नन्वारोपितानारोपितयोरनारोपितपरिग्रहेणानित्यत्वादिना साम्यम् । न जाग्रत्त्वपरिग्रहेण बोधानिवर्त्यताकारेणेत्यत्र किं विनिगमकमित्यतः श्रुतिरेव नियामिका फलं चान्यथासिद्धमित्याह- **आस्थेति ।। अनित्यत्वादाविति ।।** व्याख्याश्रुतिनिर्णीततात्पर्यविषय इत्यर्थः । **प्रमाणविरुद्धेति ।।** श्रुतिविरुद्धेत्यर्थः। अयं भावः- पर्वतोऽग्निमानित्यत्रान्वयदृष्टान्तो महानस एव गृह्यते न तदयोग्यो महाह्रदः । एवमिहापि श्रुति-गृहीततात्पर्यकेण पुराणेनाप्यनित्यादौ उक्ते तद्धर्मवान् सत्यो धर्म्येव दृष्टान्तीकर्तव्यो न तदयोग्यं जाग्रत्त्वम् । किन्तु नैवं जगत् न स्वप्नादिवदित्यत्र यत्र वैधर्म्योदाहरणीकृतं तत्रैवेति रहस्यम् ।

**साक्षादिति ।।** मायामयपदेनाविद्याकारत्वस्य मूलत एवोक्तेरित्यर्थः । संज्ञाभ्रान्तिरेव तव न तेन तदुक्ति-रित्याशयेन तन्निर्वक्ति- **माययेति ।। निर्मितत्वादिति ।।** अनेन मूले विविधतया नितरां मितं निश्चितमित्यर्थः सूचितः । निर्मितमिति पाठे 'मा निर्माणे' इति धातुं निरदिक्षदिति भावः । तन्निर्वचनाय धातुं पठति- **माङ् मान इति ।। यत्प्रत्यय इति ।।** 'अचो यत्' इति सूत्रादिति भावः । तर्हि 'ईद्यति' इति ईकारादेशे गुणे च मेयमिति स्यादित्यत आह- **धातोश्चेति ।।** निरुक्तत्वादिति भावः । एवं च मायामयपदं भगवत्प्रज्ञा-विनिश्चिततत्वमाह । तच्च सत्यत्वाविनाभूतमिति न मिथ्यात्वं वक्तीति भावः । नन्वनेनेति निर्वचने इदमृतमिति स्यान्नानृतमित्यतो नायमिदम्शब्दः किन्त्वनशब्द इत्याशयेन व्याचष्टे- **चेष्टकेनेति ।।** उपपदाकारलोपश्छान्दस इति भावः । बोधनिवर्त्यमित्यादि व्यर्थमित्यतो रूढार्थपरिग्रहे बाधकपरतालाभायेति भावेना-पीति व्याचष्टे- **तथापीति ।। इत्यादीति ।।** अनृतं कथ्यत इति पृथग्योजनेति भावः । **तदधीनेति ।।** अनेन मूले तेन सत्यमिति विग्रहे कर्तरि तृतीयेत्युक्तं भवति । **कथमिति ।।** परायत्तस्य स्वभावत्वासम्भवादिति भावः । स्वस्वामिभावे **(व्या.टि.)** सत्यस्येति षष्ठीत्याह- **नियामक इति ।।** विनाऽपि सूर्येण किञ्चित्कालमवस्थानात्प्रायेणेति । प्राणपदस्य पञ्चवृत्तिपरत्वभ्रन्तिवारणाय व्याचष्टे- **प्राणन्तीतीति ।।** उक्तशङ्कामपनयति- **सम्पन्नाना-मिति ।।** मायामयशब्दं प्रकारान्तरेण व्याख्यातुं मायाशब्दं निर्वक्ति- **तानेवेति ।।** इच्छाप्रयुक्तान् चतुर-शब्दानित्यर्थः । **स्वतन्त्रमिति ।।** न मयडित्यर्थः ।

**मूलम् -** **'सर्वे वेदा हरेर्भेदं सर्वस्माज्ज्ञापयन्ति हि ।**
**भेदः स्वातन्त्र्यसार्वज्ञसर्वैश्वर्यादिकश्च सः ।**
**स्वरूपमेव भेदोऽयं व्यावृत्तिश्च स्वरूपता ।**
**सर्वव्यावृत्तये यस्मात् स्वशब्दोऽयं प्रयुज्यते ।**
**सर्वव्यावृत्ततामेव नेति नेत्यादिका श्रुतिः ।**
**विष्णोरतो वदेदन्या अपि सर्वा न संशयः ।' इति नारायणश्रुतिः ।**

**(त.मं.)** स च भेदो नान्यत्वमात्रम् । स्वातन्त्र्यसार्वज्ञ्यादिरूपो विलक्षणभावो हि विवक्षितः । भेदाङ्गीकारे भेदस्य भेदान्तरापेक्षयाऽनवस्थेत्यत आह- **स्वरूपमिति ।। व्यावृत्ति**र्वैलक्षण्यमेव स्वरूपतेति यत् तस्मात् स्वरूपमेव भेदः । कथं वैलक्षण्यमेव स्वरूपतेत्यत आह- **सर्वेति ।।**

**टीका-** एवं जीवेश्वरभेदे अतत्त्वमसीत्यागमस्तावत्प्रमाणमित्युक्तमुपपादितम् । तथाऽपि सर्वागमा भेदविषया इत्येतत्कुत इत्यतः सर्वागमानां प्रत्येकमुदाहरणेन भेदपरत्वप्रतिपादनम् अल्पे ग्रन्थे दुःशकमित्यभिप्रायवान् सर्वेऽपि वेदा भगवतः सर्वस्माद्भेदमेव बोधयन्तीत्यत्र श्रुतिमेव पठति- **सर्व इति ।।**

सर्वे वेदा हरेः सर्वस्माज्जीवजडात्मकाद्भेदं ज्ञापयन्तीत्ययुक्तम् । 'सर्वोत्कर्षे देवदेवस्य विष्णोः' इति तद्गुणोत्कर्षे सर्ववेदानां महातात्पर्यस्योक्तत्वेन तद्विरोधात् । न ह्येकस्योभयत्र महातात्पर्यमुप-पद्यते । एकवाक्यत्वस्यार्थैकत्वाधीनत्वादित्यत आह- **भेद इति ।।** स च भेदः स्वातन्त्र्यादिरूप इत्यन्वयः । गुणोत्कर्षो भेद इत्येक एवार्थः । अतो न विरोधः । यदि स्वातन्त्र्याद्युत्कृष्टगुणलक्षणे हरेः सर्वस्माद्भेदे सर्वेषां वेदानां महातात्पर्यं तदा वक्तव्यं हरिः कुतः सिद्ध इति । वेदेभ्य एवेति चेन्न । उभयत्र महातात्पर्यविरोधादित्यत आह- **स्वरूपमेवेति ।।**

हरेरिति वर्तते । **अयं** स्वातन्त्र्यादिलक्षणः । तथा च स्वातन्त्र्यादिरूपभेदस्वरूपे हरौ तात्पर्यमित्यर्थः ।

ननु भेदशब्दो भावसाधनः करणसाधनश्च । तत्र भेदनं भेद इति भावसाधनेनान्योन्याभावो व्यावृत्तिरूपोऽभिधीयते । भिद्यतेऽनेनेति भेद इति करणसाधनेन स्वातन्त्र्यादिरसाधारणो धर्मः कथ्यते । तत्राद्य एवात्र प्रकृतः । द्वितीयस्तु तादर्थ्येन । तथा च हरेः सर्वतो व्यावृत्तावसाधारण-धर्मस्वरूपे हरौ च वेदानां महातात्पर्याङ्गीकारे पुनर्वाक्यभेदः स्यादित्यत आह- **व्यावृत्तिश्चेति ॥** वस्तुनो याऽन्यस्माद्व्यावृत्तिर्या च स्वरूपता तदुभयं तावदेकमेवेत्यर्थः । तत्कुत इत्यत आह- **सर्वेति ॥** अयं स्वरूपशब्दान्तर्गतो रूपशब्दो हि वस्तुपर्यायः, स्वपरसाधारण इति स्वशब्दस्य प्रयोगः । ततश्च 'सिद्धे सत्यारम्भो नियमार्थः' इतीतरसर्वव्यावृत्तिबोधनाय स्वशब्दः प्रयुज्यत इति लभ्यते । एवं च सर्वतो व्यावृत्तं रूपं स्वरूपमित्यर्थः सम्पद्यते । धर्मवचनानां धर्म्यभिधायक-त्वात् । स्वरूपस्य भावस्स्वरूपता । प्रवृत्तिनिमित्तमेव शब्दस्य तद्धितवाच्यो भाव इति स्वरूपता व्यावृत्तिश्चेत्येक एवार्थ इत्यर्थः । न चात्र भावभवित्रोर्भेदोऽस्ति । केवलं विशेषबलेनैव भाव-भवितृभावः । अतः सर्वस्माद्व्यावृत्तिरपि हरेः स्वरूपमेवेति द्विविधे भेदे हरौ च तात्पर्यमित्येतन्न विरुध्यते । विशेषविवक्षायान्तु स्वातन्त्र्यादिगुणैस्तन्निमित्तया सर्वतो व्यावृत्त्या च विशिष्टे हरौ तात्पर्यमिति भावः । अस्त्वेवं विरोधाभावः । तथाप्युभयविधभेदप्रतिपादकवाक्यानां वेदेऽदर्शनात् कथं तत्र तात्पर्यमुच्यत इत्यत आह- **सर्वेति ॥** एवशब्देन सर्वासत्त्ववादित्वं व्यावर्तयति । अतः, **अन्याः** 'यः सर्वज्ञः' इत्याद्याः सर्वा अपि श्रुतयो विष्णोरसाधारणधर्मान् वदन्तीति शेषः । तदेवं 'सन्ति च भेदे सर्वागमाः' इत्येतत्सिद्धमिति ।

**(र.टि.)** ननु स्वरूपशब्दान्तर्गतस्य स्वशब्दस्य व्यावृत्त्यर्थत्वात्कथं व्यावृत्तवस्तुलाभ इत्यत आह- **धर्म-वचनानामिति ॥** स्वशब्दस्य व्यावृत्त्यर्थत्वेऽपि कथं स्वरूपताव्यावृत्त्योरैक्यमित्यत आह- **प्रवृत्तिनिमित्तमे-वेति ॥** न चैवं स्वभावव्यावृत्त्योरैक्यं स्यात्, न स्वरूपताव्यावृत्त्योरिति वाच्यम् । रूपशब्दसमभिव्याहृतस्यैव स्वशब्दस्य 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन व्यावृत्त्यर्थत्वाङ्गीकारात् । अत एवायमित्येतत्स्वरूप-शब्दान्तर्गत इति व्याख्यातम् । नन्वेवमपि व्यावृत्तिविष्णुस्वरूपतयोरभेदोऽस्तु, विष्णुव्यावृत्त्योः कथमभेद इत्यत आह- **न चात्रेति ॥** नन्वेवं विष्णुतद्गतस्वातन्त्र्यादिधर्मतन्निमित्तकव्यावृत्तीनामभेदे 'सर्वस्माद्भिन्नत्वेन सर्वस्माद्विशिष्टत्वेन ज्ञेयम्' इत्यादि कथमित्यत आह- **विशेषविवक्षायान्त्विति ॥**

**(रा.टि.) सर्वागमा भेदविषया इत्येतदिति ॥** 'सन्ति च भेदे सर्वागमाः' इति प्रागुक्तमित्यर्थः । कुतो विरोध इत्यत उपपादयति- **न हीति ॥ एकस्येति ॥** एकवाक्यतापन्नस्य, **उभयत्र** भेदे गुणोत्कर्षे चेत्यर्थः । **(रा.टि.)** वाक्यभेदप्रसङ्गादिति भावः । कुत इत्यत आह- **एकेति ॥ अर्थैकत्वेति ॥** 'अर्थैकत्वादेकं वाक्यम्' इति जैमिनिसूत्रोक्तेरिति भावः । तच्छब्दचशब्दयोरन्वयेन अनुवादोऽयम्- **स च भेद इति ॥ भावसाधन इति ॥**

'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते'

इत्युक्तो धात्वर्थरूपो भावः साधनं प्रत्ययोत्पत्तौ अस्य शब्दस्य स भावसाधनः । एवं करणसाधन इत्यत्रापि ज्ञेयम् । 'भिदिर् विदारणे' इत्यतो भावे करणे च 'अकर्तरि च कारके' इति सूत्रेण घञ्प्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे भेदशब्दरूपमिति भावः । व्यावृत्तिरूप इत्युत्तरोपयोगायोक्तम् । **तादर्थ्येनेति ॥** भेदसिद्ध्यर्थत्वे-नेत्यर्थः । भेदकाभावे भेदस्यासिद्धेरिति भावः । स्वशब्दोक्त्या कथमिष्टसिद्धिरित्यत आह- **ततश्चेति ॥** स्वपरसाधारणरूपपदेनैव स्वस्वकीयरूपग्रहणसिद्धावपि पुनः स्वेतिशब्दः स्वस्यैव रूपं न पररूपमिति नियमार्थः सन् रूपस्येतरसर्वव्यावृत्तिबोधनाय प्रयुज्यत इत्यर्थः । अत एव पाणिनीये 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रे स्वमिति रूपविशेषणोक्तिः । फलितमाह- **एवमिति ॥** व्यावृत्त्यर्थं स्वेति प्रयोगे सतीत्यर्थः । **व्यावृत्तं** व्यावृत्तिधर्मकम् । व्यावृत्तिवाचिनः स्वशब्दस्य कथं व्यावृत्तिमत्त्वमित्यत आह- **धर्मवचनानामिति ॥** तावता कथं स्वरूपताव्यावृत्त्योरैक्यमित्यत आह- **स्वरूपस्य भाव इति ॥** को भावपदार्थ इत्यत उक्तम्- **प्रवृत्तिनिमित्त-मेव शब्दस्येति ॥** स्वरूपशब्दस्य प्रवृत्तिनिमित्तं स्वरूपतेति तल्प्रत्ययरूपतद्धितवाच्यो भावपदार्थः । इतीतिशब्दो हेत्वर्थः । स्वशब्दस्य व्यावृत्तिवाचिनो रूपपदसमभिव्याहारेण धर्मिपरतया व्यावृत्तं रूपं स्वरूपमित्यर्थः । स्वरूपस्य भावः स्वरूपतेत्युक्त्या व्यावृत्तरूपस्य भावो

व्यावृत्ततेत्युक्तं भवति । व्यावृत्तस्य भावश्च व्यावृत्तशब्द-प्रवृत्तिनिमित्तं व्यावृत्तिरेव । तथा च व्यावृत्तिः स्वरूपतेत्येक एव अर्थ इत्यर्थः। ननु व्यावृत्तेः स्वरूपतायाश्चैक्यमस्तु, विष्णुनैक्यं कथं, येन वाक्यभेददोषोद्धार इत्यत आह- **न चात्रेति ॥** हरावित्यर्थः । **भावेति ॥** धर्मधर्मिणोरि-त्यर्थः । **विशेषेति ॥** भेदकार्यनिर्वाहकत्वेन भेदप्रतिनिधिविशेषबलेनेत्यर्थः। नन्वेवं 'सदागमैकविज्ञेयम्' इत्युक्तस्य 'अतः सदागमैरेव सर्वस्माद्भिन्नत्वेन सर्वस्माद्विशिष्टत्वेन च ज्ञेयो भगवान्' इति परिच्छेदान्ते कथं भेदेनोपसंहार इत्यत आह- **विशेषविवक्षायां त्विति ॥** भेदप्रतिनिधिविशेषेत्यर्थः । **अतोऽन्या इति ॥** 'नेति नेति' इति श्रुतितोऽन्या इत्यर्थः ।

**(श्री.टि.) इत्युक्तमिति ॥** 'तथा हि- अतत्त्वमसीति नवकृत्व उपदेशः सदृष्टान्तकः' इति प्रतिज्ञातमि-त्यर्थः । **उपपादितमिति ॥** न हि शकुनिसूत्रयोरित्यारभ्यैतावता ग्रन्थेनेत्यर्थः । **अर्थैकत्वेति ॥** 'अर्थैकत्वादेकं वाक्यम्' इति जैमिनिसूत्रादित्यर्थः । ननु कथमनेनोक्तविरोधपरिहार इत्यत आह- **गुणोत्कर्ष इति ॥ भावसाधन इति ॥** भावो धात्वर्थः तं साधयति प्रतिपादयतीति भावसाधन इत्यर्थः । **करणसाधन इति ॥** करणत्वप्रतिपादक इत्यर्थः । **तादर्थ्येनेति ॥** भेदसिद्ध्यर्थत्वेनेत्यर्थः । **वस्तुपर्याय इति ॥** अभिधेयार्थक इत्यर्थः । **स्वपरसाधारण इति ॥** स्वपराभिधायक इत्यर्थः । ननु स्वशब्दप्रयोगेण कथमितरसर्वव्यावृत्तिबोध इत्यत उक्तम्- **सिद्धे (श्री.टि.) सतीति ॥** स्वपरसाधारणरूपशब्देनैव स्वस्मिन् सिद्धे प्राप्ते सति पुनरारम्भो नियमार्थः, स्वशब्देन पुनः प्रतिपादनं स्वाख्यमेव रूपम् अभिधेयमिति नियमार्थमित्यर्थः । एवं च स्वशब्दः स्वेतरसमस्तवस्तुव्यावृत्तिं प्रतिपादयतीति भावः । नन्वितरसर्वव्यावृत्तिबोधनाय यदि स्वशब्दः प्रयुज्यते तर्हि स्वरूपशब्दान्तर्गतस्य स्वशब्दस्य व्यावृत्त्यर्थकत्वमेव प्राप्तं तत्कथं व्यावृत्तवस्तुवाचकत्वम् । तथा च सर्वतो व्यावृत्तं रूपं स्वरूपमित्युक्तमसदित्यत आह - **धर्मवचनानामिति ॥** एवं च व्यावृत्तिरूपधर्मवाच्यपि शब्दो व्यावृत्तवस्तुरूपधर्म्यभिधायकोऽपि भवति । धर्मधर्मिणोरभेदादिति भावः ।

ननु स्वशब्दस्य व्यावृत्त्यर्थकत्वेऽपि व्यावृत्तिश्च स्वरूपतेत्युक्तं व्यावृत्तिस्वरूपतयोरैक्यं कथं प्राप्तमित्यतस्तदुप-पादयति- **प्रवृत्तिनिमित्तमेव चेति ॥** 'तस्य भावस्त्वतलौ' इति सूत्रोक्तत्वतल्प्रत्ययरूपतद्धितवाच्यो धर्मः शब्दस्य यत्प्रवृत्तिनिमित्तं तदेव यथा घटत्वादि। एवं च प्रकृते रूपशब्दसमभिव्याहृतस्वशब्दप्रवृत्तिनिमित्तभूतैव व्यावृत्तिः, स्वरूपतेत्यत्र स्वरूपस्य भावः स्वरूपतेति तद्धित(भूत)स्वरूपतल्प्रत्ययवाच्यो धर्म इति तयोर्भेदा-भावाद्व्यावृत्तिस्वरूपतयोरैक्यमित्यर्थः । ननु व्यावृत्तिस्वरूपतयोरैक्येऽपि विष्णुस्वरूपव्यावृत्त्योः कथमैक्य-मित्यत आह- **न चात्रेति ॥** तथा च धर्मधर्मिणोरभेदाद्भगवद्धर्मभूतव्यावृत्तिभगवत्स्वरूपयोरैक्यमिति भावः । ननु भगवत्स्वरूपव्यावृत्त्योरैक्ये भगवतस्सर्वस्माद्व्यावृत्तिरिति धर्मधर्मिभावायोग इत्यत आह- **केवल-मिति ॥ द्विविधे** व्यावृत्तिरूपे व्यावर्तकधर्मरूपे च । ननु भेदकधर्मव्यावृत्त्योर्विष्णुस्वरूपेणाभेदे स्वातन्त्र्यादिगुण-विशिष्टे सर्वव्यावृत्त्या च विशिष्टे हरौ तात्पर्यमित्येतन्न युक्तं तस्याभेदसापेक्षत्वादित्यत आह- **विशेषविव-क्षायामिति ॥** अभेदे भेदकार्यकारिविशेषविवक्षयेति यावदित्यर्थः । **उभयविधेति ॥** व्यावृत्तिव्यावर्तकधर्म-रूपोभयविधेत्यर्थः । **एवशब्देनेति ॥** नेति नेतीत्यादिका श्रुतिः सर्वव्यावृत्ततामेव विष्णोर्वदति । न तु किमपि जगन्नास्तीति सर्वासत्त्वं प्रतिपादयतीत्येवं सर्वासत्त्ववादित्वम् एवशब्देन व्यावर्तयतीत्यर्थः ।

**(पां.टि.) एकवाक्यत्वस्येति ॥**

'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्'

इति जैमिनिवचनादिति भावः । **विरोधादिति ॥** वाक्यभेदप्रसङ्गादिति भावः । **भावसाधन इति ॥** भावो धात्वर्थः स साधनम् अभिधेयं यस्येति बहुव्रीहिः । ततश्च भावाभिधायक इत्यर्थः । एवं करणसाधन इत्यस्यापि करणाभिधायक इत्यर्थः । **रूपशब्दो हीति ॥** 'स्वं रूपं शब्दस्य' इत्यत्र रूपशब्देन प्रसक्तस्य बाह्यार्थस्य व्यावृत्तये स्वमित्युक्तत्वात्' इति टीकाकृताऽन्यत्रोक्तत्वादिति भावः । अत्र शब्दस्येति 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । अस्य च अध्याहृतेन ग्राह्यमित्यनेन सम्बन्धः । ग्राह्यमिति च णिजन्ताद्यत् । तेन शब्दस्य स्वयमेव रूपं प्रत्यापयति । न लोकवद्बाह्यार्थमिति सूत्रार्थः सम्पद्यते । अत्र यद्यपि स्वात्मीयवाचिना स्वशब्देन तस्य शब्दस्येवार्थस्य प्रतिपादनेऽपि नार्थस्य सत्त्वम्। अर्थो हि स्वप्रतिपत्तौ सम्बन्धग्रहणमपेक्षते। पर्यायैरपि प्रतिपादनात् साधारणश्च । अनुकरणशब्दैरप्रत्यायनादनित्यसम्बन्धश्चेति । किं नाम प्रतीतौ उपदेशानपेक्ष-**(पां.टि.)** त्वादसाधारणत्वात् नित्यसम्बन्धित्वाच्च शब्दरूपमेव स्वं सिद्ध्यतीति । अर्थस्याप्रसङ्गात् किं रूपग्रहणेनेति वैयर्थ्यमाशङ्क्य सति तु व्यावर्त्ये तत्रैवोपक्षयाद्रूपग्रहणस्याज्ञापकत्वेऽपि प्रकृते रूपग्रहणस्य व्यावर्त्याभावेनानुपक्षीणं यद्रूपग्रहणं करोति तत् ज्ञापयत्याचार्यः । अस्त्यन्यच्छब्दरूपात् स्वं शब्दस्येति । किं पुनस्तत्? बाह्योऽर्थः । ततश्च शास्त्रे शब्दस्वरूपेण समानकक्ष्योऽर्थ इति सिद्धौ स्वशब्देन बाह्यार्थस्य प्रसक्तौ तद्व्यावृत्त्यर्थं रूपपदं प्रयुक्तम् । तच्च सामान्याकारवाचकम् । तत्र व्यापकत्वात् शब्दत्वादिसाधारणाकारस्यैव

रूपपदेन विवक्षायामुक्तातिप्रसङ्गेन सूत्रस्यैवानर्थक्यापत्त्या असाधारणस्यैवाग्निशब्दत्वादे रूपस्य विवक्षणीयत्वे-नार्थस्य प्रसङ्गान्न तद्वाचिभ्यः सर्वशब्देभ्यः प्रत्ययोत्पत्तिप्रसङ्ग इति युक्तः सूत्रारम्भ इति मञ्जर्यादौ निर्णीतत्वान्न रूपशब्देन प्रसक्तस्य बाह्यार्थस्य स्वशब्देन व्यावृत्त्यभिधानमुचितम्। तथाप्युक्तातिप्रसङ्गनिरासार्थं प्रवृत्तत्वेऽप्यस्य सूत्रस्य रूप्यते निरूप्यते इति रूपमभिधेयम्। तच्चोभयोरपि शब्देन प्रतिभासात् शब्दोऽर्थश्चेति द्वयमपि। तत्रापि शब्दरूपमेव रूपं प्रतीतावुपदेशानपेक्षत्वादिहेतुभ्यः। न त्वर्थोऽपि प्रतीतावुपदेशादिसापेक्षत्वादिहेतुभ्यः। ततश्चान्तरेणापि स्वशब्दं रूपशब्देन स्वरूपस्यैव प्राप्तेरव्यावर्तकत्वान्न स्वशब्देन प्रयोजनमिति शङ्कायां सिद्धे सत्यपि यत्स्वग्रहणं करोति तज्ज्ञापयत्याचार्यः- अस्त्यन्यत् स्वाद्रूपं शब्दस्येति। किं तत्? अर्थः। ततश्चार्थस्यापि शब्दस्वरूपसमानकक्ष्यत्वसिद्ध्या रूपशब्देन प्रसक्तिसम्भवात्तद्व्यावृत्त्यर्थं स्वशब्दोपादानम्। ततश्च बाह्यार्थ-व्यावृत्तस्यासाधारणशब्दरूपस्यैव लाभात् न सर्वेभ्यः प्रत्ययोत्पत्तिप्रसङ्ग इति तत्सूत्रवर्णकान्तराभिप्रायेणायं ग्रन्थः प्रवृत्त इति द्रष्टव्यम्।

ननूक्तरीत्या स्वरूपशब्दान्तर्गतस्य स्वशब्दस्य व्यावृत्त्यर्थकत्वात् कथं व्यावृत्तवस्तुलाभ इत्यत आह- **धर्म-वचनानामिति ॥** धर्मधर्मिणोरभेदेन व्यावृत्तिरूपधर्मवाचकस्य व्यावृत्तिविशिष्टधर्म्यभिधायकत्वादित्यर्थः। नन्वेवं स्वशब्दस्य व्यावृत्त्यर्थकत्वे कथं व्यावृत्तिस्वरूपतयोरैक्यलाभ इत्यत आह- **प्रवृत्तिनिमित्तमेवेति ॥** न चैवं स्वताव्यावृत्त्योरैक्यं स्यात्, न स्वरूपताव्यावृत्त्योरैक्यमिति वाच्यम्। रूपशब्दसमभिव्याहृतस्य स्वशब्दस्यैव 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन व्यावृत्त्यर्थत्वाङ्गीकारात्। अत एवायमिति एतत्स्वरूपशब्दान्तर्गत इति व्याख्यातम्। नन्वेवमपि व्यावृत्तिविष्णुस्वरूपतयोरभेदेऽपि विष्णुव्यावृत्त्योः कथमभेद इत्यत आह- **न चात्रेति ॥** कथं तर्हि अयं भावः अयं भवितेति व्यवहार इत्यत आह- **केवलमिति ॥ द्विविध इति ॥** अन्योन्याभावरूपे स्वातन्त्र्यादिरूपे चेति एवं द्विविधे इत्यर्थः। नन्वेवं विष्णुतद्गतस्वातन्त्र्यादिधर्मतन्निमित्त-कव्यावृत्तीनामभेदे 'सर्वस्माद्भिन्नत्वेन सर्वस्माद्विशिष्टत्वेन च ज्ञेयम्' इत्यादिकं कथमित्यत आह- **विशेष-विवक्षायामिति ॥**

**(व्या.टि.)** शिष्यशेमुषीमनुकूलयिष्यन् वृत्तवर्तिष्यमाणसङ्गतिं दर्शयति - **एवमिति ॥** दुश्शकमिति खलन्तम्। **एक एवेति ॥** भेदशब्दस्य करणसाधनत्वादित्यर्थः। **प्रकृत इति ॥** ऐक्यप्रतिषेधत्वेन साक्षात्प्रकृत इत्यर्थः। भावभवित्रोरभेदं वक्तुं व्यावृत्तेरपि भावप्रत्ययार्थतया भावत्वं साधयति- **तदुभयमिति ॥** उभयपद-**(व्या.टि.)**वाच्यमित्यर्थः। अतो न वाक्यभेद इति भावः। एतेन स्वरूपतामुपेत्य व्यावृत्तिमनङ्गीकुर्वाणस्याद्वैतिनो व्याहतिः सूचिता। ननु व्यावृत्तिवाचकस्य पदस्य कथं धर्मवाचिरूपपदसामानाधिकरण्यमित्यत आह- **धर्म-वचनानामिति ॥** नीलमुत्पलमित्यादिविशेषणपदानां सामानाधिकरण्यबलेन तद्द्वारा विशेष्यपरत्वादि-त्यर्थः। **प्रवृत्तिनिमित्तमेवेति ॥** प्रकृतिप्रवृत्तिनिमित्तमेव न धर्ममात्रं भावप्रत्ययार्थ इत्यर्थः। तथापि भावभवितृ-रूपार्थभेदाद्वाक्यभेदःइत्यत आह-**न चात्रेति ॥** 'एवं धर्मान् पृथक्पश्यन्' इति धर्मानुक्त्वा पृथक्त्वनिषेधादि-त्यर्थः। यथोक्तमनुव्याख्याने-

'उक्त्वा धर्मान् पृथक्त्वस्य निषेधादत एव हि।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥' इति।

अभेदे कथं भावभवितृभावः। तस्य भेदनिबन्धनत्वादित्यत आह- **केवलमिति ॥** प्रतिनिधेरपि मुख्यकार्य-करत्वादित्यर्थः। पृथक् स्वरूपमात्रतात्पर्ये अखण्डार्थता श्रुतीनामित्यत आह- **विशेषविवक्षयेति ॥** तथा च विशिष्टार्थपरत्वान्नाखण्डार्थतेति भावः। **उभयविधेति ॥** व्यावृत्तिव्यावर्तकरूपोभयविधेत्यर्थः। **व्यावर्तय-तीति ॥** 'स वा एष नेति नेत्यात्मा' इति प्रथमान्तपदसामानाधिकरण्यान्नञो व्यावृत्तिपरत्वमेव न निषेधपर-त्वम्। तथात्वेऽधिकरणवाचिनि सप्तमीप्रसङ्गादिति भावः। अतोऽन्या इत्यत्रापि पूर्वकर्मानुवृत्तावैकार्थ्य-प्राप्तेरपूर्वकर्माध्याहरति- **असाधारणधर्मानिति ॥** अखण्डार्थं निगमयति- **तदेवमिति ॥**

**मूलम् - 'अहं ब्रह्मास्मि' 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' 'योऽसावादित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' इत्यादि त्वन्तर्याम्यपेक्षया। 'स यश्चायं पुरुषे यश्चासा-वादित्ये स एकः','अ इति ब्रह्म तत्रागतमहमिति तस्योपनिषदहम्' इति,**

**'अहंनामा हरिर्नित्यमहेयत्वात्प्रकीर्तितः ।**
**त्वं चासौ प्रतियोगित्वात् परोक्षत्वात् स इत्यपि ।**
**सर्वान्तर्यामिणि हरावस्मच्छब्दविभक्तयः ।**
**युष्मच्छब्दगताश्चैव सर्वास्तच्छब्दगा अपि ।**
**सर्वशब्दगताश्चैव वचनान्यखिलान्यपि ।**
**स्वतन्त्रत्वात् प्रवर्तन्ते व्यावृत्तेऽप्यखिलात् सदा ।**
**तत्सम्बन्धात्तु जीवेषु तत्सम्बन्धादचित्स्वपि ।**
**वर्तन्त उपचारेण तिङ्पदान्यखिलान्यपि ।**
**तस्मात् सर्वगतो विष्णुरेको भिन्न ततो बहुः ॥'**

**इति नारायणश्रुतिः ।**

**'सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥'**

**इति भगवद्वचनम् ।**

**(त.मं.)** ऐक्यश्रुतीनां गतिमाह- **अहमिति ॥ तत्र** ब्रह्मणि वाचकत्वेनाऽगतमहमिति पदम् **उपनिषद्** गुह्यनाम। **तस्मात्** सर्वनियामकत्वात् सर्वगतो विष्णुः । **ततः** सर्वनियामकत्वेन सर्वगतत्वत एकश्च बहुः । न च तावता भेदवानित्याह- **अभिदिति ॥** विशेषेणैव तद्बहुत्वमित्या-कूतम् ।

**टीका -** तथाऽपि 'न चाभेदे कश्चिदागमः' इत्यसत् । अहं ब्रह्मास्मीत्याद्यनेकागमसद्भावादित्यत आह- **अहमिति ॥ तद्यः** स प्रसिद्धो योऽहं **सोऽसौ** सूर्ये स्थितः । **योऽसौ** सूर्ये स्थितः परमात्मा सोऽहम् । प्रवृत्तमिति शेषः । तत्राद्ये वाक्ये अहंशब्देनान्तर्यामिणं निर्दिश्य तस्य देशकालपूर्णत्वलक्षणं ब्रह्मत्वमुच्यते । द्वितीये तु स्थानभेदेनान्तर्यामिणोरपि भेदशङ्कायां स्वान्तर्यामिणः सूर्यान्तर्गतेन परमात्मनैक्यमभिधाय पुनरिन्द्रार्जुनादिवदवान्तरविशेषनिरासाय योऽसौ सोऽहमिति सूर्यान्तर्गतस्य स्वान्तर्यामिणैक्यमुच्यते । तृतीयेऽप्येवमेव । आदिपदोक्तानि 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवम्' इत्यादीन्यप्यन्तर्यामिविषयतया योज्यानि । प्रतीतार्थपरित्यागेनार्थान्तरकल्पनं कुत इति चेत्समाख्यानादित्याह- **स यश्चेति ॥ स** प्रसिद्धो योऽयमित्यर्थः । अहंशब्दस्यान्तर्यामिवाचित्वं कुत इत्यत आह- **अ इतीति ॥** अहमित्यपि पदं तत्र ब्रह्मविषयतया **आगतम्** अवगतमित्यर्थः ।

अहंशब्दवाच्यत्वं हरेः किं जीवाभेदेन निमित्तेनेत्याशङ्कां परिहरन्नपेक्षिताशेषार्थपरां श्रुतिं पठति- **अहंनामेति ॥** नित्यमहेयत्वादित्यनेन नञ्पूर्वकात् 'ओ हाक् त्यागे' इत्यस्मात्कर्मणि कप्रत्यय इत्युक्तं भवति । यद्यप्यस्मच्छब्दस्यैवेदं रूपम्, तथाऽपि हरौ तद्वृत्तौ न जीवाभेदो निमित्तमिति प्रतिपादनाय निर्वचनं कृतम् । जीवेऽप्यहंशब्दप्रवृत्ताविदमेव निमित्तम् । स्थान्यादेशभावस्य काल्पनिकत्वादस्मदादेशस्याप्येवं निर्वचनं युक्तम् । **प्रतियोगित्वाद**भिमुख्यात् ।

अनेन तत्त्वमस्यादिवाक्ये त्वंशब्देनान्तर्याम्युच्यत इत्यपि सूचितम् । स इत्यपीत्युपलक्षणम् । 'भूतानि विष्णुर्भुवनानि विष्णुः' इत्यादौ भूताद्यन्तर्यामी भूतादिशब्दैः तेन तेन निमित्तेनोच्यत इत्यपि ग्राह्यम् । अहमादिशब्दप्रवृत्तावपि 'अहं कविरुशना पश्यतामा' इत्यादि कथमित्यत आह- **सर्वान्तर्यामिणीति ॥ सर्वशब्दगता** भूतादिसर्वशब्दगताः

सप्तविभक्त्यन्ता अस्मदादिशब्दा इत्यर्थः। न केवलमेकवचनान्येव। किं तर्हि? अखिलान्यपि वचनानि। विभक्तिवृत्तौ निमित्तं **स्वतन्त्रत्वादिति।** कारकेषु हि विभक्तयो वर्तन्ते सङ्ख्याविशेषणत्वेनापि निमित्तत्वात्। कारकश्च क्रियाहेतुः। सर्वकारकाणाञ्च प्रधानक्रियासु अवान्तरक्रियास्वपि हरिरेव स्वतन्त्र इति युक्ता तत्र सर्वविभक्तिवृत्तिः। एकत्वद्वित्वबहुत्वसङ्ख्याया भेदरहितेऽपि हरौ सत्त्वात् सर्ववचनवृत्तिरपि। तर्हि कथमन्यत्र व्यवहार इत्यत आह- **तत्सम्बन्धादिति ॥** तत्सम्बन्धलब्धेन निमित्तेन। न चात्र लक्षणोच्यते। **उपचारेणेति ॥** परममुख्यवृत्त्यपेक्षया हीनया वृत्त्येत्यर्थः। **तिङ्पदानीति ॥** तिङन्तपदानीत्यर्थः। अस्मादादिषूपपदेषु विहितानां तेषां तद्वृत्तौ वृत्तेः सुलभत्वात्। एवमहं ब्रह्मास्मीत्यादिवाक्यगताहमादिशब्दानां विष्णुवाचित्वे कस्तेषां वाक्यानामर्थः सम्पन्न इत्यत आह- **तस्मादिति ॥** सर्वगतो विष्णुरेक इत्यनेन 'तद्योऽहम्' इत्यादेरर्थ उक्तः। बहुः विपुलः पूर्णः, तेन 'अहं ब्रह्मास्मि' इत्यादेरर्थः। **ततः, सर्वस्माद् भिन्न** भिन्नोऽपीत्यभेदनिमित्तनिरासानुवादः।

अयमत्राभिप्रायः- अस्मदादयः शब्दाः प्रत्यगादिवाचकत्वे तावत्प्रसिद्धाः। प्रत्यगादिश्च सर्वदा पिण्डीभूत एव। तत्राहेयत्वादिकं निमित्तमपराधीनमन्तर्यामिणि। तत्प्रेरितानि जीवादौ। तदेवं मुख्यामुख्यत्वाभ्यां पिण्डविषयं शब्दमविवेकिनो बाह्येषु जीवादिष्वेव प्रयुञ्जते यथा दहतिशब्दं काष्ठे। प्राज्ञास्त्वमुख्यमंशमनादृत्य मुख्यार्थे हरौ प्रयुञ्जते। परैरप्यहंशब्दस्येदमनिदंरूपवस्तु-गर्भपिण्डार्थताऽङ्गीकृतैवेति।

पूर्वं श्रुतिसमाख्योक्ता। इदानीं स्मृतिसमाख्यामप्याह- **सर्वभूतेष्विति ॥ विभक्तेषु** परस्परं परमेश्वराच्च भिन्नेषु **सर्वभूतेषु** चेतनाचेतनेषु **अविभक्तं** स्वगतभेदवर्जितम्। तेषां व्ययेऽप्यव्ययमेकं भावं सर्वोत्तमं पदार्थं **येन** ज्ञानेन, **ईक्षते** विषयीकरोति तज्ज्ञानं सात्त्विकं विद्धीत्यर्थः।

**(र.टि.) स प्रसिद्ध इति ॥** अनेन स चासौ यश्चेति विग्रहप्रदर्शनपूर्वकं वैयर्थ्यपरिहारः कृतो भवति। ननु यदि 'अहं ब्रह्मास्मि' इत्यादिवाक्यजातमन्तर्याम्यपेक्षया प्रवृत्तं तर्ह्यन्तर्यामिणो ब्रह्माभेदादेः सिद्धत्वात्तद्बोधनं व्यर्थं स्यादित्यतस्तदर्थमाह- **तत्राद्य इत्यादिना ॥** नन्वस्मच्छब्दरूपस्याहमित्यस्य रूढत्वान्न निर्वचनीयत्वमित्या-शङ्क्य परिहरति- **यद्यपीति ॥** जीवे रूढत्वेऽपि हरौ तदभावान्निर्वचनं सार्थकमिति भावः। ननु तर्हि नानार्थकत्वं स्यादित्यत आह- **जीवेऽपीति ॥** ननु तथाप्यादेशरूपशब्दस्य स्थानिशब्दार्थार्थकत्वेन न निर्वचनीयत्वमित्यत आह- **स्थान्यादेशभावस्येति ॥** अहमिति शब्दः प्रत्यगर्थादिवाचकत्वेन स्वतः सिद्ध एव न तु 'त्वाहौ सौ' इतीति भावः। ननूक्तनिर्वचनबलेन प्रथमैकवचनान्तास्मदादिशब्दस्य प्रवृत्तावपि तद्द्विवचनबहुवचनद्वितीयादि-विभक्त्यन्तानां मां मा त्वां त्वा इत्यादिशब्दानां कथमित्यभिप्रायेण शङ्कते- **अहमादीति ॥** अत एव द्वितीयाविभक्त्यन्तमेतिपदोपेतऋगन्त्यपादोदाहरणं कृतम्। आदिपदेन 'मम देवासोऽनुकेतमायन्' इत्यादेर्ग्रह-णम्। ननु स्वादिप्रत्ययमात्रस्य पदत्वाभावेनाप्रतिपादकत्वात्कथमस्मच्छब्दविभक्तय इत्याद्युक्तमित्यत आह- **सप्तविभक्त्यन्ता इति ॥** नन्वेकवचनाद्या विभक्तयः। एकवचनादीनि त्वेकत्वादिसङ्ख्याविवक्षायां भवन्ति। 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्यत्र द्व्यादिशब्दानां भावप्रधानत्वेनाभियुक्तैर्व्याख्यात-त्वात् तत्कथं कारकेषु विभक्तयो वर्तन्त इत्युक्तमित्यत आह- **सङ्ख्याविशेषणत्वेनापीति ॥** कारका-श्रितैकत्वादिसङ्ख्यायामेवैकवचनादिकं भवति। न निराश्रयसङ्ख्यामात्रे। तथा च सङ्ख्याधारत्वेन कारकस्यापि विभक्तिप्रवृत्तौ निमित्तत्वादित्यर्थः। **प्रधानक्रियास्ववान्तरक्रियास्विति ॥** इन्द्रियादिकरणादीनां ज्ञानादि-लक्षणप्रधानक्रियासु, अर्थसन्निकर्षजनकीभूतावान्तरक्रियास्वित्यर्थः। तत्सम्बन्धलब्धेन निमित्तेनेत्युक्तमेवोप-पादयति- **न चात्रेति ॥ पिण्डीभूत इति ॥** अन्तर्भावितविष्णुर्जीव इत्यर्थः। **सर्वोत्तममिति ॥** एकपदस्यैक्यार्थत्वे अविभक्तमित्युक्ताविशेषप्रसङ्गादिति भावः।

**(रा.टि.)** आकाङ्क्षां पूरयति- **इति शेष इति ॥** अपेक्षयेत्यनन्तरमिति भावः। **अवान्तरविशेषेति ॥** अर्जुनगतयावद्व्यापारानुसन्धानमिन्द्रस्येव नेन्द्रगतसर्वानुसन्धानमर्जुनस्येत्येवंरूपविशेषनिरासायेत्यर्थः। **एव-मेवेति ॥** आदित्यान्तर्गतस्वान्तर्यामिणोरैक्योक्तिपरमेवेत्यर्थः। **योज्यानीति ॥ यो** जीवः **अन्यां** स्वस्माद्भिन्नां देवतां **अन्योऽसावहं** मदन्तर्यामी चान्य इत्युपास्ते यथा पशुर्न वेद तथा स न वेदेत्येवंरूपेण योज्यानीत्यर्थः। अग्रे स इति श्रवणादपौनरुक्त्यायाह- **स**

**प्रसिद्ध इति ।।** **इत्यपीति ।।** न केवलमित्यपेरर्थः । **नञ्पूर्वकात् ओ हाक् त्याग इति ।।** 'उपदेशेऽजनुनासिकः' इत्योकारस्य 'हलन्त्यम्' इति ककारस्यापगमे हा इत्यस्य निर्वचन-बलात्कर्मणि कप्रत्यये ककारव्यञ्जनस्य 'लशक्वतद्धिते' इति लोपे 'आतो लोप इटि च' इत्याकारलोपे 'नलोपो नञः' इति नकारव्यञ्जनस्य लोपे च 'अद' इत्यस्मात्स्वाद्युत्पत्तौ तस्यामि 'अमि पूर्वः' इति पूर्वरूपे न हीयते न त्यज्यते इत्यहमिति रूपमित्यर्थः । प्रत्यगर्थे निरूढस्याहंपदस्य किं निरुक्त्येत्याशङ्क्याह- **यद्यपीति ।। अस्मच्छब्दस्यैवेति ।।** अस्मदित्यस्मात्सुप्रत्यये 'त्वाहौ सौ' इति मपर्यन्तस्य अह इत्यादेशे 'शेषे लोपः' इति दकारस्य **(रा.टि.)** लोपे 'ङेप्रथमयोरम्' इति प्रथमाविभक्तेरमादेशे 'अमि पूर्वः' इति पूर्वरूपे अहमिति रूपमित्यर्थः । तर्ह्यन्यायोऽनेकार्थत्वदोष इत्यत आह- **जीवेऽपीति ।।** एतेन जीवेऽपि यौगिक एवाहंशब्दो न रूढः । योगेनोपपत्तौ गौरवान्न समुदायशक्तिकल्पनेत्युक्तं भवति । अर्थनिमित्तपाणिनिस्मृतिस्तु व्युत्पादनमात्रपरेति भावः । अत एवाह- **स्थान्यादेशभावस्येति ।।** रेखागवयेन सत्यगवयप्रदर्शनमिव बुद्धिकल्पितप्रकृतिप्रत्ययविभागेन सत्यभूतस्य नित्यस्याहंपदस्य प्रदर्शनपरत्वादित्यर्थः । युक्तमित्यत्र हेतुः- **काल्पनिकत्वादिति ।।** न हीयते न त्यज्यते स्वस्वरूपं कदाऽपि जीवेनेत्येवंरूपनिर्वचनमित्यर्थः । **तेन तेनेति ।।** भूतभवनादिशब्दप्रवृत्तिनिमित्तेनेत्यर्थः । **इत्यादि कथमिति ।।** प्रथमायाः प्रातिपदिकार्थमात्रे विधानेन अर्थविशेषाभावात् प्रातिपदिकार्थनिमित्तप्रथमाविभक्तिवृत्तिसम्भवेऽपि षष्ठ्याः स्वामित्वेनोपपत्तावपि 'मा मां पश्यत' इति 'मया सोऽन्नमत्ति' इत्यादिद्वितीयादिविभक्तेर्निरुक्त्या हरौ वृत्तेरयोगाद्विभक्त्यादिवृत्तिः कथमित्यर्थः । विभक्तिमात्रस्य प्रयोगाभावात्पृथगर्थानवबोधकत्वाच्चाह- **सप्तविभक्त्यन्ता इति ।।** बहुवचनार्थः सप्तेति । वचनान्यविभक्तेरभावान्न केवलं सप्त विभक्तयः, अपि त्वखिलान्यपि वचनानीति समुच्चयायोगादध्याहृतेनापिपदघटनामाह- **न केवल-मिति ।।** स्वातन्त्र्यस्य कथं विभक्तिवृत्तौ निमित्ततेत्यतो व्यनक्ति- **कारकेष्विति ।। विभक्तय इति ।।** द्वितीयादिविभक्तिपञ्चकाभिप्रायमेतत् । अत एव पश्यतामेत्यादेरेवोक्तिः । सुप्तिङौ हि 'विभक्तिश्च' इति सूत्रेण विभक्तिसंज्ञकौ । द्वितीयादिसुब्विभक्तयश्च 'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' 'सम्प्रदाने चतुर्थी' 'अपादाने पञ्चमी' 'अधिकरणे सप्तमी' इति कर्मादिषट्कारकेषु कारकवाचिशब्देषु तदन्ततया विहिताः कारकनिमित्तकतया वर्तन्त इत्यर्थः ।

ननु कथमेतत् । विभक्तयो ह्येकवचनादिरूपाः । एकवचनादीनि च 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति कर्मादिकारकगतैकत्वद्वित्वबहुत्वसङ्ख्यायां विवक्षितायामेव विधीयन्ते, कारकाणि त्वेक-वचनादिनिमित्तसङ्ख्यासु व्यावर्तकतया विशेषणान्येवेत्यत आह- **सङ्ख्याविशेषणत्वेनापीति ।।** राज्ञः पुत्र इत्यादावकारके राजादावेकत्वादौ सत्यपि द्वितीयैकवचनादेरदर्शनात्, राजानं पुत्रांश्च पश्य, राजा जीवति, राजभ्यः करं ददातीत्यादावेव सङ्ख्यानिमित्तकद्वितीयैकवचनादीनां दर्शनेन वचननिमित्तसङ्ख्याः प्रति विशेषण-त्वेनापि कारकाणां वचनात्मकविभक्तिनिमित्तत्वात्तत्र विभक्तयस्तन्निमित्तकतया वर्तन्ते इत्युक्तिर्युक्तेत्यर्थः। **क्रियाहेतुरिति ।।** 'क्रियां कुर्वद्धि कारकम्' इति प्रसिद्धेरिति भावः । **प्रधानेति ।।** कुठारेण काष्ठं छिनत्तीत्यादौ प्रधानच्छेदनादिक्रियासु, उद्यमननिपतनादिरूपावान्तरक्रियास्वित्यर्थः। **हरिरेव स्वतन्त्र इतीति ।।** 'न ऋते त्वत्क्रियते' इत्यादिश्रुतेरिति भावः । अयमर्थः । शब्दप्रवृत्तिर्हि द्वेधा । प्रवृत्तिनिमित्तस्य तद्गतत्वेन, अन्यगतं प्रति यथेष्टविनियोगकर्तृत्वरूपस्वातन्त्र्येण चेति । तत्राद्याऽहंत्वमित्यादिशब्दानामहेयत्वप्रतियोगित्वादिस्मृत्युक्त-तत्तच्छब्दप्रवृत्तिनिमित्तस्य 'सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वधर्मः सर्वकामः सर्वरूपः' इत्यादिश्रुत्या भगवन्निष्ठत्वेन तत्र प्रवृत्तिर्घटादिशब्दानां घटादाविव प्रसिद्धैव । अन्त्या तु 'तदधीनत्वादर्थवत्' इति सूत्र-**(रा.टि.)** सिद्धा । तत्र हि अन्यगतप्रवृत्तिनिमित्तं प्रति स्वातन्त्र्यं यन्निष्ठं तेन तत्र प्रवृत्तिरस्त्युत नेति सन्देहे भृत्यगतनिगडबन्धदुःखादिकं प्रति राज्ञः स्वातन्त्र्यसत्त्वेऽपि राजा बद्धो दुःखीति शब्दप्रवृत्तेरभावेनानैकान्त्यान्न तन्निमित्तेन अस्ति शब्दप्रवृत्तिरिति प्राप्ते भृत्यादिबन्धादिस्वातन्त्र्यमात्रनिमित्तेन बन्धादियोग्ये राजनि बद्धादि-शब्दाप्रयोगस्यामङ्गलत्वादिप्रतिबन्धनिमित्तत्वाद् भगवति तदयोग्ये अमङ्गलत्वशङ्काऽयोगेन जीवगतबन्धादि-स्वातन्त्र्यमात्रनिमित्तेन 'कार्यकारणबद्धौ तौ' इत्यादौ बद्धादिशब्दप्रयोगस्य लोके भृत्यगतजयं प्रति स्वातन्त्र्येण राज्ञि जयिशब्दप्रयोगस्य च दर्शनाद्भगवत्येव तेन निमित्तेन शब्दप्रवृत्तिरिति सिद्धान्तितत्वात् । तथा च कर्मादि-कारकगतक्रियाहेतुत्वरूपकारकत्वं प्रति स्वतन्त्रत्वात्तन्निमित्तकविभक्तयोऽपि तत्र प्रवर्तितुं युक्ता इति । तदुक्तं पद्मनाभतीर्थीये- 'सर्वस्वामित्वाद् भृत्यजयशब्दो राज्ञीव वर्तन्ते विभक्त्यादयः' इति । यद्वा स्वतन्त्रत्वादित्यस्य मुख्यहेतुत्वादित्यर्थः । भगवानेव कुठारचक्षुरादिकरणादिकारकेषु स्थित्वा तत्कार्यच्छिदाज्ञानादिकार्यं निर्वर्तय-तीति मुख्यकारकम् । कुठारादि तु तत्प्रेरितशक्तिकं सत्, तद्द्वारमात्रम् । अतस्तत्र विभक्तिवृत्तिर्युक्तैवेति ।

नन्वेवं वचनवृत्तिरपि तन्निमित्तसङ्ख्याया एकस्मिन्विरुद्धत्वेनाभावादन्यगताःसङ्ख्याः प्रति स्वातन्त्र्येणैव वाच्याः किमित्यत आह- **एकत्वद्वित्वेति ।।** 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति नये 'द्वित्वं चैकस्य युज्यते' इत्यनुव्याख्यानादौ समर्थनादिति भावः । **तत्सम्बन्धादितीति ।।** 'शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' इति न्यायादिति भावः । तत्र हि त्रिपाद्यां सर्वशब्दानां भगवति वृत्तौ किमर्थो लोके व्यवहार इति शङ्कायां 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रे हानोपादानाद्यर्थ इति समाहितत्वेऽपि तर्हि बह्निशब्दस्य जले, जलशब्द-स्याग्नावित्याद्यव्यवस्था स्यादित्याशङ्कायां तत्तच्छब्दमुख्यार्थहरिसम्बन्धस्य तत्र तत्र व्यवस्थितत्वात्तन्निमित्तोऽन्यत्र व्यवहारो व्यवस्थित इत्युक्तेः । ननु पूरसम्बन्धात्तीरे गङ्गापदव्यवहार इवान्यत्र तत्तच्छब्दमुख्यार्थभगवत्सम्बन्धा-दन्यत्र शब्दव्यवहारोऽमुख्य इति उपचारेणेति वाक्यशेषबलात्प्रतीयते । तथा चान्यत्रापि मुख्यार्थत्वलाभाय तत्सम्बन्धलब्धेन निमित्तेनेति कुतो व्याख्येत्यत आह- **न चात्रेति ।।** 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इति सूत्रे भगवत्सम्बन्धादन्यत्र वृत्तावभ्युपेतायां लक्षणा स्यादित्यतो निगमनिघण्ट्वादिसिद्धमुख्यवृत्तेर्लोकेऽपि शब्दानामुक्तेरिति भावः । तत्तुल्यन्यायसिद्धोक्तिः 'तत्सम्बन्धादचित्स्वपि' इति । **हीनयेति ।।** मुख्यवृत्तावेव हीनाधिकभावस्य अमुख्यवृत्तौ लक्षणागौण्योरिव लक्षणारूढलक्षणादेरिव 'समाकर्षात्' इत्यधिकरणे समर्थनादिति भावः । तिङ्मात्रस्यापदत्वादाह- **तिङन्तेति ।। अस्मदादिष्विति ।।** 'अस्मद्युत्तमः' इति 'युष्मद्युपपदे समानाधि-करणे स्थानिन्यपि मध्यमः' इति 'शेषे प्रथमः' इति च सूत्रैरहं त्वं स इत्यादिशब्देषूपपदेषु विहितानामहं ब्रह्मास्मी-त्यादावहमादिशब्दवृत्तावस्मीत्यादिशब्दानां वृत्तेः सुलभत्वादित्यर्थः । तत्परतन्त्रत्वात्तस्येति भावः । **अर्थ उक्त इति ।।** सूर्यादौ मयि च वर्तमान एक इत्यर्थकत्वात्तस्येति भावः । तत इत्यनुवादः, पूर्णत्वादित्यर्थः । सर्वस्माद्भिद्येत्यन्वयेनानुवादः । चोऽप्यर्थ इति भावेनोक्तम्- **भिन्नोऽपीति ।।** नन्वहमादिपदानामन्तर्यामिणि मुख्यताऽन्यत्र हीनवृत्तिश्चेत्तर्हि जीवे बहुलप्रयोगो न स्यात् । तीरादौ गङ्गापदप्रयोगस्य प्राचुर्येणादर्शनात्, मुख्यार्थ **(रा.टि.)** एव सर्वेषां प्रयोगप्राचुर्याद्, भिन्नवस्तुद्वयवाचित्वेऽक्षादिशब्दवन्नानार्थत्वापाताद् विष्ण्वादिशब्द-पर्यायतापातादुभयत्र निमित्तसत्त्वे मुख्यामुख्यत्वायोगाच्चेत्यत आह- **अयमभिप्राय इति ।।** प्रत्यगादीत्यादिपदेन प्रतियोग्यादिवाचकास्त्वमित्यादिशब्दा ग्राह्याः । अनेन विष्ण्वादिशब्दपर्यायतानिरासः । **पिण्डीभूत इति ।।** ब्रह्मचेतनजीवचेतनद्वयरूपो दग्धकाष्ठायःपिण्डादिवत्पिण्डीभूतः क्षीरनीरवदविविक्ततया वर्तमान इति । अनेन नानार्थत्वनिरासः । अपराधीनमित्यक्त्या मुख्यामुख्यत्वायोगनिरासः । **अविवेकिन इति ।।** भगवच्चेतन-मेलनाज्ञानिनस्तत्र मुख्यताऽज्ञानिनश्च । **बाह्येषु** भगवद्बहिर्भूतेषु । तस्य व्याख्या- **जीवादिष्विति ।।** एतेना-ज्ञानमूलोऽन्यत्र प्रचुरप्रयोगः इत्युक्तं भवति । परसम्मत्याऽपि द्रढयति- **परैरपीति ।।** इदमिति ब्रह्मचैतन्यम् । अनिदमिति जडमन्तःकरणम् । स यश्चायं पुरुष इत्यादिप्रागुदाहृतेनापौनरुक्त्यायाऽह- **पूर्वमिति ।।** अन्तर्याम्यैक्यापेक्षया सोऽहमस्मीत्यादिश्रुतयः प्रवर्तन्त इत्युक्तार्थ इति योज्यम् । अविभक्तपदेनापौनरुक्त्याय एकं प्रधानमित्युपेत्य फलितार्थमाह- **सर्वोत्तममिति ।।**

**(श्री.टि.)** अन्तर्याम्यपेक्षयेत्यनन्तरमध्याहार्यमाह- **प्रवृत्तमिति शेष इति ।। आद्ये वाक्ये** अहं ब्रह्मास्मीति वाक्ये । **द्वितीये** तद्योऽहमिति वाक्ये । **अवान्तरविशेषेति ।।** अंश्यनभिमतकरणादिरूपः । यथोक्तमनुव्याख्याने 'विशेषस्तु कश्चिदीशकृतो भवेत्' इति । व्याख्यातं च सुधायाम्- 'विशेषः इन्द्रानभिमतखाण्डववनदहनादिरूपः' इति । **तृतीये** 'योऽसावादित्ये पुरुष इति' वाक्ये । **अथ योऽन्यामिति ।।** यो भगवल्लक्षणां देवताम् **अन्यां** स्वभिन्नामुपास्ते । कथमित्यतस्तत्प्रकार उच्यते- **असौ** भगवान् मदन्यः, अहं च तस्मादन्योऽस्मीति । 'न स वेद यथा पशुः' इति भेदज्ञानिनः पशुत्वोक्तिरूपनिन्दया एषैव श्रुतिरभेदे प्रमाणमिति न वाच्यम् । अस्या अपि श्रुतेर्यो भगवल्लक्षणां देवताम् **अन्यां** स्वान्तर्यामिभिन्नामुपास्ते । कथम् ? अन्योऽसौ, **अहं** मदन्तर्यामी चान्य इति । न स वेद यथा पशुरित्येवमन्तर्यामिभेदज्ञानिनिन्दापरतयाऽन्यार्थकत्वादिति भावः । श्रुतौ तच्छब्दद्वय-सद्भावादेकोऽनुवादपर इत्याशयेनाह- **स प्रसिद्ध इति ।। ब्रह्मविषतया** ब्रह्मवाचकतया । **नञ्पूर्वकादिति ।।** 'ओ हाक् त्यागे' इत्यत्र ओ इत्यनुबन्धाकार एवं क् इत्यपि । हा इत्येव धातुः । तथा च नञ्पूर्वकात् हा इत्यस्माद्धातोः कर्मणि कप्रत्यये ककारलोपे 'आतो लोप इटि च' इति धात्वाकारलोपे 'नलोपो नञः' नञो नस्य लोपः स्यादुत्तरपदे इति सूत्रेण नञो नस्य लोपे सोरमागमे पूर्वरूपे अहमिति रूपमित्यर्थः । नन्वस्मच्छब्द-रूपस्याहमित्यस्य रूढत्वान्न निर्वचनीयत्वमित्याशङ्क्य निषेधति- **यद्यपीत्यादिना ।। अस्मच्छब्दस्यैवेदं रूपमिति ।।** 'त्वाहौ सौ' इति सूत्रेण युष्मदस्मदोर्मपर्यन्तस्य त्वाहादेशविधानाद् अस्मद् सु इत्यत्र मपर्यन्तस्य अहेत्यादेशे अहद् इति जाते 'शेषे लोपः' इति दकारलोपे 'ङेप्रथमयोरम्' इति सोरमादेशे अह अम् इति जाते 'अमि पूर्वः' इत्यकारस्य पूर्वरूपे अहमित्यस्मच्छब्दस्यैवेदं रूपमित्यर्थः । **तद्वृत्ताविति ।।** अहंशब्दप्रवृत्तावित्यर्थः। **निर्वचनं कृतमिति ।।** जीवे रूढत्वेऽपि हरौ तदभावान्निर्वचनं सार्थकमिति भावः । ननु तर्ह्यहंशब्दस्य नानार्थकत्वं स्यादित्यत आह- **जीवेऽपीति ।।**

**इदमेव** अहेयत्वमेव । ननु स्थानिभूतास्मच्छब्दादेशरूपस्याहंशब्दस्य कथं **(श्री.टि.)** निर्वचनं युक्तम् । प्रत्ययस्येवाऽदेशस्याप्यनिर्वक्तव्यत्वादित्यत आह- **स्थान्यादेशभावस्येति ।।** 'त्वाहौ सौ' इति पाणिनिना कल्पितत्वादित्यर्थः । अहमिति शब्दः प्रत्यगर्थभूतजीववाचकत्वेन भगवद्वाचकत्वेन च स्वतस्सिद्ध एव । न तु 'त्वाहौ सौ' इति सूत्रप्रवृत्त्यनन्तरं निष्पन्नः । सूत्रप्रवृत्तिस्तु सिद्धशब्दव्युत्पादनार्थमेवेति भावः । **अस्मदादेशस्यापीति ।।** अस्मदादेशत्वेन पाणिनिना कल्पितस्याप्यहमित्यस्येत्यर्थः । **आभिमुख्या-दिति ।।** पराक्त्वेन स्थितत्वादित्यर्थः । **अनेन** त्वंशब्दवाच्यत्वकथनेन । **सूचितमिति ।।** तथा च तद् ब्रह्म **त्वं** त्वदन्तर्यामीत्यर्थः । असीत्येतदप्यसनादियोगेनेश्वरवाचीति मन्तव्यम् । उपलक्षणमित्युक्तमेव दर्शयति- **भूतानीति ।।** 'वनानि विष्णुर्गिरयो दिशश्च । सरित्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विष्णुरेव' इति वाक्यशेषः ।

ननूक्तनिर्वचनबलेन प्रथमैकवचनान्तास्मच्छब्दप्रवृत्तावपि तद्द्विवचनतद्बहुवचनद्वितीयादिविभक्त्य-न्तानां मां मा त्वां त्वेत्यादिशब्दानां कथं प्रवृत्तिरित्यभिप्रायेण शङ्कते- **अहमादीति ।।** आदिपदेन त्वमित्यस्य ग्रहणम् । अत एव द्वितीयाविभक्त्यन्तमेतिपदोपेतऋगन्त्यपादोदाहरणं कृतम् । इत्यादि कथमित्यत्रादिपदेन 'मम देवासो अनुकेतमायन्' इत्यादेर्ग्रहणम् । मूले तच्छब्दगा इत्यस्य सः तौ ते इत्यादितच्छब्दगा इत्यर्थः । भूतादिसर्वशब्दगता इत्यत्रादिपदेन भुवनवनगिर्यब्ध्यादिशब्दानां ग्रहणम् । **अखिलान्यपि वचनानीति ।।** ननु भगवति जीवे च योगेन यदाऽहंशब्दः प्रवर्तते तदा अहम् आवां वयमित्यादिरूपेणैव शब्दोऽन्यथा वा । नाद्यः । अस्मदादेशरूपत्वेन रूढत्वे ह्येवंशब्दः । निर्वचनकरणेन यौगिकत्वपक्षे तथा शब्दायोगात् । द्वितीये तु कथं शब्द इति चेदुच्यते । यदा जीवे रूढ्याऽहंशब्दः प्रवर्तते तदा स्थान्यादेशभावमङ्गीकृत्य अहम् आवां वयमित्यादिरूपेण प्रसिद्ध एव शब्दः । यदा तु जीवपरमात्मनोर्योगेन प्रवर्तते तदा अहम् अहे अहानीत्यादिरूपेण स्वतन्त्र एव शब्दः । तथा आवामित्यपि प्रकृतिप्रत्यययोगेन स्वतन्त्र एव । एवं वयमित्याद्यपीत्यूह्यम् । न चैतदद्दृष्टचरमिति वाच्यम् । यथा 'वसन्ते वसन्ते' इत्यादिवाक्यगतवसन्तादिशब्दानां वसन्तादिकाले रूढिमङ्गीकृत्य वाक्यसमन्वयपक्षे वसन्त इत्यकारान्तवसन्तशब्दस्य सप्तमी भवति । पदसमन्वयन्यायेन 'वसन्तिश्च वसंस्ततः' इति योगवृत्त्या भगवद्वाचकत्वपक्षे वसन्त इत्येतद् हे वसन्ते इत्येवमिकारान्तवसन्तिशब्दस्य सम्बुद्ध्येकवचनमिति स्वतन्त्र एव शब्दो भवति, तद्वदिति सम्प्रदायविदः । स्वातन्त्र्यस्य निमित्तत्वमुपपादयितुमाह-**कारकेष्विति ।।** 'कर्तृकरणयोस्तृतीया' 'कर्मणि द्वितीया' इत्यादिना विभक्तीनां कर्त्रादिकारकेष्वेव विधानादिति हिशब्दार्थः। ननु कथमेतत् । 'द्व्येकयोर्द्विवचनैकवचने' द्वित्वैकत्वयोरेते स्तः । 'बहुषु बहुवचनम्' बहुत्वे एतत्स्यादित्येवं केवलैकत्वादिसङ्ख्यायामेव विभक्त्युक्तेर्विभक्तीनां सङ्ख्याश्रितत्वात्कथं कारकेषु विभक्तयो वर्तन्त इत्युच्यत इत्यत आह- **सङ्ख्याविशेषणत्वेनापीति ।।** सङ्ख्याविशेषणकत्वेनापीत्यर्थः । **निमित्तत्वादिति ।।** कर्त्रादिकारकाणामेवेति शेषः । तथा च केवलसङ्ख्यायामेव विभक्त्यवृत्तेरेकत्वादिसङ्ख्योपेतकर्त्रादिकारकेष्वेव तत्सद्भावेन सङ्ख्यारूपविशेषणयुक्तकर्मादिकारकाणामेव विभक्तिवृत्तौ निमित्तत्वात्कारकेषु विभक्तयो वर्तन्त **(श्री.टि.)** इत्युक्तं युक्तमिति भावः । केचित्तु निराश्रितकेवलसङ्ख्यायामेव विभक्त्ययोगात्कर्त्रादिकारका-श्रितैकत्वसङ्ख्यायामेव विभक्तिवृत्तिर्वाच्या । एवं च कारकाश्रिता सङ्ख्येति सङ्ख्यां प्रति विशेषणत्वेन कारकाणामेव सङ्ख्यायां विभक्तिवृत्तौ निमित्तत्वादुक्तं युक्तमित्याहुः ।

अस्त्वेवं कारकेषु सर्वविभक्तिवृत्तिः, तथाऽपि स्वातन्त्र्यस्य विभक्तिवृत्तौ कथं निमित्तत्वमित्यत आह- **कारकश्चेति ।।** 'क्रियां कुर्वद्धि कारकम्' इति वचनादिति भावः । **सर्वकारकाणाम्** इन्द्रियाणाम् । **प्रधानक्रियासु** ज्ञानलक्षणासु । **अवान्तरक्रियासु** सन्निकर्षलक्षणासु । **युक्तेति ।।** स्वातन्त्र्यरूपनिमित्तेनेति शेषः । **तत्रेति ।।** प्रधानक्रियाऽवान्तरक्रियाजनकत्वेन कारकभूते हरावित्यर्थः । नन्वेवमपि द्वित्वादिसङ्ख्याया निर्भेदहरावभावात्, द्व्येकयोरित्यादिनोक्तानां द्वित्वादिविवक्षयोक्तद्विवचनादीनां भगवति वृत्त्ययोग इत्यत आह- **एकत्वद्वित्वे-त्यादि ।।** एकत्वेति प्रसङ्गादुक्तम् । केचित्तु भेदरहिततयैकत्वसङ्ख्योपेतेऽपि हरौ द्वित्वबहुत्वसङ्ख्यायाः सत्त्वादिति बुद्ध्या विविच्य योज्यमित्याहुः । सत्त्वाद् विशेषबलेनेति शेषः । **तर्हीति ।।** यदि सर्वे शब्दा हरावेव वर्तन्ते तर्हीत्यर्थः । **अन्यत्र** जीवादौ । मूले 'तत्सम्बन्धादचित्स्वपि' इत्यस्य जीवसम्बन्धाज्जडेष्वपि शब्दाः प्रवर्तन्ते अभिमान्यधिकरणन्यायेनेत्यर्थः । यदि तत्सम्बन्धाज्जीवादिषु शब्दाः प्रवर्तन्ते तर्हि मञ्चाः क्रोशन्तीत्यादा-विव जीवादौ शब्दानां लक्षणाप्रसङ्ग इत्याशङ्क्य तत्सम्बन्धलब्धनिमित्तेनेत्युक्तं निमित्तमेवोपपादयति- **न चात्रेति ।।** उच्यत इत्यनन्तरम् इत्याहेति शेषः । नन्वेवमपि मुख्यवृत्त्यलाभ एवेत्यत उपचारेणेत्यस्यार्थमाह- **परममुख्यवृत्त्यपेक्षयेति ।। हीनया वृत्त्येति ।।** तथा हि- शब्दानां वृत्तिर्द्विविधा मुख्यामुख्यभेदात् । आद्याऽपि द्विविधा परममुख्यमुख्यभेदात् । परममुख्यवृत्तिरपि महायोगमहारूढिभेदेन द्विविधा । मुख्यवृत्तिरपि योगरूढि-भेदाद् द्विविधा । अमुख्यवृत्तिरप्युपलक्षणा गौणी चेति द्विविधा । एवं च भगवति विद्यमानमहायोगमहारूढि-लक्षणपरममुख्यवृत्त्यपेक्षया

या हीना वृत्तिर्योगरूढिलक्षणा मुख्यवृत्तिस्तयेत्यर्थः । तथा चोपचारपदं नामुख्य-वृत्तिप्रभेदरूपोपचारपरमिति भावः । तिङः पदत्वाभावात्तिङ्पदानीत्ययुक्तमित्याशङ्क्य प्रत्ययग्रहणे तदन्तशब्द-स्यापि ग्रहणमिति परिभाषया तिङन्तान्यस्मीत्यादिपदान्येव तिङ्पदशब्देनोच्यन्त इत्याशयेन व्याचष्टे- **तिङन्तपदानीति ॥**

ननु तिङन्तपदानां कथं हरौ वृत्तिरित्यत आह- **अस्मादादिष्विति ॥** उक्तरीत्याऽहमादीनां भगवति वृत्तौ सत्यामस्मदादिषूपपदेषु सत्सु 'अस्मद्युत्तमः' 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' 'शेषे प्रथमः' इत्यादिसूत्रैर्विहितानाम् अस्म्यसिभवतीत्यादीनां तिङन्तपदानां भगवति वृत्तेः सुलभत्वादित्यर्थः । **सर्वगत इति ॥** आदित्यादिसर्वगत इत्यर्थः । भिन्नेति चशब्दोऽपिशब्दार्थ इत्यभिप्रेत्य भिन्नोऽपीत्युक्तम् । **अभेदनिमि-त्तेति ॥** अहमादिशब्दप्रवृत्तौ परोक्तजीवाभेदरूपनिमित्तनिरासायेत्यर्थः । नन्वहमादिशब्दस्य जीवादिष्वपि वृत्तौ निमित्तभूतस्याहेयत्वादेर्भगवत्यपि सद्भावात्कथं मुख्यपरममुख्यत्वादिना विभाग इत्यत आह- **अयमत्राभि-प्राय इति ॥ पिण्डीभूत इति ॥** नियामकतयाऽन्तःप्रविष्टविष्णुना संवलित इत्यर्थः । **पिण्डविषयमिति ॥ (श्री.टि.)** नियामकतयाऽन्तःप्रविष्टपरमात्मनियम्यजीवप्रतिपादकमित्यर्थः । **दहतिशब्दं** दहतीति शब्दम् । काष्ठं दहतीति प्रयोगादिति भावः । **अमुख्यमंशमिति ॥** अन्तर्भावितविष्णुर्हि जीवस्तत्र जीवरूपममुख्यांश-मित्यर्थः । अयं प्रकारः परस्यापि सम्मत इत्याह- **परैरपीति ॥ इदं** चेतनम् **अनिदं** जडम् । अहंशब्दवाच्याहमर्थस्य परैश्चिदचित्संवलनात्मकत्वाङ्गीकारादिति भावः । **स्वगतभेदवर्जितमिति ॥** स्थानभेदप्रयुक्तभेदशून्यमि-त्यर्थः । तेषां चेतनानामचेतनानां च व्यये देहनाशादिरूपे नाशे जातेऽप्यव्ययमित्यर्थः । एकपदस्यैक्यार्थ-त्वेऽविभक्तमित्यनेन पुनरुक्तिपरिहारायार्थमाह- **सर्वोत्तममिति ॥**

**(पां.टि.)** 'तद्योऽहम्' इत्यस्य व्याख्यानम्- **तद्यः स प्रसिद्ध इत्यादि ॥** तत्र तदित्यस्य व्याख्यानम्- **स इति ॥** योऽहमित्यस्य यथास्थितस्य श्रौतपदद्वयस्यानुकरणम्- **योऽहमिति ॥ अवान्तरविशेषेति ॥** इन्द्रार्जुनयोरभेदेन इन्द्रस्यार्जुनगताशेषानुसन्धानेऽप्यर्जुनस्य तद्गतमहाफलानुसन्धानेऽप्यशेषाननुसन्धानमित्येवं-रूपेत्यर्थः । **कर्मणि कप्रत्यय इति ॥** कित्त्वात् 'आतो लोप इटि च' इत्याकारलोपे न हीयते इति अहमिति रूपनिष्पत्तिः । नन्वस्मच्छब्दरूपस्याहमित्यस्य रूढत्वान्न निर्वचनीयत्वमित्याशङ्कां निर्वचनप्रयोजनोक्त्या परिहरति- **यद्यपीति ॥** तर्हि नानार्थत्वमित्यतस्तत्परिहरति-**जीवेऽपीति ॥** ननु तथाप्यादेशसिद्धरूपस्य स्थानि-शब्दार्थकत्वेन न निर्वचनीयत्वमिति चेत्तत्राऽह- **स्थान्यादेशभावस्येति ॥** अहमितिशब्दः प्रत्यगर्थादिवाचकत्वेन स्वतः सिद्ध इत्येव । न तु 'त्वाहौ सौ' इति सूत्रप्रवृत्त्यनन्तरं निष्पद्यते । सूत्रप्रवृत्तिस्तु सिद्धशब्दानुव्याख्यानार्थेति भावः । ननूक्तनिर्वचनबलेन प्रथमैकवचनान्तस्याहमादिशब्दस्य वृत्तावपि द्विवचनबहुवचनान्तस्य द्वितीयादि-विभक्त्यन्तस्य च कथं वृत्तिरित्याशयेन शङ्कते- **अहमादीति ॥** तावताऽपि कथं शङ्कापरिहार इत्यतः, अभिप्राय-माह- **सप्तविभक्त्यन्ता इति ॥** स्वतन्त्रत्वादित्यनेन विभक्तिवृत्तौ को हेतुरुक्त इत्यतः कारकत्वमेवेति भावेन तत्र विभक्तिवृत्तिमुपपादयति- **कारकेष्विति ॥** ननु कर्मकर्तृकरणादिकं हि कारकम् । तद्धि न विभक्ति-वाच्यम् । किन्तु एकत्वादिकमेव । 'द्व्येकयोर्द्विवचनैकवचने' इत्यादिना एकत्वादिष्वेव तद्विधानात्कथं 'कारकेषु हि विभक्तयो वर्तन्ते' इत्युच्यत इत्यतः केवलस्यैकत्वादेर्विभक्त्याऽनभिधानात् कर्मादिगतस्यैव तस्याभिधा-नात् । कर्मादिगतस्यैकत्वादेरभिधेयत्वे च सङ्ख्यां प्रति विशेषणत्वेन विभक्तिवृत्तौ निमित्ततया युक्तैव कारकेषु विभक्तिवृत्तिरित्याशयेनाऽह- **सङ्ख्येति ॥** अस्त्वेतावता कारकेषु विभक्तिवृत्तिः । भगवतः किमायातमित्यतः तस्यैव मुख्यकारकत्वात्तत्रैव विभक्तिसिद्धिरिति भावेन मुख्यकारकतां तस्योपपादयितुं कारकत्वं तावन्निर्वक्ति- **कारकश्चेति ॥ तर्हीति ॥** भगवत्येव सर्वविभक्तिवचनवृत्त्यङ्गीकार इत्यर्थः । ननु यदि तत्सम्बन्धलब्ध-निमित्तेनान्यत्र विभक्त्यादिवृत्तिः तर्हि लोके लक्षणैव स्यात् । तथा चेक्षत्यधिकरणस्य मूले निहितः कुठारः स्यादित्यतः, अन्यत्र भगवदपेक्षया मुख्यवृत्तावेव तारतम्यमङ्गीकृत्य अमुख्यत्वस्याभिप्रेतत्वेन लक्षणागौण्यो-रेवानभिमतत्वान्नोक्तदोष इत्याशयेनाऽह- **न चात्रेति ॥** अत्र लक्षणाशब्देन गौण्या अपि ग्रहणम् । कुतस्तत्र तिङन्तपदवृत्तिरित्यतो निमित्तनैमित्तिकभावमुपपादयन्नेव निमित्तमाह- **अस्मदादिष्विति ॥** नन्वहमादिशब्दस्य **(पां.टि.)** जीवादिष्वपि वृत्तौ निमित्तस्याहेयत्वादेस्तत्रापि सत्त्वात् कथं मुख्यपरममुख्यत्वादिना विभाग इत्यत आह- **अयमभिप्राय इति ॥ पिण्डीभूत एवेति ॥** नियामकत्वेनान्तःप्रविष्टविष्णुविशिष्टो जीव इत्यर्थः । नन्वेवमस्मदादिशब्दानां पिण्डीभूतार्थविषयकत्वकल्पनाप्रसङ्गो दोष इत्यतस्तस्य परेणाप्यङ्गीकृतत्वेन न तत्प्रसङ्गोऽपीत्यभिप्रेत्य पिण्डीभूतार्थविषयतायाः परसम्मततामुपपादयति- **परैरपीति ॥** अहंशब्दवाच्यस्याह-मर्थस्य चिदचित्संवलनात्मकत्वादिति भावः । समाख्यायाः पूर्वमेवोक्तत्वेन पुनस्तदभिधाने पौनरुक्त्यमित्याशङ्कां परिहरति- **पूर्वमिति ॥**

**(व्या.टि.)** यद्यपि 'न चाभेदे कश्चिदागमः' इति प्रथमप्रतिज्ञातमागमासिद्धत्वमेव प्रथममुपपादनीयम् । तथाऽ-प्यैक्यस्य पराभिमतमहावाक्यासिद्धत्वं तद्विरुद्धत्वं च, तद्वाक्यस्य भेदपरत्वोपपादने उपपादितं स्यादित्यभिरुच्या तद्भेदपरतयोपपादितम् । ततस्तत्प्रसक्त्या भेदवाक्यान्येवोदाहृतानि । ततश्चावसरप्राप्तमागमासिद्धत्वमुपपाद-यितुमुपक्षिपति- **तथाऽपीति ।। अनेकेति ।।** तथा च न कश्चिदित्यागममात्रनिषेधोऽयुक्त इति भावः । तद्य इति समस्तं पदमिति मत्वा व्याचष्टे- **स प्रसिद्ध इति ।।** अनेन स चासौ यश्च तद्य इति विग्रहः सूचितः । सूर्यस्यापि विशिष्टान्तरत्वेन तदभेदायोगादाह- **सूर्ये स्थित इति ।।** 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इति स्मृतेरित्यर्थः । अपेक्षयेत्यस्यापेक्षितं पूरयति- **प्रवृत्तमिति शेष इति ।।** तत्र किंपदमन्तर्यामिपरमित्यतः तत्स्पष्टयति- **तत्रेत्यादिना ।। अवान्तरविशेषेति ।।** स तूक्तोऽनुव्याख्याने-

'अंशिनोऽशेषसन्धानमत्यल्पस्यापि विद्यते ।
भुवि जातेन चांशेन सुखदुःखादि तद्गतम् ।
अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत् ।।' इति ।

**एवमेवेति ।।** विशेषनिरासायैक्याभ्यासः । **आदिपदोक्तानीति ।। योज्यानीति ।।** तत्प्रकारस्तु यो**ऽन्यां देवतां** सूर्यादिस्थितनारायणादिदेवतामुपास्ते स यथा पशुरेवम् । ननु मिथ्योपासने पशुर्भवेत् कथमियं मिथ्योपासनेत्यतस्तां दर्शयति- अन्यो**ऽसौ** सूर्यान्तर्यामी, अन्यो**ऽहं** जीवान्तर्यामीति । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति श्रुत्योभयोरैक्याभिधानाद्भेदोपासना मिथ्योपासनेति पशुदृष्टान्तो युक्त एवेति भावः । 'न स वेद' इति श्रौतान्तर्याम्यैक्यं न वेदेति पशुत्वे हेतूक्तिः । तत्पदस्येदमर्थपरामर्शकत्वायोगाद्व्याचष्टे- **स प्रसिद्ध इति ।।** तत्रेति विषयसप्तमीति व्याचष्टे- **ब्रह्मविषयतयेति ।।** अत्र पूर्वभागस्येहोपयोगाभावेऽपि तत्पदपरामृष्टप्रदर्शनायोदाहृतम् । **जीवाभेदेनेति ।।** 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः' इति श्रुतिः शङ्काबीजमिति भावः । कथमिदं शब्दलभ्यमित्यतो निर्वक्ति- **नञ्पूर्वादिति ।। कर्मणीति ।।** 'घञर्थे कविधानम्' इत्युक्तेरित्यर्थः । 'आतो लोप इटि च' इत्याकारलोपश्चेत्यपि ग्राह्यम् । ततश्च हेयं हम्, न हम् अहमित्यहेयत्वलाभः। ननु 'ङेप्रथमयोरम्' युष्मदस्मद्भ्यां परस्य ङे इत्यस्य प्रथमाद्वितीययोश्चामादेश इति सोरमादेशे सति 'त्वाहौ सौ' इति युष्मदस्मदोर्मपर्यन्तस्य त्व-अहादेशे 'शेषे लोपः' इति आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोर-**(व्या.टि.)** न्त्यस्य दकारस्य लोपे 'अमि पूर्वः' इति पूर्वरूपे च त्वम् अहमिति रूपसिद्धेरहमित्यस्यास्मच्छब्द-रूपत्वेन तदादेशस्य हरौ वृत्तौ तत्स्थानिनोऽपि तत्र वृत्त्या तदर्थं जीवाभेदापात इत्याशङ्क्य निराकरोति- **यद्य-पीति ।। न जीवाभेद इति ।।** बाधाद्रूढार्थपरित्याग इति भावः । एवं स्थानिनोऽपि जीवत्वनिमित्तकत्वात् तदादेशस्यापि तन्निमित्तकत्वमुपेत्योक्तम् । अधुना तदेव नेत्याह- **जीवेऽपीति ।। इदमेव** अहेयत्वमेव । न जीवत्वमित्यर्थः । ब्रह्मण्यपि 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति । 'अहं सर्वस्य जगतः' 'मत्तः परतरम्' 'मया ततमिदं सर्वम्' 'अहं बीजप्रदः पिता' इत्यादौ जीवत्वाभावेऽपि प्रयोगादिति भावः । तर्हि स्थान्यादेश-योरैकार्थ्यात्तद्भावसम्भव इत्यत ओमित्याह- **स्थान्यादेशभावस्येति ।। काल्पनिकत्वादिति ।।** वैयाकरण-साङ्केतिकत्वेन स्वभावत्वाभावादित्यर्थः । अभ्युपेत्यापि स्थान्यादेशभावमैकार्थ्यं च समाधत्ते- **अस्मदादेशस्या-पीति ।।** अस्मदादयः शब्दाः प्रत्यगादिवाचित्वेन प्रसिद्धाः । अहंशब्दस्त्वहेयवाची । प्रतीचोऽप्यहेयत्वादुभयोर-प्यैकार्थ्यं युक्तम् । **निर्वचनमिति ।।** हरौ जीवेऽपीति शेषः । उभयोरपि प्रत्यक्त्वादहेयत्वाच्च । यद्वक्ष्यति- 'प्रत्यगादिश्च सर्वदा पिण्डीभूत एव' इति । तथा च सकलमकलङ्कम् ।

नन्वनाशङ्कितत्वमादिपदनिर्वचने किं लब्धमित्यत आह- **अनेनेति ।।** मेत्यादीत्यादिपदेन 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इति शिववाक्यपरिग्रहः । तत्र 'त्वामौ द्वितीयायाः' 'त्वमावेकवचने' 'प्रत्ययोत्तरपदयोश्च' इत्य-स्मादाद्यादेशस्य मेत्यादेरहेयत्वादिनिर्वचनासम्भवादिति प्रश्नार्थः । कथमनेनोक्तशङ्काऽपगम इत्यतः, अस्मच्छब्द-शक्तिकथने विभक्तिशक्तिकथनमसङ्गतमित्यतश्चास्मच्छब्दविभक्तय इत्येतद्विभक्त्यन्ताः शब्दा इति व्याख्या-तम् । अस्मदादिशब्दानां प्रत्यगादिवाचकत्वाद् ब्रह्मणोऽप्यन्तर्यामित्वेन प्रत्यगादित्वात्तच्छब्दोपपत्तिरिति भावः। अपिपदसमुच्चेयमाह- **न केवलमिति ।।** स्वतन्त्रत्वस्य कर्तृविभक्त्युपयोगेऽपि न सर्वविभक्त्युपयोग इत्यतः सर्वोपयोगं दर्शयति- **कारकेषु हीति ।।** प्रथमाषष्ठ्योः कारकविभक्तित्वाभावेऽपि भूम्ना व्यपदेशः । ननु महाभाष्ये 'एकं वाक्यं तच्चेदश्च' इति विभक्तिवचनानाम् 'द्व्येकयोः' इत्यादिसङ्ख्यावचनैकवाक्यत्वाभिधानेन सङ्ख्या-प्राधान्याभिधानात् कथमासां कारकविभक्तित्वमित्यत आह- **सङ्ख्याविशेषणत्वेनापीति ।।** कारकविशेषित-सङ्ख्याभिधानेऽपि विशेषणतया कारकस्याप्यभिधेयतया निमित्तत्वात्कारकविभक्तित्वं तासामुपपन्नमिति भावः । यद्वा सङ्ख्याविशेषणत्वेनेति बहुव्रीहिः । तथा च कारकस्यैव

मुख्यतयाऽभिधेयत्वमिति ध्येयम् । **क्रिया-हेतुरिति ।।** 'क्रियां कुर्वद्धि कारकम्' इति लक्षणकरणादिति भावः । स्वतन्त्रत्वमुपलक्षणमिति भावेनाऽह- **एकत्वद्वित्वेति ।।** 'यदेकमव्यक्तमनन्तरूपम्' इति श्रुतेः । 'द्वित्वं चैकस्य युज्यते' इति भाष्याच्चेति भावः । व्यवहर्तव्यनिमित्ताभावे कथं सम्बन्धमात्रेण व्यवहार इत्यतो व्याचष्टे- **तत्सम्बन्धलब्धेति ।। निमित्तेन** प्रत्य-क्त्वादिना । नन्वत्रोपचारोक्त्या सत्सम्बन्धोक्त्या च लक्षणा प्रतीयते । सा च 'तस्मात् परममुख्यत्वं विष्णा-वन्यत्र मुख्यता' इत्यनुभाष्यविरुद्धा इत्यत आह- **न चात्रेति ।।** उच्यत इत्यतः परं यत इति शेषः । **तिङन्त-पदानीति ।।** 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति परिभाषयेत्यर्थः । तिङन्तपदप्रवृत्तौ निमित्तानुक्तौ युक्तिं वक्ति- **(व्या.टि.) अस्मदादिष्विति ।।** 'अस्मद्युत्तमः' 'युष्मदि मध्यमः' 'शेषे प्रथमः' इति विहितानामित्यर्थः । **सुलभत्वादिति ।।** निमित्तवृत्तौ नैमित्तिकस्य वर्तनीयत्वात् । अन्यथा सामानाधिकरण्यायोगादित्यर्थः । पदार्थे वाक्यार्थापर्यवसानाद्वाक्यार्थं पृच्छति- **एवमिति ।।** पृथक्श्रुत्यर्थतया व्याचष्टे- **सर्वगत इत्यादिना ।।** भिच्चेति व्याचष्टे- **भिन्नोऽपीति ।।** भिदेः कर्मणि क्विप् । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् । अभेदनिमित्तेति कर्मधारयः ।

नन्वहमादिशब्दोऽन्तर्यामिणि मुख्य इत्ययुक्तम् । रूढेरन्यत्र सत्त्वात् । अहेयत्वादिना योगसत्त्वेऽपि तस्याधि-काराधिकरणन्यायेन रूढेर्दुर्बलत्वात् । न हि यत्र प्रसिद्धशब्दस्तत्रामुख्यः । मुख्यस्तु तत्पदप्रवृत्तिनिमित्तवतीति दृष्टचरम् । न चासावज्ञरूढिः, दहतिशब्दस्य च काष्ठे यथा । ततो विद्वद्रूढिर्योगमूला बलीयसीति वाच्यम् । तत्र दहतिशब्दस्य काष्ठाधिष्ठानव्यतिरेकेणायो दहतीत्यधिष्ठानान्तरे प्रयोगादग्नौ मुख्यतानिर्णयवत्, अत्र जीवादिव्यति-रेकेणान्तर्यामिमात्रेऽहमादिप्रयोगाभावात् । उभयवाचित्वे शब्दानां नानार्थपरतापत्तिश्च । न च न नानार्थता, जीवादिविशिष्टस्यैवाहमादिपदवाच्यताभ्युपगमात् । यथोक्तं भाष्यटीकायामानुमानिकाधिकरणे- 'न चोभयार्थत्वे वाक्यभेदः । प्रधानादिविशिष्टस्यैव परमात्मनः शब्दवाच्यत्वाभ्युपगमात्' इति,इति वाच्यम् । विशिष्टस्य पदार्थान्तरत्वे ब्रह्म सर्वशब्दाभिधेयमिति सिद्धान्तो दत्तजलाञ्जलिः स्यात् । ब्रह्मव्यतिरेकेणाव्यक्तादीनामिव तद्व्यतिरेकेण ब्रह्मणोऽपि तत्तच्छब्दाभिधेयत्वाभावात् । विशिष्टाद्वैतप्रसङ्गाच्च । अनर्थान्तरत्वे नानार्थतादोषः प्रादुःष्यादित्युभयतःपाशा रज्जुः । प्रवृत्तिनिमित्तपौष्कल्यान्मुख्यत्वेऽल्पपङ्कजाद्बहुपङ्कजे पदमुख्यताप्रसङ्गः । प्रागभावादितोऽत्यन्ताभावेऽभावपदमुख्यत्वप्रसङ्गः । किञ्च वाच्यार्थातिशयाभावेऽपीतरवेदादृचः, इतरनामभ्यो रामनामादेरर्थातिशयाभावेऽपि स्वरूपातिशयदर्शनात् । बहुपुत्रवत्यां पुत्रवतीशब्दमुख्यत्वादर्शनाच्चान्वय-व्यतिरेकव्यभिचारः । तस्यैवोभयत्रापि मुख्यत्वे तरबादिलोपप्रसङ्गः इत्यादिबहुविप्लवापात इत्यत आह- **अय-मत्राभिसन्धिरिति ।।** अत्रायं परिहारक्रमः । सत्यम् अहमादिशब्दा अन्यत्रैव प्रसिद्धा इति । तदनुमन्यामहे । न मुख्यत्वम् । तस्य प्रवृत्तिनिमित्ताधीनत्वेन रूढिमूलत्वाभावात् । अन्यथा रूढलक्षणाया अपि मुख्यवृत्तित्वापत्तेः। प्रवृत्तिनिमित्तं चाहेयत्वादिकं बाह्यजीवेष्विवान्तर्यामिण्यपि मुख्यम् । न चैवं प्रसिद्धिबाधः । प्रसिद्धेरज्ञानमूलायाः पुरुषदोषत्वेन वस्तुदोषत्वाभावात् । यथोक्तं टीकायाम् 'न ह्ययं स्थाणोरपराधो यद्येनमन्धो न पश्यति' इति । न चैवं जीवाद्यधिष्ठानाद्व्यतिरेकेण प्रयोगप्रत्ययौ स्यातामिति वाच्यम् । इष्टापत्तेः । 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यादौ जीवाधिष्ठानव्यतिरेकेण प्रयोगात् । 'जीवेनाऽत्मना' इत्यादौ जीवादिशब्दानामपि केवलहरौ प्रयोगात् ।

'स जीवनामा भगवान् प्राणधारणहेतुतः ।'
'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।'

इत्यादेः । न चैवं साम्यम् । अन्तर्यामिव्यतिरेकेणाधिष्ठानमात्रप्रयोगाभावात् । परायत्तनिमित्तत्वाच्चान्यत्रा-

**(व्या.टि.)** मुख्यत्वात् । न चैवं नानार्थता वाक्यभेदो वा । प्रवृत्तिनिमित्तैक्येन तदभावात् । न चैवं भाष्य-टीकाविरोधः । एतट्टीकानुरोधेन तत्रत्यविशिष्टपदस्य पिण्डीभूतार्थपरत्वात् । न चैवमतिप्रसङ्गः । तत्रान्यतरप्रवृत्ति-निमित्तस्याल्पतराव्यक्तत्वाभावात् । अन्तर्यामिण्यव्यक्तादिपदानां परममुख्यत्वेन पारम्यातिशयद्योतनाय तरबादेरावश्यकत्वाच्च । तस्माद् अहमादिशब्दा अन्यत्रैव प्रसिद्धा अप्यन्तर्यामिण्येव परममुख्या इति रहस्यम् । अविवेकिन इति व्यवहारभेदे विप्रतिपत्तौ च मूलोक्तिः । **बाह्येषु** कञ्चुकभूतेषु । 'दग्धशब्दं यथा काष्ठे' इति भाष्यमनुरुध्याऽह- **काष्ठ इति ।।** दीप्त इत्यर्थः । **प्रयुञ्जत इति ।।** तदुक्तं भगवता सूत्रकारेण 'साक्षादप्यविरोधं जैमिनिः' इति । तद्विवृतं भाष्यकृता । सङ्गृहीतं च चन्द्रिकायाम्-

'अज्ञास्त्वज्ञानतः शब्दानन्यत्रैव प्रयुञ्जते ।
ज्ञानिनोऽपि च हानादिव्यवहारप्रसिद्धये' इति ।

शब्दस्य पिण्डार्थता परस्यापि सम्मतेत्याह- **परैरपीति ॥ इदमनिदंरूपेति ॥** चिदचित्संवलनमहङ्कार इति वदद्भिरित्यर्थः। **स्मृतीति ॥** गीतेत्यर्थः। गीतार्थमाह- **विभक्तेष्वित्यादिना ॥** अधिष्ठानभेदेऽप्यन्तर्याम्यैक्यं तदर्थमित्यर्थः।

**मूलम्- न चासत्यो भेदः 'सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः', 'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये।' 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा। मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः' 'आत्मा हि परमस्वतन्त्रः सर्ववित्सर्वशक्तिः परमसुखः परमो, जीवस्तु तद्वशः अल्पज्ञः अल्पशक्तिः आर्तः अल्पकः' इत्यादिश्रुतिभ्यः ॥**

**(त.मं.)** नन्वयमुच्यमानो भेदोऽसत्य इत्यत आह- **न चासत्य इति ॥** एनमनु विश्वे **मदन्ति** आनन्दन्ति इत्येतत् **सत्यम्** न मिथ्या। स्तुवत इन्द्रस्य **रातिं** दातारम्। **शवः** सुखम्। **आरुभिः** दोषशीलैः **वननीयो** भजनीयः- **आरुवण्यो मैव**। अभ्यासस्तात्पर्यार्थः।

**टीका-** श्रुतिस्मृत्योश्चेतनात्मकानां सर्वपदार्थानां परस्परमीश्वराच्च भेदः, तदन्तर्यामिणस्तु न कश्चिद्भेद इत्युक्तत्वादहमादिश्रुतयोऽपि तदनुसारेणैव योज्या इत्युक्तम्। तदयुक्तम्। श्रुतिस्मृतिभ्यामसत्यस्यैव भेदस्योच्यमानत्वात्। न ह्यतत्त्वावेदकानुसारेण तत्त्वावेदकं योजयितुं युक्तमित्यत आह- **न चेति ॥** श्रुत्यादिप्रतिपादित इति शेषः। कुतो नेत्यत आह- **सत्यमिति ॥** यद्यप्येषा शङ्का प्रागेव परिहृता। तथाऽपि युक्तिभिः परिहृतां श्रुतिभिरपि परिहर्तुं पुनरारम्भः।

**गृणतः** स्तुवतो **मघोनो देवस्येन्द्रस्य रातिं** मित्रम**ेनं** विष्णु**मनु** तस्माद्धेतोरिति यावत्, **विश्वे** सर्वेऽपि प्राणिनो **मदन्ति** हृष्यन्ति इत्येतदीश्वरस्य जीवानाञ्चोपजीव्योपजीवकत्वं सत्यम्। **२. स** प्रागुक्तो**ऽस्य** विष्णो**र्महिमा** महत्त्वं सर्वोत्तमत्वमित्यर्थः **सत्यः**। तं सत्यमहिमानमहं विप्रराज्यरूपेषु यज्ञेषु **शवः** सुखमुद्दिश्य **गृणे** स्तौमि। **३. आत्मा** परमात्मा। तयोर्भिदा च **सत्यं** सत्या। शपथत्वेन त्रिरुक्तिः। केचिद्भेदमसत्यमाहुः। तत्कथमेतदित्यत उक्तम्- **मैवेति ॥ आरुभिर्दोषिभिर्वन्यो** वननीयो भजनीयो **मैव** तदुक्तप्रकारो न भवति परमात्मेति यावत्। **४.** कथं जीवपरमात्मनोर्भेद इत्यत उक्तम्- **आत्मा हीति ॥** परमस्वतन्त्रः इत्यस्य विरोधित्वेनोक्तम्- तद्वश इति। सर्वविदित्यस्य अल्पज्ञ इति। सर्वशक्तिरित्यस्याल्पशक्तिरिति। परमसुखम् इत्यस्याऽर्त इति। परम इत्यस्याल्पक इति। **श्रुतिभ्यो** भेदसत्यत्वावगमादिति शेषः।

**(रा.टि.)** अस्फुटत्वात्किमनेनोक्तं भवतीत्यतोऽत्रानुवादमुखेन व्यनक्ति- **श्रुतिस्मृत्योरिति ॥** स्वोक्त-शङ्कानिरासपरत्वलाभायाऽह- **इति शेष इति ॥** एतेन तद्वशत्वज्ञापनार्थमेव सृष्ट्यादिकथनमित्यदिना मिथ्यात्व-श्रुतीर्व्याख्याय 'अतो न कुत्रापि जगतो मिथ्यात्वमुच्यते' इत्युपसंहृत्य तत्सत्यत्वे 'कविर्मनीषी परिभूः' इत्यादि-वचनान्युक्त्वा भेदभेदिनां सत्यत्वस्य पूर्वग्रन्थेन स्थापनात्, तथा 'न च परमार्थतो भेदाभावो व्यावहारिकः सोऽस्ति' इत्यादिना व्यवहितपूर्वग्रन्थेन च भेदसत्यत्वोक्तेः पुनरुक्तिरिति निरस्तम्। स यश्चायमित्यादिश्रुति-स्मृत्युक्तभेदविशेषपरत्वादस्य, प्राचीनस्य तु सामान्यपरत्वादिति तात्पर्यात्। एतदेवाऽशङ्क्य समाध्यन्तरमाह- **यद्यपीति ॥ युक्तिभिरिति ॥** सामान्यश्रुतिभिश्चेत्युपलक्ष्यते। **श्रुतिभिरिति ॥** विशिष्य भेदसत्यत्वश्रुतिभिरि-त्यर्थः। यद्वा 'तद्वशत्वज्ञापनार्थम्' इत्यादिग्रन्थो जगन्मिथ्यात्वनिरासमात्रपरः। 'न च परमार्थत' इत्यादिग्रन्थस्तु भेदसत्यत्वसाधनपर इति भावेन तदभिप्रायेण यद्यपीत्यादिग्रन्थप्रवृत्तिः। अस्मिन्पक्षे युक्तिभिरित्यस्य सदसद्वै-लक्षण्ये प्रमाणाभावादित्यादियुक्तिभिरिति, श्रुतिभिरित्यस्य सत्यं भिदेत्यादिश्रुतिभिरित्येवार्थः। श्रौतपदाना-मन्वयपूर्वमर्थमाह- **गृणतः स्तुवत इति ॥** 'गॄ निगरणे' इति धातोरिति भावः। लक्षणे कर्मप्रवचनीयोऽयमनुशब्द इत्युपेत्य जपमनु प्रावर्षदित्यादाविवार्थमाह- **विष्णुमनु तस्माद्धेतोरिति ॥** सत्य इति श्रुत्यर्थमाह- **स इति ॥** एकवचनं बहुवचनार्थ इत्युपेत्यार्थमाह- **विप्रराज्यरूपेष्विति ॥** लिङ्गव्यत्ययः छान्दस इति भावेनाऽह- **सत्यं सत्येति ॥** 'रषाभ्यां नो णः', 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वमिति भावेनाऽह- **वन्य इति भजनीय इति ॥** 'वन सम्भक्तौ' इति धातोरिति भावः। पुंलिङ्गानुरोधादाह- **परमात्मेति यावदिति ॥** तस्य प्रकृत-त्वात्। भिदाविशेषणत्वे तु वन्येति स्त्रीलिङ्गेन भाव्यम्। परमात्मभजनं च भेदेनैवेति भेदासत्यत्वनिरासः फलि-ष्यतीति भावः।

अत्रापि शपथेन त्रिरुक्तिरित्युक्तप्रायम् । **कथमिति ।।** केन प्रकारेण केन भेदकधर्मेणेत्यर्थः । विरोधित्वेनोक्तमिति सर्वत्रान्वेति । श्रुतिभ्य इत्यस्य 'न चासत्यो भेदः' इत्यनेन साक्षादनन्वयादाह- **इति शेष इति ।।**

**(श्री.टि.)** पूर्वग्रन्थफलितार्थं वदन्नुत्तरग्रन्थमवतारयति- **श्रुतिस्मृत्योरित्यादिना ।। परस्परमिति ।।** विभक्ते-ष्विति सर्वपदार्थानां परस्परं भेद उक्त इति भावः । **प्रागेव परिहृतेति ।।** 'न च परमार्थतो भेदाभावो व्यावहारिकः सोऽस्तीति वाच्यम्'इत्यादिना भेदस्य पारमार्थिकसत्यत्वोपपादनेन तच्छ्रुतीनां तत्त्वावेदकत्वस्योक्तत्वादि-त्यर्थः । एकवचनं बहुवचनार्थ इत्यभिप्रेत्य विप्रराज्यरूपेष्वित्युक्तम् । यज्ञो हि ब्राह्मणानां राज्यम् । ब्राह्मणै **रञ्जनीयः** शोभनीयः । ब्राह्मणैर्हि यज्ञः शोभते । रञ्ज रागे । अपेक्षणीयो वा । तथा च विप्रप्रधानकेष्विति फलितार्थो द्रष्टव्यः । **आरुभिर्दोषिभिरिति ।।** दोषारच्छिद्रशब्दानां पर्यायत्वात् । अरा दोषा एषां सन्तीत्यर्थे अरशब्दादुण्प्रत्यये 'यस्येति च' इति रकारस्थाकारलोपे णित्त्वादादिवृद्धौ सत्यां निष्पन्नस्य उकारान्ताऽरुशब्दस्य तृतीयाबहुवचनमारुभिरिति भवतीत्यभिप्रेत्य दोषिभिरिति तदर्थ उक्त इति द्रष्टव्यम् । **भजनीय इति ।।** 'वन षण सम्भक्तौ' इति धातोरिति भावः । कथमनेन शङ्कापरिहार इत्यत आह- **तदुक्तप्रकार इति ।।** तदुक्तरीत्याऽ-सत्यभेदोपेत इत्यर्थः । **परमस्वतन्त्रः** निरवधिकस्वतन्त्र इत्यर्थः । **आर्त इति ।।** आर्तिर्दुःखं तद्वानार्त इत्यर्थः ।

**(पां. टि.) प्रागेवेति ।।** 'अतोऽनिर्वचनीयाभावादसतः प्रतीत्यनङ्गीकाराच्च प्रतीयमानत्वाच्च भेदस्य सत्त्वप्राप्तेर्न द्वितीयत्वं युज्यते' इत्यादिना भेदं गोचरयतः प्रत्यक्षादेरसद्विषयकत्वसदसद्वैलक्षण्यरूपानिर्वचनीयविषयकत्व-रूपपक्षद्वयनिरासपूर्वकं परिशेषतः विषयभूतभेदादिप्रपञ्चस्य परमात्मसत्त्वसमर्थनेन तदतात्त्विकविषयकत्व-शङ्कायाः परिहृतत्वादित्यर्थः ।

**(व्या.टि.)** उक्तमनूद्याऽऽक्षिपति- **श्रुतिस्मृत्योरित्यादिना ।।** ननु मिथ्यावादित्वे च श्रुतेः कथमैक्यस्य सत्यत्वमिति पूर्वमेवास्या उद्धृतत्वात्पुनरुत्थानायोग इत्याशङ्क्य परिहरति- **यद्यपीति ।।** अन्विति इत्थम्भूताख्याने कर्मप्रवचनीयसञ्ज्ञां विज्ञाय व्याचष्टे- **तस्माद्धेतोरिति ।।** श्रुतसत्यपदविशेष्यमेतत्पदाध्याहारेण योजयति-**इत्येत-दिति ।।** वाक्यार्थपरामर्शोऽयमित्याह- **ईश्वरस्येति ।। सत्यमिति ।।** 'सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः' इति समाख्याश्रुतेरित्यर्थः । इति भेदकसत्यतोक्ता । श्रुतौ सो अस्येति 'प्रकृत्याऽन्तःपादमव्यपरे' इत्येङः प्रकृतिभावः । शवः सकारान्तमिदं सुखनामेत्याह- **सुखमिति ।। गृणे स्तौमीति ।।** यद्यपि 'अवाद्ग्रः' इत्युपसृष्टस्याऽऽत्मनेपदं विहितम् । तथाऽपि तस्य योगविभागाद्व्यत्ययाद्वा केवलादपि गृणातेरुपग्रहव्यत्ययात् साधु । **दोषिभिरिति ।।** 'विचित्रा हि तद्धितगतिः' इत्यरशब्दाद्दोषवाचकान्मतुबर्थे उण्प्रत्यय इत्युक्तं भवति ।

**मूलम्- न चावान्तरसत्यत्वमिदम् । 'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।', 'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते', 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः', 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा', 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् तत्केन कं जिघ्रेत् तत्केन कं विजानीयात् येनेदं सर्वं विजानाति तं च केन विजानीयाद् विज्ञातारमरे केन विजानीयात् ', 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति', 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति', 'अमृतस्यैष सेतुः' 'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे', 'ईशमाश्रित्य तिष्ठन्ति मुक्ताः संसारसागरात् । यथेष्टभोगभोक्तारो ब्रह्मान्ता उत्तरोत्तरम्' इति मोक्षानन्तरं भेदश्रुतिभ्यः। 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति भगवद्वचनम् । 'ॐ जगद्व्यापारवर्जं ॐ', 'ॐ प्रकरणादसन्निहितत्वाच्च ॐ' इत्यादि च ।।**

**(त.मं.)** मुक्तौ भेदस्य निवृत्तेरिदमवान्तरसत्यत्वमित्यत आह- **न चावन्तरेति ।। त्वः** एको ब्रह्मा ऋचां पोषं

मुख्यार्थमध्यास्ते । **पुपुष्वान्** आनन्दादिना पुष्टो मुक्तः त्वः गायत्रं साम गायति । त्वः शक्करीषु सम्बद्धं साम । **जातविद्या**मितिहासादि त्वो वदति । त्वस्तु ब्रह्मा यज्ञस्य मात्रामु **विमिमीते** विष्णो रूपमेव विशेषेण पश्यति । **जक्षन्** भक्षयन् । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, तदितर इतरं जिघ्रति' इत्यादिना मोक्षे भेदमभिधाय 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादौ मोक्षे विषयाभावपक्षस्याक्षेपो हि विधीयते । **यत्र** यस्मिन् पक्षे । द्वैतं **भवतीव** पारतन्त्र्येण भवति । न मुख्यत इतीवशब्दार्थः । यथा तादृगेव भवति न तु तदेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमेति । **अमृतस्य** मुक्तसमुदायस्यैष आधारः । **सखाय** एककालमुक्ताः । ब्रह्मादयोऽक्ष्यादिसर्वेन्द्रियवन्तोऽ**समाः** तारतम्यवन्तो बभूवुः । सुधासमुद्रे गुल्फजान्वादिदघ्ने विहर्तुं योग्यताविशेषवन्तः **आदघ्नास** ईषत्परिमाणाः केचित् । उपकक्षासः कक्षदघ्नसुधाः (कक्षस्य समीपे) केचित् । केचित् सुधायां यथेष्टं स्नानशीलाः ह्रदसम्बन्धात् ह्रदा इव ददृशिरे । **जगद्व्यापारवर्जम्** सर्वान्कामानाप्त्वाऽमृतः समभवदित्युच्यते । तत्र सृष्ट्यादिभ्यो-न्यानाप्नोति । कुतः? **प्रकरणादसन्निहितत्वाच्च** । जीवप्रकरणत्वात् । जीवानां तादृक्सामर्थ्यदूरत्वा-च्चेति श्रीमद्भाष्ये अनयोरर्थं स्वयमेवाह ।

**टीका-** ननु सत्यत्वं त्रिविधं- प्रातीतिकं व्यावहारिकं पारमार्थिकञ्चेति । तत्र प्रातीतिकं शुक्ति-रजतादीनाम् । व्यावहारिकं गगनादीनाम् । पारमार्थिकन्तु ब्रह्मणः । ततश्च जीवेश्वरभेदस्य व्याव-हारिकसत्यत्वात् तत्परमिदं श्रुतिजातं न परमार्थसत्यत्वपरं, तद्बोधकाभावात् । 'अहं ब्रह्मास्मि' इत्यादिकन्तु परमार्थसत्यत्वपरम् । अतो न तदनुसारेणान्यथयितव्यमित्यत आह- **न चेति ॥ अवान्तरसत्यत्वं** व्यावहारिकसत्यत्वम् । जीवेश्वरभेदस्येत्यादावुपस्कर्तव्यम् । कुतो नेत्यत आह-**यो वेदेति ॥ गुहायां** हृदये । **व्योमन्** व्योम्नि । ब्रह्मणा सहेति भेदोक्तिः । न च, **ब्रह्मणा** ब्रह्मरूपेण सर्वान् कामान् **सह** युगपदश्नुते इति व्याख्येयम् । ब्रह्मात्मैकत्वं प्राप्तस्य कामावाप्त्यनङ्गीकारात् । सर्वभेदनिवृत्त्युपलक्षणमेतदिति चेन्न । लक्षणायां प्रयोजनाभावात् । २. आनन्दमयस्य परब्रह्मत्वं त्वन्यत्र निर्णीतम् । उपसङ्क्रम्येति समीपप्राप्त्युक्त्या भेदः प्रतीयते । इमान् लोकाननुसञ्चरन्निति सम्बन्धः । काम्यत इति कामः । कामश्च तदन्नञ्चेति विग्रहः । कामेनेच्छया लभ्यमन्नमिति वा । **एतद्वक्ष्यमाणम्** । **३. त्वः** कश्चिद् ब्रह्मा **पुपुष्वान्** पुष्टः सन् ऋचां **पोषं** पुष्टमुच्चारणं कुर्वन्नास्ते । त्वस्तु ब्रह्मा **शक्करीषु** ऋक्षु गायत्रं साम गायति । त्वस्तु ब्रह्मा **जातविद्यां** पौरुषेयीविद्यां वदति । त्वस्तु ब्रह्मा **यज्ञस्य** विष्णो**र्मात्रामु** अंशमेव **विमिमीते** ध्यायतीति । अत्र भेदः स्फुट एव प्रती-यते । मोक्षविषयश्चैतद् ब्रह्मबहुत्वाभिधानात् । अतीतानन्तकल्पेषु मुक्तानां ब्रह्मणां बहुत्वोप-पत्तेः । न च वाच्यमृत्विग्विषयमेतदिति । एकस्मिन् यज्ञेऽनेकेषां ब्रह्मणामभावात् । अन्यथा त्वो ब्रह्मेत्यस्य वैयर्थ्यात् । ब्रह्मानुचरास्त्रयोऽपि ब्रह्माण इति चेन्न । तथाऽपि तेषां ऋक्पोषणादि-प्रसिध्यभावात् । यज्ञे जातविद्योपयोगाभावाच्च ।

**४. परञ्ज्योतिः** परमात्मानम**ुपसम्पद्य** तत्समीपं प्राप्येति भेदोक्तिः । 'जक्ष भक्षहसनयोः' । सहमुक्ता **ज्ञातयः** । **अज्ञातयस्तु** कल्पान्तरे मुक्ताः । ५. यत्र त्वस्येति वाक्यं स्वयमेवाऽचार्यो व्याख्यास्यति । ६. तादृगेव भवति न तु तदेव भवति । 'एवं मुनेर्विजानत आत्मा भवति गौतम' इति वाक्यशेषः । एवं **विजानतो मुनेः** विजानतां मुनीना**मात्मा**ऽधिपतिः हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति किमुतान्य इत्यर्थः । **७. पुण्यमनिष्टम्** । **निरञ्जनो** निर्लेपः । **साम्यं** परमात्मना निर्दुःखत्वादिसादृश्यमुपैतीति भेदोक्तिः । **८. अमृतस्य** मुक्तजात**स्यैषः** परमात्मा सेतुरिव सेतुराश्रयः । ९. प्राप्ताक्षिकर्णफलत्वा**दक्षण्वन्तो**ऽक्षिमन्तः कर्णवन्तश्च मुक्ताः **सखायः** परस्परं प्रीतियुक्ता **मनोजवेषु** प्रज्ञादिगुणे**ष्वसमाः** तारतम्योपेता बभूवुः । तत्र केचित् **आदघ्नास** आदघ्नाः । अर्शआदिभ्योऽच् । बहुप्रमाणक्षीराब्धिमन्तः तत्क्रीडापराः । **त्वे** केचि**दुपकक्षास** उपकक्षाः । **कक्षस्य** वनस्य **उप** समीपे उ एव वर्तमाना वनक्रीडारताः । त्वे **स्नात्वा उ** स्नातव्या ह्रदा इव गम्भीरा **ददृश्रे** ददृशिरे परमेश्वरमेव ददृशुरिति । अस्य मुक्तविषयत्वञ्च

**'श्रुत्वा विष्णुं कर्णफलम्' इत्यागमव्याख्यानाज्ज्ञायते । १०. उत्तरोत्तरं यथेष्टभोगभोक्तारः । ११. भगवद्वचनश्च मोक्षानन्तरमपि भेदं वक्ति । १२. जगद्व्यापारवर्जं मुक्तः सर्वान्कामानवाप्नोतीत्यैश्वर्यमर्यादोक्त्या जगद्व्यापारवतो हरेर्भेदोऽवगम्यते । अस्यापि भगवद्वचनत्वेऽपि निर्णायकत्वात्पृथगुक्तिः ।**

**मायामयं हि व्यावहारिकं नाम, मोक्षे च माया सर्वथा निवृत्तेति तदनन्तरमपि विद्यमानो भेदः कथं व्यावहारिकसत्यः स्यात् । अपरमुक्तिरेवेयमिति चेन्न । एतद्व्यतिरिक्तायां परममुक्तौ प्रमाणाभावात् । तद्वाक्यानाश्चानन्तरमेव व्याकरिष्यमाणत्वात् ।**

**(र.टि.)** प्रातिभासिकसत्त्वस्यामुख्यत्वरूपावान्तरत्वसद्भावादाह- **व्यावहारिकसत्यत्वमिति ॥** ननु 'ब्रह्मा त्वो वदति' इति सकृद्ब्रह्मशब्दश्रवणाद्ब्रह्मणामनेकत्वं नास्त्येवेत्यत आह- **अन्यथेति ॥** सकृत् श्रुतोऽपि ब्रह्मशब्दः सर्वत्र त्व इत्येतद्विशेष्यत्वेन सम्बध्यते । विशेष्यान्तराध्यहारे तु त्व इति व्यर्थं स्यादित्यर्थः । **आगमव्याख्याना-दिति ॥** 'अक्षण्वन्तः' इति वाक्यस्य मुक्तविषयत्वेनाऽगमे व्याख्यानादित्यर्थः ।

'श्रुत्वा विष्णुं कर्णफलमाप्तत्वात् कर्णसंयुताः ।  
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गुणाः ।  
तारतम्यं च तेषां च श्रुतावुदितमञ्जसा ।  
क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः ।  
उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।  
एके ह्रदे केचिदपि देवा एते सदा हरिम् ।  
नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।  
सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ॥'

इत्येवमेतच्छ्रुतिव्याख्यानरूपागमे बहुशो मुक्तपदश्रवणादिति भावः ।

**(रा.टि.)** अवान्तरेत्यस्य प्रातीतिकमिति भ्रमनिरासायाऽह- **व्यावहारिकसत्यत्वमिति ॥** कस्येत्याकाङ्क्षां पूरयति- **जीवेश्वरेत्यादिना ॥** व्योमन्निति 'सुपां सु लुक्' इति सप्तम्या लुक्, 'न ङिसम्बुद्ध्योः' इति नलोपाभाव इति भावेनोक्तम्- **व्योम्नीति ॥** हृद्गताकाश इत्यर्थः । **भेदोक्तिरिति ॥** सहभावस्य भेदाविनाभावादिति भावः। आनन्दमयस्य परिरीत्या कोशत्वे विवक्षितार्थासिद्धेराह- **आनन्दमयस्येति ॥ अन्यत्रेति ॥** भाष्यानुभाष्य-**(रा.टि.)** योरित्यर्थः । व्यवधानादाह- **इति सम्बन्ध इति ॥** कामपदस्य कर्मणि 'अकर्तरि च कारके' इति घञन्तत्वेन 'घञन्तः पुंसि' इति पुंलिङ्गत्वादाह- **कामश्च तदन्नं चेति विग्रह इति ॥** ततश्च मतुबर्थकेन्प्रत्यय इति भावः। एतेन कामरूपीत्यपि व्याख्यातम्। एतदित्यस्य परामर्शविषयाऽप्रतीतेराह- **एतद्वक्ष्यमाण-मिति ॥** 'हावु हावु' इत्यादेः प्रसिद्धत्वादनुक्तिः । 'पुष पुष्टौ' इत्यस्माद्धातोः लिटि, लिटः क्वसुरादेशे द्विर्वचने च सुबादौ सति रूपमुपेत्याऽह-**पुपुष्वान् पुष्टः सन्निति ॥** कर्मणि घञन्तमुपेत्य शेषोक्त्याऽर्थमाह-**पोषं पुष्टमुच्चारणमिति ॥** 'यज्ञो वै विष्णुः' इति श्रुतेः, 'यज्ञार्थात्कर्मणोऽन्यत्र' इति स्मृतेश्चाऽह- **यज्ञस्य विष्णो-रिति ॥** [१]'डु मिञ् प्रक्षेपे'श्नुविकरणं विमिमीते । अनेकार्थत्वाद्धातूनां ध्यायतीत्युक्तम्। **ऋत्विग्विषयमिति ॥** तथा च न मुक्तपरमेतदिति भावः। **ब्रह्मानुचरा इति ॥** ज्योतिष्टोमे हि ब्रह्माऽध्वर्युर्होतोद्गाता चेति चत्वारः प्रधानर्त्विजः। तेषां त्रयस्त्रयोऽनुचराः सन्ति। तत्र ब्रह्मणोऽनुचराः ब्राह्मणाच्छंसी, अग्नीत्, पोता चेत्येवंनामानोऽपि साहचर्याद् ब्रह्माण इत्युच्यन्त इति चेदित्यर्थः। **परंज्योतिः परमात्मेति ॥** 'आत्मा प्रकरणात्' इति चतुर्थे तथा निर्णयादिति भावः। **जक्ष भक्षहसनयोरिति ॥** जक्षन्नित्यस्य स्वेष्टं भक्षयन् हसन्नित्यर्थद्वयमिति भावः। **स्त्रीभिः क्रीडन्** मिथुनीभवन्। यद्वा स्त्रीभी **रममाणो** यानादिभिः क्रीडन्नित्यर्थः । मुक्तौ ज्ञात्यादेरभावादाह- **सहमुक्ता इति ॥ व्याख्यास्यतीति ॥** किञ्चिद्व्यवधानेनेति भावः। न तु विसदृशमिति भ्रमनिरासायैव-कारव्यावर्त्यमाह- **न तु तदेवेति ॥** अनेन जीवभेदाप्रतीतेराह- **एवं मुनेरिति ॥** काठकभाष्यानुरोधेनार्थमाह- **विजानतां मुनीनामिति ॥** श्रुतौ व्यत्ययेनैकवचनमिति भावः। एतेनेश्वरभावं प्राप्तस्य महानुभावस्यास्तु ब्रह्मतादात्म्यं विरिञ्चस्येति शङ्काऽपास्ता। 'अग्निहोत्रादि तु तत्कार्यायैव' इत्यादिसूत्रादौ पुण्यस्य मुक्तौ सुखाति-शयार्थत्वोक्तेः कथं तस्य हानिरुच्यत इत्यत आह- **पुण्यमनिष्टमिति ॥** काम्यफलकमित्यर्थः। 'रुग्मवर्णं कर्तारमीशं

पुरुषं ब्रह्मयोनिम्' इति पूर्वशेषः ।

'श्रुत्वा विष्णुं कर्णफलं प्राप्ताः' इत्याद्यागमानुरोधेनार्थमाह- **प्राप्तेति ।। बहुप्रमाणेति ।।** दघ्नशब्दः प्रमाणवाची 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति पाणिन्युक्तेः । आङ्पूर्वाद् दघ्नशब्दात् मत्वर्थे 'अर्श आदिभ्योऽच्' इत्यच्प्रत्यये व्यञ्जनस्य 'हलन्त्यम्' इति लोपे 'अतो गुणे' इति पररूपे सुबुत्पत्तौ 'आज्जसेरसुक्' इत्यसुगागमे आदघ्नास इति रूपसिद्धेः । बहुप्रमाणेति बहुव्रीहिणा बहुप्रमाणोपेतो यः क्षीराब्धिः तद्वन्तस्तत्क्रीडारता इति सिध्यतीति भावः । **स्नातव्या इति ।।** अर्हार्थे त्वन्प्रत्यय इति भावः । 'इरयो रे' इति रेभावे ददृश्रे इति रूपमिति भावेनाऽह-**ददृशिर इति ।।** छान्दसमात्मनेपदमिति भावेनोक्तम्- **ददृशुरिति ।। इत्यागमेति ।।**

'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः ।
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गणाः ।
**(रा.टि.)** तारतम्यं च तेषां च श्रुतावुदितमञ्जसा ।
क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः ।
उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।
ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् ।
नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।
सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ।।'

इत्यैतरेयभाष्योक्ताऽगमव्याख्यानादित्यर्थः । **भगवद्वचनश्चेति ।।** न केवलम् 'इत्यादिमोक्षानन्तरं भेदश्रुतिः' इति च शब्दार्थः । सूत्रमुपन्यस्य शेषोक्त्यैवार्थं व्यनक्ति- **जगद्व्यापारवर्जं मुक्त इति ।।** जगन्नियमनादिव्यापारवर्जं यथा भवति तथा मुक्तः सर्वान्कामानवाप्नोतीति जगद्व्यापारव्यतिरिक्तसर्वकामावाप्तिरूपैश्वर्यमर्यादोक्त्ये-त्यर्थः । 'प्रकरणात्' इत्यस्य तु, कुतः सर्वान्कामानिति श्रुतेर्मुक्तपरत्वं, सर्वशब्दस्य सङ्कोचश्च कुत इत्यतः 'प्रकरणात्' इति सूत्रम् । शरीरभेदादूर्ध्वमुत्क्रम्येति जीवप्रकरणाज्जीवानां च जगद्व्यापारसामर्थ्ये **असन्निहितत्वात्** तद्भिदूरत्वात्तद्धीनत्वादिति यावदित्यर्थः । ननु यो वेदेत्यादिश्रुत्युक्त्या कथं भेदस्य व्यावहारिकत्वनिरास इत्यत आह- **मायामयं हीति ।। निवृत्तेति ।।** 'तस्याभिध्यानाद्योजनात्तत्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतेरिति भावः । यत्र त्वस्येत्यादिवाक्यान्येव तत्र प्रमाणमित्यत आह- **तद्वाक्यानामिति ।।**

**(श्री.टि.) तद्बोधकाभावादिति ।।** परमार्थसत्यत्ववाचकपदाभावादित्यर्थः । **परमार्थसत्यपरमिति ।।** परमार्थसत्यभूतजीवब्रह्मैक्यपरमित्यर्थः । **तदनुसारेणेति ।।** व्यावहारिकसत्यतापरभेदश्रुत्यविरोधेनेत्यर्थः । **अन्य-थयितव्यमिति ।।** अन्तर्याम्यैक्यपरतया न व्याख्येयमित्यर्थः । **अवान्तरसत्यत्वमिति ।।** अमुख्यसत्यत्वमि-त्यर्थः । प्रातिभासिकसत्यत्वस्याप्यमुख्यसत्यत्वात्तद्व्यावृत्त्यर्थमाह- **व्यावहारिकेति ।। आदाविति ।।** अवान्तर-सत्यत्वमित्यतः प्रागध्याहर्तव्यमित्यर्थः । **ब्रह्मणा सहेति ।।** परब्रह्मणा सहेत्यर्थः । सायुज्यभाजां ब्रह्मणा सहभोगसद्भावादित्यवधेयम् । **अनङ्गीकारादिति ।।** ब्रह्मात्मकत्वमाप्तस्याविद्याया नष्टत्वेन तत्कार्यस्य कामस्यापि नष्टत्वादिति भावः । **एतदिति ।।** सर्वान्कामानिति पदमित्यर्थः । उक्तरीत्या मुख्यार्थस्य बाधितत्वादिति भावः। **प्रयोजनाभावादिति ।।** न च कामावाप्त्यनङ्गीकार एव प्रयोजनमिति वाच्यम् । सिद्धेऽस्य प्रयोजनत्वे तदर्थं सर्वभेदनिवृत्तौ लक्षणा, तस्यां च सत्यां तद्विरोधाभावेन तस्य प्रयोजनत्वसिद्धिरित्यन्योन्याश्रयादिति भावः । ननु 'एतमानन्दमयमात्मानम्' इति वाक्ये न जीवपरमात्मनोर्भेदः प्रतीयते, किन्त्वानन्दमयस्य कोशत्वेन तस्मादेव जीवस्य भेदप्रतीतेर्नैतदुदाहरणं युक्तमित्यत आह- **आनन्दमयस्येति ।। अन्यत्रेति ।।** 'आनन्दमयोऽ-भ्यासात्' इत्यधिकरणभाष्यानुव्याख्यानयोरित्यर्थः । अन्नस्य कामपदोक्तेच्छाभेदायोगादाह- **काम्यत इति ।।** तथा च 'कमु कान्तौ' कान्तिरिच्छा । ततः कर्मण्यण् णित्त्वादादिवृद्धौ कामेति रूपमिति भावः । **कामश्च तदिति ।।** काम्यं च तदित्यर्थः । **लभ्यमिति ।** तथा च मध्यमपदलोपी समास इति भावः । **वक्ष्यमाणमिति ।। (श्री.टि.)** हावु हाविवत्यादिनोत्तरत्र वक्ष्यमाणमित्यर्थः । **पुष्ट इति ।।** स्वयं पुष्टः सन्नित्यर्थः । पोषमित्यस्यार्थः पुष्टमुच्चारणमिति । पुष्टं यथा स्यात्तथेत्यर्थः । **शक्करीष्वृक्ष्विति ।।** शक्करीच्छन्दोबद्धासु ऋक्ष्वित्यर्थः । 'ऋच्यध्यूढं साम गीयते' इत्युक्तेरिति भावः । **स्फुट एवेति ।।** जीवेशयोर्ध्यातृध्येयभावोक्तेरिति भावः । नन्वेतत्कल्पे मुच्यमानस्य ब्रह्मण एकत्वात्कथं ब्रह्मबहुत्वमित्यत आह- **अतीतानन्तेति ।।** ननु ब्रह्मबहुत्वाभिधानान्यथाऽ-नुपपत्त्या नास्य वाक्यस्य मोक्षविषयकत्वं कल्प्यम् । यज्ञप्रसिद्धब्रह्माख्यर्त्विग्विषयत्वेनान्यथासिद्धत्वादित्या-शङ्क्य निराकरोति-

**न च वाच्यमिति ॥ अनेकेषामिति ॥** अस्मिन्कर्मणि त्वं ब्रह्मा भवेति यज्ञकाण्डे ब्रह्मण एकत्वप्रसिद्धेरिति भावः । यज्ञभेदेन ब्रह्मणामनेकत्वसद्भावात्कथमेतदित्यत उक्तम्- **एकस्मिन्यज्ञ इति ॥**

ननु स्यादिदं दूषणं यद्यत्र वाक्ये ब्रह्मणामनेकत्वं श्रूयेत । न चैतदस्ति । 'ब्रह्मा त्वो वदति' इति तृतीयपादे सकृदेव ब्रह्मशब्दश्रवणादित्यत आह- **अन्यथेति ॥** ब्रह्मणां बहुत्वानङ्गीकारे ब्रह्मा त्वो वदतीति वाक्ये त्व इत्यस्य वैयर्थ्यं स्यात् । तथा हि- पादत्रयेऽपि कश्चिदित्यर्थकास्त्वशब्दास्तावत् श्रूयन्ते । तेषां विशेष्यान्तरमपेक्षि-तम् । अतो विशेष्यतया ब्रह्मेत्येतदेव सर्वत्र सम्बध्यते इति वक्तव्यम् । तथा च ब्रह्मणामनेकत्वं सिध्यति । ननु ब्रह्मातिरिक्तऋत्विग्वाचिविशेष्यभूतं पदान्तरं किञ्चिदध्याह्रियत इति चेन्न । तथात्वे तृतीयपादे त्वो ब्रह्मेत्यस्य वैयर्थ्यं स्यात् । कश्चिद्ब्रह्मेति हि तस्यार्थः । इदं तु सजातीयब्रह्मणां बहुत्वाङ्गीकार एव श्लिष्टं भवति नान्यथा । अनेकेषु ब्राह्मणेषु सत्स्वेव हि कश्चिद्ब्राह्मण इति प्रयोगः । अतो ब्रह्मणामनेकत्वानङ्गीकारे ब्रह्मेत्येतावतैव पूर्तेस्त्व इत्यस्य वैयर्थ्यं स्यादिति भावः । ननु तथाऽपि ऋत्विक्परमेवेदं वाक्यम् । न च यज्ञे ब्रह्मबहुत्वानुपपत्तिरिति वाच्यम् । यज्ञे होता पोता प्रशास्तोद्गातेति प्रधाना ऋत्विजश्चत्वारः । तत्र होतैव ब्रह्मेत्युच्यते । एतेषां चतुर्णां त्रयस्त्रयः शिष्याः सन्ति । एवं सति यज्ञे षोडशर्त्विजः प्रसिद्धाः । तथा च ये होतृशब्दवाच्यब्रह्माख्यर्त्विगनुचराः शिष्याः सन्ति ते त्रयो ब्रह्माणो ब्रह्मशब्दवाच्याः 'ऋचां त्वः' इति पादत्रयप्रतिपाद्याः । अतस्त्वो ब्रह्मेति न व्यर्थमित्याशङ्कते- **ब्रह्मानुचरास्त्रयोऽपीति ॥ तेषां** ब्रह्मानुचराणां त्रयाणाम् । ऋक्पोषादीत्यादिपदेन गायत्रसाम-गानविष्णुरूपध्यानग्रहणम् । **प्रसिद्ध्यभावादिति ॥** याज्ञिकप्रसिद्ध्यभावादित्यर्थः । **जातविद्येति ॥** पुराण-विद्योपयोगाभावादित्यर्थः । तथा च तृतीयपादे ब्रह्मशब्देन प्रधानर्त्विग्भूतब्रह्मग्रहणेऽपि तस्य पुराणविद्यावदनं याज्ञिकप्रसिद्ध्यभावादयुक्तमिति भावः । **जक्ष भक्षेति ॥** तथा च जक्षन्नित्यस्य भक्षयन् हसन् वेत्यर्थो द्रष्टव्यः। **न तु तदेवेति ॥** अन्यथा वृद्ध्यभावप्रसङ्ग इति भावः । ननूदाहृते यथोदकमित्यर्धे दृष्टान्तमात्रकथनेन जीवेश-योर्भेदाप्रतिपादनादसङ्गतिरित्यह आह- **एवं मुनेरिति ॥** समुदायापेक्षमेकवचनमित्यभिप्रेत्य विजानता-मित्याद्युक्तम् । अन्ये जीवाः । ननु

'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय ........................... ॥'

इति पापवत् पुण्यस्याप्यपरोक्षज्ञानेन सर्वात्मना नाशः प्रतीयते । तदयुक्तम् । तथा हि- अपरोक्षज्ञाननाश्यं **(श्री.टि.)** पुण्यं काम्यमेव नापरम् । तच्च द्विविधम् इष्टमनिष्टञ्चेति । तत्रानिष्टपुण्यवदिष्टस्यापि पुण्यस्य नाशाङ्गीकारे ज्ञानस्येष्टविघातित्वेनापुरुषार्थत्वं स्यादतो व्याचष्टे- **पुण्यमनिष्टमिति ॥ अनिष्टं** काम्यमित्यर्थः। **प्राप्ताक्षिकर्णफलत्वादिति ॥** अक्षिकर्णयोः फलं विष्णुदर्शनं तच्छ्रवणश्च । तदुभयं मुक्तैः प्राप्तमस्तीत्यर्थः । **मनोजवेष्विति ॥** मनोवेगेषु मनोधर्मेष्वित्यर्थः । अत्र मुक्तानां जडमनसोऽभावात् यत्स्वरूपभूतं मनस्तदेवात्र विवक्षितम् । स्वरूपमन एव चास्मन्मते साक्षीत्युच्यते । प्रज्ञादेस्तद्धर्मत्वं च विशेषबलादेव समाधेयम् । मनश्शब्दस्य साक्षिपरत्वं चैकादशस्कन्धतात्पर्योदाहृते 'दुःखेषु गृह्यमाणेषु मनआदिभिरिन्द्रियैः' इति प्रमाणे दुःखादीनां मनोग्राह्यत्वोक्त्या सिद्धमित्यवगन्तव्यम् । **मनोजवेषु** प्रज्ञादिगुणेष्व**समा**स्तारतम्यापेता अपि **सखायः** परस्परं प्रीतियुक्ता एव बभूवुः । न तु लोकवत्परस्परं द्वेषेर्ष्यादियुक्ता इति योज्यम् । यथोक्तम्- 'अक्षरधियां त्वविरोधः' इति । तारतम्योपेतत्वमेव दर्शयितुमादघ्नास इत्यर्धः प्रवृत्तस्तं व्याचष्टे- **तत्र केचिदिति ॥ आदघ्नास इति ॥** तथा च ऋचि आङ्पूर्वकाद्दघ्नशब्दाज्जसि 'आज्जसेरसुक्' इत्यसुगागमे आदघ्नासस् इति जाते सस्य रुत्वे विसर्गे चाऽदघ्नास इति युक्तमिति ज्ञातव्यम् । ननु 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' प्रमाणार्थे एते तद्धितप्रत्ययाः स्युरिति सूत्रेण विहितास्तद्धितप्रत्ययाः शब्दोपर्येव प्रसिद्धा न तूपसर्गोपरि । अतः प्रकृते उपसर्गभूतस्य आङः पुरः कथं दघ्नच्प्रत्यय इति चेन्न । स्यादिदं यद्युक्तसूत्रविहितोऽयं दघ्नच्प्रत्ययः स्यात् । न चैवम् । किं नाम प्रमाणवाची दघ्नशब्द इति नोक्तदोष इति सम्प्रदायविदः । यथोक्तं सुधायाम्- 'तरतमशब्द इव दघ्नशब्दोऽप्रत्ययोऽप्यस्ति' इति । तर्ह्यसङ्गतिरित्यत आह- **अर्शआदिभ्योऽजिति ॥** अर्शआदिभ्यो मत्वर्थेऽच्प्रत्ययः स्यादिति सूत्रार्थः । मूलव्याधिवाचिनोऽर्शस्शब्दात् अर्शः अस्यास्तीति मत्वर्थेऽच्प्रत्यये अर्शस इति भवति । तद्वदत्रापि मत्वर्थेऽच्प्रत्यये दघ्न एषामस्तीति दघ्ना इत्यर्थः । स्पष्टं तदर्थमाह- **बहुप्रमाणक्षीराब्धिमन्त इति ॥** सम्यगर्थकस्याऽङोऽर्थो बह्विति । दघ्नशब्दार्थः प्रमाणेति । तथा च बहुप्रमाणं परिमाणमस्येत्यादघ्नम् । यद्वा आस्यशब्दस्य आभावः । तथा च आ आस्यं प्रमाणं परिमाणमस्येत्यादघ्नम् । तस्येदं तात्पर्यम्- **बहुप्रमाणेति ॥** आस्यपरिमाणेत्यर्थः । बहुप्रमाणं किं, यद्वन्तो मुक्ता इत्याकाङ्क्षायां क्षीराब्धीति विशेष्यभूतान्यपदार्थो दर्शितः । तथाऽप्यादघ्नासो बहुप्रमाणक्षीराब्धीत्यसङ्गतम् । अतो अर्शआद्यजन्तत्वमङ्गीकृत्य स एषामस्ति स्थानमिति विग्रहाभिप्रायेणोक्तम्-**क्षीराब्धिमन्त इति ॥** ननु क्षीराब्धिस्सर्वान्प्रत्यस्तीति तद्वत्त्वं सर्वसाधारणं नासाधारण्येन मुक्तत्वद्योतकम् । अतस्तत्तात्पर्यमाह- **तत्क्रीडापरा**

**इति ॥** क्षीराब्धौ क्रीडापरा इत्यर्थः। यथोक्तं सुधायाम्- 'केचिदादघ्नासः आस्यशब्दस्य आभावः। आस्यं परिमाणमस्येत्यादघ्नम् अमृतम्। तदेषामस्ति स्थानमित्यर्थः। 'अर्श आदिभ्योऽ-च्' । आस्यपरिमाणसुधानिधौ विहरन्त इति दूरत्वमुच्यते' इति। **गम्भीराः** निश्चलाः। **दद्दशिर इति ॥** तथा च ऋचि 'इरयो रे' इति सूत्रेण इरे इत्यस्य षष्ठी इरय इति। तस्य रेइत्यादेशो भवतीत्युक्तत्वाद् दद्दश्रे इति युक्ति-मिति भावः। नन्वक्षण्वन्त इति वाक्यस्य कुतो मुक्तविषयत्वं ज्ञापकाभावादित्यत आह- **अस्य मुक्तविषयत्वं चेति ॥** अक्षण्वन्त इति वाक्यस्य मुक्तविषयत्वेन तैत्तिरीयभाष्योदाहृतागमे व्याख्यानादित्यर्थः।

**(श्री.टि.)** 'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात् कर्णसंयुताः।
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गणाः।
तारतम्यं च तेषां तु श्रुतावुदितमञ्जसा।
क्षीरसागरदघ्नास्तु केचित् तिष्ठन्ति मुक्तिगाः।
उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम्।
ऐरे ह्रदे केचिदपि देवा एव सदा हरिम्।
नागभोगशयं मुक्ता दद्दश्रेऽधिकमोदिनः।
सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ॥'

इत्येवमेतच्छ्रुतिव्याख्यानरूपागमे बहुशो मुक्तपरत्वश्रवणादिति भावः। 'जगद्व्यापारवर्जम्' इति क्रियाविशेष-णम्। जगद्व्यापारवर्जं यथा स्यात्तथेत्यर्थः। तथा च तद्व्यतिरिक्तान् योग्यान् सर्वान् कामानवाप्नोतीत्यर्थः। हरेः सकाशात् जीवस्येति शेषः। नन्विदं ज्ञानमुपाश्रित्येतिवत् जगद्व्यापारवर्जमित्यस्यापि भगवद्वाक्यत्वादुभयं पठित्वाऽन्ते भगवद्वचनमिति वक्तव्यम्। तथाऽनुक्त्वा इत्यादि चेति पृथग्वचनं किमर्थमित्यत आह- **अस्या-पीति ॥ निर्णायकत्वादिति ॥**

'सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः।
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ॥'

इति ब्रह्मसूत्राणां निर्णायकत्वप्रसिद्धेरिति भावः। ननु श्रुत्याद्युदाहरणमात्रेण कथं भेदस्य व्यावहारिकत्वनिरास इत्यतोऽभिप्रायमाह- **मायामयं हीति ॥ अपरमुक्तिरिति ॥** गौणी मुक्तिः सगुणमुक्तिरिति यावत्। तथा च सगुणमुक्तौ मायाभेदाङ्गीकारात्तद्विषयमेव भवदुदाहृश्रुत्यादिकम्। निर्गुणमुक्तौ भेदानङ्गीकारादहं ब्रह्मास्मी-त्यादिकं निर्गुणमुक्तौ जीवब्रह्मणोः पारमार्थिकाभेदप्रतिपादनपरमिति भिन्नविषयत्वान्न विरोध इति भावः। **एतदिति ॥** अपरमुक्तित्वेन त्वदभिमतसगुणमुक्तिव्यतिरिक्तायां निर्गुणमुक्तिरूपपरममुक्तौ प्रमाणा-भावादित्यर्थः। ननु कथं मानाभावः। यत्र त्वस्येति वाक्यानामेव सत्त्वादित्यत आह- **तद्वाक्यानां चेति ॥** सगुणमुक्तिव्यतिरिक्तनिर्गुणमुक्तिप्रतिपादकतया प्रतीयमानानां वाक्यानामित्यर्थः।

**(पां.टि.)** व्यावर्त्यत्वेनोक्तशङ्काया मूलारूढत्वं दर्शयितुमवान्तरसत्यत्वपदं व्यावहारिकसत्यत्वपरतया व्याख्याति- **अवान्तरेति ॥ अनङ्गीकारादिति ॥** तथा च सिद्धान्ताननुगुणमेतद्व्याख्यानमिति भावः। उपलक्षणं चैतत्। श्रौताक्षराननुगुणं चेत्यपि द्रष्टव्यम्। ननु आनन्दमयस्य कोशत्वेनाब्रह्मत्वान्नेयं श्रुतिः मुक्तब्रह्मणोर्भेदे प्रमाणमित्यत आह- **आनन्दमयस्येति ॥ अन्यत्रेति ॥** आनन्दमयाधिकरणीयभाष्यानुव्याख्ययोरित्यर्थः। **सम्बन्ध इति ॥** असन्निधानेऽपि योग्यत्वादिति भावः। **काम्यत इति काम इति ॥** कर्मणि घञ् इति भावः। बहुव्रीहिणैव सम्बन्धलाभात् तदर्थकस्य इनेर्वैयर्थ्यमाशङ्क्य कर्मधारयादेव वाचनिकस्य इनेराश्रयणान्नानुपपत्तिरिति **(पां.टि.)** भावेन कर्मधारयमाह - **कामश्च तदन्नं चेति ॥ इच्छयेति ॥** अनेन कामनं काम इति भावे घञित्युक्तं भवति। **अनिष्टमिति ॥** इष्टनाशस्यापुरुषार्थत्वादिति भावः। **मुक्तजातस्येति ॥** अनेन अमृत-स्येत्येकवचनं जात्यर्थकमेव न व्यक्त्यर्थकमित्युक्तं भवति। सर्वसाधारणत्वात्। न 'अक्षण्वन्तः कर्णवन्तः' इति मुक्तानामसाधारण्येनोक्तिः सम्भवतीत्यतस्तां घटयति- **प्राप्तेति ॥ अक्षण्वन्तोऽक्षिमन्त इति ॥** अत्रच 'अनो नुट्' इति नुट् सुधाऽनुसारेण द्रष्टव्यः। ननु अक्षिशब्दस्य इकारान्ततया अन्नन्तत्वाभावात् कथमत्र अन्नन्तादुत्तरस्य मतुपो नुड्विधायकस्य 'अनो नुट्' इत्यस्य प्राप्तिः। न च 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनेन ङित्त्वादन्त्येकारस्यानङादेशेन अन्नन्तत्वसम्भवाद्युक्तैव ततः परस्य मतुपो नुट्प्राप्तिरिति वाच्यम्। तृतीयाद्यजादिविभक्तिपरत्व एव तस्यानङादेशविधायकतया असति तस्मिन्ननङादेशस्य तेनाप्यत्रानुपपत्तेरिति चेन्न। छन्दसि अनङ्विधानार्थं प्रवृत्ते 'छन्दस्यपि दृश्यते' इति सूत्रे दृशिग्रहणसामर्थ्याद् यतो विहितस्ततोऽ-न्यस्मादपि अजादाविवानजादावपि तृतीयादाविवातृतीयादावपि विभक्ताविवाविभक्तावपि परतश्छन्दस्य-नङादेशविधानसिद्ध्या

असत्यप्यजादितृतीयादिविभक्तिपरत्वे अक्षिशब्दस्येकारस्यानङादेशसम्भवेना-न्नन्तत्वोपपत्त्या तत्परस्य मतुपः 'अनो नुट्' इति नुड्विधानसम्भवात् ।

ननु चात्र विधीयमानोऽपि नुड् नुगिति कित्त्वात् किं पूर्वान्ततयाऽभिमतः किं वा नुडेवेति टित्त्वात् परादि-तया । नाऽद्यः । तथा सति प्रातिपदिकान्तत्वात् पदान्तत्वाच्च नुटो नकारस्य 'न लोपः प्रातिपदिकान्तस्य' इति लोपप्रसङ्गात् । 'न पदान्तस्य' इति पदान्तनकारस्य णत्वनिषेधेन तत्प्रसङ्गाच्च । नान्त्यः । तथा सति 'तदागमास्तद्-ग्रहणेन गृह्यन्ते' इति न्यायेन तस्य मतुब्भक्ततया तद्ग्रहणेन गृहीतत्वात् 'मादुपधायाः' इति वत्वप्रसङ्गात् । नुटा व्यवहितत्वान्मतुपो मकारस्य वत्वाभावप्रसङ्गाच्चेति चेत्, उभयत्राप्यदोषात् । तथा हि । अस्तु तावत् पूर्वान्त एवेत्याद्यः । न चैवं 'न लोपः प्रातिपदिकान्तस्य' इति नुटो नकारस्य लोपप्रसङ्ग इति वाच्यम् । नुटोऽसिद्धत्वेन तत्पूर्वनकारस्यैव 'न लोपः प्रातिपदिकान्तस्य' इति लोपसम्भवेन तदप्राप्तेः । न चैवमन्नन्तत्वाभावान्नुडनुपपत्तिरिति वाच्यम् । इदानीमन्नन्तत्वाभावेऽपि पूर्वं तत्सद्भावेन भूतपूर्वगत्या अन्नन्तत्वाश्रयणेन नुडुत्पत्तेरप्रत्यूहत्वात् । न चैवमपि 'न पदान्तस्य' इति नुटो नकारस्य णत्वप्रतिषेधप्रसङ्गः । भत्वाश्रयणेन णत्वोपपत्त्या तदप्रसङ्गात् । अस्तु वा द्वितीयः । न चैवं तदागमा इति न्यायेन मतुब्ग्रहणेन ग्रहणात् तस्य 'मादुपधायाः' इति वत्वप्रसङ्ग इति वाच्यम् । 'निर्दिश्यमानस्याऽदेशा भवन्ति' इति न्यायेन तत्र सूत्रे निर्दिश्यमानमतुप्परित्यागेनानिर्दिश्यमानस्य नुटस्तदप्रसङ्गात् । न च निर्दिश्यमानस्य मतुपो नुटा व्यवहितत्वात् कथं वत्वं स्यादिति वाच्यम् । नुटोऽसिद्धतया तदव्यवधानसम्भवेन मतुपो मस्य वत्वसम्भवात् । न च नुटः परादित्वे णकारस्य पूर्वपदान्तत्वाभावात् अक्षण्वन्त इति अक्षणऽवन्त इति णान्तस्य पदकाले अवग्रहानुपपत्तिरिति वाच्यम् । पदस्यानित्यतया पदकारैरेव लक्षणस्यानुवर्त्यतया लक्षणेन पदकाराणामननुवर्तनीयत्वादित्यास्तां प्रपञ्चः । ततश्चाक्षिशब्दात् तदस्यास्त्यस्मिन्नर्थे मतुप्प्रत्यये 'छन्दस्यपि दृश्यते' इति अनङादेशे 'अनो नुट्' इति नुटि नुटोऽसिद्धतया पूर्वनकारलोपे तत एव च **(पां.टि.)** 'मादुपधायाः' इति मतुपो मकारस्य वत्वे भूतपूर्वगत्या अन्नन्तत्वात् नुटि तस्य णत्वे च अक्षण्वन्निति प्रातिपदिकस्य निष्पत्तिरिति भावः ।

**मनोजवः** प्रज्ञातिशयः । बहुवचनमाद्यर्थ इति भावेन मनोजवेष्वित्येतद्व्याचष्टे- **प्रज्ञादिगुणेष्विति ॥** आस्यशब्दस्य आभावः, आस्यं परिमाणमस्येत्यादघ्नम् अमृतम् तदेषामस्ति स्थानमिति व्युत्पत्तिं मनसि निधाय आदघ्नास इत्येतद् व्युत्पादयति- **अर्श इति ॥** उपलक्षणमेतत् । 'आज्जसेरसुक्' इति असुक् चेत्यपि द्रष्टव्यम् । **स्नातव्या इति ॥** 'कृत्यार्थे तवैकेन्केन्यत्वनः' इत्यनेन त्वन् इति भावः । श्रुतौ 'इरयो रे' इत्यनेन इरे इत्यस्य रेभाव इति भावेनाऽह- **ददृशिर इति ॥** यदत्र वक्तव्यं तच्छेषवाक्यार्थचन्द्रिकायामस्माभिः प्रपञ्चितम् । तत एव प्रतिपत्तव्यम् । ननु वेदापभाष्यरीत्या अस्य वाक्यस्यार्थान्तरस्यैव प्रतीतेस्तद्विरुद्धतया भवदुक्तार्थपरत्वा-भावान्नानेन विवक्षितार्थसिद्धिरिति एतदुदाहरणं प्रकृतासङ्गतमित्यतस्तस्य 'श्रुत्वा विष्णुं कर्णफलं' इत्यन्यत्रो-दाहृतैतद्वाक्यव्याख्यानरूपस्मृतिविरुद्धत्वेन तस्यापव्याख्यानत्वेन तद्विरोधस्याकिञ्चित्करत्वाद् अस्मदुक्त-व्याख्यानस्यैवादरणीयत्वेन अस्त्येव प्रकृतोपयोग इति न तदुदाहरणासङ्गतिरिति भावेनाऽह- **अस्येति ॥** नन्वेतावताऽपि कथमेतत्प्रघट्टकव्यावर्त्योक्तशङ्कापरिहार इत्यतस्तमाह- **मायामयं हीति ॥ मोक्षे चेति ॥** अन्यथा तादृशस्य ब्रह्मणोऽपि व्यावहारिकत्वप्रसङ्गादिति भावः । यत्र त्वस्येत्यादिवाक्योक्ताया एव मुक्तेः परममुक्तित्वात्कथं तत्र प्रमाणाभाव इत्यतः आह- **तद्वाक्यानां चेति ॥ अनन्तरमेवेति ॥** अविनाशीत्याद्य-व्यवहितोत्तरग्रन्थेनेत्यर्थः ॥

**(व्या.टि.) अन्यथयितव्यमिति ॥** अन्यथाशब्दाण्णिचि इष्टवद्भावे तव्यप्रत्यये इडागमे गुणायादेशयोश्च रूपमिति भावः । **हृदय ति ॥** 'गुहाशयः' इत्यादौ हृदये गुहाशब्दप्रयोगादित्यर्थः । व्योमन्निति ङिलोप इति भावः । **भेदोक्तिरिति ॥** 'यत्कर्तव्यं तदनया सह' इति 'सजूर्देवेन त्वष्ट्रे' इति च साहित्यस्य भिन्नप्रतियोगिकत्व-नियमादित्यर्थः । ननु 'सहयुक्तेऽप्रधाने' इति ब्रह्मणोऽप्राधान्यापत्तिरिति चेत्, मैवम्, अर्थप्राधान्यस्येष्ट-त्वात् ।'सोमेन सह राज्ञा' इतिवदिति । अर्थान्तरमाशङ्कते- **न चेति ॥** सहेति व्याख्याति- **युगपदिति ॥** 'सह पशूनालभेत' इतिवत् 'सोऽश्नुते सकलान् कामान(न्)क्रमेण सुरर्षभः' इति स्मृतेरित्यर्थः । सर्वतो बलीयसी-मर्थानुपपत्तिमाह-**ब्रह्मत्वमाप्तस्येति ॥ अनङ्गीकारादिति ॥** 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति श्रुतेर्मुक्ते भोगाभावपरतया परैर्व्याख्यानादित्यर्थः । ब्रह्मीभूतस्य सर्वभोगासम्भवेऽपि तत्तद्भोक्तृभेदाभाव-परमेतदित्याशङ्कते- **सर्वभेदेति ॥** दूषयति- **लक्षणेति ॥** 'भेदेनैव तु मुख्यार्थसम्भवे लक्षणा कुतः' इत्युक्तेः इति भावः । ननु 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इति न जीवपरभेदश्रुतिः, आनन्दमयस्य कोशत्वादित्यत आह- **आनन्दमयस्येति ॥ अन्यत्रेति**

॥ 'आनन्दमयोऽभ्यासात्' इति सूत्र इत्यर्थः । ननु उपसङ्क्रम्ये-त्यतिक्रमोक्तेः कथं भेदलाभ इत्यत आह- **उपसङ्क्रम्येति ॥ समीपप्राप्त्युक्तेति ॥** विस्तरस्तु-

**(व्या.टि.)** 'उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति ।
अतिक्रमं वदन्तं तमुपशब्दो निवारयेत् ।
अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः ॥'

इत्यनुभाष्यदिशाऽवसेयः ।

**सम्बन्ध इति ॥** क्रियाकारकयोजनेत्यर्थः । नन्विच्छाया अनद्यत्वात्कथं कामान्नत्वमित्यत आह- **काम्य इति ॥** कर्मणि घञिति भावः । **इति विग्रह इति ॥** तत इनिरिति शेषः । न च 'न कर्मधारयान्मत्वर्थीयः' इति निषेधात् कथमिनिरिति वाच्यम् । नञा निर्दिष्टस्यानित्यत्वात् । अस्वरसादाह- **कामेनेति ॥** 'सङ्कल्पादेव च तच्छ्रुतेः' इति सूत्रादिति भावः । लभ्यमिति गम्यमानक्रियोक्तिः । **एतद्वक्ष्यमाणमिति ॥** 'अथैष ज्योतिः' इत्यादौ वक्ष्यमापरामर्शनादित्यर्थः । पुपुष्वानिति 'लिटः कानज्वा' 'क्वसुश्च' इति क्वस्वन्तमित्युपेत्य व्याचष्टे- **पुष्ट इति ॥** पोषमिति घञन्तं, णमुलन्तं वाऽभिप्रेत्याऽह- **पुष्टमिति ॥ विष्णोरिति ॥** 'यज्ञो वै विष्णुः' इति श्रुतेरित्यर्थः । 'स्वायम्भुवः स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः' इत्यादिनाऽऽकूतिसूनुर्यज्ञो विष्णुरिति प्रसिद्धम् । मात्रामित्यन्वाय्य व्याचष्टे- **अंशमेवेति ॥** अत्र शङ्क्यते-अंशमेवेति किमंशप्रातिपदिकादवधारणम्, एकवच-नाद्वा । नाद्यः । यतोऽवधारणं तदन्यत्र व्यवच्छेद इति अनंशस्य मूलरूपिणो बृहच्छरीरस्य ब्रह्माध्येयत्वप्रसङ्गः । न चेष्टापत्तिरिति वाच्यम् ।

'ब्रह्मा तु सर्वगम्पश्येद् गुणानप्यन्यतोऽधिकम् ।
मुक्तस्तु सर्वदा पश्येत्सर्वगत्वेन चापि तु ॥

इति, 'ब्रह्मणस्तु प्राय एव श्रियो यथा' इति च मुक्तब्रह्मणः सर्वदा सर्वगापरोक्षदर्शनाभिधानात् । दृश्यस्य ध्येयत्वात् । न द्वितीयः । अंशमेवेत्युक्तत्वाद् अन्यसङ्ख्यासङ्ख्येयरूपाध्याने,

'ब्रह्मा सर्वगुणां(णै)श्चैव क्रियासामान्यतश्च गीः ।
गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परे ॥'

इति ब्रह्मणो यावद्भगवन्मूर्तिध्यानोक्तेश्च । भगवदनन्तमूर्तीनामनन्तवेदवेद्यतयाऽवश्योपास्यत्वाच्च तद्विरोध इति चेन्न । अंशशब्दस्य गुणांशत्वेन(पर)ब्रह्मणो वेदोक्तयावद्गुणरूपादिध्यानेऽपि ध्यातव्यगुणादेः प्रत्येकमपि साकल्येनाज्ञेयत्वान्न कोऽपि दोषः । मुक्तस्य ब्रह्मणो ध्यानमपरोक्षज्ञानसन्तान इति रहस्यम् । **अत्र** विमिमीत इति श्रुतौ । **स्फुट एवेति ॥** ध्येयध्यातृभावोक्तेरित्यर्थः । प्रकृतोपयोगमाह- **मोक्ष इति ॥** तत्र युक्तिं वक्ति- **ब्रह्मबहुत्वेति ॥** संसारे तदयोगादित्यर्थः । मुक्तौ कथं मुक्तिरित्यत आह- **अतीतानन्तेति ॥ त्रयोऽपीति ॥** होत्रादय इत्यर्थः । परञ्ज्योतिपदं व्याख्याति-**परमात्मानमिति ॥** 'आत्मा प्रकरणात्' इत्यधिकरणे 'परञ्ज्योतिः परं ब्रह्म परमात्मादिकाः गिरः । वदन्ति विष्णुमेव' इति स्मृत्या तदसाधारण्योक्तेरित्यर्थः ।

**(व्या.टि.)** ननु 'ज्ञातिश्चेदनलेन किम्' इत्युक्तविरोधिदायादाभावात्कथं मुक्तौ ज्ञातिसद्भाव इत्यत आह- **सहमुक्ता इति ॥** तादृगेवेत्येवकारव्यावर्त्यमाह- **न तु तदेवेति ॥** एकवचनं जात्यभिप्रायेणेति मत्वाऽऽह-**विजानतामिति ॥** आत्मशब्दः 'अहम्भावो भवन्तश्च सर्वं नारायणात्मकम्' 'विष्णुरात्मा भगवतो भवस्यामिततेजसः' 'सूर्य आत्मा जगतस्तस्थुषश्च' इत्यादाविवाधिपतिपर इत्याह- **आत्माऽधिपतिरिति ॥** ननु सुखसाधनपुण्यविधूननं कथमिष्टमित्यतो व्याचष्टे- **पुण्यमनिष्टमिति ॥** मोक्षपरिपन्थीत्यर्थः । साम्यमिति व्याचष्टे- **सादृश्यमिति ॥ भेदोक्तिरिति ॥** अत एव पूर्वतन्त्रे 'श्येनेनाभिचरन् यजेत' इति विहितस्य श्येनस्य 'यथा वै श्येनो निपत्याऽदत्ते' इति श्येनसादृश्याभिधानाच्छ्येनशब्दो यागे गौण इत्युक्तं तद्व्यपदेशाधिकरणे । अमृतस्येति जातावेकवचनमित्याह- **मुक्तजातस्येति ॥ सेतुरिवेति ॥** नाम्ना तद्धर्मातिदेश इति भावः । साधर्म्यमाह- **आश्रय इति ॥** अनेनाऽश्रयाश्रयिभावेन भेदोक्तिः । **अक्षण्वन्त इति ॥** अक्षिशब्दान्मतुप् । 'छन्दस्यपि दृश्यते' इत्यनङ् । नुटोऽसिद्धत्वात्पूर्वं नलोपः । ततो 'अनो नुट्' इति नुट् । ननु मतुपो वत्वाप्रसङ्गः, तस्यैव वत्वप्रसङ्गश्च । नुटो वत्वं प्रत्यसिद्धत्वात् । यदि पूर्वान्तो नुक् क्रियेत तदा 'न पदान्तस्य' इति णत्वं न स्यात् । तस्मान्नुडेवोचितः । नन्वेवमवग्रहे दोषः स्यात् । अक्षणिति णान्तमवगृह्णन्ति । अक्षेत्यकारान्तमेव ग्रहीतुमुचितमिति चेत् । सत्यम् । 'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्तनीयम्,

तस्माद्यथालक्षणं पदं कार्यम्' इति महाभाष्ये स्थितम्। किञ्च देवयन्तः, भूरिक्ष(रत)वत्तरः, ईयिवांसमित्यादौ पदत्वं विनाऽपि बहुलमवग्रहः क्रियते। 'पूर्वेभिरग्निभिः' इत्यादौ सत्यपि पदत्वे न क्रियते इति बहुलं लक्षणावग्रह-वैपरीत्यमिति दिक्। एतावन्तमभिप्रेत्य व्याचष्टे- **अक्षिमन्त इति ॥ असमाः तारतम्योपेता इति ॥** ननु **एन** अकारवाच्येन ब्रह्मणा समा इति किं नोच्यत इति चेन्न। नञ्(ञुप)पदप्रकृतिस्वरानुपपत्तेः। आदघ्नास इति इत्याद्युत्तरविरोधाच्च। आनन्दादितारतम्यश्रुतिविरोधाच्च। आदघ्नास इति आस्यं प्रमाणमेषामिति विगृह्य 'प्रमाणे द्वयसच्' इत्यादिना दघ्नच्प्रत्ययः, आस्यपदस्य आभावः, 'आज्जसेरसुक्' इत्यसुगिति मत्वा व्याचष्टे- **आदघ्ना इति ॥** अथ वा आकाराद् बहुसमानार्थात्प्रमाणे दघ्नच्प्रत्ययः। 'दघ्नशब्दोऽप्रत्ययोऽप्यस्ति' इति सुधानुरोधाद्वा निर्वोढव्यः। मुक्तविशेषणं कथमित्यत आह- **अर्शआदिभ्योऽजिति ॥** उपकक्षास इति पदं व्याकरोति- **उपकक्षा इति ॥** 'बहुलं छन्दसि' इति बहुलग्रहणादतोऽमभावः। स्नात्वेत्येतद्याकरोति- **स्नातव्या इति ॥** 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति त्वन्प्रत्यय इत्युक्तं भवति। **दद्दश्रे दद्दशिर इति ॥** 'इरयोरे' इति रेभावः। अत्र रेशब्दस्येटि कृते पुनरपि रेभावः। तदर्थं(च)सूत्रे द्विवचनान्तं निर्दिष्टम् 'इरयोः' इति। भगवद्वचनमिति कर्तुः क्रियान्वयं दर्शयति- **भेदं वक्तीति ॥** सूत्रस्य श्रुत्याऽन्वयं दर्शयति- **जगद्व्यापारेति ॥ सर्वथेति ॥** 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति तन्निवृत्त्युक्तेरित्यर्थः।

**मूलम्- 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति तद्धर्माणामप्यनुच्छित्तेः प्रस्तुतत्वात्, 'अत्रैव मा भगवान् मोहान्तमापिपत् न प्रेत्य सञ्ज्ञाऽस्ति' इति सञ्ज्ञा-नाशस्य दोषत्वेनोक्तत्वात्, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इति ह्याक्षेप एव।**

**(त.मं.)** ननु यत्र हि द्वैतमित्यादि संसारकथनम्। यत्रत्विति मोक्षं प्रस्तुत्य तत्केनेत्यादिना भोग एवाक्षिप्यते, नायमैक्यपक्षाक्षेप इत्यत आह- **अविनाशीति ॥** मोहान्तं मोहसामग्रम्। मुक्तानां अमुक्तप्रज्ञाविषयत्वं नास्तीत्यभिप्रायेण प्रेत्य संज्ञा नास्तीति याज्ञवल्क्येनोक्ते सति प्रज्ञाश्रयत्व-निधेधाशङ्कावर्ती मैत्रेयीं प्रति हि याज्ञवल्क्यो 'न वा अरेहं मोहं ब्रवीमि अविनाशी' इति प्रज्ञादिधर्मानाशमाह। अहमिति वेद्य एव मोक्षस्य पात्रमिति वचनेनापि विज्ञातुरात्मनोऽ-विज्ञानमनुपपन्नम्।

**टीका-** ननु मोक्षानन्तरमपि भेदसद्भावप्रतिपादनाय यत्र त्वस्येति वाक्योदाहरणमयुक्तं, विरुद्धार्थ-त्वात्। क्रियाकारकफलसम्बन्धस्यात्यन्तमुच्छेदो ह्यत्र मुक्तस्योच्यते। तथा हि- 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादिनाऽविद्यामयीं संसारावस्थां प्रदर्श्य 'यत्र त्वस्य' इत्यादिना तद्विलक्षणां मुक्त्यवस्थां दर्शयति। **यत्र** यदाऽविद्यायां स्थितायां **द्वैतमिव भवति** शरीरेन्द्रिय-विषयादिरूपं स्वव्यतिरिक्तं किमप्यपारमार्थिकं भवति **तत्** तदा **इतरः** कर्ता **इतरं** घटम् **इतरेण** चक्षुषा पश्यतीत्यादि युज्यते। **यत्र तु** मुक्तावविद्यायां निवृत्तायाम् **अस्य** विदुषः **सर्वं** करणादिकम् **आत्मैवाभूत्** स्वव्यतिरेकेण किमपि नाभूत् **तत्** तस्यामवस्थायां **केन** करणेन **कं** विषयं पश्येत्, न केनापि किमपि पश्यतीत्यादि। येन करणसमूहेनेदं विषयजातं सर्वं विजानाति संसारी तमपि मुक्तौ केन विजानीयात्। न केनापि। किञ्च प्राक् **विज्ञातारम्** आत्मानञ्च **अरे** मैत्रेयि **केन विजानीयात्** न केनापि। तदेवं विरुद्धार्थस्य वाक्यस्योदाहरणमयुक्तम् इत्यतो यत्र त्वस्येत्यादि-वाक्यं व्याख्याति- **अविनाशीति ॥** यत्र त्वस्येत्याक्षेप एव न तु वस्तुस्थितिकथनम्। **हि** यस्मात् तस्मात् अत्रास्योदाहरणं युक्तमेव। नन्वत्र प्रश्नायोगात्किंशब्दस्य आक्षेपार्थत्वं परेणाप्यङ्गिकृत-मेव। तत्किमनेनाधिकमाचरितम्। उच्यते- नात्र किंशब्दस्याक्षेपार्थत्वमुच्यते। तस्योभयवादि-सिद्धत्वात्। किन्तु आक्षेपशब्दोऽत्र प्रसङ्गार्थः। यत्र त्वस्येत्यादिना मुक्तौ भेदानङ्गीकारे प्रसङ्ग आपदनात्मा क्रियत इत्यर्थः। मुक्तौ करणाद्यभावाद्दर्शनादिकं नास्तीति वस्तुस्थितिकथनमेव किं न भवति। इदं कुतः प्रसङ्गार्थतया व्याख्यानं क्रियत इत्यत उक्तम्- **अत्रैवेति ॥** भगवान् **अत्रैव** अवश्यवेदितव्य एव विषये **मा** मां **मोहान्तं** मोहाख्यं विनाशम् **आपिपत्** प्रापितवान्। कथं **प्रेत्य** मोक्षानन्तरं **संज्ञा** ज्ञानं नास्तीति। न चेदं सम्यग्ज्ञानम्। परमपुरुषार्थे

मोक्षे ज्ञानाभाव-स्यासम्यक्त्वादिति मुक्तौ ज्ञाननाशस्य पूर्ववाक्ये दोषत्वेनोक्तत्वात्।

ननु पूर्वपक्षस्थितया मैत्रेय्या दूषितत्वेऽपि कथं प्रतिपादकस्य याज्ञवल्क्यस्य वाक्यमन्यथयितुं शक्यमिति चेन्न। मोक्षस्यापुरुषार्थत्वप्रसङ्गो हि मैत्रेयीवाक्यस्यार्थः। यदि चोत्तरवाक्ये मुक्तस्य ज्ञानाभाव एव सिद्धान्तः स्यात्तदा मैत्रेय्युक्तप्रसङ्गस्योत्तरं वक्तव्यम्। न चोक्तम्। तेन गम्यते मुक्तस्य ज्ञानाभावो नोत्तरवाक्येऽभिप्रेत इति। न केवलं पूर्वपक्षस्थितया मैत्रेय्योक्तस्य दोषस्यापरि-हृतत्वान्यथाऽनुपपत्त्याऽभ्युपगतत्वावगमादाक्षेपोऽयं व्याख्यायते। किं तर्हीत्यत उक्तम्- **अवि-नाशीति**॥ न विद्यते उच्छित्तिर्येषां तेऽनुच्छित्तयः। अनुच्छित्तयो धर्मा यस्यासौ **अनुच्छित्ति-धर्मेति** मुक्तस्य। ज्ञानादीनां **धर्माणामपि** न केवलं स्वरूपस्य। **अनुच्छित्तेः प्रस्तुतत्वात्** पूर्ववाक्ये प्रतिपादकेनैवोक्तत्वात्प्रसङ्ग एवायमिति ज्ञायते। अन्यथा पूर्वोत्तरविरोधप्रसङ्गात्। ननु 'अत्रैव मा भगवान्' इति न मोक्षस्यापुरुषार्थत्वप्रसङ्गाभिप्रायः। किन्तु विज्ञानघन इत्युक्त्वा पुनः 'न प्रेत्य सञ्ज्ञाऽस्ति' इत्युक्ते व्याहत्यभिप्रायेण 'अत्रैव' इत्युक्तम्। तत्र, संसारे विज्ञानघनो मोक्षे तु केन कं पश्येदिति परिहारः सङ्गत एवेति। मैवम्। तथा सति 'अत्रैव मा भगवान् मोहान्तमापिपद्यद्विज्ञानघन' इति 'न प्रेत्य सञ्ज्ञाऽस्ति' इति चेति वाक्यद्वयोपादानप्रसङ्गात्। व्याघातस्य उभयाश्रितत्वात्। एकस्यैव तु वाक्यस्योपादानात्तद्विषयमेव दोषोद्भावनमिति ज्ञायते। न चान्योऽभिप्रायो दृश्यत इत्युक्ताभिप्रायमेवेदम्।

ननूच्छित्तिर्धर्मो यस्यासावुच्छित्तिधर्मा, नोच्छित्तिधर्मा अनुच्छित्तिधर्मेति स्वरूपाविनाश एवोच्यते, न तु धर्मानुच्छित्तिरिति चेन्न। स्वरूपाविनाशस्याविनाशीत्यनेनैवोक्तत्वात्। निर्विकारत्वं तेनोक्तमिति चेत्, तथाऽप्यनुच्छित्तिरिति बहुव्रीहिणैव पूर्णत्वाद्धर्मपदवैयर्थ्यम्। तस्मात् 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति संसारे ज्ञानरूपस्य जीवस्य भूतोत्पत्तिविनाश-निमित्तावुत्पत्तिविनाशावित्यभिधाय 'न प्रेत्य सञ्ज्ञाऽस्ति ' इति मुक्तस्य तु भूतानां विनिवृत्तत्वात् तन्निमित्तं वृत्तिज्ञानम्, उपलक्षणमेतद्, उत्पत्त्यादिकञ्च नास्तीति याज्ञवल्क्येनोक्तम्। ततो मोक्षस्वरूपं सम्यग्ज्ञातुकामा मैत्रेयी सर्वथा ज्ञानाभावोऽनेनोक्त इत्यारोप्य 'अत्रैव मा भगवान्' इत्याह। अथ याज्ञवल्क्यो, न वा अरे अहं मोहं ब्रवीमि इति- नाहं मोहकं वाक्यं ब्रवीमि, त्वन्तु भूतेभ्य इति प्रकरणमननुसन्धायान्यथा कल्पयसीत्युवाच। पुनस्तस्या विशेषजिज्ञासां ज्ञात्वा मोक्षविषया वादिविप्रतिपत्तीर्निराकुर्वन् शून्यवाद्यभिमतमात्मविनाशलक्षणं मोक्षम् 'अविनाशी वा अरेऽयमात्मा' इति निराकृत्य विशेषगुणोच्छेदलक्षणं वैशेषिकाद्यभिमतमपि मोक्षं निराकृत-वान्। अनन्तरं ये अद्वितीयचैतन्यमात्रावस्थानं मोक्षमास्थितास्तन्मतेऽनिष्टप्रसङ्गं वक्तुं तस्य व्याप्तिसापेक्षत्वात् तामादाववादीत्- यत्र हि द्वैतमिति। द्वयोर्भावो द्विता, भेद इति यावत्, तस्या इदं धर्मि द्वैतं, भिन्नं वस्त्वित्यर्थः। यद्वा 'द्वि' इति भावप्रधानम्। द्वित्वेनेतं प्राप्तं द्वीतम्। ततः स्वार्थिकाऽण्। द्वैतं- भेदवत्। अथ वा द्वाभ्यां विरुद्धधर्माभ्यामितं द्वीतम्। तत्र भवं द्वैतम्। भेद इति यावत्। यद्वा द्वितेत्यनेकत्वसङ्ख्योच्यते। तत्र भवं द्वैतं, भेद एव। द्वित्वेन सङ्ख्यया इतं, तत्र भवम्। द्वित्वसङ्ख्यया युते भवमिति वा। तत्र भेदिनां भेदस्य च पारतन्त्र्यादिवशब्दः। यदा द्वैतसद्भावस्तदैव दर्शनादिभोगो दृष्ट इति।

**(रा.टि.) क्रियेति**॥ क्रियाकारकफलैस्सम्बन्धस्येत्यर्थः। तानि चाग्रे व्यक्तानि। **अत्रेति**॥ 'यत्र त्वस्य' इति वाक्ये। मुक्तौ विज्ञातुरभावादाह- **प्राग्विज्ञातारमिति**॥ आकाङ्क्षाक्रमेण वाक्यं व्याचष्टे- **यत्र त्वस्येत्याक्षेप एवेत्यादिना**॥ आक्षेपपदस्याभिप्रेतार्थमुक्त्वा मूलवाक्यस्यार्थमाह- **यत्र त्वस्येत्यादिना**॥ आदिपदेन मूलोक्त-कृत्स्नवाक्यग्रहः। **दोषत्वेनोक्तत्वादिति**॥ कारणाद्यभावाद्दर्शनादिकं नास्तीति वस्तुस्थितिकथनपरतया न व्याख्यातव्यमिति वाक्यशेषः। **प्रतिपादकस्येति**॥ सिद्धान्तिन इत्यर्थः। **यदि चोत्तरवाक्य इति**॥ यत्र त्वस्येति वाक्य इत्यर्थः। **आक्षेपोऽयमिति**॥ यत्र त्वस्येत्यनेनोक्तोऽर्थ आपादनरूपप्रसङ्गात्मेत्यर्थः। धर्माणा-मनुच्छित्तिलाभाय बहुव्रीहिगर्भबहुव्रीहिमाह- **न विद्यत इति**॥ 'धर्मादनिच्केवलात्' इत्यनिच्प्रत्यये अनुच्छित्ति-धर्मा इति रूपमिति भावः। मूलस्थापिपदार्थं व्यनक्ति- **न केवलमिति**॥ प्रस्तुतत्वादित्यनुवादः। पूर्वेत्यादि-व्याख्या। **प्रतिपादकेनेति**॥ याज्ञवल्क्येनेत्यनुषङ्गः। **अत्रैवेत्युक्तमिति**॥ 'अत्रैव मा भगवान्'

इत्यादि-वाक्यमुक्तं मैत्रेय्येत्यर्थः। व्याहतिपरिहारार्थं यत्र त्वस्येत्याद्युत्तरवाक्यमिति भावेनावस्थाभेदेन व्याहतिनिरासप्रकारं व्यनक्ति- **तत्रेति ॥** परोक्ताभिप्रायकत्वे मैत्रेयीवाक्यस्योक्ते सतीत्यर्थः। **एकस्येति ॥** 'न प्रेत्य सञ्ज्ञाऽस्ति' इत्येवंरूपस्येत्यर्थः। **न चान्य इति ॥** त्वदुत्प्रेक्षितादस्माभिर्दूषितादन्योऽभिप्राय इत्यर्थः। परिशेषार्थमिय-मुक्तिः। इतिर्हेत्वर्थः। **इदमिति ॥** वाक्यमिति योज्यम्। **ननूच्छित्तिरिति ॥ उच्छित्तिर्विनाशो** धर्मो यस्य स नेत्यनुच्छित्तिधर्मा इत्यर्थः। तर्हि कोऽर्थोऽस्य वाक्यस्येत्यत आह- **तस्मादिति ॥** परोक्तार्थस्यायुक्तत्वादित्यस्य आपादनात्मकाऽऽक्षेप एवास्य वाक्यस्यार्थ इत्यनेनान्वयः। अत्रैव मा भगवानित्यतः पूर्ववाक्यमनूद्य तस्यार्थ-**(रा.टि.)** मनुवदति- विज्ञानेत्यादिना अभिधायेत्यन्तेन। भूतोत्पत्तीति भूतपदं भौतिकदेहपरम्। एतेन समुत्था-येत्यस्योत्पद्येत्यर्थ उक्तो भवति। **अभिधायेति ॥** बृहदारण्यके पञ्चमेऽध्याये मैत्रेयीब्राह्मण इति योज्यम्।

अनुविनश्यतीत्यनन्तरस्थवाक्यमुदाहृत्य तस्यार्थमाह- **न प्रेत्य सञ्ज्ञाऽस्तीति ॥** प्रेत्येत्यस्यार्थो मुक्त-स्येति। संज्ञेत्यस्यार्थो वृत्तिज्ञानमिति। संज्ञाऽस्तीत्यनन्तरं श्रुतौ पठितस्य **मूलकृदुदाहृतस्य** अत्रैवेति वाक्यस्य सङ्गतिमाह- **ततो मोक्षस्वरूपमिति ॥ इत्याहेति ॥** इत्यादि न प्रेत्य सञ्ज्ञाऽस्तीत्यन्तं वाक्यमाहेत्यर्थः। 'न वा अरे अहं मोहं ब्रवीम्यलं वै विज्ञानाय' इति तदुत्तरवाक्यस्य तात्पर्यार्थमाह- **अथेति ॥** अनन्तरमित्यर्थः। तदनन्तरपठितस्याविनाशीत्यादिवाक्यस्य सङ्गतिं वदन्नर्थमाह- **पुनस्तया इति ॥ निराकृतवानिति ॥** अनुच्छित्तिधर्मेत्यनेनेति योज्यम्। यदा द्वैतसद्भाव इत्यादिना व्याप्तिं दर्शयिष्यन् द्वैतशब्दार्थं पञ्चधा निरुच्य दर्शयति- **द्वयोर्भाव इत्यादिना ॥** यद्यपि भेदो न युगधर्मः। तथाऽपि तद्भेदोऽत्रैतद्भेदस्तत्रेत्येवं द्वयोर्धर्मत्वं ज्ञेयम्। एकवचनं तु घटपटयोः स्वरूपमितिवत्समुदायाशयम्। **द्वितेति ॥** 'तस्य भावस्त्वतलौ' इत्येकवचनस्या-तन्त्रत्वादिति भावः। **तस्या इदमिति ॥** धर्मधर्मिभावसम्बन्धेन 'तस्येदम्' इति सूत्रेणाण्प्रत्यये 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ द्वैतमिति रूपम्। भेदस्य स्वरूपत्वेऽपि भेदप्रतिनिधिविशेषेण धर्मधर्मिभावो युक्त इति भावः। **द्वित्वेनेतमिति ॥** धर्मिप्रतियोगिनिरूप्यत्वात्तदुभयगतद्वित्वेनेतमित्यर्थः। **स्वार्थिकोऽणिति ॥** प्रज्ञादेराकृति-गणत्वात् 'प्रज्ञादिभ्यश्च' इत्यनेनेति भावः। **तत्र भवमिति ॥** विरुद्धधर्माधिकरणयोर्वस्तुनोर्विद्यमानमित्यर्थः। 'तत्र भवः' इति सूत्रेण भवार्थेऽण्प्रत्यय इति सूचनाय तत्र भवमित्युक्तम्- **तत्र भवमिति ॥** अनेकसङ्ख्यायां भवम्। एकान्यद्वित्वबहुत्वादिसङ्ख्यासमानाधिकरणमित्यर्थः। द्विशब्दं भावप्रधानमुपेत्य द्वीते भवं द्वैतमिति भावेनाऽऽह- **द्वित्वसङ्ख्यया युते भवमिति वेति ॥ तत्रेति ॥** द्वैतपदस्य भेदिभेदोभयपरत्वे सतीति वा व्याप्तिप्रदर्शकवाक्य इति वाऽर्थः। यत्रेत्यस्य तदित्यस्य चार्थो यदा तदैवेति। **द्वैतसद्भावो** भेदिभेदसद्भाव इत्यर्थः। 'दृष्ट इति' इतिपदस्य तां व्याप्तिमादाववादीदिति पूर्वोक्तेनान्वयः॥

**(श्री.टि.) अविद्यामयीमिति ॥** यत्र हि द्वैतमिवेति इवशब्दस्य द्वैतप्रपञ्चेऽपारमार्थिकत्वरूपमायामयत्वार्थ-कत्वादिति भावः। मुक्त्यवस्थायां जीवस्य विज्ञातृत्वाभावादाह- **प्राग्विज्ञातारमिति ॥ वस्तुस्थितीति ॥** केन कं पश्येन्न केनापि किमपि पश्यतीत्यादीत्युक्तरीत्येत्यर्थः। **प्रश्नायोगादिति ॥** प्रश्नार्थत्वायोगादित्यर्थः। उत्तराभावादिति भावः। **परेणापीति ॥** न केनापि किमपीत्युक्तत्वादिति भावः। **न चेदमिति ॥** मोक्षानन्तरं ज्ञानं नास्तीति यत्तदित्यर्थः। **दूषितत्वेऽपीति ॥** मोक्षानन्तरं ज्ञानाभाववचनस्य मोहकत्वोक्त्या दूषितत्वेऽपी-त्यर्थः। **प्रतिपादकस्येति ॥** सिद्धान्तयितुरित्यर्थः। **वाक्यं** यत्र त्वस्येति वाक्यम्। मैत्रेय्या दोषत्वोक्त्यनुरोधेनेति शेषः। **अन्यथयितुं** प्रसङ्गार्थतया व्याख्यातुम्। **मोक्षस्येति ॥** अत्रैव मा भगवानिति मैत्रेयीवाक्यस्य मोक्षानन्तरं ज्ञानं नास्तीत्यस्य मोहकत्वकथनमेव नार्थः। किन्तु मोक्षानन्तरं ज्ञानाभावे तस्यापुरुषार्थत्वं स्यादित्यपुरुषार्थ-त्वापादनमपीत्यर्थः। अन्यथा निर्दलपूर्वपक्षकरणे मैत्रेय्या असुज्ञत्वप्रसङ्गादिति भावः। 'मैत्रेय्युक्तोत्तरं च किम्' **(श्री.टि.)** इत्यनुव्याख्यानं हृदि निधायाऽऽह- **यदि चेति ॥ उत्तरवाक्ये** यत्र त्वस्येति वाक्ये। **सिद्धान्तो** याज्ञवल्क्यस्य। **मैत्रेय्युक्तप्रसङ्गस्य** ज्ञानाभावे मोक्षस्यापुरुषार्थत्वापादनस्य। **उत्तरं वक्तव्यमित्यादि ॥** यदि मुक्तस्य ज्ञानाभाव एव याज्ञवल्क्यसिद्धान्तस्स्यात् तदा ज्ञानाभावेऽपुरुषर्थत्वं स्यादिति मैत्रेय्या कृतापादनस्य ज्ञानाभावेऽपि पुरुषार्थत्वं सम्भवतीत्यपुरुषार्थत्वपरिहारेण तर्केऽप्रयोजकत्वोक्त्योत्तरं वक्तव्यं स्यात्। न चोक्त-मित्यर्थः। **अभ्युपगतत्वेति ॥** ज्ञानाभावेऽपुरुषार्थत्वप्रसङ्गो यो मैत्रेय्योक्तः स याज्ञवल्क्येनाऽभ्युपगत इत्यव-गमादित्यर्थः। **अयं** यत्र त्वस्येत्यादिवाक्यसमुदायः। **प्रतिपादकेन** सिद्धान्तयित्रा याज्ञवल्क्येन। **अन्यथा** यत्र त्वस्येत्यादेर्वस्तुस्थितिकथनपरत्वे। **पूर्वोत्तरेति ॥** पूर्वमनुच्छित्तिधर्मेति ज्ञानादिधर्माणामनुच्छित्तिं प्रतिपाद्य वस्तुस्थितिकथनपरेण यत्र त्वस्येत्यादिनोत्तरेण वाक्येन ज्ञानाभावप्रतिपादने याज्ञवल्क्यवाक्यस्य पूर्वोत्तरविरोधः स्यादित्यर्थः। **व्याहत्यभिप्रायेणेति ॥** तथा च मोहान्तमित्यस्य चित्तभ्रंशरूपम् **अन्तं** विनाशमित्यर्थो द्रष्टव्यः। विज्ञानघन इत्युक्तप्रकारेण जीवस्य ज्ञानरूपत्वं वा न प्रेत्य सञ्ज्ञाऽस्तीत्युक्तरीत्या ज्ञानाभावो वेति चित्तविभ्रंशरूपं मोहं प्रापितवानित्युक्त्या तव व्याहतिः

प्राप्नोतीत्यभिप्रायः। 'मुह वैचित्त्ये' इति धातुः। **उपादानप्रसङ्गा-दिति ॥** मैत्रेय्येति शेषः। कुत इत्यत आह-**व्याघातस्येति ॥** **उभयाश्रितत्वादिति ॥** वाक्यद्वयनिरूप्यत्वादि-त्यर्थः। **तद्विषयमेवेत्यादि ॥** मोक्षे ज्ञानानङ्गीकारे मोक्षस्यापुरुर्थत्वापादनरूपदोषोद्भावनं मैत्रेय्याऽभिप्रेतमि-त्यर्थः। **अन्योऽभिप्राय इति ॥** मैत्रेयीवाक्यस्यैवमभिप्राये सिद्धे सति यत्र त्वस्येत्यादियाज्ञवल्क्यवाक्यस्य वस्तुस्थितिकथनपरत्वरूपान्योऽभिप्रायो न दृश्यत इत्यर्थः। तथात्वे मैत्रेय्युक्तापुरुषार्थत्वरूपदोषस्यापरिहार-प्रसङ्गादिति भावः। **उक्ताभिप्रायमेवेदमिति ॥** यत्र त्वस्येति वाक्यमस्मदुक्तरीत्याऽऽक्षेपाभिप्रायकमेवेत्यर्थः।

अनुच्छित्तिधर्मेति तद्धर्माणामनुच्छित्तेः प्रस्तुतत्वादित्युक्तमयुक्तमित्याशङ्कते- **ननूच्छित्तिर्धर्म इति ॥ अनुच्छित्तिधर्मेति ॥** विनाशाभावाख्यधर्मवानित्यर्थः। **उक्तत्वादिति ॥** तथा च पुनरुक्तिरिति भावः। **निर्विकारत्वमिति ॥** विनाशशब्देन विकारस्य विवक्षितत्वात् तदभावोऽविकारित्वमिति यावत् अविनाशीति पदेनोच्यते। अनुच्छित्तिधर्मेत्यनेन तु स्वरूपानाशरूपं नित्यत्वमुच्यत इति न पुनरुक्तिरिति भावः। **तथाऽ-पीति ॥** यद्यप्येवं पुनरुक्तिपरिहारः। तथापि स्वरूपानाशरूपनित्यत्वप्रतिपादनायानुच्छित्तिरित्येतावता पूर्णत्वेन धर्मपदवैयर्थ्यमित्यर्थः। नन्वनुच्छित्तिरित्येवोक्तौ न उच्छित्तिः अनुच्छित्तिरिति नञ्समासेनोच्छित्तिरूपविनाश-भिन्नत्वमेव प्राप्नोति न तु स्वरूपस्यानाश इत्यत उक्तम्- **बहुव्रीहिणैवेति ॥** न विद्यत उच्छित्तिर्यस्यासावनु-च्छित्तिरिति बहुव्रीहिणैव स्वरूपानाशलाभादित्यर्थः। एवं परपक्षेऽनुपपत्तिं प्रदर्श्य मैत्रेय्या आक्षेपकरणे प्रसक्तिं दर्शयन् प्रकरणशुद्ध्या व्याचष्टे- **तस्मादित्यादिना ॥** तस्मादित्यस्याऽऽपादनात्मकाक्षेप एवास्य वाक्यस्यार्थ इत्युत्तरेण सम्बन्धः।

'आशङ्क्यास्य ज्ञानहानिं मैत्रेय्या मोहमाह माम्।
भवानित्युक्तवत्या हि नाहं मोहं वदामि ते।
**(श्री.टि.)** इत्युक्त्वा याज्ञवल्क्यो हि स्वरूपानाशमूचिवान्।
ज्ञानरूपस्य विज्ञाननाशस्तन्नाश एव यत्।
इति शून्यमतोच्छित्त्यै .......... ॥'

इत्यनुव्याख्यानं हृदि निधायाऽह- **विज्ञानघन एवेत्यादिना ॥** याज्ञवल्क्येनोक्तमित्यन्तेन मैत्रेय्या आक्षेपकरणे प्रसक्तिर्दर्शितेति ज्ञातव्यम्। **प्रकरणमननुसन्धायेति ॥** 'भूतेभ्यः समुत्थाय' इति प्रकरणानुसन्धाने वृत्ति-ज्ञानाभावस्यैव प्राप्तेरिति भावः। **अन्यथा कल्पयसीति ॥** सर्वथा ज्ञानाभावोऽनेनोक्त इति कल्पयसीत्यर्थः।

'पुनरानन्दपूर्वकान्। धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनिवारितान्'

इत्यनुव्याख्यानं हृदि निधायाऽह- **विशेषगुणोच्छेदेति ॥** अशेषविशेषगुणोच्छेदेत्यर्थः। **निराकृतवान्** अनु-च्छित्तिधर्मेत्यनेनेत्यर्थः।

'आचिक्षेप मतं तच्च यस्मिन्न विषयादिकम्।
घ्राणादिभोगाभावस्य त्वनिष्टत्वहृदा श्रुतिः ॥'

इत्यनुव्याख्यानं मनसि निधायाऽह- **अद्वितीयचैतन्येति ॥ अनिष्टप्रसङ्गं वक्तुमिति ॥** यदि निर्विशेष-चैतन्यमात्रावस्थानं मोक्षस्स्यात्तदा दर्शनाऽघ्राणादिभोगो न स्यादित्यनिष्टप्रसङ्गं यत्र त्वस्येत्यादिना वाक्येन वक्तुमित्यर्थः। **तामादाविति ॥** तत्र व्यतिरेकव्याप्तिं आदाववादीदित्यर्थः। **द्वयोर्भेदवतोः। भावो** धर्मः। **तस्याः** भेदाख्यद्वितायाः। **धर्मीति ॥** तदुपेतमित्यर्थः। तथा च द्विताशब्दादण्प्रत्यये णित्त्वादादिवृद्धौ द्वैतमिति रूपमिति भावः। **द्वित्वेन** भेदेन। **स्वार्थिकोऽणिति ॥** तथा च द्वीतशब्दात् स्वार्थिकाणप्रत्यये णित्त्वादादिवृद्धौ द्वीतमेव द्वैतमित्यर्थः। **तत्र भवमिति ॥** विरुद्धधर्मद्वयोपेतवस्तुनोर्विद्यमानमित्यर्थः। तथा चात्र 'तत्र भवः' इति सूत्रेण भवार्थेऽण्प्रत्यय इति भावः। **अनेकत्वसङ्ख्योच्यत इति ॥** द्वित्वसङ्ख्यामारभ्य परार्धपर्यन्तसङ्ख्या-सङ्घहोऽनेकत्वसंख्येत्यनेन कृत इति ज्ञातव्यम्। **तत्र भवमिति ॥** अनेकत्वसङ्ख्योपेते वस्तुनि विद्यमानमि-त्यर्थः। पुनः प्रकारान्तरमाह- **द्वित्वसङ्ख्ययेति ॥** द्वित्वरूपसङ्ख्यया **इते** युक्ते वस्तुनि भवमिति व्युत्पत्त्या द्वैतं भेद एवेत्यर्थः। ननु यत्र हि द्वैतमिवेतीवशब्दाद्भेदस्य मिथ्यात्वं प्रतीयत इत्यतः 'अस्वातन्त्र्यादिवेत्युक्तं न द्वैताभावतः क्वचित्' इत्यनुव्याख्यानं मनसि निधायाऽह- **तत्र भेदिनामिति ॥** तथा च यत्र हि द्वैतमिव भवतीत्यस्य पराधीनोऽपि भेदो यत्र वर्तत इत्यर्थो द्रष्टव्यः।

**(पां.टि.) प्रश्नायोगादिति ॥** उत्तराभावेन प्रश्नार्थत्वायोगादिति भावः। **न विद्यत इत्यादि ॥** अत्र च न विद्यते उच्छित्तिर्येषान्ते तथोक्ताः। अनुच्छित्तयो धर्मा यस्यासावनुच्छित्तिधर्मेति बहुव्रीहिपूर्वपदो बहुव्रीहिः धर्माणामनुच्छित्तित्वलाभार्थम् अनिच्प्रत्ययनिर्वाहार्थं च समाश्रितः। एवं सत्येव 'धर्मादनिच् केवलात्' इति धर्मान्ताद्बहुव्रीहेः समासान्तोऽनिच्प्रत्यय उपपद्यते। तथा हि- बहुव्रीहिणा पूर्वपदमाक्षिप्यते। तस्य केवलादिति **(पां.टि.)** विशेषणम्। तेन पूर्वपदीभवतः **केवलाद्** अन्यनिरपेक्षात्परो यो धर्मशब्दः तदन्ताद्बहुव्रीहेः समा-सान्तोऽनिच्प्रत्ययः भवतीति सूत्रार्थः सम्पद्यते। अत एव, परमः स्वः धर्मो यस्येति परमस्वधर्म इति त्रिपदे बहुव्रीहौ नानिच्प्रत्ययः प्रसज्यते। तत्र स्वशब्दस्य मध्यत्वादन्यसापेक्षत्वेन केवलस्य तस्य पूर्वपदत्वाभावात्। यदा च स्वो धर्मः स्वधर्मः, परमः स्वधर्मो यस्येति परमस्वधर्म इति बहुव्रीहिस्तदा यद्यपि पूर्वपदमन्यानपेक्षरूपकेवलं भवति। तथाऽपि स्वशब्देन व्यवायान्न ततः परो धर्मशब्द इति न भवति समासान्तः। ततश्चात्रानुच्छित्तिशब्दो बहुव्रीहेः पूर्वपदं भवन्नान्यमपेक्षत इति केवलात्परो धर्मशब्द इति भवत्येवात्र समासान्तोऽनिच्प्रत्ययः। अत एव 'निवृत्तिधर्मा स्थानी भवति' इति प्राचां प्रयोगः सङ्गच्छते। एवमेव 'साध्यसमानधर्मा धर्मी सपक्षः' इति टीकाकारीयोक्तिरपि निर्वाह्या। इयांस्तु विशेषः। यदत्र बहुव्रीहिपूर्वपदो बहुव्रीहिः, तत्र 'साध्येन समानः साध्यसमानः, स धर्मो यस्य' इति तृतीयातत्पुरुषपूर्वपदो बहुव्रीहिरिति। एवम् 'सन्दिग्धसाध्यधर्मा धर्मी पक्षः' इत्याद्यपि निर्वाह्यम्। नन्वेवं बहुव्रीहिणा पूर्वपदमाक्षिप्यते। तच्च केवलादित्यनेन विशिष्यत इत्यङ्गीकारे केवलपदमनर्थकं स्यात्। पूर्वपदशब्दस्य समासप्रथमावयवे रूढत्वेन मध्यमपदव्यावृत्तिसम्भवादिति चेन्न। पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन सार्थक्यसम्भवादिति। केचित्तु **केवलं** पदान्तरेणाविशिष्टं समासानात्मकमिति यावत्, यत्पूर्वपदं तस्मात्परो धर्मशब्द इत्येव सूत्रार्थः। ततश्च उच्छित्तिर्धर्मो यस्येत्युच्छित्तिधर्मा न उच्छित्तिधर्मा अनुच्छित्तिधर्मा इत्येव विग्रहोऽत्राभिमतः। न विद्यते उच्छित्तिर्येषान्ते अनुच्छित्तयः, अनुच्छित्तयो धर्मा यस्येति तु तात्पर्यकथनमात्रं टीकायां कृतम्। न तु विग्रहप्रदर्शनमेतत्। धर्माणामविनाशसिद्धिस्त्वार्थिक्येव। 'सन्दिग्धसाध्यधर्मा धर्मी पक्षः' इत्यादावपि साध्यं धर्मो यस्येति साध्यधर्मेति व्युत्पाद्य सन्दिग्धश्चासौ साध्यधर्मा चेति कर्मधारयः। स च सन्देहः साध्यधर्मद्वारक एव पर्यवस्यतीति न कश्चिद्दोष इत्याहुः। तन्न। उक्तरीत्या धर्माणामविनाशित्वस्य साध्यसन्दिग्धतायाश्च साक्षाल्लाभसम्भवे क्लिष्टकल्पनानवकाशात्। भवदुक्तार्थकल्पनाया आकरग्रन्थानारूढत्वात्। 'निवृत्तिधर्मा स्थानी भवति' इत्याद्यभियुक्तप्रयोगप्रत्यनुकूलत्वाच्च। अस्मदुक्तार्थस्य भ्वादिगणे धृञ् धारण इति धातौ माधवग्रन्थे स्पष्टत्वादिति दिक्।

यत्तु 'अनुच्छित्तिर्धर्मो यस्येति विग्रहे अविनाशीत्यनेन पुनरुक्तिः' इत्यत्र पुनरुक्तिरित्युपलक्षणम्। अनिच्प्रत्ययानुपपत्तिश्च द्रष्टव्येति व्याख्याय, 'धर्मादनिच् केवलात्' इति केवलोपपदपूर्वात् केवलाच्च धर्मशब्दात् तद्विधानादित्युपपादनं तरङ्गिणीकारैः कृतम्, तत्तु 'केवलादिति धर्मशब्दस्य च विशेषणमित्याह' इति, 'केवलादिति कैवल्यं धर्मप्राक्पदयोः संमतम्' इति प्रसादपाणिनीयमतदर्पणदर्शनमात्रमूलकं न परामर्शमूलकमित्ययुक्तत्वा-दुपेक्ष्यम्। **आत्मविनाशलक्षणमिति ॥** 'विमोक्षस्तस्य तापिनः' इति तद्वचनादिति भावः। **द्वयोर्भावो द्वि-तेति ॥** द्विशब्दाद्भावे अभिधेये 'तस्य भावस्त्वतलौ' इति तल्प्रत्यये तलन्तत्वात् स्त्रीप्रत्यये च सति द्वितेति रूपनिष्पत्तिरिति भावः। **तस्या इदमिति ॥** द्विताशब्दाद् इदमर्थे 'तस्येदम्' इत्यणि आदिवृद्धौ 'यस्येति च' इति आकारलोपे द्वैतशब्दनिष्पत्तिरिति भावः। **द्वीति भावप्रधानमिति ॥** धर्मिवाचको द्विशब्दो लक्षणया **(पां.टि.)**द्वित्वरूपधर्मपर इत्यर्थः। **स्वार्थिकोऽणिति ॥** प्रज्ञादित्वाद् द्वीतमेव द्वैतमिति स्वार्थिके अणि णित्त्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे तच्छब्दनिष्पत्तिरिति भावः। **भेद इति तत्र भवमिति ॥** विरुद्धधर्मवति विद्यमानमित्यर्थः। द्वीतशब्दात् तत्र भव इत्यस्मिन्नर्थे अणि णित्त्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे तच्छब्दनिष्पत्तिरिति भावः । **भेद इति यावदिति ॥** एवं च पक्षद्वयेऽपि नार्थभेदः, अपि तु शब्दभेद एवेति भावः। **तत्र भवं द्वैतमिति ॥** 'तत्र भवः' इत्यनेन अणि पूर्ववत् शब्दनिष्पत्तिः। **युते भवमिति ॥** प्रज्ञादित्वात्स्वार्थिकेऽणि द्वैतशब्दनिष्पत्तिरिति भावः। **पारतन्त्र्यादिवशब्द इति ।**

'अस्वातन्त्र्यादिवेत्युक्तं न द्वैताभावतः क्वचित्'

इति अन्यत्र तत्समर्थनादिति भावः। एवं सति सिद्धां प्रसङ्गव्याप्तिं दर्शयति- **यदेति ॥** अत्र यदा द्वैताभावः तदा भोगाभावः इति प्रसङ्गाङ्गभूता व्याप्तिरवधारणबलेन फलितेत्यर्थः।

**(व्या.टि.) विरुद्धेति ॥** भेदविरुद्धेत्यर्थः। तमेव दर्शयति- **अत्यन्तमुच्छेद इति ॥** तदानुगुण्येन व्याख्याति- **तथा हीति ॥** वाक्यद्वयाभिप्रायमुक्त्वाऽन्वयं प्रदर्शयति- **यत्र यदेत्यादि ॥** अपारमार्थिकमिति इवशब्दार्थ-प्रदर्शनम्। **इत्यादीति ॥**

क्रियाकारकभावादीत्यर्थः । जडाभेदाभावादाह- [१]**स्वातिरेकेणेति** ॥ विषयाज्ञानमुक्त्वा करणाज्ञानमाह- **तस्मादिति** ॥ गूढाभिसन्धेरुत्तरमविद्वान् शङ्कते- **नन्वत्रापीति** ॥ आशयमुद्घाटयति- **उच्यत इति** ॥ बृहद्भाष्यमनुरुन्धान आह- **प्रसङ्गार्थ इति** ॥ हेतुपरतया मूलं योजयितुं तमाकाङ्क्षते- **मुक्ताविति** ॥ मैत्रेय्याशयमनुवदति- **भगवानित्यादिना** ॥ **आपिपदिति** ॥ आप्नोतेर्णिचि चङन्तम् । **मैत्रेय्येति** ॥ अत्र मित्रयोरपत्यमिति विगृह्य 'गृष्ट्यादिभ्यश्च' इति ढञ् । न च तथात्वे 'केकयमित्रयुप्रलयानां यादेरियः' इति यकारादेरियादेशे मैत्रेयेयीति स्यादिति वाच्यम् । 'दाण्डिनायन' इति सूत्रे निपातनाद्युलोपः । ततः 'टिड्ढाञ्' इत्यादिना ङीबिति भावः । **प्रतिपादकस्य** प्रतिवक्तुरित्यर्थः । **अभ्युपगतत्वेति** ॥ 'यदप्रतिषिद्धं तदनुमतम्' इति न्यायादिति भावः । अनुच्छित्तिपदं धर्मानुच्छित्तिवाचकतया व्याचष्टे- **न विद्यत इति** ॥ मौलापिपदसमुच्चेयं दर्शयति- **न केवलमिति** ॥ प्रस्तुतत्वादिति पदस्वारस्यमाह- **पूर्ववाक्य इति** ॥ मैत्रेय्याशयमन्यथा योजयति- **नन्वित्यादिना** ॥ उक्त इति व्याघातस्फोरणाय । वाक्यद्वयमवस्थाभेदेन व्यवतिष्ठत इति व्याघातप्रतिघात इति भावेनाऽह- **संसार इति** ॥ **मोक्ष इति च** ॥ योजनामूलं विच्छिनत्ति- **वाक्यद्वयेति** ॥ विपर्ययपर्यव-सानलब्धमाह- **एकस्यैवेति** ॥ एवं प्रसक्तं प्रतिषिध्यान्यस्याप्रसङ्गमप्याह- **न चान्य इति** ॥ परिशेषयति- **इत्युक्तेति** ॥ समासान्तरेणाभिमतालाभं शङ्कते- **ननूच्छित्तिरिति** ॥ पुनरुक्त्या प्रतिविधत्ते- **स्वरूपेति** ॥ **उक्तत्वादिति** ॥ 'उक्तार्थानामप्रयोगः' इति महाभाष्ये उक्तस्यानुक्त्युक्तेरित्यर्थः । तात्पर्यभेदान्न पुनरुक्तिरित्याशङ्कते- **निर्विकारत्वमिति** ॥ **वैयर्थ्यादिति** ॥ अभिमतस्य तेन विनाऽपि लाभादित्यर्थः । एवं **(व्या.टि.)** परपक्षं प्रतिक्षिप्य स्वपक्षेण श्रुतिभावमभिधत्ते- **तस्मादित्यादिना** ॥ **भूतोत्पत्तिविनाशनिमित्ता-विति** ॥ 'भूतेभ्यःसमुत्थाय तान्येवानुविनश्यति' इति वाक्येनेति भावः । **वृत्तिज्ञानमिति** ॥ मुक्तकर्तृकं अमुक्तकर्तृकं च ग्राह्यम् । 'सञ्ज्ञा नास्तीत्यपि ह्यस्य नामुक्तज्ञेयतेति हि' इत्यनुभाष्योक्तेः । अर्थान्तरमप्याह- **उपलक्षणमिति** ॥ **आरोप्य** ॥ मिथ्योपदेशत्वमिति शेषः । यथोक्तमनुव्याख्याने-

'आशङ्क्यास्य ज्ञानहानिं मैत्रेय्या मोहमाह माम् ।
भवानित्युक्तवत्या हि नाहं मोहं ब्रवीमि ते ।
इत्युक्त्या याज्ञवल्क्यो हि स्वरूपानाशमूचिवान् ॥' इति ।

तदनुरोधेन व्याकरोति- **मोहं मोहकमिति** ॥ करणे घञिति भावः । **निराकुर्वन्निति** ॥ 'लक्षणहेत्वोः क्रियायाः' इति लट् । **निराकृत्येति** ॥ निरासप्रकारस्तु-

'ज्ञानरूपस्य विज्ञाननाशस्तन्नाश एव यत् ।
इति शून्यमतोच्छित्त्यै ............. ॥'

इत्यनुभाष्यदिशाऽवसेयः । **वैशेषिकेति** ॥ तथोक्तमनुभाष्ये-

'पुनरानन्दपूर्वकान् । धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनिवारितान्' इति ।

तत्र द्वैतपदं वैभवादनेकधा निर्वक्ति- **द्वयोर्भाव इत्यादिना** ॥ **स्वार्थिक इति** ॥ प्रज्ञादेराकृतिगणत्वादित्यर्थः। एवेति व्यापकत्वे । **पारतन्त्र्यादिति** ॥ 'अस्वातन्त्र्योपमाभेदभेदेष्विव उदाहृतः' इत्यनुभाष्योक्तेरित्यर्थः ।

**मूलम्-[१]('यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इति ह्याक्षेप एव ।) न हि भोगाभावो 'विज्ञातारमरे केन विजानीयात्' इति विज्ञातुरविज्ञानश्चापेक्षितम् । 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' इति परमश्रुतिः । 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' इति मोक्षधर्मे ॥**

**टीका-** एवं व्यतिरेकव्याप्तिमभिधायेदानीं प्रसङ्गमाह- **यत्र त्वस्येति** ॥ यदि निर्विशेषचैतन्यमात्र-मवशिष्यते न किमपि वस्त्विति मतं स्यात्तदा दर्शनघ्राणादिरूपभोगोऽस्य न स्यात् । तथा येनेश्वरेणेदं सर्वं जीवो विजानाति तज्ज्ञानाभावश्च प्रसज्येत । एवं विज्ञातुरात्मनोऽपि ज्ञानं न स्यात् । निर्विशेषत्वेन कर्तृकर्मभावविरोधात् । भवितव्यश्च दर्शनादिभोगेनेश्वरज्ञानेनाऽत्मज्ञानेन च । अतो निर्विशेष-चैतन्यमात्रावस्थानलक्षणोऽपि मोक्षोऽनुपपन्न इति आपादनात्मकाक्षेप एवास्य वाक्यस्यार्थ इति । नन्वापादनमनिष्टस्य भवति । न च भोगोभावादिकमनिष्टम् । अतः

प्रसङ्गाभासोऽयमित्यत आह- **न हीति ।। विज्ञातारमिति ।।** अनेनोक्तमिति शेषः। **अपेक्षितम्** इष्टमित्यर्थः। कुतो नेति चेत्, द्विविधमनिष्टं प्रामाणिकहानमप्रामाणिकस्वीकारश्चेति । तत्र तावदात्माज्ञानं प्रमाणविरुद्धं, मोक्षेऽप्यात्मज्ञानस्य प्रमितत्वादिति भावेनाऽह- **अहमित्येवेति ।।** [१]यः सदुःखी, ससुखी, बन्ध-मोक्षयोः पात्रं च स जीव इति कीर्तितः । स सर्वा(स्व)वस्थास्वहमिति स्वेन वेद्य एवेति योजना। अन्यथेश्वरे व्यभिचारात्। दर्शनादिभोगोऽपि मोक्षे प्रमित इति भावेनाऽह- **मग्नस्येति ।। परेऽज्ञाने मग्नस्य** सर्वथा रूपादिज्ञानशून्यस्य, मुक्तस्य ज्ञानाभावाङ्गीकार इति यावत्। दुःखतरं दुःखातिशयो न किम्। भवेदेव। अन्धादौ दर्शनात्। न च दुःखं युक्तमतोऽस्त्येव रूपादिज्ञानमि-त्यर्थः। न च दिदृक्षाद्यभावाद्दुःखाभाव इति वाच्यम्। अप्रामाणिकत्वात्। तदेवमनिष्टप्रसङ्गपरत्वा-दस्य वाक्यस्य प्रसङ्गस्य तु विपर्यये पर्यवसानाद्युक्तमत्रोदाहरणमिति सिद्धम्।।

**(र.टि.)** ननु 'अहमित्येव' इति वाक्येऽहमिति वेद्यमुद्दिश्य जीवत्वादिविधाने ईश्वरे व्यभिचारः। एवकारस्य प्रयोजनं न दृश्यते। प्रकारान्तरेणापि जीवस्य वेद्यत्वाद्विरुद्धार्थत्वं च स्यात्। कदाचिदप्यहमिति वेद्यत्वेनापि वाक्यस्य चरितार्थत्वात्। मुक्तौ जीवस्य ज्ञेयत्वात्फलाभावश्चेत्यतस्तदविरुद्धार्थं सद् यथा विवक्षितार्थप्रतिपादकं स्यात्तथा योजयति- **यो दुःखी सुखीत्यादिना ।।** तेन यो दुःखी स जीवः यो वैषयिकसुखी स जीवः, यो संसारबन्धस्य मोक्षस्य वा पात्रमित्यन्वयो दर्शितो वेदितव्यः। अन्यथा तच्छब्दद्वयवैयर्थ्यम्, दुःखित्वाद्येकैकस्याप्य-व्यभिचारित्वेन विशेषणान्तरवैयर्थ्यं स्यात्। **सर्वावस्थास्विति ।।** एवकारस्य वेद्य एवेत्यन्वयेन विशेषणसङ्गतैव-कारस्यायोगव्यवच्छेदार्थकत्वादेतल्लभ्यत इति भावः।

**(रा.टि.)** लिङोऽर्थः-**प्रसज्येतेति ।।** आपाद्यस्यानिष्टत्वद्योतनाय विपर्यये पर्यवसानमाह- **भवितव्यं चेति ।।** मूल एवानिष्टत्वस्य प्रकारान्तरेण कथनात्स्वयमत्र नोक्तम्। इतिपदानन्तरमनेनोक्तमिति शेषमाह- **विज्ञातार-मिति** इति प्रतीकग्रहणम्। 'विज्ञातारमरे केन विजानीयात्' इत्यनेनोक्तं विज्ञातुरविज्ञानमित्यर्थः। **यः स दुःखीति ।।** अत्र तच्छब्दचतुष्टयश्रवणाद्वाक्यचतुष्टयं ध्येयम्। यो दुःखी स जीवः, यः प्राकृतसुखी स जीवः, यो बन्धमोक्षयोः पात्रं स जीव इति कीर्तितः । सर्वास्ववस्थास्वहमिति स्वेनेति शेषः, वेद्य एवेत्येवं योजना सूचिता। कुत एवम्, योऽहमिति स्वेन वेद्यः स जीव इति यथाश्रुतैवास्तु योजनेत्यत आह- **अन्यथेति ।।** 'तद्ब्रह्म वेदाहं ब्रह्मास्मीति' ईश्वरस्याप्यहमिति स्वेन वेद्यत्वसत्त्वेऽपि जीवत्वाभावादिति भावः। **भोगोऽपि मोक्षे प्रमित इति ।। भावेनाऽहेति ।।** विपर्यये पर्यवसानेन तस्य प्रमितत्वावगमादिति भावः। द्वितीये गीता-**(रा.टि.)** भाष्यटीकायां तु

'तथाऽपि तत्त्वं परमं शृणु सम्यङ् मयेरितम्।
इन्द्रियाणि च बुध्यन्ते स्वदेहं देहिनो नृप।
करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः।।'

इत्युत्तरश्लोके 'यद्यपीदं दुर्बोधं तथाऽपि **स्वः** स्वरूपभूतो देहो यस्य तं **स्वदेहं** परमात्मानम्। मुक्तमन्यान्देहिनो विषयांश्च मुक्तस्येन्द्रियाणि बुध्यन्ते। किं तानि कर्तॄणि? नेत्याह- **करणानीति।** कस्तर्हि पूर्वार्धस्यार्थ इत्यत आह- **सूक्ष्म इति।** इति **सूक्ष्मो** जीवस्तैरिन्द्रियैः पश्यतीति भोगोक्त्या प्रमितो भोगः' इत्युक्तम्। **अप्रामाणिकत्वादिति ।।** दिदृक्षाद्यभावे प्रमाणाभावात्। 'स यदि पितृलोककामो भवति' इत्यादिप्रमाण-विरुद्धत्वाच्चेत्यर्थः। 'तदेवं विरुद्धार्थस्य वाक्यस्यात्रोदाहरणमयुक्तम्' इति प्राकृतचोद्यस्योत्तरमाह- **तदेव-मिति ।।** यत्र त्वस्येतिश्रुत्यर्थे।

**(श्री.टि.) इदानीं प्रसङ्गमाहेति ।।** वह्निमत्त्वादेव धूमवत्त्वम् अन्यथा तन्न स्यादितिवद् 'यदा द्वैतसद्भावस्तदैव दर्शनादिभोगो दृष्ट' इति व्याप्तिमुक्त्वेदानीम् 'अन्यथा तन्न स्यात्' इति प्रसङ्गमाहेत्यर्थः। **आत्मनः** स्वस्य। ननु विशेषबलेन कर्तृकर्मभावविरोधः परिहर्तव्य इत्यत उक्तम्- **निर्विशेषत्वेनेति ।।** त्वया तदनङ्गीकारादिति भावः। प्रसङ्गत्रयस्य विपर्यये पर्यवसानमाह- **भवितव्यं चेति ।।** 'इति विज्ञातुरविज्ञानम्' इत्यत्र इतीत्यनन्तरं शेषं पूरयति- **इत्यनेनोक्तमिति ।।** अत्र

'नाखिलज्ञापको विष्णुरज्ञेयो नियमेन हि।
तज्ज्ञानार्थं हि वेदानामखिलानां प्रवर्तनम्।।'

इत्यनुव्याख्यानोक्तरीत्या येनेदं सर्वमित्युक्तेश्वरज्ञानाभावस्यानिष्टत्वं द्रष्टव्यमित्याशयेन भोगाभावो विज्ञातुर-विज्ञानं चेति द्वयमेवोक्तमित्यवधेयम्। **यस्स दुःखीत्यादि ।।** तथा च यस्स दुःखी स जीव इति कीर्तितः। यस्स दुःखी बन्धमोक्षयोः पात्रं च स जीव इति कीर्तितः। सः अहमिति स्वेन वेद्य एवेति योजना द्रष्टव्येत्यर्थः। **सर्वावस्थास्विति ।।** ननु कथमयमर्थो लभ्यते। उच्यते

। विशेषणसङ्गतैवकारस्येतरपदार्थतावच्छेदके एवकार-समभिव्याहृतपदार्थतावच्छेदकव्याप्यत्वमर्थः । यथा शङ्खः पाण्डुर एवेत्यत्र शङ्खत्वं पाण्डुरत्वव्याप्यम् । यः शङ्खः स सर्वदा पाण्डुर एव न त्वपाण्डुर इत्यर्थो लभ्यते । एवं यो जीवः सोऽहमिति स्वेन वेद्य एवेति विशेषण-सङ्गतैवकारमहिम्ना जीवत्वम् अहमिति स्वेन वेद्यत्वव्याप्यम् । यो जीवः स सर्वदाऽहमिति स्वेन वेद्य एवेत्यर्थ-लाभात्स सर्वावस्थास्वित्युक्तमिति द्रष्टव्यम् । ननु 'अहमित्येव यो वेद्यः' इत्यहमिति वेद्यमुद्दिश्य 'स जीव इति कीर्तितः' इति जीवत्वं विधीयत इति यथाश्रुतैव योजना किं न स्यादित्यत आह- **अन्यथेति ॥ व्यभिचारा-दिति ॥** 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति वाक्ये ईश्वरस्याप्यहमिति वेद्यताया उक्तत्वेन तत्र जीवत्वाभावाद् **(श्री.टि.)** व्यभिचारः स्यादित्यर्थः । **परेऽज्ञान इति ॥** केवलाज्ञान इत्यर्थः । **न च दुःखं युक्तमिति ॥** 'सर्वदुःखविमुक्तास्ते गुणमात्रस्वरूपिणः' इति मुक्तानां निर्दुःखत्वावगमादित्यर्थः । 'यदीच्छा नैव तत्रास्तीत्येव तत्कल्प्यते मृषा' इत्यनुव्याख्यानं मनसि निधायाऽह- **न च दिदृक्षादीति ॥** द्रष्टुमिच्छा दिदृक्षा, आदिपदेनाऽ-घ्राणादीच्छाग्रहणम् । अहमिदं रूपादिकं द्रक्ष्यामीत्यादीच्छायां सत्यामपि तज्ज्ञानाभावो दुःखातिशयहेतुः । मुक्तस्य तु रूपादिदर्शनेच्छाया एवाभावेन तज्ज्ञानाभावो न दुःखहेतुरिति न च वाच्यमित्यर्थः । कुतो न वाच्यमित्यत आह- **अप्रामाणिकत्वादिति ॥** 'स यदि पितृलोककामो भवति', 'कामान्नी', 'कामस्य यत्राऽप्ताः कामाः' इत्यादिश्रुतिभ्यो मुक्तानां कामशब्दवाच्येच्छासद्भावावगमेन कामाभावस्याप्रामाणिकत्वादित्यर्थः । **अस्य वाक्यस्य** यत्र त्वस्येति वाक्यस्य । **विपर्यये पर्यवसानादिति ॥** विपर्ययपर्यवसानेनाद्वितीयचैतन्यमात्रस्य मुक्तित्वाभावावगमादिति भावः । **युक्तमत्रोदाहरणमिति ॥** मोक्षानन्तरमपि भेदप्रतिपादनाय श्रुतीनामुदाहरण-समयेऽस्य वाक्यस्योदाहरणं युक्तमित्यर्थः ॥

**(पां.टि.) व्यतिरेकव्याप्तिमिति ॥** न च यदा दर्शनादिभोगस्तदाऽद्वैतसद्भाव इत्येवमाकारिकैव व्याप्तिः प्रसङ्गाङ्ग-भूता । आपाद्याभावस्य व्याप्यत्वादापादकाभावस्य व्यापकत्वात् । तत्कथमुक्तरूपा व्यतिरेकव्याप्तिः स्यादिति वाच्यम् । व्यतिरेकव्याप्तिशब्देन आपादकापाद्ययोः द्वैताभावभोगाभावयोरन्वयव्याप्तेरेव ग्रहणेन प्रसिद्धाया यत्र आपाद्यविपर्ययः तत्राऽपादकविपर्यय इति प्रसङ्गाङ्गव्यतिरेकव्याप्तेरग्रहणेन उक्तदोषानवसरात् । न चान्वयव्याप्तेः कथं व्यतिरेकव्याप्तित्वं येन व्यतिरेकव्याप्तिशब्देन ग्रहणं स्यादिति वाच्यम् । अभावरूपाभ्यामापादकापाद्याभ्यां निरूप्यत्वमात्रेण व्यतिरेकव्याप्तित्वसम्भवात् । वस्तुतो यत्र हि द्वैतमिव भवतीत्यनया वाचोभङ्ग्या सूचिताया यत्र इतर इतरं पश्यति तत्र द्वैतमस्तीत्यस्या आपाद्यविपर्ययस्य आपादकविपर्ययेण व्याप्तित्वाद्व्यतिरेकव्याप्तितया प्रसङ्गाङ्गभूतव्यतिरेकव्याप्तितया ग्रहणमिदमिति नोक्तदोषः । ननु च त्वन्मत इव मन्मतेऽपि एकस्यैव कर्तृकर्मभावः किं न स्यादिति वाच्यम् । तन्निर्वाहकविशेषस्य मयाऽङ्गीकृतत्वेन तद्बलेन मन्मते तदुपपत्तावपि त्वया तदनभ्युप-गमनेन त्वन्मतेऽपि तदनुपपत्तेरवर्जनीयत्वादिति भावेनोक्तम्- **निर्विशेषत्वेनेति ॥** प्रसङ्गस्य विपर्यये पर्यवसानं दर्शयति- **भवितव्यं चेति ॥** ननु अहमित्येवेति वाक्ये अहमिति वेद्यमुद्दिश्य तस्य जीवत्वादिविधाने ईश्वरे व्यभिचारः । एवकारस्य वैयर्थ्यश्च । प्रकारान्तरेणापि दृश्यमानत्वाद् विरुद्धार्थत्वं च । कदाचित्तस्याहमिति वेद्यत्वेनापि वाक्यस्य चरितार्थतया मुक्तौ तस्य तदलाभेन तस्य जीवत्वालाभश्चेत्यतः, तदविरुद्धार्थं विवक्षितार्थ-प्रतिपादकं च यथा स्यात् तथा योजयति- **यो दुःखी स सुखीत्यादिना ॥** अनेन यो दुःखी स जीवः, यो वैषयिकसुखी स जीवः, यो बन्धस्य मोक्षस्य पात्रं स जीवः इत्यन्वयो दर्शितो वेदितव्यः । अन्यथा तच्छब्दद्वयवैयर्थ्यं दुःखित्वादेरेकैकस्याव्यभिचरितत्वेन विशेषणान्तरवैयर्थ्यं च स्यादिति द्रष्टव्यम् । **सर्वास्ववस्थास्विति ॥** एवकारस्य वेद्य एवेत्येवं विशेषणेन सङ्गतस्य अयोगव्यवच्छेदार्थकत्वादेतल्लभ्यत इति भावः । **अत्रोदाहरण-मिति ॥** मोक्षे भेदप्रतिपादकतयोदाहरणमित्यर्थः ।

**(व्या.टि.)** प्रसञ्जकं दर्शयति- **मतं स्यादिति ॥** विपर्ययपर्यवसानमाह- **भवितव्यं चेति ॥** निगमयति- **अत इति ॥** 'ये यजमानास्ते ऋत्विजः' इतिवद् यत्तच्छब्दौ वैपरीत्येन योजयति- **य इति ॥** यः सदुःखी ससुखी बन्धमोक्षयोः पात्रं च स जीव इति कीर्तितः । स सर्वावस्थासु इत्यादिः प्रचुरः पाठः । अत्र भावप्रधानयोः दुःखि-सुखिशब्दयोः सहशब्देन बहुव्रीहिर्भाति । विशिष्टलक्षणो(णे)क्तौ कृत्याभावात् प्रत्येकं लक्षणम् । दुःखित्वा-त्यन्ताभावानधिकरणत्वस्य विवक्षितत्वान्न मुक्तादावव्याप्तिः । रमाया अलक्ष्यत्वान्नाव्याप्तिः । सुखित्वं च प्राकृतसुखवत्त्वमिति न द्वितीयलक्षणस्य रमादावतिव्याप्तिः । नित्यसंसारिणामपि लिङ्गभङ्गरूपमोक्षोपगमान्न तृतीयस्याव्याप्तिः । चशब्दश्च लक्षणसमुच्चयेन विशेषणसमुच्चय इति द्रष्टव्यम् । यो दुःखी सुखीत्यादिः क्वाचित्कः पाठः । तत्राप्यविशिष्टयोस्तच्छब्दयोः 'स यश्चायं पुरुषे' इत्यादाविव प्रसिध्यर्थयोः सुखिदुःखिपदाभ्यां प्रत्येकमन्वय इति त्रीणि लक्षणानि । यद्वा तच्छब्दचतुष्टयेन यच्छब्दमावर्त्य वाक्यचतुष्टयम् । 'पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत्' इत्युक्तेः । तत्र दुःखीति नित्ययोगे इनिः ।

'सम्बन्धेऽस्ति विवक्षायां नित्ययोगेऽतिशायने ।
भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः ॥' इत्युक्तेः ।

तथा च, यो दुःखी सर्वदाऽत्यक्तदुःखो राजसतामसश्च स जीव इति प्रथमं वाक्यम् । एवं, यः सुखी पराधीनानल्पसुखी महालक्ष्मीः स जीव इति द्वितीयं वाक्यम् । एवं, बन्धमोक्षयोः पात्रं सात्त्विकमात्रं स जीव इति तृतीयम् । एवं, यो जीव इति कीर्तितः स सर्वास्ववस्थास्वहमिति वेद्य एवेति चतुर्थं वाक्यम् । अत्र परतन्त्रचेतनत्वं जीवसामान्यलक्षणम् । जीवस्य च रमामुक्तियोग्यतदितरभेदेन त्रैविध्यं विवक्षितम् । विधात्रय-कथनपरश्चेदम् । जीवत्वावच्छेदेनाहमिति स्वेन वेद्यत्वं विधेयम् । न च महालक्ष्म्या जीवत्वग्रहे हेत्वभावः । 'कामात्' इति सूत्रे

'नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।
उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ।
श्रुतौ तथा जीवपरावुच्येते किञ्च नेतरत् ।
नोच्यते च तदा तत्त्वद्वयं वै समुदाहृतम् ॥'

इति श्रीतत्त्वस्य जीवत्वेन जीवपरतत्वद्वयप्रवेशोक्त्या 'द्वा सुपर्णा' इत्यादिजीवपरभेदस्य श्रुत्यर्थत्वोक्तेः । 'जीवेश्वरभिदा चैव' इति श्रुतावपि जीवपदेन तद्ग्रहणाच्च । अन्यथा षष्ठभेदापत्तेः । न च 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यत्रापि जीवपदेन श्रीतत्त्वमुच्यतामिति वाच्यम् । अनादिमाययेति बन्धकतयोक्तमायाशब्देन चित्प्रकृतिवत्प्रकृतेरपि ग्रहणोपपत्तेः । 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः चिद्विमुक्ताया अचितो बन्धकत्वायो-गात् । 'अबद्धा बन्धिका सैषा प्रकृतिरविकृतिः' इति वत्सश्रुतेः । स्पष्टं च जीवत्वम् उक्तं चित्प्रकृतेः 'प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो', 'देहे देहिनमव्ययम्', 'स एव भूयो निजवीर्यचोदितां स्वजीवमायां **(व्या.टि.)** प्रकृतिं सिसृक्षतीम्' इत्यादाविति बोध्यम् । इतरेषामिव श्रियोऽपि स्वाहम्प्रत्ययत्वम् 'अहं रुद्रेभिः' इत्यादितद्वाक्यादवगतमिति सकलमकलङ्कम् । श्रीपक्षे, **सर्वास्ववस्थासु** भूतभवद्भविष्यत्सु कालेष्विति भावः । तस्या जाग्रदाद्यवस्थात्रयाभावादिति भावः । **अप्रामाणिकत्वादिति ॥** प्रमाणाभावात् 'स यदि पितृलोककामो भवति' 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादि प्रमाणविरोधाच्चेत्यर्थः । अकामहतत्वश्रुतिर्विरुद्ध-कामाभावपरेत्यन्यत्र निरणायि । उपसंहरति- **तदेवमिति ॥**

**मूलम्- 'न तु तद्द्वितीयमस्ति' इति च यत्तद्ब्रह्म द्वैतत्वेन न पश्यति तदेव द्वितीयं नेत्याह । 'यत्ततोऽन्यद्विभक्तत्वेनैव पश्येत्' इति वाक्यशेषात् । 'न हि द्रष्टुर्दृष्टेर्विपरि-लोपो विद्यते' इति हेतोश्च ॥**

**(त.मं.)** ननु 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति । न हि द्रष्टुर्दृष्टेः विपरिलोपो विद्यते अविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यादेः सद्वितीयत्वपक्षे का गतिरित्याह- **न त्विति ॥ यत्** मत्स्यकूर्मादिरूपं **तद्** ब्रह्म द्वैतत्वेन भिन्नत्वेन न पश्यति, तद् द्वितीयमेव नास्ति । न तु किञ्चिदपि द्वितीयं नास्तीत्यर्थः । यदित्यादिवाक्यशेषात् । मुख्य-द्रष्टुर्दृष्टेर्विपरिलोपो बाधो न विद्यते हि ।

**टीका-** ननु च 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशि-त्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतौ स्थितायामप्यविद्यायामहङ्कारादि-तत्कार्यविलयमात्रेण क्रियाकारकफलरूपो द्वितीयाभावः सुप्तस्याऽत्मनोऽभिधीयते । तथा हि, प्राग् ज्योतिःशब्देन सुप्तस्य ज्ञानसद्भावोऽभिहितः । पुनः 'एवमेवायमात्मा प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति ज्ञानाभावश्च । तदुभयं विप्रतिषिद्धमित्याशङ्क्येद-मुच्यते । 'सुप्तो यन्नपश्यतीत्युक्तं **तद्वै** तत्तथैव । न च विप्रतिषेधः । यतः **पश्यन्वै** ज्ञानवानेव तन्न पश्यतीत्युक्तम् । कुतो ज्ञानवत्त्वम्? न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् । कथं पश्यन्नेव न पश्यति? यत् **ततः** स्वस्मादन्यद्विभक्तं पश्येत्तद्द्वितीयं तु नास्ति । अतो विषया(द्वितीया)भावान्न पश्यतीत्युच्यते । निर्विषयस्य स्वरूपज्ञानस्य स्थितत्वात्पश्यन्नित्यपि । अतो न परस्परं विरोधः' इति ।

एवमविद्याकार्यविलयमात्रेण यदा सुप्तस्यापि द्वैताभावस्तदा कुतो मोक्षे अविद्यायां सर्वात्मना निवृत्तायां द्वैतसद्भावः स्यात्। तत्कथमुक्तं मोक्षानन्तरमपि भेदोऽस्तीति। कथं च मुक्तस्यापि भोगादिसद्भाव इत्यतो यथावद्वाक्यं व्याचष्टे- **न तु तद्द्वितीयमिति ॥** इति च श्रुतिरिति शेषः। न तु सुषुप्तौ भेदाभावमित्येवशब्दार्थः।

'शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः' इति नाडीनां परस्परविलक्षणरूपवद्भिर्भगवद्रूपैर्व्याप्तत्वमुक्तम्। तेन तद्रूपाणां भेदः प्राप्तः। तथा 'तद्वा अस्यैतदाप्तकाममकामं रूपम्' इति षष्ठ्या रूपरूपवद्भेदश्च। तन्निराकर्तुमिदमुच्यते। हृदयस्य भवतीति हृदयशब्देन प्रकृतं **ब्रह्म** भगवान् **यद्** यस्माच्छुक्लादिकं रूपं **द्वैतं** स्वतः परस्परं च भिन्नं न पश्यति **तत्** तस्माद् **द्वितीयं नास्ति** न भवति । भगवता भिन्नत्वेनादृष्टत्वेऽपि कुतो न भिन्नम्। न ह्यस्माभिः शुक्तिकाया भिन्नत्वेन रजतं न दृश्यत इत्येतावता तत्ततो न भिन्नम्। मैवम्। **पश्यन्** सर्वज्ञ एव **तत्** शुक्लादिकं भिन्नत्वेन न पश्यति वै। एवन्तर्हि जीवजडात्मकं विश्वमपि किं ततो न भिन्नं, नेत्युच्यते। **यद्** यस्माद्भगवान् यज्जीवादिकं **विभक्तं** स्वतो विभक्तं भिन्नं पश्येत् **तत्** तस्मात्ततोऽन्यदेव। भगवता भेदेन दृष्टत्वेऽपि कुतो भिन्नम्। न हि चन्द्रश्चन्द्राद् भिन्नत्वेनास्माभिर्दृश्यत इत्येतावता भिन्नः। मैवम्। न हि **द्रष्टुः** परमेश्वरस्य **दृष्टेर्ज्ञानस्य विपरिलोपो** वैपरीत्यमयथार्थत्वं विद्यते **अविनाशित्वात्** निर्दोषत्वादबाधितत्वाच्चेत्येवमियं श्रुतिः यत्तत्प्रकृतं शुक्लादिकं रूपं **ब्रह्म** भगवान् **द्वैतत्वेन** स्वतः परस्परञ्च भिन्नत्वेन न पश्यति **तद् द्वितीयं** भिन्नं न भवतीत्येवाऽह। न तु सुप्तौ सकलभेदाभाव-मित्यर्थः। सकलभेदाभावपरमेव एतत्किं न भवतीत्यत आह- **यत्ततोऽन्यदिति ॥** अर्थानुवादोऽयं शाखान्तरपाठो वा, उक्तरीत्या वाक्यशेषे द्वितीयसद्भावस्योक्तत्वादित्यर्थः। तस्यान्योऽर्थ इति चेन्न। तथा सति विभक्तं यत्पश्येत् तन्नास्तीत्येतावता पूर्णत्वेन शेषवैयर्थ्यात् ।

इतोऽपि निर्विशेषचैतन्यमात्रावस्थानमस्यार्थो न भवतीत्याह- **न हीति ॥** अत्र हेतुग्रहणं स्वरूपकथनम्। अत्र हि वाक्ये द्रष्टृदृष्ट्योः सम्बन्धकथनेन निर्विशेषत्वं बाध्यते। उपचारोऽयमिति चेन्न। अनुपपत्त्यभावात्। दृष्टेरित्येतावता पूर्णत्वेन द्रष्टृग्रहणवैयर्थ्याच्च। एतेन द्रष्टुर्दृष्टेरिति सामानाधिकरण्यमित्येतदपि निरस्तम्। किञ्च दृष्टिश्चेत्स्वरूपमात्रं तदा किमपेक्षया कर्तृप्रत्ययः। अतो युक्त एव मोक्षे भेदसद्भावाभ्युपगम इति ॥

**(र.टि.) इत्येवशब्दार्थ इति ॥** तेन इत्येवमित्येवकारसम्बन्धः सूचितो भवति। अत एव वक्ष्यति 'भिन्नं न भवतीत्येवाऽह' इति ।

**(रा.टि.) क्रियाकारकेति ॥ क्रिया** ज्ञानम्। **कारकाणी**न्द्रियाणि। **फलं** व्यवहारादि। **अभिधीयत इति ॥** इति श्रुताविति पूर्वेणान्वयः। **प्रागिति ॥** वाजसनेये षष्ठे 'आत्मैवास्य ज्योतिः' इति ज्योतिःशब्देनेत्यर्थः। पुनरिति व्याख्यातृवचनं न श्रौतपदम्। **ज्ञानाभावश्चेति ॥** अभिहित इत्यनुषङ्गः। आहेत्यत्र कर्त्राकाङ्क्षायामाह- **इति श्रुतिरिति शेष इति ॥** 'न तु तद्द्वितीयमस्ति' इति श्रुतिरित्याहेत्यर्थः। अप्रसक्तनिषेधपरत्वनिरासाय प्रसक्तिं दर्शयितुं पूर्ववाक्यमनूद्यार्थमाह- **शुक्लस्येति ॥** तृतीयार्थे षष्ठी। शुक्लादिवर्णोपेतरूपपञ्चकेन पूर्णा नाड्य इत्यर्थः। **नाडीनामिति ॥** 'ता वा अस्यैता हिता नाम नाड्यः यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठति' इति पूर्ववाक्ये नाडीनां प्रकृतत्वादिति भावः। **तद्वा अस्येति ॥** शुक्लस्येति वाक्यादुपरितने 'यद् द्वैतं न पश्यति' इत्यतः पूर्वतने वाक्ये 'प्राज्ञेनाऽत्मना' इति प्रकृतं भगवन्तमस्येति परामृश्य तत्प्रसिद्धमेतद्रूपम् **आप्तकामम्** आप्ता एव कामा न त्वाप्तव्या येन तदाप्तकामम्, पूर्णसुखरूपत्वादात्मैव काम्यत इत्यात्मकामम्, अकामं विषयकामनारहितमिति यावत्। 'षष्ठी शेषे' इति सम्बन्धार्थे विहितषष्ठ्या रूपरूपवतोर्भेदश्चाऽप्त इत्यनुषङ्गः। **इदमिति ॥** यद् द्वैतं न पश्यतीत्यादिवाक्यमुच्यत इत्यर्थः। यत्तद्ब्रह्म द्वैतत्वेन न पश्यतीति मूलोक्तमर्थं श्रौतवाक्यारूढं दर्शयति- **हृदयस्येति ॥** 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' इत्यव्यवहितपूर्ववाक्ये हृदि अयत इति व्युत्पत्त्या हृदि विद्यमानस्य शेषो भवतीति हृदयशब्देन प्रकृतमित्यर्थः। यदित्यस्याऽऽवृत्ति-मुपेत्याऽह- **यद्यस्माद्यच्छुक्लादिकमिति ॥ स्वतः** स्वस्मान्मूलरूपादित्यर्थः। यत्ततोऽन्यदित्यादिमूलोक्तमर्थं 'ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रौतवाक्यारूढतया व्याचष्टे- **एवं तर्हीति ॥** अत्रापि यच्छब्दस्याऽवृत्तिः। प्रकृतहृदयशब्दार्थः-

**भगवानिति ॥** विभक्त इत्यस्यावधिमाह-**स्वत इति ॥** स्वस्मादित्यर्थः । **ततो** भगवतः। दुष्टेषु नष्टशब्दप्रयोगदर्शनान्नाशोऽत्र दोषशब्दार्थ इति भावेनाविनाशित्वान्निर्दोषत्वादित्युक्तम्। एवं श्रुतिं व्याख्या-येदानीं मूलार्थमाह- **इत्येवमिति ॥** प्रकृतं शुक्लादिकमिति द्वितीयान्तम् । एवकारार्थः- **न त्विति ॥ उक्त-रीत्येति ॥** स्वकृतव्याख्यानरीत्येत्यर्थः । **अन्योऽर्थ इतीति ॥** प्रागनूदितपरव्याख्यानरीत्येत्यर्थः। **उपचार इति ॥** राहोः शिरः, घटस्य स्वरूपमित्यादाविवेति भावः। **एतेनेति ॥** द्रष्टृपदवैयर्थ्येनेत्यर्थः । **द्रष्टृदृष्ट्यो-रिति ॥** द्रष्ट्री च सा दृष्टिश्चेति विग्रहः। **कर्तृप्रत्यय इति ॥** द्रष्ट्रीत्यत्र तृच्प्रत्यस्य 'ण्वुल्तृचौ' इति कर्तरि विधानादिति भावः ।

**(श्री.टि.)** मोक्षे कैमुत्येन भेदाभावं साधयितुमाह- **ननु च यद् द्वैतमित्यादिना ॥** अतो न परस्परविरोध इत्यन्तेन । **ज्योतिश्शब्देनेति ॥** 'अस्तमितायां वाचि किंज्योतिरयं पुरुष इति आत्मैवास्य ज्योतिः' इति वाक्ये ज्योतिःशब्देनेत्यर्थः । ज्योतिर्ज्ञानसाधनमिति तदर्थः। यद्वै तदित्यत्र यद् वै तदिति पदच्छेदमभ्युपेत्य यत् न पश्यतीत्युक्तं **तद् वै** तत्तथैवेति। **इत्युक्तमिति ॥** न बाह्यं किञ्चन वेद नान्तरमित्यनेनेत्यर्थः। **विप्रतिषेधो** विरोधः। ज्ञानवानेवेत्यंशमुपपादयितुमाह- **कुत इति ॥ विपरिलोपो** विनाशः। **अविनाशित्वादिति ॥** अविनाशिजीवस्वरूपत्वादित्यर्थः। न पश्यतीत्युक्तमुपपादयितुमाह- **कथमिति ॥** व्यवस्थोक्त्या विरोधः **(श्री.टि.)** परिहृत इत्याह- **अत इति ॥** इत्यपि उच्यत इति सम्बन्धः। एवं सुप्तौ भेदाभावे लब्धे मोक्षे भेदाभावः कैमुत्यलब्ध इत्याह- **एवमविद्याकार्येति ॥** भोगादिसद्भाव इत्यत्राऽदिपदेनेश्वरज्ञानं स्वज्ञानं च ग्राह्यम्। तस्य भेदसापेक्षत्वादिति भावः। **एवशब्दार्थ इति ॥** अनेन, तद् द्वितीयं नेत्येवाऽहेत्येवशब्दसम्बन्धस्सूचितो भवति। अत एवोत्तरत्र वक्ष्यति भिन्नं न भवतीत्येवाऽहेति । शुक्लस्येत्यादि कर्तरि षष्ठी । शुक्लादिभिरित्यर्थः । अत्र शुक्लादिशब्दाः शुक्लादिरूपवद्वासुदेवादिभगवद्रूपवाचिन इत्याशयेन **रूपवद्भिर्भगवद्रूपैरित्युक्तम्। भेदः प्राप्त इति ॥** स्थानभेदेन विरुद्धधर्माधिकरणत्वेन च भेदः प्राप्त इत्यर्थः। **रूपरूपवद्भेदश्चेति ॥** वासुदेवादिरूप-समुदायस्य रूपवता भगवता मूलरूपिणा भेदोऽस्य रूपमिति षष्ठ्या प्राप्त इत्यर्थः। **भगवान्** मूलरूपी, **शुक्लादिकं रूपं** शुक्लादिरूपोपेतं वासुदेवादिकं रूपमित्यर्थः। **द्वैतमिति ॥** अत्र न परोक्तरीत्या यद् वै इति पदविच्छेदः। किन्तु यत् द्वैतमित्येव । परपक्षेऽस्मत्पक्षे च यद्वैतमित्येव श्रुतिपाठः। तत्रास्मन्मते महाव्याकरणसूत्रेण वा निरुक्तत्वाद्वा तकारलोपो द्रष्टव्य इति सम्प्रदायविदः । **स्वतः** स्वस्मात्। **चन्द्रश्चन्द्रादिति ॥** अङ्गुल्यवष्टम्भादिनेति शेषः।

एवं श्रुतिं सम्यग्व्याख्याय न तु तद्द्वितीयमस्तीति च यत्तद्ब्रह्मेत्यादिमूलार्थमाह- **इत्येवमियं श्रुतिरित्या-दिना ॥ शुक्लादिकं रूपं** वासुदेवादिकम् । **भगवान्** मूलरूपी । 'ततोऽन्यद्विभक्तं यत्पश्येत्' इत्येव श्रुतिपाठ-सद्भावात्तथैवोदाहर्तव्ये यत्ततोऽन्यद्विभक्तत्वेनैव पश्येदिति वाक्यशेषादिति कथमुक्तमित्यत आह- **अर्थानु-वादोऽयमिति ॥** ततोऽन्यद्विभक्तं यत्पश्येदिति वाक्यस्यैवार्थानुवादोऽयमित्यर्थः । **शाखान्तरेति ॥** सदृशशाखान्तरेत्यर्थः । **उक्तरीत्येति ॥ यद्यस्माद्भगवान् यत्** जीवादिकं **विभक्तं** स्वतो विभक्तं भिन्नं पश्येत् **तत्** ततोऽन्य इत्येवमुक्तरीत्येत्यर्थः। **अन्योऽर्थ इति ॥** यत् **ततः** स्वस्माद् **अन्यद्** विभक्तं पश्येत् **तद्** द्वितीयं तु नास्तीत्युक्तरीत्या द्वितीयमात्रनिषेध एव वाक्यशेषस्यार्थ इत्यर्थः । **शेषवैयर्थ्यादिति ॥** द्वितीयमस्ति ततोऽन्यदित्यस्य वैयर्थ्यादित्यर्थः । निर्विशेषचैतन्यमात्रावस्थानमस्यार्थो नेत्यत्र 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यस्य कथं हेतुत्वमसङ्गतत्वादित्यत आह- **अत्रेति ॥ स्वरूपकथनं** वाक्यस्वरूपकथनमित्यर्थः। एवंरूपे वाक्ये तद्विरोधिप्रमेयस्योक्तत्वादिति यावदिति भावः। **सम्बन्धकथनेनेति ॥** द्रष्टुर्दृष्टेरिति षष्ठीप्रयोगेण ज्ञानवत्त्वरूपविशेषप्राप्तेरित्यर्थः। **उपचारोऽयमिति ॥** द्रष्टुर्दृष्टेरिति सम्बन्धप्रयोगो घटस्य स्वरूपमितिवदुपचरित इत्यर्थः । **अनुपपत्तिरिति ॥** मुख्यार्थेऽनुपपत्त्यभावादित्यर्थः । **वैयर्थ्यादिति ॥** अद्रष्टुर्दृष्टेरभावादिति भावः। **एतेनेति ॥** क्रियारूपाया दृष्टेर्द्रष्टृत्वाभावेन दृष्टेर्द्रष्टृत्वरूपविशेषणकथनस्य व्यर्थत्वेनेत्यर्थः। **सामानाधिकरण्य-मिति ॥** द्रष्ट्र्या इति भाव्ये छान्दसं लिङ्गव्यत्ययमङ्गीकृत्य द्रष्टुरित्येतद् दृष्टेरित्यस्य विशेषणमित्यर्थः । चेच्छब्दो यस्मादित्यर्थे । **स्वरूपमात्रमिति ॥** दृष्टिशब्दोक्तं ज्ञानं यस्मात् त्वया ब्रह्मस्वरूपमात्रमित्यङ्गीकृतम्, **तदा** तस्मात् तृच्प्रत्ययः **किमपेक्षया** कस्यार्थस्यापेक्षयेत्यर्थः । द्रष्टृशब्दस्य कर्तरि तृच्प्रत्यये सति निष्पन्नत्वेन निर्विशेष-चैतन्ये च ज्ञानकर्तृत्वरूपज्ञातृत्वस्य बाधितत्वेनार्थाभावाद् वैयर्थ्यमेव तृच्प्रत्ययस्य स्यादिति भावः।

**(पां.टि.)** नन्वस्याः श्रुतेर्न भगवद्गतभेदनिषेधकतया व्याख्यानं युक्तम् । तद्भेदस्याप्राप्ततया तन्निषेधकत्वेऽ-प्रसक्तप्रतिषेधकत्वापातादित्यतः, प्रसक्तिप्रतिपादनपूर्वकं पश्यतीति क्रियायाः कर्तृकारकत्वं च दर्शयन् तत्प्रतिषेधकतामुपपादयति- **शुक्लस्येत्यादिना ॥ स्वरूपकथनमिति ॥** कुतो हेतुग्रहणस्य स्वरूपकथनत्वं कल्प्यते हेतुत्वपरत्वमेव किं न स्यादिति चेन्न । वाक्यशेषस्यापि हेतुत्वेऽपि तत्र पञ्चम्यैव हेतुताप्रतिपादनाद्धेतो-रित्यपि वचनस्यानावश्यकत्ववदिहापि हेतोरित्यवचनेऽपि पञ्चम्यैव

हेतुत्वलाभसम्भवेन हेतुत्वस्यावक्तव्य-त्वात् । तथा चेत्युक्तरीत्यैव वाच्यत्वाद्वाक्यशेषव्यावृत्तहेतुत्वान्तरस्य चाभावाद्धेतोरित्येतदधिकं व्यर्थमित्या-शयः । कथमनेन निर्विशेषचैतन्यमात्रावस्थानस्य यत्ततोऽन्यदिति वाक्यार्थत्वनिरास इत्यत आह- **अत्र हीति ।। सामानाधिकरण्यमिति ।।** द्रष्टृरूपा या दृष्टिः तस्या इति सामानाधिकरण्यमित्यर्थः। न चैवं द्रष्टया इति ङीप् स्यादिति वाच्यम्। सर्वविधीनां छन्दसि वैकल्पिकत्वेन तदप्रसङ्गात्। **कर्तृप्रत्यय इति ।।** पश्यतीति द्रष्टेति कर्त्रर्थे विहितो यस्तृच्प्रत्ययः स तदभावे न युक्त इत्यर्थः।

**(व्या.टि.)** 'न तु तद्द्वितीयमस्ति' इत्यत्र द्वितीयशब्दार्थमाह- **क्रियाकारकफलरूपेति ।।** अभिधानप्रकारं दर्शयति- **तथा हीति ।। प्राग्ज्योतिश्शब्देनेति ।।** 'आत्मैवास्य ज्योतिः' 'आत्मनैवायं ज्योतिषाऽऽस्ते' इति ज्योतिश्शब्देनेत्यर्थः। **एवमेवेति ।।** 'यथा प्रियया भार्यया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इति पूर्वशेषः। यच्छब्दमनुवादतया व्याचष्टे- **यन्न पश्यतीत्युक्तमिति ।।** वै तदिति पदद्वयं कृत्वा वैपरीत्येनान्वीय व्याचष्टे- **तद्वै तत्तथैवेति ।।** उत्तरं शेषं विप्रतिषेधशङ्कायाः परिहारं हेतुपरतया व्याचष्टे- **यतः पश्यन्निति ।। अविनाशित्वादिति ।।** अविनाशिस्वरूपाभिन्नत्वादित्यर्थः। अन्यथा साध्यावैशिष्ट्यापत्तेः। न पश्यतीति प्रकृतात्मपरामर्शकस्तच्छब्द इत्याह- **स्वस्मादिति ।।** श्रुत्याशयमुद्घाटयति- **अथेत्यादिना ।।** उक्तमाक्षिपन्नुप-संहरति- **तत्कथमिति ।।** मूले तदेवेत्येवकारः इत्येवेति भिन्नक्रम इत्याशयेन व्याचष्टे- **न त्विति ।। सुषुप्ता-विति ।।** 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वमिति भावः। श्रुतौ भेदप्राप्तिं दर्शयति- **शुक्लस्येत्यादिना ।।** तत्र षष्ठी 'आज्यस्य पूर्णां स्रुवं जुहोति' 'घृतस्य जुहोति' इतिवत् तृतीयार्थ इत्यभिप्रेत्य व्याचष्टे- **भगवद्रूपै-रिति ।। षष्ठ्येति ।।** अस्येति षष्ठ्येत्यर्थः । तत्पदपरामर्शाय ब्रह्मप्रक्रममाह- **हृदयस्य भवतीति ।।** 'तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य' इति पूर्वशेषः। हृच्छयनात् शोकतरणवितरणलिङ्गाच्चेति भावः। भगवानिति निर्देक्ष्यमाणपुंलिङ्गापेक्षया। अत्र यत्तच्छब्दौ तन्त्रमिति व्याचष्टे- यद्यस्माच्छुक्लादिकमिति, तत्तस्मात्तद्द्वितीयमिति च।। **द्वैतं भिन्नमिति ।।** ननु 'यद्वैतन्न पश्यति' इत्यत्र यद् वै तदिति त्रैपद्येन यत् द्वैतमिति द्वैपद्येन च पूर्वपक्षसिद्धान्तयोः पदविच्छेदः स्वच्छन्दतः कुतः कृत इति चेत्, पदविच्छेदस्यार्थानुसारिताद्योतनार्थः। अत एव ऋग्भाष्ये शुभस्पतीत्यस्यां ऋचि शुभ इति शोभतेः क्विबन्तस्य षष्ठ्यन्तमाश्रित्य पदभेदेनाऽधुनिकाध्यापक-पाठेऽपि 'शुभाधिपौ' इति भगवत्पादैरैकपद्येन व्याख्यातम्। यजुषि च सुवर्णज्योतिरिति द्वैपद्येन पठन्ति। अन्ये तु हिरण्यज्योतिष्ट्वायेत्यैकपद्येन व्याख्यान्ति। ईशावास्यमित्यत्र द्वैपद्येन वाजसनेयकपाठेऽपि 'आत्मावास्यमिदं **(व्या.टि.)** विश्वम्' इति भागवतानुसारेणैव भाष्यकृतैकपद्येन व्याख्यातम्। महाभाष्यकारोऽपि 'अजेः सञ्ज्ञायाम्' इति वार्तिकं व्याचक्षाणः 'अजेः क्यपि आङ्प्रश्लेषे आज्येन' इत्यत्रावग्रहमाशङ्क्य 'पदकारैर्नाम लक्षणमनुवर्त्यं न लक्षणेन पदकारा अनुवर्त्याः' इति वदन् पठ्यमानपदविभागस्याश्रद्धेयतां स्पष्टमाचष्ट। तथा 'वीप्सायामैकपद्ये समासवच्च बहुलम्' इति लक्षणप्राप्तेऽपि 'अन्योन्यसंशये त्वेतत्' इत्यादिना भाष्यकाराद्यभि-युक्तप्रयुक्तेऽप्याधुनिकाध्यापका वेदे स्वयं यद्यदित्याद्यैकपद्येन पठन्तोऽपि 'तदन्योन्यस्मै ज्यैष्ठ्यायाऽतिष्ठमानम्' इत्यादौ भेदेन पठन्तो दृश्यन्ते। किञ्च 'अरुणो मासकृद्वृकः' इत्यृचि मासकृत् इति पदभेदेन पाठेऽपि मासानां कर्तेति परेण व्याख्यातम्। अत एव 'स आत्मा तत्त्वमसि' इत्यत्र पूर्वोत्तराविरोधायातत्त्वमसीति पदं विच्छिद्याभेदश्रुतिरेवापलापितेति। अतोऽर्थानुसार्येव पदविच्छेद इति सिद्धम्।

अत्र नञ्परोऽस्तिः अन्योन्याभावार्थकनञ्समभिव्याहारेण भवत्यर्थ इत्याह- **न भवतीति ।।** अत्रायं प्रयोगः सूचितः- शुक्लादिकं रूपं न भिन्नं भिन्नत्वेन भगवताऽदृष्टत्वादिति। अस्याप्रयोजकतामाशङ्कते- **भगवतेति ।। कुत इति ।।** निमित्तादित्यर्थः। **उच्यत इति ।।** ततोऽन्यदिति वाक्यशेष इत्यर्थः। उक्तिप्रकारं दर्शयन्नत्रापि यत्पदं तन्त्रमित्युपेत्याऽह- **यद्यस्माज्जीवादिकमिति ।।** पश्येदिति प्रकृतं ब्रह्मैव विभक्तमित्यत्र यदि(पदि)न्यायेन प्रतियोगितया सम्बध्यत इत्याह- **स्वतो विभक्तमिति ।।** अनेनापि प्रयोगान्तरं- विश्वं भगवता भिन्नं तेन भेदेन दृष्टत्वादिति सूचितम्। अत्राप्यप्रयोजकतामाशङ्कते- **भगवतेति ।।** उत्तरयति- **मैवमिति ।।** द्रष्टुर्दृष्टेरिति वैयधिकरण्येन योजयति- **द्रष्टुः परमेश्वरस्येति ।।** 'दुष्टे नष्टपदप्रयोगान्नाशशब्दो दोषवाची' इति गीताभाष्यमनु-रुन्धानो व्याचष्टे- **निर्दोषत्वादिति ।।** फलितमाह- **अबाधितत्वाच्चेति ।।** यत्पदपाठव्यत्ययादाह- **अर्थानु-वादोऽयमिति ।। अन्योऽर्थ इति ।।** ज्ञानस्य विषयाभावरूप इत्यर्थः। **शेषवैयर्थ्यादिति ।।** अन्यपद-द्वितीयपदवैयर्थ्यादित्यर्थः। **स्वरूपकथनमिति ।।** वस्तुस्थितिकथनमित्यर्थः। निर्विशेषत्वबाधके तात्पर्यं न हेताविति हृदयम्। तद्बाधकं दर्शयति- **अत्र हीति ।। सम्बन्धकथनेनेति ।।** द्रष्टुरिति षष्ठ्येत्यर्थः। **बाध्यत इति ।।** सम्बद्धस्य सखण्डत्वादित्यर्थः। **अयमिति ।।** सम्बन्धव्यपदेश इत्यर्थः। **अनुपपत्तीति ।।** सम्बन्धे बाधकाभावादित्यर्थः। **पूर्णत्वेनेति ।।** ज्ञानविनाशाभिधानस्येत्यर्थः। **वैयर्थ्यादिति ।।** विगतप्रयोजनत्वाद्विरुद्ध-

प्रयोजनत्वाच्चेत्यर्थः। **एतेनेति ।।** वैयर्थ्यदोषानुषङ्गेणेत्यर्थः। **निरस्तमिति ।।** लिङ्गभेदेन दूरनिरस्तमित्यर्थः। दोषान्तरं प्रतिजानीते- **किञ्चेति ।। कर्तृप्रत्यय इति ।।** तृच्प्रत्यय इत्यर्थः। 'कर्तरि कृत्' इति तस्य कर्तरि विधानात्क्रियाया निर्विशेषस्वरूपमात्रत्वे क्रियाकारकभावायोगादित्यर्थः। निगमयति- **अत इति ।।** इति न तु तद्द्वितीयमस्तीति श्रुत्यर्थः।

**मूलम्- 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इत्यत्रापि एकीभावो मत्यैक्यं क्षीराब्ध्यादिस्थिततद्रूपापेक्षया स्थानैक्यं वा। 'कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः। यदमीषामदः प्रियं तदैतूपमामभि', 'ब्रह्ममत्यनुकूला मे मतिर्मुक्तौ भविष्यति। अतः प्रायोऽनुकूलत्वमिदानीमपि मे स्थितम्', 'येनाऽ-क्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम्', 'एतमानन्दमयमात्मान-मुपसङ्क्रामति' इत्यादिश्रुतिभ्यः। स्वरूपैक्याभिप्राये कर्माणि विज्ञानमयश्चेति न युज्यते। न हि तत्पक्षेऽपि कर्मणा ब्रह्मैक्यं मुक्तावस्ति। निवृत्त्यभिप्राये च पञ्चदश-कलानामपि समत्वात्। 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु' इत्यन्यासां कलानां गमनमुक्त्वा कर्मणां विज्ञानात्मनश्चैकीभावकथनं व्यर्थं स्यात्। विशेषाभावात्।**

**(त.मं.) मृत्योः** संहारकस्य भगवतः कामानुकूल्येन मे कामः विषयान्प्रत्यागच्छेत्। **अमीषां** भगवद्रूपाणां यत्प्रियं तत् प्रियत्वेन माऽभ्युपैतु। उपासकानामेवमभिसन्धेः मुक्तौ मत्यैक्यं सम्भ-वति । येनाऽप्तकामा मुक्तास्तं लोकमाक्रमन्ति, यत्र तत्सत्यस्य हरेः परं **निधानं** वैकुण्ठाख्यं स्थानम्। कर्मणां जडत्वात् निवृत्तिरभिप्रेतेत्यत आह- **निवृत्तीति ।।** पञ्चदशकलानामपि निवृत्त्या कर्मसमत्वात्। सर्वासामप्येकदैव निवृत्तिकथनसम्भवात्। **प्रतिदेवतासु प्रतिष्ठाः** देवताप्रति-बिम्बभूतासु प्रजासु प्रति प्रति स्थिताः। अन्ये इन्द्रियाद्यभिमानिदेवाश्च।

**टीका-** ननु 'गताः कलाः' इति वाक्ये मुक्तस्य परमात्मैक्यं स्फुटमेवोच्यते। तथा हि-मुक्तिकाले विदुषो देहारम्भकाः प्राणाद्याः पञ्चदशकलाः **प्रतिष्ठाः** स्वकारणानि प्रति गता भवन्ति। तदभिमानिनो देवाश्च सर्वे **प्रतिदेवतासु** स्वमूलरूपेषु गता भवन्ति। कर्माणि विदुषा कृतानि निवृत्तानि **विज्ञान-मयश्चायमात्मा** विद्वान् **परेऽव्यये** परमात्मनि सर्व एकीभवन्तीति। तथा च कथं मुक्त्यनन्तरमपि भेदोऽभिधीयत इत्यतो वाक्यं सम्यग्व्याचष्टे- **कर्माणीति ।।** अत्र वाक्ये कथित इति शेषः। विषयैक्यान्मतीनामैक्यं तदैक्यान्मतिमतामप्यैक्यमिति लक्षितलक्षणेत्यर्थः। **स्थानैक्यं वेति ।।** स्थानगतमैक्यं स्थानिषूच्यत इत्यर्थः। ईश्वरस्य सर्वगतत्वात्तेन स्थानैक्यं जीवस्य सर्वदाऽस्ति। तस्मात् 'एकीभवन्ति' इति कथमित्यत उक्तम्- **क्षीराब्धीति ।। तद्रूपम्** ईश्वररूपम्। ततश्चायमर्थः-**गता** मुक्ता इति वक्ष्यमाणानां सर्वेषां विशेषणम्। प्राणाद्याः पञ्चदश कलादेवता अन्ये च **प्रतिदेवतासु** प्रतिबिम्बभूतासु प्रजासु, **प्रतिष्ठाः** स्थितिहेतवः सर्वे देवाः **कर्माणि** कर्माभिमानिनी देवता च विज्ञानमय आत्मा चेत्येते सर्वे परमात्मानं प्राप्य तस्मिन्नेव स्थिता एकीभवन्ति। प्राग्विभिन्न-मतयोऽधुनैकमत्यं प्राप्नुवन्ति, प्राग्विमतयो ब्राह्मणा राजकुले एकीभवन्तीति यथा। अथ वा प्रागीश्वरव्यक्तिस्थानापेक्षयाऽन्यत्रेतस्ततः स्थितास्तत्र मिलिता भवन्ति। अह्नि इतस्ततः स्थिता गावः सायं गोष्ठे एकीभवन्तीति यथा। च्विप्रत्ययोऽप्येवं सति मुख्यार्थः स्यात्।

'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति।
यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः।'

इत्यादीन्यपि वाक्यान्येवमेव व्याख्येयानि। **असन्तम्** अभद्रमित्यर्थः। ननु मुक्तस्य परमेश्वरेण मत्यैक्ये सिद्धे

तद्विषयमेतद्वाक्यं भवेत्, तदेव कुत इत्यतः तत्र वाक्यद्वयं पठति- **कामेनेति ।। मृत्योः** संहर्तुरीश्वरस्य **कामेन** इच्छानुसारेणैव मे काम **आगात्** मुक्तावागच्छतु । मृत्योर्**हृदयाद्** हृदयं सङ्कल्पमनुसृत्यैव मे **हृदयं** सङ्कल्प आगच्छतु । **अमीषाम्** अमुष्य मृत्योः यद् **अदः** प्रियं तदेव मामभि **आ** सम्यग् एतु, ममापि प्रियं भवतु इति मुमुक्षुणा प्रार्थ्यते । इदानीं जीवन्मुक्त्यवस्था-यामपि मुक्तानां परमेश्वरेण स्थानैक्यम् अस्तीत्येतत्कुतः? येनैतद्वाक्यं तद्विषयं स्यादित्यतोऽत्रापि श्रुतिद्वयं पठति- **येनेति ।। यत्र** लोके **सत्यस्य** परमेश्वरस्य **तत्परमं निधानं** प्राकट्येन सन्निधानं तं लोकम् **आप्तकामाः** कृतार्थाः ऋषयो **येन** देवयानेन पथा **आक्रमन्ति** गच्छन्तीति यच्छब्दस्य पूर्वत्रान्वयः । नन्वस्य वाक्यस्य साक्षादैक्यार्थेऽनुपपन्ने तत्त्यागेन लक्षणाऽऽश्रयणीया । नच मुख्यार्थेऽनुपपत्तिं पश्यामः । तत्कथं लक्षणाश्रयणमित्यतस्तावदान्तरानुपपत्तिमाह- **स्वरू-पेति ।। स्वरूपैक्यं** साक्षादैक्यम् अभिप्रायो यस्य तत्तथोक्तम् । अस्मिन् वाक्येऽङ्गीकृत इति शेषः। विज्ञानमयस्याऽत्मन इव कर्मणामपि परमेश्वरैक्यकथनं न युज्यते । कुत इत्यत आह- **न हीति ।। तत्पक्षे** मुक्तस्य ब्रह्मणैक्यपक्षे । अस्मत्पक्षे तु सुतरामित्यपेरर्थः । कर्मशब्देन हि न देवता तैरङ्गी-कृता । अतो जडानां चिदात्मना ब्रह्मणा तैरप्यैक्यं नाङ्गीकृतम् । अतोऽपसिद्धान्तः स्यादित्यर्थः ।

ननु कर्माणि एकीभवन्तीत्यस्य चित्स्वरूपे भ्रान्त्यारोपितानि ज्ञानेन निवर्तन्त इत्यभिप्रायः । अतो नोक्तदोष इति चेन्न । तथा सति विज्ञानात्मनोऽपि निवृत्तिप्रसङ्गात् । न हि सकृदुक्तस्य शब्दस्यार्थद्वयकल्पना युक्तेति स्फुटत्वादनुक्त्वा दोषान्तरमाह- **निवृत्तीति ।।** निवृत्तिरभिप्रायो यस्यासौ तथोक्तः । एकीभावशब्देऽङ्गीकृत इति शेषः । पञ्चदशकलानामिति विशेषणसमासो न द्विगुः । **समत्वात्** निवृत्तेरिति शेषः । यदि कर्माण्येकीभवन्तीत्यस्य निवर्तन्त इत्यभिप्रायः स्यात्तदा पञ्चदशानामपि कलानां निवृत्तिसाम्यात् कर्मणोऽपि कलात्वाद्गताः कलाः षोडशेत्येव वक्तव्यम् । पृथङ्निवृत्तिकथनं व्यर्थं स्यात् । किञ्च कर्मव्यतिरिक्तानां कलानां गता इति शब्देन कर्मणान्त्वेकी-भवन्तीति शब्दान्तरेण निवृत्तिकथनं व्यर्थं स्यात् । अपि च कर्मणां विज्ञानात्मना सहोक्तिश्च व्यर्था स्यादिति भावः ।

अथ वा यदुक्तमेवं सति विज्ञानात्मनोऽपि निवृत्तिः प्रसज्येतेति तदप्यनेन सूचयति- **विज्ञानात्म-न इति ।।** तदर्थं व्यर्थमित्येतद्विरुद्धार्थमिति व्याख्येयम् । ननु समानजातीयानामपि पृथक्-क्रियासम्बन्धोक्तिर्दृष्टा यथा ब्राह्मणाः समागता वसिष्ठश्चेति । तथाऽत्र किं न स्यादिति चेन्न । तत्र श्रैष्ठ्यज्ञापनादिप्रयोजनविशेषसद्भावात्प्रकृते तु तदभावादित्याह- **विशेषेति ।।** अस्मन्मते तु पृथगुक्तेः प्रयोजनमुक्तम्-

'कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।
कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यते' इति ।।

(र.टि) **च्विप्रत्ययोऽप्येवं सति मुख्यार्थः स्यादिति ।।** एकविषयबुद्धिमत्त्वस्य श्वेतद्वीपाद्येकस्थानत्वस्य प्राङ्मुक्तेरविद्यमानस्य मुक्तौ सत्यां भवनाङ्गीकारादिति भावः । **एवमेव व्याख्येयानीति ।।** एकीभावशब्दो यथैकविषयबुद्धिकत्व-एकस्थानस्थितत्वार्थो व्याख्यातः, तथा भेदशब्दो विरुद्धविषयकबुद्धिकत्वादिना व्याख्येय इत्यर्थः । विरुद्धविषयकबुद्धिकत्वादेः सत्यत्वात्कथमसङ्गतमसन्तमित्युक्तमित्यतस्तद्व्याचष्टे- **अभद्रमिति ।। यच्छब्दस्य पूर्वत्रान्वय इति ।। साक्षादैक्यमिति ।।** न तु निवृत्तिलक्षणगौणैक्यमित्यर्थः । **आत्मन इवेति ।।** अनेन विज्ञानमयश्चेति विज्ञानमयस्य दृष्टान्तत्वेन ग्रहणमित्युक्तं भवति । **कर्मणोऽपि कलात्वादिति ।।** अनेन समत्वादित्येतदावृत्त्या एतत्परत्वेन व्याख्यातं भवति । उक्त्वा कथनमिति पौर्वापर्यप्रदर्शनेनेयं युक्तिः सूचितेति ज्ञातव्यम् । गमनैकीभावपद(प्रवृत्त्या)प्रयोगसूचितं दूषणमाह- **किञ्चेति ।।** विज्ञानात्मनश्चेति पदप्रयोगेण सूचितं दूषणमाह- **अपि चेति ।।** अन्यथा कर्मणामित्यस्यैव प्रकृतोपयोगाद् विज्ञानात्मनश्चेति व्यर्थं स्यादिति भावः । विज्ञानात्मनश्चेति पदप्रयोगसूचितं दूषणान्तरमाह- **अथ वेति ।। प्रत्यवरमिति ।।** अत्यन्तमवर-मित्यर्थः । अन्यथा पञ्चदशकलाद्यभिमानिदेवानामपि तारतम्योपेतत्वात्सहोक्तिर्न स्यादिति ।

**(रा.टि.)** मूलकृतैवाग्रे समग्रस्य पूर्वार्धस्य कर्माणीत्युत्तरार्धस्य चोक्तेः 'गताः कला इति वाक्ये' इत्येवो-क्तम्। **प्राणाद्या इति ॥** 'प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति षट्प्रश्नोक्ता ध्येयाः। **तदभिमानिनो देवा इति ॥** प्राणवाणीविनायकप्राणसुत-मरुत्पावकबुधशनीन्द्ररुद्रचन्द्रवरुणवह्निस्वाहापर्जन्योषा इत्यर्थः। एकीभवन्तीतिशब्दस्य स्फुटमैक्यमुच्यत इति पूर्वेणान्वयः। आदिपदार्थमेतद्वाक्यार्थोक्त्यनन्तरं विवरिष्यन्नेतन्मात्रपरमग्रेतनव्याख्यानमिति भावेनाऽह- **अत्र वाक्य इति ॥ शेष इति ॥** कथित एकीभावो मत्यैक्यमिति योजनेति भावः। तथा च सूत्रं 'भोक्त्रापत्तेः' इत्यादि। प्रतिजीवं मतीनां भिन्नत्वात्कथं मत्यैक्यमित्यत आह- **विषयैक्यादिति ॥** एकीभवन्तीति श्रुत-स्वरूपैक्यवाचिपदेन तन्मतीनामैक्यं लक्षयित्वा तद्विषयैक्यं लक्षणीयमिति लक्षितलक्षणा। लक्षितार्थं द्वार-तयोपादायार्थान्तरं लक्षणया बोधयतीति लक्षितलक्षणारूपवृत्तिमिदिदं पदमित्यर्थः। भगवन्मतिर्यद्विषयिणी तद्विषयकमतिमन्त एव सर्वे मुक्ता न तु संसारदशायामिव तद्विरुद्धविषयकमतिमन्त इति भावः। समग्र-वाक्यार्थमाह - **ततश्चेति ॥** एकीभावशब्दस्य मत्यैक्याद्यर्थकत्वे सतीत्यर्थः। अयमर्थः, समग्रवाक्यस्येति योज्यम्। **वक्ष्यमाणानामिति ॥** देवानां कर्मणां विज्ञानमयस्य चेत्यर्थः। कलापदेनैवाभिमानिनयन्यायेन कलादेवतानां ग्रहणात्पुनर्देवाश्चेति पुनरुक्तमित्यत उक्तम्- **अन्ये चेति ॥ ऐकमत्यमिति ॥** एकार्थविषयकमति-मत्त्वं प्राप्नुवन्तीत्यर्थः। **राजकुल इति ॥** राजगृह इत्यर्थः। **व्यक्तीति ॥** अभिव्यक्तीत्यर्थः। एवं व्याख्याने किं बीजमित्यत आह- **च्विप्रत्यय इति ॥** 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति प्रागनेका अधुनैकतां प्राप्ता इत्येवंरूपाऽभूततद्भावे च्विप्रत्ययस्योक्तेरेकीतिशब्दस्य च्विप्रत्ययान्तस्य सत्त्वादस्मदुक्तार्थ एवैकशब्दात्परः च्विप्रत्ययो मुख्यः। पराभिप्रेतार्थे प्रागप्यैक्यस्य तन्मते सिद्धत्वेनाभूततद्भावासम्भवादिति भावः। न केवलं वक्ष्यमाणदिशा कर्माणीत्यादिर्मुख्यः च्विप्रत्ययोऽपीत्यपेरर्थः।

एकीभवन्तीत्यादावपीत्यत्राऽदिपदोक्तवाक्यद्वयमुदाहृत्य प्रागुक्तव्याख्यानमतिदिशति - **विभेदजनक इति ॥** मित्रभेद इत्यादाविवात्र भेदशब्दो भगवन्मतिविषयविरुद्धार्थविषयकज्ञानपरः। तज्जनके अज्ञाने संसारहेतु-भूते नाशमात्यन्तिकं गते। आत्मनः स्वस्य भेदं विरुद्धमतिमत्त्वमित्यर्थः। असन्तमलीकमिति भ्रान्तिनिरासायाऽह- **असन्तमभद्रमिति ॥** अनर्थहेतुत्वादिति भावः। व्यत्ययेन बहुवचनमित्युपेत्याऽह- **अमीषाममुष्येति ॥** तदैत्वित्यत्र तत् आ एत्विति विभागमुपेत्याऽह- **तदेवेत्यादि ॥** संसारदशायामिति भ्रमनिरासायाऽह- **जीवन्मु-क्त्यवस्थायामिति ॥** तदित्यस्याऽवृत्तिमुपेत्यार्थमाह- **तं लोकमिति ॥** श्वेतद्वीपम्। **यच्छब्दस्येति ॥** येनेतिशब्दस्य 'सत्येन पन्था विततो देवयानः' इत्याथर्वणस्थपूर्ववाक्ये येन पथाऽऽक्रमन्ति अयं देवयानः पन्थाः सत्येन हरिणा वितत इत्यन्वय इत्यर्थः। **अस्मत्पक्षे सुतरामिति ॥** कर्मणां जडत्वेन चितोरैक्यानङ्गी-कारेणाऽचितोऽत्यन्तं निस्सन्देहमैक्यं नेत्यर्थः। **विशेषणेति ॥** 'विशेषणं विशेष्येण बहुलम्' इति समास इत्यर्थः। 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुत्वे 'द्विगुरेकवचनम्' इति भाव्यत्वेन बहुवचनायोग इति भावः। निवृत्त्यभि-**(रा.टि)** प्राय इत्यादेर्व्यर्थं स्यादित्यन्तस्य त्रेधा अभिप्रायमाह- **यदि कर्माणीत्यादिना ॥** अथ वेति पर्यन्तेन ग्रन्थेन। **यदुक्तमिति ॥** व्याख्यात्रा मयेति योज्यम्। केन पदेन सूचयतीत्यत उक्तम्- **विज्ञानात्मनश्चेति ॥ विरुद्धार्थमिति ॥** कर्मणां निवृत्त्यर्थत्वं विज्ञानमयस्य स्वरूपैक्यार्थत्वमित्येवमेकी-भवन्तीत्यस्य विरुद्धार्थत्वस्य प्राप्तेरिति भावः। यदीत्यादिनोक्तदोषपरिहारमाशङ्कते- **ननु समानेति ॥** भवतामपि समानोऽयं दोषः, कर्मदेवताया अपि कलापदेन कलादेवतावाचिना गृहीतेरित्यत आह- **अस्मन्मते त्विति ॥ उक्तमिति ॥** आथर्वणभाष्ये।

**(श्री.टि.) गताः कला इति वाक्य इति ॥** 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति वाक्य इत्यर्थः। प्रतिष्ठाशब्दो मूलकारणवचन इत्यभिप्रेत्य स्वकारणानीत्युक्तम्। काम्यकर्मव्यावृत्त्यर्थं विदुषा कृतानि निवृत्तानीत्युक्तम्। निवृत्तकर्माणीत्यर्थः। **विद्वान्** ज्ञानी जीवः। **लक्षितलक्षणेति ॥** मुख्यार्थबाधाल्लक्षणा। तस्याप्यर्थस्य पुनर्बाधे सति या लक्षणा सा लक्षित-लक्षणा। तथा च लक्षितमर्थं द्वारीकृत्य लक्षणा लक्षितलक्षणेत्यर्थः। नन्वत्रार्थस्यैव सर्वपदलक्ष्यत्वमर्थान्तरलक्षकत्वं चोक्तं, तत्कथं? पदस्यैव लक्ष्यलक्षकत्वयोः प्रसिद्धेरिति चेत्, सत्यम्। अर्थस्यैव लक्ष्यत्वं लक्षकत्वं चेति मतमाश्रित्येदमुक्तम्। यथाऽऽहुः-

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽरोपिता क्रिया ॥' इति।

आरोपिता क्रियेत्यस्य शब्देऽध्यस्तो व्यापार इत्यर्थः। अत्र च लक्षकं नैकपदम्। सिद्धान्ते मत्यैक्याङ्गीकरणैक्य-रूपमुख्यार्थापरित्यागात्। अतस्सर्वपदमेवात्र लक्षकम्। तथा च सर्वे प्राणिन एकीभवन्तीत्यर्थस्य बाधे मत्यैक्यं लक्ष्यते। एवं

लक्षितलक्षणया वाक्यार्थे सिद्धे सत्यत्रानुपपत्तिर्नास्तीत्याशयेनोपपादयितुमुक्तम्- **विषयैक्या-दिति ।।** विषयैक्यान्मत्यैक्यमुपपद्यते, मत्यैक्यान्मतिमतां सर्वशब्दोक्तानामैक्यमुपपन्नमिति शेषः। **एकी-भवन्तीति कथमिति ।।** 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति सूत्रेणाभूततद्भाव एव च्विप्रत्ययविधानात्, प्रकृत ईश्वरेण स्थानैक्यस्य सर्वदा सत्त्वेनाभूतत्वाभावादेकी-भवन्तीति च्विप्रत्ययः कथमित्यर्थः। **सर्वेषां विशेषणमिति ।।** गता= मुक्ताः पञ्चदशकलाः, तथा गता= मुक्ताः प्रतिदेवतासु प्रतिष्ठाः सर्वे देवाः गताः, व्यत्ययेन गतानि= मुक्तानि कर्माणि, गतो= मुक्तो विज्ञानमयश्च आत्मेत्येवं कलादिविज्ञानमयान्तानां सर्वेषां विशेषणमित्यर्थः। **प्राणाद्याः पञ्चदश कलादेवता इति ।।** 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपोमन्त्राः कर्म लोका लोकेषु नाम च' इति षट्प्रश्नोपनिषदुक्ताः कर्मव्यतिरिक्ताः प्राणाद्याः पञ्चदश कलाः। तद्देवतास्तु

'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोभिधः।
तस्मादिन्द्रस्त्विन्द्रियात्मा तस्मात्सोमोऽन्नदेवता।
**(श्री.टि.)** ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्।
तस्मादग्निः पावकाख्यः प्रथमाग्नेः सुतस्ततः।
ततः पर्जन्य उद्भूतस्स्वाहाऽतो मन्त्रदेवता।
उदकात्मको बुधस्तस्मादुषा नामात्मिका ततः।
ततः शनिः पृथिव्यात्मा।'

इति तद्भाष्योदाहृतप्रमाणोक्ता ज्ञातव्याः। एतत्प्रमाणानुसारेणैव प्राणाच्छ्रद्धामिति श्रुतौ क्रमो ज्ञातव्यः। **अन्ये चेति ।।** सर्वे देवा इति सम्बन्धः। पञ्चदशकलादेवतातिरिक्ता इत्यर्थः। **विज्ञानमय आत्मा चेति ।।** जीवश्चे-त्यर्थः। **विभिन्नमतय इति ।।** भगवन्मतिविषयविरुद्धविषयकमतिमन्त इत्यर्थः। **ऐकमत्यम्** एकविषयकबुद्धि-मत्त्वम्। **विमतयः** राजमतिविषयविरुद्धविषयकमतिमन्त इत्यर्थः। **व्यक्तिस्थानापेक्षयेति ।।** यत्र भगवान् व्यक्ततयाऽस्ति तादृशं यत्स्थानं क्षीराब्धिशब्दोक्तश्वेतद्वीपानन्तासनवैकुण्ठाख्यं तदपेक्षयेत्यर्थः। **मुख्यार्थः स्यादिति ।।** एकविषयबुद्धिमत्त्वस्य श्वेतद्वीपाद्येकस्थानत्वस्य च मुक्तेः प्रागभूतस्य मुक्तौ सत्यां भावाङ्गी-कारादित्यर्थः।

ननु 'विभेदजनकेऽज्ञाने' इति वाक्ये स्पष्टं मुक्तौ भेदाभावः प्रतीयत इति चेत् तत्राऽह- **विभेदेति ।।** भेदहेतोर-ज्ञानस्य। **एवमेवेति ।।** एकीभवन्तीत्यत्र यथैकीभावशब्द एकविषयकबुद्धिमत्त्वार्थको व्याख्यात एवमेवेत्यर्थः। अत्र भेदशब्दो विरोधवाची। मित्रभेद इति दर्शनात्। एवं च विभेदजनके भगवन्मतिविषयविरुद्धविषयकमतिजनके भगवदज्ञान इत्यादिरूपेण व्याख्यानं द्रष्टव्यम्। ननु भगवन्मतिविषयविरुद्धवियकबुद्धिमत्त्वरूपभेदस्य सत्यत्वात् कथमसन्तमित्यसत्त्वमुच्यत इत्यत आह- **असन्तमभद्रमिति ।।** 'सद्भावे साधुभावे च' इत्यादिवचनेन सच्छब्दस्य साधुभावरूपभद्रवाचित्वादित्यर्थः। भगवद्विरोधस्य श्रुत्यदिनिन्दितत्वेनामङ्गलत्वादिति भावः। हृदयादिति ल्यब्लोपनिमित्ता पञ्चमीत्याशयेन हृदयं सङ्कल्पमनुसृत्येत्युक्तम्। बहुवचनमेकवचनार्थे 'सुपां सुलुक्' इति स्मरणादित्यभिप्रेत्यामीषाममुष्येत्युक्तम्। श्रुतौ तत् आ एतु उप इति पदच्छेदः। तत्राव्ययानामनेकार्थत्वा-दुपेत्येतदवधारणार्थमित्याशयेन तदेवेत्युक्तम्। तात्पर्यार्थमाह- **ममापीति ।। यच्छब्दस्य पूर्वत्रान्वय इति ।।** येनेति यच्छब्दस्य 'सत्येन पन्था विततो देवयान' इति पूर्वत्रान्वय इत्यर्थः। तथा च येन देवयानेन पथा आक्रमन्ति स देवयानः पन्थाः, सत्येन परमेश्वरेण विततो विस्तृतस्तिष्ठतीत्यर्थो द्रष्टव्यः। **साक्षादैक्यार्थ इति ।।** कलादीनां सर्वेषां परमात्मस्वरूपेणैक्यरूपे मुख्यार्थ इत्यर्थः। ननूत्तरत्र कर्मणामेव ब्रह्मैक्यं न सम्भवतीत्युच्यते। अतस्तदर्थं कर्माणीति न युज्यत इत्येव वक्तव्यं, न तु विज्ञानमयश्चेत्यतो दृष्टान्तकथनायेदमित्यभिप्रेत्योक्तम्- **विज्ञान-मयस्याऽत्मन इवेति ।।** ननु कर्मशब्देन देवताग्रहणे तच्चैतन्यस्य ब्रह्मणैक्यं तत्पक्षेऽस्त्येवेत्यत आह- **कर्मशब्दे-नेति ।।** कर्माणि- विदुषा कृतानि निवृत्तानीति कर्मशब्दस्य निवृत्तकर्मपरतया व्याख्यातत्वादिति भावः। ननु **(श्री.टि.)** एकीभवन्तीत्यत्रैकीभावशब्दस्य कर्मपक्षे निवृत्त्यर्थकत्वं विज्ञानात्मकशब्दोक्तजीवपक्षे ऐक्यार्थत्व-मित्यर्थद्वयं कल्प्यत इति चेत्तत्राऽऽह-**न हीति ।।** ननु पञ्चदशकलानामिति कथम्? 'तद्धितार्थोत्तरपदसमाहारे च' तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्सङ्ख्ये एकार्थेन समस्येते। 'सङ्ख्यापूर्वो द्विगुः' सङ्ख्यापूर्वो द्विगुसञ्ज्ञः स्यादिति सूत्रेणात्र पञ्चदशानां कलानां समाहारस्य वाच्यत्वेन समाहारद्विगुसमासे 'द्विगोः' इति

ङीपि पञ्चदशकलीनामिति भवेदित्यत आह- **विशेषणसमास इति ॥** तथा च 'विशेषणं विशेष्येण बहुलम्' भेदकं भेद्येन समस्यत इति सूत्रेण पञ्चदश च ताः कलाश्च पञ्चदशकलाः तासां पञ्चदशकलानामिति कर्मधारयसमास इत्यर्थः। **पृथङ्निवृत्तिकथनमिति ॥** कर्माणीत्यनेन कर्मणामिति शेषः।

गमनमुक्त्वा एकीभावकथनमिति गमनैकीभावशब्दप्रयोगाभ्यां सूचितं दूषणमाह- **किञ्चेति ॥** ननु कर्मणामेकीभावकथनं व्यर्थं स्यादित्येव वक्तव्यम्। विज्ञानात्मनश्चेति व्यर्थं प्रकृतानुपयोगादित्यतो विज्ञानात्म-नश्चेति पदप्रयोगसूचितं दूषणमाह-**अपि चेति ॥** विज्ञानात्मनश्चेत्यनेनैव सूचितं दूषणान्तरमाह-**अथ वेति ॥ सूचयतीति ॥** कर्माण्येकीभवन्तीत्यस्य ज्ञानेन निवृत्त्यभिप्रायकत्वे विज्ञानात्मनोऽपि निवृत्तिप्रसङ्गादिति दूषणं स्फुटत्वादनुक्तमिति प्रागुक्तम्। इदानीं तु विज्ञानात्मनश्चेत्यनेन सूचितमित्यर्थः। **तदर्थमिति ॥** एतद्दोष-सूचनार्थमित्यर्थः। **विरुद्धार्थमिति ॥** विज्ञानात्मनोऽपि निवृत्तिप्राप्त्या विरुद्धार्थकं स्यादित्यर्थः। **तथाऽ-त्रेति ॥** कर्मणामपि कलात्वेन प्राणादिपञ्चदशकलासाम्येऽपि पञ्चदशकलानां गता इति शब्देन, कर्मणां त्वेकी-भवन्तीति शब्दान्तरेण निवृत्तिकथनमयुक्तमित्यर्थः। ननु भवत्पक्षेऽपि कर्मणः कलात्वात् पञ्चदशकलाभ्यः पृथगुक्तौ प्रयोजनाभाव एवेति साम्यमेवेत्यत आह- **अस्मन्मते त्विति ॥ उक्तमिति ॥** आथर्वणभाष्य इत्यर्थः। **प्रत्यवरमिति ॥** अत्यन्तं नीचमित्यर्थः। समस्ततत्त्वाभिमानिदेवताभ्योऽत्यन्तं नीचमित्यर्थः। किं तत्कर्म जडं विवक्षितं? नेत्याह- **पुष्कर इति ॥** कर्माणीत्यत्र कर्मशब्देनोच्यत इत्यर्थः।

**(पां.टि.)** इत्यादीत्यादिपदेन पञ्चदश प्रतिष्ठा इत्यादिवाक्यशेषपरिग्रहः। मुक्तमतीनामपि भिन्नत्वेन ऐक्या-सम्भवात्कथं तदैक्यविषयकत्वमित्यतस्तदुक्तिमुपपादयति- **विषयैक्यादिति ॥** अनेके एके सम्पद्यन्ते एकी-भवन्तीति खलु एकीभवन्तीत्यस्यार्थः। अभूततद्भावार्थकच्विप्रत्ययप्रयोगात्। ततश्चात्र, यथा गङ्गायां घोष इत्यत्र गङ्गापदस्य प्रवाहरूपमुख्यार्थेन नार्थत्वम्। तथा सति प्रवाहस्य घोषानाधारत्वेन बाधितार्थत्वप्रसङ्गात्। तथा एकशब्दस्य नैकत्वविशिष्टरूपमुख्यार्थेनार्थवत्त्वं सम्भवति। मुक्तेः पूर्वमिवानन्तरमपि एकत्वविशिष्टत्व-सम्पत्त्यभावेन अनेके एके सम्पद्यन्त इति अभूततद्भावार्थकच्विप्रत्ययार्थस्य बाधितत्वात्। नापि गङ्गायामित्यत्र मुख्यार्थसम्बन्धितीररूपलक्ष्यार्थेनेव एकशब्दमुख्यार्थभूतैकत्वविशिष्टवस्तुसम्बन्धिना मतिरूपलक्ष्यार्थेन। तीरस्य घोषाधिकरणत्वसम्भवेन बाधाभावात् लक्ष्यार्थेन तत्र अर्थवत्त्वसम्भवेऽपि प्रकृते मुक्तेः पूर्वमैकविषयमत्यरूपाणां तेषां मुक्त्यनन्तरमप्येकविषयमतित्वसम्पत्त्यभावेनाभूततद्भावरूपच्विप्रत्ययार्थबाधतादवस्थ्यात्। किन्तु एकशब्द-लक्ष्यार्थभूतमतिसम्बन्धिमतिमद्रूपो यः पुनस्तेनैव शब्देन लक्ष्यमाणोऽर्थः, तेनैव मुक्तेः पूर्वं भगवता भिन्न-**(पां.टि.)** विषयमतिमतां तेषां मुक्त्यनन्तरं भगवता एकविषयमतिमत्त्वसम्पत्तिसद्भावेन अभूततद्भावार्थक-च्विप्रत्ययस्याबाधेन तत्स्वारस्यसम्भवादिति भावः। अस्मिन् पक्षे लक्षितलक्षणाश्रयणं कर्तव्यं भवतीत्यपरि-तोषाल्लक्षणामात्रमाश्रित्य पक्षान्तरं मूले उपन्यस्तमिति भावेन स्वयं तदनूद्य व्याख्याति- **स्थानेत्यादिना ॥**

अयं भावः। नैकशब्दस्य एकत्वविशिष्टरूपमुख्यार्थेनार्थवत्त्वं भवति। मुक्तेः पूर्वमिवानन्तरमप्येकत्व-विशिष्टत्वसम्पत्त्यभावेन अनेके एके सम्पद्यन्त इत्यभूततद्भावार्थकच्विप्रत्ययस्य बाधितत्वप्रसङ्गात्। किन्तु यथा तत्र गङ्गापदस्य मुख्यार्थसम्बन्धितीररूपलक्ष्यार्थेनार्थवत्त्वं तथा एकशब्दस्यापि मुख्यार्थभूतैकत्वविशिष्टस्थान-सम्बन्धिनिवासरूपलक्ष्यार्थेनार्थवत्त्वम्। व्यक्तिस्थानापेक्षया मुक्तेः प्रागितस्ततः स्थितानां तेषां मुक्त्यनन्तरं भगवद्व्यक्तिस्थाननिवाससद्भावेन अनेके एके सम्पद्यन्ते इत्यभूततद्भावार्थकच्विप्रत्ययस्य अबाधादिति। 'गता मुक्ताः प्राणादिपञ्चदशकलारूपदेवता अन्ये च देवाः सर्वे प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः कर्माणि विज्ञानमयो जीवश्च परमात्मनि प्रविशन्ति' इत्याथर्वणभाष्यं मनसि निधाय 'गताः कलाः' इत्येतच्छ्रुत्यर्थमाह- **ततश्चायमर्थ इति ॥** पूर्वपक्ष्युत्प्रेक्षितार्थे गता गता इत्यध्याहारप्रसङ्गान्न तथाऽर्थः, किन्तु अन्यथेति तं दर्शयति- **गता मुक्ता इत्यादिना ॥** तत्र गता इत्यस्य व्याख्यानम्- **मुक्ता इति ॥**

'प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात्।
कलानां देवता अन्या देवतानां नरा अपि।
तस्मात् सर्वेऽपि मुक्तेषु नरेष्वपि नियामकाः।
तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः॥'

इत्याथर्वणभाष्योदाहृतमुक्तविवेकोक्तेरिति भावः। अत्रायं निष्कर्षः। कलादेवादिदेवाः संसारिणः प्रतिष्ठा-नियामकाः सन्तस्तन्मुक्त्यवसरे मुक्ता मुक्तस्यापि नियामकास्तिष्ठन्ति इति। स्वतन्त्रप्रयोगत्वेन प्रयोजनानपेक्ष-त्वात् न स्वायत्तन्यायविरोध

इति भावेन लक्षितलक्षणया तादृशप्रयोगमुदाहरति- **प्राग्विमतय इति ॥** द्वितीय-पक्षेऽपि स्वतन्त्रप्रयोगत्वेन प्रयोजनानपेक्षत्वान्न स्वायत्तन्यायविरोध इति भावेन तादृशप्रयोगमुदाहरति- **अह्नी-ति ॥** स्वरूपैक्यार्थपरित्यागेन कुतोऽर्थान्तरपरत्वमाश्रीयत इत्यतः, च्विप्रत्ययस्य अमुख्यार्थतापत्तेरेव तत्र बाधकत्वेन तत्परित्यागेनेदमर्थान्तराश्रयणमिति भावेनाऽह- **च्विप्रत्यय इति ॥** एवं सत्येवेत्यर्थः । एकविषय-मतिमत्त्वस्य श्वेतद्वीपाद्येकस्थानस्थत्वस्य च प्राङ् मुक्तेरविद्यमानस्यैव मुक्त्यनन्तरं भवताऽङ्गीकारादिति भावः । एकीभवन्तीति मुक्तेश्वराभेदप्रतिपादकवाक्यव्याख्यानन्यायं तद्भेदाद्यभावप्रतिपादकवाक्येष्वतिदिशति- **विभेदजनक इत्यादिना ॥ एवमेवेति ॥** यथा एकीभवन्तीति श्रौत एकीभावशब्दो मत्यैक्यस्थानैक्यपरतया व्याख्यात एवमुदाहृतवचनगतभेदनास्तित्वशब्दोऽपि मत्यैक्यस्थानैक्यपरतया व्यख्यातव्य इत्यर्थः ।

ननु भेदाभावप्रतिपादकवाक्येषु तदभेदप्रतिपादकवाक्यव्याख्यानातिदेशो न युक्तः । अतिदेशप्रयोजकीभूताभ्य-**(पां.टि.)** धिकाशङ्कायां सत्यामेव युक्तः । तदधीनतायाः 'अतिदेशो हि तादृशः' इत्यादिना अतिदेशस्य निर्णीतत्वात् । विभेदजनक इत्यादिवाक्ये एकीभवन्तीति वचनापेक्षया अभ्यधिकाशङ्काप्रापकाभावात् तद्विषये अतिदेशानुपपत्तेरित्यतः भेदासत्त्वोक्तेरेव तद्वाक्यगताया अभ्यधिकाशङ्काप्रापकत्वेन तच्छङ्कासम्भवाद्युक्त एव उक्तव्याख्यानातिदेश इति भावेन शङ्काप्रापकमन्यथाव्याख्यानेन विघटयति- **असन्तमभद्रमित्यर्थ इति ॥** असच्छब्दस्यानेकार्थतया अविद्यमानत्वमात्रार्थत्वाभावेन नोक्तशङ्काप्रापकत्वमिति भावः । **मृत्योः संहर्तु-रिति ॥** अनेन मारयतीति मृत्युरिति मृत्युशब्दो व्याख्यातो भवति । कामेन मे काम इति भावे घञ् इति भावेन कामशब्दार्थमाह- **इच्छयेति ॥** हृदयादिति श्रुतौ ल्यब्लोपनिमित्ता पञ्चमीति भावेन तदर्थमाह- **हृदयमित्या-दिना ॥** 'सुपां सुलुक्' इति स्मरणाद् अमीषामिति बहुवचनमेकवचनार्थ इति भावेनाऽह- **अमीषाममु-ष्येति ॥** श्रुतौ यत्र येनेति यच्छब्दद्वयश्रवणात् तच्छब्दस्य च एकत्वादनन्वयमाशङ्क्य यथावद्व्याचष्टे- **यत्र लोक इति ॥ पूर्वत्रान्वय इति ॥** येन देवयानेन पथा आक्रमन्ति स देवयानः पन्थाः सत्येन वितत इति पूर्वत्रान्वय इत्यर्थः । तत्पक्षेऽपीत्यपिब्दार्थमाह- **अस्मत्पक्ष इति ॥**

ननु कर्मशब्दो न जडपरः, किन्तु अभिमान्यधिकरणन्यायेन तदभिमानिदेवतापरः । तस्याश्च चेतनत्वाद् विज्ञानमयस्येव ब्रह्मणा स्वरूपैक्यमेव किं न स्यादित्यतो भवेदेतदेवम्, यदि त्वया कर्मशब्दस्य देवतापरत्वमङ्गीकृतं स्यात् । न च तदस्तीत्याह- **कर्मशब्देन हीति ॥** अस्तु कर्मणां जडत्वं, तथाऽपि ब्रह्मणा स्वरूपैक्यमङ्गीकृतमिति किं न स्यादित्यतो विरुद्धधर्माधिकरणत्वात् न तदिति भावेन विरुद्धधर्माधिकरणतामुपदर्शयन् फलितं दूषणमाह-**अत इति ॥ नोक्तेति ॥** नापसिद्धान्त इत्यर्थः । **प्रसङ्गादिति ॥** एकीभावशब्दस्य निवृत्त्यर्थत्वेन स्वरूपैक्यार्थ-त्वाभावाद् विज्ञानात्मनोऽपि स्वरूपैक्याभावप्राप्त्याऽपसिद्धान्त एवेति भावः । ननु एकीभावशब्दस्य कर्मांशे निवृत्त्यर्थत्वस्य विज्ञानमयांशे च स्वरूपैक्यार्थत्वस्याङ्गीकारेण सर्वत्र निवृत्त्यर्थत्वस्य स्वरूपैक्यार्थत्वस्य वा अनङ्गीकारान्नापसिद्धान्तद्वयमपीत्यतो भवेदेतदेवं यदि कर्मांशे निवृत्त्यर्थत्वं विज्ञानमयांशे च स्वरूपैक्यार्थत्वमिति युक्तं स्यात् । न च तद्युज्यते । सकृत् प्रयुक्तशब्दस्यानेकार्थताकल्पनस्य 'अन्यायश्चानेकार्थत्वम्' इति न्याय-विरुद्धत्वादित्याशयेनाऽह- **न हीति ॥** तर्हि उक्तशङ्कापरिहाराय अस्यैव दोषस्य वक्तव्यत्वात् तत्परित्यागेन दूषणान्तरानुसरणं निर्निबन्धनमित्यतः उक्तदोषस्य सम्भवेऽपि स्पष्टत्वाद् विनाऽप्युक्तिं शिष्यैरेव तस्य ज्ञातुं शक्यत्वात् तत्परित्यागेन दूषणान्तरानुसरणं ग्रन्थकारस्य युक्तमेवेत्याशयेनाऽह- **स्फुटत्वादनुक्त्वेति ॥ विशेषणसमास इति ॥** पञ्चदश च ताः कलाश्चेति 'विशेषणं विशेष्येण बहुलम्' इत्यनेन विशेषणसमास इत्यर्थः । 'सङ्ख्यापूर्वो द्विगुः' इति स्मरणात् संख्यापूर्वकत्वेन द्विगुरेवात्र समासः किं न स्यादित्यत आह- **न द्विगुरिति ॥** पञ्चदशानां कलानां समाहार इति द्विगुर्नेत्यर्थः । अन्यथा 'द्विगोः' इत्यनेन ङीपि पञ्चदशकल्या इति भवेदिति भावः । यदत्र वक्तव्यं तत्सर्वं पञ्चस्कन्धशब्दव्युत्पादनावसरे प्रागेवोक्तमिति तत्रैव प्रतिपत्तव्यमिति नेहोच्यते । पदार्थमुक्त्वा वाक्यार्थमाह- **यदीति ॥ कर्मणोऽपि कलात्वादिति ॥** अनेन समत्वादित्येतदावृत्त्या **(पां.टि.)** कलात्वेन समत्वादित्यपि व्याख्यातं भवति । **यदुक्तमिति ॥** अस्माभिरिति शेषः । **तदर्थ-मिति ॥** विज्ञानात्मनोऽपि निवृत्तिः स्यादिति दूषणस्य मूलारूढत्वसिद्ध्यर्थमित्यर्थः । कथमस्मिन् पक्षे व्यर्थमिति वैयर्थ्योक्तिः सङ्गच्छत इत्यतः तामुक्ताननुगुणतया व्याख्याति- **विरुद्धार्थतयेति ॥** आद्यानुपपत्तिपरिहारं शङ्कते- **नन्विति ॥** तर्हि उक्तयुक्त्या त्वत्पक्षेऽपि पृथगुक्तिर्व्यर्थेति समानो दोष इत्यतस्तं परिहरति- **अस्मत्पक्षे त्विति ॥** किं तत् कुत्र चोक्तमित्यत आह- **कलाभ्य इति ॥ प्रत्यवरमिति ॥** अत्यन्तमवरमित्यर्थः । अन्यथा पञ्चदशकलाभिमानिदेवतानामपि तारतम्यवत्त्वात्सहोक्त्यभावप्रसङ्गात् । तथा च कर्माभिमानिदेवताया इतरदेवतापेक्षया अत्यन्तावरत्वज्ञापनार्था पृथगुक्तिरिति भावः ।

**(व्या.टि.)** पुनः प्रत्यवतिष्ठते- **नन्विति ॥ स्फुटमेवेति ॥** नन्वत्र सूत्रभाष्यविरोधः । तथा हि-'भोक्त्रापत्तेः' इति सूत्रे 'मुक्तजीवस्य

परापत्तिरुच्यते । अतस्तयोरविभागः’ इति परापत्तेर्मिश्रीभावरूपाया वाच्यत्वेनाविभाग-स्याऽर्थिकत्वेन चोक्तेरिति चेन्न । अस्यां हि श्रुतौ ‘परमाप्य तत्रैकीभवति’ इति परापत्तिः पूर्वं, ततः परम् अविभाग एकीभावः श्रूयत इति मुक्त्यनन्तरस्यैकीभावस्य न प्रत्यावृत्तिः । मुक्तेरपुनरावृत्तिरूपत्वादिति सूत्रभाष्याशयः नाविभाग आर्थिक इति । अत एव ‘अतः पूर्वमपि स एव’ इत्युत्तरभाष्यम् । अत एव सिद्धान्तभाष्ये एकीभवतीत्यस्यैक्यव्यपदेशत्वमुपेत्य ‘यथा लोके उदके उदकान्तरस्यैकीभावव्यहारेऽप्यन्तर्भेदोऽस्त्येवैवं स्यादत्रापि’ इति रूढोपचारत्वमुक्तम् । तत्त्वप्रकाशिकायान्तु ‘भोक्त्रापत्तेः’ इति सूत्रे ‘भावनिर्देशाभावेऽपि परापत्तिः’ इति भाष्यं स्वभावपरित्यागेन परभावापत्तिरित्यभिप्रेत्य तिलेषु तैलमितिवत् परे इत्यभिव्यापिकाधि-करणसप्तमीमाश्रित्यैकीभावविवक्षयैव परमात्मत्वप्राप्तिः श्रूयत इति व्याख्यातम् । सुधायां च ‘भोक्तुर्जीवस्य मोक्षे ब्रह्मत्वापत्तिश्रवणात्’ इति व्याख्यातम् । अत्र च सप्तम्यर्थं वक्ष्यति ‘परमात्मानं प्राप्य’ इति । **देहारम्भका इति ॥** यजुर्वेदे ‘षोडशकलो वै पुरुषः’ इति षोडशकलानां देहारम्भकत्वोक्तेः । प्रतिष्ठाशब्दस्य प्रतिष्ठीयन्ते तास्विति व्युत्पत्तिमुपेत्य व्याचष्टे- **स्वकारणानीति ॥** प्रति प्रति गता देवताः प्रतिदेवता इत्यभिप्रेत्याऽह- **स्वमूलरूपेष्विति ॥** कर्माणीति सामान्यं विशेषे उपसंहरति-**निवृत्तानीति ॥** विज्ञानमयपदं व्याचष्टे-**विद्वा-निति ॥** मूले इत्यादाविति सप्तम्या अन्वयाप्रतीतेराह- **अत्रेति ॥** मूल इत्यर्थः । ननु मतीनां प्रतिमन्तृभिन्नत्वात् कथमैक्यम् । न चोपचरितम् । शक्यसम्बन्धाभावात् । सर्वेषामेतदाश्रयत्वाभावेन वाक्यानिर्वाहाच्च । अत एव स्थानैक्यं चेत्यप्ययुक्तमिति चेत् । विषयेषु स्वरूपैक्यं शक्यतावच्छेदकमस्ति तद्विषयकत्वान्मतीनामेक-शब्दलक्ष्यत्वम् । तथाऽपि सर्वशब्दसामानाधिकरण्यायोग इति मतिमत्सु लक्षितलक्षणा । स्थानैक्यं स्थानिषूपचर्यत इति तत्र लक्षणामात्रमित्याशयेन व्याचष्टे- **विषयैक्यादित्यादिना ॥**

अत्र एकेतिप्रातिपदिकबोध्यतावच्छेदकमेव च्विप्रत्ययार्थः । तस्याभूतत्वमपि पूर्वमविद्यमानत्वरूपं भासते । तदपि प्रत्ययार्थः । बोध्यतावच्छेदकस्यानुप्रयुज्यमानस्यार्थेऽन्वयः । तस्य चाऽख्यातार्थे आश्रयेऽन्वयः । तस्य च प्रथमान्तार्थेऽभेदेनान्वयः । तथा च पूर्वमविद्यमानैकविषयकमतिमत्त्वभवनाश्रयाः सर्वे, तथा तादृशैकस्थानक-**(व्या.टि.)** त्वाश्रयाः सर्व इति बोधः । लक्षितलक्षणा नाम लक्षितस्य शक्यसम्बन्धिनः सम्बन्धः परम्परासम्बन्ध इति यावत् । न तु लक्षितस्य लक्षणावृत्तिरिति वा लक्षिते लक्षणावृत्तिरिति वा । अर्थस्य लक्षितत्वस्थले तस्य वृत्तेरेवायोगात् । पदस्य लक्षितस्य लक्षणाया अदर्शनात् । द्विरेफपदस्थले भ्रमरपदस्य शक्तेरेव सत्त्वाच्च । लक्षित-स्यान्वयाप्रतियोगित्वेन तल्लक्षितस्य त्वेतत्पदवृत्त्यविषयत्वेन श्रुतपदस्यान्वयप्रतियोग्यसमर्पकत्वापाताच्च । लक्षित-लक्षणेत्यत्र यदा कदाचित्पदान्तरलक्षितत्वस्य अधुना स्वलक्षितत्वस्य वा लक्ष्यमात्रे सत्त्वेन लक्षणामात्रस्य लक्षितलक्षणात्वापातात् । अधुना पदान्तरलक्षितत्वस्य, वैयर्थ्येनादर्शनेन चायोगात् । तस्मान्मत्यैक्यस्य विवक्षायां लक्षितलक्षणा । स्थानैक्यविवक्षायां लक्षणा । केचित्तु अर्थस्यैव लक्ष्यत्वे लक्षकत्वमिति मतमाश्रित्य टीका प्रवृत्तेत्याहुः । तन्न । अयुक्तमताश्रयणायोगात् । श्रुतपदस्यान्वयप्रतियोग्यसमर्पकत्वापाताच्च । एकपदस्य लक्षितलक्षणासम्भवाच्च । यच्चोक्तं तैः- अत्र लक्षकं नैकपदम् । सिद्धान्ते मत्यैक्याङ्गीकारेणैक्यरूपमुख्यार्थापरि-त्यागात् । अतः सर्वपदमेवात्र लक्षकम् । एवं सति सर्वे मतिविषया एकीभवन्तीत्यर्थ इति । तदपि न । मत्यैक्यस्यैक-विषयकत्वरूपत्वेन मुख्यत्वाभावात् । एकविषयकमतिमत्त्वस्योक्तरीत्या बोधाच्च । सर्वशब्दार्थस्य सर्वत्वस्य विषयेष्वबाधाच्च । सर्वनाम्नो बुद्धिस्थपरामर्शकत्वेन लक्षणाऽयोगाच्च । विषयाणामैक्यस्य सदातनत्वेन च्वि-प्रत्ययायोगाच्च । ‘कर्माणि विज्ञानमयश्च’ इत्यस्यानन्वयापाताच्च । स्थानैक्ये सर्वपदलक्षणाऽयोगाच्च । ‘स्वातन्त्र्ये च विशिष्टत्वे’ इत्याद्यनुव्याख्याविरोधाच्च । ‘स्वरूपैक्याङ्गीकारे’ इति वक्ष्यमाणमूलविरोधाच्च । ‘अन्यथा’ इति वक्ष्यमाणमूलेन ‘स्वरूपैक्ये विवक्षिते’ इति तट्टीकया च विरोधाच्चेत्यलं दुर्बलविशसनेन । अधिकं तु गुरु-प्रभायाम् ।

पक्षान्तरं निर्दिशति- **स्थानैक्यं वेति ॥** शक्यसम्बन्धं दर्शयति- **स्थानगतमिति ॥ कथमिति ॥** च्विप्रत्यय इति शेषः । सर्वदा भूतस्याभूतभावाभावेन तदयोगादिति भावः । **मूले क्षीराब्धीति ॥** क्षीराण्याप इव क्षीरापः, ता धीयन्तेऽत्रेति विग्रहे, ‘कर्मण्यधिकरणे च’ (घो:कि:) कर्मण्युपपदे अधिकरणोपाधौ घुसंज्ञकप्रकृतेः किप्रत्यय इत्यर्थः । ‘तेन रक्तं रागात्’ इत्यादाविव बुद्धिस्थपरामर्शोऽयमित्युपेत्याऽह- **तद्रूपमीश्वररूपमिति ॥** अथ वा ‘ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः’ इति गीतोक्तेः तदिति ब्रह्मनाम । ‘न प्रेत्यसंज्ञाऽस्ति’ इत्यादौ प्रोपसृष्टस्येणो मुक्त्यर्थत्वात् तत्पर्यायगमेरपि स एवार्थ इत्युपेत्य व्याचष्टे- **गता मुक्ता इति ॥** प्रतिरूपमिति-वत्प्रतिदेवताशब्दस्तत्प्रतिबिम्बवाचीत्याह- **प्रतिबिम्बेति ॥** प्रतिपूर्वात्तिष्ठतेः ‘आतश्चोपसर्गे’ इति कर्तरि कप्रत्यय इति भावः । पर इत्यभिव्यापिकाधिकरणसप्तमीत्युपेत्य व्याचष्टे- **प्राप्येति ॥** अधिकरणान्तरत्वेऽपि कारकस्य क्रियापेक्षितत्वात्तामाह- **स्थिता इति ॥** च्विप्रत्ययार्थं दर्शयति- **प्राग्भिन्नमतय इति ॥** तन्निदर्शयति- **प्रा-गिति ॥** पक्षान्तरमाह- **अथ वेति ॥** तच्छब्दस्य प्रसिद्धार्थत्वमुपेत्याऽह- **व्यक्तिस्थानेति ॥** अन्यत्राव्यक्तो व्यक्तलिङ्गः तत्र तु व्यक्ता एवेति प्रसिद्धिः ।

स्वपक्षे प्रत्ययानुगुण्यमाह- **च्विप्रत्ययोऽपीति ।।** मत्यैक्यस्थानैक्य-योरभूतभावित्वादिति भावः ।

**(व्या.टि.)** उक्तातिदेशेनान्यान्यपि वचनानि व्याकरोति- **विभेदजनक इति ।।** कथं मत्यैक्यपरत्वमित्यतो मतिभेदाभावप्रतिपादनमुखेनेत्याशयेन असत्पदं व्याचष्टे- **अभद्रमिति ।।** अत्र भेदो विरोधः 'मित्रभेदं प्रकुर्वाणः' इत्यादिप्रयोगात् । व्यत्ययेन लोडर्थे लुङिति भावेन व्याचष्टे- **आगच्छत्विति ।।** हृदयादिति ल्यब्लोपनिमित्ता पञ्चमी इति व्याख्याति- **सङ्कल्पमनुसृत्येति ।।** सुपां सुपो भवन्तीति एकवचस्य बहुवचनमित्युपेत्याऽऽह- **अमुष्येति ।।** अत्रास्मच्छब्दार्थाप्रतीतेराह- **मुमुक्षुणेति ।।** ननु 'अविभागो वचनात्' इति 'सत्याः सत्यकामाः' इति श्रुतमुक्तसत्यकामत्वनिर्वचनेन 'कामाहतिः कुतोऽन्यस्य' इत्यमुक्तस्य कामहतिवचनेन कथमिदानी-मित्युक्तिरित्यतो गौणमुक्त्यपेक्षयेत्याह- **जीवन्मुक्तीति ।।** अत एव प्राय इत्युक्तमित्यवधेयम् । **श्रुतिद्वय-मिति ।।** सालोक्यसामीप्यरूपमुक्तिद्वयप्रतिपादकं श्रुतिद्वयमित्यर्थः । यथाश्रुतपाठे आक्रमन्तीति क्रियापेक्षित-कर्माप्रतीतेर्यत्रेति यच्छब्दपरामृष्टार्थाप्रतीतेरर्थक्रमानुरोधेन व्याचष्टे- **यत्र तं लोकमिति ।।** सत्यस्येत्यनूद्य परमेश्वरस्येति व्याख्यातम् । 'सत्यः सत्यपराक्रमः' इति विष्णुसहस्रनामसु पाठादिति भावः ।

एवमेकीभाववाक्ये लक्षणाऽऽश्रिता । अधुनाऽस्य 'पूर्वायोगे परग्रहः' इति न्यायविषयतां दर्शयितुं लक्षणाश्रयणानौचितीं शङ्कते- **नन्वस्येति ।। आन्तरेति ।।** तस्याः आद्यस्य व्याहतित्वेन प्रबलत्वात् प्राथम्यमिति भावः । स्वरूपपदस्वारस्यमाह- **साक्षादिति ।।** रूपान्तरेणैक्यं स्वरूपे उपचर्यत इति गौणमिति भावः । **अभिप्राय इति ।।** अभिप्रेयत इति अभिप्रायः कर्मणि घञ् । तात्पर्यविषयीभूत इति यावत् । मूले इतिकरणं प्रतीकार्थम् । समग्रं वाक्यं न युज्यते, अर्थानुपपत्तेरिति हृदयम् । तां दर्शयति- **विज्ञानमयस्याऽत्मन इवेति ।।** वैधर्म्यदृष्टान्तः। चितश्चिदैक्यसम्भवादिति भावः । ननु कर्मशब्देन तद्देवताङ्गीकारे कुतो न युज्यत इत्यत आह- **कर्मशब्देनेति ।।** अर्थान्तरमाशङ्कते- **नन्विति ।। निवृत्तिप्रसङ्गादिति ।।** एकीभवन्तीत्यस्य निवृत्तिमात्रबोधकत्वादिति भावः। अर्थद्वयकल्पनां प्रतिवक्ति- **न हीति ।।** 'अन्यायश्चानेकार्थत्वम्' इति न्यायविरोधादिति हेरर्थः । ननु पञ्चदशानां कलानां समाहार इत्यर्थे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायाम्, 'द्विगोः' इति ङीपि 'द्विगुरेकवचनम्' इत्येकवचने च पञ्चदशकल्या इति भाव्यमिति कथमित्थमकथीत्यत आह- **विशेषणसमास इति ।। न द्विगुरिति ।।** ततो न ङीबेकवचने इति भावः । मूले उक्त्वेति क्त्वाप्रत्यय-सूचितयुक्तिमाह- **पृथगिति ।।** वाक्यभेदेनेत्यर्थः । मूले गता इत्येकीभवन्तीति पदद्वयानुवादलब्धयुक्तिं व्यक्तीकरोति- **किञ्चेति ।।** मूले विज्ञानमयश्चेति चशब्दसूचितामपि वक्ति- **अपि चेति ।।** षष्ठ्यन्तानुवाद-स्वारस्यमाह- **अथ वेति ।। विरुद्धार्थमिति ।।** 'आनन्त्याय कल्पते' इति चित आनन्त्यश्रवणेन निवृत्त्य-योगादिति भावः । **उक्तमिति ।।** आथर्वणभाष्य इति शेषः ।

**मूलम्- न च ज्ञाननिवृत्तस्य रजतस्य शुक्त्यैकीभावव्यवहारोऽस्ति । 'परेऽव्यये' इत्यधिकरणत्वकथनञ्च भेदज्ञापकम् । अन्यथा पर एव भवन्तीति निर्देशः स्यात् ।**

**'जीवस्य परमैक्यन्तु बुद्धिसारूप्यमेव तु ।**
**एकस्थाननिवासो वा व्यक्तिस्थानमपेक्ष्य सः ।**
**न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः ।**
**स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपते ।।' इति परमश्रुतिः ।**

**(त.मं.)** ननु अध्यस्तस्य बाधे अधिष्ठानाद्यतिरेकेणाभाव एवैकीभावो विवक्षित इत्यत आह- **न च ज्ञानेति ।।**

सर्वगतेन परमेण स विशेषत एकस्थाननिवासः कथमित्यत आह- **व्यक्तीति ।।**

**टीका-** किञ्चैकीभवन्तीत्यस्य निवर्तन्त इत्यर्थः किं वचनवृत्त्या लभ्यते उत यथैकीभूतं पृथङ् नास्ति तथा निवृत्तमपीति गौण्या वृत्त्या । नाऽद्य इत्याह- **न चेति ।।** द्वितीये तु किमस्मदुक्तलक्षणायां प्रद्वेष इति भावः । विज्ञानात्मनि मुख्यार्थलाभ इति चेन्न । तत्रापि च्विप्रत्ययस्य गौणत्वात् । इतश्चात्र न स्वरूपैक्यमर्थ इत्याह- **पर इति ।।** परमात्मनो

विज्ञानात्मानं प्रत्यधिकरणत्वकथनञ्चे-त्यर्थः । न चात्र सप्तम्या अर्थान्तरमस्ति । अधिकरणाधिकर्तव्ययोश्च लोके भेदो दृष्टः । अधिकरणत्व-कथनमुपचरितमिति चेन्न । मुख्ययैव वृत्त्या अभिप्रेतार्थे वक्तुं शक्ये प्रयोजनेन विना उपचरित-प्रयोगायोगादिति भावेनाऽह- **अन्यथेति ॥** स्वरूपैक्ये विवक्षित इत्यर्थः । पुरुष एव स्वायत्ते प्रयोगे किमित्यवाचकं पदं प्रयुञ्जीतेति पर्यनुयोगमर्हति । वेदे तु न पुरुषोऽस्तीति चेत्, तर्हि पुरुष एव पूर्वोत्तरानुसन्धानेन वदेदित्युपक्रमाद्यानुगुण्यमपि वेदे नानुसरणीयं स्यादिति गतं मीमांसा-व्यसनेन । अथ पुरुषारोपणेन तदनुसरणं, तत्प्रकृतेऽपि सममिति ।

एवमान्तरानुपपत्तिमुक्त्वा बाह्यामपि वदंस्तद्व्याख्यानरूपां श्रुतिं पठति- **जीवस्येति ॥ बुद्धिसारूप्यम्** एकविषयबुद्धित्वम् । तच्च यद् बुध्यते तत् परमेश्वरबुद्ध्यनुसारेणैवेत्येव । न तु परमेश्वरबुद्धं सर्वमिति विशेषद्योतनार्थो द्वितीयस्तुशब्दः । एकस्थाननिवासो वेति वक्ष्यमाणत्वात् अनभिमतव्यावृत्त्यर्थमेवशब्दः । 'नरं च नारायणमेव चाऽदौ ततस्सुतौ द्वौ जनयाम्बभूव' इति यथा । स चैकस्थाननिवासो भगवतो व्यक्तिस्थानमपेक्ष्यैवोक्तः । एकस्थाननिवासमात्रस्य सर्वदा सत्त्वात् । एवशब्दस्य व्यावर्त्यमाह- **नेति ॥ तस्य** जीवस्य परमेश्वरेणेति शेषः । संसारे जीवेश्वरयोर्वैरूप्यान्माभूदैक्यम् । मुक्तौ तु तदभावात्किं न स्यादित्यत आह- **मुक्तस्यापीति ॥ विरूपतो** विरुद्धधर्मत्वतः । द्वयोरपि निर्दुःखत्वादिसाम्यात् का विरूपतेत्यत आह- **स्वातन्त्र्ये-ति ॥ पूर्णता** निरवरधिकत्वम् । यथायोगमत्र सम्बन्धो न यथाक्रमम् । रोदसीव दम्पतीवेतिवत् प्रगृह्याश्रयः प्रकृतिभावो न कृतः ॥

**(र.टि.) च्विप्रत्ययस्य गौणत्वादिति ॥** विज्ञानात्मनः संसारदशायामपि ब्रह्मणैकत्वादभूततद्भावार्थत्वाभावेन च्विप्रत्ययस्य संसा(रि)रदशायामपि ब्रह्मैक्येनादृष्टस्य जीवस्य मुक्तौ तदैक्येन दर्शनमित्येव गौणत्वादित्यर्थः । **नरं चेति ॥** अत्र एवकारेणाऽदावुत्पाद्यत्वेन हरिकृष्णयोरेव व्यावृत्तिः । न तु नारायणव्यतिरिक्तस्य सर्वस्य, नरस्याप्यादावुदितत्वादित्यर्थः । मुक्तानां स्वरूपानुसारेण पूर्णत्वादाह- **निरवधिकमिति ॥**

**(रा.टि.)** शङ्कते- **पुरुष एवेति ॥ पर्यनुयोगमिति ॥** प्रश्नमित्यर्थः । **तत्प्रकृतेऽपि सममिति ॥** वेदे पुरुषाऽरोपेण पर्यनुयोग इति सममित्यर्थः । **आन्तरानुपपत्तिमिति ॥** वाक्यमध्यगतपदास्वारस्यरूपानुपपत्तिमित्यर्थः । बुद्धिसारूप्यमेवेत्येवकारव्यावर्त्यमाह- **अनभिमतव्यावृत्त्यर्थमेवशब्द इति ॥** न स्वरूपेति वक्ष्यमाणस्वरूपैक्य-व्यावृत्त्यर्थमित्यर्थः । स्थानैक्यव्यावृत्त्यर्थमस्त्वित्यत उक्तम्- **एकस्थाननिवासो वेति ॥ वक्ष्यमाणत्वा-दिति ॥** अतो न तद्व्यावृत्तिरभिमतेति भावः । तत्रानुरूपं दृष्टान्तमाह- **नरं चेति ॥** 'नारायणमेव' इत्येवकारेण पूर्वोपात्तनरस्य यथा न व्यावृत्तिस्तथेत्यर्थः । श्रौततच्छब्दस्यानुवादः- **स चेति ॥** तस्य व्याख्या- **एकस्थाननिवास इति ॥** कुतो व्यक्तिस्थानमपेक्ष्येत्युक्तिरित्यत आह- **एकस्थानेति ॥** सर्वगतेनेश्वरेणेति योज्यम् । **एव-कारेति ॥** बुद्धिसारूप्यमेवेत्यत्रत्यैवकारेत्यर्थः । एतेन प्रागनभिमतेत्युक्तं विवृतम् । करककटाहतटाकादीनामिव मुक्तानामपि स्वस्वयोग्यताऽनुरोधेन पूर्णता तुल्येत्यतो व्याचष्टे- **निरवधिकत्वमिति ॥ यथायोगमिति ॥** स्वातन्त्र्यपूर्णतयोः प्रतिद्वन्द्वितयोपात्तयोः पारतन्त्र्याल्पत्वयोः श्रुत्युक्तक्रमविपरीतक्रमेणान्वय इत्यर्थः । 'ईदूदेद् द्विवचनं प्रगृह्यम्' इत्येकारान्तद्विवचनान्तस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावे सति 'गङ्गे अमू' इत्यत्रेव स्वातन्त्र्यपूर्णते अल्पेति विश्लिष्टनिर्देशेन भाव्यम् । कथम् 'एङः पदान्तादति' इति पूर्वरूपेण निर्देश इत्यत आह- **रोदसीवेति ॥** 'मणीवादेर्न' इति वार्तिकेन प्रगृह्यसंज्ञाया निषेधान्मणीवादेरा-कृतिगणत्वान्मणीव रोदसीव दम्पतीवेत्यादावीकारद्विवचनान्ते रोदसी इवेति निर्देष्टव्ये रोदसीवेति निर्देश-वत्प्रगृह्यसंज्ञानिमित्तकः प्रकृतिभावः एकारद्विवचनान्तेऽपि न कृत इत्यर्थः । मणीवेत्यत्र द्विवचनान्तत्व-स्यास्फुटत्वाद्रोदसीवेत्यादेरुक्तिः ।

**(श्री.टि.) वचनवृत्त्या** रूढ्या । **गौण्या वृत्त्येति ॥** एकीभूते निवृत्ते च पृथगभावरूपगुणयोगेनेत्यर्थः । **अस्मदुक्तलक्षणायामिति ॥** मत्यैक्यादिरूपायामित्यर्थः । उपलक्षणागौण्योरुभयोरप्यमुख्यवृत्तित्वेन मुख्यार्थपरित्यागेन व्याख्यानस्य मतद्वयेऽपि समत्वादिति भावः । ननु भवन्मत एकीभवन्तीत्यस्य कलादिषु **(श्री.टि.)** सर्वत्रापि लक्षणैव । मन्मते तु कर्मपक्षे गौण्या वृत्त्या निवृत्त्यर्थकत्वेऽपि विज्ञानात्मनि जीवे स्वरूपैक्यरूपमुख्यार्थलाभ इत्याशङ्कते- **विज्ञानात्मनीति ॥ च्विप्रत्ययस्येति ॥** त्वन्मते विज्ञानात्मनो

ब्रह्मैक्यस्य संसारदशायामपि सत्त्वेनाभूततद्भावरूपच्विप्रत्ययमुख्यार्थस्यासम्भवेन संसारदशायामनाविर्भूत-ब्रह्मैक्यो विज्ञानमयो मुक्तावाविर्भूतब्रह्मैक्यो भवतीत्येवं च्विप्रत्ययस्य गौणार्थत्वं त्वयाऽपि वाच्यमित्यर्थः। एवं चैकीभवन्तीत्यस्य सर्वत्रापि गौणत्वमेव प्राप्तमिति नास्मन्मतवैषम्यमिति भावः। **अधिकरणेति ।।** आधारा-धेययोरित्यर्थः। **मुख्ययैव वृत्त्येति ।।** उपचारं विहाय पर एव भवन्तीति मुख्ययैव वृत्त्येत्यर्थः। **अभिप्रेतार्थे** ऐक्यरूपे। **उपचरितप्रयोगेति ।।** अधिकरणत्वप्रयोगेत्यर्थः। **न पुरुषोऽस्तीति ।।** तथा च पर एव भवन्तीति निर्देशः स्यादिति पर्यनुयोगो न युक्त इति भावः। **पुरुष एवेति ।।** पौरुषेयग्रन्थे पुरुष एव पूर्वोत्तरानुसन्धानेन पूर्वोत्तरविरोधो यथा न स्यात् तथा वाक्यार्थं वदेत्। तथाचोपक्रमाद्यनुसरणं पौरुषेयग्रन्थ एव वाक्यार्थनिर्णयाय कर्तव्यम्। वेदे तु पुरुषस्यैवाभावादुपक्रमाद्यानुगुण्यमपि नानुसरणीयं स्यादित्यर्थः। इष्टापत्तिरिति चेत्तत्राऽह- **गतं मीमांसाव्यसनेनेति ।।** 'ज्योतिरुपक्रमात्' इत्यादिरूपमीमांसाशास्त्रस्योपक्रमाद्यानुगुण्येन वेदार्थ-निर्णयपरत्वादिति भावः। **पुरुषारोपणेनेति ।।** स्वाभिप्रायप्रवेशकर्तारं पुरुषं वेदकर्तृतयाऽऽरोपणेनेत्यर्थः। तथा च स्वतन्त्रपुरुषपूर्वकत्वाभावेनाऽपौरुषेयत्वेऽपि पुरुषाभिप्रायप्रवेशसद्भावेन पौरुषेयतुल्यत्वादिति भावः। **तदनुसरणमिति ।।** उपक्रमाद्यानुगुण्यानुसरणमित्यर्थः। **सममिति ।।** तथा च वेदे पुरुषाभिप्रायप्रवेशसद्भावेन पौरुषेयवाक्यतुल्यतया पर एव भवन्तीति मुख्यप्रयोगं विना 'परेऽव्यये' इत्यधिकरणत्ववाचिसप्तम्यन्तोप-चरितप्रयोगकरणं न युक्तमिति पर्यनुयोगः सम्भवत्येवेत्यर्थः।

ननु परमात्मबुद्धिसारूप्यस्य मुक्तजीवेऽभावादाह- **बुद्धिसारूप्यमिति ।।** ननु जीवस्य कथं भगवद्बुद्धि-विषयविषयकत्वं सारूप्यम्। तथात्वे भगवद्बुद्धसमस्तविषयकत्वप्रसङ्गादित्यत आह-**तच्चेति ।।** बुद्धिसारूप्य-मित्यर्थः। **बुध्यते** मुक्तजीवेन। ननु बुद्धिसारूप्यमेवेत्येवकारेण स्थानैक्यस्यापि व्यवच्छेदे एकस्थाननिवासो वेति वक्ष्यमाणगत्यन्तरस्यायोगादाह- **अनभिमतेति ।।** तथा च स्वरूपैक्यरूपं यदस्मदनभिमतं तद्व्यावृत्त्यर्थ-मेवायमेवकारो, न स्थानैक्यव्यावृत्त्यर्थ इत्यर्थः। तत्र हेतुः-**एकस्थाननिवासो वेति ।। वक्ष्यमाणत्वादिति ।।** अन्यथा तद्विरोधाऽपत्तेरिति भावः। एवकारस्यानभिमतव्यावृत्त्यर्थकत्वे दृष्टान्तमाह- **नरं चेति ।।** यमधर्मस्य नरनारायणहरिकृष्णसंज्ञाश्चत्वारः सुताः। तत्र नरनारायणौ यमलौ। ततश्च नरं च नारायणमेवेत्यत्रैवकारो न सुतान्तरव्यवच्छेदार्थः। हरिकृष्णयोरपि सुतयोः सद्भावात्। किं नाम अनभिमतस्य हरिकृष्णयोरादावुत्पन्नत्वस्य व्यवच्छेदार्थः। आदावुत्पन्नौ नरनारायणावेव नान्याविति। एवं प्रकृतेऽपीत्यर्थः। **सर्वदेति ।।** भगवतो व्याप्तत्वा-दिति भावः। **व्यावर्त्यमाहेति ।।** अनभिमतरूपं व्यावर्त्यमाहेत्यर्थः। **वैरूप्यादिति ।।** दुःखादिसुखादि-रूपविरुद्धधर्माधिकरणत्वादित्यर्थः। **तदभावादिति ।।** मायानिवृत्तिरूपायां मुक्तौ मायाकल्पितदुःखादेर्विरुद्ध-धर्मस्य निवृत्तत्वादैक्यमुपपद्यत इत्यर्थः। विरूपत इति भावप्रधानमित्याशयेनाऽह- **विरुद्धधर्मत्वत इति ।। (श्री.टि.) द्वयोरपि** मुक्तेश्वरयोरपि। मुक्तानामपि स्वयोग्यतानुसारेण पूर्णत्वादाह- **निरवधिकत्वमिति ।।** निरवधिकपूर्णत्वमित्यर्थः। यथाक्रमं सम्बन्धेऽल्पत्वस्य स्वातन्त्र्यविरोधित्वाभावात् पारन्त्र्यस्य च पूर्णत्व-विरोधित्वाभावादाह- **यथायोगमिति ।।** ननु स्वातन्त्र्यपूर्णतेऽल्पत्वेत्यत्र 'ईदूदेद् द्विवचनं प्रगृह्यम्' ईदूदेदन्तं द्विवचनान्तं प्रगृह्यं स्यादिति सूत्रेण एदन्तत्वात्प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि' प्लुताः प्रगृह्याश्चाचि परे प्रकृत्या स्युः, न सन्धिं यान्तीति यावत् इति सूत्रेण सन्ध्यभावे 'गङ्गे अमू' इत्यादिवत् स्वातन्त्र्यपूर्णते अल्पत्वेति वक्तव्यम्। पूर्णतेऽल्पत्वेति कथं सन्धिकरणमित्यत आह- **रोदसीवेति ।। प्रकृतिभावः** सन्ध्यकरणम्। यथा 'ईदूदेत्' इति सूत्रेण ईदन्तस्य प्रगृह्याश्रयप्रकृतिभावोक्तावपि 'मणीवादेर्न' इति वार्तिकेन मणीव रोदसीव दम्पतीवेति प्रकृत्यभाव उक्तः। एवमेवैदन्तस्यापि न प्रकृतिभावः। मणीवादेराकृतिगणत्वात्। एवं च पूर्णतेऽल्पत्वेति प्रकृत्यभावो युक्त इत्याशयः।

**(पां.टि.) गौणत्वादिति ।।** विज्ञानात्मनः पूर्वमपि तद्रूपत्वस्य भूतत्वेन अभूतत्वाभावादभूतस्य तद्भवनरूप-च्विप्रत्ययार्थस्य बाधितत्वेन मुख्यत्वासम्भवादिति भावः। नन्वपौरुषेयेऽपि वेदे पुरुषाभिप्रायप्रवेशोऽस्त्येव। अन्यथा सङ्कल्पप्रार्थनावाक्यानामसङ्गतिप्रसङ्गात्। तथा च नोक्तदोष इत्याशङ्क्य तथा सति तत एव प्रयोजन-पर्यनुयोगोऽप्यपरिहार्य एवेति अस्मदुक्तदूषणतादवस्थ्यमित्याह- **अथ पुरुषारोपणेनेत्यादिना ।।** नन्वेवं सर्वज्ञत्वप्रसङ्ग इत्यतोऽभिप्रायमाह- **तच्चेति ।।** सारूप्यमेवेत्यत्र एवकारस्य निरर्थकत्वमित्याशङ्क्य परिहरति- **अनभिमतेति ।।** स्वरूपैक्यव्यावर्तक इत्यर्थः। किमनभिमतव्यावृत्त्यर्थकत्वकल्पनया बुद्धिसारूप्याति-रिक्तार्थमात्रव्यावर्तकत्वे एकस्थाननिवासव्यावर्तकत्वमपि वाच्यम्। न च तत्सम्भवति। तस्य स्वयमेव वक्ष्यमाणत्वेन तद्व्यावर्तने वाक्यस्य परस्परव्याहतार्थप्रतिपादकत्वेनोन्मत्तवाक्यतया अप्रामाण्यप्रसङ्गादिति भावः। उक्तमर्थमनुरूपदृष्टान्तोक्त्या सम्भावयति- **नरं चेति ।।** यथा नारायणमेवेत्येवकारो न नरनारायण-व्यतिरिक्तसुतमात्रव्यावृत्त्यर्थकः। तथा सति आदावुत्पादितस्य नरस्यापि व्यावर्तनीयत्वापत्त्या वाक्यस्य व्याहतार्थप्रतिपादकत्वेन

उन्मत्तवाक्यतयाऽप्रामाण्यप्रसङ्गात्। किन्तु आदावुत्पाद्यत्वेनानभिप्रेतहरिकृष्णयोरेव व्यावृत्त्यर्थ इत्यर्थः। **सर्वदा सत्त्वादिति ॥** हरेः सर्वगतत्वेन तेन सह एकस्थाननिवासस्य सर्वदा सत्त्वादि-त्यर्थः। **एवकारेति ॥** बुद्धिसारूप्यमेवेत्येवकारेत्यर्थः। अनेन कोऽसावनभिमतोऽर्थः यद्व्यावृत्त्यर्थ एवकार इत्यतस्तमाहेति ग्रन्थावतारः सूचितो भवति। **वैरूप्यादिति ॥** निर्दुःखत्वसदुःखत्वादिरूपविरुद्धधर्माधि-करणत्वादिति भावः। **तदभावादिति ॥** उभयोरपि निर्दुःखत्वेन निर्दुःखत्वसदुःखत्वाभ्यां वैरूप्याभावादि-त्यर्थः। मुक्तानामपि स्वस्वरूपानुसारेण पूर्णत्वादाह- **निरवधिकत्वमिति ॥** स्वातन्त्र्यपारतन्त्र्ययोरेव परस्परविरुद्धतया पूर्णत्वाल्पत्वयोरेव च परस्परविरुद्धत्वात् स्वातन्त्र्यपूर्णते पारतन्त्र्याल्पत्वे इति प्रतिद्वन्द्वितया निर्देश उचितः। न तु स्वातन्त्र्यपूर्णते अल्पत्वपारतन्त्र्ये इत्यप्रतिद्वन्द्वितया निर्देश इत्यतः, यथायोग्यतया सम्बन्धाङ्गीकारेण यथाक्रमं सम्बन्धानङ्गीकारेणास्यापि निर्देशस्य प्रतिद्वन्द्वितया निर्देशत्वान्नानुपपत्तिरित्याह- **(पां.टि.) यथायोगमित्यादिना ॥** 'स्वातन्त्र्यपूर्णतेऽल्पत्व' इत्यत्र 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति एदन्ततया प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावेन स्वातन्त्र्यपूर्णते अल्पत्वपारतन्त्र्ये इत्येव भवितव्यत्वेन पूर्णतेऽल्पत्वेति कथं सन्धिरित्यत आह- **रोदसीवेति ॥** यथा हि रोदसीवेत्यत्र ईदन्तरोदसी इति द्विवचनस्य 'ईदूदेद्द्विवचनम्' इति प्रगृह्यत्वेऽपि 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावाभावाद् रोदसीवेतिसन्धिः तथा स्वातन्त्र्यपूर्णते इत्यस्य प्रगृह्यत्वेऽपि 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावानाश्रयणाद्युक्तः स्वातन्त्र्यपूर्णतेऽल्प-त्वेत्यत्र सन्धिः। न च 'मणीवादेर्न' इति वार्तिकेन प्रकृतिभावनिषेधात्तत्र सन्धिसम्भवेऽपि प्रकृते तदनिषेधात् कथं सन्धिः स्यादिति वाच्यम्। वैदिकप्रयोगानुसारेण तत्रास्याप्युपसंख्येयत्वेन तेनैव प्रकृतिभावनिषेधेन सन्धेरुपपन्नत्वादित्याशयात्॥

**(व्या.टि.)** एवम् 'एकीभवन्ति' इत्यस्य निवृत्त्यर्थत्वमुपेत्य दूषितम्। अधुना तदर्थत्वमेव दूषयितुं विकल्पेन पृच्छति- **किञ्चेति ॥** गुणं वर्णयति- **यथैकीभूतमिति ॥** व्यवहारातिरिक्तशक्तिग्राहकाभाववति तस्याप्यभावे ग्राहकाभावेन तदभाव एव सेत्स्यतीति भावः। **अस्मदुक्तेति ॥** स्थानैक्यमत्यैक्ययोरित्यर्थः। अमुख्यवृत्तित्व-साम्यादिति भावः। वैषम्यमाशङ्कते- **विज्ञानात्मनीति ॥** जहल्लक्षणायां सर्वथा मुख्यार्थत्यागो, गौण्यान्तु समभिव्याहृतैकदेशे मुख्यार्थलाभ इति विशेष इति भावः। **तत्रापीति ॥** अङ्गीकृतैकदेशेऽपीत्यर्थः। चिदैक्यस्य त्वन्मते सर्वदा सत्त्वेनाभूतभावाभावादिति भावः। अन्यच्चाऽह- **इतश्चेति ॥** अनेन परो विज्ञानात्मनो भिद्यते तं प्रत्यधिकरणत्वात्, विज्ञानात्मा पराद्भिद्यते तदधिकर्तव्यत्वाद् इति प्रयोगद्वयसूचकपरोपदेशरूपं मूलमि-त्यर्थः। सूचितहेत्वोः स्वरूपं दर्शयति- **अधिकरणेति ॥** स्वायत्तन्यायविरोधमाह- **मुख्ययैवेति ॥** अपौरुषेयत्वान्न तद्विरोध इति शङ्कते- **पुरुष एवेति ॥** अनिष्टप्रसङ्गेन पराचष्टे- **तर्हीति ॥ आरोपणेनेति ॥** पुरुषाभिप्रायप्रवेशे-नेत्यर्थः। वदन्निति शत्रन्तम्। द्वितीयतुशब्दलब्धविशेषमाह- **न त्विति ॥** जनयाम्बभूवेत्यामन्तादनुप्रयोगः। मूर्तिदेवीति प्रकृतेनान्वयः। विरूपत इति बहुव्रीहेर्भावप्रधानात्तसिल्प्रत्यय इत्युपेत्याऽह- **विरुद्धधर्मत्वत इति ॥ यथायोगमिति ॥** पाठक्रमादार्थस्य बलीयस्त्वादित्यर्थः। ननु स्वातन्त्र्यपूर्णते इत्यस्य एदन्तद्विवचनान्त-त्वेन 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञानिबन्धनः प्रकृतिभावो भाव्य इत्यत आह- **रोदसीवेति ॥** मणीवादेराकृतिगणत्वादिति भावः।

**मूलम्-'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि च 'सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्' इतिवत् बृंहितो भवतीत्यर्थः। नहि ब्राह्मणपूजकः स एव ब्राह्मणो भवति।**

**'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः।**
**प्रकृतिः परमं ब्रह्म परमं महदच्युतः।**

**तस्मान्न मुक्ता न च सा न क्वचिद्विष्णुवैभवम्।**
**प्राप्नुवन्ति स एवैकः स्वतन्त्रः पूर्णषड्गुणः॥' इति परमश्रुतिः।**

**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति',**

**'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते।**
**तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरे॥' इति च॥**

**(त.मं.)** त्वं परः **मात्रायाः** परिमाणेन जगतो विलक्षणः अनन्तत्वात् । **तन्वा वृधान** देहेन सहैव पूर्ण । तस्य स्वतोऽभिन्नत्वात् । त्वन्महिमानं केऽपि नानुभवन्ति । **कैवल्यं** समधिक-राहित्यम् । केवलः अविमिश्रः ।

**टीका-** ननु च 'परमं ब्रह्म वेद ब्रह्मैव भवति' इति मुक्तौ जीवस्य ब्रह्मत्वमुच्यते । न चात्राप्युपचारो वक्तव्यः । एवशब्दविरोधात् । तेन ह्यब्रह्मत्वव्यावृत्त्या ब्रह्मत्वं लभ्यते । उपचारे ह्यब्रह्मण एव केनचिन्निमित्तेन ब्रह्मत्वम् । तत्कथं मुक्त्यनन्तरमपि भेदोऽङ्गीक्रियत इत्यत आह- **ब्रह्मेति ॥ इत्यादि** च वाक्यम्, इति वाक्यवद्व्याख्येयमिति शेषः ।

इदमुक्तं भवति- अत्र हि यो ब्रह्म वेद सोऽब्रह्मत्वं त्यक्त्वा ब्रह्म भवतीत्येवोच्यते । न तु यद्ब्रह्मानेन विदितं तदेवायं ब्रह्म भवतीति । तथाविधस्याश्रवणात् । यथा सम्पूज्येति वाक्ये ब्राह्मणपूजकस्य शूद्रस्य ब्राह्मणत्वमेवोच्यते न तु पूजितब्राह्मणव्यक्तितादात्म्यम्, तथेति । दृष्टान्तकथनस्योत्तरत्रोपयोगो भविष्यति । ननु यद्वेद तदेव भवतीति शब्दाभावेऽपि अनुपपत्त्यैषोऽर्थो लभ्यते । ब्रह्मत्वं हि अस्योच्यते । न च ब्राह्मणपूजकस्य शूद्रस्य ब्राह्मणान्तरत्ववद् ब्रह्मान्तरत्वं युज्यते, अनेकब्रह्माभावात् । तेन विदितब्रह्मतादात्म्यं प्राप्नोतीत्येवार्थः सिध्यतीत्यत आह- **बृंहित इति ॥** ब्रह्मशब्दो हि बृंहणयोगनिमित्तको न त्वनपेक्षितावयवार्थो व्यक्तिविशेषे रूढः । तथा चानेकब्रह्मसम्भवान्नानुपपत्त्याऽप्येषोऽर्थो लभ्यत इति भावः ।

ननु यद्यपि ब्रह्मशब्दो यौगिकः, तथाऽपि द्वितीयान्तेन ब्रह्मशब्देन वाच्यस्तावत्परमात्मा । तथा च तस्मिन् बुद्धिस्थे द्वितीयोऽपि ब्रह्मशब्दस्तमेव गमयिष्यति । अन्यथा प्रकृतपरित्यागा-प्रकृतपरिग्रहौ स्याताम् । अतो यत्तच्छब्दाभावेऽपि तदर्थो लभ्यत इति चेत् तर्हि सम्पूज्येति वाक्येऽप्येवमेवाऽपद्यते । न च तदस्तीत्याह- **न हीति ॥ स एव** यस्तेन पूजितः । तत्र ब्राह्मणशब्दस्य जातिवाचित्वेनैकार्थत्वमेवेति चेद्, अत्रापि ब्रह्मशब्दो बृंहितानेकव्यक्तिवृत्तिब्रह्मत्वजातिवाचीति साम्यम् । बाधकात्प्रकृतपरित्यागादिकमित्येतदपि समानम् । बाधकानि चोक्तानि वक्ष्यन्ते च । किञ्चात्र पूर्वो ब्रह्मशब्दः परमत्वेन विशेषितो द्वितीयस्तु केवल इति च विशेषः ।

एवमेकेन प्रकारेण श्रुतिर्व्याख्याता । अथ वाऽऽद्यो ब्रह्मशब्दः परमात्मवाची द्वितीयो जीव-वाची । ततश्च यद्यपि जीवः **परमं ब्रह्म वेद** ब्रह्मविद्यादिकां महतीं साधनसम्पत्तिं कुर्यात्, तथाऽपि **ब्रह्मैव** जीव एव भवति । न तु पारतन्त्र्यादिरूपं जीवभावं परित्यज्य कदाऽपि परमात्मत्वं प्राप्नोतीति श्रुतेरर्थान्तरमभिप्रेत्य तत्समर्थनार्थं श्रुत्यन्तरवाक्यद्वयं पुराणवाक्यश्चैकं पठति- **ब्रह्माणीति ॥ सर्वेऽपि** मुक्ता अमुक्ताश्च । मुक्तिगास्तु परब्रह्माण्यपि । **प्रकृतिर्**महालक्ष्मीः । परशब्दादतिशये मप्रत्यय इति भावः । **परमं महद्** ब्रह्मेति वर्तते । यस्मादेवमेतेषां स्वाभाविकं तारतम्यं तस्मात् सा प्रकृतिः । संसारिणस्तु कैमुत्यसिद्धत्वान्न निराकृताः । **न क्वचित्** काले देशे वा **वैभवं** महि-मानम् । किन्तु स एव ।

विष्णो, त्वं **मात्रया** मात्रायाः मितेः परोऽसि । तन्वा **वृधान** ववृधान पूर्णः न तु कीर्ति-मात्रेण । एवम्भूतस्य ते **महित्वं** महिमानं केऽपि **नान्वश्नुवन्ति** नाऽप्नुवन्ति ।

यत् **कैवल्यं** सर्वोत्कृष्टत्वं **यत्स्वभावो** यस्यानागन्तुकं स केवलो भवानिति ।

**(र.टि.)** ननु परपरमशब्दयोरुभयोरप्युत्तमरूपैकार्थत्वात्को विशेषो महालक्ष्म्या इत्यत आह - **परशब्दा-दिति ॥ तस्मादिति ॥** तस्माद्विष्णोः संसार्यादीनां न परस्परमैक्यमित्यर्थः । तत्र विष्णोस्तैरैक्याभावप्रतिपादनम् 'न मुक्तो न च सा' इति । अच्युत इत्यस्यात्रापि सम्बन्ध इति भावः । तर्हि न संसारीत्यपि वक्तव्यमित्यत उक्तम्- **संसारिणस्त्विति ॥** अनेन मुक्त इति जात्यपेक्षयैकवचनमिति सूचितं भवति । विष्णुना तेषामैक्याभावप्रतिपादनम् 'न क्वचिद् विष्णुवैभवं प्राप्नुवन्ति' इति । कैमुत्यसिद्धसंसारिणमादाय बहुवचनोप-पत्तिर्द्रष्टव्या । असाधारणधर्मप्राप्तिरेवैक्यस्य प्राप्तिरित्यर्थः । अथ वा, तस्मान्मुक्तः सा

प्रकृतिः चशब्दसूचित-संसारीत्येते क्वचिद्विष्णुवैभवं न प्राप्नुवन्तीति नेति न, किं तु नाऽप्नुवन्त्येवेति वाक्यं योजनीयमिति भावः।

**(रा.टि.)** वत्यन्तस्य इत्यादि चेत्यस्य चान्वयपूर्वं शेषमाह- **इत्यादि च वाक्यमित्यादि ।।** अस्फुटत्वादाह- **इदमुक्तमिति ।। उत्तरत्रेति ।।** न हीत्याद्युत्तरवाक्ये प्रकृतत्यागादिदोषशङ्कानिवर्तने प्रतिबन्द्युक्त्यर्थमुपयोगो भविष्यतीत्यर्थः। **बृंहणयोगनिमित्तक इति ।।** बृहि वृद्धावित्यतो 'बृंहेर्नोऽच्च' इति मनिन्प्रत्यये नकारस्य **(रा.टि.)** चाकारे यणादेशे च ब्रह्मेति रूपमिति भावः। दृष्टान्तोक्तेरुपयोगं वक्तुं शङ्कामाह- **ननु यद्यपीति ।। यौगिक इति ।।** आद्यो द्वितीयश्चेत्यर्थः। **यत्तच्छब्देति ।।** यद्ब्रह्म वेद तद्ब्रह्म भवतीत्येवमित्यर्थः। स एवेत्यस्य साकाङ्क्षत्वादाह- **स एव यस्तेन पूजित इति ।।** शङ्कते- **तत्रेति ।। जातिवाचीति ।।** तथा च ब्रह्म भवतीत्यस्य बृंहितत्वरूपब्रह्मत्वजात्याक्रान्तो भवतीत्यर्थ इति भावः। **बाधकादिति ।।** प्रत्यक्षविरोधादिबाधकाद् ब्रह्मशब्देन प्रकृतपरित्यागाऽप्रकृतस्वीकारादित्यर्थः। **बाधकानि चोक्तानीति ।।** 'प्रत्यक्षानुमानसिद्धत्वे च भेदस्य तद्विरोधादेवाऽप्रामाण्यमभेदागमस्य' इत्यादिना प्रत्यक्षविरोधादिबाधकानि जीवेश्वरैक्य उक्तानीत्यर्थः। **वक्ष्यन्ते चेति ।।** 'सर्वयुक्तिविरुद्धं च' इत्यादिनेति भावः। पूर्वोत्तरब्रह्मशब्दयोः सविशेषणत्वनिर्विशेषणत्वरूपविशेषबलाच्च प्रकृतत्यागादिर्युक्त इति भावेनाऽह- **किं चेति ।।** 'स यो ह वै तत्परं ब्रह्म वेद ब्रह्म भवति' इति श्रवणादिति भावः। वेदेत्युपलक्षणमुपेत्याऽह- **ब्रह्मविद्यादीति ।।** परमशब्दस्य रूढस्य परशब्दपर्यायतया मुक्तेभ्यः प्रकृतेरति-शयितब्रह्मशब्दवाच्यत्वाऽसिद्धेराह- **परशब्दादिति ।।** औणादिको मप्रत्यय इति भावः। प्रकृतिमुक्तयोरिव संसारिणः कुतो न निरस्ता इत्यत आह- **संसारिणस्त्विति ।।** वैभवप्राप्तिविषये न निराकृता इत्यर्थः। **स एवेति ।।** स एवैक इत्यादिः किन्त्वित्यस्योत्तरमित्यर्थः। उत्तरार्धे विष्णो देवत्वमिति श्रवणादाह- **विष्णो त्वमिति ।। स केवलः** सर्वोत्तम इत्यर्थः।

**(श्री.टि.) उपचार इति ।।** स्थानैक्यादिनिमित्त इत्यर्थः। **तेन हीति ।।** ब्रह्मैव भवतीत्यत्र भवने ब्रह्मेत्यस्य विशेषणत्वात्तत्सङ्गतैवकारस्यायोगव्यवच्छेदकत्वात्तन्महिम्नेत्यर्थः। **ब्रह्मत्वमिति ।।** वक्तव्यमिति शेषः। तच्चाब्रह्मत्वव्यावर्तकैवकारविरुद्धमित्याशयः। **तथाविधस्येति ।।** यद् ब्रह्मानेन विदितं तदेवायं भवतीत्येवं-विधस्येत्यर्थः। ब्राह्मणत्वं ब्राह्मणत्वजात्याक्रान्तत्वम्। **उत्तरत्रेति ।।** न हीत्युत्तरवाक्ये प्रतिबन्द्यापादन इत्यर्थः। **ब्राह्मणान्तरत्ववदिति ।।** अनेकब्राह्मणव्यक्तिसद्भावेन तन्निष्ठानां ब्राह्मणत्वानामपि प्रातिस्विकानां बहूनां सत्त्वादिति भावः। **अनेकब्रह्मेति ।।** ब्रह्मण एकत्वेन अनेकब्रह्मव्यक्त्यभावादित्यर्थः। **अनेकब्रह्मसम्भवा-दिति ।।** बृंहितानेकव्यक्तिसम्भवादित्यर्थः। **द्वितीयान्तेनेति ।।** ब्रह्म वेदेति द्वितीयाविभक्त्यन्तेनाऽद्येन ब्रह्मशब्देनेत्यर्थः। **प्रकृतेति ।।** पूर्वं ब्रह्मशब्देन प्रकृतस्य परमात्मनः परित्यागेऽप्रकृतस्य बृंहितरूपार्थस्य परिग्रह इत्यर्थः। **यत्तच्छब्दाभावेऽपीति ।।** यद् ब्रह्मानेन विदितं तदेव भवतीति यत्तच्छब्दाभावेऽपीत्यर्थः। **तदर्थ इति ।।** उक्तरूपयत्तच्छब्दार्थ इत्यर्थः। **तर्हि सम्पूज्येति ।।** अनेनोत्तरत्रोपयोगो भविष्यतीत्येतद्दर्शितं भवतीति ज्ञातव्यम्। **तत्र** सम्पूज्येति वाक्ये। **जातिवाचित्वेनेति ।।** अनेकब्राह्मणव्यक्तिवृत्तिब्राह्मणत्वजातिवाचित्वेने-त्यर्थः। मीमांसकैः पदानां जातौ शक्तिरित्यङ्गीकृतं व्यवहारे भट्टनय इति मयाऽङ्गीकारादिति भावः। **एकार्थत्व-मेवेति ।।** न त्वनेकब्राह्मणव्यक्त्यर्थत्वमित्यर्थः। एवं च ब्राह्मणो भवेदित्यस्य ब्राह्मणत्वजातिमान् भवेदित्यर्थो द्रष्टव्यः। **साम्यमिति ।।** तथा च ब्रह्म भवतीत्यस्य ब्रह्मत्वजात्याक्रान्तो भवतीत्यर्थ इति साम्यमित्यर्थः। न च बृंहितानेकव्यक्त्यङ्गीकारे ब्रह्मण एव बृंहितत्वप्रतिपादकश्रुतिविरोधः शङ्क्यः। बृंहितत्वेऽपि तारतम्यसद्भा- **(श्री.टि.)** वात्। न चैतद्दृष्ट्याऽपलपनीयम्। घटोदश्वन(सरित्स)सरस्समुद्रेषु जलपूर्णतायां तारतम्यदर्शनादिति ध्येयम्।

ननु न सम्पूज्येति वाक्यसाम्यं, द्वितीयान्तब्राह्मणशब्देन पूजितब्राह्मणे बुद्धिस्थे द्वितीयोऽपि ब्राह्मणशब्दस्तमेव गमयति। तदभेदोक्तौ प्रमाणविरोधरूपबाधकसद्भावात् प्रकृतपूजितब्राह्मणव्यक्तिपरित्यागेन अप्रकृत-ब्राह्मणत्वजातिपरत्वं प्रथमान्तब्राह्मणपदस्योक्त्वा ब्राह्मणत्वजातिमान् भवतीति व्याख्यात इति चेद् एतदपि समानमित्याह- **बाधकादिति ।। समानमिति ।।** यद्ब्रह्मानेन विदितं तदेवायं भवतीति स्वज्ञातब्रह्माभेदोक्तौ बाधकानां सद्भावात्प्रकृतं परमार्थत्वं परित्यज्याप्रकृतबृंहितार्थत्वं द्वितीयब्रह्मशब्दस्योच्यत इत्यर्थः। **बाधका-नीति ।।** स्वज्ञातब्रह्माभेदोक्तावित्यर्थः। सम्पूज्येति वाक्यसाम्यमङ्गीकृत्योक्तम्। वस्तुतस्तु सम्पूज्येति वाक्यापेक्षयाऽत्र महान् विशेषोऽस्तीत्याह- **किञ्चात्रेति ।।** पारतन्त्र्यादिरूपं जीवभावमिति। यथोक्तम्-

'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥'

इति। **परब्रह्माण्यपीति ॥** न केवलं ब्रह्मशब्दवाच्याः, किन्तु परब्रह्मशब्दवाच्याश्चेत्यर्थः।

ननु परपरमशब्दयोरुभयोरप्युत्तमरूपैकार्थवाचित्वात् प्रकृतिशब्दोक्तमहालक्ष्म्याः परमब्रह्मशब्दवाचित्वोक्त्या परब्रह्मशब्दवाच्यमुक्तेभ्यः को विशेष इत्यत आह- **परशब्दादिति ॥** तथा च नात्र परपरमशब्दौ पर्यायतयैकार्थौ विवक्षितौ, किं नाम परशब्दादतिशयार्थे मप्रत्यये निष्पन्नोऽयं परमशब्दः। तथा च परब्रह्मशब्दवाच्यमुक्तापेक्षया महालक्ष्म्या अतिशयद्योतको भवत्येवायं पतमब्रह्मशब्द इति भावः। **यस्मादेवमेतेषामिति ॥** अमुक्तमुक्त-प्रकृतिपरमात्मनां ब्रह्म-परब्रह्मादिशब्दवाच्यत्वेन स्वाभाविकं तारतम्यमित्यर्थः। ननु संसारिभिरप्यैक्याभाव-प्रतिपादनाय न संसारिण इत्यपि वक्तव्यमिति चेत्तत्राऽह- **संसारिणस्त्विति ॥ कैमुत्येति ॥** प्रकृत्यादेः परमात्मैक्याभावे संसारिणां तदभावः कैमुत्येनैव सिद्ध इत्यर्थः। 'तस्मान्न मुक्ताः' इत्यादौ नञ्त्रयं श्रूयते। तत्र मुक्ता विष्णुवैभवं नाऽप्नुवन्ति सा प्रकृतिर्नाप्नोतीति योजनायामेकस्य नञ आधिक्यम्। सा मुक्ताश्चेत्येते नाऽप्नुवन्तीति योजनायां नञ्द्वयस्याऽधिक्यं भवति। अत इत्थं योज्यम्। मुक्ताः सा प्रकृतिश्चेत्येते क्वचित्काले देशे वा विष्णुवैभवं नाप्नुवन्तीति नेति न, किन्तु नाप्नुवन्त्येवेति। केचित्तु- चशब्देन संसारिणो गृहीत्वा नञ्त्रयस्य सार्थक्यमाहुः। न च 'संसारिणः कैमुत्यसिद्धत्वान्न निराकृताः' इति टीकाविरोध इति वाच्यम्। कण्ठतो न निराकृताः किन्तु चशब्देनैवेति व्याचक्षते। नक्वचिद्देशे काले चेति क्वाचित्कः पाठः। तत्र च अथवेत्यादि-वन्निपातसमुदायरूपमेकमेव पदम्। तथा च नञ्द्वयमेव प्राप्तमिति नानुपपत्तिरिति द्रष्टव्यम्। तदसाधारणधर्मप्राप्तेरेव तदैक्यप्राप्तिरूपत्वेन विष्णुवैभवं नाऽप्नुवन्तीति तदसाधारणधर्मप्राप्तिनिषेधे तदैक्याभाव एवात्रोक्त इत्यव-धेयम्। एवमुत्तरत्रापि द्रष्टव्यम्। **किन्तु स एवेति ॥** किन्त्विति शङ्कायाम्, 'स एवैकः स्वतन्त्रः पूर्णषड्गुणः' **(श्री.टि.)** इति वाक्यशेषः प्रवृत्त इत्यर्थः। **मितेः परोऽसीति ॥** अपरिमित इत्यर्थः। **नाऽप्नुवन्तीति ॥** अशू व्याप्ताविति धातोरिति भावः। **अनागन्तुकमिति ॥** नैसर्गिकं स्वरूपमित्यर्थः।

**(पां.टि.) शेष इति ॥** इत्यादि चेत्यतः परं वाक्यमिति, इतिवदित्यनन्तरं व्याख्येयमिति च शेष इत्यर्थः। **तथाविधस्येति ॥** यद् ब्रह्मानेन विदितं तदेवायं भवतीत्येवंविधस्येत्यर्थः। न तु पूजितव्यक्तितादात्म्यमिति। तथाविधशब्दाश्रवणादिति भावः। **उत्तरत्रेति ॥** 'न हि ब्राह्मणपूजकः स एव ब्राह्मणो भवति' इत्युत्तरवाक्य इत्यर्थः। ननूक्तप्रकारेणैक्यस्य श्रौतार्थत्वासम्भवे श्रुतेरागमतया तत्र प्रमाणत्वासम्भवेऽपि श्रुत्यर्थान्यथाऽनुपपत्ति-लब्धत्वादनुपपत्तितया श्रुतेस्तत्र प्रामाण्यं स्यादिति भावेन अर्थतस्तदवगमकत्वं दर्शयन् शङ्कते- **नन्विति ॥ अनेकब्रह्माभावादिति ॥** 'एकमेवाद्वितीयम्' इति तदेकत्वावधारणादिति भावः । **अनेकब्रह्मसम्भवा-दिति ॥** ब्रह्मैकत्वावेदकश्रुतिस्तु निरवधिकपूर्णब्रह्मैकत्वावेदिकेति न तद्विरोध इति भावः। तमेव गमयिष्यती-त्यवधारणं विपक्षे बाधककथनेनोपपादयति- **अन्यथेति ॥** ननु च बाधकात्तत्र प्रकृतपरित्यागाप्रकृतस्वीकारौ न दोषाय। असति बाधके तयोर्दोषत्वेऽपि सति बाधके तयोरदोषत्वादिति शङ्कते- **बाधकादिति ॥ समान-मिति ॥** अत्रापि बाधकादेव प्रकृतपरित्यागाप्रकृतस्वीकारयोरदोषत्वसम्भवादिति भावः। **उक्तानीति ॥** 'यो वेद निहितं गुहायाम्' इत्यादिना उक्तानीत्यर्थः। **वक्ष्यन्ते चेति ॥** 'ब्रह्माणि जीवाः सर्वेऽपि' इत्यादिना अनुपदमेवेति शेषः। **विशेषित इति ॥** तथा च तद्वाच्यस्य परमात्मत्वं युक्तम्। अन्यथा विशेषणवैयर्थ्यादिति भावः। **केवल इति ॥** तथा च न तस्य परब्रह्मात्मकत्वम्। अन्यथा तत्रापि तद्विशेषणप्रयोगप्रसङ्गादिति भावः। **परब्रह्माण्यपीति ॥** अनेन सर्वेऽपीत्यपिशब्दस्याऽवृत्तिर्दर्शिता भवति। ननु परपरमशब्दयोरुभयोरप्युत्तम-रूपैकार्थत्वात् परमशब्देन लक्ष्म्याः को विशेषः प्रतिपादितः स्यादित्यतः परशब्दादतिशयार्थे विहितमप्रत्ययान्तस्य परमशब्दस्य परशब्दसमानार्थत्वाभावेन युक्तं तेन तस्या विशेषसमर्पणमित्याह- **परशब्दादिति ॥ वर्तत इति** अनुवर्तत इत्यर्थः। **यस्मादिति ॥** तथा च मुक्तानां विष्णोश्च न परस्परं साम्यमिति भावः। ननु मुक्तानां लक्ष्म्याश्च विष्णुनैक्याभावबोधनार्थं मुक्ता विष्णुवैभवं न प्राप्नुवन्ति, सा लक्ष्मीः विष्णुवैभवं न प्राप्नोतीति यथोच्यते तथा संसारिणामपि तदैक्याभावबोधनार्थं संसारिणोऽपि विष्णुवैभवं न प्राप्नुवन्तीति वक्तव्यमेव। तत्किमिति नोक्तमित्यतः कैमुत्यन्यायेनैव तस्यार्थस्य सिद्धत्वात्तदनुक्तिर्न दोषायेत्याशयेनाऽह- **संसारिण-स्त्विति ॥** नन्वेवं यदि संसारिणो न निराकृताः तर्हि द्वाभ्यामेव नशब्दाभ्यां मुक्तानां लक्ष्म्याश्च विष्णुवैभवाभाव-प्रतिपादनेन विवक्षितसिद्धेस्तृतीयस्य नशब्दस्य वैयर्थ्यं स्यादित्यतो अत्र न क्वचिदिति निपातसमुदायस्य देश-कालार्थकस्याभिप्रेतत्वेन न तस्य वैयर्थ्यमित्यभिप्रेत्य न क्वचिदिति निपातसमुदायं प्रतीकत्वेनोपादायैव देश-कालार्थकतया व्याख्याति- **न क्वचिद्देशे काले वेति ॥** परो मात्रयेति श्रुतिं व्याचष्टे- **विष्णो त्वमित्यादिना ॥ मात्राया इति ॥** श्रुतौ 'सुलुग्' इति स्मरणात् मात्रयेति षष्ठ्यर्थे तृतीयेति भावः। वृधानशब्देनैव पूर्णत्वलाभात् किं तन्वेतिशब्देनेत्यतस्तद्विशेषणसूचितमर्थमाह- **तन्वेति ॥** यत्प्राप्नुमित्यत्र यदित्यस्य कैवल्यमित्यनेन **(पां.टि.)** व्यवहितत्वेऽपि

योग्यत्वात्सम्बन्ध इति भावेन तथा सम्बन्धप्रदर्शनपूर्वकं तदर्थमाह- **यत्कैवल्य-मिति ॥ यस्यानागन्तुकं स्वरूपमिति ॥** अनेन यदिति भिन्नं पदम्, अतो न तस्य वैयर्थ्यमित्युक्तं भवति ।

**(व्या.टि.)** पुनर्मुक्तावभेदं प्रत्यवतिष्ठते- **ननु चेति ॥ अब्रह्मत्वव्यावृत्त्येति ॥** शङ्खः पाण्डुर एवेतिवद्विशेषण-सङ्गतस्यैवकारस्यायोगव्यवच्छेदार्थकत्वादित्यर्थः । एवकारस्योपचारे विरोधं स्फुटयति- **उपचारे हीति ॥** अस्योत्तरवाक्यैकवाक्यत्वायोगादध्याहारेण पूरयति- **इत्यादि चेत्यादिना ॥** ननु 'सम्पूज्य' इति वाक्ये शूद्रत्वपरित्यागेन ब्राह्मणभवनवदत्रापि जीवभावापगमेन ब्रह्मभावप्राप्तिश्रवणे मदभिमतसिद्धिरित्यत आह- **इदमुक्तं भवतीति ॥** ननु दृष्टान्तमात्रकथनस्य क्वोपयोगः । प्रतिदृष्टान्तस्यापि वक्तुं शक्यत्वादित्यत आह- **दृष्टान्तकथनस्येति ॥** प्रकृतग्रहणशङ्काऽपनोदकत्वेनोपयोक्ष्यतीति भावः । दृष्टान्ताद्वैषम्यमाशङ्कते - **नन्विति ॥ अनेकेति ॥** 'एकमेवाद्वितीयम्' इति ब्रह्मान्तरप्रतिषेधादित्यर्थः । **बृंहणेति ॥** 'बृंहतेर्नोऽच्च' इत्यौणादिक-सूत्रादित्यर्थः । प्रकृतग्रहणमाशङ्कते- **नन्विति ॥** दृष्टान्तोक्तिसूचितबाधकमाह- **तर्हीति ॥** ननु ब्राह्मणशब्दो जातिवचन इति नानेकार्थ इति वैषम्यमिति शङ्कते- **तत्रेति ॥** दुस्तरां प्रतिबन्दीं गृह्णाति- **अत्रापी-ति ॥** ननु ब्राह्मणशब्दस्यानेकार्थत्वेऽपि बाधकात्प्रकृतपरित्याग इत्याशङ्क्य समः समाधिरित्याह- **बाधका-दिति ॥** किमत्र बाधकमित्यत आह- **बाधकानीति ॥** प्रकृतब्रह्मग्रहणे बाधकान्तरमाह- **किञ्चेति ॥ एकेन प्रकारेणेति ॥** परमपूर्ण एव भवतीति प्रकारेणेत्यर्थः । **परमात्मवाचीति ॥** परमत्वेन विशेषणादिति भावः । **तत्समर्थनार्थमिति ॥** अर्थान्तरसमर्थनार्थमित्यर्थः । **परब्रह्माण्यपीति ॥** यथा 'नित्यो नित्यानाम्' इत्यत्र स्वस्य नित्यत्वेऽपि चेतनत्वेऽपि नित्यान्तरचेतनान्तरसद्भावादतिशयः, तथा मुक्तानां ब्रह्मत्वेऽपि ब्रह्मान्तर-सत्त्वात्परब्रह्मत्वम् । परमपदस्यापि परशब्दसमानार्थत्वात्कथं विशेष इत्यत आह- **परशब्दादिति ॥** 'तद्धिताः' इति बहुवचनादत्रातिशये मप्रत्ययस्तद्धित इति भावः । स्वामिनस्त्वौणादिक इत्याहुरिति भ्राम्यन्ति । वस्तुतस्त्वाणादिक इति पाठः । तस्मादिति परामृष्टहेतुं दर्शयति- **यस्मादिति ॥ मूले न मुक्ता इति ॥** मुक्ता विष्णुवैभवं न प्राप्नुवन्तीत्यर्थः । **न च सा चेति ॥** सा च विष्णुवैभवं न प्राप्नोतीति योजना । तच्छब्दपरामृष्टं दर्शयति (टीकायां)- **प्रकृतिरिति ॥** महालक्ष्मीरित्यर्थः ।

ननु परब्रह्मशब्दोक्तानां मुक्तानां परमब्रह्मपदोक्तचित्प्रकृतेश्च विष्णुवैभवप्राप्तिनिरासेऽपि ब्रह्मपदोक्तसंसारिणः कुतो न निराकृता इत्यत आह- **संसारिणस्त्विति ॥ कैमुत्यसिद्धत्वादिति ॥** स्वाप्राप्यमहिमवदप्राप्यस्य स्वाप्राप्यमहिमत्वनियमेन स्वप्राप्तिशङ्काया असम्भावनाग्रहग्रस्तत्वेन तन्निरासवैयर्थ्यादित्यर्थः । ननु न प्राप्नुवन्तीति देशकालविशेषयोर्निरासेऽपि देशकालान्तरे किं न प्राप्नुयुरित्यत आह- **न क्वचिदिति ॥** व्याचष्टे- **देशे काले वेति ॥** तेन देशकालसामान्यनिषेधेन चैतच्छङ्काऽनवकाशः । इदमुपलक्षणम् । विश्वामित्रादिब्रह्मत्वादिवद्वरादि-रूपनिमित्तान्तरे इत्यपि ध्येयम् । अत्र न क्वचिदितिनिपातसमुदायस्य देशान्तरे कालान्तरे वेत्यर्थः । अत एव टीकायामपि तथैव प्रायिकः पाठ इति केचिदूचुः । अपरे तु एते विष्णुवैभवं न प्राप्नुवन्तीति नेति न, किन्तु **(व्या.टि.)** नाऽप्नुवन्त्येवेति नञाधिक्यं परिहरन्ति । विजयीन्द्रस्वामिनस्तु न मुक्तो न च सेति पाठमाश्रित्य चशब्देन संसारिणः समुच्चित्य आप्नुवन्तीति बहुवचनं समाधाय मुक्तस्य महालक्ष्म्याश्चेश्वरैक्यनिषेधाय न मुक्तोऽच्युतो न च साच्युत इत्यावृत्त्याऽन्वीय योजनान्तरं तद्विवरणमिति व्याचक्रुः । वैभवं विभुत्वमिति भ्रमनिरसायाह- **महिमानमिति ॥** स एवेत्यस्य पूर्वापेक्षितमाह- **किन्त्विति ॥** तृतीया पञ्चम्यर्थ इत्याह- **मात्रया मात्राया इति ॥** वृधान इति 'लिटः कानच्' इत्युपेत्य व्याचष्टे- **वृधान ववृधान पूर्णेति ॥** तत्पद-व्यावर्त्यमाह- **न त्विति ॥** कीर्त्या वृद्धेर्ज्ञानिसाधारण्यात् । 'महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या' इति श्रुतेरित्यर्थः । त इति विष्णोर्निर्देशः 'न ते विष्णो' इत्युत्तरपरामर्शात् । स्मृतौ कैवल्यं नैर्गुण्य-मित्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **सर्वोत्कृष्टत्वमिति ॥**

**मूलम्-** **'यथाऽपियन्ति तेजांसि महातेजसि भास्करे ।**
**पृथक्पृथक् स्थितान्यह्नि स्वरूपैरपि सर्वशः ।**
**परे ब्रह्मणि जीवाख्यब्रह्माण्यप्यपियन्ति हि ।**
**मुक्तौ पृथक् स्थितान्येव तदन्येषामदर्शनम् ।**
**अप्ययोऽयं समुद्दिष्टो न स्वरूपैकता क्वचित् ॥' इति नारायणश्रुतिः ।**

**अतः सर्वागमविरुद्धमेव जीवेश्वरैक्यम् ।**

**(त.मं.)** ब्रह्मैव सन् ब्रह्माप्येति इति ब्रह्मण एव ब्रह्माप्ययः कथं भेदपक्षे समस्तीत्यत आह- **यथाऽपीति ।। तदन्येषां** मुक्तेभ्योऽन्येषाम् ।

**टीका-** ननु 'ब्रह्मैव सन् ब्रह्माप्येति' इति मुक्तस्य परमात्मैक्यमुच्यते । प्रागपि **ब्रह्मैव सन्** अविद्या-वृतब्रह्मत्व इदानीमविद्यायां निवृत्तायां ब्रह्मणैकीभवतीति । न चात्र पूर्ववदर्थान्तरं सम्भवति । तत्कथं मोक्षानन्तरमपि भेदः कथ्यत इत्याशङ्क्य 'स्वं ह्यपीत' इत्यस्य व्याख्यानेनैवेदमपि व्याख्या-तम् । नियामकश्च तत्रैवोक्तम् । तथाऽपि ब्रह्मैव सन्नित्येद्धटयितुं श्रुत्यन्तरं पठति- **यथेति ।।** स्वरूपैः पृथक् पृथक् स्थितान्येव सर्वशोऽपि **तेजांसि** नक्षत्रादीनि **महातेजसि** भास्करेऽह्नि यथाऽपियन्ति तथेत्यन्वयः । कोऽयमप्ययशब्दार्थ इत्यत आह- **तदन्येषामिति ।।** अमुक्तानाम-दर्शनमदर्शनविशिष्टा प्राप्तिः । लयेऽप्ययशब्दस्यैतदेव निर्वचनम् । प्रध्वंसस्तु प्रमाणान्तरगम्यः । तदनेन **ब्रह्मैव** सन् जीवाभावमजहदेव **ब्रह्म** परम् **अप्येति** अपिहितः प्रविशतीति व्याख्यातं भवति । अनयैव दिशा सर्वाण्यपि मुक्ताभेदप्रतिपादकवत्प्रतीयमानान्यागमवाक्यानि व्याख्येयानीति भावः । एवं मुक्तावपि भेदस्य सद्भावान्नावान्तरसत्यत्वमिति सिद्धम् ।

'न चाभेदे कश्चिदागमः । सन्ति च भेदे सर्वागमाः' इत्युक्तमुपपाद्योपसंहरति- **अत इति ।।** सर्वागमविरुद्धमित्यनेन 'सन्ति च भेदे सर्वागमाः' इत्यस्योपहारः । भेदस्य सर्वागमसिद्धत्व एवैक्यस्य तद्विरुद्धत्वसम्भवात् । विरुद्धमेव न त्वागमिकमित्येवशब्देन 'न चाभेदे कश्चिदागमः' इत्यस्योप-संहारः ।।

**(र.टि.)** अपिहिततत्प्राप्तिवाचकाप्ययशब्दार्थत्वं कथमदर्शनमात्रस्येत्यत आह- **अदर्शनविशिष्टा प्राप्ति-रिति ।।** ननु यद्यदर्शनविशिष्टप्राप्तिरित्यदर्शनशब्दार्थः, तर्हि सर्वकार्यनाशरूपे प्रलये कथमप्ययशब्दस्य 'सृष्टि-स्थित्यप्ययेह' इत्यादौ प्रयोग इत्यत आह- **लयेऽपीति ।।** ननु प्रलयवाचकाप्ययशब्दस्यैवं निर्वचनं तर्हि सकल-कार्यप्रध्वंसो न सिध्येदित्यत आह- **प्रध्वंसस्त्विति ।।** 'उत्पत्तिस्थितिसंहाराः' इत्यादिप्रमाणान्तरगम्यः प्रध्वंस इत्यर्थः ।।

**(रा.टि)** ब्रह्मैव सन्नित्यनुवादः । अविद्यावृतब्रह्मत्व इति व्याख्या । बहुव्रीहिः । पूर्वेणागतार्थत्वमाह- **न चा-त्रेति ।। इत्यस्य व्याख्यानेनैवेति ।। स्वं** स्वतन्त्रं परमात्मानं **अप्येति** इतरैरज्ञेयत्वेन प्रविष्ट इति व्याख्यानेनैव ब्रह्माप्येतीति वाक्यमपीतरैरज्ञेयत्वेन प्रविशतीति व्याख्यातमित्यर्थः । **नियामकं चेति ।।** 'अप्ययशब्दो नैकीभावे रूढः । किन्तु अपिरपिधाने 'इण् गतौ' अप्ययोऽज्ञेयत्वेन प्रवेशः' इति, स्वं कुलायं यथा अपीत इति च, 'एकीभावार्थत्वे ब्रह्मणा इति स्यात्' इत्यादिनियामकमित्यर्थः । इत्येतद्धटयितुमिति शेषोक्त्या तेन ततो न पौनरुक्त्यमिति भावः । **श्रुत्यन्तरमिति ।।** प्रागुक्तपरमश्रुत्यपेक्षयाऽन्तरशब्दः । व्यवहितत्वात्पदानामन्वयपूर्वं व्याकुर्वन् तथेति शेषोक्त्या परे ब्रह्मणीत्यादेरप्यन्वयमाह- **स्वरूपैरिति ।।** नन्वदर्शनविशिष्टा प्राप्तिरप्यय इत्ययुक्तम् । प्रलयेऽप्ययशब्दस्य स्वरूपनाशार्थत्वावगमात् । अन्यथा तत्र स्वरूपध्वंसाऽसिद्धेरित्यत आह- **लयेऽपीति ।। प्रमाणान्तरेति ।।** 'स्रष्टा पाता च संहर्ता' इत्यादिप्रमाणान्तरेत्यर्थः । अभ्यस्तत्वात् 'नाभ्यस्ताच्छतुः' इति नुमभावादजहदित्युक्तम् । जीव इति योज्यम् । कार्यब्रह्मव्यावृत्तये ब्रह्म परमित्युक्तम् । **अपिहितः** तिरोहितः । ब्रह्माप्येतीति श्रुत्यर्थः । **व्याख्येयानीति ।।** व्याख्यातानि च न्यायामृते द्वितीयपरिच्छे-दादौ । न चावान्तरसत्यत्वपरमिदमिति प्रकृतावान्तरप्रमेयं स्वयमुपसंहरति- **एवमिति ।।** 'यो वेद निहितं गुहायाम्' इत्यादिनोक्तप्रकारेणेत्यर्थः । उभयोपसंहारपरत्वं व्यनक्ति-**सर्वागमेति ।।** जीवेश्वरैक्यस्य प्रत्यक्षागम-विरुद्धत्वतदसिद्धत्वयोरुक्तिः ।

**(श्री.टि.) केवलः** सर्वोत्तमः । **व्याख्यानेनेति ।।** 'अपीत इत्यपि प्रवेशमात्रं, स्वमिति द्वितीयानिर्देशात्' **(श्री.टि.)** इति व्याख्यानेनेत्यर्थः । **व्याख्यातमिति ।।** अत्रापि ब्रह्मप्येतीत्यस्य ब्रह्म प्रविशतीत्येवार्थः । अप्येतीत्यस्यैक्यार्थत्वे ब्रह्मणाऽप्येतीति तृतीयानिर्देशः स्यात् । न तु ब्रह्मेति द्वितीयानिर्देश इति भावः । अत्राप्यप्ययशब्दस्य प्रवेशार्थत्वे किं नियामकमित्यत आह- **नियामकं चेति ।।** अप्ययशब्दस्य प्रवेशार्थत्वे नियामकं

'स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदा ॥'

इति प्रमाणं च स्वमपीत इति वाक्यव्याख्यानावसरे एवोक्तमित्यर्थः । नन्वदर्शनविशिष्टप्राप्तिवाचकोऽप्यय-शब्दस्तत्कथं 'तदन्येषामदर्शनम्' इत्यदर्शनमात्रस्याप्ययशब्दार्थत्वमुच्यत इत्यत आह- **अदर्शनविशिष्टा प्राप्तिरिति ॥** ननु यद्यदर्शनविशिष्टा प्राप्तिरप्ययशब्दार्थस्तर्हि सर्वकार्यनाशरूपे प्रलये कथमप्ययशब्दस्य 'सृष्टिस्थित्यप्ययेहा' इत्यादौ प्रयोग इत्यत आह-**लयेऽपीति ॥** ननु यदि प्रलयवाचकाप्ययशब्दस्यैतदेव निर्वचनं तर्हि सकलकार्यप्रध्वंसः प्रलयशब्दान्न सिध्येदिति चेन्न । इष्टापत्तेः । तर्हि कुतस्तत्सिद्धिरित्यत आह- **प्रध्वंस-स्त्विति ॥** 'उत्पत्तिस्थितिसंहाराः' इत्यादिप्रमाणान्तरगम्यः । प्रध्वंस इत्यर्थः । **जीवभावं** पारतन्त्र्यादिरूपम् । 'अतो विरुद्धवत्प्रतीयमानान्यपि वाक्यानि सादृश्याद्यर्थान्येव योजनीयानि' इति तत्त्वोद्योतवाक्यं हृदि निधायाह- **अनयैव दिशेति ॥** नन्वैक्यस्य सर्वागमविरुद्धत्वोक्त्या भेदे सर्वागमाः सन्तीति कथं लभ्यते, येनायं तस्योपसंहारः स्यादित्यत आह- **भेदस्येति ॥ तद्विरुद्धत्वेति ॥** भेदप्रतिपादकसर्वागमविरुद्धत्वसम्भवादित्यर्थः । तथा च तद्विरुद्धत्वोक्तौ भेदस्य सर्वागमसिद्धत्वं प्राप्तमेवेति भावः । **आगमिकम्** आगमसिद्धम् ।

**(पा.टि.) व्याख्यातमिति ॥** अपीतशब्दस्य प्रवेशार्थत्वव्युत्पादनेनाप्येतीत्यस्य तदर्थताया सिद्धत्वादिति भावः । **नियामकं चेति ॥** 'स्वमिति द्वितीयानिर्देशादेकीभावविवक्षायां स्वेनेति तृतीयानिर्देशापातात्' इति नियामकस्य तत्रोक्ततयाऽत्रापि ब्रह्मेति द्वितीयानिर्देशादेकीभावविवक्षायां ब्रह्मणेति तृतीयानिर्देशः स्यादिति नियामकं चोक्तप्रायमित्यर्थः । नन्वपिहितप्राप्तिवाचकत्वेनाप्ययशब्दः प्राग्व्याख्यातः । तत्किं श्रुतावदर्शन-मात्रार्थतया व्याख्यायत इत्यत आह- **अदर्शनविशिष्टेति ॥** अमुक्तकर्तृकदर्शनाभावविशिष्टा प्राप्तिरित्यर्थः । नन्वदर्शनविशिष्टप्राप्तिरेव यद्यप्ययशब्दार्थः कथं तर्हि सर्वकार्यनाशरूपे लये 'सृष्टिस्थित्यप्यय' इत्यादौ अप्ययशब्द-प्रयोगः । तेन कार्यनाशनिमित्तकत्वप्राप्त्या तदर्थकत्वस्यैव प्राप्तत्वादित्यत आह- **लयेऽपीति ॥ एतदेवेति ॥** अदर्शनविशिष्टा प्राप्तिरेव लयेऽप्यप्ययशब्दप्रवृत्तौ निमित्तं न तु कार्यनाश इत्यर्थः । नन्वेवं तर्ह्यप्ययशब्दाददर्शन-विशिष्टप्राप्तिसिद्धिरेव स्यात्, कार्यनाशसिद्धिस्तु न स्यादित्यतो न तत्राप्यप्ययशब्देन कार्यनाशसिद्धिरभिमता किन्तु प्रमाणान्तरादेवेतीष्टापादनमेवैतदिति भावेनाऽह- **प्रध्वंसस्त्विति ॥ प्रमाणान्तरेति ॥** 'उत्पत्तिस्थिति-संहाराः' इत्यादिप्रमाणान्तरेत्यर्थः । वस्तुतस्तदभेदप्रतिपादकानामन्यथाव्याख्यानानुपपत्तेर्मुक्तावभेदप्रति-पादकवत् प्रतीयमानानीत्युक्तम् । तावताऽप्यवान्तरसत्यत्वं सत्यत्वमिति शङ्कायाः कः परिहार इत्यत आह- **(पा.टि.) एवं चेति ॥** मायामयं हि व्यावहारिकं नाम । मोक्षे हि माया सर्वथा निवृत्तेति तदनन्तरमपि विद्यमानो भेदः कथं व्यावहारिकसत्यः स्यादित्यर्थः । अन्यथा मुक्तौ विद्यमानस्यापि व्यावहारिकसत्यत्वे ब्रह्मणोऽपि तत्प्रसङ्गादिति भावः । नन्वैक्यस्य सर्वागमविरुद्धत्वोपसंहारपरस्यात इत्यस्य तथैवावतारो युक्तः । तत्कथं सर्वागमासिद्धत्वसर्वागमविरुद्धत्वोपसंहारपरतया अवतार इत्यतोऽप्यस्याप्युभयोपसंहारपरतया तद्व्याचष्टे- **सर्वागमविरुद्धमिति ॥** तत्कथमित्यतस्तदुपपादयति- **भेदस्येति ॥**

**(व्या.टि.)** पुनःप्रत्यवतिष्ठते- **नन्विति ॥ ब्रह्मैवेति ॥** 'असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद' इति यजुर्वेदारण्यक इत्यर्थः । **मुक्तस्येति ॥** 'सकलं भद्रमश्नुते' इति पूर्वत्र सर्वकामावाप्तिश्रवणात्तस्य मुक्तलिङ्गत्वश्रवणादित्यर्थः । **नियामकमिति ॥** अप्ययपदस्य प्रवेशार्थत्व इत्यर्थः । **उक्तम्** उक्तप्रायमित्यर्थः। तत्रेवात्रापि ब्रह्मेति द्वितीयानिर्देशात् । अन्यथा ब्रह्मणेति निर्देशः स्यादिति समानन्यायत्वेनास्यापि तद्विषय-त्वादित्यर्थः । **नक्षत्रादीनीति ॥** 'उभे हि तेजसी सम्पद्येते उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति' इत्यादि-श्रुतेरित्यर्थः । अपिः अपिधाने वर्तते । एतिश्च गतावित्युपेत्यार्थमाह- **अदर्शनविशिष्टेति ॥** नन्वेवंभूताप्यय-शब्दोऽपि प्रवेशमात्रं वदेदिति भूतलयासिद्धिरित्यत आह- **लयेऽपीति ॥ प्रमाणान्तरेति ॥** अप्यय-श(ब्दभिन्न)ब्दाभिप्रेतप्रमाणान्तरेणेत्यर्थः । उपसंहारबीजमाह- **अनयैवेति ॥** 'न चावान्तरसत्यत्वमिदम्' इत्यस्योपसंहाराभावात् स्वयमुपसंहरति- **एवमिति ॥** अंशतोऽर्थद्वयस्योपसंहार इत्यंशभेदं दर्शयति- **इत्यने-नेति ॥** ननु कथमयं 'सन्ति' इत्यस्योपसंहारः । तत्र भेदस्य सर्वागमसिद्धत्वोपक्रमेण तद्वैरूप्यादित्यत आह- **भेदस्येति ॥** ऐक्यस्य तद्विरुद्धत्वोक्त्याशयेन तत्सम्भावकतद्व्यापकोक्तेस्तस्याप्युपक्रम एवेति भावः । **सम्भवादिति ॥** अन्यथा **(व्या.टि.)** ग्राह्याभावानवगाहिनोर्विरोधवाचोयुक्तेरयोगादित्यर्थः । **एवशब्देनै-वेति ॥** इत्यागमासिद्धत्वतद्विरुद्धत्वोपपादनम् ॥

**मूलम्- तथैव सर्वयुक्तिविरुद्धश्च ॥**

**टीका -** एवं जीवेश्वरैक्यस्य सर्वप्रमाणविरुद्धत्वं तदसिद्धत्वञ्चोक्त्वा तत्र प्रत्यक्षागमविरुद्धत्वं तदसिद्धत्वञ्चोपपाद्य इदानीमनुमानविरुद्धत्वं तदसिद्धत्वञ्चोपपादयितुं प्रतिजानीते- **तथैवेति ।।** यथा प्रत्यक्षागमविरुद्धं तदसिद्धञ्च तथैवेत्यर्थः । सर्वेति प्रत्यक्षागममूलानां साधनदूषणरूपाणां वा ग्रहणम् । चशब्देन तदसिद्धत्वं समुच्चिनोति ।

कथं जीवपरमात्मैक्यस्य युक्तिविरुद्धत्वादिकमिति चेत्, ऐक्यवादिनोऽनेकविधाः केवलैक्य-वादिनो भेदाभेदवादिनश्चेति । तत्राऽद्या मायावादिनो ब्रुवते । सजातीयविजातीयस्वगतभेदवर्जितं निर्विशेषं ब्रह्मैव तत्त्वम् । **तद्** अज्ञानवशाज्जगदीश्वरजीवरूपेण प्रतिभासते । अज्ञानश्च न ज्ञानाभावः । किन्तु भावरूपमनाद्यनिर्वाच्यम् आवरणविक्षेपव्यापारम् । स्वरूप-प्रकाशप्रतिबन्ध आवरणम् । अतदाकारप्रतिभासो विक्षेपः । तच्च शास्त्रजनिततत्त्वज्ञाननिवर्त्यत्वाद् अज्ञानमविद्येत्यादिशब्दैरुच्यते । तद् द्विविधं मायाऽविद्याभेदादित्येके ।

अपरे तु, स्वाश्रयव्यामोहनाव्यामोहनरूपव्यापारभेदादेकमेव वस्त्वविद्या मायेत्युच्यत इत्याहुः । तत्र मायावच्छिन्नं ब्रह्मैवेश्वर इत्युच्यते । स च मायामयसार्वज्ञसर्वेश्वरत्वाद्युपेतो वियदादेर्विश्वस्य कर्ता स्थापकः संहर्ता च । विश्वं च न सन्नासन्नसदसत् किन्त्वनिर्वाच्यमेव मायोपादानकम् । शुक्तिकायां रजतमिव ब्रह्मण्यारोपितमेव प्रतीयते । अत एवेश्वरस्य तत्कर्तृत्वा-दिकमपि मायामयं मिथ्यैव । किन्त्वसावधिष्ठानयाथात्म्यज्ञानवत्त्वान्न मुह्यति । ब्रह्मविवर्तरूपं जगत् पश्यत्येव केवलम् । जीवस्तु अविद्यावच्छिन्नं ब्रह्मैव, यथा दर्पणाद्युपाध्यवच्छिन्नं मुखमेव प्रतिमुखम् । अवच्छेदमात्रमाविद्यकत्वान्मिथ्या । यथा तत्र बिम्बे मुखेऽविद्यमानं मलिनत्वं दर्पणोपाधिवशात्प्रतिबिम्बे प्रतीयते तथाऽविद्यावशादेव प्रत्यगात्मनि ब्रह्मप्रतिबिम्बेऽहङ्काराख्यं द्रव्यमविद्योपादानकं मिथ्याभूतमेवाऽरोप्यते । तच्च ज्ञानशक्तिमाश्रित्य मन इति, क्रियाशक्तिमाश्रित्य प्राण इति च गीयते । तद्धर्मा एव कर्तृत्वभोक्तृत्वसुखदुःखादयो जपाकुसुमगतं लौहित्यं स्फटिकमणाविव सन्निधानादात्मन्यारोप्यन्ते । स चाविद्याऽहङ्काराद्यध्यासद्रष्टा प्रत्यगात्मा साक्षी-त्युच्यते । तस्य साक्षित्वमप्याविद्यकमेव न सत्यम् । यथा रजताध्यासो ज्ञानार्थरूपो मिथ्या तथाऽविद्याध्यासोऽपीति ।

ते च द्विविधाः । एकजीववादिनो बहुजीववादिनश्चेति । एक एव ब्रह्मप्रतिबिम्बो जीवः, अन्ये जीवा जडवत्स्वरूपेणैव कल्पिताः, यथा स्वप्ने यथा वा चित्रभित्तौ । तत्र यः परमार्थतो जीवः तस्य तत्त्वज्ञानोदये तत्कल्पितोऽयं सर्वो बाह्यभ्यन्तररूपः प्रपञ्चो निवर्तते, प्रतीतिमात्रशरीरत्वाद्, अन्यस्य प्रत्येतुरभावात्, ईश्वरभेदस्यापि तेनैव कल्पितत्वादित्येकजीववादिनां मतम् । बहुजीववादिनान्तु मुखमिवानेकेषु दर्पणेष्वनेकाविद्यासु प्रतिबिम्बितं ब्रह्मानेकजीवभावमापद्यते । तत्र विच्छेद-मात्रमारोपितम् । जीवास्त्वनन्ताः स्वरूपेण सत्या एव । तत्र यस्य तत्त्वज्ञानमुत्पद्यते सोऽपव्र-ज्यते । अन्ये संसरन्तीति ।

भेदाभेदवादिनोऽपि त्रिविधाः । तत्रैके वर्णयन्ति- सार्वज्ञादिगुणोपेतं सर्वदोषदूरं ब्रह्म सच्छक्ति-चिच्छक्तियोगाद् द्विविधम् । तत्र सच्छक्तिकं जगदुपादानकारणं भवति । जगच्च सत्यमेव । चिच्छक्तिकन्तु अनाद्यन्तःकरणोपाधिपरिच्छिन्नं जीवेश्वरभावमापद्यते । यथैकमेवाऽकाशं घटमठाद्युपाधिपरिच्छिन्नं घटाकाशादिभावम् । तत्रेश्वरोऽविलुप्तज्ञानत्वान्न संसरति । केवल-मुपाधिसम्बन्धाज्जगत्सर्जनादिक्रियावेशमनुभवति । जीवास्तु बहवोऽज्ञानमिथ्याज्ञानतत्संस्कार-कामकर्मादिवशात् सत्यानेवान्तःकरणधर्मान् दुःखादीनात्मन्यारोप्य संसरन्ति । एवं भेदाभेदयोः सत्त्वेऽप्यभेदः स्वाभाविको भेदस्त्वौपाधिकः । तत्र यस्य निवृत्तकर्मसमुच्चितै(तेनै)क्य-ज्ञानेनोपाध्यादिकमत्यन्तं विनश्यति स तत्कृतभेदनाशात् स्वाभाविकं ब्रह्मभावमापद्यते । अन्ये तु संसरन्तीति ।

अन्ये त्वाचक्षते- एकस्यैव ब्रह्मणोऽनेके स्वाभाविका एवांशा जीवा न त्वौपाधिकाः । अतो भेदाभेदयोः स्वाभाविकत्वान्मुक्तावपि भिन्नाभिन्ना एव जीवाः । केवलमज्ञानादिनिमित्तं दुःखादिकमानन्दाद्यावरणञ्च ज्ञानकर्मभ्यां

**निवर्तत इति।**

**अपरे तु मन्यन्ते- जीवा ब्रह्माभिन्नाः। भेदस्तु न कल्पितो न चौपाधिको नाप्यंशांशिभाव-निमित्तः। किन्त्वतिरेकनिमित्त एव। अन्यत्समानमिति।**

**(रा.टि.)** अतः परमनुमानविरोधोक्तिपरो ग्रन्थः। प्रत्यक्षाद्यमूलकानुमानस्य जीवेश्वरैक्याविरोधित्वादिति वा धूमाद्यनुमानानामविरोधकत्वादिति वाऽभिप्रायेण सर्वपदार्थमाह - **सर्वेतीति ॥** जीवेश्वराभेदग्राहिणामिति योज्यम्। कथं जीवपरमैक्यस्य युक्तिविरुद्धत्वादिकमिति चेदित्यस्य प्रमाणशून्यत्वात्प्रमाणविरुद्धत्वाच्चेति प्रतिज्ञापूर्वं पराभिमतदृश्यत्वाद्यनुमानानां दुष्टत्वोक्त्या तदसिद्धत्वं शिष्योपदेशाद्यर्थं प्रवृत्त्यन्यथाऽनुपपत्त्यादियुक्ति-विरुद्धत्वं च 'न तावत्' इत्यादिवाक्यव्याख्यानावसरेऽग्रे विवक्षुः, एकजीवेति मूलसूचितमतभेदं विविच्य दर्शयति- **ऐक्यवादिन इति ॥ भेदाभेदेति ॥** तन्मतस्याप्यग्रे 'उपाधिभेदाङ्गीकारे' इत्यादिना निरासात्तद्विभागोऽपि दर्शितः। **सजातीयेति ॥** जीवजडप्रतियोगिकस्वनिष्ठभेदविवर्जितं निर्धर्मकं चेत्यर्थः। **तदज्ञानेति ॥** तत्राध्यस्ताज्ञानेत्यर्थः। एतच्च 'भ्रान्तिकल्पितत्वे च जगतः' इति वक्ष्यमाणोपयोगायोक्तम्। ननु न्यायमतरीत्या अज्ञानस्य ज्ञानाभावरूपत्वे कथमीश्वराभेदेन जगदवभासकत्वम्, भावरूपत्वे वा तस्याऽवरणत्वेन जगदीश्वरयोः शुक्तिरूप्ययोरिवाभेदावभासकत्वमित्यत आह- **अज्ञानं चेति ॥ अतदाकारेति ॥** तथा च तदज्ञानवशा-दित्युक्तिर्युक्तैवेति भावः। ननु ज्ञानाभावस्य ज्ञानविरोधित्वादज्ञानत्वं युक्तं, भावरूपस्य तु कथमित्यत आह- **तच्चेति ॥** जीवेश्वरादिचेतनभागोक्त्यर्थमाह- **द्विविधमिति ॥** अविद्या मायेत्युच्यत इति यथाक्रममन्वयः। ईश्वरविभागोक्तेरुपयोगमाह- **स च मायामयेत्यादि ॥** एतेन 'यः सर्वज्ञः' 'एष सर्वेश्वरः' 'यतो वा इमानि **(रा.टि.)** भूतानि जायन्ते' इत्यादिश्रुतिगतिरुक्ता भवति। एषां धर्माणां सत्यत्वे निर्विशेषमित्युक्तिविरोध इत्यतो मायामयेत्युक्तम्। मयड् विकारार्थः। विश्वस्य कर्तेत्याद्युक्त्या प्रतीतसत्यत्वं निराह- **विश्वं चेति ॥** विश्वं मायोपादानकमित्याद्युक्त्या तदज्ञानादिति प्रागुक्तस्य विवरणमेतदिति ज्ञेयम्। **मिथ्यैवेति ॥** नन्वेवं तद्विषयकभ्रान्तिमत्त्वे मायायाः स्वाश्रयाव्यामोहकत्वभङ्ग इति कृतप्रश्नस्योत्तरम्- **किन्त्वित्यादि ॥ ब्रह्म-विवर्तेति ॥** ब्रह्मण्यध्यस्तमायोपादानकरूपमित्यर्थः। अविद्या चेत्युक्तविभागोपयोगमाह-**जीवस्त्विति ॥ तद्धर्मा इति ॥** अहङ्कारधर्मा इत्यर्थः। मूलोपयोगाय जीववादिविभागमाह- **ते चेति ॥** मायावादिनः। **प्रतीतिमात्रशरीरत्वादिति ॥** प्रपञ्चस्येत्यनुषङ्गः। ईश्वरोऽस्तु प्रत्येतेत्यत आह- **ईश्वरभेदस्येति ॥** कल्पक-जीवस्य तत्त्वज्ञानेन सोऽपि निवर्तत एवेति भावः।

बहुजीववादिपक्षेऽपीत्यादिवक्ष्यमाणोपयोगायाऽह- **बहुजीवेति ॥ विच्छेदमात्रं** भेदमात्रम्। **स्वरूपे-णेति ॥** विशेष्यरूपेणेत्यर्थः। **अपवृज्यते** मुक्तो भवति। इतिशब्दो बहुजीववादिप्रक्रियासमाप्तौ। शिष्टं प्राग्वदेव ज्ञेयमिति भावः। मतत्रयस्याप्यग्रे निरासात्तद्विभागमाह- **भेदाभेदवादिनोऽपीति ॥ उपादानादीति ॥** निमित्त-मादिपदार्थः। **घटाकाशादिभावमिति ॥** आपद्यते इत्यनुषङ्गः। **क्रियावेशः** क्रियावत्त्वम्। **अज्ञानेति ॥** ब्रह्मभावाज्ञानतद्विपरीतज्ञानेत्यर्थः। **आत्मन्यारोप्येति ॥** आत्मीयत्वेन ज्ञात्वेत्यर्थः। **निवृत्तकर्मेति ॥** निष्काम-कर्मेत्यर्थः। **स तत्कृतेति ॥ सः** जीवः उपाधिनाशकृतेत्यर्थः। **अज्ञानादीति ॥** मिथ्याज्ञानादिरादिशब्दार्थः। **अतिरेकेति ॥** विश्लेषविशेषोऽतिरेकः।

**(श्री.टि.)** ननु युक्तिशब्दवाच्यानुमानस्यैकत्वात्कथं सर्वेत्युक्तमित्यतः प्रकारद्वयेन तदर्थमाह- **प्रत्यक्षेत्या-दिना ॥** 'युक्तिश्च त्रिविधा मता। व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा' इत्यनुव्याख्यानं हृदि निधायोक्तम्- **प्रत्यक्षेत्यादि ॥ मूलानां** मूलिकानां युक्तीनामित्यर्थः। **साधनेति ॥** साधनानुमानदूषणानुमान-रूपाणां वा युक्तीनामित्यर्थः। व्यक्तिभेदाद्बहुवचनमत्रेति ज्ञातव्यम्। **तदसिद्धत्वमिति ॥** युक्त्यसिद्धत्वमि-त्यर्थः। **तदज्ञानवशाज्जगदित्यादि ॥ जगद्** वियदादि जडम्। तद्ब्रह्म जगदादिरूपेणाज्ञानवशात्प्रतिभासत इत्यन्वयः। प्रातिभासिकरजतादिव्यावृत्त्यर्थमनादीति विशेषणम्। प्रागभावव्यावृत्त्यर्थं भावरूपमित्युक्तम्। ब्रह्मव्यावृत्त्यर्थमनिर्वचनीयमित्युक्तम्। **व्यापारं** व्यापारयुक्तम्। **स्वरूपेति ॥** अहमिति स्वप्रकाशतया नित्यसिद्धप्रत्यक्चैतन्याभिन्नैक्यस्यापि प्रकाशप्राप्तिप्रतिबन्धकमावरणमित्यर्थः। अतदाकारो दुःखादिः। अत्र विक्षेपस्याऽवरणकार्यत्वं ज्ञातव्यम्। नन्वज्ञानस्य भावरूपत्वमङ्गीकृत्य ज्ञानाभावत्वानङ्गीकारे अज्ञानमविद्येत्यत्र नञर्थः क इति चेत्, असुरादिशब्देष्विव तद्विरुद्धत्वमेवेति वदामः। अज्ञानस्य ज्ञानविरुद्धत्वमेव कुत इति चेत्तत्राऽह- **तच्चेति ॥** भावरूपमप्यज्ञानमित्यर्थः। **तद्** अज्ञानम्। **एकमेव वस्त्विति ॥** अज्ञानाख्यमेकमेव वस्तु तस्य स्वाश्रयव्यामोहनरूपव्यापारो यदा तदाऽविद्येत्युच्यते। यदा तु स्वाश्रयाव्यामोहनरूपव्यापाररस्तदा मायेत्युच्यत इत्यर्थः। **न सदिति ॥** बाध्यत्वादिति भावः। **नासदिति ॥** प्रतीतत्वादिति

भावः । **न सदस-(श्री.टि.) दिति ।।** विरोधादिति भावः । **अनिर्वाच्यमेवेति ।।** सदसद्विलक्षणमेवेत्यर्थः । **अत एव** विश्व-स्याऽरोपितत्वादेव । **असौ** ईश्वरः । **न मुह्यतीति ।।** तथा च मायायाः स्वाश्रयाव्यामोहकत्वे आश्रयस्याधि-ष्ठानयाथात्म्यज्ञानवत्त्वं निमित्तमित्युक्तं भवति । ननु कल्पितविश्वद्रष्टृश्वरस्य कथं मोहाभाव इत्यत आह- **ब्रह्मविवर्तरूपमिति ।।** ब्रह्मण्यध्यस्तरूपं यज्जगदित्यर्थः । तथा च कल्पितं कल्पितत्वेनैव पश्यतीति न दोष इति भावः । नन्वविद्यावच्छिन्नस्य ब्रह्मण एव जीवत्वे संसारो जीव एव कस्मात् प्रतीयत इति चेन्न । एतन्मते जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावाङ्गीकारात् । अविद्यारूपोपाधेश्च प्रतिबिम्बपक्षपातित्वात् । जीव एव संसार इत्येतद् दृष्टान्तपूर्वकमुपपादयति- **यथा दर्पणादीति ।। मुखमेव** बिम्बमेव । **अवच्छेदो** भेदः । **अहङ्काराख्यं द्रव्यमिति ।।** चिदचित्संवलनात्मकाहङ्कारस्यैव संसारत्वादिति भावः । **तच्चेति ।।** अहङ्काराख्यं द्रव्यमित्यर्थः । **ज्ञानशक्तिं** ज्ञातृत्वशक्तिम् । **क्रियाशक्तिं** कर्तृत्वशक्तिम् । **तद्धर्मा** एव अहङ्कारधर्मा एव । **सन्निधाना-दिति ।।** अहङ्काराख्यान्तःकरणसन्निधानादित्यर्थः । ननु साक्षादध्यासद्रष्टृत्वरूपं साक्षित्वमेव प्रत्यगात्मनि सत्यभूतो धर्मः प्राप्त इति चेत्तत्राऽह- **तस्येति ।।** अध्यासो द्विविधः, स च मिथ्येति दृष्टान्तपूर्वकमाह- **यथा रजतेति ।। ते चेति ।।** मायावादिन इत्यर्थः । **बाह्याऽभ्यन्तररूप इति ।।** वियदादिरूपो दुःखादिरूपश्चेत्यर्थः । **प्रतीतिमात्रेति ।।** प्रातिभासिकत्वादित्यर्थः । तथा च तस्य तत्त्वज्ञानोदयेन जगत्प्रतीत्यभावे तत्कल्पितत्वेन तत्प्रतीतिमात्रशरीरकस्य प्रपञ्चस्यापि निवृत्तिर्भवतीति भावः । ननु यस्य तत्त्वज्ञानं नोत्पन्नं सोऽन्यो जीव एव प्रपञ्चप्रत्येता भविष्यति । तथा च तत्प्रतीतिशरीरकत्वान्न प्रपञ्चनिवृत्तिरित्यत आह- **अन्यस्येति ।। प्रत्येतुः** ज्ञातुः जीवस्य । **अभावादिति ।।** तस्यापि तेनैव कल्पितत्वेन तस्य तत्त्वज्ञानोदये तस्यापि निवृत्तत्वादिति भावः । नन्वथापि ईश्वरः प्रत्येता भविष्यति । तथा च तत्प्रतीतिशरीरकत्वादनिवृत्तिः प्रपञ्चस्य युक्तेति चेत्तत्राऽह- **ईश्वरभेदस्यापीति ।।** इदं ब्रह्म, अयमीश्वर इत्येवं भेदस्यापीत्यर्थः । तथा च तस्य तत्त्वज्ञानोदये ईश्वरस्यापि निवृत्तत्वादिति भावः । अविद्यासु उपाधिभूतासु । विच्छेदमात्रं जीवानां, ब्रह्मणश्च भेदमात्रम् । **स्वरूपेण** चैतन्यरूपेण । **अपव्रज्यते** अपवर्गवान्मुक्तो भवति ।

**सच्छक्तीति ।।** तथा च सच्छक्तिकं चिच्छक्तिकं चेति द्विविधमित्यर्थः । **उपादानकारणं** परिणामिकार-णम् । मायिमत इव भास्करैकदेशिमते अविद्या नोपाधिः किन्त्वन्तःकरणमेवेत्याह- **अनाद्यन्तःकरणेति ।।** परिच्छिन्नं सदिति शेषः । **जीवेश्वरभावमिति ।।** नन्वन्तःकरणाख्योपाधिपरिच्छिन्नस्य चिच्छक्तिकस्य जीवेश्वरोभयभावः कथमिति चेन्न । उपाधिभूतेऽन्तःकरणेऽपि वैचित्र्यस्य कल्पनीयत्वादिति भावः । यथोक्तं न्यायामृते-'विचित्रान्तःकरणोपाधिपरिच्छिन्नं चिच्छक्तिकं ब्रह्म जीवादित्वमापद्यते' इति । नन्वीश्वरस्य सृष्ट्यादिकर्तृत्वाङ्गीकारात्स एव संसारः प्राप्त इति न संसरतीत्ययुक्तमिति चेत्तत्राऽह- **केवलमिति ।। उपाधि-सम्बन्धाद्** अन्तःकरणाख्योपाधिसम्बन्धात् । न तु स्वत इति भावः । **क्रियावेशं** सृष्ट्यादिकर्तृत्वम् । **औपाधिक** उपाधिजन्यः । **तत्र यस्येत्यादि ।।** अस्य ज्ञानकर्मसमुच्चयवादित्वादिति भावः । **स्वाभाविका एवांशा इति ।। (श्री.टि.)** इदमत्राऽकूतम्- ब्रह्मैकमेव स्वभावसिद्धं तत्त्वम् । तत्परमार्थभूतमायासम्बन्धादीश्वरतामापद्यते । स च सर्वज्ञः सर्वेश्वरो जगज्जन्मादिकर्ता । जीवास्तु ब्रह्मणोंऽशा एव वह्नेरिव विष्फुलिङ्गाः । अत एव ब्रह्मणो भिन्नाभिन्नाः परस्परमीश्वराच्च भिन्ना एव । ब्रह्म तु सकलचेतनसमुदायात्मकमतिरिक्तं चेति । यथोक्तमनु-व्याख्याने-'ईशाख्या समुदाये स्यात्' इति । **औपाधिका** अन्तःकरणोपाधिनिमित्तकाः । ननु जीवानां ब्रह्माभिन्नत्वे कथं दुःखाद्यनुभव आनन्दाद्यनुभवश्चोपपद्यत इत्यत आह- **केवलमिति ।। भेदस्त्विति ।।** प्रतीयमानो भेदस्त्वित्यर्थः । **न कल्पित इति ।।** मायावादिरीत्येत्यर्थः । **न चौपाधिक इति ।।** प्रथमोपन्यस्तभास्करैक-देशिमतरीत्येत्यर्थः । **नाप्यंशांशिभावेति ।।** अन्ये त्वित्यादिनोपन्यस्तद्वितीयभास्करैकदेशिरीत्येत्यर्थः । तर्हि भेदः कीदृश इति पृच्छति- **किन्त्विति ।।** उत्तरमाह- **अतिरेकनिमित्त एवेति ।।** भेदव्यवहारसम्पादनपटुर्धर्म-विशेषोऽतिरेकः, तन्निमित्तो भेद इत्यर्थः । **अन्यत्समानमिति ।।** केवलमज्ञानादिनिमित्तं दुःखादिकमानन्दा-द्यावरणं च निवृत्तकर्मसमुचितेनैक्यज्ञानेन निवर्तत इत्येतत्समानमित्यर्थः ।

**(पां.टि.)** मूले 'युक्तिविरुद्धं च' इत्येतावतैवैक्यस्य युक्त्यसिद्धत्वयुक्तिविरुद्धत्वप्रतिज्ञायाः सिद्धत्वात् सर्वपद-मनर्थकमित्यतस्तत्सङ्ग्राह्यप्रदर्शनेन तत्सार्थक्यमुपपादयति- **सर्वेतीति ।।** ऐक्यवादो न युज्यत इत्येतावता पूर्तेः 'एकजीववादः' इति विशेषोक्त्यानर्थक्यमित्यतः, तथोक्त्या सूचितं तद्वादानामनेकविधत्वं दर्शयति- **ऐक्य-वादिनोऽनेकविधा इति ।। तदज्ञानेति ।।** तदिति भिन्नं पदम् । ततश्च तद्ब्रह्मैवाज्ञानवशाद् जगदादिरूपेण प्रतिभासत इत्यन्वयः । नन्वेवं ज्ञानाभावारूपाज्ञानस्य मुक्तेः पूर्वमिव मुक्त्यनन्तरमपि सत्त्वात् तद्दशायामपि तस्य तथा प्रतिभासप्रसङ्ग इत्यतो भवेदेतदेवं यद्यज्ञानं ज्ञानाभावः स्यात्, न चैवमित्याह- **अज्ञानं चेति ।।** ननु यदि तद्भावरूपं कुतस्तस्याज्ञानादिशब्दवाच्यत्वम् । न च ज्ञाननिवर्त्यत्वात्तदिति वाच्यम् । ज्ञानस्य तत्साधकत्वेन तदविरोधितया तन्निवर्तकत्वायोगादित्यतः चैतन्यरूपज्ञानस्य तत्स्फोरकतया तदनिवर्तकत्वेऽपि शास्त्रजनितवृत्ति-रूपज्ञानस्य

तत्स्फोरकत्वाभावेन तन्निवर्त्यत्वसम्भवाद्युक्तमेव तेन निमित्तेनोक्तलक्षणस्य तस्याज्ञानादि-शब्दवाच्यत्वमित्याह- **तच्चेति** ।। जीवेश्वरविभागमुपपादयितुं तद्द्वैविध्यमाह- **तद् द्विविधमिति** ।। **अत एवेति** ।। विश्वस्य मायाकल्पितत्वादेवेत्यर्थः। तथात्वे विश्वदर्शिनः ईश्वरस्य शुक्तिरजतादिद्रष्टृजीववन्मिथ्या-भूतविश्वद्रष्टृत्वाद् भ्रान्तित्वापत्तिरिति पृच्छति- **किन्त्विति** ।। **असाविति** ।। ईश्वर इत्यर्थः । नन्ववच्छिन्नस्य जीवस्य कथमनवच्छिन्नब्रह्मरूपत्वमित्यतो दृष्टोपदर्शनेन तदुपपादयति- **यथेति** ।। **अवच्छेदमात्रमिति** ।। भेदमात्रमित्यर्थः । ननु तथाऽपि जीवस्य ब्रह्मप्रतिबिम्बत्वे कथं तत्र संसारावभासः, बिम्बभूते ब्रह्मणि तस्या-सत्त्वादित्यतो दृष्टान्तोपदर्शनेन तदुपपादयति- **यथेति** ।। तथापि कर्तृत्वादिधर्मवतो जीवस्य कथं निर्धर्मकब्रह्म-रूपत्वं स्यादित्यतः कर्तृत्वादयो न जीवधर्माः किन्त्वहङ्कारस्यैवेत्याह- **तद्धर्मा एवेति** ।। अहङ्काराख्यद्रव्यधर्मा एवेत्यर्थः। कथं तर्हि अन्यधर्माणां तेषां जीवे प्रतिभास इत्यतो दृष्टान्तोपदर्शनेन तदुपपादयति-**जपाकुसुमेति** ।।

ननु प्रत्यगात्मनो ब्रह्मप्रतिबिम्बत्वे कथं तत्र निर्निमित्तकः साक्षित्वव्यवहार इत्यतो निमित्तं कथयन् तमुप-**(पां.टि.)** पादयति- **स चेति** ।। स च प्रत्यगात्मा अविद्याध्यासद्रष्टृत्वात् साक्षीत्युच्यत इत्यर्थः। ननु चाविद्या-ध्यासद्रष्टृत्वं साक्षिणो न सम्भवति। तथा सति तस्य साक्षिदृष्टत्वात् तद्दृष्टात्मस्वरूपवदविद्याध्यासस्य सत्यत्वा-पातादित्यतस्तद्दृष्टस्यापि मिथ्यात्वं दृष्टान्तोपदर्शनेनोपपादयति- **यथेति** ।। ननु यस्य ज्ञानोदयस्तस्य प्रतीत्य-भावेऽप्यन्यस्यैव तत्प्रतीतिः किं न स्यादित्यतः, अन्यः प्रत्येता भवन् जीवो वा स्यादीश्वरो वा स्यादिति विकल्प्य आद्यं दूषयति- **अन्यस्येति** ।। जीवस्य तत्कल्पितत्वेन तत्तत्त्वज्ञानोदये निवृत्तत्वान्न प्रत्येतृत्वमिति भावः। द्वितीयं दूषयति- **ईश्वरेति** ।। ईश्वरस्यापि तत्कल्पितत्वेन तस्य तत्त्वज्ञाने सति निवृत्तत्वान्न प्रत्येतृत्वमिति भावः। **विच्छेदमात्रमिति** ।। भेदमात्रमित्यर्थः । न त्वेकजीववादिमत इव कल्पिता इत्यर्थः । नन्वेवं भेदाभेद-योरुभयोरपि सत्यत्वे सत्यस्यानिवर्त्यत्वाङ्गीकारान्मुक्तावपि तयोः सत्त्वापत्त्या कथं तद्वादिनामैक्यवादित्वमित्यत आह- **एवमिति** ।। **भेदस्त्वौपाधिक इति** ।। तथा च सत्यत्वेऽपि भेदस्यौपाधिकतया तन्निवृत्तौ निवृत्त्य-वश्यम्भावेन मुक्तावसत्त्वापत्तेर्युक्तमेव तद्वादिनामैक्यवादित्वमिति भावः। **समुचितेनेति** ।। निष्कामकर्म-समुचितेनेत्येर्थः। संसारवन्मुक्तावपि जीवानां भिन्नाभिन्नत्वे तयोरविशेषप्रसङ्ग इत्यतः प्रकारान्तरेण विशेष-मुपपादयति- **केवलमिति** ।। **ज्ञानकर्मभ्यामिति** ।। ऐक्यज्ञाननिवृत्तकर्मभ्यामित्यर्थः। **अतिरेकेति** ।। भेदाभेदव्यवहारसम्पादनपटीयान् धर्मविशेषोऽतिरेकः, तन्निमित्त इत्यर्थः। नन्वतिरेकनिमित्तत्वे भेदस्य मुक्तावपि सत्त्वापत्त्या मुक्तिसंसारयोरविशेषप्रसङ्ग इत्यत आह- **अन्यदिति** ।। अतिरेकनिमित्तकभेदस्य मुक्तौ सत्त्वेऽपि न तयोरविशेषप्रसङ्गः। अज्ञानादिनिमित्तस्य दुःखादेरानन्दाद्यावरणस्य च निवृत्त्या मुक्तेः संसारापेक्षया विशेषः सम्भवतीत्येतत् पूर्वमत इव एतन्मतेऽपि समानमित्यर्थः।

**(व्या.टि.) यथेति** ।। तयोः परं प्रत्युपपादितत्वेन सिद्धत्वाद् दृष्टान्तीकरणम्। युक्त्याभासविरोधस्या-किञ्चित्करत्वेनानुद्भाव्यत्वाद् भिन्नविषययुक्तिविरोधाभावात्सर्वेति व्यर्थमित्यतो व्याचष्टे- **प्रत्यक्षानुमानाग-मेति** ।। भेदविषयाणामिति शेषः। **कथमिति** ।। केन प्रकारेणेत्यर्थः । तत्तन्मतभेदाज्ञाने तत्तदारूढयुक्तिविरोध-स्यापि दुर्ज्ञानत्वात् तज्ज्ञानार्थमननुभाषणदूषणशोषणार्थं च मतभेदाननुवदति- **ऐक्यवादिन इत्यादिना** ।। ननु भेदाभेदवादिनां कथमैक्यवादिपदेन ग्रहणम् । तथा सति 'आग्नेयं चतुर्धा करोति' इत्यादावाग्नीषोमीयैन्द्रा-ग्नयोरप्याग्नेयपदेन ग्रहणापातादिति चेत्, मैवम्। वैषम्यात्। तत्र तद्धितस्य 'समर्थानां प्रथमाद्वा' इति समर्थाधि-कारत्वात् सापेक्षत्वे सामार्थ्याभावात्तद्धितानुत्पत्तेः, अग्रहणेऽपि पृषदाज्यस्य 'आज्यमुत्पुनाति' इत्यादा-वाज्यपदेनेव, ङ्याबित्यादाविव च सामान्यग्रहणे बाधकाभावात्। **सजातीयेति** ।।

'वृक्षस्य स्वगतो भेदः पत्रमूलफलादिभिः।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः।
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ।।'

**(व्या.टि.)** इति तदीयवचनादिति भावः। **तदिति** ।। ब्रह्मेत्यर्थः। **अज्ञानेति** ।। यथोक्तं संक्षेपशारीरकभाष्ये-

'अज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूरिभावा।
स्वाभाविकस्वमहिमस्थितिरस्तमोहा प्रत्यक् चितिर्विजयते भुवनैकयोनिः ।।' इति।

ननु जीवादिभेदो ह्युपादानसापेक्षो भावकार्यत्वात्। अज्ञानं च ज्ञानाभावत्वान्न भवति भावोपादानमित्यत आह- **भावरूपमिति** ।। जीवावरकत्वादित्यर्थः। भावत्वादुपादानत्वोपपत्तिरिति भावः। आवरणविक्षेपौ क्रमेण लक्षयति- **स्वरूपेति** ।। **अतदाकारेति**

च ॥ **उच्यत इति** ॥ असुरेतिवद्विरोधो नञर्थ इत्यर्थः । **मायाऽविद्याभेदादिति** ॥ ईश्वरनिष्ठा माया, जीवनिष्ठाऽविद्येति विवेकः । **व्यामोहनाव्यामोहनेति** ॥ **अविद्यामायेति** ॥ यथाक्रममन्वयः । अज्ञानभेदपरिग्रहफलं दर्शयति- **तत्रेति** ॥ ननु कर्तृत्वादेः सार्वज्ञाद्य-विनाभावात्कथं तस्य निर्विशेषब्रह्मत्वमित्यत आह- **मायामयेति** ॥ कर्तेत्यादित्रितयग्रहणं जन्मादिसूत्रे 'सृष्टिः स्थितिर्भङ्गः समासार्थः' इति भाष्यानुसारेण । तर्हि सत्यजगत्सर्जनानुपपत्तिरित्यतस्तदपि तादृगेवेत्याह- **विश्वं चेति** ॥ कथं निरुपादाना भावसृष्टिरित्यतो मायोपादानकमित्याह । तर्हि निर्विशेषाङ्गीकारो व्यर्थः । कर्तृत्वोपा-दानत्वोभयाभावादित्याशङ्क्य परिहरति- **शुक्तिकायामिति** ॥ तर्हि कार्यस्याऽरोपितत्वे तत्कर्तृकत्वमपि मिथ्या स्यादित्यतः ओमित्याह- **अत एवेति** ॥ तर्हीश्वरस्याहं कर्तेत्यादिभ्रान्तित्वापत्त्या तदज्ञानस्य मायात्वानुपपत्ति-रिति शङ्कते- **किन्त्विति** ॥ उत्तरयति- **अधिष्ठानेति** ॥ तर्हि कथं सार्वज्ञ्यमित्यत आह- **पश्यत्येवेति** ॥ अविद्याद्वयस्वीकारफलमाह- **जीवस्त्विति** ॥ तयोर्बिम्बप्रतिबिम्ब-भावादिति भावः । बिम्बप्रतिबिम्बभावेऽपि कुत ऐक्यमित्यतस्तयोः प्रतिबन्धं(न्दीं)दर्शयति- **यथेति** ॥

ननु मुखमेवेत्ययुक्तम् । तयोः प्राङ्मुखत्वप्रत्यङ्मुखत्वादिभेददर्शनादित्यत आह- **अवच्छेदमात्रमिति** ॥ **आविद्यकत्वादिति** ॥ अविद्याया विकार आविद्यः स एवाऽविद्यकः, तस्य भावस्तस्मादित्यर्थः । प्रतिबिम्बस्य बिम्बतामात्रत्वे तत्रानारोप्याऽरोपोऽत्र कुत इत्यत उपाधेः प्रतिबिम्बपक्षपातदर्शनादिति वक्तुं तन्निदर्शयति- **यथेति** ॥ नन्वेकस्यैकदाऽनेकवस्तुपरिणामासम्भवात्कथमेकस्याहङ्कारस्य मनःप्राणात्मतेत्यत आह-**तच्चेति** ॥ सञ्ज्ञाभेद एव नार्थभेद इति भावः । ननु ज्ञानक्रियाभोगशक्तीनामहङ्कारनिष्ठत्वे कथं तन्निमित्तानां कर्तृत्व-भोक्तृत्वादीनामात्मनि भानं, वैयधिकरण्यादित्यत आह- **तद्धर्मा एवेति** ॥ सोपाधिकारोप एव न प्रमेति भावः। नन्वात्मनो ज्ञानशक्त्यभावेऽध्याससाक्षी न स्यादित्यध्यासे मानाभाव इत्यत आह- **स चेति** ॥ **उच्यत इति** ॥ तथा व्यवहारमात्रमित्यर्थः । कुत इत्यत आह- **तस्येति** ॥ तर्हि साक्षिभास्यार्थोऽपि मिथ्या स्यादित्य-तोऽभिमतापादनमिदमित्याह- **यथेति** ॥ जडवदिति स्वमतेन दृष्टान्तः । तत्र द्वे निदर्शयति- **यथेति** ॥ तत्र यद्यपि स्वरीत्या न्यायरीत्या वा स्वाप्नानामेकाज्ञानकल्पितत्वेन युक्तं दृष्टान्तीकरणम् । न चित्रभित्तेः । तत्र चित्राणां बुद्धिपूर्वं कृतत्वात् । तथाऽप्येककर्तृकल्पितत्वे दृष्टान्तीकरणम् । चित्रभित्तौ प्रतीयमानानां गजतुरगादि-जीवानां भ्रान्तबालकाज्ञानपरिकल्पितत्वे वा- **प्रतीतीति** ॥ अज्ञानोपादेयत्वात्प्रतीतेः । अज्ञानस्य ज्ञान-**(व्या.टि.)** निवर्त्यत्वादिति भावः । अन्यः प्रत्येष्यति तदित्यत आह- **अन्यस्येति** ॥ ईश्वरोऽस्तीति चेत्तत्राऽह- **ईश्वरभेदस्यापीति** ॥ **विच्छेदमात्रमिति** ॥ जीवविभागोऽनेकत्वमित्यर्थः । **अपव्रज्यते** । 'वृजी वर्जने' अस्माद्यक्, मुक्तो भवती-त्यर्थः । **त्रिविधा इति** ॥ भेदांशे उपाध्यंशत्वातिरेकरूपनिमित्तत्रैविध्यात् त्रैविध्योप-चारः । **वर्णयन्तीति** ॥ 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' इति चौरादिको धातुः । न तु 'सत्याप' इति परिगणितप्रातिपदिकम् । अतः स्वार्थिक एवायं णिजिति भावः । अपरिच्छिन्नस्याप्युपाधिपरिच्छिन्नस्यानेक-भावभवनं निदर्शयति- **यथैकमेवेति** ॥ नन्वेकस्य विजातीयानेकोपाधिसम्बन्धादनेकभावे तत्तन्निबन्धनानेक-वैचित्र्यसम्भवेऽपि अन्तःकरणरूपैकजातीयोपाधिपरिच्छिन्नस्य जीवेश्वरभावे तत्र बन्धमुक्तिरूपावान्तरविशेषः किन्निबन्धन इत्यतोऽस्ति निमित्तान्तरमित्याह- **तत्रेश्वर इति** ॥ **जीवास्त्विति च** ॥ उभयोः सत्यत्वे किमभेदपक्षपातेनेत्यत आह- **स्वाभाविक इति** ॥ औपाधिकस्यापि स्वाभाविकवन्नित्यत्वे किं नामभेदमात्रेणेत्यतो नेत्याह- **तत्र यस्येति** ॥ सर्वदैकरूपत्वे संसारमुक्त्योः को भेद इत्यत आह- **केवलमिति** ॥ **निवर्तत इति** ॥ मुक्ताविति शेषः। अस्य मतस्य भेदव्यवहारसम्पादनपटुधर्मविशेषरूपादतिरेकत एवातिरेको नान्य इत्याह- **अन्यदिति** ॥

**मूलम्- न तावदेकजीववादो युज्यते । एकाज्ञानपरिकल्पितत्वे च सर्वस्य सर्वमिदं परिकल्पितमिति जानतः पुनः शिष्यादिबोधनं न युज्यते । न हि स्वप्नोऽयमिति निश्चित्य स्वाप्नपुत्रदायार्थं यतते । स्वप्ने तु स्वाप्नत्वाज्ञानादेव यतते । न च बहूनां दृश्यमान-त्वादस्याज्ञानपरिकल्पितमिदमिति निश्चयो युज्यते ।**

**(त.मं.)** स एकजीववादी प्रष्टव्यः । किं गुर्वज्ञानपरिकल्पितं विश्वम् । आहोस्वित् शिष्याज्ञान-परिकल्पितमिति । गुर्वज्ञानपरिकल्पितत्वे दूषणमाह- **सर्वमिदमिति** ॥ यथा स्वप्ने यतते तथा अत्रापि यततामित्यत आह- **स्वप्ने त्विति** ॥

**टीका-** एतेष्वेकजीववादिनोऽत्यन्तविरुद्धा इति तन्निराकरणमादावारभते- **न तावदिति** ॥ तावच्छब्दः क्रमापेक्षः ।

**न युज्यते** प्रमाणशून्यत्वात् तद्विरुद्धत्वाच्च। ननु विप्रतिपन्नं सर्वं जीवजडात्मकमेकजीवाज्ञानपरिकल्पितं दृश्यत्वात् स्वप्नवदित्यनुमानसद्भावात् कथमत्र प्रमाणाभाव इति चेदत्र वक्तव्यम्- एवमनुमिमानेन सर्वस्य कल्पको जीवोऽमुक इति निश्चितो न वा। आद्ये किमसाविदानीमैक्यप्रवणो भेदप्रवणो वा । प्रथमेऽपि किं गुरुः शिष्यो वा। आद्ये दोषमाह- **एकेति ।।** सर्वस्य जीवजडात्मकस्य एकजीवाज्ञानपरिकल्पितत्वपक्षे केचित्खलु मायावादिनो जीवजडेश्वरकल्पनानिमित्तमज्ञानमुपाध्यवच्छिन्नजीवाश्रितं मन्यन्ते । अन्ये तु सत्यज्ञानानन्तानन्द-स्वरूपब्रह्माश्रितमिति। अपरे तु जीवत्वब्रह्मत्वविवक्षां विहाय स्वरूपमात्राश्रितं जीवभागपक्षपाति यथा दर्पणो बिम्बप्रतिबिम्बविवक्षां विना मुखमात्रसम्बन्धी प्रतिबिम्बपक्षपातीति। तत्र ये जीवाज्ञानवादिनस्तान् प्रतीदं वक्ष्यमाणं दूषणाभिधानमिति ज्ञापनाय एकाज्ञानपरिकल्पितत्वे च सर्वस्येत्युक्तम्। तेन यदुक्तं परैः 'गुरुशिष्यादिशब्दैः किं केनचित्परिच्छेदेन कवलीकृतं चैतन्यमभिधीयते किं वा निरस्तभेदम्। नाऽद्यः। परिच्छिन्नस्य परिकल्पितत्वादेवाविद्या-श्रयत्वानङ्गीकारात् । द्वितीये तु न वक्ष्यमाणदोषः' इति । तत्परिहृतं भवति । पक्षद्वयस्य प्रकारान्तरेण निराकरिष्यमाणत्वात् । विदिततत्त्वो हि गुरुर्भवति । ततश्च सर्वमिदं जीवजडात्मकं मदविद्या-परिकल्पितमिति जानतस्तस्य पुनः शिष्यश्रेयोऽर्थिनो नरान्तरबोधनं न युज्यते। शिष्यादीनां कल्पितत्वेन मोक्षरहितत्वेन च निश्चितत्वात् ।

तथाऽपि कुतो न युज्यत इत्यतो यो येन कल्पिततया ज्ञातो न तत्पुरुषार्थायासौ यतत इति व्याप्तिदर्शनार्थं दृष्टान्तमाह- **न हीति ।।** स्वप्नादुत्थित इति शेषः । परप्रसिद्ध्या चेदं दृष्टान्ताभि-धानम् । स्वपक्षे स्वप्नस्य सत्यत्वात् । तदीयदायार्थमयतनं तु वासनामयस्य विनष्टत्वज्ञानात्। उभयप्रसिद्ध्या तु मृतपुत्रो भ्रान्त्या पुत्रं प्रतीत्य भ्रान्तेरुत्थितः कल्पित एवायमिति निश्चित्य तदीयदायार्थं न हि यतत इति दृष्टान्तोऽभिधातव्यः।

ननु च गुरुर्विदिततत्त्वोऽपि ज्ञानस्यापरिपक्वत्वात्, अविद्यायाः कार्त्स्न्येनानिवृत्तत्वात् शिष्यादिकं पश्यति। अतस्तन्मोक्षार्थं बोधनं कुर्यात्। यथा स्वप्ने पुत्रं पश्यन् तदीयदायार्थं यतते। स्वप्नादुत्थितस्तु पुत्रमेव न पश्यति। तस्मादयतनं तस्य युक्तमित्यत आह- **स्वप्ने त्विति ।।** न तु दर्शनमात्रेणेत्येवशब्दार्थः।

एतदुक्तं भवति- न प्रवृत्तौ दर्शनमात्रं कारणम्। किन्तु कल्पितत्वाज्ञानसहितम्। दिङ्मोहादौ सत्यपि दर्शने कल्पितत्वनिश्चयोत्तरकालं प्रवृत्त्यभावात्। स्वप्ने तु कल्पितत्वानिश्चयात्प्रवर्तते। अतो गुरुः शिष्यादिकं पश्यन्नपि कल्पितत्वनिश्चयान्न प्रवर्तेतैवेति । अपरोक्षज्ञानाभावात् प्रयतत इति चेन्न । दिङ्मोहादौ परोक्षज्ञानमात्रस्यापि प्रवृत्तिप्रतिबन्धकत्वदर्शनात्। किञ्च शब्दादेवाप-रोक्षज्ञानमुत्पद्यत इत्यस्मिन्पक्षे गुरोरपरोक्षज्ञानाभावोऽसम्भावित एव। संस्कारात् प्रवृत्तिरित्यपि न युक्तम्। न ह्ययं वेगादिवद्बलात्प्रवर्तयति। किन्तु निश्चितार्थानुसन्धानप्रतिबन्धेन । ततश्च भिक्षाटनादौ घटतां नाम कथञ्चित् प्रवृत्तिः। अद्वैतं बोधयंस्तु कथं तदनुसन्धानहीनः स्यात्।

गुरुरेव सत्यो जीवः, तदज्ञानकल्पितं सर्वमिति निश्चयमङ्गीकृत्येदं दूषणमुक्तम्। निश्चय एवायं तव नोपपद्यत इत्याह- **न चेति ।। बहूनां** जीवानाम्। **अस्य** गुरोरेव। ननु यदि बहवो दृश्यन्ते तर्हि कथं ते चेतना, घटादिवत्। तत्कथमनिश्चय इति चेद्, गुरुरपि दृश्यते न वा। आद्ये सोऽप्यचेतन इति कथं कल्पकजीवत्वेन निश्चीयते। द्वितीये तु सुतराम्। बुद्ध्यनारूढस्य तथा निश्चेतुमशक्य-त्वात्। यद्यपि निश्चयपक्षत्रयदूषणावसान एवैतद्वक्तव्यं साधारणत्वात् । तथाऽपि विलम्ब-मसहमानेनात्रैवोक्तम्। एवं शिष्यादिविषयेऽपि निश्चयो निराकार्यः।

अथ वा गुरुपक्ष एवेदं दूषणम् । तथा हि, किं सर्वेऽपि गुरवः कल्पकाः किं वा कश्चिद् गुरुः । नाऽद्यः । एकजीववादपरित्यागापत्तेः। द्वितीये दोषमाह- **न च बहूनामिति ।।** बहूनां गुरूणाम्। **अस्य** गुरुव्यक्तिविशेषस्य ।

**(र.टि.) स्वपक्ष इति ॥** तथा च 'सर्वमिदं परिकल्पितमिति जानतः' इति मूलोक्तस्य कल्पिततया निश्चितत्वस्य हेतोरभावाद् दृष्टान्तस्य साधनविकलत्वमिति भावः । ननु स्वप्नादुत्थितस्य प्रवृत्तिविषयदर्शनरूपकारणाभावादेव प्रवृत्त्यभावोपपत्तौ न कल्पितत्वज्ञानस्य प्रतिबन्धकत्वं कल्पनीयम् । तथा च प्रकृते कारणसत्त्वात् प्रवृत्तिर्भवि-ष्यतीत्याशयेन शङ्कते- **ननु च गुरुरिति ॥** स्वप्ने त्वित्यनेन कथं कल्पितत्वज्ञानस्य प्रतिबन्धकत्वमुपपादितमित्यत आह-**एतदुक्तं भवतीति ॥ अपरोक्षज्ञानाभावादिति ॥** गुरोः शिष्यादौ कल्पितत्वापरोक्षज्ञानाभावादि-त्यर्थः । कल्पितत्वापरोक्षज्ञानस्यैव प्रतिबन्धकत्वं, न परोक्षज्ञानस्येति भावः । **दिङ्मोहादाविति ॥** सूर्योदयवत्त्वा-न्नेयं प्रतीचीति प्रतीचीत्वकल्पितत्वपरोक्षज्ञानमात्रस्यापि भ्रमरूपप्रतीचीत्वदर्शनप्राप्तप्रवृत्तिप्रतिबन्धकत्वादि-त्यर्थः । **गुरोरेवेति ॥** अनेन अस्यैवेत्येवकारसम्बन्ध उक्तो भवति । **तत्कथमिति ॥** अचेतनानामकल्पकत्व-निश्चयादिति भावः । **निश्चितपक्षत्रयेति ॥** उर्वरितैक्यप्रवणशिष्यादिनिश्चितपक्षत्रयेत्यर्थः ।

**(रा.टि.)** 'प्रमाणाभाव इति चेत्' इत्यस्यैकाज्ञानेत्यादिमूलोक्तदूषणमग्रे 'विदिततत्त्वो हि' इत्यादिना विवरिष्यंस्तद्दूषणघटनाय विकल्पयति- **अत्र वक्तव्यमित्यादिना ॥ ऐक्यप्रवण इति ॥** ऐक्याभिनिवेश-वानित्यर्थः । **आद्य इति ॥** ऐक्यप्रवणो गुरुरेव कल्पकत्वेन निश्चित इति पक्ष इत्यर्थः । शिष्याज्ञानेत्यग्रे कथनादाद्य इत्युक्तिः । अस्मिन्नपि ब्रह्माश्रिताज्ञानकल्पितं जगदिति मते शुद्धचिदाश्रिताज्ञातनकल्पितमिति मते च मूलोक्त-स्यालग्नत्वेन मतविशेष एव घटनाय मतभेदमाह - सर्वस्येत्यादिना प्रतिबिम्बपक्षपातीत्यन्तेन । ननु शुद्ध-चिदाश्रितत्वे कथं जीवे आविद्यकः संसार इत्यतस्तद्दृष्टान्तमाह- **जीवभागेति ॥** तेनेत्यस्य तत्परिहृतमित्य-**(रा.टि.)** न्वयः । यदुक्तं परैरित्यस्य तदित्यग्रेतनेन तच्छब्देनान्वयः । न दोष इतीतिपदस्य यदुक्तमिति पूर्वेणान्वयः । **न वक्ष्यमाणेति ॥** एकाज्ञानेति मूलोक्तेत्यर्थः । तयोः पक्षयोर्युक्तिविरुद्धतैवं सति नोक्ता स्यादित्यत आह- **पक्षद्वयस्येति ॥** ब्रह्माश्रितपक्षस्य चिन्मात्राश्रितपक्षस्य च 'आत्माऽज्ञानात्मकत्वे च जगत आत्मनो भिन्नत्वेन न दृश्येत' इत्यादिना भेदेनोपलम्भरूपदोषेण निरसिष्यमाणत्वादित्यर्थः । एकाज्ञानेत्यादि मूलं व्याचष्टे- **विदितेति ॥** स्वप्ने त्वित्यग्रे श्रवणादाह- **स्वप्नादुत्थित इति शेष इति ॥ स्वप्नस्येति ॥** स्वप्नप्रतीतवस्तुजात-स्येत्यर्थः । 'सन्ध्ये सृष्टिराह हि' इत्यधिकरणे तथोक्तेरिति भावः । सत्यत्वे स्वाप्नपुत्रदायार्थं स्वप्नादुत्थितः कुतो न प्रवर्तत इत्यत आह- **तदीयेति ॥** ननु गुरुः शिष्यबोधार्थं न प्रवर्तेत तन्निष्ठकल्पितत्वनिश्चयवत्त्वादिति प्रागुक्तहेतुरप्रयोजकः । तद्दर्शनादेव स्वप्नपुत्रदायार्थमिव प्रवृत्त्युपपत्तेरित्याशङ्कानिवर्तकत्वेन मूलमवतारयति- **ननु चेति ॥** पञ्चम्यन्तयोर्हेतुहेतुमद्भावेन पश्यतीत्यत्र हेतुत्वं ध्येयम् । ननु परेणोच्यते दर्शनं प्रवृत्तिहेतुरिति । भवद्भिस्तु कल्पितत्वाज्ञानसहितमिति । किमत्र नियामकमित्यत आह- **दिङ्मोहादाविति ॥** आदिपदेन पीतः शङ्ख इत्याद्यौपाधिकभ्रमपरिग्रहः । प्राच्यादौ प्रतीचीत्वादिभ्रमे सत्याप्तवाक्यादिना प्रतीचीत्वादेः कल्पित्वज्ञाने सत्यौपाधिकतया भ्रमरूपदर्शने सत्यपि प्रतीचीत्वादिनिमित्तकप्रवृत्तेरदर्शनादित्यर्थः । **अपरोक्षेति ॥** कल्पित-त्वापरोक्षेत्यर्थः । **परोक्षेति ॥** कल्पितत्वपरोक्षज्ञानमात्रस्यापीत्यर्थः । **प्रतिबन्धकत्वेति ॥** प्रागुक्तदिशेति भावः । **इत्यस्मिन्पक्ष इति ॥** मायावादिमत इत्यर्थः । दशमस्त्वमसीत्यादाविव नेह नानेत्यादिशब्दात् कल्पितत्वापरोक्षज्ञानसम्भवेनापरोक्षज्ञानाभावोऽसम्भावित एवेत्युक्तम् । **वेगेति ॥** शरादिगतवेगाख्यसंस्कार इवेत्यर्थः । वाय्वादिरादिपदार्थः । **निश्चितेति ॥** निश्चितो योऽर्थः तस्य यदनुसन्धानं तत्प्रतिबध्य प्रवर्तयति पूर्वसंस्कार इत्यर्थः । तथा च कल्पितत्वं हि तन्मते निश्चितोऽर्थः । तदनुसन्धानं गुरोः प्रतिबध्य संस्कारस्तं प्रवर्तयतीति वाच्यम् । अस्त्वेवं को दोष इत्यत आह- **ततश्चेति ॥** संस्कारेण कल्पितत्वानुसन्धानप्रतिबन्धतश्चे-त्यर्थः । एवकारो भिन्नक्रम इत्युपेत्यास्येत्यनूद्यार्थमाह- **अस्य गुरोरेवेति ॥ कथं ते चेतना इति ॥** दृश्यत्वस्य यद् दृश्यं तदचेतनमिति व्याप्तेरचेतनत्वनिश्चयादेकस्यैव गुरोरज्ञानकल्पितत्वं सर्वस्येति निश्चयो मम घटत इत्यर्थः । **सुतरामिति ॥** कथमित्यादिवाक्यस्यानुषङ्गः । **निश्चयपक्षत्रयेति ॥** ऐक्यप्रवणो गुरुः कल्पक इति निश्चयपक्ष एकः । ऐक्यप्रवणाः शिष्याः कल्पका इति निश्चयो द्वितीयः । भेदप्रवणः कल्पक इति निश्चयस्तृतीयः। प्राग्विकल्पिततादृशनिश्चयपक्षत्रयेत्यर्थः । स एव स्यादित्युक्त्यनन्तरं वक्तव्यमेतदित्यर्थः । **एवं शिष्यादीति ॥** बहुषु जीवेषु दृश्यमानेष्वयमेक एव कल्पक इति शिष्यविषये कथमेकजीववादिनो निश्चयः । 'ननु यदि बहवो दृश्यन्ते कथं ते चेतना इत्यादेर्निश्चेतुमशक्यत्वात्' इत्यन्तग्रन्थस्याप्यत्र योजनेन निराकार्य इत्यर्थः ।

**(श्री.टि.) क्रमापेक्ष इति ॥** बहुजीववादादिकं पश्चान्निराकुर्म इति भावः । **आद्ये दोषमाहेति ॥** सर्वस्य कल्पको जीवोऽमुक इति निश्चितः, स इदानीमैक्यप्रवणो गुरुश्चेति पक्ष इत्यर्थः । 'एकाज्ञानपरिकल्पितत्वे हि' इति मूले एकाज्ञानेत्यत्र कर्मधारयप्रतीतिनिवारणाय मध्यमपदलोपी समास इत्याशयेनाऽह- **एकजीवा-(श्री.टि.) ज्ञानेति ॥** एकजीवाज्ञानपरिकल्पितत्व इत्युक्तेः सार्थक्यं वक्तुमाह- **केचित्खल्वित्यादिना ॥ मायावादिनो** वाचस्पतिप्रभृतयः । **उपाधीति ॥** अविद्यारूपोपाधीत्यर्थः

। **ब्रह्माश्रितमिति ॥** एतन्मते सर्वज्ञे ब्रह्मण्येवाज्ञानम् । तथाहि- प्रमाणतस्सर्वं जानीयात्, स्वभावसिद्धया प्रज्ञया वा । नाऽद्यः । प्रमातृत्वस्याज्ञानसम्बन्धं विनाऽयोगात् । द्वितीये असङ्गस्वरूपस्याज्ञानं विना ज्ञातृत्वायोगात् । यथोक्तम्-

'स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् ।
तच्चोभयं विनाऽविद्यासम्बन्धं नैव सिध्यति ॥' इति ।

भ्रान्त्या सर्वं जानीयादिति पक्षेऽपि भ्रान्तेरज्ञानकार्यत्वादज्ञानसम्बन्धं विना भ्रान्तेरेवायोगादिति पक्षत्रये सर्वज्ञे ब्रह्मण्येवाज्ञानमिति भावः । **अपरे** विवरणकारादयः । **जीवत्वं** दुःखादिविशिष्टत्वम् । **ब्रह्मत्वं** सार्वज्ञादिविशिष्ट-त्वम् । **स्वरूपमात्रेति ॥** उभयानुस्यूतचिन्मात्राश्रितमित्यर्थः । 'आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला' इति तद्वचनादिति भावः ।

नन्वज्ञानस्योभयानुस्यूतचिन्मात्राश्रितत्वे ब्रह्म विहाय जीव एव कुतस्तस्य संसारापादकत्वमित्याशङ्क्योपाधेः प्रतिबिम्बपक्षपातित्वादित्याशयेनाऽह- **जीवभागपक्षपातीति ॥** तत्र दृष्टान्तमाह- **यथेति ॥ मुखमात्रेति ॥** मुखप्रतिमुखानुस्यूतमुखमात्रेत्यर्थः । **प्रतिबिम्बेति ॥** तत्रैव मालिन्यादिकमापादयतीत्यर्थः । दर्पणरूपोपाधेर्बिम्ब-सम्बन्धेन प्रतिबिम्बजनकत्वमुक्त्वा उभयानुस्यूतमुखमात्रसम्बन्धित्वं वदतोऽयमभिप्रायः । असम्बद्धस्य दर्पणस्य प्रतिमुखजनकत्वासम्भवाद् बिम्बं सम्बध्य जनयतीति वाच्यम् । तन्न युक्तम् । बिम्बत्वस्य प्रतिबिम्बसापेक्षत्वेन तदुत्पत्तेः पूर्वं तत्र बिम्बत्वस्यैवायोगात् । अत उभयानुस्यूतमुखमात्रसम्बन्धेनैव प्रतिमुखजनकत्वम्, एवं प्रकृतेऽ-पीति । **तेनेति ॥** एकाज्ञानपरिकल्पितत्वे च सर्वस्येति वचनेनेत्यर्थः । **परैः** जीवेऽज्ञानानङ्गीकारिभिः । **परिच्छेदेन** अज्ञानादिना परिच्छेदकेन । उपाधिनेति यावत् । **कवलीकृतं** विशिष्टम् । **निरस्तेति ॥** चैतन्यमात्रमेवेत्यर्थः । **परिकल्पितत्वादेवेति ॥** अविद्याकल्पितत्वादेवेत्यर्थः । तथा चाविद्यासिद्धौ तत्कल्पितजीवसिद्धिः, तत्सिद्धौ च तदाश्रिताविद्यासिद्धिरित्यन्योन्याश्रयादित्यर्थः । यथोक्तं परैः 'पूर्वसिद्धतमसो हि पश्चिमो नाऽश्रयो भवति नापि गोचरः' इति । **वक्ष्यमाण इति ॥** 'शिष्यादिबोधनं न युज्यते' इत्यादिर्वक्ष्यमाण इत्यर्थः । चैतन्यमात्रस्य शिष्याबोधकत्वादिति भावः । **तत्परिहृतं भवतीति ॥**

अयमभिसन्धिः । कल्पकजीवस्य गुरुत्वपक्षे यदत्र दूषणमुच्यत उत्तरत्र शिष्याज्ञानपरिकल्पितमित्यङ्गीकार इति शिष्यस्य कल्पकत्वपक्षे च यद्दूषणमुच्यते तदयुक्तम् । यदि गुरुशिष्यशब्दाभ्यामविद्याविशिष्टचैतन्याभि-प्रायेण दूषणं भवद्भिरुच्यते तर्ह्यनुक्तोपालम्भः । अन्योन्याश्रयेण मया तत्राज्ञानानङ्गीकारात् । ततश्चैक-जीवाज्ञानपरिकल्पितत्वे शिष्याज्ञानपरिकल्पितत्व इत्ययमंशो व्यर्थः स्यात् । यदि च चैतन्यमात्रं गुरुशिष्य-शब्दाभ्यामभिप्रेतं तर्हि चैतन्यस्य शिष्यादिबोधकत्वाद्यभावेनात्र शिष्यादिबोधनं न युज्यत इति कथनमुत्तरत्र 'सम्यग्ग्रन्थाधिगमस्येति सम्यग्ग्रन्थाधिगन्तृत्वकथनं चायुक्तं स्यात्' इति यत्परैर्जीवेऽज्ञानानङ्गीकारिभिर्वादि-**(श्री.टि.)** भिर्दूषणमुक्तं तदेकजीवाज्ञानपरिकल्पितत्वे उत्तरत्र शिष्याज्ञानपरिकल्पितत्व इति वचनेन परिहृतं भवति । न ह्यस्माभिस्त्वां प्रति दूषणमभिधीयते, किं नाम येऽविद्याविशिष्टचैतन्ये जीवे गुरुशिष्यादिशब्दवाच्ये अज्ञानवादिनः तान् प्रत्येवेत्यनेन सूचितत्वादिति ।

ननु सर्वज्ञब्रह्माश्रितं चिन्मात्राश्रितं चाज्ञानमिति पक्षद्वयं विहाय जीवाश्रिताज्ञानपक्ष एव कस्माद्दूषणमुच्यते भगवत्पादैरित्यत आह- **पक्षद्वयस्येति ॥** 'सर्वमिदं परिकल्पितमिति जानतः' इत्युक्तस्य परिकल्पितत्वज्ञान-स्याऽवश्यकत्वमुपपादयति- **विदिततत्त्वो हीति ॥** जीवजडात्मकप्रपञ्चस्याविद्यापरिकल्पितत्वमेव हि तन्मते तत्त्वम् । तदज्ञाने तस्य गुरुत्वमेव न स्यात् । विदिततत्त्वस्यैव गुरुत्वात् । अतो गुरुत्वान्यथाऽनुपपत्त्या जीव-जडात्मकप्रपञ्चस्याविद्याकल्पितत्वज्ञानमावश्यकमिति सिध्यतीत्याशयः । **निश्चितत्वादिति ॥** अनेन शिष्याः गुरुणा श्रेयोऽर्थं न प्रयतितव्याः, तेन परिकल्पिततया निश्चितत्वात् । यद् येन कल्पिततया निश्चितं न तत् तत्प्रवृत्तिविषय इत्यनुमानं सूचितं भवति । **तथाऽपीति ॥** दृष्टान्ताभावेन व्याप्त्यनिश्चयादुक्तानुमानेऽप्रयोजकतेति भावः । **स्वपक्ष इति ॥** तथा चास्मन्मते स्वप्ने हेतोरभावात्साधनवैकल्यं स्यादिति भावः । ननु यदि परप्रसिद्धचैवेदं दृष्टान्ताभिधानं तर्हि भवत्सिद्धान्ते स्वाप्नस्य सत्यत्वात्तदीयदायार्थं स्वप्नादुत्थितो यतेतैवेत्यत आह-**तदीयेति ॥** अयतनं तु अस्मन्मते युक्तमिति शेषः । ननु प्रवृत्तौ प्रवृत्तिविषयदर्शनं कारणम् । तदस्ति प्रकृते, ततस्तद्बोधनार्थं प्रवृत्तिर्युक्ता । स्वप्नादुत्थितस्य प्रवृत्तिविषयदर्शनाभावादेव तदीयदायार्थमप्रवृत्तिर्युक्ता । स्वप्ने तु प्रवृत्तिविषय-दर्शनसद्भावादेव प्रवर्तत इत्याशङ्कते- **ननु चेति ॥ दर्शनमात्रेणेति ॥** प्रवृत्तिविषयदर्शनमात्रेणेत्यर्थः ।

एतदुक्तं भवतीत्यादेरयमाशयः । प्रवृत्तिविषयदर्शनमात्रं न प्रवृत्तौ कारणम् । तथात्वे प्राच्यां प्रतीची-त्वारोपानन्तरं तत्र प्रतीचीत्वं कल्पितमिति कल्पितत्वनिश्चयानन्तरमपि प्रवृत्तिः स्यात् । प्रतीच्यां दिशि प्रवृत्त्यर्थिनः प्रवृत्तिविषयप्रतीचीत्वदर्शनस्य

कल्पिततत्वनिश्चयरूपस्य सत्त्वात् । अतः कल्पिततत्वाज्ञानसहितं प्रवृत्तिविषयदर्शनं प्रवृत्तौ कारणमिति वाच्यम् । स्वप्ने त्वेतत्कारणसद्भावाद्युक्ता प्रवृत्तिः । प्रकृते तु गुरौ शिष्यादिदर्शनरूप-विशेष्यसद्भावेऽपि विदिततत्त्वस्यैव गुरुत्वेन तदन्यथाऽनुपपत्त्या शिष्यादिप्रपञ्चस्य कल्पिततत्वज्ञानस्यैव सद्भावेन कल्पिततत्वाज्ञानरूपविशेषणाभावेन कल्पिततत्वाज्ञानसहितप्रवृत्तिविषयदर्शनरूविशिष्टस्य प्रवृत्तिकारणस्याभावेन शिष्यादिबोधने प्रवृत्तिर्न स्यादित्युक्तं युक्तमेवेति । ननु प्रवृत्तौ कल्पिततत्वापरोक्षज्ञानाभावसहितं प्रवृत्तिविषयदर्शनं प्रयोजकमित्युच्यते । प्रकृते च गुरोः शिष्यादौ कल्पिततत्वापरोक्षज्ञानाभावसद्भावाद्युक्ता शिष्यादिबोधने प्रवृत्तिरित्याशङ्कते- **अपरोक्षेति ॥ दिङ्मोहादाविति ॥** नेदमपि प्रवृत्तौ प्रयोजकम् । प्राच्यां प्रतीचीत्वाऽरोपा-नन्तरं सूर्योदयवत्त्वान्नेयं प्रतीचीति केनचिदाप्तेनोक्ते तद्वाक्यजन्यकल्पिततत्वपरोक्षज्ञानेनापि प्रतीच्यां कार्यार्थी न प्रवर्तत इत्यनुभवसिद्धम् । एवं च कल्पिततत्वापरोक्षज्ञानाभावसहितप्रवृत्तिविषयदर्शनसद्भावात् प्रवृत्तिः स्यात् । न भवति च प्रवृत्तिः, अतो व्यभिचारान्नेदमपि प्रयोजकमिति भावः । कल्पिततत्वापरोक्षज्ञानाभावसहितस्य प्रवृत्तिविषयदर्शनस्य प्रवृत्तिजनकत्वमङ्गीकृत्य दूषणमुक्तम् । वस्तुतस्तु नेदं प्रयोजकं गुरौ त्वया वक्तुं **(श्री.टि.)** शक्यते । तस्यापि कल्पिततत्वापरोक्षज्ञानसद्भावात् । न च तस्याऽऽगमेन कल्पिततत्वविषयकं परोक्षज्ञानमेवास्तीति वाच्यम् । दशमस्त्वमसीति वाक्ये प्रयुक्तेऽहं दशमोऽस्मीत्यपरोक्षज्ञानं शब्दादुत्पद्यत इति त्वयाऽङ्गीकृतत्वेनाऽऽगमेनापि गुरोः कल्पिततत्वापरोक्षज्ञानस्यैव जायमानत्वेन उक्तप्रयोजकाभावात् प्रवृत्तिरयुक्तै-वेत्याह- **किञ्चेति ॥** ननु गुरोस्तत्त्वज्ञानाभावदशायां तावदकल्पिततत्वज्ञानमस्ति । तज्जन्याकल्पिततत्वसंस्कारस्य तत्त्वज्ञानदशायामपि सत्त्वेन तावन्मात्रादेव युक्ता शिष्यादिबोधने प्रवृत्तिरित्याशङ्कते- **संस्कारादिति ॥ अयं** संस्कारः । **वेगादिवदिति ॥** यथा वेगसंस्कारः शरं पातयति तद्वदित्यर्थः । **बलादिति ॥** प्रवृत्तीच्छाशून्य-मपीत्याशयः । **निश्चितार्थेति ॥** तत्त्वज्ञानदशायां निश्चितो योऽयमर्थः शिष्यादेः कल्पिततत्वरूपस्तदनुसन्धानं प्रतिबध्य शिष्यादिबोधने प्रवृत्तिं जनयति संस्कार इति वक्तव्यमित्यर्थः । ओमिति चेत्तत्राऽऽह- **ततश्चेति ॥ घटतां नामेति ॥** निश्चितार्थानुसन्धानाभावेऽपि भिक्षाटनादौ प्रवृत्तिसम्भवादित्यर्थः । अद्वैतं बोधयन्निति हेतुगर्भं विशेषणम् । ब्रह्मैकमेव तत्त्वमितरन्मिथ्येत्येवम् 'एकमेवाद्वितीयम्' 'नेह नानाऽस्ति किञ्चन' इत्यादिना शिष्यं बोधयन्गुरुः कथं कल्पिततत्वानुसन्धानहीनस्स्यात् । तदनुसन्धानाभाव उक्ताद्वैतबोधनमेवानुपपन्नमिति भावः ।

**कथं त इति ॥** तथा च दृश्यत्वाद्घटादिवदचेतना एवेत्यर्थः । **तत्कथमिति ॥** तथा च दृश्यमानानां बहूनामचेतनत्वेनाचेतनानां चाकल्पकत्वनिश्चयादस्य गुरोरेवाज्ञानकल्पितमिति निश्चयो युज्यत एवेति भावः। **सोऽप्यचेतन इति ॥** अन्यथा अचेतनत्वसाधकदृश्यत्वहेतोस्तत्र व्यभिचारः स्यादिति भावः । **तथेति ॥** कल्पकजीवत्वेनेत्यर्थः । **यद्यपि निश्चयपक्षत्रयेति ॥** ऐक्यप्रवणो गुरुरिति निश्चयपक्षस्य दूषितत्वाद्, ऐक्यप्रवणः शिष्यः, भेदप्रवणो गुरुः, भेदप्रवणः शिष्यश्चेति निश्चयपक्षत्रयदूषणावसान इत्यर्थः । **एतदिति ॥** 'बहूनां दृश्यमानत्वात्' इत्यादिना क्रियमाणं दूषणमित्यर्थः । कुत इत्यत आह- **साधारणत्वादिति ॥** बहूनां दृश्यमानत्वादस्य गुरोरेवाज्ञानकल्पितमिति निश्चयो न सम्भवतीति दूषणस्य बहूनां दृश्यमानत्वादस्य शिष्यस्यैवा-ज्ञानकल्पितमिति निश्चयो न सम्भवतीति शिष्यस्य कल्पकत्वपक्षेऽपि साधारणत्वादिर्थः । तथा चैक्यप्रवणो गुरुः कल्पक इति पक्षदूषणानन्तरमेव न वक्तव्यमिति भावः । **अत्रैवेति ॥** ऐक्यप्रवणो गुरुरिति निश्चयपक्ष-दूषणानन्तरमेवेत्यर्थः। नन्वनेनैव प्रकारेण शिष्यः कल्पक इति निश्चयपक्षो भेदप्रवणो गुरुः शिष्यश्च कल्पक इति निश्चयपक्षो भगवत्पादैरेव कस्मान्न निराकृत इत्यतः साधरणत्वादित्युक्तमेव दर्शयति- **एवं शिष्यादीति ॥** तथा च बहूनां दृश्यमानत्वादस्यैव शिष्यस्याज्ञानेन परिकल्पितमिति निश्चयो न युज्यते । आदिपदेन भेदप्रवणो गुरुरिति पक्षेऽपि भेदप्रवणानां गुरूणां बहूनां दृश्यमानत्वादस्यैव भेदप्रवणस्य गुरोरज्ञानपरिकल्पितमिति निश्चयो न युज्यते । तथा भेदप्रवणः शिष्य इति पक्षेऽपि भेदप्रवणानां शिष्याणां बहूनां दृश्यमानत्वादस्यैव भेदप्रवणस्य शिष्यस्याज्ञानपरिकल्पितमिति निश्चयो न युज्यत इत्येवं शिष्यः कल्पक इति निश्चयपक्षः, भेदप्रवणो गुरुरिति च निश्चयपक्षः, भेदप्रवणः शिष्य इति च निश्चयपक्षः, एवं गुरुः कल्पक इति निश्चयपक्षनिराकरणे यः प्रकारो 'न च बहूनां दृश्यमानत्वात्' इत्यादिनोक्तस्तेनैव प्रकारेणोक्तरीत्या निराकार्य इत्यर्थः । अत्र शिष्यः कल्पक इति पक्षे **(श्री.टि.)** शिष्याज्ञानपरिकल्पितमित्यङ्गीकार इत्यनेन भेदप्रवणो गुरुः शिष्यश्च कल्पक इति च पक्षे स चैको जीवो यदि भेदवादीत्यादिनोत्तरत्र यद्दूषणमुच्यते भगवत्पादैस्तच्छिष्यादीनां कल्पकत्वनिश्चयपक्ष एव । अत्र तु निश्चय एव नोपपद्यत इत्युच्यत इति महान्भेद इति ज्ञातव्यम् । पूर्वं सामान्याकारेण गुरोः कल्पकत्वं न सम्भवतीत्येवंपरत्वेन 'न च बहूनाम्' इति मूलं व्याख्याय गुरुव्यक्तिविशेषस्यापि कल्पकत्वं न सम्भवती-त्येवंपरतया व्याचष्टे-**अथ वेति ॥**

**(पां.टि.)** अस्त्वेवमेकजीववादपदसूचितमैक्यवादिनामनेकविधत्वम् । तथाऽप्येकजीववादिनिराकरणमात्रेण नैक्यस्य युक्तिविरुद्धत्वादिसिद्धिः । तन्मतानामनिराकरणात् । न चोत्तरत्र तेषामपि निरासात्तत्सिद्धिः । सर्वमतानां निरस्यत्वे असति निमित्तविशेषे एकजीववादस्य प्रथमं निरासस्य निर्निमित्तत्वादित्यत आह- **एतेष्विति ॥** अनेकविधेष्वैक्यवादिष्वित्यर्थः । ननु अज्ञानकल्पितत्वे हि सर्वस्येति वक्तुं शक्यत्वात्तथाऽनुक्त्वा मूले 'एकाज्ञान-परिकल्पितत्वे हि सर्वस्य' इति किमर्थमुक्तमित्याशङ्क्य, अज्ञानकल्पितत्वपक्षाणामप्यनेकविधत्वात् तदनुक्तौ वक्ष्यमाणदोषस्य सर्वमतसाधारणत्वप्रतीतिः स्यात् । तन्निरासार्थं मतविशेषनिर्धारणाय तदुक्तमिति भावेन अज्ञानकल्पितत्वेऽपि मतभेदमाह- **केचिदित्यादिना ॥** स्वरूपमात्राश्रितत्वेऽज्ञानस्य तत्कार्यं स्वरूपमात्र एव स्यात् । जीव एव तु कुत इत्यत उपाधेः प्रतिबिम्बपक्षपातित्वाद्युक्तं जीव एव तत्कार्यदर्शनमिति भावेनोक्तम्- **जीवभागपक्षपातीति ॥** ननु चिन्मात्रसम्बन्धिनस्तस्य कथं प्रतिबिम्बे जीवे पक्षपात इत्यतो मुखमात्र-सम्बन्धिनोऽपि दर्पणस्य प्रतिमुखे पक्षपातवत् चिन्मात्रसम्बन्धिनोऽप्यज्ञानस्य स युक्त इत्याह- **यथेति ॥ अविद्याऽऽश्रयत्वानङ्गीकारादिति ॥** कल्पितस्याप्यज्ञानाश्रयत्वे अज्ञानसिद्धौ कल्पितसिद्धिः, तत्सिद्धौ चाज्ञानसिद्धिरित्यन्योन्याश्रयप्रसङ्गादिति भावः । नन्वनेन जीवाज्ञानपरिकल्पितत्वे दोषाभिधानात्तन्निरास-सिद्धावपि सत्यज्ञानानन्दस्वरूपब्रह्माश्रिताज्ञानपरिकल्पितत्वपक्षस्य जीवब्रह्मत्वविवक्षां विहाय स्वरूपमात्राश्रित-जीवभागपक्षपात्यज्ञानकल्पितत्वपक्षस्य चानेन निरासादुपपन्नत्वस्य च प्रसक्त्या जगतो नाज्ञानकल्पितत्वा-भावसिद्धिरित्यतः, अनेन दोषेण तस्या निरासेऽपि वक्ष्यमाणरीत्या दुष्टत्वेनानुपपन्नत्वसिद्ध्या युक्त एव जगतो अज्ञानकल्पितत्वाभाव इति भावेनाऽह- **पक्षद्वयस्येति ॥**

ननु गुरोस्तथा ज्ञानाभावादेव शिष्यबोधनं किं न स्यादित्यतः तथा सति गुरुत्वमेव न स्यादिति भावेन निमित्तनैमित्तिकभावोपपादनपूर्वकं वाक्याभिप्रायमाह- **विदिततत्त्वो हीति ॥ परप्रसिद्ध्या चेति ॥** पर-प्रसिद्ध्यैवेत्यर्थः । कुत इत्यतः स्वपक्षेऽर्थज्ञानात्मकस्य स्वप्नस्य सत्यत्वेन स्वाप्नपुत्रस्यापि सत्यतयाऽकल्पिततया निश्चित्वाद्धेतोस्तत्राभावेन साधनवैकल्यापत्त्या स्वरीत्या एतद्दृष्टान्तकथनस्यासम्भवादिति भावेनाऽह- **स्वपक्ष इति ॥** तर्हि तन्मते स्वप्नादुत्थितस्य कुतः स्वाप्नपुत्रदायार्थमयतनमित्यत आह- **तदीयेति ॥** तर्ह्युभयप्रसिद्ध्या दृष्टान्ताभावेन कथं 'यो येन कल्पिततया निश्चितो न तत्पुरुषार्थायासौ यतते' इत्युक्तव्याप्तिसिद्धिरित्यत आह- **उभयप्रसिद्ध्येति ॥** ननु गुरोर्विदिततत्त्वतया शिष्यादिकमज्ञानकल्पितमिति निश्चयेऽपि तस्य निश्चयस्यापरि-**(पां.टि.)** पक्वत्वेन शिष्यादिदर्शनप्रतिबन्धकपरिपक्वनिश्चयाभावेन शिष्यादिदर्शनसम्भवाद्युक्तैव तत्पुरुषार्थोद्देशेन तद्बोधनार्था प्रवृत्तिः । किञ्च संसारमूलकारणभूताविद्या यद्यप्येकैव । तथाऽपि तस्याः सन्त्येव बहव आकाराः । तत्रैको बन्धस्य परमार्थसत्यत्वविभ्रमहेतुः । द्वितीयोऽर्थक्रियासमर्थवस्तुकल्पकः । तृतीयस्तु अपरोक्षप्रतिभास-विषयाकारकल्पकः । तत्राद्वैतस्य सत्यत्वाध्यवसायेन समस्तद्वैतसत्यत्वकल्पकाकारो निवर्तते । अर्थक्रियासमर्थ-प्रपञ्चोपादानमायाकारस्तत्त्वसाक्षात्कारेण विलीयते । अपरोऽपि प्रतिभासयोग्यार्थावभासजनकस्तु मायालेशो जीवन्मुक्तस्यानिवृत्तः समाध्यवस्थायां तिरोहितोऽन्यदा देहावभासजगदवभासहेतुतयाऽनुवर्तते । प्रारब्धकर्म-फलोपभोगावसाने तु निवर्तते, इति परेषां प्रक्रिया । तथा चैषामाकाराणां मध्ये गुरोर्विदिततत्त्वतया परमार्थ-सत्यत्वविभ्रमहेतोराकारस्य-अद्वैतसत्यतानिश्चयेनार्थक्रियासमर्थवस्तुकल्पकमायाकारस्य च तत्त्वसाक्षात्कारेण निवृत्तावपि, प्रारब्धकर्मभोगस्यावशिष्टत्वेन तदवसानविरहान्नाऽऽशयस्यापरोक्षप्रतिभासयोग्यार्थावभासजनकस्य तृतीयाकारस्यानिवृत्तत्वेन तद्वशाच्छिष्यादिदर्शनसम्भवेन युक्ततरैव तत्पुरुषर्थोद्देशेन बोधनार्था गुरोः प्रवृत्तिरिति शङ्कते- **नन्विति ॥** नन्वेवं स्वप्नादुत्थितस्य स्वाप्नपुत्रदायार्था प्रवृत्तिः किं न स्यादित्यत आह- **स्वप्नादुत्थित इति ॥**

'स्वप्ने तु इति' मूले प्रतिज्ञामात्रस्य कृतत्वेऽपि हेतोरनुक्तत्वान्न विवक्षितार्थसिद्धिः । अन्यथा विपरीतार्थप्रतिज्ञया तस्यापि सिद्धिः स्यादित्यतः स्वयं हेतूक्त्या तामुपपादयति- **एतदुक्तं भवतीति ॥** न प्रवर्तेतैवेति पूर्वेणान्वयः। **अपरोक्षज्ञानाभावादिति ॥** गुरोः शिष्यादिकं कल्पितमिति कल्पितत्वापरोक्षज्ञानस्यैव प्रवृत्तिप्रतिबन्धकत्वेन तत्परोक्षज्ञानस्य प्रतिबन्धकत्वाभावाद् गुरोः कल्पितत्वपरोक्षज्ञानसद्भावेऽपि प्रवृत्तिप्रतिबन्धकापरोक्षज्ञाना-भावाद्युक्तैव तद्बोधनार्था प्रवृत्तिरिति भावः । **दिङ्मोहादाविति ॥** सूर्योदयवत्त्वेन नेयं प्रतीचीति प्रतीचीत्व-कल्पितत्वपरोक्षज्ञानमात्रस्यापि भ्रमरूपप्रतीचीत्वदर्शनप्राप्तप्रवृत्तिप्रतिबन्धकत्वदर्शनादित्यर्थः । अङ्गीकृत्यैव च कल्पितत्वापरोक्षज्ञानाभावं तत्परोक्षज्ञानस्यापि प्रवृत्तिप्रतिबन्धकत्वदर्शनात्प्रवृत्तिर्न स्यादित्यापादनं कृतम् । वस्तुतस्तु कल्पितत्वापरोक्षज्ञानस्यापि विद्यमानत्वाद् गुरोस्तत्त्वबोधनार्था प्रवृत्तिर्न स्यादेवेत्याह- **किञ्चेति ॥** ज्ञानेनाविद्यायां निवृत्तायामपि तत्संस्कारेण शिष्यादिदर्शनोपपत्त्या युक्ता तद्बोधनार्था प्रवृत्तिरित्याशङ्क्य निराकरोति- **संस्कारेति ॥** संस्कारस्याविद्याकार्यत्वे तन्निवृत्तौ अवस्थानानुपपत्तिः । न ह्युपादाने निवृत्ते कार्यमवस्थितं दृष्टम् । अकार्यत्वे

अविद्यातत्कार्ययोरन्यतरत्वाभावात्सत्यत्वापत्तिरिति सत्येव दोषे स्फुटत्वात् तमनुक्त्वा दोषान्तरमेवाऽह- **तर्ह्ययमिति गुरुरेवेति** ॥ गुरुरेव कल्पक इति निश्चयपक्षस्य दूषितत्त्वात् तन्नियमानु-पपत्तिव्युत्पादनपरस्यास्य ग्रन्थस्य पूर्वविरोधमाशङ्क्य परिहरति- **गुरुरेवेति** ॥ **निश्चयपक्षत्रयेति** ॥ गुरुरेव कल्पकः, शिष्य एव कल्पको, भेदप्रवण एव कल्पको जीव इति निश्चयपक्षत्रयेत्यर्थः। निश्चयपक्षत्रयावसान एवास्य दोषस्य वक्तव्यत्वे निमित्तमाह- **साधारणत्वादिति** ॥ **इदमिति** ॥ 'बहूनां दृश्यमानत्वात्' इत्यादिक-मित्यर्थः। न त्वनियमपक्ष इत्यर्थः ॥

**(व्या.टि.)** एवमनूदितेषु विरुद्धवादेष्वेकजीववादस्यैवादावपवादे बीजमाह- **एतेष्विति** ॥ ननु प्रतिपक्षमात्र-प्रतिक्षेपे हि स्वपक्षनिर्धारणं सम्भवति। न तदेकदेशप्रतिक्षेपे। प्रतिपक्षन्तरे विरोधिनि जागरूके स्वपक्षावधारणा-सम्भवात्। यथोक्तं गौतमसूत्रे 'विमृश्य पक्षप्रतिपक्षाभ्यां तत्त्वावधारणं निर्णयः' इति। अतस्तदेकदेश-निराकरणप्रतिज्ञा न मनोज्ञेत्यत आह- **तावच्छब्दः क्रमापेक्ष इति** ॥ न हेतुमन्तरेण प्रतिज्ञामात्रेणार्थसिद्धिः। वादिन्यनाश्वासादित्यतोऽभिसंहितहेतू दर्शयति-**प्रमाणेत्यादिना** ॥ आद्ये हेतोरसिद्धिं शङ्कते- **नन्विति** ॥ **अनुमिमानेनेति** ॥ जौहोत्यादिकादनुपूर्वात् 'मा निर्माणे' इत्यतः शानच्। **अमुक इति** ॥ नन्वमुक इति सुधायामत्र च निर्दिष्टं कथं निर्वोढव्यम्। अदसोऽकचा वा केन वा। न चाकचा निर्वाहः। अकचि हि सति 'अदस औत्वप्रतिषेधः साकच्कस्य वा, सात् उत्वं च' इति वार्तिकेनादस औत्वप्रतिषेधविकल्पे प्रतिषेधसंनियोगशिष्टं सादुत्वं प्रतिषेध एवेति तस्मिन्सत्यसुक इति, औत्वे 'तदोः' इति सत्वे चासकाविति भाव्यत्वेनामुक इत्यस्य कथमप्यभाव्यत्वात्। न द्वितीयः। कप्रत्ययस्य प्रागिवीयत्वेन प्राग्दिशीयत्वाभावेन विभक्तिसंज्ञाऽभावेन त्यदाद्यत्वाभावेनासान्तत्वप्रयुक्तमुत्वासम्भवात्। अकचा बाधाचेति चेत्, अत्राऽभाति

'सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्॥'

इत्युक्तेः, अदसोऽकचि वार्तिकादौत्वप्रतिषेधपक्षे परशब्दस्येष्टार्थत्वेन सत्वात्पूर्वं त्यदाद्यत्वे परत्वान्मुत्वे प्रसक्ते तस्य 'न मु ने' इत्यत्र नेति नमु इति वा योगविभागात्सत्वे कार्ये कदाचिदसिद्धत्वाभावेऽमुक इति रूपं निर्वाह्यम्। अन्यथा बहुपुराणकल्पसूत्रप्राचीननिबन्धप्रयोगानुपपत्तेः। यद्वा एतदर्थं 'सादुत्वं च' इति वार्तिकमपि स चादुत्वं च सादुत्वम्। अच्च संनिधानादिष्टानुरोधेन च सात्परो गृह्यते। अस्य च वेति सम्बध्य वैकल्पिकत्वं प्रतिषेधपक्षत्वं चायं विकल्प इति व्याख्यायते। अयं चोभयत्र विकल्पः। तथा चौत्वप्रतिषेधे सुत्वे 'असुक' इति, मुत्वे 'अमुक' इति, औत्वे तु 'असकौ' इति रूपत्रयं प्रामाणिकम् इति रहस्यम्। यद्वा लघुशब्देन्दुशेखरोक्त-रीत्या अदश्शब्दपर्यायस्यामुकशब्दस्य सत्त्वेन अमुक इति रूपं साधु। एतेनामुकशर्मेत्यादिप्रयोगोऽपि सिद्ध्यति। अधिकन्तु गुरुप्रभायाम्।

ननु पक्षविशेषप्रतिग्रहेण दूषणाभिधानं कुत इत्यतो दोषस्यासाधारणत्वात् पक्षाणां विजातीयत्वादित्याशयेन पक्षत्रयमनुवदति- **केचित्त्वखल्विति** ॥ एतदुक्तिलब्धफलमाह- **तेनेति** ॥ **परिहृतमिति** ॥ पक्षविशेषपरिग्रहेण विकल्पानवकाशादिति भावः। अवच्छिन्नचैतन्यस्याज्ञानानाश्रयत्वमते कल्पकपरगुर्वादिपदेन तद्ग्रहणस्य, चिन्मात्र ग्रहणे इष्टापत्त्या बोधकत्वापादनस्यायुक्तत्वेऽप्यज्ञानस्य जीवाश्रितत्वपक्षे दोषाभावादित्याकूतम्। प्रतिपक्षपक्षत्रये पक्षद्वयस्याविशिष्टत्वान्निराकरणन्यूनतेत्यत आह- **पक्षद्वयस्येति** ॥ जानत इति हेतुगर्भविशेषणमित्याशयेन व्याचष्टे- **विदितेति** ॥ स्वप्ने स्वप्नत्वनिश्चयाभावादाह- **स्वप्नादिति** ॥ (बा)बोधेन मिथ्यात्वज्ञानादिति शेषः। ननु किमीयः पक्षो निदर्शित इत्यत आह- **परेति** ॥ स्वपक्षे प्रवृत्त्यभावं स्वप्नादुत्थितस्य घटयति- **विनष्टज्ञाना-(व्या.टि.) दिति** ॥ ननूभयसिद्धं निदर्शनीयम्। अन्यथाऽन्यतरसाधनवैकल्येन दृष्टान्तस्य दुष्टत्वापातादित्यत आह-**उभयेति** ॥ नन्वयतने न कल्पितत्वनिश्चयः प्रयोजकः, किन्तु प्रतिवस्त्वदर्शनमिति वक्तुं दर्शनस्य प्रवृत्ति-प्रयोजकतामाशङ्कते- **ननु चेति** ॥ पञ्चमीप्रकृत्यर्थद्वयं दर्शनहेतुद्वयम्। अन्वयव्यतिरेकावुदाहरति- **यथेति** ॥ **स्वप्नादिति** ॥ मूलेऽवधारणं न दर्शनव्यवच्छेदकं, किन्तु तदीयावधारणव्यवच्छेदकमित्याह- **न दर्शनमात्रे-णेति** ॥ ननूभयप्रयोजकत्वेऽन्यतरेणार्थसिद्धिः स्यादित्यत आकूतमावेदयति- **एतदुक्तं भवतीति** ॥ **अज्ञान-सहितमिति** ॥ विशिष्टं प्रयोजकं(चो)नोभयमिति भावः। विशिष्टप्रयोजकतासाधनाय विशेष्यदलस्य व्यभिचारं दर्शयति- **दिङ्मोहादाविति** ॥ विशिष्टस्यान्वयं दर्शयति- **स्वप्ने त्विति** ॥ एवमापादकस्य प्रयोजकतां प्रसाध्याऽपादनप्रकारमाह- **अत इति** ॥ कल्पितत्वस्यापरोक्षज्ञानं प्रवृत्तिप्रतिबन्धकमित्याशयानः(येन)शङ्कते- **अपरोक्षेति** ॥ **परोक्षेति** ॥ शब्दादिजन्यस्येत्यर्थः। हेत्वसिद्धमाह- **किञ्चेति** ॥ **अस्मिन्पक्ष इति** ॥ 'दशमस्त्वमसि' इतिवत् 'तत्त्वमसि' इति युष्मच्छब्दश्राविणामहमस्मीति शाब्दापरोक्षोदय इति मायिपक्ष इत्यर्थः। **संस्कारादिति** ॥ भावनाभिधानादित्यर्थः। द्वारबाधात्तदयोग इति वक्तुं

तस्येतरसंस्कारवैजात्यमाह- **न हीति** ।। द्वारमाक्षिपति-**कथमिति** ।। ननु बहुदर्शनेऽपि जडत्वान्न कल्पकतेत्यतो व्याचष्टे- **जीवानामिति** ।। विशेषोक्तिः सावधारिणीत्याह- **गुरोरेवेति** ।। कथमित्याक्षेपे । दृश्यत्वस्य जडत्वव्याप्तेरित्यर्थः । **कथमिति** ।। दृश्यस्य जडत्वेन द्रष्टुश्चेतनत्वेन कल्पकत्वनिश्चयसम्भवादित्यर्थः। दृश्यत्वस्य जडत्वप्रतिबन्धं पराकर्तुं प्रतिबन्दीं गृह्णाति- **गुरुरपीति** ।। **सोऽपीति** ।। अन्यथा तत्र व्यभिचारः स्यादित्यर्थः । **तथा** कल्पकत्वेन । **दूषणेति** ।। असाधारणेत्यर्थः । **साधारणत्वादिति** ।। पक्षत्रयेऽपि साम्यादित्यर्थः । साम्यं दर्शयति- **एवमिति** ।। अस्यैव शिष्यस्येति, अस्यैव भेदप्रवणस्येति व्याख्येयमित्यर्थः । एवं पक्षत्रयसाधारणदूषणपरतया मूलं व्याख्यायासाधारण-परतयाऽपि व्याचष्टे- **अथ वेति** ।।

**मूलम्- स्वप्ने तु प्रबोधानन्तरमेकस्यावशिष्टत्वान्निश्चयः । न चात्र तथाऽस्ति । तस्य तस्य तथा तथा प्रतिपत्तव्यमित्यङ्गीकारे वस्तुनि विकल्पासम्भवादकल्पितमित्येव स्यात् । न च तथा प्रतिपत्तव्यमित्यत्र प्रमाणमस्ति ।**

**(त.मं.)** अत्रापि विश्वनिवृत्त्यनन्तरमेकस्यावशिष्टत्वान्निश्चय इत्यत आह- **न चात्रेति** ।। न हि भृशमात्मैक्योपास्तिमतामेकस्यापि इतः पूर्वं विश्वनिवृत्तिरासीत् । तस्य तस्याहमबाध्यो जीव इति प्रतिपत्तव्यमित्यङ्गीकारे वस्तुनि प्रतिपत्तिविकल्पासम्भवात् । सर्वजीवानामबाध्यत्वात् तदात्मकं विश्वमकल्पितमित्यस्मन्मतमेव प्राप्तं स्यात् । यथा यवाग्वा पयसा वा जुहुयादित्यादिक्रियायां विकल्पः एवं स्थाणुरयमिति वा पुरुषोऽयमिति वा जानीयादिति वस्तुज्ञाने विकल्पो न स्याद्धि । ननु अस्ति वस्तुज्ञाने विकल्पः । भगवान् कृष्ण इति वा राम इति वा प्रतिपत्तव्य इति । मैवम् । तत्र द्वयोरपि विकल्पकोटयोर्विद्यमानत्वाद्युगपदुभयप्रतिपत्तेरपि सम्भवात् । विकल्पस्याधिकारो-ल्लेखित्वात् ।

**टीका-** ननु न बहूनां दर्शनं कल्पकैकव्यक्तिनिश्चयाभावे हेतुः । स्वप्ने बहूनां दृश्यमानत्वेऽपि कल्पकैकव्यक्तिनिश्चयदर्शनादित्यत आह- **स्वप्ने त्विति** ।। नास्माभिर्बहुदर्शनमात्रं कल्पकैकव्यक्ति-निश्चयाभावे कारणत्वेनाभिप्रेतम् । किन्तु बहूनां दृश्यमानत्वाद्विनिगमकाभावाच्च न निश्चय इति । स्वप्ने चास्ति विनिगमकमिति निश्चयो युज्यते । प्रकृते तु तन्नास्तीति कथं निश्चय इति ।

स्यादेतत् । यदि प्रपञ्चकल्पकैकव्यक्तिनिर्धारणोपायाभावात् निर्धारणं नोपपद्यते तर्हि मोप-पादि । किमनेन निर्धारणेनेत्यनिश्चयपक्ष एवास्त्विति । मैवम् । निर्धारणाभावेऽनुमानप्रवृत्त्यनुप-पत्तेः । तथा हि- किं सर्वेऽपि जीवाः पक्षीक्रियन्ते । किं वा कल्पकत्वेनाभिमतव्यक्तिव्यतिरिक्ताः। नाऽद्यः । कल्पकस्यापि कल्प्यत्वप्रसङ्गात् । न द्वितीयः । व्यक्तिनिर्धारणाभावे तद्व्यतिरिक्तत्वेन पक्षविशेषणानुपपत्तेः । कल्पकातिरिक्ता इति विशेषणाददोष इति चेन्न । कल्पितत्वे सिद्धे कल्पक-सिद्धिः, तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयप्रसङ्गात् । दृश्याः सर्वे जीवा इति पक्षनिर्देश इति चेन्न । कल्पकस्यापि दृश्यत्वात् । अन्यथा एकजीवाज्ञानकल्पिता इति विशेषणस्याप्रसिद्धि-प्रसङ्गात् । तस्य स्फुरणमात्रेण विशेषणत्वोपपत्तिरिति चेन्न । कल्पककल्पितत्वनिश्चयात् प्रागस्य स्फुरणमेव, अन्येषान्तु दृश्यत्वमिति विवेक्तुमशक्यत्वादिति । किञ्च यदि कल्पको जीवो न निर्धारितः, तर्हि मोक्षसाधनज्ञानं केन साधनीयम् । सर्वैरपि मदज्ञानकल्पितं सर्वम्, अहमेव परमात्मेति मोक्षसाधनीभूता विप्रतिपत्तिः कर्तव्या । तत्र यः सत्यो जीवस्तस्य तथा प्रतिपत्त्या मोक्षो भवति, अन्येषां तु निवृत्तिरिति किमत्र दुर्घटमिति चेत्, किमत्र प्रतित्तिर्मानसी क्रिया उत तत्त्वज्ञानम् । नाऽद्यः । तस्य मोक्षसाधनत्वाभावात् । द्वितीये त्वाह- **तस्येति** ।। 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । वीप्सायां द्विर्वचनम् । **तथेति** मदज्ञानकल्पितं सर्वम्, अहमेव परमात्मेति **प्रतिपत्तव्यं** ज्ञातव्यम् ।

अयमर्थः- किमेताः सर्वाः प्रतिपत्तयस्तत्त्वविषया उत एका तत्त्वविषया अन्यास्तु भ्रान्ताः । आद्ये देवदत्तप्रतिपत्तेः

तत्त्वविषयत्वात्, देवदत्तः सत्यः यज्ञदत्तस्तु कल्पितः स्यात्। यज्ञदत्त-प्रतिपत्तेस्तत्त्वविषयत्वात् तद्वैपरीत्यं स्यात्। न चैतद्युक्तम्। एकस्मिन्नेव देवदत्तादौ वस्तुनि कल्पितत्वाकल्पितत्वरूपविकल्पासम्भवात्। न हि विरुद्धधर्मालिङ्गितं वस्त्वस्ति। द्वितीये त्वियं तत्त्वविषयेति निश्चायकाभावेन सर्वासामपि भ्रान्तत्वसम्भवादकल्पितमेव सर्वमिति किं न स्यादिति।

नैतदेवम्। सिद्धं तावदनुमानेन सर्वस्यैकजीवाज्ञानपरिकल्पितत्वं सामान्येन। तत्र सर्वैरेवं प्रतिपत्तिषु क्रियमाणासु यः सत्यो जीवस्तस्य प्रतिपत्तिः तत्त्वविषया तस्य मोक्षं साधयिष्यति। अन्यास्तु भ्रान्ता व्यर्था भविष्यन्ति। विशेषनिर्धारस्तु व्यर्थ इति चेत्, भवेदेवं यदि सर्वैस्तथा प्रतिपत्तयः क्रियेरन्। न चैवम्। सर्वे हि मोक्षाशया कुर्युः, विधानसामर्थ्याद् वा। नाऽद्यः। आत्मनः सत्यजीवत्वनिश्चयाभावे मोक्षस्याप्यनिश्चयात्। न हि कश्चिदनिश्चितप्रयोजनाय महान्तं क्लेश-मनुभवति। द्वितीये विधानमपीष्टसाधनताबोधनरूपं वा स्याद्राजाज्ञारूपं वा। न प्रथमः। उक्त-न्यायात्। द्वितीये त्वाह- **न चेति ॥ प्रमाणं** राजाज्ञारूपम्। तदेवमनुमानानुदयान्मोक्ष-साधनानुष्ठानासम्भवाच्चानिश्चयपक्षोऽनुपपन्न इति स्थितम्॥

**(र.टि.) उक्तन्यायादिति ॥** आत्मनः सत्यजीवत्वनिश्चयाभाव इति उक्तन्यायादित्यर्थः।

**(रा.टि.)** बहूनां दर्शनस्यानैकान्त्ये परेण चोदिते किमनेनोत्तरमुक्तमित्यत आह- **नास्माभिरिति ॥ अस्ति विनिगमकमिति ॥** एकाकिनोऽवशेष इति भावः। **मोपपादीति ॥** निर्धारणमुपपन्नं मा भूदित्यर्थः। **अनुमा-नेति ॥** सर्वस्य कल्पितत्वसाधकदृश्यत्वानुमानेत्यर्थः। **सर्वेऽपि जीवा इति ॥** सर्वजीवजडात्मकमिति प्रागुक्तपक्षशरीरप्रविष्टसर्वजीवपदेनेत्यर्थः। **अन्यथेति ॥** कल्पितत्वस्यैव बुद्ध्यनारोहे तद्घटितसाध्यस्याप्य-ज्ञानादप्रसिद्धिप्रसङ्गादित्यर्थः। **स्फुरणेति ॥** वृत्त्यविषयत्वेऽपि कल्पकजीवचितः स्वप्रकाशत्वात् स्फुरण-मात्रेणेत्युक्तम्। **विशेषणत्वेति ॥** साध्यविशेषणत्वेत्यर्थः। ननु ‘कर्तृकरणयोस्तृतीया’ इति तेन तेनेति तृतीयया भाव्यमित्यत आह- **कृत्यानामिति ॥** ‘कृत्याः प्राङ्ण्वुलः’ इति तृतीयाध्यायाऽद्यपादीयसूत्रेण ‘ण्वुल्तृचौ’ इति सूत्रात् प्राक् ये प्रत्ययाः ते सर्वे कृत्यसञ्ज्ञका भवन्तीत्युक्तत्वात्तन्मध्ये ‘तव्यत्तव्यानीयरः’ इति सूत्रोक्त-तव्यप्रत्ययस्यापि कृत्यसञ्ज्ञकत्वात्तद्योगे षष्ठीत्यर्थः। अस्फुटत्वादाह-**अयमर्थ इति ॥** शङ्कते-**नैतदेवमिति ॥** सर्वैस्तथा प्रतिपत्तव्यमित्येतद्, **एवं** भवद्भिर्विकल्पितरीत्या, न भवतीत्यर्थः। किं तर्हीत्यत आह- **सिद्धं ताव-दिति ॥** प्रागुक्तदृश्यत्वानुमानेनेत्यर्थः। **उक्तन्यायादिति ॥** आत्मनस्सत्यजीवत्वनिश्चयेत्याद्युक्तन्यायादि-त्यर्थः।

**(श्री.टि.) विनिगमकाभावाच्चेति ॥** गुरुव्यक्तिविशेषस्यैव कल्पकत्वमित्यत्र विनिगमकाभावाच्चेत्यर्थः। **विनिगमकं** प्रबोधानन्तरमेकस्यैवावशिष्टत्वरूपम्। **मोपपादीति ॥** मोपपद्यतामित्यर्थः। **अनुमानेति ॥** विप्रतिपन्नं जीवजडात्मकं सर्वम् एकजीवाज्ञानपरिकल्पितं दृश्यत्वात् स्वप्नवदिति त्वदुक्तानुमानेत्यर्थः। **कल्प्यत्व-प्रसङ्गादिति ॥** तस्यापि सर्वान्तःपातित्वादिति भावः। **व्यक्तिनिर्धारणेति ॥** व्यक्तिविशेषनिर्धारणेत्यर्थः। **अनुपपत्तेरिति ॥** प्रतियोगिज्ञानाभावादिति भावः। **अदोष इति ॥** सामान्याकारेण कल्पकस्य प्रसिद्धत्वादिति भावः। **कल्पकसिद्धिरिति ॥** कल्पकत्वस्य कल्पितत्वसापेक्षत्वादिति भावः। **दृश्यत्वादिति ॥** तथा च तस्यापि कल्पितत्वप्रसङ्गेनांशे बाध इति भावः। **अन्यथेति ॥** कल्पकस्य दृश्यत्वाभाव इत्यर्थः। **अप्रसिद्धीति ॥** एकजीवस्य ज्ञानविषयत्वाभावेन तद्घटितसाध्यस्याप्यज्ञानादिति भावः। ननु माऽस्तु कल्पकजीवस्य वृत्तिविषयत्व-रूपं दृश्यत्वम्। न च तद्घटितसाध्यस्याप्रसिद्धिरिति वाच्यम्। तस्य कल्पकजीवस्य स्वप्रकाशत्वेन प्रसिद्धिसम्भवात् साध्यविशेषणत्वोपपत्तेरुक्तदोषाभावादित्याशङ्कते- **तस्येति ॥ स्फुरणमात्रेणेति ॥** वृत्त्यतिरिक्तस्वरूप-प्रकाशमात्रेणेत्यर्थः। **कल्पककल्पितत्वेति ॥** तथा च सर्वस्य कल्पकेन कल्पितत्वसिद्धौ तस्य वृत्तिविषयत्व-रूपदृश्यत्वे कल्प्यत्वापत्त्या कल्पकत्वायोगेन तस्य स्फुरणमेव, अन्येषां तु दृश्यत्वमिति विवेकसिद्धिः। तत्सिद्धौ च स्फुरणमात्रेण तस्य विशेषणत्वोपपत्त्याऽप्रसिद्धविशेषणत्वाभावेनानुमानात् कल्पकेन कल्प्यत्वसिद्धि-रित्यन्योन्याश्रयः स्यादिति भावः। शङ्कते- **सर्वैरपीति ॥ मानसी क्रियेति ॥** अविद्यमानोपास्तिरित्यर्थः। **तस्या इति ॥** अविद्यमानोपास्तेरनर्थहेतुत्वादिति भावः। ननु ‘कर्तृकरणयोस्तृतीया’ इति कर्तरि तृतीया-विधानात्तेनेति तृतीयया भवितव्यं तस्येति, तु कथमित्यत आह- **कृत्यानामिति ॥**

'कृत्याः प्राङ्ण्वुलः' 'ण्वुल्तृचौ' इति सूत्रात् प्राक् ये प्रत्यया विहितास्ते कृत्यसञ्ज्ञाः स्युः । तेषां च कृत्यानां प्रत्ययानां प्रयोगे कर्तरि षष्ठी वा विकल्पेन स्यादिति सूत्रार्थः। तथा च तव्यप्रत्ययस्य कृत्यप्रत्ययत्वेन तद्योगे तस्येति षष्ठी युक्तेति भावः। **वीप्सायामिति** ।। 'बह्वर्थसङ्ग्रहो वीप्सा' इति वचनात् बह्वर्थसङ्ग्रहविवक्षायामित्यर्थः । **तद्वैपरीत्य-मिति** ।। यज्ञदत्तः सत्यो देवदत्तस्तु कल्पितः स्यादित्यर्थः। **विकल्पेति** ।। विरुद्धधर्मद्वयाऽलिङ्गितत्वेत्यर्थः। **विरुद्धधर्मालिङ्गितमिति** ।। विरुद्धधर्मद्वयाऽलिङ्गितमेकं वस्त्वित्यर्थः । तेन वस्तुतो गोत्वविरुद्धाश्वत्वालिङ्गित-वस्तुसद्भावाद् गोत्वाश्वत्वरूपविरुद्धधर्मद्वयाऽलिङ्गितगवाश्वरूपवस्तुद्वयसद्भावाच्च कथमेतदिति चोद्यानवकाश इति ज्ञातव्यम्। शङ्कते- **नैतदेवमिति** ।। **इष्टसाधनतेति** ।। मदज्ञानपरिकल्पितं सर्वम् अहमेव परमात्मेति प्रतिपत्तिर्मोक्षरूपेष्टसाधनत्वात्कर्तव्येत्येवमिष्टसाधनताबोधनरूपमित्यर्थः। **राजाज्ञारूपमिति** ।। अकरणे राजदण्डभयात्तदाज्ञारूपं विधानमवश्यं कर्तव्यमित्यर्थः । **उक्तन्यायादिति** ।। मां प्रतीदं मोक्षरूपेष्टसाधनतां बोधयतीति निश्चित्यैवं प्रतिपत्तयः कर्तव्याः । न चैवं सम्भवति । आत्मनः सत्यजीवत्वनिश्चयाभावे मोक्षस्या-प्यनिश्चयात् । न हि कश्चिदनिश्चितप्रयोजनाय महान्तं क्लेशमनुभवतीत्युक्तन्यायादित्यर्थः। ननु प्रमाणं नास्तीत्यनेन कथं द्वितीयपक्षप्रतिषेध इत्यतः प्रमाणपदं नियामकपरमित्याशयेनोक्तम्- **राजाज्ञारूपमिति** ।।

**(पां.टि.) सर्वे जीवाः पक्षीक्रियन्त इति** ।। सर्वं जीवजडात्मकम् एकजीवाज्ञानपरिकल्पितम् इति प्रतिज्ञायां जीवशब्देन सर्वे जीवाः पक्षतया अभिप्रेयन्ते, उत कल्पकव्यतिरिक्ता इति विकल्पार्थः। **कल्पकस्यापीति** ।। जीवत्वरूपपक्षतावच्छेदकाक्रान्ततया पक्षकोटिनिक्षिप्तत्वेन तत्र एकजीवाज्ञानपरिकल्पितत्वसिद्धौ कल्पकस्य कल्पितत्वापत्तेरनिवार्यत्वादिति भावः । **अन्यथेति** ।। एकजीवस्यादृश्यत्वे तदज्ञानेन तद्धटितैकजीवाज्ञान-कल्पितत्वरूपसाध्यस्याप्यज्ञानादित्यर्थः । कल्पकस्य दृश्यत्वाभावेऽपि स्फुरणाङ्गीकारेण ज्ञातत्वसम्भवान्न तद्घटितसाध्यस्याप्रसिद्धविशेषणत्वमिति शङ्कते- **तस्येति** ।। **कल्पककल्पितत्वनिश्चयात्प्रागिति** ।। तथा च कल्पककल्पितत्वनिश्चये सति तस्य न दृश्यत्वम्। किन्तु स्फुरणमेवेत्यस्यार्थस्य सिद्धिः, तत्सिद्धौ च स्फुरण-मात्रेण विशेषणत्वोपपत्त्या साध्यप्रसिद्ध्याऽप्रसिद्धविशेषणत्वाभावेन कल्पककल्पितत्वसिद्धिरित्यन्योन्याश्रय इति भावः। शङ्कते- **सर्वैरपीति** ।। ननु कर्मणि निष्पन्नप्रतिपत्तव्यशब्देन कर्मण उक्तत्वेऽपि तस्येति तच्छब्दोक्तस्य कर्तुस्तेन अनभिधानात् कर्तुः तिङाद्यनभिहिततया 'कर्तृकरणयोस्तृतीया' इति तृतीयायां तेन तेन तथा प्रतिपत्तव्यमिति तृतीयया भवितव्यम्। तस्य तस्येति षष्ठी तु कथम्? न च 'कर्तृकरणयोस्तृतीया' इति प्राप्ततृतीयायाः 'कर्तृकर्मणोःकृति' इति षष्ठ्या बाधितत्वात् तदुपपत्तिरिति वाच्यम् । तथा सति तेन प्रतिपत्तव्यमित्यभियुक्तप्रयोगेषु तृतीयाऽभावप्रसङ्गादित्यतो नित्यं प्राप्तायाः 'कर्तृकर्मणोः कृति' इति कृद्योगलक्षणषष्ठ्याः 'कृत्यानां कर्तरि वा' इति सूत्रे कृत्ययोगे विकल्पितत्वेन तृतीयाषष्ठ्योरुभयोरप्यभ्यनुज्ञानात् । तव्यप्रत्ययस्य च 'कृत्याः प्राङ्ण्वुलः' इति कृत्यप्रत्ययत्वात् तद्योगे तृतीयापक्षे तेनेत्यस्य षष्ठीपक्षे तस्येत्यस्य च उपपन्नतया न तृतीयाषष्ठ्योरनुपपत्ति-रित्याशयेनाऽह- **कृत्यानां कर्तरि वेति** ।। तस्य प्रतिपत्तव्यमित्येतावता पूर्णत्वात् किं द्विर्वचनेनेत्यत आह- **वीप्सायामिति** ।। **उक्तन्यायादिति** ।। आत्मनः सत्यजीवत्वनिश्चयाभावे मोक्षस्याप्यनिश्चयान्न तदाशया सर्वेषां प्रतिपत्तिकरणं सम्भवतीति भावः ।

**(व्या.टि.)** ननु बहुदर्शनं कल्पकैकव्यक्तिनिश्चयं प्रतिबध्य हि तदभावे कारणं वाच्यम्। तदेव न। तस्मिन् सत्यपि तदुत्पादादिति शङ्कते- **नन्विति** ।। **विनिगमकमिति** ।। प्रबोधानन्तरमेकस्यावशिष्टत्वात्तस्य सत्यत्वेन कल्पकत्वनिश्चयो युज्यते । अत्र तु विशेषाभावान्न निश्चय इति भावः। निश्चयपक्षदूषणसम्मत्याऽनिश्चय-पक्षमन्योऽनुमन्यते-**स्यादेतदिति** ।। **मोपपादीति** ।। मोपपादीति चिणन्तं माङ्योगादडभावश्चेति बोध्यम् । पक्षतावच्छेदकाभावेन पक्षीकरणायोगादित्यर्थः । पक्षीकरणप्रकारं निर्दिश्य दूषयति- **सर्वेऽपीत्यादिना** ।। **कल्प्य-त्वेति** ।। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतायाः सर्वपदेन सूचनादिति भावः। **अनुपपत्तेरिति** ।। प्रतियोगिविशेषितभेदज्ञाने तज्ज्ञानस्य हेतुत्वादित्यर्थः। पक्षान्तरं शङ्कते- **कल्पकेति** ।। कल्पकातिरिक्तत्वं पक्षीकृतानां कुतः सिद्धमिति वाच्यम्। कल्पितत्वादिति चेत्तत्राऽह- **कल्पितत्व इति** ।। **कल्पकत्वेति** ।। कल्प्यातिरिक्तत्वेनेति शेषः। कल्पकेति पाठे कल्पकमन्तरा कल्पितत्वासिद्ध्या परस्पराश्रयत्वमिति भावः । **दृश्यत्वादिति** ।। तेन सह साध्यसिद्धिप्रसङ्गात् । अन्यथा तत्रानैकान्त्यादित्यर्थः । **विशेषणस्येति** ।। अज्ञान-**(व्या.टि.)** विशेषणैकजीवस्येत्यर्थः । **स्फुरणेति** ।। **स्फुरणं** चैतन्यम् । **दृश्यत्वमिति** ।। वृत्तिव्याप्यत्वमि-त्यर्थः । एवं कल्पकैकव्यक्तिनिर्धारणाभावे कल्पनानुमानानुपपत्तिमभिधाय मोक्षसाधनप्रतिपत्त्यनुपपत्तिमप्याह- **किञ्चेति** ।। तत्र पण्डितम्मन्योऽन्यो मन्यते- **सर्वैरपीति** ।। तदेतत्पण्डितहृदयपुण्डरीकं न मण्डयतीत्याशयेन विकल्प्य पृच्छति- **किमत्रेति** ।। **क्रियेति** ।। विस्रम्भादिरूपेत्यर्थः । **अभावादिति** ।। 'नान्यः पन्थाः' इति

निषेधादिति भावः। ननु 'कर्तृकरणयोः' इति कर्तरि तृतीयया भाव्यमत आह- **कृत्यानामिति ॥ वीप्साया-मिति ॥** 'नित्यवीप्सयोः' इति सूत्रेण द्विर्वचनम्। स्थाने द्विर्वचनपक्षे स्थानिवत्त्वेन सुबन्तत्वाद्विशिष्टस्यैकपदत्वम्, द्वे इति वचनसामर्थ्याद् द्वे पदे समुदिते आदेश इत्यर्थोपगमात्प्रत्येकमपि पदत्वम्। तेन पदकार्याणि स्युः। द्विःप्रयोगपक्षे तु प्रत्येकं पदसञ्ज्ञा स्पष्टैव। समुदायस्य तु तयोरेव प्रकृतिप्रत्यययोर्द्विरुक्तत्वात् 'यस्मात्स विहितः' इति न्यायेन पदत्वम्। 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इति वार्तिकेन तु द्विर्वचने 'समासवच्च बहुलम्' इति समासवद्भावादैकपद्यं द्रष्टव्यम्। वस्तुनि विकल्पासम्भवहेतोरेकतरपक्षासाधारण्याद्विकल्प्याऽद्यकल्पे योजयति- **अयमर्थ इति ॥ भ्रान्ता इति ॥** पीता गावः, विभक्ता भ्रातर इत्यत्रेव महाभाष्योक्तदिशाऽत्रापि भ्रान्तो विषय आसामस्तीत्यर्शआद्यचि स्त्रीलिङ्गम्। अन्यथा 'नपुंसके भावे क्तः' इति नपुंसकत्वापत्तेः। द्वितीयं हेतुं योजयति- **नियामकाभावेनेति ॥** अथ वा विकल्पपदस्य कल्पितत्वाकल्पित्वरूपविरुद्धधर्मार्थत्वव(द्वीतत्वा)द् भ्रान्तत्वाभ्रान्तत्वरूपविरुद्धधर्मार्थत्वे तस्य विरुद्धर्मद्वयस्य वस्तुनि प्रतीतिसमूहे नियामकाभावेन व्यवस्थाया असम्भवादित्यर्थमुपेत्य वस्तुनि विकल्पासम्भवस्य पक्षद्वयसाधारण्यं द्रष्टव्यम्। विशिष्यानिश्चयेऽपि सामान्य-सिद्धिमात्रेण मोक्षसाधनानुष्ठानमाशङ्कते- **नैतदेवमिति ॥** निर्धार इति धृञो घञन्तम्। क्रियेरन्निति कर्मणि यकि 'रिङ् शयग्लिङ्क्षु' इति ऋतो रिङादेशे लिङात्मनेपदम्। स्वीयसत्यत्वानिश्चये मोक्षाशाऽसम्भवादि-त्यर्थः। प्रयोजनानिश्चयेऽपि कृष्यादाविव प्रवर्तेरन्नित्यत आह- **न हीति ॥** अनिश्चितप्रयोजनायाल्पक्लेशा-नुभवोऽस्तीत्यतो महान्तमित्युक्तम्। **उक्तेति ॥** उच्यमानपुरुषानिश्चयेन नियोज्याभावादित्यर्थः। **राजाज्ञा-रूपमिति ॥** अकरणे दण्डरूपमित्यर्थः। अनिश्चयपक्षस्य क्रमातिक्रमेण निराकरणे नोत्तरस्यावसर-सङ्गतिर्लब्धेत्याह- **तदेवमिति ॥**

**मूलम्- शिष्याज्ञानपरिकल्पितमित्यङ्गीकारे तस्यैवाऽचार्यभावे स्वयमेव कल्पितो भवतीति सम्यग् ग्रन्थाधिगमस्यैवानर्थहेतुत्वं स्यात्। न च कस्यचिन्मुक्तिः। ग्रन्था-धिगमे तस्यैव शिष्याज्ञानपरिकल्पितत्वप्राप्तेः।**

**(त.मं.)** शिष्याज्ञानपरिकल्पितत्वेऽपि दूषणमाह- **शिष्येति ॥**

**टीका-** निश्चितत्वपक्षेऽपि गुर्वज्ञानपरिकल्पितत्वपक्षो दूषितः। इदानीं शिष्याज्ञानपरिकल्पितत्व-निश्चयपक्षे दोषमाह- **शिष्येति ॥ परिकल्पितं** गुर्वादिकं समस्तमिति शेषः। स्वयमेव शिष्याज्ञान-परिकल्पितो भवति। न चासौ शिष्यं न बोधयतीति वाच्यम्। महावाक्यार्थाधिगमाभाव-प्रसङ्गात्। चतुर्भिश्च प्रकारैः विद्या उपयुक्ता भवतीति व्याख्यानस्यापि वाक्यार्थाधिगतिहेतुत्वेन प्रसिद्धत्वात्। तदिदमुक्तम्- **सम्यग्ग्रन्थाधिगमस्येति ॥** शिष्यत्वस्यानियतत्वादयमपि निश्चयो न युक्त इति भावः। न केवलमस्मिन्पक्षे कल्पकाव्यवस्थितिः। किं नाम मोक्षव्यवस्थाऽपि न सिध्यतीत्याह- **न चेति ॥** कुत इत्यत आह- **ग्रन्थेति ॥**

तथा हि-शिष्यः कल्पको गुर्वादिकं समस्तं कल्पितमित्यस्मिन्पक्षे शिष्यस्यैव मोक्षो वक्तव्यः। स च महावाक्यार्थाधिगमसाध्यः। उपलक्षणत्वपक्षे शिष्यबोधनेनैव सम्यग्भवतीत्युक्तम्। सति च शिष्ये तदज्ञानपरिकल्पितत्वप्राप्तेः इति। शिष्यत्वमुपलक्षणं न विशेषणमिति चेत्, तर्हि अनिश्चयपक्ष एवाऽपन्न इति।

**(र.टि.) चतुर्भिश्च प्रकारैरिति ॥**

'आचार्यात् पादमादत्ते पादं शिष्यः स्वबुद्धितः।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात्॥'

इति भावः। **कल्पितत्वप्राप्तेरिति ॥** साधनसम्पत्तौ कल्पितत्वप्राप्त्या न मोक्षः। कल्पितत्वप्राप्त्यर्थं शिष्यासम्पादने साधनाभावादेव न मोक्ष इति मोक्षव्यवस्थानं सिध्यतीति भावः। **शिष्यत्वमुपलक्षणमिति ॥** शिष्यबोधनेन गुरुत्वप्राप्तावपि प्राक् शिष्यत्वस्य स्थितत्वान्न कल्पकत्वापगमः। तदनपगमे तु कथं कल्पकत्वप्राप्तिरिति भावः। **तर्ह्यनिश्चयपक्ष एवेति ॥** न च 'बहूनां दृश्यमानत्वात्' इत्युक्तरीत्या शिष्यत्वोपलक्षितानां बहूनां दृश्य-मानत्वादस्यैव शिष्यत्वोपलक्षितस्य कल्पकत्वमिति निश्चयोऽनुपपन्न इति भावः।

**(रा.टि.)** कल्पित इत्यत्र शेषोक्त्याऽनुवदति- **स्वयमेव शिष्याज्ञानेति ॥ महावाक्येति ॥** तत्त्वमसी-त्याद्यैक्यवाक्येत्यर्थः।

**चतुर्भिश्च प्रकारैरिति ।।** 'ग्रहणाध्ययनप्रवचनसंव्यवहारेभ्यः' इति व्याकरणभाष्योक्त-रीत्या, ग्रहणं गुरुमुखात्, अध्ययनं चिन्तनम्, प्रवचनं शिष्यबोधनम्, संव्यवहारः तत्र तत्र सभासु व्यवहारः, इत्येवं चतुर्भिः प्रकारैरित्यर्थः ।

'आचार्यात्पादमादत्ते पादं शिष्यः स्वबद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ।।'

इत्यपि प्रकारचतुष्टयमाहुः । सम्बन्धटीकाऽनुगुण्यमस्य मूलस्य न प्रतीयत इत्यत आह- **शिष्यत्वस्येति ।। (रा.टि.) अयमपीति ।।** ऐक्यप्रवणः शिष्यः कल्पक इति निश्चय इत्यर्थः । **कल्पितत्वप्राप्तेरिति ।।** तथा च न मोक्षनिश्चय इति भावः । सत्यपि शिष्ये गुरुत्वप्राप्तावपि प्राक्तनशिष्यत्वेन कल्पकत्वोपपत्तेर्मोक्षनिश्चय इति भावेन शङ्कते- **शिष्यत्वमुपलक्षणमिति ।।** कादाचित्कं सदपि कल्पकत्वनिश्चायकं भविष्यतीति भावः । **अनिश्चयेति ।।** शिष्यत्वोपलक्षणयुतानामनेकेषां दृश्यमानत्वेनायमेवेति निश्चये नियामकाभावेनानिश्चयपक्ष एवाऽपन्न इति दृश्यत्वानुमाने प्रागुक्तदिशा साध्याप्रसिद्धिरित भावः ।

**(श्री.टि.) शिष्याज्ञानेति ।।** स्वशिष्याज्ञानपरिकल्पितो भवतीत्यर्थः । **शिष्यं** स्वशिष्यम् । कुतो न वाच्यमित्यत आह- **महावाक्यार्थेति ।।** शिष्यबोधनरूपव्याख्यानाभावे तत्त्वमसीत्यादिमहावाक्यार्थभूतैक्यज्ञानाभाव-प्रसङ्गादित्यर्थः । ननु व्याख्यानाभावे महावाक्यार्थाधिगमाभावः कुतः? श्रवणमननाभ्यामेव तदुपपत्तेरित्याशङ्का-परिहाराय सम्यक्पदाभिप्रायमाह- **चतुर्भिरिति ।।**

'आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ।।'

इति वचनोक्तैः चतुर्भिः प्रकारैरित्यर्थः । तथा च व्याख्यानाभावे एकप्रकारन्यूनतया सम्यङ्महावाक्यार्थाधिगमो न स्यादित्यर्थः । **कल्पकाव्यवस्थितिरिति ।।** सर्वस्यापि शिष्यरूपैकजीवाज्ञानपरिकल्पितत्वे तस्यैव गुरुत्वप्राप्तौ स्वशिष्याज्ञानपरिकल्पितत्वप्राप्त्या न तस्य कल्पकत्वम् । तच्छिष्यस्यैव कल्पकत्वे तस्याप्येवमेवेति कल्पका-व्यवस्थितिरित्यर्थः । **उक्तमिति ।।** चतुर्भिश्च प्रकारैरित्यादिनेत्यर्थः । **परिकल्पितत्वप्राप्तेरिति ।।** तथा च न मोक्ष इति शेषः । तथा हि- शिष्यादिबोधनरूपसाधनसम्पत्तौ स्वस्य कल्पितत्वप्राप्त्या न मोक्षः । कल्पितत्वाप्राप्त्यर्थं शिष्यासम्पादने व्याख्यातृत्वाभावेन सम्यङ्महावाक्यार्थाधिगमरूपसाधनाभावादेव न मोक्ष इति मोक्षव्यवस्था न सिध्यतीति भावः । **उपलक्षणमिति ।।** शिष्यः कल्पक इत्यस्यापि शिष्यत्वोपलक्षितः कल्पक इत्येवार्थः । तथा च शिष्यबोधनेन गुरुत्वप्राप्तावपि प्राक् शिष्यत्वस्य स्थितत्वेनेदानीं तदुपलक्षितत्वानपगमान्न कल्पक-त्वापगम इति कल्पकव्यवस्थितिर्युक्ता । कल्पकत्वानपगमे च तस्य कल्प्यत्वाभावान्मोक्षव्यवस्था च सेत्स्यतीति भावः । **तर्ह्यनिश्चयपक्ष एवाऽपन्न इति ।।** तथा च 'न च बहूनां दृश्यमानत्वात्' इति प्रागुक्तरीत्या शिष्यत्वोप-लक्षितानां बहूनां दृश्यमानत्वादस्यैव शिष्यत्वोपलक्षितस्य कल्पकत्वमिति निश्चयोऽनुपपन्न इति भावः ।

**(पां.टि.) चतुर्भिश्च प्रकारैरिति ।।**

'आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ।।'

इति वचनप्रतिपन्नैः चतुर्भिः प्रकारैरित्यर्थः । **अयमपीति ।।** शिष्याज्ञानपरिकल्पितमित्ययमपीत्यर्थः । **उक्त-मिति ।।** चतुर्भिश्च प्रकारैरित्यादिनेति शेषः । ननु शिष्यः कल्पक इत्यस्य शिष्यत्वोपलक्षितः कल्पक इत्येवार्थः। **(पां.टि.)** एवं च शिष्यबोधनदशायां गुरुत्वप्राप्तावपि प्राक् शिष्यत्वस्य स्थितत्वान्न कल्पकत्वागमः । तदनपगमे तु कथं कल्प्यत्वप्राप्तिरिति भावेन शङ्कते- **शिष्यत्वमिति ।। तर्हीति ।।** 'न च बहूनां दृश्यमानत्वात्' इत्युक्तरीत्या शिष्यत्वोपलक्षितानां च बहूनां दृश्यमानत्वादस्यैव शिष्यत्वोपलक्षितस्य कल्पकत्वमिति निश्चयोऽनुपपन्न इति भावः ।

**(व्या.टि.)** विशेष्यदलं निर्दिशति- **गुर्वादिकमिति ।। अभावेति ।।** बोधनाभावेति शेषः । **चतुर्भिरिति ।।** उद्दिष्टचतुर्षु बोधनस्यापि गणितत्वादिति भावः । **प्रसिद्धत्वादिति ।।** 'स एतां मनुष्येषु विब्रूयाद्यथा यथाह वै ब्रूयात्तथाऽधिको भवति' इति श्रुतौ 'ग्रहणाध्ययनप्रवचनसंव्यवहारेभ्यः' इति महाभाष्ये,

'आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
सखिभ्यः पादमादत्ते पादं व्याख्यानकौशलात् ।।'

इति स्मृतौ चेत्यर्थः । शिष्यस्याऽचार्यभावेन शिष्यत्वप्रच्युत्या कथमयं शिष्यकल्पकपक्षदोष इत्यत आह- **शिष्यत्वस्येति ॥ अनियतत्वादिति ॥** कादाचित्कशिष्यत्वस्य गुरावपि सत्त्वेनानिर्णय इत्यर्थः । मोक्षाव्यव-स्थानं दर्शयति- **तथा हीति ॥** दृढसंस्कारादिति पञ्चम्याः 'न कदाचिद्भेदनिवृत्तिः निवर्तकाद्वैतज्ञानाभावात्' इति मूलेनान्वयः ।

**मूलम्- स चैकजीवो यदि भेदवादी भवति तस्य तत्रैव दार्ढ्यान्न कदाचिद्भेदनिवृत्तिरिति न कस्यापि मुक्तिः स्यात् । तेन यथा कल्पितं तथैव भवतीति तेनैकजीववादिनां नित्यनिरयकल्पने स एव स्यात् ॥**

**टीका-** भेदप्रवणपक्षं दूषयति-**स चेति ॥** तर्हि तस्य **तत्रैव दार्ढ्याद्** भेदविषय एव दृढसंस्कार-त्वात् । 'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन्' इति वचनात् । मोक्षश्रुतिप्रामाण्यात्तस्य भेद-वासनाक्षयोऽद्वैतज्ञानश्च भविष्यतीति चेत्, तर्हि नासौ कल्पको जीवः भेदप्रवणत्वस्यापगमात् । उपलक्षणत्वपक्षे चोक्तत्वात् । दोषान्तरं चाह- **तेनेति ॥** इतिशब्दो हेतौ । क्रियाकारकफलरूपस्य सर्वस्य तत्कल्पनामात्रशरीरत्वादिति भावः ।

अयमत्र समुदायार्थः । गुर्वादिनिश्चयपक्षाणामतिप्रसङ्गदुष्टत्वादसम्भवाच्चानुपपत्तावनिश्चय-पक्षेऽङ्गीकार्ये प्रतिज्ञैव नाङ्गं धत्त इति नानुमानसम्भवः । अथ वा निश्चयाभावपक्षे मोक्षसाधना-नुष्ठानासम्भवान्निश्चयोऽवश्यमङ्गीकार्यः । तत्र च कल्पकस्य जीवस्य गुर्वाद्यन्यतमत्वं व्यापकम् । 'परस्परविरोधे तु न प्रकारान्तरस्थितिः' इति न्यायात् । न च तदुक्तविधया युक्तमिति व्यापक-निवृत्त्या व्याप्यनिवृत्तेः बाधितविषयमनुमानमिति ।

**(र.टि.) उपलक्षणत्वपक्षे चोक्तत्वादिति ॥** भेदप्रवणत्वोपलक्षितानां बहूनां दृश्यमानत्वादेकस्यैव भेद-प्रवणत्वोपलक्षितस्य कल्पकत्वमिति निश्चयोऽनुपपन्न इत्यनिश्चयपक्ष एवाऽपन्न इत्युक्तत्वादित्यर्थः । **क्रिया-कारकफलरूपस्येति ॥** नित्यनरकस्य फलरूपत्वादिति भावः । नन्वेकाज्ञानपरिकल्पितत्वे इत्यादिना मूलग्रन्थेन विप्रतिपन्नम् एकाज्ञानपरिकल्पितं दृश्यत्वादिति परकीयानुमाने किं दूषणमित्यत आह- **अयमत्र समुदायार्थ इति ॥**

**(रा.टि.) भेदेति ॥** प्राग्विकल्पितभेदप्रवणकल्पकत्वपक्षमित्यर्थः । **स चेतीति ॥** भेदप्रवणो गुरुर्वा शिष्यो वाऽस्त्विति भावः । **पूर्वाभ्यासेनेति ॥** षष्ठे गीतावचने पूर्वं यस्मिन्नर्थे स्वस्य परिचयाधिक्यमस्ति तेनैवाभ्या-सेन **अवशोऽपि** महाप्रयत्नहीनोऽपि तदर्थविषय एव स पुमान् **ह्रियते** प्रवर्त्यत इत्युक्तेर्न कदाचित्तस्य भेदबुद्धि-निवृत्तिरित्यर्थः । **उपलक्षणत्वपक्षे चोक्तत्वादिति ॥** अनिश्चयपक्ष एवाऽपन्न इत्युक्तत्वादित्यर्थः । स्पष्टार्थ-त्वान्मूलस्याऽकाङ्क्षितं हेतुमात्रमाह- **क्रियेति ॥** ज्ञानभोजनगमनशयनादिक्रिया, कर्तृकर्मकरणादीनि क्रियाजनककारकाणि, घटादिव्यवहारधनधान्यस्वर्गादीनि फलानि, एतद्रूपस्येत्यर्थः। कल्पकपुरुषनिश्चयानिश्चय-पक्षदोषोक्त्या लब्धं परोक्तानुमानदोषं निष्कृष्य दर्शयति- **अयमत्रेति ॥ गुर्वादीति ॥** ऐक्यप्रवणगुरुशिष्य-भेदप्रवणाः कल्पका इति निश्चयपक्षाणामित्यर्थः । 'एकाज्ञानकल्पितत्वे च' इत्यादिवाक्यत्रयस्य तथा 'तस्यैवाऽ-चार्यभावे स्वयमेव' इत्यादिवाक्यत्रयस्य तथा 'तस्य तत्रैव दार्ढ्यात्' इत्यादिवाक्यद्वयस्य चार्थानुवादः- **अति-प्रसङ्गदुष्टत्वादिति ॥** 'न च बहूनां दृश्यमानत्वादेव' इत्यादिवाक्यत्रयस्यार्थानुवादः- **असम्भवाच्चेति ॥ नाङ्गं धत्त इति ॥** विशेषणाप्रसिद्ध्या स्वरूपनिष्पत्तिमेव न लभत इत्यर्थः । **निश्चयेति ॥** ऐक्यप्रवणगुरुशिष्य-भेदप्रवणानामन्यतमः कल्पक इति निश्चयाभावेत्यर्थः । 'तस्य तस्य तथा' इत्यादिवाक्यद्वयार्थस्यानुवादः- **मोक्षे-त्यादि ॥** ऐक्यप्रवणगुरुशिष्यभेदप्रवणपुरुषत्वेभ्योऽपि प्रकारान्तरं कल्पकत्वव्यापकमस्त्वित्यत आह- **परस्प-रेति ॥** घटत्वाघटत्वयोरिवैक्यप्रवणत्वाऽक्रान्तगुर्वादित्वभेदप्रवणत्वाऽक्रान्तपुरुषत्वयोश्चान्योन्यविरोधान्न ततोऽन्यः प्रकारोऽस्तीति भावः । **उक्तविधयेति ॥** अतिप्रसङ्गादसम्भवाच्चेत्युक्तविधयेत्यर्थः ।

**(श्री.टि) भेदप्रवणपक्षमिति ॥** भेदप्रवणो गुरुः शिष्यश्चेति निश्चयपक्षमित्यर्थः । **दृढसंस्कारत्वात्** दृढसंस्कार-वत्त्वादित्यर्थः । वृत्तसंस्कारत्वादिति पाठे स्थितसंस्कारत्वादित्यर्थो द्रष्टव्यः । दृढोऽपि संस्कारो निवर्तिष्यत इति चेत्तत्राऽह- **पूर्वाभ्यासेनेति ॥** पूर्वसंस्कारेणेत्यर्थः । **मोक्षश्रुतीति ॥** अद्वैतज्ञानान्मोक्ष इत्येवमर्थाः श्रुतयस्ता-वत्सन्ति । तत्र कल्पकस्य गुरोः शिष्यस्य वा दृढाया अपि भेदवासनायाः क्षयोऽद्वैतज्ञानं च भविष्यतीति कल्प्यते । अन्यथा दृढाया अपि भेदवासनाया अनिवृत्तौ अद्वैतज्ञानाभावे च मोक्षश्रुत्यप्रामाण्यप्रसङ्गादित्यर्थः । कुतो न कल्पक इत्यत आह- **भेदप्रवणत्वस्येति ॥** भेदवासनानाशेन अद्वैतज्ञानाङ्गीकारे

भेदप्रवणत्वस्याप-गतत्वाद्भेदप्रवणः कल्पक इति गतः पक्ष इति भावः।

ननु भेदप्रवणो गुरुः शिष्यो वा कल्पक इत्यस्य भेदप्रवणत्वोपलक्षितो गुरुः शिष्यो वा कल्पक इत्यर्थः। तथा च भेदवासनाक्षयेनाद्वैतज्ञानदशायां भेदप्रवणत्वस्य प्राक् स्थितत्वेन तदुपलक्षितत्वानपगमाद्युक्तं कल्पकत्व-मित्याशङ्क्य भेदप्रवणत्वोपलक्षितानां बहूनां गुरूणां शिष्याणां वा दृश्यमानत्वादस्यैव भेदप्रवणत्वोपलक्षितस्य गुरोः शिष्यस्य वा कल्पकत्वमिति निश्चयो न युज्यत इत्यनिश्चयपक्ष एवाऽपन्नः। स च मोक्षसाधनानुष्ठानासम्भव इति दूषित इत्यभिप्रायेणाऽह- **उपलक्षितत्वपक्षे चेति ॥** दोषस्येति शेषः। मूले तेन भेदप्रवणेन गुरुणा शिष्येण वा यथा कल्पितं तथैव भवतीति हेतोस्तेन भेदप्रवणेन गुरुणा शिष्येण वा एकजीववादिनामद्वैतिनामन्धन्तम-आख्यो नित्यनिरयो भवतीति कल्पने स नित्यनिरयस्स्यादेवेत्युक्तम्। तत्कुत इत्यतस्तदुपपादयति- **क्रिया-कारकेति ॥ क्रिया** यज्ञादि। **कारकम्** इन्द्रियादि। **फलं** स्वर्गनरकादि। तथा च नित्यनरकस्यापि फलान्तर्गत-त्वादिति भावः। नन्वेतावता प्रबन्धेन विप्रतिपन्नम् एकजीवाज्ञानपरिकल्पितं दृश्यत्वादित्यनुमानस्य किं दूषणमुक्तमित्यत आह- **अयमत्र समुदायार्थ इति ॥ अतिप्रसङ्गेति ॥** सर्वमिदं मदज्ञानपरिकल्पितमिति जानतः पुनः शिष्यादिबोधनं न युज्यत इत्यनेनोक्तातिप्रसङ्गेत्यर्थः। **असम्भवाचेति ॥** न च बहूनामित्युक्त-रीत्येत्यर्थः। **नाङ्गं धत्त इति ॥** अप्रसिद्धविशेषणत्वेनेति भावः। ननु निश्चयपक्षानुपपत्तावनिश्चयपक्षः, अनिश्चय-पक्षानुपपत्तौ निश्चयपक्षश्च कुतोऽङ्गीकार्य इत्यत आह- **परस्परेति ॥** परस्परविरोधोपेतपदार्थद्वयमध्ये एकस्य प्रतिषेधेऽन्यस्यैव प्राप्तिः न तु प्रकारान्तरे तृतीये स्थितिरित्यर्थः। तथा च 'परस्परविरुद्धयोरन्यतर-निषेधस्यान्यतरविधिनान्तरीयकत्वात्' इति न्यायादिति यावत्। **व्यापकेति ॥** गुरुत्वादीत्यर्थः। **व्याप्य-निवृत्तेरिति ॥** कल्पकजीवनिवृत्तेरित्यर्थः। जीवस्य कल्पकत्वनिवृत्तेरिति यावत्। **बाधितविषयमिति ॥** उक्तरीत्यैकजीवाज्ञानपरिकल्पितत्वरूपसाध्याभावनिश्चयाद् दृश्यत्वानुमानं बाधितविषयमित्यर्थः।

**(पां.टि.)** तस्य तत्रैव दृढसंस्कारत्वनियामकमाह- **पूर्वेति ॥** शङ्कते- **मोक्षेति ॥** अन्यथा तच्छ्रुतिविरोधादिति भावः। ननु भेदप्रवणत्वं न विशेषणम्। किन्तु उपलक्षणमेव। ततश्च तदुपलक्षितस्य कल्पकत्वं भविष्यतीत्यत आह- **उपलक्षणत्वपक्षे चेति ॥** भेदप्रवणोपलक्षितानां बहूनां दृश्यमानत्वादस्यैव भेदप्रवणोपलक्षितस्य कल्पकत्व-मिति निश्चयोऽनुपपन्न इत्यनिश्चयपक्ष एवाऽपन्न इत्युक्तत्वादित्यर्थः। **क्रियाकारकेति ॥** नित्यनरकस्य फल-रूपत्वादिति भावः। नन्वेतावता विप्रतिपन्नं सर्वं जीवजडात्मकम् एकजीवाज्ञानकरिकल्पितं दृश्यत्वात् स्वप्नवत् इत्यनुमानस्य किं दूषणमुक्तं भवतीत्यत आह- **अयमत्रेति ॥**

**(व्या.टि.)**मायी शङ्कते-**मोक्षश्रुतीति ॥ भेदप्रवणत्वस्येति ॥** कल्पकविशेषणस्येत्यर्थः। **उक्तत्वादिति ॥** अनिश्चयपक्षापत्तेरित्यर्थः। ननु निश्चयपक्षदूषणेनानिश्चयपक्षावशेषे अनिश्चयपक्षदूषणेन निश्चयपक्षावशेषे चानुमानस्य किं दूषणमुक्तमित्यतः, अखण्डलब्धार्थमाह- **अयमत्रेत्यादिना ॥ नाङ्गं धत्ते ॥** अनिश्चयपक्षावशेषे प्रतिज्ञाभङ्गो दोष इत्यर्थः। **परस्परेति ॥** पारस्करादित्वात्सुट्। इतीत्यतः परं निश्चयपक्षावशेषे दोष इति व्यवस्थेति शेषः।

**मूलम्- न चैकजीवाज्ञानपरिकल्पितं समस्तमित्यत्र किञ्चिन्मानम्।**

**'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥'**

**इत्यस्य चायमर्थः। प्रपञ्चो यदि विद्येत- भवेत उत्पद्येत, तर्हि निवर्तेत, न च निवर्तते। तस्मादनादिरेवायम्। प्रकृष्टः पञ्चविधो भेदः प्रपञ्चः। न चाविद्यमानोऽयं, मायामात्रत्वात्। मायेति भगवत्प्रज्ञा, सैव मानत्राणकर्त्री यस्य तन्मायामात्रम्। परमेश्वरेण ज्ञातत्वाद्, रक्षितत्वाच्च, न द्वैतं भ्रान्तिकल्पितमित्यर्थः। न हीश्वरस्य भ्रान्तिः। तर्ह्यद्वैतः सर्वभावानामिति व्यपदेशः कथमित्यत आह-'अद्वैतं परामर्थतः' इति। परमार्थापेक्षया ह्यद्वैतं, सर्वस्मादुत्तमोऽर्थः स एक एवेत्यर्थः।**

**(त.मं.)** प्रपञ्च इत्यादि मानमत्रास्तीत्यत आह- **प्रपञ्च इति ॥** विद उत्पत्तौ भवतेरुत्पत्तौ आत्मने-पदमित्यादिनोत्पत्तिवाचित्वमवगम्यते। [१]**तस्य व्यपदेशः** अद्वैतस्य व्यपदेशः।

**टीका-** नन्वनुमानस्य श्रुतिसाहाय्यवत्त्वान्नैतैर्विकल्पपांसुभिराच्छादनं युक्तं, श्रुत्या विकल्पदोषाणामाभासीकरणादित्यत आह- **न चेति ॥ किञ्चिन्मानं** काचिच्छ्रुतिरित्यर्थः । ननु कथं नास्ति । 'प्रपञ्चो यदि' इति वाक्यस्य सत्त्वात् । अत्र च 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्येकस्यैव जीवस्य प्रपञ्चकल्पकाज्ञानाश्रयतया प्रतीयमानत्वादित्यतः सम्यगेतद्वाक्यं व्याख्या-तुमाह- **प्रपञ्च इति ॥** चशब्दस्तुशब्दार्थे । **अयं** वक्ष्यमाणतया बुद्धिस्थः । प्रतिज्ञातमर्थमाह- **प्रपञ्च इति ॥** विदेः सत्तार्थत्वमङ्गीकृत्य भवेतेति व्याख्यातम् । व्यत्ययो बहुलमित्यात्मनेपदम् । सत्ता च कादाचित्की विवक्षितेत्याह- **उत्पद्येतेति ॥** अथ वा 'भू प्राप्तावात्मनेपदी' इत्यस्य विकल्पितण्यन्तस्येदं रूपम् । **भवेत** सत्तां प्राप्नुयादित्यर्थः । तस्य तात्पर्यमुत्पद्येतेति । यद्वा विद्यतिः सत्तार्थोऽर्थादुत्पत्तिर्लभ्यत इत्यभिप्रेत्य भवेतेत्युक्तम् । अधुना त्वनेकार्थत्वाद्धातूनां विद्यति-रेवोत्पत्तिवाचीत्याह- **उत्पद्येतेति ॥** यदीत्यस्य तर्हीत्यनेन नित्ययोगात्तर्हीत्यध्याहृतम् । प्रसङ्गस्य विपर्यये पर्यवसानावश्यम्भावात्तदाह- **न चेति ॥** ननु प्रपञ्चो घटादिरुत्पद्यमानो विनाशवांश्च प्रमाणसिद्धः । ततो नेदमनिष्टापादनं नापि विपर्यये पर्यवसानमित्यत आह- **प्रकृष्ट इति ॥** नात्र प्रपञ्चो विश्वविस्तारः । किन्तु जातीयरोऽर्थे पञ्चन्शब्दात् डप्रत्ययः । ततश्च पञ्चविधः पञ्चः, स च प्रकृष्टत्वात्प्रपञ्चः । प्रकृष्टत्वं च मोक्षाङ्गज्ञानत्वात् । तत्र विशेष्याकाङ्क्षायां प्रकरणप्राप्तमुक्तम्- **भेद इति ॥**

तथा हि- 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा' इति पूर्वश्लोके **अनादिमायया** परमेश्वरेच्छया प्रकृत्यादिना च जीवजातस्य ज्ञानावरणलक्षणं सुप्तत्वं, तथैव तत्त्वज्ञानलक्षणः प्रबोधश्चोक्तः । तेन जीवेश्वरयोः जडेश्वरयोः जीवजडयोश्च भेदाः सन्तीति लब्धम् । प्रभोरिच्छया निगडादिना पुरुषे बद्धे मुक्ते च भेदत्रयदर्शनात् । प्राक् 'प्रभवः सर्वभावा-नाम्' इति भावशब्दोक्तानां जीवानां मिथो भेदोऽपि लब्धः । तत एवाऽवरणानां जडानामपि मिथो भेदोऽर्थाल्लभ्यते । तेषां पञ्चानामपि भेदानामनादिमाययाऽजमनिद्रमित्यादिविशेषण-सामर्थ्यादनादित्वं लब्धम् । तदिदं पञ्चानामपि भेदानां सत्यत्वमनादित्वञ्चोपपादयितुमिदं श्लोक-द्वयम् । तत्र तावदनादित्वं विपक्षे बाधकप्रसङ्गेनोपपादितम्- **प्रपञ्च इति ॥** यदि च जडजीवभेदो नश्येत्तदा जीवस्य जडत्वापत्त्या मोक्षशास्त्रवैयर्थ्यापत्तिरित्यादिरूपेण निवर्तेतेत्यस्यानिष्टत्वं द्रष्टव्यम् ।

तृतीयपादं प्रागुक्तसत्यत्वोपपादनायावतारयति- **न चेति ॥ अयं** पञ्चविधो भेदः । अनेनेदं द्वैतमिति प्राक् प्रपञ्चशब्दोक्तार्थस्य परामर्श इति सूचयति । **अविद्यमानो** भ्रान्तिकल्पितः । विरुद्धोऽयं हेतुरित्यतो व्याख्याति- **मायेति ॥** मायेतिशब्देन भगवत्प्रज्ञोच्यते । प्रमाणस्योक्तत्वादित्यर्थः । 'माङ् माने' 'त्रैङ् पालने' इत्याभ्यां मूलविभुजादित्वात्कः । घञर्थे कविधानमिति वा । ततो मायाशब्दस्य बहुव्रीहिः । हेतुहेतुमद्भावप्रकटनाय तात्पर्यमाह- **परमेश्वरेणेति ॥** परमेश्वरेण ज्ञातत्वेऽपि कुतो न भ्रान्तिकल्पितत्वमित्यत आह- **न हीति ॥** यदीश्वरदृष्टमपि भ्रान्तिकल्पितं स्यात्तर्हीश्वरस्यापि भ्रान्तिरित्युक्तं स्यात् । न च तद्युक्तम् । निरवद्यत्वश्रुतिविरोधदिति भावः । एवं 'न हि भ्रान्तिकल्पितं केनचिद् द्रक्ष्यते' इत्यपि वक्तव्यम् ।

निवर्त्यशङ्काप्रदर्शनपूर्वकं चतुर्थपादमवतार्य पठति- **तर्हीति ॥** यदि पञ्चविधो भेदः सत्यः स्यादित्यर्थः । **कथं?** न कथञ्चिदुपपद्येत । अतोऽयुक्तमुक्तम् । अथ वा कथं व्याख्येय **इत्यत** आक्षेपात्परम्, इत्याक्षेपो जायते यतोऽतः कारणादिति वा **आह** विरोधित्वेन शङ्कितस्य श्रुत्यन्तर-स्यार्थान्तरमिति शेषः । कथमनेन सा श्रुतिर्व्याख्यातेत्यत आह- **परमार्थेति ॥** अनेनाद्वैतशब्दो भावप्रधानः । परमार्थत इति पञ्चमी ल्यब्लोपनिमित्तेत्युक्तं भवति । यदिदं परमेश्वरस्याद्वितीयत्वं 'अद्वैतःसर्वभावानां देवस्तुर्यो विभुः स्मृतः' इत्यादौ श्रुत्यन्तरे कथ्यते तत्परमार्थमपेक्ष्येत्यर्थः । नन्वेतच्छङ्कितुरप्यभिप्रेतमेव । तेनापि व्यवहारतः सद्द्वितीयत्वं, परमार्थतोऽद्वितीयत्वमित्यङ्गी-कारादित्यतो

विवृणोति- **सर्वस्मादिति ।।**

**(र.टि.)** एकजीवाज्ञानपरिकल्पितत्वे पराभिमतानुमानस्य दूषितत्वादुत्तरत्र परोदाहृतश्रुतेरेवार्थप्रच्यावनस्य करिष्यमाणत्वादाह- **काचिच्छ्रुतिरिति ।।** ननु 'प्रपञ्चो यदि विद्येत' इति वाक्यं मायामात्रमिति पदबलेनाज्ञान-कल्पितत्वमात्रे प्रमाणम् । एकजीवाज्ञानपरिकल्पितत्वे कथं प्रमाणतयोदाहियत इत्यत आह- **अत्र चेति ।। एकस्यैवेति ।।** जीव इत्येकवचनादिति भावः । ननु सत्तार्थकविदिव्याख्यानरूपभवतेरपि सत्तार्थकत्वात्कथं भवेत इत्यात्मनेपदम् । प्राप्त्यर्थकभवतेरेव आत्मनेपदित्वादित्यत आह- **व्यत्यय इति ।। अर्थादिति ।।** निवर्तेतेति विनाशस्याऽपाद्यत्वेन तदापादकत्वेनोक्तसत्त्वस्य कादाचित्कत्वमेवार्थाल्लभ्यत इत्यर्थः । अन्यथा व्याप्त्यभावेनाऽ-पाद्याऽपादकभावो न स्यादिति भावः । **जातीयरोऽर्थ इति ।।** 'प्रकारवचने जातीयर्' इति प्रकाररूपार्थे जातीयरो विधानादिति भावः । **तथैव तत्त्वज्ञानलक्षण इति ।।** अनेनेश्वरेच्छार्थकत्वेन मायाशब्दस्य प्रबुध्यत इत्यत्रान्वयः सूचितो भवति । **मिथो भेद इति ।।** भावानामिति बहुवचनेन भावशब्दोक्तजीवानां बहुत्वोक्तेर्बहुत्वस्य बाधकाभावे भेदसमानाधिकरणत्वादिति भावः । **तत एवेति ।।** जीवानां भेदेऽप्यावरणस्याभेदे एकस्य तत्त्व-ज्ञानेनाऽवरणनिवृत्तौ सर्वेषां मुक्तिस्स्यादिति भावः । **विशेषणसामर्थ्यादिति ।।** यद्यपि जीवेऽनादित्वादिकं विशेषणं न श्रूयते । तथाऽपि मायागतानादित्वविशेषणसामर्थ्यात्तदावृतज्ञानवतो जीवस्याप्यनादित्वं लभ्यत इति भावः । निवर्तेतेत्यस्येष्टापादनत्वं परिहरति- **यदि चेति ।। इत्यादिरूपेणेति ।।** यदि जडेश्वरयोर्भेदो नश्येत् तदेश्वरस्य जडत्वापत्त्या सत्यं ज्ञानमित्यादिशास्त्रस्य विरुद्धार्थत्वापत्तिः । यदि जीवानां परस्परभेदो नश्येत् तर्हि परस्परमैक्यापत्त्या परस्परगतसुखदुःखाद्यनुसन्धानापत्तिः । यदि च जीवेश्वरयोर्भेदो नश्येत् तदेश्वरस्य वा दुःखाद्य-नुभवः, जीवस्य वा सार्वज्ञाद्यनुभवः स्यात् । न चात्रापीष्टापत्तिरिति वाच्यम् । प्रमाणाभावात् । यथायथं श्रुत्य-नुभवरूपप्रमाणविरुद्धार्थस्वीकारापत्तिरित्यादिरूपेणेत्यर्थः । **प्रागुक्तसत्यत्वेति ।।** 'प्रभवः सर्वभावानां सता-मिति विनिश्चयः' इति ज्ञानसत्त्वस्यानादिमाययेति मायाऽनादित्वस्य 'अजमनिद्रम्' इति ब्रह्माजत्वस्योक्त्या तत्तद्धर्मिकभेदानामपि सत्यत्वमुक्तमेवेति भावः । **अनेनेति ।।** अयमित्यनेनेत्यर्थः । 'न द्वैतं भ्रान्तिकल्पितम्' इत्युत्तरवाक्यानुरोधेनाविद्यमानपदं व्याचष्टे- **भ्रान्तिकल्पितमिति ।।** तथा चाविद्यमानपदस्यासत्त्वार्थकत्वे बाध इति परास्तमिति भावः । **विरुद्धोऽयमिति ।।** मायामात्रपदस्याऽविद्यकत्वार्थकत्वादिति भावः । इति-शब्दवैयर्थ्यं परिहरति- **मायेति शब्देनेति ।।** अत एवोच्यत इति शेषः पूरितः । हिशब्दाभिप्रायमाह- **निरवद्यत्व-श्रुतीति ।।** ईश्वररक्षितत्वहेतोरप्यप्रयोजकत्वं परिहरति- **एवमिति ।।**

**(रा.टि)** प्रपञ्चेति श्रुतावेकजीवाज्ञानकल्पितत्वाप्रतीतेर्माण्डूके प्रपञ्चेत्यतः पूर्वमन्त्रेऽस्ति तत्प्रतीतिरिति भावे-नाऽह- **अत्र चेति ।।** माण्डूके पूर्वमन्त्र इत्यर्थः । **एकस्यैवेति ।।** जीव इत्येकवचनादिति भावः । प्रतीयमानत्वा-दित्यनन्तरं प्रपञ्च इति विद्यते । निवर्तत इति च । कुतः मायामात्रं? पूर्वत्र प्रकृतैकजीवाज्ञानपरिकल्पितमिति प्रतीयमानत्वादित्यपि ध्येयम् । प्राक्श्रुत्यन्तरानुक्तेस्समुच्चयायोगादाह- **चशब्द इति ।।** पराभिमतार्थादर्थान्तर-सूचनार्थतया तुशब्दार्थ इत्यर्थः । ननु 'भू सत्तायाम्' इत्यस्य परस्मैपदित्वात्कथं भवेतेत्युक्तिरित्यत आह- **व्यत्यय इति ।। सत्ता चेति ।।** विद्येतेत्युक्तसत्ता चेत्यर्थः । **इत्यस्येति ।।** अस्य वाक्यस्य भूधातुः प्राप्त्यर्थक आत्मनेपदी भवति, वाशब्दाद्विकल्पेन णिच् भवतीत्यर्थकत्वाण्णिजभावपक्षे भवेतेति रूपमित्यर्थः । **अर्था-दिति ।।** निवर्तेतेति विनाशोक्त्यन्यथाऽनुपपत्तिरूपार्थापत्त्येत्यर्थः । **जातीयरोऽर्थ इति ।।** 'प्रकारवचने जातीयर्' इति पञ्चमस्य तृतीयपादोक्तजातीयर्प्रत्ययार्थे । प्रपञ्चो भेदपञ्चक इति वक्ष्यमाणवचनबलाद्वा 'तद्धिताः' इत्यधिकारसूत्रे बहुवचनोक्तिबलाद्वा डप्रत्यये 'चुटू' इति डलोपे 'डिति भस्य टेर्लोपः' इति अन् इत्यस्य लोपे प्रपञ्चेति रूपमित्यर्थः 'कृत्तद्धित' इति प्रातिपदिकत्वे स्वाद्युत्पत्तौ प्रपञ्च इति रूपसिद्धिरिति भावः । मोक्षाङ्गेति बहुव्रीहिः । तेन विषयत्वलाभः ।

'पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ।
निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा ।।'

इति भारततात्पर्यनिर्णयोक्तेः । 'वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा' इत्युक्तेश्चेति भावः । कथं प्रकरणप्राप्तो भेद इत्यत आह- **तथा हीत्यादिना ।।** अनादित्वं लब्धमित्यन्तेन ।

'अनादिमायया विष्णोरिच्छया स्वापितो यदा ।
तया प्रबोधमायाति तदा विष्णुं प्रपश्यति ।।'

इति माण्डूकभाष्यानुरोधेनार्थमाह- **परमेश्वरेच्छयेति ।।** भाष्यमुपलक्षणमिति भावेनाऽह- **प्रकृत्यादिना चेति ।।** आदिपदेनानादिकामकर्मग्रहः । **प्रबोधश्चेति ।।** परोक्षरूपः । मुक्तावपि भेदत्रयस्योपपादनार्थमुक्तम्- **मुक्ते च भेदत्रयदर्शनादिति**

**।। अत्रशिष्टभेदद्वयप्राप्तिमाह- प्रागिति ।।** अनादीति मन्त्रात्पूर्वमित्यर्थः। **तत एवेति ।।** जीवानां भेदादेव तदावरणभूतजडानामित्यर्थः । **अर्थादिति ।।** बद्धमुक्तव्यवस्थाऽन्यथानुपपत्ति-बलादित्यर्थः । अन्यथाऽऽवरणस्यैक्ये एकस्य ज्ञानोदयेनाऽवरणनिवृत्तौ सर्वमुक्त्यापत्तेरिति भावः । **इत्यादि-विशेषणेति ।।** आवरणभूतस्य प्रकृत्यादेरनादि-त्वोक्त्या जडस्य तेन सुप्तत्वोक्त्या जीवानामजत्वोक्त्या ईश्वरस्य चानादित्वेन तत्स्वरूपभेदानामनादित्वं लब्धमित्यर्थः ।

मूलेऽनिष्टत्वानुक्तेस्स्वयमाह- **यदि चेति ।। इत्यादीति ।।** यदि जीवानां भेदो नश्येत्तदा जीवैक्यापत्त्या बद्धमुक्तव्यवस्थाऽनुपपत्तिः । ईश्वरजडभेदनाशे त्वीश्वरस्य जडत्वाऽपत्त्या ज्ञानपूर्वं विश्वसृष्ट्याद्ययोग इत्यादिरादि-**(रा.टि)** शब्दार्थः । **परामर्श इतीति ।।** द्वयोर्भावो द्विता, तदीयो वर्गो द्वैतं, सामान्ये नपुंसकमिति । 'पञ्च-सम्बन्धस्तु प्रकरणाल्लभ्यते' इति सुधोक्तदिशेति भावः । **भ्रान्तिकल्पित इति ।।** तेन पूर्वार्धे भेदपञ्चकस्यानादि-तोक्ता । उत्तरार्धे सत्यतोच्यत इत्युक्तं भवति । **प्रमाणस्योक्तत्वादिति ।।**

'मायेत्युक्ता प्रकृष्टत्वात् प्रकृष्टं हि मयाभिधम् ।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ।।'

इत्युक्तत्वादित्यर्थः । **मूलविभुजादित्वादिति ।।** तृतीयाद्यपादे 'आतश्चोपसर्गे' इति सूत्रे 'मूलविभुजादिभ्य उपसङ्ख्यानम्, इत्युक्तत्वात्कप्रत्यय इत्यर्थः। **घञर्थ इति ।।** 'अकर्तरि च कारके संज्ञायाम्' इत्युक्तघञर्थ इत्यर्थः। 'आतो लोप इटि च' इत्याकारलोपे माति त्रायते चेति मात्रमिति रूपमिति भावः। 'धातोः' इत्यधिकारे तस्य विधानेऽपि 'अदिभूभ्यां डुतच्' इत्युक्तेरद्भुतमित्यादाविव धातुद्वयादपि कप्रत्ययो नायुक्त इति भावः। ननु घञ्प्रत्ययो ह्यकर्तरि विहितः । तदर्थे विहितः कप्रत्ययः कथं माया भगवत्प्रज्ञा मानत्राणकर्त्री यस्येति कर्त्रर्थं ब्रूयादिति चेत्, भावार्थ एवायं कप्रत्ययः, मायया मानं त्राणं यस्येत्येव विग्रहः। तस्य फलितार्थोक्तिः मानत्राणकर्त्री यस्येत्येके। छन्दस्त्वात्कर्तर्यपि घञमुपेत्य घञर्थे क इत्युक्तमित्यन्ये। कुतो न भ्रान्तिकल्पितमित्यस्य मूलोक्तमुत्तरं न साक्षाल्लगतीत्यतः परिष्कृत्य घटयति-**यदीति ।। निरवद्यत्वेति ।।** 'निरनिष्टो निरवद्यः' इत्यादिश्रुतीत्यर्थः । **इत्यपीति ।।** अन्यथाऽन्त्यहेतोरुपपादनं न कृतं स्यादिति भावः । अर्थद्वयेऽपीत्यत इत्यस्यार्थमाह- **इत्याक्षेपा-दिति ।।** परमिति शेषोक्तिः । इत्याक्षेपात् परं पश्चादाहेत्यर्थ इति भावः। इत्यत इत्यस्यार्थान्तरमाह- **इतीति ।।** इत्याक्षेपो यतो जायते अतः कारणादाहेत्यर्थ इति वेत्यर्थः । आहेति प्रतीकपूर्वं कर्माकाङ्क्षां पूरयति- **आहेत्या-दिना ।। ल्यब्लोपेति ।।** स्वाभिमतस्य कस्यचिल्लयबन्तस्य पदस्य लोपो वाच्यः । तद्योगे पञ्चमी वाच्येत्युक्त-त्वादिह चापेक्ष्येति ल्यबन्तस्य लोपे तन्निमित्ता पञ्चमीत्यर्थः । **इत्यादाविति ।।** माण्डूकवाक्यादावित्यर्थः ।

**(श्री.टि.)** ननु 'प्रपञ्चो यदि' इति वाक्यं मायामात्रमितिपदबलेन द्वैतप्रपञ्चस्य अज्ञानकल्पितत्वमात्रे प्रमाण-मिति प्रतीयते। अतः कथमेकजीवाज्ञानपरिकल्पितत्वे प्रमाणतयोदाह्रियत इत्यत आह- **अत्र चेति ।। एकस्यैव जीवस्येति ।।** जीवः प्रतिबुध्यत इत्यत्र जीव इत्येकवचनसद्भावादिति भावः।

ननु सत्तार्थकविदधातुव्याख्यानरूपभवतेरपि सत्तार्थकत्वात्सत्तार्थकस्य भवतेश्च परस्मैपदित्वनियमात्कथं भवेतेत्यात्मनेपदप्रयोगः । प्राप्त्यर्थकभवतेरेवाऽत्मनेपदित्वात् । प्रकृते च प्राप्त्यर्थकत्वाभावादित्यत आह- **व्यत्यय इति ।।** परस्मैपदाऽत्मनेपदानां बहुलं व्यत्ययो भवतीत्यर्थः । एवं च प्रकृते सत्तार्थकत्वेऽप्यात्मनेपदित्वं युक्तमि-त्यर्थः । **कादाचित्कीति ।।** कादाचित्कसत्तालाभस्यैवोत्पत्तित्वादिति भावः। अथ वा प्राप्त्यर्थ एवायं भूधातुः। तथा च भवेतेत्यात्मनेपदित्वं तस्य युक्तम्। भूधातोः प्राप्त्यर्थत्वं च धातुसूत्रसिद्धमित्याह- **अथ वा भू प्राप्ता-वित्यादिना ।।** भू इत्ययं धातुः, प्राप्तौ प्राप्तिरूपार्थे आत्मनेपदी भवन्, वा विकल्पेन चुरादिः स्यात्। चुरादौ **(श्री.टि.)** 'आ धृषाद्वा' इत्यधिकृत्य भू प्राप्तावात्मनेपदीति पाठादित्यर्थः। ननु भूधातोश्चुरादिगणत्वे चुरादिगणस्य 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' एभ्यः, चुरादिभ्यश्च णिच् स्यादिति सूत्रेण णिजन्तताविधानात् भावयेतेति णिजन्तः प्रतीयेतेत्यत उक्तम्- **विकल्पितण्यन्त-स्येति ।।** एवं च प्रकृते णिच् न जात इति भवेतेति युक्तमिति भावः। भूधातोः प्राप्त्यर्थत्वमेव दर्शयति- **सत्तां प्राप्नुयादिति ।।** सत्तामित्यस्य योग्यतया लाभ इति द्रष्टव्यम्। ननु तर्हि मूले उत्पद्येतेति व्यर्थं, तद्व्याख्येया-भावादित्यत आह- **तस्य तात्पर्यमिति ।।** सत्तां प्राप्नुयादित्यर्थकस्य भवेतेत्यस्यैवेदं तात्पर्यकथनमित्यर्थः। असतः सत्तासम्बन्धस्यैवोत्पत्तिरूपत्वादिति भावः। पूर्वं विदेर्भवतेश्च सत्तारूपैकार्थत्वमङ्गीकृत्य विद्येतेत्येतद्भवेतेति व्याख्याय सत्तायाः कादाचित्कत्वलाभायोत्पद्येतेत्युक्तमिति व्याख्यातम्। तथा भवेतेत्यस्य सत्ताप्राप्त्यर्थकत्व-

मङ्गीकृत्य तत्तात्पर्यकथनपरत्वेनोत्पद्येतेत्युक्तमिति प्रकारान्तरेण व्याख्यातम्। अधुना उत्पद्येतेत्येतत्प्रकारान्तरेण व्याख्यातुं विद्येत भवेतेत्यस्यैवाभिप्रायमाह- **यद्वेति ।।** विद्यतिः सत्तार्थ इत्यभिप्रेत्य भवेतेत्युक्तमित्यन्वयः । नन्वत्रापि विदेर्भवतेश्च सत्तारूपैकार्थत्वमङ्गीकृत्य विद्येतेत्येतद् भवेतेति पूर्ववदेव व्याख्यातं, को विशेषो येन यद्वेत्युक्तमित्यत उक्तम्- **अर्थादुत्पत्तिर्लभ्यत इति ।।** न पूर्वव्याख्यानद्वय इवोत्पद्येतेत्यनेनोत्पत्तिलाभो नोच्यते, किन्त्वर्थादेवेत्ययमेव विशेष इत्यर्थः । तथा हि-निवर्तेतेति विनाशस्याऽपाद्यत्वेनोक्तत्वात् तदापादकत्वेन विद्येतेत्यनेनोक्तसत्त्वस्य कादाचित्कत्वम् उत्पत्तिरिति यावत्, अर्थाल्लभ्यते । अन्यथोत्पत्तेरेव निवृत्तिव्याप्यत्वेन सत्त्वस्याऽत्मादौ व्यभिचारेण तद्व्याप्यत्वासम्भवादापाद्याऽपादकभावो न स्यादिति भावः । तर्हि मूले उत्पद्येते-त्येतदुर्वरितं व्यर्थं स्यादित्यत आह- **अधुनेति ।। अनेकार्थत्वादिति ।।** 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते। प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति वचनादित्यर्थः। **उत्पत्तिवाचीति ।।** विदोत्पत्तावित्यपि धातुरस्तीत्यर्थः । यथोक्तमनुव्याख्याने- 'विदोत्पत्ताविति ह्यस्माद्धातोः' इति। तथा चास्मिन्पक्षे उत्पत्तिः शब्दत एव लभ्यते, न पूर्ववदर्थादिति भावः। **इत्याहेति ।।** इत्यभिप्रेत्य विद्येतेत्येतत्प्रकारान्तरेण व्याख्याती-त्यर्थः। **अवश्यम्भावादिति ।।**

'व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये।
अनिष्टाननुकूलत्वम् इति तर्काङ्गपञ्चकम्।
अङ्गपञ्चकसम्पन्नस्तत्त्वज्ञानाय कल्प्यते।
अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेत्॥'

इति कारिकावचनादति भावः। **प्रमाणेति ।।** प्रत्यक्षादिप्रमाणेत्यर्थः। **नापीति ।।** प्रत्यक्षादिप्रमाणबाधादेवेति भावः। **विश्वविस्तार इति ।।** तथा च प्रपञ्च इत्येतत्प्रोपपदात् पचि विस्तारे इति धातो रूपं न भवतीत्यर्थः। **जातीयरोऽर्थ इति ।।** प्रकारार्थ इत्यर्थः। 'प्रकारवचने जातीयर्' इति सूत्रेण प्रकारार्थे जातीयरो विधानादित्यर्थः। **डप्रत्यय इति ।।** तथा च पञ्चन्शब्दात्प्रकाररूपे जातीयरोऽर्थे डप्रत्यये डित्त्वाट्टिभूतस्य अन् इत्यस्य लोपे पञ्चेति **(श्री.टि.)** रूपमित्यर्थः । तमेव जातीयरोऽर्थं दर्शयति- **पञ्चविध इति ।।** पञ्चप्रकार इत्यर्थः। **मोक्षाङ्गज्ञान-त्वादिति ।।** मोक्षजनकज्ञानविषयत्वादित्यर्थः। यथोक्तम्-

'पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च।
निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा॥' इति।

**प्रकरणप्राप्तमिति ।।** भेद इति विशेष्यपदं प्रकरणप्राप्तमित्यन्वयः।

ननु कथं भेदः प्रकरणप्राप्तो, येन तस्यानादित्वाद्युपपादनं सङ्गतं स्यादित्यत आह- **तथा हीत्यादिना ।। प्रभोरिच्छयेत्यादि ।।** निगडबद्धजीवप्रभ्वोः, निगडप्रभ्वोः, बद्धजीवनिगडयोश्च भेददर्शनात् प्रकृतेऽप्येवमिति भावः । **लब्ध इति ।।** भावानामिति बहुवचनेनेत्यर्थः। बहुत्वस्य भेदव्याप्तत्वादिति भावः। **तत एवेति ।।** जीवानां भेदादेवेत्यर्थः। **आवरणानाम्** आवरकाणाम्। **अर्थाल्लभ्यत इति ।।** जीवानां भेदेऽप्यावरणस्याभेदे एकस्य तत्त्वज्ञानेनाऽवरणनिवृत्तौ सर्वेषामपि मुक्तिस्स्यादिति भावः। **तेषां पञ्चानामपि भेदानामिति ।।** 'अनादिमाया' इति प्रकृतेरनादित्वोक्त्या जीवेश्वरप्रतियोगिकप्रकृतिधर्मिकभेदस्याऽवरणादिजडान्तरप्रतियोगिक-भेदस्य चानादित्वं लब्धम्। एवमीश्वरस्याजडत्वोक्त्या जीवजडप्रतियोगिकेश्वरधर्मिकभेदस्यानादित्वं लब्धम्। जडेश्वरप्रतियोगिकजीवधर्मिकभेदस्य परस्परं जीवभेदस्य चानादित्वं कथं लब्धमित्यत इत्यादिविशेषणेत्यु-क्तम् । अत्र आदिपदेन सुप्त इति विशेषणं ग्राह्यम् । तथा चानादिमाययेति मायाशब्दोक्तलिङ्गशरीररूपाऽवरण-स्यानादित्वं तावदुक्तं, तादृशानाद्यावरणेन जीवस्य सुप्तत्वोक्त्याऽऽव्रियमाणस्य जीवस्याप्यनादित्वं लब्धम्। अन्यथा तस्याऽवरणत्वायोगात्। तेनेश्वरप्रकृत्यादिजडप्रतियोगिकजीवधर्मिकभेदस्यानादित्वं लब्धम्। तथा परस्परजीवभेदस्याप्यनादित्वं लब्धमिति द्रष्टव्यम्। अत एव विशेषणसामर्थ्यादित्युक्तम्।

**अनादिनित्यत्वमिति ।।** जीवेश्वरप्रकृत्यादिजडानां नित्यतया तत्स्वरूपभूतानां पञ्चानामपि भेदानां नित्यत्वं च लब्धप्रायमिति द्रष्टव्यम् । **सत्यत्वमिति ।।** अनादित्वोक्तावज्ञानकार्यत्वरूपमिथ्यात्वाभावस्य लाभेऽर्थात्सत्यत्वं लब्धमिति भावः । निवर्तेतेत्यस्येष्टाऽपादनत्वं परिहरति- **यदि चेति ।। वैयर्थ्येति ।।** अधिकारिणोऽभावादिति भावः। **इत्यादिरूपेणेति ।।** यदि जडेश्वरयोर्भेदो नश्येत्तदेश्वरस्य जडत्वापत्त्या सत्यं ज्ञानमित्यादिशास्त्रस्य विरुद्धार्थत्वाऽपत्तिः। यदि जडानां परस्परं भेदो नश्येत्तदा विद्याया अप्यविद्यात्वापत्त्या तमेवं विद्वानिति शास्त्रस्य विरुद्धार्थत्वापत्तिः। यदि जीवानां परस्परभेदो नश्येत्तदा परस्परमैक्यप्राप्त्या परस्परं सुखदुःखाद्यनुसन्धानाऽ-पत्तिः। यदि च जीवेश्वरयोर्भेदो नश्येत्तदेश्वरस्य दुःखाद्यनुभवः स्यात्। तथा च 'निरनिष्टो निरवद्यः'

इत्यादिश्रुति-विरोधः। जीवस्य वा सार्वज्ञाद्यनुभवः स्यात्। तथा चानुभवविरोधः। इत्यादिरूपेण निवर्तेतेत्यस्यानिष्टत्वं द्रष्टव्यमित्यर्थः। **प्रागुक्तेति ॥** अनादित्वोक्त्या अर्थाल्लब्धेत्यर्थः। **अनेनेति ॥** अयमित्यनेनेत्यर्थः। **उक्तार्थस्य** पञ्चविधभेदस्य । 'न द्वैतं भ्रान्तिकल्पितम्' इत्युत्तरवाक्यानुरोधेनाविद्यमानपदं व्याचष्टे- **भ्रान्तिकल्पित इति ॥ विरुद्धोऽयं हेतुरिति ॥** पञ्चविधो भेदो भ्रान्तिकल्पितो न भवति मायामात्रत्वादित्यत्र मायामात्रपदस्याऽ-**(श्री.टि.)**विद्यकत्वार्थकत्वेन तस्योक्तसाध्याभावव्याप्तत्वाद्विरुद्धत्वमिति भावः। **प्रमाणस्योक्तत्वादिति ॥**

'मायेत्युक्ता प्रकृष्टत्वात् प्रकृष्टं हि मयामिधम्।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ॥'

इति प्रमाणस्योक्तत्वादित्यर्थः। **मूलविभुजादित्वादिति ॥** तद्गणस्थत्वादित्यर्थः। तथा च 'मूलविभुजादिभ्यश्च' इति सूत्रेण कर्त्रर्थे कप्रत्यय इति भावः। मूलविभुजादिगणे मात्रशब्दस्य पाठाभावादाकृतिगणत्वकल्पनस्य चागतिकगतित्वात्प्रकारान्तरमाह- **घञर्थ इति ॥** इति वार्तिकेन वेत्यर्थः। कर्तृकरणभावानां त्रयाणामपि घञर्थत्वात्प्रकृते कर्त्रर्थे घञ्प्रत्यय इति भावः। तथा च 'माङ् माने' त्रैङ् पालने' आभ्यां 'मूलविभुजादिभ्यश्च' इति सूत्रेण वा 'घञर्थे कविधानम्' इति वार्तिकेन वा कर्तरि कप्रत्यये ककारलोपे 'आदेच उपदेशेऽशिति' इत्यैकारस्याऽत्वे मात्रा अ इति स्थिते 'आतो लोप इटि च' इति धात्वाकारलोपे मात्र् अ मात्रेति रूपं द्रष्टव्यम्। धातुद्वयोपर्येकः प्रत्ययश्चाद्भुतमित्यादौ दृष्ट इत्यवगन्तव्यम्। **बहुर्व्रीहिरिति ॥** मात्रशब्देन बहुव्रीहिरि-त्यर्थः। हिशब्दाभिप्रायमाह- **निरवद्यत्वश्रुतीति ॥** 'निरनिष्टो निरवद्यः' इति श्रुतीत्यर्थः। मूले ईश्वरेण ज्ञातत्वहेतोरप्रयोजकत्वं परिहृतम्। इदमुपलक्षणम्। ईश्वर(रक्षित)निरीक्षितत्वेऽपि भ्रान्तिकल्पितं किं न स्यादिति द्वितीयहेतोरप्यप्रयोजकत्वपरिहारो द्रष्टव्य इत्याशयेनाऽह- **एवमिति ॥** इत्यत आहेत्येतद्व्याख्याति- **इत्यत आक्षेपात्परमिति ॥** आक्षेपानन्तरमित्यर्थः। आहेति सम्बन्धः। प्रकारान्तरेण योजयति- **इत्याक्षेप इति ॥ पञ्चमीति ॥** 'पञ्चाम्यास्तसिल्' इति सूत्रेण परमार्थादिति पञ्चम्यास्तसिलो जातत्वादिति भावः। **ल्यब्लो-पेति ॥** 'ल्यब्लोपे तत्कर्मण्यधिकरणे पञ्चमी वाच्या' प्रासादात्प्रेक्षते, आसनात्प्रेक्षते, प्रासादमारुह्य आसने उपविश्य प्रेक्षत इति वार्तिकार्थः। एवमत्राप्यपेक्ष्येति ल्यब्लोपे तत्कर्मणि परमार्थत इति पञ्चमी जातेत्यर्थः। **एतदिति ॥** एवं श्रुतिव्याख्यानमित्यर्थः। **शङ्कितुरपीति ॥** तर्ह्यद्वैतः सर्वभावानामिति व्यपदेशः कथमिति शङ्कितुर्मायावादिनोऽपीत्यर्थः। **व्यवहारत इति ॥** व्यवहारदशायामित्यर्थः।

**(पां.टि.)** 'प्रपञ्चो यदि विद्येत' इति वाक्यस्य मायामात्रपदबलेन अज्ञानकल्पितत्वप्रमाणत्वात्, तेन तन्मात्र-सिद्धावपि एकजीवाज्ञानपरिकल्पितत्वासिद्धेः कथं तत्र प्रमाणतया उपन्यास इत्यत आगमतया तस्यास्तत्र प्रमाणत्वासम्भवेऽपि अर्थतस्तदवगमकत्वादन्यथाऽनुपपत्तितया प्रमाणत्वं युज्यत एवेत्याशयेनाऽह- **[1]तत्र चेति ॥ एकस्यैवेति ॥** जीव इत्याद्येकवचनादिति भावः। **सत्तार्थत्वमिति ॥** 'विद सत्तायाम्' इति स्मरणादिति भावः। सत्तार्थकस्य भवतेः परस्मैपदितया कथं भवेतेत्यात्मनेपदप्रयोग इत्यत आह- **व्यत्यय इति ॥** एतच्च प्रागेव सकृद्व्युत्पादितं तत एव प्रतिपत्तव्यम्। **सत्ता चेति ॥** न तु सार्वकालिकी, येन उत्पद्येतेति व्याख्यानानुपपत्तिः स्यादिति भावः। अत्र पक्षे व्यत्ययाश्रयणं भवतीत्यपरितोषं मनसि निधायाऽह- **अथ वेति ॥** यद्यपि प्राप्त्यर्थकस्य भूधातोः प्राप्नुयादित्येव व्याख्यातव्यत्वात् सत्तां प्राप्नुयादिति व्याख्यानं न शाब्दम्। तथाऽपि योग्यतया सत्तायाः **(पां.टि.)**सम्बन्धमभिप्रेत्य तथा व्याख्यानमिति द्रष्टव्यम्। तर्हि भवेतेत्यतावता पूर्णत्वाद् उत्पद्येतेत्यस्य वैयर्थ्य-मित्यतस्तत्तात्पर्यकथनार्थत्वान्न तदिति भावेन तथा योजयति- **तस्य तात्पर्यमिति ॥** अत्रापि तात्पर्यार्थत्व-कल्पनादिकं भवतीत्यपरितोषादाह- **(यद्वे)अथ वेति ॥ अर्थादिति ॥** निवर्तेतेत्यापादितविनाशान्यथाऽनुप-पत्तेरित्यर्थः। नन्वेवमुत्पद्येतेत्यस्य पौनरुक्त्यं, भवेतेत्यनेनैवोत्पत्तिलाभादित्यतः प्रकारान्तरेण तदवतारयति- **अनेकार्थत्वादिति ॥** 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः। प्रयोगतोऽवगन्तव्या अनेकार्था हि धातवः' इति स्मरणादिति भावः। **अवश्यम्भावादिति ॥** अन्यथा तद्रूपाङ्गवैकल्येन प्रसङ्गस्याऽभासत्वप्राप्तेरिति भावः। **प्रपञ्चो घटादिरिति ॥** प्रपञ्चशब्दस्य विश्वविस्तारवाचकत्वादिति भावः। **विपर्यये पर्यवसानमिति ॥** बाध-प्रसङ्गादिति भावः। **जातीयरोऽर्थ इति ॥** प्रकारार्थ इत्यर्थः। 'प्रकारवचने जातीयर्' इति प्रकारार्थे तद्विधानादिति भावः। **डप्रत्यय इति ॥** 'पञ्चद्दशतौ वर्गे वा' इति निपातनादिति भावः। न च 'पञ्चद्दशतौ वर्गे वा' इत्यत्र वर्गेऽभिधेये तदस्य परिमाणमित्येतदस्मिन्विषये पञ्चन्दशन्शब्दाभ्याम् 'सङ्ख्याया अतिशदन्तायाः कन्' इति कनि पञ्चकः दशकः इति नित्यं प्राप्तौ डतिप्रत्ययविधानेन डित्वाट्टिलोपे पञ्चत्, दशदित्येव निपातनात्, वाशब्देन च पक्षे कन्प्रत्ययविधानेन पञ्चकः दशकः इति पूर्वप्राप्तरूपस्याभ्यनुज्ञानात् डप्रत्ययस्यानभ्यनुज्ञानेन पञ्चन्शब्दात् डप्रत्ययस्याप्राप्त्या डित्वाट्टिलोपासम्भवेन कथमनेन पञ्च इति रूपनिष्पत्तिरिति वाच्यम्। पञ्चकः दशकः इत्यभियुक्तप्रयोगानुसारेण पक्षे वाशब्देन कन्प्रत्ययस्येव पञ्च इति श्रौतप्रयोगानुसारेण

पक्षेऽप्राप्तडप्रत्ययस्यापि वाशब्दार्थत्वेनाभ्यनुज्ञातव्यत्वात्, अविशेषादित्यत्र तात्पर्यात्। सम्मतश्चायमर्थो टीकाकृतः। अत एवान्यत्र टीकाकृता 'वाशब्देन पञ्चशब्दस्यापि निपातनात्' इत्युक्तम्। अन्यथा वाशब्देन पञ्चकशब्दस्य निपातनादित्येवा-वक्ष्यत्। अत एव च माधवधातुवृत्तौ 'वाग्रहणात् संख्याया अतिशदन्तायाः कन् इति कनि पञ्चकः पञ्चेति डे उक्तमिति दुर्गः' इत्युक्तमिति द्रष्टव्यम्। न च तथाऽपि 'पञ्चद्दशतौ' इत्यस्यार्थान्तरे डप्रत्ययविधायकत्वप्राप्तावपि जातीयरोऽर्थे तदविधायकत्वात्कथमनेन तत्र डप्रत्ययः स्यादिति वाच्यम्। 'विचित्रा तद्धितगतिः' इतिवचने-नार्थान्तरे डप्रत्ययविधायकस्यापि जातीयरोऽर्थे तद्विधायकत्वस्याप्याश्रयितुं शक्यत्वात्। सम्मतश्चायमर्थो टीकाकाराणाम्। अत एव 'एष चासावात्मा चैतदात्मा 'विचित्रा तद्धितगतिः' इति वचनात्' इति एतदात्मन इदमित्यर्थे ष्यञ्प्रत्ययाश्रयणं टीकाकारीयं सङ्गच्छते। अन्यथेदमर्थे तदननुशासनात्तदयुक्तं स्यादिति द्रष्टव्यम्। यद्वेह टीकायां डप्रत्ययविधायकतया सूत्रविशेषमनुपादाय डप्रत्यय इत्येवोक्तत्वात्पञ्चन्शब्दाज्जातीयरोऽर्थे 'तद्धिताः' इति डप्रत्यय इत्यर्थः। यद्यपि जातीयरोऽर्थे डप्रत्ययो न विहितः। 'तद्धिताः' इति योगश्च पञ्चमाध्यायान्तं विहितप्रत्ययानां तद्धितसञ्ज्ञाविधायको, न डप्रत्ययविधायको, नतरां जातीयरोऽर्थे डप्रत्ययविधायक इति 'तद्धिताः' इति डप्रत्यय इति व्याख्यातुमनुचितम्। तथाऽपि 'सर्वत्राधिकारसूत्रे 'प्रत्ययः' 'समासान्तः' इत्याद्येकवचनान्तप्रयोगस्यैव दर्शनात्तद्वत्प्रकृतेऽपि तद्धित इत्येकवचन एव वक्तव्ये यत् 'तद्धिताः' इति बहुवचनं तेन सञ्ज्ञिनां बहुत्वसूचनादनुक्तोऽपि तद्धितः परिगृह्यत इति भावेन बहुवचनमनुक्ततद्धितपरिग्रहार्थम्। ततश्च 'पृथिव्या ञाञौ' 'अग्रपश्चादिमन्' इत्येवमादि लब्धं भवति' इति वृत्तिकारेणोक्तत्वाज्जातीयरोऽर्थेऽनुक्तोऽपि **(पां.टि.)** डप्रत्ययः 'तद्धिताः' इति बहुवचनलभ्य इत्यभिप्रायेण जातीयरोऽर्थे 'तद्धिताः' इति ड इति व्याख्यान-मुपपन्नमेव। सम्मतश्चायमर्थो टीकाकाराणाम्। 'मत्वर्थे तद्धिता इति डः' इत्यन्यत्र टीकाकारैरुक्तत्वात्। अन्यथा मत्वर्थे डप्रत्ययाविधानात्तथोक्तेरसामञ्जस्यप्रसङ्गादित्यवधेयम्।

अस्तु पञ्चविधः पञ्चः, तस्य प्रकृष्टत्वं तु कुतः, येन प्रपञ्चत्वं स्यादित्यतो मोक्षसाधनज्ञानविषयत्वादित्याह- **प्रकृष्टत्वं चेति ॥** 'वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा' इत्युक्तेरिति भावः। प्रपञ्चशब्दस्य विश्वविस्तार-वाचित्वे विशेष्यानाकाङ्क्षत्वेऽप्युक्तरीत्या तद्व्याख्याने विशेषणशब्दत्वेन पञ्चविधः क इति विशेष्याकाङ्क्षायां प्रकरणप्राप्तभेदस्य विशेष्यतया सम्बन्धसम्भवात्, तदाकाङ्क्षानिवृत्तिरिति भावेनाऽह- **विशेष्येति ॥** ननु भवेदेतदेवं पञ्चविधस्यानादित्वसत्यत्वोपपादकतया श्लोकद्वयव्याख्यानम्, यदि प्रपञ्चो यदीत्यतः पूर्वत्र श्रुतौ भेदपञ्चकं तदनादित्वं वा प्रसक्तं स्यात्। न चैतदस्ति। तत्कथं तत्परतया व्याख्यानम्। अस्तु वा कथञ्चित्तत्प्रसक्ति-व्युत्पादनेन श्लोकद्वयस्य तत्समर्थनपरत्वम्। तथाऽपि प्रथमश्लोके मायामात्रमित्यादेरानर्थक्यमेव। तद्वचनस्य प्रकृतोपयोगाप्रतिभासादित्यत आह- **तथा हीति ॥**

'महामायेत्यविद्येति नियतिर्मोहिनीति च।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते॥'

इति प्रमाणं मनसि निधायाऽह- **परमेश्वरेच्छयेति ॥** जीव इत्येकवचनं 'यदा नीतिपरो राजा' इत्यादिवत्, 'स्वर्गकामो यजेत' इत्यादिवच्च जात्यभिप्रायम्। न तु जीवैक्याभिप्रायम्। तथा सति 'इति सृष्टौ विनिश्चिताः' इति पूर्वेण, 'सम्पूज्यः सर्वभावानाम्' इत्युत्तरेण जीवभेदवाक्येन विरोधप्रसङ्गादिति भावेनोक्तम्-**जीवजात-स्येति ॥** न केवलं श्रुतौ अनादिमायया सुप्तः इति यथास्थित एव सम्बन्धः। किन्तु 'अतः प्रबोधोऽस्मात्' इत्युक्तरीत्या अनादिमायया प्रबुध्यत इत्यपीति भावेनोक्तम्-**तथैवेति ॥** भेदाः सन्तीति तत्सत्त्वं लब्धमित्यर्थः। अत एवाऽह- **प्रभोरित्यादि ॥ मिथो भेदोऽपीति ॥** भावानामिति बहुवचनेन भावशब्दोक्तजीवानां बहुत्वो-क्तेः, बहुत्वस्य च भेदसामानाधिकरण्यस्यौत्सर्गिकत्वेन प्रकृते च बाधकाभावेन तन्नियमादिति भावः। **तत एवेति ॥** आव्रियमाणभेदादेवेत्यर्थः। जीवानां भेदेऽप्यावरणैक्ये एकस्य तत्त्वज्ञानात्तदनिवृत्तावनिर्मोक्ष-प्रसक्तेस्तन्निवृत्तौ च सर्वेषां मुक्तिप्रसक्तेस्दावरणभेदसिद्धिरिति भावः। एवं पञ्चविधभेदप्रसक्तिं तत्सत्यत्व-प्रसक्तिश्चोक्त्वा तदनादिनित्यत्वप्रसक्तिमपि दर्शयति- **तेषां चेति ॥**

**इत्यादिविशेषणसामर्थ्यादिति ॥** अत्राऽदिपदेनोक्तरूपसुप्तत्वरूपविशेषणपरिग्रहः। तेनानाद्यावर-णावृतत्वमाव्रियमाणानादित्वं विना न सम्भवतीति मायागतानादित्वविशेषणसामर्थ्यात्सुप्तपदेनाऽवृततयोक्तानां जीवानामप्यनादित्वसिद्धिः। एवं च धर्मिणामनादित्वोक्त्याऽऽक्षेपाद्वा सि(द्धत) द्धया तद्भेदपञ्चकस्याप्यनादित्वं लब्धमित्यर्थः। निवर्तेतेत्यस्येष्टापादनत्वं परिहरति- **यदि चेति ॥ इत्यादिरूपेणेति ॥** यदि जडेश्वरयोर्भेदो नश्येत्तदेश्वरस्य जडत्वप्रसक्त्या 'सत्यं ज्ञानम्' इत्यादिशास्त्रस्य विरुद्धार्थत्वप्रसङ्गः। यदि जडानां परस्परं भेदो **(पां.टि.)** नश्येत्तदा विद्याया अप्यविद्यात्वापत्त्या 'तमेवं

विद्वान्' इत्यादिशास्त्रस्य विरुद्धार्थत्वापत्तिः । यदि जीवानां परस्परं भेदो नश्येत्तदा परस्परमैक्यापत्त्या परस्परगतसुखदुःखाद्यनुसन्धानापत्तिः । यदि च जीवेश्वरभेदो नश्येत्तर्हि तदैक्यप्राप्त्येश्वरस्य जीवस्येव सुखदुःखाद्यनुभवस्य, जीवस्यापीश्वरस्येव सार्वज्ञाद्यनुभवस्य च प्रसक्त्या यथायथं श्रुत्यनुभवरूपप्रमाणविरोधाद्यापत्तिरित्येवंरूपेणेत्यर्थः। **प्रमाणस्येति** ॥ 'विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते' इत्यादिप्रमाणस्येत्यर्थः । **मूलविभुजादित्वादिति** ॥ कप्रकरणे 'मूलविभुजादिभ्य उपसङ्ख्यानम्' इति 'तुन्दशोकयोः परिमृजापनुदोः' इत्येतत्सूत्रीयोपसङ्ख्यानात् 'अदिभूभ्याम्' इत्यादाविव धातुद्वयाद्बाहुलकात् कप्रत्यये 'आदेच उपदेशेऽशिति' इत्यात्वे 'आतो लोप इटि च' इत्याकारलोपे मात्रशब्दनिष्पत्तिरिति द्रष्टव्यम् । **घञर्थ इति** ॥ 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति 'ग्रहवृदृनिश्चिगमश्च' इत्येतत्सूत्रीयवार्तिके घञर्थे कविधानाद्धातुद्वयान्माति त्रातीति कर्त्रर्थे कप्रत्यये पूर्ववन्मात्रशब्दनिष्पत्तिरिति भावः । न च कर्तरि घञोऽविहितत्वात्कथं कर्तरि घञर्थे कः स्यादिति वाच्यम् । नञा निर्दिष्टस्यानित्यत्वे कर्तर्यपि तदुपपत्तेरित्याश-यात् । न च स्थास्नादिष्वपाठात्कथमत्र तेनापि कप्रत्ययः स्यादिति वाच्यम् । पाठमूलभूतशिष्टप्रयोगानुरोधेन तथा पाठोऽपि तत्र कार्योऽन्यथाऽतिप्रसङ्गादित्यत्र तात्पर्यात् । **इत्यपि वक्तव्यमिति** ॥ अन्यथा अप्रयोजकत्व-शङ्काकलङ्कितत्वेनेश्वररक्षितत्वहेतोरहेतुत्वप्रसङ्गादिति भावः । कथमित्यस्यार्थान्तरमाह- **अथ वा कथं व्याख्येय इति ॥ इत्याक्षेपो जायते यतोऽतः कारणादिति वेति च ॥ भावप्रधान इति** ॥ अद्वैतशब्दो लक्षणयाऽद्वैतत्व-पर इत्यर्थः । **ल्यब्लोपेति** ॥ 'ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्या' इति तत्र प्राप्तद्वितीयादिबाधेन पञ्चमीविधानादिति भावः । तदभिप्रेतत्वमेवोपपादयति- **तेनेति** ॥

**(व्या.टि.) साहाय्यवत्त्वादिति** ॥ 'योपाधाद् गुरूपोत्तमाद् वुञ्' 'सहायाद्वा' इति पक्षे ष्यञ् । साहाय्यं, साहायकम् इति च रूपद्वयम् । आक्षिपति- **कथमिति** ॥ वाक्यस्य । माण्डूक्यस्येति शेषः । कथमस्य तदर्थतेत्यतस्तत्पूर्ववाक्ये तथा प्रतीतेरित्याह- **अत्रेति ॥ एकस्यैवेति** ॥ सुप्तो जीव इत्येकवचनादित्यर्थः । **अज्ञानेति** ॥ मायाशब्दस्य तद्वाचित्वात् सुप्तिरूपाज्ञानकार्यावरणकथनाच्चेत्यर्थः । **आहेति** ॥ प्रतिजानीत इत्यर्थः । समुच्चेयाभावेन समुच्चयासम्भवादाह- **चशब्द इति** ॥ विशेषार्थ इत्यर्थः। कथं प्रत्यक्षनिर्देश इत्यत आह- **बुद्धिस्थ इति** ॥ नन्वर्थसाम्याभावात्कथं प्रतिपदग्रहणमित्यत आह- **विदेरिति** ॥ सत्तावाचिनो भुवः परस्मैपदित्वादाह-**व्यत्यय इति** ॥ छान्दसत्वान्न दोष इति भावः। सत्तामात्रस्य निवृत्त्यनापादकत्वादाह- **सत्ता चेति** ॥ बुद्धिवैशद्यायार्थान्तरमाह- **अथ वेति ॥ विकल्पितण्यन्तस्येति** ॥ 'आधृषाद्वा' इति णेर्विकल्पना-दिति भावः । णिच्सन्नियोगेनैवाऽत्मनेपदमिति तु निर्मूलम् । सत्तामिति योग्यतयाऽन्वयि । प्राप्नुयादित्येवार्थ-निर्देशः ।'विदुत्पत्ताविति ह्यस्माद्धातोः' इत्यनुव्याख्यानं मनसि निधायाऽह-**यद्वेति ॥ अनेकार्थत्वादिति** ॥ यथोक्तं शाब्दिकैः- 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते। प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति। विद्यतेरार्थिकार्थवर्णनम्- **भवेतेति** ॥ उत्पद्येतेति तु साक्षाद्व्याख्येति भावः । **अवश्यम्भावादिति** ॥

**(व्या.टि.)** 'व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ।'

इति न्यायाचार्योक्तेरिति भावः । भावमुद्घाटयितुं शङ्कते- **नन्विति ॥ नात्रेति** ॥ प्रपूर्वात् 'पचि विस्तारे' इत्यतो घञादिकृदन्तो न, किन्तु 'तद्धिताः' इति बहुवचनलब्धडप्रत्ययरूपतद्धितान्तोऽयमित्याह- **जातीयरोऽर्थ इति** ॥ 'प्रकारवचने जातीयर्', 'प्रकारवति चायमिष्यते' इत्युक्तेः प्रकारिणि प्रत्ययः । पटुजातीय इतिवत् । पञ्चन्शब्दात्प्रकारिणि डप्रत्यये 'टेः' इति टिलोपे पञ्च इति साधुः । तदर्थमाह- **पञ्चविध इति ॥ मोक्षाङ्गेति** ॥ 'वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा' इत्यादिस्मृतेरिति भावः । प्रकरणपदोक्तप्रक्रमं प्रकटयति- **तथा हीति ॥ परमेश्वरेच्छयेति** ॥ 'अभिध्योपदेशाच्च' इति सूत्रादित्यर्थः । **प्रकृत्यादिना वेति** ॥ 'मायां तु प्रकृतिं विद्यात्' इति स्मृतेरिति भावः । **जीवजातस्येति** ॥ तेन सुप्त इत्येकवचनं समुदायापेक्षितमित्युक्तं भवति । लाभप्रकारमाह- **प्रभोरिति** ॥ वर्गशो भेदपञ्चकं सिषाधयिषुरादौ त्रिकसिद्धिं तावदाह- **भेदत्रयेति** ॥ कथं तर्हि पञ्चभेदवाद इत्यत आह- **प्रागिति** ॥ द्विकप्रदर्शनम्- **मिथ इति** ॥ भावानामिति बहुवचनेनेति भावः । **तत एवेति** ॥ जीवबहुत्वादेवेत्यर्थः । **आवरणानामिति**- हेतुगर्भविशेषणम् । एकस्यानेकाक्रियमाणव्याप्तत्वे कस्यचित्तन्निवृत्तावन्यस्य बद्धत्वानुपपत्तेरित्यर्थः । सुधायामप्येवमेवास्ति ।

**पञ्चानामपीति** ॥ अत्रैके चोदयन्ति- पञ्चभेदाङ्गीकारोऽयुक्तः । तथा हि- भेदानेकत्वस्य भेदभेदैकार्थ-समवायित्वेन भिन्नभेदवादे स्वरूपभेदवादे वा भेदभेदकाभावेन भेदपञ्चकासम्भवात् । तथा हि- भिन्नभेदवादे प्रतियोगिभेदाद्भेदभेदो वा पटत्वघटत्वभेदवत्,

प्रतियोगितावच्छेदकभेदाद्वा घटपटभेदवत्, संसर्गभेदाद्वा नाना-सम्बन्धारोप्यैकैकपटादिप्रतियोगिकात्यन्ताभाववत् । नाऽद्यः । जीवजडप्रतियोगिकस्येश्वरभेदस्य प्रतियोगि-जीवजडानन्त्येन आनन्त्यप्रसङ्गादीश्वरप्रतियोगिकस्य जीवजडधर्मिकभेदस्येश्वरैक्येनैक्यप्रसङ्गश्च । न द्वितीयः । प्रतियोगितावच्छेदकानां जडत्वजीवेश्वरत्वानां त्रित्वेन भेदत्रित्वप्रसङ्गः । ईश्वरप्रतियोगिकजीवजडधर्मिक-भेदस्येश्वरत्वरूपप्रतियोगितावच्छेदकैक्येनैक्यापत्तिश्च । ईश्वरधर्मिकजीवजडप्रतियोगिकभेदस्य जीवत्वजडत्वरूप-प्रतियोगितावच्छेदकद्वित्वेन द्वित्वप्रसङ्गश्च । न तृतीयः । प्रतियोग्यानन्त्येन तत्तादात्म्यानन्त्येन भेदानन्त्य-प्रसङ्गात् । तादात्म्यत्वेनानुगमे चैकत्वप्रसङ्गः । भेदस्य धर्मिणा भेदेऽनवस्थापत्त्या भिन्नभेदवादस्यैवायुक्त-त्वाच्च । धर्मिस्वरूपभेदवादेऽपि धर्मिभेदाद्भेदभेदो वा धर्मितावच्छेदकभेदाद्वा । नाऽद्यः । प्रत्येकं भेदानन्त्येन तदानन्त्यप्रसङ्गात् । समुदायविवक्षायामपि द्वित्वादिवद्भेदस्याद्विष्ठत्वेन परस्परभेदपरिगणनायां षड्भेदापत्तिः । समुदायिनां जीवानां जडानामानन्त्येनानन्त्यापरिहाराच्च । भेदस्याभावरूपत्वेनाधिकरणभेदेन तद्भेदानुप-पत्तेश्च। अन्यथाऽत्यन्ताभावस्याप्यधिकरणभेदेन भेदापत्तेः । ईश्वरस्यैकत्वेन तद्धर्मिकेतरभेदस्याप्येकत्वापत्त्या नेति नेतीति नञ्द्वयानुपपत्तिश्च । एकधर्मिकानन्तप्रतियोगिकानामैक्यप्रसङ्गश्च । न द्वितीयः । ईश्वरत्वादिधर्मिता-वछेदकत्रित्वेन भेदत्रित्वप्रसङ्गः । उपसङ्ग्राहकैकधर्मविशेषमन्तराऽनन्तभेदेषु पञ्चभेदाः त्रयो द्वौ इत्याद्यवान्तर-सङ्ख्याऽनुपपत्तिरिति ।

**(व्या.टि.)** अत्रायं गूढोऽभिसन्धिः टीकाकाराणम् । भेदस्य धर्मिस्वरूपताया अत्रान्यत्र च समर्थितत्वेन भिन्नभेद-वादोऽनङ्गीकारपराहतः । धर्मिस्वरूपस्य भेदस्य धर्मितावच्छेदकभेदाद्भेदोऽसम्भावित इति धर्मिभेदादेव भेदः । तथा च धर्मिणामानन्त्याद्भेदस्याऽनन्त्यमेव। समुदायविवक्षा च नाङ्गीक्रियते। भेदस्याभावत्वेऽपि धर्मिप्रतीतौ प्रतीयमानत्वादिबहुयुक्तिभिः धर्मिस्वरूपत्वं प्रमितमिति नात्यन्ताभावप्रतिबन्दी। ईश्वरधर्मिकस्यानन्त-प्रतियोगिकस्यैकत्वेऽपि नानाप्रतियोगिकत्वविज्ञापनाय वीप्सार्थकश्रौतनञ्द्वयम्। अनन्तानामपि भेदानां धर्मित्वप्रतियोगित्वान्यतरसम्बन्धेन, जीवसम्बन्धित्वे सति ईश्वरसम्बन्धित्वम्, १। तेनैव सम्बन्धेन जडसम्बन्धित्वे सति ईश्वरसम्बन्धित्वम्, २। तेनैव सम्बन्धेन जीवसम्बन्धित्वे सति जडसम्बन्धित्वम्, ३। उभयसम्बन्धेनापि जीवमात्रसम्बन्धित्वम्, ४। उभयसम्बन्धेनापि जडमात्रसम्बन्धित्वम्, ५। इत्यैतैः पञ्चभिः प्रकारैः सङ्ग्रहात् पञ्चविधत्वम्। सन्मात्रसम्बन्धिकभेदस्य विवक्षितत्वान्नासत्प्रतियोगिकभेदासङ्ग्रहो दोषः। लक्ष्म्याश्च परतन्त्रचेतनत्वेन जीवत्वान्न तद्भेदासङ्ग्रहः । अत्र जीवत्वधर्मावच्छिन्नधर्मिकस्य तद्व्याप्यदेवदत्तत्वावच्छिन्न- धर्मिकस्य च ईश्वरप्रतियोगिकस्येश्वरधर्मिकस्योक्तधर्मावच्छिन्नप्रतियोगिकस्य भेदस्याऽद्येन सङ्ग्रहः । एवं जडेश्वर-भेदस्य विविधस्य द्वितीयेन सङ्ग्रहः। एवं जीवजडभेदस्य बहुविधस्य तृतीयेन सङ्ग्रहः। जीवेश्वरौ जडं नेत्यादौ तु भेदद्वयमेव प्रतीयते। जडं जीवेश्वरौ न, घटस्तौ न, जीवो जडेश्वरौ न, चैत्रस्तौ न इत्यादीनां तु प्रकारद्वयादिना सङ्ग्रहः । प्रकारसमावेशस्यादोषत्वात् । न्यूनाधिकप्रकारकरणसम्भवेऽप्यस्यैव मोक्षसाधनज्ञानविषयत्वान्नाति-प्रसङ्ग इत्यवधेयम् । धर्मित्वप्रतियोगित्वोभयतरसम्बन्धेनोभयधर्मावच्छिन्ननिरूप्यत्वधर्मित्वप्रतियोगित्वेनोभय-सम्बन्धेनान्यतरव्याप्यधर्मावच्छिन्ननिरूप्यत्वाभ्यां उभयसम्बन्धिनोऽन्यतरसम्बन्धिनश्च भेदननुगमय्य द्विकत्रिक-वर्गाभ्यां पञ्चत्वसङ्ख्यासम्पत्तिः। अत्रोभयपदेन जीवत्वजडत्वेश्वरत्वरूपत्रिकमध्ये उभयं ग्राह्यम्। अवच्छिन्नपद-माश्रयपरम्। अन्यतरदपि त्रिकस्येति ज्ञेयम्। द्वितीयोपसङ्ग्राहके जीवो जीवो न, जडं जडं नेत्युक्तौ उद्देश्यता-वच्छेदकविधेयविरोधेन शब्दप्रमाऽनुपपत्त्या व्याप्यान्तम्। तेन स जीवोऽयं न, तज्जडमिदं नेतिशब्दप्रमोपपत्तिः। उद्देश्यतावच्छेदकविधेयभेदात्। वर्गशोऽपि सङ्ख्यासम्पत्तिर्दृश्यते। यथा वेदे 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि, चत्वार्यश्लीलानि, तानि नवेति। तथा 'चतुरः प्रयाजान्यजति द्वावनुयाजौ षड् सम्पद्यन्ते' इति। एवं च सजातीयैकमात्रसम्बन्धेनोपसङ्ग्राहकेणैकं द्विकम्। विजातीयोभयसम्बन्धित्वेनोपसङ्ग्राहकेण त्रिकम्। इति वर्ग-द्वयेन पञ्चत्वसङ्ख्यापूर्तिर्युक्ता। वस्तुतस्तु नायमस्ति नियमः। यदुपसङ्ग्राहकेणैवावान्तरसङ्ख्यासम्पत्तिरिति।

'पञ्च सप्त च वर्षाणि नववर्षं शतक्रतुः ।
व्रतमेतदनुष्ठेयं नववर्षाणि पञ्च च ॥'

इत्यादौ उपसङ्ग्राहकाभावेऽप्यवान्तरसङ्ख्यानदर्शनात् । 'पञ्चाशद्वर्णराशेर्वेदस्य अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाननानारूपा भवन्तीति अनन्तवेदाः' इति श्रौतदिशा सङ्ख्येयत्ववदसङ्ख्येयराशेरप्युपसङ्ग्राहकेण सङ्ख्येयत्वोपपत्तेश्चेत्यलम् । सम्मतं चैतन्मीमांसकानाम् ''चतुरवत्तं जुहोति' इति श्रुतचतुरवदानस्य 'द्विर्हविषोऽ-वद्यति उपस्तृणात्यभिघारयति' इति श्रुतौ यस्तरणाभिघारणाभ्यां सम्पत्तिं वदताम् ।

**(व्या.टि.) लब्धमिति ॥** भेदिनामनादित्वोक्त्येति शेषः। **सत्यत्वमिति ॥** मिथ्याभूतस्यानादित्वा-योगात्तन्नान्तरीयकं तदिति

भावः । ननूत्पत्तिवादी तस्य विनाशमभ्युपैत्येवेति कथं तस्यानिष्टत्वमित्यतस्तत् प्रदर्शयति- **यदि चेति ।।** जडत्वापत्त्येत्युपलक्षणम् । जडस्य जीवत्वापत्त्या मिथ्याजडव्यतिरेकेण जीवाभावान्मोक्ष-शास्त्रवैयर्थ्यापत्तिर्बोध्या । **आदिरूपेणेति ।।** यदि जीवेशभेदो नश्येत्तर्हि जीवस्येश्वरत्वापत्त्या दुःखानुभवो न स्यादीश्वरस्य जीवत्वापत्त्या 'उत्तमः पुरुषस्त्वन्यः' इति तदनुभवसिद्धतद्भेदवचनानुपपत्तिः। एवं यदि जडेशभेदो नश्येत्तदा जडस्येश्वरत्वापत्त्या स्वतः प्रवृत्त्यापत्तिः। ईश्वरस्य जडत्वापत्त्या प्रवृत्त्यनुपपत्तिरित्यादि बोध्यम्। **अनेनेति ।।** इदमा प्रकृतिभूतेनेत्यर्थः। प्रागित्युक्तपदान्वयि। श्रुतौ द्वैतपदापेक्षया नपुंसकत्वेऽपि पुंलिङ्गप्रपञ्च-पदनिर्दिष्टस्य तथैव परामर्शो युक्त इति मूले पुंलिङ्गनिर्देशः। मायैव मायामात्रमित्यन्यथाप्रतीत्या शङ्कते- **विरुद्ध इति ।।** तस्य मिथ्याभावाविनाभावादिति भावः। स्वाशयं प्रकाशयति- **प्रज्ञेति ।।** वचनवृत्तौ किं प्रमाणमित्यत आह- **प्रमाणस्येति ।।** 'तवेच्छाऽनन्त कथ्यते' इति प्रमाणस्येत्यर्थः । **इत्याभ्यामिति ।।** धातुद्वयादेक-प्रत्ययोत्पत्तिः समर्थिताऽधस्तात् । **मूलविभुजादित्वादिति ।।** मूलानि विभुजति भञ्जयतीति मूलविभुजो रथः। मूलविभुजादेराकृतिगणत्वादित्यर्थः। **क इति ।।** कर्तरि कृदिति कर्तरि क इति भावः। व्युत्पत्त्यन्तरं दर्शयति- **घञर्थ इति ।।** भावे इत्यर्थः। **तत इति ।।** कर्तृसाधनाद्भावसाधनाद्वा मात्राशब्दान्मायाशब्दस्य बहुव्रीहिः । तत्राऽद्यव्युत्पत्तौ माया मात्रा यस्येति समानाधिकरणो बहुव्रीहिः। द्वितीयस्यां मायया मात्रे यस्य तन्मायामात्रमिति व्यधिकरणबहुव्रीहिः। **हेतुहेतुमद्भावेति ।।** मायामात्रमिति हेत्वर्थस्य, इदं द्वैतं न भ्रान्ति-कल्पितमिति प्रतिज्ञार्थस्य चेत्यर्थः । अप्रयोजकतामाशङ्क्य निराहेत्याह- **परमेश्वरेणेति ।।** अतिदेशेनापेक्षितं पूरयति- **परमिति ।।** कथम आक्षेपार्थमुपेत्य विपर्ययपर्यवसानमाह- **न कथञ्चिदिति ।।** फलितमाह- **अत इति ।। अयुक्तमिति ।।** भेदपञ्चकस्यानादिसत्यत्वपरतया व्याख्यानमित्यर्थः । बुद्धिवैशद्यायार्थान्तरमाह- **अथ वेति ।।** कथमित्यतः परं व्याख्येय इति शेष इति भावः। मौलमित्यत इतिपदमैकपद्येन व्याचष्टे- **आक्षेपात् परमिति ।।** अनेन 'इति चासावेष च इत्येष तस्मात् इत्यतः' इति व्याख्यातं भवति। पदभेदेनापि व्याचष्टे- **इत्याक्षेप इति ।।** एतच्छब्दस्य यच्छब्दसापेक्षत्वात् तं योजयति- **यतोऽत इति ।।** आहेति स्थानितो ब्रूञस्सकर्म-कत्वात् कर्माध्याहरति- **अर्थान्तरमिति ।। अनेन** पादेन। **श्रुतिर्विरोधिनी। ल्यबूलोपेति ।।** ल्यपोऽदर्शनेऽपि तदर्थावगतावित्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह- **यदिदमिति ।।** परमार्थनामभ्रान्त्या शङ्कते- **नन्विति ।।** विवृणोति स्वाभिप्रेतयोगमिति शेषः ।

**मूलम्- अन्यथा ह्यद्वैतः सर्वभावानामिति व्यर्थं स्यात्। सर्वभावानां मध्ये तस्यैक-स्यैवाद्वैतत्वमित्युक्ते समाधिकराहित्यमेवोक्तं स्यात् । अन्येषां सर्वभावानाञ्च समाधिकभावः । 'विकल्पो विनिवर्तेत कल्पितो यदि केनचित्' इति वाक्यशेषाच्च न कल्पितत्वमस्येति ज्ञायते। निवर्तत इत्यङ्गीकारे निवर्तेत, विद्येतेति च प्रसङ्गरूपेण कथनं यदिशब्दौ च न युज्यन्ते। विद्येतेत्यस्य चोत्पत्त्यर्थानङ्गीकारे यद्यदस्ति तत्त-न्निवर्तत इति व्याप्त्यभावान्निवर्तेतेति न युज्यते। अतः प्रपञ्चस्यानादिसत्यत्वपरमिदं वाक्यम्। अत उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यत इत्याह। अज्ञात एव द्वैतं न विद्यते। अज्ञानिनां पक्ष एव द्वैतं न विद्यत इत्यर्थः ।**

**(त.मं.) अन्यथा** नात्रोत्तमार्थमात्रमुच्यत इत्यङ्गीकारेऽद्वैतः सर्वभावानामिति व्यर्थं स्यात्। न ह्येकजीववादिपक्षेऽपि सर्वपदार्थानां द्वैताभावः । एकजीवातिरिक्तस्य सर्वस्य निवृत्त्यभ्युप-गमात्। समाधिकराहित्ये सम्भवति चाद्वैतशब्दः अद्वितीयो धनुर्धर इत्यादिवत्। सर्वभावानां चेति चशब्दोऽवधारणे । यद्ययं **विकल्पो** भेदः केनचित्कल्पितो भ्रान्त्या तर्हि **विनिवर्तेत** बाध्येत । न च निवर्तते। तस्मान्न कल्पित एव। उभयत्रापि निवर्तेतेत्यस्य च निवर्तत इत्यर्थाङ्गी-कारे। ननु विद सत्तायामिति च धातोः विद्यमानत्वात् अत्र विदेः सत्ताऽर्थः किं न स्यादित्यत आह- **विद्येतेति ।।** यद्यत् सदसद्विलक्षणं तत्तन्निवर्तत इति हि व्याप्तिः तत्पक्षे।

**टीका-** कस्मादेवं व्याख्यायते, प्रतीत एवार्थः किं न स्यादित्यतोऽस्याः श्रुतेरभिप्रेतां युक्तिमाह- **अन्यथेति ।।** यदि द्वितीयशून्यत्वमेव तस्याः श्रुतेरर्थः स्यात् तर्हि सर्वभावानामित्येतद् व्यर्थं विगतप्रयोजनं विरुद्धप्रयोजनञ्च स्यात् । कथमिति चेत्, सर्वभावानामित्यनेन विनैव देवोऽ-द्वैत इत्येतावता विवक्षितार्थसिद्धेः तस्य प्रयोजनशून्यत्वं स्फुटमेव

। विरुद्धप्रयोजनत्वमुपपादयति- **सर्वेति ॥** सर्वभावानामिति निर्धारणे ह्येषा षष्ठी। लक्षणान्तरासम्भवात्। तथा च कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते यथा कृष्णाया एव सम्पन्नक्षीरतमत्वम्, अन्यासां तदभाव इत्युक्तं स्यात्तथा सर्वभावानां मध्ये तस्यैकस्यैवाद्वैतत्वमित्युक्ते एकस्यैवाद्वितीयत्वम्, अन्येषां सर्वभावानां सद्वितीय-त्वमित्युक्तं भवति। न चैतद्युक्तम्। तस्याद्वितीयत्वेऽन्ये भावा एव न सन्ति। केषां सद्वितीयत्वं स्यात्। ततोऽयं द्वैतशब्दः समाधिकवाचीत्यङ्गीकर्तव्यम्। तथा च तस्यैकस्य समाधिकराहित्यम्, अन्येषां तत्साहित्यं चोक्तं भवेत्। तच्चाद्वैतमतविरुद्धमिति।

कुत एवं 'प्रपञ्चो यदि' इति श्लोको व्याख्यायते। जडजीवात्मकस्य सर्वस्यैकजीवाज्ञान-कल्पितत्वमेवार्थः किं न स्यादित्यत आह- **विकल्प इति ॥ विकल्पो** भेदो यदि केनचिदज्ञानादिना कल्पितः स्यात्तदा निवर्तेत बाध्येतेति कल्पितत्वपक्षेऽनिष्टप्रसङ्गो वाक्यशेषेऽभिधीयते। प्रसङ्गस्य च विपर्यये पर्यवसानमावश्यकमिति वाक्यशेषादस्य प्रपञ्चस्य कल्पितत्वं नास्तीति विज्ञायते। तेन चास्य श्लोकस्य प्रपञ्चस्य कल्पितत्वमर्थो न भवतीत्यपि विज्ञायत इत्यर्थः। उक्तवक्ष्यमाण-ज्ञापकान्तरसमुच्चयार्थश्चशब्दः।

भवेदेतत्सर्वं यदि श्लोकद्वये निवृत्त्यापादनं स्यात्। न चैवम्। किन्तु वस्तु(स्थिति)कथनमेतदित्यत आह- **निवर्तत इति ॥** वस्तुकथनस्योपलक्षणमेतत्। यद्यत्र निवृत्तिर्नाऽपाद्यते किं तर्हि स्वरूप-कथनमेवैतदित्यङ्गीक्रियते तदा विद्यमानवत्प्रतीयमानोऽप्ययं प्रपञ्चो निवर्तिष्यते। केनचित्कल्पितोऽयं विकल्पो विनिवर्तिष्यत इति वक्तव्यम्। प्रसङ्गो रूप्यते प्रतिपाद्यतेऽनेनेति **प्रसङ्गरूपो** लिङ्, तेन कथनं, यदिशब्दौ च न युज्यन्ते। यदिशब्दसहितस्य च लिङो यदि पर्वतो निरग्निकः स्यात्तदा निर्धूमोऽपि स्यादित्यादौ प्रसङ्ग एव दृष्टत्वात्। यद्यपि यदिशब्द एक एव। तथाऽपि स्थानद्वये पठितत्वाद्यदिशब्दावित्युक्तम्। क्वचिद्यदिशब्दश्चेति पाठः। तत्र प्रसङ्गरूपेण कथनद्वयमङ्गीकृत्य न युज्यन्त इति बहुवचनम्। लिङ एकत्वेऽपि धातुभेदेन समुदाययोर्भेदात्।

अस्त्वेवं, तथाऽपि विद्येतेत्यस्योत्पत्त्यर्थाङ्गीकारो न युक्तः। अप्रसिद्धत्वादित्यत आह- **विद्येते-त्यस्येति ॥** अत्र शब्दे निविष्टस्य विदेरित्यर्थः। उत्पत्तिश्चासावर्थश्चेति विग्रहः। उत्पत्तिरर्थोऽस्येति बहुव्रीहिर्वा। तथात्वे भावप्रधानो निर्देशः। सत्तार्थाङ्गीकारे चेति शेषः। यद्यादिबलात् प्रसङ्गोऽयमिति तावन्निश्चितम्। प्रसङ्गस्य च व्याप्त्याऽवश्यं भवितव्यम्। व्याप्तिश्चोत्पत्त्यर्थाङ्गीकारे सम्भवति। उत्पत्तिमतो भावस्य विनाशनियमदर्शनात्। न तु सत्तार्थाङ्गीकारे व्याप्तिः सम्भवति, नित्येष्वात्मादिषु व्यभिचारात्। ततश्च निवर्तेतेत्यव्याप्येनाव्यापकस्याऽपादनं न युज्यते। अतस्तदुपपत्तये विदेर-प्रसिद्धमपि उत्पत्त्यर्थत्वमङ्गीकार्यमिति।

एवमुपपादितं सार्धश्लोकव्याख्यानमुपसंहरति- **अत इति ॥ प्रपञ्चस्य** प्रकृष्टस्य पञ्चविधस्य भेदस्य। द्वन्द्वात्परं श्रूयमाणः त्वप्रत्ययः प्रत्येकमभिसम्बध्यते। अनादित्वं सत्यत्वं च **परम्** उद्देश्यं, प्रतिपाद्यं यस्य तत्तथोक्तम्। अनादिसत्यत्वशब्दस्य नित्यसापेक्षत्वात् समासो युक्तः। ननु तर्हि ज्ञाते द्वैतं न विद्यत इति वाक्यशेषविरोध इत्यत आह- **अत इति ॥** यत एवं पूर्ववाक्यं भेदस्याना-दित्वं सत्यत्वञ्च प्रतिपादयतीति निश्चितम्, अत एतदपि वाक्यं भेदसत्यतामाहेति गम्यत इत्यर्थः। यद्यप्युपदेशादिति पादो नोक्तविरोधी। तथाऽपि अत्र नञ्प्रश्लेषप्रदर्शनाय तत्पाठः। कथमिदं वाक्यं भेदसत्यतामाहेत्यत आह- **अज्ञात एवेति ॥** तत्त्वेऽज्ञाते सत्येव, द्वैतं न विद्यत इत्यङ्गीकार इत्यर्थः। एतदेव स्पष्टयति- **अज्ञानिनामिति ॥**

**(र.टि.) लक्षणान्तरासम्भवादिति ॥** 'कर्तृकर्मणोः कृति' इत्यादिसूत्रान्तरप्राप्तेरयोगादित्यर्थः। **तेन चा-स्येति ॥** एवञ्चास्येत्येतदावत्यर्थिशब्दमध्याहृत्य न कल्पितत्वमस्येत्येतत्प्रकारान्तरेण व्याख्यातमिति ज्ञात-व्यम्। ननु निवर्तिष्यत इत्यर्थाङ्गीकारे इति वक्तव्यम्। निवर्तत इति कथमुक्तम्। किञ्च विद्यत इत्यर्थाङ्गीकार इत्यपि वक्तव्यम्। उत्तरत्र तस्यापि ग्रहणादित्यत आह-

**वस्तुकथनस्येति ।। यदिशब्दसहितस्येति ।।** यद्यपि कल्पित इत्यत्र लिङ् न श्रूयते । तथाऽपि यदिशब्दबलात्स्यादिति लभ्यत इति भावः । अत एव सुधायाम् 'केन-चिदज्ञानादिना कल्पितः स्यात्' इत्युक्तम् । **कथनद्वयमिति ।।** विद्येत निवर्तेतेति कथनद्वयमित्यर्थः । ननु प्रसङ्गप्रतिपादकलिङोऽप्येकत्वात्तेन कथनमप्येकमेवेत्यत आह- **लिङ एकत्वेऽपीति ।।** ननूत्पत्तिर्विदि-धातोरेवार्थत्वेनाङ्गीकृता, न प्रत्ययस्यापि । तत्कथं विद्येतेत्यस्येत्युक्तमित्यत आह- **अत्र शब्द इति ।। सत्तार्थाङ्गी-कारे चेति शेष इति ।।** उत्पत्त्यर्थानङ्गीकारमात्रस्य यद्यदस्तीति वक्ष्यमाणव्याप्त्यभावोपपादकत्वाभावादिति भावः । **उत्पत्त्यर्थाङ्गीकार इति ।।** अनेन मूले 'उत्पत्त्यर्थानङ्गीकारे' इति वचनं तदङ्गीकारे व्याप्तिः सम्भवतीति ज्ञापयितुमुक्तमित्युक्तं भवति । **इति निश्चितमिति ।।** प्रतिपादयतीत्येतावन्मात्रोक्तावन्योन्याश्रयः स्यात् । वाक्यशेषविरोधाभावे पूर्ववाक्यस्यानादिसत्यत्वपरत्वम् । तस्मिन्सति वाक्यशेषस्यार्थान्तरपरत्वेन तद्विरोधाभाव इतीति भावः । अत एव प्राग् 'यद्यादिबलात्' इत्युक्तम् । ननु ज्ञान्यज्ञानिपुरुषापेक्षया द्वैतस्य विद्यमानत्वा-विद्यमानत्वे कथम्? वस्तुनो द्वैरूप्यायोगादित्यत आह- **तत्त्वे ज्ञाते सत्येवेति ।।** द्वैताभावाङ्गीकार एवात्र श्रुतावभिप्रेतो न तु वस्तुगत्या द्वैताविद्यमानत्वमित्यर्थः । एवञ्च 'अज्ञनिनां पक्ष एव' इत्युत्तरवाक्ये 'तस्मादज्ञानिनां मतम्' इति समाख्याऽनुरोधेन पक्षशब्दः प्रथमान्तः । एवकारश्चाज्ञानिनामेवेति सम्बध्यत इति सूचितं भवति ।

**(रा.टि.) अस्याः श्रुतेरिति ।।** अद्वैतः सर्वेति श्रुतिव्याख्यानपराया 'अद्वैतं परमार्थतः' इति श्रुतेरित्यर्थः । **तस्याः श्रुतेरिति ।।** 'सर्वभावानाम् इति श्रुतेरित्यर्थः । **निर्धारण इति ।।** द्वितीयस्य तृतीयपादे 'यतश्च निर्धारणम्' इति सूत्रे जातिगुणक्रियाभिस्समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । यतो निर्धारणं ततोऽपि शब्दरूपात्षष्ठी भवतीत्युक्तत्वादिह च भावेभ्यो देवस्याद्वैतत्वगुणेन पृथक्करणात्तत्र षष्ठी निर्धारण इत्यर्थः । उदाहरणन्त्वाकर एवाग्रे व्यक्तम् । **लक्षणेति ।।** 'षष्ठी शेषे' इत्यादिषष्ठीविधायकसूत्रान्तरेत्यर्थः । एवशब्दसामर्थ्यलब्धमर्थमुपपाद्य विरुद्धप्रयोजनकत्वं व्यनक्ति । **न चैतदिति ।।** सर्वभावानां मध्य इत्यादिनोक्तमित्यर्थः । यदि द्वितीयशून्यत्वमेव तस्याः श्रुतेरर्थः स्यात्तर्हीत्यनुषङ्गः । एतन्न च युक्तमित्यर्थः । कुत इत्यतोऽयुक्तता‍ं व्यनक्ति- **तस्येति ।। आवश्यकमिति ।।** इतिशब्दो हेत्वर्थः । देव इत्युक्तस्येत्यर्थः । न कल्पितत्वमस्येति वाक्ये अस्येत्यस्य 'प्रपञ्चो यदि' इति श्लोकस्येति भेदपञ्चकस्येति चार्थद्वयमुपेत्य योजयति- **वाक्यशेषादिति ।। उक्तेति ।।** मायामात्रपदोक्त- **(रा.टि.)** ज्ञापकद्वयेन निवर्तेतेत्यादिवक्ष्यमाणेन च समुच्चयार्थ इत्यर्थः । आपाद्यानुगुणाऽपादकघटनायाऽह- **वस्तुकथनस्येति ।। प्रसङ्गरूपेण कथनद्वयमिति ।।** श्लोकद्वय इति योज्यम् । प्राङ्निवर्तत इत्यङ्गीकार इत्यादिमूलवाक्यस्य मन्त्रद्वयोक्तप्रसङ्गपरतया व्याख्यानात्सार्धश्लोकेत्यग्रेतनग्रन्थाच्चेति ज्ञेयम् ।

ननु मूले प्रसङ्गरूपाभ्यामित्यनुक्त्वा मन्त्रानुरोधेन प्रसङ्गरूपेणेत्युक्त्या लिङ एकत्वावगमात्कथं प्रसङ्गद्वय-कथनमित्यत आह- **लिङ एकत्वेऽपीति ।।** यद्यपि विकल्प इति मन्त्रे धातुभेदो न श्रूयते । तथाऽप्यज्ञानादिना कल्पितस्स्यादिति स्याच्छब्दाध्याहारेण प्रसङ्गशरीरस्योक्तत्वादस्ति धात्वोर्भेदः । तद्भेदेन तदन्तसमुदाय-योर्भेदात्प्रसङ्गद्वयकथनाङ्गीकारेण बहुवचनं युक्तमित्यर्थः । निवर्तेत विद्येतेति मूलोक्तलिङन्तपदद्वयपरप्रसङ्गद्वय-कथनमित्यादिग्रन्थ इत्यप्याहुः । समुदायस्योत्पत्त्यर्थत्वाभावादाह- **अत्रेति ।।** विद्येतेति शब्द इत्यर्थः । आपाद्याऽ-पादकयोरवैयधिकरण्यायाऽह- **इति शेष इति ।।** नन्वनादित्वपदस्य प्रपञ्चपदेन साकाङ्क्षस्य कथं सत्यपदेन समास इत्यत आह- **नित्येति ।।** देवदत्तस्य गुरुकुलमित्यादाविवेति भावः । **निश्चितमिति ।।** प्रसङ्गरूपाद्युप-पत्तिबलादिति भावः । इत्याहेत्यत्रेतिशब्दात्परमेतदपि वाक्यमिति कर्त्रध्याहारपूर्वं प्रकृतं कर्मकारकमाह- **एतदपि वाक्यं भेदसत्यतामाहेतीति ।।** अत इत्यस्यान्वयाय साध्यमाह- **इति गम्यत इति ।।** द्वैताभावपरत्वे तु अस्य पादस्य पूर्ववाक्यविरोधेनाप्रामाण्यापत्तेरिति भावः । कथमिदं वाक्यं भेदसत्यतामाहेत्यत आह- **अज्ञात एवे-तीति ।।** यद्यप्ययमर्थोऽत्र न वचनवृत्त्या प्रतीयते । तथाऽपि द्वैताभावपक्षस्य तत्त्वाज्ञानिमतत्वेन निन्दनात्तद्बलेन द्वैतसत्यत्वं प्राप्तम् । 'ऐकात्म्यं नाम यदिदम्' इत्यादाविवेति भावः । अज्ञाते द्वैतं न विद्यत इति भ्रमनिरासायाऽह- **तत्त्वेऽज्ञात इति ।।** अनन्वयनिरासायाऽह- **इत्यङ्गीकार इति ।।**

**(श्री.टि.) विवक्षितार्थेति ।।** द्वितीयशून्यत्वरूपविवक्षितार्थेत्यर्थः । ननु निर्धारणे ह्येषा षष्ठीति कुतः? 'कर्तृ-कर्मणोः कृति' इति सूत्रेण कर्तरि कर्मणि वा किं न स्यादित्यत आह- **लक्षणान्तरेति ।।** सर्वभावानां कर्तृत्व-कर्मत्वरूपार्थस्य प्रकृतेऽयोगेन सूत्रान्तरप्राप्तेरसम्भवादित्यर्थः । **गवां** मध्ये । **प्रपञ्चस्य** भेदपञ्चकस्य । कल्पित-त्वाभावे ज्ञापकान्तरस्यानुक्तत्वाद्वाक्यशेषाच्चेति चकारो व्यर्थ इत्यत आह- **उक्तवक्ष्यमाणेति ।।** द्वैतस्य भ्रान्तिकल्पितत्वाभावे परमेश्वरेण ज्ञातत्वरक्षितत्वरूपं ज्ञापकं मायामात्रपदेन पूर्वमुक्तम् । वस्तुस्थितिकथन-परत्वनिरासेनाऽपादनत्वसमर्थनपरं यद्यादिशब्दरूपं, 'ज्ञाते द्वैतं न विद्यते' इति वाक्यशेषरूपं 'जीवेश्वरभिदा च' इति प्रमाणरूपं च ज्ञापकान्तरं वक्ष्यमाणं द्रष्टव्यम् । **वस्तुस्थितीति ।।** प्रपञ्चो **विद्येत** विद्यत इव दृश्यते ।

**निवर्तेत** इदानीं निवृत्त्यभावात् उत्तरत्र निवर्तिष्यते । केनचिदज्ञानादिना कल्पितो विकल्पितो भेदो निवर्तेतेदानीं निवृत्त्यभावाद्धिनिवर्तिष्यते बाध्यत इति वस्तुस्थितिकथनपरमेवैतत्, नाऽपादनरूपमित्यर्थः । ननु निवर्तत इत्यङ्गीकार इतिवद् विद्यत इत्यर्थाङ्गीकार इत्यपि वक्तव्यम् । उत्तरत्र तस्यापि ग्रहणादित्यत आह- **वस्तुकथन-स्येति ॥** वस्तुस्थितिकथनस्येत्यर्थः । तथा च निवर्तत इत्यङ्गीकार इत्यस्य वस्तुस्थितिकथनपरत्वस्याङ्गीकार इत्यर्थो द्रष्टव्यः । **यदिशब्दसहितस्य च लिङ इति ॥** कल्पितो यदि केनचिदित्यत्र न लिङ् श्रूयते, तथाऽपि (**श्री.टि.**) यदिशब्दबलात् कल्पितः स्यादिति लभ्यत इति भावः । अत एव सुधायां 'यदि केनचिदज्ञानादिना कल्पितः स्यात्' इत्युक्तम् । **स्थानद्वये** श्लोकद्वये । **कथनद्वयमिति ॥** विद्येत निवर्तेति प्रसङ्गरूपेण कथनद्वयं लिङ्द्वयमिति यावदित्यर्थः । ननु लिङोऽप्येकत्वेन प्रसङ्गरूपेण कथनद्वयाभावाद् यदिशब्दश्चेति पाठे न युज्यन्त इति बहुवचनमनुपपन्नमेवेत्यत आह- **लिङ एकत्वेऽपीति ॥ धातुभेदेनेति ॥** 'विद सत्तायाम्' 'वृतु वर्तने' इति धात्वोर्भेदेनेत्यर्थः । वृतुधातोरेव नीत्युपसर्गबलेन निवृत्त्यर्थत्वमिति द्रष्टव्यम् । **समुदाययोरिति ॥** तत्तद्धातुसम्बद्धयोर्लिङोरपीत्यर्थः । ननु विदिधातोरेवोत्पत्त्यर्थकत्वं न प्रत्ययस्यापि । तस्य कर्तृत्वार्थकत्वात् । एवं च प्रत्ययसहितस्य विद्येतेत्यस्योत्पत्त्यर्थकत्वाभावात्'विद्येतेत्यस्योत्पत्त्यर्थानङ्गीकारे' इति कथमुक्तमत आह- **अत्र शब्द इति ॥** विद्येतेति शब्दे निविष्टस्य विदेर्धातोरित्यर्थः । **तथात्वे** बहुव्रीहित्वे । **भावप्रधान इति ॥** उत्पत्त्यर्थत्वानङ्गीकार इत्यर्थः ।

उत्पत्त्यर्थानङ्गीकारमात्रस्य यद्यदस्तीति वक्ष्यमाणव्याप्त्यभावोपपादकत्वाभावादाह - **सत्तार्थाङ्गीकारे चेति ॥ व्याप्त्याऽवश्यं भवितव्यमिति ॥** 'व्याप्तिस्तर्काप्रतिहतिः' इत्यादिना तर्कस्याङ्गपञ्चकमभिधाय, अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेत्' इति कारिकायामुक्तत्वेन व्याप्त्यभावे तर्कस्य प्रशिथिलमूल-त्वाऽपत्त्याऽऽभासत्वाऽपत्तेर्व्याप्त्याऽवश्यं भवितव्यमिति भावः । ध्वंसव्यावृत्त्यर्थं भावस्येत्युक्तम् । **अव्याप्ये-नेति ॥** सत्त्वस्य निवृत्तिं प्रत्यव्याप्यत्वेनाव्याप्येन सत्त्वेनाव्यापकस्य निवर्तनस्याऽपादनं निवर्तेतेत्यनेन क्रियमाणं न युज्यत इत्यर्थः। नन्वनादिसत्यताशब्दस्य प्रपञ्चशब्देन सापेक्षत्वेन समर्थत्वात्तेनैव समासो वक्तव्यो न पर-पदेन । 'सापेक्षमसमर्थवद्भवति' इति वचनात् । तथा च प्रपञ्चानादिसत्यतापरमिति वक्तव्यमित्यत आह- **अनादिसत्यत्वशब्दस्येति ॥ नित्यसापेक्षत्वादिति ॥** उत्थिताऽकाङ्क्षावत्त्वादित्यर्थः । 'सापेक्षमसमर्थवद्भवति' इति वचनमनित्यसापेक्षविषयम् । उत्थाप्याऽकाङ्क्षास्थलविषयमिति यावत् । अस्य तूत्थिताऽकाङ्क्षावत्त्वादन्येन पदेन समासेऽपि पूर्वपदेनाऽकाङ्क्षा न विहन्यते, देवदत्तस्य गुरुकुलमितिवदित्यर्थः । **नोक्तविरोधीति ॥** तथा च न सह पठितव्य इत्यर्थः । **नञ्प्रश्लेषेति ॥** अज्ञात इति नञ्प्रश्लेषेत्यर्थः । तथा चोपदेशादिति पादोदाहरणाभावे नञ्प्रश्लेषप्रदर्शनं न सम्भवतीति भावः ।

**(पां.टि.) स्फुटमेवेति ॥** अतस्तदनुपपादनं ग्रन्थकारस्य युक्तमेवेति भावः । **लक्षणान्तरेति ॥** स्वस्वामिभावरूपसम्बन्धादिरूपार्थान्तरेत्यर्थः । तथा सति भेदप्रसङ्गादिति भावः । ननु निवर्तत इत्यर्थाङ्गीकारे विद्यत इत्यर्थाङ्गीकारे चेति वक्तव्यम् । तत्कथं निवर्तत इत्येवोक्तमित्यत आह- **वस्तुकथनस्येति ॥ यदिशब्द-सहितस्येति ।** यद्यपि कल्पित इत्यत्र लिङ् न श्रूयते । तथाऽपि यदिशब्दबलात्स्यादिति लभ्यते । 'केनचिद-ज्ञानादिना कल्पितः स्यात्' इति टीकाकृता पूर्वमुक्तत्वादिति द्रष्टव्यम् । **कथनद्वयमिति ।** 'विद्येत निवर्तेतेति' 'कल्पितः स्यान्निवर्तेत' इति च कथनद्वयमित्यर्थः । ननु प्रसङ्गप्रतिपादकलिङोऽप्येकत्वात्तेन कथनमप्येकमेवेति कथं प्रसङ्गद्वयाङ्गीकारेण बहुवचनोपपत्तिरित्यत आह- **लिङ एकत्वेऽपीति ॥** ननूत्पत्तिर्विदिधातोरेवार्थत्वेनाङ्गी-**(पां.टि.)** कृता, न प्रत्ययस्यापि । तत्कथं 'विद्येतेत्यस्य' इत्युक्तमित्यत आह- **अत्र शब्द इति ॥** विद्येतेति शब्द इत्यर्थः । उत्पत्त्यर्थानङ्गीकारमात्रस्य यद्यदस्तीति वक्ष्यमाणव्याप्त्यभावोपपादकत्वाभावादाह- **सत्तार्थाङ्गी-कारे चेति शेष इति ॥** ननु व्याप्त्यभावो न दोषः । शब्दविधयैवास्य वाक्यस्य बोधकत्वसम्भवादित्यत आह- **यद्यादिबलादिति ॥ अवश्यम्भवितव्यमिति ॥** व्याप्तिहीनस्य प्रसङ्गाभासत्वादिति भावः । नन्वनादि-सत्यत्वपदस्य प्रपञ्चस्येत्येतत्सापेक्षात्वात्सापेक्षस्य च 'सापेक्षमसमर्थं भवति' इति न्यायेन वृत्तावुपसर्जनपदस्या-प्रधानार्थाभिधायिना भाव्यत्वेनाप्रधानत्वस्य, स्वविशेषणापेक्षया च प्रधानत्वस्याऽवश्यकत्वादेकस्यैकदा प्रधानत्वैकार्थीभावयोरसम्भवेनासमर्थत्वान्न परशब्देनानादिसत्यत्वपरमिति समासः सम्भवति । 'समर्थः पदविधिः' इति समासविधौ समर्थाधिकारेण निरपेक्षस्यैव तद्विधानादित्यतः, पूर्वकायो नाभेः, देवदत्तस्य गुरुकुलमित्यादौ समासदर्शनेन नित्यसापेक्षस्य तत्सिद्ध्या पूर्वादिशब्दवत्ससम्बन्धिशब्दत्वेन नित्यसापेक्ष-स्यानादिसत्यत्वशब्दस्य परशब्देन समासो युक्त इत्याह- **अनादिसत्यत्वशब्दस्येति ॥ इति निश्चित-मिति ॥** प्रतिपादयतीत्येतावन्मात्रोक्तावन्योन्याश्र-यात् । वाक्यशेषविरोधाभावे पूर्ववाक्यस्यानादिसत्यत्वपर-त्वम् । तस्मिन् सति वाक्यशेषस्यार्थान्तरपरत्वेन तद्विरोधाभाव इतीति भावः । अत एव प्राक् 'यद्यादिबलात्' इत्युक्तम् । ननु ज्ञान्यज्ञानिपुरुषभेदेन कथं द्वैतस्य विद्यमानत्वाविद्यमानत्वे । तथात्वे वस्तुनो

द्वैरूप्यप्रसङ्गात्। न हि विरुद्धाकारद्वयालिङ्गितं वस्त्वस्तीत्यत आह- **तत्त्वेऽज्ञात इति ॥**

**(व्या.टि.)** स्वव्याख्यानदाढर्याय परापव्याख्यां दूषयितुमुपक्षिपति- **कस्मादेवमिति ॥ विरुद्धप्रयोजनं चेति ॥ विरुद्धं** विपरीतं प्रयोजनं यस्येति, **विरुद्धं** विहतं **प्रयोजनम्** उद्देश्यमिति वेति विगृह्य उद्देश्यविघातः अनिष्टप्राप्तिश्चेति व्याख्येयम्। आद्यस्यानुक्त्या न्यूनतां परिहरति- **स्फुटमेवेति ॥ निर्धारण इति ॥** 'यतश्च निर्धारणम्' इतिसूत्रादित्यर्थः। **उक्तं भवतीति ॥** फलिष्यतीत्यर्थः। विहतप्रयोजनत्वमाह- **न चैतद्युक्त-मिति ॥ उक्तं भवेत् ॥** फलिष्यतीत्यर्थः। तस्यानिष्टत्वमुपपादयति- **तच्चेति ॥** वाक्यशेषे कल्पितत्वाभावो न वाक्यार्थ इति कथं तद्विरोध इत्यतो न वाक्यविधया तदर्थावबोधः, किन्तु दूषणानुमानविधयेत्याशयेन तद्वाक्यं व्याचष्टे- **विकल्प इत्यादिना ॥** 'न कल्पितत्वमस्य' इत्येतदावृत्त्या योजयति- **अस्य प्रपञ्चस्येत्यादि ॥** वस्तुकथनमेतत्। लिङन्तं लडर्थत्वेन विवक्षितमित्यर्थः। लिङि प्रसङ्गरूपपदं निर्वक्ति- **रूप्यत इति ॥** रूपयतेः करणे 'घञर्थे कविधानम्' इति कप्रत्यय इति भावः। लिङोऽर्थान्तरसम्भवादाह- **यदिशब्दसहितस्येति ॥** प्रसङ्गस्यैवेत्यर्थान्तरवारणम्। **स्थानद्वयेऽपीति ॥** घटक इत्यादौ घटशब्दस्य द्व्यच्कत्वं यथा। **द्वयमिति ॥** विद्येतेति निवर्तेतेति च द्वयमित्यर्थः। **धातुभेदेनेति ॥** विदिवृतिभेदेनेत्यर्थः। प्रकृतिप्रत्ययसमुदायप्राप्तेराह- **अत्र शब्द इति ॥** विद्येतेतिशब्द इत्यर्थः।

नन्वेतदभित्तिकचित्रायितप्रसङ्गत्वस्यैवानिश्चयादित्यत आह- **यद्यादीति ॥** यदिपूर्वो लिङ् यद्यादिस्तद्वला-दित्यर्थः। **अव्याप्येन** आपादकेन **अव्यापकस्य** आपाद्यस्येत्यर्थः। पृथगुभयार्थत्वायाऽऽह- **द्वन्द्वात्परमिति ॥ (व्या.टि.)** ननु कथमिदं विज्ञायते। किं द्वन्द्वसमासाद्भावप्रत्ययः उत भावप्रत्ययान्ताद् द्वन्द्वसमासः। नाऽद्यः। अनादित्वं सत्यत्वं चेति भावप्रत्ययान्तत्वेन प्रदर्शयिष्यमाणविग्रहानुपपत्तिर्भावप्रत्ययान्तस्य समाससमर्थना-नुपपत्तिश्च। न द्वितीयः। द्वन्द्वात्पर इति पूर्ववाक्यानुपपत्तिः। तस्माद्दुर्गमेयं फक्किकेति चेत्, शृणु। द्वन्द्वात्परो भावप्रत्ययः। न च प्रत्येकमभिसम्बध्यत इत्यस्यायुक्तिः। प्रत्येकमभिसम्बध्यत इत्यस्य प्रत्येकं संयोज्यते। योग्यतया प्रत्येकमन्वीयते। स्वप्नमायादिकेष्वित्यत्रत्यादिशब्दवदित्यर्थात्। न च भावप्रत्ययेन विग्रहप्रदर्शना-नुपपत्तिः। तस्य स्वप्नादिके मायादिकेष्वित्यत्रेव फलितप्रदर्शनपरतोपपत्तेः। न च त्वान्तस्य समाससमर्थनपरोत्तर-वाक्यानुपपत्तिः। त्वान्तस्य परशब्देन समाससमर्थनपरतोपपत्तेः। **नित्यसापेक्षत्वादिति ॥** ध्रुवापेक्षत्वादि-त्यर्थः। अयं भावः। त्वान्तस्य भाववाचकस्य भवितृवाचकषष्ठ्यन्तप्रपञ्चपदसापेक्षत्वेऽपि तस्यासामर्थ्यहेतुत्वा-भावेन गमकत्वाद्देवदत्तस्य गुरुकुलमितिवत्परपदेन समास इति। **विरोध इति ॥** अद्वैते ज्ञाते द्वैतं न विद्यत इत्यर्थप्रतीतेरित्यर्थः। आहादेशप्रकृतिभूतस्य ब्रूञः कर्मापेक्षायामाह- **भेदसत्यतामाहेति ॥ प्रश्लेषदर्शना-येति ॥** वादर् अज्ञात इति स्थिते 'अतो रोरप्लुतात्' इति रोरुत्वे गुणे 'एङः पदान्तात्' इति पूर्वरूपे च वादोऽज्ञात इति भवतीति सन्धिज्ञापनार्थमित्यर्थः। वस्तुतो विद्यमानस्याज्ञानिनां पक्षेऽप्यविद्यमानत्वायोगादङ्गीकार इति शेषोक्तिः।

**मूलम्-** **'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा।**
**जीवभेदो मिथश्चैव जडजीवभिदा तथा।**
**मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः।**
**सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात्।**
**न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः।**
**कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते।**
**द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्।**
**मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना।**
**तस्मात् सत्यमिति प्रोक्तं परमो हरिरेव तु ॥' इति परमश्रुतिः।**

**मैत्रेयीशाखायां च 'अथ ज्ञानोपसर्गा' इत्युक्त्वा 'अथ ये चान्ये मिथ्यातर्कैः दृष्टान्तैः कुहकेन्द्रजालैः वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् प्राकाश्या ह्येते तस्करा अस्वर्ग्या इति ह्याह-**

**नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।**
**भ्राम्यंल्लोको न जानाति वेदविद्यान्तरं तु यत् ॥ इति ।'**

**आत्मसम्बन्धि किमपि नास्तीति वादो नैरात्म्यवादः ॥**

**(त.मं.)** मिथ्यात्वे प्रयुज्यमानाः तर्काः **मिथ्यातर्काः** । विमतं मिथ्या दृश्यत्वादित्यादयः । **कुहकानां** मायाविनाम् । इन्द्रजालादयः तत्र दृष्टान्ताः । नैरात्म्ये वादो येषां ते नैरात्म्यवादाः । त एव **कुहकाः** मायिनः ।

**टीका-** एवमान्तरोपपत्तिबलादयमेव श्रुत्यर्थ इत्युक्तम् । श्रुत्यन्तरसंवादाच्चेत्याह- **जीवेश्वरेति ॥** चशब्दास्तथाशब्दौ च समुच्चये । एवशब्दावभेदसाहित्यनिरासार्थौ । **भेदपञ्चक इति ॥** 'पञ्चद्दशतौ वर्गे वा' इत्यत्र वाशब्देन वर्गार्थे पञ्चशब्दस्य निपातनमङ्गीकृत्योक्तम् । 'सोऽयं सत्यो ह्यनादिश्च' इति प्रतिज्ञाद्वयम् । तत्रानादित्वं प्रसङ्गविपर्ययाभ्यामुपपादयति- **सादिश्चेदिति ॥** सत्यत्वमुपपादयितुं पूर्वप्रतिज्ञामनुवदति- **न चासाविति ॥** कुतो नेत्यतः प्रसङ्गविपर्ययावाह- **कल्पितश्चेदिति ॥** द्वैतमित्यनेन उपदेशादित्यर्धमुपसंहारार्थमिति ज्ञायते । **एतद्** द्वैतम् । इति **प्रोक्तं** निश्चितम् । परमो हरिरेवेत्यस्यापि 'अद्वैतं परमार्थतः' इत्यस्येव शङ्का व्याख्यानञ्च ।

श्रुत्यन्तरे प्रपञ्चमिथ्यात्ववादिनां निन्दितत्वाच्च न प्रपञ्चो यदीति वाक्यस्य प्रपञ्चस्यैकजीवाज्ञानपरिकल्पितत्वमर्थोऽङ्गीकार्य इति भावेनाह- **मैत्रेयीति ॥ अथ** अनन्तरं **ज्ञानोपसर्गाः** सम्यग्ज्ञानविघ्ना उच्यन्त **इत्युक्त्वा** इति प्रतिज्ञाय 'अथ ये चान्ये' इत्याद्युक्तमिति शेषः । ये चान्ये प्रागुक्तेभ्यः कापालिकादिभ्यो **मिथ्यातर्कैः** प्रपञ्चमिथ्यात्वसाधकैर्दृश्यत्वादिहेतुभिः । कुहकेन्द्र-जालैर्दृष्टान्तैः । **कुहकं** छद्मना प्रदर्शितम् । प्रकाशे भवाः प्राकाश्याः । 'इति ह्याह' इति ब्राह्मणं स्वोक्तार्थे साक्षित्वेन मन्त्रमुपादत्ते । इत्युक्तमर्थं मन्त्रोऽप्याह हीत्यर्थः । तमेव मन्त्रं पठति- **नैरात्म्येति ॥** नैरात्म्यवादैः कुहकैश्च मिथ्यात्वसाधकैः दृष्टान्तहेतुभिः । अर्थात्कुहकैर्दृष्टान्तैरिति भवति । **वेदविद्याऽऽन्तरं** वेदविद्याऽभिप्रायम् । नन्वत्र नैरात्म्यवादिनां बौद्धादीनां निन्दा श्रूयते, न मायावादिनां, तेषामात्मवादित्वेन नैरात्म्यवादित्वाभावादित्यत आह-**आत्मेति ॥** आत्मन इदम् आत्म्यम् । तस्याभावो निरात्म्यम् । 'अर्थाभावे यदव्ययम्' इति समासः । तस्य भावो नैरा-त्म्यम् । स्वार्थे वाऽण् । तस्य वादो नैरात्म्यवादः। अस्य तात्पर्यार्थोऽयम् **आत्मसम्बन्धीति** । अवश्यञ्चैतदङ्गीकार्यम् । वैदिकेषु 'परिस्थातुमिच्छन्ति' इति वचनात् । न हि बौद्धादयो वैदिकेषु परिस्थातुमिच्छन्तीति ॥

**(र.टि.) पञ्चशब्दस्य निपातनमिति ॥** विकल्पार्थकवाशब्दस्य पक्षे निपाताभाववच्छब्दान्तरनिपातनमप्यर्थ इति भावः ।

**(रा.टि.) पञ्चद्दशतौ वर्गे वेत्यत्र वाशब्देनेति ॥** यद्यपि वृत्तौ पञ्चशब्दो दशशब्दश्च डतिप्रत्ययान्तो निपा-त्यते । वर्गेऽभिधेये तदस्मिन्परिमाणमित्येतस्मिन्विषयेऽर्थे वाशब्दात् 'सङ्ख्याया अतिशदन्तायाः कन्' इत्यतोऽनु-वृत्तकन्प्रत्ययो भवति पञ्च परिमाणमस्य वर्गस्य पञ्चत् वर्गः, पञ्चको वर्गः, दशको वर्ग इत्येवोक्तं, न तु डप्रत्ययान्तो निपात इति । तथाऽपि श्रौतप्रयोगानुसारात्सोऽप्यङ्गीकार्य इति भावेनोक्तम्- **वाशब्देनेति ॥** डप्रत्ययान्तस्य निपातनमित्यर्थः । अपौनरुक्त्यायाऽह- **पूर्वप्रतिज्ञामनुवदतीति ॥** व्यवहितत्वात्पुनरनुवाद इति भावः । एतदित्यनुवादो द्वैतमिति व्याख्या । इति प्रोक्तमित्यनुवादो निश्चितमिति व्याख्या । **शङ्का व्याख्यानश्चेति ॥** ज्ञायत इत्यनुषङ्गः । 'यदि विकल्पः' इति पूर्वार्धे पञ्चविधो भेदो सत्य इत्यभिमतस्तर्ह्यद्वैतः सर्वभावानामिति व्यपदेशः कथमिति शङ्का । अद्वैतं परमार्थत इति परमार्थहरिमपेक्ष्याद्वैतम् । कोऽर्थः? हरिरेव परमः सर्वभावानां चेतनानां मध्ये समाभ्यधिकरहित इति व्याख्या च 'अद्वैतं परमार्थतः' इत्यनेन क्रियत इति 'परमो हरिरेव तु' इति वाक्येन ज्ञायत इत्यर्थः । क्त्वाप्रत्ययनिर्वाहायाऽह- **इत्याद्युक्तमिति शेष इति ॥** वेदविद्यान्तरन्तु यदितीत्यनन्तरमुक्तमिति शेष इत्यर्थः । इति ह्याहेत्यस्यार्थमाह- **इत्युक्तमिति ॥** 'ये चान्ये' इत्यादिनोक्तमर्थमित्यर्थः । **अर्थादिति ॥** योग्यताबलादित्यर्थः । आत्मन इदमात्म्यमिति ष्यञ्प्रत्यये टिलोपे चाऽत्म्यमिति रूपम् । **तस्य** आत्मसम्बन्धिनो भाव इत्यर्थे 'अव्ययं

विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभाव' इत्यादिसूत्रेणार्थाभावे यदव्ययमिति सुबन्तेन समस्यत इत्युक्तत्वात् 'निर्' इत्यभावार्थकाव्ययस्याऽत्म्यपदेन समास इत्यर्थः । आदिवृद्ध्यर्थमाह- **तस्य भाव इति ॥** अण्प्रत्यये 'यस्येति च' इत्यकारलोपे 'तद्धितेष्वचा-मादेः' इत्यादिवृद्धिरिति भावः । भावार्थकत्वाभावेऽप्युपपत्तेराह- **स्वार्थे वेति ॥ अवश्यश्चैतदिति ॥** आत्मसम्बन्धीत्यादिनोक्तं मायिमतनिराकरणपरत्वमित्यर्थः ।

**(श्री.टि.) आन्तरोपपत्तिर्**यद्यादिशब्दवैयर्थ्यरूपा । **चशब्दा इति ॥** त्रयश्चशब्दास्तथाशब्दद्वयं चेति शब्दपञ्चकं पञ्चानां भेदानां परस्परसमुच्चये वर्तत इत्यर्थः। 'ननु प्रपञ्चो भेदपञ्चकः' इत्ययुक्तम् । 'पञ्चद्दशतौ वर्गे वा' । वर्गार्थे पञ्चत् दशत् इति निपात्येते इत्युक्तत्वेन भेदपञ्चकः पञ्चत् इत्येव वक्तव्यम् । न तु प्रपञ्च इति । अतःकथमेतदित्याशङ्क्य भेदपञ्चक इति व्याख्यानं प्रपञ्च इति मूलारूढं करोति- **भेदपञ्चक इतीति ॥ पञ्चशब्द-स्येति ॥** तथा च प्रपञ्च इति युक्तमिति भावः । **पूर्वप्रतिज्ञामिति ॥** सोऽयं सत्य इत्यनेन कृतां सत्यत्वप्रतिज्ञा-मित्यर्थः । **न चासावितीति ॥** भ्रान्तिकल्पित्वाभाव एव सत्यत्वमिति भावः । **प्रागुक्तेभ्य इति ॥** मैत्रेयी-**(श्री.टि.)** शाखायां प्रागुक्तेभ्य इत्यर्थः । **कापालिकेभ्यः** शैवादिभ्यः । मिथ्यातर्कैर्दृष्टान्तैरित्यन्वयप्रतीतिवार-णाय कुहकेन्द्रजालैर्दृष्टान्तैरित्यन्वय इत्याह- **कुहकेति ॥** ननु कुहकैर्मिथ्यादृष्टान्तहेतुभिरित्यत्र कुहकैरिन्द्रजाल-रूपैर्मिथ्यात्वसाधकैर्दृष्टान्तैर्हेतुभिश्चेति प्रतीयते । तदयुक्तम् । तथात्वे ब्राह्मणमन्त्रयोर्विसंवादापत्तेः । ब्राह्मणे दृश्यत्वादीनां हेतुत्वमुक्तम् । कुहकेन्द्रजालानां दृष्टान्तत्वमुक्तम् । मन्त्रे तु कुहकेन्द्रजालानां दृष्टान्तत्वं हेतुत्वं चोच्यते । तत्र कुहकानामिन्द्रजालानां मिथ्यात्वसाधने दृष्टान्तत्वसम्भवेऽपि हेतुत्वासम्भवाद् दृश्यत्वादीनामेव हेतुत्वादित्यत आह- **अर्थादिति ॥** यद्यपि कुहकानामिन्द्रजालानां हेतुत्वमुक्तम् । तथाऽपि तस्य बाधितत्वेना-सम्भवात् अर्थाद् दृष्टान्तत्वमेव तेषामुक्तं भवतीत्यर्थः । तथा च मिथ्यात्वसाधकैः कुहकैर्दृष्टान्तैर्दृश्यत्वादि-हेतुभिश्चेति बुद्ध्या विविच्य मन्त्रो योज्य इत्युक्तं भवति । **तस्याभाव इति ॥** आत्म्यस्याभाव इत्यर्थः । नन्वात्म्यरूपार्थाभाववाचिनो निरः कथमात्म्यपदेन समास इत्यत आह- **अर्थाभाव इति ॥** अर्थाभावरूपार्थे यदव्ययं तस्य 'अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्यय' इत्यादिसूत्रेण मक्षिकाणामभावो निर्मक्षिक-मितिवद् आत्म्यस्याभावो निरात्म्यमिति समासो युक्त इत्यर्थः । **तस्य भाव इति ॥** निरात्म्यस्य **भावो** धर्मो नैरात्म्यमित्यर्थः । प्रकारान्तरमाह- **स्वार्थे वेति ॥** तथा च निरात्म्यशब्दात्स्वार्थेऽण्प्रत्यये णित्त्वाद् इकारस्य ऐकाररूपवृद्धौ निरात्म्यमेव नैरात्म्यमिति भवतीति द्रष्टव्यम् । **अवश्यं चैतदिति ॥** प्रपञ्चमिथ्यात्ववादिनां मायावादिनामेव निन्दापरमेतद्वाक्यं, न बौद्धानामित्येतदेवावश्यमङ्गीकार्यमित्यर्थः । **वैदिकेषु** वेदप्रामाण्य-वादिषु । तन्मध्य इति यावत् । **न हीति ॥** तेषां वेदाप्रामाण्यवादित्वादिति भावः ।

**(पां.टि.)** ननु सङ्ख्यार्थपञ्चन्शब्दस्य विशेषणत्वात्पञ्चभेदक इति वक्तव्ये कथं भेदपञ्चक इत्युक्तमित्यत आह- **भेदपञ्चक इतीति ॥** तथा च समूहार्थकस्य विशेष्यपरत्वान्नोक्तदोष इति भावः । ननु वर्गे अभिधेये तदस्य परिमाणमित्येतस्मिन्विषये 'सङ्ख्याया अतिशदन्तायाः कन्' इति प्राप्तस्य कनोऽपवादेन डतिप्रत्ययविधा-नाड्डित्वाट्टिलोपे सति पञ्चद्दशदित्येव भवितव्यम् । पञ्चक इति तु कथमित्यतोऽप्याह- **भेदपञ्चक इतीति ॥** सति डति प्रत्यये तथारूपस्य भवितव्यत्वेऽपि वाशब्देन पक्षे कन्प्रत्ययविधानेन पञ्चकःदशक इति पूर्वरूपाभ्यनु-ज्ञानात्पञ्चक इत्यप्युपपन्नमिति भावः । इति ह्याहेत्यस्यापि श्रुतिविशेषत्वेनोक्तेत्याचार्यवाक्येन सम्बन्धासम्भवेन तस्य साकाङ्क्षत्वात्प्रसक्तवाक्याभासत्वमपेक्षितशेषपूरणेन परिहरति- **अथ ये चान्ये इत्याद्युक्तमिति शेष इति ॥** इत्याहेत्यन्तमुक्तमिति शेष इत्यर्थः । **आत्मन इदमिति ॥** तथा च 'विचित्रा तद्धितगतिः' इति वचनादिदमर्थे ष्यञित्युक्तं भवति । **अर्थाभाव इति ॥** तथा च निर्मक्षिकमित्यत्रेवाऽत्म्यस्याभावो निरात्म्य-मित्यर्थाभावे 'अव्ययं विभक्ति' इत्यनेनाव्ययीभावसमास इत्यर्थः । **तस्य भाव इति ॥** 'हायनान्तयुवादि-भ्योऽण्' इत्यनेन निरात्म्यशब्दाद्भावेऽणि णित्वादादिवृद्धौ नैरात्म्यशब्दनिष्पत्तिरिति भावः । अस्मिन्पक्षे युवादिषु सङ्ख्यानं भवति । तच्चागतिका गतिरिति भावेन पक्षान्तरमाह- **स्वार्थिको वेति ॥** ततश्च निरात्म्यमेव नैरात्म्यमिति निरात्म्यशब्दात्स्वार्थे प्रज्ञादित्वात् 'प्रज्ञादिभ्यश्च' इत्यनेन सूत्रेणाणि णित्त्वादादिवृद्धौ नैरात्म्यशब्दनिष्पत्तिरिति **(पां.टि.)** भावः । ननु बौद्धवादिनामेवेयं निन्दा किं न स्यात्, किमिति मायावादिनिन्दापरत्वं कल्प्यते । मुख्यार्थानुपपत्तावेवार्थान्तरपरत्वस्य कल्पनीयत्वादित्यत आह- **अवश्यं चैतदिति ॥**

**(व्या.टि.)** एवं प्रपञ्च इति श्लोके प्रपञ्चपदं जातीयरोऽर्थे डप्रत्ययकरणेन विधाऽर्थतया व्याख्यातम् । अधुना'प्रपञ्चो भेदपञ्चकः' इत्यनुव्याख्यानानुरोधेनात्र च श्रुतौ पञ्चकपदेन प्रपञ्चपदव्याख्यानात्तस्य च वर्गार्थत्वात्पञ्चशब्दस्यापि वर्गार्थत्वं प्रत्ययसंयोजनेन साधयति- **भेदपञ्चक इतीति ॥ पञ्चशब्दस्य** 'प्रपञ्चो यदि' इति श्लोकीयस्य, **निपातनं** डप्रत्ययान्ततया, 'स्तोमे डविधिः' परिमाणमस्येत्यर्थ इति प्रस्तुतत्वादित्यर्थः । **उक्तं** श्रुताविति शेषः ।

अत्रेदं विचार्यते । नात्र पञ्चशब्दो निपात्यते । किन्तु पञ्चद्दशतौ इति डतिप्रत्ययान्तौ पञ्चद्दशच्छब्दौ वाशब्दात् पञ्चकशब्दः । वैयाकरणैस्तथा व्याख्यातत्वात् । तथा हि- 'सङ्ख्याया अतिशदन्तायाः कन्' इति कनं प्रकृत्य श्रूयते 'पञ्चद्दशतौ' इति वाशब्दात्कनेव ग्राह्यः । अपवादाभाव उत्सर्गस्य न्यायप्राप्तत्वात् । तथैवोदाहृतं पञ्चद्वर्गः पञ्चको वर्गः, दशद्वर्गो दशको वर्ग इति । अतः कथं पञ्चशब्दस्य निपातनं सूत्रार्थतया वर्ण्यत इति । अत्रेद-माकूतमाचार्याणम् । यथा पञ्चकशब्दः प्रामाणिकसांव्यावहारिकत्वान्निर्व्यूढः, एवं पञ्चशब्दोऽपि निर्वोढव्य एव । 'प्रपञ्चो भेदपञ्चकः' इति श्रुत्यैव वर्गार्थकपञ्चकशब्दप्रतिपदग्रहणेन वर्गार्थकतया प्रपञ्चशब्दस्य व्याख्यात-त्वात् । तथा च प्रयोगः- प्रपञ्चपदं वर्गार्थशक्तम्, वर्गार्थशक्तपञ्चकपदप्रतिपादितार्थकत्वात् । यद् यदर्थशक्त-प्रतिपादितार्थकं तत् तदर्थशक्तम् । यथा आख्यातपदं यत्नत्वविशिष्टशक्तकरोतिधातुप्रतिपादितार्थकं भवति यत्नत्वविशिष्टशक्तमिति सामान्यमुखव्याप्तिसम्भवेन सामान्यतो दृष्टसम्भवात् । गृहीतश्च व्याख्यानाच्छक्ति-ग्रहः । 'विवृतेः' इत्युक्तेः । सम्मतं चैतन्मीमांसकानां नानुयाजाधिकरणे समासव्यासयोरेकार्थं ब्रुवताम् । तन्न्यायेनाप्यत्र वर्गार्थत्वनिश्चयः । तथा पञ्चकशब्दस्य 'सङ्ख्यायास्संज्ञासङ्घसूत्राध्ययनेषु' इति सन्निहितकप्रत्यय-विधायकपूर्वसूत्रोदाहरणत्वेनैव सिद्ध्या पुनरिह कल्पितोदाहरणत्वमस्वरसमिति निपातानिपातविकल्पमुज्झित्वा निपात्यविकल्पाभिप्रायेण पञ्चशब्दनिपातोऽप्यत्राभिमत इति सूत्रार्थमभिप्रेत्य टीकाकृता वाशब्देन पञ्चशब्दस्य निपातनमङ्गीकृत्येत्युक्तम् । केशवाचार्यस्वामिकृतं पञ्चकशब्दसमर्थनपरतया व्याख्यानं तु पञ्चकशब्दस्य निपातनमिति क्वाचित्कपाठसमर्थनाय । न तु पञ्चशब्दनिपातनं नास्तीत्यभिप्रेत्य । पञ्चशब्दस्येति बहुपाठविरो-धात् । 'शाखाचतुष्पञ्चगतं वसु' इत्युपासनापादीयानुव्याख्यानव्याख्यावसरे चतुःपञ्चशब्दौ वर्गार्थौ निपा-तितौ । 'प्रपञ्चो यदीति यथा' इत्यत्र पञ्चशब्दस्य दृष्टान्ततया ग्रहणेन तद्विरोधाच्चेत्यलं विस्तरेण । **प्रतिज्ञा-द्वयमिति ।।** अत्र सत्यत्वप्रतिज्ञोक्तपञ्चप्रकारावच्छेकावच्छेदेन । अनादित्वप्रतिज्ञा तु जडघटितप्रकारेषु सामाना-धिकरण्येन । कार्यजडधर्मिकभेदस्य कार्यत्वाद्, अकार्यधर्मिकस्याकार्यत्वादिति ध्येयम् ।

**प्रसङ्गविपर्ययाभ्यामिति ।।** 'सादिश्चेन्नाशमाप्नुयात्' इति 'न च नाशं प्रयात्येषः' इति वाक्याभ्यामित्यर्थः। **(व्या.टि.)** अत्र वैशेषिकाः- नेदं विपर्ययपर्यवसानं युक्तम् । अन्योन्याभावत्वं ध्वंसप्रतियोगिवृत्ति ध्वंसेतराव्याप्यवृत्त्यप्रतियोगिकप्रतियोगिसमानाधिकरणाभाववृत्तित्वात् प्रागभावत्ववदित्यनुमानेनान्योन्या-भावानित्यत्वसिद्धेः । तत्र वृत्तिमत्त्वादित्येवोक्ते आत्मत्वादौ व्यभिचार इत्यभावपदम् । घटात्यन्ताभावत्वे व्यभिचारनिरासाय प्रतियोगिसमानाधिकरणेति, संयोगात्यन्ताभावत्वादिनिरासायाव्याप्यवृत्त्यप्रतियोगिकेति, घटध्वंसत्वादौ व्यभिचारं वारयितुं ध्वंसेतरेत्यभावविशेषणत्रयम् । तन्नाशस्तु प्रतियोगिनाशकारणात् प्रतियोगि-नाशाद्वा । न चान्योन्याभावनाशे नष्टघटयोरभेदापत्तिः । किमत्राभेदपदेन ऐक्यमुच्यते भेदाभेदो वा । नाऽद्यः । स्वरूपाभावेनैकरूप्यापादनानुपपत्तेः । न द्वितीयः । तन्नाशे तन्नास्तितानियमेन इष्टापत्तेः । नन्वाश्रयनाशादाश्रित-कार्यनाशदर्शनेन अन्योन्याभावस्याप्याश्रयनाशादेव नाशो युक्तो, न प्रतियोगिविनाशकारणात् । किं च प्रागभावनाशस्य प्रतियोगिसामग्रीजन्यत्वेन प्रतियोग्यात्मकत्ववदन्योन्याभावनाशस्य प्रतियोगिविनाशसामग्री-जन्यत्वेन प्रतियोगिविनाशतादात्म्यापत्तिः । तत्सामग्र्यभिन्नसामग्रीजन्यत्वादिति चेन्न । तत्र न तावदाद्यः । आश्रयशब्देन समवाय्यभिधानात् । अन्यथा ध्वंसस्यापि विनाशप्रसङ्गात् । एकाधिकरणनाशेऽप्यधिकरणान्तरे तद्भेदप्रतीतेश्च । नापि द्वितीयो दोषः । अन्योन्याभावनाशयोर्वैयधिकरण्येन प्रागभावभेदेन सामग्र्यभेदासिद्धेर्घट-तत्प्रागभावविनाशयोश्चैक एव प्रागभाव इति न तद्भेदस्तत्रेति । प्रतियोगिनाशादन्योन्याभावनाश इत्यस्य पर-सिद्धान्तत्वादित्याहुः ।

तन्नतरां शोभते । उक्तानुमानं न तावदत्र प्रमाणम् । अप्रयोजकत्वात् । अनष्टस्येव नष्टस्यापि प्रतियोगिनः स्मरणे वर्तमानधर्मिणि भेदस्याबाधितप्रत्यक्षसिद्धत्वेन तद्विरोधाच्च । इदानीं तद्भिन्न इदानीं तद्भेदकवत्त्वादिति सामान्यतो दृष्टानुमानविरोधाच्च । किं चान्योन्याभावत्वं न ध्वंसप्रतियोगिवृत्ति प्रागभावेतराभावमात्रवृत्तित्वाद् ध्वंसत्ववत् इति प्रत्यनुमानपराहतत्वात् । एवमव्याप्यवृत्तिप्रतियोगिकस्यैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वनियमेन तदप्रतियोगिकत्वेनैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधि-करण्याभावलाभेन स्वरूपासिद्धिः । यत्किञ्चित्सम्बन्धेन प्रतियोगिसामानाधिकरण्ये प्रतियोगिसमानाधिकरण-विशेषणवैयर्थ्यम् । किञ्चैवं सति घटात्यन्ताभावत्वं ध्वंसप्रतियोगिवृत्ति ध्वंसेतराव्याप्यवृत्त्यप्रतियोगिकप्रतियोगि-समानाधिकरणाभाववृत्तित्वादिति घटात्यन्तभावस्यापि नाशापत्तिः । न च प्रतियोगिसामानाधिकरण्ये विप्रति-पत्तिः । घटात्यन्ताभाववति घटानयने तस्यान्यत्रागत्या प्रतियोगिसामानाधिकरण्यस्यावर्जनीयत्वात् । अन्तरा-श्यामे घटे रक्तं नास्तीति प्रतीत्या तस्यापि प्रतियोगिसमवायिदेशत्वाभ्युपगमाच्च । अनित्यप्रतियोगिकान्यो-

न्याभावमात्रस्यानित्यत्वसिद्ध्यर्थमनित्यप्रतियोगिकान्योन्याभावत्वानां पक्षीकरणे संयोगान्योन्याभावत्वे भागा-सिद्धिप्रसङ्गाच्च । प्रतियोग्यन्योन्याभावप्रतियोगितावच्छेदकात्यन्ताभावयोर्व्याप्यव्यापकभावेन व्यापकान्योन्या-भावाभावे तद्व्याप्यप्रतियोगितावच्छेदकात्यन्ताभावप्रसङ्गाच्च । अनित्यान्योन्याभावस्यानित्यत्वे तस्यासत्त्वनिय-मेनान्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपत्वेनेश्वरादेर्नित्यस्यानित्यघटवृत्तितद्व्यक्तित्वादिप्रसङ्गश्च । न चैतेषामाभासत्वम् । तस्यान्योन्याभावनाशसिद्ध्यधीनत्वेनान्योन्याश्रयत्वादित्यलं दुर्बलवैशसेन ।

**(व्या.टि.)** ननु परपक्षप्रतिक्षेपेऽपि धर्मिस्वरूपस्य भेदस्य तन्नाशे नाशावश्यम्भावेन कथं पर्यवसितार्थस्या-नादिनित्यत्वस्य सिद्धिः । इत्थम्- जीवेश्वरप्रकृत्यादिनित्यस्वरूपभूतोऽनादिनित्य एवेति न कश्चित्क्षुद्रोपद्रवः । अनित्येष्वपि न्यायसुधायां टीकाकारास्तु मन्यन्ते । 'भेदो नामान्योन्याभावः स चान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः । प्रतियोग्यापत्तेरेवाभावविपत्तित्वस्य प्रागभावे दृष्टत्वात् । न च कदाऽपि पदार्थानामन्योन्यतादात्म्य-मस्तीत्यनित्यानामपि भेदो नित्य एव' इत्यनुवादमुखेन प्राचीनमतमालम्ब्योपद्रवः परिहृतः । 'तस्मात्प्रध्वस्त-भेदादि सदित्येवावगम्यते' इत्येतद्व्याख्याऽवसरे 'नष्टानामपि वस्तूनां भेदो नैव विनश्यति' इति तैत्तिरीयभाष्यो-दाहृतप्रमाणमुदाहृत्य 'धर्मिनाशेऽपि भेदो न नश्यति' इति व्यवहरणमेतन्मतमालम्ब्यैव । वस्तुतस्तु सुधायां 'नान्यदन्यत्वम्' इत्येतद्व्याख्यावसरे सतोर्भेदिनोर्भेदो न निवृत्तिमान् भेदत्वात् स्तम्भकुम्भभेदवदित्येतत्प्रयोगे दृष्टान्ते साध्यवैकल्यव्यभिचारपरिहाराय सतोरिति विशेषणदानात् । 'भावे त एव चोच्छेदात्' इत्येतद्व्या-ख्याऽवसरेऽपि 'नष्टस्यासत्त्वेन भेदचिन्ताऽनवकाशात्' इत्युक्तेश्च । नष्टानामपीति पक्षस्योत्तरत्र 'इत्याहुः केचिद-ज्ञानात्' इति निन्दनाच्च । धर्मिपटनाशे भेदस्य निरालम्बनतयाऽवस्थानायोगात्तन्त्वात्मकतया स्थितौ तन्तोः स्वात्यन्ताभिन्नपटात्यन्ताभिन्नत्वापत्तिः, परमाणौ क्रमेणानन्तभेदसमावेशापत्तिः परमाणुप्रतियोगिकभेदस्य पटस्वरूपस्य परमाणावापत्तिरित्याद्यनेकबाधकनिकायाच्च । प्रागभावधर्मिकस्यानित्यत्वावश्यम्भावाच्च । नित्य-धर्मिकोनित्य इत्युक्तरीत्याऽनादित्वप्रतिज्ञा सामानाधिकरण्येन । तर्कश्चावच्छेदकावच्छेदेनैवेत्यवधेयम् । **इत्यनेनेति ॥** समाख्याश्रुतावुपसंहारेणेत्यर्थः । **अर्धमिति ॥** माण्डूकीयश्लोकार्धमित्यर्थः । एतच्छब्दपरामृष्टं दर्शयति- **द्वैतमिति ॥ शङ्केति ॥** तर्ह्यद्वैतः सर्वभावानामिति व्यपदेशः कथमित्यवतारिकेत्यर्थः । **व्याख्यान-मिति ॥** परमो हरिरित्येवाद्वैतश्रुत्यर्थ इत्यर्थः । **मूले मैत्रेयेति ॥** मित्रयोरपत्यमिति विग्रहे 'ऋष्यन्धकवृष्णि-कुरुभ्यश्च' इत्यणि प्राप्ते एतदपवादो 'गृष्ट्यादिभ्यश्च' इति ढञ् । ततः 'केकयमित्रयुप्रलयानां यादेरियः' ञ्णिति किति चेति, यकारादेरियादेशे मैत्रेयेय इति प्राप्ते 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिना-यनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' इति निपातनाद्युलोपे, मैत्रेयः मैत्रेयौ मित्रयवः इतिरूपाणि, तस्य शाखेति विग्रहः । मैत्रयीति पाठे ततोऽण् बोध्यः। पुंवद्भावाभावश्च । ह्रस्वपाठे मैत्रेयशब्दादिञ् । ज्ञानेतिमुख्यवृत्तिमाश्रित्याऽह- **सम्यगिति ॥** आहेति वक्ष्यमाणक्रियाया मन्त्रकर्तृकत्वेन उक्त्वेत्युक्तक्रियाया ब्राह्मणकर्तृकत्वेन समानकर्तृकत्वाभावेन क्त्वाऽसम्भवमाशङ्क्य शेषं पूरयति- **उक्तमिति शेष इति ॥** मिथ्येति भावप्रधान इत्याह- **मिथ्यात्वेति ॥** प्राकाश्यास्तस्करा इत्यनयोरैकार्थ्यं वारयितुमाह- **प्रकाशे भवा इति ॥** अपहारिण इत्यर्थः । **तस्करा इति ॥** ननु प्राक् प्रकाशे तस्करत्वमिवेति प्रकाशे तस्करत्वानुपपत्तेरुक्तेः कथं विरुद्धयोरेकविशेषणत्वमिति चेत्, इत्थम् । तस्करा इवाऽचरन्त इत्याचारे क्विप् । तस्करा इवाऽचरन्तोऽपि हि यतः प्राकाश्याः प्रकाशप्रमाणरूपराजदृष्टस्वविषयस्तेयमकुर्वाणा मोघाशा इति यावत् । यथोक्तं गीतायाम्- 'मोघाशाः मोघकर्माणः, इति' इति हेतुहेतुमद्भावेन व्याख्येयम् । अस्वर्ग्याः स्वर्गोद्देशेन न दानपात्रम् । यथोक्तं **(व्या.टि.)** भगवत्पादैः- 'अवैष्णवाय दातव्यो नोदबिन्दुर्न तण्डुलः' इति । **उपादत्त इति ॥** 'आङो दोऽनास्य-विहरणे' इत्यात्मनेपदं, प्रतिजग्राहेत्यर्थः । **अर्थादिति ॥** तदन्वययोग्यत्वादित्यर्थः । **मूले भ्राम्यन्निति ॥** तथावादेनेति शेषः । यथोक्तं 'तथावादबला जनाः' इति । भ्रमेः श्यन्नन्ताच्छता बोध्यः । 'शमाम्' इति दीर्घश्च । आन्तरमित्यन्तरशब्दादणं मत्वाऽऽह- **अभिप्रायमिति ॥** इतिशब्दस्याऽहेत्यन्वयः । **आत्मन इद-मिति ॥** मूले आत्मसम्बन्धि इति नपुंसकनिर्देशादिदमिति निर्देशः । अथवा भावकर्मणोरेव ष्यञ् । 'गुणवचन-ब्राह्मणादिभ्यः' इत्यत्र ब्राह्मणादेराकृतिगणत्वादिति । भावकर्मोभयग्रहणाय सामान्ये नपुंसकमिति । अत एव मूले 'किमपि' इति । भावः कर्म वेत्यर्थः । तथाच 'ये चाभावकर्मणोः' इति प्रकृतिभावाभावः । अभावकर्मणोरिति पर्युदासात् । **तस्येति ॥** नैरात्म्यस्येत्यर्थः। 'हायनान्त' इति भावे अणिति भावः । **स्वार्थे वेति ॥** प्रज्ञादेराकृति-गणत्वादित्यर्थः । **अस्येति ॥** निरुक्तपदस्येत्यर्थः । आत्मनिर्धर्मकत्वनिष्क्रियत्ववाद इत्यर्थः । मायावादिनामेवैषा निन्दा न बौद्धादीनाम् । तेषां शून्यवादित्वेनानिरात्मवादित्वात् । ष्यञो वैयर्थ्यात् । मायिनस्त्वङ्गीकृत्याप्यात्मानं तस्य धर्मक्रियाशून्यतां वदन्तीति सार्थकः ष्यञ्प्रत्ययः । ज्ञापकान्तरमाह- **अवश्यमिति ॥ न हीति ॥** तेषां वेदबाह्यत्वादिति भावः ।

**मूलम्- भ्रान्तिकल्पितत्वे च जगतः, सत्यं जगद्द्वयमपेक्षितम्। न हि सत्यशुक्तेः, सत्यरजतस्य, तयोः सादृश्यस्य चाभावे भ्रान्तिर्भवति।**

**टीका -** एवं कल्पकं जीवमधिकृत्य दूषणाभिधानेन सर्वस्यैकजीवाज्ञानपरिकल्पितत्वपक्षो दूषितः। अधुना परिकल्प्यमधिकृत्य दूषणाभिधानेनापि तं दूषयति- **भ्रान्तीति ॥** अधिष्ठानत्वेन प्रधानत्वेन च सत्यद्वयं तावदपेक्षितम्। अधिष्ठानप्रधानयोश्चाऽरोप्येण सादृश्यस्यापेक्षितत्वाज्जगत एव जगता सादृश्यसम्भवात्सत्यं जगद्द्वयमपेक्षितमित्युक्तम्। यदि जीवजडात्मकं सर्वजगद् भ्रान्ति-कल्पितं स्यात् तर्हि कल्प्यमानजगत्सदृशाधिष्ठानप्रधानभूतसत्यजगद्द्वयं पूर्वमङ्गीकार्यं प्रसज्येत। न च सत्यद्वयाङ्गीकारो युक्तः। पिण्याकयाचनार्थं गतस्य पिशाचस्य खारीतैलदानप्रतिज्ञा-वदधिकापातात्। अतो नेदं जगद्भ्रान्तिकल्पितमिति दृश्यत्वानुमानस्य तर्कपराहतिरुक्ता भवति।

अथ वा कल्पनाया आरोप्यसदृशाधिष्ठानप्रधानपूर्वकत्वं व्यापकम्। तच्चात्र नास्ति। सत्यजगद्-द्वयाङ्गीकारादस्यैव जगतः सत्यत्वाङ्गीकारस्य लघुत्वात्। अतो व्याप्यकल्पनाऽपि नास्तीति प्रमाणविरोधः (वा)।

तर्कस्यानुमानस्य च व्याप्तिमुपपादयति- **न हीति ॥** येन तर्कानुमानयोर्व्याप्तिर्भज्येतेति शेषः।

तथा च प्रयोगः। प्रपञ्चो न भ्रान्तिकल्पितो निरधिष्ठानत्वात् निष्प्रधानत्वादात्मवद् व्यतिरेकेण वा रजतवत्। जगत्प्रतीतिर्वा न भ्रान्तिः पूर्वोक्ताद्धेतुद्वयादात्मप्रतीतिवत् शुक्तिरजतप्रतीतिवच्च। विपक्षे त्वारोप्यसदृशाधिष्ठानप्रधानभूतसत्यजगद्द्वयाङ्गीकारप्रसङ्गो बाधक इति।

नन्वन्यत्र सत्यमेवान्यत्राऽरोप्यत इत्यन्यथाख्यातिवादिनां पन्थाः। तत्कथं प्रतीयमानसदृशम् अन्यत् सत्यद्वयमपेक्षितमित्युक्तम्। किन्तु सत्यमधिष्ठानमारोपितस्य अन्यत्र सत्यत्वं चापेक्षित-मिति वक्तव्यम्। मैवम्। आरोपितमत्यन्तासद् इत्यङ्गीकुर्वद्भिरेवंविधान्यथाख्यातेरनङ्गीकृत-त्वात्। यथा हि सत्यरजते रजताभिज्ञाऽऽकारमेव ज्ञानमुत्पद्यते तथा भ्रान्तरजतेऽपि। तत्केन प्रमाणेन तस्यान्यत्र सत्त्वं व्यवस्थाप्यते। कस्यचित्प्रत्यभिज्ञोत्पत्तावपि तस्या भ्रान्तित्वान्नान्यत्र सत्त्वव्यवस्थापकत्वम्। अन्यत्र सत्त्वाभावे कथं प्रतीतिरिति चेत्तर्हि अत्रैव सत्यत्वमङ्गीकार्यम्। बाधकान्नेति चेत्तर्हि अन्यत्र सत्त्वस्येह प्रतीत्यनुपपादकत्वात् तादात्म्यवदसत्त्वेऽप्युपपत्तेर-त्यन्तासत्त्वमेवाङ्गीकार्यमिति ॥

**(र.टि.) अथ वेति ॥** अनेन 'भ्रान्तिकल्पितत्वे च' इति वाक्यं दृश्यत्वानुमानस्य सोपाधिकत्वप्रतिपादक-त्वेन व्याख्यातं भवति। अत एवोपाधेर्विप्रतिपत्त्युत्तरकालं प्रतिपक्षोन्नायकत्वात्प्रमाणविरोध इत्युक्तम्। **विपक्षे त्विति ॥** तथा च निरधिष्ठानत्वनिष्प्रधानत्वलक्षणहेतूच्छित्तिरेवेति भावः। **सत्यजगद्द्वयाङ्गीकारेति ॥** आरोप्यसत्यत्वापेक्षयाऽधिकसत्यत्वोपेतजगद्द्वयाङ्गीकारप्रसङ्ग इत्यर्थः। ननु शुक्तिकादौ पूर्वानुभूतान्यत्रस्थित-रजताभेदविषयकभ्रमस्यैवारोपितस्यान्यत्र सत्त्वावेदकत्वादेवंविधान्यथाख्यातेरेव स्वयमङ्गीकृतत्वादित्यत आह- **यथा हीति ॥** भ्रमस्य पुरोवर्तिनि पूर्वानुभूतरजताभेदविषयकत्वमेवासिद्धमिति भावः।

**(रा.टि.)** अपेक्षायां हेतूक्तिपूर्वं व्याचष्टे- **अधिष्ठानत्वेनेति ॥** यदनुभवजन्यसंस्कारसचिवं दुष्टमिन्द्रियं भ्रमं जनयति तत्प्रधानमित्युच्यते। तावता जगद्द्वयं कुतः। रजतारोपे सत्यद्वयापेक्षाऽभावादित्यत आह- **अधिष्ठा-नेति ॥ पिण्याकेति ॥** कश्चन पिशाचः तैलवणिजं पिण्याकं तिलपिष्टं याचमानस्सन् प्रवृत्तः। स च तेन वाऽन्येन वा मान्त्रिकेण मन्त्रवशेन निर्बन्धितस्तन्मोचनाय तस्य खारिशब्दितविंशतिप्रस्थपरिमाणं तैलं दास्यामीति प्रतिज्ञाकरणं यथा तथेत्यर्थः। **दृश्यत्वानुमानस्येति ॥** न तावदेकजीवेत्यादिवाक्यावतारिकायामुक्तस्याऽ-धिक्यरूपप्रसङ्गतर्कस्येत्यर्थः। पूर्वं प्रसज्यत इत्यादिशेषोक्त्या तर्कपरतया व्याख्यातमेव वाक्यं दृश्यत्वानुमानस्य सोपाधिकत्वोक्तिपरतया व्याचष्टे- **अथ वेति ॥ व्यापकमिति ॥** शुक्तिरूप्यादिभ्रमे

दर्शनादिति भावः। नास्तीत्यत्र हेतुमाह- **सत्येति ॥ प्रमाणविरोधो वेति ॥** दृश्यत्वानुमानस्येत्यनुषङ्गः। वक्ष्यमाणप्रमाणविरोध इत्यर्थः। **तर्कस्यानुमानस्य चेति ॥** सत्यजगद्द्वयाङ्गीकारेण प्रसङ्गरूपतर्कस्योपाध्यभावरूपानुमानस्य **(रा.टि.)** चेत्यर्थः। **तथा चेति ॥** व्याप्तिसत्त्व इत्यर्थः। विशिष्टस्य हेतुत्वे व्यावर्त्याभावादाह- **निरधिष्ठान-त्वान्निष्प्रधानत्वादिति ॥** विपक्षे हेतुर्नेति भावेनाऽह- **व्यतिरेकेण वेति ॥ पूर्वोक्ताद्धेतुद्वयादिति ॥** अधिष्ठानासम्भिन्नार्थविषयकत्वात् सदृशवस्त्वन्तरानुभवजन्यसंस्कारसचिवेन्द्रियादिकरणाजन्यत्वादित्यर्थः। **शुक्तीति ॥** व्यतिरेकेणेत्यनुषङ्गः। न्यायमतरीतिमाश्रित्य शङ्कते- **नन्वन्यत्रेति ॥ तत्कथं प्रतीयमान-सदृशमिति ॥** सादृश्यस्य भेदघटितत्वादिति भावः। सिद्धान्तदिशैतदुक्तिरिति भावेनाऽह- **आरोपित-मिति ॥** प्रतीतिरेवान्यत्र सत्त्वं प्रतीतस्य गमयतीति अन्यथाख्यातिपक्ष एवाङ्गीकार्य इत्यतः सा किमभिज्ञा-रूपाऽथ वा तदेवेदं रजतमिति प्रत्यभिज्ञारूपा। आद्या न तत्कल्पिकेत्याह- **यथा हीति ॥** अन्त्य आह- **कस्यचिदिति ॥ तर्हीति ॥** सत एव प्रतीतिरित्यङ्गीकार इत्यर्थः। असतस्सन्निकर्षाभावात्प्रतीत्यनुपपत्तिरित्यत आह- **तादात्म्यवदिति ॥** रजतस्य धर्मिणोऽसत्यस्य भानाभावेऽपि रजतशुक्त्योस्तादात्म्यमसदेव भासत इत्युदयनादिभिः प्राचीनैरङ्गीकारात्तद्वदेवासतो रजतस्यापि प्रतीतत्वोपपत्तेरित्यर्थः।

**(श्री.टि.) परिकल्प्यमिति ॥** जगदित्यर्थः। **सत्यद्वयमिति ॥** आरोप्यसत्त्वापेक्षया अधिकसत्त्वोपेतमि-त्यर्थः। सत्यं जगद्द्वयमपेक्षितमित्युक्तम्। तदुपपादयति- **अधिष्ठानेत्यादिना ॥** नन्वारोप्याज्जगतोऽधिक-सत्त्वोपेतं ब्रह्मैव जगदारोपेऽधिष्ठानम्, अन्यत्किञ्चित्प्रधानं च भविष्यति। अतस्तदर्थे सत्यजगद्द्वयं कस्मादपेक्षित-मित्यत उक्तम्- **जगत एवेति ॥ जगता** आरोप्येण। तथा चाऽरोप्यजगत्प्रतियोगिकसादृश्याधिकरणमधिष्ठानं प्रधानं च जगदेव भवितुमर्हं नान्यदित्यर्थः। आरोप्यसादृश्यस्याऽवश्यकत्वं कुत इत्यत उक्तम्-**अधिष्ठानेति ॥**

नन्वारोप्यस्यात्यन्तासत्त्वेन निर्धर्मकत्वात्कथं तत्सादृश्यमधिष्ठानप्रधानयोरपेक्षितमित्युच्यत इति चेन्न। आरोप्यस्य किञ्चित्प्रतियोगिकसादृश्यानाश्रयत्वेऽपि किञ्चिन्निष्ठसादृश्यप्रतियोगित्वाङ्गीकारात्तस्य च रूपादि-वद्धर्मिसत्तासापेक्षत्वाभावात्। नन्वारोप्यसादृश्यं नाम तद्गतभूयोधर्मवत्त्वम्। आरोप्यस्य चात्यन्तासत्त्वेन निर्धर्मक-त्वात् कथं तद्गतभूयोधर्मवत्त्वम् अधिष्ठानप्रधानयोरुच्यत इति चेन्न। परमते घटत्वादिजातिवदस्मन्मते सादृश्यस्या-खण्डत्वेन तद्गतभूयोधर्मवत्त्वादिरूपत्वाभावादिति द्रष्टव्यम्। यथोक्तं सुधायाम्- 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यत्र 'सादृश्यं हि पदार्थान्तरम्' इति। पदार्थान्तरमखण्डमित्यर्थः।

कुतो न युक्त इत्यत आह- **पिण्याकेति ॥** तिलयन्त्रेण तिलादेः सकाशात्तैलनिष्पत्त्यनन्तरं यत्पिष्टमवशि-ष्यते तत्पिण्याकमुच्यते। गतस्येति कर्मणि षष्ठी, गतं प्रतीत्यर्थः। पिशाचस्येति कर्तरि षष्ठी। पिशाचकर्तृक-खारीपरिमिततैलदानप्रतिज्ञावदित्यर्थः। खारीति परिमितिविशेषः। 'खारी द्रोणो निकुञ्चकः' इत्यभिधानात्। **अधिकाऽपातादिति ॥** स्वापेक्षितापेक्षयाऽधिकस्याऽपातादित्यर्थः। यथा केनचित्पिण्याकं देहीति याचिते सति तं प्रति किं पिण्याकेन तेन सह खारीपरिमितं तैलं दास्यामीति केनचित्पिशाचेन प्रतिज्ञाते सति पिण्याक-याचकस्य यथाऽधिकलाभो जातस्तद्वत्परिदृश्यमानस्यैकस्य जगतस्सत्यत्वमपेक्षमाणं मां प्रत्यस्य जगतो भ्रान्ति-कल्पितत्ववचनेनोक्तरीत्या सत्यभूतजगद्द्वयलाभेनापेक्षितादप्यधिकलाभो मम जात इत्यविवेकितया पिशाच-**(श्री.टि.)** तुल्यो भवानिति भावः। कुतो नास्तीत्यत आह- **सत्यजगद्द्वयेति ॥** तथात्वे गौरवं स्यादिति भावः। **अस्यैवेति ॥** भ्रान्तिकल्पिततया त्वयोच्यमानस्यास्यैव परिदृश्यमानस्येत्यर्थः। **प्रमाणविरोधो वेति ॥** तथा च प्रपञ्चो न भ्रान्तिकल्पितो निरधिष्ठानत्वान्निष्प्रधानत्वादात्मवत्, व्यतिरेकेण रजतवदित्याद्यनुमान-विरोधो वाऽनेन मूलेनोक्तो भवतीत्यर्थः। व्यतिरेकदृष्टान्तमाह- **शुक्तिरजतेति ॥** अप्रयोजकतापरिहाराय विपक्षे बाधकतर्कमाह- **विपक्षे त्विति ॥ अधिष्ठानप्रधानभूतेत्यादि ॥** तथा च निरधिष्ठानत्वनिष्प्रधानत्व-लक्षणहेतूच्छित्तिप्रसङ्ग इति भावः। **अन्यथाख्यातिवादिनां** तार्किकाणाम्। **तत्कथं प्रतीयमानसदृशेति ॥** आरोप्यत्वेन प्रतीयमानस्यान्यत्र सत्त्वाभावे खलु तत्सदृशद्वयमपेक्षितं स्यात्। न चैवम्। किन्त्वापणस्थरूप्यस्यै-वात्र प्रतीयमानत्वेनाऽरोप्यस्यान्यत्र सत्त्वाङ्गीकारात् तत्सदृशमधिष्ठानमेकमेवाङ्गीकार्यम्। अत आरोप्यसदृशं सत्यद्वयं नापेक्षितमित्यर्थः। तर्हि मूले किमपेक्षितमिति वक्तव्यमित्यत आह- **किन्त्विति ॥** असदेव रजतं प्रत्यभादित्युत्तरकालीनानुभवाच्छुक्तिरेवात्यन्तासद्रजतात्मना प्रतिभातीत्येवमभिनवान्यथाख्यातिवादिभिर-स्माभिरारोप्यस्यान्यत्र सत्त्वानङ्गीकारादवश्यं तत्सदृशमधिष्ठानं प्रधानं चापेक्षितमेवेत्याशयेन परिहरति- **मैवमित्यादिना ॥**

ननु भ्रमस्य पुरोवर्तिनि शुक्तिकादौ पूर्वानुभूतान्यत्रस्थितरजताभेदविषयकत्वस्यानुभवसिद्धत्वेन तदन्यथाऽ-नुपपत्त्याऽऽरोप्यस्य

अन्यत्र सत्त्वमङ्गीकार्यमित्यतः, तदेवासिद्धं यदन्यथाऽनुपपत्त्या आरोप्यस्यान्यत्र सत्त्वं सिद्ध्येदित्याह- **यथा हीति ॥ अभिज्ञाऽऽकारम्** इदं रजतमित्यनुभवरूपम्। भ्रान्तरजतेऽपीत्यनन्तरम् इति यस्मादिति शेषः। **तत्** तस्मात्। तथा च सत्यरजतस्थले भ्रान्तरजतस्थले चानुभवस्यैकप्रकारत्वेन मात्रयाऽपि विशेषाभावाद् भ्रमस्थलेऽनुभवस्य पुरोवर्तिनि पूर्वानुभूतरजताभेदविषयकत्वाङ्गीकारे सत्यरजतस्थलेऽप्यनुभवस्य तथात्वाऽऽपत्त्या तस्याप्यन्यत्र सत्त्वं कल्पनीयं स्यादिति भावः। किञ्च भ्रमस्थले इदं रजतमिति ज्ञानस्य पूर्वानुभूता-न्यत्रस्थितरजताभेदविषयकत्वे सोऽयं देवदत्त इतिवत् तदिदं रजतमिति प्रत्यभिज्ञारूपं ज्ञानमुत्पद्येत। इष्टापत्तिरिति चेत्तत्राऽह- **कस्यचिदिति ॥** भ्रमस्थले तदिदं रजतमिति प्रत्यभिज्ञारूपं ज्ञानं कस्यापि नोत्पद्यते, किन्त्विदं रजतमित्येव। यदि कस्यचित्तादृशं प्रत्यभिज्ञारूपं ज्ञानमुत्पद्यत इत्यङ्गीक्रियते तर्हि तस्य बह्वनुभवविरोधेन भ्रान्ति-त्वोपपत्तेर्न तस्यान्यत्र सत्त्वव्यवस्थापकत्वमिति भावः। **अन्यत्र सत्त्वाभाव इति।** अत्यन्तासत्त्वाङ्गीकारे चेति शेषः। **कथं प्रतीतिरिति ॥** यदसत्तन्न प्रतीयते इति व्याप्तेरिति भावः। **अत्रैवेति ॥** पुरोदेश एवेत्यर्थः। **बाधकादिति ॥** नेदं रजतमिति बाधकप्रत्ययसद्भावान्न पुरोदेशे सत्त्वमङ्गीकर्तुं युक्तमित्यर्थः। तर्ह्यन्यत्र सत्त्वमपि नाङ्गीकार्यं कुत इत्यत आह- **अन्यत्रेति ॥ इह** पुरोदेशे। निगमयति- **असत्त्वेऽपीति ॥** रजतस्यात्यन्तासत्त्वेऽपि प्रतीत्युपपत्तेरित्यर्थः। यदसत्तन्न प्रतीयत इति चेत्तत्राऽह- **तादात्म्यवदिति ॥** भ्रमस्थले शुक्तिः सती रजतं सत् तादात्म्यमात्रमसदिति त्वदङ्गीकारात्तत्र व्याप्तेर्व्यभिचार इति भावः।

**(पां.टि.)** एकजीवाज्ञानपरिकल्पितत्वपक्षस्य दूषितत्वादुत्तरत्रापि तद्दूषणे पौनरुक्त्यमित्यतःप्रकारभेदान्न तदिति भावेन तं दर्शयति- **एवमिति ॥** दृश्यत्वाद्यनुमानस्य तर्कपराहतिपरतया 'भ्रान्तिकल्पितत्वे च' इति वाक्यं व्याख्याय सोपाधिकत्वकथनपरतयाऽपि व्याचष्टे- **अथ वेति ॥** टीकायां प्रमाणविरोध इत्येव पाठः, वाशब्दस्तु लेखकदोषपतितः। मूलकोशेष्वदर्शनात्। अथ वेति श्रवणेनास्वरसत्वाच्च। विप्रतिपत्त्युत्तरकालं प्रतिपक्षोन्ना-यकत्वात्प्रमाणविरोध इत्युक्तम्। अप्रयोजकत्वमाशङ्क्य परिहरति- **विपक्षे त्विति ॥** प्रसिद्धान्यथाख्यातिवादित्वं ग्रन्थकारस्य मन्वानः सिद्धान्तविरोधमाशङ्कते- **नन्विति ॥ इत्युक्तमिति ॥** तथा सत्यन्यथाख्यातिवादिपक्षा-ननुसारित्वेन तथाऽभिधाने तद्वादित्वभङ्गप्रसङ्गादिति भावः। **वक्तव्यमिति ॥** तथा वचनस्य तत्सिद्धान्तानुसारि-त्वादिति भावः। अन्यथाख्यातिवादित्वेऽपि अभिनवान्यथाख्यातिवादाङ्गीकारेण प्रसिद्धतद्वादानङ्गीकारेण नोक्तविधवचनं तद्वादित्वभङ्गसम्पादकमिति भावेन परिहरति- **मैवमिति ॥** कुतस्तथाऽनङ्गीकार इत्यत आरोपितस्यान्यत्र सत्त्वे प्रमाणाभावादिति भावेन तद्धि भवत् तदिदं रजतमिति प्रत्यभिज्ञानं वा स्यादन्यद्वा। आद्येऽपि तत्किं सार्वजनीनमभिमतं पुरुषविशेषीयं वेति विकल्पान्मनसि निधायाऽद्यमनुपलम्भबाधेन दूषयति- **यथा हीति ॥** द्वितीयं दूषयति- **कस्यचिदिति ॥ अनुपपादकत्वादिति ॥** तस्य प्रतीतिहेतुभूतसन्निकर्षाद्यर्थ-त्वाभावेन तदनुपपादकत्वादित्यर्थः। **तत्तादात्म्यवदिति ॥** शुक्तिरजततात्म्यवदित्यर्थः। अन्यथा रजतस्येव शुक्तिरजततादात्म्यस्याप्यन्यत्र सत्ताया अभ्युपगन्तव्यत्वप्रसङ्गादिति भावः।

**(व्या.टि.)** श्रोतृशेमुषीमनुकूलयिष्यन्नुक्तवक्ष्यमाणदूषणासाङ्कर्याय वृत्तवर्तिष्यमाणसन्दर्भभेदमाह- **एव-मिति ॥** सामान्यसिद्धिपरिशेषाभ्यां सत्यजगद्द्वयं प्रसिसञ्चयिषुरादौ सामान्यसिद्धिं दर्शयति- **अधिष्ठान-त्वेनेत्यादिना ॥** परिशेषयति- **जगत एवेति ॥** तत्र हेतुः- **अधिष्ठानप्रधानयोश्चाऽरोप्येण सादृश्यस्यापेक्षित-त्वादिति ॥**

अत्र शङ्क्यते। अधिष्ठानप्रधानयोरारोप्यसादृश्यमपेक्षितमित्युक्तम्। तदुपयुक्तम्, युक्तं वा। नोभयथाऽ-पि। तथा हि- आद्ये आरोप्यसादृश्यं भ्रमोत्पत्तौ उपयोगि, भ्रमत्वज्ञाने वा। आद्ये किमिन्द्रियदोषवत् स्वरूप-सद् उपयोगि, ज्ञातं वा। नाऽद्यः। सत्यपि सादृश्ये तदज्ञाने भ्रमानुदयात्। न द्वितीयः। प्रधानसादृश्यस्य साधारणधर्मरूपस्याधिष्ठाने सतः अर्थदोषरूपस्याऽरोपपूर्वभावित्वेन ज्ञातोपयोगितासम्भवेऽपि आरोप्य-सादृश्यस्याऽरोपात्प्रागसतः अज्ञातस्य च ज्ञातोपयोगिताऽसम्भवात्। न द्वितीयः। त्रिकोणत्वकालपृष्टत्वादि-वैसादृश्यरूपवैधर्म्यज्ञानस्यैव भ्रमत्वज्ञानोपयोगदर्शनेन सादृश्यज्ञानस्यैवानुपयोगेनाऽरोप्यसादृश्यज्ञानस्यात्यन्ता-नुपयोगात्। न द्वितीयः। गुणक्रियाजातिभिः साधर्म्यरूपसादृश्यस्यासताऽऽरोप्येणासम्भवात्। मीमांसकाभि-मतस्य तदवयवसंयोगरूपसादृश्यस्य भवदनभिमतत्वात्। आरोप्यस्यासत्त्वेन निरवयवत्वादसम्भवश्च। आरोप्यस्य निर्धर्मिकत्वेन 'तमिवैनं पश्यति तादृशः' इति महाभाष्ये 'अस्मानिव यान् पश्यन्ति तानस्मादृशान्' इति नैषधटीकायां च प्रदर्शितनिरुक्तिलभ्यस्य समानधर्मप्रकारकज्ञानविषयत्वरूपस्य तस्यासम्भवाच्च। पदार्था-**(व्या.टि.)** नियमवादिनां सादृश्यस्य पदार्थान्तरत्वेऽपि तस्य सत्त्वव्याप्यत्वेन व्यापकाभावेन व्याप्यासम्भ-वाच्च। न च रजतशब्दवाच्यत्वेनाऽरोपितप्रधानयोः सादृश्यमिति वाच्यम्। वाच्यवाचकभावस्य 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति

बादरायणाभिमतजैमिन्युक्तमार्गेण सस्वरूपशब्दार्थनिष्ठतया निःस्वरूपस्याऽरोप्यस्य पदवाच्यताऽसम्भवात् । अरजतस्य रजतपदवाच्यताव्याघाताच्च । लक्षणोच्छेदापत्तिश्च । मुख्यानुपपत्तिप्रति-सन्धानपूर्वकप्रतीतिविरोधाच्च । तस्य प्रधानारोप्यनिष्ठत्वेऽपि अधिष्ठानेऽभावाच्च । रजतमिति धीविषयत्वस्य रजतारोपानुव्यवसायावसेयस्य रजतारोपोपयोगाभावाच्च । अधिष्ठानेऽभावाच्चेति । तस्य प्रतिवाद्यसम्प्रतिपन्नस्या-भ्युपगमे प्रतितन्त्रसिद्धान्तत्वापत्तेश्चेति । तस्मादारोप्यसादृश्योक्तिरयुक्ता ।

अधिष्ठानप्रधानयोश्चेत्यप्यत्यन्तायुक्तम् । भ्रान्तौ प्रधानप्रत्यभिज्ञाऽभावेन तस्यानारोप्यतया सर्परज्ज्वारोप-परिहाराय प्रधानस्यारोप्यसादृश्यापेक्षायामपि अधिष्ठानस्य तदपेक्षाऽसम्भवात् । तथा हि- अधिष्ठानस्य प्रधान-सादृश्येनैव दोषरूपेणाऽरोपोपपत्तौ आरोप्यसादृश्यस्यानुपयोगात् । किञ्चाऽरोप्यसादृश्यमारोप्यत्वेनान्येनाऽकारेण वा । नाऽद्यः । तर्हि मिथ्यात्वापत्त्या सत्यजगद्द्वयमपेक्षितमिति मूलविरोधः । न द्वितीयः । असतः आरोप्यस्य निराकारत्वेन तत्सारूप्यस्य व्याहतत्वात् । धर्मारोपे संसर्गारोपे वा अभेदारोपे वा धर्मिणस्तदयोगाच्चेति ।

अत्रोच्यते । प्रधानस्यैवाऽरोप्यत्वमित्यन्यथाख्यातिवादिनां पन्थाः । तत्र प्रधानारोप्यसादृश्यानपेक्षायामपि तस्य ख्यात्यनुपपत्तेर्बाधानुपपत्तेर्वाभावेनाप्रामाणिकत्वादिना बहुधा दूषितत्वेनाधिष्ठानसन्निकृष्टेनेन्द्रियेण दोष-वशादत्यन्तासद्रजताद्यात्मनाऽवभासो भ्रम इत्यभिनवान्यथाख्यातेरेव स्वीकर्तव्यता । एतन्मते चाधिष्ठान-प्रधानयोरारोप्येण सादृश्यमस्त्येव । शुक्तौ रजतारोपदशायामापणस्थरजतस्मृतावारोप्ये रजते तद्रजतसादृश्यस्य प्रतीयमानत्वाद्रङ्गरजतयोरिमे रजते इति भ्रमदशायामिमे सदृशे इति प्रतीतेश्च, असञ्जातबाधभ्रमस्य पुनः सत्यरजतदर्शन एतत्सदृशं मया पूर्वं दृष्टमिति परामर्शाच्च, आरोप्ये प्रधानसादृश्यं तावत्प्रतीयते । प्रधानेऽप्या-रोप्यप्रतियोगिकं सादृश्यं निस्संशयं प्रतीयते । अधिष्ठानसादृश्यं त्वारोप्यदशायां न तद्व्यक्तित्वावच्छिन्नप्रति-योगिकं प्रतीयते । तद्व्यक्तेर्भेदेन तदा प्रतीतेः । तथाऽपि शुक्तिसदृशमिदं रजतमिति शुक्तित्वावच्छिन्नप्रतियोगिकं सादृश्यं प्रतीयत एव । एवमसञ्जातबाधभ्रमस्य कालान्तरेऽधिष्ठानशुक्तिदर्शने दृष्टरजततुल्येयं शुक्तिरिति प्रतीतिर्भवत्येव । सत्यरजतमिथ्यारजतप्रतीत्योः प्रमात्वभ्रमत्वाभ्यामेव विशेषः । न विषयीकरणविषये कलयाऽपि विशेषः । एवं चेत्थम् आरोप्ये प्रतीयमानस्य रजतत्वेन रजतसादृश्यस्य शुक्लत्वादिना शुक्तिसादृश्यस्य धर्मिस्वरूप-त्वपक्षे तद्गतधर्मसदृशधर्मवत्त्वरूपत्वपक्षे पदार्थान्तरत्वेऽपि धर्मिसत्तासापेक्षत्वमिति पक्षे सत्त्वासम्भवेऽपि धर्मि-सत्ताऽनपेक्षत्वमिति पक्षे सत्त्वमेवाङ्गीकार्यं बाधकाभावात् । यत्सदृशं प्रतीतं तदसदिति प्रतीतेर्धर्म्यंशविषय-त्वात् । अन्यथा यद् भ्रान्तिनिरूपकं तदसदिति प्रतीतेर्निरूपकत्वादेरप्यसत्त्वापत्तेः । सादृश्यावच्छेदकस्य रजतत्वशुक्लत्वादेरसत्त्वेऽपि सादृश्यस्य सत्त्वं प्रतियोगितावच्छेदकस्य कूर्मरोमत्वादेरसत्त्वेऽपि प्रतियोगिताया इवोपपद्यते । एवं चाधिष्ठानप्रधानाभ्यामारोप्यस्य तेन चैतयोः सादृश्यमस्त्येव ।

**(व्या.टि.)** अथ वा मा भूदारोप्यधर्मिकं सादृश्यं सत् । तथाऽपि तत्प्रतियोगिकं सादृश्यमधिष्ठानप्रधानयोः सदेव । यथाऽसद्धर्मिकभेदस्यासत्त्वेऽपि तत्प्रतियोगिको भेदः सति सन् । अथ वा पारिभाषिकं सादृश्यम् । आरोप्यनिरूपिता या विषयिता तत्सदृशविषयितानिरूपितविषयताकत्वं प्रधानस्य सादृश्यम् । अधिष्ठानस्य तु उक्तविधविषयतासमानाधिकरणधर्मसदृशधर्मवत्त्वम् । आरोप्यविषयकप्रतीतिविषयधर्मवत्त्वं वा । रजतार्थि-प्रवृत्तिकारणतावच्छेदिका विषयिता भ्रमप्रमयोस्तुल्येति बहुधा समर्थितं सुधायाम् । अतः प्रधानस्योक्तं सादृश्यं युक्तम् । अधिष्ठानस्याप्यारोप्यनिरूपितविषयितासदृशविषयितानिरूपितविषयतासमानाधिकरणशुक्लत्वादि-सदृशशुक्लत्वादिमत्त्वरूपम्,आरोप्यविषयकप्रतीतिविषयो यो धर्मः शुक्लत्वादिस्तद्वत्त्वरूपं वा सादृश्यं युक्तम् । इदं च सर्वं स्मर्यमाणधर्म्यारोपस्थले । धर्माद्यारोपस्थले तूक्तं सादृश्यं रजतत्वादेरेवेति तदेव प्रधानम् । अधिष्ठानस्य तूक्तविषयता(क)समानाधिकरणधर्मसदृशधर्मवत्त्वमेव । गृह्यमाणारोपस्थले त्वारोप्यस्य सत्त्वं प्रधानत्वं चेत्यधिष्ठानप्रधानयोरेव सादृश्यं तन्त्रम् । एतादृशस्याऽरोप्यसादृश्यस्य स्वरूपसत एवाधिष्ठानप्रधानयोः सादृश्य-स्यैव विनिगमनाविरहात्कारणत्वं व्यभिचाराभावेन नियतपूर्ववृत्तित्वमात्रं वा । मूले नियममात्राभिधानादिति न कोऽपि दोषः । केचित्त्वेकपदवाच्यत्वेन सादृश्यमाहुः । तेषां मते 'औत्पत्तिकस्तु' इति सूत्रेऽर्थपदस्य ज्ञेयमात्र-परत्वेनाऽलोकादिपदस्य वाच्यान्तराभावेन निरर्थकत्वापत्त्या चासतः पदवाच्यत्वसम्भवेऽपि रजतभिन्नस्याऽ-रोप्यस्य रजतपदवाच्यत्वासम्भवेनाधिष्ठानस्य सर्वथा वाच्यत्वासम्भवेन शक्तिभ्रमशक्यसम्बन्धसादृश्य-ज्ञानादिकमनपेक्ष्यैकपदव्यवहार्यत्वेन सादृश्ये तात्पर्यं भाति । विस्तृतमेतद्गुरुप्रभायाम् ।

प्रसङ्गप्रकारं दर्शयति- **यदीत्यादिना ॥** तस्य विपर्ययपर्यवसानमाह- **न चेति ॥ पिण्याकं** तिलपिष्टम् । **गतस्येति ॥** तिलपेषकं प्राप्तस्येत्यर्थः । **पिशाचस्येति ॥** सम्प्रदानत्वाभावेन रजकस्य वस्त्रं ददातीतिवत् सम्बन्धसामान्ये षष्ठी । **अधिकापातादिति ॥**

**अधिकस्य** जगद्द्वयस्याङ्गीकारापातादित्यर्थः । तथा चाल्पं याचमानं पिशाचं प्रति तददाने तेन बाधितस्य वणिजः खारीतैलदानप्रतिज्ञावत् एकजगत्सत्यत्वं याचमानानस्मान् प्रति तदननुमतौ बाधकप्रदर्शने परस्य जगद्द्वयसत्यत्वप्रतिज्ञाप्रसङ्ग इत्यर्थः । यद्वा याचनकर्तुः पिशाचस्यैव वणिङ्मन्त्रबाधितस्य प्रतिज्ञाकर्तृत्वमिवैकजगन्मिथ्यात्वं याचमानस्य परस्यास्मदीयतर्कमन्त्रबाधितस्य जगद्द्वय-सत्यत्वप्रतिज्ञाकर्तृत्वमित्यर्थः । एवं मूलं दृश्यत्वाद्यनुमानस्य तर्कपराहतिपरतया व्याख्यायाधुनाऽनुमानपरतया व्याचष्टे- **अथ वेति ॥ येन** व्यभिचारदर्शनेन । पूर्वं व्यापकानुपलब्धिरुक्ता । अधुना तल्लब्धान्वयव्यतिरेकिणं दर्शयति- **तथा चेति ॥** पूर्ववाक्यमत्र विपक्षे बाधकपरतयाऽपि व्याचष्टे- **विपक्षे त्विति ॥** अधुनाऽन्यथाख्यातिं प्रदूष्याभिनवान्यथाख्यातिं समर्थयमानस्तामुपक्षिपति-**नन्विति ॥** उक्तदूषणानौचित्यमाह- **तत्कथमिति ॥** पृच्छति- **किन्त्विति ॥** उत्तरयति- **सत्यमिति ॥** एवमनूद्य प्रतिषेधति- **मैवमिति ॥** नास्माकं पथच्युतिः । तस्यापथत्वादित्याह- **आरोपितमित्यादिना ॥** कुतो नाङ्गीकार इत्यतस्तत्र प्रमाणाभावाद् विपक्षे बाधकाभावाच्चेति वक्तुं किमारोपितस्यान्यत्र सत्त्वं प्रतीत्याऽङ्गीक्रियते, उत विपक्षे बाधकसद्भावाद्वेति विकल्पं मनसि निधायाऽद्यं **(व्या.टि.)** निराह- **यथा हीति ॥** केनेत्याक्षेपाद्विपर्ययपर्यवसानीयः । **भ्रान्तित्वा-दिति ॥** तत्तु बाधेन निश्चीयत इत्यर्थः । द्वितीयं निरसितुमुपक्षिपति- **अन्यत्रेति ॥ तर्हीति ॥** प्रतीत्युपपत्तये सत्त्वाङ्गीकारश्चेदि-त्यर्थः । आक्षेप्यस्यानुपपत्तिशामकत्वाभावादर्थापत्तिपरिक्षय इत्यर्थः । **असत्त्वेऽपीति ॥** तादात्म्यवदिति पराङ्गीकारप्रदर्शनम् । अन्यथाऽप्युपपत्तिश्चार्थापत्तिदूषणमिति भावः । विस्तरस्तु सुधादौ बोध्यः ।

**मूलम्- स्वप्नेऽपि वासनारूपं सत्यमेव जगत् मनसि स्थितं बहिःष्ठत्वेन दृश्यते । देहात्मनोरपि एकदेशस्थत्वादिसादृश्यमस्त्येव । शङ्खः पीतः, नभो नीलम् इत्यादिष्वपि पीतादयोऽन्यत्र विद्यन्त एव । तत्सादृश्यश्च द्रव्यत्वादिकं किञ्चित् शङ्खादीनाञ्चा-स्त्येव । अतो न कुत्रापि सदृशसत्यवस्तुद्वयं विना भ्रमः ।**

**(त.मं.)** यथा सत्यजगदन्तराधिष्ठानं विनैव स्वाप्नं जगद्दृश्यते । एवमत्रापि स्यादित्यत आह- **स्वप्नेऽपीति ॥** सादृश्यं विनाऽपि देह आत्मत्वाध्यासो दृश्यते हि । एवमेव विसदृशेऽपि ब्रह्मणि जगदध्यासः स्यात् । तस्माज्जगद्वयं नापेक्षितमित्यत आह- **देहेति ॥** आदिशब्दादेकनियन्तृत्व-मेकगुणसम्बन्धित्वं चक्षुरादिमत्त्वं च । पीतशङ्खादीन् सत्यान् अदृष्टवतोऽपि पीतशङ्खादिभ्रम उप-लभ्यते हि । एवं जगदन्तरं सत्यमदृष्टवतोऽपि जगद्भ्रमः स्यादित्यत आह- **शङ्ख इति ॥** अन्यत्र विद्यमानाः पीतत्वादयः शङ्खादीनां श्वेतादिष्वध्यस्ताः । स्यादेतत् । पीतहरिद्राखण्डादीनां श्वेतशङ्खादिसादृश्यं नानुभूयते । अतः कथं सादृश्यादेव भ्रम इत्यत आह- **सादृश्यं चेति ॥** आदिशब्दात् पीतत्वादीनां गुणत्वम् ।

**टीका-** स्यादेतत् । स्वाप्नास्तावत्पदार्था भ्रान्तिकल्पिताः । सत्यत्वे हि किं ते अनादिनित्याः, उतोत्पत्तिविनाशवन्तः । आद्ये प्रागूर्ध्वञ्चोपलभ्येरन् । द्वितीयेऽपि समानोऽयं प्रसङ्गः। तदैवोत्पद्य विनष्टा इति चेन्न । असम्भावितत्वात् । किञ्चैवमप्युपादानानि निमित्तानि चोपलब्धव्यानि । अपि च एतान् अन्तः पश्यति बहिर्वा । नाऽद्यः । अल्पप्रदेशे महतां दर्शनासम्भवात् । न द्वितीयः । पार्श्वस्थानामप्युपलम्भप्रसङ्गात् । केन च ते करणेनोपलभ्यन्ते । न तावद्बाह्येन्द्रियैः । तेषां तदोपरत-त्वात् । नापि मनसा । तस्य बहिरस्वातन्त्र्यात् । किञ्च काश्यां सुप्तो मधुरां पश्यति । तथा हेमन्ते सुप्तो वसन्तम् । न च तत्र तयोः सम्भवः । तस्माद्भ्रान्तिरेवेयम् । न च तत्र किञ्चिदधिष्ठानमस्ति । आत्मनो भेदेनोपलम्भात् । न ह्यहं गज इति तदा प्रतीतिरस्ति । तथा च या भ्रान्तिः सा साधिष्ठानेति व्याप्तेः भङ्ग इत्यत आह- **स्वप्नेऽपीति ॥** स्वप्नेऽपि सत्यमेव **जगत्** गजादिकं प्रतीयते । न केवलं जागरे । तेन निरधिष्ठानत्वेऽपि न विरोधः । ननु सत्यत्वे बाधकमुक्तम् । मैवम् । उत्पत्तिविनाशाङ्गी-कारात् । न च प्रागूर्ध्वमुपलब्धिप्रसङ्गः । विद्युदादिवत्तात्कालिकत्वसम्भवात् । तर्हि उपादानाद्युप-लब्धिः स्यादित्यत उक्तम्- **वासनारूपमिति ॥** वासनोपादानकम् । वासनानाञ्चातीन्द्रियत्वा-दनुपलब्धिर्युज्यते । निमित्तं त्वदृष्टेश्वरादिकमिति भावः ।

अतीन्द्रियकार्यस्यापि त्र्यणुकवदुपलम्भः सम्भवति। अत एवान्तर्मनसोपलब्धिर्युज्यते। मधुरादिदर्शनं च नानुपपन्नम्। तर्हि स्वशिरश्छेदादि-प्रतीतिरनुपपन्ना। तस्याननुभूतत्वेन वासनाऽभावादित्यत उक्तम्- **मनसि स्थितमिति ॥** मनो ह्यनादिप्रसिद्धम्। अन्यथा संसारस्य सादित्वप्रसङ्गात्। तच्च जन्मान्तरानुभूतवस्तुवासनारूपेण परिणमत इति को दोष इति भावः।

यदि स्वाप्नं जगत् सत्यं कथं तर्हि 'वैधर्म्याच्च न स्वप्नादिवत्' इति वचनमित्यत उक्तम्- **बहिःष्ठत्वेनेति ॥** बाह्योपादानकत्वेन बहिरनुभूतैक्येन च दृश्यते, तदपेक्षं वचनमिति भावः। बाह्यत्वारोपे चाधिष्ठानादिकमस्त्येवेति न व्याप्तिभङ्गः। गजमद्राक्षं किन्त्वसौ स्वाप्न एव न बाह्य इत्येव हि प्रतीतिरुत्थितस्योत्पद्यत इति। इयमेव रीतिर्मनोरथस्य। इयांस्तु विशेषः। स्वप्नेऽदृष्टवशादेव वासनापरिणामो दृश्यते। मनोरथे तु पुरुषप्रयत्नाधीन इति।

नन्वहं मनुष्य इति देहात्मविभ्रमस्तावदस्ति। अन्यथा संसाराभावप्रसङ्गात्। देहात्मभ्रमाद्धि रागद्वेषोदयः। ततः पापपुण्यरूपप्रवृत्त्युत्पादः। तस्मादपूर्वदेहादिलाभः। तेन दुःखप्राप्तिः। तथा चोक्तम्- 'नैषां ममाहमिति धीः श्वसृगालभक्ष्ये' इति। तत्र यद्यप्यधिष्ठानं प्रधानश्चास्ति। तथाऽपि सादृश्याभावादुक्तव्याप्तिभङ्ग इति चेत्, किमत्राऽत्मनि देहारोपो देहे वाऽत्मारोप उत भिन्नयोर्देहा-त्मनोरभेदारोपः। न प्रथमद्वितीयौ। देहात्मनोः प्रातीतिकत्वप्रसङ्गात्। देहाद्यन्तराभावात्। न तृतीयः। आविपालगोपालं देहात्मभेदज्ञानसद्भावस्यान्यत्रोपपादितत्वात्। कथं तर्हि मनुष्योऽह-मित्यादिव्यवहार इति चेत्, उपचारेणेति ब्रूमः। उपचारे किं निमित्तमित्यत आह-**देहात्मनो-रिति ॥** यथा वस्तुतो भिन्नयोस्तन्तुपटयोरेकदेशस्थितत्वं, भेददर्शनेऽपि स्फुटतरविवेकाभावश्चास्ति तथा देहात्मनोरपीत्यनेन सादृश्येनायं व्यवहारः। ततो भ्रान्तेरभावात् नात्रोक्तव्याप्तेर्भङ्गः शङ्कनीय इति। स्फुटभेदज्ञानाभावादेव संसारोपपत्तिः। किञ्च स्फुटभेदज्ञानेऽपि पुत्रादाविव स्नेहवशाद्रागादिकं सम्भवत्येव। पुराणवाक्यमपि स्फुटभेदप्रतिभासाभावविषयमिति।

अन्ये तु देहात्मभ्रममङ्गीकृत्य सादृश्योपपादनार्थमिमं ग्रन्थं व्याचक्षते।

ननु शङ्खः पीतः, नभो नीलं, तिक्तो गुडः इत्यादिषु त्रितयाभावाद्व्याप्तिभङ्ग इत्यत आह- **शङ्ख इति ॥ पीतादयः** चिरबिल्वप्रभृतयः। यद्यप्यत्र सादृश्याभावेनैव त्रितयाभावः शङ्कितः। तथाऽपि प्रपञ्चार्थमाचार्येण त्रितयमप्युपपादितम्।

ननु द्रव्यत्वादिसादृश्येन भ्रान्त्युत्पादेऽतिप्रसङ्गः स्यादिति चेन्न। सोपाधिकभ्रमेष्वल्पस्यापि सादृश्यस्य भ्रमहेतुत्वोपपत्तेः। यथा जलप्रवाहगते दण्डे वक्रिमभ्रमः। चक्षुर्गतपित्तपीतिमप्रयुक्तो हि पीतशङ्खभ्रमः। गोलकगतकार्ष्ण्योपाधिकः साक्षिसिद्धे नभसि नीलत्वभ्रमः। जिह्वागतपित्ततिक्त-तानिमित्तो गुडतिक्तताभ्रमः।

नन्वेकेनैव वाक्येन व्याप्त्युपपादनं किं न कृतम्। नैवं शङ्क्यम्। स्वप्ने हि भ्रमाभ्रमसङ्करोऽ-स्ति। देहात्मनोस्तु भ्रम एव नास्ति। पीतशङ्खादिभ्रमः सोपाधिकः। शुक्तिरजतादिभ्रमस्तु निरुपाधिकः। तत्र न शक्यमेकविधया समाधानाभिधानम्।

अनयैव दिशा भ्रमस्य त्रितयपूर्वकत्वव्याप्तिः सर्वत्रोपपादनीयेत्याशयवानुपसंहरति- **अत इति ॥** यद्यपि परेणाप्येषा व्याप्तिरङ्गीकृतैव। यदवोचत 'स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यासः' इति। अत्र हि स्मृतिरूपपदेन सादृश्यमङ्गीकृतम्। परत्रेत्यधिष्ठानम्। पूर्वदृष्टेति प्रधानम्। अत एव केशोण्ड्रकादिभ्रमस्य निरधिष्ठानत्वमाशङ्क्य तेजोंऽशाधिष्ठानत्वेन समाधानं कृतम्। बालस्य गुडतिक्तताभ्रमे प्रधानाभावमाशङ्क्य जन्मान्तरानुभूतत्वोपपादनेन परिहार उक्तः। तथाऽपि शिष्यव्युत्पादनार्थम् आचार्येणेदं व्याप्त्युपपादनं कृतं, न परं प्रतीत्यदोषः।

**(र.टि.) तथा चोक्तमिति ॥** विशेषनिषेधः शेषविधिं गमयतीत्यन्येषां देहात्मभ्रमोऽस्तीति नैषामिति वाक्येनार्थाल्लभ्यत इति

भावः । ननु देहात्मनोः प्रातीतिकत्वमिष्टमेव । न च देहाद्युचितार्थक्रियाऽभावप्रसङ्गः । देहाद्यन्तरेण तदुपपत्तेरित्यत आह- **देहाद्यन्तराभावादिति ॥** एकदेशस्थत्वादीत्यादिपदं व्याचष्टे- **भेददर्शनेऽ-पीति ॥ स्फुटभेदप्रतिभासाभावेति ॥** इदं च पुराणवाक्यस्याऽर्थिकार्थकथनमिति ज्ञातव्यम् । **त्रितयम-पीति ॥** शङ्खादीनामित्यनेनाधिष्ठानस्याप्युपपादितत्वादिति भावः । **अल्पस्यापीति ॥** प्रधानविजातीयगत-त्वेनातिप्रसक्तस्यापीत्यर्थः । **सर्वत्रोपपादनीयेत्याशयवानिति ॥** अनेन कुत्रापीत्येतदुक्ततात्पर्यमिति ज्ञात-**(र.टि.)** व्यम् । **स्मृतिरूपपदेनेति ॥** स्मृत्या **रूप्यते** जन्यत इत्यध्यासस्य स्मृतिरूपत्वं वक्तव्यम् । भ्रमजनकप्रधानस्मृतिहेतुसंस्कारोद्बोधश्चाधिष्ठाने प्रधानसादृश्यं विना न सम्भवतीति स्मृतिरूपपदेन प्रधानाधि-ष्ठानयोः सादृश्यमङ्गीकृतमित्यर्थः । **प्रधानाभावमिति ॥** प्रधानज्ञानाभावमित्यर्थः । ज्ञातस्यैव प्रधानत्वादिति भावः ।

**(रा.टि.)** निरधिष्ठानत्वहेतोरनैकान्त्यं वक्तुं शङ्कते- **स्यादेतदिति ॥** भ्रान्तिकल्पिता इत्यत्र कुत इति हेत्वा-काङ्क्षायां सत्यत्वे बाधकसद्भावादिति हेतुमभिप्रेत्य बाधकानि व्यनक्ति- **सत्यत्वे हीत्यादिना ॥** प्रतीत्यनुपपत्तिं चाऽह- **अपि चैतानिति ॥** बहिः पश्यतीति सम्बन्धः । करणान्यपि निराह- **केन चेति ॥** देशकालभेदाच्च न सत्त्वं पदार्थानामित्याह- **काश्यामिति ॥ तस्मादिति ॥** बाधकसत्त्वादित्यर्थः । उपादानाद्युपलब्धिप्रसङ्गं निराह- **वासनानां चेति ॥** तथा च सूत्रद्वयं 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वाद्' इति 'निर्मातारं चैके पुत्रादयश्च' इति च । अतीन्द्रियोपादानकस्य गजतुरगादेः कथमुपलम्भ इत्यत आह- **त्र्यणुकवदिति ॥** नीरूपादपि रूपवत उत्पत्तिः वायोरग्निरित्याद्यङ्गीकुर्वतां वेदान्तिनां सिद्धैवेत्यपि ध्येयम् । परतीत्या तु अपूर्वचित्ररूपहीनात् कारणसमूहादपूर्वचित्ररूपवतः कार्यस्योत्पत्तिरुदाहार्या । **सादित्वप्रसङ्गादिति ॥** 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इत्युक्तेर्मनसः सादित्वे संसारस्यापि सादित्वप्रसङ्गादित्यर्थः । **तच्चेति ॥** स्वशिरश्छेदादिकमित्यर्थः।

**वचनमिति ॥** सूत्रमित्यर्थः । तस्याऽरोपितत्वे बाधप्रत्ययो मानमित्याह- **गजमद्राक्षमिति ॥** स्थलान्तरे व्याप्तिभङ्गमाशङ्क्याऽह- **इयमेवेति ॥** वैषम्यानुभवात्कथमियमेव रीतिरित्युक्तिरित्यत आह- **इयांस्त्विति ॥** कुतो देहैक्यभ्रमाभावे संसाराभाव इत्यतः 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापाया-दपवर्गः' इति न्यायसूत्रे पूर्वपूर्वं प्रति उत्तरोत्तरेषां कारणत्वोक्तेस्तद्रीत्योपपादयति- **देहात्मभ्रमाद्धीति ॥ तथा चोक्तमिति ॥** द्वितीयस्कन्धे सप्तमे ।

'एषां स एव भगवान्दययेदनन्तस्सर्वात्मनाऽश्रितपदो यदि निर्व्यलीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां नैषाम् ॥'

इति श्लोके यदि **निर्व्यलीकं** छद्मना विना । **सर्वात्मना** सर्वप्रकारेण श्रितपदः । येषां **दययेत्** दयां कुर्यात् । तर्ह्येषां श्वसृगालभक्ष्ये देहे । ममाहमिति धीर्न भवति । ते **देवमायां** देवस्य महिमानं विदन्ति । अतितरन्ति च संसारम् । इत्युक्त्याऽन्येषां ममाहमिति धीरस्तीति गम्यत इति भावेनैतदुक्तिरिति ज्ञेयम् । **अधिष्ठानं प्रधानं चास्तीति ॥** देहात्मनोरन्यतरस्मिन्नन्यतरस्याऽरोपे एकमधिष्ठानमन्यत्प्रधानमिति भावः । अस्तु प्रातीतिकत्वं, को दोष इत्यत आह- **देहाद्यन्तरेति ॥** सत्यभूतस्येत्यर्थः । तथा च 'आत्मा वा इदमग्र आसीत्', 'अथात आत्माऽऽदेशः' इत्यादेरप्रामाण्याऽपातः । 'ब्राह्मणो वाजपेयेन यजेत' इत्यादौ प्रातीतिकब्राह्मण्यकः शूद्रोऽप्यधि-क्रियेतेति भावः । **अन्यत्रेति ॥**

**(रा.टि.)** 'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ।
अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् ।'

इति भक्तिपादीयानुव्याख्यानसुधयोः । यथा हि जातमात्रस्य पश्वादेः स्तन्यपानादौ प्रवृत्त्यादिहेतोरिष्टसाधन-त्वाद्यनुमितेर्यत् स्तन्यपानं तदिष्टसाधनं यथेदम्, यत् नेत्रस्यान्तः कण्डूयनं तद् अनिष्टसाधनं यथेदमित्यादिव्याप्ति-स्मृतिस्तावन्न देहान्तरास्मृतौ युक्ता । न च मम देहान्तरमभूदिति स्मरतः स्वस्यैव तद्देहैक्यधीः । किन्त्वनेक-मणिष्वनुस्यूतं सूत्रमिवानेकदेहानुस्यूतमात्मानं पश्यतस्ततो भेदज्ञानमेव भवतीत्युपपादितत्वात् । तथा गीताभाष्ये द्वितीये 'देहिनोऽस्मिन्यथा देहे' इति श्लोकव्याख्याऽवसरे प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वदेहानुसन्धे-रुक्तत्वेनोपपादितत्वात् । तथा चार्वाकनये-

'देहादन्योऽनुभवत आत्मा भाति शरीरिणाम् ।
मम देह इति व्यक्तं ममार्थ इतिवत्सदा ॥'

इत्यनुव्याख्यानादौ चोपपादितत्वादित्यर्थः । **इत्यादीति ॥** ब्राह्मणोऽहमित्यादिव्यवहारादिरादिपदार्थः। ‘उपचारश्च कृष्णोऽहमिति कर्दमलेपने’ इत्यनुव्याख्यानोक्तमाह- **उपचारेणेति ॥** यद्यपि तत्र कृष्णोऽहमित्यादिना देहधर्माणां काष्ण्र्यादीनामात्मनिष्ठत्वेन प्रतीतिर्नेत्युक्त्वा व्यवहारमात्रं तु कर्दमलिप्तवस्त्रे कृष्णं वस्त्रमिति व्यवहारवदि-त्येवोक्तम् । न तु मनुष्योऽहं ब्राह्मणोऽहमित्यादिव्यवहारस्य । मनुष्योऽहमित्यादिव्यवहारस्येव प्रतीतेरपि सत्त्वात्प्रमात्वाच्च । ‘अहं ब्राह्मणोऽहं मनुष्यः, इत्यादिधीस्तु प्रमैव। देहविशेषविशिष्ट एव हि ब्राह्मणादिशब्दार्थः न तु देहविशेषः । देहो ब्राह्मण इति कदाऽप्यप्रतीतेः’ इति देहात्मैक्यभङ्गे न्यायामृतोक्तेः । गीताभाष्ये च द्वितीये चार्वाकनिरासप्रस्तावे अहं मनुष्य इत्याद्यनुभवाच्चेति शङ्कितस्यानुभवस्यासिद्धेरप्रामाण्यस्य वा परिहारेऽनुक्तेश्च । तथाऽभ्युपेत्य वा कृष्णोऽहमित्यादिव्यवहाराभिप्रायेण वा इयमुक्तिरिति ज्ञेयम् ।

देहात्मनोरैक्यव्यवहारे हेतुभूतसादृश्यप्रतियोगिनो मूलेऽनुक्तेः स्वयमाह- **वस्तुतो भिन्नयोस्तन्तुपटयो-रिति ॥** न्यायमतेनायं दृष्टान्तः । एकैकतन्तुपटाभिप्रायेण वाऽयं दृष्टान्तः । मूले अपिपदोक्तेर्धर्मान्तरेणापि तन्तुपटसादृश्यमभिमतमिति भावेन दृष्टान्ते धर्मान्तरं चाऽह- **स्फुटतरविवेकाभावश्चास्तीति ॥** ततः किमित्यतो मूलार्थमाह- **तथेति ॥ अनेन सादृश्येनेति ॥** एकदेशस्थस्फुटतरविवेकशून्यतन्तुपटदृष्टान्तसादृश्येनैकदेश-स्थत्वस्फुटतरविवेकराहित्यरूपेणाहमिति देहात्मनोरभेदव्यवहार इत्यर्थः । अनुव्याख्याने तु

‘व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।
भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वविविक्तवत् ।
भवन्ति व्यवहाराश्च ।’

**(रा.टि.)** इत्यादिनाऽङ्गारवह्निदृष्टान्तेन सादृश्यमुक्तम् । **स्फुटभेदज्ञानेऽपीति ॥** देहाऽत्मनोरङ्गुलिद्वयवत् स्फुटतरविवेको नेति तदभिप्रायं, न त्वैक्यभ्रमाभिप्रायम् । विवृतमेतद्देहाऽत्मैक्याध्यासभङ्गे । देहाऽत्मनोरप्येकदेश-स्थत्वादिसादृश्यसद्भावान्न देहोऽहमिति भ्रमोऽधिष्ठानतत्सादृश्यरहित इत्यर्थः । पद्मनाभतीर्थीयादिटीकाया-मुक्तेराह- **अन्ये त्विति ॥** तद्व्याख्यानमभ्युपेत्यवादेनेति भावः । **त्रितयेति ॥** अधिष्ठानप्रधानतत्सादृश्य-रूपत्रितयेत्यर्थः । **व्याप्तीति ॥** यदारोपितं तद् अधिष्ठानादित्रितयोपेतमिति व्याप्तिभङ्ग इत्यर्थः । **प्रभृतय इति ॥** प्रभृतिपदेन जम्बूफलनिम्बबीजादिग्रहः । **सादृश्याभावेनैवेति ॥** अधिष्ठानप्रधानयोः प्रसिद्धत्वादधि-ष्ठानस्य शुक्लादित्वात्प्रधानस्य पीतादित्वेन सादृश्यस्य दुर्निरूपत्वात्तदभावनिबन्धनस्त्रितयाभावो गमनिकायां शङ्कित इत्यर्थः । **त्रितयमपीति ॥** शङ्खादीनामित्यनेन शङ्खनभोगुडादीनामधिष्ठानानामुक्तत्वादिति भावः । **अतिप्रसङ्ग इति ॥** शुक्तौ पाषाणाद्यारोपोऽपि स्यादित्यर्थः । मूलोक्तभ्रान्तीनामौपाधिकत्वोपपादनाय दृष्टान्त-माह- **यथा जलेति ॥** उपाधीनाह- **चक्षुर्गतेति ॥** ननु नभसश्चक्षुरयोग्यस्य न चाक्षुषज्ञानविषयतेत्यत आह- **साक्षिसिद्ध इति ॥** परमते त्वनुमानेनोपनीते नभसीति ध्येयम् । **एकेनैव वाक्येनेति ॥** स्वप्नदेहाऽत्मैक्यशङ्खपीति-मनभोनैल्यादिभ्रमेष्वेकदेशस्थत्वादिसादृश्यमस्त्येवेत्यादिरूपेणेति भावः । ननु केशोण्डूकालातचक्रैन्द्रजालिक-पदार्थादिभ्रमेष्वनेकेषु सत्सु तत्र व्याप्तिमनुपपाद्य कथं न कुत्रापीत्युपसंहार इत्यत आह- **अनयैव दिशेति ॥** तेजोऽलातवस्त्रखण्डाद्यधिष्ठानादिसत्त्वोपपादनेन व्याप्तिरुपपादनीयेत्याशयवानित्यर्थः । **यदवोचतेति ॥** मायीति योज्यम् । नेदं ‘वच परिभाषणे’ इत्यस्य रूपम् । तस्य परस्मैपदित्वात् । किन्तु ‘ब्रूञ् व्यक्तायां वाचि’ इत्यस्य रूपम् । ‘ब्रुवो वचिः’ इति ब्रूञ आर्धधातुके लुङि वचिरादेशे ‘वच उम्’ इति उमागमे च्लेरङादेशे रूपमिति । **स्मृतिरूप इति ॥** प्रधानगोचरस्मृतिजन्यत्वादभेदोपचारेण स्मृतिरूप इत्युक्त्या स्मृतिहेतुसंस्कारोद्बोधक-प्रधानाधिष्ठानसादृश्यज्ञानलाभभावेन वा, स्मृते रूपमिव रूपं यस्येति सः स्मृतिसदृशत्वं चोद्बुद्धसंस्कारजन्य-त्वेन, तदुद्बोधश्च सादृश्यज्ञानेनेति भावेन वाऽऽह- **स्मृतिरूपपदेनेति ॥ प्रधानाभावं** प्रधानज्ञानाभावम् । **उक्त इति ॥** अध्यासभाष्ये ।

**(श्री.टि.)** या भ्रान्तिः सा साधिष्ठानेति व्याप्तेः स्वाप्नपदार्थेषु व्यभिचारं वक्तुं तेषां भ्रान्तिकल्पितत्वं तावत् साधयति- **स्वाप्नास्तावत्पदार्था इत्यादिना ॥ प्रागूर्ध्वं चेति ॥** स्वप्नात्प्राक् तदूर्ध्वं चेत्यर्थः । **तदैवेति ॥** विद्युदादिवदिति भावः । **असम्भावितत्वादिति ॥** तत्कालीने जन्मन्युपादानादेः सम्भावितस्याभावादिति भावः । यथोक्तं सुधायाम् । ‘न हि तत्कालीने जन्मन्युपादानं निमित्तं च पश्यामः’ इति । **एवमपीति ॥** उपादानादेः सम्भावितस्य सत्त्वेऽपीत्यर्थः । **अन्तरिति ॥** देहान्तरित्यर्थः । महतां गजतुरगादीनाम् । **तदा** स्वप्नदशायाम् । **उपरतत्वादिति ॥** विषयज्ञानजननव्यापारविनिर्मुक्तत्वादित्यर्थः । **बहिरस्वातन्त्र्यादिति ॥** तत्तदिन्द्रियाधिष्ठानेन तत्तदिन्द्रियविषयाणामेव मनोविषयकत्वेन मनसस्तत्तदिन्द्रियाधिष्ठानेनैव

बाह्यार्थज्ञान-जनकत्वं न स्वातन्त्र्येण । तत्तदिन्द्रियानधिष्ठितत्वेनेति यावत् । बाह्येन्द्रियाणां च तदोपरतत्वात् स्वातन्त्र्येणैव **(श्री.टि.)** बाह्यार्थज्ञानजनकत्वं वाच्यम् । तच्च मनसो न युक्तमिति भावः । **तत्र** काशीहेमन्तयोः । **तयोः** मधुरावसन्तयोः । आत्मैवाधिष्ठानमिति चेत्तत्राऽह- **आत्मनो भेदेनेति ॥** आत्मनः सकाशाद्भेदेन । तदसम्भिन्नतयेति यावत् । स्वाप्नार्थानां गजादीनामुपलम्भादित्यर्थः । ननु स्वाप्नपदार्थानामपीदं रजतमितिवदधि-ष्ठानसम्भिन्नतयैव प्रतीतिरस्तीति चेत्तत्राऽह- **न हीति ॥ न विरोध इति ॥** भ्रान्तिकल्पितस्यैवाधिष्ठान-सापेक्षत्वादिति भावः । **वासनानामिति ॥** उपादानभूतानामित्यर्थः । ननु स्वाप्नघटादिपदार्थोपादानानां वासनानामतीन्द्रियत्वेनोपलम्भासम्भवेऽपि निमित्तकारणोपलब्धिः स्यादिति चेन्न । अदृष्टदेरिव निमित्तत्वेन दण्डादेस्तदनङ्गीकारात्तस्य चातीन्द्रियत्वाद् युक्ता अनुपलब्धिरित्याशयेनाऽह-**निमित्तन्त्विति ॥** ईश्वरादिक-मित्यादिपदेन कालग्रहणम् ।

नन्वतीन्द्रियवासनाकार्याणां स्वाप्नपदार्थानां कथमैन्द्रियकत्वं युज्यते । स्वाप्नाः पदार्था अतीन्द्रिया अतीन्द्रिय-कार्यत्वाद् व्यतिरेकेण घटादिवदित्यनुमानविरोधादिति चेन्न । अतीन्द्रियद्व्यणुककार्ये त्र्यणुके व्यभिचारादित्याह- **अतीन्द्रियकार्यस्यापीति ॥** अपि चैतानन्तः पश्यति बहिर्वा, केन च ते करणेनोपलभ्यन्त इत्याशङ्क्य यद्दूषण-मुक्तं तदप्यत एवापास्तमित्याह- **अत एवेति ॥** वासनोपादानकत्वेन बाह्यपदार्थवैलक्षण्यादेवेत्यर्थः । तथा चाल्पदेशेऽपि महतां दर्शनसम्भवान्न देहविदारणम् । नापि मनसोपलब्ध्यङ्गीकारे मनसो बहिरस्वातन्त्र्यादित्युक्त-दोषः । तेषां बाह्यपदार्थत्वाभावेन स्वातन्त्र्येण मनसस्तज्ज्ञानजनकत्वसम्भवादिति भावः । **मधुरादीति ॥** काशीमधुरयोर्हेमन्तवसन्तयोश्च वासनामयत्वादिति भावः । **अननुभूतत्वेनेति ॥** अस्मिन्जन्मनीति शेषः । 'सूक्ष्मत्वेन लये सच्च प्राकृतैरुपचीयते । सृष्टिकाले यदा तन्न कुतः संसारसंस्थितिः' इत्यनुव्याख्यानं मनसि निधायोपपादयति- **अन्यथेति ॥** मनसः सादित्व इत्यर्थः । **सादित्वेति ॥**

'मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् '

इति वचनेन संसारस्य मनोऽधीनत्वावगमान्मनसः सादित्वे संसारस्यापि सादित्वप्रसङ्गः । न चेष्टापत्तिरिति वाच्यम् ।

'अनादिकर्मणा बद्धो जीवः संसारमण्डले ।
वासुदेवेच्छया नित्यं भ्रमति ॥'

इत्यादिवचनविरोधादिति भावः । **तच्चेति ॥** मन इत्यर्थः । **जन्मान्तरेति ॥** तथा चानादौ संसारे स्वशिरश्छेदा-नुभवसम्भवेन तज्जन्यवासनाया अनादिमनसि स्थितत्वेन स्वप्ने तद्दर्शनं युक्तमिति भावः । **वैधर्म्याच्चेति ॥** स्वप्नादुत्थितस्य स्वप्नोऽयं, नायं बाह्यो गज इति बाधकसद्भावात्स्वाप्नस्य मिथ्यात्वं वक्तव्यम् । प्रपञ्चस्य तु बाधकाभावरूपाद्वैधर्म्यान्न स्वाप्नादिवन्मिथ्यात्वं, किन्तु सत्यत्वमेवेति सूत्रार्थः । **अनुभूतैक्येन** अनुभूत-पदार्थैक्येन । ननु तर्हि या भ्रान्तिस्सा साधिष्ठानेति व्याप्तेर्बाह्यत्वे व्यभिचारोऽस्तु । तत्राधिष्ठानाभावादित्यत आह- **बाह्यत्वाऽरोपे चेति ॥** बाह्यत्वाऽरोपेऽधिष्ठानादिसत्त्वमुपपादयति- **गजमद्राक्षमिति ॥ प्रतीतिः (श्री.टि.)** बाधकप्रतीतिः । **उत्थितस्य** स्वप्नादुत्थितस्य । तथा च बाह्यत्वाऽरोपे स्वाप्नगजादिकमेवाधिष्ठानमिति भावः । **मनोरथस्येति ॥** मनोरथे प्रतीयमानानां पदार्थानामपि स्वाप्नवद्वासनामयत्वेन सत्यत्वान्न तत्राप्युक्त-व्याप्तेर्व्यभिचार इति भावः । **वासनापरिणामः** वासनोपादानकपदार्थानां सृष्टिः । **पुरुषेति ॥** मनोरथे वासनामयपदार्थानां सृष्टिः पुरुषप्रयत्नाधीनेत्यर्थः ।

ननु देहाऽत्मविभ्रमाभावे कुतः संसाराभावप्रसङ्ग इत्यतस्तस्य संसारकारणत्वमुपपादयति- **देहाऽत्म-विभ्रमाद्धीति ॥ रागद्वेषोदय इति ॥** देहानुकूलप्रतिकूलयोरिति शेषः । **नैषामिति ॥** 'ते वै विदन्त्यतितरन्ति च देवमायाम्' इति पूर्ववाक्यम् । तथा च येषां श्वसृगालभक्ष्ये देहे ममाहमिति धीः देहाऽत्मैक्यभ्रम इति यावत्, नास्ति त एव देवमायां विदन्ति अतितरन्ति च संसारमित्युक्त्या विशेषनिषेधः शेषविध्यनु(मा)ज्ञापक इति न्यायेन येषां ममाहमिति देहाऽत्मैक्यभ्रमरूपा धीरस्ति ते संसारं नातितरन्तीति नैषामिति वाक्येनार्थाल्लभ्यत इति भावः । **अत्र** देहाऽत्मैक्यभ्रमे । **अधिष्ठानमिति ॥** आत्मैक्यभ्रमे देहोऽधिष्ठानम् आत्मा प्रधानमित्यर्थः । **सादृश्येति ॥** अधिष्ठानप्रधानयोरित्यर्थः । **उक्तव्याप्तीति ॥** या भ्रान्तिस्साऽऽरोप्यसदृशाधिष्ठानप्रधान-पूर्विकेत्युक्तव्याप्तीत्यर्थः । **देहाऽत्मनोः** आरोप्ययोः । **प्रातीतिकत्वेति ॥** प्रातिभासिकत्वेत्यर्थः । ननु देहाऽत्मनोः प्रातीतिकत्वमिष्टमेव । न च देहाद्युचितार्थक्रियाऽभावप्रसङ्गः । देहाद्यन्तरेण तदुपपत्तेरित्यत आह- **देहाद्यन्तराभावादिति ॥** आ अविपालगोपालमिति पदच्छेदः । अविपालगोपालं मर्यादीकृत्येत्याविपाल-गोपालमित्यर्थः । **अन्यत्रेति ॥**

'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ।

अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत्।
यदि देहान्तरज्ञानं देहैक्यावसितिः कुतः।
मम देह इति ह्येव न देहोऽहमिति प्रमा॥'

इत्यादिनाऽनुव्याख्यान इत्यर्थः। **कथं तर्हीति॥** देहात्मैक्याभावे देहधर्मस्य मनुष्यत्वस्य कथमात्मनि प्रतीतिः स्यात्। न च तथा प्रतीतिरेव नास्तीति वाच्यम्। मनुष्योऽहमिति व्यवहारान्यथाऽनुपपत्त्या तदवगमात्। तथा च व्यवहारसिद्धप्रतीत्यन्यथाऽनुपपत्त्या देहात्मैक्यभ्रमसिद्धिरिति भावः। **उपचारेणेति॥** तथा च चित्रलिखिते सिंहे सिंह इति व्यवहारवदस्यौपचारिकव्यवहारत्वेन न तदन्यथाऽनुपपत्त्या ज्ञानं कल्पनीयमिति भावः। तथा च न तदुपपत्तये देहात्मभ्रमकल्पनमिति हृदयम्।

एकदेशस्थत्वादीत्यादिपदार्थमाह- **भेददर्शनेऽपीति॥ तथेति॥** देहाऽत्मनोरप्येकदेशस्थत्वं स्फुटतरविवेका-भावश्चास्तीत्येवमभिन्नतन्तुपटसादृश्येन मनुष्योऽहमित्ययं व्यवहार इत्यर्थः। **भ्रान्तेरेवेति॥** देहाऽत्मभ्रम-स्यैवाभावादित्यर्थः। ननु देहात्मविभ्रमाभावे उक्तरीत्या संसाराभावप्रसङ्ग इति चेत्तत्राऽऽह- **स्फुटभेदेति॥ (श्री.टि.)** देहाऽत्मनोः स्फुटतरविवेकज्ञानाभावादेव देहानुकूलप्रतिकूलयो रागद्वेषादिद्वारा संसारोपपत्तिरिति भावः। ननु तर्हि स्फुटतरविवेकज्ञानवतां जीवन्मुक्तानां संसारोपलम्भो न स्यात्। तेषामपि देहसंरक्षणार्थं भिक्षाटनादौ प्रवृत्तिदर्शनादित्यत आह- **किञ्चेति॥ पुराणेति॥** तथा च येषां श्वसृगालभक्ष्ये देहे ममाहमिति धीर्नास्ति स्फुटतरविवेकज्ञानमस्तीति यावत्, ते वै विदन्ति इत्याद्युक्त्याऽन्येषां स्फुटतरविवेकज्ञानं नास्तीति लभ्यत इति ज्ञातव्यम्।

**अन्ये** नरहरितीर्थाः। **सादृश्येति॥** देहाऽत्मैक्यभ्रमेऽधिष्ठानप्रधानयोः सत्त्वेऽपि सादृश्याभावेनोक्तव्याप्तिभङ्गे चोदितेऽनुव्याख्यानानुसारेण देहाऽत्मभ्रम एव नास्तीति कुत्र व्यभिचारः स्यादित्यभिधाय कथं तर्ह्यहं मनुष्य इत्यादिव्यवहार इत्याशङ्क्य तस्यौपचारिकत्वमुक्त्वा उपचारे निमित्तप्रदर्शनपरत्वेन देहाऽत्मनोरपीति वाक्यं टीकाकारैर्व्याख्यातम्। नरहरितीर्थास्तु देहाऽत्मैक्यभ्रमेऽधिष्ठानप्रधानयोः सद्भावेऽपि सादृश्याभावेनोक्तव्याप्ति-भङ्गे चोदिते देहात्मैक्यभ्रममङ्गीकृत्य तस्मिन्भ्रमे सादृश्योपपादनपरत्वेन देहाऽत्मनोरपीति वाक्यं व्याचक्षत इत्यर्थः। तेषामनुव्याख्यानविरोधः स्पष्ट इति भावः।

**त्रितयेति॥** अधिष्ठानप्रधानयोः सद्भावेऽपि शङ्खपीतद्रव्ययोः नभोनीलद्रव्ययोः तिक्तद्रव्यगुडयोश्च सादृश्याभावात्त्रितयाभाव इत्यर्थः। इदं चैकसत्त्वे द्वयमिह नास्तीति प्रतीतिसिद्धव्यासज्यवृत्तिप्रतियोगिका-भावाभिप्रायेणेति द्रष्टव्यम्। पीतादय इत्यादिपदव्याख्यानम्- **प्रभृतय इति॥** तथा च पीतं चिरबिल्वं, बिल्वस्य पीतत्वद्योतनाय चिरग्रहणम्। बहुकालीने बिल्वे पीतत्वदर्शनात्। **नीलं** वस्त्रादि। **तिक्तं** निम्बादीति द्रष्ट-व्यम्। **यद्यप्यत्रेति॥** तथा च सादृश्यमेवोपपादनीयम्। न त्वधिष्ठानप्रधानयोस्सत्त्वमिति भावः। **उपपादित-मिति॥** शङ्खः पीत इत्याद्युक्त्या शङ्खादीनामधिष्ठानत्वमुक्तम्। अन्यत्र विद्यन्त इत्यनेन प्रधानं सादृश्यं चेति वाक्येन सादृश्यमिति त्रितयमप्युपपादितमित्यर्थः। **अतिप्रसङ्गः स्यादिति॥** घटेऽपि पटभ्रमः स्यादिति भावः। **सोपाधिकभ्रमेष्विति॥** विशेषदर्शनानिवर्त्यभ्रमेष्वित्यर्थः। **अल्पस्यापीति॥** यत्प्रधानं तदतिरिक्तगतत्वेनाति-प्रसक्तस्यापीत्यर्थः। तथा चोपाधिरेवातिप्रसङ्गभञ्जक इति भावः।

सोपाधिकभ्रमानुदाहरति- **यथेत्यादिना॥** दण्डशङ्खनभोगुडेषु दीर्घत्वशौक्ल्य नीलत्वमाधुर्यरूपविशेष-दर्शनसद्भावेऽपि जलप्रवाहाद्युपाधिगतं वक्रिमादिकं गृहीत्वा दण्डादावारोप्यत इत्यर्थः। गुडतिक्तताभ्रमो यदि बालातिरिक्तस्य तर्हि गृह्यमाणाऽरोपः। यदि च बालस्य तर्हि स्मर्यमाणाऽरोपः। अदृष्टवशात्पूर्वजन्मानुभूत-तिक्ततां स्मृत्वा गुड आरोप्यत इति द्रष्टव्यम्। **एकेनैव वाक्येनेति।** **स्वप्ने** देहाऽत्मनोः शङ्खः पीत इत्यादिरूपेणे-त्यर्थः। तथा च वाक्यभेदः किमर्थ इति भावः। सर्वत्रोपपादनस्यैकप्रकारत्वे ह्येकेनैव वाक्येनोपपादनं कार्यं स्यात्। न चैवमस्तीत्याह- **स्वप्ने हीति॥** स्वाप्नपदार्थानां वासनामयत्वेन सत्यत्वात्। भ्रान्तिकल्पितत्वमेव नास्तीति तज्ज्ञानं प्रमा न भ्रमः। बहिष्ठत्वमात्रमेव भ्रान्तिकल्पितमिति तज्ज्ञानं भ्रमरूपमित्येवं भ्रमाभ्रमयोः साङ्कर्यमस्तीत्यर्थः। एवं च यत्र व्यभिचारश्चोद्यते तेषां सत्यत्वमेवेत्येवं समाधानं नान्यत्र वक्तुं शक्यत इति **(श्री.टि.)**भावः। **सोपाधिको** विशेषदर्शनानिवर्त्यः। **निरुपाधिको** विशेषदर्शननिवर्त्यः। **न शक्यमिति॥** सोपाधिकभ्रमेऽतिप्रसक्तस्यापि सादृश्यस्य भ्रमहेतुत्वात् निरुपाधिकभ्रमे प्रधाननिष्ठाऽसाधारणचाक-चक्यादिसादृश्यस्यैव भ्रमहेतुत्वादिति भावः। **सर्वत्रेति॥** अनेन मूलगतं न कुत्रापीत्येदुक्ततात्पर्यकमिति द्रष्टव्यम्। **एषा व्याप्तिरिति॥** भ्रान्तेः सदृशाधिष्ठानप्रधानपूर्वकत्वव्याप्तिरित्यर्थः। तथा च परेणाप्यङ्गी-कृतत्वान्नैतदुपपादनं भगवत्पादैः कर्तव्यमिति भावः। कथमङ्गीकृतेति ज्ञायत इत्यत आह- **यदभाषतेति॥** सङ्केरेण भाष्य उक्तमित्यर्थः। तदुदाहरति- **स्मृतिरूप इति॥** स्मृत्या **रूप्यते** जन्यत इत्यध्यासस्य स्मृतिरूपत्वं वक्तव्यम्।

भ्रमजनकप्रधानस्मृतिहेतुभूतसंस्कारोद्बोधश्चाधिष्ठाने प्रधानसादृश्यं विना न सम्भवतीति स्मृतिरूपपदेन प्रधानाधिष्ठानयोः सादृश्यमङ्गीकृतमित्यर्थः । **अत एवेति ॥** भ्रान्तेः सदृशाधिष्ठानप्रधानपूर्वकत्वव्याप्तेरङ्गी-कृतत्वादेवेत्यर्थः । **प्रधानाभावमिति ॥** प्रधानज्ञानाभावमित्यर्थः । ज्ञातस्यैव प्रधानत्वात् तिक्ततायाश्च बालेनास्मिन्जन्मनि प्रागननुभूतत्वादिति भावः ।

**(पां.टि.)** आद्येऽपि किं तेऽतीन्द्रियाः, किं वा ऐन्द्रियकाः । नाद्यः । स्वप्नदशायामपि तदनुपलम्भप्रसङ्गादिति भावेन द्वितीयं दूषयति- **प्रागूर्ध्वं चेति ॥ समानोऽयं प्रसङ्ग इति ॥** अतीन्द्रियत्वे स्वप्नदशायामप्युपलम्भो न स्यात् । ऐन्द्रियकत्वे च प्रागूर्ध्वं चोपलब्धिः स्यादिति समानोऽयं प्रसङ्ग इत्यर्थः । ऐन्द्रियकत्वेऽपि तदैवोत्पद्य विनष्टत्वान्न प्रागूर्ध्वं चोपलब्धिप्रसङ्ग इति शङ्कते- **तदैवेति ॥ असम्भावितत्वादिति ॥** तदैवोत्पत्तिविनाश-योरसम्भावितत्वादित्यर्थः । विद्युदादौ तद्दर्शनान्न स्वाप्नपदार्थानां तदैवोत्पत्तिविनाशयोरसम्भावितत्वमित्यतः इत्थम्भावे प्रमाणाभावादिति सत्येव दोषे दोषान्तरमाह- **किञ्चेति ॥** प्राग् मृदादीनि पश्चाच्च कपालादीनि उपलब्धव्यानीत्यर्थः । ननु न प्रागूर्ध्वं मृदादीनां कपालादीनामुपलब्धिः प्रसज्यते । वासनोपादानकत्वाङ्गीकारेण तेषां बाह्यमृदाद्युपादानकत्वाभावादित्यरुचेराह- **अपि चेति ॥** अत्र 'यथाकामं स्वे शरीरे परिवर्तते' इति 'बहिष्कुलायादमृतश्चरित्वा' इति च श्रुतिद्वयं विकल्पकोटिद्वयप्रापकमिति द्रष्टव्यम् । **दर्शनासम्भवादिति ॥** अल्पप्रदेशे महतां रथादीनामवस्थानासम्भवेन तत्र तद्दर्शनस्यायुक्तत्वादित्यर्थः । देशकालविसंवादाच्च न स्वप्नः सत्य इति भावेन तद्विसंवादमुपदर्शयति- **किञ्चेति ॥ न च तत्रेत्यादि ॥** काश्यां मधुरावस्थानस्य, हेमन्ते वसन्तावस्थानस्य च असम्भवादित्यर्थः । आत्मन एतदधिष्ठानत्वं किं न स्यादिति शङ्कते- **आत्मन इति ॥** भेददर्शनस्य भ्रमविरोधिनो विद्यमानत्वान्नाऽत्मनो भ्रमाधिष्ठानत्वमिति भावः । भेददर्शने विवदमानं प्रति तदुपपादयति- **न हीति ॥** प्रत्युत नाहं गज इत्येव प्रतीतिरित्यर्थः । **उक्तमिति ॥** 'ते किमनादिनित्याः' इत्यादिनेति शेषः । **उत्पत्तीति ॥** तथा च अनादिनित्यत्वपक्षदोषोऽनङ्गीकारपराहत इति भावः । नन्वेवं वासनानामतीन्द्रियत्वात् तदुपादानकस्वाप्नार्थानामप्यतीन्द्रियतया चाक्षुषाद्युपलम्भानुपपत्तिरित्यतोऽतीन्द्रिय-द्व्यणुकोपादानकस्यापि त्र्यणुकस्यैन्द्रियकत्वेनोक्तनियमासिद्धेर्न तत्प्रसक्तिरिति भावेनाऽह-**अतीन्द्रियेति ॥** तर्हि वासनारूपमित्येतावतैव प्रसक्तदोषाणां परिहारसिद्धेर्मनसि स्थितमिति विशेषणमनर्थकमित्यतोऽनुप-**(पां.टि.)** पत्त्यन्तरपरिहारार्थं तदिति भावेन तदुत्थापयति- **तर्हीति ॥ प्रसिद्धमिति ॥** 'नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठति' इत्यादिश्रुतिप्रसिद्धमित्यर्थः । **अन्यथेति ॥** अविद्यादेरेव संसारत्वेन संसारस्याविद्या-कामकर्माद्यधीनत्वानुपपत्त्या मनोव्यतिरेकेण तदनादित्वनिर्वाहकाभावादिति भावः ।

तथाऽपि कथं स्वप्ने स्वशिरश्छेदादिप्रतीतिसमर्थनमित्यतः तज्जन्मनि स्वशिरश्छेदादेरननुभूतत्वेऽपि जन्मान्तरेऽनुभूतत्वात्तज्जन्यसंस्काराणां तदात्मना परिणामसम्भवात्तद्दर्शनोपपत्तिरिति भावेनाऽह- **तच्चेति ॥** तर्हि तत्रैव व्याप्तिभङ्ग इत्यतो वासनारूपस्वाप्नार्थानामेव बाह्यत्वारोपेऽधिष्ठानत्वान्न तत्रोक्तव्याप्तेर्भङ्ग इति-भावेनाऽह- **बाह्यत्वारोपे चेति ॥** संस्कारोपादानकवस्त्वधिष्ठानत्वादिकमेव दर्शयति- **गजमिति ॥** ननु तथाऽपि मनोरथस्य भ्रमत्वेऽपि तत्राधिष्ठानाद्यभावाद्व्यभिचार इत्यतस्तत्रापि संस्कारोपादानकतया पदार्थानां सत्यत्वेन तत्प्रतीतेर्भ्रान्तित्वासिद्धेर्न तत्राप्युक्तव्याप्तेर्भङ्ग इति भावेनाऽह- **इयमेवेति ॥** तर्हि स्वप्नमनोरथयोः को विशेषः, येन 'स्वप्नमनोरथो यथा' इत्यादौ मनोरथस्य स्वप्नात्पृथङ् निर्देश इत्यतस्तमुपदर्शयति- **इयांस्त्वि-ति ॥** मास्तूक्तव्याप्तेः स्वप्नमनोरथयोर्व्यभिचारः । उदाहरणस्यानादरणीयत्वात् । अहं मनुष्य इति भ्रमे तु व्यभिचारः स्यादेवेति भावेन तदनभ्युपगमे बाधककथनेन तत्साधुत्वमुपपादयति- **नन्विति ॥** तत्कथमित्यतः निमित्तनैमित्तकभावं स्फोरयति- **देहात्मभ्रमाद्धीति ॥ तथा चोक्तमिति ॥** विशेषनिषेधः शेषविधिं गमयतीति अन्येषां देहात्मभ्रमोऽस्तीति 'नैषाम्' इति वाक्येनार्थाल्लभ्यत इति भावः । **प्रातीतिकत्वप्रसङ्गादिति ॥** आरोप्यस्यासत्त्वनियमेन तन्नियमादिति भावः ।

ननु देहात्मनोः प्रातीतिकत्वमिष्टमेव । न च प्रातीतिकस्यार्थक्रियाकारित्वाभावाद्देहाद्युचितार्थक्रियाकारित्वाद्य-भावप्रसङ्ग इति वाच्यम् । शुक्तिकायामारोपितस्य रजतस्य प्रातिभासिकत्वेऽप्यप्रातिभासिकेन रजतेन तदुचितार्थ-क्रियावत् अप्रातिभासिकदेहात्मभ्यां तदुचितार्थक्रियासम्भवेन तदप्रसङ्गादित्यतः आरोपितस्य प्रातिभासिकत्वेऽप्य-नारोपितरजतस्याप्रातिभासिकस्य सत्त्वेन तेन तदुचितार्थक्रियासम्भवेऽपि प्रकृते प्रातीतिकदेहात्मव्यतिरेकेण देहा-त्मनोरसत्त्वात्ताभ्यां तदुचितार्थक्रियाया वक्तुमनुचितत्वेन तदभावप्रसङ्गो दुर्वार इत्याशयेनाऽह-**देहाद्यन्तरेति ॥**

**आविपालगोपलमिति ॥** ननु च 'आ अविपालगोपालेभ्यो भेदज्ञानम्' इत्यत्र तद्विधायकाभावात्कथं पञ्चमीति चेन्न । अत्राऽङः 'आङ् मर्यादावचने' इति स्मरणात् कर्मप्रवचनीयतया कर्मप्रवचनीयाङ्योगात् 'पञ्चम्यपाङ्परिभिः' इति युक्तैव आ अविपालगोपालेभ्यः इति पञ्चमी । न चैवं कर्मप्रवचनीयस्याऽङः पञ्चम्यन्तेनाविपालगोपालशब्देन 'आङ् मर्यादाभिविध्योः' इति

समासे 'सुपो धातुप्रातिपदिकयोः' इति सुब्लोपे अपविष्णु संसार इत्यादाविव आविपालगोपालं भेदज्ञानमित्येव स्यात् । आ अविपालगोपालेभ्यः भेदज्ञानमिति पञ्चमी तु कथमिति वाच्यम् । 'विभाषा' इति महाविभाषाऽधिकारेण 'आङ् मर्यादाभिविध्योः' इति मार्यादार्थक-स्याऽङो विकल्पेन पञ्चम्या समासविधानेन समासाभावपक्षे आ अविपालगोपालेभ्य इति वाक्यस्य सम्भवेन पञ्चमीश्रवणस्य, समासपक्षे आविपालगोपालमित्यस्य च रूपस्योपपन्नतरत्वादित्याशयात् ।

**(पां.टि.) अन्यत्रोपपादितत्वादिति ॥** 'जातमात्रा मृगा गावः' इत्यादिना 'यदा देहान्तरज्ञानं देहैक्यावसितिः कुतः' इत्यन्तेन ग्रन्थेन अनुव्याख्याने तृतीयाध्याये उपपादितत्वादित्यर्थः । ननु व्यवहारस्य व्यवहर्तव्यज्ञान-साध्यत्वनियमादभेदभ्रमे सति तन्मूलकस्य मनुष्योऽहमिति व्यवहारस्य सम्भवेऽपि आविपालगोपालं भेदज्ञानस्यैव सत्त्वात्तदभेदभ्रमस्याभावे कारणाभावान्मनुष्योऽहमिति व्यवहारः कथं स्यादिति शङ्कते- **कथं तर्हि मनुष्योऽहमि-तीति ॥** मुख्यव्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वनियमेऽपि सिंहो देवदत्त इत्यादौ व्यभिचारेण मुख्यामुख्यव्यव-हारसाधारण्येन व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वनियमाभावान्मनुष्योऽहमिति भेदव्यवहारस्य औपचारिक-त्वेनाभेदज्ञानसाध्यत्वाभावात्तदभावेऽप्यौपचारिकव्यवहारो युक्त इति भावेन समाधत्ते- **उपचारेणेति ॥** भवेदेतदेवं यद्यस्य व्यवहारस्य सिंहो देवदत्त इत्यादिवदौपचारिकत्वं स्यात् । न च तत्सम्भवति । तत्र सादृश्यविशेषस्य सत्त्वेन तन्निमित्तकतयौपचारिकत्वसम्भवेऽपि प्रकृते तादृशनिमित्तविशेषाभावेनौपचारिकत्वस्यासिद्धेस्तदनुप-पत्तिस्तदवस्थैवेति शङ्कते- **उपचारे किं निमित्तमिति ॥** न किमपीत्यर्थः । मूले एकदेशस्थत्वादीत्यादिपद-व्याख्यानम्- **यथेति ॥** तर्हि देहात्मभ्रमजन्यत्वात्संसारस्य तदभावेऽभावः स्यादित्यतोऽङ्गुलीद्वयवत्स्फुटतरभेद-ज्ञानाभावात्तदनुकूलप्रतिकूलयो रागद्वेषाद्युपपत्तेर्न तदभावप्रसङ्ग इत्याशयेनाऽह- **स्फुटेति ॥** भवेदेवं यदि देहात्मनोः स्फुटतरभेदज्ञानाभाव एव सम्भवेत् । न च सम्भवति । स्फुटतरभेदज्ञानस्योदाहृतानुव्याख्यानसिद्धत्वेन तदभावस्य तद्विरुद्धतयाऽसम्भवदुक्तिकत्वादित्यरुचेराह- **किञ्चेति ॥** स्त्रीपुत्रादिभ्यः स्फुटतरभेदज्ञानस्य सत्त्वात्तदभेदभ्रमाभावेऽपि तत्र स्नेहवशात्तदनुकूलप्रतिकूलयो रागद्वेषाद्युत्पत्तिक्रमेण दुःखोत्पत्तिरूपसंसार-वत्स्फुटतरभेदप्रतिभासाद् देहात्मैक्यप्रतिभासाभावेऽपि देहस्नेहविशेषवशात्तदनुकूलप्रतिकूलयो रागद्वेषाद्युत्पत्ति-प्रणाडिकया दुःखोत्पत्तिरूपसंसारसम्भवेन तदनुपपत्तेरेवाभावान्न तया देहैक्यभ्रमसिद्धिरिति भावः । तर्हि का पुराणवाक्यस्य गतिरित्यत आह- **पुराणवाक्यमपीति ॥** अङ्गुलीद्वयवद् देहात्मनोरुक्तनिमित्तद्वयेन स्फुटभेदप्रति-भासाभावविषयकमित्यर्थः ।

चिरन्तनटीकाकारमतमनुवदति- **अन्ये त्विति ॥** अन्ये त्वित्यस्वरसोद्भावनम् । तद्बीजं तु

'जातामात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ।
अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् ॥'

इत्याद्यनुव्याख्यानविरुद्धतया देहात्मभ्रमाङ्गीकारस्यानुचितत्वेन तदङ्गीकारेण सादृश्योपपादन-तयैतद्ग्रन्थ-व्याख्यानस्यासमञ्जसत्वमिति द्रष्टव्यम् । **त्रितयमपीति ॥** यद्यप्यत्र प्रधानसादृश्ये एव उपपादिते न त्वधिष्ठानमपीति न तथोक्तिरुपपन्ना, तथाऽपि शङ्खादीनामित्यनेनाधिष्ठानमप्युपपादितमित्याशयेन त्रितयमपीत्युक्तमिति द्रष्ट-व्यम् । **अल्पस्यापीति ॥** प्रधानविजातीयगतत्वेनातिप्रसक्तस्यापीत्यर्थः । सोपाधिकभ्रमानेवोदाहरति- **यथा इत्यादिना-** इत्याहुः । वस्तुतस्तु सोपाधिकभ्रमेऽल्पस्यापि सादृश्यस्य हेतुतामेव दृष्टान्तेनाऽह - **यथा (पां.टि.) जलेति ॥** तथाऽपि प्रकृतभ्रमाणां कथं सोपाधिकत्वम् ? उपाधेरप्रतिभासादित्यतः शङ्खः पीत इत्यादिभ्रमेषु क्रमेण सोपाधिकत्वमुपपादयति- **चक्षुर्गतेत्यादिना ॥** मूले कुत्रापीत्युक्तत्वात्तत्तात्पर्यमाह - **अनयैव दिशेति ॥** पराङ्गीकृतमिति कथमवगतमित्यतः तद्वाक्यादेवेत्याह- **यदभाषतेति ॥** तद्वाक्यं पठति- **स्मृतिरूप इति ॥** यद्यपि परभाष्ये 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इत्येव पठितम् । तथाऽपि साकाङ्क्षत्वपरि-हाराय प्रश्नवाक्यस्याध्यासपदानुषङ्गं सिद्धवत्कृत्वाऽध्यासपदगर्भतयैवानुवादः कृत इति द्रष्टव्यम् । कथमेव-मुक्त्याऽप्यध्यासस्याधिष्ठानादित्रितयपूर्वकत्वलाभ इत्यतः तमुपदर्शयति- **अत्र हीति ॥**

अत्र परत्रेत्युक्त्या परस्येत्यर्थतो लाभात् परत्र परस्यावभास इत्येव लक्षणमभिमतम् । तदुपपादनाय स्मृति-रूपत्वसङ्कीर्तनम् । स्मृतिरूपत्वोपपादनाय च पूर्वदृष्टत्वसङ्कीर्तनम् । तथा हि । अत्र अध्यासद्वयेऽपि परत्रेति सामान्यतो धीयोग्यमधिष्ठानमुक्तम् । अत्रार्थपक्षेऽवभास्यत इत्यवभासः 'अपरश्चासावभासश्च' इति परावभास इति विग्रहः । ज्ञानपक्षे च 'अवभासनमवभासः परस्यावभासः परावभासः' इति विग्रहो द्रष्टव्यः । परावभास इत्येवोक्ते घटात्परस्य पटस्यावभासेऽवभास्यमाने पटे चातिव्याप्तिः स्यात् । तन्निवृत्तये परत्रेत्युक्तम् । न चैवमपि खण्डो गौरित्यादावतिव्याप्तिः । परत्रेत्यारोप्यात्यन्ताभाववतोऽधिष्ठानस्य विवक्षितत्वात् । खण्डगवादीनां

तादात्म्यवतां संसर्गशून्यत्वाभावात् । दोषसंस्कारसम्प्रयोगोत्थत्वादवभासः सम्भवतीति वक्तुं स्मृतिरूप इत्यु-क्तम् । स्मर्यत इति स्मृतिः स्मर्यमाणोऽर्थः । 'भावे' 'अकर्तरि च कारके सञ्ज्ञायाम्' इति सूत्रद्वयमधिकृत्य 'स्त्रियां क्तिन्' इति सूत्रेण भावे कर्तृव्यतिरिक्ते कारके च कर्मादौ संज्ञायां चकारादसंज्ञायां च क्तिनो विधा-नात् । ततश्चार्थपक्षे स्मर्यमाणस्य रूपमिव रूपं यस्येति स्मृतिरूपः, न तु स्मर्यत एव । अस्पष्टपुरोऽवस्थितत्वेन भानात् । ज्ञानपक्षे च स्मरणं स्मृतिः। उक्तसूत्रेण भावेऽपि क्तिनो विधानात् स्मृतेः रूपमिव रूपमस्येति स्मृति-रूपः न स्मृतिरेव । पूर्वानुभूतस्य तथा भानात् । स्मृतिरूपता चास्य दोषादित्रयोत्थत्वात् तादृग्विषयाद्वा । अदृष्टरजतस्य रजतभ्रमादृष्टे तत्संस्काराभावाच्च । संस्कारद्वारा स्मृतिरूपतोपयोगित्वं पूर्वदृष्टत्वस्य । ततश्च अत्र भाष्ये 'परत्र परावभासः' इत्येवाध्यासलक्षणमभिमतम् । इतरदुक्तरीत्या तच्छेषभूतमित्यवधेयम् । यद्वा अत्राव-भास इत्यनेन मिथ्याज्ञानमध्यास इति सङ्क्षिप्तमध्यासलक्षणमुक्तम् । अवसन्नोऽवमतो वा भासोऽवभासः । प्रत्ययान्तरबाध एव अत्रास्यावसादोऽवमानो वेति यौगिकेन तेन मिथ्याज्ञानस्यैव लाभसम्भवात् । पूर्वदृष्टेत्या-दिनाऽवभासपदस्य रूढमर्थमादाय विस्तृतमध्यासलक्षणमुच्यत इति द्रष्टव्यम् । तथा हि । पूर्वदृष्टस्य अवभासः पूर्वदृष्टावभासः । अत्र पूर्वदृष्टेत्यनेन अनृतमारोपणीयमुपस्थाप्यते । मिथ्याप्रत्ययस्याऽरोपविषयारोपणीयरूप-सत्यानृतमिथुनमन्तरेणासम्भवात् । तस्य च दृष्टत्वमात्रमुपयुज्यते । न वस्तुसत्तेत्यभिप्रेत्य दृष्टग्रहणम् । तत्रापि वर्तमानं दृष्टदर्शनं नाऽरोपोपयोगीति भावेन पूर्वेत्युक्तम् । तच्च पूर्वदृष्टं स्वरूपेण सदप्यारोपणीय-तयाऽनिर्वाच्यमित्यनृतम् ।

आरोपविषयसत्यमाह- **परत्रेति ॥ परत्र** शुक्तिकादौ परमार्थसतीत्यर्थः । तदनेन विशेषणद्वयेन सत्यानृतं **(पां.टि.)** मिथुनमुक्तं भवति । पूर्वत्र दृष्टस्य परत्रावभासोऽध्यास इत्युक्ते स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासे, तथा पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासे च यथार्थप्रत्यये प्रत्यभि-ज्ञारूपेऽतिव्याप्तिः । न च मिथ्याज्ञानत्वरूपावभासपदार्थस्य तत्राभावात् कथं तत्पदाङ्कितलक्षणस्य तत्राति-व्याप्तिरिति वाच्यम् । अत्र लक्षणेऽवभासपदस्य रूढार्थत्वाश्रयणेन योगेन मिथ्याज्ञानार्थत्वाभावान्नीलस्याव-भासः, पीतस्यावभास इत्यादौ समीचीनप्रत्ययेऽप्यवभासप्रसिद्ध्या समीचीनप्रत्ययस्याप्यवभासपदरूढार्थ-त्वात् । न चैवमपि पूर्वदृष्टेत्यनेनानृतस्याऽरोपणीयस्योक्तत्वात्कथं तत्पदाङ्कितलक्षणस्य प्रत्यभिज्ञायामतिव्याप्ति-रिति वाच्यम् । स्मृतिरूपपदाभिधास्यमानासन्निधानसिद्धवत्कारेण पूर्वदृष्टेत्यनेनानृतारोपणीयसमर्पणस्योक्तत्वेन तस्य पूर्वदृष्टपदसामर्थ्याप्रयुक्ततया तत्पदाङ्कितलक्षणस्यापि तत्रातिव्याप्तेर्वज्रलेपत्वात् । अतस्तत्रातिव्याप्ति-परिहारार्थं स्मृतिरूप इत्युक्तम् । स्मृतिरूपमिव रूपं यस्येति स्मृतिरूपः । न चोक्तप्रत्यभिज्ञाया अपि संस्कारजन्यत्वेन स्मृतिरूपत्वान्न तेन तद्व्यावृत्तिरिति वाच्यम् । स्मृतिरूपपदेनासन्निहितविषयत्वस्योक्त्या संस्कारजन्यस्याप्युक्तप्रत्यभिज्ञानस्य समीचीनप्रत्ययत्वेन सन्निहितविषयत्वेनासन्निहितविषयत्वाभावात् तदर्थक-स्मृतिरूपपदेन तद्व्यावृतेः सम्भात् । न च देशान्तरादौ सत्त्वरूपासन्निहितत्वस्य प्रत्यभिज्ञाविषयेऽपि सत्त्वान्नासन्नि-हितविषयत्वोक्त्याऽपि प्रत्यभिज्ञानिरास इति वाच्यम् । आरोप्यस्याधिष्ठाने परमार्थतोऽसत्त्वरूपस्यैवा-सन्निहितत्वस्य स्मृतिरूपपदेन विवक्षिततया तेनोक्तरूपप्रत्यभिज्ञाव्यावृत्तेः सम्भवात् । ततश्चासन्निहित-स्यावभासोऽध्यास इत्येव लक्षणम् । इतरत्तु तच्छेषभूतम् । न तु स्मृतावतिव्याप्तिपरिहाराय परत्रेत्यपि लक्षणे निवेश्यम् । स्मृतिरूपपदेनैव स्मृतिव्यावृत्तिसिद्धेस्तदर्थस्याधिष्ठाने परमार्थतोऽसत्त्वमिति निरुक्तस्याधिष्ठान-समसत्ताकत्वाभावरूपस्य प्रत्यभिज्ञाविषये गोत्व इव स्मृतिविषयीभूततत्तायामप्यभावादुभयोरपि गोव्यक्त्यन्तर-स्मर्यमाणधर्मिरूपाधिष्ठानसमसत्ताकत्वादधिष्ठानसत्यत्वार्थकेन परत्रेत्यनेन स्मृतिव्यावर्तनासम्भवाच्चेत्यन्यत्र विस्तरः । **यत्तु** स्मृत्या रूप्यते जन्यत इति अध्यासस्य स्मृतिरूपत्वं वक्तव्यम् । भ्रमजनकप्रधानस्मृतिहेतु-संस्कारोद्बोधश्चाधिष्ठाने प्रधाने सादृश्यज्ञानं विना न सम्भवतीति स्मृतिरूपपदेन प्रधानाधिष्ठानयोः सादृश्य-मङ्गीकृतमित्यर्थ इत्येतद्ग्रन्थव्याख्यानं **तत्तु** एतद्ग्रन्थव्याख्यानरूपभामतीविवरणाद्यदर्शनमूलकत्वात्स्वग्रन्थेऽपि पूर्वोत्तरपरामर्शामूलकत्वाच्चायुक्तमेवेत्युपेक्ष्यम् । अत एव स्मृते रूपमिव रूपं यस्य सः स्मृतिरूपः । स्मृतिसदृशत्वं चोद्बुद्धसंस्कारजन्यत्वादिना । संस्कारोद्बोधश्च प्रधानसदृशतयाऽधिष्ठानज्ञानेनेति सादृश्याङ्गीकारसिद्धिरिति तद्ग्रन्थव्याख्यानान्तरमप्ययुक्तत्वादुपेक्ष्यम् । **प्रधानाभावमिति ॥** प्रधानज्ञानाभावमित्यर्थः ।

**(व्या.टि) तावदिति ॥** पश्चात्तत्र व्यभिचारं वक्ष्यामीत्याशयः । सत्यत्वे बाधकसद्भावान्मिथ्यात्वसिद्धिरित्य-भिप्रेत्य सत्यत्वे स्वरूपानुपपत्तिः, कारणानुपपत्तिः, दर्शनानुपपत्तिः, करणानुपपत्तिः, असम्भवद्विषयत्वं चेति पञ्च बाधकानि क्रमेण विवक्षुराद्यं तावद्वक्तुं किमनादिनित्याः, उतोत्पत्तिविनाशवन्तः, तदोत्पन्नविनष्टा वेति त्रेधा विकल्प्य पृच्छति- **किं त इति ॥ प्रागूर्ध्वमिति ॥** स्वप्नादिति शेषः । सतो विषयस्यानुपलम्भे हेत्वभा-**(व्या.टि)** वादित्यर्थः । **समान इति ॥** स्थायित्वरूपाऽपादकसाम्यादित्यर्थः

। तृतीयमुट्टङ्कयति- **तदैवेति ।। असम्भावितत्वादिति ।।** उत्पत्तिविनाशसामग्रीयौगपद्यस्येति शेषः। द्वितीयं दोषमाह- **किञ्चैवमिति ।।** भावकार्यस्योपादाननिमित्तोभयवत्त्वनियमादित्यर्थः । तृतीयं वक्ति- **अपि चेति ।। पार्श्वस्थानामपीति ।।** जागरे बहिष्ठदर्शने तथोपलम्भादिति भावः । तुरीयं दोषमाह- **केन चेति ।। उपरतत्वात्** निर्व्यापारत्वादित्यर्थः। पञ्चमदोषमाह- **किञ्चेति ।।** काश्यामिति देशव्यवधिः । हेमन्त इति कालव्यवधिः । व्यभिचारमुद्घाटयति- **न च तत्रेति ।।** आत्माऽधिष्ठानं स्यादित्यत आह- **आत्मन इति ।।** अत्रासिद्धिं व्युदस्यति- **न हीति ।।** आरोपितसम्भिन्नतयोपलब्धेरधिष्ठानत्वे तन्त्रत्वादित्यर्थः । निगमयति- **तथा चेति ।।** अपिपदसमुच्चेयं दर्श-यति- **न केवलमिति ।।** उक्तदोषमुद्धरति- **तेनेति ।।** साध्यस्याप्यागमान्न व्यभिचार इत्यर्थः। **वासनोपादानक-मिति ।।** 'मायामात्रम्' इति सूत्रादित्यर्थः । नन्वतीन्द्रियोपायस्याप्यतीन्द्रियत्वप्रसङ्ग इत्यतो व्यभिचारान्नायं नियम इत्याह- **अतीन्द्रियकार्यस्यापीति ।।** अन्तरित्युत्सर्गः । 'अंशेन जीवमादाय' इति सुप्तस्याप्यर्जुनस्य कैलासदर्शनोक्तेरिति ध्येयम्। **मधुरादीति ।।** तस्यापि वासनामयत्वादित्यर्थः । **अननुभूतत्वेनेति ।।** इह जन्मनीति शेषः । **प्रसिद्धमिति ।।** नित्यं मनोऽनादित्वात् । 'न ह्यमनाः पुमांस्तिष्ठति' इति श्रुतेरिति भावः । बाधकाच्चैवमित्याह- **अन्यथेति ।।** 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति स्मृतेरित्यर्थः । तच्चेति मनःपरामर्शः । **जन्मान्तरानुभूतेति ।।** 'अदृष्टे चाश्रुते भावे न भाव उपजायते' इति श्रुतेरित्यर्थः । **वचन-मिति ।।** 'न स्वप्नादिवत्' इति साम्यनिषेधवचनमित्यर्थः । बहिःष्ठत्वेनेति द्वेधा व्याचष्टे- **बाह्येत्यादिना ।।** तत्रैव व्यभिचारोऽस्त्वित्यत आह- **बाह्यत्वारोपेति ।।** तद्भाष्यमनुसन्दधानः सौत्रं वैधर्म्यहेतुं व्यनक्ति- **गज-मिति ।।** बाह्यत्वादेर्बाध्यत्वादेव न वासनोपादेयत्वमिति भावः । एतामेव युक्तिं समीकरोति- **इयमेवेति ।। अदृष्टवशादेवेति ।।** अनिष्टदुःस्वप्नस्यापि भावादिति भावः । अन्यत्र व्यभिचारमादेष्टुं पृच्छति- **नन्विति ।। देहात्मेति ।।** मनुष्यत्वादेर्देहधर्मत्वस्य 'मानुषीं तनुमाश्रितम्' इत्यादौ प्रसिद्धेरित्यर्थः । **संसाराभावेति ।।** भ्रमस्य संसारकारणत्वादिति भावः । तदुपपादयति- **देहात्मेति ।।** 'मर्त्यात्मबुद्धेः सुतदारकोशेष्वासज्यमानस्य' इति भागवते भ्रमस्य रागादिहेतुत्वोक्तेरिति भावः । **अपूर्वदेहादीति ।।** 'पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकम्' इति श्रुतेरित्यर्थः । **तेन दुःखप्राप्तिरिति ।।** 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरुप-हतिरस्ति' इति श्रुतेरित्यर्थः । देहात्मभ्रमं दूषयितुं विकल्प्य पृच्छति- **किमत्रेति ।। प्रातीतिकत्वेति ।।** तथा च तत आदानादिव्यवहारनिर्वाहो न स्यादित्यनिष्टत्वम् । ननु देहाद्यन्तरात्तद्भविष्यतीत्यत आह- **देहादीति ।।** देहात्मनोः प्रत्येकमेकत्वादित्यर्थः । **आविपालगोपालमिति ।।** अत्र केचित्तु आ अविपालगोपालमिति पदं चिच्छिदुः । तन्न शोभते । तस्याव्ययीभावसमासत्वेनैकपद्यात् । अव्ययीभावत्वाभावे अमो दुर्लभत्वाच्च । तस्य नित्यसमासत्वेनास्वपदविग्रहत्वाच्चेति । **अन्यत्रेति ।।**

'जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ।।'

**(व्या.टि)** इत्यनुव्याख्यान इत्यर्थः । 'उपचारश्च कृष्णोऽहमिति कर्दमलेपने । वस्त्रस्य यद्वदेवेयं स्यात्' इत्यनुभाष्यं मनसि निधाय समाधत्ते- **उपचारेणेति ।।** मनुष्योऽहमित्यभिलाप एव नाभिज्ञेत्येतन्निदर्शयति-**यथेति ।। इत्य-नेनेति ।।** शङ्कनीय इतीत्यतः परमध्याहृतं सूचितमित्यन्वयि । **अनेन सादृश्येनेति ।।** सामानाधिकरण्यं वा ।

नन्विदं निदर्शनं न्यायरीत्या वा स्वरीत्या वा । नाऽद्यः । तन्मते इह तन्तुषु पट इतीहप्रत्ययेन समवायाभ्युप-गमेन च तन्त्वाश्रितस्य पटस्य तन्तुसामानाधिकरण्याभावात् । द्वितीये तन्तुपटयोरित्यत्र तन्तूत्तरविभक्तिरेक-वचनं बहुवचनं वा । नाऽद्यः । अंशिनोऽशेनाऽत्यन्तिकभेदे 'अंशिनोंऽशैरभेदोऽयमंशेन तु भिदाऽभिदा' इत्यनुव्याख्यानविरोधात् । न द्वितीयः । समासे द्विवचनानुपपत्तेः । 'अंशैरभेदोऽयम्' इत्यनुव्याख्याने यावत्तन्तूनामेव पटत्वोपगमात्तद्विरोधात् । 'तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गतः' इति गीतातात्पर्यनिर्णये आत्यन्तिकभेदाक्षेपेण तद्विरोधाच्च । 'जडानामंशतो भेदः समुदाये न चोभयम्' इति ऋग्भाष्यविरोधः । ऋग्भाष्या-नुभाष्ययोः परस्परविरोधश्च दुरुद्धरोऽवरुन्ध्यात् । देहस्य बहिःष्ठत्वेन बहिरुपादानसामर्थ्येन आत्मनश्च शरीरस्थत्वेन शरीरशब्दितस्य बहिरुपादानाद्यसामर्थ्येनान्तरशब्दितस्यान्तरत्वेनैकदेशस्थत्वसादृश्याभावेन तथेत्युपनयाभा-वात् । तस्मान्नोभयथा तन्तुपटदृष्टान्तीकरणम्, एकदेशस्थत्वसादृश्याभिधानं वा युक्तमिति चेत् । अत्रोच्यते । न्यायमते पटस्य समवायेन तन्तुस्थत्वेऽपि संयोगेन भूतलस्थत्वात् । इह भूतले घट इति सार्वजनीनप्रतीतेः । अस्मन्मते एकैकतन्तोर्भेदाभेदे भेदस्य स्फुटविवेकाभावस्यापि सत्त्वान्नोक्तदोषः । अथवा स्वरीत्यैवेदं निदर्श-नम् । तत्रान्तर्वर्तिनी लुप्तविभक्तिरेकवचनमेव । तच्च समुदायापेक्षम् । तथा च तन्तुसमुदायपटयोरित्यर्थः । न चैवमनुभाष्यविरोधः । समुदायेनापि भेदाभेदाभ्युपगमात् । यथोक्तं ऋग्भाष्ये-'समुदायेन चोभयम्' इति । न चैवं भाष्ययोः परस्परविरोधः । अनुभाष्यस्य समुदितपटीयव्यतिषङ्गयुक्ततन्तुसमुदायविषयत्वात् । ऋग्भाष्य-स्याविवक्षितव्यतिषङ्गतन्तुसमुदायविषयत्वात् । अत एव सुधायाम्,

सर्वतन्तुसत्त्वेऽपि पटानुत्पत्तेरयावद्-द्रव्यभावित्वेन भेदाभेदावाशङ्क्य व्यतिषङ्गविशिष्टयावत्तन्तुभ्योऽत्यन्ताभेदः । व्यतिषङ्गरहितयावत्तन्तुभ्योऽपि भेदाभेदाविति व्यवस्थापितम् । न च देहात्मनोरेकदेशस्थत्वानुपपत्तिः । वस्त्रप्रावृतजानुवत् कारीषाग्निवच्चापृथक् सिद्धस्यैव तच्छब्देन विवक्षणान्न विरोधगन्धः । तस्याप्युपचारबीजत्वोपपत्तेर्युक्तं तन्तुपटदृष्टान्तीकरणमित्युक्तम् । **स्फुटविवेकाभावश्चेति ।।** पृथग्दर्शनाभावेनाऽत्यन्तिकभेदादर्शनमित्यर्थः । अत एव गीतातात्पर्ये-

'तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गतः ।
अनन्यश्चेत्तन्तुभावे पटाभावः कथं भवेत् ।।'

इत्यान्तिकभेदाभेदयोर्दोषोऽभिहित इति दिक् ।

ननु देहात्मभ्रमाभावेनाऽत्मात्मीययो रागद्वेषाभावेन प्रवृत्त्यनुपपत्त्या संसारानुपपत्तिरित्याशङ्क्यान्यथोप-पत्तिमाह- **स्फुटेति ।।** 'पृथगात्मानं प्रेरितारं च मत्वा मुक्तस्ततस्तेनामृतत्वमेति' इति स्फुटभेदज्ञानस्य मुक्तिहेतुत्वोक्तेः स्फुटभेदज्ञानाभावादेव संसारो न त्वज्ञानादिति भावः । मूलमङ्गीकारवादेन प्रवृत्तं न वस्तु-**(व्या.टि)** वृत्त्येत्याशयेन स्वयं प्रकारान्तरेण दूषयति- **किञ्चेति ।।** अनेनार्थापत्तेरन्यथैवोपपत्तिः समर्थिता । ननु 'मम देह इति व्यक्तं ममार्थ इतिवत्सदा' इत्यनुभाष्यदिशा पश्वादीनामपि स्फुटभेदप्रतिभासेन नैषामिति भागवते विशिष्य निषेधो न युज्यत इत्यत आह- **पुराणवाक्यमपीति ।। अभावेति ।।** तामसानामिति शेषः। **अन्ये त्विति ।।** प्राचीनटीकाकारा इति शेषः । वैरूप्यनैरूप्यवैरस्यैः सादृश्याभावेन त्रितयाभावं शङ्कते- **नन्वित्यादिना ।।**

नन्वेतत्पूर्वविरुद्धम् । पूर्वं हि महता प्रबन्धेनाऽरोप्यसादृश्यमधिष्ठानप्रधानयोरपेक्षितमित्युक्तम् । अधुना अधिष्ठानप्रधानयोर्वैरूप्यमाशङ्क्य तन्मात्रसादृश्यं समर्थ्यत इति कथं न पूर्वोक्तविरोध इति चेत् । मैवम् । अभिप्रायसद्भावात् । तथा हि । 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति न्यायेन प्रधानसदृशस्याधि-ष्ठानस्य दर्शनेन प्रधानस्मरणम् । ततः स्मृतस्यैवाऽरोपे अन्यथाख्यातिप्रसङ्गेन विसदृशस्य खर्परादेरप्यारोपप्रसङ्गेन च तत्सदृशस्यैवाऽरोप इति हि सिद्धान्तवर्त्म । तत्र प्रधानस्मरणसाधनाधिष्ठानप्रधानसादृश्याभावेन भ्रमा-सम्भवमाशङ्क्य तत्सादृश्यं प्रदर्शितम् । न त्वारोप्यसादृश्यस्यानपेक्षितत्वादिति । किं च भ्रमो द्विविधः सोपाधिको निरुपाधिकश्च । तत्र निरुपाधिके आरोप्येण द्वयोः सादृश्यमपेक्षितम् । सोपाधिके तु प्रधानस्यैव । अत एव पीतादयोऽन्यत्र विद्यन्त एवेति आरोप्यपीतादिसदृशस्य चिरबिल्वप्रभृतेरन्यत्र स्थितिरुक्ता । जगदारोपस्तु निरुपाधिक एवात्र विवक्षित इति आरोप्यसादृश्यं द्वयोरप्यपेक्षितमिति सत्यजगद्द्वयाङ्गीकारः सुप्रसञ्जित इति रहस्यम् । **त्रितयमिति ।।** अधिष्ठानं प्रधानं तयोः सादृश्यं चेत्यर्थः । किञ्चिच्छब्दार्थं समर्थयितुमुपक्षिपति- **नन्विति ।।** वक्रिमेत्यामनिजन्तम् । धर्मिभानाभावेन भ्रमानुदयं व्युदसितुं उपनीतभानमाह- **साक्षिसिद्ध-मिति ।।** वाक्यभेदानौचित्यं चोदयति- **नन्वेकेनैवेति ।।** निगमं सङ्गमयितुकामो निगमयितुराशयं प्रकाशयति- **अनयैवेति ।।** अधिष्ठानप्रधानयोः परस्परसादृश्यं तु सार्वत्रिकम् । लक्षणपदैरभ्युपगमं गमयति- **अत्र हीत्यादिना ।। सादृश्यमिति ।।** अधिष्ठानप्रधानयोरिति शेषः ।

**मूलम् - न चाऽत्मन्यनात्मभ्रमःक्वापि दृष्टः । न हि कश्चिद् अहम् अहं न भवामीति भ्रान्तो दृश्यते । आत्मन्यनात्मभ्रम एवायं प्रपञ्च इति तैरुच्यते । तं विनैवानात्मन्यात्म-भ्रमकल्पनेऽनात्मनः सत्यत्वं स्यात् । तदा चाद्वितीयत्वकल्पनेऽनात्मैवास्ति । नाऽत्मेति भवति ।**

**(त.मं.)** न केवलं सदृशसत्यवस्तुद्वयाभावादेवात्र भ्रमासम्भवः । अनुभवबाह्यत्वाच्चेत्याह - **न चात्मनीति ।।** न हि कश्चिदहमहं न भवामीति भ्रान्तो दृश्यते । भ्रान्तावभ्रान्तौ वा संसर्गप्रत्यये यथेदमिति पुरोवर्तिधर्मिग्रहणम्, तथाहमित्याख्यधर्मिग्रहणमेष्टव्यम् । यथा कुत्रचिदपि पुरोवर्ति-धर्मिस्वरूपमात्र इदमिदं न भवतीति भ्रान्तिर्न दृष्टा, एवमात्माख्यधर्मिस्वरूपमात्रेऽप्यहमहं न भवामीति कस्यापि भ्रान्तिर्न दृश्यते । आत्मनः स्वरूपमात्रस्य स्वयंप्रकाशत्वादयं नियमः ।

यथेदं प्रत्ययवेद्यपुरोवर्तिस्वरूपमात्रे भ्रमाभावेऽपि तद्विशेषे शुक्तित्वादौ भ्रमः सम्भवति, एवमेवाहंप्रत्ययवेद्य आत्मस्वरूपमात्रे भ्रमासम्भवेऽपि तद्विशेषे कुत्रचिद् भ्रमः स्यान्नाम । अनुभवानपेक्षायामतिप्रसङ्गमाह- **तं विनैवेति ।।** तद्विवक्षितभ्रमं विनैव ।

**टीका-** नन्वस्त्येव भ्रमस्याधिष्ठानादिपूर्वकत्वनियमः । अस्त्येव च जगदारोपस्याधिष्ठानमात्मा । स हि सर्वस्योपादानतया श्रूयते । न चापरिणामिनस्सोपपद्यते । अतोऽविद्योपादानकप्रपञ्चा-रोपेऽधिष्ठानमिति सिद्ध्यति । पूर्वपूर्वप्रपञ्च एवोत्तरोत्तरप्रपञ्चारोपे प्रधानं भविष्यति । न च सत्यत्वा-भावान्न प्रधानमिति वाच्यम् । प्रधानं किं स्वरूपेणोपयुज्यते उत ज्ञानेनाथ संस्कारेण । नाऽद्यः । अज्ञातरजतस्यापि रजतारोपप्रसङ्गात् । न द्वितीयः । ज्ञानस्य चिरविनष्टस्य कारणत्वानुपपत्तेः । तृतीये तूपपद्यत एव मिथ्यार्थस्यापि प्राधान्यं, तज्ज्ञानजन्यसंस्कारसम्भवात् । न च प्रथमारोपेऽ-नुपपत्तिः, अनादित्वादारोपपरम्परायाः । आदिसृष्टावपि पूर्वसर्गसंस्कारोऽस्त्येव । अत एव नानवस्थादोषः, सिद्धविषयत्वात् । सादृश्यं च द्रव्यत्वादिकं विद्यत एव । ततो निरधिष्ठानत्वं निष्प्रधानत्वं चासिद्धम् । तर्कश्चेष्टापादनत्वादाभास इत्यतो जगद्भ्रान्तावात्मनोऽधिष्ठानत्वं तावन्नि-राकरोति- **न चेति ।।** आत्मा ह्यात्मत्वेन प्रत्यक्त्वेन प्रतीयते । प्रपञ्चस्त्वनात्मतया पराक्त्वेन । ततश्च विरुद्धतयैव प्रतीयमानयोरात्मजगतोरधिष्ठानाध्यस्तभावो नोपपद्यत इति भावः । अत्र विरुद्धतया प्रतीयमाने तद्विरुद्धतया प्रतीयमानस्याऽरोपः कुत्रापि न दृष्ट इत्येव वक्तव्ये यदात्माना-त्मग्रहणं करोति तद्विरुद्धतया प्रतीयमानत्वहेतोः पक्षधर्मतामपि प्रदर्शयितुमिति ज्ञातव्यम् ।

तथा च प्रयोगौ । नाऽत्मा जगदारोपाधिष्ठानं तद्विरुद्धतया प्रतीयमानत्वात् । यथा पर्वतो न सर्षपारोपाधिष्ठानम् । प्रपञ्चो वा नाऽत्मन्यध्यस्तः तद्विरुद्धतया प्रतीयमानत्वात् । यथा सर्षपो न पर्वतेऽध्यस्त इति । विरुद्धाकारप्रतीतावप्यध्यासाङ्गीकारे तस्य कदाऽप्यनिवृत्तिप्रसङ्गः । आत्मनः सर्वोपादानत्वश्रुतिस्तु नास्त्येवेत्यन्यत्रोपपादितम् ।

''न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः'' इत्यस्योक्ताभिप्रायमबुद्ध्वा यश्चोदयेत्- आत्मनि व्याप्तेऽणौ वाऽनात्मनः शरीरपरिमाणत्वस्य भ्रमदर्शनात् कथमेतदिति तं प्रत्युक्तं विवृणोति- **न हीति ।।** अहमिति प्रत्यक्त्वेनाऽत्मानमनुभवन्नेवाऽत्मन्यहं न भवामीति तद्विरुद्धतया प्रतीयमान-मारोपयन् कश्चिन्न हि दृश्यत इत्यर्थः । जगदारोपानङ्गीकारेऽनुमानस्याप्रसिद्धविशेषणत्वमिति चेन्न । प्रतिषेध्यस्य परप्रसिद्ध्याऽप्यनुमानोपपत्तेः । अन्यथा प्रतितन्त्रसिद्धार्थस्य क्वापि प्रतिषेधा-भावप्रसङ्गात् । नन्वात्मन्यनात्मारोपः परैरनङ्गीकृत एव कस्मान्निराक्रियत इत्यत आह- **आत्म-नीति ।।** अनात्मा चासौ भ्रमश्चेति विग्रहः ।

ननु भ्रमो नाम ज्ञानविशेषः । तत्कथं तस्यानात्मसामानाधिकरण्यम् । मैवम् । ज्ञानार्थरूपस्य परैर्भ्रमाध्यासादिशब्दवाच्यत्वाभ्युपगमात् । अस्य च तदनुवादत्वात् । **अयम्** इत्याध्यात्मिको बाह्यश्च । 'युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः' इत्यात्मानात्मानौ प्रकृत्य 'तथाऽप्यन्योन्य-स्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य' इत्यादिना तैर्मायावादिभिरितरेतराध्यासं वदद्भिरात्म-न्यनात्मनः प्रपञ्चस्याऽरोपोऽङ्गीकृत एव । अतो नानुक्तोपालम्भोऽयमिति भावः । अत्र विवादा-भावसूचनाय बहुवचननिर्देशः । इतरेतराध्यासेऽप्यात्मा अनात्मरूपेणासत्यो न स्वरूपेण । प्रपञ्चस्त्वात्मरूपेण स्वरूपेण चानृत इति सूचनाय भ्रम एवेत्यवधारणम् । यथोक्तं- ' सत्यानृते मिथुनीकृत्य' इति । योऽत्रानुक्तोपालम्भं शङ्कमानस्याभिप्रायः तमुत्तरत्रोद्भाव्य दूषयिष्यामः ।

आत्मन्यनात्माध्यासनिरासप्रसङ्गेनानात्मन्यात्माध्यासमपि परोक्तं निराकरोति- **तं विनै-वेति ।।** अनात्मन्यात्मारोपकल्पनमयुक्तम् । तथा सत्यानात्मनः सत्यत्वप्रसङ्गात् । शुक्त्यादेरधि-ष्ठानस्य सत्यत्वदर्शनात् । अनात्मनश्चाधिष्ठानत्वात् । स्यादेतदेवं यद्यनात्मन्यात्मा स्वरूपेणाऽरो-प्येत । नैतदेवम् । किन्तु आत्मन्यनात्मा स्वरूपेणाऽरोप्यते तत्राऽरोपितेऽनात्मन्यात्मा संसृष्टरूपे-णैवाऽरोप्यत इति, तत्रोक्तम्-**तं विनैवेति ।। तम्** आत्मन्यनात्मभ्रमं विनैव, तं परित्यज्येत्यर्थः।

इदमुक्तं भवति । सत्यमेवं परस्य दर्शनमिति । किं नामाऽत्मन्यनात्मनः स्वरूपेणाऽरोप-स्तावद्दूषितो दूषयिष्यते

च। अतः स परित्याज्यः। तथा च तं विनैव केवलमनात्मन्यात्मारोपो वाच्यः। तत्र चेदं दूषणमुक्तम् - **अनात्मनः सत्यत्वं स्यादिति ॥** एवं सति कथमयुक्तमिति।

नन्वनात्मनः सत्यत्वे काऽस्माकं क्षतिः। अपसिद्धान्तः स्यादिति चेन्न। सत्यस्याद्वितीयत्वं ह्यस्मत्सिद्धान्तः। न चैवं सत्यसौ भग्न इत्यत आह- **तदा चेति ॥** अनात्मनः सत्यत्वेऽपि सत्य-स्याद्वितीयत्वमित्यस्य सिद्धान्तस्याङ्गीकारेऽनात्मैव सत्य आत्मा तु न सत्य इत्यापन्नं भवति। आत्मनोऽपि सत्यत्वे सत्यस्याद्वितीयत्वमित्यस्य सिद्धान्तस्य हानिप्रसङ्गात् । अस्त्वेवमिति चेन्न। आत्मैवास्ति न अनात्मेति सिद्धान्तहानिप्रसक्तेः। अत्र कश्चिद्धैयात्यादाह- एकमेव सत्यं द्वितीयमसत्यमिति स्थिते यत्सत्यं सोऽस्माकमात्मा यदसत्यं सोऽनात्मा। न नाम्नि विप्रतिपत्ति-रिति। तदसत्। दृश्यत्वजडत्वपरिच्छिन्नत्वादिरूपेण प्रतिपन्नस्य हि सत्यत्वमापादितम्। तथा प्रत्यक्त्वादिरूपेण प्रतिपन्नस्यासत्यत्वं, न नाममात्रम्। एवं च सति कथं नापसिद्धान्त इति।

**(र.टि)** आत्मनः प्रपञ्चारोपाधिष्ठानत्वे श्रुतार्थपत्तिमाह- **स हीत्यादिना ॥ पक्षधर्मतामपीति ॥** अनेना-त्मत्वेनाज्ञातेऽनात्मत्वेन ज्ञायमानस्याऽरोपो न क्वापि दृष्ट इति मूलमुक्ताभिप्रायकमिति ज्ञातव्यम्। **आत्मन इति ॥** तथा चास्मदनुमानेन प्रागुक्तश्रुतार्थापत्तिविरोधादिति भावः। 'ननु न चाऽत्मनि' इति वाक्यस्योक्ता-भिप्रायत्वे 'न हि कश्चित्' इत्युत्तरवाक्यं पुनरुक्तं स्यादित्यत आह। **उक्ताभिप्रायमबुद्ध्वेति ॥ उक्तं विवृणोतीति ॥** पूर्ववाक्ये आत्मानात्मपदयोस्तु स्थितिप्रदर्शनपरत्वसम्भवान्नाधिष्ठानारोप्यतावच्छेदकत्वेनाऽ-त्मत्वादिप्रतिपादकत्वं प्रतीयते। अत्र तु प्रकारवाचिभवामीति शब्दबलादहमादिपदानामधिष्ठानाद्यवच्छेद-कत्वादिप्रतिपादकत्वेन स्फुटप्रतिभासनाद्विवरणरूपत्वमिति भावः। **अनुमानस्येति ॥** आत्मा न जगदारोपा-धिष्ठानमिति प्रथमानुमानस्येत्यर्थः। भ्रमप्रपञ्चपदयोः सामानाधिकरण्यादाह-**अनात्मा चासाविति ॥ शङ्कमान-स्याभिप्रायमिति ॥** प्रत्यक्त्वेन प्रतीयमानेऽन्तःकरणावच्छिन्नचैतन्ये पराक्त्वेन प्रतीयमानस्यारोपो न स्वय-मङ्गीक्रियत इत्यभिप्राय इति। **उद्भाव्य दूषयिष्याम इति**। 'अन्तःकरणावच्छिन्नं परिच्छिन्नम्' इत्यादिनेत्यर्थः।

**(रा.टि) श्रूयत इति ॥** 'यतो वा इमानि भूतानि जायन्ते', 'आत्मानं स्वयमकुरुत' इत्यादिना श्रूयत इत्यर्थः। **तर्कश्चेति ॥** यदि जगत् कल्पितं स्यात् अधिष्ठानादित्रितयपूर्वकत्वमङ्गीकार्यं स्यादिति तर्कश्च। न केवलमनुमान-मसिद्धत्वादाभास इति चार्थः। आत्मानात्मशब्दौ तथा ज्ञातोपलक्षकाविति भावेन व्याचष्टे- **आत्मा हीति ॥** आत्मत्वेनेत्यस्य व्याख्या प्रत्यक्त्वेन प्रतीयत इति। अनात्मत्वेनेत्यस्य व्याख्या पराक्त्वेनेति। आन्तरत्वेन बाह्यत्वेन च प्रतीयेते आत्मानात्मानावित्यर्थः। **पक्षधर्मतामपीति ॥** आत्मत्वानात्मत्वशब्दितयोः प्रत्यक्त्व-पराक्त्वयोर्विरुद्धत्वेनाऽत्मादिपदोक्त्यैव तत्सूचनादिति भावः। न केवलं व्याप्तिमित्यपेरर्थः। **तथा चेति ॥** व्याप्तिपक्षधर्मतयोः सिद्धत्वे सतीत्यर्थः। विपक्षे बाधकतर्कमाह- **विरुद्धाकारप्रतीतावपीति ॥** प्रागुक्त-श्रौतार्थापत्तिं निराह- **सर्वेति ॥ नास्त्येवेति ॥** 'यतो वा' इत्यादेरन्यार्थतया प्रकृतिनयानुव्याख्याने सम्यग्व्याख्यानादिति भावः। तथा च प्रागुक्तानुमानस्य न तद्विरोध इति भावः।

ननूत्तरवाक्यस्य वक्ष्यमाणव्याख्यानरीत्या विरुद्धधर्मवत्त्वेन प्रतीयमानयोर्नाध्यस्ताधिष्ठानभाव इत्यर्थकत्वात् पूर्ववाक्यस्यापि तथैव तात्पर्यवर्णनान्न हीति वाक्यवैयर्थ्यमित्यतो यथाश्रुतार्थं मन्वानं प्रति न हीत्युत्तरवाक्यं प्रवृत्तमित्यवतारयति- **न चाऽत्मनीति ॥ उक्तेति ॥** ततश्च विरुद्धतयेत्यादिनोक्ताभिप्रायमित्यर्थः। अनात्मन इत्यस्य व्याख्या शरीरेत्यादि। स्थूलोऽहं कृशोऽहमित्यादिभ्रमेत्यर्थः। **तद्विरुद्धतयेति ॥** एतेन 'अहं न भवामि' **(रा.टि)** इत्येतद्विरुद्धतया प्रतीयमानस्योपलक्षणमित्युक्तं भवति। **अनुमानस्येति ॥** नात्मा जगदारोपाधि-ष्ठानमिति प्रागुक्तानुमानस्येत्यर्थः। प्रतियोग्यप्रसिद्ध्या तदभावस्याप्रसिद्धेरिति भावः। **प्रतितन्त्रेति ॥** स्वमत-मात्रसिद्धोऽर्थः प्रतितन्त्रसिद्धान्तः। यथा न्यायमत ईश्वरस्य प्रमाणता। अद्वैतमते शुक्तिरूप्यस्यानिर्वचनीयते-त्यादि। अधिकरणे ल्युटोऽनुशासने सत्यपि प्रपूर्वकात् 'माङ् माने' इत्यस्याधिकरणार्थकल्युडन्तस्य प्रयोगा-भावाद्धिप्राः प्रमाणमित्यादेस्तद्वाक्यप्रामाण्येनोपचारत्वादित्यादिरूपेण प्रतिषेधाभावप्रसङ्गादित्यर्थः। **नन्वात्म-नीति ॥** प्रत्यक्त्वेन प्रतीतेऽहमर्थे आत्मनीत्यर्थः। व्याप्तेर्निर्विशेषचैतन्य एव जगदारोपाङ्गीकारादिति गूढाभिप्रायेणेयं शङ्का। तामग्रे निरसिष्यन् प्रत्यगात्मन्यनात्मारोप इति पक्षे प्रत्यक्त्वपराक्त्वरूपविरुद्धधर्मवत्त्वेन भेदेनैकत्वबहुत्वाभ्यामन्तर्भेदहीनत्वतद्वत्त्वाभ्यां प्रतीयमानयोरात्मानात्मनोर्नाधिष्ठानाध्यस्तभाव इति क्रमाच्चतुर्धा **(रा.टि)** निरसिष्यन् आद्यनिरासाय मूलमवतार्य व्याचष्टे- **इत्यत आहेति ॥** 'भ्रमु चलने' इत्यस्य कर्मणि रूपमुपेत्य प्रपञ्चपदसामानाधिकरण्यायाऽह- **अनात्मा चासाविति ॥ ज्ञानार्थेति**

॥ ज्ञानरूपस्यार्थरूपस्य चेत्यर्थः। विषयविषयिणोरित्यस्य यथायोगं विवरणमात्मानात्मानाविति। **इत्यादिनेति** ॥ अध्यासभाष्यस्थ-वाक्येनेत्यर्थः । भाष्यकारस्य परस्यैकत्वात् कथं तैरित्युक्तिरित्यत आह- **विवादेति** ॥ तद्व्याख्यात्राद्यभिप्रायं बहुवचनमिति भावः । **यथोक्तमिति** ॥ अध्यासभाष्ये । प्रपञ्चस्य स्वरूपेणाप्यसत्यत्वादनृतपदप्रयोगः । अन्यस्यातथात्वात्सत्यपदप्रयोगः कृत इति भावः । अहं ममेति नैसर्गिको व्यवहार इति वाक्यशेषः । ननु प्रत्यक्त्वेन प्रतीतेऽहमर्थे न प्रपञ्चारोपः, अपि तु व्याप्ते आत्मनि । न हि तस्य प्रत्यक्त्वेन भानमस्ति, येन विरुद्धतया प्रतीयमाने पराक्त्वेन विरुद्धधर्मेण प्रतीयमानस्य जगत आरोपो न युक्त इत्युक्तिर्युक्ता स्यात्। अहमर्थ आत्मनि जगदारोप इति मतेऽस्तूक्तो दोषः । मदभिप्रेते तु दोषो नोक्त इत्यत आह- **योऽत्रेति** ॥ आत्मन्यनात्मभ्रम एवेति वाक्यावतारिकायां शङ्कमानस्य व्याप्तात्मन्येवाऽरोपो नाहमर्थ इत्यत्राभिप्रायो यः तं 'न चाऽत्मनि भेदभ्रमः क्वापि दृष्टः' इति वाक्यव्याख्याऽवसाने स्यादेतदित्यादिग्रन्थेन प्रकटीकृत्य दूषयिष्याम इत्यर्थः । तात्पर्यस्यास्फुटत्वादाह-**इदमुक्तं भवतीति** ॥ **दूषित इति** ॥ 'भ्रान्तिकल्पितत्वे च' इत्यादिनेति भावः । **दूषयिष्यत इति** ॥ उपरम्यत इति वाक्यव्याख्याऽवसाने वा बहुजीववादिपक्षदोषोक्तिप्रस्तावे वा दूषयिष्यते चेत्यर्थः । **असाविति** ॥ सिद्धान्तो न भग्न इत्यर्थः ।

**(श्री.टि)** आत्मनः प्रपञ्चारोपाधिष्ठानत्वे श्रुतार्थापत्तिमाह- **स हीत्यादिना** ॥ **श्रूयत इति** ॥ 'सच्च त्यच्चाभवत्', 'तदात्मानं स्वयमकुरुत' इत्यादावित्यर्थः । **सा** उपादानता । **अधिष्ठानमेवेति** ॥ इदमेव चोपादानत्वमिति भावः । **न प्रधानमिति** ॥ पूर्वपूर्वप्रपञ्चस्याप्यारोपितत्वेनाऽरोप्यप्रपञ्चादधिकसत्ताकत्वाभावान्न प्रधानत्वमि-त्यर्थः । सत्यत्वाभावेऽपि प्रधानत्वं सम्भवतीति वक्तुमाह- **प्रधानं किमित्यादिना** ॥ **स्वरूपेणेति** ॥ अज्ञातत्वे-नेत्यर्थः । **उपयुज्यत इति** ॥ भ्रमकारणं भवतीत्यर्थः । **अज्ञातरजतस्येति** ॥ पुरुषस्येत्यर्थः । **कारणत्वानुपपत्ते-रिति** ॥ भ्रमापेक्षयाऽव्यवहितपूर्ववर्तित्वाभावादिति भावः । **मिथ्यार्थस्यापीति** ॥ सत्यत्वाभावेऽपीत्यर्थः । **(श्री.टि) प्राधान्यमिति** ॥ पूर्वपूर्वप्रपञ्चस्येत्यर्थः । **तज्ज्ञानेति** ॥ मिथ्याभूतपूर्वपूर्वप्रपञ्चविषयकभ्रम-रूपज्ञानजन्येत्यर्थः । **अनुपपत्तिरिति** ॥ तदपेक्षया प्रधानभूतस्य पूर्वप्रपञ्चस्याभावेन तदनुभवजन्यसंस्कारा-भावादिति भावः । नन्वथाप्यादिसृष्टौ प्रधानभूतपूर्वप्रपञ्चाभावेन तदनुभवजन्यसंस्कारायोगेनाऽरोपानुपपत्तिरित्यत आह- **आदिसृष्टावपीति** ॥ **पूर्वसर्गेति** ॥ सृष्टिप्रलयपरम्पराया इदम्प्रथमताभावेनानादित्वादिति भावः । अत एवेत्युक्तं विशदयति- **सिद्धविषयत्वादिति** ॥ बीजाङ्कुरानवस्थावत् प्रामाणिकविषयत्वादित्यर्थः । **सादृश्यम्** अधिष्ठानप्रधानयोः । **निरधिष्ठानत्वमित्यादि** ॥ आत्मदृष्टान्तेन प्रपञ्चस्य भ्रान्तिकल्पितत्वाभावसाधकमित्यर्थः। **तर्कश्चेति** ॥ यदि जीवजडात्मकं सर्वं जगद् भ्रान्तिकल्पितं स्यात् तर्ह्यारोप्यसदृशाधिष्ठानप्रधानपूर्वकमङ्गीकार्यं प्रसज्येतेति तर्कश्चेत्यर्थः । **आभास इति** ॥ अनिष्टत्वरूपाङ्गवैकल्यादित्यर्थः । 'अङ्गान्यतमवैकल्ये तर्कस्याऽ-भासता भवेत्' इति कारिकावचनादिति भावः । आत्मत्वेनेत्यस्यैव विवरणम् - **प्रत्यक्त्वेनेति** ॥ अनात्मतयेत्यस्य व्याख्यानम्- **पराक्त्वेनेति** ॥ **पक्षधर्मतामपीति** ॥ अनेनाऽत्मत्वेन ज्ञातेऽनात्मत्वेन ज्ञायमानस्याऽरोपो न क्वापि दृष्ट इति मूलार्थ उक्तो भवतीति ज्ञातव्यम् । यद् यद्विरुद्धतया प्रतीयते तत् तदारोपाधिष्ठानं न भवतीति सामान्यव्याप्तौ दृष्टान्तमाह- **यथेति** ॥ यद् यद्विरुद्धतया प्रतीयते तत् तस्मिन्नध्यस्तं न भवतीति सामान्यव्याप्तौ दृष्टान्तमाह- **यथेति** ॥ अत्राप्रयोजकतापरिहाराय विपक्षे बाधकं तर्कमाह-**विरुद्धाकारेति** ॥ **तस्याध्यासस्य** ।

ननु 'सच्च त्यच्चाभवत्' इत्यादिश्रुत्या सर्वस्यापि प्रपञ्चस्य ब्रह्मोपादानता श्रूयते । न चापरिणामिनस्सा सम्भवति । अतोऽविद्योपादानकप्रपञ्चारोपे ब्रह्माद्यधिष्ठानमेवेति सिद्ध्यतीति पूर्वोक्तां श्रुतार्थापत्तिं दूषयति- **आत्मन इति** ॥ **अन्यत्रेति** ॥ 'जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते' इत्यादिनाऽनुव्याख्याने तैत्तिरीयभाष्ये चास्याः श्रुतेरन्यार्थताया उपपादितत्वादात्मनस्सर्वोपादानताश्रुतिस्तु नास्त्येवेत्यर्थः । 'न चाऽत्मनीति' वाक्यस्य तद्विरुद्धतया प्रतीयमाने तद्विरुद्धतया प्रतीयमानस्याऽरोपो न सम्भवतीत्युक्ताभिप्रायकत्वे 'न हि कश्चिदहं न भवामीति भ्रान्तो दृश्यते' इत्युत्तरवाक्यं पुनरुक्तं स्यादित्यत उक्तम्- **उक्तमभिप्रायमबुद्ध्वेति** ॥ **चोदये-दिति** ॥ आत्मन्यनात्मभ्रमो न दृष्ट इति प्रतीत एवार्थे चोदनां शङ्कां कुर्यादित्यर्थः । तत्प्रकारमाह- **आत्मनी-त्यादिना** ॥ ननु जैनरीत्या आत्मनि कायपरिणामत्वरूपमध्यमपरिणामत्वज्ञानस्य भ्रमत्वं कुतः? वस्तुगत्या आत्मा कायपरिणाम एव किं न स्यादित्यत उक्तम्- **व्याप्त इति** ॥ तार्किकरीत्येदमुक्तम्। अस्मद्रीत्योक्तम्- **अणाविति** ॥ **एतदिति** ॥ आत्मन्यनात्मभ्रमो न दृष्ट इत्येतत्कथमित्यर्थः । **उक्तं विवृणोतीति** ॥ अनात्म-शब्दस्याहं न भवामीति विवरणादित्यर्थः । **तद्विरुद्धतया** पराक्त्वेन । **प्रतीयमानं** वस्तु । **अनुमानस्येति** ॥ आत्मा न जगदारोपाधिष्ठानं तद्विरुद्धतया प्रतीयमानत्वात् यथा पर्वतो न सर्षपारोपाधिष्ठानमिति प्रथमानु-मानस्येत्यर्थः । **अप्रसिद्धविशेषणत्वमिति** ॥ भवन्मते

जगदारोपस्यैवाप्रसिद्धया तद्धटितसाध्यस्याप्यप्रसिद्ध-त्वादिति भावः ।

**परप्रसिद्धयेति ॥** तथा च जगदारोपाधिष्ठानं नेति प्रतिषेध्यस्य जगदारोपाधिष्ठानत्वस्य **परस्य** तव मते **(श्री.टि)** प्रसिद्धयाऽप्यनुमानोपपत्तेरित्यर्थः । **अन्यथेति ॥** प्रतिषेध्यस्य परप्रसिद्धयनपेक्षायामित्यर्थः । **प्रतितन्त्रसिद्धार्थस्येति ॥** 'स्वतन्त्र एव सिद्धोऽर्थः परतन्त्रैर्निवारितः । प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता' इति कारिकावचनेन प्रतितन्त्रसिद्धान्तलक्षणं ज्ञातव्यम् । तथा च प्रतितन्त्रसिद्धान्तसिद्धस्येश्वरप्रामाण्यस्य कणादादिभिरीश्वराप्रामाण्यवादिभिः क्रियमाणः प्रतिषेधोऽनुपपन्नः स्यादित्यर्थः । **कस्मादिति ॥** तथा चानुक्तोपालम्भ इति भावः । **सामानाधिकरण्यमिति ॥** अनात्मरूपार्थस्य भ्रमत्वाभावादनात्मभ्रमपदयोः कथं सामानाधिकरण्यमित्यर्थः । अध्यासादीत्यादिपदेन भ्रमादिशब्दग्रहणम् ।

ननु परैरेवमभ्युपगतत्वेऽपि भवद्भिः कथं तथा व्यवहारः कृत इत्यत आह - **अस्य चेति ॥** 'आत्मन्यनात्मभ्रम एवायं' इत्यादिमूलस्येत्यर्थः । आत्मन्यनात्मारोपः परैरङ्गीकृत इत्यत्र ज्ञापकमाह- **युष्मदस्मदित्यादिना ॥ आत्मानात्मानाविति ॥ अस्मत्प्रत्ययगोचरः** प्रत्यगर्थ इति यावत्, स आत्मा, **युष्मत्प्रत्ययगोचरः** परागर्थ इति यावत्, सोऽनात्मेत्यात्मानात्मनोरुपक्रान्तत्वादित्यर्थः । **अन्योन्यस्मिन्निति ॥** आत्मन्यनात्मनोऽ-नात्मन्यात्मन इत्यन्योन्यस्मिन्नित्यर्थः । अन्योन्यात्मकतामिति तादात्म्यारोपाभिप्रायेण । संसर्गारोपाभि-प्रायेणान्योन्यधर्मांश्चेत्युक्तम् । **बहुवचननिर्देश इति ॥** तैरिति बहुवचननिर्देश इत्यर्थः । **भ्रम एवेति ॥** न तु तत्र सत्यांशोऽस्तीत्यर्थः । **सत्यानृते इति ॥** अधिष्ठानाध्यस्ते इत्यर्थः । **मिथुनीकृत्येति ॥** संवलिते कृत्वे-त्यर्थः । व्यवहाराः प्रवर्तन्त इत्युत्तरेणान्वयः । अहं कर्ता भोक्ता, अहं मनुष्यः, सन् घटः, प्रकाशते घटः इत्यादयो व्यवहारा इति तदर्थः । **योऽत्रानुक्तोपालम्भं शङ्कमानस्याभिप्राय इति ॥** आत्मन्यनात्मारोपः परैरनङ्गीकृत एव कस्मान्निराक्रियत इत्यनुक्तोपालम्भं शङ्कमानस्यायमभिप्रायः । तथाहि- यदि प्रत्यक्त्वेन प्रतीय-मानमन्तःकरणावच्छिन्नं परिच्छिन्नचैतन्यं पराक्त्वेन प्रतीयमानप्रपञ्चारोपाधिष्ठानं स्यात् तर्ह्येव नाऽत्मा जगदा-रोपाधिष्ठानं तद्विरुद्धतया प्रतीयमानत्वादित्युक्तानुमानविरोधः स्यात् । न चैवम् । किन्तु सर्वतो व्याप्तमेव । तच्च स्वभावेनैकरसमप्यनन्तोपाधिभिन्नम् । तच्च न प्रत्यक्त्वादिना विरुद्धत्वेन प्रतीयते । यच्च प्रत्यक्त्वादिना विरुद्धतया प्रतीयमानमन्तःकरणावच्छिन्नं परिच्छिन्नं तस्यानधिष्ठानत्वात् । अतो नोक्तानुमानावकाश इति । **उद्धाव्य दूषयिष्याम इति ॥** तमिमभिप्रायं 'स्यादेतत् । यद्यन्तःकरणावच्छिन्न' इत्यादिना ग्रन्थेनोद्धाव्य 'व्याप्तात्मस्वरूपानुविद्धतया घटादीनां प्रतीत्यभावात् । आरोपितस्याधिष्ठानानुविद्धतया प्रतीतिनियमात् । न हि कश्चिदिदं शुक्लभास्वरं रजतमितिवदिदमात्मस्वरूपं घट इति प्रत्येति ' इत्यादिना ग्रन्थेनोत्तरत्र दूषयिष्याम इत्यर्थः । किन्त्वित्यनन्तरमादाविति शेषः । **आरोपितेऽनात्मनीति ॥** तथा चाधिष्ठानत्वेऽपि सत्यत्वं न वक्तव्यमित्यर्थः । **तं परित्यज्येति ॥** आत्मन्यनात्मभ्रम इति वचनं त्वया त्यज्यतामित्यर्थः । कुत इत्यत आह- **इदमुक्तं भवतीति ॥ एवं सतीति ॥** यथाकथञ्चिदेकस्यैव सत्यतायाः प्राप्तत्वादिति भावः । **सिद्धान्तस्य हानीति ॥** सत्यद्वयप्राप्तेरिति भावः । **अस्त्वेवमिति ॥** अनात्मैव सत्य आत्मा तु न सत्य इत्येवमस्त्वित्यर्थः। **अस्तीति ॥** सत्य इत्यर्थः । **यत्सत्यमिति ॥** सत्यतया यदायास्यतीत्यर्थः । **अस्माकमात्मेति ॥** तत्रैवानात्म-**(श्री.टि)** न्यात्मसञ्ज्ञा क्रियत इत्यर्थः । **सोऽनात्मेति ॥** तत्रैवाऽत्मन्यनात्मसञ्ज्ञा क्रियत इत्यर्थः । एतादृशवादिनोऽलौकिकत्वादेव पूर्वं वैयात्यादाहेत्युक्तम् । औद्धत्यादिति तदर्थः ।

**(पां.टि) नन्वस्त्येवेति ॥** तथा च नियमव्युत्पादनमनर्थकमिति भावः । ननु यद्यस्ति नियमस्तर्हि अधिष्ठा-नाभावात्कथं जगद्भ्रमसिद्धिरित्यतः तस्याऽत्माधिष्ठानकत्वान्न तदनुपपत्तिरिति भावेनाऽह- **अस्त्येव चेति ॥** ननु आत्मनो जगदारोपाधिष्ठानत्वं कुतः प्रमाणात्सिद्धमित्यतः 'सच्च त्यच्चाभवत्', 'तदात्मानꣳ स्वयमकुरुत' इत्यादिश्रुतेरेव तत्सिद्धेर्युक्तं जगदारोपाधिष्ठानत्वमात्मन इत्याह- **स हीति ॥** ज्ञातस्यैव प्रधानत्वादिति भावः। केचित्तु आत्मनः प्रपञ्चारोपाधिष्ठानत्वे श्रुतार्थापत्तिमाह- स हीति इति ग्रन्थावतारमाहुः । ननूपादानत्वश्रुत्योपा-दानत्वसामान्यसिद्धावपि न तदधिष्ठानत्वरूपतद्विशेषसिद्धिर्मृदादेर्घटादिकं प्रति परिणामितयेवाऽत्मनोऽपि जगत्प्रति तथोपादानत्वस्य सम्भवेन तत्परित्यागेनाधिष्ठानतया तदाश्रयणस्य निर्निबन्धनत्वादित्यतः केवल-योपादानत्वश्रुत्या तदसिद्धावपि परिणामितयोपादानत्वानुपपत्तिसहकृतया तया तत्सिद्धिस्स्यादिति भावेन परिणामितया तदनुपपत्तिं हेतूक्त्याऽह- **न चेति ॥** अपरिणामिन इति हेतुगर्भं विशेषणम् । अपरिणामित्वादि-त्यर्थः । परिणामे विकारित्वप्रसङ्गेन निर्विकारत्वश्रुतिविरोधापातादिति भावः । फलितमाह- **अत इति ॥** अधिष्ठानत्वं विनोपादानत्वानिर्वाहादित्यर्थः । नन्वस्त्वात्मनोऽधिष्ठानत्वं तथाऽपि प्रधानाभावात् कथं तदारोप इत्यतः पूर्वापूर्वारोपविषयप्रपञ्चस्यैवोत्तरोत्तरप्रपञ्चारोपे प्रधानत्वसम्भवान्न तदभावोऽस्तीत्याह - **पूर्वपूर्वेति ॥ न चेति ॥** आरोपस्य सत्यप्रधानपूर्वकत्वनियमात् पूर्वारोपविषयप्रपञ्चस्य

चासत्यत्वादुत्तरोत्तरप्रपञ्चारोपे कथं प्रधानत्वमित्याशयः। प्रधानस्य स्वरूपेणाऽरोपोपयोगित्वपक्षे तत्प्राप्तावपि तदनुपयोगित्वपक्षे न तत्प्राप्तिरिति भावेन सम्भावितविकल्पप्रदर्शनपूर्वकं तद्दूषणेन तत्सत्ताया अनुपयोगं दर्शयति- **प्रधानं किमित्यादिना ॥ तज्ज्ञानजन्येति ॥** न च प्रमाजन्यसंस्कारस्यैव भ्रमहेतुत्वेन भ्रमजन्यसंस्कारस्य तत्राहेतुत्वात् सत्यपि तस्मिन् तद्धेतुप्रमाजन्यसंस्काराभावान्न भ्रमजन्यसंस्कारेणाऽरोपोपपत्तिरिति वाच्यम्। सत्यपि संस्कारे प्रमाजन्यत्वाभावेन भ्रमाभावादर्शनेन प्रमाभ्रमसाधारणज्ञानजन्यसंस्कारस्यैवाऽरोपोपयोगित्वेन प्रमाजन्यसंस्कारस्यैव तद्धेतुताया निष्प्रमाणकत्वेनानङ्गीकर्तव्यत्वादित्याशयात्। **अनुपपत्तिरिति ॥** ततः पूर्वं प्रपञ्चारोपाभावेन तद्विषयप्रपञ्चस्य संस्कारद्वाराऽऽरोपोपयोगस्य वक्तुमशक्यत्वादिति भावः। जगदारोपस्येदम्प्रथमतापक्षे उक्तरीत्या तदनुपपत्ति-प्रसक्तावपि तस्यानादित्वे पूर्वारोपविषयप्रपञ्चस्य संस्कारद्वारोपयोगः सम्भवत्येवेति नानुपपत्तिरिति भावेन परिहरति- **अनादित्वादिति ॥**

ननु कल्पाद्यभ्रमे ततः पूर्वं प्रपञ्चारोपाङ्गीकारे तस्याऽद्यभ्रमत्वानुपपत्त्या ततः पूर्वं तस्याङ्गीकर्तुमशक्यतया तद्विषयप्रपञ्चस्य तदारोपं प्रति संस्कारद्वारोपयोगस्यासम्भवदुक्तिकतया तदारोपानुपपत्तिस्तदवस्थैवेत्यतः तत्कल्पीयपूर्वारोपजन्यसंस्कारस्य तत्रोपयोगस्य वक्तुमशक्यत्वेऽपि कल्पान्तरीयप्रपञ्चारोपजन्यसंस्कारस्य तदुपयोगो नानुपपन्न इति भावेनाऽह- **आदिसृष्टावपीति ॥** अत एवेत्यनेन परामृष्टं हेतुं दर्शयति- **सिद्ध-(पां.टि) विषयत्वादिति ॥ सादृश्यं चेति ॥** न च द्रव्यत्वादिसादृश्येन भ्रान्त्युत्पादेऽतिप्रसङ्गः स्यादिति वाच्यम्। जलप्रवाहगते दण्डे वक्रिमभ्रमदर्शनानुरोधेन सोपाधिकभ्रमेष्वतिप्रसक्तसादृश्यस्याप्युपयोगसम्भ-वादित्यत्र तात्पर्यात्। आत्मत्वेनेत्यस्य व्याख्यानम्- **प्रत्यक्त्वेनेति ॥** अनात्मत्वेनेत्यस्य व्याख्यानम्- **पराक्त्वे-नेति ॥ पक्षधर्मतामिति ॥** अनेनाऽत्मत्वेन ज्ञातेऽनात्मत्वेन ज्ञायमानस्याऽरोपो न क्वापि दृष्ट इति मूलाभिप्राय उक्तो भवति। अप्रयोजकतां परिहरति- **विरुद्धाकारेति ॥** तर्ह्युपादानत्वश्रुतेर्निर्विषयत्वादप्रामाण्यमित्यतः सैव नास्तीत्याह- **आत्मन इति ॥ अन्यत्रेति ॥** 'सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते' इत्यादिनाऽऽ-नुमानिकपादे प्रकृत्यधिकरण इत्यर्थः। **अबुद्ध्वेति ॥** विरुद्धत्वेन प्रतीयमानयोर्नाधिष्ठानाध्यस्तभावः सम्भवती-त्यभिप्रायबोधे तच्छङ्काऽनुदयादिति भावः।

ननु 'न चाऽत्मनि' इति पूर्ववाक्योक्तस्यैव 'न हि' इत्युत्तरवाक्येनापि प्रतिपादनात् पौनरुक्त्यमित्याशङ्क्य तद्विवरणरूपत्वात्तस्य न तेन पौनरुक्त्यमित्याह- **उक्तं विवृणोतीति ॥** पूर्ववाक्ये आत्मानात्मपदयोर्वस्तुस्थिति-प्रदर्शनत्वसम्भवान्नाधिष्ठानारोप्यतावच्छेदकत्वेनाऽत्मत्वादिप्रतिपादकत्वं प्रतीयते। अत्र च प्रकारवाचिभवामीति शब्दबलादहमादिशब्दानामधिष्ठानाद्यवच्छेदकत्वादिनाऽऽत्मत्वादिप्रतिपादकत्वेन स्फुटं प्रतिभासनात्तद्विवरण-रूपत्वमिति भावः। **अनुमानस्येति ॥** आत्मा न जगदारोपाधिष्ठानमिति प्रथमानुमानस्येत्यर्थः। अनात्मविषयको भ्रमोऽनात्मभ्रम इत्यर्थः प्रतीयते, स चानुपपन्नः। तथा सति भ्रमः प्रपञ्च इति भ्रमप्रपञ्चपदयोः सामानाधि-करण्यानुपपत्तिप्रसङ्गात्। अतोऽन्यथा विग्रहमाह- **अनात्मा चासावित्यादि ॥ कथमिति ॥** तत्प्रतिपाद्यसमस्य-मानपदार्थभेदस्य बाधितत्वेन सामानाधिकरण्यस्य बाधितत्वप्रसङ्गादिति भावः। **आध्यात्मिक इति ॥** आन्तरो दुःखादिरूप इत्यर्थः। **बाह्यश्चेति ॥** घटादिरूप इत्यर्थः। नन्वान्तरस्य बाह्यस्य च प्रपञ्चस्य भ्रमत्वं परैरुच्यत इत्युक्तम्। तत्कुतो विज्ञायत इत्यतः तद्वाक्योदाहरणेन तदुपपादयति। **युष्मदित्यादि ॥** युष्मत्प्रत्यय-गोचरोऽनात्मा, अस्मत्प्रत्ययगोचर आत्मा तयोरिति सम्बन्धः। **बहुवचनेति ॥** बहुवचननिर्देशः परेषां विवादाभावसूचनायैव न तु गौरवादित्यर्थः। **यथोक्तमिति ॥** सत्यसंसृष्टतयाऽनृतं स्वरूपेण मिथुनीकृत्याध्यस्य क्त्वाप्रत्ययो गौणः। एतदध्यासरूपोऽहं ममेति लोकव्यवहारो नैसर्गिक इत्यन्वयः। **शङ्कमानस्याभिप्राय इति ॥** प्रत्यक्त्वेन प्रतीयमानेऽन्तःकरणावच्छिन्ने चैतन्ये पराक्त्वेन प्रतीयमानस्याऽरोपो न स्वयमङ्गीकृत इति योऽभिप्रायस्तम्। 'स्यादेतदन्तःकरणावच्छिन्नं परिच्छिन्नम्' इत्यादिनोद्भाव्य 'व्याप्तात्मस्वरूप' इत्यादिना दूषयिष्याम इत्यर्थः। आत्मन्यध्यासनिरासप्रस्तावे तस्यैव निरासः सङ्गतो न तु अनात्मन्यात्माध्यास-निरासोऽपीत्यतः तत्प्रसङ्गेनेत्युक्तम्। नन्वनात्मन्यात्मनः संसृष्टतयाऽऽरोपपक्षेऽपि कथमनात्मनः सत्यत्व-प्रसङ्गः। आत्मन्यनात्मनोऽपि स्वरूपेणाध्यासाङ्गीकारादित्याशयेन पृच्छति- **किं नामेति ॥** परिहरति- **आत्मनीति ॥ दूषित इति ॥** 'न चाऽत्मन्यनात्मभ्रमः' इत्यादिनेति शेषः। **दूषयिष्यते चेति ॥** 'आत्माज्ञाना-त्मकत्वे च जगतः' इत्यादिनेति शेषः।

**(व्या.टि)** जगति जगदारोपे जगद्द्वयसत्यतापातरूपवज्रपातमसहमानोऽजगति जगदारोपं शङ्कते- **नन्वस्त्ये-वेत्यादिना ॥** निरधिष्ठानत्वहेतोरसिद्धिं दर्शयति- **अस्त्येवेति ॥ श्रूयत इति ॥** 'इदं सर्वं यदयमात्मा', 'सर्वं खल्विदं ब्रह्म', 'अक्षरात्सम्भवतीह विश्वम्' इत्यादिनेति शेषः। उपादानस्यापि 'जनिकर्तुः प्रकृतिः' इत्यपादानत्वादिति भावः। **अपरिणामिन इति ॥**

निर्विकारत्वश्रुतेरित्यर्थः। **अविद्योपादानकेति ॥** तस्याः परिणामसम्भवादिति भावः। निष्प्रधानत्वहेतोरप्यसिद्धिमाह- **पूर्वपूर्वेति ॥** सत्यत्वं न प्राधान्यप्रयोजनमिति वक्तुं पृच्छति- **प्रधानं किमिति ॥** अज्ञातरजतस्यापीति बहुव्रीहिः। विशेषणाभावेनापि न विशिष्टाभाव इत्याह- **सादृश्यं चेति ॥** निगमयति- **तत इति ॥** मूले आत्मानात्मशब्दौ तत्त्वेन प्रतीयमानपरौ इति व्याचष्टे- **आत्मत्वेनेत्यादि ॥** अत्र विरुद्धतया प्रतीयमानयोः इति हेतुगर्भविशेषणम्। सामान्यतो दृष्टे सामान्यतो व्याप्तिः प्रदर्शनीया न तु विशेषतः। तस्य पक्षसाधारणत्वादित्युदाहरणानौचित्यमाशङ्क्य पराचष्टे- **अत्रेति ॥** अस्य 'तथोपनयरूपा च' इत्युक्तदिशोपनयरूपत्वान्न दोष इति भावः। निष्कर्षयति- **तथा चेति ॥ प्रयोगा-विति ॥** अधिष्ठानावलम्बेनाध्यस्तावलम्बेन च द्वावित्यर्थः। विपक्षे बाधकमाह- **विरुद्धाकारेति ॥ कदाऽ-पीति ॥** चरमावस्थायामपीत्यर्थः। निवर्तकस्य निवृत्तिव्यभिचारेण तदप्रयोजकत्वे कालस्यातन्त्रत्वादि-त्यर्थः। **अन्यत्रेति ॥** प्रकृत्यधिकरणानुभाष्यसुधयोरित्यर्थः। विवृतस्य विवरणानर्थक्यमाशङ्क्य निराह- **न चाऽत्मनीति ॥ उक्तं** टीकोक्तम्। **य इति ॥** औत्तानिक इत्यर्थः। नन्वात्माननुभवे अनात्मभ्रमोऽपि युक्तः। यथाऽऽह पतञ्जलिः- 'परोक्षे लिट्' इत्यत्र 'अपरोक्षस्यापि परोक्षं सुप्तोऽहं किल विललाप' इत्यादौ, अत आह- **अनुभवन्निति ॥ अप्रसिद्धेति ॥** प्रतियोग्यप्रसिद्धौ निषेधस्याप्रसिद्धिरिति भावः। उत्तरयति- **प्रतिषेध्य-स्येति ॥** किमेवं वादिनो नैयायिकस्य प्रसिद्धिमात्रमनुमानोपयोगि प्रमाणेन वा। आद्यं दूषयति- **परेति ॥** तथा च नात्राप्रसिद्धविशेषणत्वमिति भावः। द्वितीये वज्रं पातयति- **अन्यथेति ॥** अत्रानुक्तोपालम्भं शङ्कते- **नन्विति ॥ एवेति ॥** अनुक्तेरित्यर्थः। प्रपञ्चपदसामानाधिकरण्यलब्धविग्रहमाह- **अनात्मा चासाविति ॥** भ्रमपदस्य ज्ञानवाचित्वप्रसिद्ध्या शङ्कते- **नन्विति ॥ अनुवादत्वादिति ॥** अनुवादस्य पुरोनुवादानुरूपत्वेन स्वार्थपरत्वाभावादिति भावः। **आध्यात्मिक इति ॥** 'अध्यात्मादेष्ठञिष्यते' इति ठञ्, आन्तर इत्यर्थः। **बहुवचनेति ॥** कर्तुरेकत्वेऽपि 'तोटङ्कपद्मपादश्च ज्ञानोत्तबीजभुक्तथा' इत्युक्ततदनुमन्तृशिष्यबहुत्वाद् बहुवचनमित्यर्थः। एवकारसूचितमनुवाद्यविशेषं दर्शयति- **इतरेति ॥** नन्वत्रानुक्तोपालम्भशङ्कायाः तदुक्ति-प्रदर्शनेन परिहारेऽपि सत्यां प्रसिद्धोक्तावनुक्तोपालम्भशङ्कैवेयं निर्दला नोपपद्यत इत्यत आह- **योऽत्रेति ॥ उत्तरत्रेति ॥** 'न च मिथ्योपाधिकृतो भेदः क्वापि दृष्टः' इति मूल इत्यर्थः। नन्वात्मन्यनात्माध्यास एवायं निरसनीयो नानात्मन्यात्माध्यासः, नाशङ्कितत्वात्। अन्यथा व्यर्थोक्तेरपर्यवसानात्, इत्यतः सति प्रसङ्गे परोक्तं दूष्यं नोदास्यमित्याह- **आत्मनीति ॥** तं विनैवेत्यंशमवतारयति- **स्यादेतदेवमिति ॥** ननु परित्यागेऽप्यारो-पितत्वादधिष्ठानं मिथ्यैवेति कथं तत्सत्यत्वापादनमित्यतोऽभिसन्धिमुद्घाटयति- **इदमुक्तं भवतीति ॥ परित्याज्य (व्या.टि) इति ॥** दुष्टस्याग्राह्यत्वादित्यर्थः। **आपन्नमिति ॥** भ्रमस्य सदधिष्ठानत्वबलादिति शेषः। **वैयात्या-दिति ॥** शाठ्यादित्यर्थः। **न नाममात्रमिति ॥** प्रतीचोऽसत्यत्वं पराचश्च सत्यत्वमित्यनर्थावेवाऽपद्येते, न नामविनिमयमात्रं, येनेष्टापत्तिः स्यादित्यर्थः।

**मूलम् - आत्माज्ञानात्मकत्वे च जगत आत्मनो भिन्नत्वेन न दृश्येत। न हि शुक्तेर्भेदेन रजतं दृश्यते भ्रान्तौ। न चैकमेव युगपद्बहुधा दृश्यते भ्रान्तौ। न चाऽत्मनि भेदभ्रमः क्वापि दृष्टः।**

**(त.मं.)** इतश्चात्माधिष्ठानको भ्रमो न युज्यत इत्याह- **आत्माज्ञानेति ॥** एकैव रज्जुः क्रमेण हि भूच्छिद्रबलीवर्दमूत्रितसर्पादिरूपेण बहुधा दृश्यते। न तु युगपदित्यभिप्रायेण युगपत्पदं उपनि-बबन्ध। एकस्मिन्नेवात्मनि युगपत् घटपटाद्यनेकपदार्थाध्यास इति हि तन्मतम्। एवं एकजीववादिनं निरस्येदानीं बहुजीववादं निराकरोति- **न चात्मनि भेदभ्रम इत्यादिना ॥** अयमर्थः। यथैकस्मिन्नेव चन्द्रे भेदभ्रमो दृश्यते तथैकस्मिन्नेवात्मनि भेदभ्रम इति हि तैरुच्यते। स च खल्वात्मनि कुत्रापि नानुभूतः।

**टीका-** एवं प्रसङ्गादनात्मनि आत्मारोपमपाकृत्य प्रकृतमेव जगदारोपस्याऽत्माधिष्ठानत्वं युक्त्यन्तरेण निराकरोति- **आत्मेति ॥** आत्मनो यदावरणमज्ञानं तद् **आत्माज्ञानम्। तदात्मकत्वे** पररीत्या तदुपादानकस्वरूपप्रतिभासत्वे। स्वरीत्या तु तन्निमित्तप्रतीतिकत्व इति व्याख्येयम्। **न दृश्येत** जगदिति शेषः। यद्यात्माधिष्ठानत्वे चेत्येवोच्येत तदाऽधिष्ठानाधिष्ठेययोः कुण्डबदरयोः परस्परं भिन्नत्वेन दृश्यमानत्वाद्व्याप्तिहीनोऽयं प्रसङ्ग इति छलावतारः स्यात्। तत्परिहारायाधि-ष्ठानाधिष्ठेयस्वरूपव्याख्यानार्थं 'आत्माज्ञानात्मकत्वे च जगत' इत्युक्तम्। यदज्ञानेनाऽवृता-साधारणाकारं सद् असत्यवस्त्वन्तरात्मनाऽवभासते तदधिष्ठानम्। इतरदधिष्ठेयमिति ह्यत्र विव-क्षितम्। तत्कथं

व्याप्तिभङ्ग इति। प्रसङ्गस्य व्याप्तिमुपपादयति- **न हीति ॥** शुक्तिसमीपस्थं रजतान्तरं दृश्यत एवेत्यतो भ्रान्तावित्युक्तम् । तदारोपितमिति यावत्। अथवा भ्रान्तेरुत्थितेन भेदेन दृश्यत एवेत्यत इदमुक्तम्।

तथा चैवं प्रसङ्गः। यदि जगद् आत्मन्यारोपितं स्यात् तदा आत्मनोऽपि भिन्नत्वेन न दृश्येत। यद् यत्राऽरोपितं तत् ततो भिन्नत्वेन न प्रतीयते। यथा शुक्तिकायामारोपितं रजतं न शुक्तिकया भिन्नत्वेन भ्रान्तौ दृश्यते। दृश्यते चेदमिदानीं जगद् आत्मनो भिन्नत्वेन। तस्मान्न तत्राऽरोपित-मिति।

अत्र धर्म्यारोपे भिन्नत्वेनेति भेदेनेति च यथाश्रुतं ग्राह्यम्। धर्मारोपे त्वसंसृष्टत्वेनेति। न च तर्कस्येष्टापादनत्वमनुमानस्य चासिद्धिराशङ्कनीया। प्रत्यग्पराग्भावेन भेदप्रतीतेः स्फुटत्वात्। प्राग्विरोधेन प्रतीतिरुक्ता । इदानीं तु भेदप्रतीतिमात्रमिति भेदः।

भेदेन प्रतीयमानमपि तत्राऽरोपितं चेत्कदाऽप्यारोपानिवृत्तिः स्यात्। किञ्चैकस्मिन्नात्मनि सर्वं जगत्कल्पितं न भवति युगपद्बहुधा दृश्यमानत्वात्, आत्मा वा युगपद्बहुधा दृश्यमानस्याधिष्ठानं न भवति एकत्वादित्यनुमानद्वयस्य व्याप्तिमुपपादयति- **न चेति ॥** येनैतयोरनुमानयोर्व्याप्तिर्भज्येतेति शेषः। आदौ रजतत्वेन दृष्टं पश्चाच्छुक्तिकात्वेन दृश्यत इत्यतो भ्रान्तावित्युक्तम्। भ्रान्तावेव रज्जुखण्डसर्पमालाबलीवर्दमूत्रत्वेन क्रमेण दृश्यते। तत्परिहारार्थं युगपदित्युक्तम्। अनेनैव सर्वव्यभिचारपरिहारो भविष्यतीति चेत्तर्हि स्वरूपकथनाय भ्रान्तावित्युक्तम्। प्रागधिष्ठानाधि-ष्ठेययोर्विरोधभेदावाश्रित्यानुमितम्। इदानीं त्वारोप्यतयाऽभिमते जगति बहुविधत्वमाश्रित्येति भेदः ।

नन्वात्मा एकविध एव। जगत्तु बहुविधं प्रतीयताम्। तथाऽपि तत् तत्राऽरोपितं भविष्यति। जगद्गतस्य बाहुविध्यस्य सत्यत्वे ह्यध्यासानुपपत्तिः स्यात्। न चैवं यतस्तदप्यारोपितमिति चेत्, कुत्रेति वक्तव्यम्। आत्मन्येवेति चेत्, किं धर्मित्वेनोत धर्मत्वेन। पक्षद्वयमप्यनुपपन्नमित्याह- **न चेति ॥** न हि कश्चिदहं न भेद इति वा भिन्न इति वा भ्रान्तो दृश्यत इत्यर्थः। **भेदो** बाहुविध्यम्। परस्पर(रं भे) भेदप्रतीतिमाश्रित्यानुमातव्यमिति सूचयितुं भेदग्रहणं कृतम्।

**(र.टि)इति व्याख्येयमिति ॥** तथा च यथाश्रुतापादकस्य शुक्तिरजतादावभावेन स्वरीत्या व्याप्तिग्रहणं न सम्भवतीति शङ्काऽवकाशो नेति भावः। ननु भ्रान्तावित्युक्तेऽपि न दोषपरिहारः। शुक्तिरजतयोरिमे रजते इति भ्रान्तौ शुक्तेर्भेदेन रजतस्य दर्शनादित्यत आह- **तदारोपितमिति यावदिति ॥ प्राग्विरोधप्रतीतिरिति ॥** 'न चाऽत्मन्यनात्मभ्रमः' इत्यत्राऽत्मत्वानात्मत्वप्रकारकविरुद्धधर्मप्रतीतिरेव भ्रमासम्भवे हेतुत्वेनोक्तेत्यर्थः। तर्हि बाहुविध्यभ्रम इत्येव कुतो नोक्तमित्यत आह- **परस्परमिति ॥** आत्मा परस्परं भिन्नत्वेन दृश्यमानस्याधिष्ठानं न भवति अभिन्नत्वादित्यनुमानमत्र द्रष्टव्यम्। अस्मिन्पक्षे भेदभ्रम इति भेदसंसर्गभ्रम इत्यर्थ इति ज्ञातव्यम्।

**(रा.टि) स्वरीत्येति ॥** सिद्धान्तरीत्येत्यर्थः। तथा सति यद् यदज्ञाननिमित्तप्रतीतिकं तत् ततो भेदेन न प्रतीयते, यथा शुक्तिरूप्यमिति व्याप्तिःस्वमते सम्भवति।पराभिमतार्थे तु परमत एव तत्र व्याप्तिरिति भावः। रजतान्तरं दृश्यत एवेत्यत्र शुक्तितो भेदेनेति योज्यम् । भ्रान्तेनापि समीपस्थस्य भेदेन दर्शनात्तात्पर्यमाह- **तदारोपितमिति ॥** दार्ष्टान्तिकदृष्टान्तवाक्यद्वयोक्तानुवादो भिन्नत्वेन भेदेन चेति। **धर्मारोपे त्विति ॥** जडत्व-परिच्छिन्नत्वादिजगद्धर्मारोपे रजतत्वधर्मारोपे चेत्यर्थः। **अनुमानस्य चेति ॥** जगदात्मनि नाऽरोपितं ततो भेदेन प्रतीयमानत्वात् सामान्यव्याप्त्या शुक्तिसमीपस्थरजतवदित्यभिमतानुमानस्य चेत्यर्थः। आत्मपदेन प्रत्यगर्थमेवाभिप्रेत्याऽह- **प्रत्यक्पराग्भावेनेति ॥** 'न चाऽत्मनि' इत्यादिग्रन्थेन 'आत्माज्ञान' इत्यादिग्रन्थस्य पौनरुक्त्यमाशङ्क्याऽह - **प्राग्विरोधेनेति ॥** तर्कानुमानयोरप्रयोजकत्वशङ्कां निराह -**भेदेनेति ॥ सर्प-मालेति ॥** सर्पतया मालात्वेन बलीवर्दस्य मूत्रतयेत्यर्थः। भेदपदप्रयोगे कृत्यमाह- **परस्परेति ॥** जगदन्तर्गत-पदार्थानामन्योन्यभेदप्रतीतिमाश्रित्यापीत्यर्थः। आत्मा स्वान्तर्भेदोपेतजगदारोपाधिष्ठानं न भवति स्वान्तर्भेद-हीनत्वाद्गगनवत्। तादृशं जगद्वा स्वान्तर्भेदहीनात्मनि नाऽरोपितं परस्परं स्वान्तर्भेदवत्त्वात् शुक्तौ रूप्यसमुदाय-वदित्यनुमातव्यमित्यर्थः।

**(श्री.टि)** ननु स्वमते आरोपितस्य शुक्तिरजतादेरत्यन्तासत्त्वेनाज्ञानोपादानकत्वाभावाद् यद् यदज्ञानपरिकल्पितं तत् ततो भिन्नत्वेन न दृश्येत इति व्याप्तिग्रहणं शुक्तिरजतादौ न सम्भवतीत्यत आह- **स्वरीत्या त्विति ॥** अत्यन्तासतोऽपि शुक्तिरजतादेरधिष्ठानाज्ञाननिमित्तप्रतीतिकत्वाङ्गीकारादिति भावः । **इत्येवोच्येतेति ॥** यदधिष्ठेयं तदधिष्ठानाद्भिन्नत्वेन न दृश्येतेत्येव यद्युच्येतेत्यर्थः । **छलेति ॥** वक्ष्यमाणाभिप्रायेण प्रयुक्तयोरधि-ष्ठानाधिष्ठेयशब्दयोराधाराधेयभावरूपाभिप्रायान्तरं कल्पयित्वा दूषणादित्यर्थः । एवमुक्तेऽपि कुण्डबदरादौ कथं व्यभिचारपरिहार इत्यत आह । **यदज्ञानेनेति ॥ रजतान्तरं** सत्यभूतं रजतमित्यर्थः । **दृश्यत इति ॥** प्रमायामि-त्यर्थः । ननु भ्रान्तावित्युक्तेऽपि न दोषपरिहारः । समीपस्थयोः शुक्तिरजतयोरिमे रजते इति भ्रान्तौ शुक्तेर्भेदेन रजतस्य दर्शनादित्यत आह- **तदारोपितमिति यावदिति ॥** तथा च भ्रान्तौ शुक्त्यारोपितरजतभिन्नं वास्तवं यद्रजतं तदेव शुक्तेर्भेदेन प्रतीयते न तु तत्रारोपितं यद्रजतं तदित्यर्थः । **दृश्यत एवेति ॥** शुक्तेर्भेदेन रजतमि-त्यर्थः । **इदमुक्तमिति ॥** भ्रान्ताविति विशेषणमुक्तमित्यर्थः । **धर्म्यारोपे** इदं रजतमिति तादात्म्यारोपे । **धर्मारोपे** अत्र रजतत्वमिति तन्निष्ठधर्मसंसर्गारोप इत्यर्थः । भिन्नत्वेन भेदेनेत्यनयोरर्थमाह- **असंसृष्टत्वे-नेति ॥ तर्कस्येति ॥** यदि जगदात्मन्यारोपितं स्यात्तदाऽऽत्मनो भिन्नत्वेन न दृश्येतेति तर्कस्येत्यर्थः । **अनुमान-स्येति ॥** जगदात्मन्यारोपितं न भवति ततो भेदेन दृश्यमानत्वादित्यनुमानस्येत्यर्थः । तर्के विपर्ययपर्यवसान-लब्धमिदमनुमानमित्यवगन्तव्यम् । 'न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्ट :' इति पूर्वग्रन्थेन गतार्थतां परिहरति- **प्रागिति ॥** आत्मत्वानात्मत्वप्रकारकविरुद्धधर्मप्रतीतिरेव भ्रमासम्भवे हेतुत्वेनोक्ता । इदानीं तु भेदप्रतीतिमात्र-मेव भ्रमासम्भवे हेतुत्वेनोच्यत इत्यर्थः । असिद्धिपरिहारायैव प्रत्यक्पराग्भावेन भेदप्रतीतेः स्फुटत्वादित्युक्त-**(श्री.टि)** मित्यवगन्तव्यम् । अनुमानेऽप्रयोजकतापरिहाराय बाधकं तर्कमाह- **भेदेन प्रतीयमानमपीति ॥** आदावित्यनन्तरमेकमेव शुक्तिकाशकलमिति शेषः । तथा च तत्र व्यभिचार इत्यर्थः । **अनेनैवेति ॥** युगपदिति विशेषणेनैवेत्यर्थः । **सर्वेति ॥** आदौ रजतत्वेन दृष्टं पश्चाच्छुक्तिकात्वेन दृश्यत इत्युक्तः । शुक्तिशकले व्यभिचारपरिहारोऽपि युगपदित्यनेनैव भविष्यति । अतस्तदर्थं भ्रान्ताविति न वक्तव्यमित्यर्थः । गतार्थतां परिहरति- **प्रागिति ॥ अनुमितं** जगतोऽनारोपितत्वमिति शेषः । अप्रयोजकत्वमाशङ्कते- **नन्विति ॥ धर्मित्वेनेति ॥** अहं बाहुविध्यमिति तादात्म्येनेत्यर्थः । **धर्मत्वेनेति ॥** अहं बाहुविध्यवानिति बहुविधत्व-रूपधर्मसंसर्गवत्त्वेनेत्यर्थः । ननु तर्हि न चाऽत्मनि बाहुविध्यभ्रमः क्वापि दृष्ट इत्येव कस्मान्नोक्तमित्यत आह- **परस्परमिति ॥** आत्मा परस्परं भिन्नत्वेन दृश्यमानस्य जगतोऽधिष्ठानं न भवति अभिन्नत्वादित्यनुमानमत्र द्रष्टव्यम् । अस्मिन्पक्षे भेदभ्रम इत्यस्य भेदसंसर्गभ्रम इत्यर्थो द्रष्टव्यः ।

**(पां.टि) आत्माधिष्ठानत्वमिति ॥** जगदारोपस्याऽत्माधिष्ठानकत्वमित्यर्थः । आत्माज्ञानमित्यस्यात्माश्रित-मज्ञानमित्यर्थः प्रतीयते, स च न युक्तः । शुक्त्याद्याश्रिताज्ञानाकल्पिते शुक्तिरजतादौ व्याप्तिग्रहासम्भवादतो व्याचष्टे- **आत्मनो यदावरणमिति ॥** शुक्तिरूप्यादिकं तु शुक्त्याद्यावरकाज्ञानकल्पितमेवेति युक्तस्तत्र व्याप्तिग्रह इति भावः । **इति व्याख्येयमिति ॥** तथा च यथाश्रुतापादकस्य शुक्तिरजतादावभावेन स्वरीत्या व्याप्तिग्रहणं न सम्भवतीति शङ्काऽवकाशो नेति भावः। नन्वेवमपि कुण्डबदरादौ कथं व्यभिचारपरिहार इत्यत आह-**यदज्ञाने-नेति ॥** ननु भ्रान्तावित्यनेनापि न दोषपरिहारः । शुक्तिरजतयोरिमे रजते इति भ्रान्तौ वस्तुतः शुक्तिरजत-विषयत्वादित्यत आह- **तदारोपितमिति यावदिति ॥ इदमुक्तमिति ॥** भ्रान्तावितीदमुक्तमित्यर्थः । नन्वेवं तर्हि पूर्वप्रसङ्गाभेद इत्यत आह- **प्रागिति ॥** 'न चाऽत्मन्यनात्मभ्रमः' इत्यत्राऽत्मत्वानात्मत्वरूपविरुद्धधर्म-प्रतीतिरेवाऽत्मन्यनात्मभ्रमासम्भवे हेतुत्वेनोक्तेत्यर्थः । **भेदप्रतीतिमात्रमिति ॥** आरोपासम्भवे हेतुत्वेनोक्तं न तु विरोधप्रतीतिरिति न पौनरुक्त्यमित्यर्थः । अस्तु भेदेन प्रतीतिस्तथाप्यारोपोऽस्त्वित्यप्रयोजकत्वमाशङ्क्य विपक्षे बाधकसत्त्वान्न तदिति भावेन तदाह- **भेदेनेति ॥ अनेनैवेति ॥** युगपदित्यनेनैव भ्रान्तिपदनिरसनीय-व्यभिचारस्यापि परिहारात् तदानर्थक्यमित्यर्थः । **तर्हीति ॥** भ्रान्तावित्यस्य स्वरूपकथनत्वेनाव्यावर्तकतया हेतुशरीरप्रवेशासम्मतेर्न तदानर्थक्यमिति भावः । ननु चोक्तप्रसङ्गप्रतिपादकत्वात्पूर्वेण पौनरुक्त्यमित्यतः प्रकार-भेदान्न तदिति भावेनाऽह- **प्रागधिष्ठानेति ॥ विरोधभेदमिति ॥** विरोधसहितो भेदो विरोधभेदस्तमित्यर्थः । यद्यपि भेदमाश्रित्य पूर्वमारोपासम्भव उक्त इत्येव वक्तुमुचितं भेदेन प्रतीत्यैवाऽरोपासम्भवस्योक्तत्वात् । तथाऽपि तत्पूर्ववाक्ये विरोधप्रतीतिमाश्रित्याप्यारोपासम्भवस्योक्तत्वात् तदसम्भवप्रतिपादकग्रन्थद्वयेन पौनरुक्त्यपरिहारोऽयमिति ज्ञापयितुं विरोधग्रहणमिति द्रष्टव्यम् । क्वचिट्टीकायां विरोधभेदावाश्रित्येति पाठः । स स्पष्ट एव । आत्मनि बहुविधत्वेन प्रतीयमानजगद्भ्रमस्य परेणोक्तत्वेऽपि भेदभ्रमस्यानुक्तत्वेन भेदपदस्यात्र भेदपरत्वानुपपत्तेर्बाहुविध्यपरतया तद्व्याचष्टे- **भेदो बाहुविध्यमिति ॥** नन्वेवं नाऽत्मनि बाहुविध्यभ्रमो दृष्ट **(पां.टि)** इत्येव वक्तव्यं, किं भेदग्रहणेनेत्यत आह- **परस्परमिति ॥** आत्मा परस्परं भिन्नत्वेन दृश्यमान-स्याधिष्ठानं न भवत्यभिन्नत्वादित्यनुमानस्यापि सूचनार्थं भेदग्रहणं कृतमित्यर्थः ।

**(व्या.टि)** प्रकृतमनुसरतीत्याह- **एवमिति ॥** अज्ञानपदस्य ज्ञानाभावपरत्वेऽभावस्योपादानत्वावरणत्व-योरसम्भवादनुक्तेश्चासदनुवादत्वमपाचिकीर्षुरज्ञानपदं विज्ञापयति- **आत्मन इति ॥** आवरणाक्रियमाणभावः षष्ठ्यर्थ इति भावः । परेणाज्ञानातिरिक्तस्याज्ञानकार्यतोररीकरणादन्यथाऽनुवाद इत्याशङ्क्य मतभेदेन द्वेधा व्याचष्टे- **परीत्येत्यादि ॥** तदुपादानं ययोस्तौ तदुपादानकौ । 'शेषाद्विभाषा ' इति कप् । स्वरूपं च प्रतिभासश्च स्वरूपप्रतिभासौ तथाभूतौ तौ यस्य तस्य भावस्तत्त्वं तस्मिन्नित्यर्थः । भ्रमोपादानमज्ञानमिति तैस्तल्लक्षण-करणादिति भावः । **तन्निमित्तेति ॥** अत्राऽत्मशब्दो निमित्तपर इत्युक्तं भवति । **जगत इति ॥** पूर्वानुमितस्याऽ-काङ्क्षोपरमाद्विभक्तिपरिणामे मानाभावाच्चेत्याशयेन व्याचष्टे- **जगदिति शेष इति ॥** नन्वात्माधिष्ठानत्व इति लघ्वक्षरैरनुवादसम्भवे किमिति गुर्वक्षरैस्तदर्थानुवादेनेत्यतः तत्फलमाह- **यदीति ॥ छलेति ॥** सामान्य-फलस्येत्यर्थः । अधिष्ठानाधिष्ठेयपदविवक्षितार्थकथनेन छलत्वं विच्छिनत्ति- **यदिति ॥** पृथक्पदम् । **उपपादय-तीति ॥** व्यभिचारपरिहारेणेति शेषः । **रजतान्तरमिति ॥** आरोपितभिन्नं सत्यमित्यर्थः । **इत्यत इति ॥** व्यभिचारादित्यर्थः । **दृश्यत इति ॥** इदं रजतमित्याकलितोऽस्मीत्यनुभवादिति भावः । **तथा चेति ॥** उदाहरणे भ्रान्तिपदप्रयोगेणेत्यर्थः । अत्र सर्वत्राऽत्मशब्दः प्रत्यक्परः । प्रसङ्गस्याऽरोपद्वयसाधारण्याय तृतीयान्तस्यार्थ-भेदमाह- **अत्रेति ॥ स्फुटत्वादिति ॥** सुदृढनिरूढत्वादित्यर्थः । अन्यथाऽनुभवविरोधं च सूचयेदिति । 'न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः' इति प्राचीनग्रन्थेन पुनरुक्तिमाशङ्क्य निराह- **प्रागिति ॥** व्यावर्तकप्रत्यक्त्वादि-धर्मप्रतीतिरुक्ता । व्यावृत्तिप्रतीतिरत्रोच्यत इति भेद इति भावः । विपक्षे बाधकमाह- **भेदेनेति ॥** निवर्तकान्त-राभावादस्याप्यनिवर्तकत्वेऽकारणकार्योत्पत्तियोगेन निवृत्तिलक्षणकार्यं कदाऽपि न स्यादित्यर्थः । न चैकमेवेति व्याप्तिवचनाभिहितमनुमानद्वयं दर्शयति- **किञ्चेति ॥** आद्ये हेतुपदकृत्यमाह- **आदावित्यादिना ॥** भ्रान्ति-पदवैयर्थ्यमाशङ्कते- **अनेनैवेति ॥** युगपत्पदेनैवेत्यर्थः । **सर्वेति ॥** भ्रान्तिपदव्यावृत्तेत्यर्थः । **स्वरूपेति ॥** उपरञ्जकविशेषणमित्यर्थः । पुनरुक्तिं व्युदस्यति- **प्रागिति ॥ बहुविधत्वमिति ॥** अनेकप्रकारमित्यर्थः । हेतोरप्रयोजकतामाशङ्कते- **नन्विति ॥ धर्मित्वेनेति ॥** अधिष्ठानतादात्म्येनेत्यर्थः । **धर्मत्वेनेति ॥** संसृष्ट-त्वेनेत्यर्थः । **अनुपपन्नमिति ॥** अनुभवविरुद्धमित्यर्थः । व्यावृत्तेरुक्तेः प्रकृतानुपयुक्तेश्च भेदपदं विवृणोति- **भेदो बाहुविध्यमिति ॥** गौणप्रयोगस्यार्थान्तरसूचनेन साफल्यमाह- **परस्परेति ॥** परस्परस्य जीवजडात्मक-प्रपञ्चस्येत्यर्थः । तथा च नाऽत्मा परस्परभिन्नतया प्रतीयमानप्रपञ्चारोपाधिष्ठानम् अभेदेनैकरस्येन प्रतीयमान-त्वादित्यनुमानं सूचितम् ।

## मूलम्- न च कुत्रापि मिथ्योपाधिकृतो भेदो दृष्टः ।

**(त.मं.)** ननु यथाऽऽकाशस्योपाधिकृतो भेदः एवमात्मनोऽपि मिथ्योपाधिकृतो भेदः स्यादित्यत आह- **न च कुत्रेति ॥** उपाधिकृत एव भेदो न दृष्टः किमुत मिथ्योपाधिकृत इत्यर्थः । न ह्याकाशादावपि घटमठाद्युपाधिः भेदं करोति । किन्तु पूर्वमेव सन्तं व्यञ्जयति ।

**टीका-** स्यादेतत् । अन्तःकरणाद्यवच्छिन्नं परिच्छिन्नमात्मस्वरूपं न जीवजडरूपप्रपञ्चारोपाधिष्ठानं ब्रूमः । किन्तु सर्वतो व्याप्तमेव । तच्च स्वभावेनैकरसमपि अनन्तोपाधिकृतभेदभिन्नम् । तथा च नोक्तानुमानावकाशः । अधिष्ठानत्वेनाभिमतस्याऽन्तरत्वादिना विरोधेन भेदेन चाप्रतीतेः । विरुद्धत्वेन भेदेन च प्रतीतस्यानधिष्ठानत्वात् । उपाधिभेदभिन्नस्याऽत्मस्वरूपस्य बहुविध-प्रपञ्चारोपाधिष्ठानत्वोपपत्तेरिति चेन्न । व्याप्तात्मस्वरूपानुविद्धतया घटादीनां प्रतीत्यभावात् । आरोपितस्याधिष्ठानानुविद्धतया प्रतीतिनियमात् । न हि कश्चिदिदं शुक्लभास्वरं रजतमिति-वदिदमात्मस्वरूपं घट इति प्रत्येति । ननु 'सन् घटः','प्रकाशते घटः' इति सत्प्रकाशसम्भिन्नतया घटः प्रतीयते । सत्प्रकाशात्मकश्चाऽत्मेति कथमात्मानुविद्धतया घटादिप्रतीत्यभावः । असाधारणा-कारानुवेधस्तु रजतादिविभ्रमेऽपि नास्तीति चेन्न । 'अनित्यमिदम्','कृष्णमिदम्' इति प्रतीतेर-नित्यादिरूपस्याधिष्ठानत्वप्रसक्तेः । घटधर्म एवासौ नाधिष्ठानानुवेध इति चेत्तर्हि सत्तादिकमपि किन्न स्यात् । अस्य पृथक् सत्ताऽभावादिति चेन्न । अन्योन्याश्रयप्रसङ्गात् । सिद्धे ह्यारोपितत्वे पृथक् सत्ताऽभावसिद्धिः । ततश्चाधिष्ठानानुवेधसम्भवेनाऽरोपितत्वसिद्धिः । प्रकाशानुवेधस्तु

जडस्येति तूत्तरत्र प्रत्याख्यास्यामः।

यदप्युक्तमुपाधिकृतभेदेनाऽत्मस्वरूपस्यापि भिन्नत्वाद्बहुविधप्रपञ्चारोपाधिष्ठानत्वं युक्तमिति तत्र वक्तव्यम्। किमुपाधयः सत्या उत मिथ्येति। नाऽद्यः। अपसिद्धान्तापातात्। द्वितीयं दूषयति- **न चेति ॥** सर्वसामर्थ्यविधुरस्य मिथ्याभूतस्य शशविषाणादेः कार्यकारित्वादर्शनादिति भावः। भेदोऽपि मिथ्येति चेत्तथाऽप्यनुपपत्तिः। मिथ्याभूतस्याप्याकाशभेदस्य घटाद्युपाध्यभावे प्रतीत्यभा-वात्। उपाधयोऽप्यारोपिताः सत्या एव, न शशविषाणायिता इति चेत्, कथं तर्हि ते बहुविधा अतादृशात्मन्यध्यस्येरन्। तदर्थं पुनरुपाध्यन्तरकृतभेदकल्पनेऽनवस्था स्यादिति।

यच्चोक्तं पूर्वं जगदुत्तरोत्तरारोपे प्रधानमिति तदसत्। आदिसृष्टावनुपपत्तेः। पूर्वकल्पानुभव-संस्कारस्तत्राप्यस्तीति चेन्न। तथा सति नारिकेलद्वीपवासिनोऽपि गुञ्जापुञ्जादौ ज्वलनसमारोप-प्रसङ्गात्। न ह्यनादौ संसारे कदाऽपि तेन ज्वलनो नानुभूत इति शक्यते वक्तुम्। प्रमिते ह्यनन्यथा-सिद्धे कार्ये जन्मान्तरानुभवस्याप्युपयोगः कल्प्यते। न चेदानीमपि जगदारोपः प्रमितः। अनुमानागमयोर्निराकृतत्वात्। अत एव सादृश्यव्युत्पादनमप्यसदिति।

**(र.टि) तथाऽप्यनुपपत्तिरिति ॥** मिथ्याभूतस्य कृतकत्वासम्भवादिति भावः। ननूपाधिकृतत्वं नामोपाधि-ज्ञाप्यत्वम्। ज्ञानं तु मिथ्याभूतस्यापि सम्भवतीत्यत आह- **मिथ्याभूतस्यापीति ॥** यद्वा **अनुपपत्तिः** प्रतीत्यनु-पपत्तिः। तामेवोपपादयति- **मिथ्याभूतस्येति ॥** नन्वेवं जन्मान्तरानुभवकल्पनस्यातिप्रसङ्गित्वे जातमात्रस्य प्रवृत्त्युपयोगीष्टसाधनत्वानुमानाङ्गव्याप्तिस्मृतिरपि न कल्प्येतेत्यत आह- **प्रमिते हीति ॥**

**(रा.टि.)** एवं प्रत्यगर्थेऽनात्मारोपं चतुर्धा निरस्य शङ्कमानस्याशयमुद्घाट्य दूषयिष्याम इति प्रागुक्तं व्यनक्ति- **स्यादेतदित्यादिना ॥ एकरसमिति ॥** स्वान्तर्भेदहीनम्। **नोक्तेति ॥** प्रत्यक्त्वादिविरुद्धधर्मवत्त्वेन भिन्नत्वेन बहुत्वेन स्वान्तर्भेदहीनत्वेन च प्रतीयमानत्वादात्मनः तद्विरुद्धत्वेन ततो भिन्नत्वेन स्वान्तर्भेदवत्त्वेन प्रतीय-मानानात्मारोपाधिष्ठानं नेत्युक्तानुमानेत्यर्थः। अनवकाशमेव व्यनक्ति- **अधिष्ठानत्वेत्यादिना ॥ प्रतीत-स्येति ॥** प्रत्यगर्थस्येत्यर्थः। बहुविधेत्युपलक्षणम्। अन्तर्भेदभिन्नेत्यपि ध्येयम्। **सम्भिन्नतयेति ॥** सदनुविद्धतया प्रकाशानुविद्धतया चेत्यर्थः। आत्मस्वरूपं घट इत्यनुवेधो नास्तीत्यत आह- **असाधारणेति ॥ ततश्चेति ॥** पृथक् सत्ताऽभावत इत्यर्थः। अस्तु सत्ता घटनिष्ठा, प्रकाशस्य तु घटेऽभावादात्मानुवेध एवेत्यत आह- **प्रका-शेति ॥ उत्तरत्रेति ॥** 'प्रपञ्चसत्यत्वाङ्गीकारे' इति वाक्यव्याख्यावसरे 'कथं प्रकाशेतेति कोऽर्थः' इत्यादिना ग्रन्थेनेति भावः। मिथ्येत्यस्यासदित्यर्थमुपेत्याह- **सर्वसामर्थ्येति ॥ तथाऽप्यनुपपत्तिरिति ॥** असतो भेदस्य कृतकत्वानुपपत्तिरित्यर्थः। यद्वा भेदोऽपि मिथ्येत्यस्योक्तरीत्याऽसतः कृतकत्वायोगेऽपि मिथ्योपाधिना ज्ञाप्यत इति शङ्काऽर्थः। तथाऽप्यनुपपत्तिरित्येतद्व्यनक्ति- **मिथ्याभूतस्यापीति ॥** आकाशे स्वस्मिन् स्वप्रतियोगिकभेदस्य मिथ्याभूतस्याप्यसतोऽपि घटाद्युपाध्यभावे घटाद्युपाधेर्मिथ्यात्वे सत्यदर्शनात्। घटाद्युपाधिसत्त्वे एव घटाकाशोऽयं मठाकाशोऽयमित्यादिभेदप्रतीतेर्मिथ्योपाधिना मिथ्याभेदो ज्ञाप्यत इत्यप्ययुक्तमिति भावः। **बहुविधा इति ॥** उपाधय इत्यनुषङ्गः। **अतादृशेति ॥** अबहुविधात्मनीत्यर्थः। **तदर्थमिति ॥** बहुविधोपाध्यारोपायाऽत्मनो बाहुविध्यार्थमित्यर्थः। नन्वेवं जातमात्रस्य स्तन्यपाने जन्मान्तरानुसन्धानकल्पनानुपपत्तिरित्यत आह- **प्रमिते हीति ॥ अनुमानेति ॥** 'यच्च प्रमाणदृष्टानामपि पदार्थानां मिथ्यात्वकल्पनं' इत्यादिना दृश्यत्वाद्यनुमानस्य 'न च वाचारम्भणशब्दो मिथ्यात्वे प्रसिद्धः' इत्यादिना चाऽगमस्य निरस्तत्वादित्यर्थः। **अत एवेति ॥** अधिष्ठानप्रधानयोरभावादेव। तयोस्सादृश्यव्युत्पादनं 'न चाऽत्मन्यनात्मारोपः' इत्येतदवतारिकायां यत्कृतं तदसदित्यर्थः।

**(श्री.टि)** नन्वेकस्याऽत्मनः कथं बहुविधप्रपञ्चारोपाधिष्ठानत्वमित्यत आह- **तच्चेति ॥** अनुमानानामनव-काशमुपपादयति- **अधिष्ठानत्वेनेति ॥ आन्तरत्वादिनेति ॥** प्रत्यग्पराग्भावरूपेण विरोधेनेत्यर्थः। **आत्म-स्वरूपस्येति ॥** व्याप्तात्मस्वरूपस्यैकत्वेऽप्युपाधिभेदभिन्नस्य बहुविधत्वादित्यर्थः। **सम्भिन्नतया** अनुविद्ध-तया। ननु घटादेरात्मानुविद्धतया प्रतीतौ तन्निष्ठज्ञानानन्दाद्यसाधारणाकारानुवेध एव स्यान्न तु सदादिरूपासा-धारणाकारानुवेध इति चेन्न। अदृष्टकल्पनाप्रसङ्गादित्याह- **असाधारणाकारेति ॥ असौ** अनित्यत्वादिः। **किन्न स्यादिति ॥** तथा च सत्त्वादिकमपि घटधर्म एव नाधिष्ठानानुवेध इत्यर्थः। **पृथगिति ॥** ब्रह्मव्यतिरेकेण पृथगनित्यत्वादिधर्माणां घटे विद्यमानत्वेनानित्यत्वादिकं घटधर्म एव नाधिष्ठानानुवेध इति कल्प्यते

। सन्निति त्वधिष्ठानानुवेध एव घटादेर्ब्रह्मण्यारोपिततया **पृथक्** ब्रह्मसत्ताव्यतिरेकेण घटधर्मभूतायाः सत्ताया अभावादि-त्यर्थः । ननु सन्घट इत्यत्र सत्त्वस्य घटगतत्वेनाधिष्ठानत्वासम्भवेऽपि प्रकाशते घट इत्यत्र प्रकाशात्मकब्रह्मानुवेध एवेत्यङ्गीकार्यम् । घटादेर्जडत्वेन प्रकाशस्य सत्तावत्तद्धर्मत्वायोगाद् इत्यत आह- **प्रकाशेति ॥ उत्तरत्रेति ॥** 'उच्यते । कथं प्रकाशेतेति कोऽर्थः ।' इत्यादिना ग्रन्थेनेत्यर्थः । तथा हि । घटः प्रकाशत इत्यस्य कोऽर्थः । किं प्रकाशरूप इति उत प्रकाशाश्रय इति यद्वा प्रकाशविषय इति । न प्रथमद्वितीयौ । अनभ्युपगमात् । तस्मात्तृतीय एवाङ्गीकार्यः । तत्रापि प्रकाशो न चैतन्यम् । अप्रामाणिकत्वात् । अतो वृत्तिरेव वाच्या । तथा च प्रकाशते घट इत्यस्य वृत्तिरूपज्ञानविषयो घट इत्यर्थकतया नाधिष्ठानभूतप्रकाशरूपब्रह्मानुवेध इति प्रत्याख्यास्याम इति भावः। **भेदोऽपीति ॥** भेदस्य सत्यत्वे हि मिथ्याभूतस्य वास्तवकार्यकारित्वं न सम्भवतीति युक्तं स्यात् । न चैवम् । भेदस्यापि मिथ्यात्वेनोपाधेः स्वानुरूपकार्यकारित्वसम्भवादित्यर्थः । **तथाऽप्यनुपपत्तिरिति ॥** प्रतीत्यनुप-पत्तिरित्यर्थः । तामेवोपपादयति- **मिथ्याभूतस्यापीति ॥ घटाद्युपाधीति ॥** उपाधीनां मिथ्यात्वे शशविषा-णायितत्वेनात्यन्तासत्त्वापत्त्या न मिथ्याभूतभेदप्रतीतिजनकत्वं युक्तमित्यर्थः । आरोपिता आत्मनीति शेषः । **सत्या एवेति ॥** व्यावहारिकसत्त्वोपेतेत्यर्थः । **अताद्दशात्मनीति ॥** अबहुविध एकस्मिन्नात्मनीत्यर्थः । ननु मिथ्याभूतभेदहेतव उपाधयो नैकस्मिन्नात्मन्यारोपिताः किन्तूपाध्यन्तरकृतभेदभिन्न आत्मन्येव । अतो नोक्तदोष इत्यत आह- **तदर्थमिति ॥ अनवस्थेति ॥** तेषामप्युपाधीनामुपाध्यन्तरकृतभेदभिन्न आरोपितत्वं वाच्यम् । पुनस्तत्राप्येवमित्यनवस्थेत्यर्थः । **नानुभूत इति शक्यते वक्तुमिति ॥** तथा च ज्वलनानुभवजनित-संस्कारस्तस्याप्यस्तीति भावः ।नन्वेवं जन्मान्तरानुभवकल्पनस्यातिप्रसङ्गित्वे जातमात्रस्य प्रवृत्त्युपयोगीष्ट-साधनत्वानुमानाङ्गभूता 'यत् स्तनपानं तदिष्टसाधनम्' इत्येवं रूपा व्याप्तिः तत्स्मृतिरपि न कल्प्येतेत्यत आह- **प्रमिते हीति ॥** अनन्यथासिद्धजीवनरूपकार्यस्य तत्र प्रमितत्वादिति भावः । तर्ह्यत्रापि कार्यं प्रमितमित्याशङ्क्य निराकरोति- **न चेदानीमपीति ॥** ननु दृश्यत्वाद्यनुमानेन तत्त्वमस्याद्यागमेन च प्रमित इति चेत्तत्राह- **अनुमाना-गमयोरिति ॥** प्रमाणबाधान्यथाकल्पनाभ्यां निराकृतत्वादिति भावः । **अत एवेति ॥** अधिष्ठानप्रधान-योरभावादेवेत्यर्थः ।

**(पां.टि)** योऽत्रानुक्तोपालम्भमाशङ्कमानस्याऽशयस्तमुत्तरत्रोद्घाट्य दूषयिष्याम इत्युक्तं तं दूषयितुमाशयं तावदुद्घाटयति- **स्यादेतदिति ॥** ननु सन्घटः प्रकाशते घट इति सत्त्वादिसाधारणाकारेणाधिष्ठानानुवेधे विद्यमानेऽ-प्यात्मा घट इति तदसाधारणाकारानुविद्धतया घटादिप्रतिभासाभावान्न तत्राऽरोप इत्यतः इदं शुक्लभास्वरं रजतमित्यधिष्ठानसाधारणाकारानुविद्धतया रजतप्रतिभासेऽपि शुक्ती रजतमिति तदसाधारणाकारानुविद्धतया रजतावभासाभावाद् रजतस्यापि शुक्त्यधिष्ठानकत्वं न स्यादित्याह- **असाधारणेति ॥ उत्तरत्रेति ॥** 'ननु च सत्यत्वे प्रपञ्चः कथं प्रकाशते' इत्यादावित्यर्थः ।'तथाऽप्यनुपपत्तिः' इति प्रतिज्ञातामनुपपत्तिमेव प्रथयति- **मिथ्याभूतस्यापीति ॥** ततश्च तद्वन्मिथ्यात्वेऽपि भेदस्योपाधीनां मिथ्यात्वेनाभावान्न तत्सम्भव इति भावः । नन्वेवं जन्मान्तरानुभवकल्पनस्यातिप्रसङ्गित्वे जातमात्रस्य प्रवृत्त्युपयोगीष्टसाधनत्वानुमानाङ्गव्याप्तिस्मृतिरपि न कल्पनीया स्यादित्यतो वैषम्येण परिहरति- **प्रमिते हीति ॥ अनुमानागमयोरिति ॥** विप्रतिपन्नं जीवजडात्मकं विश्वं एकजीवाज्ञानपरिकल्पितं दृश्यत्वादित्यनुमानम् , प्रपञ्चो यदि इत्यागमस्तयोरित्यर्थः । **अत एवेति ॥** अधिष्ठानप्रधानयोः सत्त्वे तत्सादृश्यव्युत्पादनस्यापेक्षिततया कर्तव्यत्वेऽपि प्रकृते जगदारोपे उक्तरीत्याऽधिष्ठान-प्रधानयोरभावेन तत्सादृश्यानपेक्षत्वात्तद्व्युत्पादनमयुक्तमेवेति भावः ।

**(व्या.टि)** अत्रानुक्तोपालम्भं शङ्कमानस्याऽशयमुद्घाटयति- **स्यादेतदिति ॥** परिच्छिन्नत्वे हेतुः- **अन्तःकरणा-वच्छिन्नमिति ॥** विरोधभेदानुमानयोरनवकाशं वैयधिकरण्येनोपपादयति- **अधिष्ठानत्वेनेति ॥ अप्रतीते-रिति ॥** तथा च तत्पक्षीकारे हेत्वोः स्वरूपासिद्धिरित्यर्थः । **अनधिष्ठानत्वादिति ॥** तत्पक्षीकारे सिद्धसाधन-तेत्यर्थः । तृतीयहेतोरेकत्वस्याप्रयोजकतां दर्शयति- **उपाधीति ॥** एकत्वेऽपीति शेषः । अत्राप्यनुमानविरोधमाह- **व्याप्तात्मेति ॥** तत्प्रयोगप्रकारस्तु घटादिकं व्याप्तात्मस्वरूपाधिष्ठेयं न भवतीति प्रतिज्ञा बहिरेवोपस्कर्तव्या । तत्र हेतुमाह- **व्याप्तात्मेति ॥** अस्य व्यतिरेकव्याप्तिं दर्शयति- **आरोपितस्य चेति ॥** हेतोः पक्षधर्मतां दर्शयति- **न हीति ॥ इतिवदिति ॥** व्यतिरेकिनिदर्शनम् । व्याप्तात्मानुविद्धतया प्रतीतिविरहहेतोरसिद्धिं शङ्कते- **नन्वित्यादिना ॥** किमत्र साधारणाकारानुवेधो नास्त्युतासाधारणाकारानुवेध इति विकल्प्याऽद्यमवद्यति - **सत्प्रकाशसम्भिन्नतयेति ॥** 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेरिति भावः । द्वितीये व्याप्त्यभाव इत्याह- **असाधारणाकारानुवेधस्त्विति ॥** अतिप्रसङ्गेनानुवेधानुमानं पराह- अनित्यमिदं **कृष्णमिदमित्यादि ॥ असौ** अनित्यत्वादिः । प्रतिबन्द्या समाधत्ते- **तर्हीति ॥ अस्य** जगतः । अन्योन्यसिद्ध्योः अन्योन्यसिद्ध्यपेक्षां दर्शयति- **सिद्धे हीति ॥** ननु सत्त्वादेः स्वधर्मत्वेनाधिष्ठानानुवेधाभावेऽपि

प्रकाशानुवेधोऽधिष्ठानस्यैव। जडस्य प्रकाशानुपपत्तेरिति शङ्कते- **प्रकाशानुवेधस्त्विति ॥ उत्तरत्रेति ॥** 'कथं प्रकाशेतेति कोऽर्थः' इत्यादावित्यर्थः। दूषयितुमनुवदति- **यदप्युक्तमिति ॥** अत्र सत्यत्वे आत्मरूपा वा भिन्ना वेति विकल्पः। आद्ये उपाध्युपधेय-भावसम्भवं च बहिरेवोपस्कृत्य द्वितीये त्वाह- **अपसिद्धान्तेति ॥** सदद्वैतस्य सिद्धान्तत्वादित्यर्थः। मिथ्याशब्द-स्यासति रूढिमुपेत्य दूषयति- **सर्वेति ॥ भेदोऽपीति ॥** मिथ्योपाधेर्विरूपकार्यकारित्वासम्भवेऽपि सरूप-कार्यकरत्वसम्भव इति भावः। सत्त्वाभावे कार्यानुपपत्तिमुपेत्याऽह- **तथाऽपीति ॥ अभावे** सत्त्वाभाव इत्यर्थः। आपादकासिद्धिमाह- **उपाधयोऽपीति ॥ न शशविषाणायितेति ॥** अत्राऽचारक्यजन्तात्कर्तरि निष्ठाया-मिट्। **तर्हीति ॥** आरोपितसत्त्वस्य प्रयोजकत्व इत्यर्थः। **अतादृशेति ॥** एकविधेत्यर्थः। **तदर्थमिति ॥** बहुविधारोपार्थमित्यर्थः। **अनुपपत्तेरिति ॥** सर्वस्य प्रलयादित्यर्थः। **तथा सतीति ॥** संस्कारमात्रेण प्रधानत्व इत्यर्थः। तत्र संस्कारमवधारयति- **तर्हीति ॥** तर्हि क्वापि जन्मान्तरीयसंस्कारकल्पना न स्यादित्यत आह- **प्रमिते हीति ॥** स्तनपानादावित्यर्थः। **अनुमानागमयोरिति ॥** नाल्पाच्त्वः पूर्वनिपातो नियतः, 'समानाधि-करणजातीययोः' इति निर्देशादिति भावः। **अत एवेति ॥** अधिष्ठानप्रधानयोरभावादेवेत्यर्थः।

**मूलम् - न च ज्ञानाज्ञानयोरपि मिथ्याकल्पितत्वं दृष्टम् । तद्विषयस्यैवान्यथात्वं भ्रान्तौ । एवमाद्यनन्तयुक्तिविरुद्धोऽयं पक्षः ।**

**(त.मं.)** पराज्ञानज्ञानयोरपि मिथ्यात्वे अनुभवविरोधमाह- **न च ज्ञानेति ॥** इयन्तं कालं इदं रजतमिति ज्ञानमासीदेव मम। शुक्तिरिति नावेदिषम्। इदानीं शुक्तिरित्यवेदिषं चेति ज्ञानाज्ञान-योरबाधानुभवात्।

**टीका -** एवमनेकानुमानप्रतिहतत्वान्न दृश्यत्वानुमानमुपपन्नमित्युक्तम्। किञ्च यदज्ञानमधिष्ठान-मावृत्याऽरोपमुत्पादयति यच्चाऽरोपितार्थज्ञानं, किं तदुभयव्यतिरिक्तं जगत्पक्षीकृत्य दृश्यत्वाद्यनु-मानेनैकजीवाज्ञानपरिकल्पितमिति साध्यते, आहोस्वित् तदपि पक्षे निक्षिप्य। न प्रथमः। तावताऽप्यद्वैतासिद्धेः। न हि ज्ञानाज्ञानयोरात्मस्वरूपत्वमङ्गीकृतं येन तयोरनारोपितत्वेऽप्यद्वैतं सिद्ध्येत्। यद्यपि आरोपितस्य ज्ञानं साक्षीत्यङ्गीकृतम्। तथाऽपि तस्यासङ्गत्वादारोपितार्थसम्बन्धा-सम्भवात् आरोपितार्थे सम्बन्धिरूपेण कल्पितरूपेण कल्पितरूपत्वमेव परेणाङ्गीकृतम्।

अस्तु तर्हि द्वितीयः पक्ष इत्यत आह- **न च ज्ञानेति ॥** मिथ्याभूतेनाज्ञानेन कल्पितत्वं **मिथ्याकल्पितत्वम्**। यथा नाभूदत्र रजतमिति बाधकप्रत्ययेन रजतस्य कल्पितत्वं दृश्यते न तथा ज्ञानाज्ञानयोरपि। प्रत्युत एतावन्तं कालमहमिदं शुक्तिकाशकलं नाज्ञासिषं, रजतत्वेनाज्ञासिषं चेति शुक्तिकाशकलवद् ज्ञानाज्ञानयोरबाधितत्वेनानुवृत्तिरेव दृश्यते। अतो बाधितविषया प्रतिज्ञेति।

कल्पितत्वमित्येतावता पूर्णे यन्मिथ्याग्रहणं करोति तेन दूषणान्तरमपि सूचयति। तथा हि- ज्ञानाज्ञानयोरपि किं कल्पितत्वं कल्पकेन उत तेन विनैव। न तावद् द्वितीयः। कादाचित्कत्वानुप-पत्तेरनिवृत्तिप्राप्तेः। रजतादेरपि तथात्वप्रसक्तेश्च। आद्ये किं तत्कल्पकं सत्यं मिथ्या वा। प्रथमेऽप्यात्मातिरिक्तमात्मैव वा। नाऽद्यः। अपसिद्धान्तात्। न द्वितीयः। तस्य कूटस्थत्वेन कल्पकत्वायोगात्, आत्ममात्रानुबन्धिनोऽनिवृत्तिप्रसङ्गाच्च। मिथ्यात्वे च तदप्यन्येन मिथ्याभूतेन कल्पितमित्यनवस्था। स्वेनैव कल्पिततायामात्माश्रयत्वम्। रजतादेरपि तथात्वप्रसक्तिश्च। अनादित्वे कल्पितत्वव्याघात इति।

ननु यद्यारोपितार्थज्ञानं सत्यं स्यात्तदा कथं तस्मिन् मिथ्याज्ञानमिति व्यपदेशः। कथं च तस्याप्रामाण्यम्। अतस्तस्य मिथ्यात्वमङ्गीकार्यमित्यत आह- **तद्विषयस्यैवेति ॥ तस्य** ज्ञानस्य यो **विषयः** शुक्तिशकलादिकम्। ज्ञानस्य तत्सन्निकृष्टकरणेन जातत्वात्। तस्य यद् **अन्यथात्वं** रजतत्वादिकं तदेव **भ्रान्तौ** ज्ञानस्याप्रामाण्ये मिथ्यात्वव्यपदेशे च कारणमिति शेषः। अथ वा कल्पनया **तद्विषयस्य** रजतादेरेव **अन्यथात्वं** बाधितत्वं भ्रान्तित्वादौ

**कारणमिति व्याख्येयम्।**

**एतदुक्तं भवति- न तावत् स्वरूपतो मिथ्यात्वमात्रमप्रामाण्यादिकारणं, किन्तु विषयवैपरीत्य-मपि। अन्यथा तत्त्वमस्यादिवाक्यजनितस्य मिथ्याभूतस्य वृत्तिज्ञानस्याप्यप्रामाण्यादिप्रसङ्गात्। न च विषयान्यथात्वेऽपि स्वरूपमिथ्यात्वाभावेनाप्रामाण्याद्यभावो दृष्टः। ततश्च तन्मात्रेणैव तदुपपत्तौ स्वरूपमिथ्यात्वमपि कल्पयतो गौरवं स्यादिति। एवमुक्तमेकजीववादिपक्षस्य युक्तिविरुद्धत्व-मुपसंहरति- एवमादीति॥**

**(र.टि.) ज्ञानस्याप्रामाण्ये मिथ्यात्वव्यपदेशे चेति॥** अनेन भ्रान्ताविति भावप्रधानं मिथ्याव्यपदेशोपलक्षकं चेत्युक्तं भवति। अत एव वक्ष्यति 'भ्रान्तित्वादौ' इति। **कल्पनया तद्विषयस्येति॥** ज्ञानजनकसन्निकर्ष-प्रति(र्षानु)योगित्वरूपविषयत्वापेक्षयेदमुक्तमित्यवधेयम्।

**(रा.टि.)** एवमिति 'भ्रान्तिकल्पितत्वे च जगतः' इत्यादिनोक्तभ्रान्तिकल्पितत्वपरामर्शः। **साक्षीत्यङ्गीकृत-मिति॥** शुक्त्याद्यधिष्ठानचैतन्यं शुक्त्याद्यारोपितरजतज्ञानमित्यङ्गीकृतमित्यर्थः। **आत्ममात्रानुबन्धिन इति॥** कल्पकनिवृत्त्या हि तन्निवृत्तिः। कल्पकश्च सदातन इति भावः। ननु साद्यध्यास एव कल्पकापेक्षा। अज्ञानाद्यध्यासस्त्वनादिरूप एवेति न तत्र तदपेक्षेत्याशङ्‌क्याऽह- **अनादित्व इति॥** कल्पितत्वस्य दोषजन्यधी-मात्रशरीरत्वादिति भावः। ननु रूप्यज्ञानस्य कथं शुक्तिविषयतेत्यत आह- **तत्सन्निकृष्टेति॥** यत्सन्निकृष्टकरणेन यद् ज्ञानमुत्पद्यते स तस्य विषय इति विषयत्वनिर्वचनादिति भावः। भ्रान्तावित्यस्य विपरिणामेन अनुवादो **(रा.टि.)** ज्ञानस्येति। **कल्पनया तद्विषयस्येति॥** कल्पनाविषयस्य कल्पितस्येति यावत्। **अन्यथात्वम्** असत्त्वम्। भ्रान्तावित्यस्यार्थः **भ्रान्तित्वादाविति॥** अप्रामाण्ये मिथ्याव्यपदेशे चेत्यर्थः।

ननु स्वरूपमिथ्यात्वमेव ज्ञानस्य भ्रान्तित्वादौ कारणमित्यत्र को दोष उक्तः। येन विषयान्यथात्वं कारणं कल्प्येतेत्यत आह- **एतदुक्तमिति॥** स्वरूपतो मिथ्यात्वमात्रमिति पराभिमतानुवादो व्यभिचारादिबाधकोप-दर्शनेन त्याजयितुं कृतः। **अप्रामाण्यादीति॥** मिथ्येति व्यपदेश आदिपदार्थः। परमते तस्यापि स्वरूपतो मिथ्यात्वादिति भावः। अन्वयव्यभिचारेऽपि व्यतिरेकबलादस्तु तदेव कारणमित्यतो नेत्याह- **न चेति॥** दृष्ट इत्यन्वयः। तन्मते सर्वस्यापि ज्ञानस्य मिथ्यात्वादिति भावः। विषयवैपरीत्याभावे च तदभावो दृष्ट इत्यपि ध्येयम्। **ततश्चेति॥** अन्वयतो व्यतिरेकतश्चेत्यर्थः। एकजीवमते युक्तिविरोधोक्तिः।

**(श्री.टि.) अद्वैतासिद्धेः** अद्वैतहानेरित्यर्थः। ननु आरोपजनकाज्ञानारोपितार्थज्ञानयोरकल्पितत्वेऽपि नाद्वैत-हानिः। तयोरात्मस्वरूपत्वाङ्गीकारादित्यत आह- **न हीति॥ साक्षीति॥** साक्षिरूपमित्यर्थः। साक्षिणश्चाऽत्म-त्वान्नाद्वैतहानिरिति भावः। **तस्यासङ्गत्वादिति॥** 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः साक्षिणः स्वरूपेणा-सङ्गतयाऽविद्यासम्बन्धमन्तरेणारोपितार्थसम्बन्धानुपपत्तेरित्यर्थः। **कल्पितेति॥** तथा चाविद्यावृत्तिप्रति-बिम्बितचैतन्यस्यैव साक्षित्वेन तस्य च विशिष्टत्वेन कल्पितत्वादारोपितार्थज्ञानस्य कल्पितविशिष्टसाक्षि-स्वरूपत्वानङ्गीकारादद्वैतहानिरेवेति भावः। **न तथा ज्ञानाज्ञानयोरिति॥** अज्ञानं नास्ति ज्ञानं नास्तीति बाधकप्रत्ययो नास्तीत्यर्थः। **नाज्ञासिषमिति॥** शुक्त्यज्ञानमासीदित्यर्थः। **अज्ञासिषमिति॥** रजतज्ञान-मासीदिति यावदित्यर्थः। **प्रतिज्ञेति॥** ज्ञानाज्ञानयोरेकजीवाज्ञानपरिकल्पितत्वसाधिका प्रतिज्ञेत्यर्थः। तथा च ज्ञानाज्ञानयोः पक्षकोटिप्रवेशेनैकजीवाज्ञानपरिकल्पितत्वसाधनेंऽशे बाध इति भावः। **कादाचित्कत्वेति॥** कल्पकेन विना कल्पितत्वे कादाचित्कताऽनुपपत्त्या सार्वकालिकत्वप्राप्तेरनिवर्त्यत्वं स्यादित्यर्थः। **तथा-त्वेति॥** कल्पकेन विनैव कल्पितत्वप्रसङ्गादित्यर्थः। तथा च तत्राज्ञानादीनां भ्रमोपादानत्वादिकल्पनमयुक्त-मिति भावः। **कूटस्थत्वेनेति॥** निर्विकारत्वेनाकर्तृत्वादित्यर्थः। **आत्ममात्रेति॥** केवलात्मरूपस्यैव कल्पक-त्वेनाऽत्मनः सर्वदा सत्त्वेन तन्मात्रानुबन्धिनो ज्ञानादेरपि सर्वदा सत्त्वप्राप्त्याऽनिवृत्तिप्रसङ्गादित्यर्थः। कल्पकं मिथ्येति द्वितीयपक्षं दूषयति- **मिथ्यात्वे चेति॥ मिथ्याभूतेन** कल्पकेन। **स्वेनैवेति॥** अनवस्थापरिहाराय स्वेनैव कल्पिततायामुच्यमानायामित्यर्थः। **तथात्वप्रसक्तिरिति॥** स्वेनैव कल्पितत्वप्रसक्तिरित्यर्थः। ननु साद्यध्यास एव कल्पकापेक्षा। अज्ञानारोपितार्थज्ञानयोरध्यासस्त्वनादिरेवेति न तत्र कल्पकापेक्षेत्यत आह- **अनादित्व इति॥ व्याघात इति॥** कल्पितत्वस्य दोषजन्यधीमात्रशरीरत्वरूपत्वादिति भावः। सत्यं स्वरूपेणेति शेषः। **अत इति॥** अप्रामाण्यमिथ्यात्वव्यपदेशयोरन्यथाऽनुपपन्नत्वादित्यर्थः। **तस्य** आरोपितार्थज्ञानस्य मिथ्यात्वं स्वरूपेणेति शेषः। तथा च 'न च ज्ञानाज्ञानयोरपि मिथ्याकल्पितत्वं दृष्टम्' इत्युक्तमसदिति भावः। यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य

विषय इति विषयलक्षणमभिप्रेत्य शुक्तिकाशकले तदुपपादयति- **(श्री.टि.) ज्ञानस्येति ॥** भ्रान्तावित्येतद् भ्रान्तित्व इति भावप्रधानमभिप्रेत्य व्याचष्टे- **ज्ञानस्याप्रामाण्य इति ॥** भ्रान्तावित्युपलक्षणमित्याशयेनोक्तम् - **मिथ्याव्यपदेशे चेति ॥** अत एव वक्ष्यति 'भ्रान्तित्वादौ' इति । **कल्पनया तद्विषयस्य** अवास्तवतया ज्ञानविषयस्येत्यर्थः । रजतस्यात्यन्तासत्त्वेन ज्ञानस्य तत्सन्निकृष्ट-करणजन्यत्वाभावेन रजतादेर्वास्तवविषयत्वाभावादिति भावः । **अन्यथेति ॥** विषयवैपरीत्यस्यापि कारणत्वमनङ्गीकृत्य स्वरूपतो मिथ्यात्वस्यैवाप्रामाण्ये मिथ्यात्वव्यपदेशे च कारणत्वाङ्गीकार इत्यर्थः । **मिथ्या-भूतस्येति ॥** ब्रह्मव्यतिरिक्तत्वेन स्वरूपतो मिथ्याभूतस्यापीत्यर्थः । **वृत्तिज्ञानस्य** ब्रह्मविषयकचरमवृत्ति-रूपज्ञानस्य । **प्रसङ्गादिति ॥** विषयवैपरीत्यस्यापि कारणत्वाङ्गीकारे तु स्वरूपतो मिथ्यात्वसत्त्वेऽपि विषयस्य ब्रह्मणोऽबाधिततया वैपरीत्याभावेन नाप्रामाण्यादिप्रसङ्ग इति भावः । यथा स्वरूपतो मिथ्यात्वसत्त्वेऽपि विषयवैपरीत्याभावेनाप्रामाण्याभावश्चरमवृत्तिरूपज्ञाने दृष्ट इति विषयवैपरीत्यस्याप्रामाण्यादौ कारणत्वं दृष्टम्, एवं विषयवैपरीत्यसद्भावेऽपि स्वरूपमिथ्यात्वाभावेनाप्रामाण्याभावः प्रामाण्यमिति यावत्, यदि दृष्टः स्यात्तर्ह्येव विषयवैपरीत्यमप्रयोजकीकृत्य स्वरूपमिथ्यात्वस्यैवाप्रामाण्यादौ कारणत्वं वाच्यं स्यान्न चैवमस्तीत्याह- **न च विषयान्यथात्व इति ॥** विषयस्यान्यथात्वे यथावस्थितार्थविषयकत्वाभावेन प्रामाण्यमेव न स्यादिति भावः । स्वरूपमिथ्यात्वेऽपि विषयवैपरीत्याभावात्प्रामाण्यं चरमवृत्तिरूपज्ञाने दृष्टम् । विषयवैपरीत्येऽपि स्वरूपस्य सत्यत्वेन प्रामाण्यं कुत्रापि न दृष्टम् । यदि कुत्रचिद् दृष्टं स्यात्तर्ह्येव विषयवैपरीत्यमप्रयोजकं स्यादिति फलि-तोऽर्थः । **तन्मात्रेणेति ॥** विषयवैपरीत्यमात्रेणेत्यर्थः । **तदुपपत्तौ** अप्रामाण्याद्युपपत्तौ । **कल्पयत इति ॥** अप्रामाण्यादौ प्रयोजकत्वेन कल्पयत इत्यर्थः ।

**(पां.टि.) अद्वैतासिद्धेरिति ॥** ज्ञानाज्ञानयोरेवाऽत्मातिरिक्तयोरपक्षीकृतत्वेन तन्मिथ्यात्वासिद्धेरिति भावः । ननु सत्यत्वेऽपि ज्ञानाज्ञानयोरात्मस्वरूपत्वेनातिरिक्तत्वाभावान्नाद्वैतासिद्धिरित्यत आह-**न हीति ॥ असङ्गतयेति ॥** 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या तत्सिद्धेरिति भावः । शुक्तिकाशकलादेः कथमिदं रजतमिति ज्ञानविषयत्वमित्यतस्तदुपपादयति- **तत्सन्निकृष्टकरणेनेति ॥ ज्ञानस्येति ॥** अनेन मूले भ्रान्तावित्येतद्भाव-प्रधानतया मिथ्याव्यपदेशे च इत्येतदुपलक्षणतया च व्याख्यातं भवति । **कल्पनयेति ॥** ज्ञानजनक-सन्निकर्षप्रति(र्षानु)योगित्वरूपविषयत्वापेक्षयेदमुक्तमित्यवधेयम् । ननु स्वरूपतो मिथ्यात्वमात्रस्यैव ज्ञानस्य भ्रान्तित्वादौ कारणत्वसम्भवे तत्परित्यागेन कुतो विषयान्यथात्वस्यैव तत्कारणत्वकल्पनमित्यत आह- **एतदुक्तं भवतीति ॥**

**(व्या.टि.)** श्रोतृबुद्ध्यनुकूलनायोक्तमर्थमनुवक्ति- **एवमिति ॥ किञ्चेति ॥** अन्यच्चेत्यर्थः । **अद्वैतासिद्धे-रिति ॥** तस्यैव सिषाधयिषितत्वेनार्थान्तरप्रसङ्गादित्यर्थः । तां व्यनक्ति- **तर्हीति ॥** नन्वज्ञानस्य ज्ञानात्म-ब्रह्मात्मत्वासम्भवेऽप्यारोपस्य साक्षिरूपत्वमिष्टमेवेत्याशङ्क्य निराकरोति- **यद्यपीति ॥** कर्मधारयभ्रान्तिं निवारयति- **मिथ्याभूतेनेति ॥** नाज्ञासिषमज्ञासिषमिति लुङा ज्ञानाज्ञानयोर्भूतकालसत्त्वावगमादनुवृत्तिरेव, **(व्या.टि.)** नाऽरोपितवन्निवृत्तिरित्यर्थः । उपसंहरति- **अत इति ॥ बाधितेति ॥** अज्ञानज्ञानांश इति शेषः । कल्पकाज्ञानस्य मिथ्येति विशेषणकृत्यमाह-**एतावतेति ॥ तेन विनैवेति ॥** 'पृथग्विना' इत्यादिना तृतीया । **कादाचित्कत्वानुपपत्तेरिति ॥** कादाचित्कत्वस्य निवृत्तिव्यापकत्वात्सकारणत्वस्य च तद्व्यापकत्वात्तदभावे तद्व्याप्याभावेन निवृत्त्यभावप्रसङ्ग इत्यर्थः । **तथात्वेति ॥** कल्पकेन विना कल्पितत्वप्राप्तेरित्यर्थः । **आद्य इति ॥** कल्पकसत्त्व इत्यर्थः । **प्रथम इति ॥** सत्यत्व इत्यर्थः । **अपसिद्धान्तादिति ॥** सदद्वैतसिद्धान्तभङ्गादि-त्यर्थः । **कूटस्थत्वेनेति ॥** निर्विकारत्वेनेत्यर्थः । **अनिवृत्तीति ॥** तस्य सदातनत्वादित्यर्थः । आद्ये द्वितीयं निरस्यति- **मिथ्यात्वे चेति ॥** अत्र तत् मिथ्याकल्पकं मिथ्याकल्पकान्तरेण कल्पितम्, उत स्वेनैव, अथानादीति विकल्पान् हृदि निधाय निराह- **इत्यनवस्थेत्यादिना ॥ तथात्वेति ॥** कर्तृकर्मभावानुपपत्तिश्चेत्यपि ग्राह्यम् । ननु रजतज्ञानस्य कथं शुक्तिविषयकत्वं व्यपदेशविरोधादित्यतो लक्षणयोगादित्याह- **तत्सन्निकृष्टेति ॥** भ्रान्ति-पदं भावप्रधानमितिभावेनाऽह- **प्रामाण्य इति ॥** अधुना यज्ज्ञानं यत्प्रतिभासं स तस्य विषय इति लक्षणं पक्षीकृत्य व्याचष्टे- **अथ वेति ॥ कल्पनयेति ॥** भ्रान्त्या न वस्तुत इत्यर्थः । अन्यस्यान्यात्मनाऽवभासो भ्रम इति तल्लक्षणकरणादित्यर्थः । ननु विनिगमकाभावात्कथमुक्तशङ्काऽपगम इत्यत आह- **एतदुक्तं भवतीति ॥** स्वरूपमिथ्यात्वस्याप्रामाण्यकारणत्ववादी प्रष्टव्यः । किं तन्मात्रं कारणम् उत विषयान्यथात्वविशिष्टम् । आद्यं दूषयन्ननुवदति- **न तावदिति ॥** द्वितीयं परिशेषयति- **किन्त्विति ॥** आद्यमवद्यति- **अन्यथेति ॥** अन्वय-व्यतिरेकाभ्यां हि कारणताऽध्यवसायः । न चात्रान्वयोऽस्तीत्यर्थः । नापि व्यतिरेक इत्याह- **न चेति ॥** द्वितीयं परिशेष्य तद् दूषयति- **ततश्चेति ॥** वृत्तं वक्ति- **एवमिति ॥ उक्तमिति ॥** प्रतिज्ञातमुपपादितं चेत्यर्थः ।

**मूलम् - ग्रन्थबहुत्वं स्यादित्येवोपरम्यते ।**

**टीका-** यद्यनन्तयुक्तिविरुद्धस्तर्हि किमिति ता अपि युक्तयो न प्रदश्यर्न्ते। किमुपसंहारेण। अतः प्रौढवाद एवायमित्यत आह- **ग्रन्थेति ।।** न तु विरोधयुक्तीनां समाप्तत्वादित्येवशब्दार्थः।

तथा हि- किमिदं दृश्यत्वम्, किं दृग्विषयत्वमुतास्वप्रकाशत्वम्। आद्येऽपि किं दृग् वृत्तिरूपा चिद्रूपा वा। नाऽद्यः। आत्मन्यनैकान्त्यात्, तस्यापि वेदान्तजनितवृत्तिविषयत्वात्। वृत्ति-जनितफलासम्बन्धान्नेति चेत्, फलं किं ज्ञातता व्यवहारो वा। आद्ये घटादावपि तदभावादसिद्धिः स्यात्। द्वितीये पुनरनैकान्त्यमेव। आत्मनोऽपि वृत्तिजन्यव्यवहारविषयत्वात्। चिद्रूपदृग्विषयत्वं तु घटादौ अस्माभिर्नाङ्गीक्रियत इति भागासिद्धिः। द्वितीये स्वप्रकाशत्वं वक्तव्यं यदभावो दृश्य-त्वम्। अवेद्यत्वमिति चेत्, तर्हि वेद्यत्वं दृश्यत्वमित्युक्तं स्यात्। तथा च पूर्वोक्तविकल्पदोषा-पातः। स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वप्रकाशत्वं तदभावो दृश्यत्वमिति चेत्तर्हि आत्मनोऽपि अद्वितीयत्वादिव्यवहारे संविदन्तरापेक्षासद्भावाद् व्यभिचारः। निर्विकल्पकस्वव्यवहारे संविदन्तरानपेक्ष आत्मेति चेत्तर्हि घटोऽपि तथैवेत्यसिद्धिः। घटे निर्विकल्पकव्यवहार एव नास्तीति चेत्, आत्मन्यपि स नास्त्येव। सुषुप्तौ अस्तीति चेन्न। तस्यापि निर्विकल्पकत्वे विवादात्। अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं स्वप्रकाशत्वमिति चेन्न। व्याहतत्वेनासम्भवित्वात्। कथञ्चिदव्याहतत्वेऽपि किं विशेषणाभावेन, उत विशेष्याभावेन, अथोभयाभावेन दृश्यत्वं निर्वक्तव्यम्। तत्राऽद्येऽवेद्यत्वाभावो वेद्यत्वमेव हेतुरस्तु किं विशेष्येण। तस्य चोक्तं दूषणम्। द्वितीये स्वरूपासिद्धिः। तृतीये व्यर्थविशेष्यत्वं विशेष्यासिद्धिश्चेति।

जडत्वमपि किमज्ञानत्वम्, उताज्ञातृत्वम्। नाऽद्यः। वृत्तिज्ञाने भागासिद्धत्वात्। आत्मनोऽपि ज्ञानत्वस्य निराकरिष्यमाणत्वेनानैकान्त्यात्। न द्वितीयः। आत्मनोऽप्यज्ञातृत्वात्। अहङ्कारस्य ज्ञातृत्वाङ्गीकारेण भागासिद्धेश्च। परिच्छिन्नत्वमपि देशतः कालतो वस्तुतो वा। न प्रथम-द्वितीयौ। सर्वगतेषु नित्येषु कालाकाशादिष्वसिद्धेः। तेषामपि परिच्छिन्नत्वे ब्रह्मणोऽप्यपरिच्छि-न्नत्वं कुतः? श्रुत्यादिकं तु उभयत्र समानम्। न तृतीयः। आत्मनोऽपि जडाद्भेदस्याङ्गीकृतत्वेन व्यभिचारात्। पारमार्थिको नाऽत्मनो भेदोऽस्तीति चेत्, स जगत्यपि नास्तीत्यसिद्धिः।

अस्य पटस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधनमप्यत्यन्ताभावस्य निष्प्रतियोगिक-त्वेन बाधितम्। एतत्तन्तुषु नास्तीति साधने सिद्धसाधनम्। कार्यकारणयोरभेदेन आधाराधेयभावा-भावात्। एतत्तन्तुकार्यो न भवतीति साधने अकार्यत्वान्यकार्यत्वसिद्ध्याऽर्थान्तरत्वात्। आका-शादिषु चैवं प्रयोगासम्भवेन सर्वजगन्मिथ्यात्वासिद्धिश्च। भेदत्वभेदसंवेदनत्वयोश्च सबाधत्वेन सोपाधिकत्वम्। तस्यापि तत एव साधने मिथ्यात्वेन सोपाधिकत्वमेव।

स्वान्तर्भेदहीनत्वमपि समुदायस्य समुदायाद् भेदाभावेनास्माकं सिद्धमेव। भेदहीनत्वमात्रसाधने दृष्टान्तस्य साध्यविकलता। यथाऽऽकाशसमुदायः समुदायिभेदरहितस्तथा जगत्समुदायोऽपीति साधने सिद्धसाधनम्। समुदायस्य समुदायिभ्योऽभिन्नत्वेन समुदायिभेदस्य समुदायेऽसत्त्वात्।

विमता आत्मानो देवदत्तान्न भिद्यन्त इति प्रतिज्ञा कल्पकैकजीवानिर्धारणे नोपपद्यते। आत्मत्वं च जातिर्वा ज्ञातृत्वं वा असिद्धमेव।

सर्वशरीरादीनां देवदत्तभोगायतनत्वादिसाधनेऽपि तत्र स्थितिमात्रसाधने सर्वगतत्वसिद्ध्या अर्थान्तरम्। तन्निमित्तसुखादिभोगसाधनेऽपि देवदत्तस्य परपुरप्रवेशसिद्ध्याऽर्थान्तरता। देवदत्तस्यैवेति विशेषणाददोषमिति चेद् ब्रह्मग्रहाधिष्ठिते शरीरेऽन्यस्य भोगाभावेन तद्भाव-सिद्ध्याऽर्थान्तरताऽपरिहारात्। सर्वदेति विशेषणे बाधः, सुप्त्यादावभावात्। जाग्रत्त्वविशेषणेऽपि दृष्टान्तस्य साध्यविकलता। तत्रापि कदाचिद् ब्रह्मग्रहानुप्रवेशसम्भवादित्यास्तां विस्तरः।

**(र.टि.) अस्माभिर्नाङ्गीक्रियत इति ॥** ब्रह्मशब्देन पूर्वं न ज्ञातमिदानीं ज्ञातमित्यनुभवेन ज्ञाततया अज्ञाततया वा चिद्रूपदृग्विषयत्वस्य ब्रह्मण्यपि सत्त्वेनानैकान्त्यप्रसङ्गात्साक्षाच्चिद्रूपदृग्विषयत्वं हेतुत्वेन वक्तव्यम्। तच्च घटादावस्माभिर्नाङ्गीकृतमिति भावः । नन्ववेद्यत्वं नाम फलाव्याप्यत्वम्, अपरोक्षव्यवहारविषयत्वन्तु वृत्ति-विषयत्वेन भविष्यतीत्यत आह- **कथञ्चिद्व्याहतत्वेऽपीति ॥** फलव्याप्यत्वस्य प्रागेव दूषितत्वात्कथञ्चिदि-त्युक्तम् । **विशेषणाभावेनेति ॥** अपरोक्षव्यवहारविषयत्वरूपविशेष्यसत्त्वमङ्गीकृत्यावेद्यत्वरूपविशेषणा-भावेनेत्यर्थः । तथा चावेद्यत्वाभावे सत्यपरोक्षव्यवहारविषयत्वविशिष्टं दृश्यत्वमिति फलितोऽर्थः । एवं विशेष्या-भावेनेत्यत्रापि विशेषणमवेद्यत्वमङ्गीकृत्य विशेष्यापरोक्षव्यवहारविषयत्वाभावेन दृश्यत्वनिर्वचनेऽवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वाभावो दृश्यत्वमिति फलितोऽर्थः। तथा चोभयाभावेनेत्यत्राप्यवेद्यत्वाभावे सत्यपरोक्षव्यवहारविषयत्वाभावरूपं विशिष्टं दृश्यत्वमिति फलितोऽर्थः । तथा च प्रथमपक्षे व्यर्थविशेष्यत्वस्य, द्वितीयपक्षे स्वरूपासिद्धेः, तृतीयपक्षे व्यर्थविशेष्यत्वविशेष्यासिद्ध्योर्दूषणत्वं सङ्गच्छत इति द्रष्टव्यम्। नन्ववेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वलक्षणविशिष्टस्याभावो दृश्यत्वमभिप्रेतम् । विशिष्टाभावश्च घटादौ फलव्याप्यत्व-लक्षणावेद्यत्वरूपविशेषणाभावेन, धर्मादौ तु विशेष्याभावेनेत्यनुगत इति नोक्तदोषावकाश इति चेन्न। उक्तरीत्या फलस्य दूषितत्वेन घटादौ विशेष्यवद्विशेषणस्यापि सत्त्वेनापरोक्षैकरससाक्षिसाक्षाद्विषयाविद्यादौ विशेषण-वद्विशेष्यस्यापि सत्त्वेनोक्तविशिष्टाभावरूपदृश्यत्वाभावेन भागासिद्धेरिति भावः । **निष्प्रतियोगिकत्वेन ॥** असत्प्रतियोगिकत्वेनेत्यर्थः । **बाधितमिति ॥** पटस्यासत्त्वाभावस्य प्रमितत्वादिति भावः । **कल्पकजीवा-निर्धारण इति ॥** एकजीववादिमत आत्मनां कल्पकजीवाभेदः साधनीयः । कल्पकजीवानिर्धारणे तु देवदत्तादिति विशिष्य प्रतिज्ञा नोपपद्यत इति भावः । **असिद्धमेवेति ॥** एकमेव शरीरं सजीवम्, अन्यानि तु निर्जीवानीति वदता एकजीववादिना पक्षीभूतानामात्मशब्दवाच्यानां जडत्वाङ्गीकारादिति भावः ।

**(रा.टि.)** 'यच्च प्रमाणदृष्टानाम्' इत्येतदवतारिकायामुक्तानुमानेषु सदसद्वैलक्षण्ये प्रमाणाभावादित्यादिना प्रतिज्ञांशं निरस्तं मत्वा हेतूनपाकरोति- **किमिदमित्यादिना ॥ नेति चेदिति ॥** वृत्तिविषयत्वमित्यनुषङ्गः । **नाङ्गीक्रियत इति ॥** वृत्तिद्वारा चिद्रूपसाक्षिविषयत्वाङ्गीकारेऽपि घटाद्याकारापरोक्षवृत्त्यभिव्यक्ताधिष्ठानचैत-न्योपरागरूपचिद्विषयत्वं पराभिमतं नाङ्गीक्रियत इत्यन्यतरासिद्धो हेतुरिति भावः। सुखादौ चिद्विषयत्वाङ्गीकाराद् भागेत्युक्तम्। अस्मद्भागेऽसिद्धिरिति वा। अप्रस्तुतं किं पृच्छ्यत इत्यत आह - **यदभाव इति ॥ इति पूर्वो-(रा.टि.) क्तेति ॥** दृग्वृत्तिरूपा चिद्रूपा वा इत्युक्तविकल्पानां तद्दोषाणा (श्चापात) मापात इत्यर्थः । **संविदन्त-रापेक्षासद्भावादिति ॥** 'एकमेवाद्वितीयम् ' इत्यादिवाक्यजन्यसंविदन्तरेत्यर्थः । **विवादादिति ॥** सुखमह-मस्वाप्सं, दुःखं नाज्ञासिषमिति कालसुखदुःखाज्ञानगोचरौत्तरिकानुस्मृतिबलेन प्रागपि कालादिविशिष्टात्मानु-भवादेरङ्गीकार्यत्वात्। तथा चासिद्धिरनैकान्तिको वेति भावः । **व्याहतत्वेनेति ॥** वेद्यस्यैव व्यवहारविषयत्वादिति भावः। ननु चिदवेद्यत्वमत्र विवक्षितम्। वृत्तिवेद्यतया व्यवहारविषयता। अतो न व्याहततेत्यत आह- **कथञ्चि-दिति ॥** अस्तु तथैवेत्यत आह- **तस्य चोक्तं दूषणमिति ॥** भागासिद्धिरूपदूषणमुक्तमित्यर्थः । **द्वितीय इति ॥** चिदवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वाभावपक्षे नित्यातीन्द्रियस्यापि योगिनामपरोक्षव्यवहारविषयत्वात् स्वरूपासिद्धिरित्यर्थः। **तृतीय इति ॥** चिद्वेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमिति पर्यवसितपक्षे विशेषणेनैव पूर्तेरिति भावः । अस्तु विशेषणमात्रमित्यत आह- **विशेषणासिद्धिश्चेति ॥** भागासिद्धिरित्यर्थः। **अज्ञानत्व-मिति ॥** ज्ञानरूपत्वाभावः। **निराकरिष्यमाणत्वेनेति ॥** परिच्छेदान्ते ' न च स्वेनापि ज्ञेयत्वं तैरुच्यते' इत्यादिनेति भावः ।

ननु ब्रह्मणोऽपरिच्छिन्नत्वम् 'अनन्तं ब्रह्म' इति श्रुत्यादिप्रसिद्धमिति चेत् 'आकाशवत्सर्वगतश्च नित्यः', 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इत्याकाशादावप्यस्तीत्याह- **श्रुत्यादि त्विति ॥ जडाद्भेदस्येति ॥** वस्तुपरिच्छेदस्य भेदरूपत्वादिति भावः । परीत्येयमुक्तिः । **निष्प्रतियोगिकत्वेनेति ॥** अयं पटः एतत्तन्तु-निष्ठा-त्यन्ताभावप्रतियोगी पटत्वादिति प्रागुक्तानुमानेन पटादेरत्यन्ताभावप्रतियोगित्वसाधने निस्स्वरूपत्वमेव साधितं स्यात् । अत्यन्ताभावस्य निस्स्वरूपशशशृङ्गादिप्रतियोगिकत्वात् । तथा च बाधितमनुमानं स्यादित्यर्थः। प्रागुक्तभेदत्वभेदसंवेदनत्वानुमानयोरपि दुष्टतामाह- **भेदत्वेति ॥ सबाधत्वेनेति ॥** नास्ति भेद इति बाध-प्रत्ययसाहित्यरूपोपाधिना सोपाधिकत्वमित्यर्थः । **सोपाधिकत्वमेवेति ॥** एकदोभयसाधने त्वर्थान्तरम्, एकदो-भयत्राविवादादिति भावः । विमतं तात्विकस्वान्तर्भेदहीनमिति प्रागुक्तानुमानं च निराह- **स्वान्तर्भेदेति ॥** विमतपदेन

हि परमते जगत्समुदायोऽभिमतः । स च स्वान्तर्भेदहीन इत्यस्य स्वप्रतियोगिकभेदवान् स्वयं न भवतीति वाऽर्थः, यत्किञ्चिन्निरूपितभेदोऽपि स्वस्मिन्नास्तीति वा । आद्ये सिद्धसाधनतामाह- **समुदाय-स्येति ॥** अन्त्ये आह- **भेदहीनत्वेति ॥** घटादिभेदस्य तत्रापि सत्त्वादिति भावः । जीवैक्यानुमानान्यपि प्रागुक्तानि निराह- **विमता इति ॥ कल्पकैकजीवानिर्धारण इति ॥** देवदत्त इत्यनिर्धारणे सति देवदत्तान्न भिद्यन्त इत्युक्तिर्बाधिता । अन्यस्य कल्पकत्वेऽस्य कल्पितत्वेन तद्भेदस्यैव सर्वेण वाच्यत्वादिति भावः । हेतुं च निराह- **आत्मत्वं चेति ॥ असिद्धमेवेति ॥** एकस्यैवाऽत्मत्वेनान्येषां जडत्वादिति भावः । **आस्तां विस्तर इति ॥** प्रपञ्चस्तु दृश्यत्वाद्यनुमानभङ्गे जीवैक्यानुमानभङ्गे च न्यायामृते वादावल्यां च ध्येयः ।

**( श्री. टि .) चिद्रूपा वेति ॥** वृत्तिप्रतिबिम्बितचैतन्याभिव्यक्ताधिष्ठानचैतन्यरूपा या दृक् तद्विषयत्वं दृश्यत्व-मित्यर्थः । ननु वृत्तिविषयत्वं नाम न ज्ञानविषयत्वं किन्नाम वृत्तिजन्यफलाश्रयत्वम् । ततश्च न ब्रह्मणि व्यभिचार इति शङ्कते- **वृत्तिजनित इति ॥ तदभावादिति ॥** ज्ञानव्यतिरिक्तज्ञाततायां मानाभावादिति भावः । आत्मन्य-नैकान्त्यमुपपादयति- **आत्मनोऽपीति ॥ वृत्तीति ॥** वेदान्तजन्यवृत्तीत्यर्थः । अन्यथा वेदान्तानां वैयर्थ्यं स्यात् । ब्रह्मजिज्ञासेत्यादौ कर्मणि षष्ठी, 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ तव्यादिश्च न स्यादिति भावः । **चिद्रूपेति ॥** अत्र चिद्रूपदृग्विषयत्वं किं परम्परया विवक्षितं साक्षाद्वा । नाऽद्यः । यथा अतीन्द्रियं धर्मादिकं पूर्वं न ज्ञातम् इदानीं तु वेदान्तेन ज्ञातमित्यनुभवेन ज्ञानावच्छेदकत्वेन वा अज्ञानावच्छेदकत्वेन वा चिद्विषयत्वं तत्रास्ति, एवं शुद्धं ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन ज्ञाततया अज्ञाततया वा चिद्रूपदृग्विषयत्वस्य ब्रह्मण्यपि सत्त्वेनानैकान्त्यप्रसङ्गात् । न द्वितीयः । तस्याप्रामाणिकत्वेन घटादावप्यस्माभिरनङ्गीकाराद्भागा-सिद्धिरिति भावः । **द्वितीये** अस्वप्रकाशत्वं दृश्यत्वमिति पक्षे । **पूर्वोक्तेति ॥** वेद्यत्वं किं वृत्तिवेद्यत्वं विवक्षितं चिद्वेद्यत्वं वेति पूर्वोक्तरीत्या विकल्पदोषाऽपात इत्यर्थः । स्वरूपमात्रव्यवहारे स्वाख्यसंवित्सापेक्षताया एव सत्त्वेनासम्भवः स्यादतः स्वातिरिक्तेत्युक्तम् । **संविदन्तरेति ॥** विशेषणोपनायकैकमेवाद्वितीयमित्यादि-मानान्तरजन्यसंविदन्तरेत्यर्थः । **निर्विकल्पकेति ॥** अद्वितीयत्वादिविशिष्टव्यवहारे विशेषणोपनायकमाना-पेक्षासद्भावेऽपि निर्विकल्पकस्वव्यवहारे निष्प्रकारकस्वरूपमात्रव्यवहार इति यावत्, तदनपेक्ष आत्मेत्यर्थः । **तथैवेति ॥** घटत्वादिविशिष्टव्यवहारे घटादेः स्वातिरिक्तसंविदन्तरापेक्षत्वेऽपि न निर्विकल्पकव्यवहारे तदपेक्षेत्य-सिद्धिरित्यर्थः । **विवादादिति ॥** एतावन्तं कालं सुखमहमस्वाप्समित्यौत्तरिकानुस्मृतिबलेन सुषुप्तौ सुखादि-विशिष्टतयैवानुभवसिद्ध्या निर्विकल्पकाऽत्मस्वरूपमात्रानुभवस्यासिद्धत्वादिति भावः । नन्ववेद्यत्वं नाम फलाव्याप्यत्वम् अपरोक्षव्यवहारविषयत्वं तु वृत्तिविषयत्वेन भविष्यतीत्यत आह - **कथञ्चिदव्याहतत्वेऽ-पीति ॥** फलव्याप्यत्वस्य प्रागेव दूषितत्वात्कथञ्चिदित्युक्तम् । **विशेषणाभावेनेत्यादि ॥** अपरोक्षव्यवहार-विषयत्वरूपविशेष्यसत्त्वमङ्गीकृत्य अवेद्यत्वरूपविशेषणाभावेनेत्यर्थः । तथा चावेद्यत्वाभावे सत्यपरोक्षव्यवहार-विषयत्वं दृश्यत्वमिति फलितोऽर्थः । एवं विशेष्याभावेनेत्यत्रापि विशेषणमवेद्यत्वमङ्गीकृत्य विशेष्यभूतापरोक्ष-व्यवहारविषत्वाभावेन दृश्यत्वनिर्वचनेऽवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वाभावो दृश्यत्वमिति फलितोऽर्थः । तथोभयाभावेनेत्यत्रापि अवेद्यत्वाभावे सत्यपरोक्षव्यवहारविषयत्वाभावो दृश्यत्वमिति फलितोऽर्थः । तथा च प्रथमपक्षे व्यर्थविशेष्यत्वस्य, द्वितीयपक्षे स्वरूपासिद्धेः, तृतीयपक्षे व्यर्थविशेष्यत्वविशेष्यासिद्ध्योर्दूषणत्वकथनं सङ्गच्छत इति द्रष्टव्यम् । **तस्य चोक्तं दूषणमिति ॥** वेद्यत्वमात्रस्य च ब्रह्मणि व्यभिचाररूपं दूषणमुक्तमि-त्यर्थः । **व्यर्थविशेष्यत्वमिति ॥** व्यावर्त्याभावादिति भावः । तर्हि न तद्विशेषणमिति चेत्तत्राऽह-**विशेष्यासिद्धि-श्चेति ॥ निराकरिष्यमाणत्वेनेति ॥** 'न च स्वरूपमन्यद्वा ज्ञेयम्' इत्यादिनेत्यर्थः । **अज्ञातृत्वादिति ॥** आत्मनो निर्धर्मकत्वेन तत्र ज्ञातृत्वाभावाद् व्यभिचार इत्यर्थः । कल्पितज्ञातृत्वमादाय व्यभिचारपरिहारे त्वाह- **अहङ्कारस्येति ॥** तस्यापि पक्षनिविष्टत्वेन तत्राज्ञातृत्वाभावादिति भावः । **वस्तुत इति ॥** वस्त्वन्तरप्रतियोगिको **(श्री.टि.)** भेद इत्यर्थः । देशतः परिच्छिन्नत्वाभावोपपादनाय सर्वगतेष्वित्युक्तम् । कालतः परिच्छिन्नत्वा-भावोपपादनाय नित्येष्वित्युक्तम् । आकाशादिष्वित्यादिपदेन प्रकृतिवर्णयोर्ग्रहणम् । ननु 'स एवाधस्तात् स उपरिष्टात्स सर्वतो महतो महीयान्' 'अन्तर्बहिश्च तत्सर्वं व्याप्य' 'अजो नित्यः शाश्वतः' इत्यादिश्रुत्या 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्' इत्यादिस्मृत्या च ब्रह्मणो देशतः कालतश्चापरिच्छिन्नत्वं सिद्ध्यतीति चेत्तत्राऽह- **श्रुत्यादिकन्तूभयत्र समानमिति ॥** 'कालश्च नित्यः प्रकृतिश्च नित्या' 'यावद्ब्रह्म विष्ठितं तावती वाक्' 'गौरनाद्यन्तवती' इत्यादिश्रुतिः 'यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । न कालादेः परिच्छेदो देशतः कालतस्तथा' इत्यादिस्मृतिः कालादेरप्यपरिच्छिन्नत्वेऽस्तीति समानमित्यर्थः । कालादेरपरिच्छिन्नत्वे साक्षिप्रत्यक्षं सदा सर्वत्र देशकालौ इत्यबाधितप्रतीतिश्च प्रमाणमित्यपि द्रष्टव्यम् । **असिद्धिरिति ॥** वस्त्वन्तरप्रतियोगिक-पारमार्थिकभेदवत्त्वरूपपरिच्छिन्नत्वस्य पक्षीभूते जगत्यप्यभावादसिद्धिरित्यर्थः ।

अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात्पटान्तरवदिति प्रगाशङ्कितमनुमानं दूषयति -**अस्येति ॥ निष्प्रतियोगिकत्वेनेति ॥** असत्प्रतियोगिकत्वेनेत्यर्थः। **बाधितमिति ॥** पटेऽसत्त्वाभावस्यैव प्रमितत्वादिति भावः। **अकार्यत्वेति ॥** सर्वथाऽकार्यत्वस्य 'विशेषनिषेधः शेषविध्यनुमापकः' इति न्यायेनान्यकार्यत्वस्य वा सिद्धचेत्यर्थः । **एवं प्रयोगेति ॥** पटादेस्सोपादानत्वेन तन्निष्ठात्यन्ताभावप्रतियोगित्व-मुक्तानुमानेन यथा साधितमेवमाकाशादिकं पक्षीकृत्यायमाकाशादिरेतन्निष्ठात्यन्ताभावप्रतियोगीति साधयितुं न शक्यते । तस्य निरुपादानत्वादिति भावः । भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत्, विवादपदं भेदसंवेदनं भ्रान्तिः भेदसंवेदनत्वात् चन्द्रभेदसंवेदनवदित्यनुमानद्वयं दूषयति- **भेदत्वेति ॥ सबाधत्वेनेति ॥** दृष्टान्ते चन्द्रभेदादौ साध्यव्यापकतत्वात् साधनवतः पक्षाद्व्यावृत्तत्वेन साधनाव्यापकत्वाच्चेति भावः। **तस्यापीति ॥** भेदत्वादिहेतुनैव पक्षे सबाधत्वं साध्यते। तथा च साधनव्यापकत्वान्नायमुपाधिरित्यर्थः। **मिथ्यात्वेनेति ॥** तथा च सबा(ध्यत्वे)धत्वे साध्ये मिथ्यात्वमुपाधिरित्यर्थः । यथा मैत्रीतनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वमुपाधिः तस्मिन्साध्ये श्यामत्वमित्यन्योन्योपाधिभावेनाप्यनुमानयोर्दुष्टत्वमेवं प्रकृतेऽपीति भावः। विमतं तात्त्विकस्वान्तर्भेदहीनं मतत्वाद्गगनवदित्यनुमानं दूषयति- **स्वान्तर्भेदहीनत्वमपीति ॥** विमतमित्यनेन वियदादिसमुदायस्य पक्षतयाऽभिप्रेतत्वात्समुदायः स्वान्तर्भेदशून्यो भवत्येव । स्वस्य स्वेनाभेदस्यैव सत्त्वेन भेदाभावात् सिद्धसाधनते-त्यर्थः। तर्हि स्वान्तरिति विशेषणं परित्यज्य भेदहीनत्वमात्रमेव साध्यत इति चेत्तर्हि गगनरूपे दृष्टान्ते घटादि-भेदस्यैव सत्त्वेन साध्यवैकल्यं स्यादित्याह- **भेदहीनत्वमात्रेति ॥** स्वान्तर्भेदहीनत्वमित्यस्य तात्पर्यान्तरमाशङ्क्य निराकरोति- **यथाऽऽकाशेति ॥** जगत्समुदायोऽपि समुदायिभूताज्जगतो भेदशून्य इत्यर्थः। **साधन इति ॥** समुदायत्वहेतुनेति शेषः । अत्राऽकाशस्यैकत्वेनासमुदितत्वाद् 'यथाऽऽकाशसमुदायः' इत्यादिकमयुक्तमिति दूषणं बहिरेव द्रष्टव्यमित्यभिप्रेत्य दूषणान्तरमाह- **सिद्धसाधनमिति ॥** तदुपपादयति- **समुदायस्येति ॥** समुदायस्य समुदायिभ्यो भेदाभावसाधनेऽभेदस्यैव प्राप्त्या सिद्धसाधनत्वादित्यर्थः ।

**( श्री. टि .)** विमता आत्मानो देवदत्तान्न भिद्यन्त आत्मत्वाद्देवदत्तवदित्यनुमानं दूषयति- **विमता इति ॥ कल्पकैकजीवानिर्धारण इति ॥** एकजीववादिमते आत्मनः कल्पकैकजीवाभेदः साधनीयः। कल्पकैक-जीवानिर्धारणे च देवदत्तान्न भिद्यन्त इति विशिष्य प्रतिज्ञा नोपपद्यत इति भावः । **असिद्धमेवेति ॥** एकमेव शरीरं सजीवम् अन्यानि तु निर्जीवानीति वदतैकजीववादिना पक्षीभूतानामात्मशब्दवाच्यानां जडत्वाङ्गीकारेण तेष्वात्मत्वजातेर्वा ज्ञातृत्वस्य वाऽसिद्धत्वादिति भावः । अनेन जीवाः परमात्मनस्तत्त्वतो न भिद्यन्त आत्मत्वात् परमात्म-वदित्यन्तिमानुमानमपि प्रत्युक्तं वेदितव्यम्। विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वात् सम्मतदेवदत्तशरीरवत्। एवं विमतानि इन्द्रियाणि प्रत्येकं समुदितानि च पक्षीकृत्य प्रयोक्तव्यमित्युक्तं दूषयति- **सर्वशरीरादीनामिति ॥** आदिपदेनेन्द्रियाणां ग्रहणम्। **साधनेऽपीति ॥** भोगायतनत्वादिसाधकानुमानेऽपी-त्यर्थः। **परपुरप्रवेशेति ॥** योगसामर्थ्येन परपुरप्रवेशेन भोगसिद्ध्या ऐक्यासिद्धेरर्थान्तरतैवेत्यर्थः । **देवदत्तस्यै-वेति ॥** तथा च न परपुरप्रवेशसिद्ध्याऽर्थान्तरता। परपुरप्रवेशस्थले द्वयोर्भोगसद्भावादत्र पुनरेकस्यैव भोगसाधनादिति भावः। **तद्भावसिद्धेति ॥** ब्रह्मग्रहवद्देवदत्तस्येतरदेहेष्वधिष्ठातृत्वेन भोगसिद्ध्या ऐक्या-सिद्धेरर्थान्तरत्वादित्यर्थः । न हि ब्रह्मग्रहस्य स्वाधिष्ठितशरीरस्थजीवेनैक्यमस्तीति भावः। **सर्वदेतीति ॥** सर्वशरीराणां सर्वदा देवदत्तस्यैव भोगायतनत्वं साध्यते। तथा च न देवदत्तस्य ब्रह्मग्रहसाम्यम्। ब्रह्मग्रहस्य सर्वदा तच्छरीरे भोगाभावात्। तथा चैक्यमेव सिध्यतीति भावः। **जाग्रत्त्वेति ॥** जाग्रदवस्थायां सर्वदा देवदत्तस्य भोगायतनानीति साध्यत इत्यर्थः। **दृष्टान्तस्येति ॥** दृष्टान्तीकृते देवदत्तशरीरे उक्तसाध्याभावात्साध्यवैकल्य-मित्यर्थः। उक्तसाध्याभावः कुत इत्यत आह- **तत्रापीति ॥** देवदत्तशरीरेऽपीत्यर्थः। **ब्रह्मग्रहेति ॥** तथा च जाग्रदवस्थायां सर्वदा देवदत्तस्यैव भोगायतनत्वं नास्ति ब्रह्मग्रहस्यापि भोगसद्भावादिति भावः।

**(पां.टि.)** ननु विरोधयुक्तीनां समाप्तत्वादेवायमुपरमः किं न स्यात्, किं तन्निमित्तान्तरकल्पनयेत्यतोऽधिका विरोधयुक्तीः स्वयमाह- **तथाऽपीति ॥** अनैकान्त्यमुपपादयति- **तस्यापीति ॥** अन्यथा ब्रह्मपराणां वेदान्ता-नामानर्थक्यप्रसङ्गादिति भावः। ननु वृत्तिविषयत्वं वृत्तिजनितफलयोगित्वम्। तच्च ब्रह्मणि नास्तीति न व्यभिचार इति शङ्कते- **वृत्तिजनितेति ॥ घटादावपीति ॥** मद्रीत्येति शेषः। उपलक्षणं चैतत्। पररीत्याऽतीतादा-वभावादित्यपि द्रष्टव्यम्। व्यवहारोऽप्यादानादिर्विवक्षितोऽभिलपनलक्षणो वा। नाऽद्यः। गगनादौ तदभावेन भागासिद्धिः स्यादित्यभिप्रेत्य द्वितीयं दूषयति- **द्वितीय इति ॥** तदुपपादयति- **आत्मनोऽपीति ॥** वेदान्त-जन्याभिलपनलक्षणव्यवहारविषयत्वादित्यर्थः । चिद्रूपदृग्विषयत्वमपि यथाकथञ्चिद्वा विवक्षितं साक्षाद्वा। नाऽद्यः । नित्यातीन्द्रियं पूर्वं न ज्ञातमिदानीं शब्देन ज्ञातमितिवच्छुद्धं ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन ब्रह्मण्यपि तस्य

सत्त्वेनानैकान्त्यापातादित्यभिप्रेत्य द्वितीयं दूषयति- **चिद्रूपेति ॥** साक्षादिति शेषः। अस्माभिरित्युपलक्षणम्। आत्मनीव घटादावपि तदाकारवृत्त्यैव तदज्ञाननिवृत्त्युपपत्त्याऽसिद्धिप्रसङ्गेन परैरपि तस्यानङ्गीकर्तव्यत्वादित्यपि द्रष्टव्यम्। न च घटादेरापरोक्ष्यसिद्ध्यर्थं चिद्विषयत्वं परैरवश्यमङ्गीकर्तव्य-**(पां.टि.)** मेवेति वाच्यम्। चैतन्याभिव्यञ्जकत्वार्थमावश्यकेनेन्द्रियजन्यत्वप्रयुक्तेन वृत्तिगतेन साक्षात्कारत्व-रूपविशेषेणैव चैतन्याविषयस्यापि घटादेरापरोक्ष्यसम्भवादित्याशयात्। **वक्तव्यमिति ॥** निर्वक्तव्यमित्यर्थः। निर्वक्तव्यत्वे हेतुमाह-**यदभाव इति ॥** स्वप्रकाशत्वनिरुक्तिं शङ्कते-**अवेद्यत्वमिति ॥ इत्युक्तं स्यादिति ॥** वेद्यत्वस्यैवावेद्यत्वरूपस्वप्रकाशत्वाभावरूपास्वप्रकाशत्वरूपत्वादिति भावः। अस्तु तर्हि तदेव दृश्यत्वमित्यत आह- **तथा चेति ॥** वेदनं किं वृत्तिः किं वा चित्। नाऽद्यः। आत्मन्यनैकान्त्यात्। न द्वितीयः। तस्य घटादा-वभावादिति पूर्वोक्तविकल्पदोषापात इत्यर्थः। स्वप्रकाशत्वस्य निरुक्त्यन्तरं शङ्कते- **स्वव्यवहार इति ॥** किमत्र स्वविषयकव्यवहारमात्रं विवक्षितं स्वरूपमात्रव्यवहारो वेति विकल्पं मनसि निधायाऽद्यं दूषयति- **तर्हीति ॥** आत्मनोऽप्यद्वितीयत्वस्वप्रकाशत्वादिविशिष्टव्यवहारे स्वातिरेकिवेदान्तजन्यसंविदन्तरापेक्षा-नियतिसद्भावाद्व्यभिचारः इत्यर्थः। अस्तु तर्हि स्वव्यवहारशब्देन स्वरूपमात्रव्यवहार एव विवक्षित इति द्वितीयः। आत्मनि स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टव्यवहारे विशेषणोपनायकमानापेक्षानियमेऽपि स्वरूपमात्रव्यवहारे तदपेक्षाऽभावेन तत्र व्यभिचाराप्रसङ्गादिति शङ्कते- **निर्विकल्पकेति ॥ असिद्धिरिति ॥** घटस्यापि घटत्वादि-विशिष्टव्यवहारे विशेषणोपनायकमानापेक्षानियमेऽपि स्वरूपमात्रव्यवहारे तदपेक्षाऽभावेनासिद्धिः स्यादित्यर्थः।

घटे विशिष्टव्यवहारातिरिक्तस्वरूपमात्रगोचरव्यवहारस्यैवाभावाद्विशिष्टव्यवहारे च विशेषणोपनायक-मानापेक्षानियमान्नासिद्धिरिति शङ्कते- **घट इति ॥** आत्मन्यपि स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टव्यवहारातिरिक्त-स्वरूपमात्रगोचरव्यवहारासम्भवाद्विशिष्टव्यवहारे च विशेषणोपनायकमानापेक्षानियमात्तत्र व्यभिचार एवेति भावेनाऽह- **आत्मन्यपीति ॥** नन्वात्मनि सौषुप्तिकव्यवहारस्यैव स्वप्रकाशत्वाद्वितीयत्वादिविशिष्टव्यवहाराति-रिक्तस्वरूपमात्रगोचरव्यवहारत्वात्तत्र च संविदन्तरानपेक्षतया न तत्र व्यभिचार इति शङ्कते- **सुषुप्ताविति ॥ विवादादिति ॥** एतावन्तं कालं सुखमहमस्वाप्समिति परामर्शेन तस्य विशिष्टत्वेनैव सिद्ध्या स्वरूपमात्र-गोचरत्वासम्प्रतिपत्तेरिति भावः। **व्याहतत्वेनेति ॥** अवेद्यत्वेन विषयत्वं प्रतिषिध्य पुनर्विषयत्वोक्तेर्व्याहतत्वा-दित्यर्थः। नन्ववेद्यत्वं फलाव्याप्यत्वम्। न वृत्त्यविषयत्वम्। अपरोक्षव्यवहारविषयत्वं तु वृत्तिविषयत्वमेव। तथा च न व्याघात इत्यत आह- **कथमिति ॥ विशेषणाभावेनेत्यादि ॥** यद्यपि विशेषणाभावेनेत्यादेरवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वरूपविशिष्टाभावः किमपरोक्षव्यवहारविषयत्वरूपविशेष्यमङ्गीकृत्यावेद्यत्वरूप-विशेषणाभावमात्रप्रयुक्तोऽभिमतः, उत सत्यप्यवेद्यत्वेऽपरोक्षव्यवहारविषयत्वरूपविशेष्याभावप्रयुक्तः, किं वाऽवेद्यत्वरूपविशेषणस्यापरोक्षव्यवहारविषयत्वरूपविशेष्यस्य च चाभावमभिप्रेत्य वेति सर्वसम्मतत्वात् प्रसिद्धोऽर्थः। तथाच प्रथमपक्षे व्यर्थविशेष्यत्वस्य, द्वितीये स्वरूपासिद्धेः, तृतीयपक्षे व्यर्थविशेष्यत्वविशेष्या-सिद्ध्योश्चाप्रसङ्गात्तदभिधानमसङ्गतमेव। विशेषणाभावप्रयुक्तविशिष्टाभावाभिप्रायकत्वे घटादेश्चैतन्यविषयत्वा-भावेन विशेष्यवद्विशेषणस्यापि सत्त्वादसिद्धेरेव, विशेष्याभावप्रयुक्तविशिष्टभावाभिप्रायकत्वे साक्षिवेद्यसुखादौ भागासिद्धेरेव, उभयाभावप्रयुक्तविशिष्टाभावाभिप्रायकत्वे घटादावसिद्धेरेव प्रसक्त्या व्यर्थविशेष्यत्वस्वरूपा-**(पां.टि.)** सिद्ध्यादेरप्रसङ्गात्। तथाऽपि विशेषणाभावेनेत्यत्रापरोक्षव्यवहारविषयत्वरूपविशेष्यसत्त्वमङ्गी-कृत्यावेद्यत्वरूपविशेषणाभावेनेत्येवार्थः। तथा चावेद्यत्वाभावे सत्यपरोक्षव्यवहारयोग्यत्वमेवास्वप्रकाशत्वमिति फलितोऽर्थः। एवं विशेष्याभावेनेत्यत्र विशेषणमवेद्यत्वमङ्गीकृत्य विशेष्यापारोक्ष्यव्यवहारविषयत्वाभावेनेत्ये-वार्थः। ततश्चावेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वाभाव एवास्वप्रकाशत्वमिति फलितोऽर्थः। तथोभयाभावेने-त्यत्राप्यवेद्यत्वरूपविशेषणस्यापरोक्षव्यवहारविषयत्वरूपविशेष्यस्य चाभावेनेत्यर्थः। तथा चावेद्यत्वाभावे सत्यपरोक्षव्यवहारविषयत्वाभाव एवास्वप्रकाशत्वमिति फलितोऽर्थः। तथा च प्रथमपक्षे व्यर्थविशेष्यत्वस्य द्वितीयपक्षे स्वरूपासिद्धेः तृतीयपक्षे व्यर्थविशेत्वविशेष्यासिद्ध्योश्च प्रसङ्गान्नात्र ग्रन्थे तदभिधानासङ्गतिरिति द्रष्टव्यम्। अस्तु तर्हि तावान्मात्रस्यैव हेतुत्वमित्यत आह- **तस्य चेति ॥** 'वेद्यत्वं हि न वृत्तिविषयत्वम्। तथा सत्यात्मन्यनैकान्त्यापातात्। नापि चिद्विषयत्वम्। घटादौ तदभावेनासिद्ध्यापातात्' इति दूषणमुक्तमित्यर्थः।

नन्वन्तःकरणे ज्ञानत्वोपचाराद् वृत्तिरज्ञप्तिरिति परग्रन्थानुरोधेन वृत्तेरज्ञप्तित्वेन ज्ञानत्वस्यैवाभावेना-ज्ञानत्वसिद्धेः न वृत्तिभागेऽज्ञानत्वस्य भागासिद्धिरित्यतः, तथा सति परोक्षवृत्त्या स्वविषयेऽज्ञाननिवृत्ति-व्यवहारस्मृत्यभावप्रसङ्गः,

अज्ञाननिवृत्त्यादेर्ज्ञप्तिकार्यत्वात् । धर्माधर्मादिकं जानामीत्यनुभवश्च न स्यात्, इत्यादिदोषगणे सत्यपि स्पष्टत्वात्तमुपेक्ष्य दोषान्तरमेवाऽह- **आत्मनोऽपीति ।।** ज्ञातृज्ञेयशून्यत्वेनेति शेषः । **निराकरिष्यमाणत्वादिति ।।** 'न च स्वरूपभूतं ज्ञातारं ज्ञेयं वा विना ज्ञानं दृष्टम्' इत्यादिनेति शेषः । **अज्ञातृत्वादिति ।।** ज्ञातृत्वस्य ज्ञानज्ञेयसापेक्षत्वेन सद्वितीयत्वप्रसक्त्या कर्तृत्वे क्रियावेशेन विकारित्वप्रसक्त्या च परेणात्मनो ज्ञातृत्वानङ्गीकारेण तस्याज्ञातृतया तत्रानैकान्त्यप्रसङ्गादिति भावः । न चाऽत्मन्यपि कल्पितस्य ज्ञातृत्वस्य विद्यमानत्वान्नानैकान्त्यमिति वाच्यम् । कल्पितेन हेत्वभावेन व्यभिचारपरिहारेऽतिप्रसङ्गात् । **अहङ्कारस्येति ।।** पक्षनिक्षिप्तस्येति शेषः । ननु देशकालादीनां सर्वगतत्वाद्यभावात्तेषामपि परिच्छिन्नत्वेन न तत्र भागासिद्धिरित्यतः, माऽस्तु तर्हि भागासिद्धिः, सत्यस्य ब्रह्मणोऽपि सर्वगतत्वाद्यभावेन देशतः कालतश्च परिच्छिन्नतया तत्रानैकान्त्यमवर्जनीयमेवेत्याह- **तेषामपीति ।।** ननु च ब्रह्मणः श्रुत्यादिना सर्वगतत्वसिद्ध्या परिच्छिन्नत्वाभावेन हेतोरेवागमनान्नानैकान्त्यमित्यतः आकाशरूपदेशकालादेरपरिच्छिन्नत्वेनैव धर्मिग्राहि-णैव साक्षिणा 'आकाशवत्सर्वगतश्च नित्यः', 'सदेव सौम्येदमग्रे', 'दृष्ट्वैव तं मुच्यते', 'अथ मर्त्योऽमृतो भवति', 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिश्रुत्या सदा सर्वत्र कार्यदर्शनादियुक्त्या च सर्वगतत्वादिसिद्ध्या परिच्छिन्नत्वाभावसिद्धेर्भागासिद्धिरपरिहार्यैवेति भावेनाऽह- **श्रुत्यादिकन्त्विति ।। आत्मन इति ।।** वस्तु-भिन्नत्वरूपवस्तुपरिच्छिन्नत्वस्याऽत्मन्यपि सत्त्वादिति भावः । **निष्प्रतियोगित्वेनेति ।।** असत्प्रतियोगि-त्वेनेत्यर्थः । **बाधितमिति ।।** पटासत्त्वाभावस्य प्रमितत्वादिति भावः । सिद्धसाधनमेवोपपादयति- **कार्य-कारणयोरिति ।। अर्थान्तरत्वादिति ।।** त्वदभिमतमिथ्यात्वासिद्धेरिति भावः । **तस्यापीति ।।** सबाधकत्वस्यापि भेदत्वभेदसंवेदनत्वाभ्यामेव साधन इत्यर्थः । **मिथ्यात्वेनेति ।।** सबाधत्वरूपसाध्यव्यापकताया भेदत्वभेद-**(पां.टि.)** संवेदनत्ववति पक्षे मिथ्यात्वाभावेन साधनाव्यापकतायाश्च सत्त्वादिति भावः । न च युगपदुभय-साधनान्न मिथ्यात्वस्योपाधित्वमिति वाच्यम् । मिथ्यात्वे विप्रतिपत्तिदशायां तस्यैव साधनीयतया युगपदुभय-साधनस्य प्रकृतानुपयुक्ततया तत्साधनेऽर्थान्तरत्वापातादित्याशयात् । जगत्समुदायः स्वान्तर्भेदहीनः समु-दायत्वात्, आकाशसमुदायवदित्यनुमानमपि दूषयति- **स्वान्तर्भेदहीनत्वमपीति ।। साध्यविकलतेति ।।** घटादिभेदसत्त्वेन भेदहीनत्वस्यासत्त्वादिति भावः । **कल्पकैकजीवेति ।।** एकजीववादिमते आत्मनां कल्पकाभेद एव साधनीयः कल्पकजीवानिर्धारणे तु देवदत्तान्न भिद्यन्त इति देवदत्ताभेदप्रतिज्ञा तु नोपपद्यत इति भावः ।

प्रतिज्ञां दूषयित्वा हेतुमपि दूषयति- **आत्मत्वश्चेति ।। असिद्धमेवेति ।।** एकमेव शरीरं सजीवम् अन्यानि निर्जीवानीति वदता एकजीववादिना पक्षीकृतानामात्मशब्दवाच्यानां जडत्वाङ्गीकारेण तत्राऽत्मत्वज्ञानत्व-योरभावादिति भावः । देवदत्तस्यैव भोगायतनानीति किं सर्वशरीरेषु देवदत्तस्यावस्थितिमात्रं साधनतयाऽभिमतम् उत तन्निमित्तकभोगसाधनतयेति विकल्पद्वयं मनसि निधायाऽद्यं दूषयति- **अवस्थितीति ।। अर्थान्तर-मिति ।।** देवदत्तस्य सर्वशरीरेष्ववस्थितिमात्रसिद्धावपि तन्निमित्तकभोगासिद्ध्या तत्तदधिष्ठातृजीवाभेदासिद्धे-रिति भावः । द्वितीयं दूषयति- **तन्निमित्तेति ।।** देवदत्तस्य तत्तच्छरीरावस्थितिनिमित्तभोगस्य तत्तच्छरीराधि-ष्ठातृजीवाभेदाभावेऽपि परपुरप्रवेशमात्रेणोपपन्नत्वेन विप्रतिपन्नभोगासिद्धेरर्थान्तरतैवेत्यर्थः । तत्तच्छरीरेष्वधिष्ठित-चेतनस्य भोगमङ्गीकृत्य देवदत्तस्यापि तत्तदवस्थितिनिमित्तभोगसाधने देवदत्तस्य परपुरप्रवेशसिद्ध्याऽर्थान्तरत्व-प्राप्तावपि तत्तदधिष्ठितचेतनान्तरस्य भोगमनङ्गीकृत्य देवदत्तस्यैव भोगसाधनेन परपुरप्रवेशमात्रसिद्ध्याऽर्थान्तर-मिति भावेन शङ्कते- **देवदत्तस्यैवेतीति ।।** एवमपि देवदत्तस्य तत्तदधिष्ठातृजीवाभेदाभावेऽपि अधिष्ठातृ-चेतनान्तरस्य भोगाभावेऽपि च देवदत्तस्यैव भोगस्तस्य ब्रह्मग्रहत्वमात्रेणोपपन्नः । ब्रह्मग्रहाविष्टशरीरेऽन्यस्य सतोऽपि चेतनस्य भोगाभावेन तदभेदाभावेऽपि चाविष्टस्य ब्रह्मग्रहस्यैव भोगदर्शनात् । ततश्च विप्रतिपन्नसर्वाभेदस्य देवदत्तेऽसिद्धेरविप्रतिपन्नब्रह्मग्रहत्वसिद्धेरर्थान्तरभेदो वेत्याऽह- **ब्रह्मग्रहेति ।।** ननु सर्वदा देवदत्तस्य भोग-साधनादाविष्टस्य ब्रह्मग्रहस्यैव कादाचित्कभोगेऽपि सर्वदा तस्यैव भोगाभावात्सर्वदा भोगवतो देवदत्तस्य ब्रह्मग्रहत्वस्य बाधितत्वान्न तद्भावसिद्ध्याऽर्थान्तरतेत्यतः एवं तर्हि माऽस्त्वर्थान्तरत्वम् आविष्टब्रह्मग्रहस्येव तत्र सतो देवदत्तस्यापि सर्वदा भोगस्यासत्त्वात्तत्साधने बाधः स्यादेवेत्याशयेनाऽह- **सर्वदेति ।। विशेषणे बाध इति ।।** कथमित्यत आह- **सुषुप्त्यादाविति ।।** सुप्तिप्रलययोर्देवदत्तस्य भोगाभावादित्यर्थः । ननु सुप्त्यादावभावेन सर्वदा भोगसाधनत्वस्य बाधितत्वेऽपि जाग्रद्दशायां देवदत्तस्य सर्वदा भोगसद्भावात्तत्साधनेन बाध इत्यतो माऽस्तु तर्हि बाधो, दृष्टान्ते साध्यवैकल्यं तु भविष्यत्येवेति तत एवानुमानस्याऽभासत्वं सिध्यती-त्याशयेनाऽह- **जाग्रत्त्वविशेषणेऽपीति ।।** तत्कथमित्यतस्तदुपपादयति- **तत्रापीति ।।** दृष्टान्तीकृते देवदत्त-शरीरे कदाचिद् ब्रह्मग्रहानुप्रवेशे तस्यैव तद्दशायां तच्छरीरे सुखदुःखादिभोगेन देवदत्तस्य भोगाभावेन देवदत्त-शरीरस्यापि न देवदत्तं प्रति जाग्रद्दशायां सर्वदा भोगसाधनत्वमिति भावः । एतावता तद्दूषणसमाप्तौ प्राक्प्रतिज्ञातस्य विरोधिदोषाणामानन्त्यस्य भङ्ग इत्यत आह- **इत्यास्तां**

**विस्तर इति ।।**

**(व्या.टि.)** अनभिमतव्यावृत्तिं दर्शयति- **न त्विति ।।** एवं भगवत्पादप्रतिज्ञातानामनन्तानां युक्तीनां तत्तद्योग्य-पुरुषप्रतिभाप्रतीतानां दिक्प्रदर्शनाय प्रतिजानीते- **तथा हीति ।।** तत्र प्रयोगे लिङ्गप्राधान्यात्तद्दूषयितुं विकल्पेन पृच्छति-**किमिदमिति ।। दृगिति ।।** आद्यं निरुक्तिलक्ष्यम्। अर्हे कृत्यविधानात्। द्वितीयं सामयिकमिति क्रमः। **वृत्तिरूपेति ।।** विशेषणविकल्पे विशिष्टं विकल्पितमिति भावः। **वेदान्तजनितेति ।।** 'अन्यथा वेदान्तश्रवणवैयर्थ्यम्, गुरुशिष्ययोर्मौनं मौढ्यं च, तदुद्देशेन तद्विधिवैयर्थ्यं स्यात्' इति न्यायामृते विवृतम्। उक्तोद्धारायान्यद्विवक्षति- **वृत्तिजनितेति ।। तदभावादिति ।।**

'न च प्रमाणतोऽन्यस्मात्प्रमितिर्नाम कुत्रचित्'

इत्यनुभाष्ये ज्ञानातिरिक्तायां तस्यां प्रमाणाभावेनाभावोक्तेरित्यर्थः। **वृत्तिजन्येति ।।** व्यवहारस्य व्यवहर्तव्य-ज्ञानसाध्यत्वादित्यर्थः। द्वितीयं दूषयति- **चिद्रूपेति ।।** सुखादौ तदुररीकरणाद्घटादावित्युक्तम्। द्वितीयं दूषयितुं पृच्छति- **वक्तव्यमिति ।।** निर्वक्तव्यमित्यर्थः। किं केन सङ्गतमित्यत उक्तम्- **यदभाव इति ।।** प्रतियोगि-ज्ञानेऽभावस्य सुज्ञानत्वादित्यर्थः। **उक्तं स्यादिति ।।** अभावाभावस्य भावत्वादित्यर्थः। अर्थविशेषं पर्यवसाय्य दूषयति- **तथा चेति ।। पूर्वोक्तेति ।।** वेदनं किं वृत्तिरूपं वा चिद्रूपं वा। नाऽद्यः। आत्मन्यनैकान्त्यात्। द्वितीये घटादावसिद्धिरिति पूर्वोक्तेत्यर्थः। उक्तदोषानुद्दिधीर्षुः स्वप्रकाशत्वमन्यन्निर्वक्ति-**स्वव्यवहार इति ।।** 'भावार्थत्वान्नञोर्द्वयोः' इत्यनुभाष्यदिशा भावपर्यवसानमध्यवसाय्य निराचष्टे- **तर्हीति ।।** स्वातिरिक्तसंविदिति तत्पुरुषः कर्मधारयो वा, नोभयथाऽपीत्याह- **संविदन्तरेति ।।** विशिष्टव्यवहारे विशिष्टज्ञानसाध्ये द्वितीयादि-स्वातिरिक्तज्ञानस्य चिदतिरिक्तवृत्तेरपेक्षणादनैकान्त्यमित्यर्थः। व्यवहारं विविनक्ति- **निर्विकल्पेति ।।** प्रतिबन्दीं गृह्णाति- **तर्हीति ।।** स इति निर्विकल्पकव्यवहारपरामर्शः। **सुषुप्ताविति ।।** 'सुविनिर्दुर्भ्यः सुपि-सूतिसमाः' इति षत्वम्। सुषुप्तावभिलपनाभावेऽप्यभिज्ञाया अपि परेषां व्यवहारत्वादभ्युपगम-वादोऽयमिति रहस्यम्। स्वप्रकाशत्वं पुनरन्यन्निर्वक्ति- **अवेद्यत्वे सतीति ।। व्याहतत्वेनेति ।।** अपरोक्षज्ञानं विना तत्कार्यव्यवहारायोगेन तदावश्यकत्वाद्व्याघात इति भावः। **कथञ्चिदिति ।।** अर्थतो व्याहतावपि न साक्षाद्-व्याहतिरिति भावः। फलाव्याप्यत्वादिविवक्षान्तरेण वा योज्यम्। **दृश्यत्वमिति ।।** विशिष्टाभावरूपमस्व-प्रकाशत्वमित्यर्थः। **आद्ये इति ।।** विशेषणाभावप्रयोज्यविशिष्टाभाव इत्यर्थः। **किं विशेष्येणेति ।।** अभाव-प्रतियोगिविशिष्टान्तर्गतेनेति शेषः। विशिष्टान्तर्गतविशेषणाभावस्यैव हेतुतोपपत्तौ विशिष्टाभावहेतूकरणं व्यर्थ-मिति गौरवादिति भावः। तथाऽस्त्वित्याशङ्क्य परिहरति- **तस्य चेति ।। उक्तमिति ।।** वेदनं किं वृत्तिरूपं चिद्रूपं वेति विकल्प्य तद्दोषाणां प्रत्यापत्तेरिति भावः। **स्वरूपासिद्धिरिति ।।** घटादौ विशेष्यस्यैव सत्त्वेन तदभावाभावेन तत्प्रयोज्यविशिष्टाभावोऽप्यसिद्ध इति भावः। **तृतीय इति ।।** उभयाभावप्रयोज्य इत्यर्थः। **व्यर्थविशेषणत्वमिति ।।** विशेषणाभावस्यैव हेतुत्वसम्भवे हेतूकृतविशिष्टाभावप्रतियोगिकोटौ विशेष्यस्य वैयर्थ्येन तद्विशेषणतयोपादानं व्यर्थमित्यर्थः। क्वचिद्व्यर्थविशेष्यत्वमित्येव पाठः। **विशेष्यासिद्धिश्चेति ।।** निर्विशेष-**(व्या.टि.)** चिन्मात्रेऽपरोक्षव्यवहारविषयत्वाभावेन घटादावेव प्रतियोगिप्रसिद्धेस्तत्रैव तदभावोक्तौ विशेष्यस्य प्रतियोगिनोऽप्रसिद्धिः स्यादित्यर्थः। एतेन विशिष्टाभावस्यैकत्वेन न विशेष्यवैयर्थ्यादेरवकाश इति निरस्तम्। हेतूकृतविशिष्टाभावप्रयोजकत्वेनोपादानेन तदप्रयोजकत्वे वैयर्थ्यादेरपरिहारादिति। यद्वा विशेषणाभावेने-त्यादेर्वेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वरूपं वा अवेद्यत्वविशिष्टापरोक्षव्यवहारविषयत्वाभावस्तद्रूपं वा वेद्यत्वविशिष्टापरोक्षव्यवहारविषयत्वाभावस्तद्रूपं वा दृश्यत्वं निर्वक्तव्यमित्यर्थः। तत्र च किं विशेष्येणेत्यादिक-मनायासेन योज्यम्।

द्वितीयं हेतुं निरसितुं विकल्प्य पृच्छति- **जडत्वमपीति ।। निराकरिष्यमाणत्वेनेति ।।** स्वपरविषयाभावेनेति शेषः। **अज्ञातृत्वादिति ।।** ज्ञानरूपस्य क्रियात्वेन कर्तृत्वरूपकारकत्वानुपपत्तेरित्यर्थः। **ज्ञातृत्वाङ्गीकारे-णेति ।।** वादिनेति शेषः।

परिच्छिन्नत्वमपि परिचितकल्पविकल्पेन पृच्छति- **परिच्छिन्नत्वमपीति ।।** एकोक्त्या पक्षद्वयं निरस्यति- **सर्वगतेषु नित्येष्विति ।। कालाकाशादिष्विति ।।** आदिपदेन प्रकृतिवर्णादिपरिग्रहः। यथोक्तं तत्त्वोद्योते-'प्रकृतिकालादिषु' इति। नन्वेवं तत्त्वोद्योतस्यानुभाष्यनिर्णयाभ्यां विरोधः। अनुभाष्ये ह्यपरोक्षज्ञान-तारतम्योक्तिप्रस्तावे 'त्रैगुण्यात्परतः पश्येद्व्याप्तं शतगुणम्' इति वाण्यास्त्रैगुण्यादूर्ध्वमापरोक्ष्योक्त्या प्रकृतेः परिच्छिन्नत्वविज्ञानात्। स्पष्टं च निर्णये-'अबग्नीरनभोऽहंकृन्महत्तत्वगुणत्रयैः। क्रमाद्दशगुणैर्युक्तम्' इतीति चेत्। मैवम्। सम्मुग्धाकारेण निर्देशेऽपि प्रकृतेः कालपरिच्छेदाभाव एव। कालाकाशादीनां तूभयपरिच्छेदाभाव इति यथायोगमन्वयात्। प्रकृतिः न विभ्वी, विकारिकारणत्वात्, तन्त्वादिवत्। न चासिद्धिः। 'प्रकृतिं तु विकारिणीम्। विकार एव जननम्' इति स्मृत्या तत्सिद्धेः। अत एवात्र कालाकाशयोरेव मुख्यतो ग्रहणम्। प्रकृतेश्च आदिपदेनेति

। चित्प्रकृतिग्रहणे तु न शङ्कापङ्कः । अत एव न्यायामृते प्रकृतिस्थाने आकाशो गृहीत इति न कोऽपि दोष इति रहस्यम् । भागासिद्धिं परिहरति- **तेषामपीति ।।** तर्ह्येकं सन्धित्सोरपरं प्रच्यवते इत्याह- **ब्रह्मणोऽपीति ।। कुत इति ।।** देशकालयोरपरिच्छेदे ताभ्यामपरिच्छेदो ब्रह्मणो युज्यते । तयोः परिच्छेदे तद्व्याप्तत्वस्यापरिच्छिन्नत्वरूपत्वासम्भवेन ब्रह्मणोऽपि देशकालापरिच्छेदो व्याहतः स्यादिति भावः । श्रौतार्थेन युक्तिपराहतिरित्याशङ्क्य समः समाधिरित्याह- **श्रुत्यादिकन्त्विति ।।** 'अनन्तं ब्रह्म' इत्यादिवत् 'आकाशवत्सर्वगतश्च नित्यः' इत्यादेरपि सत्त्वादित्यर्थः । विशिष्टं न व्यभिचरतीत्याशङ्कते- **पारमार्थिक इति ।।** उत्तरयति- **स इति ।।** इति परिच्छिन्नत्वभङ्गः । स्वात्यन्ताभावसामानाधिकरण्यं मिथ्यात्वमित्युपे-त्यानुमितम्- **अयं पट इत्यादि ।।** तद्दूषयति- **अस्य पटस्येति ।। निष्प्रतियोगिकत्वेनेति ।।**

अत्र शङ्क्यते । अत्यन्तभावस्य निष्प्रतियोगिकत्वमसिद्धम् । प्रतियोग्युल्लेखमन्तराऽभावप्रतीत्यनुपपत्तेः । अभावस्य सद्भावां निरूप्यत्वात् । न हि कोऽपि नास्तीत्येव प्रत्येति । किन्तु इदमिह नास्तीति । न च निष्प्रति-योगिकत्वं नाम न प्रतियोग्युल्लेखविधुरत्वं, किन्तु निःस्वरूपप्रतियोगिकत्वम् । तथा च पटस्यात्यन्ताभाव-**(व्या.टि.)** प्रतियोगित्वसाधनेन तस्य निःस्वरूपत्वपर्यवसानेन तस्य प्रमाणविरुद्धत्वाद्बाधितत्वमित्यर्थ इति वाच्यम् । अत्यन्ताभावस्य निःस्वरूपमात्रप्रतियोगिकत्वाऽसम्प्रतिपत्तेः । अप्रमाणिकात्यन्ताभाववत्प्रामाणिक-प्रतियोगिकात्यन्ताभावस्यापि घटो नास्तीत्याद्यध्यक्षसिद्धत्वात् । न हि घटो नास्तीत्यादिप्रतीतेः शशशृङ्गं नास्तीति प्रतीत्या मात्रयाऽपि विशेषोऽनुभूयते । न च तस्य निषेधत्वेऽपि नात्यन्ताभावत्वमिति वाच्यम् । तर्ह्यभाव-त्रैविध्यभङ्गापत्तेः । सदाऽभावस्यैवात्यन्ताभावत्वेन नाममात्रे विवादायोगात् । विवृतं चैतदधस्तात् । तस्मात् प्रामाणिकप्रतियोगिकात्यन्ताभावस्यापि प्रामाणिकत्वेन पटस्य निःस्वरूपत्वाभिधानमुखेन बाधाभिधान-मयुक्तमिति चेत्, अत्राऽभाति । अयमभिसन्धिः टीकाकाराणाम् । सत्यं प्रामाणिकप्रतियोगिकोऽ-प्यत्यन्ताभावोऽस्तीति । तथाऽपि नात्यन्ताभावप्रतियोगित्वसाधने निःस्वरूपत्वपर्यवसानेन बाधं ब्रूमः । किन्तु सार्वत्रिकात्यन्ताभावप्रतियोगित्वसाधने । तदेव ह्यत्यन्तासत्त्वम् । यथोक्तं न्यायामृते-

'त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता ।
सत्तोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी' इति ।

न्ययासुधायां च 'यद्धि सकलदेशकालासत्तदत्यन्ताभावप्रतियोगि इत्युच्यते यथा शशविषाणादिकम्' इति । परेणापि मिथ्यात्वसाधनमनुशयानेन सर्वदेशीयनिषेधप्रतियोगित्वमेव साधनीयम् । अन्यथाऽर्थान्तरापत्तेः । अत एव परकीयानुमाने पक्षनिर्देशोऽयमिति निर्देशः । अन्यनिष्ठात्यन्ताभावप्रतियोगीति तदर्थः । दूषणेऽपि अस्येति अन्यनिष्ठात्यन्ताभावप्रतियोगिन इति परोक्तानुवादः । तथा चायं निष्कर्षः । अन्यनिष्ठात्यन्ताभाव-प्रतियोगिनः पटस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे साधिते सार्वत्रिकात्यन्ताभावप्रतियोगित्वापत्त्या निस्स्वरूपत्वपर्यवसानेन व्याघाताभिधानं युक्तमिति ।

अवृत्तित्वं प्रतिज्ञार्थ इत्याशङ्क्य निराचष्टे- **एतत्तन्तुष्विति ।।** सिद्धसाधनव्युत्पादनाय सिद्धिं व्युत्पादयति- **कार्यकारणयोरिति ।। अभेदेनेति ।।** सदसत्कार्यवादसाधनादित्यर्थः । पक्षान्तरं विवक्षित्वा प्रतिक्षिपति- **एतत्तन्तुकार्यो न भवतीति ।।** कार्यशब्दस्य 'कृत्याश्च' इति विशेष्यलिङ्गता । अन्यकार्यत्वेत्यतः परमन्यतरेति ग्राह्यम् । युगपद्विरुद्धोभयासिद्धेरिति हृदयम् । **एवमिति ।।** दिष्टदिशेति भावः । भेदतद्धियोर्मिथ्यात्वभ्रान्तित्वा-नुमाने निराचष्टे- **भेदत्वेनेति ।। सबाधत्वेनेति ।।** 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति तृतीया । **तत एवेति ।।** पूर्वहेतुत एवेत्यर्थः । परोदीरितं भेदाभावसाधनमपि न प्रौढिमाढौकत इत्याशयानोऽनूद्यावद्यति- **स्वान्तर्भेद-हीनत्वमपीति ।।** अत्र स्वान्तर्भेदशून्यताशब्देन जगत्समुदायस्य समुदायप्रतियोगिकभेदराहित्यं विवक्षितं किं वा अविशेषितप्रतियोगिकभेदराहित्यं विवक्षितमुत समुदायिप्रतियोगिकभेदराहित्यमथवा समुदायिनां परस्पर-प्रतियोगिकभेदराहित्यमिति चतुर्धा विकल्प्याऽद्यं कल्पं निराचष्टे- **समुदायस्येति ।।** द्वितीयं पराह- **भेद-हीनत्वमात्रेति ।।** आकाशस्य कालादिभ्यो भेदाभावादिति भावः । द्वितीयं निराचष्टे - **यथेति ।। अभिन्न-त्वेनेति ।।** तत्रैवांशांशिनोरपीति तत्समर्थनादित्यर्थः । तुरीयस्तु 'व्योम्नोऽपि संयोगित्वेन सावयवत्वसाधना-**(व्या.टि.)** दृष्टान्तस्य साध्यवैकल्यम्' इति वादावलीदिशा बहिरेव व्युदसनीय इति दिक् । विशिष्य जीवाभेदबोध-हेतुवादान्निरस्यति- **विमता इत्यादिना ।। अनिर्धारण इति ।।** नामविशेषनिर्धारणाभाव इत्यर्थः । एकजीववादस्यैव मायावादिपरमसिद्धान्तत्वादिति भावः । प्रतिज्ञां प्रदूष्य हेतुं दूषयति- **आत्मत्वं चेति ।।** जात्यङ्गीकारे व्यक्तिभेदापत्तेर्ज्ञानत्वस्य सविषयत्वाद्यन्यतराभावेनाङ्गीकारानर्हत्वादुभयवाद्यसिद्धमित्यर्थः । क्रिया-कारकसाङ्कर्यसाधकानुमानानि निराचष्टे- **सर्वशरीरादीनामिति ।। सर्वगत्वेति ।।** देवदत्तस्येति शेषः । अर्थान्तर-व्यावृत्तये भोगं विशिनष्टि- **तन्निमित्तेति ।। अर्थान्तरतेति**

॥ प्रत्यगभेदासिद्धेरिति हृदयम्। **तद्भावेति ॥** देवदत्तादेर्ब्रह्मग्रहाभाव इत्यर्थः। बाधोद्धाराय विशिंषतोऽन्यो दोषः प्रादुःष्यादित्याह- **जाग्रत्त्वेति ॥** जाग्रन्ति शरीराणीति विशेषण इत्यर्थः। **तत्रापीति ॥** देवदत्तशरीरेऽपीत्यर्थः। **सम्भवादिति ॥** ब्रह्मग्रहानुप्रवेशे प्रविष्ट-ग्रहस्यैव भोगेन देवदत्तभोगाभावात् साध्यविकलता स्फुटैवेति भावः। ग्रन्थगौरवभयादुपरम्यत इत्याह- **आस्ता-मिति ॥ विस्तर इति ॥** 'प्रथने वाव शब्दे' इति घञः पर्युदासादबिति भावः।

**मूलम् - न च सत्यत्वाङ्गीकारे कश्चिद्दोषः।**

**टीका-** ननु एकजीववादिमते यो दोष उक्तः प्रमाणाभावो बाधकसद्भावश्चेति स जीवजडात्मक-प्रपञ्चसत्यत्वाङ्गीकारेऽपि समानः। तत्किमनेन पक्षपातेनेत्यत आह- **न चेति ॥** तथा हि। न तावत् प्रमाणाभावः। सन् घटः इत्यादिप्रत्यक्षस्य, प्रामाणिकत्वाद्यनुमानस्य, 'विश्वं सत्यम्' इत्याद्यागमस्य च विद्यमानत्वात्।

ननु प्रत्यक्षं वर्तमानमात्रविषयम्। तत्कथमागामिबाधाभावलक्षणं सत्यत्वं गृह्णीयात्। सत्यत्वान्तरग्रहणं तु प्रकृतानुपयुक्तमिति। उच्यते - प्रत्यक्षं तावत् प्रमाणं बाधकाभावात्। अनुमाना-देस्तु बाधकत्वस्य निरस्तत्वात्। प्रबलप्रत्यक्षस्य चाभावात्। भविष्यतीति निर्मूलशङ्काया अनुचितत्वात्। ततश्च वर्तमानकाले सत्तां गृह्णत् प्रत्यक्षं बाधाभावमेव साधयति। न हि विनाशो बाधः किन्तु कालत्रयसत्तानिषेधः। न ह्येकस्मिन्काले सतः स सम्भवतीति। प्रामाणिकत्वातिरिक्तं सत्यत्वं नास्तीति साध्याविशिष्टतेति चेन्न। स्वपरासम्मतेः। न तावत्स्वरीत्येदमुक्तम्। प्रमाणा-विषयस्यापि ब्रह्मणस्सत्यत्वाभ्युपगमात्। नाप्यस्मद्रीत्या। ब्रह्मण इव प्रपञ्चस्याप्यस्माभिः प्रामाणिकत्वातिरिक्तसत्यत्वस्याभ्युपगमात्। अन्यथा शशविषाणवत् प्रमाणप्रवृत्त्ययोगात्। तथाऽपि ब्रह्मणः प्रामाणिकत्वाभावात् साधनविकलो दृष्टान्त इति चेन्न। असाधारणदूषणत्वाभावपक्षे केवलव्यतिरेकित्वोपपत्तेः। ब्रह्मणश्चाप्रामाणिकत्वे शशविषाणवदसत्त्वप्रसङ्गः। स्वतः सिद्धत्वान्नेति चेत्, स्वत इति स्वेनेति वा प्रमाणेन विनेति वा। नाऽद्यः। अनभ्युपगमात्। न हि स्वस्मिन् स्वस्य कारकता परेणाभ्युपगम्यते। शशविषाणस्याप्येवं सिद्धिस्स्यात्। न द्वितीयः। प्रमाणाभावे सत्यत्वं न स्यादित्यस्य प्रमाणेन विना सिद्ध्यतीत्यस्यानुत्तरत्वात्। सिद्ध्युपायान्तरस्यानुपन्यस्तत्वात्।

एतेन स्वप्रकाशतया सिद्धिरित्यपि परास्तम्। स्वप्रकाशतायाः कथितप्रकारद्वयाबहिर्भावात्। तत्त्वावेदकप्रमाणविषयत्वं परस्यासिद्धम्। अतत्त्वावेदकप्रमाणसिद्धत्वं तु व्यभिचारीति चेन्न। अतत्त्वावेदकं च प्रमाणं चेत्यस्य विप्रतिषिद्धत्वेन विकल्पानुपपत्तेः। अस्तु तर्हि प्रत्यक्षादीना-मप्रामाण्यादसिद्धिरेवेति चेन्न। बाधकाभावस्योक्तत्वात्। अन्यथा तत्त्वमस्याद्यागमस्याप्य-प्रामाण्यप्रसङ्गात्। एतेन 'विश्वं सत्यम्' इत्याद्यगमप्रामाण्यमपि सिद्धम्।

ननु प्रपञ्चसत्यत्वेऽस्ति बाधकम्। तथा हि। प्रपञ्चो ब्रह्मणो भिन्नोऽभिन्नो भिन्नाभिन्नो भिन्नाभिन्नविलक्षणो वा। आद्ये भेदपरम्परयाऽनवस्था। अभिन्नत्वेऽपसिद्धान्तः। तृतीये व्याघातः। चतुर्थेऽनिर्वचनीयतेति। मैवम्। भेदस्य स्वरूपत्वेन अनवस्थाऽभावस्योक्तत्वात्। किञ्चैवं ब्रह्मण्यपि प्रपञ्चाद् भिन्नमभिन्नं वेत्यादिविकल्पदोषाः समा एव। 'तत्सत्यम्' इत्यादिप्रमाणं ब्रह्मणः सत्यत्व-मवधारयदुक्तदोषान् आभासीकरिष्यतीति चेत्, प्रपञ्चसत्यताप्रमाणमपि किं न दोषान् आभासीकुर्यात्।

ननु सत्यत्वे प्रपञ्चः कथं प्रकाशेत। तथाहि-न तावत् स्वतः, जडत्वात्। नापि परतः, प्रका-शान्तरेण सम्बन्धाभावात्। असम्बद्धस्य प्रकाशनेऽतिप्रसङ्गात्। असत्य(अध्यस्त)त्वे तु चित्प्रका-शारोपितस्याधिष्ठानाध्यस्तत्वसम्बन्धेन प्रकाशोपपत्तिरिति। उच्यते। कथं प्रकाशेतेति कोऽर्थः। कथं प्रकाशः स्यादिति वा प्रकाशाश्रय इति वा प्रकाशविषय

इति वा। न प्रथमद्वितीयौ। अनभ्युप-गमात्। तृतीयेऽपि किं प्रकाशशब्देन चैतन्यं वा विवक्षितं वृत्तिर्वा। नाऽद्यः। चैतन्याविषयत्वेऽपि बाधकाभावात्। वृत्तिविषयत्वेनैव व्यवहारोपपत्तेः। चैतन्यस्यापि स्वाभाविकं विषयित्वं भविष्यतीति को दोषः। असङ्गश्रुतिस्तु परमेश्वरस्य पापादिसम्बन्धाभाववादिनी। न द्वितीयः। करणसामर्थ्येन विषयविषयिभावोपपत्तेः। अध्यस्तत्वेन प्रकाशने च जीवेऽध्यासपक्षे सर्वदा प्रकाशः स्यात्। ब्रह्मा(ह्मण्य)ध्यासे न कदाचित्। बहुजीवपक्षेऽपि जीवेऽध्यासे सर्वदा सर्वेषां प्रपञ्चः प्रकाशेत। ब्रह्माधिष्ठानत्वे तु न कस्यापि कदाऽपि। दृष्टिसृष्टिपक्षस्त्वेकजीववादिना न वक्तुं शक्यः। कल्पकैकजीवस्य सुषुप्तौ प्रपञ्चाभावप्रसङ्गात्। नापि बहुजीववादिना। प्रत्यभिज्ञासंवादयोरनुप-पत्तेः। अथोच्येत-चक्षुरादेः करणस्य घटादिविषयसन्निकर्षे सति अन्तःकरणं दीर्घप्रभाऽऽकारेण परिणमते। स च परिणामो मध्ये स्थितां विषयगतां चाविद्यां तिरस्करोति। ततश्च सर्वं चैतन्यमेकीभवति। तेन न सर्वदोपलब्धिः। नापि सर्वेषाम्। अन्तःकरणभेदेन प्रतिकर्म-व्यवस्थोपपत्तेरिति। उच्यते। एवं तर्हि अन्तःकरणवृत्तिसन्निकर्षो विषयस्य तेनैवाङ्गीकृत इति तेनैव दृश्यत्वोपपत्तौ किमनया प्रमाणशून्यया प्रक्रियया। 'तस्य भासा सर्वमिदं विभाति' इत्यादेस्त्वन्यविषयत्वात्। अतीतादिषु च नेयं प्रक्रिया सम्भवतीति। गौरवं तर्हि बाधकमिति चेत्, तर्हि गौरवाद् बिभ्यता शून्यवाद एवातिलघीयानङ्गीकार्यः। प्रामाणिकत्वाद् आत्मसत्यत्वं न गौरवदोषमावहतीति चेत्, प्रपञ्चेऽपि सममेतदिति। तस्मात्साधूक्तं 'प्रपञ्चसत्यत्वाङ्गीकारे न कश्चिद्दोषः' इति।

**(र.टि.) प्रामाणिकत्वाद्यनुमानस्येति॥** भ्रमविषयकसाक्षिणं नेदं रजतमिति(साक्षाद्विषयलाभे)-बाधकप्रत्ययमादय शुक्तिरजतं प्रामाणिकमिति न व्यवह्रियत इति प्रामाणिकपदेनैवानिषेध्यत्वेन प्रमां प्रति साक्षद्विषयत्वलाभेन भ्रमविषयसाक्ष्यादिवेद्यत्वमादाय न शुक्तिरजते व्यभिचार इति ध्येयम्। ननु घटादेर्वर्तमानकाले सत्तां गृह्णदपि प्रत्यक्षमागामिविनाशाभावलक्षणमबाधं कथं साधयतीत्यत आह- **न हीति॥ अन्यथेति॥** प्रामाणिकत्वातिरिक्तसत्यत्वाभावे प्रमाणप्रवृत्तेः पूर्वं ब्रह्मप्रपञ्चयोरपि शशविषाणाद्यविशेषापत्त्या प्रमाण-प्रवृत्त्ययोगादित्यर्थः। तथा च प्रमाणप्रवृत्त्ययोग्यतावच्छेदकत्वेन प्रामाणिकत्वातिरिक्तमेव सत्यत्वमङ्गीकार्यमिति भावः। ननु वृत्त्यविषये सुखादौ कथं व्यवहारः स्यादित्यत आह-**न चैतन्यस्यापीति॥ करणसामर्थ्येनेति॥** घटसन्निकृष्टकरणजन्यत्वेनैव वृत्तेर्घटविषयत्वोपपत्तिरिति भावः। ननु प्रपञ्चस्य जीव एवाध्यासः। न च सर्वदा सर्वेषामुपलब्धिप्रसङ्गः। दृष्टिसृष्ट्यङ्गीकारेण यदा यदृष्ट्या यज्जन्यते तत् तदैव तेनैव गृह्यत इति व्यवस्थोपपत्तेरित्यत आह- **दृष्टिसृष्टिपक्षस्त्विति॥ प्रपञ्चाभावप्रसङ्गादिति॥** दृष्टिरूपकारणाभावेनोद्बोधकस्यासम्भवे सर्वदा सुषुप्तिप्रसङ्गेन कल्पकसुप्त्यनन्तरं प्रपञ्चाभावप्रसङ्ग इत्यर्थः। **तेनैवेति॥** प्रपञ्चस्य सत्यत्वेऽपि वृत्तिद्वारकसम्बन्धेन चिद्रूपदृक्सम्बन्धसम्भवेन दृश्यत्वोपपत्तावित्यर्थः।

**(रा.टि.)** 'विमतं सत्यं प्रमाणदृष्टत्वाद् यदित्थं तत्तथा यथाऽऽत्मा' इति मिथ्यात्वानुमानखण्डनोक्तमाह- **प्रामाणिकत्वादीति॥** 'बाध्यं नार्थक्रियाकारि न च स्वप्नोऽपि नो मृषा' इत्याद्यानुमानिकपादोक्तार्थक्रिया-कारित्वमादिपदार्थः।

'विश्वं सत्यं यच्चिकेत प्रधान्वस्य यथार्थतः।
इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचिकाः॥'

**(रा.टि.)** इत्याद्यनुव्यख्यानाद्युक्तमाह- **विश्वं सत्यमिति॥** प्रत्यक्षस्य सत्ताऽनिर्णायकत्वं तावच्छङ्कापूर्व-मुपपादयति- **नन्वित्यादिना॥ सत्यत्वान्तरेति॥** भाविबाधाभावरूपसत्यत्वादन्यवर्तमानकालसम्बन्धित्व-रूपसत्यत्वान्तरग्रहणं तु भवदभिमतत्रिकालाबाध्यत्वरूपप्रकृतप्रमेयानुपयुक्तमित्यर्थः।

'यदि स्वतस्त्वं प्रामाण्ये विश्वसत्ता कथं न ते।
प्रामाण्यस्य च मर्यादा कालतो व्यहता भवेत्॥'

इत्यनुव्याख्यानोक्तं समाधिं वक्तुं प्रामाण्यं तावत्साधयति- **प्रत्यक्षमिति॥ निरस्तत्वादिति॥** 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्यादिनेति भावः। यद्वा दृश्यत्वाद्यनुमानानां मिथ्यात्वपरत्वेन पराभिमत-वाचारम्भणादिश्रुतीनां निराकृतत्वेनानुमानादेर्बाधकत्वस्य निरस्तत्वादित्यर्थः। ननु माऽस्तु दुर्बलत्वादनुमानादिकं प्रबलसत्त्वग्राहिप्रत्यक्षबाधकम्। विपरीतप्रत्यक्षं तु स्याद्बाधकमित्यत आह- **प्रबलप्रत्यक्षस्येति॥** बाधकस्येति योज्यम्। भाविबाधकशङ्कया भवत्वप्रामाण्यमित्यत आह- **भविष्यतीति॥** बाधकमित्यनुषङ्गः। ननु बाधो नाम घटस्य नाशः। स च कालान्तरभावी। तमिदानीं सन्घट इति प्रत्यक्षं कथं गृह्णीयादित्यत

आह- **न हीति ॥ स इति ॥** त्रिकाले सत्तानिषेध इत्यर्थः । अनुमानमपि शङ्कापूर्वं समर्थयते- **प्रामाणिकत्वेति ॥ सत्यत्वस्याभ्युपगमादिति ॥** त्रैकालिकनिषेधाप्रतियोगित्वरूपस्याभ्युपगमादित्यर्थः । **अन्यथेति ॥** प्रामाणप्रवृत्त्युपयोगिन उक्तरूपस्य सत्यत्वस्य घटादेरभाव इत्यर्थः । अथ वा साध्याविशिष्टतां निरस्याप्रयोजकतां निराह- **अन्यथेति ॥** अप्रामाणिकत्वे । **असाधारणेति ॥** सति सपक्षे तत्रावर्तमानत्वरूपं हेतोरसाधारण-त्वम् । शब्दो नित्यः शब्दत्वादित्यादावविानुकूलतर्कासत्त्वदशायामिदं दूषणम् । नेति पक्षे शशशृङ्गादिदृष्टान्ते व्याप्तिसम्भवेन व्यतिरेकव्याप्त्युपपत्तेरित्यर्थः । **कारकतेति ॥** कर्मकारकतेत्यर्थः । **कथितप्रकारद्वयेति ॥** 'स्वव्यवहारे स्वातिरिक्तसंविदन्तरानपेक्षत्वम् । अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम्' इति कथितेत्यर्थः । तद्द्वयं दूषितमेवेति भावः । हेतुमपि शङ्कानिरासपूर्वं समर्थयते- **तत्त्वावेदकेति ॥** प्रामाणिकत्वादिति हेतोः प्रकारान्तरेणासिद्धिमाशङ्कते- **प्रत्यक्षादीनामिति ॥** विमतं सत्यं प्रामाणिकत्वादित्यस्य घटः सन्नित्यादि-प्रत्यक्षार्थक्रियाकारित्वाद्यनुमानविश्वंसत्यमित्याद्यागमरूपप्रमाणसिद्धत्वादित्यर्थः । तत्र च तेषामप्रामाण्यात् प्रामाणिकत्वहेतुरसिद्ध इत्यर्थः । **अन्यथेति ॥** बाधकाभावेऽप्यप्रामाण्य इत्यर्थः । अवशिष्टं मिथ्यात्वानु-मानखण्डनटीकायां ध्येयमिति भावः । एवं साधकमुक्त्वा बाधकमाशङ्क्य निराह- **ननु प्रपञ्चेति ॥ उक्तत्वा-दिति ॥** 'पदार्थस्वरूपत्वाद्भेदस्य' इत्यादिग्रन्थव्याख्याऽवसर इति भावः । 'जगतो भिन्नमभिन्नं वेत्यादि-विकल्पस्तत्रापि युज्यते' इत्यादितत्त्वोद्योतोक्तमाह- **किञ्चैवमिति ॥**

बाधकान्तरमाशङ्कते- **ननु सत्यत्व इति ॥ सम्बन्धाभावादिति ॥** संयोगसमवाययोरभावाद्विषयविषयि-भावस्य दुर्वचत्वादिति वा चितोऽसङ्गत्वादिति वा भावः । व्यवहारायोगो बाधक इत्यत आह- **वृत्तिविषयत्वेनै-वेति ॥** व्यवहारो हि ज्ञप्तिकार्यम् । न च परमते वृत्तिर्ज्ञप्तिः । अपि तु चैतन्यमेवेति वा सुखादौ व्यवहारायोग **(रा.टि.)** इति वा वादिनं प्रत्याह- **चैतन्यस्यापीति ॥ स्वाभाविकमिति ॥** ननु 'असङ्गो ह्ययं पुरुषः' इत्यसङ्गत्वानुपपत्त्यैवौपाधिकमुपेयमित्यत आह- **असङ्गेति ॥ पापाभावेति ॥** 'स यत्तत्र किञ्चित्पश्यत्य-नन्वागतस्तेन भवति' इति पूर्ववाक्यात्, 'यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्' इति स्मृतेश्चेति भावः । वृत्तिर्वेति पक्षं निराह- **न द्वितीय इति ॥** आन्तरवृत्तेर्बाह्येन कथं सम्बन्ध इत्यत आह- **करणसामर्थ्ये-नेति ॥** यत्तु चित्प्रकाशाऽरोपितस्येत्यादि तत्र किं जीवचित्यारोपो ब्रह्मचिति वा । आद्य आह- **जीव इति ॥** तस्य सर्वदाऽहमिति भासमानत्वेन तत्राऽरोपितस्याभानायोगादिति भावः । अन्त्य आह- **ब्रह्माध्यास इति ॥** तस्य संसारदशायामज्ञानावृतत्वेनाधिष्ठानाप्रकाशे तत्राऽरोपितस्य प्रकाशायोगाज्जीवस्य तत्प्रकाशे सम्बन्धा-भावाच्चेति भावः । ननु जीवाध्यासपक्षे तद्दृष्टचैव सर्वसृष्ट्यभ्युपगमात्तद्दृष्टिदशायामेव तदुपलम्भो न सर्वदेत्यत आह- **दृष्टिसृष्टीति ॥ सुषुप्ताविति ॥** न च सुप्तिरेव तस्य नेति युक्तम् । 'स्वपिति' इत्यादिसुप्तिश्रुतेरप्रामाण्यापत्ते-रिति भावः । **नापि बहुजीववादिनेति ॥** दृष्टिसृष्टिपक्षो न वक्तुं शक्यत इत्यनुषङ्गः । **प्रत्यभिज्ञेति ॥** तदेवेदमिति प्रत्यभिज्ञाया दृष्टेऽप्येकस्मिन्नर्थे मानान्तरसंवादस्य चानुपपत्तेरित्यर्थः । नन्वेकजीवपक्षे बहुजीवपक्षे चास्तु जीव एवाध्यासः, व्याप्तब्रह्मचैतन्ये वाऽस्तु । तथाऽपि नोक्तदोष इति शङ्कते-**अथोच्येतेति ॥ अन्तःकरणमिति ॥** सावयवत्वात्तैजसत्वाच्च चक्षुर्गोलकान्निर्गत्य रश्मिद्वारा विषयपर्यन्तं दीर्घप्रभाऽऽकारेण विषयाकारेण च परिण-मते । यथा तटाकोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारान्प्रविश्य तद्वदेव चतुष्कोणत्वाद्याकारं भवति तथे-त्यर्थः । **ततश्चेति ॥** अन्तःकरणपरिणामरूपवृत्त्या घटाद्यवच्छिन्नचैतन्याऽवरकाविद्याऽभिभवे सत्यन्तःकरणा-वच्छिन्नप्रमातृचैतन्यं चक्षुराद्यवच्छिन्नप्रमाणचैतन्यं विषयावच्छिन्नप्रमेयचैतन्यम् **एकी भवति-** एकतया व्यक्तं भवति । तेनैकीभावं प्राप्ततयाऽभिव्यक्तचैतन्येन विषयप्रकाशाङ्गीकारेण न सर्वदोपलम्भः, प्रमात्रादिचैतन्यैकी-भावस्य सर्वदाऽभावात् । एकीभूतस्यैवोपलम्भकत्वात् । नापि सर्वेषामुपलम्भप्रसङ्गः । कुत इत्यत आह- **अन्तःकरणभेदेनेति ॥** बहुजीवपक्षे यदीयान्तःकरणमुक्तदिशा यदाऽविद्याभिभवार्थं भवति तदा तस्यैव तद्विषयप्रकाशो नान्यस्य नान्यदा चेत्यभ्युपगमात् । प्रतिकर्म प्रतिविषयव्यवस्थेत्यर्थः । कर्मकारकं विषयशब्दितमत्र कर्मपदार्थः । तं तं पुरुषं प्रति स स एव तदा तदा प्रकाश्यो विषय इति व्यवस्थेत्यर्थः । **तेनैवेति ॥** अविद्या-तिरस्कारद्वारा सर्वचैतन्यैकीभावार्थमावश्यकेनेत्येवकारार्थः । प्रतिविषयं भिन्नतयाऽङ्गीकृतेन वृत्तिसन्निकर्षेणैवेति वाऽर्थः । ननु प्रमाणशून्ययेत्ययुक्तम् । 'तस्य भासा' इति श्रुतिसिद्धत्वादित्यत आह- **तस्येति ॥** तस्य भासेत्यस्य तदधीनभासा सूर्यादिप्रकाशेनेदं जगद्भातीत्यर्थपरत्वादित्यर्थः । अनुकृतिनये 'अपि स्मर्यते' इति सूत्रे परभाष्ये 'यदादित्यगतं तेजः' इति स्मृतेरेवैतच्छ्रुत्यर्थकतयोक्त्येदम्पदस्य परमते जगत्परत्वाभावाच्चेति भावः । **गौरव-मिति ॥** ब्रह्मैकं सत्यं जगच्चेति सत्यद्वयाङ्गीकाररूपं गौरवमित्यर्थः ।

**(श्री.टि.) समान इति ॥** तथा च सत्यत्वेऽपि प्रमाणं नास्ति बाधकश्चास्तीत्यर्थः। **प्रामाणिकत्वेति ॥ (श्री.टि.)** विमतं सत्यं प्रमाणदृष्टत्वात् अर्थक्रियाकारित्वादित्याद्यनुमानस्येत्यर्थः। 'सत्यत्वाङ्गीकारे न कश्चिद्दोषः' इत्युक्तम्। कस्यापि दोषस्याभावमुपपादयितुमाह- **नन्वित्यादिना ॥** ननु प्रत्यक्षमिदानीं विनाशाभावरूपं सत्यत्वं गृह्णात्येवेति चेत्तत्राऽह- **सत्यत्वान्तरेति ॥ प्रकृतेति ॥** इदानीमस्माभिः प्रपञ्चस्य त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वापरपर्यायमेव मिथ्यात्वं साध्यते न विनाशित्वरूपं (सत्यत्वान्तरम्)। तथा च भवद्भिर्मिथ्यात्वे बाधकतयोच्यमानं प्रत्यक्षं यद्यविनाशित्वरूपं सत्यत्वान्तरं गृह्णीयात्तदा प्रकृतं यन्निरुक्तं मिथ्यात्वं तदविरोधित्वादनुपयुक्तमित्यर्थः। ननु दृश्यत्वाद्यनुमानतत्त्वमस्याद्यागमयोरेव बाधकयोस्सत्त्वात्कथं बाधकाभाव इत्यत आह- **अनुमानादेरिति ॥** 'तर्कमात्रतः प्रत्यक्षबाधने' इत्यादिना कालात्ययापदिष्टोच्छेदप्रसङ्गेनोपजीव्यप्रमाणविरोधेन च निरस्तत्वादित्यर्थः। मिथ्यात्वग्राहिप्रबलप्रत्यक्षमेव बाधकं भविष्यतीति चेत्तत्राऽह- **प्रबलेति ॥** ननूत्तरत्र बाधो भविष्यतीति भाविबाधकशङ्कैव सत्यत्वग्राहिप्रत्यक्षस्य बाधिका भविष्यतीत्यत आह- **भविष्यतीति ॥** नन्विदानीं सत्यतया गृह्यमाणस्यापि घटादेरुत्तरत्र विनाशात्कथं विनाशाभावरूपबाधाभावसाधकत्वं प्रत्यक्षस्येत्यत आह- **न हीति ॥ सतः** प्रत्यक्षसिद्धसत्त्ववतः। **स** कालत्रय-सत्तानिषेधः।

ननु वर्तमानकाले सत्तां गृह्णतः प्रत्यक्षस्य कथं कालत्रयसत्तानिषेधरूपबाधाभावावगाहित्वम्। न हि प्रत्यक्ष-गृहीतैककालीनसत्ता अनुमानग्राह्यकालत्रयसत्ताप्रतिषेधाभावरूपा। येन साक्षाद्ग्राह्याभावावगाहित्वेन विरोधित्वं स्यात्। अतः कथमेतदिति चेदत्राऽहुः- वर्तमानकाले सत्तां गृह्णतः प्रत्यक्षस्य न त्रैकालिकसत्ताप्रतिषेधा-भावावगाहित्वेन साक्षाद्विरोधित्वम्। किं नाम त्रैकालिकसत्ताप्रतिषेधाभावव्याप्यभूतैककालीनसत्ताग्राहकतया तदभावव्याप्यावगाहित्वेनैव। यत्रैककालीनसत्ता तत्र त्रैकालिकसत्ताप्रतिषेधाभाव इति व्याप्तेरिति। तन्न। तथात्वे वह्निरनुष्ण इत्यादिस्थले प्रतियोगिभूतोष्णत्वग्राहिप्रत्यक्षस्य साक्षाद्ग्राह्याभावावगाहित्वेन विरोधित्वं सर्वसम्मतं तदपि न स्यात्। तत्राप्यनुमानेन त्रैकालिकौष्ण्याभावः साध्यते स्पार्शनप्रत्यक्षेण तु वर्तमानकालीन-मेवौष्ण्यं गृह्यते। तथा च त्रैकालिकानौष्ण्याभावव्याप्यभूतैककालीनौष्ण्यग्राहकत्वेनैव स्पार्शनप्रत्यक्षस्य विरोधित्वं न साक्षादिति वक्तुं शक्यत्वात्। वस्तुतस्तु साक्षद्ग्राह्याभावावगाहित्वेनैव विरोधित्वम्। न च प्रत्यक्षगृहीतैक-कालीनसत्तायाः त्रैकालिकसत्ताप्रतिषेधाभावरूपत्वाभावात् कथमेतदिति वाच्यम्। स्यादिदं यदि सार्वदैशिकी सार्वकालिकी या सत्ता तत्प्रतिषेधो बाध इत्येवं देशकालयोरपि निषेध्यकोटौ प्रवेशः स्यात्, न चैवम्, किन्तु सर्वस्मिन्देशे सर्वस्मिन्काले च या सत्ता तत्प्रतिषेध इत्येवमधिकरणकोटावेव। तथा च सत्ताप्रतिषेधमात्रस्यैव बाधत्वेन प्रत्यक्षेण च सत्तामात्रस्यैव गृहीतत्वेन साक्षात्सत्ताप्रतिषेधाभावावगाहित्वेनैव विरोधित्वम्। एतदेवाभि-प्रेत्योक्तं 'तच्चेन्नोत्तरगोचरम्' इत्यनुव्याख्यानावतारिकावसरे भक्तिपादीयसुधायां 'घटादिसत्ताप्रतिषेधरूपस्य बाधस्य तत्सत्ताग्राहिणा प्रत्यक्षेण विरोधावश्यंभावात्' इति। निपुणतरमेतदुपपादितमस्मदाचार्यैस्तट्टिप्पण्यां तत्रैवानुसन्धेयम्। किन्तु कालत्रयसत्ताप्रतिषेध इति वाक्यमपि कालत्रये या सत्ता तत्प्रतिषेध इति व्याख्येयम्।

**(श्री.टि.)** 'स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम्।
प्रतिषेधं निरुन्धानो गृह्णात्येवात्यबाध्यताम् ॥'

इति न्यायामृतकारिकाश्लोकस्याप्येवमेवाभिप्रायो वर्णनीयः।

प्रामाणिकत्वानुमानं बाधकपरिहारेण समर्थयितुमाशङ्कते- **प्रामाणिकत्वातिरिक्तमिति ॥ प्रामाणिकत्वा-तिरिक्तेति ॥** अर्थक्रियाकारित्वरूपेत्यर्थः। **अन्यथेति ॥** प्रामाणिकत्वातिरिक्तसत्यत्वाभाव इत्यर्थः। **प्रमाण-प्रवृत्तीति ॥** प्रपञ्चे प्रमाणं प्रवर्तते शशविषाणे तु न प्रवर्तते तत्कुत इति पृष्टे प्रमाणप्रवृत्तियोग्यताऽऽपादकं सत्त्वं प्रपञ्चेऽस्ति शशविषाणे तु नास्तीति वक्तव्यम्। अन्यथा प्रपञ्चस्य शशविषाणाद्यविशेषापत्त्या प्रमाणप्रवृत्ते-रेवायोगात्। अतः प्रमाणप्रवृत्तियोग्यताऽवच्छेदकत्वेन प्रामाणिकत्वातिरिक्तं सत्यत्वमङ्गीकार्यमिति भावः। **प्रामाणिकत्वाभावादिति ॥** अवेद्यत्वेन प्रमाणजन्यज्ञानविषयत्वाभावादित्यर्थः। **केवलव्यतिरेकित्वोपपत्ते-रिति ॥** तत्र च शुक्तिरजतादिकं दृष्टान्त इति द्रष्टव्यम्। ननु तर्हि व्यतिरेकेऽसाधारण्यं स्यात्। तथा हि। यत्र सत्यत्वाभावस्तत्र प्रामाणिकत्वाभाव इति व्यतिरेकव्याप्तौ प्रामाणिकत्वाभावरूपसाध्यवत्त्वेन सपक्षभूते ब्रह्मणि सत्यत्वाभावरूपहेतोरवर्तमानत्वादित्यत उक्तम्- **असाधारण्यस्य दूषणत्वाभावपक्ष इति ॥** नित्यव्यावृत्त-गन्धवत्त्वाद्भूः किमनित्या उत अनित्यव्यावृत्तगन्धवत्त्वाद्भूः किं नित्या वेतिवत् सत्यव्यावृत्तप्रामाणिकत्व-वत्त्वाद्विमतं किं मिथ्या उत मिथ्याभूतरजतादिव्यावृत्तप्रामाणिकत्ववत्त्वाद् विमतं किं सत्यं वेति सांशयिकत्वेन साध्यनिश्चये प्रतिबन्धकतयाऽसाधारण्यस्य

दूषणत्वं वक्तव्यम्। तत्र यद्येककोटौ विशेषदर्शनाद्यनुकूलतर्काव-तारस्तर्ह्यनुमितिर्भवत्येवेति नासाधारण्यस्य दोषत्वम्। एवं च प्रकृते सत्यत्वाभावे शशविषाणाद्यविशेषाऽपत्त्या प्रमाणप्रवृत्त्ययोगेन प्रमाणप्रवृत्तियोग्यतावच्छेदकत्वेन सत्यत्वस्यैव सिद्धिरित्यनुकूलतर्करूपविशेषदर्शनसद्भावेन सत्यत्वकोटेरेव सिद्ध्या सन्देहानुपपत्तौ सत्यत्वानुमितेरेवोत्पत्त्याऽसाधारण्यस्यादोषत्वेन केवलव्यतिरेकित्वोप-पत्तेरित्यर्थः। यथोक्तं मणौ सुवर्णतैजसवादे- 'संशयः सत्प्रतिपक्षो वाऽसाधारण्यस्य दूषकतायां द्वारम्। तच्चेह विशेषदर्शनादसम्भवीत्यसाधारण्यं न दोषाय' इति। साधनवैकल्यमङ्गीकृत्य केवलव्यतिरेकित्वोपपरित्युक्तम्। वस्तुतस्तु तदेव नास्तीत्याह- **ब्रह्मणश्चेति ॥ नेतीति ॥** शशविषाणवदसत्त्वप्रसङ्गो नेति भावः। **स्वस्मिन्** स्वविषये। **कारकता** ज्ञानरूपक्रियाजनकता। **परेणेति ॥** निर्विशेषवादिना परेण कर्तृत्वकर्मत्वयोरेकत्र विरोधेनानङ्गीकारादिति भावः। **एवं सिद्धिः स्यादिति ॥** स्वेनैव सिद्धिः स्यादित्यर्थः। प्रमाणाभावे सत्यत्वं **न स्यादित्यस्येति ॥** ब्रह्मणोऽप्रामाणिकत्वे शशविषाणवदसत्यत्वापत्त्या सत्यत्वसिद्धिर्न स्यादिति प्रसङ्गस्ये-त्यर्थः। **सिद्ध्यति** सत्यत्वमिति शेषः। कुतोऽनुत्तरत्वमित्यत आह- **सिद्ध्युपायान्तरस्येति ॥** प्रामाणिकत्वा-भावेऽपि प्रकारान्तरेण तत्सिद्धिर्भविष्यतीत्येवं तत्सिद्धावुपायान्तरमेवोत्तरत्वेनोपन्यसनीयं न तु प्रमाणेन विना सिद्धिरित्यर्थः। **प्रकारद्वयेति ॥** स्वेनैव प्रकाशः, प्रमाणेन विना प्रकाश इति प्रकारद्वयेत्यर्थः। नन्वथापि विमतं सत्यं प्रामाणिकत्वादित्यत्र तत्त्वावेदकप्रमाणदृष्टत्वं हेतुतया विवक्षितमतत्त्वावेदकप्रमाणदृष्टत्वं वा। **(श्री.टि.)** नाऽद्य इत्याह- **तत्त्वावेदकेति ॥** परस्य मायावादिनः प्रपञ्चावेदकप्रत्यक्षादिप्रमाणानां तत्त्वावेदक-त्वानङ्गीकारादित्यर्थः। नापि द्वितीय इत्याह- **अतत्त्वाऽवेदकेति ॥ व्यभिचारीति ॥** अ(तत्त्वे)सत्ये शुक्तिरजतादावित्यर्थः। **असिद्धिरेवेति ॥** प्रपञ्चे प्रमाणदृष्टत्वाभावादिति भावः। **उक्तत्वादिति ॥** अनुमानादेः प्रत्यक्षबाधकत्वाभावादित्यर्थः। **अन्यथेति ॥** बाधकाभावेऽप्यप्रामाण्योक्तावित्यर्थः।

**एतेनेति ॥** तत्त्वमस्यादिवाक्यानुमानरूपबाधकाभावेनेत्यर्थः। **भेदपरम्परयेति ॥** भेदः किं भेदिभ्यां भिन्नो वाऽभिन्नो वेत्यादिपरम्परयेत्यर्थः। **अपसिद्धान्त इति ॥** मिथ्यासत्ययोरभेदानङ्गीकारादिति भावः। **उक्तत्वादिति ॥** 'पदार्थस्वरूपत्वाद्भेदस्य' इत्यादिनेत्यर्थः। 'जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते' इति तत्त्वोद्योतवाक्यं मनसि निधायाऽह- **किञ्चैवमिति ॥** भिन्नत्वे भेदपरम्परयाऽनवस्था, अभिन्नत्वेऽप-सिद्धान्तः, भिन्नाभिन्नत्वे व्याघात, उभयविलक्षणं चेद्ब्रह्मण एवानिर्वचनीयत्वमापतितमित्यर्थः। **उक्तदोषान्** ब्रह्म प्रपञ्चाद्भिन्नमभिन्नं वेत्यादिविकल्पदोषान्। **दोषान्** प्रपञ्चो ब्रह्मणो भिन्नोऽभिन्नो वेत्यादिविकल्पदोषान्। **जडत्वादिति ॥** अप्रकाशस्वरूपत्वादित्यर्थः। **प्रकाशान्तरेणेति ॥** वृत्तिरूपज्ञानाख्येनेत्यर्थः। **चित्प्रका-शेति ॥** अधिष्ठानचैतन्यरूपप्रकाशेत्यर्थः। **अधिष्ठानेत्यादि ॥** आध्यासिकसम्बन्धेनेत्यर्थः। **प्रकाशः** प्रकाश-रूपः। **अनभ्युपगमादिति ॥** जडस्य प्रपञ्चस्य प्रकाशरूपत्वप्रकाशाश्रयत्वयोरनभ्युपगमादित्यर्थः। **चैतन्यम्** अधिष्ठानचैतन्यम्। **बाधकाभावादिति ॥** सत्यत्वे कथं प्रकाशेतेत्यस्य कथं चैतन्यरूपप्रकाशविषयः स्यात्। चैतन्यरूपप्रकाशविषयो न स्यादिति यावदिति ह्यर्थः। तथा च सत्यस्यापि चैतन्यरूपप्रकाशाविषयत्वे बाधकाभावेन तर्कस्येष्टापत्तिरिति भावः। ननु चैतन्याविषयत्वे घटादिव्यवहार एव न स्यात्। व्यवहारस्य व्यवहर्तव्यज्ञान-साध्यत्वादित्येवं व्यवहारान्यथाऽनुपपत्तिरेव बाधिका। ततश्च तदन्यथाऽनुपपत्त्या चित्प्रकाशविषयत्वमङ्गी-कार्यमिति नेष्टापत्तिरित्यतोऽन्यथैवोपपत्तिमाह- **वृत्तीति ॥** वृत्तिरूपज्ञानविषयत्वेनैवेत्यर्थः। ननु चक्षुरादि-जन्यवृत्त्यविषये सुखादौ कथं व्यवहारः स्यादित्यत आह- **चैतन्यस्यापीति ॥** साक्षिरूपचैतन्यस्यापीत्यर्थः। **विषयित्वं** सुखादिविषयकत्वम्। तथा च सुखादेः साक्षिविषयत्वेन व्यवहारः सम्भवतीति भावः। ननु 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या साक्षिचैतन्यस्यासङ्गत्वावगमात्कथं तस्य चैतन्यस्य सुखादिविषयसम्बन्ध इत्यत आह- **असङ्गश्रुतिस्त्विति ॥** असङ्गत्वश्रुतिस्त्वित्यर्थः। सत्यत्वे वृत्तिरूपप्रकाशविषयः कथं स्यादिति द्वितीय-पक्षोऽप्ययुक्त इत्याह- **द्वितीय इति ॥ करणसामर्थ्येनेति ॥** घटसन्निकृष्टकरणजन्यत्वेनैव वृत्तेर्घटविषयक-त्वोपपत्तेरित्यर्थः। असत्यत्वे तु चित्प्रकाशारोपितस्येत्यादिनोक्तमाध्यासिकसम्बन्धेन प्रकाशं दूषयति- **अध्य-स्तत्वेनेति ॥ जीवेऽध्यासपक्ष इति ॥** जीवचैतन्यमविद्योपाधिकं सत्सर्वगतम्, अन्तःकरणोपाधिकं तु परिच्छिन्नमित्यङ्गीकृतत्वेनाविद्योपाधिकसर्वगतजीवचैतन्येऽध्यासपक्षे जीवचैतन्यस्यैकत्वात् स्वस्मिन्नध्यस्तः प्रपञ्चः स्वस्य सर्वदा प्रकाशेतेत्यर्थः। **न कदाचिदिति ॥** अधिष्ठानभूतब्रह्मण इन्द्रियजन्यज्ञानाविषयत्वेन तदध्यस्तस्य प्रपञ्चस्य न कदाचिदपि प्रकाशः स्यादित्यर्थः। **सर्वदेति ॥** उक्तरीत्या यस्मिन्जीवचैतन्येऽध्यस्तः **(श्री.टि.)** प्रपञ्चस्तस्य जीवस्य सर्वदा प्रकाशेतेत्यर्थः। **सर्वेषामिति ॥** घटाधिष्ठानभूतजीवचैतन्यस्य सर्व-साधारणत्वेन तत्राऽरोपितः प्रपञ्चः सर्वेषां प्रकाशेतेत्यर्थः। इदं च दूषणं नैकजीववादिनो मते सम्भवति। कल्पक-

जीवव्यतिरिक्तजीवानामभावादिति ज्ञातव्यम्। **ब्रह्माधिष्ठानत्वे त्विति ॥** तस्येन्द्रियजन्यज्ञानाविषयत्वेन तत्राऽरोपितः प्रपञ्चः कस्यापि कदाऽपि न प्रकाशेतेत्यर्थः। ननु प्रपञ्चस्य जीव एवाध्यासः। न च सर्वदा सर्वेषामुपलब्धिप्रसङ्गः। दृष्टिसृष्ट्यङ्गीकारेण यदा यस्य दृष्ट्या यज्जन्यते तदा तेनैव तद्गृह्यत इति व्यवस्थोपपत्ते-रित्यत आह- **दृष्टिसृष्टिपक्षस्त्विति ॥** कुतो न शक्य इत्यत आह- **कल्पकैकेति ॥** सुप्त्यादावित्यादिपदेन मूर्च्छा ग्राह्या। **प्रपञ्चाभावप्रसङ्गादिति ॥** दृष्टिरूपकारणाभावेनोद्बोधकस्यासम्भवे सर्वदा सुप्तिप्रसङ्गेन कल्पक-जीवसुप्त्यनन्तरं प्रपञ्चाभावप्रसङ्गादित्यर्थः। नापि बहुजीववादिना दृष्टिसृष्टिपक्षो वक्तुं शक्य इत्यन्वयः। कुत इत्यत आह- **प्रत्यभिज्ञासंवादयोरिति ॥** दृष्टिसृष्टिपक्षे यावद्दृष्टिस्तत्पर्यन्तमेव घटादेः सत्त्वेन दृष्टिनाशे तस्य नष्टत्वात्कालान्तरे स एवायं घट इति प्रत्यभिज्ञा भवति। सा न स्यात्। तद्दृष्टिसृष्टस्य घटस्य तन्मात्रविषयत्वेन तद्विषयकज्ञानरूपः कथमपरस्य संवादश्च स्यादित्यर्थः। प्रपञ्चस्य जीवेऽध्यासपक्षे ब्रह्मण्यध्यासपक्षे च नानुपपत्तिः। न च सर्वदा सर्वेषां प्रकाशः कदाऽप्यप्रकाशो वा स्यादिति वाच्यम्। यस्यान्तःकरणवृत्तिर्यदा चक्षुरादिद्वारा प्रमातृचैतन्योपरूढा सती बहिर्निर्गत्य घटादिविषयाधिष्ठानचैतन्यगताविद्यां तिरस्करोति, अनन्तरं वृत्त्युपारूढं प्रमातृचैतन्यमधिष्ठानचैतन्येनैकीकरोति तदैव तस्यैव घटप्रकाशो भवति। अतो न सर्वदा सर्वेषां प्रकाशः। वृत्तेरेवातिप्रसङ्गभञ्जकत्वादित्याशङ्कते- **अथोच्येतेति ॥** अन्तःकरणं प्रमातृचैतन्याधिष्ठितमिति पूरणीयम्। अन्यथाऽविद्यानाशकत्वानुपपत्तेः। 'सर्वं चैतन्यमेकीभवति' इत्युत्तरग्रन्थास्वारस्याच्च। तथा हि- केवलाया वृत्तेरविद्यानाशकत्वाभावात् केवलचैतन्यस्य चाज्ञानस्फोरकत्वेनाज्ञाननाशकत्वाभावाद् वृत्त्युपारूढचैतन्य-स्यैवाज्ञाननाशकत्वं वाच्यम्। सूर्यकान्तोपारूढायास्सूर्यदीप्तेः तृणादिदाहकत्ववत्। यथोक्तं परेण।

'तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य तं न्यायं चिति योजयेत्॥' इति।

**विषयगतामिति ॥** विषयावच्छिन्नचैतन्यगतामित्यर्थः। जडस्याप्रकाशस्वरूपत्वेन प्रकाशप्रसक्तेरेवाभावेन प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावान्न जडावरकाज्ञानमस्ति। यथोक्तमनुव्याख्याने-

अप्रकाशस्वरूपत्वाज्जडेऽज्ञानं न मन्यते।' इति।

अतस्तदवच्छिन्नचैतन्य एवाज्ञानमिति तन्मतस्थितेरित्यर्थः। **सर्वं चैतन्यमिति ॥** वृत्त्युपारूढं ज्ञातृचैतन्यं घटादिविषयाधिष्ठानचैतन्यं चैकीभवतीत्यर्थः। **अन्तःकरणभेदेन** अन्तःकरणवृत्तिभेदेन। **प्रतिकर्मव्यव-स्थेति ॥** अस्य ज्ञानस्यायमेव विषयो नान्य इति प्रतिज्ञानविषयव्यवस्थेत्यर्थः। यथोक्तं परैः-

'स्वच्छेऽन्तःकरणेऽशनिप्रसृमरे नेत्रादिमार्गोद्गते
तत्तद्बाह्यचयात्मना परिणते बिम्बीभवन्ती चितिः।
**(श्री.टि.)** एकाऽप्यर्थमनोविशेषकवशाद्द्वैतं प्रपन्ना हर-
त्यज्ञानं प्रकटीकरोति विषयान् ज्ञातं ममेदं त्विति॥' इति।

**अशनिप्रसृमरे** विद्युत्समाने। नेत्रादिद्वारेण बहिरुद्गते तत्तद्घटादिबाह्यवस्तुसमुदायात्मना परिणतेऽ-शनिसमानत्वादेव तैजसत्वात्स्वच्छे **अन्तःकरणे** अन्तःकरणवृत्तौ बिम्बीभवन्ती चितिः प्रमातृचैतन्यमिति यावत्। स्वयमधिष्ठानचैतन्येनैकाऽप्यर्थमनोवृत्तिलक्षणव्यावर्तकवशाद् विषयाधिष्ठानचैतन्यं मनोवृत्त्युपारूढं चैतन्यमिति **द्वैतं** भेदं प्रपन्ना सती विषयाधिष्ठानचैतन्यगतमज्ञानं हरति। पश्चादधिष्ठानचेतन्येनैकीभूता सती मयेदं ज्ञातमिति विषयान् प्रकाशयतीति श्लोकार्थः। अन्यत्रापि वृत्तिस्वरूपमुक्तम्- 'यथा तटाकोदकं कुल्यात्मना बहिर्निर्गत्य केदारान् प्रविश्य तद्वदेव चतुष्कोणत्वाद्याकारेण परिणमते तद्वत्सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा बहिर्निर्गत्य विषयं व्याप्य तदाकारं भवति। सेयं वृत्तिः' इति। **तेनैव दृश्यत्वोपपत्ताविति ॥** सर्वदोपलब्ध्याद्यतिप्रसङ्गवारणाय आवरणभूताज्ञाननिवृत्तिद्वारा चैतन्याभिव्यक्त्यर्थमावश्यकेनान्तःकरणवृत्ति-सन्निकर्षेणैव तज्जन्यज्ञानेनैवेति यावत्, प्रपञ्चस्य सत्यत्वेऽपि दृश्यत्वोपपत्तावित्यर्थः। ननु 'तस्य भासा' इत्यादिश्रुतस्याधिष्ठानचैतन्यस्य **भासा** प्रकाशेनेदं **सर्वं घटादिजगद् भाति** इति श्रुत्या चित्प्रकाशारोपिततया जगत्प्रकाशोक्तेश्चैतन्येऽध्यस्तत्वसिद्धिरिति चेत्तत्राऽह-**तस्य भासेति ॥ अन्यविषयत्वादिति ॥ तस्य** हरेर्भासा **सर्वमिदं** सूर्यादिकं **विभाति** प्रकाशते। तथा तदधीनसूर्यादिभासा **सर्वमिदं** जगद्विभाति प्रकाशत इत्येवं भगवतः सूर्यादिप्रकाशकत्वादेरेव तदर्थत्वादिति भावः। **अतीतादिषु चेति ॥** तत्र चक्षुरादेः करणस्य विषयसन्नि-कर्षाभावेनान्तःकरणवृत्तेस्तत्रायोगेन तदज्ञाननिवृत्त्यनुपपत्तावधिष्ठानचैतन्यप्रकाशेन तत्प्रकाशानुपपत्त्या तज्ज्ञानं न स्यात्। तत्राप्युक्तविधवृत्त्याऽधिष्ठानचित्प्रकाशेन

प्रकाशाङ्गीकारेऽपरोक्षचित्सम्बन्धेनातीतानामप्यापरोक्ष्यं स्यादिति भावः।

ननु तथाऽपि न जगतस्सत्यत्वं युक्तम्। तथा हि। यदि जगत्सत्यं स्यात्तर्हि ब्रह्म जगच्चेति सत्यवस्तुद्वयाङ्गी-कारापत्त्या गौरवं स्यादिति बाधकतर्कसद्भावादित्याशङ्कते- **गौरवमिति ॥ लघीयानिति ॥** ब्रह्म सत्यं जगन्मिथ्येति द्वैरूप्याङ्गीकारे गौरवापत्त्या शून्यवादिरीत्या आत्मनोऽपि मिथ्यात्वाङ्गीकारेऽतिलाघवमित्यर्थः। **प्रामाणिकत्वात्** 'तत्सत्यं स आत्मा' इत्यादिप्रमाणसिद्धत्वादित्यर्थः। **आत्मसत्यत्वम्** आत्मसत्यत्वाङ्गी-कारः। **सममिति ॥** विश्वं सत्यमित्यादिप्रमाणेन विश्वसत्यत्वस्यापि प्रामाणिकत्वात्तदङ्गीकारेऽपि न गौरवं दोषावहमिति भावः।

**(पां.टि.) समान इति ॥** अतः परं प्रति तदुद्भावनमनुचितम्। 'यत्रोभयोः समो दोषः' इति न्यायादिति भावः। **प्रामाणिकत्वाद्यनुमानस्येति ॥** आदिपदेन विमतं सत्यमर्थक्रियाकारित्वादित्यन्यत्र सत्यत्वसाधक-तयोक्तार्थक्रियाकारित्वरूपहेत्वन्तरपरिग्रहः। यद्यपि 'विमतं सत्यं प्रमाणदृष्टत्वात्' इति भगवत्पादोक्त्यनुसारेण प्रमाणदृष्टत्वाद्यनुमानस्येत्येव वक्तुमुचितम्। तथापि 'प्रमाणदृष्टत्वपदेन प्रामाणिकत्वमात्रस्य विवक्षितत्वात्' **(पां.टि.)** इति तद्वाक्यतात्पर्यविवरणरूपस्वोक्त्यनुरोधेन प्रामाणिकत्वाद्यनुमानस्येत्येवोक्तमिति मन्तव्यम्। यत्तु विमतं सत्यमनिषिद्धत्वेन साक्षात्प्रमाविषयत्वादित्यनुमानस्येत्यर्थः। तेन व्यवसायद्वारा निषेध्यतया च प्रमाणविषये शुक्तिरूप्यादौ न व्यभिचार इत्येतद्ग्रन्थार्थकथनं तत्तु एतद्वाक्यविवरणरूपमिथ्यात्वखण्डनीयस्पष्ट-टीकाकारोक्त्यनुसारेणैवास्मदुक्तरीत्या व्याख्येयत्वेन तथाऽव्याख्यायानुमानबाधाय न्यायामृतोदाहृता-नुमानविशेषपरत्वाश्रयणेन व्याख्यानस्यैतद्विवरणरूपटीकाकारीयग्रन्थादर्शनन्यायामृतग्रन्थदर्शनमात्र-मूलकत्वेनायुक्तत्वादुपेक्ष्यम्। **वर्तमानमात्रग्राहकमिति ॥**

'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना'

इत्यभियुक्तोक्तेरिति भावः। **सत्यत्वान्तरेति ॥** वर्तमानकालीनबाधाभावग्रहणं त्वित्यर्थः। **प्रकृतानुपयुक्त-मिति ॥** भिन्नविषययोरविरोधित्वेन तस्य विरोधित्वाभावादिति भावः। **बाधकाभावादिति ॥** तद्धि भवद् विमतं जीवजडात्मकं सर्वमेकजीवाज्ञानकल्पितं दृश्यत्वादित्यनुमानमभिमतम्, 'प्रपञ्चो यदि' इत्यागमो वा, सत्यत्वग्राहकप्रत्यक्षापेक्षया प्रबलप्रत्यक्षं वा, बाधकं भविष्यतीति भाविबाधकशङ्कामात्रं वेति विकल्पं मनसि निधायाऽद्यपक्षद्वयं दूषयति- **अनुमानादेरिति ॥** तृतीयं दूषयति- **प्रबलेति ॥** अयोग्यस्य बुद्ध्यनारूढतया बाधकत्वेन वक्तुमशक्यत्वाद्योग्यस्य चानुपलब्धिबाधितत्वादिति भावः। चतुर्थं प्रत्याह- **अनुचितत्वा-दिति ॥** तादृशशङ्कायाः सर्वत्र सुलभत्वेनातिप्रसङ्गादिति भावः। **बाधाभावमेवेति ॥** 'नेह नाना' इत्यादेरागम-स्यापि वर्तमानकालीनबाधग्राहकत्वेन वर्तमानकालीनबाधाभावग्राहकप्रत्यक्षेण समानविषयतया तद्विरुद्धतया बाधसम्भवादिति भावः। 'नेह नाना' इत्यादेरागामिबाधबोधकत्वमङ्गीकृत्यापि प्रत्यक्षविरुद्धतामुपपादयति- **न हीति ॥ न ह्येकस्मिन् काले सतः स सम्भवतीति ॥** किन्तु तेन विरुध्यत एवेत्यर्थः। प्रतिपन्नोपाधौ वर्तमानकालीनसत्त्वग्राहिणा प्रत्यक्षेण तत्र त्रैकालिकसत्त्वात्यन्ताभावग्राहकमागमादिकं विरुध्यत एव। वर्तमान-सत्त्वस्य स्वात्यन्ताभावाभावरूपत्वेन तद्ग्राहकस्य प्रत्यक्षस्य आगमादिग्राह्याभावावगाहित्वात्। असत्त्वस्य सत्तासामान्यनिषेधरूपत्वेन तद्विशेषाणामेव तदभावरूपत्वाद्विशेषग्राहकप्रत्यक्षस्य ग्राह्याभावग्राहकत्वा-वश्यम्भावादित्यर्थः।

अयमाशयः। असत्त्वप्रतिषेधो ह्यसत्त्वप्रतियोगिभूततत्तत्सत्त्वरूप एव। सामान्याभावस्य यत्किञ्चित्प्रतियोगि-सत्त्वविरोधित्वेन तत्तद्विशेषाणामेव सामान्याभावं प्रति प्रतियोगितया विरोधित्वम् अवश्यं वाच्यम्। प्रतियोगित्वं च स्वाभावविरहात्मकत्वमेवेति कथं न तद्विशेषाणामेव सामान्याभावाभावत्वम्। तस्य च रूपद्वयं सामान्याभावाभावत्वम्। तत्तद्विशेषत्वं च। तत्र प्रकृते प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन कालत्रयवर्ति-सत्त्वनिषेधरूपासत्त्वाभावत्वेन तदभावविषयत्वासम्भवेऽपि वर्तमानकालीनबाधाभावत्वेन रूपेण तद्ग्राहकत्व-मुपपन्नमेवेति तद्बोधो दुष्परिहर इति सूरयो विदाङ्कुर्वन्तु। **स्वरीत्येति ॥** त्वद्रीत्येत्यर्थः। प्रामाणिकत्वाति-रिक्तसत्त्वाभ्युपगमे प्रपञ्चस्य नियामकमाह- **अन्यथेति ॥** तथा सति शशविषाणेऽपि प्रमाणप्रवृत्तिप्रसङ्गादिति **(पां.टि.)** भावः। **असाधारणस्य दूषणत्वाभावे केवलव्यतिरेकित्वोपपत्तेरिति ॥** अनुकूलतर्कावतार-दशायामसाधारण्यस्य दूषणत्वाभावादिति भावः। नन्वनुकूलतर्कावतारे व्यतिरेकिणीवान्वयिन्यप्यसाधारण्यस्य दूषणत्वाभावात्तदनवतारे चान्वयिनीव व्यतिरेकिण्यपि तस्य दोषत्वाद् व्यतिरेकित्वोपपत्तेरिति अयुक्तम्। असत्सपक्षत्वस्य केवलव्यतिरेकिलक्षणत्वात् सपक्षसत्त्वे व्यतिरेकित्वानुपपत्तेश्चेति चेन्न। भावानवबोधात्। अनुकूलतर्केण व्यतिरेकव्याप्तौ निश्चितायां तददोषत्वस्याभिप्रेतत्वात्। न चान्वयिन्यपि साम्याद्व्यतिरेकिण

एव विशेषग्रहणानुपपत्तिरिति वाच्यम् । व्यतिरेकव्याप्तौ निश्चितायामपि पक्षे साध्यसिद्धेरजातत्वेन तदर्थं परार्थानुमानस्य प्रवृत्तिसम्भवेन तत्रादोषत्वम् । अन्वयिनि च शब्दोऽभिधेयः शब्दत्वादित्यादावनुकूलतर्केणान्वयव्याप्तिनिश्चये पक्ष एव तन्निश्चयस्य वाच्यत्वेन पक्षे व्याप्तिनिश्चये तत्र साध्यस्य सिद्धत्वेन तदर्थानुमानस्य सिद्धसाधनत्वेन व्यर्थत्वापत्त्याऽसाधारण्यस्यैव तादृशदोषसम्पादकत्वेन दोषत्वमित्यभिप्रेतत्वात् । व्यतिरेकव्याप्तिग्रहणमात्रेणैव व्यतिरेकित्वोक्त्याऽसत्सपक्षत्वस्य तत्त्वेनानभिप्रेतत्वान्नान्त्यो दोष इत्यङ्गीकृत्यैव च ब्रह्मणोऽप्रामाणिकत्वमयं परिहार उक्तः । वस्तुतस्तु अप्रामाणिकत्वमेव तस्य नेति न साधनवैकल्यशङ्काऽपीतिभावेनाप्रामाणिकत्वे दोषमाह- **ब्रह्मणश्चेति ॥** उभयोरप्यप्रामाणिकत्वाविशेषादिति भावः । स्वतः सिद्धत्वसिद्धत्वाभावाभ्यां विशेषान्ना-विशेषव्याप्तिरिति शङ्कते- **स्वतः सिद्धत्वादिति ॥** अभ्युपगमे त्वाह- **शशविषाणस्यापीति ॥** ब्रह्मण इव शशविषाणस्यापि स्वेनैव सिद्धेर्वक्तुं शक्यत्वादिति भावः । **असिद्धमिति ॥** तद्ग्राहकप्रमाणानां तत्त्वावेदकत्वस्य परेणानङ्गीकृतत्वादिति भावः । **व्यभिचारीति ॥** असत्यस्य शुक्तिरजरादेरपि अतत्त्वावेदकप्रमाणगम्यत्वादिति भावः । विकल्पप्रश्नेनेदं दूषणमुक्तम् । तत्र स्वव्याहतत्वाद्विकल्पप्रश्न एव नोपपद्यते, दूरे दूषणाभिधानमित्याशयेन व्याहतिमुपपादयति- **अतत्त्वावेदकं चेति ॥** प्रत्यक्षादीनामप्रामाण्यं वदन् प्रष्टव्यः किं बाधकबलात् तदभ्युपगमः, किं वा तेन विनैवेति विकल्पं मनसि निधाय आद्यं दूषयति- **बाधकेति ॥ उक्तत्वादिति ॥** अनुमानागम-योर्निरस्तत्वाद्बलवत्प्रत्यक्षस्य चाभावाद्बाधकं भविष्यतीति शङ्कामात्रस्य निर्मूलत्वेनाबाधकत्वादिति पूर्वग्रन्थे-नोक्तत्वादित्यर्थः । द्वितीयं दूषयति- **अन्यथेति ॥** अविशेषादिति भावः । **एतेनेति ॥** प्रत्यक्षानुमानयोः प्रामाण्योपपादनेनेत्यर्थः ।

ननु माऽस्त्वेकजीववादिपक्षोक्तः प्रमाणाभावः सत्यत्वपक्षे दोषः । बाधकसद्भावस्तु स्यादेवेति शङ्कते- **नन्विति ॥** प्रपञ्चे बाधकं भवत् भिन्नत्वादिना तस्य निरूपणानुपपत्तिरूपं वाऽभिमतम्, प्रकाशानुपपत्तिरूपं वा, गौरवं वेति विकल्पान्मनसि निधायाऽद्यमुत्थापयति- **तथा हीति ॥** भेदस्य वस्तुस्वरूपत्वेनानवस्थाऽ-भावस्य प्रागेवोपपादितत्वेन प्रपञ्चस्य ब्रह्मणः सकाशाद्भिन्नत्वेनैव निरूपयितुं शक्यत्वेन नोक्तविकल्पानुप-पत्तिर्बाधिकेति भावेन प्रथमपक्षमङ्गीकृत्य समाधत्ते- **भेदस्येति ॥** अङ्गीकृत्यैव च विकल्पानुपपत्तेर्दोषत्वमिदमाद्य-पक्षमभ्युपेत्य समाधानमुक्तम् । वस्तुतस्तु जगतीव ब्रह्मण्यप्युक्तविकल्पानुपपत्तेस्समत्वाज्जगति तस्यादोषत्वेऽ-विशेषेण ब्रह्मण्यपि तस्यादोषत्वप्रसङ्गाद् ब्रह्मणोऽपि सत्त्वं न स्यादित्यतोऽदोषत्वमेवेत्यभिप्रेत्य ब्रह्मणि तत्प्रवृत्तिं **(पां.टि.)** दर्शयति- **किञ्चेति ॥** ननु जगति विकल्पानुपपत्तेर्दोषत्वे ब्रह्मण्यपि तस्य दोषत्वमिति दृष्टान्ताभावान्न विशेषव्याप्तिः । नाप्यविशेषरूपा । ब्रह्मणि तदाभासत्वव्युत्पादकश्रुतिसद्भावेन तदसिद्धेरित्याशयेन शङ्कते-**तत्सत्यमितीति ॥ प्रपञ्चेति ॥** ततश्च तदाभासत्वव्युत्पादकप्रमाणस्योभयत्र सत्त्वादविशेषोऽवर्जनीय एवेति भावः । द्वितीयं पक्षमुत्थापयति- **ननु चेति ॥** सत्यत्व इव तन्मिथ्यात्वेऽपि प्रकाशानुपपत्तेस्तुल्यत्वान्न तस्याः सत्यत्वपक्षे बाधकत्वमित्यतस्तस्य मिथ्यात्वपक्षे उपपत्तिं दर्शयति- **अध्यस्तत्वे त्विति ॥** विकल्पासहत्वान्न प्रकाशानुपपत्तिरपि सत्यत्वबाधिकेति भावेन सम्भवितान् पक्षान् विकल्पयति- **उच्यत इत्यादिना ॥** ननु व्यवहारानुपपत्तेरेव बाधकत्वात्कथं चैतन्याविषयत्वे बाधकाभाव इत्यतः परोक्षवृत्तिविषयत्वेनैव चैतन्याविषय-स्यापि व्यवहारविषयतादर्शनान्न तदनुपपत्तिस्तत्र बाधिकेत्याह- **वृत्तिविषयत्वेनैवेति ॥** नन्वेवं वृत्त्यविषयसुखादौ कथं व्यवहारः स्यादित्यतः चैतन्यविषयत्वमभ्युपगम्यैव तमुपपादयति- **चैतन्यस्यापीति ॥** नन्वसङ्गश्रुत्या चैतन्यस्य विषयसम्बन्धाभावसिद्धेः कथं तस्य स्वाभाविकं विषयत्वमित्यत आह- **असङ्गेति ॥** न तु सम्बन्धा-भाववादिनी 'यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्' इत्यादितथाविधदृष्टान्तोपादानादिति भावः । **करणसामर्थ्येनेति ॥** घटसन्निकृष्टकरणजन्यत्वेन घटवृत्तेस्तद्विषयकत्वमिति भावः । प्रपञ्चस्याध्यासं वदन् प्रष्टव्यः किं जीवे किं वा ब्रह्मणीति विकल्प्याऽद्यं दूषयति- **जीव इति ॥ सर्वदेति ॥** तस्यानावृतत्वादिति भावः । द्वितीयं दूषयति- **ब्रह्मणीति ॥** तस्याऽवृतत्वादिति भावः । ननु जीव एव प्रपञ्चस्याध्यासः । न च सर्वदा सर्वेषां तत्प्रकाशप्रसङ्गः । दृष्टिसृष्ट्यङ्गीकारेण यदा यद्दृष्ट्या यज्जन्यते तत् तदैव तेनैव गृह्यते इति व्यवस्थोप-पत्तेरित्यत आह- **दृष्टीति ॥ प्रसङ्गादिति ॥** उद्बोधकसंस्काराद्यभावात् सुप्तस्य पुनरुद्बोधासम्भवेन जगतोऽ-प्रतीत्या दृष्टिरूपकारणाभावेनोत्तरत्र प्रपञ्चाभावप्रसङ्गादित्यर्थः । प्रपञ्चस्य जीवे ब्रह्मणि वाऽध्यस्तत्वेऽपि नानुपपत्तिः । न चैवं सर्वदोपलब्धिः, कदाऽप्यनुपपलब्धिश्च स्यादित्युक्तमिति वाच्यम् । प्रमातृचैतन्यसम्बन्धा-सम्बन्धाभ्यां कदाचिदुपलम्भोपपत्तेरिति शङ्कते- **अथेति ॥ सर्वं चैतन्यमिति ॥** प्रमातृप्रमेयप्रमाणचैतन्यमि-त्यर्थः । अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृ । विषयावच्छिन्नं प्रमेयम् । वृत्त्यवच्छिन्नं प्रमाणम् । **तेन न सर्वदोपलब्धिरिति ॥** सर्वेन्द्रियसन्निकर्षाभावेनान्तःकरणस्य विषयाकारेण परिणामस्याभावेना-विद्यातिरस्काराभावान्न सर्वदा प्रकाश इति भावः । **तेनैवेति ॥** प्रपञ्चस्य सत्यत्वेऽप्यन्तःकरणवृत्तिसन्निकर्षेणैव दृश्यत्वोपपत्तावित्यर्थः । **किमनयेति ॥** चित्प्रकाशारोपितत्वकल्पनया

न किमपि प्रयोजनमित्यर्थः ।

**(पां.टि.)** ननु 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्या सर्वस्य चित्प्रकाश्यत्वसिद्ध्या तदन्यथाऽनुपपत्त्या तत्राऽरोपितत्वमवश्यं कल्पनीयम् । तत्र प्राप्तातिप्रसङ्गपरिहाराय तत्तदाकारवृत्तिकल्पनं चाऽवश्यकमिति कथमुक्तप्रक्रियाया अप्रामाणिकत्वकल्पनमित्यत आह- **तस्य भासेति ।। अन्येति ।।** सूर्यादिप्रकाशानां भगवदधीनत्वं भगवतश्च सूर्याद्यप्रकाशत्वरूपं च यदर्थान्तरं तत्परत्वादित्यर्थः । श्रुत्यर्थे विप्रतिन्नं प्रति तत्कल्पनामेवाङ्गीकृत्यापि दूषयति- **अतीतादिषु चेति ।।** वर्तमानैन्द्रियकेषूक्तकल्पनायाः कथञ्चिदुपपत्तावपि **(पां.टि.)** अतीतातीन्द्रियेषूक्तविधकल्पनाया असम्भवेन तत्र विषयत्वानुपपत्त्या तन्निर्वाहार्थं प्रकारान्तर-स्यावश्यमनुसरणीयत्वेनातीतादिष्विव वर्तमानेष्वपि विषयत्वनिर्वाहान्नेयं कल्पना युक्तेत्याशयः । गौरवं प्रपञ्चसत्यत्वे बाधकमिति तृतीयपक्षमुत्थाप्य प्रतिबन्द्या दूषयति- **गौरवमित्यादिना ।।**

**(व्या.टि.)** उक्तं वक्ति- **प्रमाणेति ।। पक्षपातेनेति ।।** दुष्टान्यतरपरिग्रहेणेत्यर्थः । प्रमाणाभावसाम्यं निरस्यति- **न तावदिति ।। नन्विति ।।** आगामीति बाधविशेषणम् । **सत्यत्वान्तरेति ।।** अर्थक्रियाकारित्वमित्यर्थः । प्रत्यक्षस्य बाधाभावे प्रामाण्यं परिशेषयितुं तत्सामर्थ्यं समर्थयितुं प्रतिजानीते- **उच्यत इति ।। निरस्तत्वा-दिति ।।** ततोऽपि दौर्बल्यादित्यर्थः । **शङ्काया इति ।।** भाविबाधकशङ्काया इत्यर्थः । परिशेषयति- **बाधाभावमे-वेति ।।** ततश्च प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेऽपि बाधाभावग्रहः सम्भवतीति भावः । सङ्गृहीतमेतन्न्यायामृते-

'स्वकाले सत्यतां गृह्णन् साक्षात्कारस्त्रिकालगम् ।
प्रतिषेधं निरुन्धानो गृह्णात्येवात्यबाध्यताम् ।।' इति ।

ननु 'बाधृ विलोडने' इतिधातोः विलोडनापरपर्यायविनाशो बाधशब्दाभिधेयः । तत्कथं भविष्यत्प्रलय-कालीनविनाशाभावं स्थितिकाले गृह्णीयात् असन्निकर्षेण प्रतियोगिनोऽयोग्यत्वादित्यत आह- **न हीति ।।** पृच्छति-**किन्न्विति ।।** बाधं निरुच्य तदभावं साधयति- **न हीति ।।** अत्रेदं शङ्क्यते- प्रत्यक्षं बाधाभावं गृह्णातीति रिक्तं वचः । तथा हि- 'स्वकाले सत्यतां गृह्णन्' इत्यनेन हि कालसम्बन्धरूपसत्त्वं प्रागवगम्यते, पश्चाद्बाधाभाव इति विज्ञायते । उक्तं ह्यनुव्याख्याने- 'सत्तैवं देशकालगा । देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते' इति । कालविशेषसम्बन्धवति च न तत्सामान्याभावसम्भवः । प्रतियोगिविशेषस्य तत्सामान्याभावविरोधित्वात् । न हीति टीकायां तथैवोपपादितत्वाच्च । तथा च कालसम्बन्धित्वरूपसत्त्वमबाध्यत्वव्याप्यमिति तत्प्रत्यक्षं विशेषदर्शनरूपमेव न साक्षादबाध्यत्वदर्शनम् । तज्ज्ञानस्य व्याप्यदर्शनजन्यस्यानुमितित्वावश्यम्भावात् । अयोग्य-प्रतियोगिकाभावस्य तस्य झटिति प्रत्यक्षासम्भवाच्च । अतः कथं प्रत्यक्षं सत्त्वगोचरमिति । अत्राऽभाति । सत्यं नाबाध्यत्वरूपं सत्यत्वं प्रत्यक्षमिति । तस्यानुपपत्तिप्रतिसन्धानजन्यज्ञानविषयस्यानुमेयत्वात् । बुद्धेर्विरम्य व्यापारायोगाच्च । अत एवात्र बाधाभावमेव साधयतीत्युक्तम्, नतु गृह्णातीति । अनुपपत्तिप्रतिसन्धानं च स्पष्टी-कृतं न हीति वाक्ये । न्यायामृतमप्येवंपरतया योज्यम् । न चैवं संवादेन निग्रहप्रसङ्गः । प्रत्यक्षमात्रे संवादेऽपि चाक्षुषविशेषे तदभावात् । अत एवानुव्याख्याने-

'अतीतवर्तमानत्वधर्मिणी सा च दृश्यते'

इत्यादिना चाक्षुषस्य प्रत्यभिज्ञादेः वर्तमानमात्रग्राहित्वाभावो व्युत्पादितो न प्रत्यक्षमात्रस्येति दिक् । वस्तुतस्तु बाधाभावेऽपि प्रत्यक्षान्तरमेष्टव्यम्, न पूर्वमेव तदवगाढुमाढौकते । अनुपपत्तिप्रतिसन्धानेन विच्छेदात् । सामिधेनीप्रकरणं काम्यकल्पेष्विव । यथोक्तं भट्टपादैः-

**(व्या.टि.)** 'विच्छिन्ना सामधेनीनां निविद्भूः प्रक्रिया यतः ।
तत्तु काम्यैः पुनः कल्पैः सन्धातुं सा हि शक्यते ।।' इति ।

न च विशेषदर्शनजन्यत्वादनुमितित्वावश्यम्भावः । संशयोत्तरप्रत्यक्षवदुपपत्तेः । परं त्वव्यवधेरैक्यभ्रमः । बाह्यप्रत्यक्षे त्वित्थं स्थितिः । साक्षी त्वनुपपत्तिप्रतिसन्धानानुकूलितो बाधाभावमेव गृह्णातीत्यभ्युगमे न कोऽपि दोषः । अत एवानुव्याख्याने-

'तच्चेन्नोत्तरगोचरम् । कथमेवोत्तरः कालस्तद्गो मोक्षश्च गम्यते ।'

इति साक्षिणः कालत्रयावगाहित्वमुक्तमिति । अतस्तादृशग्रन्थस्तत्परतया योजनीय इति रहस्यम् । यत्किञ्चि-द्विशेषस्यापि सामान्याभावाभावत्वेन स्वकालसत्ताग्राहिणोऽपि प्रत्यक्षस्य कालत्रयसत्तानिषेधरूपबाधा-भावावगाहिता युक्तैवेति गुह्यतमम् ।

'अतो न वर्तमानैकनियमः स्याद् ग्रहेऽक्षजे ।'

इत्यनुभाष्ये साक्षात्कारमात्रस्य तन्नियमाभावाऽवेदनेन अतीतानागतबाधाभावगोचरता युक्ततरैवेति गुह्यतरमिति सङ्क्षेपः । एवं प्रत्यक्षस्य प्रामाण्यं प्रसाध्यानुमानप्रामाण्यं समर्तिथयिषुस्तद्दोषानुद्धरति- **प्रामाणिकत्वेति ।। प्रमाणाविषयस्यापीति ।।** अवेद्यत्वोररीकरणादित्यर्थः । **अतिरिक्तस्येति ।।** 'देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते' इति देशकालापेक्षस्वरूपसत्त्वस्योक्तेरित्यर्थः । विपक्षे बाधकश्चाऽह- **अन्यथेति ।।**

दोषान्तरं शङ्कते- **तथापीति ।। अभावपक्ष इति ।।** असाधारणस्य विपक्षाद्व्यावृत्त्याऽसाधकत्वमुत सपक्षा-दव्यावृत्त्याऽसाधकत्वमिति संशयद्वारा ग्राह्यसंशयाधायकत्वेनानुमित्यप्रतिबन्धकत्वाददोषत्वमिति पक्षेऽनुकूल-तर्कसत्त्वेऽदोषत्वमिति वा पक्ष इत्यर्थः । साधनवैकल्यं विपक्षे बाधकं दण्डं प्रदश्योद्धरति- **ब्रह्मणश्चेति ।।** अनभ्युपगमबीजं दर्शयति- **न हीति ।। स्वस्मिन्निति ।।** ज्ञानरूप इति शेषः । अतिप्रसङ्गं च आह- **शशविषाण-स्यापीति ।।** अनुत्तरत्वं प्रकटयति- **अनुपन्यस्तत्वादिति ।।** सिद्धेः प्रमाणैकोपायत्वं मूलीकृत्य प्रसञ्जयते, मूलाकीर्तनादित्यर्थः । कारणं विना कार्याङ्गीकारेण व्याघातादित्यर्थः । कथितप्रकारमन्यत्राप्यतिदिशति- **एते-नेति ।। कथितेति ।।** स्वेनेति प्रमाणेन विनेति कथितेत्यर्थः । विकल्पमुरसिकृत्य निरस्यति- **तत्त्वावेद-केति ।। विप्रतिषिद्धत्वेनेति ।।** मिथो व्याहतत्वेनेत्यर्थः । पुनर्दोषेण दूषयति- **अस्तु तर्हीति ।। बाधका-भावस्येति ।।** अप्रामाण्यस्य परतस्त्वेन बाधकैकावसेयत्वात्तदभावे तदध्यवसायायोग इत्यर्थः । विपक्षे बाधकमाह- **अन्यथेति ।।** अनुषङ्गसिद्धमर्थान्तरं चाऽह- **एतेनेति ।।** बाधकाभावेनेत्यर्थः । शङ्कते- **नन्विति ।। अस्ति बाधकमिति ।।** सत्येकस्मिन्नपि बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वादित्यर्थः । भेदपक्षं कक्षीकृत्य तद्दोषमुद्धरति- **स्वरूपत्वेनेति ।।** प्रतीतिभेदाभावादित्यर्थः । 'जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि **(व्या.टि.)** युज्यते' इति तत्त्वोद्योताभिहितयुक्तिं वक्ति- **किञ्चेति ।।** शब्दप्राबल्यमवलम्ब्य शङ्कते- **तत्सत्य-मित्यादीति ।।** प्रतिबन्द्या बन्धयति- **प्रपञ्चेति ।।** प्रकाशानुवेधादध्यासं विवक्षुस्तदनुवेधं सत्यत्वे प्रतिक्षेप्तु-मुपक्षिपति- **नन्विति ।। सम्बन्धाभावादिति ।।** संयोगसमवाययोरसम्भवादिति भावः । पक्षविवक्षितसम्बन्ध-मनुशास्ति- **अधिष्ठानाध्यस्तत्वसम्बन्धेनेति ।।** प्राक्प्रत्याख्यास्याम इति प्रतिज्ञातं सम्प्रति प्रत्याख्याति- **उच्यते इति ।।** आक्षेप्तुं प्रतिक्षेप्तुं विवरीतुकामः पृच्छति- **कोऽर्थ इति ।। अनभ्युपगमादिति ।।** तथा च न तदभावापादनं युक्तमिति भावः । आद्ये कस्य चैतन्यविषयत्वमाक्षिप्यते किं बाह्यस्य घटादेरान्तरस्य सुखादेर्वेति विकल्प्याऽद्ये सम्प्रतिपत्तिमुत्तरमाह- **चैतन्याविषयत्वेऽपीति ।।** व्यवहारानुपपत्तिमाशङ्क्यान्यथोपपत्त्या परिहरति- **वृत्तिविषयत्वेनेति ।।** औत्पत्तिकस्त्विति सूत्रादित्यर्थः । द्वितीये स्वाभाविकमर्थसम्बन्धमुपेत्याऽऽक्षेपं प्रतिक्षिपति- **स्वाभाविकमिति ।।** सम्बन्धः श्रुतिविरुद्ध इत्याशङ्क्य तामन्यथयति- **असङ्गश्रुतिरिति ।।** 'सर्वेभ्यः पाप्मभ्य उदितः ' इति विशेषश्रुत्या यदाहवनीयन्यायेन सङ्कोच इति भावः । द्वितीयं निराह- **करणेति ।।** वृत्तिकरणेत्यर्थः । **सामर्थ्येनेति ।।** केवलानुप्रमाणयोस्समानविषयत्वनियमादित्यर्थः । यत्सन्निकृष्टकरणेनेति करणलक्षणशिक्षणादिति भावः ।

एवं स्वपक्षे प्रकाशानुपपत्तिं परिहृत्य परपक्षे तां द्रढयति- **अध्यस्तत्वेनेति ।।** अध्यासोऽपि किं जीवे ब्रह्मणि वेति विकल्प्याऽद्यं निराह- **सर्वदेति ।।** जीवस्य स्वप्रकाशत्वेन सर्वदा भासमानत्वादित्यर्थः । द्वितीयं पराह- **न कदाचिदिति ।।** अवेद्यस्य कदाऽप्यनाभासादित्यर्थः । बहुजीववादिपक्षे सर्वेषामित्यधिको दोषः । ननु मायावादिना दृष्टिसृष्टेरिष्टत्वेन नैते दोषाः प्रादुःष्यन्तीत्यतोऽङ्गीकृताऽपीयं नोभाभ्यामङ्गीकारार्हा इत्याह- **दृष्टिसृष्टीति ।। सुषुप्ताविति ।।** दृष्टेरेवाभावादित्यर्थः । **प्रत्यभिज्ञासंवादयोरिति ।।** क्षणिकत्वापत्त्येति शेषः । सर्वदोपलब्धि-परिहाराय कादाचित्ककारणकलापमाह- **चक्षुरादेरिति ।।** [1]**परिणमतीति ।।** तत्र साक्षिचैतन्यं प्रतिबिम्ब इति शेषः । **मध्ये स्थितां** प्रतिबिम्बितसाक्षिचैतन्यस्थिताम्, **विषयगतां च** विषयारोपाधिष्ठानचैतन्यावरि-कामित्यर्थः । **सर्वं चैतन्यमिति ।।** साक्षिचैतन्यं वृत्तिप्रतिबिम्बितचैतन्यं तदभिव्यक्ताधिष्ठानचैतन्यं चेत्यर्थः । **भेदेनेति ।।** बहुत्वेनेत्यर्थः । अन्तःकरणवृत्तिसन्निकर्षो विषयस्येति दीर्घप्रभाकारेणेत्युक्तेः । **तेनैवेति ।।** प्रतिबिम्बिताधिष्ठानरूपेण चैतन्यभेदवादिनैवेत्यर्थः । प्रक्रियाङ्गीकारवैफल्यमाह- **किमनयेति ।।** प्रकाशानुवेध-श्रुतिमर्थान्तरावकाशेन निरस्यति- **तस्य भासेति ।। अन्यविषयत्वादिति ।।** तदुक्तम् 'अनुकृतेस्तस्य च' इत्यधिकरणे 'तदीयभासा तदधीनभासा भास्यत्वं तदर्थः' इति । न दृश्यसर्वव्यापिनीयं प्रक्रियेत्याह- **अतीतादिषु चेति ।। तर्हीति ।।** सत्यद्वयाङ्गीकार इत्यर्थः । **शून्यवादः** सर्वासत्त्ववादः । **सममिति ।।** प्रामाणिकत्वमित्यर्थः। उपसंहरति-**तस्मादिति ।।**

**मूलम्- बहुजीववादिपक्षेऽपि भेदस्य मिथ्यात्वाङ्गीकारे एते दोषा भवन्त्येव । मिथ्योपाधिकृतं हि तेषामपि बहुत्वम् । न च मिथ्योपाधिकृतो भेदः क्वापि दृष्टः ॥**

**(त.मं.)** एवं बहुजीववादमपि निरस्य अनयोर्मतयोरैक्यं साधयन् एकजीववादिनो दूषणान्यपि सर्वाण्यत्रानुकर्षयति- **बह्विति ॥** शिष्यादिबोधनासम्भव एकजीवनिश्चय इत्याद्यास्तत्रोपन्यस्ता एते दोषा भवन्त्येव । आत्मन्यनात्मत्वकल्पना वा तज्जन्यदेहादिर्वा खलु मिथ्योपाधिर्नाम । तस्यास्तु निरस्तत्वात् मिथ्योपाधिरेव न युज्यते । किं पुनस्तत्कृतो भेदः ।

**टीका-** एवम् एकजीववादिमतं दूषयित्वा तानेव दोषान् बहुजीववादिमतेऽप्यतिदिशति- **बहुजीववादीति ॥** ये जीवेश्वरयोः जीवानां च केवलं भेदमाचक्षते ये च भेदाभेदौ ते सर्वेऽपि बहुजीववादिनः । अतो बहुजीववादीत्येवोक्ते तन्मतेऽप्युक्तदोषातिदेशः कृतः स्यात् । न चासौ युज्यते । अत उक्तं 'भेदस्य मिथ्यात्वाङ्गीकारे' इति । ये मायावादिनो भेदस्य मिथ्यात्वमङ्गीकृत्य बहुजीववादिनः तन्मत एवायं दोषातिदेशः । शुद्धभेदवादस्तु सिद्ध एव । भेदाभेदवादस्तु प्रकारान्तरेण दूषयिष्यत इति भावः । एत इति ये एकजीववादिमतस्योक्ता इत्यर्थः । एवेति तेषामपरिहार्यत्व-माह ।

ननु ये गुरुशिष्यादिविकल्पदोषाः प्रागेकजीववादिनाम् उक्तास्त एव कथं बहुजीववादिनां भवन्ति । तैर्जीवबहुत्वस्याङ्गीकृतत्वादिति चेन्न । बहुत्वाङ्गीकारेऽपसिद्धान्तात् । ननु यथा बिम्ब-प्रतिबिम्बयोः प्रतिबिम्बानाञ्च परस्परं वास्तवभेदाभावेऽप्युपाधिकृतो भेदस्तथा जीवेश्वरयोर्जीवानां च परस्परमुपाधिकृतं बहुत्वमस्त्येव । तेन बहुत्वसद्भावात् सर्वव्यवस्थोपपत्तिः । तस्य च औपाधिक-त्वान्नापसिद्धान्त इति चेत्, एवं वदता वक्तव्यं स उपाधिः सत्यो मिथ्या वेति । आद्येऽपसिद्धान्ता-पाताद् द्वितीय एव अङ्गीकार्य इत्याह- **मिथ्येति ॥** हिशब्देन अपसिद्धान्तप्रसङ्गं विपक्षे सूचयति । **तेषां** बहुजीववादिनामपि पक्षे, न केवलमेकजीववादिनाम् । ततः किमित्यतः प्रागुक्तं दोषं दर्शयति- **न चेति ॥** तथा चैकजीववादिभ्यो विशेषाभावाद् गुरुशिष्यादिविकल्पदोषाः प्रसज्यन्त एवेति भावः । उपाधिकृत एव भेदः तावन्नास्ति, मिथ्योपाधिकृतस्तु सर्वथा नास्तीत्यत्राभिप्रायो, न तूपाधिकृतो भेदोऽस्तीति ।

ननु बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां च मिथो भेदो दर्पणाद्युपाधिकृतो दृश्यत एवेति चेन्न । तद्भेदस्य स्वाभाविकत्वात् । दृश्यते हि तावद्भेदः । न च तस्य स्वाभाविकत्वे बाधकमस्ति, येनौपा-धिकत्वं कल्प्येत । ननु यथा बहिःस्थितो देवदत्तो यत्स्वलक्षणप्रतिपन्नः तत्स्वलक्षण एव वेश्मान्तः प्रविष्टोऽपि प्रतीयते तथा दर्पणतलस्थितोऽपि । न तद् वस्त्वन्तरत्वे युज्यते । किं च शास्त्रीयोऽपि व्यवहारः प्रतिबिम्बस्य पारमार्थिकबिम्बैकरूपत्वं दर्शयति-

'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥' इति ।

अपि च वस्त्वन्तरत्वे सति आदर्श एव बिम्बसन्निधिवशात् तदाकारगर्भितः परिण(म)त इति वाच्यम् । विरुद्धपरिमाणत्वात्, संश्लेषाभावाच्च प्रतिमुद्रेव बिम्बलाञ्छितत्वानुपपत्तेः । तथा सति बिम्बसन्निधिलब्धपरिणतिरेव तदपायेऽप्यवतिष्ठेत । न हि निमित्तापाये कार्यनाशोऽस्ति । तदेवं बिम्बप्रतिबिम्बयोः पारमार्थिकेऽभेदे सत्युपाधिकृत एव भेदोऽङ्गीकर्तव्य इति । उच्यते- किं यथा बहिः स्थितो देवदत्त इत्यादिना सादृश्यप्रतीतिरुपन्यस्ता किं वा प्रत्यभिज्ञानम् । आद्ये नाभेद-सिद्धिः । न हि गवये गोसादृश्यावगतौ तयोरभेदः सिद्ध्यति । द्वितीयस्त्वसिद्ध एव । प्रतिबिम्बो हि बिम्बाद्भिन्नत्वेन प्रतीयत इति तावदविवादम् । अन्यथा कस्योपाधिकृतत्वं वर्ण्येत । तथा च प्रत्यक्षेण भेदं पश्यन्नेव प्रत्यक्षेणैव तदेवैतदिति प्रत्यभिजानातीति कथं युज्यते । भेदप्रतीतिबलादेव वारिस्थमादित्यमिति व्यपदेशोऽपि गौणो व्याख्यातव्यः । व्यपदेशमात्रस्य प्रत्यक्षबाधकतायाम् 'आदित्यो यूपः' इत्यादावपि तत्प्रसङ्गात् । यथा बिम्बसन्निधिरादर्शपरिणतिहेतुः, एवं तदपायोऽपि विपरीतपरिणतिहेतुः । विपरीतपरिणतौ च प्रतिबिम्बगर्भितता

**नश्यत्येव। यथा सुवर्णरजतादीनां मूषाग्निसन्निधाने लब्धद्रवावस्थानां तदपाये पुनर्घनीभावस्तथाऽत्रापि किं न स्यात् । दर्शनानादरे च स्थायित्वमपि कस्य बलेनाऽपाद्येत। तस्माद् यथा यथा दर्शनं लोके समवाय्यसमवायिनिमित्तनाशः कार्यनाशे कारणमङ्गीक्रियते तथा प्रतिबिम्बस्यापि उपाधिबिम्बतत्सन्निधिनाशात् नाशोऽङ्गी-कर्तव्यः । तस्मात् बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां च मिथो भेदस्य स्वाभाविकत्वात् नोपाधि-कृतत्वम्। किमुत मिथ्योपाधिकृतत्वमिति ।**

**(र.टि.) न तूपाधिकृतभेदोऽस्तीति ॥** तथा च 'भेदश्चोपाधितः कुतः' इत्यादिना न विरोध इति भावः । **बिम्बैकरूपत्वं गमयतीति ॥** न वारिस्थमित्यत्राऽदित्यमित्यस्यानुवृत्त्या वारिस्थस्याऽदित्यत्वव्यपदेशादिति भावः । आदित्यमित्यस्यानुवृत्तिप्रदर्शनार्थमेव समग्रवाक्योदाहरणमिति ज्ञातव्यम्। **गौणो व्याख्यातव्य-इति ॥** न चोद्यदादिप्रायपाठविरोधः । भेदप्रत्यक्षस्य प्राबल्येन तस्यापि बाधोपपत्तेरिति भावः ।

**(रा.टि.)** अङ्गीकृत्येत्यस्य वादिन इति वदनक्रियाकर्तृभिस्समानकर्तृकत्वं ज्ञेयम्। वर्तन्त इति शेषो वा। **सिद्ध एवेति ॥** न दूष्य इत्यर्थः । **दूषयिष्यत इति ॥** 'उपाधिभेदाङ्गीकारे' इत्यादिनेति भावः । शङ्कते- **यथा बिम्बेति ॥ सर्वव्यवस्थेति ॥** गुरुशिष्यादिनिर्णयः, शिष्योपदेशाय प्रवृत्तिः, तस्य तस्य तथा प्रतिपत्तिः, अयं मुक्तोऽयं बद्ध इत्यादिसर्वव्यवस्थेत्यर्थः। **प्रागुक्तं दोषमिति ॥** मिथ्येत्यस्यासदित्यर्थकत्वादविद्यमानोपाधिना कृतो भेदो न दृष्ट इत्येवंरूपमित्यर्थः। विशेषनिषेधः शेषविधिं गमयतीति न्यायेनोपाधिकृतभेदोऽस्तीति प्रतीतिं तात्पर्योक्त्या निराह- **उपाधिकृत एवेति ॥ उद्यन्तमादित्यमिति ॥** आदित्यपदं प्रत्येकमन्वेति । तेन वारिस्थस्यापि प्रतिबिम्बस्योद्यदादित्यतुल्यतयेक्षणनिषेधान्यथाऽनुपपत्त्या बिम्बादित्याभेदप्रतीतेरिति भावः। **इति वाच्यमिति ॥** प्रकारान्तरासम्भवादिति भावः । प्रतिमुद्रेव बिम्बलाञ्छितत्वरूपप्रकारान्तरमपि सम्भवतीत्यत आह- **विरुद्धेति ॥** दीर्घसूक्ष्मत्वादिरूपेणेति भावः। अस्तु तर्हि परिणमत इत्येव पक्ष इत्यतस्तत्पक्षे दोषमाह- **तथा सतीति ॥** दर्पणस्यैव तदाकारतया परिणतत्वे सतीत्यर्थः। असिद्ध एवेत्युक्तं व्यनक्ति- **प्रतिबिम्बो हीति ॥ गौण इति ॥** सारूप्यादादित्यशब्दप्रयोग इति भावः। व्यपदेशेन भेदप्रतीतेरेवास्तु बाध इत्यत आह- **व्यपदेशेति ॥** एतदपायेऽप्यवतिष्ठेतेति प्रागुक्तदोषं निराह- **यथा बिम्बेति ॥ तदपायो** बिम्बापायः । **प्रति-बिम्बगर्भितेति ॥** परिणतिरिति योज्यम् । ननूक्तं न हि निमित्तापाय इत्यादि तत्राऽह- **यथा सुवर्णेति ॥ स्थायित्वमपीति ॥** प्रतिबिम्बरूपकार्यस्येत्यर्थः ।

**(श्री.टि.) तन्मतेऽपि** केवलभेदमाचक्षाणानां मतेऽपि। ननु केवलभेदवादिनां भेदाभेदवादिनामपि बहुजीव-वादित्वेन तन्मतं कस्मान्न दूष्यत इत्यत आह- **शुद्धेति ॥** केवलेत्यर्थः। **सिद्ध एवेति ॥** सम्मत एव, अतो न निराकार्य इति भावः। तदङ्गीकृतं बहुत्वं स्वाभाविकमौपाधिकं वेति विकल्प्याऽद्ये दोषमाह- **बहुत्वाङ्गीकार इति ॥** बहुत्वस्य स्वाभाविकत्वाङ्गीकारे सत्यत्वप्राप्त्याऽपसिद्धान्ताऽपातादित्यर्थः। द्वितीयमाशङ्कते- **यथा बिम्बप्रतिबिम्बयोरित्यादिना ॥ उपाधीति ॥** दर्पणाद्युपाधीत्यर्थः । **सर्वव्यवस्थेति ॥** गुरुशिष्यादिव्यवस्था बद्धमुक्तव्यवस्था चेत्यर्थः । आद्येऽपसिद्धान्तादित्युक्तं दूषणं मूलसूचितमित्याह- **हिशब्देनेति ॥ विपक्षे** उपाधेः सत्यत्वाङ्गीकारे। ननु 'मिथ्योपाधिकृतो भेदो न दृष्टः' इत्यत्रोपाधिकृतो भेदो वर्तते, परन्तु मिथ्योपाधिकृतो भेदो नास्तीति मूलाभिप्रायः प्रतीयते। तथात्वे 'भेदश्चोपाधितः कुतः' इत्यादिना विरोधाऽपत्तेस्तदभिप्रायमाह- **उपाधिकृत एवेति ॥ न त्विति ॥** येन भेदश्चोपाधितः कुत इत्यादिस्ववचनविरोधः स्यादिति भावः। स्वाभाविकत्वमुपपादयति - **दृश्यते हीति ॥** बिम्बप्रतिबिम्बयोरभेदं सदृष्टान्तं प्रत्यभिज्ञयोपपादयति- **नन्विति ॥ यत्स्वलक्षण इति ॥** करचरणाद्यवयवसन्निवेशरूपयत्स्वलक्षणयुक्तया प्रतिपन्न इत्यर्थः । **तथा दर्पणतलेति ॥** यत्स्वलक्षणं मुखं ग्रीवायां प्रतिपन्नं तत्स्वलक्षणमेवाऽदर्शे प्रतिपन्नोऽस्मीति प्रत्यभिज्ञया प्रतीयत इत्यर्थः। **वस्त्वन्तरत्वे** प्रतिबिम्बस्य बिम्बादत्यन्तभिन्नत्व इत्यर्थः। **दर्शयतीति ॥** पारमार्थिकं यत्प्रतिबिम्बस्य बिम्बैकरूपत्वं तद्दर्शयतीत्यर्थः। नभसो मध्यङ्गतमित्यन्वयः। तथा चात्रोद्यदादाविव वारिस्थे प्रतिबिम्बेऽप्यादित्य-**(श्री.टि.)** पदप्रयोगादिति भावः। आदित्यपदस्यात्रानुवृत्तिसूचनार्थमेव समग्रवाक्योदाहरणमिति ज्ञात-व्यम्। **वस्त्वन्तरत्वे** प्रतिबिम्बस्य बिम्बाद्भिन्नत्वे। **तदाकारगर्भितो** बिम्बाऽकारगर्भितः, अन्तर्गतबिम्बाऽकार इत्यर्थः। **इति वाच्यम्** इत्येव वाच्यम् । प्रकारान्तराभावादिति भावः । ननु कथं प्रकारान्तराभावः । यथा वस्त्रादौ प्रतिमुद्रायाः बिम्बभूतमुद्रालाञ्छितत्वमेवास्ति। न तु प्रतिमुद्रागर्भिततया वस्त्रादेः परिणामः। एवमादर्शेऽपि बिम्बभूतमुखलाञ्छितत्वमेवास्तु नतु तद्गर्भिततया परिणाम इत्यत आह- **विरुद्धेति ॥** बिम्बभूत-मुद्रायाः प्रतिमुद्रापेक्षया विरुद्धपरिमाणत्वाभावो वस्त्रादीनां संश्लेषश्च

बिम्बभूतमुद्रालाञ्छितत्वोपयोगी तिष्ठति, न तथा तत्रास्ति। मुखप्रतिमुखयोर्विरुद्धपरिमाणोपेतत्वात् बिम्बस्याऽदर्शसंश्लेषाभावाच्च, बिम्बलाञ्छितत्वा-नुपपत्त्या तदाकारगर्भित एव परिणमत इति वाच्यमित्यर्थः। अस्त्वेवं ततः किमित्यत आह- **तथा सतीति ॥** दर्पणस्य बिम्बाकारगर्भिततया परिणतत्वे सतीत्यर्थः। **परिणतिः** आदर्शपरिणामः प्रतिबिम्बः। **तदपाये** बिम्बसन्निध्यापाये। परिणतिरेवेत्येवकारस्यावतिष्ठेतैवेति सम्बन्धः। तयोर्भेदाङ्गीकारादिति भावः। न च बिम्ब-सन्निधेरादर्शपरिणामे निमित्तकारणत्वेन तन्नाशे कार्यस्यापि नाशान्नावस्थानमित्यत आह- **न हीति ॥** दण्डादि-नाशे घटादिनाशादर्शनादित्यर्थः।

नन्वस्त्वेवं बिम्बप्रतिबिम्बयोरभेदः किं ततः प्रकृत इत्यत आह- **तदेवमिति ॥ अङ्गीकर्तव्य इतीति ॥** तथा च 'न चोपाधिकृतो भेदः क्वापि दृष्टः' इत्युक्तमसदिति भावः। **सादृश्यप्रतीतिरिति ॥** बिम्बप्रतिबिम्ब-योरभेदसाधनायेति शेषः। **सिद्धिः** सादृश्यप्रतीत्येति शेषः। **द्वितीयः** प्रत्यभिज्ञारूपानुभवः। **अन्यथा** भेदस्यैवाप्रतीतौ। **कथमिति ॥** विरोधादिति भावः। **गौणो**ऽमुख्यः। न चोद्यदादिप्रायपाठविरोधः। बिम्बप्रतिबिम्बभेदावगाहिप्रत्यक्षस्य प्राबल्येन प्रायपाठस्यापि तेन बाधोपपत्तेरिति भावः। गौणव्यपदेशेनैव भेदावगाहिप्रत्यक्षबाधः किं न स्यादित्यत आह- **व्यपदेशमात्रस्येति ॥ तत्प्रसङ्गादिति ॥** 'आदित्यो यूपः' इत्यभेदव्यपदेश आज्याञ्जननिमित्तौज्ज्वल्यरूपसारूप्येणामुख्यः। तथा च तस्याप्यभेदव्यपदेशस्याऽदित्य-यूपभेदावगाहिप्रत्यक्षबाधकताप्रसङ्गादित्यर्थः। आदर्श एव बिम्बसन्निधिवशात्तदाकारगर्भितः परिणमत इत्यस्य तथा सति बिम्बसन्निधिलब्धपरिणतिरेव तदपायेऽप्यवतिष्ठेतेत्युक्तदूषणं परिहरति- **यथेति ॥ आदर्श-परिणतिहेतुः** आदर्शस्य प्रतिबिम्बाकारेण परिणतौ हेतुरित्यर्थः। **तदपायो** बिम्बसन्निध्यपायः। **गर्भितता** आदर्शस्य। न हि निमित्तापाये कार्यनाशोऽस्तीत्युक्तदोषं परिहरति-**यथेति ॥ तदपाये** मूषाग्निसन्निधान-रूपनिमित्तकारणापाये। तथा च निमित्तकारणनाशेन कार्यनाशो दृष्ट इति भावः। ननु सुवर्णरजतादौ दृष्टान्ते विद्यमानमपि निमित्तकारणनाशेन कार्यनाशदर्शनं नाऽद्रियत इत्यत आह- **दर्शनानादर इति ॥ स्थायित्वम-पीति ॥** बिम्बसन्निधिलब्धपरिणतिरेव तदपायेऽप्यवतिष्ठेतेत्येवं बिम्बसन्निधिलब्धपरिणतेर्बिम्बसन्निध्यपाये स्थायित्वमपि कस्य बलेनाऽपाद्यते। निमित्तापायेऽपि कार्यानाशस्यैव दर्शनादित्येवं दर्शनबलेनाऽपाद्यत इति वक्तव्यम्। तदनादरे एतदपि न स्यादिति भावः। **यथादर्शनं** दर्शनानुसारेण। **समवायीत्यादि ॥** समवायि-**(श्री.टि.)** कारणनाशात् कार्यनाशो यथा तन्तुनाशात् पटनाशः। असमवायिकारणनाशाद्यथा तन्तुद्वय- संयोगनाशात्पटनाशः। निमित्तकारणनाशाद्यथा अपेक्षबुद्धिनाशाद् द्वित्वनाशः। यथा वा मूषाग्निसन्निधाननाशेन सुवर्णादीनां द्रवावस्थानाश इति द्रष्टव्यम्। **तत्सन्निधिनाशात्** तत्सन्निधीनां नाशादित्यर्थः। तथा चोपाधिनाशाद् बिम्बनाशात् तयोस्सन्निधिनाशाच्च नाशोऽङ्गीकर्तव्य इति प्रत्येकं सम्बन्धो द्रष्टव्यः।

**(पां.टि.)** नन्वेकजीववादिमतोक्तानां दोषाणां बहुजीववादिमते अतिदेशस्य बहुजीववादिमतेऽप्येते दोषा भवन्तीत्येतावतैव सिद्धे भेदमिथ्यात्वाङ्गीकार इत्यस्यांशस्य वैयर्थ्यम्। न च बहुजीववादिनामनेकविधत्वा-दुक्तदोषातिदेशस्य च तावन्मतसाधारण्याभावेनोक्तदोषातिदेशस्य तद्व्यक्तिविशेषनिष्ठतां ज्ञापयितुं भेदस्य मिथ्यात्वाङ्गीकार इत्येतद्विशेषणमिति वाच्यम्। तत्प्रकारानिरूपणेन बहुजीववादिनामनेकविधत्वस्यैवा-सिद्धेः। कथञ्चित् तत्सिद्धौ वा दोषाणां तावन्मतसाधारणत्वाभावे तैस्तन्निरासासम्भवेन तावन्मतसाधारण्य-स्याऽवश्यकत्वेन तद्व्यक्तिविशेषनिष्ठत्वस्यानाश्रयणीयत्वेन तज्ज्ञापकतया सार्थक्यस्य वक्तुमशक्यत्वादित्यतो बहुजीववादिनामनेकविधत्वोपदर्शनपूर्वकमुक्तदोषाणां तद्व्यक्तिविशेषनिष्ठत्वोपवर्णनार्थतया तेषां दोषाणां तावन्मतसाधारणत्वाभावं दर्शयति- **ये जीवेश्वरयोरिति ॥ न चासाविति ॥** मतवैलक्षण्यादिति भावः। एवमनेकविधत्वं तावन्मतसाधारण्याभावं चोक्तदोषातिदेशस्योपपाद्य तद्व्यक्तिविशेषनिष्ठतामतिदेशस्योपपाद-यति- **ये मायावादिन इति ॥** नन्वेवं तन्मतयोरनिरासप्रसक्तिरित्यतो मतद्वये पूर्वमतस्यानिरासप्रसक्तिरभिमतो तद्द्वितीयस्येति विकल्पद्वयं मनसि निधायाऽद्यमिष्टापत्त्या दूषयति- **शुद्धेति ॥** आत्यन्तिकभेदवादस्तु निर्दुष्ट इत्यर्थः। तथा न तदनिरासप्रसङ्गः सिद्धान्तिनः क्षत्यापादक इति भावः। द्वितीयं दूषयति- **भेदाभेदेति ॥** तथा च न तदनिरासप्रसङ्गोऽपीति भावः। एकजीववादिमतोक्तदोषाणामिवानुक्तदोषाणामप्युत्तरत्र बहुजीवमते कथनेन तद्व्यावर्तकत्वासम्भवात् तदर्थकैवकारानुपपत्तिरित्यतोऽत्रोक्तदोषाणामपरिहार्यत्वमात्रसूचकत्वेनेतरदोष-व्यावर्तकत्वानङ्गीकारान्न तदनुपपत्तिरिति भावेनाऽह- **एवेतीति ॥** बहुत्वं किं वास्तवं कल्पितं वेति विकल्पं मनसि निधाय आद्यं दूषयति- **बहुत्वाङ्गीकार इति ॥** जीवैक्यस्य त्वत्सिद्धान्तत्वादिति भावः। अस्तु तर्हि द्वितीयो निरवद्यत्वादित्यभिप्रेत्य करिष्यमाणस्वकल्पनाया असम्भावितत्वशङ्कां तदनुगुणदृष्टान्तोपदर्शनेन परिहरन्नेव तमवलम्ब्य व्यवस्थाऽनुपपत्त्यपसिद्धन्तयोः परिहारं शङ्कते- **यथेति ॥ सर्वेति ॥** गुरुशिष्यादीत्यर्थः। अपिशब्दसङ्ग्राह्यप्रदर्शनेन तद्वैयर्थ्यं परिहरति- **न केवलमिति ॥** ननु 'भेदश्चोपाधितः कुतः' इति सिद्धान्ते उपाधेर्भेदकारकत्वखण्डनात् 'उपाधिकृतो भेदो न दृष्टः' इत्येतावता पूर्णत्वादुपाधिकृतो भेदो

न दृष्ट इत्येव वक्तव्यत्वान्मिथ्यापदमनर्थकम्। तन्महिम्ना भेदस्य मिथ्योपाधिकृतत्वाभावप्राप्तावप्युपाधिकृतत्वाभावाप्राप्त्या विरुद्धार्थत्वं चेत्यतोऽत्र मिथ्यापदस्याभिप्रायान्तरवत्त्वेन आपाततः प्रतीताभिप्रायकत्वाभावान्नानुपपत्तिरिति भावेनाऽह- **उपाधिकृत एवेत्यादि ॥** उपाधिकृतो भेदो न दृष्ट इति गूढाभिसन्धिनोक्तस्याऽशयमज्ञात्वा सम्भ्रान्त-श्चोदयति- **नन्विति ॥** आशयमुद्घाटयति- **नेति ॥** बिम्बप्रतिबिम्बयोरभेदे पारमार्थिकत्वस्य सकलप्रमाण-**(पां.टि.)** सिद्धत्वात्तद्भेदस्य स्वाभाविकत्वानुपपत्तेरुपाधिकृतत्वमेवाभ्युपगन्तव्यमित्याशयेन शङ्कते - **नन्विति ॥** अभिज्ञासिद्धो भेदः कथं प्रत्यभिज्ञया बाध्यतामित्यत आह- **न तादिति ॥** तत्प्रत्यभिज्ञानमित्यर्थः। अभिज्ञायाः स्वरूपमात्रगोचराया भेदाभेदयोरुदासीनत्वात्प्रत्यभिज्ञायास्त्वभेदविषयत्वाद्भेदबाधकत्वमिति भावः। **किञ्चेति ॥**

> 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन।
> नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥'

इति शास्त्रीयो व्यवहारोऽपि प्रतिबिम्बस्य पारमार्थिकबिम्बैकरूपत्वं दर्शयतीति सम्बन्धः । अत्र वारिस्थे प्रतिबिम्बे बिम्बवाच-कादित्यशब्दप्रयोगात्तदैक्यसिद्धेरिति भावः ।

नन्वैक्यावभासेनैव भेदावभासः कुतो बाध्यः, भेदावभासेनैवैक्यावभासबाधः किं न स्यादित्यतो व्यक्तिभेदः तत्रोपपत्तिशून्यत्वाद्बाध्यत इत्याह- **अपि चेति ॥ इति वाच्यमिति ॥** भिन्नस्य मुखस्योत्पादकान्तराभा-वाद्दर्पणावयवा एव मुखाकारेण परिणता इति वाच्यमित्यर्थः । मुखतत्प्रतीत्योरन्यथाऽनुपपन्नत्वादिति भावः । निमित्तकारणकथनम्- **बिम्बसन्निधिवशादिति ॥** ननु मुखलाञ्छितप्रतिमुद्रेयं, न परिणाम इत्यत आह- **विरुद्धपरिमाणत्वादिति ॥** मुद्रासमानपरिमाणाभावात् मुद्रासंयोगाभावाच्च बिम्बलाञ्छितत्वानुपपत्तेर्दर्पणस्थं प्रतिमुद्रेव न तु प्रतिमुद्रेत्यर्थः। यद्वा ननु प्रतिबिम्बं न दर्पणादिपरिणामः किन्तु मुद्रालाञ्छितप्रतिमुद्रेव प्रतिबिम्बं बिम्बलाञ्छितमेवेत्यत आह- **विरुद्धेति ॥** युक्तं प्रतिमुद्राया मुद्रालाञ्छितत्वं मुद्रासमानपरिमाणत्वात् । मुद्रायाः संयोगस्य प्रतिमुद्राऽऽधारे पात्रादौ विद्यमानत्वाच्च । प्रकृते तु बिम्बसमानपरिमाणत्वाभावात् आदर्शे बिम्ब-संयोगाभावाच्च प्रतिमुद्रेव प्रतिबिम्बस्य बिम्बलाञ्छितत्वानुपपत्तेरित्यर्थः । अस्तु दर्पणावयवपरिणाम एव मुखमित्यत आह- **तथा सतीति ॥**

ननु बिम्बसन्निध्यपगमेन तस्य परिणामनाशात् न तथैवावस्थानमापादयितुं शक्यमित्यतः समवाय्यसमवायि-नाशयोरेव कार्यनाशप्रयोजकत्वात्, अतथाभूतबिम्बसन्निध्यपगमस्य परिणामनाशकत्वं वक्तुं न शक्यमित्याह- **न हीति ॥** अन्यथाऽतिप्रसङ्गादिति भावः । अस्त्वेवं तर्हि बिम्बप्रतिबिम्बयोः पारमार्थिकमैक्यं किं ततः प्रकृते लब्धमित्यतः तद्भेदस्योपाधिकृतत्वमेवेत्याह- **तदेवमिति ॥** किमनेन सादृश्यप्रतीतिः साधकतया उपन्यस्ता, अन्यद्वा किञ्चित्प्रमाणमिति विकल्पद्वयं मनसि निधाय विकल्पयति- **किं यथेति ॥** आद्यं दूषयति- **आद्य इति ॥** तत्र हेतुमाह- **न हीति ॥** अन्यथा तयाऽपि तदभेदः सिध्येदिति भावः । नाप्यतिरिक्तं किञ्चित्प्रमाणमिति द्वितीयः । तद्धि भवत्प्रत्यक्षं वा अनुमानं वा आगमो वेति, आद्येऽप्यभिज्ञानं वा प्रत्यभिज्ञानं वा इति च विकल्पान् मनसि निधाय, नाऽद्यः । तस्य प्रत्यक्पराक्त्वादिना भेदग्राहित्वादिति भावेन प्रत्यभिज्ञानं तत्र प्रमाणमिति द्वितीयं दूषयति- **द्वितीयस्त्विति ॥**

**(पां.टि.)** अयमर्थः:- प्रतिबिम्बो हि बिम्बाद्भिन्नतया साक्षात्क्रियत इति तावदविवादम्। अन्यथा त्वयाऽपि कस्य भ्रमत्वमुच्येत। न च भेदं भेदकं च साक्षात्कुर्वन्नभेदमपि साक्षात्कुर्वन् दृष्टः । न च ऐक्ये साक्षात्कृते सोपाधिकभ्रमोऽपि युक्तः । तदुपादानस्याप्यैक्याज्ञानस्य ऐक्यज्ञानेन निवृत्तत्वात् । न चोपाधिनिवृत्तिसहकृतमेव ज्ञानमज्ञाननिवर्तकम् । ज्ञाते कदाऽपि न जानामीत्यननुभवेन ज्ञानस्य स्वप्रागभावं प्रतीव अज्ञानं प्रत्यप्यन्यान-पेक्षस्यैव निवर्तकत्वात्। न च बिम्बप्रतिबिम्बयोरैक्ये ज्ञातेऽपि तदवच्छिन्नचैतन्ये ऐक्याज्ञानात्तत्र भेदभ्रम इति वाच्यम्। अतिप्रसङ्गात्। न च बिम्बप्रतिबिम्बैक्याज्ञानाभावेऽपि मूलाविद्याकार्योऽयं भेदभ्रमः। तथा सति व्यावहारिकत्वापातात्। न च सोपाधिकं भ्रमं प्रति नाज्ञानज्ञाने उपादाननिवर्तके। किन्तु उपाधिसन्निधान-रूपदोषतदपगमाविति वाच्यम्। दोषो निमित्तमात्रं कार्यानुगुणं मिथ्याभूतमज्ञानमेव तूपादानमिति त्वन्मत-हानेः। अन्यथा हि अज्ञानाकार्यत्वेन ज्ञानानिवर्त्यत्वेन च बिम्बप्रतिबिम्बभेदस्य सत्यत्वापातादिति। नाप्यनुमानं तत्र मानम्। अत्यन्तसादृश्यस्य वैधर्म्याभावस्य क्रियासाम्यस्य पृथक् कारणाभावस्य बिम्बकारणमात्रजन्यत्वस्य च व्यभिचारासिद्ध्यादिनाऽन्यत्र निरस्तत्वादिति भावेन आगमं निराकरोति- **भेदप्रतीतिबलादेवेति ॥** चित्रितः सिंह इति लोकव्यवहारवत्, 'यथा दारुमयी योषा यथा चर्ममयो

मृगः’ इत्यादिस्मार्तव्यवहारवच्च भेदप्रतीतिबला-देव वारिस्थमादित्यमिति व्यवहारस्य सादृश्यादिनिमित्ततया गौणत्वेन मुख्यत्वाभावान्न तस्य प्रमाणत्वमिति भावः ।

ननु भेदप्रतीतिबलात्कुतः शास्त्रीयव्यपदेशस्य गौणत्वकल्पनम् । व्यपदेशविरोधेन भेदप्रतीतेरेवाप्रमाणत्वं किं न स्यादित्यतः तथा सति ‘आदित्यो यूपः’ इत्यादिव्यपदेशानुसारेण तद्भेदप्रत्यक्षस्यैवाप्रामाणिकत्वापत्त्या प्रत्यक्षानुसारेण व्यपदेशस्य तत्सिद्धीत्यादिपेटिकया जैमिनिना गौणताया अवर्णनीयत्वप्रसङ्गादिति भावेनाऽह- **व्यपदेशमात्रस्येति ॥** इत्यादावपीत्यादिपदेन ‘यजमानः प्रस्तरः’ इत्यादेः सङ्ग्रहः । अपि चेत्युक्तं दोषं निराकरोति- **यथेति ॥** तथा च न सर्वदोपलब्धिप्रसङ्ग इति भावः । ननु समवायिकारणासमवायिकारणनाशयोरेव कार्यनाशप्रयोजकत्वात्कथमतादृग्रूपस्य बिम्बसन्निध्यपगमस्य परिणामनाशहेतुत्वं स्यादित्यतस्तयोरिव निमित्त-कारणनाशस्य तत्प्रयोजकतानियामकस्य लोकदर्शनस्याविशिष्टत्वेन निमित्तकारणनाशस्य तत्प्रयोजकत्वमवश्य-मभ्युपेयमिति भावेन तदुदाहरति- **यथा हीति ॥** लोकदृष्टस्यानभ्युपगमे बाधकमाह- **दर्शनेनेति ॥** तस्यापि दर्शनमूलकत्वेनाविशेषादिति भावः । किमेतावता सिद्धमित्यत एतावता लोकदर्शनानुसारेण समवाय्यसमवायि-नाशयोः कार्यनाशप्रयोजकत्ववन्निमित्तनाशस्यापि प्रयोजकत्वात्तन्नाशेन परिणामनाशो युक्त इति निगमयति- **तस्मादिति ॥** परमप्रकृतमुपसंहरति- **तस्मादिति ॥**

**(व्या.टि.) अतिदिशतीति ॥** एत इत्येतच्छब्देन इति शेषः । मूलोक्तविशेषणकृत्यं व्यनक्ति- **य इत्यादिना ॥ केवलमिति ॥** आत्यन्तिकमनौपाधिकं चेत्यर्थः । ननु तयोरुक्तदोषानतिदेशे किमदुष्टत्वमुत दोषान्तर-मित्यतस्सत्यमाद्येऽदुष्टत्वं द्वितीये दोषान्तरमित्याह- **शुद्धभेदवादस्त्वित्यादिना ॥ अपरिहार्यत्वमिति ॥ (व्या.टि.)** अवधारणस्य भवनक्रियान्वयादित्यर्थः । कथमित्याक्षेपे । तदापादकाभावादित्यर्थः । **बहुत्वेति ॥** स्वाभाविकेति शेषः । अद्वैतस्यैव परमसिद्धान्तत्वादित्यर्थः । अपसिद्धान्तं व्यपोहति- **यथेति ॥ वक्तव्य-मिति ॥** वक्ष्यमाणस्य विकल्पस्योत्तरमिति शेषः । अपिपदसमुच्चेयं दर्शयति- **न केवलमिति ॥** नन्वत्र विशिष्ट-निषेधे शिष्टमिष्टं स्याद्, विशेषनिषेधे शेषाभ्यनुज्ञानन्यायात् । तथा च ‘भेदश्चोपाधितः कुतः’ इति तत्त्वप्रकाशिका-विरोध इत्यतोऽस्याऽशयं प्रकाशयति-**उपाधिकृत एवेति ॥** उक्तप्रति(त्यभि)ज्ञा दृष्टिविरुद्धेत्याह-**नन्विति ॥** उत्तरयति- **तद्भेदस्येति ॥** कुतः स्वाभाविकत्वमित्यतोऽपवादाभावे उत्सर्गस्य न्यायप्राप्तत्वेन प्रमाणानपेक्षणा-दित्याशयेनापवादाभावमाह- **न चेति ॥** बिम्बप्रतिबिम्बयोर्वास्तवभेदे बाधकमाशङ्कते- **तदिति ॥** आत्यन्तिक-साधर्म्यमित्यर्थः । **शास्त्रीय इति ॥** ‘वृद्धाच्छः’ इति च्छः, तस्येयादेशः । शास्त्रे उद्यन्तमित्यादिना स्वरूपैः प्रतिरूपस्य वारिस्थस्य । समभिव्याहारादित्यर्थः । प्रतिबिम्बस्य बिम्बभेदे बाधकान्तरञ्चाह- **अपि चेति ॥** परिणामं परिशेषयितुमन्यद्दूषयति- **विरुद्धेति ॥** परिशिष्टंपराचष्टे- **तथा सतीति ॥** ननु निमित्तापाये कथं कार्यावस्थानमित्यत आह- **नहीति ॥** यद्यपि निमित्तापाये नैमित्तिकापायो बहुस्थलेषु दृष्टः । पूर्वतन्त्रे प्रयाजेषु वा शिष्टापाये नाराशंसापायस्य, सामधेनीषु राजन्यापाये पाञ्चदश्यापायस्य, पितृयज्ञे आर्षेयवरणापाये तन्निमित्त-चोदकापायस्य दर्शनात् । व्याकरणेऽपि सिजादिलोपे तन्निमित्तवृद्ध्यादिलोपस्य, न्यायनयेऽपेक्षाबुद्धिनाशे द्वित्वनाशस्य, अदृष्टनाशे स्वर्गभोगनाशस्य च दर्शनात् । तथाऽपि नासौ नियतः । तुरीनाशेऽपि पटानाशात् । अङ्गीकार्येत्यादौ णिलोपेऽपि वृद्ध्यादिदर्शनादिति भावः । निगमयति- **तदेवमिति ॥** बिम्बप्रतिबिम्बम्बाभेदे प्रमाणं दूषयितुं पृच्छति- **किमिति ॥** सादृश्यस्याभेदाविनाभावाभावादित्याह- **न हीति ॥** अभेदप्रत्यभिज्ञाऽभावं भेदप्रतीत्या समर्थयते- **प्रतिबिम्बो हीति ॥** विपक्षे बाधकमाह- **अन्यथेति ॥** धर्मिण एवाप्रतीतावित्यर्थः । **कथमिति ॥** विरुद्धोभयप्रत्ययस्य सकृदेककरणेनानुत्पत्तेरित्यर्थः । गौणत्वे बीजमाह- **भेदप्रतीतीति ॥ तत्प्रसङ्गादिति ॥** तथा च तत्सिद्धिपेटिकाविरोध इति फलितम् । परिणतिपक्षोक्तबाधकमुद्धरति- **यथेति ॥** निमित्तापायो न साक्षान्नैमित्तिकापाये हेतुः, किन्तु विपरीतपरिणतिद्वारेत्याह- **विपरीतपरिणताविति ॥** निमित्तापायस्य विपरीतकार्योत्पादहेतुभावं निदर्शनेन द्रढयति- **यथा हीति ॥** स्थायित्वस्य दर्शनैकप्रमाणक-त्वात्कस्येत्याक्षेपः । न्यायनयमवलम्ब्योपसंहरति- **तस्मादिति ॥** परमप्रकृतमुपसंहरति- **तस्मादिति ॥ किमु-तेति ॥** सामान्याभावे विशेषस्यानाशङ्कनीयत्वादित्यर्थः । **मिथ्येति ॥** निरुपाख्यस्य कार्यकारणभावा-सम्भवादित्याशयः ॥

**मूलम्- आत्मन्यनात्मकल्पनारूपत्वान्मिथ्योपाधिरेव न युज्यते । मायामयी सृष्टिरपि तत्सदृशस्यान्यस्य विद्यमानत्व एव दृष्टा । द्रव्यत्वादिसादृश्ययुतं किञ्चिदधिष्ठान-माश्रित्यैव च ।**

**'अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना ।**
**न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि ।**
**मानस्यां वासनायां तु बहिर्वस्तुत्वकल्पनम् ।**
**स्वाप्नो भ्रमश्च मायायां कर्तृदेहादिवस्तुषु ।**
**चतुरङ्गबलत्वादिकल्पनं भ्रम इष्यते ।**
**न भ्रान्तिकल्पितं विश्वमतो विष्णुबलाश्रयम् ॥' इति ब्रह्मवैवर्ते ॥**

**(त.मं.)** इन्द्रजालवत् सदृशान्तरानपेक्षत्वं सम्भवतीत्यत आह- **मायामयीति ॥**

**टीका -**'न च मिथ्योपाधिकृतो भेदः क्वापि दृष्टः' इत्यनेन असम्भावनोक्ता । सा स्याद्यदि भेदः सत्यः स्यात् । मिथ्योपाधिरिति च निरुपाख्यः स्यात् । न चैवम् । किन्तु आरोपितेनैव उपाधिना भेदारोपः । तेन च आरोपिताशेषव्यवस्थासिद्धिरिति कुतोऽसम्भावना । उच्यते । भवेदेवं कथञ्चिद् यदि मिथ्योपाधिर्युज्येत । न चासौ युज्यत इत्याह- **आत्मनीति ॥** अध्यासस्याध्यस्यमान-सदृशाधिष्ठानप्रधानपूर्वकत्वनियमात् मिथ्योपाधिं वदताऽवश्यं तदध्यासाधिष्ठानं वाच्यम् । न चाऽत्मनोऽन्यदधिष्ठानं सम्भवति । उपाधिश्चाज्ञानमेव । तच्चाहमज्ञ इत्यनात्मतया प्रतीयते । ततश्च आत्मन्यनात्मकल्पनारूपत्वात् मिथ्योपाधेः आत्मन्यनात्मकल्पनायाश्च पूर्वमेव निराकृतत्वात् मिथ्योपाधिरेव न युज्यते, दूरे ततो भेदकल्पनादीति ।

नन्वैन्द्रजालिकनिर्मितायां मायामय्यां सृष्टावधिष्ठनाभावात् नास्त्यारोपस्याधिष्ठानपूर्वकतानियम इत्यत आह- **मायामयीति ॥** अत्र अधिष्ठानमात्रं प्रदर्शनीयं तस्यैव विप्रतिपन्नत्वात् । तथाऽपि शिष्याणां व्युत्पादनार्थं त्रितयमपि प्रदर्शितम् ।

नन्वेतदपि किमिति पूर्वमेवाऽशङ्क्य न परिहृतम् । उच्यते- जीवब्रह्मभेदेन द्विस्कन्धमेव चैतन्य-मिति मन्यमानैः एकजीववादिभिः जीवाश्रिताविद्याकल्पित एवाऽभ्यन्तरो बाह्यश्च प्रपञ्चः । जीवस्यैकत्वात् न साधारणासाधारणभेदोऽस्तीत्यङ्गीकृतम् । बहुजीववादिभिस्तु जीवेश्वरब्रह्मभेदेन त्रिस्कन्धचैतन्यमङ्गीकुर्वाणैः स्वाप्नादिवद् आध्यात्मिक एव प्रपञ्चो जीवाश्रिताज्ञानकल्पितः । अत एवासावसाधारणः । बाह्यस्त्वीश्वराश्रितमायाकल्पितः। तस्मादसौ साधारणः । यथैन्द्रजालिक-पुरुषाश्रितमायामयी सृष्टिः सर्वैरुपलभ्यत इत्यभ्युपगतम् । तत्र न केवलमान्तरस्य जीवाविद्या-कल्पितत्वं न युज्यते । अधिष्ठानप्रधानाभावात् । किन्तु ब्राह्यप्रपञ्चस्यापि ईश्वरमायाकल्पितत्व-मपि तत एव हेतोर्न युज्यते । मायामयसृष्टावप्यधिष्ठानाद्यव्यभिचारादितीदं प्रदर्शयितुमस्यात्रोप-न्यासः ।

आन्तरो बाह्यश्च प्रपञ्चो न भ्रान्तिकल्पितो निरधिष्ठानत्वात् निष्प्रधानत्वाद् इत्यनुमानद्वयस्य व्याप्तिपक्षधर्मतादिसद्भावेन न काऽपि शङ्का कार्येत्यभिप्रायेण तत्र पुराणवाक्यसम्मतिमाह-**अधिष्ठानं चेति ॥** चशब्देन प्रधानं समुच्चिनोति । सदृशमिति तदुभयविशेषणम् । आरोप्येणेति शेषः । एवं तथ्यवस्तुद्वयं विना । **क्वापि** अन्तर्बहिश्च । आन्तरासाधारणे व्यतिरेकव्याप्तिं दर्शयितुं स्वप्नादि-केष्वित्युक्तम् । बाह्ये साधारणेऽपि तत्प्रदर्शनाय मायादिकेष्विति । **अपि**रभिव्याप्तौ । तदुभयं क्रमेण प्रपञ्चयति- **मानस्यामिति ॥** पूर्ववद् दूषणपरिहाराय मानस्यामित्युक्तम् । मानस-वासनापरिणामे गजादावित्यर्थः । तुशब्दो मिथ्यात्वाद् व्यावर्तयति । मायायाञ्चेति सम्बन्धः । **कर्तै**न्द्रजालिकः । आदिपदेन मूलचीरादिग्रहणम् । **चत्वारि** हस्त्यश्वरथपदातिसञ्ज्ञानि **अङ्गानि** अवयवा यस्य तच्चतुरङ्गम् । तच्च तद् **बलं** सैन्यं च तस्य भावस्तत्त्वम् । आदिशब्देन व्याघ्रत्वादेर्ग्रह-णम् । अन्वयव्याप्तिस्त्वात्मनि स्फुटैवेति न प्रदर्शिता । 'न च विश्वस्याधिष्ठानं प्रधानं चास्ति' इति पक्षधर्मता च वक्तव्या । इदानीं साधनत्वाभिव्यक्तिपूर्वकं प्रतिज्ञामाह-

**न भ्रान्तीति ॥** यतो भ्रान्तेरधिष्ठानादिपूर्वकत्वं व्यापकं यतश्चेह तन्नास्ति अत इत्यर्थः । यदि विश्वमीश्वरवत्सत्यं स्यत्तदा तद्वदेव स्वतन्त्रमपि स्यादित्यत उक्तम्- **विष्ण्विति ॥**

**(र.टि.) निरुपाख्यः स्यादिति ॥** तथात्वे हि सकलसामर्थ्यविधुरत्वेनाऽरोपजनकत्वं न स्यादिति भावः । **एवं तथ्यवस्तुद्वयमिति ॥** अनेन सदृशमधिष्ठानं प्रधानं चेति सत्यवस्तुद्वयं विनेतीतिशब्दाध्याहारेण मूलं योजितं भवति । **अपिरभिव्याप्ताविति ॥** भ्रमान्तरस्याऽदिपदेन सङ्गृहीतत्वान्न समुच्चयार्थत्वं सम्भवतीति भावः ।

**(रा.टि.)** इयता ग्रन्थेन मिथ्येत्यस्यासदित्यर्थमुपेत्यासता सत्यो भेदो नेत्युक्तम् । अधुना नासत्त्वं मिथ्याशब्दार्थो, नापि भेदस्सत्यः इत्युपेयत इत्याशङ्कते- **न च मिथ्योपाधिकृत इति ॥ तेन चेति ॥** आरोपितभेदेनेत्यर्थः । **अन्यदधिष्ठानमिति ॥** सर्वस्य मिथ्यात्वादिति भावः । **आत्मनीति ॥** व्याप्ते ब्रह्मणीति भ्रमनिरासा-यान्तःकरणावच्छिन्नं परिच्छिन्नचैतन्यमेवाऽत्मशब्दार्थ इति द्योतनायाहमज्ञ इत्यनात्मतयेत्युक्तम् । अहमर्थाधि-करण इति योज्यम् । **निराकृतत्वादिति ॥** 'न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः' इत्यादिग्रन्थेनेति भावः । **(रा.टि.) कल्पनादीति ॥** आदिपदेन व्यवस्थाग्रहः । **नन्वेतदपीति ॥** मायामयी सृष्टिरपीत्यादिकम् । 'अतो न कुत्रापि'इत्युपसंहारग्रन्थात्पूर्वमेवाऽरोपस्याधिष्ठानादिनियमोक्तिप्रस्ताव एवेत्यर्थः । **साधारणेति ॥** अनेकजीवसाधरणो बाह्यः । तत्तज्जीवमात्रासाधारण आभ्यन्तर इति भेद इत्यर्थः । **ईश्वरेति ॥** मायाशबलं सगुणम् । **ब्रह्मेति ॥** निर्गुणं चैतन्यम् । स्वप्नादिवदिति परमतरीत्योक्तिः । **आध्यात्मिक इति ॥** सुखदुःखादिरूपः। असाधारणस्तत्तज्जीवमात्रदृश्यः । **साधारण इति ॥** सर्वजीवदृश्यः । सृष्टिरपीत्यपिपदसूचितमर्थमाह- **न केवल-मिति ॥** मायेत्यादिमूलार्थमाह- **मायामयेति ॥** अधिष्ठानादितोऽन्यत्तथ्यं वस्तुद्वयमिति भ्रमनिरासाय शेषोक्त्या योजयति- **एवं तथ्यवस्तुद्वयमिति ॥** सदृशमित्यनन्तरमितिशब्दो योज्य इति भावः । **व्यतिरेकेति ॥** विश्वं न भ्रान्तिकल्पितम् अधिष्ठानादिसदृशतथ्यवस्तुद्वयपूर्वकत्वाभावादात्मवदिति प्रयोगे 'तथ्यवस्तुद्वयं विना न भ्रान्तिः' इत्युक्तस्य यो यो भ्रमस्स सर्वोऽपि सदृशवस्तुद्वयपूर्वक इत्येवंरूपव्यतिरेकव्याप्तिमित्यर्थः । आदिपदं पूर्वत्रापि योज्यमिति भावेनोक्तम्- **स्वप्नादिकेष्विति ॥** आदिपदेन सुखदुःखादिग्रहः । **अपिरभिव्याप्ता-विति ॥** आदिपदेन भ्रमान्तरग्रहणेऽप्यशेषभ्रमग्रहणायाभिव्याप्त्यर्थकोऽपिशब्द इत्यर्थः । **तदुभयं** स्वप्नादौ बाह्ये च व्याप्तिरस्तीत्येदुभयमित्यर्थः । **पूर्ववद्दूषणेति ॥** 'स्वप्नेऽपि वासनारूपं सत्यमेव जगन्मनसि स्थितं बहिःष्ठत्वेन' इत्येतदवतारिकायामुक्तानां स्वाप्नार्थानां सत्यत्वे पार्श्वस्थानामुपलम्भप्रसङ्ग इत्यादिदूषणानां परिहारायेत्यर्थः। वासनाया अतीन्द्रियत्वात्तत्र बहिःष्ठत्वाऽरोपायोग इत्यत आह- **मानसेत्यादि ॥ मूलेति ॥** मूलिकेत्यर्थः । चीरो वस्त्रखण्डः । **अन्वयव्याप्तिरिति ॥** यदधिष्ठानादिहीनं तन्न कल्पितमित्येवंरूपेत्यर्थः। **न प्रदर्शितेति ॥** पुराणवाक्य इति योज्यम् ।

**(श्री.टि.) निरुपाख्यः स्यादिति ॥** तथात्वे हि सकलसामर्थ्यविधुरत्वेनाऽरोपजनकत्वं न स्यादिति भावः । **अशेषव्यवस्थेति ॥** गुरुशिष्यादिव्यवस्थेत्यर्थः । **अनात्मतयेति ॥** अहमर्थरूपात्माश्रितत्वेनाऽत्मभिन्नतये-त्यर्थः । कल्पनादीत्यादिपदेनोक्तव्यवस्थाग्रहणम् । **ऐन्द्रजालिकः** पुरुषः । **पूर्वमिति ॥** 'सादृश्यं च द्रव्यत्वादिकं किञ्चिच्छङ्खादीनां पीतादीनां चास्त्येव' इति ग्रन्थानन्तरमेवेत्यर्थः । **स्कन्धः** प्रभेदः । **आभ्यन्तरो** दुःखादिः । **बाह्यो** घटादिः । **भेदोऽस्तीति ॥** सर्वोऽपि प्रपञ्चोऽसाधारण एवेति भावः । **आध्यात्मिको** दुःखादिः । **असा-धारणः** तन्मात्रवेद्यः । **साधारणः** सर्ववेद्यः । **न युज्यते** द्विस्कन्धचैतन्यवादिमते । **बाह्येति ॥** त्रिस्कन्धचैतन्य-वादिमत इत्यर्थः । **तत एवेति ॥** अधिष्ठानप्रधानयोरभावादेवेत्यर्थः । नन्वैन्द्रजालिकपुरुषनिर्मितायां मायामय्यां सृष्टावधिष्ठानाद्यभावात्तद्दृष्टान्तेन मायामय्यामीश्वरसृष्टावपि तदभावः किन्न स्यादित्यतो दृष्टान्त एवासम्मत इति वक्तुं प्रवृत्तस्य मायामयी सृष्टिरपीति वाक्यस्य तात्पर्यमाह- **मायामयसृष्टावपीति ॥** ऐन्द्रजालिक-सृष्टावपीत्यर्थः । **अत्रेति ॥** बहुजीववादिमतनिराकरणावसर इत्यर्थः । **एवं तथ्यवस्तुद्वयं विनेति ॥** अनेनाऽरोप्येण सदृशमधिष्ठानं चशब्देन सूचितं सदृशं प्रधानश्चेति तथ्यवस्तुद्वयं विनेति इतिशब्दाध्याहारेण मूलयोजना सूचिता भवतीति द्रष्टव्यम् । आन्तरं यदसाधारणं तस्मिन् । **तत्प्रदर्शयितुं** तां व्यतिरेकव्याप्तिं दर्शयितुम् । **अपिरभिव्याप्ताविति ॥** भ्रमान्तरस्याऽदिपदेन गृहीतत्वान्न समुच्चयार्थत्वं सम्भवतीत्यर्थः । तथाच **(श्री.टि.)** स्वप्नमायादीत्यादिपदोक्तस्यासङ्कोचव्यञ्जनमपिशब्दार्थ इति भावः । **उभयं** स्वप्नमायेत्युक्तमुभ-यम् । उभयत्राप्यधिष्ठानसद्भावमिति यावत् । **पूर्ववदिति ॥** सत्यत्वे प्रागूर्ध्वमुपलम्भप्रसङ्ग इति दूषणपरिहाराये-त्यर्थः । **इत्युक्तमिति ॥** मानसवासनामयत्वोक्त्या पूर्ववत्परिहारो ज्ञातव्यः । **मूलं** मूलिका । **चीरं** वस्त्र-खण्डः । **अवयवाः** एकदेशाः । व्याघ्रत्वादेरित्यादिपदेन बिडालत्वादिग्रहणम् ।

**(पां.टि.)** भेदस्य सत्यत्वं स्यादित्युपलक्षणम् । व्यवस्था सत्या स्यादित्यपि द्रष्टव्यम् । मिथ्योपाधिरिति च निरुपाख्यः

स्यादित्युपलक्षणम् । भेदोऽपि न सत्य इति निरुपाख्यः स्यादित्यपि द्रष्टव्यम् । निरुपाख्यस्योपाधेः सकलसामर्थ्यरहितत्वेन भेदजनकत्वासम्भववन्निरुपाख्यस्य भेदस्यापि व्यवस्थाजनकत्वासम्भवस्याविशिष्ट-त्वात् । अत एव त्रयाणामप्यारोपितत्ववर्णनमसङ्गतम् । अन्यथोपाधिभेदयोरेव तदवक्ष्यदिति ज्ञेयम् । **न चाऽत्मन इति ॥** तदन्यस्य मिथ्यात्वादिति भावः । अस्तु तर्ह्यात्मनः सत्यत्वादुपाध्यध्यासाधिष्ठानत्वमित्यतो विरुद्धरूपेण प्रतीयमानयोरात्मोपाध्योर्नाधिष्ठानाध्यस्तभावः । अन्यथाऽध्यासानिवृत्तिप्रसङ्गादिति भावेनोपाधेर्विरुद्धतया प्रतीतिमुपदर्शयितुं तन्निर्दिशति- **उपाधिश्चेति ॥** भेदकल्पनादीत्यादिशब्देन व्यवस्थाकल्पनपरिग्रहः । **विप्रतिपन्न-त्वादिति ॥** तदभावस्यैव पूर्वमाशङ्कितत्वेन तस्यैव विप्रतिपन्नत्वादित्यर्थः । **नन्वेतदपि पूर्वमेवेति ॥** तत्र तत्र शङ्कितव्यभिचारपरिहारेणोक्तव्याप्तिव्यवस्थापकस्वप्नेऽपि वासनारूपमेवेत्यादिपूर्वग्रन्थ एवेत्यर्थः । प्रतिपत्ति-सौकर्यादिति भावः । **अत एवेति ॥** जीवाश्रिताज्ञानकल्पितत्वेन जीवेनैव दृश्यमानत्वादन्येनादृश्यमानत्वादे-वेत्यर्थः । **तस्मादिति ॥** मायाकल्पितत्वादेवेत्यर्थः । मायाकल्पितस्य साधारणत्वं दृष्टान्तोपदर्शनेनोपपादयति-**यथेति ॥** उपलभ्यत इत्यतः परं तथेश्वराश्रितमायाकल्पितं घटादिकमपि सर्वैरुपलभ्यमानत्वात्साधारणमिति शेषः । **तत एवेति ॥** निरधिष्ठानत्वादित एवेत्यर्थः । **तदुभयेति ॥** सदृशमधिष्ठानं सदृशं प्रधानमित्यधिष्ठानप्रधान-योर्विशेषणमित्यर्थः ।

अधिष्ठानप्रधानयोः परस्परं सादृश्यमिति भ्रान्तिनिवारणायापेक्षितं शेषं पूरयति - **आरोप्येणेति शेष इति ॥** तच्चैकपदवाच्यत्वेन बोध्यम् । **एवं तथ्यवस्तुद्वयं विनेति ॥** अनेन सदृशमधिष्ठानं प्रधानं चेति सत्यवस्तुद्वयं विनेतीति शब्दाध्याहारेण योजितं भवति । भ्रमान्तरस्याऽदिशब्दसङ्गृहीतत्वेन तत्समुच्चायकत्वासम्भवेन तदानर्थक्यमित्यत आह- **अपरिभिव्याप्ताविति ॥** 'सर्वकर्माण्यपि सदा' इत्यादाविवेति शेषः । एतद्व्युत्पादनं च तद्ग्रन्थोक्तं तत एवावधेयम् । **पूर्ववदिति ॥** तात्कालिकोत्पत्तिविनाशत्वे प्राङ्मृदादीनामूर्ध्वं च कपालादीनां चोपलम्भप्रसङ्गादिवारणाय वासनारूपं मनसि स्थितमिति पूर्वग्रन्थ इवात्रापि 'मानस्यां वासनायाम्' इत्युक्तमित्यर्थः । ततश्च भावनाऽपरनामकमानसवासनोपादानकत्वात्स्वाप्नार्थानां बाह्यमृदाद्युपादानकत्वा-भावान्न तेषामुपलब्धिप्रसङ्गः । नापि स्वशिरश्छेदादेरनुपलम्भप्रसङ्ग इति भावः । मानसवासनाया अतीन्द्रियत्वे-नाधिष्ठानत्वायोगात्तत्र बहिर्वस्तुत्वकल्पनमनुपपन्नमित्यतः मानसवासनाशब्देन मानसवासनापरिणामरूप-गजादीनामेव विवक्षितत्वादतीन्द्रियद्व्यणुकोपादानकत्र्यणुकवदतीन्द्रियवासनोपादानकानामपि गजादीना-**(पां.टि.)** मैन्द्रियकतयाऽधिष्ठानत्वोपपत्तेर्युक्तं तत्र बहिर्वस्तुत्वकल्पनमिति भावेन 'मानस्यां वासनायाम्' इत्येतद् व्याचष्टे- **मानसेति ॥** मानसवासनायां बहिर्वस्तुत्वकल्पनं स्वप्नो भ्रम इत्येतावतैव विवक्षितपूर्तेः मूले चशब्दानर्थक्यमाशङ्क्य भिन्नक्रमतया तस्यार्थवत्तामाह- **मायायां चेति सम्बन्ध इति ॥** अनुमानापेक्षित-व्याप्तेरप्रदर्शनान्मूले न्यूनतामाशङ्क्य परिहरति- **अन्वयव्याप्तिरिति ॥** तथापि तदपेक्षितपक्षधर्मताया अप्रदर्शनान्न्यूनत्वमेवेत्यतस्तस्या अनावश्यकत्वात्तदप्रदर्शनं न दोषायेति सत्यपि परिहारेऽङ्गीकृत्य तदावश्यकत्वं परिहारान्तरमाह- **न चेत्यादि ॥** अत इत्यस्य यत इत्येतत्सापेक्षत्वेन तदुपदर्शनपूर्वकमत इत्येतद्योजयति- **यत इति ॥**

**(व्या.टि.)** पुनः प्रत्यवतिष्ठते- **न चेति ॥ असम्भावनेति ॥**'नासतो दृष्टत्वात्' इति सूत्रोक्तासतः सदुत्पत्त्य-सम्भावना अत्रानूदितेत्यर्थः । **स्याद्यदीति ॥** कार्यकारणवैरूप्यमिति शेषः । तदुपपादयति- **भेदः सत्यः स्यादित्यादिना ॥ मिथ्योपाधिरितीति ॥** अत्रेति शब्दः पदार्थविपर्यासे वर्तते 'नवेति विभाषा' इतिवत् । तथा च मिथ्योपाधिशब्देनेत्यर्थः । स्यादित्यतः पूर्वमभिहित इति शेषः । कारणकार्यसारूप्यमाह- **आरोपितेनै-वेति ॥ भेदारोप इति च ॥** समाधत्ते- **उच्यत इति ॥** कथञ्चिदित्यनेनाऽरोपाणां सत्यानां परम्परयोत्पादेऽपि नाऽरोपितानामसत्यानामिति सूचयति । आत्मनीति परिशेषसिद्धानुवाद इत्याह- **अध्यासस्येति ॥** उपाधिमपि परिशिनष्टि- **अज्ञानमेवेति ॥ अनात्मतयेति ॥** प्रत्यगाधेयतया पराक्त्वेनाज्ञानज्ञानतदाधारतया प्रतीचः प्रतीतिविरुद्धतया प्रतीयमानत्वान्न तत्रारोप इति भावः । **अनात्मकल्पनाया इति ॥** अहमज्ञानमिति भ्रान्तेर-निरूप्यत्वादित्यर्थः । **पूर्वमिति ॥** 'न हि कश्चिदहमहं न भवामीति भ्रान्तो दृश्यते' इति ग्रन्थ इत्यर्थः । अध्यासस्याध्यस्यमानसदृशाधिष्ठानप्रधानपूर्वकत्वनियमेऽनैकान्त्यं शङ्कते- **नन्वित्यादिना ॥** आधिक्यमाशङ्क्य निराह- **अत्रेति ॥ त्रितयमपीति ॥** 'प्रसङ्गे वस्तुस्थितिः कथनीया' इति न्यायादिति भावः । प्रकरणविच्छेदहेतुं पृच्छति- **नन्वेतदपीति ॥** निरस्यमतभेदेन निरासप्रकारभेद इत्याशयेनाऽह- **उच्यत इति ॥** मन्यमानैरिति दैवादिकः । **इदं प्रदर्शयितुमिति ॥** बाह्यप्रपञ्चो न मायाकल्पितो निरधिष्ठानत्वान्निष्प्रधानत्वादिति प्रयोगं सूचयितुमित्यर्थः । **अस्य** व्यभिचारस्य । **अत्र** बहुजीववादिनो निरासावसर इत्यर्थः ।

**पुराणसम्मतिमाहेति ॥** व्याप्तिपक्षधर्मतयोः पुराणोक्तत्वान्नासिद्धिशङ्केति भावः । समुच्चेयमन्तरा समुच्च-यानुपपत्तेस्तं दर्शयति-

**चशब्देनेति ।। तदुभयेति ।।** अधिष्ठानप्रधानोभयेत्यर्थः । तत्प्रतियोगिविशेषं विशेषेण पोषयति- **आरोप्येणेति ।।** विवृतमेतन्निपुणतरमधस्तात् । साधारणासाधारणयोः पृथग्व्याप्तिप्रदर्शनाय द्विपदं पृथगभिसम्बध्य वाक्यभेदेन योजयति- **उक्तमिति ।।** उक्त्यभिसंहितमित्यर्थः । **अभिव्याप्ताविति ।। सर्वस्मिन्** आन्तरे बाह्ये चेत्यर्थः । **उभयमिति ।।** भ्रममिति शेषः । **पूर्वेति ।।** किं ते अनादिनित्याः उतोत्पत्तिविनाशवन्त इति विकल्प्य दूषणेत्यर्थः। पदद्वयतात्पर्यमाह- **मानसेति ।। व्यावर्तयतीति ।।** वासनापरिणाममिति शेषः । **(व्या.टि.) चीवरं** वस्त्रम् । ननु 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसञ्ज्ञायाम् 'द्विगोः इति ङीपि चतुरङ्गीबलेति वक्तव्यम् । कथं चतुरङ्गेतीत्यतो विशेषणपूर्वपदबहुव्रीहिरयं न द्विगुरित्याह-**चत्वारीति ।। आदिशब्देनेति ।।** आदिशब्दार्थादित्वनिरूपकत्वेनेत्यर्थः । व्यतिरेक-व्याप्तेः पक्षधर्मताव्यधिकरणत्वादृजुरन्वयव्याप्तिः कुतो न दर्शितेत्यत आह- **अन्वयव्याप्तिस्त्विति ।।** उपनयं दर्शयति- **न च विश्वस्येति ।। साधनत्वेति ।।** साधनत्वं च अत इति पञ्चम्या व्यज्यते । **विष्णुबलेति ।।** अनेन श्रौतमायामयत्वोक्तिरपि 'अनेन सर्वगतत्वमाया-मयशब्दादिभ्यः' इति सूत्रदिशा 'शक्त्या मायाख्यया' इति भागवते प्रयोगात्, 'तान् यज्ञस्य मायया सर्वानवयजामहे' इति शक्तौ वैदिकप्रयोगाच्च, बलाश्रितत्वपरतया व्याख्यातेति वेदितव्यम् ।

**मूलम्-** **'न च मायाविना माया दृश्यते विश्वमीश्वरः ।**
**सदा पश्यति तेनेदं न मायेत्यवधार्यताम् ।।' इति च ।**
**'अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद् भवेत् ।**
**सर्वापरोक्षविद्विष्णुर्विश्वदृक्तन्न तन्मृषा ।।' इति च ।।**

**(त.मं.)** देशकालस्वरूपव्यवहितं सर्वमप्यपरोक्षं विदन् विष्णुः **विश्वं** जगत् पश्यति । तस्मात् तद्विश्वं मिथ्या न ।

**टीका-** विश्वस्येश्वरमायाकल्पितत्वाभावेऽनुमानान्तरमपि व्याप्तिपक्षधर्मतोपपादनप्रयासनिरासाय पुराणवाक्येनैव दर्शयति- **न चेति ।।** चशब्दो यस्मादित्यर्थे, अवधारणे वा । मायाविना पुरुषेण मायामयं गजादिकं नैव दृश्यत इति व्यतिरेकव्याप्तिप्रदर्शनम् । विश्वमीश्वरः सदा पश्यतीति पक्षधर्मतोक्तिः । सदेति स्वरूपकथनम् । मायाव्यपि मायामयं परोक्षतो जानातीति व्यभिचारः स्यात् । तत्परिहारार्थं दृशिग्रहणम् । दृशिर्हि साक्षात्कारे वर्तते । तेनेदं न मायेति साधनत्वख्यापनेन साध्यनिर्देशः । नेश्वरमायाकल्पितमिति यावत् ।

अयमत्र प्रयोगः-विश्वं नेश्वरमायाकल्पितं तेन दृश्यमानत्वात् । यद् यन्मायाकल्पितं न तत् तेन दृश्यते यथैन्द्रजालिकं मायाविनेति । यद् येन दृश्यते तत् तन्मायाकल्पितं न भवतीत्येवम् ऋजावन्वये सम्भवति किं वक्रो व्यतिरेक उपन्यस्त इति चेत्, उच्यते- व्याप्तिप्रदर्शनं व्यभिचारनिरसनं चेत्युभयमप्यनेन कृतं भवतीति ।

ननु मायाविना मायिकं वस्तु मा दर्शि । ईश्वरेण दृश्यमानमपि विश्वं तन्मायामयं किं न स्यात् । तथा च विपक्षे बाधकाभावान्नेदं मायामयमिति अवधारणानुपपत्तिरिति चेन्न । मायाया लोकोपमत्वेऽदृष्टकल्पनाप्रसङ्गात् । अलौकिकत्वेऽविद्यामयत्वापातात् । उभयबहिर्भावे त्वस्माक-मप्रतिपक्षत्वात् । तदेवं विपक्षे बाधकसद्भावाद्युक्तमवधारणम् । तदिदमुक्तमित्यवधार्यतामिति । प्रसक्तपरिषेधेऽन्यत्राप्रसङ्गादमायामयत्वमेव सिद्ध्यति । अथ वा नेदं मायामयं मायावित्वाभिमतेन दृश्यमानत्वादिति प्रयोगः ।

पुराणवाक्येनैवात्रानुमानान्तरमाह- **अपरोक्षेति ।।** अत्र पूर्वार्धेन व्याप्तिं दर्शयति । अधिष्ठान-मापरोक्ष्येण पश्यतः तत्राऽरोपितमिथ्यार्थदर्शनं न भवेत् । अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्राऽरोपितं न भवेदिति यावत् । अनेनान्वयो दर्शितः । यन्मिथ्या तस्य दर्शनमधिष्ठानापरोक्षदृशो न भवेदिति व्यतिरेको वा । क्वचिदित्यनेन तदुभयनियमः । यद्यपि दृशिरेवापरोक्षज्ञाने वर्तते । तथापि 'पश्यार्थैश्चानालोचने' इत्यादौ ज्ञानमात्रेऽपि प्रयोगादपरोक्षेत्युक्तम् ।अत

एव सर्वापरोक्ष-विद्विष्णुर्विश्वदृगिति सामान्येन हेतोः पक्षधर्मतां दर्शयति- सर्वात्मनाऽपरोक्षतोऽधिष्ठानाभिमतं जानन् विष्णुः विश्वं पश्यतीति। अपरोक्षतः शुक्तिकां पश्यन्नेव तदारोपितं रजतं पश्यतीति व्यभिचारपरिहाराय सर्वेत्युक्तम् । नन्वेवं दृष्टान्ते साधनाभावः प्राप्नोति । न हि लोके कोऽपि किमपि सर्वात्मना पश्यति । मैवम् । सर्वशब्देनासाधारणाकारस्य विवक्षितत्वात्। व्याप्तिकथनेऽपि एतदनुसन्धेयम्। आप्तवाक्यादिना शुक्तिकां जानन्नपि रजतं पश्यतीति व्यभिचारनिरा-सायापरोक्षेत्युक्तम् । विष्णुरित्यसिद्धिपरिहाराय स्वरूपकथनम् । **तत्** तस्मात्, **तत्** विश्वम्, मृषा न भवतीति साधनत्वाभिव्यक्तिपूर्वकं साध्यं निर्दिशति।

अयमत्र प्रयोगः-विवादपदं नाऽरोपितं सर्वात्मनाऽधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वात् । यदेवं तदेवम् । यथोक्तविधया स्तम्भविदा दृश्यमानो न कुम्भस्तत्राऽरोपितः । अथ वा यन्नैवं तन्नैवम् । यथा शुक्तिकारोपितं रजतमुक्तरीत्या शुक्तिदर्शिना न दृश्यत इति । इदं च दुःखादेः अविद्यामयत्व-निरासेऽपि समानम् । अधिष्ठानयाथात्म्यापरोक्षज्ञानेऽपि भ्रमानुवृत्तौ कदाऽप्यनिवृत्तिप्रसङ्गः। ततश्च ब्रह्मज्ञानान्वेषणवैयर्थ्यप्रसङ्गः। अनयैव दिशा ईश्वरदृष्टत्वहेतुरपि प्रपञ्चस्य सत्यत्वेऽनुसन्धेयः । तद्दृष्टस्य स्वस्वरूपस्य सत्यत्वदर्शनात्। अन्यथेश्वरस्यापि भ्रान्तत्वापत्तेरिति।

**(र.टि.) अवधारणे वेति ॥** अन्यथा व्याप्तेरसिद्धिरिति भावः । **सदेति स्वरूपकथनमिति ॥** पश्यतीति विशेषोक्त्यैव व्यभिचारशङ्काऽनवकाश इति भावः । ननु केनचिद् दृश्यमानमपि कस्यचिन्मायामयं भवतीतीश्वरेण दृश्यमानत्वलक्षणविशेषेण सामान्यतो मायामयत्वाभावः कथं साध्यत इत्यत आह- **नेश्वरमायेति ॥ मायाया इति ॥** मायाया **लोकोपमत्वे** स्वाश्रयाव्यामोहकत्वे तेन दृश्यमाने तन्मायामयत्वस्य लोकेऽ**दृष्टस्यैव** प्रपञ्चे पक्षे कल्पनाप्रसङ्गादित्यर्थः । तथा च वियदादिकं मायिकं दुःखादिकन्त्वाविद्यकमिति विभागो न स्यादित्यर्थः। **अप्रतिपक्षत्वादिति ॥** मायाशब्दवाच्यप्रकृत्याद्युपादानकत्वादेः प्रपञ्चेऽस्माभिरङ्गीकृतत्वादिति भावः । नन्वनेनानुमानेनेश्वरमायाकल्पितत्वाभावसिद्धावपि न सर्वथाऽमायामयत्वं सिद्ध्यति । अन्यमायाकल्पितत्व-सम्भवादित्यत आह- **प्रसक्तेति ॥** प्रपञ्चस्य मायामयत्वपक्षे ईश्वरमायामयत्वस्यैव प्रसक्तिः, न त्वन्यमायामय-त्वस्य। तैस्तथाऽनङ्गीकारादिति भावः। **अथ वेति ॥** अस्मिन्व्याख्याने 'न माया' इत्यत्रेश्वरपदसंयोजने पक्षधर्मताप्रतिपादकवाक्ये ईश्वरपदं किमर्थमित्यतो व्यभिचारवारणायेश्वरपदं मायावित्वाभिमतपरमित्य-भिप्रेत्योक्तम्- **मायावित्वाभिमतेनेति ॥ तत्राऽरोपितं न भवेदिति यावदिति ॥** तेन तस्य व्याप्तिकथनस्य न तन्मृषेति प्रयोगानानुगुण्यं परिहरति- **सामान्येनेति ॥** अन्यथा सर्वापरोक्षदृगिति वक्तव्यम् । न ह्येकस्य व्याप्तिरपरस्य पक्षधर्मता वक्तुं शक्यत इति भावः । **व्याप्तिकथनेपीति ॥** असाधारणाकारेणाधिष्ठानापरोक्ष-ज्ञानवत इत्यर्थः । अन्यथाऽनादिः स्यादिति भावः । **अनयैव दिशेति ॥** अनेन 'सर्वापरोक्षविद्विष्णुः' इत्युत्तरार्धं प्रकारान्तरेण व्याख्यातं भवति । अस्मिन् व्याख्याने सर्वापरोक्षविदिति विपक्षे बाधकसूचनार्थमुक्तमित्य-भिप्रेत्याऽह- **अन्यथेति ॥ ईश्वरस्यापि** सर्वापरोक्षविदोऽपीत्यर्थः ।

**(रा.टि.)** अवधारणे वेत्युक्तं व्यनक्ति- **नैव दृश्यत इति ॥** तथा च नियमांशप्रवेशेनाव्यभिचारस्य सूचनाद्व्याप्तेः पुनर्दर्शनं भवतीति भावः। नैव दृश्यत इत्युक्तत्वादेव सदेत्यस्य कृत्याभावादाह- **स्वरूपकथनमिति ॥** उत्तरत्रा-परोक्षदृश इति ज्ञानसामान्येऽपि दृशेर्दर्शनादाह- **दृशिर्हीति ॥** साक्षात्कार एव प्रसिद्ध इत्यर्थः। ईश्वरदृष्टत्वेऽपि मायाव्यन्तरकल्पितत्वमस्तु इति शङ्कानिरासायोक्तम्- **नेश्वरमायेति ॥** ईश्वरमायाकल्पितत्वस्यैव पराङ्गीकारादिति भावः । **अनेनेति ॥** विपक्षे हेत्वभावप्रदर्शनपरेण व्यतिरेकव्याप्तिकथनेनेत्यर्थः । **लोकोपमत्व इति ॥** लोके मायाविनो माया स्वकल्पितमैन्द्रजालिकं मायाविनो न प्रदर्शयति । परव्यामोहकत्वात्तस्याः । ईश्वरनिष्ठा च माया तादृशी चेत्स्वाश्रयप्रदर्शकत्वस्य लोकमायायामदृष्टस्य कल्पनाप्रसङ्गादित्यर्थः । **अलौकिकत्वे** लौकिक-मायाविलक्षणत्वे । स्वाश्रयस्य भ्रमकरत्वरूपत्वे त्वविद्यामयत्वापातात् । अज्ञानस्य स्वाश्रयव्यामोहनाव्यामोहन-भेदेन मायाऽविद्याभेदस्य 'न चैकजीवाज्ञानपरिकल्पितं समस्तम्' इत्येतदवतारिकायां परप्रक्रियायामुपन्यस्त-त्वात् । तथा च तद्द्वैविध्यभङ्ग इति भावः । **अप्रतिपक्षत्वादिति ॥** मायाशब्दितभगवदिच्छाप्रकृत्यादिनिर्मितत्वेन तन्मयत्वस्येष्टत्वादिति भावः । नन्वीश्वरेण दृष्टत्वात्तदीयमायाकल्पितत्वाभावेऽपि मायाव्यन्तरमाया-कल्पितत्वमस्तु, तस्यादृश्यं चास्त्वित्यत आह- **प्रसक्तेति ॥** परैरीश्वरमायाकल्पितत्वस्यैवाङ्गीकारेण तस्यैव

**(रा.टि.)** प्रसक्तत्वादन्यदीयमायामयत्वेऽप्रसङ्गात् मायामयत्वसामान्याभावः सिद्ध्यतीति भावः । 'न च मायाविना माया' इत्यादिना व्याप्तिमुक्त्वा ' पश्यतीदमीश्वरः' इत्युक्त्या स एवात्र मायावित्वेनाभिमतो नान्य इति भावेन सामान्याभावसिद्धिकं स्पष्टं प्रयोगमाह- **अथ वेति ॥**

अपरोक्षदृशः पुंस एवेदं रूप्यमिति मिथ्यावस्तुनो दर्शनात् कथमिदं व्याप्तिप्रदर्शनमित्यत आह- **अधिष्ठान-मिति ॥** सर्वात्मनेति योज्यम् । व्याप्यव्यापकस्वरूपव्यक्त्या व्याप्तिशरीरं निष्कृष्य दर्शयति- **अधिष्ठानेति ॥** अत्रापि सर्वात्मनेति योज्यम् । अत एव वक्ष्यति- सर्वात्मनेति । व्याप्तिकथनेऽप्येतदनुसन्धेयमिति च । **तदुभ-येति ॥** अन्वयव्यतिरेकोभयेत्यर्थः । **अपरोक्षज्ञाने वर्तत इति ॥** 'दृशिर् प्रेक्षणे' इति धातुपाठादिति भावः । **पश्यार्थैरिति ॥** अनालोचनेऽचाक्षुषज्ञाने वर्तमानैः पश्यार्थैः दृशिधात्वर्थकैः धातुभिर्योगे युष्मदस्मदादेशास्त्वमा-वित्यादयो न भवन्तीति सूत्रे अनालोचन इत्युक्त्या ज्ञानसामान्येऽपि दृशिधातुरस्तीति ज्ञापनादपरोक्षपदमर्थवदिति भावः । **अत एवेति ॥** अपरोक्षे प्रसिद्धत्वादेवेत्यर्थः । अन्यथा विश्वापरोक्षदृगित्युच्येतेति भावः । **सर्वेत्युक्त-मिति ॥** सर्वप्रकारेणेत्युक्तमित्यर्थः । **आप्तवाक्यादिनेति ॥** प्रबलदोषाहितापरोक्षभ्रमस्य परोक्षाधिष्ठान-गतविशेषदर्शनानिवर्त्यत्वादिति भावः । **असिद्धिपरिहाराय स्वरूपकथनमिति ॥** सर्वात्मनाऽधिष्ठाना-परोक्षज्ञानवता दृश्यमानत्वादिति वक्ष्यमाणहेतोः न केनापि तादृशेन दृश्यमानत्वमस्ति, अतोऽसिद्धो हेतुरिति शङ्कानिरासाय सर्वज्ञेश्वरेण दृश्यमानत्वमिति प्रदर्शनायोक्तं विष्णुपदं, न तु व्यभिचारवारकतया व्याप्तिग्रह-णाय । अतस्स्वरूपकीर्तनमेतदित्यर्थः । तदित्यस्याऽवृत्तिमुपेत्याऽह-**तत्तस्मात्तद्धिश्वमिति ॥ सर्वात्मनेति ॥** अधिष्ठानासाधारणाकारेणेत्यर्थः । विशेषणानां कृत्यं प्रागेवोक्तम् । **उक्तेति ॥** सर्वात्मनाऽधिष्ठानापरोक्षज्ञानवता दृश्यमान इत्यर्थः । व्यतिरेकमाह- **यन्नैवमिति ॥ उक्तरीत्येति ॥** सर्वात्मनाऽपरोक्षतश्शुक्तिदर्शिनेत्यर्थः । **समानमिति ॥** विगीतं दुःखादिकं नाऽरोपितं सर्वात्मनाऽधिष्ठानभूतात्मापरोक्षज्ञानवता दृश्यमानत्वादि-त्युक्तिसम्भवादिति भावः । नन्वत्र सर्वापरोक्षदृग् ईश्वरो जीवो वा । नाऽद्यः । तेन दृश्यमानत्वेऽपि तदज्ञाना-कल्पितत्वरूपानारोपितत्वस्यापि सत्त्वात् । नान्त्यः । अहमर्थस्य सर्वात्मनाऽपरोक्षतो भानेऽपि तस्यानधिष्ठान-त्वात् । अधिष्ठानभूतनिर्विशेषचितश्च नापरोक्ष्यमिति चेन्न । अहमिति प्रत्यये विशेष्यभानस्यापि चन्द्रिकादा-वुपपादनादिति ज्ञेयम् । हेतोरप्रयोजकत्वनिरासाय तर्कमाह- **अधिष्ठानेति ॥** हेतुसत्त्वेऽपि साध्याभाव इत्यर्थः। अस्तु को दोष इत्यत आह- **ततश्चेति ॥** भ्रमानिवृत्तिप्रसङ्गतश्चेत्यर्थः । सत्यपि तज्ज्ञाने तदनिवृत्तेरिति भावः। विश्वदृगित्युक्त्याऽन्यत्स्वपक्षसाधनमपि सूचितमित्याह- **अनयैव दिशेति ॥** विवादपदं सत्यम् ईश्वरदृष्टत्वादिति हेतुरपीत्यर्थः । को दृष्टान्त इत्यत आह- **तद्दृष्टस्येति ॥** विपक्षे बाधकमाह- **अन्यथेति ॥** तद्दृष्टस्याप्यसत्त्व इत्यर्थः ।

**(श्री.टि.) यस्मादित्यर्थ इति ॥** तथा च तेनेति सङ्गच्छत इति भावः । **अवधारणे वेति ॥** अन्यथा व्याप्ति-प्रदर्शनासिद्धेरिति भावः । ननु सदापदं व्यर्थम् । न च मायावी मायामयं परोक्षतस्तदानीं जानातीति व्यभिचार-**(श्री.टि.)** परिहाराय सदेत्युक्तमिति वाच्यम् । दृश्यते पश्यतीत्यपरोक्षज्ञानोक्त्यैव व्यभिचारपरिहारात्तद्वयर्थ-मेवेत्यत आह- **सदेति स्वरूपकथनमिति ॥ दृशिग्रहणमिति ॥** दृश्यत इति दृशिग्रहणमित्यर्थः । कथं तेन व्यभिचारपरिहार इत्यत आह- **दृशिर्हीति ॥** मायावी मायामयं परोक्षत एव जानाति नापरोक्षत इति न व्यभिचार इति भावः । **साधनत्वख्यापनेनेति ॥** सहेति शेषः। ननु केनचिद् दृश्यमानमपि कस्यचिन्मायामयं भवत्येव । अत ईश्वरेण दृश्यमानत्वरूपविशेषेण न मायेति सामान्यतो मायामयत्वाभावः कथं साध्यत इत्यतस्तदपि विशेषपरतया व्याचष्टे- **नेश्वरमायाकल्पितमिति यावदिति ॥ वक्र इति ॥** भावेन भावसाधनेऽभाव-योर्व्याप्तेर्वक्रत्वादिति भावः । **उपन्यस्त इति ॥** 'न च मायाविना माया' इति श्लोकेनेत्यर्थः । प्रदर्शनमित्यनन्तरं तेनेति शेषः । **व्यभिचारनिरसनं चेति ॥** व्यतिरेकव्याप्तिप्रदर्शनेन साध्याभाववति हेत्वभावलाभाद्धेतोः साध्य-व्यभिचारनिरसनमपि कृतं भवतीत्यर्थः । अप्रयोजकतामाशङ्कते- **नन्विति ॥ अवधारणानुपपत्तिरिति ॥** अवधार्यतामित्युक्तनिश्चयरूपावधारणानुपपत्तिरित्यर्थः । **मायाया लोकोपमत्व इति ॥** स्वाश्रयाव्यामोहक-त्वेनैन्द्रजालिकार्थहेतुभूतमायासादृश्य इत्यर्थः । **अदृष्टकल्पनाप्रसङ्गादिति ॥** तेन दृश्यमाने तन्मायामयत्वस्य लोकेऽदृष्टस्यैव प्रपञ्चे कल्पनाप्रसङ्गादिति भावः । **अलौकिकत्व इति ॥** लोकमायाविलक्षणत्वे स्वाश्रय-व्यामोहकत्व इति यावत् । **अविद्यामयत्वापातादिति ॥** मायायाः स्वाश्रयव्यामोहकत्वेऽविद्यात्वापत्त्या विश्वस्याऽविद्यकत्वप्रसङ्गादित्यर्थः । तथा च वियदादिकं मायिकं दुःखादिकन्त्वाविद्यकमिति विभागो न स्यादिति भावः । **अप्रतिपक्षत्वादिति ॥** मायाशब्दवाच्यप्रकृत्याद्युपादानकत्वादेः प्रपञ्चेऽस्माभिरङ्गीकृतत्वादिति भावः। नन्वेवमीश्वरमायाकल्पितत्वाभावसिद्धावपि न सर्वथा मायामयत्वाभावसिद्धिः । अन्यमायामयत्वस्यापि सम्भवादिति चेन्न । परैरन्यमायामयत्वानङ्गीकारेणाप्रसक्तेः ।

प्रसक्तेश्वरमायामयत्वस्याभावसाधने परिशेषात् सर्वथाऽमायामयत्वमेव सिद्ध्यतीत्याह- **प्रसक्तेति ।।** पूर्वमन्यमायाकल्पित्वस्याप्रसङ्गादीश्वरमायाकल्पित-त्वाभावे साध्ये परिशेषादमायामयत्वमेव सिध्यतीत्युक्तम् । इदानीन्तु सर्वथाऽमायामयत्वमेव साध्यतयाऽभिप्रे-तम् । ईश्वरपदं च सामान्येन मायावित्वाभिमतपुरुषपरमित्याशयेनाऽह- **अथ वेति ।।** ईश्वरमादाय पक्षे हेतूपपादनं द्रष्टव्यम् । **इति प्रयोगः** 'न च मायाविना' इत्यनेन सूचित इति शेषः ।

**पुराणवाक्येनैवेति ।।** व्याप्तिपक्षधर्मतोपपादनप्रयासनिरासायेति शेषः । **व्याप्तिमिति ।।** अन्वयव्याप्तिं व्यतिरेकव्याप्तिं चेत्यर्थः । तदुभयमप्युपपादयति- **अधिष्ठानमित्यादिना ।।** ननु दृशेः साक्षात्कारार्थत्वादधि-ष्ठानमापरोक्ष्येण पश्यत इत्यनुपपन्नम् । तत्रारोपितमिथ्यादर्शनं न भवेदित्येतदपि तन्मृषेति निगमनसूचित-वक्ष्यमाणप्रयोगाननुगुणमित्यत आह- **अधिष्ठानापरोक्षज्ञानवतेति ।।** अत्र यत्किञ्चिदपरोक्षज्ञानवता दृश्यमाने शुक्तिरजते व्यभिचारवारणायाधिष्ठानेत्यध्याहृतम् । शुक्तिलक्षणाधिष्ठनापरोक्षज्ञानवता दृश्यमाने रङ्गारोपितरजते व्यभिचारवारणाय तत्रेत्युक्तम् । यस्मिन्नधिष्ठानेऽपरोक्षज्ञानं तत्रेत्यर्थः । **तदुभयनियम इति ।।** व्याप्तिद्वये व्यभिचाराभावः प्रदर्शित इत्यर्थः । **अपरोक्षज्ञान इति ।।** तथाच मूलेऽपरोक्षपदं गतार्थमिति भावः । **ज्ञान-(श्री.टि.) मात्रेऽपीति ।।** पश्यार्थैरित्यस्य ज्ञानार्थैरिति वृत्तिकारैर्व्याख्यतत्वादिति भावः । **प्रयोगादिति ।।** दृशेः प्रयोगदर्शनादित्यर्थः । 'पाघ्राध्मा' इत्यादिना सूत्रेण दृशेः पश्यादेशविधानादिति द्रष्टव्यम् । तेन पश्यतेरेव ज्ञानमात्रे प्रयोग न तु दृशेरतः कथमेतदिति निरस्तम् । **अत एवेति ।।** यतो दृशिर्ज्ञानसामान्यार्थकोऽत एवेत्यर्थः। **सामान्येनेति ।।** विदिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षदृगिति वक्तव्यम् । न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मता वक्तुं युक्तेति भावः । कथमित्यतस्तद्विवृणोति- **सर्वात्मनेति ।।** सर्वशब्दस्यार्थ-कथनमिदम् । पश्यतीति पक्षधर्मतां दर्शयतीति सम्बन्धः । **शुक्तिकां पश्यन्** इदन्त्वेनेत्यर्थः । **सर्वेत्युक्तं** सर्वात्मनेत्युक्तमित्यर्थः । **किमपि सर्वात्मनेति ।।** पलपरिमाणयुक्ततयेत्यर्थः । तथात्वे सार्वज्ञं स्यात् । 'एकश्च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः । न समर्थः' इति वचनादिति भावः । **असाधारणाकारस्य** शुक्तित्वादि-रूपाधिष्ठानगतासाधारणाकारस्य । **एतदिति ।।** सर्वात्मनेत्येतद्विशेषणमित्यर्थः । अन्यथा न्यूनता स्यादिति भावः । **आप्तवाक्यादिनेति ।।** अपरोक्षभ्रमस्य परोक्षविशेषदर्शनमात्रानिवर्त्यत्वादिति भावः । **असिद्धि-परिहारायेति ।।** अस्मदादिषु सर्वात्मना जगदधिष्ठानापरोक्षज्ञानाभावात्पक्षे हेतोरसिद्धिरित्याशङ्कायां पक्षे विष्णु-ज्ञानमादाय हेतूपपादनार्थं विष्णुग्रहणं न तु हेतुशरीरप्रविष्टतयेति भावः । **साधनत्वाभिव्यक्त्यीति ।।** साधन-त्वाभिव्यञ्जकपञ्चमीविभक्तिपूर्वकमित्यर्थः । तथा च 'लिङ्गस्य वचनं हेतुस्साधकत्वप्रकाशकम्' इति कारिका-वचनात्साधकत्वाभिव्यञ्जकपञ्चमीविभक्त्यन्तलिङ्गवचनरूपहेतुपूर्वकमिति यावत् । **साध्यं** साधयितुं योग्यं साध्यं, साध्यधर्मविशिष्टधर्मिरूपं पक्षं निर्दिशतीति । 'हेतुपूर्वं पुनःपक्षवचो निगमनं मतम्' इति कारिकावचनात् निगमयतीति भावः । **सर्वात्मनेति ।।** असाधारणाकारेणेत्यर्थः । **उक्तविधयेति ।।** 'सर्वात्मना' इत्या-द्युक्तविधयेत्यर्थः । एवमुक्तरीत्येत्यपि व्याख्येयम् । **इदं चेति ।।** 'अपरोक्षदृशः' इत्यादिनोक्तमनुमानमित्यर्थः। अप्रयोजकत्वशङ्कापरिहाराय विपक्षे बाधकतर्कमाह-**अधिष्ठानयाथात्म्येति ।।** इष्टापत्तिरिति चेत्तत्राऽह- **तत-श्चेति ।।** ब्रह्मज्ञानेत्यतः पूर्वं विश्वभ्रमनिवृत्तिसाधनीभूतेति शेषः कार्यः । 'सर्वापरोक्षविद्विष्णुः' इत्युत्तरार्धं प्रकारान्तरेण व्याख्याति- **अनयैव दिशेति ।।** तथा च प्रपञ्चः सत्यः ईश्वरदृष्टत्वात् तत्स्वरूपवदिति प्रयोगो द्रष्टव्यः । **तद्दृष्टस्येति ।।** ईश्वरदृष्टस्य स्वस्वरूपस्येत्यर्थः । अस्मिन् व्याख्याने 'सर्वापरोक्षवित्' इत्येतद्विपक्षे बाधकसूचनार्थमुक्तमित्यभिप्रेत्याऽह- **अन्यथेति ।।** ईश्वरदृष्टस्यापि सत्यत्वाभाव इत्यर्थः । **ईश्वरस्यापीति ।।** सर्वापरोक्षविदोऽपीत्यर्थः ।

**(पां.टि.)** तेनेति तच्छब्दश्रवणाद्यस्मादित्यर्थकतया चशब्दं व्याख्याति- **यस्मादित्यर्थ इति ।। अवधारणे वेति ।।** अन्यथा व्याप्तिप्रदर्शनासिद्धेरिति भावः । ननु पश्यतीत्यपरोक्षज्ञानोक्त्यैव व्यभिचारपरिहारात्सदेति व्यर्थमित्यत आह- **सदेतीति ।। साधनत्वख्यापनेनेति ।।** सहयोगे तृतीया । ननु परेण मायात्वस्यानभ्युपगमेन तदभावसाधनस्य सिद्धसाधनत्वात्कथं न मायेति निगमनम् । न च तस्य न मायाजन्यमित्यर्थकत्वाद्युक्तं निगमनमिति वाच्यम् । केनचिद्दृश्यमानस्याप्यन्यमायामयत्वस्य सम्भवादप्रयोजकत्वेनेश्वरेण दृश्यमानत्वेन **(पां.टि.)** मायामयत्वाभावसाधनासम्भवादित्यतस्तदुक्तेरभिप्रायमाह - **नेश्वरमायाकल्पितमिति याव-दिति ।। लोकोपमत्व इति ।।** स्वाश्रयाव्यामोहकत्वेनैन्द्रजालिकार्थहेतुभूतमायातुल्यत्व इत्यर्थः । **अदृष्टेति ।।** तेन दृश्मानस्य तन्मायामयत्वकल्पनस्यादृष्टत्वादिति भावः । **अलौकिकत्व इति ।।** लोकमायाविलक्षणत्वे स्वाश्रयव्यामोहकाविद्यात्वापत्त्या विश्वस्याऽविद्यकत्वप्रसङ्गात् । वियदादिकं मायिकं दुःखादिकन्त्वाविद्यकमिति पराभिमतविभागाभावप्रसङ्गादिति भावः । **अप्रतिपक्षत्वादिति ।।** मायाशब्दवाच्येश्वरेच्छानिमित्तकत्वस्य

तच्छब्दवाच्यप्रकृत्युपादानकत्वस्य चास्मभिरङ्गीकृतत्वादिति भावः । नन्वनेनेश्वरमायामयत्वाभावसिद्धावप्यन्य-मायामयत्वाभावस्यासिद्ध्या कथममायामयत्वावधारणमित्यत आह- **प्रसक्तेति ॥** अस्मिन् पक्षे बहुकुसृष्ट्या-श्रयणं मन्वानः पक्षान्तरमाह- **अथ वेति ॥**

**वर्तत इति ॥** तथा च मूलेऽपरोक्षपदं व्यर्थमिति भावः । **पश्यार्थैरिति ॥** दर्शनं पश्यः, अस्मादेव निपातनाद्भावे शप्रत्ययः । 'पाघ्राध्मा' इति पश्यादेशः । पश्योऽर्थो येषान्ते पश्यार्थाः । यदि तु पश्यतीति पश्य इति 'पाघ्रा-ध्माधेट्दृशःशः' इति कर्तरि शः क्रियते ततो द्रष्टृभिरित्यर्थः स्यात् । ततश्चानालोचने इति आलोचनविपर्यासोऽनर्थकः स्यात् । न ह्यालोचनार्था द्रष्टृर्था भवन्ति । **आलोचनं** चाक्षुषज्ञानम् । तस्य पर्युदस्तत्वात् । 'दृशिरिह ज्ञानमात्रे वर्तते अदर्शनं लोप इत्यत्र यथा' इति आकरे स्थितत्वादिति भावः । **अत एवेति ॥** यतोऽत्र दृशिर्ज्ञान-सामान्यार्थकोऽत एवेत्यर्थः । **सामान्येनेति ॥** विदिति ज्ञानसामान्यस्यैवोदितत्वात् । अन्यथा सर्वापरोक्षदृगिति ब्रूयात् । न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मतेति युज्यत इति भावः । **एतदिति ॥** सर्वात्मनेत्येतदित्यर्थः । अन्यथा न्यूनत्वप्रसङ्गादिति भावः । **आप्तवाक्यादिनेति ॥** अपरोक्षभ्रमस्य परोक्षविशेषदर्शनानिवर्त्यत्वादिति भावः । हेतुगतविशेषणानां व्यभिचारवारकत्वनियममभ्युपेत्याऽह- **स्वरूपकथनमिति ॥** अत्राप्रयोजकत्वपरिहाराय विपक्षे बाधकतर्कमाह- **अधिष्ठानेति ॥** व्यावर्तकाकारेणाधिष्ठानज्ञानेऽपीत्यर्थः । **ततश्चेति ॥** ब्रह्मज्ञानेऽपि तदनुवृत्त्या तदनिवृत्तेरिति भावः । ननु च व्याप्तिविकलत्वादस्य हेतोः कथं सत्यत्वसाधकत्वमित्यत आह- **दृष्टस्येति ॥** तथाप्यप्रयोजकत्वान्न सत्यत्वसाधकत्वमस्येत्यत आह- **अन्यथेति ॥**

**(व्या.टि.) उपपादनप्रयासेति ॥** प्रतिवादिनो वादिन्यनाश्वासात् । **इत्यर्थ इति ॥** अव्ययानामनेकार्थत्वादि-त्यर्थः । उदाहरणवाक्यं दर्शयति- **मायाविनेति ॥** 'अस्मायामेधास्रजो विनिः' इति मत्वर्थीयो विनिः । मयटो अभावेऽपि तदर्थोऽवसेय इत्याह- **मायामयमिति ॥** उपनयं विविनक्ति- **विश्वमित्यादिना ॥ स्वरूपकथनमिति ॥** अव्यावर्तकत्वादित्यर्थः । **उदाहरणवाक्ये दृशिग्रहणमिति ॥** उपनये पश्यतीति तिङ्प्रकृतितयेति शेषः । 'पाघ्राध्मा' इति पश्यस्य दृश्यादेशत्वादिति भावः । अस्यापरोक्षार्थत्वे हि तत्परिहारः स्यात्, कथं तदित्यत आह- **दृशिर्हीति ॥** हिशब्देन 'दृशिर् प्रेक्षणे' इति धातुपाठप्रसिद्धिं सूचयति । **साधन-त्वेति ॥** तेनेति हेतुत्वार्थतृतीययेति भावः । एवमागमं प्रयोगपरतया व्याख्याय प्रयोगं दर्शयति-**अयमत्रेति ॥** व्यतिरेकव्याप्तिप्रदर्शनानौचित्यं शङ्कते- **यद्येनेति ॥ ऋजाविति ॥** पक्षधर्मतासमानाधिकरण इत्यर्थः । **वक्र (व्या.टि.) इति ॥** तद्व्यधिकरण इत्यर्थः । लाघवेन समाधत्ते- **व्याप्तिप्रदर्शनमिति ॥** अन्वये प्रदर्शिते व्यभिचारनिरासाय वाक्यान्तरमपेक्षितं स्यात् । व्यतिरेके प्रदर्शिते साध्येन विना भावनिरसने मुखतो व्यभिचार-निरसनमनुषङ्गतोऽविनाभावप्रदर्शनमप्येकेन वाक्येन कृतं स्यादिति लाघवमित्यर्थः । मा दर्शीति चिण्णन्तम् । **अवधारणेति ॥** विपक्षप्रतिक्षेपानुपपत्तिरित्यर्थः । माया किं लोकोपमा, उतालौकिकीति विकल्पं हृदि निधायाऽद्यं निराह- **लोकोपमत्व इति ॥** 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः । **अदृष्टेति ॥** लोकादृष्टेत्यर्थः । द्वितीयं निराचष्टे- **अलौकिकत्व इति ॥** लोकसिद्धार्थापरिग्रहे पारिभाषिकमायाशब्दितत्व इत्यर्थः । **उभयबहिर्भाव इति ॥** 'इन्द्रो मायाभिः', 'यज्ञस्य मायया' इत्यादाविव शक्तिरूपत्व इत्यर्थः । **अप्रतिपक्षत्वादिति ॥** तस्यैव स्वपक्षत्वेनाविरोधित्वादित्यर्थः । ननूक्तविधयेश्वरमायामयत्वासम्भवेनामायामयत्वावधारणं कुतः । न हि किञ्चिद्विशेषाभावे सामान्याभावसिद्धिरित्यत आह- **प्रसक्तप्रतिषेध इति ॥** शङ्कितपक्षनिरासेऽन्यत्रा-नाशङ्कनाद्यावद्विशेषाभावसिद्ध्या सामान्याभावसिद्धिरिति भावः । एवं पुराणे ईश्वरग्रहणेन सामान्यतो दृष्टपरतया व्याख्याय अप्रयोजकत्वाऽशङ्का बाधकेनापनीता । अत्रेश्वरग्रहणमतन्त्रीकृत्य दृष्टपरतया व्याख्याति- **अथ वेति ॥** अत्र तु सामान्यनिषेधेन विशेषशङ्काशङ्कुरेव न लगतीति भावः ।

**पुराणवाक्येनैवेति ॥** न पुनः स्वयं प्रयुज्य व्याप्तिपक्षधर्मतोपपादनप्रयासाद्यायासेनेति अनभिमतव्यावृत्तिः। 'नरं च नारायणमेव चाऽदौ ततः सुतौ द्वौ जनयाम्बभूवतुः' इतिवत् । **अत्रेति ॥** बाह्यविश्वमायामयत्व इत्यर्थः। अन्वयं दर्शयति- **अधिष्ठानमिति ॥** अत्राव्याप्यस्याव्यापकेन सम्बन्धप्रदर्शनाद्वैयधिकरण्यमित्यतोऽभि-सन्धिमाह- **अधिष्ठानेति ॥** व्याप्तिः केत्यत आह- **अनेनेति ॥** एवं मिथ्यादर्शनमित्यस्यैकपद्यं हृद्यवरुध्यान्वय-प्रदर्शनपरतया व्याकृतम् । अधुना मिथ्यापदपार्थक्येन व्यतिरेकप्रदर्शनपरतया व्याचष्टे- **यन्मिथ्येति ॥ उभ-येति ॥** अन्वयव्यतिरेकोभयस्येत्यर्थः ।

नन्वपरोक्षपदस्य दृशिनैकार्थ्यात्सहप्रयोगानुपपत्तिरित्यत आह- **यद्यपीति ॥ प्रयोगादिति ॥** दर्शनं पश्यः शप्रत्ययान्तो निपातः । अनालोचन इति विषयसप्तमी । तथाचानालोचनविषयैः पश्यार्थैरित्यनेनापरोक्ष-ज्ञानार्थकानां दृश्यादीनां सामान्यप्रत्यायकत्वमुक्तम् । न तु मुख्यता 'ज्ञोऽविदर्थस्य' इति यथा । 'पश्यार्थैश्चा-नालोचने' इत्येवं व्याख्यातं वैयाकरणैः-

पूर्वमन्वादेशे त्वामादीनादेशानुक्त्वा तत्प्रतिषेधकमिदं सूत्रम्। अचाक्षुषज्ञानार्थैर्धातुभिर्योगेनैते आदेशाः स्युरिति। तथैवोदाहृतम्- चेतसा त्वां समीक्षत इति। दृशिसमार्थ ईक्षत्यादिरुदाहृतो न दृशिः। प्रत्युत प्रत्युदाहृतः, आलोचने तु भक्तस्त्वा पश्यति चक्षुषेति। राजाऽमनुष्यपूर्वा सभा इतिवत्। तथा च टीकाकारोदाहृतसूत्रे दृशेः ज्ञानमात्रे प्रयोगोऽसिद्ध इति भाति। तथाऽपि सूत्रे पश्यार्थग्रहणानर्थक्यप्रसङ्गाद्दृशिसमार्थ एवोदाहर्तव्य इति समार्थस्य प्रयोगे सिद्धे दृशेरपि प्रयोगः सिद्धप्राय इत्यभिप्रायतः प्रयोगादित्युक्तम्। अथ वा दृशेः तिङन्तस्य प्रयोगाभावेऽपि अनालोचने पश्यार्थैरिति शप्रत्ययान्त-प्रयोगाभिप्रायेणेत्थमकथीति। अत एवास्वरसादादिग्रहणम्। तेन च 'दृशोऽनालोचने कन् च' इति सूत्रमुपा-**(व्या.टि.)** देयम्। तद्धचेवं काशिकायां व्याख्यातम् 'त्यदादिषूपपदेषु अनालोचनार्थाद्धातोः कन् चात्क्विन्। धातुश्च दृशिरेव स्वरूपग्रहणात्। 'आ सर्वनाम्नः' इत्याकारे यादृक् यादृशः तादृक् तादृशः इत्युदाहृत्य आलोचने तमिवेमं पश्यन्ति तद्दर्श इति प्रत्युदाहृतम्। तथा चात्र दृशेर्ज्ञानमात्रे प्रयोगः सिद्ध इति तदभिप्रायेण टीका नेया। यत्तु भट्टोजिः ' दृशोऽनालोचने' इत्येतदज्ञानार्थाद्धातोरिति व्यवीवरत्, तत्काशिकादिप्राचीनग्रन्थविरुद्धम्। उदाहरणप्रत्युदाहरणं विरुद्धम्। सौत्रानालोचनपदस्वारस्यविरुद्धं च। किञ्चाज्ञानार्थादिति व्याख्याने महाभाष्यविरोधः। तत्र हि कर्मकर्तरि व्युत्पत्तिर्दर्शिता। तथा हि 'तमिवेमं पश्यन्ति जनाः स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थः' इति। 'अनालोचने किम्। तं पश्यन्तीति तद्दर्शः कर्मण्यण्' इति प्रत्युदाहरणाच्च, ज्ञानसामान्यार्थकत्वं दृशेः प्रतीयते। इति मात्सर्यमुत्सार्य सुधीभिराकलनीयमिति दिक्। दृशेरापरोक्ष्ये मुख्यतां साधयति- **अत एवेति॥** विश्वदृगिति पक्षधर्मताप्रदर्शनाय **सामान्येना**ऽपरोक्ष्यविशेषणेन विना दर्शयतीत्यर्थः। केचित्तु सामान्येनेत्येतत् सर्वापरोक्षविदिति ज्ञानसामान्यवाचिविदिधातुनेति दृशेर्ज्ञानमात्रार्थोपोद्बलकतया व्याचख्युः। दर्शनप्रकारमाह-**सर्वात्मनेति॥** विष्णुर्विश्वदृगित्यस्यैव हेतुत्वमस्तु किमधिकेनेत्यतस्तत्कृत्यमाह- **अपरोक्षत इति॥**

सर्वशब्दार्थमजानानः शङ्कते- **नन्वेवमिति॥** अभिसन्धिमुद्घाटयति- **सर्वशब्देनेति॥ एतदिति॥** सर्वपद-मित्यर्थः। अन्यथा व्यभिचारेणाव्यभिचारप्रदर्शनासम्भवादिति भावः। अपरोक्षपदकृत्यमाह- **आप्तवाक्यादि-नेति॥** सोपाधिकभ्रमाभिप्रायेण प्रबलदोषाभिप्रायेण वेदमिति मन्तव्यम्। **स्वरूपेति॥** 'विष्णोर्नुकम्' इति श्रुत्युक्ताचिन्त्यवीर्यत्वरूपस्वरूपसम्भावकविशेषणमित्यर्थः। शेषं निगमनमित्याह- **तत्तस्मादिति॥** आगमं प्रयोगपरतया व्याख्याय प्रदर्शयति- **विवादपदमित्यादिना॥** इदं प्रयोगद्वयमान्तरस्याविद्यामयत्वेऽपि दर्शयति- **इदं चेति॥** विपक्षे बाधकमाह- **अधिष्ठानेति॥ कदाऽपीति॥** अनिवर्तकत्वसाम्यादि-त्यर्थः। पूर्वं विष्णुपदं स्वरूपकथनपरतया व्याख्यायाधुना विष्णुर्विश्वदृगित्यस्य स्वतन्त्रहेतुपरतया व्याचष्टे- **अनयैवेति॥** अस्य व्याप्तिं दर्शयति- **तद्दृष्टस्येति॥** विपक्षे बाधकमाह- **अन्यथेति॥** इति भेदे मिथ्यात्ववादिबहुजीववादिनिरासः।

**मूलम्- यदि चैकमेव ब्रह्मोपाधिभेदात्संसरति मुच्यते च तदा संसारिणां सर्वदा विद्यमानत्वात् सर्वदा संसार्येव ब्रह्म। अतस्तद्भावोऽपि न मुक्तिः सर्वदोपाधि-सम्बन्धत्वात्तस्य। न च शुद्धस्य नोपाधिसम्बन्ध इति वाच्यम्। उपाधिसम्बन्धस्योपाधि-सम्बन्धकल्पनेऽनवस्थाप्रसङ्गात्। न च तेनैव सम्बन्धेन सम्बद्धस्य। आत्माश्रय-प्रसङ्गात्॥**

**(त.मं.)** बहुजीववादं विस्तरान्निराकरोति- **यदीति॥** शुद्धस्यासङ्गत्वान्नोपाधिसम्बन्धः। किन्तु मायाशबलत्वेनाशुद्धस्यैवेति च न वाच्यम्। अशुद्धत्वस्योपाधिसम्बन्धापेक्षत्वात् उपाधि-सम्बन्धान्तरापेक्ष उपाधिसम्बन्ध इत्युक्तं स्यात्। तथा कल्पने चानवस्था। नोपाधिसम्बन्धान्तरापेक्ष उपाधिसम्बन्धः। किन्तु तेन उपाधिसम्बन्धेन स्वेन सम्बद्धस्य। ततः शुद्धस्यैव स्वसम्बन्ध इति च न स्यात्। उपाधेरात्मनः सम्बन्धानन्तरमात्मनः सम्बन्धो भवतीत्यात्माश्रयत्वप्रसङ्गात्।

**टीका-** एवमेकजीववादिनां मतस्योक्तान् दोषान् भेदस्य मिथ्यात्वं वदतां बहुजीववादिनां मतेऽप्यतिदिश्य तदुपपादनं कृतम्। इदानीं येऽद्वैतवादिनः सत्यमेव जीवब्रह्मणोः बहूनां जीवानां च मिथो भेदमौपाधिकमाहुस्तन्मतमनूद्य युक्तिविरोधेन दूषयति- **यदि चेति॥ एकं** (कमेव) स्वभावतो भेदरहितम्(तमेव)। **उपाधिभेदात्** उपाधिकृताद्भेदात्

। मयूरव्यंसकादित्वात्समासः। अनेकोपाधिसम्बन्धाद् अनेकजीवभावमापद्येत्यर्थः । **संसरति मुच्यते चेति ॥** यदुपाध्यवच्छिन्ने निवृत्तकर्मसमुचितमैक्यज्ञानं नोत्पन्नं तेन रूपेण **संसरति** दुःखादिकमनुभवति। यदुपाध्यवच्छिन्ने ज्ञानादिकमुत्पद्यते तेन रूपेण **मुच्यते**। आत्यन्तिकोपाधिनिवृत्तौ निर्दुःखपरमानन्दरूपब्रह्मभाव-मापद्यत इत्यर्थः।

अयं च तन्मतोपन्यासोऽधिकाशङ्काप्रदर्शनार्थः । तथा हि । न तावदेकजीववादिनामिवैतेषां जीवेश्वरब्रह्मव्यवस्थाबद्धमुक्तव्यवस्थागुरुशिष्यादिव्यवस्थानामसिद्धिः । जीवेश्वरब्रह्मणां जीवानां चान्योन्यं भेदस्याङ्गीकृतत्वात्। न चाद्वैतश्रुतिविरोधः। भेदस्यौपाधिकत्वेन स्वभावतोऽद्वितीय-त्वात्। न चैवमपि बहुजीववादिनां मायावादिनामुक्तदोषाः प्राप्नुवन्ति । उपाधीनां भेदस्य, अन्यस्यापि प्रपञ्चस्य सत्यत्वाभ्युपगमात् । न च उपाध्यादिसत्यत्वे ज्ञानेन निवृत्त्यनुपपत्तिः। ज्ञानकर्मसमुच्चयनिवर्त्यत्वाङ्गीकारात् इति। यद्यपि तैरेवमुच्यते। तथापि न बद्धमुक्तव्यवस्था जीवब्रह्मव्यवस्था च तेषां सिद्ध्यति। कथम्? 'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते' इत्यादिश्रुतेः संसारिणां सर्वदा विद्यमानत्वाद् ब्रह्मापि संसार्येवेत्यापन्नम् । तथा च तद्भावमापन्नस्यापि न मुक्तिः । न हि संसारिभावमापन्नो मुक्तो भवति । तथा च बद्धानां जीवानामेव भावो, न मुक्तस्य शुद्धस्य ब्रह्मण इति कथं व्यवस्थाद्वयसिद्धिः।

ननु संसारिणां सर्वदा विद्यमानत्वेऽपि ब्रह्मणः सर्वदा संसारित्वं कुतः? हेतुहेतुमद्भावाप्रतीतेरित्यत आह- **सर्वदेति ॥** ब्रह्मैव ह्युपाधिसम्बन्धात् संसरतीति परस्य मतम्। ततश्च संसारिणां सर्वदा विद्यमानत्वात् सर्वदा ब्रह्मण एव उपाधिसम्बन्धोऽस्तीत्युक्तं भवति। उपाधिसम्बन्ध एव च संसारकारणम्। तत्कथं ब्रह्मणो न सर्वदा संसारित्वमिति ।

ननु भवेदेवं बद्धमुक्तव्यवस्थाया जीवब्रह्मव्यवस्थायाश्चानुपपत्तिः, यदि शुद्धस्यैव ब्रह्मण उपाधिसम्बन्धं संसारं च ब्रूमः। किन्तु शुद्धमुपाधिभिरसम्बद्धमेवावतिष्ठते। तत्कथं तद्भावो न मुक्तिरत्यत आह- **न चेति ॥** कुतो न वाच्यमिति चेदुच्यते-उपाधिसम्बन्धमङ्गीकुर्वाणेन तावद-वश्यं प्रतिसम्बन्धि वक्तव्यम्। न हि सम्बन्धिनौ विना सम्बन्धोऽस्ति। न च जडस्योपाधिसम्बन्धः, तस्य चेतनभेदकारित्वानुपपत्तेः। चेतनस्य शुद्धस्य चेन्नोपाधिसम्बन्धः, तदोपाधिसम्बद्धस्यैव असावङ्गीकार्यः प्रकारान्तराभावात्। उपाधिसम्बन्धरहितं हि शुद्धमुच्यते। अस्तूपाधिसम्बद्ध-स्यैवोपाधिसम्बन्धः को दोष इत्यत आह- **उपाधीति ॥** जीवभेदनिमित्तोपाधिसम्बन्धार्थत्वेन कल्प्यमान उपाधिसम्बन्धः किमस्मादन्य उतायमेव। नाऽद्यः। सोऽपि सम्बन्धः उपाध्यन्तर-सम्बद्धस्यैवेत्यनवस्थाप्रसङ्गात्। अन्यथाऽयमेवोपाधिसम्बन्धः शुद्धस्य किं नाङ्गीक्रियते। सर्वेऽप्युपाधयः तत्सम्बन्धाश्च अनादय एव, तत्कथमनवस्थेति चेत्, तेषां सम्बन्धानां निमित्त-निमित्तिभावोऽस्ति न वा। आद्ये कथं नानवस्था। द्वितीये तु सम्बन्धाः सर्वेऽपि शुद्ध एवेत्या-पन्नम्। सिद्धविषयत्वान्नानवस्थादोष इति चेन्न। निमित्तनिमित्तिभावावस्थितानन्तोपाधिसम्बन्ध-सद्भावे प्रमाणाभावेन कल्पनामात्रत्वात्। तदिदमुक्तम्- **कल्पन इति ॥**

द्वितीयं निषेधति- **न चेति ॥** यो जीवभेदनिमित्तभूत उपाधिसम्बन्धः, तेनैव सम्बन्धेन सम्बद्धस्य स एव सम्बन्ध इति च नेत्यर्थः। कुत इत्यत आह- **आत्मेति ॥** उत्पत्तिज्ञप्त्यप्रतिबन्धकत्वान्नायं दोष इति चेन्न। निमित्तनिमित्तिभावाभ्युपगमात् । अन्यथा शुद्धस्यैवोपाधिसम्बन्ध इत्यापत्तेः । किं च तदुपाधिसम्बन्धवति तदुपाधिसम्बन्ध इत्यङ्गीकारे तदुपाधिसम्बन्धस्य आधारे प्रवेश आधेयत्वं चाङ्गीकृतम्। तथा च स्वोत्पत्त्यपेक्षोत्पत्तिवत् स्वज्ञानापेक्षज्ञानवत् स्वस्यैव आधाराधेयत्वेऽपि आत्माश्रयत्वं भवत्येव। अन्यथा यज्ञदत्तः किमिति न स्वात्मानमारोहेत्। केवले स्वस्मिन्नवर्तमा-नाददोष इति चेत्, तर्हि कुण्डलिनि स्वस्मिन् स्वयं वर्तेत। रूपविशिष्टे च रूपस्य वृत्तिः स्यात्। तस्मात् उपाधिसम्बद्धस्यैव उपाधिसम्बन्धाङ्गीकारेऽनवस्थादिप्रसङ्गात् शुद्धस्यैव उपाधिसम्बन्ध इत्यङ्गीकार्यम्

। तथा च न बद्धमुक्तादिव्यवस्थासिद्धिरिति व्यर्थ एव बहुजीवाभ्युपगमः ।

**(र.टि.)** भास्करमते जीवब्रह्मणोर्भेदस्य सत्यत्वादेकमेवेत्येतद्व्याचष्टे- **स्वभावत इति** ।। ननु कथमुपाधि-भेदादित्यस्योपाधिकृतभेदादिति व्याख्यानम् । 'शाकपार्थिवादीनाम्' इत्येतदविषयत्वेन समासानुपपत्तेरित्यत आह- **मयूरव्यंसकादित्वादिति** ।। उपाधिभेदेनापि कथं शुद्धस्य संसार इत्यतस्तात्पर्यमाह- **अनेकेति** ।। **ज्ञान-कर्मेति** ।। यद्यपि ज्ञानमज्ञानस्यैव निवर्तकमिति नियमेनाऽविद्यकत्वलक्षणमिथ्यात्वाभावे प्रपञ्चस्य ज्ञानेन निवृत्त्ययोगः । तथापि कर्मरूपसहकारिसामर्थ्यात् तत्समुचितं ज्ञानं सत्यमपि निवर्तयतीति भावः । **न बद्धमुक्त-व्यवस्था जीवब्रह्मव्यवस्था चेति** ।। 'सर्वदा संसार्येव ब्रह्म' इत्यनेन जीवब्रह्मव्यवस्थाऽनुपपत्तेः, 'अतस्तद्भा-वोऽपि न मुक्तिः' इत्यनेन बद्धमुक्तव्यवस्थाऽनुपपत्तेश्चोक्तत्वादिति भावः । ननु शुद्धातिरिक्तस्योपाधि-सम्बन्धरहितस्य चेतनस्योपाधिसम्बन्धो भविष्यति । अतः कथं प्रकारान्तराभाव इत्यत आह- **उपाधिसम्बन्ध-रहितमिति** ।। **अनादय एवेति** ।। तथा चोत्पत्त्यप्रतिबन्धकत्वादनवस्था न दोष इति भावः । नन्वन्यविशिष्टे स्वस्य वृत्त्यसम्भवेऽपि स्वविशिष्टेऽन्यस्मिन्नुपाधिसम्बन्धस्य वृत्तिः स्यादित्यत आह- **रूपविशिष्टे चेति** ।।

**(रा.टि.)** एकत्वगुणकमिति भ्रमनिरासायाऽह- **एकं स्वभावतो भेदरहितमिति** ।। **मयूरेति** ।। द्वितीयाद्यपादे 'मयूरव्यंसकादयश्च' इति सूत्रे मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्तीत्युक्तेरिति भावः । ननु जीवगतौ बन्धमोक्षाविति प्रसिद्धिः कथमित्यत आह- **अनेकेति** ।। **निवृत्तकर्मसमुचितमिति** ।। एतस्य कृत्यमग्रे व्यक्तम् । संसरति मुच्यते चेत्येतद्व्याहतिनिरासाय कारणोक्तिपूर्वं व्याचष्टे- **यदुपाधीति** ।। संसरतीत्यस्य व्याख्या- **दुःखादिकमनुभवतीति** ।। मुच्यत इत्यस्य व्याख्या- **आत्यन्तिकेति** ।। सत्यभेदाभेदवादिमतेऽप्युक्ता एव दोषा इति वाच्ये तन्मतोपन्यासः कुत इत्यत आह- **अयं चेति** ।। भेदेत्यादिवाक्यं व्याचष्टे- **यद्यपीत्या-दिना** ।। **ब्रह्मापि संसार्येवेत्यापन्नमिति** ।। तथा च कथं जीवब्रह्मव्यवस्था, जीव एवास्ति न ब्रह्मेत्यापन्नमिति भावः । 'अतस्तद्भावोऽपि न मुक्तिः' इत्यंशोक्तां बद्धाद्यव्यवस्थां च व्यनक्ति- **तथा च तद्भावमिति** ।। उत्तरवाक्यमवतारयति- **ननु भवेदेवमिति** ।। **प्रकारान्तराभावादिति** ।। जडस्य, उपाधिसम्बद्धस्य चेतनस्य वोपाधिसम्बन्ध इत्युक्तप्रकारद्वयात्प्रकारान्तराभावादित्यर्थः । ननूपाधिसम्बन्धहीनस्यास्तूपाधिसम्बन्धः । अतः कथं प्रकारान्तराभाव इत्यत आह- **उपाधिसम्बन्धरहितं हि शुद्धमुच्यत इति** ।। 'शुद्धमुपाधिसम्बन्ध-रहितमेवावतिष्ठते' इति त्वयैवोक्तेरिति भावः । ननु त्रिचतुरोपाधिसम्बन्धानन्तरमुपाधिसम्बन्धः शुद्धस्यास्तु ततो नानवस्थेत्यत आह- **अन्यथेति** ।। त्रिचतुरकक्षानन्तरं शुद्धस्यैवोपाधिसम्बन्धाङ्गीकारे । **अयमेव** प्राथमिक एवेत्यर्थः । **सिद्धविषयत्वादिति** ।। बीजाङ्कुरानवस्थावत्प्रमितविषयत्वादित्यर्थः । **द्वितीयमिति** ।। उतायमेवेति प्राग्विकल्पितमित्यर्थः । फलितार्थमाह- **स एव सम्बन्ध इति** ।। जीवभेदकोपाधिसम्बन्ध एव तदुपाधिसम्बन्धो नोपाध्यन्तरसम्बन्धे तदन्योपाधिसम्बन्धकल्पनेत्यर्थः । **अन्यथेति** ।। सर्वोपाधिसम्बन्धानामन्योन्यानपेक्षत्वे शुद्धेनैव सर्वेषां सम्बन्धः इत्यस्याऽपन्नत्वादिति भावः । यत्किञ्चिद्वस्तुना विशिष्टे स्वस्य वर्तनं न दोषायेति भावेन शङ्कते- **केवल इति** ।। यत्किञ्चिद्विशिष्ट इत्यत्र स्वान्ययत्किञ्चिद्विशेषणविशिष्टेति वाऽर्थः । स्वविशिष्टे स्वस्य वर्तनं न दोषायेति वा । आद्य आह- **कुण्डलिनीति** ।। अन्त्य आह- **रूपविशिष्ट इति** ।।

**(श्री.टि.)** ननु भास्करमते जीवब्रह्मणोर्भेदस्य सत्यत्वादेकमेवेति कथमुक्तमित्यतस्तद्व्याचष्टे- **स्वभावत इति** ।। उपाधीनां भेदादित्यन्यथाप्रतीतिनिवारणाय मयूरवद्व्यंसको मयूरव्यंसक इतिवन्मध्यमपदलोपी समा-सोऽयमित्याह-**उपाधिकृतादिति** ।। **मयूरव्यंसकादित्वात्** तद्गणस्थत्वात् । तस्याऽकृतिगणत्वादिति भावः । ननूपाधिकृतभेदेनापि कथं शुद्धस्य संसार इत्यत आह- **अनेकेति** ।। तामेवाधिकाशङ्कां दर्शयति- **तथा हीत्या-दिना** ।। **उक्तदोषा इति** ।। 'न च मिथ्योपाधिकृतो भेदः क्वापि दृष्टः' इत्यादिनोक्ता इत्यर्थः । **निवृत्त्यनुपपत्ति-रिति** ।। यतो ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमित्यङ्गीकारादिति भावः । सत्यं यतो ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति नियमेन अज्ञानकार्यत्वलक्षणमिथ्यात्वाभावे प्रपञ्चस्य ज्ञानेन निवर्त्यत्वायोग इति । तथापि कर्मरूपसहकारिसामर्थ्यात्तत्समुचितं ज्ञानं सत्यमपि निवर्तयिष्यत्येव । दूरगमनादिनियमविशेषविशिष्टं सेतुदर्शनं ब्रह्महत्यादेरिवेत्याशयेनाऽह- **ज्ञानकर्मसमुच्चयेति** ।। इत्यधिकाशङ्काप्रदर्शनार्थमिति सम्बन्धः । **तथा च बद्धानामित्यादि** ।। जीवानामेव भावो न ब्रह्मण इत्यनेन जीवब्रह्मव्यवस्थाया असिद्धिस्सर्वदा संसार्येव ब्रह्मेत्यनेन सूचिता । बद्धानामेव भावो न मुक्तस्येत्यनेन बद्धमुक्तव्यवस्थाया असिद्धिरतस्तद्भावोऽपि न मुक्तिरित्यनेन सूचितेति ज्ञातव्यम् । अवतिष्ठत इत्यनन्तरमितीति शेषः । **प्रतिसम्बन्धीति** ।। उपाधिसम्बन्धः कस्येति पृष्टे अस्येति प्रतिसम्बन्धि किमपि वक्तव्यमित्यर्थः । **जडस्येति** ।। तथा च

तदेव प्रतिसम्बन्धीति भावः । **तस्य** उपाधिसम्बद्धस्य जडस्य । **अनुपपत्तेरिति ।।** व्यधिकरणत्वादिति भावः । ननु शुद्धातिरिक्तस्योपाधिसम्बन्ध-रहितस्य चेतनस्योपाधिसम्बन्धो भविष्यति । अतः कथं प्रकारान्तराभाव इत्यत आह- **उपाधिसम्बन्धरहितं हीति ।।** तथा च यदुपाधिसम्बन्धरहितं तस्यैव शुद्धत्वेन शुद्धातिरिक्तस्योपाधिसम्बन्धरहितस्य चेतनस्यैवाभावादुपाधिसम्बद्धस्यैवोपाधिसम्बन्धोऽङ्गीकार्य इत्यर्थः । **अस्माद्** जीवभेदनिमित्तोपाधिसम्बन्धात् । ननु किञ्चिद्दूरं गत्वा स उपाधिसम्बन्धः शुद्धस्येत्यङ्गीक्रियते, अतो नानवस्थेत्यत आह- **अन्यथेति ।। अयमेवेति ।।** प्राथमिको जीवभेदनिमित्तोपाधिसम्बन्ध एवेत्यर्थः । **अनादय एवेति ।।** तथा चोत्पत्त्यप्रतिबन्धकत्वान्नानवस्थादोष इति भावः । **कथं नानवस्थेति ।।** निमित्तनिमित्तिभावोपेतोपाधिसम्बन्धपरम्परयेत्यर्थः । **द्वितीये त्विति ।।** निमित्तनिमित्तिभावमनङ्गीकृत्य उपाध्यन्तरसम्बन्धे उपाधिसम्बन्धस्यानङ्गीकारे सर्वेऽप्युपाधिसम्बन्धाः शुद्ध एवेत्यापन्नं, ततश्च तद्भावमापन्नस्य न मुक्तिरिति भावः । **सिद्धेति ।।** प्रामाणिकेत्यर्थः । **अभ्युपगमादिति ।।** तथा च तत्प्रतिबन्धकत्वेनैवाऽत्माश्रयत्वं दोष इति भावः । **अन्यथेति ।।** निमित्तनिमित्तिभावानभ्युपगम इत्यर्थः। **स्वस्यैवाधाराधेयत्वेऽपीति ।।** तथा चाधाराधेयभावप्रतिबन्धकत्वेनैवात्माश्रयत्वस्य दोषत्वमिति भावः । तदनङ्गीकारे बाधकमाह- **अन्यथेति ।।** नन्वन्याविशिष्टे केवले यज्ञदत्ते यज्ञदत्तस्यावर्तनात्तत्र तदङ्गीकारे आत्माश्रयत्वं दोषस्स्यादेव । न चैवं प्रकृते । उपाधिसम्बन्धविशिष्टे उपाधिसम्बन्धाङ्गीकारेण **केवले** उपाधि-सम्बन्धरहिते स्वस्मिन्नुपाधिसम्बन्धस्यावर्तनात् तत्सद्भावानङ्गीकारादिति यावत्, आत्माश्रयत्वं न दोष इति शङ्कते- **केवल इति ।। तर्हीति ।।** अन्याविशिष्टे केवले यज्ञदत्ते यज्ञदत्तस्यावर्तनात्तत्र तदङ्गीकारे आत्माश्रयत्वं दोषश्चेत्तर्हि कुण्डलविशिष्टे स्वस्मिन् स्वयं वर्तेत । तथा च प्रकृत इव तत्राप्यात्माश्रयत्वं न दोषः स्यात् । यदि **(श्री.टि.)** तत्र आत्माश्रयत्वं दोषः तर्हि प्रकृतेऽपि तथेति भावः । नन्वन्यविशिष्टे स्वस्मिन् स्वस्य वृत्त्यसम्भवेऽपि स्वविशिष्टेऽन्यस्मिन् स्वयं वर्तताम् । तथाचोपाधिसम्बन्धविशिष्टेऽन्यस्मिन् शुद्धे उपाधिसम्बन्धस्य वृत्तिः स्यादित्यत आह- **रूपविशिष्ट इति ।।** रूपविशिष्टेऽन्यस्मिन् घट इत्यर्थः । तथा च तत्राऽत्माश्रत्वं यथा दोषस्तथा प्रकृतेऽपीति भावः ।

**(पां.टि.)** एकमेवेत्येवशब्दस्य तन्मते भेदस्य तत्सत्यतायाश्च सत्त्वेन तन्निरासार्थकत्वासम्भवादेवशब्दं प्रकारान्तरेण व्याचष्टे- **स्वभावतो भेदरहितमेवेति ।।** ननु कथमुपाधिभेदादित्यस्योपाधिकृतभेदादिति व्याख्या-नम् । शाकपार्थिवादित्वाभावेन 'शाकपार्थिवादीनाम्' इत्येतदविषयत्वेन समासानुपपत्तेरित्यत आह- **मयूर-व्यंसकादित्वादिति ।।** ननूपाधिकृतभेदादपि शुद्धस्य कथं संसार इत्यतस्तात्पर्यमाह- **अनेकेति ।। अधिका-शङ्केति ।।** सत्यामेव तस्यामतिदेशनियमनात्तदप्रदर्शनेऽतिदेशानुपपत्तेरिति भावः । **ज्ञानकर्मसमुच्चयेति ।।** यद्यपि ज्ञानमज्ञानस्यैव निवर्तकमिति परेण नियमाङ्गीकारान्न सत्यस्य तन्निवर्त्यत्वं सम्भवति । तथापि कर्मरूप-सहकारिसामर्थ्यात्सत्यस्यापि ज्ञानं निवर्तकं भवत्येव दूरगमनादिविशिष्टसेतुदर्शनेन सत्यस्यापि ब्रह्महत्यादिपापस्य निवृत्तिदर्शनादिति भावः । **न बद्धमुक्तव्यवस्थेति ।** सर्वदा संसार्येव ब्रह्मेत्यनेन जीवब्रह्मव्यवस्थाया, अतस्तद्भावो न मुक्तिरिति बद्धमुक्तव्यवस्थायाश्चानुपपत्तेर्मूले उक्तत्वेन द्वयोरुपादानमित्याशयः । **न हीति ।।** अन्यथा सर्वदा तद्भावापन्नत्वेन सर्वदा मुक्तत्वप्रसङ्गादिति भावः । **न हीति ।।** अन्यथा शशशृङ्गनृशृङ्गयोरपि तत्प्रसङ्गादिति भावः । **असाविति ।।** उपाधिसम्बन्ध इत्यर्थः । ननु शुद्धभिन्नस्योपाधिसम्बन्धरहितस्योपाधिसम्बन्धो भविष्यतीत्यत आह- **प्रकारान्तरेति ।।** उपाधिसम्बन्धरहितत्वे शुद्धाद्भेदस्यैवानुपपत्तेरित्यर्थः । एतदेवाऽह- **उपाधिसम्बन्धरहितं हीति ।।** ननु शुद्धस्यैव तदुपाधिसम्बन्धाङ्गीकारेणोपाधिसम्बन्धस्यैवोपाधिसम्बन्धानङ्गी-कारान्नानवस्थेत्यत आह- **अन्यथेति ।।** अविशेषादिति भावः । **तत्कथमिति ।।** उत्पत्त्यप्रतिबन्धकत्वादिति भावः । **कथमिति ।।** निमित्तनैमित्तिकभावप्रतिबन्धकत्वेनैव तस्यादूषणत्वसम्भवादिति भावः । **सिद्धेति ।।** तस्या अपि दूषणत्वे बीजाङ्कुरपरम्पराया अपि तत्प्रसङ्गादिति भावः । विशिष्टरूपेण भेदसत्त्वाद्विषमोऽयं दृष्टान्त इति शङ्कते- **केवल इति ।।** ननु कुण्डलिनि स्वस्मिन् स्वस्य वृत्तिप्रसङ्गस्तदा प्रसज्येत, यद्यन्यविशिष्टे स्वस्मिन् स्वस्य वृत्तिमभ्युपगच्छामः । किं नाम स्वविशिष्टेऽन्यस्मिन् स्वस्येत्यत आह- **रूपविशिष्टे चेति ।।**

**(व्या.टि.)** सत्योपाधिकृतभेदवादिनां बहुजीववादित्वेऽप्युक्तैकजीववादिदोषाविषयत्वात्पृथग्युक्तिविरोधेन दूषयिष्यन् वृत्तमनुवक्ति- **एवमिति ।।** उपाधिभेदाङ्गीकारादेकमेवेत्यवधारणमनभिमतस्वाभाविकभेदव्यावृत्ति-परतया व्याचष्टे- **स्वभावत इति ।।** उपाधीनां भेदादिति भ्रमं वारयति- **उपाधिकृतादिति ।।** नन्वेवं कृतपदलोपेन कथं भेदपदेन समास इत्यत आह- **मयूरव्यंसकादित्वादिति ।।** 'अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु बोध्यः' इति वैयाकरणाभियुक्तप्रयोगात्तस्य चाऽकृतिगणत्वात्समाससम्भवः । वस्तुतस्तु दिङ्मात्रदर्शन-**(व्या.टि.)** मिदम् । शाकपार्थिवादित्वान्मध्यमपदलोपीह समासो

बोध्य इति रहस्यम्। उपाधिसम्बन्धस्य साक्षात्संसारान्मुक्त्यहेतुत्वादपेक्षितं पूरयति- **अनेकजीवभावमिति ॥** संसारमुक्ती विरुद्धे कथमेकत्र स्याता-मित्यतो व्यवस्थापयति- **यदुपाध्यवच्छिन्न इति ॥** मुच्यत इति व्याचष्टे- **आत्यन्तिकेति ॥ अधिकेति ॥** एकजीववादादिति शेषः । अधिकशङ्कां प्रदिदर्शयिषुरुक्तदोषानधरीकरोति- **न तावदित्यादिना ॥** एकजीव-वादिनामिवेति व्यतिरेकदृष्टान्तः। असिद्धिविरहहेतुं दर्शयति- **भेदस्येति ॥ अद्वितीयत्वादिति ॥** श्रुत्यर्थस्यैव-मेवोपगमान्न विरोध इति भावः। उक्तदोषाप्राप्तियुक्तयुक्तिं दर्शयति- **सत्त्वाभ्युपगमादिति ॥ समुच्चयेति ॥** क्रमुकपर्णचूर्णसमुदायस्य मदकारितावत्समुदायस्य कार्यविशेषहेतुतोपपत्तिरिति भावः । शङ्काशङ्कनुद्धरति- **यद्यपीति ॥ न हीति ॥** व्याघातादिति भावः। न संसारिसत्त्वमात्रेण ब्रह्मणः संसार आपाद्यते। किन्तु तत्कारणोपाधिसम्बन्धप्रसञ्जनद्वारेति नानुपपत्तिरित्याह- **ब्रह्मैव हीति ॥** ब्रह्मण उपाधिसम्बन्धेऽपि न शुद्धस्योपाधिसम्बन्ध इति व्यवस्थाद्वयोपपत्तिं शङ्कते- **नन्विति ॥** आवश्यकतामुपपादयति- **न हीति ॥ चेतनभेदेति ॥** व्यधिकरणस्य कार्यजननाशक्तेरित्यर्थः । **प्रकारान्तरेति ॥** 'परस्परविरोधे तु न प्रकारान्तर-स्थितिः' इति न्यायादित्यर्थः । व्याघाताच्चेत्याह- **उपाधीति ॥ अन्यथेति ॥** शुद्धस्योपाधिसम्बन्धाङ्गीकार इत्यर्थः। **अयमेवेति ॥** आद्य एवेत्यर्थः। **तत्कथमिति ॥** उत्पत्तिज्ञप्त्यप्रतिबन्धादित्यर्थः । **कथं नेति ॥** निमित्तनिमित्तिभावे परस्परापेक्षासद्भावादिति भावः । उपाधिसम्बन्धानां निमित्तनिमित्तिभावाभावे सम्बन्धस्य सम्बन्ध इति रिक्तं स्यादित्याह- **शुद्ध एवेत्यापन्नमिति ॥** आद्यमङ्गीकृत्यानवस्थां परिहरति- **सिद्धेति ॥** कल्पनामात्रत्वादिति मात्रपदेन प्रमाणं व्यवच्छिनत्ति । इतिशब्दाध्याहारेण योजयति- **इति नेति ॥** आत्माश्रय-मुद्दिधीर्षुः शङ्कते- **उत्पत्तीति ॥ अन्यथेति ॥** तद्भावानभ्युपम इत्यर्थः। **भवत्येवेति ॥** स्थितावपि स्वापेक्षाया-मात्माश्रय इत्यर्थः। विपक्षे बाधकमाह- **अन्यथेति ॥** विशिष्टे शुद्धस्य वृत्तावपि शुद्धे शुद्धस्य वृत्तेर्नाऽत्माश्रय इति शङ्कते- **केवलेति ॥** अनिष्टं प्रसञ्जयित्वोपसंहरति- **तस्मादिति ॥** शुद्धस्यैवोपाधिसम्बन्ध इति पक्षं परिशेष्य तमपि दूषयति- **तथा चेति ॥ व्यर्थ एवेति ॥** विगतप्रयोजनो विरुद्धप्रयोजनश्चेत्यर्थः ।

**मूलम्- इतश्च मिथ्योपाधिर्न युज्यते। अज्ञानसिद्धौ मिथ्योपाधिसिद्धिः अज्ञानं विना मिथ्यात्वासिद्धेः । न च मिथ्योपाधिं विनाऽज्ञानसिद्धिः । मिथ्योपाधिभिन्नस्यैव अज्ञत्वात् ॥**

**टीका-** अत्राऽहुः मायावादिनः-सत्योपाधिकृतसत्यजीवभेदवादिनां बद्धमुक्तादिव्यवस्थाऽसिद्धा-वपि अस्माकं सा सिद्ध्यत्येव। तथा हि- यद्यपि शुद्धस्यैवोपाधिसम्बन्धः, तथापि तद्भावमापन्नस्य मुक्तत्वमुपपद्यते। न चोक्तदोषः, उपाधीनां मिथ्यात्वात् । मिथ्योपाधिसम्बन्धेन ब्रह्मणः शुद्धत्वाहानेः । न हि आरोपितेन रूपेणाऽकाशस्य नीरूपताऽपनीयते। उपाधीनां मिथ्यात्वेऽपि भेदहेतुत्वं युज्यत एव, भेदस्यापि मिथ्यात्वात्। मिथ्याभूतेनापि भेदेन व्यवस्थासिद्धिर्युज्यते । 'न मुमुक्षुः न वै मुक्त इत्येषा परमार्थता' इति व्यवस्थानामपि काल्पनिकत्वात् । यद्यप्युपाधिसम्बन्ध एव संसारबीजम्। तथाऽपि यदुपाध्यवच्छिन्नस्य ज्ञानमुत्पन्नं नासौ स्वोपाधिमन्योपाधीन् वा पश्यति । मिथ्योपाधीनां ज्ञानेन निवृत्तत्वात् । किन्त्वात्मनः शुद्धब्रह्मभावमेवानुभवति । अनुत्पन्नज्ञानस्तु मिथ्याभूतानुपाधीन् तत्कृतांश्च विच्छेदान् पश्यन् संसरतीति।

अत्रोच्यते। भवेन्मायावादिनां व्यवस्थासिद्धिः यद्युपाधिमिथ्यात्वं युज्येत। न च तद्युज्यते। निरधिष्ठानत्वादिना प्रागेव दूषितत्वात्। न केवलं पूर्वोक्तदूषणेनैव मिथ्योपाधिर्न युज्यते, किं तर्हीत्यत आह-**इतश्चेति ॥** वक्ष्यमाणादपि दूषणादित्यर्थः ।

ननु येन दोषेण मिथ्योपाधिर्न युज्यते स एव वक्तव्यः किमनेन वाक्येन। यदीदं नोच्येत तदा पूर्वोक्तदोषे परेण परिहृते दोषान्तरमुच्यत इति मन्दस्य शङ्का स्यात्। अतः सार्थकमेतत्। किं च यद्येकेनैव वाक्येन दूषणं वक्तुं शक्यं स्यात्तदा भवेदिदं व्यर्थम्। उपोद्घातप्रक्रियया विना बहुभिर्वाक्यैः दोषाभिधानोपक्रमे शिष्याणां किं वक्ष्यतीति मनो व्याकुलं स्यात्। तत्समाधानार्थमिदं वाक्यमुप-युज्यते।

कोऽसावन्योऽपि दोष इत्यतः तं दर्शयितुमाह- **अज्ञानेति ॥** अत्र **सिद्धिः** व्यवस्थितिः। न तूपत्तिरेव। अज्ञानस्य

परेणानादित्वाङ्गीकारात्। मिथ्योपाधेरज्ञानाधीनत्वं कुत इत्यत आह- **अज्ञानमिति ॥** उपाधेः मिथ्यात्वं नाम न तावदसत्त्वं परेणाङ्गीकृतम्। किन्त्वारोपितत्वेन अनिर्वाच्यत्वम्। आरोपश्चार्थज्ञानात्मकोऽज्ञानाधीनः। अज्ञानं हि अधिष्ठानमाच्छाद्यार्थज्ञान-योरुपादानं भवति। तस्मादज्ञानं विना उपाधेः **मिथ्यात्वस्य** आरोपितत्वस्यासिद्धेः अज्ञान-सिद्ध्यधीना मिथ्योपाधिसिद्धिरित्यङ्गीकार्यम्। ततः किमित्यत आह- **न चेति ॥ मिथ्योपाधिं** मिथ्योपाधिसिद्धिम्। अज्ञानसिद्धेः कथं मिथ्योपाधिसिद्ध्यधीनत्वमित्यत आह- **मिथ्येति ॥** अज्ञानं खल्वाश्रयविषयव्याप्तम्। अस्यास्मिन् अज्ञानमिति प्रतीतेः। ततोऽज्ञानस्य आश्रयो वाच्यः। न चाचेतनस्याज्ञानाश्रयत्वम्। तस्य अज्ञानकार्यत्वेनाज्ञानसिद्ध्युत्तरकालीनत्वात्। किञ्चाज्ञानं न ज्ञानाभावः। किन्तु भावरूपं ज्ञानावरणमिष्यते। न चाचेतनस्य ज्ञानप्राप्तिरस्ति येन तदावरणार्थं तत्राज्ञानं कल्प्येत। अतश्चेतनस्यैवाज्ञत्वे वक्तव्ये किं ब्रह्मणो जीवस्य वेति वाच्यम्। आद्ये वक्ष्यामः। द्वितीयेऽपि किं जीवो ब्रह्मणोऽभिन्न उत भिन्नः। आद्ये ब्रह्मपक्षदोष एव भविष्यति। द्वितीयेऽपि किं स्वभावतो भिन्न उतोपाधितः। नाऽद्यः। अपसिद्धान्तात्। द्वितीयेऽप्युपाधिः सत्यो मिथ्या वा। आद्येऽपसिद्धान्त एव। अतो द्वितीय एवाङ्गीकार्यः। तथा च मिथ्योपाधिना ब्रह्मणो भिन्नस्यैव जीवस्याज्ञानाश्रयत्वात्कथं न मिथ्योपाधिसिद्ध्यधीनाऽज्ञानसिद्धिरिति।

**(र.टि.)** ननु शुद्धस्यैवोपाधिसम्बन्धाङ्गीकारे तद्भावमापन्नस्यापि उपाधिसम्बन्धापत्त्या मुक्तत्वं न स्यात्। यद्युपाधेर्मिथ्यात्वेन शुद्धत्वान्मुक्तस्याप्यहानिस्तर्हि सर्वेषामपि मुक्तत्वप्रसङ्गेन बद्धमुक्तव्यवस्था न स्यादित्यत आह- **यद्यपीति ॥** उपाधिदर्शनादर्शनाभ्यामेव बद्धमुक्तव्यवस्था, न तत्सम्बन्धासम्बन्धाभ्यामिति भावः। **न तूत्पत्तिरेवेति ॥** सिद्धौ सिद्धिरिति द्विरुक्तस्यापि सिद्धिपदस्योत्पत्तिरेवार्थो न, किन्त्वज्ञानसिद्धावित्यत्र व्यवस्थितिः सिद्धिपदार्थः, मिथ्योपाधिसिद्धिरित्यत्रोत्पत्तिस्तदर्थः इत्यर्थः। तदिदमुक्तम्- **एवेति ॥** अत एवाज्ञानस्य परेणेत्यज्ञानमात्रं गृहीतम्। अज्ञानं ह्यधिष्ठानमाच्छाद्येति मिथ्योपाधेरज्ञानोपादानकत्वोक्त्योत्पत्तिः सूचिता।

**(रा.टि.)बद्धमुक्तादिव्यवस्थेति ॥** आदिपदेन जीवब्रह्मव्यवस्थाया असिद्धावपीति ग्राह्यम्। **न चोक्तेति ॥** सर्वदा संसार्येव ब्रह्मेति वाक्योक्तो दोष इत्यर्थः। **भेदेति ॥** जीवब्रह्मादिभेदहेतुत्वमित्यर्थः। **व्यवस्थेति ॥** बद्धमुक्तव्यवस्थेत्यर्थः। परमार्थतेति पदानन्तरमित्यभियुक्तवचनादिति शेषः। ननूपाधिसम्बद्धस्यैव संसारिजीवत्वादुपहितब्रह्मभावमापन्नस्य कथं मुक्ततेत्यत आह- **यद्यपीति ॥ ज्ञानेनेति ॥** वेदान्तजन्यशुद्ध-चैतन्याकारापरोक्षज्ञानेन तत्राऽरोपितोपाधीनां निवृत्तत्वादित्यर्थः। **विच्छेदादिति ॥** जीवब्रह्मणोर्भेदं जीवानां भेदं जीवजडादिभेदं चेत्यर्थः। सुखदुःखादिकमनुभवतीत्याहुरित्यन्वयः। **प्रागेवेति ॥** न चोपाधिकृतो भेदः क्वापि दृष्ट इत्यादावित्यर्थः। **किमनेनेति ॥** 'इतश्च मिथ्योपाधिर्न युज्यते' इति प्रतिज्ञावाक्येनेत्यर्थः। **उपोद्धा-तेति ॥** 'अतश्च अन्योन्याश्रयता' इति दोषाभिधानं ह्यज्ञानसिद्धौ हीत्यादिभिर्बहुभिर्वाक्यैरुपक्रम्यते। दोषोक्त्यनन्तरं बहुभिर्वाक्यैरुपपादने कार्ये प्रागेव तदुपपादनमसङ्गतमित्यत उक्तम्- **उपोद्घातप्रक्रिययेति ॥ अत्रेति ॥** अज्ञानसिद्धावित्यादिवाक्य इत्यर्थः। **व्यवस्थितिः** अवस्थानम्। मिथ्योपाधिसिद्धिरित्यत्र सिद्धि-शब्दस्योत्पत्त्यर्थत्वेऽप्यज्ञानसिद्धावित्यत्राज्ञानसिद्धिरित्यत्र च नोत्पत्त्यर्थकत्वमिति भावेनोक्तम्- **न तूत्पत्ति-रेवेति ॥** कुत इत्यत आह- **अज्ञानस्येति ॥** ननूत्पत्त्यर्थकत्वमेव 'घटसिद्धौ दण्डसिद्धिः दण्डसिद्धौ घटसिद्धिः' इत्यन्योन्याश्रयस्थले दृष्टमित्यतो वाऽऽह- **न तूत्पत्तिरेवेति ॥** क्वचिद् व्यवस्थित्यर्थकत्वेऽपि स्यादेवान्यो-न्याश्रयतेति भावः। अर्थज्ञानात्मको ह्यारोपोऽज्ञानाधीन इत्येतद्व्यनक्ति- **अज्ञानं हीति ॥** शुक्त्याद्यधिष्ठान-चैतन्यावरकमज्ञानं शुक्त्यादेः शुक्तित्वाद्यसाधारणधर्मेण प्रकाशं प्रतिबध्य रजतादिरूपेण तज्ज्ञानरूपेण च **(रा.टि.)** परिणमत इत्यज्ञानमुपादानमित्युक्तम्। नन्वज्ञानस्य ज्ञानाभावत्वात्कथमर्थज्ञाने प्रत्युपादानता, कथं च जडाश्रयतेत्यत आह-**किञ्चेति ॥ ज्ञानावरणमिति ॥** ज्ञानप्रतिबन्धकमित्यर्थः। **न चाचेतनस्येति ॥** कर्तरि षष्ठी। **तदावरणार्थमिति ॥** तस्याचेतनस्य स्वविषयकस्य परविषयकस्य वा ज्ञानस्य प्रतिबन्धकं कल्प्येतेत्यर्थः। **अज्ञत्वे**ऽज्ञानाश्रयत्वे। **वक्ष्याम इति ॥** 'शुद्धस्य' इति वाक्ये।

**(श्री.टि.) उक्तदोष इति ॥** सर्वोपाधिसम्बद्धत्वात्तस्येत्युक्तदोष इत्यर्थः। **रूपेण** नीलिम्ना। ननु मिथ्योपाधीनां कथं जीवब्रह्मभेदहेतुत्वमित्यत आह- **उपाधीनामिति ॥ भेदस्यापीति ॥** भेदस्य सत्यत्वे हि मिथ्याभूतोपाधीनां तद्धेतुत्वमनुपपन्नं स्यादिति भावः। ननु मिथ्याभूतभेदस्य कथं सत्यभूतबद्धमुक्तादिव्यवस्थाहेतुत्वमित्यत आह- **न मुमुक्षुरिति ॥** परमार्थतेति

तल्प्रत्ययः स्वार्थे । तथा च मुमुक्षुर्मुक्त इत्येषा व्यवस्था न परमार्थेत्यर्थः । ननु शुद्धस्यैवोपाधिसम्बन्धाङ्गीकारे तद्भावमापन्नस्याप्युक्तोपाधिसम्बन्धापत्त्या मुक्तत्वं न स्यादित्यत आह- **यद्य-पीति ॥ तथापीति ॥** तथा चोपाधिदर्शनादर्शनाभ्यामेव बद्धमुक्तव्यवस्था, न तत्सम्बन्धासम्बन्धाभ्यां, येनोक्तदोषः स्यादिति भावः। **विच्छेदान्** भेदान्। **अनेनेति ॥** 'इतश्च मिथ्योपाधिर्न युज्यते' इति प्रतिज्ञा-वाक्येनेत्यर्थः। उत्तरमाह- **यदीदमिति ॥ पूर्वोक्तदोष इति ॥** निरधिष्ठानत्वादिरूप इत्यर्थः। **परेण** माया-वादिना। निरधिष्ठानत्वादिदूषणानां निरवकाशत्वेनापरिहार्यत्वं सुमतीनां ज्ञातुं शक्यत्वान्मन्दस्येत्युक्तम्। **सार्थकमेवेति ॥** न केवलं पूर्वोक्तदूषणेन मिथ्योपाधिर्न युज्यते, किन्त्वितश्चेत्युक्त्या पूर्वोक्तदूषणस्यापरिहार्यत्व-सूचनादित्यर्थः। **उपोद्धातप्रक्रियया विनेति ॥** 'चिन्तां प्रकृतिसिद्धचर्थामुपोद्धातं प्रचक्षते' इति वचनात्, प्रतिज्ञावाक्येन विनेत्यर्थः। कुत इत्यत आह- **अज्ञानस्येति ॥** 'जीव ईशो विशुद्धा चिद्भेदस्तस्यास्तयोर्द्वयोः। अविद्या तच्चितोर्योगः षडस्माकमनादयः' इति परेणोक्तत्वादिति भावः। तथा चाज्ञानसिद्धौ मिथ्योपाधिसिद्धिरिति द्विरुक्तस्यापि सिद्धिपदस्योत्पत्तिरेवार्थो न भवति, किन्त्वज्ञानासिद्धावित्यत्र व्यवस्थितिः सिद्धिपदार्थः, मिथ्योपाधिसिद्धिरित्यत्र तूत्पत्तिस्तदर्थ इति ज्ञातव्यम्। आरोपस्याज्ञानाधीनस्थितितित्वमुपपादयति- **अज्ञानं हीति ॥** तदुपपादयति- **अस्यास्मिन्निति ॥** अस्मिन्विषय इत्यर्थः। **उत्तरकालीनत्वादिति ॥** 'पूर्वसिद्धतमसो हि पश्चिमो नाऽश्रयो भवति नापि गोचरः' इति परेणोक्तत्वात् तथा चान्योन्याश्रय इति भावः। **ज्ञानावरण-मिति ॥** 'प्राप्तप्रकाशप्रतिबन्धो ह्यावरणम्' इति परेणोक्तत्वादिति भावः। **ज्ञानप्राप्तिर्ज्ञान**प्रसक्तिः। अप्रकाश-स्वरूपत्वादिति भावः। यथोक्तं 'अप्रकाशस्वरूपत्वाज्जडेऽज्ञानं न मन्यते' इति।

**(पां.टि.)** ननु मिथ्याभेदेन वास्तवी बद्धमुक्तव्यवस्था कथमुपपद्येतेत्यत आह- **नेति ॥** ननु शुद्धस्योपाधि-सम्बन्धमङ्गीकृत्य बद्धमुक्तव्यवस्थोपपादनं न युक्तम्। तथा सत्युपाधिसम्बन्धस्यैव संसारबीजत्वेन शुद्धस्यैव संसारापत्त्या तद्भावापन्नस्यासंसारापातात्। न चोपाधेर्मिथ्यात्वाद्वास्तवस्य शुद्धत्वस्य नापाय इति वाच्यम्। तर्हि सर्वेषां शुद्धत्वेन बद्धत्वाभावापत्त्या बद्धमुक्तव्यवस्थाऽभावप्रसङ्गादित्याशङ्क्य निराकरोति- **यद्यपीति ॥ विच्छेदानिति ॥** भेदानित्यर्थः। उपाधिसम्बन्धासम्बन्धाभ्यां न बद्धमुक्तव्यवस्थां ब्रूमः। किन्तु तज्ज्ञाना-ज्ञानाभ्यामिति नोक्तदोष इति भावः। उत्तरमाह- **यदीदमिति ॥** ननु पूर्वदोषपरिहारस्य शब्देनैव सुज्ञानत्वान्नेदं **(पां.टि.)** समाधानमित्यत आह- **किञ्चेति ॥ नतूत्पत्तिरेवेति ॥** अनेनाज्ञानसिद्धावित्यत्र सिद्धिपदं व्यवस्थि-त्यर्थकम्। उपाधिसिद्धिरित्यत्रोत्पत्त्यर्थकमिति व्याख्यातं भवति। उत्पत्तिरेवोभयत्र स्थितिशब्दार्थः किं न स्यादित्यत आह- **अज्ञानस्येति ॥** 'षडस्माकमनादयः' इति तद्वचनादिति भावः। यद्यपि 'जीवो ब्रह्म विशुद्धा चिद्विभागस्त्वनयोः' इति तद्वचनादेव जीवब्रह्मभेदस्याप्यनादित्वमेव तेनाङ्गीकृतमिति न तत्राप्युत्पत्त्यर्थत्वं सिद्धिशब्दस्य। तथापि तदेकदेशिमतमाश्रित्यैवमुक्तिरिति द्रष्टव्यम्। **परेणाङ्गीकृतमिति ॥** तथा सत्यपसिद्धान्तप्रसङ्गादिति भावः। अर्थज्ञानात्मकस्यारोपस्याज्ञानाधीनत्वमेवोपपादयति- **अज्ञानं हीति ॥**

**(व्या.टि.)** पुनर्मिथ्योपाधिकृतमिथ्याभेदवादं निरसिसिषुस्तन्मतमनुवदति- **अत्राऽहुरित्यादिना ॥** मतसाम्ये कथं तद्दोषानिवृत्तिरित्यत आह- **यद्यपीति ॥ उक्तदोष इति ॥** उपाधिसम्बन्धनिबन्धनसंसारानुपपत्त्या मुक्तत्व-व्याघातलक्षण इत्यर्थः। आरोपितेन स्वरूपहानिं निदर्श्य द्रढयति- **न हीति ॥** उपाधीनां मिथ्यात्वे कथं सत्यभेद-कारित्वमित्याशङ्क्य निराह- **उपाधीनामिति ॥** ननु तर्हि कथं बद्धमुक्तव्यवस्थासिद्धिरित्यत आह- **मिथ्या-भूतेनापीति ॥ परमार्थतेति ॥** व्यवस्थाराहित्यमेव ब्रह्मपारमार्थ्यमित्यर्थः। उपाधेः संसारहेतुभावमुपेत्य बद्धमुक्तव्यवस्थां व्यवस्थापयति-**यद्यपीत्यादिना ॥** कुतो न पश्यतीत्यतो हेतुमाह-**मिथ्योपाधीनामिति ॥** किमदर्शनं सर्वथेति पृच्छति- **किन्त्विति ॥** उत्तरयति- **आत्मन इति ॥** मुक्तिमुक्त्वा बन्धं वक्ति- **अनुत्पन्नज्ञान इति ॥** दूषितस्य पुनर्दूषणं मृतमारणमित्यत आह- **न केवलमिति ॥** अतिहेयत्वं बहुदोषेण सिध्यतीति भावः। **किमनेनेति ॥** दूषणमप्रतिज्ञायापि दूषित इदमनेन दूषितमिति ज्ञास्यत्येवेति प्रतिज्ञा व्यर्थेत्यर्थः। **सार्थक-मिति ॥** पूर्वदोषदार्ढ्यप्रज्ञापनादित्यर्थः। अन्यमर्थमुपपादयति- **किञ्चेति ॥ अत्रेति ॥** अज्ञानपदसमभिव्याहारे इत्यर्थः। अज्ञानाधीन इत्युक्तं विवृणोति- **अज्ञानं हीति ॥ व्याप्तमिति ॥** अविनाभूतमित्यर्थः। **उत्तरकालीन-त्वादिति ॥** उत्तरकालीनस्य पूर्वकालीनाज्ञानाश्रयत्वानुपपत्तेरित्यर्थः। सामान्यतश्चेतनस्याज्ञानाश्रयत्वं प्रसाध्य मिथ्योपाधिभिन्नस्यैवाज्ञानं परिशेषयितुं विकल्प्योत्तरपक्षान् दूषयति- **किं ब्रह्मण इत्यादिना ॥** परिशिष्टं पक्षं परस्पराश्रयेण दूषयति- **तथा चेति ॥**

**मूलम्- शुद्धस्यैवाज्ञत्वे मुक्तस्याप्यज्ञत्वप्रसक्तेः। स्वाभाविकत्वात् सत्यत्वात् सद्वितीयत्वप्रसक्तेश्च। स्वाभाविकस्य चानिवृत्त्यङ्गीकारादनिवृत्तिप्रसक्तेश्च। सत्यस्य च अनिवृत्तिरिति हि तत्पक्षः ॥**

**(त.मं.)** अविद्याविजृम्भितं हि मिथ्या नाम । तस्मादज्ञानं विना मिथ्यात्वासिद्धिः । अज्ञानस्य मोक्षेऽनुवृत्तत्वात् स्वाभाविकत्वम् । सत्यस्य चानिवृत्तिरिति तत्पक्षः । ततः सत्यत्वाच्चा-निवृत्तिप्रसक्तेः ।

**टीका-** ननु शुद्धस्य ब्रह्मण एव अज्ञानाश्रयत्वं न तु जीवस्य । अतो मिथ्योपाधेः अज्ञानाधीनत्वेऽपि न अज्ञानस्य मिथ्योपाध्यधीनत्वं, निरुपाधिकब्रह्माश्रयत्वादित्यत आह- **शुद्धस्यैवेति ।।** ततश्च 'अविद्यास्तमयो मोक्षः' इत्युक्तत्वान्मुक्तत्वव्याघातप्रसक्तेरिति शेषः । प्रसक्तेरिति हेतोः मिथ्योपाधिभिन्नस्यैवाज्ञत्वमिति साध्येनान्वयः ।

ननु न मुक्तस्याज्ञानं दृश्यते । नापि कल्प्यं कल्पकाभावादिति कश्चित् । तदसत् । भावानव-बोधेनासङ्गतत्वात् । न ह्यस्माभिः मुक्तस्य अज्ञानं साधितम् । किन्तु अज्ञानसम्बन्धस्य अन्यनिमित्तत्वे मुक्तस्य च निमित्तापायेऽज्ञानाभावः सिद्ध्येत् । यथाऽऽर्द्रेन्धननिबन्धनस्य धूमस्य तदभावेऽभावः । शुद्धस्यैवाज्ञत्वे स्वरूपातिरिक्तस्य अज्ञानसम्बन्धे निमित्तस्याभावाद् यावत्स्वरूप-मवस्थानावश्यम्भावान्मुक्तस्यापि तदापादनं कृतम् । तत्र मुक्तस्य न दृश्यत इत्यादेः का सङ्गतिः। अत एव ब्रह्मण एवेति वक्तव्ये शुद्धस्यैवेत्युक्तम् ।

एतेन न ब्रह्मणो नापि जीवस्य अज्ञानम् । किन्तु चैतन्यस्वरूपमात्रस्य इत्यपि परास्तम् । तस्यापि शुद्धोपहितान्यतरत्वस्य अवश्यं वक्तव्यत्वात् ।

न केवलं शुद्धस्याज्ञत्वे मुक्तस्यापि अज्ञत्वप्रसक्तेः मिथ्योपाधिभिन्नस्य जीवस्यैव अज्ञत्व-मङ्गीकर्तव्यम् । किं तर्हीत्यत आह- **स्वाभाविकत्वादिति ।।** यदि केवलस्यैव ब्रह्मणोऽज्ञानं स्यात्तदा निमित्तान्तराभावात् स्वाभाविकमेव तत् स्यात् । यच्च तस्य स्वाभाविकमानन्दादिकं तत्सत्यं दृष्टमिति अज्ञानमपि स्वाभाविकत्वात् सत्यं स्यात् । ततश्च अज्ञानस्यापि सत्यत्वाद् ब्रह्मणः सद्वितीयत्वं प्रसज्येत । न ह्यानन्दादिवदज्ञानस्यापि ज्ञानात्मकेन ब्रह्मणाऽभेदो युज्यते । अतो जीवस्यैव अज्ञानमङ्गीकार्यम् । इतश्चैवमित्याह- **स्वाभाविकस्येति ।।** शुद्धस्यैव ब्रह्मणोऽज्ञानाङ्गीकारे स्वाभाविकमेव तत्स्यादिति तावदुक्तम् । यच्च ब्रह्मणः स्वाभाविकमानन्दादिकं तस्यानिवृत्तिः परेणाङ्गीकृता । तद्वद् अज्ञानस्यापि स्वाभाविकत्वादनिवृत्तिः प्रसज्येत । ततश्च तन्निवृत्त्यर्थं ज्ञानार्थस्य तत्त्वमसीत्याद्युपदेशस्य वैयर्थ्यं स्यात् । पूर्वत्र मुक्तस्याज्ञत्वापादनेन व्याहतौ तात्पर्यम् । इह त्वैकात्म्योपदेशवैयर्थ्य इति भेदः ।

ननु स्वाभाविकस्याऽनन्दादेरनिवृत्तिरङ्गीकृतैव । किन्तु न सा स्वाभाविकत्वप्रयुक्ता । अपि तु निवर्तकाभावप्रयुक्ता । अतः स्वाभाविकत्वेऽपि निवर्तकाभावादानन्दादेः अनिवृत्तिः । अज्ञानस्य तु तद्भावान्निवृत्तिर्भविष्यति को दोष इत्यत आह- **सत्यस्य चेति ।।** यद्ब्रह्मणः स्वाभाविकं तत्सत्यमिति व्याप्तेरज्ञानस्यापि स्वाभाविकत्वात् सत्यत्वमापन्नम् । सत्यस्य च अनिवृत्तिरिति तावत्परस्य सिद्धान्तः । सत्यमबाध्यमिति अङ्गीकारात् । बाधस्यैव अत्र निवृत्तिशब्देन विवक्षित-त्वात् । तत्कथमज्ञानस्य स्वाभाविकत्वात् सत्यस्य निवृत्तिः स्यात् । व्याघातापातात् । सत्यत्वादेव निवर्तकाभावोऽपि अनुमीयत इति भावः ।

एतेन स्वाभाविकस्यापि सत्यत्वं मा भूत् को दोष इत्यपि परास्तम् । ब्रह्मणा निरुपाधिक-सम्बन्धवतोऽज्ञानस्य निवर्तकस्य निवृत्तेर्वा भावे ब्रह्मणोऽपि तत्प्रसङ्गात् । अनिवृत्तौ प्राप्तायां सत्यत्वमेव प्राप्तम् । अनिवृत्तिव्यतिरिक्तस्य तस्याभावात् । ब्रह्मत्वमेवानिवृत्त्यादौ प्रयोजकं न तु स्वाभाविकत्वमित्येतदपि अनेनैव प्रत्युक्तम् । अब्रह्मणोऽपि अज्ञानस्य अनिवृत्त्यादेरुपपत्ति-सिद्धत्वात् । निरुपाधिकसम्बन्धवतोऽपि प्रतिसम्बन्धिव्यभिचारेऽनुमानमात्रविलोपप्रसङ्ग इति ।

**(र.टि.)** **का सङ्गतिरिति ।।** आपादने प्रत्यक्षबाधो न दूषणं प्रत्युतानुगुण एव । आपादकं चाज्ञानसम्बन्ध-स्यान्यनिबन्धत्वमेवेति भावः । एतदापादकं मूले कथमुक्तमित्यत आह- **अत एवेति ।। व्याहतौ तात्पर्य-मिति ।।** अज्ञाननिवृत्तेरेव मुक्तित्वाद्व्याहतिरित्यर्थः

। अत एव विरोधस्फोरणार्थं मुक्तस्यापीत्यपिपदप्रयोग इति भावः । सत्यस्य कुतो न निवृत्तिरित्यत आह- **सत्यमबाध्यमिति ।।** अबाध्यस्यापि निवृत्त्यङ्गीकारे किं बाधकमित्यत आह- **बाधस्यैवेति ।।** ननु 'सत्यस्य च' इति वाक्येन निवर्तकाभावलक्षणोपाधौ को दोष उक्त इत्यत आह- **सत्यत्वादेवेति ।।** तथा च सत्यत्वहेतोरुपाधित्वाभिमतेन व्याप्तिमुपपादयितुमेतद्वाक्यमिति भावः। **अनिवृत्तिव्यतिरिक्तस्येति ।।** अबाधव्यतिरिक्तस्येत्यर्थः । अनेन 'सत्यस्य चानिवृत्तिः' इति वाक्यं चशब्दस्या-वधारणार्थत्वमङ्गीकृत्य प्रकारान्तरेण व्याख्यातं भवति । **अब्रह्मणोऽप्यज्ञानस्येति ।।** तथा च ब्रह्मत्वस्य पक्ष एवानिवृत्त्यादिरूपसाध्याव्यापकत्वान्नोपाधित्वमिति भावः । नन्वेवमन्योन्याश्रयः । स्वाभाविकत्वस्यानिवृत्ति-व्याप्यत्वसिद्धौ ब्रह्मत्वस्यानुपाधित्वसिद्धिः । तत्सिद्धौ च व्याप्यत्वसिद्धिरिति चेन्न । ब्रह्मस्वाभाविकस्याप्य-ज्ञाननिवृत्तौ ब्रह्मणोऽपि निवृत्तिः स्यादित्यनुकूलतर्केण स्वाभाविकस्यानिवृत्तिव्याप्यत्वनिश्चयात् । अत एव पूर्वं तर्कं व्युत्पाद्य 'एतदप्यनेनैव प्रत्युक्तम्' इत्युक्तम् । ननु निरुपाधिकसम्बन्धवतोऽप्यज्ञानस्य निवृत्त्यादि-युक्तत्वेऽपि मास्तु ब्रह्मणो निवृत्त्यादिकं, विपक्षे बाधकाभावात् । तथा च तर्कस्य प्रशिथिलमूलकत्वान्न तेन स्वाभाविकत्वस्यानिवृत्तिव्याप्यत्वनिश्चय इत्यत आह- **निरुपाधिकसम्बन्धवतोऽपीति ।।**

**(रा.टि.)** अस्तु को दोष इत्यत आह- **ततश्चेति ।।** अज्ञत्वप्रसक्तितश्चेत्यर्थः । **असङ्गतत्वादिति ।।** अज्ञान-सम्बन्धस्यास्माभिरापाद्यत्वेन तत्र तदभावोक्तिरसङ्गतैवेत्यर्थः । असङ्गतिमेव व्यनक्ति-**न हीति ।। अत (रा.टि.) एवेति ।।** अनन्यनिमित्तकत्वसूचनार्थत्वादेवेत्यर्थः । यदि शुद्धस्यैवाज्ञानं तस्य यावत्स्वरूपमवस्थानात् तद्भावमापन्नस्य मुक्तस्याज्ञत्वमापद्येत । ततश्च मुक्तत्वव्याघात इति द्योतनाय शुद्धस्यैवेत्युक्तम् । ब्रह्मण इत्युक्तौ तु मायाशबलस्य ब्रह्मणो निवृत्त्या शुद्धत्वसम्भवेन न मुक्तत्वव्याघात इति भावः । **निमित्तान्तराभावा-दिति ।।** ब्रह्मणोऽज्ञानस्येति योज्यम् । स्वाभाविकमज्ञानमित्यनुषङ्गः । अज्ञानस्य ब्रह्मस्वरूपत्वान्न सद्वितीयत्वप्रसङ्ग इत्यत आह- **न ह्यानन्दादिवदिति ।।** विरोधद्योतनाय ज्ञानात्मकेनेत्युक्तम् । सत्यस्य कुतो न निवृत्तिरित्यत आह- **सत्यमबाध्यमिति ।। सत्यस्य निवृत्तिः स्यादिति ।।** अबाध्यस्य बाधः कथं स्यात् तथोक्तौ व्याघातापातादित्यर्थः । ननु निवर्तकभावाभावप्रयुक्ते एव निवृत्त्यनिवृत्ती इति कृतचोद्यस्य किमुत्तर-मित्यत आह- **सत्यत्वादेवेति ।।** अबाध्यत्वादेव बाधकाभावोऽनुमीयत इत्यर्थः । **अनिवृत्तौ प्राप्ताया-मिति ।।** अज्ञानस्येति योज्यम् । **तस्याभावादिति ।।** सत्यत्वस्याभावादित्यर्थः । सत्यमबाध्यं निवृत्तिर्बाध इति तु प्रागेव व्यक्तम् । **उपपत्तिसिद्धत्वादिति ।।** 'स्वाभाविकत्वात्सत्यत्वम्' इत्यादिनोक्तोपपत्तीत्यर्थः । **अनुमानमात्रेति ।।** धूमादेरपि वह्न्यादिव्यभिचारापत्तेरिति भावः ।

**(श्री.टि.) निरुपाधिकेति ।।** जीवब्रह्मोभयानुस्यूतचिन्मात्रेत्यर्थः । 'आश्रयत्वविषयत्वभागिनी निर्विशेष-चितिरेव केवला' इति वचनादिति भावः । प्रसक्तेरिति पञ्चम्या अन्वयाप्रतीतेराह- **प्रसक्तेरिति हेतोरिति ।। न मुक्तस्याज्ञानं दृश्यत इति ।।** तथा च तत्साधने प्रत्यक्षादिप्रमाणबाध इति भावः । **मुक्तस्याज्ञानं साधित-मिति ।।** येन प्रमाणबाधस्स्यादिति भावः । किन्त्वापादनं कृतमित्यन्वयः । आपादकप्रदर्शनपूर्वकमापादनप्रकारं दर्शयति- **अज्ञानसम्बन्धस्येत्यादिना ।। अन्यनिमित्तत्व इति ।।** स्वरूपातिरिक्तोपाधिनिमित्तत्व इत्यर्थः । **शुद्धस्यैवाज्ञत्व इति ।।** स्वरूपमात्रनिमित्तकत्वे त्वित्यर्थः । **यावत्स्वरूपमिति ।।** स्वरूपप्रयुक्तधर्माणां स्वरूपनिवृत्तिं विना निवृत्त्यभावेन यावत्स्वरूपमवस्थानमावश्यकमित्यर्थः । **का सङ्गतिरिति ।।** आपादने प्रमाणबाधादेरलङ्कारत्वेनादूषणत्वादिति भावः । **अत एवेति ।।** शुद्धस्यैवाज्ञत्वे त्वित्यादिनोक्तापादनप्रकार-सूचनार्थमेवेत्यर्थः । **चैतन्यस्वरूपमात्रस्येति ।।** उभयानुस्यूतचिन्मात्रस्येत्यर्थः । **तस्यापि** उभयानुस्यूत-चिन्मात्रस्यापि । **शुद्धोपहितान्यतरत्वेति ।।** शुद्धत्वे तत्राज्ञानोक्तौ मुक्तस्यापि तदापत्तिः । **उपहितत्वे** उपाधिविशिष्टत्वे। तत्राज्ञानोक्तौ मिथ्योपाधिभिन्नस्यैवाज्ञत्वादित्युक्तत्वेनान्योन्याश्रयः स्यादिति भावः । नन्वज्ञानस्य सत्यत्वेऽप्यानन्दादिवद् ब्रह्मणाऽभिन्नत्वान्न सद्वितीयत्वप्रसक्त्याऽद्वैतहानिरित्यत आह- **न हीति ।।** अभेदाभावोपपादनायैव ज्ञानात्मकेनेत्युक्तम् । **तन्निवृत्त्यर्थं ज्ञानार्थस्येति ।** अज्ञाननिवृत्तिप्रयोजकं यदैक्यज्ञानं तदर्थस्येत्यर्थः । गतार्थतापरिहारायाऽह-**पूर्वत्रेति ।।** अज्ञाननिवृत्तेरेव मुक्तित्वाद्व्याहतिरित्यर्थः । अत एव विरोधस्फोरणार्थं मुक्तस्यापीत्यपिशब्दप्रयोग इति भावः । अत एव पूर्वं 'मुक्तत्वव्याघातप्रसक्तेरिति शेषः' इत्युक्तमिति ज्ञातव्यम् ।

अज्ञानं न निवर्तते स्वाभाविकत्वादानन्दादिवदित्यभिप्रेतानुमाने निवर्तकाभाव उपाधिरित्याशङ्कते - **(श्री.टि.) नन्विति ।।** साध्यव्यापकत्वमुपपादयति- **निवर्तकाभावादिति ।।** साधनाव्यापकतामुपपादयति- **अज्ञानस्य त्विति ।। तद्भावादिति ।।** ज्ञानरूपनिवर्तकसद्भावादित्यर्थः । यतो ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति परैरुक्तत्वादिति भावः । सत्यत्वादेव निवर्तकाभावोऽप्यनुमीयत इति साधनाव्यापकत्वं वक्तुं निवर्तकाभावसाधकं सत्यत्वमेवासिद्धमिति शङ्कायां तत्साधयति- **यद्ब्रह्मण**

**इत्यादिना ।। स्वाभाविकत्वा-दिति ।।** शुद्धस्यैव ब्रह्मणोऽज्ञानाङ्गीकारे तस्य स्वरूपमात्रप्रयुक्तत्वेनान्यनिमित्तकत्वाभावात् स्वाभाविकत्वमेव प्राप्तमित्युक्तत्वादिति भावः । सत्यस्य कुतो न निवृत्तिरित्यत आह- **सत्यमबाध्यमिति ।।** अबाध्यस्यापि निवृत्त्यङ्गीकारे किं बाधकमित्यत आह- **बाधस्यैवेति ।। स्वाभाविकत्वात्सत्यस्येति ।।** स्वाभाविकत्वहेतुसिद्ध-सत्यत्वोपेतस्येत्यर्थः । **व्याघातापातादिति ।।** सत्यमबाध्यं निवृत्त्यप्रतियोगि, तन्निवर्तत इत्यङ्गीकारे व्याघात-प्रसङ्गादित्यर्थः । किमनेनोपाधेर्दूषणमुक्तमित्यत आह- **सत्यत्वादेवेति ।।** ततश्च साधनव्यापकत्वमुपपाद-यितुमेतद्वाक्यमिति भावः । निवर्तकाभावसाधकं यत् सत्यत्वं तत्साधके स्वाभाविकत्वानुमानेऽप्रयोजकतां आशङ्कते- **स्वाभाविकस्यापीति ।। सत्यत्वम**निवर्त्यत्वम् । **माभूदिति ।।** तथा च निवर्तकसद्भाव एवास्त्विति भावः । एतेनेत्युक्तं विशदयति- **ब्रह्मणेति ।। निरुपाधिकसम्बन्धवत इति ।।** स्वाभाविकसम्बन्धवत इत्यर्थः। शुद्धस्यैवाज्ञानाङ्गीकारे तस्य शुद्धब्रह्मस्वरूपमात्रप्रयुक्तत्वेन तत्सम्बन्धस्यान्यप्रयुक्तत्वाभावादिति भावः । **तत्प्रसङ्गादिति ।।** निवर्तकस्य निवृत्तेर्वा प्रसङ्गादित्यर्थः । स्वाभाविकत्वाविशेषादिति भावः । **सत्यत्वमेवा**-बाध्यत्वमेव । **तस्य** सत्यत्वस्य । अज्ञानं न निवर्तते स्वाभाविकत्वादानन्दादिवदित्यनुमाने निवर्तकाभावस्यानु-पाधित्वेऽपि ब्रह्मत्वमेवोपाधिर्भविष्यति । अनिवृत्त्युपेते आनन्दादौ दृष्टान्ते 'विज्ञानमानन्दं ब्रह्म' इत्यादि-श्रुतेर्ब्रह्मत्वसद्भावेन साध्यव्यापकत्वात् । साधनवतः पक्षाद्व्यावृत्तत्वेन साधनाव्यापकत्वाच्चेत्येतदप्यनेनैव प्रत्युक्त-मित्याह-**ब्रह्मत्वमेवेति ।।** आदिपदेन निवर्तकाभावो ग्राह्यः । अनेनैवेत्युक्तं विशदयति-**अब्रह्मणोऽपीति ।।** ब्रह्मवत्स्वाभाविकस्याप्यज्ञानस्य निवृत्तौ ब्रह्मणोऽपि निवृत्तिः स्यादित्यनुकूलतर्केण स्वाभाविकत्वहेतोरनिवृत्ति-व्याप्यत्वनिश्चयेन पक्षेऽनिवृत्तिरूपसाध्यनिश्चयाद् ब्रह्मत्वरूपोपाधेः पक्ष एव साध्यव्यापकत्वभङ्गान्न तस्योपाधि-त्वमिति भावः । ननु ब्रह्मणा निरुपाधिकसम्बन्धवतोऽप्यज्ञानस्य निवृत्तिरस्तु ब्रह्मणो निवृत्तिर्मास्त्विति विपक्षे बाधकाभावेन तर्कस्याप्रयोजकत्वान्न तेन स्वाभाविकत्वस्यानिवृत्तिव्याप्यत्वनिश्चय इत्यत आह- **निरुपाधिक-सम्बन्धवत इति ।। अनुमानमात्रेति ।।** धूमस्यापि प्रति-सम्बन्धिरूपवह्निव्यभिचारप्रसङ्ग इति भावः ।

**(पां.टि.) यावदिति ।।** स्वरूपप्रयुक्तधर्मस्य स्वरूपनिवृत्तिं विना निवृत्तौ स्वरूपप्रयुक्तताया व्याहतत्वादिति भावः । **का सङ्गतिरिति ।।** आपादने प्रमाणबाधस्यादूषणत्वात् । अन्यथाऽऽपादनमात्रोच्छेदप्रसङ्गादिति भावः। **तस्यापीति ।।** चैतन्यमात्रस्यापीत्यर्थः । तदुभयान्यतरत्वव्यतिरेके तद्रूपत्वानिर्वाहादिति भावः । **व्याहता-विति ।।** अज्ञाननिवृत्तेरेव मुक्तित्वादिति भावः । अज्ञानं न निवर्तते स्वाभाविकत्वाद् आनन्दादिवदित्यभि-मतानुमाने निवर्तकाभाव उपाधिरित्याशङ्कते- **नन्विति ।।** सत्यस्यानिवृत्तिरिति तत्सिद्धान्त इति भवद्भिः **(पां.टि.)** कुतोऽवगम्यत इत्यत आह- **सत्यमिति ।।** ननु तदङ्गीकारेणाबाध्यत्वप्राप्त्या बाधासम्भवेऽप्य-निवृत्त्यप्राप्तेः निवृत्त्यङ्गीकारे को दोष इत्यत आह- **बाधस्यैवेति ।।** 'न हि विनाशो बाधः' इति पूर्वग्रन्थानुरोधेन विनाशरूपताया असम्भवादिति भावः । **व्याघातेति ।।** अज्ञानस्य सत्यत्वेन अबाध्यतया निवृत्त्यप्रति-योगित्वसिद्ध्या निवृत्त्यप्रतियोगिनोऽज्ञानस्य निवृत्त्युक्तेर्व्याहतत्वादिति भावः । किमनेनोक्तोपाधेर्दूषणमुक्तं भवतीत्यत आह- **सत्यत्वादेवेति ।।** तथा च साधनव्यापकत्वान्न निवर्तकाभाव उपाधिरिति भावः । स्वाभाविकत्वमस्तु सत्यत्वं मास्तु, विपक्षे बाधकाभावादप्रयोजकत्वमित्याशङ्क्याऽऽह- **एतेनेति ।।** एतेनेत्युक्तमेव विवृणोति- **ब्रह्मणेत्यादि ।।** ब्रह्मणा निरुपाधिकसम्बन्धवतोऽप्यज्ञानस्य निवृत्त्याद्यङ्गीकारेऽविशेषेण ब्रह्मणोऽपि तदापत्त्या निवृत्त्यादेरनङ्गीकर्तव्यतया अनिवृत्तत्वे च तन्मात्रस्वरूपत्वे सत्यत्वस्यापि प्राप्त्या स्वाभाविकं सत्यं मा भूदिति शङ्कायाः सत्यं सत्यं माभूदित्यत्र पर्यवसन्नतया व्याहतत्वेनानुपपन्नतयाऽनुदयेन तत्परिहारार्थं विपक्षे बाधकस्यावक्तव्यत्वाद्युक्तं स्वाभाविकत्वेन सत्यत्वापादनमिति भावः । **अनिवृत्तिव्यतिरिक्तस्येति ।।** अबाध्यत्वव्यतिरिक्तस्य सत्यत्वस्याभावादित्यर्थः । ननु ब्रह्मत्वस्यैवानिवृत्त्यादौ प्रयोजकत्वेनाज्ञानस्य तदभावेना-निवृत्त्याद्यप्रसङ्गान्न शङ्कायाः व्याहतत्वेनापरिहार्यत्वमित्यत आह- **ब्रह्मत्वमेवेति ।।** यद्वा स्वाभाविकत्वादज्ञान-स्यानिवृत्तिरित्यस्योपाध्यन्तरमाशङ्क्य निराकरोति- **ब्रह्मत्वमेवेति ।।** अनेनैवेत्युक्तमेव हेतुं प्रथयति- **अब्रह्मणोऽपीति ।।** तथा च ब्रह्मत्वस्य पक्षे एव निवृत्त्यादिरूपसाध्याव्यापकत्वान्नोपाधित्वमिति भावः । नचैवमप्यन्योन्याश्रयः । स्वाभाविकत्वस्यानिवृत्तिव्याप्यत्वसिद्धौ ब्रह्मत्वस्यानुपाधित्वसिद्धिः, तत्सिद्धौ च व्याप्यत्वसिद्धिरिति वाच्यम् । ब्रह्मस्वाभाविकस्याप्यज्ञानस्य निवृत्तौ ब्रह्मणोऽपि निवृत्तिः स्यादित्यनुकूलतर्केण स्वाभाविकत्वस्यानिवृत्तिव्याप्यत्वनिश्चयात् । अत एव पूर्वं तर्कं व्युत्पाद्यैतदप्यनेनैव प्रत्युक्तमित्युक्तम् । ननु निरुपाधिकसम्बन्धवतोऽप्यज्ञानस्य निवृत्त्यादियुक्तत्वेऽपि मास्तु ब्रह्मणो निवृत्त्यादिकं विपक्षे बाधकाभावात् । तथा च प्रशिथिलमूलत्वान्न तेन स्वाभाविकत्वस्य अनिवृत्तिव्याप्यत्वनिश्चय इत्यत आह- **निरुपाधिक-सम्बन्धवतोऽपीति ।।**

**(व्या.टि.)** परस्पराश्रयभिया जीवाश्रयत्वपक्षं परित्यज्य शुद्धाश्रयत्वं शङ्कते-**नन्विति ॥ आहेति ॥** अनिष्टं प्रसञ्जयतीत्यर्थः । नाज्ञानवत्त्वमेवानिष्टमित्यतस्तत्तात्पर्यमाह- **ततश्चेति ॥** प्रसक्तेरिति पञ्चम्या अन्वयाप्रतीतेस्तं दर्शयति- **अज्ञत्वमिति साध्येनेति ॥** अज्ञत्वमङ्गीकार्यमिति फलेनेत्यर्थः । यद्वक्ष्यति 'जीवस्यैवाज्ञानमङ्गीकार्यम्' इति । यत्तु कश्चित्साधनपरतया व्याचष्टे, तद्धैयात्यात् । नह्येवं कुलधर्मः, यदनिष्टं प्रसञ्जयता प्रसक्त्यैव साधनं कार्यमिति । उपाधिभिन्नस्य विशिष्टस्य संसारिणोऽज्ञानापादनेन स्वरूपासिद्धेश्च । किमत्र मुक्तस्याज्ञानं साध्यत उतापाद्यत इति विकल्पं मनसि निधाय कश्चिच्छङ्कते- **नन्विति ॥** आद्यं निराह- **न मुक्तस्येति ॥** बाधादिति भावः । द्वितीयं पराचष्टे- **नापीति ॥ कल्पकाभावादिति ॥** निमित्तापाये नैमित्तिकाज्ञानापादकाभावादि-त्यर्थः । **असदिति ॥** अभद्रमित्यर्थः । द्वितीयं कल्पमुपेत्य तद्दोषमुद्धरति- **न ह्यस्माभिरिति ॥ एवमेवेति ॥ (व्या.टि.)** अविचार्यैवेत्यर्थः । **अभावादिति ॥** ल्यब्लोपनिमित्ता पञ्चमी । अभावमप्यापाद्येत्यर्थः । **इत्यादे-रिति ॥** चोद्यस्येति भावः । एतावदापादनतात्पर्यलिङ्गमाह-**अत एवेति ॥** एतदेव मूलं पक्षान्तरप्रतिक्षेपेऽप्यति-दिशति- **एतेनेति ॥ तस्यापीति ॥** चैतन्यस्वरूपस्येत्यर्थः । सामान्यस्य विशेषे पर्यवसानीयत्वेनेति भावः । चशब्दसमुच्चयं दर्शयति- **न केवलमिति ॥** अनिष्टं प्रसञ्जयितुमापादकस्य व्याप्तिं दर्शयति- **यच्चेति ॥** अनृत-स्वाभावस्याप्यनृतत्वाद्व्यभिचारपरिहाराय तस्येति विशेषितम् । तथा च यत्तदीयं स्वाभाविकं तत्सत्यमित्यन्वयं दर्शयति- **आनन्दादिकमिति ॥** न ब्रह्मणः सद्वितीयत्वं सतोऽप्यज्ञानस्य ब्रह्मस्वरूपत्वादित्याशङ्क्य निराकरोति- **न हीति ॥** ज्ञानात्मकेनेति हेतुगर्भं विशेषणम् । ब्रह्मण इत्यापादकविशेषणम् । तत्तात्पर्यमाह- **तत्र चेति ॥** नन्वनेनापि पर्यायेण मुक्तस्याज्ञानवत्त्वमेवाऽऽपादितमिति पुनरुक्तिमाशङ्क्य तात्पर्यभेदान्नेत्याह- **पूर्वत्रेति ॥**

तर्कमूलभूतव्याप्तावुपाधिमाशङ्कते- **नन्विति ॥ निवर्तकाभावप्रयुक्तेति ॥** प्रयोजकत्वान्निवर्तकाभाव उपाधिरित्यर्थः । उपाधेः पक्षाद्व्यावृत्तिं दर्शयति- **तद्भावादिति ॥** 'उपाधिः प्रतिरूपं हि साधनं तत्र चापरम्' इत्यनुभाष्योक्तिदिशा साध्यव्यापकस्योपाधेः पक्षव्यावृत्तौ व्यापकनिवृत्तिन्यायेनोपाध्युन्नीतेऽज्ञानं निवर्तते निवर्तकभावादिति प्रतिपक्षे बाधमुद्भावयति- **यद्ब्रह्मण इत्यादिना ॥ आपन्नं** तर्कितमित्यर्थः । व्याघाता-वधित्वाद्बाधशङ्कायाः सत्यत्वेऽपि निवृत्तिःकिन्न स्यादिति शङ्का समूलघातं हतेत्याह-**सत्यस्य चेति ॥** सिद्धान्तेऽपि न व्याप्यव्यापकभावेन, किं त्वैकार्थ्येनेत्याह- **सत्यमबाध्यमिति ॥ बाधस्यैवेति च ॥ अत्र** तर्के । **निवृत्ति-शब्देनेति ॥** प्रसञ्जनीयप्रतियोगिशब्देनेत्यर्थः । कथमित्याक्षेपे । **निवृत्तिः स्यादिति ॥** प्रतिपक्षेणानुमिता स्यादित्यर्थः । कुत इत्यत आह- **व्याघातापातादिति ॥** एवमुपाध्युन्नीतप्रतिपक्षे बाधमभिधायासिद्धि-मप्याह- **सत्यत्वादेवेति ॥** कश्चित्त्वत्र अज्ञानं न निवर्तते सत्यत्वादित्यनुमानं फलितमित्याह । तन्न । साध्या-वैशिष्ट्यात् । किन्तु अज्ञानं निवर्तकशून्यमनिवर्त्यत्वादित्यनुमानप्रकारो द्रष्टव्यः । इदं मूलं स्वाभाविकत्वात् सत्यत्वादिति पूर्वोक्ततर्केऽप्रयोजकताशङ्कानिरासेऽपि योजयति- **एतेनेति ॥** तत्परतया मूलं योजयति- **ब्रह्म-णेति ॥ निवर्तकस्य** बाधकस्य **निवृत्तेर्वा** बाधस्य वेत्यर्थः । **ब्रह्मणोऽपीति ॥** तत्प्रतिसम्बन्धिनोऽपीत्यर्थः । **तत्प्रसङ्गादिति ॥** तयोर्बाधकबाधयोरित्यर्थः । निरुपाधिकसम्बन्धे सम्बन्धिनोः समसत्ताकत्वनियमेन बाध्या-बाध्ययोरबाध्यस्वाभाविकसम्बन्धबाधादित्यर्थः । **प्राप्नायामिति ॥** तर्कस्य विपर्ययपर्यवसानेनोपपत्तिसिद्धा-यामित्यर्थः । **प्राप्तं** सिद्धमित्यर्थः । किं व्याप्यव्यापकभावेनेत्यतो न, किन्त्वैकार्थ्येनेत्याह- **अनिवृत्तीति ॥** अनेन **सत्यस्य** सत्यपदस्य **अनिवृत्तिः** प्रवृत्तिनिमित्तमित्यर्थं सूचयति । एवं चानिवृत्तिमुपेत्य सत्यत्वप्रतिक्षेपो व्याहत इति भावः । स्वाभाविकस्य चानिवृत्त्यङ्गीकारादनिवृत्तिप्रसक्तेश्चेति पूर्वोक्ते ब्रह्मीयस्वाभाविकत्वेऽनिवृत्तिः स्यादिति तर्के, सत्यस्येत्यत्रोक्ते सत्यत्वेन निवर्तकाभावानुमाने चोपाधिं शङ्कते- **ब्रह्मत्वमेवेति ॥** अनिवृत्त्या-दावित्यादिपदेन निवर्तकाभावग्रहः । **स्वाभाविकत्वमिति ॥** उपलक्षणमेतत् । सत्यत्वं चेत्यपि ग्राह्यम् । उक्तदोषनिरासप्रकारमत्राप्यतिदिशति- **अनेनैवेति ॥** अब्रह्मणोऽपीति पक्षे उपाधेः साध्यव्यभिचारप्रदर्शनम् । **(व्या.टि.)**ननु 'न हि पक्षे पक्षतुल्ये वा व्यभिचारः' इति सकलतान्त्रिकव्यवहारात्कथं पक्षे तदुद्भावनमित्यत आह- **उपपत्तीति ॥** ब्रह्मणा निरुपाधिकसम्बन्धवतोऽज्ञानस्य निवर्तकस्य निवृत्तेर्भावे ब्रह्मणोऽपि तत्प्रसङ्गात् अनुपाधिकसम्बन्धसम्बन्धित्वसाम्याद् विनिगमकाभावादित्यनिष्टप्रसङ्गरूपोपपत्तिसिद्धत्वादित्यर्थः । तथा च 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः' इति भावः । प्रतिकूल-तर्कपराहतत्वेन व्यभिचारोन्नयनासम्भवाच्च नास्योपाधित्वमित्याह- **निरुपाधिकसम्बन्धवतोऽपीति ॥** अनिवृत्त्यविनाभूतब्रह्मस्वाभाविकत्वस्य निवर्तकाभावाविनाभूतसत्यत्वस्य चेत्यर्थः । **प्रतिसम्बन्धिव्यभिचार इति ॥** स्वाभाविकत्वमनिवृत्तिव्यभिचारि ब्रह्मत्वव्यभिचारित्वात् । तथा सत्यत्वं निवर्तकाभावव्यभिचारि ब्रह्मत्वव्यभिचारित्वात् इति साध्यव्यभिचारेऽनुमिते इत्यर्थः । अनेन सत्यस्य चकारात्स्वाभाविकस्य, अनिवृत्तिः उपलक्षणया निवर्तकाभावश्चेति संयोज्य यथायथं सत्य(त्व)स्य निवर्तकाभावः

स्वाभाविकस्यानिवृत्तिरिति तत्पक्ष इति विवृतं भवति। अथ वा चोऽवधारणे। सत्यस्य च सत्यस्यैव न तु ब्रह्मत्वविशेषितस्येति। **अनुमान-मात्रेति ॥** सर्वस्यापि व्याप्यस्य व्यापकव्यभिचारप्रसङ्गेनानुमानमात्रोच्छेदापात इति मायिनां वज्रपातः।

**मूलम्- अतश्चान्योन्याश्रयता। अज्ञानसिद्धौ मिथ्योपाधिसिद्धिः मिथ्योपाधिसिद्धौ जीवसिद्धिः जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरिति चक्रकं वा। न च शुद्धमेव भ्रान्त्याऽज्ञमिति युक्तम्। अज्ञानसिद्धौ भ्रमसिद्धिः तत्सिद्धौ अज्ञानसिद्धिरिति अन्योन्याश्रयत्वात् ॥**

**(त.मं.) अतश्चान्योन्याश्रयता** । अयमर्थः। एवमज्ञानस्य मिथ्यात्वाङ्गीकार एव अन्योन्या-श्रयता। न तु सत्यत्वाङ्गीकारे। अत्र तु सर्वशक्तेरीश्वरस्येच्छया ज्ञानादेवाज्ञानस्य विनाशोपपत्तेः।

मिथ्योपाधिसिद्धौ चैतन्यस्य तदुपहितत्वेन जीवसिद्धिः। ननु शुद्धस्यैव ब्रह्मणो भ्रान्तिकल्पितं ह्यज्ञानमभ्युपगच्छामो न तात्त्विकम्। न च भ्रान्तिकल्पिते चक्रकादिदोषावकाशः। न हि भ्रान्तेर्लक्षणमस्तीत्यत आह- **न च शुद्धमिति ॥** अज्ञानसिद्धौ भ्रमसिद्धिः। न हि शुक्त्यज्ञानं विना रजतभ्रमः। भ्रमसिद्धौ भ्रान्तिकल्पितमज्ञानं सिद्ध्यति। एतत्पक्षे सर्वनिर्वाहकस्य भ्रमस्यैवासम्भवः।

**टीका-** अस्तु मिथ्योपाधिभिन्नस्य जीवस्यैव अज्ञानम्। ततः किमित्यत आह- **अतश्चेति ॥** यत एवमज्ञानसिद्धौ तत्कल्पिततया मिथ्योपाधिसिद्धिः, तत्सिद्धौ च तदवच्छिन्नजीवाश्रयतयाऽज्ञान-सिद्धिः। अतो मिथ्योपाध्यज्ञानयोरितरेतरापेक्षत्वान्नैकस्यापि सिद्धिः स्यादिति। शिष्यव्युत्पादनाय चक्रं च एतद्वक्तुं शक्यमित्याह- **अज्ञानेति ॥**

ननु बीजाङ्कुरादाविव अत्र परिहारः किं न स्यात्। उच्यते। युक्तं बीजाङ्कुरव्यक्तीनां भिन्नत्वात् समाधानम्। जीवादेस्तु एकैकत्वाद् अपरिहार्यमेव अन्योन्याश्रयत्वादिकम्। ननु अज्ञानादेः उत्पत्त्यभावात् कथमन्योन्याश्रयादीति चेन्न। तथापि निमित्तनिमित्तिभावस्य विद्यमानत्वात्। अन्यथाऽरोप्यत्वाद्यभावप्रसङ्गेन तस्योपपादितत्वात्।

ननु अज्ञानमेव जीवभेदहेतुरुपाधिरङ्गीक्रियते न त्वहङ्कारादिकम्। तदभावेऽपि सुषुप्त्यादौ भेदसद्भावात्। न हि उपाधिनिवृत्तौ औपाधिकमवतिष्ठते। सुषुप्त्यादौ च भेदनिवृत्तौ मुक्तस्येव पुनर्निर्मूलसंसारप्रत्यावृत्त्यनुपपत्तिः। तत्कथमन्योन्याश्रयादीति। उच्यते। अज्ञानस्य उपाधित्वेऽ-प्यारोपितत्वेन अज्ञानापेक्षायामनवस्थाऽन्योन्याश्रयचक्रकात्माश्रयान्यतमस्यापरिहार्यत्वमेव। एतच्चोक्तवक्ष्यमाणरीत्या सुज्ञानमिति नोक्तम्।

अत्राह ब्रह्माज्ञानवादी- न जीवस्याज्ञानं, तेन नान्योन्याश्रयादिप्रसङ्गः, किन्तु ब्रह्मण एव। न चोक्तदोषः। यदि हि अज्ञानं ब्रह्मस्वरूपमात्रनिबन्धनं स्यात्तदा भवेदुक्तो दोषः। न चैवम्। यतः शुद्धमेव ब्रह्म भ्रान्त्याऽज्ञमिति ब्रूम इत्यत आह- **न चेति ॥** कुतो न युक्तमित्यत आह- **अज्ञा-नेति ॥** अज्ञानस्यैव अधिष्ठानावरणविक्षेपहेतुत्वात्। तत्सिद्धौ चेति परेणैव अङ्गीकृतत्वात्। तदेवं सत्योपाधिपक्ष इव न मिथ्योपाधिपक्षेऽपि बद्धमुक्तादिव्यवस्था सिद्ध्यतीति सिद्धम् ॥

**(र.टि.)अज्ञानस्यैवेति ॥** अधिष्ठानगतासाधारणाकाराऽवरणे सत्यतदाकारप्रतिभासस्य भ्रमत्वादिति भावः।

**(रा.टि.) जीवादेरिति ॥** जीवाज्ञानाहङ्काराणामित्यर्थः। **उपपादितत्वादिति ॥** अज्ञानसिद्धावित्यादि-पूर्ववाक्यव्याख्याऽवसर इति भावः। **न त्वहङ्कारादिकमिति ॥** आदिपदेन मनोबुद्ध्योर्ग्रहः। **सुषुप्त्यादौ** सुप्तिमोहयोः। नन्वहङ्कारादेरुपाधित्वेऽपि जीवपरभेदस्य तन्निमित्तकस्योपाधिभूताहङ्कारादिविलयेऽपि सुषुप्त्यादौ तदुपाधिको भेदोऽवतिष्ठतामित्यत आह- **न हीति ॥**

स्फटिकलौहित्यादावुपाधिनिवृत्त्या लौहित्यनिवृत्तिदर्शनादिति भावः। अस्तु भेदस्यापि निवृत्तिः, को दोष इत्यत आह- **सुषुप्त्यादौ च भेदनिवृत्ताविति ॥** अतोऽज्ञानमेवो-पाधिरुपेयः । तथा चाज्ञानकल्पितजीवाश्रयतयाऽज्ञानावस्थितेः, अज्ञानसिद्धावुपाधिसिद्धिस्तत्सिद्धौ च तद्भिन्न-जीवाश्रिताज्ञानसिद्धिरिति व्यक्तिभेदाभावान्नान्योन्याश्रयत्वादीत्यर्थः। **अनवस्थेति ॥** अपर्यवसिताज्ञानव्यक्ति-परम्पराङ्गीकारे व्यक्तिद्वयाङ्गीकारे व्यक्तित्रयाभ्युपगमे व्यक्त्यैक्यस्वीकारे च क्रमादेते दोषा ध्येयाः। **उक्तेति॥ (रा.टि.)** अज्ञानसिद्धावित्याद्युक्तरीत्याऽज्ञानसिद्धौ भ्रमसिद्धिरित्यादिवक्ष्यमाणरीत्येत्यर्थः। **नचोक्तेति॥** शुद्धस्यैवाज्ञत्व इत्यादिवाक्योक्तदोष इत्यर्थः । अज्ञानसिद्ध्यधीनत्वं भ्रान्तेर्व्यनक्ति- **अज्ञानस्यैवेति ॥ अधिष्ठानावरणं** नामाधिष्ठानगतशुक्तित्वाद्यसाधारणधर्माच्छादनं तदप्रतिभासनमिति यावत् । तद्धेतुत्वाद् विक्षेप-शब्दितान्याकारावभासरूपभ्रमहेतुत्वाच्चेत्यर्थः । भ्रमशब्दितज्ञानार्थयोरज्ञानपरिणामत्वादिति भावः । बहुजीव-वादिपक्ष इत्यादिनोक्तमुपसंहरति- **तदेवमिति ॥** यद्वा यदि चैकमेवेत्यादिनोक्तमुपसंहरति- **तदेवमिति ॥**

**(श्री.टि.)** बीजादङ्कुरम्, अङ्कुराद्बीजमित्यत्र प्राप्तान्योन्याश्रयो यथा परिह्रियते तथेत्यर्थः। यस्माद्बीजादङ्कुरमुत्पन्नं तस्मादङ्कुरात्तद्बीजस्यैवोत्पत्तिर्नास्ति, किन्तु बीजान्तरस्यैव। तस्माच्च बीजान्तरादङ्कुरान्तरस्येति व्यक्तिभेदात् तत्रान्योन्याश्रयः परिह्रियते। न चात्र तथाऽस्ति, जीवाज्ञानमिथ्योपाधिव्यक्तीनामेकैकत्वादित्याह- **उच्यत इत्यादिना ॥ उत्पत्त्यभावादिति ॥** तथा चोत्पत्त्यप्रतिबन्धकत्वान्नान्योन्याश्रयादिर्दोषायेत्यर्थः। **निमित्त-निमित्तिभावस्येति ॥** निमित्तनैमित्तिकभावस्येत्यर्थः। तथा च निमित्तनैमित्तिकभावप्रतिबन्धकत्वेना-न्योन्याश्रयः स्यादेवेति भावः । **अन्यथेति ॥** अज्ञानमिथ्योपाध्योर्निमित्तनैमित्तिकभावाभाव इत्यर्थः। **आरोप्य-त्वाभावप्रसङ्गेनेति ॥** उपाधेरित्यर्थः। **उपपादितत्वादिति ॥** उपाधेर्मिथ्यात्वं नामाऽरोपितत्वेनानिर्वाच्यत्व-मेव । आरोपश्चार्थज्ञानात्मकोऽज्ञानाधीनस्थितिरेव । अज्ञानं ह्यधिष्ठानमाच्छाद्यार्थज्ञानयोरुपादानं भवतीत्यादिना पूर्वमुपाधेरारोपितत्वस्याज्ञानसिद्ध्यधीनत्वेनाज्ञानमिथ्योपाध्योर्निमित्तनैमित्तिकभावस्योपपादितत्वादित्यर्थः। **जीवभेदे** जीवब्रह्मभेदे। **न त्विति ॥** यद्यहङ्कारान्तःकरणादिकमुपाधित्वेनाभिप्रेतं स्यात्तदाऽहङ्काराद्युपाधि-सिद्धेरज्ञानसिद्ध्यधीनत्वेन अज्ञानसिद्धौ मिथ्योपाधिसिद्धिरित्युक्तरीत्याऽन्योन्याश्रयः स्यादिति भावः। अहङ्कारादिकं कुतो नोपाधिरित्यत आह- **तदभाव इति ॥** सुप्तावहङ्कारस्य प्रविलयादिति भावः। **भेदेति ॥** जीवब्रह्मभेदेत्यर्थः। ननु सुप्तावहङ्काराद्युपाध्यभावेऽपि जीवब्रह्मभेदोऽस्तु को दोष इत्यत आह- **न हीति ॥** ननु सुषुप्तौ जीवब्रह्मभेद एव नास्तीति चेत्तत्राऽह- **सुषुप्त्यादौ चेति ॥ भेदनिवृत्ताविति ॥** शुद्धब्रह्मभावापत्तेरि-त्यर्थः। नन्वज्ञानस्यैवोपाधित्वे किं लब्धमित्यत आह- **तत्कथमिति ॥** तथा चाज्ञानस्योपाधित्वेऽज्ञानसिद्धौ मिथ्योपाधिसिद्धिरित्युक्तमयुक्तम्। स्वसिद्धेः स्वाधीनत्वाभावादतो नान्योन्याश्रय इति भावः। **आरोपितत्वेना-ज्ञानापेक्षायामिति ॥** जीवब्रह्मभेदहेतुभूताज्ञानरूपोपाधेरारोपितत्वेनाऽरोपस्याज्ञानकार्यतयाऽज्ञानान्तरापेक्षायां तस्याप्यारोपितत्वेन पुनरज्ञानान्तरापेक्षायामनवस्था, व्यक्तिद्वयाङ्गीकारेऽन्योन्याश्रयता, व्यक्तित्रयकल्पने चक्रकं, स्वस्यैव स्वारोपनिमित्तत्वाङ्गीकारे आत्माश्रयत्वमित्यर्थः। नन्वज्ञानस्यैवोपाधित्वाङ्गीकारे उक्तरीत्याऽ-नवस्थादिकं भगवत्पादैरेव कुतो नोक्तमित्यत आह- **एतच्चेति ॥ उक्तदोष इति ॥** शुद्धस्यैवाज्ञत्वे मुक्तस्या-प्यज्ञत्वप्रसक्तेरित्युक्तदोष इत्यर्थः । **भ्रान्तेति ॥** ततश्च स्वरूपातिरिक्तान्यनिमित्तकमेवेति भावः । **अज्ञान-स्यैवेति ॥** अधिष्ठानगतासाधारणाकारावरणे सत्यतदाकारप्रतिभासरूपभ्रमहेतुत्वादज्ञानसिद्धौ भ्रमसिद्धिरि-त्यर्थः। **परेणैवेति ॥** शुद्धमेव ब्रह्म भ्रान्त्याऽज्ञमिति वदता परेणैव भ्रमसिद्धावज्ञानसिद्धिरिति कोटेरङ्गीकृतत्वान्न तत्रोपपादनापेक्षेत्यर्थः।

**(पां.टि.) तस्येति ॥** निमित्तनैमित्तिकभावस्येत्यर्थः। **आरोपितत्वेनेत्यादि ॥** अधिष्ठानयाथात्म्यावरणं विनाऽऽरोपायोगादिति भावः। **उक्तदोष इति ॥** अनिवृत्तिप्रसङ्गरूपोक्तेत्यर्थः। **अज्ञानस्यैवेति ॥** अधिष्ठानासाधारणाकारावरणे सति अतदाकारप्रतिभासस्य भ्रमत्वादिति भावः।

**(व्या.टि.)** एवं युक्तिपराजितोऽनुमन्यते- **अस्त्विति ॥** ज्ञप्तिप्रतिबन्धकतामाह- **नैकस्यापीति ॥ व्युत्पाद-नायेति ॥** परपक्षे दोषातिशयप्रकटनायेत्यर्थः। **भिन्नत्वादिति ॥** उत्पाद्योत्पादकव्यक्तीनां पृथक्त्वादित्यर्थः। **उपपादितत्वादिति ॥** निमित्तनिमित्तिभावस्याकार्यत्वे पृथिवीत्वादेर्गन्धादिप्रयोजकत्ववदुपपादितत्वादि-त्यर्थः। **तदिति ॥** अहङ्कारादेरित्यर्थः। ननु व्यतिरेकव्यभिचारेऽपि अन्वयमात्रेण हेतुः किं न स्यादित्यत आह- **न हीति ॥** तर्ह्यौपाधिकस्यापि निवृत्तिः स्यादित्यत आह- **भेदनिवृत्तौ मुक्तस्येति ॥** ब्रह्मभूयं प्राप्तस्ये-त्यर्थः। **तदिति ॥** अज्ञानस्योपाधित्वादित्यर्थः। **आरोपितत्वेनेति ॥**

आरोपापेक्षयोक्तदोषो न स्वरूपा-पेक्षयेत्यर्थः। अज्ञानारोपसिद्धावित्येवं कुतो नोऽवादीदित्यत उक्तम्- **सुज्ञानमिति ॥ उक्त इति ॥** मुक्तस्याज्ञत्वादित्यर्थः। भ्रमस्याज्ञानापेक्षां दर्शयति- **विपक्षे हेतुत्वादिति ॥** अज्ञानस्य भ्रमहेतुत्वादित्यर्थः। उपसंहरति- **तदेवमिति ॥**

**मूलम् -** **'अनागता अतीताश्च यावन्तः सहिताः क्षणाः।**
**अतीतानागताश्चैव यावन्तः परमाणवः।**
**ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ॥'**

**इति वत्सश्रुतेर्न संसारिणां परिसमाप्तिरस्मत्पक्षे।**

**'परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।**
**सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिताः।**
**सहस्रयोजनसभां प्रभावाद्विश्वकर्मणः।**
**अनन्ता राशयोऽनन्ताः प्रजानामधिसंस्थिताः ॥' इति स्कान्दे ॥**

**(त.मं.)** ननु जीवानां स्वरूपावस्थित्या समाप्तेर्भेदवादे जगत्प्रवाहस्योच्छेदः। स चानाद्यनन्तं जगदेतदीदृगित्यादि श्रुतिविरुद्धः। अस्मत्पक्षे त्वेकस्यैवानन्तस्य मायामयोपाध्युपहितस्यैकैकांश मुक्तावपि असमाप्तिरित्यत आह- **अनागता इति ॥** अनागता अतीताश्च क्षणाः **सहिताः** मिलिताः यावन्तः। **स्थूला अपि** स्थूलशरीरा अपि ईशशक्त्यैव अल्पप्रदेशे स्थिता हि। तदेव प्रपञ्चयति सहस्रेति स्कान्दवचनेन।

**टीका-** यदुक्तं 'संसारिणां सर्वदा विद्यमानत्वात्' इति 'मुक्तस्यापि अज्ञत्वप्रसक्तेः' इति च, तत्र एकजीववादी मन्यते स्यादिदं वचनं युक्तं यदि बहवो जीवाः तेषु केचिन्मुच्यन्ते केचित् संसरन्तीत्येतद्युक्तं स्यात्। न चैवम्। तथा सत्येकैकमाषापचये माषराश्यपचयवत्क्रमेणैकैकस्य जीवस्य अपवर्गेऽनादौ काले सर्वेषां संसारिणां समाप्तिः स्यात्। ततश्चेदानीं संसारोपलम्भो न स्यात्। तस्मादेक एव जीवः। स चेदानीं संसरति। न तु कश्चिन्मुक्तोऽस्ति। शुको मुक्त इत्यादयस्तु अर्थवादाः केवलं प्ररोचनार्थाः। तत्कथं संसारिणां सर्वदा विद्यमानत्वम्। क्व चास्ति मुक्तो यस्याज्ञानमापाद्येत। न च वाच्यं जीवानामनन्तत्वादसमाप्तिरिति। तत्र प्रमाणाभावात्। नानन्ता जीवाः परिच्छिन्नत्वात् माषवदिति प्रमाणविरोधात्। अपरिच्छिन्नत्वे तु एकस्यैव गगनस्य कर्ण-शष्कुलीभिरिव एकस्यैव शरीरैः उपाधिभिः सुखादिव्यवस्थोपपत्तौ बहुजीवकल्पनावैयर्थ्यापत्ति-रिति, तत्राऽह- **अनागता इति ॥** ननु परमाणूनां नित्यत्वात् कथमतीतानागताश्चेति वचनम्। मैवम्। 'रूपादिमत्त्वाच्च विपर्ययो दर्शनात्' इति सूत्रकृतैव तदनित्यत्वस्य समर्थितत्वात्। अनन्तगुणिता एवेति सम्बन्धः। **पृथगिति ॥** देवानां दैत्यानां मानवानां च तथा ब्रह्मणां रुद्राणां चेत्यादि। **अस्मत्पक्ष इति ॥** सत्यस्वाभाविकबहुजीववादमङ्गीकृत्य केचिन्मुक्ताः केचित् संसरन्तीति अङ्गीकारेऽपीत्यर्थः। कालक्षणेभ्योऽप्यानन्त्यकथनेन एकैकस्य एकैकस्मिन् क्षणेऽपवर्गेऽपि न समाप्तिः। किमुत कल्पान्ते केषाञ्चिदपवर्ग इति सूचयति। कालक्षणाश्च स्वाभाविका एव अत्राभिमताः न त्वौपाधिका। किञ्च उपाधिः आत्मन एकदेशं ग्रसतीत्यादिवक्ष्यमाणदूषण-स्यात्रापि साम्यात्। अनेन जीवानामानन्त्ये प्रमाणाभावो निरस्तः। श्रुतिविरोधादनुमानमपि निरस्तम्।

ननु जीवानां परिच्छिन्नपरिमाणलक्षणं मूर्तत्वमङ्गीक्रियते। न च मूर्तानां समानदेशत्वमस्ति। ततश्च परमाणुभ्योऽप्यनन्तत्वे तेषां स्थानाभावप्रसङ्गादयुक्तमेतदित्यशङ्कामागमवाक्येनैव परिहरति- **परमाण्विति ॥** परमाणोरवस्थानस्य योग्यः प्रदेशः **परमाणुप्रदेशः**। सूक्ष्मत्वात् अप्रतिघत्वेन समानदेशत्वोपपत्तेरिति भावः। ननु

ते संसारित्वेन पार्थिवादिशरीरोपपन्नाः। पार्थिवादीनां सप्रतिघत्वं नियतम्। तत्कथमल्पदेशावस्थानमित्यत उक्तम्- **ईशेति ॥** स्वरूपापेक्षया सूक्ष्मत्वादित्युक्तम्। शरीरसाहित्यविवक्षया- **स्थूला अपीति ॥** सप्रतिघा अपीत्यर्थः। हीत्यनेन ईश्वरशक्तेरघटितघटकत्वं प्रसिद्धमिति सूचयति। उक्तस्य असम्भावनां परिहर्तुं पुराणवाक्येन दृष्टान्तं दर्शयति- **सहस्रेति ॥** सहस्रयोजनानि परिमाणमस्या इति तथोक्ता। 'अधिशीङ्स्थाऽऽसां कर्म' इति कर्मत्वाद् द्वितीया। अनन्ता अनन्ता इत्यनुपचारेण अनन्ता इत्यर्थः। विश्वकर्मणोऽप्येवं प्रभावः, किमु परमेश्वरस्येति भावः। आनन्त्ये प्रमाणाभावोऽनुमानविरोधोऽवस्थानासम्भावना चैकजीववादिभिरुक्तानि दूषणानि अनेकश्रुतिपुराणदर्शिभिरस्माभिरेव परिहर्तुं शक्यन्ते, न तु अन्यैर्बहुजीववादिभिरल्पदर्शिभिरिति ज्ञापयितुमपीदं चोद्यमत्र परिहृतम्। अत एवोक्तमस्मत्पक्ष इति।

**(र.टि.)** हेत्वसिद्धिं परिहरति- **अपरिच्छिन्नत्वे त्विति ॥** ननु 'अतोऽनन्तदोषदुष्टत्वात्' इत्यतः पूर्वमेवैतद्वाक्यमुदाहर्तव्यम्। व्यवधाने किन्निमित्तमित्यत आह- **आनन्त्य इति ॥ इति ज्ञापयितुमपीति ॥** न केवलं यदुक्तं संसारिणामित्याद्याशङ्कानिरासार्थमित्यपिशब्दस्यार्थः।

**(रा.टि.)** परिच्छिन्नत्वादिति हेतोरसिद्धिं विपक्षे बाधकोक्त्या निरस्यति- **अपरिच्छिन्नत्वे त्विति ॥ सूत्र-कृतैवेति ॥** वैशेषिकाधिकरणे परमाणवोऽनित्याः, रूपवत्त्वाद्रसवत्त्वाद्धटादिवदिति 'नित्यमेव च भावात्' इति पूर्वसूत्रोक्तनित्यत्वविपर्ययोऽनित्यत्वं रूपादिमत्त्वहेतुना घटादौ दर्शनादिति (तेनैव) व्यासेनैव समर्थितत्वादित्यर्थः। रूपादेर्भौतिकत्वेन विशेषणान्नानैकान्तिकत्वदोषः परमात्मप्रकृत्यादाविति भावः। **सत्यस्वाभाविकेति ॥** एवंरूपेणार्थोक्तेः कृत्यमग्रे व्यक्तम्। ननु न्यायमतरीत्याऽखण्डे काले क्षणाना-मौपाधिकत्वादुपाधीनां च परिमितत्वात्कथं क्षणानन्त्यमित्यत आह- **कालक्षणाश्चेति ॥** न केवलमौपाधि-कत्वपक्षोऽत्रानभिमत इत्येव। किन्तु सपक्षो दुष्टश्चेत्याह- **किञ्चेति ॥** सूक्ष्मत्वादित्यनुवादः, अप्रतिघत्वेनेति व्याख्या। परस्परप्रतिहतिमद्घनीभूतद्रव्यत्वाभावेनेत्यर्थः। यथा ह्रदमध्ये जलमाकाशः सौराद्यालोकश्चेत्यर्थः। सप्रतिघद्रव्यत्वं चान्योन्यप्रतिहतिमन्निबिडद्रव्यरूपत्वं कुम्भकुसूलयोरिवेत्यर्थः। **सप्रतिघा अपीत्यर्थ इति ॥** पार्थिवादिस्थूलशरीरवत्त्वेन सप्रतिघा अपीत्यर्थ इत्यर्थः। अधिकरणत्वात्सभायामिति भाव्यमित्यत आह- **इति कर्मत्वादिति ॥** अधिपूर्वस्य शीङ् स्वप्न इत्यस्य ष्ठा गतिनिवृत्तावित्यस्य आस उपवेशन इत्यस्य धातोर्यदाधारकारकं तत्कर्मसञ्ज्ञं भवतीत्युक्तेःकर्मत्वात् 'कर्मणि द्वितीया' इति द्वितीयेत्यर्थः। तथा च सभामिति साध्विति भावः। नन्वनागता अतीताश्चेत्यादिवचनस्य स्वपक्षदोषोद्धारपरत्वान्न च सत्यत्वाङ्गीकारे कश्चिद्दोषोऽ-स्तीति वाक्यानन्तरमुपन्यासो युक्तः। न त्वत्र परपक्षे दोषोक्तिप्रस्तावे। अत एव टीकायां 'ननु प्रपञ्चसत्यत्वेऽस्ति बाधकम्' इत्यादिना परोक्तबाधकान्याशङ्क्य तत्रैव परिहृतानीत्यत आह- **आनन्त्य इति ॥ अत्र परिहृत-मिति ॥** बहुजीववाददोषोक्तिप्रस्तावे। तैः परिहर्तुमशक्यमिदमित्यपि ज्ञापयितुम्। न केवलं चोद्यं निरसितु-मित्यपेरर्थः। तन्मात्रार्थत्वे तु न च सत्यत्वे इत्यादिवाक्यानन्तरमेवेदं वक्तव्यम्। अत्रोक्तौ तु मिथ्याभूत-बहुजीववादिप्रभृतिभिर्नैयायिकादिभिस्सर्वैरपि दुष्परिहरमिदं चोद्यमिति ज्ञापनादिति भावः। **अत एवोक्त-मिति ॥** व्याख्यातं चैतत्सर्वं बहुजीववादिसाधारण्येनेति भावः।

**(श्री.टि.) अनादौ काले** अतीतकाले। ननु तर्हि शुको मुक्तो वामदेवश्च मुक्तः इत्यादिवाक्यानां का गतिरित्यत आह- **शुको मुक्त इत्यादय इति ॥ प्ररोचनार्था इति ॥** संसारापेक्षया मुक्तिस्समीचीनेति प्ररोचनार्था इत्यर्थः। तथा चार्थवादत्वान्न स्वार्थे तात्पर्यमिति भावः। हेत्वसिद्धिं परिहरति- **अपरिच्छिन्नत्वे त्विति ॥ एकस्यैव** जीवस्य **शरीरैरुपाधिभिः** शरीरलक्षणैरुपाधिभिः। **वैयर्थ्यापत्तिरिति ॥** अतः परिच्छिन्नत्वमेवाङ्गी-कार्यमिति भावः। **रूपादिमत्त्वाचेति ॥** रूपादिमत्त्वाचानित्यत्वम्, तथा दृष्टत्वाल्लोक इति सूत्रार्थः। 'भौति-कन्त्वेव रूपादि व्याप्तं नाशेन नो मते' इत्युक्तत्वान्नेश्वरे व्यभिचारः शङ्कनीयः। प्रसङ्गादाह- **कालक्षणाश्चेति ॥ औपाधिका इति ॥** तरणिपरिस्पन्दाद्युपाधिनिमित्तभेदवन्त इत्यर्थः। यथोक्तं वैशेषिकैः-'आकाशादित्रय-मेकैकमेवोपाधिभेदान्नानुभूतम्' इति। औपाधिकत्वे को दोष इत्यत आह- **किञ्चोपाधिरिति ॥ दूषणस्य** उपाधेर्भेदकारित्वानुपपत्तिरूपस्य। **अत्रापीति ॥** कालक्षणानामौपाधिकत्वेऽपीत्यर्थः। **अनेनेति ॥** अनागता इति वत्सश्रुत्युदाहरणेनेत्यर्थः। **अनुमानं** जीवा नानन्ताः परिच्छिन्नत्वादित्यनुमानम्। **स्थानेति ॥** अवस्थान-योग्यप्रदेशेत्यर्थः। **मूले- परमाणुप्रदेशेऽपीति ॥** वालाग्रस्य शतधा विभागे सत्येको विभागो यावान्सूक्ष्मस्तावान् सूक्ष्मो जीवः स च हृदयाकाशे तिष्ठति। तस्मिन् जीवेऽनन्तानि कर्माणि।

'कर्माणि तानि च पृथक् चेतनान्येव सर्वशः ।
अचेतनशरीराणि स्वकर्मफलभाञ्जि च ॥' इति ।

तानि चैवमित्यनन्ताः प्राणिराशयः परमाणोरवस्थानयोग्यप्रदेशे सन्तीति ज्ञातव्यम् । **अप्रतिघत्वेनेति ॥** स्वाधिष्ठितप्रदेशेऽन्यस्यावस्थानानापादकत्वं सप्रतिघत्वं तदभावोऽप्रतिघत्वं तेनेत्यर्थः । **पार्थिवादीनां** पार्थिवादि-शरीरोपपन्नानाम् । **उक्तस्यासम्भावनामिति ॥** शरीरसहितत्वेन स्थूलानामप्यल्पदेशेऽवस्थानमसम्भावित-मित्यसम्भवानाशङ्कां निराकर्तुमित्यर्थः । ननु सभायाः प्रजाधारत्वेनाधिकरणत्वात्तत्र सप्तमी स्यात् । न तु सभामिति द्वितीयेत्यत उक्तम्- **अधिशीङ्स्थासां कर्मेतीति ॥** अधिपूर्वाणां शीङ् स्वप्ने, ष्ठा गतिनिवृत्तौ, आस उपवेशने, इत्येषां धातूनामाधारः कर्मसञ्ज्ञः स्यादिति सूत्रार्थः । अधिशेते अधितिष्ठत्यध्यास्ते वा वैकुण्ठं हरिरित्युदाहरणम् । तथा च प्रकृतेऽधिपूर्वष्ठागतिनिवृत्तावितिधात्वर्थाधारभूतायास्सभायाः कर्मत्वात् 'कर्मणि द्वितीया' इति सूत्रेण द्वितीया जातेत्यर्थः । ननु मिथ्योपाधिकृतमिथ्याभेदवादिनां सत्योपाधिकृतसत्यभेदवादिनां चैक्यवादिनां निराकरणानन्तरं जीवानां स्वाभाविकानन्त्ये प्रमाणाभावादिके शङ्किते तत्परिहारायानागता इत्यादिवाक्यम्' अतोऽनन्तदोषदुष्टत्वात्' इत्यतः पूर्वम् अन्योन्याश्रयादित्यनन्तरमुदाहर्तव्यम् । अत्रोक्तौ किं निमित्तमित्यत आह- **आनन्त्य इति ॥ अनुमानविरोध** आनन्त्याभावसाधकपरिच्छिन्नत्वानुमानविरोधः । **इति ज्ञापयितुमपीति ॥** न केवलं 'यदुक्तं संसारिणां सर्वदा विद्यमानत्वात्' इति, 'मुक्तस्याप्यज्ञत्वप्रसक्तेः' इति च 'तत्रैकजीववादी मन्यते' इत्याद्याशङ्कानिरासार्थमित्यपिशब्दार्थः । **अत एवेति ॥** अनेकश्रुतिपुराण-दर्शिभिरस्माभिरेव परिहर्तुं शक्यन्ते यतोऽत एवेत्यर्थः । **अस्मत्पक्ष इतीति ॥** अनेकश्रुतिपुराणदर्शिनामस्माकं पक्ष इत्यर्थः । **तस्य** ऊेपाध्यादेः । **उपाधिसम्बन्धेन** उपाधिसम्बन्धप्रयुक्तेन ।

**(पां.टि.)** हेत्वसिद्धिं परिहरति- **अपरिच्छिन्नत्वे त्विति ॥ अनन्तगुणिता एवेति सम्बन्ध इति ॥** अतीताना-गताश्चैवेत्येवकारस्यानन्तगुणिता एवेत्यनेन सम्बन्धेन यथाश्रुतसम्बन्धाभावान्न तस्य वैयर्थ्यमिति भावः । ननु कालक्षणानामौपाधिकत्ववज्जीवानामप्यौपाधिकत्वं किं न स्यादित्यत आह- **कालक्षणाश्चेति ॥** तथा च दृष्टान्तोऽसम्प्रतिपन्न एवेति भावः । नन्वसति औपाधिकत्वे बाधके तत्परित्यागेन स्वाभाविकत्वावधारणं निर्निबन्धनमित्यतः, किञ्चोपाधिरात्मन एकदेशं ग्रसतीत्यादिवक्ष्यमाणदूषणकवलिततया तत्परित्यागेन स्वाभाविकत्वावधारणस्य युक्तत्वादित्याशयेनाऽह- **किञ्चेति ॥ अनेनेति ॥** श्रुतिरूपप्रमाणोदाहरणेने-त्यर्थः । **अनुमानमपीति ॥** जीवाः नानन्ताः परिच्छिन्नत्वान्माषवद् इत्यनुमानमपीत्यर्थः । **न च मूर्ताना-मिति ॥** न च तन्तुपटयोरेकत्वेन समानाश्रयत्वदर्शनात्कथमेतदिति वाच्यम् । अवयवावयविभावानापन्नानां समानाश्रयत्वाभावस्याभिमतत्वात् । यदत्र वक्तव्यं तच्छेषवाक्यार्थचन्द्रिकायां स्पष्टमुक्तं तत एव प्रतिपत्त-व्यम् । परमाणुप्रदेश इत्यस्य परमाणोः प्रदेशेंऽशविशेष इत्यर्थप्रतिपत्तिवारणाय व्याचष्टे- **परमाणोरिति ॥** नन्वेतद्विरुद्धमित्यत आह- **स्वरूपापेक्षयेति ॥** ननु सहस्रं योजनानि परिमाणमस्याः सभायाः सा तथोक्तेति सहस्रयोजनसभाया अधिकरणतया तत्र सप्तम्यां सत्यां सभायामिति भवितव्यं, सभामिति द्वितीया तु कथमित्यतः 'अधिशीङ्स्थासाम्' इत्यधिपूर्वाणां शीङादीनामाधारस्य कर्मताविधानात्कर्मणि द्वितीयायां सभामित्यस्योपपन्न-तरत्वादित्याह- **अधिशीङ्स्थासां कर्मेति कर्मत्वाद् द्वितीयेति ॥** ननु जीवानन्त्यादौ प्रमाणाभावादिशङ्का-परिहारः 'अतोऽनन्तदोषदुष्टत्वात्' इत्यतः पूर्वमेव कर्तव्यः । तत्र हि परपक्षेऽनन्तदोषदुष्टत्वेन दूषिते स्वपक्षेऽपि दोषः सम इति शङ्कोदयात्, तत्कथमत्रैतच्चोद्यपरिहार इत्यत आह- **आनन्त्ये प्रमाणाभावादित्यादि ॥** अस्माभि-रेवेत्यवधारणोपपादकं स्वस्येतरापपेक्षया विशेषं दर्शयति- **अनेकेति ॥** इतरैरपरिहार्यत्वे हेतुमाह-**अल्प-दर्शिभिरिति ॥ इति ज्ञापयितुमपीति ॥** अपिशब्देन यदुक्तं संसारिणां सर्वदा विद्यमानत्वादित्युक्त-शङ्कानिरासार्थत्वसमुच्चय इत्याहुः ।

**(व्या.टि.)** एवं द्विविधबहुजीववादं निरस्य मध्येऽप्येकजीववादं निरसितुं तदुत्थापयिषुस्तदुत्थानबीजमुक्त-मनुवदति- **यदुक्तमिति ॥ वचनमिति ॥** दोषवचनमित्यर्थः । **एतदिति ॥** मतमित्यर्थः । **युक्तमिति ॥** सम्भावितमित्यर्थः । सम्भाविते हि युक्तिविरोधोद्भावनं युक्तम् । न त्वसम्भावनयैवापोढे, निराश्रयत्वादि-त्यर्थः । तामेव दर्शयति- **तथा सतीति ॥ क्रमेणेति ॥** कालक्रमेणेत्यर्थः । परमतं प्रदूष्य स्वमतं पर्यवसाययति- **तस्मादिति ॥** यदि न मुक्तस्तर्हि शुको मुक्त इत्यादिरनर्थः स्यादिति शङ्कते- **त्विति ॥** किन्त्वित्यर्थः । **अर्थवादा इति ॥** भूतार्थवादा इत्यर्थः । केवलमित्यर्थतत्त्वतात्पर्यव्यावृत्तिः । पूर्वतन्त्रे 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यर्थवादा नार्थतत्त्वपराः असम्भावनावादत्वादित्युक्तेरित्यर्थः । किमाक्षेपे । आक्षेपं प्रतिक्षि-पति- **न चैवं वाच्यमिति ॥ असमाप्तेरिति ॥** संसारिणामिति शेषः । तदेकजीववादी मानाभावानुमान-विरोधावस्थानासम्भावनाभिर्दूषयिषुराद्यं तावदाह- **तत्रेति ॥** द्वितीयमप्याह- **नानन्ता इति ॥** हेतोः स्वरूपा-सिद्धिं निरसितुमपरिच्छिन्नत्वे बहुजीववादाङ्गीकारवैयर्थ्यमाह- **अपरिच्छित्वे त्विति ॥**

**(व्या.टि.)** नन्वत्रैकस्य गगनस्य कर्णशष्कुलीभिरिवेति नभसः श्रोत्रभावो दृष्टान्तीकृतः। स कुतो न दूषितः। न चानुमतत्वादिति वाच्यम्। सर्वप्रमाणविधुरस्य प्रमाणविरुद्धस्यानुमन्तुमनर्हत्वात्। तथा हि। न तावन्नभसः श्रोत्रत्वे प्रत्यक्षं प्रमाणम्। ज्ञानकारणमतीन्द्रियमिन्द्रियमिति तल्लक्षणोक्तिव्याघातात्। रूपाद्यभावाच्च। नाप्यनुमानम्। तत्प्रतिबद्धलिङ्गाभावात्। न च श्रोत्रं गगनीयम्, रूपादिषु पञ्चसु मध्ये शब्दस्यैव ग्राहकत्वा-दित्यनुमानं मानम्। व्याप्त्यभावात्। भेरीदण्डसंयोगादौ व्यभिचाराच्च। विपक्षे बाधकाभावेनाप्रयोजकत्वाच्च। नभसः श्रोत्रत्वे बधिराभावप्रसङ्गश्च । पृथिव्यादित्व एवोपहतिसम्भवात्। अदृष्टादिकारणविशेषस्योभयत्र साम्यात्। नाप्यागमः। कल्पनामात्रमूले श्रुत्याद्यनाकलनात्। तथैव सर्वप्रमाणविरुद्धं च। आकाशं न श्रोत्रमिति साक्षिविरोधात्। श्रोत्रं नाऽकाशं गत्यादिमत्त्वादित्यनुमानविरुद्धं च। न चासिद्धिः। 'श्रोत्रमुदक्रामत् अशृण्वन्नश्नन् पिबन् आस्तैव' इति 'श्रोत्रं प्राविशत्' इति चोत्क्रान्तिप्रवेशोक्तेः। गगनस्य श्रोत्रत्वे 'प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति' इति 'विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतम्' इति श्रुतिस्मृत्युक्तेदंद्रवणाभावाच्च। नभसः श्रोत्रत्वे तस्य सिद्धत्वेन 'अश्विनौ वा अकामयेतां श्रोत्रश्विनावबधिरौ स्याव' इति तदाशंसनविरोधाच्च। 'तावेत-मश्विभ्यामश्वयुग्भ्यां पुरोडाशं द्वादशकपालं निरवपताम्। ततो वैतौ श्रोत्रश्विनावबधिरौ अभवताम्' इति तत्सिद्ध्यर्थमिष्ट्यनुष्ठानविधानानुपपत्तिश्च। तस्य एतच्छ्रोत्रं यद्वाल्मीक इति वल्मीकसादृश्यानुपपत्तिश्च। न चात्र श्रोत्रं कर्ण इति वाच्यम्। 'सत्य इमे लोका एषु चरन्ति प्राणाऽनुगुहाशयां निहितास्सप्त सप्त' इतीन्द्रियाणां गोलकस्थत्वाभिधानेन कर्णस्य गोलकत्वेन श्रोत्रत्वानुपपत्तेः। 'सूर्यं चक्षुर्गमयतात्' इत्यनुवाके चक्षुरादेरिव 'दिशः श्रोत्रम्' इति कर्णानुप्रविष्टगमनप्रार्थनानुपपत्तेश्च। वाङ्म आसन्निति मन्त्रे अक्ष्णोश्चक्षुरितीव कर्णयोः श्रोत्रमिति कर्णानुप्रविष्टश्रोत्रकथनानुपपत्तिश्च। 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इतीन्द्रियोत्पत्ति-कथनेन नित्ये नभसि तदयोगाच्च। तस्मान्निराकरणीयमिति चेत् सत्यम् अनभिमतमेतन्निराकरणीयमिति। तथाऽप्यन्यत्र विस्तरतो निरस्तत्वान्नात्र निराक्रियाप्रक्रिययेत्यलम्।

मूले सहिता इति साहित्यमिहैकबुद्ध्युपारूढत्वम्। क्रमिकाणां क्षणानां मेलनासम्भवात्। मूले परामाणव इति सहिता इत्यत्राप्यनुषञ्जनीयम्। परमाण्वारम्भवादी शङ्कते- **नन्विति ॥ समर्थितत्वादिति ॥**

ननु कथमेतद्युक्तम्। भूतसूक्ष्माणां परमाणुत्वात्तेषां च नित्यत्वात्। कथं च तदानन्त्यापेक्षया जीवा-नन्त्यातिशयसम्भवः। प्रतिजीवमनेकभूतसूक्ष्मात्मकप्रकृत्यावरणावश्यम्भावात्। एतदतिरिक्तानां जगदुपादा-नानन्तभूतसूक्ष्माणां सत्त्वाद्वेति चेन्न। 'अविभागः पराणुता' इत्यनुभाष्योक्तपरमाणुलक्षणस्य 'यस्य विभिन्ना-वयवेषु सत्स्वपि तेषां विभागो न कदाऽपि भवितुमर्हति स परमाणुः' इति। 'यतः स्वावयवं विना स्वतन्त्रमनवयवरूपमपकृष्टपरिमाणं नास्ति स परमाणुः' इति द्वेधा सुधायां परिष्कृतस्य भूतसूक्ष्मेष्वभावात्। तेषां स्वावयवेन खण्डनाभावेन भेदाभावेन विभिन्नावयवेषु सत्स्वित्यन्तस्य प्रथमलक्षणघटकस्याभावात्। द्वितीयलक्षणे स्वावयवं विनेत्यस्य स्वावयवातिरिक्तमित्यर्थः। एतद्विशेषणमहिम्ना स्वावयवानामनवयवत्वा-**(व्या.टि.)** वस्थापन्नानामप्यपकृष्टपरिमाणानां सत्त्वलाभेन भूतसूक्ष्मेष्वतिव्याप्तिरिति निपुणतरं वाक्यार्थचन्द्रि-कोपपादितरीत्या द्वितीयलक्षणस्याप्यभावात्। तथा च भूतसूक्ष्मजन्यद्रव्याणामेव परमाणुतया तेषामनित्यत्वं तदानन्त्यापेक्षया जीवानन्त्यातिशयश्च युक्तः। न च तथाऽप्युक्तानां सर्वेषामपि प्रतिकल्पं सृज्यत्वेन भूतसूक्ष्म-कार्यानेकपरमाणुसम्बन्धावश्यम्भावान्न तदानन्त्यापेक्षया जीवानन्त्यातिशय इति वाच्यम्। स्वसम्बद्ध-परमाण्वतिरिक्तजगदुपादानपरमाणूनामेवात्र विवक्षितत्वात्। कतिपयानामेव सृष्टिरिति वदतस्त्वसृज्यानां परमाणुसम्बन्धो नास्तीति नानुपपत्तिरित्याहुः। सर्वथा जीवानन्त्यातिशयो युक्तः। अत एव सुधायां 'रूपादि-मत्त्वाच्च' इति सूत्रव्याख्यायां 'नन्वस्माभिर्भूतसूक्ष्माणां नित्यताऽङ्गीक्रियते तत्कथमेवमनुमीयते। मैवम्। न हि परमाणवो भूतसूक्ष्माणि। किन्नामाहङ्कारोपचितानि विकृताकाराश्च नित्या एव' इति विकृतानां परमाणूनां भूतेभ्योऽन्यत्वमुक्तम्।

पृथगित्यनूद्य व्याचष्टे- **पृथगिति देवानामित्यादिना ॥** नन्वनेन कथमन्वयः सूचितः। न तावज्जीवानां राशयः पृथगनन्ता देवानां दैत्यानां मानवानां ब्रह्मणां रुद्राणां राशयः प्रत्येकमनन्ता इति। राशिशब्दस्य समुदायापरपर्यायत्वेन समुदायस्य प्रत्येकमेकत्वेनानन्त्यस्य दूरापास्तत्वात्। नापि पृथग्देवदैत्यादिनानारूपेण स्थितानां जीवानां राशय इति। जीवसमुदायस्याप्येकत्वेनोक्तदोषात्। नानारूपेण स्थितिकथनानर्थक्याच्च। देवानामित्यादिषष्ठ्यनन्वयाच्च। नापि समुदायवाचिनः समुदायिलक्षणया प्रथमोक्तोऽन्वयः। देवादीनां लक्षणानन्त्यापेक्षयाऽतिशयितानन्त्यस्यासम्भावितत्वात्। ब्रह्मणां सुतरामसम्भावितत्वात्। तथा हि। सर्वेषां ब्रह्मणां मुक्तियोग्यत्वमेकैकस्यैकैकस्मिन्नेव कल्पे मुक्तिरिति च तत्त्वम्। तथा च प्रतिक्षणं स्थितानां तत्प्रागभाव-तद्ध्वंसानां तत्समसङ्ख्याकत्ववत्प्रतिकल्पमेकैकत्वेनोत्पत्स्यमानानां महत्तत्त्वादीनां

महाकल्पसमसङ्ख्यावत्त्व-वच्चेत्प्रतिकल्पमेकैकत्वेन मुच्यमानग्रहाणामपि तत्समसङ्ख्याकत्वस्यैव युक्ततया प्रतिकल्पमनन्तलक्षण-परमाण्वपेक्षया ब्रह्मणामानन्त्यातिशयस्यासम्भावितत्वात् ।

अत्रोच्यते । रुद्राणां चेत्यत्र राशिरिति वचनविपरिणामेनान्वयः । इत्यादीत्येतदन्तं पृथगित्यस्य व्याख्यान-क्रियाविशेषणम् । स्थितानामिति शेषः । तथा च नानारूपेण स्थितानां जीवानां राशयोऽनन्ता इति । अत्र बहुवचनं समुदायापेक्षया । नानारूपेण स्थितिकथनं च जीवानामानन्त्येऽपि ब्रह्मादीनां पर्यवसाने निर्ब्रह्मादिः कल्पः स्यादिति शङ्कानिरासकतदानन्त्यद्योतनाय । न तु क्षणाद्यानन्त्यातिशयितानन्त्यद्योतनाय । उक्त-युक्तिविरोधात् । आनन्त्यमात्रेणैवोक्तशङ्कानिरासाच्च । अत एव भारतार्थप्रकाशे-

'पूर्तिश्च नैव नियमाद्भविता हि यस्मात्तस्मात्समाप्तिमपि यान्ति न जीवसङ्घाः ।
आनन्त्यमेव गणशोऽस्ति यतो हि तेषामित्यन्ततः सकलकालगता प्रवृत्तिः ॥'

इति गणशः आनन्त्यमेवोक्तम् । न तु क्षणाद्यतिशयितम् । 'कालक्षणेभ्योऽप्यानन्त्यकथनेनैकैकस्यैकै-कस्मिन्क्षणेऽपवर्गेऽपि न समाप्तिः, किमुत कल्पान्ते केषाञ्चिदपवर्गे इति सूचयति' इत्युत्तरवाक्यबलाद-**(व्या.टि.)** प्येषोऽर्थोऽवगम्यते । ब्रह्मणां क्षणानन्त्यादतिशयितानन्त्ये एकैकस्य ब्रह्मण एकैकस्मिन् क्षण इत्यवक्ष्यत् । किमुत कल्पान्ते केषाञ्चिदित्यनेनेन प्रतिकल्पं मुच्यमानानां तत्तत्कल्पीयक्षणसङ्ख्याऽपेक्षया न्यूनसङ्ख्या-कत्वमेवाभिप्रेतम् । अन्यथा कैमुतिकत्वायोगात् । प्रतिकल्पं मुक्तिङ्गच्छतां तमो गच्छतां स्वभावाभिव्यक्तिं प्रतिपद्यमानानां नित्यसंसारिणाश्च मिलित्वा तत्तत्कल्पीयक्षणसङ्ख्यापेक्षयाऽधिकसङ्ख्याकत्वमात्रेण जीवानन्त्यस्य क्षणानन्त्यादाधिक्यं सङ्गच्छते । मुक्तियोग्यापेक्षया तमोयोग्यानामधिकसङ्ख्याकत्वं मानान्तरादवसेयम् । जीवानामानन्त्यमात्रेण संसार्यसमाप्तिलाभेऽपि वस्तुतत्वं श्रुतावुक्तमिति ध्येयम् ।

मूले अस्मत्पक्ष इति विशेषणेन पक्षान्तरे संसारिपरिसमाप्तिः दुरुद्धरेति सूचितम् । तद्व्याचष्टे- **सत्यस्वाभा-विकेति ॥** कथमनेनोक्तशङ्काऽपगतेत्यतः कैमुत्यसूचनेनेत्याह- **कालक्षणेभ्योऽपीति ॥ केषाञ्चिदिति ॥** केषाञ्चित्तमोयोग्यत्वादपरेषां नित्यबद्धतया सर्वेषामपवर्गायोग्यत्वादित्यर्थः । एक एव कालोऽखण्ड एव तद्भेदस्तु औपाधिक इति नैयायिकमतं निरस्यति- **कालक्षणाश्चेति ॥ साम्यादिति ॥** आत्मीयोपाधिनिरासकयुक्तीनां कालिकोपाधिनिरासेऽपि प्रसङ्गयोगादित्यर्थः । श्रुत्युदाहरणप्रयोजनमाह- **अनेनेति ॥ श्रुतीति ॥** वत्सश्रुती-त्यर्थः । तृतीयं निरसितुं प्रसञ्जयति-**नन्विति ॥** मूर्तानामितिहेतुगर्भविशेषणम् । घटादौ तद्दर्शनादिति भावः । **अयुक्तमिति ॥** असम्भावितमित्यर्थः । **एतदिति ॥** परमाणूत्कृष्टजीवानन्त्यमित्यर्थः । यद्यपि परमाणुभ्यः आनन्त्येऽपि जीवानां न समानदेशत्वं प्रसज्यते । ब्रह्माण्डस्यान्तर्बहिरवकाशभागेऽप्यवस्थानसम्भवात् । अन्तरवस्थाननियमेऽपि परमाण्ववच्छिन्नाकाशभागेषु बहुषु तत्सम्भवात् । अनवच्छिन्नभागस्य परमाण्ववच्छिन्न-भागापेक्षयाऽल्पत्वेऽति परमाण्वपेक्षया सूक्ष्मतमानां जीवानां गण्डशिलापेक्षयाऽल्पदेशेऽपि सर्षपाणामिव बहूना-मवस्थानासम्भवात् परमाण्वनवच्छिन्नदेशाभावेऽपि समानदेशत्वप्रसक्तावपि न तदनुपपत्तिः । पिपीलिकानां हस्तिपादे समानदेशत्वदर्शनात् । तथाऽपि संसारिणामन्तरेवावस्थानात्परमाणूनामहङ्कारकार्याणां यावदहङ्कृति व्याप्तत्वाद्विरलतयाऽवस्थानेऽपि ततोऽधिकसङ्ख्यानामतीतानागतपरमाण्वपेक्षयाऽप्यनन्तानां जीवानामव-स्थानायोगात् । 'बालाग्रशरभागस्य दशधा कल्पितस्य च । जीवो भागः समुद्दिष्टः' इति मानेन विभक्तावयव-समपरिमाणस्य परमाण्वपेक्षया अत्यल्पपरिमाणत्वयोगात्पिपीलिकानां हस्तिपादेनोर्ध्वाधरीभावस्य परस्परं च विभिन्नदेशत्वस्यैव सत्त्वेन जीवानां परमाणूनां परस्परं समानदेशत्वप्रसक्तिः तदनुपपत्तिश्चास्तीति न दोषः । अत्र परमाणुप्रदेशोऽपीति समासप्राबल्यात्कर्मधारये प्राप्तेऽपि परमाणुसामानाधिकरण्यघटनाय विवक्षितमाह- **परमाणोरिति ॥** मूर्तसादेश्यं घटयन् सूक्ष्मत्वादित्येतद्व्याचष्टे- **अप्रतिघत्वेनेति ॥** परस्परप्रतिहतिमद्घन-द्रव्यत्वाभावेनेत्यर्थः । अनेन प्रतिघत्वं मूर्तत्वानुमानोपाधिरिति सूचितम् । जलाकाशसौरालोकानामिवेति ।

पुनः शङ्कते- **नन्विति ॥ पार्थिवादीति ॥** 'भूतबन्धो हि संसारः' इति भारतवचनादिति भावः । **नियत-मिति ॥** सार्वत्रिकमित्यर्थः । तत्रोपाध्युन्नीतहेतोरसिद्धिरिति भावः । अवस्थानघटकद्वयं व्यवस्थापयति- **स्वरूपापेक्षयेति ॥ साहित्यविवक्षयेति च प्रसिद्धमिति ॥** 'विचित्रशक्तिः पुरुषः पुराणः' 'नम आश्चर्यकर्मणे' **(व्या.टि.)** 'सर्वोपेता च तद्दर्शनात्' इति श्रुतिस्मृतिसूत्रैरतर्कितकार्यलिङ्गेन च प्रसिद्धमित्यर्थः । यत्तु 'कर्माणि तानि च पृथक्चेतनान्येव सर्वशः' इत्यनुभाष्यानुरोधेनात्र पापजीवपरतया व्याख्याति, तत्प्रमितमप्यत्रानभि-मतम् । असङ्गतत्वात् । परमाणुसमदेशजीवानन्त्यस्य प्रकृतत्वात् । परमाणुजीवस्थपापजीवानन्त्यस्याप्रकृत-त्वात् । परमाणुपदेन जीवपरिग्रहे प्रकृतहानाप्रकृतकल्पने स्यातामिति ।

परमाणुजीवस्थपरमाणुपापजीवपरिग्रहे टीकायां परमाणुश्चासौ प्रदेशश्चेति विग्रहः प्रदर्श्येत । न तु परमाणोरवस्थानप्रदेश इति षष्ठीतत्पुरुष इति मात्सर्यमुत्सार्य विचार्यतामिति दिक् ।

**उक्तस्येति ॥** स्थूलानामप्यल्पस्थानावस्थानस्येत्यर्थः । **दृष्टान्तमिति ॥** सभापरिमाणाल्पपरिमाण-जीवराश्यवस्थानमित्यर्थः । नन्वत्रापि सङ्ख्यापूर्वत्वाद् द्विगुत्वेन ङीपा भाव्यमित्यत आह- **सहस्रमिति ॥** ननु सभायाः प्रजावस्थित्यधिकरणत्वात्सप्तमी स्यादित्यत आह- **अधिशीङिति ॥** विशेषसञ्ज्ञया सामान्य-सञ्ज्ञाया बाध इति भावः । यद्यपि 'सभा राजाऽमनुष्यपूर्वा' इत्यतः अमनुष्यपूर्वत्वान्नपुंसकेन भाव्यम् । तथाऽप्यमनुष्येत्यत्र नञिवयुक्तन्यायेन मनुष्यसदृशवाचिरक्षःप्रभृतिशब्दस्यैव ग्रहणान्नेह प्रवर्तते । द्विरुक्तेः फलमाह- **अनुपचारेणेति ॥** 'मङ्गलानां च मङ्गलम्' 'मन्मथमन्मथः' इत्यादौ प्रवृत्तिनिमित्तपारम्ये तात्पर्यदर्शनादित्यर्थः । कथं दृष्टान्तमात्रेणासम्भवनानिवृत्तिः, सम्भावकानुक्तेरित्यतः, कैमुत्ये तात्पर्यादित्याह- **विश्वकर्मणोऽपीति ॥** देवतक्ष्णोऽपीत्यर्थः । तस्य हि 'यथा च तक्षोभयथा' इति पराधीनत्वं प्रसिद्धमित्यर्थः । **परमेश्वरस्येति ॥** बहुसमर्थस्येत्यर्थः । कैमुत्यन्तु 'देवादिवदपि लोके' इति सूत्रितमित्यर्थः । ननु 'परदोषं पश्यसि त्वमात्मदोषं न पश्यसि' इत्याभाणकविषयता भवतामापन्ना । यतो बहुजीववादनिरासप्रसङ्गेऽप्येकजीव-वादनिरासेऽसङ्गतिर्नाऽलोचितेत्यतोऽत्रैकजीववादनिरासोऽपि बहुजीववादनिरासफलक इत्यतो नासङ्गतिरित्या-शयेनाऽह- **आनन्त्य इति ॥** असम्भावना चेत्यतः परम् एतानीति शेषः । अनेकेति श्रुतिपुराणविशेषणम् । तानि द्रष्टुं शीलन्त इति अनेकश्रुतिपुराणदर्शिनः । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । **अस्माभिरे-वेति ॥** मुख्यप्राणावतारैरित्यर्थः । तेषामेव हि 'नित्य आशये द्वितीयमासप्तशिवासु मातृषु' इति स्वापापरपर्यायश्रुतिस्मृतेः 'यास्वशुचिरहिंस्यमानः' इति घृणाशुचित्वापरिज्ञातव्यत्वयोः 'कुविदङ्ग' इति श्रुतौ 'ते वायवे मनवे बाधिताय' इति सर्वदेवनमस्कार्ये गुरुत्वस्य 'प्राणो रक्षति विश्वमेजत्' इति विश्वरक्षकत्वस्य 'स इ सर्वं व्यासने' इति सर्वव्यापित्वस्य 'प्राणं देवा अनुप्राणन्ति' इति सर्वचेष्टकत्वस्य 'प्राणो वा ईशितव्येशः' इति 'मध्यमः प्राणः' इति चावान्तरेश्वरत्वस्य 'वैद्युतेनैव ततस्तच्छ्रुतेः' इति सर्ववाग्देवताभूतविद्युन्नामक-भारतीपतित्वस्य 'स एनान् ब्रह्म गमयति' इति ब्रह्मगमयितृत्वस्य चोक्तेः । तथाऽन्यस्वरूपमाह- **अल्प-दर्शिभिरिति ॥** अल्पेति ज्ञानाल्पत्वकथनेनाज्ञानमिथ्याज्ञानप्राचुर्यमुक्तम् । अत्रापि ताच्छील्ये णिनिः । तेषां ताच्छील्यन्तु 'अत्यल्पप्रतिभानत्वान्मानुषाः श्रुतवेदिनः' इत्यल्पप्रतिभानस्य, गीतायाम् 'कश्चिन्मां वेत्ति तत्त्वतः' इति सम्यग्ज्ञानदौर्लभ्यस्य, 'ईश्वरोऽहमहं भोगी' इत्यादिनाऽद्वैतानुवादेन 'इत्यज्ञानविमोहिताः' इति अज्ञान-**(व्या.टि.)** प्राचुर्यस्य, 'द्वन्द्वमोहेन' इति भेदे मोहस्य, 'अहङ्कारविमूढात्मा' इति विमूढात्मत्वस्य, 'नष्टात्मानः' इति दुष्टात्मत्वस्याल्पबुद्धित्वस्योग्रकर्मत्वस्य, 'क्षयाय जगतोऽहिताः' इति लोकानिष्टहेतुत्वस्य, 'त आसुराः' इत्यासुरत्वस्य चोक्त्या सिद्धम् । भागवन्महिमवत्स्वमहिम्नोऽपि मुमुक्षुज्ञेयत्वात्तत्प्रदर्शनम् । अनेनैकजीववादी कलिः । तत्क्षपणदक्षः प्राण एवेति रहस्यमवश्यमवसेयम् ।

**मूलम्- न च मिथ्यावस्तुनो दुर्घटत्वमेव भूषणम् । दृष्टस्य वस्तुनो मिथ्यात्वकल्पनस्य दृष्टिसकाशाद् बलवत्प्रमाणयुक्त्यपेक्षत्वात् तदभावे सत्यत्वं दृष्ट्यैव सिद्ध्यति । न हि अन्नादिकं भोग्यं दृष्ट्वा भोक्तुं सत्यत्वे प्रमाणान्तरमपेक्षते । किन्तु नेदमन्नमिति केनचिदुक्ते कथमिदमन्नत्वेन दृश्यमानमन्नं न भवतीति प्रमाणान्तरमपेक्षते ॥**

**(त.मं.)** अज्ञानेनोपाधिभेदादीनां अन्योन्याश्रयत्वादिना दुर्घटत्वं प्रतिपाद्यते तद् भूषणमेव तेषां मिथ्यावस्तुत्वादित्यत आह- **न च मिथ्येति ॥** मिथ्यावस्तुत्वहेतुरेव असिद्ध इत्याकूतम् । प्रत्यक्षस्य बलवत्त्वं साधयति- **न ह्यन्नेति ॥** न ह्यन्नादेः सत्यत्वे दृष्टे बलवत् प्रमाणान्तरमपेक्षते ।

**टीका-** बद्धमुक्तादिव्यवस्थासिद्ध्यर्थं बहुजीववादोऽद्वैतवादिभिरभ्युपगतः । तत्रापि सत्योपाधिपक्षे ब्रह्मणः सर्वदोपाधिसम्बन्धात् सर्वदा संसारित्वापत्त्या तद्भावमापन्नस्यापि मुक्तत्वाभावान्न बद्धमुक्तव्यवस्था सिद्ध्यतीत्यतो मायावादिनोपाधेर्मिथ्यात्वमङ्गीकृतम् । ततः तन्निराकरणेन तत्पक्षेऽपि व्यवस्थाऽसिद्धौ सिद्धान्तिनोक्तायां पुनर्मायावादी प्रत्यवतिष्ठते । यदिदमुपाधेः तत्कृतस्य जीवभेदस्य ज्ञानाज्ञानसुखदुःखादिरूपस्य बन्धस्य च अन्योन्याश्रयत्वादिना दुर्घटत्वमुक्तं तन्न दूषणम् । किन्तु भूषणमेव । अन्योन्याश्रयत्वादिकं हि तस्य सत्यत्वं निवारयेत्

। तच्चेष्टमेव । उपाध्यादेर्मिथ्यात्वेनाङ्गीकृतत्वात् । अतोऽभिलषितस्य मिथ्यात्वस्य साधकमन्योन्याश्रयत्वादिकं कथं दूषणं स्यात् । अभिलषितार्थविरोधिन एव दूषणत्वात् । कथं वा भूषणं न स्यात् । अभिलषित-साधकस्य भूषणत्वात् । तदेवमविचारितरमणीयोपाधिनिबन्धनेन जीवभेदादिना मायावादिनां बद्धमुक्तव्यवस्था सिद्ध्यतीति । तदेतत्प्रतिषेधति- **न चेति ॥** मिथ्याशब्दस्य असति प्रसिद्धत्वात् तन्निवृत्त्यर्थं वस्तुन इत्युक्तं । ततोऽनिर्वक्तव्यस्येत्युक्तं भवति । न सुघटत्वमित्येवार्थः । सुघटत्वे हि सत्यत्वप्रसङ्गेन मिथ्यात्वं न स्यात् । कुतो नेति चेत्, उच्यते- स्यादिदमात्मश्रयत्वादिकं भूषणं यदि मिथ्यात्वमस्य स्यात् । न चैवम् । घटादेरात्मभेदादेश्च प्रत्यक्षसिद्धत्वेन सत्यत्वात् । प्रत्यक्ष-सिद्धस्यापि शुक्तिरजतादेरिव मिथ्यात्वम्भविष्यतीति चेत्, नेति ब्रूमः । कुत इत्यत आह- **दृष्ट-स्येति ॥** दृष्टेरित्युक्ते षष्ठीभ्रमोऽपि स्यात् । अर्थपर्यालोचनया च तन्निरासे प्रतिपत्तिगौरवं स्यात् । अतो मन्दानामनुग्रहाय दृष्टिसकाशादित्युक्तम् । बलवच्छब्दस्य नित्यसापेक्षत्वात्समासोपपत्तिः । बलवता प्रमाणेन **युक्तिः** योगः सम्बन्धः तदपेक्षत्वात् । प्रमाणबलवत्त्वार्थमनुमानस्यापि अपेक्षित-त्वात् । प्रमाणं च युक्तिश्चेति द्वन्द्वो वा । प्रमाणशब्दश्च कुरुपाण्डवन्यायेन प्रत्यक्षागमविषयत्वेन विवक्षितः । बलवत्प्रमाणमूलयुक्त्यपेक्षत्वादिति वा ।

इदमुक्तम्भवति-प्रत्यक्षदृष्टस्यापि शुक्तिरजतादेर्मिथ्यात्वमङ्गीक्रियत एव । किं तु तदपि न निर्निमित्तम् अपि तु बलवद्बाधकवशात् । न च प्रत्यक्षदृष्टस्य ब्राह्यस्याऽभ्यन्तरस्य च जगतो बाधक-मस्ति । अतो दृष्टस्य वस्तुनो यन्मिथ्यात्वकल्पनं तस्य ततोऽपि बलवद्बाधकप्रमाणसापेक्षत्वनिय-मात् । प्रकृते च तदभावात् न मिथ्यात्वकल्पनं युक्तमिति ।

ननु तिष्ठतु तावद्बाधकं, सत्यत्वं तु जगतः केन सिद्ध्यति । न च प्रत्यक्षदृष्टचैवेति युक्तम् । तस्याः स्वरूपमात्रविषयत्वेन सत्यत्वागोचरत्वात् । तद्गोचरत्वेऽपि शुक्तिरजतादौ तदसाधक-त्वात् । तथा च जगत्सत्यत्वसाधकाभावे सत्यत्वाभावान्मिथ्यात्वमेव सेत्स्यतीत्यत आह- **तदभाव इति ॥** अयमर्थः-प्रत्यक्षदृष्टिर्हि विधिरूपा घटं घटतया सुखं सुखतया गोचरयति । घटादयश्चार्थ-क्रियावत्सत्प्रभेदा इति घटादिसत्यतागोचरैव । सर्वज्ञानानां च उत्सर्गतोऽर्थाव्यभिचारित्वम् । बाधकादेवापवाद इति च वादिप्रतिवादिनोस्सम्मतम् । ततोऽपवादाभावात् जगत्सत्यत्वं दृष्टचैव सिद्ध्यतीति न मिथ्यात्वसिद्धिरिति । बाधकाभावे विधिमुखेन अर्थक्रियायोग्यत्वेन दृष्टस्य सत्यत्वं दृष्टचैवाङ्गीक्रियते । न तु तत्र प्रमाणं मृग्यते । तन्मिथ्यात्वाङ्गीकार एव बाधकप्रमाणमन्विष्यत इति । उक्तमर्थद्वयं दृष्टान्तेन बोधयति- **न हीति ॥** अन्नादिकमिति विधिमुखवेद्यत्वं सूचयति । भोग्यमित्यर्थक्रियायोग्यत्वम् ।

ननु च 'भोज्यं भक्ष्ये' इति निपातनाद् भोज्यमिति भाव्यम् । भोग्यमिति तु कथम् । मैवम् । अन्नादिकमिति ह्युक्तं न तु अन्नमित्येव । न च स्रक्चन्दनादिकं भक्ष्यम् । अतः सामान्यविषयत्वाद् भोग्यमित्येव युक्तम् । प्रयोजनाभावादेव अनपेक्षेति न वाच्यमिति भावेनोक्तम्- **भोक्तु-मिति ॥** असत्यस्य भोजनायोगात् भोक्तुकामेन अवश्यमपेक्षणीयमेवेति । प्रत्यक्षदृष्टेरन्यत् प्रमाणं **प्रमाणान्तरम्** । अन्नमित्युपलक्षणम् । **कथं** केन प्रमाणेन । **इति** एवं प्रकारेण । तन्मिथ्यात्व इति शेषः । **प्रमाणान्तरं** प्रत्यक्षदृष्टेर्बाधकं बलवत्प्रमाणमित्यर्थः ।

**(र.टि.)** न चैवं तर्हि मिथ्याभूतवस्तुपदयोर्व्याहतिरित्यत आह- **ततोऽनिर्वक्तव्यस्येति ॥ अन्नमित्युपलक्षण-मिति ॥** पूर्वमन्नादिकमित्यादिपदप्रयोगादिति भावः । ननु प्रत्यक्षदृष्टेः प्रामाण्याभावात्कथं बाधकप्रमाणस्य प्रमाणान्तरत्वव्यपदेश इत्यत आह- **प्रत्यक्षदृष्टेर्बाधकमिति ॥**

**(रा.टि.)** जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरित्युक्त्याऽज्ञानकार्यबन्धोऽभिमत इति भावेनाऽह- **ज्ञानाज्ञानसुख-दुःखादिरूपस्य बन्धस्येति ॥** नन्वेवं चेद्व्याहतिः । वस्तु चेन्न मिथ्या, मिथ्या चेन्न वस्तु । अतो मिथ्यावस्तुन इति विप्रतिषेधादित्यतोऽभिप्रायमाह-

**अनिर्वक्तव्यस्येति ।।** ननु बलवच्छब्दस्य दृष्टिसकाशपदसापेक्षस्य कथमुत्तरपदेन समास इत्यत आह- **नित्येति ।।** देवदत्तस्य गुरुकुलमिति यथेति भावः। द्वन्द्वग्रहणे हेतुं वदन्नेव पक्षान्तरमाह- **प्रमाणेति ।।** बलवत्प्रमाणमूलेति बहुव्रीहिः। यद्वा प्रमाणमूलेति प्रमाणस्य सहायभूतयुक्ती-त्यर्थः। प्रत्यक्षदृष्टस्यापि शुक्तिरूप्यादेर्मिथ्यात्वं दृष्टमिति तथाऽस्तु घटादेर्बाह्याभ्यन्तरजगत इति भावेन कृतचोद्यस्य किमनेनोत्तरमुक्तमित्यत आह- **इदमुक्तमिति ।।** सत्यत्वे साधकाभावादेव मिथ्यात्वसिद्धिः । प्रत्यक्षादि च स्वरूपमात्रग्राहि न सत्यत्वग्राहीति कृतचोद्यस्य तदभाव इत्याद्युत्तरं न स्पष्टमित्यत आह- **अयमर्थ इति ।। अर्थक्रियावदिति ।।** बहुव्रीहि(वति)रयम् न मतुप्। यद्वा अर्थक्रियावन्तो ये सन्तः तत्प्रभेदा इत्यर्थः। अर्थक्रियावत्त्वात् सत्प्रभेदा इति वाऽर्थः। अस्तु स्वरूपग्राहकमेव सत्त्वग्राहि। तथाऽपि शुक्तिरूप्यज्ञानवत्किं न स्यदित्यस्योत्तरमाह- **सर्वज्ञानानां चेति ।। अन्विष्यत इति ।।** अयमर्थः इति पूर्वेणान्वयः। **उक्तमर्थद्वय-मिति ।।** दृष्टिसिद्धसत्त्वे प्रमाणामार्गणं, मिथ्यात्व एव बाधकान्वेषणमित्युक्तर्थद्वयमित्यर्थः। **विधिमुखवेद्यत्व-मिति ।।** तथैव प्राक्प्रस्तावादिति भावः। 'भक्ष्येऽभिमते भोज्यम्' इति निपातनात्पाणिनीयसूत्रे अत्र चान्नस्य भक्ष्यस्य चोपादानाद्भोज्यमिति भाव्यमित्याशङ्क्य निराह-**नन्वित्यादिना ।।** अन्यत् प्रमाणं प्रमाणान्तरम्। किमपेक्षयाऽन्यदित्यत आह- **प्रत्यक्षदृष्टेरन्यदिति ।। उपलक्षणमिति ।।** भोग्यवस्तुमात्रस्येति भावः। भवतीति- पदानन्तरं शेषमाह- **[1]इत्येवंरूपेण तन्मिथ्यात्व इतीति ।।** प्रमाणान्तरमित्यनूद्य तद्विशिनष्टि- **प्रमाणान्तरं प्रत्यक्षदृष्टेर्बाधकमिति ।।** यद्वा किमपेक्षया प्रमाणान्तरमित्यतोऽवधिमाह- **प्रत्यक्षदृष्टेरिति ।।** पञ्चमीयम्। प्रत्यक्षदृष्टेरमानत्वात्कथं प्रमाणान्तरमित्युक्तिरित्यतः फलितमाह- **बाधकं बलवत्प्रमाणमिति ।।** षष्ठ्यन्ततया प्रत्यक्षदृष्टेरितीहाप्यन्वेति।

**(श्री.टि.)** नन्वेवं तर्हि मिथ्याभूतवस्तुपदयोर्व्याहतिरित्यत आह- **ततोऽनिर्वक्तव्यस्येति ।।** अनिर्वचनीयस्ये-त्यर्थः। **कुतो नेति चेदिति ।।** मिथ्यावस्तुनो दुर्घटत्वं कुतो भूषणं न भवतीत्यर्थः। **अर्थपर्यालोचनयेति ।। (श्री.टि.)** दृष्टेरित्यस्य षष्ठीविभक्तित्वेऽर्थासङ्गतिः स्यात्, अतस्तत्पर्यालोचनया नेयं षष्ठीविभक्तिः, अपि तु पञ्चम्येवेति प्रतिपत्तिर्भविष्यतीत्यर्थः। **दृष्टिसकाशादित्युक्तमिति ।।** बुद्धिक्षोभकरात्प्रतिपत्तिगौरवाच्छब्द-गौरवस्य सह्यत्वादिति भावः। ननु बलवच्छब्दस्य दृष्टिपदसापेक्षत्वेन तेनैव समासो युक्तो न प्रमाणपदेन। सापेक्षमसमर्थवद्भवतीति वचनादित्यत आह- **नित्यसापेक्षत्वादिति ।।** तथा च प्रमाणपदेन समासेऽपि पूर्वपदेनाऽकाङ्क्षा न विहन्यते देवदत्तस्य गुरुकुलमितिवत्। वचनं चानित्यसापेक्षविषयमिति भावः। ननु युक्तेरपि प्रमाणत्वात्पृथग्युक्तिग्रहणं व्यर्थमित्यत आह- **बलवतेति ।।** तथा च बलवत्प्रमाणसद्भावापेक्षत्वादित्यर्थः। ननु द्वन्द्वसमासपक्षे प्रमाणापेक्षत्वे नैवालं, युक्त्यपेक्षत्वं किमर्थमित्यत उक्तम्- **प्रमाणबलवत्त्वार्थमिति ।। अनुमानस्याप्यपेक्षितत्वादिति ।।** इदं प्रमाणं बलवदुपजीव्यत्वादित्यनुमानस्येत्यर्थः। द्वन्द्वपक्षे प्रमाण-शब्दाभिप्रेतार्थमाह- **प्रमाणशब्दश्चेति ।।** यथा हि 'द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम्' इत्यत्र पाण्डवशब्दस्य पृथक्सत्त्वेन सामान्यवाचिना कुरुशब्देन पाण्डवातिरिक्ता एव गृह्यन्ते तथा प्रकृतेऽपि युक्तिशब्दस्य पृथक्सत्त्वेन सामान्यवाचिना प्रमाणशब्देन तदतिरिक्तप्रमाणमेव ग्राह्यमिति भावः। एवं च प्रमाणबलवत्त्वार्थमित्यत्र प्रमाणयोः प्रत्यक्षागमयोर्बलवत्त्वार्थमिति व्याख्येयम्। मध्यमपदलोपी समास इत्यभिप्रेत्य योजनान्तरमाह- **बलवत्प्रमाणमूलेति ।।** मूलकेत्यर्थः। केवलयुक्तेरसाधकत्वादिति भावः। **बाह्यस्य** वियदादेः। **आन्तरस्य** दुःखादेः। **तदसाधकत्वात्** सत्यत्वासाधकत्वात्। **अर्थक्रियावत्सत्प्रभेदा इतीति ।। अर्थक्रियावत्** अर्थक्रियाकारीति यावत् यत्सत्तत्प्रभेदा इत्यर्थः। तथा चार्थक्रियाकारित्वात्सत्या इत्यर्थः। प्रत्यक्षदृष्टेर्घटादिसत्यता-गोचरत्वं प्रकारान्तरेणोपपादयति- **सर्वज्ञानानाञ्चेति ।। अर्थाव्यभिचारित्वं** प्रामाण्यम्। **सम्मतमिति ।।** उभाभ्यामपि प्रमाण्यस्य स्वतस्त्वाङ्गीकारादिति भावः। पूर्वग्रन्थफलितार्थं वदन्नुत्तरग्रन्थमवतारयति- **बाधकाभाव इति ।। अर्थद्वयमिति ।।** प्रत्यक्षदृष्टस्य सत्यत्वे प्रमाणं न मृग्यते प्रत्युत मिथ्यात्वाङ्गीकार एव प्रमाणमन्विष्यत इत्यर्थद्वयमित्यर्थः। 'भोज्यं भक्ष्ये' भक्षणार्हे वस्तुनि भोज्यमिति शब्दो निपात्यत इत्यर्थः। **इत्येवेति ।।** येन भोज्यमिति बक्तव्यं स्यादिति भावः। **स्रक्चन्दनेति ।।** अन्नादिकमित्यत्राऽदिपदगृहीतमित्यर्थः। **भोग्यमित्ये-वेति ।।** स्रगादिवदन्नादेरपि भोगार्हत्वेन भोग्यत्वादिति भावः। **अनपेक्षेति ।।** सत्यत्वे प्रमाणान्तरस्यानपेक्षेत्यर्थः। **अपेक्षणीयमेवेति ।।** सत्यत्वे प्रमाणान्तमित्यर्थः। तच्च नापेक्षत इति भावः। **अन्नमित्युपलक्षणमिति ।।** पूर्वमन्नादिकमिति आदिपदप्रयोगादिति भावः।

**(पां.टि.)** नन्वेवं मिथ्यावस्तुपदयोः परस्परव्याहतिरित्यतः पदद्वयबलेनानिर्वाच्यस्यैवोक्तत्वाददोष इति भावेनाऽह- **ततोऽनिर्वक्तव्यस्येत्युक्तम्भवतीति ।।** ननु बलवच्छब्दस्य दृष्टिशब्दसापेक्षत्वात् सापेक्षस्य च 'सापेक्षमसमर्थं भवति' इति न्यायेन वृत्तावुपसर्जनपदस्याप्रधानार्थाभिधायिना भाव्यत्वेनाप्रधान(त्व)स्य स्व-विशेषणापेक्षया च प्रधानत्वस्य

आवश्यकत्वादेकस्यैवैकदाऽप्रधानत्वैकार्थीभावयोरसम्भवेनासमर्थत्वान्न प्रमाणशब्देन बलवच्छब्दस्य बलवत्प्रमाणेति समासः सम्भवति। 'समर्थः पदविधिः' इति समासविधौ समर्थाधि-**(पां.टि.)** कारेण निरपेक्षस्यैव तद्विधानादित्यतः 'पूर्वकायो नाभेः', 'देवदत्तस्य गुरुकुलम्' इत्यादौ समासदर्शनेन नित्यसापेक्षस्य तत्सिद्ध्या पूर्वादिशब्दवत्सम्बन्धिशब्दत्वेन नित्यसापेक्षस्य बलवच्छब्दस्य प्रमाणशब्देन समासो युक्त इत्याह- **बलवच्छब्दस्येति ॥** ननु युक्तेरपि प्रमाणत्वेन प्रमाणशब्देन युक्तेरपि ग्रहणोपपत्तेः पुनर्युक्ति-ग्रहणमयुक्तमित्यत आह- **प्रमाणशब्दश्चेति ॥ कुरुपाण्डवन्यायेनेति ॥** यथा पाण्डवानां कुरुत्वेऽपि सामान्यविशेषापेक्षया 'सन्तानबीजं कुरुपाण्डवानाम्' इत्यादौ कुरुभ्यः पृथग्वचनम्। तथा प्रमाणशब्दस्य सामान्यविषयत्वेऽपि तद्विशेषप्रत्यक्षागमपरत्वेन विवक्षितत्वाद्युक्तं तदपेक्षया युक्तेः पृथग्वचनम्। अत्र पक्षे कुरुपाण्डवन्यायाश्रयणं भवतीति मन्वानः पक्षान्तरमाह- **बलवदिति ॥** बलवत्प्रमाणं मूलं यस्या इति विग्रहः। नन्वेतावता प्रत्यक्षसिद्धस्यापि शुक्तिरजतादेरिव मिथ्यात्वं भविष्यतीति शङ्कायाः कः परिहार उक्त इत्यत आह- **इदमुक्तं भवतीति ॥ नन्वेवं मदिष्टसिद्धिरिति** पृच्छति- **किन्त्विति ॥** परिहरति- **तदपीति ॥** इतीत्यस्येतीदमिति सम्बन्धः। ननु घटादीनां सत्प्रभेदत्वेन तत्प्रतीतेः सत्यत्वविषयत्वान्न स्वरूपमात्रगोचरत्व-मित्यत आह- **तद्गोचरत्वेऽपीति ॥** अन्यथा शुक्तिरजतादेरपि तया सत्यत्वसिद्ध्यापातादिति भावः। कथमनेनोक्ताक्षेपस्य परिहार इत्यत आह- **तदयमर्थ इति ॥** बाह्यप्रपञ्चाभिप्रायेणाह- **घटं घटतयेति ॥** आन्तरप्रपञ्चाभिप्रायेणाऽह- **सुखं सुखतयेति ॥** ननु प्रत्यक्षदृष्टेः घटं घटतया सुखं सुखतया स्वस्वविषयाव-गाहित्वेऽपि तत्सत्तानवगाहित्वेन न तन्मिथ्यात्वानुमानादिबाधकत्वमित्यतो घटादीनां सद्विशेषत्वात्तत्प्रतीतेः सत्तावगाहित्वसिद्धेर्युक्तं तद्बाधकत्वमिति वक्तुं भवेदेतदेवं घटादिदृष्टेः सत्तावगाहित्वं यदि घटादेः सद्विशेषत्वमेव सिद्धं स्यात्। तदेव कुत इत्यतः तत्र हेतुं वदन् उक्तमुपपादयति- **घटादयश्चेति ॥** अर्थक्रियावदिति हेतुगर्भविशेष-णम्। ततश्चार्थक्रियाकारित्वाद् घटादीनां सद्विशेषत्वसिद्धेर्युक्तं तत्प्रत्यक्षदृष्टेः सत्त्वावगाहित्वमिति भावः। ननूक्तरीत्या सत्यत्वविषयकत्वेऽपि तत्प्रतीतेस्तस्यास्तत्साधकत्वं न सिध्यति। अन्यथा शुक्तिरूप्यादेरपि तया तत्सिद्धिप्रसङ्गादित्यत आह- **सर्वज्ञानानां चेति ॥ उत्सर्गत इति ॥** असति बाधक इत्यर्थः। **सम्मत इति ॥** उभयमतेऽपि प्रामाण्यस्य स्वतस्त्वादिति भावः। **अनपेक्षेति ॥** सत्यत्वे प्रमाणान्तरस्यानपेक्षेत्यर्थः। प्रमाणान्तर-मित्यत्रान्तरशब्दमहिम्ना प्रत्यक्षमपि प्रमाणमिति प्रतीयते। न च तद्युक्तम्। परेण तथाऽनभ्युपगमादित्यतो व्याचष्टे- **प्रत्यक्षदृष्टेरन्यदिति ॥ अन्नमित्युपलक्षणमिति ॥** नेदमन्नमिति मूलेऽन्नमिति स्रक्चन्दनादीना-मुपलक्षणम्। अन्नादिकमिति पूर्वग्रन्थे तेषामपि सङ्गृहीतत्वेन तत्परित्यागेनान्नशब्देनान्नमात्रग्रहणस्यायुक्त-त्वादिति भावः। प्रमाणान्तरशब्दस्य पूर्वत्रेवात्रापि प्रत्यक्षदृष्टे रन्यदित्याद्यर्थः प्रतीयते। न चासौ युक्तः। पूर्वत्र प्रथमप्रवृत्तप्रत्यक्षस्यान्नादिस्वरूपसाधकत्वं पश्चात्प्रवृत्तस्य तु तत्सत्यतासाधकत्वमित्येवं कथञ्चिदेकत्रोपयोग-सद्भावेन साधकत्वमात्रविवक्षयाऽन्तरशब्दोपपत्तावपीह पश्चात्प्रवृत्तप्रमाणस्य पूर्वप्रवृत्तप्रत्यक्षबाधकतया तस्मिन्प्रमाणशब्दप्रयोगायोगाद् बाधकत्वस्यैव व्यवहर्तव्यत्वादित्यतः प्रकारान्तरेण व्याचष्टे- **प्रत्यक्ष-दृष्टेर्बाधकमिति ॥**

**(व्या.टि.)** पूर्वग्रन्थेनोत्तरं सङ्गमयितुं पूर्वोक्तार्थमनुवदति- **बद्धमुक्तादीति ॥ प्रत्यवतिष्ठत इति ॥** 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। 'न दूषणं किन्तु भूषणम्' इति प्रतिज्ञातमुभयं साधयति- **अन्योन्या-श्रयत्वादिकमिति ॥** नन्वेवं सति मिथ्यावस्तुन इत्यत्र वन्ध्या जननीतिवद्व्याघात इत्यत आह- **अत इति ॥** प्रसिद्धार्थस्य वस्तुत्वायोगात्पारिभाषिकार्थग्रहणमिति भावः। विपरीतं व्यावर्तयति- **नेति ॥** सुघटत्वं कुतो व्यावर्तनीयमित्यतः इष्टविघातित्वादित्याह- **सुघटत्वे हीति ॥ कुत इति ॥** भूषणमिति शेषः। त्वदिष्टमपि मिथ्यात्वं दृष्टिविरुद्धत्वाद्दुष्टमित्याह- **न चैवमिति ॥** मूले उक्तिगौरवमाशङ्क्य निराकरोति- **इत्युक्त इति ॥ मन्दानामिति ॥** बुद्ध्येति शेषः। **नित्यसापेक्षत्वादिति ॥** प्रतियोग्यपेक्षाध्रौव्यादित्यर्थः। **बलवत्त्वार्थ-मिति ॥** दाढर्यार्थमित्यर्थः। युक्तेरपि प्रमाणत्वात्कथं पृथग्ग्रहणमित्यत आह- **कुरुपाण्डवन्यायेनेति ॥ प्रमाणमूलेति ॥** शाकपार्थिवादित्वात्समासः। आकूतमाह- **इदमुक्तं भवतीति ॥ बाधकमिति ॥** सत्यत्व इति शेषः। सत्यत्वे बाधकान्मिथ्यात्वाभावेऽपि साधकाभावादेव मिथ्यात्वं सिद्धमिति शङ्कते- **नन्विति ॥** तदभ्युपेत्यापि निरस्यति- **तद्गोचरत्वेऽपीति ॥** ननु प्रतिज्ञामात्रं कथमुक्तोत्तरं स्यादित्यतस्तद्भावमाह- **अयमर्थ इति ॥ प्रत्यक्षदृष्टेर्हीति ॥** स्तम्भोऽयं कुम्भोऽयमित्याद्येकाकारनियतज्ञानरूपनिर्णय इत्यर्थः। विधिरूपेति हेतुगर्भविशेषणम्। विधिरूपत्वात्सत्त्वगोचरेति। **घटमिति ॥** वस्तुतो घटत्ववन्तमित्यर्थः। **घटतयेति ॥** घटत्वप्रकारेणेत्यर्थः। बाह्यदृष्टिमुक्त्वाऽऽन्तरीयमाह- **सुखमिति ॥**

'अतीतानागतौ कालावपि नः साक्षिगोचरौ।
तत्सम्बन्धितया सत्त्वमपि दृष्टस्य साक्षिगम्॥' इति।

'सत्तैवं देशकालगा।
देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते॥'

इत्युक्तदिशा कालसम्बन्धित्वरूपस्वरूपसत्त्वगोचरत्वमुपपाद्य, अर्थक्रियायोग्त्वरूपसत्त्वगोचरतामुपपादयति- **घटादयश्चेति ॥ अर्थक्रियावत्सत्प्रभेदा इति ॥** अर्थक्रियायोग्यसद्विशेषा इत्यर्थः। अर्थक्रियायोग्यत्व-व्याप्यतावच्छेदकधर्मवन्त इति यावत्। निगमयति- **घटादिसत्यतागोचरैवेति ॥** तद्विशेषदर्शनस्य तत्संशय-विपर्ययप्रतिबन्धकत्वेन तद्गोचरत्वम् एवेत्यवधारयति। नीलघटत्वज्ञाने घटत्वसंशयविपर्ययाभावदर्शनाद्व्याप्य-दर्शनस्य व्यापकगोचरत्वं नियतमेवेति भावः। सत्त्वगोचरत्वेऽपि तदसाधकत्वहेतुं बाधकं निरस्यति- **सर्वज्ञाना-नाश्चेत्यादिना अपवादाभावादित्यन्तेन ॥ अपवादो**ऽर्थव्यभिचारः। **जगत्सत्यत्वं** वस्तुतथात्वम्। **दृष्टचैव** साक्षिनिर्णीतप्रमात्वया। **दृष्टचैव** वस्तुतथात्वाश्वासरूपतदनन्तरभाविनिर्णयेनैवेत्यर्थः। **सिद्ध्यतीति ॥** आश्वासविषयीभवतीत्यर्थः। तेन प्रमितत्वरूपसत्त्वमपि साक्षिसिद्धमिति सत्तात्रैविध्ये प्रमाणान्तरानपेक्षेति भावः। साक्षात्सत्त्वग्राहि सन्घट इत्यादिप्रत्यक्षं तु सार्वजनीनमिति न दूरतोऽन्वेषणीयमिति भावः। स्वामिनस्तु अर्थक्रियावदिति वाक्यं 'वतिरयं न मतुप्' इति व्याचक्रुः। तन्न बुध्यते। उत्तरमूलं सङ्गमयितुं पूर्वोक्तमनुवदति- **(व्या.टि.) बाधकाभाव इति ॥ विधिमुखेनेति ॥** अभूद् भवति भविष्यतीति, तत्रात्रेति देशकालयोर्विधि-मुखवेद्यत्वेनेत्यर्थः।

'निषेधविधिरूपत्वं भावाभावत्वमत्र हि।'

इत्यनुभाष्योक्तेः। **इति तु कथमिति ॥** 'चजोः' इति कुत्वे प्राप्ते भक्ष्ये तदभावस्यैव निपातनादित्यर्थः। **न च स्रक्चन्दनादिकमिति ॥** अयम्भावः- बहुव्रीहिर्ह्यन्यपदार्थप्रधानः। अत्रान्यपदार्थः स्रगादिकम्। अन्नन्तु गुणभूतम्। तद्गुणसंविज्ञानत्वाच्च प्रधानेन गुणेन चान्वययोग्यं विशेषणीयम्। **न गुणेनैवेति ॥ भोक्तु-कामेनैवेति ॥** 'तुंकाममनसोः' इति स्मरणात् तुमोऽन्त्यलोपः। अन्यार्थकान्तरशब्दस्य प्रतियोगिसापेक्ष-त्वात्तमाह- **प्रत्यक्षदृष्टेरिति ॥** सापेक्षत्वेऽपि मयूरव्यंसकादित्वात्समासः। **उपलक्षणमिति ॥** निषेध्यसमर्पक-मन्नपदमित्यर्थः। मौलमितीति पदं व्याचष्टे- **एवमिति ॥** प्रमाणान्तरं विशिनष्टि- **बाधकं बलवदिति ॥**

**मूलम्- न च प्रत्यक्षदृष्टस्य ततो बलवत्प्रत्यक्षमागमं विना अनुमानादिनैव बाधो दृष्टः। दूरस्थवृक्षह्रस्वत्वादौ प्रत्यक्षापटुत्वस्य निश्चितत्वद्युक्त्या तत्र दीर्घत्वनिश्चयः। प्रत्यक्षस्य हि दूरे मन्दग्राहित्वं परिमाणादावन्यथात्वं च ततो बलवत्प्रत्यक्षेणैव निश्चितम्॥**

**(त.मं.)** ननु अस्ति बलवदनुमानादि। तथाहि। भेदो मिथ्या भेदत्वात् चन्द्रभेदवदित्यादि। असतः ख्यात्ययोगात् इत्याद्यर्थापत्तिश्चेत्यत आह- **न च प्रत्यक्षेति ॥** तादृशानुमानस्य प्रत्यक्षेणैव कालात्ययापदिष्टत्वात् इत्याशयः। यथा दूरस्थवृक्षह्रस्वत्वादौ युक्त्या प्रत्यक्षं बाध्यते तथा अत्रापि इत्यत आह- **दूरेति ॥** आदिशब्दाद् दूरस्थवाक्यस्याव्यक्तत्वम्।

**टीका-** सत्यं, प्रत्यक्षदृष्टस्य मिथ्यात्वकल्पनं बाधकप्रमाणाधीनमिति। तथाऽप्युपपद्यते जगतो मिथ्यात्वकल्पनम्। दृश्यत्वाद्यनुमानस्य ज्ञाननिवर्त्यत्वानुपपत्तेश्च बाधकस्य सत्त्वादित्यत आह- **न चेति ॥** अनुमानादिनेत्यादिपदेन अर्थापत्तेर्ग्रहणम्। अर्थापत्तेरनुमानत्वेऽपि 'व्यवहारे भट्टनयः' इति वदता परेणानुमानात् पृथक्त्वेनाङ्गीकृतत्वात्तदनुसारेणाऽदिशब्दप्रयोगः। अयमभिप्रायः- प्रबलं हि विरोधि बाधकं भवति। न च प्रत्यक्षादनुमानार्थापत्त्योर्बलवत्त्वमस्तीत्युक्तम्। अतोऽनु-मानादिना प्रत्यक्षदृष्टस्य जगत्सत्यत्वस्य बाधो न युक्त इति। न दृष्ट इति वदताऽन्यथा अदृष्टकल्पनं स्यादिति सूचितम्। उपलक्षणं चैतत्। अन्यथा कालात्ययापदिष्टोच्छेदप्रसङ्गश्चेत्यपि द्रष्टव्यम्। एवं तर्हि शुक्तिरजतादेरपि सत्यत्वं ग्राह्यं स्यात्। दाहाद्यनुमानमेव हि तत्र बाधकमित्यत उक्तम्- **ततो बलवत्प्रत्यक्षमागमं विनेति ॥** इदं रजतमिति प्रत्यक्षस्य नेदं रजतं किन्तु शुक्तिकैवेति प्रत्यक्षं बाधकं भवति। प्रथमस्यापरीक्षितत्वेन दुर्बलत्वाद् द्वितीयस्य परीक्षितत्वेन बलवत्त्वात्। यद्यपि परीक्षाऽनुमानमेव। तथाऽपि तस्य केवलस्याबाधकत्वेऽपि प्रत्यक्षसाहाय्येन सामर्थ्यात्। प्रकृते च तदभावात्। अत

एवोक्तम्- **अनुमानादिनैवेति ॥** प्राक्च प्रमाणयुक्त्यपेक्षत्वादिति। भगवदवतारेषु च्छेदभेदादिप्रत्यक्षस्य 'निरनिष्टः' इत्यादिरागमो बाधकः। विष्णुर्दोषवानिति प्रत्क्षस्योपजीवकस्य दुर्बलत्वात्। आगमस्य तूपजीव्यस्य प्रबलत्वात्। प्राबल्याभावापेक्षया आगमोऽपि वाऽदिशब्दोक्तः। यद्यपीदं प्रागुक्तम्। दूषितं चानुमानादिकम्। तथाऽपि प्रसङ्गादागतं पुनः सङ्क्षेपेणोक्तमित्यदोषः। उत्तरप्रमेयप्रसञ्जनार्थं चेति।

ननु दूरस्थे वृक्षे दीर्घेऽपि ह्रस्वोऽयमिति, तथा चन्द्रे प्रादेशपरिमित इति च जायमानं प्रत्यक्षं दूरतोऽप्येवं दृश्यमानत्वादित्यनुमानेन अनुपजीव्येनाप्यागमेन च बाध्यं दृष्टम्। न हि तत्र प्रत्यक्षमेव बाधकम्। प्रत्यासत्तेः प्रागेव दीर्घत्वादिनिश्चयात्। तत्कथमेवमुच्यत इत्यत आह- **दूरस्थेति ॥** विषयसप्तम्येषा। **निश्चितत्वात्** ह्रस्वत्वादिप्रत्यक्षोत्पत्तेः प्रागेवेति शेषः। युक्त्येत्यागमस्याप्युप-लक्षणम्। **दीर्घत्वनिश्चयो** दीर्घत्वादिनिश्चयः। केन कारणेन प्रत्यक्षस्यापटुत्वमित्यत आह- **प्रत्यक्षस्य हीति ॥ मन्दग्राहित्वं** रेखोपरेखाद्यविषयीकरणेनार्थग्राहित्वम्। **परिमाणादौ** परिमाण-पृथक्त्वादिविषये । **अन्यथात्वम्** अयथार्थत्वम् । मन्दग्राहित्वमन्यथात्वे हेतुः। **बलवत्प्रत्यक्षेण** साक्षिणा।

इदमुक्तं भवति- द्विविधं ज्ञानं दो(डो)लायमानमेकाकारविषयं च। तत्राऽद्यं सन्देह इत्युच्यते। द्वितीयमपि द्विविधम्। किञ्चित्स्वार्थस्य निश्चायकं- यथा भवत्येवायं स्तम्भ इति। किञ्चित्स्वार्थ-मेकाकारतयोल्लिखदपि नावधारयति- यथा सवितरि सुषिरमित्यादि। स चायं भेदः क्वचित्सम्भा-वनाऽसम्भावानाभ्यां भवति। क्वचित्परीक्षापेक्षायामपि तत्प्रवृत्त्यप्रवृत्तिभ्याम्। क्वचित्प्रागेव विपरीतसंस्कारभावाभावाभ्याम्। तत्राऽद्यं निश्शङ्कप्रवृत्तिहेतुत्वात्पटुशब्देनोच्यते। द्वितीयं तु तदहेतुत्वादपटुशब्देन। दूरस्थवृक्षह्रस्वत्वादिविषयं च, यद्दूरस्थत्वादिदोषयुक्तं तन्मन्दग्राहि। तत एव परिमाणादावयथार्थमित्यन्वयव्यतिरेकानुगृहीतेन साक्षिणा सामान्यतो निश्चितत्वाद्विपरीत-संस्कारसद्भावादेकाकारविषयतया जायमानमप्यनिश्चाययदेव निश्शङ्कप्रवृत्त्यकारणं बाधितप्रायं जायते। ततः परश्च नाप्रवर्तमानावनुमानागमौ तेन दत्तावकाशौ दीर्घत्वादिनिश्चयं कुर्वाणौ तद्बाधकाविवोच्येते। अतो नैतत् प्रत्यक्षस्यानुमानागमबाध्यत्वे निदर्शनमिति।

**(र.टि.)** ननु प्रत्यक्षस्यानुमानादिकमेव बाधकमिति वदन्तं प्रत्यनुमानादिकं बाधकं भवतीत्येवोक्तं न तु तत्र हेतुरुक्त इत्यत आह- **अयमभिप्राय इति ॥** अनुमानस्य प्रत्यक्षादिराहित्यलक्षणदौर्बल्यद्योतकमनुमानादि-नैवेत्येवकारं प्रयुञ्जानस्यायमभिप्राय इत्यर्थः। **प्राक्चेति ॥** प्रकारद्वयेन तत्र युक्तेरपि बाधकत्वाङ्गीकारादिति भावः। **आगममिति ॥** प्रत्यक्षसमानयोगक्षेमत्वेन तद्रीत्यैव परिहारोपपत्तेरस्य पृथक्करणं न स्यात्। उत्पत्त्यनन्तरं प्रबलबाधकदर्शनाच्चेति भावः। ह्रस्वत्वादावित्यादिपदेन 'आगमं विना' इत्यादिप्रकारान्तरानुसारेण चन्द्र-प्रादेशत्वादेरेव विवक्षितत्वात्तदनुरोधादाह- **आगमस्याप्युपलक्षणमिति ॥ दीर्घत्वादिनिश्चय इति च ॥**

**(रा.टि.)** प्रत्यक्षदृष्टस्याप्यनुमानादिना कुतो न बाध इत्यतोऽभिप्रायमाह- **अयमभिप्राय इति ॥ इत्युक्त-मिति ॥** 'नहि प्रमाणदृष्टस्य तर्कबाध्यत्वम्। प्रत्यक्षादिविरुद्धस्य तर्काभासत्वनियमात्' इत्यादिनोक्तमि-त्यर्थः। **दाहादीति ॥** नेदं रजतं दह्यमानत्वात् पाट्यमानत्वादित्याद्यनुमानमित्यर्थः। **अपरीक्षितत्वेनेति ॥** सजातीयविजातीयसंवादतद्विसंवादाभावरूपपरीक्षाशून्यत्वेनेत्यर्थः। **प्रकृते चेति ॥** शुक्तिरूप्यदौ चेत्यर्थः। **प्राक्च प्रमाणेति ॥** प्रमाणमूलयुक्तीति व्याख्यानादिति भावः। **भगवदवतारेष्विति ॥** रामकृष्णादौ अयं कश्चिन्मनुष्य इति ज्ञात्वा इन्द्रजिदादिनिर्मितनागास्त्रादिना च्छेदभेदादिमानयमिति ज्ञानं न विष्णुत्वसामानाधि-करण्येन दोषवत्त्वप्रत्यक्षज्ञानम्। किन्तु विष्ण्ववतारत्वं रामादेरागमाज्ज्ञात्वा विष्णुरयं दोषीति प्रत्यक्षमेव विष्णोर्दोषित्वज्ञानम्। तच्च येनाऽगमेन विष्णुत्वं ज्ञायते तेनैव तस्य निर्दोषत्वाज्ज्ञानेऽपि तज्जातीयेन निरनिष्ट इत्याद्यागमेन तज्ज्ञानात् स बाधक इत्यर्थः। नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादौ

'नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्'

इत्यादावुपजीव्यजातीयस्य बाधकत्वदृष्टेरिति भावः । **उपजीव्यस्येति ॥** उपजीव्यजातीयस्येत्यर्थः । अनुमानादि-नेत्यादिपदेनैव प्रागर्थापत्तिग्रह उक्तः । उपजीव्यत्वादिहीनदुर्बलागमो वा ग्राह्य इत्याह- **प्राबल्याभावेति ॥ यद्यपीदमिति ॥** अनुमानादि न प्रत्यक्षबाधकमिति प्रमेयम् । 'न हि प्रमाणदृष्टस्य' इत्यादिनेति भावः । **अनुमानादिकमिति ॥** दृश्यत्वाद्यनुमानमर्थापत्तिश्चेत्यर्थः । **उत्तरप्रमेयेति ॥** प्रत्यक्षदृष्टमप्यनुमानागमे-नाप्रबलेनापि बाधितं दृष्टमिति चोद्यनिरासकप्रमेयप्रसक्त्यर्थमित्यर्थः । न च प्रत्यक्षेत्याद्यनुक्तौ तच्छङ्काऽनुदयेन तन्निरासाप्रसक्तेरिति भावः । **आगमेनेति ॥**

'अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु'

इत्यागमेनेत्यर्थः । युक्त्या दीर्घत्वनिश्चय इत्यस्य घटनाय निश्चितत्वादित्यनूद्य शेषमाह- **निश्चितत्वादिति ॥ दीर्घत्वादिनिश्चय इति ॥** अप्रादेशिकत्वनिश्चय आदिपदार्थः । पृथक्त्वादीत्यादिपदेन द्रुतत्वादिः । **मन्दग्राहित्वं (रा.टि.)** रेखाद्यविषयीकारित्वम् । तात्पर्यस्यास्फुटत्वादाह- **इदमुक्तं भवतीति ॥ सम्भवनासम्भा-वनाऽभ्यामिति ॥** स्तम्भादौ स्तम्भत्वादिसम्भावना सवितृसुषिरत्वादावसम्भावना, ताभ्याम् । तत्रार्थसत्ता-निर्धारकत्वानिर्धारकत्वरूपो भेदो भवतीत्यर्थः । **तत्प्रवृत्त्यप्रवृत्तिभ्यामिति ॥** सजातीयसंवादरूपपरीक्षा प्रवृत्तिर्नेदं रूप्यमित्यादिज्ञाने, इदं रूप्यमित्यादौ तु तदप्रवृत्तिर्ज्ञेया । **क्वचिद्विपरीतेति ॥** समीपस्थदूरस्थवृक्षादौ दीर्घह्रस्वत्वज्ञानादावित्यर्थः ।

**(श्री.टि.)** शङ्कते- **सत्यमिति ॥ ज्ञाननिवर्त्यत्वानुपपत्तेरिति ॥** 'तरति शोकमात्मवित्' इति श्रुत्या दुःखादेर्जगतो ज्ञाननिवर्त्यत्वं तावच्छ्रूयते । न च सत्यत्वे निवृत्तिः सम्भवति आत्मवत् । अतो यतो ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति वचनादज्ञानकल्पितत्वरूपमिथ्यात्वं विनाऽनुपपद्यमानं तदाक्षिपतीति भावः । ननु प्रत्यक्षस्यानुमानादिकमेव बाधकमिति वदन्तं प्रति प्रत्यक्षस्यानुमानादिकं बाधकं न भवतीत्येवोक्तम् । न तत्र कश्चिद्धेतुरुक्त इत्याशङ्कायामाह- **अयमभिप्राय इति ॥** अनुमानादिनैवेत्येवकारं प्रयुञ्जानस्यायमभिप्रायो यद्धेतुसूचनमित्यर्थः । तमेव दर्शयति- **प्रबलं हीति ॥ अन्यथेति ॥** प्रत्यक्षदृष्टस्यानुमानादिना बाधाङ्गीकार इत्यर्थः । एवमेवोत्तरत्राप्यन्यथेत्यस्यार्थो द्रष्टव्यः । **दाहाद्यनुमानमेवेति ॥** नेदं रजतं दाहच्छेदादिमत्त्वादित्यनु-मानमेवेत्यर्थः । अनुमानविरोधश्च प्रबलप्रत्यक्षस्याकिञ्चित्कर इत्यङ्गीकृतत्वादिति भावः । **परीक्षितत्वेनेति ॥** दाहच्छेदादिरूपविजातीयसंवादेनाप्रामाण्यशङ्काशून्यतया निश्चितत्वेनेत्यर्थः । **परीक्षा नामेति ॥** द्वितीयस्य प्रत्यक्षस्य बाधकत्वोपयोगिबलवत्त्वसम्पादिका परीक्षा नामानुमानमेवेति तद्विरोधोऽकिञ्चित्कर इति भावः । **तस्य** परीक्षारूपानुमानस्य । **प्रत्यक्षसाहाय्येन सामर्थ्यादिति ॥** प्रत्यक्षरूपसाहाय्यसामर्थ्यात् । तदानुकूल्य-सद्भावाद्बाधकत्वं युक्तमिति शेषः । तर्ह्येवमेवास्तु प्रकृत इत्यत आह- **प्रकृते चेति ॥** दृश्यत्वाद्यनुमानादेः प्रत्यक्षसाहाय्याभावादित्यर्थः । **अनुमानादिनैवेतीति ॥** प्रत्यक्षसाहाय्यरहितेन केवलानुमानादिनैवेत्यर्थः । **प्राक्चेति ॥** प्रत्यक्षागमरूपप्रमाणबलवत्त्वार्थं युक्तेरपेक्षितत्वात् तथा बलवत्प्रमाणमूलकयुक्त्यपेक्षत्वादित्येवं प्रकारद्वयेन तत्र युक्तेरपि बाधकत्वस्योक्तत्वेन केवलयुक्तेरप्रयोजकताया उक्तत्वादिति भावः । आगमं विनेत्या-गमग्रहणस्य प्रयोजनमाह- **भगवदवतारेष्विति ॥** रामकृष्णादिष्वित्यर्थः । **छेदभेदादिप्रत्यक्षस्येति ॥** तत्कालीनानामिति शेषः । ननु तत्र प्रत्यक्षस्य दौर्बल्यमागमस्य प्राबल्यं च कथमित्यत आह- **विष्णुर्दोषवानिति प्रत्यक्षस्येति ॥**

अयं भावः । कृष्णादीनां विष्ण्ववतारत्वाज्ञाने येषां केषाञ्चित्कृष्णादीनां दोषवत्त्वेन विष्णोस्तदभावप्राप्तेः कृष्णादीनां

'देवक्यां देवरूपिण्यां विष्णुस्सर्वगुहाशयः । आविरासीत्'

इत्याद्यागमेन विष्णुत्वं ज्ञात्वा कृष्णादिर्दोषी ततश्च तदभिन्नो विष्णुरपि दोषीति प्रत्यक्षेणोत्पत्तव्यम् । तथा च **(श्री.टि.)** सर्वस्याप्यागमस्यैकवाक्यत्वादुपजीव्यभूतो निर्दोषत्वग्राही यः प्रबलागमस्स एव विष्णुर्दोष-वानित्युपजीवकस्य दुर्बलस्य प्रत्यक्षस्य बाधक इति । यथोक्तमनुव्याख्याने-

'आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते ।
न चेत्स्याद्दोषवानन्यः' इत्यादि ।

नन्वनुमानादिनैवेत्यादिपदेनार्थापत्तिमगृहीत्वा आगमग्रहणे 'आगमं विना बाधो न दृष्टः' इत्यागमस्य बाधकताया उक्तत्वात्पुनरागमेन बाधो न दृष्ट इत्युक्ते व्याघात इत्यत उक्तम्- **प्राबल्याभावापेक्षयेति ॥** तथा चोपजीव्यतया बलवदागमं विनाऽनुपजीव्येन दुर्बलेनाऽगमेन बाधो न दृष्ट इति व्याख्यानान्न दोष इति भावः । **प्रागुक्तमिति ॥** 'तर्कमात्रतः प्रत्यक्षबाधने'

इत्यादिनेत्यर्थः । **दूषितं चेति ।।** दृश्यत्वाद्यनमानादिकं 'यच्च प्रमाणदृष्टानामपि पदर्थानां मिथ्यात्वकल्पनम्' इत्यादिनोपजीव्यप्रमाणबाधादिना दूषितं चेत्यर्थः। **प्रसञ्जनार्थम्** उपक्षेपार्थम्। तदेव दर्शयति- **नन्वित्यादिना।। दूरतोऽप्येवमिति ।।** अपिशब्दोऽवधारणे । अयं वृक्षो वस्तुगत्या दीर्घो भवितुमर्हति दूरस्थत्वादिदोषादेव एवं ह्रस्वतया दृश्यमानत्वादित्यनुमानेन बाध्यमित्यर्थः । केचित्तु यद्दूरत एवं दृश्यते तत्तत्परिमाणादावयथार्थमिति व्याप्तिसमुच्चायकोऽपिशब्द इत्याहुः । **आगमेनेति ।।** प्रादेश-परिमितश्चन्द्रमा इति प्रत्यक्षम्

'अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ।
प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव तु ।।'

इत्यनुपजीव्येनाप्यागमेन बाध्यं दृष्टमित्यर्थः । **प्रत्यासत्तेः प्रागेवेति ।।** समीपगमनात्प्रागेवेत्यर्थः । **एवमुच्यत इति ।।** प्रत्यक्षदृष्टस्यानुमानेन, अनुपजीव्येन केवलागमेन वा बाधो न दृष्ट इति कथमुच्यत इत्यर्थः। **प्रागेवेति शेष इति ।।** उत्पत्त्यनन्तरं बाधे इदं रजतमिति प्रत्यक्षसमानयोगक्षेमत्वेन तद्रीत्यैव परिहारोपपत्तेरस्य पृथक्करणं न स्यादिति भावः। वृक्षह्रस्वत्वादावित्यत्राऽदिपदेन चन्द्रप्रादेशत्वस्य विवक्षितत्वात्तदनुसारेणाऽह- **आगमस्या-प्युपलक्षणमिति ।।** तर्हि दीर्घत्वनिश्चय इत्ययुक्तमित्यतस्तदनूद्याऽदिपदाध्याहारेण व्याख्याति- **दीर्घत्वनिश्चयो दीर्घत्वादिनिश्चय इति ।। अर्थमात्रेति ।।** पदार्थस्वरूपमात्रेत्यर्थः । **अन्यथात्वे** प्रत्यक्षस्य परिमाणादि-विषयेऽयथार्थत्वे ।

ननु चन्द्रप्रादेशत्वादिप्रत्यक्षस्यापि स्तम्भोऽयमित्यादिप्रत्यक्षवदेकाकारविषयत्वेन स्वार्थे पुरुषप्रवर्तकत्व-सम्भवात्कथमपटुत्वमित्याशङ्कायामेकाकारविषयकत्वाविशेषेऽप्यस्य दोषजन्यतया निश्चितत्वात् स्तम्भोऽय-मित्यादिज्ञानवैलक्षण्यमिति प्रदर्शयितुमुत्तरत्र जगत्प्रत्यक्षस्य सर्वापटुप्रत्यक्षवैलक्षण्यं चोपपादयितुं ज्ञानप्रभेदं तावदाह- **इदमुक्तं भवतीत्यादिना ।। सुषिरं** छिद्रम् । नन्वेकाकारविषयेऽपि ज्ञाने स्वार्थनिश्चायकत्वादिरूपो विशेष एवायं किन्निबन्धन इति जिज्ञासायामाह- **स चायं भेद इति ।। क्वचिदिति ।।** स्तम्भोऽयमिति ज्ञाने **(श्री.टि.)** सवितृसुषिरज्ञाने चेत्यर्थः । **सम्भावना** अर्थाभावानिश्चयः । तथा च स्तम्भोऽयमिति ज्ञानमर्था-भावानिश्चयरूपसम्भावनासद्भावात् स्वार्थनिश्चायकं, सवितृसुषिरज्ञानं तु प्रागेवार्थाभावनिश्चयरूपासम्भा-वनासद्भावान्न स्वार्थनिश्चायकमिति भावः । **क्वचिदिति ।।** सत्यरजतज्ञाने शुक्तिरजतज्ञाने चेत्यर्थः । रजत-मिदमिति ज्ञानानन्तरं तस्मिन् ज्ञाने प्रामाण्याप्रामाण्यसंशयेन प्रामाण्यग्राहके साक्षिणि प्रतिबद्धे सति तन्निरासाय सजातीयविजातीयसंवादरूपपरीक्षाऽपेक्षायां यत्र सत्यरजतज्ञाने तत्प्रवृत्तिस्तत्स्वार्थनिश्चायकं, परीक्षया शङ्काप-गमेऽप्रतिबद्धसाक्षिणा तत्प्रामाण्यनिश्चयात् । यत्र च शुक्तिरजतादिज्ञाने परीक्षापेक्षायामपि सा परीक्षा न प्रवर्तते तत् स्वार्थानिश्चायकमिति तयोर्भेदो द्रष्टव्यः । **क्वचिच्चेति ।।** शैलाग्रस्थतरुपरिमाणादिज्ञाने सन्निहिततरुपरिमाण-ज्ञाने चेत्यर्थः । **विपरीतसंस्कारो** दोषनिश्चयः । तत्र दूरस्थत्वादिदोषस्य प्रागेव निश्चितत्वेन शैलाग्रस्थतरु-परिमाणज्ञानं न स्वार्थनिश्चायकम् । सन्निहिततरुपरिमाणादिज्ञानं तु प्राग्दोषनिश्चयाभावात्स्वार्थनिश्चायकमिति तयोर्भेद इति भावः । **तत्राऽद्यमिति ।।** यत्र सम्भावना, यत्र परीक्षापेक्षायां तत्प्रवृत्तिः, यत्र च प्रागेव विपरीत-संस्काराभावश्च, तदित्यर्थः । **द्वितीयमिति ।।** यत्रासम्भावनापरीक्षापेक्षायां तदप्रवृत्तिः प्रागेव विपरीत-संस्कारभावश्च तदित्यर्थः । **मन्दग्राहीति ।।** रेखोपरेखाद्यविषयीकरणेन पदार्थस्वरूपमात्रग्राहीत्यर्थः । **अनुमानागमाविति ।।** दूरतोऽप्येवं दृश्यमानत्वादित्यनुमानं 'अष्टाशीतिसहस्राणि' इत्यागमश्चेत्यर्थः। **तेन** साक्षिप्रत्यक्षेण। **बाधकाविवेति ।।** राजगौरवेण राजभृत्येनामात्य इवेति भावः । यथाऽऽहुः

'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदापि विपरीतत्वं शिष्टाकोपे यथोदितम् ।।' इति ।

**अस्य** जगत्प्रत्यक्षस्य ।

**(पां.टि.)** प्रत्यक्षस्यानुमानादिकं बाधकं न भवतीति प्रतिज्ञामात्रं तत्र हेत्वनुक्तेरयुक्तमित्यतोऽनुमानादि-नैवेत्येवकारेणैव तत्सूचनेन प्रतिज्ञामात्रत्वाभावान्नानुपपत्तिरिति भावेनाऽह- **अयमभिप्राय इति ।।** ननु प्रत्यक्षत्वाविशेषादिदं रजतमित्येतदेव प्रत्यक्षं नेदं रजतमिति प्रत्यक्षस्य बाधकं किन्न स्यादित्यतोऽविशेषोऽसिद्ध इति भावेन विशेषमुपदर्शयति- **प्रथमस्येति ।। प्रत्यक्षसाहाय्येति ।।** नेदं रजतमिति प्रत्यक्षसाहाय्येत्यर्थः । अस्तु तर्हि जगत्प्रत्यक्षस्यापि तत्साहाय्यवताऽनुमानेनैव बाध इत्यत आह- **प्रकृते चेति ।। अत एवेति ।।** यतः प्रत्यक्षादिसाहाय्यरहितमबाधकमत एवेत्यर्थः । मूल आगमग्रहणप्रयोजनमाह- **भगवदवतारेष्विति ।।**

आगमस्य प्रत्यक्षबाधकताप्रयोजकं प्राबल्यमुपपादयति- **विष्णुर्दोषवानिति ।। आदिशब्देनोक्त इति ।।** अनुमानादि-नेत्यादिशब्देनोक्त इत्यर्थः । ननु प्रत्यक्षबाधकस्याऽगमस्य कथं तदबाधकत्वोक्तिरित्यतः प्रबलस्य बाधकत्वेऽपि दुर्बलस्याबाधकत्वात्तदभिप्रायकत्वात्तदुक्तेर्नानुपपत्तिरित्याह- **प्राबल्याभावापेक्षयेति ।। प्रागेवेति शेष इति ।।** उत्पत्त्यनन्तरं बाध इदं रजतमिति प्रत्यक्षसमानयोगक्षेमत्वेन तद्रीत्यैव परिहारोपपत्तेरस्य पृथक्करणं न स्यात् । उत्पत्त्यनन्तरं प्रबलबाधकदर्शनाच्चेति भावः । **आगमस्याप्युपलक्षणमिति ।।** अनुपजीव्यानुमानस्येवा-**(पां.टि.)** नुपजीव्यागमस्यापि प्रत्यक्षबाधकत्वेन शङ्कितत्वात्तत्परित्यागेन मूले युक्त्येत्यनेन युक्तिमात्रग्रहणस्या-युक्तत्वादिति भावः । तर्ह्यनुपजीव्यानुमानागमाभ्यां दीर्घत्वस्यानिश्चयान्मूले तदुक्तेरस्वारस्यमित्यतोऽन्यथा व्याचष्टे- **दीर्घत्वनिश्चय इति ।। परिमाणपृथक्त्वविषय इति ।।** अनेन परिमाणादावविति विषयसप्तमीत्युक्तं भवति । **अन्यथात्वे हेतुरिति ।।** अनेन मन्दग्राहित्वं तत एवान्यथात्वं चेति मूलयोजनोक्ता भवति । द्विविधं हि ज्ञानं भवतीत्यादिको ग्रन्थस्तत्त्वोद्योतटीकायाम् अस्माभिरेव विवृतत्वान्न पृथगत्र विवृतः ।

**(व्या.टि)** उक्तं व्यक्तीकृत्य चोदयति- **सत्यमिति ।। बाधकस्येति ।।** दृढभक्तिरित्यादिवत्सामान्ये नपुंसकमिति भावः । **आदिपदेनेति ।।** यद्यपि समासेनान्यपदार्थग्रहणं नाऽदिपदेन । तथाऽप्यादिपदेनेत्यस्याऽदिपदान्तेन समासेनेत्यत्र निरूढलक्षणा । अन्यपदार्थनिरूपितप्राथम्यवाचिपूर्वप्रभृतिप्रमुखादिशब्दान्तबहुव्रीहौ सर्वत्र पूर्वपदेन प्रभृतिपदेनान्येषां ग्रहणमित्यादितान्त्रिकव्यवहारात् । पूर्वपदस्य तात्पर्यग्राहकतामाश्रित्यैवेत्थं व्यवहारा इत्यव-धेयम् । ननु तथाऽप्यर्थापत्तेरनुमानत्वेन तद्भेदाभावात्कथमादिपदेन ग्रहणमित्यत आह- **अर्थापत्तेरिति ।। इति वदतेति ।।** ‘अभावषष्ठान्येतानि’ इत्युक्त्या मानषट्कस्य भट्टनयत्वात्तदनुयायित्वं स्वस्य वदता मायिने-त्यर्थः । **अङ्गीकृतत्वादिति ।** अभ्युपगमसिद्धान्तत्वात्तस्येति भावः । **तदनुसारेणेति ।** पुरोवादानुरूपत्वादनुवाद-स्येत्यर्थः । नन्वदर्शनं न साधकं, विपक्षे बाधकानुपन्यासादित्यत आह- **न दृष्ट इति वदतेति ।। एतदिति ।।** दूषणसूचनमित्यर्थः । **द्रष्टव्यमिति ।।** उत्प्रेक्षितव्यमित्यर्थः । **सामर्थ्यादिति ।।** बाधनसामर्थ्यादित्यर्थः । यथोक्तम्-

‘दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदा तु विपरीतत्वं शिष्टाकोपे यथोदितम् ।।’ इति ।

‘शिष्टाकोपे विरुद्धमिति चेत् । न , शास्त्रपरिमाणत्वात्’ इति शिष्टाकोपाधिकरणेऽतिदुर्बलाया अपि ‘क्षुत आचा-मेत्’ इति स्मृतेः प्रबलपदार्थाश्रितत्वेन प्रबलाया ‘वेदं कृत्वा वेदिं करोति’ इति क्त्वाश्रुतिबाधकत्वमुक्तम् । **उक्तमिति ।।** एवेति केवलानुमानार्थापत्त्योर्दौर्बल्यमित्यर्थः । **प्रमाणयुक्तीति ।।** बाधकयुक्तेः प्रमाणमूलक-त्वेन प्राबल्यमुक्तमित्यर्थः । प्रत्यक्षस्य बलवत्प्रत्यक्षबाधमुदाहृत्य प्रबलागमबाधमुदाहरति- **भगवदवतारे-ष्विति ।। उपजीव्यस्येति ।।** ‘यः सर्वज्ञः’ इत्यादेर्विष्णुत्वग्राहकस्येत्यर्थः । आदिपदस्यार्थान्तरमाह- **आगमोऽपि वेति ।। इदं प्रागुक्तमिति ।।** ‘यच्च प्रमाणदृष्टानामपि मिथ्यात्वकल्पनम्’ इत्यत्रेत्यर्थः । **दूषितश्चानुमानादिक-मिति ।।** ‘तर्कमात्रतः प्रत्यक्षबाधने’ इत्यादिनेति शेषः । सङ्क्षेपेणेति पुनरुक्तिं प्रतिचिक्षेप । ‘सङ्क्षेपविस्तराभ्यान्तु कथयन्ति मनीषिणः’ इति स्मृतेरित्यर्थः । **उक्तं** प्रत्युक्तम् । **अदोषः** दोषाभावः । **उत्तरप्रमेयेति ।।** प्रत्यक्ष-पटुत्वापटुत्वादिरूपप्रमेयेत्यर्थः । न दुष्ट इति रिक्तं वचः । बहुस्थलेषु दुष्टत्वादित्याशङ्कते- **नन्विति ।। दूरस्थ इति ।।** तथेत्युदाहरणान्तरसमुच्चये । उपमायां वा । दिक्कृतपरत्ववतीत्यर्थः । **अनुमानेनेति ।।** दूरस्थोऽयं वृक्षः दीर्घः दूरतोऽप्येवं दृश्यमानत्वादिति प्रयोगो द्रष्टव्यः । अनुपजीव्येनेति पूर्वोत्तरान्वयि । धर्माग्राहकेणेत्यर्थः । **आगमेनेति ।।** ‘अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु’ इत्यनेनेत्यर्थः । उभयोः परिमाणभ्रमत्वेऽपि **(व्या.टि)** भौमान्तरिक्षभेदेन पृथगुक्तिः । अनुमानेनाऽगमेनेति च यथाक्रममन्वयः । **बाध्यमिति ।।** अपहार्य-विषयमित्यर्थः । **प्रत्यक्षमेवेति ।।** भ्रमानन्तरं दीर्घत्वादिप्रत्यक्षमित्यर्थः । **प्रत्यासत्तेः प्रागेवेति ।** वृक्षं प्रत्यासाद्य हि दीर्घत्वं निश्चेयम् । ततः प्रागेव साक्षिणा ज्ञानाप्रामाण्यनिश्चयाहितार्थाभावनिश्चयात्तद्विपरीतदीर्घत्वादिरपि निश्चित एवेति । ततः प्रवर्तमानप्रत्यक्षमपहृतापहारायोगादबाधकमित्यर्थः । **निश्चितत्वादिति ।।** साक्षिणा सामान्यतो निश्चितत्वात् । विशेषतश्च विपरीतसंस्कारलक्षणकारणेनानुमितत्वादित्यर्थः । अस्यावधिमुद्भावयति- **ह्रस्वत्वादीति ।।** चन्द्रमहत्त्वे प्रमाणसङ्ग्रहायाऽह- **युक्त्येति ।।** महत्त्वसङ्ग्रहायाऽह- **आदीति ।।** मान्यं च विशेषाग्रहणमित्याह- **रेखोपरेखादीति ।।** परिमाणादावित्यादिपदसङ्ग्राह्यं दर्शयन् विभक्त्यर्थमाह- **पृथक्त्वादि-विषय इति ।।** आदिपदेन संयोगग्रहः । चशब्दसमुच्चेयं हेतुं दर्शयति- **मन्दग्राहित्वमिति ।।** नन्वपटुत्व-कारणप्रश्नस्य नेदमुत्तरं, तदनुक्तेरित्यत आह- **इदमुक्तं भवतीति ।। डोलायमानमिति ।।** डोलेवाऽचरतीत्या-चारक्यङन्ताच्छानच् । **आद्यमिति ।।** एकस्मिन् धर्मिणि विरुद्धानेकाकारावगाहीत्यर्थः । **निश्चायकमिति ।।**

अर्थतथात्वाश्वासहेतुरित्यर्थः । (**नावधारयतीति ।।** अर्थतथात्वाश्वासाहेतुरित्यर्थः) **नावधारयतीति ।।** अर्थतथात्वाश्वासनं न करोतीत्यर्थः । एतद्वाक्याऽपातप्रतीत्या नावधारणत्वादेककोटिकोऽपि संशय इत्यङ्गीकुर्वाणा निरस्ताः । एतद्वाक्यतात्पर्यस्य सुधायामुक्तेः । उक्तं हि सुधायाम्-'न स्तम्भोऽयमित्याद्येकाकारनियतं ज्ञानमिह निर्णयपदेनोच्यते । किन्तु तदनन्तरभावि वस्तुतथात्वाश्वासः' इति । नन्वेकाकारनैयत्ये समाने कुतोऽय-मवधारणभेद इत्यत आह- **स चायमिति ।।** अपटुत्वं प्रकृतोदाहरणे प्रदर्शयति- **दूरस्थेति ।। बाधकावि-वेति ।।** न तु बाधकावेवेत्यर्थः । निगमयति- **अत इति ।। एतदिति ।।** दूरस्थह्रस्वत्वप्रत्यक्षमित्यर्थः ।

**मूलम्- न च जगत्प्रत्यक्षस्य मिथ्यात्वं केनापि प्रमाणेन निश्चितम् । विशेषतश्च ज्ञानाज्ञानसुखदुःखात्मभेदादिविषयस्यानुभवस्य न मिथ्यात्वं दृष्टम् । अतश्च संसारस्य सत्यत्वात् सत्यस्य चानिवृत्त्यङ्गीकारान्न मोक्षः स्यात् । अनुभवसिद्धस्य बलवदनुभवं विना युक्तित एव मिथ्यात्वाङ्गीकारे आत्मनोऽपि मिथ्यात्वं स्यात् । युक्तिश्च सर्वस्यान्यस्य मिथ्यात्वाङ्गीकारात् । द्विधा कल्पने कल्पनागौरवमिति ।।**

**(त.मं.)** अनुभवस्याव्यभिचारनियमात् विशेषतोऽपि मिथ्याविषयत्वं न दृष्टम् । **न मोक्षः स्यात्** मायिपक्षे । अनुभवापलापेऽतिप्रसङ्गमाह- **अनुभवसिद्धस्येति ।।** आत्ममिथ्यात्वे युक्तिमाह- **युक्तिश्चेति ।।** जगति असत्य इति सत्य इति द्विधा कल्पने कल्पनागौरवम् ।

**टीका-** नन्वेवमेव तर्हि जगत्प्रत्यक्षस्याप्यपटुत्वे यद्यपि अनुमानागमौ न तस्य बाधकौ । तथाऽपि तेन अबाधितौ जगन्मिथ्यात्वं निश्चाययिष्यत इति चेत्, किमस्य प्रतिभासतोऽपटुत्वं कल्प्यते, उत कारणसद्भावादनुमीयते । नाऽद्यः । सत्य एव स्तम्भ इति निश्चायकतयैवावभासनात् । द्वितीयेऽपि न तावदसम्भावना परीक्षाभावो वा कारणं, तदभावात् । अतः प्रागेवायथार्थतया निश्चितत्वं वाच्यम् । न च तदप्यस्तीत्याह- **न चेति ।। मिथ्यात्वम्** अयथार्थत्वम् । यथा चैतत्तत्तथोपपादितं प्राक् । अत्र सर्वत्र प्रत्यक्षशब्देनापरोक्षज्ञानमात्रं विवक्षितं न तु प्रमाणम् । ततो न व्याघातादिदोष-प्रसङ्गः । एवं सम्भावितदोषस्य यथार्थत्वायथार्थत्वविकल्पशङ्काविषयस्यापि घटादिसत्यताग्राहिणः प्रत्यक्षस्य बाह्यस्य यदा नायथार्थत्वं किमुत तदा तद्विपरीतस्य साक्षिणो वक्तव्यमित्याशयवानाह- **विशेषतश्चेति ।। ज्ञानं** मानसम् । **अज्ञानं** भावरूपम् । **आत्मभेद** ईश्वराज्जीवान्तरात् जडाच्च आत्मनो भेदः । आदिपदेन इच्छादीनां ज्ञानाद्यभावस्य च ग्रहणम् । न दृष्टमिति साक्ष्यनुभवस्य यथार्थत्वनियमं सूचयति ।

घटादेर्बाह्यस्य ज्ञानादेरान्तरस्य च जगतः तन्मिथ्यात्वस्यापि मिथ्यात्वात् अन्योन्याश्रयत्वा-दिकं भूषणमेव नतु दूषणमिति शङ्कानिरासार्थं समर्थितेनैव बन्धसत्यत्वेन अन्यदपि सिद्धमिति प्रसङ्गेनाह- **अतश्चेति ।।** साक्ष्यनुभवस्य यथार्थत्वनियमादित्यर्थः । संसारस्य ज्ञानाज्ञानादि-रूपस्याङ्गीकारान्मायावादि(ना)नां न मोक्षः स्यात् । ततश्चैकजीववादिवदेषामपि बद्धमुक्त-व्यवस्थाऽसिद्धेः व्यर्थो बहुजीववादाङ्गीकार इति भावः ।

ननु शुक्तिरजतादिकं साक्षिवेद्यं बाध्यत इति कथं तस्य यथार्थत्वनियम इति चेन्न । इन्द्रिय-व्यापारान्वयव्यतिरेकानुविधायित्वेन रजतादिज्ञानस्यैन्द्रियकत्वात् । अधिष्ठानग्रहण एवेन्द्रियस्य व्यापार इति चेन्न । कल्पकाभावात् । प्रतीतिसमयमात्रपरिवर्तिना रजतेनेन्द्रियसन्निकर्षानुपपत्तेरेवं कल्प्यत इति चेन्न । अनिर्वचनीयख्यातेः निराकृतत्वात् । अन्यथाख्यातिनये तु शुक्तिका-सन्निकृष्टेनेन्द्रियेण शुक्तिकैवात्यन्तासद्रजताकारेण प्रतीयत इत्युपपद्यत इति ।

(ननु) 'घटादेः ज्ञानादेश्च प्रत्यक्षसिद्धस्य युक्तिमात्रेण बाधो नास्ति । बलवता प्रत्यक्षादिना विना युक्तिमात्रेण प्रत्यक्षसिद्धस्य क्वापि बाधादर्शनात्' इत्युक्तम् । विपक्षे बाधकाकाङ्क्षायां च भूतचतुष्टयस्येत्यादिना बाधकमप्युक्तम्

। तदसत्। पृथिव्याः पृथिवीत्वाभावादेः सर्वमिथ्यात्व-वादिनोऽभीष्टत्वादित्यतोऽतिप्रसङ्गान्तरमाह- **अनुभवेति ॥ अनुभवः** साक्षिप्रत्यक्षं बाह्यश्च। बलवदनुभवं विनेति बाह्यापेक्षयोक्तम्। **आत्मनोऽपि मिथ्यात्वं स्यात्** तस्यापि साक्षिप्रत्यक्ष-सिद्धत्वात्। स्वयंप्रकाश एवाऽत्मेति चोत्तरत्र निराकरिष्यते।

नन्वात्मनो मिथ्यात्वं प्रतिपादयन्ती युक्तिरेव नास्ति याऽऽत्मानुभवस्य बाधिका स्यादित्यत आह- **युक्तिश्चेति ॥** आत्ममिथ्यात्वसाधिकाऽस्तीति शेषः। कथमस्तीत्यत आह- **सर्वस्येति ॥** आत्मनोऽन्यस्य सर्वस्य मिथ्यात्वाङ्गीकारात्तद्दृष्टान्तेन वस्तुत्वादिनाऽऽत्मनो मिथ्यात्वं साध्यत इत्यर्थः। व्यभिचारपरिहारार्थं सर्वस्येत्युक्तम्। विपक्षे बाधकाभावादप्रयोजकं वस्तुत्वादिकमित्यत आह- **द्विधेति ॥** यद्यात्मा सत्यः स्यात्तदाऽऽत्मा सत्यः अन्यन्मिथ्येति द्विधा कल्पने कल्पनागौरवं स्यादिति बाधकसद्भावात् नाप्रयोजकत्वम्। इति युक्तिश्चास्तीति सम्बन्धः।

ननु सर्वस्य मिथ्यात्वं सिद्धान्तिना नाङ्गीकृतं तत्कथमेवमनुमानम्। शुक्तिरजतादेः दृष्टान्तस्य सम्भवेऽपि व्यभिचारापरिहारादिति चेन्न। परन्यायेन परस्यानिष्टापादनात्। किञ्च प्रत्यक्षसिद्धस्यापि युक्त्या बाधो भवतीति वदन्तं परं प्रति शून्यवादी यद्येवमनुमानं प्रयुञ्जीत तदा न तस्योत्तरमित्य-भिप्रायः। अत एवाङ्गीकारादित्युक्तम्। नन्वात्मनो वस्तुत्वादिधर्मानङ्गीकारादसिद्धो हेतुरिति चेन्न। तद्व्यवहारलोपप्रसङ्गात्। काल्पनिकधर्मसद्भवाद् व्यवहारोपपत्तिः, सत्यधर्माभावादसिद्धिरिति चेत्तर्हि दृश्यत्वादेरपि सत्यत्वाभावादसिद्धिः स्यात्। वस्तु च मिथ्या चेति विरुद्धमिति चेत्। दृश्यं च मिथ्या चेति कुतो न विरुद्धम्। शुक्तिरजतादौ सह दर्शनान्नेति चेत्, समं वस्तुत्वे। वास्तवं वस्तुत्वं तत्र नास्तीति चेत्, दृश्यत्वमपि तथेति समानम्। यादृशतादृशदृश्यत्वं तत्रास्तीति चेत्, वस्तुत्वमपि तथाभूतमस्तीति कुतो विरुद्धत्वम्। तत्सत्यमित्यादिश्रुत्या बाधितमनुमानमिति चेत्, विश्वं सत्यमित्यादिश्रुत्या प्रपञ्चमिथ्यात्वानुमानमपि कथं न बाधितम्। व्यावहारिकसत्यत्वपरा सा श्रुतिरिति चेदन्याऽपि तथा किं न स्यात्। उपक्रमादिलिङ्गान्यपि तात्पर्यं ज्ञापयन्त्यन्यपरतामेव निवारयन्ति न तु पारमार्थिकत्वम्। किञ्च प्रत्यक्षमिव युक्त्या श्रुतिरपि किन्न बाध्यते। युक्तिः पुरुषमतिकल्पिता सम्भावितदोषा। श्रुतिस्त्वपौरुषेयी न तथेति चेत्, तर्हि साक्षिप्रत्यक्षमपि न तथेति तुल्यम्। अपि चाविद्यामूला श्रुतिः कथमसम्भावितदोषा भवेत्।

मिथ्यात्वमसत्त्वं चेत्, दृष्टान्तस्य मायावादिरीत्या साध्यविकलता। अनिर्वचनीयत्वं चेत् शून्यवादिनोऽप्रसिद्धविशेषणत्वमिति चेन्न। दृश्यत्वाद्यनुमानेऽपि तुल्यत्वात्। सत्यविवेक-साधनाददोष इति चेदात्ममिथ्यात्वानुमानेऽपि समानमेतत्। अनिर्वचनीयवादिनैव केनचिदात्मनि मिथ्यात्वे साधिते किमुत्तरम्।

**(र.टि.) अत्र सर्वत्रेति ॥** 'न च प्रत्यक्षदृष्टस्य' इति, 'प्रत्यक्षापटुत्वस्य' इति, 'प्रत्यक्षस्य हि दूरे' इति त्रिष्वपि वाक्येष्वित्यर्थः। न व्याघातादीत्यादिपदेन बलवत्पदवैयर्थ्यादिकं ग्राह्यम्। **मानसमिति ॥** तत्रैव मिथ्यात्वस्य शङ्काऽर्हत्वादिति भावः। **भावरूपमिति ॥** आदिपदेन सुखाद्यभावसङ्ग्राहकतयाऽवश्यव्याख्येयेन ज्ञानाभाव-ग्रहणसम्भवाच्च। तत्परत्वेनाप्यज्ञानपदं योजनीयमिति भावः। बाह्यप्रत्यक्षस्य साक्षिणश्च प्रकृतत्वादुभय-परामर्शकत्वमतश्शब्दस्य न मन्तव्यमित्याह- **साक्ष्यनुभवस्येति ॥** अत एवाऽह- **संसारस्य ज्ञानाज्ञानरूप-स्येति ॥** 'नित्यत्वाङ्गीकारान्न मोक्षः स्यात्' इत्युक्तिबलादेवं व्याख्येयम्। घटादेरुक्तयुक्त्या नित्यत्वाङ्गीकारस्य मोक्षाभावोपपादकत्वाभावादिति भावः। **बाह्यापेक्षयोक्तमिति ॥** अनुभवपदेन बाह्यस्यापि गृहीतत्वात्तद-पेक्षयेत्यर्थः। उभयापेक्षया चेत्कचिद्बलवता साक्षिणा दुर्बलसाक्षिणो बाध इत्युक्तं स्यात्। न च तत्सम्भवति। साक्षिणो याथार्थ्यनियमाङ्गीकारविरोधादिति भावः। नन्वात्मनोऽवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूप-स्वप्रकाशत्वाङ्गीकारात्कथं साक्षिसिद्धत्वमित्यत आह- **स्वयम्प्रकाश एवेति ॥ इति द्विधा कल्पन इति ॥** अनेन धाप्रत्ययाभिप्राय उक्तो भवति। **शुक्तिरजतादेरिति ॥** शुक्तिरजतादौ बस्तुत्वरूपहेत्वभावेऽप्यादि-पदोक्तज्ञेयत्वाभिप्रायेणेदमिति द्रष्टव्यम्। तर्केऽप्यापाद्यापादकयोर्व्याप्तिर्वक्तव्येत्यत उक्तम्- **परन्यायेनेति ॥ अत एवाङ्गीकारादिति ॥** शून्यवादिमायावादिभ्यामपि

सर्वमिथ्यात्वस्याङ्गीकारान्नान्यतरव्याप्तिहीनत्वमिति ज्ञापयितुमङ्गीकारादित्युक्तमित्यर्थः । **दृश्यत्वादेरपीति ।।** प्रपञ्चमिथ्यात्वसाधकत्वेन प्रयुक्तदृश्यत्वादेरपि त्वन्मते सत्यत्वाभावात्प्रपञ्चे सत्यदृश्यत्वाभावेन असिद्धिः स्यादित्यर्थः । **न तु पारमार्थिकत्वमिति ।।** आत्मसत्त्यत्वस्य व्यवस्थापयन्तीत्यर्थः ।

**(रा.टि.) प्रतिभासत इति ।।** अपटुत्वावभासबलादित्यर्थः । आद्योऽसिद्ध इति भावेनाह- **नाऽद्य इति ।।** असत्त्वादिभ्रमनिरासायाऽह- **मिथ्यात्वमयथार्थत्वमिति ।। उपपादितं प्रागिति ।।** 'न च सत्यत्वाङ्गीकारे कश्चिद्दोषः' इतिवाक्यव्याख्यानावसर इति भावः । यद्वा 'तद्वशत्वज्ञापनार्थमेव सृष्ट्यादिकथनम्' इत्यादिना मिथ्यात्वपरश्रुतिस्मृतीनामन्यथाव्याख्यानेनोपपादितमित्यर्थः । अथ वा 'न चाभेदे कश्चिदागमः' इत्यादिना पराभिप्रेताशेषवाक्यानां प्रत्यक्षबाधकानामन्यथाव्याख्यानेनोपपादितमित्यर्थः । दृश्यत्वाद्यनुमानानां च 'एवमा-द्यनन्त' इतिवाक्यव्याख्याने निरस्तत्वादिति भावः । **न व्याघातादीति ।।** प्रत्यक्षप्रमाणस्यान्यथात्वं मिथ्यार्थक-त्वमित्यस्य व्याहतेः । प्रमाणेन निश्चितमित्युक्त्ययोग आदिपदार्थः । असम्भावितत्वादिति भावः । **तद्विपरीत-स्येति ।।** असम्भावितदोषादेरित्यर्थः । **मानसं** मनोवृत्तिरूपम् । **समर्थितेनेति ।।** 'दृष्टस्य वस्तुनो मिथ्यात्वकल्पने' इत्यादिना समर्थितेनेत्यर्थः । प्रकृतत्वादाह- **ज्ञानाज्ञानादिरूपस्येति ।।** परमतरीत्या शङ्कते- **ननु शुक्तिरजता-दिकमिति ।।** दुष्टेन्द्रियसन्निकृष्टशुक्त्याकारवृत्त्या क्षुभितं शुक्त्यधिष्ठानचैतन्यावरकाज्ञानम् अनिर्वचनीय-रजतात्मना भ्रमरूपज्ञानात्मना च परिणमत इति प्रक्रियामाश्रित्याऽह- **प्रतीतिसमयमात्रेति ।। निराकृत-त्वादिति ।।** 'सदसद्वैलक्षण्ये प्रमाणाभावात्' इत्यादिना 'नाद्वितीयत्वं युज्यते' इत्यन्तेन निराकृतत्वादित्यर्थः। **(रा.टि.)** ख्यात्यन्तरपक्षेऽपि कथमसता सन्निकर्ष इत्यत आह- **अन्यथाख्यातीति ।। घटादेरिति ।।** 'न हि प्रमाणदृष्टस्य तर्कबाध्यत्वम्' इत्यादिना पूर्वत्र, 'न च जगत्प्रत्यक्षस्य' इत्यादिनाऽत्र च युक्तिमात्रेण बाधो नास्तीत्युक्तम् । 'शुक्तिरजतादिप्रतीतेरपि बलवत्प्रत्यक्षविरुद्धत्वादेव भ्रमत्वं न तर्कमात्रात्' इत्यनेन पूर्वत्र क्वापि बाधादर्शनादित्युक्तमित्यर्थः । साक्ष्यपेक्षया बलवतोऽभावादाह- **बलवदनुभवं विनेति ।। बाह्यापेक्ष-योक्तमिति ।।** साक्षिसिद्धत्वमात्मनो नास्ति येनातिप्रसङ्ग आपद्येत । किन्तु स्वयम्प्रकाशरूप एवेत्यत आह- **स्वयम्प्रकाश एवेति ।। उत्तरत्रेति ।।** 'न च स्वेनापि ज्ञेयत्वं तैरुच्यते' इत्यादिवाक्यव्याख्यानावसर इत्यर्थः । **व्यभिचारपरिहारार्थमिति ।।** अन्यस्येत्येवोक्तौ यस्य कस्यचिदमिथ्यात्वेनाप्युपपत्त्या व्यभिचारापत्तेस्तन्निरा-साय सर्वस्येत्युक्तमित्यर्थः । इतिपदस्य पूर्वेणान्वयमाह- **इति युक्तिश्चास्तीति सम्बन्ध इति ।। शुक्ति-रजतादेरिति ।।** रजतात्मना प्रतीतशुक्तिशकलादेरित्यर्थः । तत्र तेनाकारेण मिथ्यात्वस्य वस्तुत्वस्य च सत्त्वादिति भावः । यद्वा वस्तुत्वादित्यस्य ज्ञानगोचरत्वादित्यर्थः । यद्वा वास्तववस्तुत्वस्याभावेऽपि यादृशतादृशं प्रातीतिकं तदस्तीत्यग्रे व्यक्तम् । **अनिष्टापादनादिति ।।** विश्वसत्यत्ववाद्युत्तरपक्षे यदि कृत्स्नमपि जगन्मिथ्या स्यात्तदाऽऽ-त्माऽपि मिथ्या स्याद्वस्तुत्वादेरविशेषात् । अन्यथा द्विधा कल्पने कल्पनागौरवमित्यनिष्टापादनरूपत्वेन योज्य-मित्युक्तं भवति । युक्तिश्चेत्युक्तिस्वारस्यानुरोधेन प्रागुक्तानुमानरूपत्वेऽपि न दोष इत्याह-**किञ्चेति ।। परम्प्रतीति ।।** मायिनं प्रतीत्यर्थः । **शून्यवादीति ।।** तेनापि सर्वमिथ्यात्वाङ्गीकारेणानैकान्त्याभावादिति भावः । **इत्युक्तमिति ।।** सर्वमिथ्यात्वस्योभयसम्मतत्वद्योतनायाङ्गीकारादित्युक्तमित्यर्थः । **दृश्यत्वादे-रिति ।।** जगन्मिथ्यात्वसाधकहेतोरित्यर्थः । **बाधितमनुमानमिति ।।** आत्ममिथ्यात्वानुमानमित्यर्थः । ननूपक्रमादिलिङ्गानि तत्सत्यमित्यादिश्रुतिबोध्यसत्यत्वस्य पारमार्थिकत्वमेव गमयिष्यन्तीत्यत आह- **उपक्रमा-दीति ।।** ज्ञापयन्तीति शत्रन्तम् । **न तु पारमार्थिकत्वमिति ।।** तात्पर्यविषयस्येति, गमयन्तीति च योज्यम् । **युक्त्येति ।।** वस्तुत्वादि प्रागुक्तयुक्त्या 'तत्सत्यम्' इत्यादिश्रुतिरपीत्यर्थः । शून्यवाद्युक्तात्ममिथ्यात्वानुमाने साध्यस्य विकलपदोषावाह- **मिथ्यात्वमिति ।।**

**(श्री.टि.) प्रतिभासत इति ।।** ल्यब्लोपनिमित्ता पञ्चमी । प्रतिभासमारभ्य तदुत्पत्तिमारभ्येत्यर्थः । तथा च किं प्रागेव दोषनिश्चयेनापटुत्वेव ज्ञानमुत्पद्यत इति पृष्टं भवतीति द्रष्टव्यम् । **कारणेति ।।** अपटुत्व इत्यर्थः । **अनुमीयत इति ।।** सवितृसुषिरशुक्तिरजतादिविषयप्रत्यक्षवदिति शेषः । **निश्चायकतयैवेति ।।** दोषाजन्यतया पटुतयैव साक्षिणाऽवभासनान्नापटुत्वेनाऽदितो ज्ञानमुत्पद्यत इति भावः । **तदभावादिति ।।** सवितृसुषिरादाविव प्रागेवार्थाभावनिश्चयरूपकारणस्य शुक्तिरजतादाविव परीक्षाप्रवृत्त्यभावरूपकारणस्य चाभावादित्यर्थः । **उपपादितमिति ।।** मिथ्यात्वसाधकप्रमाणाभावस्य प्रागुक्तत्वादित्यर्थः । इदमुपलक्षणम् । नापि जगत्प्रत्यक्षस्य सन्देहवदपटुत्वम् एकाकारविषयकत्वादित्यपि द्रष्टव्यम् । तथा च जगत्प्रत्यक्षस्य सर्वापटुप्रत्यक्षवैलक्षण्यमिति भावः । ननु 'न च प्रत्यक्षदृष्टस्य' 'प्रत्यक्षापटुत्वस्यैव' 'प्रत्यक्षस्य हि दूरे' इति त्रिष्वपि वाक्येषु यदि प्रत्यक्षशब्देन **(श्री.टि.)** निर्दोषार्थेन्द्रियसन्निकर्षजन्यं

प्रमाणरूपमपरोक्षज्ञानं विवक्षितं तर्ह्याद्यवाक्ये तस्य प्रत्यक्षागमाभ्यां बाधोक्तिव्याघातः । बलवत्पदवैयर्थ्यं च । द्वितीयवाक्येऽपटुत्वोक्तिव्याघातः । तृतीयवाक्ये मन्दग्राहितया परिमाणादावन्यथात्वोक्तिव्याघात इत्यत आह- **अत्र सर्वत्रेति** ।। त्रिष्वपि वाक्येष्वित्यर्थः । आदिशब्देनाऽदि-वाक्ये बलवच्छब्दवैयर्थ्यं ग्राह्यम् । **ज्ञानं मानसमिति** ।। मनोवृत्तिरूपमित्यर्थः । साक्षिरूपस्वरूपानुभवस्य विषयीकारितया पृथगुक्तत्वादिति भावः । **अज्ञानं भावरूपमिति** ।। सिद्धान्ते ज्ञानाभावातिरिक्तं भावरूपमज्ञानं जीवस्वरूपाद्यावरकत्वोक्त्यन्यथाऽनुपपत्त्या स्वीकर्तव्यम् । ज्ञानाभावस्याऽवरकत्वायोगादिति सम्प्रदायविदः। इदं च भावरूपाज्ञानं सत्त्वादिगुणात्मिका प्रकृतिरेवेति मन्तव्यम् । उपपादितमेतन्निपुणतरं तत्त्वसङ्ख्यानटीका-विवरणेऽस्माभिः । **आत्मनो भेद इति** ।। जीवस्य भेद इत्यर्थः । ईश्वरादिप्रतियोगिको जीवधर्मिको भेद इति यावत् । जीवस्याहमिति साक्षिसिद्धत्वेन तद्धर्मिकभेदस्यापि साक्षिविषयत्वादिति भावः । **ज्ञानाद्यभाव-स्येति** ।। समुदायापेक्षमेकवचनम् । ज्ञानादिप्रतियोगिकाभावानामित्यर्थः ।

उत्तरवाक्यमवतारयति- **घटादेरित्यादिना** ।। **तन्मिथ्यात्वस्यापीति** ।। बाह्यान्तरजगन्निष्ठमिथ्यात्व-स्यापीत्यर्थः । **साक्षिवेद्यमिति** ।। प्रातिभासिकत्वादिति भावः । **तस्य** साक्ष्यनुभवस्य । **ऐन्द्रियकत्वादिति** ।। तथा च शुक्तिरजतादिज्ञानस्यैन्द्रियकत्वेन साक्षिवेद्यत्वाभावादित्यर्थः । ऐन्द्रियकज्ञानस्य च यथार्थत्वनियमो नास्त्येवेति भावः । **अधिष्ठानेति** ।। शुक्तिरूपाधिष्ठानेत्यर्थः । तथा चान्यत्रानुपक्षीणान्वयव्यतिरेकौ न स्त इति भावः । अधिष्ठानग्रहण एवेन्द्रियव्यापारस्योपक्षयकल्पकमाशङ्कते- **प्रतीतीति** ।। रजतेनेन्द्रियसन्नि-कर्षाङ्गीकारे घटादिवत्सन्निकर्षात्प्राक् रजतस्य सत्त्वं वक्तव्यम् । तन्न सम्भवति । प्रतीतिमात्रशरीरकत्वाङ्गी-कारादिति भावः । **अनिर्वचनीयेति** ।। प्रातिभासिकेत्यर्थः । स्यादिदं यदीदं रजतमित्यत्र प्रतीयमानं रजतं प्रातिभासिकं स्यात् । न चैवम् । प्रातिभासिकताया अनिर्वचनीयत्वे च रजतस्येत्यादिना प्राङ्निराकृतत्वादिति भावः । ननु तर्हि प्रतीयमानं रजतं कीदृशमिति चेदसदेव रजतं प्रत्यभादित्युत्तरकालीनानुभवादसदेवेति वदामः। तर्ह्यसता रजतेनेन्द्रियस्य सन्निकर्षायोगात्कथं प्रतीतिरिति चेत्तत्राऽह- **अन्यथाख्यातिनये त्विति** ।। दोष-वशाच्छुक्तिरेवात्यन्ताऽसद्रजतात्मना प्रतीयत इत्यभिनवान्यथाख्यातिवादिनामस्माकं सिद्धान्त इत्यर्थः । **शुक्ति-केति** ।। तथा च नासता रजतेन सन्निकर्षोऽङ्गीकृत इति भावः । **शुक्तिकैवेति** ।। दोषवशादिति शेषः । **उपपद्यत इति** ।। रजतादिज्ञानस्यैन्द्रियकत्वमिति शेषः । **विपक्ष इति** ।। प्रत्यक्षसिद्धस्य युक्तिमात्रेण बाधाङ्गीकारे किं बाधकमित्याकाङ्क्षायामित्यर्थः । **इत्यादिनेति** ।। 'भूतचतुष्टयस्य पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वं न स्यात्' इत्यादिनेत्यर्थः । अनुभवशब्देन साक्षिणोऽपि गृहीतत्वात्तदपेक्षयाऽन्यस्य प्रबलस्यानुभवस्याभावादाह- **बाह्यापेक्षयोक्तमिति** ।। अनुभवशब्देन बाह्यस्यापि गृहीतत्वात्तदपेक्षयेत्यर्थः । उभयापेक्षया चेत्तर्हि क्वचिद्बलवता साक्षिणा दुर्बलसाक्षिणो बाध इत्युक्तं स्यात् । न च तत्सम्भवति । मोक्षयोग्यानां साक्षिणो याथार्थ्यनियमाङ्गीकार-विरोधादिति भावः । **तस्यापीति** ।। जीवचैतन्यस्याप्यहमिति साक्षिप्रत्यक्षसिद्धत्वादित्यर्थः । तस्यैव ब्रह्मत्वादिति **(श्री.टि.)** हृदयम् । नन्वात्मनोऽवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वाङ्गीकारात्कथं तस्य साक्षि-सिद्धत्वमित्यत आह- **स्वयंप्रकाश एवाऽत्मेति चेति** ।। **उत्तत्रेति** ।। न च स्वेनापि ज्ञेयमित्यादिना उत्तरत्रेत्यर्थः। **आत्मानुभवेति** ।। अहमित्यात्मस्वरूपावगाहिसाक्ष्यनुभवेत्यर्थः । वस्तुत्वादिनेत्यादिपदेन ज्ञेयत्वं ग्राह्यम् । शुक्तिरजतादिदृष्टान्तेनेति शेषः । **सर्वस्येत्युक्तमिति** ।। यद्यात्मव्यतिरिक्तं किञ्चित्सत्यं स्यात्तर्ह्येव व्यभिचारः स्यादिति भावः । एवमनुमानं कुतो न सम्भवतीत्यत आह- **शुक्तिरजतादेरिति** ।। शुक्तिरजतादौ वस्तुत्व-हेत्वभावेऽप्यादिपदोक्तज्ञेयत्वरूपहेत्वभिप्रायेणेदमिति ज्ञातव्यम् । **व्यभिचारेति** ।। घटादिप्रपञ्चे भवत्पक्षे व्यभिचारापरिहारादित्यर्थः । **आपादनादिति** ।। नैवमस्माभिरस्मद्रीत्योच्यते, किन्त्वात्मनोऽन्यस्य सर्वस्य त्वया मिथ्यात्वाङ्गीकारेण त्वन्मते व्यभिचाराभावात् त्वद्रीत्यैव शुक्तिरजतदृष्टान्तेनाऽत्मनोऽपि मिथ्यात्वं स्यादि-त्यापाद्यत इत्यर्थः । शून्यवादी सर्वस्य मिथ्यात्वाङ्गीकारवादी । **एवमनुमानम्** आत्मा मिथ्या वस्तुत्वाद्रूप्यवदि-त्यनुमानम् । तथा च सर्वस्य मिथ्यात्वं शून्यवादिना नाङ्गीकृतमिति कथमेवमनुमानं, घटादिप्रपञ्चे व्यभिचारा-परिहारादिति शङ्का तं प्रति न सम्भवतीत्याशयः । परन्यायेन किञ्चेत्युक्ताभिप्रायद्वये ज्ञापकमाह-**अत एवेति** ।। आद्याभिप्राये मायिनाऽङ्गीकारादित्यर्थः । द्वितीयाभिप्राये शून्यवादिनाऽङ्गीकारादित्यर्थो द्रष्टव्यः ।

वस्तुत्वाद्यनुमानस्यासिद्ध्यादिदोषानाशङ्क्य निराकरोति- **नन्वित्यादिना** ।। **तद्व्यवहारेति** ।। आत्मा वस्त्वित्यादिव्यवहारेत्यर्थः । केचित्तु आदिपदोक्तज्ञेयत्वरूपधर्मानङ्गीकारे आत्मव्यवहार एव न स्यात् । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादिति भाव इत्याहुः । **सत्येति** ।। पारमार्थिकेत्यर्थः । **दृश्यत्वादेरपीति** ।। सत्यं प्रत्यक्षदृष्टस्य मिथ्यात्वकल्पनं बाधकप्रमाणाधीनमिति । तथाऽप्युपपद्यते

जगतो मिथ्यात्वकल्पनं दृश्यत्वाद्यनुमानस्य बाधकस्य सत्त्वादित्येवं प्रपञ्चमिथ्यात्वसाधकत्वेन त्वदुपन्यस्तस्यापि दृश्यत्वादेस्त्वन्मते सत्यत्वाभावात्प्रपञ्चे सत्यभूत-दृश्यत्वाभावेनासिद्धिः स्यादित्यर्थः । ननु दृश्यत्वमिथ्यात्वयोर्न सहानवस्थानरूपो विरोधः । कुत इति चेत्तत्राऽह- **शुक्तिरजतादाविति ॥** तर्हि वस्तुत्वमिथ्यात्वयोरपि शुक्तिरजतादौ सहदर्शनान्न विरुद्धत्वमिति सममेवेत्याह- **सममिति ॥** ननु वस्तुत्वमिथ्यात्वयोः शुक्तिरजतादौ न सहावस्थानम् । कुत इति चेत्तत्राऽह-**वास्तवमिति ॥ तथेति ॥** वास्तवं शुक्तिरजते नास्तीत्यर्थः । तथा च दृश्यत्वमिथ्यात्वयोरपि शुक्तिरजतादौ सहदर्शनान्न विरोध इत्युक्तमसदिति भावः । **यादृशतादृशं** कल्पितम् । **तत्र** शुक्तिरजते । एवञ्च सहदर्शनमेवास्तीति न विरोध इति भावः । **तथाभूतं** कल्पितम् । **अनुमानम्** आत्ममिथ्यात्वानुमानम् । **सा श्रुतिः** विश्वं सत्यमित्यादि-श्रुतिः । **अन्या** तत्सत्यमित्यादिकाऽऽत्मसत्यत्वश्रुतिः ।

ननु ब्रह्मसत्यत्वावेदकश्रुतीनामुपक्रमादिलिङ्गसचिवत्वात्पारमार्थिकसत्यतापरत्वमिति चेत्तत्राऽह- **उपक्रमा-दिलिङ्गानीति ॥** ज्ञापयन्ति सन्ति । **अन्यपरतां** 'तत्सत्यम्' इत्यादिश्रुतीनामात्मातिरिक्ते वस्तुनि तात्पर्योपे-तताम् । **न तु पारमार्थिकत्वमिति ॥** श्रुतिप्रतिपादितात्मसत्यत्वस्य पारमार्थिकत्वं न व्यवस्थापयन्तीत्यर्थः । **श्रुतिरपीति ॥** आत्ममिथ्यात्वसाधकयुक्त्या तत्सत्यमित्यादिकाऽऽत्मसत्यत्वपरा श्रुतिरपि किं न बाध्यत इत्यर्थः। **(श्री.टि.) अपौरुषेयी** पुरुषमतिकल्पिता न भवतीत्यर्थः । **न तथेति ॥** सम्भावितदोषा नेत्यर्थः । **न तथेति तुल्यमिति ॥** नित्यत्वेन सम्भावितदोषं न भवतीति तुल्यमित्यर्थः । श्रुतेरपौरुषेयत्वेनासम्भावितदोषत्वं परेणोक्त-मङ्गीकृत्य प्रतिबन्योत्तरमुक्तम् । वस्तुतस्तु तदेव नास्तीत्याह- **अपि चेति ॥ कथमिति ॥** आविद्यकत्वस्यैव दोषत्वादिति भावः । शङ्कते- **मिथ्यात्वमिति ॥** आत्मा मिथ्येत्यनुमाने साध्यभूतं मिथ्यात्वमित्यर्थः । **मायावादिरीत्येति ॥** तेन शुक्तिरजतादेः सदसद्वैलक्षण्यरूपानिर्वचनीयत्वाङ्गीकारादिति भावः । **शून्यवादिन इति ॥** 'शून्यवादी यद्येवमनुमानं प्रयुञ्जीत' इति पूर्वमुक्तत्वादिति भावः । **अप्रसिद्धेति ॥** तेन सर्वस्याप्यसत्त्वाङ्गी-कारेणानिर्वचनीयस्य वस्तुनस्तन्मतेऽप्रसिद्धत्वादिति भावः । **तुल्यत्वादिति ॥** तत्रापि मिथ्यात्वमसत्त्वं चेत्, मायिमते दृष्टान्ते साध्यवैकल्यम्, अनिर्वचनीयत्वं चेत् सिद्धान्तिनो मतेऽप्रसिद्धविशेषणत्वमित्यर्थः । **सत्यविवे-केति ॥** सद्भिन्नत्वरूपं मिथ्यात्वं साध्यत इति न दृश्यत्वानुमाने साध्यवैकल्यादिदोष इत्यर्थः । **समानमेत-दिति ॥** सद्भिन्नत्वरूपे मिथ्यात्वे साधिते साध्यवैकल्यादिदोषो नास्तीति समानमित्यर्थः । **किमुत्तरमिति ॥** अप्रसिद्धविशेषणत्वानवकाशादिति भावः ।

**(पां.टि.) प्रतिभासत इति ॥** सवितृसुषिरमिति ज्ञानवज्ज्ञानस्वभावत इत्यर्थः । **अत्र सर्वत्रेति ॥** 'न च प्रत्यक्षदृष्टस्य' इति, 'प्रत्यक्षापटुत्वस्यैव' इति, 'प्रत्यक्षस्य हि दूरे' इति त्रिष्वपि वाक्येष्वित्यर्थः । *व्याघातादी-त्यादिपदेन बलवत्पदवैयर्थ्यादिपरिग्रहः । **एवमिति ॥** पौरुषेयतया सम्भावितदोषस्य तत एव यथार्थत्वायथार्थत्व-विकल्पशङ्काविषयस्यापीति योजना । **ज्ञानं मानसमिति ॥** अयमाशयः-न ज्ञानस्य स्वरूपेण मिथ्यात्वं तन्मिथ्यात्वभ्रान्तित्वयोः कारणम् । तथा सति वेदान्तजन्यवृत्तिज्ञानस्यापि स्वरूपतो मिथ्यात्वेन तस्यापि मिथ्यात्वभ्रान्तित्वयोः प्रसङ्गात् । किन्तु 'तद्विषयस्यान्यथात्वमेव भ्रान्तित्वादौ कारणम्' इति पूर्वग्रन्थानुरोधात् तद्विषयान्यथात्वमेव । ततश्चात्र वाक्ये ज्ञानशब्देन स्वरूपज्ञानस्यैव ग्रहणे तद्रूपविषयान्यथात्वमेव तद्ग्राहकसाक्षिणो भ्रान्तित्वादौ कारणं वक्तव्यं स्यात् । न च तत्सम्भवति । स्वरूपज्ञानस्यानन्यथात्वनियमेन विषयान्यथात्व-रूपकारणाभावेन तद्ग्राहकसाक्षिणि भ्रान्तित्वादिशङ्काया एवाप्रसरेण तन्निरासानुपपत्तिप्रसङ्गात् । अतो न ज्ञानशब्देन स्वरूपज्ञानस्य ग्रहणम् । किन्तु मानसस्यैव । तस्य च मिथ्यात्वशङ्काऽर्हत्वात् तत्प्रयुक्तायास्तद्ग्राहक-साक्षिणि मिथ्यात्वादिशङ्कायाः प्रसरेण तन्निराकरणस्योपपन्नत्वलाभादिति । **भावरूपमिति ॥** यद्यपि ज्ञाना-भावोऽप्यज्ञानशब्देन ग्रहीतुं शक्यते, तथाऽपि सुखाद्यभावपरतयाऽवश्यं व्याख्येयेनाऽदिशब्देनैव सुखाभावस्येव ज्ञानाभावस्यापि ग्रहणं स्वरसम् । न तु भावसङ्ग्राहकज्ञानसमभिव्याहृताज्ञानशब्देनेति भावेनेदं व्याख्यानमिति द्रष्टव्यम् । बन्धसत्यत्वेनान्यसिद्धिवर्णनस्य प्रकृतेऽसङ्गतिमाशङ्क्य परिहरति- **प्रसङ्गेनेति ॥** साक्ष्यनुभवस्य बाह्यप्रत्यक्षस्य च याथार्थ्यस्य प्रकृतत्वादत इत्यस्य तदुभयपरामर्शकत्वभ्रान्तिं निवारयति- **साक्ष्यनुभवस्य (पां.टि.) यथार्थत्वनियमादित्यर्थ इति ॥** अत एवाऽह- **ज्ञानाज्ञानादिरूपसंसारस्येति ॥** यद्यप्यात्मीय-पुत्रपौत्रादेरपि संसारशब्दार्थत्वं सम्भवति । तथाऽपि 'अनिवृत्त्यङ्गीकारान्न मोक्षः स्यात्' इत्युत्तरग्रन्थानुसारादेवं व्याख्यानम् । पुत्राद्यनुवर्त्यत्वस्य मुक्त्यभावोपपादकत्वाभावादिति ध्येयम् । **बाह्यापेक्षयोक्तमिति ॥** अनुभवपदेन बाह्यस्यापि गृहीतत्वात्तदपेक्षयेत्यर्थः । उभयापेक्षया चेत्कचिद्बलवता साक्षिणा दुर्बलसाक्षिणो बाध इत्युक्तं स्यात् । न च तत्सम्भवति । साक्षिणो याथार्थ्यनियमाङ्गीकारविरोधादिति भावः । नन्वात्मनोऽवेद्यत्वे सत्य-परोक्षव्यवहारयोग्यत्वरूपस्वप्रकाशत्वाङ्गीकारात्कथञ्च साक्षिसिद्धत्वमित्यत आह- **स्वयं प्रकाश एव आत्मे-तीति ॥ उत्तरत्रेति ॥** 'न च स्वेनापि ज्ञेयत्वं तैरुच्यते' इत्यादिनेति शेषः । **शुक्तिरजतादेरिति ॥** यद्यपि शुक्तिरजतादेरवस्तुत्वेन साधनाभावान्न

दृष्टान्तत्वं सम्भवति । तथाऽपि वस्तुत्वादिनेत्यनेनातद्गुणसंविज्ञान-बहुव्रीहिणा ज्ञेयत्वपरिग्रहात्तस्य च शुक्तिरजतादौ सत्त्वान्न साधनवैकल्यमित्यभिप्रेत्येदमुक्तमिति द्रष्टव्यम् । **अत एवेति ॥** तर्कस्य नान्यतररीत्याऽपि व्याप्तिहीनत्वमिति ज्ञापनार्थं 'शून्यवादिमायावादिभ्यां सर्वमिथ्या-त्वाङ्गीकारात्' इत्युक्तमित्यर्थः । **लोपेति ॥** व्यवहारस्य तन्मूलकत्वेनासति तस्मिंस्तदसम्भवादिति भावः । **दृश्यत्वादेरिति ॥** प्रपञ्चमिथ्यात्वसाधकत्वेन त्वदुपन्यस्तदृश्यत्वजडत्वपरिच्छिन्नत्वादेरित्यर्थः । **सत्य-त्वेति ॥** तेषां सत्यत्वे तत्र दृश्यत्वादिवृत्तौ तत्रैवानैकान्त्यस्य, अवृत्तौ चाज्ञानासिद्ध्यादेः प्रसङ्गादिति भावः । **सममिति ॥** यद्यपि शुक्तिरजतादौ न वस्तुत्वम् । तथाऽप्यतद्गुणसंविज्ञानबहुव्रीहिणा पूर्वोक्तज्ञेयत्वहेत्वभिप्रायेणेदं समत्वकथनमिति द्रष्टव्यम् । **तथाभूतमिति ॥** यादृशतादृशमित्यर्थः । **तत्सत्यमिति ॥** ब्रह्मसत्त्वावेदिका श्रुतिरपि व्यावहारिकपरा किन्न स्यादित्यर्थः । ननु 'तत्सत्यम्' इति ब्रह्मसत्यत्वाऽवेदकश्रुतीनामुपक्रमादि-तात्पर्यलिङ्गैस्तत्पारमार्थिकत्वसाधकत्वसिद्धेर्न व्यावहारिकसत्यत्वपरत्वमित्याशङ्क्याऽह- **उपक्रमादीति ॥ न त्विति ॥** आत्मसत्यत्वस्य पारमार्थिकत्वं व्यवस्थापयतीत्यर्थः । अन्यथा कुरूपां शूरश्चोद्दिश्य शतकृत्वः प्रयुक्तस्याहो दर्शनीयेति शूर इति च वाक्यस्य तत्पारमार्थिकत्वसाधकत्वप्रसङ्गादिति भावः ।

**(व्या.टि.)** एतन्न्यायसाम्यं शङ्कते-**नन्वेवमेवेति ॥** निश्चाययिष्यत अवधारयत इत्यर्थः । **प्रतिभासत इति ॥ ज्ञानप्रतिभासतः** ज्ञानानुभवादित्यर्थः । **निश्चिततत्वमिति ॥** अपटुत्वस्येति शेषः । प्रत्यक्षपदेनापरोक्षज्ञान-स्वीकारात्तदनुरोधेन व्याचष्टे- **अयथार्थत्वमिति ॥ व्याघातादीति ॥** आदिपदेनापसिद्धान्तः । विशेषतश्चेति मूलोक्तकैमुत्यहेतुं विवृण्वन्नाशयं प्रकाशयति- **एवमित्यादिना ॥** यथार्थत्वायथार्थत्वे विकल्पौ विरुद्धकोटी यस्याः सा शङ्का तथोक्ता । भावद्वन्द्वलाभायाऽह- **भावरूपमिति ॥** आत्मशब्दो धर्मिपर इत्याह- **ईश्वरादि-त्यादिना ॥** इच्छादीनामित्यादिपदेन द्वेषादिपरिग्रहः । **न दृष्टमितीति ॥** अर्थव्यभिचारव्यवच्छेदेनेत्यर्थः । दूषणभूषणत्वशङ्कानिरासाय प्रवृत्तस्य मोक्षाभावप्रसञ्जने कः प्रसङ्ग इत्यतः प्रसङ्ग एव सङ्गतिरित्याह- **घटादे-रित्यादिना ॥** अत इत्येतच्छब्दपरामृष्टं दर्शयति- **साक्ष्यनुभवस्येति ॥ ज्ञानाज्ञानादिरूपतयेति ॥** द्वन्द्वस्य बन्धकत्वादित्यर्थः । भावसाधनाङ्गीकारपदार्थस्य कर्त्रपेक्षत्वात्तमाह- **मायावादिनेति ॥** प्रसञ्जनफलमाह- **(व्या.टि.) ततश्चेति ॥** साक्षिबोध्यं न बाध्यत इति व्याप्तेर्भङ्गं गिरति- **नन्विति ॥ ऐन्द्रियकत्वादिति ॥** इन्द्रियजन्मत्वादित्यर्थः । प्राग्वहतीये ठकि रूपम्[1] । अन्वयव्यतिरेकयोरन्यथासिद्धिं शङ्कते- **अधिष्ठानेति ॥** अन्यथासिद्धिकल्पिकामनुपपत्तिं कल्पयति- **प्रतीति ॥** किमियमनुपपत्तिरनिर्वचनीयख्यातिनये अभिनवान्यथा-ख्यातिनये वा । नाऽद्य इत्याह- **अनिर्वचनीयख्यातेरिति ॥** द्वितीये त्वाह- **अन्यथाख्यातीति ॥ उपपद्यत इति ॥** सन्निकर्ष इति शेषः । तथा चानुपपत्त्यभावाज्ज्ञानस्यैन्द्रियकत्वं सिद्धमित्यर्थः । 'प्रत्यक्षसिद्धस्य युक्तिमात्रेण बाधे भूतचतुष्टयस्य' इत्यतिप्रसङ्गस्योक्तत्वात्पुनरुक्तिरित्यत आह-**घटादेरित्यानिना ॥ अभीष्टत्वादिति ॥** ततश्चोक्तस्येष्टाऽपादनत्वेन तर्काभासत्वात्पुनरुक्तिर्युक्तेति भावः । **बाह्यापेक्षयेति ॥** साक्षितो बलवतोऽन्यस्या-भावादिति भावः । आपादनसम्भवायाऽपादकं दर्शयति- **तस्यापीति ॥ उत्तरत्रेति ॥** 'न च स्वेन विज्ञेयत्वं तैरुच्यते' इति ग्रन्थ इत्यर्थः । **शेष इति ॥** वाक्यशेष इत्यर्थः । दृष्टान्तमात्रस्यासाधकत्वात्तदुक्त्यभिसंहितहेतु-माह- **वस्तुत्वादिनेति ॥** इतिकरणस्य पूर्वेणान्वयं दर्शयति- **इति युक्तिश्चेति ॥**

वादिनो व्याप्त्यभावेनानुमानासम्भवमाशङ्कते- **नन्विति ॥ शुक्तिरजतादेरिति ॥** रजतत्वादिना प्रतीत-शुक्त्यादेरित्यर्थः । मिथ्यात्वं च रजतत्वाकारेण बोध्यम् । आरोपितरजतग्रहणे तु वास्तववस्तुत्वासम्भवेऽपि वक्ष्यमाणयादृशतादृशवस्तुत्वस्य वा ज्ञेयत्वरूपवस्तुत्वस्य वा वस्तुत्वादिनेत्यतद्गुणसंविज्ञानबहुव्रीहिणोक्तस्य ज्ञेयत्वस्य वा तत्र सत्त्वान्न साधनवैकल्यमित्यवधेयम् । **आपादनादिति ॥** तन्मते व्यभिचाराभावात्तस्यानुमानं युक्तमिति भावः । रीत्यन्तरेण साधनमपि साधयति- **किञ्चेति ॥** परन्यायेनेति वाद्यन्तररीतेरिति चोपष्टम्भके-नोपष्टम्भयति- **अत एवेति ॥** आत्ममिथ्यात्वानुमानं निरसितुमसिद्धिमाशङ्कते- **नन्विति ॥ तदिति ॥** आत्मनो वस्तुत्वव्यवहार इत्यर्थः । प्रतिबन्दीं गृह्णाति- **तर्हीति ॥** व्याघातमाशङ्कते- **वस्तु चेति ॥** समोऽयं दोषस्तवा-पीत्याह- **दृश्यश्चेति ॥ नेतीति ॥** व्याघात इति शेषः । **सममिति ॥** वस्तुत्वमिथ्यात्वयोरपि तत्र सहदर्शनमि-त्यर्थः । **तथेति ॥** वास्तवं नास्तीत्यर्थः । **यादृशतादृशमिति ॥** व्यावहारिकमित्यर्थः । **तत्र** शुक्तिरजतादौ । **तथाभूतमिति ॥** दृश्यत्वसदृशमित्यर्थः । **अनुमानमिति ॥** आत्ममिथ्यात्वानुमानमित्यर्थः । **श्रुतिः** विश्वं सत्यमित्यादिका । **अन्याऽपीति ॥** तत्सत्यमित्यादिकेत्यर्थः । आत्ममिथ्यात्व उपक्रमादितात्पर्यलिङ्गविरोध-माशङ्क्याऽन्यथासिद्धिमाह- **उपक्रमादीति ॥** ज्ञापयन्तीति शत्रन्तम् । **किञ्चेति ॥** अन्यद्वेत्यर्थः । **श्रुतिः** आत्मसत्यत्वपरा । वैषम्यमाशङ्कते- **युक्तिरिति ॥** दुस्तरां प्रतिबन्दितरङ्गिणीं बध्नाति- **तर्हीति ॥**

अविद्यामूलेति हेतुगर्भम् । कथम् आक्षेपे । आत्ममिथ्यात्वानुमाने साध्यं विकल्प्य दूषयति- **असत्त्वश्चेदिति ।।** दृष्टान्तस्य शुक्तिरजतादेरित्यर्थः । **शून्यवादिन इति ।।** तस्यासत्त्ववादित्वादित्यर्थः । **अदोष इति ।।** उभयदोषाभाव इत्यर्थः । **केनचिदिति ।।** वैतण्डिकेनेत्यर्थः । **किमुत्तरमिति ।।** तस्यानिर्वचनीयप्रसिद्ध्या साध्यवैकल्याप्रसिद्ध-विशेषणत्वयोरभावान्निरुत्तरमात्ममिथ्यात्वसाधनमित्यर्थः ।

**मूलम्- आत्माधिष्ठानभ्रमस्यैवादृष्टेस्तस्याधिष्ठानत्वमपि न युज्यते । दुर्घटत्वस्य च भूषणत्वे दुर्घटमप्यात्ममिथ्यात्वं स्यादेव । प्रतीतेरप्यविद्याकार्यत्वाङ्गीकारात् । तस्याश्च दुर्घटत्वस्य भूषणत्वात्सत्यस्य च युक्त्यपेक्षत्वाद् घटादीनां द्रष्टृत्वमात्मनश्च जडत्वं, द्रष्टुरभावे च प्रतीतिः, अधिष्ठानं विनैव भ्रम इत्यादि विरुद्धं सर्वमपि स्यात् ।।**

**(त.मं.)** ननु मिथ्यावस्तुनो हि दुर्घटत्वं भूषणम् । न सत्यस्याऽत्मनः । तस्मात् कथमात्मनो मिथ्यात्वमिति । सत्यम् । आत्मनो मिथ्यात्वधर्मस्य मिथ्यावस्तुत्वात् । दुर्घटत्वाच्च । सत्यस्य च युक्त्यपेक्षत्वात् । घटादीनां **द्रष्टृत्वं** प्रतीतिमत्त्वमापाद्यते । (ताव--?) तत्र दुर्घटत्वमस्ति । युक्तिश्च नास्तीति विरोधः । विषयापेक्षा प्रतीतिरविद्यामयीति ह्यभ्युपगच्छन्ति । विषयनिरपेक्षा तर्हि शिलावत् प्रतीतिरेव न स्यात् । अविद्यायाश्च दुर्घटत्वस्य भूषणत्वात् । सत्यस्यैव युक्त्यपेक्षत्वात् । आत्मनस्तु घटादिविलक्षणत्वाङ्गीकारात् जडत्वं स्यात् । आत्मनो जडत्वे द्रष्टुरभाव एवेति चेत्, स्यात् द्रष्ट्रभावेऽपि प्रतीतिः । जगद्भ्रमान्यथाऽनुपपत्त्या अधिष्ठानत्वेनात्माऽभ्युपगम्यत इति चेत् । मैवम् । अविद्या-त्वादधिष्ठानं विना भ्रमः स्यात् । आदिशब्दात् भ्रमस्य ज्ञानान्निवृत्तिरपि न स्यात् ।

**टीका-** नन्वात्मनो मिथ्यात्वं साधयताऽऽत्मनोऽन्यस्य सर्वस्य मिथ्यात्वमङ्गीकार्यम् । अन्यथा वस्तुत्वादेस्तत्र व्यभिचारापत्तेः । मिथ्यात्वे कथं प्रतीतिरिति पृष्टेन भ्रम इति वक्तव्यम् । तत्र भ्रमे चाऽत्मन एवाधिष्ठानत्वं स्वीकार्यम् । तस्यापि मिथ्यात्वेऽधिष्ठानान्तरकल्पनया अनवस्था स्यात् । तत्परिहारार्थमन्ततो यस्य सत्यत्वमभ्युपगम्यते स एवात्मेति सर्वथाऽऽत्मनः सत्यत्वेऽ-भ्युपगन्तव्ये कथं तन्मिथ्यात्वमनुमीयत इति चेदुच्यते- किं यो भ्रमः स सर्वोऽपि आत्माधिष्ठानक इति व्याप्तेः विश्वभ्रमस्याऽत्माऽधिष्ठानत्वेन स्वीकार्यः, किं वा यो भ्रमः स साधिष्ठानः न चाऽत्मातिरिक्तं तदस्तीति सामान्यसिद्धिपरिशेषाभ्याम् । आद्यं दूषयति- **आत्मेति ।।** दृष्टान्ताभावेन व्याप्त्यसिद्धेः विश्वभ्रमे नाऽत्मनोऽधिष्ठानत्वं युज्यत इत्यर्थः । न द्वितीयः । सर्वभ्रमाणां शून्यवादिना निरधिष्ठानत्वेनाङ्गीकृतत्वात्तं प्रति व्याप्त्यसिद्धेः । तदिदमुक्तमपिशब्देन । अथ वा दूषणान्तर-समीकरणेऽपिशब्दः । तच्चोक्तं पुरस्तात् ।

यत एवमनुभवसिद्धस्यापि विश्वस्यानुमानेन मिथ्यात्वसाधने सत्यत्वेनाभिमतस्याप्यात्मनो मिथ्यात्वं प्रसज्येत । अतः परेणाप्यनुभव एवानुमानस्य बाधकः, जात्या धर्म्यादिग्राहकत्वेन प्रामाण्यग्राहकत्वेन चोपजीव्यतया च प्राबल्यात्, न त्वनुमानमनुभवस्य बाधकं, दुर्बलत्वादिति वक्तव्यम् । तत्समं प्रकृतेऽपीति नानुमानेन विश्वमिथ्यात्वसिद्धिः । ज्ञानाद् बन्धनिवृत्तिस्त्व-सिद्धैवेत्यन्यत्रोक्तम् ।

यो लौकिकीं मर्यादामनतिक्रम्य वर्तते तं प्रति पृथिव्या अपि पृथिवीत्वं न स्यादित्यतिप्रसङ्ग उक्तः । यस्तु लोकमर्यादामप्यतिक्रम्य वैतालिकत्वमवलम्ब्य वर्तते तं प्रत्ययमिति ज्ञातव्यम् ।

एवमुपाध्यादेः प्रपञ्चस्य मिथ्यात्वाभावादन्योन्याश्रयत्वादिकं भूषणमिति वक्तुं न शक्य-मित्युक्तम् । अथाप्रामाणिकं प्रमाणविरुद्धमपि विश्वमिथ्यात्वमङ्गीकृत्य दूषणमपि भूषण-त्वेनाङ्गीकुर्वाणस्यातिप्रसङ्गमाह- **दुर्घटत्वस्येति ।।** अङ्गीकारानर्हस्याप्यन्योन्याश्रयत्वादि-दुष्टत्वस्येत्यर्थः । आत्मनोऽपि मिथ्यात्वमङ्गीकृत्य तत्र यद् दूषणमापतति तत्सर्वं भूषणत्वे-नाङ्गीकर्तव्यमित्यर्थः । एतदेव प्रपञ्चयति- **प्रतीतेरपीति ।।**

अयमर्थः- विश्वस्येवाऽत्मनोऽपि मिथ्यात्वं तावदङ्गीकार्यम् । तत्र दूषणमापतति । घटा-दयस्तावदारोपिताः । आरोपरूपायाश्च प्रतीतेः प्रत्येत्रा भवितव्यम् ।तत्राऽत्मनो मिथ्यात्वे प्रतीतेरसाक्षिकत्वं प्रसज्येत । न च क्रिया कर्तृरहिता युक्ता । किञ्चाऽरोपस्याधिष्ठानवत्त्व-नियमाद्धटाद्यारोपेऽधिष्ठानेन भाव्यम् । आत्मा चेन्मिथ्या तदा निरधिष्ठानो भ्रमः प्रसज्येत । न च तद्युक्तम् । इदमित्थमिति सर्वत्र भ्रमे व्यंशताप्रतीतेः । अपि च भ्रमस्य बाधेन भवितव्यम् । बाधश्च सर्वत्र सावधिको दृष्टः । ततश्चाऽत्मनो मिथ्यात्वे प्रपञ्चबाधो निरवधिकः प्रसज्येत । न च तद्यु-ज्यते । इदमेवं न तथेति सर्वबाधानां सावधिकत्वदर्शनादिति । तत्र परेण वक्तव्यम् । आत्मनो जडत्वं प्रतीतिं प्रति कर्तृत्वाभाव एव । किन्त्वारोपितानां घटादीनामेव द्रष्टृत्वमारोपसाक्षित्व-मिति । अथवा प्रतीतेः प्रत्येतृसाहित्यनियमममङ्गीकृत्येदमुक्तम् । वस्तुतस्तु द्रष्टुरभावेऽप्यारोपरूपा प्रतीतिः भवतीति वक्तव्यम् । द्वितीयदूषणेऽधिष्ठानं विनैव भ्रमोऽयमिति वाच्यम् । तृतीयदूषणे निरवधिक एवायं बाधो भवतीति वक्तव्यम् । नन्वेतत्सर्वं प्रतीत्यादिविरुद्धं कथमङ्गीक्रियत इति वदन्तं प्रति विरुद्धमपि सर्वं भवत्विति वक्तव्यं स्यादङ्गीकार्यमिति शेषः । कथमेतत्सर्वमङ्गीकार्यमिति चेदारोप्यवदारोपरूपायाः प्रतीतेरप्यविद्यामयत्वाङ्गीकारात् । साक्षिरूपत्वेऽपि अविद्यां विनाऽ-सङ्गत्वेन आरोप्यसम्बन्धानुपपत्तेः । अविद्यामय्याश्च प्रतीतेर्दुर्घटत्वस्य **भूषणत्वात्** मिथ्यात्व-स्योपोद्बलकत्वात् । तथाऽपि निष्प्रमाणकं कथमेतत्सर्वमङ्गीकार्यमिति चेन्न । सत्यस्यैव **युक्त्यपेक्ष-त्वात्** प्रमाणापेक्षत्वात् । मिथ्याभूतस्य प्रमाणापेक्षत्वे मिथ्यात्वहानेः । तन्मिथ्यात्वस्यापि मिथ्या-त्वाङ्गीकारादिति । यत एवं प्रमाणसिद्धस्यापि प्रपञ्चस्य मिथ्यात्वमङ्गीकृत्य प्राप्तदूषणानि भूषणत्वेनाङ्गीकुर्वतोऽतिप्रसङ्गः, तस्मादात्मवत्सत्यत्वमेवाङ्गीकर्तव्यम् । किमनेन साधन-दूषणोपन्यासपरिहाराभ्यां कियन्तमध्वानं गत्वा ततः परं दूषणपरिहारासामर्थ्ये सति उपहासविषयेण भूषणत्वाङ्गीकारेणेति । अथवाऽऽत्ममिथ्यात्वं स्यादेवेत्येकोऽतिप्रसङ्गः । तत्र श्रुतिविरोधादिकं दौर्घट्यं घटादीनां द्रष्टृत्वमित्यादिकमतिप्रसङ्गान्तरमिति बोद्धव्यम् ॥

(र.टि.) **तदिदमुक्तमपिशब्देनेति ॥** अनेनाऽत्मनोऽपीत्यपिशब्दसम्बन्धः सूचितो भवति । **अथ वेति ॥** अनेन युज्यतेऽपीत्यपिशब्दसम्बन्धो ज्ञापितो भवति । **पुरस्तादिति ॥** 'न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः' इत्यत्रेत्यर्थः । **ज्ञानाद् बन्धनिवृत्तिस्त्वसिद्धैवेति ॥** तथा चानुमानादिनैवेत्यादिपदोक्तार्थापत्तिर्न विश्वसत्य-त्वावगाहिप्रत्यक्षस्य बाधिका भवतीति भावः । नन्वनुभवसिद्धस्यैवेत्यादिनैवालम् । किं तर्कमात्रत इत्यादिनेत्यत(त्र)आह- **यो लौकिकी मितिं ॥ अङ्गीकारानर्हस्यापीति ॥** अनेन दुर्घटमपीत्यपिपदाभिप्राय उक्तो भवति । नन्वात्मनो मिथ्यात्वे जगदारोपं प्रति साक्षित्वाभाव एव प्राप्तो न जडत्वमित्यतो जडत्वमित्येतद् व्याचष्टे- **प्रतीतिं प्रति साक्षित्वाभाव एवेति ॥** अनेन चशब्दोऽवधारणार्थः सन् जडत्वं चेति सम्बध्यत इत्युक्तं भवति । ननु जगदारोपे घटादीनां साक्षित्वस्योक्तत्वात् 'द्रष्टुरभावेऽपि प्रतीतिः' इत्येतत्पूर्वविरुद्धमित्यतः पक्षान्तरप्रदर्शकत्वेन तद्याचष्टे- **अथवेति ॥ निरवधिक एवायमिति ॥** अनेन इत्यादीत्यादिपदं व्याख्यातं भवति । एतदनुरोधेनैव प्राग् अपि चेत्याद्युक्तमिति ज्ञातव्यम् । **आरोप्यवदिति ॥** अनेन प्रतीतेरपि इत्यपि-पदमुक्ततात्पर्यं भवति । ननु मिथ्याभूतस्य प्रपञ्चस्य प्रमाणानपेक्षत्वेऽपि तन्मिथ्यात्वस्य प्रमाणेनोपपादनीयत्वात्कथं घटादीनां द्रष्टृत्वमित्यादिदोषः । तद्दोषापरिहारे प्रपञ्चमिथ्यात्वासिद्धेरित्यत आह- **तन्मिथ्यात्वस्यापीति ॥ अथ वाऽऽत्ममिथ्यात्वमिति ॥** अनेन सर्वमपीत्यपिशब्दो यथाश्रुत एव दाढर्यादिसमुच्चायक इत्युक्तं भवति । पूर्वव्याख्याने तु इत्यादिकमपीत्यन्वितः सन् घटादिद्रष्टृत्वसमुच्चायक इति ज्ञातव्यम् ।

(रा.टि.) आत्मान्यसर्वमिथ्यात्वाभ्युपगमान्यथाऽनुपपत्तिरूपतर्कपराहतमात्ममिथ्यात्वानुमानमिति शङ्कते- **नन्वात्मन इत्यादिना ॥ कथं प्रतीतिरिति ॥** आत्मान्यस्य मिथ्यात्व इत्यनुषङ्गः । **भ्रम इतीति ॥** प्रतीति-रित्यनुषङ्गः । **तत्र भ्रमे चेति ॥** आत्मान्यस्य सर्वस्य भ्रमे चेत्यर्थः । उक्तसमुच्चयानुपलम्भात्सर्वभ्रमाणां निरधिष्ठानत्वस्य शून्यवादिनोपगमादपीत्यनुक्तसमुच्चय इति भावेनाऽह- **तदिदमुक्तमपिशब्देनेति ॥** अपि न युज्यते न युज्यतेऽपीत्यन्वयमुपेत्याऽह- **अथ वेति ॥ पुरस्तादिति ॥** 'न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः' इत्यादिना विरुद्धधर्मवत्त्वेन प्रतीतस्य नाधिष्ठानादिभाव इति प्रागुक्तत्वादिति भावः । 'न च प्रत्यक्षदृष्टस्य ततो **(रा.टि.)** बलवत्प्रत्यक्षम्' इत्यादिना उक्तम्, तथा 'अनुभवसिद्धस्य ततो बलवदनुभवं विना' इत्यादिनोक्त-मुपसंहरन् तस्योपयोगमाह- **यत एवमनुभवसिद्धस्येति ॥** नन्वनुमानेन विश्वमिथ्यात्वासिद्धावपि भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रूयते, तदन्यथाऽनुपपत्त्याऽस्तु

मिथ्यात्वसिद्धिरित्यत आह- **ज्ञानादिति ।। अन्यत्रोक्त-मिति ।।**

'नर्ते त्वत्क्रियते किञ्चिदित्यादेर्न हरिं विना ।
ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित्'

इत्यनुव्याख्यानसुधयोरित्यर्थः । तथा च प्राक् 'अनुमानादिनैव बाधो दृष्टः' इत्यादिपदगृहीतार्थापत्तिरपि न विश्वसत्यत्वप्रत्यक्षबाधिकेत्युक्तं भवति ।

ननु पूर्वं 'तर्कमात्रतः प्रत्यक्षबाधने भूतचतुष्टयस्य पृथिवीत्वादृष्टेः' इत्यादिनैवास्यार्थस्योक्तेः पुनरत्रानुभव-सिद्धस्येत्यादिनाऽतिप्रसङ्गान्तरोक्तिः किमर्थेत्यत आह- **यो लौकिकीमिति ।। वैतालिकत्वं** वितण्डावादित्वम्, परोक्तखण्डनमात्रकारित्वमालम्ब्येत्यर्थः । **तं प्रत्ययमिति ।।** अनुभवसिद्धस्येत्यादिनाऽतिप्रसङ्ग इत्यर्थः । उत्तरवाक्यं सङ्गमयितुमाह- **एवमुपाध्यादेरिति ।। अन्योन्याश्रयत्वादीति ।।** अज्ञानसिद्धावित्यादिनोक्तेति भावः । अस्फुटत्वादाह- **अयमर्थ इति ।। इदमिति ।। इदं** शुक्त्यादिकम् । **इत्थं** रजतत्वादिप्रकारोपेतम् इत्यधि-ष्ठानाध्यस्तरूपद्व्यंशतेत्यर्थः । **एवमिति ।।** शुक्तित्वादिप्रकारोपेतम् । **न तथा** रजतत्वादिप्रकारोपेतं नेत्यर्थः । जडत्वमित्यनुवादः, प्रतीतिं प्रति कर्तृत्वाभाव एवेति व्याख्या । द्रष्टृत्वमित्यनुवादः, आरोपसाक्षित्वमिति व्याख्या । वाक्यशेषस्यार्थमाह- **अथ वेति ।। द्वितीयदूषण इति ।।** आत्मा चेन्मिथ्या तदा निरधिष्ठानो भ्रमः प्रसज्येतेति दूषण इत्यर्थः । **तृतीय इति ।।** प्रपञ्चबाधो निरवधिक इति प्रसज्येतेति दूषण इत्यर्थः । प्रतीते-रित्यादिपूर्ववाक्यं योजयति- **आरोप्यवदित्यादिना ।।** अनेन प्रतीतेरपीत्यपिपदार्थो व्यक्तीकृतो भवति । **साक्षिरूपत्वेऽपीति ।।** प्रतीतेरित्यनुषङ्गः । चैतन्यज्ञानरूपत्वेऽपीत्यर्थः । **आरोप्यसम्बन्धानुपपत्तेरिति ।।** अतोऽविद्यामयत्वमुपेयमिति भावः । ततः किमित्यत आह- **अविद्यामय्याश्चेति ।।** भूषणत्वादित्यनुवादः, मिथ्यात्वस्योपोद्बलकत्वादिति व्याख्या । युक्तिपदमुपलक्षणमिति भावेनोक्तम्- **प्रमाणापेक्षत्वादिति ।।** मिथ्याभूतप्रपञ्चस्य प्रमाणानपेक्षत्वेऽपि तन्मिथ्यात्वं प्रमाणापेक्षितमित्यत आह- **तन्मिथ्यात्वस्यापीति ।।** एकप्रसङ्गपरतया प्राग्योजितम् । अधुना प्रसङ्गभेदपरतया योजनामाह- **अथ वेति ।।** व्याख्यानं तु प्राग्वदेवेति भावः ।

**(श्री.टि.)** यो भ्रमः स साधिष्ठान इति सामान्यसिद्धिः । न चाऽत्मातिरिक्तं तदस्तीति परिशेषः । **तदिदमुक्त-मिति ।।** सामान्यसिद्धिपरिशेषाभ्यां विश्वभ्रमस्याऽत्माधिष्ठानकत्वमिति द्वितीयपक्षदूषणमपिशब्देनोक्तमि-त्यर्थः । **दूषणान्तरेति ।।** आत्ममिथ्यात्वानुमाने । नन्वात्मनो वस्तुत्वादिधर्मानङ्गीकारादसिद्धो हेतुरित्यादि **(श्री.टि.)** यद्दूषणं त्वयाऽभिधीयते तस्य सर्वस्य विश्वमिथ्यात्वानुमानेऽपि समीकरणसमुच्चयेऽपिशब्द इत्यर्थः। **तच्चेति ।।** समीकरणं च, 'तर्हि दृश्यत्वादेरपि सत्यत्वाभावादसिद्धिः स्यात्' इत्यादिना पुरस्तादस्माभिः प्रदर्शित-मित्यर्थः । पुरस्तात् 'न चाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः' इत्यत्रोक्तमित्यर्थ इति भावबोधे व्याख्यातम् । **परेणा-पीति ।।** वक्तव्यमिति सम्बन्धः । **अनुभव एवेति ।।** आत्मस्वरूपसत्यताग्राही साक्षिरूपानुभव एवेत्यर्थः । **अनुमानस्य** आत्ममिथ्यात्वानुमानस्य । **प्रामाण्येति ।।** अनुमानप्रामाण्येत्यर्थः । **प्रकृतेऽपीति ।।** ज्ञानाज्ञान-सुखदुःखादिविषयकानुभवेऽपीत्यर्थः । सत्यं प्रत्यक्षदृष्टस्य मिथ्यात्वकल्पनं बाधकप्रमाणाधीनमिति । तथाऽप्युपपद्यते जगतो मिथ्यात्वकल्पनम् । दृश्यत्वाद्यनुमानस्य, ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तेश्च बाधकस्य सत्त्वादिति प्राक् शङ्कितम् । तत्रानुमानं दूषयित्वोपसंहरति- **नानुमानेन विश्वमिथ्यात्वसिद्धिरिति ।।** ननु तथापि ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिरेव विश्वसत्यत्वावगाहिप्रत्यक्षस्य बाधिका भविष्यतीत्यत आह- **ज्ञानाद् बन्धनिवृत्तिस्त्विति ।।** या प्राक् 'अनुमानादिनैव बाधो न दृष्टः' इत्यत्राऽदिपदगृहीतेत्यर्थः । **असिद्धैवेति ।।** स्यादेवं यदि विश्वस्य ज्ञाननिवर्त्यत्वं स्यात्, न चैवं, किं नाम प्रसादनिवर्त्यत्वमेव । 'यस्य प्रसादात्परमार्ति-रूपादस्मात्संसारान्मुच्यते नापरेण' इति श्रुतेः । किं च 'बन्धको भवपाशेन भवपाशाच्च मोचकः' इति श्रुतौ भगवतो बन्धनिवृत्तिसाधनत्वं तावच्छ्रूयते । साधनं च द्विविधम् । सिद्धमसिद्धं चेति । तत्र सिद्धं सव्यापारीकरणी-यम् । यथा कुठारादि । असिद्धं प्रयत्नोत्पाद्यम् । यथा यागादि । सिद्धं च साधनं भगवान्, अतः स सव्यापारीकर-णीयः । व्यापारश्च प्रसन्नतैव । व्यापारिव्यापारप्राधान्यविवक्षया 'भवपाशाच्च मोचकः' 'यस्य प्रसादाद्' इति वाक्यद्वयमप्युपपद्यते । तच्च ज्ञाननिवर्त्यत्वं सत्यस्यापि निगडबन्धादेरिव सम्भवतीत्येवं

'यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृत् ।
एवं दृष्टस्स भगवान् कुर्याद्बन्धविभेदनम् ।।'

इत्यनुव्याख्याने उक्तमित्यर्थः । प्रत्यक्षसिद्धस्य बलवता प्रत्यक्षादिना विना युक्तिमात्रेण बाधो नास्तीति प्रतिपादितम् । तत्र

विपक्षे बाधकाकाङ्क्षायां भूतचतुष्टयस्येत्यादिना बाधकं प्रागुक्तम् । तत्र पृथिव्याः पृथिवी-त्वाभावादेः सर्वमिथ्यात्ववादिनोऽभीष्टत्वादितीष्टापत्तौ चोदितायामनुभवसिद्धस्य बलवदनुभवं विनेत्यादिना प्रत्यक्षसिद्धस्य युक्तिमात्रेण बाधाङ्गीकारे आत्मनोऽपि मिथ्यात्वं स्यादित्यतिप्रसङ्गान्तरमुक्तम् । तत्र अनेनै-वातिप्रसङ्गेनालं, किं 'तर्कमात्रतः' इत्यादिनोक्तेन प्राचीनातिप्रसङ्गेनेत्यत आह- **यो लौकिकीमिति ॥ वैतालिकत्वमिति ॥** वेतालः पिशाचः । तत्समानधर्मवत्त्वं वैतालिकत्वमित्यर्थः । अन्यथा लोकमर्यादानतिक्रमेण वैतालिकत्वानालम्बने पृथिव्याः पृथिवीत्वाभावादेरिष्टत्वादिति कथमाशङ्केतेति भावः । **अयमिति ॥** अनुभवसिद्धस्येत्यनेनोक्तमात्ममिथ्यात्वरूप इत्यर्थः । दुर्घटत्वस्य चेत्यत्र चशब्दोऽप्यर्थः, स च गर्हायाम् । 'अपिःपदार्थ' इत्यादिसूत्रात् । अतस्तदभिप्रायमाह- **अङ्गीकारानर्हस्यापीति ॥** आत्मनो मिथ्यात्वाङ्गीकारे आपतितं दूषणमेव दर्शयति- **घटादय इत्यादिना ॥ असाक्षित्वम्** असाक्षिकत्वम् । अत्र साक्षिशब्दः प्रत्येतृ-**(श्री.टि.)** परः । इष्टापत्तिं परिहरति- **न च क्रियेति ॥ क्रिया** प्रतीतिरूपा । **व्यंशतेति ॥** अधिष्ठानारोप्य-रूपव्यंशतेत्यर्थः । **अवधिः** पर्यन्तः । **इदं** पुरोवर्ति । **एवं** शुक्तिरेव । **तथा** रजताकारेण नेत्यर्थः । **दर्शना-दिति** । दूषणमापततीत्यन्वयः । **कर्तृत्वाभावः** अप्रमातृत्वमित्यर्थः । एवेत्युक्त्या आत्मनश्चेति चशब्दोऽव-धारणार्थ इत्युक्तं भवति । **इदमुक्तं** घटादीनां द्रष्टृत्वमित्युक्तम् । इत्यादीत्यादिपदं व्याख्याति- **निरवधिक एवायमिति ॥** एतदनुरोधेनैव प्रागपि च भ्रमस्येत्याद्युक्तमित्यवगन्तव्यम् । सर्वमपीत्यत्रापिशब्दस्य विरुद्ध-पदेनान्वय इत्याह- **विरुद्धमपीति ॥**

ननु सर्वं भवत्विति वक्तव्यमित्येतन्मूले कथं लब्धमित्यतः स्यादित्यनन्तरमङ्गीकार्यमिति शेषपूरणेने-त्याशयेनाऽह- **स्यादिति ॥** प्रतीतेरपीत्यपिशब्दाभिप्रायमाह- **आरोप्यवदिति ॥** अर्थज्ञानात्मकोभय-विधभ्रमाङ्गीकारादिति भावः । नन्वारोपरूपायाः प्रतीतेः साक्षिरूपत्वाङ्गीकारान्नाविद्यामयत्वमित्यत आह- **साक्षिरूपत्वेऽपीति ॥** नन्वविद्यां विना कुतः साक्षिण आरोप्यसम्बन्धानुपपत्तिरित्यतस्तत्र हेतुरुक्तोऽसङ्गत्वे-नेति । साक्षिण इति शेषः । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेरित्यर्थः । तथा चाविद्यामयत्वमेव प्राप्तप्रायमिति भावः । ततः किमित्यत आह- **अविद्यामय्याश्चेति ॥** भूषणत्वादित्यस्यार्थमाह- **मिथ्यात्वस्येति ॥** मिथ्या-त्वोपपादकत्वादित्यर्थः । **मिथ्यात्वहानेरिति ॥** मिथ्याभूतस्य प्रमाणापेक्षत्वे प्रामाणिकत्वप्राप्त्या मिथ्यात्व-हानेरित्यर्थः । ननु मिथ्यात्वहानिभिया मिथ्याभूतस्य प्रपञ्चस्य प्रमाणानपेक्षत्वेऽपि प्रपञ्चनिष्ठं यन्मिथ्यात्वं तत्तावत्प्रमाणेनोपपादनीयमेव । तथा चाधिष्ठानं विना भ्रमः द्रष्टृभावेऽप्यारोपरूपा प्रतीतिः स्यादित्यादिरूपो दोषः परिहर्तव्य एव । अन्यथा द्रष्टारमधिष्ठानं च विना भ्रमाद्यङ्गीकारे प्रपञ्चे मिथ्यात्वस्य प्रमाणेनोप-पादयितुमशक्यत्वेन तदसिद्धिप्रसङ्गादित्यत आह- **तन्मिथ्यात्वस्यापीति ॥** स्यादिदं प्रपञ्चमिथ्यात्वस्य प्रमाणेनोपपादनीयत्वं यदि च प्रपञ्चनिष्ठं मिथ्यात्वं सत्यं स्यात्, न चैवम् । तस्य ब्रह्मभिन्नत्वेऽद्वैतहानेः । नापि ब्रह्ममात्रम् । सोपाधिकनिरुपाधिकयोरैक्यायोगात् । अतस्तन्मिथ्याभूतमेवेत्यङ्गीकृतमिति न तत्प्रमाणेनोप-पादनीयमिति न द्रष्टृभावेऽपि प्रतीतिरित्यादिदोषः परिहर्तव्य इति भावः । किमनेन भूषणत्वाङ्गीकारेणेत्य-न्वयः । पूर्वं घटादीनां द्रष्टृत्वमित्यादिकं पूर्वोक्तार्थप्रपञ्चनपरमिति व्याख्यायेदानीं प्रकारान्तरेण व्याख्याति- **अथ वेति ॥** एकोऽतिप्रसङ्ग इति अप्रामाणिकं प्रमाणविरुद्धमपि विश्वमिथात्वमङ्गीकृत्य दूषणमपि भूषणत्वे-नाङ्गीकुर्वाणस्य दुर्घटमप्यात्ममिथ्यात्वं स्यादित्येकोऽतिप्रसङ्ग उक्त इत्यर्थः । ननु तत्राऽत्ममिथ्यात्वस्य दुर्घटत्वं नाम कीदृशमित्यत आह- **तत्रेति ॥** तथा च दुर्घटमपीत्यस्य 'तत्सत्यं स आत्मा' इति श्रुतिविरोधादिना दुर्घटमपीत्यर्थो द्रष्टव्यः । **घटादीनामिति ॥** दूषणमपि भूषणत्वेनाङ्गीकुर्वाणस्यैव घटादीनां द्रष्टृत्व-मित्यादिनाऽतिप्रसङ्गान्तरमुच्यते इत्यर्थः ।

**(पां.टि.) तदिदमिति ॥** अनेनाऽत्मनोऽपीत्यपिशब्दसम्बन्धः सूचितो भवति । **अथ वेति ॥** अनेन युज्यतेऽपीत्यपिशब्दसम्बन्धो दर्शितो भवति । किं तद् दूषणान्तरं यत्समीकरणेऽपिशब्द इत्यत आह-**तच्चेति ॥ (पां.टि.) पुरस्तादिति ॥** 'नचाऽत्मन्यनात्मभ्रमः क्वापि दृष्टः' इत्यादिनेति शेषः । नन्वेवमप्यनु-मानादिनेत्यादिपदसङ्गृहीता ज्ञानाद्बन्धनिवृत्त्यन्यथाऽनुपपत्तिर्विश्वसत्यत्वग्राहकप्रत्यक्षस्य बाधिका स्यादेवेत्यत आह- **ज्ञानादिति ॥** न ज्ञानमात्राद्बन्धनिवृत्तिः, किन्तु तज्जन्यभगवत्प्रसादादेवेति अन्यत्र समर्थितत्वान्न साऽपि तद्बाधिकेति भावः । नन्वनुभवसिद्धस्येत्युक्तप्रसङ्गेनैव पूर्तेः किं 'तर्कमात्रतः' इति पूर्वग्रन्थोक्तप्रसङ्गेनेत्यत आह- **य इति ॥ तं प्रत्ययमिति ॥** प्रत्यगात्मनोऽपि मिथ्यात्वं स्यादित्ययं प्रसङ्ग इत्यर्थः । **अङ्गीकारानर्हस्या-पीति ॥** अनेन दुर्घटत्वस्य चेति चशब्दस्याप्यर्थस्याभिप्राय उक्तो भवति । **आत्मनोऽपीति ॥** अनेन दुर्घट-मपीत्यपिपदस्य सम्बन्धो दर्शितो भवति । आपतितदूषणमेव दर्शयति-**घटादयस्तावदिति ॥** इष्टापत्तिमाशङ्क्य परिहरति- **न च क्रियेति ॥** तस्याः सकर्तृकत्वनियमादिति भावः । **सावधिक इति ॥** साधिष्ठानक इत्यर्थः । **इदमेवमिति ॥ इदं** शुक्त्यादिकम्, **एवं** रजतादिकमित्यर्थः । नन्वेकस्य विरुद्धस्याङ्गीकारे

विरुद्धान्तराङ्गीकार-स्यैवाऽपादनीयत्वात्कथं विरुद्धं स्यादित्यापादनमित्यतो विरुद्धान्तराङ्गीकारस्यैवाऽपादनीयतयाऽभिप्रेतत्वान्नानुपपत्तिरिति भावेनानुरूपशेषपूरणेन तदुपपादयति-**स्यादङ्गीकार्यमिति शेष इति** ॥ स्यादित्यतः पूर्वमङ्गीकार्यमिति शेषः पूरणीय इत्यर्थः । प्रतीतेरपीत्यपिपदस्याऽरोप्यसमुच्चयार्थत्वमभिप्रेत्याऽह- **आरोप्य-वदिति** ॥ ननु मिथ्यात्वहानिभिया मिथ्याभूतस्य प्रपञ्चस्य प्रमाणानपेक्षत्वेऽपि तन्मिथ्यात्वस्य प्रमाणेनोप-पादनीयत्वाद् द्रष्टुरभावे कथं तन्मिथ्यात्वसिद्धिरित्यत आह- **तन्मिथ्यात्वस्यापीति** ॥ अस्मिन्पक्षे दुर्घटत्व-मपीत्यस्य घटादीनामित्युत्तरग्रन्थस्य च प्रपञ्च्यप्रपञ्चकभावाश्रयणं कर्तव्यं भवति । तथेत्याद्यपीत्यन्वितस्य सतोऽपिशब्दस्य घटादिद्रष्टृत्वसमुच्चायकत्वं चाऽश्रयणीयं भवतीत्यपरितोषात्पक्षान्तरमाह- **अथ वेति** ॥ अत्र च यथाश्रुतस्यैव दौर्घट्यादिसमुच्चायकत्वान्नोक्तकुसृष्ट्याश्रयणप्रसङ्ग इति भावः ।

**(व्या.टि.)** भ्रमाधिष्ठानत्वेनाऽत्मसत्यत्वानुमानमभिसन्धायाऽत्ममिथ्यात्वानुमानं दूषयितुमुपक्रमते- **नन्वित्यादिना** ॥ आत्ममिथ्यात्वेऽन्यमिथ्यात्वस्याप्रयोजकत्वात्कुतस्तस्याङ्गीकार इत्यत आह- **अन्य-थेति** ॥ **तत्रेति** ॥ सत्यत्वेनाभिमतेऽन्यस्मिन् । मिथ्यात्वे । अन्यस्येति शेषः । अधिष्ठानत्वेऽपि सत्यत्वं कुत इत्यत आह- **तस्यापीति** ॥ अधिष्ठानस्य सत्यत्वेऽप्यात्मनः किमायातमित्यत उक्तम्- **स एवेति** ॥ किमात्माधिष्ठानत्वं विशेषानुमानेनोत परिशेषानुमानेनेति विकल्पं हृद्यवरुध्य पृच्छति- **किमिति** ॥ अदृष्टेरिति पञ्चम्युक्तं हेतुत्वं दर्शयति- **दृष्टान्ताभावेनेति** ॥ **अपिशब्देनेति** ॥ शून्यवादिनं प्रति यो भ्रमः स साधिष्ठान इति व्याप्त्यसिद्ध्या सामान्यसिद्ध्यभावात्परिशेषोऽपि न युज्यत इत्यर्थः । **दूषणान्तरसमीकरण इति** ॥ एतस्यैतद्दोषस्य दूषणान्तरस्यात्र प्राप्त्या समीकरणे वर्तते । एतदिव तदप्यत्र प्राप्नोतीत्यर्थः । तत्किमित्यत आह- **उक्तं पुरस्तादिति** ॥ नाऽत्मा विश्वभ्रमाधिष्ठनं तद्विरुद्धतया तद्भिन्नतया प्रतीयमानत्वादित्युक्तमित्यर्थः । प्रकृतमुपसंहरति- **यत एवमिति** ॥ **जात्येति** ॥ उत्सर्गत इत्यर्थः । **प्रकृतेऽपीति** ॥ विश्वानुभवेऽपीत्यर्थः । **असिद्धेवेति** । प्रसादाद्वन्धनिवृत्तेरभ्युपगमादित्यर्थः । **अन्यत्रेति** ॥ अनुभाष्य इत्यर्थः । उक्तपुनरुक्तिं वादि-**(व्या.टि.)** व्यवस्थयाऽपाकरोति- **य इत्यादिना** ॥ **लौकिकी मिति** ॥ अनुभवानुरोधिनीमित्यर्थः । तद्धर्मस्य तत्र स्थितिरन्यत्रावृत्तिरिति व्यवस्थामित्यर्थः । **अतिक्रम्येति** ॥ सर्वमिथ्यात्वमुपेत्येत्यर्थः । [1]**वैतण्डिकत्व-मिति** ॥ स्वपक्षस्थापनां विना कथकत्वमित्यर्थः । वृत्तेन वर्तिष्यमाणं सङ्गमयितुं वृत्तमर्थमनुवक्ति- **एव-मिति** ॥ **भूषणमिति** ॥ अभिहिताभिमतहितहेतुरित्यर्थः । **अङ्गीकारानर्हस्येति** ॥ अङ्गीकारः अनर्हः यस्मादिति व्युत्पत्त्या तच्छब्देनानर्हताहेतुरुच्यते, तस्येत्यर्थः । अनेन 'अप्रामाणिकं प्रमाणविरुद्धमपि विश्वमिथ्यात्वमङ्गी-कृत्य' इत्यवतारिकाविरोधो निरस्तः । अथ वा भूषणत्वेनेति शेषः । मूले स्यादित्यापादनस्याङ्गीकार्यमिति शेषं मत्वा तस्य विश्वमिथ्यात्वोपपादकापाद्यत्वेऽपि भूषणत्वापादकापाद्यत्वाभावेन तन्मात्रेणाऽपादनापर्यवसाना-दधिकं विवक्षुराह- **अङ्गीकृत्येति** ॥ **इत्यर्थ इति** ॥ विश्वमिथ्यात्वे आत्मनि मिथ्यात्वमापाद्य तद्दूषणभूषणत्व-मित्यापादनद्वये तात्पर्यमित्यर्थः । आत्ममिथ्यात्वाऽङ्गीकृतौ किं दूषणम् । तत्कथम्भूषणत्वेनाङ्गीकार्यमित्यत आह- **एतदेवेति** ॥ कथमुक्तस्यायं प्रपञ्च इत्यत अस्य प्रपञ्चतां प्रपञ्चयति- **अयमर्थ इत्यादिना** ॥ **दूषण-मिति** ॥ सामान्ये नपुंसकम् । प्रतीतौ कर्त्रभावः भ्रम अधिष्ठानाभावः बाधेऽवध्यभावश्चेति दूषणत्रयमित्यर्थः । प्रतिश्रुते प्रथममभिनीय दर्शयति- **घटादय इति** ॥ **असाक्षिकत्वमिति** ॥ अकर्तृकत्वमित्यर्थः । क्रियायाः कर्मादिकारकविशेषव्यभिचारदर्शनात्कर्तृव्यभिचारोऽपि किं न स्यादित्यत आह- **न चेति** ॥ अकर्मकाऽसनादि-क्रियावदकर्तृकक्रियायाः क्वाप्यदर्शनादित्यर्थः । प्रतिश्रुते द्वितीयं प्रपञ्चयति- **किञ्चेति** ॥ **व्यंशतेति** ॥ इदमित्यधिष्ठानोल्लेखः, इत्थमिति प्रकारोल्लेख इति व्यंशतेत्यर्थः । तृतीयं प्रपञ्चयति- **अपि चेति** ॥ **सावधिक इति** ॥ 'शेषाद्विभाषा' इति कप् । सर्वत्रेत्यव्यभिचारप्रदर्शनम् ।

आत्ममिथ्यात्वे प्राप्तदूषणं प्रपञ्च्य तद्दू(द्भू)षणत्वं प्रपञ्चयति- **तत्रेति** ॥ अर्थक्रमेण व्याचष्टे- **जडत्व-मिति** ॥ द्रष्टुरभावेऽपीत्यादि पूर्वपक्षे विरुद्धत्वात्पक्षान्तरपरतया योजयति- **अथ वेति** ॥ प्रतीतिरित्यन्तं प्रथमपक्षदूषणत्वपरतया व्याख्याय, अधिष्ठानं विनेत्यादि द्वितीयदूषणभूषणतापरतया, इत्यादीति तृतीय-दूषणभूषणत्वपरतया व्याचष्टे- **द्वितीयदूषण इत्यादिना** ॥ स्यादित्यतः परमित्यतः परमिति शेषः । **इति शेष इति** ॥ अङ्गीकार एवाऽपाद्यो न सत्त्वमिति भावः । प्रतीतेरित्यादि दुर्घटत्वस्य भूषणत्वे हेतूक्तिपरतया योजयितुमवतारयति- **कथमेतदिति** ॥ **अङ्गीकारादिति** ॥ अन्यथाऽऽत्मभिन्नसत्त्वेऽद्वैतहानिः, आत्मरूपत्वे ब्रह्मणो भ्रमत्वापत्तिः, असार्वज्ञापत्तिः, बद्धतापत्तिः, नित्यमुक्तिश्रुत्यप्रामाण्यापत्तिः, अज्ञानोपादेयत्वापत्तिः, इत्यादिबहुविप्लवापत्तिं सूचयति । दुराग्रहदण्डेन खण्डयति- **साक्षिरूपत्वेऽपीति** ॥ **अविद्यामय्या इति** ॥ मयटष्टित्त्वात् 'टिड्ढाण्' इति ङीबिति भावः । कथमस्य भूषणत्वमित्यतोऽभिमतहितहेतुत्वादित्याशयेन हित-मातनोति- **मिथ्यात्वस्येति** ॥ सत्यस्येत्याद्यङ्गीकारहेतुपरतया योजयितुमवतारयति- **तथापीति** ॥ **हाने-रिति** ॥ प्रामाणिकस्य सत्यत्वाविनाभावादिति भावः । मिथ्याभूतस्य तदनपेक्षयामपि

तन्मिथ्यात्वप्रतिपत्तये (**व्या.टि.**) तदपेक्ष्यतामित्यत आह- **तन्मिथ्यात्वस्यापीति ॥** परमप्रकृतविश्वसत्यत्वं परिशेषयन्नुपसंहरति- **यत एवमिति ॥ अध्वानमिति ॥** कथामार्गमित्यर्थः । **विरुद्धमिति ॥** प्रतीतिविरोधादिना दुर्घटमिति दौर्घट्योपपादनम् । एवमात्ममिथ्यात्वे प्रतीतिविरोधादिदौर्घट्यस्य परमते भूषणत्वोपपादनपरतया प्रतीतेरित्यादि-मूलं संयोज्याधुना प्रसङ्गान्तरपरतया व्याचष्टे- **अथ वेति ॥ दौर्घट्यमिति ॥** बहिरेवोहनीयमिति शेषः । **इतीति ॥** प्रतीतेरित्यादिपूर्ववाक्यमेतच्छेषतया योजनीयमित्यर्थः ।

**मूलम्- उपाधिभेदाङ्गीकारे हस्तपादाद्युपाधिभेदेऽपि तद्गतसुखदुःखादिभोक्तुर्यथा भेदो न प्रतीयते एवमेव शरीरादिभेदेऽपि भोक्तुर्भेदो न दृश्येत । सर्वदेहगतसुख-दुःखादिकमेकेनैव भुज्येत । यथा चैकाङ्गुल्याद्यपगमेऽपि न मुक्तिः, एवमेकोपाध्य-पगमेऽपि तस्यैवानन्तोपाधिसम्बद्धत्वान्न मुक्तिस्स्यात् ॥**

**टीका-** प्राक्सत्योपाधिकृतभेदवादिनामद्वैतवादिनां बद्धमुक्तव्यवस्था न सिध्यतीत्युक्तम् । अधुना सुखदुःखादिव्यवस्थाऽपि तेषां न सिध्यतीत्याह- **उपाधीति ॥** उपाधिकृतो भेद उपाधिभेदः । **तद्गतं** तन्निमित्तकम् । **शरीरादिभेदेऽपि** शरीराद्युपाधिकृते भेदे सत्यपि । भोक्तुः शरीरादिनिमित्तक-सुखादेरिति शेषः । न केवलं भेदादर्शनमापाद्यते, किं तर्हीत्यत आह- **सर्वेति ॥**

अयमत्राऽपादनक्रमः- यदि सर्वेषां जीवानामभेदः स्यात्तदा देवदत्तशरीराद्यनुग्रहोपघातादिना देवदत्तशरीरे सुखदुःखाद्युत्पत्तौ सत्यां देवदत्त एव सुखी दुःखी वा, न यज्ञदत्त इति । तथा यज्ञदत्तशरीरे सुखाद्युत्पत्तौ यज्ञदत्त एव सुखादिमान्, न देवदत्त इति च भोक्तृभेदो न स्यात् । न चाऽपाद्यापादक-योरभेदादापादनानुपपत्तिः । स्वरूपभेदस्याऽपादकत्वात्, भोक्तृरूपभेदाभावस्याऽपाद्यत्वात् । तथा सर्वशरीरगतं सुखादिकमेकेनैव भुज्येत ।

तदयं प्रसङ्गार्थः-यदि देवदत्तशरीराधिष्ठाता जीवो यज्ञदत्तशरीराधिष्ठातृजीवाभिन्नः स्यात्तर्हि यज्ञदत्तशरीरगतसुखाद्यननुसन्धाता न स्यात् । किन्तु तदनुसन्धातैव स्यात् यज्ञदत्तशरीराधि-ष्ठातृजीववत् । अनुसन्धानं नाम अनेन सुखेनाहं सुखीत्याद्यनुभवः । 'न चैवं, तस्माद्भिद्यते' इति प्रसङ्गविपर्यये व्यतिरेकव्याप्तिरेवाऽश्रीयत इत्यदोषः ।

एतेनैतदपि प्रत्युक्तं यत्सुखदुःखादिव्यवस्थया भेदसिद्धिमाशङ्क्य केनचिदुक्तम् । केयं व्यवस्था नाम? किं धर्माणां भेद उत विरोधोऽथवा भिन्नाश्रयत्वम् । नाऽद्यः । एकस्याप्यनेकधर्माश्रयत्वदर्श-नात् । न द्वितीयः । सुखादीनां भावाभावरूपत्वाभावात् । कारणोपनिपाते सति सहावस्थानसम्भ-वात् । बध्यघातुकभावस्य चैकाश्रयत्वापेक्षत्वात् । न तृतीयः । अन्योन्याश्रयत्वप्रसङ्गादिति । व्यवस्थाशब्देनानुसन्धानभावाभावयोर्विवक्षितत्वात् ।

यच्चोक्तम्-किमत्रांशानामनुसन्धानमापाद्यत उतांशिनः । नाऽद्यः । हस्तगतसुखदुःखस्य पादगतेनाननुसन्धानात् । न द्वितीयः । अंशिनो ब्रह्मणः सर्वानुसन्धानस्येष्टत्वादिति । एतच्चायु-क्तम् । जीवानां तावदनुसन्धानस्याऽपाद्यत्वात् । सुखादिकारणानां सुखादीनां च हस्तादिसम्बन्धेऽपि भोक्तुरेकत्वेन व्यभिचाराभावात् । अन्यथा चरणतललग्नकण्टकोद्धरणाय हस्तव्यापारो न स्यात् । न च पुत्रादाविवोपपत्तिः । दुःखाद्यनुमानपूर्वककृपादेरनुपलम्भात् ।

अथ मतम्- अनुसन्धाने न चेतनत्वे सत्यभेदमात्रं प्रयोजकं किन्तूपाधिकृतभेदाभावसहितम् । देवदत्तयज्ञदत्तयोश्च स्वाभाविकाभेदे सत्यपि शरीराद्युपाधिकृतभेदसद्भावादनुसन्धानाभावोपपत्ति-रिति । एतदप्ययुक्तम् । स्वरूपैक्ये सति हस्तपादाद्युपाधिकृतभेदे विद्यमानेऽप्यनुसन्धानदर्शनेन स्वरूपैक्यस्यैवानुसन्धाने प्रयोजकत्वं

नोपाध्यभावसहितस्येति निश्चयात्। अतः शरीरादिकृतभेदे विद्यमानेऽपि स्वरूपैक्यस्याङ्गीकारेऽप्यनुसन्धानमापाद्यत एवेति। एतेन प्रयोजकस्याऽपाद्या-व्यापकत्वमुक्तं वेदितव्यम्। नन्वत्र विशेषणस्य पक्षमात्रव्यावृत्त्यर्थत्वेन वैयर्थ्यमेव कस्मान्नोक्तम्। मैवम्। साध्याव्यापकत्वस्य स्फुटत्वात्। पक्षमात्रव्यावर्तकस्यापि विशेषणस्य क्वचिदङ्गीकृतत्वेन वैयर्थ्यस्योपपादनीयत्वात्।

अतिप्रसङ्गान्तरमाह- **यथा चेति ॥** सर्वजीवानामैक्यं वदन्प्रष्टव्यः-किं सर्वेषां जीवानां युगपदेव मुक्तिर्भवत्युत क्रमेण। आद्ये किमेकजीववादिनाऽपराद्धं येन तत्परित्यागेन बहुजीववादोऽङ्गीकृतः। बद्धमुक्तव्यवस्थासिद्धये खलु बहुजीववादाभ्युपगमः। तस्मिन्नपि यदि न बद्धमुक्तव्यवस्था तदा किं तेन। द्वितीये देवदत्तस्य किं स्वसम्बन्धिसर्वोपाध्यपगमो मुक्तिरुत कतिपयोपाधिविगमः। नाऽद्यः। देवदत्ताभिधोपाध्यपगमेऽपि यज्ञदत्ताद्यभिधानामनन्तोपाधीनामनपगमेन मुक्त्यभाव-प्रसङ्गात्। देवदत्तजीवस्य यज्ञदत्तादिजीवाभेदेन तदुपाधीनां सर्वेषां देवदत्तजीवसम्बन्धित्वात्। यथा कस्यचिदेकाङ्गुल्याद्यपगमेऽपि तत्सम्बन्धिकर्णाद्युपाधिसद्भावान्न मुक्तिस्तथैव। द्वितीये तु एकाङ्गुल्याद्यपगमेऽपि मुक्तिः स्यात्। देवदत्ताभिधोपाधिरेव देवदत्तसम्बन्धी न यज्ञदत्ताद्यभिधोपा-धय इति चेत्, तत्किं देवदत्तस्य यज्ञदत्तादिभ्यो भेदः। अभेदेऽप्युपाधिकृतो भेदोऽस्तीति चेत्, तर्हि उपाधिसम्बद्धस्योपाधिसम्बन्ध इत्युक्तं स्यात्। तच्च निराकरिष्यते।

एतेनैतज्जीवभेदकसर्वोपाध्यपगमोऽस्य मुक्तिरित्यपि परास्तम्। उपाध्यपरामर्श एतज्जीवे-त्यस्यायोगात्। भाव्यपेक्षयैवमुक्तिरिति चोपाधेर्भेदकत्वानुपत्त्यादिना दूषयिष्यते।

प्राग्ब्रह्मणः सर्वोपाधिसम्बन्धित्वेनोपाधिनिवृत्त्या तद्भावमापन्नस्यापि न मुक्तिरित्युक्तम्। इदानीन्तूपाधिनिवृत्तेरेवाभावादित्युच्यत इति भेदः ॥

**(र.टि.)** सुखदुःखादेर्मनोगतत्वादाह- **तन्निमित्तकमिति ॥** मूले उपाधिभेदाङ्गीकारस्याऽपादकत्वं प्रतीयते। न च तद्युज्यते। हस्तपादाद्युपाधिभेदेऽपीत्यादिनोपाधिभेदाभावस्यानुसन्धानं प्रत्यप्रयोजकत्वसमर्थनं प्रतीयते। तदपि न युज्यते। आपादकस्यानुक्तत्वेन तन्निरासायोपाधिमाशङ्क्य तदप्रयोजकत्ववर्णनस्यासङ्गतत्वादित्यत आह- **अयमत्राऽपादनक्रम इति ॥** भोक्तृभेदो न स्यादित्यर्थः। अनेन 'भोक्तुर्भेदो न दृश्येत' इत्यत्र न दृश्येतेत्येतदापाद्यस्य प्रामाणिकपरित्यागरूपानिष्टत्वज्ञापनार्थमुक्तमिति सूचितं भवति। **भोक्तृरूपेति ॥** भोक्तृरूपाणां भेदाभावस्येत्यर्थः। अनेन भोक्तुरित्येतदुक्ततात्पर्यं भवति। नन्वेवमिष्टापत्तिः स्यात्। वस्तुगत्या भोक्तुरेकत्वाङ्गीकारेण भोक्तृभेदाभावादित्यत आह- **तदयं प्रसङ्गार्थ इति ॥** देवदत्तादेर्यज्ञदत्तादिगत-सुखदुःखादिविषयकानुमितिरूपानुसन्धानसम्भवेनेष्टापादनमित्यत आह- **अनुसन्धानं नामेति ॥** ननु सिद्धान्ते तर्कस्याऽपाद्यानिष्टत्वं विपर्यये पर्यवसानं च साध्यसाधकत्वोपयोगीत्यङ्गीकृतम्। तथा च न च जीवाः परस्परगतसुखाद्यनुसन्धानास्तस्माद्भिद्यन्त इति विपर्यये पर्यवसानम्। अनुसन्धानाभावस्य भेदेन व्याप्तिग्रहं विना न सम्पद्यत इति तयोर्व्याप्तिग्रहो वक्तव्यः। न च स प्रकृते सम्भवति। आपादकभूतस्वाभाविकैक्याभावस्य परेण क्वाप्यनङ्गीकारेण दृष्टान्तासिद्धेरित्यत आह- **प्रसङ्गविपर्यय इति ॥** यत्र स्वाभाविकैक्यं तत्रानुसन्धानमिति व्यतिरेकव्याप्तेरुपपादितत्वादिति भावः। **एकस्यापीति ॥** तथा च धर्मभेदरूपव्यवस्थायाः व्यभिचारान्न धर्मिभेदसाधकत्वमिति भावः।

ननु सुखदुःखादीनां परस्परविरहरूपत्वलक्षणविरोधाभावेऽपि सहानवस्थानरूपविरोधो भविष्यतीत्यत आह- **कारणोपनिपाते सतीति ॥** तथा चासिद्धिरिति भावः। **एकाश्रय-त्वापेक्षत्वादिति ॥** तथा च विरुद्धत्वान्न धर्मिभेदसाधकत्वमिति भावः। **अन्योन्याश्रयप्रसङ्गादिति ॥** धर्मिभेदसिद्धौ धर्माणां भिन्नाश्रयत्वलक्षण-व्यवस्थासिद्धिः। तत्सिद्धौ च धर्मिभेदसिद्धिरित्यर्थः। **हस्तादिसम्बन्धेऽपीति ॥** सुखकारणविषयाणां हस्तादिना संयोगः। सुखादीनां तु निमित्तनिमित्तिभाव इति सम्बन्धो बोद्धव्यः। **विशेषणस्य पक्षमात्रव्यावृत्त्यर्थत्वे-नेति ॥** स्वाभाविकैक्यवादिमते भेदाभावस्य केवलान्वयित्वेन पर्वतेतरत्वादौ पर्वतेतस्येवोपाधिकृतेत्यस्य पक्ष-**(र.टि.)** मात्रव्यावृत्तिप्रयोजकत्वेनेत्यर्थः। **क्वचिदङ्गीकृतत्वेन वैयर्थ्यस्योपपादनीयत्वादिति**

॥ क्वचिदनु-कूलतर्करहितस्थले पक्षमात्रव्यावर्तकविशेषणवतोऽप्युपाधित्वाङ्गीकारेण प्रकृतापादकस्याऽपाद्येन व्याप्त्यावानुकूल्यं व्युत्पाद्योपाधिकृतेति विशेषणवैयर्थ्यस्योपपादनीयत्वादित्यर्थः। स्पष्टप्रतिभासदूषणमनादृत्य उपपाद्य-दूषणाभिधानेऽकौशलं स्यादिति भावः । ननु स्वीयसर्वोपाध्यपगम एव मुक्तिः । तथा च यज्ञदत्ताद्यभिधोपाधीनां देवदत्तीयत्वाभावात्तदनपगमेऽपि देवदत्तमुक्तिर्न विरुद्धेत्यत आह- **देवदत्तजीवस्येति** ॥ देवदत्ताभिधशरीरा-वच्छिन्नचेतनस्येत्यर्थः । एवं यज्ञदत्तजीवेत्यादावपि द्रष्टव्यम् । अनेन तस्यैवेत्येतदुक्ततात्पर्यकं ज्ञातव्यम् । उपाधिकृतभेदवत्युपाधिसम्बन्धाङ्गीकारे उपाधिसम्बन्धस्यैवोपाधिसम्बन्ध इत्युक्तं स्यात् । उपाधिसम्बन्धं विना तत्कृतभेदासम्भवादिति भावः । नन्वेतज्जीवेत्युक्तिर्न प्राङ्निष्पन्नोपाधिसम्बन्धापेक्षया । किन्तु भाव्युपाधि-सम्बन्धापेक्षया । तथा चोपाध्यपरामर्श इत्याद्युक्तात्माश्रयानवकाश इत्यत आह- **भाव्यपेक्षयैवमिति** ॥ **प्राग्ब्रह्मण इति** ॥ 'यदि चैकमेव ब्रह्म' इत्यत्र संसार्येव ब्रह्मेत्यादिबलात्प्राग्यस्य ब्रह्मण एव सर्वदोपाधिसम्बन्धस्य प्रतिपादितत्वात् । अत्र च तस्यैवानन्तोपाधिसम्बन्धत्वादित्युक्त्या प्राप्तुर्जीवस्यैवोपाध्यनिवृत्तेरेवोक्तत्वादिति भावः ।

**(रा.टि.) प्रागिति** ॥ 'यदि चैकमेव ब्रह्मोपाधिभेदात्संसरति' इत्यादिग्रन्थ इत्यर्थः । **सुखदुःखादि-व्यवस्थाऽपीति** ॥ तथा च न पुनरुक्ततादोष इति भावः । भोक्तुरित्यत्र कस्येत्याकाङ्क्षायामाह- **शरीरादि-निमित्तकेति** ॥ मूले आपादकानुक्त्याऽऽपाद्यापादकभावादेरस्फुटत्वदाह- **अयमत्रेति** ॥ यद्वा मूलोक्तापादनस्य विशेषापादनरूपत्वेन द्वितीयकक्ष्यात्वात्प्रथमकक्ष्यापन्नसामान्यापादनं तावदापाद्योक्तिपूर्वमाह - **अयम-त्रेति** ॥ अवस्थाभेदेन भेदमुपेत्याऽह- **स्वरूपाभेदस्येति** ॥ **तथेति** ॥ यदीत्यापादकभेदस्येहायोगादाह- **तदयमिति** ॥ अनुसन्धानं ज्ञानमात्रं चेन्मुखप्रसादादिना परकीयसुखादिज्ञानं जीवभेदेऽपि सम्भवतीत्यत आह- **अनुसन्धानं नामेति** ॥ **इत्यादीति** ॥ तत्कृतोच्चत्वादिरादिपदार्थः । **न चैवमिति** ॥ नानुसन्धानवानि-त्यर्थः । **भिद्यत इति** ॥ देवदत्तशरीराधिष्ठाता जीवो यज्ञदत्तशरीराधिष्ठातृजीवादिति योज्यम् । **प्रसङ्गविपर्यय इति** ॥ प्रसङ्गस्य विपर्ययपर्यवसाने यत्रान्योन्यानुसन्धानाभावस्तयोस्तत्र भेद इत्यन्वयव्याप्तौ न दृष्टान्तोऽ-स्ति । सर्वजीवानां भिन्नाभिन्नत्वेन विवादग्रस्तत्वात्, यो यद्गतसुखदुःखाद्यनुसन्धानवान् स तदभेदवान् यथा यज्ञदत्तशरीराधिष्ठातृजीवस्तेनैवाभेदवानिति दृष्टान्तसम्भवाद्व्यतिरेकव्याप्तिराश्रीयत इत्यर्थः । एके तु यत्रान्यो-न्यानुसन्धानाभावः तत्र तयोर्भेदः यथा घटपटयोरित्येवंरूपा व्यतिरेकव्याप्तिरित्याहुः । धर्माणां भेदो न धर्मिभेदकल्पक इति भावेनाऽह- **एकस्यापीति** ॥ धर्माणां विरोधस्तदाश्रयधर्मिभेदक इति पक्षे विरोधो नामान्योन्यविरहरूपत्वं वा वध्यघातुकभावो वा । आद्य आह- **सुखादीनामिति** ॥ दुःखाभाव एव सुखमिति मते सुखदुःखोभयकारणोपनिपातेन भावाभावरूपसुखदुःखयोस्सहावस्थानसम्भवादित्यर्थः । द्वितीय आह- **वध्येति** ॥ 'नाजात एकोऽन्यं हन्ति नाप्यन्याधारः' इति न्यायात्समानाश्रययोरेव मूषकमार्जारयोर्वध्यघातुक-**(रा.टि.)** भावदर्शनाच्चेति भावः । **अन्योन्याश्रयत्वेति** ॥ सुखादिधर्माणां भिन्नाश्रयत्वे सिद्धे तदाश्रयधर्मि-भेदसिद्धिः । तत्सिद्धौ च धर्माणां भिन्नाश्रयत्वसिद्धिरित्येवमित्यर्थः । इत्येतत्प्रत्युक्तमिति पूर्वेणान्वयः । **हस्तेति** ॥ हस्तपादाद्युपाधिभेदेन जीवांशानां भिन्नत्वादिति तन्मतावष्टम्भेनेयमुक्तिः । **पादगतेनेति** ॥ अंशेनेति योज्यम् । **सुखादिकारणानामिति** ॥ सुरूपसुस्पर्शसुगन्धादिसम्बन्धेन तन्निमित्तकसुखादौ जाते सतीत्यर्थः । **व्यभिचाराभावादिति** ॥ देवदत्तशरीराधिष्ठातेत्यादि प्रागुक्तप्रयोगे यो यदधिष्ठात्रभिन्नः स तन्निमित्तसुखाद्यनु-न्धातेत्यभिमतव्याप्तेरिति योज्यम् । **न च पुत्रादाविवेति** ॥ रोदनादिकार्येण पुत्रादौ दुःखमनुमाय दयया तद्दुःखपरिहाराय पितुर्यथा प्रवृत्तिः तथैवास्तु किमनुसन्धानकल्पनयेत्यर्थः । न चेतनत्वे सतीति विभागः । **अनुसन्धानदर्शनेनेति** ॥ सुखादिकारणानामित्युक्तदिशेति भावः ।

**एतेनेति** ॥ स्वरूपैक्यस्यैव प्रयोजकत्वकथनेनेत्यर्थः । हस्तपादाद्युपाधिभेदेऽप्यनुसन्धानदर्शनेनेति वा । परोक्तस्य उपाधिकृतभेदाभावसहितस्वरूपैक्यरूपप्रयोजकस्यानुसन्धानरूपापाद्याव्यापकत्वमुक्तं वेदितव्यमि-त्यर्थः । **पक्षमात्रेति** ॥ शरीराद्युपाधिकृतभेदस्य पक्ष एव सत्त्वेन तदभावरूपं विशेषणं पक्षमात्रव्यावर्तकमित्यर्थः। **क्वचिदिति** ॥ सर्वं तेजोऽनुष्णं पदार्थत्वादित्यादौ तेजोऽन्यत्वाद्युपाधावित्यर्थः । **उपपादनीयत्वादिति** ॥ स्वरूपैक्यमात्रस्यानुसन्धानव्याप्तत्वेन निमित्तेन तादृशं विशेषणमिह व्यर्थमेव व्यावर्त्याभावादित्युपपाद-नीयत्वादित्यर्थः । **अतिप्रसङ्गान्तरमिति** ॥ सुखदुःखादिव्यवस्थानुपपत्तिरूपप्रसङ्गापेक्षया मुक्त्यनुपपत्ति-रूपप्रसङ्गान्तरमित्यर्थः । मूलं घटयितुं परिष्करोति- **सर्वजीवानामिति** ॥ 'एकोपाध्यगमेऽपि' इत्यादिमूलं योजयति- **नाऽद्य इत्यादिना** ॥ अन्यदीयोपाधीनां कथं देवदत्तीयत्वमित्यत आह- **देवदत्तजीवस्येति** ॥ यथा चेत्यादिपूर्ववाक्यं व्याचष्टे- **यथेति** ॥ **द्वितीये त्विति** ॥ कतिपयोपाध्यपगम एव मुक्तिरिति पक्ष इत्यर्थः । **उपाधिसम्बद्धस्येति** ॥ प्रागेवोपाधिसम्बन्धवशाद्धि देवदत्तयज्ञदत्तचैत्रमैत्रादिसञ्ज्ञका जीवा जाताः । तेषामेवो-पाधिसम्बद्धतया

देवदत्तादिसञ्ज्ञकानामौपाधिकभेदोऽस्तीत्युक्ते सत्युपाधिसम्बद्धस्योपाधिसम्बन्धो भेदकारीत्युक्तं स्यात्। तच्च 'उपाधिकृतांशकल्पने' इत्यादिना तुल्यन्यायेन निराकरिष्यत इत्यर्थः। **उपाध्यपरामर्श इति ॥** एतज्जीवेत्यत्रैतच्छब्देनैतदुपाध्यवच्छिन्नचेतनेत्येवमेतच्छब्देन जीवत्वसम्पादकोपाध्यपरामर्श इत्यर्थः । परामर्शो तूपाधिसम्बद्धस्यैवोपाधिसम्बन्ध इत्यायातीति भावः । **भाव्यपेक्षयेति ॥** 'इग्यणस्सम्प्रसारणम्' 'अग्नये जुष्टं निर्वपामि' इत्यादाविव येनोपाधिना देवदत्तो यज्ञदत्त इत्यादिसञ्ज्ञको भविष्यति, तदुपाधिरेतच्छब्देन परा-मृश्यते । तथा चोपाधेरेकत्वान्नोपाधिसम्बद्धस्योपाधिसम्बन्ध इति दोष इति भावः । **दूषयिष्यत इति ॥** 'किंचोपाधिः' इत्यादिनेत्यर्थः। **प्राग्ब्रह्मण इति ॥** 'यदि चैकमेव ब्रह्म' इत्यादावित्यर्थः। **इदानीमिति ॥** यथा चेत्यादिना ग्रन्थेनेत्यर्थः। अतो न पुनरक्तिरिति भावः ।

**(श्री.टि.)** उपाधीनां भेद इत्यन्यथाप्रतीतिनिरासाय शाकपार्थिवादिवत् मध्यमपदलोपी समास इत्याशयेनाऽह- **उपाधिकृत इति ॥** सुखदुःखादेर्मनोगतत्वेन हस्तपादगतत्वाभावादाह- **तन्निमित्तकमिति ॥** हस्तादीनां **(श्री.टि.)** सुखदुःखादिभोगावच्छेदकत्वेन सुखाद्युत्पत्तौ निमित्तत्वादित्यर्थः । अत्र 'भोक्तुर्भेदो न दृश्येत' इत्यनेनाऽपादिते भोक्तृभेदाभावे 'उपाधिभेदाङ्गीकारे' इत्युक्तोपाधिभेदस्याऽपादकत्वं प्रतीयते। तदयुक्तम्। अप्रयोजकत्वात्। अतोऽत्र भोक्तृभेदो न स्यात्सर्वदेहगतसुखदुःखादिकमेकेनैव भुज्येतेत्युक्तापादने यदि सर्वेषां जीवानामभेदः स्यादित्यापादकमध्याहार्यम् । पुनरनुसन्धाने अथ मतमित्यादिना प्रयोजकान्तरशङ्कायामुपाधि-भेदाङ्गीकार इत्यादिकं तस्य व्यभिचारप्रदर्शनार्थं प्रवृत्तमित्याशयेनाऽपादनप्रकारं दर्शयति- **अयमत्राऽपादनक्रम इति ॥ अनुग्रहः** स्रक्चन्दनादिप्रियवस्तुसम्बन्धः। **उपघातो**ऽप्रियवस्तुसम्बन्धः। **भोक्तृभेदो न स्या-दिति ॥** ननु तर्हि मूले भोक्तुर्भेदो न स्यादित्येव वक्तव्यम्। न दृश्येतेति किमर्थमुक्तमिति चेन्न। भोक्तुर्भेदो न स्यादित्युक्तापाद्यस्य प्रामाणिकपरित्यागरूपानिष्टत्वज्ञापनार्थत्वादिति द्रष्टव्यम्। भोक्तुर्भेद इत्यत्र भोक्तुरित्यस्याभिप्रायं वक्तुमाह- **न चाऽपाद्येति ॥ स्वरूपाभेदस्येति ॥** चैतन्यैक्यस्येत्यर्थः । **भोक्तृरूप-भेदाभावस्येति ॥** उक्तरीत्या व्यवस्थया सुखदुःखभोक्तृदेवदत्तयज्ञदत्ताभिधरूपाणां भेदाभावस्याऽपाद्य-त्वादित्यर्थः । नन्वेवमपीष्टापत्तिः स्यात् । वस्तुगत्या भोक्तुरेकत्वाङ्गीकारेण भोक्तृरूपभेदस्याप्यभावादित्यत आह- **तदयं प्रसङ्गार्थ इति ॥**

ननु देवदत्तादेर्यज्ञदत्तादिगतसुखदुःखादिविषयकानुमितिरूपानुसन्धानसम्भवेनेष्टापादनमित्यत आह- **अनु-सन्धानं नामेति ॥** ननु सिद्धान्ते तर्कस्यापाद्यानिष्टत्वं विपर्ययपर्यवसानं च साध्यसाधकत्वोपयोगीत्यङ्गी-कृतम् । तथा च न जीवाः परस्परसुखदुःखाद्यनुसन्धातारः, तस्मात्स्वाभाविकैक्यवन्तो न भवन्तीति विपर्यये पर्यवसानम् अनुसन्धानाभावस्य स्वाभाविकैक्याभावेन व्याप्तिग्रहं विना न सम्पद्यत इति तयोर्व्याप्तिग्रहो वक्तव्यः। न च स प्रकृते सम्भवति । आपादकभूतस्वाभाविकैक्याभावस्य परेण क्वाप्यनङ्गीकारेण दृष्टान्ताभावादित्यत आह- **प्रसङ्गविपर्यय इति ॥** यत्र स्वाभाविकैक्यं तत्रानुसन्धानं यथा यज्ञदत्तशरीराधिष्ठाता जीव इति व्यतिरेकव्याप्तिरेवाश्रीयत इति दृष्टान्ताभावेन व्याप्तिग्रहानुपपत्तिरूपो दोषो नास्तीत्यर्थः । **भेदसिद्धिमिति ॥** धर्मिभूतजीवभेदसिद्धिमित्यर्थः । **धर्माणां भेद इति ॥** तथा च धर्मभेदाद्धर्मिभेद इत्यर्थः । **विरोध इति ॥** तथा च विरुद्धधर्मभेदाद्धर्मिभेद इत्यर्थः। **भिन्नाश्रयत्वमिति ॥** तथा च भिन्नाश्रयधर्मभेदाद्धर्मिभेद इत्यर्थः। **एक-स्यापीति ॥** तथा च रूपरसादिधर्माणां भेदेऽपि धर्मिणो घटस्यैकत्वेन भेदाभावेन व्यभिचारान्न धर्मभेद-रूपव्यवस्थाया धर्मिभेदसाधकत्वमिति भावः । **सुखादीनामिति ॥** तथा च सुखदुःखादीनां परस्परविरह-रूपत्वलक्षणविरोधाभावेन स्वरूपासिद्धिरिति भावः। ननु सुखदुःखादीनां परस्परविरहरूपत्वलक्षण-विरोधाभावेऽपि सहानवस्थानरूपो विरोधो भविष्यतीति नासिद्धिरित्यत आह- **कारणोपनिपाते सतीति ॥** सुखदुःखकारणानां युगपद्देहसम्बन्धे सति तज्जन्यसुखदुःखयोः सहावस्थानसम्भवादित्यर्थः। तथा च पुनरसिद्धिरेवेति भावः। ननु तथाऽपि सुखदुःखादीनां बध्यघातुकभावेन विरोधो भविष्यतीति नासिद्धिरित्यत आह- **वध्यघातुकभावस्येति ॥** एकस्मिन्स्थाने सतोरेव ह्यहिमूषकयोर्वध्यघातुकभावो दृष्टो न भिन्नस्थाने **(श्री.टि.)** सतोरित्येवं वध्यघातुकभावरूपविरोधस्यैकाश्रयत्वसापेक्षत्वेन वध्यघातुकभावविरोधोपेतसुख-दुःखादिधर्मभेदस्य प्रत्युत धर्म्यभेदसाधकत्वेन विरुद्धत्वान्न धर्मिभेदसाधकत्वमिति भावः । **अन्योन्याश्रयत्व-प्रसङ्गादिति ॥** धर्मिभेदसिद्धौ धर्माणां भिन्नाश्रयत्वलक्षणव्यवस्थासिद्धिः। तत्सिद्धौ च तया धर्मिभेदसिद्धिरित्य-न्योन्याश्रयत्वप्रसङ्गादित्यर्थः। एतेनेत्युक्तं विशदयति- **व्यवस्थाशब्देनेति ॥** यस्य सुखमुत्पन्नं तस्यैव तदनुसन्धानभावो नान्यस्य, यस्य दुःखमुत्पन्नं तस्यैव तदनुसन्धानमन्यस्य तदभाव इति सुखदुःखाद्यनुसन्धान-भावाभावयोरेव व्यवस्थाशब्देन विवक्षितत्वादित्यर्थः ।

**यच्चोक्तमिति ॥** परेण स्वग्रन्थ इत्यर्थः । **अंशानां** जीवानाम् । **अंशिनो** ब्रह्मणः । भास्करमते जीव-

ब्रह्मणोरंशांशिभावाङ्गीकारादंशानामित्याद्युक्तम् । यत्र स्वाभाविकैक्यं तत्रांशानामनुसन्धानमित्यस्य व्यभिचार-माह- **हस्तगतसुख(दुःख)स्येति ॥** हस्तावच्छिन्नांशगतसुखस्येत्यर्थः । **पादगतेन** अंशेन । **इष्टत्वादिति ॥** तथा चानिष्टत्वरूपाङ्गविकलत्वादाभासभूतस्तर्क इति भावः । **जीवानाम्** अंशानाम् । तत्रोक्तं व्यभिचारं परिहरति- **सुखादिकारणानामिति ॥** स्रक्चन्दनादिविषयाणामित्यर्थः । **सुखादीनां** तज्जन्यसुखादीनाम् । **हस्तादि-सम्बन्धेऽपीति ॥** सुखादिकारणविषयाणां हस्तादिना संयोगः सम्बन्धः । सुखादीनां च हस्तादिना निमित्तनिमित्तिभाव इति सम्बन्धो बोद्धव्यः । भोक्तुरेकत्वेनेत्यनन्तरम् अनुसन्धानसद्भावादिति शेषः । यद्यपि सुखादिकारणीभूततत्तद्विषयसम्बन्धस्तज्जन्यसुखादिकश्च हस्ताद्यवच्छेदेनैवास्ति, अतस्तदवच्छिन्नांशानामनु-सन्धानं त्वयोच्यते । तथाऽपि भोक्तुरेकत्वेन तत्तदंशानां स्वभाविकैक्यसद्भावेनानुसन्धानमस्त्येवेति न व्यभिचार इति भावः । पादगतसुखस्य हस्तगतेनानुसन्धानानङ्गीकारे बाधकमाह- **अन्यथेति ॥** ननु यथा पुत्रपादतल-लग्नकण्टकोद्धरणाय तदीयदुःखानुसन्धानाभावेऽपि पितुः कृपया प्रवृत्तिर्भवति तथाऽत्र कृपया प्रवृत्तिरुपपद्यते । तथा च न तदन्यथानुपपत्त्याऽनुसन्धानं कल्पनीयमित्याशङ्कते- **न च पुत्रादाविवेति ॥ दुःखाद्यनुमानपूर्व-केति ।** रोदनादिना तदीयदुःखादिकमनुमायानन्तरं जातया कृपया तदीयकण्टकोद्धरणादौ पितुः प्रवृत्तिरुपलब्धा, तथाऽत्रानुपलम्भादित्यर्थः ।

'उपाधिभेदाङ्गीकारे' इत्यादिमूलनिवर्त्यामाशङ्कामाह- **अथ मतमिति ॥** घटस्य घटेनाभेदे सत्यप्यनु-सन्धानाभावाद्व्यभिचार इत्यतश्चेतनत्वे सतीत्युक्तम् । **प्रयोजकमिति ॥** येन परस्परानुसन्धानं स्यादिति भावः । **एतेनेति ॥** हस्तपादाद्युपाधिभेदेऽपीत्यादिना वाक्येनेत्यर्थः । **आपाद्येति ॥** उपाधिकृतभेदाभाव-सहितस्वरूपैक्यरूपप्रयोजकस्य व्यभिचारादनुसन्धानरूपापाद्याव्यापकत्वमुक्तं वेदितव्यमित्यर्थः । **विशेषण-स्येत्यादि ॥** स्वाभाविकैक्यवादिमते भेदाभावस्य केवलान्वयित्वेन पर्वतेतरत्वादौ पर्वतेत्यस्येवोपाधिकृतेत्यस्य विशेषणस्य पक्षमात्रव्यावृत्तिप्रयोजकत्वेनानुमानमात्रोच्छेदकत्वाद्वैयर्थ्यमेव कस्मान्नोक्तम्, आपाद्याव्यापकत्वं कस्मादुक्तमित्यर्थः । **साध्येति ॥** आपाद्येत्यर्थः । उक्तप्रयोजके आपाद्याव्यापकत्वस्य स्फुटत्वात् तदेवोक्तमिति भावः । **क्वचिदिति ॥** यत्रोपाधेः साध्यव्यापकताग्राहकानुकूलतर्को नास्ति तत्र पक्षमात्रव्यावर्तकविशेषण-वतोऽप्युपाधित्वमङ्गीकृतम् । अनुकूलतर्कसद्भावे पक्ष एव साध्यव्यापकताभङ्गापत्तेः ।

**(श्री.टि.)** 'अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः ॥'

इति वचनात् । अतो बाधोन्नीतपक्षेतरत्वमुपाधिरिति भावः । **वैयर्थ्यस्योपपादनीयत्वादिति ॥** प्रकृते चाऽपादकस्याऽपाद्येन व्याप्तावनुकूलतर्कं व्युत्पाद्य पक्ष एवाऽपाद्याव्यापकत्वं प्रयोजकस्योपपाद्योपाधिकृतेत्यस्य विशेषणस्य वैयर्थ्यमस्माभिरुपपादनीयं भवतीति प्रयत्नगौरवमायाति । अत आपाद्याव्यापकत्वरूपं स्फुटदूषण-मुपेक्ष्योपपादनीयदूषणाभिधानेऽकौशलं स्यादिति तदेवोक्तमिति भावः । **तस्मिन्नपीति ॥** बहुजीववादाभ्युप-गमेऽपीत्यर्थः । ननु स्वीयसर्वोपाध्यपगम एव मुक्तिः । तथा च यज्ञदत्ताद्यभिधोपाधीनां देवदत्तीयत्वाभावात् तदनपगमेऽपि देवदत्तमुक्तिर्न विरुद्धेत्यत आह- **देवदत्तजीवस्येति ॥** देवदत्ताभिधशरीरावच्छिन्नचेतनस्येत्यर्थः। **यज्ञदत्तादिजीवाभेदेनेति ॥** यज्ञदत्ताद्यभिधशरीरावच्छिन्नचेतनाभेदेनेत्यर्थः । अनेन तस्यैवेत्येतत् उक्ततात्पर्यकं ज्ञातव्यम् । **तत्किमिति ॥** येन देवदत्ताभिधोपाधिरेव देवदत्तसम्बन्धी न यज्ञदत्ताभिधोपाधिरिति स्यादिति भावः । शङ्कते- **अभेदेऽपीति ॥** देवदत्तयज्ञदत्तयोरित्यर्थः । **तर्हीति ॥** देवदत्तयज्ञदत्तयोरुपाधिसम्बद्धत्वेन तयोरभेदमङ्गीकृत्य पुनरुपाधिकृतभेदाङ्गीकारे उपाधिसम्बद्धस्यैवोपाधिसम्बन्ध इत्युक्तं स्यात्, उपाधिसम्बन्धं विना तत्कृतभेदासम्भवादिति भावः । अस्त्विति चेत्तत्राऽह- **तच्चेति ॥** 'उपाधिसम्बद्धस्यैवोपाधिसम्बद्धत्वं तदुपाधिकृतत्वे आत्माश्रयत्वमुपाध्यन्तरकल्पनेऽनवस्था' इत्यत्राऽत्माश्रयत्वादिना निराकरिष्यत इत्यर्थः । एतेनेत्युक्तं विशदयति- **उपाध्यपरामर्श इति ॥** उपाध्यविवक्षायामित्यर्थः । तथा हि । जीवस्यैतत्त्वं नामेतर-वैलक्षण्यं भेद इति यावत् । इदं चोपाधिसम्बन्धं विना न सम्भवति । तथा चैतज्जीवेत्यस्य प्राङ्निष्पन्नोपाधि-सम्बन्धकृतभेदवतो देवदत्तस्येत्यर्थस्स्यात् । तस्य यज्ञदत्तादिभेदकसर्वोपाध्यपगमोऽस्य देवदत्तस्य मुक्तिरित्युक्तं स्यात् । तथा च तत्रोपाधेरेकत्वविवक्षायामात्माश्रयत्वमिति भावः । नन्वेतज्जीवेत्युक्तिर्न प्राङ्निष्पन्नोपाधि-सम्बन्धकृतभेदापेक्षया, किन्तु भाव्युपाधिसम्बन्धकृतभेदापेक्षयैव । तथा चोपाध्यपरामर्श इत्युक्तात्माश्रयानवकाश इत्यत आह- **भाव्यपेक्षयैवमुक्तिरिति ॥ एवमुक्तिः** एतज्जीवेत्युक्तिः । **दूषयिष्यत इति ॥** 'किञ्चोपाधि-रात्मनः' इत्यादिनेत्यर्थः । ननु प्राक् 'यदि चैकमेव ब्रह्म' इत्यत्र 'तद्भावमापन्नस्यापि न मुक्तिः' इति मुक्त्यभाव उक्तः । इदानीं यथा चैकेत्यत्रापि न मुक्तिस्स्यादिति मुक्त्यभाव एवोच्यत इति पूर्वग्रन्थेन गतार्थतेत्यत आह- **प्रागिति ॥** यदि चैकमेव ब्रह्मेत्यत्र सर्वदा संसार्येव ब्रह्मेति प्राप्यस्य ब्रह्मण एव सर्वदोपाधिसम्बन्धस्य

प्रतिपादितत्वात्तद्भावमापन्नस्यापि न मुक्तिरिति प्रतिपादितम् । अत्र च तस्यैवानन्तोपाधिसम्बद्धत्वादित्युक्त्या प्राप्तुर्जीवस्योपाध्यनिवृत्त्युक्त्या मुक्त्यभाव उच्यत इति भेद इति भावः ।

**(पां.टि.) उपाधिकृत इति ।।** मयूरव्यंसकादित्वात्समास इति भावः । सुखदुःखादीनामन्तःकरणगततया हस्तपादादिगतत्वाभावात्तदुक्त्यनुपपत्तिमाशङ्क्य तदभिप्रायमाह- **तन्निमित्तकमिति ।।** मूले उपाधिभेदाङ्गी-कारस्याऽऽपादकत्वं भोक्तृभेदाभावस्याऽऽपाद्यत्वं प्रतीयते । न च तद्युक्तम् । भोक्तृभेदस्याप्यौपाधिकत्वेनाऽ-**(पां.टि.)** पाद्यापादकयोर्विरोधादित्यतोऽभेदस्यैवाऽऽपादकत्वमित्याह- **अयमत्रेति ।। भोक्तुर्भेदो न स्या-दिति ।।** मूले 'भोक्तुर्भेदो न दृश्येत' इति दर्शनपर्यन्तधावनमापाद्यस्यानिष्टत्वसूचनार्थमित्याशयः । भोक्तु-रित्येतन्मूलाभिप्रायमाह- **भोक्तृरूपेति ।।** भोक्तृरूपाणां भेदाभावस्येत्यर्थः । ननु यदि सर्वेषां जीवानामभेदः स्यात्तर्हि सर्वशरीरगतसुखदुःदिकमेकेनैव भुज्येतेत्यापादनं कृतं तदनुपपन्नम् । सकलजीवाभेदरूपस्याऽऽपादक-स्यैकस्मिन्सर्वशरीरगतसुखादिभोगरूपस्याऽऽपाद्यस्य चाप्रसिद्धत्वाद् व्याप्तिग्रहणस्थलाभावेन व्याप्त्यभावाच्च वैयधिकरण्याच्चेत्यतः प्रसङ्गार्थमाह- **तदयमिति ।।** यद्वा एवमपीष्टापत्तिः स्यात् । वस्तुगत्या भोक्तुरेकत्वाङ्गीकारेण भोक्तृभेदाभावादित्यत आह- **तदयमिति ।।** एकपदं चैतत् । सोऽयं प्रपञ्च इत्यर्थः । **प्रसङ्गस्तर्कः अर्थः** प्रयोजनं यस्य प्रपञ्चस्य सोऽयं प्रसङ्गार्थः । ननु देवदत्तादेर्यज्ञदत्तादिगतसुखदुःखादिविषयकानुमितिरूपानुसन्धान-सत्त्वा-दिष्टापादनमित्यत आह- **अनुसन्धानं नामेति ।।** ननु सिद्धान्ते तर्कस्याऽऽपाद्यानिष्टत्वं विपर्यये पर्यवसानं च साध्यसाधकत्वोपयोगीत्यङ्गीकृतम् । तथा च जीवाः परस्परगतसुखाद्यननुसन्धातारस्तस्माद्भिद्यन्त इति विपर्यये पर्यवसानमनुसन्धानाभावस्य भेदेन व्याप्तिग्रहं विना न सम्पद्यत इति तयोर्व्याप्तिग्रहो वक्तव्यः । न च स प्रकृते सम्भवति । आपादकभूतस्वाभाविकैक्याभावस्य परेण क्वाप्यनङ्गीकारेण दृष्टान्तासिद्धेरित्यत आह- **प्रसङ्गविपर्यय इति ।।** यत्र स्वाभाविकैक्यं तत्र अनुसन्धानमिति व्यतिरेकव्याप्तिरेवाऽऽश्रीयत इत्यर्थः । **एकस्यापीति ।।** तथा च धर्मभेदरूपव्यवस्थाया व्यभिचारान्न धर्मिभेदसाधकत्वमिति भावः । ननु सुखदुःखादीनां परस्परविरह-रूपत्वलक्षणविरोधाभावेऽपि गोत्वाश्वत्ववत्सहानवस्थानलक्षणविरोधो भविष्यतीत्यत आह- **कारणोपनिपाते सतीति ।।** तथा चासिद्धिरिति भावः । **एकाश्रयत्वापेक्षत्वादिति ।।** 'नाजात एकोऽन्यं हन्ति नाप्यन्याधारः' इति न्यायादिति भावः । तथा च विरुद्धत्वान्न धर्मिभेदसाधकत्वमिति भावः । **अन्योन्याश्रयत्वेति ।।** धर्मि-भेदसिद्धौ धर्माणां भिन्नाश्रयत्वलक्षणव्यवस्थासिद्धिः, तत्सिद्धौ च धर्मिभेदसिद्धिरित्यन्योन्याश्रयत्वेत्यर्थः । **अंशानामिति ।।** जीवानाभित्यर्थः । ततश्च यत्र स्वाभाविकैक्यं तत्रांशानामन्योन्यगतसुखदुःखाद्यनुसन्धानमिति व्याप्त्यभावात्तद्रूपाङ्गविकलत्वादाभासत्वम् । तत्राप्यन्योन्यानुसन्धाने च तेषां पादे मे वेदना, शिरसि मे दुःखमिति न प्रतीयेत । किन्तु पादे वेदनेतिवद् दुःखमित्यपि शिरसि दुःखमितिवद्वेदनेत्यपीत्युभयत्रोभयं प्रतीयेतेति भावः। इष्टत्वादित्युपलक्षणम् । तस्याभोक्तृत्वादित्यपि ग्रन्थान्तरोक्तरीत्या द्रष्टव्यम् । **जीवानां तावदिति ।।** तावच्छब्देन द्वितीयपक्षपरिग्रहं सूचयति ।

नन्वंशानामनुसन्धानाऽऽपादनमयुक्तम् । पूर्वोक्तव्यभिचारकलङ्कितत्वादित्यत आह- **सुखादीति ।। हस्तादि-सम्बन्धेऽपीति ।।** सुखादिकारणविषयाणां हस्तादिना संयोगे सुखादीनां च निमित्तनैमित्तिकभावरूपसम्बन्धे च सतीत्यर्थः । श्रूयमाणशब्दस्य श्रोत्रसम्बन्धेऽपि वीणायाः क्वणननिमित्तत्वाद् वीणायां शब्द इतिवत्पादे दुःखहेतोः कण्टकस्य सम्बन्धात्तदवच्छेदेन दुःखप्रतीतिरिति भावः । **अन्यथेति ।।** हस्तावच्छिन्नस्य पादाव-च्छिन्नगतसुखदुःखाद्यनुसन्धानाभाव इत्यर्थः । व्यापारो न स्यादित्यत्र झडितीति पूरणीयम् । अत एवान्यत्र **(पां.टि.)** तदुक्तम् । एतदेवाऽऽशङ्कासमाधानाभ्यामुपपादयति-**न चेत्यादि ।।** किमनेन शङ्कितोपाधेर्दूषणमुक्तम्भ-वतीत्यत आह- **एतेनेति ।। आपाद्याव्यापकत्वमिति ।।** आपाद्यव्यापकत्वे सत्यापादकाव्यापकत्वस्यैवोपाधि-लक्षणत्वेनाऽऽपाद्याव्यापकस्य तदनाक्रन्तत्वादनुपाधित्वमिति भावः । **विशेषणस्येति ।।** स्वाभाविकैक्यवादिमते भेदाभावस्य केवलान्वयित्वेन पर्वतेतरत्वादौ पर्वतेत्यस्येवौपाधिकेत्यस्य पक्षमात्रव्यावृत्तिप्रयोजनकत्वेन वैयर्थ्यमेव कुतो नोक्तमित्यर्थः । **क्वचिदिति ।। क्वचिदनुकूलतर्करहितस्थले** पक्षमात्रव्यावर्तकविशेषणवतोऽप्युपाधित्व-दर्शनेन प्रकृते चाऽऽपादकस्य व्याप्तावनुकूलतर्कस्य सत्त्वेन विशेषणवैयर्थ्यस्योपपादनीयत्वादित्यर्थः । स्पष्ट-प्रतिभासदूषणमनादृत्योपपाद्यदूषणाभिधानस्याकौशलाऽऽपादकत्वेनाकर्तव्यत्वादिति भावः । ननु स्वकीय सर्वोपाध्यपगमस्यैव देवदत्तमुक्तित्वाद्यज्ञदत्ताद्यन्योपाधीनां देवदत्तीयत्वाभावात्तदनपगमेऽपि न तन्मुक्तिर्विरुद्धे-त्यत आह- **देवदत्तजीवस्येति ।।** देवदत्ताभिधशरीरावच्छिन्नस्य चैतन्यस्येत्यर्थः । तथा चाभेदपक्षे स्वकीयत्व-परकीयत्वादिरूपेण विशेषानुपपत्तेरुक्तदोषतादवस्थ्यमिति

भावः । **तर्हीति ॥** उपाधिकृतभेदवति उपाधि-सम्बन्धाङ्गीकारे उपाधिसम्बन्धस्यैवोपाधिसम्बन्ध इत्यङ्गीकृतं स्यात् । उपाधिसम्बन्धं विना तत्कृतभेदासम्भा-वादिति भावः । नन्वेतज्जीवेत्युक्तिः न प्राङ्निष्पन्नोपाधिसम्बन्धापेक्षया । किन्तु भाव्युपाधिसम्बन्धापेक्षया । तथा चोपाध्यपरामर्श इत्युक्ताऽत्माश्रयानवकाश इत्यत आह- **भाव्यपेक्षयेति ॥ प्रागिति ॥** 'यदि चैकमेव ब्रह्मोपाधिसम्बन्धात्संसरति' इत्यत्रेत्यर्थः । **भेद इति ॥** ततश्च न तेनास्य पौनरुक्त्यमिति भावः ।

**(व्या.टि.)** पूर्वोत्तरग्रन्थयोरेकवाक्यतापनुत्तये तदर्थभेदमाह- **प्रागित्यादिना ॥** वाद्यन्तरत्वप्रतिपत्तिनिरासा-याह- **तेषामिति ॥ उपाधिकृत इति ॥** शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । **तत्** तस्मिंस्ततो (वौ) वा गतमित्यभिप्रेत्य व्याचष्टे- **तन्निमित्तकमिति ॥** मूले 'तद्गतसुखदुःखादिभोक्तुः' इति सुखदुःखादि भुङ्क्ते इति सुखदुःखादिभोक्तेति तृन्नन्तेन द्वितीयासमासोऽभिसंहित इति सूचितम् । तृजन्तत्वे 'तृजकाभ्यां कर्तति' इति समासप्रतिषेधात् । अत एव टीकायां तद्गतमिति विशेषणे द्वितीयानिर्देशः । सुखदुःखादीति भिन्नपदं वा । शरीरादिभ्यो भेद इति व्युत्पत्तिमुपेत्य व्याकरोति-**शरीरादीति ॥** सत्यपीत्यनादरसूचनं वा । भोक्तुरित्यस्यापेक्षितं पूरयति- **शरीरादीति ॥ सुखादेरिति ॥** 'कर्तृकर्मणोः कृति' इति षष्ठीविधानादिति भावः । तर्कितं तर्कान्तरेण समुच्चिनोति- **न केवलमिति ॥** ननु नेदमापादनद्वयं सम्भवति । आपादकाभावात् । तथा हि । किमत्रोपाधि-भेदाभाव आपादकः स्वरूपैक्यं वा विशिष्टं वा । नाऽद्यः । तस्यानङ्गीकारपराहतत्वात् । पक्षे तदभावेन भेदादर्शनानुसन्धानयोरापादनायोगाच्च । न द्वितीयः । स्वरूपैक्यमात्रस्य जडे व्यभिचारात् । चेतनत्वे सति स्वरूपैक्यस्येहानुपन्यासात् । अत एव न तृतीयः । अप्राप्तकालता च । विशेष्यं ह्यादौ प्रदूष्य पश्चाद्विशिष्टं दूषणीयम् । विशिष्टस्य प्रथमं बुद्ध्यनारोहात् । विशेषणस्योपाधिभेदाभावरूपोपाधेरापाद्याप्रयोजकत्वं वा वक्त-व्यम् । तथैवाऽपादितं तत्वप्रकाशिकायां भगवत्पादैः-

**(व्या.टि.)** 'सुखदुःखादिभोगस्य स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥' इति ।

अतः कथमयमापादनविनिमय इत्यतस्तथैवेदमपि योजनीयमित्याह-**अयमत्राऽपादनक्रम इत्यादिना ॥** अत्र क्रम इत्यनेनात्रापि स्वरूपैक्ये भेदेनादर्शनं परस्परसुखदुःखाद्यनुसन्धानं चाऽपाद्य पश्चादथ मतमित्यादिना विशिष्टं प्रयोजकमाशङ्क्य निरसिष्याम इति सूचयति । जडे व्यभिचारापनोदायाऽह- **जीवानामिति ॥** तर्कस्यानिष्टप्रसङ्गतासिद्धये भोक्तुर्भेदमनुभावयति- **देवदत्तशरीरादीति ॥ अभेदादिति ॥** अभेदभेदाभाव-योरभेदादित्यर्थः । **स्वरूपेति ॥** भोक्तृस्वरूपेत्यर्थः । **भोक्तृरूपेति ॥** यद्यपि स्वरूपाभेदे विशिष्टरूपाभेदो नाऽपादयितुं शक्यते । विशिष्टस्य पदार्थान्तरत्वेन व्याप्त्यभावात् । तथाऽप्यत्र तदभेदे स्वरूपाभेदस्यैव प्रयोजकत्वात् कारणाभावेन कार्याभावापादनं युक्तमिति भावः । द्वितीयं प्रसङ्गमाह- **तथेति ॥** नन्विदमपीष्टापादनम् । स्वरूपैक्यवादिनो भोक्त्रैक्यस्येष्टत्वात् । पूर्वप्रसङ्गाभेदाच्चेत्यत आह- **तदयमिति ॥** पूर्वासङ्कीर्ण इत्यर्थः । **तदनुसन्धातैवेति ॥** पूर्वं भोक्तृभेदाभाव आपादितोऽत्र तु भोगसाङ्कर्यमिति न पुनरुक्तिरित्यर्थः । अनुसन्धानस्य ज्ञानमात्रत्व इष्टापत्तिमाशङ्क्य तदर्थमाह- **अनुसन्धानं नामेति ॥** प्रसङ्गं विपर्यये पर्यवसाययति- **न चैव-मिति ॥** तर्कस्यानुमानानुग्राहकत्वेन तद्विपर्ययस्यानुमानत्वात् तस्य च देवदत्तशरीराधिष्ठाता जीवो यज्ञदत्त-शरीराधिष्ठिताद्भिद्यते तदनुसंहितसुखाद्यननुसन्धातृत्वात्तदननुसंहिततदनुसन्धातृत्वादित्यत्रान्वयव्याप्तेरसम्मते-रयुक्तिरित्यत आह- **प्रसङ्गविपर्यय इति ॥** सुखदुःखादिव्यवस्थाऽभावमनापाद्य भोक्तृभेदादर्शनापादने को हेतुरित्यतस्तथाऽपादनलब्धमाह- **एतेनेति ॥** निरुक्तव्यवस्थाया धर्मिभेदव्यभिचारं दर्शयति- **एकयापीति ॥** द्वितीये किं विरोधो भावाभावरूपो वा सहानवस्थानरूपो वा वध्यघातुकभावो वेति विकल्पं प्रकल्प्य निरस्यति- **न द्वितीय इति ॥** द्वितीये प्रथमं निराह- **सुखादीना-मिति ॥** द्वितीये द्वितीयं तुसति- **कारणोपनिपाते सतीति ॥ सहानवस्थानेति ॥** 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् इति सर्वत्र नियमः' इति स्मृतेरिति भावः । द्वितीये तृतीयं व्युदस्यति- **वध्यघातुकभावस्येति ॥ एकेति ॥** 'नाजात एकोऽन्यं हन्ति नाप्यन्याधारः' इति न्यायादिति भावः । **अन्योन्याश्रयत्वेति ॥** धर्मिभेदे सिद्धे धर्माणां भिन्नाश्रयत्वसिद्धिः तत्सिद्धौ तत्सिद्धि-रित्यन्योन्यव्यपेक्षेत्यर्थः । मूले भोक्तृपदस्वरसनिरस्यं दर्शयति- **यच्चोक्तमित्यादिना ॥** यथेत्यादिना निदर्शने भेदादर्शनफलमाह- **जीवानामिति ॥** अंशानामित्यर्थः । **तावदिति ॥** सर्वदेहगतेत्यर्थः । **सुखादिकारणा-नामिति ॥ अन्यथेति ॥** अंशानां परस्परानुसन्धानाभाव इत्यर्थः । अनुसन्धानेन विना प्रवृत्तिं शङ्कते- **न चेति ॥ उपपत्तिरिति ॥** कृपादिप्रयोजकान्तरेणेति भावः । **दुःखादीति ॥** रोदनादिनेति शेषः । अनुसन्धाने प्रयोजकमाशङ्कते- **अथ मतमिति ॥** परिशेषं दर्शयति- **किन्त्विति ॥** देहाद्युपाधिभेदाभावविशिष्टमैक्यमनुसन्धाने

प्रयोजकत्वादुपाधिरित्यर्थः। किमनेन प्रसङ्गोपाधेर्दूषणमित्यत आह- **एतेनेति** ।। स्वरूपैक्यस्य पक्षेऽपि सत्त्वेन तद्व्यावर्तकविशेषणस्य पर्वतेतरत्वादिवदनुपाधित्वं शङ्कते- **नन्वत्रेति** ।। **मात्रेति** ।। **वैयर्थ्यमिति** ।। पक्षतदितर-(**व्या.टि.**) व्यावर्तकविशेषणवत्त्वे ह्युपाधिनिवृत्त्या साध्यनिवृत्तिसाधनेऽन्वयदृष्टान्तलाभेन व्याप्तिग्रहौपयि-कताऽन्यथा वैयर्थ्यमित्यर्थः। एवेति तस्यापरिहार्यतामाह। **क्वचिदिति** ।। बाधोन्नीत इत्यर्थः। **उपपादनीय-त्वादिति** ।। अनुकूलतर्काभावस्थले पक्षमात्रव्यावर्तकविशेषणस्य सार्थक्यदर्शनेऽपि प्रकृततर्केऽनुकूलतर्कसत्त्वेन पक्षमात्रव्यावर्तकस्य वैयर्थ्यमेवेत्युपपादनीयत्वादित्यर्थः। अत एवादूषणत्वादिति वक्तव्य उपपादनीयत्वा-दित्युक्तमित्यवधेयम्।

**अतिप्रसङ्गान्तरमिति** ।। बद्धमुक्तव्यवस्थाभङ्गरूपमित्यर्थः। मूलस्य द्वितीयकल्पं विकल्प्याऽद्यकल्पदूषण-परत्वात्तदपेक्षितविकल्पाद्यकल्पदूषणे बहिरेवोपस्करोति- **सर्वजीवानामित्यादिना** ।। बहुजीववादाभ्युपगम-वैफल्यप्रदर्शनाय तदुद्देश्यासिद्धिमाह- **बद्धमुक्तव्यवस्थासिद्धय इति** ।। समानकालावच्छेदेन बद्धमुक्तावस्थानं बद्धमुक्तव्यवस्थेत्यर्थः। द्वितीये प्रथमकल्पदूषणपरतया मूलं योजयति- **देवदत्ताभिधोपाध्यपगमेऽपीति** ।। अन्योपाधीनां स्वसम्बन्धमुपपादयति- **देवदत्तजीवस्येति** ।। मुक्त्यभावप्रसङ्गे यथेत्यादिमूलमन्वयदृष्टान्तपरतया योजयति-**यथेति** ।। द्वितीयकल्पे मूलस्य प्रसङ्गनिदर्शनपरत्वाप्रतिभासात्तदभिसंहितं विपक्षे मुक्तिप्रसङ्गं बहिरेवोप-स्कृत्य प्रत्यक्षविरोधेन तं विपर्यये पर्यवसाय्य तन्निदर्शनेन मुक्त्यभावं निर्धारयति- **द्वितीये त्विति** ।। अस्मिन् पक्षे स्यादस्ति स्यान्नास्तीतिवत् स्याच्छब्दो युक्तार्थः। द्वितीयकल्पदोषपरिहारायान्योपाधेः स्वसम्बन्धाभावं शङ्कते- **देवदत्ताभिधोपाधिरेवेति** ।। तत्किमिति काक्वा योजनीयम्। **उपाधिकृतो भेद इति** ।। देवदत्तादि-शरीरभेदप्रयोजकान्योपाधिप्रयुक्तो जीवभेद इत्यर्थः। **उपाधिसम्बन्धस्येति** ।। पूर्वोपाधिसम्बन्धस्योत्तरोपाधि-सम्बन्ध इत्यर्थः। **निराकरिष्यत इति** ।। किं तदुपाधिसम्बद्धस्योतान्योपाधिसम्बद्धस्येति विकल्प्याऽद्ये आत्मा-श्रयः, द्वितीयेऽनवस्थेति वक्ष्यमाणदिशेति भावः। उक्तप्रकारमन्यत्राप्यतिदिशति- **एतेनेति** ।। जीवभेदकेति अङ्गुल्यादेर्निरासः। तस्य देहभेदकत्वेऽपि जीवभेदकत्वाभावात्। यज्ञदत्तादिदेहव्युदासाय **एतदिति**। अतीता-नागतसङ्ग्रहाय **सर्वेति**। परासप्रकारं दर्शयति- **उपाधीति** ।। उपाधिं विना जीवभेदकाभावादिति भावः। **भावीति** ।। उपाधिसम्बन्धेन य एतज्जीवो भविष्यति तदपेक्षयेत्यर्थः। यथोक्तं महाभाष्ये-'भाविनी सञ्ज्ञा विज्ञायते। तद्यथाऽस्य सूत्रस्य शाटकं वय इति यस्मिन् ते शाटको भवति' इति। यथा वा पूर्वतन्त्रे 'यूपं तक्षति यूपमष्टाश्रीकरोति' इत्यादि। यस्मिन् संस्कृते यूपो भवति तमित्यर्थः। 'दृष्टादृष्टगणो यूपः' इति मीमांसकप्रवादः। दूषयिष्यत इति दूषेर्णिजन्तात्कर्मणि यकि लृटि बोध्यः। यदि चैकमेवेत्यतोऽस्य पुनरुक्तिं वारयितुमुक्तिभेदमाह- **प्रागित्यादिना** ।। **उपाधिनिवृत्त्येति** ।। स्वोपाधिनिवृत्त्येत्यर्थः। **उपाधिनिवृत्तेरेवेति** ।। सर्वजीवानां स्वरूपैक्येन सर्वोपाधीनां स्वोपाधित्वादित्यर्थः।

**मूलम्-** **'उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः।**
**पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन्युधि ।।'**

**इति भारतवचनान्न विश्लेषाद्विशेषः ।।**

**(त.मं.)** हस्तपादाद्युपाधीनां भेदेऽपि संश्लिष्टत्वात् दुःखाद्यनुसन्धानं सम्भवति। चैत्राद्युपाधीनां विश्लेषाद्विशेषोऽस्तीत्यत आह- **उद्यतेति** ।। 'नानादेहगभोगानुसन्धानं योगिनो यथा' इति स्वयमेवान्यत्र प्रपञ्चितवान्।

**टीका-** ननु सुखदुःखाद्यनुसन्धाने न चेतनस्य सतः स्वरूपैक्यमात्रं प्रयोजकं, किन्तूपाधिकृत-भेदाभावसहितं स्वरूपैक्यम्। औपाधिकभेदसद्भावेऽपि उपाधीनां संश्लेषश्च। देवदत्तयज्ञदत्तोपाधयस्तु विश्लिष्टाः। अतः स्वरूपैक्येऽपि विश्लिष्टोपाधिकृतभेदसद्भावान्नानुसन्धानापत्तिरित्यत आह- **उद्यतेति** ।। उद्यतान्यायुधानि येषु ते उद्यतायुधाः। उद्यतायुधा दोर्दण्डा येषां ते तथोक्ताः। पतितानि च तानि स्वशिरांसि चेति कर्मधारयः। पतितस्वशिरसामक्षीणीति षष्ठीसमासः।

शिरोगतस्य कबन्धगतस्य चाऽत्मनो विश्लिष्टोपाधिकृतभेदसद्भावेऽपि स्वरूपैक्यसद्भाव-मात्रेणान्योन्यज्ञानाद्यनुसन्धानदर्शनेन स्वरूपैक्यमेवानुसन्धाने प्रयोजकं नोपाधिसंश्लेषोऽपीति निश्चयाद् देवदत्तयज्ञदत्तयोः स्वरूपैक्ये सत्युपाधिविश्लेषाद् **विशेषः** अनुसन्धानाभावरूपो न वक्तव्यः। किन्तु

स्यादेवानुसन्धानमित्यर्थः । अथ वा **विश्लेषात्** कारणात् देवदत्ताद्युपाधीनां हस्ता-द्युपाधिभ्यो **विशेषो**ऽनुसन्धानप्रतिबन्धकत्वरूपो न शङ्कनीय इति । अस्यापि प्रयोजकस्याऽ-पाद्याव्यापकत्वान्न तदभावेनाऽपाद्याभावो वाच्य इत्युक्तं भवति ।

यस्तु ब्रूयाच्छिरःकबन्धाद्युपाधयो यद्यपीदानीं विश्लिष्टास्तथाऽपि प्राक्संश्लिष्टत्वात् नानुसन्धानं प्रतिबध्नन्ति । देवदत्ताद्युपाधयस्तु सर्वदा विश्लिष्टा, अतो नाऽनुसन्धानम् । न च गर्भिण्या गर्भस्थस्य चान्योन्यानुसन्धानप्रसङ्गः । व्यापकत्वमात्रेणोपाधित्वोपपत्तेरिति । तं प्रति नानादेहधारिणो योगिन उदाहर्तव्याः ।

नन्वयं ग्रन्थो यथा चैकेत्यतः प्रागेव सङ्गतः । तत्कुतो व्यवधानम् । उच्यते । अङ्गुल्याद्युपाधीनां संश्लिष्टत्वादेकैकापाये मुक्त्यभावेऽपि देवदत्ताद्युपाधीनां विश्लिष्टत्वात्तदपगमे मुक्त्युप-पत्तिरित्याकाङ्क्षाऽप्यनेन निरस्ता भवतीत्युभयशेषत्वादत्रास्योपन्यासो युक्तः । स्वरूपैक्ये संश्लिष्टानां च सुखाद्यनुन्धानहेतुत्वे विशेषाभावाद्विश्लिष्टोपाधिसद्भावे संसारावश्यम्भावान्न मुक्तिरिति ।

**(र.टि.) संसारावश्यम्भावादिति ।।** सुखदुःखाद्यनुसन्धानस्यैव संसारत्वादिति भावः ।

**(रा.टि.) न चेतनस्येति** च्छेदः । सहितं स्वरूपैक्यमित्यत्र प्रयोजकमित्यनुषङ्गः । संश्लेषश्चेत्यत्रापि प्रयोजक इत्यनुषङ्गः । बहुव्रीहिगर्भबहुव्रीहिरित्युपेत्याऽह- **उद्यतानीति ।।** एवं वचनोक्तेस्तात्पर्यार्थमुक्त्वा 'न विश्लेषा-द्विशेषः' इति वाक्यार्थमाह- **देवदत्तयज्ञदत्तयोरित्यादिना ।।** प्रकारान्तरेण तद्वाक्यार्थमाह- **अथ वेति ।। अस्यापीति ।।** उपाधिकृतभेदाभावसहितमुपाधिविश्लेषवत् स्वरूपैक्यमित्येवंरूपप्रयोजकस्याऽपाद्यभूतानु-सन्धानाव्यापकत्वं शिरःकबन्धस्थलेऽव्यापकत्वादित्यर्थः । यत्रानुसन्धानं तत्रोक्तरूपोपाधिरितिवत् यत्रोक्त-रूपोपाधिस्तत्रानुसन्धानमित्यापाद्यव्याप्यत्वमप्यावश्यकं मत्वा चोदयति- **न च गर्भिण्या इति ।। व्यापक-त्वेति ।।** हस्तपादादिसम्बन्धिसुखाद्यनुसन्धानादाविति भावः । **योगिन इति ।।** सौभर्यादियोगिनामनेक-देहधारणेन सर्वदेहसम्बन्धिसुखाद्यनुसन्धानस्य पुराणेषु श्रवणादिति भावः । **इत्याकाङ्क्षाऽपीति ।।** न केवलमुपाधीनां विश्लेषादनुसन्धानाभावादिरूपो विशेषो निरस्तः, किन्तु इयमाकाङ्क्षाऽपि निरस्तेत्यर्थः । शिरःकबन्धरूपोपाधिविश्लेषेऽपि योगिनो नानादेहधारिणश्च विश्लिष्टनानादेहनिमित्तसुखाद्यनुसन्धानदर्शनेन स्वरूपैक्यस्यैव तत्र प्रयोजकतया देवदत्तादेर्विश्लिष्टदेहरूपैकोपाध्यपगमेऽपि देहान्तरनिमित्तसुखाद्यनुसन्धान-स्यावर्जनीयतया न मुक्तेरवकाश इत्येवंभावेन तन्निरासोऽग्रे 'स्वरूपैक्ये' इत्यादिना व्यक्तः । **उभयेति ।।** 'उपाधिभेदाङ्गीकारे' इत्यादिवाक्यस्य, 'यथा च' इत्यादिवाक्यस्य च शेषत्वादित्यर्थः । शरीरस्योपाधीनां च विश्लिष्टत्वान्नानुसन्धानमिति शङ्कानिरासकत्वात्पूर्वशेषता, विश्लिष्टोपाधित्वादेकोपाध्यपगमेऽपि मुक्तिः स्यादिति शङ्कानिरासकत्वादुत्तरशेषता उद्यतेत्यादेरिति ज्ञेयम् ।

**(श्री.टि.)** ननु हस्तपादादिस्थलेऽनुसन्धाने सत्यप्युपाधिकृतभेदसद्भावाद्व्यभिचार इत्यत आह- **औपाधिक-भेदसद्भावेऽपीति ।।** 'न विश्लेषाद्विशेषः' इति वचनानुसारेण संश्लेषो विश्लेषाभाव इति व्याख्येयम् । एवमुत्तर-त्रापि । तथा च विश्लिष्टोपाधिकृतभेदाभावसहितं स्वरूपैक्यमेवानुसन्धाने प्रयोजकमित्यर्थः । एवं च हस्त-पादाद्युपाधीनां संश्लिष्टत्वेन विश्लिष्टोपाधिकृतभेदाभावसद्भावेनानुसन्धानोपपत्त्या न व्यभिचार इति भावः । **शिरोगतस्य कबन्धगतस्य चाऽत्मन इति ।।** ननु कबन्धेषु पातयन्तीति चेष्टोक्त्या जीवसद्भावः सिद्धः । अक्ष्णां कर्तृप्रयोज्यत्वरूपदर्शनकारणत्वोक्त्या तत्रापि तत्सद्भावः सिद्धः । तथा च जीवस्याणुत्वेन कथमुभय-त्रावस्थानम् । न च जीवानां सांशत्वात्तद्युक्तमिति वाच्यम् । देवादीनां सांशत्वेऽपि मानुषजीवानां तदभा-वात् । न च भारतयुद्धे हीदं कथ्यते । भारतयुद्धगताश्चोत्तमा एवातस्तेषामंशतोऽवस्थानं युक्तमिति वाच्यम् । मानुषजीवानामप्येवंभावस्य क्वचिद्दर्शनात् । द्वित्रिश्छिन्नगोधाशरीरेषु युगपच्चेष्टायाः सर्वजनप्रत्यक्षत्वाच्चेति चेत्, उच्यते । उत्तमानामंशतोऽवस्थानसम्भवान्नानुपपत्तिः । मानुषादिविषये त्वित्थम् । अघटितघटको भगवानच्छेद्यमपि जीवं बहुधा विच्छिद्य तत्तद्व्यापारान् कारयित्वा पुनरैक्यमापादयतीति नानुपपत्तिः । यथोक्तम्-

**(श्री.टि.)** 'अच्छेद्यस्यापि जीवस्य वि(भागं)च्छेदं बहुधा हरिः ।

कृत्वा भोगान्प्रदायैव चैक्यमापादयेत्पुनः ॥' इति ।

**विश्लेषा(दिति)द्विशेषादिति**[१] ॥ उपाधिविश्लेषलक्षणविशेषसद्भावादित्यर्थः । किमनेनोक्तं भवतीत्यत आह- **अस्यापीति** ॥ विश्लिष्टोपाधिकृतभेदाभावसहितस्वरूपैक्यरूपप्रयोजकस्यापीत्यर्थः । **आपाद्येति** ॥ कबन्धेषु व्यभिचारेणानुसन्धानरूपापाद्याव्यापकत्वादित्यर्थः । **वाच्य इतीति** ॥ न ह्यव्यापकाभावेनाव्याप्याभावो दृष्ट इति भावः । **सर्वदेति** ॥ तथा चानुसन्धाने सर्वदा विश्लिष्टोपाधिभेदाभावः प्रयोजकः । कबन्धेषु तु पूर्वं संश्लेषसद्भावेन सर्वदा विश्लिष्टोपाधिकृतभेदाभावसद्भावाद्युक्तमनुसन्धानमिति भावः ।

ननु गर्भिण्या गर्भस्य गर्भदशायां संश्लेषसद्भावेन सर्वदा विश्लिष्टोपाधिभेदाभावसत्त्वेऽप्यनुसन्धानाभावेन व्यभिचारान्न समव्याप्तिरतो नायमुपाधिरित्याशङ्क्य निराकरोति- **न च गर्भिण्या इति** ॥ **व्यापकत्वमात्रे-णेति** ॥ आपाद्यभूतानुसन्धानव्यापकत्वमात्रेणैवोपाधित्वोपपत्त्या समव्याप्तेरनपेक्षितत्वादिति भावः । इति यस्तु ब्रूयादिति सम्बन्धः । **योगिनः** सौभर्याद्याः । **उदाहर्तव्या इति** ॥ उक्तप्रयोजकस्य व्यभिचारस्थलत्वेनेति शेषः । तथा च तत्रानुसन्धाने सत्यपि सर्वदा विश्लिष्टोपाधिभेद एवास्तीति व्यभिचार इति भावः । यथोक्तम्-

'नानादेहभोगानुसन्धानं योगिनो यथा ।
न चेद्भोगानुसन्धानं तदिच्छा योगिनः कुतः ॥' इति ।

**अयं ग्रन्थ इति** ॥ अनुसन्धाने प्रयोजकान्तरमाशङ्क्य कबन्धादौ व्यभिचारकथनपर उद्यतायुधेत्ययं ग्रन्थ इत्यर्थः । **व्यवधानं** यथा चैकेतिवाक्येन । **अनेन** उद्यतायुधेति वाक्येन । **अत्रास्येति** ॥ तथा चैकेति-वाक्येनातिप्रसङ्गकथनानन्तरं कबन्धादौ व्यभिचारोपन्यासो युक्त इत्यर्थः । कथं निरस्ता भवतीत्यत आह- **स्वरूपैक्ये इति** ॥ सतीति शेषः । **संश्लिष्टानाम्** अङ्गुल्याद्युपाधीनाम् । **विश्लिष्टानां** देवदत्ताद्युपाधीनाम् । **हेतुत्वे** हेतुत्वविषये । न विशेष इत्यस्यार्थमाह- **विशेषाभावादिति** ॥ कबन्धस्थले उपाधिविश्लेषसद्भावेऽप्यनु-सन्धानदर्शनेनेत्यर्थः । तद्वत्प्रकृतेऽपीति शेषः । **विश्लिष्टेति** ॥ देवदत्तयज्ञदत्तयोरपि विश्लिष्टोपाधिकृतभेदसद्भाव इत्यर्थः । **संसारावश्यम्भावादिति** ॥ सुखदुःखाद्यनुसन्धानस्यैव संसारत्वेन तस्यावश्यम्भावादित्यर्थः ।

**(पां.टि.) उपाधीनां संश्लेषश्चेति** ॥ तथा च विश्लिष्टोपाधिकृतभेदाभावसहितं स्वरूपैक्यमेव प्रयोजकमिति भावः । **तथाऽपीति** ॥ तथा च संश्लेषायोग्योपाधिकृतभेदाभावसहितत्वं विशेषणमिति भावः । **योगिन इति** ॥ यदि संश्लेषयोग्योपाधिकृतभेदाभावसहितं स्वरूपैक्यमनुसन्धानप्रयोजकं स्यात्तथा सति सौभर्यादियोगिनो नानाशरीरगतसुखदुःखादीन्नानुसन्दधीरन्नित्याद्युदाहर्तव्यमित्यर्थः । उभयशेषतामेव दर्शयति- **स्वरूपैक्य इति,** इत्यप्याहुः । **संसारेति** ॥ सुखदुःखाद्यनुसन्धानस्यैव संसारत्वादिति भावः ।

**(व्या.टि.)** उक्तं चेतनत्वविशिष्टं स्वरूपैक्यप्रसङ्गोपाधिमुदास्य संश्लेषाभावविशिष्टोपाधिकृतभेदाभावविशिष्ट-चेतनत्वे सति स्वरूपैक्यरूपं विशिष्टमनुसन्धाने प्रयोजकमाशङ्कते- **नन्वित्यादिना** ॥ तत्र विशेष्यभूत-विशिष्टमात्रस्य प्रयोजकतां निरस्यति- **नेति** ॥ **उपाधिकृतेति** ॥ अत्र प्रतियोगी प्रतिबन्धकः । यद्वक्ष्यति 'विशेषोऽनुसन्धानप्रतिबन्धकत्वरूपः' इति । तदभावः कारणमित्यर्थः । तस्योत्तेजकमाह- **संश्लेषश्चेति** ॥ **विशिष्टा इति** ॥ विश्लेषस्यानुसन्धानप्रतिबन्धकतावच्छेदकत्वादिति भावः । उत्तेजकाभावविशिष्टप्रतिबन्धक-मत्रोपपादयति- **अत इति** ॥ उद्यतायुधदोर्दण्डा इति बहुव्रीहिगर्भबहुव्रीहिरित्याह- **उद्यतानीति** ॥ पतित-स्वशिरोऽक्षिभिरित्यत्र पतिताः स्वे येषामिति समासेऽर्थानुपपत्तिः । शिरःपातेऽपि कबन्धपाताभावात् । पतितानि स्वशिरांसि येषामिति बहुव्रीहौ 'उरःप्रभृतिभ्यः कप्' इति समासान्तापाताच्चेत्यस्वरसमुरसिकृत्य व्याचष्टे- **पतितानि च तानीति** ॥ कबन्धस्थात्मनां द्रष्टृत्वात्कबन्धाः पश्यन्तः इत्युपचर्यते । किमेवंवादिनोपाधि-संश्लेषविशिष्टस्वरूपैक्यमनुसन्धाने प्रयोजकीक्रियते उत तदुपलक्षितं वेति विकल्प्याऽऽद्यं कल्पं पराचष्टे- **शिरो-गतस्येत्यादिना** ॥ अत्र कैश्चिच्छिन्नगोधादिशरीरेषु भोगासम्भवमाशङ्क्य 'अच्छेद्यस्यापि जीवस्य' इत्यनु-भाष्योदाहरणेन समाहितम्, तदसङ्गतम् । तस्य 'अविरोधश्चन्दनवत्' सति सूत्रोक्तसांशजीवविषयत्वात् । निरंशेषु जीवविभागाभावात् । 'गुणाद्वाऽऽलोकवत्' इति सूत्रे 'अन्ये चिद्गुणेनैव नान्यथा' इति प्रकाशव्याप्युक्तेः। अतः प्रकाशविभागेनैव निर्वोढव्यम् । **विश्लिष्टस्येति** ॥ संश्लेषस्य व्यतिरेकव्यभिचारप्रदर्शनम् । **स्वरूपैक्य-सद्भावमात्रेणेति** ॥ सद्भावेति विशेष्यस्यान्वयः प्रदर्शितः । मात्रेणेति विशिष्टस्य तद-भावश्च । **संश्लेषोऽपी-तीति** ॥ विशिष्टमित्यर्थः । मूलीयविशेषपदस्य देवदत्तयज्ञदत्तयोरिति शेषं मत्वा व्याचष्टे- **देवदत्तेत्यादि** ॥ अधुना विशेषपदमुपाधीनामिति विशेषेण विशेष्यं

विविनक्ति- **अथ वेति ।। कारणात्** प्रयोजकादित्यर्थः । अभिसन्धिमुद्धाटयति- **अस्यापीति ।। अव्यापकत्वादिति ।।** आपाद्यवन्निष्ठाभावप्रतियोगित्वादित्यर्थः । उपाधिवैकल्यमाह- **न तदभावेनेति ।।** द्वितीयं कल्पं परमतत्वेनानूद्यावद्यति- **यस्तु ब्रूयादित्यादिना ।।** संश्लेषस्योपलक्षणतया प्रयोजकतामाह- **प्रागिति ।। सर्वदेति ।।** सार्वकालिकविश्लेषस्यानुसन्धानप्रतिबन्ध-कतावच्छेदकत्वमिति भावः । प्रयोजकत्वं कारणत्वमित्यवगत्यान्वयव्यभिचारचोदनापदेशेन प्रसञ्जयति- **न चेति ।।** नात्र प्रयोजकत्वं कारणत्वं किन्तूपाधित्वम् । तच्च विषमव्याप्त्यापि सम्भवतीत्याह- **व्यापकत्वमात्रे-णेति ।।** यथाश्रुतव्याख्याने विशिष्टस्यैव प्रयोजकत्वप्रसक्त्या गर्भिणीगर्भयोरापादकाभावेनाऽपादनानुपपत्तिः। उपाधेरापाद्यव्यभिचारप्रदर्शनानुपपत्तिश्च। अतो विकल्पमुखेन दूषणम् । एतद्दूषणस्यानुक्तेः । 'नानादेहग-भोगानुसन्धानं योगिनो यथा' इति ग्रन्थान्तरोक्तमनुस्मर्तव्यमित्याह- **तं प्रतीति ।। नानादेहधारिण इति ।।** सर्वदोपाधिसंश्लेषरहिता इत्यर्थः ।

ततश्चायमाखण्डलार्थः । गर्भिणीगर्भयोर्मातापुत्रयोः सत्यपि कदाचित्संश्लेषे स्वरूपैक्याभावेनाननुसन्धान-दर्शनात् कबन्धादौ संश्लेषोपलक्षिते सर्वथा तद्रहिते सौभर्यादौ चासत्यपि उपाधिसंश्लेषे स्वरूपैक्यमात्रेणानु-**(व्या.टि.)** सन्धानदर्शनादनन्यथासिद्धान्वयव्यतिरेकाभ्यां स्वरूपैक्यभावाभावौ चानुसन्धानाननुसन्धानयोः प्रयोजकौ न संश्लेषविश्लेषशब्दितसंयोगविभागाविति देवदत्तयज्ञदत्तयोः स्वरूपैक्येऽनुसन्धानं स्यादेवेति सुस्थः प्रसङ्ग इति । तदेतदनुसन्धायोक्तमनुव्याख्याने 'चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम्' इति। असङ्गत्या निगृह्णाति- **नन्वयमिति ।। प्रागेवेति ।।** सुखव्यवस्थाभङ्गप्रस्ताव इत्यर्थः। तत्र हि 'हस्तपादाद्युपाधिभेदेऽपि' इति प्राचा ग्रन्थेनोपाधिभेदाभावस्याऽपाद्याव्यापकत्वेऽभिहिते उपाधिसंश्लेषस्योपाधित्वमित्याकाङ्क्षोदयात्तदुप-शामकस्तत्रैव सङ्गत इत्यर्थः । अत एव तत्त्वोद्योते हस्तपादादीतिग्रन्थानन्तरमेवास्य निवेशः । एवेत्यत्राऽकाङ्क्षा-विरहं सूचयति । **व्यवधानमिति ।।** बद्धमुक्तव्यवस्थाभञ्जकग्रन्थेन तदाकाङ्क्षाविच्छेदात् । निविडूभिरिव सामि-धेन्याकाङ्क्षायाः पुनरुत्थाप्यत इत्यत आह- **तत्कुत इति ।।** प्रकरणशुद्धिमवधीर्य पुनरुत्थानायोगादित्यर्थः । अस्य यथा चैकेत्यनेनाप्याकाङ्क्षां दर्शयति- **अत इति ।।** इत्याऽकाङ्क्षापीति पूर्वाकाङ्क्षासमुच्चयः । **उभयशेषत्वा-दिति ।।** उभयान्वितत्वादित्यर्थः । ननु कथमेकस्योभयशेषत्वम्? किमाश्चर्यम् । यथा पूर्वतन्त्रे अच्छिद्रेणेत्यादेः 'चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनातु' इति दीक्षितयावनमन्त्रत्रयशेषत्वम् । यथा चोत्तरतन्त्रे स्मृत्यधिकरणस्य युक्तिसमयोभयविरोधशामकत्वेनोभयवादशेषत्वं, तथैवेत्यवैहि । मूलस्य यतो न मुक्तिरिति शेषं मत्वा तद्भावमाह- **स्वरूपैक्य इति ।। संसारेति ।।** सुखदुःखादिरूपः संसारः ।

**मूलम्- किञ्चोपाधिरात्मन एकदेशं ग्रसत्युत सर्वमात्मानम् । एकदेशाङ्गीकारे सावयवत्वम् । सावयवस्य चानित्यत्वं तैरङ्गीकृतम् । सर्वग्रासे च नोपाधिर्भेदकः स्यात् । उपाधिकृतांशकल्पने तदुपाधिकृतत्वे आत्माश्रयत्वम् । उपाध्यन्तर-कल्पनेऽनवस्था ।**

**(त.मं.)** अथोपाधिग्रासार्थं उपाधिकृतांशकल्पने । तत्र चोद्यम्- किं तेनैवोपाधिना कृतोंऽशः आहोस्वित् उपाध्यन्तरेणेति ।

**टीका-** एवमुपाधेर्भेदकत्वमङ्गीकृत्य सुखदुःखादिव्यवस्था बद्धमुक्तव्यवस्था च परपक्षे न सम्भ-वत इत्युक्तम् । इदानीमुपाधेर्भेदकारित्वमेव नोपपद्यत इति प्रतिपादयितुमाह- **किञ्चेति ।।** अन्यच्चाभेदवादिनां दूषणमुच्यत इत्यर्थः । तद्वक्तुं विकल्पेन पृच्छति- **उपाधिरिति ।।** किमित्यनु-वर्तते । अथ वा किञ्चोपाधिरित्यादिकमेव वाक्यम् । तत्र किंशब्दः प्रश्ने चशब्दो दूषणसमुच्चये । आत्मन इति ब्रह्मणो जीवस्य वा । असंयुक्तस्य भेदकत्वेऽतिप्रसङ्गात्संयुक्त एव भिनत्तीति वाच्यम् । तत्रोपाधिनाऽऽत्मनः संयोगः किमात्मनः प्रदेशवृत्तिरुत व्याप्यवृत्तिरित्यर्थः ।

नन्वात्मनि निरंशे प्रश्न एवायं नोपपद्यते । मैवम् । न हि परो निरंशत्वमेवाङ्गीकरोतीत्यतः प्राक्प्रसक्तम् । तथाऽपि संयोगस्य प्रदेशवृत्तित्वं प्रसिद्धमिति विकल्पानुपपत्तिः । न । गुणेषु प्रकारद्वयदर्शनात्पराङ्गीकारस्य चानिश्चितत्वाद्विकल्पोपपत्तेः ।

उतशब्दः पक्षान्तरे । आत्मानं ग्रसतीति वर्तते । **ग्रसति** आत्मन्यन्तर्भावयति । तदेकदेशेन कृत्स्नेन वा तेन संयुज्यत इत्यर्थः । आद्ये दोषमाह- **एकदेशेति ॥** एकदेशग्रासाङ्गीकार इत्यर्थः । सावयवत्वमात्मनः प्रसज्यत इति शेषः । एकदेशोऽवयव इति परमतेऽनर्थान्तरत्वात् ।

ननु संयोगस्यैकदेशवृत्तित्वं नाम स्वात्यन्ताभावसमानाधिकरणत्वम् । तत्कथमयं प्रसङ्गः । मैवम् । भावाभावयोरेकाधिकरणत्वे सर्वत्र तयोर्विरोधाभावप्रसङ्गेन जगति विरोधमात्राभावप्रसङ्गात् सर्वविरोधानां तन्मूलत्वात् । भावाभावयोर्हि परस्परप्रतिक्षेपात्मकत्वेन साक्षाद्विरोधः । तद्द्वारा त्वन्येषामिति स्थितिः । अतस्तद्विरोधस्थित्यै स्वाभाविको वौपाधिको वैकदेशोऽङ्गीकार्य एव ।

अस्त्वात्मनः सावयवत्वं, ततः को दोष इति चेत् । सावयवत्वेनानित्यत्वप्रसङ्ग इति ब्रूमः । सावयवत्वेऽप्यनित्यत्वं कुत इति चेत् । पराभ्युपगतव्याप्त्या परस्याऽपादनमिति भावेनाऽह- **सावयवस्य चेति ॥** प्रसङ्गसमुच्चये चशब्दः । **तैः** अस्मदतिरिक्तैर्वादिभिः । यथाऽऽहुः- 'कृतसावयवत्वादिप्रयुक्ता च विनाशिता' इति ।

ननु द्रव्योपादानं द्रव्यमवयव उच्यते । यथा पटस्य तन्तवः । ततः सावयवं नामोपादानवत् । तस्यानित्यत्वं सर्वैरप्यङ्गीकर्तव्यम् । तस्मात्तैरित्यनुपपन्नम् । उच्यते । उपादानव्यतिरिक्तोऽप्येक-देशोऽस्मन्मतेऽङ्गीक्रियते । पटस्य खलूपादानं तन्तवः । तद्व्यतिरिक्ताश्च हस्तवितस्त्यादिपरिमिता एकदेशा दृश्यन्ते । तेऽप्युपादानमिति चेन्न । आरभ्यारम्भकत्वप्रसङ्गेन परैस्तदनभ्युपगमात् । किञ्च निरुपादानस्याप्याकाशस्यैकदेशा दृश्यन्ते । तदाश्रयेण च संयोगस्य प्रदेशवृत्तित्वं युज्यते । अतो नास्मन्मते तन्मात्रेणानित्यत्वं प्रसज्यते । परैस्तूपादानातिरिक्तस्यैकदेशस्यानङ्गीकृतत्वा-दुपाधिसंयोगस्यैकदेशवृत्तित्वाङ्गीकारे सोपादानत्वमेवाङ्गीकृतं स्यादिति तेषामेवानित्यत्वप्रसङ्गः। अनित्यत्वे च मोक्षाभावात् पुनर्बद्धमुक्तव्यवस्थाऽभाव एवेति ।

द्वितीये दोषमाह- **सर्वेति ॥** न हि सर्वस्मिन् पटे महारजनेन लिप्ते भेदबुद्धिरुत्पद्यते । एकदेशसम्बन्धेऽनित्यत्वप्रसङ्गाद्व्याप्यवृत्तित्वेऽङ्गीकार्ये नोपाधेर्भेदहेतुत्वमित्यभिप्रायः । ननूपाधि-संयोगः प्रदेशवृत्तिरेव । तथात्वे सावयवत्वापत्तिरिति चेन्न । इष्टत्वात् । न चानित्यत्वप्राप्तिः । तस्याप्यंशस्योपाधिकृतत्वाङ्गीकारात् । स्वाभाविकस्यैवांशवत्त्वस्यानित्यत्वेन व्याप्तत्वादिति चेत्तत्र वक्तव्यम् । किमेतेनैवोपाधिसंयोगेन कृतेंऽशेऽयमेवोपाधिसंयोगः, उतोपाधिसंयोगान्तरेण कृते । आद्ये दोषमाह- **उपाधीति ॥ तदुपाधिकृतत्वे** तदुपाधिसंयोगकृतत्वेंऽशस्येति शेषः । **आत्माश्रयत्वम्** एतदुपाधिसंयोगसिद्ध्यर्थमेतदुपाधिसंयोगस्यापेक्षितत्वात् । द्वितीयं दूषयति- **उपाध्यन्तरेति ॥** तस्याप्युपाधिसंयोगस्यांशवृत्तित्वेनोपाधिसंयोगान्तरापेक्षत्वादनवस्था । उपाधिसंयोगद्वयाङ्गीकारेऽन्योन्याश्रयत्वम् । त्रयाद्यङ्गीकारे चक्रकमिति च स्फुटत्वान्नोक्तम् । पूर्वपूर्वसंयोगेनैवांशभेदस्य कृतत्वे सत्युत्तरोत्तरसंयोगवैयर्थ्यञ्च । यद्यप्यत्रांशे संयोगपक्षे भेदकत्वा-नुपपत्तिः कृतस्य करणायोगाद्वक्तुं शक्यत एव । तथापि सा शिष्यैरेवोह्यतामिति भावेन सावयवत्व-मापाद्य तस्य चाऽत्माश्रयानवस्थादिप्रसङ्गेनैवौपाधिकत्वनिरासेन स्वाभाविकत्वमापाद्यानित्यत्व-मेवाऽपादितम् ।

ननु च दण्डकुण्डलाद्युपाधिकृतो देवदत्तस्य भेदो दृश्यते । तत्कथमुपाधिकृतो भेदो नास्तीत्यु-च्यते । मैवम् । न दण्डादिना देवदत्तस्य भेदः क्रियते । किन्तु दण्डादिविशेषणसम्बन्धेन देवदत्तो विशिष्टरूपं द्रव्यान्तरमुत्पादयति । व्यावृत्तिरेव वैशिष्ट्यमिति मतेऽपि दण्डादिकं प्राक् स्थितामेव व्यावृत्तिं बोधयति । न ह्यवस्थान्तरापादनमेव भेदकत्वमत्र विवक्षितं तस्य व्यवस्थाऽनुपयोगि-त्वात् । किं नाम युगपदनेकत्वहेतुत्वमिति ।

**(र.टि) ब्रह्मणो जीवस्य वेति ॥** अज्ञानरूपोपाधेर्ब्रह्मसम्बन्धस्य, देहादिरूपोपाधेर्जीवसम्बन्धस्य परेणाङ्गीकृतत्वादिति भावः । **भावाभावयोरिति ॥** प्रतियोगितत्संसर्गाभावयोरेकस्मिन् काल इत्यर्थः । **आरभ्यारम्भकत्वेति ॥** हस्तवितस्त्यादीनां पटोपादानत्वे

उपादानस्य प्राक्तनत्वनियमेन हस्तवितस्त्यादय आदौ स्वयमुत्पद्य पश्चात्पटारम्भका भवेयुरित्यारभ्यारम्भकत्वप्रसङ्गेनेत्यर्थः । अथ वा हस्तवितस्त्याद्युपा-दानस्यान्यस्याभावात्तन्तूनामेवोपादानत्वे तन्तूनां हस्तवितस्त्यादीन् **आरभ्य** उत्पाद्य पटारम्भकत्वप्रसङ्गेनेत्यर्थः।

**(रा.टि) दूषणसमुच्चय इति ।।** व्यवस्थानुपपत्तिरूपप्रागुक्तदूषणेनास्येत्यर्थः । **ब्रह्मण इति ।।** 'तदेवोपाधि-वशान्नानाजीवभावमापद्यते' इति, यदि चैकमेवेत्यत्रोक्तत्वाद्धस्तपादाद्युपाधिवशाज्जीवो नानांशभावमापद्यत इति 'हस्तपादाद्युपाधिभेदेऽपि' इत्यादिना ज्ञापनाज्जीवस्येत्युक्तम् । विकल्पायोगो हि प्रष्टव्यार्थविरोधिनः पूर्वत्र प्रसक्तत्वाद्वा अनिर्वचनीयस्यैव सर्वथाऽलीकत्वेन वा । नाऽद्य इत्याह- **न हीति ।। अतः प्रागिति ।।** इतः **(रा.टि)** पूर्वमित्यर्थः । अन्त्य आह- **तथापीति ।।** विरोधिप्रसक्त्यभावेऽपि । प्रसिद्धमिति न विकल्पानुप-पत्तिरिति योजना । तावता कथं विकल्पः, कोटिद्वयप्रसिद्ध्या भाव्यत्वादित्यत आह- **गुणेष्विति ।।** संयोगादौ प्रदेशवृत्तित्वस्य रूपादौ व्याप्यवृत्तित्वस्य चेत्येवंप्रकारद्वयस्येत्यर्थः । उपाधिसंयोगस्य च गुणत्वादिति भावः । **पराङ्गीकारस्येति ।।** निरंशत्वाङ्गीकारस्येत्यर्थः । **प्रसङ्गसमुच्चय इति ।।** सावयवत्वानित्यत्वापादनयोस्समुच्चय इत्यर्थः । **आरभ्यारम्भकत्वेति ।।** हस्तवितस्त्यादीनामुपादानत्वे स्वयम् **आरभ्य** पटात्पूर्वमुत्पाद्य पश्चात् पटारम्भकत्वप्रसङ्गेनेत्यर्थः । ननूपाधेर्भेदकत्वानुपपत्तिं वक्तुमारभ्य कथं सावयवत्वाद्यापादनं क्रियत इत्यतस्तत्रैव पर्यवसानमाह- **एकदेशसम्बन्ध इति ।। उत्तरोत्तरसंयोगवैयर्थ्यं चेति ।।** तत्कृत्यस्यांशसम्पादनस्य प्रागेव जातत्वादिति भावः । **अनुपपत्तिरिति ।।** वक्तुं शक्यत एवेत्यन्वयः । भ्रान्तश्चोदयति- **ननु च दण्डेति ।।** अस्त्वेवं प्रकृतेऽपि सुखदुःखादिव्यवस्थापकमवस्थान्तरकरणमुपाधिनेत्यत आह- **न ह्यवस्थान्तरेति ।।** उपाधेर्भेदकत्वायोगः ।

**(श्री.टि)भेदकत्वं** भेदकारित्वम् । **अनुवर्तत इति ।।** किञ्चेति पूर्ववाक्यादित्यर्थः । **ब्रह्मणो जीवस्य वेति ।।** अज्ञानरूपोपाधेर्ब्रह्मसम्बद्धत्वस्य देहादिरूपोपाधेर्जीवसम्बद्धत्वस्य परेणाङ्गीकृतत्वादिति भावः । **अति-प्रसङ्गादिति ।।** काश्मीरस्थेन महारजनेन केरलदेशवर्तिवाससोऽवच्छेदप्रसङ्गादित्यर्थः । **अतः प्रागिति ।।** 'किञ्चोपाधिः' इति ग्रन्थात्प्रागित्यर्थः । येन प्रश्नो नोपपद्येतेति भावः । प्रकारान्तरेण प्रश्नानुपपत्तिं शङ्कते- **तथापीति ।। प्रसिद्धमितीति ।।** तथा च सन्देहायोगेन तन्मूलकविकल्पप्रश्नानुपपत्तिरिति भावः । परिहरति- **नेति ।। गुणेष्विति ।।** केचिद्रूपादयो गुणा व्याप्यवर्तिनः प्रसिद्धाः । शब्दो विभागश्चाव्याप्यवर्तिनौ प्रसिद्धौ । संयोगश्च गुणः । अतो व्याप्यवृत्तिरव्याप्यवृत्तिर्वेति सन्देहसम्भवेन युक्तस्तन्मूलको विकल्पप्रश्न इत्यर्थः ।

ननु तथाऽपि परेण संयोगस्य प्रदेशवृत्तित्वमङ्गीकृतमिति । निश्चितत्वेन पुनः प्रश्नानुपपत्तिरित्यत उक्तम्- **पराङ्गीकारस्य चेति ।।** नन्वेकदेशग्रासाङ्गीकारे आत्मनः सावयवत्वं कुतः प्रसज्यत इत्यत आह- **एकदेशोऽवयव इति ।।** सिद्धान्ते पटे उपादानभूततन्तुव्यतिरिक्तानामपि हस्तवितस्त्यादिरूपैकदेशानामङ्गीकारात् परमत इत्यु-क्तम् । **तत्कथमिति ।।** एकदेशवृत्तित्वस्य प्रदेशवृत्तित्वरूपत्वे हि सावयवत्वापादनं सङ्गतं स्यान्न चैवमिति भावः । **एकाधिकरणत्व इति ।।** संयोगस्य स्वात्यन्ताभावसामानाधिकरण्याङ्गीकारे भावाभावयोरेकाधिकरणत्व-प्राप्तेरित्यर्थः । सर्वविरोधानां ज्ञानवाक्यस्ववचनस्वन्यायविरोधानाम् । **तन्मूलत्वादिति ।।** भावाभावविरोध-मूलकत्वादित्यर्थः । तदेवोपपादयति- **भावाभावयोर्हीति ।।** परस्परप्रतिक्षेपात्मकत्वेन परस्परविरुद्धरूपत्वेन । **तद्द्वाराऽन्येषामिति ।।** घटतदभावयोर्विरुद्धत्वादेव ज्ञानतदभावयोर्घटोऽस्ति घटो नास्तीति घटतदभाव-प्रतिपादकवाक्ययोश्च विरोधः । एवमन्यत्रापीति भावः । तद्विरोधस्थित्यै भावाभावयोर्विरोधस्थित्यै । विरोधस्थितौ सत्यामिति यावत् । तच्छान्त्यर्थमिति शेषः । **स्वाभाविक इति ।।** तथा च संयोगस्य स्वात्यन्ताभावसामानाधि-करण्यमङ्गीकुर्वताऽपि विरोधपरिहाराय स्वाभाविक औपाधिको वा एकदेशोऽङ्गीकार्य एवेत्यर्थः । अत एवाऽऽहुः

**(श्री.टि.)** पदार्थविदः- 'अग्रे वृक्षः कपिसंयोगीति मूले नेति प्रतीतेरवच्छेदकभेदेनाविरोधः' इति । तत्रावच्छे-दकशब्देन प्रदेशस्यैवाभिप्रेतत्वादित्यवधेयम् । **प्रसङ्गसमुच्चय इति ।।** सावयवत्वापादनेन सहानित्यत्वापादनस्य समुच्चय इत्यर्थः । **कृतेति ।।** द्वन्द्वान्ते श्रूयमाणस्य त्वप्रत्ययस्य प्रत्येकं सम्बन्धः । तथा च कृतं कृतत्वम् । कृतकत्वमित्यर्थः । एवं च विनाशिता अनित्यता कृतकत्वसावयवत्वादिप्रयुक्तेति तदर्थो द्रष्टव्यः ।

शिष्यश्शङ्कते- **नन्विति ।।** द्रव्यमवयव इत्युक्ते घटादेरप्यवयवत्वं स्यादत उक्तम्- **द्रव्योपादानमिति ।।** तावत्युक्ते सिद्धान्ते

शब्दरूपगुणस्याप्याकाशं प्रत्युपादानत्वेनावयवत्वं स्यादत उक्तम्- **‘द्रव्यमिति’ इति** सम्प्रदायविदः **।। तस्येति ।।** स्वोपादानकद्रव्यस्येत्यर्थः । **सर्वैरिति ।।** भवदादिभिरपीत्यर्थः । **आरभ्यारम्भ-कत्वप्रसङ्गेनेति ।।** तन्तूनामिवेति शेषः । तन्तुवद्धस्तवितस्त्यादिपरिमितैकदेशानामपि पटोपादानत्वे हस्त-वितस्त्यादिपरमितैकदेशोपादानस्यान्यस्याभावेन तन्तूनामेव तदुपादानत्वे वाच्ये तन्तूनामादौ हस्तवितस्त्यादि-परिमितैकदेशानामारभ्योत्पाद्य पटारम्भकत्वप्राप्त्या विरम्य व्यापारप्रसङ्गेनेत्यर्थः । पटोत्पादने प्रवृत्तानामस्माकं न हस्तवितस्त्याद्येकदेशोत्पादनेनैव चारितार्थ्यं किन्तु पटोऽप्यस्माभिः करणीय इति मत्वा हस्तवितस्त्यादीनुत्पाद्य पश्चात्पटस्तन्तुभिरारब्धव्य इत्येवं स्थित्वा व्यापाररूपो विरम्यव्यापारश्चेतनधर्मो नाचेतनेषु तन्तुषु सम्भवतीति भावः । आकाशस्य अव्याकृताकाशस्य । **दृश्यन्त इति ।।** साक्षिणेति शेषः । इह विहङ्गमः पततीत्यादिप्रत्ययस्य साक्ष्युपनीताव्याकृताकाशैकदेशाधिकरणकत्वस्यान्यत्र समर्थितत्वादिति भावः । तदाश्रयेण तादृशैकदेशा-श्रयेण । तन्मात्रेण तादृशैकदेशवृत्तितामात्रेण । **अङ्गीकृतं स्यादिति ।।** आत्मन इति शेषः । तेषां परेषाम् । अत एवानित्यत्वप्रसङ्गो नास्मन्मत इत्यर्थः । अनित्यत्वापादने इष्टापत्तिं परिहरति- **अनित्यत्वे चेति ।।** तथात्व इत्यनन्तरम् आत्मन इति शेषः । **तस्यापीति ।।** उपाधिसंयोगो यदंशवृत्तिस्तस्यापीत्यर्थः । तर्हि अनित्यत्वप्राप्तिः कथं परिहृतेत्यत आह- **स्वाभाविकस्यैवेति ।।** न तूपाधिकृतांशस्येत्यर्थः । **एतेनैवेति ।।** जीवब्रह्मभेद-हेतुभूतेनैवेत्यर्थः । **अपेक्षितत्वादिति ।।** तथा च स्वापेक्षया स्वस्यैव पूर्वभावित्वप्राप्त्या आत्माश्रयत्वमिति भावः । **अपेक्षत्वादिति ।।** अंशस्येति शेषः । **अनवस्थेति ।।** अंशोपाधिसंयोगपरम्परयाऽनवस्थेत्यर्थः । नन्वेतदुपाधिसंयोगकृतेंऽशे उपाध्यन्तरसंयोगः । उपाध्यन्तसंयोगकृतेंऽशे एतदुपाधिसंयोग इत्युपाधिसंयोगद्वयाङ्गी-कारान्नानवस्थेति चेत्तर्ह्यन्योन्याश्रयस्स्यादित्याह- **उपाधिसंयोगद्वयेति ।। त्रयादीति ।।** उपाधिसंयोग-त्रयाद्यङ्गीकार इत्यर्थः । **पूर्वपूर्वेति ।।** एतदुपाधिसंयोगस्यांशवृत्तित्वोपपत्त्यर्थं ये उपाध्यन्तरसंयोगा ब्रह्मणि कल्प्यन्ते ते पूर्वपूर्वसंयोगाः । तदन्ये उत्तरोत्तराः । तथा च पूर्वोपाधिसंयोगेनैवांशभेदस्य प्राप्तत्वाद् उत्तरोपाधि-संयोगकल्पनावैयर्थ्यमित्यर्थः । संयोगपक्षे उपाधिसंयोगपक्षे । भेदकत्वानुपपत्तिः उपाधेर्भेदकारित्वानुपपत्तिः । तत्र हेतुः- **कृतस्येति ।।** उपाधिसंयोगस्यांशवृत्तित्वाङ्गीकारे उपाधिसंयोगात् प्रागेवांशः सिद्धः । अन्यथा तस्यैतद्- वृत्तित्वकथनायोगात् । तथा चांशसिद्ध्या तद्भेदस्यापि सिद्धत्वेनोपाधिना पुनस्तत्तत्करणायोगादित्यर्थः । **इति वक्तुं शक्यत एवेति ।।** तथा च सावयवत्वापादनं व्यर्थमिति भावः । **सेति ।।** उपाधेर्भेदकत्वानुपपत्तिः । **(श्री.टि.)** तस्य चावयवस्यौपाधिकत्वनिरासेनेत्यन्वयः । तत्र हेतुः- **आत्माश्रयेत्यादि ।।** ‘तदुपाधिकृतत्वे’ इत्यादिनोक्तरीत्येत्यर्थः । दण्डादिना दण्डाद्युपाधिना । देवदत्तस्य विशेष्यभूतदेवदत्तस्वरूपस्य । तर्ह्युपाधेः कृत्याभावाद्वैयर्थ्यमित्याशयेन शङ्कते- **किन्त्विति ।।** उत्तरमाह- **दण्डादीति ।।** उत्पादयतीत्यनन्तरम् इत्येवेति शेषः । तथा च विशेष्यभूतो देवदत्तो विशिष्टं प्रत्युपादानं विशिष्टशुद्धयोश्च भेदाभेदौ । एवं च विशेष्यभूतदेवदत्तस्य विशिष्टाकारेण परिणामे दण्डाद्युपाधिसम्बन्धो निमित्तमित्येव न तु देवदत्ते भेदकारीत्यर्थः ।

ननु दण्डाद्युपाधिस्तावद् देवदत्ते वैशिष्ट्यमुत्पादयति । अदण्ड्यादिव्यावृत्तिरेव वैशिष्ट्यमित्यङ्गीकृतं वैशेषिकैः । व्यावृत्तिरेव च भेदः । एवं च दण्डाद्युपाधेर्व्यावृत्त्यपरपर्यायवैशिष्ट्याख्यभेदकारित्वं प्राप्तमेवेति कथमुपाधिकृतो भेदो नास्तीत्युच्यत इत्यत आह- **व्यावृत्तिरेवेति ।। प्राक्स्थितामेवेति ।।** अदण्ड्यादि-व्यावृत्तेरन्योन्याभावरूपाया नित्यत्वेन वैशेषिकैरङ्गीकाराद् दण्डाद्यभावदशायामपि देवदत्तेऽदण्डिव्यावृत्ति-सद्भावेन दण्डाद्युपाधिसम्बन्धस्य प्राक्स्थितादण्ड्यादिव्यावृत्तिज्ञापकत्वमेव न कारकत्वमिति भावः ।

नन्वदण्डित्वदशायामदण्डिव्यावृत्तिः कथम् । अन्योन्याभावस्य प्रतियोगितावच्छेदकेन सह विरोधाद् अदण्डित्ववत्यदण्डिव्यावृत्तेरयोगादिति चेदुच्यते- अत्यन्ताभाववदन्योन्याभावस्याप्यव्याप्यवृत्तित्वात् । न चात्यन्ताभावस्याव्याप्यवृत्तित्वेऽपि तस्य प्रतियोगिसामानाधिकरण्याविरोधघटकावच्छेदकभेदवदिहान्योन्या-भावस्याव्याप्यवृत्तित्वे प्रतियोगितावच्छेदकसामानाधिकरण्याविरोधघटकं किमपि नास्तीति वाच्यम् । काल-भेदस्यैवेह सत्त्वात् । पूर्वमदण्डिनोऽपि पश्चाद्दण्डसम्बन्धदशायामदण्डिव्यावृत्तेरपि सत्त्वेनादण्डित्वादण्डि-व्यावृत्त्योः कालभेदेनाविरोधोपपत्तेः । यद्वा यथाऽनित्योऽपि घटात्यन्ताभावो भूतले घटसद्भावदशायां भूतला-संसर्गितयाऽवृत्तिन्यायेनास्ति ततो न विरोधः । घटापसरणे तु भूतलघटसम्बन्धध्वंसरूपव्यञ्जकसम्पत्त्या प्रतीयत इत्यङ्गीकृतं तार्किकैः । एवमदण्डित्वदशायां नित्यभूतादण्डिव्यावृत्तिरपि देवदत्तासंसर्गितयाऽस्त्येवातो न विरोधः । सा च दण्डसम्बन्धरूपव्यञ्जकसमवधाने सति प्रतीयत इति द्रष्टव्यमिति । ननु दण्डाद्युपाधिसम्बन्धेन देवदत्ते पूर्वमविद्यमानं दण्डित्वादिरूपमवस्थान्तरं जायत इत्यनुभवसिद्धम् । एवं चावस्थान्तरापादकत्वमेव भेदकत्वमित्युपाधेरवस्थान्तररूपभेदकारित्वसिद्धिरित्यत आह- **न हीति ।। अत्रेति ।।** सुखदुःखादि-व्यवस्थोपपादनरूपे प्रकृत

इत्यर्थः । कुतो न हि विवक्षितमित्यत आह- **तस्येति ।।** यथैकस्मिन् देहे बाल्ययौव-नाद्यवस्थान्तरापत्तौ न देवदत्तयज्ञदत्तगतसुखदुःखादिव्यवस्थोपपत्तिरेवमेकस्यैव शरीरलक्षणोपाधेर्देव-दत्तेऽवस्थान्तरापादकत्वप्राप्तावपि न तेन देवदत्तयज्ञदत्तयोस्सुखदुःखादिव्यवस्था सिद्ध्यतीत्येवमवस्थान्त-रापादकत्वरूपभेदकत्वस्य सुखदुःखादिव्यवस्थानुपयोगित्वादित्यर्थः । तर्हि व्यवस्थोपयोगिभूतं भेदकत्वं कीदृशमिति पृच्छति - **किं नामेति ।।** उत्तरमाह- **युगपदिति ।।** यद्युपाधिर्युगपदनेकत्वरूपभेदहेतुः स्यात् तर्ह्येवैतादृशोपाधिकृतभेदेनोक्तव्यवस्थोपपत्तिर्नान्यथा । एवं च दण्डाद्युपाधिर्देवदत्ते न युगपदनेकत्वरूपभेद-हेतुरतो न दण्डादेर्देवदत्तादौ युगपदनेकत्वरूपभेदहेतुत्वस्याभावादुपाधिकृतो भेदो नास्तीत्युक्तं युक्तमिति भावः ।

**(पां.टि.)** पूर्वोत्तरविरोधं परिहरति- **एवमिति ।। ब्रह्मणो जीवस्य वेति ।।** अज्ञानरूपोपाधेर्ब्रह्मसम्बन्धस्य देहादिरूपोपाधेर्जीवसम्बन्धस्य च परेणाङ्गीकृतत्वादिति भावः । **प्रश्न एव नोपपद्यत इति ।।** सिद्धार्थतायाः प्रश्नदूषणत्वादिति भावः । परकीयस्तदङ्गीकारः कुतः सिद्ध इत्यतस्तद्वचनादेवेति भावेन तदुदाहरति- **यथाऽऽहु-रिति ।। आरभ्येति ।।** तन्त्वतिरिक्तत्वे हस्तवितस्त्याद्यवच्छेद्यानामंशानां पटारम्भकत्वे आरम्भकस्य कार्यारम्भात्प्राक्सत्त्वनियमेन हस्तवितस्त्याद्यवच्छेद्यांशाः पूर्वमुत्पद्य पश्चात्पटारम्भकाः स्युरित्यारभ्यारम्भकत्व-प्रसङ्गेनेत्यर्थः । यद्वा हस्तवितस्त्याद्यवच्छेद्यांशानामारम्भकान्तरस्याभावात्तन्तूनामेव हस्तवितस्त्याद्यवच्छेद्यांशा-नारभ्य पश्चात्पटारम्भकत्वप्रसङ्गेनेत्यर्थः । 'उपाधिकृतांशकल्पने' इत्युत्तरवाक्ये शङ्कासमाधाने न युक्ते, अनित्यत्वप्रसङ्गेन दूषिततया पुनः शङ्कोदयासम्भवादित्याशङ्क्याभिप्रायकथनपूर्वकं तद्ग्रन्थमवतारयति- **ननूपा-धीति ।।** अंशस्य तदुपाधिकृतत्वेऽपि तत्संयोगकृतत्वाभावेन तत्संयोगार्थं तत्संयोगस्यापेक्षाया अभावात् कथमात्माश्रयत्वमित्यतस्तदुपपादकतया मूलं योजयति- **तदुपाधिकृतत्व इत्यादिना ।।** उपाध्यन्तरकृतत्वेऽनव-स्थाप्रसङ्गादन्योन्याश्रयादिप्रसङ्गस्यापि वक्तव्यत्वात्तदनुक्तिरयुक्तेत्यतो निमित्तोक्त्या तदनुक्तिमुपपादयति- **उपाधिसंयोगद्वयाङ्गीकार इत्यादिना ।।**

**(व्या.टि.)** उच्यत इति शेषोक्तिः । **किमितीति ।।** ननु कथमस्यानुवृत्तिः । प्रागवृत्तत्वात् । किञ्चेतिपदवृत्तत्वेऽपि पदस्य ह्यनुवृत्तिः न तदेकदेशस्य । 'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्' इति 'सूत्रेष्वदृष्टं पदम्' इति च पदस्यैवानुवृत्त्युक्तिः । प्रकृते तु किञ्चेत्येकं पदं न किमिति । अतः कथमनुवृत्तिरुक्तेति चेत्, मैवम् । महाभाष्ये 'सदिरप्रतेः' इत्यत्र प्रसाद इत्यादौ षत्वव्यावृत्तये 'इण्कोः' इत्यादौ समासरूपपदैकदेशस्यापि प्रत्येकमपि पदत्वेन इण्‌इत्यस्यानुवृत्त्या इण्णन्तादुपसर्गादित्युक्तेरिहापि किञ्चेतिनिपातसमुदायैकदेशस्य किमोऽपि पदत्वेना-नुवृत्तिर्युक्तैवेति रहस्यम् । अज्ञानादिलक्षणो देहादिलक्षणश्चोपाधिर्ब्रह्मणो जीवानाञ्च भेदक इत्यभिप्रेत्याऽत्मपदं द्वेधा व्याचष्टे- **ब्रह्मणो जीवस्येति ।।** असंयुक्तस्यापि भेदकत्वे संयुक्ते एव विकल्पो न युज्यत इत्यत आह- **असंयुक्तस्येति ।।** तथाऽपि विकल्पो न युज्यते । आकाङ्क्षाविरहेणासङ्गतेः व्याहतेर्वा प्रश्नदोषत्वात् । यथोक्तमनुव्याख्याने-

'प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ।
सिद्धार्थता च वैफल्यं न तैः स्यात् तत्त्वनिर्णयः ।।'

इति भावेन शङ्कते- **नन्विति ।। अत इति ।।** एतस्माद्विकल्पादित्यर्थः । **प्रसक्तमिति ।।** येनासङ्गतिः स्यादिति वाक्यशेषः । ननु संयोगत्वस्याव्याप्यवृत्तिताव्याप्यस्य पक्षे दर्शनेन सिद्धार्थत्वात्प्रश्नो नोपपद्यते । असङ्गतेरिव सिद्धार्थताया अपि प्रश्नदोषतया परिगणितत्वादित्याशयेन शङ्कते- **तथाऽपीति ।।** निषेधति- **नेति ।।** संशय-बीजमुज्जीवयति- **गुणेष्विति ।।** ननु गणित्वस्य साधारणधर्मत्वेऽपि न संशयबीजोज्जीवनम् । साधारणधर्म-दर्शनमात्रं न संशयबीजं किन्त्वन्यतरकोटिव्याप्यादर्शनसचिवम् । अत्र च व्याप्यवृत्तित्वव्याप्यसंयोगत्वं प्रकृतेऽवगतं **(व्या.टि.)** न वा । नेति पक्षेऽनुवादायोगादवगतमित्येव वक्तव्यम् । तत्र च संशयानुपपत्तिरिति । मैवम् । भावानवबोधात् । (न)तत्र गुणत्वं साधारणधर्मतयोपात्तम् । किन्तु विमतिविषयतावच्छेदकतयाऽपि । संयोगत्वं तु नावगतम् । अनुवादस्तु सम्भावनयेति न दोषः । विमतिं विदर्शयति- **प्रकारद्वयेति ।।** संयोगे प्रदेशवृत्तित्व-मितरेषु व्याप्यवृत्तित्वमिति प्रकारद्वयेत्यर्थः । अथ वा संयोगत्वं धर्मितावच्छेदकम् । तस्मिंश्च प्रदेशवृत्तित्वं न निश्चितं गुणेषु प्रकारद्वयदर्शनादित्यर्थः । पराङ्गीकारोऽपि न प्रश्नविरोधीत्याह- **पराङ्गीकारस्येति ।।** अनेन कः पक्षोऽत्र पक्षीक्रियत इति मूले शेषं सूचयति- **अनिश्चितत्वादिति ।।** अन्यतरकोट्यङ्गीकारस्यानिश्चितत्वात् संशयोपपत्तिरिति भावः । आत्मानमित्यतः परमित्यतः परमिति शेषः । विकल्पदूषणयोः सामानाधिकरण्याय ग्रस्यमानवाच्येकदेशपदं ग्रासोपलक्षणमित्याह- **एकदेशग्रासाङ्गीकार इति ।।** साधने बाधनिरासायाऽह- **प्रसज्यत इतीति ।।** कथं प्रसज्यप्रसञ्जकभाव इत्यत आह- **एकदेश इति ।।** परग्रहणेन स्वमतेऽर्थान्तरत्वं ध्वनयति । न्यायनयमभिनीय दर्शयति- **नन्विति ।। समानाधिकरणत्वमेवेति ।।** नावयववृत्तित्वमित्यर्थः । **कथमिति ।।**

आपादकाभावादिति भावः। **भावाभावयोरिति ॥** तथाभूतयोः संयोगतदभावयोरित्यर्थः। **सर्वत्रेति ॥** भावाभावसामान्येऽपीत्यर्थः। **प्रसङ्गेनेति ॥** विशेषे तथाभावे विनिगमकाभावादित्यर्थः। **विरोध-मात्रेति ॥** सहानवस्थानलक्षणविरोधमात्रेत्यर्थः। प्रयोज्यप्रयोजकभावमुपपादयति- **सर्वेति ॥** क्वचिद्भावयोरेव, क्वचिदभावयोरेव, क्वचिद्भावाभावयोः, क्वचिद्व्याप्ययोरित्येवं सर्वसम्बन्धिनामित्यर्थः। न तु यथाश्रुतः। वध्यघातुकभावस्य तन्मूलत्वाभावादिति द्रष्टव्यम्। आशयं प्रकाशयति- **परस्परेति ॥** तदुक्तमनुव्याख्याने-

'असत्यं नोक्तमित्युक्ते सत्यमुक्तमिति प्रजाः।
जानन्त्युक्तं तु नो सत्यमित्युक्तेऽसत्यतामपि' इति।

प्रसङ्गं विपर्यये पर्यवसाययति- **अत इति ॥** वेत्यनास्थायाम्। 'कृतास्त्रमकृतास्त्रं वा' इति रामायणे विश्वा-मित्रवचोवत्। **अस्त्विति ॥** तस्य स्वतोऽनिष्टत्वाभावादिति भावः। चशब्दं भिन्नवाक्यतया योजयितुं तत्समुच्चयप्रसङ्गं दर्शयति- **सावयवत्वेनेति ॥** मूलं प्रसङ्गमूलव्याप्त्युपपादकतया व्याचष्टे-**सावयवत्वेऽपीति ॥** न च प्रसङ्गपरपदाभावः। चशब्दस्य समुच्चयवाचकत्वेऽपि समुच्चेयपदाभावेन समुच्चायकत्वासम्भवादित्यत आह- **प्रसङ्गसमुच्चय इति ॥** अनित्यत्वप्रसङ्गसमुच्चय इत्यर्थः। अनेनेदं सूचयति। यथा प्रादयः क्रियासंयोगे तदर्थातिशायकाः। तदभावे तु ससाधनक्रियामाहुः। प्राचार्य इत्यादौ। तथा चशब्दोऽपि समुच्चेयपरपदसमभिव्याहारे समुच्चयमात्रपरः। तदभावे तु समुच्चेयसमुच्चयमाचिनोति इति। सैकदेशत्वरूपसावयवत्वेऽनित्यत्वं नास्मान् प्रसञ्जयति। उपादानातिरिक्तैकदेशाभ्युपगमेन सोपादानत्वरूपसावयवत्वानङ्गीकारादिति वक्तुं तज्ज्ञापकतया परोक्षव्यवहितमात्रवाचितच्छब्दस्वरसलब्धार्थमाह- **अस्मदतिरिक्तैरिति ॥** वादिभिरिति विशेष्येऽपि शेषो-क्तिः। तन्मात्रोक्तावस्मदर्थस्यापि प्राप्तेः तं व्यावर्तयत्तच्छब्दस्यार्थोऽस्मदतिरिक्तैरिति। कृतसावयवत्वेति द्वन्द्वात्परो भावप्रत्ययः प्रत्येकमपि सम्बद्ध्यते।

**(व्या.टि.)** तार्किकः शङ्कते- **नन्विति ॥** समाधिं वक्तुं प्रतिजानीते- **उच्यत इति ॥** किमुपादानव्यतिरेकेणाव-यवाभावात्तच्छब्दयोः पर्यायत्वमुत सावयवत्वस्य सोपादानत्वाविनाभावेन सावयवत्वे सोपादानत्वप्रसङ्ग इति विकल्प्याऽद्यं निराह- **उपादानव्यतिरिक्तोऽपीति ॥** परानभ्युपगमे निमित्तमाह- **आरभ्येति ॥** न आरभ्येति ल्यबन्तं किन्तु कृत्यान्तम्। अर्थादन्येति सम्बध्यते। तथा चान्यारभ्यस्य स्वव्यतिरेकेण सिध्यतोऽर्थस्येति लभ्यते। तथा च तन्तूनादायैकदेशानां तानादाय तन्तूनां वाऽन्यथासिद्ध्यापत्त्याऽनन्यथासिद्धान्वयव्यतिरेकाभावेन कस्याप्युपादानत्वाभावापातेनेत्यर्थः। हस्तवितस्त्यादीनामुपादानत्वे स्वयमारभ्य पटात् पूर्वमुत्पद्य पश्चात् पटारम्भकत्वप्रसङ्गेनेत्यर्थ इति स्वामिनः। द्वितीयं पराचष्टे- **किञ्चेति ॥** व्यवस्थया दूषणसमुच्चये चशब्दः। **संयोगस्येति ॥** मूर्तसंयोगस्येत्यर्थः। अमूर्तसंयोगस्य तु व्याप्यवृत्तित्वमेव। न च मूर्तामूर्तसंयोगे कथमिति वाच्यम्। अस्मन्मते परस्परनिरूपितसंयोगद्वैविध्येन यथायथं व्याप्यवृत्तित्वाव्याप्यवृत्तित्वोपपत्तेः। परमते त्वैक्याद्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वे विरुद्धे स्यातामिति दूषणं बोध्यम्। **सोपादानत्वमेवेति ॥** अनेन 'अग्रावच्छेदेन संयोगः मूलावच्छेदेन तदभावः' इत्याद्युक्तिरयुक्ता परमते। उपादानातिरिक्तभागाभावात्। तदङ्गीकारे त्वदर्शनसंवादयोरापत्तेरिति सूचितम्। **अनित्यत्वेति ॥** आत्मन इति शेषः। तस्य त्विष्टा-पत्तावनिष्टान्तरमाह- **अनित्यत्वे चेति ॥** एवेत्यपरिहार्यतामाह। ननु किञ्चेति उपाधेर्भेदकत्वानुपपत्तिं प्रतिज्ञाय विकल्पितम्। तदयुक्तम्। कल्पद्वयेऽपि भेदकत्वानुपपत्त्यभावादित्यतोऽस्याभिप्रायमाह- **एकदेशसम्बन्धे चेति ॥** कल्पयोराद्यं दोषान्तरेण निरस्योत्तरं परिशेष्य भेदकत्वानुपपत्तिरुच्यत इति न प्रतिज्ञोपपादनवैयधि-करण्यमिति। सांशत्वेन सावयवत्वप्रसङ्गे इष्टापत्तिं द्वितीये तत्प्रयुक्तानित्यत्वप्रसङ्गे व्याप्तिवैकल्यमाशङ्कते- **नन्वित्यादिना ॥ उपाधिसंयोगान्तरेति ॥** अपर्यवसितेति शेषः। अनवस्थोक्तिः व्यवस्थितदोषान्त-रोपलक्षणमित्याह- **द्वयेत्यादि ॥ नोक्तमिति ॥** मुख्यत इति शेषः। तदुपलक्षितमन्यच्चाऽह- **पूर्वपूर्वेति ॥** पूर्वं परिशिष्टपक्षे भेदकत्वानुपपत्तिरुक्ता। अधुना पक्षद्वयेऽपि भेदकत्वानुपपत्तिरस्तीत्याह- **यद्यपीति ॥ कृत-स्येति ॥** सिद्धस्येत्यर्थः। कृतकृत्य इति प्रयोगात्। अनुक्तौ बीजमाह- **तथाऽपीति ॥ तस्य चेति ॥** अवयव-स्येत्यर्थः। असङ्गतिपरिहारायौपाधिकत्वनिरासस्य तात्पर्यमाह- **स्वाभाविकमापाद्येति ॥**

**विशिष्टरूपं द्रव्यान्तरमिति ॥** ननु कथमेतत्। विशेष्यविशेषणाद्यतिरिक्तस्य विशिष्टस्याभावादिति चेन्न। किं साधकाभावान्न विशिष्टं पदार्थान्तरं यद्वा बाधकसद्भावात्। नाऽद्यः। दण्डीत्यादिविशिष्ट-व्यवहारनिर्वाहकस्य दण्डीत्यादिविशिष्टज्ञानस्य पदार्थान्तरं विनाऽनुपपद्यमानस्य तत्साधकत्वात्। तथाहि- दण्डीति प्रतीतेः किमदण्डिव्यावृत्तदेवदत्तस्वरूपमात्रं विषयः, विशेषणविशेष्ये वा, गृहीतासंसर्गे ते एव वा, विशेषणविशेष्यतत्सम्बन्धा वा। आद्ये वस्तुतोऽदण्डिव्यावृत्तं यद्देवदत्तस्वरूपं तद्विषयत्वे देवदत्तोऽयमिति

ज्ञानादवैलक्षण्यापत्त्या व्यावृत्तेरपि प्रतीतौ निरधिकरणिकायास्तस्याः प्रत्येतुमशक्यत्वेन व्यावृत्तौ देवदत्त इति प्रतीतौ वाच्यायां तत्र व्यावृत्तिवैशिष्ट्यप्रतीत्या तस्य चाव्यावृत्तव्यावृत्तिरूपत्वे पुनस्तद्वैशिष्ट्यभानावश्यम्भा-**(व्या.टि.)** वेनानवस्थापत्त्या व्यावृत्तिविशिष्टस्य पदार्थान्तरत्वे दण्डविशिष्टस्यैव पदार्थान्तरत्वसिद्धिः। द्वितीये दण्डदेवदत्ताविति समूहालम्बनाद्वैलक्षण्यानापत्तिः। तृतीये समूहालम्बनेऽसंसर्गभाननियमाभावेन ततो वैलक्षण्यानुपपत्तिरेव। चतुर्थे दण्डदेवदत्तसम्बन्धा इति समूहालम्बनाद्वैलक्षण्यानुपपत्तिः। न च विशिष्टज्ञाने सम्बन्धसम्बन्धोऽप्यधिको भासत इति वाच्यम्। तथाऽपि दण्डदेवदत्तसम्बन्धतत्सम्बन्धा इति समूहालम्ब-नाद्वैलक्षण्यानुपपत्तिः। न च विषयवैलक्षण्याभावेऽपि विषयतावैलक्षण्यान्निर्वाहः। विशिष्टज्ञाने देवदत्ते विशेष्यतारूपा दण्डे विशेषणतारूपा सम्बन्धे च सांसर्गिकरूपा विषयता। समूहालम्बने तु सर्वत्र विशेष्यतारूपा विषयतेति वाच्यम्। विषयभेदाभावे निर्निमित्तस्य विषयतावैलक्षण्यस्यैवायोगात्। अस्मन्मते कारणवैलक्षण्य-विषयवैलक्षण्ययोरेव वह्निविषयकसाक्षात्कारानुमित्यादौ घटपटज्ञानादौ च वैलक्षण्यनियामकत्वात्। किञ्च विषयताया ज्ञानस्वरूपत्वे घटपटाविति ज्ञानस्य घटपटविशेष्यतयोर्ज्ञानस्वरूपयोरभेदेन घटत्वाभाववत्पट-विशेष्यतानिरूपितघटत्वप्रकारताकत्वेन भ्रमत्वापत्त्या विषयस्वरूपत्वस्यैव वाच्यतया विषयभेदाभावे न विषयतावैलक्षण्यम्। न च विषयताया विषयस्वरूपत्वे समूहालम्बनविशिष्टबुद्ध्योर्वैलक्षण्यानुपपत्त्या पदार्थान्त-रत्वमेवेति वाच्यम्। अपसिद्धान्तात्। विशिष्टस्य पदार्थान्तरत्वेन विषयवैलक्षण्यादेव वैलक्षण्योपपत्तेश्च।

किञ्च विषयताया पदार्थान्तरत्वे स्वरूपसम्बन्ध इति प्रवादानुपपत्तिः। संयोगसमवायातिरिक्तसम्बन्धत्वेन तथा प्रवादे परस्परातिरिक्तत्वेन संयोगादावपि तथाऽऽपत्तेः। योगेन सम्भवे पारिभाषिकत्वकल्पनानुपपत्तेश्च। किञ्च दण्डीत्यादिज्ञाने एकविशिष्टकल्पनेनैवोपपत्तौ विषयतात्रयकल्पने गौरवम्। अपि च विषयताया अतिरिक्ताया अपि यावद्विषयं सत्त्वेन क्रमिकाणां समूहालम्बनविशिष्टबुद्ध्यादीनां समानविषयकत्ववत्समानविषयताकत्वस्य प्राप्त्या ज्ञानसमानकालवृत्तित्वावश्यम्भावेऽनन्तेषु विषयेषु प्रत्येकमनन्त(त्व)ज्ञानीयानन्तविषयताकल्पनापत्ति-रिति महदेव गौरवम्। अन्यच्च एकस्मिन्नेव संयोगादावनेकेषामेकदा तद्विशेष्यकज्ञानोत्पत्तौ सजातीयानेक-विशेष्यतानां केषाञ्चित्तद्विशेष्यकज्ञानानामपरेषां तत्प्रकारकतत्संसर्गकज्ञानानां चैकदोत्पत्तौ विजातीयानेक-विषयतानामुत्पत्त्या पदार्थानां विचित्रसृष्टिभित्तित्वापत्तिः। किञ्च विशिष्टव्यवहारकारणे ज्ञाने विशिष्टमेकमस्मन्मते कारणतावच्छेदकं भवन्मतेऽनेकेषां कारणतावच्छेदकत्वं तत्रापि विशेषणविशेष्यभावे विनिगमनाविरह-प्रयुक्तानेककार्यकारणभावकल्पनमिति गौरवम्। तस्माद्विषयताया विषयस्वरूपत्वात् तद्भेदाद्वैलक्षण्यानुपपत्त्या विषयभेदेनैव निर्वाह्यतया विशिष्टस्यातिरिक्तत्वे समूहालम्बनाद् विशिष्टबुद्धेर्वैलक्षण्यान्यथानुपपत्तिरेकं मानम्। एवं दण्डीति व्यवहारो दण्डदेवदत्ततत्सम्बन्धातिरिक्तविषयकव्यवहर्तृसमवेतज्ञानजन्यो विशिष्टव्यवहार-त्वात् कुण्डलीति व्यवहारवत्। दण्डीति व्यवहारो दण्डदेवदत्ततत्सम्बन्धमात्राविषयकव्यवहर्तृसमवेतज्ञानजन्यः, सत्यपि तज्ज्ञाने कदाऽप्यनुत्पद्यमानत्वादित्याद्यनुमानं मानम्। एतत्सर्वमभिप्रेत्य सङ्गृहीतं मन्दारमञ्जर्याम्-

'दण्डीत्यादिव्यवहृतेर्मूलभूता विशिष्टधीः।
विभिन्नं पुरुषादिभ्यो विशिष्टमवलम्बते।' इति।

**(व्या.टि.)**किञ्च विशिष्टस्यातिरिक्तत्वाभावे विशिष्टाभावोऽप्यतिरिक्तो न स्यात्। दण्डी नास्तीति प्रतीतेर्विशेष-णाभावविषयत्वोपपत्तेः। न च विशेषणवति पुरुषाभाववति जायमानप्रतीतेर्न तद्विषयत्वमिति वाच्यम्। तत्र पुरुषाभावविषयत्वोपपत्तेः। न चाननुगमः। अतिरिक्ताभावकल्पनापेक्षयाऽननुगमस्यापि वृक्षसरोवरादौ हरिर्नास्तीत्यादाविव सह्यत्वात्। तत्र व्यवहारमात्रमेकाकारं प्रतीतिस्तु कपिमण्डूकत्वाद्यवच्छिन्नाभावविषयि-ण्येवेति चेत्प्रकृतेऽपि तथात्वोपपत्तेः। विशेषणविशेष्ययोः सम्बन्धाभावेनानुगमसम्भवाच्च। दण्डो नास्ती-त्यादिप्रतीतेर्वैलक्षण्यस्यानुभवसिद्धत्वेनातिरिक्तभावस्वीकारे शृङ्गे शशीयत्वं नास्ति, पटे घटत्वं नास्तीत्यादि-प्रतीतेः शशशृङ्गं नास्ति, घटत्वेन पटो नास्तीति प्रतीतेरपि वैलक्षण्येन तत्राप्यतिरिक्ताभावस्वीकारापत्तेः। तत्र प्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रमाभावेनाभावासम्भवे यद्दण्डस्य पुरुषसम्बन्धो नास्ति तमादायैतद्दण्डी नास्तीति प्रतीतेरतिरिक्ताभावविषयकत्वासम्भवः। तत्र विशेषणाभावविषयकत्वेऽनुभवविरोधोऽननुगमश्च। प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यारोपेण निर्वाहेऽन्यत्रापि तथैवोपपत्तिः। तस्माद्विशिष्टस्यातिरिक्तत्वा-देवाभावोऽतिरिक्त इत्यभावातिरिक्तत्वानुपपत्तिरप्यपरा साधिका। नापि द्वितीयः। बाधकाभावात्। नन्वति-रिक्तस्य विशिष्टस्य नित्यत्वे सर्वदोपलब्ध्यादिप्रसङ्गेनानित्यत्वे वाच्ये समवायिकारणावश्यम्भावेनान्यस्यासम्भा-वितत्वेन विशेषणविशेष्ययोरेव समवायिकारणत्वं

वाच्यम् । तत्र प्रत्येकमुपादानत्वे एकस्य द्रव्योपादानत्वायोगो बाधकः । तत्रापि विशेष्यस्योपादानत्वे मूर्तानां सामानाधिकरण्यानुपपत्तिश्च । विशेषणस्य तत्त्वे गुणस्य समवायिकारणत्वानुपपत्तिश्चेति बाधकद्वयम् । मिलितयोरुपादानत्वे रूपी घट इत्यादौ रूपिलक्षणविशिष्टं प्रति रूपस्य गुणस्योपादानत्वायोगः । उभयोपादानके द्रव्यत्वगुणत्वसाङ्कर्यापत्तिः । विशेषणभेदाद्विशिष्टभेदेनानेक-विशेषणस्थले मूर्तानां विशिष्टानां सामानाधिकरण्यापत्तिश्चेति बाधकत्रयमिति चेत्, न । विशेषणविशेष्य-तत्सम्बन्धानां नित्यत्वस्थले विशिष्टस्य नित्यत्वमेव । सामग्रीसत्त्वे उपलब्ध्यादिकमस्त्येवेति न कोऽपि दोषः। अन्यत्र त्वनित्यत्वमु(मेको)पादानत्वं विशिष्टस्येति उपेमः । एकस्य द्रव्योपादानत्वायोगस्तावन्न बाधकः । एकस्य दीर्घतन्तोः पटारम्भकत्वदर्शनात् । एकस्य गुणोपादानत्ववद् द्रव्योपादानत्वे बाधकाभावाच्च । अवयव-संयोगलक्षणासमवायिकारणानुपपत्तिर्न बाधिका । अस्माभिर्भाव-कार्येऽसमवायिकारणजन्यत्वनियमानङ्गी-कारात् । विशेषणविशेष्यतत्सम्बन्धादेस्तत्त्वोपपत्तेश्च । नापि गुणत्वात् समवायिकारणत्वानुपपत्तिर्बाधिका । एकं रूपमित्यबाधितप्रतीत्या रूपादेर्गुणस्य सङ्घारम्भकत्वदर्शनात् । गुणत्वं समवायिकारणत्वसमानाधिकरणं सत्तासाक्षाद्व्याप्यजातित्वाद् द्रव्यत्ववदिति तत्साधनाच्च । कर्मत्वं पक्षतुल्यम् । वस्तुतस्तु गुणत्वादिकं सर्वं पक्षीकृत्य पदार्थविभाजकत्वेनैवोक्तं साध्यं सुसाधम् । तेनाभावस्य विशेषणत्वस्थलेऽपि नानुपपत्तिः । अभावेन भिन्नाभिन्नस्य विशिष्टस्य भावत्वन्तु तदत्यन्ताभिन्नस्य प्रमेयत्वादेरिवोपपन्नम् ।

अथ वा विशेषणविशेष्ययोरुभयोरुपादानत्वमस्तु । गुणस्योपादानत्वायोगस्तु परिहृतः । नापि जाति-साङ्कर्यापत्तिप्रसङ्गः । उभाभ्यां विजातीयाभ्यां कारणाभ्यां कार्यविजातीयद्वयसम्बन्धस्य प्रतिबन्धात् । प्रसिद्ध-**(व्या.टि.)** रूपेभ्यश्चित्ररूपस्य विजातीयत्ववद्विशिष्टस्य प्रसिद्धपदार्थविजातीयत्वोपपत्तेः । नापि मूर्तानां सामानाधिकरण्यायोगः । विशिष्टस्य द्रव्यत्वानङ्गीकारात् । परमाणुप्रदेश ईश्वरशक्त्या जीवानामिव विशेष्ये विशिष्टानां सामानाधिकरण्योपपत्तेश्च । एकस्मिन्नेव तन्तौ द्वितन्तुकादिमहापटपर्यन्तावयविपरम्परायास्त्वयाऽ-प्यङ्गीकाराच्च । अथ वा विशेष्यस्यैवोपादानत्वम् । बाधकश्च परिहृतम् । रूपि द्रव्यं रूपत्वजातिमान्गुणो मानस-ज्ञानादिमांश्चेतन इत्यादिप्रतीतिसिद्धं विशिष्टस्य विशेष्यजातीयत्वं सङ्गच्छते । एतच्च विशिष्टोपादानत्वं न कौटस्थ्यविरोधि । अत आकाशादीनां संयोगाद्युपादानत्ववद्विशिष्टोपादानत्वेऽपि न दोषः । अत एव तत्त्वविवेकादौ गोबलीवर्दन्यायेन कार्यकारणाभ्यां पृथग्विशिष्टशुद्धयोरुपादानम् । नापि गदाधरीयोक्तम्, ‘गुणवृत्तिसत्तादितो गुणाद्यन्यत्वविशिष्टसत्तादेरतिरिक्तत्वेऽनुगतधर्ममात्रोच्छेदः, एवं सर्वेषामेव वस्तूनां तत्तत्क्षणवृत्तित्वरूप-विशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गापत्तिपर्यवसानम्’ इति बाधकद्वयम् । सत्तादिधर्माणां प्रातिस्विकत्वेनानुगत-त्वानुपगमात् । अनुगतस्य कस्यचित्स्वीकारेऽपि तत्तद्व्यक्तिवृत्तित्वविशिष्टैरभेदस्यैवानुगतिशब्दार्थत्वेऽपि विशिष्टयोः परस्परं भेदेऽपि विशेष्येण भेदाभेदस्वीकारेणानुगतौ बाधकाभावाच्च । प्रतीतिबलेन एकविशेष्यकता-स्थले विशिष्टयोरप्यभेदोपगमाच्च । विशिष्टस्य विशेष्यादन्यत्वेऽपि विशेषणस्य विशेष्यगतत्वोपगमेन एकविशेष्यगतानां तत्तद्व्यक्तिवृत्तित्वानामनुगतिरूपत्वोपपत्तेश्च । एतेन एकत्र तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्या-भ्युपगमे एकत्वस्यासम्भवः । अनभ्युपगमेऽवृत्तित्वप्रसङ्ग इति निरस्तम् । विशिष्टयोर्भेदेऽपि विशेष्यस्य तैर्भेदा-भेदोपगमे चैकत्वोपपत्तेः । विशेषणस्य तत्तद्व्यक्तिवृत्तित्वस्य सर्वमते विशेष्यगतत्वेनावृत्तित्वप्रसङ्गस्याप-हास्यत्वाच्च ।

एतेन क्षणभङ्गापत्तिरपि परस्ता । तत्तत्क्षणवृत्तित्वरूपविशेषणभेदाद्विशिष्टभेदेऽपि विशेष्यभेदाभावात् । विशेष्यस्य विशिष्टैरभेदस्याभ्युपगमाच्च । एकविशेष्यकस्थले विशिष्टयोरपि भेदाभेदसम्भवाच्च । यच्च प्रत्यभिज्ञा-बलाद्विशेष्यस्य विशिष्टाभेदेऽपि द्रव्यवृत्तित्वादिवैशिष्ट्यपुरस्कारेणानुगतसत्तादेर्द्रव्यत्वाननुमापकत्वम् । गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति, इदानीं पूर्वक्षणवृत्तित्वविशिष्टघटो नास्तीत्यादिप्रत्ययबलेन मिथो भिन्नांश्च तत्तद्विशेषणविशिष्टसत्त्वे घटादीनङ्गीकृत्य भिन्नस्यैव विशिष्टस्यानुमापकत्वमाशङ्क्य दूषितम् । भिन्नस्यापि विशिष्टस्य द्रव्यवृत्तित्वादिविशिष्टत्वेन हेतुत्वेऽनुगतसाधारण्यं तादृशविशिष्टतद्व्यक्तित्वेन तत्त्वे विशेषणवैयर्थ्यं तद्व्यक्तित्वस्यानुपस्थितिश्च । विशिष्टसत्ता नास्तीति प्रतीतेरपि न विशिष्टसत्तात्वावच्छिन्नाभावविषयक-त्वम् । प्रतियोगितावच्छेदकावच्छिन्नस्यासत्त्वात् । नापि तद्व्यक्तित्वावच्छिन्नाभावविषयकत्वं तस्य प्रतियोगिकोटावनुल्लेखात् । नापि विलक्षणसम्बन्धावच्छिन्नाभावविषयकत्वम् । स च सम्बन्धो भिन्नविशिष्ट-निरूपित एव । तेन प्रतियोगितावच्छेदकविशिष्टस्य सत्त्वेऽपि तत्सम्बन्धाभावादभावप्रत्ययोपपत्तिरिति । विशेष्याभिन्नविशिष्टस्यैव विशेषणाभावस्थले सम्बन्धो नास्तीति सम्भवेनातिरिक्तविशिष्टकल्पने मानाभावा-दिति । तदपि न । अस्मन्मते विशिष्टद्वयानङ्गीकारात् । विशेष्यस्य विशिष्टेन भेदाभेदोपगमादेव प्रत्यभिज्ञाया **(व्या.टि.)** द्रव्यवृत्तित्ववैशिष्ट्यरूपेण द्रव्यत्वानुमापकत्वस्य प्रतियोगितावच्छेदकविशिष्टाभावप्रत्ययस्योप-पत्तेः । तस्मान्न किमपि बाधकम् । अतो युक्तं विशिष्टं द्रव्यान्तरमिति ।

अधिकं साधकं चिन्त्यं निरस्यं बाधकं स्फुरत् ।
उक्तश्च शोध्यं श्रीमध्वशास्त्राभिज्ञैर्मनीषिभिः ।

**स्थितामेवेति** ।। व्यावृत्तेर्वस्तुस्वरूपत्वादित्यर्थः । ननु विशिष्टरूपद्रव्यान्तरस्य वा व्यावृत्तिरूपस्य वाऽव-स्थान्तरस्यापादकत्वादुपाधेर्भेदकत्वमत आह- **न हीति** ।। **व्यवस्थेति** ।। सुखदुःखव्यवस्थाया बद्धमुक्त-व्यवस्थाया वेत्यर्थः । **अनेकत्वेति** ।। तथा चोपाधेरनेकत्वहेतुत्वाभावान्न भेदकत्वमिति भावः ।

**मूलम्- नचेश्वरस्य सर्वगतत्वादौपाधिकभेदो ब्रह्मणा भवति । नहि देशतः कालतश्चापरिच्छिन्नयोरौपाधिकभेदो दृष्टः । सर्वोपाधिगतत्वाच्चैकस्यैवेश्वरस्य भेदस्य मिथ्यात्वाद्धस्तपादादिभेदेऽपि भोक्तुरेकत्ववत् सर्वसुखदुःखादिभोक्तृत्वमीश्वरस्यैव स्यात् ।**

**टीका-** एवं भेदस्योपाधिकृतत्वासम्भवात् सम्भवेऽपि तस्य स्वाभाविकैक्यप्रयुक्तानुसन्धानाप्रति-बन्धकत्वात् सुखदुःखादिव्यवस्था बद्धमुक्तव्यवस्था च परपक्षे न सिद्ध्यत इत्युक्तम् । याऽपीयं त्रिस्कन्धचैतन्यवादिनामिष्टा ब्रह्मेश्वरजीवव्यवस्था साऽपि न सिद्ध्यति, भेदाभावात् । ननु ब्रह्मेश्वरयोः स्वाभाविकभेदाभावेऽपि उपाधिकृतोऽस्त्येव भेदः । ततो ब्रह्मेश्वरव्यवस्था सेत्स्यतीत्यत आह- **नचेति** ।। स्यादियं व्यवस्था यदीश्वरस्य ब्रह्मणौपाधिकभेदः सम्भवेत् । नचैवम् । कुतः? सर्वगतत्वात् । द्वयोरपीति शेषः । नित्यत्वाच्चेत्यपि द्रष्टव्यम् । सर्वगतयोर्नित्ययोरपि उपाधिभेदः कुतो न भवतीत्यत आह- **नहीति** ।।

अयमभिप्रायः- उपाधिर्हि भेदकत्वपक्षेऽप्युपहितस्य देशावच्छेदकत्वेन वा भेदं कुर्यात् यथा वस्त्रादेर्महारजनादिः, कालावच्छेदकत्वेन वा यथा यौवनादिकं देहस्य । नचैतदुभयमप्यत्र सम्भ-वति । द्वयोः सर्वगतत्वेन देशतः परिच्छेदाभावात् । नित्यत्वेन कालतः परिच्छेदाभावाच्च । नच सर्वगतत्वादौ विवादः । श्रुत्यादिसिद्धत्वात् । अन्यथा द्वयोरपि तदभावस्याङ्गीकार्यत्वात् । द्वावपि प्रकारावनङ्गीकृत्य औपाधिकभेदकल्पनेऽदृष्टकल्पनाप्रसङ्ग इति । ब्रह्मेश्वरभेदस्याप्रामाणिकत्वात् तद्व्यवस्थापरिपालनमयुक्तमित्यन्यत्रोक्तम् ।

किञ्च जीवेश्वरव्यवस्थाऽपि तत्पक्षे न सिद्ध्यतीत्याह- **सर्वेति** ।। **सर्वसुखदुःखादिभोक्तृत्वं** सर्वोपाधिनिमित्तसुखदुःखादिभोक्तृत्वमीश्वरस्यैव स्यात् । कुतः? एकस्यैवेश्वरस्य सर्वोपाधिगत-त्वात् । ननु तत्तदुपाध्यभिमानी दुःखादेर्भोक्ता । ईश्वरस्तु नियामकत्वेन सर्वोपाधिगतोऽपि न भोक्ता । अन्यथा भवतामप्ययं प्रसङ्गः समान इत्यत उक्तम्- **भेदस्य मिथ्यात्वादिति** ।। असत्त्वादित्यर्थः । अन्यथा द्वैतप्रसङ्गात् । स्वाभाविकस्य जीवेश्वरभेदस्यासत्त्वेऽप्यौपाधिकोऽ-सावस्त्येव । तेन जीवेषु दुःखादिभोगवत्स्वपि नेश्वरस्तथेत्यत उक्तम्- **हस्तेति** ।। एतच्च प्राग्व्युत्पादितम् ।

अत्र कश्चिदाह - ईश्वरस्य सर्वसुखदुःखाद्यनुसन्धानेऽपि भोक्तृत्वाभावाज्जीवेश्वरव्यवस्था-सिद्धिरिति । तदसत् । आत्मीयतयाऽनुभवो ह्यनुसन्धानम् । कस्ततोऽन्यो भोगो नाम यो नेश्वरस्यास्तीत्युच्यते । अस्तु वा भोगानुसन्धानयोर्भेदः । तथाऽप्यभेदेन भोग एवाऽऽपाद्यत इति कथं जीवेश्वरव्यवस्थासिद्धिः । भोगापादनमेवैतदिति चोक्तम् - **भोक्तृत्वमिति** ।। 'अनश्नन्नन्यः' इत्यादिविरोध इति चेन्न । प्रमाणविरोधस्याऽऽपादनालङ्कारत्वात् । अत एव प्रमाणविरोधभीरुणाऽ-द्वैतं त्यज्यतामिति ।

**(र.टि.)** उत्तरवाक्यगतापरिच्छिन्नयोरिति द्विवचनानुरोधादाह- **द्वयोरपीति शेष इति** ।। उत्तरवाक्यगतकालत इत्यनुरोधादाह- **नित्यत्वाच्चेत्यपीति** ।। **श्रुत्यादिसिद्धत्वादिति** ।। 'आकाशवत्सर्वगतश्च नित्यः', 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः', 'न त्वेवाहं जातु नाऽसम्', 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यादिश्रुतिस्मृत्यादिनेश्वरसर्वगतत्वस्य प्रसिद्धत्वादित्यर्थः

। **अन्यथेति** ।। उक्तश्रुत्यादिसिद्धस्यापीश्वर-सर्वगतत्वस्यानङ्गीकारे ईश्वरवद् ब्रह्मणोऽपि श्रुत्यादिसिद्धतत्सर्वगतत्वाभावस्यानङ्गीकार्यत्वादित्यर्थः । **द्वाव-पीति** ।। ब्रह्मेश्वरयोर्नित्यत्वसर्वगतत्वप्रकारावित्यर्थः । ननु ब्रह्मेश्वरव्यवस्थायाः प्रमाणसिद्धत्वात्तदन्यथानुप-पत्त्या उपाधेरपरिच्छिन्नभेदकत्वमन्यत्राद्दष्टमपि सिद्ध्यतीत्यत आह- **ब्रह्मेश्वरभेदस्येति** ।। सर्वोपाधिगतत्वा-दित्यापादकानुसारेणाऽह- **सर्वोपाधिनिमित्तेति** ।। ननु सत्योपाधिकृतसत्यभेदवादिनां दूषणप्रकरणमिदं तन्मत औपाधिकस्य सत्यत्वात्स्वाभाविकभेदस्य चात्यन्तासत्त्वात् नानिर्वचनीयत्वरूपमिथ्यात्वं भेदस्य इति कथं 'भेदस्य मिथ्यात्वात्' इत्युक्तमित्यत आह- **असत्त्वादित्यर्थ इति** ।।

**(रा.टि.)** 'कुतो न भवति' इत्युक्तशङ्कानिवृत्तेर्मूलेऽस्फुटत्वादाह- **अयमभिप्राय इति** ।। **उपाधिर्हीति** ।। भेदं कुर्यादित्यन्वयः । **भेदकत्वपक्ष इति** ।। स्वस्येति योज्यम् । **उपहितस्य** उपाधिसम्बद्धस्येत्यर्थः । **यौवनादिक-(रा.टि.) मिति** ।। तद्धि मध्यकालावच्छेदेन कौमारदेहाद् युवदेहस्य भेदकमित्यर्थः । **श्रुत्यादीति** ।। 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इति ब्रह्मणः 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति 'न त्वेवाहं जातु नाऽसम्' इत्यादिना चेश्वरस्य सर्वगतत्वादिसिद्धेरिति भावः । **अन्यथेति** ।। एकमेव व्याप्तं चेतनमुपाधिवशाद् ब्रह्मेश्वररूपेण विभागवच्चेदित्यर्थः । **तदभावस्येति** ।। सर्वगतत्वानित्यत्वयोरभावस्येत्यर्थः । **द्वावपि प्रकाराविति** ।। देशावच्छिन्नत्वकालावच्छिन्नत्वरूपप्रकारावित्यर्थः- **अन्यत्रोक्तमिति** ।। प्रकृत्यधिकरणानुव्याख्यान-सुधयोर्द्वादशगीताभाष्यादौ च तदुक्तमित्यर्थः । **एतच्च प्रागिति** ।। 'हस्तपादाद्युपाधिभेदेऽपि' इत्यादि-वाक्यव्याख्यावसर इति भावः । 'भोक्तृत्वमीश्वरस्यैव स्यात्' इति मूलकृता चोक्तमित्यर्थः । भोगापादने ज्ञापकमाह- **भोगापादनमिति** ।। जीवेश्वरविभागायोगः ।

**(श्री.टि.) अप्रतिबन्धकत्वादिति** ।। हस्तपादाद्युपाधिभेदेऽपि तद्गतसुखदुःखादिभोक्तुरेकत्वानुभवादिति भावः । **भेदाभावादिति** ।। त्वन्मते ब्रह्मेश्वरयोः स्वाभाविकभेदाभावादित्यर्थः । उत्तरवाक्यगतापरिच्छिन्नयोरिति द्विवचनानुरोधादाह-**द्वयोरपीति शेष इति** ।। उत्तरवाक्यगतकालत इत्यनुरोधादाह- **नित्यत्वाच्चेत्यपीति** ।। **देशावच्छेदकत्वेनेति** ।। देशमर्यादाकरणेनेत्यर्थः । **महारजनं** मञ्जिष्ठाद्रव्यम् । तत् वस्त्रप्रदेशयोर्मर्यादाकरणेन भेदकमित्यर्थः । **कालावच्छेदकत्वेन** कालमर्यादाकरणेनेत्यर्थः । **यौवनादिकमिति** ।। यौवनादिकं पूर्वोत्तर-कालमर्यादाकरणेन देहे भेदकारीत्यर्थः । **द्वयोरिति** ।। ईश्वरब्रह्मणोरित्यर्थः । सर्वगतत्वादावित्यत्राऽदिपदेन नित्यत्वं ग्राह्यम् । **विवाद इति** ।। ईश्वरस्येति शेषः । **श्रुत्यादिसिद्धत्वादिति** ।। 'आकाशवत् सर्वगतश्च नित्यः' 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'न त्वेवाहं जातु नाऽसम्', 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यादि श्रुतिस्मृतिभ्यामीश्वरस्य सर्वगतत्वनित्यत्वयोः सिद्धत्वादित्यर्थः । **अन्यथेति** ।। उक्तश्रुत्यादिसिद्धस्यापीश्वरसर्वगतत्वादेरनङ्गीकारे ईश्वरवद् ब्रह्मणोऽपि श्रुत्यादिसिद्धसर्वगतत्वादेरभावस्या-प्यङ्गीकार्यत्वापातादित्यर्थः । ननूपाधेर्देशावच्छेदकत्वकालावच्छेदकत्वरूपं प्रकारद्वयमनङ्गीकृत्य प्रकारान्तरेण भेदकत्वमङ्गीक्रियत इति चेत्तत्राऽह- **द्वावपीति** ।। ब्रह्मेश्वरयोरौपाधिको भेदोऽस्तीति परोक्तमङ्गीकृत्य न हीतिवाक्येनोभयोरपि नित्यत्वाद् व्याप्तत्वाच्च नोपाधेर्भेदकत्वमित्युक्तम् । वस्तुतस्तु तयोर्भेद एव नास्तीत्याह- **ब्रह्मेश्वरभेदस्येति** ।। ननु ब्रह्मेश्वरव्यवस्थायाः प्रमाणसिद्धत्वात्तदन्यथानुपपत्त्योपाधेरपरिच्छिन्नभेदकत्व-मन्यत्राद्दष्टमपि सिद्ध्यतीत्यत आह- **ब्रह्मेश्वरभेदस्येति** ।। **अन्यत्रोक्तमिति** ।। प्रकृत्यधिकरणानुव्याख्या-नादावुक्तमित्यर्थः । सर्वोपाधिगतत्वादित्यापादकानुसारेणाऽह-**सर्वोपाधिनिमित्तेति** ।। **अभिमानीति** ।। अभिमानी यो जीवः स एवेति शेषः । **नियामकत्वेनेति** ।। तथा च नाभिमानीति भावः । यथोक्तम्-

'तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते ।
तदभावान्नाभिमानी भगवान् पुरुषोत्तमः ।।' इति ।

**(श्री.टि.) अन्यथेति** ।। नियामकत्वेन सर्वोपाधिगतस्यापि दुःखादिभोगापादन इत्यर्थः । **भेदस्य मिथ्यात्वा-दिति** ।। जीवेश्वरभेदस्य मिथ्यात्वादित्यर्थः । ननु सत्योपाधिकृतसत्यभेदवादिनां दूषणप्रकरणमिदम् । तथा च तन्मते औपाधिकभेदस्य सत्यत्वेन भेदस्य मिथ्यात्वादिति भेदस्य मिथ्यात्वं कथमुच्यते । अतोऽसदनुवादोऽय-मित्यत आह- **असत्त्वादित्यर्थ इति** ।। भास्करमते औपाधिकभेदस्यैव सत्यत्वं न स्वाभाविकभेदस्यातो भेदस्य मिथ्यात्वादित्यस्य स्वाभाविकभेदस्यात्यन्तासत्त्वादित्यर्थो द्रष्टव्य इति भावः । **अन्यथेति** ।। भेदस्य स्वाभा-विकत्वमङ्गीकृत्य सत्यत्वाङ्गीकार इत्यर्थः । शङ्कते-**स्वाभाविकस्येति** ।। **तथेति** ।। दुःखादिभोगवानित्यर्थः । **प्रागिति** ।। 'उपाधिभेदाङ्गीकारे' इति वाक्यव्याख्यानावसर इत्यर्थः । **ततोऽन्य इति** ।।

आत्मीयतयाऽनुभवादन्य इत्यर्थः। **भेद इति** ।। आत्मीयतयाऽनुभवो भोगो ज्ञानमात्रमनुसन्धानमित्येवंरूपेण भेद इत्यर्थः। **भोग एवेति** ।। नानुसन्धानमित्यर्थः । ननु भोगापादनं मूले नोपलभ्यत इत्यत उक्तम्- **भोगापादनमेवेति** ।। ईश्वरस्य सुखादिभोक्तृत्वाङ्गीकारे श्रुतिविरोधमाशङ्कते- **अनश्नन्निति** ।। किञ्च यद्यनश्नन्नित्यादिप्रमाण-विरोधभीत्येश्वरस्य सुखादिभोक्तृत्वं नाङ्गीक्रियते तर्हि प्रमाणविरोधभीरूणा त्वया द्वासुपर्णेत्यादिप्रमाण-विरोधादेवाद्वैतमपि त्यज्यतामित्याह- **अत एवेति** ।।

**(पां.टि.)** उत्तरवाक्यगतापरिच्छिन्नयोरिति द्विवचनानुरोधात्तदनुरूपं शेषमाह- **द्वयोरपीति शेष इति** ।। उत्तरवाक्यगतकालत इति विशेषणानुरोधादाह- **नित्यत्वाच्चेति** ।। **श्रुत्यादीति** ।। 'नित्यो नित्यानाम्' इत्यादि-श्रुत्या इत्यर्थः। **अन्यथेति** ।। श्रुत्यादिसिद्धस्यापि ईश्वरसर्वगतत्वादेरनङ्गीकारे ब्रह्मणोऽपि तन्न स्यादविशेषादिति भावः । ननु प्रमाणसिद्धब्रह्मेश्वरव्यवस्थान्यथानुपपत्त्याऽन्यत्राहष्टमप्युपाधेरपरिच्छिन्नवस्तुभेदकत्वं किं न स्यादित्यत आह- **ब्रह्मेश्वरभेदस्येति** ।। **अन्यत्रेति** ।। न च भगवतोऽन्यद् ब्रह्मेत्यादिना गीताभाष्य इत्यर्थः। ननु सत्योपाधिकृतसत्यभेदवादिनां दूषणप्रकरणमिदम्। तन्मते चोपाधिकृतभेदस्य सत्यत्वात् स्वाभाविकभेदस्य चात्यन्तासत्त्वान्नानिर्वचनीयत्वरूपं मिथ्यात्वमिति भेदस्य मिथ्यात्वादिति कथं तदुक्तिरित्यतस्तदर्थमाह- **असत्त्वादित्यर्थ इति** ।।

**(व्या.टि.)** ननु नोत्तरग्रन्थः प्रकृतसङ्गतो बद्धमुक्तव्यवस्थाऽदूषकत्वादित्यतः प्रकरणभेदेन योजयति- **एव-मित्यादिना** ।। **ब्रह्मेश्वरजीवव्यवस्थेति** ।। अत्रैकोक्त्या ब्रह्मेश्वरव्यवस्था जीवेश्वरव्यवस्था जीवब्रह्मव्यवस्था चेति त्रितयपरिग्रहः । न सिद्ध्यतीत्यभिमतप्रतिज्ञा। तत्र हेतुं बहिरेवोपस्करोति- **भेदाभावादिति** ।। परस्परमिति शेषः। तत्रोत्तरमूलमवतारयति- **नन्विति** ।। आद्यां दूषयितुमनूद्यति- **स्यादियमिति** ।। न हि देशतः कालतश्चेति वक्ष्यमाणानुरोधेनाऽह- **द्वयोरपीति** ।। **नित्यत्वाच्चेति च** ।। कुतो न भवतीति प्रश्नस्यादर्शनाभिधानं नोत्त-रम्। बीजानुपन्यासादित्यत आह- **अयमभिप्राय इति** ।। **अवच्छेदकत्वेनेति** ।। प्रकारे तृतीया । **यौवनेति** ।। तेन परिमाणभेदाद् द्रव्यभेद इति नैयायिकमतमपास्तम् । **देहस्येति** ।। यथोक्तं गीतायाम्- 'देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा' इति। **श्रुत्यादीति** ।। 'नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' इति ब्रह्मसर्वगतत्वे **(व्या.टि.)** श्रुतिः । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इतीश्वरसर्वगतत्वे स्मृतिः प्रमाणमित्यर्थः। **अन्यथेति** ।। श्रुत्यादेरप्रामाण्य इत्यर्थः। **द्वावपीति** ।। देशावच्छेदकत्वकालावच्छेदकत्वरूपावित्यर्थः। **अदृष्ट-कल्पनेति** ।। यावद्विशेषाभावेऽपि सामान्यकल्पन इत्यर्थः। किञ्चासति धर्मिणि धर्मचिन्तावसर एव नास्तीत्याह- **ब्रह्मेश्वरभेदस्येति** ।। अप्रामाणिकत्वादित्युपलक्षणम् । 'परं ब्रह्म परं धाम पवित्रं परमं भवान्' इति गीताविरोधाच्चेत्यपि ग्राह्यम्। **तदिति** ।। तेनेत्यर्थः। द्वितीयां दूषयति- **किञ्चेति** ।। **सर्वसुखदुःखादीति** ।। आयुर्घृतमितिवत् कार्यकारणभावभावेनाभेदव्यपदेश इति व्याचष्टे- **सर्वोपाधिनिमित्तेति** ।। **सर्वोपाधीति** ।। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति सर्वदेहगतत्वोक्तेः । **अभिमानी भोक्तेति** ।। 'मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः' इति गीतायां विषयाभिमानिन एव सुखदुःखादिभोक्तार इत्युक्तेः । **नियामक-त्वेनेति** ।। 'भ्रामयन्सर्वभूतानि' इति नियामकत्वोक्तेः। **अन्यथेति** ।। स्थितिमात्रेण भोग इत्यर्थः। **भवता-मपीति** ।। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति सर्वव्याप्तिं वदतामित्यर्थः। **असत्त्वादिति** ।। सत्त्वाभावादित्यर्थः। **अन्यथेति** ।। भेदसत्त्व इत्यर्थः । **एतदिति** ।। उपाधिभेदाभावस्याप्रयोजकत्वम्। अनुसन्धानभोगयोर्भेदं मन्वान आहेत्याह- **अत्रेति** ।। तयोरैक्यादङ्गीकारानङ्गीकारौ व्याहतावित्याह- **(निया-मकत्वेनेति)तदसदिति** ।। **आत्मीयतयेति** ।। ननु 'आत्मन्विश्वजनभोगोत्तरपदात्खः' इति खप्रत्यये 'आत्माऽ-ध्वानौ खे' इति प्रकृतिभावे चाऽत्मनीनयेति भाव्यम् । कथमात्मीयतयेति । मैवम् । 'तस्मै हितम्' इत्यधिकृत्य खविधानेऽप्यात्मन इदमित्यर्थे उत्सर्गात् छ एव । 'तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत्' इति महाभाष्येऽप-वादविषयेऽप्युत्सर्गप्राप्तेरुक्तेः । **भोग एवेति** ।। यो नष्ट इति शेषः । **अलङ्कारत्वादिति** ।। अस्यालङ्कारत्वं विपर्ययपर्यवसानहेतुत्वेनेत्याह- **अत एवेति** ।। त्यज्यतामितिक्रियापदान्वयः।

**मूलम्- देशतः कालतश्चापरिच्छिन्नयोरौपचारिकभेदाभावादेव दुःखिनोऽन्यच्छुद्धं ब्रह्म न सिद्ध्यति । अतः स्वाभाविकस्संसारः इत्यनिवृत्तिरेव स्यात् । किञ्च विशिष्टस्य शुद्धस्य वा संसारः । शुद्धस्य संसार इत्युक्ते स्वव्याहतिः । विशिष्टस्येत्युक्ते विशिष्टोऽन्यः स एव वा । स एव चेदुक्तो दोषः । अन्यश्चेन्नित्योऽनित्यो वा । अनित्यश्चेन्नाश एव तस्य न मोक्षः । नित्यत्वे च भेदस्य सत्यत्वं, मोक्षेऽपि तस्य भावात् । स्वरूपमात्रस्या-भेद उपाधिभिन्न एवेत्यङ्गीकारे स्वरूपमेवोपाधिसम्बद्धमिति न तस्य**

**शुद्धत्वम् । अशुद्धस्वभावस्य न कदाचिच्छुद्धत्वमिति च तत्पक्षः ।**

**(त.मं.)** शुद्धं ब्रह्म शबलं चेति द्वयमपि देशतः कालतोऽप्यनन्तं कल्पयन्ति । तत्र शबल-मीश्वरापरपर्यायं 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च' इति श्रुतिदृष्टम् । तयोरेवौपाधिको भेद इति च न वक्तव्यम् । तत्रौपाधिकभेदस्यानुक्तत्वात् । एकस्य परस्परविरुद्धरूपद्वयान्यथा-नुपपत्त्या स कल्प्यत इति चेत् । मैवम् । यत् शुद्धं ब्रह्म तद्दुःखिनो भेदेन न सिद्ध्यतीति ह्याप-तितम् । तथाच तत्तद्दुःखित्वमौपाधिकं न भवति । शुद्ध उपाध्यसम्भवात् । अतः स्वाभाविको दुःखादिसंसार इति च । तस्यानिवृत्तिरेव स्यात् ।

**टीका-** जीवब्रह्मव्यवस्थाऽपि तन्मते न सिद्ध्यतीत्याह- **देशत इति ।।** ईश्वरस्य तावद्दुःखित्वादिकं पूर्वोक्तन्यायेनाऽऽपन्नम् । ततश्च तेनाभिन्नत्वाद् ब्रह्मणोऽपि दुःखित्वं प्राप्तमेव । तथाच दुःखिनोऽन्य-दत एव शुद्धं ब्रह्म न सिद्ध्यति । ननु ब्रह्मेश्वरयोः स्वाभाविकभेदाभावेऽप्यौपाधिकभेदसद्भावादीश्वरे दुःखिन्यपि न ब्रह्मणो दुःखित्वमित्यत उक्तम्- **देशत इति ।।** पूर्वं जीवगतदुःखेन ब्रह्मणोऽपि दुःखित्वान्न जीवब्रह्मव्यवस्थासिद्धिरित्युक्तम् । इदानीं त्वीश्वरगतेनेति भेदः । यद्यपि ब्रह्मणो दुःखित्वापत्तिरेवानिष्टा व्यवस्थाविघातित्वात् । तथाऽपि तयाऽन्यदप्यनिष्टमापाद्यत इत्याह- **अत इति ।।** ब्रह्मणो हि भवन् दुःखादिरूपः संसारः स्वाभाविक एव भवेत् । शुद्धगतस्य नैमित्तिक-त्वासम्भवात् । स्वाभाविकत्वाच्च संसारस्यानिवृत्तिः स्यात् । अन्यथा स्वरूपनिवृत्तिप्रसङ्गात् । तथाच पुनर्बद्धमुक्तव्यवस्थाभाव इति । अस्यापीश्वरद्वारैवाऽऽपादनान्न पुनरुक्तिदोषः ।

प्रकारान्तरेणाद्वैतिनां व्यवस्थासिद्धिं दर्शयितुं प्रतिजानीते- **किञ्चेति ।।** तदेवान्यद्दूषणं वक्तुं विकल्पेन पृच्छति- **विशिष्टस्येति ।।** उपाधिनाऽवच्छिन्नस्य जीवस्येत्यर्थः । **शुद्धस्येति ।।** कालत्रयेऽपि स्वव्यतिरिक्तशून्यस्य ब्रह्मण इत्यर्थः । **संसारो** दुःखादिरूपः । यद्यप्येतयोः पक्ष-योर्दूषणमुक्तं 'यदि चैकमेव' इति 'उपाधिसम्बद्धस्य' इति च । तथाऽपि दूषणान्तराभिधित्सया विकल्पप्रश्नोऽयमित्यदोषः । यद्यपि प्राप्तिक्रमानुरोधेन प्रश्नः कृतः । तथाऽपि द्वितीयपक्षदूषण-स्याल्पत्वात् तदेवादावाह- **शुद्धस्येति ।। व्याहतिः** स्यादिति शेषः । न खल्वयं संसारः सादिः येन ब्रह्मणि शुद्ध्यशुद्धी कालभेदेन व्यवतिष्ठेते । अतः सर्वदा संसारवच्छुद्धं चेति कथं न व्याहतिः। नहि संसारस्य मिथ्यात्वमेतैरङ्गीकृतं येन मिथ्याभूतोऽसौ न ब्रह्मणः शुद्धिं विहन्तीति परिहारः स्यात् । आद्यं दूषयितुं विकल्पेन पृच्छति- **विशिष्टस्येति ।।** विशिष्टस्य संसार इति परेणोक्ते संसाराधारो विशिष्टः शुद्धादन्यो वा शुद्ध एव वेति प्रष्टव्यमित्यर्थः । अत्रापि पूर्वोक्त एव विकल्पक्रमे हेतुः । अल्पत्वादेव द्वितीयमादौ दूषयति- **स एव चेदिति ।। उक्तो दोषो** व्याहतिः । विशिष्टः शुद्धात्मक इत्येका तावद्व्याहतिः । परस्य व्याहतभाषित्वसम्भवात् प्रश्नोपपत्तिः । विशिष्टस्य शुद्धात्मकत्वे शुद्धस्यैव संसार इत्युक्तं स्यात् । ततः पुनरन्या व्याहतिरिति । आद्यं दूषयितुं विकल्पेन पृच्छति- **अन्यश्चेदिति ।।** स विशिष्टः शुद्धादन्यश्चेदित्यर्थः । अत्रापि क्रमव्युत्क्रमयोस्तदेव निमि-त्तम् । द्वितीयं दूषयति- **अनित्यश्चेदिति ।।** अत्रानित्यश्चेदिति पराभ्युपगममनूद्य नाश एव तस्येति तदेवानित्यत्वं हेतुत्वेनोपादाय न मोक्षः स्यादित्यापादनं क्रियते । अनित्यश्चेदनित्यत्वादेव तस्य न मोक्षः स्यादिति ।

अयम्भावः- यदि जीवोऽनित्यः स्यात् तदा सर्वोपाधिविगमोत्तरक्षणे नश्येद् विनाश-कारणान्तराभावात् । ततश्च नित्यपुरुषार्थभाक् न स्यादिति । आद्यं दूषयति- **नित्यत्वे चेति ।। सत्यत्वं** स्वाभाविकत्वं प्रसज्येत । कुत इत्यत आह- **मोक्षेऽपीति ।।** सर्वोपाधीनां मोक्षे सत्यपि ब्रह्मणोऽन्यस्य तस्य जीवस्य नित्यतया भावात् । स्यादेतत्, संसाराधारो जीव एव न ब्रह्म । स च ब्रह्मणोऽन्यो नित्यश्च । किं नाम जीवस्वरूपमात्रस्य ब्रह्मणोऽभेदः । भेदस्तूपाधिकृत

एव। एवञ्च न कश्चिद्दोषः। उपाध्यपगमे ब्रह्मस्वरूपत्वेनैव तस्य मुक्तौ भावेन भेदस्य स्वाभाविकत्वा-नापातादित्यत आह- **स्वरूपमात्रस्येति ।।** जीवब्रह्मणोरिति शेषः। उपाधिनैव जीवो ब्रह्मणो भिन्न इत्यङ्गीकार इत्यर्थः।

अत्र वक्तव्यम्- जीवभेदकारणमुपाधिः जीवसम्बद्धो वा स्याद् ब्रह्मसम्बद्धो वा। नाऽद्यः। अन्योन्याश्रयत्वापातात् । द्वितीये तु ब्रह्मस्वरूपमात्रमुपाधिसम्बद्धं वा निमित्तान्तरसहितं वा। न द्वितीयः। तदभावात्। भावेऽप्यनवस्था(द्या)पातात्। आद्ये निर्निमित्तं ब्रह्मस्वरूपमेवोपाधि-सम्बद्धमिति हेतोः तस्य ब्रह्मणः शुद्धत्वं न स्यात्। मा भूद् ब्रह्मणस्तावच्छुद्धत्वम्। उपाधिनिवृत्तौ सत्यां शुद्धत्वं भविष्यतीत्यत आह- **अशुद्धेति ।।** यद्युपाधिर्निमित्तमन्तरेण ब्रह्मसम्बद्धोऽङ्गीक्रियते तदा ब्रह्मणः स्वाभाविकमेवोपाधिवैशिष्ट्यमङ्गीकृतं स्यात्। तथाच स्वरूपानपाये स्वाभाविका-नपायस्य सर्वसम्मतत्वात् कदापि ब्रह्मणो न शुद्धत्वमित्यापद्येतेति। **इति च तत्पक्ष इति ।।** चशब्दो भिन्नक्रमः तत्पक्षश्चेति। न केवलमस्मत्पक्ष इत्यर्थः। अत्र सर्वेष्वपि पक्षेषु यथासम्भवं व्यवस्थासिद्धिरूहनीयेति।

**(र.टि.)** 'देशतः कालतश्चापरिच्छिन्नयोः' इति मूले दुःखिशुद्धब्रह्मणोरपरिच्छिन्नत्वमुच्यते। न च तत् सम्भ-वति। दुःखिनो जीवस्यापरिच्छिन्नत्वाभावादित्यतो दुःखिपदमीश्वरपरं कृत्वा व्याचष्टे- **ईश्वरस्य तावदिति ।।** ननु 'यदि चैकमेव ब्रह्म' इत्यत्रैव 'अतः संसार्येव ब्रह्म' इत्यनेन ब्रह्मणो दुःखित्वमापाद्य जीवब्रह्मव्यवस्था न सिद्ध्यतीत्युक्तम्। संसारस्य दुःखित्वादिरूपत्वात्। तथा च तेनेदं पुनरुक्तमित्यत आह- **पूर्वमिति ।।** अनेन दुःखिपदस्येश्वरपरत्वेन व्याख्याने इदमप्येकं निमित्तमिति सूचितम्। **न पुनरुक्तिदोष इति ।।** 'अतस्तद्भावोऽपि न मुक्तिः' इत्यनेन न पुनरुक्तिदोष इत्यर्थः। विशिष्टपदस्येश्वरपरत्वं वारयितुमाह- **उपाधिनाऽवच्छिन्नस्य जीवस्येति ।।** अत एवोक्तम्- **प्राप्तिक्रमानुरोधेनेति ।।** स्वरूपेण शुद्धत्वं जीवस्याप्यस्तीत्यत आह- **काल-त्रयेऽपीति ।।** अनेन व्याहतिरपि प्रकटीकृता भवति। ब्रह्मेति प्रकृतत्वाद्विशिष्ट इति कथं पुल्लिङ्गनिर्देश इत्यत आह- **संसाराधार इति ।।** ननु 'अनित्यश्चेन्नाश एव तस्य' इति कथमापाद्यापादकभावः, भेदाभावादित्यत आह- **अत्रानित्यश्चेदिति ।।** न हि स्वरूपावस्थानं मुक्तिः। किन्तु सर्वोपाधिविगम एव। तथा च सर्वोपाधि-विगमानन्तरं जीवस्य किञ्चित्कालावस्थानसम्भवेन न मोक्षविरोध इत्यत आह- **अयं भाव इति ।।** भास्करं प्रति भेदसत्यत्वापादनं नानिष्टमित्यत आह- **स्वाभाविकत्वमिति ।।** मोक्षे जीवस्य विद्यमानत्वेऽपि कुतो भेदस्य स्वाभाविकत्वमित्यतो व्याचष्टे- **सर्वोपाधीनामिति ।।** 'अभेद उपाधिभिन्नः' इत्यनयोः सामानाधि-करण्यप्रतीत्यादिकं वारयितुमाह- **उपाधिनैव जीव इति ।। यथासम्भवमिति ।।** शुद्धस्य संसार इति पक्षे बद्धमुक्तव्यवस्थायाः, जीवब्रह्मव्यवस्थायाश्चासिद्धिः। विशिष्टः शुद्धस्वरूप इति पक्षेऽप्युक्तव्यवस्थाद्वया-सिद्धिः। विशिष्टः शुद्धादन्यः, सोऽनित्य इति पक्षे बद्धमुक्तव्यवस्थाया असिद्धिः। नित्य इति पक्षेऽपि तथैव, मोक्षेऽपि भेदस्य स्वाभाविकत्वेन सत्त्वाद्ब्रह्मभावलक्षणमुक्तेरभावात्। 'आत्मस्वरूपमात्रस्याभेद उपाधिभिन्नः' इत्यादिवाक्योक्तपक्षेऽपि जीवब्रह्मव्यवस्थाया बद्धमुक्तव्यवस्थायाश्चासिद्धिरिति व्यवस्थासिद्धिरित्यर्थः।

**(रा.टि.) पूर्वोक्तन्यायेनेति ।।** सर्वोपाधिगतत्वात् सर्वोपाधिनिमित्तं दुःखित्वादिकमापन्नमित्यर्थः। **अत एव** भेदाभावादेवेत्यर्थः। पूर्वभागं व्याचष्टे- **नन्वित्यादिना ।। पूर्वमिति ।।** यदि चैकमेव ब्रह्मेत्यादावित्यर्थः। **स्वाभाविकत्वाच्चेति ।।** प्रसङ्गसमुच्चये चशब्दः। **अस्यापीति ।।** अनिवृत्तिरूपप्रसङ्गस्यापि। ईश्वरस्य जीवाभेदेन संसारित्वापत्त्या तदभेदेन शुद्धे प्राप्तस्यापि संसारस्यानिवृत्तिरित्येवं रूपेणेत्यर्थः। यदि चेत्यादिना प्रागुक्त-मतस्यात्रोक्तमतस्य च सत्योपाधिकृतसत्यभेदवादिमतत्वात् पौनरुक्त्यसमाध्युक्तिरियमिति ज्ञेयम्।

प्रसङ्गरूपतासूचनायाऽह-**स्यादिति शेष इति ।।** अद्वैतिनामिति औपाधिकसत्यभेदवादिनामिति योज्यम्। **पूर्वोक्त एवेति ।।** प्राप्तिक्रम इत्यर्थः। ननु व्याहतस्य कथं प्रश्नकोटितेत्यत आह- **परस्येति ।। क्रमव्युत्क्रमयो-रिति ।।** निर्देशे क्रमे, दूषणे च व्युत्क्रमे प्राप्तिक्रमोऽल्पत्वं च निमित्तमित्यर्थः। अनित्यत्वं नाम नाश एवेति कथमापाद्यापादकभाव इत्यत आह- **अत्रानित्यश्चेत्यादिना ।।** प्रसङ्गस्वरूपं व्यनक्ति- **अनित्यश्चेदिति ।।** अस्फुटत्वादाह- **अयं भाव इति ।।** विशिष्टस्य जीवत्वेन प्राग्व्याख्यानादाह- **यदि जीव इति ।। विनाश-(रा.टि.) कारणान्तराभावादिति ।।** यद्विलम्बाद्विनाशो न स्यादिति भावः। मोक्ष इत्यत्र कस्येत्याकाङ्क्षायामाह- **सर्वोपाधीनां मोक्ष इति ।।** सर्वोपाध्यपगमे सत्यपीत्यर्थः। **अनवस्थापातादिति ।।**

निमित्तान्तरमपि निमि-त्तान्तरसहितस्येति वाच्यत्वात् । शुद्धस्यैव निमित्तान्तरसम्बन्धोपगमे सत्युपाधिसम्बन्ध एव शुद्धस्योपेयतामिति भावः। इतिशब्दं हेत्वर्थं मत्वाऽऽह- **इति हेतोरिति ॥ सर्वेष्वपि पक्षेष्विति ॥** शुद्धस्य संसार इति पक्षे, विशिष्टः शुद्धात्मैवेति पक्षे, विशिष्टः शुद्धादन्यो नित्य इति पक्षे, अनित्य इति पक्षे, मोक्षे जीवो ब्रह्ममात्रमिति पक्षे चेत्यर्थः। आद्ये बद्धमुक्तव्यवस्थायाः जीवब्रह्मव्यवस्थायाश्चासिद्धिः । द्वितीयेऽप्येवमेव । तृतीये चतुर्थे च बद्धमुक्तव्यवस्थायाः, पञ्चमे जीवब्रह्मादिव्यवस्थाया असिद्धिरित्येवं यथासम्भवमूहनीयेत्यर्थः । औपाधिकसत्य-भेदाद्वैतिमतव्यवस्थानुपपत्त्युक्तिः ।

**(श्री.टि.)** ननु 'देशतः कालतश्चापरिच्छिन्नयोः' इति मूले दुःखिशुद्धब्रह्मणोरपरिच्छिन्नत्वमुच्यते। न च तत्सम्भवति। दुःखिनो जीवस्यापरिच्छिन्नत्वाभावादिति चेन्न । दुःखिपदस्येश्वरपरत्वात्। कथमीश्वरस्य दुःखित्वमित्यत आह- **ईश्वरस्येति ॥ पूर्वोक्तन्यायेनेति ॥** 'सर्वोपाधिगतत्वाच्चैकस्यैवेश्वरस्य भेदस्य मिथ्यात्वाच्च' इत्यादिना पूर्वोक्तन्यायेन दुःखिभूतजीवाभिन्नतयेश्वरस्य दुःखित्वं सिद्धमित्यर्थः। **तेनेति ॥** दुःखिभूतेनेश्वरेणेत्यर्थः। **दुःखिन** ईश्वरात्। ननु, यदि चैकमेव ब्रह्मेत्यत्रातस्संसार्येव ब्रह्मेत्यनेन ब्रह्मणो दुःखित्व-मापाद्य जीवब्रह्मव्यवस्था न सिद्ध्यतीत्युक्तम्। संसारस्य दुःखित्वादिरूपत्वात्। तथा च तेनेदं पुनरुक्तमित्यत आह- **पूर्वमिति ॥ दुःखित्वादिति ॥** उक्तरीत्या तयोर्भेदाभावादिति भावः । **ईश्वरगतेनेति ॥** पूर्वोक्तन्यायेन दुःखिभूतेश्वराभिन्नत्वादिति भावः । ईश्वरगतेनेत्युक्त्या दुःखिपदस्य ईश्वरपरत्वेन व्याख्याने इदमप्येकं निमित्त-मिति सूचितमिति ज्ञातव्यम्। देशतः कालतश्चापरिच्छिन्नयोरिति वाक्योक्तं ब्रह्मणो दुःखित्वापादनं परस्येष्टा-पादनरूपमिति दूषणान्तरमाचार्यैः अत इति वाक्येनोच्यत इति प्रतीतिवारणायाऽह- **यद्यपीति ॥** अनिष्टैवेत्य-न्वयः। **व्यवस्थेति ॥** जीवब्रह्मव्यवस्थेत्यर्थः। **तयेति ॥** ब्रह्मणो दुःखित्वापत्त्येत्यर्थः । मूले अत इत्यस्य ब्रह्मणो दुःखित्वादित्यर्थः । **अन्यथेति ॥** स्वाभाविकस्यापि निवृत्त्यङ्गीकार इत्यर्थः । ननु 'यदि चैकमेव ब्रह्म' इत्यत्रैव संसार्येव ब्रह्मातस्तद्भावोऽपि न मुक्तिरिति बद्धमुक्तव्यवस्थाभावस्य पूर्वमुक्तत्वात् पुनरुक्तिरित्यत आह- **अस्यापीति ॥** अत्रोच्यमानबद्धमुक्तव्यवस्थाभावस्यापीत्यर्थः। पूर्वं जीवब्रह्मणोर्भेदस्य मिथ्यात्वा-ज्जीवगतेन दुःखेन ब्रह्मणोऽपि दुःखित्वात्तद्भावमापन्नस्यापि न मुक्तत्वमिति बद्धमुक्तव्यवस्था न सिद्ध्यती-त्युक्तम् । इदानीं तु दुःखिभूतजीवाभिन्नस्येश्वरस्य ब्रह्मणश्च भेदस्य मिथ्यात्वेनेश्वरगतेन दुःखेन ब्रह्मणोऽपि दुःखित्वापत्त्या तद्भावमापन्नस्यापि न मुक्तत्वमिति पुनर्बद्धमुक्तव्यवस्थाभाव इत्युच्यत इति न पुनरुक्तिदोष इति भावः । **तदेवेति ॥** प्रतिज्ञातमेवेत्यर्थः । विशिष्टपदस्येश्वरपरत्वप्रतीतिं वारयितुमाह- **उपाधिनाऽवच्छिन्नस्य जीवस्येति ॥** स्वरूपेण शुद्धत्वं जीवस्याप्यस्तीत्यतो व्याचष्टे- **कालत्रयेऽपीति ॥** अनेन व्याहतिरपि प्रकटिता भवति । **यद्यपीत्यादि ॥** 'यदि चैकमेव ब्रह्मोपाधिभेदात्संसरति मुच्यते च' इत्यादिना शुद्धस्य संसार इति पक्षे **(श्री.टि.)** दूषणमुक्तम्। उपाधिसम्बद्धस्योपाधिसम्बन्ध इत्यङ्गीकारे तदुपाधिकृतत्वे आत्माश्रयत्वमित्यादिना, उपाधिनाऽवच्छिन्नस्य जीवस्य संसार इति पक्षे च दूषणमुक्तमिति विवेकेन योज्यम्।

ननु विशिष्टस्य संसार इति प्रथमपक्षदूषणमादावनुक्त्वा द्वितीयपक्षदूषणमादावुच्यते। तदयुक्तम्। प्रथमातिक्रमे कारणाभावात् । न चाल्पत्वात्सूचीकटाहन्यायेन द्वितीयपक्षदूषणमादावुच्यत इति वाच्यम् । तर्हि शुद्धस्य संसारो विशिष्टस्य वेत्येव प्रश्नस्य कर्तव्यत्वादित्यत आह- **यद्यपीति ॥** विशिष्टशुद्धयोर्मध्ये उपाध्यवच्छिन्नजीवस्यैव संसारः सम्भावितत्या प्राप्तो न शुद्धस्यातस्तत्क्रमानुसारेण प्रश्नः कृत इत्यर्थः । तर्हि प्रश्नानुसारेणैव दूषणं कस्मान्न कृतमित्यत आह- **तथाऽपीति ॥** केचित्तु ब्रह्मज्ञाने हि सत्यादौ विशिष्टस्य प्राप्तिः पश्चाच्छुद्धस्येति प्राप्तिक्रमानुरोधेनेत्यर्थ इत्याहुः । तन्न । ब्रह्मज्ञाने सति विशिष्टस्य सगुणस्येश्वरस्यैव प्राप्तिरङ्गीकृता न जीवस्य। प्रकृते च विशिष्टपदस्योपाध्यवच्छिन्नजीवपरत्वेन व्याख्यानात्। ब्रह्मज्ञाने सति जीवस्य जीवप्राप्त्यभावेन व्यधिकरणत्वात्। अत्रापि क्रमव्युत्क्रमयोस्तदेव निमित्तमित्युत्तरत्र विशिष्टोऽन्यश्चेन्नित्योऽनित्यो वेति प्रश्नः क्रियते। तत्राऽदौ नित्यत्वप्रश्ने च प्राप्तिक्रमस्यैव निमित्तत्वमुच्यते। तदप्यसङ्गतं स्यादिति ज्ञातव्यम्। ननु शुद्धस्य संसार इत्यत्र व्याहत्यापादनमयुक्तम्। संसारस्य सादित्वेन कालभेदेन शुद्धचाशुद्ध्योः सम्भवेन व्याहत्यभावादित्यत आह- **न खल्वयमिति ॥** ननु तथाऽपि दुःखादिरूपसंसारस्य मिथ्यात्वान्मिथ्याभूतेन संसारेण ब्रह्मणः शुद्धत्वं न विहन्यते । आरोपितेन नीलिम्ना गगनस्य नीरूपत्वानपायादित्यत आह- **न हीति ॥ एतैरिति ॥** भास्करैरित्यर्थः। एतेषां सत्योपाधिकृतसत्यभेदवादित्वेन दुःखादिरूपसंसारस्यैतन्मते सत्यत्वादिति भावः।

ननु शुद्धं ब्रह्मेति नपुंसकलिङ्गस्य प्रकृतत्वाद्विशिष्ट इति कथं पुल्लिङ्गनिर्देश इत्यत आह- **संसाराधार इति ॥** ननु संसाराधारो विशिष्टः शुद्धो वा तदन्यो वेति विकल्पमकृत्वा शुद्धादन्यः स एव वेति विकल्पकरणे को हेतुरित्यत आह- **अत्रापीति ॥** विरुद्धधर्माधिकरणयोरैक्यायोगेन विशिष्टस्य शुद्धादन्यत्वमेवाऽदौ सम्भावितत्या प्राप्तम्। अतः प्राप्तिक्रम एव तत्र हेतुरित्यर्थः।

तर्हि विकल्पानुसारेणैव कस्मान्न दूष्यत इत्यत आह- **अल्पत्वादे-वेति ।।** द्वितीयपक्षदूषणस्याल्पत्वादेवेत्यर्थः । **नन्वेवं तर्हि विशिष्टः शुद्ध एव वेति** भवद्भिरपि कथं प्रश्नः क्रियते व्याहतेस्तुल्यत्वात् । तस्याश्च प्रश्नदोषत्वात् । यथोक्तम्-

'प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ।
सिद्धार्थता च वैफल्यम्'

इति, तत्राऽह- **परस्येति ।।** तथा च मायावादिनस्तावद्व्याहतभाषित्वं सम्भावितम् । तथा च तं प्रति तदनुसारेण व्याहतप्रश्नकरणे नास्माकं कश्चिद् दोष इति भावः । **शुद्धस्यैवेति ।।** कालत्रयेऽपि स्वव्यतिरिक्तशून्यस्यैवे-त्यर्थः । अन्यश्चेदनित्यो नित्यो वेति विकल्पमकृत्वा नित्योऽनित्यो वेति विकल्पक्रमे किं निमित्तं, विकल्प-क्रमानुसारेण दूषणमनभिधाय व्युत्क्रमेण दूषणाभिधाने च किं निमित्तमित्यत आह- **अत्रापीति ।।** मोक्षशा(स्त्र-**(श्री.टि.)** वैयर्थ्याप्रसङ्गा)स्त्रावैयर्थ्यान्यथानुपपत्त्या शुद्धादन्यस्य विशिष्टजीवस्य नित्यत्वमेव सम्भावितत्या प्राप्तमिति प्राप्तिक्रम एव विकल्पक्रमे निमित्तम् । द्वितीयपक्षस्याऽदौ दूषणे च दूषणस्याल्पत्वमेव निमित्तमित्यर्थः। निमित्तशब्दापेक्षया तदेवेति नपुंसकम् । 'शैत्यं हि यत्सा प्रकृतिर्जलस्य', 'दक्षिणान्नं तनुते यो न आत्मा' इत्यादिवदिति ज्ञातव्यम् । प्राप्तिक्रमस्य सामान्येन परामर्शात्तदेवेति नपुंसकोपपत्तिः । 'सामान्ये नपुंसकम्' इतिसूत्रादित्यप्याहुः । नन्वनित्यश्चेन्नाश एव तस्येति कथमापाद्यापादकभावः । भेदाभावादित्यत आह- **अत्रानित्यश्चेदितीति ।। तदेव** पराभ्युपगतमेव । तदेव दर्शयति- **अनित्यश्चेदिति ।।** तदेवानित्यत्वं हेतुत्वेनोपादायेत्युक्तं दर्शयति- **अनित्यत्वादेवेति ।।** अनित्यत्वादेव न मोक्षः स्यादित्यत्राप्रयोजकताशङ्का-परिहारायाभिप्रायमाह- **अयं भाव इति ।।** कुत इत्यत आह- **विनाशेति ।।** सर्वोपाधिविगमं विना जीवस्य विनाशे कारणान्तराभावादित्यर्थः । **ततश्चेति ।।** विनाशे सतीत्यर्थः । **न स्यादिति ।।** पुरुषार्थान्वयिन एवाभावादिति भावः । ननु भास्करं प्रति भेदस्य सत्यत्वापादनं नानिष्टम् । सत्योपाधिकृतसत्यभेदवादित्वात्तस्येत्यत आह-**स्वाभाविकत्वमिति ।।** ननु ब्रह्मणोऽन्यस्य जीवस्य नित्यतया सद्भावेऽपि भेदस्य स्वाभाविकत्वं कुतः। औपाधिकत्वमेव किं न स्यादित्यत उक्तम्- मोक्षेऽपीतीत्याशयेन व्याचष्टे-**सर्वोपाधीनामिति ।। मोक्ष इति ।।** विगम इत्यर्थः । तथा च मोक्षेऽपीत्यतः पूर्वं सर्वोपाधीनामिति शेषः । मोक्ष इत्यनन्तरम् अपीत्यतः पूर्वं सतीति शेष इत्युक्तं भवति । तथा च सर्वोपाध्यपगमदशायामपि विद्यमानस्य भेदस्य नौपाधिकत्वं युक्तम् । किं नाम स्वाभाविकत्वमेवेत्याशयः । **न कश्चिद्दोष इति ।।** ब्रह्मणोऽन्यस्य जीवस्य नित्यत्वपक्षे सर्वोपाध्यपगमदशायामपि ब्रह्मणोऽन्यस्य जीवस्य नित्यतया भावेन भेदस्य स्वाभाविकत्वमिति यो दोष उक्तस्स नेत्यर्थः । कथं नेत्यतस्तदुप-पादयति- **उपाध्यपगम इति ।। ब्रह्मस्वरूपत्वेनैव तस्य मुक्तौ भावेनेति ।।** उपाधीनां नाशेनोपाधिविशिष्टा-कारस्य नष्टत्वेन तदुपाधिकभेदस्यापि नष्टत्वादिति भावः । **भेदस्येत्यादि ।।** तस्यैवाभावेन कस्य स्वाभाविकत्वं स्यादिति भावः । 'अभेद उपाधिभिन्नः' इत्यत्राभेदस्योपाधिभिन्नत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायोपाधिभिन्न इत्येतद्व्याचष्टे - **उपाधिनैवेति ।। अन्योन्याश्रयत्वापातादिति ।।** उपाधिसिद्धौ जीवसिद्धिः। जीवसिद्धौ तत्सम्बद्धोपाधिसिद्धिरित्यन्योन्याश्रयापातादित्यर्थः । **तदभावादिति ।।** यन्निमित्तान्तरसहितं ब्रह्मस्वरूप-मुपाधिसम्बद्धं तस्य निमित्तान्तरस्याभावादित्यर्थः । **अनवस्थादीति ।।** निमित्तान्तरसद्भावाङ्गीकारे तन्निमि-त्तान्तरसाहित्यमपि ब्रह्मस्वरूपमात्रस्य वक्ष्यमाणरीत्याऽसम्भवात्पुनर्निमित्तान्तरसहितस्यैवेति वाच्यम् । तन्निमित्तान्तरसम्बन्धोऽप्येवमित्यनवस्था, द्व्यादिकल्पनेऽन्योन्याश्रयत्वाद्यापात इत्यर्थः । **तावच्छुद्धत्व-मिति ।।** यावत्पर्यन्तमुपाधिसम्बन्धोऽस्ति तावत्पर्यन्तं ब्रह्मणः शुद्धत्वं मा भूदित्यर्थः । सर्वसम्मतमपि मया नाङ्गीक्रियत इत्याशङ्कापरिहारायोक्तम् 'इति च तत्पक्षः' इतीत्यभिप्रेत्य व्याचष्टे- **इति च तत्पक्ष इतीति ।। यथासम्भवमिति ।।** शुद्धस्य संसार इति पक्षे बद्धमुक्तव्यवस्थाया जीवब्रह्मव्यवस्थायाश्चासिद्धिः । विशिष्टं शुद्धस्वरूपमिति पक्षेऽप्युक्तव्यवस्थाद्वयासिद्धिः । विशिष्टः शुद्धादन्यस्स चानित्य इति पक्षे बद्धमुक्तव्यवस्थाया असिद्धिः । नित्य इति पक्षेऽपि बद्धमुक्तव्यवस्थाया असिद्धिः । मोक्षेऽपि भेदस्य स्वाभाविकत्वेन सत्त्वेन **(श्री.टि.)** ब्रह्मभावलक्षणमुक्तेरभावात् । जीवब्रह्मणोः स्वरूपमात्रस्याभेदः उपाधिनैव जीवो ब्रह्मणो भिन्न इति पक्षेऽपि जीवब्रह्मव्यवस्थाया बद्धमुक्तव्यवस्थायाश्चासिद्धिरित्येवं सर्वेष्वपि पक्षेषु यथासम्भवं व्यवस्थाया असिद्धिरूहनीयेत्यर्थः ।

**(पां.टि.)** 'देशतः कालतश्चापरिच्छिन्नयोः' इति मूले दुःखिशुद्धब्रह्मणोरपरिच्छिन्नत्वमुच्यते । न च तत्सम्भ-वति । दुःखिनो जीवस्यापरिच्छिन्नत्वाभावादित्यतो दुःखिपदमीश्वरपरतया व्याचष्टे- **ईश्वरस्य तावदिति ।।** ननु यदि चैकमेव ब्रह्मेत्यत्र सर्वदा संसार्येव ब्रह्मेत्यनेन ब्रह्मणो दुःखित्वादिकमापाद्य जीवब्रह्मव्यवस्था न सिद्ध्यतीत्युक्तम् । संसारस्य दुःखित्वादिरूपत्वात् । तथा च तेनेदं पुनरुक्तमित्यत आह- **पूर्वमिति ।। अनि-ष्टेति ।।** ततश्चास्त्वेवमितीष्टापत्तिशङ्कानुदयान्न तयाऽऽपाद्यमानस्यानिष्टान्तरस्योक्तिर्युक्तेति शेषः । अनिष्टत्वोप-पादनम्- **व्यवस्थेति ।।** नेयं तदिष्टापत्तिशङ्कायामनिष्टान्तरोक्तिरभिमता । किन्तु तयाऽनिष्टान्तरस्याप्यापत्ति-

रित्येवेत्याशयेनोत्तरग्रन्थं योजयति- **तथाऽपीति ॥** नन्वतस्तद्भावोऽपि न मुक्तिरित्यत्र बद्धमुक्तव्यवस्थानुपपत्ति-रुक्ता सैव पुनरिहोच्यत इति पुनरुक्तिमाशङ्क्याऽह- **अस्यापीति ॥** विशिष्टपदस्येश्वरपरत्वभ्रान्तिं परिहरति- **उपाधिनेति ॥** स्वरूपेण शुद्धत्वं जीवस्यापीति शङ्कावारणाय वक्ष्यमाणव्याहतिस्फोरणाय च शुद्धस्येत्यस्यार्थ-माह- **कालत्रयेऽपीति ॥** किं तदित्यतः तदेव विशिष्य निर्दिशति- **यदि चेत्यादिना ॥ प्राप्तिक्रमेति ॥** विशिष्टशुद्धयोर्भावाभावरूपत्वादभावापेक्षया भावस्यैव प्रथमप्राप्तिक्रमानुरोधेनेत्यर्थः । **तदेवेति ॥** सूचीकटाह-न्यायेनेति शेषः । ब्रह्मेति प्रकृतत्वात् कथं पुल्लिङ्गनिर्देश इत्यत आह- **संसाराधार इति ॥** नन्वनित्यश्चेन्नाश एवेति कथमापाद्यापादकभावः भेदाभावादित्यत आह- **अत्र नित्यश्चेदितीति ॥** ननु जीवस्यानित्यत्वे कुतो मोक्षो न स्यात् । न हि सर्वदा स्वरूपावस्थानं मुक्तिः । किन्तु सर्वोपाधिविगम एव । तथा च सर्वोपाधिविगमानन्तरं जीवस्य किञ्चित्कालावस्थानसम्भवेन न मोक्षविरोध इत्यत आह- **अयं भाव इति ॥** भास्करं प्रति भेदसत्य-त्वापादनं नानिष्टम् । अतः कथं तदापादनमित्यत आह- **स्वाभाविकत्वमिति ॥** जीवभेदस्य मुक्तिकाले सत्त्वेऽपि कुतः स्वाभाविकत्वमित्यतो व्याचष्टे- **सर्वोपाधीनामिति ॥** 'अभेद उपाधिभिन्नः' इति सामानाधि-करण्येनान्वयभ्रान्तिं वारयति- **उपाधिनैव जीव इति ॥ शुद्धत्वमिति ॥** इदानीमिति शेषः । तस्य पक्षान्तरा-भावाच्चशब्दस्य यथाश्रुतानन्वयमाशङ्क्याऽह- **चशब्दो भिन्नक्रम इति ॥** इति च तत्पक्ष इति चशब्दस्य भिन्नक्रमत्वेन दर्शयति - **तत्पक्षश्चेतीति ॥** इति तत्पक्षश्चेत्यन्वय इत्यर्थः । उक्तान्वयेऽपि कस्तदर्थ इत्यत आह- **न केवलमिति ॥**

ननु जीवेश्वरब्रह्म-गुरुशिष्य-सुखदुःखव्यवस्थासिद्ध्यादयो न सर्वेषामद्वैतवादिनाम् । द्विस्कन्धचैतन्यवादिमते ब्रह्मेश्वरसुखदुःखव्यवस्थासिद्धेरभावाद्, गुरुशिष्यव्यवस्थासिद्धेश्च बहुजीववादिनां मतेऽसम्भवात्तत्राऽह- **अत्र सर्वेष्विति ॥ यथासम्भवमिति ॥** शुद्धस्य संसार इति पक्षे बद्धमुक्तव्यवस्थाया जीवब्रह्मव्यवस्थायाश्चासिद्धिः। विशिष्टः शुद्धस्वरूप इति विशिष्टपक्षेऽप्युक्तरीत्या व्यवस्थाद्वयासिद्धिः । विशिष्टः शुद्धादन्यः, सोऽनित्य इति **(पां.टि.)** पक्षे बद्धमुक्तव्यवस्थाया असिद्धिः । नित्य इति पक्षेऽपि तथैव । मोक्षेऽपि भेदस्य स्वाभाविकत्वेन सत्त्वात् । ब्रह्मभावलक्षणमुक्तेरभावात् । 'स्वरूपमात्रस्याभेद उपाधिभिन्नः' इत्यादिवाक्योक्तपक्षेऽपि जीवब्रह्म-व्यवस्थाया बद्धमुक्तव्यवस्थायाश्चासिद्धिरिति व्यवस्थासिद्धिरित्यर्थः ।

**(व्या.टि.)** जीवेश्वरव्यवस्थानुपपत्तेर्जीवब्रह्मव्यवस्थानुपपत्त्युपजीवित्वात् तामुपपाद्य जीवब्रह्मव्यवस्थानुपपत्तिं प्रतिजानीत इत्याह- **जीवब्रह्मव्यवस्थाऽपीति ॥** ब्रह्मदुःखित्वापत्तेरीश्वरदुःखित्वापत्तिप्रयुक्ततामाह- **तत-श्चेति ॥** तृतीयापत्तेस्तन्निमित्ततामाह- **अत एवेति ॥ देशत इति ॥** भेदकस्योपाधेर्देशकालान्यतरावच्छेदकत्व-व्यापकत्वात्तदभावे भेदकोपाध्यभाव इति मौलो भाव इति भावः । ननु द्विस्कन्धचैतन्यवादिनामुक्तव्यवस्था-नुपपत्तिप्रकारेणैवात्रोक्तेः पुनरुक्तिरित्यत आह- **पूर्वमिति ॥** पूर्वं साक्षादीश्वरघटितपारम्पर्येणात्रेति न पुनरुक्तिरिति भावः । मूलेऽनिष्टान्तरापादनमयुक्तम् । अस्यैवानिष्टत्वादित्याशङ्क्यावतारयति- **यद्यपीति ॥** अत्रापि निमित्तनिमित्तिभावेनानिष्टद्वयपरतयाऽनिष्टद्वयावश्यम्भाव इति भावः । आपादकस्याऽपाद्यप्रयोजकता-माह- **शुद्धगतस्येति ॥** विपक्षे बाधकमाह- **अन्यथेति ॥** अत्राप्युक्तानुक्तिं व्यनक्ति- **अस्यापीति ॥** प्रति-जानीत इति 'सम्प्रतिज्ञामनाध्याने' इत्यात्मनेपदम् । वैशिष्ट्यस्य प्रतियोगिनिरूप्यत्वात्तमाह- **उपाधिनेति ॥** शुद्धपदं विशेष्यभ्रमं वारयञ्छून्यपरतया व्याचष्टे- **कालत्रयेऽपीति ॥ अभिधित्सयेति ॥** अधिकविवक्षयोक्ता-नुवाददोषः । अभिपूर्वाद् दधातेः सनि सति 'सनि मीमा' इति इसि 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे च 'सः स्यार्धधातुके' इति सस्य तत्वे च 'अ प्रत्ययात्' इत्यप्रत्यये 'अजादि' इति टापि रूपं न्यरूपि । प्रश्नक्रम एव प्रतिवचनेऽप्यनुरोद्धव्य इति शङ्कते- **यद्यपीति ॥** व्युत्क्रमकारणमाह- **अल्पत्वादिति ॥** व्याहतिं व्युत्पादयति- **न खल्विति ॥** द्वेधा हि व्याहतिपराहतिः । संसारसादित्वेन तन्मिथ्यात्वेन वा । आद्यमनूद्यावद्यति- **नेति ॥** द्वितीयं पराचष्टे- **न हीति ॥ शुद्धिं** शून्यताम् । उक्तिकर्तारं वक्ति- **परेणेति ॥ शुद्धस्येति ॥** प्रकृतशुद्ध एवान्य इत्यत्र प्रतियोगितया पदिन्यायेन सम्बध्यत इत्याह- **शुद्धादिति ॥** अपेक्षितं पूरयति - **इति प्रष्टव्य-मिति ॥ पूर्वेति ॥** प्राप्तिक्रम इत्यर्थः । उक्तं दोषं शृङ्गग्राहिकया दर्शयति- **व्याहतिरिति ॥** तामुपपादयति- **एकेति ॥** स्वव्याहतं कथं पृच्छ्यत इत्यत आह- **परस्येति ॥ अन्येति ॥** फलितेति भावः । **अत्रापीति ॥** प्रश्नदूषणयोरित्यर्थः । अत्राऽपाद्यापादकयोरैक्यभ्रमं वारयति- **अत्रेत्यादिना ॥** आपादनप्रकारं दर्शयति- **अनित्यत्वादेवेति ॥** अनेन नाश एव तस्येत्यतः परं 'भर्तव्या मनुरब्रवीत्' इतिवदितिकरणमभिप्रैति ।

नन्वनित्यत्वोपगमेऽपि जीवस्य नाशकारणविलम्बेन कियत्कालमवस्थानसम्भवेनोपाध्यपगमरूपमोक्षा-भावकत्वं किं न स्यादित्यतोऽभिप्रायमाह- **अयं भाव इति ॥ सर्वोपाधीति ॥** अनेन मूले शेषोक्तिः । उपाध्यपगमस्यैव कारणत्वस्फोरणाय कारणान्तरं निराह- **नाशकारणान्तरेति ॥** उपाधिनाशोपहितनाशयोः कार्यकारणभावस्यान्वयव्यतिरेकसिद्धत्वादिति भावः । आपाद्यं विशदयति- **ततश्चेति ॥** अनुमानेऽसिद्धिं व्युदसितुमाह- **प्रसज्यत इति ॥** मोक्ष इति निमित्तसप्तमीत्युपेत्य व्याचष्टे-

**सत्यपीति ॥** उपाध्यपगमेऽप्यनप-**(व्या.टि.)** गमादिति उपाध्यपगमेऽप्युपहितसत्त्वं व्याहतभाषिणः परस्यैव युक्तमिति भावः । उक्तं प्रति-वक्तुं शङ्कते- **स्यादेतदिति ॥** उक्तदोषमाशङ्कते- **किं नामेति ॥** उत्तरयति- **जीवस्वरूपमात्रस्येति ॥ तस्य** जीवस्य । स्वरूपमात्रस्येति विशिष्टव्यावृत्त्या व्याहतिं व्यवच्छिनत्ति । **उपाधिनैवेति ॥** अनेनैवकारो भिन्नक्रम इति सूचयति । मूलं विकल्पेषु परिशिष्टकल्पाभिप्रायमित्युपेत्य विकल्पस्य प्रतिज्ञासापेक्षत्वादपेक्षितं पूरयति- **अत्र वक्तव्यमित्यादिना ॥ अन्योन्याश्रयत्वेति ॥** जीवसिद्धौ तत्सम्बन्धोपाधिसिद्धिः, तत्सिद्धौ तदुपहित-जीवसिद्धिरित्यन्योन्याश्रयत्वादित्यर्थः । **अनवस्थेति ॥** निमित्तान्तरसम्बन्धाय निमित्तान्तरापेक्षायामनवस्थे-त्यर्थः । इतिशब्दो हेतावित्युपेत्य व्याचष्टे- **इति हेतोरिति ॥** उपाधिसम्बन्धसमकालमित्यर्थः । मूलमापादनपर-तया व्याचष्टे- **यदीति ॥** तर्कमूलव्याप्तिप्रदर्शनपरतया व्याचष्टे- **तथा चेति ॥** सर्वसम्मतत्वादित्युक्तं मूलारूढं करोति- **चशब्द इति ॥** ननु च 'व्यवस्थासिद्धिं दर्शयितुम्' इति 'किञ्च' इत्यवतारितम् । तदयुक्तम् । व्यवस्थासिद्ध्याः क्वाप्यदर्शनादित्यत आह- **अत्र सर्वेष्वपीति ॥ ऊहनीयेति ॥** ऊहप्रकारस्त्वित्थम् । शुद्धस्य संसार इति पक्षे जीवेश्वरव्यवस्थासिद्धिः, बद्धमुक्तव्यवस्थासिद्धिः, सुखदुःखव्यवस्थासिद्धिश्च । विशिष्टस्य संसार इति पक्षे शुद्धानन्यत्वे प्रागुक्तत्रितयम् । अन्यत्वेऽनित्यत्वे च बद्धमुक्तव्यवस्थासिद्धिः । नित्यत्वे चोपहितस्य सर्वोपाध्यपगमेन बद्धमुक्तव्यवस्थासिद्धिः । औपाधिकभेदनिवृत्त्या ब्रह्मस्वरूपत्वेनैवावस्थानात् । अत एव यथासम्भवमित्युक्तमिति दिक् । इति सत्योपाधिकृतसत्यभेदवादः ।

**मूलम्- उपाधिमिथ्यात्वाङ्गीकारे चान्योन्याश्रयत्वादिदोषा उक्ताः । नचानादि-कर्म्मभेदाद्भेदः । औपाधिकभेदसिद्धौ कर्म्मभेदसिद्धिः, तत्सिद्धौ च तत्सिद्धिरित्य-न्योन्याश्रयत्वात् । अतोऽनन्तदोषदुष्टत्वाद् ग्रन्थबहुत्वं स्यादित्येवोपरम्यते । अतः सर्वप्रमाणविरुद्धत्वान्नाभेदे श्रुतितात्पर्यम् ।**

**(त.मं.)** मिथ्या ह्युपाधिः अतस्तन्निमित्तमशुद्धत्वमपि मिथ्या । अतः कथं अशुद्धस्वभावत्वमित्यत आह - **उपाधीति ॥**

नच वक्तव्यं अनादिकर्मभेदात्तन्निमित्तोपाधिभेद इति ॥ नहि निष्क्रियस्य शुद्धब्रह्मणः उपाधिभेदं विना कर्मसिद्धिरित्यन्योन्याश्रयत्वात् । अत उक्तन्यायादेवानन्तदोषदुष्टत्वादस्य पक्षस्या-स्माभिरुपरम्यते । न दोषाणां प्रतिपाद्यमानानां समाप्तेः । तर्ह्यनन्तानां दोषाणां स्पष्टं प्रतिपादनं किमिति न क्रियत इति नाशङ्कनीयम् । अल्पायुरनल्पश्रोतव्यवद्भिरधिकारिभिरभ्यसनीयस्य ग्रन्थबहुत्वं स्यादिति हेतोरेव ह्युपरम्यते ।

**टीका-** अत्राऽहुर्मायावादिनः- 'उपाधिभेदाङ्गीकारे' इत्यादिनोक्ताः सुखदुःखव्यवस्थासिद्ध्यादयो दोषा नास्मत्पक्षे प्रसज्यन्ति । अस्माभिरुपाधिमिथ्यात्वस्याङ्गीकृतत्वात् । तथाहि- काल्पनिको ह्युपाधिर्भेदकल्पनां जनयन् सुखादीनपि व्यवस्थयैव कल्पयति । यथाऽङ्गुल्यवष्टम्भादिः चन्द्रमसि भेदभ्रमं जनयंश्चक्रत्वादीन् धर्मानपि व्यवस्थयैव दर्शयति । तेन सुखदुःखादिव्यवस्थोपपन्ना । यदपि 'यथा चैकाङ्गुल्याद्यपगमे' इत्युक्तं तदपि न । यस्य ज्ञानमुत्पन्नं तस्य ब्रह्मव्यतिरिक्तार्थदर्शनाभा-वात् । नहि ज्ञानोत्पत्तौ मिथ्यार्थदर्शनमस्ति । नच मिथ्याभूतैरुपाधिभिः स्थितैर्गतैर्वा ब्रह्मणः कश्चिद्विशेषो व्योम्न इव नीलिम्ना । यच्च, किञ्चोपाधिरित्यादि तदप्यसत् । सत्यस्योपाधेर्भेदजन-कत्वे हि तत् स्यात् । नचैवम् । मिथ्याभूत एवोपाधिर्मिथ्याभूतमेव भेदं दर्शयतीत्यङ्गीकारात् । ईश्वरादिव्यवस्था मिथ्योपाधिकृतैवोपपद्यते । किञ्च विशिष्टस्येत्याद्यप्यसत् । परमार्थतः कस्याप्य-भावात् । कल्पनायान्तु यस्योपाधिसम्बन्धस्तस्यैवेत्यभ्युपगमात् । नच मिथ्योपाधिसम्बन्धेन ब्रह्मणः शुद्धिरपैतीत्युक्तमिति ।

एतन्निराकरोति- **उपाधीति ॥** स्यादयं परिहारो यद्युपाध्यादेर्मिथ्यात्वं स्यात् । नचैवम् । अन्योन्याश्रयत्वादिदोषैस्तस्य निरस्तत्वात् ।

इदमुक्तं भवति। मिथ्यात्वपक्षस्य दुष्टत्वात् सर्वैरद्वैतवादिभिः सत्योपाधिकृत एव सत्यो भेदः संसारश्चेति वक्तव्यम् । ततश्च व्यवस्थानुपपत्तिरपरिहार्यैवेति। ननु सत्योपाधिपक्षेऽपि न सुखादिसाङ्कर्यम्। यस्य कर्मणा य उपाधिरारब्धः तस्यैव तदुपाधिगतदुःखादिभोगो नान्य-स्येत्यादिव्यवस्थोपपत्तेरित्यत आह- **न चेति ॥ कर्मभेदात्** कर्मणां व्यवस्थानात्। **भेदः** उपाधीनां सुखादीनाञ्च व्यवस्था। उपाध्युत्तरकालीनं खलु कर्म। निरुपाधिके क्रियावेशासम्भवात् । तत्कथमुपाधेर्नियामकं स्यादित्यत उक्तम्- **अनादीति ॥** नात्र स्वरूपानादित्वं प्रवाहानादित्वं वा विवक्षितमसम्भवात् प्रकृतानुपयोगादुत्तरविरोधाच्च । किन्तु पूर्वजन्मकृतत्वमात्रम् । ततश्च पूर्वजन्मकृतकर्मव्यवस्थयाऽस्मिञ्जन्मन्युपाध्यादिव्यवस्थेत्युक्तं भवति।

कुतो नेति चेत्, निर्भेदे चैतन्ये यस्य कर्मणेति वक्तुं कर्मव्यवस्थाया एवाभात्। चैतन्यस्य स्वाभाविकभेदाभावेऽप्यौपाधिकभेदोऽस्त्येव। तदाश्रयेण कर्मव्यवस्था सिद्ध्यतीति चेत्, किमेतत् कर्मव्यवस्थानिमित्तोपाधिव्यवस्था याऽऽशास्यते तयैव चैतन्यभेदोऽङ्गीक्रियत उतोपाधि-व्यवस्थान्तरेण। आद्यं दूषयति- **औपाधिकेति ॥** चैतन्यस्यौपाधिकभेदसिद्धौ, उपाधिनिमित्त-देवदत्तादिव्यवस्थासिद्धावित्यर्थः। **कर्मभेदसिद्धिरिति ॥** देवदत्तस्येदं कर्मेत्यादिव्यवस्था-सिद्धिरित्यर्थः। **तत्सिद्धौ च तत्सिद्धिरिति ॥** तयैव कर्मव्यवस्थयोपाधिव्यवस्थासिद्धिरित्यर्थः। इत्यङ्गीकारे चान्योन्याश्रयत्वात्। द्वयोरपि परस्परापेक्षया पूर्वभावित्वापातात् । द्वितीये त्वन-वस्था। बीजाङ्कुरवत्कर्मोपाधिव्यवस्थयोः कार्यकारणभावो नानवस्थादोषमावहतीति चेन्न। वैष-म्यात्। सिद्धविषया हि बीजाङ्कुरानवस्था न त्वियम्। चैतन्याभेदस्यैवाप्रामाणिकत्वेनोपाधिव्यवस्था-यास्तन्निमित्तकर्मादिव्यवस्थायाश्चासिद्धेरिति।

एवमद्वैतस्य 'तथैव सर्वयुक्तिविरुद्धश्च' इत्यादिना युक्तिशून्यतां तद्विरुद्धताञ्चोक्त्वोपसंहारे कारणं वदन्नुपसंहरति- **अतोऽनन्तेति ॥** दोषशब्देन दूषिका युक्तयोऽभिधीयन्ते। नाद्वैतविरोधि-दोषाणां समाप्तत्वादुपरम्यते। किन्तु तेषामनन्तत्वेन वक्तुमशक्यत्वात्। इतोऽप्यधिकानां कतिपयानां वचनेऽपि ग्रन्थबहुत्वप्रसङ्गात्। दिङ्मात्रसूचनस्यैतावता सिद्धेरिति। तथा हि। उपाधिकृतभेदवादे किं सर्वे जीवाः सर्वगताः, उत शरीरपरिमाणाः, अथाणवः। नाऽद्यः। अवच्छिन्नस्य सर्वगत-त्वानुपपत्तेस्तथाविधोपाध्यनुपलब्धेश्च । द्वितीये सावयवत्वेनानित्यत्वापत्तिः। तृतीये शरीरा-व्याप्तिः। किञ्च द्वितीयतृतीययोरुपाधेर्मूर्तत्वेन क्रियावत्त्वात्किं यत्रयत्रोपाधिर्गच्छति तत्रतत्रोपहितो ब्रह्मांशो जीवोऽपि गच्छत्युत पूर्वमुपहितं ब्रह्मांशं विहाय यत्रोपाधिर्गच्छति तत्रैवांशान्तरमव-च्छिनत्ति। आद्ये उपाधिविभक्ते स्थाने ब्रह्मणः सुषिरत्वं संयुक्तस्थाने द्विगुणत्वं स्यात्। द्वितीये जीवानामुत्पत्तिविनाशप्राप्त्या कृतहान्यकृताभ्यागमप्रसङ्गः।

योऽपि स्वाभाविकौ भेदाभेदौ वदति स प्रष्टव्यः-किमर्थमयं भेदोऽङ्गीक्रियत इति। व्यवस्था-सिद्ध्यर्थमिति चेदभेदेन सङ्करोऽप्यापाद्यमानः कथं निवार्यते। भेदेनोपरुद्धोऽभेदो न स्वकार्यकारीति चेदभेदेनोपरुद्धो भेदोऽपि व्यवस्थां न कुर्यात्। भेदः प्रबल इति चेत्तर्हि किमनेनाभेदेनाङ्गीकृतेन। ईश्वरस्याचिन्त्यशक्तिवशात् सर्वमुपपद्यत इति चेत्तर्हीश्वरे बहुमानवता शुद्धभेदोऽङ्गीक्रियताम्। श्रुतिस्तं न सहत इति प्रत्युक्तम्। एतेनातिरेकपक्षोऽपि निरस्तः। पक्षद्वयोक्तदोषापातादित्यलम्।

'कथं च जीवपरमात्मैक्ये सर्वश्रुतीनां तात्पर्यं युज्यते। सर्वप्रमाणविरुद्धत्वात्' इत्यादिनोक्त-मर्थमुपसंहरति- **अत इति ॥** जीवेश्वराभेदस्येति शेषः। प्रमाणशून्यत्वाच्चेत्यपि द्रष्टव्यम्। **अभेदे** जीवेश्वरयोः ॥

**(र.टि.)** ननु यस्य ज्ञानमुत्पन्नं तस्य शुद्धब्रह्मभावलक्षणमुक्तिर्वक्तव्या। न च सा सम्भवति। तदानीमपि केषाञ्चित्संसारिणां सत्त्वेन ब्रह्मण एवोपाधिसम्बन्धस्य वक्तव्यत्वेन शुद्धत्वाभावात्। तथा च बद्धमुक्तव्यवस्थाऽसिद्धिरित्यत आह- **न च मिथ्याभूतैरिति**

॥

ननु 'इतश्च मिथ्याभूतोपाधिर्न युज्यते' इत्यादिग्रन्थेनेदं पुनरुक्तमित्यत आह- **इदमुक्तं भवतीति ॥** सर्वोपा-धीनां सर्वोपाध्यवच्छिन्नचेतनसम्बन्धित्वाद्व्यवस्थायाः सुखदुःखादिहेतुत्वं न स्यादिति शङ्कायामुपाधिनिमित्त-भूतकर्मव्यवस्थयोपाधीनामपि व्यवस्थितत्वान्न सर्वसम्बन्धित्वमिति परेण परिहृतत्वात्तथैवानुवादः कर्तव्यः। न त्वनादिकर्मभेदाद्भेद इत्यत आह- **कर्मभेदात्कर्मणां व्यवस्थानादित्यादि ॥ प्रकृतानुपयोगादिति ॥** इतः प्राचीनजन्मसम्बन्धिकर्मव्यवस्थामात्रेणोपाधिव्यवस्थोपपत्तौ द्विविधानादित्वकथनस्य प्रकृतानुपयोगादि-त्यर्थः । **उत्तरविरोधादिति ॥** द्विविधानादित्वकथनस्यौपाधिकभेदसिद्धिरित्यनेन वक्ष्यमाणोत्पत्तिप्रतिबन्धको योऽन्योन्याश्रयः तत्कथनविरोधादित्यर्थः । असम्भवस्तु स्वरूपानादित्व एवेति द्रष्टव्यम् । ननु 'दोषदुष्टत्वात्' इति कथम्? न हि दोषेण दुष्टत्वं किन्तु दूषकेनेत्यत आह- **दूषिका इति ॥** अतः सर्वयुक्तिविरुद्धत्वादिति युक्तिविरोधोपसंहारस्य कर्तव्यत्वात्सामान्यतः सर्वप्रमाणविरुद्धत्वस्यानुपदमेवोपसंह्रियमाणत्वेन पुनरुक्ति-प्रसङ्गाच्च दोषशब्दस्य दूषकमात्रपरत्वं न सम्भवतीत्यत उक्तम्- **युक्तय इति ॥** ननु सर्वगतोपाध्यवच्छिन्नस्य सर्वगतत्वं सम्भवतीत्यत आह- **तथाविधेति ॥**

**(रा.टि.) व्यवस्थयैव दर्शयतीति ॥** आरोपितचन्द्र एव न तु सत्यचन्द्र इत्यर्थः। ननु बहुजीववादे समुत्पन्न-ज्ञानवतो ब्रह्मभावेऽपि ब्रह्मणोऽपि जीवान्तरोपाधिसम्बन्धसत्त्वान्न बद्धमुक्तव्यवस्थेत्यत आह- **न च मिथ्या-भूतैरिति ॥** सदा शुद्धभाव एवेति भावः। **निरस्तत्वादिति ॥** अज्ञानसिद्धौ मिथ्योपाधिसिद्धिरित्यादिना निरस्तत्वादित्यर्थः। निरस्तपक्षस्य पुनरनुवादः किमर्थ इति चेत्, गमनिकायामुक्तदिशाऽप्यधिकाशङ्कासद्भावात् तात्पर्यं चाऽह- **इदमुक्तमिति ॥** स्वरूपानादित्वाभावे हेतुमाह- **असम्भवादिति ॥** आशुतरविनाशित्वादिति भावः। द्वितीये हेतुः- **अनुपयोगादुत्तरविरोधाच्चेति ॥** पूर्वजन्मकृतकर्मव्यवस्थामात्रेण प्रकृतोपयोगात् । अन्योन्याश्रयोक्तिपरोत्तरवाक्यविरोधादनादित्वे तदसम्भवादिति भावः । **याऽऽशास्यते तयैव** उपाधिव्यव-स्थयैवेत्यर्थः । **उपाधिव्यवस्थान्तरेणेति ॥** भेदहेतुर्या उपाधिव्यवस्था कर्मव्यवस्थाधीना सा कर्मव्यवस्था स्वसम्पाद्योपाधिव्यवस्थातोऽन्योपाधिव्यवस्थया आशास्यत इत्यर्थः। उपपादितप्रमेयोपसंहारपरत्वद्योतनायाऽह- **दोषशब्देन दूषिका युक्तय इति ॥** व्याप्तोपाध्यवच्छिन्नस्य सर्वगतत्वमित्यत आह- **तथाविधेति ॥ सावयवत्वेनेति ॥** मध्यमपरिमाणस्य तन्नियमादिति भावः । **श्रुतिरिति ॥** तत्त्वमस्यादिश्रुतिरित्यर्थः । 'अतत्त्वमसीति नवकृत्वोऽभ्यासः' इत्यादिना प्रत्युक्तमित्यर्थः । एवं तथैव सर्वयुक्तिविरुद्धं चेत्येतदवतारि-कायामुक्तत्रिविधभेदाभेदवादिमते मतद्वयं निरस्य तृतीयमप्यतिदेशेन निराह - **एतेनातिरेकपक्षोऽपीति ॥ (रा.टि.)** एतच्छब्दार्थं व्यनक्ति- **पक्षद्वयेति ॥** तथाह्युपाधिकृतेत्यादिनोक्तदोषेत्यर्थः। विरुद्धत्वादित्यत्र कस्येत्याकाङ्क्षायामाह- **जीवेश्वराभेदस्येति शेष इति ॥** अभेद इत्यत्र शेषमाह- **अभेदे जीवेश्वरयोरिति ॥**

**(श्री.टि.) प्रसज्जन्तीति ॥** प्राप्ता भवन्तीत्यर्थः। **व्यवस्थयैवेति ॥** वास्तवचन्द्रेऽदर्शयन्नारोपित एव चन्द्रे दर्शयतीत्यर्थः। **तेन** काल्पनिकभेदेन। ननु यस्य ज्ञानमुत्पन्नं तस्य शुद्धब्रह्मभावलक्षणमुक्तिर्वक्तव्या। न च सा सम्भवति। तदानीमपि केषाञ्चित्संसारिणां सत्त्वेन ब्रह्मण एवोपाधिसम्बद्धतया शुद्धत्वाभावात्। तथा च बद्धमुक्तव्यवस्थाऽसिद्धिरित्यत आह- **न च मिथ्याभूतैरिति ॥ विशेषः** शुद्धत्वाभावरूपः। **नीलिम्ना** आरोपितनीलरूपेणेत्यर्थः। **तत्** किञ्चोपाधिरित्यादिनोक्तं दूषणम्। **तस्यैवेति ॥** संसार इति शेषः। तर्हि शुद्धत्वहानिरित्यत आह- **न चेति ॥ अपैतीति ॥** व्योम्न इव नीलिम्नेति भावः। **निरस्तत्वादिति ॥** 'इतश्च मिथ्योपाधिर्न युज्यते' इत्यादिना ग्रन्थेनेत्यर्थः । तथा च बद्धमुक्तव्यवस्थाया असिद्धिरिति वाक्यशेषः । कथमसिद्धिरित्यतस्तामुपपादयितुमाह- **इदमुक्तं भवतीति ॥ उपाधिर्दे**हादिः । ननु परेणोपाधिनिमित्तकर्म-व्यवस्थयोपाध्यादिव्यवस्थेत्युक्तत्वेन तथैवानुवादे कर्तव्ये कर्मभेदादित्यनुवादः कथमित्यतो भेदशब्दो व्यवस्थापर इत्याह- **कर्मणां व्यवस्थानादिति ॥** कुत इत्यत आह- **निरुपाधिक इति ॥** देहाद्युपाधिरहित इत्यर्थः। **क्रियावेशः** कर्मकर्तृत्वम्। **नियामकमिति ॥** उपाधिभेदे कर्मभेदः कथं प्रयोजक इत्यर्थः। अन्योन्याश्रयादिति भावः। ननु कर्मणां स्वरूपानादित्वं कुतो न विवक्षितमित्यतस्तत्र हेतुमाह- **असम्भवादिति ॥** कर्मणा-मुत्पत्तिमत्त्वेन स्वरूपानादित्वासम्भवादित्यर्थः। द्विविधानादित्वं न विवक्षितमित्यत्र हेतुमाह- **प्रकृतानुप-योगादिति ॥** इतः प्राचीनजन्मसम्बन्धिकर्मव्यवस्थामात्रेणोपाधिव्यवस्थोपपत्तौ द्विविधानादित्वकथनस्य प्रकृते उपाधिव्यवस्थाकथनेऽनुपयोगादित्यर्थः । द्विविधानादित्वं न विवक्षितमित्यत्र हेत्वन्तरमाह- **उत्तरविरोधा-च्चेति ॥** द्विविधानादित्वविवक्षायामौपाधिकभेदसिद्धावित्यनेनोत्तरत्रोत्पत्तिप्रतिबन्धकीभूतान्योन्याश्रयकथनं विरुद्धं स्यात् ।

स्वरूपानादित्वविवक्षायां तदसम्भवादित्यर्थः । अनादिकर्मभेदादिति मूलार्थमाह- **ततश्चेति ॥ यस्य कर्मणेति वक्तुमिति ॥** यस्य कर्मणा य उपाधिरारब्धस्तस्यैव तदुपाधिगतसुखादिभोगो नान्यस्येति वक्तुं या कर्मव्यवस्थोच्यते तस्या एवेत्यर्थः । यस्य जीवस्य कर्मणेति निर्भेदे चैतन्ये वक्तुमशक्यत्वादिति भावः । शङ्कते- **चैतन्यस्येति ॥ तदाश्रयेणेति ॥** औपाधिकभेदाश्रयेणेत्यर्थः । तथा च यस्य कर्मणेति वक्तुं शक्यत इति भावः । **एतदिति ॥** कर्मभेदव्यवस्थापनमित्यर्थः । आशास्यत इति सम्बन्धः । तत्र निमित्त-कथनम्- **कर्मव्यवस्थेत्यादि ॥** यस्यामुपाधिव्यवस्थायां कर्मव्यवस्था निमित्तं तयोपाधिव्यवस्थयेत्यर्थः । तथा च कर्मव्यवस्थयोपाधिव्यवस्था, तयैव च कर्मव्यवस्था आशास्यत इति भावः । **व्यवस्थान्तरेणेति ॥** यस्यामुपाधिव्यवस्थायां कर्मव्यवस्था निमित्तं तयैवोपाधिव्यवस्थया कर्मव्यवस्था नोच्यते । किं नामोपाध्यन्तर-व्यवस्थयेत्यर्थः । **द्वयोः** उपाधिकर्मणोः । **अनवस्थेति ॥** उपाध्यन्तरव्यवस्थाऽपि कर्मान्तरव्यवस्थया वाच्या, साऽपि पुनरुपाध्यन्तरव्यवस्थयेति कर्मोपाधिव्यवस्थापरम्परयाऽनवस्थेत्यर्थः । **बीजाङ्कुरवदिति ॥** बीजाङ्कुरा-**(श्री.टि.)** नवस्थावदित्यर्थः । **सिद्धविषयेति ॥** अतस्सा न दोषायेति भावः । नन्वत्रापि चैतन्याभेदस्य प्रामाणिकत्वात्तत्र सुखादिसाङ्कर्यरूपदोषपरिहाराय कर्मोपाध्योः कार्यकारणभावोऽङ्गीकार्य एवाऽतो नानवस्था-दोषायेत्यत आह- **चैतन्याभेदस्यैवेति ॥** अप्रामाणिकत्वेनेत्यतः परं तदुपपत्त्यर्थं कल्प्यमानाया इति शेषः ।

ननु दोषदुष्टत्वादित्यत्र दोषग्रहणमनर्थकम् । दूषकप्रमाणदुष्टत्वादिति वक्तव्यत्वेन दोषेण दोषवत्त्वा-दित्यस्यासङ्गतत्वादित्यत आह- **दोषशब्देनेति ॥** तथैव सर्वयुक्तिविरुद्धं चेत्युक्तयुक्तिविरोधोपसंहारस्य कर्तव्यत्वाद्दोषशब्दस्य दूषकप्रमाणमात्रपरत्वं न सम्भवतीत्याशयेन युक्तय इत्युक्तमिति द्रष्टव्यम् । ननु दिङ्-मात्रसूचनार्थमपि कतिपयदोषा वक्तव्या एवेति चेत्तत्राऽह- **दिङ्मात्रसूचनस्येति ॥ अवच्छिन्नस्येति ॥** तत्तदुपाध्यवच्छिन्नस्य जीवसमुदायस्य परिच्छिन्नत्वेनेत्यर्थः । ननु जीवस्य परिच्छिन्नोपाध्यवच्छिन्नत्वं नो-च्यते । येन सर्वगतत्वानुपपत्तिः । किं नामोपाधिरपि कश्चित्सर्वगत एवास्ति तदवच्छिन्नस्य जीवस्य सर्वगतत्व-मुपपद्यत इत्यत आह- **तथाविधेति ॥** सर्वगतेत्यर्थः । **सावयवत्वेनेति ॥** जीवानामिति शेषः । मध्यमपरिमाण-वत्त्वेन सावयवत्वमिति भावः । **शरीराव्याप्तिरिति ॥** तथा च सर्वाङ्गीणसुखाद्यनुभवो न स्यादिति भावः । **द्वितीयतृतीययोरिति ॥** शरीरपरिमाणत्वपक्षेऽणुत्वपक्षे चेत्यर्थः । **उपाधिर्देहः । उपहितो ब्रह्मांश इति ॥** उपाधिसहित एव ब्रह्मांशो गच्छतीत्यर्थः । **पूर्वमुपहितमिति ॥** येन ब्रह्मांशेन जीवेन सम्बन्धोऽभूत्तमित्यर्थः । **तत्रैव** स्थितम् । **स्थाने** पूर्वतनस्थाने । **सुषिरत्वमिति ॥** सुषिः छिद्रमस्यास्तीति सुषिरं छिद्रवत्तत्त्वमित्यर्थः । छिद्रवत्त्वमिति यावत् । 'ऊषसुषिमुष्कमधो रः' इति सूत्रेण सुषिशब्दान्मत्वर्थे रप्रत्यय इति द्रष्टव्यम् । **उत्पत्ति-विनाशेति ॥** उपाधेः पूर्वोपहितब्रह्मांशभूतजीवपरित्यागे जीवस्य विनाशः प्राप्तः । उपाधेः पुनर्ब्रह्मांशान्तर-भूतजीवसम्बन्धे चोत्पत्तिः प्राप्तेत्यर्थः । **कृतहानीति ॥** उपाधेः पूर्वोपहितजीवपरित्यागे तस्य जीवस्य तदुपाधि-कृतकर्मणो हानिः । उपाधेरंशान्तरसम्बन्धे ब्रह्मांशान्तरभूतस्य जीवस्योपाधिसम्बन्धात्प्राक् कर्मकरणाभावेना-कृताभ्यागमप्रसङ्गः । उपाध्यापादककर्माभावेऽप्युपाधिसम्बन्धप्राप्तिप्रसङ्गः इत्यर्थः । **योऽपि** भास्करैकदेशी । **भेदाभेदौ** जीवेश्वरयोः । **व्यवस्थेति ॥** सुखादिव्यवस्थेत्यर्थः । सङ्करः सुखदुःखादिसाङ्कर्यम् । **स्वकार्येति ॥** सुखदुःखादिसाङ्कर्यरूपस्वकार्येत्यर्थः । **भेद इति ॥** तथा चाभेदकार्यं निरुणद्धीति भावः । **तर्हीति ॥** विद्यमानस्याप्यभेदस्याजागलस्तनवत्कार्याक्षमत्वेन तदङ्गीकारस्य व्यर्थत्वादिति भावः । ननु भेदाभेदौ तुल्य-बलौ । न चाभेदप्रयुक्तसाङ्कर्यापत्तिः । ईश्वराचिन्त्यशक्त्या तत्परिहारोपपत्तेरित्याङ्कते- **ईश्वरस्येति ॥ भेद एवेति ॥** जीवाभेदे ईश्वरस्याचिन्त्यशक्त्यभावापत्तेरिति भावः । ननु तत्त्वमसीत्यादिश्रुतिर्भेदाङ्गीकारं न सहत इति चेत्तत्राऽह- **श्रुतिरिति ॥ प्रत्युक्तमिति ॥** तत्त्वमसीत्यादिश्रुतेर्भेदपरत्वेन व्याख्यातत्वादिति भावः । **अतिरेकपक्ष इति ॥** अपरे तु मन्यन्ते- जीवाः ब्रह्माभिन्नाः, भेदस्तु न कल्पितो न चौपाधिको नाप्यंशांशि-भावनिमित्तः । किन्त्वतिरेकनिमित्त एवेति प्रागुपन्यस्तः पक्ष इत्यर्थः । एतेनेत्युक्तं विशदयति- **पक्षद्वयो-क्तेति ॥** यथा भेदस्य स्वाभाविकत्वपक्षे औपाधिकत्वपक्षे च दोष उक्तः । एवं जीवब्रह्मभेदव्यवहारसम्पादन-**(श्री.टि.)** पटुभूतधर्मविशेषरूपातिरेकस्यापि स्वाभाविकत्वे स्वाभाविकस्यानिवृत्त्यङ्गीकारेण मोक्षेऽप्यति-रेकरूपधर्मसद्भावप्राप्त्या तन्निमित्तभेदस्यापि प्राप्तेरभेदाङ्गीकारविरोधात् औपाधिकत्वे उपाधिसिद्धावतिरेक-सिद्धिः, तत्सिद्धौ च तन्निमित्तभेदसिद्ध्या जीवसिद्धौ तत्सम्बन्ध्युपाधिसिद्धिरित्यन्योन्याश्रय इत्यर्थः ।

**(पां.टि.)** ननु यस्य ज्ञानमुत्पन्नं तस्य शुद्धब्रह्मभावलक्षणा मुक्तिर्वक्तव्या । न च सा सम्भवति । तदानीमपि केषाञ्चित् संसारिणां सत्त्वेन ब्रह्मण एवोपाधिसम्बन्धस्य वक्तव्यत्वेन शुद्धत्वाभावात् । तथा च कथं बद्ध-मुक्तव्यवस्थासिद्धिरित्यत आह- **न च मिथ्याभूतैरिति ॥ व्योम्न इवेति ॥** अन्यथा मिथ्याभूतेन नीलिम्ना व्योम्नोऽपि नीरूपत्वभङ्गप्रसङ्गादिति भावः । ननु 'इतश्च

मिथ्योपाधिर्न युज्यते' इत्यादिग्रन्थेनेदं पुनरुक्तमित्यत आह- **इदमुक्तं भवतीति** ।। ननु सर्वोपाधीनां सर्वोपाध्यवच्छिन्नचेतनसम्बन्धित्वाद्व्यवस्थायाः सुखदुःखादि-हेतुत्वं न स्यादिति शङ्काया उपाधिनिमित्तभूतकर्मभेदव्यवस्थयोपाधीनामपि व्यवस्थितत्वान्न सर्वसम्बन्धित्वमिति परेण परिहृतत्वात्तथैवानुवादः कर्तव्यः । न त्वनादिकर्मभेदाद्भेद इतीत्यत आह- **कर्मभेदात्कर्मणां व्यवस्थाना-दित्यादि** ।। तत्र स्वरूपानादित्वमभिप्रेत्याऽह- **असम्भवादिति** ।। कर्मणामुत्पत्तिमत्त्वेन स्वरूपानादित्वा-सम्भवादित्यर्थः । **प्रकृतानुपयोगादिति** ।। इतः प्राचीनजन्मसम्बन्धिकर्मव्यवस्थामात्रेणोपाधिव्यवस्थोपपत्तौ द्विविधानादित्वकथनस्य प्रकृतानुपयोगादित्यर्थः । **उत्तरविरोधादिति** ।। द्विविधानादित्वकथनस्योपाधिभेदसिद्धा-वित्यनेन वक्ष्यमाणोत्पत्तिप्रतिबन्धको योऽयमन्योन्याश्रयः तत्कथनविरोदादित्यर्थः । **किमेतत्कर्मेति** ।। कर्मव्यवस्था निमित्तं यस्याः, एवम्भूता या उपाधिव्यवस्था तया किमाशास्यते । अस्यैव विवरणम्- **तयैव चैतन्यभेदोऽङ्गीक्रियत इति** । उपाधिव्यवस्थान्तरेण चैतन्यभेद इति द्वितीयं पक्षं दूषयति- **द्वितीये त्विति** ।।

ननु दोषदुष्टत्वादिति कथम् । न हि दोषेण दुष्टत्वं नामास्ति । किन्तु दूषकयुक्त्यैवेत्यतो दोषशब्दं दूषकयुक्तिपरतया व्याचष्टे- **दोषशब्देनेति** ।। ननु सर्वगतोपाध्यवच्छिन्नस्य सर्वगतत्वं सम्भवतीत्यत आह- **तथाविधेति** ।। **शरीराव्याप्तिरिति** ।। तथा च सर्वाङ्गीणसुखाद्यनुपलब्धिप्रसङ्गादिति भावः । **तर्हीति** ।। अभेदस्य विद्यमानस्यापि स्वकार्यकरत्वाभावेन तदङ्गीकारस्य व्यर्थत्वादिति भावः । नन्वभेदेऽपीश्वराचिन्त्यशक्त्यैव सर्वाऽपि व्यवस्थोपपद्यत इति शङ्कते- **ईश्वरस्येति** ।। **श्रुतिरिति** ।। तत्त्वमस्यादिश्रुत्या अभेदसिद्धेर्न केवलोऽभेदस्तत्सम्मत इति शङ्क्यम् । श्रुतेर्भेदपरत्वस्य समर्थनेनाभेदपरत्वस्य पूर्वमेव दूषितत्वादिति भावः । एतेनेत्युक्तमेव हेतुं दर्शयति- **पक्षद्वयोक्तेति** ।। अतिरेको हि धर्मविशेषः । स च न तावत्स्वाभाविकः । तथा सति स्वाभाविक-त्वेनानिवृत्त्यापत्त्या मोक्षेऽपि तत्कार्यप्रसक्त्या भेदाभावप्रसङ्गात् । नाप्यौपाधिकः । अन्योन्याश्रयेण तत्पक्षस्य दूषितत्वादित्यर्थः ।

**(व्या.टि.)** उपाधिमिथ्यात्वाङ्गीकारेण कथमुक्तदोषनिवृत्तिरित्यतस्तदुपपादयति- **तथा हीति** ।। **कल्पनां** भ्रान्तिम् । तन्निदर्शयति- **यथेति** ।। **व्यवस्थयैवेति** ।। आरोपितनिष्ठतयैवेत्यर्थः । **ज्ञानोत्पत्ताविति** ।। अधिष्ठान-**(व्या.टि.)** ज्ञानोत्पत्तावित्यर्थः । स्थितैर्गतैर्वेत्यनास्थासूचनम् । **दर्शयतीति** ।। ज्ञापकत्वेऽपि कारकत्वानभ्युप-गमादित्यर्थः । **तस्येति** ।। संसार इति शेषः । **शुद्धिः** शून्यता । उक्तदोषस्मारणेन किं लब्धमित्यत आह- **इद-मुक्तं भवतीति** ।। **वक्तव्यमिति** ।। परिशेष्टव्यमित्यर्थः । परिशिष्टपक्षे दोषमाह- **व्यवस्थानुपपत्तिरिति** ।। **व्यवस्थोपपत्तेरिति** ।। व्यवस्थापककर्मभेदसत्त्वादित्यर्थः । उभयत्र भेदशब्दो व्यवस्थापर इत्याह- **व्यवस्था-नादित्यादिना** ।। शङ्कते- **उपाध्युत्तरकालीनमिति** ।। 'कालाठ्ठञ्' इति चात्खः । उपाधेः पूर्वभावं दर्शयति- **निरुपाधिक इति** ।। **कथमिति** ।। किमाक्षेपे । **नियामकमिति** ।। व्यवस्थापकमित्यर्थः । अनादिशब्दस्य गौणीं वक्तुं मुख्यार्थे बाधकमाह- **नात्रेति** ।। **असम्भवादिति** ।। क्षणिकत्वेनेति शेषः । **प्रकृतेति** ।। उपाधि-नियामकत्वस्येत्यर्थः । **उत्तरेति** ।। 'तत्सिद्धौ च तत्सिद्धिः' इत्युत्तरग्रन्थेनेत्यर्थः । वक्तुमित्यतः परमशक्यत्वेनेति शेषः । शङ्कते- **चैतन्यस्येति** ।। विकल्पयितुं पृच्छति- **किमिति** ।। व्यवस्थेति असिद्धा कथमनूद्यत इत्यत आह- **येति** ।। चैतन्यस्येति शेषोक्तिः । भेदशब्दो व्यवस्थापर इत्याह- **व्यवस्थेति** ।। प्रसङ्गपरतया व्याचष्टे- **आपातादिति** ।। **अनवस्थेति** ।। उपाधिकर्मव्यवस्थाऽपर्यवसानादित्यर्थः । दोषशब्दस्य भावसाधनत्वे पुनरुक्तेराह- **दोषशब्देनेति** ।। करणे घञिति भावः । अनन्तेति ग्रन्थबहुत्वमिति चोपरमे कारणद्वयम् । तत्राऽद्यमुपरमे द्वितीयन्त्विहोपरमे । इतिशब्दश्चाऽवर्तते इत्यभिप्रेत्य व्याचष्टे- **किन्त्वित्यादिना** ।। इतोऽधिक-ग्रन्थाभावे दिङ्मात्रमपि न सूचितं स्यादित्यत आह- **दिङ्मात्रेति** ।। **एतावतैवेति** ।। बुद्धिमतामिति शेषः । स्वस्य प्रज्ञातिशयं नैजं दर्शयितुं सूचितदोषानाविष्करोति- **तथा हीति** ।। **सर्वजीवा इति** ।। कतिपयतत्त्वाभि-मानिनामभिमन्यमानतत्त्वसर्वगतत्वस्वीकारात्सर्वेत्युक्तम् । शरीरपरिमाणा इति बहुव्रीहिः । सर्व इत्यत्रा-प्यनुषज्यते । **तथाविधेति** ।। सर्वगतावच्छेदकेत्यर्थः । **द्वितीय इति** ।। मध्यमपरिमाणत्व इत्यर्थः । तस्य सावयवत्वाविनाभावादित्यर्थः । **तृतीये** ।। अणुत्व इत्यर्थः । दोषान्तरं प्रतिजानीते- **किञ्चेति** ।। द्वितीयतृतीय-योरित्यस्य किमित्यादिनाऽन्वयः । अवच्छिनत्तीत्यतः परमिति विकल्प इति शेषः । **सुषिरत्वमिति** ।। सच्छिद्रत्वमित्यर्थः । **उत्पत्तिविनाशेति** ।। उपहितपूर्वांशस्योपाधिविभागेन नाशः । गत्वोपाधिर्यमंशमवच्छिनत्ति स जीवत्वेनोत्पन्न इत्यर्थः । **कृतहानेति** ।। पूर्वांशेन कृतस्य हानिरुत्तरांशेनाकृतस्याभ्यागम इत्यर्थः ।

अभेदः स्वाभाविकः भेदस्त्वौपाधिक इति पक्षं प्रतिक्षिप्योभयस्वाभाविकत्वपक्षं प्रतिक्षेप्तुमुपक्षिपति- **योऽपीति** ।। यादवप्रकाश इत्यर्थः । **प्रबल इति** ।। अन्यानुपरुद्धः स्वकार्यकारीत्यर्थः । **किमनेनेति** ।। अकार्यकारिणेत्यर्थः । अङ्गीकृतेनेत्यतः परं किञ्च

भेदाभेदयोर्विरोधादसम्भव इति बहिरुपस्कर्तव्यम् । तत्र शङ्कते- **ईश्वरस्येति ॥** सर्वविरुद्धमित्यर्थः । **शुद्ध इति ॥** अभेदासंवलित इत्यर्थः । **श्रुतिरिति ॥** अभेदश्रुतिरित्यर्थः । **प्रत्युक्तमिति ॥** अर्थान्तराभिधानादित्यर्थः । **अतिरेकपक्ष इति ॥** उपाध्यादिव्यतिरिक्तो भेदकार्यतिरेक इति मतम् । **पक्षद्वयेति ॥** औपाधिकस्वाभाविकभेदपक्षद्वय इत्यर्थः । **जीवेश्वरयोरिति ॥** अल्पाच्तरस्य पूर्वनिपातः।

**मूलम्- सर्वशब्दावाच्यस्य लक्षणाऽपि न दृष्टेति न तस्य शास्त्रगम्यत्वम् । अतोऽ-वाच्यत्वादज्ञेयत्वाच्छून्यमेव तदिति प्राप्तम् । नच स्वेनापि ज्ञेयत्वं तैरुच्यते । कर्तृ-कर्म्मविरोध इति हि ते वदन्ति ॥**

**(त.मं.)** एकमेवाद्वितीयमित्यभिन्नं ब्रह्म शास्त्रगम्यं हीत्यत आह - **सर्वशब्देति ॥** नहि शास्त्रेणा-वाच्यं शास्त्रगम्यम् । तल्लक्ष्यते परन्नोच्यत इति चेत् । मैवम् । सर्वशब्दावाच्यस्य लक्षणापि न युक्ता हि । पुरुषादिशब्दैरुच्यमाना हि लोके 'मञ्चाः क्रोशन्ति' इत्यादिमञ्चादिशब्दैर्लक्ष्यन्ते । सर्वप्रमाणविरुद्धत्वस्य मुहुरुपन्यासः तात्पर्यार्थः प्रमेयान्तरानुसन्धानार्थो वा । तथाचोक्त-मनुव्याख्या-याम्- मानमेयविशेषेण पुनरुक्तिर्न जायत इति । मनोवाचामगोचरं हि शून्यवादी च शून्यं मन्यते । ननु ज्ञानात्मकं हि वयं ब्रह्म ब्रूमः । कथं तस्य शून्यत्वमित्यत आह - **नच स्वेनेति ॥** यथा स्वस्य स्वस्कन्धारोहणे तथा सर्वत्रापि कर्तुः कर्मत्वे अनुभवविरोध इति हि ते वदन्ति ।

**टीका-** किञ्चाभेदे श्रुतीनां तात्पर्यमभिलषता मायावादिना वक्तव्यम्- किमभेदो ब्रह्म-स्वरूपम् उत ततोऽन्यः । आद्ये ब्रह्मण्येव तदङ्गीकृतं भवति । श्रुतिगम्यत्वे सति पश्चात्तत्र तात्पर्यं चिन्त्यम् । शब्देन ह्यर्थे प्रतिपादिते किमयमन्यार्थं प्रतिपाद्यते, किं वा स्वप्रधान इति चिन्ता-वसरः । नच ब्रह्मणः श्रुतिगम्यत्वं, दूरे तत्र श्रुतीनां तात्पर्यम् । तथा हि- ब्रह्म किं वाक्यार्थः स्यात् पदार्थो वा । नाऽद्यः । असंसर्गभेदरूपत्वात्, तयोरेव वाक्यार्थत्वात् । द्वितीये किं तत्र वचनवृत्तिः, उत लक्षणा, अथ गौणी । नाऽद्यः । चतुष्टयी हि वाचकानां शब्दानां गतिः । जातिशब्दाः गुणशब्दाः क्रियाशब्दाः द्रव्यशब्दाश्चेति । तत्र जातिनिमित्ताः शब्दाः यथा ब्राह्मण इति । गुणनिमित्ताः यथा शुक्लो दण्डीति । क्रियानिमित्ताः यथा पाचक इति । द्रव्यशब्दा यदृच्छानिमित्ता यथा डित्थ इति । तत्र तावदाद्यं प्रकारत्रयं न ब्रह्मणि सम्भवति । जातिगुणक्रियारहितत्वाङ्गीकारात् । वैदिकपदाना-मसाङ्केतिकत्वान्न चतुर्थोऽपि प्रकारः । ततः सर्वशब्दावाच्यं ब्रह्मेति स्थितम् । अत एव न तत्र पदानां गौणी वृत्तिः । तस्या गुणयोगनिमित्तत्वात् । तर्हि द्वितीय एव पक्षोऽस्त्वित्यत आह- **सर्व-शब्देति ॥** तीरादिशब्देन वाच्यमेव गङ्गादिपदलक्ष्यं दृष्टम् । ननु केनापि शब्देनावाच्यस्य लक्षणा क्वापि दृष्टा । अतः केनापि शब्देनावाच्यत्वाद् ब्रह्मणो लक्ष्यत्वमपि नास्ति । तथाचापदार्थत्वाद-वाक्यार्थत्वाच्च न तस्य श्रुतिगम्यत्वम् । दूरे तत्र तात्पर्यमिति ।

किञ्च सति ब्रह्मणि तत्र श्रुतितात्पर्यचिन्ता । तदेव तु नास्ति प्रमाणाभावात् । प्रमाणा-धीनत्वाद्वस्तुसत्ताङ्गीकारस्येत्याह- **अत इति ॥** उक्ताद्धेतोर्ब्रह्मणोऽवाच्यत्वात्तत एव लक्षणाद्य-सम्भवात्तत एवावाक्यार्थत्वाच्चेत्यागमनिरासः । एवं रूपादिरहितत्वात् तत्प्रतिबद्धलिङ्गाभावाच्चेति प्रत्यक्षानुमाननिरासोऽपि द्रष्टव्यः । अज्ञेयत्वादिति प्रमाणत्रितयनिरासे सामान्ययुक्तिः । ज्ञेयत्वाङ्गीकारे जडत्वापातः, तथा परेणाङ्गीकृतत्वात् । **शून्यमेव** असदेव ।

नन्ववाच्यत्वाद् ब्रह्मणो यदलक्ष्यत्वमुक्तं तदयुक्तम् । लक्षणायां वाच्यत्वस्योपयोगाभावात् । वाच्यार्थसम्बन्धित्वेन प्रसिद्धिरेव हि लक्षणाबीजम् । अस्ति च सा ब्रह्मणि स्वप्रकाशत्वात् । नच विपक्षे बाधकाद्विना व्यभिचारादर्शनेनैव व्याप्तिनिश्चयः । पक्ष एव व्यभिचारशङ्कनात् । अतो लक्ष्यत्वसम्भवान्न तस्य शास्त्रगम्यत्वाभावः । अत एव न शून्यत्वमपि । लक्षणासम्भवेन शास्त्रसिद्धत्वात् । वस्तुतः सर्वप्रमाणातीतत्वेऽपि स्वप्रकाशतया सिद्धत्वादिति । उच्यते-किमिदं स्वप्रकाशत्वम् । किं स्वेन ज्ञेयत्वमुतान्येनाज्ञेयत्वम् । नाऽद्यः । अपसिद्धान्तापातादित्याह- **न चेति**

॥ अपिपदेन द्वितीयपक्षदूषणं समुच्चिनोति । प्रमाणाभावादसिद्धौ चोदितायामन्येनाज्ञेयत्वात् सिद्धमित्यनुत्तरं, सिद्ध्युपायस्यानुपन्यस्तत्वात् । अन्यथा शशविषाणादीनामपि सिद्धिप्रसङ्गा-दिति । अङ्गीकारवादश्चायं लक्ष्यत्वे वाच्यत्वोपयोगस्यान्यत्र समर्थितत्वात् ।

ब्रह्मणः स्वेन ज्ञेयत्वं कुतस्तैर्नोच्यत इत्यत आह- **कर्तृकर्मेति ॥** द्वावपि शब्दौ भावप्रधानौ । कर्तृत्वकर्मत्वयोः विरोधादेकाश्रयत्वं न युज्यते । स्वज्ञेयत्वे च एकस्यामेव ज्ञानक्रियायां ब्रह्मणो ज्ञातृत्वं ज्ञेयत्वं चाऽपद्यत इति विरोधभयान्न स्वेन ज्ञेयत्वं तैरुच्यते । तैरित्यादिबहुवचनेन बहूनां वादिनामेवमभ्युपगम इति सूचयति ।

ननु युक्तमेवैतद्वचनम् । तत्किं तैरित्यादिनेति चेत् । किं कर्तृत्वकर्मत्वयोर्लक्षणविरोधादसमा-वेशोऽङ्गीक्रियत उत परस्परपरिहारेण वृत्तेर्नियमेन दर्शनात् । नाऽद्यः । क्रियाश्रयः कर्ता, क्रियाविषयः कर्मेति लक्षणसम्भवेन परसमवेतक्रियाफलशालि कर्मेत्यादिलक्षणस्याग्राह्यत्वात् । न द्वितीयः । 'स्वाध्यायोऽध्येतव्यः' इति विधेः स्वाध्ययनविधायकत्वदर्शनात् । शब्दशब्दस्य स्ववाचकत्वोप-लम्भात् । घटादिशब्दानामपि स्वरूपपदार्थकत्वप्रतीतेः । तत्र भिन्नकर्मणि सति स्वकर्मकत्वं, न केवलं स्वकर्मकत्वमिति चेन्न । कर्तृकर्माभेदस्यापरिहारात् । एकदेशः कर्ता, समुदायः कर्मेति भेदोऽस्तीति चेन्न । [1]घटशब्दस्य स्वव्यतिरिक्तवाच्यादर्शनात् । देवदत्तो ग्रामं गच्छतीत्यादौ कर्तृकर्मणोः प्रत्यक्पराग्भावदर्शनात् कथमैक्यमिति चेत् परिस्पन्दरूपासु क्रियास्वेवं न सर्वत्रेत्यलम् ॥

(र.टि.) **असंसर्गभेदरूपत्वादिति ॥** संसर्गभेदरूपत्वाभावादित्यर्थः । लक्षणाऽपीत्यपिपदाभिप्रायमाह- **नाऽद्य इत्यादिना ॥ तस्या गुणयोगनिमित्तत्वादित्यन्तेन ॥** ननु शून्यवादिभिः शून्यस्य तत्त्वरूपताङ्गी-कारात्तद्भावे कथमप्रामाणिकत्वं हेतुरित्यतो व्याचष्टे- **असदेवेति ॥** ननु 'सिद्धं तु निवर्तकत्वात्' इति वदता त्वया शास्त्रस्याऽवरणनिवृत्तिप्रयोजनकत्वमेवाङ्गीकृतम् । न ब्रह्मसिद्धिकरणत्वम् । तथा च कथं शास्त्रसिद्धत्वाद् इत्युच्यते इत्यस्वरसादाह- **वस्तुत इति ॥** न चैवं शास्त्रवैयर्थ्यम् । आवरणनिवर्तकत्वेन सार्थकत्वादिति भावः । सिद्धिप्रसङ्गादिति द्वितीयपक्षदूषणमिति दूषणान्वयः । **स्वरूपपदार्थकत्वेति ॥** स्वाख्यपदवाच्यत्व-प्रतीतेरित्यर्थः । 'स्वाध्यायोऽध्येतव्यः' इत्यत्र 'शब्दशब्दस्य' इत्यत्र च परिहारं शङ्कते- **तत्र भिन्ने कर्म-णीति ॥** अत एवाऽह- **घटशब्दस्येति ॥** घटपटसमुदायानात्मकत्वादित्यर्थः ।

(रा.टि.) परिष्कारपूर्वमुत्तरवाक्यमवतारयति- **किञ्चाभेद इत्यादिना ॥** अस्तु को दोष इत्यत आह-**श्रुति-गम्यत्व इति ॥** न च ब्रह्मणः श्रुतिगम्यत्वमित्यनेनास्यान्वयः । **नाऽद्य इति ॥** तदुपपादनम्- **असंसर्गेति ॥** क्रियाकारकभावादिरूपसंसर्गो वा, घटः पटो नेत्यादिभेदरूपो वा वाक्यार्थः, तदुभयरूपत्वाभावादित्यर्थः । **द्रव्यनिमित्तका इति ॥** साङ्केतिका इत्यर्थः । तेषां द्रव्यस्वरूपमात्रनिमित्तकत्वात् । शून्यमेवेत्यनुवादः । असदेवेति व्याख्या । समुच्चिनोतीत्युक्तं व्यनक्ति- **प्रमाणाभावादसिद्धाविति ॥ अङ्गीकारवादश्चायमिति ॥** लक्ष्यत्वे वाच्यत्वमनुपयुक्तं, स्वप्रकाशत्वेन प्रसिद्धे तत्र लक्षणा युक्तेत्येतदङ्गीकारवाद इत्यर्थः । **अन्यत्र** भाष्यानु-भाष्ययोरीक्षतिनये । **लक्षणविरोधादिति ॥** परसमवेतक्रियाफलशालित्वं कर्मत्वम्, तादृशक्रियाश्रयत्वं कर्तृत्वमिति हि तल्लक्षणम् । एकस्यैव कर्तृत्वकर्मत्वयोरुपगमे परसमवेतेत्यस्याभावादिति भावः । **क्रियाश्रय इति ॥** ग्रामं गच्छति चैत्र इत्यादौ तथा दर्शनादिति भावः । **स्वाध्याय इति ॥** क्रमविशेषविशिष्टवर्णराशिर्हि स्वाध्यायः । स चाध्येतव्यः, गुरूच्चारणानूच्चारणरूपाध्ययनविषयः कार्य इति विधिः, सर्वस्वाध्यायाध्ययनं विदधत् स्वाध्यायत्वेन स्वात्मनोऽध्ययनं विदधातीत्येकस्यैव कर्तृत्वं कर्मत्वं च दृष्टम् । घटेत्यादिशब्दानां घोत्तरटादिवर्णमालारूपस्वात्मवाचित्वं दृष्टमिति न नियमेन तयोरन्योन्यपरिहारेण वर्तनमित्यर्थः । **तत्रेति ॥** स्वाध्यायाध्ययनविधौ केवलस्य कर्तृत्वम् । इतरस्वाध्यायराशिसहितस्य स्वस्य कर्मता, ब्रह्मणि तु केवलस्य कर्तृत्वं कर्मत्वमिति वैषम्यमिति भावः ॥

(श्री.टि.) **ब्रह्मण्येवेति ॥** अभेदस्य ब्रह्मस्वरूपत्वाङ्गीकारे अभेदे श्रुतितात्पर्याङ्गीकारे ब्रह्मण्येव श्रुति-तात्पर्यमङ्गीकृतं भवतीत्यर्थः । अस्त्विति चेत्तत्राऽह- **श्रुतिगम्यत्वे सतीति ॥** आदौ ब्रह्मणः श्रुतिगम्यत्वे सिद्धे सतीत्यर्थः । तदुपपादयति- **शब्देन हीति ॥ अन्यार्थम्** अन्यशेषत्वेन अप्राधान्येनेति यावत् । **चिन्ते-ति ॥** तात्पर्यचिन्तेत्यर्थः । अस्तु ब्रह्मणः श्रुतिगम्यत्वं को दोष इत्यत

आह- **न चेति ।।** न हीत्यर्थः । कुतो ब्रह्मणः श्रुतिगम्यत्वं नास्तीत्यतस्तदुपपादयति- **तथा हीत्यादिना ।। असंसर्गभेदरूपत्वादिति ।।** संसर्गभेद-रूपत्वाभावादित्यर्थः । **तयोरेवेति ।।** संसर्गभेदयोरेवेत्यर्थः । नीलोत्पलमित्यादिकर्मधारयस्थले संसर्गो वाक्यार्थः। धवखदिरावित्यादिद्वन्द्वस्थले भेदो वाक्यार्थ इति द्रष्टव्यम् । द्वितीये किं तत्र वचनवृत्तिरथ गौणीति विकल्प्य नाऽद्य इत्यादिना तस्याः गुणयोगनिमित्तत्वादित्यन्तेन तन्निराकरणं मूले लक्षणाऽपीत्यपिशब्दसमुच्चेयकथन-मिति द्रष्टव्यम् । **गतिः** स्थितिः । जातिशब्दा इत्यादिकं जातिनिमित्तकाः शब्दा इत्यादि व्याख्येयम् । **ब्राह्मण इतीति ।।** ब्राह्मणशब्दप्रवृत्तौ ब्राह्मणत्वजातिर्निमित्तमित्यर्थः । **शुक्ल इति ।।** दण्डी देवदत्तः शुक्लः । मतुपो लोपेन अर्श आद्यजन्तत्वेन वा शुक्लरूपवानित्यर्थः । तथाच दण्डिनि शुक्लशब्दप्रवृत्तौ शुक्लरूपगुणो निमित्तमि-त्यर्थः । **पाचक इतीति ।।** देवदत्ते पाचकशब्दप्रवृत्तौ पचनक्रिया निमित्तमित्यर्थः । द्रव्यशब्दा इत्येतत्स्वयमेव विवृणोति- **यदृच्छानिमित्ता इति ।।** अस्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतः इच्छा, तन्निमित्तकाः । द्रव्ये पुत्रादौ पित्रादीनां सङ्केतेन प्रवर्तमानाः शब्दाः द्रव्यशब्दाः । साङ्केतिका डित्थडिबित्थादिशब्दा इत्यर्थः ।

**असाङ्केतिकत्वादिति ।।** वाच्यवाचकभावसम्बन्धस्यानादित्वेन साङ्केतिकत्वाभावादित्यर्थः । वैदिकानां पदानामधुनातनास्तावन्न सङ्केतयितार इति परस्यापि सिद्धम् । परमेश्वरोऽप्यनादितो विद्यमानमेव वाच्यवाचक-भावसम्बन्धमादिकाले महर्ष्यादीन् ज्ञापयतीत्यन्यत्र निपुणतरमुपपादितमनुसन्धेयम् । यथोक्तमनुव्याख्याने-'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते' इति । उक्तं च जैमिनिना-'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यादि । औत्पत्तिकः स्वाभाविक इत्यर्थः । **अत एवेति ।।** प्रवृत्तिनिमित्तधर्मशून्यत्वेन सर्वशब्दावाच्यत्वादेवे-त्यर्थः । तदेव विवृणोति- **तस्या गुणयोगेति ।।** सिंहो देवदत्तः, अग्निर्माणवक इत्यत्र सिंहाग्निशब्दाभ्यां तत्रत्यक्रौर्यपैङ्गल्यादिगुणानुपलक्ष्य तद्योगेन निमित्तेन देवदत्ते माणवके च सिंहाग्निशब्दयोः प्रवृत्तिरिति गौणी-वृत्तेर्गुणयोगनिमित्वादित्यर्थः । 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति गौणीवृत्तेर्लक्षितत्वादिति भावः। **लक्ष्यत्वमपि नास्तीति ।।** तथा च ब्रह्म न लक्ष्यं केनापि पदेनावाच्यत्वाद्वैधर्म्येण तीरवदित्यनुमानं सूचितं भवतीति ज्ञेयम् । **तथा चेति ।।** वचनवृत्त्याद्यसम्भवे नापदार्थत्वात्संसर्गभेदरूपत्वाभावे नावाक्यार्थत्वाच्चेत्यर्थः। **उक्ताद्धेतोरिति ।।** प्रवृत्तिनिमित्तभूतजात्यादिधर्माभावरूपाद्धेतोरित्यर्थः । **तत एव** अवाच्यत्वादेव । आदिपदेन गौणीवृत्तिग्रहणम् । अनेनापदार्थत्वमुपपादितमिति ज्ञातव्यम् । **तत्प्रतिबद्धेति ।।** तद्व्याप्तेत्यर्थः । निर्धर्मकत्वेन तदनुमापकासाधारणधर्माभावादिति भावः । ननूक्तरीत्या प्रमाणत्रितयनिरासस्य जातत्वादज्ञेयत्वादिति व्यर्थमित्यत आह- **अज्ञेयत्वादिति ।। सामान्ययुक्तिरिति ।।** प्रमाणत्रयस्य यथावस्थितार्थज्ञानजनकत्व-**(श्री.टि.)** स्वाभाव्याद्, ब्रह्मणश्च त्वयाऽज्ञेयत्वाङ्गीकारान्न प्रमाणत्रयस्यापि तत्र प्रवृत्तिरिति सामान्युक्तिरि-त्यर्थः । ननु जडत्वापात इति कुत इत्यत आह- **तथेति ।।** ज्ञेयत्वं नाम दृश्यत्वं तच्च जडस्यैव, न चेतनस्य ब्रह्मण इत्यङ्गीकृतम् । तथात्वे मिथ्यात्वसाधकदृश्यत्वहेतोर्ब्रह्मणि व्यभिचारः स्यादित्याशयः । ननु शून्यवादिभिः शून्यस्य तत्त्वरूपत्वेन प्रामाणिकत्वाङ्गीकाराच्छून्यत्वे कथमप्रामाणिकत्वं हेतुरित्यतः शून्यपदं व्याचष्टे-**असदे-वेति ।।**

ब्रह्म न लक्ष्यम् अवाच्यत्वादित्यभिप्रेतानुमानेऽप्रयोजकतामाशङ्कते- **नन्वित्यादिना ।।** ननु अवाच्यत्व-लक्ष्यत्वाभावयोर्व्यभिचारादर्शनेन व्याप्तिनिश्चयोपपत्तेर्नाप्रयोजकतेति चेत्तत्राऽह- **न च विपक्ष इति ।।** अवाच्य-स्यापि लक्ष्यत्वमस्त्वित्यप्रयोजकतायां विपक्षे बाधकतर्को वक्तव्यः । तं विना केवलव्यभिचारादर्शनमात्रेणैव न व्याप्तिनिश्चय इत्यर्थः । ननु कुतस्तन्मात्रेणैव न व्याप्तिनिश्चय इत्यत आह- **पक्ष एवेति ।।** अनुकूलतर्काभाव-दशायां सर्वशब्दावाच्यस्य ब्रह्मण एव लक्ष्यत्वमस्त्विति पक्ष एव व्यभिचारशङ्कनादप्रयोजकताशङ्कनादित्यर्थः । **अत इति ।।** विपक्षे बाधकाभावेनानुमानस्याप्रयोजकत्वादित्यर्थः । **शून्यत्त्वम्** असत्त्वम् । अत एवेत्युक्तं दर्शयति- **लक्षणेति ।।** लक्षणया शास्त्रगम्यत्वसम्भवेन प्रामाणिकत्वान्न ब्रह्मणोऽसत्त्वमित्यर्थः । ननु 'सिद्धं तु निवर्तकत्वाद्' इति वदता त्वया शास्त्रस्याऽवरणनिवृत्तिप्रयोजकत्वमेवाङ्गीकृतं, न ब्रह्मसिद्धिकरणत्वं तथा च कथं शास्त्रसिद्धत्वादित्युच्यत इत्यस्वारस्यादाह- **वस्तुत इति ।।** न चैवं शास्त्रवैयर्थ्यम् आवरणनिवर्तकत्वेन सार्थकत्वादिति भावः । **असिद्धौ** ब्रह्मणः सिद्ध्यभावे । **सिद्ध्युपायस्येति ।। सिद्धिकरणस्य** प्रमाणस्येत्यर्थः। **अन्यथेति ।।** सिद्ध्युपायाभावेऽपि स्वप्रकाशतया सिद्ध्यङ्गीकार इत्यर्थः । **सिद्धिप्रसङ्गादिति ।।** द्वितीयपक्ष-दूषणमित्यन्वयः । **अङ्गीकारवादश्चायमिति ।।** वाच्यत्वं लक्षणायां नोपयोगि, किं नाम वाच्यार्थसम्बन्धित्वेन प्रसिद्धिरेव । अस्ति च सा प्रकृते स्वप्रकाशत्वादिति परेण चोदिते तदङ्गीकृत्य स्वप्रकाशत्वनिरासो यो नचेति वाक्येन कृतः सोऽङ्गीकारवाद इत्यर्थः । वस्तुतस्तु कथमित्यत आह- **लक्ष्यत्व इति ।। अन्यत्रेति ।।**

ननु वाच्यत्वं लक्षणायां कथमुपयोगीत्याशङ्क्य 'किं प्रयोजकान्तरमाशङ्कसे प्रयोजकत्वप्रकारमेव वा पृच्छसि' इत्यादिना तत्त्वप्रकाशिकायां समर्थितत्वादित्यर्थः। तथा हि, शब्दावाच्यस्यापि लक्षणाङ्गीकारे किं लक्ष्यमिति प्रश्नस्य निरुत्तरत्वं स्यात्। न च ब्रह्मैवेति ब्रह्मपदमेव वक्तुं युक्तम्। न हि गङ्गापदेन किं लक्ष्यमिति प्रश्नस्य गङ्गै-वोत्युत्तरम्। अथ तत्र पदान्तरम्। तेनापि किं लक्ष्यमिति प्रश्नस्य निरुत्तरत्वात्। अथ किञ्चित्पदमस्ति वाचकमिति चेत्तर्हि किं पदान्तरेणापराद्धम्। यथोक्तम्-'किं तदित्यनवस्थितिः' इति। तस्मादवाच्यत्वे लक्ष्यार्थोप-स्थितेरेवायोगेन लक्षणा न सम्भवति। न च स्वप्रकाशत्वात्तदुपस्थितिरिति वाच्यम्। अवेद्यत्वं स्वप्रकाशत्व-मित्यङ्गीकारादवेद्यत्वात्तदुपस्थितिरिति साधु भाषितमायुष्मतेति वाच्यत्वस्य लक्ष्यत्वे उपयोगसिद्धिरिति।

**द्वावपीति ॥** कर्तृकर्मशब्दावित्यर्थः। **एवमभ्युपगम इति ॥** कर्तृत्वकर्मत्वयोर्विरोधेनैकाश्रयत्वं नास्तीत्य-**(श्री.टि.)** भ्युपगम इत्यर्थः। **एतद्वचनमिति ॥** कर्तृत्वकर्मत्वयोर्विरोधेनैकत्रासमावेशकथनमित्यर्थः। इत्यादि-नेत्यादिपदेन ते वदन्तीत्यस्य सङ्ग्रहः। **लक्षणविरोधादिति ॥** क्रियाश्रयः कर्ता, परसमवेतक्रियाफलशालि कर्म। कर्तर्यतिव्याप्तिवारणाय परसमवेतेत्युक्तम्। कर्त्रन्यसमवेतेति तदर्थः। न चैवमात्माश्रयः। कर्त्रन्यत्वे सतीत्यत्र तात्पर्यात्। एवं च कर्तृत्वकर्मत्वलक्षणयोर्विरुद्धत्वात् कर्तृत्वकर्मत्वयोर्नैकत्र समावेश इति भावः। उतेत्यत्रापि कर्तृत्वकर्मत्वयोरिति वर्तते। **स्वाध्ययनेति ॥** 'स्वाध्यायोऽध्येतव्यः' इति वाक्यं स्वाध्यायत्वा-वच्छिन्नस्याध्ययनं विधत्ते। तथा च विधायकत्वेन कर्तृत्वं प्राप्तम्। स्वाध्यायत्वावच्छिन्नस्य कर्मत्वविधायकस्यापि वाक्यस्य स्वाध्यायत्वावच्छिन्नत्वेनाध्ययनकर्मत्वप्राप्त्या कर्तृत्वकर्मत्वयोरेकत्र समावेशो दृष्ट इत्यर्थः। **शब्दशब्द-स्येति ॥** अयं शब्द इति वाक्ये शब्दत्वावच्छिन्नशब्दस्य वाच्यत्वमेकस्यास्य शब्दस्य वाचकत्वं प्रतीयते। तथा च वाचकशब्दस्यापि शब्दत्वावच्छिन्नतया वाच्यत्वप्राप्त्या कर्तृत्वकर्मत्वयोरेकत्र समावेशः प्राप्त एवेत्यर्थः। **स्वरूपपदार्थकत्वेति ॥** स्वाख्यो यः पदार्थस्तदर्थकत्वेत्यर्थः। 'स्वं रूपं शब्दस्याशब्दसञ्ज्ञा' इति सूत्रम्। शब्दस्य स्वं स्वयमपि रूपमभिधेयमिति तदर्थः। एवं च घटशब्दस्य घटरूपार्थ-घटशब्दोभयवाचकत्वेन यदा स्ववाचकत्वं तदा कर्तृत्वकर्मत्वयोरस्ति समावेश इति भावः।

स्वाध्यायोऽध्येतव्य इत्यत्र, शब्दशब्दस्येत्यत्र परिहारं शङ्कते- **तत्र भिन्ने कर्मणि सतीति ॥** कर्तृभूतविधि-वाक्यादिव्यतिरिक्ते कर्मणि सतीत्यर्थः। तथा च स्वाध्यायोऽध्येतव्यः, अयं शब्द इत्युभयत्र स्वभिन्नकर्मकत्वं स्वकर्मकत्वं चेत्युभयकर्मकत्वमस्ति न केवलं स्वकर्मत्वमिति भावः। **कर्तृकर्माभेदस्येति ॥** उभयकर्मत्वेन यदा स्वकर्मकत्वं प्राप्तं तदा कर्तृकर्मणोरभेदप्राप्त्या कर्तृत्वकर्मत्वयोरेकत्र समावेशः प्राप्त एवेति भावः। 'स्वाध्यायोऽध्येतव्यः' 'अयं शब्दः'इत्यत्र च कर्तृकर्मभावो न विरुद्ध इत्याशङ्कते- **एकदेश इति ॥** स्वाध्यायैक-देशः, शब्दैकदेशश्चेत्यर्थः। **भेदः** कर्तृकर्मणोरिति शेषः। तथा च कर्तृत्वकर्मत्वयोर्नैकत्र समावेशः प्राप्त इति भावः। स्वध्यायोऽध्येतव्यः, अयं शब्द इत्युभयत्र तथा सम्भवेऽपि घटशब्दस्थले नायं न्यायः सम्भवतीत्याह- **घटशब्दस्येति ॥** प्रयोगविशेषकाल इति शेषः। घटशब्दस्य घटरूपोऽर्थो घटशब्दश्च वाच्यो भवति। तत्र यदा घटशब्दविवक्षयैव घट इति प्रयुज्यते एवं घटपटस्तम्भकुम्भादय इति शब्दशास्त्रे तदा प्रयोगविशेषकाले घटशब्दस्य घटशब्दव्यतिरिक्तवाच्यस्यादर्शनेन समुदायैकदेशिभावो न सम्भवति। अतस्तत्र कर्तृकर्मभेदः प्राप्त एवेत्यर्थ इत्याहुः। वस्तुतस्तु एकदेशः कर्ता समुदायः कर्मेति न्यायः स्वाध्यायोऽध्येतव्यः, अयं शब्द इत्युभयत्र च सम्भवति। वेदत्वावच्छिन्नः, शब्दत्वावच्छिन्नश्च समुदायः पृथगस्ति। स्वाध्यायोऽध्येतव्य इति वाक्यम्, अयं शब्द इति शब्दश्चैकदेशः। घटशब्दस्थले तु नैवं सम्भवति। 'स्वं रूपं शब्दस्य' इति न्यायेन घट इति शब्देन घटशब्दस्यैकस्यैव वाच्यतया घटशब्दातिरिक्तः समुदायरूपो घटशब्दस्तदेकदेशभूतश्चैको घटशब्द इति समुदायैक-देशिभावायोगात्। एवं च घटशब्दस्य स्वव्यतिरिक्तार्थरूपवाच्यस्य सत्त्वेऽपि स्वव्यतिरिक्तसमुदाय-स्थानीय-सजातीयशब्दान्तररूपवाच्यस्यादर्शनान्न कर्तृकर्मणोर्भेद इति भावः। **प्रत्यक्पराग्भावेति ॥** प्रत्यक्त्वपराक्त्व-**(श्री.टि.)**योर्दर्शनादित्यर्थः। कर्तृकर्मणोरिति शेषः। **एवमिति ॥** गमनादिरूपपरिस्पन्दक्रियासु प्रत्यक्-पराग्भावदर्शनेन कर्तृकर्मणोरैक्याभाव इत्यर्थः। **सर्वत्रेति ॥** धात्वर्थक्रियामात्र इत्यर्थः। तथा च ज्ञानरूप-धात्वर्थक्रियायां कर्तृकर्मणोरैक्योपपत्त्याऽस्मन्मते विरोधाभावाद्युक्तं तैरित्यादिबहुवचनमिति भावः।

**(पां.टि.)** भवत्वेवमित्यतः ब्रह्मणः श्रुतिगम्यतायां सत्यामेव तत्सम्भवेऽपि ब्रह्मणस्तदगम्यतायां न तत्सम्भ-वतीति भावेन तस्य तत्सिद्ध्यधीनत्वमुपपादयति- **शब्देन हीत्यादिना ॥** अस्तु तर्हि ब्रह्मणोऽपि श्रुतिगम्य-त्वादभेदस्य तात्पर्यविषयत्वमित्यतः परमते ब्रह्मणः श्रुतिगम्यत्वं निराकरोति- **न चेति ॥ असंसर्गेति ॥** संसर्गभेदान्यतरत्वाभावादित्यर्थः। तथात्वेऽपि कुतो न ब्रह्मणो वाक्यार्थतेत्यत आह- **तयोरेवेति ॥** संसर्गभेद-योरेवेत्यर्थः। अत्र भेदशब्दो व्यवच्छेदपरः। 'व्यवच्छेदवाक्यार्थरुचीनाम्' इत्यन्यत्र टीकाकारीयव्यवहारात्। ननु सर्वत्र वाक्ये पदार्थानां संसर्गस्यैवोत्सर्गतः प्रतीयमानत्वादस्तु वाक्यार्थत्वं न तु व्यवच्छेदस्य

। तस्य सर्वस्य वाक्ये औत्सर्गिकप्रतीत्यसिद्धेः । किन्तु क्वचित्सामान्यश्रुतौ विशेषणवशाद्व्यवच्छेदः प्रतीयते । यथेन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणेऽसति ज्ञानग्रहणे सामान्यश्रुतिसद्भावात् ज्ञानस्य सुखादेश्च प्राप्तौ क्रियमाणस्य ज्ञानग्रहणस्य प्राप्तज्ञानविधायकत्वान्यथानुपपत्त्या सुखादिव्यवच्छेदप्राप्तिः । तत्रापि चार्थाद् गम्यमानतया न व्यवच्छेदस्य वाक्यार्थत्वम् । 'यश्चार्थादर्थो न स चोदनार्थः' इति न्यायात् । अतोऽसंसर्गरूप-त्वादित्येव च प्रतिज्ञाय तस्यैव वाक्यार्थत्वादित्येव वक्तव्यत्वाद्भेदग्रहणमनर्थकमिति चेत्, सत्यमेवं वस्तुस्थितिः। तथाऽपि दिङ्नागप्रभृतिभिर्वादिभिस्तादृशस्यापि व्यवच्छेदस्य वाक्यार्थत्वाभ्युपगमात् तन्मतमाश्रित्येह टीकायां भेदग्रहणं कृतमित्यदोषः । एतच्च दिङ्नागमतं 'साध्यनिर्देशः प्रतिज्ञा' इत्येतत्सूत्रीयवार्तिकवाचस्पतितत्त्वबोधेषु स्पष्टमुपन्यस्योक्तरीत्या निराकृतम् । यद्वा संसर्गवद्भेदस्यापि वाक्यार्थत्वं स्वसिद्धान्त एव । तथा हि । भेद एव तावत्सर्ववेदार्थः ।

'सर्वे वेदा हरेर्भेदं सर्वस्माज्ज्ञापयन्ति च'

इति वचनात् । तथाऽप्यस्त्यत्र विशेषः । भेदशब्दो भावसाधनः करणसाधनश्च । तत्र, भेदनं भेद इति भावसाधनेनान्योन्याभावो व्यावृत्तिरूपोऽभिधीयते । भिद्यतेऽनेनेति करणसाधनेन स्वातन्त्र्यादिरूपोऽ-साधारणधर्मः कथ्यते । ततश्च स्वातन्त्र्यादिरूपासाधारणधर्मप्रतिपादको वेदभागो धर्मधर्मिसंसर्गं प्रतिपादयतीति तत्र संसर्ग एव वाक्यार्थः । अन्यस्तु 'नेति नेति' इत्यादिभागो व्यावृत्तिं प्रतिपादयतीति । तत्र व्यावृत्ति-रूपोऽन्योन्याभाव एव वाक्यार्थः ।

'सर्वव्यावृत्ततामेव नेति नेत्यादिका श्रुतिः ।
विष्णोरतो वदेदन्या अपि सर्वा न संशयः ॥'

इति प्रमाणानुसारेणोक्तार्थस्य पूर्वमेव व्यवस्थापितत्वात्तेन वेदार्थस्य संसर्गभेदान्यतरत्वस्थित्या ब्रह्मणो वेद-**(पां.टि.)** वाक्यार्थत्वं वदता परेण संसर्गभेदान्यतरत्वं वक्तव्यम् । न च तद्वक्तुं शक्यम् । तस्य संसर्गरूपताया व्यावृत्तिरूपताया वा परेणानभ्युपगमात् । अतो न तस्य वेदवाक्यार्थत्वमिति । प्रकृते वेदवाक्यार्थत्वाभिप्रायेण संसर्गभेदयोरुपादानमिह टीकायां कृतम् । न्यायामृते तु संसर्गग्रहणस्य भेदोपलक्षणताया अभिप्रेतत्वादविरोध इति द्रष्टव्यम् । अन्ये तु, वाक्यार्थः संसर्गो भेदो भेदसंसर्गौ वा । तत्र राज्ञः पुरुष इत्यनेन स्वविशेषस्य स्वामिविशेषेण, स्वामिविशेषस्य वा स्वविशेषेण यः सम्बन्धः स उच्यते । स्वाभ्यन्तरेभ्यः स्वामिविशेषस्य वा स्वाभ्यन्तरेभ्यः स्वविशेषस्य वा या व्यावृत्तिः साऽर्थसिद्धा । न ह्यव्यावर्तमानयोस्सम्बन्ध्यन्तरेभ्यः संसर्गो घटत इति संसर्गवाक्यार्थं मन्वानस्य मतम् । भेदं वाक्यार्थं मन्वानस्य तूक्तरूपा व्यावृत्तिरेवोच्यते । संसर्गस्त्वर्थतः सिद्ध्यति । न ह्यन्यस्माद्व्यावृत्तस्य सम्बन्ध्यन्तरेणावस्थानं सम्भवतीति मतम् । उभयं वाक्यार्थं मन्वानस्य संसर्गभेदौ उभावप्यभिधीयेते इति मतम् । तदेतन्मतत्रयस्यानुवादोऽयं **भेदसंसर्गयोरेवेति ।** अत्र च प्रत्येकविवक्षया विशकलितयोर्द्वयोरिव समुदायविवक्षया मिलितयोरपि द्वयोरेव ग्रहणं भवति । उपक्रमोपसंहारावित्यत्र प्रत्येकविवक्षया विशकलितयोर्द्वयोरिव समुदायविवक्षया तदैकरूप्यस्य ग्रहणदर्शनादित्यभिप्राय इत्याहुः ।

**वैदिकपदानामिति ॥** तथा च साङ्केतिकानामेव यदृच्छानिमित्तत्वम् । न तु वैदिकपदानाम् । तेषा-मन्वर्थकत्वादिति भावः । ननु शून्यवादिभिः शून्यस्यापि तत्त्वरूपताङ्गीकारात्तद्रूपत्वे कथमप्रामाणिकत्वं हेतुरित्यतो व्याचष्टे- **असदेवेति ॥** ननु यदुक्तं लक्ष्यत्वे वाच्यत्वं न प्रयोजकम् । किन्तु वाच्यार्थसम्बन्धित्वेन प्रसिद्धत्वमिति । तदसत् । विपक्षे बाधकाभावेऽप्यवाच्यत्वलक्ष्यत्वाभावयोर्व्यभिचाराभावेन व्याप्तिनिश्चयोपपत्त्या वाच्यत्वाभावेनैव लक्ष्यत्वाभावसाधनसम्भवादित्यतःपक्ष एव व्यभिचारशङ्कया तयोर्व्याप्त्यनिश्चयान्न तेन तत्साधनं सम्भवतीत्याह- **न चेत्यादिना ॥** ननु 'सिद्धं तु निवर्तकत्वात्' इति वदता परेण शास्त्रस्याऽवरणमात्र-निवर्तकत्वाङ्गीकारेण तस्य ब्रह्मप्रतिपादकत्वाभावान्न तत्साधकत्वमिति न तदुक्तिर्युक्तेत्यपरितोषादाह- **वस्तुतस्त्विति ॥** अपिशब्दसमुच्चितं दूषणमेव दर्शयति- **प्रमाणाभावादिति ॥** इतीत्यस्येति द्वितीयपक्षदूषणं समुच्चिनोतीति पूर्वेणान्वयः ।

ननु किं वाच्यत्वस्य लक्ष्यतायामुपयोगाभाववचनस्याभ्युपगमवादत्वाभ्युपगमकल्पनया । तस्य तत्रोप-योगाभावस्य वास्तववादत्वस्यैव सम्भवादित्यत आह- **अन्यत्रेति ॥** ईक्षत्यधिकरणीयानुव्याख्यानादावित्यर्थः। **द्वावपीति ॥** कर्तृकर्मशब्दौ लक्षणया कर्तृत्वकर्मत्वरूपधर्मपरावित्यर्थः । **लक्षणसम्भवेनेति ॥** यथा चानयोरेव कर्तृत्वकर्मत्वलक्षणत्वसम्भवः, तथोक्तमस्माभिः शेषवाक्यार्थचन्द्रिकायां तत एव प्रतिपत्तव्यम् । **परेति ॥** मीमांसकोक्तपरसमवेतक्रियाफलशालित्वं कर्मत्वमित्यादिलक्षणस्येत्यर्थः

। अग्राह्यत्वादित्युपलक्षणम् । अनेक-दोषाक्रान्तत्वादित्यपि द्रष्टव्यम् । यथा च तस्यानेकदोषदुष्टत्वम्, तथोक्तमस्माभिरधस्तात् । **स्वाध्यायोऽध्येतव्य इति ॥** 'स्वाध्यायोऽध्येतव्यः' इति वाक्यत्वरूपविशेषाकारेण सर्वस्वाध्यायाध्ययनविधायकस्याप्यस्य वाक्यस्य स्वाध्यायत्वरूपसामान्याकारेण स्वविषयत्वदर्शनेन न कर्तृत्वकर्मत्वयोः परस्परपरिहारेणैव वृत्तिदर्शनमित्यर्थः। **(पां.टि.)** एवं कर्तृत्वकर्मत्वयोः सहवृत्तौ वैदिकमुदाहरणमुक्त्वा लौकिकमुदाहरणद्वयमाह- **शब्दशब्दस्ये-त्यादिना ॥** शब्द इतिशब्दस्येत्यर्थः । शब्द इति शब्दत्वेन शब्दत्वावच्छिन्नशब्दमात्रवाचकस्यापि शब्दशब्दस्य शब्दत्वरूपसामान्याकारेण स्वविषयत्वदर्शनेन न लोकेऽपि कर्तृत्वकर्मत्वयोः परस्परपरिहारेणैव वृत्तिदर्शनमि-त्यर्थः । **घटादिशब्दानामपीति ॥** घट इत्यादिशब्दानामपि घट इत्यादिशब्दत्वेन घटादिरूपार्थवाचिनामपि स्वरूपपदार्थकत्वेन घट इति शब्दवाचकत्वस्यापि विद्यमानत्वेन तत्रापि कर्तृत्वकर्मत्वयोः समावेशान्न परस्पर-परिहारेणैव लोके वृत्तिदर्शनमित्यर्थः ।

ननु न वयं कर्तृत्वकर्मत्वयोः सर्वथा समावेशो नास्तीति निराकुर्मः । येनोक्तदोषः स्यात् । किन्तु स्वातिरिक्ते कर्मण्यसति स्वमात्रकर्मकत्वमेव निराकुर्मः । एवं च 'स्वाध्यायोऽध्येतव्यः' इत्येतद्वाक्यव्यतिरिक्तस्य स्वाध्यायस्यैव कर्मणः सत्त्वान्न वैदिकोदाहरणे उक्तनियमभङ्गः । शब्द इतिशब्देऽपि तदतिरिक्तानां घट इत्यादिशब्दानां शब्द इति शब्दवाच्यतया स्वातिरिक्तकर्मणां सत्त्वान्न तत्रापि कर्तृत्वकर्मत्वयोः समावेश-प्रास्योक्तनियमभङ्गः । एवं घट इत्यादिशब्दानामपि तच्छब्दातिरिक्तघटाद्यर्थवाचकतया स्वमात्रवाचकत्वाभावान्न तत्राप्युक्तनियमभङ्गः इति वैदिकलौकिकोदाहरणेषु त्रिष्वपि समाधानमाशङ्कते- **तत्रेति ॥** किमुक्तशङ्कायाः वैषम्यमात्रप्रदर्शने तात्पर्यम्, अङ्गीकृत्य स्वविषयकत्वं तत्प्रदर्शने तात्पर्यं वा । नाऽद्यः । तन्मात्रप्रदर्शनस्यानुप-युक्ततयाऽकर्तव्यत्वेन तन्मात्रप्रदर्शकत्वे प्रकृतशङ्काया अनुत्थानप्रसङ्गादिति भावेन द्वितीयं दूषयति- **कर्तृकर्माभेद-स्येति ॥ एकदेश इति ॥** कर्मीभूतस्वाध्यायाद्येकदेश इत्यर्थः । तथा च कर्तृभूतस्वाध्यायाद्येकदेशापेक्षया कर्मीभूतस्वाध्यायादेर्भिन्नत्वान्न त्रिष्वप्युदाहरणेषु कर्तृत्वकर्मत्वयोः सहवृत्तिरिति भावः । **घटशब्दशब्द-स्येति ॥** घटशब्द इतिशब्दस्येत्यर्थः । तथा च घटशब्द इतिशब्दस्यैव तत्र वाचकत्वं वाच्यत्वं चाभ्युपेयम् । तद्व्यतिरिक्तस्य वाच्यान्तरस्य वक्तुमशक्यत्वात् । तथा च तत्र स्वातिरिक्ते कर्मण्यसत्यपि स्वमात्रवाचकताया दृष्टत्वेन कर्तृत्वकर्मत्वयोः समावेशसिद्धिरिति न शङ्कितप्रकारेणाप्युक्तनियमसिद्धिरिति भावः । अविशेषेण कर्तृकर्मणोः क्रियामात्रे ऐक्यं सिद्धान्तिनोऽभिमतम् इति भ्रान्तः शङ्कते- **देवदत्त इति ॥** भवेदुक्तचोद्यावकाशः, यदि क्रियामात्रे तयोरैक्यमिति मदभिमतं स्यान्न चैवम्, किन्तु ज्ञप्तिरूपक्रियायामेव । अतो गत्यादिरूपक्रियायां तयोर्भेदशङ्कनं न युक्तमित्याह- **परिस्पन्देति ॥**

**(व्या.टि.)** दोषान्तरं प्रतिजानीते- **किञ्चेति ॥ आद्ये ब्रह्मण्येवेति ॥** द्वितीयस्तु 'अप्राप्तत्वाच्चेश्वरभेदस्य' इति मूले निरसिष्यते । **तयोरेवेति ॥** नन्वभेदस्यापि वाक्यार्थत्वादवधारणानुपपत्तिरिति चेन्न । तस्यापि संसर्ग-त्वात् । यथोक्तम् 'नामार्थयोरभेदः संसर्गः' इति । **चतुष्टयीति ॥** तयबन्तत्वान्ङीप् । **वाचकानामिति ॥** वचनवृत्तिमतामित्यर्थः । **जातिशब्दा इति ॥** जातिनिमित्ताः शब्दा इत्यर्थः । शाकपार्थिवादित्वात्समासः । **गुणशब्दा इति ॥** अत्र गुणशब्देन जातिक्रियातिरिक्तपदार्थमात्रं ग्राह्यम् । अन्यथाऽभावादिप्रवृत्तिनिमित्तक-शब्दानामतिरिक्तत्वापत्तेः । दण्ड्यादिशब्दानामतिरिक्तत्वापत्तेश्च । न च तेषां द्रव्यशब्दत्वम् । द्रव्यशब्दा **(व्या.टि.)** इत्यस्य यदृच्छाशब्दा इति साङ्केतिकशब्दविषयतया व्याख्यातत्वेन डित्थ इत्युदाहरणेन च तदयो-गात् । गुणशब्दस्य प्रसिद्धगुणार्थत्वे दण्डीत्युदाहरणायोगाच्च । तस्य विशेष्यत्वञ्च इतिशब्दस्य स्वरूपबोधकत्वेन पटशब्दस्य विशेष्यत्वसम्भवेन, पाचक इत्यादावनुक्त्या चायुक्तम् । **यथा डित्थ इतीति ॥** साङ्केतिकशब्दानां शक्यातिरिक्ततत्तावच्छेदकाभावेन निष्प्रकारकस्मृतिजनकत्वम् । पदार्थसमभिव्याहारेण सप्रकारकबोधजनकत्व-मिति नैयायिकः । सञ्ज्ञाप्रकारकबोधजनकत्वमित्यपरे । वृद्ध्यादिशब्देनाऽदैच्त्वादिप्रकारकबोधजननेन संज्ञिगतस्य सङ्केत्रभिमतधर्मिप्रकारकबोधजनकत्वमिति तत्त्वम् । **तत इति ॥** वचनवृत्तिनिमित्तचतुष्टयाभावादित्यर्थः । **गुणयोगेति ॥** ब्रह्मणश्चासङ्गत्वादिति शेषः । अत्र विवक्षितव्यतिरेकप्रयोगे व्यतिरेकिव्याप्तिं दर्शयितुं तस्याः सहचारदर्शनव्यभिचारादर्शनग्राह्यत्वात् तयोराद्यं बहिरेवोपस्करोति- **तीरादिशब्देनेति ॥** मूलं व्यभि-चारादर्शनपरतया योजयति- **न तु केनापीति ॥** विवक्षितप्रयोगमपि बहिरेवोपस्कुर्वन्निगमयति- **अत इति ॥** अत्राप्यङ्गीकारस्यैव हेतुत्वान्नासिद्धिः । मूलं परमसाध्यपरतया व्याचष्टे- **तथा चेति ॥** परमते ब्रह्मणः सत्त्वमेव दुर्लभम् । दूरे तत्र श्रुतितात्पर्यमित्याह- **किञ्चेति ॥** लक्षणादिनाऽपि बोधनसम्भवेन नावाच्यत्वमात्रस्याऽगम-निरासहेतुतेत्यतोऽधिकमपेक्षितं पूरयति- **तत एवेति ॥** नाऽगमरूपप्रमाणविशेषाभावेनार्थस्य शून्यता । प्रत्यक्षादिनाऽपि तत्सिद्धेरित्यतस्तन्निरासहेतुमपि बहिरेवोपस्करोति- **एवमिति ॥** अवाच्यत्वाज्ञेयत्वयोः समकक्षतां निरस्यति- **सामान्ययुक्तिरिति ॥** अज्ञेयत्वस्यासिद्धिं विपक्षे बाधकेन निराह- **ज्ञेयत्वाङ्गीकार**

**इति ।।** अत्रापवादकत्वप्रयोजिकां व्याप्तिं पराङ्गीकारेण समर्थयते- **तथेति ।।** शून्यपदं निर्धर्मकत्वभ्रमं वारयितुं व्याचष्टे- **असदेवेति ।।** विवक्षितव्यतिरेकिप्रयोगं दूषयितुमनुवदति- **नन्वित्यादिना ।। उपयोगाभावा-दिति ।।** तस्य तत्प्रयोजकत्वे हि तदभावस्य तदभावप्रयोजकत्वम् । यथा वह्नेर्धूमप्रयोजकत्वाद्धि तदभावेन तदभावः । न चैवमत्रास्तीत्यर्थः । बीजान्तरेणान्यथासिद्धेरित्याह- **वाच्यार्थसम्बन्धित्वेनेति ।।** न चात्र व्यतिरेकव्याप्तिर्निश्चेतुं शक्यते । व्यभिचारादर्शनमात्रस्य तद्ग्राहकत्वादित्याह- **न चेति ।। गम्यत्वेति ।।** मुख्यत्वाभावेऽपि तात्पर्यविषयत्वसम्भवादित्यर्थः । **सिद्धत्वादिति ।।** तत्सत्ताया इति शेषः ।

ननु शास्त्रजन्यज्ञानविषयत्वेऽपि जडत्वापातः । 'सिद्धन्तु निवर्तकत्वात्' इति वदता परेण शास्त्रस्याऽवरण-निवर्तकत्वमात्राङ्गीकारेणापसिद्धान्तश्चेत्यत आह- **वस्तुत इति ।।** उक्तस्य दूषणं प्रतिजानीते- **उच्यत इति ।।** दूषयितुं विकल्प्य पृच्छति- **किं स्वेनेति ।।** अयं शब्दलभ्योऽर्थः । **अन्येनेति ।।** अयन्तु 'स्वयं दासास्तपस्विनः' इति पदार्थिकोऽर्थः पराभिमतः । मूलफलितमाह- **अपसिद्धान्तेति ।।** अपिपदं पृथग्दूषणपरमित्युपेत्य व्याचष्टे- **अपिपदेनेति ।।** किन्तदित्यतस्तद्विशदयति- **प्रमाणाभावादित्यादिना ।। अन्यथेति ।।** सिद्ध्युपायाभावेऽपि सिद्धावित्यर्थः । ननु लक्षणायां वाच्यत्वस्योपयोगाभावे चोदिते तदपरिहृत्य स्वप्रकाशत्वनिराकरणे कथमुक्ता-समर्थनं नाऽलोच्यत इत्यत आह- **अङ्गीकारवाद इति ।।** समर्थनासामर्थ्यमेव किं न स्यादित्यत आह- **अन्य-त्रेति ।।** 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं हि किन्तदित्यनवस्थितिः' इत्यनुव्याख्यान इत्यर्थः । **विरोधा-(व्या.टि.) दिति ।।** लक्षणविरोधादित्यर्थः । **ज्ञातृत्वमिति ।।** यद्यपि कर्मत्वं कर्तृत्वं चेत्येव वक्तव्यम् । तथाऽपि तदुपाधिकधर्मद्वयप्रदर्शनाय तथोक्तिरिति ज्ञातव्यम् । इत्यादीत्यादिपदेन 'ते' इति प्रथमाबहुवचनान्तं ग्राह्यम् । **एवमिति ।।** कर्तृत्वकर्मत्वयोरसमावेशेनेत्यर्थः । **स्वाध्यायेति ।।** यद्यपि 'स्वाध्यायोऽध्येतव्यः' इति वाक्यस्याध्ययनकर्मत्वेऽपि न तत्कर्तृत्वम् । स्वकर्मकाध्ययनकर्मकविधानक्रियायां कर्तृत्वेऽपि न कर्मत्वम् । तथाऽपि विधानक्रियायां कर्मकोटिप्रविष्टत्वात् कर्मत्वमिति मन्तव्यम् । उदाहरणान्तरमाह- **शब्दशब्द-स्येति ।।** स्वेति घटादिशब्दवाचकत्ववत् शब्दशब्दवाचकत्वस्यापि सत्त्वादेकस्यां वचनक्रियायाम् उभयसमावेश इति भावः । शाब्दिकसम्मतमुदाहरति- **घटादीति ।।** घट इत्ययमाह, 'अग्नेर्ढक्' इत्यादावित्यर्थः । 'स्वं रूपं शब्दस्याशब्दसञ्ज्ञा' इति सूत्रादित्यर्थः । **स्वरूपपदार्थकत्वेति ।।** अनेनाभिधानक्रियायां तत्समावेश इति भावः । **भिन्नकर्मणीति ।।** 'स्वाध्यायोऽध्येतव्यः' इत्यादौ स्वेतरस्वाध्यायादौ कर्मणि सति स्वकर्मकत्वं न स्वमात्रकर्मकत्वमित्यर्थः । **अभेदस्येति ।।** अधिकप्रवेशेऽपि स्वप्रवेशानपायादित्यर्थः । **एकदेश इति ।।** आद्योदाहरणे स्वाध्यायैकदेशो विधिवाक्यम्, द्वितीयोदाहरणे शब्दसमुदायैकदेशः शब्देतिशब्दः, तृतीयोदाहरणे शब्दार्थैकदेशः शब्द इत्यवधेयम् । **भेद इति ।।** अवच्छेदकभेद इत्यर्थः । अवच्छेदकैक्यदेशमुद्दिशति- **घटशब्द-शब्दस्येति ।।** कथमित्यभेदनियममाक्षिपति- **क्रियास्विति ।।** धात्वर्थेष्वित्यर्थः । सङ्क्षिपति- **अलमिति ।।**

**मूलम्- नच स्वरूपमन्यद्वा ज्ञेयं ज्ञातारं च विना ज्ञानं दृष्टम् । अतो ज्ञातृज्ञेयाभावात् ज्ञानस्यापि शून्यतैव । अतः शून्यवादान्न कश्चिद्विशेषः । नच ज्ञातृज्ञेयरहितं ज्ञानं क्वापि दृष्टम् ।**

**(त.मं.)** स च विरोधो न सार्वत्रिक इत्याह- **नच स्वरूपमिति ।।** यदि स्वरूपं कोऽपि न जानातीति वदति तर्हि तं प्रति पृच्छामः । त्वं स्वरूपं जानासि वा न वेति । अहमपि न जानामीति वदसि चेत् आत्मस्वरूपं ज्ञात्वा हि अहंपदेनोक्तम् । अहंपदेन अहङ्कार एव उच्यते । नात्मस्वरूपमिति चेत् । अहमपि स्वरूपं न जानामीति वदतः स्वरूपस्याहङ्कारवेद्यत्वमेव निषिद्धम् । न स्वसंवेद्य-त्वम् । अप्रतिषिद्धं चानुमतमेवेत्यास्तामयं विस्तरः ।

**ज्ञानस्यापि शून्यतैव ।।** ज्ञानशब्दस्यापि शून्यार्थतैव तत्पक्षे ।

**टीका-** ननु ज्ञानं ब्रह्म, न ज्ञातृ । ज्ञानञ्च क्रियात्वाद् यद्यपि न स्वकर्मकं तथाऽपि स्वभावात् पर-निरपेक्षमेव प्रकाशते । अतो न ब्रह्मणो लक्ष्यत्वानुपपत्तिः । नापि शून्यतापत्तिरित्यतः, स्यादेतदेवं कथञ्चिद्यदि ब्रह्मणो ज्ञानत्वं स्यात् । तदेव तु न युज्यत इति वक्तुमुपोद्घातमाह- **नचेति ।।** जानातिर्हि सकर्मकः प्रसिद्धः । अतस्तदर्थस्य कर्मणा भाव्यम् । कर्म च स्वरूपमन्यद्वा सम्भावितम् । क्रियात्वात् कर्त्रा च भवितव्यम् । नच ज्ञानं स्वरूपमन्यद्वा ज्ञेयं ज्ञातारञ्च विना दृष्टम् । तदेवमन्वयव्यतिरेकाभ्यां ज्ञानस्य ज्ञेयज्ञातृमत्त्वं व्यापकमिति सिद्धम् । 'नच ज्ञेयं ज्ञातारं च विना ज्ञानं

दृष्टम्' इत्येतावति वक्तव्ये स्वरूपमन्यद्वेति वचनमुत्तरत्र दूषणसौकर्यार्थम्। तच्च वक्ष्यामः।

ननु क्रियायाः स्ववृत्तिविरोधात् स्वरूपमित्यसम्भावितमेव। मैवम्। ज्ञानस्य स्वविषयत्वाभावे केवलान्वयव्याप्तिग्रहणानुपपत्तिप्रसङ्गात्। सर्वोपसंहारे स्वरूपं प्रविशति न केवलमिति चेन्न। स्वविषयत्वे सति अस्य वैधर्म्यस्यानुपयुक्तत्वात्।

अस्तु ज्ञानस्य ज्ञातृज्ञेयवत्ता व्यापिका। ततः किमित्यत आह- **अत इति ॥** यत एवं ज्ञानस्य ज्ञातृज्ञेयवत्त्वं व्यापकं, नच तदुभयमस्ति ब्रह्माख्यस्य ज्ञानस्य। तथा हि- न तावत्तस्य ज्ञाताऽ-स्ति। ततोऽन्यस्य वस्तुनोऽभावात्। पारतन्त्र्यप्रसङ्गाच्च। नापि ज्ञेयमस्ति। तद्धि स्वरूपं वा स्यादन्यद्वा। नाद्यः। स्वक्रियाविरोधभयेन तदनङ्गीकारात्। न द्वितीयः। वास्तवस्य परस्याभा-वात्। अवास्तवस्यापि मुक्तावभावात्। तथाच व्यापकाभावाद् व्याप्यस्य ज्ञानस्याप्यभाव एव। किञ्चैवं शशविषाणादेः शून्यस्याप्येवं सिद्धिः किं न स्यात्। तदपि स्वप्रकाशज्ञानरूपमित्यङ्गीकर्तुं शक्यत्वात्। तथात्वेऽप्यस्माकं कुतस्तत्सिद्धिरिति चेत्, ब्रह्मणोऽपि कुतः सिद्धिः। (स्व)वयमेव ब्रह्मेति चेत् समानं शून्येऽपीत्याशयवानाह- **अत इति ॥** उक्तरूपज्ञाततायाः शून्येऽपि सम्भवादित्यर्थः। ब्रह्मवादस्येति शेषः।

ननु कर्तृकर्मणी कारकविशेषौ। कारकं च क्रियोत्पत्तावुपयुज्यते। नच ब्रह्मज्ञानं क्रियारूपम्। नाप्युत्पत्तिमत्। अतो जन्यज्ञानस्य ज्ञातृज्ञेयवत्तानियमेऽपि ब्रह्मज्ञानस्य तद्रहितस्यापि सत्ता भविष्यतीत्यत आह- **नचेति ॥** क्वापीत्यनेन नित्यानित्ययोरविशेषं सूचयति।

अयं भावः। ज्ञानमिति जानाते रूपं न वा। नेति पक्षे दृष्टहानिरदृष्टकल्पना च स्यात्। आद्ये कथं क्रिया न स्यात्। भावे ह्ययं प्रत्ययो, न करणादाविष्टः। नचोत्पत्तावेव क्रिया कारकमपेक्षत इति नियमः। अस्ति ब्रह्मेत्यादौ नित्याया अपि सत्तायाः कर्तृसापेक्षतादर्शनात्। अन्यथा लकारानुत्पत्तिप्रसङ्गः। तस्मादुत्पादनेन विनाऽप्यविनाभावमात्रेण धात्वर्थस्य कर्त्रादिव्याप्तत्व-मस्त्येवेति।

**(र.टि.) स्यादेतदेवं कथञ्चिदिति ॥** वृत्तिरूपं ज्ञानं साक्षिरूपपरमपेक्ष्यैव प्रकाशते। साक्षिरूपं तु स्वकर्मकमेव सत्प्रकाशत इति ज्ञानं स्वभावात् परनिरपेक्षमेव प्रकाशत इत्युक्तमित्यभिप्रेत्य कथञ्चिदित्युक्तम्। **स्वक्रिया-विरोधभयेनेति ॥** कर्मीभूतस्य स्वस्य क्रियात्वविरोधभयादित्यर्थः। **शून्येऽपीति ॥** असत्यपीत्यर्थः। अत एव पूर्वं शशविषाणादेरिति शून्यं विशेषितम्। अत्र सर्वत्र शून्यपदस्य बाह्याभिमतशून्यपरत्वे पूर्वोत्तर-वाक्यासङ्गतिरित्यवधेयम्। **क्वापीत्यनेनेति ॥** तथा च 'न च स्वरूपमन्यद्वा' इत्यनेनास्य न पुनरुक्तत्वमिति द्रष्टव्यम्।

**(रा.टि.) शून्यत्वापत्तिरिति ॥** असत्त्वापत्तिरित्यर्थः। 'स्वभावात्प्रकाशते' इत्युक्तेरिति भावः। **तदर्थ-स्येति ॥** ज्ञानस्येत्यर्थः। **वक्ष्याम इति ॥** अत इत्युत्तरवाक्यव्याख्यानावसरे 'तद्धि स्वरूपं वा स्यादन्यद्वा' इत्यादिनेति भावः। **स्ववृत्तीति ॥** स्वविषयकत्वेत्यर्थः। **केवलान्वयेति ॥** इदमभिधेयं ज्ञेयत्वादित्यत्र यज्ज्ञान-विषयस्तदभिधेयमित्यत्र ज्ञानस्य ज्ञानविषयत्वावश्यम्भावादिति भावः। **स्वक्रियाविरोधेनेति ॥** अन्यविषये स्वस्य क्रियात्वेऽपि स्वविषये स्वस्य क्रियात्वविरोधेन, स्वकर्मकत्वविरोधेनेति यावत्। **एवं सिद्धिरिति ॥** स्वरूपप्रकाशेनैव सिद्धिरित्यर्थः। **विशेष** इत्यत्र कस्येत्याकाङ्क्षायामाह- **ब्रह्मवादस्येति ॥ भावे ह्ययं प्रत्यय इति ॥** ल्युट्प्रत्यय इत्यर्थः। 'ज्ञा अवबोधने' इत्यतो 'भावे ल्युट् च' इति सूत्रेण ल्युटि 'युवोरनाकौ' इत्यनादेशे ज्ञानमिति रूपत्वादिति भावः। **अन्यथा लकारेति ॥** अस्तीत्यत्र कर्त्रर्थकत्वाभावे 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति चकारात् कर्तरि च लडादयो भवन्तीत्युक्तेर्लट्प्रत्ययो न स्यादित्यर्थः।

**(श्री.टि.) ज्ञानं ब्रह्मेति ॥** धात्वर्थक्रियारूपं यद् ज्ञानं तदात्मकं ब्रह्मेत्यर्थः। **न ज्ञात्रिति ॥** तथात्वे क्रियायाः कर्तृत्वापत्तेः क्रियाकर्तृभावस्य च विरुद्धत्वादिति भावः। **ज्ञानं च क्रियात्वाद्यपि न स्वकर्मकमिति ॥** ब्रह्मणो ज्ञानरूपधात्वर्थक्रियात्वं

तावत्सिद्धम्। ज्ञानं च क्रियात्वात् कर्मसापेक्षम्। तच्च कर्म न तावदन्यत्। वास्तवस्य तस्याभावात्। अवास्तवस्य मुक्तावभावात्। अतः स्वकर्मकमेव तदिति वक्तव्यम्। तन्न सम्भ-वति। क्रियायाः कर्मत्वापत्तेः। क्रियाकर्मभावस्य च विरुद्धत्वादिति भावः। **परनिरपेक्षमेवेति ॥** कर्मनिरपेक्ष-मेवेत्यर्थः। **अत इति ॥** लक्ष्यार्थोपस्थितिसम्भवादित्यर्थः। **शून्यतेति ॥** असत्त्वेत्यर्थः। **स्यादेतदेवं कथञ्चि-दिति ॥** अभावेच्छादौ सत्प्रतियोगित्वसविषयकत्वादेस्स्वभावत्वदर्शनेन विषयसापेक्षत्वस्य ज्ञानस्वभावत्वेन स्वभावात् परनिरपेक्षमेव ज्ञानमित्ययुक्तमित्याशयेन कथञ्चिदित्युक्तमिति मन्तव्यम्। **जानातिरिति ॥** 'ज्ञा अवबोधने' इति धातुरित्यर्थः। तदर्थस्य ज्ञाधात्वर्थभूतस्य ज्ञानस्येत्यर्थः। **भाव्यमिति ॥** न ह्यकर्तृका क्रिया लोके दृष्टेति भावः। **इति वचनमिति ॥** विविच्य ज्ञेयवचनमित्यर्थः। **तच्चेति ॥** दूषणसौकर्यमित्यर्थः। **वक्ष्याम इति ॥** 'अतो ज्ञातृज्ञेयाभावात्' इति मूलव्याख्यानसमय इत्यर्थः। **स्ववृत्तीति ॥** यथा घटे ज्ञानमित्यत्र ज्ञानस्य घटे वृत्तिर्नाम तद्विषयकत्वमेव एवं ज्ञानरूपक्रियायाः स्वस्मिन् वृत्तिर्नाम स्वविषयकत्वमेव वाच्यम्। **(श्री.टि.)** तच्च विरुद्धमित्यर्थः। अत एव ज्ञानस्य स्वविषयकत्वाभाव इति वक्ष्यति। **स्वरूपमित्यसम्भावित-मिति ॥** स्वरूपं ज्ञेयमिति ज्ञानरूपक्रियात्मकस्य ब्रह्मणो ज्ञेयत्ववचनमसम्भावितमित्यर्थः। **स्वविषयत्वाभाव इति ॥** स्ववृत्तिविरोधेन स्वविषयकत्वाभावेऽङ्गीकृते सतीत्यर्थः। **केवलान्वयव्याप्तीति ॥** यत्प्रमेयं तदभिधेय-मिति व्याप्तिज्ञानं प्रमेयत्वादिरूपेण स्वविषयकमेवेति वक्तव्यम्। अन्यथा केवलान्वयित्वभङ्गापत्तेरिति भावः। शङ्कते- **सर्वोपसंहार इति ॥** यत्प्रमेयं तदभिधेयमिति सर्वोपसंहारेण व्याप्तिग्रहे ज्ञानस्वरूपं प्रमेयत्वेन रूपेणैव प्रविशति । न केवलं ज्ञानस्वरूपं ज्ञानत्वेन रूपेण तत्र प्रविष्टमिति न केवलान्वयव्याप्तिग्रहणानुपपत्तिरि-त्यर्थः। **स्वविषयकत्वे सतीति ॥** सर्वोपसंहारेण व्याप्तिज्ञाने यथाकथञ्चित्स्वविषयकत्वे सिद्धे सति ज्ञान-स्वरूपस्य प्रमेयत्वेन रूपेणैव प्रवेशो न ज्ञानत्वेनेति वैधर्म्यस्यानुपयुक्तत्वादित्यर्थः। **तस्य** ब्रह्मरूपज्ञानस्य। **पारतन्त्र्येति ॥** अन्येन ज्ञेयत्वाङ्गीकारे पराधीनत्वप्राप्तेरिति भावः। 'तच्च वक्ष्यामः' इत्युक्तं दर्शयति- **नापि ज्ञेयमस्तीत्यादिना ॥ स्वक्रियाविरोधभयेनेति ॥** कर्मीभूतस्य स्वस्य क्रियात्वविरोधभयेनेत्यर्थः। **किञ्चैव-मिति ॥** ज्ञातृज्ञेयशून्यस्यापि ब्रह्मणः स्वप्रकाशज्ञानरूपत्वाङ्गीकार इत्यर्थः। **शून्यस्य** अत्यन्तासतः। **एवं** ब्रह्मवत्। **अस्माकं कुत इति ॥** अस्मान् प्रति कुतः प्रमाणाच्छशविषाणादिसिद्धिरित्यर्थः। अस्मदीयज्ञाना-गोचरत्वेऽस्मान् प्रति तत्सिद्ध्यसम्भवादिति भावः। **ब्रह्मणोऽपीति ॥** तस्याप्यस्मदीयज्ञानागोचरत्वेऽस्मान् प्रति तत्सिद्धेरप्यसम्भवादिति भावः। नन्वहमिति जीवस्य स्वप्रकाशतया नित्यसिद्धत्वात्तदभिन्नस्यापि ब्रह्मणः स्वप्रकाशतया नित्यसिद्धिर्युक्तेत्याशङ्क्ते- **स्वयमेवेति ॥** जीव एवेत्यर्थः। वयमेव ब्रह्मेत्यपि क्वचित् पाठः। **शून्येऽपीति ॥** शशविषाणादिरूपासत्यपीत्यर्थः। **उक्तरूपज्ञानताया इति ॥** ज्ञातृज्ञेयशून्यज्ञानरूपताया इत्यर्थः। **शून्येऽपि सम्भवादिति ॥** असत्यपि सम्भवादित्यर्थः। न कश्चिद्विशेष इत्यनन्तरमध्याहार्यमाह- **ब्रह्मवादस्येति ॥**

क्रियारूपत्वमङ्गीकृत्याप्याह- **नाप्युत्पत्तिमदिति ॥** उत्पत्तिमत्क्रियारूपं न भवतीत्यर्थः। येन तदुत्पत्तौ कर्तृकर्मकारकापेक्षा स्यादिति भावः। **ब्रह्मज्ञानस्येति ॥** नित्यभूतस्येत्यर्थः। **तद्रहितस्यापीति ॥** ज्ञातृ-ज्ञेयरहितस्यापीत्यर्थः। **सत्तेति ॥** तथा च न ब्रह्मवादस्य शून्यवादाविशेष इति भावः। **क्वापीत्यनेनेति ॥** तथा च 'न च स्वरूपमन्यद्वा ज्ञेयम्' इत्यनेनास्य न पुनरुक्तता। नियमद्योतनार्थत्वादिति भावः। **नित्यानित्ययो-रिति ॥** ज्ञानयोरिति शेषः। नैतावन्मात्रमुक्तशङ्कापरिहाराय पर्याप्तमित्यत आह- **अयं भाव इति ॥ जानाते-रिति ॥** 'ज्ञा अवबोधने' इति धातोरित्यर्थः। **दृष्टहानिरिति ॥** दृष्टस्य ज्ञाधातुरूपत्वस्य हानिरदृष्टस्य धात्वन्तररूपत्वस्य च कल्पना स्यादित्यर्थः। **कथं क्रिया न स्यादिति ॥** तथा च 'न च ब्रह्मज्ञानं क्रियारूपम्' इत्युक्तमसद् इति भावः। ननु ज्ञायतेऽनेनेति ज्ञानमिति करणेऽपि ल्युटो विहितत्वात्करणस्य क्रियारूपत्वा-भावादुक्तमसदित्यत आह- **भावे हीति ॥** धात्वर्थरूपक्रियायाम् अयं प्रत्ययो ल्युड्प्रत्ययः। हीत्यनेन 'ल्युड् भावे' इति स्मरणं सूचयति। तथा च 'ज्ञा अवबोधने' अस्माद्भावे ल्युट्प्रत्यये 'लशक्वतद्धिते' इति सूत्रेण **(श्री.टि.)** लकारलोपे 'हलन्त्यम्' इति टकारलोपे युकारस्य 'युवोरनाकौ' इति सूत्रेणानादेशे ज्ञा अनेति जाते अकारस्य पूर्वरूपे (ज्ञप्ति)र्ज्ञानमिति भाव एवायं प्रत्ययो द्रष्टव्य इत्यर्थः। **न करणादाविष्ट इति ॥** तथात्वे ब्रह्मणः कारणत्वापत्तेरिति भावः। ननु क्रियारूपत्वेऽपि नित्यत्वान्न कारकापेक्षेति चेत्तत्राऽह- **न चोत्पत्तावे-वेति ॥** कुतो न नियम इत्यत आह- **अस्तीति ॥ सत्ताया इति ॥** 'अस भुवि' इति धात्वर्थभूताया इत्यर्थः। **अन्यथेति ॥** नित्याया अपि सत्तायाः कर्तृसापेक्षतानङ्गीकार इत्यर्थः। **लकारेति ॥** अस्धातोः कर्तरि लट्प्रत्यये तस्य तिप् इत्यादेशे 'हलन्त्यम्' इति पकारलोपे अस्तीति रूपम्। तथा च सत्तायाः नित्यत्वेन कर्तृसापेक्षत्वाभावे कर्त्रर्थलट्प्रत्ययानुत्पत्तिप्रसङ्गेनास्तीति रूपनिष्पत्तिर्न स्यादिति भावः। **अविनाभावमात्रेणेति ॥** द्रव्यत्व-संयोगवत्त्वादाविवेति भावः।

**(पां.टि.) स्यादेतदेवं कथञ्चिदिति ॥** वृत्तिरूपं ज्ञानं साक्षिरूपपरमपेक्ष्यैव प्रकाशते। साक्षिरूपन्तु स्वकर्मकमेव सत्प्रकाशत इति ज्ञानस्वभावात् परनिरपेक्षमेव प्रकाशत इत्ययुक्तमित्यभिप्रेत्य कथञ्चिदित्युक्तम्। **तच्चेति ॥** दूषणसौकर्यं चेत्यर्थः। **वक्ष्याम इति ॥** 'नापि ज्ञेयमस्ति' इत्यादिनेति शेषः। **स्वरूपमितीति ॥** स्वरूपं ज्ञेयमित्यसम्भावितमित्यर्थः। **ज्ञानस्येति ॥** यत्प्रमेयं तदभिधेयमिति व्याप्तिज्ञानस्य स्वविषयत्वमभ्युपेयम्। अन्यथा सर्वोपसंहारेण व्याप्तिग्रहासिद्धिप्रसङ्गादिति भावः। **स्वक्रियाविरोधभयेनेति ॥** कर्मीभूतस्य स्वस्य क्रियात्वविरोधभयेनेत्यर्थः। **शून्यस्यापीति ॥** असतोऽपीत्यर्थः। न तु शून्यवाद्यभिमततत्त्वरूपशून्यस्य। अत एव शशविषाणादेरित्युक्तमिति ध्येयम्। **तथात्वेऽपीति ॥** स्वप्रकाशज्ञानरूपतया तस्य शून्यं प्रति सिद्धत्वेऽपीत्यर्थः। **अस्माकमिति ॥** अस्मदीयज्ञानागोचरत्वेनास्मान्प्रति तत्सिद्ध्युपायाभावादिति भावः। 'न च स्वरूपमन्यद्वा' इत्यनेनैव ज्ञातृज्ञेयरहितज्ञानस्य निराकृतत्वात्पुनस्तदाशङ्क्य निराकरणमयुक्त-मित्यतोऽवतारयति- **ननु कर्तृकर्मणी इति ॥** ननु भाव इव करणादावपि ल्युड्विधानान्न जानातिरूपत्वमात्रेण क्रियात्वनिश्चय इत्यत आह- **भावे हीति ॥** भावार्थे ह्ययं प्रत्यय इत्यर्थः। ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्तेरेव सुप्रसिद्धत्वादिति भावः। सत्तायाः परानपेक्षत्वे दूषणमाह- **अन्यथेति ॥** 'लः कर्मणि' इति कर्तरि तद्विधानादिति भावः।

**(व्या.टि.)** उक्तदोषानुद्दिधीर्षुरन्यानपेक्षप्रकाशत्वं स्वप्रकाशत्वमित्युपेत्य चोदयति- **नन्वित्यादिना ॥** पूर्व-मेकक्रियायां कर्तृकर्मभावविरोधान्न ब्रह्मणो ज्ञातृज्ञेयभाव इत्युक्तम्। अधुना क्रियात्वान्न कर्तृकर्मभाव इत्याह- **ज्ञानं ब्रह्मेति ॥ क्रियात्वादिति च। न स्वकर्मकमिति ॥** उपलक्षणमेतत्। स्वकर्तृकमित्यपि ग्राह्यम्। क्रियात्वस्य कारकत्वाभावे हेत्वौचित्यात्। **अतो नेति ॥** लक्षणाबीजस्य स्वरूपसिद्धेः सत्त्वादित्यर्थः। **शून्य-तेति ॥** ब्रह्मस्वरूपसत्ताया अपि ब्रह्मवदेव निरपेक्षं प्रकाशनादित्यर्थः। **उपोद्घातमिति ॥** तदुपयोग्यर्थमि-त्यर्थः। जानातिरिति श्तिपा धातुनिर्देशः। **सकर्मक इति ॥** कर्माकाङ्क्षाविनाभूतः। अतः सकर्मकः। तच्चार्थद्वारेत्याह- **अत इति ॥** तदर्थस्य ज्ञानस्य। अनेन ज्ञानं सकर्मकम्, तथा प्रसिद्धधात्वर्थत्वादित्यनुमानं (**व्या.टि.**)सूचयति। **क्रियात्वादिति ॥** धात्वर्थत्वादित्यर्थः। क्रियावाचिन इति धात्वर्थे क्रियापदव्यवहारात्। क्रियात्वमात्रस्य वृद्ध्यादौ व्यभिचारदर्शनात्कर्मसाधनेन प्रयोगः। क्रियायाः कर्त्रविनाभावात्तत्त्वेन कर्तारं साधयति- **कर्त्रा भवितव्यमिति ॥** एवं पृथग् हेतुद्वयं विधाय साध्यद्वयेऽप्येकं ज्ञानत्वहेतुं वक्तुं तस्य कारकद्वयाविनाभावं दर्शयति - **न च ज्ञानमिति ॥** उपसंहरति - **तदेवमिति ॥** ज्ञानस्येति भावप्रधानः। एवमुत्तरत्रापि। उपोद्घातमाह- **व्यापकमिति ॥** अधिकोक्तिं परिहरति- **सौकर्यार्थमिति ॥ तच्चेति ॥** दूषणमित्यर्थः। विकल्पानुपपत्तिं स्वव्याहत्या चोदयति- **स्ववृत्तीति ॥** क्रियाकारकभावस्य पूर्वापरभावरूपस्याऽश्रयविषयभावरूपस्य चैकस्मिन् स्वस्मिन्वृत्तिविरोध इत्यर्थः। अथवा क्रियायाः कारकानुप्रवेशविरोधादित्यर्थः। **स्वरूपमिति ॥** ज्ञेयज्ञातृ-विशेषमित्यर्थः। तत्र ज्ञानस्य स्वकर्तृकत्वं कर्त्रन्तराभावेन सिसाधयिषुः स्वकर्मकत्वं विपक्षे बाधकेन साधयति- **मैवमिति ॥ केवलान्वयीति ॥** प्रमेयत्वादेरित्यर्थः। **स्वरूपमिति ॥** व्याप्तिज्ञानमित्यर्थः। अन्यथा तत्रैव व्यभिचारेण तस्य केवलान्वयित्वभङ्गप्रसङ्गादित्यर्थः। **केवलमिति ॥** स्वातन्त्र्येणेत्यर्थः। **सतीति ॥** स्वप्रवेशे सिद्धे सतीत्यर्थः। वैधर्म्यस्य वैलक्षण्यमात्रस्यानुपयुक्तत्वात् कर्तृकर्मभेदानुपयुक्तत्वेनार्थान्तरत्वमित्यर्थः। फलं पृच्छति- **किमिति ॥** ब्रह्माख्यज्ञानस्य ज्ञाता किं ब्रह्मान्यः, उत ब्रह्मैव वेति विकल्प्याऽद्यं निराह- **ततोऽन्यस्येति ॥ वस्तुन इति ॥** सत्यस्येत्यर्थः। **पारतन्त्र्येति ॥** क्रियाश्रयस्य कर्तृत्वेनान्यस्य कर्तृत्वे ब्रह्मज्ञानाख्यक्रियाश्रयत्वापातादित्यर्थः। ब्रह्माख्यप्रतीतेः परायत्तत्वापाताद्वा। न द्वितीयः। ज्ञानक्रियाया एव ज्ञातृत्वे स्ववृत्तिविरोधादिति बहिरेवोपस्कर्तव्यम्। ज्ञातृनिराकरणानन्तरं ज्ञेयं निराकरोति- **नापीति ॥ स्वक्रियाविरोधेति ॥** स्वकर्मकक्रियाविरोधेत्यर्थः। क्रियाया एव स्वजन्यफलाश्रयत्वरूपकर्मत्वासम्भवादिति यावत्। **न द्वितीय इति ॥** अन्यदिति द्वितीयो नेत्यर्थः। तथाहि। तदन्यद्वास्तवं मृषा वेति विकल्प्याऽद्यं निराह- **वास्तवस्येति ॥** द्वितीयं पराह- **अवास्तवस्येति ॥ मुक्ताविति ॥** निर्विषयत्वे तात्पर्यम्। अविद्या-निवृत्तावविद्यकाभावात्। अनेनानादितो ब्रह्मणो भ्रमत्वमभिप्रैति। निगमयति- **तथाचेति ॥** अतिप्रसङ्गेन दूषयति- **किञ्चेति ॥ एवमिति ॥** स्वप्रकाशतया सिद्धावित्यर्थः। तत्र प्रसङ्गस्याऽपादकं व्याकरोति- **अङ्गीकर्तु-मिति ॥ तत्सिद्धिः** शून्यसिद्धिः। **सिद्धिरिति ॥** अस्माकमिति वर्तते। **समानमिति ॥** स्वयमेव शून्यमित्युत्तरं समानमित्यर्थः। 'नित्यभावनया भातं तद्भावं योगिनं नयेत्' इति शून्यवादादित्यर्थः।

**क्रियोत्पत्ताविति ॥** उत्पत्तावेव क्रिया कारकमपेक्षते। 'क्रियां कुर्वद्धि कारकम्' इति शाब्दिकप्रयोगादि-त्यर्थः। **क्रियारूपमिति ॥** तस्य परिमाणवत्त्वेन द्रव्यत्वादित्यर्थः। **नापीति ॥** अनन्तमित्यानन्त्यवचनादि-त्यर्थः। अनेन क्रियात्वहेतोरसिद्धिरुक्ता भवति। निगमयति- **अत इति ॥** अनेन ज्ञानत्वहेतोर्जन्यज्ञानत्वेन सोपाधिकतामाचष्टे। **अविशेषमिति ॥** क्वापीत्यस्य नित्येऽनित्ये

चेत्यर्थात्। अनेनोपाध्यभावस्य साध्याभाव-व्यभिचारं चोदयता उपाधेरप्रयोजकतोक्ता भवति। कथमनेन क्रियात्वहेतोरसिद्धिपरिहार इत्यत आह- **अयं भाव इति ॥ ज्ञानमिति ॥** सत्यं ज्ञानमिति ब्रह्मविशेषणं ज्ञानपदमित्यर्थः। **दृष्टेति ॥** व्याकरणव्युत्पन्नस्य **(व्या.टि.)** हानिरव्युत्पन्नस्य परिग्रह इत्यर्थः। **कथमिति ॥** धात्वर्थत्वादित्यर्थः। अनेन ब्रह्मरूपं ज्ञानं क्रिया, जानाति प्रकृतिपदवाच्यत्वादित्यनुमानं सूचयति। ननु 'ज्ञानान्येतानि भिन्नानि' इत्यादौ करणेऽपि प्रयोगान्न क्रियात्वनिश्चय इत्यत आह- **भावे हीति ॥ अयं प्रत्यय इति ॥** अत्रत्यो ल्युडिति भावः। 'विज्ञानं ब्रह्म' इति समाख्यानादिति भावः। अनेन भावप्रत्ययान्तत्वेन विशिनष्टि। क्रियाकारकसम्बन्धे द्वारनियमं वारयति- **न चेति ॥ अन्यथेति ॥** अकर्मकधातोरभावार्थत्वे कर्त्रर्थतानियमेन तदभावे कर्तृलकारो न स्यादित्यर्थः। **विनाऽपीति ॥** व्याप्तावविनाभाव एव प्रयोजको न कार्यकारणभाव इति भावः। क्रियां निर्वक्तुं धात्वर्थ-स्येत्युपसंहारः। अस्त्येवेति व्याप्त्यवधारणम्।

**मूलम्- अप्राप्तत्वाच्चेश्वरभेदस्य नाभेदे श्रुतितात्पर्यं युज्यते।**

**'सर्वोत्तमं सर्वदोषव्यपेतं गुणैरशेषैः पूर्णमन्यं समस्तात्।**
**वैलक्षण्याज्ज्ञापयितुं प्रवृत्ताः सर्वे वेदा मुख्यतो नैव चान्यत् ॥'**

**इति महोपनिषदि।**

**अतः सदागमैरेव सर्वस्माद्भिन्नत्वेन सर्वस्माद्विशिष्टत्वेन च विज्ञेयो भगवान्नारायण इति सिद्धम्।**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीमद्विष्णुतत्त्वविनिर्णये प्रथमः परिच्छेदः ॥**

**(त.मं.)** ननु यद्येवं जीवः स्वज्ञेयः तर्हि तस्य स्वरूपभूतेश्वरात् भेदो विज्ञात एव। प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं गृह्यते। तस्मादीश्वरस्यागमैकवेद्यत्वे सत्यपि तद्भेदस्य द्विष्ठधर्मस्य प्रत्यक्षप्राप्तत्वं स्यात्। अतस्तद्वादिनो वेदस्यानुवादकत्वेन दौर्बल्यादैक्यवाक्यस्याभेदे तात्पर्यं किं न स्यादित्यत आह- **अप्राप्तत्वाच्चेति ॥** न तावदीश्वरस्य जीवाद् भेदो ज्ञातः। नहि धर्मिण्यज्ञाते धर्मो ज्ञायते । नचान्यतरप्रतियोगिकत्वमात्रादन्यतरधर्मो द्विष्ठो भवति। जीवादीश्वरस्य भेदः ईश्वरधर्मः। ईश्वराज्जीवस्य भेदो जीवधर्म इति व्यवस्थाया दृष्टत्वात्। नन्वेवं सतीश्वरस्यापि प्रतियोगित्वेन ज्ञानमिष्टम्। तज्ज्ञाने तत्स्वरूपभूतो भेदोऽपि ज्ञायेतैवेति। सत्यम्। दृष्टादृष्टार्थजातं सर्वमपि सामान्यतो ज्ञातम्। सामान्यतस्तद्धर्मो भेदोऽपि ज्ञायतां नाम। नच तावता तत्र ज्ञान-व्यवहारः। त्वं विवक्षितवृक्षः प्लक्षो वा (वृक्षयक्षो वा) न वेति परिपृष्टे चैत्रो नाहं स इति जानीते। स कीदृश इत्युक्ते नाहं तं वेदेति हि वदति। अभिहितं चेदं पूर्वत्र- नच युगपज्ज्ञानानुपपत्तिरिति।

प्रमाणोपन्यासपूर्वकं निगमयति- **सर्वोत्तममिति ॥**

**॥ इति प्रथमं विशेषणम् ॥**

**टीका-** द्वितीयपक्षेऽपि न जीवेश्वराभेदे श्रुतितात्पर्यं युज्यत इत्याह- **अप्राप्तत्वाच्चेति ॥** अभेदो ब्रह्मणोऽन्यश्चेद्भेदाभाव एव वक्तव्यः। अभावः प्रतिषेध इति पर्यायौ। प्रतिषेधप्रतिपादनं च प्राप्तिपूर्वकम्। नच भेदस्य केनापि प्राप्तिरस्ति। ईश्वरस्य प्रत्यक्षाद्यविषयत्वादित्युक्तम्। अतो भेदस्याप्राप्तत्वात् तत्प्रतिषेधात्मकाभेदप्रतिपादकत्वं न युज्यते। 'द्वा सुपर्णा' इत्यादिश्रुतिप्राप्त-भेदप्रतिषेधपरत्वे श्रुतीनां स्वव्याघातः स्यात्। अप्राप्तत्वादेव न तासामनुवादकत्वं सम्भवति। अप्राप्तत्वप्रकटनार्थमीश्वरेत्युक्तम्। ईश्वरधर्मिको वा तत्प्रतियोगिको वा भेद ईश्वरभेदः।

किञ्च जीवेश्वराभेदे श्रुतितात्पर्यस्य श्रुत्यैव प्रतिषिद्धत्वान्न तद्युज्यत इत्याह- **सर्वोत्तममिति ॥ वैलक्षण्यात्**

कारणात् । समस्तादन्यम् । न केवलमन्यं किन्तु सर्वोत्तमम् । कुतः? सर्वदोषव्यपेत-त्वात् । अशेषैर्गुणैः पूर्णत्वाच्च । **मुख्यतो** महातात्पर्येण । **अन्यद्** अभेदादिकम् ।

एवं विष्णोः सदागमैकवेद्यत्वमुपपाद्योपसंहरति- **अत इति ॥** एवेत्येकशब्दस्यार्थः । **सर्व-स्माद्भिन्नत्वेन** समतीतक्षराक्षरत्वेन । **सर्वस्माद्विशिष्टत्वेन च** निर्दोषाशेषसद्गुणत्वेन च । उभयत्रेत्थम्भूतलक्षणे तृतीया । उभयमपि वीत्युपसर्गस्यार्थः । भगवानिति पूजार्थम् ।

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्विष्णुतत्त्वविनिर्णयस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां प्रथमः परिच्छेदः समाप्तः ॥**

**(र.टि.)** ननु 'द्वा सुपर्णा' इत्यादिश्रुतीनां भेदानुवादकत्वमेव न तु तद्विधायकत्वमित्यतो न श्रुतीनां परस्परं व्याघात इत्यत आह- **अप्राप्तत्वादेवेति ॥ ईश्वरधर्मिको वेति ॥** तथा च 'तत्त्वमसि', 'क्षेत्रज्ञं चापि मां विद्धि', 'नेह नानाऽस्ति किञ्चन' इत्यादीनां सर्वेषामप्यभेदे तात्पर्यनिषेधोऽनेन सिद्ध्यतीति भावः । **वीत्युपसर्गस्येति ॥** अत एव वीत्युपसर्गं विना ज्ञेय इत्येवोक्तमिति भावः ।

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्विष्णुतत्त्वविनिर्णयस्य श्रीमज्जयतीर्थपूज्यचरणविरचितायाः टीकाया विवृतौ श्रीरघूत्तमयतिविरचितायां भावबोधसञ्ज्ञिकायां प्रथमपरिच्छेदस्समाप्तः ॥**

**(रा.टि.)** 'सर्वशब्दावाच्यस्य' इत्येतदवतारिकायामभेदो ब्रह्मस्वरूपं तदन्यो वेति विकल्पितद्वितीयपक्ष-दूषणपरतया मूलं योजयति- **द्वितीयपक्षेऽपीति ॥ ईश्वरस्य प्रत्यक्षाद्यविषयत्वादित्युक्तमिति ॥** 'आगमं विनेश्वरस्यैवासिद्धेः' इत्यादिनोक्तमित्यर्थः । भेदश्रुतीनां निषेधायानुवादकत्वान्न व्याघात इत्यत आह- **अप्राप्त-त्वादेवेति ॥** सर्वस्माद्भिन्नत्वेनेत्यनुवादः । समतीतेति व्याख्या । सर्वस्माद्विशिष्टत्वेन चेत्यनुवादः । निर्दोषेत्यादि व्याख्या । **इत्थम्भूतेति ॥** कञ्चन प्रकारं प्राप्त इत्थम्भूतः, तल्लक्षणे तज्ज्ञापने तृतीयेत्यर्थः । भिन्नत्वेन प्रकारेण निर्दोषाशेषसद्गुणत्वेन प्रकारेण च ज्ञेय इति । इत्थम्भूतलक्षणे तृतीयेत्यस्य 'जरायै ब्रह्मणस्पतिम्' इत्यत्र ऋग्भाष्यटीकायामेवमेवार्थोक्तेः ।

**॥ इति श्रीमद्विष्णुतत्त्वविनिर्णयटीकाभावदीपे श्रीमद्राघवेन्द्रयतिकृते प्रथमः परिच्छेदः ॥**

**(श्री.टि.) द्वितीयपक्षेऽपीति ॥** 'किञ्चाभेदे श्रुतितात्पर्यमभिलषता मायावादिना वक्तव्यम् । किमभेदो ब्रह्मस्वरूपमुत ततोऽन्यः' इति विकल्प्याऽद्यो दूषितः । अतः परमवशिष्टेऽभेदो ब्रह्मणोऽन्य इति द्वितीय-पक्षेऽपीत्यर्थः । **भेदाभाव एव वक्तव्य इति ॥** ब्रह्मान्यस्याभेदस्य भावरूपत्वे सत्यत्वेऽद्वैतहानिः । मिथ्यात्वे मुक्तौ तस्य निवृत्तत्वेन जीवब्रह्मणोर्भेदापत्तेर्भेदाभावरूप एव वक्तव्य इति भावः । अभावरूपधर्माणां च सत्यत्वेऽपि नाद्वैतहानिः, 'अभावरूपा धर्माः नाद्वैतं निघ्नन्ति' इति मण्डनोक्तेरिति ध्येयम् । **केनापि** प्रमा-णेन । **प्रत्यक्षाद्यविषयत्वादिति ॥** तथा च तद्धर्मिकभेदस्याप्यप्राप्तिरिति भावः । **इत्युक्तमिति ॥** 'आगमं विनेश्वरस्यैवासिद्धेः' इत्यनेनोक्तमित्यर्थः । नन्वीश्वरस्य प्रत्यक्षाद्यविषयत्वेन तद्धर्मिकभेदस्य प्रत्यक्षानुमाना-भ्यामप्राप्तत्वेऽपि 'द्वा सुपर्णा' इत्यादिश्रुतिप्राप्त एव भेदो 'नेह नानाऽस्ति' इत्यादिना प्रतिषिध्यत इत्याशङ्क्य निराकरोति- **द्वा सुपर्णेत्यादीति ॥** तथा च सर्वासामपि श्रुतीनामेकवाक्यत्वेन स्वयमेव भेदं प्रतिपाद्य पुनस्तन्निषेधे स्वव्याघातप्रसङ्गेन श्रुतीनामुन्मत्तवाक्यत्वं स्यादित्यर्थः । ननु भवेदयं श्रुतीनां स्वव्याघातो यदि 'द्वा सुपर्णा' इत्यादिश्रुतीनां भेदविधायकत्वं स्यात् । न चैवम् । भेदानुवादकत्वाङ्गीकारात् । तथा च 'द्वा सुपर्णा' इत्यादिना भेदमनूद्य 'नेह नाना' इति निषेधे नोक्तदोष इत्यत आह- **अप्राप्तत्वादेवेति ॥** भेदस्येति शेषः । कथमप्राप्तिर्भेद-स्येत्यत आह- **अप्राप्तीति ॥** तत्त्वमसीत्यत्र तदितीश्वरं धर्मीकृत्य त्वमसीति जीवभेदाभावप्रतिपादने ईश्वर-धर्मिकजीवप्रतियोगिकभेदप्राप्त्या भाव्यम् । तथा त्वमिति जीवमनूद्य तदसीति, तथा 'क्षेत्रज्ञं चापि मां विद्धि' इति जीवभेदाभावप्रतिपादने जीवधर्मिकेश्वरप्रतियोगिकभेदप्राप्त्या भाव्यम् । सा च न सम्भवति । ईश्वरस्य प्रत्यक्षानुमानाविषयत्वेन तद्धर्मिकस्य वा तत्प्रतियोगिकस्य वा भेदस्याप्राप्तेर्द्वा सुपर्णेत्यादिश्रुतीनामनुवादक-त्वायोगेन विधायकत्वमेव वाच्यम् । तथाच स्वव्याघातप्रसङ्गेन तत्त्वमसीत्यादिश्रुतीनामुन्मत्तवाक्यत्व-मपरिहार्यमिति भावः ।

ननु सदागमैकविज्ञेयत्वं प्रतिपाद्योपसंहारोऽपि तथैव कर्तव्यः । तथा च सदागमैरेवेति कथमुपसंहार इत्यत **(श्री.टि.)** एकशब्दार्थ एवैवकारेणोच्यते । अतो न दोष इत्याशयेनाऽह- **एवेत्येकशब्दस्यार्थ इति ॥** ननु सर्वस्माद् भिन्नत्वेन सर्वस्माद्विशिष्टत्वेन चेत्यत्र कथं तृतीया । न च 'कर्तृकरणयोस्तृतीया' इति सूत्रेण तृतीयेति वाच्यम् । तयोः कर्तृत्वकरणत्वयोरभावादित्यत आह- **उभयत्रेति ॥** ज्ञेयत्वरूपप्रकारं प्राप्तो भगवान् इत्थम्भूतः । तज्ज्ञापके सर्वस्माद्भिन्नत्वे सर्वस्माद्विशिष्टत्वे च तृतीयेत्यर्थः । नन्वाद्यपद्ये 'सदागमैकविज्ञेयम्' इत्युक्तत्वाद् अत्राप्युपसंहारे विज्ञेयो भगवानिति वक्तव्ये ज्ञेय इत्येव वचने किं निमित्तमित्याशङ्क्य वैलक्षण्यविशिष्टत्व-रूपवीत्युपसर्गार्थस्यैव सर्वस्माद् भिन्नत्वेन सर्वस्माद्विशिष्टत्वेनेति विशेषणद्वयेनोक्तत्वाद्विज्ञेय इत्यनुक्त्वा ज्ञेय इत्येवोक्तमित्याशयेनाऽह- **उभयमपीति ॥** परिच्छेदान्तेऽपि मङ्गलाचरणस्यावश्यं कर्तव्यत्वज्ञापनायाह- **भगवानिति पूजार्थमिति ॥** पूज्यत्वज्ञापनार्थमित्यर्थः ।

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां**
**विष्णुतत्त्वविनिर्णयटीकाविवृतौ वाक्यार्थदीपिकायां प्रथमः परिच्छेदः ॥**

**(पां.टि.) द्वितीयपक्षेऽपीति ॥** अभेदो ब्रह्मान्य इति द्वितीयपक्षेऽपीत्यर्थः । **श्रुतिप्राप्तभेदप्रतिषेध-परत्वे त्विति ॥** यथा च 'द्वा सुपर्णा' इत्यादिश्रुत्या जीवेश्वरभेदप्राप्तिस्तथोपपादितं पूर्वत्र । ननु 'द्वा सुपर्णा' इत्यादिश्रुतीनां भेदानुवादकत्वमेव न तु तद्विधायकत्वम् । अतो न श्रुतीनां परस्परं व्याघात इत्यत आह- **अप्राप्तत्वादेवेति ॥** ईश्वरधर्मिक इत्यादि ॥ तथा च 'तत्त्वमसि', 'क्षेत्रज्ञं चापि मां विद्धि', 'नेह नानास्ति किञ्चन' इत्यादित्रिविधाद्वैतवाक्यानामप्यभेदे तात्पर्यनिषेधोऽनेन सिद्ध्यतीति भावः । मूले सर्वोत्तममित्यत्र समासव्युत्पादनप्रकारोऽस्माभिः कार्यतावादान्त एव कृतस्तत एव प्रतिपत्तव्यः । **इत्थम्भूतलक्षण इति ॥** प्रकार इत्यर्थः । **वीत्युपसर्गस्येति ॥** 'सदागमैकविज्ञेयम्' इत्याद्यपद्यगतवीत्युपसर्गस्येत्यर्थः ।

**॥ इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्येण केशवेन विरचितायां गुरुराजमतानुवर्तिन्यां तत्त्वनिर्णयटीकागतविषमपदवाक्यार्थविवृतौ प्रथमपरिच्छेदः समाप्तः ॥**

**(व्या.टि.) द्वितीयपक्षे** अभेदस्य ब्रह्मभिन्नत्वे । **भेदाभाव एवेति ॥** भेदात्यन्ताभाव एवेत्यर्थः । एवेति अस्य भावत्वं व्यावर्तयति । संसर्गाभावमात्रस्य प्रतीतिं वारयति- **पर्यायाविति ॥** समार्थावित्यर्थः । **प्राप्तीति ॥ प्राप्तिः** प्रसक्तिः । प्रतियोगिन इति शेषः । कुतो नेत्यत सम्बन्धिनोऽप्रसिद्धत्वादित्याह- **ईश्वरस्येति ॥** ननु 'द्वा सुपर्णा' इत्यादीनामनुवादकत्वेन भेदाप्रापकत्वान्न व्याघात इत्यत आह- **अप्राप्तत्वादेवेति ॥** भेदस्य जीवेश्वरोभयनिरूप्यत्वेनैकग्रहणं किमर्थमित्यत आह- **अप्राप्तत्वेति ॥** उभयभेदस्येश्वरभेदत्वमुपपादयति- **ईश्व-रेति ॥ प्रतिषिद्धत्वादिति ॥** 'नैव चान्यत्र' इत्यंशेनेति भावः । उपलक्षणमेतत् । तात्पर्यान्तरस्योक्तत्वा-च्चेति । वैलक्षण्यादिति हेतौ पञ्चमीत्याह- **कारणादिति ॥** समस्तादिति प्रतियोगिन्युपपदविभक्तिरित्याशयेनान्वयं दर्शयति- **समस्तादन्यमिति ॥ न केवलमिति ॥** तस्य घटादिसाधारण्येन वेदैदम्पर्याविषयत्वादित्यर्थः । **(व्या.टि.)** सर्वदोषव्यपेतं, गुणैः पूर्णमित्येतद्द्वयं सर्वोत्तमत्वे हेतुगर्भविशेषणमित्युपेत्यावतारयति- **कुत इति ॥** ननु कथमयमुक्तोपसंहारः शब्दप्रतिज्ञाभावादित्यतोऽर्थप्रतिज्ञां निदर्शयति- **एवेत्यादिना ॥** नन्वनुक्तप्रकारद्वयोक्तेः कथमुक्तोपसंहारत्वमित्यतः उक्तित्वेन निर्वक्ति - **समतीतेत्यादिना ॥** ननु कुतोऽत्र तृतीयेत्यतः सूत्रं पठति- **इत्थम्भूत इति ॥** अस्यार्थः - स्थितप्रकारज्ञापके तृतीयेति । तदुदाहरणन्तु छात्रेणोपा-ध्यायमद्राक्षीदिति । प्रकृते तु नारायणत्वं कश्चिज्ज्ञाप्यः प्रकारः । तज्ज्ञापकयोर्भिन्नत्वविशिष्टत्वयोस्तृतीये-त्यर्थः । प्रकारद्वयमप्युक्तमित्याह- **उभयमपीति ॥** फलसिद्धयेऽन्तेऽपि मङ्गलमाचरितमित्याह- **पूजार्थ-मिति ॥** सैव मङ्गलमिति भावः ।

श्रीमदानन्दतीर्थार्यतरणेः किरणो ह्ययम् ।
जयतीर्थार्ययतिराट् प्रमेयं तत्प्रभावजा ॥
श्रीसज्जनोद्देश्यतत्त्वनिर्णयाय भवेच्चिरम् ।
हृदन्धकारो मन्दानां प्रभया विनिवर्तताम् ॥
काहं मन्दमतिः कैषा टीका देवविनिर्मिता ।
तथाऽपि स्वकृतामेनां स्वस्मिन्नेवार्पयेद्धरिः ॥
अमन्दबोधव्याख्याने मन्दबोधकृता कृतिः ।
केवलं परिहासायाप्यनुगृह्णन्तु सूरयः ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीविष्णुतत्त्वविनिर्णयटीकाव्याख्यायां प्रभायां प्रथमः परिच्छेदः ॥**

**॥ अथ द्वितीयः परिच्छेदः ॥**

**मूलम्- ॐ॥ 'ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः ।**
**लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ।**
**स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ।**
**निस्सीमत्वेन ते सर्वे तद्वशाः सर्वदैव च ।**
**सर्गस्थितिक्षययतिप्रकाशावृतिबन्धनम् ।**
**सर्वक्षराणामेकः स कुर्यात् सात्त्विकमोक्षणम् ।**
**सर्गस्थितियतिज्योतिर्नित्यानन्दप्रदोऽक्षरे ।**
**चेष्टाप्रदश्च सर्वेषामेक एव परो हरिः ।**
**तस्य नान्योऽस्ति सर्गादिकर्ता निर्दोषकश्च सः ॥' इति परमश्रुतिः ।**
**'ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः ।**
**सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः ।' इति स्कान्दे ॥**

**(त.मं.)** समतीतक्षराक्षरमित्येतद्विशेषणं सदुक्तिभिः साधयति । **ब्रह्मेति ।** हरेः निस्सीमत्वेन निरवधिकत्वेनानन्तत्वेनेत्यर्थः । सर्वदैव चेति चशब्दात् सर्वत्र च । सर्वक्षराणां मध्ये सात्त्विकानां मोक्षणं च । अक्षरविषये सर्गः पराधीनविशेषप्रापणमेव । **यतिज्योतिषी** नियमनज्ञाने ।

**टीका-** कलत्रं कमला यस्य पुत्रः कमलसम्भवः ।
शिवाद्यास्सेवकास्तस्मै नमो विश्वकुटुम्बिने ।

इदानीं समतीतक्षराक्षरत्वं विष्णोस्समर्थयितुं द्वितीयः परिच्छेद आरभ्यते । ननु समतीतक्षराक्षर-त्वेन निर्दोषाशेषसद्गुणत्वेन च भगवान्नारायणः सदागमैर्विज्ञेय इति प्रथमपरिच्छेदे साधितम् । तेनैव सदागमप्रमाणेन विष्णोर्विशेषणद्वयं सिद्धमेव । तत्किमर्थमुत्तरपरिच्छेदद्वयारम्भः । उच्यते । सामान्यतः साधितमपि विशेषणद्वयं यावद्विशेषतः सदागमवाक्यानि नोदाह्रियन्ते तावदसाधितप्रायमेव । अतस्तदुदाहरणार्थं तत्र[१] प्राप्तानुपपत्तिपरिहारार्थं चोत्तरपरिच्छेदद्वय-मारम्भणीयमेव ।

तत्राऽदौ तावत्क्षराक्षरशब्दव्याख्यानपूर्वकं विष्णोस्तत्परत्वं प्रतिपादयती श्रुतिस्मृतिवाक्ये पठति- **ब्रह्मेति ॥** सुराद्या जीवा इत्येवोक्ते ब्रह्मशिवयोर्जगदुत्पत्तिसंहारकर्त्रोरिदमसम्भावितमिति मन्यमानैस्तव्द्यतिरिक्ता एव जीवा गृह्येरन् । अतो ब्रह्मशिवयोः स्वरूपेणोपादानम् । **क्षरणाद्** विनाशात् । क्षरणं जीवस्वरूपस्य न सम्भवतीति शरीरेत्युक्तम् । स्वविनाशेन स्वामिनोऽपि विनाशोपचारो लोके दृश्यते । **क्षरा** उच्यन्ते । अक्षरत्वादित्येवोक्ते जीवानामपि तत्साम्याल्लक्ष्मी-रक्षरोच्यत इति विशिष्योक्तिरयुक्ता स्यात् । अतो देहग्रहणं कृतम् । ताभ्यां परः **तत्परः** । कथं तत्परत्वमित्यत आह- **स्वातन्त्र्येति ॥** [१]सत्ताप्रतीतिप्रवृत्तिषु स्वाधीनत्वं स्वातन्त्र्यम् । कार्योत्पत्त्याद्यनुकूलोऽतीन्द्रियः कारणधर्मविशेषः शक्तिः । स्वरूपसहकारिव्यतिरिक्ता शक्तिर्नास्ति, प्रमाणाभावादिति केचित् । तन्न । 'न तस्य कार्यं करणं च विद्यते' इति सहकार्यभावमभिधाय, 'पराऽस्य शक्तिः'

इति परमेश्वरसम्बन्धित्वेन शक्तेरभिहितत्वात् । सुख-शब्देन दुःखाभाव एवोच्यत इत्यप्यसत् । बाधकाभावात् । सुखस्य दुःखाविनाभूतत्वेन दुःखपक्षे[२] निक्षेपो बाधक इति चेत्तर्हि ज्ञानस्यापि दुःखकारणत्वेन तत्पक्षनिक्षेपादभावः स्यात् । जन्यमेव ज्ञानं दुःखकारणं न नित्यमिति चेत्तर्हि जन्यमेव सुखं दुःखाविनाभूतं न नित्यमिति ब्रूमः । नित्यं सुखं क्वोपलब्धमिति चेज्ज्ञानमपि नित्यं क्वोपलब्धम् । सक्लेशं ज्ञानं दुःखकारणं नान्यदित्यपि समानम् । आद्यग्रहणेन वीर्यशौर्यौदार्यकारुण्यादीनां सङ्ग्रहः । एतेषामन्यत्रान्तर्भावोऽनुभव-विरुद्धः । **गुणैर्निःसीमत्वेनेति ॥** निःसीमैतद्गुणत्वादित्यर्थः । लक्ष्म्यादीनां ससीमगुणत्वाच्चेत्यपि द्रष्टव्यम् ।

इतश्च क्षराक्षरपरो विष्णुरित्याह- **ते सर्व इति ॥** लक्ष्म्याद्याः **तद्वशा** विष्णुवशाः । कथं तद्वशा इत्यतो जीवानां तावदाह- **सर्गेति ॥ सर्गो** देहसृष्टिः । **स्थितिः** देहाधिष्ठानेनावस्थानम् । **क्षयो** मरणम् । **यतिः** विधिनिषेधाभ्यां बन्धः । **प्रकाशो** ज्ञानोत्पादनम् । **आवृतिः** अविद्या । **बन्धनं** लिङ्गदेहादिबन्धः । एषां द्वन्द्व एकवद्भावश्च । **सात्त्विकानां** जीवानां **मोक्षणम्** आत्यन्तिकदुःख-निवृत्तिसहितपरमानन्दाविर्भावलक्षणं च कुर्यात् । एवं तामसानां नित्यनिरयप्राप्तिं च कुर्यादित्यपि ग्राह्यम् । अक्षरस्य तद्वशत्वमुपपादयति- **सर्गेति ॥** अत्र **सर्गः** प्रादुर्भावः । **स्थितिः** कदाऽपि मरणाभावः । **यतिः** आज्ञान्तर्गतिः । **ज्योतिः** नित्याविर्भूतो भगवदितरसर्वसाक्षात्कारः । **अक्षरे** अक्षरस्य । यद्यपि सर्गादिशब्दसाम्यम् । तथाऽप्युक्तविधयाऽर्थभेदादसाधारणधर्मोक्तिरियं भवति । साधारणं तद्वशत्वं दर्शयति- **चेष्टेति ॥ सर्वेषां** क्षराणामक्षरस्य च । यथाऽयं सर्वेषां सर्गादेः कर्ता तथा तस्याप्येतेषां मध्येऽन्यतमः सर्गादिकर्ता चेत्तदा साम्येन न परत्वं भवति । न चेतरेतराश्रयत्वेन सम्भवः । विषयभेदेनेतरेतरवशत्वोपपत्तेरित्यत आह- **तस्येति ॥** इतोऽप्यसौ क्षराक्षरोत्तम इत्याह- **निर्दोषकश्चेति ॥** स्वार्थे कप्रत्ययः । अन्ये सदोषा इत्यपि वाच्यम् । अत 'एक एव परः' इति पूर्वोक्तमत्रोपसंहारत्वेन[१] योज्यम् । शैवादिदर्शनेषु शिवादीनां सर्वोत्तम-त्वेनाभिधानात्तन्निरासार्थं ब्रह्मशेषेत्यादिस्वरूपग्रहणम् । एतेन क्षराक्षरशब्दौ जडजीवविषयाविति व्याख्यानं प्रत्युक्तम् ॥

**(र.टि.)** एतत्परिच्छेदप्रतिपाद्यसमतीतक्षराक्षरत्वस्य व्याख्यानपूर्वकं तद्धर्मयुक्तं हरिं नमति-**कलत्रमिति ॥ सामान्यतः साधितमिति ॥** 'सर्वज्ञं सर्वकर्तारम्' इत्यस्य 'सर्वोत्तमं सर्वदोषव्यपेतम्' इत्यस्य च सर्वोत्तमत्व-प्रतिपादकत्वेऽपि समतीतक्षराक्षरत्वेन रूपेण विशिष्य तदप्रतिपादकत्वात् । 'द्वाविमौ' इत्यस्य तु तत्प्रति-पादकत्वेऽपि 'कूटस्थः' इति 'सर्वाणि भूतानि' इत्येव श्रूयते । न तु लक्ष्मीरिति ब्रह्मरुद्राद्या इति च । क्षराक्षरशब्दस्य व्याख्यानं च न क्रियत इति भावः । अत एव 'ब्रह्मा शिवः' इत्याद्युदाहृतवाक्येषु लक्ष्मीब्रह्मरुद्रादीनां स्वपदेनोपादानस्य प्रयोजनं वक्ष्यति- **स्वरूपेणोपादानमिति ॥** ब्रह्मत्वशिवत्वरूपेणेत्यर्थः । **स्वविनाशेनेति ॥** जीवस्य शरीरमपि स्वीयम्भवतीति भावः । तथा च रूढोपचारत्वान्न प्रयोजनापेक्षेति हृदयम् । शरीरक्षरणात्क्षरा इत्यनेन शरीरक्षरणस्य स्वरूपतो क्षरेषु क्षरपदप्रवृत्तनिमित्तमेवोच्यते । न तु स्वरूपनाशहेतुत्व-मित्याह- **क्षरा उच्यन्त इति ॥ ताभ्यामिति ॥** क्षराक्षराभ्यामित्यर्थः । तच्छब्देन सन्निहितलक्ष्मीमात्रग्रहणे तस्या ब्रह्मशिवाद्युत्तमत्वस्य स्पष्टमनुक्तत्वादर्थतोऽपि ब्रह्माद्युत्तमत्वं न लभ्यत इति भावः । ननु शक्तेः सहकारिस्वरूपत्वादीश्वरे सुखाभावेन सुखपदेन दुःखाभावार्थत्वे तयोर्गुणत्वाभावात्कथं गुणैरित्युक्तमित्याशङ्क्य परिहरति- **स्वरूपसहकारीत्यादिना ॥** ननु वीर्यशौर्यादीनां प्रयत्नौदार्यकारुण्यादीनामिच्छायामन्तर्भावात्कथं पृथग्गुणत्वमित्यत आह- **एतेषामिति ॥** ननु जीवस्वरूपस्यानादित्वात्सर्वदा विद्यमानत्वान्नित्यत्वादत्र कथं सर्गस्थितिक्षियान् ईश्वरः कुर्यादित्यतो व्याचष्टे- **सर्गो देहसृष्टिरित्यादिना ॥** सर्गस्थितियतिज्योतिर्नित्यानन्दानां चेष्टावत्क्षरसाधारण्यात्कथं तेषां पृथग्वचनमित्याशङ्क्य परिहरति- **यद्यपीति ॥** ननु तत्पर इत्युक्तत्वात् 'एक एव परो हरिः' इति पुनः साध्यनिर्देशो व्यर्थ इत्यत आह- **अत एक एवेति ॥** निगमनरूपत्वादस्य न वैयर्थ्यमिति **(र.टि.)** भावः । अत एव अतःशब्दाध्याहारेण योजितम् । **क्षराक्षरशब्दाविति ॥** 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इत्येतद्वाक्यगताविर्थः ।

**(रा.टि.)** एतत्परिच्छेदप्रतिपाद्ये क्षराक्षरातीतत्वे कारणं वदन् मङ्गलमाचरति- **कलत्रमिति ॥** आक्षिप्य समाधातुं प्रतिपाद्यमाह-

**समतीतेति ॥ साधितमिति ॥** 'सर्वज्ञं सर्वकर्तारम्', 'सर्वोत्कर्षे देवदेवस्य विष्णोः' इत्यादिवचनानामुक्तेरिति भावः । **प्राप्तानुपपत्तीति ॥** ब्रह्मरुद्रादेर्जगदुत्पादकत्वतत्संहर्तृत्वयोः प्रसिद्धेस्तदती-तत्वम् अयुक्तमित्याद्यनुपपत्तिपरिहारार्थं तत्रोपपत्त्युक्त्यर्थं चेत्यर्थः । **स्वविनाशेनेति ॥** वित्तविनाशेन । **स्वामिनः** वित्तपतेः । शेषमाह- **उच्यन्त इति ॥** तेन व्यवहारे निमित्तमेतदिति सूचितम् । **स्वरूपेति ॥** कारणस्वरूपेत्यर्थः। **इत्यपि समानमिति ॥** वैषयिकसुखं वा कुत्सितविषयजन्यसुखं वा दुःखव्याप्यं नान्यदिति समानमित्यर्थः । योग्यतया निस्सीमत्वं गुणेष्वन्वेतीति भावेनाऽह- **निस्सीमैतद्गुणत्वादिति ॥** गजेन धनीत्यादाविवेति भावः । **सर्गादिशब्दसाम्यमिति ॥** सर्गादिशब्दैः पूर्वोक्तजीवपरवाक्यसाम्यमित्यर्थः । यद्वा सर्गादिशब्दानां पूर्वत्रात्र च साम्यमित्यर्थः । **असाधारणेति ॥** तेनाक्षरपरत्वमस्येति भावः । **साधारणमिति ॥** क्षराक्षर-साधारणमित्यर्थः । **मन्त्रोपसंहारत्वेनेति ॥** निर्दोषकश्चेत्यनन्तरमत इत्यध्याहृत्य एक एव परो हरिः इत्याकृष्य पूर्वोक्तस्य मन्त्रकृतोपसंहारपरत्वेन योज्यमित्यर्थः । तेन तत्परो हरिरिति पूर्वोक्तोपसंहाररूपत्वान्न पौनरुक्त्य-दोष इति भावः । तत्परो हरिरिति पूर्वोक्तमन्त्रस्योपसंहाररूपत्वेनेति वाऽर्थः । 'श्रुतिस्मृती पठति' इति प्रागेवावतारितत्वाद्विशिष्योक्तेः कृत्यमाह- **शैवादिदर्शनेष्विति ॥ एतेनेति ॥** श्रुतिस्मृत्योर्व्याख्याकरणेन 'क्षरश्चाक्षर एव च' इत्यादिवचनगताविति भावः ।

**(श्री.टि.)** महालक्ष्मीर्यस्य पत्नी तनुजः पद्मसम्भवः ।
भृत्या रुद्रादिकास्तस्मै जगद्भर्त्रे नमो नमः ॥

मध्येऽपि मङ्गलाचरणस्यावश्यं कर्तव्यत्वादेतत्परिच्छेदप्रतिपाद्यसमतीतक्षराक्षरत्वव्याख्यानपूर्वकं तद्धर्म-युक्ततया हरिं नमति- **कलत्रमिति ॥** विश्वमेव **कुटुम्बः** पोष्यवर्गो यस्यासौ तथोक्तस्तस्मै । शिष्याणां मनोव्याकुलीभावपरिहाराय परिच्छेदप्रतिपाद्यमाह- **इदानीमिति ॥ विशेषणद्वयमिति ॥** समतीतक्षराक्षरत्वं निर्दोषाशेषसद्गुणत्वं चेति विशेषणद्वयमित्यर्थः । **सामान्यत इति ॥** 'सर्वज्ञं सर्वकर्तारम्' इत्यस्य 'सर्वोत्तमं सर्वदोषव्यपेतम्' इत्यस्य च सर्वोत्तमत्वप्रतिपादकत्वेऽपि समतीतक्षराक्षरत्वेन रूपेण विशिष्य तदप्रतिपादकत्वात्, 'द्वाविमौ' इत्यस्य तु तत्प्रतिपादकत्वेऽपि कूटस्थ इति सर्वाणि भूतानीत्येव श्रूयते । न तु लक्ष्मीरिति ब्रह्मरुद्राद्या इति च । क्षराक्षरशब्दव्याख्यानं च न क्रियत इति भावः । अत एव 'ब्रह्मा शिवः सुराद्याश्च' इत्याद्युदाहृतवाक्येषु लक्ष्मीब्रह्मरुद्रादीनां स्वपदेनोपादानस्य प्रयोजनं वक्ष्यतीति ज्ञातव्यम् । **अत्र** समतीतक्षराक्षरत्वादौ । **प्राप्तानुपप-त्तीति ॥** 'यस्मात्परं नापरमस्ति' इति मन्त्रे सर्वस्यासत्त्वमुच्यते । अतः कथं तस्य सर्वोत्तमत्वम् । उत्तमत्वस्य **(श्री.टि.)** प्रतियोगिसत्तासापेक्षत्वात् । तथा 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतिषु ब्रह्मादीनामपि सर्वेश्वर-त्वादिकमुच्यते । तत्कथं विष्णोस्तदङ्गीक्रियते । उभयोस्तद्विरोधादित्येवं समतीतक्षराक्षरत्वे प्राप्तानुपपत्तिपरि-हारार्थं, तथा विष्णोर्मानुषेषूत्पत्त्यन्यथाऽनुपपत्त्या निर्गुणत्वादिना च न निर्दोषाशेषसद्गुणत्वं युक्तमित्येवं निर्दोषा-शेषसद्गुणत्वे प्राप्तानुपपत्तिपरिहारार्थं चेत्यर्थः । **इदमिति ॥** शरीरक्षरणमित्यर्थः । **स्वरूपेणेति ॥** स्वस्य रूपेण ब्रह्मत्वशिवत्वरूपासाधारणधर्मेणेत्यर्थः । 'क्षर विनाशसन्ततदानयोः' इति धातुमभिप्रेत्याऽह- **विनाशा-दिति ॥ न सम्भवतीति ॥** नित्यत्वादिति भावः ।

ननु शरीरनाशेन जीवनाशव्यवहारः कथम्? अन्यनाशेनान्यनाशव्यवहारादर्शनात्प्रयोजनाभावाच्चेत्यत आह- **स्वविनाशेनेति ॥ स्वस्य** द्रव्यस्य विनाशेनेत्यर्थः । 'स्वमज्ञातिधनाख्यायाम्' इत्यत्र ज्ञातिधनान्यवाचिनः स्वशब्दादिति व्याख्यातत्वेन स्वशब्दस्य धनवाचित्वादिति ज्ञेयम् । **लोके दृश्यत इति ॥** द्रव्ये नष्टे सत्यहं विनष्टोऽस्मीति व्यवहारो दृश्यत इत्यर्थः । तथा च जीवस्य शरीरमपि स्वीयं भवतीति तद्विनाशेन जीवनाशव्यवहारः सम्भवति । स्वस्वामिभावसम्बन्धरूपनियामकसद्भावादिति भावः । एवं च रूढोपचारत्वान्न प्रयोजनापेक्षेति हृदयम् । नन्वनेन क्षरशब्दः शरीरे मुख्यः ब्रह्मादौ तूपचार इति प्राप्तं न मुख्यवृत्तिरिति चेन्न । क्षरशब्दस्य ब्रह्मादौ रूढोपचारत्वाङ्गीकारात् । मुख्यार्थातिरिक्तगुणयोगेन वृत्तिरुपचारः । तत्र प्रयोगबाहुल्यं रूढोपचारः । अत एवात्र प्रयोगबाहुल्यप्रदर्शनाय लोके दृश्यत इत्युक्तम् । तथा च रूढोपचारस्याभिधातुल्यत्वान्मुख्यवृत्ति-तुल्यतैवेत्यभिप्रायः । यथोक्तं मणिकृता 'रूढोपचारोऽप्यभिधातुल्यः' इतीति सम्प्रदायः । तत्परो हरिरित्यत्र तच्छब्दस्य सन्निहितलक्ष्मीमात्रपरत्वप्रतीतिनिरासायाऽह- **ताभ्यामिति ॥** क्षराक्षराभ्यामित्यर्थः ।

शक्तिं लक्षयति- **कार्योत्पत्त्याद्यनुकूल इति ॥** वह्न्यादौ दाहजनकत्वशक्तिर्नाम दाहादिकार्योत्पत्त्याद्य-नुकूलोऽतीन्द्रियो वह्न्यादिरूपकारणगतो धर्मविशेष इत्यर्थः । कारणधर्मः शक्तिरित्युक्ते वह्न्यादिगतसङ्ख्या-परिमाणादिधर्मेष्वतिव्याप्तिः स्यात् । अत उक्तमतीन्द्रिय इति । तावत्युक्ते वायुवनस्पतिसंयोगवत्प्रत्यक्षा-प्रत्यक्षसंयोगस्याप्रत्यक्षत्वेन वह्न्यादिगते परमाण्वादिसंयोगेऽतिव्याप्तिः स्यादत उक्तम्- **कार्योत्पत्त्याद्यनुकूल इति ॥** कार्योत्पत्त्याद्यनुकूलो धर्मः शक्तिरित्युक्ते दाहाद्यनुकूले

करतलानलसंयोगे उष्णस्पर्शे चातिव्याप्तिः स्यादत उक्तमतीन्द्रिय इति । ननु विशेषपदं किमर्थमिति चेदुच्यते । आत्मनिष्ठज्ञानादिजनकत्वशक्तेरपि लक्ष्यतया अदृष्टे ऽतिव्याप्तिस्स्यात् । तस्यापि ज्ञानादिकार्योत्पत्त्याद्यनुकूलत्वादतीन्द्रियत्वात्कारणीभूतात्मधर्मत्वाच्च । अतो विशेषपदम् । अदृष्टभिन्नो धर्म इत्यर्थः ।

ननु शक्तिविज्ञानसुखाद्यैर्गुणैरित्ययुक्तम् । शक्तेस्सहकारिस्वरूपत्वेन सहकारिणो गुणत्वाभावात् । सुखस्य च दुःखाभावरूपत्वेन तस्यापि गुणत्वाभावादित्याशङ्क्य शक्तेस्सहकारिव्यतिरिक्तत्वं सुखस्य च दुःखाभाव-रूपत्वाभावं च समर्थयितुमाह- **स्वरूपसहकारीति ॥** वह्निस्वरूपकरतलानलसंयोगरूपसहकारिणोस्समव-धानमेव दाहजनकत्वशक्तिःन तु तद्व्यतिरिक्ता वह्नौ दाहजनकत्वशक्तिरस्ति । एवं हरिस्वरूपदेहेन्द्रियादि-**(श्री.टि.)** रूपसहकारिसमवधानमेव स्रष्टृत्वादिशक्तिः न तु तद्व्यतिरिक्तो हरौ शक्तिनामकगुणोऽस्तीत्याशयः। **सहकार्यभावमिति ॥ कार्यं** देहः **करणम्** इन्द्रियादिकं च न विद्यत इति सहकार्यभावमभिधायेत्यर्थः । **सम्बन्धित्वेनेति ॥** अस्य शक्तिरिति सम्बन्धित्वेनेत्यर्थः । तथा च स्वरूपातिरिक्ता शक्तिः सिद्धेति भावः। **उच्यत इति ॥** बौद्धविशेषयोर्वैभाषिकसौत्रान्तिकयोर्मते दुःखाभाव एव सुखं न तु भावरूपं सुखमस्ति । यथोक्तम्- 'दुःखाभावं सुखं चाऽहुः' इति । तथा च न तस्य गुणत्वमिति भावः । **बाधकाभावादिति ॥** सुखशब्देन भावरूपसुखाख्यगुणग्रहणे बाधकाभावादित्यर्थः । बाधकमाशङ्कते- **सुखस्येति ॥ दुःखपक्षनिक्षेप इति ॥** विषसम्पृक्तमधुवदित्यर्थः । तथा च यत्र सुखं तत्र दुःखमिति व्याप्त्या सुखस्य दुःखसम्भिन्नत्वेन परमेश्वरस्य सुखाङ्गीकारे दुःखमप्यङ्गीकार्यं स्यादित्याशयः । **ज्ञानस्येति ॥** अनिष्टपदार्थज्ञानस्येत्यर्थः । **तत्पक्षनिक्षेपाद्** दुःखपक्षनिक्षेपादित्यर्थः । तथा च ज्ञानरूपदुःखकारणाङ्गीकारे कार्यभूतदुःखस्याप्यङ्गी-कार्यत्वापत्त्या ज्ञानरूपगुणस्याप्यभावः स्यादिति भावः । **नित्यं** ज्ञानमिति वर्तते । परमेश्वरश्च नित्यज्ञानः । अतो न तत् तस्य दुःखकारणमिति भावः । न नित्यमित्यत्र सुखमित्यनुवर्तते । परमेश्वरश्च नित्यसुखः । अतो न तद् दुःखाविनाभूतमिति न परमेश्वरस्य सुखाङ्गीकारे दुःखाङ्गीकारप्रसङ्ग इति भावः । ननु ज्ञानाङ्गीकारे तस्य दुःखकारणत्वेन तदप्यङ्गीकार्यं प्रसज्यत इत्ययुक्तम् । रागद्वेषरूपक्लेशसमानाधिकरणस्यैव ज्ञानस्य दुःख-कारणत्वाङ्गीकारात् । परमेश्वरे च सक्लेशज्ञानाभावान्न दुःखप्रसक्तिरतो न ज्ञानाङ्गीकारे बाधकमिति चेत्तर्हि सक्लेशमेव सुखं दुःखाविनाभूतमिति तादृशमेव सुखं दुःखपक्षनिक्षिप्तम् । परमेश्वरे च तदभावान्न दुःखप्रसक्तिरतो न सुखाङ्गीकारे किञ्चिद् बाधकमस्तीति समानमित्याह- **सक्लेशज्ञानमिति ॥** रागद्वेषरूपक्लेशसमानाधि-करणमित्यर्थः । यथोक्तं समयपादीयसुधायां जैनमतानुवादसमये- 'क्लेशो रागद्वेषौ' इति । ननु वीर्यशौर्ययोः प्रयत्ने, औदार्यकारुण्यादीनामिच्छायामन्तर्भावात्कथं पृथग्गुणत्वमित्यत आह- **एतेषामिति ॥ अनुभवविरुद्ध इति ॥** सत्यपि प्रयत्ने नास्ति वीर्यं शौर्यं च, सत्यामपीच्छायां नास्त्यौदार्यादिकमिति व्यवहारसिद्धो योऽनुभवो वीर्यादेः प्रयत्नादिभेदावगाही तद्विरुद्ध इत्यर्थः । **ससीमगुणत्वादिति ॥** ब्रह्मापेक्षया लक्ष्म्याः कोटिगुणाधिकत्वेन ससीमगुणत्वं द्रष्टव्यम् ।

ननु जीवस्वरूपस्यानादित्वात्कथमीश्वरो जीवस्य सर्गं करोतीत्यतस्सर्गपदं व्याचष्टे-**सर्गो देहसृष्टिरिति ॥** ननु जीवस्वरूपस्य सर्वदा विद्यमानत्वात्कथमीश्वरो जीवस्य स्थितिं करोतीत्यतः स्थितिपदं व्याचष्टे- **स्थिति-रिति ॥** ननु जीवस्य नित्यत्वात्कथमीश्वरो जीवस्य क्षयं करोतीत्यतः क्षयपदं व्याचष्टे- **क्षयो मरणमिति ॥** देहवियोग इत्यर्थः । ननु द्वन्द्वसमासे बन्धनानीति स्यादित्यत उक्तम्- **एकवद्भावश्चेति ॥** 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनादिति भावः । रमाया देहसृष्टिरूपसर्गाभावेन हरेस्तत्प्रदत्वायोगादाह- **प्रादुर्भाव इति ॥** रमाया भिन्नदेहाभावेन देहाधिष्ठानेनावस्थानरूपस्थित्यसम्भवादाह- **कदाऽपीति ॥ आज्ञान्तर्गतिः** आज्ञान्तर्वर्तमानत्वम् । मुक्तामुक्तऋजुसाधारण्यव्यावृत्त्यर्थं नित्याविर्भूतेत्युक्तम् ।

**(श्री.टि.)** अयमर्थः । 'त्यब्नेर्ध्रुवे' ध्रुवं नियतं तस्मिन्नर्थे नेः नीत्युपसर्गात्परं त्यप्प्रत्ययो भवतीति सूत्रार्थः । तथा च नित्येत्यस्य नियमेन सर्वदा कालत्रयेऽप्यनालोचनदशायामित्यर्थः । तथा च कालत्रयेऽप्यनालोचनदशायां भगवदितरसर्वसाक्षात्कार इत्युक्तं भवति । तत्रानालोचनदशायामित्यनेनामुक्तऋजुसाधारण्यपरिहारः । मुक्त-ऋजुसाधारण्यपरिहाराय कालत्रयेऽपीत्युक्तमिति ज्ञातव्यम् । ननु सर्गस्थितियतिज्योतिर्नित्यानन्दानां चेष्टावत् क्षरसाधारणत्वात् सर्गस्थितियतिज्योतिरित्यादिना कथमक्षरासाधारणधर्मतयोच्यन्त इत्याशङ्क्य परिहरति- **यद्यपीति ॥ उक्तविधयेति ॥** सर्गो देहसृष्टिरित्याद्युक्तविधया, अत्र सर्गः प्रादुर्भाव इत्याद्युक्तविधया, चेत्यर्थः। **तस्यापि** ईश्वरस्यापि । **एतेषां** क्षराणाम् । **इतरेतरेति ॥** ईश्वरसृष्टानामेतेषामपीश्वरसर्गादिकर्तृत्वाङ्गीकारे इतरेतराश्रयापत्त्यैतेषामीश्वरसर्गादिकर्तृत्वं न सम्भवतीत्यर्थः । **विषयभेदेनेति ॥** ब्रह्मादीनां देहसृष्ट्यादावीश्वर-वशत्वम्, ईश्वरस्य तु स्वप्रवृत्त्यादौ ब्रह्मादिवशत्वमिति विषयभेदान्नेतरेतराश्रय इत्यर्थः । केचिद्विषयभेदेनेत्यस्य कल्पभेदेनेत्यर्थः इत्याहुः । कप्रत्ययेन निर्दोषत्वस्य कुत्सितत्वप्रतीतेराह- **स्वार्थ इति ॥** तथा च निर्दोष एव निर्दोषक इत्यर्थः । ननु तत्परो हरिरित्युक्तत्वादेक एव परः

इति पुनस्साध्यनिर्देशो व्यर्थ इत्यत आह- **अत इति ॥** तत्परो हरिरिति प्रतिज्ञाय स्वातन्त्र्येत्यादिनोपपाद्योपसंह्रियते। तथा च 'एक एव परो हरिः' इत्येत-न्निर्दोषकश्च स इत्यनन्तरं योज्यम्। एवं चोपसंहाररूपत्वान्न वैयर्थ्यमिति भावः। उपसंहारत्वज्ञापनायैवात इत्यध्याहारेण योजितमिति ज्ञातव्यम्। **स्वरूपग्रहणमिति ॥** स्वेषां ब्रह्मादीनां ये रूपा ब्रह्मत्वशेषत्वाद्यसाधारण-धर्मास्तद्युक्ततया ग्रहणमित्यर्थः। **एतेनेति ॥** 'ब्रह्मा शिवः सुराद्याश्च' इत्युदाहृतपरमश्रुतिविरोधेनेत्यर्थः। **क्षराक्षरशब्दाविति ॥** 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इत्येतद्वाक्यगताविर्थः। **जडजीवविषया-विति ॥** क्षरशब्दो विनाशिजडप्रतिपादकः। अक्षरशब्दो नित्यभूतजीवप्रतिपादक इत्यर्थः।

**(पां.टि.)** यस्माद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते।
तदस्त्वेषा भक्तियुक्ता सेवा तत्पूज्यपादयोः ॥

द्वितीयपरिच्छेदं व्याचिख्यासुष्टीकाकारः एतत्परिच्छेदप्रतिपाद्यसमतीतक्षराक्षरत्वविवरणपूर्वकं तद्युक्त-भगवन्नतिस्तुतिरूपमङ्गलमादावाचरति- **कलत्रमिति ॥** श्रोतृशेमुषीमनुकूलयितुं सङ्गतिकथनपूर्वकं एतत्परि-च्छेदप्रतिपाद्यं दर्शयंस्तदारम्भं प्रतिजानीते- **इदानीमिति ॥ सामान्यतः साधितमपीति ॥** 'सर्वज्ञं सर्वकर्तारम्' सर्वोत्तमं सर्वदोषव्यपेतम्' इत्यादिना सामान्यतः साधितमपीत्यर्थः। अत्रानुपपत्तिपरिहारार्थं चेत्येव मूल-पाठः। मूलकोशेषु तथैव दर्शनात्स्वरसत्वाच्च। अनुपपत्तिपरिहारार्थमिति तु लेखकदोषपतित इत्यवधेयम्। जगदुत्पत्तिसंहारकर्त्रोरिति हेतुगर्भं विशेषणम्। सकलजगदुत्पत्तिसंहारकर्तृत्वाद् ब्रह्मशिवयोरेतदसम्भावित-मिति। तथा सति तयोस्तत्कर्तृत्वानुपपत्तिप्रसङ्गादिति योजना। **स्वरूपेणोपादानमिति ॥** ब्रह्मत्वरूपेणेत्यर्थः। 'शरीरक्षरणात्क्षराः' इत्यत्र शरीरपदानर्थक्यमाशङ्क्य क्षरणानुपपत्तिपरिहारार्थात्वान्न तदिति भावेन तत्प्रयोजनं वक्तुं क्षरणशब्दार्थं तावदाह- **क्षरणाद्विनाशादिति ॥ न सम्भवतीति ॥** अविनाशित्वादिति भावः। नन्वेता-**(पां.टि.)** वताऽपि शरीरिणां कथं क्षरत्वनिर्वाह इत्यत आह- **स्वविनाशेनेति ॥** स्वीयविनाशस्य स्वामिनो विनाशे निमित्तत्वदर्शनाच्छरीरस्यापि स्वीयत्वात्तद्विनाशस्यापि तन्निमित्तत्वं युक्तमिति भावः। प्रयोजनाभावा-न्नोपचारः, स्वायत्तन्यायविरोधादित्यतः रूढोपचारत्वात्तस्य न प्रयोजनापेक्षत्वमिति भावेनोक्तम्- **लोके दृश्यत इति ॥** क्षर इत्यस्य किमित्याकाङ्क्षावत्त्वात्प्राप्तां वाक्याभासतामपेक्षितपूरणेन परिहरति - **उच्यन्त इति ॥ तत्साम्यादिति ॥** तेषामप्यनादिनित्यत्वसाम्यादिति भावः । तत्पर इत्यत्र सन्निहिताक्षरमात्रपरामर्शो न युक्तः। तथा सति तन्मात्रपरत्वलाभेऽपि क्षरातीतत्वालाभेन प्रकृतासङ्गतिप्रसङ्गात्। किन्तु योग्यत्वात्क्षरस्यापि परामर्श इति भावेन तद्व्याख्याति- **ताभ्यां परस्तत्पर इति ॥ स्वाधीनत्वमिति ॥** स्वेच्छाधीनत्वमित्यर्थः। 'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः' इत्यन्यत्र भगवत्पादैस्तन्निर्वचनादिति भावः। ननु शक्तेः स्वरूपसहकारिमात्ररूपत्वान्न गुणत्वं, दुःखाभावातिरिक्तसुखाभावान्न तस्यापि गुणत्वमिति तदुक्तिरयुक्ते-त्यभिप्रेत्य चोदयति- **स्वरूपेति ॥** पदार्थस्वरूपव्यतिरिक्ता सहकारिव्यतिरिक्ता च शक्तिर्नास्तीत्यर्थः।

**सहकार्यभावमिति ॥** अनेन श्रौतं करणपदं सहकारिपरमित्युक्तं भवति। **समानमिति ॥** सक्लेशं सुखं दुःखाविनाभूतं नान्यदितीश्वरस्य तदभावान्न तेन तत्प्रसङ्ग इति समानमित्यर्थः । ननु वीर्यशौर्यादीनां प्रयत्ने औदार्यकारुण्यादीनामिच्छायामन्तर्भावात्कथं पृथग्गुणत्वमतो न तेषामादिपदार्थत्वमित्यत आह- **एतेषा-मिति ॥** विष्णुवदेव लक्ष्म्यादीनामपि निःसीमगुणत्वेनोभयोरपि तुल्यत्वान्न तेन तत्परत्वसाधनं सम्भवतीत्यत आह- **लक्ष्म्यादीनामिति ॥** ननु जीवस्वरूपस्यानादित्वात् सर्वदा विद्यमानत्वाच्च नित्यत्वाच्च कथं सर्गस्थिति-क्षयान् ईश्वरः कुर्यादित्यतो व्याचष्टे- **सर्गो देहसृष्टिरित्यादिना ॥** द्वन्द्वत्वे बन्धनमित्येकवचनं कथमित्यत आह- **एकवद्भावश्चेति ॥** 'सर्वो द्वन्द्वो विभाषया एकवद्भवति' इतिवचनादिति भावः । ननु सर्गस्थिति-यतिर्ज्योतिर्नित्यानन्दानां चेष्टावत्क्षरसाधारण्यान्नासाधारण्यमिति कथमसाधारण्येन कथनमित्यतः शब्दतस्तेषां साधारण्येऽप्युक्तरीत्या अर्थतः साधारण्याभावाद्युक्तमसाधारण्येन कथनमित्याह- **यद्यपीति ॥** ईश्वरस्यापी-त्यर्थः। अन्धपङ्गुवद्विषयभेदेन परस्परापेक्षत्वेऽप्येकस्मिन् व्यापारे परस्परानपेक्षत्वान्नेतरेतराश्रयत्वमित्याशयेन परिहरति- **विषयभेदेनेति ॥** कप्रत्ययस्य कुत्सार्थत्वे जीववदीश्वरस्यापि सदोषत्वप्राप्तेराह-**स्वार्थ इति ॥** निर्दोषप्रातिपदिकार्थ इत्यर्थः। ननु तत्पर इत्युक्तत्वात् 'एक एव परो हरिः' इति पुनः साध्यनिर्देशो व्यर्थ इत्यतः निगमनरूपत्वात्तस्य न वैयर्थ्यमिति भावेन तथा योजयति- **अत एक एवेति ॥ क्षराक्षरशब्दाविति ॥** 'द्वाविमौ' इति वाक्योक्तक्षराक्षरशब्दावित्यर्थः।

**(व्या.टि.)** 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि कार्याणि निर्विघ्नं परिसमाप्यन्ते प्रचीयन्ते च' इति

महाभाष्यवचनान्मङ्गलभूयस्त्वाय रमाब्रह्माद्युत्तमत्वरूपं समतीतक्षराक्षरत्वमुपवर्णयन्मध्येऽपि तदाचरति- **कलत्रमिति ॥** भार्येत्यर्थः । 'कलत्रं श्रोणिभार्ययोः' इत्यभिधानात् । **कमला** महालक्ष्मीः । 'कमला श्रीर्हरिप्रिया' इत्यभिधानात् । भगवत उपादानत्वभङ्गाय कलत्रमित्यादिसम्बन्धिशब्दप्रयोगः । तेन 'मम योनिर्महद्ब्रह्म तस्मिन् **(व्या.टि.)** गर्भं दधाम्यहम्' 'सम्भवः सर्वभूतानां मत्तो भवति भारत' इति, 'अहं बीजप्रदः पिता' इति, 'अहं सुवे पितरमस्य मूर्धन्' इति, 'स मनसा वाचा मिथुनं समभवत्ततः संवत्सरोऽजायत' इत्यादिश्रुतिस्मृतीः सूचयति । न च 'यद् भूतयोनिं परिपश्यन्ति धीराः' इति योनित्वोक्त्या विष्णोः स्त्रीत्वोपगमान्न पितृत्वमिति वाच्यम् । 'यो नः पिता' इति स्पष्टश्रुतेः । न च योनित्वोक्तिविरोधः । किं प्रातिपदिकार्थे विरोध उत स्त्रीलिङ्गार्थस्य । नाऽद्यः । 'योनिश्च हि गीयते' इति सूत्रभाष्येऽव्यवधानेनोत्पत्तिद्वारत्वस्यैव प्रकृत्यर्थताऽभिधानेन तस्य 'उभयात्मकसूतित्वाद् वासुदेवः परः पुमान्' इति स्मृत्या भगवत्यभिधानेनाविरोधात् । न द्वितीयः । 'स एवैनं योनौ प्रतिष्ठितमाधत्ते' इति 'स्वयमेव योन्यां समारोहयत्' इति च वैदिकोभयलिङ्गत्वनिश्चयात् । 'श्रोणियोन्यूर्मयः पुंसि च' इत्युभयलिङ्गानुशासनाच्च । अनेन रमाया अत्यन्तरङ्गत्वं सूचितम् । 'न च भार्यासमं मित्रम्' इति स्मृतेः । कमलसम्भव इत्यनेन 'यदासीत्तत एवाऽद्यः स्वयम्भूः समभूदजः' इति स्मृतिं पद्मभूरिति प्रसिद्धिं 'नारायणाद्ब्रह्म जायते', 'तस्माद्विराडजायत', 'अहमस्मि प्रथमजा ऋताऽस्य', 'हिरण्यगर्भं पश्यत जायमानम्' इत्यादिश्रुतिं च सूचयता हिरण्यगर्भस्वातन्त्र्यवादी निरस्तः । अनेनान्यदेवेभ्योऽप्यतिप्रेयस्त्वं सूचि-तम् । 'पुत्रो हि हृदयम्' इति श्रुतेः । शिवेति तन्नामग्रहणेन शैवमतमपास्तम् । **सेवका इति ॥** सिवेर्ण्वुलि लघूपधलक्षणगुणः, परिचारका इत्यर्थः । नृत्तगानादिनेति शेषः । शिवस्य नर्तकत्वं तु 'त्रियम्बको महादेवो नृत्यते यस्य सन्निधौ' इति स्मृतिसिद्धम् । इतरेषां तु 'शृण्वन्ति गायन्ति गृणन्ति साधवः' इत्यादिस्मृति-सिद्धम् । अत एवोक्तं सप्तमस्तोत्रे-'नृत्यति शिवः प्रकटोरुशक्तिः' इति, 'गायन्ति विष्णुमृषयः' इति च । तस्मा इति च 'नमः स्वस्ति' इत्यादिना चतुर्थी । **विश्वकुटुम्बिन इति ॥** ननु न कर्मधारयान्मत्वर्थीय इतीनोऽ-योगः । नञा निर्दिष्टत्वेन तस्यानित्यत्वात् । चकोरपारणपटुज्योतिष्मतीत्यादिप्रयोगाच्च । एवं हरिप्रीतितारतम्येन तद्भक्तितारतम्येन च लक्ष्म्यादीनां तारतम्यं सूचितम् । यथोक्तमनुव्याख्याने-

'लक्ष्मीर्विरिञ्चवाणीशगिरिजेन्द्रगिराम्पतिः ।
सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ॥' इति ।

'तद्भक्तितारतम्येन' इति च ।

उत्तरपरिच्छेदद्वयानारम्भं चोदयति- **नन्वित्यादिना ॥ तेनैवेति ॥** प्रथमेनैवेत्यर्थः । सिद्धमेवेत्यतः परम् इति साधितमेवेति शेषः । प्रमेयसिद्ध्यविनाभावात् प्रामाणिकत्वसिद्धेरिति भावः । **असाधितप्रायमेवेति ॥** विशिष्य सिद्धिकरणानुपन्यासेन तत्करणकसिद्धेरसिद्धेरिति भावः । **तत्रेति ॥** उदाहृतवाक्येष्वित्यर्थः । प्रतिपादयती इति शत्रन्तं द्विवचनम् । मन्यमानैरिति श्यना निर्देशः । वादिभिरिति शेषः । ननूपचारे को हेतुरित्यतो रूढोप-चारोऽयमित्याह- **स्वेति ॥** धननाशे धनिनि नष्टपदप्रयोगादित्यर्थः । रूढोपचारस्याभिधातुल्यत्वेन ब्रह्मादौ मुख्यत्वं पूर्वोक्तं जडोपलक्षकत्वं च युक्तमित्यवधेयम् । **ताभ्यामिति**- परशब्दस्य दिक्छब्दत्वात् पञ्चम्या विगृ-ह्णाति । समासस्तु 'पञ्चमी' इति योगविभागात् साधुः । स्वातन्त्र्यं निर्वक्ति- **सत्ताप्रमितिप्रवृत्तिष्विति ॥** न **(व्या.टि.)** च सत्तात्रैविध्य इत्यान्यत्रिकोक्तिविरोधः । तत्र सत्तादित्रैविध्य इति तदर्थात् । इतरथा प्रमितेरपि सत्तात्वेन सदसद्विभागो न स्यादिति हृदयम् । अथवा सत्तात्रैविध्य इत्यस्य त्रिविधसत्तायामित्यर्थः । अत एव 'सत्ता प्रधानपुरुषशक्तीनां च प्रतीतयः प्रवृत्तयश्च ताः सर्वाः' इत्यनुव्याख्याने सुधायां 'केचिन्मन्यन्ते स्वरूपमेव वस्तुनः सत्त्वमिति । अपरे तु प्रमाणयोग्यत्वम् । अन्ये तु पुनरर्थक्रियावत्त्वं तदिदं त्रयमपि प्रकृत्यादीनां भगवद-धीनमेव' इत्युक्तम् । अत्र सत्त्वेन प्रमाणयोग्यत्वस्य विवक्षितत्वान्नासति प्रसङ्ग इति मन्तव्यम् । अत्र स्वाधीनत्वं परानपेक्षत्वम् । तथा च सत्तादौ परानपेक्षत्वं स्वतन्त्रत्वम् । अत्र स्वातन्त्र्यनिर्वचनेनैव सत्तादौ परापेक्षत्वं परतन्त्रत्वमिति लब्धम् ।

ननु तथाऽपि नेदं स्वतन्त्रत्वलक्षणं युक्तम् । किमिदं प्रत्येकलक्षणं विशिष्टं वा । नाऽद्यः । तत्र सत्ता-शब्दोक्तस्थितेरैश्वर्या अपि कालाधिष्ठानाद्यपेक्षत्वेनासम्भवात् । 'देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते' इत्यनुव्याख्यानोक्तेः । असतः सत्ताभावेन तत्र परानपेक्षत्वेनासत्यतिव्याप्तेश्च । एवं प्रमितिपदेन स्वकर्तृकप्रमितिर्वा स्वविषयकप्रमितिर्वा विवक्षिता । आद्ये तस्यास्सर्वविषयतया विषयतया परानपेक्षणादसम्भवः । 'ज्ञातृज्ञेयविहीनं च ज्ञानमेव न तद्भवेत्' इत्यनुव्याख्यानोक्तेः । द्वितीयेऽन्यदीयस्वविषयकप्रतीतेरुत्पत्त्यादौ कारणापेक्षत्वादसम्भव एव । एवं प्रवृत्तिपदेन स्वकर्तृकव्यापारविवक्षायां सर्जनादिव्यापारस्य 'तत्तेजोऽसृजत', 'तदपोऽसृजत' इत्यादि-श्रुत्या सृज्यादिपरापेक्षत्वादसम्भवः । स्वविषयकविवक्षायां तु स्तुत्यादिरूपपरकीयप्रवृत्तेः परापेक्षत्वं सिद्धमित्य-सम्भव एव । विशिष्टलक्षणत्वे विशेषणवैयर्थ्यं च । व्यावृत्त्यभावात् । एवं परतन्त्रलक्षणमप्ययुक्तम् । पृथग्लक्षणत्वे

सत्तापदेन स्थितेर्वक्तव्यतयोक्तदिशा स्वतन्त्रेऽतिव्याप्तेः । प्रमितिपदेन स्वकर्तृकविवक्षायामचेतनेऽव्याप्तिः । स्वविषयकविवक्षायामुक्तदिशाऽतिव्याप्तिः स्वतन्त्रे । असतोऽपि स्वविषयकप्रतीतौ परापेक्षत्वेनास्वतन्त्रता-पत्तिश्च । एवं प्रवृत्तिपदेन स्वकर्तृकव्यापारविवक्षायामचेतनेऽव्याप्तिः । 'रचनानुपपत्तेः' इति स्वतःप्रवृत्तिनिषे-धात् । स्वविषयकविवक्षायामुक्तदिशा स्वतन्त्रेऽतिव्याप्तिः । समुदितलक्षणे विशेषणवैयर्थ्यं च । व्यावर्त्याभावादिति चेत् ।

अत्राऽहुर्विजयीन्द्रस्वामिनः-'स्वान्यूनशक्तिकस्वरूपासहकारिकस्वरूपत्वम्, स्वान्यूनविषयकप्रमित्यसह-कारिकप्रमितिमत्त्वम् । स्वान्यूनप्रकारकप्रवृत्त्यसहकारिकप्रवृत्तिमत्त्वं चेत्यर्थः । प्रवृत्तिशब्देनेच्छादिव्यापारो विवक्षितः' इति । तेषामयं भावः । पृथगेवेदं लक्षणत्रितयम् । न चात्रोक्तदोषः । सत्तापदेन स्वरूपग्रहणात् । अत एव तत्त्वसङ्ख्यानटीकायां स्वरूपेति न्यरूपि । न चासत्यतिव्याप्तिः । तस्य निःस्वरूपत्वात् । न चैवम-सम्भवः । अन्यदीयस्वरूपस्य स्वन्यूनशक्तिकत्वेन विशिष्टाभावसत्त्वात् । एवं द्वितीयलक्षणेऽपि प्रमितिपदेन स्वकर्तृकप्रमितिरेव विवक्षिता । तस्यावलोकनादिरूपायाः 'करुणारसपूर्णाभ्यां लोचनाभ्यां विलोकय' इति प्रार्थनारूपपरप्रमितिसहकारिकत्वेऽपि विषयतया परापेक्षत्वेऽपि च तस्याः स्वन्यूनविषयकत्वेन विशिष्टाभाव-सम्भवात् । एवं तृतीयेऽपि प्रवृत्तिपदेन स्वेच्छादेरेव ग्रहणात् । तस्य च स्वाधिष्ठितलक्ष्मीब्रह्मादीच्छाद्यपेक्षायामपि तस्य स्वन्यूनप्रकारकत्वेन विशिष्टव्यतिरेक एवेति स्वतन्त्रलक्षणत्रयं सुस्थम् ।

**(व्या.टि.)** अत्र तद्विपर्ययेण परतन्त्रलक्षणकरणे स्वान्यूनशक्तिकस्वरूपसहकारिकस्वरूपकत्वमित्येकमेव लक्षणं सर्वास्वतन्त्रसाधारणम् । न चैवमपि नित्यस्य पराधीनताऽभावादव्याप्तिः । 'द्रव्यं कर्म च कालश्च' इति 'नित्यं नित्यात्मना यतः' इति च श्रुत्या, आकाशाधिकरणन्यायेन च तस्यापि परापेक्षत्वात् । स्वतन्त्रे तु स्वन्यूनशक्तिकस्वरूपसहकारिकत्वेऽपि स्वान्यूनशक्तिकस्वरूपकस्यान्यस्याभावेन तत्सहकारिकत्वाभावा-न्नातिव्याप्तिः । स्वान्यूनविषयकप्रमितिसहकारिकप्रमितिमत्त्वम् । स्वान्यूनप्रकारकप्रवृत्तिसहकारिकप्रवृत्तिमत्त्वं चेति शिष्टे परतन्त्रलक्षणे प्रमितिप्रवृत्तिपदाभ्यां स्वकर्तृकप्रमितिप्रयत्नविवक्षायां चेतनासाधारणे इति ज्ञातव्यम् । द्वितीये प्रमितिपदेन स्वविषयकप्रमितिविवक्षायां तु साधारणत्वेऽपि न दोषः । न चासत्यतिव्याप्तिः । प्रमितिपदेन सर्वांशप्रमितिस्वीकारात् । असतश्च सर्वांशप्रमाविषयत्वाभावात् । न च तथाऽपि नृशृङ्गमसच्छशशृङ्गं नास्तीत्यादिसर्वांशप्रमाविषयत्वादतिव्याप्तिप्रत्यापत्तिः । सत्त्वेन सर्वांशप्रमाविषयत्वं लक्षणमित्यर्थात् । अत एव 'असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिः' इत्यन्यथाप्रतीतिर्विवेचिताऽऽचार्यसूर्येणेति मन्तव्यम् । तृतीयलक्षणे प्रवृत्तिपदेन 'पयोऽम्बुवच्चेत्तत्रापि' इति सूत्रदिशाऽचेतनसाधारणस्वकर्तृकव्यापारमात्रविवक्षायां साधारण-त्वम् । सर्वस्यापि स्वान्यूनशक्तिकप्रवृत्तिसहकारिकप्रवृत्तित्वेन नासम्भवः । श्रीतत्त्वादिप्रवृत्तेरपि 'यां यां परेश उरुधैव करोति लीलां तां तां करोत्यनु तथैव रमाऽपि देवी' इत्यादिना 'प्रकृतिं तु विकारिणीम् । अनुप्रविश्य गोविन्दः' इति स्वान्यूनविषयकप्रमित्याद्यनपेक्षत्वेऽपि यत्किञ्चित्प्रमित्यादिकमादाय लक्षणसम्भवः । लक्ष्याति-रिक्तत्वस्य स्वान्यूनविषयकप्रमित्यादिविशेषणत्वान्नेश्वरे देवदत्तादिप्रमितिमादायातिव्याप्तिः । स्वविषयक-प्रमित्यादिमात्रस्य तत्त्वविवक्षणेऽप्यभेदेऽपि साकाङ्क्षत्वाङ्गीकारान्न दोषः । स्वतन्त्रलक्षणेऽपि लक्ष्यातिरिक्तेति स्वान्यूनविषयकप्रमित्यादेर्विशेषणान्नासम्भवः । अत एव छान्दोग्येऽप्रवृत्तीति पराप्रवर्त्यत्वं लक्षणत्वेनोक्तमिति रहस्यम् । वस्तुतस्तु स्वरूपसत्त्वस्य प्रमितेः सर्जनादिप्रवृत्तेश्च भगवत्स्वरूपत्वेनेतरानधीनत्वमेव । अधीनत्वं चान्यदेव यथेष्टविनियोगयोग्यत्वादिरूपम् । न सापेक्षत्वमात्रम् । अतीतादिविषयकस्यासद्विषयकस्य च ज्ञानादेस्तत्सापेक्षत्वेन तदधीनत्वे तत्र स्वामित्वापत्तेः । सर्जनस्य सृज्याधीनत्वेऽन्योन्याश्रयतापत्तेश्च । अत्रोक्तं स्वाधीनत्वमभेदे स्वस्वामिभावोपगमेऽप्यनतिव्याप्तये लक्ष्यान्यानधीनत्वरूपमेवेत्यवधेयम् । अत्र भगवतः सृष्ट्याद्यष्टके पञ्चकाभावादवशिष्टत्रितयानपेक्षत्वमेव लक्षणघटकम् । अन्यस्य तु यद्यपि यथायथं सृष्ट्याद्यष्टके परापेक्षत्वं लक्षणं विवक्षितुं शक्यम् । अत एवात्र 'सृष्टिस्थितिक्षययतिप्रकाशावृतिबन्धनम्' इत्यादिना यथायथं परापेक्षां वक्ष्यति । तथाऽपि तत्त्वसङ्ख्याने ब्रह्मलक्षणवैलक्षण्यसिद्धये तावदेवोक्तमिति ध्येयम् ।

केचित्तु स्वनिष्पत्तिस्वप्रमितिस्वप्रवृत्त्यन्यतमेषु परानपेक्षत्वमित्यर्थः। निष्पत्तिशब्देन स्वरूपलाभः । प्रमितिपदेन विशिष्य स्ववृत्तियावद्धर्मप्रकारकयथार्थज्ञानं विवक्षितम् । कार्यप्रपञ्चस्य स्वनिष्पत्त्यादित्रितये परापेक्षत्वात्तदन्यस्य चेतनस्याचेतनस्य वा स्वप्रमितौ प्रवृत्तौ च परापेक्षत्वात् । अव्यक्ततत्त्वस्यापि स्ववृत्तियावद्धर्मवत्तया स्वतन्त्र-विष्णुप्रमितिविषयत्वात्तत्प्रवृत्तिविषयत्वाच्च परापेक्षता । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' **(व्या.टि.)** इति श्रुतेः । 'अनुकृतेस्तस्य च' इति सूत्राच्च । स्वतन्त्रविष्णौ तु नैवम् । तस्य स्ववृत्त्यशेषधर्मवत्तया स्वान्यप्रमित्यविषयत्वात् । अन्यप्रवृत्त्यविषयत्वाच्चेति नातिप्रसङ्ग इति वदन्तीति त एव पक्षान्तरं पपक्षुः । वस्तुतस्तु परतन्त्रलक्षणे प्रमित्यादिवन्निष्पत्तेरपि वियन्नयन्यायेन पराधीनविशेषावाप्तिरूपायाः सार्वत्रिकत्वेन

पृथगेव लक्षणत्वं सुवचमिति रहस्यम्। अत्र श्रुतिर्नैयायिकेष्टां गुणाष्टककाष्ठां निरसिसिषुरधिकान् वक्ति। **स्वातन्त्र्य-शक्तीत्यादिना** । तत्र स्वातन्त्र्यं निरुक्तम्। परानभिमतां शक्तिं निर्वक्ति- **कार्योत्पत्त्यादीति ॥** आदिपदेन क्वचित्पूर्वशक्तिप्रतिबन्धोऽपि ग्राह्यः । कारणतावच्छेदकव्युदासायातीन्द्रिय इति । न्यायमतं प्रतिक्षेप्तुमुपक्षिपति- **स्वरूपेति ॥** निरासं प्रतिजानीते-**तन्नेति ॥** परोक्तहेतुमसिद्ध्या दूषयति-**न तस्येति ॥** प्रकृतिविवक्षयैवैतत्।

वस्तुतस्तु सर्वत्रापि शक्तिरुररीकरणीया। तथा हि वह्न्यादौ दाहादिकार्यविशेषहेतुतया मणिमन्त्रादि-प्रतिबध्यतया च कारणनिष्ठो विशेषोऽङ्गीकरणीयः। न च कार्यवैजात्यसिद्धकारणवैजात्येनान्यथासिद्धिः। सजातीयसामग्र्याऽपि सति प्रतिबन्धे कार्यानुत्पत्तेः । न च प्रतिबन्धकाभावेनान्यथासिद्धिः । उत्सर्गापवाद-भावाभावप्रसङ्गेन तस्याकारणत्वात् । न चोत्तेजकाभावविशिष्टमण्याद्यभावेनान्यथासिद्धिः । दत्तोत्तरत्वात् । विशिष्टस्य शुद्धानतिरेकादिति वदता मणिकृता विशिष्टाभावनिरासात् । अतिरेकेऽपि कारणान्तरस्वीकारा-पत्तिश्च । धर्मिकल्पनातो धर्मकल्पनाया ज्यायस्त्वाच्च । दावदहनदग्धवेत्रबीजस्य कदलीकाण्डजननशक्तिपरित्यागे पूर्वत्र विशिष्टाभावकारणत्वमपरत्र विशिष्टकारणमिति द्वैविध्यविकल्पनाप्रसङ्गेन गौरवाच्च। अनन्तविशिष्टाभाव-कल्पने च तस्य प्रागभावाद्यन्यतमत्वेन कारणत्वकल्पनेऽवच्छेदकगौरवम् । तत्प्रयोजकतया विशेषणाद्यन्य-तमाभावकल्पनं चेत्यतिगौरवम् । शब्दशक्तिस्थले आधेयशक्तिस्थले न विशिष्टाभावसम्भवोऽपीत्यलम्। स च भावो विधिमुखप्रत्ययवेद्यत्वात्, घटवत्। स च न द्रव्येऽन्तर्भवति, अगुणित्वाद्धर्मिपारतन्त्र्याच्च । नवस्व-नन्तर्भावाच्च । न तावत्पृथिवी । गन्धाभावात्पाकजरूपाभावाच्च । न जलम् । शीतस्पर्शाभावादभास्वरशुक्लाभा-वाच्च । नापि तेजः । उष्णस्पर्शाभावाद्भास्वरशुक्लाभावाच्च । नापि वायुः । त्वाचस्पर्शाभावात्सदागत्यभावाच्च । नाऽकाशम् । शब्दाभावाच्छिद्रत्वाभावाच्च। विभुत्वाभावाच्च। अत एव न कालदिशौ। परत्वापरत्वासमवायि-कारणसंयोगानाधारत्वाच्च। नापि मनः । अणुत्वाभावात् । सर्वोपलब्धिसाधनत्वाभावाच्चेति । नापि गुणे । चतुर्विंशत्यन्यत्वात् । 'अहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इत्यादिना ज्ञानेऽप्य-ज्ञाननिवृत्तिशक्त्युक्तेः । नापि कर्मणि । चलनात्मकत्वविरहात् । यागादिक्रियास्वपि वृत्तेश्च। नापि जातौ। अनेकसमवेतत्वाभावात्। नित्यत्वाभावाच्च। 'न हि ब्राह्मणस्यौदनं किञ्चन हिनस्ति' इति 'ब्राह्मणो न हन्तव्यः' इति 'ब्राह्मणम् उद्धरेत्' इति 'आपः शुन्धन्तु मैनसः' इति, 'हिरण्यवर्णाः शुचयः पावकाः' इति ब्राह्मणत्वादिजातावहन्यत्वपावकत्वादिशक्त्युक्तेश्च। नापि विशेषे। अनित्येऽपि वृत्तेः। नापि समवाये। असम्बन्धत्वादनेकत्वाच्च । 'पराऽस्य शक्तिर्विविधैव' 'इमांल्लोकानीशत ईशिनीभिः' 'विचित्रशक्तिः' 'इन्द्रो मायाभिः' 'सर्वोपेता च' इति विचित्रतैकत्वश्रुतेः । 'शक्त्या मायाख्यया' इति भागवतोक्त्या मायाशब्दस्य **(व्या.टि.)** शक्तिसञ्ज्ञात्वात् । संमतं चैतच्छाब्दिकानाम् । 'शक्लृ शक्तौ' 'क्षय्यजय्यौ शक्यार्थे' 'आख्यातानामर्थं ब्रुवतां शक्तिधीः सहकारिणी' इति वदताम् । भगवद्गीतायामपि 'शक्नोतीहैव' इत्यादिना प्रयुङ्क्ते । सम्मतं चैतन्मीमांसकानामपि । 'वचनात्त्वयथार्थमैन्द्री स्याद्' इति, 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति वाचनिकविनियोगे मुख्यसामर्थ्याभावेन गौणं ब्रुवताम्। पेठुश्च भट्टपादाः। 'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इति। स च धर्मः पारतन्त्र्यात्सविषयत्वाज्ज्ञानेच्छादिवत्। न चासिद्धिः। 'शक्तिसदोश्च' इति कर्मणि यतो विधानात्। 'कृत्यानां तयोरेव' इति नियमितत्वात्। शक्यार्थ इति प्रयोगाच्च। न च कार्योत्पत्त्याद्यनुकूलत्वमसम्भवि। सोऽहं शक्नोमि वक्तुं शक्नोति तदेव जेतुं नाशक्नुवन्प्राप्तुं शक्नुयुः क्वचिदित्यादिना, भोक्तुं व्रजतीतिवत्क्रियार्थोप-पदविहिततुमुना शक्तेः क्रियार्थत्वनिश्चयात्। तस्माच्छक्तिः पदार्थान्तरमिति सिद्धम् । न्यायमतं निरस्यति- **सुखशब्देनेति ॥ बाधकेति ॥** मुख्यार्थग्रहण इति शेषः । परित्याजकाभावे परित्यागो नोचित इति भावः ।

नैयायिको बाधकमाशङ्कते- **सुखस्येति ॥** दुस्तरां प्रतिबन्दीं दीपयति- **तर्हीति ॥ ज्ञानस्यापीति ॥** अपिना इच्छादेर्ग्रहः । ईश्वरस्येति शेषः। तदुत्तरं समीकरोति- **तर्हीति ॥ क्वेति ॥** पक्षादन्यत्रेत्यर्थः। **सक्लेशमिति ॥** बाधितमित्यर्थः। 'क्लिशू विबाधने' इति धातोः। चिन्ताश्रमसहितमिति वा। **समानमिति ॥** सक्लेशमेव सुखं दुःखाविनाभूतमितरं समानमित्यर्थः । उपलक्षणमेतत् 'को ह्येवान्यात्' इति श्रौतार्थापत्तिसद्भावाच्चेत्यपि ग्राह्यम्। **आद्यग्रहणेनेति ॥** यद्यपि 'शूर वीर विक्रान्तौ' इति धातुं पठन्ति। तथाऽपि शौर्यं पराक्रमः, वीर्य-मारब्धान्तगामित्वमिति भेदो बोध्यः । **अनुभवेति ॥** वीर्यादीनां परपरिगणितगुणविलक्षणतयाऽनुभवसिद्धत्वेन तदन्तर्भावस्तद्विरुद्ध इति भावः। तत्पर इत्युक्त्याऽर्थलब्धे प्रतियोग्यवरत्वे हेतुं समुच्चिनोति- **लक्ष्म्यादीना-मिति ॥** अवधिनिष्ठससीमगुणत्वसहितस्यैवाऽश्रयनिष्ठनिःसीमगुणत्वस्य परत्वे हेतुत्वमिति वा समुच्चयः। सर्गादिशब्दानां क्षरसाधारण्यायार्थभेदमाह- **देहसृष्टिरित्यादिना ॥** 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय' इति श्रुतेः। **मरणमिति**

॥ 'तान्पद्यानुविशति' इति श्रुतेरित्यर्थः । **यतिर्बन्ध इति** ॥ 'यमो बन्धने' इत्युक्त्या धात्वनैकार्थ्यद्योतनार्थाद्यमेः क्तिनि यतिरिति भावः । यतिर्नियतिर्बन्ध इति तत्तात्पर्यं वा । **विधिनिषेधाभ्या-मिति** ॥

ननु नेदं सर्वक्षरसाधारणम् । देवानामनियतत्वेन ब्रह्मणः स्वेच्छानियतत्वेन विधिबन्धविधुरत्वात् । 'अनियता हि देवा ब्रह्मैव स्वेच्छानियतः' इति श्रुतेरिति चेत्सत्यम् । भूम्ना गौणोऽयं व्यपदेश इति गृहाण । वस्तुतस्तु 'विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियतः' इति श्रुतावुच्यमानं मनुष्याणां विधिनियतत्वं वर्णाश्रमादिव्यवस्थयैवानुष्ठेयकर्मवत्त्वम् । देवानां त्वनुष्ठेयानां मध्ये कामचारानुज्ञावन्तः' इति टीकावाक्यादव्य-वस्थितानुष्ठेयवत्त्वमनियतत्वम् । ब्रह्मणस्त्ववश्यकर्तव्यस्वेच्छाविषयत्वं स्वेच्छानियतत्वम् । तथा च देवाना-मनुष्ठेयानां कामचारे विधिबद्धत्वं ब्रह्मणोऽपि स्वेच्छाचरणस्यैव विहितत्वेन विधिबद्धत्वमस्त्येवेति विध्यादि-बन्धोपपत्तिः । यद्वाऽपरोक्षज्ञानिनां मनुष्याणां विधिनिषेधबद्धत्वं नाम क्लृप्तानन्दप्रतिबन्धकविहितकरण-**(व्या.टि.)** निषिद्धकरणत्वम् । देवानां तु प्राप्तव्यप्रतिबन्धसद्भावेऽप्युक्तक्लृप्तानन्दानुभवप्रतिबन्धक-विहिताकरणनिषिद्धकरणरहितत्वमनियतत्वम् । ब्रह्मणस्तु पुण्यजनकस्वेच्छाविषययावद्व्यापारकत्वं स्वेच्छा-नियतत्वम् । सर्वथा विधिबन्धस्य सर्वसाधारण्यान्न दोष इत्यवधेयम् । **ज्ञानोपादनमिति** ॥ ननु नेदं सर्वक्षरसाधा-रणं योगिनामृजूनामनादिनित्यमित्यृजुज्ञानस्य, सादि च तात्त्विकेभ्योऽन्यत्रेति तात्त्विकज्ञानमात्रस्यानादि-त्वोक्तेः । मैवम् । प्रवाहतोऽनादित्वेऽपि प्रवाहव्युत्पादनसम्भवात् । यद्यपि प्रवाहानादित्वं लोकविषये सर्वसाधार-णम् । तथाऽपि ब्रह्मविषयेऽनादित्वमृजूनां तात्त्विकानां च ज्ञानस्यैव । तत्रापि तात्त्विकानां प्रवाहिरूपमुत्पद्यमानं ज्ञानं प्रायेणाज्ञातविषयं संशयादिनिवर्तकं च जायते । ब्रह्मणस्तु प्रायः प्रतिभासितविषयमेव । गुणविशेष-विषयेऽज्ञातविषयमपि क्रमेण वर्धमानमित्युक्तेः । ब्रह्मणस्तु प्रायो नाप्रतिभासितमित्युक्तेश्च । 'जानन्तोऽपि विशेषार्थज्ञानाय' इत्युक्तेश्च । 'ब्रह्मेन्द्ररुद्रादिदेवतानां ज्ञानस्फूर्तिः' इत्यस्याप्राप्तज्ञानलाभ इति टीकायां व्याख्यातत्वाच्च । किञ्चिदप्राप्तलाभश्चेति टीकोक्तेश्च । तदीयश्रवणस्यापि दृष्टार्थत्वावश्यंभावाच्च । विष्णोः प्रीत्यर्थमेवेति विरिञ्चस्य केवलं धर्मकारणमित्युक्तिश्च तिरोहितलाभाभावपरा । संशयनिवर्तकत्वाभावपरा च । इतरेषामिव ब्रह्मणस्तिरोधानसंशययोरप्रसक्तेः । हनुमदादेः संशयाद्युक्तिरपि परकीयसंशयाद्याहरणविषयाऽतः सर्वथा ज्ञानोत्पादनं सर्वक्षरसाधारणम् ।

**आवृतिरविद्येति** ॥ अविद्या च भावरूपा विरिञ्चसाधारणा । दग्धपटायमानत्वेन संशयमिथ्याज्ञान-जननासामर्थ्येऽपि यावत्स्वरूपानन्दानुभवप्रतिबन्धकतयाऽऽवरणस्याऽवश्यकत्वात् । **लिङ्गदेहादीति** ॥ आदिना स्थूलपरिग्रहः । **एकवद्भावश्चेति** ॥ 'सर्वोऽपि द्वन्द्वः' इति वार्तिकादिति भावः । यद्यपि 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इत्युक्तमुक्तिः सर्वसाधारणी । तथाऽपि सात्त्विकासाधारणीं तामाह-**मोक्षणमिति** ॥ मोक्षश्च णश्चेति द्वन्द्वैकवद्भावमभिप्रेत्य व्याचष्टे- **निवृत्तिसहितपरमानन्देति** ॥ 'णस्तु निर्वृतिवाचकः' इति स्मृतेरिति भावः । ननु देहवियोगमात्रस्य क्षरत्वेन तामसानामपि तथात्वात् तत्साधारण्यालाभ इत्यतस्तदर्थं 'मुक्तिस्तु द्विविधा तत्र सुखं नित्यं तथा परम्' इत्यनुव्याख्यानं मनसि निधायाऽह- **एवमिति** ॥ **प्रादुर्भाव इति** ॥ 'कामादितरत्र तत्र चाऽयतनादिभ्यः' इत्यधिकरणोक्तेरित्यर्थः । **मरणाभाव इति** ॥ समनानयन्यायादिति भावः । **आज्ञान्तर्गतिरिति** ॥ 'एतस्य वाऽक्षरस्य प्रशासने गार्ग्याकाश ओतश्च प्रोतश्च' इत्युक्तं सर्वाधारतया भगवदाज्ञयाऽवस्थानमित्यर्थः । अतो नातिप्रसङ्गः । **साक्षात्कार इति** ॥ ज्योतिःशब्दस्य प्रकाशे प्रसिद्धेरिति भावः । नन्वक्षरायेति चतुर्थ्या भवितव्यम्, सम्प्रदानत्वात् । तदविवक्षायामपि षष्ठ्याः आवश्यकत्वादित्यतस्तथा व्याचष्टे- **अक्षरस्येति** ॥ ननु सर्गादिशब्दस्य साधारण्यात्कथमसाधारणार्थलाभ इत्यत आह- **उक्तेति** ॥ श्रुतावुक्तेरित्यर्थः । विधेयेत्यनेनावान्तरभेदेऽपि न शब्दसाम्यभङ्ग इति भावः । **विषयभेदेनेति** ॥ अन्धपङ्गुवदिति भावः । **स्वार्थ इति** ॥ वैभाषिकोऽयं समासान्त इति भावः । **अत्रेति** ॥ उभयशेषतयेति भावः । ब्रह्मादीनां नामग्रहणेन निरासे हेतुमाह- **शैवादीति** ॥ आप्तताप्रतीतिं निराह-**एतेनेति** ॥ श्रुतिस्मृतिविरोधादिति भावः।

**मूलम्-** **'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।**
**अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।**
**अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ।**
**अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे'**
**'यमन्तः समुद्रे कवयोऽवयन्ति तदक्षरे परमे प्रजाः ।**

**यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् ।**
**यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि ।**
**अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम् ।**
**यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ।**
**तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्'**

**'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्', 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखा-दिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत', 'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवी', 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त । विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः' इति 'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः । नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः' इत्यादिश्रुतिभ्यश्च ।**

**(त.मं.)** यं कामय इत्यादिना त्वक्षरस्य सर्वेश्वरत्वं हरेर्महिम्ना तदाधिक्येन तदत्ययं सर्वक्षरात्ययं च साधयति । एतदर्थः तत्वदीपिकायां गुरुभिरभिहितः । यंयं उग्रं कर्तुं कामये तन्तमुग्रं कृणोमि । यंयं ब्रह्माणं कामये तन्तं ब्रह्माणं करोमि इति । इह च तात्पर्यमधिकमवगम्यते । 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः' इत्यादरणीयत्वकथनात् । **रुद्राय हन्तवै धनुरातनोमि** रुद्रं हन्तुमित्यर्थः । अहये हन्तवा उ इतिवत् । **शरुः** संहारशीलः । शृङ् हिंसायामिति धातोः । उ एव । **समदं** सततप्रमदं मोक्षसुखम् । अहम् **अस्य पितरं** ब्रह्माणं मूर्ध्नि सुषुम्नया सुषुवे ।

**अवयन्ति** अवगच्छन्ति । **तदक्षरे** तस्मिन्नक्षरे । **यतः** पराधीनविशेषं प्राप्ता श्रीः । **तोयेन** कर्मणा जीवान् । **भूम्यां** प्रकृत्याम् । **व्यससर्ज** व्यासृजत् । छन्दोभङ्गपरिहारार्थं ह्रस्वत्वम् । 'इन्द्रावरुण वामहम्' इतिवत् । **यत्** परमाक्षरं नियमनार्थं चराचराणि भूतानि विवेश । पुरुषान् पशूंश्च **ओषधीभिः** व्रीह्याद्योषध्यन्तर्यामिरूपैश्च विवेश । अतस्तत्र विशेषसन्निधानम् । **अतो**ऽन्यत् **परं** विशिष्टं नास्ति । अथवा **अन्यत्** जगत् अतः **परं** विशिष्टं न । किन्तु एतत्परात् परम् **अक्षरं** प्रति **यद्** गच्छत् । प्रळये मुक्तौ च **यदव्यक्तं** सूक्ष्मं ब्रह्मैकमपि विशेषेणानन्तरूपम् । **विश्वं** पूर्णम् । **तमसः परस्तात्** प्रकृतेर्बहिः। प्रकृतिकार्येभ्यो जन्मादिभ्यो बाह्यमित्यर्थः । **ऋतं** शश्वदेकप्रकारम् । **सत्यं** साधुगुणपूर्णम् ।

**अस्य** विष्णोरेषस्य मीळ्हुषो देवस्य हविर्भिः मनसि प्रभरणे हि । वयाः सन् रुद्रो रुद्रियं महित्वं विदे हि । अश्विनौ युवामप्यन्नवर्ती वृत्तिं हविर्भिः प्रभरणे च विष्णोः सकाशादेव अया-सिष्टम् । **मीढ्वान्** समर्थः । **वयाः** बन्धकः । वय बन्धने इति धातोः । **विदे** लेभे । विद लाभ इति धातोः । हविर्भिः प्रभरणे कर्मणा ध्यानेन **प्रभृथं** प्रभरणमिति ।

**विश्वो** वायुः ।

**इदमग्रे** अस्मादग्रे ।

**टीका-** एवं क्षराक्षरशब्दार्थकथनपूर्वकं सामान्यतस्तत्परत्वं विष्णोः श्रुतिपुराणवाक्याभ्यां प्रदर्शि-तम् । सम्प्रति ताभ्य एव तत्तद्दर्शनाधिकृताभ्यः शक्त्यादिदेवताभ्यो विष्णोः परत्वं विशेषतः श्रुतिभिरुपपादयति- **यं कामय इति**

।। **महालक्ष्मीवाक्यमेतत्** । अहं यं यमुग्रं रुद्रं कर्तुं कामये तं तमुग्रं **कृणोमि** करोमि । 'व्यत्ययो बहुलम्' इति विकरणव्यत्ययः । तथा तं ब्रह्माणम्, तमृषिं, तं **सुमेधां** सुमेधसं करोमि । अहं **शरवे** हिंसकाय । पञ्चममुखच्छेदाद् ब्रह्मद्विषे रुद्राय द्वितीयार्थे चतुर्थी । एवम्भूतं रुद्रम् । **हन्तवा उ** हन्तुमेव न तु भीषयितुम् । **धनुरातनोमि** विस्तारयामि । अहं **जनाय** जनस्य **समदं** सम्मदं हर्षं करोमि । अहं द्यावापृथिव्युपलक्षितान् सर्वानूर्ध्वाधोलोकान्धार-णायाऽविवेश । विशेः 'छन्दसि लुङ्लङ्लिटः' इत्यपरोक्षेऽपि लिट् । अहम् **अस्य** जगतः **पितरं** ब्रह्माणं **मूर्धन्** मूर्धनि सर्वोत्कृष्टतया **सुवे** जनयामि । न केवलं पदे स्थापयामि । एवम्भूताया मम **योनिः** कारणभूतः समुद्रे अप्स्वपामन्तस्तिष्ठति । स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा 'आपो नाराः' इत्यादिनोक्तं तदर्थमेवाऽह । अत्र श्रिया ब्रह्मादीनां सर्वेषा-मात्माधीनत्वमभिधाय स्वात्मनोऽपि नारायणाधीनत्वमुक्तम् ।

**यमन्तस्समुद्रे** समुद्रस्यान्तः स्थितम् । **कवयो** ज्ञानिनोऽपि **अवयन्ति** ईषदेव जानन्ति । यस्मिन् **तदक्षरे** तस्मिन्नविनाशिनि परमे प्रजा अधीनाः । जगतः **प्रसूती** प्रसूतिर्ज(नित्री)नयित्री लक्ष्मीः **यतो** यस्मात् **प्रसूता** उत्पन्ना । यच्च वस्तु **तोयेन** तत्तत्कर्मणा स्ववीर्येण वा तोयोपलक्षितैर्भूतैर्वा **भूम्यां** पृथिव्यां पृथिव्यादिषु लोकेषु जीवान् **व्यससर्ज** विससर्ज विविधं ससर्ज । यच्चौषधीभिस्सहितान् पुरुषान् पशूंश्च चराचराणि भूतानि प्रेरणाय विवेश । चराचराणि भूतानीत्यनेनैव सिद्धे यज्ञाङ्गत्वादिना विशिष्टानामोषध्यादीनां ग्रहणाय पुनर्वचनम् । अतो यस्मात् **परम्** अतिशयेनान्यद्वस्तु **अणीयसम्** अणीयो नास्ति । यच्च **परात्परम्** उत्कृष्टादुत्कृष्टम् । **महतो** महापरिमाणादपि **महान्तं** महत् । यद् **एकं** केवलम् । **अव्यक्तम्** अतीन्द्रियम् । **विश्वं** पूर्णम् । **तमसः** प्रकृतेरज्ञानाद्वा **परस्तात्** तदतिक्रम्य स्थितम् । तदेव **ऋतं** यथार्थज्ञानरूपम् । **तदु** तदेव **सत्यं** ज्ञानपूर्वक्रियावत् । तदेव कवीनां मते परमं ब्रह्मेति । अत्रापि स्फुटमभिमतार्थः प्रतीयते ।

**अस्य** प्रसिद्धस्य **देवस्य** द्योतनादिगुणवतः । **मीळ्दुषो** भक्ताभिलषितवर्षितुः । **एषस्य** इच्छारूपस्य सत्यकामस्येति यावत् । विष्णोः **प्रभृथे** प्रभरणे पूजने कृते तत्प्रसादात्, **वया** वय बन्धने असुन्, अहङ्काराभिमानित्वेन जीवानां बन्धको रुद्रः, **रुद्रियं महित्वं** रौद्रं महिमानम्, **विदे** विविदे लब्धवान् । **हि** प्रसिद्धमेतत् । हे अश्विनौ, युवामपि विष्णोः प्रसादादेव **इरावद्वर्तिः** अन्नवद्वर्तनं, समस्तभोगवत्पदम्, **यासिष्टम्** अयासिष्टं लब्धवन्तौ स्थ इति रुद्रादीनां भगवत्प्रसा-दाधीना पदप्राप्तिरुच्यते ।

**मनसः** परमपुरुषस्य । **चक्षोः** चक्षुषः । 'प्रकृत्यान्तःपादमव्यपरे' इति प्रकृतिभावः ।

**आसीत्** महाप्रलये । **मुनिः** मौनी । **ततः** तस्य चिन्तनात् । **एते** वक्ष्यमाणाः । **विश्वो** वायुः ।

**इदमग्रे**ऽस्य जगतोऽग्रे । इत्यादिश्रुतिभ्यश्च विष्णोः समतीतक्षराक्षरत्वं सिद्धम् ।

**(र.टि.)** अवेत्युपसर्गार्थमाह- **ईषदेवेति** ।। यस्मिंस्तदक्षर इति, यच्च वस्त्वित्यत्र चानुवादत्वनिर्वाहार्थं यच्छब्दोऽ-ध्याहृत इति बोद्धव्यम् । **अतो यस्मादिति** ।। यस्मिंस्तदक्षरवद्यच्छब्दाध्याहारेणात इत्येतद् ब्रह्मवाचकत्वेन योजितमिति द्रष्टव्यम् । परशब्दस्योत्तमार्थत्वे तन्निषेधस्य परात्परमित्यनेनार्थतो गतार्थत्वाद्भिन्नार्थत्वे चान्यदि-**(र.टि.)** त्यनेन पुनरुक्तिप्रसङ्गात्तस्यार्थान्तरमाह- **अतिशयेनेति** ।। इच्छारूपत्वस्येतरचेतनसाधारणतया तस्यैवैष इतिशब्दवाच्यत्वं कथमित्यत आह- **सत्यकामस्येतीति** ।।

**(रा.टि.)** अस्मच्छब्दार्थव्यक्त्यर्थमाह- **लक्ष्मीवाक्यमिति** ।। 'अहमष्टौ वागम्भ्रणी तुष्टावाऽत्मानम्' इत्यनु-क्रमणिकोक्तेरम्भ्रण्याश्च 'श्रीर्भूर्दुर्गाम्भ्रणी ह्रीश्च महालक्ष्मीश्च दक्षिणा' इति श्रुत्या लक्ष्मीत्वादिति भावः । **उग्रं** रुद्रम् । 'उग्रः कपर्दी श्रीकण्ठः' इत्यमरोक्तेः । **विकरणव्यत्ययः** उविकरणस्य श्नुविकरणमित्यर्थः । **हिंस-कायेति** ।। 'शॄ हिंसायाम्' इत्यत उप्रत्ययो गुणश्चेति भावः । ब्रह्मद्विषां दैत्यानां शत्रव इत्यन्यत्र व्याख्या । **हन्तुमेवेति** ।। 'तुमर्थे सेसेनसे' इत्यादिना तुमर्थे तवैप्रत्ययः । उ एवेत्यर्थः ।

**इत्यादिनेति ॥**

‘आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥’

इति भाष्योक्तस्मृत्येत्यर्थः । अवेत्यस्यापकर्षवाचित्वादवज्ञानार्थत्वनिरासाय हरेरुत्कर्षोक्तिपरत्वलाभाय चाऽह- **ईषदेव जानन्तीति ॥** अन्यथा तदंशोक्तिर्व्यर्था स्यादिति भावः । फलितार्थमाह- **अधीना इति ॥** तद् ब्रह्मेति विध्यन्वयायानुवादत्वसिद्धये यत्पदमाकृष्यार्थमाह- **यच्च वस्त्विति ॥** परमित्यस्यार्थः- **अतिशयेनेति ॥ अभिमतार्थ इति ॥** क्षराक्षरातीतत्वार्थः । देवपदार्थो द्योतनादिगुणवत इति । **वर्षितुरिति ॥** ‘मिह सेचने’ इति धातोः योग्यतया भक्तेत्याद्युक्तिः । तृन्नन्तयोगाद् द्वितीया । **इच्छारूपस्येति ॥** ‘इषु इच्छायाम्’ भावे घञिति भावः । कोऽतिशयोऽनेनेत्यत आह- **सत्यकामस्येति ॥ यासिष्टमिति ॥** ‘या प्रापणे’ लुङ् द्विवचनं, अडभावश्छान्दसः अमाङ्योगेऽपीत्युक्तेरिति भावेनाऽह- **लब्धवन्तौ स्थ इति ॥** ननु सूर्यो अजायतेति कथम्? ‘एङः पदान्तादति’ इति पूर्वरूपेण भाव्यत्वादित्यत आह- **प्रकृत्येति ॥** ऋक्पादमध्यस्थ एङ् प्रकृत्या भवति अति परे । नतु वकारयकारपराति परे एङ् प्रकृत्या भवतीत्यर्थः । असाधारण्यलाभाय वा न ब्रह्मेत्यादिघटनाय वाऽऽह- **आसीन्म-हाप्रलय इति ॥** मननशीलार्थत्वभ्रमनिरासायाऽह- **मुनिर्मौनीति ॥** साकाङ्क्षत्वादाह- **विष्णोरित्यादि ॥**

**(श्री.टि.) सम्प्रति** इदानीम् । **तत्तद्दर्शनाधिकृताभ्य इति ॥** शाक्तादितत्तद्दर्शनप्रतिपाद्याभ्य इत्यर्थः । **महालक्ष्मीवाक्यमेतदिति ॥** ‘अम्भ्रणी वागात्मानं तुष्टाव’ इत्यनुक्रमणिकावचनादिति भावः । **अम्भ्रणी** महालक्ष्मीः । ननु कृणोमीति कथम् । ‘डु कृञ् करणे’ ञकारोऽनुबन्धार्थः । कृ इत्येव धातुः । अस्माल्लटि तस्योत्तमपुरुषे मिप् इत्यादेशे पकारलोपे उविकरणे, तस्मिन् परतः ऋवर्णस्य गुणे रपरत्वे कर उ मि इति जाते उकारस्य ओकाररूपे गुणे करोमीति वक्तव्यत्वादित्यत आह- **व्यत्ययो बहुलमितीति ॥** इतिसूत्रेणेत्यर्थः । **विकरणव्यत्यय इति ॥** उविकरणस्य श्नुविकरणत्वेन व्यत्यय इत्यर्थः । तथा च कृधातोर्लटि तस्य मिपि श्नुविकरणे ‘लशकतद्धिते’ इति शकारलोपे कृ नु इति स्थिते नस्य णत्वे उकारस्य ओकाररूपे गुणे कृणोमीति **(श्री.टि.)** रूपमिति भावः । **हिंसकायेति ॥** शॄ हिंसायामिति धातोरिति भावः । कथं हिंसकत्वमित्यत आह- **पञ्चममुखच्छेदादिति ॥** ब्रह्मणः पञ्चममुखच्छेदादित्यर्थः । अत एव ब्रह्मद्विष इति योज्यम् । **द्यावापृथिव्युपलक्षितानिति ॥** द्युशब्देनोपलक्षिता ऊर्ध्वलोकाः । पृथिवीशब्देनोपलक्षिताः पातालाद्या अधोलोका इति द्रष्टव्यम् । ननु ‘परोक्षे लिट्’ इति सूत्रेण परोक्षार्थ एव लिटो विधानात्स राजा तदा बभूवेत्यादिप्रयोगदर्शनात् प्रकृते चाहमिति स्वकर्तृकावेशनस्यापरोक्षत्वेन परोक्षत्वाभावादाविशामीति वक्तव्यं न त्वाविवेशेति तत्राऽह- **छन्दसीति ॥** परोक्षार्था लुङादयस्त्रयः छन्दस्यपरोक्षेऽपि भवन्तीति सूत्रार्थः ।

तथा च च्छन्दस्त्वादत्रापरोक्षेऽप्याविवेशेति लिडुपपत्तिरिति भावः । **समुद्रे अप्स्विति ॥** अत्र समुद्रशब्दः अपाङ्ग्रातपर इत्यवधेयम् । **अनुचितमिति ॥** ‘गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि’ इति वचनादिति भावः । **आपो नारा इत्यादिनेति ॥**

‘आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥’

इति प्रमाणेनेत्यर्थः । ‘नरोऽनाशात्परो हरिः’ इति द्वितीयस्कन्धतात्पर्योक्तेर्नरो भगवान् तत्सूनवस्तत्पुत्रा इत्यर्थो द्रष्टव्यः । अवेत्युपसर्गार्थमाह- **ईषदेवेति ॥** यस्मिंस्तदक्षर इत्यत्र यच्च वस्त्वित्यत्र चानुवादत्वसिद्ध्यर्थं यस्मिन् यच्चेति यच्छब्दो अध्याहृत इत्यवधेयम् । तोयशब्दस्य ‘तोयमापः कर्माणि’ इति कर्मनामसु पाठादाह- **कर्मणेति ॥ स्ववीर्येण वेति ॥** स्वसामर्थ्येन वेत्यर्थः । तोयशब्दस्य वीर्यनामस्वपि पाठादिति भावः । विविधमिति वीत्यस्यार्थः । अससर्जेति लिटच्यप्यडागमः छन्दस्त्वादित्यवधेयम् । **सिद्धेरिति ॥** ओषधीनां पुरुषाणां पशूनां च चराचरान्तर्गतत्वादोषधीभिरित्यादिपुनर्वचनं व्यर्थमित्यर्थः । **ओषध्यादीनां** सोमलतादीनाम् । आदिपदेन गवादीनां ग्रहणम् । तेषां विशिष्टत्वोपपादनाय यज्ञाङ्गत्वादिनेत्युक्तम् । आदिपदेन गवादीनां क्षीरद्वारेण देवता-पूजाङ्गत्वं ग्राह्यम् । ‘यस्मिंस्तदक्षरे’ इतिवदनुवादत्वसिद्ध्यर्थं यच्छब्दाध्याहारेणात इत्येतद्ब्रह्मवाचकत्वेन योजयति- **अतो यस्मादिति ॥** अतः परं नान्यदित्यत्र परशब्दस्योत्तमार्थत्वे तन्निषेधस्य परात्परमित्यनेनार्थतो गतार्थत्वा-दन्यार्थत्वेऽन्यदित्यनेन पुनरुक्तिप्रसङ्गादाह- **परमतिशयेनेति ॥ उत्कृष्टादिति ॥** उत्तमाद् ब्रह्मादेरित्यर्थः । ‘विश्वं समस्तं पूर्णश्च’ इत्यभिधानादाह- **विश्वं पूर्णमिति ॥** ‘ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः’ इति प्रमाणानुसारेण ऋतसत्यशब्दार्थावाह- **यथार्थज्ञानरूपमित्यादिना ॥ ज्ञानपूर्वक्रियावदिति ॥** ज्ञानपूर्वकं कर्तेत्यर्थः । **अभिप्रेतार्थ इति ॥** रमादिदेवताभ्यो विष्णोः परमत्वरूपोऽर्थ इत्यर्थः ।

'इषु इच्छायाम्' इति धातोरकारप्रत्यये इकारस्य एकाररूपे गुणे च सति निष्पन्न एषशब्द इच्छावाची-त्यभिप्रेत्याऽह- **एषस्येच्छारूपस्येति** ।। इच्छारूपत्वस्य सकलचेतनसाधारणत्वादाह- **सत्यकामस्येतीति** ।। **असुन्निति** ।। तथा च वय अस्मादसुन्प्रत्यये उन् इत्यस्य लोपे वयस् इति सकारान्तप्रातिपदिकसिद्धिः। पश्चात् सुप्रत्यये तस्य लोपे 'अत्वसन्तस्य चाधातोः' इति सूत्रेणासन्तत्वाद्दीर्घे वयास् इति स्थिते सस्य रुत्वे विसर्गे च **(श्री.टि.)** वयाः इति भवतीति द्रष्टव्यम्। **लब्धवन्तौ स्थ इति** ।। इदानीं प्राप्तवन्तौ स्थ इत्यर्थः। मनसो जात इत्यत्र कर्त्रप्रतीतेराह- **परमपुरुषस्येति** ।। परमपुरुषस्य यन्मनस्तस्मादित्यर्थः। चक्षोरित्येतद् व्यत्ययेनोका-रान्तमित्यभिप्रेत्याऽह- **चक्षोः चक्षुष इति** ।। ननु 'चक्षोः सूर्यो अजायत' इति सन्ध्यभावः कथम्? सूर्यो अजायतेत्यत्र 'एङः पदान्तादति' पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यादिति सूत्रेण अकारस्य पूर्वरूपे सूर्योऽजायतेति सन्धिस्स्यादित्यत आह- **प्रकृत्यान्तःपादमिति** ।। पादस्यान्तरन्तःपादं ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् न सन्धिं यातीति यावत्। अति अकारे परे न तु वकारयकारपरे अतीत्यर्थः। 'सुजाते अश्व-सूनृते। उपप्रयन्तो अध्वरम्' इत्युदाहरणम्। तथा चात्र वकारयकारपरस्याकारस्य परतोऽभावेन केवलस्याकारस्यैव विद्यमानत्वात्तस्मिन् परे ओकाररूपस्य एङः प्रकृतिभावे सति पूर्वरूपाप्राप्त्या सूर्यो अजायतेति युक्तमिति भावः। मूले **समचिन्तयदिति** ।। एते जायन्ताम् इत्यैच्छदित्यर्थः। **चिन्तनादिति** ।। इच्छाविशेषादित्यर्थः। इदमित्येतद्व्यत्ययेन षष्ठ्यर्थमित्यभिप्रेत्याऽह- **अस्य जगतोऽग्र इति** ।।

**(पां.टि.) तत्तद्दर्शनाधिकृताभ्य इति** ।। शैवादिदर्शने सर्वोत्तमतया प्रतिपादितशिवादिदेवताभ्य इत्यर्थः। **महालक्ष्मीवाक्यमेतदिति** ।। 'अम्भ्रणी वागात्मानं तुष्टाव' इति वचनानुसारेण 'यं कामये' इत्यादिवाक्य-स्याम्भ्रणीवाक्यत्वात्तस्याश्च लक्ष्मीमूर्तित्वाद् 'यम्' इत्यादिवाक्यस्य लक्ष्मीवाक्यत्वमिति भावः। ननु कृञ्धातोः उविकरणतया 'तनादिकृञ्भ्य उः' इति सति तस्मिन् तत्परतो धातोर्गुणे रपरत्वे निष्पन्नकरुशब्दस्य मिपि परतो गुणे सति करोमीत्येव भवितव्यम्। तत्कथं श्रुतौ कृणोमीति निर्देश इत्यत आह- **व्यत्यय इति** ।। व्याख्यातमेतदधस्तात्। ततश्च कृञ उविकरणस्यापि व्यत्ययेन श्नुविकरणतया सति तस्मिन् परतः श्नोः ङिन्निमित्तकगुणनिषेधकत्वप्राप्त्या निष्पन्नकृणुशब्दस्य मिपि परतो गुणे सति कृणोमीति रूपसिद्धिरकलङ्केति भावः। **हिंसकायेति** ।। 'शॄ हिंसायाम्' इति स्मरणादिति भावः। रुद्रस्य ब्रह्मद्विट्त्वं कथमित्यतः निमित्तकथनेन तदुपपादयति- **पञ्चमेति** ।। **द्वितीयार्थ इति** ।। 'सुपां सुलुक्' इति स्मरणादिति भावः। एवशब्दव्यावर्त्यं दर्शयति- **न त्विति** ।। जनायेति षष्ठ्यर्थे चतुर्थीति भावेनाऽह- **जनस्येति** ।। **हर्षमिति** ।। 'मदी हर्षे' इति स्मरणादिति भावः। ननु 'परोक्षे लिट्' इति परोक्षे लिड्विधानात्प्रकृते कथमहमाविवेशेति अपरोक्षे लिडित्यतः 'छन्दसि लुङ्लङ्लिटः' इत्यपरोक्षेऽपि लुङादीनां विधानादपरोक्षेऽपि तदुपपत्तिरित्याह- **छन्दसीति** ।। **अनु-चितमिति** ।। 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इति स्मरणादिति भावः। अवयन्तीत्यत्रावेत्युप-सर्गार्थकथनम्- **ईषदेवेति** ।। अनुवादत्वसिद्ध्यर्थं यच्छब्दमध्याहृत्य व्याचष्टे- **यस्मिंस्तदक्षर इति** ।। एवमुत्तरत्रापि यच्छब्दाध्याहारस्य प्रयोजनं द्रष्टव्यम्। **व्यससर्जेति** ।। 'बहुलं च्छन्दस्यमाङ्योगेऽपि इति वचनाल्लिटचपि अडागम इति भावः। परशब्दस्योत्तमार्थत्वे तन्निषेधस्य परात्परमित्यनेनार्थतो गतार्थत्वाद्भिन्नार्थत्वे चान्यदित्यनेन पुनरुक्तिप्रसङ्गात्तस्यार्थान्तरमाह- **अतिशयेनेति** ।। **अभिमतोऽर्थ इति** ।। क्षराक्षरविलक्षणत्वरूपोऽर्थ इत्यर्थः। **इच्छारूपस्येति** ।। 'इषु इच्छायाम्' इति स्मरणादिति भावः। नन्विच्छारूपत्वस्य सर्वजीवसाधारण्यात्कथमनेन **(पां.टि.)** निमित्तेनास्य शब्दस्य परमात्मन्येव प्रवृत्तिरित्यतस्तात्पर्यमाह- **सत्यकामस्येति यावदिति** ।। **परमपुरुषस्येति** ।। 'सहस्रशीर्षा पुरुषः' इति तस्यैव प्रकृतत्वादिति भावः। ननु 'चक्षोः सूर्यो अजायत' इति कथम्। 'एङः पदान्तादति' इति पूर्वरूपे सति 'सूर्योऽजायत' इत्येव भवितव्यत्वादित्यत आह- **प्रकृत्येति** ।। अत्र च 'एङः पदान्तादति' इत्यतोऽनुवर्तमानं एङः इति पञ्चम्यन्तमर्थात्प्रथमया विपरिणम्यते। अन्यस्य कार्यिणोऽसम्भवात्। अयमर्थः-पादस्यान्तः अन्तःपादम्। ऋक्पादमध्यस्य एङ्प्रकृत्या स्यात्सन्धिरूपं विकारं न याति अतिपरे। न तु वकारयकारपरेऽति परतः। तथा चात्रावकारयकारपरस्यातः परस्य सत्त्वादेङः प्रकृतिभावान्न सन्धिरिति भावः। इदमिति नपुंसकस्य कथं पुंलिङ्गवासुदेवशब्देन सामानाधिकरण्येनान्वय इत्यतः नेदंशब्दस्य वासुदेवशब्देनान्वयः इत्यतो नानुपपत्तिरिति योजयति- **इदमग्र इति** ।। इदं चैकपदम्। तस्यार्थमाह- **अस्य जगतोऽग्र इति** ।।

**(व्या.टि.) महालक्ष्मीवाक्यमिति** ।। यद्यपि 'अहमष्टौ वागम्भ्रणी तुष्टावाऽत्मानं द्वितीया जगती' इत्यनुक्रम-णिकातो वागम्भ्रणी ऋषिरिति प्रतीयते। तथाऽपि 'श्रीर्भूर्दुर्गाऽम्भ्रणी ह्रीश्च महालक्ष्मीश्च दक्षिणा' इति प्रथम-बृहद्भाष्योदाहृतपैङ्गिश्रुत्याऽम्भ्रण्याः महालक्ष्मीत्वस्योक्तत्वान्महालक्ष्मीत्युक्तमित्यवधेयम्। 'श्रियः स्वद्दष्टे सूक्तन्तु' इति तन्त्रसारोक्तेश्चेति। **यं यमिति** ।। 'क्रियासमभिहारे द्वे वाच्ये' इति सर्वोपसंहाराय द्विर्भावावश्य-कत्वात्तत्पदे दर्शनाच्च तथा व्याचष्टे। **रुद्रमिति** ।। 'उग्रो रुद्रः

प्रसिद्धत्वात्सूचितत्वाच्चास्यार्थस्य' इति भाष्ये स्पष्टम् । ननु 'तनादिकृञ्भ्य उः' इत्युविकरणस्य भाव्यत्वेन कथं कृणोमीत्यत आह- **व्यत्यय इति ।। सुमेधस-मिति ।।** 'नित्यमसिच्प्रजामेधयोः' इत्यसिजागमाभावः छान्दस इति भावः । **शरवे हिंसकायेति ।।** शृणातेरु-प्रत्ययो गुणश्चेति भावः । **पञ्चममुखच्छेदादिति ।।** नन्वेतदयुक्तम् । ब्रह्मणश्चतुर्मुखत्वप्रसिद्धिविरोधेन पञ्चम-मुखाभावात् । तत्सत्त्वेऽपि देवोत्तमस्य रुद्रस्य पितृद्रोहबुद्ध्यसम्भवात् । 'अहिंसा सत्यमक्रोधः' इति गीताया-महिंसाद्रोहादीनां देवसम्पदत्वावेदनात् । अनभिभवसूत्रे तदनभिभवोक्तेश्च । पितृद्रोहस्य महापापत्वाच्च । 'प्रायः सतां न मनः पापमार्गे' इति 'धर्मस्वरूपचित्तत्वात्' इति च सज्जनमात्रस्य पापे मनोऽभावोक्तेः । 'कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्' इति ततोऽवराणामप्यर्जुनादीनां पापभीरुत्वोक्त्या तस्य कैमुतिकन्याय-सिद्धत्वेन जिघांसाभावनाया अप्यभावादिति चेदुच्यते । अस्त्येव ब्रह्मणः पञ्चमुखत्वम् ।

'हयमुखसमरे तु पञ्चमं वेधसो मुखम् ।
दुःशब्दमकरोत्तेन लक्ष्मीरुद्वेगमाप्य तु ।
धनुर्दत्त्वाऽथ बाणश्च रुद्रमाज्ञापयत्तदा ।
छिन्धि शीर्षमिदं धातुः स तदैव तथाऽकरोत् ।
ज्वलत्कालानलसमं तन्मुखं रुद्रमाद्रवत् ।
भीतोऽथ शरणं प्राप लक्ष्मीं रुद्रोऽतिविह्वलः ।
**(व्या.टि.)** सा तत्करे कपालं तद्दत्वा विष्णुपदाम्बुधिः ।
शमयामास तत्पापं धौतपाप्मा ततोऽभवत् ।।'

इति विष्णुरहस्ये रुद्रस्य ब्राह्मपञ्चममुखच्छेदोक्तेः । न च पाप-मनःक्षोभाभावः । 'मुह्यन्ति यं सूरयः' इति सामान्यतः, विशिष्याष्टमभागवते 'नाहं परायुः' इत्यारभ्य 'यन्मायया मुषितचेतसः' इति रुद्रेणैव सात्त्विका-नामपि भगवदिच्छानियन्त्रितत्वोक्तेः । तत्रैव विष्णुपादोदकेनैव तच्छमनोक्तेश्च । भागवते च

'यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् ।'

इति विष्णुशौचोदकेन शुचित्वोक्तेश्च । न च देवानां पापासम्भवः, 'पुण्यमेवामूनुपगच्छति न ह वै देवान् पापमुपगच्छति' इति श्रुतेरिति वाच्यम् । तस्याः स्वनियम्यपरकीयपापाभावविषयत्वात् । आरब्धपाप-मस्त्येवेत्यनुव्याख्याने, परशुक्लत्रयं स्मृतमित्यन्यत्र च परशुक्लत्रयेतरेषां पापसम्बन्धोक्तेश्च । लोकेऽपि ब्रह्म-शिरःकपालभृत्त्वादेव 'शितिकण्ठः कपालभृत्' इति प्रसिद्धिः । अन्तकत्वप्रसिद्धेश्च । 'रोदेर्णिलुक्च' इति व्याकरणस्मृतेश्च । **द्वितीयार्थ इति ।।** 'सुप्तिङुपग्रह' इति महाव्याकरणादिति भावः । **हन्तुमेवेति ।।** अनेन 'तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः' इति सूत्राद्धातोस्तवैप्रत्यय इत्युक्तं भवति । **भीषयितुमिति ।।** 'भियो हेतुभये' षुगन्तम् । **समदमिति ।।** 'समोवाहिततततयोः' इति परनिमित्तव्यभिचारः छान्दस इत्युक्तं भवति । **छन्दसीति ।।** अनेनापरोक्षे लिड्विधानादहमाविवेशेति युज्यते । **मूर्धनीति ।।** अनेन 'सुपां सुलुग्' इति ङेर्लुगिति सूचितम् । **तिष्ठतीति ।।** अतःशब्दबलादेतदध्या-हृतम् । **अनुचितमिति ।।** 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इति स्मृतेरिति भावः । **आदिनेति ।।** 'महोदधिशयोऽन्तकः' इत्यादेः सङ्ग्रहः । कथमनेन शक्त्यादिभ्यो हरेरुत्तमत्वमित्यतस्तद्भावमाह- **अत्रेत्या-दिना । ईषदेवेति ।।** 'ब्रह्मापि तन्न जानाति ईषत्सर्वोऽपि जानति' इति स्मृतेरिति भावः । **जानन्तीति ।।** इणो गत्यर्थत्वेन ज्ञानार्थत्वादिति भावः । प्रकृष्टा सूतिर्यस्या इति विगृह्य छान्दसं ङीपं प्रपूर्वात्षूङः कर्तरि क्तिचि औणादिके तिककि 'कृदिकाराद्' इति ङीषं वाऽभिप्रेत्य प्रसूतीपदं व्याचष्टे- **जनित्रीति ।।** अन्तर्णीतणि-जयम् । परित्यागबुद्धिं वारयति- **विविधमिति ।। विशिष्टानामिति ।।** प्रशस्तानामित्यर्थः । यज्ञाङ्गत्वं त्वोषधीनां व्रीह्यादित्वेन हविष्ट्वात् । पुरुषाणामपि 'अबध्नन्पुरुषं पशुम्' इत्यादौ हविष्ट्वादन्यत्र कर्तृत्वाच्च बोध्यम् । एवं पशूनामपि वायव्यादीनां हिंस्यानां हविष्ट्वेन, अहिंस्यानां गवादीनां पयोघृतादिहविराधारत्वेन बोध्यम् । तच्च 'वरं वृणै मय्येव' इत्यारभ्य 'तस्मादविसतो भयेन भुञ्जते' इत्यन्तेन प्रसिद्धम् । **प्रकृतेरिति ।।** तमोरूपत्वात्तस्या इति भावः । **अज्ञानादिति ।।** आवरकत्वसाम्यादिति भावः । 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका क्रिया' इति तैत्तिरीयभाष्यमनुसन्दधानो ऋतसत्यपदे व्याचष्टे- **यथार्थेति ।। क्रियावदिति ।।** मत्वर्थीयोऽजिति भावः । **वर्षितुरिति ।।** 'मिह सेचने' इत्यस्मात् 'दाश्वान्साह्वान्मीढ्वांश्च' इसि क्वसुप्रत्ययान्तो निपात इति भावः । **इच्छारूपस्येति ।।** अनेनेषेरचि लघूपधलक्षणो गुण इति सूचयति । 'अविद्येच्छारूपः' इति छान्दोग्यभाष्यम् । **(व्या.टि.)** प्रभृथ इति 'उणादयो बहुलम्' इति थक्प्रत्यय इत्युपेत्य व्याचष्टे- **प्रभरण इति ।। रुद्रियमिति ।।** अनेन 'यज्ञर्त्विग्भ्यां घखञौ' इति प्रकृतिनियमो नेति सूचितम् । विद इत्यत्र अभ्यासलोपः

छान्दस इति भावेनाऽह- **विविद इति ॥ इरावद्धर्तिरन्नवदिति ॥** इरंमदबृहदुक्थमित्यत्र इरया माद्यतीति व्याख्यानात्। **अयासिष्टमिति ॥** 'छन्दस्यमाङ्योगेऽपि' इत्यडभाव इति भावः। ननु 'एङः पदान्तादति' इति पूर्वरूपं स्यादित्यत आह- **प्रकृत्येति ॥ चिन्तनादिति ॥** प्रकृत्यर्थपरामर्शोऽयमिति भावः। इदमित्यव्ययं प्रथमा वेत्युपेत्याऽह- **अस्येति ॥** श्रुतिभ्यः इति पञ्चम्युक्तहेत्वपेक्षितसाध्यांशं पूरयति- **विष्णोरिति ॥**

**मूलम्- 'यस्मात्परं नापरमस्ति किञ्चित्' इत्यत्राप्यपरमस्तीत्येवार्थः। अन्यथा 'तेनेदं पूर्णं ततो यदुत्तरतरं तदरूपमनामयम्' इति वाक्यशेषविरोधात्। तेनेदमित्युक्तमेव तत इति परामृश्यते। अन्यथा 'यस्मात्परं न' इत्युक्तिविरोधात् ॥**

**(त.मं.)** अत्र परापरनिषेधात् कथं सर्वोत्तमत्वमित्यत आह- **यस्मादिति ॥** यस्मात् **परं** विशिष्टं नास्ति। अपरं किञ्चिदस्ति। अधमं तदपेक्षयात्यल्पं जगदस्ति। **अन्यथा** ततोऽधमस्य विश्वस्या-भावे। 'तेन इदं पूर्णं पुरुषेण सर्वम्'इत्यत्र इदमित्युक्तं जगदेव हि तत इति परामृश्यते। ननु पुरुषेण सर्वमिति पुरुषशब्दोक्तो विष्णुस्तत इति परामृश्यते। पुरुषस्य रूपवत्वात् अरूपत्वोक्त्य- सम्भवादित्यत आह- **अन्यथेति ॥** यस्मात्परं नेत्यन्योत्तमतया यच्छब्दोक्तः पुरुषो हि तेनेति परामृश्यते। **अरूपं** प्राकृतरूपरहितम्।

**टीका-** ननु 'यस्मात्परं नापरमस्ति किञ्चित्। यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यस्मिन्मन्त्रे परमात्मनोऽन्यस्य सर्वस्या-सत्त्वमुच्यते। तत्कथं तस्य सर्वोत्तमत्वमुपपद्यते, उत्तमत्वस्य प्रतियोगिसत्तासापेक्षत्वादित्यत आह- **यस्मादिति ॥ अत्रापि** श्रुतौ, यस्मात्परमात्मनः **परम्** उत्कृष्टं वस्तु नास्ति, **अपरम्** अपकृष्टं त्वस्ति, तच्च किञ्चिदल्पमित्येष एवार्थः प्रतिपाद्यते। न तु परापरयोरुभयोरपि प्रतिषेधः। 'यस्मान्नाणीयो न ज्यायोऽस्ति' इतिवदुभयनिषेधोऽर्थः किं न स्यादित्यत आह- **अन्यथेति ॥** यदि परमपुरुषातिरिक्तं किमपि नास्तीत्यस्यार्थः स्यात्तदा तेनेदं पूर्णमिति वाक्यशेषो विरुद्ध्येत। वाक्यशेषे हीदमिति व्यतिरिक्तसद्भावोऽवगम्यते। इदंशब्दार्थस्यासत्त्वे किं तेन पूर्णं स्यात्। तथा, '**ततः** प्रपञ्चाद् **यद्** ब्रह्म **उत्तरतरम्** उत्कृष्टतरम्' इति वाक्यशेषोऽपि विरुद्ध्येत। तत्र तत इति प्रपञ्चस्यावधित्वेनोक्तस्य सत्यताप्रतीतेः। यदि तदेव न स्यात्तदा कुतो ब्रह्मोत्तरतरं स्यात्। यस्मान्नाणीय इत्यत्र तु विरोधाभावान्नञो द्विः प्रयोगाच्चोभयनिषेधोऽङ्गीक्रियते।

ननु ततो यदुत्तरतरमित्यत्र **ततः** पुरुषाद् यदन्यद् उत्तरतरमित्युच्यते। अतः प्रपञ्चमिथ्या-त्वाङ्गीकारेऽपि न वाक्यशेषविरोध इत्यत आह- **तेनेदमिति ॥** इदंशब्देन **उक्तं** विश्वमेव तत इति परामृश्यते। नतु तेनेत्युक्तः परमपुरुषः। नन्वत्र प्रधानतया प्रकृतः परमपुरुष एव परामर्शमर्हति, नाप्रधानतया प्रकृतं विश्वमिति चेत्सत्यम्। तथाऽपि पूर्ववाक्यविरोधादेवमङ्गीकार्यमित्याह- **अन्यथा यस्मादिति ॥** यस्मात्परं नेति पुरुषादुत्कृष्टं निषिद्ध्य ततः पुरुषादन्यदुत्कृष्टतरमिति वचने श्रुतेः पूर्वापरविरोधः स्यात्।

एतेन ततो यदुत्तरतरमिति परमपुरुषादुत्कृष्टतरस्यान्यस्य श्रवणात् कथं तस्य सर्वोत्तमत्वमिति शङ्काऽपि निरस्ता ॥

**(र.टि.) एतेनेति ॥** अनेन तेनेदमित्युक्तमेवेत्यादिवाक्यद्वयमुक्तार्थत्वेनैवाऽवर्तितमिति ज्ञातव्यम्।

**(रा.टि.) अस्मिन्मन्त्र इति ॥** तैत्तिरीयशाखासमानशाखास्थमन्त्र इत्यर्थः। अन्यथा ततो यदुत्तरमिति वाक्यशेषोक्त्ययुक्तेः। **एतेनेति ॥** तत इत्यस्य सोपपत्तिकं प्रपञ्चार्थत्वकथनेनेत्यर्थः।

**(श्री.टि.) उभयनिषेध इति ॥** परमपरं च नेत्युभयनिषेध इत्यर्थः। **इदंशब्दार्थस्यासत्त्व इति ॥** इदंशब्दार्थभूतस्य सर्वस्य

जगतोऽसत्त्व इत्यर्थः । **तदेव न स्यादिति ॥** तच्छब्दोक्तः प्रपञ्च एव न स्यादित्यर्थः । **कुतः**कस्मात् । यस्मान्नाणीय इति दृष्टान्तवाक्याद्वैषम्यं दर्शयति- **विरोधाभावादिति ॥** वाक्यशेषविरोधाभावादित्यर्थः । **ततः पुरुषादिति ॥** तथा च तत इत्यनेनावधितया प्रपञ्चो न परामृश्यत इति भावः । **इदंशब्देनेति ॥** तेनेदं पूर्णमिति वाक्ये इदंशब्देनोक्तं विश्वमेवेत्यर्थः । **प्रधानतया प्रकृत इति ॥** तेनेदमिति वाक्ये कर्तृवाचिना तेनेति पदेन प्रधानतया कर्तृत्वेन प्रकृत इत्यर्थः । **अप्रधानतयेति ॥** भगवत्कर्तृकपूर्तिकर्मत्वेनाप्रधानतयेदंशब्देन प्रकृतं विश्वमित्यर्थः । **एवमङ्गीकार्यमिति ॥** तेनेदमिति वाक्ये इदंशब्देनाप्रधानतया प्रकृतविश्वमेव ततो यदुत्तरतरमित्यत्र तत इत्यनेन परामृश्यते । न तु तेनेति प्रधानतया प्रकृतः परमात्मेत्यङ्गीकार्यमित्याहेत्यर्थः । **एतेनेति ॥** तत इति तच्छब्दस्य प्रपञ्चपरत्वस्य परमपुरुषपरत्वे यस्मात्परं नेति पूर्वापरवाक्यविरोधस्य चोपपादनेनेत्यर्थः ।

**(पां.टि.) उभयनिषेध इति ॥** काकाक्षिगोलकन्यायेन नञः उभयत्रान्वयादिति भावः । कथं वाक्यशेषविरोध इत्यतस्तमेवोपपादयति- **वाक्यशेषे हीति ॥** प्रकारान्तरेण तमेवोपपादयति-**तथेति ॥ विरोधाभावादिति ॥** वाक्यशेषविरोधाभावादित्यर्थः । काकाक्षिगोलकन्यायाश्रयणन्त्वगतिकागतित्वादयुक्तमेवेति भावः । द्वितीयं **(पां.टि.)** वाक्यशेषविरोधमाक्षिपति- **नन्विति ॥ परामर्शमर्हतीति ॥** प्रकृतपरामर्शकेन तत इत्यनेनेति शेषः । **पूर्ववाक्यविरोधादिति ॥** पूर्वापरविरोधादित्यर्थः । **एवमङ्गीकार्यमितीति ॥** प्रधानतया प्रकृतपरमा-त्मनः तत इति न परामर्शः, किन्त्विदंशब्देनाप्रधानतया प्रकृतविश्वस्यैवेत्यङ्गीकार्यमित्यर्थः । कथं पूर्वापरविरोधः परयोजनायामित्यतः तमुपदर्शयति- **यस्मादित्यादिना ॥ एतेनेति ॥** पूर्वापरवाक्यविरोधेन प्रधानतया प्रकृतपरमात्मपरामर्शनिरा-करणेनेदंशब्देनाप्रधानतया प्रकृतजगत्परामर्शसमर्थनेनेत्यर्थः ।

**(व्या.टि.)** तत्र विरोधितया प्रतीतश्रुतीर्यथावद्व्याचिख्यासुरुपक्षिपति- **नन्वित्यादिना ॥ एष एवेति ॥** शेषवाक्यार्थस्तु वृक्ष इव वृक्षसदृशे जगति 'ऊर्ध्वमूलम्' इति स्मृतेरित्यर्थः । **दिवि** द्युनाम्न्यां महालक्ष्म्यामि-त्यर्थः । 'द्युनाम्नी च द्युसंस्थिता । प्रकाशश्च ततः श्रीस्तु' इति छान्दोग्यभाष्यादित्यर्थः । **स्तब्धोऽ**वष्टब्धो गूढ इति यावत् । **एकोऽ**सहायः । **तेन** सर्वान्तर्यामिणा **इदं** सर्वं पूर्णमित्यर्थः । एवेति व्यवच्छिन्नानभिमतं दर्शयति- **न त्विति ॥** सकृन्नञ्प्रयोगादित्यर्थः । **अवगम्यत इति ॥** प्रत्यक्षनिर्देशादित्यर्थः । श्रौतार्थापत्त्येति वा । तां दर्शयति- **किं तेनेति ॥** शेषान्तरविरोधं समुच्चिनोति- **तथेति ॥** यद्यप्ययं शेषो न पूर्वशेषतया पठ्यते । तथाऽपि स्वस्य सर्वविद्यावैशारद्यं ग्रन्थस्याप्यस्य विश्वतोमुखत्वञ्च सूचयता शाखान्तराम्नातः पठित इति ज्ञातव्यम् । औदुम्बराधिकरणे 'ऊर्जः पशूनान्यो यूज्यो वरूध्या' इति उत्तरशेषवत् 'तनू वर्षिष्ठ' इति पूर्वमन्त्रशेषवच्च । उदाहरणान्तरस्य वैषम्यं दर्शयति- **इत्यत्रेति ॥** द्वितीयवाक्यशेषविरोधं परिजिहीर्षति- **नन्विति ॥** मूले तेनेदमित्यत्रेदमितीत्युभयस्योक्तिकरणतयाऽऽवृत्तिं मत्वा योजयति- **इदंशब्देनेति ॥** ईप्सिततमतया प्रधानभूतकर्मवाचिनेत्यर्थः । अनभिमतं व्यवच्छिनत्ति- **न त्विति ॥** तत्र हेतुमाह- **तेनेत्युक्तमिति ॥** कर्मणि प्रयोगे कर्तुरप्राधान्यादित्यर्थः ।

अयं भावः । यथा 'स तया वाचा तेनाऽत्मनेदं सर्वमसृजत' इति पूर्ववाक्ये मृत्युसंवत्सरयोः प्रकृतत्वेऽपि आत्मनेति तृतीयानिर्दिष्टसंवत्सरपरित्यागेन स इति प्रथमानिर्दिष्टमृत्योरेव 'स यद्यदेवासृजत तत्तदत्तुमध्रियत' इत्यत्र स इति परामर्शः । तथाऽत्रापि इदमिति प्रथमानिर्दिष्टस्यैव जगतस्तत इति परामर्शो न तेनेति तृतीया-निर्दिष्टपुरुषस्य । अत एतावत्प्रदर्शनायैवेदमित्युक्तस्येत्येव वक्तव्ये तेनेदमित्युक्तस्येत्येवावादीदिति । न च वृक्ष इव स्तब्ध इति पुरुषस्यापि प्रथमान्तेन प्रकृतत्वात्तत्परामर्शः किं न स्यादिति वाच्यम् । व्यवहितपरामर्शापत्तेः। दूषणान्तरञ्चोक्तम् ।

मूले अन्यथेति व्यवहितपरामर्शं शङ्कते- **नन्वत्रेति ॥ प्रधानतयेति ॥** तिष्ठत्येक इति स्थितिकर्तृत्वेन प्रधानतयेत्यर्थः । **अप्रधानतयेति ॥** वृक्ष इवेत्यधिकरणतयेत्यर्थः । पूर्वापरेति विधिनिषेधानुवादयोरित्यर्थः । ननु तेनेत्युक्त इत्यतः परं नन्वत्रेति पाठं दृष्ट्वेत्थं व्याख्यातम् । क्वचित्तु न तु तेनेति वाक्यं नास्ति । ननु तेनेत्येव पाठः । तत्र प्राधान्यमर्थतोऽवगन्तव्यम् । आनुषङ्गिकार्थमाह- **एतेनेति ॥ शङ्काऽपीति ॥** प्रधानार्थ-विरोधिशङ्काऽपीत्यर्थः ।

**मूलम्- 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति',**

**'यस्यैव सर्वनामानि[१] व्यतिरिक्तस्य सर्वतः ।**
**यः स्वतन्त्रः सदैवैकः स विष्णुः परमो मतः ॥'**

**इत्यादिश्रुतिभ्योऽन्यनामान्यप्यस्यैवेति नान्येषां सर्वेश्वरत्वादिकमुच्यते । सर्ववेदेष्वप्य-**

**स्यादोषवचनादादावभावावचनाच्च तद्वचनाच्चान्येषां सर्वेषां वेदेषु सर्वेषु । तेषां सर्व-नामत्वानुक्तेश्च ॥**

**(त.मं.)** विष्णोः सर्वोत्तमत्वे 'एको रुद्रो न द्वितीयाय तस्थ' इति 'स इमाँल्लोकानीशत ईशनीभिः' इत्यादीनां वाक्यानां का गतिरित्यत आह- **नामानीति** ॥

**तद्वचनाच्चान्येषां** ॥ अयमर्थः । **अन्येषां** ब्रह्मरुद्रादीनां वेदेषु दोषवचनात् आदावभाववचनाच्च नान्येषां सर्वेश्वरत्वादिकमुच्यते। 'यं कामय' इत्यादौ जन्मादिदोषवत्त्वमुच्यते हि। 'न ब्रह्मा नच शङ्करः' इत्यादिनाऽऽदावभावश्च ।

**टीका-** ननु 'हिरण्यगर्भः समवर्तताग्रे', 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति', 'स इमाँल्लोकानीशत ईशिनीभिः' इत्यादिश्रुतिषु ब्रह्मशिवादीनामपि सर्वेश्वरत्वादिकमुच्यते । तत्कथं विष्णोस्तदङ्गीक्रियते उभयोस्तद्विरोधात् । नच देशकालव्यवस्थया विकल्पः, अनिष्टत्वादित्यत आह-**नामानीति** ॥ **आविशन्ति** मुख्यया वृत्त्या विशन्ति, वदन्तीति यावत्। सर्वनामवत्त्वं सर्वाभेदेनेति भ्रान्ति-निरासार्थमुक्तम्- **व्यतिरिक्तस्येति** ॥ दुःख्यादिनामानि कथं तस्येत्यत उक्तम्- **यः स्वतन्त्र इति** ॥ यथोक्तम्-'तदधीनत्वादर्थवत्' इति। **अन्यनामान्यपि** अन्यनामत्वेन प्रसिद्धान्यपि हिरण्यगर्भादिनामानि, **अस्य** विष्णोरेव वाचकानि । इतिशब्दो हेतौ । तासामपि श्रुतीनां विष्णुपर-त्वादित्यर्थः । कुत एवम् अन्यथा व्याख्यानं, प्रतीत एवार्थः किं न स्यादित्यत आह- **सर्वेति** ॥ अपिरभिव्याप्तौ । **अस्य** विष्णोः **अदोषवचनाद्** दोषवचनाभावाद् दोषाभाववचनादिति वा । **आदौ** प्रलये । **अभावावचनाद्** भाववचनाच्चेत्यपि ग्राह्यम् । **तद्वचनाद्** दोषवचनात् प्रलयेऽ-भाववचनाच्च । सर्ववेदेष्वपीति प्रकृतत्वेऽपि पुनर्वेदेषु सर्वेष्विति वचनं शैवपुराणादिव्युदासार्थम्। तेषां पाशुपताद्यागममूलानां प्रामाण्यासम्मतेः । वेदेष्वित्यादिरुत्तरग्रन्थो वा। तत्रापि तदेव प्रयोजनम् ।

एतदु(इदमु)क्तं भवति- यो हि सर्वेश्वरस्तेनाज्ञानादिदोषरहितेन प्रलयेऽप्यविलुप्तज्ञानादिमता भवितव्यम्। तन्न जानाति, तस्य चेष्ट इत्यनुपपत्तेः । यश्चेतरजीववत्प्रलये विलुप्तज्ञानादिस्तस्याऽदि-सृष्ट्यादिकर्तृत्वासम्भवात् । अज्ञानाशक्त्यादयो दोषाः प्रलये ज्ञानादिविलोपश्च विष्णोर्न कुत्रापि श्रूयन्ते। प्रत्युत तदभाव एव श्रूयते। अतस्तस्यैव सर्वेश्वरत्वादिकं सम्भवति। ब्रह्मादीनान्तु निर्दोषत्वादेरश्रुतत्वाद्दोषवत्त्वादेरेव श्रुतत्वाच्च तन्न सम्भवति। अतस्तासां श्रुतीनां विष्णुपरत्वमेव न्याय्यमिति। इतोऽप्येवमित्याह- **तेषामिति** ॥ यदि शिवः सर्वेश्वरः स्यात्तदा हिरण्यगर्भस्य सर्वेश्वरत्वं वदन्तीनां श्रुतीनां का गतिः । नचास्मद्रीत्या तच्छ्रुतीनां शिवपरत्वं, वैषम्यात् । विष्णोर्हिरण्यगर्भादिसर्वनामवत्त्वे प्रमाणमुक्तम्। नच शिवादीनां तथात्वे वैदिकवचनमस्ति। तदेवं निर्दोषत्वादेः सर्वेश्वरत्वादिव्यापकस्य शिवादिष्वभावाच्छ्रुत्यन्तरविरोधपरिहारोपायाभावाच्च न शिवादीनां सर्वेश्वरत्वादिकं श्रुत्या वक्तुं शक्यते। किन्तु विष्णोरेव व्यापकाव्यावृत्तेर्विरोधा-भावाच्चेति स्थितम् ॥

**(र.टि.)** ननु विष्णोर्दोषावचनादेः कथं सर्वेश्वरत्वादिसाधकत्वं, कथं ब्रह्मादीनां सर्वेश्वरत्वादिबाधकत्वमित्यतो वाक्यतात्पर्यमाह- **एतदुक्तं भवतीति** ॥ प्रलयेऽपि वर्तमानप्रकृत्यादिविषयकाज्ञानतन्नियामकत्वलक्षणेश्वर-त्वयोर्विरोधलक्षणबाधकेन प्रकृत्यादिसर्वेश्वरत्वस्य प्रलयेऽप्यविलुप्तज्ञानादिमत्त्वव्याप्यत्वनिश्चय इति भावः। विपक्षे बाधकान्तरमाह- **यश्चेति** ॥

**(रा.टि.)** स्वातन्त्र्येण निमित्तेन दुःखिबद्धादिशब्दानां विष्णुनिष्ठत्वोक्तावानुमानिकनयस्थसूत्रसम्मतिमाह- **यथोक्तमिति** ॥ सर्वशब्दप्रवृत्तिनिमित्तानां भगवदधीनत्वाद् दुःखिबद्धावरादिशब्दजातं हरावर्थवत्, तद्वाचकं भवतीत्यर्थः। **तदेव प्रयोजनमिति** ॥ शैवपुराणादिव्युदास इत्यर्थः । ननु विष्णुतदितरेषां दोषानुक्तितदुक्त्यादिना कथं सर्वेश्वरत्वतदभावलाभः ।

येनान्यमहिमोक्तिपरश्रुतीनामन्यथा व्याख्यानमित्यत आह- **एतदुक्तं भवतीति ॥ तस्य चेष्ट इति ॥** 'ईश ऐश्वर्ये', 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । तस्येश्वर इत्यर्थः । **परिहारोपायेति ॥** वैदिकवचोरूपेत्यर्थः । **व्यापकेति ॥** दोषाभावादिरूपेश्वरत्वव्यापकाव्यावृत्तेरित्यर्थः । **विरोधेति ॥** अन्यमहिमोक्तिपरश्रुत्यन्तरविरोधेत्यर्थः ।

**(श्री.टि.) ईशिनीभिरिति ॥** ईशनं प्रेरणं तच्छीलाभिः शक्तिभिरित्यर्थः । **व्यवस्थयेति ॥** कस्मिंश्चिद्देशे **(श्री.टि.)** कस्मिंश्चित्काले विष्णोः सर्वोत्तमत्वं कालान्तरे देशान्तरे च ब्रह्मादीनामिति व्यवस्थयेत्यर्थः । **अनिष्टत्वादिति ॥** 'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' इति सूत्रे सर्वदेशकालावस्थासु भगवत एव सर्वेश्वर-त्वोक्तेर्देशकालव्यवस्थया विकल्पस्य भवतामनिष्टत्वादित्यर्थः । **तदधीनत्वादिति ॥** दुःख्यादिशब्दजात-मीश्वरेऽर्थवत्, अन्यगतसुखदुःखादीनां तदधीनत्वादिति सूत्रार्थः । यथोक्तम्- 'दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्ते' इति । **शैवपुराणादीति ॥** ननु शैवपुराणादौ शिवादीनाम् अदोषत्ववचनमादौ (अ)भाववचनं चास्तीत्याशङ्काव्युदासार्थमित्यर्थः । वेदेष्विति पुनर्वचनेन कथं तद्व्युदास इत्यत आह- **तेषामिति ॥ उत्तरग्रन्थो वेति ॥** 'वेदेषु सर्वेषु तेषां सर्वनामत्वानुक्तेश्च' इत्युत्तरग्रन्थोपक्रमवाक्यं चेत्यर्थः । उत्तरवाक्येऽपि वेदेष्विति किमर्थं वक्तव्यमित्यत आह- **तत्रापीति ॥ तदेवेति ॥**

ननु शिवादीनां कथं सर्वनामवत्त्वानुक्तिः, शैवपुराणादौ तदुक्तेरित्याशङ्काव्युदासार्थं वेदेष्वित्युक्तमिति भावः । ननु विष्णोर्दोषावचनादेः कथं सर्वेश्वरत्वादिसाधकत्वम् । कथं च ब्रह्मादीनां दोषवचनादेः सर्वेश्वर-त्वादिबाधकत्वमित्यतो वाक्यतात्पर्यमाह- **एतदुक्तं भवतीति ॥** ननु ईश्वरेणाज्ञानादिदोषरहितेन भवितव्यमित्ययुक्तम् । अज्ञानादिमतोऽपि ईश्वरत्वे बाधकाभावादित्यत आह- **तन्न जानातीति ॥ ईष्टो** नियामकः । तथा हि । ईश्वरत्वं नामेशनशीलत्वं नियामकत्वमिति यावत् । एवं च प्रकृत्यादिकं जगन्न जानातीति पुनस्तस्य चेष्ट इति न युज्यते । तज्ज्ञानाभावे तन्नियामकत्वासम्भवादिति भावः । नन्वीश्वरेण प्रलयेऽविलुप्त-ज्ञानादिमता कुतो भवितव्यम् । प्रलये विलुप्तज्ञानवतोऽपीश्वरत्वे बाधकाभावादित्यत आह- **यश्चेति ॥ तत्** सर्वेश्वरत्वादिकम् । **तासां श्रुतीनामिति ॥** ब्रह्मादिसर्वेश्वरत्वप्रतिपादिकानां 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिश्रुतीनामित्यर्थः । **इतोऽप्येवमिति ॥** न शिवादीनां सर्वेश्वरत्वादिकं किन्तु विष्णोरेवेत्याहेत्यर्थः । गतिमाशङ्कते- **न चेति ॥** वैषम्यमेवोपपादयति- **विष्णोरिति ॥ तथात्वे** सर्वनामवत्त्वे । शैवपुराणादिवचन-व्यावृत्त्यर्थं वैदिकं वचनमित्युक्तम् । **श्रुत्यन्तरविरोधेति ॥** शिवस्य सर्वोत्तमत्वाङ्गीकारे 'हिरण्यगर्भः समवर्त-ताग्रे' इत्यादिब्रह्मादिसर्वोत्तमत्वप्रतिपादकश्रुत्यन्तरविरोधे प्राप्ते तत्परिहारोपायस्य शिवस्य हिरण्यगर्भादिसर्वनाम-वत्त्वस्याभावादित्यर्थः। **सर्वेश्वरत्वादिकमिति ॥** निर्दोषत्वादिव्याप्यभूतमित्यर्थः । **व्यापकाव्यावृत्तेरिति ॥** सर्वेश्वरत्वादिव्यापकस्य निर्दोषत्वादेर्विष्णौ सत्त्वादित्यर्थः । **विरोधाभावाच्चेति ॥** विष्णोस्सर्वेश्वरत्वाङ्गीकारे शिवादिसर्वोत्तमत्वप्रतिपादकश्रुत्यन्तरविरोधपरिहारोपायस्य विष्णोः शिवादिसर्वनामवत्त्वरूपस्य सत्त्वेन विरोधाभावादित्यर्थः ।

**(पां.टि.) अनिष्टत्वादिति ॥** भवतामिति शेषः । सर्वदेशकालेषु नारायणस्यैव भवद्भिः सर्वोत्तमत्वाङ्गीकारादिति भावः । **कुत एवमिति ॥** हिरण्यगर्भश्रुतीनां कुतो विष्णुपरतया व्याख्यानं क्रियते । प्रतीतं हिरण्यगर्भादिपरत्व-मेव किं न स्यादित्यर्थः । प्रतीतार्थपरत्वपरित्यागेनाप्रतीतार्थपरत्वकल्पनस्य निर्निबन्धनत्वेनायुक्तत्वादिति भावः । **अपिरभिव्याप्ताविति ॥** सर्वकर्माण्यपि सदेत्यादाविवेति शेषः । ततश्च नापिपदवैयर्थ्यमिति भावः । **(पां.टि.)** ननु विष्णोरदोषवचनादेः कथं सर्वेश्वरत्वादिसाधकत्वम् । कथं वा ब्रह्मादीनां दोषवचनादेः सर्वेश्वर-त्वादिबाधकत्वमित्यतो वाक्यतात्पर्यमाह- **एतदुक्तं भवतीति ॥** अप्रयोजकमेतदित्यतो विपक्षे बाधकमाह- **तन्न जानातीति ॥** प्रलयेऽपि वर्तमानप्रकृत्यादिविषयकाज्ञानतन्नियामकत्वलक्षणेश्वरत्वयोः विरोधलक्षण-बाधकेन प्रकृत्यादिसर्वेश्वरत्वस्य प्रलयेऽप्यविलुप्तज्ञानादिमत्त्वव्याप्यत्वनिश्चय इति भावः । विपक्षे बाधकान्तर-मप्याह- **यश्चेति ॥** हेत्वसिद्धिं परिहर्ति- **अज्ञानाशक्त्यादय इति ॥**

**(व्या.टि.)** एवं सर्वोत्तमत्वापरपर्यायसमतीतक्षराक्षरत्वस्यासम्भवे निरस्तेऽतिव्याप्तिमाशङ्कते- **नन्विति ॥** जगज्जन्मादिकारणत्वादीनां पृथग्लक्षणत्वात्पृथगतिव्याप्तये पृथग्वाक्यान्युदाहरति- **हिरण्यगर्भ इत्यादि ॥** अग्र इति प्रलयकालवर्तित्वम् । शान्तिमत्यन्तमिति मोक्षदत्वम् । ईशत इति प्रेरकत्वञ्च । **कथमिति ॥** अतिव्याप्तस्यालक्षणत्वादित्यर्थः । बहुलक्ष्यत्वेन नातिव्याप्तिरित्यत आह- **उभयोरिति ॥** अपर्यायतत्तदसाधा-रणशब्दभेदेनार्थभेदस्य शब्दान्तराधिकरणन्यायसिद्धत्वात्, 'एकमेवाद्वितीयम्', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति लक्ष्यस्यैकव्यक्तित्वाच्चोभयोर्लक्ष्यत्वविरोधादित्यर्थः । अथ वा विरोधादिति निरुपचरितासङ्कुचित-सर्वोत्तमत्वादेः परस्परोच्चावचभावप्रसङ्गेन व्याघातादित्यर्थः । 'उदिते जुहोति अनुदिते जुहोति' इति विधि-

द्वयवद्विकल्पेन विरोधमुद्दिधीर्षति- **न चेति ॥ देशकालेति ॥** 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादि-वद्विधिवाक्यान्तर्गतसर्वशब्दसङ्कोचादित्यर्थः । कर्मानुष्ठानविकल्पसम्भवेऽपि वस्तुनो द्वैरूप्यासम्मतेरित्याह- **अनिष्टत्वादिति ॥** अथ वा 'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' इत्यधिकरणे सूत्रकृता असङ्कुचितसर्व-जगत्कारणत्वादेरेवोक्तत्वेन व्यवस्थाया अनिष्टत्वादित्याह- **अनिष्टत्वादिति ॥** विप्रतिपन्नतत्तदसाधारण-नाम्नां भगवति समन्वयेनातिव्याप्तिमुद्दिधीर्षुराहत्य विष्णौ तत्समन्वयप्रतिपादिकां श्रुतिं व्याकरोति- **मुख्यया वृत्त्येति ॥** अनेन 'साक्षादप्यविरोधं जैमिनिः' इत्यादिसूत्रदिशा व्यवहारार्थमन्यां मुख्यां वृत्तिमुपैतीति सूच्यते । अत्र श्रुतिद्वये 'तं वै विष्णुं परममुदाहरन्ति', 'स विष्णुः परमो मतः' इत्युक्त्या 'तदेव ब्रह्म परमं कवीनाम्' इतिवन्महायोगविद्वद्रूढिभ्यां विष्णुशब्दस्य भगवति मुख्यवृत्तिमभिधायान्यत्र गौण्यभिप्रेतेति सूचि-तम् । तेन यज्ञशिवादिष्वपि विष्णुशब्दस्य 'यज्ञो वै विष्णुः',

'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ।
संसारिवेद्यः सर्वज्ञः परमात्मेत्युदाहृतः ।
एतन्नामाष्टकं पुण्यं शिवस्याघविनाशनम् ॥'

इति स्मृत्या, शिवसहस्रनामपर्यालोचनया च सद्भावेन, नारायणासाधारण्याभावान्न तेनास्य सर्वनामत्वमिति निरस्तम् । 'ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' इति व्यवहारार्थं स्वनाम्नां समाकर्षाधिकरणन्यायेन तत्र तत्र सङ्केतितत्वेऽपि परममुख्यवृत्त्यभावात् । 'यानि नामानि गौणानि' इत्युक्तगुणनिमित्तकत्वस्थैर्याय प्रतीतेः निमित्तानि निरस्यति- **सर्वाभेदेनेत्यादिना ॥** स्वातन्त्र्यं कथं प्रवृत्ति-**(व्या.टि.)** निमित्तमित्यतः सूत्रितं तदित्याह- **तदधीनत्वादिति ॥** अन्यप्रवृत्तिनिमित्तानां भगवदधीन-त्वात्तच्छब्दजातं तत्र मुख्यमित्यर्थः । ननु कथमन्यनाम्नां भगवन्नामत्वम्, अन्याय्यश्चानेकार्थत्वमिति न्याय-विरोधादित्यत आह- **प्रसिद्धानीति ॥** अज्ञरूढानीत्यर्थः । इतिशब्दस्य समाप्त्यर्थत्वेऽनन्वयादाह- **इति शब्द इति ॥** तदपेक्षितसाध्यं पूरयति- **तासामपीति ॥** प्रतीतार्थे बाधकं पृच्छति- **कुत इति ॥ अपिरिति ॥** सर्वशब्दार्थासङ्कोचतात्पर्यग्राहक इत्यर्थः । मूलं द्वेधा व्याचष्टे- **दोषवचनाभावादित्यादि ॥** अत्र नञोऽभावार्थकस्य दोषशब्देन दोषवचनशब्देन वाऽन्वितस्य 'असन्देहाः प्रयोजनम्' इत्यादिप्रयोगात् अतद्धर्माभिलापादित्यादि-वत्तत्पुरुषोऽपि । अव्ययीभावत्वेऽपि न दोषः । पञ्चमीत्वात् । **भावेति ॥** 'एको नारायण आसीन्न ब्रह्मा नेशानः' इति श्रुतेरिति भावः । शैवपुराणेषूभयोक्तेः कथमवचनमिति शङ्का पुनरुक्त्याऽनभ्युपगमपराहतेत्याह- **पुनरिति ॥ तत्रापीति ॥** उत्तरशेषेऽपीत्यर्थः । ननु श्रुतिषु सर्वेश्वरत्वोक्त्यनुक्त्योर्दोषवचनावचनयोश्च कथं निमित्तनिमित्तिभाव इत्यतो व्याप्यव्यापकभावादित्याशयं व्यनक्ति- **इदमुक्तम्भवतीति ॥** विपक्षे व्याघातवज्रं पातयति- **तन्न जानातीति ॥** तयोः कार्यकारणभावेन अकारणकार्योत्पत्तिप्रसङ्गादित्यर्थः । **कुत्रापीति ॥** वेद इति शेषः । **इतोऽपीति ॥** व्यापकान्तराभावाच्चेत्यर्थः । श्रुत्यन्तविरोधापरिहारोपायाभावाच्चेति वार्थः । तात्पर्यविषयं व्यवस्थाप्योपसंहरति- **स्थितमिति ॥**

**मूलम्-** **'उत्पत्तिर्वासुदेवस्य प्रादुर्भावो नचापरः ।**
**देहोत्पत्तिस्तदन्येषां ब्रह्मादीनां तदीरणात् ।**
**देहोऽनादिर्हरेर्नित्यो ब्रह्मादीनामनित्यकाः ।**
**मुख्योत्पत्तिस्तदन्येषां प्रादुर्भावो हरेर्जनिः' इति परमश्रुतेश्च ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्विष्णुतत्त्वविनिर्णये द्वितीयः परिच्छेदः समाप्तः ॥**

**(त.मं.)** विष्णोरपि कृष्णादिरूपेणोत्पद्यमानत्वात् कथं जन्मादिदोषा न सन्तीत्यत आह - **उत्पत्तिरिति ॥** वासुदेवस्योत्पत्तिर्नाम केवलं प्रादुर्भाव एव । कृष्णादिरूपाणां प्रकाशनमेव । न पुनर्देहोत्पत्तिः । हरेर्देहः स्वरूपभूतत्वात् ज्ञानादिगुणात्मकत्वाच्च अनादिर्नित्यश्च हि ॥

॥ इति द्वितीयं विशेषणम् ॥

**टीका-** ननु 'जनितोत विष्णोः' इति श्रुतौ विष्णोरुत्पत्तिरुच्यते । तत्कथं तस्य निर्दोषत्वादिकं प्रतिज्ञायते । अथ यत्तत्र समाधानं तच्छिवादिष्वपि वक्तुं शक्यमित्याशङ्क्यां श्रुत्यैव परिहरति- **उत्पत्तिरिति ।।** उत्पत्तिवचनार्थ इत्यर्थः । **अपरो** देहोत्पत्त्यादिः । देहोत्पत्तिरुत्पत्तिश्रुतेरर्थ इति शेषः । विष्णोरपि तच्छब्दवाच्यानि रूपाणि सन्तीत्यतस्तदन्येषामित्युक्तम् । अविवादपदाना-मस्मदादीनां व्युदासाय- **ब्रह्मादीनामिति ।। तदीरणात्** तस्य वासुदेवस्य प्रेरणात् । कुत एवं श्रुत्यर्थद्वैविध्यकल्पनमित्यत आह- **देह इति ।।** ब्रह्मादीनां देहा अनित्यकाः सादयश्च । एतदुभयं प्रमाणनिश्चितं यत इति भावः । **मुख्योत्पत्तिः** देहोत्पत्तिरेवोत्पत्तिवाक्यार्थ इति शेषः । यद्यपीय-मप्यमुख्या । तथाऽपि प्रादुर्भावापेक्षया मुख्यत्वान्मुख्येत्युक्तम् । **जनिः**जनिश्रुत्यर्थः । देहात्म-विवेकमनाश्रित्य देहोत्पत्तिरेवोत्पत्तिशब्दार्थो मुख्य आश्रितः । प्रादुर्भावस्तु कदाचिदुप-लभ्यत्वगुणयोगेनामुख्य इति । यद्यप्ययमुत्तरपरिच्छेदप्रतिपाद्योऽर्थः । तथापि प्रसङ्गागतत्वा-दत्राप्यभिहित इति ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्विष्णुतत्त्वविनिर्णयस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां द्वितीयः परिच्छेदः समाप्तः ।।**

**(र.टि.)** उत्पत्तिःप्रादुर्भाव इत्येतद्विरुद्धमित्यत आह-**उत्पत्तिवचनस्यार्थ इतीति ।।** एवमुत्तरत्रापि द्रष्टव्यम् । **सादयश्चेति ।।** सादित्वस्योत्पत्तिसाधकत्वात् । अनादिरित्युक्तत्वाच्चेति भावः । प्रादुर्भावापेक्षया देहोत्पत्तेः कथं मुख्यत्वमित्यत आह- **देहात्मविवेकमिति ।।** स्फुटतरविवेक(कार्थ)मित्यर्थः ।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्विष्णुतत्त्वविनिर्णयस्य श्रीमज्जयतीर्थपूज्यचरणविरचिताया टीकाया विवृतौ श्रीरघूत्तमयतिविरचितायां भावबोधसञ्ज्ञिकायां द्वितीयः परिच्छेदः समाप्तः ।।**

**(रा.टि.)** शङ्कानिवृत्तिलाभायाऽह- **उत्पत्तिवचनार्थ इति ।।** 'जनितोत विष्णोः' इत्यस्यार्थ इत्यर्थः । अभ्युपेत्येदमुक्तम् । वस्तुतस्तु विष्णोरित्यस्य यज्ञस्य यजमानस्य वा सोमो जनयितेत्यर्थान्तरस्योक्तेः । 'अजायमानो बहुधा विजायते', 'स एषोऽन्तश्चरते बहुधा जायमानः' इत्यादिश्रुत्यभिप्रायेण वेयमुक्तिः । स्वरूपोत्पत्तिभ्रमव्युदासायाऽह- **अपरो देहोत्पत्त्यादिरिति ।।** आदिपदेन पराधीनविशेषावाप्तिपरिग्रहः । ब्रह्मादीनामित्येवास्तु किं तदन्येषामित्युक्त्येत्यत आह- **तच्छब्दवाच्यानीति ।।** ब्रह्मादिपदवाच्यानि विष्णो रूपाणि सन्तीत्यर्थः । **श्रुत्यर्थद्वैविध्येति ।।** हरावुत्पत्तिश्रुतेः प्रादुर्भावोऽर्थः । अन्यत्र देहयोगादिरित्येवं द्वैविध्ये-त्यर्थः । **अमुख्येति ।।** स्वरूपपरिणामरूपोत्पत्त्यपेक्षयेति भावः । प्रादुर्भावापेक्षया कथं मुख्यत्वमित्यत आह- **देहात्मविवेकमिति ।। प्रसङ्गेति ।।** ब्रह्मादेर्दोषित्वेन जगदीशितृत्वायोगे विष्णोरपि जननादिदोषित्वश्रवणात् तदभावशङ्कापरिहारार्थत्वप्रसङ्गेत्यर्थः ।

**।। इति श्रीमद्विष्णुतत्त्वविनिर्णयटीकाभावदीपे राघवेन्द्रयतिकृते द्वितीयः परिच्छेदः ।।**

**(श्री.टि.) जनितोतेति ।।** 'सोमः पवते' इति पूर्ववाक्यादत्र सोम इत्यनुवर्तते । तथाच सोमः विष्णोरुत विष्णोरपि जनिता जनयिता उत्पादक इत्यर्थः । 'जनिता मन्त्रे' इति निपातनात् । ननु वासुदेवस्य प्रादुर्भाव एव यद्युत्पत्तिस्तर्हि जनितोत विष्णोरिति श्रुतिवचनविरोधः कथं परिहृत इत्यत उत्पत्तिरित्यस्यार्थमाह- **उत्पत्ति-वचनार्थ इति ।।** ननु ब्रह्मादीनामित्येवास्तु, तदन्येषामिति व्यर्थमित्यत आह- **विष्णोरपीति ।।** ब्रह्मादीनां देहोत्पत्तेरुत्पत्तिश्रुत्यर्थत्वे विष्णोरपि ब्रह्मादिशब्दवाच्यानां पृथग्रूपाणां विद्यमानत्वेन तेषां देहोत्पत्तेरुत्पत्ति-शब्दार्थत्वप्राप्तौ 'तस्य नान्योऽस्ति सर्गादिकर्ता', 'निर्दोषकश्च सः' इत्युक्तविरोधप्रसङ्गादित्यर्थः । **तदन्येषा-मिति ।।** ब्रह्मादिशब्दवाच्यविष्णुरूपेभ्योऽन्येषामित्यर्थः । तर्हि तदन्येषामित्येवास्तु ब्रह्मादीनामिति किमर्थ-मुक्तमित्यत आह- **अविवादपदानामिति ।।** तदन्येषामित्येवोक्तौ देहोत्पत्तिमत्त्वेन विवादानास्पदाना-मस्मदादीनामपि प्राप्तेस्तद्व्युदासाय ब्रह्मादीनामित्युक्तमित्यर्थः। **द्वैविध्येति ।।** विष्णूत्पत्तिवचनस्य प्रादुर्भावोऽर्थः, ब्रह्माद्युत्पत्तिवचनस्य देहोत्पत्तिरर्थ इति द्वैविध्यकल्पनमित्यर्थः । 'देहोऽनादिर्हरेः' इत्युक्तत्वात्तत्प्रतियोगित्वेन सादित्वमप्यत्र द्रष्टव्यमित्याह- **सादयश्चेति ।।**

ननु स्वरूपोत्पत्तेरेव मुख्योत्पत्तित्वेन देहोत्पत्तेरमुख्यत्वात्कथं देहोत्पत्तिरेव मुख्योत्पत्तिरित्युच्यत इत्याशङ्क्य समाधत्ते- **यद्यपीयमिति ।।** ननु प्रादुर्भावापेक्षया देहोत्पत्तेः कथं मुख्यत्वमित्यतस्तदुपपादयति- **देहात्मेति ।।** देहात्मनोः स्फुटतरं विवेकमित्यर्थः । तथा च देहात्मनोः स्फुटतरविवेकाश्रयणे स्वरूपोत्पत्त्यपेक्षया देहोत्पत्ति-रप्यमुख्यैव भवति । तदनाश्रयणे तु देहोत्पत्त्या स्वरूपस्यैवोत्पत्तिः प्राप्तप्रायेति प्रादुर्भावापेक्षया देहोत्पत्तिर्मुख्ये-त्यर्थः । प्रादुर्भावस्यामुख्योत्पत्तित्वे का सा न मुख्यवृत्तिरभिप्रेतेत्यतो

गौणी वृत्तिरित्याह- **कदाचिदिति ।।** स्वरूपत उत्पन्ने घटादावालोकादिनाऽभिव्यक्ते च घटादौ कदाचिदुपलभ्यत्वगुणयोगादित्यर्थः । ननु भगवतो निर्दोषत्वप्रतिपादनस्योत्तरपरिच्छेदप्रमेयत्वेनात्र तदभिधानमसङ्गतमित्याशङ्क्याऽह- **यद्यपीति ।। अयमर्थो** भगवतो निर्दोषत्वरूपः । **प्रसङ्गागतत्वादिति ।।** समतीतक्षराक्षरत्वरूपं सर्वेश्वरत्वं शिवादीनां किं न स्यादिति शङ्कायां तद्व्यापकीभूतस्य निर्दोषत्वस्य तेष्वभावाद्विष्णौ च तद्भावान्न तेषां सर्वेश्वरत्वम्, किन्तु विष्णोरेवेति प्रसङ्गागतत्वादित्यर्थः ।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां**
**श्रीमद्विष्णुतत्त्वविनिर्णयटीकाविवृतौ वाक्यार्थदीपिकायां द्वितीयः परिच्छेदः ।।**

**(पां.टि.) तथात्वे** हिरण्यगर्भादिसर्वनामवत्त्वे । उत्पत्तिः प्रादुर्भाव इत्येतद्विरुद्धमित्यत आह- **वचनस्यार्थ इति ।। सादयश्चेति ।।** अनित्यत्वमात्रस्योत्पत्तिसाधकत्वाभावादिति भावः । ननु स्वरूपत उत्पत्तेरेव मुख्यत्वान्न देहोत्पत्तेर्मुख्यत्वमिति कथं तदुक्तिरित्यतः न स्वरूपोत्पत्तितो देहोत्पत्तेर्मुख्यत्वमत्राभिप्रेतम्, येनोक्तदोषः स्यात् । किन्तु प्रादुर्भावापेक्षयैवेत्यतो नानुपपत्तिरित्याशङ्क्य परिहरति- **यद्यपीत्यादिना ।।** प्रादुर्भावापेक्षयाऽपि **(पां.टि.)** देहोत्पत्तेः कथं मुख्यत्वम्? येन देहोत्पत्तेरेवोत्पत्तिवाक्यार्थत्वं स्यात् । कथं च प्रादुर्भावस्य देहोत्प-त्त्यपेक्षया गौणत्वमित्यतः तदुभयमुपपादयति- **देहात्मविवेकमिति ।।** स्फुटतरदेहात्मविवेकमित्यर्थः ।

**।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां सकलविद्वच्चक्रचूडामणीनां**
**श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्येण केशवेन विरचितायां गुरुराजमार्गानुवर्तिन्यां**
**तत्त्वनिर्णयटीकागतविषमपदवाक्यार्थविवृतौ द्वितीयः परिच्छेदः ।।**

**(व्या.टि.)** एवं सर्वेश्वरत्वव्यापकनिर्दोषत्वाभावान्न तेषां जगत्कारणवाक्यप्रतिपाद्यत्वमित्युक्तम् । अधुना तद्वद्विष्णावपि दोषश्रवणेन व्यापकाभावात्तद्व्याप्यसर्वेश्वरत्वाभावः स्यादिति शङ्कते- **नन्वित्यादिना ।। उत्पत्ति-रिति ।।** 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः' इति श्रुताविति शेषः । ननु तत्र 'यज्ञो वै विष्णुः' इति श्रौतप्रयोगानुरोधेन 'विष्णुरिति यज्ञस्य यजमानस्य वा नाम' इत्यन्यत्रोक्तरीत्या नाम्नोऽर्थान्तरमभिप्रेत्य समाधानमिति शङ्कते- **अथेति ।। तत्** समाधिसाम्यम् । **शिवादिष्वपीति ।** तत्रापि शिवादिशब्दस्य कल्याणपुरुषाद्यर्थान्तरपरिग्रहेण दोषस्यान्य-निष्ठत्वोक्तेः सौलभ्यादित्यर्थः । वचनस्य विष्णूत्पत्तिपरत्वेऽप्युत्पत्तेरनेकविधत्वान्न दोषभूतोत्पत्तिपरत्वमिति समाधत्त मूलकारः- **उत्पत्तिः प्रादुर्भाव इति ।।** अस्य दोषे गुणसामानाधिकरण्यानुपपत्तेः प्रादुर्भाव उत्पत्तिवचनार्थ इत्यर्थः । न चापरः, देहोत्पत्तिरित्यनयोर्लिङ्गविपर्ययेण सामानाधिकरण्यानुपपत्तेः शेषमापूर्योत्तरशेषतया योजयति- **इति शेष इति ।। तत्तच्छब्देति ।।** ब्रह्मादिशब्दवाच्यानीत्यर्थः । 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' इति स्मृतेरिति भावः । विशेष्यपदकृत्यमाह- **अविवादपदानामिति ।।** देहोत्पत्तेः प्रत्यक्षसिद्धत्वेना-निर्णेतव्यत्वात् इत्यर्थः । तदीरणादित्यत्र तत्पदपरामृश्यं प्रदर्श्य विग्रहं दर्शयति- **तस्य वासुदेवस्येति ।।** 'वासुदेवो वा इदमग्र आसीत्' इति तस्यैव मूलकारणत्वश्रवणादित्यर्थः । कुत इति प्रमाणप्रश्नः । **निश्चितमिति ।।** यथावद्व्याख्येयत्वादित्यर्थः । **अमुख्येति ।।** स्वरूपोत्पत्तेरेव मुख्यत्वादित्यर्थः । **प्रादुर्भावापेक्षयेति ।।** यथाऽन्य-त्रेन्द्रादिशब्दवृत्तेर्मुख्यत्वेऽपि भगवति परममुख्यवृत्त्यपेक्षयाऽमुख्यत्वादमुख्यत्वव्यपदेशस्तथा व्यक्तिरूपामुख्य-व्यपेक्षया मुख्यत्वव्यपदेशः । ननु 'नैषां ममाहमिति धीः श्वसृगालभक्ष्ये' इति भागवतोक्तदिशा 'न देहोऽहमिति प्रमा' इत्यनुव्याख्यानसुधोक्तभङ्ग्या च देहोऽहमिति भ्रमस्य कस्याप्यभावेन प्रमाया दूरनिरस्तत्वाद्देहोत्पत्तेर्देह-निष्ठतया तत्रैव मुख्यतया तत्सम्बन्धिस्वामिनि लक्षणासम्भवेन तच्छब्दस्य तत्र मुख्यत्वासम्भवात् । शक्ये तत्सम्बन्धिनि च शक्तौ लक्षणोच्छेदापत्तेः । 'स्वविनाशेन स्वामिनोऽपि नाशोपचारात्' इति पूर्वोक्तन्यायेन स्वोत्पत्त्या स्वाम्युत्पत्तेरमुख्यत्वौचित्यमित्यत आह- **देहात्मविवेकमनाश्रित्येति ।।** अत्राविवेकमाश्रित्येति च ग्राह्यम् ।

अयम्भावः । न देहस्वरूपोत्पत्तिम् अभूत्वाभावलक्षणामाश्रित्योच्यते । किन्त्वविवेकदेहाभिमानं तत्प्रयुक्त-विकारश्चाऽश्रित्येति । यथोक्तम् 'अभिमानोऽभिमानिनः' इति 'पुरुषे तद्विशेषणम्' इति च । ननु 'नैषां ममाह-**(व्या.टि.)** मिति धीः श्वसृगालभक्ष्ये' इत्येकान्तिनां विवेकित्वात्कथमविवेक इत्यत आह- **विवेकमनाश्रि-त्येति ।।** अविवक्षित्वेत्यर्थः । कुतोऽविवक्षेति चेदित एव-यद्यपि न देहेऽहंभ्रमः कस्याप्यस्ति । देहधर्मभ्रमो न सर्वेषाम् । एकान्तिनां विवेकित्वात् । कृष्णोऽहमित्यादिव्यवहारमात्रस्य 'उपचारश्च कृष्णोऽहमिति कर्दम-लेपने । वस्त्रस्य यद्वदेवं स्यात्' इति,

'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।

भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वाविविक्तवत्'

इत्यनुव्याख्यानोक्तरीत्या रूढोपचारत्वात् । तथाऽपि स्फुटविवेकस्य क्वाचित्कत्वेनाल्पत्वादविवक्षया ज्ञान्यज्ञानि-साधारणो देहिन्यहंप्रत्ययो गृह्यते । ज्ञानिनोऽपि हि 'अहं भवो भवन्तश्च' इति 'ततो वयं सत्प्रमुखा यदर्थे' इत्यादि पिण्डीभूत एव प्रयुञ्जते । 'अयो यथा दाहकत्वम्' इति 'दग्धृशब्दो यथा काष्ठे' इत्युक्तदिशा काष्ठे दहतिशब्दवत् । अत(अयमा)आत्मा जातोऽजातो मृतोऽमृत इति विशेषणदेहविकारेण विशेषितो भवति । तर्हि न पुरुषस्य विकार इत्यत उक्तं तत्रैव 'परतन्त्रविशेषो हि विकार इति कीर्तितः' इति । परायत्तस्वाभिमत-देहादिजन्यदुःखादिरेव विकार इत्यर्थः । तथा च श्रुतिः- 'भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति । अभिमानस्य दुःखहेतुत्वमुक्तं गीतायां 'मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः' इति । तथा च विशिष्ट-प्रत्ययस्य विशेष्यगोचरत्वात्तत्रापि परम्परया (वि)देहविकारः साक्षाच्च तदभिमाननिबन्धनदुःखादिविकारश्चास्ति सार्वजनीन इति स एवोत्पत्तिशब्दमुख्यार्थ इत्युक्तम् । अत एवोक्तं भाष्ये 'प्रकृतिः पुरुषः कालो महानित्यादिषु क्रमात् । विकार एव जननम्' इति । गीतातात्पर्यनिर्णये च-

'स्वदेहयोगविगमौ नाम जन्ममृती पुरा ।
इष्येते ह्येव जीवस्यायुक्तेर्न तु हरेः क्वचिदिति स्कान्दे ।।' इति ।

ननु तथाऽपि देहात्मविवेकमनाश्रित्येति किमर्थमुक्तमिति चेत् । अतिविवेकिनां दधीच्यादीनां देवकार्याय स्वदेहवियोजनदर्शनेन जनकादीनां स्व(वि)देहदाहेऽपि 'न मे किञ्चन दह्यति' इति प्रयोगेण च तेषां देहेऽहम्भावाभावसिद्धेः । सर्वेषाञ्च स्वदेहाभिमानाभावेन दुःखाभावाच्च विकाराभावसिद्धेः । उत्पत्तिशब्दार्थे विकारस्येव विवक्षणीयत्वात्तदविवक्षा । एवञ्च 'मर्त्यात्मबुद्धेः' इति भागवतस्यापि मर्त्ये देहे पिण्डीकृते आत्मन्यहमिति बुद्धिरेव विवक्षिता । न देहात्मैक्यबुद्धिरिति रहस्यम् । केचित्तु यद्धर्मविशिष्टस्याविवेको यत्र तत्र तन्मुख्यमिति नियमाज्जन्मादिधर्मविशिष्टस्य देहस्याऽत्मन्यविवेक इति जन्मादिकमपि तत्र मुख्यमिति भाव इति विवेकमनाश्रित्येति टीकया विवेकमाश्रित्येत्युपेत्य व्याख्यान् । तन्न शोभते । देहात्मैक्यभ्रमस्य 'न देहोऽहमिति प्रमा' इत्यनुव्याख्यानसुधयोर्दूषितत्वेन तदनवलम्बिव्याख्यानस्यास्य भ्रममूलत्वात् । आरोपितस्य मिथ्यात्वेन मिथ्यार्थस्य मुख्यत्ववर्णनायोगाच्च । न तत्त्वं शुक्तौ मुख्यमित्युक्तेरपास्यत्वाच्च । ब्रह्मादीनामिति ब्रह्मादिदेहोत्पत्तेः **(व्या.टि.)** प्रकृतत्वेन तेषामविवेकासम्भवाच्च । 'धीरस्तत्र न मुह्यति' इति धीरमात्रस्य मोहाभावोक्त्या धीरतमस्य कैमुतिकन्यायसिद्धत्वेनाविवेकोक्तेरेवाविवेकत्वाच्च । भागवतादेरन्यार्थवर्णनाच्चेति ।

ननु(भोक्ता) विवेकनिराकरणेन पुनरविवेकाङ्गीकारे कथं न व्याहतिरिति चेन्न । देहात्मभ्रान्तिरविवेकः पराभिमतो निराकृतः । देहे आत्मीयतया भ्रान्तिरूपो विवेकोऽङ्गीक्रियते । तस्य मूलविरोधात् । अस्य तदविरो-धात् । 'प्रत्युत तथा च तक्षोभयथा' इति सूत्रकृत्सम्मतत्वेन भ्रमत्वाभावाच्च । परमस्वातन्त्र्यस्यैव भ्रान्ति-त्वाच्च । अत एव देहात्मविवेकमनाश्रित्येत्येतत् स्फुटतरविवेकमिति विजयीन्द्रस्वामिनो व्याचख्युः । 'नाहं कर्ता हरिः कर्ता' इति स्फुटतरविवेकमित्यर्थ इति सङ्क्षेपः । **उत्पत्तिशब्देति ।।** उपलक्षणमेतत् । देहहानिरेव हानिशब्दार्थ इत्यपि ग्राह्यम् । **कदाचिदिति ।।** स्वरूपोत्पन्नस्य घटादेर्देहोत्पन्नस्य जीवस्यापि 'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत' इति गीतादिशा कदाचिदुपलभ्यत्वं मुख्यस्येति ध्येयमिति दिक् । **उत्तरपरि-च्छेदेति ।।** निर्दोषत्वस्य तृतीयविशेषणत्वादित्यर्थः । प्रासङ्गिकत्वान्नासङ्गतिरिति भावः ।

**।। इति श्रीमद्विष्णुतत्त्वविनिर्णयटीकया लब्धप्रतिभया भातः परिच्छेदो द्वितीयकः ।।**

## ।। समाप्तो द्वितीयपरिच्छेदः ।।

## ।। अथ तृतीयपरिच्छेदः ।।

**मूलम्- ॐ।।'वर्जितः सर्वदोषैर्यो गुणसर्वस्वमूर्तिमान् ।**
**स्वतन्त्रो यद्वशाः सर्वे स विष्णुः परमो मतः ।।'**

**इति परमोपनिषदि ।**

**'नित्यपूर्णाखिलगुणो निर्दोषः[1] सर्वदैव यः ।**
**स्वतन्त्रः स परो विष्णुर्जन्ममृत्यादिवर्जितः ।**

**नारद उवाच ।**

**निर्दोषश्चेत् कथं विष्णुर्मानुषेषूदपद्यत ।**
**चिन्ताश्रमव्रणाज्ञानदुःखयुग् दृश्यते कथम् ।**
**एष मे संशयो ब्रह्मन् हृदि शल्य इवार्पितः ।**
**अनुद्धार्योऽपरैर्मर्त्यैः सूक्तिशक्त्या तमुद्धर ।**

**श्रीब्रह्मोवाच ।**

**स्त्रीपुंमलाभियोगात्मा देहो विष्णोर्न[2] जायते ।**
**किन्तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् ।**
**प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।**
**तथाऽप्यसुरमोहाय परेषां च क्वचित्क्वचित् ।**
**दुःखाज्ञानश्रमादीन् स दर्शयेत् शुद्धसद्गुणः ।**
**क्व व्रणादि क्वचाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे ।**
**दौर्लभ्यायैव मोक्षस्य दर्शयेत्तान्यजो हरिः ।**
**मिथ्यादर्शनदोषेण तेन मुक्तिं न यान्ति च ।**
**तमो यान्ति च तेनैव तस्माद्दोषविवर्जितम् ।**
**प्रादुर्भावगतं चैव जानीयाद्विष्णुमञ्जसा ॥'**

**इति ब्रह्माण्डे ।**

**'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते ।**
**अतो मिथोऽपि भेदो न तेषां कश्चित् कदाचन ।**
**स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु ।**
**भेदाभावेऽपि तेनैव व्यवहारश्च सर्वतः ॥'**

**इति परमोपनिषदि ॥**

**(त.मं.)** निर्दोषाशेषसद्गुणमिति विशेषणं साधयति - **वर्जित इति ॥** गुणानां सर्वरूपमेवास्य मूर्तिः । पूर्णगुणो विदोष इत्युक्त्वा स्वतन्त्र इत्यादिना गुणान् दोषाभावांश्चाह । **परेषां** स्वयोग्यतातिरिक्तशुभवतां सतां च मोहाय ।

ननु न गुणिन ईश्वरस्य गुणस्वरूपत्वं सम्भवति । तथा सति गुणमात्रत्वप्रसङ्गात् । नहि लोके तद्वतः तद्रूपत्वं दृष्टम् । तथाचायं प्रयोगः । तद्वांस्तन्न भवति । तद्वत्त्वात् । यो यद्वान् स तन्न । यथा छत्रीत्यत आह - **गुणेति ॥** आदिशब्दादिच्छाशक्त्यादयः ।

स्वरूपेऽपीत्यादेरयमर्थः । गुणिस्वरूपेऽपि गुणक्रियादिरूपो विशेषोऽस्ति । तस्मान्न गुण-मात्रत्वप्रसङ्गः । यथा स्वरूपिण एव स्वरूपत्वविशेषोऽस्त्येव । नहि तत्पक्षेऽपि स्वरूपिणः स्वरूपं भिन्नम् । भेदाभावेऽपि तेन

**विशेषेणैकस्वरूपस्वरूपिव्यवहारो गुणगुण्यादिव्यवहारश्च वर्तते । अत्रचोक्तं तत्त्वदीपिकायाम् । सोयमेकत्रापर्यायिनानाशब्दप्रवृत्तिहेतुः । एवंभूते विशेषे किं प्रमाण-मिति चेत् । न प्रमाणप्रश्नः । एवंभूतत्वं न विशेषात् भिन्नमिति । अनेनैव हेतोश्चानैकान्तिकत्वं साधितम् । स्वरूपिण एव स्वरूपत्वदर्शनात् । महोपनिषदादिविरोधादेव कालात्ययापदिष्टत्वं च ।**

**टीका-** जगज्जन्मादिकर्तारं समस्तगुणसागरम् ।
अवद्यगन्धविधुरं हरिं वन्दे निरन्तरम् ॥

क्रमप्राप्तं विष्णोर्निर्दोषाशेषसद्गुणत्वं श्रुतिपुराणवाक्याभ्यां साधयति- **वर्जित इति ॥** अत्र गुणशब्दः शुभवचनः । दोषाभावस्य गुणत्वेऽपि भावाभावरूपतया पृथगुक्तिः । गुणानां **सर्वस्वं** साकल्यं तदेव मूर्तिस्तद्वान् । विग्रहवत्त्वात् कथं सर्वदोषैर्वर्जितः । विग्रहस्य दोषाविनाभूत-त्वादित्येतत्परिहारायेदमुक्तम् । उभयोपपादनम्- **स्वतन्त्र इति ॥** स विष्णुरित्यादि साध्यनिर्देशः। एवमेव नित्येत्यादिवाक्ययोजना । **चेद्** यदि, तर्हीति शेषः । उत्पत्तिरेव दोषव्याप्ता । मानुषेषु तु सुतराम् । चिन्तादियुग् अनुमानेन दृश्यते, व्रणादियुक् प्रत्यक्षेण । त्वद्वचनेन प्रत्यक्षादिदर्शनेन च जात एष संशयः । **मर्त्यैः** किमु ।

मानुषेषु कथमुदपद्यतेत्यस्य परिहारः- **स्त्रीति ॥** समासान्तो विधिरनित्य इति स्त्रीपुंसेति नोक्तम् । **मलं** शुक्लशोणितम् । **अभियोगः** सम्बन्धः । स **आत्मा** कारणं यस्य देहस्य स तथोक्तः। 'विज्ञानमानन्दं ब्रह्म' इतिवत् सुखशब्दस्य विशेष्यलिङ्गता । अत एव चिन्तादिदोषरहितोऽपि । तर्हि कथं तद्दर्शनमित्यत आह- **तथाऽपीति ॥ परेषां** सज्जनानां च मोहाय । दोषाभावमेव प्रकटयति- **क्वेति ॥** असुरादिमोहनं किमर्थमित्यत आह- **दौर्लभ्यायैवेति ॥** असुराणामत्यन्तं तमःप्राप्तये परेषां विलम्बाय । तेन कथं मोक्षदौर्लभ्यमित्यत आह- **मिथ्येति ॥** मुक्तिं न यान्ति । अत्यन्तमविलम्बेन च तमो यान्ति चासुराः ।

अत्र केचित्परमात्मा निर्गुण एवेति प्रतिपन्नाः । सगुणत्वेऽपि गुणानां ततः परस्परं चात्यन्तं भेदमेके मन्यन्ते । अपरे भेदाभेदौ । अन्ये त्वानन्दादयो द्विविधाः स्वरूपभूता भिन्नाश्चेति । एतत्पक्षचतुष्टयनिरासेन स्वपक्षं श्रुत्यैव साधयति- **गुणेति ॥** आदिपदेन जात्यादिग्रहणम् । अनेन परमात्मनो गुणादयः सन्ति । ते च तेनात्यन्ताभिन्ना इति वचनेन चत्वारोऽपि पक्षा निरस्ताः । अन्यदिति भेदाभेदावानन्दादिद्वैविध्यं च । **अत** एकेन परमात्मनाऽत्यन्ताभिन्नत्वात् । कथं तर्ह्यानन्दं ब्रह्मण इत्यादिसम्बन्धव्यवहारो, गुणेषु बहुवचनव्यवहारो, गुणिन्येकवचनं, शब्दानामपर्यायत्वं चेत्यत आह- **स्वरूपेऽपीति ॥** अभिन्नेऽपीत्यर्थः । विशेषो नाम काचन वस्तुनः शक्तिः । तत्सम्भा-वनार्थं दृष्टान्तमाह- **स्वरूपत्ववदिति ॥** नहि स्वरूपे स्वरूपत्वं नाम भिन्नो धर्मोऽस्ति । अस्ति च त्वप्रत्ययः । न चासौ निर्विषयः, अप्रयोगप्रसङ्गात् । अतोऽस्ति तत्प्रवृत्तौ किमपि निमित्तम् । स एव विशेषः । एवमन्यत्रापि वेदितव्यमिति । अस्त्येवेति सम्बन्धः । तेन प्रमाणवत्तां सूचयति । यथोक्तम्- येन प्रत्यक्षसिद्धेनेत्यादि । तुशब्देन वैशेषिकाभ्युपगताद् विशेषाद्व्यवच्छिनत्ति । यद्यस्ति ततः किमित्यत आह- **भेदेति ॥ व्यवहारः** सम्बन्धादिविषयः ।

**(र.टि.)** व्याचिख्यासितपरिच्छेदप्रतिपाद्यविशेषणयुक्तं हरिं नमति- **जगज्जन्मादिकर्तारमिति ॥ क्रम-प्राप्तमिति ॥** निर्देशक्रमेण प्राप्तमित्यर्थः । **शुभवचनमिति ॥** तथा च दुःखादीनामपि गुणत्वात्कथं गुणसर्वस्व-मूर्तिमत्त्वं सर्वदोषविवर्जितत्वोपपादकमिति वक्ष्यत इति शङ्काऽनवकाश इति भावः । **चेद्यदीति ॥** कथमिति-शब्दबलादस्य तर्करूपत्वमवगम्यते । चेच्छब्दस्य शङ्कार्थत्वे तन्न स्यादिति भावः । मानुषेष्वित्यस्य वैयर्थ्यं परिहरति- **उत्पत्तिरेवेति ॥ अनुमानेनेति ॥** चिन्तादेरान्तरत्वेन परप्रत्यक्षाविषयत्वादिति भावः । दोषाभाव-लक्षणकोट्युपस्थापकाभावात्कथं संशय इत्यत आह- **त्वद्वचनेनेति ॥ मर्त्यैः किम्विति ॥** अनेनापरैरित्यस्य रुद्रादिदेवैरित्यर्थः इत्युक्तं भवति । ननु स्त्रीपुंमलात्मेत्यादिनोत्पत्तिलक्षणदोष एव परिहृतो न तु चिन्तारूपदोष इति कथं तत्प्रदर्शनगतिः तथाऽपीत्यादिना कथ्यते इत्यत आह- **अत एव चिन्तादीति ॥ येन प्रत्यक्ष-सिद्धेनेत्यादीति ॥** अत्राऽदिपदेन

विशेषस्यार्थापत्त्यादिसिद्धत्वप्रतिपादक 'भेदहीने त्वपर्यायशब्दान्तरनियामकः' इत्यादिवाक्यग्रहणम् ॥

**(रा.टि.)** मङ्गलमाचरति- **जगदिति ॥** विशेषणद्वयेन परिच्छेदार्थोक्तिः । समस्तगुणसागरत्वावद्यगन्ध-विधुरत्वयोरुपपादनाय- **जगज्जन्मादिकर्तारमिति ॥** निरन्तरमित्येतत्पूर्वविशेषणेष्वप्यनुसन्धेयम् । **क्रमप्राप्त-मिति ॥** आद्यपद्ये यथोद्देशप्राप्तमित्यर्थः । गुणशब्दस्य सत्त्वादिषु प्रसिद्धेः परमते दुःखादेर्गुणत्वेन परिगणनाच्च तद्व्युदासायाऽह- **गुणशब्द इति ॥ साध्यनिर्देश इति ॥** दोषहीनो गुणसर्वस्ववान् विष्णुर्भवितुमर्हति स्वातन्त्र्यादित्येवमुक्तं भवतीति भावः । चेच्छब्दस्य शङ्कार्थत्वनिरासेनास्य तर्करूपताद्योतनायार्थमाह- **चेद्य-दीति ॥** यदि निर्दोषस्तर्हि कथं रामकृष्णादिरूपेणोत्पद्येत नोत्पद्येतेत्येतावता पूर्तौ मानुषेष्विति किमर्थमुक्त-मित्यतोऽनुवादव्याजेन कृत्यं सूचयति- **उत्पत्तिरेवेति ॥** आपाद्यापादकयोर्व्यतिरेकप्रदर्शनार्थं मानुषेष्वि-त्युक्तमित्यर्थः । तावता निर्दोषत्वविधानसिद्धेश्चिन्तेत्यादि किमर्थमित्यतः कैमुत्यसूचनायेति भावेनैवेत्येवकार-प्रयोगः । **अनुमानेनेति ॥** मुखम्लानतास्वेदादिलिङ्गेनेन्द्रजित्कृतोरगबन्धादिना व्रणादिकं तत्कालवृत्तिलोक-प्रत्यक्षेण दृश्यत इत्यर्थः । न दृश्येतेत्यापाद्यं व्याप्तिश्च प्राग्वत् । मानुषेष्वेवेति भावः । **त्वद्वचनेनेति ॥** निर्दोषो भगवानित्यादित्वद्वचनेनेत्यर्थः । नारदो ब्रह्माणं प्रति वक्ति । मर्त्यैः किम्वित्युक्त्या अपरैरित्यस्य ब्रह्मेतर-देवर्ष्यादिभिरित्यर्थः सूचितो भवति । 'अचतुरविचतुरसुचतुरस्त्रीपुंस' इति सूत्रेऽकारान्ततया निपातनात्कथं स्त्रीपुंमलेत्युक्तिरित्यत आह- **समासान्त इति ॥** 'ऋक्पूरब्धूःपथामानक्षे' इति पथानामिति वाच्ये पथामिति निर्देशस्य समासान्तो विधिरनित्य इति ज्ञापनार्थत्वादिति वैयाकरणोक्तेरिति भावः । चिन्तादिदोषपरिहारः कुतो नोक्त इत्यत आह- **अत एवेति ॥** अप्राकृतविग्रहत्वादेवेत्यर्थः । परेषां विलम्बायेत्यत्र सज्जनानां मोक्ष-विलम्बायेत्यर्थः । कथं मोक्षदौर्लभ्यमित्यत्र प्रागुक्तद्विरूपदौर्लभ्यमित्यर्थः । **भेदाभेदाविति ॥** निरस्तावित्यन्वयः। **द्वैविध्यमिति ॥** नितस्तमित्यन्वयः । अत इत्यनुवादः एकेनेत्यादि व्याख्या । **तत्प्रवृत्ताविति ॥** त्वप्रत्यय-प्रयोगप्रवृत्तावित्यर्थः । **एवमन्यत्रापीति ॥** गुणक्रियादावपीत्यर्थः । **यथोक्तमिति ॥** वैशेषिकनयानुव्याख्याने-

**(रा.टि.)** 'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ।
भावाभावविभागेन यं विना न कथञ्चन ।
एतादृशे विशेषेऽस्मिन् को द्वेषो वादिनां भवेत् ॥'

इत्युक्तमित्यर्थः । **वैशेषिकेति ॥** नित्यद्रव्यगता(अन्त्या)(अनन्ता)विशेषा इत्येवंभूताद्विशेषादित्यर्थः ।

**(श्री.टि.)** विश्वोत्पत्त्यादिकर्तारमनन्तगुणवारिधिम् ।
दोषलेशविहीनं तं वेदव्यासं सदा भजे ॥ १ ॥

व्याचिख्यासिततृतीयपरिच्छेदप्रतिपाद्यविशेषणविवरणपूर्वकं तद्विशेषणयुक्तं हरिं नमति- **जगज्जन्मा-दीति ॥ अवद्यगन्धेति ॥** दोषलेशेत्यर्थः । 'गन्धः सौरभ्यलेशयोः' इत्यभिधानात् । **निरन्तरमिति ॥ अन्तरं** व्यवधानं विना सदेत्यर्थः । यद्वा भगवद्गुणानां भगवता भेदशङ्कापरिहाराय निरन्तरमित्युक्तम् । निर्भेदमित्यर्थः। **क्रमप्राप्तमिति ॥** सदागमैकविज्ञेयम् इत्याद्यपद्ये निर्देशक्रमप्राप्तमित्यर्थः । ननूत्तरत्र गुणसर्वस्वमूर्तिमत्त्वं सर्वदोषविवर्जितत्वोपपादकमित्युच्यते । तत्र दुःखादीनामपि गुणत्वेन परमते व्यवहारात्तदात्मकमूर्तिमत्त्वं कथं सर्वदोषविवर्जितत्वस्योपपादकं स्यादित्यत आह- **शुभवचन इति ॥** शुभधर्मवचन इत्यर्थः । तथा च गुणशब्देन दुःखादीनामप्रसक्तिरिति भावः । ननु 'दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि' इति वचनात्, अक्रौर्यं गुणः आरोग्यं गुण इति प्रयोगाच्च दोषाभावस्यापि गुणत्वेन गुणसर्वस्वमूर्तिमानित्यनेनैव सर्वदोषविवर्जितत्वस्य लब्धत्वाद्वर्जितः सर्वदोषैरिति पृथगुक्तिर्व्यर्थेत्यत आह- **दोषाभावस्येति ॥ भावाभावरूपतयेति ॥** भावा-भावरूपधर्मविवक्षयेत्यर्थः । **मूर्तिः** देहः । किमस्य विशेषणस्य प्रयोजनमित्यत आह- **विग्रहवत्त्वादिति ॥ इदमुक्तमिति ॥** गुणसर्वस्वमूर्तिमानिति विशेषणमुक्तमित्यर्थः । तथा च प्राकृतविग्रहस्यैव दोषाविनाभूतत्वाद् भगवद्विग्रहस्य चातथात्वान्नोक्तदोष इति भावः ।

'यदधीना गुणाश्चैव दोषा अपि हि सर्वशः ।
गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः ॥'

इत्यनुव्याख्यानं मनसि निधायाऽह- **उभयोपपादनमिति ॥** गुणपूर्णत्वनिर्दोषत्वयोरुभयोरुपपादनमित्यर्थः । तथा हि । द्वेधा हि वस्तु न प्राप्यते, तत्र स्वातन्त्र्याभावाद् प्रेप्साभावाद्वा । द्वेधा च न हीयते । स्वातन्त्र्याभावाद्वा जिहासाभावाद्वा । अस्ति च तावदीश्वरस्य सर्वतः स्यातन्त्र्यम्, अस्ति च मया सर्वदा आनन्दादिगुणवता दुःखादिदोषवर्जितेन च भवितव्यमितीच्छा ।

प्रेप्सावत्त्वादतः कथं तस्याऽनन्दादिगुणपूर्णत्वं दुःखादिदोषदूरत्वं च न भवति। अत्रैते प्रयोगाः- ईश्वरः सर्वगुणपूर्णः सर्वदोषदूरश्च स्वतन्त्रत्वात्, व्यतिरेकेण यज्ञदत्तवत्। ईश्वरो विप्रतिपन्नगुणवान् तत्र प्रेप्सावत्त्वे सति स्वतन्त्रत्वात्। यो यत्र प्रेप्सावत्त्वे सति स्वतन्त्रः स तद्वान् यथा सम्प्रतिपन्नः। ईश्वरो न विमतदोषवान् तज्जिहासुत्वे सति स्वतन्त्रत्वात्। यो यत्र जिहासावत्त्वे सति स्वतन्त्रः **(श्री.टि.)** स तदभाववान् यथा सम्मत इति। **एवमेवेति ॥** अत्रापि गुणशब्दः शुभवचनः। दोषाभावस्य गुणत्वेऽपि भावाभावरूपतया पृथगुक्तिः। उभयोपपादनं स्वतन्त्र इति। परमो विष्णुरिति साध्यनिर्देश इत्येवं वर्जित इति वाक्ययोजनावदेव नित्यपूर्णेत्यादिवाक्ययोजनाऽपि द्रष्टव्येत्यर्थः। 'निर्दोषश्चेत्कथं विष्णुर्मानु-षेषूदपद्यत' इत्यस्य तर्करूपत्वं तावत्कथंशब्दबलादवगम्यते। तत्र चेच्छब्दस्य शङ्कार्थत्वे तन्न स्यादतो व्याचष्टे- **चेद्यदीति ॥** चेच्छब्दो यदीत्यर्थक इत्यर्थः। तथा च विष्णुर्यदि निर्दोषः स्यात्कथं तर्हि मानुषेषूदपद्यत। मानुषेषूत्पत्त्यादिकं न स्यादिति यावदित्यर्थो द्रष्टव्यः। मानुषेष्विति विशेषणवैयर्थ्यमाशङ्क्य तदभिप्रायमाह- **उत्पत्तिरेवेति ॥** मानुषेषु तूत्पत्तिः सुतरां दोषव्याप्तेत्यर्थः। व्रणस्य प्रत्यक्षत्वेऽपि चिन्तादेरान्तरत्वेन परप्रत्यक्षाविषयत्वाद् दृश्यत इत्ययुक्तमित्यतो व्याचष्टे- **अनुमानेन दृश्यत इति ॥** ज्ञायत इत्यर्थः। दोषाभावलक्षणकोटयुपस्थापकाभावात्कथं संशय इत्यत आह- **त्वद्वचनेन चेति ॥** (निर्दो)विदोषः सर्वदैव य इति त्वद्वचनेनेत्यर्थः। **मर्त्यैः किम्विति ॥** अनेनापरैरित्यस्य त्वद्व्यतिरिक्तै रुद्रादिदेवैरित्यर्थ इत्युक्तं भवति। मूले- **हृदि शल्यमिवेति ॥** यथा हृदि लग्नशल्यं शक्त्या सामर्थ्येनोद्ध्रियत इति लोके दृष्टं तथा तमिमं संशयरूपं शल्यं समीचीनोक्तिसामर्थ्येनोद्धरेत्यर्थः।

ननु स्त्रीपुंमलेति कथम्? 'अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनस' इत्यादिसूत्रे समासान्ताच्-प्रत्ययान्तानां पञ्चविंशतिशब्दानां निपातितत्वेन स्त्रीपुंसमलेति वक्तव्यत्वादित्यत आह- **समासान्तो विधिरनित्य इति ॥** समासान्ताच्प्रत्ययविधानं क्वचित्स्यात्क्वचिन्न स्यादित्यर्थः। **शुक्लशोणितमिति ॥ शुक्लं** रेतः **शोणितं** रक्तं तत्र स्त्रीमलं शोणितं पुरुषमलं रेत इति विवेको द्रष्टव्यः। अभियोग आग्रह इत्यन्यथा प्रतीतेरभियोग-शब्दार्थमाह- **सम्बन्ध इति तथोक्त इति ॥** स्त्रीपुंमलाभियोगात्मेत्युक्त इत्यर्थः। तथा च स्त्री च पुमांश्च स्त्रीपुमांसौ तयोर्मलं स्त्रीपुंमलम्। स्त्रीपुंमलस्याभियोगः स्त्रीपुंमलाभियोगः। स आत्मा कारणं यस्य स स्त्रीपुंमलाभि-योगात्मा। स्त्रीपुंमलाभियोगात्मा देहो यस्यासौ स्त्रीपुंमलाभियोगात्मदेह इति विग्रहो द्रष्टव्यः। ननु सुखशब्दस्य नित्यनपुंसकत्वात्सुखामिति कथमुक्तमित्यतो विशेष्यनिघ्नत्वाददोष इत्येतत्सदृष्टान्तमाह- **विज्ञानमानन्द-मिति ॥** विशेष्यभूतब्रह्मशब्दस्य नपुंसकत्वेन तद्विशेषणभूतानन्दशब्दस्य नित्यपुंलिङ्गस्यापि यथा नपुंसकत्वं दृष्टम्, एवं विशेष्यभूततनुशब्दस्य स्त्रीलिङ्गत्वेन तद्विशेषणीभूतसुखशब्दस्यापि स्त्रीलिङ्गत्वं युक्तमित्यर्थः। ननु स्त्रीपुंमलाभियोगात्मेत्यादिना कथं मानुषेषूदपद्यत इत्युक्तोत्पत्तिलक्षणदोष एव परिहृतो न तु चिन्ताज्ञानश्रम-दुःखादिदोषाः परिहृताः। तथा च तथाऽपीत्यादिना चिन्तादिप्रदर्शनस्य गतिकथनमसङ्गतं स्यादित्यतो न चापरेत्यनन्तरं शेषं पूरयति- **अत एवेति ॥** निर्दोषचैतन्यसुखरूपदेहवत्त्वादेवेत्यर्थः। एवं सति तथाऽपीत्यादिना चिन्तादिप्रदर्शनस्य गतिकथनं सङ्गतमिति भावः। 'सतामपि च कुत्रचित्' इति तात्पर्यनिर्णयगतं वाक्यं हृदि निधाय परेषामित्यस्यार्थमाह- **सज्जनानामिति ॥** स्वरूपयोग्यतामतिक्रम्य साधनानुष्ठातार एधमानास्तद्विट्-त्वाद्भगवत इति भावः। तथा च श्रुतिः- 'एधमानद्विलुभयस्य राजा' इति। उक्तं च भगवत्पादैः-

**(श्री.टि.)** 'एधमानद्विडित्येव विष्णोर्नाम हि वैदिकम्' इति,

'स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते।
कथञ्चिदधिके यत्ने(दोषः)विघ्नः कश्चित् समापतेत्॥' इति च।

असुरादीत्यादिपदेन सज्जनग्रहणम्। ननु पूर्वमसुराणां सज्जनानां च प्रकृतत्वादुभयेषामपि मोक्षदौर्लभ्यं प्रतीयते तदयुक्तम्। सज्जनानां मोक्षस्य प्रमाणप्रमितत्वेन दोर्लभ्यायोगादित्यत आह- **असुराणामित्यादि ॥** तथा चासुराणां तमःप्राप्त्या मोक्षदौर्लभ्यं,स्वरूपयोग्यतामतिक्रम्य साधनानुष्ठातॄणां सज्जनानां मोक्षविलम्ब एव दौर्लभ्यं न त्वसुराणामिव तदभाव इति भावः। **तेनेति ॥** (व्रणा) दुःखाज्ञानादिदोषप्रदर्शनेनेत्यर्थः। **दौर्लभ्यमिति ॥** असुराणां सज्जनानां चेति शेषः। मूले मिथ्यादर्शनदोषेणेत्यस्य मिथ्याभूतं यद् व्रणादिकं तद्दर्शनजन्यदोषेणेत्यर्थो द्रष्टव्यः।

मुक्तिं न यान्तीत्यत्र सज्जनानामपि मुक्त्यभावः प्रतीयते। स च प्रमाणविरोधादनुपपन्न इत्यतः सज्जनपक्षे मुक्तिं न यान्तीत्यस्याभिप्रायमाह- **अत्यन्तमविलम्बेनेति ॥** तथा चासुराणां सर्वथा मुक्त्यभाव एव। सज्जनानां त्वविलम्बेन मुक्तिर्न भवति, किं नाम मिथ्यादर्शनदोषेण विलम्बेन मुक्तिं प्रयान्तीत्येव। न तु सर्वथा मुक्त्यभाव इत्यर्थः। तमो यान्ति चेत्यत्र सज्जनानामपि कर्तृत्वप्रतीतिनिरासाय शेषं पूरयति- **तमो यान्ति चासुरा इति ॥ अत्रेति ॥** विष्णोर्नित्यपूर्णाखिलगुणात्मकत्वप्रतिपादनावसर

इत्यर्थः । **केचित्** मायिनः। **ततः** परमात्मनः । **मन्यन्ते** तार्किकाः । **द्विविधा इति ॥** न चैवं भेदाभेदपक्षसाङ्कर्यम् । भेदाभेदपक्षे एकस्यैवाऽनन्दादेः परमात्मना भेदोऽभेदश्चाङ्गीकृतः । एतन्मते तु आनन्दादयो गुणा द्विविधाः परमात्मस्वरूपभूतास्तद्भिन्नाश्चेति । तत्राऽ-द्यानामभेदः । द्वितीयानां वैषयिकानन्दादीनां भेद एवेत्यङ्गीकारादिति द्रष्टव्यम् । **जात्यादीति ॥ जातिः** परमात्मत्वादिरूपो धर्मः । आदिपदेनावयवादिग्रहणम् । ननु गुणक्रियादीनां विष्णुस्वरूपत्वोक्त्या निर्गुणत्वात्यन्तभेदपक्षयोर्निरासेऽपि भेदाभेदपक्ष आनन्दादिद्वैविध्यपक्षश्च कथं निरस्त इत्यतोऽन्यदितिपदेन तदुभयपक्षनिरास इत्याह- **अन्यदितीति ॥** ननु गुणादीनां परमात्मनाऽत्यन्ताभेदलाभेऽपि कथं परस्परं भेदाभावः, हेत्वभावादित्याशङ्कापरिहारायोक्तस्यात इत्यस्यार्थमाह- **अत इति ॥ एकेनेति ॥** यद्यदभिन्नाभिन्नं तत्तेनाभिन्नम्, यथा रामाभिन्ननारायणाभिन्नः कृष्णो रामाभिन्न इति व्याप्तिबलादानन्दाद्यभिन्नविष्ण्वभिन्नो ज्ञानादिरानन्दाभिन्न इति भावः । **कथं तर्हीति ॥** गुणानां भगवता परस्परं चात्यन्ताभेदाङ्गीकार इत्यर्थः । **वस्तुनः शक्तिरिति ॥** वस्तुनो धर्मभूतोऽभेदे भेदकार्यकारित्वशक्तिमान् पदार्थो विशेष इति योज्यम् । अन्यथा गुणगुण्यादिपदार्थशक्तिरेव विशेष इति प्राप्त्या ग्रन्थान्तरविरोधापत्तेः । तत्र गुणगुण्यादिभेदव्यवहारनिर्वाहकस्य गुणिनिष्ठस्य विशेषरूप-पदार्थस्यातिरिक्तस्यैव प्रतिपादनादित्यवगन्तव्यम् । यथोक्तमनुव्याख्याने-

'भेदहीने त्वपर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥' इति ।

**(श्री.टि.) तत्सम्भावनार्थमिति ॥** एतादृशविशेषेऽसम्भावनाशङ्कापरिहारार्थमित्यर्थः । **न हीति ॥** स्वरूपत्व-रूपधर्मस्य स्वरूपाद्भिन्नत्वे द्रव्याद्यन्तर्भावो वाच्यः । स तु न सम्भवति । तथा हि- न तावत्स्वरूपत्वं द्रव्यम् । गुणस्वरूपेऽपि सत्त्वात् । गुणे च द्रव्याभावात् । नापि गुणः । कर्मस्वरूपेऽपि सत्त्वात् । कर्मणि च गुणाभावात् । नापि कर्म । सामान्यस्वरूपेऽपि सत्त्वात् । सामान्ये च कर्माभावात् । नापि सामान्यम् । विशेषस्वरूपेऽपि सत्त्वादित्येवं द्रव्याद्यन्तर्भावासम्भवेन षट्पदार्थातिरेकः स्यादित्याशयः । यथोक्तमनुव्याख्याने-

'षट्पदार्थातिरेकः स्यात्' इत्यादि ।
'न स्वरूपत्वसामान्यं केनाप्यङ्गीकृतं क्वचित् ।
स्वरूपं चेदनुगतं व्यावृत्तं तत्र किं भवेत् ।
किं व्यावृत्तमिति प्रश्ने स्वरूपमिति केवलम् ।
स्यादुत्तरं ततोऽन्यच्चेत्तदेव स्वयमेव नः ॥'

इति भक्तिपादीयानुव्याख्यानोक्तरीत्या स्वरूपत्वं न स्वरूपाद्भिन्नो धर्मोऽस्तीति भाव इत्यप्याहुः । **त्वप्रत्यय इति ॥** स्वरूपस्य भावः स्वरूपत्वमिति भेदकार्यभूतो धर्मधर्मिव्यवहार(हेतु)(रूप)स्त्वप्रत्ययप्रयोगोऽस्ती-त्यर्थः । **निर्विषय इति ॥** निरर्थक इत्यर्थः । अस्तु निरर्थकः को दोष इत्यत आह- **अप्रयोगेति ॥** त्वप्रत्ययस्येति शेषः । निरर्थकशब्दस्य प्रेक्षावताऽप्रयुज्यमानत्वादिति भावः । **अन्यत्रापीति ॥** सत्त्वपदार्थत्वादावपीत्यर्थः । तथा च सत्त्वादिकमपि नातिरिक्तो धर्मोऽस्ति, अस्ति च त्वप्रत्ययः । अतोऽस्ति तत्प्रवृत्तौ किमपि निमित्तं, स एव विशेष इति भावः । किं तत्प्रमाणमित्यत आह- **यथोक्तमिति ॥** समयपादीयानुव्याख्याने भगवत्पादैरि-त्यर्थः । इत्यादीत्यादिपदेन विशेषस्यार्थापत्तिसिद्धत्वप्रतिपादकं 'भेदहीने त्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः' इत्यादिवाक्यं ग्राह्यम् । **वैशेषिकाभ्युपगतादिति ॥** नित्येष्वेव द्रव्येष्वेव वर्तन्त एवेति विशेषाः। अन्त्यव्यावृत्तिहेतुर्विशेषः । 'अजातिरेकवृत्तिश्च विशेष इति गीयते' इति लक्षितादित्यर्थः ।

**(पां.टि.)** ॐ यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

व्याचिख्यासितपरिच्छेदप्रतिपाद्यविशेषणविवरणपूर्वकं तद्विशेषणयुक्तभगवन्नतिस्तुतिरूपमङ्गलमादा-चरति- **जगज्जन्मादीति ॥** समस्तगुणसागरमित्यत्र प्रकृत्यादिभ्य उपसङ्ख्यानात्समस्तगुणैरिति तृतीया । 'तृतीया तत्कृतार्थे' इति सूत्रे तृतीयेति योगविभागाद्वा 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणाद्वा तृतीयासमास इति ज्ञेयम् । **क्रमप्राप्तमिति ॥** यद्यपि नेदमाकाङ्क्षाक्रमप्राप्तं, तथाऽपि निर्देशक्रम एवात्र विवक्षितः । न त्वाकाङ्क्षा-क्रमः । आद्यश्लोकोक्तविशेषणसाधने आकाङ्क्षाक्रमस्याविवक्षिततया निर्देशक्रमस्यैव च विवक्षिततायाः पूर्वं टीकाकारैरुक्तत्वात् । एवञ्च निर्देशक्रमप्राप्तत्वाभिप्रायेण निर्दोषाशेषसद्गुणत्वस्य क्रमप्राप्तत्वोक्तिरियमिति

**(पां.टि.)** द्रष्टव्यम् । **गुणशब्दः शुभवचन इति ॥** अन्यथा दुःखादिष्वपि गुणशब्दप्रयोगात्तेषां तेन शब्देन प्राप्तौ गुणसर्वस्वमूर्तिमत्त्वस्य वक्ष्यमाणसर्वदोषवर्जितत्वोपपादकत्वानुपपत्तिप्रसङ्गादिति भावः । **गुणत्वेऽ-पीति ॥** 'दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि' इत्यनुव्याख्यानोक्तेरिति भावः । गुणसर्वस्वेत्यादिविशेषण-प्रयोजनमाह- **विग्रहवत्त्वादिति ॥** अनेन विग्रहवत्त्वेन दोषवत्त्वान्न तस्य सर्वदोषवर्जितत्वमित्यतो गुणसर्वस्व-मूर्तिमानित्युक्तम् । ततश्च दोषाविनाभूतस्य प्राकृतस्य भौतिकस्य वा देहस्य भगवत्यभावाद्विद्यमानस्य च ज्ञानानन्दाद्यात्मकस्य विग्रहस्य दोषाविनाभूतत्वाभावेन तद प्रापकत्वाद्युक्तं तस्य विग्रहवत्त्वेऽपि दोषवर्जितत्व-मिति विशेषणद्वययोजना हेतुहेतुमद्भावेनोक्ता भवति । **तदुभयेति ॥** चेतनान्तरे सर्वदोषवर्जितत्वस्य गुण-सर्वस्वमूर्तिमत्त्वस्य चादृष्टत्वेन भगवति तद्विशेषणद्वयासम्भवशङ्कापरिहारार्थं स्वतन्त्र इत्युक्तम् । ततश्चान्येषा-मस्वतन्त्रतया तद्वत्त्वासम्भवेऽपि विष्णोस्तद्वत्त्वं सम्भवतीति योजनोक्ता भवति । पूर्ववाक्यवदुत्तरवाक्यस्यापि दुर्गमत्वादवश्यं व्याख्येयस्य कुतो व्याख्यानं न क्रियत इत्यतः पूर्ववाक्यव्याख्यानेनैवोत्तरवाक्यस्य व्याख्यातत्वान्न तदिति भावेन पूर्ववाक्यव्याख्यानमेव तद्वाक्यव्याख्यानतयाऽतिदिशति- **एवमेवेति ॥** अत्रापि गुणशब्दः शुभ-वचनः । भावाभावरूपतया दोषाभावस्य पृथग्ग्रहणम् । विग्रहवत्त्वात्कथं सर्वदोषविवर्जितत्वमित्यतो नित्य-पूर्णाखिलगुण इत्युक्तम् । तत्त्वं च नित्यपूर्णाखिलगुणमूर्तित्वम् । तदुभयोपपादनं स्वतन्त्र इति । स विष्णुरिति साध्यनिर्देश इति वाक्ययोजनेत्यर्थः । कथमित्यनेन प्रतिपन्नतर्करूपत्वनिर्वाहाय शङ्कार्थकं चेच्छब्दं यदिशब्दार्थ-परतया व्याचष्टे- **चेद्यदीति ॥** उदपद्यत इत्यनेनैव विवक्षितार्थसिद्धेर्मानुषेष्वित्येतद् व्यर्थमित्यतोऽर्थविशेष-सूचनार्थत्वान्न तदिति भावेन तद्विशेषणसूचितमर्थविशेषं दर्शयति- **उत्पत्तिरेवेति ॥**

ननु परमात्मगतचिन्तादीनामप्रत्यक्षत्वाद् दृश्यत इति तद्दृश्यत्वोक्तिरनुपपन्नेत्यतो योजयति- **अनुमाने-नेति ॥ प्रत्यक्षेणेति ॥** यद्यपि 'न विष्णोर्दोषवत्त्वे हि प्रत्यक्षं वर्तते स्वतः' इत्यन्यत्रोक्तेर्न प्रत्यक्षस्य व्रणादि-दोषग्राहकत्वमपि । तथाऽपि

'शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ।
प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान्मुदे मुकुन्दः ॥'

इति वचनावगतव्रणादिदोषग्राहकभीष्मादिप्रत्यक्षाभिप्रायेणेयमुक्तिरिति द्रष्टव्यम् । दोषाभावलक्षणकोट्युपस्थाप-काभावात् कथमयं संशय इत्यतः, त्वद्वचनस्यैव तत्कोटिप्रापकस्य सत्त्वाद्युक्त एवैवंरूपः संशय इति भावेनोक्तम्- **त्वद्वचनेनेति ॥** कुतो मां प्रत्येवायं प्रश्न इत्यतोऽन्यस्य परिहारकस्याभावात्त्वां प्रत्येव प्रश्न इति भावेन प्रवृत्ते अनुद्धार्योऽपरैर्मर्त्यैरिति वाक्ये अपरैरित्येतावता पूर्तेर्मर्त्यैरित्येतद्विशेषणमनर्थकमित्यतो विशेषसूचकत्वात्तस्य न तदिति भावेन तत्सूचितं विशेषं दर्शयति- **मर्त्यैः किम्विति ॥** अनेनापरै रुद्रादिभिर्यदाऽनुद्धार्यः तदा मर्त्यैरनुद्धार्यः किम्विति वाक्ययोजनोक्ता भवति ।

ननु 'अचतुर' इति सूत्रे स्त्रीपुंसेति निपातितत्वात् स्त्रीपुंसमलेति भवितव्यम् । स्त्रीपुंमलेति तु कथमित्यत **(पां.टि.)** आह- **समासान्तेति ॥** तदनित्यत्वे ज्ञापकस्तु 'शुच्याम्पि तडागानि' इति भाष्यकारीयः प्रयोग एव । समासान्तविधेर्नित्यत्वे हि 'ऋक्पूरब्धूः पथामानक्षे' इति समासान्तेऽकारे सति निष्पन्नशुच्यपशब्दस्या-कारान्ततया तस्मात् परस्य जसः 'जश्शसोः शिः' इति शौ तस्य 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसञ्ज्ञायां तस्मिन् परतो 'नपुंसकस्य झलचः' इत्यजन्तक्लीबतया नुमि 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधादीर्घतायां शुच्यपानीति रूपनिष्पत्तेः शुच्याम्पीति भाष्यकारीयप्रयोगासाधुत्वप्रसङ्गात् । समासान्तविधेरनित्यत्वे त्वकारप्रत्ययाप्राप्तौ झलन्तक्लीबतया 'नपुंसकस्य झलचः' इति नुमि 'अप्तृन्' इत्युपधादीर्घतायां स्वांपीत्यादि-वच्छुच्याम्पीति प्रयोगो भाष्यकारीय उपपद्यत इति परस्यापि तदनित्यत्वं सम्मतमित्यन्यत्र विस्तरः ।

ननु सुखशब्दस्य नपुंसकत्वान्निर्दोषचैतन्यसुखमिति वक्तव्यम् । सुखामिति स्त्रीलिङ्गन्तु कथमित्यतः पुंलिङ्गस्यापि आनन्दशब्दस्य विशेष्यनिघ्नतया 'विज्ञानमानन्दं ब्रह्म' इत्यत्र नपुंसकत्ववत्सुखशब्दस्यापि स्त्रीलिङ्ग-तनुशब्दविशेषणतया विशेष्यनिघ्नत्वात् सुखामिति स्त्रीलिङ्गनिर्देशोऽप्युपपन्न एवेत्याह- **सुखशब्दस्येति ॥** ननु स्त्रीपुंमलाभियोगात्मेत्यनेनोत्पत्त्यादिशङ्कितानेकदोषेषूत्पत्तिरूपदोष एव परिहृतः । न चिन्तादिरूपः । एवं च तत्प्रदर्शनगतेः न तथाऽपीत्यादिना सिद्धिरित्यत आह- **अत एवेति ॥** निर्दोषचैतन्यसुखात्मशरीरत्वादेवेत्यर्थः। असुराणामत्यन्तमप्राप्तिरूपदौर्लभ्यवत्परेषां तादृशदौर्लभ्यस्य, परेषां विलम्बमात्रवदसुराणां तादृशदौर्लभ्यस्य बाधितत्वेनैकरूपदौर्लभ्यस्याऽश्रयितुमशक्यत्वाद्योग्यतया असुरेष्वत्यन्तमप्राप्तिरूपमेव तत्, परेषु च विलम्ब-मात्रमेव तदिति भावेन दौर्लभ्यमुभयपरतया व्याचष्टे- **असुराणामत्यन्तमप्राप्त्य इत्यादिना ॥** मुक्तिं न यान्तीत्यत्राप्यसुराणां सर्वथा मुक्त्यभाववत्परेषां सर्वथा मुक्त्यभावस्य, परेषां विलम्बमात्रवदसुराणां विलम्ब-मात्रस्य च बाधिततयाऽऽश्रयितुमशक्यत्वादसुरादिषु भिन्नप्रकारमेव तदिति भावेन द्वेधा व्याचष्टे- **अत्यन्तमवि-लम्बेन चेति ॥** अनेन असुरा

अत्यन्तं मुक्तिं न यान्ति, परे चाविलम्बेन मुक्तिं न यान्तीति वाक्ययोजनोक्ता भवति । मुक्तिं न यान्तीत्यत्रैव तमो यान्ति चेत्यत्रापि असुराणां परेषां चान्वयभ्रान्तिं वारयति- **तमो यान्ति चासुरा इति ॥ एकेन परमात्मनाऽत्यन्ताभिन्नत्वादिति ॥** ततश्च यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेना-त्यन्ताभिन्नमिति व्याप्त्या ज्ञानाभिन्नपरमात्मनाऽत्यन्ताभिन्नस्यानन्दस्य ज्ञानेनात्यन्ताभिन्नत्वमेवेत्यनुमानमुक्तं भवति । स्वरूपत्ववदेवेत्येवकारस्य व्यर्थत्वाद्विरुद्धार्थत्वाच्च भिन्नक्रमतया तं व्याचष्टे- **अस्त्येवेति सम्बन्ध इति ॥** ननु भिन्नक्रमत्वेऽपि वैयर्थ्यं तदवस्थमित्यतोऽस्तित्वप्रमाणसूचकत्वान्न तदिति भावेन तदर्थमाह- **तेनेति ॥** किं तद्विशेषप्रमाणमित्यतः तत्सङ्ग्राहकं समयपादीयानुव्याख्यानमेवोदाहरति- **यथोक्तमिति ॥** आदिपदेन

'व्यवहारोऽखिलो भवेत् ।
भावाभावविभागेन यं विना न कथञ्चन ।
एतादृशे विशेषेऽस्मिन् को द्वेषो वादिनां भवेत् ॥'

**(पां.टि.)** इत्युदाहृतवाक्यशेषपरिग्रहः । **अभ्युपगतादिति ॥** विशेषादिति शेषः । सम्बन्धादीत्यादिपदेन बहुत्वादिपरिग्रहः ।

**(व्या.टि.)** लक्ष्मीपतिं पूर्णगुणं सर्वदोषविवर्जितम् ।
भजेऽन्वहं सर्वभव्यभूतयेऽभूतिनुत्तये ॥

आदिमध्ययोर्मङ्गलमाचर्यान्तेऽपि तदाचरति- **जगज्जन्मादीति ॥ अवद्यगन्धेति ॥ गन्धो** लेशः । 'गन्धो गन्धक आमोदे सम्बन्धे लेशगर्वयोः' इत्यभिधानात् । **क्रमप्राप्तमिति ॥** उद्देशक्रमप्राप्तमित्यर्थः । 'ननु त्रैगुण्यवर्जितम्' इति तद्वर्जनोक्तेः कथं तद्वत्त्वमित्यत आह- **अत्रेति ॥** न्यायनयं वा निराह- **अत्रेति ॥ दोषाभावस्येति ॥** दोषात्यन्ताभावस्येत्यर्थः । ननूभयोरपि गुणत्वेन गुणशब्देनोभयग्रहणसम्भवे किमिति पृथगुक्तिरित्यतोऽवान्तरविशेषद्योतनायेत्याह- **गुणत्वेऽपीति ॥ गुणानामिति ॥** शुभभावानामित्यर्थः । तदेवेत्यभावशुभव्यवच्छेदः । मूर्तिविशेषणकृत्यमाह- **विग्रहवत्त्वादिति ॥ इदमिति ॥** गुणसर्वस्वेति विशेषण-मित्यर्थः । 'प्रच्युतोऽशेषदोषैः सदा पूर्तितः' इत्यत्रोक्तेरित्यर्थः । **उभयेति ॥** यद्यपीदं गुणसर्वस्वमूर्तिमत्त्व-स्यैवोपपादकम् । न निर्दोषत्वस्य । तस्य तेनैवोपपादितत्वात् । तथाऽप्युपपादकोपपादकस्याप्युपपादकत्वा-दुभयेत्युक्तम् । निर्दोषत्वेऽभ्युच्चययुक्तिर्वा । **साध्येति ॥** फलमित्यर्थः । श्रुतिव्याख्यानं स्मृतावतिदिशति- **एवमिति ॥** ननूत्पत्तेरेव दोषव्याप्तत्वान्मानुषविशेषणं व्यर्थमित्यतो दार्ढ्यहेतुरयमित्याह- **उत्पत्तिरेवेति ॥ अनुमानेनेति ॥** चिन्तादीनां मनोधर्मत्वादित्यर्थः । **प्रत्यक्षेणेति ॥** व्रणादीनां देहधर्मत्वादित्यर्थः । **दर्शनेन चेति ॥**

ननु संशयो हि साक्षात्कारप्रभेदः । तत्कथं वचनेन दर्शनेन चेति । विजातीयोभयकारणकत्वे संशयवैजात्या-पत्तेः । अन्यथा जातिसाङ्कर्यापत्तेरिति चेन्न । न्यायमतमेतत्, न तत्वविन्मतम् । विपर्ययस्य प्रत्यक्षानुमानशब्दाभास-जन्यत्वानुभववत्संशयस्यापि यथायथं प्रत्यक्षाद्याभासजन्यत्वानुभवात् । तदेकदेशिभिरपि सत्प्रतिपक्षे संशया-कारानुमितिस्वीकारात् । विप्रतिपत्तेः संशयबीजत्वाभ्युपगमाच्च । सम्मतश्चैतन्मीमांसकानामपि श्रुतलिङ्गाधिकरणे 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्युदाहृत्य किमैन्द्र्या लिङ्गादिन्द्रोपस्थानशेषत्वमुत श्रुत्या गार्हपत्यशेषत्वमिति श्रुतिलिङ्गाभ्यां विनियोगसंशयं ब्रुवताम् । श्रुतावपि तद्व्याचिकित्सत् । 'जुहवानीमाहौषामिति तद्विचिकित्सायै जन्म इति प्रात्यक्षिकसंशयस्याभिधार्यास्त्र्यम्बकानाभिधार्या इति मीमांसत इति परामर्शजन्यसंशयस्य, 'यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वनीकशान्करोति' इति शाब्दिकसंशयस्य च प्रदर्शनात् । वादिविवादः सन्देहबीजमिति तान्त्रिकवचनाच्च । न च विजातीयोभयकारणजन्यत्वे वैजात्यापत्तिः । इष्टत्वात् । वस्तुतस्त्वत्र जात इति सप्तम्यन्ततया विच्छिद्यते । तथा चोभाभ्यां जाते कोटिद्वयानुसन्धान इति शेषः । एवं चात्र हृदीत्युक्तेर्मानस एवायं संशयः । तत्कारणकोटिद्वयानुसन्धानकारणं प्रमाणद्वयमिति न दोष इति हृदयम् । यद्यपि न प्रत्यक्षं **(व्या.टि.)** वचनसमं तथाऽप्यपरीक्षितत्वात्साम्यमिति संशयहेतुत्वं मन्तव्यम् । नन्वत्र संशयकारणतयोक्त-योर्वचनप्रत्यक्षयोः संशयकारणतयोक्तपञ्चसु किंरूपेण कारणत्वं दरीदृश्यते । न तावत्साधारणधर्मतया । वचन-प्रत्यक्षादेर्दोषसाधारण्याभावात् । दोष्यदोषिसाधारण्याभावाच्च । निर्दोषस्यान्यस्याभावेन कोटचप्रसिद्धेश्च । तद्दोष-प्रत्यक्षस्य जीवसाधारण्येऽपि कोटिद्वयसाधारण्याभावात्कोटिद्वयानुसन्धायकताऽभावाच्च । नाप्यसाधारणतया । वचनप्रत्यक्ष(योः)तया संशयधर्म्यसाधारण्याभावात् । कोटिद्वयाननुसन्धायकत्वाच्च । नापि विप्रतिपत्तितया । विरुद्धार्थकवाग्रूपत्वाभावात् । नाप्युपलब्धितया । ज्ञानरूपत्वाभावात् । नापि पञ्चमप्रकारेण । उभयोर्भावरूप-त्वात् । तस्मादनयोः कारणत्वं दुर्वचमिति चेत्, अत्राऽभाति । विप्रतिपत्तितयैवानयोः

हेतुत्वम्। न च वाक्यत्वाभावादसम्भवः। विरुद्धप्रमाणद्वयमात्रस्य विप्रतिपत्तित्वोपपत्तौ वाक्यत्वाप्रवेशात्। टीकायामप्येवंविधानि वाक्यान्येवं योजनीयानि । अथ वा वचनप्रत्यक्षयोः साधारणधर्मतया कोटिद्वयानुसन्धायकत्वम् । न च कोटिद्वय-साधारण्याभावात्तत्त्वाभावः । पुरोवर्तिसंशयधर्मिकोटिसाधारण्यमात्रेण साधारणत्वोपपत्तेः । निर्दोषत्ववचनस्य विष्णुशिवादिसाधारण्यात्। प्रत्यक्षस्य जीवादिसाधारण्यात्। अत एवोक्तम्- 'न ह्येकेनैव साधारणधर्मेण भवितव्यमिति नियमोऽस्ति' इति। एकेन कोटिद्वयसाधारणेनेत्यर्थः। उपलक्षणमेतत्। एकेनैव कोटिद्वयमनु-सन्धातव्यमित्यपि नियमो नेति। यत्तु स्थाणुपुरुषयोः साधारणमिति तत्रैवोक्तम्। तत्प्रकृतविवक्षया न सार्वत्रिकविवक्षयेत्यवेहि। अत एव अस्मत्पितृचरणाः पुरोवर्तिस्थितो धर्मो यदि कोट्याश्रितो भवेत् तर्हि साधारणो नामेति लक्षणं समगृह्णन्निति। तथा चात्र प्रमाणद्वयस्य पृथक्कोटचनुसन्धायकत्वसम्भवाद्युक्तं संशयबीजत्वमिति सिद्धम्।

ननु 'अचतुरविचतुरस्त्रीपुंस' इति स्त्रीपुंसाभ्यामिति च समासान्ताजन्ततया निपातनात्कथं तदभावेन स्त्रीपुंमलेति निर्देश इत्यत आह- **अनित्य इति।।** 'ऋक्पूरब्धः पथामानक्षे' इति सूत्रकारप्रयोगेणैव तदनित्यता-ज्ञापनादिति भावः। विष्ठात्वभ्रान्तिं निवारयति- **शुक्लं शोणितमिति ।।** 'सर्वोऽपि द्वन्द्वः' इत्येकवद्भावः। तथोक्त इत्यनन्तरं तथाविधो देहो यस्य स तथोक्त इति शेषः। अत्र विशेषः

'नावतारेष्वपि हरेर्देहः शुक्लादिसम्भवः।
अथापि रेतःसंस्थः सन् मातृदेहं प्रविश्य तु।
विलाप्य शुक्लं तत्रैव भवति ज्ञानरूपकः।
उदेति भगवान्विष्णुः काले लोकं विमोहयन्॥'

इति तार्तीयतात्पर्योक्तो बोध्यः। ननु सुखशब्दस्य नित्यनपुंसकत्वात्कथं विशेष्यनिघ्नतेत्यतो दृष्टान्तेनोपपाद-यति- **आनन्दं ब्रह्मेतिवदिति ।।** छान्दसो निर्देश इति भावः। अर्शआद्यजन्तो वा। चिन्ताश्रमेति पूर्वोक्त-द्वितीयाशङ्कानिरासकस्य मूलेऽभावात्तन्निरासकतयाऽपि तदेव व्याचष्टे- **अत एवेति ।।** प्राकृतदेहादेरेव तद्व्याप्त-त्वादित्यर्थः। मूले सैवेति प्रकाशयतीत्युक्तधात्वर्थपरामर्शः। विधेयापेक्षया स्त्रीलिङ्गत्वम्। सा वैश्वदेवीतिवत्। **(व्या.टि.)** 'प्रत्यक्षत्वं हरेर्जन्म' इति श्रुतेरिति भावः। **कथमिति ।।** कारणाभावात्फलाभावाच्चेत्यर्थः। मूलेऽसुरेत्यविभक्तिको निर्देशः। 'लिङः स लोपः' इतिवत्। परेषामसुरभिन्नानामित्यर्थः। 'मुह्यन्ति यं सूरयः' इति स्मृतेरित्यर्थः। क्वचित्क्वचिदित्यनेनासुराणां नित्यमोहं सूचयति। उत्तरशेषेण अनेन भगवदेककारणकत्वा-दसुरादिमोहफलकत्वाच्च दर्शनं युक्तमिति भावः। **प्रकटयतीति ।।** क्वेति किम आक्षेपार्थत्वादित्यर्थः। मुह्यमान-भेदेन मोहभेदाद्दौर्लभ्यमिति द्वेधा व्याचष्टे- **अत्यन्तमिति ।। विलम्बायेति च ।।** अधिकारिभेदेन क्रियां द्वेधा विशिनष्टि- **अत्यन्तमविलम्बेनेति ।।** प्रतिपन्ना इति गत्यर्थेति क्तः, 'रदाभ्याम्' इति निष्ठानत्वञ्च बोध्यम्। **जात्यादीति ।।** आदिपदेनावयवादयः। नान्यदित्यस्य प्रकारान्तरव्यवच्छेदपरत्वमुपेत्य व्याख्यातमत्यन्ताभिन्ना इति। किं तत्प्रकारान्तरमित्यतः तद्दर्शयति- **अन्यदितीति ।।** एतेन मूले नान्य इष्यन्त इति वक्तव्यं, यथाश्रुत-त्वेऽप्यन्यद्विश्वमित्यन्वयोऽपि घटनाऽस्तीति निरस्तम्। प्रतिश्रुतपक्षचतुष्टयनिरासोपायाभावात्। नपुंसकैकशेषो वा। अत इत्येतच्छब्दपरामृष्टं दर्शयति- **एकेनेति ।।** अनेन गुणा न मिथो भिन्ना एकेन गुणिनाऽत्यन्ताभिन्नत्वा-द्यदेवं तदेवं यन्नैवं तन्नैवमिति विपक्षे हेतूच्छित्तिर्बाधिकेति प्रयोगं सूचयति। बाधकं शङ्कते- **कथं तर्हीति ।।** मुख्याभावेऽपि प्रतिनिधिना व्रीहिकार्यं नीवारादिनेव सम्भवतीत्याह- **अभिन्नेऽपीति ।।** प्रतिनिहितं विशेषं लक्षयति- **विशेषो नामेति ।।** सम्भावितस्यैव प्रमाणेन दृढीकर्तव्यत्वात् सम्भावनोपोद्घातमाहेत्याह- **तत्सम्भा-वनार्थमिति ।।** दृष्टान्ते विशेषयुक्त्या साधयति- **न हीति ।। स्वरूप इति ।।** सर्वव्यावर्तकशून्य इत्यर्थः। 'सर्वव्यावृत्तये यस्मात्स्वशब्दोऽयं प्रयुज्यते' इत्युक्तेरित्यर्थः। भिन्न इत्यनवस्थितेरिति भावः। **अप्रयोगेति ।।** अभियुक्तानामिति शेषः। दृष्टान्ते प्रसाध्य तत्प्रकारं पक्षेऽप्यतिदिशति- **एवमिति ।।** एवकारो भिन्नक्रम इत्युपेत्यान्वयं दर्शयति- **इति सम्बन्ध इति ।। तेनेति ।।** अवधारणेनेत्यर्थः। प्रामाणिकस्यैवावधार्यत्वादित्यर्थः। **उक्तमिति ।।** अनुभाष्य इत्यर्थः। प्रतितन्त्रसिद्धान्तो येनाभ्युपगमसिद्धान्त इत्याह- **तुशब्देनेति ।। व्यवच्छि-नत्तीति ।।** अनित्यसाधारण्याद्भेदकार्यमात्रकारित्वात्तत्प्रतिनिधित्वादित्यर्थः। नन्वेवं जीवब्रह्माद्यपर्यायशब्दोप-पत्तौ किं भेदेनेति भेदो दत्तजलाञ्जलिः स्यादिति चेत्। न हि मुख्यसम्भवेऽपि प्रतिनिधेयमिति कुलधर्मः। यथोक्तं न्यायामृते 'न हि सोमाभावे पूतिकाग्रहणमिति तद्भावेऽपि सः' इति।

**मूलम्-** **'अभिन्नत्वमभेदश्च यथा भेदविवर्जितम् ।**
**व्यवहार्यं पृथक् च स्यादेवं सर्वे गुणा हरेः ।**
**अभेदाभिन्नयोर्भेदो यदि वा भेदभिन्नयोः ।**
**अनवस्थितिरेव स्यान्न विशेषणतामतिः ।**
**मूलसम्बन्धमज्ञात्वा, तस्मादेकमनन्तधा ।**
**व्यवहार्यं विशेषेण दुस्तर्कबलतो हरेः ।**
**विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च ।।' इति ब्रह्मतर्के ।।**

**(त.मं.) अभिन्नत्वम् अभेदश्च** अभेदधर्मविशिष्टं वस्तु अभेदधर्मश्चेत्युक्तद्वयं यथा परस्परं भेदविवर्जितं, तथाऽपि विशेषमात्रेणैव धर्मधर्मिरूपेण पृथग्व्यवहार्यं च स्यात् । एवं हरेर्गुणाश्च भेदवर्जिता अपि पृथग्व्यवहार्याः स्युः । विपक्षे दोषमाह- **अभेदेति ।।** अथवा **अभिन्नत्वं** अभेदधर्मविशिष्टत्वम् । अभेदधर्मस्य यथा धर्मिणः परस्परं च भेदविवर्जितम् । **अभेदाभिन्नयोरिति** सर्वेषां धर्मिणां गुणगुणिनां चोपलक्षणम् । भेदभिन्नादीनां भेदश्चेत् सम्बन्धापेक्षा तस्य सम्बन्धस्य सम्बन्धान्तरापेक्षयाऽनवस्थितिः । यः सम्बन्धः स्वसन्धिद्वारेणैव सर्वसम्बन्धानामनुग्राहकः तं मूलसम्बन्धमज्ञात्वा अयमनयोः सम्बन्ध इति विशेषणतामतिर्न ज्ञायते । किन्तु कयोश्चित्सम्बन्ध इति सामान्यबुद्धिरेव । अथवा यदि भेदभिन्नयोर्भेदः तर्हि तस्य भेदस्यापि भिन्नाद्धर्मिणो भेदान्तरं, तस्यापि तस्यापीत्यनवस्था । **मूलसम्बन्धं** प्रथमयोर्भेदभिन्नयोरेव सम्बन्धमज्ञात्वा अनयोरयं भेद इति विशेषणतामतिर्न स्यात् । कथमेकमेवानेकधा व्यवहार्यमित्यत आह- **दुस्तर्केति ।।** तर्कयितुमशक्यं **दुस्तर्कम्** । विशेषविशेषिणोर्विशेषान्तरं पुनरप्येवमित्यनवस्था युष्मत्पक्षेऽपि; विशेषविशेषिणोः सम्बन्धापेक्षया चेत्यत आह- **विशेषोऽपीति ।।** स विशेषोऽपि वस्तुस्वरूपमेव न तु भिन्नः । येन सम्बन्धापेक्षया अनवस्थितिः । तस्यापि स्वयमेव विशेष इति स्वनिर्वाहकता च । **अस्य** विशेषस्य । तस्मान्न भिन्नविशेषान्तरापेक्षयाऽनवस्थितिः ।

**टीका-** एतदेव न्यायशास्त्रवाक्येन द्रढयति- **अभिन्नत्वमिति ।।** यथाऽद्वैतवादिनां मते जीव-ब्रह्मणोरभिन्नत्वमभेद इति पर्यायशब्दवाच्यं वस्तु ब्रह्मणो भेदवर्जितम् । चशब्देन गुणगुणिभेद-वादिनां मते यथा स भेदो भेदिभ्यां भेदवर्जितः, तथा भेदाभेदवादिमते यथा भेदाभेदौ भेदाभेदि-नोर्भेदवर्जिताविति समुच्चिनोति । चतुर्थपक्षोऽप्यत्रैवान्तर्भूतः । **पृथग्व्यवहार्यं च स्यादिति ।।** विशेषशक्त्येति शेषः । यथा जीवब्रह्मणोरभिन्नत्वमिति, जीवब्रह्मणी अभिन्ने इत्यादि, यथा गुणगुणिनोर्भेदो, गुणगुणिनौ भिन्नाविति वा तथा गुणगुणिनोर्भेदाभेदौ, गुणगुणिनौ भिन्नाभिन्नाविति वा । एवं सर्वे गुणाः हरेस्तेनाभिन्ना अपि विशेषशक्त्या सम्बन्धित्वादिना व्यवहार्याः । ननु अभेदो भेदो भेदाभेदौ च ब्रह्मादिना नाभिन्नाः, ततो न दृष्टान्ताः संमता इत्यत आह- **अभेदेति ।।** यद्यभेदस्य **अभिन्नस्य** ब्रह्मणश्च भेदोऽङ्गीक्रियते, वाशब्दः चार्थे, भेदस्य भिन्नस्य गुणादेश्च यदि भेदोऽभ्युपगम्यते, एवं भेदाभेदयोर्गुणगुणिनोश्च यदि भेदः स्वीक्रियते तदा भेदपरम्पराऽपातेन अनवस्थितिः स्यात् । एवशब्देन अनवस्थाया अपरिहार्यत्वं सूचयति । विशिष्ट-प्रतीतिसिद्ध्यर्थं हि भेदोऽङ्गीकार्यः । नचाप्रतीतो भेदः तद्धेतुर्भवतीति तत्प्रतीतिरप्यङ्गीकार्या । न चाविविक्ततया तत्प्रतीतिरप्युपयोगिनीति भेदस्यापि विशिष्टप्रतीत्यङ्गीकारे कथं नानवस्थेति । भेदाभेदपरम्पराश्रयणेऽप्येवमनवस्थैव ।

एतदुक्तं भवति- सर्वैरपि वादिभिः अनवस्थापरिहारार्थमन्ततः सविशेषाभेदोऽङ्गीकार्यः । ततो वरं भगवतस्तद्गुणानाञ्च सोऽङ्गीकर्तुमिति । गुणगुणिनोरत्यन्तभेदपक्षे दूषणान्तरमाह- **नेति ।।** यदि गुणो गुणिनोऽत्यन्तभिन्नः स्यात्तदा मेरुर्मन्दरस्येव गुणो गुणिनो विशेषणतया न ज्ञायेते-त्यर्थः । सम्बन्धसद्भावान्नैवमिति

चेत्, स सम्बन्धः प्रतीतो विशेषणतामतेर्मूलमप्रतीतो वा। आद्येऽपि सम्बन्धिविशेषणतया प्रतीतो वा स्वातन्त्र्येण प्रतीतो वा । आद्ये तत्रापि सम्बन्धान्तर-प्रतीत्यपेक्षायामनवस्था । द्वितीयेऽतिप्रसङ्ग एव । तृतीये दोषमाह- **मूलसम्बन्धमज्ञात्वेति ॥** विशेषणता न ज्ञायत इति । संयोगादीनां हि ज्ञातानामेव विशिष्टप्रत्ययहेतुत्वं दृष्टं न सत्तामात्रेणेति भावः । यत एवं सर्वेषु पक्षेषु दोषस्तस्माद्भगवद्गुणानामभेद एव । विशेषेण तु नानाविधो व्यवहार इत्येवाङ्गीकार्यमित्युपसंहरति- **तस्मादिति ॥ एकं** गुणाद्यभिन्नं भगवत्स्वरूपम्। न केवलेन विशे-षेण। किं तर्हीत्यत आह- **दुस्तर्केति ॥** हरेस्तर्कागोचरया शक्त्या चेत्यर्थः । ननु स विशेषो विशेषितो भिन्नोऽभिन्नो वा । आद्ये भेदानवस्था । द्वितीये विशेषविशेषिभावानुपपत्तिरित्यत आह- **विशेषोऽपीति ॥ स्वरूपं** विशेषिणः । तथाऽपि विशेषशक्त्या विशेषविशेषिभावोपपत्तिरिति भावः। तर्हि विशेषपरम्परयाऽनवस्थेत्यत आह- **स्वनिर्वाहकतेति ॥**

**(र.टि.) पर्यायशब्दवाच्यं वस्त्विति ॥** तथा चाभिन्नत्वमभेद इति पुनरुक्तिः। अभेदस्यान्तेऽभिहितत्वात् तदपेक्षया भेदविवर्जित इति पुंलिङ्गत्वं च भवेदिति शङ्का निराकृता भवतीति भावः । **चतुर्थपक्षोऽपीति ॥** स्वरूपभूतानन्दादीनामैक्यसमानयोगक्षेमत्वादानन्दादिभेदस्य तार्किकाङ्गीकृतगुणगुणिभेदसमानयोगक्षेमत्वा-दिति भावः । अपरिहार्यत्वमेव ज्ञप्तिप्रतिबन्धकत्वोपपादनेनोपपादयति- **विशिष्टप्रतीतिसिद्ध्यर्थं हीति ॥ न ज्ञायेतेत्यर्थ इति ॥** अनेन स्यादित्यस्यानुवृत्तिरित्युक्तं भवति ।

**(रा.टि.)** मतत्रये अभेदादेरभेदिप्रभृतिना भेदराहित्येऽपि पृथग्व्यवहर्तव्यतोक्ता। तथाऽऽनन्दादयो द्विविधा **(रा.टि.)**इति चतुर्थपादे । तथा कुतो नोक्तमित्यत आह- **चतुर्थपक्षोऽपीति ॥** स्वरूपभूता आनन्दादय इति पक्षे मायिमते । ऐक्यस्य वाऽऽनन्दिना भेदराहित्येऽपि पृथग्व्यवहर्तव्यता, भिन्नाश्चेति पक्षे भेदिभिस्सह भेदस्य भेदराहित्येऽपि पृथग्व्यवहर्तव्यतेत्येवं पूर्वोक्ताद्यपक्षद्वयेऽन्तर्भवतीति भेदाभेदरूपतृतीयपक्ष इवोपपादनं ध्येयमिति तृतीयपक्ष एवान्तर्भूत इति वार्थो ध्येयः । दृष्टान्तत्रये पृथग्व्यवहारप्रदर्शनपूर्वं दार्ष्टान्तिके तथा व्यवहारं व्यनक्ति- **यथा जीवेत्यादिना ॥** अनवस्थाया अपरिहार्यत्वं व्यनक्ति- **विशिष्टप्रतीतीति ॥** जीवब्रह्मणोरभिन्नत्वं जीवब्रह्मणी अभिन्ने इत्यादिप्राक्प्रदर्शितविशिष्टप्रतीतिसिद्ध्यर्थमित्यर्थः। **भेदोऽङ्गीकार्य इति ॥** विशेषणविशेष्य-भूतयोरिति योज्यम्। **तद्धेतुः** विशिष्टप्रतीतिहेतुः। **न चाविविक्ततयेति ॥** निर्विकल्पकरूपं तज्ज्ञानमित्यर्थः। **विशिष्टप्रतीत्यङ्गीकार इति ॥** विशेषणतया विशेष्यतया वा प्रतीत्यङ्गीकार इत्यर्थः । विपक्षे बाधकोक्त्या किं लब्धमित्यतो विपर्यये पर्यवसानमुखेनाभिमतसिद्धिमाह- **एतदुक्तं भवतीति ॥ स्वातन्त्र्येणेति ॥** विशेषणत्वेन विशेष्यत्वेन वा सम्बन्धिस्पर्शमन्तरेणेत्यर्थः । **अतिप्रसङ्ग एवेति ॥** घटरूपसम्बन्धा इति ज्ञानेनापि विशिष्टधी-प्रसङ्ग इत्यर्थः ॥

**(श्री.टि) न्यायशास्त्रवाक्येनेति ॥** ब्रह्मतर्कवाक्येनेत्यर्थः। 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम्' इति वचनादिति द्रष्टव्यम् । ननु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति सूत्रादभेदश्चेत्यन्तेऽभिहितत्वात्तदपेक्षया भेदवर्जित इति वक्तव्यत्वेन भेदवर्जितमिति नपुंसकलिङ्गानुपपत्तिरित्यतोऽध्याहारेण योजयति- **इति पर्यायशब्दवाच्यं वस्त्विति ॥ भेदाभेदिनोरिति ॥** सकाशादित्यर्थः । **चतुर्थपक्षोऽपीति ॥** स्वरूपभूतानन्दादीनामभेद-समानयोगक्षेमत्वाद् आनन्दादिभेदस्य च तार्किकाङ्गीकृतगुणगुणिभेदसमानयोगक्षेमत्वादिति भावः । **ब्रह्मादि-नेति ॥** अभेदो ब्रह्मणा, भेदश्च भेदिनोः, भेदाभेदौ च भेदाभेदिनोर्नाभिन्नाः। किन्तु भिन्ना एवेत्यर्थः। चशब्द-समुच्चयमेव दर्शयति- **भेदस्येत्यादिना ॥ भेदपरम्पराऽऽपातेनेति ॥** स भेदः किं भेदिभ्यां भिन्नोऽभिन्नो वेत्यादिपरम्परयेत्यर्थः । अपरिहार्यत्वमेव ज्ञप्तिप्रतिबन्धकत्वोपपादनेनोपपादयति- **विशिष्टप्रतीतिसिद्ध्यर्थ-मित्यादिना ॥** जीवब्रह्मणी अभिन्ने इत्यादिजीवब्रह्मादिविशेष्यकाभेदादिविशेषणकप्रतीतिसिद्ध्यर्थमित्यर्थः। **भेदोऽङ्गीकार्य इति ॥** गुणगुणिनोरिति शेषः। अन्यथा स्वस्मिन्नपि स्वविशिष्टप्रत्ययप्रसङ्ग इति भावः। **अप्रतीत इति ॥** स्वरूपसद्भेद इत्यर्थः। **तद्धेतुरिति ॥** विशिष्टप्रत्ययहेतुरित्यर्थः । अन्यथा दण्डपुरुष-योरभेदभ्रमदशायामपि दण्डीति विशिष्टप्रत्ययप्रसङ्गः। स्वरूपसद्भेदस्य तत्रापि सत्त्वादिति भावः। **तत्प्रतीतिः** भेदप्रतीतिः। नन्वङ्गीकृता भेदप्रतीतिः, किं तत इत्यत आह- **न चेति ॥ अविविक्ततयेति ॥** इतरसङ्कीर्णतये-त्यर्थः। तत्प्रतीतिः भेदप्रतीतिः । **उपयोगिनीति ॥** जीवब्रह्मादिविशेष्यकाभेदादिविशेषणकविशिष्टप्रतीत्युप-योगिनीत्यर्थः । तथात्वे सर्वमिति सर्वत्वादिना रूपेण दण्डप्रतीतौ सत्यां दण्डीति विशिष्टप्रत्ययप्रसङ्गादिति भावः। **भेदस्यापीत्यादि ॥** जीवब्रह्मादेरभेदादेश्च भेदाप्रतीतौ विशिष्टप्रत्ययायोगाद्भेदप्रतीतिरङ्गीकार्या। इतरसङ्कीर्णभेदप्रतीतेर्विशिष्टप्रत्ययजनकत्वायोगादितरासङ्कीर्णतया जीवब्रह्माभेदानां भेद

इत्यादिजीवब्रह्मा-(**श्री.टि.**)भेदविशेषणकभेदविशेष्यकविशिष्टप्रतीतिरङ्गीकार्या। केवलं भेद इत्येव प्रतीतेरभावात्। इयं च विशिष्टप्रतीतिर्भेदस्य गुणगुणिनोश्च भेदाभावे न सम्भवतीति भेदोऽङ्गीकार्यः । न चाप्रतीतो भेदस्तद्धेतुर्भवतीति तस्यापि पुनर्विशिष्टप्रतीतिरङ्गीकार्येत्येवमादिरूपेणानवस्थेत्यर्थः । **एवमनवस्थैवेति ॥** अभेदस्याभिन्नस्य भेदस्य भिन्नस्य गुणादेर्भेदाभेदयोर्गुणगुणिनोश्च यदि भेदाभेदावङ्गीक्रियेते तदा भेदाभेदयोर्भेदाभेदिभ्यां गुणगुणिभ्यां च पुनर्भेदा-भेदोऽङ्गीकार्यः । पुनस्तत्राप्येवमिति भेदाभेदपरम्परयाऽनवस्थैवेत्यर्थः । **सविशेषाभेद इति ॥** भेदस्य गुणगुणिभ्यां भेदाभेदयोश्च भेदाभेदिभ्यामभेदमङ्गीकृत्य विशिष्टप्रत्ययरूपभेदकार्यनिर्वाहाय विशेषोऽङ्गीकार्य इत्यर्थः। न विशेषणतामतिरित्यत्र स्यादित्यनुवर्तत इत्यभिप्रेत्य तदभिप्राय उक्तः- **न ज्ञायेतेति ॥** मेरुमन्दरयोः सम्बन्धा-भावाद् गुणगुणिनोश्च समवायरूपसम्बन्धसद्भावेन तत्साम्याभावाद्युक्तं गुणिनो विशेषणतया गुणस्य ज्ञान-मित्याशङ्कते- **सम्बन्धेति ॥ स सम्बन्ध इति ॥** गुणस्य गुणिनं प्रति विशेषणतामतिमूलभूतः सम्बन्ध इत्यर्थः। **सम्बन्धीति ॥** गुणगुणिरूपसम्बन्धीत्यर्थः। प्रतीतो वेत्यादौ विशेषणतामतेर्मूलमित्यनुवर्तते । **स्वातन्त्र्ये-णेति ॥** गुणगुणिरूपसम्बन्ध्यविशेषणतयेत्यर्थः । **तत्रापीति ॥** गुणगुणिरूपसम्बन्धिविशेषणतया प्रतीयमाने समवायरूपसम्बन्धेऽपीत्यर्थः। **अनवस्थेति ॥** यदि गुणगुणिरूपसम्बन्धिविशेषणतया समवायरूपः सम्बन्धः प्रतीयत इत्युच्यते, तदा समवायसम्बन्धस्य गुणगुणिनोश्च पुनस्सम्बन्धान्तरं प्रतीयत इत्यङ्गीकार्यम् । अन्यथा मेरुमन्दरस्येव गुणगुणिनोस्समवाय इति गुणगुणिनौ प्रति समवायसम्बन्धस्य विशेषणतया प्रतीत्यनुपपत्तेः। अतो गुणगुणिनोस्समवायस्य च प्रतीयमानं सम्बन्धान्तरमपि गुणगुणिसमवायानां सम्बन्ध इति गुणगुणि-समवायरूपसम्बन्धिविशेषणत्वेनैव प्रतीयत इत्यङ्गीकार्यम् । तत्रापि मेरुमन्दरवद्विशेषणविशेष्यभावेन प्रतीत्यनुप-पत्तिपरिहाराय गुणगुणिसमवायानां सम्बन्धान्तरस्य च पुनः सम्बन्धान्तरप्रतीत्यपेक्षयाऽनवस्था स्यादित्यर्थः। **अतिप्रसङ्ग एवेति ॥** गुणगुणिनोर्विशेषणविशेष्यभावप्रतीतिमूलभूतः सम्बन्धो यदि स्वातन्त्र्येण गुणगुणि-रूपसम्बन्धिविशेषणत्वेनाप्रतीत एव विशेषणतामतिमूलं स्यात् तदीयत्वेनाप्रतीतोऽपि तद्विशेषणतामतिमूलं स्यादिति यावत्, तथात्वे मेरुमन्दरसम्बन्धित्वेनाप्रतीतस्य घटस्यापि मेरोर्मन्दरं प्रत्यपि विशेषणतामतिमूलत्वं स्यादित्यतिप्रसङ्ग एवेत्यर्थः ।

**तृतीय इति ॥** अप्रतीतस्यैव सम्बन्धस्य गुणस्य गुणिनं प्रति विशेषणतामतिमूलत्वपक्ष इत्यर्थः। मूलसम्बन्ध-मज्ञात्वेत्यनन्तरं न विशेषणतामतिरित्यनुवर्तत इति सूचयन्नेव प्रतीकं गृह्णाति- **मूलसम्बन्धमित्यादिना ॥** विशेषणतामतिमूलभूतं सम्बन्धमित्यर्थः । अज्ञातस्य सम्बन्धस्य कुतो न विशेषणप्रत्ययहेतुत्वमित्यतस्त-दुपपादयति- **संयोगादीनां हीति ॥** ज्ञातानामेवेत्येवकारव्यावर्त्यं दर्शयति- **न सत्तामात्रेणेति ॥** तथात्वे पिहितदण्डेऽपि देवदत्ते दण्डीति विशिष्टप्रत्ययः स्यात्। स्वरूपसतो दण्डसंयोगस्य तत्रापि सत्त्वादिति भावः। तथा च विशिष्टप्रत्ययमूलभूतसम्बन्धज्ञानेऽङ्गीकार्ये उक्तरीत्याऽनवस्थेति हृदयम्। **नानाविध इति ॥** आनन्दं ब्रह्मण इत्यादिसम्बन्धव्यवहारः, गुणेषु बहुवचनव्यवहारो, गुणिन्येकवचनव्यवहारः, शब्दानामपर्यायत्वमिति (**श्री.टि**) नानाविधो व्यवहार इत्यर्थः। मूले व्यवहार्यमित्यस्य नानाविधव्यवहारविषय इत्यर्थः। दुस्तर्केत्यत्र दुरित्युपसर्गार्थमाह- **तर्कागोचरयेति ॥** बलवत इत्यस्यार्थः- **शक्त्येति ॥ स विशेष इति ॥** येन नानाविध-व्यवहारो भवति स विशेष इत्यर्थः। **विशेषितो** गुण्यादेः। **भेदानवस्थेति ॥** भेदः किं भेदिभ्यां भिन्नोऽभिन्नो वेत्येवं भेदपरम्परयाऽनवस्थेत्यर्थः । तर्हि विशेषविशेषिभावानुपपत्तिरित्यत आह- **तथाऽपीति ॥ विशेष-परम्परयेति ॥** विशेषविशेषिणोर्विशेषविशेषिभावघटकविशेषान्तराङ्गीकारे तस्यापि विशेषितोऽभिन्नत्वे विशेषविशेषिभावानुपपत्तेस्तत्परिहाराय पुनर्विशेषान्तराङ्गीकारे विशेषपरम्परयाऽनस्थेत्यर्थः ।

**(पां.टि.) न्यायशास्त्रवाक्येनेति ॥** ब्रह्मतर्कवाक्येनेत्यर्थः । **चतुर्थपक्षोऽपीति ॥** स्वरूपभूतानन्दादीना-मैक्यसमानयोगक्षेमत्वादानन्दादिभेदस्य तार्किकाङ्गीकृतगुणगुणिभावसमानयोगक्षेमत्वादिति भावः । पृथग्व्यव-हार्यत्वमेव शृङ्गिग्राहिकतयोपदर्शयति- **यथेति ॥** सम्बन्धित्वादिनेत्यत्राप्यादिपदेन बहुत्वादेः परिग्रहः। ब्रह्मादिनेत्यादिपदेन भेदिनोर्भेदाभेदिनोः परिग्रहः । गुणादेश्चेत्यादिपदेन गुणिनः परिग्रहः । ननूत्पत्त्यप्रतिबन्ध-कत्वान्नेयमनवस्था दूषणमित्यतः उत्पत्तिज्ञप्त्यन्यतरप्रतिबन्धकत्वेनैव तस्या दूषणत्वेनोत्पत्तिमात्रप्रतिबन्धकत्वेन दूषणत्वाभावात्प्रकृते उत्पत्त्यप्रतिबन्धकत्वेऽपि ज्ञप्तिप्रतिबन्धकत्वाद्दूषणत्वं स्यादेवेति भावेन कथं ज्ञप्तिप्रति-बन्धकत्वमपीत्यतः तदुपपादयति- **विशिष्टप्रतीतिसिद्ध्यर्थं हीति ॥** न विशेषणतामतिरिति न वस्तु-स्थितिकथनमात्रं किन्तु तर्कपरमेवेतिभावेनाऽह- **न ज्ञायेतेत्यर्थ इति ॥** अनेन स्यादित्यस्यात्रानुवृत्तिरित्युक्तं भवति । **नैवमिति ॥** मेरुमन्दरादिसाम्यमित्यर्थः । **अतिप्रसङ्ग एवेति ॥** मेरुमन्दरयोरपि विशेषणविशेष्य-भावेन प्रतीतिप्रसङ्ग इत्यर्थः । साकाङ्क्षत्वप्रयुक्तवाक्याभासतापरिहारायापेक्षितं शेषं पूरयति- **विशेषणता न**

**ज्ञायत इति ।।** नन्वज्ञातस्यापि सम्बन्धस्य सत्तामात्रेण विशेषणताप्रत्ययनिर्वाहकत्वं किं न स्यादित्यतः विमतः सम्बन्धः न सत्तामात्रेण विशेषणतामतिनिर्वाहकः सम्बन्धत्वात्संयोगादिवदित्यनुमानमभिप्रेत्य दृष्टान्ते साध्यवैकल्यं परिहरति- **संयोगादीनामिति ।। विशेषण इति ।।** ततश्च न भेदपरम्परयाऽनवस्थेति भावः । ननु चैवमपि विशेषविशेषिभावानुपपत्तिरित्येतत्पक्षोक्तदोषः स्यादित्यतोऽत्रापि विशेषेणैव तदुपपत्तेर्न तत्प्रसङ्गोऽ-पीत्याह- **तथाऽपीति ।। तर्हीति ।।** विशेषेऽपि विशेषाङ्गीकार इत्यर्थः ।

**(व्या.टि.) एतदेवेति ।।** सविशेषाभेदमतमित्यर्थः । **द्रढयतीति ।।** परमते बाधकोपन्यासेनेति शेषः । विवर्जित-मिति नपुंसकलिङ्गानुगुण्याय विशेष्यं पूरयति- **वस्त्विति ।। भेदवादिनामिति ।।** नैयायिकानामित्यर्थः । **भेदाभेदेति ।।** यादवप्रकाशीयेत्यर्थः । इतीति चशब्देनेति पूर्वेणान्वयः । **चतुर्थेति ।।** आनन्दादिद्वैविध्यपक्ष इत्यर्थः । **अत्रैवेति ।।** गुणगुणिभेदपक्ष इत्यर्थः । **विशेषेति ।।** भेदप्रतिनिधिभूतेत्यर्थः । **सम्बन्धित्वादि-नेति ।।** आदिपदेन विशेषणविशेष्यभावोऽपि ग्राह्यः । विपक्षे बाधकं वक्तुमुपक्षिपति- **नन्विति ।।** पक्षत्रयं क्रमेणानुवदति- **यद्यभेदस्येत्यादिना ।। अपरिहार्यत्वमिति ।।** स्यादेवेति क्रियान्वितेनाप्येवकारेण धूमवान् वह्निमान् भवत्येवेत्यत्रेव नियमलाभादित्यर्थः । **विशिष्टेति ।।** गुणगुणिनोरित्यर्थः । **न चेति ।।** भिन्नतया **(व्या.टि.)** प्रतीतस्यैव विशेषणत्वादित्यर्थः । **अविविक्ततयेति ।।** धर्मिप्रतियोग्यविशेषितत्वेन स्वरूपेणैवे-त्यर्थः । **अत इति ।।** गुणादिषु भेदादेर्विशिष्टप्रतीत्यर्थमित्यर्थः । **अत्यन्तभेदेति ।।** नैयायिकपक्ष इत्यर्थः । भगवद्गुणानां गुणिना सविशेषाभेदं सिषाधयिषुर्गुणमात्रेऽपि विपक्षे बाधकप्रसङ्गेन तं साधयति- **यदीत्या-दिना ।। विशेषणतयेति ।।** अपृथक्सिद्धधर्मतयेत्यर्थः । यथाश्रुतार्थत्वे दण्डादौ व्यभिचारप्रसङ्गात् । तर्कमूलव्याप्तौ सम्बन्धाभावमुपाधिमभिप्रेत्याऽशङ्कते- **सम्बन्धेति ।।** समवाय इत्यर्थः । **सम्बन्धिविशेषणतयेति ।।** गुणो गुणिनि समवेत इत्येवंरूपेणेत्यर्थः । **स्वातन्त्र्येणेति ।।** प्रकृतसम्बन्ध्यसम्बद्धतयेत्यर्थः । **तत्रापीति ।।** समवेत-मिति गुणादिविशेषणतया समवायप्रतीतावपीत्यर्थः । **प्रतीत्यपेक्षायामिति ।।** एकसम्बन्धिविशेषणतया प्रतीत-स्यैव सम्बन्धस्य सम्बन्ध्यन्तरनिरूपितसम्बन्धिविशेषणताप्रतीतिहेतुत्वादिति भावः । **अनवस्थेति ।।** सम्बन्ध-प्रतीतिविशेषणताप्रतीतिपरम्पराऽपर्यवसानमित्यर्थः । **द्वितीय इति ।।** अन्यासम्बन्धितया प्रतीतस्यापि सम्बन्धत्व इत्यर्थः । **अतिप्रसङ्ग इति ।।** संयोगस्यापि सम्बन्धत्वापत्तिरित्यर्थः । **तृतीय इति ।।** गुणगुणिसम्बन्धोऽप्रतीत एव गुणविशेषणतामतेर्मूलमिति तृतीय इत्यर्थः । **दोषमिति ।।** अनुमानविरोधमित्यर्थः । प्रयोगप्रकारस्तु गुणगुणिसम्बन्धः नाज्ञातहेतुः सम्बन्धत्वात्संयोगादिवद् इति । न च दृष्टान्तोऽसम्मत इत्यत आह- **संयोगा-दीनामिति ।।** ज्ञातानामेवेति संसर्गज्ञानमात्रहेतुत्वं साधयति । आदिपदेन स्वस्वामिभावपरिग्रहः । तस्यापि धनीत्यादिविशिष्टबुद्धिनियामकत्वादिति हृदयम् ।

ननु 'विशिष्टज्ञाने विशेषणज्ञानं कारणम् । विशेष्ये इन्द्रियसन्निकर्षः । तदुभयासंसर्गाग्रहः' इति नैयायिकोक्त-कारणत्रितयादेव विशिष्टबुद्ध्युपपत्तौ किं संसर्गग्रहकारणतयेति चेत्, यदि दण्डादिज्ञाने सति दण्ड्यादिज्ञान-दर्शनात्तत्कारणत्वं मन्यसे तर्ह्युपनीतभानानुमित्यादौ च देवदत्तादिविशेष्यज्ञानपूर्वकतादर्शनात्संयुक्तत्वादिना दण्डादिज्ञाने सति दण्ड्यादिविशिष्टबुद्धेर्दर्शनात्, विशेष्यस्य संयोगादेश्च ज्ञानमपि विशिष्टबुद्धिकारणं किन्न स्यात् । न चादृष्टचरसन्निकर्षस्थले पूर्वाज्ञातस्यापि भानेन व्यभिचारान्न कारणत्वम् । तर्हि प्रामाण्यज्ञानादौ पूर्वाज्ञातस्यैव प्रामाण्यादेः प्रकारत्वाद्विशेषणज्ञानकारणत्वमपि त्यज्यताम् । वस्तुतो न विशिष्टप्रत्ययत्वावच्छेदेन संसर्गग्रहो हेतुः । पूर्वाज्ञातस्यैव संसर्गस्य वाक्यार्थत्वात् । अज्ञातस्यैवाध्यक्षीकरणाच्च । तथाऽपि विशेष्यताप्रत्यये तत्कारणत्वमानुभाविकम् । अत एव तलः प्रयोगः । **विशिष्टेति ।।** विशेषणविशिष्टेत्यर्थः । न हि कुसमयेनानु-भवस्त्याज्य इत्याह-**दृष्टमिति ।।** न च विशिष्टप्रत्यये विशेषणस्य स्वरूपेणैव भानं न विशेषणतयेति वाच्यम् । विशिष्टप्रतीतावपि विशेषणविशेष्ययोः स्वरूपेण भाने निर्विकल्पकाभेदप्रसङ्गः । दण्डी पुरुष इतिवत्पुरुषी दण्ड इति प्रत्ययप्रसङ्गश्च । दण्डीति विशिष्टबुद्धेः दण्डपुरुषसम्बन्धा इति समूहालम्बनाभेदप्रसङ्गश्च स्यात् । त्रितयस्य तत्रापि विषयीकरणात् । न च समूहालम्बने सम्बन्धः स्वातन्त्र्येण प्रतीयते, विशिष्टमतौ तु दण्डादिनिरूपिततयेति वाच्यम् । तर्ह्यङ्गीकृतं त्वयैव विशिष्टबुद्धौ सम्बन्धनिरूपकतया विशेषणज्ञानमिति । सैव विशेषणतामतिरिति कृतं विवादेन ।

**(व्या.टि.)** एतेन विशिष्टबुद्धौ सम्बन्धस्य स्वरूपेण भानमिति प्राचीनमतमपास्तम् । अत एव नवीनाः 'भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्, भासमानत्वं प्रतियोगित्वविशेषणम्' इति चाऽहुः । शाब्दविशिष्टबुद्धौ शब्दशक्त्यैव भासनाच्च । मतुबादीनां तत्रैव व्युत्पत्तेः । तथैव हि पाणिनिरप्यभाणीत् 'तदस्यास्त्यस्मिन्निति मतुप्' इति इतिकरणेन । आचार्यसूर्योऽपि 'स्वातन्त्र्यं तद्गतत्वञ्च शब्दवृत्तेर्हि कारणम्' इति । 'हरौ तद्गत्वबुद्ध्योक्ता दोषकारिणः' इति च । एवं सामान्यतो गुणगुणिभेदनिरासेनाभेदं प्रसाध्य

प्रकृतमुपसंहरति- **तस्मादिति ।।** अभेद एवेत्यतः परमन्यत्र संहिते भेदाभेदौ । यावद्वस्तुन्यभेद एवेति बहिरेवोपस्कर्तव्यम् । यथोक्तमनुव्याख्याने 'धर्माः उभयरूपकाः । भावे त एव चोच्छेदात्तदन्ये च समस्तशः' इति । दुस्तर्केति खलन्तं बलविशेषणमित्याह- **तर्कागोचरस्येति ।। स्वनिर्वाहकतेति ।।** विशेषस्वरूपस्यैव गुणगुणिभावनिर्वाहकस्य स्वकीयविशेषिभाव-निर्वाहकतया विशेषान्तरानपेक्षणान्नानवस्थेति भावः ।

**मूलम्-** **'एकमेवाद्वितीयं तन्नेह नानाऽस्ति किञ्चन ।**
**मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ।।**
**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक्पश्यंस्तानेवानु विधावति ।।'** इत्यादिश्रुतेश्च ।

**'देशः सर्वत्र, पुरुषः स्वतन्त्रः, कालनित्यता ।**
**इत्यादिषु स्वसम्बन्धाद्यथैव गुणरूपिणः ।**
**गुणित्वं गुणभोक्तृत्वं स्याद्विष्णोस्तच्च स स्वयम् ।।'** इति ब्रह्मतर्के ।

**'विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः ।**
**निर्दुःखानन्दभुङ्नित्यं तत्समीपे स मोदते ।**
**मुक्तानां चाऽश्रयो विष्णुरधिकोऽधिपतिस्तथा ।**
**तद्वशा एव ते सर्वे सर्वदैव स ईश्वरः ।।'** इति परमश्रुतिः ।।

**(त.मं.) एकमेव** अन्तर्भेदरहितं स्वगुणावतारादीनां भेदाभावेन । **अद्वितीयं** समाधिकरहितम् । **इह** ब्रह्मणि **किञ्चन** गुणादिकं **नाना नास्ति** भिन्नत्वेन नास्तीत्यर्थः । य इह **नाना** भेदं **इव** भेदाभेदं वा पश्यति, स मृत्योर्मृत्युमाप्नोति । मृत्युशब्दश्चाधिकं दुःखं लक्षयति । 'इवोभये च सादृश्य इति वाक् शब्दनिर्णयः' इति ह्यनुव्याख्यायाम् । तस्माद्भेदशब्दान्वितत्वेन प्रयुक्त इवशब्दो भेदाभेदाख्य उभयस्मिंश्च वर्तते । यथा पर्वतेषु **दुर्गस्थाने** शिलाशिखरादौ वृष्टमुदकं विधावति । एवं ब्रह्मधर्मान् ब्रह्मणः परस्परं वा पृथक् पश्यन् **तान्** दृष्टानन्वेव विधावति । अन्यथादर्शनानुकूल्येनैव सुखस्थितिविपरीतत्वेन धावति ।

ननु कथमेकत्वे ईश्वरस्य गुणाः सन्तीत्याधाराधेयभावसम्बन्धः । ईश्वरस्य रूपाणीत्यादि (स्व)स्वामिसम्बन्धः । भिन्नयोर्हि सम्बन्धोऽनुभूयते । नैकस्येत्यत आह- **देश इति ।।** सर्वदेशेऽपि देशो वर्तते । महापुरुषः स्वस्यैव वशः न परवशः । कालः सर्वकालेऽप्यस्ति । अहं मां जानामि । एवं लोकव्यवहारे यथा स्वसम्बन्धः । एवं विष्णोरपि गुणरूपिणो गुणित्वं नाम स्वसम्बन्धः । नचेदं गुणित्वं नाम दण्डित्वादिवत्सम्बन्धमात्रम् । किन्त्वानन्दादिगुणभोक्तृत्वम् ।

ननु भोक्तृत्वस्य भोगोपाधिनिमित्तस्य निमित्ताभावे सति अभावात्, पाचकत्वाद्यौपाधिकधर्म-वत् भेदः स्यादित्यत आह- **तच्च स स्वयमिति ।।** न हीश्वरस्य कदाचिद्गुणभोगाभावः । प्रळय-काले सृष्ट्यभावात् कथमीश्वरस्य स्रष्टृत्वधर्मो नित्य इति चेत् तदापि सृष्टिक्रियायाः शक्तिरूपेण स्थितत्वादिति ब्रूमः । नहि तदी(दे)श्वरस्यापि प्रळयकाले सृष्टिप्रयत्नो नष्टः । तस्य नित्यत्वाभ्युपग-मात् । नन्वीश्वरस्य प्रयत्नमात्रं नित्यमेव । सृष्ट्यादौ तत्तदुपाधिभेदात् सृष्ट्यादिप्रयत्नो जायत इति । मैवम् । प्रयत्नस्य बहुत्वादीश्वरस्याष्टगुणत्वप्रतिज्ञाहानेः । औपाधिकभेदस्यौपचारिकत्वान्नोक्तदोष इति चेत् । किमिदमौपचारिकं सत्यं मिथ्या वा । सत्यं चेत् कथं नोक्तदोषः । मिथ्या चेत् प्रळयकालेऽपि सृष्टिप्रयत्नोऽस्तीति स्थितम् । तस्मादीश्वरस्य अनन्तगुणत्वाङ्गीकारेऽपि न किञ्चिदनुपपन्नमिति भवति सुन्दरम् ।

अत्र प्रतिपादितस्य ज्ञानस्य फलमाह- **विष्णुमिति ।।** तेषामबद्धत्वात् स्वातन्त्र्यसम्भवात् विष्णोरुक्तस्वातन्त्र्यगुणहीनत्वं स्यादित्यत आह- **मुक्तानामिति ।।** 'अथात आनन्दस्य मीमांसा भवति' इत्यारभ्य 'तस्येयं पृथिवी सर्वा वित्तेन पूर्णा स्यात्' इत्यादिना चक्रवर्तिनां गन्धर्वादीनां च आनन्दतारतम्यमुक्त्वा 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति हि तैत्तिरीय-श्रुतिः ।

**टीका-** निर्गुणत्वादिपक्षचतुष्टये श्रुत्यन्तरविरोधमाह- **एकमिति ।।** एकमेवेत्यवयवावयविभावेन भेदौ भेदाभेदौ च निवारितौ । **इह** ब्रह्मणि **किञ्चन** गुणादिकमपि **नाना** भिन्नं नास्ति । यस्तु **इह** ब्रह्मणि **नानेव** भिन्नाभिन्नं गुणादिकं पश्यति स मृत्योरनन्तरं **मृत्युं** नरकमाप्नोति । यथा पर्वतेषु **दुर्गे** स्थाने शिखरे वृष्टम् उदकं **विधावति** अधो विधावति एवं भगवतो धर्मांस्ततः परस्परं च पृथक् पश्यन् पुरुषः **तानन्वेव** तद्दर्शनमन्वेव **विधावति** अधो गच्छतीत्यर्थः । यदि धर्मा एव न सन्ति तर्हि नेहास्ति किञ्चन, धर्मान्पश्यन् इत्येव वक्तव्यं स्यात् । नानेति पृथगिति च व्यर्थमेव । तेन सन्ति धर्माः, किन्तु न भिन्ना नापि भिन्नाभिन्ना इति श्रुत्यर्थः । अनयैव श्रुत्या विशेषोऽपि ज्ञायते । यथाऽऽहुः-

'उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेव हि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ।।'

इति । परमेश्वरगुणादीनां ततो भेदाभावेऽपि विशेषशक्त्या सम्बन्धित्वादिव्यवहारो युज्यत इत्येतत्सदृष्टान्तमुपपादयद्वाक्यान्तरमप्यत्र पठति- **देश इति ।।** यथा पक्षी सर्वत्राऽऽकाशे पततीति पक्षिणः सर्वाकाशसम्बन्धः प्रतीयते । तथा **देश** आकाशोऽपि 'सर्वत्राऽऽकाशोऽस्ति' इति सर्वाकाश-सम्बन्धः आकाशस्य प्रतीयते । यथा 'गुरुतन्त्रः शिष्यः' इति शिष्यस्य गुरुणा सम्बन्धः प्रतीयते एवं 'परमपुरुषः स्वतन्त्रः' इति तस्य स्वसम्बन्धः प्रतीयते । यथा आकाशस्य नित्यता सर्वकाल-सम्बन्धितालक्षणा प्रतीयते तथा कालस्यापि नित्यता प्रतीयते । आदिपदेन पूर्वोक्ताभेदादीनां ग्रहणम् । **इत्यादिषु** स्थानेषु । गुणरूपिण इति कर्मधारयादिनिः । गुणभोक्तृत्वमानन्दभुगित्यादौ श्रुतम् । **स्याद्विष्णोः** विशेषेण निमित्तेनेति शेषः । **तच्च** निमित्तं **स** विष्णुः स्वयमेव । देशः सर्वत्रेत्यस्य सर्वमूर्तद्रव्यसंयुक्त इति वा अपरिच्छिन्न इति वाऽर्थ इति चेन्न । सप्तम्यर्थस्यासमर्थित-त्वात् । बाधकाभावेनोपचाराश्रयणस्यायुक्तत्वात् । अत एव स्वतन्त्र इत्यस्य परतन्त्रताव्यावृत्तिरर्थ इत्ययुक्तम् । नित्योऽविनाशीति चेन्न । सदातनपर्यायत्वान्नित्यशब्दस्य । तस्य सर्वकालभावि-वाचकत्वात् ।

मायावादिनस्त्वाहुः- निर्गुण एव परमात्मा । गुणास्तु तस्य मायामयाः सन्ति । अतो नोदाहृत-श्रुत्यादिविरोध इति । तदसत् । तदीयसर्वगुणपूर्णताज्ञानस्य मोक्षसाधनताश्रवणात् । नहि मायामयार्थज्ञानं मोक्षसाधनम् । किन्तु तत्त्वज्ञानमेवेति भावेन तां श्रुतिं पठति- **विष्णुमिति ।।** मुक्तस्यापि न तत्साम्यापत्तिर्येन निर्दोषाशेषसद्गुणत्वं स्यादिति भावेनाऽऽह- **मुक्तानां चेति ।।** तस्मात् स एव **सर्वदेश्वरो** निर्दोषाशेषसद्गुण इति यावत् ।

**(र.टि.)** दृष्टान्तेष्वपि विप्रतिपत्तिं परिहर्तुं दृष्टान्तान्तरेण स्वसम्बन्धमुपपादयति- **यथा पक्षी सर्वत्रेत्या-दिना ।। कर्मधारयादिनिरिति ।।** अन्यथा गुणरूपस्येति भवेदिति भावः । **सप्तम्यर्थस्येति ।।** आकाशस्य परेणावृत्तित्वाङ्गीकारेण सर्वमूर्तसंयोगेऽप्याधारत्वालाभादिति भावः ।

**(रा.टि.) निवारिताविति ।।** निवारित इत्यपि योज्यम् । अत्र धर्मधर्मिणोर्भेदो भेदाभेदौ वा नेत्युच्यते । न तु धर्मसद्भावः येन तद्विरोधो निर्गुणत्ववादस्येत्यत आह- **यदि धर्मा एवेति ।। यथाऽऽहुरिति ।।** ऋग्भाष्ये- 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्' इत्यादिना परमेश्वरस्यानेकान् धर्मानुक्त्वा 'एकमेवाद्वितीयम्' इत्येवं पुनः पृथक्त्वस्य निषेधाद्भेदादन्यो विशेषो भगवति श्रुत्यैव ज्ञायते । अखण्डत्वे धर्मोक्त्यनुपपत्तेः । भेदे च निषेधायो-गात् । किं च घटादौ भेदादन्यो विशेषः साक्षितश्च ज्ञायते इत्यर्थः । **पूर्वोक्ताभेदादीनां ग्रहणमिति ।।** अभेद-भेदभेदाभेदानां स्वरूपत्वेऽपि तत्सम्बन्धित्वेन व्यवहारस्तथेति ग्राह्यमित्यर्थः । **कर्मधारयादिनिरिति ।।** गुणश्च तद्रूपं च गुणरूपं तदस्यास्तीति मत्वर्थे 'अत इनिठनौ' इतीनिप्रत्यय इत्यर्थः । बहुव्रीहिपक्षे

गुणरूपस्येति भाव्यत्वादिति भावः । **आनन्दभुगित्यादाविति ॥** 'आनन्दभुक्तया प्राज्ञः' इति माण्डूक इत्यर्थः । न्याय-तन्त्रोक्तोदाहरणत्रयस्यान्यथावर्णनं क्रमेणाऽऽशङ्क्य निराह- **देशस्सर्वत्रेत्यस्येत्यादिना ॥ अत एवेति ॥** बाधकाभावेनोपचारकल्पनायोगादेवेत्यर्थः ।

**(श्री.टि.) गुणादिकमपीति** - किञ्चनेत्यत्रत्यचनशब्दार्थ इत्यवगन्तव्यम् । नानेवेत्यस्यार्थः- **भिन्नाभिन्न-मिति ॥** इवशब्दः स्वयं यत्समभिव्याहृतस्तद्विरोधिद्वितीयसङ्ग्राहको भवति- यथोक्तम्- 'इवोभये च सादृश्य इति वाक् शब्दनिर्णये' इति । अत्र च नानोक्त्वा प्रयुक्त इवशब्दोऽनाना सङ्गृह्णातीत्यभिप्रेत्य भिन्नाभिन्न-मित्युक्तमिति द्रष्टव्यम् । **ततो** भगवतः । **तद्दर्शनमन्वेवेति ॥** तद्दर्शनानन्तरमेवेत्यर्थः । **अधो गच्छतीति ॥** नित्यनिरयं प्राप्नोतीत्यर्थः । ननु कथमनेन निर्गुणत्वादिपक्षनिरासलाभ इत्यत आह- **यदीत्यादिना ॥** कथमनया श्रुत्या विशेषो ज्ञायत इत्यतोऽत्र ऋग्भाष्यस्थं भगवत्पादवाक्यं प्रमाणयति- **यथाऽऽहुरिति ॥** 'इन्द्रवायू इमे सुता' इति ऋग्व्याख्यासमय इति शेषः । तदुदाहरति- **उक्त्वेति ॥** तं दुर्दर्शं गूढमनुप्रविष्टमित्यादिना परमेश्वरस्यानेकान् धर्मानुक्त्वा एकमेवाद्वितीयमित्येवं पुनः पृथक्त्वस्य निषेधाद्भेदादन्यो विशेषो भगवति श्रुत्यैव ज्ञायते । अखण्डत्वे धर्मकथनानुपपत्तेः । गुणानां भगवता भेदे च पृथक्त्वनिषेधायोगात् । किञ्च घटादौ भेदादन्यो विशेषः साक्षितश्च ज्ञायत इति श्लोकार्थो द्रष्टव्यः । भिन्नस्थल इवाभिन्नस्थलेऽपि सम्बन्धः प्रतीयतेऽतो नात्र विप्रतिपत्तिः कार्येत्याशयेन मूलोक्तान् दृष्टान्तान् स्वयं दृष्टान्तैरुपपादयति- **यथा पक्षीत्यादिना ॥** तत्र देशः सर्वत्रेत्येतद् दृष्टान्तेन विवृणोति- **यथा पक्षीति ॥** अत्यन्तभेदस्थले यथा प्रतीयते तथेत्याशयः । पुरुषः स्वतन्त्र इत्येतद्दृष्टान्तेन विशदयति- **यथा गुरुतन्त्र इति ॥** कालनित्यतेत्येतद्दृष्टान्तेन स्फुटयति- **यथाऽऽकाश-स्येति ॥ नित्यता प्रतीयत इति ॥** कालः सर्वदाऽस्तीतिप्रतीतिबलादिति भावः । **पूर्वोक्तेति ॥** 'अभिन्नत्व-मभेदश्च' इत्यादिना पूर्वोक्तेत्यर्थः । **अभेदादीनामिति ॥** यथा अभेदभेदादेर्ब्रह्मादिना भेदेऽपि जीवब्रह्मणोरभेदः **(श्री.टि.)** गुणगुणिनोर्भेद इति सम्बन्धिता प्रतीयत इत्यर्थः । ननु गुणा रूपं यस्यासौ गुणरूपस्तस्य गुणरूपस्येति वक्तव्यम् । न तु गुणरूपिण इतीनेः प्रयोगः । 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इति वचनाद्, अत आह- **कर्मधारयादिनिरिति ॥** तथा च गुणा एव रूपं गुणरूपं गुणरूपमस्यास्तीति गुणरूपी । तस्य गुणरूपिण इति विग्रहो द्रष्टव्यः । **निमित्तमिति ॥** विशेषरूपं निमित्तमित्यर्थः । **स्वयमेवेति ॥** तदभिन्न एवेत्यर्थः ।

ननु देशस्सर्वत्रेति दृष्टान्ते आकाशस्य सर्वाकाशसम्बन्धः प्रतीयत इत्युक्तं, तन्न मम सम्मतमित्याशङ्कते- **देशः सर्वत्रेत्यस्येति ॥ सप्तम्यर्थस्येति ॥** आकाशस्य सर्वमूर्तद्रव्यसंगित्वसद्भावेऽपि सर्वत्रेति सप्तम्यर्थभूतं यद्देशशब्दोक्ताकाशं प्रत्याधारत्वं तन्न परमत उपपद्यते । आकाशस्य परेणावृत्तित्वाङ्गीकारादिति भावः । उपचरिता सप्तमीति चेत्तत्राऽऽह- **बाधकेति ॥ उपचारे ॥** सप्तमीविभक्तेरिति शेषः । ननु पुरुषः स्वतन्त्र इति दृष्टान्ते पुरुषस्य स्वसम्बन्धः प्रतीयत इत्युक्तं, तदयुक्तम् । स्वतन्त्र इत्यस्य परतन्त्रताव्यावृत्तिरेवार्थ इति चेत्, तत्राऽऽह-**अत एवेति ॥** स्वसम्बन्धाङ्गीकारे बाधकाभावादेवेत्यर्थः । ननु कालनित्यतेति दृष्टान्ते कालस्य सर्वकाल-सम्बन्धित्वं प्रतीयत इत्ययुक्तं नित्यशब्दस्याविनाशित्वार्थकत्वादित्याशङ्कते- **नित्योऽविनाशीति ॥ सदात-नेति ॥** 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः' इति पर्यायत्वोक्तेरिति भावः । ननु नित्यशब्दस्य सदातन-पर्यायत्वेऽपि कालस्य सर्वकालसम्बन्धः कथं नित्यशब्देन लब्ध इत्यत आह- **तस्येति ॥** सदातनशब्दस्येत्यर्थः। **सर्वकालभाविवाचकत्वादिति ॥** सर्वकालभाविवस्तुवाचकत्वादित्यर्थः । तथा च तत्पर्यायस्य नित्यशब्दस्यापि सर्वकालभावित्वार्थकत्वमेवेति भावः । **उदाहृतश्रुत्यादीति ॥** 'गुणक्रियादयो विष्णोः स्वरूपम्' इत्यादिनोदा-हृतश्रुत्यादीत्यर्थः । श्रुत्यादीनां मायाकल्पितगुणपरत्वादिति भावः । मुक्तानां चेत्युत्तरवाक्यस्य वैयर्थ्यमाशङ्क्य 'परमं साम्यमुपैति' इति श्रुतेर्मुक्तस्य भगवत्समानत्वावगमान्निर्दोषाशेषसद्गुणत्वलक्षणस्य मुक्तेऽतिव्याप्ति-रित्याशङ्कापरिहारार्थमित्याह- **मुक्तस्यापीति ॥** किमुतामुक्तस्येत्याशयः । **येन** साम्यापातेन । साम्यवाक्यं च निर्दुःखत्वादिधर्मेण साम्यपरमित्याशयः । यथोक्तम्- 'दुःखाभावः परानन्दो लिङ्गभेदः समा मताः' इति ।

**(पां.टि) एकमेवेतीति ॥** एकमेवेत्यादिनेत्यर्थः । **नानेव भिन्नाभिन्नमिति ॥** 'इवोभये च सादृश्ये इति वाक्शब्दनिर्णये' इति प्रमाणानुसारेण यदुक्तं पूर्वपदेन तत्प्रतियोगि द्वितीयं हि इवशब्दार्थः । अत्र च नानो-त्तरप्रयुक्त इवशब्दोऽनाना सङ्गृह्णातीति भेदाभेदाख्यमुभयं नानेवेत्येतच्छब्दार्थ इति ध्येयम् । **मृत्योरनन्तर-मिति ॥** मरणानन्तरमित्यर्थः । ननु मरणानन्तरं मरणप्राप्तेर्बाधितत्वात्कथं तदुक्तिरित्यतो द्वितीयस्य मृत्यु-शब्दस्यार्थान्तरपरत्वेन प्रसिद्धमरणपरत्वाभावान्नानुपपत्तिरिति भावेनार्थान्तरपरतया तं व्याचष्टे- **मृत्युं नरक-मिति ॥** 'पर्वतेषु दुर्गे शिखरे वृष्टमुदकं यथाऽधो विधावति' इत्यादिकाठकभाष्यं

मनसि निधाय यथोदक-मित्येतद्वाक्यं व्याख्याति- **यथा पर्वतेष्वित्यादिना ॥** कथमेतत् श्रुतिविरोधः उपन्यस्तः पक्षचतुष्टयस्येत्य-तस्तमुपपादयति-**यदीति ॥ नेह नानाऽस्ति किञ्चनेति** ॥ आद्ये वाक्ये नेहास्ति किञ्चनेत्येव वक्तव्यं स्यात् । द्वितीयवाक्ये च धर्मान् पश्यन्नित्येव वक्तव्यं स्यादिति योजना । **व्यर्थमेवेति ॥** आद्ये वाक्ये नानेति व्यर्थं **(पां.टि.)** स्यात् । द्वितीये च पृथगिति च व्यर्थं स्यादिति सम्बन्धः । तावताऽपि कथं श्रुतिविरोध इत्यतोऽर्थ-तस्तद्विरोधमुपदर्शयति- **तेनेति ॥** कथमनयैव श्रुत्या विशेषावगतिरित्यतः तद्व्युत्पादकं ऋग्भाष्यवाक्य-मेवोदाहरति- **यथाऽऽहुरिति ॥** भेदं विना विशेषमात्रेणैव द्विवचनादिकं घटत इत्ययुक्तम् । भेदादन्यस्य विशेषस्यैवाप्रामाणिकत्वादित्याशङ्कापरिहारकस्य अस्य वाक्यस्यायमर्थः । काठके 'तं दुर्दर्शम्' इत्यादिना परमेश्वरस्यानेकान्धर्मानुक्त्वा एकमेवाद्वितीयमित्येवं पुनः पृथक्त्वस्य निषेधाद्भेदादन्यो विशेषो भगवति श्रुत्या ज्ञायते । अखण्डत्वे धर्मकथनानुपपत्तेः । भेदे च निषेधायोगात् । किञ्च घटादौ भेदादन्यो विशेषः साक्षितश्च ज्ञायत इति ।

अयमाशयः । तन्तुपटमृद्घटादिबुद्धीनां घटादिबुद्धितो वैलक्षण्यस्यानुभवसिद्धत्वात्सम्बद्धकुण्डबदरादिबुद्धितो वैलक्षण्यानुभवेन सम्बन्धविषयत्वस्य तत्र प्रयोजकत्वासम्भवात् । घटतद्धर्मिकान्योन्याभावादिबुद्धेर्घटपटादि-बुद्धितोऽपि वैलक्षण्याभावापातेन स्वरूपप्रत्यासत्तिसंयोगान्यसम्बन्धविषयकत्वस्यापि तत्राप्रयोजकत्वेनाऽश्रया-श्रयिभावनियमरूपायुतसिद्धौ आश्रयाश्रयिभावमात्रस्य कुण्डबदरादिप्रतीतावपि भावेन नियमस्य च तन्तुपटादि-प्रतीतावप्यभावेनायुतसिद्धविषयकत्वस्यापि तत्राप्रयोजकत्वेन सम्बन्धनित्यत्वस्य सम्बन्ध्ययुतत्वस्य वा तत्रानु-स्फुरणेन समवायविषयकत्वस्यापि तत्राप्रयोजकत्वादभेदविषयत्वेनैव वैलक्षण्ये वाच्ये तत्रापि केवलाभेदविषयकत्वे समानाधिकरणव्यवहारजनकत्वासम्भवेनाधिकविषयत्वे वाच्ये भेदरूपाधिकविषयत्वे च पटो न तन्तुः घटो न मृदित्यपि व्यवहारापत्त्या भेदाभेदविरोधपरिहारकस्यान्यस्याऽवश्यकत्वाच्च विशेषरूपाधिकविषयत्वमेवाऽ-वश्यकमिति तन्तुपटादिबुद्धेर्घटपटादिबुद्धितः साक्षिरूपवैलक्षण्यानुभव एव विशेषे प्रमाणमिति । दृष्टान्तेष्वपि विप्रतिपत्तिं परिहर्तुम् उदाहरणान्तरेण स्वसम्बन्धमुपपादयति- **यथा पक्षी सर्वत्रेत्यादिना ॥**

ननु गुणः रूपं यस्येति बहुव्रीहिणैव मत्वर्थलाभादिनिप्रत्ययवैयर्थ्यमित्यतो बहुव्रीहिमाश्रित्य मतुबर्थप्रत्ययप्रयोगे वैयर्थ्यदोषेऽपि कर्मधारयमाश्रित्य मतुबर्थप्रयोगे शब्दान्तरत्वान्न दोष इत्याशयेनाऽह- **गुणरूपिण इति ॥** ननु तथाऽपि कर्मधारयान्मत्वर्थीयाद् बहुव्रीहिरेवेष्टो लघुत्वादिति न्यायाच्छब्दान्तराश्रयणेऽपि बहुव्रीहिविवक्षयाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बह्वलाश्रयणं दोषः स्यादिति चेन्न । बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीये शब्दगौरवस्थले बह्वलाश्रयणस्य दोषत्वेऽपि शब्दसाम्ये तददोषत्वस्य टीकाकृदभिप्रेतत्वात् । अत एव टीकायां यद्विकारीत्यत्र कर्मधारयान्मत्वर्थीयमभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । बहुव्रीहौ कर्मधारयमत्वर्थीये चार्थगौरवाप्रसङ्गेन शब्दगौरवस्यैव लाघवन्यायविरुद्धत्वात् । प्रकृते तदभावेनादोषत्वात् । लाघवन्यायानादरेण शब्दगौरवेऽपि न्यासादिगतकर्मधारयान्मत्वर्थीयप्रयोगाणां 'एकगोपूर्वाट्ठञ् नित्यम्' इति सूत्रे दुर्घटवृत्तिकृता दर्शितत्वाच्चेति सकलमकलङ्कमिति सम्प्रदायः ।

वस्तुतस्तु यदा कर्मधारयान्मत्वर्थीयः क्रियते तदा स्वपदार्थप्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः । तेषामेव **(पां.टि)** च पदार्थानामन्यत्र गुणभावमाश्रित्य मत्वर्थीय उत्पद्यत इति प्रतिपत्तिगौरवम् । यदा च पूर्वमेवान्य-पदार्थप्राधान्यविवक्षा तदा वर्तिपदार्थानां गुणभाव आश्रीयत इति प्रतिपत्तिलाघवम् । कर्मधारयो मत्वर्थीयसहित एवान्यपदार्थस्य प्रतिपादक इति शब्दगौरवम् । बहुव्रीहिस्तु अन्यानपेक्ष एव तत्प्रतिपादक इति शब्दलाघवं च भवतीति न कर्मधारयान्मत्वर्थीयाश्रयणं युक्तम् । तथाऽपि अन्यपदार्थप्राधान्यविवक्षायां बहुव्रीहेरेव प्रसङ्गेन सर्वधनी सर्वबीजी सर्वकोशी नट इत्याद्यभियुक्तप्रयोगानुपपत्तिप्रसङ्गात् । तदुपपादनार्थं प्रवृत्तात् 'सर्वादेः कर्मधारयादिनिः' इति भाष्यकारीयवचनाल्लाघवानाश्रयणेन वाचनिकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति । देशः सर्वत्रेत्यादेरर्थान्तरपरत्वेन भवदुक्तार्थकत्वाभावान्न स्वस्य स्वसम्बन्धे इदमुदाहरणमित्यभिप्रेत्य तस्यार्थान्तर-माशङ्कते- **देशः सर्वत्रेति सप्तम्यर्थस्येति ।** सर्वत्रेति सप्तम्यर्थो हि आधारत्वम् । तच्च परमते नोपपद्यते । 'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः' इति प्रशस्तदेवाचार्योक्त्याऽकाशादेरवृत्तित्वसिद्धेरिति भावः । **अत एवेति ॥** बाधकाभावादेवेत्यर्थः । **नित्यशब्दस्येति ॥** 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः' इत्यनु-व्याख्यानोक्तेरिति भावः । **नोदाहृतश्रुत्यादिविरोध इति ॥** अतत्त्वावेदकत्वेन तस्याप्रामाण्यान्न निर्गुणत्वपक्षस्य तद्विरोध इति भावः । **न हि मायामयेति ॥** 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति साङ्कर्षणसूत्राद् इति भावः । **न तत्साम्यापत्तिरिति ॥** न तत्सर्वसाम्यापत्तिरित्यर्थः । अतो न परमं साम्यमुपैती-त्यादिश्रुतिविरोध इति भावः । **इति यावदिति ॥** निर्दोषाशेषसद्गुणत्वस्यैव साध्यतया प्रस्तुतत्वादिति भावः।

**(व्या.टि)** श्रुत्यन्तरेति महोपनिषदपेक्षया । **अवयवावयविभावेनेति ।।** यथाऽऽह परोऽपि

'वृक्षस्य स्वगतो भेदः पत्रमूलफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ।
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात्' इति ।

**भिन्नमिति ।।** 'विनञ्भ्यां नानाञौ नसह' इति विनार्थे नाञो विधानात् । **भिन्नाभिन्नमिति ।।** 'इवोभये च सादृश्ये इति वाक्शब्दनिर्णये' इत्यनुभाष्योक्तेः । **मृत्यनन्तरमिति ।।** अनेन मृत्युशब्दो भावसाधन इत्युक्तम्भवति । **मृत्युं** यमं तत्स्वातन्त्र्यात् ताच्छब्द्यम् । अध इति- दुर्गपदस्वारस्यात् । 'यथाऽपः प्रवतायन्ति' इति अपां नीचैःप्रवणतास्वाभाव्यात् । **विधावतीति ।।** तीव्रगमने सर्तेर्धावादेशः । धर्मानिति सम्बन्धितया प्रकृतधर्मिपरामर्शकोऽयमित्याह- **तत इति ।। तानन्विति ।।** दृष्टानन्वित्यर्थः । सविशेषणे हीतिन्यायेन विशेषणपरं तदित्याह- **दर्शनानन्तरमिति ।।** कथमनेन निर्गुणत्वादिपक्षचतुष्टयनिरास इत्यतस्तदुपपादयति- **यदीत्या-दिना ।। तेनेति ।।** सविशेषणे हीति न्यायेनेत्यर्थः । ननु गुणगुणिनोरत्यन्ताभेदे कथं तच्छब्दापर्यायत्वादि-कम् । विशेषबलादिति चेत्तत्र प्रमाणाभावादित्यत आह- **अनयैवेति ।।** प्रकृतदृष्टान्ते विप्रतिपन्नं प्रति तं दृष्टान्तेनोपपादयति- **यथेत्यादिना ।।** सर्वत्रेत्यत्र त्रलो देशे विधानादित्यर्थः । **अभेदादीनामिति ।।** ब्रह्मणाऽभेद **(व्या.टि)** इति स्वरूपब्रह्माभेदः प्रतीयत इत्यर्थः । **कर्मधारयादिनिरिति ।।** 'न कर्मधारयान्मत्वर्थीयः' इति त्वनित्यम् । नञा निर्दिष्टत्वादिति भावः । तत्पदपरामर्शं दर्शयितुं शेषमाह- **विशेषणेति ।।** नैयायिकः शङ्कते- **देशस्सर्वत्रेति ।।** उपचरिता सप्तमीत्यत आह- **बाधकाभावेनेति ।। अविनाशीति ।।** 'त्यष्टार्ध्रुवः' इति सूत्रादिति भावः । **पर्यायत्वादिति ।।** यथोक्तमनुभाष्ये 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः' इति । **तस्येति ।।** सदातनशब्दस्येत्यर्थः । सदाशब्दात्कालवाचकाद्भवार्थे टचुलि तुडागमेन च तस्य निष्पाद्यतेति भावः । परमतं निरसितुमनुवदति- **मायावादिन इति ।।** ननु गुणमायामयत्ववादनिरासाय तत्सत्यत्वश्रुतिरेवोदा-हर्तव्या विरोधित्वात् । न तु गुणज्ञानस्य मोक्षसाधनताश्रुतिरसङ्गतेरित्यतो भावमाह- **न हीति ।।** ननु 'परमं साम्यमुपैति' इति मुक्तस्य परमसाम्योक्तेर्निर्दोषाशेषसद्गुणत्वमतिव्याप्तमित्यत आह- **मुक्तस्यापीति ।। सर्वदेवे-श्वर इति ।।** निर्णीतश्च सूत्रकारेण 'अत एव चानन्याधिपतिः' इति । उपक्रमोपसंहारैकरूप्याय व्याचष्टे- **निर्दोषेति ।।**

**मूलम्- 'अमृतस्यैष सेतुः', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादि च ।**

**'नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् ।**
**गुणैः सर्वैः शतगुणा मोदन्त इति हि श्रुतिः ।। इति पाद्मे ।**

**अतो निश्शेषदोषवर्जितः पूर्णाऽनन्तगुणो नारायण इति सिद्धम् ।**

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ।।**

**स्वतन्त्रायाखिलेशाय निर्दोषगुणरूपिणे ।**
**प्रेयसे मे सुपूर्णाय नमो नारायणाय ते ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्विष्णुतत्त्वविनिर्णये तृतीयः परिच्छेदः समाप्तः ।।**

**(त.मं.)** निगमयति- **अत इति ॥** इदानीमात्मस्वरूपसंवेदनपूर्वकमिमं ग्रन्थं केशवे समर्पयति गुरुस्वरूपं जानतामेव हि गुरुभक्तिद्वारेण विद्या फलतीति । **यस्य** वायोः बळित्थेत्यादिवेदवचने त्रीणि रूपाण्युदितानि । **अलं दिव्यानि** स्तुत्यानि । यस्य देवस्य **महद्रूपं** मूलरूपं इत्थमेव निहि-तम् । श्रीमन्नारायणेन त्रयाणां वपुषां प्रादुष्करणार्थमेव क्लृप्तम् । तन्मूलरूपं कीदृग्भूतमित्याकाङ्क्षा-यामाह- **बडित्यादि ॥** बट् बलरूपम् । डकारस्य ळकारः । (अस्यां च शाखायां ळकास्य डकारः।) 'नेदीयसः कूळयाताः पणी स्व ईक्षत' इतिवत् । परोक्षत्वात् ततत्वाद्वा **दर्शतं** दर्शनरूपम् । ज्ञान-रूपम् । तृतीयात् तृतीयस्यापि अतिशयार्थत्वात् । दुष्टान् भर्जयतीति **भर्गः** । त्रीणि रूपाणि कानीत्याकाङ्क्षायामाह- **प्रथमकं रामवचोनयं** हनूमद्रूपमित्यर्थः । द्वितीयं वपुः **पृक्षः** । पृतना, सम्पृक्तत्वात् पृगित्युच्यते । तां क्षपयतीति पृक्षः । भीमसेन इति यावत् । तृतीयं **मध्वः** । मधुशब्द आनन्दवाची । 'कामानलं मधुलवैः शमयन् दुरापैः' इत्यादौ दृष्टत्वात् । अकारस्तीर्थवाची । पापप्रतिषेधरूपत्वात् तीर्थस्य । एवं मध्वः आनन्दतीर्थः । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' इति वचनाद्वा । **यत्तु एतत्** यत्तु देशकालाभ्यां सन्निकृष्टं मध्वाख्यं तृतीयं वपुः **अमुना** रूपेण तेन वायुना **केशवे** श्रीमद्विष्णुतत्वनिर्णयाख्यो **ग्रन्थः कृत** इति । अत्र बट् तदित्यादिना तद्वेदवचनं च सूचयति ।

स्वाधीन सर्वामरपूर्वनाथ निर्दोषसंवित्सुखसद्गुणात्मन् ।
प्रियादतिप्रेष्ठ सुपूर्ण तुभ्यं नमोऽस्तु नारायण मध्ववन्द्य ॥ १ ॥

श्रीमन्दहासेन्दुकलामुदारां पुष्णन्ति मुष्णन्ति च ये तमांसि ।
अपूर्वपक्षा अपि ते कटाक्षाः पायासुरायासहरा हरेर्नः ॥ २ ॥

एतान् त्रिविक्रममहार्यवरांश्च मध्वान् व्यासांश्च क्लृप्तवरसूत्रमणिप्रदीपान् ।
वन्दे गुरून् गुरुतमानपि मे गुरूणां साक्षादहो गुरुतमांश्च गुणाम्बुराशीन् ॥ ३ ॥

जातां गुरूणां करुणाम्बुसिक्तया विद्याख्यवल्या......? माधवागमात् ।
नारायणस्यार्पयते पदाम्बुजे नारायणो मञ्जरि तत्त्वमञ्जरीम् ॥ ४ ॥

**॥ ॐ इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीमद्विष्णुतत्त्वनिर्णयटीकायां तत्त्वमञ्जर्यां तृतीयं विशेषणम् ॥**

**टीका-** मुक्तस्य भगवत्साम्यमैक्यं च नास्तीत्यत्र श्रुतिद्वयमपि पठति- **अमृतस्येति ॥ अमृतस्य** मुक्तसमुदायस्य **एष** परमात्मा सेतुरिव **सेतुः** आश्रयः । परस्परमपि मुक्तानां साम्यं नास्ति । किमुत परमात्मनेति भावेन तत्र पुराणवाक्यं पठति- **नृपाद्या इति ॥** इति हि श्रुतिरिति पुराणकृत् स्वोक्तार्थे 'युवा स्यात्स यो मनुष्याणां राद्धः' इत्यादिश्रुतिं सम्मतित्वेन दर्शयति । अथ वा सज्जनसंविद इत्युक्तम् । तत्र कोऽसौ मोक्षः, कुतश्च तस्योक्तलक्षणभगवत्संवित्साध्यत्वमिति शङ्कां विशेषणत्रयसाधनावसाने विष्णुं सर्वगुणैरित्यादिना परिहरतीति । इदानीं तृतीयपरिच्छेदार्थ-मुपसंहरति- **अत इति ॥**

एवं समापितप्रकरणो भगवानाचार्यो भक्तानां स्वस्वरूपं ख्यापयन् स्वकृतग्रन्थं केशवे समर्पय-न्नाह- **यस्येति ॥** ग्रन्थान्तरादस्य श्लोकस्यार्थोऽवगन्तव्यः । अन्तेऽपि मङ्गलाचरणस्य कर्तव्यत्वा-न्नारायणस्य स्तुतिप्रणामौ करोति- **स्वतन्त्रायेति ॥**

आनन्दसिन्धवे पूर्णप्रज्ञाचार्याप्तबन्धवे ।
नमः श्रीहरये स्वान्तध्वान्तौघतिमिरारये ॥ १ ॥

मया रचितया विष्णुतत्त्वनिर्णयटीकया ।
यत्पुण्यं भावि तत्सर्वमवाप्नोतु गुरुर्मम ॥ २ ॥

आनन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुरा अधिकारिणोऽत्र ।
यन्मादृशोऽपि यतते तदतीव हास्यं किं नाम भक्तिविवशस्य विभूषणं तत् ॥ ३ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्विष्णुतत्त्वविनिर्णयस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तृतीयः परिच्छेदः समाप्तः ॥**

**(र.टि.) कोऽसौ मोक्ष इति ॥** संविच्छब्दस्य पूर्वमेव मोक्षलक्षकत्वोक्तेर्मोक्षज्ञानयोः साध्यसाधनभावप्रदर्शनं च लाक्षणिकपदप्रयोगप्रयोजनमित्युक्तत्वाच्चेति भावः । **तृतीयपरिच्छेदार्थमिति ॥** अत एवैतदुपसंहारानुरोधेन 'विष्णुं सर्वगुणैः' इत्यादिवाक्यमेतत्परिच्छेदान्तर्गतत्वेन व्याख्यातमिति द्रष्टव्यम् । **विशिष्टव्याख्यानकर्म-णीति ॥** विशिष्टव्याख्यनेत्युक्तत्वात् सुरा अधिकारिण इत्युक्तं युक्तम् ।

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्विष्णुतत्त्वविनिर्णयस्य जयतीर्थाचार्यश्रीचरणविरचितटीकाया भावबोधः श्रीमद्रघुपवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिना कृतः समाप्तः ॥**

**(रा.टि.)** संविच्छब्दस्य मोक्षलक्षकत्वस्य तत्रैवोक्त्या सज्जनमोक्षायेत्युक्तप्रायत्वात्तथैव पृच्छति- **कोऽसौ मोक्ष इति ॥** साध्यसाधनभावज्ञापनं लक्षणाश्रयणप्रयोजनमित्यपि तत्रैवोक्तत्वादाह-**कुतश्च तस्येत्यादिना ॥** आहेत्यत्रापि स्वरूपमित्यनुषङ्गः । **ग्रन्थान्तरादिति ॥** भाष्यटीकारूपादिति वा हनुशब्दो ज्ञानवाचीत्यादि-ग्रन्थान्तरादिति वाऽर्थः । तथा हि- यस्य वायोर्देवस्य बलित्थेत्यादिवेदवचने क्रीडादिगुणयुक्तानि त्रीणि रूपाण्यु-दितानि तस्य यत्तृतीयं रूपम् अमुनाऽयं ग्रन्थः केशवविषये कृत इत्यन्वयः । कीदृशं चास्य मूलरूपं कानि च त्रीणि कीदृशानीति तत्राऽह- अलमिति । तदस्य वायोर्मूलरूपं बट् बलात्मकं ज्ञानरूपं, भर्गो जगद्भरणगमनगुणं, महत् महनीयम् । तदित्थम्भूतमेव रूपत्रयावताराय भगवता निहितं स्थापितमवतीर्णं च । तत्र प्रथमं हनुमदाख्यं वपुः रामस्य वचांसि सीतां प्रति नीतवत् । रामविषयवचांसि मूलरामायणादिरूपाणि शिष्येषु नीतवद्वा । रामवचसि नयो न्याय आज्ञारूपस्तद्युक्तं वा । द्वितीयं वपुर्भीमनामकं कुरुपृतनाक्षयकरम् । तृतीयं वपुः आनन्दरूपस्य हरेः प्रतिपादकशास्त्रनिर्मातृ मध्वाभिधमिति । चरमपादेनैव पूर्तौ त्रिपाद्याः किं कृत्यमित्यत आह- **स्तुतीति ॥** साऽपि तत्प्रीत्यर्थेति भावः । स्वयमपि ग्रन्थान्ते मङ्गलमाचरति- **आनन्देति ॥ विशिष्ट-व्याख्यानेति ॥** प्रातीतिकार्थान्तरनिरासेन तात्पर्यार्थव्याख्यानकर्मणि दक्षिणामूर्तिप्रभृतयः सुरा अधिकारिण इत्यर्थः । तर्हि किमिति भवद्भिर्व्याख्यातमित्यत उक्तम्- **भक्तिविवशस्य विभूषणं तदिति ॥**

अमन्दानन्दसन्दोहदेहायेन्दीवरत्विषे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥

**॥ इति श्रीमद्विष्णुतत्त्वविनिर्णयटीकाभावदीपे श्रीमद्राघवेन्द्रयतिकृते तृतीयः परिच्छेदः ॥**

**(श्री.टि.) मूले शतधृत्यन्ता इति ॥** शतधृतिश्चतुर्मुखस्तदन्ता इत्यर्थः । **युवा स्यादिति ॥** 'युवा स्यात् साधुयुवाध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः' इत्यादिकामानन्दतारतम्यप्रतिपादनपरां तैत्तिरीयश्रुतिं 'स यो मनुष्याणां राद्धः समृद्धोऽधिपतिः' इत्यादिकाम् आनन्दमर्यादाकथनपरां बृहदारण्यकश्रुतिं चोपादत्त इत्यर्थः । **कोऽसौ मोक्ष इति ॥** 'संविच्छब्देन तत्साध्यो मोक्ष उपलक्ष्यते' इति संविच्छब्दस्य पूर्वं मोक्षलक्षकत्वोक्तेः, 'मोक्षज्ञानयोः साध्यसाधनभावप्रदर्शनं लाक्षणिकपदप्रयोजनम्' इत्युक्तत्वाच्चेति भावः । **उक्तलक्षणेति ॥** निर्दोषाशेषसद्गुणत्वादिलक्षणोपेतो यो भगवान् तत्संवित्साध्यत्वमित्यर्थः । **परिहरतीति ॥** तथा च लिङ्गशरीरसम्बन्धरूपसंसारनिवृत्त्यनन्तरं निर्दुःखानन्दानुभव एव मोक्षः । स चोक्तलक्षणभगवत्संवित्साध्य इत्युक्तं भवतीति द्रष्टव्यम् । **स्वस्वरूपं ख्यापयन्निति ॥** भगवत्स्वरूपस्येवाधिकार्युत्तममुख्यप्राणावतारभूतस्वस्वरूपज्ञानस्यापि भक्तानां मोक्षसाधनत्वादिति भावः । **ग्रन्थान्तरादिति ॥** यस्य वायोर्देवस्य बलित्थेत्यादिवेदवचने दिव्यानि क्रीडादिगुणयुक्तानि त्रीणि रूपाण्युदितानि तस्य यत् तृतीयं रूपम्, अमुना रूपेणायं ग्रन्थः **केशवे** विषये तद्विषयतया कृत इत्यन्वयः । तत्प्रतिपादकत्वात् **(श्री.टि.)** तस्मिन्नर्पित इति तात्पर्यम् । कीदृशश्चास्य मूलरूपं, कानि च तानि त्रीणि रूपाणि, कीदृशानीति तत्राऽह- **अलमित्यादिना ॥** तस्य वायोर्मूलरूपम् **अलं** सम्यक् **बट्**

बलात्मकं दर्शतं ज्ञानरूपं **भर्गो** जगद्धरणगमनगुणं **महत्** महनीयं पूज्यं तत् इत्थम्भूतमेव रूपत्रयावताराय भगवता **निहितं** प्रेरितम् अवतीर्णं च। तत्र यस्य **प्रथमकं** हनुमदाख्यं वपुः रामस्य वचांसि सीतां प्रति नीतवत्, रामविषयकवचांसि मूलरामायण-रूपाणि शिष्येषु नीतवद्वा, रामवचसि यो नयो न्यायः आज्ञारूपस्तद्युक्तं वा। यस्य द्वितीयं वपुर्भीमनामकं **पृक्षः** पृतं सेनां क्षिणोतीति पृक्षः उपपदान्त्यतकारलोपः। कुरुपृतनाक्षयकरम्। यस्यैतत् तृतीयं वपुः मध्वः मधुशब्दः सुखवाची। 'मधु द्यौरस्तु नः पिता' इति प्रयोगात्। वशब्दः शास्त्रापरपर्यायतीर्थवाची। तथा च मधु आनन्दकरम् आनन्दरूपस्य हरेः प्रतिपादकं वा तीर्थं शास्त्रं तन्निर्मात्रिति यावत् मध्वाभिधमिति। यथोक्तम्-

'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्।
मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः॥' इति।

स्वरित्यत्रेव उकारलोपो मन्तव्यः। अन्यथा मधुवेति स्यादित्यवगन्तव्यम्। अतः परमाप्तप्रणीतत्वादयं ग्रन्थः सकलसुजनैरादरेणाङ्गीकार्य इति भावः। इत्येवं तत्त्वप्रदीपिकादिरूपाद्ग्रन्थान्तरादस्य श्लोकस्यार्थोऽवगन्तव्य इत्यर्थः। **अन्तेऽपीति॥** स्वस्वरूपप्रतिपादनेनैव ग्रन्थो न परिसमापनीय इत्याशयेनेति भावः। सर्वदाऽपरोक्षीकृत-भगवत्स्वरूपत्वाद्ग्रन्थपरिसमाप्तिसमये विशेषतस्तमपरोक्षीचकार। अतो मूले 'नारायणाय ते' इत्यपरोक्षनिर्देश इत्यवगन्तव्यम्। अन्तेऽपि मङ्गलाचरणस्यावश्यं कर्तव्यतया शिष्टाचारपरम्पराप्राप्तत्वात् परिसमापितग्रन्थो भगवान् टीकाकारोऽन्तेऽपि श्रीहरिनमनरूपं मङ्गलमाचरति- **आनन्दसिन्धव इति॥** 'स्वान्तं हृन्मानसं मनः' इत्यभिधानात् **स्वान्तं** मानसं तत्रत्यं यद् **ध्वान्तम्** अज्ञानं तस्य तन्निरसन इति यावत्। **तिमिरारिः** सूर्यः, तस्मा इत्यर्थः। एतत्प्रकरणटीकाकरणजनितं पुण्यं स्वगुरवे समर्पयति- **मयेति॥** इदानीं स्वगर्वं परिहरति- **आनन्दतीर्थेति॥ व्याख्यानकर्मणि** व्याख्यानकरणे। विशिष्टव्याख्यानकर्मणीत्युक्तत्वात् सुरा अधिकारिण इत्युक्तं युक्तम्। यतत इति यत् तदिति सम्बन्धः। **हास्यं** हासास्पदम्। हासास्पदत्वे यतनं व्यर्थमित्याशङ्कते- **किं नामेति॥** उत्तरमाह- **भक्तीति॥** आनन्दतीर्थभगवत्पादेषु भक्तिपराधीनस्य मम भक्तिपारवश्येन तद्वचनव्याख्याने आग्रहविशेषयुक्तस्येति यावत्। **तदिति॥** सुराधिकारिकानन्दतीर्थवचसां व्याख्याने यतनं विभूषणमलङ्कार एव। तथा चास्य ग्रन्थस्य भक्तिपरवशेन मया कृतत्वं विचार्य सूरयोऽत्र न दोषान् विचारयेयुः। तद्भक्त्या तत्कारुण्यसरणिं प्रपन्नोऽहमपि यत्किञ्चिद्वदन् महतां मान्य एवास्मीत्याशय इत्यशेषमतिमङ्गलम्।

यस्तत्त्वदेवान् सम्प्रेर्य कारयामास सत्कृतिम्।
गुर्वन्तःस्थानन्दतीर्थहृद्गतं व्यासमाभजे॥ १॥
श्रीयादवार्यसत्पादसेवकेन यथामति।
तत्त्वनिर्णयटीकाया विवृतिस्तदनुग्रहात्॥ २॥
**(श्री.टि.)** श्रीनिवासेन रचिता नाम्ना वाक्यार्थदीपिका।
व्यासपादार्पिता भूयात् सतां व्याख्योपकारिणी॥ ३॥
जयराजवचांसि क्व क्व चाहं मन्दबुद्धिमान्।
तथाऽप्यस्मद्गुरुवरानुग्रहः किं न साधयेत्॥ ४॥

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्विष्णुतत्त्वविनिर्णटीकाविवृतौ वाक्यार्थदीपिकायां तृतीयः परिच्छेदः॥**

**(पां.टि.) श्रुतिद्वयमिति॥** श्रुत्यन्तरद्वयमित्यर्थः। अमृतस्येति जातावेकवचनमिति भावेन समुदायस्ये-त्युक्तम्। **कोऽसौ मोक्ष इति॥** संविच्छब्दस्य लक्षणया तत्साध्यमोक्षपरत्वस्य प्रागेवोक्तत्वादेवं शङ्केति ध्येयम्। **ग्रन्थान्तरादिति॥** भाष्यादिटीकात इत्यर्थः। **विशिष्टेति॥** अत एव सुरा अधिकारिणोऽत्रेत्युपपन्नमिति सकलमकलङ्कम्।

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात्।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोस्सेवा॥ १॥

**॥ इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्येण केशवभट्टारकेण विरचितायां गुरुराजमार्गानुवर्तिन्यां विष्णुतत्त्वविनिर्णयटीकागतविषमपदवाक्यार्थविवृतौ तृतीयः परिच्छेदः**

**समाप्तः ॥**

**(व्या.टि.) श्रुतिद्वयमपीति ॥** आद्यायामाश्रयाश्रयिभावोक्तेरुभयाभावः । द्वितीयस्यां साहित्योक्तेरुभया-भावसिद्धिरिति । अत्र तारतम्योक्तेर्भावमाह- **परस्परमपीति ॥ नृपाद्या इतीति ॥**

'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ।
रुद्रो ब्रह्मेति क्रमशः तेषु चैवोत्तरोत्तराः ।
नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेऽपि च ।
सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तराः ॥'

इति स्मृत्यन्तरादान्तरालिकोऽवधिरवसेयः । औत्सर्गिकोऽयं नियमः । अनुभाष्यच्छान्दोग्यभाष्यतैत्तिरीय-बृहद्भाष्यादिषु विशेषोऽवसेयः । तत्र 'युवा स्याद्' इति तैत्तिरीया द्वितीया काण्वी । एवं विष्णुं सर्वगुणैरित्यादि परमतनिरसनपरतया व्याख्यायाधुना आद्यपद्योक्तफलसमर्थनपरतयाऽपि व्याचष्टे- **अथ वेति ॥** तत्समर्थने का सङ्गतिरित्यतोऽवसर एवेत्याह- **विशेषणत्रयसाधनावसान इति ॥** तत्र संसारवर्जितः, निर्दुःखानन्द-**(व्या.टि.)** भुगित्याद्यचोद्यपरिहारः । शिष्टं द्वितीयस्येति विवेकः । पुनरुक्तिपरिहारायोपसंहार इत्याह- **इदानी-मिति ॥** वर्जित इति पूर्ण इति नारायणविशेषणम् ।

ननु 'न ध्याख्यापॄमूर्च्छिमदाम्' इति निष्ठातस्य नत्वनिषेधात्कथं पूर्ण इति । मैवम् । 'वा दान्तशान्त-पूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' इति णिचि निपातनात्साधुरवधेयः । एतदैकरूप्याय पूर्वं विशेषणसमासः कृतः इत्यशेषमतिमङ्गलम् । **स्वस्वरूपमिति ॥** मुमुक्षुणा भगवत्स्वरूपस्येव भागवततारतम्यस्याप्यवश्यं वेद्यत्वात् तदवसानस्य 'इयदामननात्' इत्युक्तदिशा प्राणावधित्वेन तस्याप्यवश्यं ज्ञेयत्वादित्यर्थः । **समर्पयन्निति ॥** अनेन मूलं समर्पित इति शेषेण पूरणीयमित्युक्तं भवति । **ग्रन्थान्तरादिति ॥** न्यायसुधाग्रन्थादित्यर्थः । ननु सुधायां 'भृञ् भरणे, गम्लृ गतौ, आभ्यामसुन् प्रत्ययो डिच्च' इति भर्गशब्दो निरुक्तः । तदयुक्तम् । तथात्वे सकारान्तत्वेन जिज्ञासाधिकरणभाष्ये 'स एव भर्गशब्दार्थः' इति निर्दिष्टव्यत्वेन भर्गशब्दार्थ इति निर्देशायोगादिति चेत्, अत्रेदमवधेयम् । अत्र बलित्थेति श्रुतौ श्लोके च रूपविशेषणत्वेन नपुंसकतया असुन्प्रत्ययान्ततया व्याख्या-तम् । तत्र तु गायत्र्यां देवविशेषणतया पुंलिङ्गत्वात्तथा निर्देशः । अत एवात्र भरणगमनकर्तृ इति नपुंसकतया निर्देशः कृतः । तत्र तु गायत्र्यां यो भर्गो देव इति देवविशेषणतया उ(ड)प्रत्ययमुपेत्य भरणगमनयोगादित्येवो-क्तम् । न तु प्रत्ययो निर्दिष्टः । तत्रापि रूपविशेषणत्वे सकारान्ततैव । वस्तुतस्तु सकारान्तस्वरूपविशेषणत्व-मविवादम् । अकारान्तस्य देवविशेषणतया प्रतीतस्य 'हरः स्मरहरो भर्गः' इति हरनामसु पाठाद्धराभिधानश्रुत्या गायात्र्या हरपरताऽपनोदायाकारान्तस्यैव भगवति समन्वेतव्यतया स एव भर्गशब्दार्थः, स एव तत्र निरुक्त इति न सुधायां पूर्वोत्तरग्रन्थविरोधः इति दिक् । **अन्तेऽपीति ॥** मङ्गलसंवलितस्यैव सफलत्वादित्यर्थः । टीका-कृदप्यन्ते मङ्गलङ्गिलति- **आनन्दसिन्धव इति ॥** 'निक्षिपेत् सर्वभारांश्च गुरोः श्रीपादपङ्कजे' इत्युक्तार्थमनुतिष्ठति- **मयेति ॥ पुण्यमिति ॥** 'व्याख्यैकस्य शतोत्तरा' इत्युक्तमित्यर्थः । कृतकृत्यस्य स्वस्य प्रारब्धाविघ्नपरिसमाप्त्यैवा-धिकारसिद्धेरन्येषां तद्व्याचिख्यासाशां प्रत्यस्यति- **आनन्दतीर्थेति ॥ विभूषणम्** अलङ्कारनिकरः ।

विश्वोदयस्थितिलयोन्नियमादिहेतुं मायापतिं रघुपतिं मनसा नमामि ।
प्राभासि यन्नियमनादिह विष्णुतत्त्वनिर्णायिका श्रुतिततिप्रविचारटीका ॥ १ ॥

अनया प्रभया श्रीपदीपायितसमर्पया ।
यद्भावि भव्यं तत्सर्वमाप्नुयाद्देशिको मम ॥ २ ॥

**॥ इति श्रीमद्विष्णुतत्त्वविनिर्णयटीकागूढभावप्रकाशिका प्रभा समाप्ता ॥**

**॥ समाप्तश्चायं ग्रन्थः ॥**

**श्रीमध्वेशार्पणमस्तु**